सच्छिष्याभावे समानयोगपट्टकः पीठस्थोऽधिकारी भवति 'अनन्तरः सपिण्डाद्यस्तस्य-तस्य धनं हरेद्' इति ( मनुस्मृति ) वचनात् ।

तत्र गृहस्थस्य तु नाधिकारः—असमानधर्मत्वेनाप्रत्यासन्नत्वात् । अतएव वानप्रस्थब्रह्मचारिणोर्नाधिकारः संन्यास पीठाधिकारस्य समानयोगपट्टस्य च प्रत्यासन्नत्वात् ।

तस्याप्यलाभे दक्षिणामूर्तिमिव पीठस्थं गुरुदेहं सिद्धिं गतं साक्षीकृत्य कश्चियोग्यं ब्राह्मणं ज्ञातकुलदेशगोत्रजातिनामानमातुराश्रमेण दीक्षयित्वा तत्परम्परानुकूलं योगपट्टं विधाय ब्राह्मणैरधिकारदानेनाधिकारी कल्पनीयः । तद्धस्तेनैव तदौर्ध्वदैहिकं कारयितव्यं न साधारणेन संन्यासिनाधिकारिणामप्रत्यासन्नत्वात्, तथैव प्रसिद्धशृङ्गगिरि ( ङ्गेरी ) प्रभृतिमठेषु व्यवहारदर्शनात्, बाधाभावात्, उक्तमनुवचनाच्च । एवं चैकस्मिन्मठीयपीठे मठान्तरीयपीठगत आचार्यो नोपवेष्टुमधिकर्तुमुपदेष्टुं च नार्हति—असन्निहितत्वादितरोपदिष्टस्यैतत्पीठसम्बन्धायोगात्, एतत्पीठस्थितगुरुपरम्परायामप्रविष्टत्वेन गुरुपरम्पराविच्छेदात्, अनाद्यविच्छिन्नगुरुपरम्पराप्राप्तसिंहासनारूढेत्येवं लेखविरोधात्, 'यः स्वां देवतामतिप्रजते प्रस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति' इति ( तैत्ति० ) श्रुतेरसाधारणचन्द्रमौलीश्वरातिरिक्तदेवतानां तत्तन्मठे भेदात्तद्देवताराधनेऽभ्यनुज्ञाभावाच्च ।

एवं च प्रैषोच्चारकाले यावन्ति वस्तूनि लब्धानि ततोऽतिरिक्तस्य त्रैलोक्यस्य तदा त्यागाद् आसादितदण्डकमण्डल्वादिवस्तुनस्त्यक्तप्रायस्य देहधारणार्थं गुर्वनुज्ञया ब्राह्मणानुज्ञया वा गृहीतत्वात्ततोऽतिरिक्तानां ग्रहणस्य ' मा गृधः कस्यस्विद्धनम् ' इति ( मा० सं० ४० । १ ) श्रुत्या निषिद्धत्वात्तद्ग्रहणे वान्ताशित्वप्रसङ्गाच्च नान्यदीयमठीयपीठादिरिक्थाधिकारी भवेदिति दिक् ।

## श्रीमच्छङ्कराचार्यजयन्त्युत्सवकालविचारः—

...षण्मताम... ईश्वरावतारत्वेनाचार्या जयन्त्युत्सवयोग्या रामकृष्णादिवत् । समाचर्यते च शिष्टैर्माध्वैः ...न्ये च जान... रात्रौ शंकरावतारनिमित्तः तन्मूलगुरोस्तच्छिष्यपरम्पराप्रविष्टत्वेनारब्धः श्रीशंकराचार्य-... ( शिवनिमित्तोत्सवव्याजेन ) ।

...निरूपणीयत्र ... शिवरात्रिव्रतप्रतिबन्धेन । वैशाखशुक्लपक्षे पञ्चम्यां ...न्त्राणां लघूपन्यासानां ... रे सम्प्रतिपन्नः । प्रथमातिरिक्तानामाचा-... । एतादृशोपन्यासैर्विन... इति दिगिति केचिदाहुः। वैशाखशुक्लपक्षे ...रार्थप्रतिपादकग्रन्थाभावाद्द... ( ... ...शाखशुक्लपूर्णिमायां ( १९ ) व्यासद-... कत्वाच्चाध्येतव्यमेव । ... शेने, ... ...र्थगर्भिता सरला चेति ... ) ...ति च वैशाखे जन्मतिथ्यादिसमावेशमाश्रित्य सर्वेपि तदनु... । ( ९... )...रभ्य तत्पूर्णिमापर्यन्तं श्रीशंकराचार्याणां जयन्तीमहोत्सवं सर्वत्र समाचरन्तीति परे ॥

उपलभ्य बहून् ग्रन्थानाचार्यविषयान्नियम् ।
कृतिरित्थं विरचिता तत्समालोचनान्मया ॥ १ ॥
विचिन्त्य बहुपण्डितोक्तिषु बहून्विरोधानस-
म्भवादिकमथो चिरात्समयपीठकृत्याश्रयान् ।
यथामति कृता कृतिः सुमनसां गुणग्राहिणा-
मिव प्रियकृदस्तु दोषबहुलाऽप्यसौ धीमताम् ॥ २ ॥
पशुपादेन्दुनन्दग्लौमिताङ्ग्लशकवत्सरे ( १९१४ )
खाद्र्यङ्केन्दुमिते (१९७०) पौषे समाप्ता वैक्रमे त्वियम् ॥ ३ ॥
शिष्टार्थलेखः क्रियते साधनान्तरयोगतः ।
विदुषामाशयं ज्ञात्वा न्यूनाधिक्यविशेषकैः ॥ ४ ॥

॥ इति शिवम् ॥

इति श्रीमन्महीशूर ( मैसूर ) पुरीविराजमानश्रीयुवराजनरसिंहराजवोडयराख्यसोदरसंगत-
दिव्यरत्नसिंहासनारूढश्रीमत्कृष्णराजवोडयर्महाराजाश्रितेन श्रीमत्कौण्डिन्यकुलाव-
तंसेन पण्डितधर्माधिकारिबहुनिबन्धकृच्छ्रीकाशीशेषनामान्तरवल्लागेश्वर-
शास्त्रिपौत्रेण पण्डितधर्माधिकारिश्रीवेङ्कटसुब्रह्मण्यशास्त्रितनूजेन-
महाविद्वद्वेङ्कटाचलशर्मणा विरचितं श्रीमच्छङ्कराचार्यचरित्रं
समाप्तम् ।



# सूचना-

इदं च ब्रह्मसूत्रशारीरिकभाष्यं =( शाङ्करभाष्यं ), रत्नप्रभा-भामती -न्यायनिर्णय-( आनन्दगिरीय ) व्याख्यात्रयेण सह तत्रतत्र बहुधा मुद्रितमपि लोकानामास्तिकशिखामणीनां विदुषां तथाऽध्येतॄणामपि तद्दौर्लभ्यं, तथान्यत्रातिसूक्ष्माक्षरैर्मुद्रापणेन क्वचिन्नेत्रपाटवहीनानामेतद्ग्रन्थावलोकनकुतूहलिनामपि तदवलोकनसामर्थ्यशून्यतयाऽतीव क्लिश्यतामस्मद्भारतीयगोत्रप्रवर्तकमहर्षिकुलालङ्काराणां सञ्जातक्लेशदूरीकरणायान्येपि बालानामध्येतॄणामध्यापकानां च यूनां नेत्रदौर्बल्यसूक्ष्माक्षरावलोकनजनितक्लेशापनुत्तये तथाभूतक्लेशानुत्पत्तये च महता परिश्रमेण पण्डितानां संशोधनादिसाहाय्येन च स्थूलोत्तमसीसकस्फुटाक्षरैश्चिक्कणस्वच्छपत्रेषु मुद्राप्यैकत्रबद्धं स्थूलोत्तमरक्षापत्रसहितमिदं पुस्तकं सर्वेषां श्रेयसे भूयसे भूयादिति पर्यालोच्य व्ययमात्रौपयिकमूल्येन सज्जीकृतं सत्प्रकाशते । तेन व्ययीकृतधनेभ्योस्मभ्यमुक्तमूल्यप्रापणेनैतत्पुस्तकं परिगृह्य श्रवणमननादिना परमात्मानुसन्धानतत्परास्तदानन्दतुन्दिलाश्च भूत्वाऽचिरेणैव सर्वत्रैतच्छास्त्रप्रचारादिकेन सत्कृत्येन मामप्यनुगृह्णीयुरित्यभ्यर्थये इति शम् ॥

श्रीमद्धितेच्छुः-पण्डितजनहितैषी-

**श्रीकृष्णदासात्मजः-क्षेमराजः,**

"श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणालयाध्यक्षः-मोहमयी.

षणभता...
...न्ये च जान...
...निरूपणात्तत्र ...
...न्त्राणां लघूपन्यासानां...
... । एतादृशोपन्यासैर्विन...
...रार्थप्रतिपादकग्रन्थाभावाद...
...कृत्वावाध्येतव्यमेव । भ...
...र्थगर्भिता सरला चेति ...)
...।( ९६ ...

# अथ शान्तिपाठक्रमः—

श्रीमद् द्वैपायनप्रणीतब्रह्मसूत्रश्रीमच्छंकरभगवत्पादकृतभाष्यस्याध्ययनाध्यापनादौ पूर्वं शान्तिपाठः कार्यः । यथा—

ॐ 'नारायणं पद्मभुवं वसिष्ठं[1] शक्तिं च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ( १ )
श्रीशंकराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम् ।
तं त्रोटकं वार्तिककारमन्यानस्मद्गुरून्सन्ततमानतोऽस्मि ( २ )
श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादं शंकरं लोकशंकरम्' ( ३ )

ॐ 'शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम्' ( तै० उ० १।१।१ ) ॐ शान्तिः शान्तिः शान्तिः ।

ॐ 'सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै' । ॐ शान्तिः शान्तिः शान्तिः ।

ॐ 'यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्योऽध्यमृतात्सम्बभूव । स मेन्द्रो मेधया स्पृणोतु अमृतस्य देवधारणो भूयासम् । शरीरं मे विचर्षणिः । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधयापिहितः । श्रुतं मे गोपाय' ।

ॐ 'अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि । द्रविणꣳसवर्चसम् । सुमेधा अमृतोक्षितः । इति त्रिशङ्कोर्वेदानुवचनम्' ( तै० उ० १।१० )।

ॐ 'भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देव हितं यदायुः' ( तै० उ० ) ॐ शान्तिः शान्तिः शान्तिः ।

ॐ 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' ।
ॐ शान्तिः शान्तिः शान्तिः ।

ॐ 'आप्यायन्तु ममाङ्गानि, वाक्पाणिश्चक्षुः श्रो[illegible] सर्वाणि, सर्वं ब्रह्मोपनिषदं, माहं ब्रह्म निराकुर्यां[illegible] निराकरणं मे अस्तु, य आत्मनि निरते [illegible]
ॐ शान्तिः शान्तिः शान्तिः ।



---

[1] अयं वशिष्ठो ब्रह्मणो मानसः पुत्रो निमि[illegible] स्पष्टं चैतच्छारीरके भाष्ये ( ब्रह्मसू० ३।३।३ ) ।

ॐ 'वाङ्मे मनसि प्रतिष्ठिता। मनो वाचि प्रतिष्ठितमाविरासीर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्सन्दधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवतु अवतु मामवतु वक्तारमवतु वक्तारम्' ( ऐत० उ० २।७ )।

ॐ शान्तिः शान्तिः शान्तिः।

ॐ 'भद्रं नो अपि वातयमनः०–ॐ शान्तिः शान्तिः शान्तिः।

ॐ 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ( सर्वम् )। तꣳहोदेवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये'।

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो नमो महद्भ्यो नमो गुरुभ्यः।

ॐ सर्वोपप्लवरहितः प्रज्ञानघनः प्रत्यगर्थो ब्रह्मैवाहमस्मि ब्रह्मैवाहमस्मि। इति।

( ततो भाष्यस्याध्ययनमध्यापनं च )।

## अध्ययनाऽध्यापनान्ते शान्तिपाठक्रमः–

ॐ शं नो मित्रः शं वरुणः। शन्नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मावादिषम्। ऋतमवादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम्। ॐ शान्तिः शान्तिः शान्तिः।

ॐ 'सहनाववतु०–माविद्विषावहै' ॐ शान्तिः शान्तिः शान्तिः।

ॐ 'यश्छन्दसामृषभो०–श्रुतं मे गोपाय'।

ॐ 'अहं वृक्षस्यरेरिवा०–इति त्रिशङ्कोर्वेदानुवचनम्।

ॐ 'भद्रङ्कर्णेभिः०–देवहितं यदायुः' ॐ शान्तिः शान्तिः शान्तिः॥

ॐ ' पूर्णमदः पूर्णमिदं०–पूर्णमेवावशिष्यते ' ॐ शान्तिः शान्तिः शान्तिः।

ॐ ' आप्यायन्तु ममाङ्गानि०–तेमयिसन्तु तेमयिसन्तु ' ॐ शान्तिः शान्तिः शान्तिः।

ॐ ' वाङ्मे मनसि प्रति०–मवतुवक्तारम् ' ॐ शान्तिः शान्तिः शान्तिः।

ॐ भद्रं नो अपिवातयमनः०–ॐ शान्तिः शान्तिः शान्तिः।

ॐ यो ब्रह्माणं विदधाति०–शरणमहं प्रपद्ये '।

षण्म [illegible] 'यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः।व्याख्याताः सर्व वेदान्तास्तान्नित्यं प्रणतोस्म्यहम्(१)

न्ये च जा [illegible] श्रुतिपुराणानामालयं करुणालयम्। नमामि भगवत्पादं शङ्करं लोकशङ्करम् ( २ )

[illegible] केशवं बादरायणम्। सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः ( ३ )

निरूपणास्य [illegible] प्रति [illegible]

[illegible] न्त्राणां लघूपन्यासानां [illegible] निधये सर्वविद्यानां दक्षिणामूर्तये नमः ( ४ )

[illegible] । एतादृशोपन्यासैर्वि [illegible] युतम्।

[illegible] रार्थप्रतिपादकग्रन्थाभावाद् [illegible] तोऽस्मि ' ( ५ )

( [illegible] कृत्वाध्याध्येतव्यमेव। [illegible] भ्यो वंशऋषिभ्यो नमो महद्भ्यो नमो

गुरुभ्यः [illegible] र्थगर्भिता सरला चेति [illegible] ) [illegible] र्थो ब्रह्मैवाहमस्मि ब्रह्मैवाहमस्मि ' ॐ।

[illegible] । ( ९ [illegible] ठक्रमः॥

ॐ.

# अथ रत्नप्रभा–भामती–न्यायनिर्णयाख्यव्याख्यात्रयसहितब्रह्मसूत्रश्रीशाङ्करभाष्यगतविषयाणामनुक्रमणिका ।



ॐ.

# अथ रत्नप्रभा–भामती–न्यायनिर्णयाख्यव्याख्यात्रयसहितब्रह्म-सूत्रश्रीशाङ्करभाष्यगतविषयाणामनुक्रमणिका ।



## ५ ईक्षत्यधिकरणम् (५–सू०)



शुचं शोकं द्रवति [illegible]

१ [illegible]चेतनेश्वराधिष्ठितेषु चतुर्विधेषु पृथिव्यप्तेजोवायुपरमाणुषु वेदान्तवाक्यानां समन्वय इत्येवमर्थाधायककाणादिमतमादिपदेन ग्राह्यम् ।

[illegible] शोकं द्रवति [illegible]

१ [illegible] चेतनेश्वराधिष्ठितेषु चतुर्विधेषु पृथिव्यप्तेजोवायुपरमाणुषु वेदान्तवाक्यानां समन्वय इत्येवमर्थाभिधायककाणादिमतमादिपदेन ग्राह्यम्।

## ६ आनन्दमयाधिकरणम् (१२–१९–सू०)



## ७ अन्तरधिकरणम् (२०, २१–सू० )

| विषयाः | पृष्ठसंख्या. | पंक्तिसंख्या. |
|---|---|---|

अस्पष्टब्रह्मलिङ्कोपास्यवाक्यजातविचाराख्ये रूढिपदवहुलानां सविशेषवस्तुपराणां वाक्यानां ब्रह्मणि समन्वयप्रतिपादके द्वितीयपादे–

## १ सर्वत्र सिद्धयधिकरणम् (१-८ सू०)



## ३ गुहाप्रविष्टाधिकरणम् (११-१२ सू०)



## ४ अन्तराधिकरणम् (१३-१७ सू०)

## ५ अन्तर्याम्यधिकरणम् (१८–२०सू०)



## ६ अदृश्यत्वाधिकरणम् (२१–२३ सू०)



## ७ वैश्वानराधिकरणम् (२४–३२सू०)

## ६ वाक्यान्वयाधिकरणम् ( १९--२२ सू० )

## ४ समुदायाधिकरणम् ( १८-२७ सू० )

## ५ उपलब्ध्यधिकरणम् ( २८–३२ सू० )

## ६ एकस्मिन्नसम्भवाधिकरणम् (३३–३६ सू०)

| विषयाः | पृष्ठसंख्या. | पंक्तिसंख्या. |
|---|---|---|

## २ मातरिश्वव्याख्यानाधिकरणम् (८ सू०)



## ३ असम्भवाधिकरणम् (९ सू०)



## ४ तेजोऽधिकरणम् (१० सू०)

प्राणोत्पत्त्यादिश्रुतिविरुद्धश्रुतिविरोधपरिहारके लिङ्गशरीरश्रुतिविरोधपरिहारके चतुर्थे पादे—

**१ प्राणोत्पत्त्यधिकरणम् ( १–४ सू० )**

वैराग्याद्यत्वम्पदार्थब्रह्मतत्त्ववाक्यार्थोपासन(संन्यासा)द्युपायमुक्त्याद्यर्थप्रतिपादके तृतीयेऽध्याये जीवस्य ( पञ्चाग्निविद्यामाश्रित्य ) संसारगतिप्रभेदप्रतिपादके प्रथमे पादे—

## १ तदन्तरप्रतिपत्त्यधिकरणम् ( १–७ सू० )

## २ कृतात्ययाधिकरणम् ( ८–११ सू० )

## ३ अनिष्टादिकार्यधिकरणम् (१२–२१सू०)

| विषयाः | पृष्ठसंख्या. पंक्तिसंख्या. |
|---|---|



## ७ पराधिकरणम् (३१-३७ सू०)



## ८ फलाधिकरणम् (३८-४१ सू०)

(तत्पदवाच्यार्थनिरूपणम्)

| विषयाः | पृष्ठसंख्या. | पंक्तिसंख्या. |
|---|---|---|

---

चतुर्थेऽध्याये परविद्याफलैकदेशब्रह्मभावाविर्भाव-ब्रह्मगुणविद्याफलसर्वैश्वरतुल्यभोगत्वावधारके चतुर्थपादे—

१ सम्पद्याविर्भावाधिकरणम् ( १–३ सू० )



२ अविभागेन दृष्टत्वाधिकरणम् ( ४ सू० )



३ ब्राह्माधिकरणम् ( ५–७ सू० )

इति टीकात्रयोपेतब्रह्मसूत्रशाङ्करभाष्यविषयानुक्रमणिका समाप्ता ॥

# श्रीमद्बादरायणप्रणीतब्रह्मसूत्राणामकारादिवर्णक्रमः ।



विषयाः पृष्ठसंख्या. पंक्तिसंख्या.



इति टीकात्रयोपेतब्रह्मसूत्रशाङ्करभाष्यविषयानुक्रमणिका समाप्ता ।।

# श्रीमद्बादरायणप्रणीतब्रह्मसूत्राणामकारादिवर्णक्रमः ।



पृ. अ. पा. सू.



तत्सद्ब्रह्मणे नमः ।

# अथ ब्रह्मसूत्रशांकरभाष्यम्



## रत्नप्रभा–भामती–न्यायनिर्णय–टीकात्रयसमेतम् ।

## प्रथमोऽध्यायः १.

### ( उपोद्घातः । )

रत्नप्रभा श्रीगोविन्दप्रणीता ।

ॐ यमिह कारुणिकं शरणं गतोऽप्यरिसहोदर आप महत्पदम् ।
तमहमाशु हरिं परमाश्रये जनकजाङ्कमनन्तसुखाकृतिम् ॥ १ ॥

श्रीगौर्यां सकलार्थदं निजपदाम्भोजेन मुक्तिप्रदं
प्रौढं विघ्नवनं हरन्तमनघं श्रीढुण्ढितुण्डासिना ।
वन्दे चर्मकपालिकोपकरणैर्वैराग्यसौख्यात्परं
नास्तीति प्रदिशन्तमन्तविधुरं श्रीकाशिकेशं शिवम् ॥ २ ॥

यत्कृपालवमात्रेण मूको भवति पण्डितः ।
वेदशास्त्रशरीरां तां वाणीं वीणाकरां भजे ॥ ३ ॥

कामाक्षीदत्तदुग्धप्रचुरसुरनुतप्राज्यभोज्याधिपूज्य–
श्रीगौरीनायकाभित्प्रकटनशिवरामार्यलब्धात्मबोधैः ।
श्रीमद्गोपालगीर्भिः प्रकटितपरमाद्वैतभासा स्मितास्य–
श्रीमद्गोविन्दवाणीचरणकमलगो निर्वृतोऽहं यथालिः ॥ ४ ॥

श्रीशङ्करं भाष्यकृतं प्रणम्य व्यासं हरिं सूत्रकृतं च वच्मि ।
श्रीभाष्यतीर्थे परहंसतुष्ट्यै वाग्जालबन्धच्छिदमभ्युपायम् ॥ ५ ॥

विस्तृतग्रन्थवीक्षायामलसं यस्य मानसम् ।
व्याख्या तदर्थमारब्धा भाष्यरत्नप्रभाभिधा ॥ ६ ॥

---

१ मोक्षपुर्यां श्रीकांच्यां श्रीकामाक्ष्या दत्तं पायसं देवैरपि स्तुतं ( प्राज्यं ) सम्पूर्णं प्रकृष्टाज्ययुक्तं वा यद्भोज्यमन्नं तेनाधिपूज्याः श्रीशिवरामयोगिनः, किञ्च शिवश्चासौ रामश्चेति स्वनाम्ना श्रीगौरीनायकयोरभेदं प्रकटयन्ति, तेभ्यो गुरुभ्यो लब्ध आत्मबोधो यैः श्रीमद्गोपालसरस्वतीभिस्तैरित्यर्थः । २ अत्र भाष्ये कठिनवाग्रूपेण जालेन यो बन्धः जालबद्धपक्षिणामिव परमहंसानां क्लेशकरस्तन्नाशकमभीष्टमुपायं वच्मीत्यर्थः ।

श्रीमच्छारीरकं भाष्यं प्राप्य वाक् शुद्धिमाप्नुयात् ।
इति श्रमो मे सफलो गङ्गां रथ्योदकं यथा ॥ ७ ॥
यदज्ञानसमुद्भूतमिन्द्रजालमिदं जगत् ।
सत्यज्ञानसुखानन्तं तदहं ब्रह्म निर्भयम् ॥ ८ ॥

भामती श्रीवाचस्पतिमिश्रप्रणीता ।

अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो विवर्ता यस्यैते वियदनिलतेजोऽब्‍अवनयः ।
यतश्चाभूद्विश्वं चरमचरमुच्चावचमिदं नमामस्तद्ब्रह्मापरिमितसुखज्ञानममृतम् ॥ १ ॥
निःश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च भूतानि । स्मितमेतस्य चराचरमस्य च सुप्तं महाप्रलयः ॥ २ ॥
षड्भिरङ्गैरुपेताय विविधैरव्ययैरपि । शाश्वताय नमस्कुर्मो वेदाय च भवाय च ॥ ३ ॥
मार्तण्डतिलकस्वामिमहागणपतीन्वयम् । विश्ववन्द्यान्नमस्यामः सर्वसिद्धिविधायिनः ॥ ४ ॥
ब्रह्मसूत्रकृते तस्मै वेदव्यासाय वेधसे । ज्ञानशक्त्यवताराय नमो भगवतो हरेः ॥ ५ ॥
नत्वा विशुद्धविज्ञानं शंकरं करुणाकरम् । भाष्यं प्रसन्नगम्भीरं तत्प्रणीतं विभज्यते ॥ ६ ॥
आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् । रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ॥ ७ ॥

न्यायनिर्णय आनन्दगिरिप्रणीतः ।

अध्यस्तान्ध्यमपूर्वमर्थधिषणैर्ग्राह्यं पुमर्थास्पदं लक्ष्यं लक्षणभेदतः श्रुतिगतं निर्धूतसाध्यार्थकम् ॥
आम्नायान्तविभातविश्वविभवं सर्वाविरुद्धं परं सत्यं ज्ञानमनर्थसार्थविधुरं ब्रह्म प्रपद्ये सदोम् ॥ १ ॥
यो लोकं सकलं पुनाति निगमा यं प्राहुरेकान्ततो व्याप्तं येन जगज्जगन्ति सततं यस्मै नमस्कुर्वते ॥
यस्मादाविरभूदशेषममरा यस्य प्रसादार्थिनो यस्मिन्पर्यवसास्यति स्फुरदिदं तस्मै नमो विष्णवे ॥ २ ॥
योऽनुप्राप्तप्रतेजा जनयति सकलानालयं यं लभन्ते सर्वे निर्वान्ति येन श्रुतिपथपथिका वौषडातन्वते च ॥
यस्मै यस्मादकस्मात्परिभवचकिता यस्य संरोचयन्ते चिन्ता यस्मिन्प्रवृत्ता भृशविशदधियः संश्रये तं गिरीशम् ३
भिन्दानमेनांसि दुरासदानि प्रत्यूहवर्गप्रभवानि तानि । राजानमाघातपरम्पराणामारादुपासे गिरिजाभिजातम्
श्रीमद्व्यासपयोनिधिर्निधिरसौ सत्सूक्तिपङ्क्तिस्फुरन्मुक्तानामनवद्यहृद्यविपुलप्रद्योतिविद्यामणिः ॥
क्षान्तिः शान्तिधृती दयेतिसरितामेकान्तविश्रान्तिभूर्भूयान्नः सततं मुनीन्द्रमकरश्रेणीश्रयः श्रेयसे ॥ ५ ॥
यद्भाष्याम्बुजजातजातमधुरप्रेयोमधुप्रार्थनासार्थव्यग्रधियः समग्रमरुतः स्वर्गेऽपि निर्वेदिनः ॥
यस्मिन्मुक्तिपथो मुमुक्षुमुनिभिः संप्रार्थितः संबभौ तस्मै भाष्यकृते नमोऽस्तु भगवत्पादाभिधां बिभ्रते ॥ ६ ॥
यत्पादाम्बुजचञ्चरीकधिषणा निर्वाणमार्गाधिगा पङ्क्तिर्मुक्तनिसर्गदुर्गदुरिता वाचंयमानामियम् ॥
यस्मिन्नित्यमिदं शमादि समभूद्बोधाङ्कुरो मे यतः शुद्धानन्दमुनीश्वराय गुरवे तस्मै परस्मै नमः ॥ ७ ॥
मातर्नतोऽस्मि भवतीमथ चार्थये त्वां चेतः सरस्वति परास्य पराञ्चमर्थम् ।
शारीरके महदनुग्रहसंप्रसन्नमेकाग्रमस्तु वचसा सह सम्यगर्थे ॥ ८ ॥
श्रद्धाभक्ती पुरोधाय विद्यायाऽऽगमभावनाम् । श्रीमच्छारीरके भाष्ये करिष्ये न्यायनिर्णयम् ॥ ९

रत्नप्रभा ।

इह खलु "स्वाध्यायोऽध्येतव्यः" [ शतपथब्रा. ११।५।७ ] इति नित्याध्ययनविधिनाऽधीतसाङ्गस्वाध्याये "तद्विजिज्ञासस्व" [ आ. ११ । ३ । १ ] "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" [ बृह. २।४।५ ] इति श्रवणविधिरुपलभ्यते ॥ तस्यार्थः—अमृतत्वकामेनाद्वैतात्मविचार एव वेदान्तवाक्यैः कर्तव्य इति ॥ तेन काम्येन नियमविधिनाऽर्थादेव भिन्नात्मशास्त्रप्रवृत्तिः वैदिकानां पुराणादिप्राधान्यं वा निरस्यत इति वस्तुगतिः ॥ तत्र कश्चिदिह जन्मनि जन्मान्तरे वाऽनुष्ठितयज्ञादिभिर्नितान्तं निर्मलस्वान्तो 'ऽस्य श्रवणविधेः को विषयः, किं फलं, कोऽधिकारी, कः सम्बन्धः,' इति जिज्ञासते ॥ तं जिज्ञासुमुपलभमानो भगवान्बादरायणस्तदनुबन्धचतुष्टयं श्रवणात्मकशास्त्रारम्भप्रयोजकं न्यायेन निर्णेतुमिदं सूत्रं रचयाञ्चकार "अथातो ब्रह्मजिज्ञासा" [ १।१।१(१) ] इति। नन्वनुबन्धजातं विधिसन्निहितार्थवादवाक्यैरेव ज्ञातुं शक्यम् ॥ तथाहि—"तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" [ छां. ८ । १ । ६ ] इति श्रुत्या यत् कृतकं तदनित्यमिति न्यायवत्या "न जायते म्रियते वा विपश्चिद्" "यो वै भूमा तदमृतमतोऽन्यदार्त्तम्" [ छां. ७ । २४ । १ ] इत्यादिश्रुत्या च भूमात्मा नित्यस्ततोऽन्यदनित्यमिति विवेको लभ्यते ॥ कर्मणा कृष्यादिना चितः सम्पादितः सस्यादिर्लोको भोग्य इत्यर्थः ॥ विपश्चित् नित्यज्ञानस्वरूपः ॥ "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" [ मुण्ड. १ । २ । १२ ] "आत्मनस्तु कामाय सर्वं प्रियं भवति" [ बृह. २ । ४ । ५ ] इत्यादिश्रुत्या अनात्ममात्रे वैराग्यं लभ्यते ॥ परीक्ष्य अनित्यत्वेन निश्चित्य, ( अकृत्तोः ) मोक्षः, कृतेन कर्मणा, नास्तीति ॥ कर्मतत्फलेभ्यो वैराग्यं प्राप्तवानित्यर्थः ॥

भामती ।

अथ यदसंदिग्धमप्रयोजनं च न तत्प्रेक्षावत्प्रतिपित्सागोचरः, यथा समनस्केन्द्रियसंनिकृष्टः स्फीतालोकमध्यवर्ती घटः, करटदन्ता वा, तथा चेदं ब्रह्मेति व्यापकविरुद्धोपलब्धिः । तथाहि, 'बृहत्त्वाद्बृंहणत्वाद्वात्मैव ब्रह्मेति गीयते, स चायमाकीटपतङ्गेभ्य आ च देवर्षिभ्यः प्राणभृन्मात्रस्येदंकारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो विवेकेन 'अहं' इत्यसंदिग्धाविपर्यस्तापरोक्षानुभवसिद्ध इति न जिज्ञासास्पदम् । न हि जातु कश्चिदत्र संदिग्धे—ऽहं वा नाहं वेति । न च विपर्यस्यति—नाहमेवेति । न चाहं कृशः स्थूलो गच्छामीत्यादिदेहधर्मसामानाधिकरण्यदर्शनाद्देहालम्बनोऽयमहंकार इति सांप्रतम् । तदालम्बनत्वे हि योऽहं बाल्ये पितरावन्वभवं स एव स्थाविरे प्रणप्तॄननुभवामीति प्रतिसंधानं न भवेत् । न हि बालस्थविरयोः

आनन्दगिरीय-न्यायनिर्णयः ।

नित्याध्ययनविध्युपादापितवेदान्तवचोभिरापाततः प्रतिपन्नं शास्त्रारम्भौपयिकमनुबन्धजातं न्यायतो निर्णेतुं भगवान्बादरायणः सूत्रितवान् 'अथातो ब्रह्मजिज्ञासा' इति । तत्र प्रमातृत्वादिबन्धस्याध्यासत्वं धर्ममीमांसया ब्रह्ममीमांसाया गतार्थताभावो विशिष्टाधिकारिसंभवो विषयादिसत्त्वं चेति चत्वारोऽर्थाः सूचिताः । तथाहि—सत्यत्वे बन्धस्य बद्धाबद्धयोर्जीवब्रह्मणोरैक्यानुपपत्तेः सत्यस्य च ज्ञानादनिवृत्तेर्ज्ञानस्य चाज्ञानमात्रविरोधित्वादुत्तरज्ञानस्य च विरोधिगुणतया पूर्वज्ञानादिनिवर्तकत्वाद्विषयप्रयोजनसिद्धिहेतुतया बन्धस्याध्यासता सूचिता । पूर्वसिद्धत्वे वेदान्तविचारस्य विशिष्टाधिकारिणश्चाभावे तं प्रति तत्कर्तव्यतोक्तेरयोगादगतार्थत्वं विशिष्टाधिकारिसंभवश्च ध्वनितः । त्वमर्थदृष्टबन्धस्यान्यदीयज्ञानादनिवृत्ते-

१ अत्र विधौ कालविशेषानुपादानान्नित्यत्वमर्थसिद्धम् । २ अधिकारिणीति शेषः । ३ भिन्नात्मप्रतिपादकशास्त्रप्रवृत्तिरित्यर्थः । इदं निरस्यते इत्यनेनान्वेति क० पा०—आत्मशास्त्रप्रवृत्तिः ।

रत्नप्रभा ।

"शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येद्"[1] [ बृह. ।४।४।२३ ] इति श्रुत्या शमादिषट्कं लभ्यते ॥ "समाहितो भूत्वा" इति काण्वपाठः ॥ उपरतिः संन्यासः ॥ "न स पुनरावर्तते" [ कालाग्निरु. २ ] इति स्वयंज्योतिरानन्दात्मकमोक्षस्य नित्यत्वश्रुत्या मुमुक्षा लभ्यते ॥ तथा च विवेकादिविशेषणवानधिकारीति ज्ञातुं शक्यम् ॥ यथा—"एतम रात्रीरुपयन्ति" इति रात्रिसत्रविधौ प्रतितिष्ठन्तीत्यर्थवादस्थप्रतिष्ठाकामः । तद्वत् ॥ तथा "श्रोतव्यः" [ बृह. २ । ४ । ५ ] इत्यत्र प्रत्ययार्थस्य नियोगस्य प्रकृत्यर्थो विचारो विषयः ॥ विचारस्य वेदान्ता विषय इति शक्यं ज्ञातुम् ॥ 'आत्मा द्रष्टव्यः' इत्यद्वैतात्मदर्शनमुद्दिश्य 'श्रोतव्यः' इति विचारविधानात् ॥ न हि विचारः साक्षाद्दर्शनहेतुः, अप्रमाणत्वात् । अपि तु प्रमाणविषयत्वेन ॥ प्रमाणं चाद्वैतात्मनि वेदान्ता एव ॥ "तं त्वौपनिषदं पुरुषं" "वेदान्तविज्ञानसुनिश्चितार्थाः" [ मुण्ड. ३ । २ । ६ ] इति श्रुतेः ॥ वेदान्तानां च प्रत्यग्ब्रह्मैक्यं विषयः ॥ "तत्त्वमसि" [ छा. ६ । ८ । ७–१६ ] "अहं ब्रह्मास्मि" [ बृह. १।४।१० ] इति श्रुतेः ॥ एवं विचारविधेः फलमपि ज्ञानद्वारा मुक्तिः ॥ "तरति शोकमात्मवित्" [ छां. ७ । १ । ३ ] "ब्रह्मविद् ब्रह्मैव भवति"[2] इत्यादिश्रुतेः ॥ तथा सम्बन्धोऽप्यधिकारिणा विचारस्य कर्त्तव्यतारूपः, फलस्य प्राप्यतारूप इति यथायोगं सुबोधः ॥ तस्मादिदं सूत्रं व्यर्थमिति चेत्, न ॥ तासामधिकार्यादिश्रुतीनां स्वार्थे तात्पर्यनिर्णायकन्यायसूत्राभावे किं विवेकादिविशेषणवानधिकारी—उत अन्यः ? किं वेदान्ताः पूर्वतन्त्रेण गतार्था अगतार्था वा ? किं ब्रह्म प्रत्यगभिन्नं न वा ? किं मुक्तिः स्वर्गादिवल्लोकान्तरम्, आत्मस्वरूपा वेति संशयानिवृत्तेः ॥ तस्मादागमवाक्यैरा-

भामती ।

शरीरयोरस्ति मनागपि प्रत्यभिज्ञानगन्धो येनैकत्वमध्यवसीयेत । तस्माद्येषु व्यावर्तमानेषु यदनुवर्तते तत्तेभ्यो भिन्नं यथा कुसुमेभ्यः सूत्रम् । तथा च बालादिशरीरेषु व्यावर्तमानेष्वपि परस्परमहंकारास्पदमनुवर्तमानं तेभ्यो भिद्यते । अपि च स्वप्नान्ते दिव्यं शरीरभेदमास्थाय तदुचितान्भोगान्भुञ्जान एव प्रतिबुद्धो मनुष्यशरीरमात्मानं पश्यन्नाहं देवो मनुष्य एवेति देवशरीरे बाध्यमानेऽप्यहमास्पदमबाध्यमानं शरीराद्भिन्नं प्रतिपद्यते । अपि च योगव्याघ्रः शरीरभेदेऽप्यात्मानमभिन्नमनुभवतीति नाहंकारालम्बनं देहः । अत एव नेन्द्रियाण्यप्यस्यालम्बनम्, इन्द्रियभेदेऽपि योऽहमद्राक्षं स एवैतर्हि स्पृशामीत्यहमालम्बनस्य प्रत्यभिज्ञानात् । विषयेभ्यस्त्वस्य विवेकः स्थवीयानेव । बुद्धिमनसोश्च करणयोरहमिति कर्तृप्रतिभासप्रत्ययानालम्बनत्वायोगः ।

आनन्दगिरीय—न्यायनिर्णयः ।

स्तदर्थज्ञानमपि तन्निवर्हित्वमर्थविषयमेवेत्यर्थात्तदैक्यं विषयः सूचितः । मुमुक्षोरथशब्दद्योतितस्य ज्ञानाय विचारविधानात्तत्साध्यज्ञानान्मुक्तिः सूचिता । ब्रह्मज्ञानाय च विचारविधानाद्ब्रह्मणः शक्यप्रतिपाद्यतया वेदान्तैः संबन्धोऽपि दर्शितः । तदेतद्भाष्यकृद्यथाक्रमं व्युत्पादयिष्यति । अस्य चाधिकरणस्य प्राथम्यान्नाधिकरणसंगतिः । उत्तराधिकरणसंगतिस्तु तस्यैवानेनेति नास्योच्यते । विचारविध्यपेक्षितविषयाद्यर्पकश्रुतिभिरस्योत्थानादुत्थाप्योत्थापकत्वं श्रुतिसंगतिः । इदं च धर्मजिज्ञासासूत्रवदुपोद्घाततया 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते' इतिन्यायेन शास्त्रेण संबध्यते । विचारारम्भोपयोगिनीनामधिकार्यादिश्रुतीनां स्वार्थे समन्वयोक्तेरस्य विशेषतः **समन्वयाध्यायसंगतिः** । स्पष्टब्रह्मलिङ्गानां विषया-

१ "आत्मानं पश्यति" इत्येवात्र बृहदारण्ये पाठः । न तु पश्येदिति । २ "ब्रह्म वेद ब्रह्मैव भवति" [ मुण्ड० ३ । २ । ९ ]

रत्नप्रभा ।

पाततः प्रतिपन्नाधिकार्यादिनिर्णयार्थमिदं सूत्रमावश्यकम् ॥ **तदुक्तं प्रकाशात्मश्रीचरणैः**-"अधिकार्यादीनामागमिकत्वेऽपि न्यायेन निर्णयार्थमिदं सूत्रम्" इति ॥ येषां मते श्रवणे विधिर्नास्ति तेषामविहितश्रवणेऽधिकार्यादिनिर्णयानपेक्षणात् सूत्रं व्यर्थमित्यापततीत्यलं **प्रसङ्गेन** ॥ तथा चास्य सूत्रस्य श्रवणविध्यपेक्षिताधिकार्यादिश्रुतिभिः स्वार्थनिर्णयायोत्थापितत्वाद्-**हेतुहेतुमद्भावश्रुतिसङ्गतिः**॥शास्त्रारंभहेत्वनुबन्धनिर्णायकत्वेनोपोद्घातत्वाच्छास्त्रादौ **संगतिः**॥ अधिकार्यादिश्रुतीनां स्वार्थे समन्वयोक्तेः **समन्वयाध्यायसंगतिः** ॥ "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि" [ छां. ६ । ८ । ९ ] इत्यादिश्रुतीनां सर्वात्मत्वादिस्पष्टब्रह्मलिंगानां विषयादौ समन्वयोक्तेः **पादसंगतिः** ॥ **एवं** सर्वसूत्राणां श्रुत्यर्थनिर्णायकत्वात् **श्रुतिसंगतिः** ॥ तत्तदध्याये तत्तत्पादे च समानप्रमेयत्वेन संगतिरूहनीया ॥ **प्रमेयं च**-कृत्स्नशास्त्रस्य ब्रह्म, **अध्यायानां तु**-समन्वयाविरोधसाधनफलानि ॥ तत्र **प्रथमपादस्य** स्पष्टब्रह्मलिङ्गानां : समन्वयः प्रमेयः, **द्वितीयतृतीययोः**-अस्पष्टब्रह्मलिंगानाम्, **चतुर्थपादस्य** पदमात्रसमन्वय इति भेदः ॥ अस्याधिकरणस्य प्राथम्यान्नाधिकरणसंगतिरपेक्षिता ॥ **अथाधिकरणमारभ्यते**-"श्रोतव्यः" इति विहितश्रवणात्मकं वेदान्तमीमांसाशास्त्रं **विषयः** ॥ तत्किमारब्धव्यं न वेति विषयप्रयोजनसम्भवासम्भवाभ्यां **संशयः** ॥ तत्र नाहं ब्रह्मेति भेदग्राहिप्रत्यक्षेण, कर्तृत्वाकर्तृत्वादिविरुद्धधर्म्मवत्त्वलिंगकानुमानेन च, विरोधेन ब्रह्मात्मनोरैक्यस्य विषयस्यासम्भवात्, सत्यबन्धस्य ज्ञानान्निवृत्तिरूपफलासम्भवान्नारम्भणीयम् ॥ इति प्राप्ते-**सिद्धान्तः**-"अथातो ब्रह्मजिज्ञासा" [ व्या. सू. १ । १ । १ ] इति । अत्र श्रवणविधिसमानार्थत्वाय कर्तव्येति पदमध्याहर्तव्यम् ॥ अध्याहृतं च भाष्यकृता "ब्रह्मजिज्ञासा कर्तव्या" इति ॥ तत्र प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्तव्यत्वानन्वयात् प्रकृत्या फलीभूतं ज्ञानमजहल्लक्षणयोच्यते ॥ प्रत्ययेनेच्छासाध्यो विचारो जहल्लक्षणया ॥ तथा च ब्रह्म-

भामती ।

कृशोऽहमन्धोऽहमित्यादयश्च प्रयोगा असत्यप्यभेदे कथंचिन्मञ्चाः क्रोशन्तीत्यादिवदौपचारिका इति युक्तमुत्पश्यामः । तस्मादिदंकारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो व्यावृत्तः, स्फुटतराहमनुभवगम्य आत्मा संशयाभावादजिज्ञास्य इति सिद्धम् । अप्रयोजनत्वाच्च । तथाहि-संसारनिवृत्तिरपवर्ग इह प्रयोजनं विवक्षितम् । संसारश्चात्मयाथात्म्याननुभवनिमित्त आत्मयाथात्म्यज्ञानेन निवर्तनीयः । स चेदयमनादिरनादिनात्मयाथात्म्यज्ञानेन सहानुवर्तते कुतोऽस्य निवृत्तिरविरोधात् । कुतश्चात्मयाथात्म्याननुभवः, न ह्यहमित्य-

आनन्दगिरीय-न्यायनिर्णयः ।

र्थपरकवाक्यानां ( णां ) स्वार्थे समन्वयोक्त्या विशेषतोऽस्याऽऽद्यपादेन संबन्धः । पूर्वपक्षे विचारानारम्भात्तदधीनज्ञानाभावादुपायान्तरसाध्या मुक्तिः । सिद्धान्ते तु तदारम्भसंभवात्तदधीनज्ञानसिद्धेस्तेनैव मुक्तिः सिध्यतीति फलभेदः । तच्चेदमधीतिविधिवदन्तर्भूतमेव शास्त्रे तदारम्भकार्यतापरम् । तत्र वेदान्तमीमांसाशास्त्रं विषयस्तदारभ्यमनारभ्यं वेति विषयाद्यसंभवसंभवाभ्यां संशयः । प्रामाणिकत्वेन प्रमातृत्वादिबन्धस्य सत्यतया तत्त्वज्ञानानपोह्यत्वाद्बद्धाबद्धयोर्जीवब्रह्मणोरैक्यायोगात्तदभावे च बन्धाध्वस्तेर्बन्धाध्वस्तौ च फलाभावात्प्राच्या च मीमांसया वेदार्थमात्रोपाधौ प्रवृत्तया गतार्थत्वात्फलेच्छावतोऽधिकारिणोऽपि

१ प्रकृतार्थसिद्ध्यनुकूलचिन्ताविषयत्वं तत्त्वम् ॥ तथा चाहुः-"चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः" इति । २ यथाक्रमं प्रमेयाणीति शेषः । ३ क० पा० आरभ्यते । अधिकरणलक्षणं तु : "विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्" इति ।

रत्नप्रभा ।

ज्ञानाय विचारः कर्तव्य इति सूत्रस्य श्रौतार्थः सम्पद्यते ॥ तत्र ज्ञानस्य स्वतः फलत्वायोगात्प्रमातृत्वकर्तृत्वभोक्तृत्वात्मकानर्थनिवर्तकत्वेनैव फलत्वं वक्तव्यम् ॥ तत्रानर्थस्य सत्यत्वे ज्ञानमात्रान्निवृत्त्ययोगादध्यस्तत्वं वक्तव्यमिति बन्धस्याध्यस्तत्वमर्थात्सूचितम् ॥ तच्चे शास्त्रस्य विषयप्रयोजनवत्त्वसिद्धिहेतुः ॥ तथाहि—शास्त्रमारब्धव्यं, विषयप्रयोजनवत्त्वाद्, भोजनादिवत् ॥ शास्त्रं, प्रयोजनवद्, बन्धनिवर्तकज्ञानहेतुत्वाद्, रज्जुरियमित्यादिवाक्यवत् ॥ बन्धो ज्ञाननिवर्त्यः, अध्यस्तत्वाद्, रज्जुसर्पवद्,—इति प्रयोजनसिद्धिः ॥ एवमर्थाद् ब्रह्मज्ञानाज्जीवगतानर्थभ्रमनिवृत्तिं फलं सूत्रयज्जीवब्रह्मणोरैक्यं विषयमप्यर्थात्सूचयति ॥ अन्यज्ञानादन्यत्र भ्रमानिवृत्तेः ॥ जीवो, ब्रह्माभिन्नः, तज्ज्ञाननिवर्त्याध्यासाश्रयत्वाद्, यदित्थं, तत्तथा, यथा शुक्त्यभिन्न इदमंशः, इति ॥ विषयसिद्धिहेतुरध्यास इत्येवं विषयप्रयोजनवत्त्वाच्छास्त्रमारम्भणीयमिति ॥ अत्र **पूर्वपक्षे**—बन्धस्य सत्यत्वेन ज्ञानादनिवृत्तेरुपायान्तरसाध्या मुक्तिरिति फलम् ॥ **सिद्धान्ते** ज्ञानादेव मुक्तिरिति विवेकः, इति सर्वं मनसि निधाय ब्रह्मसूत्राणि व्याख्यातुकामो भगवान् भाष्यकारः सूत्रेण विचारकर्त्तव्यतारूपश्रौतार्थान्यथानुपपत्त्याऽर्थात्सूत्रितं विषयप्रयोजनवत्त्वमुपोद्घातत्वात्तत्सिद्धिहेत्वध्यासमाक्षेपसमाधानभाष्याभ्यां प्रथमं वर्णयति **युष्मदस्मत्प्रत्ययगोचरयोरिति** ॥ **एतेन** सूत्रार्थास्पर्शित्वादध्यासग्रन्थो न भाष्यमिति **निरस्तम्** ॥ आर्थिकार्थस्पर्शित्वात् ॥ **यत्तु** मंगलाचरणाभावादव्याख्येयमिदं भाष्यमिति ॥ **तन्न, सुतरामितरेतरभावानुपपत्तिरित्यन्तभाष्यरचनार्थं** तदर्थस्य सर्वोपद्रवरहितस्य विज्ञानघनप्रत्यगर्थस्य तत्त्वस्य स्मृतत्वात् ॥ अतो निर्दोषत्वादिदं भाष्यं व्याख्येयम् ॥ लोके शुक्ताविदं रजमिति भ्रमः सत्यरजते इदं रजतमित्यधिष्ठानसामान्यारोप्यविशेषयोरैक्यप्रमाहितसंस्कारजन्यो दृष्टं

भामती ।

नुभवादन्यदात्मयाथात्म्यज्ञानमस्ति । न चाहमिति सर्वजनीनस्फुटतरानुभवसमर्थित आत्मा देहेन्द्रियादिव्यतिरिक्तः शक्य उपनिषदां सहस्रैरप्यन्यथयितुम्, अनुभवविरोधात् । न ह्यागमाः सहस्रमपि घटं पट-

आनन्दगिरीय–निर्णयः ।

तुच्छत्वात्तद्विशेषणानां च दुर्वचत्वाद्ब्रह्मणः प्रसिद्धत्वे विषयप्रयोजनयोरनुपपत्तेरप्रसिद्धत्वे संबन्धप्रयोजनयोरसिद्धेस्तस्य च निःसामान्यविशेषत्वादसंभावितविषयादिकमनारभ्यं शास्त्रमिति **पूर्वपक्षः** । प्रमातृत्वादेर्व्यावहारिकमानसिद्धत्वेऽपि तात्त्विकमानासिद्धतया तथाविधमानजनितबोधबाधाविरोधादुक्तविषयादिप्रतिलम्भाद्धर्ममीमांसायाश्च वेदार्थैकदेशधर्ममात्रोपहिततया ब्रह्मास्पर्शितया तन्मीमांसया गतार्थतानवकाशादध्यक्षाद्यधिगतमिथ्याभावस्य बन्धस्य ज्ञाननिवर्त्यतया तन्निवृत्तिकामस्याधिकारिणः सुलभत्वाद्विशेषणानां च विवेकादीनामतीते वर्तमाने वा जन्मनि कृतसुकृतजनितचित्तप्रसादासादितानामनुमानागमाधीनतया सुवचत्वाद्ब्रह्मणश्च ब्रह्मपदादात्मत्वाच्च सिद्धावपि विचारं विना मानादसिद्धेरनन्यलभ्यतया विषयत्वात्तदवगतेश्च फलत्वादत्यन्तासिद्धयभावाच्च शक्यप्रतिपाद्यतया संबन्धादिसिद्धेरारोपितसामान्यविशेषभावमादाय तदीयविषयत्वस्य प्रतिपाद्यत्वादुक्तविषयादिमदिदं शास्त्रमारभ्यमिति **सिद्धान्तः** । तदिदं हृदि निधाय वेदान्तमीमांसाशास्त्रं व्याख्यातुकामो भगवान्भाष्यकारः शास्त्रारम्भार्थमाद्यसूत्रेणार्थतः सूचितं विषयादि वदितुं विरोधिनो बन्धस्याध्यासत्वं लक्षणसंभावनासद्भावप्रमाणैः सिसाधयिषुरादावध्यासमाक्षिपति—**युष्मदस्मत्प्रत्ययगोचरयोरित्यादिना मिथ्येति भवितुं युक्तमित्यन्तेन** भाष्येण । अर्थाच्च **सुतरामितरेतरभावानुपपत्तिरित्यन्तेनानुपप्लुतं** चिन्मात्रमात्मानमनुसंदधानस्तत्त्वानुस्मरणं मङ्गलाचरणं

१ विषयस्य अध्यस्तत्वं च । २ यो यज्ज्ञाननिवर्त्याध्यासाश्रयः स तदभिन्न इति स्पष्टोऽर्थः ।

## युष्मदस्मत्प्रत्ययगोचरयोः–

रत्नप्रभा ।

इत्यत्राध्यात्मन्यनात्माहंकाराध्यासे पूर्वप्रमा वाच्या ॥ सा चात्मानात्मनोर्वास्तवैक्यमपेक्षते ॥ न हि तदस्ति ॥ **तथाहि**–आत्मानात्मानौ, ऐक्यशून्यौ, परस्परैक्यायोग्यत्वात्, तमःप्रकाशवदिति मत्वा हेतुभूतं विरोधं वस्तुतः प्रतीतितो व्यवहारतश्च साधयति–**युष्मदस्मत्प्रत्ययगोचरयोरिति** ॥ न च "प्रत्ययोत्तरपदयोश्च" [ पा. सू. ७।२।९८ ] इति सूत्रेण प्रत्यये चोत्तरपदे च परतो युष्मदस्मदोर्मपर्यन्तस्य त्वमादेशौ स्त इति विधानात्त्वदीयं मदीयं त्वत्पुत्रो मत्पुत्रः इतिवत्त्वन्मत्प्रत्ययगोचरयोरिति स्यादिति **वाच्यम्** ॥ "त्वमावेकवचने" [ पा. सू. ७।२।९७ ] इत्येकवचनाधिकारादत्र च युष्मदस्मत्पदयोरेकार्थवाचित्वाभावादनात्मनां युष्मदर्थानां बहुत्वादस्मदर्थचैतन्यस्याप्युपाधितो बहुत्वात् ॥ नन्वेवं सति कथमत्र भाष्ये विग्रहः ? ॥ **न च** यूयमिति प्रत्ययो युष्मत्प्रत्ययः वयमिति प्रत्ययोऽस्मत्प्रत्ययस्तद्गोचरयोरिति विग्रह इति **वाच्यम्** ॥ शब्दसाधुत्वेऽप्यर्थासाधुत्वात् ॥ न ह्यहंकाराद्यनात्मनो यूयमिति प्रत्ययविषयत्वमस्तीति **चेत्** ॥ **न** ॥ **गोचरपदस्य** योग्यतापरत्वात् ॥ चिदात्मा तावदस्मत्प्रत्ययायोग्यः । तत्प्रयुक्तसंशयादिनिवृत्तिफलभाक्त्वात् । "न तावदयमेकान्तेनाविषयः । अस्मत्प्रत्ययविषयत्वाद्" इति भाष्योक्तेश्च ॥ **यद्यप्यहङ्कारादिरपि** तद्योग्यः ॥ **तथापि** चिदात्मनः सकाशादत्यन्तभेदसिद्ध्यर्थं युष्मत्प्रत्यययोग्य इत्युच्यते ॥ **आश्रमश्रीचरणास्तु** टीकायोजनायामेवमाहुः– "सम्बोध्यचेतनः युष्मत्पदवाच्यः । अहङ्कारादिविशिष्टचेतनः–अस्मत्पदवाच्यः ॥ तथा च युष्मदस्मदोः स्वार्थे प्रयुज्यमानयोरेव त्वमादेशनियमः, न लाक्षणिकयोः ॥ "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ" [ पा. सू. ८।१।२० ] इति सूत्रासांगत्यप्रसङ्गात् ॥ अत्र शब्दलक्षकयोरिव चिन्मात्रजड-

भामती ।

यितुमीशते । तस्मादनुभवविरोधादुपचरितार्था एवोपनिषद इति युक्तमुत्पश्यामः इत्याशयवानाशङ्क्य परिहरति– **युष्मदस्मत्प्रत्ययगोचरयोरिति** । अत्र च **युष्मदस्मादित्यादिर्मिथ्या भवितुं युक्तमित्यन्तः** शङ्काग्रन्थः । **तथापीत्यादिपरिहारग्रन्थः** । तथापीत्यभिसंबन्धाच्छङ्कायां यद्यपीति पठितव्यम् । इदमस्मत्प्रत्ययगोचरयोरिति वक्तव्ये युष्मद्ग्रहणमत्यन्तभेदोपलक्षणार्थम् । यथा ह्यहंकारप्रतियोगी त्वंकारो नैवमिदंकारः, एते वयमिमे वयमा-

आनन्दगिरीय–न्यायनिर्णयः ।

विघ्नोपशमनाद्यर्थं संपादयति । चैत्रे मैत्रोऽयमितिभ्रान्तिरन्यत्रैक्यप्रमित्यपेक्षासंस्कारजन्यत्वात्तत्प्रमितिश्चैक्यकृतेत्यात्मानात्मनोरैक्याध्यासेऽपि तत्प्रमित्यादेर्वक्तव्यतां मन्वानस्तयोरैक्याभावेऽपि त्रिविधं विरोधं हेतुमाह—**युष्मदस्मत्प्रत्ययगोचरयोरिति** । न च 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे प्रत्यये चोत्तरपदे च परतो युष्मदस्मदोरेकार्थवाचिनोर्मपर्यन्तस्य त्वमावादेशावित्युक्तत्वात्त्वत्पुत्रो मत्पुत्र इतिवत्त्वन्मत्प्रत्ययगोचरयोरिति स्यादिति युक्तम् । 'त्वमावेकवचने' इति सूत्रादेकार्थाभिधायिनोर्युष्मदस्मदोर्मपर्यन्तस्य स्थाने त्वमावादेशौ भवत इति व्याख्यानादेकवचन इत्यधिकारादत्र च युष्मदस्मदोरेकार्थवाचित्वस्याविवक्षितत्वाद्युष्मदस्मद्ग्रहणाविरोधादस्मदर्थे साक्षिणि नभोवदौपाधिकं बहुत्वम् । न चैवं युष्माकमित्यादाविव बहुवचनमनुसृत्य विगृह्येत विरोधोक्त्यनुगुणतया यथा तथा विग्रहेऽपि निवारकाभावात् । युष्मदस्मत्पदयोश्चेतनाचेतनार्थत्वादात्मानात्मवैलक्षण्यार्थमिदमस्मत्प्रत्ययगोचरयोरिति वक्तव्येऽपि युष्मद्-

१ आत्मानात्मनोर्वास्तवैक्यम् । २ युष्मदस्मत्प्रत्ययगोचरयोरितिभाष्ये । ३ अयमात्मा एकान्तेन नियमेनाविषयो न । ४ युष्मदस्मदोः षष्ठीत्यादिसूत्रे । ५ प्रतिद्वन्द्वी विरोधी ॥

रत्नप्रभा ।

मात्रलक्षकयोरपि न त्वमादेशः । लक्षकत्वाविशेषाद्'' इति ॥ यदि तयोः शब्दबोधकत्वे सत्येव त्वमादेशाभाव इत्यनेन सूत्रेण ज्ञापितम्[१]। तदाऽस्मिन् भाष्ये युष्मत्पदेन युष्मच्छब्दजन्यप्रत्यययोग्यः परागर्थो लक्ष्यते । अस्मत्पदेन अस्मच्छब्दजन्यप्रत्यययोग्यः प्रत्यगात्मा ॥ तथा च लक्ष्यतावच्छेदकतया शब्दोऽपि बोध्यत इति न त्वमादेशः ॥ न च पराक्त्वप्रत्यक्त्वयोरेव लक्ष्यतावच्छेदकत्वम् । न शब्दयोग्यत्वांशस्य । गौरवादिति वाच्यम् ॥ पराक्प्रतीचोर्[२]विरोधस्फुरणार्थं विरुद्धशब्दयोग्यत्वस्यापि वक्तव्यत्वात् ॥ अत एवेदमस्मत्प्रत्ययगोचरयोरिति वक्तव्येऽपीदंशब्दोऽस्मदर्थे लोके वेदे च बहुशः इमे वयमास्महे—इमे विदेहाः—अयमहमस्मीति च प्रयोगदर्शनान्नास्मच्छब्दविरोधीति मत्वा युष्मच्छब्दः प्रयुक्तः ॥ इदंशब्दप्रयोगे विरोधास्फूर्तेः ॥ एतेन चेतनवाचित्वादस्मच्छब्दः पूर्वं प्रयोक्तव्यः—''अभ्यर्हितं पूर्वम्'' इतिन्यायात्, ''त्यदादीनि सर्वैर्नित्यम्'' [ पा. सू. १ । २ । ७२ ] इति सूत्रेण विहित एकशेषश्च स्यादिति निरस्तम्॥युष्मदस्मदोरिति सूत्र इवात्रापि पूर्वनिपातैकशेषयोरप्राप्ते,एकशेषे विवक्षितविरोधास्फूर्तेश्च। वृद्धास्तु ''युष्मदर्थादनात्मनो निष्कृष्य शुद्धस्य चिद्धातोरध्यारोपापवादन्यायेन ग्रहणं द्योतयितुमादौ युष्मद्ग्रहणम्'' इत्याहुः॥ तत्र युष्मदस्मत्पदाभ्यां पराक्प्रत्यक्त्वेनात्मानात्मनोर्वस्तुतो विरोध उक्तः ॥ प्रत्ययपदेन प्रतीतितो विरोध उक्तः।प्रतीयत इति प्रत्ययोऽहङ्कारादिरनात्मा दृश्यतया भाति।आत्मा तु प्रतीतित्वात् प्रत्ययः स्वप्रकाशतया भाति ॥ गोचरपदेन व्यवहारतो विरोध उक्तः । युष्मदर्थः प्रत्यगात्मतिरस्कारेण कर्त्ताहमित्यादिव्यवहारगोचरः । अस्मदर्थस्त्वनात्मप्रविलापेन अहं ब्रह्मेतिव्यवहारगोचर इति त्रिधा विरोधः स्फुटीकृतः ॥ युष्मच्चास्मच्च युष्मदस्मदी—ते एव प्रत्ययौ च तौ गोचरौ चेति युष्मदस्मत्प्रत्ययगोचरौ तयो-

भामती ।

स्मह इति बहुलं प्रयोगदर्शनादिति । चित्स्वभाव आत्मा विषयी, जडस्वभावा बुद्धीन्द्रियदेहविषया विषयाः । एते हि चिदात्मानं विसिन्वन्ति अवबध्नन्ति । स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत् । परस्परान-

आनन्दगिरीय—न्यायनिर्णयः ।

ग्रहणमत्यन्तभेदोपलक्षणार्थम् । न हि त्वंकारवदिदंकारस्याहंकारप्रतियोगित्वमेते वयमिमे वयमित्यादिप्रयोगात् । न च यूयं वयं वयमेव यूयमितिवदौपचारिकत्वं तत्र तथात्वाभिमानवत्प्रकृते तदभावात् । मुख्यामुख्ययोरादौ मुख्योपनिपातादस्मदर्थस्य च मुख्यत्वात्प्रथममस्मद्ग्रहणप्रसक्तावपि युष्मदर्थादनात्मनो निष्कृष्य शुद्धस्य चिद्धातोरध्यारोपापवादन्यायेन[४] ग्रहणं द्योतयितुमादौ युष्मद्ग्रहणम् । तत्र युष्मदस्मदिति प्रत्यक्पराक्त्वेनाऽऽत्मानात्मनोः स्वभावविरोधः सूच्यते । युष्मच्छब्देनाहंकारादिरस्मच्छब्देन तत्साक्षी गृह्यते । तयोरेव प्रत्ययपदेन स्फुरणतया तद्वत्त्वेन प्रतीतितो विरोधो द्योत्यते । तत्रानात्मा प्रतीतिव्याप्यत्वादात्मा च प्रतीतित्वात्प्रत्ययस्तयोर्व्यवहारतो विरोधो गोचरशब्दार्थः । युष्मदर्थो हि कौटस्थ्यादिस्वभावात्मतिरस्कारेण सक्रियत्वादिनाऽस्मदर्थोऽपि ब्रह्मास्मीत्यहंकारादिविलापेन पूर्णतया व्यवह्रियते। युष्मचास्मच्च युष्मदस्मदी ते एव प्रत्ययौ तावेव गोचरौ तयोस्त्रिविधविरोधभाजोरन्यत्रैक्यायोगात्र तत्प्रमितिरित्यर्थः । ऐक्यासंस्कारादतदध्यासेऽपि तादात्म्यसंस्कारादिदं रजतमितिवत्तदध्यासः स्यादित्याशङ्क्य तस्यापि तत्प्रमितिपूर्वकत्वात्तस्याश्च तादात्म्यापेक्षत्वादात्मानात्मनोस्तदभावान्नेति मत्वा तयोस्ता-

१ समनियतलघुधर्मस्यावच्छेदकत्वे संभवति गुरुधर्मस्य तदभाव इति सिद्धान्तः । २ वक्ष्यमाणहेतुद्वयेन । ३ चैतन्यस्य धारकस्य सर्वाधिष्ठानस्येति यावत् । ४ 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति न्यायस्वरूपम् । ५ अहंकारः । ६ चिदात्मा ।

**विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि-**

रत्नप्रभा ।

द्विधा विरुद्धस्वभावयोरितरेतरभावोऽत्यन्ताभेदस्तादात्म्यं वा तदनुपपत्तौ सिद्धायामित्यन्वयः ॥ ऐक्यासम्भवेऽपि शुक्लो घट इतिवत्तादात्म्यं किं न स्यादित्यत आह-**विषयविषयिणोरिति** ॥ चिज्जडयोर्विषयविषयित्वाद्दीपघटयोरिव न तादात्म्यमिति भावः ॥ युष्मदस्मदी पराक्प्रत्यग्वस्तुनी, ते एव प्रत्ययश्च गोचरश्चेति वा विग्रहः । अत्र प्रत्ययगोचरपदाभ्याम् आत्मानात्मनोः प्रत्यक्पराग्भावे चिदचित्त्व हेतुरुक्तः । तत्र हेतुमाह-**विषयविषयिणोरिति** ॥ अनात्मनो ग्राह्यत्वादचित्त्वम्, आत्मनस्तु ग्राहकत्वाच्चित्त्वं वाच्यम् । अचित्त्वे स्वस्य स्वेन ग्रहस्य कर्मकर्तृत्वविरोधेनासम्भवादप्रत्यक्षत्वापत्तेरित्यर्थः ॥ यथेष्टं वा हेतुहेतुमद्भावः ॥ नन्वेवमात्मानात्मनोः पराक्प्रत्यक्त्वेन चिदचित्त्वेन ग्राह्यग्राहकत्वेन च विरोधात्तमःप्रकाशवदैक्यस्य तादात्म्यस्य चानुपपत्तौ सत्यां तत्प्रमित्यभावेनाध्यासाभावेऽपि तद्धर्माणां चैतन्यसुखजाड्यदुःखादीनां विनिमयेनाध्यासोऽस्त्वित्यत आह-**तद्धर्माणामपीति** ॥ तयोरात्मानात्म-

भामती ।

ध्यासहेतावत्यन्तवैलक्षण्ये दृष्टान्तः-**तमःप्रकाशवदिति** । न हि जातु कश्चित्समुदाचरद्वृत्तिनी प्रकाशतमसी परस्परात्मतया प्रतिपत्तुमर्हति । तदिदमुक्तम्-**इतरेतरभावानुपपत्ताविति** । इतरेतरभाव इतरेतरत्वम् । तादात्म्यमिति यावत् । तस्यानुपपत्ताविति । स्यादेतत् । मा भूद्धर्मिणोः परस्परभावस्तद्धर्माणां तु जाड्यचैतन्यनित्यत्वानित्यत्वादीनामितरेतराध्यासो भविष्यति । दृश्यते हि धर्मिणोर्विवेकग्रहणेऽपि तद्धर्माणामध्यासः, यथा कुसुमाद्भेदेन गृह्यमाणेऽपि स्फटिकमणावतिस्वच्छतया जपाकुसुमप्रतिबिम्बोद्ग्राहिण्यरुणः स्फटिक इत्यारुण्यविभ्रम इत्यत उक्तम्-**तद्धर्माणामपीति** । इतरेतरत्र धर्मिणि धर्माणां भावो विनिमयस्तस्यानुपपत्तिः । अयमभिसंधिः-रूपवद्धि द्रव्यमतिस्वच्छतया रूपवतो द्रव्यान्तरस्य तद्विवेकेन गृह्यमाणस्यापि छायां गृह्णीयात्, चिदात्मा त्वरूपो विषयी न विषयच्छायामुद्ग्राहयितुमर्हति । यथाहुः-'शब्दगन्धरसानां च कीदृशी प्रतिबिम्बता' इति । तदिह पारिशेष्याद्विषयविषयिणोरन्योन्यात्मसंभेदेनैव

आनन्दगिरीय-न्यायनिर्णयः ।

दात्म्याभावे हेतुमाह-**विषयविषयिणोरिति** । ऐक्याभावेऽपि जात्यादौ तादात्म्यादपौनरुक्त्यम् । नित्यानुभवविषयो युष्मदर्थो विषयो विषयी त्वस्मदर्थो नित्यानुभवस्तयोर्दाह्यदाहकवन्मिथो विरुद्धयोर्जातिव्यक्तिवदितरेतरभावान्न तादात्म्यमित्यर्थः । उक्ताद्धेतोः सिद्धमभेदासंभवं सदृष्टान्तमाह-**तमःप्रकाशवदिति** । न खल्वनयोरभेदः । न च तयोर्भावाभावत्वेन तदभावस्तमसोऽपि गुणवत्त्वादिना भावत्वात्तथाऽऽत्मानात्मनोरपि मिथो विरुद्धयोर्नाभेदोऽस्तीत्यर्थः । विमतौ नाभिन्नतया प्रमितौ मिथो विरुद्धत्वात्तमःप्रकाशवदिति विरोधफलमाह-**इतरेतरेति** । इतरस्येतरभावो नामेतरेतरत्वमैक्यमितरस्मिन्नितरभावस्तादात्म्यं तयोरप्रतीतावुक्तन्यायप्राप्तायां तत्संस्कारासिद्धिः । नन्वात्मानात्मनोरितरेतरभावाभावेऽपि तद्धर्माणां चैतन्यजाड्यादीनामितरेतरत्र भावः स्यात् । दृश्यते हि पुष्पपुटिकादौ पुष्पाभावेऽपि तद्धर्मगन्धानुवृत्तिः । तथा चेतरेतरत्रेतरधर्मप्रमित्या तत्संस्काराच्चाध्यासः सिध्यतीति नेत्याह-**तद्धर्माणामपीति** । तयोरात्मानात्मनोर्धर्माश्चैतन्यजाड्यादयस्तेषामितरेतरत्र न भावो मिथो विरुद्धयोर्धर्मिणोर्ध-

१ चिदचित्त्वे । २ विषयविषयित्वे चिदचित्त्वं हेतुः । चिदचित्त्वे प्रत्यक्पराग्भावो हेतुः । यद्वा-विषयविषयित्वे पराक्प्रत्यग्भावो हेतुः । प्रत्यक्पराग्भावे चिदचित्त्वं हेतुः । अथवा-प्रत्यक्पराग्भावे चिदचित्त्वं हेतुः । चिदचित्त्वे विषयविषयिभावो हेतुरिति रीत्या यथेष्टम् । ३ धर्माणां विनिमयो नाम स्वधर्म्यतिरिक्ते स्वभानम् ।

सुतरामितरेतरभावानुपपत्तिरित्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके-

रत्नप्रभा ।

नोर्धर्मोस्तद्धर्मोस्तेषामपि ॥ **इतरेतरभावानुपपत्तिः**—इतरत्र धर्म्यन्तरे इतरेषां धर्माणां भावः संसर्गस्तस्यानुपपत्तिरित्यर्थः । न हि धर्मिणोः संसर्गं विना धर्माणां विनिमयोऽस्ति । स्फटिके लोहितवस्तुसान्निध्याल्लौहित्यधर्मसंसर्गः ॥ असंगात्मधर्मिणः केनाऽप्यसंसर्गाद्धर्मिसंसर्गपूर्वको धर्मसंसर्गः कुतस्त्य इत्यभिप्रेत्योक्तम्—**सुतरामिति** ॥ नन्वात्मानात्मनोस्तादात्म्यस्य तद्धर्मसंसर्गस्य चाभावेऽप्यध्यासः किं न स्यादित्यत आह—**इत्यत इति** ॥ इति—उक्तरीत्या तादात्म्याद्यभावेन तत्प्रमायां अभावाद् **अतः**—प्रमाजन्यसंस्कारस्याध्यासहेतोरभावादध्यासो मिथ्येति भवितुं युक्तमित्यन्वयः ॥ मिथ्याशब्दो द्व्यर्थः—अपह्नववचनोऽनिर्वचनीयतावचनश्चेति ॥ अत्र च अपह्नवार्थः ॥ ननु कुत्र कस्याध्यासोऽपह्नूयते इत्याशंक्य आत्मन्यनात्मतद्धर्माणाम् अनात्मन्यात्मतद्धर्माणामध्यासो निरस्यत इत्याह—**अस्मत्प्रत्ययगोचर इत्यादिना** ॥ अहमितिप्रत्यययोग्यत्वं बुद्ध्यादेरप्यस्तीति मत्वा तत आत्मानं विवेचयति—**विषयिणीति** ॥ बुद्ध्यादिसाक्षिणीत्यर्थः ॥ साक्षित्वे हेतुः—**चिदात्मक इति** ॥ अहमिति भासमाने चिदंशात्मनीत्यर्थः ॥

भामती ।

तद्धर्माणामपि परस्परसंभेदेन विनिमयात्मना भवितव्यम्, तौ चेद्धर्मिणावत्यन्तविवेकेन गृह्यमाणावसंभिन्नौ, असंभिन्नाः सुतरां तयोर्धर्माः, स्वाश्रयाभ्यां व्यवधानेन दूरापेतत्वात् । तदिदमुक्तं—**सुतरामिति** ॥

आनन्दगिरीय—न्यायनिर्णयः ।

र्माणामितरेतरत्र भावस्यादृष्टत्वात्तेषां धर्मितादात्म्याच्चोक्तविरोधभाक्त्वाद्धर्मिणमतिक्रम्य च तद्धर्माणामगमनात् । न हि गन्धोऽपि विना धर्मिणं पुष्पपुटिकादौ दृश्यते सूक्ष्मेण स्वाश्रयेण सहैवोपलम्भादन्यथा गुणत्वव्याघातादुत्क्रान्त्यधिकरणे चैतद्वक्ष्यति । तस्मात्तद्धर्माणामपि नेतरेतरत्र सत्त्वप्रमेत्यर्थः । तथाऽप्यात्मानात्मनोरन्योन्यात्मकताध्यासस्य च किमायातमित्याशङ्क्याऽऽह—**इत्यत इति** । इतिशब्देनाभेदप्रमित्यभावो हेतुरुक्तः । तत्फलमभेदसंस्काराभावोऽतःशब्दार्थः । यदात्मनो मुख्यं प्रत्यक्त्वं प्रतीतित्वमहंकारादिविलापनेन ब्रह्मास्मीतिव्यवहार्यत्वं चोक्तं तदयुक्तमहमितिप्रतीयमानत्वादहंकारवदित्याशङ्क्य संस्काराभावफलमध्यासाभावं वक्तुमधिष्ठानस्वरूपमाह—**अस्मत्प्रत्ययगोचर इति** । अहंवृत्तिव्यङ्ग्यस्फुरणत्वं तद्वत्त्वं वा हेतुः । आद्ये साधनविकलो दृष्टान्तो द्वितीये त्वसिद्धिरतोऽनुमानायोगादात्मनो युक्तं मुख्यं प्रत्यक्त्वादीत्यर्थः । यदात्मनो विषयित्वं तन्न । अनुभवामीतिव्यवहृतत्वादहंकारवदित्याशङ्क्याऽऽह—**विषयिणीति** । अनुभवामीति । व्यवहृतत्वं तद्वाच्यत्वं तल्लक्ष्यत्वं वा । नाऽऽद्यः, असिद्धेः । नेतरः, हेतुवैकल्यादतो युक्तं विषयित्वमित्यर्थः । अहंकारस्य देहं जानामीति विषयित्वेऽपि मनुष्योऽहमित्यभेदाध्यासवदिहापि स्यादित्याशङ्क्याहंकारदेहयोर्जाड्यादिना तुल्यत्वादभेदाध्यासेऽपि चित्त्वेनाऽऽत्मत्वेन वाऽजडेऽनवच्छिन्ने प्रतीचि तद्विपरीताध्यासो न सिध्यतीत्याह—**चिदात्मक इति** । दीपादेर्विषयित्वेऽपि चिदात्मकत्वाभावादपुनरुक्तिः । अहमिति प्रथाविशेषादात्मवदहंकारस्यापि मुख्य-

१ चकारोऽत्राध्याहर्तव्यः ।

**युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः ॥ तद्विपर्ययेण-**

रत्नप्रभा ।

**युष्मत्प्रत्ययगोचरस्येति** ॥ त्वंकारयोग्यस्य इदमर्थस्येति यावत् ॥ नन्वहमिति भासमानबुद्ध्यादेः कथमिदमर्थत्वमित्यत आह-**विषयस्येति** ॥ साक्षिभास्यस्येत्यर्थः ॥ साक्षिभास्यत्वरूपलक्षणयोगाद् बुद्ध्यादेर्घटादिवदिदमर्थत्वं न प्रतिभासत इति भावः ॥ **अथ वा यद्**आत्मनो मुख्यं सर्वान्तरत्वरूपं प्रत्यक्त्वं प्रतीतित्वं ब्रह्मास्मीति व्यवहारगोचरत्वं चोक्तं **तद्**, असिद्धम्, अहमिति प्रतीयमानत्वाद्, अहंकारवदित्याशंक्याह-**अस्मत्प्रत्ययगोचर इति** ॥ अस्मच्चासौ प्रत्ययश्चासौ गोचरश्च तस्मिन्नित्यर्थः ॥ अहंवृत्तिव्यंग्यस्फुरणत्वं स्फुरणविषयत्वं वा हेतुः । **आद्ये**-दृष्टान्ते हेत्वसिद्धिः । **द्वितीये** तु-पक्षे तदसिद्धिरित्यात्मनो मुख्यं प्रत्यक्त्वादि युक्तमिति भावः ॥ **ननु** यदात्मनो विषयित्वं तद्, असिद्धम्, अनुभवामीतिशब्दवत्त्वाद्, अहंकारवदित्यत आह-**विषयिणीति** ॥ वाच्यत्वं, लक्ष्यत्वं वा हेतुः ॥ **नाद्यः**-पक्षे तदसिद्धेः । **नान्त्यः**-दृष्टान्ते तद्वैकल्यादिति भावः ॥ देहं जानामीति देहाहंकारयोर्विषयविषयित्वेऽपि मनुष्योऽहमित्यभेदाध्यासवदात्माहंकारयोरप्यध्यासः स्यादित्यत आह-**चिदात्मक इति** ॥ त योर्जाड्यालपत्वाभ्यां सादृश्यादध्यासेऽपि चिदात्मन्यनवच्छिन्ने जडाल्पाहंकारादेर्नाध्यास इति भावः ॥ अहमिति भास्यत्वादात्मवदहंकारस्यापि

भामती ।

**तद्विपर्ययेणेति** । विषयविपर्ययेणेत्यर्थः । मिथ्याशब्दोऽपह्नववचनः । एतदुक्तं भवति-अध्यासो भेदाग्रहेण व्याप्तः, तद्विरुद्धश्चेहास्ति भेदग्रहः, स भेदाग्रहं निवर्तयंस्तद्व्याप्तमध्यासमपि निवर्तयतीति । मिथ्येति भवितुं युक्तं यद्यपि तथापीति योजना ॥ इदमत्राकूतम्-भवेदेतदेवं यद्यहमित्यनुभवे आत्मतत्त्वं प्रकाशेत । न त्वेतदस्ति । तथाहि-समस्तोपाध्यनवच्छिन्नानन्तानन्दचैतन्यैकरसमुदासीनमेकमद्वितीयमात्मतत्त्वं श्रुतिस्मृतीतिहासपुराणेषु गीयते । न चैतान्युपक्रमपरामर्शोपसंहारैः क्रियासमभिहारेणेदृगात्मतत्त्वमभिदधति तत्पराणि सन्ति शक्यानि शक्रेणाप्युपचरितार्थानि कर्तुम् । अभ्यासे हि भूयस्त्वमर्थस्य भवति, यथाहो दर्शनीयाहोदर्शनीयेति, न न्यूनत्वं, प्रागेवोपचरितत्वमिति । अहमनुभवस्तु प्रादेशिकमनेकविधशोकदुःखादिप्रपञ्चोपप्लुतमात्मानमादर्शयन्कथमात्मतत्त्वगोचरः कथं वानुपप्लवः । न च ज्येष्ठप्रमाणप्रत्यक्षविरोधादाम्नायस्यैव तदपेक्षस्याप्रामाण्यमुपचरितार्थत्वं चेति युक्तम् । तस्यापौरुषेयतया निरस्तसमस्तदोषाशङ्कस्य, बोधकतया स्वतःसिद्धप्रमाणभावस्य, स्वकार्ये प्रमितावनपेक्षत्वात् । प्रमितावनपेक्षत्वेऽप्युत्पत्तौ प्रत्यक्षापेक्षत्वात्तद्विरोधादनुत्पत्तिलक्षणमप्रामाण्यमिति चेन्न । उत्पादकाप्रतिद्वन्द्वित्वात् । न ह्यागमज्ञानं सांव्य-

आनन्दगिरीय-न्यायनिर्णयः ।

प्रत्यक्त्वादियोगादयुक्तं पराक्त्वादीत्याशङ्क्याऽऽह-**युष्मदिति** । अहंकारतत्साक्षिणोरहमित्येकरूपप्रथानङ्गीकारादहंकारादेः प्रातीतिकप्रत्यक्त्वादिभावेऽपि पराक्त्वाद्येव मुख्यमित्यर्थः । अहंकारादेर्बन्धत्वेनानर्थतया हेयत्वं सूचयति-**विषयस्येति** । तस्याध्यासो मिथ्येति संवन्धः । मा भूदात्मन्यनात्माध्यासस्तद्धर्माणां तु जाड्यादीनां तस्मिन्नध्यासः स्यादित्याशङ्क्याऽऽह-**तद्धर्माणां चेति** । न हि धर्मा धर्मिणमतिक्रमन्ते नरविषाणादिधीवदात्मनि वैकल्पिकी जाड्यादिधीरित्यर्थः । आत्मनो मुख्यप्रत्यक्त्वादिभाक्त्वादनात्मतद्धर्माध्यासानधिष्ठानत्वेऽपि तद्वैपरीत्यादहंकारादेरात्मतद्धर्माध्यासाधिष्ठानत्वं स्यादित्याशङ्क्याऽऽह-**तद्विपर्ययेणेति** । अहंकारादौ जडे विषये ततो विपर्ययश्चैतन्यं तेनाऽऽत्मना विषयिणश्चिदात्मनो योऽध्यासः स मिथ्येत्यन्वयः ॥ नन्वनात्मन्यात्मानध्यासेऽपि तद्धर्माणामनुभवादीनां बुद्ध्यादवध्यासः स्यात् । नभसो ध्वन्यभेदानध्यासेऽपि तद्भेदानां वर्णानां ह्रस्वो दीर्घो वेति ध्वनिविशेषेऽध्यासदर्शनादित्यत आह-**तद्धर्माणां चेति** । अनुभवादीनां बुद्धिवृत्त्युपाधौ तत्तन्त्रतया भानादुप-

रत्नप्रभा ।

प्रत्यक्त्वादिकं मुख्यमेव । ततः पूर्वोक्तपराक्त्वाद्यसिद्धिरित्याशंक्याह–**युष्मदिति** ॥ अहंवृत्तिभास्यत्वमहंकारे नास्ति कर्तृकर्मत्वविरोधाच्चिद्भास्यत्वं चिदात्मनि नास्ति इति हेत्वसिद्धिः । अतो बुद्ध्यादेः प्रतिभासतः प्रत्यक्त्वेऽपि पराक्त्वादिकं मुख्यमेवेति भावः । **युष्मत्** पराक् तच्चासौ प्रतीयत इति प्रत्ययश्चासौ कर्तृत्वादिव्यवहारगोचरश्च तस्येति विग्रहः ॥ तस्य हेयत्वार्थमाह–**विषयस्येति** ॥ "षिञ् बन्धने "–विसिनोति बध्नाति इति–**विषयः**, तस्येत्यर्थः ॥ आत्मन्यनात्मतद्धर्माध्यासो मिथ्या भवतु ।

भामती ।

वहारिकं प्रत्यक्षस्य प्रामाण्यमुपहन्ति येन कारणाभावान्न भवेदपि तु तात्त्विकम् । न च तत्तस्योत्पादकम् । अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यवहारिकप्रमाणेभ्यस्तत्त्वज्ञानोत्पत्तिदर्शनात् । तथा च वर्णे ह्रस्वदीर्घत्वादयोऽन्यधर्मा अपि समारोपितास्तत्त्वप्रतिपत्तिहेतवः । न हि लौकिका नाग इति वा नग इति वा पदात्कुञ्जरं वा तरुं वा प्रतिपद्यमाना भवन्ति भ्रान्ताः । न चानन्यपरं वाक्यं स्वार्थे उपचरितार्थं युक्तम् । उक्तं हि 'न विधौ परः शब्दार्थः' इति । ज्येष्ठत्वं चानपेक्षितस्य बाध्यत्वे हेतुर्न बाधकत्वे रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा बाधदर्शनात् । तदनपबाधने तदपबाधात्मनस्तस्योत्पत्तेरनुत्पत्तेः । दर्शितं च तात्त्विकप्रमाणभावस्यानपेक्षितत्वम् । तथा च पारमर्षं सूत्रम्–'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' (अ० ६ पा० ५ सू० ५४) इति । तथा 'पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम् । अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥' इति । अपि च येऽप्यहंकारास्पदमात्मानमास्थिषत तैरप्यस्य न तात्त्विकत्वमभ्युपेतव्यम्–'अहमिहैवास्मि सदने जानानः' इति सर्वव्यापिनः प्रादेशिकत्वेन ग्रहात् । उच्चतरगिरिशिखरवर्तिषु महातरुषु भूमिष्ठस्य दूर्वाप्रवालनिर्भासप्रत्ययवत् । न चेदं देहस्य प्रादेशिकत्वमनुभूयते न त्वात्मन इति सांप्रतम् । न हि तदेवं भवति–'अहम्' इति; गौणत्वे वा न–'जानानः' इति । अपि च परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्तेत इति यत्र प्रयोक्तृप्रतिपत्त्रोः संप्रतिपत्तिः स गौणः, स च भेदप्रत्ययपुरःसरः । तद्यथा नैयमिकाग्निहोत्रवचनोऽग्निहोत्रशब्दः (अ० १ पा० ४ सू० ४) प्रकरणान्तरावधृतभेदे कौण्डपायिनामयनगते कर्मणि 'मासमग्निहोत्रं जुहोति' (अ० ७ पा० ३ सू० १) इत्यत्र साध्यसादृश्येन गौणः, माणवके चानुभवसिद्धभेदे सिंहात्सिंहशब्दः । न त्वहंकारस्य मुख्योऽर्थो निर्लुठितगर्भतया देहादिभ्यो भिन्नोऽनुभूयते, येन परशब्दः शरीरादौ गौणो भवेत् । न चात्यन्तनिरूढतया गौणेऽपि न गौणत्वाभिमानः, सार्षपादिषु तैलशब्दवदिति वेदितव्यम् । तत्रापि स्नेहात्तिलभवाद्भेदे सिद्ध एव सार्षपादीनां तैलशब्दवाच्यत्वाभिमानो, न त्वर्थयोस्तैलसार्षपयोरभेदाध्यवसायः । तस्सिद्धं गौणत्वमुभयदर्शिनो गौणमुख्यविवेकविज्ञानेन व्याप्तं तदिह व्यापकं विवेकज्ञानं निवर्तमानं गौणतामपि निवर्तयतीति । न च बालस्थविरशरीरभेदेऽपि सोऽहमित्येकस्यात्मनः प्रतिसंधानाद्देहादिभ्यो भेदेनास्त्यात्मानुभव इति वाच्यम् । परीक्षकाणां खल्वियं कथा न लौकिकानाम् । परीक्षका अपि हि व्यवहारसमये न लोकसामान्यमतिवर्तन्ते । वक्ष्यत्यनन्तरमेव हि भगवान्भाष्यकारः–'पश्वादिभिश्चाविशेषात्' इति । बाह्या अप्याहुः–'शास्त्रचिन्तकाः खल्वेवं विवेचयन्ति न प्रतिपत्तारः' इति । तत्पारिशेष्याच्चिदात्मगोचरमहंकार-

आनन्दगिरीय–न्यायनिर्णयः ।

चारात्तद्धर्मत्वम् । युक्तो वर्णानां ध्वनिभेदेष्वध्यासो जाड्यादिना तुल्यत्वादात्मधर्मत्वाभिमतानामनुभवादीनां चिद्रूपात्ततो भेदाभावान्न जडे बुद्ध्यादावध्यासोऽतुल्यत्वादित्यर्थः । अध्यासो नामान्यस्मिन्नन्य-

१ अहंवृत्तिभास्यत्वं हेतुः । अहंवृत्त्यभिव्यक्तचिद्भास्यत्वं वा हेतुस्तत्रेति शेषः । २ युष्मत्प्रत्ययगोचरस्य ।

**विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तम् ॥**

रत्नप्रभा ।

अनात्मन्यात्मतद्धर्माध्यासः किं न स्यात् ? । अहं स्फुरामि, सुखीत्याद्यनुभवादित्याशङ्क्याह–**तद्विपर्ययेणेति** ॥ तस्मादनात्मनो विपर्ययो विरुद्धस्वभावश्चैतन्यम्, इत्थम्भावे तृतीया । चैतन्यात्मना विषयिणस्तद्धर्माणां च योऽहङ्कारादौ विषयेऽध्यासः स मिथ्येति नास्तीति भवितुं युक्तम्, अध्याससामग्र्यभावात् [१] ॥ न ह्यत्र पूर्वप्रमाहितसंस्कारः सादृश्यमज्ञानं वाऽस्ति । निरवयवनिर्गुणस्वप्रकाशात्मनि गुणावयवसादृश्यस्य चाज्ञानस्य चायोगात् ॥ नन्वात्मनो निर्गुणत्वे तद्धर्माणामिति भाष्यं कथमिति **चेद्, उच्यते**–बुद्धिवृत्त्यभिव्यक्तं चैतन्यं ज्ञानं विषयाभेदेनाभिव्यक्तं स्फुरणं, शुभकर्मजन्यवृत्तिव्यक्तमानन्दः, इत्येवं वृत्त्युपाधिकृतभेदाज्ज्ञानादीनामात्मधर्मत्वव्यपदेशः । **तदुक्तं टीकायाम्**–"आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते" इति । अतो निर्गुणब्रह्मात्मत्वमतेऽहङ्करोमीति प्रतीतेरर्थस्य चाध्यासत्वायोगात्प्रमात्वम्, अहं नर इति सामानाधिकरण्यस्य गौणत्वमिति मतमास्थेयम् । तया च बन्धस्य सत्यतया ज्ञानान्निवृत्तिरूपफलासम्भवाद् बद्धमुक्तयोर्जीवब्रह्मणोरैक्यायोगेन विषयासम्भवाच्छास्त्रं नारम्भणीयमिति पूर्वपक्षभाष्यतात्पर्यम् । युक्तग्रहणात् पूर्वपक्षस्य दुर्बलत्वं सूचयति । **तथा–हि, किमध्यासस्य नास्तित्वमयुक्तत्वाद्**, अभानाद्वा, कारणाभावाद्वा ? **आद्य इष्ट इत्याह–तथापीति** ॥ एतदनुरोधादादौ यद्यपीति पठितव्यम् ॥ अध्यासस्यासङ्गस्वप्रकाशात्मन्ययुक्तत्वमलङ्कार इति भावः ॥ **न द्वितीय इत्याह–अयमिति** ॥ अज्ञः कर्त्ता मनुष्योऽहम्–इति प्रत्यक्षानुभवादध्यासस्याभानमसिद्धमित्यर्थः ॥ **न चेदं** प्रत्यक्षं कर्तृत्वादौ प्रमेति **वाच्यम्**, अपौरुषेयतया निर्दोषेणोपक्रमादिलिङ्गावधृततात्पर्येण च "तत्त्वमसि" [ छा० ६ । ८ । ७–१६ ] इत्यादिवाक्येनाकर्तृत्वब्रह्मत्वबोधनेनास्य भ्रमत्वनिश्चयात् ॥ न च ज्येष्ठप्रत्यक्षविरोधादागमज्ञानस्यैव बाध इति **वाच्यम्**, देहात्मवादप्रसङ्गात् ॥

भामती ।

महमिहास्मि सदन इति प्रयुञ्जानो लौकिकः शरीराद्यभेदग्रहादात्मनः प्रादेशिकत्वमभिमन्यते, नभस इव घटमणिकमल्लिकाद्युपाध्यवच्छेदादिति युक्तमुत्पश्यामः । न चाहंकारप्रामाण्याय देहादिवदात्मापि प्रादेशिक इति युक्तम् । तदा खल्वयमणुपरिमाणो वा स्याद्देहपरिमाणो वा । अणुपरिमाणत्वे स्थूलोऽहं दीर्घ इति च न स्यात् । देहपरिमाणत्वे तु सावयवतया देहवदनित्यत्वप्रसङ्गः । किंचास्मिन्पक्षेऽवयवसमुदायो वा चेतयेत् प्रत्येकं वावयवाः । प्रत्येकं चेतनत्वपक्षे बहूनां चेतनानां स्वतन्त्राणामैकवाक्यताभावा-

आनन्दगिरीय–न्यायनिर्णय ।

रूपताधीः । स मिथ्येत्यविद्यमानतोच्यते । अर्थाध्यासो ज्ञानाध्यासश्चेत्यध्यासयोर्नास्तित्वं वक्तुं द्विरध्यासवचनम् । आक्षेपमुपसंहरति—**इति भवितुमिति** । इति युक्तमिति वक्तव्ये भवितुमित्याक्षेपस्य संभावनैव मूलं न मानमिति दर्शयितुमुक्तम् । तदेवं मातृत्वादिबन्धस्य वस्तुतया विषयाद्यभावादनारम्यमिदं शास्त्रमित्याक्षेप्तुर्विवक्षितम् । अध्यासस्य नास्तित्वमयुक्तत्वादभानाद्वेति विकल्प्याऽऽद्यमङ्गीकरोति—**तथाऽपीति** । द्वितीयं प्रत्याह—**अयमिति** । मनुष्योऽहमिति प्रतीतेरध्यासस्वरूपापलापायोगादस्याश्च

१ पूर्वप्रमाजन्यसंस्कारसादृश्यादिरूपाध्याससामग्र्यभावात् । २ अहमिदं ममेदमित्ययं व्यवहारोऽध्यासः मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य प्रवृत्त इत्यन्वयक्रमाभिप्रायेण प्रतीकवैपरीत्यमित आरभ्य मूले इति भाति । ३ "उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये" इति श्लोकोक्ताः षडुपक्रमादयः । ४ निश्चित ।

रत्नप्रभा ।

मनुष्योऽहम्—इति प्रत्यक्षविरोधेन "अथायमशरीरः" [ बृह० ४ । ४ । ७ ] इत्यादिश्रुत्या देहाऽन्याऽऽत्मासिद्धेः । तस्मादिदं रजतमितिवत् सामानाधिकरण्यप्रत्यक्षस्य भ्रमत्वशङ्काकलङ्कितस्य नागमात् प्राबल्यमित्यास्थेयम् । किञ्च, ज्येष्ठत्वं पूर्वभावित्वं वा आगमज्ञानं प्रति, उपजीव्यत्वं वा ? । आद्ये न प्राबल्यं, ज्येष्ठस्यापि रजतभ्रमस्य पश्चाद्भाविना शुक्तिज्ञानेन बाधदर्शनात् । न द्वितीयः, आगमज्ञानोत्पत्तौ प्रत्यक्षादिमूलवृद्धव्यवहारे च संगतिग्रहद्वारा शब्दोपलब्धिद्वारा च प्रत्यक्षादेर्व्यावहारिकप्रामाण्यस्योपजीव्यत्वेऽपि तात्त्विकप्रामाण्यस्यानपेक्षितत्वादनपेक्षितांशस्यागमेन बाधसंभवादिति ॥ यत्तु क्षणिकयागस्य श्रुतिबलात् कालान्तरभाविफलहेतुत्ववत् "तथा विद्वान्नामरूपाद्विमुक्तः" [ मुण्ड० ३ । २ । ७ ] इति श्रुतिबलात् सत्यस्यापि ज्ञानान्निवृत्तिसम्भवादध्यासवर्णनं व्यर्थमिति । तन्न, ज्ञानमात्रनिवर्त्यस्य क्वापि सत्यत्वादर्शनात्, सत्यस्य चात्मनो निवृत्त्यदर्शनाच्च योग्यतानिश्चये सति सत्यबन्धस्य ज्ञानान्निवृत्तिश्रुतेर्बोधकत्वायोगात् ॥ न च सेतुदर्शनात् सत्यस्य पापस्य नाशदर्शनान्नायोग्यतानिश्चय इति वाच्यम्, तस्य श्रद्धानियमादिसापेक्षज्ञाननाश्यत्वात् । बन्धस्य च "नान्यः पन्थाः" [ श्वेता० ३ । ८ ] इति श्रुत्या ज्ञानमात्रान्निवृत्तिप्रतीतेः । अतः श्रुतज्ञाननिवर्त्यत्वनिर्वाहार्थमध्यस्तत्वं वर्णनीयम् । किञ्च, ज्ञानैकनिवर्त्यस्य किं नाम सत्यत्वम् ? न तावदज्ञानाजन्यत्वम्, "मायां तु प्रकृतिम्" [ श्वेता० ४ । १० ] इति श्रुतिविरोधान्मायाविद्ययोरैक्यात् ॥ नापि स्वाधिष्ठाने स्वाभावशून्यत्वम्, "अस्थूलम्" [ बृ० ३ । ८ । ८ ] इत्यादिनिषेधश्रुतिविरोधात् ॥ नापि ब्रह्मवद्बाधायोग्यत्वम्, ज्ञानान्निवृत्तिश्रुतिविरोधात् ॥ अथ व्यवहारकाले बाधशून्यत्वम्, तर्हि व्यावहारिकमेव सत्यत्वमित्यागतमध्यस्तत्वम् । तच्च श्रुत्यर्थे योग्यताज्ञानार्थं वर्णनीयमेव यागस्यापूर्वद्वारत्ववत् ॥ न च तदनन्यत्वाधिकरणे [ व्या० सू० २ । १ । १९ ] तस्य वर्णनात् पौनरुक्त्यम् ॥ तत्रोक्ताध्यासस्यैव प्रवृत्त्यङ्गविषयादिदिसिद्ध्यर्थमादौ स्मार्यमाणत्वादिति दिक् ॥ अध्यासं द्वेधा दर्शयति—लोकव्यवहार इति ॥ लोक्यते मनुष्योऽहमित्यभिमन्यत इति लोकः—अर्थाध्यासः । तद्विषयो व्यवहारोऽभिमान इति ज्ञानाध्यासो

भामती ।

दपर्यायं विरुद्धदिक्क्रियतया शरीरमुन्मथ्येत । अक्रियं वा प्रसज्येत । समुदायस्य तु चैतन्ययोगे वृक्ण एकस्मिन्नवयवे चिदात्मनोऽप्यवयवो वृक्ण इति न चेतयेत् । न च बहूनामवयवानामविनाभावनियमो दृष्टः । य एवावयवो विशीर्णस्तदा तदभावे न चेतयेत् । विज्ञानालम्बनत्वेऽप्यहंप्रत्ययस्य भ्रान्तत्वं तदवस्थमेव । तस्य स्थिरवस्तुनिर्भासत्वादस्थिरत्वाच्च विज्ञानानाम् । एतेन स्थूलोऽहमन्धोऽहं गच्छामीत्यादयोऽप्यध्यासतया व्याख्याताः । तदेवमुक्तक्रमेणाहंप्रत्यये पूतिकूष्माण्डीकृते भगवती श्रुतिरप्रत्यूहं कर्तृत्वभोक्तृत्वसुख-

आनन्दगिरीय न्यायनिर्णयः ।

देहातिरिक्तात्मवादे प्रमात्वाभावात्तदनुरूपं कारणं कल्प्यमिति भावः । अपरोक्षमध्यासं द्वेधा विभजन्विशेष्यं निर्दिशति—लोकव्यवहार इति । लोक्यते मनुष्योऽहमिति ज्ञायत इति ज्ञानोपसर्जनोऽर्थाध्यासो लोकविषयो व्यवहार इत्यर्थोपसर्जनो ज्ञानाध्यासश्चोक्तः । कोऽयमध्यासो यो विषयादिसिद्धिहेतुरित्याशंक्य तल्लक्षणमाह—

१ अज्ञः कर्ता मनुष्योऽहमित्यादिरूपस्य । २ उपजीव्यते कार्यार्थमाश्रीयते इत्युपजीव्यं कारणं, तस्य भावस्त्वम् । ३ बंधस्येति शेषः । ४ अयमभिप्रायः—यदि बन्धे सत्यत्वं त्वन्मते तदा तूपनिषदां सहस्रैरपि बन्धनिवृत्तिर्न शक्यते बोधयितुम् । बंधो, ननिवृत्तिप्रतियोगी, सत्यत्वात्, आत्मवद्—इत्यनुमानेन तस्य निवृत्त्यभावबोधनादिति । ५. मायामासेन जीवेशौ करोति, माया चाविद्या च स्वयमेव भवतीति श्रुतेस्तयोरैक्यमवसेयम् । ६ तदनन्यत्वाधिकरणमित्यारम्भणाधिकरणमिति चोभयथा व्यवहारः । ७ बन्धाध्यस्तत्वस्य ।

**तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेनात्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः–**

रत्नप्रभा ।

दर्शितः ॥ द्विविधाध्यासस्वरूपलक्षणमाह–**अन्योन्यस्मिन्नित्यादिना–धर्मधर्मिणोरित्यन्तेन** ॥ जाड्यचैतन्यादिधर्माणां धर्मिणावहङ्कारात्मानौ तयोरत्यन्तं भिन्नयोरितरेतरभेदाग्रहेणान्योन्यस्मिन् अन्योन्यतादात्म्यमन्योन्यधर्मांश्च व्यत्यासेनाध्यस्य लोकव्यवहार इति **योजना** । अतः सोऽयमिति प्रमाया नाध्यासत्वं तदिदमर्थयोः कालभेदेन कल्पितभेदेऽप्यत्यन्तभेदाभावादिति **वक्तुमत्यन्तेत्युक्तम्** ॥ न च धर्मितादात्म्याध्यासे धर्माध्याससिद्धेः धर्मांश्चेति व्यर्थमिति वाच्यम्, अन्धत्वादीनामिन्द्रियधर्माणां धर्म्यध्यासास्फुटत्वेऽप्यन्धोऽहमिति स्फुटोऽध्यास इति ज्ञापनार्थत्वात् ॥ नन्वात्मानात्मनोः परस्पराध्यस्तत्वे

भामती ।

दुःखशोकाद्यात्मत्वमहमनुभवप्रसञ्जितमात्मनो निषेद्धुमर्हतीति । तदेवं सर्वप्रवादिश्रुतिस्मृतीतिहासपुराणप्रथितमिथ्याभावस्याहंप्रत्ययस्य स्वरूपनिमित्तफलैरुपव्याख्यानम्–**अन्योन्यस्मिन्नित्यादि** । अत्र चान्योन्यस्मिन्धर्मिण्यात्मशरीरादौ 'अन्योन्यात्मकताम्' अध्यस्याहमिदं शरीरादीति । इदमिति च वस्तुतः, न प्रतीतितः । लोकव्यवहारो लोकानां व्यवहारः, स चायमहमिति व्यपदेशः । इतिशब्दसूचितश्च शरीराद्यनुकूलं प्रतिकूलं च प्रमेयजातं प्रमाणेन प्रमाय तदुपादानपरिवर्जनादिः । 'अन्योन्यधर्मांश्चाध्यस्य' अन्योन्यस्मिन्धर्मिणि देहादिधर्माञ्जन्ममरणजराव्याध्यादीनात्मनि धर्मिणि अध्यस्तदेहादिभावे समारोप्य, तथा चैतन्यादीनात्मधर्मान्देहादावध्यस्तात्मभावे समारोप्य, ममेदं जरामरणपुत्रपशुस्वाम्यादीतिव्यवहारो व्यपदेशः; इतिशब्दसूचितश्च तदनुरूपः प्रवृत्त्यादिः । अत्र चाध्यासव्यवहारक्रियाभ्यां यः कर्तोन्नीतः स समान इति समानकर्तृत्वेनाध्यस्य व्यवहार इत्युपपन्नम् । पूर्वकालत्वसूचितमध्यासस्य व्यवहारकारणत्वं सूचयति–**मिथ्याज्ञाननिमित्तः–व्यवहारः** । मिथ्याज्ञानमध्यासस्तन्निमित्तः । तद्भावाभावानुविधानाद्व्यवहारभावाभावयोरित्यर्थः । तदेवमध्यासस्वरूपं फलं च व्यवहारमुक्त्वा तस्य निमित्तमाह–**इतरेतराविवेकेन** । विवेकाग्रहेणेत्यर्थः । अथाविवेक एव कस्मान्न भवति, तथा च नाध्यास इत्यत आह–**अत्यन्तविविक्तयोर्धर्मधर्मिणोः** । परमार्थतो धर्मिणोरतादात्म्यं विवेको धर्माणां चासंकीर्णता विवेकः । स्यादेतत्, विविक्तयोर्वस्तुसतोर्भेदाग्रहनिबन्धनस्तादात्म्यविभ्रमो युज्यते, शुक्तेरिव रजताद्भेदाग्रहे रजततादात्म्यविभ्रमः । इह तु परमार्थसतश्चिदात्मनो न भिन्नं देहाद्यस्ति वस्तुसत्, तत्कुतश्चिदात्मनो भेदाग्रहः कुतश्च तादात्म्यविभ्रम

आनन्दगिरीय न्यायनिर्णयः ।

**अन्योन्यस्मिन्नित्यादिना धर्मधर्मिणोरित्यन्तेन** । तत्रान्यस्मिन्नन्यावभास इत्युक्ते प्रतिमायां देवतादृष्टिरपि भ्रान्तिः स्यात्ततो विशिनष्टि–**अन्योन्यस्मिन्निति** । तत्र देवतादृष्टिमात्रमारोप्यं न प्रतिमादृष्टिर्ब्रह्मदृष्टिरुत्कर्षादिति न्यायात् । पटं तन्तवः स च तन्तुष्विति लोकवादिदृष्ट्या तन्तुपटयोरन्योन्याधारत्वधियोऽध्यासत्वप्राप्तावुक्तमन्योन्यात्मकतामिति । पटेः शुक्लः शुक्लः पट इति प्रमाव्यावृत्त्यर्थमितरेतराविवेकेनेति । इत्थंभावे तृतीया । स्वरूपविवेकतिरस्कारेणाभेदधीरध्यासो नैवं शुक्लपटादिधीरित्यर्थः ॥ स एवायमयमेव स इत्यैक्यप्रमां प्रत्याह–**विविक्तयोर्धर्मिणोरिति** । औपाधिकभेदाभासतिरस्कारेण प्रत्यभिज्ञायामैक्यं प्रमीयते विविक्तयोर्धर्मिणोर्विवेकं तिरस्कृत्यैक्यधीर्भ्रान्तिरित्यर्थः । प्रत्यभिज्ञानेऽपि कालद्वयवैशिष्ट्यादस्ति विविक्ततेति विविक्तपदस्यातद्व्यावर्तकत्वमाशंक्याऽऽह–**अत्यन्तेति** । आत्मनो

१ अत्यन्तपदोपादानात् ।

**सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोयं लोकव्यवहारः ॥**

रत्नप्रभा ।

शून्यवादः स्यादित्याशङ्क्याह—सत्यानृते मिथुनीकृत्येति ॥ सत्यम् अनिदं चैतन्यम्, तस्यानात्मनि संसर्गमात्राध्यासो, न स्वरूपस्य ॥ अनृतं—युष्मदर्थः, तस्य स्वरूपतोऽप्यध्यासात्तयोर्मिथुनीकरणमध्यास इति, न शून्यतेत्यर्थः ॥ नन्वध्यासमिथुनीकरणलोकव्यवहारशब्दानामेकार्थत्वेऽप्यस्य--मिथुनीकृत्येति पूर्वकालत्ववाचित्क्काप्रत्ययादेशस्य ल्यपः कथं प्रयोग इति चेत् । न, अध्यासव्यक्तिभेदात् । तत्र पूर्वपूर्वाध्यासस्योत्तरोत्तराध्यासं प्रति संस्कारद्वारा पूर्वकालत्वेन हेतुत्वद्योतनार्थं ल्यपः प्रयोगः । तदेव स्पष्टयति—नैसर्गिक इति ॥ प्रत्यगात्मनि हेतुहेतुमद्भावेनाध्यासप्रवाहोऽनादिरित्यर्थः ॥ ननु प्रवाहस्यावस्तुत्वादध्यासव्यक्तीनां सादित्वात्कथमनादित्वमिति चेद् । उच्यते—अध्यासत्वावच्छिन्नव्यक्तीनां मध्येऽन्यतमया व्यक्त्या विनाऽनादिकालस्याऽवर्तनं कार्यानादित्वमित्यङ्गीकारात् । एतेन कारणाभावादिति कल्पो निरस्तः, संस्कारस्य निमित्तस्य नैसर्गिकपदेनोक्तत्वात् ॥ न च पूर्वप्रमाजन्य एव संस्कारो हेतुरिति वाच्यम् , लाघवेन पूर्वानुभवजन्यसंस्कारस्य हेतुत्वात् । अतः पूर्वाध्यासजन्यसंस्कारोऽस्तीति सिद्धम् ॥ अध्यास-

भामती ।

इत्यत आह—सत्यानृते मिथुनीकृत्य । विवेकाग्रहादध्यस्येति योजना । सत्यं चिदात्मा, अनृतं बुद्धीन्द्रियदेहादि, ते द्वे धर्मिणी मिथुनीकृत्य युगलीकृत्येत्यर्थः । न च संवृतिपरमार्थसतोः पारमार्थिकं मिथुनमस्तीत्यभूततद्भावार्थस्य च्वेः प्रयोगः । एतदुक्तं भवति—अप्रतीतस्यारोपायोगादारोप्यस्य प्रतीतिरुपयुज्यते न वस्तुसत्त्वेति । स्यादेतत् । आरोप्यस्य प्रतीतौ सत्यां पूर्वदृष्टस्य समारोपः समारोपनिबन्धना च प्रतीतिरिति दुर्वारं परस्पराश्रयत्वमित्यत आह—नैसर्गिक इति । स्वाभाविकोऽनादिरयं व्यवहारः । व्यवहारानादितया तत्कारणस्याध्यासस्यानादितोक्ता, ततश्च पूर्वपूर्वमिथ्याज्ञानोपदर्शितस्य बुद्धीन्द्रियशरीरादेरुत्तरोत्तराध्यासोपयोग इत्यनादित्वाद्बीजाङ्कुरवन्न परस्पराश्रयत्वमित्यर्थः । स्यादेतत् । अद्धा पूर्वप्रतीतिमात्रमुपयुज्यत आरोपे, न तु प्रतीयमानस्य परमार्थसत्ता । प्रतीतिरेव त्वत्यन्तासतो गगनकमलिनीकल्पस्य देहेन्द्रियादेर्नोपपद्यते । प्रकाशमानत्वमेव हि चिदात्मनोऽपि सत्त्वं न तु तदतिरिक्तं सत्तासामान्यसमवायोऽर्थक्रियाकारिता वा, द्वैतापत्तेः । सत्तायाश्चार्थक्रियाकारितायाश्च सत्तान्तरार्थक्रियाकारितान्तरकल्पनेऽनवस्थापातात् , प्रकाशमानतैव सत्ताऽभ्युपेतव्या । तथा च देहादयः प्रकाशमानत्वान्नासन्तः, चिदात्मवत् । असत्त्वे वा न प्रकाश-

आनन्दगिरीय न्यायनिर्णय

बुद्ध्यादेश्च स्वच्छत्वादिना साम्यादत्यन्तविवेकासिद्धिमाशंक्य जडत्वाजडत्वयोस्तद्धर्मयोरत्यन्तविवेकाद्धर्मिणोरपि तत्सिद्धिरित्याह—अत्यन्तविविक्तयोर्धर्मधर्मिणोरिति । उक्तरूपयोर्धर्मधर्मिणोरन्योन्यस्मिन्नन्योन्यात्मकतारूप इतरेतराविवेकात्मकोऽध्यास इति समुदायार्थः । अन्योन्यधर्मांश्चेति पृथक्कथनमन्धोऽहमित्यादौ धर्माध्यासे प्राधान्यसूचनार्थम् । नन्वितरेतराविवेकार्थे द्वयोः स्वरूपतिरस्कारे कथमन्योन्यस्मिन्निति लक्षणांशसिद्धिस्तत्सिद्धये द्वयोः स्वरूपोपस्थितौ कथमविवेकोपपत्तिरत आह—सत्येति । सत्यमनिदं चैतन्यं तस्य संसृष्टरूपेणाध्यस्तत्वेऽपि स्वरूपेणानध्यस्तत्वादनृतमहंकारादिः स्वरूपतोऽप्यध्यस्तत्वात्तदुभयमिथुनीकरणरूपोऽध्यास इति यावत् । असत्यसर्पस्य सत्यरज्ज्वां तन्मात्रतया निमज्जनवदसत्याहंकाराः

१, कां० पा० विकल्पो ।

रत्नप्रभा ।

स्योपादानमाह-**मिथ्याज्ञाननिमित्त** इति । मिथ्या च तदज्ञानं च मिथ्याज्ञानं, तन्निमित्तमुपादानं यस्य स तन्निमित्तस्तदुपादान इत्यर्थः । अज्ञानस्योपादानत्वेऽपि संस्कुरदात्मतत्त्वावरकतया दोषत्वेनाहंकाराध्यासकर्तुरीश्वरस्योपाधित्वेन संस्कारकालकर्मादिनिमित्तपरिणामित्वेन च निमित्तत्वमिति द्योतयितुं **निमित्तपदम्** । स्वप्रकाशात्मन्यसंगे कथमविद्यासंग इति शंकानिरासार्थं **मिथ्यापदम्** । प्रचण्डमार्तण्डमण्डले पेचकानुभवसिद्धान्धकारवदहमज्ञः-इत्यनुभवसिद्धमज्ञानं दुरपह्नवं कल्पितस्याधिष्ठानास्पर्शित्वात्, नित्यस्वरूपज्ञानस्याविरोधित्वाच्चेति । **यद्वाऽज्ञानं** ज्ञानाभाव इति शंकानिरासार्थं **मिथ्यापदम्** । मिथ्यात्वे सति साक्षाज्ज्ञाननिवर्त्यत्वम्-**अज्ञानस्य लक्षणं** मिथ्याज्ञानपदेनोक्तम् । ज्ञानेनेच्छाप्रागभावः साक्षान्निवर्त्यत इति वदन्तं प्रति **मिथ्यात्वे सतीत्युक्तम्** । अज्ञाननिवृत्तिद्वारा ज्ञाननिवर्त्यत्वेऽतिव्याप्तिनिरासाय-**साक्षादिति** । अनाद्युपादानत्वे सति मिथ्यात्वं वा-**लक्षणम्** । ब्रह्मनिरासार्थं-**मिथ्यात्वमिति** । मृदादिनिरासार्थ**मनादीति** । अविद्यात्मनोः सम्बन्धनिरासार्थम् **उपादानत्वे सतीति** ॥ संप्रति अध्यासं द्रढयितुमभिलषति-**अहमिदं ममेदमिति** ॥ आध्यात्मिककार्याध्यासेष्वहमिति प्रथमोऽध्यासः । न चाधिष्ठानारोप्यांशद्वयानुपलम्भान्नायमध्यास इति **वाच्यम्**, अयो दहतीतिवत् अहमुपलभे-इति दृक्दृश्यांशयोरुपलम्भात् । इदंपदेन भोग्यः संघात उच्यते । अत्राऽहमिदमित्यनेन मनुष्योऽहमिति तादात्म्याध्यासो दर्शितः । ममेदं शरीरमिति संसर्गाध्यासः ॥ ननु देहात्मनोस्तादात्म्यमेव संसर्ग इति तयोः को भेद इति **चेत्** । **सत्यम्**, सत्यैक्ये सति मिथोऽभेदः-**तादात्म्यम्** । तत्र मनुष्योऽहमित्यैक्यांशभानं, ममेदमिति भेदांशरूपसंसर्गभानमिति भेदः । **एवं** सामग्रीसत्त्वादनुभवसत्त्वादध्यासोऽस्तीत्यतो ब्रह्मात्मैक्ये विरोधाभावेन विषयप्रयोजनयोः सत्त्वाच्छास्त्रमारम्भणीयमिति सिद्धान्तभाष्यतात्पर्यम् ॥ **एवं** सूत्रेणार्थात्सूचिते विषयप्रयोजने प्रतिपाद्य तद्धेतुमध्यासं लक्षण-

भामती ।

मानाः, तत्कथं सत्यानृतयोर्मिथुनीभावः, तदभावे वा कस्य कुतो भेदाग्रहः, तदसंभवे कुतोऽध्यास इत्या-

आनन्दगिरीय-न्यायनिर्णयः ।

सत्यचिन्मात्रतया निमज्जनादेकत्वभ्रमः सत्यासत्ययोरात्मानात्मनोस्तर्कतो विविच्यमानत्वादन्योन्यस्मिन्निति लक्षणांशश्च संभवतीति भावः । किं पुनरध्यासस्य कारणमित्याशंक्य निमित्तमात्रमुपादानं वा निमित्तविशेषो वा पृच्छ्यत इति विकल्प्याऽऽद्यौ प्रत्याह-**मिथ्येति** । मिथ्या च तदज्ञानं च तन्निमित्तमुपादानं यस्य सोऽध्यासस्तथा । तत्र मिथ्येत्युक्ते भ्रान्तिज्ञानप्रस्तावज्ज्ञानमित्युक्तं तन्मात्रग्रहे ज्ञानाभावशङ्कायां मिथ्येति तेनानिर्वाच्यत्वेनाभावविलक्षणं ज्ञाननिवर्त्यमनाद्यज्ञानं तदुपादानोऽध्यास इत्यर्थः । एतदेवाज्ञानं संस्कारकालकर्मादिरूपेण परिणतमध्यासनिमित्तमिति वक्तुं निमित्तग्रहणम् । निमित्तविशेषप्रश्नं प्रतिवक्ति-**नैसर्गिक इति** । प्रत्यक्चैतन्यसत्तामात्रानुबन्धी प्रवाहरूपेणानादिरिति यावत् । न च प्रवाहरूपस्य प्रवाहिव्यतिरेकिणोऽसत्त्वात्प्रवाहिव्यक्तीनां च सादित्वात्कुतो नैसर्गिकत्वमिति वाच्यम् । प्रवाहिव्यक्तीनामन्यतमव्यक्त्या विना पूर्वकालानवस्थानं कार्येष्वनादितेत्यभ्युपगमात् । यद्वा-कारणरूपेणास्यानादित्वं

१ अर्थक्रमानुरोधेन प्रतीकवैपरीत्यमिति भाति । सर्वत्रानन्दगिरिटीकास्वपि तथैव दर्शनात् ( १५ पृष्ठे ) २ दिवान्धस्योलूकस्य । ३ प्रतियोगिप्रागभावनिवृत्तिः प्रतियोगिस्वरूपान्नातिरिच्यते इति चिरंतनतार्किकप्रसिद्धि । तन्मते इच्छाप्रागभावनिवृत्तेरिच्छास्वरूपानतिरिक्ततया इच्छाया ज्ञानसाध्यत्वांगीकारादेव इच्छाप्रागभावनिवृत्तेरपि ज्ञानसाध्यत्वसंभवादिति बोध्यम् । ४ दर्शित इति पूर्वोक्तमत्रानुवर्त्य चकारं चाध्याहृत्य संसर्गाध्यासश्च दर्शित इति बोध्यम् । ५ कां० पा० मुद्रिते ।

**आह कोऽयमध्यासो नामेति ?। उच्यते । स्मृतिरूपः परत्र पूर्वदृष्टावभासः ।**

रत्नप्रभा ।

सम्भावनाप्रमाणैः साधयितुं लक्षणं पृच्छति—**आहेति** ॥ किंलक्षणकोऽध्यास इत्याह पूर्ववादीत्यर्थः ॥ अस्य शास्त्रस्य तत्त्वनिर्णयप्रधानत्वेन वादकथात्वद्योतनार्थमाहेति परोक्तिः । आहेत्यादि—**कथं पुनः प्रत्यगात्म**नीत्यतः प्रागध्यासलक्षणपरं भाष्यं, तदारभ्य संभावनापरम्, **तमेतमविद्याख्य**मित्यारभ्य—**सर्वलोकप्रत्यक्ष** इत्यन्तं प्रमाणपरमिति विभागः ॥ लक्षणमाह—**उच्यते स्मृतिरूप इति** । अध्यास इत्यनुषंगः । अत्र परत्रावभास इत्येव लक्षणम् । शिष्टं पदद्वयं तदुपपादनार्थम् । **तथाहि**—अवभास्यत इत्यवभासो रजताद्यर्थः, तस्यायोग्यमधिकरणं **परत्रपदार्थः** । अधिकरणस्यायोग्यत्वमारोप्यात्यन्ताभाववत्त्वं, तद्वत्त्वं वा ? तथा चैकावच्छेदेन स्वसंसृज्यमाने स्वात्यन्ताभाववत्यवभास्यत्वमध्यस्तत्वमित्यर्थः ॥ इदं च साद्यनाद्यध्याससाधारणं लक्षणम् । संयोगेऽतिव्याप्तिनिरासाय **एकावच्छेदेनेति** ॥ संयोगस्य स्वसंसृज्यमाने वृक्षे स्वात्यन्ताभाववत्यवभास्यत्वेऽपि स्वस्वात्यन्ताभावयोर्मूलाग्रावच्छेदकभेदान्नातिव्याप्तिः । पूर्वं स्वाभाववति भूतले पश्चादानीतो घटो भातीति घटेऽतिव्याप्तिनिरासायं **संसृज्यमाने इति** पदम् । तेन स्वाभावकाले प्रतियोगिसंसर्गस्य विद्यमानतोच्यते इति नातिव्याप्तिः ॥ भूत्वावच्छेदेनावभास्यगन्धेऽतिव्याप्तिवारणाय स्वात्यन्ताभाववतीति पदम् । शुक्तायिदन्त्वावच्छेदेन रजतसंसर्गकालेऽत्यन्ताभावोऽस्तीति

भामती ।

शयवानाह—**आह** आक्षेप्ता—**कोऽयमध्यासो नाम** । क इत्याक्षेपः । समाधाता लोकसिद्धमध्यासलक्षणमाचक्षाण एवाक्षेपं प्रतिक्षिपति । **उच्यते—स्मृतिरूपः परत्र पूर्वदृष्टावभासः** । अवसन्नोऽवमतो

आनन्दगिरीय—न्यायनिर्णयः ।

कार्यात्मना नैमित्तिकत्वमित्युभयमविरुद्धम् । अध्यस्य मिथुनीकृत्येति क्त्वाप्रत्ययो नाध्यासस्य पूर्वकालत्वमन्यत्वं च लोकव्यवहारादङ्गीकृत्य प्रयुक्तो लोकव्यवहारस्याध्यासतया क्रियान्तरत्वाभावादतो वस्तुतोऽपौर्वापर्येऽपि विशेषणभेदेन कल्पितभेदं वस्तुतत्प्रतिपत्तिक्रमेण पौर्वापर्यं च । तदालम्बनमनुभवं द्रढयितुमध्यासमभिनयति—**अहमिति** । तत्राहमिति कार्याध्यासेष्वाद्योऽध्यासस्तस्याध्यासत्वं चिदचिदात्मत्वात् । इदमिति भोक्तुर्भोगसाधनं कार्यकरणसंघातो ममेदमित्यहंकर्त्रा स्वत्वेन तस्य संबन्धस्तयोश्चेदं ममेदमिति दृष्टयोरध्यस्तत्वमध्यस्तभोक्तृशेषत्वात्स्वप्नादावध्यस्तराजोपकरणवत् । तदेवं पूर्वभाष्योक्तरीत्या युक्तिशून्योऽप्यत्यन्तविविक्तयोरित्यादिना लक्षितः सत्यानृतमिथुनीकरणरूपत्वेन संभावितो विशिष्टकारणप्रसूतो नैसर्गिकत्वादागन्तुकदोषानपेक्षोऽहमिदमित्यादिप्रकारैर्निरूपितप्रतिभासत्वेन प्रत्यक्षत्वाज्ज्ञेयाध्यासो ज्ञानाध्यासश्चाशक्योऽपह्नोतुमित्यसत्यत्वाद्बन्धस्य विषयादिसंभवादारभ्यमिदं शास्त्रमित्यभिसंधिः । शास्त्रारम्भहेतुविषयादिसाधकमध्यासमाक्षेपसमाधिभ्यां संक्षिप्य तमेव लक्षणसंभावनाप्रमाणैः स्फुटीकर्तुं चोदयति—**आहेति** । शास्त्रस्य तत्त्वनिर्णयार्थतया वादत्वात्तत्र गुरुशिष्ययोरधिकारात्पुरस्थितमिव शिष्यं गृहीत्वा परोक्तिः । इत आरभ्य कथं पुनः प्रत्यगात्मनीत्यतः प्रागध्यासलक्षणपरं भाष्यम् । तस्मादारभ्य तमेतमविद्याख्यमित्यतः प्राक्तनं तत्संभावनाया एतदादि सर्वलोकप्रत्यक्ष इत्यन्तं तन्निर्णयायेति विभागः । समाधानभाष्येऽध्यासलक्षणनिर्देशेऽपि प्रसिद्धाध्यासलक्षणे निर्णीते प्रागुक्तलक्षणस्य तद्विशेषतया सिद्धिरिति मत्वा प्रसिद्धाध्यासं पृच्छति—**कोऽयमिति** । किंशब्दस्याऽऽक्षेपेऽपि संभवादत्र सोऽपि विवक्ष्यते । आत्मन्यध्यस्तोऽनात्मे-

१ नाम । उच्यते इति क्वचित्पाठः । २ अवशिष्टमित्यर्थः । ३ अभावस्याधिकरणानतिरिक्तत्व' तं आद्यम् । अतिरिक्तत्वमते द्वितीयम् । ४ स्वसंसर्गवतीत्यर्थः । ५ पृथिवीत्वावच्छेदेनेत्यर्थः ।

रत्नप्रभा।

नाव्याप्तिः। नन्वस्य लक्षणस्यासम्भवः, शुक्तौ रजतस्य सामग्र्यभावेन संसर्गासत्त्वात्। न च स्मर्यमाणसत्यरजतस्यैव परत्र शुक्तावत्रभास्यत्वेनाध्यस्तत्वोक्तिरिति वाच्यम्, अन्यथाख्यातिप्रसङ्गादित्यत आह-**स्मृतिरूप इति**॥ स्मर्यते इति स्मृतिस्सत्यरजतादिः, तस्य रूपमिव रूपमस्येति स्मृतिरूपः। स्मर्यमाणसदृश इत्यर्थः। सादृश्योक्त्या स्मर्यमाणादारोप्यस्य भेदान्नान्यथाख्यातिरित्युक्तं भवति। सादृश्यमुपपादयति-**पूर्वदृष्टेति**॥ दृष्टं दर्शनं संस्कारद्वारा पूर्वदर्शनादवभास्यत इति पूर्वदृष्टावभासः। तेन संस्कारजन्यज्ञानविषयत्वं स्मर्यमाणारोप्ययोः सादृश्यमुक्तं भवति। स्मृत्यारोपयोः संस्कारजन्यत्वात्। न च संकारजन्यत्वादारोपस्य स्मृतित्वापत्तिरिति वाच्यम्, दोषसंप्रयोगजन्यत्वस्यापि विवक्षितत्वेन संस्कारमात्रजन्यत्वाभावात्। अत्र **सम्प्रयोगशब्देन**-अधिष्ठानसामान्यज्ञानमुच्यते। अहङ्काराध्यासे इन्द्रियसंप्रयोगालाभात्। एवं च दोषसंप्रयोगसंस्कारबलाच्छुक्त्यादौ रजतमुत्पन्नमस्तीति परत्र परावभास्यत्वलक्षणमुपपन्नमिति स्मृतिरूपपूर्वदृष्टपदाभ्यामुपपादितम्॥ **अन्ये तु**-ताभ्यां दोषादित्रयजन्यत्वं कार्याध्यासलक्षणमुक्त**मित्याहुः**॥ **अपरे तु**-स्मृतिरूपः स्मर्यमाणसदृशः, सादृश्यं च प्रमाणाजन्यज्ञानविषयत्वम्। स्मृत्यारोपयोः प्रमाणाजन्यत्वात्पूर्वदृष्टपदं तज्जातीयपरम्। अभिनवरजतादेः पूर्वदृष्टत्वाभावात्। तथा च प्रमाणाजन्यज्ञानविषयत्वे सति पूर्वदृष्टजातीयत्वं प्रातीतिकाध्यासलक्षणं ताभ्यामुक्तम्। परत्रावभासशब्दाभ्यामध्यासमात्रलक्षणं व्याख्यातमेव। तत्र स्मर्यमाणगङ्गादावभिनवघटे चातिव्याप्तिनिरासाय प्रमाणेत्यादिपदद्वय**मित्याहुः**। तत्रार्थाध्यासे स्मर्यमाणसदृशः परत्र पूर्वदर्शनादवभास्यत इति **योजना**। ज्ञानाध्यासे तु स्मृतिसदृशः परत्र पूर्वदर्शनादवभासत इति वाक्यं योजनीयमिति **संक्षेपः**॥ ननु अध्यासे वादिविप्रतिपत्तेः कथमुक्तलक्षणसि-

भामती।

वा भासोऽवभासः। प्रत्ययान्तरबाधश्चास्यावसादोऽवमानो वा। एतावता मिथ्याज्ञानमित्युक्तं भवति। तस्येदमुपव्याख्यानम् 'पूर्वदृष्ट-'इत्यादि। पूर्वदृष्टस्यावभासः पूर्वदृष्टावभासः। मिथ्याप्रत्ययश्चारोपविषयारोपणीयस्य मिथुनमन्तरेण न भवतीति पूर्वदृष्टग्रहणेनानृतमारोपणीयमुपस्थापयति। तस्य च दृष्टत्वमात्रमुपयुज्यते न वस्तुसत्तेति दृष्टग्रहणम्। तथापि वर्तमानं दृष्टं दर्शनं नारोपोपयोगीति पूर्वेत्युक्तम्। तत्र पूर्वदृष्टं स्वरूपेण सदप्यारोपणीयतयानिर्वाच्यमित्यनृतम्। आरोपविषयं सत्यमाह-**परत्रेति**। परत्र शुक्तिकादौ परमार्थसति, तदनेन सत्यानृतमिथुनमुक्तम्। स्यादेतत्। परत्र पूर्वदृष्टावभास इत्यलक्षणम्, अतिव्यापकत्वात्। अस्ति हि स्वस्तिमत्यां गवि पूर्वदृष्टस्य गोत्वस्य, परत्र कालाक्ष्यामवभासः। अस्ति च पाटलिपुत्रे पूर्वदृष्टस्य देवदत्तस्य परत्र माहिष्मत्यामवभासः समीचीनः। अवभासपदं च समीचीनेऽपि प्रत्यये प्रसिद्धम्, यथा नीलस्यावभासः पीतस्यावभास इत्यत आह-**स्मृतिरूप इति**। स्मृते रूपमिव रूपमस्येति स्मृतिरूपः। असंनिहितविषयत्वं च स्मृतिरूपत्वं, संनिहितविषयं च प्रत्यभिज्ञानं समीचीनमिति नातिव्याप्तिः। नाप्यव्याप्तिः, स्वप्नज्ञानस्यापि स्मृतिविभ्रमरूपस्यैवंरूपत्वात्। तत्रापि हि

आनन्दगिरीय-न्यायनिर्णयः।

तिविशेषोक्तेरसदृश्योश्चाधिष्ठानाधिष्ठेयत्वायोगादसंभावनया विशेषाक्षेपात्प्रश्नाक्षेपयोर्भिन्नार्थत्वादुपपत्तिरिति भावः। अध्यासासाधारणस्वरूपधीहेतुत्वेन लक्षणस्याभ्यर्हितत्वादाक्षेपमुपेक्ष्य पृष्टमेवेति मत्वाऽऽह-**उच्यत इति**। अत्र प्रश्नवाक्यस्थाध्यासपदानुषङ्गान्न साकाङ्क्षत्वम्। परत्रेत्युक्ते परस्येत्यार्थिकं परत्र परावभास

१ अध्यासलक्षणे। २ दोषसंप्रयोगसंस्कारा दोषादयः-त्रयः। ३ "आत्मख्यातिरसख्यातिः ख्यातिरख्यातिरन्यथा। तथा निर्वचनख्यातिरित्येतत्ख्यातिपञ्चकम्" इति पञ्च ख्यातयः।

रत्नप्रभा।

द्विरित्याशङ्क्याधिष्टानारोप्यस्वरूपविवादेऽपि परत्र परावभास—इति लक्षणे संवादायुक्तिभिः सत्या-

भामती ।

स्मर्यमाणे पित्रादौ निद्रोपप्लववशादसंनिधानापरामर्शी, तत्र तत्र पूर्वदृष्टस्यैव संनिहितदेशकालत्वस्य समारोपः । एवं पीतः शङ्खस्तिक्तो गुड इत्यत्राप्येतल्लक्षणं योजनीयम् । तथाहि—बहिर्विनिर्गच्छदत्यच्छनयनरश्मिसंपृक्तपित्तद्रव्यवर्तिनीं पीततां पित्तरहितामननुभवन्, शङ्खं च दोषाच्छादितशुक्लिमानमनुभवन्, पीततायाश्च शङ्खासंबन्धमनुभवन्, असंबन्धाग्रहणसारूप्येण पीतं तपनीयपिण्डं पीतं बिल्वफलमित्यादौ पूर्वदृष्टं सामानाधिकरण्यं पीतत्वशङ्खत्वयोरारोप्याह—पीतः शङ्ख इति । एतेन तिक्तो गुड इति प्रत्ययो व्याख्यातः । एवं विज्ञातृपुरुषाभिमुखेष्वादर्शोदकादिषु स्वच्छेषु चाक्षुषं तेजो लग्नमपि बलीयसा सौर्येण तेजसा प्रतिस्रोतः प्रवर्तितं मुखसंयुक्तं मुखं ग्राहयत्, दोषवशात्तद्देशतामनभिमुखतां च मुखस्याग्राहयत्, पूर्वदृष्टाभिमुखादर्शोदकदेशतामाभिमुख्यं च मुखस्यारोपयतीति प्रतिबिम्बविभ्रमोऽपि लक्षितो भवति । एतेन द्विचन्द्रदिङ्मोहालातचक्रगन्धर्वनगरवंशोरगादिविभ्रमेष्वपि यथासंभवं लक्षणं योजनीयम् । एतदुक्तं भवति—न प्रकाशमानतामात्रं सत्त्वं, येन देहेन्द्रियादेः प्रकाशमानतया सद्भावो भवेत् । न हि सर्पादिभावेन रज्ज्वादयो वा स्फटिकादयो वा रक्तादिगुणयोगिनो न प्रतिभासन्ते, प्रतिभासमाना वा भवन्ति तदात्मानस्तद्धर्माणो वा । तथा सति मरुषु मरीचिचयम्, उच्चावचमुच्चलत्तुङ्गतरङ्गभङ्गमालेयमभ्यर्णमवतीर्णा मन्दाकिनी, इत्यभिसंधाय प्रवृत्तस्तत्तोयमापीय पिपासामुपशमयेत् । तस्मादकामेनाप्यारोपितस्य प्रकाशमानस्यापि न वस्तुसत्त्वमभ्युपगमनीयम् । न च मरीचिरूपेण सलिलमवस्तुसत्स्वरूपेण तु परमार्थसदेव, देहेन्द्रियादयस्तु स्वरूपेणाप्यसन्त इत्यनुभवागोचरत्वात्कथमारोप्यत इति सांप्रतम् । यतो यद्यसन्तो नानुभवगोचराः कथं तर्हि मरीच्यादीनामसतां तोयतयानुभवगोचरत्वम्, न च स्वरूपसत्त्वेन तोयात्मनापि सन्तो भवन्ति । यद्युच्येत नाभावो नाम भावादन्यः कश्चिदस्ति, अपि तु भाव एव भावान्तरात्मनाऽभावः स्वरूपेण तु भावः । यथाहुः—'भावान्तरमभावो हि कयाचित्तु व्यपेक्षया' इति । ततश्च भावात्मनोपाख्येयतयास्य युज्येतानुभवगोचरता । प्रपञ्चस्य पुनरत्यन्तासतो निरस्तसमस्तसामर्थ्यस्य निस्तत्त्वस्य कुतोऽनुभवविषयभावः, कुतो वा चिदात्मन्यारोपः । न च विषयस्य समस्तसामर्थ्यस्य विरहेऽपि ज्ञानमेव तत्तादृशं स्वप्रत्ययसामर्थ्यासादितादृष्टान्तसिद्धस्वभावभेदमुपजातमसतः प्रकाशनं, तस्मादसत्प्रकाशनशक्तिरेवाविद्येति सांप्रतम् । यतो येयमसत्प्रकाशनशक्तिर्विज्ञानस्य किं पुनरस्याः शक्यं, असदिति चेत्, किं तत्कार्यमाहोस्विदस्या ज्ञाप्यम् । न तावत्कार्यम्, असतस्तत्त्वानुपपत्तेः । नापि ज्ञाप्यं, ज्ञानान्तरानुपलब्धेः, अनवस्थापाताच्च । विज्ञानस्वरूपमेवासतः प्रकाश इति चेत्, कः पुनरेष

आनन्दगिरीय—न्यायनिर्णयः।

इत्येव लक्षणं तदुपपादकं स्मृतिरूपत्वं तत्साधनार्थं पूर्वदृष्टत्वम् । अध्यासद्वयेऽपि परत्रेति सामान्यतो धीयोग्यमधिष्ठानमुक्तम् । अर्थपक्षेऽवभास्यत इत्यवभासः परश्चासाववभासश्चेति । तथा ज्ञानपक्षेऽवभासनमवभासः परस्यावभासः परावभासः । तावत्युक्ते घटात्परस्य पटस्यावभासः । स चावभासमानोऽध्यासः । स्यात्तन्निवृत्तये परत्रेति । न चैवमपि खण्डा गौरित्यादावतिव्याप्तिः । परत्रेत्यारोप्यात्यन्ताभाववतोऽभिधानात्खण्डगवादीनां तादात्म्यवतां संसर्गशून्यत्वाभावात् । दोषसंस्कारसंप्रयोगोत्थत्वादित्थमवभासः संभवतीति वक्तुं स्मृतिरूप इत्युक्तम् । स्मर्यत इति स्मृतिः स्मर्यमाणोऽर्थः । भावेकर्तरि च कारके संज्ञायामिति सूत्रद्वयमधिकृत्य स्त्रियां क्तिन्निति सूत्रेण भावे कर्तृव्यतिरिक्ते च कारके कर्मादौ संज्ञायामसंज्ञायां च

रत्नप्रभा ।

धिष्ठाने मिथ्यार्थावभाससिद्धेः सर्वतन्त्रसिद्धान्ते इदं लक्षणमिति मत्वाऽन्यथात्मख्यातिवादिनोर्मतमाह-

भामती ।

सदसतोः संबन्धः । असदधीननिरूपणत्वं सतो ज्ञानस्यासता संबन्ध इति चेत्, अहो बतायमति-निर्वृतः प्रत्ययतपस्वी यस्यासत्यपि निरूपणमायतते, न च प्रत्ययस्तत्राधत्ते किंचित्, असत आधारत्वा-योगात् । असदन्तरेण प्रत्ययो न प्रथत इति प्रत्ययस्यैवैष स्वभावो न त्वसदधीनमस्य किंचिदिति चेत्, अहो बतास्यासत्पक्षपातो यदयमतदुत्पत्तिरतदात्मा च तदविनाभावनियतः प्रत्यय इति । तस्मा-दत्यन्तासन्तः शरीरेन्द्रियादयो निस्तत्त्वा नानुभवविषया भवितुमर्हन्तीति । अत्र ब्रूमः—निस्तत्त्वं चेन्ना-नुभवगोचरः, तत्किमिदानीं मरीचयोऽपि तोयात्मना सतत्त्वा यदनुभवगोचराः स्युः । न सतत्त्वाः, तदात्मना मरीचीनामसत्त्वात् । द्विविधं च वस्तूनां तत्त्वं सत्त्वमसत्त्वं च । तत्र पूर्वं स्वतः, परं तु परतः । यथाहुः—'स्वरूपपररूपाभ्यां नित्यं सदसदात्मके । वस्तुनि ज्ञायते किंचिद्रूपं कैश्चित्कदाचन ॥' इति । तत्किं मरीचिषु तोयनिर्भासप्रत्ययस्तत्त्वगोचरः, तथा च समीचीन इति न भ्रान्तो नापि बाध्येत । अद्धा न बाध्येत यदि मरीचीनतोयात्मतत्त्वानतोयात्मना गृह्णीयात् । तोयात्मना तु गृह्ण-न्कथमभ्रान्तः कथं वाऽबाध्यः । हन्त तोयाभावात्मनां मरीचीनां तोयभावात्मत्वं तावन्न सत्, तेषां तोया-भावादभेदेन तोयभावात्मतानुपपत्तेः । नाप्यसत् । वस्त्वन्तरमेव हि दस्त्वन्तरस्यासत्त्वमास्थीयते 'भावा-न्तरमभावोऽन्यो न कश्चिदनिरूपणात्' इति वदद्भिः । न चारोपितं रूपं वस्त्वन्तरं, तद्धि मरीचयो वा भवेत्, गंगादिगतं तोयं वा । पूर्वस्मिन्कल्पे मरीचय इति प्रत्ययः स्यान्न तोयमिति । उत्तरस्मिंस्तु गंगायां तोयमिति स्यात्, न पुनरिहेति । देशभेदास्मरणे तोयमिति स्यान्न पुनरिहेति । न चेदमत्यन्त-मसन्निरस्तसमस्तस्वरूपमलीकमेवास्त्विति सांप्रतम्, तस्यानुभवगोचरत्वानुपपत्तेरित्युक्तमधस्तात् । तस्मान्न सत्, नापि सदसत्, परस्परविरोधादित्यनिर्वाच्यमेवारोपणीयं मरीचिषु तोयमास्थेयं, तदनेन क्रमेणा-ध्यस्तं तोयं परमार्थतोयमिव, अत एव पूर्वदृष्टमिव, तत्त्वतस्तु न तोयं न च पूर्वदृष्टं, किं त्वनृतमनिर्वा-च्यम् । एवं च देहेन्द्रियादिप्रपञ्चोऽप्यनिर्वाच्यः, अपूर्वोऽपि पूर्वमिथ्याप्रत्ययोपदर्शित इव परत्र चिदात्म-न्यध्यस्यत इति उपपन्नम्, अध्यासलक्षणयोगात् । देहेन्द्रियादिप्रपञ्चबाधनं चोपपादयिष्यते । चिदात्मा तु श्रुतिस्मृतीतिहासपुराणगोचरः, तन्मूलतदविरुद्धन्यायनिर्णीतशुद्धबुद्धमुक्तस्वभावः सत्त्वेनैव निर्वाच्यः । अबाधिता स्वयंप्रकाशतैवास्य सत्ता, सा च स्वरूपमेव चिदात्मनः, न तु तदतिरिक्तं सत्तासामान्यसमवा-योऽर्थक्रियाकारिता वेति सर्वमवदातम् । स चायमेवंलक्षणकोऽध्यासोऽनिर्वचनीयः सर्वेषामेव संमतः परीक्ष-

आनन्दगिरीय-न्यायनिर्णयः ।

क्तिन्विधानादकर्तरि चेति चकारस्य संज्ञाव्यभिचारार्थत्वांगीकारात् । स्मर्यमाणस्य रूपमिव रूपमस्येति स्मृतिरूपो न तु स्मर्यत एव स्पष्टं पुरोवस्थितत्वेन भानात् । ज्ञानपक्षे स्मरणं स्मृतिर्भावे क्तिन्विधानात्स्मृते रूपमिव रूपमस्येति स्मृतिरूपो न स्मृतिरेव पूर्वानुभूतस्य तथाऽभानात् । स्मृतिरूपतादोषादित्रयोत्थ-त्वात्तादर्थ्यविषयत्वाद्वा । अदृष्टरजतस्य रजतभ्रमादृष्टेस्तत्संस्काराभावाच्च संस्कारद्वारा स्मृतिरूपतोपयो-गिपूर्वदृष्टत्वम् । तदेवं परत्र परावभास इत्येव लक्षणम् । अन्यदुक्तरीत्या तच्छेषमिति स्थितम् । अध्यासे वादिविप्रतिपत्तेरुक्तं तल्लक्षणं कथमित्याशङ्क्याऽऽरोप्यदेशादौ विवादेऽपि लक्षणसंवादान्न्यायतश्च तल्लक्ष्ये-ऽनिर्वाच्यतासिद्धेः सर्वतन्त्रसिद्धान्तोऽयमिति विवक्षित्वा वादिविवादानुपन्यस्यन्केषांचिदन्यथाख्यातिवादि-

१ अन्यथाख्यातिवादिनस्तार्किकस्य आत्मख्यातिवादिनो बौद्धस्य च मतमाहेत्यर्थः ।

**तं केचिद्–'अन्यत्रान्यधर्माध्यासः' इति वदन्ति । केचित्तु–'यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रमः' इति ॥**

रत्नप्रभा ।

**तं केचिदिति** ॥ केचिद् अन्यथाख्यातिवादिनः **अन्यत्र** शुक्त्यादौ अन्यधर्मस्य स्वावयवधर्मस्य देशान्तरस्थरूप्यादेरध्यास इति **वदन्ति** । आत्मख्यातिवादिनस्तु बाह्ये शुक्त्यादौ बुद्धिरूपात्मनो धर्मस्य रजतस्याध्यास आन्तरस्य रजतस्य बहिर्वदवभास इति वदन्तीत्यर्थः ॥ अख्यातिमतमाह–**केचित्त्विति । यत्र यस्याध्यासो** लोकसिद्धः, तयोरर्थयोः, **तद्धियोश्च** भेदाग्रहे सति **तन्मूलो भ्रमः** । इदं रूप्यमिति विशिष्टव्यवहार इति वदन्तीत्यर्थः ॥ तैरपि विशिष्टव्यवहारान्यथानुपपत्त्या विशिष्टभ्रान्तेः स्वीकार्यत्वात्परत्र

भामती ।

काणां, तद्भेदे परं विप्रतिपत्तिरित्यनिर्वचनीयतां द्रढयितुमाह–**तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति** । अन्यधर्मस्य, ज्ञानधर्मस्य रजतस्य । ज्ञानाकारस्येति यावत् । अध्यासोऽन्यत्र बाह्ये । सौत्रान्तिकनये तावद्बाह्यमस्ति वस्तु सत्, तत्र ज्ञानाकारस्यारोपः । विज्ञानवादिनामपि यद्यपि न बाह्यं वस्तु सत्, तथाप्यनाद्यविद्यावासनारोपितमलीकं बाह्यम्, तत्र ज्ञानाकारस्यारोपः । उपपत्तिश्च यद्यादृशमनुभवसिद्धं रूपं तत्तादृशमेवाभ्युपेतव्यमित्युत्सर्गः, अन्यथात्वं पुनरस्य बलवद्बाधकप्रत्ययवशात्, नेदं रजतमिति च बाधस्येदन्तामात्रबाधेनोपपत्तौ न रजतगोचरतोचिता । रजतस्य धर्मिणो बाधे हि रजतं च तस्य च धर्म इदन्ता बाधिते भवेताम्, तद्वरमिदन्तैवास्य धर्मो बाध्यतां न पुना रजतमपि धर्मि, तथा च रजतं बहिर्बाधितमर्थादान्तरे ज्ञाने व्यवतिष्ठत इति ज्ञानाकारस्य बहिरध्यासः सिद्ध्यति । **केचित्तु**–ज्ञानाकारख्यातावपरितुष्यन्तो वदन्ति–**यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रम इति** । अपरितोषकारणं चाहुः–विज्ञानाकारता रजतादेरनुभवाद्वा व्यवस्थाप्येतानुमानाद्वा । तत्रानुमानमुपरिष्टान्निराकरिष्यते । अनुभवोऽपि रजतप्रत्ययो वा स्यात्, बाधकप्रत्ययो वा । न तावद्रजतानुभवः । स हीदंकारास्पदं रजतमावेदयति न त्वान्तरम् । अहमिति हि तदा स्यात्, प्रतिपत्तुः प्रत्ययादव्यतिरेकात् । भ्रान्तं विज्ञानं स्वाकारमेव बाह्यतयाऽध्यवस्यति, तथा च नाहंकारास्पदमस्य गोचरः, ज्ञानाकारता पुनरस्य बाधकप्रत्ययप्रवेदनीयेति चेत्, हन्त बाधकप्रत्ययमालोचयत्वायुष्मान् । किं पुरोवर्ति द्रव्यं रजताद्विवेचयत्याहो ज्ञानाकारतामप्यस्य दर्शयति । तत्र ज्ञानाकारतोपदर्शनव्यापारं बाधकप्रत्ययस्य ब्रुवाणः श्लाघनीयप्रज्ञो देवानांप्रियः । पुरोवर्तित्वप्रतिषेधादर्थादस्य ज्ञानाकारतेति चेन्न । असंनिधानाग्रहनिषेधादसंनिहितो भवति प्रतिपत्तुरत्यन्तसन्निधानं त्वस्य प्रतिपत्रात्मकं कुतस्त्यम् । न चैष रजतस्य निषेधः, न चेदन्तायाः, किंतु

आनन्दगिरीय–न्यायनिर्णयः ।

नामात्मख्यातिवादिनां चाभिप्रायमाह–**तं केचिदिति** । अन्यत्र शुक्त्यादावन्यस्य कार्यत्वेन पारतन्त्र्याद्धर्मस्य रजतादेरध्यासस्तादात्म्यधीर्देशान्तरगतं हि रजतादिदोषात्पुरोवर्त्यात्मना भातीत्येवमुक्तमध्यासं केचिदन्यथाख्यातिवादिनो वदन्तीत्येकत्र । अपरत्र त्वन्यत्र बाह्ये शुक्त्यादावन्यस्य ज्ञानस्य धर्मो रजतादिस्तस्याध्यासो बहिरिव तदभेदेन धीरित्यात्मख्यातिवादिनस्तमध्यासमाहुरिति योजना । पक्षद्वयेऽपि परत्र परावभासे संमतिरस्तीति भावः । अख्यातिमतमाह–**केचित्त्विति** । वदन्तीत्यनुषज्यते । यत्र शुक्त्यादौ यस्य रजतादेरध्यासो लोके प्रसिद्धस्तयोस्तद्धियोश्च दोषवशाद्विवेकाग्रहे तत्कृतो रजतमिदमित्यादिसंसर्गव्यवहार इत्यख्यातिवादिनस्तैरपि संसर्गव्यवहाराय तद्धीरूपस्यावस्तुग्रहे तदभिन्नविवेकाग्रहायोगात्तस्य तत्कृतत्वासंभवादविवेतरदोषस्य भाति वस्तुन्यभानहेतुतानुपलम्भादतः परत्र परावभासे तेषामप्यस्ति

१ अख्यातिवादिनां मीमांसकानां मतमाहेत्यर्थः ।

**अन्ये तु "यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनाम्" आचक्षत इति ।**

रत्नप्रभा ।

पराबभाससम्मतिरिति भावः ॥ शून्यमतमाह—**अन्ये त्विति** ॥ **तस्यैव** अधिष्ठानस्य शुक्त्यादेर्वि**परीतधर्मत्वकल्पनां** विपरीतो विरुद्धो धर्मो यस्य तद्भावस्तस्य रजतादेरत्यन्तासतः कल्पनामाचक्षते

भामती ।

विवेकाग्रहप्रसञ्जितस्य रजतव्यवहारस्य । न च रजतमेव शुक्तिकायां प्रसञ्जितं रजतज्ञानेन । न हि रजतनिर्भासस्य शुक्तिकालम्बनं युक्तम्, अनुभवविरोधात् । न खलु सत्तामात्रेणालम्बनम्, अतिप्रसङ्गात् । सर्वेषामर्थानां सत्त्वाविशेषादालम्बनत्वप्रसंगात् । नापि कारणत्वेन, इन्द्रियादीनामपि कारणत्वात् । तथा च भासमानतैवालम्बनार्थः । न च रजतज्ञाने शुक्तिका भासते, इति कथमालम्बनं, भासमानताभ्युपगमे वा कथं नानुभवविरोधः। अपि चेन्द्रियादीनां समीचीनज्ञानोपजनने सामर्थ्यमुपलब्धमिति कथमेभ्यो मिथ्याज्ञानसंभवः। दोषसहितानां तेषां मिथ्याप्रत्ययेऽपि सामर्थ्यमिति चेन्न, दोषाणां कार्योपजननसामर्थ्यविघातमात्रे हेतुत्वात्, अन्यथा दुष्टादपि कुटजबीजाद्वटाङ्कुरोत्पत्तिप्रसङ्गात् । अपि च स्वगोचरव्यभिचारे विज्ञानानां सर्वत्रानाश्वासप्रसंगः तस्मात्सर्वं ज्ञानं समीचीनमास्थेयम् । तथा च रजतम्, इदमिति च द्वे विज्ञाने स्मृत्यनुभवरूपे, तत्रेदमिति पुरोवर्तिद्रव्यमात्रग्रहणं, दोषवशात्तद्गतशुक्तित्वसामान्यविशेषस्याग्रहात्, तन्मात्रं च गृहीतं सदृशतया संस्कारोद्बोधक्रमेण रजते स्मृतिं जनयति । सा च गृहीतग्रहणस्वभावापि दोषवशाद्गृहीतत्वांशप्रमोषाद्ग्रहणमात्रमवतिष्ठते । तथा च रजतस्मृतेः पुरोवर्तिद्रव्यमात्रग्रहणस्य च मिथः स्वरूपतो विषयतश्च भेदाग्रहात्, संनिहितरजतगोचरज्ञानसारूप्येण, इदं रजतमिति भिन्नेऽपि स्मरणग्रहणे अभेदव्यवहारं च सामानाधिकरण्यव्यपदेशं च प्रवर्तयतः । क्वचित्पुनर्ग्रहणे एव मिथोऽगृहीतभेदे, यथा पीतः शंख इति । अत्र हि विनिर्गच्छन्नयनरश्मिवर्तिनः पित्तद्रव्यस्य काचस्येव स्वच्छस्य पीतत्वं गृह्यते पित्तं तु न गृह्यते । शंखोऽपि दोषवशाच्छुक्लगुणरहितः स्वरूपमात्रेण गृह्यते । तदनयोर्गुणगुणिनोरसंसर्गाग्रहसारूप्यात्पीततपनीयपिण्डप्रत्ययाविशेषेणाभेदव्यवहारः समानाधिकरणव्यपदेशश्च । भेदाग्रहप्रसञ्जिताभेदव्यवहारबाधनाच्च नेदमिति विवेकप्रत्ययस्य बाधकत्वमप्युपपद्यते, तदुपपत्तौ च प्राक्तनस्य प्रत्ययस्य भ्रान्तत्वमपि लोकसिद्धं सिद्धं भवति । तस्माद्यथार्थाः सर्वे विप्रतिपन्नाः संदेहविभ्रमाः, प्रत्ययत्वात्, घटादिप्रत्ययवत् । तदिदमुक्तम्—**यदध्यास इति** । यस्मिञ्शुक्तिकादौ यस्य रजतादेरध्यास इति लोकप्रसिद्धिः, नासावन्यथाख्यातिनिबन्धना, किंतु गृहीतस्य रजतादेस्तत्स्मरणस्य च गृहीततांशप्रमोषेण, गृहीतमात्रस्य य इदमिति पुरोऽवस्थिताद् द्रव्यमात्रात्तत्प्रज्ञानाच्च विवेकः, तदग्रहणनिबन्धनो भ्रमः । भ्रान्तत्वं च ग्रहणस्मरणयोरितेतरसामानाधिकरण्यव्यपदेशो रजतादिव्यवहारश्चेति ॥ **अन्ये तु**—अत्राप्यपरितुष्यन्तः, **यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते** । अत्रेदमाकूतम्—अस्ति तावद्रजतार्थिनो रजतमिदमिति प्रत्ययात्पुरोवर्तिनि द्रव्ये प्रवृत्तिः, सामानाधिकरण्यव्यपदेशश्चेति सर्वजनीनम् । तदेतन्न तावद्ग्रहणस्मरणयोस्तद्गोचरयोश्च मिथो भेदाग्रहमात्राद्भवितुमर्हति । ग्रहणनिबन्धनौ हि चेतनस्य व्यवहारव्यपदेशौ कथमग्रहणमात्राद्भवेताम् । ननूक्तं नाग्रहणमात्रात्, किंतु ग्रहणस्मरणे एव मिथः स्वरूपतो विषयतश्चागृहीतभेदे, समीचीनपुरस्थितरजतविज्ञानसादृश्येनाभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च प्रवर्तयतः । अथ समीचीनज्ञानसारूप्यमनयोर्गृह्यमाणं वा व्यवहारप्रवृत्तिहेतुः, अगृह्यमाणं वा सत्तामात्रेण । गृह्यमाणेऽपि, 'समीचीनज्ञानसारूप्यम्

आनन्दगिरीय-न्यायनिर्णयः ।

संमतिरिति भावः । केषांचिदन्यथाख्यातिवादिनां माध्यमिकानां च मते दर्शयति—**अन्ये त्विति** । यत्र शुक्त्यादौ यस्य रजतादिरध्यासस्तस्यैव शुक्त्यादेर्विपरीतधर्मत्वस्य रजतादिरूपत्वस्य भावान्तरत्वेन शून्यत्वेन

**सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति ।**

रत्नप्रभा ।

इत्यर्थः ॥ एतेषु मतेषु परत्र परावभासत्वलक्षणसंवादमाह—सर्वथापि त्विति ॥ अन्यथाख्यातित्वादि-

भामती ।

अनयोरिदमिति रजतमिति च ज्ञानयोः' इति ग्रहणम्, अथवा 'तयोरेव स्वरूपतो विषयतश्च मिथो भेदाग्रहः' इति ग्रहणम् । तत्र न तावत्समीचीनज्ञानसदृशी इति ज्ञानं समीचीनज्ञानवद्व्यवहारप्रवर्तकम् । न हि गोसदृशो गवय इति ज्ञानं गवार्थिनं गवये प्रवर्तयति । अनयोरेव भेदाग्रह इति तु ज्ञानं पराहतम्, न हि भेदाग्रहेऽनयोरिति भवति, अनयोरिति ग्रहे भेदाग्रहणमिति च भवति । तस्मात्सत्तामात्रेण भेदाग्रहोऽगृहीत एव व्यवहारहेतुरिति वक्तव्यम् । तत्र किमयमारोपोत्पादक्रमेण व्यवहारहेतुः आहोऽनुत्पादितारोप एव स्वत इति । वयं तु पश्यामः—चेतनव्यवहारस्याज्ञानपूर्वकत्वानुपपत्तेः, आरोपज्ञानोत्पादक्रमेणैवेति । ननु सत्यं चेतनव्यवहारो नाज्ञानपूर्वकः किंत्वविदितविवेकग्रहणस्मरणपूर्वक इति । मैवम्, न हि रजतप्रातिपदिकार्थमात्रस्मरणं प्रवृत्तावुपयुज्यते । इदंकारास्पदाभिमुखी खलु रजतार्थिनां प्रवृत्तिरित्यविवादम् । कथं चायमिदंकारास्पदे प्रवर्तेत । यदि तु न तदिच्छेत् । अन्यदिच्छत्यन्यत्करोतीति व्याहतम् । न चेदिदंकारास्पदं रजतमिति जानीयात्कथं रजतार्थी तदिच्छेत् । यद्यतथात्वेनाग्रहणादिति ब्रूयात्स च प्रतिवक्तव्योऽथ तथात्वेनाग्रहणात्कस्मान्नोपेक्षेतेति । सोऽयमुपादानोपेक्षाभ्यामभिमत आकृष्यमाणश्चेतनोऽव्यवस्थित इदंकारास्पदे रजतसमारोपेणोपादान एव व्यवस्थाप्यत इति भेदाग्रहः समारोपोत्पादक्रमेण चेतनप्रवृत्तिहेतुः । तथाहि—भेदाग्रहादिदंकारास्पदे रजतत्वं समारोप्य, तज्जातीयस्योपकारहेतुभावमनुचिन्त्य, तज्जातीयतयेदंकारास्पदे रजते तमनुमाय, तदर्थी प्रवर्तत इत्यानुपूर्व्यं सिद्धम् । न च तटस्थरजतस्मृतिरिदंकारास्पदस्योपकारहेतुभावमनुमापयितुमर्हति, रजतत्वस्य हेतोरपक्षधर्मत्वात् । एकदेशदर्शनं खल्वनुमापकं न त्वनेकदेशदर्शनम् । यथाहुः—ज्ञातसंबन्धस्यैकदेशदर्शनादिति । समारोपे त्वेकदेशदर्शनमस्ति । तत्सिद्धमेतद्विवादाध्यासितं रजतादिज्ञानं, पुरोवर्तिवस्तुविषयं, रजताद्यर्थिनस्तत्र नियमेन प्रवर्तकत्वात्, यद्यदर्थिनं यत्र नियमेन प्रवर्तयति तज्ज्ञानं तद्विषयं यथोभयसिद्धसमीचीनरजतज्ञानं, तथा चेदं, तस्मात्तथेति । यच्चोक्तमनवभासमानतया न शुक्तिरालम्बनमिति, तत्र भवान्पृष्टो व्याचष्टां, किं शुक्तिकात्वस्य इदं रजतमिति ज्ञानं प्रत्यनालम्बनत्वमाहोस्विद् द्रव्यमात्रस्य पुरःस्थितस्य सितभास्वरस्य । यदि शुक्तिकात्वस्यानालम्बनत्वम्, अद्धा, उत्तरस्यानालम्बनत्वं ब्रुवाणस्य तवैवानुभवविरोधः । तथाहि—रजतमिदमित्यनुभवन्ननुभविता पुरोवर्ति वस्त्वङ्गुल्यादिना निर्दिशति । दृष्टं च दुष्टानां कारणानामौत्सर्गिककार्यप्रतिबन्धेन कार्यान्तरोपजननसामर्थ्यम्, यथा दावाग्निदग्धानां वेत्रबीजानां कदलीकाण्डजनकत्वम् । भस्मकदुष्टस्य चोदर्यस्य तेजसो बह्वन्नपचनमिति । प्रत्यक्षबाधापहृतविषयं च विभ्रमाणां यथार्थत्वानुमानमाभासः, हुतवहानुष्णत्वानुमानवत् । यच्चोक्तं मिथ्याप्रत्ययस्य व्यभिचारे सर्वप्रमाणेष्वनाश्वास इति, तत् बोधकत्वेन स्वतः प्रामाण्यं नाव्यभिचारेणेति व्युत्पादयद्भिरस्माभिः परिहृतं न्यायकणिकायामिति नेह प्रतन्यते । दिङ्मात्रं चास्य स्मृतिप्रमोषभङ्गस्योक्तम् । विस्तरस्तु ब्रह्मतत्त्वसमीक्षायामवगन्तव्य इति, तदिदमुक्तम्—'अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षत इति ।' यत्र शुक्तिकादौ यस्य रजतादेरध्यासस्तस्यैव शुक्तिकादेर्विपरीतधर्मकल्पनां रजतत्वधर्मकल्पनामिति योजना । ननु सन्तु नाम परीक्षकाणां विप्रतिपत्तयः, प्रकृते तु किमायतमित्यत आह—सर्वथापि त्वन्यस्यान्यधर्मावभासतां न

आनन्दगिरीय—न्यायनिर्णयः ।

वा सत्ताहीनस्य कल्पनां भासमानतामध्यासं भावान्तराभाववादिनः शून्यवादिनश्चाऽऽचक्षते । तथा च तत्रापि परत्र परावभासे संवादोऽस्तीत्यर्थः । मतान्तराण्युपन्यस्य स्वमतानुसारि लक्षणं निगमयति—सर्वथेति ।

**तथा च लोकेऽनुभवः-शुक्तिका हि रजतवदवभासते, एकश्चन्द्रः सद्वितीयवदिति । कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम् ?**

रत्नप्रभा ।

प्रकारविवादेऽप्यध्यासः परत्र परावभासत्वलक्षणं न जहातीत्यर्थः । शुक्तावपरोक्षस्य रजतस्य देशान्तरे, बुद्धौ वा, सत्त्वायोगात्, शून्यत्वे प्रत्यक्षत्वायोगात्, शुक्तौ सत्त्वे बाधायोगान्मिथ्यात्वमेवेति भावः । आरोप्यमिथ्यात्वे न युक्त्यपेक्षा, तस्यानुभवसिद्धत्वादित्याह-**तथा चेति** । बाधानन्तरकालीनोऽयमनुभवः । तत्पूर्वं शुक्तिकात्वज्ञानायोगात् । रजतस्य बाधप्रत्यक्षसिद्धं मिथ्यात्वं वच्छब्देनोच्यते । आत्मनि निरुपाधिकेऽहंकाराध्यासे दृष्टान्तमुक्त्वा ब्रह्मजीवान्तरभेदस्याविद्याद्युपाधिकस्याध्यासे दृष्टान्तमाह-**एक इति** ॥ द्वितीयचन्द्रसहितवदेक एवांगुल्या द्विधा भातीत्यर्थः ॥ लक्षणप्रकरणोपसंहारार्थ **इति शब्दः** । भवत्वध्यासः शुक्त्यादौ, आत्मनि तु न संभवतीत्याक्षिपति-**कथं पुनरिति**॥ यत्रापरोक्षाध्यासाधिष्ठानत्वं तत्रेन्द्रियसंयुक्तत्वं विषयत्वं चेति व्याप्तिः शुक्त्यादौ दृष्टा । तत्र व्यापकाभावादात्मनोऽधिष्ठानत्वं न संभवतीत्यभिप्रेत्याह-**प्रत्य-**

भामती ।

**व्यभिचरति** । अन्यस्यान्यधर्मकल्पनाऽनृतता, सा चानिर्वचनीयतेत्यधस्तादुपपादितम् । तेन सर्वेषामेव परीक्षकाणां मतेऽन्यस्यान्यधर्मकल्पनानिर्वचनीयतावश्यंभाविनीत्यनिर्वचनीयता सर्वतन्त्रसिद्धान्त इत्यर्थः । आख्यातिवादिभिरकामैरपि सामानाधिकरण्यव्यपदेशप्रवृत्तिनियमस्नेहादिदमभ्युपेयमिति भावः । न केवलमियमनृतता परीक्षकाणां सिद्धा, अपि तु लौकिकानामपीत्याह-**तथा च लोकेऽनुभवः-शुक्तिका हि रजतवदवभासत इति** । न पुना रजतमिदमिति शेषः । स्यादेतत्, अन्यस्यान्यात्मताविभ्रमो लोकसिद्धः, एकस्य त्वभिन्नस्य भेदभ्रमो न दृष्ट इति कुतश्चिदात्मनोऽभिन्नानां जीवानां भेदविभ्रम इत्यत आह-**एकश्चन्द्रः सद्वितीयवदिति** ॥ पुनरपि चिदात्मन्यध्यासमाक्षिपति-**कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम्** । अयमर्थः-चिदात्मा प्रकाशते न वा ? न चेत्प्रकाशते, कथमस्मिन्नध्यासो विषयतद्धर्माणाम् । न खल्वप्रतिभासमाने पुरोवर्तिनि द्रव्ये रजतस्य वा तद्धर्माणां वा समारोपः संभवतीति । प्रतिभासे वा ( न ) तावदयमात्मा जडो घटादिवत्पराधीनप्रकाश इति युक्तम् ।

आनन्दगिरीय-न्यायनिर्णयः ।

सर्वेषु पक्षेषु प्रकारविशेषविवादेऽपि पुरोवर्तिनो रजतादित्वेनैव वेद्यतामध्यासो न व्यभिचरतीति युक्तमुक्तलक्षणस्याध्यासस्य सर्वतन्त्रसिद्धान्तत्वम् । न च तस्य सत्त्वं बाध्यत्वादन्यत्र रजतादिसत्त्वस्यामानत्वान्न च तदसत्त्वमपरोक्षत्वान्नापि विरोधादेकस्य सदसत्त्वमतोऽनिर्वाच्यतेति भावः । न केवलं वादिनामेवायमध्यासः संमतोऽपि तु लौकिकानामपीत्याह-**तथा चेति** । अनुपहितेदमंशे रजतादिसंस्कारसहिताविद्यया रजताद्यध्यासवत्पूर्वपूर्वाहंकारादिवासितानाद्यविद्यया चिदात्मन्यनुपहिते भवत्यहंकाराद्यध्यास इति निरुपाधिकाहंकाराद्यध्यासे दृष्टान्तमाह-**शुक्तिकेति** । सम्यग्धीसिद्धाधिष्ठानरूपाभिप्रायेण शुक्तिकाग्रहणं संप्रयुक्तस्य मिथ्यारजतत्वभानधिया वत्करणम् । अनुभवप्रसिद्ध्यर्थो हिशब्दः ॥ बिम्बप्रतिबिम्बयोः प्रतिबिम्बानां च मिथो भेदधीवज्जीवब्रह्मणोर्जीवानां च भेदधियः सोपाधिकभ्रमस्य दृष्टान्तमाह-**एक इति** । एकत्वग्रहो बह्वहश्च पूर्ववत् । लक्षणप्रकरणमुपसंहर्तुमितिशब्दः । लक्षितरजताध्यासस्य लोकवादिसिद्धत्वेऽपि नाऽऽत्मन्यनात्माध्यासः स्यादिति विशेषाक्षेपमुत्थापयति-**कथमिति** । प्रतीचि पूर्णे स्फुरणत्वेनाननुभाव्ये पराचां परि-

१ सत्ख्यातिवादिनां मुरारिमिश्रादीनां मतं खण्डयति । २ अपरोक्षाध्यासाधिष्ठानत्वं व्याप्यम् । इन्द्रियसंयुक्तत्वं विषयत्वं चेत्युभयं व्यापकम् ।

 

रत्नप्रभा ।

गात्मनीति ॥ प्रतीचि पूर्णे इन्द्रियाग्राह्ये विषयस्याहंकारादेस्तद्धर्माणां चाध्यासः कथमित्यर्थः ।

भामती ।

न खलु स एव कर्ता च कर्म च भवति, विरोधात् । परसमवेतक्रियाफलशालि हि कर्म, न च ज्ञानक्रिया परसमवायिनीति कथमस्यां कर्म, न च तदेव स्वं च परं च, विरोधात् । आत्मान्तरसमवायाभ्युपगमे तु ज्ञेयस्यात्मनोऽनात्मत्वप्रसङ्गः । एवं तस्य तस्येत्यनवस्थाप्रसङ्गः । स्यादेतत्, आत्मा जडोऽपि सर्वार्थज्ञानेषु भासमानोऽपि कर्तैव न कर्म, परसमवेतक्रियाफलशालित्वाभावात्, चैत्रवत् । यथाहि चैत्रसमवेतक्रियया चैत्रनगरप्राप्त्युभयसमवेतायामपि क्रियमाणायां नगरस्यैव कर्मता, परसमवेतक्रियाफलशालित्वात्, न तु चैत्रस्य क्रियाफलशालिनोऽपि, चैत्रसमवायाद्गमनक्रियाया इति । तन्न, श्रुतिविरोधात् । श्रूयते हि 'सत्यं ज्ञानमनन्तं ब्रह्म' इति । उपपद्यते च, तथाहि—योऽयमर्थप्रकाशः फलं यस्मिन्नर्थश्च आत्मा च प्रथेते स किं जडः स्वयंप्रकाशो वा ? जडश्चेद्विषयात्मानावपि जडाविति कस्मिन्किं प्रकाशेताविशेषात्, इति प्राप्तमान्ध्यमशेषस्य जगतः । तथा चाभाणकः—'अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे' । न च निलीनमेव विज्ञानमर्थात्मानौ ज्ञापयति, चक्षुरादिवदिति वाच्यम्, ज्ञापनं हि ज्ञानजननम्, जनितं च ज्ञानं जडं सन्नोक्तदूषणमतिवर्तेतेति । एवमुत्तरोत्तराण्यपि ज्ञानानि जडानीत्यनवस्था । तस्मादपराधीनप्रकाशा संविदुपेतव्या । तथापि किमायातं विषयात्मनोः स्वभावजडयोः । एतदायातं यत्तयोः संविदजडेति । तत्किं पुत्रः पण्डित इति पितापि पण्डितोऽस्तु । स्वभाव एष संविदः स्वयं प्रकाशाया यदर्थात्मसंबन्धितेति चेत्, हन्त पुत्रस्यापि पण्डितस्य स्वभाव एष यत्पितृसंबन्धितेति समानम् । सहार्थात्मप्रकाशेन संवित्प्रकाशो न त्वर्थात्मप्रकाशं विनेति तस्याः स्वभाव इति चेत्, तत्किं संविदो भिन्नौ संविदर्थात्मप्रकाशौ । तथा च न स्वयंप्रकाशा संवित्, न च संविदर्थात्मप्रकाश इति । अथ संविदर्थात्मप्रकाशौ न संविदो भिद्येते, संविदेव तौ । एवं चेत् यावदुक्तं भवति संविदात्मार्थौ सहेति तावदुक्तं भवति संविदर्थात्मप्रकाशौ सहेति, तथा च न विवक्षितार्थसिद्धिः । न चातीतानागतार्थगोचरायाः संविदोऽर्थसहभावोऽपि । तद्विषयहानोपादानोपेक्षाबुद्धिजननादर्थसहभाव इति चेन्न, अर्थसंविद इव हानादिबुद्धीनामपि तद्विषयत्वानुपपत्तेः । हानादिजननाद्धानादिबुद्धीनामर्थविषयत्वम्, अर्थविषयहानादिबुद्धिजननाच्च अर्थसंविदस्तद्विषयत्वमिति चेत्, तत्किं देहस्य प्रयत्नवदात्मसंयोगो देहप्रवृत्तिनिवृत्तिहेतुरर्थे इत्यर्थप्रकाशोऽस्तु । जाड्याद्देहात्मसंयोगो नार्थप्रकाश इति चेत्, नन्वयं स्वयंप्रकाशोऽपि स्वात्मन्येव खद्योतवत्प्रकाशः, अर्थे तु जड इत्युपपादितम् । न च प्रकाशस्यात्मानो विषयाः, ते हि विच्छिन्नदीर्घस्थूलतयानुभूयन्ते, प्रकाशश्चायमान्तरोऽस्थूलोऽनणुरह्स्वोऽदीर्घश्चेति प्रकाशते, तस्माच्चन्द्रेऽनुभूयमान इव द्वितीयश्चन्द्रमाः स्वप्रकाशादन्योऽर्थोऽनिर्वचनीय एवेति युक्तमुत्पश्यामः । न चास्य प्रकाशस्याजानतः स्वलक्षणभेदोऽनुभूयते । न चानिर्वाच्यार्थभेदः प्रकाशं निर्वाच्यं भेत्तुमर्हति, अतिप्रसङ्गात् । न चार्थानामपि परस्परं भेदः समीचीनज्ञानपद्धतिमध्यास्ते इत्युपरिष्टादुपपादयिष्यते । तदयं प्रकाश एव स्वयंप्रकाश एकः कूटस्थनित्यो निरंशः प्रत्यगात्माऽशक्यनिर्वचनीयेभ्यो देहेन्द्रियादिभ्य आत्मानं प्रतीपं निर्वचनीयमञ्चति जानातीति प्रत्यङ् स चात्मेति प्रत्यगात्मा, स चापराधीनप्रकाशत्वात्, अनंशत्वाच्च, अविषयः, तस्मिन्नध्यासो विषयधर्माणां, देहेन्द्रिया-

आनन्दगिरीय–न्यायनिर्णयः ।

च्छिन्नानामनुभाव्यानां बुद्ध्यादीनां तद्धर्माणां च नाध्यासो मिथो विरुद्धानामधिष्ठानाधिष्ठेयत्वासंभवादित्यर्थः ।

**सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति । युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि । उच्यते-न तावदयमेकान्तेनाविषयः ॥ अस्मत्प्रत्ययविषयत्वात् ,**

रत्नप्रभा ।

उक्तव्याप्तिमाह-**सर्वो हीति** ॥ पुरोऽवस्थितत्वम्-इन्द्रियसंयुक्तत्वम् । नन्वात्मनोऽप्यधिष्ठानत्वार्थं विषयत्वादिकमस्त्वित्यत आह-**युष्मदिति** ॥ इदं प्रत्ययानर्हस्य प्रत्यगात्मनो "न चक्षुषा गृह्यते" [ मुण्ड. ३।१।८ ] इत्यादिश्रुतिमनुसृत्य त्वमविषयत्वं ब्रवीषि । संप्रत्यध्यासलोभेन विषयत्वांगीकारे श्रुतिसिद्धान्तयोर्बाधः स्यादित्यर्थः ॥ आत्मन्यध्याससंभावनां प्रतिजानीते-**उच्यते इति** । अधिष्ठानारोप्ययोरेकस्मिञ्ज्ञाने भासमानत्वमात्रमध्यासव्यापकम् । तच्च[1] भानप्रयुक्तसंशयनिवृत्त्यादिफलभाक्त्वम् । व्यापकं विषयत्वमपि तदेव । न तु भानभिन्नत्वघटितं विषयत्वम् । तन्न व्यापकम्, गौरवादिति मत्वाह-**न तावदिति** ॥ अयमात्मा नियमेनाविषयो न भवति । तत्र हेतुमाह-**अस्मदिति** ॥ अस्मत्प्रत्ययोऽहमित्यध्यासस्तत्र भासमानत्वादित्यर्थः । अस्मदर्थश्चिदात्मा प्रतिबिम्बितत्वेन यत्र प्रतीयते सोऽस्मत्प्रत्ययो

भामती ।

दिधर्माणां कथम्, किमाक्षेपे । अयुक्तोऽयमध्यास इत्याक्षेपः । कस्मादयमयुक्त इत्यत आह-**सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति** । एतदुक्तं भवति-यत्पराधीनप्रकाशमंशवच्च तत्सामान्यांशग्रहे कारणदोषवशाच्च विशेषाग्रहेऽन्यथा प्रकाशते । प्रत्यगात्मा त्वपराधीनप्रकाशतया न स्वज्ञाने कारणान्यपेक्षते, येन तदाश्रयैर्दोषैर्दूष्येत । न चांशवान्, येन कश्चिदस्यांशो गृह्येत, कश्चिन्न गृह्येत । न हि तदेव तदानीमेव तेनैव गृहीतमगृहीतं च संभवतीति न स्वयंप्रकाशपक्षेऽध्यासः । सदातनेऽप्यप्रकाशे पुरोऽवस्थितत्वस्यापरोक्षत्वस्याभावान्नाध्यासः । न हि शुक्तावपुरःस्थितायां रजतमध्यस्यतीदं रजतमिति । तस्मादत्यन्तग्रहेऽत्यन्ताग्रहे च नाध्यास इति सिद्धम् । स्यादेतत् । अविषयत्वे हि चिदात्मनो नाध्यासः, विषय एव तु चिदात्मास्मत्प्रत्ययस्य, तत्कथं नाध्यास इत्यत आह—**युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि** । विषयत्वे हि चिदात्मनोऽन्यो विषयी भवेत् । तथा च यो विषयी स एव चिदात्मा । विषयस्तु ततोऽन्यो युष्मत्प्रत्ययगोचरोऽभ्युपेयः । तस्मादनात्मत्वप्रसङ्गादनवस्थापरिहाराय युष्मत्प्रत्ययापेतत्वम्, अत एवाविषयत्वमात्मनो वक्तव्यम्, तथा च नाध्यास इत्यर्थः । परिहरति—**उच्यते-न तावदयमेकान्तेनाविषयः** । कुतः, **अस्मत्प्रत्ययविषयत्वात्** । अयमर्थः-सत्यं प्रत्यगात्मा स्वयंप्रकाशत्वादविषयोऽनंशश्च, तथाप्यनिर्वचनीयानाद्य-

आनन्दगिरीय-न्यायनिर्णयः ।

विरुद्धानामैक्यतादात्म्यप्रमित्ययोगेऽपि तदध्यासयोग्यतया कल्प्यतामधिष्ठानाधिष्ठेयत्वमित्याशङ्क्याऽऽह-**सर्वो हीति**।आरोप्येण सह तुल्येन्द्रियग्राह्यत्वमधिष्ठानस्य दृष्टमिह तदभावान्नाध्यास इत्यर्थः।तर्हि प्रत्यगात्मन्यध्यासदृष्टेर्विषयत्वमपीष्टमित्याशङ्क्याऽऽह-**युष्मदिति**। प्रत्यक्त्वादात्मत्वाच्चास्याविषयत्वमन्यथेदंप्रत्ययविषयत्वापातादपराद्धान्तापाताच्च । तस्मात्तस्मिन्नध्यासो दृष्टोऽपि क्लिष्टो नेत्यर्थः । अनात्मविशेषारोपे तद्विशेषान्तरस्याधिष्ठानत्वेऽपि तन्मात्रारोपे चिदात्मैवाधिष्ठानमित्याह-**उच्यत इति** । विरुद्धयोर्वस्तुतोऽधिष्ठानाधिष्ठेयत्वायोगेऽपि कल्पनया तत्सिद्धिरिति भावः । यत्त्वेकज्ञानाविषयत्वान्नाधिष्ठानाधिष्ठेयतेति तत्राऽऽह-**न तावदिति** । एकस्मिन्विज्ञाने तयोर्भानमात्रमारोपेऽपेक्षते न विषयतया भानं केवलव्यतिरेकाभावादात्मनः स्वप्रकाशत्वादनात्मनस्तद्विषयत्वाद्द्वयोरपि भासतोर्मनुष्योऽहमित्यादिधीवशादन्योन्याध्यासः सिध्यतीत्यर्थः । नियमेनाविषयत्वाभावे कुतः स्वप्रकाशत्वं तत्राऽऽह-**अस्मदिति** । अस्मदर्थश्चिदात्मा साक्षितया प्रतीयते

१ भासमानत्वं च ।

**अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः ।]**

रत्नप्रभा ।

ऽहंकारस्तत्र भासमानत्वादिति वार्थः ॥ न चाध्यासे सति भासमानत्वम्, तस्मिन् सति स इति परस्पराश्रय इति वाच्यम्, अनादित्वात्पूर्वाध्यासे भासमानात्मन उत्तराध्यासाधिष्ठानत्वसम्भवात् । नन्वहमित्यहंकारविषयकभानरूपस्यात्मनो भासमानत्वं कथम्? तद्विषयत्वं विना तत्फलभाक्त्वायोगादित्यत आह–अपरोक्षत्वाच्चेति ॥ चशब्दः शंकानिरासार्थः । स्वप्रकाशत्वादित्यर्थः ॥ स्वप्रकाशत्वं साधयति–प्रत्यगिति ॥ आबाल[1]पण्डितमात्मनः संशयादिशून्यत्वेन प्रसिद्धेः स्वप्रकाशत्वमित्यर्थः । अतः

भामती ।

विद्यापरिकल्पितबुद्धिमनःसूक्ष्मस्थूलशरीरेन्द्रियावच्छेदेनानवच्छिन्नोऽपि वस्तुतोऽवच्छिन्न इव, अभिन्नोऽपि भिन्न इव, अकर्तापि कर्तेव, अभोक्तापि भोक्तेव, अविषयोऽप्यस्मत्प्रत्ययविषय इव, जीवभावमापन्नोऽवभासते, नभ इव घटमणिकमल्लिकाद्यवच्छेदभेदेन भिन्नमिवानेकविधधर्मकमिवेति । न हि चिदेकरसस्यात्मनः चिदंशे गृहीते अगृहीतं किंचिदस्ति । न खल्वानन्दनित्यत्वविभुत्वादयोऽस्य चिद्रूपाद्वस्तुतो भिद्यन्ते, येन तद्ग्रहे न गृह्येरन् । गृहीता एव तु कल्पितेन भेदेन न विवेचिता इत्यगृहीता इवाभान्ति । न चात्मनो बुद्ध्यादिभ्यो भेदस्तात्त्विकः, येन चिदात्मनि गृह्यमाणे सोऽपि गृहीतो भवेत्, बुद्ध्यादीनामनिर्वाच्यत्वेन तद्भेदस्याप्यनिर्वचनीयत्वात् । तस्माच्चिदात्मनः स्वयंप्रकाशस्यैव अनवच्छिन्नस्य अवच्छिन्नेभ्यो बुद्ध्यादिभ्यो भेदाग्रहात्, तदध्यासेन जीवभाव इति । तस्य चानिदमिदमात्मनोऽस्मत्प्रत्ययविषयत्वमुपपद्यते । तथाहि–कर्ता भोक्ता चिदात्माऽहंप्रत्यये प्रत्यवभासते । न चोदासीनस्य तस्य क्रियाशक्तिर्भोगशक्तिर्वा संभवति । यस्य च बुद्ध्यादेः कार्यकारणसंघातस्य क्रियाभोगशक्ती न तस्य चैतन्यम् । तस्माच्चिदात्मैव कार्यकारणसंघातेन ग्रथितो लब्धक्रियाभोगशक्तिः, स्वयंप्रकाशोऽपि बुद्ध्यादिविषयविच्छुरणात्, कथंचिदस्मत्प्रत्ययविषयोऽहंकारास्पदं जीव इति च, जन्तुरिति च क्षेत्रज्ञ इति चाख्यायते । न खलु जीवश्चिदात्मनो भिद्यते । तथा च श्रुतिः–'अनेन जीवेनात्मना' इति । तस्माच्चिदात्मनोऽव्यतिरेकाज्जीवः स्वयंप्रकाशोऽप्यहंप्रत्ययेन कर्तृभोक्तृतया व्यवहारयोग्यः क्रियत इत्यहंप्रत्ययालम्बनमुच्यते । न चाध्यासे सति विषयत्वं विषयत्वे चाध्यास इत्यन्योन्याश्रय (त्व) मिति सांप्रतं, बीजाङ्कुरवदनादित्वात् पूर्वपूर्वाध्यासतद्वासनाविषयीकृतस्योत्तरोत्तराध्यासविषयत्वाविरोधादित्युक्तम्––'नैसर्गिकोऽयं लोकव्यवहारः' इति भाष्यग्रन्थेन । तस्मात् सुष्टूक्तम्–न तावदयमेकान्तेनाविषय इति । जीवो हि चिदात्मतया स्वयंप्रकाशतयाऽविषयोऽप्यौपाधिकेन रूपेण विषय इति भावः । स्यादेतत् । न वयमपराधीनप्रकाशतयाऽविषयत्वेनाध्यासमपाकुर्मः, किंतु प्रत्यगात्मा न स्वतो नापि परतः प्रथत इत्यविषय इति ब्रूमः । तथा च सर्वथाऽप्रथमाने प्रत्यगात्मनि कुतोऽध्यास इत्यत आह–अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः । प्रतीच आत्मनः प्रसिद्धिः

आनन्दगिरीय–न्यायनिर्णयः ।

प्रतिबिम्ब्यतेऽस्मिन्नित्यस्मत्प्रत्ययोऽहंकारस्तत्संबन्धाल्लब्धपरिच्छेदः सन्नात्मस्वरूपस्फुरणेन स्फुरन्नपि तद्विषयो निरुच्यते, ततोऽस्य शून्यवदत्यन्ताविषयत्वाभावेऽपि नास्वप्रकाशतेत्यर्थः । अध्यासे सत्यस्मत्प्रत्ययविषयत्वं सति तस्मिन्नध्यास इत्यन्योन्याश्रयत्वमाशङ्क्यानादित्वेन परिहारेऽपि परिहारान्तरमाह–अपरोक्षत्वाच्चेति । अस्मत्प्रत्ययाविषयत्वेऽप्यपरोक्षत्वादेकान्तेनाविषयत्वाभावात्तस्मिन्नहंकाराध्यास इत्यर्थः । अपरोक्षत्वमपि कैश्चिदात्मनो नेष्टमित्याशङ्क्याऽऽह–प्रत्यगात्मेति । अस्यार्थः–अस्ति तावन्ममेदं विदित-

[1] भानं तच्छब्दार्थः

**न चायमस्ति नियमः—पुरोऽवस्थित एव विषये विषयान्तरमध्यसितव्यमिति। अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति।**

---

रत्नप्रभा।

स्वप्रकाशत्वेन भासमानत्वादात्मनोऽध्यासाधिष्ठानत्वं संभवतीति भावः। यदुक्तमपरोक्षाध्यासाधिष्ठानत्वस्येन्द्रियसंयुक्तया ग्राह्यत्वं व्यापकमिति तत्राह—**न चायमिति**॥ तत्र हेतुमाह—**अप्रत्यक्षेऽपीति**॥ इन्द्रियाग्राह्येऽपीत्यर्थः। **बालाः**—अविवेकिनः, **तलम्** इन्द्रनीलकटाहकल्पं नभो, **मलिनं**-पीतमित्येवमपरोक्षमध्यस्यन्ति। तत्रेन्द्रियग्राह्यत्वं नास्तीति व्यभिचारान्न व्याप्तिः। **एतेना**त्मानात्मनोः सादृश्याभावान्नाध्यास **इत्यपास्तम्**॥ नीलनभसोस्तदभावेऽप्यध्यासदर्शनात्। **सिद्धान्ते** आलोकाकारचाक्षुषवृत्तिव्य-

भामती।

प्रथा, तस्यां अपरोक्षत्वात्। यद्यपि प्रत्यगात्मनि नान्या प्रथास्ति, तथापि भेदोपचारः यथा पुरुषस्य चैतन्यमिति। एतदुक्तं भवति—अवश्यं चिदात्माऽपरोक्षोऽभ्युपेतव्यः तदप्रथायां सर्वस्याप्रथनेन जगदान्ध्यप्रसङ्गादित्युक्तम्। श्रुतिश्चात्र भवति—'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति। तदेवं परमार्थपरिहारमुक्त्वाऽभ्युपेत्यापि चिदात्मनः परोक्षतां, प्रौढवादितया परिहारान्तरमाह—**न चायमस्ति नियमः पुरोऽवस्थित एव**—अपरोक्ष एव, **विषये विषयान्तरमध्यसितव्यम्**। कस्मादयं न नियम इत्यत आह—**अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति**। हिर्यस्मादर्थे। नभो हि द्रव्यं सत् रूपस्पर्शविरहान्न बाह्येन्द्रियप्रत्यक्षम्। नापि मानसम्, मनसोऽसहायस्य बाह्येऽप्रवृत्तेः, तस्मादप्रत्यक्षम्। अथ च तत्र बाला अविवेकिनः परदर्शितदर्शिनः कदाचित्पार्थिवच्छायां श्यामतामारोप्य, कदाचित्तैजसं शुक्लत्वमारोप्य नीलोत्पलपलाशश्याममिति वा राजहंसमालाधवलमिति वा निर्वर्णयन्ति। तत्रापि पूर्वदृष्टस्य तैजसस्य वा तामसस्य रूपस्य परत्र नभसि स्मृतिरूपोऽवभास इति। एवं तदेव तलमध्यस्यन्ति अवाङ्मुखीभूतं महेन्द्रनीलमणिमयमहाकटाहकल्प-

आनन्दगिरीय-न्यायनिर्णय

मिति विशिष्टधीः, न च सा विशेषणदर्शनादृते युक्ता, न च ज्ञानान्तरादस्य स्फुरणं विमतं नैतद्विषयमेतन्निष्ठसाक्षात्कारत्वात्तादृग्घटसाक्षात्कारवदित्यनुमानात्। न च घटादिज्ञानाश्रयतयाऽऽत्मसिद्धिस्तस्य तदधीनप्रकाशत्वे वेद्यत्वापातात्तस्माद्यस्मिन्नात्मनि विशेषणत्वं कल्पितं तस्य संविद्रूपत्वेनैव स्फुरणादपरोक्षत्वं देवदत्तस्वापकालो देवदत्तात्माऽस्तीतिव्यवहारहेतुसाक्षात्कारवान्कालत्वादितरकालवदित्यनुमानात्। न च स्वापेऽहंवृत्तिस्तद्व्याघातात्। न च पुरुषान्तरं तत्साक्षात्कर्तुमलमीश्वरास्तित्वे च साक्षात्कारस्यास्मद्विशेषणमादेयमिति। अपरोक्षाध्यासो नापरोक्षमात्रे क्वचिदपि युक्तः संप्रयुक्ततया पुरःस्थितापरोक्ष्ये तद्दृष्टेरित्याशङ्क्याऽऽह—**न चेति**। तत्र हेतुरप्रत्यक्ष इति साक्षिवेद्यतया संप्रयोगमन्तरेणापरोक्षेऽपीति यावत्। न हि नभो द्रव्यत्वे सत्यरूपस्पर्शित्वाद्बाह्येन्द्रियग्राह्यं, नापि मनसोऽसहायस्य बाह्ये वृत्तिः, तेन प्रसिद्धप्रत्यक्षत्वहीनेऽपि नभस्यविवेकिनस्तलमिन्द्रनीलकटाहकल्पं मलिनतां धूम्रतामन्यच्च पीताद्यध्यस्यन्ति। तथा चाधिष्ठानारोप्ययोरैकेन्द्रियग्राह्यत्वानियतिरिति भावः। दार्ष्टान्तिकं ब्रुवाणः संभावनां निगम-

---

१ नभसि।

**एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः। तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते । तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः ॥ तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न सम्बध्यते ।**

रत्नप्रभा ।

क्तसाक्षिवेद्यत्वं नभस इति ज्ञेयम् । संभावनां निगमयति—**एवमिति** ॥ **ननु** ब्रह्मज्ञाननाश्यत्वेन सूत्रितामविद्यां हित्वा अध्यासः किमिति वर्ण्यत इत्यत आह—**तमेतमिति** ॥ आक्षिप्तं समाहितमुक्तलक्षणलक्षितमध्यासमविद्याकार्यत्वादविद्येति मन्यन्त इत्यर्थः । विद्यानिवर्त्यत्वाच्चास्याविद्यात्वमित्याह—**तद्विवेकेनेति** ॥ अध्यस्तनिषेधेनाधिष्ठानस्वरूपनिर्धारणं विद्यामध्यासनिवर्तिकामाहुरित्यर्थः । तथापि कारणाविद्यां त्यक्त्वा कार्याविद्या किमिति वर्ण्यते तत्राह—**तत्रेति** ॥ तस्मिन्नध्यासे उक्तन्यायेनाविद्यात्मके सतीत्यर्थः ॥

भामती ।

मित्यर्थः ॥ उपसंहरति—**एवम्**—उक्तेन प्रकारेण सर्वाक्षेपपरिहारात्, **अविरुद्धः प्रत्यगात्मन्यप्यनात्मनाम्**—बुद्ध्यादीनाम् **अध्यासः** । ननु सन्ति च सहस्रमध्यासाः, तत्किमर्थमयमेवाध्यास आक्षेपसमाधानाभ्यां व्युत्पादितः, नाध्यासमात्रमित्यत आह—**तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते**। अविद्या हि सर्वानर्थबीजमिति श्रुतिस्मृतीतिहासपुराणादिषु प्रसिद्धम् । तदुच्छेदाय वेदान्ताः प्रवृत्ता इति वक्ष्यति । प्रत्यगात्मन्यनात्माध्यास एव सर्वानर्थहेतुः, न पुना रजतादिविभ्रमा इति स एवाविद्या, तत्स्वरूपं चाविज्ञातं न शक्यमुच्छेत्तुमिति तदेव व्युत्पाद्यं नाध्यासमात्रम् । अत्र च 'एवंलक्षणम्' इत्येवंरूपतयाऽनर्थहेतुतोक्ता । यस्मात्प्रत्यगात्मन्यशनायादिरहितेऽशनायाद्युपेतान्तःकरणाद्यहितारोपेण प्रत्यगात्मानमदुःखं दुःखाकरोति, तस्मादनर्थहेतुः । न चैवं पृथग्जना अपि मन्यन्तेऽध्यासं, येन न व्युत्पाद्येतेत्यत उक्तम्—**पण्डिता मन्यन्ते** । नन्वियमनादिरतिनिरूढनिबिडवासनानुबद्धाऽविद्या न शक्या निरोद्धुम्, उपायाभावादिति यो मन्यते तं प्रति तन्निरोधोपायमाह—**तद्विवेकेन च वस्तुस्वरूपावधारणं**—निर्विचिकित्सं ज्ञानं **विद्यामाहुः**, पण्डिताः । प्रत्यगात्मनि खल्वत्यन्तविविक्ते बुद्ध्यादिभ्यः बुद्ध्यादिभेदाग्रहनिमित्तो बुद्ध्याद्यात्मत्वतद्धर्माध्यासः । तत्र श्रवणमननादिभिर्यद्विवेकविज्ञानं तेन विवेकाग्रहे निवर्तिते, अध्यासापबाधात्मकं वस्तुस्वरूपावधारणं विद्या चिदात्मरूपं स्वरूपे व्यवतिष्ठत इत्यर्थः । स्यादेतत् । अतिनिरूढनिबिडवासनानुविद्धाऽविद्या विद्ययाऽपबाधितापि स्ववासनावशात्पुनरुद्भविष्यति प्रवर्तयिष्यति च वासनादि कार्यं स्वोचितमित्यत आह—**तत्रैवं सति**—एवंभूतवस्तुतत्त्वावधारणे सति, **यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न संबध्यते**—अन्तःकरणादिदोषेणाशनायादिना

आनन्दगिरीय—न्यायनिर्णय ।

यति—**एवमिति** । आत्मानात्मनोश्चिदचित्त्वेन वास्तवा ( व ) भेदासिद्धौ सामानाधिकरण्यात्तदभेदधीरध्याससंभावनां निगमयतीति भावः । ननु ब्रह्मविद्यापोह्यत्वेन सूत्रितामविद्यां हित्वा किमित्यध्यासो वर्ण्यते तत्राऽऽह—**तमेतमिति** । आक्षिप्तत्वं समाहितत्वं लक्षितत्वं च विशेषणार्थः । अध्यासमित्यनुभवानुसारिप्यनर्थतोक्ता, पण्डिता मन्यन्त इति पृथग्जनागोचरत्वेनैतदविद्यात्वस्य व्युत्पाद्यत्वमुक्तं, प्रतिपन्नोपाधौ निषेध्यस्याविद्यान्वयव्यतिरेकित्वादविद्यात्वमस्येति वक्तुमविद्याग्रहणमतो न सूत्रिताविद्योपेक्षिता, तस्या एव वर्ण्यमानत्वादित्यर्थः । न केवलमन्वयादिनाऽस्याविद्यात्वं विद्यापोह्यत्वेन तद्विरोधित्वाच्चेत्याह—**तद्विवेकेनेति** । तस्याध्यस्तस्य बुद्ध्यादेर्विवेको विलापनं तेन रूपेणाऽऽत्मनोऽसाधारणरूपस्येदमित्थमेवेत्यवधारणं विद्या तेन तद्विरोधित्वादिना सिद्धेऽध्यासस्याविद्यात्वे सैवोच्यत इत्यर्थः । तथाऽपि कारणाविद्यां त्यक्त्वा कार्याविद्योक्तिरयुक्तेत्याशङ्क्याऽऽह—**तत्रेति** । तस्मिन्नध्यास उक्तरीत्याऽविद्यात्मके सत्याच्छादकाविद्यायाः स्वापादौ

१ तथा च परदण्डेन परस्ताडनीय इति न्यायमनुसृत्य परमतसिद्धमाकाशस्याप्रत्यक्षत्वमुक्त्वा भाष्यकृद्भिः परिहारः कृत इति बोध्यम् ।

**तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमातृप्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः । सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि । कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि**

रत्नप्रभा ।

मूलाविद्यायाः सुषुप्तावनर्थत्वादर्शनात्कार्यात्मना तस्या अनर्थत्वज्ञापनार्थं तद्वर्णनमिति भावः । अध्यस्तकृतगुणदोषाभ्यामधिष्ठानं न लिप्यत इत्यक्षरार्थः एवमध्यासस्य । लक्षणसंभावने उक्त्वा प्रमाणमाह—**तमेतमिति** ॥ तं वर्णितमेतं साक्षिप्रत्यक्षसिद्धं पुरस्कृत्य हेतुं कृत्वा लौकिकः कर्मशास्त्रीयो मोक्षशास्त्रीयश्चेति त्रिविधो व्यवहारः प्रवर्तत इत्यर्थः । तत्र विधिनिषेधपराणि कर्मशास्त्राण्यृग्वेदादीनि, विधिनिषेधशून्यप्रत्यग्ब्रह्मपराणि मोक्षशास्त्राणि वेदान्तवाक्यानीति विभागः ॥ एवं व्यवहारहेतुत्वेनाध्यासे प्रत्यक्षसिद्धेऽपि प्रमाणान्तरं पृच्छति—**कथं पुनरिति** ॥ अविद्यावानहमित्यध्यासवानात्मा प्रमाता स विषय आश्रयो येषां तानि **अविद्यावद्विषयाणीति**विग्रहः । तत्तत्प्रमेयव्यवहारहेतुभूतायाः प्रमाया अध्यासात्मकप्रमा-

भामती ।

चिदात्मा, चिदात्मनो गुणेन चैतन्यानन्दादिनान्तःकरणादि न संबध्यते । एतदुक्तं भवति—तत्त्वावधारणाभ्यासस्य हि स्वभाव एव स तादृशः, यदनादिमपि निरूढनिबिडवासनमपि मिथ्याप्रत्ययमपनयति । तत्त्वपक्षपातो हि स्वभावो धियाम्, यथाहुर्बाह्या अपि—'निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः । न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥' इति । विशेषतस्तु चिदात्मस्वभावस्य तत्त्वज्ञानस्यात्यन्तान्तरङ्गस्य कुतोऽनिर्वाच्ययाऽविद्यया बाध इति । यदुक्तं, सत्यानृते मिथुनीकृत्य विवेकाग्रहादध्यस्याहमिदं ममेदमिति लोकव्यवहार इति तत्र व्यपदेशलक्षणो व्यवहारः कण्ठोक्तः ॥ इतिशब्दसूचितं लोकव्यवहारमादर्शयति—**तमेतमविद्याख्यमिति** । निगदव्याख्यातम् ॥ आक्षिपति—**कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि** । तत्त्वपरिच्छेदो हि प्रमा विद्या, तत्साधनानि प्रमाणानि कथमविद्यावद्विषयाणि । नाविद्यावन्तं प्रमाणान्याश्रयन्ति, तत्कार्यस्य विद्याया अविद्याविरोधित्वादिति भावः । सन्तु वा प्रत्यक्षादीनि संवृत्त्यापि यथा तथा, शास्त्राणि तु पुरुषहितानुशासनपराण्यविद्याप्रतिपक्षतया नावि-

आनन्दगिरीय-न्यायनिर्णयः ।

स्वतोनर्थत्वादर्शनात्कर्तृत्वाद्यध्यासात्मना तस्या जागरादौ तथात्वात्कार्याविद्या[1] वर्ण्यते । यत्राऽऽत्मनि बुद्ध्यादौ यस्य बुद्ध्यादेरात्मनो वाऽध्यासस्तेन बुद्ध्यादिनाऽऽत्मना वा कृतेनाशनायादिदोषेण चैतन्यगुणेन वाऽऽत्मानात्मा वा वस्तुतो न स्वल्पेनापि युज्यत इत्यतो विद्यया तन्निवृत्तिरित्यर्थः । लक्षणसंभावने भेदेनोक्त्वा सद्भावं निर्णेतुमादौ प्रत्यक्षं दर्शयति—**तमिति** । आक्षेपसमाधिविषयत्वं तदर्थः । लक्ष्यत्वमेतदर्थः । अविद्याख्यमिति संभावितोक्तिः । पुरस्कृत्येत्यध्यासस्य व्यवहारहेतुतया स्वानुभवसिद्धत्वमुक्तम् । प्रमाणप्रमेयग्रहणं प्रमात्रादेरुपलक्षणम् । अपौरुषेयत्वेन विशेषं मत्वा शास्त्राणां पृथग्ग्रहणम् । मोक्षपराणि विधिनिषेधशून्यानि वस्तुमात्रनिष्ठानीत्यर्थः त्रिविधव्यवहारस्याऽऽध्यासिकत्वे प्रमाणान्तरजिज्ञासया पृच्छति—**कथमिति** । यद्यपि प्रत्यक्षादिसर्वमविद्योत्थाहंकारादिविशिष्टात्माश्रयमिति स्वसाक्षिकं तथाऽऽपि केन मानान्तरेण तथा स्यात्पुनः शब्दान्मानान्तरविवक्षाधीः । यद्वा प्रमाता प्रमाणानामाश्रयो नाविद्यावाननुपयोगादित्याक्षेपः । अथवा यद्येतानि प्रमाणानि कथमविद्यावद्विषयाणीत्यन्वयः । यद्वा यद्येतान्यविद्यावद्विषयाणि कथं प्रमाणान्यविद्यावदाश्रयत्वे कारणदोषादप्रामाण्याद्यस्य च दुष्टं करणमित्यादि भाष्या-

[1] कार्याविद्या तच्छब्दार्थः ।

**शास्त्राणि चेति ? उच्यते–देहेन्द्रियादिष्वहंममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः । न हीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः सम्भवति ॥**

रत्नप्रभा ।

श्राश्रितत्वात् । प्रमाणानामविद्यावद्विषयत्वं **यद्यपि** प्रत्यक्षम्, **तथापि** पुनरपि **कथं केन** प्रमाणेनाविद्यावद्विषयत्वमिति **योजना । यद्वा**ऽविद्यावद्विषयाणि **कथं** प्रमाणानि स्युः ? आश्रयदोषादप्रामाण्यापत्तेरित्याक्षेपः । तत्र प्रमाणप्रश्ने व्यवहारार्थापत्तिं तल्लिङ्गकानुमानं चाह–**उच्यते** इत्यादिना–**तस्मादित्यन्तेन ।** देवदत्तकर्तृको व्यवहारः, तदीयदेहादिष्वहंममाध्यासमूलः, तदन्वयव्यतिरेकानुसारित्वात्, यदित्थं तत्तथा, यथा मृन्मूलो घटः–इति प्रयोगः । तत्र व्यतिरेकं दर्शयति–**देहेति** ॥ देवदत्तस्य सुषुप्तावध्यासाभावे व्यवहाराभावो दृष्टः । जाग्रत्स्वप्नयोरध्यासे सति व्यवहार इत्यन्वयः स्फुटत्वान्नोक्तः । अनेन लिंगेन कारणतयाध्यासः सिद्ध्यति, व्यवहाररूपकार्यानुपपत्त्या वेति भावः । **ननु** मनुष्यत्वादिजातिमति देहेऽहमित्यभिमानमात्राद्व्यवहारः सिद्ध्यतु, किमिन्द्रियादिषु ममाभिमानेनेत्याशङ्क्याह–**न हीति**॥ इन्द्रियपदं लिङ्गादेरप्युपलक्षणं, प्रत्यक्षादीत्यादिपदप्रयोगात् ॥ तथा च प्रत्यक्षलिङ्गादिप्रयुक्तो योऽव्यवहारो द्रष्टा

भामती ।

द्यावद्विषयाणि भवितुमर्हन्तीत्याह–**शास्त्राणि चेति** । समाधत्ते–**उच्यते–देहेन्द्रियादिष्वहंममाभिमानहीनस्य**–तादात्म्यतद्धर्माध्यासहीनस्य **प्रमातृत्वानुपपत्तौ** सत्यां **प्रमाणप्रवृत्त्यनुपपत्तेः** । अयमर्थः–प्रमातृत्वं हि प्रमां प्रति कर्तृत्वं तच्च स्वातन्त्र्यम् । स्वातन्त्र्यं च प्रमातुरितरकारकाप्रयोज्यस्य समस्तकारकप्रयोक्तृत्वम् । तदनेन प्रमाकरणं प्रमाणं प्रयोजनीयम् । न च स्वव्यापारमन्तरेण करणं प्रयोक्तुमर्हति । न च कूटस्थनित्यश्चिदात्माऽपरिणामी स्वतो व्यापारवान् । तस्माद्व्यापारवद्बुद्ध्यादितादात्म्याध्यासात्, व्यापारवत्तया प्रमाणमधिष्ठातुमर्हतीति भवत्यविद्यावत्पुरुषविषयत्वमविद्यावत्पुरुषाश्रयत्वं प्रमाणानामिति। अथ मा प्रवर्तिषत प्रमाणानि किं नश्छिन्नमित्यत आह–**न हीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः संभवति।** व्यवह्रियतेऽनेनेति व्यवहारः फलं, प्रत्यक्षादीनां प्रमाणानां फलमित्यर्थः ।

आनन्दगिरीय–न्यायनिर्णयः ।

दित्याक्षेपः । व्यवहारहेतुमध्यासमनुमानादिना साधयितुमारभते–**उच्यत इति** । तत्रानुमाने वक्तुं व्यतिरेकव्याप्तिमाह–**देहेन्द्रियादिष्विति** । सशिरस्कोऽवयवी त्वगिन्द्रियस्यानपेक्षाधारो देहस्तत्र मनुष्यत्वादिजातिमति देहेऽहमभिमान इन्द्रियेष्वादिशब्दगृहीतदेहावयवेषु च ममाभिमानस्तेन हीनस्य सुप्तस्य प्रमातृत्वानुपपत्तौ सत्यां मानाप्रवृत्तेरध्यासस्तद्धेतुरित्यर्थः । यत्र नाध्यासस्तत्र न व्यवहारः, यथा सुषुप्ताविति व्याप्तिः । देवदत्तस्य जागरादिकालस्तस्यैवाध्यासाधीनव्यवहारवांस्तस्यैव स्वापादिकालादन्यकालत्वाद्व्यतिरेके तस्यैव स्वापादिकालवदिति भावः । इन्द्रियादिषु ममत्वाभावेऽपि देहेऽहंभावमात्रान्मानप्रवृत्तिमाशङ्क्याऽऽह–**न हीति** । इन्द्रियग्रहणं लिङ्गादेरुपलक्षणं प्रत्यक्षादीत्यादिपदप्रयोगाद्व्यवहारस्य व्यवहर्तारं विनाऽयोगादनुपादानस्य व्यवहारस्य च कर्तृसाम्ये तान्यनुपादाय यो व्यवहारः स नेति योजना । यो द्रष्टृत्ववक्तृत्वादिरक्षमक्षं प्रति नियतो व्यवहारः, यश्च लिङ्गादिनाऽनुमातृत्वादिव्यवहारो नासौ तानि ममत्वेनागृहीत्वा युक्तः, देहाध्यासेऽपि चक्षुराद्यनध्यासेऽन्धादेरदर्शनादित्यर्थः । इन्द्रियाध्यासे तेनैव व्यवहा-

१ यो यदन्वयव्यतिरेकानुसारी, स तन्मूल इत्यर्थः ।

**न चाधिष्ठानमन्तरेणेन्द्रियाणां व्यवहारः सम्भवति ॥ न चानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते । न चैतस्मिन्सर्वस्मिन्नसत्यासङ्गस्यात्मनः**

रत्नप्रभा ।

अनुमाता श्रोताऽहमित्यादिरूपः स इन्द्रियादीनि ममतास्पदान्यगृहीत्वा न सम्भवतीत्यर्थः ॥ यद्वा-तानि ममत्वेनानुपादाय यो व्यवहारः स नेति योजना । पूर्वत्रानुपादानासम्भवक्रिययोरेको व्यवहारः कर्ता इति क्त्वाप्रत्ययः साधुः । उत्तरत्रानुपादानव्यवहारयोरेकात्मकर्तृकत्वात्तत्साधुत्वमिति भेदः । इन्द्रियादिषु ममेत्यध्यासाभावेऽन्धादेरिव द्रष्टृत्वादिव्यवहारो न स्यादिति भावः ॥ इन्द्रियाध्यासेनैव व्यवहारादलं देहाध्यासेनेत्यत आह-न चेति ॥ इन्द्रियाणामधिष्ठानम् आश्रयः । शरीरमित्यर्थः ॥ नन्वस्त्वात्मना संयुक्तं शरीरं तेषामाश्रयः किमध्यासेनेत्यत्राह- न चानध्यस्तात्मभावेनेति ॥ अनध्यस्त आत्मभावः आत्मतादात्म्यं यस्मिन् तेनेत्यर्थः ॥ "असङ्गो हि" [ बृह. ६ । ४ । ३ । १९ ] इति श्रुतेराध्यासिक एव देहात्मनोः सम्बन्धो न संयोगादिरिति भावः ॥ नन्वात्मनो देहादिभिराध्यासिकसम्बन्धोऽपि मास्तु । स्वतश्चेतनतया प्रमातृत्वोपपत्तेः ॥ न च सुषुप्तौ प्रमातृत्वापत्तिः करणोपरमादिति तत्राह-न चैतस्मिन्निति ॥ प्रमाश्रयत्वं हि प्रमातृत्वम् । प्रमा यदि नित्यचिन्मात्रं, तर्ह्याश्रयत्वायोगः, करणवैयर्थ्यं च ।

भामती ।

'इन्द्रियाणि' इति, इन्द्रियलिङ्गादीनीति द्रष्टव्यम्, दण्डिनो गच्छन्तीतिवत् । एवं हि 'प्रत्यक्षादि' इत्युपपद्यते । व्यवहारक्रियया च व्यवहार्याक्षेपात्समानकर्तृकता । अनुपादाय यो व्यवहार इति योजना। किमिति पुनः प्रमातोपादत्ते प्रमाणानि, अथ स्वयमेव कस्मान्न प्रवर्तत इत्यत आह-न चाधिष्ठानमन्तरेणेन्द्रियाणां व्यापारः[1]-प्रमाणानां व्यापारः संभवति । न जातु करणान्यनधिष्ठितानि कर्त्रा स्वकार्ये व्याप्रियन्ते, मा भूत्कुविन्दरहितेभ्यो वेमादिभ्यः पटोत्पत्तिरिति ॥ अथ देह एवाधिष्ठाता कस्मान्न भवति, कृतमत्रात्माध्यासेनेत्यत आह-न चानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते । सुषुप्तेऽपि व्यापारप्रसङ्गादिति भावः । स्यादेतत् । यथानध्यस्तात्मभावं वेमादिकं कुविन्दो व्यापारयन्पटस्य कर्ता, एवमनध्यस्तात्मभावं देहेन्द्रियादि व्यापारयन्भविष्यति तदभिज्ञः प्रमातेत्यत आह-न चैतस्मिन्सर्वस्मिन्-इतरेतराध्यासे इतरेतरधर्माध्यासे च असति, आत्मनोऽसंगस्य-सर्वथा सर्वदा सर्वधर्मधर्मिवियुक्तस्य

आनन्दगिरीय-न्यायनिर्णयः ।

रादलं देहाध्यासेनेत्याशङ्क्याऽऽह-न चेति । इन्द्रियाणामधिष्ठानत्वेन देहे गृहीतेपि तस्मिन्नहंभावस्य न प्रवृत्त्युपयोगो देहात्मनोः संबन्धान्तरादपि प्रवृत्तेरित्याशङ्क्याऽऽह-न चानध्यस्तेति । अस्यार्थः-अध्यासेतरो देहात्मयोगो देहस्याऽऽत्मसंयोगो वाऽऽत्मेच्छयाऽनुविधीयमानत्वं वा तदनुविधानयोग्यत्वं वा तत्कर्मारभ्यत्वं वा । नाऽऽद्यः-आत्मसंयुक्तेन परदेहेनापि तत्प्रसङ्गात् । न द्वितीयः-तदभावेऽप्यातुरदेहे मातृत्वादिदर्शनात् । न तृतीयः-स्वापादावपि तत्प्रसङ्गात्तद्योग्यताया यावद्द्रव्यभावित्वात् । न च तदा सर्वकर्मलयान्न शरीरमेवेति वाच्यं, स्वदृष्ट्या तदभावेऽपि परदृष्ट्या तद्भावात्तस्य तस्मिन्मातृत्वादिधीध्रौव्यात् । न चतुर्थः-भृत्यादिदेहैरपि तत्प्रसङ्गात्तेषां स्वामिकार्यारभ्यत्वादतो देहस्याऽऽत्मनि संबन्धान्तरासिद्धेरध्यास इति । नन्वात्मा स्वतश्चेतनत्वान्मातृत्वादिशक्तिमानिन्द्रियाद्यवधाने जागरादौ मातृत्वादिकमश्नुते स्वापादौ चक्षुराद्यभावात्तदभावो नाध्यासाभावादतोऽव्यतिरेकिणि व्यतिरेकः संदिह्यते तत्राऽऽह-न चैतस्मिन्निति ।

[1] इन्द्रियव्यापारः-इ० पा० । [2] करणानां समनस्केन्द्रियाणामुपरमादविद्यायां विलयादित्यर्थः ।

**प्रमातृत्वमुपपद्यते॥ न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति ॥ तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च इति ॥**

रत्नप्रभा ।

**यदि** वृत्तिमात्रं, जगदान्ध्यप्रसङ्गः, वृत्तेर्जडत्वात् । अतो वृत्तीद्धो बोधः प्रमा, तदाश्रयत्वमसङ्गस्यात्मनो वृत्तिमन्मनस्तादात्म्याध्यासं विना न सम्भवतीति भावः ॥ देहाध्यासे, तद्धर्माध्यासे चासतीत्यक्षरार्थः ॥ तर्ह्यात्मनः प्रमातृत्वं मास्त्विति वदन्तं प्रत्याह—**न चेति** ॥ तस्मादात्मनः प्रमातृत्वादिव्यवहारार्थमध्यासोऽङ्गीकर्तव्य इत्यनुमानार्थापत्त्योः फलमुपसंहरति—**तस्मादिति** ॥ प्रमाणसत्त्वादित्यर्थः ॥ **यद्वा**—प्रमाणप्रश्नं समाधायाक्षेपं परिहरति—**तस्मादिति** ॥ अहमित्यध्यासस्य प्रमात्रन्तर्गतत्वेनादोषत्वादविद्यावदाश्रयाण्यपि प्रमाणान्येवेति **योजना** । सति प्रमातरि पश्चाद्भवन् **दोष इत्युच्यते** । **यथा**—काचादिः । अविद्या तु प्रमात्रन्तर्गतत्वान्न दोषः । येन प्रत्यक्षादीनामप्रामाण्यं भवेदिति भावः ॥ **ननु** यदुक्तमन्वयव्यतिरेकाभ्यां व्यवहारोऽध्यासकार्य इति । **तदयुक्तं**—विदुषामध्यासाभावेऽपि व्यवहारदृष्टेरित्यत आह—

भामती ।

**प्रमातृत्वमुपपद्यते** । व्यापारवन्तो हि कुविन्दादयो वेमादीनधिष्ठाय व्यापारयन्ति, अनध्यस्तात्मभावस्य तु देहादिष्वात्मनो न व्यापारयोगोऽसङ्गत्वादित्यर्थः । आतश्चाध्यासाश्रयाणि प्रमाणानीत्याह—**न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति** । प्रमायां खलु फले स्वतन्त्रः प्रमाता भवति । अन्तःकरणपरिणामभेदश्च प्रमेयप्रवणः कर्तृस्थश्चित्स्वभावः प्रमा । कथं च जडस्यान्तःकरणस्य परिणामश्चिद्रूपो भवेत्, यदि चिदात्मा तत्र नाध्यस्येत, कथं चैष चिदात्मकर्तृको भवेत्, यद्यन्तःकरणं व्यापारवच्चिदात्मनि नाध्यस्येत् । तस्मादितरेतराध्यासाच्चिदात्मकर्तृस्थं प्रमाफलं सिद्ध्यति । तत्सिद्धौ च प्रमातृत्वम्, तामेव च प्रमामुररीकृत्य प्रमाणस्य प्रवृत्तिः । प्रमातृत्वेन च प्रमोपलक्ष्यते । प्रमायाः फलस्याभावे प्रमाणं न प्रवर्तेत । तथा च प्रमाणमप्रमाणं स्यादित्यर्थः । उपसंहरति—**तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि** । स्यादेतत् । भवतु पृथग्जनानामेवम् । आगमोपपत्तिप्रतिपन्नप्रत्यगात्मतत्त्वानां व्युत्पन्नानामपि

आनन्दगिरीय—न्यायनिर्णयः ।

प्रमातृत्वं प्रमां प्रति कर्तृत्वं, तच्च कारकान्तराप्रयोज्यस्य तत्प्रयोक्तृत्वं, न च व्यापारमन्तरेण करणादिप्रयोक्तृत्वं, न च कूटस्थासङ्गात्मनः स्वतो व्यापारः, न चेच्छातिरेकेण प्रमाकरणप्रयोक्तृत्वं, न चाऽऽत्मन्यक्रियेऽगुणे क्रियागुणवद्बुद्ध्याद्यध्यासादृते सा युक्ता, तस्माद्बुद्ध्याद्यभेदाध्यासे तद्धर्माध्यासे चासति स्वतोऽसङ्गस्य मातृत्वायोगादध्यासस्तद्धेतुरित्यर्थः । तर्हि मा भूदसङ्गस्याऽऽत्मनो मातृत्वं नेत्याह—**न चेति** । आत्मन्याध्यासिकमातृत्वाभावे सर्वव्यवहारहानिरित्यर्थः । एवं व्यतिरेकिणि व्यतिरेकासंदेहात्तस्यादोषत्वादर्थापत्तेरपि तेनावरोधात्प्रमाणान्तरप्रश्ने समाहितेऽपि कथमाक्षेपसमाधिस्तत्राऽऽह—**तस्मादिति** । प्रमाणस्य सत्त्वादिति यावत् । अयं भावः—मातुरेव मानाश्रयत्वेऽपि तस्याध्यस्तत्वात्तेषामविद्यावदाश्रयत्वम् । न च कारणदोषादप्रामाण्यं सति प्रमाकरणे पश्चाद्भाविनो दोषस्य दोषत्वादविद्यायास्तत्कारणनिविष्टत्वाद्यस्य च दुष्टं करणमिति चोक्तेरागन्तुकदोषविषयत्वादध्यक्षादीनां च तात्त्विकप्रामाण्याभावस्येष्टत्वाद्व्यवहारे बाधाभावाद्व्यावहारिकप्रामाण्यसिद्धेः । न च तेषामतात्त्विके प्रामाण्ये तदन्तर्गतश्रुतेरपि तथात्वान्नेष्टसिद्धिः । श्रुत्यर्थस्य ब्रह्मणः सत्यं ज्ञानमित्यादिना तात्त्विकत्वदृष्टेस्तस्यास्तात्त्विकप्रामाण्यादिति । नन्वविवेकिव्यव-

१ क० पा० चेति । २ केन प्रमाणेनाविद्यावद्विषयाणि प्रत्यक्षादीनीतिप्रश्नम् । ३ अविद्यावद्विषयाणि चेदप्रमाणानि कथं स्युरिति खण्डनम् । ४ व्यवहारदर्शनात् ।

**पश्वादिभिश्चाविशेषात् । यथा हि-पश्वादयः शब्दादिभिः श्रोत्रादीनां सम्बन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते, अनुकूले च प्रवर्तन्ते, यथा-दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति-**

रत्नप्रभा ।

**पश्वादिभिश्चेति॥ चशब्दः** शङ्कानिरासार्थः ॥ किं विद्वत्त्वं-ब्रह्मास्मीति साक्षात्कारः ?-उत यौक्तिकमात्मानात्मभेदज्ञानम् ?-आद्ये-"बाधिताध्यासानुवृत्त्या व्यवहारः" इति समन्वयसूत्रे वक्ष्यते । द्वितीये-परोक्षज्ञानस्यापरोक्षभ्रान्त्यनिवर्त्तकत्वाद्विवेकिनामपि व्यवहारकाले पश्वादिभिरविशेषादध्यासवत्त्वेन तुल्यत्वाद्व्यवहारोध्यासकार्य इति युक्तमित्यर्थः ॥ **अत्रायं प्रयोगः**-विवेकिनः, अध्यासवन्तः, व्यवहारवत्त्वात्, पश्वादिवदिति । तत्र संग्रहवाक्यं व्याकुर्वन् दृष्टान्ते हेतुं स्फुटयति-**यथा हीति** ॥ विज्ञानस्यानुकूलत्वं प्रतिकूलत्वं चेष्टानिष्टसाधनगोचरत्वम् । तदेवोदाहरति-**यथेति** ॥ अयं दण्डः, मदनिष्टसाधनं, दण्डत्वाद्, अनुभूतदण्डवद्,-इदं तृणम्, इष्टसाधनम्, अनुभूतजातीयत्वाद्, अनुभूततृणवद्, इत्यनुमाय व्यव-

भामती ।

पुंसां प्रमाणप्रमेयव्यवहारा दृश्यन्त इति कथमविद्यावद्विषयाण्येव प्रमाणानीत्यत आह-**पश्वादिभिश्चाविशेषादिति** । विदन्तु नामागमोपपत्तिभ्यां देहेन्द्रियादिभ्यो भिन्नं प्रत्यगात्मानम् । प्रमाणप्रमेयव्यवहारे तु प्राणभृन्मात्रधर्मान्नातिवर्तन्ते । यादृशो हि पशुशकुन्तादीनामविप्रतिपन्नमुग्धभावानां व्यवहारस्तादृशो व्युत्पन्नानामपि पुंसां दृश्यते । तेन तत्समान्यात्तेषामपि व्यवहारसमयेऽविद्यावत्त्वमनुमेयम् । चशब्दः समुच्चये । उक्तशङ्कानिवर्तनसहितपूर्वोक्तोपपत्तिः, अविद्यावत्पुरुषविषयत्वं प्रमाणानां साधयतीत्यर्थः । एतदेव विभजते-**यथा हि पश्वादय इति** । अत्र च **शब्दादिभिः श्रोत्रादीनां संबन्धे सति** इति प्रत्यक्षं प्रमाणं दर्शितम् । **शब्दादिविज्ञाने** इति तत्फलमुक्तम् । **प्रतिकूले** इति चानुमानफलम् । तथाहि-शब्दादिस्वरूपमुपलभ्य तज्जातीयस्य प्रतिकूलतामनुस्मृत्य तज्जातीयतयोपलभ्यमानस्य प्रतिकूलतामनुमिमीत इति । उदाहरति-**यथा दण्डेति** । शेषमतिरोहितार्थम् । स्यादेतत् । भवन्तु प्रत्यक्षादीन्यविद्यावद्विषयाणि । शास्त्रं तु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादि न देहात्माध्यासेन प्रवर्तितुमर्हति । अत्र खल्वामुष्मिकफलोपभोगयोग्योऽधिकारी प्रतीयते । तथा च पारमर्षं सूत्रम्-'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात् स्वयं प्रयोगे स्यात्' ( अ, ३ पा, ७

आनन्दगिरीय-न्यायनिर्णयः ।

हारस्याऽऽध्यासिकत्वेऽपि नाविद्यावद्विषयाण्येव प्रमाणानि विवेकिनामपि तद्व्यवहारात्तत्राऽऽह-**पश्वादिभिश्चेति** । चशब्दः शङ्काव्यावृत्त्यर्थः । यौक्तिकविवेकस्याध्यक्षभ्रान्त्यविरोधित्वाद्विरोधित्वेऽपि तदननुसंधाने त्विवेकिनामपि व्यवहारे पश्वादिभिरविशेषात्तद्व्यवहारोऽप्याध्यासिक एवेत्यर्थः । कथं व्यवहारकाले विवेकिनामपि पश्वादिभिरविशेषः, न हि ते निःशेषं पश्वादिव्यवहारमनुवर्तन्ते तत्राऽऽह-**यथा हीति** । संगृहीतोऽर्थो यथा व्यज्यते तथोच्यत इति यावत् । आदिशब्देन शकुन्तादिरुक्तः । शब्दादिभिः श्रोत्रादीनां संबन्धे सतीत्यर्थेन्द्रियसंनिकर्षात्मकमध्यक्षमुक्तम् । शब्दादिविज्ञान इति तत्फलम् । प्रतिकूलेऽनुकूल इत्यनुमानम् । ते हि शब्दाद्युपलभ्य तज्जातीयस्य प्रातिकूल्यमानुकूल्यं वाऽनुस्मृत्यास्यापि तज्जातीयत्वात्तथात्वमनुमिन्वन्ति । तत्र प्रतिकूलत्वानुमानफलं निवृत्तिः । अनुकूलत्वानुमानफलं प्रवृत्तिरिति विवेकः । उक्तमर्थमुदाहरति-**यथेति** । पुरुषविशेषं दृष्ट्वा तज्जातीयस्य हन्तृत्वमनुस्मृत्यास्यापि तज्जातीयत्वात्तदनुमाय ततो वैमुख्यं भजन्तीत्यर्थः । प्रत्येकं पश्वादीनामाशयं दर्शयितुं मामित्युक्तम् । पुरुषान्तरं तु दृष्ट्वा

**पलायितुमारभन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति इति । एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान्बलवत उपलभ्य ततो निवर्तन्ते, तद्विपरीतान्प्रति प्रवर्तन्ते । अतस्समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः ॥ पश्वादीनां च प्रसिद्ध एवाविवेकपूर्वकः प्रत्यक्षादिव्यवहारः ॥ तत्सामान्यदर्शनाद्व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समान इति निश्चीयते ॥**

---

रत्नप्रभा ।

हरन्तीत्यर्थः ॥ अधुना हेतोः पक्षधर्मतामाह–**एवमिति** ॥ व्युत्पन्नचित्ता अपीत्यन्वयः । विवेकिनोऽपीत्यर्थः ॥ फलितमाह–**अत इति** ॥ अनुभवबलादित्यर्थः ॥ **समान इति** । अध्यासकार्यत्वेन तुल्य इत्यर्थः ॥ नन्वस्माकं प्रवृत्तिरध्यासादिति, न पश्वादयो ब्रुवन्ति, नापि परेषामेतत् प्रत्यक्षम् । अतः साध्यविकलो दृष्टान्त इति, नेत्याह–**पश्वादीनां चेति** ॥ तेषामात्मानात्मनोर्ज्ञानमात्रमस्ति, न विवेकः । उपदेशाभावात् । अतः सामग्रीसत्त्वादध्यासस्तेषां प्रसिद्ध इत्यर्थः ॥ निगमयति–**तत्सामान्येति** ॥ तैः पश्वादिभिः सामान्यं व्यवहारवत्त्वं तस्य दर्शनाद्विवेकिनामप्ययं व्यवहारः समान इति निश्चीयत इति **सम्बन्धः** ॥ **समानत्वं**–व्यवहारस्याध्यासकार्यत्वेनेत्युक्तं पुरस्तात् । तत्रोक्तान्वयव्यतिरेकौ स्मारयति–**तत्काल इति** ॥

भामती ।

सू. १८ ) इति । न च देहादि भस्मीभूतं पारलौकिकाय फलाय कल्पत इति देहाद्यतिरिक्तं कंचिदधि-

रत्नप्रभा श्रीगोविन्दप्रणीता ।

तज्जातीयस्याऽऽनुकूल्यमनुस्मृत्यास्यापि तज्जातीयत्वात्तदनुमाय तदाभिमुख्यं भजन्तीत्याह—**हरितेति** । दार्ष्टान्तिकं वदन्व्यवहारलिङ्गेनाध्यासमनुमातुं तस्य पक्षधर्मतामाह—**एवमिति** । पित्रादित्रितयशिक्षाजन्यपदवाक्याभिज्ञता व्युत्पन्नचित्तता । क्रूरदृष्ट्यादिविशिष्टान्पुरुषान्दृष्ट्वा तद्विधानां प्रातिकूल्यं स्मृत्वा तथात्वेनैतेषामपि तदनुमाय पश्वादिवद्विवेकिनोऽपि तेभ्यो विमुखी भवन्ति तेभ्यो विपरीतान्प्रसन्नदृष्टित्वादिविशिष्टान्पुरुषविशेषानालक्ष्य तादृशानामानुकूल्यं स्मृत्वा तथात्वादेषामपि तदनुमाय तेष्वभिमुखी भवन्तीत्यर्थः । पक्षधर्मतां निगमयति—**अत इति** । अनुभवार्थोऽतःशब्दः । नन्वस्माकं प्रवृत्तिरध्यासादिति न पश्वादयो ब्रुवन्ति नापि परेषामेतत्प्रत्यक्षमतो दृष्टान्तस्य साध्यवैकल्यं तत्राऽऽह—**पश्वादीनां चेति** । अधिष्ठानारोप्यज्ञानेऽसत्यध्यक्षादिभिः सामानाधिकरण्यविरोधिविवेकाभावादध्यासवत्त्वं तेषां कल्प्यते । विनाऽपि मानैर्विवेके तदानर्थक्यमतो विना विवेकं पश्वादिषु व्यवहारदृष्टेस्तन्मूलाध्याससिद्धिरित्यर्थः । संप्रत्यनुमानमाह—**तत्सामान्येति** । तैः पश्वादिभिः सामान्यं व्यवहारवत्त्वं तस्य विवेकेषु भानादिति यावत् । अपरोक्षाध्यासस्य व्यवहारपुष्कलकारणत्वात्तस्याध्यासस्य काल एव कालो यस्य व्यवहारस्य स तत्कालः समानः पश्वादिभिरिति शेषः । विमतो व्यवहारोऽध्यासकृतो व्यवहारत्वात्संमतवद्विमता वाऽध्यासवन्तो व्यवहारवत्त्वात्पश्वादिवदिति प्रयोगः । मानयुक्तिभ्यां विवेकेऽप्यध्यासविरोधिप्रमित्यभावादध्यासवत्त्वमविरुद्धमिति मत्वा व्युत्पत्तिमतामपीत्युक्तम् । न च व्यवहारवत्त्वाद्यप्रयोजकमात्मनो मातृत्वादिशक्तिमत्त्वे शक्तेः सनिमित्तशक्याधीनतया मुक्तानामपि सनिमित्तशक्यापादकत्वात्तत्रापि मातृत्वादिप्रसक्त्या मुक्त्यभावापातस्य विपक्षे बाधकत्वात्प्रमातृत्वादिल-

---

१ क० पा० अभिमुखीभवन्ति । २ पा० प्रसिद्धोऽविवेकपुरस्सरः प्रत्येति । ३ उपसंहरति ।

**शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वात्मनः परलोकसम्बन्धमधिक्रियते । तथापि न वेदान्तवेद्यमशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमसंसार्यात्मतत्त्वमधिकारेऽपेक्ष्यते । अनुपयोगादधिकारविरोधाच्च ॥ प्राक् तथाभूतात्मविज्ञानात्प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं**

रत्नप्रभा ।

तस्याध्यासस्य काल एव कालो यस्य सः तत्कालः ॥ यदा अध्यासः, तदा व्यवहारः । तदभावे सुषुप्तौ तदभाव इत्युक्तान्वयादिमानिति यावत् । अतो व्यवहारलिंगाद्विवेकिनामपि देहादिष्वहंममाभिमानोऽस्तीत्यनवद्यम् ॥ ननु लौकिकव्यवहारस्याऽऽध्यासिकत्वेऽपि ज्योतिष्टोमादिव्यवहारस्य नाध्यासजन्यत्वं, तस्य देहातिरिक्तात्मज्ञानपूर्वकत्वादित्याशङ्क्य हेतुमङ्गीकरोति—**शास्त्रीये त्विति** ॥ तर्हि कथं वैदिककर्मणोऽध्यासजन्यत्वसिद्धिरित्याशङ्क्य किं तत्र देहान्यात्मधीमात्रमपेक्षितमुत आत्मतत्त्वज्ञानम् ?. आद्ये तस्याध्यासाबाधकत्वात्तत्सिद्धिरित्याह—**तथापीति** ॥ न द्वितीय इत्याह—**न वेदान्त इति** ॥ क्षुत्पिपासादिग्रस्तो जातिविशेषवानहं संसारीति ज्ञानं—कर्मण्यपेक्षितं, न तद्विपरीतात्मतत्त्वज्ञानम् । अनुपयोगात्, प्रवृत्तिबाधाच्चेत्यर्थः ॥ शास्त्रीयकर्मणोऽध्यासजन्यत्वं निगमयति—**प्राक् तथेति** ॥ अध्यासे आगमं प्रमाण-

भामती ।

कारिणमाक्षिपति शास्त्रं, तदवगमश्च विद्येति कथमविद्यावद्विषयं शास्त्रमित्याशङ्क्याह—**शास्त्रीये त्विति** । तुशब्दः प्रत्यक्षादिव्यवहाराद्भिनत्ति शास्त्रीयम् । अधिकारशास्त्रं हि स्वर्गकामस्य पुंसः परलोकसंबन्धं विना न निर्वहतीति तावन्मात्रमाक्षिपेत्, न त्वस्यासंसारित्वमपि, तस्याधिकारेऽनुपयोगात् । प्रत्युत औपनिषदस्य पुरुषस्याकर्तुरभोक्तुरधिकारविरोधात् । प्रयोक्ता हि कर्मणः कर्मजनितफलभोगभागी कर्मण्यधिकारी स्वामी भवति । तत्र कथमकर्ता प्रयोक्ता, कथं वाऽभोक्ता कर्मजनितफलभोगभागी । तस्मादनाद्यविद्यालब्धकर्तृत्वभोक्तृत्वब्राह्मणत्वाद्यभिमानिनं नरमधिकृत्य विधिनिषेधशास्त्रं प्रवर्तते । एवं वेदान्ता अप्यविद्यावत्पुरुषविषया एव । न हि प्रमात्रादिविभागादृते तदर्थाधिगमः । ते त्वविद्यावन्तमनुशासन्तो निर्मृष्टनिखिलाविद्यमनुशिष्टं स्वरूपे व्यवस्थापयन्तीत्येतावानेषां विशेषः । तस्मादविद्यावत्पुरुषविषयाण्येव शास्त्राणीति सिद्धम् । स्यादेतत् । यद्यपि विरोधानुपयोगाभ्यामौपनिषदः पुरुषोऽधिकारे नापेक्ष्यते, तथाप्युपनिषद्भ्योऽवगम्यमानः शक्नोत्यधिकारं निरोद्धुम् । तथा च परस्परापहतार्थत्वेन कृत्स्न एव वेदः प्रामाण्यमपजह्यादित्यत आह—**प्राक् च तथाभूतात्मेति** । सत्यमौप-

आनन्दगिरीय—न्यायनिर्णयः ।

क्षणशक्याभावे च ग्राहकमानाभावेन शक्तिमत्त्वस्यापि दुर्वचनत्वात् । न च सर्वो व्यवहारो रजताध्यासकृतो व्यवहारत्वादित्याभासतुल्यता, बाधादेव तस्यानुत्थानात् । मनुष्योऽहमित्यध्यासस्य सर्वानुभवसिद्धतया तदभावादिति भावः । विवेकिनां च लौकिकव्यवहारस्याऽऽध्यासिकत्वेऽपि शास्त्रीयव्यवहारस्य विद्वद्विषयत्वान्न तत्पूर्वकतेति भागे बाधमाशङ्क्य तस्यापि तत्पूर्वकत्वार्थं देहेतरात्मधीपूर्वकत्वमङ्गीकरोति—**शास्त्रीये त्विति** । तस्य तद्विषयत्वे कथमध्यासाधीनतेत्याशङ्क्याऽऽह—**तथाऽपीति** । किं तद्वेदान्तवेद्यं तदाह—**अशनायादीति** । कर्त्रन्वयाधिकारान्वयभोक्त्रन्वया विशेषणैर्व्यावर्त्यन्ते । आमुष्मिकफलकर्मसु देहेतरात्मज्ञानादेव प्रवृत्तावुक्तात्मज्ञानस्याकिंचित्करत्वादित्याह—**अनुपयोगादिति** । किंचोक्तात्मज्ञाने सर्वाभिमानभङ्गात्कर्मस्वप्रवृत्तिरेवेति कुतस्तदपेक्षेत्याह—**अधिकारेति** । तथाऽपि कथं शास्त्रीयप्रवृत्तेराध्यासिकत्वं, न हि देहातिरिक्तात्मज्ञाने बाधके तदध्यासानुवृत्तिरित्याशङ्क्य तस्य पारोक्ष्यादपरोक्षाध्यासाविरोधे तत्पूर्विकैव शास्त्रीयप्रवृत्तिरित्याह—**प्राक्चेति** । यथा यथोक्तान्यध्यक्षादी-

१ प्राक् चेति पाठो भामती—न्यायनिर्णयसम्मतः ।

**नातिवर्तते॥ तथा हि "ब्राह्मणो यजेत" इत्यादीनि शास्त्राण्यात्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते ॥ अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम । तद्यथा**

---

रत्नप्रभा ।

यति—**तथा हीति** । यथा प्रत्यक्षानुमानार्थापत्तयोऽध्यासे प्रमाणं, तथाऽऽगमोपीत्यर्थः ॥ "ब्राह्मणो यजेत" "न ह वै स्नात्वा भिक्षेत" "अष्टवर्षं ब्राह्मणमुपनयीत" "कृष्णकेशोऽग्नीनादधीत" इत्यागमो ब्राह्मणादिपदैरधिकारिणं वर्णाद्यभिमानिनमनुवदन्नध्यासं गमयतीति भावः । एवमध्यासे प्रमाणसिद्धेऽपि कस्य कुत्राध्यास इति जिज्ञासायां तमुदाहर्तुं लक्षणं स्मारयति—**अध्यासो नामेति** । उदाहरति—**तद्यथेति** ॥ तल्लक्षणं यथा स्पष्टं भवति, तथोदाह्रियत इत्यर्थः ।

भामती ।

निपदपुरुषाधिगमोऽधिकारविरोधी, तस्मात्तु पुरस्तात्कर्मविषयः स्वोचितं व्यवहारं निर्वर्तयन्तो नानुपजातेन ब्रह्मज्ञानेन शक्या निरोद्धुम् । न च परस्परापहतिः, विद्याविद्यावत्पुरुषभेदेन व्यवस्थोपपत्तेः । यथा 'न हिंस्यात्सर्वा भूतानि' इति साध्यांशनिषेधेऽपि 'श्येनेनाभिचरन् यजेत' इति शास्त्रं प्रवर्तमानं न हिंस्यादित्यनेन न विरुध्यते, तत्कस्य हेतोः, पुरुषभेदादिति । अवजितक्रोधारातयः पुरुषा निषेधेऽधिक्रियन्ते, क्रोधारातिवशीकृतास्तु श्येनादिशास्त्र इति । अविद्यावत्पुरुषविषयत्वं नातिवर्तत इति यदुक्तं तदेव स्फोरयति—**तथाहीति** । वर्णाध्यासः—'राजा राजसूयेन यजेत' इत्यादिः । आश्रमाध्यासः—'गृहस्थः सदृशीं भार्यां विन्देत्' इत्यादिः । वयोऽध्यासः—'कृष्णकेशोऽग्नीनादधीत' इत्यादिः । अवस्थाध्यासः—'अप्रतिसमाधेयव्याधीनां जलादिप्रवेशेन प्राणत्यागः' इति । आदिग्रहणं महापातकोपपातकसंकरीकरणापात्रीकरणमलिनीकरणाद्यध्यासोपसंग्रहार्थम् । तदेवमात्मानात्मनोः परस्पराध्यासमाक्षेपसमाधानाभ्यामुपपाद्य प्रमाणप्रमेयव्यवहारप्रवर्तनेन च दृढीकृत्य तस्यानर्थहेतुतामुदाहरणप्रपञ्चेन प्रतिपादयितुं तत्स्वरूपमुक्तं स्मारयति—**अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम** । 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः' इत्यस्य संक्षेपाभिधानमेतत् । तत्राहमिति धर्मितादात्म्याध्यासमात्रं, ममेत्यनुत्पादितधर्माध्यासं नानर्थहेतुरिति धर्माध्यासमेव ममकारं साक्षादशेषानर्थसंसारकारणमुदाहरणप्रपञ्चेनाह—**तद्यथा**

आनन्दगिरीय-न्यायनिर्णयः ।

न्यध्यासं साधयन्ति तथाऽऽगमोऽपि विधेर्बोद्धारमधिकारिणं ब्राह्मणादिशब्दैरनुवदन्देहात्मनोरन्योन्याध्यासं साधयतीत्याह—**तथा हीति** । तत्राष्टवर्षं ब्राह्मणमुपनयीतेत्यादिर्वर्णवयोविशेषस्य न ह वै स्नात्वा भिक्षेतेत्यादिराश्रमविशेषस्य जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यादिरवस्थाविशेषस्याध्यासः । आदिशब्दाज्जीवन्जुहुयादिति जीवनस्य स्वर्गकामो यजेतेति कामित्वस्य गृहदाहवान्यजेतेति निमित्तविशेषस्य महापातकित्वादेश्चाध्यासो गृह्यते । उक्तप्रमाणैः सिद्धेऽप्यध्यासे कस्य युष्मदर्थस्य कस्मिन्नस्मदर्थे वैपरीत्येन वाऽध्यास इति विशेषबुभुत्सायां तदर्थमध्यासलक्षणं परामृशति—**अध्यासो नामेति** । अध्यासस्यानर्थहेतुतां दर्शयितुं तद्विशेषानुदाहरति—**तद्यथेति** । प्रसिद्धातिरेकयोरपि पुत्रादिसाकल्यवैक-

---

१ पा०त्य वर्तन्ते । २ स्नानमत्र समावर्तनम् । तथा च ब्रह्मचर्यान्त्यस्नानमनुष्ठाय गार्हस्थ्ये भिक्षाटनं न कार्यमितिभावः ।

**पुत्रभार्यादिषु विकलेषु सकलेषु वाहमेव विकलः, सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति, तथा-देहधर्मान्-स्थूलोऽहं, कृशोऽहं, गौरोऽहं, तिष्ठामि, गच्छामि, लङ्घयामि चेति, तथेन्द्रियधर्मान्-मूकः, काणः, क्लीबो, बधिरोऽन्धोऽहमिति, तथान्तःकरणधर्मान् कामसङ्कल्पविचिकित्साध्यवसायादीन्, एवमहम्प्रत्ययिनमशेषस्वप्रचारसाक्षिणि-**

---

रत्नप्रभा।

स्वदेहाद्भेदेन प्रत्यक्षाः पुत्रादयो बाह्याः, तद्धर्मान् साकल्यादीन् देहविशिष्टात्मन्यध्यस्यति। तद्धर्मज्ञानात् स्वस्मिंस्तत्तुल्यधर्मानध्यस्यतीत्यर्थः। भेदापरोक्षज्ञाने तद्धर्माध्यासायोगाद् अन्यथाख्यात्यनङ्गीकाराच्चेति द्रष्टव्यम्। देहेन्द्रियधर्मान् मनोविशिष्टात्मन्यध्यस्यतीत्याह-**तथेति**॥ कृशत्वादिधर्मवतो देहादेरात्मनि तादात्म्येन कल्पितत्वात्तद्धर्माः साक्षादात्मन्यध्यस्ता इति मन्तव्यम्॥ अज्ञाते प्रत्यग्रूपे साक्षिणि मनोधर्माध्यासमाह-**तथान्तःकरणेति**। धर्माध्यासमुक्त्वा तद्वदेव धर्म्यध्यासमाह-**एवमिति**। अन्तःकरणं साक्षिण्यभेदेनाध्यस्य तद्धर्मान् कामादीन् अध्यस्यतीति मन्तव्यम्। **स्वप्रचारा** मनोवृत्तयः। प्रातिलोम्येनास-

भामती।

**पुत्रभार्यादिष्विति**। देहतादात्म्यमात्मन्यध्यस्य देहधर्मं पुत्रकलत्रादिस्वाम्यं च कृशत्वादिवदारोप्य आह-अहमेव विकलः, सकल इति। स्वस्य खलु साकल्येन स्वाम्यसाकल्यात्, स्वामीश्वरः सकलः संपूर्णो भवति। तथा स्वस्य वैकल्येन स्वाम्यवैकल्यात्, स्वामीश्वरो विकलोऽसंपूर्णो भवति। बाह्यधर्मा ये वैकल्यादयः स्वाम्यप्रणालिकया संचारिताः शरीरे तानात्मन्यध्यस्यतीत्यर्थः। यदा च परोपाध्यपेक्षे देहधर्मे स्वाम्ये इयं गतिः, तदा कैव कथाऽनौपाधिकेषु देहधर्मेषु कृशत्वादिष्वित्याशयवानाह-**तथा देहधर्मानिति**। देहादेरप्यन्तरङ्गाणामिन्द्रियाणामध्यस्तात्मभावानां धर्मान्मूकत्वादीन् ततोऽप्यन्तरङ्गस्यान्तःकरणस्य अध्यस्तात्मभावस्य धर्मान्कामसंकल्पादीन् आत्मन्यध्यस्यतीति योजना। तदनेन प्रपञ्चेन धर्माध्यासमुक्त्वा तस्य मूलं धर्म्यध्यासमाह-**एवमहंप्रत्ययिनम्**-अहंप्रत्ययो वृत्तिर्यस्मिन्नन्तःकरणादौ सोऽयमहंप्रत्ययी तम्। **स्वप्रचारसाक्षिणि**-अन्तःकरणप्रचारसाक्षिणि, चैतन्योदासीनताभ्यां,

आनन्दगिरीय-न्यायनिर्णयः।

त्ययोरनुभवेनैव मुख्याध्याससिद्धावप्रसिद्धातिरेकाणां कृशत्वादीनां तथा स्यादिति किं वक्तव्यमित्याशयेनाऽऽह-**पुत्रेति**। बाह्याः स्वदेहापेक्षया पुत्रादयस्तद्धर्मा वैकल्यादयः स्वस्वाम्यनिमित्तमात्मनि स्वदेहे तानारोपयतीत्यर्थः। प्रसिद्धभेदानामपि स्वदेहद्वाराऽऽत्मनि मुख्याध्यासे सत्यप्रसिद्धभेदानां सुतरां तत्र मुख्याध्यासः स्यादित्याह-**तथेति**। वैकल्यादीनां स्वदेहद्वाराऽऽत्मन्यध्यासवदिति यावत्। देहश्च तद्धर्माश्च देहतद्धर्मास्तानात्मन्यध्यस्यतीति संबन्धः। अत्र चाहंकारद्वाराऽऽत्माऽधिष्ठानम्। उक्ताध्यासादप्यन्तरङ्गमध्यासं कथयति-**तथेन्द्रियेति**। यथा देहं तद्धर्मांश्चाऽऽत्मन्यध्यस्यति तथेन्द्रियाणि तद्धर्मांश्चाध्यस्यतीत्येतत् देहस्य चक्षुरादिद्वारा साक्षिवेद्यत्ववदिन्द्रियाणामपि लिङ्गादिद्वारा तद्भावाद्देहवदिह ग्रहणं पृथगध्यासनिर्देशाच्च। न चैवं नित्यानुमेयत्वव्याघातस्तेषां लिङ्गादिव्यवधानेन साक्षिवेद्यत्वादधिष्ठानं तु पूर्ववदिति भावः। यथा देहेन्द्रियधर्मानात्मन्यध्यस्यति तथाऽन्तःकरणधर्मानपि कामादीनात्मनि संबन्धित्वेनाऽऽरोपयतीत्याह-**तथाऽन्तःकरणेति**। धर्माणामेवाध्यासमुक्त्वा देहादिवद्धर्म्यध्यासमाह-**एवमिति**। बुद्धिविशिष्टे तद्धर्माध्यासं तदध्यासे किमधिष्ठानं तदाह-**अशेषेति**। स्वस्याहंकारस्य प्रचाराः कामादयस्तेषां

**प्रत्यगात्मन्यध्यस्य तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यति ॥ एवमयमनादिरनन्तो नैसर्गिकः-**

---

रत्नप्रभा ।

जडदुःखात्मकाहङ्कारादिविलक्षणतया सच्चित्सुखात्मकत्वेनाञ्चति प्रकाशत इति **प्रत्यक्** । एवमात्मन्यनात्मतद्धर्माध्यासमुदाहृत्यानात्मन्यात्मनोऽपि संसृष्टत्वेनाध्यासमाह-**तं चेति** ॥ अहमित्यध्यासे चिदात्मनो भानं वाच्यम्, अन्यथा जगदान्ध्यापत्तेः । न चानध्यस्तस्याध्यासे भानमस्ति । तस्माद्रजतादाविदम इवात्मनः संसर्गाध्यास एष्टव्यः-**तद्विपर्ययेणेति** ॥ तस्याध्यस्तस्य जडस्य विपर्ययोऽधिष्ठानत्वम् । चैतन्यं च तदात्मना स्थितमिति यावत् । तत्राज्ञाने केवलात्मनः संसर्गः, मनस्यज्ञानोपहितस्य देहादौ मन उपहितस्येति विशेषः । **एवमात्मनि** बुद्ध्याद्यध्यासात् कर्तृत्वादिलाभः, बुद्ध्यादौ चात्माध्यासाच्चैतन्यलाभ इति भावः । वर्णिताध्यासमुपसंहरति-**एवमयमिति** । अनाद्यविद्यात्मकतया कार्याध्यासस्यानादित्वम्, अध्यासात् संस्कारस्ततोऽध्यास इति प्रवाहतो नैसर्गिकत्वम् । एवमुपादानं निमित्तं चोक्तं भवति । ज्ञानं विना ध्वंसाभावादानन्त्यम् । तदुक्तं भगवद्गीतासु-"न रूपमस्येह

भामती ।

**प्रत्यगात्मन्यध्यस्य** । तदनेन कर्तृत्वभोक्तृत्वे उपपादिते । चैतन्यमुपपादयति-**तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेण**-अन्तःकरणादिविपर्ययेण, अन्तःकरणाद्यचेतनं तस्य विपर्ययः चैतन्यं तेन । इत्थंभूतलक्षणे तृतीया । **अन्तःकरणादिष्वध्यस्यति** । तदनेनान्तःकरणाद्यवच्छिन्नः प्रत्यगात्मा इदमनिदंरूपश्चेतनः कर्ता भोक्ता कार्यकारणाविद्याद्वयाधारोऽहंकारास्पदं संसारी सर्वानर्थसंभारभाजनं जीवात्मा इतरेतराध्यासोपादानः, तदुपादानश्चाध्यास इत्यनादित्वाद्बीजाङ्कुरवन्नेतरेतराश्रयत्वमित्युक्तं भवति । प्रमाणप्रमेयव्यवहारदृढीकृतमपि शिष्यहिताय स्वरूपाभिधानपूर्वकं सर्वलोकप्रत्यक्षतयाऽध्यासं सुदृढीकरोति-**एवमयमनादिरनन्तः**-तत्त्वज्ञानमन्तरेणाशक्यसमुच्छेदः । अनाद्यनन्तत्वे हेतुरुक्तः-**नैसर्गिक इति** ।

आनन्दगिरीय-न्यायनिर्णयः ।

साधिकरणानां साक्षादेव साधके प्रत्यगात्मनि देहादिषु विवेकाद्बहिर्नीतेषु प्रातिलोम्येनान्तरञ्चतीति प्रत्यगुच्यते स चाऽऽत्मा । निरुपचरितस्वरूपत्वात्तस्मिन्नज्ञानवतीत्यर्थः । आत्मन्यनात्मतद्धर्माध्यासे सिद्धे तस्याधिष्ठानत्वनियमे तद्विशेषचैतन्याभानाज्जगदान्ध्यमित्याशङ्क्य तस्यापि संसृष्टत्वेनाध्यासमाह-**तं चेति** । तद्विपर्ययस्तेषामन्तःकरणादीनां विपर्ययश्चेतनत्वं तदात्मनेति यावत् । न च तेषामधिष्ठानत्वमेव तद्विशेषादृष्ट्या व्यवहारविरहादतो द्वयोर्विशेषदृष्टेरन्योन्याध्यासधीरध्यासे विशेषदृष्टेर्ध्यस्यमानताकृतत्वान्न च द्वयोर्विशेषदृष्टौ नाधिष्ठानत्वं स्वनिष्ठत्वेन तदभानान्न चोभयोरध्यासे बाध्यतया शून्यता द्विधाध्यस्तानात्मनः सर्वथा बाधेऽपि संसृष्टरूपेणैवाध्यस्तात्मनस्तन्मात्रबाधेऽपि स्वरूपशेषादिति भावः । आत्मनि बुद्ध्याद्यध्यासोक्त्या कर्तृत्वभोक्तृत्वे तस्योक्ते तेष्वात्माध्यासोक्त्या बुद्ध्यादिषु चैतन्यमुक्तम् ॥ संप्रत्यध्यासं सप्रमाणं निगमयति-**एवमिति** । पूर्वबुद्ध्याद्यध्यासात्संस्काराद्यध्यासस्ततस्तादृगुत्तरबुद्ध्याद्यध्यास इति प्रवाहात्मना प्रवाहुपादानजाड्यात्मना वाऽनादित्वम् । तत्त्वधिया विना सर्वात्मना नाशहानेरानन्त्यम् । उपादानस्य मायाशक्तितया जडस्य प्रत्यक्चैतन्यस्त्वानुबन्धिन्यादधिष्ठानत्वीयावत्वं सिद्धवत्कृत्योक्तम्-**नैसर्गिक इति** ।

**अध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः । अस्यानर्थहेतोः प्रहाणायाऽऽत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते॥**

रत्नप्रभा ।

तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा'' [ १५।३ ] इति ॥ हेतुमुक्त्वा स्वरूपमाह-**मिथ्येति** । मिथ्या माया तया प्रतीयते इति प्रत्ययः कार्यप्रपंचः, तत्प्रतीतिश्चेत्येवंस्वरूप इत्यर्थः । तस्य कार्यमाह-**कर्तृत्वेति**॥ प्रमाणं निगमयति-**सर्वेति** ॥ साक्षिप्रत्यक्षमेवाध्यासधर्मिग्राहकमानम्, अनुमानादिकं तु सम्भावनार्थमित्यभिप्रेत्य प्रत्यक्षोपसंहारः कृतः । एवमध्यासं वर्णयित्वा तत्साध्ये विषयप्रयोजने दर्शयति-**अस्येति** ॥ कर्तृत्वाद्यनर्थहेतोरध्यासस्य समूलस्याऽऽत्यन्तिकनाशो मोक्षः स केनेत्यत आह-**आत्मेति** ॥ ब्रह्मात्मैक्यसाक्षात्कारस्य प्रतिपत्तिः श्रवणादिभिरप्रतिबन्धेन लाभस्तस्या इत्यर्थः ॥ विद्यायां कारणमाह-**सर्व इति** ॥ आरभ्यन्ते अधीत्य विचार्यन्ते इत्यर्थः । विचारितवेदान्तानां ब्रह्मात्मैक्यं विषयो, मोक्षः फलमित्युक्तं भवति । अर्थात्तद्विचारात्मकशास्त्रस्यापि ते एव विषयप्रयोजने इति ज्ञेयम् । ननु वेदान्तेषु

भामती ।

**मिथ्याप्रत्ययरूपः**-मिथ्याप्रत्ययानां रूपमनिर्वचनीयत्वं तद्यस्य स तथोक्तः । अनिर्वचनीय इत्यर्थः ॥ प्रकृतमुपसंहरति-**अस्यानर्थहेतोः प्रहाणाय** । विरोधिप्रत्ययं विना कुतोऽस्य प्रहाणमित्यत उक्तम्-**आत्मैकत्वविद्याप्रतिपत्तये** । प्रतिपत्तिः प्राप्तिः तस्यै, न तु जपमात्राय, नापि कर्मसु प्रवृत्तये; आत्मैकत्वं विगलितनिखिलप्रपञ्चत्वम् आनन्दरूपस्य सतः, तत्प्रतिपत्तिं निर्विचिकित्सां भावयन्तो वेदान्ताः समूलघातमध्यासमुपघ्नन्ति । एतदुक्तं भवति-अस्मत्प्रत्ययस्यात्मविषयस्य समीचीनत्वे सति ब्रह्मणो ज्ञातत्वान्निष्प्रयोजनत्वाच्च न जिज्ञासा स्यात् । तदभावे च न ब्रह्मज्ञानाय वेदान्ताः पठयेरन् । अपि त्वविवक्षितार्था जपमात्रे उपयुज्येरन् । न हि तदौपनिषदात्मप्रत्ययः प्रमाणतामश्नुते । न चासावप्रमाणमभ्यस्तोऽपि वास्तवं कर्तृत्वभोक्तृत्वाद्यात्मनोऽपनेतुमर्हति । आरोपितं हि रूपं तत्त्वज्ञानेनापोद्यते, न तु वास्तवमतत्त्वज्ञानेन । न हि रज्ज्वा रज्जुत्वं सहस्रमपि सर्पधाराप्रत्यया अपवदितुं समुत्सहन्ते । मिथ्याज्ञानप्रसञ्जितं च स्वरूपं शक्यं तत्त्वज्ञानेनापवदितुम् । मिथ्याज्ञानसंस्कारश्च सुदृढोपि तत्त्वज्ञानसंस्कारेणादरनैरन्तर्यदीर्घकालतत्त्वज्ञानाभ्यासजन्मनेति । स्यादेतत् । प्राणाद्युपासना अपि वेदान्तेषु बहुलमु-

आनन्दगिरीय-न्यायनिर्णयः ।

मिथ्याधीहेतुत्वेन तादात्म्यमाह-**मिथ्येति** । कारणाध्यासो हि कार्याध्यासस्य हेतुरित्यध्यासस्य मिथ्याप्रत्ययत्वमित्यर्थः । लक्षणतस्तथा रूप्यते न प्रतीयत इति रूपग्रहणम् । अथवा-मिथ्याप्रत्ययानां रूपमनिर्वाच्यत्वं यस्य स तथेत्यनिर्वाच्यत्वं वोच्यते । यद्वा-मिथ्याभूताखण्डजडशक्तिस्तन्मात्रत्वेनाध्यासप्रत्ययो रूप्यते। न हि कारणादृते कार्यस्य रूपमस्ति । तस्यानर्थहेतुतामाह-**कर्तृत्वेति** । प्रमाणं निगमयति-**सर्वेति** । प्रत्यक्षपदमुक्तप्रमाणोपलक्षणम् । विषयादिसंभावनाहेतुमध्यासं प्रसाध्य विषयप्रयोजने निर्दिशन्वेदान्तानामादेयत्वात्तदीयविचारशास्त्रस्यापि तथात्वमाह-**अस्येति** । कर्तृत्वादिरनर्थस्तस्य हेतुरुक्तोऽध्यासस्तस्य प्रकर्षेण हानं सोपादानस्य निवृत्तिस्तदर्थमिति यावत् । कुतोऽस्य प्रहाणं तत्राऽऽह-**आत्मेति** । आत्मनस्त्वमर्थस्य तदर्थेन ब्रह्मणा यदेकत्वं वाक्यार्थस्तद्विषया विद्या साक्षात्कारो बुद्धिवृत्तिस्तस्याः प्रतिपत्तिरप्रतिबद्धतया प्राप्तिस्तदर्थमिति यावत् । कुतः पुनरेषा विद्योत्पद्यते तत्राऽऽह-**सर्व इति** । द्विविधवाक्यसंग्रहार्थः सर्वशब्दः । आरम्भो विचारो विचारितेभ्यो यथोक्तविद्योत्थानमित्यर्थः । वेदान्तेषु

**यथा चायमर्थस्सर्वेषां वेदान्तानां, तथा च वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः ॥ वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रम्—**

रत्नप्रभा ।

प्राणाद्युपास्तीनां भानादात्मैक्यमेव तेषामर्थ इति कथमित्यत आह—**यथा चेति** ॥ शरीरमेव शरीरकं कुत्सितत्वात्, तन्निवासी **शारीरको** जीवस्तस्य ब्रह्मत्वविचारो मीमांसा तस्यामित्यर्थः । उपास्तीनां चित्तैकाग्र्यद्वाराऽऽत्मैक्यज्ञानार्थत्वात्तद्वाक्यानामपि महातात्पर्यमैक्ये इति वियक्ष्यते । एवमध्यासोक्त्या ब्रह्मात्मैक्ये विरोधाभावेन विषयप्रयोजनवत्त्वाच्छास्त्रमारम्भणीयमिति दर्शितम् । **इति प्रथमवर्णकम्** ॥ विचारस्य साक्षाद्विषया वेदान्ताः, तेषां गतार्थत्वागतार्थत्वाभ्यामारम्भसन्देहे कृत्स्नस्य वेदस्य विधिपरत्वाद्विधेश्च— "अथातो धर्मजिज्ञासा" [ जै. सू. १।१।१ ] इत्यादिना पूर्वतन्त्रेण विचारितत्वादवगतार्था एव वेदान्ता इत्यव्यवहितविषयाभावान्नारम्भ इति प्राप्ते ब्रूते—**वेदान्तेति** ॥ वेदान्तविषयकपूजितविचारात्मक-

भामती ।

पलभ्यन्ते, तत्कथं सर्वेषां वेदान्तानामात्मैकत्वप्रतिपादनमर्थ इत्यत आह—**यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः** । शरीरमेव शरीरकं तत्र निवासी शारीरको जीवात्मा, तस्य त्वंपदाभिधेयस्य तत्पदाभिधेयपरमात्मरूपतामीमांसा या सा तथोक्ता । एतावानत्रार्थसंक्षेपः—यद्यपि च स्वाध्यायाध्ययनविधिना स्वाध्यायपदवाच्यस्य वेदराशेः फलवदर्थावबोधपरतामापादयता कर्मविधिनिषेधानामिव वेदान्तानामपि स्वाध्यायशब्दवाच्यानां फलवदर्थावबोधपरत्वमापादितं, यद्यपि च 'अविशिष्टस्तु वाक्यार्थः' इति न्यायात् मन्त्राणामिव वेदान्तानामर्थपरत्वमौत्सर्गिकं, यद्यपि च वेदान्तेभ्यश्चैतन्यानन्दघनः कर्तृत्वभोक्तृत्वरहितो निष्प्रपञ्च एकः प्रत्यगात्माऽवगम्यते, तथापि कर्तृत्वभोक्तृत्वदुःखशोकमोहमयमात्मानमवगाहमानेनाहंप्रत्ययेन संदेहबाधविरहिणा विरुध्यमाना वेदान्ताः स्वार्थात्प्रच्युता उपचरितार्था वा जपमात्रोपयोगिनो वेत्यविवक्षितस्वार्थाः । तथा च तदर्थविचारात्मिका चतुर्लक्षणी शारीरकमीमांसा नारब्धव्या । न च सर्वजनीनाहमनुभवसिद्ध आत्मा संदिग्धो वा सप्रयोजनो वा, येन जिज्ञास्यः सन् विचारं प्रयुंजीतेति पूर्वः पक्षः । सिद्धान्तस्तु भवेदेतदेवं यद्यहंप्रत्ययः प्रमाणम् । तस्य तूक्तेन क्रमेण श्रुत्यादिबाधकत्वानुपपत्तेः, श्रुत्यादिभिश्च समस्ततीर्थकरैश्च प्रामाण्यानभ्युपगमादध्यासत्वम् । एवं वेदान्ता नाविवक्षितार्थाः, नाप्युपचरितार्थाः किंतूक्तलक्षणाः । प्रत्यगात्मैव तेषां मुख्योऽर्थः । तस्य च वक्ष्यमाणेन क्रमेण संदिग्धत्वात्, प्रयोजनवत्त्वाच्च युक्ता जिज्ञासा, इत्याशयवान्सूत्रकारः तज्जिज्ञा-

आनन्दगिरीय—न्यायनिर्णयः ।

प्राणाद्युपास्तीनामपि भानात्कथमात्मैक्यमेवार्थस्तेषामित्याशङ्क्याऽऽह—**यथा चेति** । शरीरमेव शरीरकं कुत्सितत्वात्तन्निवासी शारीरको जीवस्तस्य ब्रह्मतावेदिका विचारात्मिका मीमांसा तस्यामिति यावत् । प्रथमवर्णके विचारविधेर्ज्ञानव्यवधानेन विषयो ब्रह्मात्मैक्यं बन्धध्वस्तिश्च फलमित्यध्यासोक्त्या साधितम् । इदानीं पूर्वमीमांसया वेदार्थमात्रोपाधौ प्रवृत्तया गतत्वान्नैतद्विचारकर्तव्यतेत्याशङ्क्याऽऽह—**वेदान्तेति** । तेषां मीमांसा विचारः, मीमांसाशब्दस्य परमपुरुषार्थहेतुसूक्ष्मार्थनिर्णयार्थविचारवाचित्वात्, तस्याः शास्त्रं सूत्रसंदर्भः । शास्यते शिष्येभ्योऽनेन प्रतिपाद्यते तत्त्वमिति व्युत्पत्तेः । तद्वेदानीमेव व्याख्यातुमिष्टम्

१ का० पा० वक्ष्यते । २ वर्णयति गहनमर्थमिति वर्णकं व्याख्यानमिति यावत् ।

# अथातो ब्रह्मजिज्ञासा ॥ १ ॥ १ ॥ १ ॥ इति ॥

**तत्राऽथशब्द आनन्तर्यार्थः परिगृह्यते ।**

रत्नप्रभा ।

शास्त्रस्य व्याख्यातुमिष्टस्य सूत्रसन्दर्भस्येदं प्रथमसूत्रमित्यर्थः ॥ यदि विधिरेव वेदार्थः स्यात्तदा सर्वज्ञो वादरायणो ब्रह्मजिज्ञासां न ब्रूयात्, ब्रह्मणि मानाभावात्। अतो ब्रह्मणो जिज्ञास्यत्वोक्त्या केनापि तन्त्रेणाऽनवगतब्रह्मपरवेदान्तविचार आरम्भणीय इति सूत्रकृद्दर्शयति। तच्च "व्याचिख्यासितस्य" इति पदेन भाष्यकारो बभाषे॥इति द्वितीयवर्णकम् ॥ एवं वर्णकद्वयेन वेदान्तविचारस्य कर्तव्यतायां विषयप्रयोजनवत्त्वम्, अागतार्थत्वं चेति हेतुद्वयं सूत्रस्याऽऽर्थिकार्थं व्याख्यायाक्षरव्याख्यामारभमाणः पुनरप्यधिकारिभावाभावाभ्यां शास्त्रारम्भसन्देहे सति, अथशब्दस्यानन्तर्यार्थकत्वोक्त्या अधिकारिणं साधयति-**तत्राथशब्द इति**॥सूत्र इत्यर्थः।'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इति अमरकोशेऽव्ययवर्गे अथशब्दस्य बहवोऽर्थाः

भामती ।

सामसूत्रयत्-**अथातो ब्रह्मजिज्ञासेति** । जिज्ञासया संदेहप्रयोजने सूचयति । तत्र साक्षादिच्छाव्याप्यत्वाद्ब्रह्मज्ञानं कण्ठोक्तं प्रयोजनम् । न च कर्मज्ञानात्पराचीनमनुष्ठानमिव ब्रह्मज्ञानात्पराचीनं किंचिदस्ति, येनैतदवान्तरप्रयोजनं भवेत् । किंतु ब्रह्ममीमांसाख्यतर्केतिकर्तव्यतानुज्ञातविपर्यैर्वेदान्तैराहितं निर्विचिकित्सं ब्रह्मज्ञानमेव समस्तदुःखोपशमरूपमानन्दैकरसं परमं प्रयोजनम् । तमर्थमधिकृत्य हि प्रेक्षावन्तः प्रवर्तन्तेतराम् । तच्च प्राप्तमप्यनाद्यविद्यावशादप्राप्तमिवेति प्रेप्सितं भवति । यथा स्वग्रीवागतमपि ग्रैवेयकं कुतश्चिद्भ्रमान्नास्तीति मन्यमानः परेण प्रतिपादितमप्राप्तमिव प्राप्नोति । जिज्ञासां तु संशयस्य कार्यमिति स्वकारणं संशयं सूचयति । संशयश्च मीमांसारम्भं प्रयोजयति । तथा च शास्त्रे प्रेक्षावत्प्रवृत्तिहेतुसंशयप्रयोजनसूचनात् युक्तमस्य सूत्रस्य शास्त्रादित्वमित्याह भगवान्भाष्यकारः-**वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्य** अस्माभिः **इदमादिमं सूत्रम्** । पूजितविचारवचनो मीमांसाशब्दः । परमपुरुषार्थहेतुभूतसूक्ष्मतमार्थनिर्णयफलता विचारस्य पूजितता । तस्या मीमांसायाः शास्त्रम्, सा ह्यनेन शिष्यते शिष्येभ्यो यथावत्प्रतिपाद्यत इति । सूत्रं च बह्वर्थसूचनाद् भवति । यथाहुः-'लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च । सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः॥' इति । तदेवं सूत्रतात्पर्यं व्याख्याय तस्य प्रथमपदमथेति व्याचष्टे-**तत्राथशब्द आनन्तर्यार्थः परिगृह्यते** । तेषु सूत्रपदेषु मध्ये योऽयमथशब्दः

आनन्दगिरीय-न्यायनिर्णयः ।

'अथातो धर्मजिज्ञासा' इति वेदार्थैकदेशे धर्मोपाधौ विचारकार्यताप्रतिज्ञानाच्चोदनासूत्रे च तस्यैव लक्षणप्रमाणयोः श्रुत्यर्थाभ्यामुपन्यासादुत्तरत्रापि तस्यैव विचारितत्वाद्वेदान्तविचारशास्त्रस्येदमादिमं सूत्रम् । आदिमत्वादनेन श्रोतृप्रवृत्तये विषयादि सूच्यते सूत्रत्वाच्चास्यानेकार्थसूचकत्वम् । उक्तं हि-"लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च । सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः । अल्पाक्षरमसंदिग्धं सारवद्विश्वतो मुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः" इति । तथा च विशिष्टविषयादिमदिदं शास्त्रमारम्यमिति भावः । वर्णकद्वयेन सूत्रतात्पर्यमुक्त्वा तत्रावतारितसूत्रस्य सामर्थ्यं दर्शयितुं प्रतिपदं व्याख्यास्यन्नथशब्दस्य वृद्धप्रयोगेऽर्थचतुष्टयसाधारणत्वादभीष्टमर्थमाह-**तत्रेति** । तेषु सूत्रपदेषु मध्ये योऽथशब्दः स आनन्तर्यार्थ इति योजना । लोकेऽथशब्दस्यार्थचतुष्टये निवेशेऽपि तदर्थोऽत्राऽऽनन्तर्यमेवार्थान्तरस्य वक्ष्यमाणरीत्याऽत्रायोगादित्यर्थः । नन्वथशब्दोऽधिकारार्थोऽपि लोकवेदयोर्दृष्टोऽयैष ज्योतिरथ योगानु-

**नाधिकारार्थः ॥ ब्रह्मजिज्ञासाया अनधिकार्यत्वात् ॥**

रत्नप्रभा ।

सन्ति । तत्र "अथ योगानुशासनम्" [ पा. यो.सू. १।१ ] इत्यत्र सूत्रे **यथा**—अथशब्द आरम्भार्थकः—योगशास्त्रमारभ्यत इति, तद्वदत्र किं न स्यादित्यत आह—**नाधिकारार्थ इति** ॥ **अयमाशयः**-किं जिज्ञासापदं ज्ञानेच्छापरम्-उत-विचारलक्षकम्? **आद्ये**—अथशब्दस्यारम्भार्थत्वेन ब्रह्मज्ञानेच्छाऽऽरभ्यत इति सूत्रार्थः स्यात् । स चासङ्गतः, तस्या अनारभ्यत्वात् । न हि प्रत्यधिकरणम् इच्छा क्रियते । किंतु तया विचारः । **न द्वितीयः**—कर्तव्यपदाध्याहारं विना विचारलक्षकत्वायोगात् । अध्याहृते च तेनैवारम्भोक्तेरथशब्दवैयर्थ्यात् किन्त्वधिकारिसिद्ध्यर्थमानन्तर्यार्थतैव युक्तेति । अधुना सम्भावित-

भामती ।

स आनन्तर्यार्थ इति योजना । नन्वधिकारार्थोऽप्यथशब्दो दृश्यते, यथा 'अथैष ज्योतिः' इति वेदे । यथा वा लोके 'अथ शब्दानुशासनम्' 'अथ योगानुशासनम्' इति । तत्किमत्राधिकारार्थो न गृह्यत इत्यत आह—**नाधिकारार्थः** । कुतः, **ब्रह्मजिज्ञासाया अनधिकार्यत्वात्** । जिज्ञासा तावदिह सूत्रे ब्रह्मणश्च तत्प्रज्ञानाच्च शब्दतः प्रधानं प्रतीयते । न च यथा 'दण्डी प्रैषानन्वाह' इत्यत्राप्रधानमपि दण्डशब्दार्थो विवक्ष्यते, एवमिहापि ब्रह्मतज्ज्ञाने इति युक्तम्; ब्रह्ममीमांसाशास्त्रप्रवृत्त्यङ्गसंशयप्रयोजनसूचनार्थत्वेन जिज्ञासाया एव विवक्षितत्वात् । तदविवक्षायां तदसूचनेन काकदन्तपरीक्षायामिव, ब्रह्ममीमांसायां न प्रेक्षावन्तः प्रवर्तेरन् । न हि तदानीं ब्रह्म वा तज्ज्ञानं वाभिधेयप्रयोजने भवितुमर्हतः, अनध्यस्ताहंप्रत्ययविरोधेन वेदान्तानामेवंविधेऽर्थे प्रामाण्यानुपपत्तेः । कर्मप्रवृत्त्युपयोगितयोपचरितार्थानां वा जपोपयोगिनां वा 'हुम्' इत्येवमादीनामविवक्षितार्थानामपि स्वाध्यायाध्ययनविध्यधीनग्रहणत्वस्य संभवात् । तस्मात्संदेहप्रयोजनसूचनी जिज्ञासा इह पदतो वाक्यतश्च प्रधानं विवक्षितव्या । न च तस्या अधिकार्यत्वम्, अप्रस्तूयमानत्वात्, येन तत्समभिव्याहृतोऽथशब्दोऽधिकारार्थः स्यात् । जिज्ञासाविशेषणं तु ब्रह्मतज्ज्ञानमधिकार्यं भवेत् । न च तदप्यथशब्देन संबध्यते, प्राधान्याभावात् । न च जिज्ञासा मीमांसा, येन योगानुशासनवदधिक्रियेत, नान्तत्वं निपात्य 'माङ् माने' इत्यस्माद्वा 'मान पूजायाम्' इत्यस्माद्वा धातोः 'मान्बध—' इत्यादिनाऽनिच्छार्थे सनि व्युत्पादितस्य मीमांसाशब्दस्य पूजितविचारवचनत्वात् । ज्ञानेच्छावाचकत्वाज्जिज्ञासापदस्य, प्रवर्तिका हि मीमांसायां जिज्ञासा स्यात् । न च प्रवर्त्यप्रवर्तकयोरैक्यम्, एकत्वे तद्भावानुपपत्तेः । न च स्वार्थपरत्वस्योपपत्तौ सत्यामन्यार्थपरत्वकल्पना युक्ता, अतिप्रसङ्गात् । तस्मात् सुष्ठूक्तं 'जिज्ञासाया अनधिकार्यत्वात्' इति । अथ मङ्गलार्थोऽथशब्दः कस्मान्न

आनन्दगिरीय—न्यायनिर्णयः ।

शासनमिति तथेहापीत्याशङ्क्याऽऽह—**नाधिकारार्थ इति** । तत्र हेतुः—**ब्रह्मेति** । अस्यार्थः—किमयमथशब्दो ब्रह्मज्ञानेच्छायाः किंवा तन्निर्णीतविचारस्याथ वेच्छाविशेषणस्य ज्ञानस्याऽऽरम्भार्थः । नाऽऽद्यः—तस्या मीमांसाप्रवर्तिकायास्तदप्रवर्त्यत्वादनारभ्यत्वात्तस्याश्चोत्तरत्र प्रत्यधिकरणमप्रतिपादनात् । न द्वितीयः—अथशब्देनाऽऽनन्तर्योक्तिद्वारा विशिष्टाधिकार्यसमर्पणे साधनचतुष्टयसंपन्नानां ब्रह्मधीतद्विचारयोरर्थित्वाद्विचारानारम्भात् । न च विचारविधिवशादधिकारी कल्प्यः, प्रारम्भस्यापि तुल्यत्वादधिकारिणश्च विध्यपेक्षितोपाधित्वात् । न तृतीयः—ब्रह्मज्ञानस्याऽऽनन्दसाक्षात्कारत्वेनाधिकार्यत्वेऽप्यप्राधान्यादथशब्दासं-

१ अध्याहृतकर्तव्यपदेन ।

**मङ्गलस्य च वाक्यार्थे समन्वयाभावात् ॥ अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति ॥**

रत्नप्रभा ।

मर्थान्तरं दूषयति-**मंगलस्येति** ॥ वाक्यार्थो विचारकर्तव्यता । न हि तत्र मङ्गलब्दस्य कर्तृत्वादिनाऽन्वयोऽस्तीत्यर्थः । ननु सूत्रकृता शास्त्रादौ मङ्गलं कार्यमिति अथशब्दः प्रयुक्त इति चेत् । सत्यम् । न तस्यार्थो मङ्गलं किंतु तच्छ्रवणमुच्चारणं च मङ्गलकृत्यं करोति, तदर्थस्त्वानन्तर्यमेवेत्याह-**अर्थान्तरेति**॥ **अर्थान्तरम्**,आनन्तर्यम् । **श्रुत्या** श्रवणेन शंखवीणादिनादश्रवणवदोङ्काराथशब्दयोः श्रवणं मङ्गलफलकम्- "ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकाविमौ ॥ १ ॥" इति स्मरणादिति भावः । ननु प्रपंचो मिथ्येति मते प्रकृते सति, अथेत्येतन्मतं प्रपञ्चः सत्य इति,

भामती ।

भवति । तथा च मङ्गलहेतुत्वात् प्रत्यहं ब्रह्मजिज्ञासा कर्तव्येति सूत्रार्थः संपद्यत इत्यत आह-**मंगलस्य च वाक्यार्थे समन्वयाभावात्** । पदार्थ एव हि वाक्यार्थे समन्वीयते, स च वाच्यो वा लक्ष्यो वा । न चेह मङ्गलमथशब्दस्य वाच्यं वा लक्ष्यं वा, किंतु मृदङ्गशङ्खध्वनिवदथशब्दश्रवणमात्रकार्यम् । न च कार्यज्ञाप्ययोर्वाक्यार्थे समन्वयः शब्दव्यवहारे दृष्ट इत्यर्थः । तत्किमिदानीं मङ्गलार्थोऽथशब्दस्तेषु तेषु न प्रयोक्तव्यः । तथा च 'ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥' इति स्मृतिव्याकोप इत्यत आह-**अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मंगलप्रयोजनो भवति** । अर्थान्तरेष्वानन्तर्यादिषु प्रयुक्तोऽथशब्दः श्रुत्या श्रवणमात्रेण वेणुवीणाध्वनिवन्मङ्गलं कुर्वन् मङ्गलप्रयोजनो भवति, अन्यार्थमानीयमानोदकुम्भदर्शनवत् । तेन न स्मृतिव्याकोपः । न चेहानन्तर्यार्थस्य सतो न श्रवणमात्रेण मङ्गलार्थतेत्यर्थः । स्यादेतत् । पूर्वप्रकृतापेक्षोऽथशब्दो भविष्यति विनैवानन्तर्यार्थत्वम् । तद्यथेममेवाथशब्दं प्रकृत्य विमृश्यते किमयमथशब्द आनन्तर्ये अथ अधिकार इति । अत्र विमर्शवाक्येऽथशब्दः पूर्वप्रकृतमथशब्दमपेक्ष्य प्रथमपक्षोपन्यासपूर्वकं पक्षान्तरोपन्यासे । न चास्यानन्तर्यमर्थः, पूर्वप्रकृतस्य प्रथमपक्षोपन्यासेन व्यवायात् । न च प्रकृतानपेक्षा, तदनपेक्षस्य तद्विषयत्वाभावेनासमानविषयतया विकल्पानुपपत्तेः । न हि जातु भवति किं नित्य आत्मा, अथ अनित्या बुद्धिरिति । तस्मादानन्तर्यं विना पूर्वप्रकृतापेक्ष इहाथशब्दः

आनन्दगिरीय-न्यायनिर्णयः ।

बन्धात्तस्मान्नाऽऽरम्भार्थतेति । अस्तु तर्हि मङ्गलार्थत्वं, नेत्याह-**मंगलस्येति** । न तावद्ब्रह्मजिज्ञासा कर्तव्येति वाक्यार्थे मङ्गलस्य कर्त्रादिभावेनान्वयस्तस्य तथात्वाप्रसिद्धेः कारकान्तराणां च प्रसिद्धेर्न च ब्रह्मजिज्ञासा मङ्गलमिति सामानाधिकरण्यं प्रशंसात्वेन सूत्रस्यार्थवादत्वापत्तेस्तन्माङ्गल्यस्य च प्रसिद्धत्वात् । न च तदनूद्य तत्कर्तव्यतापरं सूत्रम्, तस्या मङ्गलत्वे कर्तव्यत्वस्याऽऽर्थिकत्वादतो न मङ्गलार्थः । ननु विघ्नोपशान्तये शिष्टाचाररक्षायै च शास्त्रारम्भे मङ्गलमाचरणीयम् । 'ओंकारश्चाथशब्दश्च'इत्यादिस्मृतेर्मङ्गलार्थश्चाथशब्दस्तत्राऽऽह-**अर्थान्तरेति** । आनन्तर्यमर्थान्तरं तस्मिन्नेव प्रयुक्तोऽथशब्दः श्रवणमात्रेण वीणाध्वनिवन्मङ्गलहेतुस्तत्फलो भवति । अन्यार्थं नीयमानोदकुम्भोपलम्भवत् । उक्तस्मृतिस्तु मङ्गलफलत्वविषयेत्यर्थः । उक्तदृष्टान्तार्थो हि-शब्दः । अथैतन्मतमितिवत्प्रकृतादर्थादर्थान्तरार्थोऽथशब्दस्त-

१ मङ्गलकार्यम् । २ वुभौ-इत्यपि पाठः क्वचित् ।

**पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकात् ॥ सति चानन्तर्यार्थत्वे यथा धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनं नियमेनापेक्षते, एवं ब्रह्मजिज्ञासाऽपि यत्पूर्ववृत्तं नियमेनापेक्षते, तद्वक्तव्यम् ॥**

---

रत्नप्रभा ।

अत्र पूर्वप्रकृतार्थादुत्तरार्थस्यार्थान्तरत्वार्थोऽथशब्दो दृष्टः । तथात्र किं न स्यादित्यत आह—**पूर्वेति** ॥ **फलतः** फलस्येत्यर्थः । ब्रह्मजिज्ञासायाः पूर्वमर्थविशेषः प्रकृतो नास्ति, यस्मात्तस्या अर्थान्तरत्वमथशब्देनोच्येत । यतः कुतश्चिदर्थान्तरत्वं सूत्रकृता न वक्तव्यम्, फलाभावात् । यदि फलस्य जिज्ञासापदोक्तकर्तव्यविचारस्य हेतुत्वेन यत्पूर्वं प्रकृतं तदपेक्षास्तीत्यपेक्षाबलात् प्रकृतहेतुमाक्षिप्य ततोऽर्थान्तरत्वमुच्येत, तदाऽर्थान्तरत्वमानन्तर्येऽन्तर्भवति, हेतुफलभावज्ञानायानन्तर्यस्यावश्यंवाच्यत्वात् । तस्मादिदमर्थान्तरमित्युक्ते तस्य हेतुत्वाप्रतीतेः । तस्मादिदमनन्तरमित्युक्ते भवत्येव हेतुत्वप्रतीतिः । न चाश्वादनन्तरो गौरित्यत्र हेतुत्वभानापत्तिरिति वाच्यम्, तयोर्देशतः कालतो वा व्यवधानेनानन्तर्यस्यामुख्यत्वात् । अतः सामग्रीफलयोरेव मुख्यमानन्तर्यम् अव्यवधानात् । तस्मिन्नुक्ते सत्यर्थान्तरत्वं न वाच्यम्, ज्ञातत्वाद्वैफल्याच्चेति भावः । फलस्य विचारस्य पूर्वप्रकृतहेत्वपेक्षाया बलाद्यदर्थान्तरत्वं तस्यानन्तर्याभेदान्न पृथगथशब्दार्थत्वमित्यध्याहृत्य भाष्यं योजनीयम् । यद्वा—पूर्वप्रकृतेऽर्थेऽपेक्षा यस्या अर्थान्तरतायास्तस्याः फलं ज्ञानं तद्द्वाराऽऽनन्तर्याव्यतिरेकात्तज्ज्ञाने तस्या ज्ञानतोऽन्तर्भावान्नाथशब्दार्थतेत्यर्थः । नन्वानन्तर्यार्थकत्वेऽप्यानन्तर्यस्यावधिः क इत्याशंक्याह—**सति चेति** ॥ यन्नियमेन **पूर्ववृत्तं** पूर्वभावि असाधारणकारणम्, पुष्कलकारणमिति यावत्, तदेवावधिरिति वक्त-

भामती ।

कस्मान्न भवतीत्यत आह—**पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकात्** । अस्यार्थः—न वयमानन्तर्यार्थतां व्यसनितया रोचयामहे किंतु ब्रह्मजिज्ञासाहेतुभूतपूर्वप्रकृतसिद्धये । सा च पूर्वप्रकृतार्थापेक्षत्वेऽप्यथशब्दस्य सिध्यतीति व्यर्थ आनन्तर्यार्थत्वावधारणाग्रहोऽस्माकमिति । तदिदमुक्तं 'फलतः' इति । परमार्थतस्तु कल्पान्तरोपन्यासे पूर्वप्रकृतापेक्षा । न चेह कल्पान्तरोपन्यास इति पारिशेष्यादानन्तर्यार्थ एवेति युक्तम् । भवत्वानन्तर्यार्थः किमेवं सतीत्यत आह—**सति चानन्तर्यार्थत्व इति** । न तावद्यस्य कस्यचिदत्रानन्तर्यमिति वक्तव्यं, तस्याभिधानमन्तरेणापि प्राप्तत्वात् । अवश्यं हि पुरुषः किंचित्कृत्वा किंचित्करोति । न चानन्तर्यमात्रस्य दृष्टमदृष्टं वा प्रयोजनं पश्यामः । तस्मात्तस्यात्रानन्तर्यं वक्तव्यं यद्विना ब्रह्मजिज्ञासा न भवति, यस्मिन् सति तु भवन्ती भवत्येव, तदिदमुक्तम्—**यत्पूर्ववृत्तं नियमेनापेक्षत इति** । स्यादेतत् । धर्मजिज्ञासाया इव ब्रह्मजिज्ञासाया अपि योग्यत्वात्, स्वाध्या-

आनन्दगिरीय–न्यायनिर्णयः ।

त्राऽह—**पूर्वेति** । यत्किंचित्प्रकृतमपेक्ष्य भाविन्यां जिज्ञासायामथप्रयोगेऽनुवादादृष्टार्थत्वयोरन्यतरत्वम् । अवश्यं हि पुमान्किंचित्कृत्वा किंचित्करोति फलत्वेनावस्थितजिज्ञासाहेतुत्वेन प्रकृतापेक्षया भाविन्यामस्यामथशब्दे प्रकृतापेक्षावशाद्यदस्यार्थान्तरं तदानन्तर्यान्नातिरिच्यते हेतुफलयोरव्यभिचारेणाऽऽनन्तर्यस्यैव मुख्यत्वात्तथा चार्थान्तरं न पृथग्वाच्यम् । अतो हेतुभूतार्थस्याधिकारिविशेषणत्वेन फलपर्यन्तेच्छाविचारादिप्रवृत्तौ प्रतिपत्त्यपेक्षत्वात्प्रवृत्त्यङ्गशास्त्रीयाधिकारिविशेषणसाधनचतुष्टयपुष्कलहेत्वानन्तर्यार्थोऽथशब्द इति भावः । तस्याऽऽनन्तर्यार्थत्वेऽपि कथं ब्रह्मजिज्ञासायाः साधनचतुष्टयादेवाऽऽनन्तर्यमित्याशंक्याऽऽह—**सति चेति** । दृष्टान्ते दार्ष्टान्तिके च नियमेन पूर्ववृत्तमिति संबन्धः । ननु धर्मजिज्ञासासूत्रे पूर्ववृत्तस्योक्तत्वान्नात्र

**स्वाध्यायानन्तर्यं तु समानम्। नन्विह कर्मावबोधानन्तर्यं विशेषः॥**

रत्नप्रभा।

व्यमित्यर्थः। नन्वस्तु धर्मविचार इव ब्रह्मविचारेऽपि वेदाध्ययनं पुष्कलकारणमित्यत आह–**स्वाध्यायेति।** **समानम्,** ब्रह्मविचारे साधारणकारणम्, न पुष्कलकारणमित्यर्थः। **ननु** संयोगपृथक्त्वन्यायेन "यज्ञेन दानेन" [बृह०।४।४।२२] इत्यादिश्रुत्या "यज्ञादिकर्माणि ज्ञानाय विधीयन्ते" इति सर्वापेक्षाधिकरणे [व्या० सू० ३।४।२६] वक्ष्यते। तथा च पूर्वतन्त्रेण तदवबोधः पुष्कलकारणमिति शङ्कते–**नन्विति।** **इह** ब्रह्मजिज्ञासायाम्। **विशेषः**–असाधारणकारणम्। ["एकस्य तूभयत्वे संयोगपृथक्त्वम्" [४।३।५] इति जैमिनीयसूत्रम्। तदर्थस्तु–**एकस्य** कर्मणः उभयत्वे अनेकफलसम्बन्धे **संयोगः** उभयसम्बन्धबोधकं वाक्यं तस्य पृथक्त्वं भेदः। तत्रोदाहरणं–

भामती।

यानन्तर्यं, धर्मवद्ब्रह्मणोऽप्याम्नायैकप्रमाणगम्यत्वात्। तस्य चागृहीतस्य स्वविषये विज्ञानाजननात्, ग्रहणस्य च स्वाध्यायोऽध्येतव्य इत्यध्ययनेनैव नियतत्वात्। तस्माद्वेदाध्ययनानन्तर्यमेव ब्रह्मजिज्ञासाया अप्यथशब्दार्थ इत्यत आह–**स्वाध्यायानन्तर्यं तु समानं,** धर्मब्रह्मजिज्ञासयोः। अत्र च स्वाध्यायेन विषयेण तद्विषयमध्ययनं लक्षयति। तथा च 'अथातो धर्मजिज्ञासा' इत्यनेनैव गतमिति नेदं सूत्रमारब्धव्यम्। धर्मशब्दस्य वेदार्थमात्रोपलक्षणतया धर्मवद्ब्रह्मणोऽपि वेदार्थत्वाविशेषेण वेदाध्ययनानन्तर्योपदेशसाम्यादित्यर्थः। चोदयति–**नन्विह कर्मावबोधानन्तर्यं विशेषः,** धर्मजिज्ञासातो ब्रह्मजिज्ञासायाः। अस्यार्थः–'विविदिषन्ति यज्ञेन' इति तृतीयाश्रुत्या यज्ञादीनामङ्गत्वेन ब्रह्मज्ञाने विनियोगात्, ज्ञानस्यैव कर्मतयेच्छां प्रति प्राधान्यात्, प्रधानसंबन्धाच्चाप्रधानानां पदार्थान्तराणाम्। तत्रापि च न वाक्यर्थज्ञानोत्पत्तावङ्गभावो यज्ञादीनां, वाक्यार्थज्ञानस्य वाक्यादेवोत्पत्तेः। न च वाक्यं सहकारितया कर्माण्यपेक्षत इति युक्तम्, अकृतकर्मणामपि विदितपदतदर्थसंगतीनां समधिगतशाब्दन्यायतत्त्वानां गुणप्रधानभूतपूर्वापरपदार्थाकांक्षासंनिधियोग्यतानुसंधानवतामप्रत्यूहं वाक्यार्थप्रत्ययोत्पत्तेः। अनुत्पत्तौ वा विधिनिषेधवाक्यार्थप्रत्ययाभावेन तदर्थानुष्ठानपरिवर्जनाभावप्रसङ्गः। तद्बोधतस्तु तदर्थानुष्ठानपरिवर्जने परस्पराश्रयः, तस्मिन्सति तदर्थानुष्ठानपरिवर्जनं ततश्च तद्बोध इति। न च वेदान्तवाक्यानामेव स्वार्थप्रत्यायने कर्मापेक्षा, न वाक्यान्तराणामिति सांप्रतम्, विशेषहेतोरभावात्। ननु 'तत्त्वमसि' इतिवाक्यात् त्वंपदार्थस्य कर्तृभोक्तृरूपस्य जीवात्मनो नित्यशुद्धबुद्धोदासीनस्वभावेन तत्पदार्थेन परमात्मनैक्यमशक्यं द्रागित्येव प्रतिपत्तुम्, आपाततोऽशुद्धसत्त्वैर्योग्यताविरहनिश्चयात्। यज्ञतपोदानतनूकृतान्तर्मलास्तु विशुद्धसत्त्वाः श्रद्दधाना योग्यतावगमपुरःसरं तादात्म्यमवगमिष्यन्तीति चेत्, तत्किमिदानीं प्रमाण-

आनन्दगिरीय–न्यायनिर्णयः।

वक्तव्यं शिष्यते तत्राऽऽह–**स्वाध्यायेति।** विध्यधीनसाङ्गाध्ययनलब्धस्वाध्यायादानन्तर्यं धर्मब्रह्मजिज्ञासयोः साधारणमतो नात्र पृथक्कथनीयम्। यद्वा–समानं नात्यन्तमनपेक्षितं नापि स्वयमेव प्रयोजकमतस्तन्न शास्त्रारम्भे पुष्कलकारणमित्यर्थः। ननु धर्मजिज्ञासायां वेदाध्ययनादेवाऽऽनन्तर्यम्। यथाऽऽहुः–तादृशीं तु धर्मजिसामधिकृत्याथशब्दं प्रयुक्तवानाचार्यः। या वेदाध्ययनमन्तरेण न संभवतीति। ब्रह्मजिज्ञासायां तु कर्मावबोधादानन्तर्यमथशब्दार्थः। युक्तं हि विचारयोरन्योन्यमुपकार्योपकारकत्वादुपकार्यब्रह्मावबोधस्योपकारककर्मावबोधादानन्तर्यमतो धर्मजिज्ञासातो ब्रह्मजिज्ञासाया हेतुभेदो-

१ आ० पा० स्वाध्यायाध्ययनानन्तर्यम्। २ का० पा० इति चेन्न।

न ॥ धर्मजिज्ञासायाः-

रत्नप्रभा ।

"दध्ना जुहोति", "दध्नेन्द्रियकामस्य जुहुयात्", "खादिरो यूपो भवति", "खादिरं वीर्यकामस्य" इति ततश्चात्रापि ज्योतिष्टोमादिकर्मणां स्वर्गादिफलकानामपि "यज्ञेन दानेन" [ बृ० । ४ । ४ । २२ ] इत्यादिवचनाज्ज्ञानार्थत्वं चेति । ] परिहरति-नेत्यादिना । अयमाशयः-न तावत्पूर्वेत-

मामती ।

कारणं योग्यतावधारणमप्रमाणात्कर्मणो वक्तुमध्यवसितोऽसि, प्रत्यक्षाद्यतिरिक्तं वा कर्मापि प्रमाणम् । वेदान्ताविरुद्धतन्मूलन्यायबलेन तु योग्यतावधारणे कृतं कर्मभिः । तस्मात् 'तत्त्वमसि' इत्यादेः श्रुतमयेन ज्ञानेन जीवात्मनः परमात्मभावं गृहीत्वा तन्मूलया चोपपत्त्या व्यवस्थाप्य, तदुपासनायां भावनापराभिधानायां दीर्घकालनैरन्तर्यवत्यां ब्रह्मसाक्षात्कारफलायां यज्ञादीनामुपयोगः । यथाहुः-'स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः' इति । ब्रह्मचर्यतपःश्रद्धायज्ञादयश्च सत्कारः । अत एव श्रुतिः-'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इति । विज्ञाय तर्कोपकरणेन शब्देन प्रज्ञां भावनां कुर्वीतेत्यर्थः । अत्र च यज्ञादीनां श्रेयःपरिपन्थिकल्मषनिबर्हणद्वारेणोपयोग इति केचित् । पुरुषसंस्कारद्वारेणेत्यन्ये । यज्ञादिसंस्कृतो हि पुरुष आदरनैरन्तर्यदीर्घकालैरासेवमानो ब्रह्मभावनामनाद्यविद्यावासनां समूलकाषं कषति, ततोऽस्य प्रत्यगात्मा सुप्रसन्नः केवलो विशदी भवति । अत एव स्मृतिः-'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' । 'यस्यैतेऽष्टाचत्वारिंशत्संस्काराः' इति च । अपरे तु ऋणत्रयापाकरणे ब्रह्मज्ञानोपयोगं कर्मणामाहुः । अस्ति हि स्मृतिः-'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्' इति । अन्ये तु 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यादिश्रुतिभ्यस्तत्तत्फलाय चोदितानामपि कर्मणां संयोगपृथक्त्वेन ब्रह्मभावनां प्रत्यङ्गभावमाचक्षते, क्रत्वर्थस्यैव खादिरत्वस्य वीर्यार्थताम्, 'एकस्य तूभयार्थत्वे संयोगपृथक्त्वम्' इति न्यायात् । अत एव पारमर्षं सूत्रम्-'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' ( ब्र. अ. ३ पा. ४ सू. २६ ) इति । यज्ञतपोदानादि सर्वं, तदपेक्षा ब्रह्मभावनेत्यर्थः । तस्माद्यदि श्रुत्यादयः प्रमाणं यदि वा पारमर्षं सूत्रं सर्वथा यज्ञादिकर्मसमुच्चिता ब्रह्मोपासना विशेषणत्रयवती अनाद्यविद्यातद्वासनासमुच्छेदक्रमेण ब्रह्मसाक्षात्काराय मोक्षापरनाम्ने कल्पत इति तदर्थं कर्माण्यनुष्ठेयानि । न चैतानि दृष्टादृष्टसामवायिकारादुपकारहेतुभूतौपदेशिकातिदेशिकक्रमपर्यन्ताङ्गग्रामसहितपरस्परविभिन्नकर्मस्वरूपतदधिकारिभेदपरिज्ञानं विना शक्यान्यनुष्ठातुम् । न च धर्ममीमांसापरिशीलनं विना तत्परिज्ञानम् । तस्मात्साधूक्तं 'कर्मावबोधानन्तर्यं विशेषः' इति । कर्मावबोधेन हि कर्मानुष्ठानसाहित्यं भवति ब्रह्मोपासनाया इत्यर्थः । तदेतन्निराकरोति-न । कुतः,

आनन्दगिरीय-न्यायनिर्णयः ।

ऽस्तीति शङ्कते-नन्विति । विचारयोरुपकार्योपकारकत्वस्यासिद्धेर्नैवमिति समाधत्ते-नेत्यादिना । यद्यपि वेदान्ताध्ययनं ब्रह्मजिज्ञासायां न पुष्कलो हेतुस्तथाऽपि तेन विना न सा युक्ता । युक्ता त्वधीतवेदान्तस्य विनाऽपि धर्मजिज्ञासया तस्यास्तस्यामनुपयोगादतो न ब्रह्मजिज्ञासाया धर्मजिज्ञासा-

---

१ दध्ना जुहुयादितिफलासंयुक्तवाक्येन क्रत्वर्थत्वेन विहितस्यापि दध्नः दध्नेन्द्रियकामस्य जुहुयादित्यनेन फलाय विधानात्पुरुषार्थत्वमपि । तथा ज्योतिष्टोमादीनां स्वर्गार्थत्वेन विहितानामपि "यज्ञेन दानेन" इत्यादिवाक्यैर्ज्ञानसाधनत्वमपि स्यादिति भावः ।

**प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः ॥**

रत्नप्रभा ।

न्त्रस्थन्यायसहस्रं ब्रह्मज्ञाने तद्विचारे वा पुष्कलकारणम् । तस्य धर्मनिर्णयमात्रहेतुत्वात् । नापि कर्म-

भामती ।

कर्मावबोधात् **प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः** । इदमत्राकूतम्—ब्रह्मोपासनया भावना-पराभिधानया कर्माण्यपेक्ष्यन्त इत्युक्तं, तत्र ब्रूमः—क्व पुनरस्याः कर्मापेक्षा, किं कार्ये, यथाग्नेयादीनां परमापूर्वे चरमभाविफलानुकूले जनयितव्ये समिदाद्यपेक्षा । स्वरूपे वा, यथा तेषामेव द्रिरवत्तपुरो-डाशादिद्रव्याग्निदेवताद्यपेक्षा । न तावत्कार्ये, तस्य विकल्पासहत्वात् । तथाहि—ब्रह्मोपासनाया ब्रह्मस्व-रूपसाक्षात्कारः कार्यमभ्युपेयः, स चोत्पाद्यो वा स्यात्, यथा संयवनस्य पिण्डः । विकार्यो वा, यथावघातस्य व्रीहयः । संस्कार्यो वा, यथा प्रोक्षणस्योलूखलादयः । प्राप्यो वा, यथा दोहनस्य पयः । न तावदुत्पाद्यः । न खलु घटादिसाक्षात्कार इव जडस्वभावेभ्यो घटादिभ्यो भिन्न इन्द्रियाद्याधेयो ब्रह्मसाक्षात्कारो भावनाधेयः संभवति, ब्रह्मणोऽपराधीनप्रकाशतया तत्साक्षात्कारस्य तत्स्वाभाव्येन नित्य-तयोत्पाद्यत्वानुपपत्तेः, ततो भिन्नस्य वा भावनाधेयस्य साक्षात्कारस्य प्रतिभाप्रत्ययवत्संशयाक्रान्ततया प्रामा-ण्यायोगात्, तद्विधस्य तत्सामग्रीकस्यैव बहुलं व्यभिचारोपलब्धेः । न खल्वनुमानविबुद्धं वह्निं भावयतः शीतातुरस्य शिशिरभरमन्थरतरकायकाण्डस्य स्फुरज्ज्वालाजटिलानलसाक्षात्कारः प्रमाणान्तरेण संवाद्यते, विसंवादस्य बहुलमुपलम्भात्, तस्मात् प्रामाणिकसाक्षात्कारलक्षणकार्याभावान्नोपासनाया उत्पाद्ये कर्मा-पेक्षा । न च कूटस्थनित्यस्य सर्वव्यापिनो ब्रह्मण उपासनातो विकारसंस्कारप्राप्तयः संभवन्ति । स्यादेतत् । मा भूद्ब्रह्मसाक्षात्कार उत्पाद्यादिरूप उपासनायाः, संस्कार्यस्तु अनिर्वचनीयानाद्यविद्याद्वयपिधानापनयनेन भविष्यति, प्रतिसीरापिहिता नर्तकीव प्रतिसीरापनयद्वारा रङ्गव्यापृतेन । तत्र च कर्मणामुपयोगः । एता-वांस्तु विशेषः—प्रतिसीरापनये पारिषदानां नर्तकीविषयसाक्षात्कारो भवति । इह तु अविद्यापिधानापनयमात्र-मेव नापरमुत्पाद्यमस्ति, ब्रह्मसाक्षात्कारस्य ब्रह्मस्वभावस्य नित्यत्वेन अनुत्पाद्यत्वात् । अत्रोच्यते—का पुनरियं ब्रह्मोपासना । किं शाब्दज्ञानमात्रसंततिः, आहो निर्विचिकित्सशाब्दज्ञानसंततिः, यदि शाब्दज्ञानमात्रसंततिः, किमियमभ्यस्यमानाप्यविद्यां समुच्छेत्तुमर्हति । तत्त्वविनिश्चयस्तदभ्यासो वा सवासनं विपर्यासमुन्मूलयेत्, न संशयाभ्यासः, सामान्यमात्रदर्शनाभ्यासो वा । न हि स्थाणुर्वा पुरुषो वेति वा आरोहपरिणाहवत् द्रव्यमिति वा शतशोऽपि ज्ञानमभ्यस्यमानं पुरुष एवेति निश्चयाय पर्याप्तम्, ऋते विशेषदर्शनात् । ननूक्तं श्रुतमयेन ज्ञानेन जीवात्मनः परमात्मभावं गृहीत्वा युक्तिमयेन च व्यवस्थाप्यत इति । तस्मान्निर्विचिकि-त्सशाब्दज्ञानसंततिरूपोपासना कर्मसहकारिण्यविद्याद्वयोच्छेदहेतुः । न चासावनुत्पादितब्रह्मानुभवा तदुच्छेदाय पर्याप्ता । साक्षात्काररूपो हि विपर्यासः साक्षात्काररूपेणैव तत्त्वज्ञानेनोच्छिद्यते, न तु परोक्षावभासेन, दिङ्मोहालातचक्रचलद्वृक्षमरुमरीचिसलिलादिविभ्रमेष्वपरोक्षावभासिषु अपरोक्षावभासि-

आनन्दगिरीय-न्यायनिर्णयः ।

नन्तर्यमित्यक्षरार्थः । अयं भावः—प्राच्यां मीमांसायां न्यायसहस्रं तद्गतवाक्यार्थधीर्वाक्यार्थ-श्चाग्निहोत्रादिकर्मेति त्रयं वृत्तम् । तत्र न तावदस्या न्यायसहस्रानन्तर्यम् । तस्य तत्तदर्थभेदज्ञा-नोपयोगिनोऽस्यामनुपयोगात्स्वाध्यायस्यार्थज्ञानोपयोगेऽनपेक्षत्वेन स्वतो मानत्वेन च न्यायद्वयमिहोपयुक्तमपि स्वाध्यायाध्ययनवन्न पुष्कलकारणमिति न तदानन्तर्यमस्या युक्तम् । नापि वाक्यार्थज्ञानादत्राऽऽनन्तर्यम् । तद्धि नात्र प्रवर्तकमन्यार्थत्वान्नापि प्रत्यायकं धर्मब्रह्मणोरसंबन्धान्न च ज्ञाताद्वाक्यार्थादत्राऽऽनन्तर्यम-

रत्नप्रभा ।

निर्णयः । तस्यानुष्ठानहेतुत्वात् । न हि धूमाग्न्योरिव धर्मब्रह्मणोर्व्याप्तिरस्ति । यथा धर्मज्ञानाद्ब्रह्मज्ञानं

भामती ।

भिरेव दिगादितत्त्वप्रत्ययैर्निवृत्तिदर्शनात् । नो खल्वाप्तवचनलिङ्गादिनिश्चितदिगादितत्त्वानां दिङ्मोहादयो निवर्तन्ते । तस्मात् त्वंपदार्थस्य तत्पदार्थत्वेन साक्षात्कार एषितव्यः । एतावता हि त्वंपदार्थस्य दुःखिशोकित्वादिसाक्षात्कारनिवृत्तिः, नान्यथा । न चैष साक्षात्कारो मीमांसासहितस्यापि शब्दस्य प्रमाणस्य फलम् अपि तु प्रत्यक्षस्य, तस्यैव तत्फलत्वनियमात् । अन्यथा कुटजबीजादपि वटाङ्कुरोत्पत्तिप्रसङ्गात् । तस्मान्निर्विचिकित्सवाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम् । न चायमनुभवो ब्रह्मस्वभावो येन न जन्येत, अपि त्वन्तःकरणस्यैव वृत्तिभेदो ब्रह्मविषयः । न चैतावता ब्रह्मणो नापराधीनप्रकाशता । न हि शाब्दज्ञानप्रकाश्यं ब्रह्म स्वयंप्रकाशं न भवति । सर्वोपाधिरहितं हि स्वयंज्योतिरिति गीयते, न तूपहितमपि । यथाह स्म भगवान् भाष्यकारः—'नायमेकान्तेनाविषयः' इति । न चान्तःकरणवृत्तावप्यस्य साक्षात्कारेऽसर्वोपाधिविनिर्मोकः, तस्यैव तदुपाधेर्विनश्यदवस्थस्य स्वपरोपाधिविरोधिनो विद्यमानत्वात् । अन्यथा चैतन्यच्छायापत्तिं विनाऽन्तःकरणवृत्तेः स्वयमचेतनायाः स्वप्रकाशत्वानुपपत्तौ साक्षात्कारत्वायोगात् । न चानुमितभावितवह्निसाक्षात्कारवत् प्रतिभात्वेनास्याप्रामाण्यं, तत्र वह्निस्वलक्षणस्य परोक्षत्वात् । इह तु ब्रह्मरूपस्योपाधिकलुषितस्य, जीवस्य प्रागप्यपरोक्षत्वात् । न हि शुद्धबुद्धत्वादयो वस्तुतस्ततोऽतिरिच्यन्ते । जीव एव तु तत्तदुपाधिरहितः शुद्धबुद्धादिस्वभावो ब्रह्मेति गीयते । न च तत्तदुपाधिविरहोऽपि ततोऽतिरिच्यते । तस्माद्यथा गान्धर्वशास्त्रार्थज्ञानाभ्यासाहितसंस्कारसचिवश्रोत्रेन्द्रियेण षड्जादिस्वरग्राममूर्च्छनाभेदमध्यक्षमनुभवति, एवं वेदान्तार्थज्ञानाभ्यासाहितसंस्कारो जीवस्य ब्रह्मभावमन्तःकरणेनेति । अन्तःकरणवृत्तौ ब्रह्मसाक्षात्कारे जनयितव्येऽस्ति तदुपासनायाः कर्मापेक्षेति चेत् । न, तस्याः कर्मानुष्ठानेन सहभावाभावेन तत्सहकारित्वानुपपत्तेः । न खलु 'तत्त्वमसि' इत्यादेर्वाक्यान्निर्विचिकित्सं शुद्धबुद्धोदासीनस्वभावमकर्तृत्वाद्युपेतम् अपेतब्राह्मणत्वादिजातिं देहाद्यतिरिक्तम् एकमात्मानं प्रतिपद्यमानः कर्मस्वधिकारमवबोद्धुमर्हति । अनर्हश्च कथं कर्ता वाधिकृतो वा । यद्युच्येत निश्चितेऽपि तत्त्वे विपर्यासनिबन्धनो व्यवहारोऽनुवर्तमानो दृश्यते, यथा गुडस्य माधुर्यविनिश्चयेऽपि पित्तोपहतेन्द्रियाणां तिक्तावभासानुवृत्तिः, आस्वाद्य थूत्कृत्य त्यागात् । तस्मादविद्यासंस्कारानुवृत्त्या कर्मानुष्ठानं, तेन च विद्यासहकारिणा तत्समुच्छेद उपपत्स्यते । न च कर्माविद्यात्मकं कथमविद्यामुच्छिनत्ति, कर्मणो वा तदुच्छेदकस्य कुत उच्छेद इति वाच्यम्; सजातीयस्वपरविरोधिनां भावानां बहुलमुपलब्धेः । यथा पयः पयोऽन्तरं जरयति, स्वयं च जीर्यति । यथा विषं विषान्तरं शमयति, स्वयं च शाम्यति । यथा वा कतकरजो रजोऽन्तराविले पाथसि प्रक्षिप्तं रजोऽन्तराणि भिन्दत्, स्वयमपि भिद्यमानमनाविलं पाथः करोति । एवं कर्माविद्यात्मकमपि अविद्यान्तराण्यपगमयत् स्वयमप्यपगच्छतीति । अत्रोच्यते—सत्यं, 'सदेव सोम्येदम्' इत्युपक्रमात् 'तत्त्वमसि' इत्यन्ताच्छब्दात्, ब्रह्ममीमांसोपकरणादसकृदभ्यस्तात्, निर्विचिकित्सेऽनाद्यविद्योपादानदेहाद्यतिरिक्तप्रत्यगात्मतत्त्वावबोधे जातेऽपि अविद्यासंस्कारानुवृत्तावनुवर्तन्ते सांसारिकाः प्रत्ययास्त-

आनन्दगिरीय-न्यायनिर्णयः ।

ज्ञानत्वेन व्यवहितफलहेतुकर्मसु । फलप्रवृत्तिकालज्ञानानपेक्षेषु ब्रह्मज्ञानफलविचाराधिकारोपाधितया पूर्वक्षणे ज्ञातव्याधिकारिविशेषणत्वायोगात्तस्मान्न कर्मतज्ज्ञानविचारानन्तर्यमथशब्दार्थ इति । ननु धर्मजिज्ञासाया

रत्नप्रभा।

भवेत्। यद्यपि शुद्धिविवेकादिद्वारा कर्माणि हेतवः, तथापि तेषां नाधिकारिविशेषणत्वम्, अज्ञातानां

भामती।

द्व्यवहाराश्च, तथापि तान्यप्ययं व्यवहारप्रत्ययान्मिथ्येति मन्यमानो विद्वान्न श्रद्धत्ते पित्तोपहतेन्द्रिय इव गुडं थूत्कृत्य त्यजन्नपि तस्य तिक्तताम्। तथा चायं क्रियाकरणेतिकर्तव्यताफलप्रपञ्चमतात्त्विकं विनिश्चिन्वन्कथमधिकृतो नाम विदुषो ह्यधिकारः, अन्यथा पशुशूद्रादीनामप्यधिकारो दुर्वारः स्यात्। क्रियाकर्त्रादिस्वरूपविभागं च विद्वस्यमान इह विद्वानभिमतः कर्मकाण्डे। अत एव भगवानविद्वद्विषयत्वं शास्त्रस्य वर्णयांबभूव भाष्यकारः। तस्माद्यथा राजजातीयाभिमानकर्तृके राजसूये न विप्रवैश्यजातीयाभिमानिनोरधिकारः। एवं द्विजातिकर्तृक्रियाकरणादिविभागाभिमानिकर्तृके कर्मणि न तदनभिमानिनोऽधिकारः। न चानधिकृतेन समर्थेनापि कृतं वैदिकं कर्म फलाय कल्पते, वैश्यस्तोम इव ब्राह्मणराजन्याभ्याम्। तेन दृष्टार्थेषु कर्मसु शक्तः प्रवर्तमानः प्राप्नोतु फलं, दृष्टत्वात्। अदृष्टार्थेषु तु शास्त्रैकसमधिगम्यं फलमनधिकारिणि न युज्यत इति नोपासनाकार्ये कर्मापेक्षा। स्यादेतत्। मनुष्याभिमानवदधिकारिके कर्मणि विहिते यथा तदभिमानरहितस्यानधिकारः, एवं निषेधविधयोऽपि मनुष्याधिकारा इति तदभिमानरहितस्तेष्वपि नाधिक्रियेत, पश्वादिवत्। तथा चायं निषिद्धमनुतिष्ठन् न प्रत्यवेयात्, तिर्यगादिवदिति भिन्नकर्मतापातः। मैवम्। न खल्वयं सर्वथा मनुष्याभिमानरहितः, किं त्वविद्यासंस्कारानुवृत्त्यास्य मात्रया तदभिमानोऽनुवर्तते। अनुवर्तमानं च मिथ्येति मन्यमानो न श्रद्धत्त इत्युक्तम्। किमतो यद्येवम्, एतदतो भवति-विधिषु श्राद्धोऽधिकारी नाश्राद्धः। ततश्च मनुष्याद्यभिमानेनाश्रद्दधानो न विधिशास्त्रेणाधिक्रियते। तथा च स्मृतिः—'अश्रद्धया हुतं दत्तम्' इत्यादिका। निषेधशास्त्रं तु न श्रद्धामपेक्षते। अपि तु निषिध्यमानक्रियोन्मुखो नर इत्येव प्रवर्तते। तथा च सांसारिक इव श्रद्धावगतब्रह्मतत्त्वोपि निषेधमतिक्रम्य प्रवर्तमानः प्रत्यवैतीति न भिन्नकर्मदर्शनाभ्युपगमः। तस्मान्नोपासनायाः कार्ये कर्मापेक्षा। अत एव नोपासनोत्पत्तावपि, निर्विचिकित्सशाब्दज्ञानोत्पत्त्युत्तरकालमनधिकारः कर्मणीत्युक्तम्। तथा च श्रुतिः-'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः।' तत्किमिदानीमनुपयोग एव सर्वथेह कर्मणाम्, तथा च 'विविदिषन्ति यज्ञेन' इत्याद्याः श्रुतयो विरुध्येरन्। न। आरादुपकारकत्वात्कर्मणां यज्ञादीनाम्। तथाहि-'तमेतमात्मानं वेदानुवचनेन-नित्यस्वाध्यायेन ब्राह्मणा विविदिषन्ति'—वेदितुमिच्छन्ति। न तु विदन्ति। वस्तुतः प्रधानस्यापि वेदनस्य प्रकृत्यर्थतया शब्दतो गुणत्वात्, इच्छायाश्च प्रत्ययार्थतया प्राधान्यात् प्रधानेन च कार्यसंप्रत्ययात्। न हि राजपुरुषमानयेत्युक्ते वस्तुतः प्रधानोऽपि राजा पुरुषविशेषणतया शब्दत उपसर्जन आनीयतेऽपि तु पुरुष एव, शब्दतस्तस्य प्राधान्यात्। एवं वेदानुवचनस्येव यज्ञस्यापीच्छासाधनतया विधानम्। एवं तपसोऽनाशकस्य। कामानशनमेव तपः, हितमितमेध्याशिनो हि ब्रह्मणि विविदिषा भवति, न तु सर्वथाऽनश्नतो मरणात्। नापि चान्द्रायणादितपःशीलस्य, धातुवैषम्यापत्तेः। एतानि च नित्यान्युपात्तदुरितनिबर्हणेन पुरुषं संस्कुर्वन्ति। तथा च श्रुतिः-'स ह वा आत्मयाजी यो वेद इदं मेऽनेनाङ्गं संस्क्रियत इदं मेऽनेनाङ्गमुपधीयते' इति। अनेनेति प्रकृतं यज्ञादि परामृशति। स्मृतिश्च—'यस्यैतेऽष्टाचत्वारिंशत्संस्काराः' इति।

आनन्दगिरीय-न्यायनिर्णयः।

ब्रह्मजिज्ञासायां सामग्रीत्वाभावेऽप्यानन्तर्योक्तिद्वारा तत्क्रमज्ञानार्थोऽथशब्दः "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः" [ तै० सं० ६-३-१०-४ ] इत्यवदानक्रमज्ञानार्थाथशब्दवत्। "अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्मतः। इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्" [ मनु० ६-३६ ] इति स्मृतेः।

**यथा च हृदयाद्यवदानानामानन्तर्यनियमः क्रमस्य विवक्षितत्वात्, न तथेह क्रमो विवक्षितः ।**

रत्नप्रभा ।

तेषां जन्मान्तरकृतानामपि फलहेतुत्वात् । अधिकारिविशेषणं ज्ञायमानं प्रवृत्तिपुष्कलकारणमानन्तर्यावधित्वेन वक्तव्यम् । अतः कर्माणि तदवबोधस्तन्न्यायविचारो वा नावधिरिति न ब्रह्मजिज्ञासाया धर्मजिज्ञासानन्तर्यमिति । ननु धर्मब्रह्मजिज्ञासयोः कार्यकारणत्वाभावेऽप्यानन्तर्योक्तिद्वारा क्रमज्ञानार्थोऽथशब्दः—"हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः" [ तैत्ति० संहि० ] इत्यवदानानां क्रमज्ञानार्थाथशब्दवदित्याशंक्याह—**यथा चेति** ॥ अवदानानामानन्तर्यनियमः क्रमो **यथा**ऽथशब्दार्थस्तस्य विवक्षित-

भामती ।

नित्यनैमित्तिकानुष्ठानप्रक्षीणकल्मषस्य च विशुद्धसत्त्वस्याविदुष एव उत्पन्नविविदिषस्य ज्ञानोत्पत्तिं दर्शयत्याथर्वणी श्रुतिः—'विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः' इति । स्मृतिश्च—'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इत्यादिका । कल्प्तेनैव च नित्यानां कर्मणां नित्येहितेनोपात्तदुरितनिबर्हणेन पुरुषसंस्कारेण ज्ञानोत्पत्तावङ्गभावोपपत्तौ न संयोगपृथक्त्वेन साक्षादङ्गभावो युक्तः, कल्पनागौरवापत्तेः । तथाहि—नित्यकर्मानुष्ठानाद्धर्मोत्पादः, ततः पाप्मा निवर्तते, स ह्यनित्याशुचिदुःखरूपे संसारे नित्यशुचिसुखख्यातिलक्षणेन विपर्यासेन चित्तसत्त्वं मलिनयति, अतः पापनिवृत्तौ प्रत्यक्षोपपत्तिद्वारापावरणे सति प्रत्यक्षोपपत्तिभ्यां संसारस्य अनित्याशुचिदुःखरूपतामप्रत्यूहमवबुध्यते, ततोऽस्य अस्मिन्ननभिरतिसंज्ञं वैराग्यमुपजायते, ततस्तज्जिहासोपावर्तते, ततो हानोपायं पर्येषते, पर्येषमाणश्चात्मतत्त्वज्ञानमस्योपाय इत्युपश्रुत्य तज्जिज्ञासते, ततः श्रवणादिक्रमेण तज्जानातीत्याराादुपकारकत्वं तत्त्वज्ञानोत्पादं प्रति चित्तसत्त्वशुद्ध्या कर्मणां युक्तम् । इममेवार्थमनुवदति भगवद्गीता—'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते ॥' एवं चाननुष्ठितकर्मापि प्राग्भवीयकर्मवशाद्यो विशुद्धसत्त्वः संसारासारतादर्शनेन निष्पन्नवैराग्यः, कृतं तस्य कर्मानुष्ठानेन वैराग्योत्पादोपयोगिना, प्राग्भवीयकर्मानुष्ठानादेव तत्सिद्धेः । इममेव च पुरुषधौरेयमेदमधिकृत्य प्रववृते श्रुतिः—'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' इति । तदिदमुक्तम्—कर्मावबोधात्—**प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरिति** । अत एव न ब्रह्मचारिण ऋणानि सन्ति, येन तदपाकरणार्थं कर्मानुतिष्ठेत् । एतदनुरोधाच्च 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते' इति, गृहस्थः संपद्यमान इति व्याख्येयम् । अन्यथा 'यदि वेतरथा ब्रह्मचर्यादेव' इति श्रुतिर्विरुध्येत । गृहस्थस्यापि च ऋणापाकरणं सत्त्वशुद्ध्यर्थमेव । जरामर्यवादो भस्मान्ततावादोऽन्त्येष्टयश्च कर्मजडानविदुषः प्रति, न त्वात्मतत्त्वपण्डितान् । तस्मात्तस्यानन्तर्यमथशब्दार्थः,यद्विना ब्रह्मजिज्ञासा न भवति यस्मिंस्तु सति भवन्ती भवत्येव । न चेत्थं कर्मावबोधः तस्मान्न कर्मावबोधानन्तर्यमथशब्दार्थ इति सर्वमवदातम् । स्यादेतत् । मा भूदग्निहोत्रयवागूपाकवदार्थः क्रमः, श्रौतस्तु भविष्यति, 'गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्' इति जाबालश्रुतिर्गार्हस्थ्येन हि यज्ञाद्यनुष्ठानं सूचयति । स्मरन्ति च—'अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्मतः । इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥' निन्दन्ति च—'अनधीत्य द्विजो वेदाननुत्पाद्य तथात्मजान् । अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन्व्रजत्यधः ॥' इत्यत आह—**यथा च हृदयाद्यवदानानामानन्तर्यनियमः** । कुतः, 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः'

आनन्दगिरीय—न्यायनिर्णयः ।

न तु पुष्कलहेतुज्ञानार्थताऽस्येति तत्राऽऽह—**यथेति** । अनुष्ठेयावदानानां बहुत्वादनुष्ठातुश्चैक्यादयौग-

१ आ० पा० हृदयाद्यवदानानन्तर्य० । २ अवदानं खण्डनम् ।

**शेषशेषित्वेऽधिकृताधिकारे वा प्रमाणाभावाद्धर्मब्रह्मजिज्ञासयोः-**

रत्नप्रभा ।

स्यान्न, तथेह धर्मब्रह्मजिज्ञासयोः क्रमो विवक्षितः । एककर्तृकत्वाभावेन तयोः क्रमानपेक्षणात् । अतो न क्रमार्थोऽथशब्द इत्यर्थः । ननु तयोरेककर्तृकत्वं कुतो नास्तीत्यत आह-**शेषेति** । येषामेकप्रधानशेषता यथा-अवदानानां प्रयाजादीनां च, ययोश्च शेषशेषित्वं, यथा-प्रयाजदर्शयोः, यस्य चाधि-

भामती ।

इत्यथाप्रशब्दाभ्यां क्रमस्य विवक्षितत्वात् । न तथेह क्रमो विवक्षितः, श्रुत्या तयैवानियमप्रदर्शनात्, 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा' इति । एतावता हि वैराग्यमुपलक्षयति । अत एव 'यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इति श्रुतिः। निन्दावचनं चाविशुद्धसत्त्वपुरुषाभिप्रायम् । अविशुद्धसत्त्वो हि मोक्षमिच्छन्नालस्यात्तदुपायेऽप्रवर्तमानो गृहस्थधर्ममपि नित्यनैमित्तिकमनाचरन्प्रतिक्षणमुपचीयमानपाप्माधोगतिं गच्छतीत्यर्थः । स्यादेतत् । मा भूच्छ्रौत आर्थो वा क्रमः, पाठस्थानमुख्यप्रवृत्तिप्रमाणकस्तु कस्मान्न भवतीत्यत आह-**शेषशेषित्वे प्रमाणाभावात्** । शेषाणां समिदादीनां, शेषिणां चाग्नेयादीनाम्, एकफलवदुपकारोपनिबद्धानाम् एकफलावच्छिन्नानाम् एकप्रयोगवचनोपगृहीतानाम् एकाधिकारिकर्तृकाणां चैकपौर्णमास्यमावस्याकालसंबद्धानां युगपदनुष्ठानाशक्तेः, सामर्थ्यात्क्रमप्राप्तौ, तद्विशेषापेक्षायां पाठादयस्तद्भेदनियमाय प्रभवन्ति । यत्र तु न शेषशेषिभावः, नाप्येकाधिकारावच्छेदः । यथा सौर्यार्यम्णप्राजापत्यादीनां, तत्र क्रमभेदापेक्षाभावान्न पाठादिः क्रमविशेषनियमे प्रमाणम्, अवर्जनीयतया तस्य तत्रागतत्वात् । न चेह धर्मब्रह्मजिज्ञासयोः शेषशेषिभावे श्रुत्यादीनामन्यतमं प्रमाणमस्तीति । ननु शेषशेषिभावाभावेऽपि क्रमनियमो दृष्टः, यथा गोदोहनस्य पुरुषार्थस्य दर्शपौर्णमासिकैरङ्गैः सह, यथा वा 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति दर्शपौर्णमाससोमयोरशेषशेषिणोरित्यत आह-**अधिकृताधिकारे वा प्रमाणाभावात्** । इति योजना । स्वर्गकामस्य हि दर्शपौर्णमासाधिकृतस्य पशुकामस्य सतो दर्शपौर्णमासक्रत्वर्थाप्प्रणयनाश्रिते गोदोहनेऽधिकारः । नो खलु गोदोहनद्रव्यमव्याप्रियमाणं साक्षात्पशून् भावयितुमर्हति । न च व्यापारान्तराविष्टं श्रूयते, यतस्तदङ्गक्रममतिपतेत्, अप्प्रणयनाश्रितं तु प्रतीयते 'चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्य' इति समभिव्याहारात्, योग्यत्वाच्चास्यापां प्रणयनं प्रति । तस्मात्क्रत्वर्थाप्प्रणयनाश्रितत्वाद्गोदोहनस्य तत्क्रमेण पुरुषार्थमपि गोदोहनं क्रमवदिति सिद्धम् । श्रुतिनिराकरणेनैव इष्टिसोमक्रमवदपि क्रमोऽप्यपास्तो वेदितव्यः । शेषशेषित्वाधिकृताधिकाराभावेऽपि क्रमो विवक्ष्येत, यद्येकफलावच्छेदो भवेत् । यथाग्नेयादीनां, षण्णामेकस्वर्गफलावच्छिन्नानां, यदि वा जिज्ञास्यब्रह्मणोंऽशो धर्मः स्यात्, यथा चतुर्लक्षणीव्युत्पाद्यं ब्रह्म केनचित्केनचिदंशेनैकेन लक्षणेन व्युत्पाद्यते, तत्र चतुर्णां लक्षणानां जिज्ञास्याभेदेन परस्परसंबन्धे सति क्रमो

आनन्दगिरीय-न्यायनिर्णयः ।

पद्यात्क्रमध्रौव्यात्तन्नियममथशब्दो ब्रूयात् । इह तु विचारयोरनुष्ठातृभेदान्न क्रमो विवक्षितः । यत्राङ्गाङ्गित्वं प्रयाजदर्शादिषु यत्र चाधिकृताधिकारो गोदोहनादिषु तत्रैव कर्त्रैक्यं न प्रस्तुतविचारयोस्तथात्वेनानमतोऽत्र कर्तृभेदान्न क्रमविवक्षा । स्मृतिस्त्वविरक्तस्याऽऽश्रमक्रमोक्त्या यज्ञाद्यनुष्ठानानन्तरं शुद्धबुद्धेर्मुमुक्षां दर्शयति न ब्रह्मविचारस्य धर्मविचारानन्तर्यम् । तत्र तद्वाचिशब्दाभावाद्ब्रह्मचर्यादेव संन्यासविधानाच्च । तस्मादनेककर्तृकत्वाद्विचारयोर्न क्रमार्थोऽथशब्द इत्यर्थः । नन्वाग्नेयादीनामेकस्वर्गफलानामध्यायानां च

**फलजिज्ञास्यभेदाच्च-अभ्युदयफलं धर्मज्ञानम् ।**

रत्नप्रभा ।

कृताधिकारत्वं, **यथा**-अपां प्रणयनं दर्शपूर्णमासाङ्गमाश्रित्य "गोदोहनेन पशुकामस्य" इति विहितस्य गोदोहनस्य, **यथा** वा-"दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति दर्शाद्युत्तरकाले विहितस्य सोमयागस्य दर्शाद्यधिकृताधिकारत्वं, तेषामेककर्तृकत्वं भवति । ततश्चैकप्रयोगवचनगृहीतानां तेषां युगपदनुष्ठानासम्भवात् क्रमाकांक्षायां श्रुत्यादिभिर्हि क्रमो बोध्यते । **नैवं** जिज्ञासयोः शेषशेषित्वश्रुतिलिङ्गादिकं मानमस्ति । **ननु** "ब्रह्मचर्यं समाप्य गृही भवेद् गृहाद्वनी भूत्वा प्रव्रजेद्" [ जाबालो० ४ ] इति श्रुत्या,-"अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्मतः । इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥ १ ॥" इति स्मृत्या चाधिकृताधिकारत्वं भातीति । **तन्न**, "ब्रह्मचर्यादेव प्रव्रजेत्" [ जाबालो० ४ ] "आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे" इति श्रुतिस्मृतिभ्यां त्वयोदाहृतश्रुतिस्मृत्योरशुद्धचित्तविषयत्वावगमाद् । **एतदुक्तं भवति** । **यदि** जन्मान्तरकृतकर्मभिः शुद्धं चित्तं, **तदा** ब्रह्मचर्यादेव संन्यस्य ब्रह्म जिज्ञासितव्यम् । **यदि** न शुद्धमिति रागेण ज्ञायते, **तदा** गृही भवेत् । तत्राप्यशुद्धौ वनी भवेत् । तत्राप्यशुद्धौ तथैव कालमाकलयेत् । वने शुद्धौ प्रव्रजेदिति । तथा च श्रुतिः"यदहरेव विरजेत्तदहरेव प्रव्रजेद्" [ जाबालो० ४ ] इति । तस्मान्नानयोरधिकृताधिकारत्वे किंचिन्मानमिति भावः । **ननु** मीमांसयोः शेषशेषित्वमधिकृताधिकारत्वं च मास्तु । एकमोक्षफलकत्वेनैककर्तृकत्वं स्यादेव । **वदन्ति हि** । ज्ञानकर्मभ्यां मुक्तिः-इति **समुच्चयवादिनः** । **एवमेकवेदार्थजिज्ञास्यकत्वाच्चैककर्तृकत्वम्** । तथा चाग्नेयादिषड्यागानामेकस्वर्गफलकानां द्वादशाध्यायानां चैकधर्मजिज्ञास्यकानां क्रमवत्तयोः क्रमो विवक्षित इति क्रमार्थोऽथशब्द इत्याशंक्याह-**फलेति** ॥ फलभेदाजिज्ञास्यभेदाच्च न क्रमो विवक्षित इत्यनुषङ्गः । **यथा**-सौर्यार्यम्णप्राजापत्यचरूणां ब्रह्मवर्चसस्वर्गायुःफलभेदाद्, **यथा वा**-कामचिकित्सातन्त्रयोर्जिज्ञास्यभेदान्न क्रमापेक्षा, **तद्वन्मीमांसयोर्न** क्रमापेक्षेति भावः। तत्र फलभेदं विवृणोति-**अभ्युदयेति** ॥ विषयाभिमुख्येनोदेतीत्यभ्युदयो विषयाधीनं सुखं स्वर्गादिकं तच्च धर्मज्ञानहेतोर्मीमांसायाः फलमित्यर्थः ।

भामती ।

विवक्षितः, तथेहाप्येकजिज्ञास्यतया धर्मब्रह्मजिज्ञासयोः क्रमो विवक्ष्येत न चैतदुभयमप्यस्तीत्याह-**फलजिज्ञास्यभेदाच्च** । फलभेदं विभजते-**अभ्युदयफलं धर्मज्ञानमिति** । जिज्ञासाया वस्तुतो ज्ञानतन्त्रत्वात् ज्ञानफलं जिज्ञासाफलमिति भावः । न केवलं स्वरूपतः फलभेदः, तदुत्पादनप्रकारभेदादपि तद्भेद

आनन्दगिरीय-न्यायनिर्णयः ।

द्वादशानामेकधर्मार्थानां क्रमदर्शनादनयोरपि विचारयोरलौकिकसुखफलयोरेकवेदार्थविषययोरपेक्षिते क्रमे तदर्थोऽथशब्दो भविष्यति नेत्याह-**फलेति** । नोक्तरीत्या क्रमापेक्षेति शेषः । अलौकिकसुखफलत्वे तुल्ये कथं भिन्नफलतेत्याशंक्य धर्मजिज्ञासाफलमाह-**अभ्युदयेति** । ज्ञानेन जिज्ञासा लक्षिता प्रकृतत्वात् । तस्या धर्मज्ञानानुष्ठानद्वारा देहाद्यवच्छिन्नत्वेनाभितो जातः स्वर्गादिसुखविशेषः फलमित्यर्थः ।

१ पूर्वमीमांसानाम्नः द्वादशाध्यायात्मकस्य जैमिनिप्रणीतस्य शास्त्रस्य । २ धर्मब्रह्मजिज्ञासयोः ।

**तच्चानुष्ठानापेक्षम् । निःश्रेयसफलं तु ब्रह्मविज्ञानं, न चानुष्ठानान्तरापेक्षम् ॥ भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति । पुरुषव्यापारतन्त्रत्वात् ॥ इह तु भूतं ब्रह्म जिज्ञास्यम् । नित्यत्वान्न पुरुषव्यापारतन्त्रम् ॥ चोदनाप्रवृत्तिभेदाच्च-**

रत्नप्रभा ।

न केवलं फलस्य स्वरूपतो भेदः किन्तु हेतुतोऽपीत्याह-**तच्चेति** ॥ ब्रह्मज्ञानहेतोर्मीमांसायाः फलं तु तद्विरुद्धमित्याह-**निःश्रेयसेति** ॥ नित्यं निरपेक्षं श्रेयो निःश्रेयसं-मोक्षः, तत् फलमित्यर्थः । ब्रह्मज्ञानं च स्वोत्पत्तिव्यतिरिक्तमनुष्ठानं नापेक्षत इत्याह-**न चेति** ॥ स्वरूपतो हेतुतश्च फलभेदान्न समुच्चय इति भावः । जिज्ञास्यभेदं विवृणोति-**भव्यश्चेति** ॥ भवतीति भव्यः । साध्य इत्यर्थः । साध्यत्वे हेतुमाह-**नेति** ॥ तर्हि तुच्छत्वं, नेत्याह-**पुरुषेति** ॥ पुरुषव्यापारः प्रयत्नस्तन्त्रं हेतुर्यस्य तत्त्वादित्यर्थः । कृतिसाध्यत्वात्कृतिजनकज्ञानकाले धर्मस्यासत्त्वं, न तुच्छत्वादित्यर्थः । ब्रह्मणो धर्माद्वैलक्षण्यमाह-**इह त्विति** ॥ उत्तरमीमांसायामित्यर्थः । भूतमसाध्यम् । तत्र हेतुः-**नित्येति** । सदा सत्त्वादित्यर्थः । साध्यासाध्यत्वेन धर्मब्रह्मणोः स्वरूपभेदमुक्त्वा हेतुतोऽप्याह-**नेति** । धर्मवत् कृत्यधीनं नेत्यर्थः । मानतोऽपि भेदमाह-**चोदनेति** ॥ अज्ञातज्ञापकं वाक्यमत्र चोदना । तस्याः प्रवृत्तिर्बोधकत्वं तद्वैलक्षण्याच्च

भामती ।

इत्याह-**तच्चानुष्ठानापेक्षम्** । **ब्रह्मज्ञानं च नानुष्ठानान्तरापेक्षम्** । शाब्दज्ञानाभ्यासान्नानुष्ठानान्तरमपेक्षते, नित्यनैमित्तिककर्मानुष्ठानसहभावस्यापास्तत्वादिति भावः । जिज्ञास्यभेदमात्यन्तिकमाह-**भव्यश्च धर्म इति** । भविता भव्यः, कर्तरि कृत्यः । भविता च भावकव्यापारनिर्वर्त्यतया तत्तन्त्र इति ततः प्राग्ज्ञानकाले नास्तीत्यर्थः । भूतं सत्यम् । सदैकान्ततः न कदाचिदसदित्यर्थः । न केवलं स्वरूपतो जिज्ञास्ययोर्भेदः, ज्ञापकप्रमाणप्रवृत्तिभेदादपि भेद इत्याह-**चोदनाप्रवृत्तिभेदाच्च** । चोदनेति वैदिकं

आनन्दगिरीय-न्यायनिर्णयः ।

न केवलं स्वरूपतः फलभेदः किंतूत्पादनप्रकारभेदादपीत्याह-**तच्चेति** । वैदिकधीत्वाद्ब्रह्मधीरपि धर्मधीवदभ्युदयफलेत्याशंक्याऽह-**निःश्रेयसेति** । अभ्युदयफलव्यावृत्तये तुशब्दः । पूर्ववज्ज्ञानशब्दो जिज्ञासामधिकाराल्लक्षयति । उपास्तिवद्धर्मज्ञानवद्वा स्वगतमर्थगतं वा ब्रह्मधीरप्यनुष्ठानमपेक्षतामित्याशंक्याऽऽह-**न चेति** । 'ब्रह्मसंस्थोऽमृतत्वमेति' इतिश्रुतेर्ब्रह्मधीरोंकारनिष्ठाव्यतिरिक्तानुष्ठानानपेक्षेत्यर्थः । फलभेदमुक्त्वा जिज्ञास्यभेदमाह-**भव्यश्चेति** । भवत्यसाविति भव्यो भविता भव्यगेयादिशब्दानां विकल्पेन कर्तरि निपातनात् । उक्तं हि-'भव्यादयः शब्दाः कर्तरि निपात्यन्ते' इति । धर्मस्य भव्यत्वं साध्यैकस्वभावत्वं तदुपपादयति-**न ज्ञानेति** । तत्काले सत्त्वाभावे तुच्छत्वमाशंक्याऽऽह-**पुरुषेति** । असतोऽपि तत्काले क्रियासाध्यत्वादतुच्छतेत्यर्थः । धर्मवद्ब्रह्मणोऽपि वेदार्थतया साध्यत्वमाशंक्योक्तमिह **त्विति** । भूतमित्यतीतत्वं व्यावर्तयति-**नित्यत्वादिति** । कालत्रयासंस्पर्शादशून्यत्वाच्च धर्मवत्कृतिसाध्यत्वमाशंक्य कालादिकल्पनासाक्षित्वान्नेत्याह-**न पुरुषेति** । रूपतो जिज्ञास्यभेदमुक्त्वा मानतोऽप्याह-**चोदनेति** । वैदिकशब्दमात्रं चोदना विशेषेण सामान्यलक्षणात् । शक्तितात्पर्याभ्यामर्थज्ञाप-

१ आ० पा० नित्यत्वान्न पुरुषा । २ ब्रन्धनिवृत्त्युत्पत्तीत्यर्थः । ३ " भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा" [ पा० सू० । ३ । ४ । ६८ । ] इति निपातिताः ।

**या हि चोदना धर्मस्य लक्षणं सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति ॥ ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलम् । अवबोधस्य चोदनाजन्यत्वान्न पुरुषोऽवबोधे नियुज्यते ॥**

---

रत्नप्रभा ।

जिज्ञास्यभेद इत्यर्थः । संग्रहवाक्यं विवृणोति—**या हीति । लक्षणं** प्रमाणम् । "स्वर्गकामो यजेत" इत्यादिवाक्यं हि स्वविषये धर्मे यागादिकरणस्वर्गादिफलकभावनारूपे फलहेतुयागादिगोचरनियोगे वा हितसाधने यागादौ वा पुरुषं प्रवर्तयदेवावबोधयति । "अयमात्मा ब्रह्म" [ बृ० २ । ५ । १९ ] इत्यादि वाक्यं तु त्वमर्थं केवलमप्रपञ्चं ब्रह्म बोधयत्येव न प्रवर्तयति । विषयाभावादित्यर्थः । नन्ववबोध एव विषयस्तत्राह—**न पुरुष इति** ॥ ब्रह्मचोदनया पुरुषोऽवबोधे न प्रवर्त्यते इत्यत्र हेतुं पूर्ववाक्येनाह—**अवबोधस्येति** ॥ स्वजन्यज्ञाने स्वयं प्रमाणं न प्रवर्तकमित्यत्र दृष्टान्तमाह—

भामती ।

शब्दमाह, विशेषेण सामान्यस्य लक्षणात् । प्रवृत्तिभेदं विभजते—**या हि चोदना धर्मस्येति** । आज्ञादीनां पुरुषाभिप्रायभेदानामसंभवात् अपौरुषेये वेदे चोदनोपदेशः । अत एवोक्तम्—'तस्य ज्ञानमुपदेशः' इति । सा च स्वसाध्ये पुरुषव्यापारे भावनायां, तद्विषये च यागादौ, स हि भावनाविषयः, तदधीननिरूपणत्वात् प्रयत्नस्य भावनायाः । 'षिञ् बन्धने' इत्यस्य धातोर्विषयपदव्युत्पत्तेः । भावनायास्तद्वारेण च यागादेरपेक्षितोपायतामवगमयन्ती तत्रेच्छोपहारमुखेन पुरुषं नियुञ्जानैव यागादिधर्ममवबोधयति नान्यथा । ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलं न तु प्रवर्तयन्त्यवबोधयति । कुतः, अवबोधस्य प्रवृत्तिरहितस्य चोदनाजन्यत्वात् । ननु 'आत्मा ज्ञातव्यः' इत्येतद्विधिपरैर्वेदान्तैः तदेकवाक्यतयाऽवबोधे प्रवर्तयद्भिरेव पुरुषो ब्रह्मावबोध्यत इति समानत्वं धर्मचोदनाभिर्ब्रह्मचोदनानामित्यत आह—**न पुरुषोऽवबोधे नियुज्यते** । अयमभिसंधिः—न तावद्ब्रह्मसाक्षात्कारे पुरुषो नियोक्तव्यः, तस्य ब्रह्मस्वाभाव्येन नित्यत्वात् । अकार्यत्वात् । नाप्युपासनायां, तस्या अपि ज्ञानप्रकर्षे हेतुभावस्यान्वयव्यतिरेकसिद्धतया प्राप्तत्वेनाविधेयत्वात् । नापि शाब्दबोधे, तस्याप्यधीतवेदस्य पुरुषस्य विदितपदतदर्थस्य

आनन्दगिरीय-न्यायनिर्णयः ।

कत्वे तुल्ये कथं तत्प्रवृत्तिभेदस्तत्राऽऽह—**या हीति** । वैदिको लिङादिर्धर्मे मानम्—"चोदनालक्षणोऽर्थो धर्मः" [ जै० सू० १–१–२ ] इत्युक्तत्वात् । स स्वविषये धात्वर्थकरणकपुरुषार्थभाव्यार्थभावनारूपे प्रेरयन्नेव पुरुषं बोधयति । यजेतेत्यादिर्हि शब्दोंऽशत्रयविशिष्टामर्थभावनां विदधत्तदवबोधे पुरुषप्रवृत्तेस्तामपि बोधयतीत्यर्थः । ब्रह्मचोदनाऽपि चोदनात्वादितरवत्प्रवृत्तिनिष्ठेत्याशंक्याऽऽह—**ब्रह्मेति** । ब्रह्मणि प्रतीचि स्थितमयमात्मा ब्रह्मेत्यादिवाक्यं त्वंपदलक्ष्यं पुरुषं केवलमप्रपञ्चं ब्रह्म बोधयत्येव न प्रवर्तयतीत्यत्र हेतुमाह—**अवबोधस्येति** । नन्वात्मा ज्ञातव्य इत्यादिवाक्यैर्ब्रह्म बोध्यते तेन ब्रह्मबोधे भाव्ये पुरुषं प्रेरयन्तो वेदान्तास्तद्वयावृत्तां भावनां बोधयन्ति, सत्यादिवाक्यानां भूतं भव्यायोपदिश्यत इति न्यायाद्विधिवाक्यैरैक्यात्तत्राऽऽह—**न पुरुष इति** । ज्ञानस्येच्छाप्रयत्नानधीनत्वान्मानवस्तुतन्त्रत्वादनिच्छतोऽयतमानस्यापि दुर्गन्धादिज्ञानान्न तस्मिन्विधिः । न च त्रिविधेऽपि ज्ञाने विधिः शक्यो निरूपयितुम् । न च चोदना साध्यमेव बोधयति किंतु भूतादावपि

---

१ तत्त्वमसीत्यादौ । 

**यथाऽक्षार्थसन्निकर्षेणार्थावबोधे, तद्वत् । तस्मात्किमपि वक्तव्यं, यदनन्तरं ब्रह्मजिज्ञासोपदिश्यत इति ॥ उच्यते ॥ ( १ ) नित्यानित्यवस्तुविवेकः,**

रत्नप्रभा ।

**यथेति** ॥ मानादेव बोधस्य जातत्वाज्जाते च विध्ययोगान्न वाक्यार्थज्ञाने पुरुषप्रवृत्तिः । तथा च प्रवर्तकमानमेयो धर्मः, उदासीनमानमेयं ब्रह्म, इति जिज्ञास्यभेदान्न तन्मीमांसयोः क्रमार्थोऽथशब्द इति भावः । एवमथशब्दस्यार्थान्तरासम्भवादानन्तर्यवाचित्वे सति तदवधित्वेन पुष्कलकारणं वक्तव्यमित्याह—**तस्मादिति** ॥ **उपदिश्यते** । सूत्रकृतेति शेषः । तत्किमित्यत आह—**उच्यत इति** । विवेकादीनामागमिकत्वेन

भामती ।

समधिगतशाब्दन्यायतत्त्वस्याप्रत्यूहमुत्पत्तेः । अत्रैव दृष्टान्तमाह—**यथाक्षार्थेति** । दार्ष्टान्तिके योजयति—**तद्वदिति** । अपि चात्मज्ञानविधिपरेषु वेदान्तेषु नात्मतत्त्वविनिश्चयः शाब्दः स्यात् । न हि तदात्मतत्त्वपरास्ते, किंतु तज्ज्ञानविधिपराः, यत्पराश्च ते त एव तेषामर्थाः । न च बोधस्य बोध्यनिष्ठत्वादपेक्षितत्वात्, अन्यपरेभ्योऽपि बोध्यतत्त्वविनिश्चयः, समारोपेणापि तदुपपत्तेः । तस्मान्न बोधविधिपरा वेदान्ता इति सिद्धम् । प्रकृतमुपसंहरति—**तस्मात्किमपि वक्तव्यमिति** । यस्मिन्नसति ब्रह्मजिज्ञासा न भवति सति तु भवन्ती भवत्येवेत्यर्थः । तदाह—**उच्यते नित्यानित्यवस्तुविवेक इत्यादि** । नित्यः प्रत्यगात्मा, अनित्या देहेन्द्रियविषयादयः । तद्विषयश्चेद्विवेको निश्चयः, कृतमस्य ब्रह्मजिज्ञासया, ज्ञातत्वाद्ब्रह्मणः । अथ विवेको ज्ञानमात्रं न निश्चयः, तथा सत्येष विपर्यासादन्यः संशयः स्यात्, तथा च न वैराग्यं भावयेत्, अभावयन्कथं ब्रह्मजिज्ञासाहेतुः, तस्मादेवं व्याख्येयम् । नित्यानित्ययोर्वसतीति नित्यानित्यवस्तु तद्धर्मः, नित्यानित्ययोर्धर्मिणोस्तद्धर्माणां च विवेको नित्यानित्यवस्तुविवेकः । एतदुक्तं भवति—मा भूदिदं तदृतं नित्यम्, इदं तदनृतमनित्यमिति धर्मिविशेषयोर्विवेकः, धर्मिमात्रयोर्नित्यानित्ययोस्तद्धर्मयोश्च विवेकं निश्चिनोत्येव । नित्यत्वं सत्यत्वं तद्यस्यास्ति तन्नित्यं सत्यं, तथा चास्थागोचरः । अनित्यत्वमसत्यत्वं तद्यस्यास्ति तदनित्यमनृतं, तथा चानास्थागोचरः । तदेतेष्वनुभूयमानेषु युष्मदस्मत्प्रत्ययगोचरेषु विषयविषयिषु यदृतं नित्यं सुखं व्यवस्थास्यते तदास्थागोचरो भविष्यति, यत्त्वनित्यमनृतं भविष्यति तापत्रयपरीतं तदुपेक्ष्यत इति । सोऽयं नित्यानित्यवस्तुविवेकः प्राग्भवीयादैहिकाद्वा कर्मणो विशुद्धसत्त्वस्य भवत्यनुभवोपपत्तिभ्याम् । न खलु सत्यं नाम न किंचिदस्तीति वाच्यम् । तदभावे तदधिष्ठानस्यानृतस्याप्यनुपपत्तेः शून्यवादिनामपि शून्यताया एव सत्यत्वात् । अथास्य पुरुषधौरेयस्यानुभवोपपत्तिभ्यामेवं सुनिपुणं निरूपयतः, आ च सत्यलोकात् आ चावीचेः 'जायस्व म्रियस्व' इति विपरिवर्तमानं, क्षणमुहूर्तयामाहोरात्रार्धमासमासर्त्वयनवत्सरयुगचतुर्युगमन्वन्तरप्रलयमहाप्रलयमहासर्गावान्तरसर्गसंसारसागरोर्मिभिरनिशं मुह्यमानं, तापत्रयपरीतमात्मानं च जीवलोकं चावलोक्य अस्मिन्संसारमण्डले अनित्याशुचिदुःखात्मकं

आनन्दगिरीय-न्यायनिर्णयः ।

चोदना हि भूतमित्याद्युक्त्या तत्प्रवृत्तेः । न च तस्य विधिशेषित्वेनैव धीः समन्वयसूत्रविरोधादिति भावः । पुंसो बोधे नियोगाभावं दृष्टान्तेन स्पष्टयति—**यथेति** । आनन्तर्यवाचिनोऽथशब्दस्याक्रमार्थत्वे पुष्कलहेतुज्ञानार्थत्वमेवेत्युपसंहरति—**तस्मादिति** । अध्ययनादेर्ब्रह्मजिज्ञासायामसामग्रीत्वात्तथाभूतमन्यदेव वाच्यमित्याह—**उच्यत इति** । शास्त्रीयविधेस्तादृगेवाधिकारनिमित्तमिति मत्वाऽऽह—**नित्येति** । आत्मातिरिक्तं सर्वं कार्यत्वाद् घटवदनित्यमात्मैव नित्योऽकृतकभावत्वादिति निश्चयो नित्यानि-

१ आ० पा० णाक्षार्थावबोधस्तद्वत् ।

**( २ ) इहामुत्रार्थभोगविरागः, ( ३ ) शमदमादिसाधनसम्पत्, ( ४ ) मुमुक्षुत्वं च ॥ तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं, ज्ञातुं च, न विपर्यये ॥**

रत्नप्रभा ।

प्रामाणिकत्वं **पुरस्तादेवोक्तम्** । लौकिकव्यापारान्मनस उपरमः **शमः** । बाह्यकरणानामुपरमो **दमः** । ज्ञानार्थं विहितनित्यादिकर्मसंन्यास **उपरतिः** । शीतोष्णादिद्वन्द्वसहनं—**तितिक्षा** । निद्रालस्यप्रमादत्यागेन मनःस्थितिः **समाधानम्** । सर्वत्राऽऽस्तिकता **श्रद्धा** । एतत्षट्कप्राप्तिः **शमदमादिसम्पत्** । अत्र विवेकादीनामुत्तरोत्तरहेतुत्वेनाधिकारिविशेषणत्वं मन्तव्यम् । तेषामन्वयव्यतिरेकाभ्यां ब्रह्मजिज्ञासाहेतुत्वमाह—**तेष्विति** ॥ अथ कथञ्चित् कुतूहलितया ब्रह्मविचारे प्रवृत्तस्यापि फल-

भामती ।

प्रसंख्यानमुपावर्तते; ततोऽस्यैतादृशान्नित्यानित्यवस्तुविवेकलक्षणात्प्रसंख्यानात्—**इहामुत्रार्थभोगविरागः** भवति । अर्थ्यते प्रार्थ्यत इत्यर्थः । फलमिति यावत् । तस्मिन्विरागोऽनाभोगात्मिकोपेक्षाबुद्धिः । ततः **शमदमादिसाधनसंपत्** । रागादिकषायमदिरामत्तं हि मनस्तेषु तेषु विषयेषूच्चावचमिन्द्रियाणि प्रवर्तयत्, विविधाश्च प्रवृत्तीः पुण्यापुण्यफला भावयत्, पुरुषमतिघोरे विविधदुःखज्वालाजटिले संसारहुतभुजि जुहोति । प्रसंख्यानाभ्यासलब्धवैराग्यपरिपाकभग्नरागादिकषायमदिरामदं तु मनः पुरुषेणावजीयते वशीक्रियते, सोऽयमस्य वैराग्यहेतुको मनोविजयः शम इति वशीकारसंज्ञ इति चाख्यायते । विजितं च मनस्तत्त्वविषयविनियोगयोग्यतां नीयते, सेयमस्य योग्यता दमः । यथा दान्तोऽयं वृषभयुवा हलशकटादिवहनयोग्यः कृत इति गम्यते । आदिग्रहणेन च विषयतितिक्षातदुपरमतत्त्वश्रद्धाः संगृह्यन्ते । अत एव श्रुतिः—'तस्माच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत् सर्वमात्मनि पश्यति' इति । तदेतस्य शमदमादिरूपस्य साधनस्य संपत्प्रकर्षः शमदमादिसाधनसंपत् । ततोऽस्य संसारबन्धनान्मुमुक्षा भवतीत्याह—**मुमुक्षुत्वं च** । तस्य च नित्यशुद्धमुक्तसत्यस्वभावब्रह्मज्ञानं मोक्षस्य कारणमित्युपश्रुत्य तज्जिज्ञासा भवति धर्मजिज्ञासायाः प्रागूर्ध्वं च, तस्मात्तेषामेवानन्तर्यं न धर्मजिज्ञासाया इत्याह—**तेषु हीति** । न केवलं जिज्ञासामात्रमपि तु ज्ञानमपीत्याह—**ज्ञातुं च** । उपसंहरति—

आनन्दगिरीय—न्यायनिर्णयः ।

**त्यवस्तुविवेकः** । वर्तमानदेहस्थितिहेत्वनिषिद्धान्नाद्यतिरिक्तार्थेच्छाविरुद्धा दृढा चेतोवृत्तिरि**हामुत्रार्थभोगविरागः** । लौकिकसर्वबुद्धिव्यापाराणां स्वाधिकारानुपयुक्तानामफलत्वज्ञानपूर्वकस्त्यागः **शमः** । तथारूपबाह्यकरणव्यापारत्यागो **दमः** । सत्त्वशुद्धौ नित्यानामपि विधित एव त्याग **उपरतिः** । शीतोष्णादिद्वंद्वानां स्वाधिकारापेक्षितजीवनविच्छेदकातिरिक्तानां सहिष्णुता **तितिक्षा** । सर्वास्तिकता **श्रद्धा** । विधित्सितश्रवणादिविरोधिनिद्रादिनिरोधेन चेतसोऽवस्थानं **समाधानम्** । एतेषां संपत्तिः **शमदमादिसंपत्** । आत्मनोऽज्ञानतत्कार्यसंबन्धो **बन्धः** । तद्विच्छेदो **मोक्षः** । तदिच्छावत्त्वं **मुमुक्षुत्वम्** । एतेषां पूर्वस्य पूर्वस्योत्तरोत्तरहेतुतया मुमुक्षावसानात्तस्या एव ब्रह्मजिज्ञासाहेतुत्वाद्युक्तममुष्यास्तदानन्तर्यम् । तेषां साक्षात्पारम्पर्याभ्यां तद्धेतुत्वादित्यर्थः । साधनचतुष्टयस्य ब्रह्मविचारादिप्रवृत्तौ दृष्टहेतुत्वमन्वयेनान्वाचष्टे—**तेष्विति** । तत्रैव व्यतिरेकमाह—**नेति** । कथंचित्कुतूहलितया ब्रह्मजिज्ञासायां प्रवृत्तस्यापि फलपर्यन्तज्ञानानुदयाद्व्यतिरेकसिद्धिः । अन्वयव्यतिरेकसिद्धमर्थमुपजीव्याथशब्दव्याख्यामु-

१ क० पा० थेफलभोगवि।

**तस्मादथशब्देन यथोक्तसाधनसम्पत्त्यानन्तर्यमुपदिश्यते ॥ अतश्शब्दो हेत्वर्थः ॥ यस्माद्वेद एवाग्निहोत्रादीनां श्रेयस्साधनानामनित्यफलतां दर्शयति-**

रत्नप्रभा ।

पर्यन्तं तज्ज्ञानानुदयाद्व्यतिरेकसिद्धिः । अथशब्दव्याख्यामुपसंहरति-**तस्मादिति** ॥ ननूक्तविवेकादिकं न सम्भवति । "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्" इत्यादिश्रुत्या कर्मफलस्य नित्यत्वेन ततो वैराग्यासिद्धेः । जीवस्य ब्रह्मस्वरूपमोक्षश्चायुक्तः, भेदात्[1] । तस्य लोष्टादिवत् पुरुषार्थत्वायोगाच्च । ततो न मुमुक्षासम्भव इत्याक्षेपपरिहारार्थः-**अतःशब्दः** ॥ तं व्याचष्टे-**अतःशब्द इति** । अथशब्देनानन्तर्यवाचिना तदवधित्वेनार्थाद्विवेकादिचतुष्टयस्य ब्रह्मजिज्ञासाहेतुत्वं यदुक्तं तस्यार्थिकहेतुत्वस्याक्षेपनिरासायानुवादकोऽतश्शब्द इत्यर्थः । उक्तं विवृणोति-**यस्मादिति** । **तस्मादिति**-उत्तरेण संबन्धः ।

भामती ।

**तस्मादिति** । क्रमप्राप्तमतःशब्दं व्याचष्टे-**अतःशब्दो हेत्वर्थः** । तमेवातःशब्दस्य हेतुरूपमर्थमाह-**यस्माद्वेद एवेति** । अत्रैवं परिचोद्यते-सत्यं यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा भवति । सैव त्वनुपपन्ना, इहामुत्रफलोपभोगविरागस्यानुपपत्तेः । अनुकूलवेदनीयं हि फलम्, इष्टलक्षणत्वात्फलस्य । न चानुरागहेतावस्य वैराग्यं भवितुमर्हति दुःखानुषङ्गदर्शनात्सुखेऽपि वैराग्यमिति चेत्, हन्त भोः सुखानुषङ्गादुःखेऽप्यनुरागो न कस्माद्भवति । तस्मात्सुख उपादीयमाने दुःखपरिहारे प्रयतितव्यम् । अवर्जनीयतया दुःखमागतमपि परिहृत्य सुखमात्रं भोक्ष्यते । तद्यथा मत्स्यार्थी सशल्कान्सकण्टकान्मत्स्यानुपादत्ते, स यावदादेयं तावदादाय विनिवर्तते । यथा वा धान्यार्थी सपलालानि धान्यान्याहरति, स यावदादेयं तावदुपादाय निवर्तते, तस्माद्दुःखभयान्नानुकूलवेदनीयमैहिकं वामुष्मिकं वा सुखं परित्यक्तुमुचितम् । न हि मृगाः सन्तीति शालयो नोप्यन्ते, भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । अपि च दृष्टं सुखं चन्दनवनितादिसङ्गजन्म क्षयितालक्षणेन दुःखेनाघ्रातत्वात् अतिभीरुणा त्यज्येतापि, न त्वामुष्मिकं स्वर्गादि, तस्याविनाशित्वात् । श्रूयते हि-'अपाम सोमममृता अभूम' इति । तथा च 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' । न च कृतकत्वहेतुकं विनाशित्वानुमानमत्र संभवति, नरशिरःकपालशौचानुमानवत्, आगमबाधितविषयत्वात् । तस्माद्यथोक्तसाधनसंपत्त्यभावान्न ब्रह्मजिज्ञासेति प्राप्तम् । एवं प्राप्ते आह भगवान्सूत्रकारः-**अत इति** । तस्यार्थं व्याचष्टे भाष्यकारः-**यस्माद्वेद एवेति** । अयमभिसंधिः-

आनन्दगिरीय-न्यायनिर्णयः ।

पसंहरति-**तस्मादिति** । अथशब्दादानन्तर्यमात्रं शक्त्या दृष्टोऽर्थः । साधनचतुष्टयस्य ब्रह्मजिज्ञासादिप्रवृत्तौ दृष्टहेतुत्वेन जिज्ञासासामग्रीत्वं तेन द्योत्योऽर्थ इति भेदः । क्रमप्राप्तमतःशब्दं व्याकरोति-**अतःशब्द इति** । अथशब्देन हेतोरुक्तत्वादतःशब्देनापि तस्यैवोक्तौ पुनरुक्तिरित्याशंक्य हेतुरूपमर्थमेवाऽह-**यस्मादिति** । तस्मादित्युत्तरेण संबन्धः । अस्यार्थः-अथशब्देनाऽऽनन्तर्योक्तिद्वारा पूर्वनिर्वृत्तब्रह्मजिज्ञासापुष्कलहेतुचतुष्टये विवक्षितेऽपि तदपवादे शङ्किते तन्निरासेन तद्धेतुत्वमतःशब्देनाथशब्दोक्तहेतुवाचिना व्यवस्थाप्यते । तथाहि-कृतकत्वादेर्ध्वंसादौ व्यभिचारादक्षय्यमित्यादिश्रुत्या च विरोधादनित्यत्वासाधकत्वादकृतकत्वस्य प्रागभावे व्यभिचारान्नित्यत्वाहेतुत्वाद्भावत्वविशेषणे चाण्वादौ भावादात्ममात्रनित्यत्वासिद्धेरपरिच्छिन्नत्वस्य प्रतिदेहं भिन्नेष्वात्मस्वभावाद्विभुत्वविवक्षायामाकाशादिषु भावाद्दु-

१ जीवस्य ब्रह्मणः सकाशाद् भेदात् । २ सिद्धस्य ब्रह्मणः ।

"तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" [ छां० ८ । १ । ६ ] इत्यादिः, तथा–ब्रह्मविज्ञानादपि परं पुरुषार्थं दर्शयति–"ब्रह्मविदाप्नोति परम्" [ तै० आर० २ । १ । १ ] इत्यादिः । तस्माद्यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा कर्त्तव्या ॥ ब्रह्मणो जिज्ञासा

---

रत्नप्रभा ।

"यदल्पं तन्मर्त्यं, यत्कृतकं तदनित्यम्" इति न्यायवती "तद्यथेह" [ छा० ८ । १ । ६ ] इत्यादिश्रुतिः कर्मफलाक्षयत्वश्रुतेर्बाधिका । तस्माद् "अतोऽन्यदार्तम्" [ बृ० ३ । ४ । २ ] इति श्रुत्याऽऽनात्ममात्रस्यानित्यत्वविवेकाद्वैराग्यलाभ इति भावः । मुमुक्षां सम्भावयति–**तथेति** ॥ यथा वेदः कर्मफलानित्यत्वं दर्शयति, तथा ब्रह्मज्ञानात् प्रशान्तशोकानलमपारं स्वयंज्योतिरानन्दं दर्शयतीत्यर्थः । जीवत्वादेरध्यासोक्त्या ब्रह्मत्वसम्भव उक्त एवेति भावः । एवमथातःशब्दाभ्यां पुष्कलकारणवतोऽधिकारिणः समर्थनाच्छास्त्रमारब्धव्यमित्याह–**तस्मादिति** ॥ सूत्रवाक्यपूरणार्थमध्याहृतकर्तव्यपदान्वयार्थं ब्रह्मजिज्ञासापदेन विचारं लक्षयितुं तस्य स्वाभिमतसमासकथनेनावयवार्थं दर्शयति–**ब्रह्मण इति** ॥

भामती ।

सत्यं मृगभिक्षुकादयः शक्याः परिहर्तुं पाचकक्षीवलादिभिः, दुःखं त्वनेकविधानेककारणसंपातजमशक्यपरिहारम्, अन्तःसाधनपारतन्त्र्यक्षयितालक्षणयोर्दुःखयोः समस्तकृतकसुखाविनाभावनियमात् । न हि मधुविषसंपृक्तमन्नं विषं परित्यज्य समधु शक्यं शिल्पिवरेणापि भोक्तुम् । क्षयितानुमानोपोद्बलितं च 'तद्यथेह कर्मचितः' इत्यादि वचनं क्षयिताप्रतिपादकम् 'अपाम सोमम्' इत्यादिकं वचनं मुख्यासंभवे जघन्यवृत्तितामापादयति । यथाहुः पौराणिकाः–'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति । अत्र च ब्रह्मपदेन तत्प्रमाणं वेद उपस्थापितः । स च योग्यत्वात् 'तद्यथेह कर्मचितः' इत्यादिरत इति सर्वनाम्ना परामृश्य, हेतुपञ्चम्या निर्दिश्यते । स्यादेतत् । यथा स्वर्गादेः कृतकस्य सुखस्य दुःखानुषङ्गस्तथा ब्रह्मणोऽपीत्यत आह–**तथा ब्रह्मविज्ञानादपीति** । तेनायमर्थः–अतः स्वर्गादीनां क्षयिताप्रतिपादकात्, ब्रह्मज्ञानस्य च परमपुरुषार्थताप्रतिपादकात् आगमात्, यथोक्तसाधनसंपत् ततश्च जिज्ञासेति सिद्धम् । ब्रह्मजिज्ञासापदव्याख्यानमाह–**ब्रह्मण इति** । षष्ठीसमासप्रदर्शनेन प्राचां वृत्तिकृतां

आनन्दगिरीय–न्यायनिर्णयः ।

कृदोषान्नित्यानित्यविवेकायोगाद्वैराग्यादेरपि तदभावेऽभावाद्विशिष्टाधिकार्यभावादनारम्भः शास्त्रस्येत्याशंक्य तन्निरासेन हेतुचतुष्टयमुपपाद्य तद्धेतुत्वमतःशब्दः साधयति । न हि ध्वंसादौ नित्यत्वं प्रागभावादावकृतकत्वमात्मनि वा परिच्छिन्नत्वं यावद्विकारं तु विभाग इति न्यायात् । पुण्यस्याक्षयफलत्वश्रुतिस्तु वस्तुबलप्रवृत्तानुमानानुगृहीतश्रुतिविरोधे न स्वार्थे मानमतो विवेकद्वारा वैराग्यादिभावाद्विशिष्टाधिकारिलाभादारभ्यं शास्त्रमिति । आदिशब्दादतोऽन्यदार्तमित्यादिवाक्यं गृह्यते । मुमुक्षुत्वस्य हेत्वन्तरमाह–**तथेति** । यथा कर्मणामनित्यफलत्वं वेदो दर्शयति तथेति यावत् । परमपुरुषार्थं निरस्तसमस्तदुःखं निरतिशयानन्दमित्यर्थः । अत्राप्यादिशब्देन "तरति शोकमात्मवित्" इत्याद्युच्यते । हेतुचतुष्टयस्य ब्रह्मजिज्ञासासामग्रीत्वे स्थिते परिपूर्णो हेतुरवश्यं कार्यमुत्पादयतीति फलितमुपसंहरति–**तस्मादिति** । अथातःपदे व्याख्याय ब्रह्मजिज्ञासापदस्य वृत्तिकाराभीष्टचतुर्थीसमासनिरासेन षष्ठीसमासमाह–**ब्रह्मण इति** । अवयवार्थस्येच्छायाः कर्मप्रयोजनयोरैक्यात्कर्मणः स्वरूपसाधकत्वेन प्राधान्या-

**ब्रह्मजिज्ञासा ॥ ब्रह्म च वक्ष्यमाणलक्षणं-"जन्माद्यस्य यतः" [ १ । १ । २ ] इति ॥ अत एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरमाशङ्कितव्यम् ॥ ब्रह्मण इति**

रत्नप्रभा ।

**ननु** "धर्माय जिज्ञासा" इतिवद् 'ब्रह्मणे जिज्ञासा' इति चतुर्थीसमासः किं न स्यादिति चेद् **उच्यते ।** जिज्ञासापदस्य हि मुख्यार्थ इच्छा । तस्याः प्रथमं कर्मकारकमपेक्षितम् । पश्चात् फलम् । ततश्चादौ कर्मज्ञानार्थं षष्ठीसमासो युक्तः । कर्मण्युक्ते सत्यर्थात् फलमुक्तं भवति । इच्छायाः कर्मण एव फलत्वात् । **यथा**-स्वर्गस्येच्छेत्युक्ते स्वर्गस्य फलत्वं लभ्यते, **तद्वत्** । अत एव धर्मजिज्ञासेत्यत्रापि सा हि तस्य ज्ञातुमिच्छेतीच्छां गृहीत्वा षष्ठीसमासो दर्शितः । विचारलक्षणायां तु विचारस्य क्लेशात्मकतया प्रथमं फलाकांक्षत्वाद् "धर्माय जिज्ञासा" इति चतुर्थीसमास उक्तः । **तथा** वृत्तिकारैः "ब्रह्मणे जिज्ञासा" इत्युक्तं **चेद**स्तु ज्ञातत्वेन ब्रह्मणः फलत्वादिति । अधुना ब्रह्मपदार्थमाह-**ब्रह्म चेति** ॥ **ननु** "ब्रह्म क्षत्रमिदं ब्रह्म आयाति ब्रह्म स्वयम्भूर्ब्रह्म प्रजापतिः" इतिश्रुतिषु लोके च ब्राह्मणत्वजातौ जीवे वेदे कमलासने च ब्रह्मशब्दः प्रयुज्यत इत्याशंक्याह-**अत एवेति** ॥ जगत्कारणत्वलक्षणप्रतिपादकसूत्रासाङ्गत्यप्रसङ्गादेवेत्यर्थः । वृत्त्यन्तरे शेषे षष्ठीत्युक्तं दूषयति-**ब्रह्मण इतीति** ॥ सम्बन्धसामान्यं शेषः ।

भामती ।

ब्रह्मणे जिज्ञासा ब्रह्मजिज्ञासेति चतुर्थीसमासः परास्तो वेदितव्यः । 'तादर्थ्यसमासे प्रकृतिविकृतिग्रहणं कर्तव्यम्' इति कात्यायनीयवचनेन यूपदार्वादिष्वेव प्रकृतिविकारभूतेषु चतुर्थीसमासनियमात्, अप्रकृतिविकारभूत इत्येवमादौ तन्निषेधात्, 'अश्वघासादयः षष्ठीसमासा भविष्यन्ति' इत्यश्वघासादिषु षष्ठीसमासप्रतिविधानात्। षष्ठीसमासेपि च ब्रह्मणो वास्तवप्राधान्योपपत्तेरिति । स्यादेतत्। ब्रह्मणो जिज्ञासेत्युक्ते तत्रानेकार्थत्वाद्ब्रह्मशब्दस्य संशयः,कस्य ब्रह्मणो जिज्ञासेति। अस्ति ब्रह्मशब्दो विप्रत्वजातौ, यथा ब्रह्महत्येति। अस्ति च वेदे,यथा ब्रह्मोज्झमिति । अस्ति च परमात्मनि, यथा 'ब्रह्म वेद ब्रह्मैव भवति' इति, तमिमं संशयमपाकरोति-**ब्रह्म च वक्ष्यमाणलक्षणमिति** । यतो ब्रह्मजिज्ञासां प्रतिज्ञाय तज्ज्ञापनाय परमात्मलक्षणं प्रणयति ततोऽवगच्छामः परमात्मजिज्ञासैवेयं न विप्रत्वजात्यादिजिज्ञासेत्यर्थः । षष्ठीसमासपरिग्रहेऽपि नेयं कर्मषष्ठी,किंतु शेषलक्षणा, संबन्धमात्रं च शेष इति ब्रह्मणो जिज्ञासेत्युक्ते ब्रह्मसंबन्धिनीजिज्ञासेत्युक्तं भवति । तथा च ब्रह्मस्वरूपप्रमाणयुक्तिसाधनप्रयोजनजिज्ञासाः सर्वा ब्रह्मजिज्ञासार्था ब्रह्मजिज्ञासयावरुद्धा भवन्ति । साक्षात्पारंपर्येण च ब्रह्मसंबन्धात् । कर्मषष्ठ्यां तु ब्रह्मशब्दार्थः कर्म,स च स्वरूपमेवेति तत्प्रमाणादयो नावरुध्येरन्,तथा चाप्रतिज्ञातार्थचिन्ता प्रमाणादिषु भवेदिति ये मन्यन्ते तान्प्रत्याह-**ब्रह्मण**

आनन्दगिरीय-न्यायनिर्णयः ।

कर्मणि षष्ठीसमासः । तादर्थ्यसमासे प्रकृतिविकृतिग्रहणस्य कर्तव्यत्वात्तथाभूतयूपदार्वादौ तद्दृष्टेरश्वघासादौ षष्ठीसमासाङ्गीकारात् । न च धर्माय जिज्ञासेतिवदिहापीति वाच्यम्, षष्ठीसमासस्यैव तत्रापीष्टत्वात्। उक्तं हि-सा हि तस्य ज्ञातुमिच्छेति न चात्र प्रकृतिविकृतित्वं षष्ठीसमासेऽपि ब्रह्मप्राधान्यमार्थिकं, तस्मादवयवार्थे षष्ठीसमासोऽयुक्त इति भावः । किं तद्ब्रह्म यत्कर्मत्वेन फलत्वेन च जिज्ञासाया विवक्षितं तदाह-**ब्रह्मेति** । यतो ब्रह्मजिज्ञासां प्रतिज्ञाय ब्रह्मलक्षणं वक्ष्यत्यतो वृत्तिकारप्रयासो वृथेत्याह-**अत एवेति** । आदिशब्देन जीवकमलासनशब्दराशीनां ग्रहणम् । वृत्त्यन्तरे शेषे षष्ठी व्याख्याता तत्राऽऽह-**ब्रह्मण इतीति** । जिज्ञासापदस्याकारप्रत्ययान्तत्वेन कृद्योगात् 'कर्तृकर्मणोः कृति'

**कर्मणि षष्ठी, न शेषे । जिज्ञास्यापेक्षत्वाज्जिज्ञासायाः, जिज्ञास्यान्तरानिर्देशाच्च ॥ ननु शेषषष्ठीपरिग्रहेऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुध्यते । सम्बन्धसामान्यस्य विशेषनिष्ठत्वात् ।**

---

रत्नप्रभा ।

जिज्ञासेत्यत्र सन्प्रत्ययवाच्याया इच्छाया ज्ञानं कर्म । तस्य ज्ञानस्य ब्रह्म कर्म । तत्र सकर्मकक्रियायाः कर्मज्ञानं विना ज्ञातुमशक्यत्वादिच्छाया विषयज्ञानजन्यत्वाच्च प्रथमापेक्षितं कर्मैव षष्ठ्या वाच्यं, न शेष इत्यर्थः । ननु प्रमाणादिकमन्यदेव तत्कर्मास्तु । ब्रह्म तु शेषितया सम्बध्यतां, तत्राह—**जिज्ञास्यान्तरेति** ॥ श्रुतं कर्म त्यक्त्वान्यदश्रुतं कल्पयन् "पिण्डमुत्सृज्य करं लेढि" इति न्यायमनुसरतीति भावः । गूढाभिसन्धिः शङ्कते—**नन्विति** ॥ "षष्ठी शेषे" [ पा० सू० २ । ३ । ५० ] इति विधानात्षष्ठ्या सम्बन्धमात्रं प्रतीतमपि विशेषाकांक्षायां सकर्मकक्रियासन्निधानात् कर्मत्वे पर्यवस्य-

भामती ।

**इति । कर्मणीति** । अत्र हेतुमाह—**जिज्ञास्येति** । इच्छायाः प्रतिपत्त्यनुबन्धो ज्ञानं, ज्ञानस्य च ज्ञेयं ब्रह्म । न खलु ज्ञानं ज्ञेयं विना निरूप्यते, न च जिज्ञासा ज्ञानं विनेति प्रतिपत्त्यनुबन्धत्वात्प्रथमं जिज्ञासा कर्मैवापेक्षते, न तु संबन्धिमात्रम्, तदन्तरेणापि सति कर्मणि तन्निरूपणात् । न हि चन्द्रमसमादित्यं चोपलभ्य कस्यायमिति संबन्ध्यन्वेषणा भवति । भवति तु ज्ञानमित्युक्ते विषयान्वेषणा किंविषयमिति । तस्मात्प्रथममपेक्षितत्वात् कर्मतयैव ब्रह्म संबध्यते, न संबन्धितामात्रेण, तस्य जघन्यत्वात् । तथा च कर्मणि षष्ठीत्यर्थः । ननु सत्यं न जिज्ञास्यमन्तरेण जिज्ञासा निरूप्यते, जिज्ञास्यान्तरं त्वस्या भविष्यति, ब्रह्म तु शेषतया संभन्त्स्यत इत्यत आह—**जिज्ञास्यान्तरेति** । निगूढाभिप्रायश्चोदयति—**ननु शेषषष्ठीपरिग्रहेऽपीति** । सामान्यसंबन्धस्य विशेषसंबन्धाविरोधेन कर्मताया अविघातेन जिज्ञासानिरूपणोपपत्तेरित्यर्थः ।

आनन्दगिरीय—न्यायनिर्णयः ।

[पा०२–३–६९] इति सूत्रात्कर्मण्येषा षष्ठी। न च "कर्मणि च" इति सूत्रे षष्ठ्याः समासनिषेधाद्ब्रह्मजिज्ञासेति समासासिद्धिः "उभयप्राप्तौ कर्मणि" इति सूत्राया षष्ठी कर्तृकर्मणोरुभयोरपि सामर्थ्याद्युपादानप्राप्तौ कर्मण्येवेति नियमिता तस्या एव समासनिषेधाद्यथाऽऽश्चर्यो गवां दोहोऽगोपालकेनेति । इह तु नोभयप्राप्तिर्ब्रह्मणः कर्मत्वस्यैवेष्टत्वात्कर्तृस्थातिशयस्याविवक्षितत्वात्तस्मात्कर्तृकर्मणोः कृतीत्येवात्र षष्ठीति ब्रह्मजिज्ञासेतिसमाससिद्धिरिति भावः । परपक्षनिषेधमुक्त्वा हेतुमाह—**नेत्यादिना** । कर्मादिभ्योऽन्यः प्रातिपदिकार्थातिरिक्तः स्वस्वामिसंबन्धादिः शेषस्तत्र नैषा षष्ठी किंतु कर्मण्येव जिज्ञासाया जिज्ञास्यापेक्षत्वाज्ज्ञानं हीच्छायाः प्रतिपत्त्यनुबन्धस्तदभावे जिज्ञासानिरूपणाज्ज्ञानस्य ज्ञेयं ब्रह्म तद्विना ज्ञानायोगादतः प्रतिपत्त्यनुबन्धत्वादादौ जिज्ञासा कर्मैवापेक्षते न संबन्धमात्रम् । तेनैषा कर्मण्येव षष्ठीत्यर्थः । जिज्ञासाया जिज्ञास्यापेक्षितत्वेऽपि प्रमाणादि जिज्ञास्यमस्तु, ब्रह्म तु शेषितया संबध्यतामित्याशंक्याह—**जिज्ञास्यान्तरेति** । श्रुतकर्मलाभे नाश्रुतकल्पनेति भावः । प्रमाणादिप्रतिज्ञानां श्रौतत्वमभिप्रेत्य शङ्कते—**नन्विति** । "षष्ठी शेषे" इति संबन्धमात्रे तद्विधानेऽपि व्यवहारस्य विशेषनिष्ठत्वात्सकर्मकक्रियायां कर्मणोऽन्तरङ्गत्वाद्ब्रह्मणा कर्मणा जिज्ञासानिरूपणं सिध्यतीत्यर्थः । एकस्यापि

---

१ ब्रह्माश्रितशेषप्रमाणादिविचारप्रतिज्ञानार्थां शेषषष्ठीं स्वीकार्येत्याशयवान् ।

**एवमपि प्रत्यक्षं ब्रह्मणः कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षं कर्मत्वं कल्पयतो व्यर्थः प्रयासः स्यात् ॥ न व्यर्थो—ब्रह्माश्रिताशेषविचारप्रतिज्ञानार्थत्वादिति चेत् । न, प्रधानपरिग्रहे तदपेक्षितानामर्थाक्षिप्तत्वात् ॥ ब्रह्म हि ज्ञानेनाप्तुमिष्टतमत्वात्प्रधानम् ॥ तस्मिन्प्रधाने जिज्ञासाकर्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति, तान्यर्थाक्षिप्तान्येवेति न पृथक् सूत्रयितव्यानि ॥ यथा राजाऽसौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति, तद्वत् ॥ श्रुत्यनुगमाच्च "यतो**

रत्नप्रभा ।

तीत्यर्थः । अभिसन्धिमजानन्निवोत्तरमाह—**एवमपीति** ॥ कर्मलाभेऽपि प्रत्यक्षं "कर्तृकर्मणोः कृति" [ पा० सू० २ । ३ । ९ ] इति सूत्रेण जिज्ञासापदस्याऽऽवन्तत्वेन कृदन्तस्य योगे विहितं प्रथमापेक्षितं कर्मत्वं त्यक्त्वा परोक्षमशाब्दं कल्पयत इत्यर्थः ॥ शेषवादी स्वाभिसन्धिमुद्घाटयति—**न व्यर्थ इति** ॥ शेषषष्ठ्यां ब्रह्मसम्बन्धिनी जिज्ञासा प्रतिज्ञाता भवति । तत्र यानि ब्रह्माश्रितानि लक्षणप्रमाणयुक्तिज्ञानसाधनफलानि, तेषामपि विचारः प्रतिज्ञातो भवति । तज्जिज्ञासाया अपि ब्रह्मज्ञानार्थत्वेन ब्रह्मसम्बन्धित्वात् । कर्मणि षष्ठ्यां तु ब्रह्मकर्मक एव विचारः प्रतिज्ञातो भवतीत्यभिसन्धिना शेषषष्ठीत्युच्यते । अतो मत्प्रयासो न व्यर्थः । ब्रह्मतत्सम्बन्धिनां सर्वेषां विचारप्रतिज्ञानमर्थः फलं यस्य तत्त्वादित्यर्थः । तत्प्रयासस्येदं फलं न युक्तम्, सूत्रेण मुखतः प्रधानस्य ब्रह्मणो विचारे प्रतिज्ञाते सति तदुपकरणानां विचारस्यार्थिकप्रतिज्ञाया उदितत्वादित्याह सिद्धान्ती—**न प्रधानेति** ॥ संगृहीतमर्थं सदृष्टान्तं व्याकरोति—**ब्रह्म हीत्यादिना** । "तद्विजिज्ञासस्व" इति मूलश्रुत्यनुसाराच्च कर्मणि षष्ठीत्याह—**श्रुत्यनुगमाच्चेति** ॥ श्रुतिसूत्रयोरेकार्थत्वलाभाच्चेत्यर्थः ॥ जिज्ञासापदस्यावयवार्थमाह—

भामती ।

निगूढाभिप्रायं एव दूषयति—**एवमपि प्रत्यक्षं ब्रह्मण इति** । वाच्यस्य कर्मत्वस्य जिज्ञासया प्रथममपेक्षितस्य प्रथमसंबन्धार्हस्य चान्वयपरित्यागेन पश्चात्कथंचिदपेक्षितस्य संबंधिमात्रस्य संबन्धो जघन्यः प्रथमः, प्रथमश्च जघन्य इति सुव्याहृतं न्यायतत्त्वम् । प्रत्यक्षपरोक्षाभिधानं च प्राथम्याप्राथम्यस्फुटत्वास्फुटत्वाभिप्रायम् । चोदकः स्वाभिप्रायमुद्घाटयति—**न व्यर्थः, ब्रह्माश्रिताशेषेति** । व्याख्यातमेतदधस्तात् । समाधाता स्वाभिसंधिमुद्घाटयति—**न प्रधानपरिग्रह इति** । वास्तवं प्राधान्यं ब्रह्मणः । शेषं सनिदर्शनमतिरोहितार्थं,

आनन्दगिरीय—न्यायनिर्णयः ।

प्रधानस्य श्रौतत्वं न बहूनामपि गुणानामिति समाधत्ते—**एवमपीति** । प्रत्यक्षं शब्दवाच्यं प्रथमापेक्षितं वा । परोक्षमार्थिकं जघन्यं वा ॥ शेषषष्ठीवादी स्वाभिप्रायमाह—**नेत्यादिना** । शेषषष्ठीपक्षे सामान्येन यत्किंचिद्ब्रह्मयोगि मानयुक्त्यादि तत्सर्वं जिज्ञास्यत्वेनोक्तं स्यात्प्रतिज्ञातव्यं चैतत्, अन्यथा विचार्यत्वायोगात् । अतः संबन्धमात्रमेवात्रेष्टं सामान्ये विशेषान्तर्भावादित्यर्थः ॥ सिद्धान्ती स्वाभिसंधिमाह—**न प्रधानेति** । मानादीनामपि स्वविचारेषु तुल्यं प्राधान्यं नेत्याह—**ब्रह्मेति** । तथाऽपि ब्रह्मोपास्यमित्युक्ते मानाद्यजिज्ञासावत्प्रकृतेऽपीत्याशंक्याऽऽह—**तस्मिन्निति** । अप्रधानानां मुख्यवृत्त्या शब्दोपादानं प्रधानस्यार्थाक्षेपश्चोचितोक्तिसंभवो नेति भावः ॥ उक्तमर्थं दृष्टान्तेन स्फुटयति—**यथेति** । कर्मणिषष्ठीत्यत्र युक्त्यन्तरमाह—**श्रुतीति** । एतत्सूत्रमूलश्रुतौ ब्रह्मणः कर्मत्वदृष्टेः सूत्रेऽपि षष्ठ्या तदेव ग्राह्य-

---

१ "अ प्रत्ययाद्" इति सूत्रेण अकारप्रत्ययो विहितः ।

वा इमानि भूतानि जायन्ते" [ तै० आ० २।३।१।१ ] इत्याद्याः श्रुतयः, "तद्विजिज्ञासस्व तद्ब्रह्म" [ तै० आ० २।३।१।१ ] इति प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं दर्शयन्ति ॥ तच्च कर्मणि षष्ठीपरिग्रहे सूत्रेणानुगतं भवति ॥ तस्माद्ब्रह्मण इति कर्मणि षष्ठी ॥ ज्ञातुमिच्छा जिज्ञासा । अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्मफलविषयत्वादिच्छायाः ॥ ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म ॥ ब्रह्मावगतिर्हि पुरुषार्थः ॥

रत्नप्रभा ।

**ज्ञातुमिति** ॥ नन्वनवगते वस्तुनीच्छाया अदर्शनात्तस्या मूलं विषयज्ञानं वक्तव्यं, ब्रह्मज्ञानं तु जिज्ञासायाः फलं, तदेव मूलं कथमित्याशंक्याह—**अवगतीति** ॥ आवरणनिवृत्तिरूपाभिव्यक्तिमच्चैतन्यमवगतिः पर्यन्तोऽवधिर्यस्याऽखण्डसाक्षात्कारवृत्तिज्ञानस्य तदेव जिज्ञासायाः कर्म, तदेव फलम् । मूलं त्वापातज्ञानमित्यधुना वक्ष्यत इति फलमूलज्ञानयोर्भेदान्न जिज्ञासानुपपत्तिरित्यर्थः । ननु गमनस्य ग्रामः कर्म, तत्प्राप्तिः फलमिति भेदात् कर्मैव फलमित्ययुक्तं तत्राह—**फलेति** ॥ क्रियान्तरे तयोर्भेदेऽपीच्छायाः फलविषयत्वात् कर्मैव फलमित्यर्थः । ननु ज्ञानावगत्योरैक्याद्भेदोक्तिरयुक्तेत्यत आह—**ज्ञानेनेति** । ज्ञानं वृत्तिः, अवगतिस्तत्फलमिति भेद इति भावः ॥ **अवगन्तुम्** अभिव्यञ्जयितुम् । अवगतेः फलत्वं स्फुटयति—**ब्रह्मेति** ॥

भामती ।

श्रुत्यनुगमश्चातिरोहितः । तदेवमभिमतं समासं व्यवस्थाप्य जिज्ञासापदार्थमाह—**ज्ञातुमिति** । स्यादेतत् । न ज्ञानमिच्छाविषयः। सुखदुःखावाप्तिपरिहारौ वा तदुपायौ वा तद्द्वारेणेच्छागोचरः । न चैवं ब्रह्मविज्ञानम् । न खल्वेतदनुकूलमिति वा प्रतिकूलनिवृत्तिरिति वानुभूयते । नापि तयोरुपायः, तस्मिन्सत्यपि सुखभेदस्यादर्शनात् । अनुवर्तमानस्य च दुःखस्यानिवृत्तेः । तस्मान्न सूत्रकारवचनमात्रादिषिकर्मता ज्ञानस्येत्यत आह—**अवगतिपर्यन्तमिति** । न केवलं ज्ञानमिष्यते किं त्ववगतिं साक्षात्कारं कुर्वदवगतिपर्यन्तं सन्वाच्याया इच्छायाः कर्म । कस्मात् । फलविषयत्वादिच्छायाः, तदुपायं फलपर्यन्तं गोचरयतीच्छेति शेषः । ननु भवत्ववगतिपर्यन्तं ज्ञानं, किमेतावतापीष्टं भवति । न ह्यनपेक्षणीयविषयमवगतिपर्यन्तमपि ज्ञानमिष्यत इत्यत आह—**ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म** । भवतु ब्रह्मविषयावगतिः, एवमपि कथमिष्टेत्यत आह—**ब्रह्मावगतिर्हि पुरुषार्थः** । किमभ्युदयः, न, किंतु निःश्रेयसं विगलितनिखिलदुःखानुषङ्गपरमानन्दघनब्रह्मावगतिर्ब्रह्मणः स्वभाव इति सैव निःश्रेयसं पुरुषार्थ इति । स्यादेतत्, न ब्रह्मावगतिः पुरुषार्थः, पुरुषव्यापारव्याप्यो हि पुरुषार्थः । न चास्या ब्रह्मस्वभावभूताया उत्पत्तिविकारसंस्कारप्राप्तयः संभवन्ति । तथा सत्यनित्यत्वेन तत्स्वाभाव्यानुपपत्तेः । न चोत्पत्त्याद्यभावे व्यापारव्याप्यता । तस्मान्न ब्रह्मावगतिः पुरुषार्थः इत्यत

आनन्दगिरीय—न्यायनिर्णयः ।

मिति भावः । कथं कूटस्थस्य ब्रह्मणः श्रुतौ कर्मत्वमुक्तं तत्राऽऽह—**यत इति** । प्रत्यक्षमिति स्फुटत्वोक्तिरविद्याद्वारा तत्कर्मत्वश्रुतिरिति भावः । श्रौतेऽपि कर्मत्वे ब्रह्मणः सौत्रे शेषत्वमेव किं न स्यात्तत्राऽऽह—**तच्चेति** । न हि श्रुतिसूत्रयोर्मूलमूलिनोर्विप्रतिपत्तिर्युक्तेति भावः ॥ पञ्च्यर्थमुपसंहरति—**तस्मादिति** । जिज्ञासापदस्यावयवार्थमाह—**ज्ञातुमिति** । ब्रह्मणि ज्ञाते तज्ज्ञानस्याऽऽप्तत्वात्तदिच्छायोगादज्ञातविशेषणाज्ञानात्तज्ज्ञानेच्छासिद्धेर्न जिज्ञासेत्याशंक्याऽऽह—**अवगतीति** । ज्ञानावगत्योरैक्यात्कथं भेदकथेत्याशंक्य हेतुफलभावेनेत्याह—**ज्ञानेनेति** । ब्रह्मावगतेरपीष्टानिष्टप्राप्तिहानितद्धेतुत्वाभावान्नेष्टत्वमित्याशङ्क्योक्तं **ब्रह्मेति** ।

१ फलकर्मणोः ।

**निश्शेषसंसारबीजाविद्याद्यनर्थनिबर्हणात् ॥ तस्माद्ब्रह्म जिज्ञासितव्यम् ॥ तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात् ?**

रत्नप्रभा ।

हिशब्दोक्तं हेतुमाह—**निश्शेषेति** ॥ बीजमविद्या आदिर्यस्यानर्थस्य तन्नाशकत्वादित्यर्थः । अन्वयार्थमुक्त्वा सूत्रवाक्यार्थमाह—**तस्मादिति** ॥ अत्र सन्प्रत्ययस्य विचारलक्षकत्वं तव्यप्रत्ययेन सूचयति । अथातःशब्दाभ्यामधिकारिणः साधितत्वात्तेन ब्रह्मज्ञानाय विचारः कर्तव्य इत्यर्थः । **इति तृतीयवर्णकम्** ॥ प्रथमवर्णके बन्धस्याध्यासत्वोक्त्या विषयादिसिद्धावपि ब्रह्मप्रसिद्ध्यप्रसिद्ध्योर्विषयादिसम्भवासम्भवाभ्यां शास्त्रारम्भसन्देहे पूर्वपक्षमाह—**तत्पुनरिति** ॥ पुनःशब्दो वर्णकान्तरद्योतनार्थः । यदि वेदान्तविचारात् प्रागेव ब्रह्म ज्ञातम्, तर्ह्यज्ञातत्वरूपविषयत्वं नास्ति । अज्ञानाभावेन तन्निवृत्तिरूपफल-

भामती ।

आह—**निःशेषसंसारबीजाविद्याद्यनर्थनिबर्हणात्** । सत्यम्, ब्रह्मावगतौ ब्रह्मस्वभावे नोत्पत्त्यादयः संभवन्ति, तथाप्यनिर्वचनीयानाद्यविद्यावशाद्ब्रह्मस्वभावोऽपराधीनप्रकाशोऽपि प्रतिभानपि न प्रतिभातीव पराधीनप्रकाश इव देहेन्द्रियादिभ्यो भिन्नोऽप्यभिन्न इव भासत इति संसारबीजाविद्याद्यनर्थनिबर्हणात्प्रागप्राप्त इव तस्मिन्सति प्राप्त इव भवतीति पुरुषेणार्थ्यमानत्वात्पुरुषार्थ इति युक्तम् । अविद्यादीत्यादिग्रहणेन तत्संस्कारोऽवरुध्यते । अविद्यादिनिवृत्तिस्तूपासनाकार्यादन्तःकरणवृत्तिभेदात् साक्षात्कारादिति द्रष्टव्यम् । उपसंहरति—**तस्माद्ब्रह्म जिज्ञासितव्यम्** । उक्तलक्षणेन मुमुक्षुणा । न खलु तज्ज्ञानं विना सवासनविविधदुःखनिदानमविद्योच्छिद्यते । न च तदुच्छेदमन्तरेण विगलितनिखिलदुःखानुषङ्गानन्दघनब्रह्मात्मतासाक्षात्काराविर्भावो जीवस्य । तस्मादानन्दघनब्रह्मात्मतामिच्छता तदुपायो ज्ञानमेषितव्यम् । तच्च न केवलेभ्यो वेदान्तेभ्योऽपि तु ब्रह्ममीमांसोपकरणेभ्य इति इच्छानिभेन ब्रह्ममीमांसायां प्रवर्त्यते, न तु वेदान्तेषु तदर्थविवक्षायां वा । तत्र फलवदर्थावबोधपरतां स्वाध्यायाध्ययनविधेः सूत्रयता 'अथातो धर्मजिज्ञासा' इत्यनेनैव प्रवर्तितत्वात्, धर्मग्रहणस्य च वेदार्थोपलक्षणत्वेनाधर्मवद्ब्रह्मणोऽप्युपलक्षणात् । यद्यपि च धर्ममीमांसावत् वेदार्थमीमांसया ब्रह्ममीमांसाप्याक्षेप्तुं शक्यते, तथापि प्राच्या मीमांसया न तद्व्युत्पाद्यते, नापि ब्रह्ममीमांसाया अध्ययनमात्रानन्तर्यमिति ब्रह्ममीमांसारम्भाय नित्यानित्यविवेकाद्यानन्तर्यप्रदर्शनाय चेदं सूत्रमारम्भणीयमित्यपौनरुक्त्यम् । स्यादेतत् । एतेन सूत्रेण ब्रह्मज्ञानं प्रत्युपायता मीमांसायाः प्रतिपाद्यत इत्युक्तं, तदयुक्तं विकल्पासहत्वादिति चोदयति—**तत्पुनर्ब्रह्मेति** । वेदान्तेभ्योऽपौरुषेयतया स्वतःसिद्धप्रामाण्येभ्यः प्रसिद्धमप्रसिद्धं वा स्यात् । यदि प्रसिद्धं, वेदान्तवाक्य-

आनन्दगिरीय—न्यायनिर्णयः ।

पुमर्थत्वे तस्या हेतुं हिशब्दसूचितं विशदयति—**निःशेषेति** । समस्तसंसारबीजमनादिरविद्या तस्यास्तामादित्वेनाऽऽदाय प्रवृत्तानर्थस्य च तस्यैव संसारस्योक्तावगत्या ध्वस्तेरिति यावत् । सूत्राक्षरव्याख्यामुपसंहरति—**तस्मादिति** । विशिष्टाधिकारिसत्त्वं तदर्थः । ब्रह्म ज्ञातुकामेन ब्रह्म विचारयितव्यमिदं शास्त्रं श्रोतव्यमित्यर्थः । बन्धमिथ्यात्वेन सिद्धेऽपि विषयादौ विधान्तरेण तदाक्षिप्य समाधातुं वर्णकान्तरमवतारयन्नादावाक्षिपति—**तदिति** । प्रागेव जिज्ञासायास्तद्ब्रह्म कुतश्चिज्ज्ञातमज्ञातं वेति विकल्पार्थः । आद्ये शास्त्राप्रतिपाद्यतया नास्य ब्रह्म विषयोऽनन्यलभ्यत्वाभावादतोऽनेनानवगमान्नास्य फलमपि तदव-

१ आ० पा० ब्रह्मविजिज्ञा ।

**यदि प्रसिद्धं, न जिज्ञासितव्यम् ॥ अथाऽप्रसिद्धम् । नैव शक्यं जिज्ञासितुमिति ॥ उच्यते ॥ अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं-**

रत्नप्रभा ।

मपि नास्तीति न विचारयितव्यम् । अथाज्ञातं केनापि तर्हि तदुद्देशेन विचारः कर्तुं न शक्यते । अज्ञातस्योद्देशायोगात् । तथा च बुद्धावनारूढस्य विचारात्मकशास्त्रेण वेदान्तैश्च प्रतिपादनायोगात् । तत्प्रतिपाद्यत्वरूपः सम्बन्धो नास्तीति ज्ञानानुत्पत्तेः फलमपि नास्तीत्यनारभ्यं शास्त्रमित्यर्थः । आपातप्रसिद्ध्या विषयादिलाभादारम्भणीयमिति सिद्धान्तयति—**उच्यत इत्यादिना** । प्रसिद्धं तावदित्यर्थः । अस्तित्वस्याप्रकृतत्वेनास्तिपदस्य प्रसिद्धिपरत्वात् । **ननु** केन मानेन ब्रह्मणः प्रसिद्धिः । **न च** "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुत्या सेति **वाच्यम्,** ब्रह्मपदस्य लोके सङ्गतिग्रहाभावेन

भामती ।

समुत्थेन निश्चयज्ञानेन विषयीकृतं, ततो न जिज्ञासितव्यं, निष्पादितक्रिये कर्मणि अविशेषाधायिनः साधनस्य साधनन्यायातिपातात् । अथाप्रसिद्धं वेदान्तेभ्यस्तर्हि न तद्वेदान्ताः प्रतिपादयन्तीति सर्वथाऽप्रसिद्धं नैव शक्यं जिज्ञासितुम् । अनुभूते हि प्रिये भवतीच्छा न तु सर्वथाऽननुभूतपूर्वे । न चेष्यमाणमपि शक्यं ज्ञातुं, प्रमाणाभावात् । शब्दो हि तस्य प्रमाणं वक्तव्यम् । यथा वक्ष्यति—'शास्त्रयोनित्वात्' इति । स चेत्तन्नावबोधयति, कुतस्तस्य तत्र प्रामाण्यम् । न च प्रमाणान्तरं ब्रह्मणि प्रक्रमते । तस्मात्प्रसिद्धस्य ज्ञातुं शक्यस्याप्यजिज्ञासनात्, अप्रसिद्धस्येच्छाया अविषयत्वात्, अशक्यज्ञानत्वाच्च न ब्रह्म जिज्ञास्यमित्याक्षेपः । परिहरति—**उच्यते—अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावम्** । अयमर्थः—प्रागपि ब्रह्ममीमांसाया अधीतवेदस्य निगमनिरुक्तव्याकरणादिपरिशीलनविदितपदतदर्थसंबन्धस्य 'सदेव सोम्येदमग्र आसीत्' इत्युपक्रमात्, 'तत्त्वमसि' इत्यन्तात्संदर्भात् नित्यत्वाद्युपेतब्रह्मस्वरूपावगमस्तावदापाततो विचाराद्विनाप्यस्ति । अत्र च ब्रह्मेत्यादिनावगम्येन तद्विषयमवगमं लक्षयति, तदस्तित्वस्य सति विमर्शे विचारात्प्रागनिर्णयात् । नित्येति क्षयितालक्षणं दुःखमुपक्षिपति । शुद्धेति देहाद्युपाधिकमपि दुःखमपाकरोति । बुद्धेत्यपराधीनप्रकाशमानन्दात्मानं दर्शयति, आनन्दप्रकाशयोरभेदात् । स्यादेतत् । मुक्तौ सत्यामस्यैते शुद्धत्वादयः प्रथन्ते, ततस्तु प्राक् देहाद्यभेदेन तद्धर्मजन्मजरामरणादिदुःखयोगादित्यत उक्तम्—**मुक्तेति** । सदैव मुक्तः सदैव केवलोऽनाद्यविद्यावशात्तु भ्रान्त्या तथावभासत इत्यर्थः । तदेवमनौपाधिकं ब्रह्मणो

आनन्दगिरीय—न्यायनिर्णयः ।

गतिरिति विषयाद्यसिद्धिरित्याह—**यदीति** । यन्न कदाचिदपि केनचिदाकारेण बुद्धावारोहति तस्य प्रतिपाद्यत्वेऽशक्यप्रतिपाद्यतया न शास्त्रेण संबन्धोऽप्रतिपाद्यत्वे तदवगतिर्न फलमपीति संबन्धाद्यसिद्ध्या द्वितीयं दूषयति—**अथेत्यादिना** । ब्रह्मणः सामान्यतो ज्ञातस्य विशेषतो विना विचारमज्ञानाद्विचारयोग्यतेति त्रितयमपि समाधत्ते—**उच्यत इति** । तत्र प्रसिद्धत्वोक्त्या ब्रह्मणः शक्यप्रतिपाद्यतया संबन्धं साधयति—**अस्तीति** । प्रसिद्धत्वमस्तित्वम् । प्रसिद्धमप्रसिद्धं वेत्यधिकारात् । ब्रह्मणो निरुपाधिकं रूपमाह—**नित्येति** । कार्यैक्यव्यावृत्त्यै नित्यपदम् । तत्तादात्म्यं व्यासेद्धुं **शुद्धेति** । अखण्डजाड्यस्वाभाव्यं व्यावर्तयति—**बुद्धेति** । तादृग्जाड्यैक्याभासेनाध्यस्तचैतन्यं व्युदस्यति—**मुक्तेति** । मोक्षावस्थायामेव नित्यत्वादीत्याशङ्क्याऽऽह—**स्वभावमिति** । भानाभानकृता मुक्तिबन्धयोर्भेदबुद्धिरिति भावः । सोपा-

१ आ॰ पा॰ यदि तत्प्रसिद्धम् । २ प्रमाणेनेति शेषः ।

**सर्वज्ञं सर्वशक्तिसमन्वितं ब्रह्म ॥ ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते ॥ बृहतेर्धातोरर्थानुगमात्, सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः—**

रत्नप्रभा ।

तद्घटितवाक्यस्याबोधकत्वादित्याशंक्य ब्रह्मपदव्युत्पत्त्या प्रथमं तस्य निर्गुणस्य सगुणस्य च प्रसिद्धिरित्याह—**ब्रह्मशब्दस्य हीति** ॥ **अस्यार्थः**—श्रुतौ सूत्रे ब्रह्मशब्दस्य प्रयोगान्यथानुपपत्त्या कश्चिदर्थोऽस्तीति ज्ञायते । प्रमाणवाक्ये निरर्थकशब्दप्रयोगादर्शनात् । स चार्थो महत्त्वरूप इति व्याकरणान्निश्चीयते । "बृहि वृद्धौ" [ पा०धातु०भ्वा० ] इति स्मरणात् । सा च वृद्धिर्निरवधिकमहत्त्वमिति, संकोचकाभावाच्छ्रुतावनन्तपदेन सह प्रयोगाच्च ज्ञायते । निरवधिकमहत्त्वं चान्तवत्त्वादिदोषवत्त्वे सर्वज्ञत्वादिगुणहीनत्वे च न सम्भवति । लोके गुणहीनदोषवतोरल्पत्वप्रसिद्धेः । अतो बृंहणाद् ब्रह्मेति व्युत्पत्त्या देशकालवस्तुतः परिच्छेदाभावरूपं नित्यत्वं प्रतीयते । अविद्यादिदोषशून्यत्वं—**शुद्धत्वम्** । जाड्यराहित्यं **बुद्धत्वम्** । बन्धकालेऽपि स्वतो बन्धाभावः—**मुक्तत्वम्** । च प्रतीयते । **एवं** सकलदोषशून्यं निर्गुणं प्रसिद्धम् । तथा सर्वज्ञत्वादिगुणकं च तत्पदवाच्यं प्रसिद्धम् । ज्ञेयस्य कार्यस्य चापरिशेषेऽल्पत्वप्रसंगेन सर्वज्ञत्वस्य सर्वकार्यशक्तिमत्त्वस्य चालाभादिति । **एवं** तत्पदात्प्रसिद्धेरप्रमाणत्वेनापातत्वादज्ञानानिवर्तकत्वाज्जिज्ञासोपपत्तिरित्युक्त्वा त्वंपदार्थात्मनापि ब्रह्मणः प्रसिद्ध्या तदुपपत्तिरित्याह—**सर्वस्येति** ॥ सर्वस्य लोकस्य

भामती ।

रूपं दर्शयित्वाऽविद्योपाधिकं रूपमाह—**सर्वज्ञं सर्वशक्तिसमन्वितम्** । तदनेन जगत्कारणत्वमस्य दर्शितं, शक्तिज्ञानभावाभावानुविधानात्कारणत्वभावाभावयोः । कुतः पुनरेवंभूतब्रह्मस्वरूपावगतिरित्यत आह—**ब्रह्मशब्दस्य हीति** । न केवलं 'सदेव सोम्येदम्' इत्यादीनां वाक्यानां पौर्वापर्यालोचनया इत्थंभूतब्रह्मावगतिः । अपि तु ब्रह्मपदमपि निर्वचनसामर्थ्यादिममेवार्थं स्वहस्तयति । निर्वचनमाह—**बृहतेर्धातोरर्थानुगमात्** । वृद्धिकर्मा हि बृहतिरतिशायने वर्तते । तच्चेदमतिशायनमनवच्छिन्नं पदान्तरावगमितं नित्यशुद्धबुद्धत्वाद्यस्याभ्यनुजानातीत्यर्थः । तदेवं तत्पदार्थस्य शुद्धत्वादेः प्रसिद्धिमभिधाय त्वंपदार्थस्याप्याह—**सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः** । सर्वस्य पांसुलपा-

आनन्दगिरीय-न्यायनिर्णयः ।

धिकं ब्रह्मरूपमाह—**सर्वज्ञमिति** । ननु न सामान्येनापि लोके ब्रह्म ज्ञातं तस्योक्तरूपस्याध्यक्षाद्यगम्यत्वान्नापि श्रुत्या तद्धीस्तद्गतब्रह्मशब्दस्याज्ञातसंगतित्वादत एव न पदमात्रादपि तद्धीस्तत्राऽऽह—**ब्रह्मेति** । श्रुतिसूत्रयोर्ब्रह्मशब्दोऽन्यथानुपपन्नो निगमाद्यनुगृहीतो विशिष्टवाक्यार्थान्वयिपदार्थाकांक्षानुगृहीतश्च नियतपदार्थधीहेतुतया विशिष्टेऽपि ब्रह्मणि संभावनाहेतुरिति युक्ता तस्य प्रसिद्धिरित्यर्थः । बृंहतिधात्वालोचनायामपि तत्प्रसिद्धिरित्याह—**बृंहतेरिति** । संकोचकप्रकरणोपपदाभावे वृद्धिकर्मणो बृंहतिधातोर्निरंकुशमहत्त्वबोधित्वादवच्छेदत्रयशून्यत्वसिद्धेर्नित्यपदस्य तत्परत्वाद्दोषभूयिष्ठत्वाद्यभावेन शुद्धत्वादजडत्वेन बुद्धत्वादविद्यापरतन्त्रतया मुक्तत्वात्कुतश्चिदप्यव्यावृत्तज्ञानशक्तितया सर्वज्ञतादिसिद्धेर्धात्वर्थानुरोधादेवोक्तब्रह्मसिद्धिः । नित्यत्वादिशून्ये निरंकुशमहत्त्वायोगात्तथा च पदशक्तेरेव प्रसिद्धं ब्रह्मेत्यर्थः । तत्पदार्थस्य नित्यत्वादिना प्रसिद्धिमुक्त्वा त्वंपदार्थात्मनाऽपि प्रसिद्धिमाह—**सर्वस्येति** । आत्माऽपि प्रत्यक्षाद्यगोचरत्वात्प्र-

१ व्यापनात् । २ तत्त्वमसीत्यादौ । ३ तत्त्वमसीत्यादौ । ४ तत्त्वमसीत्यादौ ।

**सर्वो ह्यात्मास्तित्वं प्रत्येति–न नाहमस्मीति ॥ यदि हि नात्मास्तित्वप्रसिद्धिस्स्यात्, सर्वो लोको नाहमस्मीति प्रतीयात् ॥ आत्मा च ब्रह्म ॥ यदि तर्हि लोके ब्रह्माऽऽत्मत्वेन प्रसिद्धमस्ति, ततो ज्ञातमेवेत्यजिज्ञास्यत्वं पुनरापन्नम् ॥ न ॥ तद्विशेषं प्रति विप्रतिपत्तेः–**

---

रत्नप्रभा ।

योऽयमात्मा तदभेदाद् ब्रह्मणः प्रसिद्धिरित्यर्थः । नन्वात्मनः प्रसिद्धिः केत्यत आह–**सर्वो हीति** ॥ अहमस्मीति न प्रत्येतीति न । किन्तु प्रत्येत्येव । सैव सच्चिदात्मनः प्रसिद्धिरित्यर्थः । आत्मनः कुतः सत्तेति शून्यमतमाशंक्याह–**यदि हीति**॥आत्मनः शून्यस्य प्रतीतावहं नास्मीति लोको जानीयात् । लोकस्तु अहमस्मीति जानाति, तस्मादात्मनोऽस्तित्वप्रसिद्धिरित्यर्थः । आत्मप्रसिद्धावपि ब्रह्मणः किमायातं तत्राह–**आत्मा चेति** ॥ "अयमात्मा ब्रह्म" [ बृ० २।५।१९ ] इत्यादिश्रुतेरिति भावः । प्रसिद्धिपक्षोक्तं दोषं पूर्वपक्षेण स्मारयति–**यदीति** ॥ अज्ञातत्वाभावेन विषयाद्यभावादविचार्यत्वं प्राप्तमित्यर्थः । यथा–इदं रजतमिति वस्तुतः शुक्तिप्रसिद्धिः, तद्वदहमस्मीति सत्त्वचैतन्यरूपात्मत्वसामान्येन वस्तुतो ब्रह्मणः प्रसिद्धिः । नेयं पूर्णानन्दब्रह्मत्वरूपविशेषगोचरा । वादिनां विवादाभावप्रसङ्गात् । न हि शुक्तित्वविशेषदर्शने सति रजतं रङ्गमन्यद्वेति विप्रतिपत्तिरस्ति । अतो विप्रतिपत्त्यन्यथानुपपत्त्या सामान्यतः प्रसिद्धावपि विशेषस्याज्ञातत्वाद्विषयादिसिद्धिरिति सिद्धान्तयति–**नेत्यादिना** ॥ सामान्यविशेषभावस्त्वात्मनि सच्चित्पूर्णादिपद-

भामती ।

दकस्य हालिकस्यापि ब्रह्मास्तित्वप्रसिद्धिः, कुतः, आत्मत्वात् । एतदेव स्फुटयति–**सर्वो हीति** । प्रतीतिमेवाप्रतीतिनिराकरणेन द्रढयति–**न नेति** । न न प्रत्येत्यहमस्मीति, किंतु प्रत्येत्येवेति योजना । नन्वहमस्मीति च ज्ञास्यति मा च ज्ञासीदात्मानमित्यत आह–**यदीति** । **अहमस्मीति न प्रतीयात्** । अहंकारास्पदं हि जीवात्मानं चेन्न प्रतीयात्, अहमिति न प्रतीयादित्यर्थः । ननु प्रत्येतु सर्वो जन आत्मानमहंकारास्पदं ब्रह्मणि तु किमायातमित्यत आह–**आत्मा च ब्रह्म** । तदस्त्वमा सामानाधिकरण्यात् । तस्मात्तत्पदार्थस्य शुद्धबुद्धत्वादेः शब्दतः, त्वंपदार्थस्य च जीवात्मनः प्रत्यक्षतः प्रसिद्धेः, पदार्थज्ञानपूर्वकत्वाच्च वाक्यार्थज्ञानस्य, त्वंपदार्थस्य ब्रह्मभावावगमः 'तत्त्वमसि' इति वाक्यादुपपद्यत इति भावः । आक्षेप्ता प्रथमकल्पाश्रयं दोषमाह–**यदि तर्हि लोक इति** । अध्यापकाध्येतृपरंपरा लोकः । तत्र 'तत्त्वमसि' इतिवाक्याद्यदि ब्रह्मात्मत्वेन प्रसिद्धमस्ति । आत्मा ब्रह्मत्वेनेति वक्तव्ये ब्रह्मात्मत्वेनेत्यभेदविवक्षया गमयितव्यम् । परिहरति–**न** । कुतः, **तद्विशेषं प्रति विप्रतिपत्तेः** । तदनेन विप्रतिपत्तिः साधकबा-

आनन्दगिरीय–न्यायनिर्णयः ।

सिद्धो नेत्याशङ्कयाऽऽह–**सर्वो हीति** । प्रमाणाप्रमाणसाधारणीं प्रतीतिमप्रतीतिनिरासेन स्फोरयति–**न नेति** । अहमस्मीति न न प्रत्येति किंतु प्रत्येत्येवेति योजना । आत्मनः शून्यस्यैव प्रतीतेर्नास्तित्वप्रसिद्धिरिति शून्यवादमाशङ्कयाऽऽह–**यदीति** । आत्मनः शून्यस्य प्रतीतावहं नास्मीति प्रतीतिः स्यात्सर्वश्च लोकोऽहमस्मीति प्रत्येत्यतस्तदस्तित्वधीरित्यर्थः । आत्मप्रसिद्धावपि कथं ब्रह्मप्रसिद्धिस्तत्राऽऽह–**आत्मा चेति** । चैतन्याविशेषादयमात्मा ब्रह्मेत्यादिश्रुतेश्च ब्रह्मात्मनोरैक्यमित्यर्थः । प्रसिद्धत्वोक्त्या संबन्धादौ सिद्धे तत्पक्षोक्तं दोषं स्मारयति पूर्वपक्षी–**यदीति** । व्यवहारभूमौ विना विचारमात्मत्वेन ब्रह्म यदि प्रसिद्धमस्ति तर्हि ततो लोकादेव ज्ञातं ब्रह्मेत्यनन्यालभ्यत्वेन शास्त्राविषयत्वात्तदवगतेश्चाफलत्वात्पुनरपि प्राप्तमजिज्ञास्यत्वमिति योजना । धर्मे प्रति विप्रतिपन्ना बहुविद इतिन्यायेन परिहरति–**नेत्यादिना** । आत्मनोऽहमिति प्रत्यात्मं प्रसिद्धत्वेऽपि तद्विशेषे

**देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लोकायतिकाश्च प्रतिपन्नाः॥ इन्द्रियाण्येव चेतनान्यात्मेत्यपरे॥ मन इत्यन्ये॥ इन्द्रियाणि मनो वेति तदेकदेशिनः॥ विज्ञानमात्रं क्षणिकमित्येके॥ शून्यमित्यपरे॥ अस्ति देहादिव्यतिरिक्तस्संसारी कर्ता भोक्तेत्यपरे॥**

रत्नप्रभा।

वाच्यभेदात् कल्पित इति मन्तव्यम्। तत्र स्थूलसूक्ष्मक्रमेण विप्रतिपत्तीरुपन्यस्यति-**देहमात्रमित्यादिना**। शास्त्रज्ञानशून्याः-**प्राकृताः**। वेदबाह्यमतान्युक्त्वा तार्किकादिमतमाह-**अस्तीति**॥ सांख्यमतमाह-**भोक्तेति**॥ किमात्मा देहादिरूपः-उत-तद्भिन्न इति विप्रतिपत्तिकोटित्वेन देहेन्द्रियमनोबु-

भामती।

धकप्रमाणाभावे सति संशयबीजमुक्तम्। ततश्च संशयाज्जिज्ञासोपपद्यत इति भावः विवादाधिकरणं धर्मी सर्वतन्त्रसिद्धान्तसिद्धोऽभ्युपेयः, अन्यथा अनाश्रया भिन्नाश्रया वा विप्रतिपत्तयो न स्युः। विरुद्धा हि प्रतिपत्तयो विप्रतिपत्तयः। न चानाश्रयाः प्रतिपत्तयो भवन्ति, अनालम्बनत्वापत्तेः। न च भिन्नाश्रया विरुद्धाः। न ह्यनित्या बुद्धिः, नित्य आत्मेति प्रतिपत्तिविप्रतिपत्ती। तस्मात्तत्पदार्थस्य शुद्धत्वादेर्वेदान्तेभ्यः प्रतीतिः, त्वंपदार्थस्य च जीवात्मनो लोकतः सिद्धिः सर्वतन्त्रसिद्धान्तः। तदाभासत्वानाभासत्वतत्तद्विशेषेषु परमत्र विप्रतिपत्तयः। तस्मात्सामान्यतः प्रसिद्धे धर्मिणि विशेषतो विप्रतिपत्तौ युक्तस्तद्विशेषेषु संशयः। तत्र त्वंपदार्थे तावद्विप्रतिपत्तीर्दर्शयति-**देहमात्रम्**। इत्यादिना,

आनन्दगिरीय-न्यायनिर्णयः।

विप्रतिपत्तेस्तस्या वस्तुतो ब्रह्मविषयतया सामान्येन सिद्धमपि तद्विशेषतोऽसिद्धेस्तद्धेतोः शास्त्रस्य भवति विषयः। भवति च तदवगतिस्तत्फलं सामान्यतः सिद्धत्वाच्च विशेषतः शक्यं प्रतिपादयितुमिति संबन्धसिद्धिरिति युक्ता ब्रह्मजिज्ञास्यतेति भावः। विप्रतिपत्तीरेव दर्शयन्नादौ स्थूलदृशां मतमाह-**देहेति**। देहातिरिक्तं चैतन्यं स्वतन्त्रमस्वतन्त्रं वा नास्ति देहाकारपरिणतभूतचतुष्टयान्तर्भूतमेव तदिति मात्रचो ग्रहणम्। मृतदेहव्यावृत्त्यर्थं चैतन्यविशिष्टमित्युक्तम्। आत्मेत्यहमालम्बनमुच्यते। प्राकृताः शास्त्रासंस्कृतधियो दृष्टमात्रा विकल्पितप्रवृत्तयोजना जन्ममरणमात्रधर्माणो लोकायतिका भूतचतुष्टयतत्त्ववादिनः। देहस्त्वगिन्द्रियस्यानपेक्षमधिकरणं तत्र मनुष्योऽहमितिबुद्धेरात्मतेत्यर्थः। सत्यपि देहे नेत्रादौ चासति स्वापादौ स्वरूपाद्यज्ञानात्तेषामिन्द्रियानुविधानाच्चैतन्यदृष्टेस्तेषु चाहंबुद्धेस्तेषामेवाऽऽत्मतेति पक्षान्तरमाह-**इन्द्रियाणीति**। न च तेष्वनेकेषु भोगायोगो वरगोष्ठीवन्मिथो गुणप्राधान्यात्क्रमेण तद्योगात्। न च नानात्वे प्रत्यभिज्ञानुपपत्तिरेकदेहाश्रितत्वेनोपपत्तिरिति भावः। स्वप्ने नेत्राद्यभावेपि केवले मनसि ज्ञानदृष्टेरहंधियश्च तस्मिन्नवैकल्यादिन्द्रियानुविधानस्य च रूपादिधियां तद्धर्मत्वेऽपि तत्करणत्वादुपपत्तेरेकदेहस्थत्वेन प्रत्यभिज्ञायामेकप्रासादस्थानामपि तत्प्रसङ्गान्मन एवाऽऽत्मेति मतान्तरमाह-**मन इति**। लोकायतमतभेदानुक्त्वा योगाचारमतमाह-**विज्ञानेति**। आश्रयं व्यावर्तयितुं मात्रपदम्। सिद्धान्ताद्विशेषार्थं **क्षणिकमिति**। देहादेर्ज्ञेयत्वाद्घटतुल्यत्वान्मनसोऽनन्तरबुद्ध्यनतिरेकादाश्रयान्तरस्यादृष्टत्वात्क्षणिकज्ञानेष्वपि सादृश्यात्प्रत्यभिज्ञानाद्बन्धमोक्षयोः संतानाश्रयत्वाद्युक्तं योगाचारमतमित्यर्थः। माध्यमिकमतमाह-**शून्यमिति**। स्वापे धियोऽप्यभावादकस्मात्पुनरहमित्युदयादसदालम्बनाऽहंधीरित्यर्थः। तार्किकादिमतमाह-**अस्तीति**। शून्यातिरिक्तमस्तित्वम्। अहमस्मीत्यनुभवाच्चदालम्बनस्याऽऽत्मत्वात्तस्य प्रत्यभिज्ञया स्थायित्वात्। तस्याभ्यासानतिशया सादृश्यानधीनत्वादविकारस्य क्रियाफलत्वायोगात्क्रियावेशा-

**भोक्तैव केवलं, न कर्तेत्येके ॥ अस्ति तद्व्यतिरिक्त ईश्वरस्सर्वज्ञस्सर्वशक्तिरिति केचित् ॥ आत्मा स भोक्तुरित्यपरे ॥ एवं बहवो विप्रतिपन्ना युक्तिवाक्यतदाभाससमाश्रयास्सन्तः ॥**

रत्नप्रभा ।

द्विशून्यान्युक्त्वा तद्भिन्नोऽपि कर्तृत्वादिमान्न वेति विप्रतिपत्तिकोटित्वेन तार्किकसांख्यपक्षावुपन्यस्या- कर्तापीश्वराद्भिन्नो न वेति विवादकोटित्वेन योगिमतमाह—**अस्ति तद्व्यतिरिक्त ईश्वर इति** ॥ निरतिशयसत्त्वं गृहीत्वा ईश्वरः सर्वज्ञत्वादिसम्पन्न इति **योगिनो वदन्ति** ॥ भेदकोटिमुक्त्वा सिद्धान्तकोटिमाह—**आत्मा स भोक्तुरिति** ॥ भोक्तुर्जीवस्याकर्तुः साक्षिणः स ईश्वर आत्मा स्वरूपमिति वेदान्तिनो वदन्तीत्यर्थः । विप्रतिपत्तीरुपसंहरति—**एवं बहव इति** ॥ विप्रतिपत्तीनां प्रपञ्चो निरासश्च विवरणोपन्यासेन दर्शितः सुखबोधायेतीहोपरम्यते । तत्र युक्तिवाक्याश्रयाः सिद्धान्तिनः—"जीवो, ब्रह्मैव, आत्मत्वाद्, ब्रह्मवत्" इत्यादियुक्तेः "तत्त्वमसि" [ छां० ६ । ८ । १६ ]. इत्यादिश्रुतेश्चाबाधितायाः सत्त्वात् । **अन्ये तु** देहादिरात्माऽहंप्रत्ययगोचरत्वाद्व्यतिरेकेण घटादिवदित्यादियुक्त्याभासम्, "स वा एष पुरुषोऽन्नरसमयः" [ तै० आ० २ । १ । १ ] इन्द्रियसंवादे चक्षुरादयः

भामती ।

**भोक्तैव केवलं न कर्ता**—इत्यन्तेन । अत्र देहेन्द्रियमनःक्षणिकविज्ञानचैतन्यपक्षे न तत्पदार्थनित्यत्वादयः त्वंपदार्थेन सम्बध्यन्ते, योग्यताविरहात् । शून्यपक्षेऽपि सर्वोपाख्यारहितमपदार्थः कथं तत्त्वमोर्गोचरः । कर्तृभोक्तृस्वभावस्यापि परिणामितया तत्पदार्थनित्यत्वाद्यसंगतिरेव । अकर्तृत्वेऽपि भोक्तृत्वपक्षे परिणामितया नित्यत्वाद्यसंगतिः । अभोक्तृत्वेऽपि नानात्वेनावच्छिन्नत्वादनित्यत्वादिप्रसक्तावद्वैतहानाच्च तत्पदार्थासंगतिस्तदवस्थैव । त्वंपदार्थविप्रतिपत्त्या च तत्पदार्थेऽपि विप्रतिपत्तिर्दर्शिता । वेदाप्रामाण्यवादिनो हि लौकायतिकादयस्तत्पदार्थप्रत्ययं मिथ्येति मन्यन्ते । वेदप्रामाण्यवादिनोऽप्यौपचारिकं तत्पदार्थमविवक्षितं वा मन्यन्त इति । तदेवं त्वंपदार्थविप्रतिपत्तिद्वारा तत्पदार्थे विप्रतिपत्तिं सूचयित्वा साक्षात्तत्पदार्थे विप्रतिपत्तिमाह—**अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित्** । तदिति जीवात्मनः परामृशति । न केवलं शरीरादिभ्यः, जीवात्मभ्योऽपि व्यतिरिक्तः । स च सर्वस्यैव जगत ईष्टे । ऐश्वर्यसिद्ध्यर्थं स्वाभाविकमस्य रूपद्वयमुक्तम्—**सर्वज्ञः सर्वशक्तिरिति** । तस्यापि जीवात्मभ्योऽपि व्यतिरेकात्, न त्वंपदार्थेन सामानाधिकरण्यमिति स्वमतमाह—**आत्मा स भोक्तुरित्यपरे** । भोक्तुर्जीवात्मनोऽविद्योपाधिकस्य स ईश्वरस्तत्पदार्थ आत्मा, तत ईश्वरादभिन्नो जीवात्मा । परमाकाशादिव घटाकाशादय इत्यर्थः । विप्रतिपत्तीरुपसंहरन् विप्रतिपत्तिबीजमाह—**एवं बहव इति** । युक्तियुक्त्याभासवाक्यवाक्याभाससमाश्रयाः सन्त

आनन्दगिरीय–न्यायनिर्णयः ।

त्मत्वात्कर्तृत्वस्यैवमात्मत्वाच्च संसारस्याऽऽत्मनो युक्तैवंरूपतेत्यर्थः । सांख्यमतमाह—**भोक्तेति** । करोमि जानामीति धियोऽहंकारानुगमात्केवलात्मायोगाद्भोगस्य चिदवसानत्वात्तद्रूपात्मनो युक्ता यथोक्तरूपतेत्यर्थः । त्वमर्थे विवादद्वारा तदर्थे तं सूचयित्वा साक्षादेव तत्र विवादमाह—**अस्तीति** । देहाद्यतिरिक्ताद्भोक्तुरप्यतिरिक्तत्वं तद्व्यतिरिक्तत्वं तत्समर्थनार्थं सर्वज्ञ इत्यादिविशेषणम् । स्वपक्षमाह—**आत्मेति** । स हीश्वरो भोक्तुः स्वरूपं बृहत्यर्थान्वयेन स्वतोऽनवच्छिन्नत्वस्योक्तत्वाच्चैतन्ये भेदायोगादैक्यश्रुतेश्चेश्वरस्याताटस्थ्यादिति भावः । विप्रतिपत्तीरुपसंहरति—**एवमिति** । मानयुक्ती विना विवादमात्रान्न पूर्वपक्षतेत्याशङ्क्याऽऽह—**युक्तीति** । अन्त्यपक्षवादिनो युक्तिवाक्याश्रया अन्ये तदाभासाश्रया इत्युत्तराधि-

१ विविधवादिषु ।

**तत्राविचार्य यत्किंचित्प्रतिपद्यमानो निश्श्रेयसात्प्रतिहन्येतानर्थं चेयात् ॥ तस्माद्ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निश्श्रेयसप्रयोजना प्रस्तूयते ॥ १ ॥ इति जिज्ञासाधिकरणम् ॥ १ ॥**

---

रत्नप्रभा।

"ते ह वाचमूचुः" [ बृ० १ । ३ । २ ] "मन उवाच" "योऽयं विज्ञानमयः" [ बृ० ४ । ४ । २२ ] "असदेवेदमग्र आसीत्" [ छां० २ । १३ । १ ] "कर्ता" "बोद्धा" [ प्रश्न० ४ । ९ ] "अनश्नन्नन्यः" [ श्वे० ४ । ६ ] "आत्मानमन्तरो यमयति" इति वाक्याभासं चाश्रिता इति विभागः। देहादिरनात्मा भौतिकत्वाद्दृश्यत्वादित्यादिन्यायैः "आनन्दमयोऽभ्यासात्" [ व्या० सू० १ । १ । १२ ] इत्यादिसूत्रैश्चाभासत्वं वक्ष्यते । ननु सन्तु विप्रतिपत्तयस्तथापि यस्य यन्मते श्रद्धा तदाश्रयणात्तस्य स्वार्थः सेत्स्यति, किं ब्रह्मविचारारम्भेणेत्यत आह-**तत्राविचार्येति** ॥ ब्रह्मात्मैक्यज्ञानादेव मुक्तिरिति वस्तुगतिः । मतान्तराश्रयणे तदभावान्मोक्षासिद्धिः । किंचात्मानमन्यथा ज्ञात्वा तत्पापेन संसारान्धकूपे पतेत् । "अन्धं तमः प्रविशन्ति" [ ईश० १२ ] "ये के चात्महनो जनाः" [ ईश० ३ ] इति श्रुतेः, "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ १ ॥" इति वचनाच्चेत्यर्थः । अतः सर्वेषां मुमुक्षूणां निःश्रेयसफलाय वेदान्तविचारः कर्तव्य इति सूत्रार्थमुपसंहरति-**तस्मादिति** ॥ बन्धस्याध्यस्तत्वेन विषयादिसद्भावादगतार्थत्वादधिकारिलाभादापातप्रसिद्ध्याविषयादिसम्भवाच्च वेदान्तविषया मीमांसा पूजिता विचारणा, वेदान्ताविरोधिनो ये तर्कास्तन्त्रान्तरस्थास्तान्युपकरणानि यस्याः सा निःश्रेयसायारभ्यत इत्यर्थः । ननु सूत्रे विचारवाचिपदाभावात्तदारम्भः कथं सूत्रार्थ इत्यत आह-**ब्रह्मेति** ॥ ब्रह्म-

भामती।

इति योजना । ननु सन्तु विप्रतिपत्तयः, तन्निमित्तश्च संशयः तथापि किमर्थं ब्रह्ममीमांसारभ्यत इत्यत आह-**तत्राविचार्येति** । तत्त्वज्ञानाच्च निःश्रेयसाधिगमो नातत्त्वज्ञानाद्भवितुमर्हति । अपि च अतत्त्वज्ञानान्नास्तिक्ये सत्यनर्थप्राप्तिरित्यर्थः । सूत्रतात्पर्यमुपसंहरति-**तस्मादिति** । वेदान्तमीमांसा तावत्तर्क एव, तदविरोधिनश्च येऽन्येऽपि तर्का अध्वरमीमांसायां न्याये च वेदप्रत्यक्षादिप्रामाण्यपरिशोधनादिषूक्तास्त उपकरणं यस्याः सा तथोक्ता । तस्मात्परमनिःश्रेयससाधनब्रह्मज्ञानप्रयोजना ब्रह्ममीमांसारब्धव्येति

आनन्दगिरीय-न्यायनिर्णयः।

करणेषु व्यक्ती भविष्यति । तथाऽपि यस्य यस्मिन्पक्षे श्रद्धा स तमाश्रित्य स्वार्थं साधयिष्यति किं विचारेणेति तत्राऽऽह-**तत्रेति** । विवादः सप्तम्यर्थः । मिथो विरुद्धधीषु कस्याश्चित्तत्त्वधीत्वात्तस्या विचारसाध्यत्वात्तद्धीनस्तत्त्वधीवैधुर्यान्न पुमर्थभागीत्यर्थः । किंचाविचारे तत्त्वाज्ञानान्नास्तिकत्वे "ये के चाऽऽत्महनो जनाः" इति श्रुतेः श्रुत्यर्थबहिर्मुखोऽनर्थं गच्छेदित्याह-**अनर्थं चेयादिति** । सूत्रतात्पर्यमुपसंहरति-**तस्मादिति** । विषयादिसत्त्वं तदर्थः । ब्रह्मजिज्ञासोपन्यासमुखेन विशिष्टा मीमांसा स्तूयत इति संबन्धः । विशिष्टज्ञानेच्छोक्तिव्याजेन विचारारम्भपरं सूत्रम् । न हीच्छा ज्ञानं वा साक्षात्कर्तव्यम् । तथा चेष्यमाणज्ञानोपायविचारकार्यतार्थं सूत्रमित्यर्थः । किमुपकरणा सेति तत्राऽऽह-**तदविरोधीति** । तेषां वेदान्तानामविरोधिनस्तर्का मीमांसायां न्याये च वेदप्रामाण्यशुद्ध्याद्युपयोगिनो यस्या उपकरणं सा तथा मीमांसायास्तर्कत्वेऽपि तर्कान्तराणामुपकरणतेति भावः । किंप्रयोजना सेत्यत आह-**निःश्रेय**-

**ब्रह्म जिज्ञासितव्यमित्युक्तम् ॥ किंलक्षणकं पुनस्तद्ब्रह्म ?-इत्यत आह भगवान्सूत्रकारः—**

रत्नप्रभा ।

ज्ञानेच्छोक्तिद्वारा विचारं लक्षयित्वा तत्कर्तव्यतां ब्रवीतीति भावः । **एवं** प्रथमसूत्रस्य चत्वारोऽर्था व्याख्यानचतुष्टयेन दर्शिताः । सूत्रस्य चानेकार्थत्वं भूषणम् । **नन्विदं** सूत्रं शास्त्राद्बहिः स्थित्वा शास्त्रमारम्भयत्यन्तर्भूत्वा **वा ?-आद्ये**—तस्य हेयता, शास्त्रासम्बन्धात् । **द्वितीये**—तस्यारम्भकं वाच्यम् । न च स्वयमेवारम्भकम् । स्वस्मात्स्वोत्पत्तिरित्यात्माश्रयात् । न **चारम्भकान्तरं** पश्याम इति । **उच्यते** । श्रवणविधिना आरब्धमिदं सूत्रं शास्त्रान्तर्गतमेव शास्त्रारम्भं प्रतिपादयति, **यथाऽ**ध्ययनविधिर्वेदान्तर्गत एव कृत्स्नवेदस्याध्ययने प्रयुङ्क्ते तद्वदित्यनवद्यम् ॥ १ ॥ प्रथमसूत्रं समाप्तम् ॥ १ ॥ ॥ प्रथमसूत्रेण शास्त्रारंभमुपपाद्य शास्त्रमारभमाणः पूर्वोत्तराधिकरणयोः सङ्गतिं वक्तुं वृत्तं कीर्तयति-**ब्रह्मेति** ॥ मुमुक्षुणा ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इत्युक्तम् । ब्रह्मणो विचार्यत्वोक्त्या अर्थात् प्रमाणादिविचारणां प्रतिज्ञातत्वेऽपि ब्रह्मप्रमाणं ब्रह्मयुक्तिरित्यादिविशिष्टविचाराणां विशेषेण ब्रह्मज्ञानं विना कर्तुमशक्यत्वात्तत्स्वरूपज्ञानायादौ लक्षणं वक्तव्यं तत्र सम्भवतीत्याक्षिप्य सूत्रकृतं पूजयन्नेव लक्षणसूत्रमवतारयति-**किंलक्षणकमिति** ॥ **किमा**क्षेपे । नास्त्येव लक्षणमित्यर्थः । आक्षेपेणास्योत्थानाद्-**आक्षेपसंगतिः** । लक्षणद्योतिवेदान्तानां स्पष्टब्रह्मलिङ्गानां लक्ष्ये ब्रह्मणि समन्वयोक्तेः **श्रुतिशास्त्राध्यायपादसंगतयः । तथाहि**-"यतो वा इमानि भूतानि जायन्ते" इत्यादिवाक्यं विषयः तत्किं ब्रह्मणो

भामती ।

सिद्धम् ॥ १ ॥ ॥ तदेवं प्रथमेन सूत्रेण मीमांसारम्भमुपपाद्य ब्रह्ममीमांसामारभते-**जन्माद्यस्य यतः** । एतस्य सूत्रस्य पातनिकामाह भाष्यकारः-**ब्रह्म जिज्ञासितव्यमित्युक्तम्** । **किंलक्षणं पुनस्तद्ब्रह्म** । तत्र यद्यपि ब्रह्मस्वरूपज्ञानस्य प्रधानस्य प्रतिज्ञया तदङ्गान्यपि प्रमाणादीनि प्रतिज्ञातानि तथापि स्वरूपस्य प्राधान्यात्तदेवाक्षिप्य प्रथमं समर्थ्यते । तत्र यद्यावदनुभूयते तत्सर्वं परिमितम् अविशुद्धमबुद्धं विध्वंसि, न तेनोपलब्धेन तद्विरुद्धस्य नित्यशुद्धबुद्धस्वभावस्य ब्रह्मणः स्वरूपं शक्यं लक्षयितुम्, न हि जातु कश्चित्कृतकत्वेन नित्यं लक्षयति । न च तद्धर्मेण नित्यत्वादिना तल्लक्ष्यते, तस्यानुपलब्धचरत्वात् । प्रसिद्धं हि लक्षणं भवति, नात्यन्ताप्रसिद्धम् । एवं च न शब्दोऽप्यत्र प्रक्रमते, अत्यन्ताप्रसिद्धतया ब्रह्मणोऽपदार्थस्यावाक्यार्थत्वात् । तस्माल्लक्षणाभावात्, न ब्रह्म जिज्ञासितव्यमित्याक्षेपाभिप्रायः । तमिममाक्षेपं भगवा-

आनन्दगिरीय-न्यायनिर्णयः ।

**सोति** । ब्रह्मज्ञानद्वारेति शेषः ॥ १ ॥ ( १ ) ॥ ॥ प्रथमसूत्रेण शास्त्रारम्भमुपपाद्य तदारभमाणो जन्मादिसूत्रस्य पातनिकामाह-**ब्रह्मेति** । जिज्ञासापदस्यावयवार्थत्यागेनान्तर्णीतविचारार्थत्वमुपेत्य ब्रह्म ज्ञातुकामेनेदं शास्त्रं ज्ञातव्यमित्युक्तमित्यर्थः । ब्रह्मणो जिज्ञास्यत्वोक्त्याऽर्थात्प्रमाणादिविचाराणां प्रतिज्ञातत्वेऽपि ब्रह्मप्रमाणं ब्रह्मयुक्तिरित्यादिविशिष्टविचाराणां विशेषणमित्यपेक्षत्वादादौ ब्रह्मस्वरूपं वाच्यमित्याह--**किंलक्षणमिति** । श्रौतस्य ब्रह्मणः श्रौतलक्षणद्वयावेदकं सूत्रं सूत्रकारं पूजयन्नवतारयति---**अत इति** । "यतो वा इमानि"इत्यादिवाक्यं ब्रह्म न लक्षयति लक्षयति वेत्येकस्योभयहेतुत्वासंभवसंभवाभ्यां संदेहे श्रुतेरनुमानानुगुण्यादेकस्योभयहेतुत्वे दृष्टान्ताभावेनाशक्यानुमानत्वादेकतरहेतुत्वस्य लक्षणत्वे वस्तुपरिच्छेदाल्लक्ष्यस्याब्रह्मत्वान्न लक्षयतीति प्राप्ते पुरुषमतिप्रभवत्वेनानुमानस्य संभावितदोषस्यापौरुषेयत्वेनापास्तदोषागमानुग्राहकतर्कत्वा-

१ आ० पा० किंलक्षणमिति ।

# जन्माद्यस्य यतः ॥ २ ॥ ( २ ) ॥ इति ॥

## जन्मोत्पत्तिरादिरस्येति तद्गुणसंविज्ञानो बहुव्रीहिः ।

रत्नप्रभा ।

लक्षणं वक्ति न वेति सन्देहः । तत्र पूर्वपक्षे ब्रह्मस्वरूपासिद्ध्या मुक्त्यसिद्धिः फलं, सिद्धान्ते तत्सिद्धिरिति भेदः । यद्यप्याक्षेपसङ्गतौ पूर्वाधिकरणफलमेव फलमिति कृत्वा पृथङ् न वक्तव्यम् । तदुक्तम्—"आक्षेपे चापवादे च प्राप्त्यां लक्षणकर्मणि । प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्तते" ॥ १ ॥ इति—तथापि स्पष्टार्थमुक्तमिति मन्तव्यम् । यत्र पूर्वाधिकरणसिद्धान्तेन पूर्वपक्षः, तत्रापवादिकी संगतिः प्राप्तिः—तदर्था चिन्ता । तंत्र न वक्तीति प्राप्तम् । जन्मादेर्जगद्धर्मत्वेन ब्रह्मलक्षणत्वायोगात् । न च जगदुपानत्वे सति कर्तृत्वं लक्षणमिति वाच्यम् । कर्तुरुपादानत्वे दृष्टान्ताभावेनानुमानाप्रवृत्तेः । न च श्रौतस्य ब्रह्मणः श्रुत्यैव लक्षणसिद्धेः किमनुमानेनेति वाच्यम् । अनुमानस्य श्रुत्यनुग्राहकत्वेन तदभावे तद्विरोधे वा श्रुत्यर्थासिद्धेः । न च जगत्कर्तृत्वमुपादानत्वं वा प्रत्येकं लक्षणमस्त्विति वाच्यम् । कर्तृमात्रस्योपादानाद्भिन्नस्य ब्रह्मत्वायोगात् । वस्तुतः परिच्छेदादिति प्राप्ते पुरुषाभ्यूहमात्रस्यानुमानस्याप्रतिष्ठितस्यातीन्द्रियार्थे स्वातन्त्र्यायोगात् । अपौरुषेयतया निर्दोषश्रुत्युक्तोभयकारणत्वस्य सुखादिदृष्टान्तेन सम्भावयितुं शक्यत्वात् । तदेव लक्षणमिति सिद्धान्तयति—जन्माद्यस्य यत इतीति ॥ अत्र यद्यपि जगज्जन्मस्थितिलयकारणत्वं लक्षणं प्रतिपाद्यते तथाप्यग्रे "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात्" [ व्या० सू० १ । ४ । २३ । ( ७ ) ] इत्यधिकरणे तत्कारणत्वं न कर्तृत्वमात्रं किन्तु कर्तृत्वोपादानत्वोभयरूपत्वमिति वक्ष्यमाणं सिद्धवत्कृत्वोभयकारणत्वं लक्षणमित्युच्यत इति न पौनरुक्त्यम् । ननु जिज्ञास्यनिर्गुणब्रह्मणः कारणत्वं कथं लक्षणमिति चेद् ॥ उच्यते—यथा रजतं शुक्तेर्लक्षणं यद्रजतं सा शुक्तिरिति, तथा यज्जगत्कारणं तद्ब्रह्मेति कल्पितं कारणत्वं तटस्थं सदेव ब्रह्मणो लक्षणमित्यनवद्यम् । सूत्रं व्याचष्टे—जन्मेत्यादिना ॥ बहुव्रीहौ पदार्थाः सर्वे वाक्यार्थस्यान्यपदार्थस्य विशेषणानि । यथा—चित्रगोर्देवदत्तस्य चित्राः गावः, तद्वदत्रापि । जन्मादीति नपुंसकैकवचनद्योतितस्य समाहारस्य जन्मस्थितिभङ्गस्य जन्मविशेषणम् । तथा च जन्मनः समासार्थैकदेशस्य गुणत्वेन संविज्ञानं यस्मिन् बहुव्रीहौ स तद्गुणसंविज्ञान इत्यर्थः । तत्र यज्जन्मकारणं तद्

भामती ।

सूत्रकारः परिहरति—जन्माद्यस्य यतः इति । मा भूदनुभूयमानं जगत्तद्धर्मतया तादात्म्येन वा ब्रह्मणो लक्षणं, तदुत्पत्त्या तु भविष्यति । देशान्तरप्राप्तिरिव सवितुर्व्रज्याया इति तात्पर्यार्थः । सूत्रावयवान्विभजते—जन्मोत्पत्तिरादिरस्येति । लाघवाय सूत्रकृता जन्मादीति नपुंसकप्रयोगः कृतस्तदुपपादनाय समाहारमाह—

आनन्दगिरीय-न्यायनिर्णयः ।

दतीन्द्रियेऽर्थे स्वतोऽप्रामाण्यादागमिकोभयहेतुत्वे सुखादिदृष्टान्तेन संभावनामात्रहेतुत्वाद्वस्तुतोऽपरिच्छेदाल्लक्ष्यस्य ब्रह्मत्वसिद्धेर्जगन्निमित्तोपादानं सच्चिदानन्दं ब्रह्मेति लक्षयतीति सिद्धान्तमाह—जन्मादीति । पूर्वाधिकरणेनास्योत्थाप्योत्थापकत्वं संगतिरुक्ता । अधीतिविष्णुपादार्पितोपनिषद्वाक्यस्य स्पष्टब्रह्मलिङ्गस्य लक्षणद्वयवति ब्रह्मणि समन्वयोक्तेः श्रुतिशास्त्राध्यायपादसंगतयः पूर्वाधिकरणस्थब्रह्मलक्षणपरीक्षणात्तत्फल-

१ यथा तार्किकमते अदृष्टवदात्मनः कार्यमात्रे निमित्तत्वाङ्गीकारेण सुखस्यापि कार्यत्वात्तत्प्रतिनिमित्तत्वमात्मनः समवायिकारणाख्यमुपादानत्वं च स्पष्टमेव । तथा च यथा सुखं प्रति निमित्तत्वमुपादानत्वं चात्मनः, तथा ब्रह्मणोऽपि घटेतैवेति भावः ॥

**जन्मस्थितिभङ्गं समासार्थः ॥ जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं, वस्तुवृत्तापेक्षं च । श्रुतिनिर्देशस्तावद्—"यतो वा इमानि भूतानि जायन्ते" [तै० आ० ३ । १ । १ ] इत्यस्मिन्वाक्ये जन्मस्थितिप्रलयानां क्रमदर्शनात् ॥ वस्तुवृत्तमपि—जन्मना लब्धसत्ताकस्य धर्मिणः स्थितिप्रलयसम्भवात् ॥ अस्येति—प्रत्यक्षादिसन्निधापितस्य धर्मिण इदमा निर्देशः ॥ षष्ठी जन्मादिधर्मसम्बन्धार्था ॥**

रत्नप्रभा ।

ब्रह्मेति ब्रह्मत्वविधानमयुक्तं, स्थितिलयकारणाद्भिन्नत्वेन ज्ञाते ब्रह्मत्वस्य ज्ञातुमशक्यत्वात् । अतो जन्मस्थितिभङ्गैर्निरूपितानि त्रीणि कारणत्वानि मिलितान्येव लक्षणमिति मत्वा सूत्रे समाहारो द्योतित इति ध्येयम् । नन्वादित्वं जन्मनः कथं ज्ञातव्यं संसारस्यानादित्वादित्यत आह—**जन्मनश्चेति** ॥ मूलश्रुत्या, वस्तुगत्या चादित्वं ज्ञात्वा तदपेक्ष्य सूत्रकृता जन्मनः आदित्वमुक्तमित्यर्थः । इदमः प्रत्यक्षार्थमात्रवाचित्वमाशंक्योपस्थितसर्वकार्यवाचित्वमाह—**अस्येतीति** ॥ वियदादिजगतो नित्यत्वान्न जन्मादिसम्बन्ध इत्यत आह—**षष्ठीति** ॥ वियदादिमहाभूतानां जन्मादिसम्बन्धो वक्ष्यत इति भावः । ननु जगतो जन्मादेर्ब्रह्मसम्बन्धाभावान्न लक्षणत्वमित्याशंक्य तत्कारणत्वं लक्षणमिति पञ्चम्यर्थमाह—

भामती ।

**जन्मस्थितिभङ्गमिति** । **जन्मनश्च**—इत्यादिः, **कारणनिर्देश** इत्यन्तः संदर्भो निगदव्याख्यातः । स्यादेतत् । प्रधानकालग्रहलोकपालक्रियायदृच्छास्वभावाभावेषूपप्लवमानेषु सत्सु सर्वज्ञं सर्वशक्तिस्वभावं ब्रह्म

आनन्दगिरीय—न्यायनिर्णयः ।

मेव पूर्वोत्तरपक्षयोरत्र फलम् । 'पदच्छेदः पदार्थोक्तिः पदविग्रहः' इति त्रयं व्याख्याङ्गं दर्शयति—**जन्मेति** । जन्मस्थितिभङ्गं षष्ठ्योच्यते । तद्गुणसंविज्ञान इत्यत्र तदा बहुव्रीह्यर्थो गृह्यते तस्य गुणत्वेन संविज्ञानं यत्र समासे स तथा सर्वस्य विशेषणत्वे समासायोगात्तदर्थैकदेशस्तया तेन विशेष्यैकदेशं विशेषणं कृत्वा समास इत्यर्थः । तत्र फलमाह—**जन्मस्थितीति** । जन्मादिरस्य स्थित्यादेरित्यतद्गुणसंविज्ञाने स्थितिभङ्गमात्रं जन्मादिशब्दार्थः स्यात् । ततश्चोभयकारणत्वलाभान्नोपलक्षणत्वं सिध्येत् । न च स्थितिलयमात्रहेतुत्वं तथा जन्महेतोरन्यत्वे लक्ष्यस्य परिच्छेदादब्रह्मत्वादतो जन्मनोऽपि विशेष्यान्तर्भावाद्धर्मजातस्य संहतिप्रधानस्य हेतुर्ब्रह्मेत्युपलक्षणसिद्धिरित्यर्थः । तादृग्धर्मजातं गृहीत्वा नपुंसकप्रयोगः । नन्वनादौ संसारे कथमादित्वं जन्मनो गृह्यते तत्राऽऽह—**जन्मनश्चेति** । एतत्सूत्रलक्षितश्रुतौ जन्मादावुच्यते तदपेक्षं सूत्रेऽपि तस्याऽऽदित्वमित्यर्थः । श्रुत्याऽपि कथमयुक्तमुक्तमित्याशङ्क्याऽऽह—**वस्त्विति** । वस्तुनो वृत्तं जनित्वा स्थित्वा लीयत इति स्वभावो जन्मना लब्धात्मकस्य[1] स्थित्यादियोगादतो नानादेः संसारस्याऽऽदिर्जन्म किंतु प्रतिवस्तु तस्याऽऽदित्वमिति तदपेक्षं श्रुतिसूत्रयोस्तदादित्वमित्यर्थः । श्रुतिनिर्देशं विशदयति—**श्रुतीति** । अनुकूलो जन्मादित्वस्येति शेषः । तत्र हेतुः—**यत इति** । वस्तुवृत्तं विभजते—**वस्त्विति** । जन्मादित्वस्यानुगुणं वस्तुवृत्तमिति विवक्षित्वा हेतुमाह—**जन्मनेति** । इदमः संनिहितवाचित्वात्प्रत्यक्षमात्रपरामर्शित्वमाशङ्क्य प्रतीतिमात्रं संनिधिरिति गृहीत्वा प्रातिपदिकार्थमाह—**अस्येति** । सर्वस्य जगतो न जन्मास्ति वियदादेरनादित्वादित्याशङ्क्य वियदधिकरणन्यायेन विभक्त्यर्थमाह—**षष्ठीति** । जगतो जन्मा-

१ लब्धात्मकस्येति क्वचित्पाठः ।

**यत इति कारणनिर्देशः ॥ अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य–**

रत्नप्रभा ।

**यत इतीति** ॥ यच्छब्देन सत्यं ज्ञानमनन्तमानन्दरूपं वस्तूच्यते । "आनन्दाद्ध्येव" [ तै० आ० ३ । ६ । १ ] इति निर्णीतत्वात् । तथा च स्वरूपलक्षणसिद्धिरिति मन्तव्यम् ॥ पदार्थमुक्त्वा पूर्वसूत्रस्थब्रह्मपदानुषङ्गेण तच्छब्दाध्याहारेण च सूत्रवाक्यार्थमाह–**अस्येत्यादिना** ॥ कारणस्य सर्वज्ञत्वादिसम्भावनार्थानि जगतो विशेषणानि । **यथा**–कुम्भकारः प्रथमं कुम्भशब्दाभेदेन विकल्पितं पृथुबुध्नोदराकारस्वरूपं बुद्धावालिख्य तदात्मना कुम्भं व्याकरोति बहिः प्रकटयति, **तथा** परमकारणमपि स्वेक्षितं नामरूपात्मना व्याकरोति इत्यनुमीयत इति मत्वाह–**नामरूपाभ्यामिति** ॥ इत्थम्भावे तृतीया । आद्यकार्यं, चेतनजन्यं, कार्यत्वात्, कुम्भवदिति प्रधानशून्ययोर्निरासः । हिरण्यगर्भादिजीवजन्यत्वं निरस्यति–**अनेकेति** ॥ श्राद्धवैश्वानरेष्ट्यादौ पितापुत्रयोः कर्तृभोक्त्रोर्भेदात्पृथगुक्तिः "यो ब्रह्माणं विदधाति पूर्वम्" [ श्वेता० ६ । १८ ] "सर्व एत आत्मानो व्युच्चरन्ति" इति श्रुत्या स्थूलसू-

भामती ।

जगज्जन्मादिकारणमिति कुतः संभावनेत्यत आह–**अस्य जगत इति** । अत्र **नामरूपाभ्यां व्याकृतस्य** इति चेतनभावकर्तृकत्वसंभावनया प्रधानाद्यचेतनकर्तृकत्वं निरुपाख्यकर्तृकत्वं च व्यासेधति । यत्खलु नाम्ना रूपेण च व्याक्रियते तच्चेतनकर्तृकं दृष्टं, यथा घटादि । विवादाध्यासितं च जगन्नामरूपव्याकृतं तस्माच्चेतनकर्तृकं संभाव्यते । चेतनो हि बुद्धावालिख्य नामरूपे घट इति नाम्ना रूपेण च कम्बुग्रीवादिना बाह्यं घटं निष्पादयति । अत एव घटस्य निर्वर्त्यस्याप्यन्तःसंकल्पात्मना सिद्धस्य कर्मकारकभावो घटं करोतीति । यथाहुः–'बुद्धिसिद्धं तु न तदसत्' इति । तथा चाचेतनो बुद्धावनालिखितं करोतीति न शक्यं संभावयितुमिति भावः । स्यादेतत् । चेतना ब्रह्मा लोकपाला वा नामरूपे बुद्धावालिख्य जगज्जनयिष्यन्ति, कृतमुक्तस्वभावेन ब्रह्मणेत्यत आह–**अनेककर्तृभोक्तृसंयुक्तस्येति** । केचित्कर्तारो भवन्ति, यथा सूदर्त्विगादयः, न भोक्तारः । केचित्तु भोक्तारः, यथा श्राद्धवैश्वानरीयेष्ट्यादिषु पितापुत्रादयः, न कर्तारः, तस्मादुभयग्रहणम् । देशकालनिमित्तक्रियाफलानि इतीतरेत-

आनन्दगिरीय–न्यायनिर्णयः ।

देर्वा ब्रह्मासंबन्धान्न लक्षणतेत्याशङ्क्याऽऽह–**यत इति** । न जगज्जन्मादि वा ब्रह्मलक्षणं किंतु तत्कारणत्वं तच्चाज्ञाते ब्रह्मणि संभावितमित्यर्थः । सूत्रपदान्येवं व्याख्याय पूर्वसूत्राद्ब्रह्मपदानुषङ्गेण तच्छब्दाध्याहारेण च वाक्यार्थमाह–**अस्येत्यादिना** । प्रधानादिहेतुत्वनिरासेन ब्रह्महेतुत्वं संभावयितुं कार्यप्रपञ्चं श्रुतिसिद्धं द्वैरूप्येन विशिनष्टि–**नामेति** । तृतीयेत्थंभावे । घटादौ स्वनामरूपगर्भविकल्पपूर्वकव्याक्रियादृष्टेर्जगतोऽपि तथात्वानुमानादचेतनाभावकर्तृकत्वमयुक्तम् । विमतं चेतनभावकर्तृकं नामरूपात्मत्वाद् घटादिवदित्यर्थः । तर्हि चेतनाभावाश्च जीवभेदा नामरूपे बुद्धावालिख्य जगज्जनयिष्यन्ति किं ब्रह्मणेत्याशङ्क्याऽऽह–**अनेकेति** । न चान्यतरस्याऽऽर्थिकत्वादुभयग्रहणानर्थक्यमृत्विगादीनां कर्तृत्वेऽप्यभोक्तृत्वात्पित्रादीनां च श्राद्धादौ भोक्तृत्वेऽप्यकर्तृत्वात्तथा च जीवानामपि स्रष्टव्यकोटिनिवेशाज्जगत्कर्तृत्वायोग्यतेत्यर्थः । सेवादिफलवद्व्यवहितफलत्वात्कर्मफलस्येश्वरप्रदा-

१ योगोक्तविकल्पात्मकत्वं विवक्षितम् ।

**प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात्सर्वशक्तेः कारणाद्भवति, तद्ब्रह्मेति वाक्यशेषः ॥ अन्येषामपि भावविकाराणां त्रिष्वेवान्तर्भाव इति जन्मस्थितिनाशानामिह ग्रहणम् ॥**

रत्नप्रभा ।

क्ष्मदेहोपाधिद्वारा जीवानां कार्यत्वेन जगन्मध्यपातित्वान्न जगत्कारणत्वमित्यर्थः । कारणस्य सर्वज्ञत्वं सम्भावयति—**प्रतिनियतेति** ॥ प्रतिनियतानि—व्यवस्थितानि देशकालनिमित्तानि येषां क्रियाफलानां तदाश्रयस्येत्यर्थः । स्वर्गस्य क्रियाफलस्य मेरुपृष्ठं देशः, देहपातादूर्ध्वं कालः, उत्तरायणमरणादिनिमित्तं च प्रतिनियतम् । एवं राजसेवाफलग्रामादेर्देशादिव्यवस्था ज्ञेया । तथा च **यथा** सेवाफलं, देशाद्यभिज्ञदातृकं, **तथा** कर्मफलं, फलत्वादिति सर्वज्ञत्वसिद्धिरिति भावः । सर्वशक्तित्वं सम्भावयति—**मनसापीति** ॥ नन्वन्येऽपि विपरिणामादयो भावविकाराः सन्तीति किमिति जन्मादीत्यादिपदेन न गृह्यन्ते, तत्राह—**अन्येषामिति** ॥ वृद्धिपरिणामयोर्जन्मनि अपक्षयस्य नाशेऽन्तर्भाव इति भावः । ननु देहो जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, नश्यति [ निरु० निघं० १ । १ । १ ] इति यास्क-

भामती ।

रद्वन्द्वः । देशादीनि च प्रतिनियतानि चेति विग्रहः । तदाश्रयो जगत्तस्य । केचित्खलु प्रतिनियतदेशोत्पादाः, यथा कृष्णमृगादयः । केचित्प्रतिनियतकालोत्पादाः, यथा कोकिलारवादयः । केचित्प्रतिनियतनिमित्ताः, यथा नवाम्बुदध्वानादिनिमित्ता बलाकागर्भादयः । केचित्प्रतिनियतक्रियाः, यथा ब्राह्मणानां याजनादयो नेतरेषाम् । एवं प्रतिनियतफला यथा केचित्सुखिनः, केचिद्दुःखिनः, एवं य एव सुखिनस्त एव कदाचिद्दुःखिनः । सर्वमेतदाकस्मिकापरनाम्नि यादृच्छिकत्वे च स्वाभाविकत्वे चासर्वशक्तिकर्तृकत्वे च न घटते । परिमितज्ञानशक्तिभिर्ग्रहलोकपालादिभिर्ज्ञातुं कर्तुं चाशक्यत्वात् । तदिदमुक्तम्—**मनसाप्यचिन्त्यरचनारूपस्येति** । एकस्या अपि हि शरीररचनाया रूपं मनसा न शक्यं चिन्तयितुं कदाचित्, प्रागेव जगद्रचनायाः, किमङ्ग पुनः कर्तुमित्यर्थः । सूत्रवाक्यं पूरयति—**तद्ब्रह्मेति वाक्यशेषः** । स्यादेतत् । कस्मात् पुनर्जन्मस्थितिभङ्गमात्रमिहादिग्रहणेन गृह्यते, न तु वृद्धिपरिणामापक्षया अपीत्यत आह—**अन्येषामपि भावविकाराणां**—वृद्ध्यादीनां **त्रिष्वेवान्तर्भाव इति** । वृद्धि-

आनन्दगिरीय—न्यायनिर्णयः ।

तृकत्वानुमानात्तदात्मकं जगदीश्वरकर्तृकमित्याह—**प्रतिनियतेति** । प्रतिनियतानि देशकालनिमित्तानि येषां क्रियाफलानां तदाश्रयो जगत्तस्येति विग्रहः । प्रतिनियतो देशः स्वर्गफलस्य मेरुपृष्ठं ग्रामादेर्भूमण्डलम् । कालोऽपि स्वर्गस्य प्रतिनियतो देहपातादूर्ध्वं पुत्रफलस्य बाल्यादूर्ध्वम् । निमित्तमपि प्रतिनियतमुत्तरायणमरणादि स्वर्गादेर्ग्रामादेस्तु राजप्रसादादि । न चेदमीदृशं जगदसर्वज्ञो निर्मातुमर्हतीत्यर्थः । विचित्रकार्यत्वाच्च जगतो विशिष्टबुद्धिमत्कर्तृकत्वं प्रासादादिवदनुमेयमित्याह—**मनसेति** । एतेन कर्तुः सर्वशक्तित्वं संभावितम् । कल्पितकारणत्वेन सजातीयप्रधानादेर्विजातीयाच्च कार्याद्ब्रह्मव्यवच्छेदकतया जगद्धेतुत्वे तटस्थलक्षणे स्थिते ब्रह्मणः स्वरूपलक्षणं विवक्षन्विशिनष्टि—**सर्वज्ञादिति** । अद्वितीयत्वं सत्यचिदात्मत्वं स्वतन्त्रतया निरतिशयसुखत्वं विशेषणाभ्यां विवक्षितम् । नन्वन्येऽपि परिणामादयो विकारा जन्मादीत्यादिग्रहणेन किं न गृह्यन्ते तत्राऽऽह—**अन्येषामिति** । अजातस्यास्थितस्यानष्टस्य च परिणामाद्ययोगात्तेषां तदधीनत्वात्तद्ग्रहणेनैव ग्रहाज्जन्मस्थितिनाशानामेवात्रोपादानमित्यर्थः । ननु निरुक्त-

**यास्कपरिपठितानां तु-"जायते, अस्ति" [ निरुक्ते० १ । १ । ३ ] इत्यादीनां ग्रहणे तेषां जगतः स्थितिकाले सम्भाव्यमानत्वान्मूलकारणादुत्पत्तिस्थितिनाशा जगतो न गृहीतास्स्युरित्याशङ्क्येत । तन्मा शङ्कीति योत्पत्तिर्ब्रह्मणः,**

---

रत्नप्रभा ।

मुनिवाक्यमेतत्सूत्रमूलं किं न स्यादत आह-**यास्केति** ॥ यास्कमुनिः किल महाभूतानामुत्पन्नानां स्थितिकाले भौतिकेषु प्रत्यक्षेण जन्मादिषट्कमुपलभ्य निरुक्तवाक्यं चकार, तन्मूलीकृत्य जन्मादिषट्ककारणत्वं लक्षणं सूत्रार्थ इति ग्रहणे सूत्रकृता ब्रह्मलक्षणं न संगृहीतं, किन्तु महाभूतानां लक्षणमुक्तमिति शङ्का स्यात्, सा मा भूदिति ये श्रुत्युक्ता जन्मादयस्त एव गृह्यन्त इत्यर्थः ॥ **यदि** निरुक्तस्यापि श्रुतिर्मूलमिति महाभूतजन्मादिकमर्थः, **तर्हि** सा श्रुतिरेव सूत्रस्य मूलमस्तु, किमन्तर्गडुना निरुक्तेनेति भावः । **यदि** जगतो ब्रह्मातिरिक्तं कारणं स्यात्, **तदा** ब्रह्मलक्षणस्य तत्रातिव्याप्त्यादिदोषः स्यात् । अतस्तन्निरासाय लक्षणसूत्रेण ब्रह्म विना जगज्जन्मादिकं न सम्भवति । कारणान्तरासम्भवादिति युक्तिः सूत्रिता । सा तर्कपादे ( २-१ ) विस्तरेण वक्ष्यते ।

भामती ।

स्तावदवयवोपचयः । तेनाल्पावयवादवयविनो द्वितन्तुकादेरन्य एव महान्पटो जायत इति जन्मैव वृद्धिः । परिणामोऽपि त्रिविधो धर्मलक्षणा-ऽवस्थालक्षण उत्पत्तिरेव । धर्मिणो हि हाटकादेर्धर्मलक्षणः परिणामः कटकमुकुटादिस्तस्योत्पत्तिः । एवं कटकादेरपि प्रत्युत्पन्नत्वादिलक्षणः परिणाम उत्पत्तिः । एवमवस्थापरिणामो नवपुराणत्वाद्युत्पत्तिः । अपक्षयस्त्ववयवह्रासो नाश एव । तस्माज्जन्मादिषु यथा स्वमन्तर्भावाद्वृद्ध्यादयः पृथङ् नोक्ता इत्यर्थः । अथैते वृद्ध्यादयो न जन्मादिष्वन्तर्भवन्ति तथाप्युत्पत्तिस्थितिभङ्गमेवोपादातव्यम् । तथा सति हि तत्प्रतिपादके 'यतो वा इमानि भूतानि' इति वेदवाक्ये बुद्धिस्थीकृते जगन्मूलकारणं ब्रह्म लक्षितं भवति । अन्यथा तु 'जायतेऽस्ति वर्धते' इत्यादीनां ग्रहणे तत्प्रतिपादकं नैरुक्तवाक्यं बुद्धौ भवेत्, तच्च न मूलकारणप्रतिपादनपरम्, महासर्गादूर्ध्वं स्थितिकालेऽपि तद्वाक्योदितानां जन्मादीनां भावविकाराणामुपपत्तेः,इति शङ्कानिराकरणार्थं वेदोक्तोत्पत्तिस्थितिभङ्गग्रहणमित्याह—**यास्कपरिपठितानां त्विति** । नन्वेवमप्युत्पत्तिमात्रं सूच्यतां, तन्नान्तरीयकतया तु स्थितिभङ्गं गम्यत इत्यत आह-**योत्पत्तिर्ब्रह्मणः** कारणादिति । त्रिभिरस्योपादानत्वं सूच्यते । उत्पत्तिमात्रं तु निमित्तकारणसाधारणमिति नोपादानं सूचयेत् ।

आनन्दगिरीय-न्यायनिर्णयः ।

कारस्य "जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यति" इति सूत्रं मूलीकृत्य जन्मादिशब्देन षण्णामपि विकाराणां ग्रहणे नान्तर्भावोक्तिक्लेशस्तत्राऽऽह—**यास्केति** । जन्मादिसूत्रस्य नैरुक्तोक्तिमूलतयाऽनेन तदुक्तविकारग्रहे तद्वाक्यस्य पौरुषेयत्वान्मूलमानापेक्षत्वादागमस्य तन्मूलत्वे सूत्रस्यैव तत्सिद्धौ नैरुक्तोक्तिमूलतानर्थक्यादध्यक्षं तदुक्तिमूलं वाच्यं, तच्च महाभूतसर्गादूर्ध्वं संभावितं भौतिकविकारगोचरं ततो यथोक्ताध्यक्षाधीननैरुक्तोक्तिमूलत्वे सूत्रस्य जन्मादिषट्कं जगतो यतस्तद्ब्रह्मेत्युक्ते भूतपञ्चकस्य भौतिकविकारहेतुत्वात्तदेव ब्रह्मेति लक्ष्येत । न भूतपञ्चकस्य जन्मादयो मूलकारणाद्ब्रह्मणो गृह्येरन्नेतत्सूत्रमूलभूतनैरुक्तसूत्रस्य तदगोचरत्वात्तस्मान्मूलकारणं ब्रह्म न लक्षितमित्याशङ्कां निरसितुं ब्रह्मणः सकाशादुत्पत्तिर्या जगतः श्रुता यौ च तस्मिन्नेव तस्य स्थितिलयौ श्रुतौ ते जन्मादिशब्देन गृह्यन्ते । तेन तद्विषये 'यतो वा' इत्यादिवाक्ये बुद्धिस्थे जगज्जन्मादिकारणं ब्रह्म लक्षितं भवतीत्यर्थः । न चैवमपि जन्मैव

**तत्रैव स्थितिः, प्रलयश्च, त एव गृह्यन्ते । न यथोक्तविशेषणस्य जगतो यथोक्तविशेषणमीश्वरं मुक्त्वाऽन्यतः प्रधानादचेतनादणुभ्यो वा भावाद्वा संसारिणो वोत्पत्त्यादि सम्भावयितुं शक्यम् ॥ न च स्वभावतः ।**

रत्नप्रभा ।

अधुना संक्षेपेण तां दर्शयति—न **यथोक्तेत्यादिना** ॥ नामरूपाभ्यां व्याकृतस्येत्यादीनां चतुर्णां जगद्विशेषणानां व्याख्यानावसरे प्रधानशून्ययोः संसारिणश्च निरासो दर्शितः । परमाणूनामचेतनानां स्वतः प्रवृत्त्ययोगाज्जीवादन्यस्य ज्ञानशून्यत्वनियमेनानुमानात्सर्वज्ञेश्वरासिद्धौ तेषां प्रेरकाभावाज्जगदारम्भकत्वासम्भव इति भावः । स्वभावादेव विचित्रं जगदिति **लोकायतः** । तं प्रत्याह—**न चेति** ॥ जगत उत्पत्त्यादि सम्भावयितुं न शक्यमित्यन्वयः । किं स्वयमेव स्वस्य हेतुरिति स्वभावः—उत—

भामती ।

तदिदमुक्तम्—**तत्रैवेति** । पूर्वोक्तानां कार्यकारणविशेषणानां प्रयोजनमाह—**न यथोक्तेति** । तदनेन प्रबन्धेन प्रतिज्ञाविषयस्य ब्रह्मस्वरूपस्य लक्षणद्वारेण संभावनोक्ता । तत्र प्रमाणं वक्तव्यम् । यथाहुर्नैयायिकाः—'संभावितः प्रतिज्ञायां पक्षः साध्येत हेतुना । न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः ॥ यथा च वन्ध्या जननी' इत्यादिरिति । इत्थं नाम जन्मादिसंभावनाहेतुः, यदन्ये वैशेषिकादय

आनन्दगिरीय–न्यायनिर्णयः ।

सूत्र्यतां तन्नान्तरीयकतया स्थितिभङ्गं सेत्स्यतीति युक्तम् । जन्ममात्रस्य निमित्तादपि संभवाद्भिरस्योपादानतासूचनादन्यत्र स्थितिलयायोगात् । न च लयाधारत्वादेवोपादानत्वे जन्मस्थितिवचनानर्थक्यं प्रकृतिविकाराभेदेनाद्वैतसिद्धये त्रयाणामादेयत्वात् । अन्यथा ब्रह्मणो जगदुपादानत्वे तदुत्पत्तिस्थित्योरन्योऽधिष्ठाता कुम्भोद्भवे कुम्भकारवद्राज्यस्थेम्नि राजवच्चेत्याशङ्क्येत तन्मा शङ्कीति त्रयाणां ग्रहणमिति भावः । युक्तिं विना लक्षणस्यातिव्याप्त्यसमाधेरर्थादनेन साऽपि सूत्रितेति तामुपन्यस्यति—**नेत्यादिना** । नामरूपाभ्यामित्यादिनोक्तविशेषणचतुष्टयविशिष्टस्येत्याह—**यथोक्तेति** । सर्वज्ञं सर्वशक्तिसमन्वितमित्युक्तं स्मारयति—**यथोक्तविशेषणमिति** । उक्तस्य जगतो नोक्तमीश्वरं मुक्त्वाऽन्यस्मादुत्पत्त्यादि संभावयितुं शक्यमिति संबन्धः । ननु सर्वे विकाराः सुखदुःखमोहसामान्यप्रकृतिकास्तदन्वितस्वभावत्वाद्ये यदन्वितस्वभावास्ते तत्प्रकृतिका यथा मृदन्वितस्वभावाः शरावादयो मृत्प्रकृतिका इत्यनुमानात्प्रधानाज्जगज्जन्मादि स्यादित्याशङ्क्याऽऽह—**न प्रधानादिति** । तद्धचेतनं जगदनभिज्ञं न तस्योत्पत्त्यादि कर्तुमीष्टेऽन्तर्बहिर्भावेन सुखादीनां पटादीनां चाध्यक्षेण भेदग्रहादेकार्थज्ञाने चैकस्यैव ज्ञातुः सुखाद्यात्मत्वेन युगपत्तद्ग्रहापाताद्धेत्वसिद्धेर्न प्रधानकारणता । **रचनानुपपत्त्यधिकरणे** चैतद्वक्ष्यतीति भावः । सर्वं कार्यद्रव्यं स्वपरिमाणादणुतरपरिमाणसंयोगसचिवसमानजातीयानेकद्रव्यारब्धं कार्यद्रव्यत्वाद्घटवदित्यनुमानादणुभ्यो जगज्जन्मादि संभावितमित्याशङ्क्याऽऽह—**नाणुभ्य इति** । दीर्घविस्तीर्णदुकूलारब्धरज्जुद्रव्यस्य ह्रस्वस्यापि कार्यद्रव्यत्वेनानैकान्त्याद्**वैशेषिकाधिकरणे** चाणुकारणतानिराकरणान्न तेभ्यो जगज्जन्मादीत्यर्थः । शून्यवादिनस्तु सर्वं कार्यमभावपूर्वकं योग्यत्वे सत्यदृष्टपूर्वावस्थत्वात्परकीयात्मवदिति व्यतिरेकिणा शून्यस्य जगद्धेतुतामाहुस्तान्प्रत्याह—**नाभावादिति** । घटस्य पूर्वावस्था मृदध्यक्षेति हेत्वसिद्धेर्न शून्यस्य जगद्धेतुतेत्यर्थः । केचित्तु हिरण्यगर्भं संसारिणमेवाऽऽगमाज्जगद्धेतुमाचक्षते, तान्प्रत्युक्तं—**न संसारिणो वेति**[१] । आगमस्य वेदविरुद्धत्वे प्रामाण्यायोगान्नासौ जगद्धेतुरित्यर्थः । स्वभाववादं व्युदस्यति—**न चेति** ।

१ जन्मादीत्यत्रत्यादिपदेनेति शेषः ।

**विशिष्टदेशकालनिमित्तानामिहोपादानात् ॥ एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादिसाधनमीश्वरकारणिनो मन्यन्ते ॥**

रत्नप्रभा ।

कारणानपेक्षत्वम् ?–नाद्यः आत्माश्रयात् । न द्वितीयः–इत्याह–**विशिष्टेति** ॥ विशिष्टान्यसाधारणानि देशकालनिमित्तानि तेषां कार्यार्थिभिरुपादीयमानत्वात्, कार्यस्य कारणानपेक्षत्वं न युक्तमित्यर्थः । अनपेक्षत्वे धान्यार्थिनां भूविशेषे वर्षादिकाले बीजादिनिमित्ते च प्रवृत्तिर्न स्यादिति भावः । पूर्वोक्तसर्वज्ञत्वादिविशेषणकमीश्वरं मुक्त्वा जगत उत्पत्त्यादिकं न सम्भवतीति भाष्येण कर्त्तारं विना कार्यं नास्तीति व्यतिरेक उक्तः । तेन यत् कार्यं, तत् सकर्तृकमिति व्याप्तिर्ज्ञायते । एतदेव व्याप्तिज्ञानं जगति पक्षे कर्तारं साधयत्सत् सर्वज्ञेश्वरं साधयति, किं श्रुत्येति तार्किकाणां भ्रान्तिमुपन्यस्यति—**एतदेवेति** ॥ एतदेवानुमानमेव साधनं न श्रुतिरिति मन्यन्ते इति योजना ॥ अथ वैतद्व्याप्तिज्ञानमेव श्रुत्यनुग्राहकयुक्तिमात्रत्वेनास्मत्सम्मतं सदनुमानं स्वतन्त्रमिति मन्यन्त इत्यर्थः । सर्वज्ञत्वमादिशब्दार्थः । यद्वा—व्याप्तिज्ञानसहकृतमेतल्लक्षणमेवानुमानं मन्यन्त इत्यर्थः । तत्रायं विभागः–व्याप्तिज्ञानाज्जगतः कर्त्तास्तीत्यस्तित्वसिद्धिः, पश्चात्स कर्त्ता, सर्वज्ञः, जगत्कारणत्वाद्व्यतिरेकेण कुलालादिवदिति सर्वज्ञत्वसिद्धिलक्षणादिति । अत्र "मन्यन्ते" इत्यनुमानस्याभासत्वं सूचितम् । तथाहि–अंकुरादौ तावज्जीवः कर्त्ता न भवति जीवाद्भिन्नस्य घटवदचेतनत्वनियमादन्यः कर्त्ता नास्त्येवेति व्यतिरेकनिश्चयाद्यत् कार्यं तत् सकर्तृकमिति व्याप्तिज्ञानासिद्धिः । लक्षणलिङ्गकानुमाने तु बाधः, अशरीरस्य जन्यज्ञानायोगात् यज्ज्ञानं तन्मनोजन्यमिति व्याप्तिविरोधेन नित्यज्ञानासिद्धेर्ज्ञानाभावनिश्चयात् । तस्मादतीन्द्रियार्थे श्रुतिरेव शरणम् । श्रुत्यर्थसम्भावनार्थत्वेनानुमानं युक्तिमात्रं न स्वतन्त्रमिति भावः । नन्विदमयुक्तं, श्रुतेरनुमानान्तर्भावमभिप्रेत्य भवदीयसूत्रकृताऽनुमानस्यैवोपन्यस्तत्वादिति

भामती ।

इत एवानुमानादीश्वरविनिश्चयमिच्छन्तीति संभावनाहेतुतां द्रढयितुमाह–**एतदेवेति** । चोदयति–

आनन्दगिरीय-न्यायनिर्णयः ।

उत्पत्त्यादि जगतः संभावयितुं न शक्यमिति संबन्धः । स्वभावादुत्पद्यत इति स्वयमेव स्वस्य निमित्तमिति वा निमित्तानपेक्षमिति वा विवक्षितम् । नाऽऽद्यः, स्वाश्रयत्वात् । न द्वितीयः, भावाभावयोरनिमित्तत्वे यौगपद्यापातात् । स्वतःसिद्धसामर्थ्यानां चार्थानामन्योन्योपकार्योपकारकत्वस्याध्यक्षत्वादित्यर्थः । उक्तलक्षणव्यतिरेक्यनुमानादेवोक्तयुक्तिसहिताद्ब्रह्मणोऽस्तित्वादिसिद्धेः शास्त्रयोनित्वाद्यधिकरणवैयर्थ्यमित्याशङ्क्याऽऽह—**एतदेवेति** । युक्तिमदुक्तलक्षणमेव स्वतन्त्रमनुमानं सद्विशिष्टेश्वरनिश्चायकमिति यद्वैशेषिकादिमतं तदयुक्तम् । लक्षणं हि युक्तिमदपि सिद्धस्य ब्रह्मणः सजातीयादिव्यावर्तकं न तु तदीदृशमिति तत्स्वरूपनिश्चायकम् । कार्यलिङ्गकानुमानं च कारणसत्तामात्रे पर्यवस्यत्तदेकत्वादौ तटस्थम् । न च तदैक्यासिद्धौ तदीयं सर्वज्ञत्वादि ज्ञातुं शक्यं सोऽयं जगद्धेतौ नानात्वैकत्वस्पर्शी संशयो लाघवादुत्कटैककोटितां नीतो मूलकारणे विशिष्टे, ब्रह्मणि संभावनेत्युच्यते संभाविते तस्मिन्प्रमाणावकाशादुत्तराधिकरणार्थवत्तेति भावः । अथेदं सूत्रमुक्तब्रह्मनिश्चायकं न वा ? । न चेदप्रामाण्यात्तदुक्तलक्षणेऽपि विश्वासो

१ जन्मादिकारणत्वलक्षणात् । २ व्याससहर्षिणा ।

**नन्विहापि तदेवोपन्यस्तं जन्मादिसूत्रे ॥ न ॥ वेदान्तवाक्यकुसुमग्रथनार्थत्वात्सूत्राणाम् ॥ वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते ॥ वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिः, नानुमानादिप्रमाणान्तरनिर्वृत्ता ॥ सत्सु तु वेदान्तवाक्येषु—**

रत्नप्रभा ।

वैशेषिकः शंकते—**नन्विति** ॥ ततो मन्यन्ते इत्यनुमानस्याभासोक्तिरयुक्तेति भावः । यदि श्रुतीनां स्वतन्त्रमानत्वं न स्यात्तर्हि "तत्तु समन्वयाद्" [ १ । १ । ४ । ( ४ ) ] इत्यादिना तासां तात्पर्यं सूत्रकृन्न विचारयेत् । तस्मादुत्तरसूत्राणां श्रुतिविचारार्थत्वाज्जन्मादिसूत्रेऽपि श्रुतिरेव स्वातन्त्र्येण विचार्यते, नानुमानमिति परिहरति—**नेति** ॥ किञ्च मुमुक्षोर्ब्रह्मावगतिरभीष्टा, यदर्थमस्य शास्त्रस्यारम्भः, सा च नानुमानात्, "तन्त्वौपनिषदम्" [ बृ० ३ । ९ । २६ ] इति श्रुतेः । अतो नानुमानं विचार्यमित्याह—**वाक्यार्थेति** ॥ वाक्यस्य तदर्थस्य च विचाराद्यदध्यवसानं तात्पर्यनिश्चयः, प्रमेयसम्भवनिश्चयश्च तेन जाता ब्रह्मावगतिर्मुक्तये भवतीत्यर्थः । अत्र सम्भवो बाधाभावः । ननु किमनुमानमुपेक्षितमेव, नेत्याह—**सत्सु त्विति** ॥ विमतमभिन्ननिमित्तोपादानकं, विमतं चेतनप्रकृतिकं कार्यत्वात्-

भामती ।

**नन्विहापीति** । एतावतैवाधिकरणार्थे समाप्ते वक्ष्यमाणाधिकरणार्थमनुवदन्सुहृद्भावेन परिहरति—**न** । **वेदान्तेति** । वेदान्तवाक्यकुसुमग्रंथनार्थतामेव दर्शयति—**वेदान्तेति** । विचारस्याध्यवसानं सवासनाविद्याद्वयोच्छेदः । ततो हि ब्रह्मावगतेर्निर्वृत्तिराविर्भावः । तत्किं ब्रह्मणि शब्दादृते न मानान्तरमनुसरणीयम् । तथा च कुतो मननं, कुतश्च तदनुभवः साक्षात्कार इत्यत आह—**सत्सु तु वेदान्तवाक्येष्विति** । अनुमानं वेदान्ताविरोधि तदुपजीवि चेत्यपि द्रष्टव्यम् । शब्दाविरोधिन्या तदुपजीविन्या च युक्त्या विवेचनं मननम् । युक्तिश्चार्थापत्तिरनुमानं वा । स्यादेतत् । यथा धर्मे न पुरुषबुद्धिसाहाय्यम्, एवं ब्रह्मण्यपि कस्मान्न

आनन्दगिरीय—न्यायनिर्णयः ।

न स्यात् । आद्ये व्यतिरेकिणो लक्षणस्य सूत्रोक्तकार्यलिङ्गकानुमानवन्नानिश्चायकतेति चोदयति—**नन्विति** । तदेवेत्येवकारेणाऽऽगमो वा तदनुगुणयुक्तिर्वा न सूत्रितेत्युच्यते प्रस्तुतानुमानं तदर्थः । 'नावेदविन्मनुते' 'नैषा तर्केण' इत्यादिश्रुतेर्वैदिकं ब्रह्मेत्युक्तयुक्त्यनुगृहीतलक्षणाख्यव्यतिरेक्यात्मकागमोक्तिपरं सूत्रमिति परिहरति—**नेत्यादिना** । कार्यानुमानस्य यत इत्यादिश्रुत्युक्तत्वेऽपि नानुमानात्मना निश्चायकत्वम् । तेन संभावनामात्राभिधानादागमात्मना निश्चायकत्वमिति भावः । उत्तरसूत्रेष्वपि तुल्यमागमप्राधान्यमिति वक्तुं सूत्राणामित्युक्तम् । सूत्रेषु कुसुमग्रथनवन्न वाक्यग्रथनं मुख्यमित्याशंक्याऽऽह—**वेदान्तेति** । तेषामपौरुषेयत्वेन निर्दोषाणां स्वत एव स्वार्थनिर्णायकत्वाद्विचारानर्थक्यमित्याशंक्याऽह—**वाक्यार्थेति** । वाक्यस्य तदर्थस्य च तात्पर्यनिश्चयार्थं संभावनार्थं च विचारणा तस्याश्चाध्यवसानं तदुभयनिश्चयस्तेन निर्वृत्तो ब्रह्मसाक्षात्कारस्तस्माद्विचारोऽर्थवानित्यर्थः । विचारावधारितशक्तितात्पर्याभ्यां प्रमापकं शब्दं हित्वा शक्तिमात्रेण प्रमापकं प्रमाणान्तरं ब्रह्मणि लाघवादादेयमित्याशङ्क्याऽऽह—**नेति** । ब्रह्मणस्तदगोचरत्वादित्यर्थः । तर्हि शब्दादेव ब्रह्मसिद्धेर्मननविधिर्युक्तिसूत्रणं च कथमित्याशंक्याह—**सत्स्विति** । विमत-

१ आ० पा० वाक्यग्रथना ।

**जगतो जन्मादिकारणवादिषु तदर्थग्रहणदार्ढ्यायानुमानमपि वेदान्तवाक्याविरोधि प्रमाणं भवन्न निवार्यते ॥ श्रुत्यैव च तर्कस्याप्यभ्युपेतत्वात् ॥ तथाहि-"श्रोतव्यो मन्तव्यः"-[बृह० २।४।५] इति श्रुतिः, "पण्डितो मेधावी गन्धारामेवोपसम्पद्येतैवमेवेहाचार्यवान्पुरुषो वेद"-[ छान्दो० ६।१४।२ ] इति च पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति । न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायाम् ॥**

रत्नप्रभा ।

सुखादिवदित्यनुमानं श्रुत्यर्थदार्ढ्यायापेक्षितमित्यर्थः । **दार्ढ्यं**-संशयविपर्यासनिवृत्तिः । "**मन्तव्यः**" [ बृ० २।४।५ ] इतिश्रुतार्थस्तर्केण सम्भावनीय इत्यर्थः । **यथा**—कश्चिद् गन्धारदेशेभ्यश्चोरैरन्यत्रारण्ये बद्धनेत्र एव त्यक्तः केनचिन्मुक्तबन्धस्तदुक्तमार्गग्रहणसमर्थः पण्डितः स्वयं तर्ककुशलो मेधावी स्वदेशानेव प्राप्नुयाद्, एवमेवेहाविद्याकामादिभिः स्वरूपानन्दात् प्रच्याव्यास्मिन्नरण्ये संसारे क्षिप्तः केनचिद्दयापरवशेनाचार्येण नासि त्वं संसारी, किन्तु "तत्त्वमसि" [ छा० ६।८।७-१६ ] इत्युपदिष्टस्वरूपः स्वयं तर्ककुशलश्चेत् स्वरूपं जानीयान्नान्यथेति श्रुतिः स्वस्याः पुरुषमतिरूपतर्कापेक्षां दर्शयतीत्याह-**पण्डित इति** ॥ **आत्मनः** श्रुतेरित्यर्थः । **ननु** ब्रह्मणो मननाद्यपेक्षा न युक्ता वेदार्थत्वाद्धर्मवत्, किन्तु श्रुतिलिङ्गवाक्यादय एवापेक्षिता इत्यत आह-**नेति** ॥ जिज्ञास्ये धर्म इव

भामती ।

भवतीत्यत आह-**न धर्मजिज्ञासायामिवेति** ॥ **श्रुत्यादय इति**। श्रुतीतिहासपुराणस्मृतयः प्रमाणम् ।

आनन्दगिरीय-न्यायनिर्णयः ।

मभिन्नोपादानाधिष्ठातृकं कार्यत्वात्सुखादिवत् । विमतं चेतनप्रकृतिकं कार्यत्वात्तद्वदित्याह-**अनुमानमपीति** । तेषु सत्सु तदपि प्रमाणं भवन्न निवार्यत इति संवन्धः । विचारसंस्कृतवेदान्तानां स्वार्थबोधित्वसिद्धौ किं तेनेत्याशङ्क्याऽऽह-**तदर्थेति** । तेषामर्थो जगतोऽभिन्ननिमित्तोपादानत्वं तस्य ग्रहणं स्वीकारस्तस्य दार्ढ्यं तदुपयोगिसंभावनात्मा निश्चयस्तदर्थमनुमानमित्यर्थः । विमतं भिन्नोपादानाधिष्ठातृकं कार्यद्रव्यत्वाद्घटवदित्यनुमानबाध इति चेन्नेत्याह-**वेदान्तेति** । जगतश्चेतनोपादानतानिमित्तत्ववादिवेदविरोधान्न तेऽनुमानम् । मन्मते तदविरोधात्तदर्थे संभावनाहेतुरित्यर्थः । जगद्धेतुर्न तर्कगम्यो वैदिकत्वात्परिशुद्धवस्तुवदित्याशङ्क्याऽऽह-**श्रुत्येति** । तर्कस्य वस्तुनिश्चयाय श्रुत्यैवेष्टतया साध्यविकलतेत्यर्थः । **काऽसौ** श्रुतिरित्युक्ते श्रवणातिरेकेण मननं युक्त्यनुसंधानं विदधतीं श्रुतिमाह-**श्रोतव्य इति** । न केवलं श्रौतस्तर्कोऽत्रोपयुज्यते किंतु प्रतिबन्धनिवर्तकत्वेन लौकिकोऽपीत्यत्र श्रुतिमाह-**पण्डित इति** । उक्तार्थधीसामर्थ्यं पाण्डित्यम् । अनुक्तेऽपि प्रयोजकशिक्षयोत्प्रेक्षाशक्तिर्मेधावित्वम् । यथा कश्चिद्गन्धारदेशेभ्यः समानीय चौरैररण्ये बद्धचक्षुर्निक्षिप्तो देशिकोपदेशतस्तदुक्तस्य साकल्येन ज्ञाता **पण्डितः** स्वयमूहापोहक्षमो **मेधावी** गन्धारानेव प्राप्नोति । एवं ब्रह्मणः सकाशादाच्छिद्य विवेकदृशं निरुध्याविद्यादिभिः संसारारण्ये निहितो जन्तुरतिकारुणिकगुरूपदेशतः स्वस्वभावं प्रतिपद्यत इत्यर्थः । श्रुतितात्पर्यमाह-**पुरुषेति** । आत्मनः श्रुतेरित्यर्थः । ननु धर्मवद्विशेषाद्ब्रह्मापि श्रुत्याद्येवापेक्षते तत्कथं तत्र श्रुतिस्तर्कं सहायीकरोति तत्राऽऽह-**नेत्यादिना** । दृष्टान्ते जिज्ञास्यो धर्मो दार्ष्टान्तिके तादृग्ब्रह्म ग्राह्यम् । श्रुत्यादय इत्यादिशब्देन लिङ्गवाक्यप्रकरणस्थानसमाख्या गृह्यन्ते । तत्र पदान्तरनिरपेक्षः शब्दः श्रुतिः । श्रुतस्यार्थस्यार्थान्तरेणाविना-

१ आ० पा० श्रुत्यैव च सहायत्वेन तर्कस्याभ्युपेयत्वात् ।-पा० तर्कस्याभ्युपगम्यमानत्वात् । २ श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्" इति जैमिनीयसूत्रम् ।

**किन्तु श्रुत्यादयोऽनुभवादयश्च यथासम्भवमिह प्रमाणम् । अनुभवावसानत्वाद्, भूतवस्तुविषयत्वाच्च ब्रह्मविज्ञानस्य ॥ कर्तव्ये हि विषये नानुभवापेक्षास्तीति श्रुत्यादीनामेव प्रामाण्यं स्यात् ।**

---

रत्नप्रभा ।

जिज्ञास्ये ब्रह्मणि इति व्याख्येयम् । अनुभवः ब्रह्मसाक्षात्काराख्यो विद्वदनुभवः । आदिपदान्मनननिदिध्यासनयोर्ग्रहः । तत्र हेतुमाह—**अनुभवेति** ॥ मुक्त्यर्थं ब्रह्मज्ञानस्य शाब्दस्य साक्षात्कारावसानत्वापेक्षणात् प्रत्यग्भूतसिद्धब्रह्मगोचरत्वेन साक्षात्कारफलकत्वसम्भवात्तदर्थं मननाद्यपेक्षा युक्ता । धर्मे तु नित्यपरोक्षे साध्ये साक्षात्कारस्यानपेक्षितत्वादसम्भवाच्च श्रुत्या निर्णयमात्रमनुष्ठानायापेक्षितम् । लिङ्गादयस्तु श्रुत्यन्तर्भूता एव श्रुतिद्वारा निर्णयोपयोगित्वेनापेक्ष्यन्ते । न मननादयः । अनुपयोगादित्यर्थः । निरपेक्षः शब्दः—**श्रुतिः** ॥ शब्दस्यार्थप्रकाशनसामर्थ्यं—**लिंगम्** ॥ पदयोग्येतरपदाकांक्षं—**वाक्यम्** ॥ अङ्गवाक्यसापेक्षं प्रधानवाक्यं—**प्रकरणम्** ॥ क्रमपठितानामर्थानां क्रमपठितैर्यथाक्रमं सम्बन्धः—**स्थानम्** ॥ यथा—ऐन्द्राग्न्यादय इष्टयो दश क्रमेण पठिताः । दशमन्त्राश्च "**इन्द्राग्नी रोचना दिवः**" इत्याद्याः । तत्र प्रथमेष्टौ प्रथममन्त्रस्य विनियोग इत्याद्यूहनीयम् । संज्ञासाम्यं—**समाख्या** । यथाऽऽध्वर्यवसंज्ञकानां मन्त्राणामाध्वर्यवसंज्ञके कर्मणि विनियोग इति विवेकः । **एवं तावद्** ब्रह्म, न

भामती ।

अनुभवोऽन्तःकरणवृत्तिभेदो ब्रह्मसाक्षात्कारस्तस्याविद्यानिवृत्तिद्वारेण ब्रह्मस्वरूपाविर्भावः प्रमाणफलम् । तच्च फलमिव फलमिति गमयितव्यम् । यद्यपि धर्मजिज्ञासायामपि सामग्र्यां प्रत्यक्षादीनां व्यापारस्तथापि साक्षान्नास्ति । ब्रह्मजिज्ञासायां तु साक्षादनुभवादीनां संभवोऽनुभवार्था च ब्रह्मजिज्ञासेत्याह—**अनुभवावसानत्वात्** । ब्रह्मानुभवो ब्रह्मसाक्षात्कारः परमपुरुषार्थः, निर्मृष्टनिखिलदुःखपरमानन्दरूपत्वादिति । ननु भवतु ब्रह्मानुभवार्था जिज्ञासा, तदनुभव एव त्वशक्यः, ब्रह्मणस्तद्विषयत्वायोग्यत्वादित्यत आह—**भूतवस्तुविषयत्वाच्च ब्रह्मविज्ञानस्य** । व्यतिरेकसाक्षात्कारस्य विकल्परूपो विषयविषयिभावः । न त्वेवं धर्मज्ञानमनुभवावसानं, तदनुभवस्य स्वयमपुरुषार्थत्वात्, तदनुष्ठानसाध्यत्वात् पुरुषार्थस्य, अनुष्ठानस्य च विनाप्यनुभवं शाब्दज्ञानमात्रादेव सिद्धेरित्याह—**कर्तव्ये हीत्यादिना** । न चायं साक्षात्कारविषयतायोग्योऽप्यवर्त-

आनन्दगिरीय—न्यायनिर्णयः ।

भावो **लिंगम्** । अन्योन्याकांक्षासंनिधियोग्यतावन्ति पदानि **वाक्यम्** । वाक्यद्वयसामर्थ्यमारभ्याधीतविषयं **प्रकरणम्** । क्रमवर्तिनां पदार्थानां क्रमवर्तिभिरर्थैर्यथाक्रमं संबन्धः **स्थानम्** । संज्ञासाम्यं **समाख्या** । गुणोपसंहारे चैषामुदाहरणानि वक्ष्यन्ते । किं तर्हि जिज्ञास्ये ब्रह्मणि प्रमाणान्तरमितिप्रश्नपूर्वकमाह—**किंत्विति** । अनुभवो ब्रह्मसाक्षात्कारो विद्वदनुभवः । आदिपदमनुमानादिसंग्रहार्थम् । श्रुत्यादीनामनुमानादीनां च शब्दशक्तितात्पर्यावधृतिद्वाराऽनुभवमुत्पाद्य ब्रह्मणि प्रामाण्यमनुभवस्य साक्षादेव तदविद्याध्वंसित्वेनेति मत्वोक्तं **यथासंभवमिति** । वेदार्थत्वाद्धर्मवद्ब्रह्मण्यपि नानुभवः संभवतीत्याशङ्क्य तदयोग्यत्वमुपाधिरित्याह—**अनुभवेति** । न हि ज्ञातेऽपि ब्रह्मण्यनुभवं विना नैराकांक्ष्यमतस्तज्ज्ञानस्यानुभवान्तत्वात्तस्मिन्नसावस्तीत्यर्थः । साधनव्याप्तिमाशङ्क्याऽऽह—**भूतेति** । चकारः शङ्कानिरासी । ननु कर्मवाक्याना ( णा ) मनुभवानपेक्षफलवज्ज्ञानजनकत्वाद्ब्रह्मवाक्याना ( णा ) मपि वेदप्रमाणत्वात्ताद्दग्धीजनकत्वं नेत्याह—**कर्तव्य इति** । धर्मस्यानुभवायोग्यत्वात्तदनुष्ठानस्य च शाब्दधीमात्रादेव

**पुरुषाधीनात्मलाभत्वाच्च कर्तव्यस्य-कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं लौकिकं वैदिकं च कर्म । यथा-अश्वेन गच्छति, पद्भ्यामन्यथा वा, न गच्छतीति, तथा "अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति", "उदिते जुहोति", "अनुदिते जुहोति" इति विधिप्रतिषेधाश्चात्रार्थवन्तस्स्युः ।**

---

रत्नप्रभा ।

मननाद्यपेक्षं, वेदार्थत्वाद्, धर्मवदित्यनुमाने साध्यत्वेन धर्मस्यानुभवायोग्यत्वम्, अनपेक्षितानुभवत्वं चोपाधिरित्युक्तम् । उपाधिव्यतिरेकाद् ब्रह्मणि मननाद्यपेक्षित्वं चोक्तम् । तत्र यदि वेदार्थत्वमात्रेण ब्रह्मणो धर्मेण साम्यं त्वयोच्येत, तर्हि कृतिसाध्यत्वं विधिनिषेधविकल्पोत्सर्गापवादाश्च ब्रह्मणि धर्मवत् स्युरिति । विपक्षे बाधकमाह-**पुरुषेत्यादिना** ॥ पुरुषकृत्यधीनः आत्मलाभः उत्पत्तिर्यस्य तद्भावाच्च धर्मे श्रुत्यादीनामेव प्रामाण्यमित्यन्वयः ॥ धर्मस्य साध्यत्वं लौकिककर्मदृष्टान्तेन स्फुटयति-**कर्तुमिति** ॥ लौकिकवदित्यर्थः ॥ दृष्टान्तं स्फुटयति-**यथेति** ॥ दार्ष्टान्तिकमाह-**तथेति** ॥ तद्वद्धर्मस्य कर्तुमकर्तुं शक्यत्वमुक्त्वाऽन्यथाकर्तुं शक्यत्वमाह-**उदित इति** ॥ धर्मस्य साध्यत्वमुपपाद्य तत्र विध्यादियोग्यतामाह-**विधीति** ॥ **विधिप्रतिषेधाश्च** विकल्पादयश्च धर्मे साध्ये येऽर्थवन्तः सावकाशा भवन्ति ते ब्रह्मण्यपि स्युरित्यर्थः । **"यजेत" "न सुरां पिबेद्"** इत्यादयो विधिनिषेधाः, व्रीहिभिर्यवैर्वा यजेतेति संभावितो विकल्पः, ग्रहणाग्रहणयोरैच्छिकः, उदितानुदितहोमयोर्व्यवस्थितविकल्पः, **"न हिंस्याद्"** इत्युत्सर्गः, **"अग्नीषोमीयं पशुमालभेत"** इत्यपवादः,-तथा **"आहवनीये जुहोति"** इत्युत्सर्गः, **"अश्वस्य पदेपदे जुहोति"**

भामती ।

मानत्वात्, अवर्तमानश्चानवस्थितत्वादित्याह-**पुरुषाधीनेति** । पुरुषाधीनत्वमेव लौकिकवैदिककार्याणामाह-**कर्तुमकर्तुमिति** । लौकिकं कार्यमनवस्थितमुदाहरति-**यथाश्वेनेति** । लौकिकेनोदाहरणेन सह वैदिकमुदाहरणं समुच्चिनोति-**तथातिरात्र इति** । कर्तुमकर्तुमित्यस्येदमुदाहरणमुक्तम् । कर्तुमन्यथा वा कर्तुमित्यस्योदाहरणमाह-**उदित इति** । स्यादेतत् । पुरुषस्वातन्त्र्यात् कर्तव्ये विधिप्रतिषेधानामानर्थक्यम्, अतदधीनत्वात् पुरुषप्रवृत्तिनिवृत्त्योरित्यत आह-**विधिप्रतिषेधाश्चात्रार्थवन्तः स्युः** । गृह्णातीति विधिः । न गृह्णातीति प्रतिषेधः । उदितानुदितहोमयोर्विधी । एवं नारास्थिस्पर्शननिषेधो ब्रह्मघ्नश्च

आनन्दगिरीय-न्यायनिर्णयः ।

सिद्धेर्धर्मवाक्यानां ( णां ) युक्तमुक्तधीजनकत्वम् । ब्रह्मणि त्वनुभवयोग्ये तद्वाक्यानां नैवमित्यर्थः । धर्मस्यापि ब्रह्मवदनुभवयोग्यत्वं वेदार्थत्वादित्याशङ्क्याकार्यत्वमुपाधिरित्याह--**पुरुषेति** । चकारोऽत्रापि शङ्कानिरासी । कर्तव्येऽपि तुल्यमसाध्यत्वमित्याशङ्क्य लौकिके वैदिके च कर्मणि साध्यत्वमाह-**कर्तुमिति** । तत्र लौकिकमुदाहरति--**यथेति** । तेन सह वैदिकं दृष्टान्तं समुच्चिनोति--**तथेति** । कर्तुमकर्तुमित्यस्य दृष्टान्तमुक्त्वा कर्तुमन्यथा वा कर्तुमित्यस्य दृष्टान्तमाह--**उदित इति** । इतोऽपि कर्मणो नानुभवयोग्यतेत्याह--**विधीति** । यजेतेत्यादयो विधयो न हन्यादित्यादयो निषेधाश्च कर्मणि सावकाशा-

---

१ आ० पा० त्मलाभत्वे ।

**विकल्पोत्सर्गापवादाश्च ॥ न तु–वस्त्वेवं, नैवमस्ति, नास्तीति वा,–विकल्प्यते ॥ विकल्पनास्तु पुरुषबुद्ध्यपेक्षाः ॥ न वस्तुयाथात्म्यज्ञानं पुरुषबुद्ध्यपेक्षम् ॥ किं तर्हि ॥ वस्तुतन्त्रमेव तत् ॥**

रत्नप्रभा ।

इत्यपवाद इति विवेकः । एते ब्रह्मणि स्युरित्यत्रेष्टापत्तिं वारयति—**न त्वित्यादिना–भूतवस्तुविषयत्वादित्यन्तेन** ॥ इदं वस्तु एवं नैवं घटः पटो वेति प्रकारविकल्पः । अस्ति नास्ति वेति सत्तास्वरूपविकल्पः । **ननु** वस्तुन्यप्यात्मादौ वादिनामस्ति नास्तीत्यादिविकल्पा दृश्यन्ते तत्राह—**विकल्पनास्त्विति** ॥ अस्तित्वादिकोटिस्मरणं पुरुषबुद्धिः, तन्मूला मनस्पन्दितमात्राः[1] संशयविपर्ययविकल्पाः, न प्रमारूपा इत्यक्षरार्थः । **अयं भावः**–धर्मो हि **यथायथा** ज्ञायते, **तथातथा कर्तुं** शक्यते इति यथाशास्त्रं पुरुषबुद्ध्यपेक्षाः विकल्पाः सर्वे प्रमारूपा एव भवन्ति । तत्साम्ये ब्रह्मण्यपि सर्वे विकल्पा यथार्थाः स्युरिति । तत्रापि ओमिति[2] वदन्तं प्रत्याह–**नेति** ॥ **यदि** सिद्धवस्तुज्ञानमपि साध्यज्ञानवत् पुरुषबुद्धिमपेक्ष्य जायेत, **तदा** सिद्धे विकल्पा यथार्थाः स्युः, न सिद्धवस्तुज्ञानं पौरुषम् । **किं तर्हि** । प्रमाणवस्तुजन्यम् । तथा च वस्तुन एकरूपत्वादेकमेव

भामती ।

तद्धारणविधिरित्येवंजातीयका विधिप्रतिषेधा अर्थवन्तः । कुत इत्यत आह—**विकल्पोत्सर्गापवादाश्च** । चो हेतौ । यस्माद्ग्रहणाग्रहणयोरुदितानुदितहोमयोश्च विरोधात्समुच्चयासंभवे तुल्यबलतया च बाध्यबाधकभावाभावे सत्यगत्या विकल्पः । नारास्थिस्पर्शननिषेधतद्धारणयोश्च विरुद्धयोरतुल्यबलतया न विकल्पः । किंतु सामान्यशास्त्रस्य स्पर्शननिषेधस्य धारणविधिविषयेण विशेषशास्त्रेण बाधः । एतदुक्तं भवति–विधिप्रतिषेधैरेव स तादृशो विषयोऽनागतोत्पाद्यरूप उपनीतः, येन पुरुषस्य विधिनिषेधाधीनप्रवृत्तिनिवृत्त्योरपि स्वातन्त्र्यं भवतीति । भूते वस्तुनि तु नेयमस्ति विधेत्याह—**न तु वस्त्वेवं नैवमिति** । तदनेन प्रकारविकल्पो निरस्तः । प्रकारिविकल्पं निषेधति—**अस्ति नास्तीति** । स्यादेतत् । भूतेऽपि वस्तुनि विकल्पो दृष्टः, यथा स्थाणुर्वा पुरुषो वेति, तत्कथं न वस्तु विकल्प्यत इत्यत आह—**विकल्पनास्त्विति** । पुरुषबुद्धिः—अन्तःकरणं, तदपेक्षा विकल्पनाः—संशयविपर्यासाः । सवासनमनोमात्रयोनयो वा, यथा स्वप्ने । सवासनेन्द्रियमनोयोनयो वा, यथा स्थाणुर्वा पुरुषो वेति स्थाणौ संशयः, पुरुष एवेति वा विपर्यासः । अन्यशब्देन वस्तुतः स्थाणोरन्यस्य पुरुषस्याभिधानात् । न तु पुरुषतत्त्वं वा स्थाणुतत्त्वं वापेक्षन्ते । समानधर्मधर्मिदर्शनमात्राधीनजन्मत्वात् । तस्मादयथावस्तवो विकल्पना न वस्तु विकल्पयन्ति वान्यथयन्ति वेत्यर्थः । तत्त्वज्ञानं तु न बुद्धितन्त्रं, किंतु वस्तुतन्त्रम्, अतस्ततो वस्तुविनिश्चयो युक्तः, न तु विकल्पनाभ्य इत्याह—**न वस्तुयाथात्म्येति** । एवमुक्तेन प्रकारेण भूतवस्तुविषयाणां ज्ञानानां प्रामाण्यस्य वस्तुतन्त्रतां प्रसाध्य ब्रह्म-

आनन्दगिरीय–न्यायनिर्णयः ।

स्तेन साध्यत्वादनुभवयोग्यतेत्यर्थः । तत्रैव हेत्वन्तरमाह—**विकल्पेति** । उदितानुदितहोमार्थो व्यवस्थितो विकल्पो ग्रहणाग्रहणार्थस्त्वैच्छिकः । न हिंस्यात्सर्वा भूतानीत्युत्सर्गोऽग्नीषोमीयं पशुमालभेतेत्यपवादः । ते च कर्मणि सावकाशास्तथा चाव्यवस्थितं कर्मानुभवायोग्यमित्यर्थः । ब्रह्मण्यपि तुल्यत्वादव्यवस्थितत्वस्योक्तोपाध्यसिद्धिरित्याशंक्याऽऽह—**न त्विति** । प्रकारविकल्पवत्प्रकारिविकल्पं निरस्यति—**अस्तीति** । वस्तुन्यपि विकल्पा दृष्टा वादिनामित्याशंक्याऽऽह—**विकल्पनास्त्विति** । सम्यग्ज्ञानाधीनत्वाद्वस्तुनस्तस्य च पुरुषाधीनत्वाद्वस्त्वपि तथेत्याशंक्याऽऽह—**न वस्त्विति** । कथं तर्हि तदुत्पत्तिरित्याशंक्याऽऽह—**किं तर्हीति** । पुरुषतन्त्रत्वं निषेद्धुमेवकारो न मानाधीनत्वं निषिध्यते ।

१ मनस्समुल्लासमात्राः । २ ओमङ्गीकारे ।

**न हि स्थाणावेकस्मिन्स्थाणुर्वा पुरुषोऽन्यो वेति तत्त्वज्ञानं भवति ॥ तत्र पुरुषोऽन्यो वेति मिथ्याज्ञानम् । स्थाणुरेवेति तत्त्वज्ञानम् ॥ वस्तुतन्त्रत्वात्-एवम्भूतवस्तुविषयाणां प्रामाण्यं वस्तुतन्त्रम् ॥ तत्रैवं सति ब्रह्मज्ञानमपि वस्तुतन्त्रमेव । भूतवस्तुविषयत्वात् ॥ ननु भूतवस्तुविषयत्वे ब्रह्मणः प्रमाणान्तरविषयत्वमेवेति वेदान्तवाक्यविचारणाऽनर्थिकैव प्राप्ता ॥**

---

रत्नप्रभा ।

ज्ञानं प्रमा, अन्ये विकल्पा अयथार्था एवेत्यर्थः । अत्र दृष्टान्तमाह-**न हि स्थाणाविति** ॥ स्थाणुरेवेत्यवधारणे सिद्धे सर्वे विकल्पा यथार्था न भवन्तीत्यर्थः । तत्र यद्वस्तुतन्त्रं ज्ञानं तद्यथार्थं, यत् पुरुषतन्त्रं तन्मिथ्येति विभजते-**तत्रेति** ॥ स्थाणावित्यर्थः । स्थाणावुक्तन्यायं घटादिष्वतिदिशति-**एवमिति** ॥ प्रकृतमाह—**तत्रैवं सतीति** ॥ सिद्धेऽर्थे ज्ञानप्रमात्वस्य वस्त्वधीनत्वे सति ब्रह्मज्ञानमपि वस्तुजन्यमेव यथार्थं, न पुरुषतन्त्रं, भूतार्थविषयत्वात् स्थाणुज्ञानवदित्यर्थः । अतः साध्येऽर्थे सर्वे विकल्पाः पुन्तन्त्राः, न सिद्धेऽर्थे इति वैलक्षण्यान्न धर्मसाम्यं ब्रह्मण इति मननाद्यपेक्षा सिद्धेति भावः । **ननु** तर्हि ब्रह्म प्रत्यक्षादिगोचरं धर्मविलक्षणत्वाद् घटादिवत् । तथा च जन्मादिसूत्रे जगत्कारणानुमानं विचार्यम् । सिद्धार्थे तस्य मानत्वात् । न श्रुतिः सिद्धार्थे तस्या अमानत्वेन तद्विचारस्य निष्फलत्वादिति शङ्कते-**नन्विति** ॥ प्रमाणान्तरविषयत्वमेव प्राप्तमिति कृत्वा प्रमाणान्तरस्यैव विचारप्राप्ताविति शेषः ॥ अत्र पूर्वपक्षी प्रष्टव्यः । किं यत्कार्यं तद्ब्रह्मजमित्यनुमानं ब्रह्मसाधकं, किं वा

भामती ।

ज्ञानस्य वस्तुतन्त्रतामाह-**तत्रैवं सतीति** । अत्र चोदयति-**ननु भूतेति** । यत् किल भूतार्थं वाक्यं तत्प्रमाणान्तरगोचरार्थतयानुवादकं दृष्टम् । यथा नद्यास्तीरे फलानि सन्तीति । तथा च वेदान्ताः । तस्मात् भूतार्थतया प्रमाणान्तरदृष्टमेवार्थमनुवदेयुः । उक्तं च ब्रह्मणि जगज्जन्मादिहेतुकमनुमानं प्रमाणान्तरम् । एवं च मौलिकं तदेव परीक्षणीयं, न तु वेदान्तवाक्यानि तदधीनसत्यत्वानीति कथं वेदा-

आनन्दगिरीय-न्यायनिर्णयः ।

विकल्पनानां मनःस्पन्दितमात्रत्वेनासम्यग्धीत्वं, सम्यग्धियश्च वस्त्वधीनतेत्यत्र दृष्टान्तमाह-**न हीति** । आद्यो वाशब्दोऽवधारणे । पुरोवर्तिनि स्थाणावेकस्मिन्नेव स्थाणुरेवेत्यदुष्टकरणस्य धीरितरस्य तत्रैव पुरुषो वा स्थाणुर्वेति संशयः । न हि तदुभयमपि सम्यग्ज्ञानमेकस्योभयत्वायोगादित्यर्थः । कथं तर्हि विभागधीस्तत्राऽऽह—**तत्रेति** । स्थाणुः सप्तम्यर्थः । उक्तन्यायं संचारयति-**एवमिति** । दार्ष्टान्तिकमाह-**तत्रेति** । विकल्पनानां बुद्धिजन्यत्वेनावस्त्वनुसारिणीनामसम्यग्धीत्वे सम्यग्धियश्च वस्त्वनुसारित्वे पूर्वोक्तन्यायेन स्थिते सतीति यावत् । न पुरुषतन्त्रमित्येवकारार्थः । ततो न धीद्वारा वस्तुनोऽपि तदधीनतेति शेषः । ब्रह्मज्ञानस्य वस्त्वधीनत्वेन सम्यग्धीत्वे हेतुमाह-**भूतेति** । परमार्थवस्त्ववगाहित्वादित्यर्थः । ब्रह्मणः सिद्धत्वेनासाध्यतया धर्मवैधर्म्यादनुभवयोग्यत्वात्तत्रानुभवापेक्षा युक्त्यनुप्रवेशश्चेत्युक्तम् । इदानीं ब्रह्मणि प्रमाणान्तरप्रवेशे-जन्मादिसूत्रमनुमानोपन्यासार्थमित्यनुमतमिति शङ्कते-**नन्विति** । सिद्धत्वाद्ब्रह्मणो धर्मवैजात्येऽपि मानान्तरगम्यतेत्यनुमानादिविचारं हित्वा वाक्यमात्रविचारोऽयुक्तो ब्रह्मण्युभयप्रवेशाविशेषादतः सूत्राणां वेदान्तवाक्यग्रथनार्थत्वमसिद्धमित्यर्थः । ब्रह्मणि संभावनाहेतुश्रुत्यनुगुणानुमानादिप्रवेशाद्गुणतया सिद्धिवाक्यविचारप्राधान्येन वेदान्तवाक्यग्रथनार्थता सूत्राणामिति समाधत्ते-

**न ॥ इन्द्रियाविषयत्वेन सम्बन्धाग्रहणात् ॥ स्वभावतो विषयविषयाणीन्द्रियाणि, न ब्रह्मविषयाणि ॥ सति हीन्द्रियविषयत्वे ब्रह्मणः, इदं ब्रह्मणा सम्बद्धं कार्यमिति गृह्येत ॥ कार्यमात्रमेव तु गृह्यमाणं किं ब्रह्मणा सम्बद्धं किमन्येन केनचिद्वा सम्बद्धमिति न शक्यं निश्चेतुम् ॥ तस्माज्जन्मादिसूत्रं नानुमानोपन्यासार्थम् ॥ किं तर्हि ॥ वेदांतवाक्यप्रदर्शनार्थम् ॥ किं पुनस्तद्वेदान्तवाक्यं यत्सूत्रेणेह लिलक्षयिषितम् ॥**

रत्नप्रभा ।

यत् कार्यं तत्सकारणमिति ? **नाद्यः** व्याप्त्यसिद्धेरित्याह[1]—**नेति** ॥ ब्रह्मण इन्द्रियाग्राह्यत्वात्प्रत्यक्षेण व्याप्तिग्रहायोगान्न प्रमाणान्तरविषयत्वमित्यर्थः । इन्द्रियाग्राह्यत्वं कुत इत्यत आह—**स्वभावत इति** ॥ "पराञ्चि खानि व्यतृणत् स्वयम्भूः" [ काठ० ४ । १ ] इति श्रुतेः, ब्रह्मणो रूपादिहीनत्वाच्चेत्यर्थः । इन्द्रियाग्राह्यत्वेऽपि व्याप्तिग्रहः किं न स्यादत आह—**सति हीति** ॥ तन्नास्तीति **शेषः** ॥ इदं कार्यं, ब्रह्मजम्—इति व्याप्तिप्रत्यक्षं, ब्रह्मणोऽतीन्द्रियत्वान्न सम्भवतीत्यर्थः । द्वितीये कारणसिद्धावपि कारणस्य ब्रह्मत्वं श्रुतिं विना ज्ञातुमशक्यमित्याह—**कार्यमात्रमिति** ॥ **सम्बद्धं** कृतं यस्मात्, श्रुतिमन्तरेण जगत्कारणं ब्रह्मेति निश्चयालाभः । तस्मात् तल्लाभाय श्रुतिरेव प्राधान्येन विचारणीया । अनुमानं तूपादानत्वादिसामान्यद्वारा मृदादिवद् ब्रह्मणः स्वकार्यात्मकादिश्रौतार्थसम्भावनार्थं गुणतया विचार्यमित्युपसंहरति—**तस्मादिति** ॥ एतत्सूत्रस्य विषयवाक्यं पृच्छति—**किं पुनरिति** ॥ इह ब्रह्मणि—लक्षणार्थत्वेन विचारयितुमिष्टं वाक्यं किमित्यर्थः । अत्र हि प्रथमसूत्रे विशिष्टाधिकारिणो ब्रह्मविचारं प्रतिज्ञाय ब्रह्म ज्ञातुकामस्य द्वितीयसूत्रे लक्षणमुच्यते—**तथैव** श्रुतावपि

भामती ।

न्तवाक्यग्रथनार्थता सूत्राणामित्यर्थः । परिहरति—**न** । **इन्द्रियाविषयत्वेति** । कस्मात् पुनर्नेन्द्रियविषयत्वं प्रतीच इत्यत आह—**स्वभावत इति** । अत एव श्रुतिः—'पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्' इति । **सति हीन्द्रियेति** । प्रत्यगात्मनस्त्वविषयत्वमुपपादितम् । यथा च सामान्यतोदृष्टमप्यनुमानं ब्रह्मणि न प्रवर्तते तथोपरिष्टान्निपुणतरमुपपादयिष्यामः । उपपादितं चैत-

आनन्दगिरीय—न्यायनिर्णयः ।

**नेत्यादिना** । मानान्तरमपि करणमेव ब्रह्मप्रमिताविति पक्षे प्रत्यक्षमनुमानादि वा तदिति विकल्प्य दूषयति—**इन्द्रियेति** । ब्रह्मणि करणत्वेन मानान्तराप्रवेशादिति शेषः । पराञ्चीत्यादिश्रुत्या प्रत्यक्षाविषयत्वं ब्रह्मणो विवृणोति—**स्वभावत इति** । संबन्धाग्रहणादित्युक्तं व्यनक्ति—**सति हीति** । ननु ब्रह्मसंबद्धमिदं कार्यमिति धिया किं स्यात्कार्यमेव गृह्यमाणं ब्रह्म ज्ञापयिष्यति नेत्याह—**कार्येति** । तन्मात्राद्धेतुमात्रं सिध्यति न सत्यज्ञानादिरूपं ब्रह्म तत्त्वावगमादेव ज्ञेयमित्यर्थः । श्रौतार्थे सामान्यद्वारा संभावनाहेतुर्मानान्तरमिति युक्ता सूत्राणां वेदान्तग्रथनार्थतेत्युपसंहरति—**तस्मादिति** । बहुत्वाद्वेदान्तानामेतदधिकरणविषयबुभुत्सया पृच्छति—**किं पुनरिति** । जिज्ञास्यं लक्षितं ब्रह्म सप्तम्यर्थः । विशिष्टाधिकारिणो ब्रह्म

१ कार्यमात्रस्य पक्षीकरणाद् दृष्टान्ताप्रसिद्धया व्याप्त्यसिद्धिरित्यर्थः । न च पक्षैकदेशो दृष्टान्तः संभवतीति वाच्यम् । एतदनुमानात्पूर्वं ब्रह्मासिद्धया तज्जत्वस्य पक्षैकदेशेऽपि निश्चेतुमशक्यत्वात् । अत एव व्यतिरेकिदृष्टान्तोपि न दर्शनीयः । इतः पूर्वं ब्रह्मासिद्धया तद्घटितब्रह्मजत्वाभावस्य दृ न्तेऽनिश्चितत्वादिति भावः ॥

**"भृगुर्वै वारुणिः वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति" [ तै० आ० ३।१।१ ]इत्युपक्रम्याऽऽह "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्म" [ तै० आ० ३।४।१ ] इति॥ तस्य च निर्णयवाक्यम्—"आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्ति" [ तै० आ० ३।६।१ ] इति॥ अन्यान्यप्येवञ्जातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तस्वभावसर्वज्ञस्वरूपकारणविषयाण्युदाहर्तव्यानि॥ २॥ इति जन्माद्यधिकरणम्॥ २॥**

---

रत्नप्रभा।

मुमुक्षोर्ब्रह्म ज्ञातुकामस्य जगत्कारणत्वोपलक्षणानुवादेन ब्रह्म ज्ञाप्यत इति श्रौतार्थक्रमानुसारित्वं सूत्रस्य दर्शयितुं सोमक्रमं वाक्यं पठति—**भृगुरिति**॥ अधीहि स्मारय उपदिशेत्यर्थः॥ अत्र येनेत्येकत्वं विवक्षितम्, नानात्वे ब्रह्मत्वविधानायोगात्। यज्जगत्कारणं तदेकमित्यवान्तरवाक्यं, यदेकं कारणं तद् ब्रह्मेति वा, यत्कारणं तदेकं ब्रह्मेति वा, महावाक्यमिति भेदः। किं तर्हि स्वरूपलक्षणमित्याशंक्य वाक्यशेषान्निर्णीतो यतश्शब्दार्थः सत्यज्ञानानन्द इत्याह—**तस्य चेति**॥ "यस्सर्वज्ञः" [ मुण्ड० १।१।१० ] "तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते" [ मुण्ड० १।१।१० ] "विज्ञानमानन्दं ब्रह्म" [ बृ० ३।९।२८ ] इत्यादिशाखान्तरीयवाक्यान्यप्यस्य विषय इत्याह—**अन्यान्यपीति**॥ एवञ्जातीयकत्वमेवाह—**नित्येति**॥ तदेवं सर्वासु शाखासु लक्षणद्वयवाक्यानि जिज्ञास्ये ब्रह्मणि समन्वितानि तद्विया मुक्तिरिति सिद्धम्॥ इति द्वितीयसूत्रम्॥ २॥ ( २ )॥

भामती।

दस्माभिर्विस्तरेण न्यायकणिकायाम्। न च भूतार्थतामात्रेणानुवादतेत्युपरिष्टादुपपादयिष्यामः। तस्मात्सर्वमवदातम्। श्रुतिश्च—'यतो वा' इति जन्म दर्शयति, 'येन जातानि जीवन्ति' इति जीवनं स्थितिं, 'यत्प्रयन्ति' इति तत्रैव लयम्। **तस्य च निर्णयवाक्यम्**। अत्र च प्रधानादिसंशये निर्णयवाक्यम्—**आनन्दाद्ध्येव—इति**। एतदुक्तं भवति—यथा रज्ज्वज्ञानसहितरज्जूपादाना धारा रज्ज्वां सत्यामस्ति रज्ज्वामेव च लीयते, एवमविद्यासहितब्रह्मोपादानं जगत् ब्रह्मण्येवास्ति तत्रैव च लीयत इति सिद्धम्॥२॥ ( २ )॥

आनन्दगिरीय-न्यायनिर्णयः।

ज्ञातुकामस्य जगत्कारणत्वोपलक्षणानुवादेन ब्रह्मप्रतिपादकं वाक्यं सोपक्रममाह—**भृगुरिति**। ननु प्रकृष्टप्रकाशश्चन्द्र इति स्वरूपलक्षणादृते यत्र शाखाग्रं स चन्द्र इत्युपलक्षणमात्राच्चन्द्रस्वरूपादृष्टेरुपलक्षितस्य स्वरूपलक्षणं वाच्यं तत्राऽऽह—**तस्येति**। ब्रह्मणो जगद्धेतुत्वानुवादेन स्वरूपनिर्णयक्रमानन्दत्वविधायि वाक्यम्। ततः सत्यादिवाक्याच्च स्वप्रकाशानतिशयानन्दलक्षणं ब्रह्मेति निर्णेतुं शक्यमित्यर्थः। तैत्तिरीयश्रुताविव श्रुत्यन्तरेऽपि ब्रह्मणो लक्षणद्वयवादीनि वाक्यानि 'यः सर्वज्ञः सर्ववित्' 'विज्ञानमानन्दम्' इत्यादीनि सन्ति तान्यपीहोदाहरणत्वेन द्रष्टव्यानीत्याह—**अन्यान्यपीति**। एवंजातीयकत्वमेवाऽऽह—**नित्येति**। तदेवं सर्वासु शाखासु लक्षणद्वयवादिवेदान्तवाक्यानि जिज्ञास्ये ब्रह्मणि समन्वितानीति तद्विया मुक्तिरयत्नलभ्येत्यर्थः॥ २॥ ( २ )॥॥ सूत्रान्तरमवतारयन्पूर्वसूत्रसंगति-

---

१ जन्माद्यस्य यत इति सूत्रस्य। २ स्वरूपलक्षणं तटस्थलक्षणं चेति लक्षणद्वयम्। तत्र जगज्जन्मादिकारणत्वमाद्यं, सत्यज्ञानानन्तानन्दाद्विरूपं द्वितीयमिति विवेकः।

जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तम् । तदेव द्रढयन्नाह—

**शास्त्रयोनित्वात् ॥ ३ ॥ ( ३ ) ॥ इति ॥**

रत्नप्रभा ।

यस्य निश्वसितं वेदाः सर्वार्थज्ञानशक्तयः । श्रीरामं सर्ववेत्तारं वेदवेद्यमहं भजे ॥ १ ॥ वृत्तानुवादेन सङ्गतिं वदन्नुत्तरसूत्रमवतारयति—**जगदिति** । चैतन्यस्य ब्रह्मणो जगत्कारणत्वोक्त्या सर्वज्ञत्वमर्थात् प्रतिज्ञातं सूत्रकृता, चेतनसृष्टेर्ज्ञानपूर्वकत्वात् । तथा च ब्रह्म सर्वज्ञं सर्वकारणकत्वात्, यो यत्कर्ता स तज्ज्ञः, यथा कुलाल इति स्थितम् । तदेवार्थिकं सर्वज्ञत्वं प्रधानादिनिरासाय वेदकर्तृत्वहेतुना द्रढयन्नाहेत्यर्थः । हेतुद्वयस्यैकार्थसाधनत्वादेकविषयत्वमवान्तरसंगतिः । **यद्वा**—वेदस्य नित्यत्वाद् ब्रह्मणः सर्वहेतुता नास्तीत्याक्षेपसङ्गत्या वेदहेतुत्वमुच्यते । "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः" [ बृह० २ । ४ । १० ] इति वाक्यं **विषयः** । तत् किं वेदहेतुत्वेन ब्रह्मणः सर्वज्ञत्वं साधयति उत न साधयति इति **सन्देहः** । तत्र व्याकरणादिवद्वेदस्य पौरुषेयत्वे मूलप्रमाणसापेक्षत्वेनाप्रामाण्यापातान्न साधयतीति **पूर्वपक्षे** जगद्धेतोश्चेतनत्वासिद्धिः फलम् । **सिद्धान्ते** तत्सिद्धिः । अस्य वेदान्तवाक्यस्य स्पष्टब्रह्मलिङ्गस्य वेदकर्तरि समन्वयोक्तेः **श्रुतिशास्त्राध्यायपादसंगतयः** ॥ एवमापादं श्रुत्यादिसङ्गतय ऊह्याः । वेदे हि सर्वार्थप्रकाशनशक्तिरुपलभ्यते । सा तदुपादानब्रह्मगतशक्तिपूर्विका तद्गता वा ? प्रकाशनशक्तित्वात् कार्यगतशक्तित्वाद्वा प्रदीपशक्तिवदिति वेदोपादानत्वेन ब्रह्मणः स्वसम्बद्धाशेषार्थप्रकाशनसामर्थ्यरूपं सर्वसाक्षित्वं सिद्ध्यति । **यद्वा—यथा** अध्येतारः पूर्वक्रमं ज्ञात्वा वेदं कुर्वन्ति, **तथा** विचित्रगुणमायासहायोऽनावृतानन्तस्वप्रकाशचिन्मात्रः परमेश्वरः स्वकृतपूर्वकल्पीयक्रमसजातीयक्रमवन्तं वेदराशिं तदर्थांश्च युगपज्जानन्नेव करोतीति, न वेदस्य पौरुषेयता । यत्र ह्यर्थज्ञानपूर्वकं वाक्यज्ञानं वाक्यसृष्टौ कारणं, तत्र पौरुषेयता । अत्र च यौगपद्यान्न सा । अतो वेदकर्त्ता वेदमिव तदर्थमपि स्वसम्बद्धं नान्तरीयकतया जानातीति सर्वज्ञ इति सिद्धान्तयति—**शास्त्रेति** ॥शास्त्रं प्रति

भामती ।

जगद्योनित्वादस्य भगवतः सर्वज्ञता, शास्त्रयोनित्वादपि बोद्धव्या । शास्त्रयोनित्वस्य सर्वज्ञतासाधनत्वं सूत्रान्तरमवतारयितुं पूर्वसूत्रसंगतिमाह—**जगत्कारणत्वप्रदर्शनेनेति** । **शास्त्रयोनित्वात्** ॥ न केवलं

आनन्दगिरीय—न्यायनिर्णयः ।

**माह—जगदिति** । सर्वकारणत्वं ब्रह्मलक्षणं सूत्रयता प्रधानादावतिव्याप्तिनिरासाय तद्बललब्धं सर्वज्ञत्वमर्थादुक्तं तदेवात्र साध्यते । तथा चाऽऽर्थिकप्रतिज्ञयाऽस्य संगतिरित्यर्थः । वेदानां नित्यत्वात्तदकर्तृत्वे विश्वकर्तृत्वायोगान्न तेनास्य सर्वज्ञतेत्याशङ्क्य श्रौतप्रतिज्ञयैव संगतिमाह—**तदेवेति** । वेदानां नित्यत्वेपि ब्रह्मणस्तत्कर्तृत्वसंभवोक्त्या तदेव जगद्धेतुत्वकृतं सर्वज्ञत्वमत्र दृढी क्रियते । तेन हेतुसाधनद्वारा तदीयसाध्यसाधनाद्युक्ताऽस्य श्रौत्या प्रतिज्ञया संगतिरिति भावः । अस्य महत इत्यादिवाक्यं ब्रह्मणो वेदकर्तृत्वेन सार्वज्ञ्यं न साधयत्युत साधयतीति वेदस्य सापेक्षत्वप्रसङ्गाप्रसङ्गाभ्यां संदेहे पाणिन्यादिवदर्थं दृष्ट्वा कर्तृत्वे वेदस्य पौरुषेयत्वेन सापेक्षत्वापातान्न साधयतीति प्राप्ते सिद्धान्तमाह—**शास्त्रेति** । न केवलं जगद्योनित्वादस्य सार्वज्ञ्यं किंतु शास्त्रयोनित्वादपीति योजना । अत्र च वेदकर्तृत्वोक्तेरेतदुक्तमानमेयाङ्गीकारेण शास्त्रप्रवृत्तेरस्येत्यादिस्पष्टब्रह्मलिङ्गवाक्यस्य सर्वज्ञे ब्रह्मणि समन्वयोक्तेश्च श्रुत्यादिसंगतयः । फलं तु पूर्वपक्षे ब्रह्मणः सर्वज्ञत्वानिर्धारणमुत्तरत्र तन्निर्धारणमिति द्रष्टव्यम् । शास्त्रयोनित्वस्य सर्वज्ञताहेतुत्वं

१ ईश्वरे । २ अर्थज्ञानवाक्यज्ञानयोरिति शेषः ।

**महत ऋग्वेदादेश्शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनस्सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म ॥ न हीदृशस्य शास्त्रस्य ऋग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतस्सम्भवोऽस्ति।**

रत्नप्रभा।

हेतुत्वाद् ब्रह्म सर्वज्ञं सर्वकारणं चेति सङ्गतिद्वयानुसारेण सूत्रयोजनामभिप्रेत्य पदानि व्याचष्टे—**महत इति** ॥ हेतोः सर्वज्ञत्वसिद्धये वेदस्य विशेषणानि। तत्र ग्रन्थतोऽर्थतश्च महत्त्वम्। हितशासनात् शास्त्रत्वम्। शास्त्रशब्दः शब्दमात्रोपलक्षणार्थ इति मत्वाह—**अनेकेति** ॥ "पुराणन्यायमीमांसाधर्मशास्त्राणि, शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतींषि षडङ्गानि" इति दश विद्यास्थानानि वेदार्थज्ञानहेतवः, तैरुपकृतस्येत्यर्थः। अनेन मन्वादिभिः परिगृहीतत्वेन वेदस्य प्रामाण्यं सूचितम्। अबोधकत्वाभावादपि प्रामाण्यमित्याह—**प्रदीपवदिति** ॥ सर्वार्थप्रकाशनशक्तिमत्त्वेऽप्यचेतनत्वात् सर्वज्ञकल्पत्वं योनिरुपादानं कर्तृ च। **ननु** सर्वज्ञस्य यो गुणः सर्वार्थज्ञानशक्तिमत्त्वं वेदस्य तदन्वितत्वेऽपि तद्योनेः सर्वज्ञत्वं कुत इत्यत आह—**न हीति** ॥ उपादाने तच्छक्तिं विना कार्ये तदयोगाद्वेदोपादानस्य सर्वज्ञ-

भामती।

* समर्थयते—**महत ऋग्वेदादेः शास्त्रस्येति**। चातुर्वर्ण्यस्य चातुराश्रम्यस्य च यथायथं निषेकादिश्मशानान्तासु ब्राह्ममुहूर्तोपक्रमप्रदोषपरिसमापनीयासु नित्यनैमित्तिककाम्यकर्मपद्धतिषु च ब्रह्मतत्त्वे च शिष्याणां शासनात् शास्त्रमृग्वेदादि, अत एव महाविषयत्वात् महत्। न केवलं महाविषयत्वेनास्य महत्त्वम्, अपि त्वनेकाङ्गोपाङ्गोपकरणतयापीत्याह—**अनेकविद्यास्थानोपबृंहितस्य**। पुराणन्यायमीमांसादयो दश विद्यास्थानानि तैस्तया तया द्वारोपकृतस्य। तदनेन समस्तशिष्टजनपरिग्रहेणाप्रामाण्यशङ्काप्यपाकृता। पुराणादिप्रणेतारो हि महर्षयः शिष्टास्तैस्तया तया द्वारा वेदान्व्याचक्षाणैस्तदर्थं चादरेणानुतिष्ठद्भिः परिगृहीतो वेद इति। न चायमनवबोधको नाप्यस्पष्टबोधको येनाप्रमाणं स्यादित्याह—**प्रदीपवत्सर्वार्थावद्योतिनः**। सर्वमर्थजातं सर्वथाववोधयन् नानवबोधको नाप्यस्पष्टबोधक इत्यर्थः। अत एव **सर्वज्ञकल्पस्य**—सर्वज्ञसदृशस्य। सर्वज्ञस्य हि ज्ञानं सर्वविषयं, शास्त्रस्याप्यभिधानं सर्वविषयमिति सादृश्यम्। तदेवमन्वयमुक्त्वा व्यतिरेकमाह—**न हीदृशस्येति**। सर्वज्ञस्य गुणः सर्वविषयता, तदन्वितं

आनन्दगिरीय-न्यायनिर्णयः।

वक्तुं शास्त्रं विशिनष्टि—**महत इत्यादिना**। चातुर्वर्ण्यचातुराश्रम्यादिमहाविषयत्वान्महदृगादिशास्त्रम्। न केवलं महाविषयत्वेनास्य महत्त्वं किंत्वनेकाङ्गोपाङ्गोपकरणतयाऽपीत्याह—**अनेकेति**। पुराणन्यायमीमांसाधर्मशास्त्राणि व्याकरणादिषडङ्गानि च दश विद्यास्थानानि तैस्तत्तद्द्वारोपकृतस्येति यावत्। एतेन शिष्टसंग्रहादप्रामाण्यशङ्काऽपि शास्त्रस्यार्थादपास्ता। पुराणादिप्रणेतारो महर्षयस्तथा तथा वेदान्व्याचक्षाणास्तदर्थं चाऽऽदरेणानुतिष्ठन्तो वेदानादृतवन्तस्तत्कथं तदप्रामाण्यमिति भावः। अबोधित्वास्पष्टबोधित्वयोरभावादपि वेदानां प्रामाण्यमित्याह—**प्रदीपवदिति**। उक्तमुपजीव्य सर्वज्ञत्वोपयुक्तं विशेषणान्तरमाह—**सर्वज्ञेति**। तत्सदृशस्येति यावत्। सादृश्यं च सर्वज्ञज्ञानस्य सर्वविषयत्ववदुक्तेरपि शास्त्रीयायास्तथात्वम्। कल्पप्रत्ययोऽचेतनत्वात्। उक्तविशेषणस्य वेदस्य निःश्वसितश्रुत्या विभक्तत्वहेतूपकृतया ब्रह्मकार्यतेत्याह—**योनिरिति**। व्यतिरेकमुखेणोक्तं व्यक्तीकुर्वाणः सर्वज्ञत्वं प्रतिजानीते—**न हीति**। महत्त्वादिविशेषणवत्त्वमीदृशत्वम्। तस्य सर्वज्ञादन्यतोऽसंभवे हेतुं सूचयति—**सर्वज्ञेति**। तस्य गुणः सर्वार्थज्ञानवत्त्वं तेनान्वितमिदं शास्त्रं सर्वार्थत्वादतस्तस्योत्पत्तिः सर्वज्ञादेवेत्यर्थः।

* पूर्वपत्रे भामत्यां पूर्वा पंक्तिर्द्वितीया बोध्या।

**यद्यद्विस्तरार्थं शास्त्रं, यस्मात्पुरुषविशेषात्सम्भवति, यथा—व्याकरणादि पाणिन्यादेर्ज्ञेयैकदेशार्थमपि, स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके । किमु वक्तव्यमनेकशाखाभेदभिन्नस्य तस्य देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतोर्ऋग्वेदाद्याख्यस्य—**

रत्नप्रभा ।

त्वम् । अनुमानं तु पूर्वं दर्शितम् । न चाविद्यायास्तदापत्तिः । शक्तिमत्त्वेऽप्यचेतनत्वादिति भावः । वेदः स्वविषयादधिकारार्थं ज्ञानवज्जन्यः, प्रमाणवाक्यत्वात्, व्याकरणरामायणादिवदित्यनुमानान्तरम् । तत्र व्याप्तिमाह—**यद्यदिति ॥ विस्तरः**—शब्दाधिक्यम् । अनेनार्थतोऽल्पत्वं वदन् कर्तुर्ज्ञानस्यार्थाधिक्यं सूचयति । दृश्यते चार्थवादाधिक्यं वेदे । **अत्रैषा योजना—यद्यच्छास्त्रं यस्मादाप्तात् सम्भवति, स ततः** शास्त्रादधिकार्थज्ञान इति प्रसिद्धम् । **यथा**—शब्दसाधुत्वादिर्ज्ञेयैकदेशोऽर्थो **यस्य, तदपि** व्याकरणादि पाणिन्यादेरधिकार्थज्ञानात् सम्भवति । यद्यल्पार्थमपि शास्त्रमधिकार्थज्ञानात् सम्भवति, तदा "अस्य महतः" [ बृह० २ । ४ । १० ] इत्यादिश्रुतेर्यस्मान्महतोऽपरिच्छिन्नाद्भूतात् सत्याद्योनेः सकाशादनेकशाखेत्यादिविशिष्टस्य वेदस्य पुरुषनिश्वासवदप्रयत्नेनैव सम्भवः, तस्य सर्वज्ञत्वं सर्वशक्तिमत्त्वं

भामती ।

शास्त्रम्, अस्यापि सर्वविषयत्वात् । उक्तमर्थं प्रमाणयति—**यद्यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात्संभवति स**—पुरुषविशेषः **ततोऽपि**—शास्त्राद् **अधिकतरविज्ञानः** इति योजना । अद्यत्वेऽप्यस्मदादिभिर्यत्समीचीनार्थविषयं शास्त्रं विरच्यते तत्रास्माकं वक्तॄणां वाक्याज्ज्ञानमधिकविषयम् । न हि ते तेऽसाधारणधर्मा अनुभूयमाना अपि शक्या वक्तुम् । न खल्विक्षुक्षीरगुडादीनां मधुररसभेदाः शक्याः सरस्वत्याप्याख्यातुम् । विस्तरार्थमपि वाक्यं न वक्तृज्ञानेन तुल्यविषयमिति कथयितुं विस्तरग्रहणम् । सोपनयं निगमनमाह—**किमु वक्तव्यमिति** । वेदस्य यस्मात् महतो भूतात् योनेः संभवः, तस्य महतो भूतस्य ब्रह्मणो निरतिशयं सर्वज्ञत्वं सर्वशक्तित्वं च किमु वक्तव्यमिति योजना । **अनेकशाखेति** । अत्र चाने-

आनन्दगिरीय—न्यायनिर्णयः ।

उक्तमनुमानीकर्तुं व्याप्तिमाह—**यदिति** । महाविषयत्वाद्वेदस्य ब्रह्मज्ञानेन तुल्यार्थत्वभ्रान्तिनिवृत्त्यर्थं विस्तरार्थमित्युक्तम् । यच्छब्दत्रयस्य स ततोऽपीत्युत्तरेण संबन्धः । शास्त्रप्रणेतुराप्तत्वार्थं पुरुषविशेषपदम् । यो यद्वाक्यप्रमाणप्रणेता स तद्विषयादधिकार्थज्ञानवानिति व्याप्तिभूमिमाह—**यथेति** । ब्रह्मणः शास्त्रकर्तृत्वेऽपि पाणिन्यादिवदसर्वज्ञत्वं शंकित्वोक्तम्—**ज्ञेयेति** । तस्य ज्ञेयैकदेशविषयत्वं तत्कर्तुरसार्वज्ञ्ये हेतुरित्यर्थः । अपिस्तथात्वसंभावनार्थः । यद्यस्मात्पाणिन्यादेः संभवति स तस्मादधिकार्थज्ञानवानिष्टः । शब्दस्य ज्ञानान्न्यूनार्थत्वाद्यथेदं तथाऽन्यदपि मानभूतं शास्त्रं यस्मादभियुक्तादुत्पद्यते स तस्मादधिकज्ञानवानित्यर्थः । उक्तेर्ज्ञानान्न्यूनार्थत्वमिक्षुक्षीरादिमाधुर्यस्यावान्तरवैषम्येऽपि तदाख्यातुं सुशिक्षितोऽपि न शक्ष्यतीति न्यायसिद्धमित्याह—**इति प्रसिद्धमिति** । व्याप्तिमुक्त्वा विवक्षितमनुमानमाह—**किम्विति** । शास्त्रस्योक्तविशेषणवतो यस्मान्महतो भूताद्योनेः संभवस्तस्य सर्वज्ञत्वाद्यनतिशयमिति किमु वक्तव्यमिति संबन्धः । ब्रह्म वेदार्थादधिकार्थज्ञानवत्तत्कर्तृत्वाद्यो यद्वाक्यप्रमाणकर्ता स तदर्थादधिकार्थज्ञानवान्यथा पाणिनिः । यद्वा—वेदः स्वार्थादधिकार्थज्ञानवज्जन्यो वाक्यप्रमाणत्वात्पाणिन्यादिवाक्यवदित्यर्थः । शास्त्रहेतोर्ब्रह्मणः सर्वज्ञता पक्षधर्मताबलादिति वक्तुं शास्त्रस्य ग्रन्थतो महत्त्वमाह—**अनेकेति** । महाविषयत्वेनोक्तं महत्त्वं व्यनक्ति—**देवेति** । आदिशब्देन वर्णाश्रमधर्मा गृह्यन्ते । प्रदीपवत्सर्वार्थावद्योतिन इत्युक्तं प्रकृतोपयो-

**सर्वज्ञानाकरस्याप्रयत्नेनैव लीलान्यायेन पुरुषनिश्वासवद्यस्मान्महतो भूताद्योनेस्सम्भवः-"अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः" [बृह० २।४।१०] इत्यादिश्रुतेः,**

रत्नप्रभा।

चेति किमु वक्तव्यमिति। तत्र वेदस्य पौरुषेयत्वशङ्कानिरासार्थं श्रुतिस्थनिश्वसितपदार्थमाह-**अप्रयत्नेनेति**॥ प्रमाणान्तरेणार्थज्ञानप्रयासं विना निमेषादिन्यायेनेत्यर्थः॥ अत्रानुमानेन "यः सर्वज्ञः" [मुण्ड० १।१] इति श्रुत्युक्तसर्वज्ञत्वदार्ढ्याय पाणिन्यादिवद्वेदकर्तरि अधिकार्थज्ञानसत्तामात्रं साध्यते। न

भामती।

कृशाखाभेदभिन्नस्येत्यादिः संभव इत्यन्त उपनयः। तस्येत्यादि सर्वशक्तित्वं चेत्यन्तं निगमनम्। '**अप्रयत्नेनैवेति**। ईषत्प्रयत्नेन, यथाऽलवणा यवागूरिति। देवर्षयो हि महापरिश्रमेणापि यत्राशक्तास्तदयमीषत्प्रयत्नेन लीलयैव करोतीति निरतिशयमस्य सर्वज्ञत्वं सर्वशक्तित्वं चोक्तं भवति। अप्रयत्नेनास्य वेदकर्तृत्वे श्रुतिरुक्ता-'अस्य महतो भूतस्य' इति। येऽपि तावद् वर्णानां नित्यत्वमास्थिषत तैरपि पदवाक्यादीनामनित्यत्वमभ्युपेयम्। आनुपूर्वीभेदवंतो हि वर्णाः पदम्। पदानि चानुपूर्वीभेदवन्ति वाक्यम्। व्यक्तिधर्मश्चानुपूर्वी न वर्णधर्मः, वर्णानां नित्यानां विभूनां च कालतो देशतो वा पौर्वापर्यायोगात्। व्यक्तिश्चानित्येति कथं तदुपगृहीतानां वर्णानां नित्यानामपि पदता नित्या। पदानित्यतया च वाक्यादीनामप्यनित्यता व्याख्याता। तस्मान्नृत्तानुकरणवत् पदाद्यनुकरणम्। यथा हि यादृशं गात्रचलनादि नर्तकः करोति तादृशमेव शिक्ष्यमाणानुकरोति नर्तकी, न तु तदेव व्यनक्ति। एवं यादृशीमानुपूर्वीं वैदिकानां वर्णपदादीनां करोत्यध्यापयिता तादृशीमेवानुकरोति माणवकः, न तु तामेवोच्चारयति, आचार्यव्यक्तिभ्यो माणवकव्यक्तीनामन्यत्वात्। तस्मान्नित्यानित्यवर्णवादिनां लौकिकवैदिकपदवाक्यादिपौरुषेयत्वे विवादः, केवलं वेदवाक्येषु पुरुषस्वातन्त्र्यास्वातन्त्र्ये विप्रतिपत्तिः। यथाहुः-'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता'। तत्र सृष्टिप्रलयमनिच्छन्तो जैमिनीया वेदाध्ययनं प्रत्यस्मादृशगुरुशिष्यपरंपरामविच्छिन्नामनादिमाचक्षते। वैयासिकं तु मतमनुवर्तमानाः श्रुतिस्मृतीतिहासादिसिद्धसृष्टिप्रलयानुसारेणानाद्यविद्योपधानलब्धसर्वशक्तिज्ञानस्यापि परमात्मनो नित्यस्य वेदानां योनेरपि न तेषु स्वातन्त्र्यं, पूर्वपूर्वसर्गानुसारेण तादृशतादृशानुपूर्वीविरचनात्। तथाहि-यागादिब्रह्महत्यादयोऽर्थानर्थहेतवो ब्रह्मविवर्ता अपि न सर्गान्तरे विपरीयन्ते। न हि जातु कश्चित् सर्गे ब्रह्महत्याऽर्थहेतुरनर्थहेतुश्चाश्वमेधो भवति। अग्निर्वा क्लेदयति। आपो वा दहन्ति। तद्वत्। यथात्र सर्गे नियतानुपूर्व्यं वेदाध्ययनमभ्युदयनिःश्रेयसहेतुरन्यथा तदेव वाग्वज्रतयानर्थहेतुः, एवं सर्गान्तरेष्वपीति तदनुरोधात् सर्वज्ञोऽपि सर्वशक्तिरपि पूर्वपूर्वसर्गानुसारेण वेदान्

आनन्दगिरीय-न्यायनिर्णयः।

गित्वेनार्थतोऽनुवदति-**सर्वेति**। यथोक्तं शास्त्रं ब्रह्मणो जायते चेत्तस्य पौरुषेयत्वेनानपेक्षत्वप्रामाण्यहानिरित्याशंक्याऽऽह-**अप्रयत्नेनेति**। पौरुषेयत्वं पुरुषनिर्वर्त्यत्वमात्रं वा नूतनानुपूर्वीरचनं वा मानान्तरदृष्टार्थोक्तिरचनं वा। नाऽऽद्यः। तवापि पदवाक्यादिषु तुल्यत्वात्। द्वितीये नूतनत्वं क्रमान्यत्वमात्रं वा विसदृशक्रमत्वं वा। नाद्यः। त्वयाऽपि प्रतिपुरुषमुपाधिभेदादुपहितक्रमान्यत्वमात्रस्येष्टत्वात्। न द्वितीयः। मयाऽपि क्रमवैसादृश्यस्यानिष्टत्वात्। न तृतीयः। अनङ्गीकारात्। अतो न पौरुषेयतया सापेक्षतेति भावः। अयत्नेन ब्रह्मणो वेदोत्पत्तौ मानमाह-**अस्येति**। ब्रह्मणोऽनतिशयं महत्त्वं तात्त्विकं च सर्वज्ञतासाधकं तद्रहिते तदनुपलम्भादिति मत्त्वा महतो भूतस्येति पुनरुक्तम्। यथा दीपादिमासनशक्तेः स्वहेतुवह्निशक्त्यनुमापकत्वं

तस्य महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वशक्तिमत्त्वं चेति ॥ अथ वा यथोक्तमृग्वेदादि शास्त्रं योनिः कारणं प्रमाणमस्य ब्रह्मणो यथावत्स्वरूपाधिगमे । शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः ॥

रत्नप्रभा ।

त्वर्थज्ञानस्य वेदहेतुत्वं, निश्वसितश्रुतिविरोधात्, वेदज्ञानमात्रेणाध्येतृवद्वेदकर्तृत्वोपपत्तेश्च । **इयान्विशेषः**—अध्येता परापेक्षः । ईश्वरस्तु स्वकृतवेदानुपूर्वीं स्वयमेव स्मृत्वा तथैव कल्पादौ ब्रह्मादिष्वाविर्भावयन्ननावृतज्ञानत्वात्तदर्थमेप्यवर्जनीयतया जानातीति सर्वज्ञ इत्यनवद्यम् । इति प्रथमवर्णकम् ॥ अधुना ब्रह्मणो लक्षणान्तरे प्रमाणजिज्ञासायां वर्णकान्तरमाह—**अथवेति** ॥ लक्षणप्रमाणयोर्ब्रह्मनिर्णयार्थत्वादेकफलकत्वं **संगतिः** ॥ "तन्त्वौपनिषदं पुरुषम्" [ बृ० ३ । ९ । २६ ] इति श्रुतिर्ब्रह्मणो वेदैकवेद्यत्वं ब्रूते न वेति **संशये** कार्यलिङ्गेनैव लाघवात् कर्तुरेकस्य सर्वज्ञस्य ब्रह्मणः सिद्धेन ब्रूत इति **प्राप्ते** वेदप्रमाणकत्वात् ब्रह्मणो न प्रमाणान्तरवेद्यत्वमिति सिद्धान्तयति—**शास्त्रयोनित्वादिति** ॥ तद्व्याचष्टे—**यथोक्तमिति** ॥ सर्वत्र पूर्वोत्तरपक्षयुक्तिद्वयं संशयबीजं द्रष्टव्यम् । अत्र **पूर्वपक्षे** अनुमानस्यैव विचार्यतासिद्धिः फलं, सिद्धान्ते वेदान्तानामिति भेदः । अनुमानादिना ब्रह्मसिद्धिः पूर्वसूत्रे प्रसङ्गा**न्निरस्ता** ॥ **किञ्च** विचित्रप्रपञ्चस्य प्रासादादिवदेककर्तृकताबाधान्न लाघवावतारः । **न च** सर्वज्ञत्वात् कर्तुरेकत्वसम्भवः । एकत्वज्ञानात् सर्वज्ञत्वज्ञानं ततस्तदित्यन्योन्याश्रयमभिप्रेत्याह—**शास्त्रादेवेति** ॥ किं तच्छास्त्रमिति,

भामती ।

विरचयन् स्वतन्त्रः । पुरुषास्वातन्त्र्यमात्रं चापौरुषेयत्वं रोचयन्ते जैमिनीया अपि । तचास्माकमपि समानमन्यत्राभिनिवेशात् । न चैकस्य प्रतिभानेऽनाश्वास इति युक्तम् । न हि बहूनामप्यज्ञानां विज्ञानां वाशयदोषवतां प्रतिभाने युक्त आश्वासः । तत्त्वज्ञानवतश्चापास्तसमस्तदोषस्यैकस्यापि प्रतिभाने युक्त एवाश्वासः । सर्गादिभुवां प्रजापतिदेवर्षीणां धर्मज्ञानवैराग्यैश्वर्यसंपन्नानामुपपद्यते तत्स्वरूपावधारणं, तत्प्रत्ययेन चार्वाचीनानामपि तत्र संप्रत्यय इत्युपपन्नं ब्रह्मणः शास्त्रयोनित्वं, शास्त्रस्य चापौरुषेयत्वं, प्रामाण्यं चेति ॥ इति प्रथमवर्णकम् ॥ वर्णकान्तरमारभते—**अथवेति** । पूर्वेणाधिकरणेन ब्रह्मस्वरूप-

आनन्दगिरीय-न्यायनिर्णयः ।

तथा वेदगतसर्वार्थभासनशक्तेरपि स्वाश्रयोपादानस्थसर्वार्थभासनशक्त्यनुमापकतेति समुदायार्थः । शास्त्रं शास्त्रकर्तृत्वे सत्यसर्वज्ञत्वानधिकरणकर्तृकं कार्यत्वाद्धटवदित्यनुमानाद्वेदस्य सर्वज्ञकर्तृकतेत्युक्तम् । इदानीं जगद्धेतुत्वेन लक्षिते ब्रह्मणि मानविशेषचिन्तायै वर्णकान्तरमवतारयति—**अथवेति** । तं त्वौपनिषदमित्यादिब्रह्मणः शास्त्रैकगम्यत्वं समर्थयेन्न वेति कार्यलिङ्गस्य हेतुविशेषावसानानवसानाभ्यां संशये विमतं सकर्तृकं कार्यत्वाद्धटवदिति सिद्धे कर्तरि तदेकत्वनानात्वसंदेहे लाघवात्तदैक्यं स च ज्ञात्वैव सर्वं करोतीति सर्वज्ञः सर्वशक्तिश्चेत्यनुमानमेव विचार्यमिति प्राप्ते प्रत्याह—**यथोक्तमिति** । नित्यसिद्धस्य ब्रह्मणः शास्त्रं कारणमित्ययुक्तमित्याशंक्याऽऽह—**प्रमाणमिति** । अनुमानादपि लाघवानुगृहीताद् ब्रह्मस्वरूपधीसंभवान्न तत्र शास्त्रमेव मानमित्याशंक्याऽऽह—**शास्त्रादिति** । न तावदप्रत्यक्षं ब्रह्म वह्निवद्विशेषतोऽनुमेयं कार्य-

१ मत्यवर्जं इति पा० क० पुस्तके । २ सर्वज्ञत्वज्ञानात् । ३ एकत्वज्ञानम् ।

**शास्त्रमुदाहृतं पूर्वसूत्रे-"यतो वा इमानि भूतानि जायन्ते" [ तै० आ० ३ । ४ । १ ] इत्यादि ॥ किमर्थं तर्हीदं सूत्रं, यावता पूर्वसूत्र एवैवञ्जातीयकं शास्त्रमुदाहरता शास्त्रयोनित्वं ब्रह्मणो दर्शितम् ? ॥ उच्यते ॥ तत्र पूर्वसूत्राक्षरेण स्पष्टं शास्त्रस्यानुपादानाज्जगतो जन्मादीति केवलमनुमानमुपन्यस्तमित्याशंक्येत । तामाशङ्कां निवर्तयितुमिदं सूत्रं प्रववृते-शास्त्रयोनित्वादिति ॥ ३ ॥ इति शास्त्रयोनित्वाधिकरणम् ॥ ( ३ ) ॥ ॥ कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वम् ॥ उच्यते ॥ यावता-**

---

रत्नप्रभा ।

तत्राह-**शास्त्रमिति** ॥ पृथगारम्भमाक्षिपति-**किमर्थमिति** ॥ येन[1] हेतुना दर्शितं, ततः[2] किमर्थमित्यर्थः । जन्मादिलिङ्गकानुमानस्य स्वातन्त्र्येणोपन्यासशङ्कानिरासार्थं पृथक्सूत्रमित्याह-**उच्यत इति** ॥ इति तृतीयसूत्रम् ॥ ३ ॥ (३) ॥ वेदान्ताः सिद्धब्रह्मपरा उत कार्यपरा इति निष्फलत्वसापेक्षत्वयोः प्रसङ्गा[3]प्रसङ्गाभ्यां संशये पूर्वसूत्रे द्वितीयवर्णकेनाक्षेपसङ्गत्या पूर्वपक्षमाह-**कथं पुनरित्यादिना** ॥ "सदेव सोम्य" [ छां० ६ । २ । १ ] इत्यादीनां सर्वात्मत्वादिस्पष्टब्रह्मलिङ्गानां ब्रह्मणि समन्वयोक्तेः श्रुत्यादिसङ्गतयः । पूर्वपक्षे वेदान्तेषु मुमुक्षुप्रवृत्त्यसिद्धिः, सिद्धान्ते तत्सिद्धिरिति विवेकः । **कथमिति**-आक्षेपे । हेतुः-**यावतेति** ॥

भामती ।

लक्षणासंभवशङ्कां न्युदस्य लक्षणसंभव उक्तः । तस्यैव तु लक्षणस्यानेनानुमानत्वाशङ्कामपाकृत्यागमोपदर्शनेन ब्रह्मणि शास्त्रं प्रमाणमुक्तम् । अक्षरार्थस्त्वतिरोहितः ॥३॥ ( ३ )॥ ॥ शास्त्रप्रमाणकत्वमुक्तं ब्रह्मणः प्रतिज्ञामात्रेण, तदनेन सूत्रेण प्रतिपादनीयमित्युत्सूत्रं पूर्वपक्षमारचयति भाष्यकारः-**कथं पुनरिति** । किमाक्षेपे । शुद्धबुद्धोदासीनस्वभावतयोपेक्षणीयं ब्रह्म, भूतमभिदधतां वेदान्तानामपुरुषार्थोपदेशिनामप्रयोजनत्वापत्तेः, भूतार्थत्वेन च प्रत्यक्षादिभिः समानविषयतया लौकिकवाक्यवत्तदर्थानुवादकत्वेनाप्रामाण्यप्रसङ्गात् । न खलु लौकिकानि वाक्यानि प्रमाणान्तरविषयमर्थमवबोधयन्ति स्वतःप्रमा-

आनन्दगिरीय-न्यायनिर्णयः ।

मात्रस्य कर्तृमात्रगमकत्वात् । न च लाघवात्तदैक्यधीर्विचित्रप्रासादादेरनेककर्तृकस्यापि दृष्टत्वेनानिर्णयात् । तथा च कर्तुर्न सर्वज्ञत्वाद्यनुमानलभ्यम् । शास्त्रे तु यत इत्येकवचनात्कर्त्रैक्यसिद्धौ सर्वज्ञत्वादिसिद्धेः शास्त्रैकगम्यं ब्रह्मेति भावः । किं तद्ब्रह्मणि प्रमाणं शास्त्रं, तदाह-**शास्त्रमिति** । पूर्वसूत्रे शास्त्रस्योक्तत्वे शास्त्रयोनित्वं पृथङ् न वाच्यमिति शङ्कते-**किमर्थमिति** । एतत्सूत्रार्थवत्त्वं प्रतिजानीते-**उच्यत इति** । तत्र शास्त्रस्योक्तत्वेऽपि सूत्रे तद्वाचकाभावाज्जन्मादिलिङ्गकं स्वतन्त्रमनुमानमुक्तमिति शंकां निरसितुमिदं सूत्रमिति तदर्थवत्तां समर्थयते-**तत्रेति** । न च तर्हीदं पूर्वशेषतया तदन्तर्गमान्न पृथक्करणीयम् । तच्छेषत्वेऽपि सर्वज्ञत्वे शास्त्रकर्तृत्वहेतुसमर्थनन्यायभेदादधिकरणान्तरत्वसिद्धेरिति ॥ ३ ॥ ( ३ ) ॥ ॥ वेदान्ता यथोक्ते ब्रह्मणि प्रमाणं न वेति सिद्धार्थज्ञानात्फलभावाभावाभ्यां सिद्धमर्थं रूपादिहीनं बोधयतो वाक्यस्य सापेक्षत्वानपेक्षत्वाभ्यां वा संशये पूर्वाधिकरणद्वितीयवर्णकेनाऽऽक्षेपलक्षणां संगतिं विवक्षन्नुत्तरसूत्रव्यावर्त्यपक्षमाह-**कथमिति** । सदेवेत्यादितत्तदाम्नायाधीतसर्वोपनिषदां स्फुटब्रह्मलिङ्गानां ब्रह्मणि समन्वयसाधनादत्र श्रुत्यादिसंगतयः । फलं तु पूर्वपक्षे परिशुद्धब्रह्मबुद्ध्यभावात्तदर्थिनामुपनिषत्स्वप्रवृत्तिः । सिद्धान्ते शुद्धब्रह्मबुद्धिसिद्धौ मुमुक्षूणामुपनिषत्सु यत्नाधिक्यमिति विवेक्तव्यम् । कथमित्याक्षेपे । **हेतुर्यावतेति** ।

---

१ शास्त्रेण । २ ततः पृथक् । ३ प्रसङ्गोऽत्र प्राप्तिः ।

**"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्–" [ जै० सू० १ । २ । १ ] इति क्रियापरत्वं शास्त्रस्य प्रदर्शितम् ॥**

रत्नप्रभा ।

यतो जैमिनिसूत्रेण शास्त्रस्य वेदस्य क्रियापरत्वं दर्शितमतोऽक्रियार्थत्वाद्वेदान्तानामानर्थक्यं फलवदर्थशून्यत्वं प्राप्तमित्यन्वयः॥ सूत्रस्यायमर्थः–प्रथमसूत्रे तावद्वेदस्याध्ययनकारणकभावनाविधिभाव्यस्य फलवदर्थपरत्वमुक्तम् "चोदनालक्षणोऽर्थः–धर्मः" [ जैमि० सू० १ । १ । २ ] इति,–द्वितीयसूत्रे–धर्मे कार्ये चोदना प्रमाणमिति वेदप्रामाण्यव्यापकं कार्यपरत्वमवसितम् । तत्र "वायुर्वै क्षेपिष्ठा" इत्याद्यर्थवादानां धर्मे प्रामाण्यमस्ति न वेति संशये आम्नायप्रामाण्यस्य क्रियार्थत्वेन व्याप्तत्वादर्थवादेषु धर्मस्याप्रतीतेरक्रियार्थानां तेषामानर्थक्यं निष्फलार्थत्वम् । न चाध्ययनविध्युपात्तानां निष्फले सिद्धेऽर्थे प्रामाण्यं युक्तम् । तस्मादनित्यमेषां प्रामाण्यमुच्यते । व्यापकाभावाद्व्याप्यं प्रामाण्यं नास्त्येवेति यावत् । एवं पूर्वपक्षे "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" [ जै० सू० १ । २।७ ] इति सूत्रेण सिद्धान्तमाह–क्रियापरत्वमिति ॥ अनित्यमिति प्राप्ते दर्शितमित्यर्थः । वायुर्वै

भामती ।

णम्, एवं वेदान्ता अपीत्यनपेक्षत्वलक्षणं प्रामाण्यमेषां व्याहन्येत । न च तैरप्रमाणैर्भवितुं युक्तम् ।

आनन्दगिरीय–न्यायनिर्णयः ।

वायुर्वै क्षेपिष्ठा देवतेत्यादयोऽर्थवादा विध्युद्देशार्थवादयोर्मिथोपेक्षणाद्विध्युद्देशेनैकवाक्यतया धर्मे प्रमाणं न वेति संशये पूर्वपक्षयति–आम्नायस्येति । सर्वस्य वेदस्य विधिनिषेधार्थवादमन्त्रनामधेयात्मकस्य कार्यतच्छेषार्थताध्रौव्यात्तानि वाक्यानि कार्यं वा तच्छेषं वा नाऽऽचक्षीरन्किंतु शुद्धं सिद्धमर्थमभिदधीरन्नतदर्थानां तेषामानर्थक्यं फलवदभिधेयवैधुर्यमतोऽनित्यमनियतं सापेक्षमेवोच्यते वेदस्य प्रामाण्यमित्युक्तत्वाद्यथाश्रुतिगृहीतानामर्थवादानां सन्तमसन्तं वा भूतमर्थं वदतां तदुक्त्यैव नैराकांक्ष्यात्कार्याध्याहारासिद्धेः । स एवैनं भूतिं गमयतीति विशिष्टार्थवेदनेनैवावसानात् 'वायव्यं श्वेतमालभेत' इत्यनेनैकवाक्यत्वाभावान्मुख्यार्थसंभवे प्राशस्त्यलक्षणायोगादाख्यायिकात्मनामपि लोके शब्दानां दर्शनात्तेषां फलवदर्थावबोधानियमादध्ययनविधेरक्षरावाप्त्या दृष्टार्थत्वाद्विध्युद्देशस्यापि विशिष्टार्थविधिना चरितार्थत्वान्मिथोपेक्षाभावादर्थवादानर्थक्यात्तत्तुल्यमन्त्रादेरपि तथात्वादेषां धर्माप्रमापकत्वादेतद्युक्तचोदनानामप्रामाण्यादप्रमाणं सर्वो वेद इति प्राप्ते 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इति सूत्रेण सिद्धान्तमाह–क्रियेति । 'वायव्यं श्वेतमालभेत भूतिकामः' इत्येवमन्तेन विध्युद्देशेन सह वायुर्वै क्षेपिष्ठेत्याद्यर्थवादानां क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यतीति प्राशस्त्यार्थेनैकवाक्यत्वात्तत्र प्रकृतविध्यपेक्षितमर्थं वदन्तोऽर्थवादादयोऽर्थवन्तः स्युरित्युक्तेरध्ययनविधेर्दृष्टार्थत्वादक्षरावाप्तेरफलत्वात्फलवदर्थावसायिताया वेदमात्रस्य वाच्यत्वादर्थवादानां च भूतार्थवेदने फलानवसायादाख्यायिकात्मकलौकिकशब्दानामफलत्वस्यानिष्टत्वाद्विध्याकांक्षितप्राशस्त्यलक्षणाया तदेकवाक्यत्वाद्विधेरेव प्रवृत्तौ प्राधान्येऽपि तदनुग्राहकतया स्तुत्यपेक्षणात्तदेकवाक्यानामर्थवादानां तथैव प्रामाण्यान्मन्त्रादेरपि स्वाध्यायविधिना फलवत्त्वसिद्धेर्विशिष्टार्थबोधिप्रधानवाक्यार्थे प्रामाण्यात्तद्युक्तचोदनानामपि तद्भावाद्युक्तं सर्वस्यैवाऽऽम्नायस्य क्रियातच्छेषविषयत्वेन प्रामाण्यं, तदेवं पूर्वोत्तरपक्षाभ्यां शास्त्रमात्रस्य कार्यपरत्वं प्रमाणलक्षणे स्थितमित्यर्थः । तथाऽपि वेदान्तेषु किं जातमित्याशंक्य यावतेत्यस्यापेक्षितमाह–

१ "तस्मादनित्यमुच्यते" इति एतत्सूत्रशेषांशः । अर्थवादाधिकरणे १ इदम् ।

**अतो वेदान्तानामानर्थक्यम् । अक्रियार्थत्वात् ॥ कर्तृदेवतादिप्रकाशनार्थत्वेन वा क्रियाविधिशेषत्वमुपासनादिक्रियान्तरविधानार्थत्वं वा ? न हि परिनिष्ठितवस्तुप्रतिपादनं सम्भवति ॥ प्रत्यक्षादिविषयत्वात्परिनिष्ठितवस्तुनः । तत्प्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावात् ॥**

रत्नप्रभा ।

क्षिप्रतमगामिनी देवता, तद्देवताकं कर्म क्षिप्रमेव फलं दास्यति इत्येवं विधेयार्थानां स्तुतिरूपार्थेन द्वारेण **"वायव्यं श्वेतमालभेत"** इत्यादिविधिवाक्येनैकवाक्यत्वादर्थवादाः सफलाः स्युः । स्तुतिलक्षणया सफलकार्यपरत्वात् प्रमाणमर्थवाद इति यावत् । नन्वध्ययनविधिगृहीतानां वेदान्तानामानर्थक्यं न युक्तमित्यत आह—**कर्त्रिति** ॥ न वयं वेदान्तानामानर्थक्यं साधयामः । किंतु लोके सिद्धस्य मानान्तरवेद्यत्वान्निष्फलत्वाच्च, सिद्धब्रह्मपरत्वे तेषां मानान्तरसापेक्षत्वनिष्फलत्वयोः प्रसङ्गादप्रामाण्यापातात् कार्यशेषकर्तृदेवताफलानां प्रकाशनद्वारा कार्यपरत्वं वक्तव्यमिति ब्रूमः । तत्र त्वन्तत्पदार्थवाक्यानां कर्तृदेवतास्तावकत्वं, विविदिषादिवाक्यानां फलस्तावकत्वम् । ननु कर्मविशेषमनारभ्य प्रकरणान्तराधीतानां वेदान्तानां कथं तच्छेषत्वं ? मानाभावादित्यरुच्या पक्षान्तरमाह—**उपासनेति** ॥ मोक्षकामोऽसंब्रह्माभेदमारोप्य "अहं ब्रह्मास्मि" [ बृ० १ । ४ । १० ] इत्युपासीत, इत्युपासनाविधिः । **आदिशब्दाच्छ्रवणादयः** । तत्कार्यपरत्वं वा वक्तव्यमित्यर्थः । ननु श्रुतं ब्रह्म विहायाश्रुतं कार्यपरत्वं किमर्थं वक्तव्यमिति तत्राह—**न हीति** ॥ परितः समन्तान्निश्चयेन स्थितं—**परिनिष्ठितम्** । कृत्यनापेक्षं सिद्धमिति यावत् । तस्य प्रतिपादनज्ञातस्य, वेदेन ज्ञापनं तन्न सम्भवति, मानान्तरयोग्येऽर्थे वाक्यस्य संवादे सत्यनुवादकत्वाद्, **"अग्निर्हिमस्य भेषजम्"** इति वाक्यवद्, विसंवादे वाऽबोधकत्वाद् **"आदित्यो यूपः"** इति वाक्यवदित्यर्थः । सिद्धो, न वेदार्थः, मानान्तरयोग्यत्वाद्घटवदित्युक्त्वा निष्फलत्वाच्च तथेत्याह—**तदिति** ॥ सिद्धज्ञापने हेयोपादेयागोचरे फलाभावाच्च

भामती ।

न चाप्रयोजनैः,स्वाध्यायाध्ययनविध्यापादितप्रयोजनवत्त्वनियमात् । तस्मात्तत्तद्विहितकर्मापेक्षितकर्तृदेवतादिप्रतिपादनपरत्वेनैव क्रियार्थत्वम् । यदि त्वसंनिधानात्तत्परत्वं न रोचयन्ते,ततः संनिहितोपासनादिक्रियापरत्वं वेदान्तानाम् । एवं हि प्रत्यक्षाद्यनधिगतगोचरत्वेनानपेक्षतया प्रामाण्यं च प्रयोजनवत्त्वं च सिध्यतीति

आनन्दगिरीय—न्यायनिर्णयः ।

**अत इति** । अर्थमात्रदृष्टेरानर्थक्यं फलवदभिधेयराहित्यमक्रियार्थत्वात्कार्यतच्छेषवाचित्वाभावादित्यर्थः । अध्ययनविधिविरोधादानर्थक्यमयुक्तमित्याशंक्याऽऽह—**कर्त्रिति** । फलसंग्रहार्थमादिपदम् । उक्तं हि—क्रत्वर्थकर्तृप्रतिपादनेनोपनिषदां नैराकांक्ष्यमिति । कर्मप्रकरणोत्तीर्णोपनिषदां कुतस्तद्विधिशेषतेत्याशंक्याऽऽह—**उपासनादीति** । आदिशब्देन श्रवणादयो गृह्यन्ते । ननु वेदान्तानां न क्रियाविधिशेषत्वमुपक्रमोपसंहारेकरूप्यादिलिङ्गैर्ब्रह्मणि तात्पर्यसिद्धेस्तत्राऽऽह—**न हीति** । मानान्तरयोग्ये ब्रह्मणि वेदान्तानां न तात्पर्यम् । तत्संवादेऽनुवादितया तद्विसंवादे च स्पर्शनधीविरोधिचित्रनिम्नोन्नतचाक्षुषधीवद्विरोधादेव तेषामतद्बोधित्वादित्यर्थः । परिनिष्ठितेऽर्थे वेदान्ताप्रामाण्ये हेत्वन्तरमाह—**तदिति** । न हि भूतार्थप्रतिपादने क्वचिद्धानमुपादानं वा तयोः प्रवृत्तिनिवृत्त्यायत्तत्वात्तयोश्च विधिनिषेधाधीनत्वात्तयोरपि कार्यविषययोः

१ असन्तमविद्यमानं स्वस्मिन् ब्रह्माभेदम् ।

**अत एव "सोऽरोदीद्" इत्यादीनामानर्थक्यं मा भूदिति "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" [ जै० सू० १ । २ । ७ ] इति स्तावकत्वेनार्थवत्त्वमुक्तम् ॥ मन्त्राणां च "इषे त्वा" [ यजुर्वेदे १।१।१।]**

---

रत्नप्रभा ।

तन्न सम्भवतीत्यर्थः । फलं हि सुखावाप्तिर्दुःखहानिश्च । तच्च प्रवृत्तिनिवृत्तिभ्यां साध्यम् । ते चोपादेयस्य प्रवृत्तिप्रयत्नकार्यस्य हेयस्य निवृत्तिप्रयत्नकार्यस्य ज्ञानाभ्यां जायेते । न सिद्धज्ञानादिति भावः । तर्हि सिद्धबोधिवेदवादानां साफल्यं कथमित्याशंक्य "आम्नायस्य"–[ जै० सू० १ । २ । १ ] इत्यादिसंग्रहवाक्यं विवृणोति–**अत एवेति** ॥ सिद्धवस्तुज्ञानात् फलाभावादेवेत्यर्थः । "देवैर्निरुद्धः सोऽग्निररोदीत्" इति वाक्यस्याश्रुजत्वेन रजतस्य निन्दाद्वारा "बर्हिषि न देयम्" इति सफलनिषेधशेषत्ववद्वेदान्तानां विध्यादिशेषत्वं वाच्यमित्यर्थः । **ननु** तेषां मन्त्रवत् स्वातन्त्र्यमस्तु, नार्थवादवद्विध्येकवाक्यत्वमित्याशंक्य दृष्टान्तासिद्धिमाह–**मन्त्राणां चेति** ॥ प्रमाणलक्षणेऽर्थवादलक्षणचिन्तानन्तरं मन्त्रचिन्ता न कृता, "इषेत्वा" [ तै० सं० १ । १ । १ ] इति मन्त्रे छिनत्तीत्यध्याहाराच्छाखाच्छेदनक्रियाप्रतीतेः । "अग्निर्मूर्द्धा" इत्यादौ च क्रियासाधनदेवतादिप्रतीतेर्मन्त्राः श्रुत्यादिभिः क्रतौ विनियुक्ताः । ते किमुच्चारमात्रेणादृष्टं कुर्वन्तः क्रतावुपकुर्वन्ति–**उत**–दृष्टेनैवार्थस्मरणेनेति सन्देहे चिन्तादिनाप्यध्ययनकालावगतमन्त्रार्थस्य स्मृतिसम्भवाददृष्टार्था मन्त्रा इति प्राप्ते सिद्धान्तः ।

भामती ।

तात्पर्यार्थः । पारमर्षसूत्रोपन्यासस्तु पूर्वपक्षदाढर्याय । आनर्थक्यं चाप्रयोजनवत्त्वं, सापेक्षतया प्रमानुत्पादकत्वं चानुवादकत्वादिति । **अतः** इत्यादि वाऽन्तं ग्रहणकवाक्यम् । अस्य विभागभाष्यं

आनन्दगिरीय–न्यायनिर्णयः ।

सिद्धेऽर्थेऽसंभवादतस्तद्वादस्याफलत्वात्फलाधीनतात्पर्याभावान्न वेदान्ता भूते मानम् । न च क्रियानपेक्षं भूतं वस्तु फलं तद्धेतुर्वा सुखदुःखाप्तिहानितद्धेतुत्वादृष्टेरित्यर्थः । मानान्तरसिद्धसिद्धार्थबोधित्वायोगात्तद्बोधस्य चाफलत्वात् । न चेद्वेदान्तास्तत्र प्रमाणं कथं तर्हि तेषामर्थवत्तेत्याशंक्यार्थवादाधिकरणसिद्धान्तं स्मारयति–**अत एवेति** । वेदान्तानां मन्त्रवत्पृथगर्थसंभवात्किमित्यर्थवादवद्विधिना पदैकवाक्यतेत्याशंक्य मन्त्रवदेव तर्हि विधिभिर्वाक्यैकवाक्यता तेषामित्याह–**मन्त्राणां चेति** । अर्थवादाधिकरणं परिसमाप्य मन्त्रेषु चिन्ताऽवतारिता प्रमाणलक्षणे । "इषे त्वा" इत्यत्र छिनद्मीत्यध्याहारेण शाखाच्छेदप्रतीतेः, 'अग्निर्मूर्धा' इत्यादौ च तद्धेतुदेवतादिदृष्टेरपि त्वेत्यादयो मन्त्राः श्रुत्यादिना क्रतौ विनियुक्तविषयास्ते किमुच्चारणमात्रेणादृष्टं कुर्वन्तस्तत्रोपकुर्वन्त्याहोस्विद्दृष्टेनैवार्थप्रकाशनेनेति संशये मन्त्राणां दृष्टार्थत्वे स्वाध्यायकालसिद्धतदर्थस्य चिन्तादिना स्मृतिसंभवात्तावन्मात्रार्थवतां तेषां नित्यवदाम्नानानर्थक्यान्मन्त्रैरेवार्थप्रत्यायननियमाददृष्टकल्पने तदुच्चारणादेव पुरुषव्यापारगोचरात्तन्नियोगविषयात्तत्कल्पनस्य युक्तत्वादुच्चारणमात्रेणादृष्टं कुर्वन्तोऽमी क्रतावुपकुर्वन्तीति पूर्वपक्षमाह–तदर्थशास्त्रादिति । इषे त्वेति छिनद्मीत्यध्याहारात्क्रियोक्तिसमर्थो मन्त्रस्तत्रैवैनं मन्त्रमिषे त्वेति शाखामाच्छिनत्तीति शास्त्रं निबध्नात्यर्थोक्त्या क्रतूपकारे तदर्थशास्त्रानर्थक्यात्तस्मात्तदुच्चारणमात्रेणैव क्रतावुपकारिताऽस्येत्यर्थः । मन्त्रैरेव देवतादि स्मर्तव्यमितिनियमस्य दृष्टार्थाभावाददृष्टार्थकल्पनेऽपि मन्त्रोच्चारणस्य तदर्थस्मारकत्वेन दृष्टार्थत्वादर्थस्मृतेश्च प्रयोगार्थत्वात्प्रयोगाच्च

---

१ ब्रह्मप्रतिपादनम् । २ प्रमाणलक्षणं द्वादशलक्षण्याख्यजैमिनीयदर्शनस्य प्रथमाध्यायस्तस्मिन् ।

**इत्यादीनां क्रियातत्साधनाभिधायित्वेन कर्मसमवायित्वमुक्तम् ॥ न क्वचिदपि वेदवाक्यानां विधिसंस्पर्शमन्तरेणार्थवत्ता दृष्टा, उपपन्ना वा ॥ न च परिनिष्ठिते वस्तुस्वरूपे विधिस्सम्भवति । क्रियाविषयत्वाद्विधेः ॥**

रत्नप्रभा ।

"**अविशिष्टस्तु वाक्यार्थः**" [ जै० सू० १ । २ । ४० ] इति लोकवेदयोर्वाक्यार्थस्याविशेषान्मन्त्रवाक्यानां दृष्टेनैव स्वार्थप्रकाशनेन क्रतूपकारकत्वसम्भवाद् दृष्टे सम्भवत्यदृष्टकल्पनानुपपत्तेः फलवदनुष्ठानापेक्षितेन क्रियातत्साधनस्मरणेन द्वारेण मन्त्राणां कर्माङ्गत्वम् । "**मन्त्रैरेवार्थः स्मर्तव्यः**" इति नियमस्त्वदृष्टार्थ इति । **तथा** चार्थवादानां स्तुतिपदार्थद्वारा पदैकवाक्यत्वं विधिभिः, मन्त्राणां तु वाक्यार्थज्ञानद्वारा तैर्वाक्यैकवाक्यत्वमिति विभागः । नन्वस्तु कर्मप्रकरणस्थवाक्यानां विध्येकवाक्यत्वं, वेदान्तानां तु सिद्धे प्रामाण्यं किं न स्यादिति तत्राह—**न क्वचिदिति** ॥ वेदान्ताः, विध्येकवाक्यत्वेनैवार्थवन्तः, सिद्धार्थवेदकत्वात्, मन्त्रार्थवादादिवदित्यर्थः । अन्यत्रादृष्टापि वेदान्तेषु कल्प्यतामिति तत्राह—**उपपन्ना वेति** ॥ नेत्यनुषङ्गः । सिद्धे फलाभावस्योक्तत्वादिति भावः । तर्हि ब्रह्मण्येव स्वार्थे विधिः कल्प्यतां कृतं वेदान्तानां विध्यन्तरशेषत्वेनेत्यत आह—**न चेति** ॥ ननु "दध्ना जुहोति" इति सिद्धे दधनि विधिर्दृष्टः, तत्राह—**क्रियेति** ॥ दध्नः क्रियासाधनस्य प्रयुज्यमानतया

भामती ।

**न हि** इत्यादि **उपपन्ना वा** इत्यन्तम् । स्यादेतत् । अक्रियार्थत्वेऽपि ब्रह्मस्वरूपविधिपरा वेदान्ता भविष्यन्ति, तथा च 'विधिना त्वेकवाक्यत्वात्—' इति राद्धान्तसूत्रमनुग्रहीष्यते । न खल्वप्रवृत्तप्रवर्तनमेव विधिः, उत्पत्तिविधेरज्ञातज्ञापनार्थत्वात् । वेदान्तानां चाज्ञातं ब्रह्म ज्ञापयतां तथाभावादित्यत आह—**न च परिनिष्ठित इति** । अनागतोत्पाद्यभावविषय एव हि सर्वो विधिरुपेयः, अधिकारविनियोगप्रयोगोत्पत्तिरूपाणां परस्पराविनाभावात्, सिद्धे च तेषामसंभवात् । तद्वाक्यानां त्वैदंपर्यं भिद्यते । यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिभ्योऽधिकारविनियोगप्रयोगाणां प्रतिलम्भात्, 'अग्निहोत्रं जुहोति' इत्युत्पत्तिमात्रपरं वाक्यम् । न त्वत्र विनियोगादयो न सन्ति, सन्तोऽप्यन्यतो लब्धत्वात्केवलमविवक्षिताः । तस्मात् भावना-

आनन्दगिरीय-न्यायनिर्णयः ।

फलोदयाद्दृष्टे सत्यदृष्टकल्पनायोगात्तदर्थशास्त्रस्य च परिसंख्यार्थत्वाद्दृष्टेनैवार्थप्रकाशनेन मन्त्राणां क्रतूपकारितेति सिद्धान्तमाह—**अविशिष्टस्तु वाक्यार्थ** इति । लोकवेदयोः शब्दानामर्थाविशेषाल्लोके फलवदुच्चारणदृष्टेर्वेदेऽपि मन्त्रोच्चारणस्य तथात्वादप्रकाशिते यज्ञे तदङ्गे च यागासिद्धेस्तदर्थे यज्ञादिप्रकाशनेन कर्मण्युपकारो मन्त्राणामित्यर्थः । तदेवं वेदान्तानामपि मन्त्रवत्कर्मतद्धेतुवादित्वेन विधिभिर्वाक्यैकवाक्यतया कर्मसमवायित्वं सिद्धवत्कृत्य मन्त्राधिकरणं प्रवृत्तमिति भाष्यार्थः । कर्मकाण्डीयमन्त्राणां विधिभिर्वाक्यैकवाक्यत्वेऽपि प्रकरणान्तरस्थवेदान्तानां स्वार्थनिष्ठत्वेनैव प्रामाण्यमित्याशंक्याऽऽह—**नेति** । विधिनिषेधार्थवादमन्त्रनामधेयाधिकारान्प्रहीतुं क्वचिदपीत्युक्तम् । अदृष्टाऽपि युक्तिवशादेष्टुं शक्येत्याशंक्य न हि परिनिष्ठितेत्यादिनोक्तं मत्वाऽऽह—**उपपन्ना वेति** । पूषा प्रपिष्टभाग इत्यत्र यागाविनाभूतद्रव्यदेवताबुद्ध्या यागविधिकल्पनावद्वेदान्तानामपि स्वार्थे विधिं परिकल्प्यार्थवत्त्वसंभवे किं कर्मविधिशेषत्वेनेत्याशंक्याऽऽह—**न चेति** । दध्ना जुहोतीत्यादाविव सिद्धेऽप्यर्थे विधिः स्यादित्याशंक्याऽऽह—**क्रियेति** । तत्र भावार्थस्यान्यतो लब्धत्वात्तदनुवादेन विधेः संक्रान्तत्वाद्विना भावार्थं शुद्धस्य सिद्धस्य विध्यविषयतेति

१ मन्त्रलिङ्गाधिकरणे । २ "अग्निहोत्रं जुहुयाद्" इति विहितहोमक्रियासाधनस्य ।

 

तस्मात्कर्मापेक्षितकर्तृदेवतादिस्वरूपप्रकाशनेन क्रियाविधिशेषत्वं वेदान्तानाम् ॥ अथ प्रकरणान्तरभयान्नैतदभ्युपगम्यते । तथापि स्ववाक्यगतोपासनादिकर्मपरत्वम् ॥ तस्मान्न ब्रह्मणश्शास्त्रयोनित्वमिति प्राप्ते–उच्यते–

## तत्तु समन्वयात् ॥ ४ ॥ ( ४ ) ॥

तुशब्दः–पूर्वपक्षव्यावृत्त्यर्थः ॥ तद् ब्रह्म सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवाऽवगम्यते ॥ कथम्? "समन्वयात्"–सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैव तस्यार्थस्य प्रतिपादकत्वेन समनुगतानि–

रत्नप्रभा ।

साध्यत्वाद्विधेयता, निष्क्रियब्रह्मणः कथमप्यसाध्यत्वान्न विधेयत्वमित्यर्थः । भाट्टमतमुपसंहरति–**तस्मादिति** ॥ स्वयमेवारुचिं वदन्पक्षान्तरमाह–**अथेति** ॥ सिद्धान्तसूत्रं व्याचष्टे–**तुशब्द इति** ॥ तद् ब्रह्म, वेदान्तप्रमाणकम्, इति प्रतिज्ञातेऽर्थे हेतुं पृच्छति–**कथमिति** ॥ हेतुमाह–**समिति** ॥ **अन्वयः**–तात्पर्यविषयत्वं, तस्मादित्येव हेतुः । तात्पर्यस्य **सम्यक्त्वम्**–अखण्डार्थविषयकत्वं सूचयितुं सं–पदं प्रतिज्ञान्तर्गतमेव । तथा चाखण्डं ब्रह्म, वेदान्तजप्रमाविषयः, वेदान्ततात्पर्यविषयत्वात्, **यो** यद्वाक्यतात्पर्यविषयः, **स** तद्वाक्यप्रमेयः, **यथा**–कर्मवाक्यप्रमेयो धर्म इति **प्रयोगः** ॥ वाक्यार्थस्य **अखण्डत्वम्**–असंसृष्टत्वम् । वाक्यस्य चाखण्डार्थकत्वं, स्वपदोपस्थिताः **ये** पदार्थाः–**तेषां यः** संसर्गः, **तद्**गोचरप्रमाजनकत्वम् । **न** चेदमप्रसिद्धम्, प्रकृष्टप्रकाशश्चन्द्र इत्यादिलक्षणवाक्यानां लोके लक्षणया चन्द्रादिव्यक्तिमात्रप्रमाहेतुत्वात् सर्वपदलक्षणा चाविरुद्धा, सर्वैरर्थवादपदैरे-

भामती ।

विषयो विधिर्न सिद्धे वस्तुनि भवितुमर्हतीति उपसंहरति–**तस्मादिति** । अत्रारुचिकारणमुक्त्वा पक्षान्तरमुपसंक्रामति–**अथेति** । एवं च सत्युक्तरूपे ब्रह्मणि शब्दस्यातात्पर्यात् प्रमाणान्तरेण यादृशमस्य रूपं व्यवस्थाप्यते न तच्छब्देन विरुध्यते, तस्योपासनापरत्वात्, समारोपेण चोपासनाया उपपत्तेरिति । प्रकृतमुपसंहरति–**तस्मान्नेति** । सूत्रेण सिद्धान्तयति–**एवं प्राप्त उच्यते–तत्तु समन्वयात्** ॥ तदेतत व्याचष्टे–**तुशब्द इति** । तदित्युत्तरपक्षप्रतिज्ञां विभजते–**तद्ब्रह्मेति** । पूर्वपक्षी कर्कशाशयः पृच्छति–**कथम्** । कुतः प्रकारादित्यर्थः । सिद्धान्ती स्वपक्षे हेतुं प्रकारभेदमाह–**समन्वयात्** । सम्यगन्वयः समन्वयस्तस्मात् । एतदेव विभजते–**सर्वेषु हि वेदान्तेष्विति** । वेदान्तानामैकान्तिकीं ब्रह्मपरतामा-

आनन्दगिरीय–न्यायनिर्णयः ।

भावः । वार्तिककारमतमुपसंहरति–**तस्मादिति** । तत्रारुचिं सूचयित्वा मतान्तरं निगमयति–**अथेत्यादिना** । मतद्वयेऽपि संमतमर्थमुपसंहरति–**तस्मान्नेति** । पूर्वपक्षमनूद्य सिद्धान्तसूत्रमवतारयति–**इति प्राप्त इति** । तत्र पूर्वपक्षप्रतिक्षेपप्रतिज्ञां व्याचष्टे–**तुशब्द इति** । तत्पदोपात्तां सिद्धान्तप्रतिज्ञां विभजते–**तद्ब्रह्मेति** । पूर्वसूत्रयोरुक्तं मेयभूतं ब्रह्म स्मारयितुं विशेषणानि । ननु वेदान्तवाक्यस्य लौकिकवाक्यवद्वाक्यत्वादेव संसृष्टार्थत्वादखण्डैकरसे ब्रह्मणि कथं प्रथाहेतुतेति पृच्छति–**कथमिति** । अपर्यायानेकशब्दानामखण्डार्थत्वस्य प्रकृष्टप्रकाशादिवाक्ये दृष्टत्वादस्यापि ब्रह्मस्वरूपमात्रबोधनप्रवृत्तस्य तद्धीहेतुता युक्तेति हेतुमादत्ते–**समन्वयादिति** । हेतुं विवृणोति–**सर्वेष्विति** । वेदान्तानामैकान्तिकीं

१ णैकस्यैवार्थ० ।

**"सदेव सौम्येदमग्र आसीद्" [छान्दो० ६ । २ । १] "एकमेवाद्वितीयम्" [बृह० २ । ५ । १९] "आत्मा वा इदमेक एवाग्र आसीत्" [ऐत० २ । ४ । १ । १] "तदेतद्ब्रह्मापूर्वमनपरमनन्तरम्–**

रत्नप्रभा ।

कस्याः स्तुतेर्लक्ष्यत्वाङ्गीकारात् । तथा सत्यज्ञानादिपदैरखण्डं ब्रह्म भातीति न पक्षासिद्धिः । नापि हेत्वसिद्धिः । उपक्रमादिलिङ्गैर्वेदान्तानामद्वितीयाखण्डब्रह्मणि तात्पर्यनिर्णयात् । तत्र छान्दोग्यषष्ठे उपक्रमं ( १ ) दर्शयति–**सदेवेति** ॥ उद्दालकः पुत्रमुवाच–हे सौम्य प्रियदर्शन इदं सर्वं जगद् अग्रे उत्पत्तेः प्राक्काले सदबाधितं ब्रह्मैवासीत् । एवकारेण जगतः पृथक्सत्ता निषिध्यते । सजातीयविजातीयस्वगतभेदनिरासार्थम् "एकमेवाद्वितीयम्" [ छा० ६ । २ । १ ] इति पदत्रयम् । **एवमद्वितीयं** ब्रह्मोपक्रम्य "ऐतदात्म्यमिदं सर्वम्" [ छा० ६ । ८ । ७–१६ ] इत्युपसंहरति ( १ ) । इदमुपक्रमोपसंहारैकरूप्यं तात्पर्यलिङ्गम् ( २ ) । यथा "तत्त्वमसि" [ छा० ६ । ८ । ७–१६ ] इति नवकृत्वोऽभ्यासः ( ३ ) । रूपादिहीनाद्वितीयब्रह्मणो मानान्तरायोग्यत्वाद् अपूर्वत्वमुक्तम् ( ४ ) । "अत्र वाव किल सत्सौम्य न निभालयसे" इति संघाते स्थितं प्रत्यग्ब्रह्म न जानासीत्यर्थः–"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" [ छा० ६ । १४ । २ ] इति ब्रह्मज्ञानात्फलमुक्तं विदुषः । तस्य यावत्कालं देहो न विमोक्ष्यते, तावदेव देहपातपर्यन्तो विलम्बः । अथ देहपातानन्तरं विद्वान् ब्रह्म सम्पत्स्यते । विदेहकैवल्यमनुभवतीत्यर्थः–"अनेन जीवेनात्मनानुप्रविश्य" [ छा० ६ । ३ । २ ] इत्याद्यद्वितीयज्ञानार्थोऽर्थवादः ( ५ ) । मृदादिदृष्टान्तैः प्रकृत्यतिरेकेण विकारो नास्तीत्युपपत्ति ( ६ ) रुक्ता । एवं षड्विधानि तात्पर्यलिङ्गानि व्यस्तानि, समस्तानि वा,–प्रतिवेदान्तं दृश्यन्त इत्यैतरेयकोपक्रमवाक्यं पठति–**आत्मावेति** ॥ बृहदारण्यके मधुकाण्डोपसंहारवाक्यं सदात्मनो निर्विशेषत्वार्थमाह–**तदेतदिति** ॥ मायाभिर्बहुरूपं **तद्** ब्रह्म । **एतद्** अपरोक्षम् । **अपूर्वं** कारणशून्यम् । **अनपरं** कार्यरहितम् । **अनन्तरं** जात्यन्तरमस्य नास्तीत्यनन्तरम् । एकरस-

भामती ।

चित्वयासुर्बहूनि वाक्यान्युदाहरति–**सदेवेति** । 'यतो वा इमानि भूतानि' इति तु वाक्यं पूर्वमुदाहृतं जगदुत्पत्तिस्थितिनाशकारणमिति चेह स्मारितमिति न पठितम् । येन हि वाक्यमुपक्रम्यते येन चोपसंह्रियते तदेव वाक्यार्थ इति शाब्दाः । यथोपांशुयाजवाक्येऽनूचोः पुरोडाशयोर्जामितादोषसंकीर्तन-

आनन्दगिरीय–न्यायनिर्णयः ।

ब्रह्मपरतां वक्तुं बहूनि वाक्यान्युदाहरति–**सदेवेत्यादिना** । सदित्यस्तितामात्रमेवेत्यवधारणे । किं तदवध्रियते तदाह–**इदमिति** । यदिदं व्याकृतं जगत्तदग्रे प्रागुत्पत्तेर्व्याकृतरूपत्यागेन सदेवाऽऽसीद्धे सोम्य प्रियदर्शनेति पित्रा पुत्रः संबोध्यते । स्थूलं पृथिव्यादीदं बुद्धिबोध्यं प्रागुत्पत्तेर्मा भूदन्यत्तु महदादिसूक्ष्ममासीदेवेति नेत्याह–**एकमिति** । कार्यं सतोऽन्यन्नाऽऽसीदेवेत्यर्थः । तथाऽपि मृदो घटाकारपरिणामयितृकुलालवज्जगन्निमित्तं सतोऽन्यदासीदित्याशंक्याऽऽह–**अद्वितीयमिति** । सतोऽपि चित्त्वं विना प्रधानवन्न हेतुतेत्याशंक्य श्रुत्यन्तरमाह–**आत्मेति** । आप्नोतीत्यात्मा मूलकारणं, वैशब्देन प्रागवस्था स्मर्यते । इदमित्याद्युक्तार्थम् । तस्य निर्विशेषत्वार्थं श्रुत्यन्तरं पठति–**तदेतदिति** । तच्छब्देनेन्द्रो मायाभिरिति प्रकृतात्मोक्तिः । विधेयं ब्रह्मापेक्ष्य नपुंसकं तदेतदेव यद्ब्रह्म । तद्वा किं लक्षणं, तत्राऽऽह–**अपूर्वमिति** । नास्य पूर्वं कारणमित्यपूर्वमकार्यमित्यर्थः । नास्यापरं कार्यं वास्तवमस्तीत्यनपरमकारण-

**अबाह्यम् । अयमात्मा ब्रह्म । सर्वानु भूः" [ बृह० २ । ५ । १९ ] "ब्रह्मैवेदममृतं पुरस्ताद्" [ मुण्ड० २ । २ । ११ ] इत्यादीनि ॥ न च तद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पना युक्ता । श्रुतहान्यश्रुतकल्पनाप्रसंगात् ॥ न च तेषां कर्तृस्वरूपप्रतिपादनपरतावसीयते ॥ "तत्केन कं पश्येद्" [ बृह० २ । ४ । १३ ] इत्यादिक्रियाकारकफलनिराकरणश्रुतेः ॥**

---

रत्नप्रभा ।

मित्यर्थः । **अबाह्यम्** अद्वितीयम् । तस्यापरोक्षत्वमुपपादयति–**अयमिति** ॥ सर्वमनुभवतीति–**सर्वानुभूः** । चिन्मात्रमित्यर्थः ॥ ऋग्यजुःसामवाक्यान्युक्त्वा आथर्वणवाक्यमाह–**ब्रह्मैवेदमिति** ॥ यत् **पुरस्तात्** पूर्वदिग्वस्तुजातम्, **इदम्** अब्रह्मेवाविदुषां भाति तद् **अमृतं ब्रह्मैव** वस्तु विदुषामित्यर्थः । आदिपदेन–"सत्यं ज्ञानम्" [ तै० २ । १ । १ ] इत्यादिवाक्यानि गृह्यन्ते । नन्वस्तु ब्रह्मणस्तात्पर्यविषयत्वं वेदान्तानां, कार्यमेवार्थः किं न स्यादिति तत्राह–**न चेति** ॥ वेदान्तानां ब्रह्मणि तात्पर्ये निश्चीयमाने कार्यार्थत्वं न युक्तम्, "यत्परः शब्दः स शब्दार्थः" इति न्यायादित्यर्थः । यदुक्तमर्थवादन्यायेन वेदान्तानां कर्त्रादिस्तावकत्वमिति तत्राह–**न च तेषामिति** ॥ तेषां कर्मशेषकर्त्रादिस्तावकत्वं न भाति । किंतु ज्ञानद्वारा कर्म तत्साधननाशकमेव । तत् तत्र विद्याकाले कः कर्त्ता **केन** करणेन **कं** विषयं पश्येदिति श्रुतेरित्यर्थः । अर्थवादानां तु स्वार्थे फलाभावात् स्तुतिलक्षण-

भामती ।

पूर्वकोपांशुयाजविधाने तत्प्रतिसमाधानोपसंहारे चापूर्वोपांशुयाजकर्मविधिपरता एकवाक्यताबलादाश्रिता, एवमत्रापि 'सदेव सोम्येदम्' इति ब्रह्मोपक्रमात् 'तत्त्वमसि' इति च जीवस्य ब्रह्मात्मनोपसंहारात् तत्परतैव वाक्यस्य । एवं वाक्यान्तराणामपि पौर्वापर्यालोचनया ब्रह्मपरत्वमवगन्तव्यम् । न च तत्परत्वस्य दृष्टस्य सति संभवेऽन्यपरताऽदृष्टायुक्ता कल्पयितुम्, अतिप्रसङ्गात् । न केवलं कर्तृपरता तेषामदृष्टा, अनुपपन्ना चेत्याह–**न च तेषामिति।**

आनन्दगिरीय–न्यायनिर्णयः ।

मित्यर्थः । नास्यान्तरं जात्यन्तरमन्तरालेऽस्तीत्यनन्तरमेकरसमित्यर्थः । तथाविधमन्यदपि तटस्थमस्तीति नेत्याह–**अबाह्यमिति** । बाह्यमस्यानात्मभूतं नास्तीत्यद्वितीयमित्यर्थः । तस्यापरोक्षत्वमाह–**अयमिति** । तत्सिद्ध्यर्थं चित्स्वभावत्वमाह–**सर्वेति** । ब्रह्माऽऽत्मा सर्वमनुभवति चेदनुभाव्यस्य पृथक्त्वान्नाद्वैतमित्याशङ्क्याऽऽह–**ब्रह्मेति** । यत्पुरस्तात्पूर्वस्यां दिश्यब्रह्मेषाविदुषां भाति तत्सर्वमिदममृतं ब्रह्मैव वस्तुत इत्यर्थः । आदिपदेन सत्यज्ञानादिवाक्यानि गृह्यन्ते । नन्वेषां वाक्यानामर्थवादाधिकरणन्यायेन कर्मापेक्षितकर्त्रादिप्रकाशनेन क्रियाविधिशेषतेत्युक्तं तत्राऽऽह–**न चेति** । वायुर्वै क्षेपिष्ठेत्यादीनामिव क्रियाविधिशेषत्वेऽपि तेषां न श्रुतहानिरश्रुतकल्पना वेत्याशंक्याऽऽह–**न चेति** । युक्तमर्थवादानां स्वार्थे पुमर्थहीनानामध्ययनविधेर्विध्यपेक्षितप्राशस्त्यद्वारा तच्छेषत्वम् । यथाऽऽहुः–"स्वाध्यायविधिना वेदः पुरुषार्थाय नीयते । तद्दर्शनार्थवादानां प्राशस्त्येन प्रमाणता" इति । वेदान्तानां तु कर्मापेक्षितकर्त्राद्यबोधित्वान्न तद्विधिशेषतेत्यर्थः । ननु पर्णताया जुहूद्वारा क्रतुशेषतावदात्मनोऽपि ज्ञानद्वारा कर्मशेषत्वात्तदर्थो वेदान्तास्तद्विधिशेषा भविष्यन्ति नेत्याह–**तदिति** । तत्तत्र विद्यादशायां केन करणेन कं विषयं को वा कर्ता पश्येदित्यादिवाक्येनाऽऽत्मविद्यया क्रियादिविलयश्रुतेर्नासौ कर्माङ्गम् । ततो

**न च परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वं ब्रह्मणः । "तत्त्वमसि" [ छान्दो० ६ । ८ । १६ ] इति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वात् ॥**

रत्नप्रभा ।

तेति भावः । यदुक्तं सिद्धत्वेन मानान्तरवेद्यं ब्रह्म, न वेदार्थ इति, तत्राह-न च परीति ॥ "तत्त्वमसि" [ छां० ६ । ८ । ७ ] इति शास्त्रमन्तरेणेति सम्बन्धः ॥ धर्मो, न वेदार्थः, साध्यत्वेन पाकवन्मानान्तरवेद्यत्वात् । यदि वेदं विना धर्मस्यानिर्णयान्न मानान्तरवेद्यता, तदा ब्रह्मण्यपि तुल्यम् । यच्चोक्तं निष्फलत्वाद् ब्रह्म न वेदार्थ इति तदनूद्य परिहरति-

भामती ।

सापेक्षत्वेनाप्रामाण्यं पूर्वपक्षवीजं दूषयति-न च परिनिष्ठितवस्तुस्वरूपत्वेऽपीति । अयमभिसंधिः-पुंवाक्यनिदर्शनेन हि भूतार्थतया वेदान्तानां सापेक्षत्वमाशङ्क्यते । तत्रैवं भवान् पृष्टो व्याचष्टाम्, किं पुंवाक्यानां सापेक्षता भूतार्थत्वेनाहो पौरुषेयत्वेन । यदि भूतार्थत्वेन ततः प्रत्यक्षादीनामपि परस्परापेक्षत्वेनाप्रामाण्यप्रसङ्गः । तान्यपि हि भूतार्थान्येव । अथ पुरुषबुद्धिप्रभवतया पुंवाक्यं सापेक्षम्, एवं तर्हि तदपूर्वकाणां वेदान्तानां भूतार्थानामपि नाप्रामाण्यं, प्रत्यक्षादीनामिव नियतेन्द्रियलिङ्गादिजन्मानाम् । यद्युच्येत सिद्धे किलापौरुषेयत्वे वेदान्तानामनपेक्षतया प्रामाण्यं सिध्येत्, तदेव तु भूतार्थत्वेन न सिध्यति, भूतार्थस्य शब्दानपेक्षेण पुरुषेण मानान्तरतः शक्यज्ञानत्वाद्बुद्धिपूर्वं विरचनोपपत्तेः, वाक्यत्वादिलिङ्गकस्य वेदपौरुषेयत्वानुमानस्याप्रत्यूहमुत्पत्तेः । तस्मात् पौरुषेयत्वेन सापेक्षत्वं दुर्वारं, न तु भूतार्थत्वेन । कार्यार्थत्वे तु कार्यस्यापूर्वस्य मानान्तरागोचरतयात्यन्ताननुभूतपूर्वस्य तत्त्वेन समारोपेण वा पुरुषबुद्धावनारोहात् तदर्थानां वेदान्तानामशक्यरचनतया पौरुषेयत्वाभावादनपेक्षं प्रमाणत्वं सिध्यतीति प्रामाण्याय वेदान्तानां कार्यपरत्वमातिष्ठामहे । अत्र ब्रूमः-किं पुनरिदं कार्यमभिमतमायुष्मतः, यदशक्यं पुरुषेण ज्ञातुम् । अपूर्वमिति चेत्, हन्त कुतस्त्यमस्य लिङाद्यर्थत्वं, तेनालौकिकेन संगतिसंवेदनविरहात् । लोकानुसारतः क्रियाया एव लौकिक्याः कार्याया लिङादेरवगमात् । 'स्वर्गकामो यजेत' इति साध्यस्वर्गविशिष्टो नियोज्योऽवगम्यते, स च तदेव कार्यमवगच्छति यत्स्वर्गानुकूलम् । न च क्रिया क्षणभंगुरामुष्मिकाय स्वर्गाय कल्पत इति पारिशेष्याद्वेदत एवापूर्वे कार्ये लिङादीनां संबन्धग्रह इति चेत्, हन्त चैत्यवन्दनादिवाक्येष्वपि स्वर्गकामादिपदसंबन्धादपूर्वकार्यत्वप्रसङ्गः, तथा च तेषामप्यशक्यरचनत्वेनापौरुषेयत्वापातः । स्पष्टदृष्टेन पौरुषेयत्वेन वा तेषामपूर्वार्थत्वप्रतिषेधे वाक्यत्वादिना लिङ्गेन वेदानामपि पौरुषेयत्वमनुमितमित्यपूर्वार्थता न स्यात् । अन्यतस्तु वाक्यत्वादीनामनुमानाभासत्वोपपादने कृतमपूर्वार्थत्वेनात्र तदुपपादकेन । उपपादितं चापौरुषेयत्वमस्माभिर्न्यायकणिकायाम्, इह तु विस्तरभयान्नोक्तम् । तेनापौरुषेयत्वे सिद्धे भूतार्थानामपि वेदान्तानां न सापेक्षतया प्रामाण्यविघातः । न चानधिगतगन्तृता नास्ति येन प्रामाण्यं न स्यात्, जीवस्य ब्रह्मताया अन्यतोऽनधिगमात् । तदिदमुक्तम्-'न च परिनिष्ठितवस्तुस्वरूपत्वेऽपि' इति । द्वितीयं पूर्व-

आनन्दगिरीय-न्यायनिर्णयः ।

धीद्वाराऽऽत्मनस्तद्विध्यशेषत्वात्तदर्थवेदान्तानां न तच्छेषतेत्यर्थः । यत्तु न परिनिष्ठितवस्तुप्रतिपादनं तस्याध्यक्षादियोग्यत्वादिति तत्राऽऽह-न चेति । तत्त्वमसीति शास्त्रमन्तरेणेति संबन्धः । वेदान्तवेद्यस्य सिद्धत्वेऽपि मानान्तरायोग्यत्वात्तत्संवादविसंवादाभावाद्युक्तं तत्रानपेक्षं तत्प्रामाण्यमित्यर्थः । तत्प्रतिपादने च

**यत्तु हेयोपादेयरहितत्वादुपदेशानर्थक्यमिति ॥ नैष दोषः ॥ हेयोपादेयशून्यब्रह्मात्मतावगमादेव सर्वक्लेशप्रहाणात्पुरुषार्थसिद्धेः ॥ देवतादिप्रतिपादनस्य तु स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चिद्विरोधः ॥**

रत्नप्रभा ।

**यत्त्वित्यादिना** ॥ **रहितत्वाद्** भिन्नत्वाद् । ब्रह्मण इति शेषः ॥ यदप्युक्तमुपासनापरत्वं वेदान्तानामिति, तत्र किं प्राणपञ्चाग्न्यादिवाक्यानाम्—उत—सर्वेषामिति ?—तत्र आद्यम्—अङ्गीकरोति—**देवतादीति** ॥ श्रेष्ठत्वादिगुणः, फलं च, आदिशब्दार्थः । न द्वितीयः—विधिशून्यानां "सत्यं ज्ञानम्" [ तै० आ० २ । १ । १ ] इत्यादीनां स्वार्थे फलवतामुपासनापरत्वकल्पनायोगात् । किञ्च तदर्थस्य ब्रह्मणस्तच्छेषत्वं ज्ञानात् प्रागूर्ध्वं वा ? आद्ये—अध्यस्तगुणवतस्तस्य **तच्छेषत्वेऽपि न** द्वितीय इत्याह—

भामती ।

पक्षबीजं स्मारयित्वा दूषयति—**यत्तु हेयोपादेयरहितत्वादिति** । विध्यर्थावगमात् खलु पारंपर्येण पुरुषार्थप्रतिलम्भः । इह तु 'तत्त्वमसि' इत्यवगतिपर्यन्ताद्वाक्यार्थज्ञानात् बाह्यानुष्ठानायासानपेक्षात्साक्षादेव पुरुषार्थप्रतिलम्भो नायं सर्पो रज्जुरियमिति ज्ञानादिवेति । सोऽयमस्य विध्यर्थज्ञानात् प्रकर्षः । एतदुक्तं भवति—द्विविधं हीप्सितं पुरुषस्य । किंचिदप्राप्तं ग्रामादि, किंचित्पुनः प्राप्तमपि भ्रमवशादप्राप्तमित्यवगतं, यथा स्वग्रीवावनद्धं ग्रैवेयकम् । एवं जिहासितमपि द्विविधं, किंचिदहीनं जिहासति, यथा वलयितचरणं फणिनं, किंचित्पुनर्हीनमेव जिहासति, यथा चरणाभरणे नूपुरे फणिनमारोपितम् । तत्राप्राप्तप्राप्तौ चात्यक्तत्यागे च बाह्योपायानुष्ठानसाध्यत्वात् तदुपायतत्त्वज्ञानादस्ति प्राचीनानुष्ठानापेक्षा । न जातु ज्ञानमात्रं वस्त्वपनयति । न हि सहस्रमपि रज्जुप्रत्यया वस्तुसन्तं फणिनमन्यथयितुमीशते । समारोपिते तु प्रेप्सितजिहासिते तत्त्वसाक्षात्कारमात्रेण बाह्यानुष्ठानानपेक्षेण शक्येते प्राप्तुमिव हातुमिव । समारोपमात्रजीविते हि ते,समारोपितं च तत्त्वसाक्षात्कारः समूलघातमुपहन्तीति । तथेहाप्यविद्यासमारोपितजीवभावे ब्रह्मण्यानन्दे वस्तुतः शोकदुःखादिरहिते, समारोपितनिबन्धनस्तद्भावः 'तत्त्वमसि' इतिवाक्यार्थतत्त्वज्ञानादवगतिपर्यन्तान्निवर्तते । तन्निवृत्तौ प्राप्तमप्यानन्दरूपमप्राप्तमिव प्राप्तं भवति, त्यक्तमपि शोकदुःखाद्यत्यक्तमिव त्यक्तं भवति, तदिदमुक्तम्—**ब्रह्मात्मावगमादेव** जीवस्य सर्वक्लेशस्य सवासनस्य विपर्यासस्य । स हि क्लिश्नाति जन्तूनतः क्लेशः, तस्य प्रकर्षेण हानात् । पुरुषार्थस्य दुःखनिवृत्ति—सुखाप्तिलक्षणस्य सिद्धेरिति । यत्तु 'आत्मेत्येवोपासीत' 'आत्मानमेव लोकमुपासीत' इत्युपासनावाक्यगतदेवतादिप्रतिपादनेनोपासनापरत्वं वेदान्तानामुक्तं, तद्दूषयति—**देवतादिप्रतिपादनस्य तु** आत्मेत्येतावन्मात्रस्य **स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चिद्विरोधः** । यदि न विरोधः, सन्तु

आनन्दगिरीय—न्यायनिर्णयः ।

हेयोपादेयरहिते पुरुषार्थाभावादित्यत्रोक्तमनुवदति—**यत्त्विति** । पुरस्तात्पञ्चम्या वस्तुन इत्यध्याहार्यम् । आनर्थक्यं हेयादिहीनार्थत्वं वा विफलत्वं वा तत्राऽऽद्यमुपेत्य द्वितीयं दूषयति—**नेति** । यत्तु स्ववाक्यगतोपासनादिपरत्वं वेदान्तानां तत्किं कतिपयानामुत सर्वेषाम् । आद्यमङ्गीकरोति—**देवतादीति** । आदिशब्देन देवतासुरसंग्रामो गुणजातं फलविशेषश्चोच्यते । तस्य तत्प्रकरणस्थोपास्तिशेषत्वं प्रकरणादिष्टमेवेत्यर्थः । नेतरः । सर्वेषां वेदान्तानां तच्छेषत्वे मानाभावात् । तदर्थस्य च ब्रह्मणस्तच्छेषत्वं ज्ञाना-

१ ब्रह्मात्माव० ।

**न तु तथा ब्रह्मण उपासनाविधिशेषत्वं सम्भवति ॥ एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः ॥ न ह्येकत्वविज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुनस्सम्भवोऽस्ति, येनोपासनाविधिशेषत्वं ब्रह्मणः प्रतिपाद्येत ॥ यद्यप्यन्यत्र वेदवाक्यानां विधिसंस्पर्शमन्तरेण प्रमाणत्वं न दृष्टम्,-**

---

रत्नप्रभा ।

**न तु तथेति** ॥ प्राणादिदेवतावदित्यर्थः । अहं ब्रह्मास्मीत्येकत्वे ज्ञाते सति हेयोपादेयशून्यतया ब्रह्मात्मनः फलाभावादुपास्योपासकद्वैतभानस्य कारणस्य नाशाच्च नोपासनाशेषत्वमित्याह-**एकत्व इति** ॥ द्वैतज्ञानस्य संस्कारबलात् पुनरुदये विधानमिति नेत्याह-**न हीति** ॥ दृढस्येति शेषः । भ्रान्तित्वानिश्चयो दार्ढ्यम् । संस्कारोत्थं तु भ्रान्तित्वेन निश्चितं न विधिनिमित्तम् ॥ **येनेति** । उपासनायां कारणस्य सत्त्वेनेत्यर्थः । वेदप्रामाण्यस्य व्यापकं क्रियार्थकत्वमनुवदति-**यद्यपीति** ॥ कर्मकाण्डेऽर्थवादादीनामित्यर्थः । तथा च व्यापकाभावाद्वेदान्तेषु व्याप्याभावानुमानमिति भावः । वेदान्ताः, न स्वार्थे मानम्, अक्रियार्थत्वात्, "सोऽरोदीद्" इत्यादिवदित्यनुमाने निष्फलार्थकत्वमु-

भामती ।

तर्हि वेदान्ता देवताप्रतिपादनद्वारेणोपासनाविधिपरा एवेत्यत आह-**न तु तथा ब्रह्मण इति** । उपास्योपासकोपासनादिभेदसिद्धयधीनोपासना न निरस्तसमस्तभेदप्रपञ्चे वेदान्तवेद्ये ब्रह्मणि संभवतीति नोपासनाविधिशेषत्वं वेदान्तानां तद्विरोधित्वादित्यर्थः । स्यादेतत् । यदि विधिविरहेऽपि वेदान्तानां प्रामाण्यं, हन्त तर्हि 'सोऽरोदीत्' इत्यादीनामप्यस्तु स्वतन्त्राणामेवोपेक्षणीयार्थानां प्रामाण्यम् । न हि हानोपादानबुद्धी एव प्रमाणस्य फले, उपेक्षाबुद्धेरपि तत्फलत्वेन प्रामाणिकैरभ्युपेतत्वादिति कृतं 'बर्हिषि रजतं न देयम्' इत्यादिनिषेधविधिपरत्वेनैतेषामित्यत आह-**यद्यपीति** । स्वाध्यायविध्यधीनग्रहणतया हि सर्वो वेदराशिः पुरुषार्थतन्त्र इत्यवगतम् । तत्रैकेनापि वर्णेन नापुरुषार्थेन भवितुं युक्तं, किं पुनरियता 'सोऽरोदीत्' इत्यादिना पदप्रबन्धेन । न च वेदान्तेभ्य इव तदर्थावगममात्रादेव कश्चित्पुरुषार्थ उपलभ्यते । तेनैष पदसंदर्भः साकांक्ष एवास्ते पुरुषार्थमुदीक्षमाणः । 'बर्हिषि रजतं न देयम्' इत्ययमपि निषेधविधिः स्वनिषेध्यस्य निन्दामपेक्षते । न ह्यन्यथा ततश्चेतनः शक्यो निवर्तयितुम् । तद्यदि दूरतोऽपि न निन्दामवाप्स्यत्ततो निषेधविधिरेव रजतनिषेधे च निन्दायां च दर्विहोमवत् सामर्थ्यद्वयमकल्पयिष्यत् । तदेवमुक्तयोः 'सोऽरोदीत्' इति च 'बर्हिषि रजतं न देयम्' इति च पदसंदर्भयोर्लक्ष्यमाणनिन्दाद्वारेण नष्टाश्वदग्धरथवत् परस्परं समन्वयः । न त्वेवं वेदान्तेषु पुरुषार्थापेक्षा, तदर्थावगमादेवानपेक्षात्परमपुरुषार्थलाभादित्युक्तम् । ननु

आनन्दगिरीय-न्यायनिर्णयः ।

ध्प्रागूर्ध्वं वा । आद्येऽध्यस्तगुणवतस्तस्य तच्छेषत्वेऽपि न द्वितीय इत्याह-**न त्विति** । देवतादिप्रतिपादनं दृष्टान्तयितुं **तथे**त्युक्तम् । तत्र **हेतुरेकत्व इति** । ज्ञाते सतीति शेषः । हेयोपादेयशून्यतयेत्यत्र ब्रह्मणो ज्ञातस्याद्वितीयस्येत्यध्याहार्यम् । उपास्योपासकादिभेदबुद्ध्यभावादुपास्तिविध्ययोगान्न ब्रह्मणो ज्ञातस्य तच्छेषतेत्यर्थः । संस्कारात्पुनर्द्वैतज्ञानोदये विध्यादिसर्वमविरुद्धमित्याशंक्याऽऽह-**न हीति** । संस्कारोत्थस्याऽऽभासत्वाद्विध्यनिमित्तत्वान्न ब्रह्मणस्तच्छेषतेत्यर्थः । वेदान्ताः स्वार्थे न मानं विधिशून्यवाक्यत्वात्संमतवदित्यनुमानात्तेषां विधिशेषतेत्याशङ्क्य स्वार्थे फलराहित्यमुपाधिरित्याह-**यद्यपीति** । अन्यत्रेति कर्मकाण्डोक्तिः । वेदवाक्यानां सोऽरोदीदित्यादीनामिति यावत् । तथाऽपि स्वार्थे वैफल्यं

**तथाप्यात्मविज्ञानस्य फलपर्यन्तत्वान्न तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुम् ॥ न चानुमानगम्यं शास्त्रप्रामाण्यं, येनान्यत्र दृष्टं निदर्शनमपेक्षेत ॥ तस्मात्सिद्धं ब्रह्मणश्शास्त्रप्रमाणकत्वम् ॥**

रत्नप्रभा ।

पाधिरित्याह—**तथापीति** ॥ अर्थवादानां निष्फलस्वार्थमानत्वेऽपीत्यर्थः । **तद्विषयस्य** तत्कारणस्य । स्वार्थे ब्रह्मात्मनीति **शेषः** ॥ सफलज्ञानकरणत्वेन वेदान्तानां स्वार्थे मानत्वसिद्धेर्न क्रियार्थकत्वं तद्व्यापकमिति भावः । **ननु** मा भूद्वेदप्रामाण्यस्य व्यापकं, क्रियार्थकत्वं, व्याप्यं तु भविष्यति, तदभावाद्वेदान्तानां प्रामाण्यं दुर्ज्ञानमिति नेत्याह—**न चेति** ॥ **येन** वेदप्रामाण्यं स्वस्यानुमानगम्यत्वेनान्यत्र क्वचिद् दृष्टं दृष्टान्तमपेक्षेत, **तदेव** नास्तीत्यर्थः । चक्षुरादिवद्वेदस्य स्वतः प्रामाण्यज्ञानान्न तद्व्याप्तिलिङ्गाद्यपेक्षा । प्रामाण्यसंशये तु फलवदज्ञाताबाधितार्थतात्पर्यात् प्रामाण्यनिश्चयो न क्रियार्थत्वेन । न कूपे पतेदितिवाक्ये व्यभिचारादिति भावः । वर्णकार्थमुपसंहरति—**तस्मादिति** ॥ समन्वयादित्यर्थः । विधिवाक्यानामपि फलवदज्ञातार्थत्वेन प्रामाण्यं तत्तुल्यं वेदान्तानामपीति स्थितम् । एवं पदानां सिद्धेऽर्थे व्युत्पत्तिमिच्छतां ब्रह्मनास्तिकानां मतं ब्रह्मणो मानान्तरायोग्यत्वात् सफलत्वाच्च वेदान्तैकमेयत्वमित्युक्त्या **निरस्तम्** ॥ सम्प्रति सर्वेषां पदानां कार्यान्वितार्थे शक्तिमिच्छतां विधिशेषत्वेन

भामती ।

विध्यसंस्पर्शिनो वेदस्यान्यस्य न प्रामाण्यं दृष्टमिति कथं वेदान्तानां तदस्पृशां तद्भविष्यतीत्यत आह—**न चानुमानगम्यमिति** । अबाधितानधिगतासंदिग्धबोधजनकत्वं हि प्रमाणत्वं प्रमाणानां तच्च स्वत इत्युपपादितम् । यद्यपि चैषामीदृग्बोधजनकत्वं कार्यार्थापत्तिसमधिगम्यं तथापि तद्बोधोपजनने मानान्तरं नापेक्षन्ते । नापीमामेवार्थापत्तिं, परस्पराश्रयप्रसङ्गादिति स्वत इत्युक्तम् । ईदृग्बोधजनकत्वं च कार्ये इव विधीनां, वेदान्तानां ब्रह्मण्यस्तीति दृष्टान्तानपेक्षं तेषां ब्रह्मणि प्रामाण्यं सिद्धं भवति । अन्यथा नेन्द्रियान्तराणां रूपप्रकाशनं दृष्टमिति चक्षुरपि न रूपं प्रकाशयेदिति । प्रकृतमुपसंहरति—**तस्मादिति** ॥

आनन्दगिरीय—न्यायनिर्णयः ।

तेषां विधिस्पर्शमन्तरेणाप्रामाण्ये हेतुरिति शेषः । साधनव्याप्तिं प्रत्याह—**आत्मेति** । तद्विषयस्येत्यात्मज्ञानं तच्छब्दार्थः । शास्त्रस्य स्वार्थे फलवत्त्वात्तत्रैवेति शेषः । एतेन न क्वचिदपीत्यादि व्याख्यातम् । अर्थवादाधिकरणस्य विषयमेवं वक्ष्यति । न च मन्त्रवद्वेदान्तानां विधिभिर्वाक्यैकवाक्यत्वं तेषां दृष्टद्वारा क्रतूपकारित्ववदेषां तदयोगादेतदुत्थात्मज्ञानस्य कर्माधिकारविरोधित्वादिति द्रष्टव्यम् । ननु वेदान्ता विधिबोधिनो मानत्वे सति वेदवाक्यत्वात्संमतवन्नेत्याह—**न चेति** । वक्ष्यमाणन्यायेन निषेधवाक्ये व्यभिचारादबाधितानधिगतासंदिग्धबोधित्वाद्युक्तं विधिस्पर्शं विना स्वार्थे वेदान्तप्रामाण्यमित्यर्थः । विध्यसंस्पर्शिनो वेदवाक्यस्य स्वार्थे प्रामाण्यमन्यत्रादृष्टं निषेधवाक्येऽपि विप्रतिपत्तेरित्याशंक्याऽऽह—**येनेति** । शास्त्रप्रामाण्यस्यानुमानगम्यत्वेनेति यावत् । अपेक्षेत शास्त्रप्रामाण्यमिति शेषः । न तथा तदनुमानगम्यं स्वारसिकत्वादुत्पन्नायां हि प्रमायां शास्त्रस्य तल्लिङ्गेन तज्जनकत्वमनुमेयम् । ततस्तदुत्पत्तिरिति स्वीकारे परस्पराश्रयत्वं तस्मादनुमानेन ज्ञेयमपि शास्त्रप्रामाण्यं न तद्गम्यत्वेन भवतीति नास्ति दृष्टान्तापेक्षेत्यर्थः । वर्णकार्थमुपसंहरति—**तस्मादिति** । वेदान्तानां प्रामाण्ये विधितुल्यत्वं तच्छब्दार्थः । लौकिकोक्तीनां मानान्तरायत्तानां सिद्धेऽर्थे प्रामाण्यमुपेत्य वेदान्तेषु विना कार्यार्थतामनपेक्षत्वं वा फलवत्त्वं वा न लभ्यमिति मतं ब्रह्मात्मनो मानान्तरायोग्यत्वेन तद्धीमात्रात्फललाभेन च परास्तम् । संप्रति कार्यान्वित

## अत्रापरे प्रत्यवतिष्ठन्ते-यद्यपि शास्त्रप्रमाणकं ब्रह्म तथापि—

रत्नप्रभा ।

प्रत्यग्ब्रह्म वेदान्तैर्बोध्यते, न स्वातन्त्र्येणेति वदतां वृत्तिकाराणां मतनिरासाय सूत्रस्य वर्णकान्तरमारभ्यते । तत्र वेदान्ताः किमुपासनाविधिशेषत्वेन ब्रह्म बोधयन्ति—उत—स्वातन्त्र्येणेति ? इति सिद्धे व्युत्पत्त्यभावभावाभ्यां संशये पूर्वपक्षमाह—**अत्रापर इति** ॥ ब्रह्मणो वेदान्तवेद्यत्वोक्तौ वृत्तिकाराः पूर्वपक्षयन्तीत्यर्थः । उपासनातो मुक्तिः पूर्वपक्षे तत्त्वज्ञानादेवेति सिद्धान्ते फलं विधिनियोगः ।

भामती ।

आचार्यदेशीयानां मतमुत्थापयति—**अत्रापरे प्रत्यवतिष्ठन्त इति** । तथाहि—'अज्ञातसंगतित्वेन शास्त्रत्वेनार्थवत्तया । मननादिप्रतीत्या च कार्यार्थाद्ब्रह्मनिश्चयः ॥' न खलु वेदान्ताः सिद्धब्रह्मरूपपरा भवितुमर्हन्ति, तत्राविदितसंगतित्वात् । यत्र हि शब्दा लोकेन न प्रयुज्यन्ते तत्र न तेषां संगतिग्रहः । न चाहेयमनुपादेयं रूपमात्रं कश्चिद्विवक्षति प्रेक्षावान्, तस्याबुभुत्सितत्वात् । अबुभुत्सितावबोधने च प्रेक्षावत्ताविघातात् । तस्मात् प्रतिपित्सितं प्रतिपिपादयिषन्नयं लोकः प्रवृत्तिनिवृत्तिहेतुभूतमेवार्थं प्रतिपादयेत्, कार्यं चावगतं तद्धेतुरिति तदेव बोधयेत् । एवं च वृद्धव्यवहारप्रयोगात् पदानां कार्यपरतामवगच्छति । तत्र किंचित्साक्षात् कार्याभिधायकं, किंचित्तु कार्यार्थस्वार्थाभिधायकं, न तु भूतार्थपरता पदानाम् । अपि च नरान्तरस्य व्युत्पन्नस्यार्थप्रत्ययमनुमाय तस्य च शब्दभावाभावानुविधानमवगम्य शब्दस्य तद्विषयबोधकत्वं निश्चेतव्यम् । न च भूतार्थरूपमात्रप्रत्यये परनरवर्तिनि किंचिल्लिङ्गमस्ति । कार्यप्रत्यये तु नरान्तरवर्तिनि प्रवृत्तिनिवृत्ती स्तो हेतू इत्यज्ञातसंगतित्वान्न ब्रह्मरूपपरा वेदान्ताः । अपि च वेदान्तानां वेदत्वाच्छास्त्रत्वप्रसिद्धिरस्ति । प्रवृत्तिनिवृत्तिपराणां च संदर्भाणां शास्त्रत्वम् । यथाहुः— 'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥' इति । तस्माच्छास्त्रत्वप्रसिद्ध्या व्याहतमेषां स्वरूपपरत्वम् । अपि च न ब्रह्मरूपप्रतिपादनपराणामेषामर्थवत्त्वं पश्यामः । न च रज्जुरियं न भुजङ्ग इति यथाकथंचिल्लक्षणया वाक्यार्थतत्त्वनिश्चये यथा भयकम्पादिनिवृत्तिः, एवं 'तत्त्वमसि' इतिवाक्यार्थावगमान्निवृत्तिर्भवति सांसारिकाणां धर्माणाम् । श्रुतवाक्यार्थस्यापि पुंसस्तेषां तादवस्थ्यात् । अपि च यदि श्रुतब्रह्मणो भवति सांसारिकधर्मनिवृत्तिः, कस्मात् पुनः श्रवणस्योपरि मननादयः श्रूयन्ते । तस्मात्तेषां वैयर्थ्यप्रसङ्गादपि न ब्रह्मस्वरूपपरा वेदान्ताः, किंत्वात्मप्रतिपत्तिविषयकार्यपराः । तच्च कार्यं स्वात्मनि नियोज्यं नियुञ्जानं नियोग इति च मानान्तरापूर्वतयाऽपूर्वमिति चाख्यायते । न च विषयानुष्ठानं विना तत्सिद्धिरिति स्वसिद्ध्यर्थं तदेव कार्यं स्वविषयस्य करणस्यात्मज्ञानस्यानुष्ठानमाक्षिपति । यथा च कार्यं स्वविषयाधीननिरूपणमिति ज्ञानेन विषयेण निरूप्यते, एवं ज्ञानमपि स्वविषयमात्मानमन्तरेणाशक्यनिरूपणमिति तन्निरूपणाय तादृशमात्मानमाक्षिपति, तदेव कार्यम् । यथाहुः— 'यत्तु तत्सिद्ध्यर्थमुपादीयते आक्षिप्यते तदपि विधेयमिति तन्त्रे व्यवहारः' इति । विधेयता च नियोगविषयस्य ज्ञानस्य भावार्थतयानुष्ठेयता, तद्विषयस्य त्वात्मनः स्वरूपसत्ताविनिश्चितिः । आरोपिततद्भावस्य त्वन्यस्य निरूपकत्वे तेन तन्निरूपितं न स्यात् । तस्मात्तादृगात्मप्रतिपत्तिविधिपरेभ्यो वेदान्तेभ्यस्तादृगात्मविनिश्चयः । तदेतत्सर्वमाह—**यद्यपीति** । विधिपरेभ्योऽपि वस्तुतत्त्वविनिश्चय इत्यत्र निदर्श-

आनन्दगिरीय-न्यायनिर्णयः ।

शब्दशक्तिनियमान्न सिद्धं वस्तु शाब्दमिति वदतामुपास्तिविधिनिष्ठान्वेदान्तानिच्छतां मतं निरसितुं वर्णकान्तरमारभ्यते । यद्वा—आरोपितब्रह्मत्वस्य जीवस्योपास्तिपरा वेदान्ता न ब्रह्मात्मत्वे मानमिति पक्षं प्रतिक्षिप्य तेषां वस्तुनि मानत्वेऽपि विधिद्वारेति विशेषमाशङ्क्य वर्णकान्तरम् । तत्र सदेवेत्यादिवेदान्ता विधेयधीविषयत्वेन ब्रह्मार्पयन्त्युत साक्षादिति सिद्धेऽप्युत्पत्त्यभावाभावाभ्यां संशये पूर्वपक्षयति— **अत्रेति** । ब्रह्म कार्यस्पृष्टमेव शास्त्रगम्यं केवलमपीत्युभयत्र फलभेदः । सप्तम्या ब्रह्मणः शास्त्रप्रमाणकत्वमुक्तम् । तदेव वदलुक्तमङ्गीकृत्यानिष्टं प्रसञ्जयति—**यद्यपीति** । प्रतिपत्तिविधिविषयतया तद्विषय-

१ एतदारम्भात्प्राक् इति सप्तमं वर्णकमिति क्वचित्पाठः । आदित आरभ्यैतदन्तं सप्तवर्णकानीति भावः ।

**प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते ॥ यथा—यूपाहवनीयादीन्यलौकिकान्यपि विधिशेषतया शास्त्रेण समर्प्यन्ते तद्वत् ॥ कुत एतत् ॥ प्रवृत्तिनिवृत्तिप्रयोजनत्वाच्छास्त्रस्य । तथाहि शास्त्रतात्पर्यविद आहुः— "दृष्टो हि तस्यार्थः कर्मावबोधनम्"[शा०भा०जै०सू०व्या०१।१।१] इति॥**

रत्नप्रभा ।

तस्य **विषयः** प्रतिपत्तिरुपासना । अस्याः को विषयः, इत्याकांक्षायां सत्यादिवाक्यैर्विधिपरैरेव ब्रह्म समर्प्यत इत्याह—**प्रतिपत्तीति** ॥ विधिविषयप्रतिपत्तिविषयतयेत्यर्थः । विधिपराद्वाक्यात्तच्छेषलाभे दृष्टान्तमाह—**यथेति** ॥ "यूपे पशुं बध्नाति", "आहवनीये जुहोति", "इन्द्रं यजेत" इतिविधिषु, के यूपादय इत्याकांक्षायां "यूपं तक्षति", "यूपमष्टाश्रीकरोति" इति तक्षणादिसंस्कृतं दारु—यूपः॥ "अग्नीनादधीत" इत्याधानसंस्कृतोऽग्निः—आहवनीयः "वज्रहस्तः पुरन्दरः" इति विधिपरैरेव वाक्यैः समर्प्यन्ते, **तद्वद्** ब्रह्मेत्यर्थः । विधिपरवाक्यस्यापि अन्यार्थबोधित्वे वाक्यभेदः स्यादिति शङ्कानिरासार्थमपिशब्दः । मानान्तराज्ञातान्यपि विधिशेषतयोच्यन्ते, न प्रधानत्वेनेति न वाक्यभेदः । प्रधानार्थभेदस्यैव वाक्यभेदकत्वादिति भावः । ननूक्तषड्विधलिङ्गैस्तात्पर्यविषयस्य ब्रह्मणः कुतो विधिविशेषत्वमिति शङ्कते—**कुत इति** ॥ वृद्धव्यवहारेण हि शास्त्रतात्पर्यनिश्चयः। वृद्धव्यवहारे च श्रोतुः प्रवृत्तिनिवृत्ती उद्दिश्यास्तप्रयोगो दृश्यते। अतः शास्त्रस्यापि ते एव प्रयोजने । ते च कार्यज्ञानजन्ये इति कार्यपरत्वं शास्त्रस्य । ततः कार्यशेषत्वं ब्रह्मण इत्याह—**प्रवृत्तीति** ॥ शास्त्रस्य नियोगपरत्वे वृद्धसम्मतिमाह—**तथाहीत्यादिना** ॥ क्रिया, कार्यं, नियोगः, विधिः, धर्मः, पूर्वमिति—अनर्थान्तरम्। को वेदार्थः, इत्याकांक्षायां शाबरभाष्यकृतोक्तम्—**दृष्टो हीति** ॥ **तस्य** वेदस्य कार्यं वेदार्थः इत्यत्र

भामती ।

नमुक्तं—**यथा यूपेति** । 'यूपे पशुं बध्नाति' इति बन्धनाय विनियुक्ते यूपे, तस्यालौकिकत्वात्कोऽसौ यूप इत्यपेक्षिते'खादिरो यूपो भवति,यूपं तक्षति,यूपमष्टाश्रीकरोति'इत्यादिभिर्वाक्यैस्तक्षणादिविधिपरैरपि संस्काराविष्टं विशिष्टसंस्थानं दारु यूप इति गम्यते। एवमाहवनीयादयोऽप्यवगन्तव्याः। प्रवृत्तिनिवृत्तिपरस्य शास्त्रत्वं न स्वरूपपरस्य,कार्य एव च संबन्धो न स्वरूपे,इति हेतुद्वयं भाष्यवाक्येनोपपादितम्—**प्रवृत्तिनिवृत्तिप्रयो-**

आनन्दगिरीय—न्यायनिर्णयः ।

प्रतिपत्तिविषयतयेति यावत् । वस्तुमात्रनिष्ठत्वे ब्रह्मधियो हानाद्यर्थत्वाभावादानर्थक्यमेवेत्यर्थः । कथं कार्यपरवेदान्तेभ्यो वस्तुधीर्वाक्यभेदादित्याशंक्याऽऽह—**यथेति** । "यूपे पशुं बध्नाति" इति पशुबन्धनाय विनियुक्ते यूपे तस्यालौकिकत्वात्कोऽसावित्याकांक्षिते खादिरो यूपो भवति । "यूपं तक्षति" "यूपमष्टाश्री करोति" इत्यादिभिस्तक्षणादिविधिपरैरपि वाक्यैर्विशिष्टसंस्कारसंस्थानं दारु यूप इति गम्यते । यदाहवनीये जुहोतीति होमाधारत्वेनोक्ताहवनीयस्यालौकिकत्वात्कोऽसाविति वीक्षायां "वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्यादितद्विधिपरैरेव वाक्यैः संस्कृतोऽग्निरसाविति भाति । तथा देवतास्वर्गाद्यपि विधिपरेणैव शास्त्रेणोच्यते । तथाऽन्यपरेणापि तेन विध्याक्षेपादुपादानाद्विशिष्टं ब्रह्म सुबोधमित्यर्थः । ननु फलिनो द्रुमा भूभागो निधिमानित्यादिषु विनाऽपि विधिं प्रयोगधीदृष्टेः शास्त्रेणापि विध्यनपेक्षेण ब्रह्मणोर्पणमिति शंकते—**कुत इति** । दृष्टान्तेऽपि कार्याध्याहाराद्यभिप्रेत्याऽऽह—**प्रवृत्तीति** । "प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येते तच्छास्त्रमभिधीयते" इति न्यायाद्वेदान्तानामपि शास्त्रत्वादन्यतरनियमाद्विधिनिष्ठताध्रौव्यमित्यर्थः । प्रवृत्त्यादिपरस्यैव शास्त्रत्वं शब्दशक्तिश्च कार्यान्वयिन्येवेत्यत्र वृद्धसंमतिमाह—**तथा हीति** । "वेदमधीत्य स्नायात्" इत्यध्ययनस्नानयोरव्यवधानाधिगमादधीत्य स्नानमकृत्वा धर्मं जिज्ञासमानो वेदमिममतिक्रामेदनतिक्रामितव्यश्चासाविति चोदिते भाष्यकृतोक्तम्—अतिक्रमिष्याम इममाम्नायमनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकमवकल्पयेमेति । कस्तर्हि वेदस्यार्थस्तत्राऽऽह—**दृष्ट इति** । तस्य वेदस्य कर्मावबोधनं नियोगज्ञानं दृष्टोऽर्थो दृष्टं फलम् । नियो-

१ शबरस्वामिनां सम्मतिम् । २ अर्थान्तरवन्न पर्याय एवेत्यर्थः ।

**चोदनेति क्रियायाः प्रवर्तकं वचनम् ॥ तस्य ज्ञानमुपदेशः-" [ जै०सू०१। १।५] "तद्भूतानां क्रियार्थेन समाम्नायः-" [ जै० सू०१।१।२५ ] "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्-" [जै०सू०१। १ । १ ] इति च ।**

रत्नप्रभा ।

चोदनासूत्रस्थं भाष्यमाह—**चोदनेति** ॥ क्रियाया नियोगस्य ज्ञानद्वारा प्रवर्तकं वाक्यं-**चोदनेत्युच्यत** इत्यर्थः । शबरस्वामिसंमतिमुक्त्वा जैमिनिसंमतिमाह—**तस्य ज्ञानमिति** ॥ **तस्य** धर्मस्य **ज्ञानं** ज्ञापकम्-अपौरुषेयविधिवाक्यम् **उपदेशः**, तस्य धर्मेणाव्यतिरेकादित्यर्थः ॥ पदानां कार्यान्वितार्थे शक्तिरित्यत्र सूत्रं पठति—**तद्भूतानामिति** ॥ **तत्** तत्र वेदे **भूतानां** सिद्धार्थनिष्ठानां पदानां **क्रियार्थेन** कार्यवाचिना लिङ्गादिपदेन **समाम्नायः** सहोच्चारणं कर्तव्यम् । पदार्थज्ञानस्य वाक्यार्थरूपकार्यधीनिमित्तत्वादित्यर्थः । कार्यान्वितार्थे शक्तानि पदानि कार्यवाचिपदेन सह पदार्थस्मृतिद्वारा कार्य-

भामती ।-०

आनन्दगिरीय-न्यायनिर्णयः ।

गश्च साध्यत्वात्प्रवृत्त्याद्यपेक्षस्तस्मात्प्रवृत्त्यादिपरं शास्त्रमित्यर्थः । धर्मजिज्ञासासूत्रस्थं भाष्यमुक्त्वा तत्रैव चोदनासूत्रस्थं भाष्यमाह—**चोदनेति** । चोदनासूत्रे हि चोदनेत्यनेन शब्देन क्रियाया नियोगस्य प्रवर्तकमनुष्ठापकं वचनमाहुर्वेदविदस्तेन शास्त्रं प्रवर्तकमित्यर्थः । प्रवृत्त्यादिपरं शास्त्रमित्यत्रैव सूत्रकारं संवादयन्नौत्पत्तिकसूत्रावयवमादत्ते—**तस्येति** । अध्यक्षाद्यभावान्मानागम्यस्य धर्मस्य कथं धीरिति वीक्षायामुक्तम् "औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" [ जै० सू० १ । १ । ५ ] इति । उत्पत्तिर्भावः शब्दस्य वाचकस्यार्थेन वाच्येन शक्तिसंबन्धस्तयोर्माविनाप्रियुक्तो नित्यो न तूत्पन्नयोरुत्तरभावी तथाऽपि धर्मे किं मानं चोदनैवेत्याह—**तस्येति** । अग्निहोत्रादिधर्मस्याध्यक्षाद्यसिद्धस्य ज्ञायतेऽनेनेति ज्ञानं तन्निमित्तं मानमुपदेश उपदिश्यतेऽनेनेति विधिवाक्यमव्यतिरेकश्च शब्दोत्थस्य ज्ञानस्यार्थे व्यभिचाराभावो न ह्यपौरुषेयोक्तिजन्यं ज्ञानं जातु विपर्येति तदस्मादन्यतोऽनुपलब्धेऽर्थे धर्माख्ये तदेवोपदेशशब्दितं विधिवाक्यं मानं ज्ञानान्तरे पुरुषान्तरे वा तस्यानपेक्षत्वाद्बादरायणस्यापि भगवतः संमतमेतदित्याचार्यं पूजयितुं बादरायणोक्तिरित्यक्षरार्थः । तत्र लोके शब्दस्य मानान्तरवेद्यत्वोपहितस्वार्थे शक्तिनियमाद्देवदत्तादिपदे च संकेतादर्थधीदृष्टेः सर्वशब्दानां तथैवार्थबोधित्वाद्वेदे संकेतायोगान्नास्य वेदार्थतेत्यभावो वेदार्थस्येत्याशङ्क्य कार्यबोधाधीनव्यवहारकृतशक्तौ मानान्तरानिवेशात्कार्यान्वितस्वार्थमात्रे शक्तेरवधृतत्वाद्वृद्धव्यवहारान्निश्चितशक्तेर्गवादिशब्दार्थधीदृष्टेर्देवदत्तादिपदे दृष्टसंकेतानुमानायोगात्प्रसिद्धार्थपदसमभिव्याहाराद्व्युत्पत्त्युपायादपूर्वकार्यार्थता लिङ्गादेः शब्दान्तराणां तदन्वितस्वार्थव्युत्पत्तेर्मानान्तरानपेक्षार्थत्वं स्वाभाविकसंबन्धादपौरुषेयवचसामिति चिन्तितम् । तथा चौत्पत्तिकसूत्रादपि शास्त्रं प्रवृत्त्यादिपरमेवेत्यर्थः । कार्यान्विते पदशक्तिरित्यत्रैव सूत्रं पठति—**तद्भूतानामिति** । समाम्नायोऽर्थस्य तन्निमित्तत्वादिति सूत्रशेषः । वेदवाक्यानि मानान्तरसापेक्षाणि तन्निरपेक्षाणि वेति संशये वृद्धव्यवहारे वाक्यात्तदर्थज्ञानेऽपि वेदवाक्यस्य समुदायान्तरत्वादर्थेनाज्ञातसंबन्धत्वात्तत्कल्पने संकेतापाताद्वेदवाक्यानां सापेक्षत्वादप्रामाण्यमिति प्राप्ते लोकवेदयोः शब्दार्थाभेदाद्वैदिकवाक्यार्थधियो लोकव्युत्पत्तिमूलत्वात्कार्यान्विते ज्ञातशक्तीनामेव शब्दानां विशिष्टार्थावच्छेदकानां वाक्यत्वाद्वैदिकवाक्यानां संकेतानपेक्षाणां स्वार्थधीहेतुत्वादपौरुषेयाणां तेषामनपेक्षं प्रामाण्यमिति राद्धान्तितम् । तेषु पदार्थेषु भूतानां वर्तमानानां पदानां कार्येण वाक्यार्थेन तत्प्रतिपत्त्यर्थत्वेन समाम्नायः संभूय वाक्यत्वेनोच्चारणमेकैकपदस्मृतार्थस्य मिलितार्थस्य वाक्यार्थधीनिमित्तत्वात्पदार्थप्रतिपत्त्यवान्तरव्यापाराणि हि पदानि वाक्यार्थं बोधयन्तीति सूत्रार्थः । भूतार्थपरस्य न शास्त्रतेत्यत्रापि सूत्रकारानुमतिमाह—**आम्नायस्येति** । अभियुक्तोक्त्या फलितमाह—

अतः पुरुषं क्वचिद्विषयविशेषे प्रवर्तयत्कुतश्चिद्विषयविशेषान्निवर्तयच्चार्थवच्छास्त्रम् ॥ तच्छेषतया चान्यदुपयुक्तम् ॥ तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्यात्॥ सति च विधिपरत्वे यथा-स्वर्गादिकामस्याग्निहोत्रादि साधनं विधीयते,एवममृतत्वकामस्य ब्रह्मविज्ञानं विधीयते इति युक्तम् ॥ नन्विह जिज्ञास्यवैलक्षण्यमुक्तं-कर्मकाण्डे भव्यो धर्मो जिज्ञास्यः।इह तु भूतं नित्यनिर्वृत्तं ब्रह्म जिज्ञास्यमिति॥तत्र धर्मज्ञानफलादनुष्ठानापेक्षाद्विलक्षणं ब्रह्मज्ञानफलं भवितुमर्हति ॥ नार्हत्येवं भवितुम् ॥ कार्यविधिप्रयुक्तस्यैव

रत्नप्रभा ।

मेव वाक्यार्थं बोधयन्तीति भावः । फलितमाह—अत इति ॥ यतो वृद्धा एवमाहुः—अतो विधिनिषेधवाक्यमेव शास्त्रम् । अर्थवादादिकं तु तच्छेषतयोपक्षीणम् । तेन कर्मशास्त्रेण सामान्यं शास्त्रत्वम् । तस्माद्वेदान्तानां कार्यपरत्वेनैव अर्थवत्त्वं स्यादित्यर्थः । ननु वेदान्तेषु नियोज्यस्य विधेयस्य चादर्शनात् कथं कार्यधीरिति तत्राह—सति चेति ॥ ननु धर्मब्रह्मजिज्ञासासूत्रकाराभ्यामिह काण्डद्वयेऽर्थभेद उक्तः । एककार्यार्थत्वे शास्त्रभेदानुपपत्तेः । तत्र काण्डद्वये जिज्ञास्यभेदे सति फलवैलक्षण्यं वाच्यम् । तथा च न मुक्तिफलाय ज्ञानस्य विधेयता । मुक्तेर्विधेयक्रियाजन्यत्वे कर्मफलादविशेषप्रसङ्गात् । अविशेषे जिज्ञास्यभेदासिद्धेः ॥ अतः कर्मफलविलक्षणत्वान्नित्यसिद्धमुक्तेस्तद्व्यञ्जकज्ञानविधिरयुक्त इत्याशङ्कते—नन्विहेति ॥ मुक्तेः कर्मफलाद्वैलक्षण्यमसिद्धमिति तदर्थं ज्ञानं विधेयम् । न च तर्हि सफलं कार्यमेव वेदान्तेष्वपि जिज्ञास्यमिति तद्भेदासिद्धेरिति वाच्यम्, इष्टत्वात् । न च ब्रह्मणो जिज्ञास्यत्वसूत्रविरोधः । ज्ञानविधिशेषत्वेन सूत्रकृता ब्रह्मप्रतिपादनादिति परिहरति—नार्हत्येवमिति॥

भामती ।

जनत्वात् इत्यादिना तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्यात् इत्यन्तेन । न च स्वतन्त्रं कार्यं नियोज्यमधिकारिणमनुष्ठातारमन्तरेणेति नियोज्यभेदमाह—सति च विधिपरत्व इति । 'ब्रह्म वेद ब्रह्मैव भवति' इति सिद्धवदर्थवादादवगतस्यापि ब्रह्मभवनस्य नियोज्यविशेषाकांक्षायां ब्रह्मबुभूषोर्नियोज्यविशेषस्य रात्रिसत्रन्यायेन प्रतिलम्भः । पिण्डपितृयज्ञन्यायेन तु स्वर्गकामस्य नियोज्यस्य कल्पनायामर्थवादस्यासमवेतार्थतयात्यन्तपरोक्षा वृत्तिः स्यादिति । ब्रह्मभावश्चामृतत्वमिति अमृतत्वकामस्य इत्युक्तम् । अमृतत्वं चामृतत्वादेव, न कृतकत्वेन शक्यमनित्यमनुमातुम् । आगमविरोधादिति भावः । उक्तेन धर्मब्रह्मज्ञानयोर्वैलक्षण्येन विध्यविषयत्वं चोदयति—नन्विति । परिहरति—नार्हत्येवमिति । अत्र चात्मदर्शनं न विधेयम् । तद्धि दृशेरुपलब्धिवचनत्वात् श्रावणं वा स्यात् प्रत्यक्षं

आनन्दगिरीय—न्यायनिर्णयः ।

अत इति।इष्टोपायो यागादिर्विषयविशेषोऽनिष्टोपायो हननादिर्द्वितीयो विषयविशेषः।विधिनिषेधकाण्डस्यैवमर्थवत्त्वेऽपिकथमर्थवादादिषु तथेत्याशङ्कयाऽऽह—तच्छेषतयेति।तथाऽपि वेदान्तानां किमायातं तदाह-तत्सामान्यादिति । कर्मशास्त्रेण सामान्यं शास्त्रत्वं तथैव प्रवर्तकत्वेन निवर्तकत्वेन तच्छेषत्वेन वेत्यर्थः । ननु वेदान्तेषु 'प्रतिष्ठाकामो रात्रिसत्रेण यजेत' इत्यादिवद्विधेयाभावान्नियोज्याभावाच्च विध्ययोगान्न प्रवृत्त्यादिपरत्वं तत्राऽऽह—सतीति । शास्त्रत्वात्तेषामपि विधिपरत्वध्रौव्ये रात्रिसत्रन्यायेन नियोज्यविशेषलाभादात्मधियश्चाग्निहोत्रादिवद्विधेयत्वाद्विधिद्वारा वेदान्तानां प्रवृत्त्यादिपरतेत्यर्थः । उक्तं स्मारयन्ब्रह्मधियो विधेयत्वमाक्षिपति—नन्विति । इहेति काण्डद्वयस्याऽऽद्यसूत्रस्य चोक्तिः । भूतशब्दस्यार्थान्तरं निरसितुं विशिनष्टि—नित्येति । धीकर्मणोर्विषयवैषम्येऽपि विधेयत्वे किं जातं तत्राऽऽह—तत्रेति । ब्रह्मधियोऽसाध्यफलत्वान्न कर्मवद्विधेयतेत्येतद्दूषयति—नेति । कृतियोग्यभावार्थविषयो नियोगोऽत्र कार्यविधिस्तदपेक्षितस्यैव ब्रह्मणो वेदान्तेषु प्रतिपादनात्तस्य स्वतोऽसाध्यत्वेऽपि विधेयक्रियाद्वारा साध्यत्वात्कर्मफलवद्धी-

**ब्रह्मणः प्रतिपाद्यमानत्वात् । "आत्मा वा अरे द्रष्टव्यः" [ बृह० २ । ४ । ५ ] "य आत्मापहतपाप्मा" [ छान्दो० ८ । ७ । १ ] "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" [ छान्दो० ८ । ७ । १ ] "आत्मेत्येवोपासीत" [ बृह० १ । ४ । ७ ] "आत्मानमेव लोकमुपासीत" [ बृह० १ । ४ । १५ ] "ब्रह्म वेद ब्रह्मैव भवति" [ मुण्ड० ३ । २ । २ ] इत्यादिषु हि विधानेषु सत्सु कोऽसावात्मा किं तद्ब्रह्मेत्याकांक्षायां तत्स्वरूपसमर्पणेन सर्वे वेदान्ता उपयुक्ताः-"नित्यस्सर्वगतः" [ भग०गी०२।२४], "नित्यतृप्तः" [भ०गी० ४ । २०], "नित्यशुद्धबुद्धमुक्तस्वभावः ॥" [ नृसिं० उत्त० ९], "विज्ञानमानन्दं ब्रह्म" [ बृह० ३ । ९ । २८ ] इत्येवमादयः ॥ तदुपासनाच्च शास्त्रदृष्टोऽदृष्टो मोक्षः फलं भविष्यति ॥ कर्तव्यविध्यननुप्रवेशे वस्तुमात्रकथने हानोपादानासम्भवात्, सप्तद्वीपा वसुमती, राजाऽसौ गच्छतीत्यादिवाक्यवद्वेदान्तवाक्यानामानर्थक्यमेव स्यात् ॥**

---

रत्नप्रभा ।

ब्रह्मणो विधिप्रयुक्तत्वं स्फुटयति-**आत्मा वा इति** ॥ ब्रह्म वेदेत्यत्र ब्रह्मभावकामो ब्रह्मवेदनं कुर्यादिति विधिः परिणम्यत इति द्रष्टव्यम् । लोकं ज्ञानस्वरूपं वेदान्तानेवार्थतो दर्शयति-**नित्य इति** ॥ ननु किं विधिफलमिति तदाह-**तदुपासनादिति** ॥ प्रत्यग्ब्रह्मोपासनाद् ब्रह्मविदाप्नोति परमिति शास्त्रोक्तो मोक्षः स्वर्गवल्लोकाप्रसिद्धः फलमित्यर्थः । ब्रह्मणः कर्तव्योपासनाविषयकविधिशेषत्वानङ्गीकारे बाधकमाह-**कर्तव्येति** ॥ विध्यसम्बद्धसिद्धबोधे प्रवृत्त्यादिफलाभावाद्वेदान्तानां वैफल्यं

भामती ।

वा । प्रत्यक्षमपि लौकिकमहंप्रत्ययो वा, भावनाप्रकर्षपर्यन्तजं वा । तत्र श्रावणं न विधेयं, स्वाध्यायविधिनैवास्य प्रापितत्वात्, कर्मश्रावणवत् । नापि लौकिकं प्रत्यक्षं, तस्य नैसर्गिकत्वात् । न चौपनिषदात्मविषयं भावनाधेयवैशद्यं विधेयं, तस्योपासनाविधानादेव वाजिनवदनुनिष्पादितत्वात् । तस्मादौपनिषदात्मोपासनामृतत्वकामं नियोज्यं प्रति विधीयते । 'द्रष्टव्यः' इत्यादयस्तु विधिसरूपा न विधय इति । तदिदमुक्तम्-**तदुपासनाच्चेति** । अर्थवत्तया मननादिप्रतीत्या चेत्यस्य शेषः प्रपञ्चो निगदव्या-

आनन्दगिरिय-न्यायनिर्णयः ।

फलस्यापि नैयोगिकत्वात्फलाद्वैलक्षण्यादुभयोर्विधेयता तुल्येत्यर्थः । वेदान्तेषु विध्यश्रवणान्न तच्छेषतया ब्रह्मोक्तिरित्याशङ्क्याह-**आत्मेति** । ब्रह्म वेदेत्यत्र रात्रिसत्रवद्विधिः । आदिपदाद्ब्रह्मविदाप्नोतीत्यादि गृह्यते । तथाऽपि सत्यादिवाक्यानि वाक्यभेदेन विध्यस्पृष्टब्रह्माभिदधीरन्नित्याशंक्य वाक्यैक्ययोगे न तद्भेदकल्पनेत्याह-**कोऽसाविति** । तानेव वेदान्तानाह-**नित्य इत्यादिना** । क्षणिकबुद्धेर्देहाद्याऽऽत्मानं व्यावर्तयितुं नित्यपदम् । "पश्यंश्चक्षुः" इत्यादिश्रुतेश्चक्षुरादिमात्रावच्छिन्नं रूपादिज्ञानवत्त्वं व्यावर्त्य सर्वत्राप्रतिबद्धज्ञानवत्त्वमाह-**सर्वज्ञ इति** । दिगम्बरेष्टं सर्वज्ञं पराचष्टे-**सर्वेति** । सांख्यं प्रत्याह-**नित्येति** । जडविशेषैरैक्यलादात्म्ये व्यासेद्धुं **नित्यशुद्धेति** । अखण्डजाड्यव्यावृत्त्यर्थं **बुद्धेति** । विवर्तहीनाखण्डजडशक्त्यैक्याध्यस्तशबलचैतन्यं निषेद्धुं **मुक्तेत्यादि** । एतानि विशेषणानि तत्तद्वाक्यस्थान्यत्र तत्तद्वाक्योपलक्षणत्वेनोक्तानि । अपरोक्षत्वमाह-**विज्ञानमिति** । परमपुरुषार्थत्वमाह-**आनन्दमिति** । आदिशब्दः सत्यं ज्ञानमित्यादिसंग्रहार्थः । ननूक्तविधिफलं दृष्टमदृष्टं वा । नाऽऽद्यः, विध्यानर्थक्यात् । न चावघातादिवत्तदर्थत्वम् । दृष्टमात्रफलवत्त्वविरोधात्तेषु नियमादृष्टस्येष्टत्वात् । न द्वितीयः, मानाभावात् । तत्राऽऽह-**तदुपासनाच्चेति** । प्रत्यग्ब्रह्म तच्छब्दार्थः । शास्त्रं ब्रह्म वेदेत्यादि । अन्वयव्यतिरेकासिद्धत्वमदृष्टत्वम् । ब्रह्मणो विध्यननुप्रवेशमुक्त्वा विपक्षं प्रत्याह-**कर्तव्येति** । ब्रह्मणो विधेयधीविषयत्वाभावे विध्यस्पृष्टस्यैवोक्तौ तत्र हानाद्ययोगाल्लौकिकोक्तिवदानर्थक्यमेव वेदान्तानामित्यर्थः । वस्तु-

नतु वस्तुमात्रकथनेऽपि रज्जुरियं नायं सर्प इत्यादौ भ्रान्तिजनितभीतिनिवर्तनेनार्थवत्त्वं दृष्टं, तथेहाप्यसंसार्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्तनेनार्थवत्त्वं स्यात् ॥ स्यादेतदेवं–यदि रज्जुस्वरूपश्रवण इव सर्पभ्रान्तिः, तदा संसारित्वभ्रान्तिर्ब्रह्मस्वरूपश्रवणमात्रेण निवर्तेत । न तु निवर्तते । श्रुतब्रह्मणोऽपि यथापूर्वं सुखदुःखादिसंसारित्वधर्मदर्शनात् "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [ बृ० २ । ४ । ५ । ] इति च श्रवणोत्तरकालयोर्मनननिदिध्यासनयोर्दर्शनात् ॥ तस्मात्प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमिति । अत्राभिधीयते–न कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात् शारीरं, वाचिकं, मानसं च, कर्म श्रुतिस्मृतिप्रसिद्धं धर्माख्यं, यद्विषया जिज्ञासा "अथातो धर्मजिज्ञासा" [ जै० सू० १ । १ । १ ] इति सूत्रिता ॥

---

रत्नप्रभा ।

स्यादित्यर्थः ॥ **नन्विति** शङ्का स्पष्टार्था । दृष्टान्तवैषम्येन परिहरति–**स्यादिति** । एतद् अर्थवत्त्वमेवं चेत् स्यादित्यर्थः । एवंशब्दार्थमाह–**यदीति** ॥ किंच, यदि ज्ञानादेव मुक्तिः, तदा श्रवणजन्यज्ञानानन्तरं मननादिविधिर्न स्यात्, तद्विधेश्च कार्यसाध्या मुक्तिरित्याह—**श्रोतव्य इति** ॥ शब्दानां कार्यान्वितशक्तेः प्रवृत्त्यादिफलस्यैव शास्त्रत्वात्सिद्धे फलाभावान्मननादिविधेश्च कार्यपरा वेदान्ता इति पूर्वपक्षमुपसंहरति–**तस्मादिति** ॥ वेदान्ता, न विधिपराः, स्वार्थे फलवत्त्वे सति नियोज्य[1]विधुरत्वात्, 'नायं सर्पः' इति वाक्यवत् "सोऽरोदीत्" "स्वर्गकामो यजेत" इति वाक्ययोर्निरासाय हेतौ विशेषणद्वयमिति सिद्धान्तयति–**अत्रेति** ॥ यदुक्तं मोक्षकामस्य नियोज्यस्य ज्ञानं विधेयमिति, तन्नेत्याह–**नेति** ॥ मोक्षः, न विधिजन्यः, कर्मफलविलक्षणत्वाद्, आत्मवदित्यर्थः । उक्तहेतुज्ञानाय कर्मतत्फले प्रपञ्चयति–**शारीरमित्यादिना वर्णितं संसाररूपमनुवदतीत्यन्तेन** ॥ अथ वेदाध्ययनानन्तरम्, अतः वेदस्य फलवदर्थपरत्वात् । धर्मनिर्णयाय कर्मवाक्यविचारः कर्तव्य इति **सूत्रार्थः** ॥ न केवलं धर्माख्यं कर्म किंतु अधर्मोऽपीत्याह–

भामती ।

ख्यातः । तदेकदेशिमतं दूषयति–**अत्राभिधीयते**–न एकदेशिमतम् । कुतः, **कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात्** । पुण्यापुण्यकर्मफले सुखदुःखे । तत्र मनुष्यलोकमारभ्याब्रह्मलोकात्सुखस्य तारतम्यमधिकाधिकोत्कर्षः । एवं मनुष्यलोकमारभ्य दुःखतारतम्यमा चावीचिलोकात् । तच्च सर्वं कार्यं च विनाशि

आनन्दगिरीय–न्यायनिर्णयः ।

मात्रोक्तावपि नाऽऽनर्थक्यमिति दृष्टान्तेन शंकते--**नन्विति** । वैषम्योक्त्या प्रत्याह--**स्यादिति** । वाक्योत्यज्ञानादेवाकृतकृत्यत्वे हेत्वन्तरमाह--**श्रोतव्य इति** । पूर्वपक्षमुपसंहरति–**तस्मादिति** । सिद्धेऽर्थे शब्दानामज्ञातशक्तित्वं वेदान्तानां शास्त्रत्वमर्थवत्त्वं श्रवणादूर्ध्वं मननादिविधिश्च तच्छब्दार्थः । प्रतिपत्तीत्यादि-प्रतिपत्तेर्विधिर्नियोगस्तस्य विषयभूतां प्रतिपत्तिं प्रत्यवच्छेदकत्वेन विषयतयेत्यर्थः । प्राप्तं पक्षमनूद्य सिद्धान्तयति—**अत्रेति** । परमतनिरासं प्रतिजानीते–**नेति** । न कर्मवद्विधेया धीरित्युक्तनिषेधे हेतुमाह-**कर्मेति** । तदेव वक्तुं कर्म भिनत्ति--**शारीरमिति** । तत्तत्कर्मभेदे देहादेः सर्वस्योपयोगेऽपि क्वचित्कस्यचित्प्राधान्यात्त्रैविध्यम् । तत्र प्रमाणमाह--**श्रुतीति** । 'अग्निहोत्रं जुहुयात्' 'ब्रह्मयज्ञेन यक्ष्यमाणः' 'संध्यां मनसा ध्यायेत्' इत्याद्या श्रुतिः । 'शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः' इत्याद्या स्मृतिः । लोकेऽपि तत्प्रसिद्धं मत्वोक्तं **धर्माख्यमिति** । न्यायसिद्धं चैतदित्याह–**यद्विषयेति** । स्वाध्यायाध्ययनानन्तरं तस्य धर्मजिज्ञासाफलहेतुत्वात्तन्निर्णयार्थं वेदवाक्यानि विचारयितव्यानीति वदता धर्मस्यैव विचा-

---

१ नियोज्यः स च कार्यं यः स्वकीयत्वेन बुध्यते इत्यत्रोक्तलक्षणकः ।

**अधर्मोऽपि हिंसादिः प्रतिषेधचोदनालक्षणत्वाज्जिज्ञास्यः परिहाराय ॥ तयोश्चोदनालक्षणयोरर्थानर्थयोर्धर्माधर्मयोः फले प्रत्यक्षे सुखदुःखे शरीरवाङ्मनोभिरेवोपभुज्यमाने विषयेन्द्रियसंयोगजन्ये ब्रह्मादिषु स्थावरान्तेषु प्रसिद्धे ॥ मनुष्यत्वादारभ्य ब्रह्मान्तेषु देहवत्सु सुखतारतम्यमनुश्रूयते ॥ ततश्च तद्धेतोर्धर्मस्य तारतम्यं गम्यते ॥**

रत्नप्रभा ।

**अधर्मोऽपीति** ॥ निषेधवाक्यप्रमाणकत्वादित्यर्थः । कर्मोक्त्वा फलमाह—**तयोरिति** ॥ मोक्षस्तु अतीन्द्रियो विशोकः शरीराद्यभोग्यो विषयाद्यजन्योऽनात्मवित्स्वप्रसिद्ध इति वैलक्षण्यज्ञानाय प्रत्यक्षत्वादीनि विशेषणानि । सामान्येन कर्मफलमुक्त्वा धर्मफलं पृथक् प्रपञ्चयति—**मनुष्यत्वादिति** ॥ "स एको मानुष आनन्दः" [ तै० आ० २ । ८ । १ ] ततः शतगुणो गन्धर्वादीनामिति श्रुतेरनुभवानुसारित्वमनुशब्दार्थः । ततश्च सुखतारतम्यादित्यर्थः । मोक्षस्तु निरतिशयः । तत्साधनं च तत्त्वज्ञानमेकरूपमिति फलवैलक्षण्यम् । **किंच** साधनचतुष्टयसम्पन्न एकरूप एव मोक्षविद्याधिकारी । कर्मणि तु

भामती ।

च । आत्यन्तिकं त्वशरीरत्वमनतिशयं स्वभावसिद्धतया नित्यमकार्यमात्मज्ञानस्य फलम् । तद्धि फलमिव फलम्, अविद्यापनयमात्रेणाविर्भावात् । एतदुक्तं भवति—त्वयाप्युपासनाविधिपरत्वं वेदान्तानामभ्युपगच्छता नित्यशुद्धबुद्धत्वादिरूपब्रह्मात्मता जीवस्य स्वाभाविकी वेदान्तगम्यास्थीयते । सा चोपासनाविषयस्य विधेर्न फलं, नित्यत्वादकार्यत्वात् । नाप्यनाद्यविद्यापिधानापनयः, तस्य स्वविरोधिविद्योदयादेव भावात् । नापि विद्योदयः, तस्यापि श्रवणमननपूर्वकोपासनाजनितसंस्कारसचिवादेव चेतसो भावात् । उपासनासंस्कारवदुपासनाऽपूर्वमपि चेतःसहकारीति चेत्, दृष्टं च खलु नैयोगिकं फलमैहिकमपि, यथा चित्रकारीर्यादिनियोगानामनियतनियतफलानाम् । न, गान्धर्वशास्त्रोपासनावासनाया इवापूर्वानपेक्षायाः षड्जादिसाक्षात्कारे वेदान्तार्थोपासनावासनाया जीवब्रह्मभावसाक्षात्कारेऽनपेक्षाया एव सामर्थ्यात् । तथा चामृतीभावं प्रत्यहेतुत्वादुपासनापूर्वस्य, नामृतत्वकामस्तत्कार्यमवबोद्धुमर्हति । अन्यदिच्छत्यन्यत्करोतीति हि विप्रतिषिद्धम् । न च तत्कामः क्रियामेव कार्यमवगमिष्यति नापूर्वमिति सांप्रतम्, तस्या मानान्तरादेव तत्साधनत्वप्रतीतेर्विधेर्वैयर्थ्यात् । न चावघातादिविधितुल्यता, तत्रापि नियमापूर्वस्यान्यतोऽनवगतेः ।

आनन्दगिरीय–न्यायनिर्णयः ।

रितत्वात्तस्य न्यायसिद्धत्वेऽपि कथमधर्मस्य तद्विषयतेत्याशंक्य धर्मशब्दस्योपलक्षणत्वमाह—**अधर्मोऽपीति** । हिंसादिरित्यादिपदमभक्ष्यभक्षणादिसंग्रहार्थम् । चोदनालक्षणत्वाद्धर्मस्य जिज्ञास्यत्वेऽपि कुतोऽधर्मस्य तथेत्याशङ्क्याऽऽह—**प्रतिषेधेति** । धर्मो हि पुरुषं निःश्रेयसेन संयुनक्तीति तज्जिज्ञासा स्यादधर्मजिज्ञासा तु विफलेत्याशंक्याऽऽह—**परिहारायेति** । उक्तं कर्मरूपमनूद्य तत्फलरूपमाह—**तयोरिति** । सर्वलोकप्रसिद्धत्वेन विद्वन्मात्रसिद्धविद्याफलाद्भेदं सूचयति—**प्रत्यक्षे इति** । सुखमात्रं विद्याफलमिदं दुःखमपीति भेदान्तरमाह—**सुखेत्यादिना** । अकार्यकरणस्य विद्याफलं लभ्यं कर्मफलं त्वन्यथेति विशेषान्तरमाह—**शरीरेति** । नित्यसिद्धं विद्याफलमविद्यापिधानभङ्गमात्रापेक्षं कर्मफलमन्यथेत्यपरं विशेषमाह—**विषयेति** । अज्ञेष्वपि सत्वाच्च कर्मफलं विद्याफलविलक्षणमित्याह—**ब्रह्मादिष्विति** । तारतम्यभाक्त्वादपि कर्मफलस्य विद्याफलादनतिशयाद्भिन्नतेत्याह—**मनुष्यत्वादिति** । श्रुतेरुक्तार्थानुसारित्वमनुशब्दार्थः । "स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः" इत्याद्या श्रुतिः । फलवैलक्षण्यमुपलक्षणं कृत्वा साधनवैलक्षण्यमाह—**ततश्चेति** । फले तारतम्यस्य श्रुतत्वादिति यावत् । हेतुवैचित्र्यं विना कार्यवैचित्र्यस्याऽऽकस्मिकत्वापत्तेर्मोक्षे विद्यारूपं साधनमेकरूपमिति व्यक्तं विद्याकर्मणोः स्वरूपवैचित्र्यम् । किंच, विद्यायामेकरूपः साधन-

धर्मतारतम्यादधिकारितारतम्यम् ॥ प्रसिद्धं चार्थित्वसामर्थ्यादिकृतमधिकारितारतम्यम् ॥ तथा च यागाद्यनुष्ठायिनामेव विद्यासमाधिविशेषादुत्तरेण पथा गमनम् ॥ केवलैरिष्टापूर्तदत्तसाधनैर्धूमादिक्रमेण दक्षिणेन पथा गमनम् ॥ तत्रापि सुखतारतम्यं तत्साधनतारतम्यं च शास्त्राद् "यावत्सम्पातमुषित्वा" [ छान्दो० ५ । १० । ५ । ] इत्यस्माद्गम्यते । तथा मनुष्यादिषु नारकिस्थावरान्तेषु सुखलवश्चोदनालक्षणधर्मसाध्य एवेति गम्यते तारतम्येन वर्तमानः । तथोर्ध्वं गतेष्वधो गतेषु च देहवत्सु दुःखतारतम्यदर्शनात्तद्धेतोरधर्मस्य प्रतिषेधचोदनालक्षणस्य, तदनुष्ठायिनां च,-तारतम्यं गम्यते ॥

रत्नप्रभा ।

नानाविध इति वैलक्षण्यमाह—**धर्मेति** ॥ गम्यते न केवलं, किंतु प्रसिद्धं चेत्यर्थः । **अर्थित्वं** फलकामित्वम् । **सामर्थ्यं** लौकिकं पुत्रादि । **आदिपदाद्**—विद्वत्त्वं, शास्त्रानिन्दितत्वं च । **किंच,** कर्मफलं मार्गप्राप्यं, मोक्षस्तु नित्याप्त इति भेदमाह—**तथेति** ॥ उपासनायां चित्तस्थैर्यप्रकर्षादर्चिरादिमार्गेण ब्रह्मलोकगमनं "तेऽर्चिषम्ँ" [ छां० ४ । १५ । ५ ] इत्यादिना श्रूयत इत्यर्थः । "अग्निहोत्रं तपस्सत्यं वेदानां चानुपालनम् । आतिथ्यं वैश्वदेवं च **इष्टमि**त्यभिधीयते ॥ १ ॥" । "वापीकूपतडागादि देवतायतनानि च । अन्नप्रदानमारामः **पूर्त**मित्यभिधीयते ॥१॥" "शरणागतसन्त्राणं भूतानां चाप्यहिंसनम् । बहिर्वेदि च यद्दानं **दत्त**मित्यभिधीयते ॥ १ ॥" ॥ **तत्रापि** ॥ चन्द्रलोकेऽपीत्यर्थः । सम्पतति गच्छति अस्माल्लोकादमुं लोकमनेनेति **सम्पातः** कर्म । **यावत्** कर्म भोक्तव्यं **तावत्** स्थित्वा पुनरायान्तीत्यर्थः । मनुष्यत्वादूर्ध्वं गतेषु सुखस्य तारतम्यमुक्त्वा अधोगतेषु तदाह—**तथेति** ॥ इदानीं दुःखतद्धेतुतदनुष्ठायिनां तारतम्यं वदन् अधर्मफलं प्रपञ्चयति—**तथोर्ध्वमिति** ॥ **द्विविधं** कर्मफलं—मोक्षस्य तद्वैलक्षण्यज्ञानाय प्रपञ्चितमुपसंहरति—

भामती ।

न च ब्रह्मभूयादन्यदमृतत्वमार्थवादिकं किंचिदस्ति, येन तत्काम उपासनायामधिक्रियेत, विश्वजिन्न्यायेन तु

आनन्दगिरीय—न्यायनिर्णयः ।

चतुष्टयविशिष्टोऽधिकारी, नानारूपस्तु कर्मणीत्यधिकारभेदमाह—**धर्मेति** । कर्माधिकारितारतम्ये हेत्वन्तरमाह—**प्रसिद्धं चेति** । आदिपदमपर्युदाससंग्रहार्थम् । न केवलं प्रसिद्धत्वादधिकारितारतम्यं किंतु दक्षिणोत्तरगतिश्रुतेरपीत्यधिकारितारतम्ये श्रुतार्थापत्तिमाह—**तथा चेति** । विद्येत्युपासनोक्ता समाधिरुपास्येऽर्थे मनसः स्थिरीभावस्तयोर्विशेषो नाम प्रकर्षः । समुच्चयानुष्ठायिनामर्चिराद्युपलक्षितं देवयानं पन्थानमुक्त्वा कर्ममात्रनिष्ठानां पथ्यन्तरमाह—**केवलैरिति** । इष्टमग्निहोत्रं तपः सत्यं वेदानां चानुपालनमातिथ्यं वैश्वदेवमित्येवंविधं कर्म । पूर्तं वापीकूपतडागादिदेवतायतनान्नप्रदानारामादिरूपं स्मार्तं कर्म । दत्तं शरणागतत्राणमहिंसा बहिर्वेदिदानं च । धूमाद्युपलक्षितेन दक्षिणेन पथा चन्द्रलोकं गतेषु सुखैकरूप्यात्तद्धेतोरपि तथात्वादन्यत्रापि तत्तारतम्यासिद्धिरित्याशंक्याऽऽह—**तत्रापीति** । संपतति येनास्माल्लोकादमुं लोकमिति कर्माशयः संपातः । तत्र यावद्भोक्तव्यं स्थित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्त इतीयत्ताकरणात्सातिशयत्वं सुखतद्धेत्वोर्भातीत्यर्थः । मनुष्यत्वादारभ्योर्ध्वगतेषु सुखतद्धेत्वोरुत्कर्षमुक्त्वा तद्दृष्टान्तेन तस्मादारभ्याधोगतेषु तयोरपकर्षतारतम्यमाह—**तथेति** । सुखतद्धेतुतदनुष्ठायिनामुत्कर्षापकर्षतारतम्यवद्दुःखतद्धेतुतदनुष्ठायिनामपि तदुभयमस्तीत्याह—**तथोर्ध्वेति** । मनुष्यत्वादूर्ध्वं गतेषु दुःखापकर्षतारतम्यं

१ कर्मकाण्डे क्रियाकर्त्रादिस्वरूपविभागविज्ञाता विद्वान् ग्राह्यो, न ब्रह्मात्मैकत्वविज्ञाता, तस्य विध्यकिंकरत्वात् । अत एव भगवानविद्वद्विषयत्वं शास्त्रस्य वर्णयाम्बभूव । तथा च विद्वत्त्वस्याधिकारिविशेषणत्वानङ्गीकारे पशुशूद्रादीनामपि अधिकारो दुर्वारः स्यात् ॥ २ "तेर्चिः" [ बृ. ६ । २ । १५ ] अत्र छान्दोग्ये ते इति नास्ति । अर्चिषमिति परमास्ति ।

**एवमविद्यादिदोषवतां धर्माधर्मतारतम्यनिमित्तं शरीरोपादानपूर्वकं सुखदुःखतारतम्यमनित्यं संसाररूपं श्रुतिस्मृतिन्यायप्रसिद्धम्। तथा च श्रुतिः—"न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" [छान्दो० ८।१२।१] इति यथावर्णितं संसाररूपमनुवदति॥ "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" [छान्दो० ८।१२।१] इति प्रियाप्रिययोः स्पर्शनप्रतिषेधाच्चोदनालक्षणधर्मकार्यत्वं मोक्षाख्यस्याशरीरत्वस्य प्रतिषिध्यत इति गम्यते॥ धर्मकार्यत्वे हि प्रियाप्रियस्पर्शनप्रतिषेधो नोपपद्यते॥ अशरीरत्वमेव धर्मकार्यं भवत्विति चेत्॥**

रत्नप्रभा।

**एवमिति**॥ अस्मिताकामक्रोधभयान्यादिशब्दार्थः। "ते तं भुक्त्वा स्वर्गलोकं विशालम्" [भग० गी० ९।२१] इत्याद्या **स्मृतिः**। काष्ठोपचयात् ज्वालोपचयदर्शनात् फलतारतम्येन साधनतारतम्यानुमानं **न्यायः**॥ श्रुतिमाह—**तथा चेति**॥ मोक्षो, न कर्मफलं, कर्मफलविरुद्धातीन्द्रियत्वविशोकत्वशरीराद्यभोग्यत्वादिधर्मवत्त्वात् व्यतिरेकेण स्वर्गादिवदिति न्यायानुग्राह्यां श्रुतिमाह—**अशरीरमिति**॥ **वावेति**—अवधारणे। तत्त्वतो विदेहं **सन्तम्** आत्मानं वैषयिके सुखदुःखे नैव स्पृशत इत्यर्थः। मोक्षश्चेदुपासनारूपधर्मफलं तदेव प्रियमस्तीति तन्निषेधायोग इत्याह—**धर्मकार्यत्वे हीति**॥ ननु प्रियं नाम, वैषयिकं सुखं, तन्निषिध्यते, मोक्षस्तु धर्मफलमेव कर्मणां विचित्रदानसामर्थ्यादिति शङ्कते—**अशरीरत्वमेवेति**॥ आत्मनो देहासङ्गित्वमशरीरत्वम्। तस्यानादि-

भामती।

स्वर्गकल्पनायां तस्य सातिशयत्वं क्षयित्वं चेति न नित्यफलत्वमुपासनायाः। तस्माद्ब्रह्मभूयस्याविद्यापिधानापनयमात्रेणाविर्भावात्, अविद्यापनयस्य च वेदान्तार्थविज्ञानादवगतिपर्यन्तादेव संभवात्, उपासनायाः संस्कारहेतुभावस्य संस्कारस्य च साक्षात्कारोपजनने मनःसाचिव्यस्य च मानान्तरसिद्धत्वात्, 'आत्मेत्येवोपासीत' इति न विधिः, अपि तु विधिसरूपोऽयम्। यथोपांशुयाजवाक्ये 'विष्णुरुपांशु यष्टव्यः' इत्यादयो विधिसरूपा न विधय इति तात्पर्यार्थः। श्रुतिस्मृतिन्यायसिद्धमित्युक्तं, तत्र श्रुतिं दर्शयति—**तथा च श्रुतिरिति**।

आनन्दगिरीय-न्यायनिर्णयः।

तस्मादधोगतेषु च तदुत्कर्षतारतम्यमिति भेदः। कर्मफलं विद्याफलाद्भेत्तुं प्रपञ्चितमुपसंहरति—**एवमिति**। अविद्यादीत्यादिपदेनास्मितारागद्वेषाभिनिवेशा गृह्यन्ते। सुखदुःखपरिणामद्वारं दर्शयति—**शरीरेति**। तस्योपादानं तस्मिन्द्विविधोऽभिमानस्तस्यानर्थतया हेयत्वमाह—**संसारेति**। अनित्यमित्यपि तदर्थमेव। मेयमुपसंहृत्य मानमुपसंहरति—**श्रुतीति**। "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्" इत्याद्या **स्मृतिः**। दृष्टहेतुसाम्येऽपि दृष्टं सुखादिवैचित्र्यं तथाभूतमेवालौकिकं हेतुं कल्पयतीति **न्यायः**। श्रुतिमाह—**तथा चेति**। निपाताववधारणे। श्रुतेस्तात्पर्यमाह—**यथेति**। नास्याः संसाररूपावेदने तात्पर्यं तदनुवादेन मुक्तिपरत्वादित्याह—**अनुवदतीति**। विद्याफलमाह—**अशरीरमिति**। तत्त्वतो विदेहं सन्तमात्मानं वैषयिके सुखदुःखे नैव स्पृशतो वावेत्यवधारणादित्यर्थः। श्रुतितात्पर्यमाह—**चोदनेति**। तत्र गमकमाह—**प्रियेति**। गमकत्वमस्य व्यतिरेकेण स्फोरयति—**धर्मेति**। तत्कार्ये तद्दृष्टेरित्यर्थः। धर्मस्य विचित्रफलत्वाददेहत्वमपि तत्कार्यमेवेति शङ्कते—**अशरीरत्वमिति**। वस्तुतो देहासंबन्धोऽशरीरत्वं तस्य नित्यत्वात्तद्व्यवधेश्चाज्ञानस्य ज्ञानमात्रापोह्य-

१ कार्यमिति चेन्नेति पाठान्तरम्।

 

न, तस्य स्वभाविकत्वाद्—"अशरीरं शरीरेषु अनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति" [ कठ० २ । २२ ] "अप्राणो ह्यमनाश्शुभ्रः" [ मुण्ड० २ । १ । २ ] "असङ्गो ह्ययं पुरुषः" [ बृह० ४ । ३ । १५ ] इत्यादिश्रुतिभ्यः ॥ अत एवानुष्ठेयकर्मफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति सिद्धम् ॥ तत्र किञ्चित्परिणामि नित्यं स्याद्, यस्मिन्विक्रियमाणेऽपि तदेवेदमिति बुद्धिर्न विहन्यते । यथा—पृथिव्यादि जगन्नित्यत्ववादिनां, यथा च—साङ्ख्यानां गुणाः ॥

रत्नप्रभा ।

त्वान्न कर्मसाध्यतेत्याह—**नेति** ॥ **अशरीरं** स्थूलदेहशून्यं देहेष्वनेकेषु अनित्येषु एकं नित्यम् **अवस्थितं महान्तं** व्यापिनम् । आपेक्षिकमहत्त्वं वारयति—**विभुमिति** ॥ तमात्मानं ज्ञात्वा धीरः सन् शोकोपलक्षितं संसारं नानुभवतीत्यर्थः । सूक्ष्मदेहाभावे श्रुतिमाह—**अप्राण इति** ॥ प्राणमनसोः क्रियाज्ञानशक्त्योर्निषेधात्, तदधीनानां कर्मज्ञानेन्द्रियाणां निषेधो हि यतः, अतः शुद्ध इत्यर्थः । देहद्वयाभावे श्रुतिः—"असङ्गो हि" [ नृसिंहोत्तरतापिन्याम् ९ ] [ बृ० ४ । ३ । १६ ] इति निर्देहात्मस्वरूपमोक्षस्यानादिभावत्वे सिद्धे फलितमाह—**अत एवेति** ॥ नित्यत्वेऽपि परिणामितया धर्मकार्यत्वं मोक्षस्येत्याशंक्य नित्यं द्वेधा विभजते—**तत्र किञ्चिदिति** ॥ नित्यवस्तुमध्य इत्यर्थः । परिणामि च

भामती ।

न्यायमाह—**अत एवेति** । यत्किल स्वाभाविकं तन्नित्यम्, यथा चैतन्यम् । स्वाभाविकं चेदं, तस्मान्नित्यम् । परे हि द्वयीं नित्यतामाहुः—कूटस्थनित्यतां परिणामिनित्यतां च । तत्र नित्यमित्युक्ते मा भूदस्य परिणामिनित्यतेत्यत आह—**तत्र किंचिदिति**।परिणामिनित्यता हि न पारमार्थिकी,तथाहि—तत्सर्वात्मना वा परिणमेदेकदेशेन वा । सर्वात्मना परिणामे कथं न तत्त्वव्याहतिः । एकदेशपरिणामे वा स एकदेशस्ततो भिन्नो वाऽभिन्नो वा । भिन्नश्चेत् कथं तस्य परिणामः । न ह्यन्यस्मिन् परिणममानेऽन्यः परिणमतेऽतिप्रसङ्गात् । अभेदे वा कथं न सर्वात्मना परिणामः । भिन्नाभिन्नं तदिति चेत्, तथाहि तदेव कारणात्मनाऽभिन्नं भिन्नं च कार्यात्मना । कटकादय इवाभिन्ना हाटकात्मना भिन्नाश्च कटकाद्यात्मना । न च भेदाभेदयोर्विरोधान्नैकत्र समवाय इति युक्तम् । विरुद्धमिति नः क्व संप्रत्ययो यत्प्रमाणविपर्ययेण वर्तते । यत्तु यथा

आनन्दगिरीय—न्यायनिर्णयः ।

त्वान्न धर्मकार्यतेत्याह—**नेति** । तत्र मानमाह—**अशरीरमिति** । शरीरं स्थूलं वस्तुतो नास्यास्तीति यावत् । तत्र हेतुः—**शरीरेष्विति** । अनवस्थेष्वनित्येष्ववस्थितं नित्यमित्यर्थः । तत्रैव हेत्वन्तरमाह—**महान्तमिति** । आपेक्षिकत्वं वारयति—**विभुमिति** । मन्तृमन्तव्यभेदं प्रत्याह—**आत्मानमिति** । ईदृशमात्मानं मत्वा धीरो भवति । न हि तन्मतिं विना धीरत्वं संभवति । स च धीरः शोकोपलक्षितं संसारं नानुभवतीत्यर्थः । सूक्ष्मदेहाभावे मानान्तरमाह—**अप्राण इति** । क्रियाशक्तिमान्प्राणोऽस्य वस्तुतो नास्तीति तन्निषेधात्तत्प्रधानानि सार्थानि कर्मेन्द्रियाणि निषिद्धानि तदभिप्रायेण हि—शब्दः । ज्ञानशक्तिमन्मनोऽस्य वस्तुतो नेति तन्निषेधात्तत्प्रधानज्ञानेन्द्रियाणि सार्थानि निषिद्धान्यत एव शुभ्रः शुद्ध इत्यर्थः । देहद्वयाभावे श्रुत्यन्तरमाह—**असङ्गो हीति** । स यत्तत्रेत्यादौ स्वप्नादिकृतकर्मस्वकर्ताऽऽत्मेत्युक्तेऽर्थे हेतुरनेनोच्यते । मूर्तं मूर्तान्तरेण युज्यमानं स्पन्दत आत्मा तु पूर्णत्वादमूर्तो न केनचिद्युज्यते तेनाकर्तेत्यर्थः । अकायमव्रणमित्यादिसंग्रहार्थमादिपदम् । अशरीरत्वस्य स्वाभाविकत्वे फलितमाह—**अत इति** । तद्वैलक्षण्ये किं स्यात्तदाह—**नित्यमिति** । तथाऽपि परिणामित्वाद्विधेयक्रियानुप्रवेशमाशंक्यापरिणामिनित्यतां वक्तुं परिणामिनित्यं पृथक्करोति—**तत्रेति** । प्रकृतं नित्यं सप्तम्यर्थः । परिणामित्वनित्यत्वयोर्विरोधं प्रत्यभिज्ञया प्रत्याह—**यस्मिन्निति** । तत्र मीमांसकादिसंमतं दृष्टान्तमाह—**यथेति** । तथाऽन्यदपि विक्रियमाणं प्रत्यभिज्ञातो नित्यं स्यादिति शेषः । सांख्यीयदृष्टान्तमाह—**यथा चेति** । तन्मते सत्त्वरजस्तमांसि गुणा विक्रियमाणा एव प्रत्यभिज्ञया नित्यास्तथा-

इदं तु-

रत्नप्रभा।

तन्नित्यं चेति परिणामिनित्यम्, आत्मा तु कूटस्थनित्य इति न कर्मसाध्य इत्याह-इदं त्विति ॥ परिणामिनो नित्यत्वं प्रत्यभिज्ञाकल्पितं मिथ्यैव। कूटस्थस्य तु नाशकाभावान्नित्यत्वं पारमार्थि-

भामती।

प्रमाणेनावगम्यते तस्य तथाभाव एव। कुण्डलमिदं सुवर्णमिति सामानाधिकरण्यप्रत्यये व्यक्तं भेदाभेदौ चकास्तः। तथाह्यात्यन्तिकेऽभेदेऽन्यतरस्य द्विरवभासप्रसङ्गः।भेदे वात्यन्तिके न सामानाधिकरण्यं,गवाश्ववत्। आधाराधेयभावे एकाश्रयत्वे वा न सामानाधिकरण्यं,न हि भवति कुण्डं बदरमिति। नाप्येकासनस्थयोश्चैत्रमै-त्रयोश्चैत्रो मैत्र इति। सोऽयमबाधितोऽसंदिग्धः सर्वजनीनः सामानाधिकरण्यप्रत्यय एव कार्यकारणयोर्भेदाभेदौ व्यवस्थापयति। तथा च कार्याणां कारणात्मत्वात्, कारणस्य च सद्रूपस्य सर्वत्रानुगमात्, सद्रूपेणाभेदः कार्यस्य जगतः, भेदः कार्यरूपेण गोघटादिनेति। यथाहुः-'कार्यरूपेण नानात्वमभेदः कारणात्मना। हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥' इति। अत्रोच्यते-कः पुनरयं भेदो नाम, यः सहा-भेदेनैकत्र भवेत्। परस्पराभाव इति चेत्, किमयं कार्यकारणयोः कटकहाटकयोरस्ति न वा। न चेत्, एकत्वमेवास्ति न च भेदः। अस्ति चेद्भेद एव नाभेदः। न च भावाभावयोरविरोधः,सहावस्थानासंभवात्। संभवे वा कटकवर्धमानकयोरपि तत्त्वेनाभेदप्रसङ्गः, भेदेस्याभेदाविरोधात्। अपि च कटकस्य हाट-कादभेदे यथा हाटकात्मना कटकमुकुटकुण्डलादयो न भिद्यन्ते एवं कटकात्मनापि न भिद्येरन्, कटकस्य हाटकादभेदात्। तथा च हाटकमेव वस्तु सन्न कटकादयः, भेदस्याप्रतिभासनात्। अथ हाटकत्वेनैवा-भेदो न कटकत्वेन, तेन तु भेद एव कुण्डलादेः। यदि हाटकादभिन्नः कटकः कथमयं कुण्डलादिषु नानु-वर्तते। नानुवर्तते चेत्कथं हाटकादभिन्नः कटकः। ये हि यस्मिन्ननुवर्तमाने व्यावर्तन्ते ते ततो भिन्ना एव, यथा सूत्रात्कुसुमभेदाः। नानुवर्तन्ते चानुवर्तमानेऽपि हाटकत्वे कुण्डलादयः, तस्मात्तेऽपि हाटकाद्भिन्ना एवेति। सत्तानुवृत्त्या च सर्ववस्त्वनुगमे इदमिह नेदम्, इदमस्मान्नेदम्, इदमिदानीं नेदम्, इदमेवं नेद-मिति विभागो न स्यात्। कस्यचित् क्वचित् कदाचित् कथंचिद्विवेकहेतोरभावात्। अपि च दूरात्क-नकमित्यवगते न तस्य कुण्डलादयो विशेषा जिज्ञास्येरन्, कनकादभेदात्तेषां, तस्य च ज्ञातत्वात्। अथ भेदोऽप्यस्ति कनकात् कुण्डलादीनामिति कनकावगमेऽप्यज्ञातास्ते। नन्वभेदोऽप्यस्तीति किं न ज्ञाताः। प्रत्युत ज्ञानमेव तेषां युक्तं, कारणाभावे हि कार्याभाव औत्सर्गिकः, स च कारणसत्तयाऽपो-द्यते। अस्ति चाभेदे कारणसत्तेति कनके ज्ञाते ज्ञाता एव कुण्डलादय इति तज्जिज्ञासाज्ञानानि चानर्थ-कानि स्युः। तेन यस्मिन् गृह्यमाणे यन्न गृह्यते तत्ततो भिद्यते। यथा करभे गृह्यमाणेऽगृह्यमाणो रासभः करभात्। गृह्यमाणे च दूरतो हेम्नि न गृह्यन्ते तस्य भेदाः कुण्डलादयः, तस्मात्ते हेम्नो भिद्यन्ते। कथं तर्हि हेम कुण्डलमिति सामानाधिकरण्यम् (इति चेत्), न ह्याधाराधेयभावे समानाश्रयत्वे वा सामानाधिकरण्यमित्युक्तम्। अथानुवृत्तिव्यावृत्तिव्यवस्था च हेम्नि ज्ञाते कुण्डलादिजिज्ञासा च कथम्। न खल्वभेद ऐकान्तिकेऽनैकान्तिके चैतदुभयमुपपद्यते इत्युक्तम्। तस्माद्भेदाभेदयोरन्यतरस्मिन्नवहेयेऽभेदो-पादानैव भेदकल्पना, न भेदोपादानाऽभेदकल्पनेति युक्तम्। भिद्यमानतन्त्रत्वाद्भेदस्य, भिद्यमानानां च प्रत्येकमेकत्वात्, एकाभावे चानाश्रयस्य भेदस्यायोगात्, एकस्य च भेदानधीनत्वात्, नायमयमिति च भेदग्रहस्य प्रतियोगिग्रहसापेक्षत्वात्, एकत्वग्रहस्य चान्यानपेक्षत्वात्, अभेदोपादानैवानिर्वचनीयभेदकल्प-नेति सांप्रतम्। तथा च श्रुतिः-'मृत्तिकेत्येव सत्यम्' इति। तस्मात् कूटस्थनित्यतैव पारमार्थिकी न

आनन्दगिरीय-न्यायनिर्णयः।

ऽन्यदपि परिणामि नित्यमित्यर्थः। तादृङ् नित्याददेहत्वे मोक्षे विशेषमाह—इदं त्विति। तत्खल्वता-त्त्विकं परिणामस्य कार्त्स्न्यैकदेशाभ्यां भेदाभेदाभ्यां च दुर्वचनत्वात्। मोक्षाख्यमदेहत्वं स्वाभा-

**पारमार्थिकं कूटस्थं नित्यं व्योमवत्सर्वव्यापि सर्वविक्रियारहितं नित्यतृप्तं निरवयवं स्वयंज्योतिस्स्वभावम् ॥ यत्र धर्माधर्मौ सह कार्येण कालत्रयं च नोपावर्तेते, तदशरीरं मोक्षाख्यम् ॥ "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च" [ कठ० १ । २ । १४ ] इत्यादिश्रुतिभ्यः ॥ अतस्तद्ब्रह्म यस्येयं जिज्ञासा प्रस्तुता ॥**

---

रत्नप्रभा ।

कम् । कूटस्थत्वसिद्ध्यर्थं परिस्पन्दाभावमाह—**व्योमवदिति** ॥ परिणामाभावमाह—**सर्वक्रियारहितमिति** ॥ फलानपेक्षित्वान्न फलार्थापि क्रियेत्याह—**नित्यतृप्तमिति** ॥ तृप्तिरनपेक्षत्वं, विशोकं सुखं वा । निरवयवत्वान्न क्रिया । तस्य भानार्थमपि न क्रिया स्वयंज्योतिष्ट्वात् । अतः कूटस्थत्वान्न कर्मसाध्यो मोक्ष इत्युक्तम् । कर्मतत्कार्यासङ्गित्वाच्च तथेत्याह—**यत्रेति** ॥ कालानवच्छिन्नत्वाच्चेत्याह—**कालेति** ॥ कालत्रयं च नोपावर्तेत इति योग्यतया सम्बन्धनीयम् । धर्माद्यनवच्छेदे मानमाह—**अन्यत्रेति** ॥ अन्यदित्यर्थः । **कृतात्** कार्यात् । **अकृताच्च** कारणात् । **भूताद्भव्याच्च** । चकाराद्वर्तमानाच्च । अन्यद् **यत्** **पश्यसि** **तद्वदे**त्यर्थः । ननूक्ताः श्रुतयो ब्रह्मणः कूटस्थासङ्गित्वं वदन्तु, मोक्षस्य नियोगफलत्वं किं न स्यादिति तत्राह—**अत इति** ॥ **तत्** कैवल्यं ब्रह्मैव । कर्मफलविलक्षणत्वादित्यर्थः । ब्रह्माभेदान्मोक्षस्य कूटस्थत्वं धर्माद्यसङ्गित्वं चेति भावः । **यद्वा** यज्जिज्ञास्यं, तद् ब्रह्म अतः पृथक्, जिज्ञास्यत्वात् । धर्माद्यस्पृष्टमित्यर्थः । अतश्शब्दाभावपाठेऽप्ययमेवार्थः । ब्रह्मणो विधिस्पर्शे शास्त्रपृथक्त्वं न स्यात्, कार्यविलक्षणानधिगतविषयालाभात् । न हि ब्रह्मात्मैक्यं भेदप्रमाणे जाग्रति विधिपरवाक्याल्लब्धुं शक्यं, न वा तद्विना विधेरनुपपत्तिः, योषिदग्न्यैक्योपास्तिविधिदर्शनादिति भावः । **अथवा** मोक्षस्य नियोगासाध्यत्वे फलितं सूत्रार्थमाह—**अत इति** ॥ यदत्र जिज्ञास्यं ब्रह्म तत् स्वतन्त्रमेव वेदान्तैरुपदिश्यते, समन्वयादि-

भामती ।

परिणामिनित्यतेति सिद्धम् । **व्योमवत्** इति च दृष्टान्तः परसिद्धः । अस्मन्मते तस्यापि कार्यत्वेनानित्यत्वात् । अत्र च **कूटस्थनित्यम्**—इति निर्वर्त्यकर्मतामपाकरोति । **सर्वव्यापि**—इति प्राप्यकर्मताम् । **सर्वविक्रियारहितम्**—इति विकार्यकर्मताम् । **निरवयवम्**—इति संस्कार्यकर्मताम् । व्रीहीणां खलु प्रोक्षणेन संस्काराख्योंऽशो यथा जन्यते, नैवं ब्रह्मणि कश्चिदंशः क्रियाधेयोऽस्ति, अनवयवत्वात् । अनंशत्वादित्यर्थः । पुरुषार्थतामाह—**नित्यतृप्तमिति** । तृप्त्या दुःखरहितं सुखमुपलक्षयति । क्षुद्दुःखनिवृत्तिसहितं हि सुखं तृप्तिः । सुखं चाप्रतीयमानं न पुरुषार्थ इत्यत आह—**स्वयंज्योतिरिति** । तदेवं स्वमतेन

आनन्दगिरीय—न्यायनिर्णयः ।

विक्रमकल्पितमिति विशेषमाह—**पारमार्थिकमिति** । तत्र हेतुमाह—**कूटस्थमिति** । तदर्थं सर्वगतत्वेन परिस्पन्दपरिणामराहित्यमाह—**व्योमवदिति** । फलार्थाऽपि क्रिया तत्र न कल्प्या तृप्तेः सदातनत्वादित्याह—**नित्येति** । परिणामाभावे हेत्वन्तरम्—**निरवयवमिति** । प्रकाशार्था विक्रिया न तत्रेत्याह—**स्वयमिति** । उक्तविशेषणवशान्न सा कर्मकार्येत्युक्तमिदानीं धर्माधर्मयोः सकार्ययोर्ब्रह्मसंबन्धनिषेधादपि तत्प्राप्तिर्मुक्तिर्न कर्मकार्येत्याह—**यत्रेति** । कालानवच्छिन्नत्वाच्च मुक्तिरकर्मसाध्येत्याह—**कालेति** । ब्रह्मणो धर्माद्यनवच्छेदत्वे मानमाह—**अन्यत्रेति** । धर्मात्तत्फलाच्च सुखादधर्मात्तत्फलाच्च दुःखात्कृतात्कार्यादकृताच्च कारणाद्भूतादिकालत्रयाच्च पृथग्भूतं तेनानवच्छेद्यं यत्पश्यसि तद्वदेति मृत्युं प्रति नचिकेतसो वचनम् । आदिशब्देन नैनं सेतुमित्याद्या श्रुतिर्गृह्यते । पृथग्जिज्ञासाविषयत्वाच्च धर्माद्यस्पृष्टत्वं ब्रह्मणो युक्तमित्याह—**तदिति** । अतःशब्दपाठे धर्माद्यस्पर्शे कर्मफलवैलक्षण्यं हेतूकृतम् ।

**तद्यदि कर्तव्यशेषत्वेनोपदिश्येत, तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात् ॥ तत्रैवं सति यथोक्तकर्मफलेष्वेव तारतम्यावस्थितेष्वनित्येषु कश्चिदतिशयो मोक्ष इति प्रसज्येत ॥ नित्यश्च मोक्षस्सर्वैर्मोक्षवादिभिरभ्युपगम्यते । अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तः ॥ अपि च "ब्रह्म वेद ब्रह्मैव भवति" [ मुण्ड० ३ । २ । ९ ] "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" [ मुण्ड० २ । २ । ८ ] "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" [ तै० उ० २ । ९ ] "अभयं वै जनक प्राप्तोऽसि" [ बृह० ४ । २ । ४ ] "तदात्मानमेवावेदहं ब्रह्मास्मीति" [ बृह० १ । ४ । १० ] "तस्मात्तत्सर्वमभवत्" [ बृह० ४ । २ । ४ ] "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" [ ईशा० ७ ]**

रत्नप्रभा ।

त्यर्थः । विपक्षे दण्डं पातयति—**तद्यदीति** ॥ **तत्रैवं सतीति** ॥ मोक्षे साध्यत्वेनानित्ये सतीत्यर्थः ॥ **अत इति** । मुक्तेर्नियोगासाध्यत्वेन नियोज्यालाभात्कर्तव्यनियोगाभावादित्यर्थः । प्रदीपात्तमोनिवृत्तिवज्ज्ञानादज्ञाननिवृत्तिरूपमोक्षस्य दृष्टफलत्वाच्च न नियोगसाध्यत्वमित्याह—**अपि चेति** ॥ यो ब्रह्माहमिति वेद स ब्रह्मैव भवति । **परं** कारण**मवरं** कार्यं तद्रूपे तदधिष्ठाने **तस्मिन् दृष्टे** सति **अस्य** द्रष्टुरनारब्धफलानि **कर्माणि** नश्यन्ति । ब्रह्मणः स्वरूपमानन्दं विद्वान् निर्भयो भवति, द्वितीयाभावात् । **अभयं** ब्रह्म प्राप्तोऽसि, अज्ञानहानात् । **तत्** जीवाख्यं ब्रह्म गुरूपदेशादात्मानमेव अहं ब्रह्मास्मि इति अवेद् विदितवत्—तस्मात् वेदनाद् तद् ब्रह्म पूर्णमभवत्, परिच्छेदभ्रान्तिहानादेकत्वम् । "अहं ब्रह्म" इत्यनुभवः । तत्र अनुभवकाले मोहशोकौ न स्त इति श्रुतीनामर्थः ।

भामती ।

मोक्षाख्यं फलं नित्यं श्रुत्यादिभिरुपपाद्य क्रियानिष्पाद्यस्य तु मोक्षस्यानित्यत्वं प्रसञ्जयति—**तद्यदीति** । न चागमबाधः, आगमस्योक्तेन प्रकारेणोपपत्तेः । अपि च ज्ञानजन्यापूर्वजनितो मोक्षो नैयोगिक इत्यस्यार्थस्य सन्ति भूयस्यः श्रुतयो निवारिका इत्याह—**अपि च ब्रह्म वेदेति** । अविद्याद्वयप्रतिबन्धापन-

आनन्दगिरीय-न्यायनिर्णयः ।

कर्तव्यधीशेषत्वेन ब्रह्मोपदेशात्तत्प्राप्तेर्मुक्तेर्वैधधीफलत्वमित्याशंक्याऽऽह—**तद्यदीति** । अनित्यत्वेऽपि स्वर्गादिवत्पुमर्थतेत्याशङ्क्याऽऽह—**तत्रेति** । तस्मिन्मोक्षे विधेयक्रियासाध्यत्वेनानित्ये सतीत्यर्थः । **यथोक्तेति** । तयोश्चोदनालक्षणयोरित्यादाविति शेषः । स्वर्गादिदृष्टान्तादित्यर्थः । इष्टापत्तिं प्रत्याह—**नित्यश्चेति** । ब्रह्माप्तेर्मुक्तेरवैधफलत्वे फलितमाह—**अत इति** । मुक्तेरवैधफलत्वे हेत्वन्तरमाह—**अपि चेति** । यो ब्रह्म प्रत्यक्त्वेन साक्षात्करोति स तदेव वेद्यं ब्रह्म भवति तत्क्रतुन्यायात् । स्मिन्परात्मनि परं कारणमवरं कार्यं तद्रूपे तदधिष्ठाने प्रत्यक्त्वेन साक्षात्कृते सत्यस्य विदुषोऽनारब्धानि[1] कर्माणि क्षीणानि भवन्ति । ब्रह्मणो रूपमानन्दं विद्वान्भयहेत्वभावान्निर्भयो भवति । श्रुताविति शब्दः श्लोकसमाप्त्यर्थः । हे जनक त्वमभयं ब्रह्म प्राप्तोऽसि तत्साक्षात्कारवत्त्वाद्यदस्मिन्देहे जलसूर्यवत्प्रविष्टं ब्रह्म जीवाख्यं तदाचार्येण बोधितमात्मानमेव सर्वकल्पनातीतमवेद्विदितवत्कथमहं ब्रह्माद्वितीयमस्मीति तस्मादेव ज्ञानादज्ञानकृतासर्वत्वनिवृत्त्या तद्ब्रह्म पूर्णात्मना स्थितमासीत् । "यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः" इति यः सर्वात्मभावो विद्यान्यङ्गत्वेनोक्तस्तत्राऽऽत्मनि तद्धीकाले तदात्मैक्यमुपदेशेन पश्यतः शोकाद्युपलक्षितः संसारो नेतीति श्रुतीनामर्थः । आदिशब्देन

१ संचितान्यागामीनि चेत्यर्थः

इत्येवमाद्याश्श्रुतयो ब्रह्मविद्यानन्तरं मोक्षं दर्शयन्त्यो मध्ये तत्कृतं कार्यान्तरं वारयन्ति ॥ तथा "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च" [बृह० १।४।१०] इति ब्रह्मदर्शनसर्वात्मभावयोर्मध्ये कर्त्तव्यान्तरवारणायोदाहार्यम् ॥ यथा-तिष्ठन् गायतीति तिष्ठतिगायत्योर्मध्ये तत्कर्तृकं कार्यान्तरं नास्तीति गम्यते ॥ "त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि" [प्रश्न० ६।८]

रत्नप्रभा ।

तासां तात्पर्यमाह-**ब्रह्मेति** ॥ विद्यातत्फलयोर्मध्य इत्यर्थः । मोक्षस्य विधिफलत्वे स्वर्गादिवत् कालान्तरभावित्वं स्यात् । तथा च श्रुतिबाध इति भावः । इतश्च मोक्षो वैधो नेत्याह-**तथेति** ॥ तद् ब्रह्म एतत् प्रत्यगस्मीति **पश्यन्** तस्माज्ज्ञानाद् वामदेवो मुनीन्द्रः शुद्धं ब्रह्म **प्रतिपेदे**, ह तत्र ज्ञाने तिष्ठन् दृष्टवानात्ममन्त्रान् स्वस्य सर्वात्मत्वप्रकाशकान् अहं मनुः-इत्यादीन् ददर्शेत्यर्थः **यद्यपि** स्थितिर्गानक्रियाया लक्षणं, ब्रह्मदर्शनं तु ब्रह्मप्रतिपत्तिक्रियाया हेतुरिति वैषम्यमस्ति, । **तथापि** "लक्षणहेत्वोः क्रियायाः" [पा० सू० ३।२।१२६] इति सूत्रेण क्रियां प्रति लक्षणहेत्वोरर्थयोर्वर्तमानाद्धातोः परस्य लटः शतृशानचावादेशौ भवत इति विहितशतृप्रत्ययसामर्थ्यात् तिष्ठन् गायति इत्युक्ते तत्कर्तृकं कार्यान्तरं मध्ये न भातीत्येतावता पश्यन् प्रतिपेदे इत्यस्य दृष्टान्तमाह-**यथेति** ॥ **किञ्च,** ज्ञानादज्ञाननिवृत्तिः श्रूयते । ज्ञानस्य विधेयत्वे कर्मत्वादविद्यानिवर्तकत्वं न युक्तम् । अतो बोधका एव वेदान्ता न विधायका इत्याह-**त्वं हीति** ॥ भारद्वाजादयः षड् ऋषयः पिप्पलादं गुरुं पादयोः प्रणम्य ऊचिरे, त्वं खल्वस्माकं पिता यस्त्वमविद्यामहोदधेः परं पुनरावृत्तिशून्यं पारं ब्रह्मविद्या-

भामती ।

यमात्रेण च विद्याया मोक्षसाधनत्वं न स्वतोऽपूर्वोत्पादेन चेत्यत्रापि श्रुतीरुदाहरति-**त्वं हि नः पितेति** ।

आनन्दगिरीय-न्यायनिर्णयः ।

"ब्रह्मविदाप्नोति" इत्याद्या गृह्यन्ते । तासां तात्पर्यमाह-**ब्रह्मेति** । विद्यातत्फलयोरेककालत्वश्रुतेर्वैधज्ञानापूर्वजन्यत्वे मुक्तेस्तदयोगाद्वैधफलस्य कालान्तरभावित्वाद्ब्रह्मधीर्न विधेया तत्फलं च दृष्टमेवेति भावः । इतश्च मोक्षो वैधो नेत्याह-**तथेति** । तत्पदलक्ष्यं ब्रह्मैतदात्मत्वेन स्थितमस्मीति पश्यन्नस्मादेव दर्शनादृषिर्वामदेवनामापरं ब्रह्माविद्याध्वस्त्या प्रतिपन्नवान्किलेति हशब्दो व्यवधानेन संबध्यते । स चास्मिन्दर्शने स्थितः सर्वात्मप्रकाशकान्मन्त्रानहमित्यादीन्दृष्टवानिति श्रुत्यर्थः । तस्यास्तात्पर्यमाह-**ब्रह्मेति** । लक्षणहेत्वोः क्रियाया इत्यत्र येन लक्ष्यते तल्लक्षणं जनको हेतुस्तौ लक्षणहेतू क्रियाविषयौ चेद्भवतस्तदा क्रियात्मके तस्या लक्षणे तस्या हेतौ चार्थे वर्तमानाद्धातोः परस्य लटः शतृशानचावादेशौ भवत इत्युक्तम् । यथा तिष्ठन्मूत्रयति शयानो भुक्तेऽधीयानो वसतीति । तथाऽत्रापि प्रतिपत्तिक्रियाहेतौ क्रियायां दर्शने पश्यन्निति शतुर्दर्शनादव्यवहिते च हेतुमति क्रियाया हेतुत्वादेष शतृप्रत्ययः सर्वात्मत्वस्य कालान्तरत्वं वारयति । अतोऽस्य न वैधतेत्यर्थः । यद्यपि न स्थितिक्रियासामर्थ्याद्गीतिक्रिया किंतु यत्नान्तरात्तथाऽपि तयोर्मध्ये क्रियान्तरं शब्दतो न भातीत्येतावतोदाहरति-**यथेति** । इतश्च ब्रह्मधीर्न विधेया तत्फलं च न वैधमित्याह-**त्वं हीति** । भरद्वाजादय षडृषयः परविद्याप्रदं पिप्पलादं गुरुं विद्यानिष्क्रयार्थमन्यदनुरूपमपश्यन्तः पादयोः प्रणम्योचिरे । त्वं खल्वस्माकं पिता ब्रह्मदेहस्याजरामरस्य विद्यया जनयितृत्वात् । इतरौ पितरौ देहमेव जनयतः । जनयितृत्वमपि सिद्धस्यैवाविद्यानिरासादित्याह । यस्त्वमस्मानविद्यामहोदधेः परमपुनरावृत्तिरूपं पारं पारयसि प्रापयसि विद्याप्लवेनेति । प्रश्नोपनिषदमुक्त्वा सनत्कुमारनारदसंवादात्मिक-

"श्रुतँ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति । सोऽहं भगवः शोचामि तन्मा भगवाञ्छोकस्य परं पारं तारयत्विति" [ छान्दो० ७ । १ । ३ । ] "तस्मै मृदितकषायाय तमसः परं पारं दर्शयति भगवान्सनत्कुमारः" [ छान्दो० ७ । २६ । २ ] इति चैवमाद्याश्श्रुतयो मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानस्य फलं दर्शयन्ति ॥ तथा चाचार्यप्रणीतं न्यायोपबृंहितं सूत्रं–"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" [ अक्षपादन्याय० सू० १ ।१।२]

रत्नप्रभा ।

प्लवेनास्मांस्तारयसि प्रापयसि । ज्ञानेनाज्ञानं नाशयसीति यावत् । प्रश्नवाक्यमुक्त्वा छान्दोग्यमाह–**श्रुतमिति** ॥ अत्र तारयत्वित्यन्तमुपक्रमस्थं शेषमुपसंहारस्थमिति भेदः । आत्मविच्छोकं तरतीति भगवत्तुल्येभ्यो मया श्रुतमेव हि न दृष्टम्, सोऽहमज्ञत्वाद्धे भगवः शोचामि, तं शोचन्तं मां भगवानेव ज्ञानप्लवेन शोकसागरस्य परं पारं प्रापयतु इति नारदेनोक्तः सनत्कुमारस्तस्मै तपसा दग्धकिल्बिषाय नारदाय तमसः शोकनिदानाज्ञानस्य ज्ञानेन निवृत्तिरूपं परं पारं ब्रह्म दर्शितवानित्यर्थः । एतद्यो वेद विहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीति वाक्यमादिशब्दार्थः । एवं श्रुतेस्तत्त्वप्रमा मुक्तिहेतुर्न कर्मेत्युक्तम् । तत्राक्षपादगौतममुनिसम्मतिमाह–**तथा चेति** । गौरोऽहमिति मिथ्याज्ञानस्यापाये रागद्वेषमोहादिदोषाणां नाशः । दोषापायाद्धर्माधर्मस्वरूपप्रवृत्तेरपायः । प्रवृत्त्यपायात्पुनर्देहप्राप्तिरूपजन्मापायः । एवं पाठक्रमेणोत्तरोत्तरस्य हेतुनाशान्नाशे सति तस्य प्रवृत्तिरूपहेतोरनन्तरस्य कार्यस्य जन्मनोऽपायात् दुःखध्वंसरूपोऽपवर्गो भवतीत्यर्थः । ननु पूर्वसूत्रे "तत्त्वज्ञानान्निःश्रेयसाधिगमः" [ गौ० सू० १ । २ ] इत्युक्ते सतीतरपदार्थभिन्नात्मतत्त्वज्ञानं कथं मोक्षं साधयतीत्याकांक्षायां मिथ्याज्ञाननिवृत्तिद्वारेणेति वक्तुमिदं सूत्रं प्रवृत्तम् । तथा च भिन्नात्मज्ञानान्मुक्तिं वदत्सूत्रं सम्मतं चेत्परमतानुज्ञा स्यादि-

भामती ।

न केवलमस्मिन्नर्थे श्रुत्यादयः, अपि त्वक्षपादाचार्यसूत्रमपि न्यायमूलमस्तीत्याह–**तथा चाचार्यप्रणीतमिति** । आचार्यश्चोक्तलक्षणः पुराणे–'आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते ॥' इति । तेन हि प्रणीतं सूत्रम्–'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्त-

आनन्दगिरीय–न्यायनिर्णयः ।

छान्दोग्योपनिषदं पठति–**श्रुतं हीति** । तत्र तारयत्वित्यन्तमुपक्रमस्थं शेषमुपसंहारस्थमिति भेदः । मम भगवत्तुल्येभ्यः श्रुतमेवेदं यत्तरति शोकं मनस्तापमकृतार्थबुद्धिमात्मविदिति सोऽहमनात्मवित्त्वाच्छोचाम्यतस्तं मां शोचन्तं शोकसागरस्य पारमन्तं तारयतु भगवानात्मज्ञानोडुपेनेति नारदेन प्रेरितः सनत्कुमारस्तस्मै वैराग्यादिना निरस्तसमस्तदोषाय योग्याय तमसोऽविद्याख्यस्य पारं परमार्थतत्त्वं दर्शितवानित्यर्थः । आदिशब्देन "यो वेद निहितं गुहायाम्" इत्याद्याः श्रुतयो गृहीतास्तासां तात्पर्यमाह–**मोक्षेति** । विद्याफलमविद्याध्वस्तिः श्रुता, न चामानात्तद्ध्वस्तिस्तथा चोपास्तेरन्या मानमेव ब्रह्मधीर्न विधेया तत्फलं च मुक्तिर्न वैधीत्यर्थः । श्रुत्यनुसारेणाविद्याध्वस्तिफलत्वाद्ब्रह्मधीस्तत्त्वधीरित्युक्तम् । इदानीं तर्कशास्त्रानुसारेणापि तथैवेत्याह–**तथा चेति** । दुःखं प्रतिकूलवेदनीयं बाधा पीडा ताप इत्यनेकविधम् । जन्म देहेन्द्रियबुद्धीनां निकायविशिष्टः प्रादुर्भावः । हिंसास्तेयादिरूपा पापिका प्रवृत्तिरधर्मं प्रसूते, दानत्राणादिरूपा प्रवृत्तिर्धर्मं जनयति । तावेतौ धर्माधर्मौ प्रवृत्तिसाध्यौ तच्छब्दौ । रागद्वेषेर्ष्यासूयामानलोभादयो दोषाः । मिथ्याज्ञानमतस्मिँस्तज्ज्ञा-

१ प्रश्नोपनिषद्वाक्यमित्यर्थः ।

**मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानाद्भवति ॥**

रत्नप्रभा ।

स्यत आह—**मिथ्येति** ॥ तत्त्वज्ञानान्मुक्तिरित्यंशे सम्मतिरुक्ता । भेदज्ञानं तु—"यत्र हि द्वैतमिव भवति" [बृ० २ । ४ । १४ ] इतिश्रुत्या भ्रान्तित्वात् "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" [बृ० ४ । ४ । १९ ] इतिश्रुत्या, अनर्थहेतुत्वाच्च न मुक्तिहेतुरिति भावः । **ननु** ब्रह्मात्मैकत्वविज्ञानमपि

भामती ।

रापाये तदनन्तरापायादपवर्गः' इति । पाठापेक्षया कारणमुत्तरं, कार्यं च पूर्वं, कारणापाये कार्यापायः, कफापाय इव कफोद्भवस्य ज्वरस्यापायः । जन्मापाये दुःखापायः, प्रवृत्त्यपाये जन्मापायः, दोषापाये प्रवृत्त्यपायः, मिथ्याज्ञानापाये दोषापायः । मिथ्याज्ञानं चाविद्या, रागाद्युपजनितक्रमेण दृष्टेनैव संसारस्य परमं निदानम् । सा च तत्त्वज्ञानेन ब्रह्मात्मैकत्वविज्ञानेनावगतिपर्यन्तेन विरोधिना निवर्त्यते । ततोऽविद्यानिवृत्त्या ब्रह्मरूपाविर्भावो मोक्षः । न तु विद्याकार्यस्तज्जनितापूर्वकार्यो वेति सूत्रार्थः । तत्त्वज्ञानान्मिथ्याज्ञानापाय इत्येतावन्मात्रेण सूत्रोपन्यासः, न त्वक्षपादसंमतं तत्त्वज्ञानमिह संमतम् । तदनेनाचार्यान्तरसंवादेनायमर्थो दृढीकृतः । स्यादेतत् । नैकत्वविज्ञानं स्थितवस्तुविषयं, येन मिथ्याज्ञानं भेदावभासं निवर्तयन्न विधिविषयो भवेत् । अपि तु संपदादिरूपम् । तथा च विधेः प्रागप्राप्तं पुरुषेच्छया कर्तव्यं सत् विधिगोचरो भविष्यति । यथा वृत्त्यनन्तत्वेन मनसो विश्वेदेवसाम्याद्विश्वान्देवान्मनसि संपाद्य मन आलम्बनमविद्यमानसमं कृत्वा प्राधान्येन संपाद्यानां विश्वेषामेव देवानामनुचिन्तनं तेन चानन्तलोकप्राप्तिः । एवं चिद्रूपसाम्याज्जीवस्य ब्रह्मरूपतां संपाद्य जीवमालम्बनमविद्यमानसमं कृत्वा प्राधान्येन ब्रह्मानुचिन्तनं, तेन चामृतत्वफलप्राप्तिः । अध्यासे त्वालम्बनस्यैव प्राधान्येनारोपिततद्भावस्यानुचिन्तनं, यथा 'मनो ब्रह्मेत्युपासीत' 'आदित्यो ब्रह्मेत्यादेशः' । एवं जीवमब्रह्म 'ब्रह्मेत्युपासीत' इति । क्रियाविशेषयोगाद्वा, यथा 'वायुर्वाव संवर्गः' । 'प्राणो वाव संवर्गः' बाह्या खलु वायुदेवता वह्न्यादीन् संवृङ्क्ते । महाप्रलयसमये हि वायुर्वह्न्यादीन्संवृत्य संहृत्यात्मनि स्थापयति । यथाह द्रविडाचार्यः—'संवरणाद्वा संहरणाद्वा सात्मीभावाद्वायुः संवर्गः' इति । अध्यात्मं च प्राणः संवर्ग इति । स हि सर्वाणि वागादीनि संवृङ्क्ते । प्रयाणकाले हि स एव सर्वाणीन्द्रियाणि संगृह्योत्क्रामतीति । सेयं संवर्गदृष्टिर्वायौ प्राणे च दशाशागतं जगद्दर्शयति यथा, एवं जीवात्मनि बृंहणक्रियया ब्रह्मदृष्टिरमृतत्वाय फलाय कल्पत इति । तदेतेषु त्रिष्वपि पक्षेष्वात्मदर्शनोपासनादयः प्रधानकर्माण्यपूर्वविषयत्वात्, स्तुतशस्त्रवत् । आत्मा तु द्रव्यं कर्मणि गुण इति संस्कारो वात्मनो दर्शनं विधीयते । यथा दर्शपूर्णमासप्रकरणे 'पत्न्यवेक्षितमाज्यं भवति' इति समाम्नातं, प्रकरणिना च गृहीतमुपांशुयागाङ्गभूताज्यद्रव्यसंस्कारतयावेक्षणं गुणकर्म विधीयते, एवं कर्तृत्वेन क्रत्वङ्गभूते आत्मनि 'आत्मा वा अरे द्रष्टव्यः' इति दर्शनं गुणकर्म विधीयते । 'येस्तु द्रव्यं चिकीर्ष्यते

आनन्दगिरीय—न्यायनिर्णयः ।

नमात्मा नास्तीत्यादि । तेषां पाठक्रमादुत्तरोत्तरस्यापाये तदनन्तरस्य पूर्वपूर्वस्यापायादपवर्गो निःश्रेयसम् । मिथ्याज्ञानादयो दुःखान्ता धर्मा विच्छेदादृते वर्तमानाः संसारः । तथा च यदा तत्त्वज्ञानान्मिथ्याज्ञानमपैति तदा हेत्वभावे फलाभावाद्दोषापायस्तदपाये च प्रवृत्तिसाध्यधर्माधर्मापायाज्जन्मापायद्वारा दुःखमपगच्छति ततश्चाऽऽत्यन्तिकं निःश्रेयसं सिध्यति । तदेवं तत्त्वज्ञानान्मिथ्याज्ञानध्वस्त्या मोक्ष इत्यक्षपादस्यापि विवक्षितमित्यर्थः । ननु भेदधीरेव मिथ्याधीविरुद्धा तत्त्वधीस्तर्कशास्त्रे त्वभीष्टा तत्त्वज्ञानं तु मिथ्याज्ञानविपर्ययेण व्याख्यातमित्युपक्रम्याऽऽत्मनि तावदस्तीत्यनात्मन्यात्मेति दुःखेऽनित्येऽत्राणे सभये जुगुप्सिते हातव्ये यथाविषयं वेदितव्यमित्यादिन्यायभाष्यदर्शनात्तत्कथं ब्रह्मात्मैक्यज्ञानान्मिथ्याधीध्वस्तिरित्यत्र न्यायशास्त्रानुगुण्यं तत्राऽऽह—**मिथ्येति** । भेददृष्टेरज्ञानविलासत्वा-

न चेदं ब्रह्मात्मैकत्वविज्ञानं सम्पद्रूपं, यथा-"अनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति" [ बृह० ३ । १ । ९ ] इति ॥ न चाध्यासरूपं यथा-"मनो ब्रह्मेत्युपासीत" [ छान्दो० ३ । १८ । १ ] "आदित्यो ब्रह्म" [ छान्दो० ३ । १९ । १ ] इत्यादेश इति च मनआदित्यादिषु ब्रह्मदृष्टयध्यासः ॥ नापि विशिष्टक्रियायोगनिमित्तं-"वायुर्वाव संवर्गः" [छान्दो० ४ । ३ । १ ] "प्राणो वाव संवर्गः" [ छान्दो० ४ । ३ । ३ ] इतिवत् ॥ नाप्याज्यावेक्षणादिकर्मवत्कर्माङ्गसंस्काररूपम् ॥

रत्नप्रभा ।

भेदज्ञानवन्न प्रमा, सम्पदादिरूपत्वेन भ्रान्तित्वादित्यत आह-न चेदमित्यादिना ॥ अल्पालम्बनतिरस्कारेणोत्कृष्टवस्त्वभेदज्ञानं सम्पद्, यथा—मनः स्ववृत्त्यानन्त्यादनन्तं, तत उत्कृष्टा विश्वेदेवा अप्यनन्ता इत्यनन्तत्वसाम्याद् विश्वेदेवा एव मन इति सम्पत्, तयाऽनन्तफलप्राप्तिर्भवति, तथा चेतनत्वसाम्याजीवे ब्रह्माभेदः सम्पदिति न चेत्यर्थः । आलम्बनस्य प्राधान्येन ध्यानं, प्रतीकोपास्तिरध्यासः-यथा ब्रह्मदृष्ट्या मनसः, आदित्यस्य वा, तथाऽहं ब्रह्मेति ज्ञानमध्यासो, नेत्याह-न चेति ॥ आदेशः उपदेशः । क्रियाविशेषो विशिष्टक्रिया तया योगो निमित्तं यस्य ध्यानस्य तत्तथा । यथा प्रलयकाले वायुरग्न्यादीन् संवृणोति संहरतीति संवर्गः । स्वापकाले प्राणो वागादीन् संहरतीति संहारक्रियायोगात् संवर्ग इति ध्यानं छान्दोग्ये विहितं, तथा बृंहिक्रियायोगाज्जीवो ब्रह्मेति ज्ञानमिति, नेत्याह-नापीति ॥ यथा "पत्न्यवेक्षितमाज्यं भवति" इति उपांशुयागाद्यङ्गस्याज्यस्य संस्कारकमवेक्षणं विहितं, तथा कर्मणि कर्तृत्वेनाङ्गस्यात्मनः संस्कारार्थं ब्रह्मज्ञानं नेत्याह-नाप्याज्येति ॥

भामती ।

गुणस्तत्र प्रतीयेत' इति न्यायादत आह-न चेदं ब्रह्मात्मैकत्वविज्ञानमिति । कुतः

आनन्दगिरीय-न्यायनिर्णयः ।

न्मिथ्याज्ञानाप्रतिपक्षत्वादद्वयब्रह्मात्मधीरेव तन्निवर्तिकेत्यावश्यकमित्यर्थः । अथैक्यज्ञानमपि संपदादिरूपत्वाद्भेदधीतुल्यं न मिथ्याधीविरुद्धं नेत्याह-न चेति । संपन्नामाल्पे वस्तुन्यालम्बने सामान्येन केनचिन्महतो वस्तुनः संपादनम् । तत्रोदाहरणं—यथेति । मनस्यनन्तवृत्त्यालम्बनेऽल्पपरिमाणे विश्वेषां देवानामनन्तानां महतामनन्तत्वसामान्येन संपादनं तेनानन्तफलाप्तिर्यथा श्रुता तथा जीवस्यापि चैतन्यसामान्याद्ब्रह्मतासंपादनममृतफलं विधेयमित्ययुक्तमित्यर्थः । अध्यासपक्षं निषेधति-न चेति । अध्यासः शास्त्रतोऽतस्मिँस्तद्धीः । संपदि संपाद्यमानस्य प्राधान्येनानुध्यानमध्यासे त्वालम्बनस्येति विशेषं मत्वा दृष्टान्तमाह—यथेति । आदिशब्दादाकाशाद्युक्तम् । आदित्यादौ यथा ब्रह्मधीरारोप्यते तथा जीवे तद्धीरारोप्येत्यध्यासरूपमिदमैक्यज्ञानमित्यपि नेत्यर्थः । पक्षान्तरं दूषयति-नापीति । 'संवर्गविद्यायां श्रुतं "वायुर्वाव संवर्गो यदा वा अग्निरुद्वायत्युपशाम्यति वायुमेवाप्येति विलीयते यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति यदाऽऽप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान्सर्वान्संवृङ्क्त इत्यधिदैवतम् । अथाध्यात्मं प्राणो वाव संवर्गो यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः" इति । तत्र यथा संहरणक्रियायोगाद्वायोः प्राणस्य च संवर्गत्वं तथा जीवब्रह्मणोर्बृंहणक्रियायोगादैक्यज्ञानमित्यपि नेत्यर्थः । आदिशब्दात्प्राणो वा उक्थमित्यादि गृहीतम् । मतान्तरं प्रत्याह—नापीति । यथा दर्शपूर्णमासाधिकारे पत्न्यवेक्षितमाज्यं भवतीत्याम्नातमेवेक्षणमुपांशुयाजाङ्गभूताज्यसंस्कारो गुणकर्मविधीयते तथा कर्तृत्वेनाङ्गे क्रतावात्मनि द्रष्टव्यादिवाक्येन दृष्टेर्गुणकर्मणो विधानात्कर्माङ्गात्मसं-

१ दर्शपूर्णमासयागे इति शेषः ।

**सम्पदादिरूपे हि ब्रह्मात्मैकत्वविज्ञानेऽभ्युपगम्यमाने "तत्त्वमसि" [ छान्दो० ६ । ८ । ७ ] "अहं ब्रह्मास्मि" [ बृह० १ । ४ । १० ] "अयमात्मा ब्रह्म" [ बृह० २ । ५ । १९ ] इत्येवमादीनां वाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमन्वयः पीडचेत ॥ "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः" [ मुण्ड० २ । २ । ८ ]**

---

रत्नप्रभा ।

प्रतिज्ञाचतुष्टये हेतुमाह—**सम्पदादीति** ॥ उपक्रमादिलिङ्गैर्ब्रह्मात्मैकत्ववस्तुनि प्रमितिहेतुर्यः समानाधिकरणवाक्यानां पदनिष्ठः समन्वयः तात्पर्यं निश्चितं तत्पीडयेत । **किंचै**कत्वज्ञानादज्ञानिकहृदयस्यान्तःकरणस्य यो रागादिग्रन्थिश्चिन्मनस्तादात्म्यरूपाहङ्कारग्रन्थिर्वा नश्यतीत्यज्ञाननिवृत्तिफलवाक्यबाधः स्यात्, सम्पदादिज्ञानस्याप्रमात्वेनाज्ञानानिवर्तकत्वात् । **किंच** जीवस्य ब्रह्मत्वसम्पदा कथं तद्भावः । पूर्वरूपे स्थिते नष्टे वान्यस्यान्यात्मतायोगात् । तस्मान्न सम्पदादिरूपमित्यर्थः ॥ सम्पदादि-

भामती ।

**संपदादिरूपे हि ब्रह्मात्मैकत्वविज्ञान इति** । दर्शपूर्णमासप्रकरणे हि समाम्नातमाज्यावेक्षणं तदङ्गभूताज्यसंस्कार इति युज्यते । न च 'आत्मा वा अरे द्रष्टव्यः' इत्यादि कस्यचित्प्रकरणे समाम्नातम् । न चानारभ्याधीतमपि । 'यस्य पर्णमयी जुहूर्भवति' इत्यव्यभिचरितक्रतुसंबन्धजुहूद्वारेण जुहूपदं क्रतुं स्मारयद्वाक्येन यथा पर्णतायाः क्रतुशेषभावमापादयति, एवमात्मा नाव्यभिचरितक्रतुसंबन्धः, येन तद्दर्शनं क्रत्वङ्गं सदात्मानं क्रत्वर्थं संस्कुर्यात् । तेन यद्ययं विधिस्तथापि 'सुवर्णं भार्यम्' इतिवत् विनियोगभङ्गेन प्रधानकर्मैवापूर्वविषयत्वान्न गुणकर्मेति स्थवीयस्तयैतद्दूषणमनभिधाय सर्वपक्षसाधारणं दूषणमुक्तम्, तदतिरोहितार्थतया न

आनन्दगिरीय–न्यायनिर्णयः ।

स्काररूपमैक्यज्ञानमित्यपि नेत्यर्थः । आदिशब्देन प्रोक्षणादि गृह्यते । संपदध्यासक्रियायोगसंस्काराणां न प्रतिज्ञामात्राद्योगोऽतिप्रसङ्गादित्याशङ्क्य वेदान्तानां स्वार्थे मानान्तरविरोधाद्वा तात्पर्याभावाद्वा संपदादिपरतेति विकल्प्य जीवब्रह्मणोर्मानान्तरागोचरत्वात्तद्भेदस्यापि तथात्वाद्भेददृष्टेश्च बिम्बप्रतिबिम्बवदविरोधादाद्यो नेति मत्वा द्वितीयं प्रत्याह—**संपदादीति** । "सदेव सोम्येदम्" "एकमेव" इत्युपक्रमात् "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इत्युपसंहारात् "तत्त्वमसि" इत्यभ्यासाद्ब्रह्मात्मनो मानान्तरावेद्यत्वेनापूर्वत्वात्तज्ज्ञानस्य "आचार्यवान्" इत्यादिना फलश्रुतेः "अनेन जीवेन" इत्यर्थवादात् "अथ येऽन्यथा" इत्यादिभेददर्शननिन्दनादुपपत्तेश्च मृदादिदृष्टान्तस्य दृष्टत्वात् । बृहदारण्यकेऽपि—"ब्रह्म वा इदम्" इत्युपक्रमात् "अयमात्मा ब्रह्म" इति परामर्शात् "पूर्णमदः पूर्णमिदम्" इत्युपसंहारात् "स एष नेति नेत्यात्मा" इत्यभ्यासादप्रपञ्चब्रह्मात्मनोऽपूर्वत्वात् "तस्मात्तत्सर्वमभवत्" इत्यादिफलश्रुतेः "स एष इह प्रविष्टोऽथ योऽन्यां देवताम्" इत्याद्यर्थवादाद्दुन्दुभ्यादिदृष्टान्तोपपत्तेः । **ऐतरेयके** च—"आत्मा वा इदमेक एव" इत्युपक्रम्य "स एतमेव पुरुषं ब्रह्म ततमपश्यत्" इति परामृश्य प्रज्ञानं ब्रह्मेत्युपसंहारात् । **आथर्वणे** च—"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातम्" इत्युपक्रम्य "ब्रह्मैवेदम्" इति निगमनात् । **तैत्तिरीयके** च—"ब्रह्मविदाप्नोति परं सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायाम्" इत्युपक्रम्य "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इति परामृश्य "आनन्दो ब्रह्मेति व्यजानात्" इत्यादिनोपसंहारात्तस्यैव ब्रह्मात्मनोऽभ्यासात्तदपूर्वता स्यात् । "सोऽश्नुते सर्वान्कामानानन्दं ब्रह्मणो विद्वान्न बिभेति" इत्यादिना फलाभिलाषात् "तदात्मानं स्वयमकुरुत" इत्यर्थवादात् "को ह्येवान्यात्" इत्याद्युपपत्तेः । एकत्वे वेदान्तानामेकान्तेन तात्पर्यमवधार्यते । तथा चायुक्ता तेषां स्वार्थे तात्पर्याभावकृता संपदादिपरतेतिभावः । किंच, ज्ञानस्याज्ञानध्वस्तिफलत्वश्रुतेर्न संपदादिरूपमैक्यज्ञानमित्याह—**भिद्यत इति** । हृद-

इति चैवमादीन्यविद्यानिवृत्तिफलश्रवणान्युपरुध्येरन् ॥ "ब्रह्म वेद ब्रह्मैव भवति" [ मुण्ड० ३ । २ । ९ ] इति चैवमादीनि तद्भावापत्तिवचनानि सम्पदादिपक्षे न सामञ्जस्येनोपपद्येरन् ॥ तस्मान्न सम्पदादिरूपं ब्रह्मात्मैकत्वविज्ञानम् ॥ अतो न पुरुषव्यापारतन्त्रा ब्रह्मात्मविद्या ॥ किं तर्हि ॥ प्रत्यक्षादिप्रमाणविषयवस्तुज्ञानवद्वस्तुतन्त्रैव ॥ एवम्भूतस्य ब्रह्मणस्तज्ज्ञानस्य वा न कयाचिद्युक्त्या शक्यः कार्यानुप्रवेशः कल्पयितुम् ॥ न च विदिक्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणः ॥ "अन्यदेव तद्विदितादथोऽविदितादधि" [ केन० १ । ४ ] इति विदिक्रियाकर्मत्वप्रतिषेधात् । "येनेदं सर्वं विजानाति तं केन विजानीयाद्" [ बृ० २ । ४ । १३ ] इति च ॥ तथोपास्तिक्रियाकर्मत्वप्रतिषेधोऽपि भवति-"यद्वाचानभ्युदितं येन वागभ्युद्यते" [ केन० १ । ५ ] इत्याद्यविषयत्वं ब्रह्मण उपन्यस्य "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" [ केन० १ । ५ ] इति ॥

---

रत्नप्रभा ।

रूपत्वाभावे फलितमाह-अत इति ॥ प्रमात्वान्न कृतिसाध्या । किं तर्हि । नित्यैव, न प्रमाणसाध्येत्यर्थः । उक्तरीत्या सिद्धब्रह्मरूपमोक्षस्य कार्यसाध्यत्वं तज्ज्ञानस्य नियोगविषयत्वं च कल्पयितुमशक्यं कृत्यसाध्यत्वादित्याह-एवम्भूतस्येति ॥ ननु ब्रह्म कार्याङ्गं कारकत्वात् पत्न्यवेक्षणकर्मकारकाज्यवदिति चेत्, किं ज्ञाने ब्रह्मणः कर्मकारकत्वम्, उतोपासनायाम्? नाद्यः इत्याह-न चेति ॥ शाब्दज्ञानं विदिक्रियाशब्दार्थः । विदितं कार्यम्, अविदितं कारणं, तस्मादधि अन्यदित्यर्थः । येनात्मना इदं सर्वं दृश्यं लोको विजानाति तं केन करणेन जानीयात्, तस्मादविषय आत्मेत्यर्थः । न द्वितीय इत्याह-तथेति ॥ "यन्मनसा न मनुते" [ केन० १ । ६ ] इति श्रुत्या लोको मनसा यद् ब्रह्म न जानातीत्यविषयत्वमुक्त्वा तदेवावेद्यं ब्रह्म त्वं विद्धि यत्तूपाधिविशिष्टं देवतादिकमित्युपासते जनाः

भामती ।

व्याख्यातम् । किंचज्ञानक्रियाविषयत्वविधानमस्य बहुश्रुतिविरुद्धमित्याह-न च विदिक्रियेति । शङ्कते-

आनन्दगिरीय-न्यायनिर्णयः ।

यमन्तःकरणं तस्य ग्रन्थी रागादिः स तस्मिन्दृष्टे भिद्यते विदीर्यते सर्वे च संशयाः संसारहेतवश्छिन्ना भवन्तीत्यर्थः । आदिशब्दात् 'तरति शोकमात्मवित्' इत्यादि गृह्यते । तेषां तात्पर्यमाह-अविद्येति । संपदादिज्ञानस्याप्रमात्वादज्ञानानिवर्तकत्वादित्यर्थः । ब्रह्मविद्याया ब्रह्मभावफलश्रुतेरपि न संपदादिरूपतेत्याह-ब्रह्मेति । आदिपदं 'ब्रह्मविदाप्नोति' इत्यादि ग्रहीतुम् । तेषां तात्पर्यमाह-तद्भावेति । आत्मनो वस्तुतो भिन्नस्याब्रह्मत्वादन्यस्य स्थितस्य नष्टस्य वाऽन्यत्वासिद्धेः संपदादिपक्षे तद्भाववाक्यानां न मुख्यार्थतेत्यर्थः । उक्तहेतुभ्यः सिद्धं निगमयति-तस्मादिति । प्रमितित्वं तमोध्वस्तितद्भावापत्तिफलत्वं च तच्छब्दार्थः । संपदादिरूपत्वाभावेऽपि कथमविधेयत्वं तदाह-अत इति । तदतन्त्रत्वे नित्यत्वमाशङ्क्याऽऽह-किं तर्हीति । तस्या वस्तुतन्त्रत्वे फलितमाह-एवमिति । एवंभूतस्याद्वयप्रत्यङ्मात्रतया स्थितस्येत्यर्थः । कृतिसाध्यस्यैव नियोगविषयत्वाद्ब्रह्मणस्तज्ज्ञानस्य वा तदसाध्यत्वादित्यर्थः । कथमवैधं ब्रह्म, वैफल्यादकारकत्वाद्वा । नाऽऽद्यः, मुक्तिश्रुतेः । नेतरः, ब्रह्मणः कर्मत्वादित्याशंक्य विदिक्रियायामुपास्तिक्रियायां वा तस्य कर्मतेति विकल्प्याऽऽद्यं दूषयति-न चेति । तद्ब्रह्म विदितात्कार्यादन्यदेवाथो कारणादप्यविदितादध्युपरिष्टादन्यदित्यर्थः । येन प्रमात्रेदं सर्वं वस्तु लोको जानाति तं केन करणेन जानीयात्करणस्य ज्ञेयविषयत्वाज्ज्ञातर्यप्रवृत्तेस्तन्न ज्ञाता ज्ञेयः किंतु साक्षीत्यर्थः । द्वितीयं प्रत्याह-तथेति । 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते' : इत्यविषयत्वमुक्त्वा

**अविषयत्वे ब्रह्मणश्शास्त्रयोनित्वानुपपत्तिरिति चेत् ॥ न ॥ अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य ॥ न हि शास्त्रमिदन्तया विषयभूतं ब्रह्म प्रतिपिपादयिषति ॥ किं तर्हि ॥ प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पितं वेद्यवेदितृवेदनादिभेदमपनयति ॥तथा च शास्त्रं–"यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम्" [ केन० २ । ३ ]**

---

रत्नप्रभा ।

**नेदं** ब्रह्मेत्यर्थः । ब्रह्मणः शाब्दबोधाविषयत्वे प्रतिज्ञाहानिरिति शंकते–**अविषयत्व इति** ॥ वेदान्तजन्यवृत्तिकृताऽविद्यानिवृत्तिफलशालितया शास्त्रप्रमाणकत्वं वृत्तिविषयत्वेऽपि स्वप्रकाशब्रह्मणो वृत्त्यभिव्यक्तस्फुरणाविषयत्वादप्रमेयत्वमिति परिहरति–**नेति** ॥ **परत्वात्** फलत्वादित्यर्थः, निवृत्तिरूपब्रह्मतात्पर्यादिति वार्थः । उक्तं विवृणोति–**न हीति** ॥ चिद्विषयत्व**मिदन्त्वम्** ॥ **अविषयतया** अनिदन्तया । अदृश्यत्वे श्रुतिमाह–**तथा चेति** ॥ **यस्य** ब्रह्म **अमतं** चैतन्याविषय इति निश्चयस्तेन सम्यगवगतम् । **यस्य** त्वज्ञस्य ब्रह्म चैतन्यविषय इति **मतं स न वेद** ॥ उक्तमेव दाढर्यार्थमनुवदति–**अविज्ञातमिति** ॥ अविषयतयां ब्रह्म **विजानतामविज्ञातम**दृश्यमिति पक्षः, अज्ञानां तु ब्रह्म **विज्ञातं**

भामती ।

**अविषयत्व इति** । ततश्च शान्तिकर्मणि वेतालोदय इति भावः । निराकरोति–**न** । कुतः **अविद्याकल्पितभेदनिवृत्तिविषयत्वादिति** । सर्वमेव हि वाक्यं नेदंतया वस्तुभेदं बोधयितुमर्हति । न हीक्षुक्षीरगुडादीनां मधुररसभेदः शक्य आख्यातुम् । एवमन्यत्रापि सर्वत्र द्रष्टव्यम् । तेन प्रमाणान्तरसिद्धे लौकिक एवार्थे यदा गतिरीदृशी शब्दस्य, तदा कैव कथा प्रत्यगात्मन्यलौकिके । अदूरविप्रकर्षेण तु कथंचित्प्रतिपादनमिहापि समानम् । त्वंपदार्थो हि प्रमाता प्रमाणाधीनया प्रमित्या प्रमेयं घटादि व्याप्नोतीत्यविद्याविलसितम् । तदस्या विषयीभूतोदासीनतत्पदार्थप्रत्यगात्मसामानाधिकरण्येन प्रमातृत्वाभावात् तन्निवृत्तौ प्रमाणादयस्तिस्रो विधा निवर्तन्ते । न हि पक्तृत्वस्तुत्वे पाक्यपाकपचनानि वस्तुसन्ति भवितुमर्हन्तीति । तथाहि–'विगलितपरागवृत्त्यर्थत्वं पदस्य तदस्तदात्वमिति हि पदेनैकार्थत्वे त्वमित्यपि यत्पदम् । तदपि च तदा गत्वैकार्थ्यं विशुद्धचिदात्मतां त्यजति सकलान्कर्तृत्वादीन्पदार्थमलान्निजान् ॥' इत्यान्तरश्लोकः । अत्रैवार्थे श्रुतीरुदाहरति,–**तथा च शास्त्रम्–यस्यामतमिति** । प्रकृतमुपसंहरति–

आनन्दगिरीय–न्यायनिर्णयः ।

तदेवेति मातृत्वादिकल्पनामपोह्याऽऽत्मभूतं ब्रह्म महत्तममिति त्वं विद्धि यदुपाधिविशिष्टं देवतादीदमित्युपासते जना नेदं त्वं ब्रह्म विद्धीत्यर्थः । शास्त्रोत्थज्ञानाविषयत्वे ब्रह्मणि तत्प्रामाण्यप्रतिज्ञाहानिरिति चोदयति–**अविषयत्व इति** । शास्त्रीयज्ञानाधीनस्फुरणवत्त्वरूपकर्मत्वाभावेऽप्यविद्याध्वस्त्यतिशयवत्त्वाद्ब्रह्मणः शास्त्रीयत्वान्न प्रतिज्ञाहानिरित्याह–**नेति** । शास्त्रीयधीकृताविद्याध्वस्तिमत्त्वेन तत्कृतस्फुरणवत्त्वमपि घटादिवदित्याशंक्य तथैवेदंधीविषयत्वापत्तेर्मैवमित्याह–**न हीति** । तर्हीदंप्रत्ययाविषयत्वादविद्याध्वस्तिमत्त्वमपि शून्यवन्नास्तीति नास्य शास्त्रीयतेत्याशंक्याहमादिसाक्षिमात्रत्वेन ब्रह्मास्मीति बुद्ध्यावाविर्भावयदविद्यामपनयति शास्त्रमिति तत्प्रामाण्यमित्याह–**किं तर्हीति** । तथाऽपि कथमद्वयं ब्रह्म प्रतिपाद्यं वेद्यादिभेदादित्याशंक्याऽऽह–**वेद्येति** । तत्र श्रुतीरुदाहरति–**तथा चेति** । यस्य ब्रह्मामतमविषय इति निश्चयस्तस्य तन्मतं सम्यग्ज्ञातं यस्य तु मतं विषयतया ज्ञातं ब्रह्मेति धीर्नासौ तद्वेद भेदधीमत्त्वादेवमेवेतिनियमार्थमुक्तौ विद्वदविद्वत्पक्षावनुवदति–**अविज्ञातमिति** । विषयत्वेनाज्ञातमेव ब्रह्म

**"न दृष्टेर्द्रष्टारं पश्येः" [ बृह० ३।४।२ ] "न विज्ञातेर्विज्ञातारं विजानीयाः" [ बृह० ३।४।२ ] इति चैवमादि ॥ अतोऽविद्याकल्पितसंसारित्वनिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वदोषः । यस्य तूत्पाद्यो मोक्षः, तस्य मानसं, वाचिकं, कायिकं वा, कार्यमपेक्षत इति युक्तम् ॥ तथा विकार्यत्वे च तयोः पक्षयोर्मोक्षस्य ध्रुवमनित्यत्वम् ॥ न हि दध्यादि विकार्यमुत्पाद्यं वा घटादि नित्यं दृष्टं लोके ॥ न चाऽऽप्यत्वेनापि कार्यापेक्षा ॥ स्वात्मस्वरूपत्वे सत्यनाप्यत्वात् ॥**

रत्नप्रभा ।

दृश्यमिति पक्ष इत्यर्थः । दृष्टेर्द्रष्टारं चाक्षुषमनोवृत्तेः साक्षिणमनया दृश्यया दृष्ट्या न पश्येः विज्ञातेर्बुद्धिवृत्तेर्निश्चयरूपायाः साक्षिणं तया न विषयीकुर्या इत्याह—**नेति** ॥ नन्वविद्यादिनिवर्तकत्वेन शास्त्रस्य प्रामाण्येऽपि निवृत्तेरागन्तुकत्वान्मोक्षस्यानित्यत्वं स्यादिति नेत्याह—**अत इति** ॥ तत्त्वज्ञानादित्यर्थः । ध्वंसस्य नित्यत्वादात्मरूपत्वाच्च नानित्यत्वप्रसङ्ग इत्यर्थः । उत्पत्तिविकाराप्तिसंस्काररूपं चतुर्विधमेव क्रियाफलम् । तद्भिन्नत्वान्मोक्षस्य नोपासनासाध्यत्वमित्याह—**यस्य त्वित्यादिना तस्माज्ज्ञानमेकं मुक्त्वेत्यन्तेन** । तथोत्पाद्यत्ववद्विकार्यत्वे चापेक्षत इति युक्तमित्यन्वयं दूषयति—**तयोरिति** ॥ स्थितस्यावस्थान्तरं **विकारः** ॥ नन्वनित्यत्वनिरासाय क्रियया स्थितस्यैव ब्रह्मणो ग्रामवदाप्तिरस्तु नेत्याह—**न चेति** ॥ ब्रह्म जीवाभिन्नं न वा ? उभयथाप्यनाप्यत्वान्न क्रियापेक्षेत्याह—**स्वात्मे-**

भामती ।

**अतोऽविद्याकल्पितेति** । परपक्षे मोक्षस्यानित्यतामापादयति—**यस्य त्विति** । कार्यमपूर्वं यागादिव्यापारजन्यं तमपेक्षते मोक्षः स्वोत्पत्ताविति । **तयोः पक्षयोरिति** । निर्वर्त्यविकार्ययोः क्षणिकं ज्ञानमात्मेति बौद्धाः । तथा च विशुद्धविज्ञानोत्पादो मोक्ष इति निर्वर्त्यो मोक्षः । अन्येषां तु संसाररूपावस्थामपहाय या कैवल्यावस्थावाप्तिरात्मनः स मोक्ष इति विकार्यो मोक्षः । यथा पयसः पूर्वावस्थापहानेनावस्थान्तरप्राप्तिर्विकारो दधीति । तदेतयोः पक्षयोरनित्यता मोक्षस्य, कार्यत्वात्, दधिघटादिवत् । अथ 'यदतः परो दिवो ज्योतिर्दीप्यते' इति श्रुतेर्ब्रह्मणो विकृताविकृतदेशभेदावगमादविकृतदेशब्रह्मप्राप्तिरुपासनादिविधिकार्या भविष्यति । तथा च प्राप्यकर्मता ब्रह्मण इत्यत आह—**न चाप्यत्वेनापीति** । अन्यदन्येन विकृतदेशपरिहाण्याऽविकृतदेशं

आनन्दगिरीय-न्यायनिर्णयः ।

सम्यगजानतां ज्ञातमेव विषयतया यथावदजानतामित्यर्थः । दृष्टेश्चक्षुर्जन्यायाः कर्मभूताया द्रष्टारं स्वभावभूतया नित्यदृष्ट्या व्याप्तारं दृश्यया तया दृष्ट्या न पश्येर्विज्ञातेर्बुद्धिधर्मस्य निश्चयस्य विज्ञातारं साक्षिणं तथैव वेद्यया विज्ञात्या न विजानीया इति श्रुत्यन्तरमाह—**न दृष्टेरिति** । आदिपदेन 'अदृश्येऽनात्म्ये यत्तदद्रेश्यम्' इत्यादि गृहीतम् । ननु यदैक्यधीः शास्त्रोत्था स्फूर्तिमनुत्पाद्याविद्याबाधया तज्जं ज्ञात्राद्यपि बाधित्वा ब्रह्मात्मन्यमेये स्वाभाविकापरोक्षव्यञ्जनेन निवर्तकतया स्थितेति ब्रह्मणि शास्त्रं प्रमाणं तर्हि ध्वस्ताविद्यातजब्रह्मरूपस्याऽऽगन्तुकत्वान्न तदाप्तेर्मुक्तेर्नित्यतेत्याशङ्क्याऽऽह—**अत इति** । शास्त्रोत्थज्ञानादिति यावत् । स्वपक्षे ब्रह्मणः शास्त्रीयत्वं मोक्षस्य नित्यत्वं चोक्त्वा परपक्षे तदनित्यत्वं वक्तुं तस्योत्पाद्यत्वं विकार्यत्वं प्राप्यत्वं संस्कार्यत्वं वेति विकल्प्य कल्पद्वये कार्यानुप्रवेशमङ्गीकरोति—**यस्येति** । तथेति मुक्तेर्विकार्यत्वे सत्युत्पाद्यत्ववत्कार्यापेक्षा युक्तेत्यर्थः । तर्हि कार्यानुप्रवेशायान्यतरपरिग्रहः स्यादित्याशंक्याऽऽह—**तयोरिति** । तदेव व्यतिरेकेण व्यनक्ति—**न हीति** । अनित्यत्वनिवृत्तये पूर्वसिद्धस्यैव ब्रह्मणो ग्रामादिवदाप्यतेति तृतीयमाशंक्याऽऽह—**न चेति** । ब्रह्म प्रत्यगन्यद्वा प्रथमं प्रत्याह—**स्वात्मेति** । द्वितीयेऽपि ब्रह्म सर्वगतं परिच्छिन्नं वा सर्वगतत्वेऽपि तत्प्राप्तिः

१ उत्पाद्यत्ववत्कार्यापेक्षा युक्तेत्यर्थः।

स्वरूपव्यतिरिक्तत्वेऽपि ब्रह्मणो नाप्यत्वम् । सर्वगतत्वेन नित्याप्तस्वरूपत्वात्सर्वेण ब्रह्मण आकाशस्येव ॥ नापि संस्कार्यो मोक्षः, येन व्यापारमपेक्षेत ॥ संस्कारो हि नाम–संस्कार्यस्य गुणाधानेन वा स्याद्दोषापनयेन वा ॥ न तावद् गुणाधानेन सम्भवति । अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य । नापि दोषापनयेन ॥ नित्यशुद्धब्रह्मस्वरूपत्वान्मोक्षस्य । स्वात्मधर्म एव संस्तिरोभूतो मोक्षः क्रिययाऽऽत्मनि संस्क्रियमाणेऽभिव्यज्यते ॥ यथाऽऽदर्शे निघर्षणक्रियया संस्क्रियमाणे भास्वरत्वधर्म इति चेत् ॥ न ॥ क्रियाश्रयत्वानुपपत्तेरात्मनः ॥

---

रत्नप्रभा ।

त्यादिना ॥ यथा व्रीहीणां संस्कार्यत्वेन प्रोक्षणापेक्षा, तथा मोक्षस्य नेत्याह–नापीत्यादिना ॥ गुणाधानं व्रीहिषु प्रोक्षणादिना, क्षालनादिना वस्त्रादौ मलापनयः । शंकते–स्वात्मधर्म इति ॥ ब्रह्मात्मस्वरूप एव मोक्षोऽनाद्यविद्यामलावृतः उपासनया मले नष्टेऽभिव्यज्यते इत्यत्र दृष्टान्तः–यथेति ॥ संस्कारो मलनाशः, किमात्मनि मलः सत्यः, कल्पितो वा ? द्वितीये ज्ञानादेव तन्नाशो न क्रियया, आद्ये क्रिया किमात्मनिष्ठा, अन्यनिष्ठा वा ? नाद्य इत्याह–न क्रियेति ॥ अनुपपत्तिं स्फुटयति–

भामती ।

प्राप्यते । तद्यथोपवेलं जलधिरतिबहलचपलकल्लोलमालापरस्परास्फालनसमुल्लसत्फेनपुञ्जस्तवकतया विकृतः, मध्ये तु प्रशान्तसकलकल्लोलोपसर्गः स्वस्थः स्थिरतयाऽविकृतस्तस्य मध्यमविकृतं पौतिकः पोतेन प्राप्नोति । जीवस्तु ब्रह्मैवेति किं केन प्राप्यताम् । भेदाश्रयत्वात्प्राप्तेरित्यर्थः । अथ जीवो ब्रह्मणो भिन्नस्तथापि न तेन ब्रह्माप्यते, ब्रह्मणो विभुत्वेन नित्यप्राप्तत्वादित्याह–स्वरूपव्यतिरिक्तत्वेऽपीति । संस्कार्यकर्मतामपाकरोति–नापि संस्कार्य इति । द्वयी हि संस्कार्यता, गुणाधानेन वा यथा बीजपूरकुसुमस्य लाक्षारसावसेकः, तेन हि तत्कुसुमं संस्कृतं लाक्षासवर्णं फलं प्रसूते । दोषापनयेन वा यथा मलिनमादर्शतलं निघृष्टमिष्टकाचूर्णेनोद्भासितभास्वरत्वं संस्कृतं भवति । तत्र न तावद्ब्रह्मणि गुणाधानं संभवति । गुणो हि ब्रह्मणः स्वभावो वा भिन्नो वा । स्वभावश्चेत् कथमाधेयः, तस्य नित्यत्वात् । भिन्नत्वे तु कार्यत्वेन मोक्षस्यानित्यत्वप्रसङ्गः । न च भेदे धर्मधर्मिभावः, गवाश्ववत् । भेदाभेदश्च व्युदस्तः, विरोधात् । तदनेनाभिसंधिनोक्तम्–अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य । द्वितीयं पक्षमपक्षिपति–नापि दोषापनयेनेति । अशुद्धिः सती दर्पणे निवर्तते, न तु ब्रह्मणि असती निवर्तनीया । नित्यनिवृत्तत्वादित्यर्थः । शङ्कते–स्वात्मधर्म एवेति । ब्रह्मस्वभाव एवमोक्षोऽनाद्यविद्यामलावृत उपासनादिक्रिययात्मनि संस्क्रियमाणेऽभिव्यजते, न तु क्रियते । एतदुक्तं भवति–नित्यशुद्धत्वमात्मनोऽसिद्धं, संसारावस्थायामविद्यामलिनत्वादिति । शङ्कां निराकरोति–न । कुतः, क्रियाश्रयत्वानुपपत्तेः । नाविद्या ब्रह्माश्रया, किंतु जीवे, सा

आनन्दगिरीय–न्यायनिर्णयः ।

संयोगस्तादात्म्यं वा । तत्राऽऽद्यं दूषयति–स्वरूपेति । तादात्म्यपक्षस्तु स्थितस्य नष्टस्य वाऽन्यस्यान्यत्वायोगादुपेक्षितः । अविकृतदेशतया परिच्छिन्नत्वेऽपि ब्रह्मणः संयोगाख्या तत्प्राप्तिरनित्यत्वादयुक्ता । तादात्म्यं तूक्तन्यायनिरस्तम् । पक्षान्तरं निराह–नापीति । तदभावं वक्तुं संस्कारद्वैविध्यमाह–संस्कारो हीति । प्रकारप्रकारिप्रसिद्ध्यर्थौ निपातौ । गुणाधानेन मुक्तेर्न संस्कार्यतेत्याह–नेति । दोषनिरासेनापि न तस्याः संस्कार्यतेत्याह–नापीति । आगन्तुकगुणदोषयोरभावेऽपि नैसर्गिकाविद्यादोषात्तन्निवृत्त्या मुक्तेः संस्कार्यतेति शङ्कते–स्वात्मेति । वस्तुतः स्वात्मैव प्रतीत्या धर्मः सन्निति यावत् । स्वाभाविकस्यापि तिरस्कृतस्य क्रियातोऽभिव्यक्तौ दृष्टान्तमाह–यथेति । किमात्मा स्वाश्रयक्रियया दोषापनुत्या संस्क्रियते किं वाऽन्याश्रयक्रिययेति विकल्प्याऽऽद्यं निरस्यति–नेति । आत्म-

१ व्रीहीन्प्रोक्षतीत्युक्तेः ।

**यदाश्रया हि क्रिया तमविकुर्वती नैवात्मानं लभते ॥ यद्यात्मा क्रियया विक्रियेत, अनित्यत्वमात्मनः प्रसज्येत ॥ "अविकार्योऽयमुच्यते" [ भ० गी०२।२५ ] इति चैवमादीनि वाक्यानि बाध्येरन् । तच्चानिष्टम्॥तस्मान्न स्वाश्रया क्रिया, आत्मनः सम्भवति ॥ अन्याश्रयायास्तु क्रियाया अविषयत्वान्न तयाऽऽत्मा संस्क्रियते ॥ ननु देहाश्रयया स्नानाचमनयज्ञोपवीतादिकया क्रियया देही संस्क्रियमाणो दृष्टः ॥ न ॥ देहादिसंहतस्यैवाविद्यागृहीतस्यात्मनस्संस्क्रियमाणत्वात् ॥ प्रत्यक्षं हि स्नानाचमनादेर्देहसमवायित्वम् ॥ तया देहाश्रयया तत्संहत एव कश्चिदविद्ययाऽऽत्मत्वेन परिगृहीतस्संस्क्रियत इति युक्तम् ॥**

---

रत्नप्रभा ।

**यदीति ॥** क्रिया हि स्वाश्रये संयोगादिविकारमकुर्वती न जायते इत्यर्थः । **तच्च** वाक्यबाधनम् । **न द्वितीय** इत्याह—**अन्येति ॥ अविषयत्वात्** क्रियाश्रयद्रव्यासंयोगादिति यावत् । दर्पणं तु, सावयवं, क्रियाश्रयेष्टकाचूर्णादिद्रव्यसंयोगित्वात् संस्क्रियत इति भावः । अन्यक्रियया अन्यो न संस्क्रियत इत्यत्र व्यभिचारं शङ्कते—**नन्विति ॥** आत्मनो मूलाविद्याप्रतिबिम्बितत्वेन गृहीतस्य नरोऽहमिति भ्रान्त्या देहतादात्म्यमापन्नस्य क्रियाश्रयत्वभ्रान्त्या संस्कार्यत्वभ्रमान्न व्यभिचार इत्याह—**नेति ॥ कश्चिदिति ॥** अनिश्चितब्रह्मस्वरूप इत्यर्थः । **यत्र** आत्मनि विषये । आरोग्यबुद्धिरुत्पद्यते तस्य देहसंहतस्यैवारोग्यफलमित्यन्वयः ॥ ननु देहाभिन्नस्य कथं संस्कारः ? तस्यामुष्मिकफलभोक्तृत्वायोगादि-

भामती ।

त्वनिर्वचनीयेत्युक्तं, तेन नित्यशुद्धमेव ब्रह्म । अभ्युपेत्य त्वशुद्धिं क्रियासंस्कार्यत्वं दूष्यते । **क्रिया हि** ब्रह्मसमवेता वा ब्रह्म संस्कुर्यात्, यथा निघर्षणमिष्टकाचूर्णसंयोगविभागप्रचयो निरन्तर आदर्शतलसमवेतः । अन्यसमवेतो वा । न तावद्ब्रह्मधर्मः क्रिया, तस्याः स्वाश्रयविकारहेतुत्वेन ब्रह्मणो नित्यत्वव्याघातात् । अन्याश्रया तु कथमन्यस्योपकरोति, अतिप्रसङ्गात् । न हि दर्पणे निघृष्यमाणे मणिर्विशुद्धो दृष्टः । **तच्चानिष्टमिति** । तदा बाधनं परामृशति । अत्र व्यभिचारं चोदयति—**ननु देहाश्रययेति** । परिहरति—**न । देहसंहतस्येति**। अनाद्यनिर्वाच्याविद्योपधानमेव ब्रह्मणो जीव इति च क्षेत्रज्ञ इति चाचक्षते। स च स्थूलसूक्ष्म-

आनन्दगिरीय-न्यायनिर्णयः ।

नोऽसङ्गत्वान्न क्रियाश्रयत्वयोग्यतेत्ययुक्तं क्रियावत्त्वमिच्छतां तद्योग्यत्वादित्याशंक्याऽऽह—**यदाश्रयेति** । आत्मनोऽपि विकारित्वमाशंक्याऽऽह—**यदीति** । न केवलमात्मनो विकारित्वे युक्तिविरोधोऽपि त्वागमविरोधोऽपीत्याह—**अविकार्य इति** । 'निष्कलं निष्क्रियम्' इत्यादिश्रुतिसमुच्चयार्थश्चकारः । 'न जायते म्रियते वा' इत्यादिश्रुतिस्मृतिसंग्रहार्थमादिपदम् । तच्चेत्यागमबाधनमनिष्टं वैदिकानामिति शेषः । आद्यपक्षायोगं निगमयति—**तस्मान्नेति** । द्वितीयं निराह—**अन्येति** । क्रियायाः स्वाश्रये तद्युक्ते वाऽतिशयहेतुत्वादसङ्गस्याऽऽत्मनस्तदाश्रयबुद्ध्याद्यसंबन्धान्न तन्निष्ठा क्रिया संस्कारमात्मन्याधातुमलमित्यर्थः । नान्याश्रया क्रियाऽन्यं संस्करोतीत्यत्र व्यभिचारं शङ्कते—**नन्विति** । आदिपदं संध्यावन्दनादिसंग्रहार्थम् । आत्मनो देहाद्यतिरिक्तस्यापि देहादिष्वविद्याध्यासात्तदभिन्नस्यैव तत्क्रियया संस्कार्यत्वान्न व्यभिचार इत्याह—**न देहेति** । अविद्यागृहीतस्येत्यविद्यया मनुष्योऽहमिति मिथ्याज्ञानदृष्टस्येत्यर्थः । देहाश्रयक्रियया देहसंहतस्य तदभिन्नस्याऽऽत्मनः संस्क्रियमाणत्वमुक्त्वा स्नानाचमनादिक्रियाया देहाश्रयत्वे मानमाह—**प्रत्यक्षं हीति** । असंहतात्मस्थक्रियया तस्यैव संस्कार्यत्वं किं न स्यादित्याशंक्याध्यक्षविरोधमाह—**तयेति** । कश्चिदित्यनिर्धारितविशेषमामुष्मिकफलोपभोगशक्तमस्तीत्येवं

यथा–देहाश्रयचिकित्सानिमित्तेन धातुसाम्येन तत्संहतस्य तदभिमानिन आरोग्यफलम्, अहमरोग इति यत्र बुद्धिरुत्पद्यते । एवं स्नानाचमनयज्ञोपवीतादिना अहं शुद्धस्संस्कृत इति यत्र बुद्धिरुत्पद्यते, स संस्क्रियते ॥ स च देहेन संहत एव ॥ तेनैव ह्यहङ्कर्त्राऽहम्प्रत्ययविषयेण प्रत्ययिना सर्वाः क्रिया निर्वर्त्यन्ते ॥ तत्फलं च स एवाश्नाति "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" [मुण्ड० ३ । १ । १] इति, मन्त्रवर्णाद् " आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः " [कठ० १ । ३ । ४] इति च ॥ तथा "एको देवः सर्वभूतेषु गूढः—

रत्नप्रभा ।

ख्यत आह–तेनेति ॥ देहसंहतेनैवान्तःकरणप्रतिबिम्बात्मना कर्त्राहमितिभासमानेन प्रत्ययाः कामादयो मनस्तादात्म्यादस्य सन्तीति प्रत्ययिना क्रियाफलं भुज्यत इत्यर्थः । मनोविशिष्टस्यामुष्मिकभोक्तुः संस्कारो युक्त इति भावः । विशिष्टस्य भोक्तृत्वं, न केवलस्य साक्षिण इत्यत्र मानमाह–तयोरिति ॥ प्रमातृसाक्षिणोर्मध्ये सत्त्वसंसर्गमात्रेण कल्पितकर्तृत्वादिमान् प्रमाता पिप्पलं कर्मफलं भुंक्ते, स एव शोधितत्वेनान्यः साक्षितया प्रकाशत इत्यर्थः । आत्मा देहः । देहादियुक्तं प्रमात्रात्मानमित्यर्थः । एवं सोपाधिकस्य चिद्धातोर्मिथ्यासंस्कार्यत्वमुक्त्वा निरुपाधिकस्यासंस्कार्यत्वे मानमाह–एक इति । सर्वभूतेष्वद्वितीय एको देवः स्वप्रकाशः । तथापि मायावृतत्वान्न प्रकाशत इत्याह–गूढ इति ॥ ननु

भामती ।

शरीरेन्द्रियादिसंहतस्तत्संघातमध्यपतितस्तदभेदेनाहमितिप्रत्ययविषयीभूतः, अतः शरीरादिसंस्कारः शरीरादिधर्मोऽप्यात्मनो भवति, तदभेदाध्यवसायात् । यथाङ्गरागधर्मः सुगन्धिता कामिनीनां व्यपदिश्यते । तेनात्रापि यदाश्रिता क्रिया सांव्यवहारिकप्रमाणविषयीकृता तस्यैव संस्कारो नान्यस्येति न व्यभिचारः । तत्त्वतस्तु न क्रिया न संस्कार इति । सनिदर्शनं तु शेषमध्यासभाष्य एव कृतव्याख्यानमिति नेह व्याख्यातम् ॥ तयोरन्यः पिप्पलमिति । अन्यो जीवात्मा पिप्पलं कर्मफलम् ॥ अनश्नन्नन्य इति । परमात्मा ॥ संहतस्यैव भोक्तृत्वमाह मन्त्रवर्णः–आत्मेन्द्रिय इति । अनुपहितशुद्धस्वभावब्रह्मप्रदर्शनपरौ मन्त्रौ पठति–एको देव इति । शुक्रं दीप्तिमत् । अव्रणं दुःखरहितम् । अस्नाविरम् अविगलितम् ।

आनन्दगिरीय–न्यायनिर्णयः ।

प्रतिपन्नं निर्दिशति दृष्टान्तेनोक्तं स्पष्टयति–यथेत्यादिना । देहसंहतिफलं तदभिमानिन इत्युक्तमारोग्यमपि कस्मादसंहतात्ममतं न स्यादित्याशंक्यानुभवविरोधादित्याह–अहमिति । संस्कारफलं शुद्ध इत्युक्तम् । आत्मनो यथोक्तबुद्धिमतोऽसंहतत्वमनुभवेन वारयति–स चेति । कथं तर्हि स्नानादीनां कर्तृसंस्कारत्वप्रसिद्धिरित्याशंक्य संहतस्यैव कर्तृत्वादित्याह–तेनेति । प्रयतेऽहमिति कर्तृत्वमनुभवितुरपि तुल्यमित्याशंक्याऽऽह–अहंप्रत्ययेति । अनुभवितुर्नित्यप्रकाशस्य न तद्विषयतेत्यर्थः । न केवलमस्याहंधीमात्रे कर्तृत्वं किंतु धीमात्र इत्याह–प्रत्ययिनेति । आत्मनो भोक्तुरेव कर्तृत्वमकर्तुर्भोगाभावादित्याशंक्याऽऽह–तत्फलं चेति । संहतस्य भोक्तृत्वे मानमाह–तयोरिति । जीवपरयोर्मध्ये जीवो नानारसं कर्मफलं भुङ्क्ते । असंहतस्याभोक्तृत्वे मान–मनश्नन्निति । परमात्मा स्वयमभुञ्जान एव पश्यन्वर्तते । संहतस्य भोक्तृत्वे वाक्यान्तरमाह–आत्मेति । आत्मीयं शरीरमात्मा । देहादिसंयुक्तमात्मानमित्यर्थः । यद्वाऽऽत्मा भोक्तेत्याहुरिति संबन्धः । इन्द्रियेत्यादि क्रियाविशेषणम् । निर्गुणत्वान्निर्दोषत्वाच्च ब्रह्मात्मनि द्विधाऽपि संस्कारो नेत्युक्तम् । इदानीं तस्मिन्गुणदोषयोरभावे मानमाह–तथा चेति । मूर्तित्रयात्मना भेदं प्रत्याह–एक इति । यथाऽऽहुः–"हरिर्ब्रह्मा पिनाकीति बहुधैकोऽपि गीयते" इति । अखण्डजाड्यं व्यावर्तयति–देव इति । आदित्यादिवैषम्यमाह–सर्वेति । तर्हि किमिति सर्वेषां न भाति तत्राऽऽह–गूढ इति ।

**सर्वव्यापी सर्वभूतान्तरात्मा ॥ कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्च" [ श्वेता० ६ । ११ ] इति, "स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्" [ ईशा० ८ ] इति चैतौ मन्त्रावनाधेयातिशयतां नित्यशुद्धतां च ब्रह्मणो दर्शयतः ॥ ब्रह्मभावश्च मोक्षः ॥ तस्मान्न संस्कार्योऽपि मोक्षः ॥ अतोऽन्यन्मोक्षं प्रति क्रियानुप्रवेशद्वारं न शक्यं केनचिद्दर्शयितुम् ॥**

---

रत्नप्रभा।

जीवेनासम्बन्धाद्भिन्नत्वाद्वा देवस्याभानं न तु मायागूहनादिति नेत्याह—**सर्वव्यापी सर्वभूतान्तरात्मेति** ॥ देवस्य विभुत्वात् सर्वप्राणिप्रत्यक्त्वाच्चावरणादेवाभानमित्यर्थः। प्रत्यक्त्वे कर्तृत्वं स्यादिति चेत् ॥ न। कर्माध्यक्षः क्रियासाक्षीत्यर्थः। तर्हि साक्ष्यमस्तीति द्वैतापत्तिः। न। सर्वभूतानामधिष्ठानं भूत्वा साक्षी भवति। साक्ष्यमधिष्ठाने साक्षिणि कल्पितमिति भावः। साक्षिशब्दार्थमाह—**चेता केवल इति** ॥ बोद्धृत्वे सति, अकर्ता साक्षी इति लोकप्रसिद्धम्। **चकारः**—दोषाभावसमुच्चयार्थः। निर्गुणत्वान्निर्दोषत्वाच्च। गुणो, दोषनाशो वा, संस्कारो नेत्यर्थः। स इत्युपक्रमात्। शुक्रादिशब्दाः पुंस्त्वेन वाच्याः। स एव आत्मा परि सर्वम् अगात् व्याप्तः, शुक्रो दीप्तिमान्, अकायो लिङ्गशून्यः, अव्रणोऽक्षतः, अस्नाविरः शिराविधुरः अनश्वर इति वा। आभ्यां पदाभ्यां स्थूलदेहशून्यत्वमुक्तम्। शुद्धो रागादिमलशून्यः। अपापविद्धः पुण्यपापाभ्यामसंस्पृष्ट इत्यर्थः ॥ **अत इति**। उत्पत्त्याप्तिविकारसंस्कारेभ्योऽन्यत् पञ्चमं क्रियाफलं नास्ति। यन्मोक्षस्य क्रियासाध्यत्वे द्वारं भवेदित्यर्थः। ननु

भामती।

अविनाशीति यावत्। उपसंहरति—**तस्मादिति**। ननु मा भून्निर्वर्त्यादिकर्मताचतुष्टयी, पञ्चमी तु काचित् विधा भविष्यति, यया मोक्षस्य कर्मता घटिष्यत इत्यत आह—**अतोऽन्यदिति**। एभ्यः प्रकारेभ्यो न प्रकारान्तरमन्यदस्ति, यतो मोक्षस्य क्रियानुप्रवेशो भविष्यति। एतदुक्तं भवति—चतसृणां विधानां मध्येऽन्यतमया क्रियाफलत्वं व्याप्तं, सा च मोक्षाद्व्यावर्तमाना व्यापकानुपलब्ध्या मोक्षस्य क्रियाफलत्वं व्यावर्तयतीति तत्किं मोक्षे क्रियैव नास्ति, तथा च तदर्थानि शास्त्राणि तदर्थाश्च प्रवृत्तयोऽनर्थ-

आनन्दगिरीय-न्यायनिर्णयः।

तर्हि तत्तद्भूतावच्छिन्नत्वेन परिच्छिन्नत्वं नेत्याह—**सर्वव्यापीति**। नभोवत्ताटस्थ्यं वारयति—**सर्वभूतेति**। सर्वेषु भूतेष्वन्तःस्थितस्य तत्तत्क्रियाकर्तृत्वं शङ्कित्वोक्तं—**कर्मेति**। सर्वभूतेष्वित्यादिना भूतानां पृथगुक्तेः सद्वितीयत्वं तत्राऽऽह—**सर्वेति**। सर्वेषां भूतानामधिवासोऽधिष्ठानम्। न च कल्पितमधिष्ठानादर्थान्तरमित्यर्थः। न परं कर्मणामेवाध्यक्षः। अपि तु तद्वतामपीत्याह—**साक्षीति**। तत्र चैतन्यस्वाभाव्यं हेतुमाह—**चेतेति**। केवलो द्वैतवर्जितोऽद्वितीयः। निर्गुणो ज्ञानादिगुणरहितः। चकारो दोषाभावसमुच्चयार्थः। ब्रह्मात्मनि गुणदोषाभावे मन्त्रान्तरमाह—**स इति**। स प्रकृतो 'यस्तु सर्वाणि भूतानि' इत्यादावात्मा परितः समन्तादगात्सर्वगतः। शुक्रमित्यादिशब्दाः पुंलिङ्गत्वेन नेयाः। स इत्युपक्रमात्कविर्मनीषीत्यादिना च पुंल्लिङ्गत्वेनोपसंहारात्। शुक्रो दीप्तिमानकायो लिङ्गदेहहीनः। अव्रणोऽक्षतोऽऽस्नाविरः शिरारहितस्ताभ्यां स्थूलदेहासत्त्वमुक्तम्। शुद्धो रागादिशून्यः। अपापविद्धो धर्माधर्मविधुरः। मन्त्रयोस्तात्पर्यमाह—**एताविति**। तथाऽपि मोक्षस्य किमायातं तदाह—**ब्रह्मेति**। मुक्तिब्रह्मणोरैक्यात्तत्र दोषाद्यभावान्न तस्याः संस्कार्यतेत्युपसंहरति—**तस्मादिति**। उत्पाद्यादिदृष्टान्तार्थोऽपिशब्दः। मुक्तेरुत्पत्त्यादिचतुष्टयं क्रियानुप्रवेशद्वारं मा भूत्पञ्चमं तु किंचिद्भविष्यति नियमाभावान्नेत्याह—**अत इति**। उत्पत्त्यादिचतुष्टयमतःशब्दार्थः। तस्या लोकवेदप्रसिद्धत्वादित्यर्थः।

**तस्माज्ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते ॥ ननु ज्ञानं नाम मानसी क्रिया ॥ न ॥ वैलक्षण्यात्–क्रिया हि नाम सा, यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते, पुरुषव्यापाराधीना च ॥ यथा–"यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्" इति "सन्ध्यां मनसा ध्यायेद्" [ऐत० ब्राह्मणे ३ । ८ । १] इति चैवमादिषु । ध्यानं चिन्तनं यद्यपि मानसम्, तथापि पुरुषेण कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुं शक्यम् । पुरुषतन्त्रत्वात् ॥**

रत्नप्रभा ।

मोक्षस्यासाध्यत्वे शास्त्रारम्भो वृथा न, ज्ञानार्थत्वादित्याह–**तस्मादिति** ॥ द्वाराभावादित्यर्थः । व्याघातं शंकते–**नन्विति** ॥ तथा च मोक्षे क्रियानुप्रवेशो नास्तीति व्याहतमिति भावः । मानसमपि ज्ञानं न विधियोग्या क्रिया वस्तुतन्त्रत्वात् कृत्यसाध्यत्वाच्चेत्याह–**नेति** ॥ वैलक्षण्यं प्रपञ्चयति–**क्रिया हीति** ॥ **यत्र** विषये तदनपेक्षैव **या चोद्यते, तत्र सा** हि क्रियेति **योजना** ॥ विषयवस्त्वनपेक्षा, कृतिसाध्या च क्रियेत्यत्र दृष्टान्तमाह–**यथेति** ॥ गृहीतमध्वर्युणेति **शेषः** ॥ "वषट् करिष्यन् होता सन्ध्यां देवताम्" इति चैवमादिवाक्येषु यथा यादृशी ध्यानक्रिया वस्त्वनपेक्षा पुंतन्त्रा च चोद्यते तादृशी **क्रियेत्यर्थः** । ध्यानमपि मानसत्वात् ज्ञानवन्न क्रियेत्यत आह–**ध्यानमित्यादिना** ॥ तथापि क्रियैवेति **शेषः** । कृत्यसाध्यत्वमुपाधिरिति भावः । ध्यानक्रियामुक्त्वा ततो वैलक्षण्यं ज्ञानस्य

भामती ।

कानीत्यत उपसंहारव्याजेनाह—**तस्माज्ज्ञानमेकमिति** । अथ ज्ञानं क्रिया मानसी कस्मान्न विधिगोचरः, कस्माच्च तस्याः फलं निर्वर्त्यादिष्वन्यतमं न मोक्ष इति चोदयति–**ननु ज्ञानमिति** । परिहरति–**न** कुतः **वैलक्षण्यात्** । अयमर्थः–सत्यं, ज्ञानं मानसी क्रिया, न त्वियं ब्रह्मणि फलं जनयितुमर्हति, तस्य स्वयंप्रकाशतया विदिक्रियाकर्मभावानुपपत्तेरित्युक्तम् । तदेतस्मिन्वैलक्षण्ये स्थित एव वैलक्षण्यान्तरमाह–**क्रिया हि नाम सेति** । यत्र विषये **वस्तुस्वरूपनिरपेक्षैव चोद्यते** । यथा देवतासंप्रदानकहविर्ग्रहणे देवतावस्तुस्वरूपानपेक्षा देवताध्यानक्रिया । यथा वा योषिति अग्निवस्त्वनपेक्षाग्निबुद्धिर्या सा क्रिया हि नामेति योजना । न हि 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट् करिष्यन्' इत्यस्माद्विधेः प्राग्देवताध्यानं

आनन्दगिरीय–न्यायनिर्णयः ।

मोक्षे क्रियाया अननुप्रवेशे तदर्थप्रवृत्त्यानर्थक्यमित्याशंक्य ज्ञानार्थत्वान्नैवमित्याह–**तस्मादिति** । क्रियानुप्रवेशद्वाराभावस्तच्छब्दार्थः । उपास्तेरपि मोक्षे साक्षात्प्रवेशो नेति वक्तुं गन्धमात्रस्येत्युक्तम् । बाह्यक्रियायास्तत्राप्रवेशे कैमुतिकन्यायार्थोऽपिशब्दः । मोक्षे ज्ञानप्रवेशे तस्य क्रियात्वादस्त्येव तत्प्रवेशस्तत्रेति शङ्कते–**नन्विति** । तस्य मानसव्यापारत्वेऽपि न वैधक्रियात्वम् । ततो जन्यफलादजन्यफलत्वेन विशेषादित्याह–**नेति** । वैधक्रिया यत्नेच्छासाध्या ज्ञानं न तथेत्यपरं विशेषमाह–**क्रिया हीति** । यत्र विषये या वस्त्वनपेक्षा चोद्यते तत्र सा क्रिया नामेति योजना । क्रियातद्धर्मप्रसिद्ध्यर्थौ निपातौ । वस्तु चेन्न कारणं किं तर्हि तथा तदाह–**पुरुषेति** । वस्त्वनपेक्षा पुंस्तन्त्रा च क्रियेत्यत्र दृष्टान्तद्वयमाह–**यथेति** । गृहीतमध्वर्युणेति शेषः । वषट् करिष्यन्निति होतोक्तः । संध्यां तदभिमानिनीं देवतामित्यर्थः । नाम ब्रह्मेत्युपासीतेत्यादि ग्रहीतुमादिपदम् । एवमादिषु वाक्येषु वस्त्वनपेक्षं पुंस्तन्त्रं च ध्यानं विधीयते तथा क्रियान्तरमपीत्यर्थः । ननु मानसत्वाविशेषाद्ध्यानमपि ज्ञानमेवेति नास्य क्रियादृष्टान्तत्वं तत्राऽऽह–**ध्यानमिति** । ज्ञानस्यापि तुल्यं पुंस्तन्त्रत्वं तदाश्रयत्वात्तत्राऽऽह—

१ क्रियाभेदवति ज्ञाने वर्तनात्साध्यव्यापकत्वं, ध्याने मानसत्वहेतुमति चास्यावर्तनात्साधनाव्यापकत्वं च बोध्यम् ॥

**ज्ञानं तु प्रमाणजन्यम् । प्रमाणं च यथाभूतवस्तुविषयम् ॥ अतो ज्ञानं कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुमशक्यम् । केवलं वस्तुतन्त्रमेव तत्, न चोदनातन्त्रम्, नापि पुरुषतन्त्रम् । तस्मान्मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम् ॥ यथा च– "पुरुषो वाव गौतमाग्निः" [ छान्दो० ५ । ७ । १ ] "योषा वाव गौतमाग्निः" [ छान्दो० ५ । ८ । १ ] इत्यत्र योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति ॥ केवलचोदनाजन्यत्वात्तु क्रियैव सा, पुरुषतन्त्रा च ॥ या तु प्रसिद्धेऽग्नावग्निबुद्धिर्न सा चोदनातन्त्रा । नापि पुरुषतन्त्रा ॥ किं तर्हि ॥ प्रत्यक्षविषयवस्तुतन्त्रैवेति ज्ञानमेव तत्, न क्रिया ॥ एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम् ॥**

---

रत्नप्रभा ।

स्फुटयति–ज्ञानन्त्विति ॥ **अतः** प्रमात्वात्, **न चोदनातन्त्रं** न विधेर्विषयः । पुरुषः कृतिद्वारा तन्त्रं हेतुर्यस्य तत्पुरुषतन्त्रम्, **तस्माद्** वस्त्वव्यभिचारादपुंतन्त्रत्वाच्च । ध्यानात् **ज्ञानस्य** महान् भेद इत्यर्थः ॥ भेदमेव दृष्टान्तान्तरेणाह–**यथा चेति** ॥ अभेदासत्त्वेऽपि विधितो ध्यानं कर्तुं शक्यं न ज्ञानमित्यर्थः ॥ ननु प्रत्यक्षज्ञानस्य विषयजन्यतया तत्तन्त्रत्वेऽपि शाब्दबोधस्य तदभावाद्विधेयक्रियात्वमिति नेत्याह–**एवं सर्वेति** ॥ शब्दानुमानाद्यर्थेष्वपि ज्ञानमविधेयक्रियात्वेन ज्ञातव्यम् । तत्रापि मानादेव ज्ञानस्य प्राप्तेर्वि-

भामती ।

प्राप्तं, प्राप्तं त्वधीतवेदान्तस्य विदितपदतदर्थसंबन्धस्याधिगतशब्दन्यायतत्त्वस्य 'सदेव सोम्येदम्' इत्यादेः 'तत्त्वमसि' इत्यन्तात्संदर्भात् ब्रह्मात्मभावज्ञानं, शब्दप्रमाणसामर्थ्यात् । इन्द्रियार्थसंनिकर्षसामर्थ्यादिव प्रणिहितमनसः स्फीतालोकमध्यवर्तिकुम्भानुभवः । न ह्यसौ स्वसामग्रीबललब्धजन्मा सन् मनुजेच्छयान्यथाकर्तुमकर्तुं वा शक्यः, देवताध्यानवत्, येनार्थवानत्र विधिः स्यात् । न चोपासना वानुभवपर्यन्ता वास्य विधेर्गोचरः, तयोरन्वयव्यतिरेकावधृतसामर्थ्ययोः साक्षात्कारे वानाद्यविद्यापनये वा विधिमन्तरेण प्राप्तत्वेन पुरुषेच्छयान्यथाकर्तुमकर्तुं वा अशक्यत्वात् । तस्माद्ब्रह्मज्ञानं मानसी क्रियापि न विधिगोचरः । पुरुषचित्तव्यापाराधीनायास्तु क्रियाया वस्तुस्वरूपनिरपेक्षिता क्वचिदविरोधिनी, यथा देवताध्यानक्रियायाः । न ह्यत्र वस्तुस्वरूपेण कश्चिद्विरोधः । क्वचिद्वस्तुस्वरूपविरोधिनी, यथा योषित्पुरुषयोरग्निबुद्धिरित्येतावता भेदेन निदर्शनमिथुनद्वयोपन्यासः । क्रियैवेत्येवकारेण वस्तुतन्त्रत्वमपाकरोति । ननु 'आत्मेत्येवोपासीत' इत्यादयो विधयः श्रूयन्ते । न च प्रमत्तगीताः, तुल्यं हि सांप्रदायिकं, तस्माद्विधेयेनात्र भवितव्यमित्यत

आनन्दगिरीय–न्यायनिर्णयः ।

**ज्ञानं त्विति** । प्रमाणद्वारा तस्य पुंस्तन्त्रत्वमाशंक्याहऽऽ–**प्रमाणं चेति** । ज्ञानस्यापुंस्तन्त्रत्वे फलितमाह–**अत इति** । तर्हि ज्ञानस्य नित्यत्वं नेत्याह–**केवलमिति** । विशेषणकृत्यमाह–**नेति** । एवकारव्यावर्त्यमाह–**नापीति** । ज्ञानध्यानयोर्मानसक्रियात्वेऽपि गोबलीवर्दवद्भेदं मत्वा वैशेष्यं निगमयति–**तस्मादिति** । तच्छब्दार्थोऽपुंस्तन्त्रत्वम् । ध्यानस्य वस्त्वनपेक्षत्वे दृष्टान्तावुक्त्वा तस्य तद्विरोधित्वे दृष्टान्तावाचष्टे–**यथा चेति** । साऽपि धीर्मानसत्वाज्ज्ञानमेवेत्याशंक्याऽऽह–**केवलेति** । न ज्ञानमिति तुशब्दार्थः । वस्त्वनधीनत्वं कैवल्यम् । एवकारोऽयोगव्यवच्छेदकः । उक्तबुद्धेरुक्तक्रियात्वनियमे हेत्वन्तरमाह–**पुरुषेति** । यथैतौ दृष्टान्तौ तथा क्रियान्तरमपीति यथाशब्दो नेयः । ज्ञानमपि योषिदादावग्निधीतुल्यमिति नेत्याह–**या त्विति** । तस्यास्तर्हि किं कारणं तदाह–**किं तर्हीति** । प्रकृतदृष्टान्तमपेक्ष्य प्रत्यक्षविषयपदम् । तेन युक्तमेव वैषम्यं वैधक्रियाधियोरित्याह–**इति ज्ञानमिति** । अध्यक्षधियोऽर्थजन्यतया तत्तन्त्रत्वेऽपि शब्दाद्यर्थधियस्तदभावाच्चोदनादिजन्यतेत्याशंक्याऽऽह–**एवमिति** । अनुमानादाव-

**तत्रैवं सति यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्त्रम् ॥ अतस्तद्विषये लिङादयश्श्रूयमाणा अप्यनियोज्यविषयत्वात्कुण्ठीभवन्त्युपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत् ॥ अहेयानुपादेयवस्तुविषयत्वात् ॥ किमर्थानि तर्हि—"आत्मा वा अरे द्रष्टव्यश्श्रोतव्यः" [बृह० २ । ४ । ५] इत्यादीनि विधिच्छायानि वचनानि ?**

रत्नप्रभा ।

ध्ययोगादित्यर्थः । **तत्रैवं सतीति** ॥ लोके ज्ञानस्याविधेयत्वे सतीत्यर्थः । **यथाभूतत्वम्** अबाधितत्वम् । ननु "आत्मानं पश्येद्" "ब्रह्म त्वं विद्धि" [ केन० १ । ९ ] "आत्मा—द्रष्टव्यः" [ बृ० २ । ४ । ९ ] इति विज्ञाने लिङ्लोट्तव्यप्रत्यया विधायकाः श्रूयन्ते । अतो ज्ञानं विधेयमित्यत आह—**तद्विषय इति** ॥ तस्मिन् ज्ञानरूपविषये विधयः पुरुषं प्रवर्तयितुमशक्ता भवन्ति । अनियोज्यं कृत्यसाध्यं नियोज्यशून्यं वा ज्ञानं तद्विषयकत्वादित्यर्थः । ममायं नियोग इति बोद्धा नियोज्यो विषयश्च विधेर्नास्तीति भावः । तर्हि ज्ञेयं ब्रह्म विधीयतां नेत्याह—**अहेयेति** ॥ वस्तुस्वरूपं विषयस्तत्त्वाद् ब्रह्मणो निरतिशयस्यासाध्यत्वान्न विधेयत्वमित्यर्थः । उदासीनवस्तुविषयकत्वाच्च ज्ञानं न विधेयं, प्रवृत्त्यादिफलाभावादित्यर्थः । विधिपदानां गतिं पृच्छति—**किमर्थानीति** ॥ **विधिच्छायानि** प्रसिद्धयागादिविधितुल्यानीत्यर्थः । विधिप्रत्ययैरात्मज्ञानं परमपुरुषार्थसाधनमिति स्तूयते स्तुत्या आत्यन्तिकेष्टहेतुत्वभ्रान्त्या

भामती ।

आह—**तद्विषये लिङादय इति** । सत्यं श्रूयन्ते लिङादयः, न त्वमी विधिविषयाः, तद्विषयत्वेऽप्रामाण्यप्रसङ्गात् । हेयोपादेयविषयो हि विधिः । स एव च हेय उपादेयो वा, यं पुरुषः कर्तुमकर्तुमन्यथा वा कर्तुं शक्नोति । तत्रैव च समर्थः कर्ताधिकृतो नियोज्यो भवति । न चैवंभूतान्यात्मश्रवणमननोपासनदर्शनानीति विषयतदनुष्ठात्रोर्विधिव्यापकयोरभावाद्विधेरभाव इति प्रयुक्ता अपि लिङादयः प्रवर्तनायामसमर्था उपल इव क्षुरतैक्ष्ण्यं कुण्ठमप्रगाणीभवन्तीति ॥ **अनियोज्यविषयत्वादिति** । समर्थो हि कर्ताधिकारी नियोज्यः । असामर्थ्ये तु न कर्तृता ततो नाधिकृतोऽतो न नियोज्य इत्यर्थः । यदि विधेरभावान्न विधिवचनानि, किमर्थानि तर्हि वचनान्येतानि विधिच्छायानीति पृच्छति—**किमर्थानीति** । न चानर्थ-

आनन्दगिरीय—न्यायनिर्णयः ।

र्थाजन्यत्वेऽपि लिङादिजन्यत्वान्न चोदनाद्यपेक्षेति भावः । लौकिकधियश्चोदनाद्यनपेक्षत्वेऽपि ब्रह्मधीरलौकिकत्वात्तदपेक्षेत इत्याशंक्य दार्ष्टान्तिकं निगमयति—**तत्रेति** । पूर्वोक्तरीत्या सम्यग्ज्ञाने वस्तुमात्रतन्त्रे सतीति यावत् । यथाभूतत्वं सदैकरूप्यम् । वैधक्रियातो वैशेष्योक्त्या ज्ञानस्याविधेयत्वमुक्तम् । तत्र ज्ञाने लिङादिश्रुत्या दृष्टविधेस्तर्कानिरस्यत्वादित्याशंक्याऽऽह—**तद्विषय इति** । तदेव ज्ञानं विषयः । तत्र यद्यपि लिङादयः श्रुतास्तथाऽपि स्तुत्यर्थवादतया विष्णुरुपांशु यष्टव्य इत्यादिवदवतिष्ठन्ते । अनियोज्यमपुंस्तन्त्रतया नियोगानर्हं नियोज्येन वा हीनं ज्ञानं तद्विषयत्वात्तेषामविधायकत्वादित्यर्थः । कुण्ठीभावे दृष्टान्तमाह—**उपलादिष्विति** । विधेयज्ञानस्य कर्मणि ब्रह्मण्यतिशयाजनकत्वाच्च न विधेयतेत्याह—**अहेयेति** । अनुष्ठेयानुष्ठात्रोरभावाद्विध्यभावे श्रुतेरपि तदपेक्षत्वेनासंभवाद्विधिशब्दवैयर्थ्यमिति शङ्कते—**किमर्थानीति** । यो द्रष्टव्यः स आत्मैवेति तत्त्वप्रतिपादकानि तानीत्याशङ्क्याऽऽह—**विधीति** ।

१ अत इति केषुचित्पुस्तकेषु पाठो नास्ति । अतस्तद्विषया इति क्वचित्पाठः । २ बृहदारण्ये ४ । ४।२३—"आत्मानं पश्यति" इति पाठः ।

**स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः ॥ यो हि बहिर्मुखः प्रवर्त्तते पुरुषः-इष्टं मे भूयादनिष्टं मा भूदिति, न च तत्रात्यन्तिकं पुरुषार्थं लभते, तमात्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविकात्कार्यकरणसंघातप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति-"आत्मा वा अरे द्रष्टव्यः" [ बृ० २ । ४ । ५ ] इत्यादीनि ॥ तस्यात्मान्वेषणाय प्रवृत्तस्याऽहेयमनुपादेयं चात्मतत्त्वमुपदिश्यते-"इदं सर्वं यदयमात्मा" [ बृ० २ । ४ । ८ ] "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" [ बृ० ४ । ५ । १५ ] "केन कं विजानीयाद्" [ बृ० ४ । ५ । १५ ] "विज्ञातारमरे केन विजानीयाद्" [ बृ० ४ । ५ । १५ ] "अयमात्मा ब्रह्म" [ बृ० २ । ५ । १९ ] इत्येवमादिश्रुतिभिः ॥**

रत्नप्रभा ।

या विषयेषु प्रवृत्तिः आत्मश्रवणादिप्रतिबन्धिका, तन्निवृत्तिफलानि विधिपदानीत्याह-**स्वाभाविकेति** ॥ विवृणोति-**यो हीत्यादिना** ॥ तत्र विषयेषु संघातस्य या प्रवृत्तिः तद्गोचराच्छब्दादेरित्यर्थः । **स्रोतः**-चित्तवृत्तिप्रवाहः । **प्रवर्तयन्ति** ज्ञानसाधनश्रवणादाविति शेषः ॥ श्रवणस्वरूपमाह-**तस्येति** ॥ **अन्वेषणं** ज्ञानम् । यदिदं जगत्तत् सर्वम् आत्मैवेत्यनात्मबाधेन आत्मा बोध्यते । अद्वितीयादृश्यात्मबोधे क्व विधिः तपस्वी द्वैतवनोपजीवनः स्थास्यतीति भावः । आत्मज्ञानिनः कर्तव्याभावे मानमाह-

भामती ।

कानि युक्तानि, स्वाध्यायविध्यधीनग्रहणत्वानुपपत्तेरिति भावः । उत्तरम्-**स्वाभाविकेति** । अन्यतः प्राप्ता एव हि श्रवणादयो विधिसरूपैर्वाक्यैरनूद्यन्ते । न चानुवादोऽप्यप्रयोजनः, प्रवृत्तिविशेषकरत्वात् । तथाहि-तत्तदिष्टानिष्टविषयेप्साजिहासापहृतहृदयतया बहिर्मुखो न प्रत्यगात्मनि समाधातुमर्हति । आत्मश्रवणादिविधिसरूपैस्तु वचनैर्मनसो विषयस्रोतः खिलीकृत्य प्रत्यगात्मस्रोत उद्घाट्यत इति प्रवृत्तिविशेषकरतानुवादानामस्तीति सप्रयोजनतया स्वाध्यायविध्यधीनग्रहणत्वमुपपद्यत इति । यच्च चोदितमात्मज्ञानमनुष्ठानानङ्गत्वादपुरुषार्थमिति, तदयुक्तम् । स्वतोऽस्य पुरुषार्थत्वे सिद्धे यदनुष्ठानानङ्गत्वं तद्भूषणं न दूषणमित्याह-

आनन्दगिरीय-न्यायनिर्णयः ।

तेषामर्थवत्त्वं ब्रुवाणः समाधत्ते-**स्वाभाविकेति** । संगृहीतं विभजते-**यो हीति** । बाहिर्मुख्यं शब्दादिप्रवणत्वम् । पुमर्थमुद्दिश्य प्रवृत्तेः श्रुत्या किमिति परावर्त्यते श्रुतेरनर्थकरत्वापाताच्चत्राऽऽह-**न चेति**। बाह्योऽर्थः सप्तम्यर्थः। किमिति तर्हि श्रुतिः सर्वानपि पुरुषान्नानुसरति तत्राऽऽह-**तमिति** । अग्नेर्दाहप्रवृत्तिवदात्मनो विषयप्रवृत्तिरपि निरोद्धुमशक्येत्याशङ्क्याऽऽह-**कार्येति** । आत्मधियोऽनात्मदर्शने सत्यपि संभवात्किमिति ततो विमुखीकरणं तत्राऽऽह-**प्रत्यगिति** । तत्र चेतसः स्रोतस्तदाभिमुख्यं तद्भावेनेति यावत् । सत्यनात्मदर्शने तत्प्रवणस्य चेतसो न प्रत्यगाभिमुख्यमित्यनात्मधीनिरासेन फलभूतात्मदृष्टिस्तावकतया तदाभिमुख्यायान्वयव्यतिरेकसिद्धा एव श्रवणादयो विधिसरूपैर्वाक्यैरनूद्यन्ते । तेन विधिकार्यलेशलाभाद्विधिच्छायान्येतानि न विधय इत्यर्थः । अस्तु वा मुमुक्षुप्रवृत्तेर्वैधत्वाद्वाक्यभेदेन श्रवणादिविधिस्तथाऽपि वस्तुनो विध्ययोग्यत्वान्न तज्ज्ञाने विधिरित्याह-**तस्येति** । यदिदं ब्रह्मक्षत्रादि तत्सर्वम[illegible] बाधायां सामानाधिकरण्याद् द्वैताभावोक्त्याऽऽत्मनोऽद्वितीयत्वेन पूर्णत्वोक्तेर्न तत्र हेयत्वमादेयत्वं च[illegible]-**इदमिति** । अविद्यावस्थायामात्मनः सद्वितीयतया हेयत्वादिसिद्धिमाशङ्क्याङ्गीकुर्वन्विद्यावस्थायामात्मातिरिक्तक्रियाद्यभावान्न हेयत्वादीत्याह-**यत्रेति** । न केवलं विद्यावस्थायामेवाऽऽत्मनि ज्ञात्रादिविभागाभावः किंत्ववस्थान्तरेऽपीत्याह-**विज्ञातारमिति** । आत्मनः स्वविषये ज्ञेयत्वाभावेऽपि ब्रह्मणि तद्भावादादेयता तत्र स्यादित्याशङ्क्याऽऽह-**अयमिति** । आदिशब्द आत्मतत्त्ववादिसर्ववाक्यसंग्रहार्थः । प्रतिपत्तिविधि-

यदप्यकर्त्तव्यप्रधानमात्मज्ञानं हानायोपादानाय वा न भवतीति, तत्तथैवेत्यभ्युपगम्यते ॥ अलङ्कारो ह्ययमस्माकं यद्ब्रह्मात्मावगतौ सत्यां सर्वकर्त्तव्यताहानिः कृतकृत्यता चेति ॥ तथा च श्रुतिः—"आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेद्" [ बृ० ४ । ४ । १२ ] इति, "एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत" [भ० गी० १५ । २०] इति च स्मृतिः ॥ तस्मान्न प्रतिपत्तिविधिविषयतया ब्रह्मणस्समर्पणम् ॥

रत्नप्रभा ।

**तथा चेति** ॥ अयं स्वयंप्रभानन्दः[1] परमात्मा **अहमस्मि** इति यदि कश्चित् पुरुष **आत्मानं** जानीयात्, तदा किं फलम् **इच्छन् कस्य** वा भोक्तुः प्रीतये **शरीरं** तप्यमानम् **अनुसंज्वरेत्** तप्येत, मोक्तृभोग्यद्वैताभावात्, कृतकृत्य आत्मविदित्यभिप्रायः । ज्ञानदौर्लभ्यार्थः **चेत्** शब्दः । **एतद्** गुह्यतमं तत्त्वम् ॥ वृत्तिकारमतनिरासमुपसंहरति—**तस्मादिति** ॥ प्राभाकरोक्तमुपन्यस्यति—

भामती ।

**यदपीति** । **अनुसंज्वरेत्** शरीरं परितप्यमानमनुतप्येत । सुगममन्यत् । प्रकृतमुपसंहरति—**तस्मान्न प्रतिपत्तीति** । प्रकृतसिद्ध्यर्थमेकदेशिमतं दूषयितुमनुभाषते—**यदपि केचिदाहुरिति** । दूषति—**तन्नेति** । इदमत्राकूतम्—'कार्यबोधे यथा चेष्टालिङ्गहर्षादयस्तथा । सिद्धबोधेऽर्थवत्तैवं शास्त्रत्वं हितशासनात् ॥' यदि हि पदानां कार्याभिधाने तदर्थस्वार्थाभिधाने वा, नियमेन वृद्धव्यवहारे सामर्थ्यमवधृतं भवेत्, न भवेदहेयोपादेयभूतब्रह्मात्मतापरत्वमुपनिषदाम् । तत्राविदितसामर्थ्यत्वात्पदानां लोके तत्पूर्वकत्वाच्च वैदिकार्थप्रतीतेः । अथ तु भूतेऽप्यर्थे पदानां लोके शक्यः संगतिग्रहस्तत उपनिषदां तत्परत्वं पौर्वापर्यपर्यालोचनयावगम्यमानमपह्नुत्य न कार्यपरत्वं शक्यं कल्पयितुं, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । तत्र तावदेवमकार्येऽर्थे न संगतिग्रहः । यदि तत्परः प्रयोगो न लोके दृश्येत, तत्प्रत्ययो वा व्युत्पन्नस्योन्नेतुं न शक्येत । न तावत्तत्परः प्रयोगो न दृश्यते लोके । कुतूहलभयादिनिवृत्त्यर्थानामकार्यपराणां पदसंदर्भाणां प्रयोगस्य लोके, बहुलमुपलब्धेः । तद्यथाखण्डलादिलोकपालचक्रवालादिवसतिः, सिद्धविद्याधरगन्धर्वाप्सरपरिवारो ब्रह्मलोकावतीर्णमन्दाकिनीपयःप्रवाहपातधौतकलधौतमयशिलातलो नन्दनादिप्रमदवनविहारिमणिमयशकुन्तकमनीयनिनदमनोहरः पर्वतराजः सुमेरुरिति । नैष भुजङ्गो रज्जुरियमित्यादि । नापि भूतार्थबुद्धिर्व्युत्पन्नपुरुषवर्तिनी न शक्या समुन्नेतुं हर्षादेरुन्नयनहेतोः संभवात् । तथाह्यविदितार्थजनभाषार्थो द्रविडो नगरगमनोद्यतो राजमार्गाभ्यर्णं देवदत्तमन्दिरमध्यासीनः प्रतिपन्नजनकानन्दनिबन्धनपुत्रजन्मा वार्ताहारेण सह नगरस्थदेवदत्ताभ्याशमागतः पटवासोपायनार्पणपुरःसरं दिष्ट्या वर्धसे पुत्रस्ते जात इति वार्ताहारव्याहारश्रवणसमनन्तरमुपजातरोमाञ्चकंचुकं

आनन्दगिरीय—न्यायनिर्णयः ।

शेषतयैव ब्रह्म शास्त्रीयमित्येतन्निराकृत्य तत्रैव सूचितं पूर्वपक्षमनुवदति—**यदपीति** । आत्मधियो हानाद्यनुपायत्वं विफलत्वं वा तत्राऽऽद्यमङ्गीकरोति—**तथेति** । द्वितीयं दूषयति—**अलंकारो हीति** । ब्रह्मात्मावगतेरुक्तफलत्वे मानं हिशब्दसूचितमाह—**तथा चेति** । अयं परमात्माऽहमस्मीत्यपरोक्षतया यदि कश्चित्पुरुषो जानीयादात्मसाक्षात्कारदौर्लभ्यद्योती चेच्छब्दः । स स्वातिरिक्तमात्मनः किं फलमिच्छन्कस्य वा पुत्रादेः फलाय तदलाभेन शरीरं तप्यमानमनु तदुपाधिः संज्वरेत्तप्येत निरुपाध्यात्मविदो नाप्यदस्ति फलं नाप्यन्यः पुत्रादिरित्याक्षेपः । तत्रैव स्मृतिमाह—**एतदिति** । गुह्यतमं शास्त्रमेतत्तस्य बुद्धिरर्थतो विधिविशेषत्वेन ब्रह्मणो न शास्त्रगम्यतेत्युक्तमुपसंहरति—**तस्मादिति** । ज्ञानस्य विधेयत्वाभावस्तथाविधफलत्वं च तच्छब्दार्थः । प्रमाप्रमारूपधीमात्रविषयः प्रतिपत्तिशब्दः । तद्विधिविषयतयेति पूर्ववत् । यूपादिदृष्टान्ते

१ स्वप्रकाशानन्दरूप इत्यर्थः ।

**यदपि केचिदाहुः-"प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण केवलवस्तुवादी वेदभागो नास्ति" इति ॥ तन्न ॥ औपनिषदस्य पुरुषस्यानन्यशेषत्वात् ॥ योऽसावुपनिषत्स्वेवाधिगतः पुरुषोऽसंसारी ब्रह्मोत्पाद्यादिचतुर्विधद्रव्यविलक्षणः-**

---

रत्नप्रभा ।

**यदपि केचिदिति**॥कर्त्तात्मा लोकसिद्धत्वान्न वेदान्तार्थः॥तदन्यद् ब्रह्म नास्त्येव वेदस्य कार्यपरत्वेन मानाभावादित्यर्थः । मानाभावोऽसिद्ध इत्याह-**नेति** ॥ अज्ञातस्य फलस्वरूपस्यात्मन उपनिषदेकवेद्यस्याकार्यशेषत्वात् कृत्स्नवेदस्य कार्यपरत्वमसिद्धम् । न च प्रवृत्तिनिवृत्तिलिङ्गाभ्यां श्रोतुस्तद्धेतुं कार्यबोधमनुमाय वक्तृवाक्यस्य कार्यपरत्वं निश्चित्य वाक्यस्थपदानां कार्यान्विते शक्त्यग्रहान्न सिद्धस्याऽपदार्थस्य वाक्यार्थत्वमिति वाच्यम् । पुत्रस्ते जात इति वाक्यश्रोतुः पितुर्हर्षलिङ्गेनेष्टं पुत्रजन्मानुमाय पुत्रादिपदानां सिद्धे सङ्गतिग्रहात् कार्यान्वितापेक्षयान्वितार्थे शक्तिरित्यङ्गीकारे लाघवात् सिद्धस्यापि वाक्यार्थत्वादित्यलम् । किञ्च ब्रह्मणो नास्तित्वादेव कृत्स्नवेदस्य कार्यपरत्वमुत वेदान्तेषु तस्याभानाद्, अथवा कार्यशेषत्वात्, किंवा लोकसिद्धत्वादाहोस्वित् मानान्तरविरोधात्? तत्र आद्यं पक्षत्रयं निराचष्टे-**योऽसाविति** ॥ अनन्यशेषत्वार्थमसंसारी इत्यादि विशेषणम् । नास्तित्वाभावे हेतुं वेदान्तमानसिद्धत्वमुक्त्वा हेत्वन्तरमात्मत्वमाह-

भामती ।

विकसितनयनोत्पलमतिस्मेरमुखमहोत्पलमवलोक्य देवदत्तमुत्पन्नप्रमोदमनुमिमीते, प्रमोदस्य च प्रागभूतस्य तद्व्याहारश्रवणसमनन्तरं भवतस्तद्धेतुताम् । न चायमप्रतिपादयन् हर्षहेतुमर्थं हर्षाय कल्पत इत्यनेन हर्षहेतुरर्थ उक्त इति प्रतिपद्यते । हर्षहेत्वन्तरस्य चाप्रतीतेः पुत्रजन्मनश्च तद्धेतोरवगमात्तदेव वार्ताहारेणाभ्यधायीति निश्चिनोति । एवं भयशोकादयोऽप्युदाहार्याः । तथा च प्रयोजनवत्तया भूतार्थाभिधानस्य प्रेक्षावत्प्रयोगोऽप्युपपन्नः । एवं च ब्रह्मस्वरूपज्ञानस्य परमपुरुषार्थहेतुभावादनुपदिशतामपि पुरुषप्रवृत्तिनिवृत्ती वेदान्तानां पुरुषहितानुशासनाच्छास्त्रत्वं सिद्धं भवति । तत्सिद्धमेतत्, विवादाध्यासितानि वचनानि भूतार्थविषयाणि, भूतार्थविषयप्रमाजनकत्वात् । यद्यद्विषयप्रमाजनकं तत्तद्विषयं यथा रूपादिविषयं चक्षुरादि, तथा चैतानि, तस्मात्तथेति । तस्मात्सुष्ठूक्तम्-**तन्न औपनिषदस्य पुरुषस्यानन्यशेषत्वादिति** । उपनिपूर्वात्सदेर्विशरणार्थात्क्विप्युपनिषत्पदं व्युत्पादितम् उपनीयाद्वयं ब्रह्म सवासनामविद्यां हिनस्तीति ब्रह्मविद्यामाह । तद्धेतुत्वाद्वेदान्ता अप्युपनिषदः, ततो विदित औपनिषदः पुरुषः । एतदेव विभजते-**योऽसावुपनिषत्स्वेवेति** । अहंप्रत्ययविषयाद्भिनत्ति-**असंसारीति** । अत एव क्रियारहितत्वाच्चतुर्विधद्रव्यविलक्षणः, अतश्च चतुर्विधद्रव्यविलक्षणो यदनन्यशेषः अन्यशेषं हि भूतं द्रव्यं चिकीर्षितं सदुत्पत्त्याद्याप्यं संभवति । यथा 'यूपं तक्षति' इत्यादि । यत्पुनरनन्यशेषं भूतभाव्युपयोगरहितं, यथा 'सुवर्णं भार्यम्' 'सक्तून्

आनन्दगिरीय-न्यायनिर्णयः ।

विधिशेषतया ब्रह्मणः शास्त्रगम्यत्वमुक्तं निरस्य प्रवृत्तिनिवृत्तीत्यादावुक्तमनुभाषते-**यदपीति** । किं वस्त्वेव नास्ति वेदान्तवेद्यं तस्याप्रसिद्धत्वात्तदुद्दिश्य प्रतिपादनायोगादाहोस्वित्तस्य क्रियाशेषतेति विकल्प्याऽऽद्यं दूषयति-**तन्नेति** । औपनिषदस्य पुरुषस्येत्याद्यनिरासं सूचितं प्रपञ्चयति-**योऽसाविति** । तस्यापि चैतन्यात्कर्तृत्वेन क्रियाशेषत्वमाशंक्यानन्यशेषत्वादिति द्वितीयं निरासमुक्तं विवृणोति-**असंसारीति** । तत्र पूर्णत्वं हेतुमाह-**ब्रह्मेति** । कर्तृत्वेनानन्वयेऽपि क्रियायामात्मा कर्मत्वेनान्वेष्यतीत्याशंक्याऽऽह-**उत्पाद्यादीति** । विनियोजकमानाभावादपि नान्वयस्तद्धि प्रकरणं वाक्यं वा? नाऽऽद्यः-

**स्वप्रकरणस्थोऽनन्यशेषो नासौ नास्ति, नाधिगम्यत इति वा शक्यं वदितुम् ॥ "स एष नेति नेत्यात्मा" [ बृ० ३।९।२६ ] इत्यात्मशब्दादात्मनश्च प्रत्याख्यानस्याशक्यत्वात् । य एव निराकर्त्ता तस्यैवात्मत्वप्रसंगात् ॥ नन्वात्माहम्प्रत्ययविषयत्वादुपनिषत्स्वेव विज्ञायत इत्यनुपपन्नम् ॥ न ॥ तत्साक्षित्वेन प्रत्युक्तत्वात् ॥**

---

रत्नप्रभा ।

**स एष इति ॥** इतिरिदमर्थे । इदं न इदं नेति सर्वदृश्यनिषेधेन य आत्मा उपदिष्टः स एष इत्यर्थः । चतुर्थं शंकते-**नन्वात्माहमिति** ॥ आत्मनोऽहंकारादिसाक्षित्वेनाहंधीविषयत्वस्य निरस्तत्वान्न लोकसिद्धतेत्याह-**नेति** ॥ यं तीर्थकारा[1] अपि न जानन्ति तस्यालौकिकत्वं किमु वाच्यमित्याह-

भामती ।

जुहेति' इत्यादि, न तस्योत्पत्त्याद्याप्यता । कस्मात्पुनरस्यानन्यशेषतेत्यत आह-यतः **स्वप्रकरणस्थः** । उपनिषदामनारभ्याधीतानां पौर्वापर्यपर्यालोचनया पुरुषप्रतिपादनपरत्वेन पुरुषस्यैव प्राधान्येनेदं प्रकरणम् । न च जुह्वादिवदव्यभिचरितक्रतुसंबन्धः पुरुष इत्युपपादितम् । अतः स्वप्रकरणस्थः सोऽयं तथाविध उपनिषद्भ्यः प्रतीयमानो न नास्तीति शक्यो वक्तुमित्यर्थः । स्यादेतत् । मानान्तरागोचरत्वेनागृहीतसंगतितयाऽपदार्थस्य ब्रह्मणो वाक्यार्थत्वानुपपत्तेः कथमुपनिषदर्थतेत्यत आह-**स एष नेति नेत्यात्मेत्यात्मशब्दात्** । यद्यपि गवादिवन्मानान्तरगोचरत्वमात्मनो नास्ति तथापि प्रकाशात्मन एव सतस्तत्तदुपाधिपरिहाण्या शक्यं वाक्यार्थत्वेन निरूपणं, हाटकस्येव कटककुण्डलादिपरिहाण्या । न हि प्रकाशः स्वसंवेदनो न भासते, नापि तदवच्छेदकः कार्यकरणसंघातः । तेन 'स एष नेति नेत्यात्मा' इति तत्तदवच्छेदपरिहाण्या बृहत्त्वादापनाच्च स्वयंप्रकाशः शक्यो वाक्यात् ब्रह्मेति चात्मेति च निरूपयितुमित्यर्थः । अथोपाधिनिरासवदुपहितमप्यात्मरूपं कस्मान्न निरस्यत इत्यत आह-**आत्मनश्च प्रत्याख्यातुमशक्यत्वात्** । प्रकाशो हि सर्वस्यात्मा तदधिष्ठानत्वाच्च प्रपञ्चविभ्रमस्य । न चाधिष्ठानाभावे विभ्रमो भवितुमर्हति। न हि जातु रज्ज्वभावे रज्ज्वां भुजङ्ग इति वा धारेति वा विभ्रमो दृष्टपूर्वः । अपि चात्मनः प्रकाशस्य भासा प्रपञ्चस्य प्रथा । तथा च श्रुतिः-'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति'इति । न चात्मनः प्रकाशस्य प्रत्याख्याने प्रपञ्चप्रथा युक्ता । तस्मादात्मनः प्रत्याख्यानायोगाद्वेदान्तेभ्यः प्रमाणान्तरागोचरसर्वोपाधिरहितब्रह्मस्वरूपावगतिसिद्धिरित्यर्थः । उपनिषत्स्वेवावगत इत्यवधारणममृष्यमाण आक्षिपति-**नन्वात्मेति** । सर्वजनीनाहंप्रत्ययविषयो ह्यात्मा कर्ता भोक्ता च संसारी तत्रैव च लौकिकपरीक्षकाणामात्मपदप्रयोगात् य एव लौकिकाः शब्दास्त एव वैदिकास्त एव च तेषामर्था इत्यौपनिषदमप्यात्मपदं तत्रैव प्रवर्तितुमर्हति, नार्थान्तरे तद्विपरीत इत्यर्थः । समाधत्ते-**न** अहंप्रत्ययविषय औपनिषदः पुरुषः । कुतः **तत्साक्षित्वेन** । अहंप्रत्ययविषयो यः कर्ता कार्यकरणसंघातोपहितो जीवात्मा तत्साक्षित्वेन परमात्मनोऽहंप्रत्ययविषयत्वस्य **प्रत्युक्तत्वात्** । एतदुक्तं भवति-यद्यपि 'अनेन जीवेनात्मना' इति जीवपरमात्मनोः पारमार्थिकमैक्यं

आनन्दगिरीय-न्यायनिर्णयः ।

इत्याह-**स्वप्रकरणस्थ इति** । पर्णतावद्वाक्यं विनियोजकमिति द्वितीयं दूषयति-**अनन्येति** । आत्मनो जुह्वादिवदव्यभिचरितक्रतुसंबन्धाभावादित्यर्थः । पक्षद्वयनिरासं निगमयति-**नासाविति** । तस्य न क्रियाशेषत्वमपीति विवक्षितम् । वेदान्तवेद्यवस्तुनो निरासायोगे हेत्वन्तरमाह-**स एष इति** । यः खल्वात्माऽथात आदेशो नेति नेतीति विश्वदृश्यनिषेधेनोक्तः स एष पञ्चमेऽपि निरूप्यत इत्यत्र वस्तुन्यात्मशब्दात्तस्य चाऽऽत्मत्वादेवानिराकार्यत्वात्तत्कर्तुरेवाऽऽत्मत्वाच्चत एव तस्योद्दिश्य प्रतिपाद्यत्वमपि सिध्यतीत्यर्थः । औपनिषदत्वं पुरुषस्यामृष्यन्नाशंकते-**नन्विति** । अहंधीविषयत्वं दूषयन्विशेषणं समर्थयते-**नेत्यादिना** ।

---

१ तीर्थकाराः शास्त्रकारा इत्यर्थः ।

**न ह्यहम्प्रत्ययविषयकर्तृव्यतिरेकेण तत्साक्षी सर्वभूतस्थः सम एकः कूटस्थनित्यः पुरुषो विधिकाण्डे, तर्कसमये वा, केनचिदधिगतस्सर्वस्यात्मा॥ अतः स न केनचित्प्रत्याख्यातुं शक्यः, विधिशेषत्वं वा नेतुम्। आत्मत्वादेव च सर्वेषां न हेयः, नाप्युपादेयः॥ सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति॥**

---

रत्नप्रभा।

**न हीति॥समः** तारतम्यवर्जितः। तत्तन्मते आत्मानधिगतिद्योतकानि विशेषणानि। **पञ्चमं** निरस्यति–**अत इति॥** केनचिद् वादिना, प्रमाणेन युक्त्या वेत्यर्थः। अगम्यत्वान्न मानान्तरविरोध इति भावः। साक्षी कर्माङ्गं चेतनत्वात् कर्तृवदिति तत्राह–**विधीति॥** अज्ञातसाक्षिणोऽनुपयोगाज्ज्ञातस्य घातकत्वान्न कर्मशेषत्वमित्यर्थः। साक्षिणः सर्वशेषित्वादहेयानुपादेयत्वाच्च न कर्मशेषत्वमित्याह–**आत्मत्वादिति॥** अनित्यत्वेनात्मनो हेयत्वमाशंक्याह–**सर्वं हीति॥** परिणामित्वेन हेयतां निराचष्टे–

भामती।

तथापि तस्योपहितं रूपं जीवः,शुद्धं तु रूपं तस्य साक्षि तच्च मानान्तरानधिगतमुपनिषद्गोचर इति। एतदेव प्रपञ्चयति–**न ह्यहंप्रत्ययविषयेति। विधिशेषत्वं वा नेतुं न शक्यः।** कुतः **आत्मत्वादेव।** न ह्यात्माऽन्यार्थोऽन्यत्तु सर्वमात्मार्थम्।तथा च श्रुतिः–'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति'इति।अपि चातः सर्वेषामात्मत्वादेव न हेयो नाप्युपादेयः।सर्वस्य हि प्रपञ्चजातस्य ब्रह्मैव तत्त्वमात्मा न च स्वभावो हेयोऽशक्यहानत्वात्।न चोपादेयः, उपात्तत्वात्। तस्माद्धेयोपादेयविषयौ विधिनिषेधौ न तद्विपरीतमात्मतत्त्वं विषयीकुरुत इति सर्वस्य प्रपञ्चजातस्यात्मैव तत्त्वमिति। एतदुपपादयति–**सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति।** अयमर्थः–पुरुषो हि श्रुतिस्मृतीतिहासपुराणतदविरुद्धन्यायव्यवस्थापितत्वात्परमार्थसन्। प्रपञ्चस्त्वनाद्यविद्योपदर्शितोऽपरमार्थसन्। यश्च परमार्थसन्नसौ प्रकृती रज्जुतत्त्वमिव सर्पविभ्रमस्य विकारस्य। अत एवास्यानिर्वाच्यत्वेनादृढस्वभावस्य विनाशः। पुरुषस्तु परमार्थसन् नासौ कारणसहस्रेणाप्यसन् शक्यः कर्तुम्। न हि सहस्रमपि शिल्पिनो घटं पटयितुमीशत इत्युक्तम्। तस्मादविनाशिपुरुषान्तो विकारविनाशः शुक्तिरज्जुतत्त्वान्त इव रजतभुजङ्गविनाशः। पुरुष एव हि सर्वस्य प्रपञ्चविकारजातस्य तत्त्वम्। न च पुरुषस्यास्ति विनाशो यतोऽनन्तो विनाशः स्यादित्यत

आनन्दगिरीय–न्यायनिर्णयः।

संस्कार्यत्वनिरासे साक्षी चेतेतिमन्त्रेणाऽऽत्मनः सर्वसाक्षित्वमुक्तं तेनाहंधीविषयत्वस्य प्रयु (स्तु)-क्तत्वादविरुद्धमौपनिषदत्वमित्यर्थः। तथापि कर्मकाण्डे तर्कशास्त्रे च सिद्धत्वान्न तस्यौपनिषदत्वं तत्राऽऽह–**न हीति।** तत्साक्षीति विधिकाण्डागम्यत्वोक्तिः। बौद्धसिद्धान्तेऽनधिगतिमाह–**सर्वेति।** सर्वेषु नश्यत्सु भूतेषु स्थितो न नश्यतीत्यर्थः। नैयायिकादिमते तदनधिगतिमाह–**सम इति।** निर्विशेष इत्यर्थः। सांख्यसमयसिद्धत्वं निरस्यति–**एक इति।** चैतन्यान्तरशून्यत्वमैक्यम्।भर्तृप्रपञ्चादिमते प्रसिद्धिं प्रत्याह–**कूटस्थेति।** कौटस्थ्ये कथं कारणत्वं तत्राऽऽह–**सर्वस्येति।** सर्पाधिष्ठानरज्जोरिव ब्रह्मणोऽपि द्वैताधिष्ठानत्वात्कारणत्वमाविद्यकमिति भावः। अन्यतोऽनधिगतौ फलितमाह–**अत इति।** ज्ञाते हि बाधो नान्यथेत्यर्थः। विधिकाण्डानधिगतिफलमाह–**विधीति।** तत्र हेत्वन्तरमाह–**आत्मत्वादिति।** आत्मा सर्वशेषित्वान्नान्यशेषः स कथं विधिशेषः स्यादित्यर्थः। विधिकाण्डाज्ञातत्वमुक्तं समुच्चेतुं चशब्दः। किंच, हेयोपादेयविषयौ विधिनिषेधौ नाऽऽत्मनि विपरीते स्यातामित्याह–**नेति।** तस्यापि संसारिणोऽनाशितया हेयत्वमाशंक्योक्तं **सर्वं हीति।** निरवधिकनाशासिद्धेरित्यर्थः। संसारस्यैव नाशो न पुरुषस्येति वक्तुं विकारजातमित्युक्तम्। घटादेर्मृदादौ नाशात्कथं पुरुषावधिः सर्वस्य

पुरुषो हि विनाशहेत्वभावादविनाशी, विक्रियाहेत्वभावाच्च कूटस्थनित्यः, अत एव नित्यशुद्धबुद्धमुक्तस्वभावः ॥ तस्मात् "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" [ कठ० १।३।११ ] "तन्त्वौपनिषदं पुरुषं पृच्छामि" [ बृह० ३ । ९ । २६ ] इति चौपनिषदत्वविशेषणं पुरुषस्योपनिषत्स्वेव प्राधान्येन प्रकाश्यमानत्वे उपपद्यते ॥ अतो भूतवस्तुपरो वेदभागो नास्तीति वचनं साहसमात्रम् ॥ यदपि शास्त्रतात्पर्यविदामनुमक्रमणं–

रत्नप्रभा ।

विक्रियेति॥उपादेयत्वं निराचेष्ट–अत एवेति॥निर्विकारित्वादित्यर्थः । उपादेयत्वं हि साध्यस्य, न त्वात्मनः। नित्यसिद्धत्वादित्यर्थः । परप्राप्त्यर्थम् आत्मा हेय इत्यत आह–तस्मात् पुरुषान्न परं किञ्चिदिति ॥ काष्ठा । सर्वस्यावधिः । एवमात्मनोऽनन्यशेषत्वादवाध्यत्वादपूर्वत्वाद्वेदान्तेषु स्फुटभावाच्च वेदान्तैकवेद्यत्वमुक्तम्। तत्र श्रुतिमाह–तन्त्वेति ॥ तं सकारणसूत्रस्याधिष्ठानम् । पुरुषं पूर्णम् । हे शाकल्य त्वा त्वां पृच्छामीत्यर्थः । अत इति ॥ उक्तलिङ्गैः श्रुत्या च वेदान्तानामात्मवस्तुपरत्वनिश्चयादित्यर्थः । पूर्वोक्तमनुवदति–यदपीति ॥

भामती ।

आह–पुरुषो हि विनाशहेत्वभावादिति । न हि कारणानि सहस्रमप्यन्यदन्यथयितुमीशत इत्युक्तम् । अथ मा भूत्स्वरूपेण पुरुषो हेय उपादेयो वा, तदीयस्तु कश्चिद्धर्मो हास्यते, कश्चिच्चोपादास्यत इत्यत आह–विक्रियाहेत्वभावाच्च कूटस्थनित्यः । त्रिविधोऽपि धर्मलक्षणावस्थापरिणामलक्षणो विकारो नास्तीत्युक्तम् । अपि चात्मनः परमार्थसतो धर्मोऽपि परमार्थसन्निति न तस्यात्मवदन्यथात्वं कारणैः शक्यं कर्तुम् । न च धर्मान्यथात्वादन्यो विकारः । तदिदमुक्तम्–विक्रियाहेत्वभावादिति । सुगममन्यत् । यत्पुनरेकदेशिना शास्त्रविद्वचनं साक्षित्वेनानुक्रान्तं तदन्यथोपपादयति–यदपि शास्त्रतात्पर्यविदामनुक्रमणमिति । 'दृष्टो हि तस्यार्थः प्रयोजनवदर्थाववोधनम्' इति वक्तव्ये धर्मजिज्ञासायाः प्रकृतत्वाद्धर्मस्य च कर्मत्वात् 'कर्माववोधनम्' इत्युक्तम् । न तु सिद्धरूपब्रह्मावबोधनं व्यापारं वेदस्य वारयति । न हि सोमशर्मणि प्रकृते तद्गुणाभिधानं परिसंचष्टे विष्णुशर्मणो गुणवत्ताम् । विधिशास्त्रं विधीयमानकर्मविषयं, प्रतिषेधशास्त्रं च प्रतिषिध्यमानकर्मविषयमित्युभयमपि कर्माववोधनपरम् । अपि च 'आम्नायस्य क्रियार्थत्वात्' इति शास्त्रकृद्वचनम् । तत्रार्थग्रहणं यद्यभिधेयवाचि ततो भूतार्थानां द्रव्यगुणकर्मणामानर्थक्यमनभिधेयत्वं

आनन्दगिरीय–न्यायनिर्णयः ।

नाशस्तत्राऽऽह–पुरुष इति । कल्पितस्यानधिष्ठानत्वात्पुरुषो नित्यसत्स्वभावस्तदधिष्ठानत्वेन विश्वोदयव्ययहेतुरित्यर्थः । पुरुषस्य परिणामिनित्यत्वात्परिणामोदयव्ययाभ्यां हानादाने स्यातामित्याशंक्याऽऽह–विक्रियेति । सावयवत्वादिस्तद्धेतुः । अशुद्धत्वादित्यागेन शुद्धत्वादेरादेयत्वं शंकित्वाऽऽह–अत इति । आत्मनि स्वतो धर्मतश्चानन्यथात्वमतःशब्दार्थः । पुरुषावधिर्नाशः सर्वस्येत्यत्र श्रुतिमाह–तस्मादिति । कल्पितस्याकल्पितमधिष्ठानमित्युक्तयुक्तिपरामर्शी तच्छब्दः । यथेन्द्रियादिभ्यो नैवं पुरुषादस्ति किंचित्परं सा पुरुषाख्या काष्ठा सूक्ष्मत्वमहत्त्वादेरवधिः सैव परा गतिः परमपुरुषार्थ इत्यर्थः । निरतिशयस्वतन्त्रतया विध्यशेषत्वे श्रुतिरुक्ता मानान्तरागम्यतया वेदान्तैकवेद्यत्वे श्रुतिमाह–तं त्विति । यस्त्वदुक्तसविशेषब्रह्मणां पृथिव्येव यस्याऽऽयतनमित्युपक्रम्योक्तमधिष्ठानं तमौपनिषदमुपनिषद्भिरेव ज्ञेयं पुरुषं त्वा त्वां पृच्छामि हे शाकल्येति याज्ञवल्क्यस्य प्रश्नः । विशेषणाभिप्रायं विवृणोति–औपनिषदत्वेति । औपनिषदत्वेऽनन्यशेषत्वे चाऽऽत्मनः सिद्धे परस्य प्रतिज्ञा निर्मूलेत्याह–अत इति । तथा हीत्यादौ वेदान्तानामर्थवत्त्वमभियुक्तोक्तिविरुद्धमित्युक्तमनुवदति–यदपीति । तस्यान्यविषयत्वं वदन्प्रकृताविरोधित्वमाह–

१ एवकाररहितः पाठः क्वचित् ।

**"दृष्टो हि तस्यार्थः कर्मावबोधनम्"[शाब०भा०जै०सू०१।१।१] इत्येवमादिः, तद्धर्मजिज्ञासाविषयत्वाद्विधिप्रतिषेधशास्त्राभिप्रायं द्रष्टव्यम् ॥ अपि च "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्-" [ जैमि० सूत्र० १ । २ । १ ] इत्येतदेकान्तेनाभ्युपगच्छतां भूतोपदेशानर्थक्यप्रसङ्गः-प्रवृत्तिनिवृत्तिविधिव्यतिरेकेण भूतं चेद्वस्तूपदिशति, भव्यार्थत्वेन**

रत्नप्रभा ।

वेदस्य नैरर्थक्ये शंकिते तस्यार्थवत्तापरमिदं भाष्यम् । **दृष्टो हीति** ॥ तत्र फलवदर्थावबोधनमिति वक्तव्ये धर्मविचारप्रक्रमात् **कर्मावबोधन**मित्युक्तम् । नैतावता वेदान्तानां ब्रह्मपरत्वनिरासः । अत एवानुपलब्धेऽर्थे "तत्प्रमाणमिति" सूत्रकारो धर्मस्य फलवद्ज्ञातत्वेनैव वेदार्थतां दर्शयति । तच्चावशिष्टं ब्रह्मण इति न वृद्धवाक्यैर्विरोध इत्याह-**तद्धर्मेति** ॥ निषेधशास्त्रस्यापि निवृत्तिकार्यपरत्वमस्ति, तत् सूत्रभाष्यवाक्यजातं कर्मकाण्डस्य कार्यपरत्वाभिप्रायमित्यर्थः । **वस्तुतस्तु** लिङर्थे कर्मकाण्डस्य तात्पर्यम् । लिङर्थश्च लोके प्रवर्तकज्ञानगोचरत्वेन क्लृप्तं यागादिक्रियागतमिष्टसाधनत्वमेव, न क्रियातोऽतिरिक्तं कार्यं, तस्य कूर्मलोमवदप्रसिद्धत्वादिति तस्यापि पराभिमतकार्यविलक्षणे सिद्धे दधिसोमादौ प्रामाण्यं किमुत ज्ञानकाण्डस्येति मन्तव्यम् । **किञ्च** वेदान्ताः सिद्धवस्तुपराः फलवद्भूतशब्दत्वाद्दध्यादिशब्दवदित्याह-**अपि चेति** ॥ किमक्रियार्थकशब्दानामानर्थक्यमभिधेयाभावः फलाभावो वा ? आद्ये आह-**आम्नायस्येति** ॥ इति न्यायेन **एतद्** अभिधेयराहित्यं नियमेनांगीकुर्वतां "सोमेन यजेत" "दध्ना जुहोति" इत्यादिवाक्येषु दधिसोमादिशब्दानामर्थशून्यत्वं स्यादित्यर्थः । **ननु** केनोक्तमभिधेयराहित्यमित्याशंक्याह-**प्रवृत्तीति** ॥ कार्यातिरेकेण भव्यार्थत्वेन कार्यशेषत्वेन दध्यादिशब्दो भूतं वक्ति **चेत्**, तर्हि सत्यादिशब्दः कूटस्थं न वक्तीत्यत्र को हेतुः किं कूटस्थस्याक्रियात्वादुताक्रियाशेषत्वाद्वेति प्रश्नः । ननु दध्यादेः कार्यान्वयित्वेन

भामती ।

प्रसज्येत, न हि ते क्रियार्था इत्यत आह-**अपि चाम्नायस्येति** । यद्युच्येत नहि क्रियार्थत्वं क्रियाभिधेयत्वमपि तु क्रियाप्रयोजनत्वम् । द्रव्यगुणशब्दानां च क्रियार्थत्वेनैव भूतद्रव्यगुणाभिधानं न स्वनिष्ठतया । यथाहुः शास्त्रविदः-'चोदना हि भूतं भवन्तम्' इत्यादि । एतदुक्तं भवति-कार्यमर्थमवगमयन्ती चोदना तदर्थं भूताधिकमप्यर्थं गमयतीति । तत्राह-**प्रवृत्तिनिवृत्ति-व्यतिरेकेण भूतं चेदिति** । अयमभिसंधिः-न तावत्कार्यार्थ एव स्वार्थे पदानां संगतिग्रहो नान्यार्थे इत्युपपादितं भूतेऽप्यर्थे व्युत्पत्तिं दर्शयद्भिः । नापि स्वार्थमात्रपरतैव पदानाम् । तथा सति न वाक्यार्थप्रत्ययः स्यात् । न हि प्रत्येकं स्वप्रधानतया गुणप्रधानभावरहितानामेकवाक्यता दृष्टा । तस्मात्पदानां स्वार्थमभिदधतामेकप्रयोजनवत्प-

आनन्दगिरीय-न्यायनिर्णयः ।

**तद्धर्मेति** । दृष्टो हि तस्यार्थः फलवदर्थबोधनमिति वक्तव्ये धर्मजिज्ञासाप्रक्रमाद्धर्मकर्मणोश्चैक्याद्यदुक्तं कर्मावबोधनं तद्विधिनिषेधविवक्षयोक्तम् । यत्तु चोदनासूत्रे चोदनापदव्याख्यानं तदप्रतिकूलं पदार्थमात्रकथनात् । परीष्टिसूत्रप्रमुखमपि सूत्रजातं पूर्वसूत्राभ्यां तत्तद्भाष्यैश्च सह प्रक्रमवशात्कर्मकाण्डार्थमेवातो ब्रह्मबोधनमिति वेदैकदेशस्य फलमित्युपनिषदर्थवत्तेत्यर्थः । अर्थवादाधिकरणविरोधं विधान्तरेण निरस्यति-**अपि चेति** । तत्र खल्वक्रियार्थत्वे सत्यानर्थक्यं भूतोपदेशविशेषस्य वा तन्मात्रस्य वा । तत्राऽऽद्यमुपेत्य द्वितीयं प्रत्याह-**आम्नायस्येति** । वषट्कर्तुः प्रथमभक्षो देवदत्तो भुक्त्वा निर्गत इत्यादिभूतोपदेशस्य संबन्धयोग्यतावाचिविभक्तियुक्तस्य द्रव्यादिवाचिनः साक्षात्कार्यार्थत्वाभावात्फलवदर्थराहित्यम् । अतोऽविशेषात्कार्योपदेशस्यापि तत्प्रसक्तिरित्यर्थः । उक्तभूतोपदेशेऽपि कर्तव्यादिपदाध्याहारात्कार्यशेषद्रव्याद्यर्थतया फलवदर्थसिद्धिरिति शङ्कते-**प्रवृत्तीति** । तत्साध्यातिरेकेण भूतमपि द्रव्यादिवस्तु

१ जैमिनिः ।

**कूटस्थनित्यं भूतं नोपदिशतीति को हेतुः ॥ न हि भूतमुपदिश्यमानं क्रिया भवति ॥ अक्रियात्वेऽपि भूतस्य क्रियासाधनत्वात्क्रियार्थ एव भूतोपदेश इति चेत् । नैष दोषः ॥ क्रियार्थत्वेऽपि क्रियानिर्वर्तन-शक्तिमद्वस्तूपदिष्टमेव ॥**

रत्नप्रभा ।

कार्यत्वादुपदेशः न कूटस्थस्याकार्यत्वादित्याद्यमाशंक्य निरस्यति—**न हीति** ॥ दध्यादेः कार्यत्वे कार्याभेदे शेषत्वहानिः । अतो भूतस्य कार्याद्भिन्नस्य दध्यादेः शब्दार्थत्वं लब्धमिति भावः । द्वितीयं शंकते—**अक्रियात्वेऽपीति** ॥ क्रियार्थः कार्यशेषपरः कूटस्थस्य त्वकार्यशेषत्वान्नोपदेश इति भावः । भूतस्य कार्यशेषत्वं शब्दार्थत्वाय फलाय वा? नाद्य इत्याह—**नैष दोष इति** ॥ दध्यादेः कार्यशेषत्वे सत्यपि शब्देन वस्तुमात्रमेवोपदिष्टं न कार्यान्वयी शब्दार्थः । अन्वितार्थमात्रे शब्दानां शक्तिग्रहणादित्यर्थः ।

भामती ।

दार्थपरतयैकवाक्यता । तथा च तत्तदर्थान्तरविशिष्टैकवाक्यार्थप्रत्यय उपपन्नो भवति । यथाहुः शास्त्रविदः—'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् । वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फले ॥ वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् । पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥' इति । तथा चार्थान्तरसंसर्गपरतामात्रेण वाक्यार्थप्रत्ययोपपत्तौ न कार्यसंसर्गपरत्वनियमः पदानाम् । एवं च सति कूटस्थनित्यब्रह्मरूपपरत्वेऽप्यदोष इति । भव्यं कार्यम् । ननु यद्भव्यार्थं भूतमुपदिश्यते न त तं, भव्यसंसर्गिणा रूपेण तस्यापि भव्यत्वादित्यत आह—**न हि भूतमुपदिश्यमानमिति** । न तादात्म्यलक्षणः संसर्गः, किंतु कार्येण सह प्रयोजनप्रयोजनिलक्षणोऽन्वयः । तद्विषयेण तु भावार्थेन भूतार्थानां क्रियाकारकलक्षण इति न भूतार्थानां क्रियार्थत्वमित्यर्थः । शङ्कते—**अक्रियात्वेऽपीति** । एवं चाक्रियार्थकूटस्थनित्यब्रह्मोपदेशानुपपत्तिरिति भावः । परिहरति—**नैष दोषः । क्रियार्थत्वेऽपीति** । न हि क्रियार्थं भूतमुपदिश्यमानमभूतं भवति, अपि तु क्रियानिर्वर्तनयोग्यं भूतमेव तत् । तथा च भूतेऽर्थेऽवधृतशक्तयः शब्दाः क्वचित्स्वनिष्ठभूतविषया दृश्यमाना मृत्वा शीर्त्वा वा न कथंचित्क्रियानिष्ठतां गमयितुमुचिताः । न ह्युपहितं शतशो दृष्टमप्यनुपहितं क्वचिद्दृष्टमदृष्टं भवति । तथा च वर्तमानापदेशा अस्तिक्रियोपहिता अकार्यार्था अप्यटवीवर्णकादयो लोके बहुलमुपलभ्यन्ते । एवं क्रियाऽनिष्ठा अपि संबन्धमात्रपर्यवसायिनः, यथा कस्यैष पुरुष इति प्रश्नोत्तरं राज्ञ इति । तथा प्रातिपदिकार्थमात्रनिष्ठाः, यथा कीदृशास्तरव इति प्रश्नोत्तरं फलिन इति । न हि पृच्छता पुरुषस्य

आनन्दगिरीय-न्यायनिर्णयः ।

वषट्कर्तुरित्यादिवाक्यमध्याहृतकार्यशेषत्वेनाभिदधाति भूतभव्यन्यायादतो भूतोपदेशस्यार्थवत्त्वान्नातिप्रसक्तिरित्यर्थः । कार्यान्वितस्वार्थाभिधानेऽपि योग्यान्विताभिधानात्तेनैव कार्यास्पृष्टवस्तूपदेशोऽपि स्यादित्याह—**कूटस्थेति** । ननु न तादृगस्ति वस्तु सर्वस्योपदिश्यमानभूतस्य कार्यस्पर्शितया कार्यत्वात्तत्राऽऽह—**न हीति** । क्रिया कार्यम् । भूतस्य तत्संसर्गस्तादात्म्यं फलफलिभावो वा । नाऽऽद्यः, क्रियाद्वारा हेतुहेतुमद्भावाभ्युपगमात् । द्वितीयेऽपि न तयोरैक्यं, फलफलित्वस्य भेदकत्वादित्यर्थः । भूतस्याकार्यत्वेऽपि तद्धेतुत्वात्तच्छेषत्वात्तदुपदेशोऽपि तच्छेष एव । गामानयेत्यादावाद्यव्युत्पत्तेः कार्यान्वितविषयत्वादतो न कूटस्थोपदेशोऽस्तीति चोदयति—**अक्रियात्वेऽपीति** । कार्यायाकार्यान्तरत्वात्कार्यपदस्य तदन्वितार्थावाचित्वायोग्येतरान्वयस्यैव सर्वपदशक्तिविषयत्वात्पुत्रजन्मादिवाक्ये चाऽऽद्यव्युत्पत्तेरकार्यार्थेऽपि दृष्टेर्भूतोक्तेरकार्यार्थत्वात्कूटस्थोक्तिः स्यादित्याह—**नैष इति** । उक्तरीत्या भूतोक्तेर्न कार्यार्थत्वम् । अस्तु वा तत्सापेक्षत्वाद् द्रव्यादेस्तदुक्तेस्तादर्थ्यं तथाऽपि यत्कार्यनिर्वर्तनशक्तिमद्भूतं तदुक्तमेव । न च तत्कार्यं तद्धेतुत्वात् । तस्य कार्यान्वयेऽपि न तदन्वयित्वं वाच्यत्वनिमित्तम् । कार्यस्य तदभावेऽपि वाच्यत्वादतो योग्यान्वितद्रव्यादेस्तच्छब्दवाच्यत्ववत्कार्यानन्वितस्यापि वस्तुनो वेदान्तार्थतेत्यर्थः । तथाऽपि कार्यशेषत्वेनैवान्यत्र

**क्रियार्थत्वं तु प्रयोजनं तस्य ॥ न चैतावता वस्त्वनुपदिष्टं भवति ॥ यदि नामोपदिष्टं, किं तव तेन स्यादिति ॥ उच्यते ॥ अनवगतात्मवस्तूपदेशश्च तथैव भवितुमर्हति—**

रत्नप्रभा ।

**द्वितीयम्** अङ्गीकरोति—**क्रियार्थत्वं त्विति** ॥ तस्य भूतविशेषस्य दध्यादेः क्रियाशेषत्वं फलमुद्दिश्याङ्गीक्रियत इत्यर्थः । न तु ब्रह्मण इति तुशब्दार्थः । ननु भूतस्य कार्यशेषत्वाङ्गीकारे स्वातन्त्र्येण कथं शब्दार्थतेति तत्राह—**न चेति** ॥ फलार्थं शेषत्वाङ्गीकारमात्रेण शब्दार्थत्वभङ्गो नास्तीत्यर्थः ॥ आनर्थक्यं फलाभाव इति पक्षं शंकते—**यदीति** ॥ यद्यपि दध्यादि स्वतो निष्फलमपि क्रियाद्वारा सफलत्वादुपदिष्टम् । तथापि कूटस्थब्रह्मवादिनः क्रियाद्वाराभावात् तेन दृष्टान्तेन किं फलं स्यादित्यर्थः । भूतस्य साफल्ये क्रियैव द्वारमिति न नियमः, रज्ज्वा ज्ञानमात्रेण साफल्यदर्शनादित्याह—**उच्यते इति** ॥ **तथैव** । दध्यादिवदेवेत्यर्थः । दध्यादेः क्रियाद्वारा साफल्यं, ब्रह्मणस्तु स्वत इति विशेषे सत्यपि वेदा-

भामती ।

था तरूणां वास्तित्वनास्तित्वे प्रतिपित्सिते, किंतु पुरुषस्य स्वामिभेदस्तरूणां च प्रकारभेदः । प्रष्टुरपेक्षितं चाचक्षाणः स्वामिभेदमेव प्रकारभेदमेव च प्रतिवक्ति, न पुनरस्तित्वं,तस्य तेनाप्रतिपित्सितत्वात् । उपपादिता च भूतेऽप्यर्थे व्युत्पत्तिः प्रयोजनवति पदानाम् । चोदयति—**यदि नामोपदिष्टं** भूतं **किं तव**—उपदेष्टुः श्रोतुर्वा प्रयोजनं **स्यात्** । तस्माद्भूतमपि प्रयोजनवदेवोपदेष्टव्यं नाप्रयोजनम् । अप्रयोजनं च ब्रह्म, तस्योदासीनस्य सर्वक्रियारहितत्वेनानुपकारकत्वादिति भावः । परिहरति—**अनवगतात्मोपदेशश्च तथैव**—प्रयोजनवानेव—**भवितुमर्हति** । अप्यर्थश्चकारः । एतदुक्तं भवति—यद्यपि ब्रह्मोदासीनं तथापि तद्विषयं शाब्दज्ञानमवगतिपर्यन्तं विद्या स्वविरोधिनीं संसारमूलनिदानमविद्यामुच्छिन्दत्प्रयोजनवदित्यर्थः । अपिच येपि कार्यपरत्वं सर्वेषां पदानामास्थिषत, तैरपि 'ब्राह्मणो न हन्तव्यः' 'न सुरा पातव्या' इत्यादीनां न कार्यपरता शक्यास्थातुम् । कृत्युपहितमर्यादं हि कार्यं कृत्या व्याप्तं तन्निवृत्तौ निवर्तते, शिंशपात्वमिव वृक्षत्वनिवृत्तौ । कृतिर्हि पुरुषप्रयत्नः स च विषयाधीननिरूपणः । विषयश्चास्य साध्यस्वभावतया भावार्थ एव पूर्वापरीभूतोऽन्योत्पादानुकूलो भवितुमर्हति, न द्रव्यगुणौ । साक्षात्कृतिव्याप्यो हि कृतेर्विषयः । न च द्रव्यगुणयोः सिद्धयोरस्ति कृतिव्याप्यता । अत एव शास्त्रकृद्वचः—'भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत' इति । द्रव्यगुणशब्दानां नैमित्तिकावस्थायां कार्यावमर्शोऽपि भावस्य स्वतः, द्रव्यगुणशब्दानां तु भावयोगात्कार्यावमर्श इति भावार्थेभ्य एवापूर्वावगतिर्न द्रव्यगुणशब्देभ्य इति । न च 'दध्ना जुहोति' 'संततमाघारयति' इत्यादिषु द्रव्यादीनां कार्यविषयता । तत्रापि हि होमाघारभावार्थविषयमेव कार्यम् । न चैतावता 'सोमेन यजेत' इतिवत्, दधिसंततादिविशिष्टहोमाघारविधानात् 'अग्निहोत्रं जुहोति' 'आघारमाघारयति' इति तदनुवादः । यद्यप्यत्रापि भावार्थविषमेव कार्यं तथापि भावार्थानुबन्धतया द्रव्यगुणावविषयावपि विधीयेते । भावार्थो हि कारकव्यापारमात्रतयाऽविशिष्टः कारकविशेषेण

आनन्दगिरीय-न्यायनिर्णयः ।

भूतोक्तेर्न स्वतन्त्रभूतोक्तिरित्याशंक्याऽऽह—**क्रियार्थत्वमिति** । भूतोपदेशस्य कार्यशेषत्वं फलवत्त्वायेष्टं, न च कार्यस्य वाच्यकोटिनिवेशोऽस्तीत्यर्थः । कार्यार्थत्वेन भूतोक्तौ कार्याशेषेऽपि कथं सिद्धे शब्दप्रामाण्यं तत्राऽऽह—**न चेति** । भूतोपदेशस्य कार्यशेषत्वमात्रेण तदशेषभूतं भूतं नैवानुपदिष्टं, तदुपदेशस्याज्ञातार्थगन्तृत्वेनाध्यक्षादिवन्मानत्वादित्यर्थः । अज्ञातार्थोपदेशित्वेऽपि वेदान्तानामकार्यशेषत्वेन वैफल्यान्न प्रामाण्यं वाक्यप्रामाण्यस्य फलाधीनत्वादिति शंकते—**यदीति** । भूतं यद्युपदिष्टमुपदिश्यतां नाम तथाऽपि किं तेनोपदिष्टेन तव श्रोतुर्वक्तुर्वा स्यादिति योजना । कार्योपदेशवदज्ञातात्मोपदेशात्मकं वेदान्तवाक्यमनन्यशेषत्वेऽपि फलवत्त्वेन मानमित्याह—**उच्यत इति** । कार्यशेषोपदेशस्य कार्यफलेन फलवत्त्वात्प्रामाण्येऽपि

**तदवगत्या मिथ्याज्ञानस्य संसारहेतोर्निवृत्तिः प्रयोजनं क्रियत इत्यविशिष्टमर्थवत्त्वं क्रियासाधनवस्तूपदेशेन॥ अपि च–"ब्राह्मणो न हन्तव्यः" इति चैवमाद्या निवृत्तिरुपदिश्यते॥ न च सा क्रिया, नापि क्रियासाधनम्॥**

रत्नप्रभा ।

न्तानां सफलभूतार्थकत्वमात्रेण दध्याद्युपदेशसाम्यमित्यनवद्यम् । इदानीं वेदान्तानां निषेधवाक्यवत् सिद्धार्थपरत्वमित्याह–**अपि चेति** ॥ नञः प्रकृत्यर्थेन सम्बन्धाद्धननाभावो नञर्थः । इष्टसाधनत्वं तव्यादिप्रत्ययार्थः । इष्टश्चात्र नरकदुःखाभावः । तत्परिपालको हननाभाव इति निषेधवाक्यार्थः । हननाभावो दुःखाभावहेतुरित्युक्तावर्थाद्धननस्य दुःखसाधनत्वधिया पुरुषो निवर्त्तते । नात्र नियोगः कश्चिदस्ति, तस्य क्रियातत्साधनदध्यादिविषयत्वात् । न च हननाभावरूपा नञ्वाच्या निवृत्तिः क्रिया ।

भामती ।

द्रव्यादिना विशेष्यत इति द्रव्यादिस्तदनुबन्धः । तथा च भावार्थे विधीयमाने स एव सानुबन्धो विधीयत इति द्रव्यगुणावविषयावपि तदनुबन्धतया विहितौ भवतः । एवं च भावार्थप्रणालिकया द्रव्यादिसंक्रान्तो विधिर्गौरवाद्बिभ्यत्स्वविषयस्य चान्यतः प्राप्ततया तदनुवादेन तदनुबन्धीभूतद्रव्यादिपरो भवतीति सर्वत्र भावार्थविषय एव विधिः । एतेन 'यदाग्नेयोऽष्टाकपालो भवति' इत्यत्र संबन्धविषयो विधिरिति परास्तम् । ननु न भवत्यर्थो विधेयः, सिद्धे भवितरि लब्धरूपस्य भवनं प्रत्यकर्तृत्वात् । न खलु गगनं भवति । नाप्यसिद्धे, असिद्धस्यानियोज्यत्वात्, गगनकुसुमवत् । तस्माद्भवनेन प्रयोज्यव्यापारेणाक्षिप्तः प्रयोजकस्य भावयितुर्व्यापारो विधेयः । स च व्यापारो भावना, कृतिः, प्रयत्न इति निर्विषयश्चाशक्यप्रतिपत्तिरतो विषयापेक्षायामाग्नेयशब्दोपस्थापितो द्रव्यदेवतासंबन्ध एवास्य विषयः । ननु व्यापारविषयः पुरुषप्रयत्नः कथमव्यापाररूपं संबन्धं गोचरयेत्, न हि घटं कुर्वित्यत्रापि साक्षान्नामार्थं घटं पुरुषप्रयत्नो गोचरयत्यपि तु दण्डादि हस्तादिना व्यापारयति । तस्माद्घटार्थी कृतिं व्यापारविषयामेव प्रतिपद्यते, न तु रूपतो घटविषयाम् । उद्देश्यतया त्वस्यामस्ति घटो न तु विषयतया। विषयतया तु हस्तादिव्यापार एव। अत एवाग्नेय इत्यत्रापि द्रव्यदेवतासंबन्धाक्षिप्तो यजिरेव कार्यविषयो विधेयः। किमुक्तं भवति, आग्नेयो भवतीति, आग्नेयेन यागेन भावयेदिति । अत एव 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावस्यां यजते' इत्यनुवादो भवति 'यदाग्नेयः' इत्यादिविहितस्य यागषट्कस्य । अत एव च विहितानूदितस्य तस्यैव 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत । इत्यधिकारसंबन्धः । तस्मात्सर्वत्र कृतिप्रणालिकया भावार्थविषय एव विधिरित्येकान्तः । तथा च 'न हन्यात्' 'न पिबेत्' इत्यादिषु यदि कार्यमभ्युपेयेत ततस्तद्व्यापिका कृतिरभ्युपेतव्या । तद्व्यापकश्च भावार्थो विषयः । एवं च प्रजापतिव्रतन्यायेन पर्युदासवृत्त्याऽहननापानसंकल्पलक्षणया तद्विषयो विधिः स्यात् । तथा च प्रसज्यप्रतिषेधो दत्तजलाञ्जलिः प्रसज्येत । न च सति संभवे लक्षणा न्याय्या। 'नेक्षेतोद्यन्तम्' इत्यादौ तु 'तस्य व्रतम्' इत्यधिकारात्प्रसज्यप्रतिषेधासंभवेन पर्युदासवृत्त्याऽनीक्षणसंकल्पलक्षणा युक्ता । तस्मात् ' न हन्यात्' 'न पिबेत्' इत्यादिषु प्रसज्यप्रतिषेधेषु भावार्थाभावात्तद्व्यापायाः कृतेरभावः, तदभावे च तद्व्यास्तस्य कार्यस्याभाव इति न कार्यपरत्वनियमः सर्वत्र वाक्य इत्याह–**ब्राह्मणो न हन्तव्य इत्येवमाद्या इति** । ननु कस्मान्निवृत्तिरेव कार्यं न भवति, तत्साधनं वेत्यत आह–**न च सा क्रियेति** ।

आनन्दगिरीय–न्यायनिर्णयः ।

कथमात्मोपदेशस्य फलवत्त्वेन तथात्वमित्याशंक्याऽऽह–**तदवगत्येति** । मिथ्या च तदज्ञानं चेति विग्रहः । तस्य भ्रान्तित्वं व्यवच्छिनत्ति–**संसारेति** । वेदान्तप्रामाण्यं फलवत्त्वेन सदृष्टान्तमुक्तं निगमयति–**इत्यविशिष्टमिति** । विधिवाक्यस्थद्रव्यादिशब्दानां शुद्धसिद्धार्थतामित्थमापाद्य तथैव ब्रह्म शाब्दमित्युक्तम् । इदानीं निषेधवाक्यवद्वेदान्तानां सिद्धार्थतेत्याह–**अपि चेति** । कृतेर्भावार्थविषयत्वान्निषेधेषु भावार्थाभावात्कृतिनिवृत्तौ तदविनाभूतं कार्यमपि निवर्तत इति मत्वाऽऽह–**ब्राह्मण इति** । निवृत्तिरेव कार्यं तद्धेतुर्वेति कुतो निषेधानामकार्यार्थतेत्याशंक्याऽऽह–**न चेति** । प्राप्तक्रियानिवृत्तित्वात्तस्या नोभयथा-

**अक्रियार्थानामुपदेशोऽनर्थकश्चेद्–"ब्राह्मणो न हन्तव्यः" इत्यादिनिवृत्त्युपदेशानामानर्थक्यं प्राप्तम्॥ तच्चानिष्टम्॥ न च स्वभावप्राप्तहन्त्यर्थानुरागेण नञश्शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण॥**

रत्नप्रभा।

अभावत्वान्नापि क्रियासाधनम्। अभावस्य भावार्थहेतुत्वाद्भावार्थासत्त्वाच्चेत्यर्थः। अतो निषेधशास्त्रस्य सिद्धार्थे प्रामाण्यमिति भावः। विपक्षे दण्डमाह–**अक्रियेति**॥ ननु स्वभावतो रागतः प्राप्तेन हन्त्यर्थेनानुरागेण नञ्सम्बन्धेन हेतुना हननविरोधिनी संकल्पक्रिया बोध्यते। सा च नञर्थरूपा। तत्राप्राप्तत्वाद्विधीयते–अहननं कुर्यादिति। तथा च कार्यार्थमिदं वाक्यमित्याशंक्य निषेधति–**न चेति**॥ औदासीन्यं पुरुषस्य स्वरूपम्, तच्च हननक्रियानिवृत्त्युपलक्षितं निवृत्त्यौदासीन्यम्। हननाभाव इति यावत्। तद्व्यतिरेकेण नञः क्रियार्थत्वं कल्पयितुं न च शक्यमिति **योजना**। मुख्यार्थस्याभावस्य नञर्थत्वसम्भवे तद्विरोधिक्रियालक्षणाया अन्याय्यत्वात्। निषेधवाक्यस्यापि कार्यार्थत्वे विधिनिषेधभेदविप्लवापत्तेश्चेति भावः। **ननु** तदभावतदन्यतद्विरुद्धयोरपि नञः शक्तिः किं न स्याद्, अब्राह्मणः, अधर्मः, इति प्रयोगदर्शनात्–"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च **नञर्थाः** षट् प्रकीर्तिताः" इत्यनेकार्थत्वादिति

भामती।

क्रियाशब्दः कार्यवचनः। एतदेव विभजते–**अक्रियार्थानामिति**। स्यादेतत्। विधिविभक्तिश्रवणात्कार्यं तावदत्र प्रतीयते तच्च न भावार्थमन्तरेण। न च रागतः प्रवृत्तस्य हननपानादावकस्मादौदासीन्यमुपपद्यते विना विधारकप्रयत्नम्। तस्मात्स एव प्रवृत्त्युन्मुखानां मनोवाग्देहानां विधारकः प्रयत्नो निषेधविधिगोचरः क्रियेति नाक्रियापरमस्ति वाक्यं किंचिदपीत्याह–**न च हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुम्**। केन हेतुना न शक्यमित्यत आह–**स्वभावप्राप्तहन्त्यर्थानुरागेण** नञः। अयमर्थः–हननपानपरो हि विधिप्रत्ययः प्रतीयमानस्ते एव विधत्त इत्युत्सर्गः। न चैते शक्ये विधातुं, रागतः प्राप्तत्वात्। न च नञः प्रसज्यप्रतिषेधो विधेयः, तस्याप्यौदासीन्यरूपस्य सिद्धतया प्राप्तत्वात्। न च विधारकः प्रयत्नः, तस्याश्रुतत्वेन लक्ष्यमाणत्वात्, सति संभवे च लक्षणाया अन्याय्यत्वात्, विधिविभक्तेश्च रागतः प्राप्तप्रवृत्त्यनुवादकत्वेन विधिविषयत्वायोगात्। तस्माद्यत्पिबेद्धन्याद्वेत्यनूद्य तन्नेति निषिध्यते, तदभावो ज्ञाप्यते, न तु नञर्थो विधीयते। अभावश्च स्वविरोधिभावनिरूपणतया भावच्छायानुपातीति सिद्धे सिद्धवत्, साध्ये च साध्यवद्भासत इति साध्यविषयो नञर्थः

आनन्दगिरीय–न्यायनिर्णयः।

त्वम्। विमतं न कार्यं तद्धेतुर्वा निवृत्तित्वाद् घटनिवृत्तिवदित्यर्थः। निवृत्तेरुभयभावाभावेऽपि किमायातं तदुपदेशानां तदाह–**अक्रियेति**। अकार्यार्थानामिति यावत्। ननु न हन्तव्य इत्यत्र हननं न कुर्यादिति न वाक्यार्थः किं त्वहननं कुर्यादिति। ततो हननविरोधिनी संकल्पक्रिया हननं न कुर्यामित्येवंरूपा कार्यतया विधीयते तेन निषेधवाक्यमपि नियोगनिष्ठमेव नेत्याह–**न चेति**। स्वभावतः शास्त्रादृते रागादेव प्राप्तो यो हन्तेर्धातोरर्थो हननं तेन नञोऽनुरागः संबन्धो यदा तदा भवत्यहननमिति तत्कार्यमित्युक्ते हननविरोधिनी संकल्पक्रिया हननप्रवृत्तेर्विधारको यत्नो वा कार्यत्वेन विधीयते विना विधिमप्राप्तत्वात्। तथा च तथाविधक्रियाविधिनिष्ठं निषेधवाक्यमिति कल्पयितुं नैव शक्यमित्यर्थः। क तर्हीदं वाक्यं त्वन्मते पर्यवसितं तदाह–**हननेति**। औदासीन्यं स्वास्थ्यादप्रच्युतिः स्वतोऽपि स्यादिति प्रसक्तक्रियानिवृत्त्योपलक्ष्यं विशिनष्टि–**हननेत्यादिना**। तस्मिन्पर्यवसितमस्मन्मते निषेधवाक्यं तद्व्यतिरेकेणार्थान्तरं

**नञश्चैष स्वभावः—यत्स्वसम्बन्धिनोऽभावं बोधयति ॥ अभावबुद्धिश्चौदासीन्ये कारणम् ॥**

रत्नप्रभा ।

चेत् ॥ न ॥ अनेकार्थत्वस्यान्याय्यत्वादित्याह—**नञश्चेति** ॥ गवादिशब्दानां तु अगत्या नानार्थत्वम्। स्वर्गेषु पशुवाग्वज्रादीनां शक्यसम्बन्धाभावेन लक्षणानवतारात् । अन्यविरुद्धयोस्तु लक्ष्यत्वं युक्तं, शक्यसम्बन्धात् । ब्राह्मणादन्यस्मिन् क्षत्रियादौ धर्मविरुद्धे वा पापे ब्राह्मणाद्यभावस्य नञ्शक्यस्य सम्बन्धात् । प्रकृते चाख्यातायोगान्नञ् प्रसज्यप्रतिषेध एव, न पर्युदासलक्षक इति मन्तव्यम् । यद्वा नञः प्रकृत्या न सम्बन्धः । प्रकृतेः प्रत्ययार्थोपसर्जनत्वात्, प्रधानसम्बन्धाच्चाप्रधानानाम् । किन्तु प्रकृत्यर्थनिष्ठेन प्रत्ययार्थेनेष्टसाधनत्वेन सम्बन्धो नञः । इष्टं च स्वापेक्षया बलवदनिष्टाननुबन्धि यत्तदेव, न तात्कालिकसुखमात्रं विषसंयुक्तान्नभोगस्यापि इष्टत्वापत्तेः । तथा च "न हन्तव्यः" इत्यत्र हननं बलवदनिष्टासाधनत्वे सति इष्टसाधनं न भवतीत्यर्थः । अत्र च "हन्तव्यः" इति हनने विशिष्टेष्टसाधनत्वं भ्रान्तिप्राप्तमनूद्य नेत्यभावबोधने बलवदनिष्टसाधनं हननमिति बुद्धिर्भवति, हनने तात्कालिकेष्टसाधनत्वरूपविशेष्यसत्त्वेन विशिष्टाभावबुद्धेर्विशेषणाभावपर्यवसानात् । विशेषणं बलवदनिष्टासाधनत्वमिति, तदभावो बलवदनिष्टसाधनत्वं नञर्थ इति पर्यवसन्नम् । तद्बुद्धिरौदासीन्यपरिपालिकेत्याह—**अभावेति** ॥ चोऽप्यर्थः । पक्षान्तरद्योती । प्रकृत्यर्थाभावबुद्धिवत् प्रत्ययार्थाभावबुद्धिरपीत्यर्थः । बुद्धेः क्षणिकत्वात्तदभावे

भामती ।

साध्यवद्भासत इति नञर्थः कार्य इति भ्रमः । तदिदमाह—**नञश्चैष स्वभाव इति** । ननु बोधयतु संबन्धिनोऽभावं नञ्,प्रवृत्त्युन्मुखानां तु मनोवाग्देहानां कुतोऽकस्मान्निवृत्तिरित्यत आह—**अभावबुद्धिश्चौदासीन्यपालनकारणम्**। अयमभिप्रायः-'ज्वरितः पथ्यमश्नीयात्''न सर्पायांगुलिं दद्यात्'इत्यादिवचनश्रवणसमनन्तरं प्रयोज्यवृद्धस्य पथ्याशने प्रवृत्तिं भुजङ्गांगुलिदानोन्मुखस्य च ततो निवृत्तिमुपलभ्य बालो व्युत्पित्सुः प्रयोज्यवृद्धस्य प्रवृत्तिनिवृत्तिहेतू इच्छाद्वेषावनुमिमीते । तथाहि—इच्छाद्वेषहेतुके वृद्धस्य प्रवृत्तिनिवृत्ती, स्वतन्त्रप्रवृत्तिनिवृत्तित्वात्, मदीयस्वतन्त्रप्रवृत्तिनिवृत्तिवत् । कर्तव्यैतैकार्थसमवेतेष्टानिष्टसाधनभावावगमपूर्वकौ चास्येच्छाद्वेषौ, प्रवृत्तिनिवृत्तिहेतुभूतेच्छाद्वेषत्वात्, मत्प्रवृत्तिनिवृत्तिहेतुभूतेच्छाद्वेषवत् । न जातु मम शब्दतद्व्यापारपुरुषाशयत्रैकाल्यानवच्छिन्नभावनापूर्वप्रत्ययपूर्वाविच्छाद्वेषावभूताम् । अपि तु भूयोभूयः स्वगतमालोचयत उक्तकारणपूर्वाविव प्रत्यवभासेते । तस्माद्वृद्धस्य स्वतन्त्रप्रवृत्तिनिवृत्ती इच्छाद्वेषभेदौ च कर्तव्यैतैकार्थसमवेते-

आनन्दगिरीय—न्यायनिर्णयः ।

तस्याशक्यं वक्तुमित्यर्थः । तत्र हेतुमाह—**नञश्चेति** । चकारोऽवधारणे । एष एव च नञः स्वभावो यत्प्रतियोगिनोऽभावबोधनम् । न च तदन्यतद्विरोधिनोरपि तदर्थत्वमभावार्थस्यैव तस्य स्वार्थसंबन्धिन्यर्थान्तरे लाक्षणिकत्वे तत्रापि शक्तिकल्पनायां गौरवात् । "नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकः । वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिनौ ।" इत्यपि लक्षणयैवार्थान्तरे नञः प्रवृत्तिरुक्तेति भावः । तर्हि नञर्थे हननाभावे नियोगात्तन्निष्ठं वाक्यमित्याशंक्याऽऽह—**अभावेति** । भावार्थौ दध्यादिर्वा नियोगविषयतया तन्निष्पत्तिहेतुर्नाभावस्तस्यानादित्वात्तद्विषयत्वे नियोगस्याननुष्ठेयत्वापातात् । न चैतत्प्रागभावपालनं कार्यं स्वास्थ्यादप्रच्युतिरूपौदासीन्यादेव तत्सिद्धेः । नञोऽर्थो दृष्टः सन्नौदासीन्यं पुंसः स्थापयत्यतोऽनुष्ठेयाभावान्न नियोगनिष्ठं वाक्यमित्यर्थः । यद्वा—न निषेधवाक्ये प्रकृत्यर्थेन नञः संबन्धोऽपि तु प्रत्ययार्थेन तस्य प्राधान्यात्प्रकृत्यर्थस्यान्योपसर्जनत्वादतो हननस्य यदिष्टोपायत्वं प्रवर्तकं तदेव प्रत्ययेनानूद्य नञा निषिध्यते ब्रह्महननमिष्टोपायो नेति, तथा चौदासीन्ये पुरुषः स्थास्यति तदाह—**अभावेति** । प्रत्ययार्थेन नञः संबन्धे कथं प्रकृत्यर्थस्य हननक्रियाया निवृत्तिस्तत्राऽऽह—

१ औदासीन्यपालनकारणमिति पाठः क्वचित् ।

**सा च दग्धेन्धनाग्निवत्स्वयमेवोपशाम्यति ॥ तस्मात्प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव "ब्राह्मणो न हन्तव्यः" इत्यादिषु प्रतिषेधार्थं मन्यामहेऽन्यत्र प्रजापतिव्रतादिभ्यः ॥**

रत्नप्रभा ।

सत्यौदासीन्यात् प्रच्युतिरूपा हननादौ प्रवृत्तिः स्यादिति तत्राह-**सा चेति** ॥ यथाग्निरिन्धनं दग्ध्वा शाम्यति, एवं सा नञर्थाभावबुद्धिः हननादावनिष्टसाधनत्वभ्रान्तिमूलं रागेन्धनं दग्ध्वैव शाम्यतीत्यक्षरार्थः । रागनाशे कुतः प्रच्युतिरिति भावः । यद्वा रागतः प्राप्ता सा क्रिया रागनाशे स्वयमेव शाम्यतीत्यर्थः । परपक्षे तु हननविरोधिक्रिया कार्येत्युक्तेऽपि हननस्येष्टसाधनत्वभ्रान्त्यनिरासात् प्रच्युतिर्दुर्वारा । तस्मात्तदभाव एव नञर्थ इत्युपसंहरति-**तस्मादिति** ॥ भावार्थाभावेन तद्विषयककृत्यभावात् कार्याभावस्तच्छब्दार्थः ॥ यद्वेत्युक्तपक्षे निवृत्त्युपलक्षितमौदासीन्यं यस्माद्विशिष्टाभावायत्तमेवेति व्याख्येयम् । स्वतःसिद्धस्यौदासीन्यस्य नञर्थसाध्यत्वोपपादनार्थं निवृत्त्युपलक्षितत्वमिति ध्येयम् । तस्य

भामती ।

ष्टानिष्टसाधनभावावगमपूर्वा वित्यानुपूर्व्या सिद्धः कार्यकारणभाव इतीष्टानिष्टसाधनतावगमात्प्रयोज्यवृद्धप्रवृत्तिनिवृत्ती इति सिद्धम् । स चावगमः प्रागभूतः शब्दश्रवणानन्तरमुपजायमानः शब्दश्रवणहेतुक इति प्रवर्तकेषु वाक्येषु 'यजेत' इत्यादिषु शब्द एव कर्तव्यमिष्टसाधनं व्यापारमवगमयंस्तस्येष्टसाधनतां कर्तव्यतां चावगमयति, अनन्यलभ्यत्वादुभयोः, अनन्यलभ्यस्य च शब्दार्थत्वात् । यत्र तु कर्तव्यतान्यत एव लभ्यते, यथा 'न हन्यात्' 'न पिबेत्' इत्यादिषु हननपानप्रवृत्त्यो रागतः प्रतिलम्भात्, तत्र तदनुवादेन नञ्समभिव्याहृता लिङादिविभक्तिरन्यतोऽप्राप्तमनयोरनर्थहेतुभावमात्रमवगमयति । प्रत्यक्षं हि तयोरिष्टसाधनभावोऽवगम्यते, अन्यथा रागविषयत्वायोगात् । तस्माद्रागादिप्राप्तकर्तव्यतानुवादेनानर्थसाधनता प्रज्ञापनपरं 'न हन्यात्' 'न पिबेत्' इत्यादिवाक्यं, न तु कर्तव्यतापरमिति सुष्ठूक्तमकार्यनिष्ठत्वं निषेधानाम् । निषेध्यानां चानर्थसाधनताबुद्धिरेव निषेध्याभावबुद्धिः । तया खल्वयं चेतन आपाततो रमणीयतां पश्यन्नप्यायतिमालोच्य प्रवृत्त्यभावं निवृत्तिमवबुध्य निवर्तते । औदासीन्यमात्मनोऽवस्थापयतीति यावत् । स्यादेतत् । अभावबुद्धिश्चेदौदासीन्यस्थापनकारणं यावदौदासीन्यमनुवर्तेत । न चानुवर्तते । न ह्युदासीनोऽपि विषयान्तरव्यासक्तचित्तस्तदभावबुद्धिमान् । न चावस्थापककारणाभावे कार्यावस्थानं दृष्टम् । न हि स्तम्भावपाते प्रासादोऽवतिष्ठतेऽत आह-**सा च दग्धेन्धनाग्निवत्स्वयमेवोपशाम्यति** । तावदेव खल्वयं प्रवृत्त्युन्मुखो न यावदस्यानर्थहेतुभावमधिगच्छति । अनर्थहेतुत्वाधिगमोऽस्य समूलोद्धारं प्रवृत्तिमुद्धृत्य दग्धेन्धनाग्निवत्स्वयमेवोपशाम्यति । एतदुक्तं भवति-यथा प्रासादावस्थानकारणं स्तम्भौ नैवमौदासीन्यावस्थानकारणमभावबुद्धिः, अपि त्वागन्तुकाद्विनाशहेतोस्त्राणेनावस्थानकारणम् । यथा कमठपृष्ठनिष्ठुरः कवचः शस्त्रप्रहारत्राणेन राजन्यजीवावस्थानहेतुः । न च कवचापगमे चासति च शस्त्रप्रहारे राजन्यजीवनाश इति । उपसंहरति-**तस्मात्प्रसक्तक्रियानिवृत्त्यौदासीन्यमेवेति** । औदासीन्यमजानतोऽप्यस्तीति प्रसक्तक्रियानिवृ-

आनन्दगिरीय-न्यायनिर्णयः ।

**सा चेति** । प्रत्ययार्थेष्टोपायतानिषेधे प्रकृत्यर्थः स्वयमेव निवर्तते आपाततो हितोपायत्वबुद्ध्या प्रवृत्तस्य ततोऽधिकतरानर्थहेतुत्वबुद्धौ प्रवृत्त्ययोगादित्यर्थः । निषेधवाक्यानामित्थमर्थमुक्त्वा सिद्धार्थत्वमुपसंहरति-**तस्मादिति** । भावार्थाभावे कृत्यभावात्तदविनाभूतकार्याभावस्तच्छब्दार्थः । प्रकृत्यर्थस्य हननादेरिष्टोपायत्वं भ्रान्तिप्राप्तं प्रत्ययेनानूद्य नञा तन्निषेधे तस्यानर्थहेतुत्वबोधिनिषेधवाक्यं तन्निवृत्त्युपलक्षितौदासीन्ये पर्यवस्यतीत्यर्थः । ननु "नेक्षेतोद्यन्तमादित्यम्" [ मनुः ४-३७ ] इत्यादावीक्षणविरुद्धा संकल्पक्रिया नेक्ष इत्येवंलक्षणा विधीयते तथाऽत्रापि हननविरुद्धा न हन्यामिति संकल्पक्रिया विधीयतां तत्कथं निषेधवाक्यस्योक्तार्थत्वं तत्राऽऽह-**अन्यत्रेति** । तत्र हि तस्य ब्रह्मचारिणो व्रतमित्यनु-

 

तस्मात्पुरुषार्थानुपयोग्युपाख्यानादिभूतार्थवादविषयमानर्थक्याभिधानं द्रष्टव्यम्॥यदप्युक्तं–कर्तव्यविध्यनुप्रवेशमन्तरेण वस्तुमात्रमुच्यमानमनर्थकं स्यात्सप्तद्वीपा वसुमतीत्यादिवदिति तत्परिहृतम् ॥ रज्जुरियं नायं सर्प इति वस्तुमात्रकथनेऽपि प्रयोजनस्य दृष्टत्वात् ॥ ननु श्रुतब्रह्मणोऽपि यथापूर्वं संसारित्वदर्शनान्न रज्जुस्वरूपकथनवदर्थवत्त्वमित्युक्तम् ॥ अत्रोच्यते ॥ न ॥ अवगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुम् । वेदप्रमाणजनितब्रह्मात्मभावविरोधात् ॥ न हि शरीराद्यात्मा-

रत्नप्रभा ।

बटोर्व्रतमित्यनुष्ठेयक्रियावाचिव्रतशब्देन कार्यमुपक्रम्य "नेक्षेतोद्यन्तमादित्यम्" इति प्रजापतिव्रतमुक्तम् । अत उपक्रमबलात्तत्र नञ ईक्षणविरोधिसङ्कल्पक्रियालक्षणाङ्गीकृता । एवमगौरसुरा अधर्म इत्यादौ नामधात्वर्थयुक्तस्य नञः प्रतिषेधवाचित्वायोगाद् अन्यविरुद्धलक्षकत्वम् । एतेभ्यः प्रजापतिव्रतादिभ्योऽन्यत्राभावमेव नञर्थं मन्यामह इत्यर्थः । दुःखाभावफलके नञर्थे सिद्धे निषेधशास्त्रमानत्ववद्वेदान्तानां ब्रह्मणि मानत्वमिति भावः । तर्ह्यक्रियार्थानामानर्थक्यमिति सूत्रं किंविषयमिति तत्राह–तस्मादिति ॥ वेदान्तानां स्वार्थे फलवत्त्वाद्व्यर्थकथाविषयं तदित्यर्थः । यदपीत्यादि ॥ स्पष्टार्थम् । श्रवणज्ञानमात्रात् संसारानिवृत्तावपि साक्षात्काराज्जीवत एव मुक्तिर्दुरपह्नवेति सदृष्टान्तमाह–अत्रोच्यते इत्यादिना ॥ ब्रह्माह-

भामती ।

त्योपलक्ष्य विशिनष्टि । तत्किमक्रियार्थत्वेनानर्थक्यमाशङ्क्य क्रियार्थत्वोपवर्णनं जैमिनीयमसमञ्जसमेवेत्युपसंहारव्याजेन परिहरति–तस्मात्पुरुषार्थेति । पुरुषार्थानुपयोग्युपाख्यानादिविषयावक्रियार्थतया क्रियार्थतया च पूर्वोत्तरपक्षौ, न तूपनिषद्विषयौ । उपनिषदां स्वयंपुरुषार्थब्रह्मरूपावगमपर्यवसानादित्यर्थः । यदप्यौपनिषदात्मज्ञानमपुरुषार्थं मन्यमानेनोक्तम्–कर्तव्यविध्यनुप्रवेशमन्तरेणेति । अत्र निगूढाभिसंधिः पूर्वोक्तं परिहारं स्मारयति–तत्परिहृतमिति । अत्राक्षेप्ता स्वोक्तमर्थं स्मारयति–ननु श्रुतब्रह्मणोऽपीति । निगूढमभिसंधिं समाधातोद्घाटयति–अत्रोच्यते–नावगतब्रह्मात्मभावस्येति । सत्यं, न ब्रह्मज्ञानमात्रं

आनन्दगिरीय–न्यायनिर्णयः ।

ष्ठेयवाचिव्रतशब्दोपक्रमादेकस्मिन्वाक्ये प्रक्रमाधीनत्वादुपसंहारस्याऽऽख्यातान्वितेन नञा दृष्टोऽपि निषेधोऽननुष्ठेयत्वादुपेक्ष्यते । धात्वर्थयोगेन च पर्युदासो लक्ष्यते । तथा चेक्षणविरुद्धा क्रिया सामान्येन प्राप्ता तद्विशेषबुभुत्सायां सर्वक्रियाप्रत्यासन्नः संकल्प इत्यवगतमोक्ष इति तु संकल्पो नाऽऽद्रियते तत्पर्युदासविरोधात् । अतोऽनीक्षणसंकल्पलक्षणया तद्विधिपरत्वं युक्तम् । नैवं निषेधेष्वपवादकमस्तीति विरोधिक्रियालक्षणया नानुष्ठाननिष्ठतेत्यर्थः । आदिपदं समस्तपर्युदासविषयसंग्रहार्थम् । हननादावुद्युक्तपरश्वादिपरावर्तनस्य तन्निवृत्तित्वात्तद्भावे हननादिप्रागभावपालनसंभवादुक्तनिवृत्तेश्च नञर्थधीफलत्वात्तदर्थो हननादिगतेष्टोपायत्वाभाव एवेति द्रष्टव्यम् । ननु निषेधवाक्यवदकार्यार्थत्वेऽपि वेदान्तानामर्थवत्त्वं चेदर्थवादाधिकरणं कथमित्याशङ्क्य क्रियासंनिहितार्थवादादिविषयं तदित्याह–तस्मादिति । उपनिषदामुक्तरीत्याऽर्थवत्त्वं तच्छब्दार्थः। उपाख्यानशब्दः सामान्यार्थः। आदिशब्दस्तद्विशेषार्थः । आम्नायस्य क्रियार्थत्वादितिहेतोस्तद्बलेनाक्रियार्थानामप्रामाण्यपूर्वपक्षस्य विध्येकवाक्यत्वेन प्रामाण्यसिद्धान्तस्य चोपलक्षणार्थमानर्थक्याभिधानमित्युक्तम् । सर्वेषामेषामुक्तविषयत्वविशेषादुपनिषदामपि पुरुषार्थानवसायित्वादर्थवादाधिकरणविषयतेत्याशङ्क्य पूर्वपक्षोक्तमनुवदति–यदपीति । तत्रोक्तं परिहारं स्मारयति–तदिति । उक्तं वैषम्यं शङ्कते–नन्विति । ज्ञानमात्रादूर्ध्वं वा संसारित्वं तत्त्वसाक्षात्काराद्वा । तत्राऽऽद्यमङ्गीकुर्वन्नाह–अत्रेति । द्वितीयं निरस्यति–नेत्यादिना । तत्प्रपञ्चयति–न हीति । शाब्दज्ञानाभ्याससंस्कृतं चेतो ब्रह्मात्मसाक्षात्कारहेतुरिति पक्षं प्रतिक्षेप्तुं

१ वेदप्रमाणजनितेत्येतावत्क्वचिन्नास्ति ।

भिमानिनो दुःखभयादिमत्त्वं दृष्टमिति-तस्यैव वेदप्रमाणजनितब्रह्मात्मावगमे तदभिमाननिवृत्तौ तदेव मिथ्याज्ञाननिमित्तं दुःखभयादिमत्त्वं भवतीति शक्यं कल्पयितुम् ॥ न हि, धनिनो गृहस्थस्य धनाभिमानिनो धनापहारनिमित्तं दुःखं दृष्टमिति-तस्यैव प्रव्रजितस्य धनाभिमानरहितस्य तदेव धनापहारनिमित्तं दुःखं भवति ॥ न च, कुण्डलिनः कुण्डलित्वाभिमाननिमित्तं सुखं दृष्टमिति तस्यैव कुण्डलवियुक्तस्य कुण्डलित्वाभिमानरहितस्य तदेव कुण्डलित्वनिमित्तं सुखं भवति ॥ तदुक्तं श्रुत्या-"अशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः" [ छान्दो० ८ । १२ । १ ] इति ॥ शरीरे पतितेऽशरीरत्वं स्यान्न जीवत इति चेत् ॥ न ॥ सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात् ॥ न ह्यात्मनशरीरीत्यभिमानलक्षणं मिथ्याज्ञानं मुक्त्वाऽन्यतस्सशरीरत्वं शक्यं कल्पयितुम् ॥ नित्यमशरीरत्वम् । अकर्मनिमित्तत्वादित्यवोचाम ॥ तत्कृत-

रत्नप्रभा ।

मिति साक्षात्कारविरोधादित्यर्थः । तत्त्वविदो जीवन्मुक्तौ मानमाह-तदुक्तं श्रुत्येति । जीवतोऽशरीरत्वं विरुद्धमिति शङ्कते-शरीर इति ॥ आत्मनो देहसम्बन्धस्य भ्रान्तिप्रयुक्तत्वात्तत्त्वधिया तन्नाशरूपमशरीरत्वं जीवतो युक्तमित्याह-नेत्यादिना ॥ असङ्गात्मस्वरूपं त्वशरीरत्वं भ्रांत्यावृतं तत्त्वधिया जीवतो व्यज्यत इत्याह-नित्यमिति ॥ देहात्मनोः सम्बन्धः सत्य इति शंकते-तत्कृतेति ॥ तन्नाशार्थं

भामती ।

सांसारिकधर्मनिवृत्तिकारणमपि तु साक्षात्कारपर्यन्तम् । ब्रह्मसाक्षात्कारश्चान्तःकरणवृत्तिभेदः श्रवणमननादिजनितसंस्कारसचिवमनोजन्मा षड्जादिभेदसाक्षात्कार इव गान्धर्वशास्त्रश्रवणाभ्यासंस्कृतमनोयोनिः । स च निखिलप्रपञ्चमहेन्द्रजालसाक्षात्कारं समूलमुन्मूलयन्नात्मानमपि प्रपञ्चत्वाविशेषादुन्मूलयतीत्युपपादितमधस्तात् । तस्माद्रज्जुस्वरूपकथनतुल्यतैवात्रेति सिद्धम् । अत्र च वेदप्रमाणसूचितया वेदप्रमाणजनितेत्युक्तम् । अत्रैव सुखदुःखानुत्पादभेदेन निदर्शनद्वयमाह-न हि धनिन इति । श्रुतिमत्रोदाहरति-तदुक्तमिति । चोदयति-शरीरे पतित इति । परिहरति-न । सशरीरत्वस्येति । यदि वास्तवं सशरीरत्वं भवेन्न जीवतस्तन्निवर्तेत । मिथ्याज्ञाननिमित्तं तु तत् । तच्चोत्पन्नतत्त्वज्ञानेन जीवतापि शक्यं निवर्तयितुम् । यत्पुनरशरीरत्वं तदस्य स्वभाव इति न शक्यं निवर्तयितुं, स्वभावहानेन भावविनाशप्रसङ्गादित्याह-नित्यमशरीरत्वमिति । स्यादेतत् । न मिथ्याज्ञाननिमित्तं सशरीरत्वमपि तु धर्माधर्मनिमित्तं, तच्च स्वकारणधर्माधर्मनिवृत्तिमन्तरेण न निवर्तते । तन्निवृत्तौ च प्रायणमेवेति न जीवतोऽशरीरत्वमिति शङ्कते-तत्कृतेति । तदित्यात्मानं परामृशति । निराकरोति-

आनन्दगिरीय-न्यायनिर्णयः ।

वेदेत्यादिपदम् । तत्त्वसाक्षात्कारवतो दुःखानुदये दृष्टान्तमाह-न हीति । तस्यैव सांसारिकसुखानुत्पादे दृष्टान्तमाह-न चेति । तत्त्वविदो देहाद्यभिमानहीनस्य सांसारिकसर्वधर्मास्पर्शे मानमाह-तदुक्तमिति । जीवतोऽशरीरत्वं मम माता वन्ध्येतिवद्विरुद्धमिति शङ्कते-शरीर इति । आत्मनो देहसंगतेराविद्यकत्वात्तत्त्वज्ञानेन तद्ध्वस्तेर्जीवतोऽपि युक्तमशरीरत्वमित्याह-नेत्यादिना । तस्याऽऽविद्यकत्वमन्वयव्यतिरेकाभ्यां साधयति-न हीति । अशरीरत्वस्य स्वतस्त्वादपि जीवतस्तदविरुद्धमित्याह-नित्यमिति । आत्मनः सशरीरत्वमज्ञानादित्युक्तममृष्यन्नाशङ्कते-तत्कृतेति । न ह्यात्मन इत्यत्र प्रकृतात्मा तच्छब्दार्थः । आत्मनो देहसंबन्धाद्धर्मादिकर्तृत्वं स्वतो

१ जनितेत्येवावत्क्वचिन्न । २ सुखदुःखाभावयोर्दृष्टान्तद्वयम् । ३ लित्वाभिमाननि० पा० । ४ शरीरात्माभि० पा० । ५ स्वाभाविकत्वादित्यर्थः । ६ दिति चावो० पा० ।

**धर्माधर्मनिमित्तं सशरीरत्वमिति चेत् ॥ न ॥ शरीरसम्बन्धस्यासिद्धत्वाद्धर्माधर्मयोरात्मकृतत्वासिद्धेः ॥ शरीरसम्बन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसंगादन्धपरम्परैवैषाऽनादित्वकल्पना ॥ क्रियासमवायाभावाच्चात्मनः कर्तृत्वानुपपत्तेः ॥ सन्निधानमात्रेण राजप्रभृतीनां दृष्टं कर्त्तृत्वमिति चेत् ॥ न ॥ धनदानाद्युपार्जितभृत्यसम्बन्धित्वात्तेषां कर्त्तृत्वोपपत्तेर्न त्वात्मनो धनदानादिवच्छरीरादिभिः स्वस्वामिसम्बधनिमित्तं किञ्चिच्छक्यं कल्पयितुम् ॥**

---

रत्नप्रभा ।

कार्यापेक्षेति भावः । आत्मनः शरीरसम्बन्धे जाते धर्माधर्मोत्पत्तिः, तस्यां सत्यां सम्बन्धजन्मेत्यन्योन्याश्रयादेकस्यासिद्धया द्वितीयस्यासिद्धिः स्यादिति परिहरति—**नेत्यादिना** ॥ नन्वेतद्देहजन्यधर्माधर्मकर्मण एतद्देहसम्बन्धहेतुत्वे स्यादन्योन्याश्रयः पूर्वदेहकर्मण एतद्देहसम्बन्धोत्पत्तिः, पूर्वदेहश्च तत्पूर्वदेहकृतकर्मण इति बीजांकुरवदनादित्वान्नायं दोष इत्यत आह—**अन्धेति** ॥ अप्रामाणिकीत्यर्थः । न हि बीजादंकुरः, ततो बीजान्तरं च यथा प्रत्यक्षेण दृश्यते, तद्वदात्मनो देहसम्बन्धः पूर्वकर्मकृतः प्रत्यक्षः । नाप्यस्ति कश्चिदागमः, प्रत्युत असङ्गो हीत्यादिः श्रुतिः सर्वकर्तृत्वं वारयतीति भावः । तत्र युक्तिमाह—**क्रियेति** ॥ कूटस्थस्य कृत्ययोगान्न कर्त्तृत्वमित्यर्थः । स्वतो निष्क्रियस्यापि कारकसन्निधानात् कर्त्तृत्वमिति शंकां दृष्टान्तवैषम्येण निरस्यति—**नेति** ॥ राजादीनां स्वक्रीतभृत्यकार्ये कर्तृत्वं युक्तं नात्मन इत्यर्थः । देह-

भामती ।

**न, शरीरसंवन्धस्येति** । न तावदात्मा साक्षाद्धर्माधर्मौ कर्तुमर्हति, वाग्बुद्धिशरीरारम्भजनितौ हि तौ नासति शरीरसंवन्धे भवतः, ताभ्यां तु शरीरसंवन्धं रोचयमानो व्यक्तं परस्पराश्रयं दोषमावहति । तदिदमाह—**शरीरसंबन्धस्येति** । यद्युच्येत सत्यमस्ति परस्पराश्रयः, न त्वेष दोषोऽनादित्वाद्बीजाङ्कुरवदित्यत आह—**अन्धपरंपरैषानादित्वकल्पना** । यस्तु मन्यते नेयमन्धपरंपरातुल्यानादिता । न हि यतो धर्माधर्मभेदादात्मशरीरसंबन्धभेदस्तत एव स धर्माधर्मभेदः किंत्वेष पूर्वस्मादात्मशरीरसंबन्धात्पूर्वधर्माधर्मभेदजन्मनः, एष त्वात्मशरीरसंबन्धोऽस्माद्धर्माधर्मभेदादिति, तं प्रत्याह—**क्रियासमवायाभावादिति** । शंकते—**संनिधानमात्रेणेति** । परिहरति—**नेति** । उपार्जनं स्वीकरणम् । न त्वियं विधात्मनीत्याह—**न त्वात्मन इति** । ये तु देहादावात्माभिमानो न मिथ्या अपि तु गौणः, माणवकादाविव सिंहाभिमान

आनन्दगिरीय–न्यायनिर्णयः ।

वा ? आद्ये तस्य तद्योगः स्वतोऽन्यतो वा । नाऽऽद्यः, तत्कृतधर्मादिनिमित्तं सशरीरत्वमित्युक्तिविरोधात् । न द्वितीयः, तस्याविद्यामनिच्छता वस्तुत्वोपगमाद्धर्मादिकर्तृत्वादृते तस्यातन्निमित्तत्वाद्देहे धर्मादिकार्यदृष्टेस्तदसिद्धौ तद्द्वारा धर्मादेरात्मकृतत्वासिद्धेरित्याह—**नेत्यादिना** । स्यादात्मकृतधर्माद्यपेक्षया तस्य देहयोगे तद्द्वारा तयोरात्मकृतत्वमित्याशंक्याऽऽह—**शरीरेति** । ननु प्राक्तनकर्मनिमित्तं संप्रतितनं शरीरं तच्च कर्म प्राक्तनदेहयोगाधीनं सोऽपि प्राचीनकर्मणेति नेतरेतराश्रयत्वम् । न चानवस्था बीजांकुरवत्कर्मदेहयोगयोरनादित्वात्तत्राऽऽह—**अन्धेति** । आत्मनि कर्मयोगस्य देहयोगस्य वाऽविद्यमानत्वादित्यर्थः । आत्मनः स्वतो धर्माद्यकर्तृतेतिपक्षं प्रत्याह—**क्रियेति** । कूटस्थानन्तचिद्धातोरक्रियत्वात्तस्य स्वतो धर्मादिकर्तृत्वान्न तत्कृतकर्मकृतमात्मनः सशरीरत्वमित्यर्थः । स्वगतक्रियाभावेऽपि कारकेषु संनिधिमात्रेणास्य कर्तृतेति दृष्टान्तेन शङ्कते—**संनिधीति** । वैषम्योक्त्या प्रत्याह—**नेति** । उपार्जनं स्वीकरणम् । अस्तु प्रस्तुतेऽपि किंचिद्धनदानादितुल्यं संबन्धनिमित्तमित्याशंक्यासङ्गत्वादात्मनो वस्तुतस्तस्यायोगादवस्तुत्वे तन्मतहानिरिति मत्वाऽऽह—**न त्विति** । स्वकृतधर्मादिकृताऽऽत्मनः सदेहते-

**मिथ्याभिमानस्तु प्रत्यक्षः सम्बन्धहेतुः ॥ एतेन यजमानत्वमात्मनो व्याख्यातम् ॥ अत्राहुः–देहादिव्यतिरिक्तस्यात्मन आत्मीये देहादावभिमानो गौणः, न मिथ्येति चेत ॥ न ॥ प्रसिद्धवस्तुभेदस्य गौणत्वमुख्यत्वप्रसिद्धेः–यस्य हि प्रसिद्धो वस्तुभेदः, यथा–केसरादिमानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाङ् मुख्योऽन्यः प्रसिद्धः, ततश्चान्यः पुरुषः प्रायिकैः क्रौर्यशौर्यादिभिस्सिंहगुणैस्सम्पन्नस्सिद्धस्तस्य पुरुषे सिंहशब्दप्रत्ययौ गौणौ भवतः, न । प्रसिद्धवस्तुभेदस्य–तस्य त्वन्यत्रान्यशब्दप्रत्ययौ भ्रान्तिनिमित्तावेव भवतः । न गौणौ ॥**

रत्नप्रभा ।

कर्मणोरविद्याभूमौ बीजांकुरवदावर्तमानयोरात्मना सम्बन्धो भ्रान्तिकृत एवेत्याह–**मिथ्येति** ॥ ननु "यजेत" इति विध्यनुपपत्त्यात्मनः कर्तृत्वमेष्टव्यमिति तत्राह–**एतेनेति** ॥ भ्रान्तिकृतेन देहादिसम्बन्धेन यागादिकर्तृत्वमाब्रह्मबोधाद्व्याख्यातमित्यर्थः॥ **अत्राहुः** । प्राभाकरा इत्यर्थः । भ्रान्त्यभावाद्देहसम्बन्धादिकं सत्यमिति भावः । भेदज्ञानाभावान्न गौण इत्याह–**नेति** ॥ प्रसिद्धो ज्ञातो वस्तुनोर्भेदो येन **तस्य** गौणमुख्यज्ञानाश्रयत्वप्रसिद्धेरित्यर्थः ॥ यस्य तस्य पुंसो गौणौ भवत **इत्यन्वयः** ॥ शौर्यादिगुणविषयावित्यर्थः ॥ **तस्य त्विति** । भेदज्ञानशून्यस्य पुंस इत्यर्थः ॥ **शब्दप्रत्ययाविति** । शब्दः,

भामती ।

इति मन्यन्ते तन्मतमुपन्यस्य दूषयति–**अत्राहुरिति** । प्रसिद्धो वस्तुभेदो यस्य पुरुषस्य स तथोक्तः । उपपादितं चैतदस्माभिरध्यासभाष्य इति नेहोपपाद्यते । यथा मन्दान्धकारे स्थाणुरयमित्यगृह्यमाणविशेषे वस्तुनि पुरुषात्, सांशयिकौ पुरुषशब्दप्रत्ययौ स्थाणुविषयौ, तत्र हि पुरुषत्वमनियतमपि समारोपितमेव । एवं संशये समारोपितमनिश्चितमुदाहृत्य विपर्ययज्ञाने निश्चितमुदाहरति–**यथा वा शुक्तिकायामिति** । शुक्लभास्वरस्य द्रव्यस्य पुरःस्थितस्य सति शुक्तिकारजतसाधारण्ये यावदत्र रजतविनिश्चयो भवति तावत्कस्माच्छुक्तिविनिश्चय एव न भवति । संशयो वा द्वेधा युक्तः, समानधर्मधर्मिणोर्दर्शनात् उपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषद्वयस्मृतेश्च । संस्कारोन्मेषहेतोः सादृश्यस्य द्विष्ठत्वेनोभयत्र तुल्यमेतदित्यत उक्तम्–

आनन्दगिरीय–न्यायनिर्णयः ।

त्येतदप्रामाणिकमित्युक्त्वा स्वपक्षे मानमाह–**मिथ्येति** । ननु ममेतिधीसक्तमधिकारिणं कर्तारं चोद्दिश्य यागादिविधेश्चेतनस्यैव कर्तृत्वम् । यथाऽऽहुः–"यजमानत्वमप्यात्मा सक्रियत्वात्प्रपद्यते । न परिस्पन्द एकैका क्रिया नः कणभोजिवत्" इति तत्राह–**एतेनेति** । क्रियाधारत्वनिरासेनेत्यर्थः । देहादावात्मधीर्मिथ्येत्यत्र मीमांसकश्चोदयति–**अत्रेति** । आत्मनः स्वकीये देहादावात्मधी राज्ञो भृत्यादाविव गौणी ततः स्वीयदेहादिनिमित्तं तस्य कर्तृत्वादि वास्तवमित्यर्थः । नाऽऽत्मनो देहादावात्मधीर्गौणी तद्व्यापकाभावादित्याह–**नेति** । प्रसिद्धो वस्तुभेदो यस्य पुंसस्तस्येति यावत् । उक्तमेव व्यनक्ति–**यस्येति** । तस्यान्यत्रान्यशब्दप्रत्ययौ गौणाविति संबन्धः । तत्रोदाहरणम्–**यथेति** । तत्रैव सिंहशब्दस्तद्धीश्च नान्यत्रेत्यन्वयव्यतिरेकावन्यः पुरुषादिति शेषः । ततश्च सिंहादित्येतत । यः सिंहपुरुषयोरुक्तरीत्या भेदं वेत्ति तस्येति षष्ठी नेया । यथा सिंहः पुमानित्युदाहरणं तथाऽग्निर्माणवक इत्यादि ग्राह्यमिति यथाशब्दो योज्यः । शब्दधियोरगौणत्वविषयमाह–**नेति** । न प्रसिद्धो भेदो यस्य तस्य पुंसोऽन्यत्रान्यशब्दप्रत्ययौ न गौणौ चेत्कथं तर्हि तस्यान्यत्रान्यशब्दप्रत्ययावित्याशंक्याऽऽह–**तस्य त्विति** ।

१ आत्मनः क्रियाकर्तृत्वनिरासेनेत्यर्थः । २ यस्य प्रसिद्धस्सिद्धश्च तस्येत्यर्थः । ३ ब्रह्मबोधपर्यन्तं नामतद्विहायेत्यर्थः ।

यथा–मन्दान्धकारे स्थाणुरयमित्यगृह्यमाणविशेषे पुरुषशब्दप्रत्ययौ स्थाणुविषयौ, यथा वा–शुक्तिकायामकस्माद्रजतमिदमिति निश्चितौ शब्दप्रत्ययौ,–तद्वद्देहादिसङ्घातेऽहमिति निरुपचारेण शब्दप्रत्ययावात्मानात्मविवेकेनोत्पद्यमानौ कथं गौणौ शक्यौ वदितुम् ॥ आत्मानात्मविवेकिनामपि पण्डितानामजाविपालानामिवाविविक्तौ शब्दप्रत्ययौ भवतः ॥ तस्माद्देहादिव्यतिरिक्तात्मास्तित्ववादिनां देहादावहम्प्रत्ययो मिथ्यैव, न गौणः ॥ तस्मान्मिथ्याप्रत्ययनिमित्तत्वात्सशरीरत्वस्य सिद्धं जीवतोऽपि विदुषोऽशरीरत्वम् ॥ तथा च ब्रह्मविद्विषया श्रुतिः–"तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदँ शरीरं शेते अथायमशरीरोऽमृतः–

---

रत्नप्रभा ।

शाब्दबोधश्चेत्यर्थः । संशयमूलौ तावुदाहरति–**यथा मन्देति** ॥ यदा संशयमूलयोर्न गौणत्वं तदा भ्रान्तिमूलयोः किं वाच्यमित्याह–**यथा वेति** ॥ **अकस्मादिति** । अतर्कितादृष्टादिना संस्कारोद्बोधे सतीत्यर्थः ॥ **निरुपचारेण** । गुणज्ञानं विनेत्यर्थः ॥ **देहादिव्यतिरिक्तात्मास्तित्ववादिनामिति** । देहात्मवादिनां तु प्रमेत्यभिमान इति भावः । जीवन्मुक्तौ प्रमाणमाह–**तथा चेति** ॥ **तत्** तत्र जीवन्मुक्तस्य देहे **यथा** दृष्टान्तः । **अहिनिर्ल्वयनी** सर्पत्वक् वल्मीकादौ **प्रत्यस्ता** निक्षिप्ता **मृता** सर्पेण त्यक्ताभिमाना वर्तते । **एवमेवेदं** विदुषा त्यक्ताभिमानं शरीरं तिष्ठति । **अथ तथा** त्वचा निर्मुक्तसर्पवदेव **अयम्** देहस्थः । **अशरीरः** विदुषो देहसर्पस्य त्वचीवाभिमानाभावाद् । अशरीरत्वाद् **अमृतः** । प्राणि-

भामती ।

**अकस्मादिति** । अनेन दृष्टस्य हेतोः समानत्वेऽप्यदृष्टं हेतुरुक्तः । तच्च कार्यदर्शनोन्नेयत्वेनासाधारणमिति भावः ॥ **आत्मानात्मविवेकिनामिति** । श्रवणमननकुशलतामात्रेण पण्डितानाम् । अनुत्पन्नतत्त्वसाक्षात्काराणामिति यावत् । तदुक्तम्–'पश्वादिभिश्चाविशेषात्' इति । शेषमतिरोहितार्थम् । जीवतो विदुषोऽशरीरत्वे च श्रुतिस्मृती उदाहरति–**तथा चेति** । सुबोधम् । प्रकृतमुपसंहरति–

आनन्दगिरीय–न्यायनिर्णयः ।

तत्र संशये समारोपितांशगतौ शब्दप्रत्ययावुदाहरति–**यथेति** । पुरोवर्तिनः स्थाणुत्वेऽपि स्थाणुरयमित्यगृह्यमाणविशेषत्वे हेतुमाह- **मन्देति** । तत्र पुरुषशब्दप्रत्ययौ पाक्षिकाविति शेषः । वस्तुतः स्थाणुविषयत्वं न प्रतीतितः, प्रतीतितस्त्वारोपितविषयत्वम् । संशये समारोपितगतौ पाक्षिकौ शब्दप्रत्ययावुदाहृत्य विपर्यये तथाविधौ निश्चितावुदाहरति–**यथा वेति** । शुक्तिकायामिति वस्तुप्रवृत्त्योक्तम् । संशये विपर्यये च दृष्टहेतुसाधारणधर्मदर्शनादेः समत्वाद्विपर्ययस्यैवोत्पत्तौ को हेतुरित्याशंक्याऽऽह–**अकस्मादिति** । दृष्टहेत्वविशेषेऽप्यदृष्टवशादित्यर्थः । दृष्टान्तमिथुनस्य दार्ष्टान्तिकमाह–**तद्वदिति** । अविवेकिनां देहादावहंधीशब्दयोर्मिथ्यात्वेऽपि विवेकिनां तत्र तौ गौणावित्याशंक्याऽऽह–**आत्मेति** । अविविक्तावविवेकोत्थभ्रान्तिकृताविति यावत् । आत्मीयेऽपि देहादावात्मबुद्धावात्मीयत्वं तिरोहितं सर्पबुद्धाविव रज्जुत्वमिति मत्वा परमतनिरासमुपसंहरति–**तस्मादिति** । तत्राहंधियो मिथ्यात्वेऽपि किं सिध्यति तदाह–**तस्मान्मिथ्येति** । न केवलं विदुषो जीवतोऽप्यशरीरत्वं यौक्तिकं किंतु श्रौतं चेत्याह–**तथा चेति** । अत्र ब्रह्म समश्नुत इति पूर्ववाक्ये जीवन्मुक्तिरुक्ता । स जीवन्मुक्तो देहस्थोऽपि पूर्ववन्न संसारीत्यत्र दृष्टान्तमाह–**तद्यथेति** । तत्तत्र जीवन्मुक्तदेहे जीवन्मुक्ते च दृष्टान्तः । यथा लोकेऽहिनिर्ल्वयनी सर्पनिर्मोकस्तदीया देहत्वग्वल्मीकादौ प्रत्यस्ता प्रक्षिप्ता मृता पूर्वमिवाहिनाऽऽत्मत्वेनानिष्टा वर्तेत तथैवेदं विदुषः शरीरं मुक्तेन प्रागिवाऽऽत्मत्वेनानिष्टं तिष्ठतीत्यर्थः । सर्पदृष्टान्तस्य दार्ष्टान्तिकमाह–**अथेति** । तथार्थोऽथशब्दः । यथा प्रत्यस्तया त्वचा मुक्तोऽपि तामहमिति नाहिरभिमन्यते

प्राणो ब्रह्मैव तेज एव" [ बृ० ४ । ४ । ७ ] इति । "सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव" इति च । स्मृतिरपि च-"स्थितप्रज्ञस्य का भाषा" [भ०गी०२।५४] इत्याद्या स्थितप्रज्ञलक्षणान्याचक्षाणा विदुषस्सर्वप्रवृत्त्यसम्बन्धं दर्शयति ॥ तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वम् ॥ यस्य तु यथापूर्वं संसारित्वं नासाववगतब्रह्मात्मभाव इत्यनवद्यम् ॥ यत्तु पुनरुक्तं-श्रवणात्पराचीनयोर्मनननिदिध्यासनयोर्दर्शनाद्विधिशेषत्वं ब्रह्मणो न स्वरूपपर्यवसायित्वमिति ॥ न ॥ अवगत्यर्थत्वान्मनननिदिध्यासनयोः ॥ यदि ह्यवगतं ब्रह्मान्यत्र विनियुज्येत, भवेत्तदा विधिशेषत्वम् , न तु तदस्ति ॥ मनननिदिध्यासनयोरपि श्रवणवदवगत्यर्थत्वात् ॥

---

रत्नप्रभा ।

तीति **प्राणो** जीवन्नपि **ब्रह्मैव** ॥ किं तद्ब्रह्म **तेजः** स्वयंज्योतिः । आनन्द एवेत्यर्थः । **वस्तुतोऽच**क्षुरपि बाधितचक्षुराद्यनुवृत्त्या सचक्षुरित्यादि **योज्यम्** ॥ **इत्यनवद्यमिति** । ब्रह्मात्मज्ञानान्मुक्तिलाभात् सिद्धं वेदान्तानां प्रामाण्यं हितशासनाच्छास्त्रत्वं च निर्दोषतया स्थितमित्यर्थः । ब्रह्मज्ञानमुद्दिश्य श्रवणवन्मनननिदिध्यासनयोरप्यवान्तरवाक्यभेदेन विध्यङ्गीकारान्न ब्रह्मणो विधिशेषत्वमुद्देश्यज्ञानलभ्यतया प्राधान्यादित्याह-**नेति** ॥ श्रवणं, ज्ञानकरणवेदान्तगोचरत्वात् । प्रधानं, मनननिदिध्यासनयोः प्रमेयगोचरत्वात्तदङ्गत्वं, नियमादृष्टस्य ज्ञाने उपयोगः **सर्वापेक्षान्यायादिति** मन्तव्यम् । तर्हि ज्ञाने विधिः किमिति त्यक्तः, तत्राह-**यदि हीति** ॥ **यदि** ज्ञाने विधिमङ्गीकृत्य वेदान्तैरवगतं ब्रह्म विधेयज्ञाने कर्म

भामती ।

**तस्मान्नावगतब्रह्मात्मभावस्येति** । ननूक्तं यदि जीवस्य ब्रह्मात्मत्वावगतिरेव सांसारिकधर्मनिवृत्तिहेतुः, हन्त मननादिविधानानर्थक्यं, तस्मात्प्रतिपत्तिविधिपरा वेदान्ता इति, तदनुभाष्य दूषयति-**यत्तुपुनरुक्तं श्रवणात्पराचीनयोरिति** । मनननिदिध्यासनयोरपि न विधिः, तयोरन्वयव्यतिरेकसिद्धसाक्षात्कारफलयोर्विधिसरूपैर्वचनैरनुवादात् । तदिदमुक्तम्-**अवगत्यर्थत्वादिति** । ब्रह्मसाक्षात्कारोऽवगतिस्तदर्थत्वं मनननिदिध्यासनयोरन्वयव्यतिरेकसिद्धमित्यर्थः । अथ कस्मान्मननादिविधिरेव न भवतीत्यत आह-**यदि ह्यवगतमिति** । न तावन्मनननिदिध्यासने प्रधानकर्मणी अपूर्वविषये अमृतत्वफले इत्युक्तमधस्तात् । अतो

आनन्दगिरीय-न्यायनिर्णयः ।

तथाऽयं जीवन्मुक्तो देहस्थोऽपि न तत्राहंधियमादधाति । अत एवामृतो देहाभिमानवतो हि मृतिर्निरुपाधिः सन्प्राणिति जीवतीति प्राणः साक्षी । स च ब्रह्मैव तच्च तेजो विज्ञानं ज्योतिरेवेत्यर्थः । तत्रैव श्रुत्यन्तरमाह-**सचक्षुरिति** । वस्तुतोऽचक्षुरपि बाधितानुवृत्त्या सचक्षुरित्यादि योज्यम् । श्रौतेऽर्थे स्मृतिमपि संवादयति-**स्मृतिरपीति** । विदुषो जीवन्मुक्तौ प्रमितायां फलितमाह-**तस्मान्नेति**।प्रमितं जीवन्मुक्तिसत्त्वं तच्छब्दार्थः। प्रतीतिमात्रशरीरं संसारित्वमनुजानाति-**यथेति** । ननु ब्रह्मविदामेवास्माकं संसारित्वमबाधितमनुभूयते नेत्याह-**यस्येति** । साक्षात्कृततत्त्वस्य पूर्वमिव संसारित्वायोगाद्युक्ता वस्तुमात्रोक्ते रज्जुस्वरूपोक्तिवदर्थवत्तेत्युपसंहरति-**अनवद्यमिति** । वेदान्तेषु नास्ति वस्तुमात्रोक्तिर्मननादिविधिशेषत्वेन ब्रह्मोक्तेरित्याशंक्योक्तमनुवदति-**यत्तु पुनरिति** । श्रुतमात्रस्य मननादियोगो नावगतस्येत्याह-**नेत्यादिना** । वेदान्तानामेकरसे ब्रह्मणि शक्तितात्पर्यनिश्चयः श्रवणम् । तस्मिन्नेव श्रुत्यनुसारिण्या युक्त्या संभावनाधानं मननम् । श्रुते मते च बुद्धेः स्थैर्यं निदिध्यासनम् । तेषामैक्यापरोक्षप्रतीतिव्यञ्जकत्वे तच्छेषत्वान्नावगतमन्यत्र विनियुक्तमित्यर्थः । अवगतस्यान्यत्राविनियोगेऽपि ब्रह्मणो विधिशेषत्वं किं न स्यात्तत्राऽऽह-**यदीति** । ब्रह्मणि मितेऽमिते वा तद्धियो विध्यसिद्धेरापातदृष्टेः साक्षात्कारार्थं श्रवणादिषु विहितेषु

**तस्मान्न प्रतिपत्तिविधिविषयतया शास्त्रप्रमाणकत्वं ब्रह्मणस्सम्भवतीति । अतस्स्वतन्त्रमेव ब्रह्म शास्त्रप्रमाणकम् । वेदान्तवाक्यसमन्वयादिति सिद्धम् ॥ एवं च सति "अथातो ब्रह्मजिज्ञासा" [१।१।१] इति तद्विषयः पृथक् शास्त्रारम्भ उपपद्यते ॥ प्रतिपत्तिविधिपरत्वे हि "अथातो धर्मजिज्ञासा" [जै० सू० १।१।१] इत्येवारब्धत्वान्न पृथक्छास्त्रमारभ्येत ॥ आरभ्यमाणं चैवमारभ्येत–"अथातः परिशिष्टधर्मजिज्ञासा" इति "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" [पू० मी० ४।१।१] इतिवत् ॥**

रत्नप्रभा ।

कारकत्वेन विनियुज्येत, **तदा** विधिशेषत्वं स्यात् । न त्ववगतस्य विनियुक्तत्वमस्ति । प्राप्ताऽवगत्या फललाभे विध्ययोगादित्यर्थः । **तस्मात्** विध्यसम्भवात् **अतः** शेषत्वासम्भवात् सत्यादिवाक्यैर्लब्धज्ञानेन अज्ञाननिवृत्तिरूपफललाभे सतीत्यर्थः । सूत्रं योजयति–**स्वतन्त्रमिति** ॥ **एवं च सतीति** । चोऽवधारणे । उक्तरीत्या ब्रह्मणः स्वातन्त्र्ये सत्येव भगवतो व्यासस्य पृथक् शास्त्रकृतिर्युक्ता, धर्मविलक्षणप्रमेयलाभात् वेदान्तानाम् । कार्यपरत्वे तु प्रमेयाभेदान्न युक्तेत्यर्थः । **ननु** मानसधर्मविचारार्थं पृथगारम्भ इत्याशङ्क्याह–**आरभ्यमाणं चेति** ॥ **अथ** बाह्यसाधनधर्मविचारानन्तरम्, **अतः** बाह्यधर्मस्य शुद्धिद्वारा मानसोपासना धर्महेतुत्वात्, परिशिष्टो मानसधर्मो जिज्ञास्य इति सूत्रं स्यादित्यत्र दृष्टान्तमाह–**अथेति** ॥ तृतीयाध्याये श्रुत्यादिभिः शेषशेषित्वनिर्णयानन्तरं शेषिणा शेषस्य प्रयोगसम्भवात् कः क्रतुशेषः को वा पुरुषशेष इति जिज्ञास्यत इत्यर्थः । **एवमारभ्येत** न त्वारब्धं तस्मादवान्तरधर्मार्थ-

भामती ।

गुणकर्मत्वमनयोरवघातप्रोक्षणादिवत्परिशिष्यते । तदप्ययुक्तम्, अन्यत्रोपयुक्तोपयोक्ष्यमाणत्वाभावादात्मनः । विशेषतस्त्वौपनिषदस्य कर्मानुष्ठानविरोधादित्यर्थः । प्रकृतमुपसंहरति–**तस्मादिति** । एवं सिद्धरूपब्रह्मपरत्वमुपनिषदाम् । ब्रह्मणः शास्त्रार्थस्य धर्मादन्यत्वाद्भिन्नविषयत्वेन शास्त्रभेदात् 'अथातो ब्रह्मजिज्ञासा' इत्यस्य शास्त्रारम्भत्वमुपपद्यत इत्याह–**एवं च सतीति** । इतरथा तु धर्मजिज्ञासैवेति न शास्त्रान्तरमिति न शास्त्रारम्भत्वं स्यादित्यत आह–**प्रतिपत्तिविधिपरत्व इति** । न केवलं सिद्धरूप-

आनन्दगिरीय–न्यायनिर्णयः ।

तेभ्यस्तद्भावान्न तस्य विधिशेषतेत्युपसंहरति–**तस्मान्नेति** । न च वस्तुप्रकरणे श्रवणादिविध्ययोगो वाक्यभेदोपगमात् । न च तद्विषये लिङादय इत्यादिभाष्यविरोधस्तस्य ज्ञानविधिनिरासार्थत्वात् । अत एवात्र प्रतिपत्तिशब्दः । न चैवं वेदान्तानां श्रवणादिविधिपरत्वं वाक्यभेदस्योक्तत्वात् । न चान्वयादिसिद्धहेतुभावेषु तेषु न विधिरवघातेऽपि तदभावापातात् । नियमादृष्टस्योभयत्र तुल्यत्वात्सर्वापेक्षाधिकरणात्तस्य ज्ञानोत्पत्त्युपयोगादिति भावः । उक्तेऽर्थे सूत्रं संयोजयति–**अत इति** । विधिशेषत्वेन शास्त्रप्रमाणकत्वासिद्धिरित्यतःशब्दार्थः । वेदान्तानां विध्यनपेक्षसिद्धबोधित्वे शास्त्रारम्भभेदं प्रमाणयति–**एवं चेति** । विधिशेषत्वेन ब्रह्मार्पणेऽपि शास्त्रं पृथगारभ्येतेत्याशंक्याऽऽह–**प्रतिपत्तीति** । नन्वाद्ये काण्डे बाह्यक्रियाविधिरधिगतो मानसज्ञानविधिविचाराय काण्डान्तरमारभ्यते, नेत्याह–**आरभ्यमाणं चेति** । देहादिसाध्यकर्मविचारानन्तर्यमथेत्युक्तम् । तस्यैव चित्तशुद्धिद्वारा ज्ञानविधिविचारोपयोगिताऽतःशब्दार्थः । तत्र चातुर्थिकमुदाहरणमाह–**अथात इति** । तृतीये श्रुत्यादिभिः शेषशेषित्वे सिद्धे सत्यनन्तरं शेषिणैव शेषस्य प्रयुक्तिसंभवात्को नाम क्रतवे प्रकुरुते को वा पुरुषार्थायेति क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ज्ञातुमिच्छा प्रवृत्तेति चतुर्थादौ प्रतिज्ञासूत्रवदिदमपि ब्रूयात् । न चैवं ब्रवीति । तस्मान्नोक्तविभागधीरित्यर्थः ।

१ तद्विषयः पृथगित्येतावत्कचिन्नास्ति । २ पूर्वमीमांसायामित्यादिः ।

**ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति तदर्थो युक्तश्शास्त्रारम्भः "अथातो ब्रह्मजिज्ञासा" [ १ । १ । १ ] इति ॥ तस्माद् "अहं ब्रह्मास्मि" [ बृ० १ । ४ । १० ] इत्येतदवसाना एव सर्वे विधयस्सर्वाणि चेतराणि प्रमाणानि ॥ न ह्यहेयानुपादेयाद्वैतात्मावगतौ निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्तीति ॥ अपि चाहुः-(श्लो०) "गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात् ॥ सद्ब्रह्मात्माहमित्येवंबोधे कार्यं कथं भवेत्॥१॥**

रत्नप्रभा ।

मारम्भ इत्ययुक्तमिति भावः । स्वमते सूत्रानुगुण्यमस्तीत्याह–**ब्रह्मेति** ॥ जैमिनिना[1] ब्रह्म न विचारितमिति तज्जिज्ञास्यत्वसूत्रणं युक्तमित्यर्थः । वेदान्तार्थश्चेदद्वैतं **तर्हि** द्वैतसापेक्षविध्यादीनां का गतिरित्याशङ्क्य, ज्ञानात् प्रागेव तेषां प्रामाण्यं न पश्चादित्याह–**तस्मादिति** ॥ ज्ञानस्य प्रमेयप्रमातृबाधकत्वादित्यर्थः । ब्रह्म न कार्यशेषः, तद्बोधात् प्रागेव सर्वव्यवहार इत्यत्र ब्रह्मविदां गाथामुदाहरति[2]–**अपि चेति** ॥ सदबाधितं ब्रह्म पूर्णमात्मा विषयानादत्त[3] इति सर्वसाक्ष्यहमित्येवं बोधे जाते सति पुत्रदेहादेः सत्ताबाधनात्, मायामात्रत्वनिश्चयात्, पुत्रदारादिरहमिति स्त्रीयदुःखसुखभाक्त्वगुणयोगाद्गौणात्माभिमानस्य, नरोऽहं, कर्त्ता, मूढः, इति मिथ्यात्माभिमानस्य च सर्वव्यवहारहेतोः **सत्त्वे कार्यं** विधिनिषेधादिव्यवहारः[4] **कथं भवेत्** ॥ हेत्वभावान्न कथंचिद्भवेदित्यर्थः ॥ नन्वहं ब्रह्मेति बोधो बाधितः । अह-

भामती ।

त्वाद्ब्रह्मात्मैक्यस्य धर्मादन्यत्वमपि तु तद्विरोधादपीत्युपसंहारव्याजेनाह–**तस्मादहं ब्रह्मास्मीति** । इतिकरणेन ज्ञानं परामृशति । विधयो हि धर्मे प्रमाणम् । ते च साध्यसाधनेतिकर्तव्यताभेदाधिष्ठाना धर्मोपपादिनश्च तदधिष्ठाना न ब्रह्मात्मैक्ये सति प्रभवन्ति, विरोधादित्यर्थः । न केवलं धर्मप्रमाणस्य शास्त्रस्येयं गतिः, अपि तु सर्वेषां प्रमाणानामित्याह–**सर्वाणि चेतराणि प्रमाणानीति** । कुतः, **न हीति** । अद्वैते हि विषयविषयिभावो नास्ति । न च कर्तृत्वं, कार्याभावात् । न च करणत्वम्, अत एव तदिदमुक्तम्–**अप्रमातृकाणि च** इति चकारेण । अत्रैव ब्रह्मविदां गाथामुदाहरति–**अपि चाहुरिति** । पुत्रदारादिष्वात्माभिमानो गौणः । यथा स्वदुःखेन दुःखी यथा स्वसुखेन सुखी तथा पुत्रादिगतेनापीति सोऽयं गुणः । न त्वेकत्वाभिमानः, भेदस्यानुभवसिद्धत्वात् । तस्माद्गौर्वाहीक इतिवद्गौणः, देहेन्द्रियादिषु त्वभेदानुभवान्न गौण आत्माभिमानः, किंतु शुक्तौ रजतज्ञानवन्मिथ्या । तदेवं द्विविधोऽयमात्माभिमानो लोकयात्रां वहति । तदसत्त्वे तु न लोकयात्रा, नापि ब्रह्मात्मैकत्वानुभवः, तदुपायस्य श्रवणमननादेरभावात् । तदिदमाह–**पुत्रदेहादिबाधनात्** । गौणात्मनोऽसत्त्वे पुत्रकलत्रादिबाधनम् । ममकाराभाव इति यावत् । मिथ्यात्मनोसत्त्वे देहेन्द्रियादिबाधनं श्रवणादिबाधनं च । ततश्च न केवलं लोकयात्रासमुच्छेदः सद्ब्रह्माहमित्येवंबोधशीलं यत्कार्यम् । अद्वैतसाक्षात्कार इति यावत् । तदपि **कथं भवेत्** । कुतस्तदसंभव इत्यत आह–

आनन्दगिरीय–न्यायनिर्णयः ।

त्वन्मतेऽपि कथं पृथगारम्भः शास्त्रस्येत्याशंक्य मेयफलभेदादित्याह–**ब्रह्मेति** । स्वातन्त्र्येण ब्रह्मात्मैक्यनिष्ठत्वे वेदान्तानां तदेव तात्त्विकमिति कथं द्वैतालम्बनस्य विधिकाण्डस्याध्यक्षादेश्च मानतेत्याशङ्क्योपसंहरन्परिहरति–**तस्मादिति** । अद्वैतधियो भेदाधिष्ठानमानविरोधित्वं तच्छब्दार्थः । इतिना ज्ञानं परामृष्टम् । तस्मादित्युक्तं हेतुं व्यनक्ति–**न हीति** । तत्त्वसाक्षात्कारे तदज्ञानध्वस्तौ तदुत्थमात्रादिसर्वभेदध्वस्तेरविद्यावस्थायामेवाशेषो व्यवहार इत्यर्थः । कार्यास्पृष्टे सिद्धे ब्रह्मण्यद्वये सिद्धा वेदान्तमानतेत्युपसंहर्तुमितिशब्दः । न केवलमस्माभिरयमर्थोऽभ्युपगतः किं त्वन्यैरपि ब्रह्मविद्भिरित्याह–**अपि चेति** ।

१ जैमिनिनेति शेषः । २ गाथां ब्रह्मविद आहुरित्यर्थः । ३ "यदाप्नोति यदादत्ते यच्चात्ति विषयानिह ॥ यच्चास्य सततं भावस्तस्मादात्मेति गीयते ॥" इति वृद्धोक्तेः । ४ आदिपदेन सद्ब्रह्माहमित्येवंबोधशीलं कार्यम् । अद्वैतसाक्षात्कालेपि तदुपायश्रवणमननादेरभावात् ।

 

**अन्वेष्टव्यात्मविज्ञानात्प्राक् प्रमातृत्वमात्मनः ॥ अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः ॥ २ ॥ देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ॥ लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥ ३ ॥" इति ॥ ४ ॥ ( इति चतुःसूत्री ) ॥ इति समन्वयाधिकरणम् ॥ ४ ॥**

---

रत्नप्रभा ।

मर्थस्य प्रमातुः ब्रह्मत्वायोगादित्याशङ्क्य, प्रमातृत्वस्याज्ञानविलसितान्तःकरणतादात्म्यकृतत्वान्न बाध इत्याह—**अन्वेष्टव्य इति** ॥ "य आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्पस्सोऽन्वेष्टव्यः" [ छा० ८ । ७ । १ ] इति श्रुतेः ज्ञातव्यपरमात्मविज्ञानात् प्रागेवाज्ञानाविद्वातोः **आत्मनः प्रमातृत्वम्** । प्रमातैव ज्ञातः सन् पाप्मरागद्वेषमरणविवर्जितः परमात्मा स्यादित्यर्थः । प्रमातृत्वस्य कल्पितत्वे तदाश्रितानां प्रमाणानां प्रामाण्यं कथमित्यत आह—**देहेति** ॥ यथा **देहात्मप्रत्ययः कल्पितो** भ्रमेऽपि व्यवहाराङ्गतया मानत्वेनेष्यते वैदिकैः, **तद्वल्लौकिकम्** अध्यक्षादिकमात्मबोधावधि व्यवहारकाले बाधाभावाद् व्यावहारिकं प्रामाण्यमिष्यताम् । वेदान्तानां तु कालत्रयाबाध्यबोधित्वात् तत्त्वावेदकं प्रामाण्यमिति **तुशब्दार्थः । आत्मनिश्चयात्** आ आत्मनिश्चयादित्याङ् मर्यादायाम् । प्रमातृत्वस्य कल्पितत्वेऽपि विषयाबाधात् प्रामाण्यमिति भावः । "रामनाम्नि परे धाम्नि कृत्स्नाम्नायसमन्वयः । कार्यतात्पर्यबाधेन साधितः शुद्धबुद्धये" ॥४॥ इति चतुःसूत्री समाप्ता ॥ वृत्तमनूद्याक्षेपलक्षणमवान्तरसङ्गतिमाह—

भामती ।

**अन्वेष्टव्यात्मविज्ञानात्प्राक्प्रमातृत्वमात्मनः** । उपलक्षणं चैतत् । प्रमाप्रमेयप्रमाणविभाग इत्यपि द्रष्टव्यम् । एतदुक्तं भवति—एष हि विभागोऽद्वैतसाक्षात्कारकारणं, ततो नियमेन प्राग्भावात् । तेन तदभावे कार्यं नोत्पद्यत इति । न च प्रमातुरात्मनोऽन्वेष्टव्य आत्मान्य इत्याह—**अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः** । उक्तं ग्रीवास्थग्रैवेयकनिदर्शनम् । स्यादेतत् । अप्रमाणात्कथं पारमार्थिकाद्वैतानुभवोत्पत्तिरित्यत आह—**देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं तु** । अस्यावधिमाह—**आऽऽत्मनिश्चयात्** । आ ब्रह्मस्वरूपसाक्षात्कारादित्यर्थः । एतदुक्तं भवति—पारमार्थिकप्रपञ्चवादिभिरपि देहादिष्वात्माभिमानो मिथ्येति वक्तव्यं, प्रमाणबाधितत्वात् । तस्य च समस्तप्रमाणकारणत्वं भाविकलोकयात्रावाहित्वं चाभ्युपेयम् । सेयमस्माकमप्यद्वैतसाक्षात्कारे विधा भविष्यति । न चायमद्वैतसाक्षात्कारोऽप्यन्तःकरणवृत्तिभेद एकान्ततः परमार्थः । यस्तु साक्षात्कारो भाविकः, नासौ कार्यः, तस्य ब्रह्मस्वरूपत्वात् । अविद्या तु यद्यविद्यामुच्छिन्द्याज्जनयेद्वा, न तत्र काचिदनुपपत्तिः । तथा च श्रुतिः—'विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥' इति । तस्मात्सर्वमवदातम् ॥ ४ ॥ इति चतुःसूत्री समाप्ता ॥ एवं 'कार्यान्वयं विना सिद्धरूपे ब्रह्मणि मानता । पुरुषार्थे

आनन्दगिरीय—न्यायनिर्णयः ।

सत्पारमार्थिकमबाधितं ब्रह्माहमित्येवं बोधे जाते पुत्रदेहादेः सत्ताबाधनान्मापामात्रत्वावगमादयमहमेवेति पुत्रादावहमभिमानस्य गौणात्मनो मनुष्योऽहमिति देहादावहमभिमानस्य च मिथ्यात्मनोऽसत्त्वे कार्यं कथं भवेत्तन्निमित्ताभावाद्विधिविधेयादिव्यवहारो न कथंचिदित्यर्थः । यद्यात्मा सद्ब्रह्मैव कस्तर्हि प्रमाता यद्ययमेव कथं तर्हि ब्रह्मताऽस्येत्याशंक्याऽऽह—**अन्वेष्टव्येति** । "य आत्माऽपहतपाप्मा" इत्यादिश्रुतिसिद्ध आत्माऽन्वेष्टव्यः "सोऽन्वेष्टव्यः" इतिश्रुतेः । तद्विज्ञानात्पूर्वमात्मनो मातृत्वं प्रमातैवान्विष्टः सन्निर्दोषः परमात्मा स्यादतोऽन्वयव्यतिरेकाभ्यामात्मनो मातृत्वमाविद्यकमित्यर्थः । तस्याऽऽविद्यत्वे कथमध्यक्षादीनां श्रुतेश्च मानता कारणदोषादित्याशंक्याऽऽह—**देहेति** । यथा देहातिरिक्तात्मवादे कल्पिताऽपि देहात्मत्वधीर्व्यवहाराङ्गतया मानमिष्यते तथा तत्त्वसाक्षात्कारपर्यन्तं व्यवहाराङ्गत्वाद्व्यवहारे बाधाभावाच्चाध्यक्षाद्यतस्त्वाग्रेदकमपि व्यावहारिकं मानं श्रुतेस्तु वर्णदैर्ध्यादिवदात्मधीहेतोस्तात्त्विक्येव मानते-

**एवं तावद्वेदान्तवाक्यानां ब्रह्मात्मावगतिप्रयोजनानां ब्रह्मात्मनि तात्पर्येण समन्वितानामन्तरेणापि कार्यानुप्रवेशं ब्रह्मणि पर्यवसानमुक्तम् ॥ ब्रह्म च सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिनाशकारणमित्युक्तम् ॥ साङ्ख्यादयस्तु परिनिष्ठितं वस्तु प्रमाणान्तरगम्यमेवेति मन्यमानाः प्रधानादीनि कारणान्तराण्यनुमिमानास्तत्परतयैव वेदान्तवाक्यानि योजयन्ति, सर्वेष्वेव वेदान्तवाक्येषु सृष्टिविषयेष्वनुमानेनैव कार्येण कारणं लिलक्षयिषन्ति ॥**

रत्नप्रभा ।

**सांख्यादयस्त्विति** ॥ भवतु सिद्धे वेदान्तानां समन्वयः । तथापि मानान्तरायोग्ये ब्रह्मणि शक्तिग्रहायोगात् कूटस्थत्वेन अविकारित्वेन कारणत्वायोगाच्च न समन्वयः । किंतु सर्गाद्यं कार्यं, जडप्रकृतिकं, कार्यत्वात्, घटवद्, इत्यनुमानगम्ये त्रिगुणे प्रधाने समन्वय इत्याक्षिपन्तीत्यर्थः । सिद्धं मानान्तरगम्यमेवेत्याग्रहः शक्तिग्रहार्थः । अत एव प्रधानादावनुमानोपस्थिते शक्तिग्रहसम्भवात् तत्परतया वाक्यानि योजयन्तीत्युक्तम् । किञ्च "तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ" [ छा० ६ । ८ । ४ ] इत्याद्याः श्रुतयः शुंगेन लिङ्गेन कारणस्य स्वतोऽन्वेषणं दर्शयन्तो मानान्तरसिद्धमेव जगत्कारणं वदन्तीत्याह—**सर्वेष्विति** ॥

भामती ।

स्वयं तावद्वेदान्तानां प्रसाधिता ॥' ब्रह्मजिज्ञासां प्रतिज्ञाय 'जन्माद्यस्य यतः' इत्यादिना 'तत्तु समन्वयात्' इत्यन्तेन सूत्रसंदर्भेण सर्वज्ञे सर्वशक्तौ जगदुत्पत्तिस्थितिविनाशकारणे प्रामाण्यं वेदान्तानामुपपादितम् । तच्च ब्रह्मणीति परमार्थतः । न त्वद्यापि ब्रह्मण्येवेति व्युत्पादितम् । तदत्र संदिह्यते—तज्जगदुपादानकारणं किं चेतनमुताचेतनमिति । अत्र च विप्रतिपत्तेः प्रवादिनां विशेषानुपलम्भे सति संशयः । तत्र च प्रधानमचेतनं जगदुपादानकारणमनुमानसिद्धमनुवदन्त्युपनिषद इति सांख्याः । जीवाणुव्यतिरिक्तचेतनेश्वरनिमित्ताधिष्ठिताश्चतुर्विधाः परमाणवो जगदुपादानकारणमनुमितमनुवदन्तीति काणादाः । आदिग्रहणेनाभावोपादानत्वादि ग्रहीतव्यम् । अनिर्वचनीयानाद्यविद्याशक्तिमच्चेतनोपादानं जगदागमिकमिति ब्रह्मविदः । एतासां च विप्रतिपत्तीनामनुमानवाक्यानुमानवाक्याभासा बीजम् । तदेवं विप्रतिपत्तेः संशये किं तावत्प्राप्तम् । तत्र 'ज्ञानक्रियाशक्त्यभावाद्ब्रह्मणोऽपरिणामिनः । न सर्वशक्तिविज्ञाने प्रधाने त्वस्ति संभवः ॥' ज्ञानक्रियाशक्ती खलु ज्ञानक्रियाकार्यदर्शनोन्नेयसद्भावे । न च ज्ञानक्रिये चिदात्मनि स्तः, तस्यापरिणामित्वादेकत्वाच्च । त्रिगुणे च प्रधाने परिणामिनि संभवतः । यद्यपि च साम्यावस्थायां प्रधाने समुदाचरद्वृत्तिनी क्रियाज्ञाने न स्तः, तथाप्यव्यक्तेन शक्त्यात्मना रूपेण संभवत एव । तथा च प्रधान-

आनन्दगिरीय-न्यायनिर्णयः ।

त्यर्थः ॥ इति चतुःसूत्री समाप्ता ॥ ४ ॥ ( ४ ) ॥ शास्त्रार्थं चतुर्भिः सूत्रैः संक्षिप्य वक्ष्यमाणाधिकरणानामपुनरुक्तमर्थं वक्तुं वृत्तं संकीर्तयति—**एवमिति** । तेषां तत्फलत्वे हेतुस्तात्पर्येणेति । कार्यान्विते ब्रह्मणि तात्पर्यं तेषामित्याशंक्याऽऽह—**अन्तरेणेति** । समन्वयसूत्रार्थमनूद्यातीतसूत्रत्रयार्थमनुवदति—**ब्रह्म चेति** । उक्ते लक्षणे तदतिव्याप्तिशंकायां निरासस्य सावकाशत्वाद्ब्रह्मणा जिज्ञास्यस्य लक्षणमपि शास्त्रीयस्योक्तमित्यर्थः । तस्मिन्ब्रह्मणि सिद्धे समन्वये समन्वयाध्यायसमाप्तेरुत्तरसंदर्भानर्थक्यमित्याशंक्याऽऽह—**सांख्यादयस्त्विति** । सिद्धेऽर्थे मानत्वविरोधिकार्यानुप्रवेशे प्रत्युक्तेऽपि ब्रह्मण्येव समन्वयो नान्यत्रेत्यनिर्धारणाद्ब्रह्मकारणताविरोधिप्रधानादिवादनिरासायोत्तरसंदर्भ इत्यर्थः । परिनिष्ठितस्य मानान्तरगम्यत्वे तत्संवादादिना तत्र वेदान्ताप्रामाण्यान्न ततो जगद्धेतुर्ब्रह्म सिध्यतीति चेत्तर्हि केन मानेन तद्धेतुधीरित्याशंक्योक्तम्—**प्रधानादीनीति** । का तर्हि वेदान्तानां गतिः परार्थानुमानतेत्याह—**तत्परतयेति** । हेत्वाद्यनुक्तेस्तेषां न परार्थानुमानतेत्याशंक्याऽऽह—**सर्वेष्विति** । "तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ" इत्यादिष्वनुमानता

**प्रधानपुरुषसंयोगा नित्यानुमेया इति साङ्ख्या मन्यन्ते ॥ काणादास्त्वेतेभ्य एव वाक्येभ्य ईश्वरं निमित्तकारणमनुमिमीते ॥ अणूंश्च समवायिकारणम् ॥ एवमन्येपि तार्किका वाक्याभासयुक्त्याभासावष्टम्भाः पूर्वपक्षवादिन इहोत्तिष्ठन्ते ॥**

---

रत्नप्रभा ।

नन्वतीन्द्रियत्वेन प्रधानादेर्व्याप्तिग्रहायोगात् कथमनुमानं तत्राह—**प्रधानेति** ॥ यत्कार्यं, तज्जडप्रकृतिकं, यथा घटः, यज्जडं, तच्चेतनसंयुक्तं, यथा रथादिरिति सामान्यतोदृष्टानुमानगम्याः प्रधानपुरुषसंयोगा इत्यर्थः ॥ अद्वितीयब्रह्मणः कारणत्वविरोधिमतान्तरमाह—**काणादास्त्विति** ॥ सृष्टिवाक्येभ्य एव परार्थानुमानरूपेभ्यो यत्कार्यं, तद्बुद्धिमत्कर्तृकमिति ईश्वरं कर्त्तारं परमाणूंश्च यत्कार्यद्रव्यं तत्स्वन्यूनपरिमाणद्रव्यारब्धमित्यनुमिमीत इत्यर्थः । **अन्येऽपि** बौद्धादयः "असद्वा इदमग्र आसीद्" [ तै० आ० २ । ७ । १ । ] इत्यादि**वाक्याभासः** ॥ यद्वस्तु, तच्छून्यावसानं, यथा दीप इति **युक्त्याभासः** ॥ एवं वादिविप्रतिपत्तिमुक्त्वा तन्निरासायोत्तरसूत्रसन्दर्भमवतारयति—**तत्रेति** ॥ वादिविवादे सतीत्यर्थः ॥ व्याकरणमीमांसान्यायनिधित्वात् पदवाक्यप्रमाणज्ञत्वम् । यज्जगत्कारणं तच्चेतनमचेतनं वेति ईक्षणस्य मुख्य-

भामती ।

मेव सर्वज्ञं च सर्वशक्ति च । न तु ब्रह्म । स्वरूपचैतन्यं त्वस्यावृत्तिकमनुपयोगि जीवात्मनामिवास्माकम् । न च स्वरूपचैतन्ये कर्तृत्वम्, अकार्यत्वात्तस्य । कार्यत्वे वा न सर्वदा सर्वज्ञता । भोगापवर्गलक्षणपुरुषार्थद्वयप्रयुक्तानादिप्रधानपुरुषसंयोगनिमित्तस्तु महदहंकारादिक्रमेणाचेतनस्यापि चेतनानधिष्ठितस्य प्रधानस्य परिणामः सर्गः । दृष्टं चाचेतनं चेतनानधिष्ठितं पुरुषार्थे प्रवर्तमानम् । यथा वत्सविवृद्ध्यर्थमचेतनं क्षीरं प्रवर्तते । 'तदैक्षत बहु स्यां प्रजायेयेति' इत्याद्याश्च श्रुतयोऽचेतनेपि चेतनवदुपचारात्स्वकार्योन्मुखत्वमादर्शयन्ति, यथा कूलं पिपतिषतीति । 'यत्प्राये श्रूयते यच्च तत्तादृगवगम्यते । भाक्तप्राये श्रुतमिदमतो भाक्तं प्रतीयते ॥' अपि चाहुर्वृद्धाः—'यथाऽग्न्यप्राये लिखितं दृष्ट्वा वदन्ति भवेदयमग्न्यः' इति, तथेदमपि 'ता आप ऐक्षन्त' 'तत्तेज ऐक्षत' इत्याद्युपचारप्राये श्रुतम् । 'तदैक्षत' इत्यौपचारिकमेव विज्ञेयम् । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति च प्रधानस्य जीवात्मत्वं जीवार्थकारितयाह । यथा हि भद्रसेनो राजार्थकारी राज्ञा भद्रसेनो ममात्मेत्युपचर्यते, एवं 'तत्त्वमसि' इत्याद्याः श्रुतयो भाक्ताः संपत्त्यर्था वा द्रष्टव्याः । 'स्वमपीतो भवति' इति च निरुक्तं जीवस्य प्रधाने स्वकीयेऽप्ययं

आनन्दगिरीय—न्यायनिर्णयः ।

भातीत्यर्थः । कार्यलिङ्गकमनुमानं ब्रह्मैव गमयिष्यतीत्याशङ्क्य सुखदुःखमोहात्मकं कार्यं तादृगेव कारणमनुमापयतीत्याह—**प्रधानेति** । तस्याचेतनस्य स्वार्थाभावात्पुमर्थप्रवृत्तौ पुंसि मानं वाच्यमिति मत्वाऽऽह—**पुरुषेति** । बुद्धौ यः प्रतिविम्बः स तादृशबिम्बपूर्वकः प्रतिबिम्बत्वाद्दर्पणे मुखाभासवदित्यर्थः । संबन्धाभावे तादर्थ्यायोगात्तत्रापि मानाकाङ्क्षायां विमतं चेतनसंयुक्तमचेतनत्वाद् द्रव्यादिवदिति बुद्ध्या संयोगग्रहणम् । मतान्तरमाह—**काणादास्त्विति** । यतो वा इमानीत्यादिवाक्येभ्यो यच्छब्दोपबन्धेन सिद्धवज्जगद्धेतुपरामर्शाद्यत्कार्यं तद् बुद्धिमत्कर्तृकमिति सामान्यतो दृष्टादीश्वरं कल्पयन्तीत्यर्थः । स्वपरिमाणादल्पपरिमाणारब्धं पटादि दृष्ट्वाऽऽद्यमपि कार्यं तथेति समवायित्वेन चतुर्विधानणून्कल्पयन्तीत्याह—**अणूंश्चेति** । असद्वा इदमग्र आसीदित्यादिवाक्याभासाद्दीपादेर्निरन्वयनाशदृष्ट्या पृथिव्यादेरपि तथा नष्टस्यासत एवोत्पत्तिरित्यादियुक्त्याभासाच्चाद्वैतवादे माध्यमिकादयो विरोधिनो भवन्तीत्याह—**एवमिति** । वादिविप्रतिपत्तीरुक्त्वा तन्निरासायोत्तरग्रन्थमवतारयति—**तत्रेति** । तत्र वादिषु भिन्नप्रस्थानेषु सत्स्विति यावत् । वाक्याभासेषु युक्त्याभासेषु च प्रतिपत्तिर्येषां ते तथा । उत्तरग्रन्थतात्पर्यमुक्त्वा सदेवेत्यादौ सच्छब्दितमीक्षितृ सर्वज्ञं

तत्र पदवाक्यप्रमाणज्ञेनाचार्येण वेदान्तवाक्यानां ब्रह्मावगतिपरत्वप्रदर्शनाय वाक्याभासयुक्त्यभासप्रतिपत्तयः पूर्वपक्षीकृत्य निराक्रियन्ते ॥ तत्र साङ्ख्याः प्रधानं त्रिगुणमचेतनं जगतः कारणमिति मन्यमानाश्चाहुः–"यानि वेदान्तवाक्यानि सर्वज्ञस्य सर्वशक्तेर्ब्रह्मणो जगत्कारणत्वं दर्शयन्तीत्यवोचस्तानि प्रधानकारणपक्षेऽपि योजयितुं शक्यन्ते । सर्वशक्तित्वं तावत्प्रधानस्यापि स्वविकारविषयमुपपद्यते ॥ एवं सर्वज्ञत्वमप्युपपद्यते ॥ कथम् ॥ यत्तु ज्ञानं मन्यसे, स सत्त्वधर्मः । "सत्त्वात्सञ्जायते ज्ञानम्" [ भ० गी० १४ । १७ ] इति स्मृतेः ॥ तेन च सत्त्वधर्मेण ज्ञानेन कार्यकारणवन्तः पुरुषास्सर्वज्ञा योगिनः प्रसिद्धाः ॥ सत्त्वस्य हि निरतिशयोत्कर्षे सर्वज्ञत्वं प्रसिद्धम् ॥

---

रत्नप्रभा ।

त्वगौणत्वाभ्यां संशये पूर्वपक्षमाह–**तत्र सांख्या इति** ॥ अपिशब्दौ एवकारार्थौ । सदेवेत्यादिस्पष्टब्रह्मलिङ्गवाक्यानां प्रधानपरत्वनिरासेन ब्रह्मपरत्वोक्तेः श्रुत्यादिसंगतयः ॥ पूर्वपक्षे जीवस्य प्रधानैक्योपास्तिः सिद्धान्ते ब्रह्मैक्यज्ञानमिति विवेकः । अचेतनसत्त्वस्यैव सर्वज्ञत्वं, न चेतनस्येत्याह–**तेन च सत्त्वधर्मेणेति** ॥

भामती ।

सुषुप्तावस्थायां ब्रूते । प्रधानांशतमःसमुद्रेके हि जीवो निद्राणस्तमसीव मग्नो भवति । यथाहुः–'अभावप्रत्ययालम्बना वृत्तिर्निद्रा' इति । वृत्तीनामन्यासां प्रमाणादीनामभावस्तस्य प्रत्ययकारणं तमस्तदालम्बना निद्रा जीवस्य वृत्तिरित्यर्थः । तथा सर्वज्ञं प्रस्तुत्य श्वेताश्वतरमन्त्रोऽपि–'सकारणं करणाधिपाधिपः' इति प्रधानाभिप्रायः । प्रधानस्यैव सर्वज्ञत्वं प्रतिपादितमधस्तात् । तस्मादचेतनं प्रधानं जगदुपादानमनुवदन्ति श्रुतय इति पूर्वः पक्षः । एवं काणादादिमतेऽपि कथंचिद्योजनीयाः श्रुतयः । अक्षरार्थस्तु **प्रधानकारणपक्षेऽपीति प्रधानस्यापीति** । अपिकारावेवकारार्थौ । स्यादेतत् । सत्त्वसंपत्त्या चेदस्य सर्वज्ञताथ तमःसंपत्त्याऽसर्वज्ञतैवास्य कस्मान्न भवतीत्यत आह–**तेन च सत्त्वधर्मेण ज्ञानेनेति** । सत्त्वं हि प्रकाशशीलं निरतिशयोत्कर्षं सर्वज्ञताबीजम् । यथाहुः–'निरतिशयं सर्वज्ञताबीजम्' इति । यत्खलु सातिशयं तत्क्वचिन्निरतिशयं दृष्टं, यथा कुवलामलकबिल्वेषु सातिशयं महत्त्वं व्योम्नि परममहति निरतिशयम् । एवं ज्ञानमप्येकद्विबहुविषयतया सातिशयमित्यनेनापि क्वचिन्निरतिशयेन भवितव्यम् । इदमेव चास्य निरतिशयत्वं

आनन्दगिरीय–न्यायनिर्णयः ।

जगदुपादानं प्रधानं ब्रह्मैवेति वादिविवादाज्ज्ञातृत्वज्ञानाभ्यां संशय्यानन्तराधिकरणपूर्वपक्षमाह–**तत्रेति** । स्थितं समुदायतात्पर्यं सप्तम्यर्थः । सर्वज्ञे जगद्धेतौ समन्वयोक्त्या तच्चैतन्यमाक्षिप्य समर्थ्यत इत्यधिकरणसंगतिः । नानाशाखास्थस्फुटब्रह्मलिङ्गवाक्यानां ब्रह्मण्येव समन्वयोक्तेः श्रुत्यादिसंगतयः । तत्त्वमसीति तच्छब्दितप्रधानैक्यसंपत्तिः पूर्वपक्षे । सिद्धान्ते चिदात्मनो ब्रह्मैक्यं फलम् । प्रकर्षेण धीयते सर्वं जगदस्मिन्निति ब्रह्मापि प्रधानं ततो विशिनष्टि–**त्रिगुणमिति** । परिणामयोग्यत्वमाह–**अचेतनमिति** । सांख्यीयमतं श्रुतिविरोधात्त्याज्यमित्याशंक्याऽऽह–**यानीति** । जीवाख्यचित्प्रतिबिम्बानां स्वतो विभजननियमेनैकीकरणशक्तयो न प्रधानस्याचेतनस्येत्यन्यदेव सर्वशक्तिमदेष्टव्यमित्याशंक्य चित्प्रतिबिम्बानामनुत्पाद्यत्वादुत्पाद्यार्थशक्तिरस्यापि स्यादित्याह–**सर्वेति** । तथाऽपि कुतोऽस्याचेतनत्वे सर्वज्ञता तत्राऽऽह–**एवमिति** । यस्य न ज्ञत्वमेव तस्य कुतः सर्वज्ञतेत्याह–**कथमिति** । प्रधाने ज्ञानकर्तृत्वं संभावयितुं ज्ञानस्वरूपमाह–**यदिति** । ननूक्तज्ञानेन चेतनानामेव योगिनां सर्वज्ञत्वात्तदचेतनं प्रधानं कथं तेन सर्वज्ञमुच्यते तत्राऽऽह–**तेनेति** । कार्यकरणवन्त इत्यचैतन्यमुक्तम् । तत्रापि चेतनांशस्यैव सर्वज्ञत्वं सत्त्वस्य सहायतया तदुत्कर्षान्वयव्यतिरेकयोरन्यथासिद्धेरित्याशङ्क्याऽऽह–**सत्त्वस्येति** । केवलव्यतिरेकाभावान्न चेत-

न केवलस्याकार्यकरणस्य पुरुषस्योपलब्धिमात्रस्य सर्वज्ञत्वं किञ्चिज्ज्ञत्वं वा कल्पयितुं शक्यम् ॥ त्रिगुणत्वात्तु प्रधानस्य सर्वज्ञानकारणभूतं सत्त्वं प्रधानावस्थायामपि विद्यते इति, प्रधानस्याचेतनस्यैव सतस्सर्वज्ञत्वमुपचर्यते वेदान्तवाक्येषु ॥ अवश्यश्च त्वयापि सर्वज्ञं ब्रह्माभ्युपगच्छता सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञत्वमभ्युपगन्तव्यम् ॥ न हि सर्वदा सर्वविषयज्ञानं कुर्वदेव ब्रह्म वर्तते । तथा हि ज्ञानस्य नित्यत्वे, ज्ञानक्रियां प्रति स्वातन्त्र्यं ब्रह्मणो हीयेत ॥ अथाऽनित्यं तदिति, ज्ञानक्रियाया उपरमेतापि ब्रह्म ॥ तदा सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञत्वमापतति ॥ अपि च प्रागुत्पत्तेस्सर्वकारकशून्यं ब्रह्मेष्यते त्वया ॥ न च ज्ञानसाधनानां शरीरेन्द्रियादीनामभावे ज्ञानोत्पत्तिः कस्यचिदुपपन्ना ॥ अपि च प्रधानस्यानेकात्म-

रत्नप्रभा ।

**न केवलस्येति** ॥ जन्यज्ञानस्य सत्त्वधर्मत्वात् नित्योपलब्धेरकार्यत्वाच्चिन्मात्रस्य न सर्वज्ञानकर्तृत्वमित्यर्थः । ननु गुणानां साम्यावस्था प्रधानम् इति सांख्या वदन्ति । तदेवावस्थायां सत्त्वस्योत्कर्षाभावात् कथं सर्वज्ञतेत्याह—**त्रिगुणत्वादिति** ॥ त्रयो गुणा एव प्रधानं, तस्य साम्यावस्था तदभेदात् प्रधानम् इत्युच्यते । तदवस्थायामपि प्रलये सर्वज्ञानशक्तिमत्त्वरूपं ससर्वज्ञत्वमक्षतमित्यर्थः । ननु मया किमिति शक्तिमत्त्वरूपं गौणं सर्वज्ञत्वमङ्गीकार्यमिति तत्राह—**न हीति** ॥ अनित्यज्ञानस्य प्रलये नाशात् शक्तिमत्त्वं वाच्यं कारकाभावाच्चेत्याह—**अपि चेति** ॥ मतद्वयसाम्यमुक्त्वा स्वमते विशेषमाह—**अपि चेति** ॥ ब्रह्मणः कारणत्वं **स्मृतिपादे** समर्थ्यते । प्रधानादेः कारणत्वं

भामती ।

यद्विदितसमस्तवेदितव्यत्वम् । तदिदं सर्वज्ञत्वं सत्त्वस्य निरतिशयोत्कर्षत्वे संभवति । एतदुक्तं भवति—यद्यपि रजस्तमसी अपि स्तः, तथापि पुरुषार्थप्रयुक्तगुणवैषम्यातिशयात्सत्त्वस्य निरतिशयोत्कर्षे सार्वज्ञ्यं कार्यमुत्पद्यत इति प्रधानावस्थायामपि तन्मात्रं विवक्षित्वाऽविवक्षित्वा च तमःकार्यं प्रधानं सर्वज्ञमुपचर्यत इति । अपिभ्यामवधारणस्य व्यवच्छेद्यमाह—**न केवलस्येति** । न हि किंचिदेकं कार्यं जनयेदपि तु बहूनि । चिदात्मा चैकः, प्रधानं तु त्रिगुणमिति तत एव कार्यमुत्पत्तुमर्हति । न चिदात्मन इत्यर्थः । तवापि च योग्यतामात्रेणैव चिदात्मनः सर्वज्ञताभ्युपगमो न कार्ययोगादित्याह—**त्वयापीति** । न केवलस्याकार्यकारणस्येत्येतत्सिंहावलोकितेन प्रपञ्चयति—**प्रागुत्पत्तेरिति** । **अपि च प्रधानस्येति** । चस्त्वर्थः ।

आनन्दगिरीय—न्यायनिर्णयः ।

नांशस्यैव सर्वज्ञतेत्यर्थः । किंच, तस्य सर्वज्ञत्वं दुर्ज्ञानं चिन्मात्रस्य ज्ञानकर्तृत्वायोगादित्याह—**नेति** । कार्यकरणविरहितत्वाच्च नास्य ज्ञानकर्तृतेत्याह—**अकार्येति** । पूर्णत्वाच्च तथेत्याह—**पुरुषस्येति** । प्रधानावस्थायां गुणसाम्ये सत्त्वोत्कर्षायोगान्न तस्य तत्कृतं सार्वज्ञ्यमित्याशंक्याऽऽह—**त्रिगुणत्वादिति** । न च ज्ञानप्रतिबन्धकरजस्तमसोरपि तत्र भावान्न सार्वज्ञ्यम् । वस्तुतस्तद्भावेऽपि माणवकस्याग्नित्ववत्तदुपचारात्तदाह—**उपचर्यत इति** । गौणमुख्ययोर्मुख्ये संप्रत्ययान्मुख्यग्रहणमाशंक्याऽऽह—**अवश्यमिति** । तत्र हेतुमाह—**न हीति** । तथात्वे काऽनुपपत्तिरित्याशंक्य तज्ज्ञानं नित्यमनित्यं वेति विकल्पयति—**तथा हीति** । तत्राऽऽद्यं दूषयति—**ज्ञानेति** । द्वितीयमनूद्य स्वमतसिद्धान्तमाह—**अथेत्यादिना** । अनित्यज्ञानपक्षे ब्रह्मणः सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञतेत्यत्र हेत्वन्तरमाह—**अपि चेति** । तथाऽपि तस्य सर्वविषयं ज्ञानं किमिति नोत्पद्यते तत्राऽऽह—**न चेति** । आदिपदेन ज्ञेयज्ञात्रादिसंग्रहः । उभयत्राप्यनुपपत्तिसाम्ये कथं पक्षविशेषपक्षपात इत्याशंक्य प्रधानपक्षे विशेषमाह—**अपि चेति** । एकस्यापि ब्रह्मणः सामग्रीसंनि-

१ उपरमे उपरमेतापि पा० । २ ब्रह्मवादिना ।

**कस्य परिणामसम्भवात्कारणत्वोपपत्तिर्मृदादिवन्नासंहतस्यैकात्मकस्य ब्रह्मण इत्येवं प्राप्ते इदं सूत्रमारभते—**

## ईक्षतेर्नाशब्दम् ॥ ५ ॥ ( ५ ) ॥

**न साङ्ख्यपरिकल्पितमचेतनं प्रधानं जगतः कारणं शक्यं वेदान्तेष्वाश्रयितुम् ॥ अशब्दं हि तत् ॥ कथमशब्दत्वम्–ईक्षतेः–ईक्षितृत्वश्रवणात्कारणस्य ॥ कथम् ॥ एवं हि श्रूयते "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" [ छान्दो० ६ । २ । १ ] इत्युपक्रम्य—**

---

रत्नप्रभा ।

तर्कपादे युक्तिभिर्निरस्यते । अधुना तु श्रुतिभिर्निरस्यति—**ईक्षतेर्नाशब्दमिति** ॥ ईक्षणश्रवणात् वेदशब्दवाच्यमशब्दं प्रधानम् । अशब्दत्वान्न कारणमिति **सूत्रयोजना** ॥ **तत्** सच्छब्दवाच्यं कारणम् ।

भामती ।

एवं प्राप्त उच्यते—**ईक्षतेर्नाशब्दम्** । नामरूपप्रपञ्चलक्षणकार्यदर्शनादेतत्कारणमात्रवदिति सामान्यकल्पनायामस्ति प्रमाणं, न तु तदचेतनं चेतनमिति वा विशेषकल्पनायामस्त्यनुमानमित्युपरिष्टात्प्रवेदयिष्यते । तस्मान्नामरूपप्रपञ्चकारणभेदप्रमायामाम्नाय एव भगवानुपासनीयः । तदेवमाम्नायैकसमधिगमनीये जगत्कारणे 'पौर्वापर्यपरामर्शाद्यदाम्नायोऽञ्जसा वदेत्। जगद्बीजं तदेवेष्टं चेतने च स आञ्जसः॥' तेषु तेषु खल्वाम्नायप्रदेशेषु 'तदैक्षत' इत्येवंजातीयकैर्वाक्यैरीक्षितुः कारणाज्जगज्जन्माख्यायत इति। न च प्रधानपरमाण्वादेरचेतनस्येक्षितृत्वमाञ्जसम्। सत्त्वांशेनेक्षितृ प्रधानं, तस्य प्रकाशकत्वादिति चेन्न । तस्य जाड्येन तत्त्वानुपपत्तेः । कस्तर्हि रजस्तमोभ्यां सत्त्वस्य विशेषः । स्वच्छता । स्वच्छं हि सत्त्वम् । अस्वच्छे च रजस्तमसी । स्वच्छस्य च चैतन्यबिम्बोद्ग्राहितया प्रकाशकव्यपदेशो नेतरयोः, अस्वच्छतया तद्ग्राहित्वाभावात् । पार्थिवत्वे तुल्य इव मणेर्बिम्बोद्ग्राहिता न लोष्टादीनाम् । ब्रह्मणस्त्वीक्षितृत्वमाञ्जसं, तस्याम्नायतो नित्यज्ञानस्वभावत्वविनिश्चयात् । नन्वत एवास्य नेक्षितृत्वं, नित्यस्य ज्ञानस्वभावभूतस्येक्षणस्याक्रियात्वेन ब्रह्मणस्तत्प्रति निमित्तभावाभावात् । अक्रियानिमित्तस्य च कारकत्वनिवृत्तौ तद्व्यासस्य तद्विशेषस्य कर्तृत्वस्य निवृत्तेः । सत्यं, ब्रह्मस्वभावश्चैतन्यं नित्यतया न क्रिया,तस्य त्वनवच्छिन्नस्य तत्तद्विषयोपधानभेदावच्छेदेन कल्पितभेदस्यानित्यत्वं कार्यत्वं चोपपद्यते । तथा चैवंलक्षण ईक्षणे सर्वविषये ब्रह्मणः स्वातन्त्र्यलक्षणं कर्तृत्वमुपपन्नम् । यद्यपि च कूटस्थनित्यस्यापरिणामिन औदासीन्यमस्य वास्तवं तथाप्यनाद्यनिर्वचनीयाविद्यावच्छिन्नस्य व्यापारवत्त्वमवभासत इति कर्तृत्वोपपत्तिः । परैरपि च चिच्छक्तेः कूटस्थनित्याया वृत्तीः प्रति कर्तृत्वमीदृशमेवाभ्युपेयं, चैतन्यसामानाधिकरण्येन ज्ञातृत्वोपलब्धेः । न हि प्राधानिकान्यन्तर्बहिःकरणानि त्रयोदश सत्त्वप्रधानान्यपि स्वयमेवाचेतनानि, तद्वृत्तयश्च स्वं वा परं वा वेदितुमुत्सहन्ते । नो खल्वन्धाः सहस्रमपि पान्थाः पन्थानं विदन्ति । चक्षुष्मता चैकेन चेद्दृश्यते, स एव तर्हि मार्गदर्शी स्वतन्त्रः कर्ता नेता तेषाम् । एवं बुद्धिसत्त्वस्य स्वयमचेतनस्य चितिबिम्बसंक्रान्त्या चेदापन्नं चैतन्यस्य ज्ञातृत्वं, चितिरेव ज्ञात्री स्वतन्त्रा, नान्तर्बहिष्करणान्यन्धसहस्रप्रतिमान्यस्वतन्त्राणि । न चास्याश्चितेः

आनन्दगिरीय-न्यायनिर्णयः ।

धानात्कारणत्वमाशंक्य तस्यासङ्गत्वादद्वयत्वाच्च नैवमित्याह—**नेति** । जगदुपादानवादिवेदान्तानां प्रधानपरतेति पूर्वपक्षमनूद्य सूत्रेण सिद्धान्तयति—**एवमिति** । सूत्रस्थं नञ्पदं व्याचष्टे—**नेति** । तत्र सौत्रमेव हेतुमाह—**अशब्दं हीति** । सदेवेत्यत्र सच्छब्दस्य तच्छब्दत्वान्नाशब्दत्वमित्याह—**कथमिति** । सौत्रं पदमवतार्य व्याकरोति—**ईक्षतेरिति** । अनुमेयं प्रधानं हित्वा तदनुवादिश्रुतिसिद्धस्य कथं कारणत्वमित्याह—**कथमिति** । कार्येण कारणमात्रमनुमातुं शक्यं न तद्विशेषस्तत्र श्रुतिरेव मानमिति मत्वाऽऽह—**एवं हीति** । श्रुतोपादानस्य चेतनार्थत्वमाह—**तदैक्षतेति** । केचिदीक्षितारमीश्वरं सद्वितीयं संगिरन्ते तान्प्रत्याह—एक-

"तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत" [ छान्दो० ६ । २ । ३ ] इति ॥ तत्रेदंशब्दवाच्यं नामरूपविकृतं जगत् प्रागुत्पत्तेस्सदात्मनावधार्य तस्यैव प्रकृतस्य सच्छब्दवाच्यस्येक्षणपूर्वकं तेजःप्रभृतेस्स्रष्टृत्वं दर्शयति ॥

रत्नप्रभा ।

ऐक्षत ईक्षणमेवाह—बह्विति ॥ बहुप्रपञ्चरूपेण स्थित्यर्थमहमेवोपादानतया कार्याभेदाज्जनिष्यामीत्याह—प्रजेति ॥ एवं तत् स दीक्षित्वा आकाशं वायुं च सृष्ट्वा तेजः सृष्टवदित्याह—तदिति ॥

भामती ।

कूटस्थनित्याया अस्ति व्यापारयोगः । न च तदयोगेऽप्यज्ञातृत्वं, व्यापारवतामपि जडानामज्ञत्वात् । तस्मादन्तःकरणवर्तिनं व्यापारमारोप्य चितिशक्तौ कर्तृत्वाभिमानः । अन्तःकरणे वा चैतन्यमारोप्य तस्य ज्ञातृत्वाभिमानः । सर्वथा भवन्मतेऽपि नेदं स्वाभाविकं क्वचिदपि ज्ञातृत्वम्, अपि तु सांव्यवहारिकमेवेति परमार्थः । नित्यस्यात्मनो ज्ञानं परिणाम इति च भेदाभेदपक्षमपाकुर्वद्भिरपास्तम् । कूटस्थस्य नित्यस्यात्मनोऽव्यापारवत एव भिन्नं ज्ञानं धर्म इति चोपरिष्टादपाकरिष्यते । तस्माद्वस्तुतोऽनवच्छिन्नं चैतन्यं तत्त्वान्यत्वानिर्वचनीयाव्याकृतव्याचिकीर्षितनामरूपविषयावच्छिन्नं सज्ज्ञानं कार्य, तस्य कर्ता ईश्वरो ज्ञाता सर्वज्ञः सर्वशक्तिरिति सिद्धम् । तथा च श्रुतिः—'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥ यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥' इति । तपसा ज्ञानेन अव्याकृतनामरूपविषयेण चीयते तद्व्याचिकीर्षावद्भवति, यथा कुविन्दादिरव्याकृतं पटादि बुद्धावालिख्य चिकीर्षति । एकधर्मवान् द्वितीयधर्मोपजननेन उपचित उच्यते । व्याचिकीर्षायां चोपचये सति ततो नामरूपमन्नमदनीयं साधारणं संसारिणां व्याचिकीर्षितमभिजायते । तस्मादव्याकृताद्व्याचिकीर्षितादन्नात्प्राणो हिरण्यगर्भो ब्रह्मणो ज्ञानक्रियाशक्त्यधिष्ठानं जगत्सूत्रात्मा साधारणो जायते, यथाऽव्याकृतात् व्याचिकीर्षितात्पटादवान्तरकार्यं द्वितन्तुकादि । तस्माच्च प्राणान्मनआख्यं संकल्पविकल्पादिव्याकरणात्मकं जायते । ततो व्याकरणात्मकान्मनसः सत्यशब्दवाच्यान्याकाशादीनि जायन्ते । तेभ्यश्च सत्याख्येभ्योऽनुक्रमेण लोका भूरादयः तेषु मनुष्यादिप्राणिनो वर्णाश्रमक्रमेण कर्माणि धर्माधर्मरूपाणि जायन्ते । कर्मसु चामृतं फलं स्वर्गनरकादि । तच्च स्वनिमित्तयोर्धर्माधर्मयोः सतोर्न विनश्यतीत्यमृतम् । यावद्धर्माधर्मभावीति यावत् । यः सर्वज्ञः सामान्यतः, सर्वविद्विशेषतः । यस्य भगवतो ज्ञानमयं तपो धर्मो नायासमयम्, तस्माद्ब्रह्मणः पूर्वस्मादेतत्परं कार्यं ब्रह्म । किंच, नामरूपमन्नं च व्रीहियवादि जायत इति । तस्मात्प्रधानस्य साम्यावस्थायामनीक्षितृत्वात्, क्षेत्रज्ञानां च सत्यपि चैतन्ये सर्गादौ विषयानीक्षणात्, मुख्यसंभवे चोपचारस्यान्याय्यत्वात्, मुमुक्षोश्चायथार्थोपदेशानुपपत्तेः, मुक्तिविरोधित्वात्, तेजःप्रभृतीनां च मुख्यासंभवेनोपचाराश्रयणस्य युक्तिसिद्धत्वात्, संशये च तत्प्रायपाठस्य निश्चायकत्वात्, इह तु मुख्यस्यौत्सर्गिकत्वेन निश्चये सति संशयाभावात्, अन्यथा किरातशतसंकीर्णदेशनिवासिनो ब्राह्मणायनस्यापि किरातत्वापत्तेः, ब्रह्मैवेक्षित्रनाद्यनिर्वाच्याविद्यासचिवं जगदुपादानं, शुक्तिरिव समारोपितस्य रजतस्य, मरीचय इव जलस्य, एकश्चन्द्रमा इव द्वितीयस्य चन्द्रमसः । न त्वचेतनं प्रधानपरमाण्वादि । अशब्दं हि तत् । न च प्रधानं परमाणवो वा तदतिरिक्तसर्वज्ञेश्वराधिष्ठिता जगदुपादानमिति सांप्रतम् । कारणात्कार्याणां भेदाभावात् कारणज्ञानेन समस्तकार्यपरिज्ञानस्य मृदादिनिदर्शनेनागमेन प्रसाधितत्वात्, भेदे च तदनुपपत्तेः । साक्षाच्च 'एकमेवाद्वितीयम्' 'नेह नानास्ति किंचन' 'मृत्योः स मृत्युमाप्नोति' इत्यादिभिर्बहुभिर्वचोभिर्ब्रह्मातिरिक्तस्य प्रपञ्चस्य प्रतिषेधाच्चेतनोपादानमेव जगत्, भुजङ्ग इवारोपितो रज्जूपादान इति सिद्धान्तः । सदुपादानत्वे हि सिद्धे जगतस्तदुपादानं चेतनमचेतनं वेति संशय्य मीमांस्येत । अद्यापि तु सदुपादानत्वमसिद्धमित्यत आह—तत्रेदंशब्दवाच्यम् इत्यादि दर्शयति इत्यन्तेन।

आनन्दगिरीय—न्यायनिर्णयः ।

मेवेति । तस्योपादानार्थत्वमाह—बहु स्यामिति । ईक्षणफलमाह—तदिति । तदाकाशं वायुं च सृष्ट्वा तेजः सृष्टवदित्यर्थः । श्रुतेरुक्तमितमर्थमुक्तमर्थमाह—तत्रेत्यादिना । उक्तश्रुतिः सत-

**तथा अन्यत्र "आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ईक्षत लोकान्नु सृजा इति ॥ १ ॥ स इमाँल्लोकानसृजत" [ऐत० ११।१] इति ईक्षापूर्विकामेव सृष्टिमाचष्टे ॥ क्वचिच्च षोडशकलं पुरुषं प्रस्तुत्याह "स ईक्षाञ्चक्रे स प्राणमसृजत" [प्रश्न० ६।३] इति ॥ ईक्षतेरिति च धात्वर्थनिर्देशोऽभिप्रेतः यजतेरितिवत् ॥ न धातुनिर्देशः ॥ तेन "यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः ॥**

---

रत्नप्रभा।

**मिषत्** चलत् सत्त्वाक्रान्तमिति यावत्। **स** जीवाभिन्नः परमात्मा। "प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोकाः लोकेषु नाम च" [प्रश्न० ६।४] इत्युक्ताः षोडश-कलाः। **ननु** "इक्श्तिपौ धातुनिर्देशे" इति कात्यायनस्मरणादीक्षतेरिति पदेन तिबन्तेन धातुरुच्यते। तेन धात्वर्थं ईक्षणं कथं व्याख्यायत इत्याशंक्य लक्षणयेत्याह—**ईक्षतेरिति चेति** ॥ "इतिकर्तव्यताविधेर्य-जतेः पूर्ववत्त्वम्" [७।४।१] इति जैमिनिसूत्रे **यथा** यजतिपदेन लक्षणया धात्वर्थो याग उच्यते **तद्वदिहापीत्यर्थः**। सौर्यादिविकृतियागस्याङ्गानामविधानात् पूर्वं (त्वं) दर्शादिप्रकृतिस्थाङ्गवत्त्वमिति सूत्रार्थः। धात्वर्थनिर्देशेन लाभमाह—**तेनेति** ॥ सामान्यतः **सर्वज्ञो** विशेषतः **सर्वविद्** इति भेदः। **ज्ञानम्** ईक्षण-

भामती।

तथापीक्षिता पारमार्थिकप्रधानक्षेत्रज्ञातिरिक्त ईश्वरो भविष्यति, यथाहुर्हैरण्यगर्भा इत्यतः श्रुतिः पठिता—'एकमेवाद्वितीयम्' इति। 'बहु स्याम्' इति चाचेतनं कारणमात्मन एव बहुभावमाह। तेनापि कारणाच्चेतनादभिन्नं कार्यमवगम्यते। यद्यप्याकाशाद्या भूतसृष्टिस्तथापि तेजोऽवन्नानामेव त्रिवृत्करणस्य विवक्षितत्वात्तत्र तेजसः प्राथम्यात्तेजः प्रथममुक्तम्। एकमद्वितीयं जगदुपादानमित्यत्र श्रुत्यन्तरमपि पठति—**तथान्यत्रेति**। ब्रह्म चतुष्पादष्टाशफं षोडशकलम्। तद्यथा—प्राची प्रतीची दक्षिणोदीचीति चतस्रः कला ब्रह्मणः प्रकाशवान्नाम प्रथमः पादः। तदर्धं शफः। तथा पृथिव्यन्तरिक्षं द्यौः समुद्र इत्यपराश्चतस्रः कला द्वितीयः पादोऽनन्तवान्नाम। तथाग्निः सूर्यश्चन्द्रमा विद्युदिति चतस्रः कलाः, स ज्योतिष्मान्नाम तृतीयः पादः। प्राणश्चक्षुः श्रोत्रं वागिति चतस्रः कलाः, स चतुर्थ आयतनवान्नाम ब्रह्मणः पादः। तदेवं षोडशकलं षोडशावयवं ब्रह्मोपास्यमिति सिद्धम्। स्यादेतत्। ईक्षतेरिति तिपा धातु-स्वरूपमुच्यते। न चाविवक्षितार्थस्य धातुस्वरूपस्य चेतनोपादानसाधनत्वसंभव इत्यत आह—**ईक्षतेरिति**। धात्वर्थनिर्देशोऽभिमतः, विषयिणा विषयलक्षणात्। प्रसिद्धा चेयं लक्षणेत्याह—**यजतेरितिवदिति**।

आनन्दगिरीय-न्यायनिर्णयः।

म्यर्थः। छन्दोगश्रुतिवदैतरेयश्रुतिरपि प्रधानवादविरोधिनीत्याह—**तथेति**। मिषच्चलत्सत्त्वाक्रान्तमिति यावत्। प्रश्नश्रुतिरपि प्रधानकारणतां वारयतीत्याह—**क्वचिच्चेति**। स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम चेत्युक्ताः षोडश कलाः। "इक्श्तिपौ धातुनिर्देशे" इति स्मरणादीक्षतेरिति श्तिपा धातुस्वरूपकथनान्न तस्य चेतनोपादानत्वसाधनतेत्या-शंक्याऽऽह—**ईक्षतेरितीति**। विषयिणा विषयस्य लक्षणादित्यर्थः। प्रसिद्धा चेयं लक्षणेत्याह—**यजते-रितिवदिति**। सप्तमे स्थितम्—इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम्। इतिकर्तव्यतायाः सौर्यादिषु विकृति-ष्वविधानादनितिकर्तव्यताकत्वे प्राप्ते प्रत्युच्यते। यथा लोके शाकादिषु सिद्धेषु वदन्त्योदनं पचेति तथेह सिद्धवत्कृत्य सामान्येनेतिकर्तव्यताकरणं विहितं तस्याश्च विकृतिष्वविधेः सौर्यादीनां विकृतियागानां दर्शा-दिप्रकृतिविहितपूर्वेतिकर्तव्यतावत्त्वमिति। तत्र यथा यजतेरिति यागो गृहीतस्तथेहापीक्षतेरितीक्षणमित्यर्थः। ईक्षतेरित्युक्तेरर्थपरत्वे वाक्यान्तराण्यपि प्रधानपक्षप्रतिक्षेपायात्र सूचितानि भवन्तीत्याह—**तेनेति**। सामा-

 

तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" [ मुण्ड० १।१।९ ] इत्येवमादीन्यपि सर्वज्ञेश्वरकारणपराणि वाक्यानि उदाहर्तव्यानि ॥ यत्तूक्तं सत्त्वधर्मेण ज्ञानेन सर्वज्ञं प्रधानं भविष्यतीति ॥ तन्नोपपद्यते ॥ न हि प्रधानावस्थायां गुणसाम्यात् सत्त्वधर्मो ज्ञानं सम्भवति ॥ ननूक्तं सर्वज्ञानशक्तिमत्त्वेन सर्वज्ञं भविष्यतीति ॥ तदपि नोपपद्यते ॥ यदि गुणसाम्ये सति सत्त्वव्यपाश्रयां ज्ञानशक्तिमाश्रित्य सर्वज्ञं प्रधानमुच्येत, कामं रजस्तमोव्यपाश्रयामपि ज्ञानप्रतिबन्धशक्तिमाश्रित्य किञ्चिज्ज्ञमुच्येत ॥ अपि च नासाक्षिका सत्त्ववृत्तिर्जानातिनाऽभिधीयते ॥ न चाचेतनस्य प्रधानस्य साक्षित्वमस्ति ॥ तस्मादनुपपन्नं प्रधानस्य सर्वज्ञत्वम् ॥ योगिनां तु चेतनत्वात्सत्त्वोत्कर्षनिमित्तं सर्वज्ञत्वमुपपन्नमित्यनुदाहरणम्[3] ॥ अथ पुनस्साक्षिनिमित्तमीक्षितृत्वं प्रधानस्य[4] कल्पेत ।

---

रत्नप्रभा ।

मेव तपः । तपस्विनः फलमाह—तस्मादिति ॥ एतत् कार्यं सूत्राख्यं ब्रह्म । केवलसत्त्ववृत्तेर्ज्ञानत्वमङ्गीकृत्य प्रधानस्य सर्वज्ञत्वं निरस्तम् ॥ सम्प्रति न केवलजडवृत्तिर्ज्ञानशब्दार्थः । किन्तु साक्षिबोधविशिष्टा वृत्तिर्वृत्तिव्यक्तबोधो वा ज्ञानं,तच्चान्धस्य प्रधानस्य नास्तीत्याह—अपि चेति ॥ साक्षित्वमस्ति,येनोक्तज्ञानवत्त्वं स्यादिति शेषः ॥ ननु सत्त्ववृत्तिमात्रेण योगिनां सर्वज्ञत्वमुक्तमित्यत आह—योगिनां त्विति ॥ सेश्वरं साङ्ख्यमतमाह—अथेति ॥ सर्वज्ञत्वं नाम सर्वगोचरज्ञानवत्त्वं, न ज्ञानकर्तृत्वं,

भामती ।

'यः सर्वज्ञः' इति सामान्यतः,'सर्ववित्'इति विशेषतः । सांख्यीयं स्वमतसमाधानमुपन्यस्य दूषयति—यत्तूक्तं सत्त्वधर्मेणेति । पुनः सांख्यमुत्थापयति—ननूक्तमिति । परिहरति—तदपीति । समुदाचरद्वृत्ति तावन्न भवति सत्त्वं, गुणवैषम्यप्रसङ्गेन साम्यानुपपत्तेः । न चाव्यक्तेन रूपेण ज्ञानमुपयुज्यते, रजस्तमसोस्तत्प्रतिबन्धस्यापि सूक्ष्मेण रूपेण सद्भावादित्यर्थः।अपि च चैतन्यप्रधानवृत्तिवचनो जानातिर्न चाचेतने वृत्तिमात्रे दृष्टचरप्रयोग इत्याह—अपि च नासाक्षिकेति । कथं तर्हि योगिनां सत्त्वांशोत्कर्षहेतुकं सर्वज्ञत्वमित्यत आह—योगिनां त्विति । सत्त्वांशोत्कर्षो हि योगिनां चैतन्यचक्षुष्मतामुपकरोति । नान्धस्य प्रधानस्येत्यर्थः । यदि तु कापिलमतमपहाय हैरण्यगर्भमास्थीयेत तत्राप्याह—अथ पुनः साक्षिनिमित्तमिति ।

आनन्दगिरीय—न्यायनिर्णयः ।

न्यतः सर्वज्ञो विशेषतः सर्वविदिति भेदः । ज्ञानमयं ज्ञानात्मकं तपो न त्वायासरूपमेतद्ब्रह्म जायमानं हिरण्यगर्भाख्यं कार्यम् । नाम देवदत्तादि । रूपं नीलपीतादि । अन्नं व्रीहियवादि । आदिपदेन ज्ञः कालकालो गुणी सर्वविद्यः स कारणमित्यादि गृहीतम् । सिद्धान्तमुपपाद्य परोक्तमनुवदति—यत्त्विति । प्रधाने गुणानां तुल्यतया सत्त्वकार्यस्य ज्ञानस्यैवासंभवे सर्वज्ञत्वं दूरनिरस्तमित्याह—तन्नेति । औपचारिकं सर्वज्ञत्वमुक्तं स्मारयति—नन्विति । सत्त्वस्य सूक्ष्मरूपेण ज्ञानहेतुत्ववदितरयोरपि तेनाऽऽत्मना तत्प्रतिबन्धकत्वान्न सर्वज्ञतेत्याह—तदपीति । केवलसत्त्ववृत्तेर्ज्ञानत्वमुपेत्य सत्त्वधर्मेण तेन न सर्वज्ञतेत्युक्तम् । इदानीं न केवला सत्त्ववृत्तिर्ज्ञानं किंतु तदभिव्यक्तश्चित्प्रकाशस्तथाविधज्ञानवत्त्वं च न प्रधानस्येत्याह—अपि चेति । तर्हि प्रधानमेव चिदात्मना परिणतमवच्छेदकवृत्त्यात्मना विपरिणंस्यते नेत्याह—न चेति । हेतुरचेतनस्येत्युक्तः । प्रधानस्यासर्वज्ञत्वमुक्तं निगमयति—तस्मादिति । अचेतनस्याज्ञातृत्वं तच्छब्दार्थः । परोक्तं दृष्टान्तं विघटयति—योगिनां त्विति । सत्त्वोत्कर्षोऽपि चेतनस्योपकरोति नाचेतनस्य प्रधानस्यान्धस्येवाऽऽदर्शोत्कर्ष इत्यर्थः । सेश्वरसांख्यमतमाह—अथेति । यस्य स्वतो नेक्षितृत्वं तस्य कथं तदन्य-

---

१ सत्त्वविषयामित्यर्थः । २ अन्धस्येवेति पा०। ३ दृष्टान्तो न सम्भवतीत्यर्थः । ४ हैरण्यगर्भमतमिति क्वचिट्टिप्पणी ।

यथाग्निनिमित्तमयःपिण्डादेर्दग्धृत्वम् ॥ तथा सति यन्निमित्तमीक्षितृत्वं प्रधानस्य तदेव सर्वज्ञं मुख्यं ब्रह्म जगतः कारणमिति युक्तम् ॥ यत्पुनरुक्तं ब्रह्मणोऽपि न मुख्यं सर्वज्ञत्वमुपपद्यते, नित्यज्ञानक्रियत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यासम्भवादिति ॥ अत्रोच्यते ॥ इदं तावद्भवान्प्रष्टव्यः ॥ कथम् ॥ नित्यज्ञानक्रियत्वे सर्वज्ञत्वहानिरिति—यस्य हि सर्वविषयावभासनक्षमं ज्ञानं नित्यमस्ति सोऽसर्वज्ञ इति विप्रतिषिद्धम् ॥ अनित्यत्वे हि ज्ञानस्य कदाचिज्जानाति कदाचिन्न जानातीत्यसर्वज्ञत्वमपि स्यात् ॥ नासौ ज्ञाननित्यत्वे दोषोऽस्ति ॥ ज्ञाननित्यत्वे ज्ञानविषयस्स्वातन्त्र्यव्यपदेशो नोपपद्यत इति चेत् ॥ न ॥ प्रततौष्ण्यप्रकाशेऽपि सवितरि दहति प्रकाशयतीति स्वातन्त्र्यव्यपदेशदर्शनात् ॥ ननु सवितुर्दाह्यप्रकाश्यसंयोगे सति दहति प्रकाशयतीति व्यपदेशः स्यात् । न तु ब्रह्मणः । प्रागुत्पत्तेर्ज्ञानकर्मसंयोगोऽस्तीति विषमो दृष्टान्तः ॥ न ॥ असत्यपि कर्मणि सविता प्रकाशत इति कर्तृत्वव्यपदेशदर्शनाद् एवमसत्यपि ज्ञानकर्मणि ब्रह्मणस्तदैक्षतेति कर्तृत्वव्यपदेशोपपत्तेर्न वैषम्यम् ॥

---

रत्नप्रभा ।

ज्ञानस्य कृत्यसाध्यत्वादिति हृदि कृत्वा पृच्छति—इदं तावदिति ॥ सर्वं जानातीति शब्दासाधुत्वं शंकते—ज्ञाननित्यत्व इति ॥ नित्यस्यापि ज्ञानस्य तत्तदर्थोपहितत्वेन ब्रह्मस्वरूपाद्भेदं कल्पयित्वा कार्यत्वोपचाराद्ब्रह्मणस्तत्कर्तृत्वव्यपदेशः साधुरिति सदृष्टान्तमाह—न प्रततेति ॥ सन्ततेत्यर्थः । असत्यपि अविवक्षितेऽपि । ननु प्रकाशतेरकर्मकत्वात् सविता प्रकाशते इति प्रतियोगेऽपि जानातेः सकर्मकत्वात् कर्मा-

भामती ।

तेषामपि हि प्रकृष्टसत्त्वोपादानं पुरुषविशेषस्यैव क्लेशकर्मविपाकाशयापरामृष्टस्य सर्वज्ञत्वं, न तु प्रधानस्याचेतनस्य । तदपि चाद्वैतश्रुतिभिरपास्तमिति भावः । पूर्वपक्षबीजमनुभाषते—यत्पुनरुक्तं ब्रह्मणोऽपीति । चैतन्यस्य शुद्धस्य नित्यत्वेऽप्युपहितं सदनित्यं कार्यम्, आकाशमिव घटावच्छिन्नमित्यभिसंधाय परिहरति—इदं तावद्भवानिति । प्रततौष्ण्यप्रकाशे सवितरि इत्येतदपि विषयावच्छिन्नप्रकाशः कार्यमित्येतदभिप्रायम् । वैषम्यं चोदयति—ननु सवितुरिति । किं वास्तवं कर्माभावमभिप्रेत्य वैषम्यमाह भवान् उत तद्विवक्षाभावं, तत्र यदि तद्विवक्षाभावं तदा प्रकाशयतीत्यनेन मा भूत्साम्यं,प्रकाशत इत्यनेन त्वस्ति। न ह्यत्र कर्म विवक्षितम् । अथ च प्रकाशस्वभावं प्रत्यस्ति स्वातन्त्र्यं सवितुरिति परिहरति—न । असत्यपि कर्मणीति । असत्यपीत्यविवक्षितेऽपीत्यर्थः । अथ वास्तवं कर्माभावमभिसंधाय वैषम्यमुच्येत, तन्न, असिद्धत्वात्कर्माभावस्य,

आनन्दगिरीय—न्यायनिर्णयः ।

कृतमपि स्यादित्याशंक्याऽऽह—यथेति । लाघवेन सिद्धान्तयति—तथेति । सिद्धान्ते परोक्तामनुपपत्तिमनुभाषते—यत्पुनरिति । तस्य मुख्यं सर्वज्ञत्वं प्रतिजानीते—अत्रेति । तत्र परोक्त्यनुपपत्तिं निरसितुं पृच्छति—इदमिति । प्रकृत्यर्थाभावात्प्रत्ययार्थाभावाद्वा ब्रह्मणोऽसर्वज्ञतेति प्रश्नमेव प्रकटयति—कथमिति । प्रथमं प्रत्याह—यस्येति । उक्तं व्यतिरेकद्वारा विवृणोति—अनित्यत्वे हीति । द्वितीयं शङ्कते—ज्ञानेति । स्वतो नित्यस्यापि ज्ञानस्य तत्तदर्थावच्छिन्नस्य कार्यत्वात्तत्र स्वातन्त्र्यं प्रत्ययार्थो ब्रह्मणः सिध्यतीत्याह—नेत्यादिना । वैषम्यं शङ्कते—नन्विति । ब्रह्मणोऽपि विषयसंबन्धे जानातीति स्यादित्याशंक्याऽऽह—न त्विति । यत्र स्वातन्त्र्यं तत्र क्रियाश्रयत्वमेवाव्यभिचारादिति दूषयति—नासत्यपीति । प्रकाशतरक-

**कर्मापेक्षायां तु ब्रह्मणीक्षितृत्वश्रुतयस्सुतरामुपपन्नाः ॥ किं पुनस्तत्कर्म यत्प्रागुत्पत्तेरीश्वरज्ञानस्य विषयो भवतीति? तत्त्वान्यत्वाभ्यामनिर्वचनीये नामरूपे अव्याकृते व्याचिकीर्षिते इति ब्रूमः ॥ यत्प्रसादाद्धि योगिनामप्यतीतानागतविषयं प्रत्यक्षं ज्ञानमिच्छन्ति योगशास्त्रविदः ॥ किमु वक्तव्यं तस्य नित्यशुद्धस्येश्वरस्य सृष्टिस्थितिसंहृतिविषयं नित्यज्ञानं भवतीति ॥ यदप्युक्तं प्रागुत्पत्तेर्ब्रह्मणश्शरीरादिसम्बन्धमन्तरेणेक्षितृत्वमनुपपन्नमिति ॥ न तच्चोद्यमवतरति ॥ सवितृप्रकाशवद्ब्रह्मणो ज्ञानस्वरूपनित्यत्वे ज्ञानसाधनापेक्षानुपपत्तेः ॥**

---

रत्नप्रभा ।

भावे तदैक्षतेत्ययुक्तमिति तत्राह–**कर्मापेक्षायां त्विति** ॥ कर्माविवक्षायामपि प्रकाशरूपे सवितरि प्रकाशत इति कथम् । चित्प्रकाशक्रियाश्रयत्वेन कर्तृत्वोपचारवच्चिदात्मन्यपि चिद्रूपेक्षणकर्तृत्वोपचारान्न वैषम्यमित्युक्तं पूर्वम् । अधुना तु कुम्भकारस्य स्वोपाध्यन्तःकरणवृत्तिरूपेक्षणवदीश्वरस्यापि स्वोपाध्यविद्यायाः विविधसृष्टिसंस्कारायाः प्रलयावसानेनोद्बुद्धसंस्कारायाः सर्गोन्मुखः कश्चित् परिणामः सम्भवति । अतः तस्यां सूक्ष्मरूपेण निलीनसर्वकार्यविषयकमीक्षणं, तस्य कार्यत्वात् कर्मसद्भावाच्च तत्कर्तृत्वं मुख्यमिति द्योतयति–**सुतरामिति** ॥ **ननु** मायोपाधिकबिम्बचिन्मात्रस्येश्वरस्य कथमीक्षणं प्रति मुख्यं कर्तृत्वं कृत्यभावादिति **चेत्** ॥ **न** ॥ कार्यानुकूलज्ञानवत एव कर्तृत्वादीश्वरस्यापि ईक्षणानुकूलनित्यज्ञानवत्त्वात् । **न च** नित्यज्ञानेनैव कर्तृत्वनिर्वाहात् किमीक्षणेनेति **वाच्यम्** । वाय्वादेरेव शब्दवत्त्वसम्भवात्किमाकाशेने-

भामती ।

विवक्षितत्वाच्चात्र कर्मण इति परिहरति–**कर्मापेक्षायां त्विति** । यासां सति कर्मण्यविवक्षिते श्रुतीनामुपपत्तिस्तासां सति कर्मणि विवक्षिते सुतरामित्यर्थः । **यत्प्रसादादिति** । यस्य भगवत ईश्वरस्य प्रसादात् । तस्य नित्यसिद्धस्येश्वरस्य नित्यं ज्ञानं भवतीति किमु वक्तव्यमिति योजना । यथाहुर्योगशास्त्रकाराः—'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च' इति । तद्भाष्यकाराश्च 'भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णाति ज्ञानवैराग्यादिना' इति ॥ **सवितृप्रकाशवदिति** । वस्तुतो नित्यस्य कारणानपेक्षां स्वरूपे-

आनन्दगिरीय–न्यायनिर्णयः ।

मेकत्वात्तथाव्यपदेशेऽपि जानातेः सकर्मकत्वात्कर्माभावे तथा व्यपदेशो न स्यादित्याशंक्याऽऽह–**कर्मेति** । प्रकृत्यर्थवत्प्रत्ययार्थस्यापि बाधाभावात्सुतरामित्युक्तम् । यथा कुम्भकारस्य व्याचिकीर्षिताकारस्य स्वोपाध्यन्तःकरणपरिणतिरीक्षणं तथा ब्रह्मणोऽप्यविद्यायाः स्वोपाधेरनादिप्रवृत्तसर्गसंस्कारायाः प्रलयहेतुकर्मक्षयोत्थापितसंस्कारादिनिमित्तवशेन सर्गोन्मुखा परिणतिरीक्षणम् । ततोऽन्यस्य मुख्यस्यासंभवादिदमेव मुख्यम् । तत्र चास्याऽऽदेकर्तुरस्ति कर्तृतेति भावः । नन्वपेक्षितं कर्म ब्रह्मणो भिन्नमभिन्नं वा? आद्ये तदद्वैतहानिर्द्वितीये सर्वज्ञत्वासिद्धिरित्याह–**किमिति** । तन्नामरूपाभ्यामेवेत्यादिश्रुतेः सर्वस्य कार्यप्रपञ्चस्य नामरूपात्मकत्वात्तयोश्च ब्रह्मणो भेदाभेदाभ्यां दुर्भणत्वान्नैवमित्याह–**तत्त्वेति** । प्रागेव तयोः सत्त्वे सर्गसिद्धिमाशंक्याऽऽह–**अव्याकृते इति** । तयोस्तथास्वाभाव्ये कुतः सृष्टिरित्याशंक्योक्तं–**व्याचिकीर्षिते इति** । निरीश्वरवादिनं प्रति ब्रह्मणः सर्वज्ञत्वमुक्त्वा सेश्वरवादिनं प्रत्याह–**यत्प्रसादादिति** । ततः प्रत्यक्चेतनाधिगमोऽन्तरायाभावश्चेति योगसूत्रस्य भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णाति ज्ञानवैराग्यादिनेति तद्भाष्यस्य च दृष्टेर्योगशास्त्रविद इत्युक्तम् । अपिना सूचितं कैमुतिकं न्यायमाह–**किम्विति** । तथा च सेश्वरवादे ब्रह्मणः सार्वज्ञ्यमनायासलभ्यमिति शेषः । जीवस्येवेश्वरस्यापि ज्ञानानुगुणहेत्वपेक्षामनुवदति–**यदपीति** । वस्तुतो नित्यस्य स्वतो हेत्वनपेक्षत्वान्नैवमित्याह–**न तदिति** । तदेव व्यतिरेकेण साधयति–

१ ततः प्रत्यक्चेतनाधिगमोप्यन्तरायाभावश्चेति तत्सूत्रम् ।

अपि चाऽविद्यादिमतस्संसारिणश्शरीराद्यपेक्षा ज्ञानोत्पत्तिस्स्यात् ॥ न ज्ञानप्रतिबन्धकारणरहितस्येश्वरस्य ॥ मन्त्रौ चेमावीश्वरस्य शरीराद्यनपेक्षतामनावरणज्ञानतां च दर्शयतः "न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च॥" [श्वेता० ६।८] इति, "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुस्स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥" [ श्वेता० ३।१९ ] इति च ॥ ननु नास्ति तव ज्ञानप्रतिबन्धकारणवानीश्वरादन्यस्संसारी "नान्योऽतोऽस्ति द्रष्टा नान्योतोऽस्ति विज्ञाता" [ बृ० ३।७।२३ ] इतिश्रुतेः ॥ तत्र किमिद-

---

रत्नप्रभा ।

त्यतिप्रसङ्गात् । अतः श्रुतत्वाद्वाय्वादिकारणत्वेनाकाशवदैक्षतेत्यागन्तुकत्वेन श्रुतमीक्षणमाकाशादिहेतुत्वेनाङ्गीकार्यमित्यलम् । अव्याकृते सूक्ष्मात्मना स्थिते । व्याकर्तुं स्थूलीकर्तुमिष्टे इत्यर्थः । अव्याकृतकार्योपरक्तचैतन्यरूपेक्षणस्य कारकानपेक्षत्वेऽपि वृत्तिरूपेक्षणस्य कारकं वाच्यमित्याशंक्याह—अपि चाविद्यादिमत इति ॥ यथैकस्य ज्ञानं, तथान्यस्यापीति नियमाभावान्मायिनोऽशरीरस्यापि जन्येक्षणकारकत्वमिति भावः ॥ ननु यज्जन्यज्ञानं तत् शरीरसाध्यमिति व्याप्तिरस्तीत्याशंक्य श्रुतिबाधमाह—मन्त्रौ चेति ॥ कार्यं शरीरम् । करणम् इन्द्रियम् । अस्य ईश्वरस्य । शक्तिः माया स्वकार्यापेक्षया परा विचित्रकार्यकारित्वाद् विविधा सा त्वैतिह्यमात्रसिद्धा न प्रमाणसिद्धेत्याह—श्रूयत इति ॥ ज्ञानरूपेण बलेन या सृष्टिक्रिया सा स्वाभाविकी अनादिमायात्मकत्वादित्यर्थः । ज्ञानस्य चैतन्यस्य बलं मायावृत्तिप्रतिबिम्बितत्वेन स्फुटत्वम् । तस्य क्रिया नाम बिम्बत्वेन ब्रह्मणो जनकता ज्ञातृतापि स्वाभाविकीति वार्थः । अपाणिरपि ग्रहीता । अपादोऽपि जवनः । ईश्वरस्य स्वकार्ये लौकिकहेत्वपेक्षा नास्तीति भावः । अग्र्यम् अनादिं, पुरुषम् अनन्तम्, महान्तं विभुमित्यर्थः । अपसिद्धान्तं शंकते—नन्विति ॥

भामती ।

णोक्त्वा व्यतिरेकमुखेनाप्याह—अपि चाविद्यादिमत इत्यादि । आदिग्रहणेन कामकर्मादयः संगृह्यन्ते । न ज्ञानप्रतिबन्धकारणरहितस्येति । संसारिणां वस्तुतो नित्यज्ञानत्वेऽप्यविद्यादयः प्रतिबन्धकारणानि

आनन्दगिरीय—न्यायनिर्णयः ।

अपि चेति । अविद्या मिथ्याज्ञानम् । आदिशब्देनास्मितादिरुक्तः । ननु संसारिणोऽपि ज्ञानस्य नित्यत्वात्तत्र हेत्वपेक्षा स्याच्चेदीश्वरस्यापि स्यादभेदादित्याशङ्क्याऽविद्यं भेदमादाय विशेषमाह—न ज्ञानेति । सोऽपि ज्ञानप्रतिबन्धकारणवानितरवच्चेतनत्वादतस्तस्यापि देहाद्यपेक्षा ज्ञानोत्पत्तिरित्याशङ्क्य कालात्ययापदिष्टत्वमाह—मन्त्रौ चेति । चकारः शङ्कानिरासार्थः । कार्यं शरीरं करणमिन्द्रियजातं समः समानजातीयोऽभ्यधिको विजातीयो दृश्यत इति नञाऽन्वितं द्वयं मानाभावपरम् । सत्त्वासत्त्वादिनाऽनवगाह्यत्वं परत्वम् । शक्तिर्मूलकारणं माया तस्या विविधत्वमाकाशाद्यशेषाकारत्वम् । ऐतिह्यमात्रसिद्धा सा न प्रामाणिकीति वक्तुं श्रूयत इत्युक्तम् । उक्तमायानुसारित्वं स्वाभाविकत्वं ज्ञानमेव बलं तेन क्रिया जगतः सर्गाद्या सा च स्वाभाविकीति । अपाणिरपि ग्रहीताऽपादोऽपि जवनो वेगवद्विहरणवानचक्षुरपि पश्यत्यकर्णोऽपि शृणोति किं बहुना सर्वमपि वेदनयोग्यं कार्यकरणानपेक्षो वेत्ति पर्यवसितं तस्मिन्वेदितृत्वमतो न तस्यान्यो वेदिताऽस्ति नित्यस्फुरणत्वाच्च तं चाऽऽदिकर्तारं महान्तमाचक्षते ब्रह्मविदो न च तन्महत्त्वमापेक्षिकमिति पुरुषपदम् । अविद्यादिमतः संसारिणो देहाद्यपेक्षा ज्ञानोत्पत्तिर्नेश्वरस्येत्यत्रापसिद्धान्तं शङ्कते—नन्विति । न केवलमपराद्धान्तादीश्वरादन्यो न संसारी किंतु श्रुतिविरोधादपीत्याह—नेति । व्यतिरिक्ते संसारिण्यसति विभागोक्तिरयुक्तेति फलितमाह—तत्रेति । स्वाभाविकमौपाधिकं वाऽन्यत्वं नास्तीति विकल्पयति—

मुच्यते संसारिणश्शरीराद्यपेक्षा ज्ञानोत्पत्तिर्नेश्वरस्येति ? ॥ अत्रोच्यते ॥ सत्यं नेश्वरादन्यस्संसारी । तथापि देहादिसङ्घातोपाधिसम्बन्ध इष्यत एव घटकरकगिरिगुहाद्युपाधिसम्बन्ध इव व्योम्नः ॥ तत्कृतश्च शब्दप्रत्ययव्यवहारो लोकस्य दृष्टो, घटच्छिद्रं करकादिच्छिद्रमित्यादिराकाशाव्यतिरेकेऽपि । तत्कृता चाकाशे घटाकाशादिभेदमिथ्याबुद्धिर्दृष्टा ॥ तथेहापि देहादिसङ्घातोपाधिसम्बन्धाविवेककृतेश्वरसंसारिभेदमिथ्याबुद्धिः ॥ दृश्यते चात्मन एव सतो देहादिसङ्घाते अनात्मन्यात्मत्वाभिनिवेशो मिथ्याबुद्धिमात्रेण पूर्वपूर्वेण[1] ॥ सति चैवं संसारित्वे देहाद्यपेक्षमीक्षितृत्वमुपपन्नं संसारिणः ।

रत्नप्रभा ।

ज्ञाने प्रतिबन्धककारणान्यविद्यारागादीनि । श्रुतावत ईश्वरादन्यो नास्तीत्यन्वयः ॥ औपाधिकस्य जीवेश्वरभेदस्य मयोक्तत्वान्नापसिद्धान्त इत्याह—अत्रोच्यत इति ॥ तत्कृत उपाधिसम्बन्धकृतः शब्दतज्जन्यप्रत्ययरूपो व्यवहारः । असंकीर्ण इति शेषः ॥ अव्यतिरेके कथमसंकरस्तत्राह—तत्कृता चेति ॥ उपाधिसम्बन्धकृतेत्यर्थः ॥ तथेति । देहादिसम्बन्धस्य हेतुरविवेकोऽनाद्यविद्या तया कृत इत्यर्थः । अविद्यायां हि प्रतिबिम्बो जीवः, बिम्बचैतन्यम् ईश्वरः इतिभेदोऽविद्याधीनसत्ताकः । अनादिभेदस्य कार्यत्वायोगात् । कार्यबुद्ध्यादिकृतप्रमात्रादिभेदश्च कार्य एवेति विवेकः । नन्वखण्डस्वप्रकाशात्मनि कथमविवेकः, तत्राह—दृश्यते चेति ॥ वस्तुतो देहादिभिन्नस्वप्रकाशस्यैव सत आत्मनो नरोऽहमिति भ्रमो दृष्टत्वाद्दुरपह्नवः । स च मिथ्याबुद्ध्या मीयत इति मिथ्याबुद्धिमात्रेण भ्रान्तिसिद्धाज्ञानेन कल्पित इतिचकारार्थः । यद्वोक्तमिथ्याबुद्धौ लोकानुभवमाह—दृश्यते चेति ॥ इत्थंभावे तृतीया । भ्रान्त्यात्मना दृश्यत

भामती ।

सन्ति न तु ईश्वरस्याविद्यारहितस्य ज्ञानप्रतिबन्धकारणसंभव इति भावः । न तस्य कार्यमावरणाद्यपगमो विद्यते, अनावृतत्वादिति भावः । ज्ञानबलेन क्रिया । प्रधानस्य त्वचेतनस्य ज्ञानबलाभावाज्जगतो न क्रियेत्यर्थः । अपाणिर्ग्रहीता, अपादो जवनो वेगवान् विहरणवान् । अतिरोहितार्थमन्यत् । स्यादेतत् । अनात्मनि व्योम्नि घटाद्युपाधिकृतो भवत्ववच्छेदविभ्रमः, न तु आत्मनि स्वभावसिद्धप्रकाशे स घटत इत्यत आह—दृश्यते चात्मन एव सत इति । अभिनिवेशः मिथ्याभिमानः । मिथ्याबुद्धिमात्रेण पूर्वेणेति ।

आनन्दगिरीय—न्यायनिर्णयः ।

अत्रेति । तत्राऽऽद्यमङ्गीकरोति—सत्यमिति । द्वितीयं प्रत्याह—तथाऽपीति । तत्कृतमन्यत्वं चेष्टमेवेति शेषः । अपरिच्छिन्नस्य परिच्छिन्नोपाधिसंबन्धे दृष्टान्तमाह—घटेति । विमतौ तत्त्वतो भिन्नावपुनरुक्तशब्दधीगम्यत्वाद्घटादिवदित्याशंक्य व्यभिचारमाह—तत्कृतश्चेति । उपाधिसंबन्धस्तच्छब्दार्थः । हेतुमदाकाशे साध्यं व्यावर्तयति—आकाशेति । तस्य तत्त्वतो भेदाभावेऽपीति यावत् । परापरयोस्तात्त्विकभेदाभावे कथं तत्प्रथेत्याशंक्याऽऽह—तत्कृतेति । पूर्ववत्तच्छब्दः । दृष्टान्तस्थमर्थं दार्ष्टान्तिके योजयति—तथेति । चिदात्मा सप्तम्यर्थः । विशिष्टोपाधियोगादविवेकस्तेन कृतेत्येतत् । व्योमादावनात्मनि भ्रान्तिसंभवेऽपि कथमात्मनि स्वप्रकाशे स्यादित्याशंक्याऽऽह—दृश्यते चेति । तत्त्वतोऽतिरिक्तस्यैव सत आत्मन इति योजना । तत्र कारणमाह—मिथ्येति । पूर्वभ्रान्तेरेव संस्कारद्वारोत्तरभ्रान्तिकारणत्वमवधारयितुं तन्मात्रग्रहणं न किंतु तद्धेतोर्विचारासहत्वं वक्तुमतो हेत्वन्तरमविरुद्धम् । उपाधिद्वारा चिदात्मनि संसारित्वेऽपि प्रकृते किं जातं तदाह—सति चेति । ईश्वरस्यासंसारिणो महाकाशस्थानीयस्य तदनपेक्षमीक्षितृत्वमिति शेषः । प्रधानस्य परोक्तं सर्वज्ञत्वं निरस्य ब्रह्मणस्तदुपपत्तिरुक्ता संप्रति प्रधानस्यैव कारण-

१ पूर्वपूर्वेणेति क्वचिन्नास्ति । ण पूर्वेणेति क्वचित्पाठः ।

यदप्युक्तं प्रधानस्यानेकात्मकत्वान्मृदादिवत्कारणत्वोपपत्तिर्नासंहतस्य ब्रह्मण इति ॥ तत्प्रधानस्याशब्दत्वेनैव प्रत्युक्तम् ॥ यथा तु तर्केणापि ब्रह्मण एव कारणत्वं निर्वोढुं शक्यते न प्रधानादीनां, तथा प्रपञ्चयिष्यते "न विलक्षणत्वादस्य–" [ व्या० सू० २। १। ४ ] इत्येवमादिना ॥५॥ अत्राह–यदुक्तं नाचेतनं प्रधानं जगत्कारणमीक्षितृत्वश्रवणादिति। तदन्यथाप्युपपद्यते ॥ अचेतनेऽपि चेतनवदुपचारदर्शनात्–यथा–प्रत्यासन्नपतनतां नद्याः कूलस्याऽलक्ष्य कूलं पिपतिषतीत्यचेतनेऽपि कूले चेतनवदुपचारो दृष्टस्तद्वदचेतनेऽपि प्रधाने प्रत्यासन्नसर्गे चेतनवदुपचारो भविष्यति तदैक्षतेति। यथा–लोके कश्चिच्चेतनस्स्नात्वा भुक्त्वा चापराह्णे ग्रामं रथेन गमिष्यामीतीक्षित्वाऽनन्तरं तथैव नियमेन प्रवर्तते, तथा प्रधानमपि महदाद्याकारेण नियमेन प्रवर्तते। तस्माच्चेतनवदुपचर्यते ॥ कस्मात्पुनः कारणाद्विहाय मुख्यमीक्षितृत्वमौपचारिकं कल्प्यते? "तत्तेज ऐक्षत" [ छान्दो० ६। २। ३ ] "ता आप ऐक्षन्त" [ छान्दो० ६। २। ४ ] इति चाचेतनयोरप्तेजसोश्चेतनवदुपचारदर्शनात् ॥ तस्मात्सत्कर्तृकमपीक्षणमौपचारिकमिति गम्यते।

---

रत्नप्रभा।

इत्यर्थः ॥ पूर्वपूर्वभ्रान्तिमात्रेण दृश्यते, न च प्रमयेति वार्थः। कूटस्थस्यापि मायिकं कारणत्वं युक्तमित्याह–यथा त्विति ॥ यस्त्ववेद्ये शब्दशक्तिग्रहायोग इति। तन्न, सत्यादिपदानामबाधितार्थेषु लोकावगतशक्तिकानां वाच्यैकदेशत्वेनोपस्थिताखण्डब्रह्मलक्षकत्वादिति स्थितम् ॥ ९ ॥ सम्प्रत्युत्तरसूत्रं निरस्याशंकामाह–अत्राहेति ॥ अन्यथापि। अचेतनत्वेऽपि। ननु प्रधानस्य चेतनेन किं साम्यं येन गौणमीक्षणमिति तत्राह–यथेति ॥ नियतक्रमवत् कार्यकारित्वं साम्यमित्यर्थः ॥ उपचारप्राये वचनादिति ॥ गौणार्थप्रचुरे प्रकरणे समाम्नानादित्यर्थः। अप्तेजसोरिवाचेतने सति गौणी ईक्षतिरिति चेत् ॥

भामती।–०

आनन्दगिरीय–न्यायनिर्णयः।

त्वयोग्यतेत्युक्तमनुवदति–यदपीति। तस्य कारणत्वं शब्दतस्तर्कतो वा? नाऽऽद्य इत्याह–तदिति। द्वितीयं निरस्यति–यथा त्विति ॥ ५ ॥ प्रधानस्य न कारणतेत्युक्ते सतीक्षितृत्वस्य चेतनकारणत्वहेतोर्व्यभिचारं चोदयति–अत्रेति। उक्तमनूद्य व्यभिचारं स्फोटयति–यदुक्तमिति। हेतुश्रवणं तदा परामृष्टमन्यथाऽपि जगत्कारणस्याचेतनत्वेऽपीत्यर्थः। कथमुपपत्तिः, न हि तत्र मुख्यमीक्षितृत्वं तत्राऽऽह–अचेतनेऽपीति। तदेव दृष्टान्तेन व्याचष्टे–प्रत्यासन्नेति। तथाऽपि कथं प्रधाने तदैक्षतेति व्यपदेशस्तत्राऽऽह–तद्वदिति। उपचारे निमित्तं प्रत्यासन्नेत्यादि। तथाविधेऽपि प्रधाने सिसृक्षतीति स्यात्कथमैक्षतेति तत्र चेतनवदिति। निरुक्तं दृष्टान्तं व्याकुर्वाणो लौकिकेक्षितृसाम्यान्नियतक्रियाकारित्वादित्थमुक्तिरित्याह–यथेति। तस्मादिति नियतप्रवृत्तिमत्त्वं हेतूकृतम्। मुख्यगौणयोर्मुख्यग्रहणं न्याय्यमिति सिद्धान्ती शङ्कते–कस्मादिति। गौणेक्षणसंनिधिना समाधत्ते–तत्तेज इति। दर्शनादौपचारिकं सतोऽपीक्षितृत्वमिति संबन्धः। संनिधिफलमाह–तस्मादिति। तच्छब्दार्थं व्याकरोति–उपचारेति। तत्प्राये तत्प्रकरणे। इतिशब्दः शंकोपक्रमस्थक्रियापदसंबन्धी। व्यभिचारशंकामनूद्य सूत्रमुत्तरत्वेनावतारयति–

---

१ त्रिनैकात्मकस्येति क्वचित्पाठः।

उपचारप्राये वचनादित्येवं प्राप्ते इदं सूत्रमारभ्यते—

## गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

यदुक्तं प्रधानमचेतनं सच्छब्दवाच्यं, तस्मिन्नौपचारिकीक्षितिरपांतेजसोरिवेति। तदसत् ॥ कस्मात् ॥ आत्मशब्दात्—"सदेव सोम्येदमग्र आसीद्" [ छान्दो० ६ । २ । १ ] इत्युपक्रम्य "तदैक्षत" [ छान्दो० ६ । २ । ३ ] "तत्तेजोऽसृजत" [ छान्दो० ६ । २ । ३ ] इति च तेजोऽबन्नानां सृष्टिमुक्त्वा, तदेव प्रकृतं सदीक्षितृ तानि च तेजोऽबन्नानि, देवताशब्देन परामृश्याह—"सेयं देवतैक्षत" [ छान्दो० ६ । ३ । २ ] "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" [ छान्दो० ६।३।२ ] इति। तत्र यदि प्रधानमचेतनं गुणवृत्त्या ईक्षितृ कल्प्येत तदेव प्रकृतत्वात् सेयं देवतेति परामृश्येत, न तदा देवता, जीवमात्मशब्देनाभिदध्यात् ॥ जीवो हि नाम चेतनश्शरीराध्यक्षः प्राणानां धारयिता, प्रसिद्धेर्निर्वचनाच्च ॥ स कथमचेतनस्य प्रधानस्यात्मा भवेत् ? आत्मा हि नाम स्वरूपम् । नाचेतनस्य प्रधानस्य चेतनो जीवस्स्वरूपं भवितुमर्हति ॥

---

रत्नप्रभा ।

न । आत्मशब्दात्सतश्चेतनत्वनिश्चयादिति सूत्रार्थमाह—**यदुक्तमित्यादिना** ॥ सा प्रकृता सच्छब्दवाच्या । इयम् ईक्षित्री देवता परोक्षा। हन्त इदानीं भूतसृष्ट्यनन्तरम्। इमाः सृष्टाः । तिस्रः तेजोऽबन्नरूपाः । [३]परोक्षत्वाद्देवता इति द्वितीयाबहुवचनम् । अनेन पूर्वकल्पानुभूतेन जीवेनात्मना मम स्वरूपेण ता अनुप्रविश्य तासां भोग्यत्वाय नाम च रूपं च स्थूलं करिष्यामीत्यैक्षतेत्यन्वयः ॥ लौकिक-

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

**एवमिति** । अनुवादभागं विभजते—**यदुक्तमिति** । परिहारभागं व्याकर्तुं नञर्थमुक्त्वा प्रश्नद्वारा हेतुमाह—**तदसदिति** । परमतं निरसितुं प्रकरणमनुसंदधानो हेतुं व्याचष्टे—**सदेवेति** । सेति प्रकृतसदात्मोक्तिरियमिति संनिहितेक्षितृत्वनिर्देशो देवतेत्यलौकिकत्वमुक्तम् । ईक्षणमभिनयति—**हन्तेति** । सूक्ष्मभूतसर्गानन्तरं तावता व्यवहारायोगात्तदपेक्षायामित्यर्थः । सृष्टिवाक्येनोक्तानि तेजोबन्नानि निर्दिशति—**इमा इति** । सूक्ष्मभूतानां व्यवहाराङ्गत्वेनाप्रात्यक्ष्यात्तेषु देवताशब्दोऽनेन पूर्वसृष्ट्यनुभूतेन जीवेन प्राणधृतिहेतुनाऽऽत्मना सद्रूपेण यथोक्ता देवताः सर्गानन्तरं प्रविश्य नाम रूपं चेति विस्पष्टमासमन्तात्करवाणीति परा देवतेक्षितवतीत्यर्थः । ननु सा जीवमात्मशब्देनाभिधत्ताम् । तथाऽपि प्रधानस्य गौणमीक्षितृत्वं किं न स्यात्तत्राऽऽह—**तत्रेति** । ईक्षणवाक्यं सप्तम्यर्थः । जीवस्य चेतनत्वादचेतनप्रधानस्य तदात्मत्वायोगादित्यर्थः । तस्यापि प्राणात्मना प्रधानकार्यत्वात्तस्य तस्मिन्नात्मशब्दः स्यादित्याशंक्य जीवस्वरूपमाह—**जीवो हीति** । तस्य तदीयचैतन्यस्य च प्रसिद्धयर्थौ निपातौ । चेतनत्वे हेतुः—**शरीरेति** । तत्र जीवशब्दप्रवृत्तौ निमित्तमाह—**प्राणानामिति** । उक्तचेतनस्य जीवत्वे मानमाह—**प्रसिद्धेरिति** । प्राणविषयत्वेनापि लौकिकी प्रसिद्धिः स्यादित्याशंक्य "जीव प्राणधारणे" इति धात्वर्थानुरोधादुक्तश्चेतनो जीव इत्याह—**निर्वचनाच्चेति** । सिद्धे जीवस्य चैतन्ये फलितमाह—**स कथमिति** । आत्मशब्दार्थं वदन्नसंभवं साधयति—**आत्मा हीति** । पूर्ववन्निपातौ । संसार्यसंसारिणोर्विरोधात्त्वन्मतेऽपि ब्रह्मणो जीवे कथ-

---

१ "तत्तेज ऐक्षत" "ता आप ऐक्षन्त" इति छान्दोग्य ( ६ । २ । ३,–४ ) श्रुतौ समाम्नानादित्यर्थः । एवं च श्रुतौ तच्छब्दो गौणार्थकः । २ रिक ईक्षेति क्वचित्पाठः । ३ सूक्ष्मभूतैर्व्यवहारासंभवेन परोक्षत्वाद्देवताशब्दप्रयोगः ।

**अथ तु चेतनं ब्रह्म मुख्यमीक्षितृ परिगृह्यते, तस्य जीवविषये आत्मशब्दप्रयोग उपपद्येत ॥ तथा-"स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" [छान्दो० ६।७।८] इति । अत्र स आत्मेति प्रकृतं सदणिमानमात्मानमात्मशब्देनोपदिश्य "तत्त्वमसि श्वेतकेतो" इति चेतनस्य श्वेतकेतोरात्मत्वेनोपदिशति ॥ अप्तेजसोस्तु विषयत्वादचेतनत्वम् ॥ नामरूपव्याकरणादौ च प्रयोज्यत्वेनैव निर्देशात् । न चात्मशब्दवत्किञ्चिन्मुख्यत्वे कारणमस्तीति युक्तं कूलवद्गौणत्वमीक्षितृत्वस्य ॥ तयोरपि च सदधिष्ठितत्वापेक्षमेवेक्षितृत्वम् ॥**

रत्नप्रभा ।

प्रसिद्धेर्जीवप्राणधारण इति धातोर्जीवति प्राणान्धारयतीति निर्वचनाच्चेत्यर्थः ॥ **अथ त्विति** । स्वपक्षे तु बिम्बप्रतिबिम्बयोर्लोके भेदस्य कल्पितत्वदर्शनाज्जीवो ब्रह्मणः सतः आत्मेति युक्तमित्यर्थः । जीवस्य सच्छब्दार्थं प्रत्यात्मशब्दात् सन्न प्रधानमित्युक्त्वा सतो जीवं प्रत्यात्मशब्दान्न प्रधानमिति विधान्तरेण हेतुं व्याचष्टे-**तथेति** ॥ **स यः** सदाख्य **एषोऽणिमा** परमसूक्ष्मः । एतदात्मकम् **इदं सर्वं** जगत् । तत्सदेव **सत्यं** विकारस्य मिथ्यात्वात्, **सः** सत्पदार्थः सर्वस्य **आत्मा** हे **श्वेतकेतो** त्वं च नासि संसारी । किंतु तदेव सदबाधितं सर्वात्मकं ब्रह्मासीति श्रुत्यर्थः ॥ **इत्यत्र** उपदिशति अतश्चेतनात्मकत्वात् सच्चेतनमेवेति **वाक्यशेषः** ॥ यदुक्तमप्तेजसोरिव सत ईक्षणं गौणमिति, तत्राह-**अप्तेजसोस्त्विति** ॥ नामरूपयोर्व्याकरणं सृष्टिः । आदिपदान्नियमनम् । अप्तेजसोर्दृग्विषयत्वात् सृज्यत्वान्नियम्यत्वाच्चाचेतनत्वमीक्षणस्य मुख्यत्वे बाधकमस्ति साधकं च नास्तीति हेतोर्युक्तमीक्षणस्य गौणत्वमिति **योजना** ॥ चेतनवत्कार्यकारित्वं गुणः । तेज ऐक्षत । चेतनवत्कार्यकारीत्यर्थः । **यद्वा**-तेजःपदेन तदधिष्ठानं सल्लक्ष्यते । तथा च मुख्यमीक्षणमित्याह-**तयोरिति** ॥ स्यादेतत् **यदि** सत ईक्षणं मुख्यं स्यात्तदेव कुत

भामती ।

अनेनानादिता दर्शिता । मात्रग्रहणेन विचारासहत्वेन निर्वचनीयता निरस्ता । परिशिष्टं निग-

आनन्दगिरीय-न्यायनिर्णयः ।

मात्मपदं प्रयुक्तमित्याशंक्याऽऽह-**अथ त्विति** । तत्त्वतोऽविरोधादृष्टितो विरोधस्य बिम्बप्रतिबिम्बयोर्व्यभिचाराज्जीवब्रह्मैक्याद्ब्रह्मणो जीवे युक्तमात्मपदमित्यर्थः । जीवे सत आत्मशब्दान्न तत्प्रधानमित्युक्त्वा विधान्तरेण हेतुं व्याचष्टे-**तथेति** । यः सदाख्यः स एषोऽणिमाऽणोर्भावो भावभवित्रोरभेदादणुरित्येतदैतदात्म्यमेतदात्मनो भाव ऐतदात्म्यम् । अयमपि प्रयोगो भवितृपरः । सर्वमिदं जगदेतदात्मकमिति यावत् । परमसूक्ष्मं सर्वात्मकं सदेव सत्यं पारमार्थिकं तत्त्वं मृत्तिकेत्येव सत्यमिति दृष्टान्तस्यावधारणस्यात्रापि संबन्धायत्सत्यं स सर्वस्याऽऽत्मा निरुपचरितं रूपं हे श्वेतकेतो त्वं च नासि संसारी किंतु तदेव ब्रह्मेत्यक्षरयोजना । तत्रापेक्षितं प्रतीकमादाय विवक्षितमाह-**इत्यत्रेति** । तथा च चेतनस्याऽऽत्मशब्दान्न तस्य प्रधानतेत्यर्थः । यत्पुनरुपचारप्रायपाठादीक्षितृत्वं सतोऽपि गौणमिति तत्राऽऽह-**अप्तेजसोस्त्विति** । युक्तमीक्षितृत्वस्य गौणत्वमिति संबन्धस्तत्र हेतुरितिशब्दः । स च प्रत्येकं संबध्यते । यतश्चेतनव्यापारं प्रति विषयत्वेन निर्देशात्तयोरचेतनत्वम् । आदिपदेन प्रवेशनियमनादिसंग्रहः । यतश्च तत्र-तत्र प्रयोज्यत्वेनैव तयोरुक्तिर्यस्माच्च सदीक्षितृत्वस्य मुख्यत्वहेत्वात्मशब्दवत्तयोरीक्षितृत्वस्य मुख्यत्वे हेतुर्न दृष्टस्तस्मात्कूलस्य गुणवृत्त्या पिपतिषावद्युक्तमप्तेजसोर्गौणमीक्षितृत्वमित्यर्थः । तर्हि प्रायपाठस्य का गतिरित्याशंक्य मुख्यत्वस्यौत्सर्गिकत्वाद्गौणेनातुल्यत्वाद्विशयानुदये प्रायवचनमकिंचित्करमित्यभिप्रेत्याप्तेजसोरपि मुख्यमेवेक्षणमाश्रयणीयं न गौणमित्याह-**तयोरपीति** । कारणेक्षणं कार्ये लक्षणयोच्यते चेत्तत्रापि कथं मुख्यतेत्याशं-

१ प्रकारान्तरेण ।

सतस्त्वात्मशब्दान्न गौणमीक्षितृत्वमित्युक्तम् ॥ ६ ॥ अथोच्येताचेतनेऽपि प्रधाने भवत्यात्मशब्दः, आत्मनस्सर्वार्थकारित्वात् । यथा–राज्ञस्सर्वार्थकारिणि भृत्ये भवत्यात्मशब्दो ममात्मा भद्रसेन इति ॥ प्रधानं हि पुरुषस्यात्मनो भोगापवर्गौ कुर्वदुपकरोति राज्ञ इव भृत्यस्सन्धिविग्रहादिषु वर्तमानः ॥–अथ वैक एवात्मशब्दश्चेतनाचेतनविषयो भविष्यति भूतात्मा इन्द्रियात्मेति च प्रयोगदर्शनात् । यथैक एव ज्योतिश्शब्दः क्रतुज्वलनविषयः ॥ तत्र कुत एतदात्मशब्दादीक्षतेरगौणत्वमिति ॥ अत उत्तरं पठति–

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

न प्रधानमचेतनमात्मशब्दालम्बनं भवितुमर्हति "स आत्मा" [ छान्दो० ६ । १४ । ३ ] इति प्रकृतं सदणिमानमादाय "तत्त्वमसि श्वेतकेतो" [ छान्दो० ६ । १४ । ३ । ] इति चेतनस्य मोक्षयितव्यस्य तन्निष्ठामुपदिश्य "आचार्यवान्पुरुषो वेद । तस्य तावदेव चिरं, यावन्न विमोक्ष्ये,

रत्नप्रभा ।

इत्यत आह–सतस्त्विति ॥ ६ ॥ गौणमुख्ययोरतुल्ययोः संशयाभावेन गौणप्रायपाठस्यानिश्चायकत्वादात्मशब्दाच्च सत ईक्षणं मुख्यमित्यर्थः । आत्महितकारित्वगुणयोगादात्मशब्दोऽपि प्रधाने गौण इति शंकते–अथेत्यादिना । आत्मशब्दः प्रधानेऽपि मुख्यो नानार्थकत्वादित्याह–अथ वेति ॥ नानार्थकत्वे दृष्टान्तः–यथेति ॥ अथैष ज्योतिरिति श्रुत्या सहस्रदक्षिणाके क्रतौ ज्योतिष्टोमे लोकप्रयोगादग्नौ च ज्योतिश्शब्दो यथा मुख्यस्तद्वदित्यर्थः । तस्मिन् सत्पदार्थे निष्ठा अभेदज्ञानं यस्य स तन्निष्ठस्तस्य मुक्तिश्रवणादिति सूत्रार्थमाह––नेत्यादिना ॥ श्रुतिः समन्वयसूत्रे व्याख्याता । अनर्थायेत्युक्तं प्रपञ्चयति–

भामती ।

दव्याख्यातम् ॥ ५ ॥ ६ ॥ तन्निष्ठस्य मोक्षोपदेशादिति । शङ्कोत्तरत्वेन वा स्वातन्त्र्येण वा प्रधान-

आनन्दगिरीय–न्यायनिर्णयः ।

क्याऽऽह–सतस्त्विति ॥ ६ ॥ आत्मशब्दोऽपि प्रधाने गौणः स्यादिति चोदयति–अथेति । गौणे प्रयोगे गुणयोगं दर्शयति–आत्मन इति । स्वर्गार्थस्यापि कर्मणः स्वर्गशब्दानर्हत्ववदात्मार्थमपि प्रधानं नाऽऽत्मशब्दार्हमित्याशंक्याऽऽह–यथेति । प्रधानस्य भृत्यवच्चैतन्याभावादात्मार्थप्रवृत्त्ययोगान्नाऽऽत्मार्थकारितेत्याशंक्याऽऽह–प्रधानं हीति । भृत्यस्य राज्ञि विवेकाविवेकाभ्यामभ्युदयाद्यहेतुत्वान्न दृष्टान्ततेत्याशंक्योपकारित्वमात्रं तुल्यमित्याह–राज्ञ इति । गौणत्वं निरसितुमुक्तात्मशब्दस्य न गौणतेत्यपरितुष्यन्नाह–अथ वेति । प्रधानेऽपि शक्तिकल्पने गौरवमाशंक्य वृद्धप्रयोगादनेकत्र शक्तिसिद्धेर्नैवमित्याह–भूतात्मेति । प्रधानात्मा परमात्मा चेति चकारार्थः । तत्राऽऽत्मशब्दस्याऽऽत्मन्येव मुख्या वृत्तिः प्रधानादौ गौणीत्याशंक्य भिन्नजातीययोरेकशब्दप्रयोगे शक्तिद्वयमेव कल्प्यमित्याह–यथेति । आत्मशब्दसाधारण्ये फलितमाह––तत्रेति । शंकोत्तरत्वेन सूत्रं पातयति–अत इति । हेतुमात्रस्य सूत्रे भानात्पूर्वसूत्रस्थनञमाकृष्य प्रतिजानीते–नेति । तत्र हेतुं सूत्रं व्याचष्टे–स इत्यादिना । साक्षित्वेनाहंकाराद्यध्यासनिरासयोग्यतां वक्तुं चेतनस्येत्युक्तम् । ऐक्यापारोक्ष्यप्रमितिप्रतिबन्धनिवर्तकं सूचयति–आचार्यवानिति । उक्तप्रमित्या सर्वबन्धननिवृत्त्या देहादिदृष्टेरपि निवृत्तिप्राप्तौ प्रारब्धकर्मणा तद्दृष्ट्यनुवृत्तिमाचष्टे––तस्येति । कथं तर्हि प्रारब्धकर्मनिवृत्तिरित्याशंक्य भोगादिति मन्वानो ब्रूते–यावदिति । आरब्ध-

१ एतदगौणत्वमित्यत आहेत्यर्थः । २ छान्दोग्ये षष्ठप्रपाठके अष्टमखण्डमारभ्य षोडशखण्डपर्यन्तं प्रतिखण्डमेवं पाठोऽस्ति ।

**अथ सम्पत्स्ये" [ छान्दो० ६ । १४ । २ । ] इति मोक्षोपदेशात् ॥ यदि हि अचेतनं प्रधानं सच्छब्दवाच्यं तदसीति ग्राहयेन्मुमुक्षुं चेतनं सन्तमचेतनोऽसीति, तदा विपरीतवादिशास्त्रं पुरुषस्यानर्थायेत्यप्रमाणं स्यात् । न तु निर्दोषशास्त्रमप्रमाणं कल्पयितुं युक्तम् । यदि चाज्ञस्य सतो मुमुक्षोरचेतनमनात्मानमात्मेत्युपदिशेत्प्रमाणभूतं शास्त्रं, स श्रद्धानतयान्धगोलांगूलन्यायेन तदात्मदृष्टिं न परित्यजेत, तद्व्यतिरिक्तं चात्मानं न प्रतिपद्येत ॥ तथा सति पुरुषार्थाद्विहन्येत, अनर्थं चर्च्छेत् ॥**

---

रत्नप्रभा ।

**यदि चाज्ञस्येति** ।। कश्चित्किल दुष्टात्मा महारण्यमार्गे पतितमन्धं स्वबन्धुनगरं जिगमिषुं बभाषे—किमत्राऽऽयुष्मता दुःखितेन स्थीयत इति । स चान्धः सुखवाणीमाकर्ण्य तमाप्तं मत्वोवाच—अहो मद्भागधेयं, यदत्र भवान्मां दीनं स्वाभीष्टनगरप्राप्त्यसमर्थं भाषत इति । स च विप्रलिप्सुर्दुष्टगोयुवानमानीय तदीयलांगूलमन्धं ग्राहयामास, उपदिदेश च एनमन्धम्, एष गोयुवा त्वां नगरं नेष्यति, मा त्यज लांगूलमिति । स चान्धः श्रद्धालुतया तदत्यजन् स्वाभीष्टमप्राप्यानर्थपरम्परां प्राप्तः, तेन न्यायेनेत्यर्थः ॥ **तथा सतीति** । आत्मज्ञानाभावे सति **विहन्येत** मोक्षं न प्राप्नुयात् । प्रत्युतानर्थसंसारं च प्राप्नुयादित्यर्थः ॥

भामती ।—०

आनन्दगिरीय-न्यायनिर्णयः ।

कर्मध्वस्तावपि कथं देहादिधीध्वस्तिरित्याशंक्याप्रतिबन्धादित्याह—**अथेति** । उत्तमपुरुषस्तूभयत्र प्रथमपुरुषे छान्दसत्वात् । सांख्यपक्षेऽपि मोक्षोपदेशोपपत्तिमाशंक्याऽऽह—**यदीति** । तदा चेतनं सन्तं मुमुक्षुमचेतनोऽसीति ब्रुवच्छास्त्रं विपरीतवादि भूत्वा पुंसोऽनर्थायेति कृत्वा स्यादप्रमाणमिति योजना । अस्तु शास्त्राप्रामाण्यं नेत्याह—**न त्विति** । आत्मनो जडैक्यमपि सत्याद्यैक्यवदनवच्छिन्नतया शास्त्रप्रमेयमित्याशंक्याऽऽह—**यदि चेति** । शास्त्रोक्ते विश्वासबुद्धौ हेतुमाह—**श्रद्दधानतयेति** । अनात्मन्यात्मदृष्टिं नासौ त्यजेदित्यत्र लौकिकं दृष्टान्तमाह—**अन्धेति** । कश्चित्किल पश्चिमचेता गहनविपिनसमीपसंचारिपथि पतितमतिदुःखितं विनष्टदृष्टिद्वयमपि पुरुषापसदमवलोक्य तदन्तिकमुपसृप्य विप्रलब्धुमिच्छन्पृच्छति-किमिति भवताऽतिबहुतरगोगवयादिसंचारसंकीर्णे दुर्गे मार्गे प्रचुरपरिणततरक्षुरोषणादिपरिवृतकान्तारपरिसरे परिहाय सहायसंपदमास्यते । स च विवेकपरिचयविधुरो मधुरां गिरमुपश्रुत्य सहर्षं समभाषत-दैवोपहतः पिहितनयनयुगुलो बताहं कयाऽपि विधया पन्थानमेनमासाद्य नानाविधबन्धुनिकरपरिपूरितमतिसविधमपि नगरं जिगमिषुरिहैवासमर्थो बहुतिथमत्यवाहयम् । संप्रति तु भवतो दिष्ट्या दृष्टस्य दृष्टिपथमवतीर्णं समासादितमनोरथं शोकसागरादुत्तीर्णमात्मानमालक्ष्य लब्धलक्ष्यो निर्वृतोऽस्मि । स च विप्रलिप्सुः शिक्षाविपक्षमुक्षाणमभ्याशदेशनिवासिनमुपादि चरन्तमाकलय्यास्य तु पुच्छं गृहीत्वा गच्छतु भवानेष त्वाऽभिमतं नगरं नेष्यतीत्याभाष्य तदनुमोदनपुरःसरं पुरुषं पशुमानीय तदीयलांगूलं ग्राहयामास । स च गृहीततदीयवालधिर्विविधा वेदनास्तदाहिता इतस्ततो नीयमानोऽनुभवन्नपि नगरजिगमिषया तदाप्त्यादेष्टुरासतादृष्ट्या च स्वयमुपात्तं प्रबलबलीवर्दयूनश्चरममङ्गं परित्यक्तुं नैव धियं दधार । स च भूयोभूयो भूयसीर्यातनाः प्रतिलभ्य प्रेप्सितमप्रतिपद्यैव महति मोहसागरे निपतितः, तेनैव न्यायेनायमपि श्रद्धालुत्वादनात्मनि शास्त्राहितामात्मदृष्टिमत्यजन्ननर्थभागी भवेदित्यर्थः । आत्मा जडादर्थान्तरं तत्साक्षित्वाद्घटसाक्षिवदित्यतिरिक्तात्मधिया पुरुषार्थभागी स्यादित्याशङ्क्याऽऽगमविरोधान्मैवमित्याह—**तद्व्यतिरिक्तं चेति** । आत्मज्ञानाभावे दोषमाह—**तथेति** । विहतिर्मुक्तिभाक्त्वाभावः । अनात्मनिष्ठत्वे दोषमाह—**अनर्थं चेति** । "ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः" इति श्रुतेरित्यर्थः ।

तस्माद्यथा—स्वर्गाद्यर्थिनोऽग्निहोत्रादिसाधनं यथाभूतमुपदिशति, तथा मुमुक्षोरपि "स आत्मा" [ छान्दो० ६।७।७ ] "तत्त्वमसि श्वेतकेतो" [ छान्दो० ६।७।८ ] इति यथाभूतमेवात्मानमुपदिशतीति युक्तम् ॥ एवं च सति तप्तपरशुग्रहणमोक्षदृष्टान्तेन सत्याभिसन्धस्य मोक्षोपदेश उपपद्यते । अन्यथा हि अमुख्ये सदात्मतत्त्वोपदेशे "अहमुक्थमस्मीति विद्यात्" [ ऐत० आर० २।१।२।६ ] इतिवत्सम्पन्मात्रमिदमनित्यफलं स्यात् ॥ तत्र मोक्षोपदेशो नोपपद्येत ॥ तस्मान्न सदणिमन्यात्मशब्दस्य गौणत्वम् । भृत्ये तु स्वामिभृत्यभेदस्य प्रत्यक्षत्वादुपपन्नो गौण आत्मशब्दो ममात्मा भद्रसेन इति ॥ अपि च क्वचिद्गौणश्शब्दो दृष्ट इति नैतावता शब्दप्रमाणकेऽर्थे गौणी कल्पना न्याय्या ॥ सर्वत्रानाश्वासप्रसङ्गात् ॥ यत्तूक्तं चेतनाचेतनयोस्साधारण आत्मशब्दः क्रतुज्वलनयोरिव ज्योतिश्शब्द इति ॥ तन्न ॥ अनेकार्थत्वस्यान्याय्यत्वात् ॥ तस्माच्चेतनविषय एवमुख्य आत्मशब्दश्चेतनत्वोपचाराद्भूतादिषु—

रत्नप्रभा ।

ननु जीवस्य प्रधानैक्यसम्पदुपासनार्थमिदं वाक्यमस्त्विति तत्राह—**एवं च सतीति** ॥ अबाधितात्मप्रमायां सत्यामित्यर्थः । कस्यचिदारोपितचोरत्वस्य सत्येन तप्तं परशुं गृह्णतो मोक्षो दृष्टः । तद्दृष्टान्तेन सत्ये ब्रह्मणि अहमित्यभिसन्धिमतः मोक्षः । यथा सत्याभिसन्धः तप्तपरशुं गृह्णाति स न दह्यते । अथ मुच्यत इति श्रुत्योपदिष्टः स उपदेशः सम्पत्पक्षे न युक्त इत्याह—**अन्यथेति** ॥ देहमुत्थापयतीत्युक्थं प्राणस्तस्मान्मोक्षोपदेशान्मुख्ये सम्भवति गौणत्वस्यान्याय्यत्वाच्चात्मशब्दः सति मुख्य इत्याह—**अपि चेति** ॥ **क्वचिद्** भृत्यादौ । **सर्वत्र** अहमात्मेत्यत्रापि मुख्य आत्मशब्दो न स्यादित्यर्थः ॥ चेतनत्वोपचाराद् भूतादिषु सर्वत्र चैतन्यतादात्म्यादित्यर्थः । आत्मशब्दश्चेतनस्यैवासाधारण इत्युक्तम् ।

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

परमते तन्निष्ठासुपपत्तेः सदात्मत्वोपदेशमिच्छता सतश्चेतनत्वमेष्टव्यमित्युपसंहरति—**तस्मादिति** । नन्वारोपेणापि शास्त्रे ध्यानोपदेशात्कथं तद्यथाभूतमेवोपदिशतीति नियम्यतेऽत्राऽऽह—**एवं चेति** । कस्यचिदारोपितचोरत्वस्य सत्येन तप्तं परशुं गृह्णतो मोक्षो दृष्टस्तेन दृष्टान्तेन सत्ये ब्रह्मण्यभिसंधिमतो मोक्षस्तद्यथा परशुं तप्तं प्रतिगृह्णातीत्यत्रोक्तः स च तत्त्वतो वस्तूपदेशे संभवतीत्यर्थः । सदात्मत्वोक्तेरारोपितार्थत्वेऽपि सत्याभिसंधिसिद्धिर्यस्य स्यादद्धेत्यादिध्यानवाक्ये तद्दृष्टेरित्याशंक्याऽऽह—**अन्यथेति** । उक्थं प्राणः । महावाक्योत्थं ज्ञानमिदमुच्यते । तस्य संपन्मात्रत्वेनानित्यफलत्वे फलितमाह—**तत्रेति** । मोक्षस्य तद्वादिभिर्नित्यत्वोपगमादित्यर्थः । मोक्षोपदेशस्य परपक्षेऽप्यनुपपत्तिमुक्त्वोपसंहरति—**तस्मादिति** । दृष्टान्ते गौणत्वमङ्गीकरोति—**भृत्येति** । इतश्चाऽऽत्मशब्दस्य दृष्टान्तेन प्रधानविषयतया न गौणतेत्याह—**अपि चेति** । मुख्यार्थायोगो गुणयोगश्च गौणत्वे हेतुः । तदभावेऽपि तत्कल्पनाऽतिप्रसङ्गिनीति हेत्वन्तरमेव स्फोटयति—**क्वचिदिति** । अग्न्यादिशब्दानां माणवकादिषु गौणत्वदृष्ट्या दहनादिष्वपि तत्प्रसक्तेरित्याह—**सर्वत्रेति** । गौणत्वं निरस्य साधारण्यं निरसितुमनुवदति—**यत्त्विति** । एकत्र मुख्यशब्दस्य तद्योगादन्यत्र वृत्तिसंभवे तत्रापि शक्तिकल्पने गौरवान्नैवमित्याह—**तन्नेति** । क्वचित्त्वगत्याऽनेकार्थतेत्यर्थः । प्रधानमात्मशब्दस्य मुख्योऽर्थस्तदविवेकादन्यत्र तच्छब्दतेत्याशंक्याऽऽप्त्यादिनिमित्तस्य चेतने मुख्यत्वात्तत्रैवाऽऽत्मशब्दस्य मुख्यतेत्याह—**तस्मादिति** । कथं तर्हि भूतात्मेत्यादिवाक्यमित्याशंक्य जीवैक्याध्यासात्पञ्चकोशात्मभूतानामिन्द्रियाणां चाऽऽत्मशब्दत्वं परमात्मैक्यारोपात्प्रधानस्य प्रकृतेरित्याह—**चेतनत्वेति** । आप्त्याद्युपाधेरात्मशब्दस्य चेतने मुख्यत्वे प्रधा-

प्रयुज्यते भूतात्मा इन्द्रियात्मेति च । साधारणत्वेऽप्यात्मशब्दस्य न प्रकरणमुपपदं वा किञ्चिन्निश्चायकमन्तरेणान्यतरवृत्तिता निर्धारयितुं शक्यते ॥ न चात्राचेतनस्य निश्चायकं किञ्चित्कारणमस्ति ॥ प्रकृतं तु सदीक्षितृ ॥ सन्निहितश्चेतनश्श्वेतकेतुः ॥ न हि चेतनस्य श्वेतकेतोरचेतन आत्मा सम्भवतीत्यवोचाम ॥ तस्माच्चेतनविषय इहात्मशब्द इति निश्चीयते ॥ ज्योतिश्शब्दोऽपि लौकिकेन प्रयोगेण ज्वलन एव रूढः ॥ अर्थवादकल्पितेन तु ज्वलनसादृश्येन क्रतौ प्रवृत्त इत्यदृष्टान्तः॥ अथ वा पूर्वसूत्र एवाशब्दं निरस्तसमस्तगौणत्वसाधारणत्वशङ्कतया व्याख्याय ततस्स्वतन्त्र एव प्रधानकारणनिराकरणहेतुर्व्याख्येयः–

रत्नप्रभा ।

अस्तु वा अव्यापिवस्तूनां साधारणः, तथापि तस्यात्र श्रुतौ प्रधानपरत्वेऽपि निश्चायकाभावान्न प्रधानवृत्तितेत्याह–**साधारणत्वेऽपीति** ॥ चेतनवाचित्वे तु प्रकरणं श्वेतकेतुपदं च निश्चायकमस्तीत्याह–**प्रकृतं त्विति** ॥ उपपदस्य निश्चायकत्वं स्फुटयति–**न हीति** ॥ ततः किं तत्राह–**तस्मादिति** ॥ आत्मशब्दो ज्योतिश्शब्दवन्नानार्थक इत्युक्तं दृष्टान्तं निरस्यति–**ज्योतिरिति**॥ कथं तर्हि ज्योतिषा यजेतेति ज्योतिष्टोमे प्रयोगस्तत्राह–**अर्थवादेति**॥ "एतानि वाव तानि ज्योतींषि य एतेऽस्य स्तोमाः" इत्यर्थवादेन कल्पितं ज्वलनेन सादृश्यं, "त्रिवृत्पञ्चदशस्त्रिवृत्ससदशस्त्रिवृदेकविंशस्तोमाः" तत्तदर्थप्रकाशकत्वेन गुणेन ज्योतिष्पदोक्ता ऋक्संघाः । तथा च ज्योतींषि स्तोमाः अस्येति ज्योतिष्टोम इत्यत्र ज्योतिश्शब्दो गौण इत्यर्थः । नन्वात्मशब्दादिति पूर्वसूत्र एवात्मशब्दस्य प्रधाने गौणत्वसाधारणत्वशङ्कानिरासः कर्त्तुमुचितः । मुख्यार्थस्य लाघवेनोक्तिसम्भवे गौणत्वनानार्थशङ्काया दुर्बलत्वेन तन्निरासार्थं पृथक्सूत्रायासानपेक्षणात् । तथा च शंकोत्तरत्वेन सूत्रव्याख्यानं नातीव शोभते, इत्यरुचेराह–**अथ वेति** ॥ निरस्ता समस्ता गौणत्व-

भामती ।–०

आनन्दगिरीय–न्यायनिर्णयः ।

नेऽपि तथैव तन्मुख्यत्वसिद्धेः साधारण्यमित्याशंक्याऽऽह–**साधारणत्वेऽपीति** । परमसूक्ष्मशक्त्यात्मकप्रकृत्यर्थाणिमशब्दात्तज्जाड्यसिद्धेस्तद्विषयत्वमात्मशब्दस्य शक्यं निश्चेतुमित्याशंक्य शक्तेरप्यन्तस्थचिदात्मनि निरंकुशमणीयस्त्वमित्याह–**न चेति** । अत्रेति प्रकरणोक्तिः । किंचित्प्रकरणमुपपदं वेत्यर्थः । कथं तर्हि चेतनविषयतेत्याशंक्य क्रमेण प्रकरणोपपदे दर्शयति–**प्रकृतं त्विति** । चेतनसंनिधानेऽपि तस्य तत्त्वमसीत्यचेतनप्रधानतादात्म्योक्तेरहेतुः संनिधिरित्याशंक्याऽऽह–**न हीति** । चेतने प्रकरणादिभावे फलितमाह–**तस्मादिति** । जीवेनाऽऽत्मना स आत्मेति च वाक्यमिहेत्युक्तम् । आत्मशब्दसाधारण्ये दृष्टान्तितं ज्योतिःशब्दं विघटयति–**ज्योतिःशब्दोऽपीति** । कथं तर्हि 'वसन्तेवसन्ते ज्योतिषा यजेत' इत्यत्र कालविधौ प्रकृतज्योतिष्टोमे ज्योतिःशब्दस्तत्राऽऽह–**अर्थवादेति** । कतमानि ज्योतींषीत्युक्त्वैतानि वाव तानि ज्योतींषि य एतस्य स्तोमा इत्यर्थवादेन कल्पितं ज्वलनेन सादृश्यं त्रिवृदादिस्तोमानां फलप्रकाशकत्वम् । ततो ज्योतिष्ट्वेन निरूपितत्रिवृदादिस्तुतिसमुदायत्वाज्ज्योतिष्टोमे ज्योतिःशब्दः । तस्मादेकस्याऽऽत्मशब्दस्यानेकसाधारण्येनेदमुदाहरणमित्यर्थः । आत्मशब्दादिति पूर्वसूत्रोक्तहेतुसाधकतया तच्छेषत्वेन सूत्रं व्याख्यायाधुना स्वतन्त्रहेतुपरतया व्याकरोति–**अथ वेति** । निरस्ता गौणत्वस्य साधारणत्वस्य च शंका यस्मात्स तथा तस्य भावस्तत्ता तयाऽऽत्मशब्दं व्याख्यायेति संबन्धः । सतश्चेतनस्य च तादात्म्यवचनं पूर्वसूत्रोक्तो हेतुः । सदर्थनिष्ठस्य मुक्तिरूपपरानन्दैक्योक्तेश्च चितो न प्रधानैक्यमिति हेत्वन्तरमिहोच्यत

"तन्निष्ठस्य मोक्षोपदेशात्" [ व्या० सू० १।१।७ ] इति ॥ तस्मान्नाचेतनं प्रधानं सच्छब्दवाच्यम् ॥ ७ ॥ कुतश्च न प्रधानं सच्छब्दवाच्यम्—

## हेयत्वावचनाच्च ॥ ८ ॥

यदि अनात्मैव प्रधानं सच्छब्दवाच्यं "स आत्मा" [ छान्दो० ६।७।८ ] "तत्त्वमसि" [ छान्दो० ६।७।८ ] इतीहोपदिष्टं स्यात् स तदुपदेशश्रवणादनात्मज्ञतया तन्निष्ठो मा भूदिति मुख्यमात्मानमुपदिदिक्षुस्तस्य हेयत्वं ब्रूयात् । यथाऽरुन्धतीं दिदर्शयिषुस्तत्समीपस्थां स्थूलां तारां मुख्यां प्रथममरुन्धतीति ग्राहयित्वा तां प्रत्याख्याय पश्चादरुन्धतीमेव ग्राहयति, तद्वन्नायमात्मेति ब्रूयात् ॥ न चैवमवोचत् । सन्मात्रावगतिनिष्ठैव हि षष्ठप्रपाठकपरिसमाप्तिर्दृश्यते ॥ च-शब्दः प्रतिज्ञाविरोधाभ्युच्चयप्रदर्शनार्थः ॥ सत्यपि हेयत्ववचने प्रतिज्ञाविरोधः प्रसज्येत, कारणविज्ञानाद्धि सर्वं विज्ञातमिति प्रतिज्ञातम्—"उत तमादेशमप्राक्ष्यो येना-

रत्नप्रभा ।

नानार्थत्वशंका यस्यात्मशब्दस्य स तच्छङ्कस्तस्य भावस्तत्ता तया इत्यर्थः ॥ **तत इति** । सत आत्मशब्देन जीवाभिन्नत्वादिति हेत्वपेक्षया मोक्षोपदेशः स्वतन्त्र एव प्रधानकारणत्वनिरासे हेतुरित्यर्थः ॥ ७ ॥ ननु **यथा** कश्चिदरुन्धतीं दर्शयितुं निकटस्थां स्थूलां ताराम् अरुन्धतीत्वेनोपदिशति **तद्वद्**नात्मन एव प्रधानस्य सत्पदार्थस्यात्मत्वोपदेश इति शंकते—**कुतश्चेति** ॥ प्रधानं सच्छब्दवाच्यं नेति कुत इत्यर्थः । सौत्रश्चकारोऽनुक्तसमुच्चयार्थ इत्याह—**चशब्द इति** ॥ विवृणोति—**सत्यपीति** ॥ अपिशब्दान्नास्त्येवेति सूचयति । वेदानधीत्याऽऽगतं स्तब्धं पुत्रं पितोवाच—हे पुत्र **उत** अपि आदिश्यत इति **आदेशः** उपदेशैकलभ्यः सदात्मा तमपि **अप्राक्ष्यः** गुरुनिकटे पृष्टवानसि, यस्य श्रवणेन मननेन विज्ञानेनान्यस्य श्रवणादिकं भवतीत्यन्वयः ॥ नन्वन्येन ज्ञातेन कथमन्यदज्ञातमपि ज्ञातं स्यादिति पुत्रः शंकते—

भामती ।

निराकरणार्थं सूत्रम् । शङ्का च भाष्ये उक्ता ॥ ७ ॥ स्यादेतत् । ब्रह्मैव जीप्सितं, तच्च न प्रथमं सूक्ष्मतया शक्यं श्वेतकेतुं ग्राहयितुमिति तत्संबद्धं प्रधानमेव स्थूलतयात्मत्वेन ग्राह्यते श्वेतकेतुररुन्धतीमिवातीवसूक्ष्मां दर्शयितुं तत्संनिहितां स्थूलतारकां दर्शयतीयमसावरुन्धतीति । अस्यां शङ्कायामुत्तरम्—**हेयत्वावचनाच्च**

आनन्दगिरीय—न्यायनिर्णयः ।

इत्याह—**तत इति** । चेतनाचेतनयोरैक्यायोगादचेतननिष्ठतया चेतनस्य मोक्षोपदेशासिद्धेः सिद्धमुपसंहरति—**तस्मान्नेति** ॥ ७ ॥ यथा कश्चिदरुन्धतीं दर्शयितुं निकटस्थां स्थूलां तारामियं सेति दर्शयत्येवं दुर्ज्ञेयत्वादात्मतत्त्वस्याऽऽदौ प्रधानात्मत्ववचनात्तदेव सच्छब्दमिति शङ्कते—**कुतश्चेति** । सूत्रमुत्तरम्—**हेयत्वेति** । तद्व्याख्यातुं हेयत्वोक्तिं प्रतियोगिनीं प्रसञ्जयति—**यदीति** । ऐक्यमुक्त्वा तन्निराकरणं पङ्कप्रक्षालनमनुसरतीत्याशंक्य परोक्तं दृष्टान्तेन प्रत्याह—**यथेति** । प्रतियोगिप्राप्तिमुक्त्वा तन्निषेधसूत्रार्थमाह—**न चेति** । तत्र हेतुः—**सन्मात्रेति** । अनृतजडशक्तिशबलेति तत्सत्यमिति सत्यत्वविधानादसत्याकारं स आत्मेति चिद्रूपत्वविधानाज्जडाकारं च बाधित्वा सत्यैकरसचिदात्माकारा याऽपरोक्षप्रमितिस्तन्निष्ठत्वेनैव च्छान्दोग्ये षष्ठसमाप्तिदर्शनात्प्रकृतसदात्मत्वाप्रत्याख्यानात्तत्त्वमसीत्यमुख्यात्मत्वोक्तिरयुक्तेत्यर्थः । पूर्वोत्तरहेत्वोः संभूयाप्रमापकत्वे कृतं चकारेणेत्याशंक्याऽऽह—**चशब्द इति** । हेयत्वावचनादेव प्रधानस्य निरासे किं प्रतिज्ञाविरोधोक्त्येत्याशंक्य हेयत्वोक्तिमुपेत्य चकारार्थं स्फुटयति—**सत्यपीति** । प्रसङ्गं प्रकटयितुं प्रतिज्ञास्वरूपमाह—**कारणेति** । हे श्वेतकेतो तमप्यादेशमादिश्यत इत्यादेशं शास्त्राचार्योक्तिगम्यं वस्त्वप्राक्ष्यः पृष्टवानसि त्वमाचार्यम् । येन श्रुतेन शास्त्रतोऽन्यदश्रुतमपि श्रुतं भवति । येन मतेन तर्कतोऽन्य-

१ छान्दोग्ये इति शेषः । २ अनम्रम् ।

श्रुतं श्रुतं भवति, अमृतं मतम्, अविज्ञातं विज्ञातमिति । कथं नु भगवस्स आदेशो भवतीति । यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञात१ स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥" [ छान्दो० ६ । १ । १ ] "एवं सोम्य स आदेशो भवतीति" [ छान्दो० ६ । १ । ३ ] इति वाक्योपक्रमे श्रवणात् ॥ न च सच्छब्दवाच्ये प्रधाने भोग्यवर्गकारणे हेयत्वेनाहेयत्वेन वा विज्ञाते भोक्तृवर्गो विज्ञातो भवति ॥ अप्रधानविकारत्वाद्भोक्तृवर्गस्य, तस्मान्न प्रधानं सच्छब्दवाच्यम् ॥ ८ ॥ कुतश्च न प्रधानं सच्छब्दवाच्यम् ?

## स्वाप्ययात् ॥ ९ ॥

रत्नप्रभा ।

**कथमिति** ॥ हे भगवः कथं नु खलु स भवतीत्यर्थः । कार्यस्य कारणान्यत्वं नास्तीत्याह—**यथेति** । पिण्डः स्वरूपं, तेन । विज्ञातेनेति शेषः ॥ तत्र युक्तिमाह—**वाचेति** ॥ वाचा वागिन्द्रियेणारभ्यत इति **विकारो वाचारम्भणम्** । ननु वाचा नामैवारभ्यते न घटादिरित्याशंक्य नाममात्रमेव विकार इत्याह—**नामधेयमिति** ॥ ( श्लो० ) "नामधेयं विकारोऽयं वाचा केवलमुच्यते । वस्तुतः कारणाद्भिन्नो नास्ति तस्मान्मृषैव सः ॥ १ ॥" इति भावः । विकारमिथ्यात्वे तदभिन्नकारणस्यापि मिथ्यात्वमिति नेत्याह—**मृत्तिकेति** ॥ कारणं कार्याद्भिन्नसत्ताकम् । न कार्यं कारणाद्भिन्नम् । अतः कारणातिरिक्तस्य कार्यस्वरूपस्याभावात् कारणज्ञानेन तज्ज्ञानं भवतीति स्थिते दार्ष्टान्तिकमाह—**एवमिति** ॥ मृद्वद्ब्रह्मैव सत्यं वियदादिविकारो मृषेति ब्रह्मज्ञाने सति ज्ञेयं किञ्चिन्नावशिष्यत इत्यर्थः । **यद्यपि** प्रधाने ज्ञाते तत्तादात्म्याद्विकाराणां ज्ञानं भवति न पुरुषाणां, तेषां प्रधानविकारत्वाभावादित्याह—**न चेति** ॥ अस्माकं जीवानां सद्रूपत्वात्तज्ज्ञाने ज्ञानमिति भावः ॥ ८ ॥ **कुतश्चेति** । पुनरपि कस्माद्धेतोरित्यर्थः । सुषुप्तौ जीवस्य सदात्मनि स्वस्मिन्नप्ययश्रवणात्सच्चेतनमेवेति **सूत्रयोजना** ॥ **एतत्** स्वपनं यथा स्यात्तथा **यत्र** सुषुप्तौ **स्वपिति** इति **नाम** भवति **तदा पुरुषः सता सम्पन्नः** एकीभवति । सदैक्येऽपि नाम-

भामती ।

इति सूत्रम् । चकारोऽनुक्तसमुच्चयार्थः । तच्चानुक्तं भाष्य उक्तम् ॥ ८ ॥ अपि च जगत्कारणं प्रकृत्य स्वपितीत्यस्य निरुक्तं कुर्वती श्रुतिश्चेतनमेव जगत्कारणं ब्रूते । यदि स्वशब्द आत्मवचनस्तथापि चेतनस्य पुरुषस्याचेतनप्रधानत्वानुपपत्तिः । अथात्मीयवचनस्तथाप्यचेतने पुरुषार्थतयात्मीयेऽपि चेतनस्य प्रलयानुपपत्तिः । न हि मृदात्मा घट आत्मीयेऽपि पाथसि प्रलीयतेऽपि त्वात्मभूतायां मृद्येव । न च रजतमनात्मभूते हस्तिनि प्रलीयते, किंत्वात्मभूतायां शुक्तावेवेत्याह—**स्वाप्ययात्** ॥ ९ ॥

आनन्दगिरीय-न्यायनिर्णयः ।

दमतमपि मतम् । येन विज्ञातेनान्यदविज्ञातमपि विज्ञातम् । न तु श्रोतव्यादि शिष्टमिति पितृवाक्यस्यार्थः । अन्यज्ञानादन्यन्न ज्ञेयमिति पुत्रो ब्रूते—**कथं न्विति** । नान्यत्वं कार्यस्य कारणादित्याह—**यथेति** । ज्ञाते मृत्पिण्डे कुतस्तद्विकारधीरित्याशंक्याऽऽह—**वाचेति** । यो विकारः स वागालम्बनमुच्यते परं न वस्तुतोऽस्तीत्यर्थः । तत्र हेतुः—**नामधेयमिति** । नाममात्रं नार्थोऽस्ति चेत्तर्हि घटादिवदसत्यत्वसंभवात्कारणस्यापि कथं सत्यतेत्याशंक्याऽऽह—**मृत्तिकेति** । उक्तदृष्टान्तादाकाशादेरपि मृषात्वात्कारणस्य सन्मात्रस्यैव सत्यत्वात्तज्ज्ञाने ज्ञातव्यशेषो नेति दार्ष्टान्तिकमाह—**एवमिति** । कार्यस्य कारणमात्रत्वोपगमात्परस्यापि प्रतिज्ञासिद्धिरित्याशंक्याऽऽह—**न चेति** । प्रतिज्ञाविरोधफलमाह—**तस्मादिति** ॥ ८ ॥ तत्रैव प्रश्नपूर्वकं हेत्वन्तरमाह—**कुतश्चेति** । प्रधानं न सच्छब्दवाच्यमित्यत्र चित्प्रतिबिम्बानां चिदात्मनि बिम्बे लया-

१ ब्रह्माभिन्नत्वात् ।

तदेव सच्छब्दवाच्यं कारणं प्रकृत्य श्रूयते—"यत्रैतत्पुरुषस्स्वपिति नाम, सता सोम्य तदा सम्पन्नो भवति, स्वमपीतो भवति । तस्मादेन ँ स्वपितीत्याचक्षते, स्वं ह्यपीतो भवति" [ छान्दो० ६ । ८ । १ ] इति ॥ एषा श्रुतिस्स्वपितीत्येतत्पुरुषस्य लोकप्रसिद्धं नाम निर्वक्ति ॥ स्वशब्देनेहात्मोच्यते ॥ यः प्रकृतस्सच्छब्दवाच्यस्तमपीतो भवत्यपिगतो भवतीत्यर्थः ॥ अपिपूर्वस्यैतेर्लयार्थत्वं प्रसिद्धम् ॥ प्रभवाप्ययावित्युत्पत्तिप्रलययोः प्रयोगदर्शनात् ॥ मनःप्रचारोपाधिविशेषसम्बन्धादिन्द्रियार्थान् गृह्णंस्तद्विशेषापन्नो जीवो जागर्ति । तद्वासनाविशिष्टस्स्वप्नान्पश्यन्मनःशब्दवाच्यो भवति ॥ स उपाधिद्वयोपरमे सुषुप्तावस्थायामुपाधिकृतविशेषाभावात्स्वात्मनि प्रलीन इवेति स्वं ह्यपीतो भवतीत्युच्यते ॥ यथा—हृदयशब्दनिर्वचनं श्रुत्या दर्शितम्—"स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयम्" [ छान्दो० ८।३।३ ] इति, यथा वा—

रत्नप्रभा ।

प्रवृत्तिः कथं ? तत्राह—**स्वमिति** ॥ तत्र लोकप्रसिद्धिमाह—**तस्मादिति** ॥ हि यस्मात् स्वं सदात्मानम् अपीतो भवति इति तस्मादित्यर्थः । श्रुतेस्तात्पर्यमाह—**एषेत्यादिना** ॥ कथमेतावता प्रधाननिरास इत्यत आह—**स्वशब्देनेति** ॥ एतेर्धातोर्गत्यर्थस्यापिपूर्वस्य लयार्थत्वेऽपि कथं नित्यस्य जीवस्य लय इत्याशंक्य उपाधिलयादिति वक्तुं जाग्रत्स्वप्नयोरुपाधिमाह—**मन इति** ॥ ऐन्द्रियकमनोवृत्तय उपाधयः । तैर्घटादिस्थूलार्थविशेषाणामात्मना सम्बन्धादात्मा तानिन्द्रियार्थान्पश्यन् स्थूलविशेषेण देहेनैक्यभ्रान्तिमापन्नो विश्वसंज्ञो जागर्ति, जाग्रद्वासनाश्रयमनोविशिष्टः सन् तैजससंज्ञः स्वप्ने विचित्रवासनासहकृतमायापरिणामान्पश्यन् "सोम्य तन्मनः" इतिश्रुतिस्थमनश्शब्दवाच्यो भवति । स आत्मा स्थूलसूक्ष्मोपाधिद्वयोपरमेऽहं नरः कर्त्तेति विशेषाभिमानाभावाल्लीन इत्युपचर्यत इत्यर्थः । ननु स्वपितीति नामनिरुक्तेरर्थवादत्वान्न यथार्थतेत्यत आह—**यथेति** ॥ तस्य हृदयशब्दस्य एतन्निर्वचनम् । तदशितम् अन्नं द्रवीकृत्य

भामती ।—०

आनन्दगिरीय–न्यायनिर्णयः ।

दिति व्यधिकरणो हेतुरित्याशंक्य प्रकरणानुसंधानपूर्वकं सूत्रं व्याचष्टे—**तदेवेति** । यत्र सुप्तौ पुंसः स्वपितीत्येतन्नाम भवति तदा पुरुषः सता संपन्नस्तेनैकीभूत इति योजना । प्रकरणेनैक्यप्रमितेः सच्छब्दलक्ष्यस्यैव चिद्बिम्बत्वान्न व्यधिकरणतेति सतश्चित्त्वं सूचयति—**स्वमिति** । तत्र लौकिकप्रसिद्धिमाह—**तस्मादिति** । तच्छब्दार्थं स्फुटयति—**स्वं हीति** । उक्तश्रुतेस्तात्पर्यमाह—**एषेति** । नामनिरुक्तिश्रुत्यक्षराणि व्याचष्टे—**स्वशब्देनेति** । कथं भिन्नविषया गतिरात्मानमेव विषयीकुर्यादित्याशंक्योपसर्गाल्लयधीरित्याह—**अपिपूर्वस्येति** । प्रसिद्धिमेव प्रकटयति—**प्रभवेति** । एतेर्धातोर्गत्यर्थस्यापिपूर्वस्य लयार्थत्वेऽपि कथमनाद्यनन्तस्य लयः स्यादित्याशंक्य तदीयलयस्यौपाधिकत्वं वक्तुं जागरितमनुवदति—**मन इति** । बुद्धिपरिणामा एवोपाधयस्तैरस्यार्थविशेषयोगाच्चक्षुरादीन्द्रियैस्तानेव स्थूलानर्थान्पश्यञ्जीवस्तद्विशेषेण स्थूलदेहेनैक्यारोपमापन्नो जागर्तीति व्यवह्रियत इत्यर्थः । स्वप्नमुपन्यस्यति—**तद्वासनेति** । जाग्रद्वासनाभिर्विचित्राभिर्विशिष्टो मनोमात्रोपाधिर्जीवः स्वप्नानुच्चावचान्वासनामात्रदेहाननुभवन्नेवमेव खलु सोम्यैतन्मन इति मनःशब्दवाच्य इति मनोद्वारा लक्ष्यो भवतीत्यर्थः । तथाऽपि कुतोऽस्य लयोक्तिरित्याशंक्याऽऽह—**स इति** । स्थूलं सूक्ष्मं चोपाधिद्वयं तत्कृतो विशेषो गन्तृत्वद्रष्टृत्वादिः स्वपितिनामनिरुक्तेरर्थवादत्वान्न श्रुतार्थतेत्याशंक्य तद्याथार्थ्यार्थं दृष्टान्तद्वयमाह—**यथेत्यादिना** । तस्य हृदयशब्दस्यैतदेव निरुक्तं

अशनायोदन्याशब्दप्रवृत्तिमूलं दर्शयति श्रुतिः-"आप एव तदशितं नयन्ते" [ छान्दो० ६। ८। ३] "तेज एव तत्पीतं नयते" [ छान्दो० ६। ८। ३] इति च, एवं स्वमात्मानं सच्छब्दवाच्यमपीतो भवतीतीममर्थं स्वपितिनामनिर्वचनेन दर्शयति ॥ न च चेतन आत्मा अचेतनं प्रधानं स्वरूपत्वेन प्रतिपद्येत ॥ यदि पुनः प्रधानमेवात्मीयत्वात्स्वशब्देनैवोच्येत, एवमपि चेतनोऽचेतनमप्येतीति विरुद्धमापद्येत ॥ श्रुत्यन्तरं च-"प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किं च न वेद नान्तरम्" [बृह० ४। ३। २१] इति सुषुप्तावस्थायां चेतनेऽप्ययं दर्शयति ॥ अतो यस्मिन्नप्ययः सर्वेषां चेतनानां तच्चेतनं सच्छब्दवाच्यं जगतः कारणम्। न प्रधानम् ॥ ९ ॥ कुतश्च न प्रधानं जगतः कारणम् ?

## गतिसामान्यात् ॥ १० ॥

यदि तार्किकसमय इव वेदान्तेष्वपि भिन्ना कारणावगतिरभविष्यत्-क्वचिच्चेतनं ब्रह्म जगतः कारणम्, क्वचिदचेतनं प्रधानम्, क्वचिदन्यदे-

---

रत्नप्रभा।

नयन्ते जरयन्तीति आप एव अशनायापदार्थः। तत्पीतम् उदकं नयते शोषयतीति तेज एवोदन्यम्। अत्र दीर्घश्छान्दसः। एवमिदमपि निर्वचनं यथार्थमित्याह-एवमिति ॥ इदं च प्रधानपक्षे न युक्तमित्याह- न चेति ॥ स्वशब्दस्यात्मनीवात्मीयेऽपि शक्तिरस्तीत्याशंक्याह-यदीति ॥ प्राज्ञेन विम्बचैतन्येनेश्वरेण सम्परिष्वङ्गो भेदभ्रमाभावेनाभेद इत्यर्थः॥९॥तत्तद्वेदान्तजन्यानामवगतीनां चेतनकारणविषयकत्वेन सामान्यान्न चेतनं जगतः कारणमिति सूत्रार्थं व्यतिरेकमुखेनाह-यदि तार्किकेत्यादिना॥ अन्यत्

भामती।

गतिसामान्यात्। गतिरवगतिः। तार्किकसमय इवेति। यथा हि तार्किकाणां समयभेदेषु परस्परपराह-

आनन्दगिरीय-न्यायनिर्णयः।

निर्वचनम्। अशनायापिपासे सोम्य विजानीहीत्युपक्रम्याशितस्यान्नस्य द्रवीकरणेन नयनाज्जरणादापोऽशनाया छान्दसमेकवचनम्। एवमशनायाशब्दस्याप्सु प्रवृत्तौ मूलं दर्शयति-'आप एव तदशितं नयन्ते'इति श्रुतिः। द्रावकोदकपाननयनात्तस्य शोषणाद्गुदन्यं तेजः। आकारश्छान्दसः। एवमुदन्यशब्दस्य तेजसि प्रवृत्तौ निमित्तं तेज एव तत्पीतं नयत इति श्रुतिर्दर्शयतीति योजना। दृष्टान्तयोरर्थं दार्ष्टान्तिके योजयति-एवमिति। प्रधानस्य व्यापित्वादव्यापिजीवलयस्थानत्वयोगादुक्तहेतोरन्यथासिद्धिमाशंक्य चितोऽचित्त्वापत्तिरयुक्तेत्याह-न चेति। स्वशब्दस्याऽऽत्मीयेऽपि शक्तत्वात्प्रधाने प्रवृत्तेरन्यथासिद्धितादवस्थ्यमाशंक्योक्तं स्फोरयति---यदीति। स्वशब्दस्याऽऽत्मा मुख्योऽर्थस्तत्संबन्धादात्मीयो लक्ष्य इति तद्ग्रहस्यानौचित्यमेवमपीत्युक्तम्। मृदात्मनो घटस्य मृद्येव लयादात्मीये जलादावदृष्टेरित्यर्थः। स्वपितिनामनिरुक्तिश्रुत्यनुग्राहकत्वेन बृहदारण्यकश्रुतिं पठति-श्रुत्यन्तरं चेति। तस्य तात्पर्यमाह-सुषुप्तेति। हेतोरन्यथासिद्ध्यभावे फलितमाह-अत इति ॥ ९ ॥ उपक्रमोपसंहारयोर्ब्रह्मण्येकवाक्यत्वं तात्पर्यलिङ्गमुक्त्वाऽभ्यासं लिङ्गान्तरं वक्तुं सूत्रान्तरं निक्षिपति-कुतश्चेति। श्रुतिप्रामाण्यैक्यात्प्रत्युपनिषदमभ्यासेन चेतनकारणतावगतिरेकरूपेत्ययुक्तमनेकरूपत्वाप्रसङ्गादित्याशंक्य कारणविषयत्वात्तर्कजन्यधीवदतुल्यत्वप्रसक्तिं वक्ति-यदीति। वस्तुतश्चिदचिदात्मकमन्यदित्युक्तं विरुद्धार्थत्वात्तर्हि त्यागो वेदान्तानामित्याशंक्य तेषामेकार्थ-

---

१ अप्ययः लयः। २ अशनायाशब्दे।

वेति, ततः कदाचित्प्रधानकारणवादानुरोधेनापीक्षत्यादिश्रवणमकल्पयिष्यत् । न त्वेतदस्ति ॥ समानैव हि सर्वेषु वेदान्तेषु चेतनकारणावगतिः । यथा—अग्नेर्ज्वलतस्सर्वा दिशो विस्फुलिंगा विप्रतिष्ठेरन्,एवमेवैतस्मादात्मनस्सर्वे प्राणा यथाऽऽयतनं विप्रतिष्ठन्ते ॥ "प्राणेभ्यो देवा देवेभ्यो लोकाः" [ कौषी० ३ । ३ ] इति "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" ] तैत्ति० २ । १ ] इति "आत्मन एवेदं सर्वम्" [ छान्दो० ७ । २६ । १ ] इति "आत्मन एष प्राणो जायते" [ प्रश्न० ३ । ३ ] इति चात्मनः कारणत्वं दर्शयन्ति सर्वे वेदान्ताः ॥ आत्मशब्दश्च चेतनवचन इत्यवोचाम ॥ महच्च प्रामाण्यकारणमेतद् । यद्वेदान्तवाक्यानां चेतनकारणत्वे समानगतित्वं चक्षुरादीनामिव रूपादिषु ॥ अतो गतिसामान्यात् सर्वज्ञं ब्रह्म जगतः कारणम् ॥ १० ॥ कुतश्च सर्वज्ञं ब्रह्म जगतः कारणम् ?

रत्नप्रभा ।

परमाण्वादिकम् । न त्वेतदिति ॥ अवगतिवैषम्यमित्यर्थः । विप्रतिष्ठेरन् विविधं नाना दिशः प्रतिगच्छेयुः । प्राणाश्चक्षुरादयो यथागोलकं प्रादुर्भवन्ति । प्राणेभ्योऽनन्तरम् देवाः सूर्यादयस्तदनुग्राहकाः । तदनन्तरं लोक्यन्त इति लोकाः विषया इत्यर्थः । ननु वेदान्तानां स्वतः प्रामाण्यत्वेन प्रत्येकं स्वार्थनिश्चायकत्वसम्भवात् किं गतिसामान्येनेत्याह—महच्चेति ॥ एकरूपावगतिहेतुत्वं वेदान्तानां प्रामाण्यसंशयनिवृत्तिहेतुरित्यत्र दृष्टान्तमाह—चक्षुरिति ॥ यथा सर्वेषां चक्षुषामेकरूपावगतिहेतुत्वं, श्रवणानां शब्दावगतिहेतुत्वं, घ्राणादीनां गन्धादिषु, एवं ब्रह्मणि वेदान्तानां गतिसामान्यं प्रामाण्यदार्ढ्यहेतुरित्यर्थः । एवमीक्षत्यादिलिङ्गैरचेतने वेदान्तानां समन्वयं निरस्य चेतनवाचकशब्देनापि

भामती ।

तार्थता, नैवं वेदान्तेषु परस्परपराहतिः,अपि तु तेषु सर्वत्र जगत्कारणचैतन्यावगतिः समानेति । चक्षुरादीनामिव रूपादिष्विति । यथा हि सर्वेषां चक्षू रूपमेव ग्राहयति, न पुना रसादिकं कस्यचिद्दर्शयति कस्य-

आनन्दगिरीय—न्यायनिर्णयः ।

तया नयनादत्यागमाह—तत इति । अस्तु तर्हि तेष्वपि कारणावगतेरनेकरूपत्वं नेत्याह—न त्विति । तर्हि जडाजडार्थवचसोः सालम्बनत्वाय द्व्यात्मके ब्रह्मण्येव गतिसामान्यमित्याशंक्य चिदेकरसे तस्याः सामान्यमाह—समानेति । विस्फुलिङ्गप्रसङ्गार्थं ज्वलत इत्युक्तम् । विप्रतिष्ठेरन्नानागतित्वेन दिशो दशापि प्रसृताः स्युरित्यर्थः । प्राणाश्चक्षुरादयो यथायतनं यथागोलकं विप्रतिष्ठन्ते विविधमुद्गच्छन्तीति यावत् । प्राणेभ्योऽनन्तरमादित्यादयस्तदनुग्राह ( हि ) का देवतास्ताभ्योऽनन्तरं लोक्यन्त इति लोका विषया भवन्तीत्यर्थः । अनुक्तानामपि वेदान्तानामुक्तैः सहास्मिन्नर्थे तात्पर्यं सूचयति—आत्मन इति । जडाजडात्मकाखण्डरूपमात्मशब्दमिति कुतो विवक्षितधीरित्याशंक्य जडस्य स्वरूपाभासत्वादखण्डाजडचैतन्यमेवाऽऽत्मेत्याह—आत्मेति । स्वतः प्रामाण्यादेकस्यापि वाक्यस्य स्वार्थधीहेतुत्वात्तत्रानुग्राहकवाक्यान्तरोक्तिरनर्थिकेत्याशंक्याऽऽह—महच्चेति । एकार्थत्वोक्त्या ज्ञानदार्ढ्याय वाक्यान्तरमित्यर्थः । वेदान्तानां चेतनकारणे तुल्यगतित्वे दृष्टान्तमाह—चक्षुरादीनामिति । सर्वेषां चक्षू रूपमेव ग्राहयति न रसादि कस्यचिदिति रूपे चक्षुषो गतिसामान्यं दृष्टम् । रसनादीनामपि रसादिषु । तथा वेदान्तानामपि चेतनकारणत्वे तुल्यगतित्वमित्यर्थः । सूत्रार्थं निगमयति—अत इति ॥ १० ॥ श्रुत्या स्फुटार्थतया ब्रह्मकारणत्वं वाच्यम् । तथा सत्यन्यासां तदैकार्थ्यनिर्णयादित्युत्तरसूत्राकांक्षामाह—कुतश्चेति । तदैक्षतेत्यत्रेक्षणमात्रं कारणस्य श्रुतं न सर्वज्ञत्वं तस्य सर्वार्थत्वादार्थिकी तद्धीः । श्वेताश्वतरे तु सर्वज्ञो जग-

१ ममंविष्य पा० ।

**श्रुतत्वाच्च ॥ ११ ॥**

**स्वशब्देनैव च सर्वज्ञ ईश्वरो जगतः कारणमिति श्रूयते-श्वेताश्वतराणां मन्त्रोपनिषदि सर्वज्ञमीश्वरं प्रकृत्य-"न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिंगम् । स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" [ श्वेताश्व० ६ । ९ ] इति ॥ तस्मात्सर्वज्ञं ब्रह्म जगतः कारणं, नाचेतनं प्रधानमन्यद्वेति सिद्धम् ॥ ११ ॥ इतीक्षत्यधिकरणम् ॥ ( ५ ) ॥ ॥ "जन्माद्यस्य यतः" [ १ । १ । २ ] इत्यारभ्य "श्रुतत्वाच्च" [ १ । १ । ११ ] इत्येवमन्तैस्सूत्रैर्यान्युदाहृतानि वेदान्तवाक्यानि तेषां, सर्वज्ञस्सर्वशक्तिरीश्वरो जगतो जन्मस्थितिलयकारणमित्येतस्यार्थस्य प्रतिपादकत्वं, न्यायपूर्वकं प्रतिपादितम् ॥ गतिसामान्योपन्यासेन च सर्वे वेदान्ताश्चेतनकारणवादिन इति व्याख्यातम् ॥ अतः**

---

रत्नप्रभा ।

निरस्यति-**श्रुतत्वाच्चेति** ॥ सूत्रं व्याचष्टे-**स्वशब्देनेति** ॥ स्वस्य चेतनस्य वाचकः सर्वविच्छब्दः "ज्ञः कालकालो गुणी सर्वविद्यः" [ श्वेता० ६ । २ । १६ ] इति सर्वज्ञं परमेश्वरं प्रकृत्य सर्ववित् कारणमिति श्रुतत्वान्नाचेतनं कारणमिति **सूत्रार्थः** ॥ करणाधिपा जीवास्तेषामधिपः । अधिकरणार्थमुपसंहरति-**तस्मादिति** ॥ ईक्षणात्मशब्दादिकं परमाण्वादावप्ययुक्तमिति मत्वाह-**अन्यद्वेति** ॥ ११ ॥ ( ५ ) ॥ वृत्तानुवादेनोत्तरसूत्रसन्दर्भमाक्षिपति-**जन्मादीति** ॥ प्रथमसूत्रस्य शास्त्रोपोद्घातत्वाजन्मादिसूत्रमारभ्येत्युक्तम् । सर्ववेदान्तानां कार्ये प्रधानाद्यचेतने च समन्वयनिरासेन ब्रह्मपरत्वं व्याख्यातम् । **अतः** प्रथमाध्यायार्थस्य समाप्तत्वादुत्तरग्रन्थारम्भे किं कारणमित्यर्थः । वेदान्तेषु सगुणनिर्गुणब्रह्मवाक्यानां बहलमुलब्धेः तत्र कस्य वाक्यस्य सगुणोपासनाविधिद्वारा निर्गुणे समन्वयः । कस्य वा गुणविवक्षां विना साक्षा-

भामती ।

चिद्रूपम् । एवं रसनादिष्वपि गतिसामान्यं दर्शनीयम् ॥ १० ॥ **श्रुतत्वाच्च** । 'तदैक्षत' इत्यत्र ईक्षणमात्रं जगत्कारणस्य श्रुतं न तु सर्वविषयम् । जगत्कारणसंबन्धितया तु तदर्थात्सर्वविषयमवगतं, श्वेताश्वतराणां तूपनिषदि सर्वज्ञ ईश्वरो जगत्कारणमिति साक्षादुक्तमिति विशेषः ॥ ११ ॥ (५) उत्तरसूत्रसंदर्भमाक्षिपति-**जन्माद्यस्य यत इत्यारभ्येति** । ब्रह्म जिज्ञासितव्यमिति प्रतिज्ञातं, तच्च शास्त्रैकसमधिगम्यं, शास्त्रं च सर्वज्ञे सर्वशक्तौ जगदुत्पत्तिस्थितिप्रलयकारणे ब्रह्मण्येव प्रमाणं न प्रधानादाविति न्यायतो व्युत्पादितम् । न चास्ति कश्चिद्वेदान्तभागो यस्तद्विपरीतमपि बोधयेदिति च 'गतिसामान्यात्' इत्युक्तम् ।

आनन्दगिरीय-न्यायनिर्णयः ।

द्धेतुरिति साक्षादुक्तम् । अतः सर्वोपनिषदां तदेकवाक्यत्वधीरित्याह-**श्रुतत्वाच्चेति** । तद्व्याचष्टे-**स्वशब्देनेति** । सर्वज्ञस्य वाचकेन शब्देनेति यावत् । सर्वश्चासौ ज्ञश्चेति । सर्ववाधशङ्कां वारयति-**ईश्वर इति** । वक्ष्यमाणमन्त्रस्थसशब्दार्थमाह-**सर्वज्ञमिति** । ज्ञः कालकालो गुणी सर्वविद्य इति प्रकृत्य स कारणमिति परामर्शाजगद्धेतोः सर्वज्ञतेत्यर्थः । तस्य सर्वेश्वरत्वमाह-**करणेति** । तेषामधिपाः स्वामिनो जीवास्तेषामधिपः परमेश्वरस्तस्य सर्वहेतुत्वार्थं विशेषणम्-**न चेति** । जीवान्प्रतीश्वरत्वं हिरण्यगर्भादेरपीत्याशंक्य नियन्त्रन्तरं निरस्यति-**न चेति** । महाप्रमेयमुपसंहरति-**तस्मादिति** । अन्यदित्युक्तार्थः ॥ ११ ॥ (५) ॥ वृत्तमनूद्योत्तरसंदर्भमाक्षिपति-**जन्मादीति** । ब्रह्मजिज्ञासां प्रतिज्ञायेति वक्तव्यम् । तेषामेतदर्थप्रतिपादनोपयुक्तन्यायग्रथनार्थमुत्तरः संदर्भोऽर्थवानित्याशंक्याऽऽह-**न्यायेति** । अनुक्तवाक्यानां तत्परत्वं वक्तुमुत्तरो ग्रन्थ इत्याशंक्याऽऽह-**गतीति** । अनुक्तसमन्वयाभावान्नोत्तरस्योत्थानमित्याह-**अत इति** । उत्तरसूत्राणाम-

परस्य ग्रन्थस्य किमुत्थानमिति ॥ उच्यते ॥ द्विरूपं हि ब्रह्मावगम्यते—नामरूपविकारभेदोपाधिविशिष्टं, तद्विपरीतं च सर्वोपाधिविवर्जितम् । "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" [ बृह० ४ । ५ । १५ ] "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" [ बृह० ४ । ५ । १५ ] "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं, यो वै भूमा तदमृतम्, अथ यदल्पं तन्मर्त्यम्" [ छान्दो० ७ । २४ । १ ] "सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाभिवदन्यदास्ते" [ तैत्ति० आ०३।१२।७]

रत्नप्रभा ।

देव ब्रह्मणि समन्वय इत्याकांक्षैव कारणमित्याह—**उच्यत इति** ॥ संक्षिप्य सगुणनिर्गुणवाक्यार्थमाह—**द्विरूपं हीति** ॥ नामरूपात्मको विकारः सर्वं जगत् । तद्भेदो हिरण्यश्मश्रुत्वादिविशेष इति वाक्यार्थः । वाक्यान्युदाहरति—**यत्र हीत्यादिना** ॥ यस्यां खल्वज्ञानावस्थायां **द्वैतमिव** कल्पितं **भवति तत्** तदा इतरः सन् **इतरं पश्यति** इति दृश्योपाधिकं वस्तु भाति । **यत्र** ज्ञानकाले विदुषः **सर्वं** जगदात्ममात्रम् **अभूत्** तदा तु 'केन कं पश्येद्' इत्याक्षेपान्निरुपाधिकं तत्त्वं भाति । **यत्र** भूम्नि निश्चितो विद्वान् द्वितीयं किमपि न वेत्ति सोऽद्वितीयो भूमा परमात्मा निर्गुणः । **अथ** निर्गुणोक्त्यनन्तरं सगुणमुच्यते । **यत्र** सगुणे स्थितो द्वितीयं वेत्ति **तदल्पं** परिच्छिन्नम् । **यः तु भूमा तदमृतं** नित्यम् । **अथेति**—पूर्ववद्[१] व्याख्येयम् । **धीरः** परमात्मैव **सर्वाणि रूपाणि विचित्य** सृष्ट्वा **नामानि च कृत्वा** बुद्ध्यादौ प्रविश्य जीवसंज्ञो व्यवहरन् यो वर्त्तते, स सगुणस्तं निर्गुणत्वेन विद्वानप्यमृतो भवति । निर्गताः कला

भामती ।

तत्किमपरमवशिष्यते, यदर्थमुत्तरसूत्रसंदर्भस्यावतारः स्यादिति ॥ **किमुत्थानमिति** । किमाक्षेपे । समाधत्ते—**उच्यते—द्विरूपं हीति** । यद्यपि तत्त्वतो निरस्तसमस्तोपाधिरूपं ब्रह्म तथापि न तेन रूपेण शक्यमुपदेष्टुमित्युपहितेन रूपेणोपदेष्टव्यमिति । तत्र च क्वचिदुपाधिर्विवक्षितः । तदुपासनानि

आनन्दगिरीय—न्यायनिर्णयः ।

गतार्थत्वं वक्तुमारभते—**उच्यत इति** । तदर्थं वेदान्तेषु भासमानमर्थं संक्षिपति—**द्विरूपं हीति** । तत्र सोपाधिकविषयं वाक्यमुदाहरति—**यत्रेति** । यस्यां खल्वविद्यावस्थायामाभासभूतं द्वैतं सदिव भाति तत्रेतरः सन्नितरं पश्यतीति दृष्टयादिगोचरमुपाधिमद्वस्तु वदतीत्यर्थः । निरुपाधिकविषयं वाक्यं पठति—**यत्र त्विति** । यस्यां विद्यावस्थायामस्य विदुषः सर्वं कर्त्राद्यात्मातिरेकेणासदेवाऽऽसीत्तत्र केन करणेन कं विषयं को वा कर्ता पश्येदित्याक्षेपादव्यवहार्यमनौपाधिकं तत्त्वमित्यर्थः । निरुपाधिके श्रुत्यन्तरमाह—**यत्रेति** । यस्मिन्भूम्नि स्थितो विद्वानन्यद् द्रष्टव्यं चक्षुषा न पश्यत्यन्यच्च श्रोतव्यं श्रोत्रेण न शृणोति न चान्यन्मन्तव्यं ज्ञातव्यं वा मनसा बुद्ध्या वा मनुते जानाति वा स भूमा दृष्ट्याद्यगोचरो निरतिशयमहत्त्वसंपन्नः परमात्मेत्यर्थः । तत्रैवावान्तरवाक्ये सोपाधिकमपि स्वरूपमुक्तमित्याह—**अथेति** । निरुपाधिकभूमोक्त्यनन्तरं सोपाधिकमपि रूपमुच्यते । यस्मिन्परिच्छिन्ने वस्तुनि निष्ठो योऽविद्वानन्यद् द्रष्टव्यादि चक्षुरादिनाऽनुसंधत्ते तदल्पं परिच्छिन्नमुपहितमित्यर्थः । भूम्नोऽल्पस्य च विशेषान्तरमाह—**यो वा इति** । अथेति द्योतितो विशेषो वाक्येन प्रकटितः । सोपाधिकेऽन्तर्यामिणि श्रुत्यन्तरमाह—**सर्वाणीति** । सर्वज्ञो हीश्वरो नामरूपादिकं विश्वं निर्माय तत्र प्रविश्याभिवदनादि कुर्वन्योऽवतिष्ठते तं विद्वानिहैवामृतो भवतीत्यर्थः ।

१ भूमामृतोक्त्यनन्तरमित्यर्थकत्वेनाथपदं व्याख्येयं, प्रकरणादिति भावः ।

**"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् । अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्" [ श्वेताश्व० ६ । १९ ] "नेतिनेति" [ बृह० २ । ३ । ६ ] इति "अस्थूलमनणुमह्रस्वमदीर्घम्" [ बृह० ३ । ८ । ८ ] इति "न्यूनमन्यत्स्थानं, सम्पूर्णमन्यद्" । इति चैवं सहस्रशो विद्याविद्याविषयभेदेन ब्रह्मणो द्विरूपतां दर्शयन्ति वाक्यानि ॥ तत्राविद्यावस्थायां ब्रह्मण उपास्योपासकादिलक्षणस्सर्वो व्यवहारः । तत्र कानिचिद्ब्रह्मण उपासनान्यभ्युदयार्थानि, कानिचित्क्रममुक्त्यर्थानि, कानिचित्कर्मसमृद्ध्यर्थानि ॥**

---

रत्नप्रभा ।

अंशा यस्मात्तत् **निष्कलम्**, अतो निरंशत्वात् **निष्क्रियम्**, अतः **शान्तम्** अपरिणामि **निरवद्यं** रागादिदोषशून्यम् **अञ्जनं** मूलतमस्सम्बन्धो धर्मादिकं वा तच्छून्यं **निरञ्जनम्** ॥ किञ्च, **अमृतस्य** मोक्षस्य स्वयमेव वाक्योत्थवृत्तिस्थत्वेन **परम्** उत्कृष्टं **सेतुं** लौकिकसेतुवत् प्रापकम् । यथा—दग्धेन्धनोऽनलः शाम्यति तमिवाविद्या तज्जं दग्ध्वा प्रशान्तं निर्गुणमात्मानं विद्यादित्यर्थः ॥ **नेतिनेतीति** । व्याख्यातम् । स्थूलादिद्वैतशून्यम् । रूपद्वये श्रुतिमाह—**न्यूनमिति** ॥ द्वैतस्थानं **न्यूनम्** अल्पं सगुणरूपं निर्गुणाद् **अन्यत्** तथा **सम्पूर्णं** निर्गुणं सगुणादन्यदित्यर्थः । एकस्य द्विरूपत्वं विरुद्धमित्यत आह—**विद्येति** ॥ विद्याविषयो ज्ञेयं निर्गुणं सत्यम्, अविद्याविषयम् उपास्यं, सगुणकल्पितमित्यविरोधः । तत्राविद्याविषयं विवृणोति—**तत्रेति** ॥ निर्गुणज्ञानार्थमारोपितप्रपञ्चमाश्रित्य बोधात्प्राकाले गुडजिह्विकान्यायेन तत्फलार्थान्युपासनानि विधीयन्ते । तेषां चित्तैकाग्र्यद्वारा ज्ञानं मुख्यं फलमिति तद्वाक्यानामपि महातात्पर्यं ब्रह्मणीति मन्तव्यम् । नामब्रह्मेत्याद्युपास्तीनां कामचारादिरभ्युदयः फलं, दहराद्युपास्तीनां क्रममुक्तिः, उद्गीथादिध्यानस्य कर्मसमृद्धिः फलमिति भेदः । ध्यानानां मानसत्वाज्ज्ञानान्तरङ्गत्वाच्च ज्ञानकाण्डे विधानमिति भावः ।

भामती ।

**कानिचित् अभ्युदयार्थानि** मनोमात्रसाधनतयात्र पठितानि । **कानिचित्क्रममुक्त्यर्थानि, कानिचित्कर्मसमृद्ध्यर्थानि** । क्वचित्पुनरुक्तोऽप्युपाधिरविवक्षितः, यथात्रैवान्नमयादय आनन्दमयान्ताः पञ्च

आनन्दगिरीय—न्यायनिर्णयः ।

निरुपाधिके श्रुत्यन्तरमाह—**निष्कलमिति** । निष्कलं निरंशं निरंशत्वादेव सर्वक्रियाशून्यं निष्क्रियं तस्मादेव शान्तमपरिणामि रागादिरहितं निरवद्यं धर्माधर्माद्यसंबद्धं निरञ्जनम् । नमसोऽस्य विशेषमाह—**अमृतस्येति** । यथा मृद्दारुमयः सेतुर्नदीकुल्यादिपरकूलप्राप्तेरुपायस्तथा संसारसागरस्य परं पारं परं ब्रह्म तद्भावस्यामृतस्य वाक्योत्थबुद्ध्यभिव्यक्तं तदेव साधनं सेतुवदवस्थितम् । तस्योपशान्तत्वे दृष्टान्तमाह—**दग्धेति** । यथा दग्धेन्धनोऽग्निः शाम्यति तथाऽज्ञानं तदुत्थं च दग्ध्वा स्थितं प्रशान्तं प्रसन्नं विद्यादित्यर्थः । इतिभ्यां विश्वं दृश्यमादाय नञ्भ्यां तन्निषेधादपि श्रुत्यन्तरं निरुपाधिकार्थमाह—**नेतीति** । द्रव्यगुणादिसर्वद्वैतनिषेधादपि वाक्यं तथेत्याह—**अस्थूलमिति** । रूपद्वये श्रुत्यन्तरमाह—**न्यूनमिति** । निष्प्रपञ्चादन्यदुपास्यं सप्रपञ्चस्थानं न्यूनं परिच्छिन्नं ततोऽन्यन्निष्प्रपञ्चं मुक्तोपसृप्यं त्रिधापरिच्छित्तिशून्यं सच्चिदानन्दात्मकमित्यर्थः । उक्तवाक्यानामुपलक्षणत्वं विवक्षित्वोक्तमेवमिति । ननु ब्रह्मणो न द्वैविध्यं युगपदेकस्य तद्विरोधात्तत्राऽऽह—**विद्येति** । अद्वैतमेव वास्तवं चेदुपास्योपासकादिभेदस्यावस्तुत्वादुपास्तिविध्यानर्थक्यमित्याशङ्क्याऽऽह—**तत्रेति** । उपास्तीनामपि मुक्त्यर्थत्वाद्विद्यावद्वस्तुगामितेत्याशङ्क्य साक्षान्न मोक्षार्थतेत्याह—**तत्रेति** । अभ्युदयार्थानि प्रतीकोपासनानि । क्रममुक्त्यर्थानि दहराद्युपासनानि । कर्मसमृद्ध्यर्थान्युद्गीथादिध्यानानि । यद्यपि विधेयत्वादेतानि कर्मकाण्डे युक्तानि तथाऽपि मानसत्वेन विद्यासाम्यादिहोक्तानीत्यर्थः ।

---

१ कारणविद्यासम्बन्ध इत्यर्थः ।

तेषां गुणविशेषोपाधिभेदेन भेदः ॥ एक एव तु परमात्मा ईश्वरस्तैस्तैर्गुणविशेषैर्विशिष्ट उपास्यो यद्यपि भवति, तथापि यथागुणोपासनमेव फलानि भिद्यन्ते–"तं यथायथोपासते तदेव भवति" [ छान्दो० ३ । १४ । १ ] इति श्रुतेः, "यथा क्रतुरस्मिँल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति" [ छान्दो० ३ । १४ । १ ] इति च ॥ स्मृतेश्च–"यंयं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तंतमेवैति कौन्तेय सदा तद्भावभावितः" [ भ० गी० ८ । ६ ] इति ॥ यद्यप्येक एव त्वात्मा सर्वभूतेषु स्थावरजङ्गमेषु गूढः, तथापि चित्तोपाधिविशेषतारतम्यादात्मनः कूटस्थनित्यैकरूपस्याप्युत्तरोत्तरमाविष्कृततारतम्यमैश्वर्यशक्तिविशेषैः श्रूयते–"तस्य य आत्मानमाविस्तरां वेद"[ऐत०

रत्नप्रभा ।

ननूपास्यब्रह्मण एकत्वात् कथमुपासनानां भेदस्तत्राह–**तेषामिति** ॥ गुणविशेषाः–सत्यकामत्वादयो, हृदयादिरुपाधिः । अत्र स्वयमेवाशङ्क्य परिहरति–**एक इति** ॥ परमात्मस्वरूपाभेदेऽप्युपाधिभेदेनोपहितोपास्यरूपभेदादुपासनानां भेदे सति फलभेद इति भावः । **तं** परमात्मानं यद्यद्गुणत्वेन लोका राजानमिव उपासते तत्तद्गुणवत्त्वमेव तेषां फलं **भवति** ॥ **क्रतुः** सङ्कल्पो ध्यानम् । इह यादृशध्यानवान् भवति मृत्वा तादृशोपास्यरूपो भवतीत्यत्रैव भगवद्वाक्यमाह–**स्मृतेश्चेति** ॥ ननु सर्वभूतेषु निरतिशयात्मन एकत्वादुपास्योपासकयोस्तारतम्यश्रुतयः कथमित्याशङ्क्य परिहरति–**यद्यप्येक इति** ॥ उक्तानामुपाधीनां शुद्धितारतम्यादैश्वर्यज्ञानसुखरूपशक्तीनां तारतम्यरूपा विशेषा भवन्ति । तैरेकरूपस्यात्मन उत्तरोत्तरं मनुष्यादिहिरण्यगर्भान्तेष्वाविर्भावतारतम्यं श्रूयते । **तस्य** आत्मन **आत्मानं** स्वरूपं **आविस्तरां** प्रकटतरं यो **वेद** उपास्ते सोऽश्नुते तदिति । तरप्प्रत्ययादित्यर्थः । तथा च निकृष्टोपाधिरात्मैवोपासकः, उत्कृष्टोपा-

भामती ।

कोशाः । तदत्र कस्मिन्नुपाधिर्विवक्षितः कस्मिन्नेति नाद्यापि विवेचितम् । तथा गतिसामान्यमपि सिद्धवदुक्तं, न त्वद्यापि साधितमिति तदर्थमुत्तरग्रन्थसंदर्भारम्भ इत्यर्थः । स्यादेतत् । परस्यात्मनस्तत्तदुपाधिभेदविशिष्टस्याप्यभेदात्कथमुपासनाभेदः, कथं च फलभेद इत्यत आह–**एक एव त्विति** । रूपाभेदेऽप्युपाधिभेदाद्भुपहितभेदादुपासनाभेदस्तथा च फलभेद इत्यर्थः । क्रतुः संकल्पः । ननु यद्येक आत्मा कूटस्थनित्यो निरतिशयः सर्वभूतेषु गूढः, कथमेतस्मिन् भूताश्रये तारतम्यश्रुतय इत्यत आह–**यद्यप्येक आत्मेति** । यद्यपि निरतिशयमेकमेव रूपमात्मन ऐश्वर्यं च ज्ञानं चानन्दश्च, तथाप्यनाद्यविद्यातमःसमा-

आनन्दगिरीय–न्यायनिर्णयः ।

उपास्यैक्यात्तत्प्राप्तेरुपास्तिफलत्वादुपास्तितत्फलभेदासिद्धिमाशङ्क्याऽऽह–**तेषामिति** । परस्य गुणभेदादुपास्तिभेदाच्च भेदेपि स्वरूपाभेदादुपास्त्यादिभेदायोगतादवस्थ्यमाशंक्य स्वरूपाभेदेऽप्युपहितभेदमाह–**एक इति** । उपास्तिप्रचयसंस्कारादुपास्यतद्गुणप्राप्तिरित्यत्र श्रुत्यन्तरमाह–**यथेति** । क्रतुः संकल्पो ध्यानम् । ध्यानसंस्कारप्रचयाद्ध्येयात्मतां ध्याता देहपाते प्रतिपद्यते किंवा तदाऽपि पूर्ववद्ध्यातृत्वमेवेति संशये संस्कारप्रकर्षाद्देवतात्मत्वमेवाऽऽप्नोतीति निर्णेतुमाह–**स्मृतेश्चेति** । सर्वत्राऽऽत्मैक्यात्तस्य कौटस्थ्यात्तस्यैवोपास्यत्वात्कुतस्तत्तारतम्यश्रुतिरित्याशंक्य नीहाराद्यावरणभेदादादित्यवद्धियात्प्रतम्यादात्मा वस्तुतो निरतिशयोऽपि सातिशयो भातीत्याह–**यद्यपीति** । यथोक्तस्याप्यात्मनः स्थावरादारभ्य ब्रह्मान्तेषु प्राणिषूत्तरोत्तरमाविष्टस्य बुद्ध्युपाधिशुद्ध्युत्कर्षतारतम्यात्प्रज्ञाधीनैश्वर्यशक्तिविशेषैस्तारतम्यं तस्योक्तोपाधिकस्य प्रकृतस्याऽऽत्मनो यो ध्याता स्वरूपमाविस्तरामतिशयेन प्रकटमुपास्तिवशाद् बुध्यते सोऽश्नुते ह्याविर्भूयेत्यै-

१ सोऽश्नुते ह्याविर्भूयेति तत्रैव स्पष्टम् ।

आ० २।३।२।१ ] इत्यत्र। स्मृतावपि "यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम्" [भ० गी० १०। ४१ ] इति॥ यत्रयत्र विभूत्याद्यतिशयस्सस ईश्वर इत्युपास्यतया चोद्यते॥ एवमिहापि आदित्यमण्डले हिरण्मयः पुरुषस्सर्वपाप्मोदयलिंगात्पर एवेति वक्ष्यति। एवम् "आकाशस्तल्लिंगाद्" [ व्या० सू० १।१।२२ ] इत्यादिषु द्रष्टव्यम्। एवं सद्योमुक्तिकारणमप्यात्मज्ञानमुपाधिसम्बन्धविशेषद्वारेणोपदिश्यमानमप्यविवक्षितोपाधिसम्बन्धविशेषं परापरविषयं परापरविषयत्वेन सन्दिह्यमानं वाक्यगतिपर्यालोचनया निर्णेतव्यं भवति॥ यथैव हि तावद् "आनन्दमयोऽभ्यासाद्" [ व्या० सू० १।१।१२ ] इति॥ एवमेकमपि ब्रह्मापेक्षितोपाधिसम्बन्धं निरस्तोपाधिसम्बन्धं चोपास्यत्वेन ज्ञेयत्वेन च वेदान्तेषूपदिश्यत इति प्रदर्शयितुं परो ग्रन्थ आरभ्यते॥ यच्च "गतिसामान्याद्" [ ब्र० सू० १।

रत्नप्रभा।

धिरीश्वर उपास्यः,-इत्यौपाधिकं तारतम्यमविरुद्धमिति भावः। अत्रार्थे भगवद्गीतामुदाहरति-स्मृतावपीति॥ अत्र सूर्यादेरपि न जीवत्वेनोपास्यता, किंत्वीश्वरत्वेनेत्युक्तं भवति। तत्र सूत्रकारसम्मतिमाह-एवमिहेति॥ उदयः असम्बन्धः। एवं यस्मिन्वाक्ये उपाधिर्विवक्षितः तद्वाक्यमुपासनापरमिति वक्तुमुत्तरसूत्रसन्दर्भस्यारम्भ इत्युक्त्वा यत्र न विवक्षितः, तद्वाक्यं ज्ञेयब्रह्मपरमिति निर्णयार्थमारम्भ इत्याह-एवं सद्य इति॥ अन्नमयादिकोशा उपाधिविशेषाः। वाक्यगतिः तात्पर्यम्। आरम्भसमर्थनमुपसंहरति-एवमेकमपीति॥ सिद्धवदुक्तगतिसामान्यस्य साधनार्थमप्युत्तरारम्भ इत्याह-यच्चेति॥ अन्नं प्रसिद्धं प्राणमनोबुद्धयः हिरण्यगर्भरूपाः, बिम्बचैतन्यमीश्वर आनन्दः, "तेषां पञ्चानां विकारा आध्यात्मिका देह-

भामती।

वृतं तेषु प्राणभृद्भेदेषु क्वचिदसदिव, क्वचिदत्यन्तापकृष्टमिव, क्वचिदपकृष्टमिव, क्वचित्सत्, क्वचित्प्रकर्षवत्, क्वचिदत्यन्तप्रकर्षवदिव भासते। तत्कस्य हेतोः, अविद्यातमसः प्रकर्षनिकर्षतारतम्यादिति। यथोत्तमप्रकाशः सविता दिङ्मण्डलमेकरूपेणैव प्रकाशेनापूरयन्नपि वर्षासु निकृष्टप्रकाश इव शरदि तु प्रकृष्टप्रकाश इव प्रथते, तथेदमपीति। अपेक्षितोपाधिसंबन्धम् उपास्यत्वेन। निरस्तोपाधिसंबन्धं ज्ञेयत्वेनेति॥११॥(९)॥

आनन्दगिरीय-न्यायनिर्णयः।

तरेयके श्रुतम्। तथा चोपास्यतारतम्यं श्रौतमौपाधिकं युक्तमित्यर्थः। उपास्येश्वरतारतम्यं भगवद्गीतास्वपि सिद्धमित्याह-स्मृताविति। श्रुतिस्मृतितात्पर्यमाह-यत्रेति। न केवलं द्वैविध्यं ब्रह्मणः श्रुतिस्मृत्योरेव सिद्धं किंतु सूत्रकृतोऽपि मतमित्याह-एवमिति। श्रुतिस्मृत्योरिव प्रकृतेऽपि शास्त्रे द्वैरूप्यं ब्रह्मणो भाति। तत्र सोपाधिकब्रह्मविषयमन्तस्तद्धर्माधिकरणमुदाहरति-आदित्येति। उक्तन्यायं तुल्यदेशेषु प्रसारयति-एवमिति। सोपाधिकोपदेशवन्निरुपाधिकोपदेशं दर्शयति-एवमित्यादिना। आत्मज्ञानं निर्णेतव्यमिति संबन्धः। निर्णेयप्रसङ्गमाह-परेति। अन्नमयाद्युपाधिद्वारोक्तस्य कथं परविषयत्वं तत्राऽऽह-उपाधीति। निर्णयक्रममाह-वाक्येति। उक्तार्थमधिकरणं क्वास्तीत्याशङ्क्योक्तम्-यथेति। अस्मिन्नेवाधिकरणे यथा निरुपाधिकं ब्रह्मैवोच्यते तथा द्युभ्वाद्यायतनमित्यादिष्वपीत्यर्थः। श्रुतिस्मृतिसूत्रेषु दृष्टं ब्रह्मद्वैरूप्यं शिष्ट्याऽनन्तरसंदर्भारम्भं संभावयति-एवमिति। अपेक्षितोपाधिसंबन्धमुपास्यत्वेन निरस्तोपाधिसंबन्धं च ज्ञेयत्वेनेति संबन्धः। तस्याद्याप्यविवेकात्कुत्रोपाधिरिष्टः कुत्र वा नेति निरूपयितुमुत्तरग्रन्थ इत्यर्थः। सिद्धवदुक्तगतिसामान्यस्यापि साधनायेत्युत्तरस्योपयोगान्तरमाह-यच्चेति। वाक्यान्तराणि व्याख्यातातिरिक्तानीति यावत्। वेदान्तानामविशेषेण निर्विशेषे ब्रह्मणि समन्वये सिद्धे क्वचित्तस्य हिरण्मयवाक्यादा-

१ । १० ] इत्यचेतनकारणनिराकरणमुक्तं, तदपि वाक्यान्तराणि ब्रह्मविषयाणि व्याचक्षाणेन ब्रह्मविपरीतकारणनिषेधेन प्रपञ्च्यते ॥

## आनन्दमयोऽभ्यासात् ॥ १२ ॥ ( ६ ) ॥

तैत्तिरीयके–"अन्नमयं" [ २ । १ । २ ], "प्राणमयं" [ २ । २ । २ ], "मनोमयं" [ २।३।२ ], "विज्ञानमयं" [ २ । ४ । १ ] चानुक्रम्य आम्नायते–"तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयः" [ तैत्ति० २ । ५ । २ ] इति ॥ तत्र संशयः–किमिह आनन्दमयशब्देन परमेव ब्रह्मोच्यते यत्प्रकृतं "सत्यं ज्ञानमनन्तं ब्रह्म" [ तैत्ति० २ । १ । १ ] इति, किंवा अन्नमयादिवत् ब्रह्मणोऽर्थान्तरमिति ॥ किं तावत्प्राप्तम् ॥ ब्रह्मणोऽर्थान्तरममुख्य आत्मा आनन्दमयः स्यात् ॥

---

रत्नप्रभा ।

प्राणमनोबुद्धिजीवा अन्नमयादयः पञ्चकोशा इति श्रुतेः परमार्थः । पूर्वाधिकरणे गौणमुख्येक्षणयोरतुल्यत्वेन संशयाभावाद्गौणप्रायपाठो न निश्चायक इत्युक्तं तर्हि मयटो विकारे प्राचुर्ये च मुख्यत्वात् संशये विकारप्रायपाठादानन्दविकारो जीव आनन्दमय इति निश्चयोऽस्तीति प्रत्युदाहरणसङ्गत्या पूर्वपक्षमाह–

भामती ।

**आनन्दमयोऽभ्यासात्** । तत्र तावत्प्रथममेकदेशिमतेनाधिकरणमारचयति–**तैत्तिरीयकेऽन्नमयामित्यादि** । गौणप्रवाहपातेऽपि युज्यते मुख्यमीक्षणम् । मुख्यत्वे तूभयोस्तुल्ये प्रायदृष्टिर्विशेषिका ॥ आनन्दमय इति हि विकारे प्राचुर्ये च मयटस्तुल्यं मुख्यार्थत्वमिति विकारार्थान्नमयादिपदप्रायपाठादानन्दमयपदमपि विकारार्थमेवेति युक्तम् । न च प्राणमयादिषु विकारार्थत्वायोगात्स्वार्थिको मयडिति युक्तम् । प्राणाद्युपाध्यवच्छिन्नो ह्यात्मा भवति प्राणादिविकारः, घटाकाशमिव घटविकारः । न च सत्यर्थे स्वार्थिकत्वमुचितम् । 'चतुष्कोशान्तरत्वे तु न सर्वान्तरतोच्यते । प्रियादिभागी शारीरो जीवो न ब्रह्म युज्यते॥' । न च सर्वान्तरतया ब्रह्मैवानन्दमयं, न जीव इति सांप्रतम् । न हीयं श्रुतिरानन्दमयस्य सर्वान्तरतां ब्रूते अपि त्वन्नमयादिकोशचतुष्टयान्तरतामानन्दमयकोशस्य । न चास्मादन्यस्यान्तरस्याश्रवणादयमेव सर्वान्तर इति युक्तम् । यदपेक्षं यस्यान्तरत्वं श्रुतं तत्तस्मादेवान्तरं भवति । न हि देवदत्तो बलवानित्युक्ते सर्वान्सिंहशार्दूलादीनपि प्रति बलवान्प्रतीयतेऽपि तु समानजातीयनरान्तरमपेक्ष्य । एवमानन्दमयोऽप्यन्नमयादिभ्योऽन्तरो न तु सर्वस्मात् । न च निष्कलस्य ब्रह्मणः प्रियाद्यवयवयोगः, नापि शारीरत्वं युज्यत इति संसार्येवा-

आनन्दगिरीय–न्यायनिर्णयः ।

वपवादः क्वचिदानन्दमयवाक्यादौ तदाभासे तदसत्त्वमुच्यत इत्यध्यायशेषारम्भे स्थिते निर्गुणविषयमेव तावदधिकरणं प्रस्तौति–**आनन्दमय इति** । तस्य वृत्तिकारमतेन विषयमाह–**तैत्तिरीयक इति** । अन्नरसविकारो देहोऽन्नमयः प्राणोपाधिरात्मा प्राणविकारः प्राणमयो मनोमयस्तदुपाधिरात्मा तद्विकारो विज्ञानमयो विज्ञानोपाधिरात्मा विज्ञानविकारः । यद्वा–भृगुवल्ल्युक्ताधिदैविकान्नादीन्प्रत्याध्यात्मिकान्नादिकोशा विकारास्तदेतच्चतुष्टयं स वा एष इत्यादिना क्रमेणोक्त्वाऽऽनन्दमय उक्तस्तस्मादन्योऽन्तर आत्मा विज्ञानमय इति सूत्रितादित्येतत् । तस्यैव स्मृत्यर्थो वै–शब्दः । एतस्मात्तस्य श्रद्धैव शिर इत्यादिना व्याख्याततात् । ततोऽन्यत्वं मनोमयस्यापीत्यत उक्तम्–**अन्तर इति**। तस्मादानन्दमयशब्दे मयटो विकारप्राचुर्यसाधारण्याद्विचारबीजं संशयमाह–**तत्रेति** । ईक्षत्यधिकरणे मुख्यसंभवे गौणस्यानवकाशत्वाद्विशयानुदये प्रायपाठस्याकिंचित्करत्वादमुख्येक्षणप्रवाहपातेऽपि जगत्कारणे मुख्यं तदित्युक्तम् । इह तु मयटो विकारप्राचुर्ययोर्मुख्यत्वे सति विशयोदये प्राचुर्यार्थात्प्रायदृष्ट्यैर्व्यावर्तकत्वात्पूर्वाधिकरणसिद्धान्ताभावेन पूर्वपक्षोन्मेषात्प्रत्युदाहरणात्मिकां संगतिं विवक्षन्नाकांक्षाद्वारा पूर्वपक्षयति–**किमिति** । श्रुत्यादिसंगतिचतुष्टयं

कस्मात् ॥ अन्नमयाद्यमुख्यात्मप्रवाहपतितत्वात् ॥ अथाऽपि स्यात्सर्वान्तरत्वादानन्दमयो मुख्य एवात्मेति ॥ न स्यात्, प्रियाद्यवयवयोगात्, शारीरत्वश्रवणाच्च ॥ मुख्यश्चेदात्माऽऽनन्दमयः स्यान्न प्रियादिसंस्पर्शः स्यात् ॥ इह तु "तस्य प्रियमेव शिरः" [ तैत्ति० २।५।२] इत्यादि श्रूयते॥ शारीरत्वं च श्रूयते-"तस्यैष एव शारीर आत्मा यः पूर्वस्य" [ तैत्ति० २ । ३ । १ ] इति ॥ तस्य पूर्वस्य विज्ञानमयस्य एष एव शारीर आत्मा य एष आनन्दमय इत्यर्थः ॥ न च स शरीरस्य सतः प्रियाप्रियसंस्पर्शो वारयितुं शक्यः ॥ तस्मात्संसार्येवानन्दमय आत्मा इत्येवं प्राप्ते-इदमुच्यते ॥ "आनन्दमयोऽभ्यासात्" ॥ [ब्र० सू० १ । १ । १२ ]॥ इति ॥ पर एवात्मानन्दमयो भवितुमर्हति ॥ कुत अभ्यासात्- परस्मिन्नेव ह्यात्मन्यानन्दशब्दो बहुकृत्वोऽभ्यस्यते ॥

---

रत्नप्रभा ।

किं तावदिति । कस्मादित्याकांक्षापूर्वकं हेतुमाह-अन्नमयादीति ॥ श्रुत्यादिसंगतयः स्फुटा एव । पूर्वपक्षे वृत्तिकारमते जीवोपास्त्या प्रियादिप्राप्तिः फलम् । सिद्धान्ते तु ब्रह्मोपास्त्येति भेदः । शङ्कते-अथापीति ॥ परिहरति-न स्यादिति ॥ संगृहीतं विवृणोति-मुख्य इति ॥ परमात्मेत्यर्थः । शारीरत्वेऽपीश्वरत्वं किं न स्यादित्यत आह-न चेति ॥ जीवत्वं दुर्वारमित्यर्थः । नन्वानन्दपदाभ्यासेऽप्यानन्दमयस्य ब्रह्मत्वं कथमित्याशङ्कय ज्योतिष्टोमाधिकारे ज्योतिष्पदस्य ज्योतिष्टोमपरत्ववदानन्दमयप्रक-

भामती ।

नन्दमयः । तस्मादुपहितमेवात्रोपास्यत्वेन विवक्षितं, न तु ब्रह्मरूपं ज्ञेयत्वेनेति पूर्वः पक्षः । अपि च यदि प्राचुर्यार्थोऽपि मयट्, तथापि संसार्येवानन्दमयः; न तु ब्रह्म । आनन्दप्राचुर्यं हि तद्विपरीतदुःखलवसंभवे भवति न तु तदत्यन्तासंभवे । नच परमात्मनो मनागपि दुःखलवसंभवः, आनन्दैकरसत्वादित्याह-न च सशरीरस्य सत इति । अशरीरस्य पुनरप्रियसंबन्धो मनागपि नास्तीति प्राचुर्यार्थोऽपि मयण् नोपपद्यत इत्यर्थः । उच्यते । आनन्दमयावयवस्य तावद्ब्रह्मणः पुच्छस्याङ्गतया न प्राधान्यम्, अपि त्वङ्गिन आनन्दमयस्यैव ब्रह्मणः प्राधान्यम् । तथा च तदधिकारे पठितमभ्यस्यमानमानन्दपदं तद्बुद्धिमाधत्त इति तस्यैवानन्दमयस्याभ्यास इति युक्तम्।ज्योतिष्टोमाधिकारे 'वसन्तेवसन्तेज्योतिषा' इति ज्योतिष्पदमिव ज्योतिष्टोमाभ्यासः कालविशेषविधिपरः । अपि च साक्षादानन्दमयात्माभ्यासः श्रूयते-'एतमानन्दमयमात्मान-

आनन्दगिरीय-न्यायनिर्णयः ।

फलं च वक्ष्यते । मयटः साधारण्येऽपि विशेषग्रहे हेतुर्नास्तीत्याह-कस्मादिति । विकारप्रायपाठं हेतुमाह-अन्नेति । प्रायपाठेऽपि प्रकरणाल्लिङ्गं बलवदित्याह-अथापीति । सावयवत्वशारीरत्वलिङ्गाभ्यां मयट्श्रुत्या चानुगृहीतं प्रकरणमेव प्रबलमित्याह-न स्यादिति । सावयवत्वस्यान्यथासिद्धिं प्रत्याह-मुख्यश्चेदिति । तस्य निष्कलत्वश्रुत्या निरंशत्वादित्यर्थः । आनन्दमयेऽपि कुतः सावयवत्वं तत्राऽऽह-इह त्विति । लिङ्गान्तरं विभजते-शारीरत्वं चेति । व्यवहितान्वयेनाभीष्टार्थदृष्टौ व्याचष्टे-तस्येति । शारीरत्वेऽपि परमात्मत्वं किं न स्यात्तत्राऽऽह-न चेति । प्रियादिस्पर्शित्वे च संसारित्वमित्यर्थः । का तर्हि सर्वान्तरत्वस्य गतिरित्याशङ्कय चतुष्कोशान्तरत्वमेव न सर्वान्तरत्वमित्याह-तस्मादिति । उक्तं प्रकरणादि तच्छब्दार्थः । आनन्दमये संसारिण्युपास्तिद्वारा दुःखरहितप्रियादियुक्तस्वरूपावस्थानं फलं वक्तुमितिशब्दः । पूर्वपक्षमनूद्य सिद्धान्तयति-एवमिति । सौत्रीं प्रतिज्ञां विभजते-पर एवेति।प्रकरणादिना तस्य संसारित्वे प्रतिज्ञानुपपत्तिरित्याह-कुत इति । हेतुमादाय व्याकरोति-अभ्यासादिति । आनन्दशब्दाभ्यासे कथमानन्दमयस्य ब्रह्मतेत्याशंक्य ब्रह्मणि प्रयुक्तपूर्वस्य तस्य प्रकरणादानन्दमये प्रयोगाज्ज्योतिष्टोमा-

आनन्दमयं प्रस्तुत्य "रसो वै सः" [ तैत्ति० २ । ७ । १ ॥ ] इति तस्यैव रसत्वमुक्त्वोच्यते—"रसꣳ ह्येवायं लब्ध्वानन्दी भवति । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति" [ तैत्ति० २ । ७।१ ], "सैषाऽऽनन्दस्य मीमाꣳसा भवति" [ तैत्ति० २ । ८ । १ ], "एतमानन्दमयमात्मानमुपसंक्रामति" [ तैत्ति० २ । ८ । ६ ], "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति" [ तैत्ति० २ । ९ । १ ], "आनन्दो ब्रह्मेति व्यजानात्" [ तैत्ति० ३ । ६ ] इति च ॥ श्रुत्यन्तरे च—"विज्ञानमानन्दं ब्रह्म" [ बृह० ३ । ९ । २८ ] इति ब्रह्मण्येव आनन्दशब्दो दृष्टः ॥ एवमानन्दशब्दस्य बहुकृत्वो ब्रह्मण्यभ्यासादानन्दमय आत्मा ब्रह्मेति गम्यते ॥ यत्तूक्तमन्नमयाद्यमुख्यात्मप्रवाहपतितत्वादानन्दमयस्याप्यमुख्यात्मत्वमिति ॥ नासौ दोषः॥आनन्दमयस्य

रत्नप्रभा ।

रणस्थानन्दपदस्यानन्दमयपरत्वात् तदभ्यासस्तस्य ब्रह्मत्वसाधक इत्यभिप्रेत्याह—आनन्दमयं प्रस्तुत्येति ॥ रसः सारः आनन्द इत्यर्थः । अयं लोकः । यद् यदि । एष आकाशः पूर्णः आनन्दः साक्षी प्रेरको न स्यात् तदा को वा अन्यात् चलेत् ॥ को वा विशिष्य प्राण्यात् जीवेत् ॥ तस्माद् एष एवानन्दयाति । आनन्दयतीत्यर्थः । "युवा स्यात् साधुयुवा" [ तैत्ति० २ । ८ । १ ] इत्यादिना वक्ष्यमाणमनुष्ययुवानन्दमारभ्य ब्रह्मानन्दावसाना एषा सन्निहिता आनन्दस्य तारतम्यमीमांसा भवति ॥ उपसंक्रामति विद्वान्प्राप्नोतीत्येकदेशिनामर्थः । मुख्यसिद्धान्ते तु उपसंक्रमणं विदुषः कोशानां प्रत्यङ्मात्रत्वेन विलापनमिति ज्ञेयम् । शिष्टमुक्तार्थम् । आनन्दशब्दाद्ब्रह्मावगतिः सर्वत्र समानेति गतिसामान्यार्थमाह—श्रुत्यन्तरे चेति ॥ लिङ्गादमुख्यात्मसंनिधेर्बाध इति मत्वाह—नासाविति ॥ सर्वान्तरत्वं

भामती ।

मुपसंक्रामति' इति । पूर्वपक्षबीजमनुभाष्य दूषयति—यत्तूक्तमन्नमयादीति । न हि मुख्यारुन्धतीदर्शनं तत्तदमुख्यारुन्धतीदर्शनप्रायपठितमप्यमुख्यारुन्धतीदर्शनं भवति । तादर्थ्यात्पूर्वदर्शनानामन्यदर्शनानुगुण्यं न तु तद्विरोधितेति चेत्, इहाप्यानन्दमयादान्तरस्यान्यस्याश्रवणात्, तस्य त्वन्नमयादिसर्वान्तरत्वश्रुतेस्तत्पर्यवसानात्तादर्थ्यं तुल्यम् । प्रियाद्यवयवयोगशारीरत्वे च निगदव्याख्यातेन भाष्येण समाहिते प्रियाद्यवयवयोगाच्च दुःखलवयोगोऽपि परमात्मन औपाधिक उपपादितः । तथानन्दमय इति प्राचुर्यार्थता

आनन्दगिरीय—न्यायनिर्णयः ।

धिकारे ज्योतिःशब्दाभ्यासवदानन्दमयाधिकारे तत्पदाभ्यासस्य तद्विषयत्वादित्याह—आनन्दमयमिति।रसः सारोऽन्नमयादिकोशचतुष्टयान्तरत्वादानन्दमयोऽयं लब्ध्वा ध्यात्वा पूर्णश्चेदानन्दः सर्वसाक्षी सर्वप्रेरको न स्यात्तदा प्राणादेरचेतनस्य चेष्टा न युक्तेत्याह—को हीति । सर्वानन्दयितृत्वादपि परानन्दत्वमस्येत्याह—एष हीति । युवा स्यादित्यादिना सार्वभौममारभ्य ब्रह्मान्तमुत्तरोत्तरमुत्कृष्टानन्दस्य ब्रह्मणि समाप्तिफला मीमांसा सैषेत्युक्ता । मयडन्तस्याभ्यासमाह—एतमिति । उपसंक्रमणं प्राप्तिर्ब्रह्मणः स्वरूपमिति शेषः । गतिसामान्यार्थं ब्रह्मण्यानन्दशब्दस्यान्यत्रापि प्रयुक्तत्वमाह—श्रुत्यन्तरे चेति । तथाऽपि कथमानन्दमयस्य ब्रह्मत्वमित्याशंक्य हेत्वर्थमुपसंहरति—एवमिति । अभ्यासात्तस्य चाधिकारादानन्दमयार्थत्वादिति शेषः । लिङ्गात्तस्य ब्रह्मत्वमुक्त्वा तदब्रह्मत्वहेतुं प्रायपाठमनुवदति—यत्त्विति । लिङ्गबाध्यः संनिधिरित्याह—नासाविति । तस्य

१ षष्ठ्यन्तमिदम् ।

सर्वान्तरत्वात् ॥ मुख्यमेव ह्यात्मानमुपदिदिक्षु शास्त्रं लोकबुद्धिमनुसरदन्नमयं शरीरमनात्मानमत्यन्तमूढानामात्मत्वेन प्रसिद्धमनूद्य मूषानिषिक्तद्रुतताम्रादिप्रतिमावत्ततोऽन्तरं ततोऽन्तरमित्येवं पूर्वेणपूर्वेण समानमुत्तरमुत्तरमनात्मानमात्मेति ग्राहयत्प्रतिपत्तिसौकर्यापेक्षया सर्वान्तरं मुख्यमानन्दमयमात्मानमुपदिदेशेति श्लिष्टतरम् ॥ यथाऽरुन्धतीनिदर्शने बह्वीष्वपि तारास्वमुख्यास्वरुन्धतीषु दर्शितासु याऽन्ते प्रदर्श्यते सा मुख्यैवारुन्धती भवति, एवमिहाप्यानन्दमयस्य सर्वान्तरत्वान्मुख्यमात्मत्वम् ॥ यत्तु ब्रूषे प्रियादीनां शिरस्त्वादिकल्पनाऽनुपपन्ना मुख्यस्यात्मन इति ॥ अतीतानन्तरोपाधिजनिता सा न स्वाभाविकीत्यदोषः ॥ शारीरत्वमप्यानन्दमयस्य । अन्नमयादिशरीरपरम्परया प्रदर्श्यमानत्वात् ॥ न पुनस्साक्षादेव शारीरत्वं संसारिवत् ॥ तस्मादानन्दमयः पर एवात्मा ॥१२॥

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

अत्राह—नानन्दमयः पर आत्मा भवितुमर्हति ॥ कस्मात् ॥ विकारश-

रत्नप्रभा ।

न श्रुतमित्याशङ्क्य ततोऽन्यस्यानुक्तेस्तस्य सर्वान्तरत्वमिति विवृणोति—मुख्यमेवेति ॥ लोकबुद्धिमिति । तस्याः स्थूलग्राहितामनुसरदित्यर्थः । ताम्रस्य मूषाकारत्ववत्प्राणस्य देहाकारत्वं देहेन सामान्यम् । तथा मनः प्राणाकारं तेन सममित्याह—पूर्वेणेति ॥ अतीतो योऽनन्तर उपाधिर्विज्ञानकोशस्तत्कृता सावयवत्वकल्पना शरीरेण ज्ञेयत्वाच्छारीरत्वमिति लिङ्गद्वयं दुर्बलम् । अतः सहायाभावादभ्याससर्वान्तरत्वाभ्यां विकारसन्निधेर्बाध इति भावः ॥ १२ ॥ विकारार्थकमयट्छ्रुतिसहाय इत्याशङ्क्य मयटः प्राचुर्येऽपि विधानान्मैवमित्याह—विकारेत्यादिना॥ "तत्प्रकृतवचने मयट्"[ पा. सू. ५।४।२१ ]इति तदिति

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

चतुष्कोशान्तरत्वमेव न सर्वान्तरत्वमित्युक्तमाशंक्य तात्पर्यमाह—मुख्यमिति । किमिति तर्हि प्रथममन्नमयादिचतुष्टयमादिष्टं तत्राऽऽह—लोकेति । कथं तर्हि देहे मनुष्योऽहमित्यात्मत्वधीरित्याशंक्याविवेकादित्याह—अत्यन्तेति । अन्नमयात्प्राणमयस्य ततो मनोमयस्य तस्मादपि विज्ञानमयस्य ततश्चाऽऽनन्दमयस्याऽऽन्तरत्वे दृष्टान्तो—मूषेति । तर्हि प्राणमयादेरेवान्यतमस्याऽऽत्मत्वसंभवे किमानन्दमयेनेत्याशंक्याऽऽह—पूर्वेणेति । अनात्मत्वेन साम्ये तत्तज्ज्ञापनमकिंचित्करमित्याशंक्य लोकबुद्धिमनुसरदित्युक्तं स्मारयति—प्रतिपत्तीति । आनन्दमयादन्यस्याऽऽन्तरस्यानुक्तेरस्य निरंकुशमान्तरत्वमित्याह—सर्वेति । अमुख्यप्रवाहपातेऽपि मुख्यत्वे दृष्टान्तमाह—यथेति । इहापीत्यमुख्यप्रवाहे पतितस्यापीति यावत् । लिङ्गेन संनिधिबाधेऽपि सावयवत्वलिङ्गानुगृहीतः स बलवानित्याशंक्योक्तमनुवदति—यत्त्विति । तस्य विज्ञानमयकोशोपाध्यधीनत्वेनान्यथासिद्धेर्न संनिधिसहायतेत्याह—अतीतेति । लिङ्गान्तरं संनिधिसहायत्वेनोक्तमनुवदति—शारीरत्वमिति । लिङ्गयोरन्यथासिद्धत्वे लिङ्गेन केवलसंनिधिबाधे फलितमाह—तस्मादिति ॥ १२ ॥

मयट्शब्दश्रुतिः संनिध्यनुग्राहिकेत्युक्तमनूद्य निरस्यति—विकारेति । तत्रानुवादं व्याख्याति—अत्राऽऽहेति । अभ्यासादिना तस्य परत्वे स्थिते कुतश्चोद्यमित्याह—कस्मादिति । बलवत्या श्रुत्योत्तरमाह—विकारेति । यथा विकारे च प्रकृतिशब्द इत्यत्र शालिविकारं भुंक्ते मुद्गविकारेणेत्यस्मिन्नर्थे शालीन्भुंक्ते मुद्गैरिति प्रकृतिशब्दो विकारे प्रयुक्तस्तथा विकारशब्दोऽपि प्रकृतौ स्यादित्याशंक्य व्याचष्टे—

१ शारीरमिति पाठान्तरम् । २ अतिसम्बद्धमित्यर्थः । ३ याऽन्त्येति पाठान्तरम् ।

ब्दात्-प्रकृतवचनादयमन्यश्शब्दो विकारवचनस्समधिगत आनन्दमय इति ॥ मयटो विकारार्थत्वात् ॥ तस्मादन्नमयादिशब्दवद्विकारविषय एवायमानन्दमयशब्द इति चेत् ॥ न ॥ प्राचुर्यार्थेऽपि मयटस्स्मरणात्–"तत्प्रकृतवचने मयट्" [पा०सू०५।४।२] इति हि प्रचुरतायामपि मयट् स्मर्यते, यथा–अन्नमयो यज्ञ इति अन्नप्रचुर उच्यते, एवमानन्दप्रचुरं ब्रह्मानन्दमय उच्यते, आनन्दप्रचुरत्वं च ब्रह्मणो मनुष्यत्वादारभ्योत्तरस्मिन्नुत्तरस्मिन् स्थाने शतगुण आनन्द इत्युक्त्वा ब्रह्मानन्दस्य निरतिशयत्वावधारणात् ॥ तस्मात्प्राचुर्यार्थे मयट् ॥ १३ ॥

## तद्धेतुव्यपदेशाच्च ॥ १४ ॥

इतश्च प्राचुर्यार्थे मयट्, यस्मादानन्दहेतुत्वं ब्रह्मणो व्यपदिशति श्रुतिः– "एष ह्येवानन्दयाति" [ तैत्ति० २ । ७ । १ ] इति ॥ आनन्दयतीत्यर्थः ॥ यो ह्यन्यानानन्दयति स प्रचुरानन्द इति प्रसिद्धं भवति ॥ यथा लोके योऽन्येषां धनिकत्वमापादयति स प्रचुरधन इति गम्यते, तद्वत् ॥ तस्मात्प्राचुर्यार्थेऽपि मयटः सम्भवादानन्दमयः पर एव आत्मा ॥ १४ ॥

---

रत्नप्रभा ।

प्रथमासमर्थाच्छब्दात्प्राचुर्यविशिष्टस्य प्रस्तुतस्य वचनेऽभिधाने गम्यमाने मयट् प्रत्ययो भवतीति **सूत्रार्थः** ॥ अत्र वचनग्रहणात्प्रकृतस्य प्राचुर्यवैशिष्ट्यसिद्धिः । तादृशस्य लोके मयटोऽभिधानाद् **यथा** अन्नमयो यज्ञ इति ॥ अत्र ह्यन्नं प्रचुरमस्मिन्नित्यन्नशब्दः प्रथमाविभक्तियुक्तः । तस्मान्मयट् प्रत्ययः यज्ञस्य प्रकृत्यर्थाऽन्नप्राचुर्यवाची दृश्यते, न शुद्धप्रकृतवचन इति ध्येयम् ॥ १३ ॥ सूत्रस्थचशब्दोऽनुक्तसमुच्चयार्थ इति मत्वा व्याचष्टे–**इतश्चेति** ॥ तच्चानुक्तं ब्रह्मानन्दस्य निरतिशयत्वावधारणं पूर्वमुक्तम् ॥ १४ ॥ आनन्दमयस्य

भामती ।

मयट उपपादितेति ॥ १२ ॥ १३ ॥ १४ ॥ अपि च मन्त्रब्राह्मणयोरुपेयोपायभूतयोः संप्रतिपत्तेर्ब्रह्मैवानन्दमयपदार्थः । मन्त्रे हि पुनःपुनः 'अन्योऽन्तर आत्मा' इति परब्रह्मण्यान्तरत्वश्रवणात्, तस्यैव

आनन्दगिरीय–न्यायनिर्णयः ।

**प्रकृतीति** । कः पुनरत्र विकारशक्त इत्युक्ते "मयड् वा" इति सूत्रान्मयट्शब्दस्य विकारवाचित्वान्नाऽऽनन्दमयस्य मुख्यात्मतेत्याह–**आनन्देति** । श्रुतेर्विकारार्थत्वे तद्युक्तः संनिधिः संसारिणमेव गोचरयतीत्याह–**तस्मादिति** । मयटो विकारार्थत्वानियमान्न श्रुत्यनुग्रहः संनिधेरित्याह–**नेति** । तदेव स्फुटयति–**तत्प्रकृतेति** । प्राचुर्येण प्रस्तुतं प्रकृतं तदुच्यतेऽस्मिन्निति प्रकृतवचनमन्नादि तदिति प्रथमासमर्थाद्यथोक्तेऽभिधेये मयट्प्रत्ययो भवतीति प्रचुरतायुक्तेऽपि वस्तुनि विकारवन्मयट्स्मरणान्न विकार्थता नियतेत्यर्थः मयटो दृष्टान्तेन स्पष्टयति–**यथेति** । आनन्दमयशब्दस्याऽऽनन्दप्राचुर्यार्थत्वं तद्विपरीतदुःखस्यापि लेशतो ब्रह्मणि प्राप्तिरित्याशंक्याऽऽह–**आनन्देति** । ब्रह्मानन्दस्य मनुष्यत्वावधिषु पूर्वस्थानेषु सुखाल्पत्वापेक्षं प्राचुर्यं न स्वगतदुःखलेशापेक्षम् । अतो ब्रह्मण्यानन्दैकरस्यं युक्तमित्यर्थः । श्रुतेर्न संनिधिसहायतेत्युपसंहरति–**तस्मादिति** ॥ १३ ॥ सूत्रस्थं चकारं व्याकरोति–**इतश्चेति** । अवशिष्टं व्याकुर्वन्नितःशब्दार्थं स्फुटयति—**यस्मादिति** । ब्रह्मणो नात्राऽऽनन्दहेतुत्वं भातीत्याशंक्याऽऽह–**आनन्दयतीत्यर्थ इति** । ब्रह्मणो लौकिकानन्दहेतुत्वेऽपि कथं प्राचुर्यार्थता मयटः स्यादित्याशंक्याऽऽह–**यो हीति** । तदेव दृष्टान्तेन स्फोरयति—**यथेति** । प्राचुर्यार्थत्वे मयटः स्थिते फलितमाह–**तस्मा-**

---

१ प्राचुर्येण प्रस्तुतं प्रकृतम् । तस्य वचनं प्रतिपादनम् । भावेऽधिकरणे वा ल्युट् । तदिति प्रथमासमर्थाद्यथोक्तेऽभिधेये मयट्-इति तदर्थः ॥ आद्ये प्रकृतमन्नमयम् । द्वितीये अन्नमयो यज्ञः ॥

## मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

इतश्चानन्दमयः पर एवात्मा, यस्माद् "ब्रह्मविदाप्नोति परम्" [ तैत्ति० उ० २ । १ । १ ] इत्युपक्रम्य "सत्यं ज्ञानमनन्तं ब्रह्म" [ तै० २ । १ । १ ] इत्यस्मिन्मन्त्रे—यद्ब्रह्म प्रकृतं सत्यज्ञानानन्तविशेषणैर्निर्धारितं,—यस्मादाकाशादिक्रमेण स्थावरजङ्गमानि भूतानि जायन्ते, यच्च भूतानि सृष्ट्वा तान्यनुप्रविश्य गुहायामवस्थितं सर्वान्तरं,—यस्य विज्ञानायान्योऽन्तर आत्माऽन्योऽन्तर आत्मेति प्रक्रान्तं,—तन्मान्त्रवर्णिकमेव ब्रह्मेह गीयते "अन्योऽन्तर आत्मानन्दमयः" [ तै० उ० २ । ५ । २ ] इति ॥ मन्त्रब्राह्मणयोश्चैकार्थत्वं युक्तम् ॥ अविरोधात् ॥ अन्यथा हि प्रकृतहानाप्रकृतप्रक्रिये स्याताम् ॥ न चान्नमयादिभ्य इवानन्दमयादन्योऽन्तर आत्माऽभिधीयते ॥ एतन्निष्ठैव च "सैषा भार्गवी वारुणी विद्या" [ तै० उ० ३ । ६ ] तस्मादानन्दमयः पर एवात्मा ॥ १५ ॥

## नेतरोऽनुपपत्तेः ॥ १६ ॥

इतश्चानन्दमयः पर एवात्मा, नेतरः ॥ इतरः—ईश्वरादन्यः संसारी । जीव इत्यर्थः ॥ न जीव आनन्दमयशब्देनाभिधीयते ॥ कस्मात् ॥ अनुपपत्तेः ॥ आनन्द—

---

रत्नप्रभा ।

ब्रह्मत्वे लिङ्गमुक्त्वा प्रकरणमाह—**मान्त्रेति** ॥ यस्मादेवं कृतं तस्मान्मान्त्रवर्णिकमेव ब्रह्मानन्दमय इति वाक्ये गीयत इति **योजना** ॥ ननु मन्त्रोक्तमेवात्र ग्राह्यमिति को निर्बन्धस्तत्राह—**मन्त्रेति** ॥ ब्राह्मणस्य मन्त्रव्याख्यानत्वादुपायत्वमस्ति; मन्त्रस्तूपेयः, तदिदमुक्तम्—**अविरोधादिति** ॥ तयोरुपायोपेयभावादित्यर्थः । तर्ह्यन्नमयादीनामपि मान्त्रवर्णिकब्रह्मत्वं स्यादित्यत आह—**न चेति** ॥ किंच भृगवे प्रोक्ता वरुणेनोपदिष्टा भृगुवल्ली पञ्चमपर्यायस्याऽऽनन्दे प्रतिष्ठिता । ततः स्थानन्यायेन तदेकार्थब्रह्मवल्ल्या आनन्दमये निष्ठेत्याह—**एतन्निष्ठैवेति** ॥ १५ ॥

भामती ।

च 'अन्योऽन्तर आत्मानन्दमयः' इति ब्राह्मणे प्रत्यभिज्ञानात्, परब्रह्मैवानन्दमयमित्याह सूत्रकारः—**मान्त्रवर्णिकमेव च गीयते** । मान्त्रवर्णिकमेव परं ब्रह्म ब्राह्मणेऽप्यानन्दमय इति गीयत इति ॥ १५ ॥ अपि चानन्दमयं प्रकृत्य शरीराद्युत्पत्तेः प्राक्स्रष्टृत्वश्रवणात्, 'बहु स्याम्' इति च सृज्यमानानां स्रष्टुरानन्दमयादभेदश्रवणात्, आनन्दमयः पर एवेत्याह सूत्रम्—**नेतरोऽनुपपत्तेः** । नेतरो जीव आनन्दमयः,

आनन्दगिरीय—न्यायनिर्णयः ।

दिति ॥ १४ ॥ चशब्दार्थमाह—**इतश्चेति** । तदेव हेत्वन्तरमाह—**यस्मादिति** । तस्मादिति व्यवहितेन संबन्धः । यन्निर्धारितं तदेवेह गीयत इति योजना । प्रकरणाविच्छेदार्थं तदनुसंधत्ते—**यस्मादिति** । भूतयोनेरेव सर्वाप्रत्यक्त्वेन सर्वान्तरत्वमाह—**यच्चेति** । तस्यैव ज्ञेयत्वेन प्रकृतत्वमाह—**यस्येति** । तदेवात्रोच्यमानमिति कुतो गम्यते तत्राऽऽह—**मन्त्रेति** । अविरोधादित्येकार्थत्वे सत्युपायोपेयत्वयोगादित्यर्थः । तयोरनेकार्थत्वे दोषमाह—**अन्यथेति** । अन्नमयादीनामनात्मत्वेऽप्यविरोधवदिहापि स्यादित्याशंक्याऽऽह—**न चेति** । ब्रह्मणस्तदान्तरत्वं पुच्छश्रुतिहतमिति भावः । किंच भृगुवल्ल्यां पञ्चमपर्यायेणोपसंहारात्तस्य ब्रह्मार्थत्ववदत्रापि तस्य स्थानात्तदर्थतेत्याह—**एतन्निष्ठेति** । प्रकरणादिसिद्धमर्थमुपसंहरति—**तस्मादिति** ॥ १५ ॥ पूर्वसूत्रस्थं चकारमाकृष्य सूत्रस्य हेत्वन्तरपरत्वमाह—**इतश्चेति** । जीवस्य प्रतिपाद्यत्वाप्राप्त्या किं निषेधमित्याशङ्क्याऽऽनन्दमयशब्दवाच्यतेत्याह—**नेति** । तस्यापि वैषयिकविविधानन्दभाक्त्वात्तच्छब्दत्वं किं न स्यादित्याह—**कस्मादिति** । हेतुमादाय व्याकर्तुं भूमिकां करोति—**अनुपपत्तेरिति** । आलोचनं तपो

मयं हि प्रकृत्य श्रूयते—"सोऽकामयत बहु स्यां प्रजायेयेति।स तपोऽतप्यत। स तपस्तप्त्वा इदं सर्वमसृजत। यदिदं किञ्च" [ तैत्ति० २ । ६ । २ ] इति ॥ तत्र प्राक् शरीराद्युत्पत्तेरभिध्यानं सृज्यमानानां च विकाराणां स्रष्टुरव्यतिरेकः सर्वविकारसृष्टिश्च न परस्मादात्मनोऽन्यत्रोपपद्यते ॥१६॥

## भेदव्यपदेशाच्च ॥ १७ ॥

इतश्च नानन्दमयः संसारी। यस्मादानन्दमयाधिकारे—"रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति" [ तैत्ति० २ । ७ । १ ] इति जीवानन्दमयौ भेदेन व्यपदिशति ॥ न हि लब्धैव लब्धव्यो भवति ॥ "कथं तर्ह्यात्माऽन्वेष्टव्यः" "आत्मलाभान्न परं विद्यते" इति च श्रुतिस्मृती यावता न लब्धैव भवतीत्युक्तम् ॥ बाढम् ॥ तथाप्यात्मनोऽप्रच्युतात्मभावस्यैव सतस्तत्त्वानवबोधनिमित्तो मिथ्यैव देहादिष्वनात्मस्वात्मत्वनिश्चयो लौकिको दृष्टः ॥ तेन देहादिभूतस्यात्मनोऽप्यात्माऽनन्विष्टोऽन्वेष्टव्यो—

रत्नप्रभा।

स ईश्वरः। तपः सृष्ट्यालोचनम्। अतप्यत कृतवानित्यर्थः। अभिध्यानं कामना, बहु स्यामित्यव्यतिरेकः ॥१६॥ अधिकारे प्रकरणे। सः आनन्दमयो रसः ॥ ननु लब्धृलब्धव्याभावेऽप्यभेदः किं न स्यादत आह—न हि लब्धैवेति ॥ ननु लब्धृलब्धव्ययोर्भेदस्यावश्यकत्वे श्रुतिस्मृत्योर्बाधः स्यादित्याशङ्कते—कथमिति ॥ यावता यतस्त्वयेत्युक्तम्। अतः श्रुतिस्मृती कथमित्यन्वयः ॥ उक्तां शङ्कामङ्गीकरोति—बाढमिति ॥ तर्ह्यात्मन एवात्मना लभ्यत्वोक्तिबाधः अभेदादित्याशङ्क्य कल्पितभेदान्न बाध इत्याह—तथापीति। अभेदेऽपीत्यर्थः। लौकिकः भ्रमः। आत्मनः स्वाज्ञानजभ्रमेण देहाद्यभिन्नस्य भेदभ्रान्त्या परमात्मनो ज्ञेयत्वाद्युक्तिरित्यर्थः। अन्वेष्टव्यो

भामती।

तस्यानुपपत्तेरिति ॥ १६ ॥ भेदव्यपदेशाच्च। रसः सारो ह्ययमानन्दमय आत्मा 'रसं ह्येवायं लब्ध्वाऽनन्दी भवति' इति। सोऽयं जीवात्मनो लब्धृभावः, आनन्दमयस्य च लभ्यता, नाभेद उपपद्यते। तस्मादानन्दमयस्य जीवात्मनो भेदे परब्रह्मत्वं सिद्धं भवति। चोदयति—कथं तर्हीति। यदि लब्धा न लब्धव्यः, कथं तर्हि परमात्मनो वस्तुतोऽभिन्नेन जीवात्मना परमात्मा लभ्यत इत्यर्थः। परिहरति—बाढम्। तथापीति। सत्यम्, परमार्थतोऽभेदेऽप्यविद्यारोपितं भेदमुपाश्रित्य लब्धृलब्धव्यभाव उपपद्यते। जीवो ह्यविद्यया परब्रह्मणो भिन्नो दर्शितः, न तु जीवादपि। तथा चानन्दमयश्चेज्जीवः, न जीवस्याविद्ययापि स्वतो भेदो दर्शित इति न लब्धृलब्धव्यभाव इत्यर्थः। भेदाभेदौ च न जीवपरब्रह्मणोरि-

आनन्दगिरीय—न्यायनिर्णयः।

नाऽऽयासमयम्। अस्त्वेवं काऽनुपपत्तिस्तत्राऽऽह—तत्रेति ॥ १६ ॥ जीवस्याऽऽनन्दमयत्वनिषेधे हेत्वन्तरमाह—भेदेति। चकारार्थं प्रतिज्ञाय प्रकटयन्भेदव्यपदेशं विशदयति—इतश्चेत्यादिना। स इत्यानन्दमयपरामर्श इति वक्तुमानन्दमयाधिकार इत्युक्तम्। श्रुतेरर्थमाह—जीवेति। कयाऽनुपपत्त्या भेदोक्तिस्तत्राऽऽह—न हीति। लब्धैव लब्धव्यो न चेत्तर्हि श्रुतिस्मृत्योरनुपपत्तिरिति शंकते—कथमिति। का तयोरनुपपत्तिस्तत्राह—यावतेति। किमेकत्र वस्तुतो न लब्धृलब्धव्यत्वं किंवा कल्पनयाऽपि ? तत्राऽऽद्यमङ्गीकरोति—बाढमिति। श्रुत्याद्युपपत्तये द्वितीयं प्रत्याह—तथाऽपीति। अप्रच्युतात्मभावोऽखण्डैकरस्यम्।

१ मिथ्यैवेति क्वचिन्नास्ति। २ अन्वेषणं विचारारम्भमात्रम्। तत्फलप्राप्तिर्लाभः। श्रवणं ब्रह्मतात्पर्यधीरिति भेदः। ३ यतः कारणात्त्वया यावता वाक्येन लब्धैव लब्धव्यो न भवतीत्युक्तमतः श्रुतिस्मृती कथमुपपद्येते इति योजनेति भावः।

ऽलब्धो लब्धव्योऽश्रुतः श्रोतव्योऽमतो मन्तव्योऽविज्ञातो विज्ञातव्य इत्यादिभेदव्यपदेश उपपद्यते॥ प्रतिषिध्यत एव तु परमार्थतः सर्वज्ञात्परमेश्वरादन्यो द्रष्टा श्रोता वा "नान्योऽतोऽस्ति द्रष्टा" [बृ० ३।७।२३] इत्यादिना॥परमेश्वरस्त्वविद्याकल्पिताच्छारीरात्कर्तुर्भोक्तुर्विज्ञानात्माख्यादन्यः॥ यथा-मायाविनश्चर्मखड्गधरात्सूत्रेणाकाशमधिरोहतः स एव मायावी परमार्थरूपो भूमिष्ठोऽन्यः। यथा वा-घटाकाशादुपाधिपरिच्छिन्नादनुपाधिरपरिच्छिन्न आकाशोऽन्यः॥ ईदृशं च विज्ञानात्मपरमात्मभेदमाश्रित्य "नेतरोऽनुपपत्तेः" [ब्रह्मसू० १।१।१६] "भेदव्यपदेशाच्च" [ब्रह्मसू० १।१।१७] इत्युक्तम्॥ १७॥

रत्नप्रभा।

देहादिव्यतिरिक्ततया ज्ञेयः। विवेकज्ञानेन लब्धव्यः साक्षात्कर्तव्यः। तदर्थं श्रोतव्यः। विज्ञानं निदिध्यासनं साक्षात्कारो वा। श्रुत्यन्तरस्थार्थानुवादादपौनरुक्त्यम्। ननु भेदः सत्य एवास्तु, तत्राह-प्रतिषिध्यत इति॥ अत ईश्वराद् द्रष्टा जीवोऽन्यो नास्तीति चेज्जीवाभेदादीश्वरस्यापि मिथ्यात्वं स्यादत आह-परमेश्वर इति॥ अविद्याप्रतिविम्बत्वेन कल्पिताज्जीवाच्चिन्मात्र ईश्वरः पृथगस्तीति न मिथ्यात्वम्। कल्पितस्याधिष्ठानाभेदेऽप्यधिष्ठानस्य ततो भेद इत्यत्र दृष्टान्तमाह-यथेति॥ सूत्रारूढः स्वतोऽपि मिथ्या, न जीव इत्यरुच्या भेदमात्रमिथ्यात्वे दृष्टान्तान्तरमाह-यथा वेति॥ ननु सूत्रबलाद्भेदः सत्य इत्यत आह-ईदृशं चेति॥ कल्पितमेवेत्यर्थः। सूत्रे भेदः सत्य इतिपदाभावात् "तदनन्यत्वा [ब्र. सू. २।१।१९] दिसूत्रणाच्छ्रुत्यनुसाराच्चेति भावः॥ १७॥ नन्वानन्दात्मकसत्त्वप्रचुरं प्रधानमानन्दम-

भामती।

त्युक्तमधस्तात्। स्यादेतत्। यथा परमेश्वराद्भिन्नो जीवात्मा द्रष्टा न भवत्येवं जीवात्मनोऽपि द्रष्टुर्न भिन्नः परमेश्वर इति जीवस्यानिर्वाच्यत्वे परमेश्वरोऽप्यनिर्वाच्यः स्यात्। तथा च न वस्तुसन्नित्यत आह-परमेश्वरस्त्वविद्याकल्पितादिति। रजतं हि समारोपितं न शुक्तितो भिद्यते। न हि तद्भेदेनाभेदेन वा शक्यं निर्वक्तुम्। शुक्तिस्तु परमार्थसती निर्वचनीया अनिर्वचनीयाद्रजताद्भिद्यत एव। अत्रैव सरूपमात्रं दृष्टान्तमाह-यथा-मायाविन इति। एतदपरितोषेणात्यन्तसरूपं दृष्टान्तमाह-यथा वा घटाकाशादिति। शेष-

आनन्दगिरीय-न्यायनिर्णयः।

लौकिको लोकादनपेतोऽप्रामाणिकः। तस्य फलवत्त्वमाह-तेनेति। अन्वेषणं विचारारम्भमात्रं तत्फलासिर्लाभः श्रवणं शक्तितात्पर्यधीरिति भेदः। द्रष्टृद्रष्टव्यत्वादिसंग्रहार्थमादिपदम्। जीवत्वेनाऽऽनन्दमयस्य जीवस्याविद्ययाऽपि जीवाद्भेदाभावान्न भेदव्यपदेशः स्यादिति भावः। किमिति कल्पितभेदेन लब्धृलब्धव्यत्वाद्युच्यते श्रुत्यादिवशाद्वास्तवो भेदोऽस्त्वित्याशंक्याऽऽह-प्रतिषिध्यत इति।जीवश्चेन्नेश्वरादन्यस्तर्हि सोऽपि ततोऽन्यो नेति तस्यापि कल्पितत्वमित्याशंक्याऽऽह-परमेश्वरस्त्विति। कल्पितस्याधिष्ठानादृते सत्त्वाद्ययोगाद्भेदेनासत्त्वेऽपि ततोऽन्यदेवाधिष्ठानं सत्तास्फूर्त्योः स्वातन्त्र्यादिति मत्वा दृष्टान्तमाह-यथेति। सूत्रारूढं स्वतोऽपि मिथ्या जीवे भेदमात्रं तथा न स्वरूपमित्यपरितोषादुक्तं-यथा वेति। तथाऽपि सूत्रद्वयसामर्थ्यात्पारमार्थिकं भेदमाशंक्याऽऽह-ईदृशं चेति। अन्यथा श्रुतिसूत्रविरोध इति भावः॥ १७॥ नन्वौपचारिकस्य कामयितृत्वस्य प्रधानेऽपि संभवात्तदेवाऽऽनन्दमयत्वेन कारणत्वेन वापेक्ष्यतां न परमात्मेत्याशङ्क्या-

१ लब्धव्यश्रोतव्य इत्यनयोर्न पौनरुक्त्यम्।

## कामाच्च नानुमानापेक्षा ॥ १८ ॥

आनन्दमयाधिकारे च "सोऽकामयत बहु स्यां प्रजायेयेति" [तैत्ति० २।६] इति कामयितृत्वनिर्देशाच्च नानुमानिकमपि सांख्यपरिकल्पितमचेतनं प्रधानमानन्दमयत्वेन कारणत्वेन वापेक्षितव्यम् ॥ "ईक्षतेर्नाशब्दम्" [ब्रह्मसू० १।१।५] इति निराकृतमपि प्रधानं पूर्वसूत्रोदाहृतां कामयितृत्वश्रुतिमाश्रित्य प्रसङ्गात्पुनर्निराक्रियते गतिसामान्यप्रपंचनाय ॥ १८॥

## अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥

इतश्च न प्रधाने जीवे वा आनन्दमयशब्दः ॥ यस्मादस्मिन्नानन्दमये प्रकृते आत्मनि प्रतिबुद्धस्यास्य जीवस्य तद्योगं शास्ति । तदात्मना योगस्तद्योगस्तद्भावापत्तिः । मुक्तिरित्यर्थः ॥ तद्योगं शास्ति शास्त्रम् । "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति ॥ यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति" [तै० उ० २।७] इति ॥ एतदुक्तं भवति—यदैतस्मिन्नानन्दमयेऽल्पमप्यन्तरमतादात्म्यरूपं पश्यति, तदा संसारभयान्न निवर्तते ॥ यदा त्वेतस्मिन्नानन्दमये निरन्तरं तादात्म्येन प्रति-

---

रत्नप्रभा ।

यमस्तु, तत्राह—कामाच्चेति ॥ अनुमानगम्यम् आनुमानिकम् । पुनरुक्तिमाशङ्क्याह—ईक्षतेरिति ॥ ॥१८॥ अस्मिन्निति । विषयसप्तमी । आनन्दमयविषयप्रबोधवतो जीवस्य तद्योगं यस्माच्छास्ति तस्मान्न प्रधानमिति योजना । जीवस्य प्रधानयोगोऽप्यस्तीत्यत आह—तदात्मनेति ॥ जीवस्य ब्रह्माभेदो नास्तीत्यत आह—मुक्तिरिति ॥ अदृश्ये स्थूलप्रपञ्चशून्ये, आत्मसम्बद्धम् आत्म्यं लिङ्गशरीरं, तद्रहिते, निरुक्तं शब्दशक्यं, तद्भिन्ने, निश्शेषलयस्थानं निलयनं माया, तच्छून्ये, ब्रह्मणि अभयं यथा स्यात्तथा यदैव प्रतिष्ठां मनसः प्रकृष्टां वृत्तिम् एष विद्वाँल्लभते अथ तदैव अभयं ब्रह्म प्राप्नोतीत्यर्थः । उद् अपि अरम् अल्पमल्पमपि अन्तरं भेदं यदैवम् एष नरः पश्यति । अथ तदा तस्य भयम् इति

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

ऽऽह—कामाच्चेति । तद्व्याख्याति—आनन्देति । ईक्षत्यधिकरणे प्रधानस्य निरस्तत्वादिहापि तन्निरासे पुनरुक्तिरित्याशंक्याऽऽह—ईक्षतेरिति । प्रासङ्गिकनिरासस्य प्रकृतोपयोगमाह—गतीति ॥ १८ ॥ आनन्दमयस्य प्रधानजीवयोरन्यतरत्वाभावे हेत्वन्तरं कामयितृत्वस्यागौणत्वं सूचयन्नाह—अस्मिन्निति । चशब्दार्थमाह—इतश्चेति । अस्मिन्नित्यादि व्याकुर्वन्नितःशब्दार्थं स्पष्टयति—यस्मादिति । प्रधानपक्षेऽपि तद्योगः स्यादित्याशंक्याऽऽह—तदात्मनेति । स्वतो भिन्नयोस्तादात्म्यसंबन्धं व्यावर्तयति—तद्भावेति । उक्तार्थं पदमनूद्य क्रियापदापेक्षितं पूरयति—तद्योगमिति । यस्यामैक्यज्ञानावस्थायां विद्वानेतस्मिन्ब्रह्मणि पञ्चीकृतभूतपञ्चकेन तत्कार्येण च समष्टिस्थूलदेहेन विराजा दृश्यशब्दितेनैक्यतादात्म्यशून्ये स्वसंबन्धितयाऽध्यस्तेन्द्रियजातेनापञ्चीकृतभूतकार्येणाऽऽत्म्येन तादात्म्यादिहीने निरुच्योच्यन्त इति निरुक्तानि भूतसूक्ष्माणि तैश्चाभेदवर्जिते निःशेषलयस्थानं निलयनमितिमूलप्रकृतेरुक्तेस्तत्तादात्म्यादिरहिते प्रकर्षेण स्थितिं पुनरावृत्तिरहितां लभते । अभयं यथा स्यादित्युक्तं व्यनक्ति—अथेति । ज्ञाने फलमुक्त्वा ज्ञानाभावे दोषमाह—यदा हीति । भेदस्यानादित्वात्तत्कारणाधीनदोषोक्तिरयुक्तेत्याशंक्याऽऽह—एतदिति । अभयं प्रतिष्ठामित्युक्त्वा पुनरभयं गतो भवतीत्युक्ते पुनरुक्तिरित्याशंक्याऽऽह—यदा त्विति । शास्त्रस्या-

१ अभेदसामानाधिकरण्यं हि भेदं अल्पत्वं बोध्यम् ।

तिष्ठति, तदा संसारभयान्निवर्तत इति ॥ तच्च परमात्मपरिग्रहे घटते, न प्रधानपरिग्रहे जीवपरिग्रहे वा । तस्मादानन्दमयः परमात्मेति सिद्धम् ॥ इदं त्विह वक्तव्यम् ॥ "स वा एष पुरुषोऽन्नरसमयः" [ तैत्ति० २ । १ ] "तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तरात्मा प्राणमयः" [ तैत्ति० २ । २ ] "तस्मादन्योऽन्तरात्मा मनोमयः" [ तैत्ति० २ । ३ ] "तस्मादन्योऽन्तरात्मा विज्ञानमयः" [ तैत्ति० २ ।४] इति च विकारार्थे मयट्प्रवाहे सत्यानन्दमय एवाकस्मादर्धजरतीयन्यायेन कथमिव मयटः प्राचुर्यार्थत्वं ब्रह्मविषयत्वं च आश्रीयत[1] इति ॥ मान्त्रवर्णिकब्रह्माधिकारादिति चेत् ॥ न[2] ॥ अन्नमयादीनामपि तर्हि ब्रह्मत्वप्रसङ्गः ॥ अत्राह–युक्तमन्नमयादीनामब्रह्मत्वम् ॥

रत्नप्रभा ।

योजना इति ॥ वृत्तिकारमतं दूषयति–इदं त्विति ॥ इह परव्याख्यायां विकारार्थके मयटि बुद्धिस्थे सत्यकस्मात् कारणं विना एकप्रकरणस्थस्य मयटः पूर्वं विकारार्थकत्वम्, अन्ते प्राचुर्यार्थकत्वमित्यर्धजरतीयं कथमिव केन दृष्टान्तेन आश्रीयत इति इदं वक्तव्यम् इत्यन्वयः ॥ प्रश्नं मत्वा शङ्कते–मान्त्रेति । स्फुटमुत्तरम् । किमान्तर इति न श्रूयते, किंवा वस्तुतोऽप्यान्तरं ब्रह्म न श्रूयत इति विकल्प्य

भामती ।

मतिरोहितार्थम् ॥ १७ ॥ १८ ॥ स्वमतपरिग्रहार्थमेकदेशिमतं दूषयति–इदं त्विह वक्तव्यमिति । एष तावदुत्सर्गो यत्–'ब्रह्म पुच्छं प्रतिष्ठेति ब्रह्मशब्दात्प्रतीयते । विशुद्धं ब्रह्म विकृतं त्वानन्दमयशब्दतः ॥' तत्र किं पुच्छपदसमभिव्याहारात् अन्नमयादिषु चास्यावयवपरत्वेन प्रयोगात्, इहाप्यवयवपरत्वात्पुच्छपदस्य, तत्समानाधिकरणं ब्रह्मपदमपि स्वार्थत्यागेन कथंचिदवयवपरं व्याख्यायताम् । आनन्दमयपदं चान्नमयादिविकारवाचिप्रायपठितं विकारवाचि वा, कथंचित्प्रचुरानन्दवाचि वा, ब्रह्मण्यप्रसिद्धं कयाचिद्वृत्त्या ब्रह्मणि व्याख्यायताम् । आनन्दपदाभ्यासेन च ज्योतिष्पदेनेव ज्योतिष्टोम आनन्दमयो लक्ष्यताम्, उतानन्दमयपदं विकारार्थमस्तु, ब्रह्मपदं च ब्रह्मण्येव स्वार्थेऽस्तु, आनन्दपदाभ्यासश्च स्वार्थे, पुच्छपदमात्रमवयवप्रायलिखितमधिकरणपरतया व्याक्रियतामिति कृतबुद्धय एव विदांकुर्वन्तु । तत्र 'प्रायपाठपरित्यागो मुख्यत्रितयलंघनम् । पूर्वस्मिन्नुत्तरे पक्षे प्रायपाठस्य बाधनम् ॥' पुच्छपदं हि वालधौ मुख्यं सदानन्दमयावयवे गौणमेवेति मुख्यशब्दार्थलंघनमवयवपरतायामधिकरणपरतायां च तुल्यम् । अवय-

आनन्दगिरीय–न्यायनिर्णयः ।

न्यथासिद्धिं प्रत्याह–तच्चेति । वृत्तिकृतां मतमुपसंहरति–तस्मादिति । परस्य ज्ञेयत्वे कैवल्यं फलतीति मत्वाऽऽह–इति स्थितमिति । अत्र चाऽऽनन्दमये परस्मिन्नात्मनि स्पष्टब्रह्मलिङ्गानां तैत्तिरीयकश्रुतीनां समन्वयादस्ति संगतिचतुष्टयमिति स्वमतसंग्रहार्थं स्वयूथ्यमतं दूषयति–इदं त्विति । इहेति परस्य व्याख्योक्तिः । पर्यायचतुष्टये मयटो विकारार्थत्वात्पञ्चमे पर्याये तादर्थ्यमिति प्रकरणं दर्शयति–स वा इति । "मयड् वा"इति सूत्रान्मयट्शब्दो विकारे श्रुतिरि (त इ) ति वक्तुं विकारार्थे मयडित्युक्तम् । विकारप्रकरणं प्रकटयितुं प्रवाहपदम् । प्रियाद्यवयवत्वस्य विकारार्थे लिङ्गत्वात्प्राचुर्यार्थत्वे च हेत्वभावान्मयटो न तदर्थतेत्याह–आनन्देति । एकस्यैव मयटोऽर्थद्वयं नेत्यत्र दृष्टान्तमाह–अर्धेति । श्रुतिलिङ्गप्रकरणविरोधेन प्राचुर्यार्थत्वे मयटो दृष्टान्तोऽपि नास्तीत्याह–कथमिति । विकारार्थत्वे निश्चिते तद्वाक्यस्य न ब्रह्मार्थतेत्याह–ब्रह्मेति । कथंशब्दस्य प्रश्नार्थतामुपेत्य प्रकरणेन शंकते–मान्त्रेति । न प्रकरणमात्रं नियामकमतिप्रसक्तेरित्याह–अन्नेति । तेषामब्रह्मत्वं लिङ्गादिति शङ्कते–अत्रेति । आनन्दमयादपि पुच्छं ब्रह्मा-

१ निश्रीयते इति पाठान्तरम् । २ नेति क्वचिन्न पठ्यते ।

 

तस्मात्तस्मादान्तरस्यान्तरस्यान्यस्यान्यस्यात्मन उच्यमानत्वात् ॥ आनन्दमयात्तु न कश्चिदन्योऽन्तर आत्मोच्यते ॥ तेनानन्दमयस्य ब्रह्मत्वम् ॥ अन्यथा प्रकृतहानाऽप्रकृतप्रक्रियाप्रसंगादिति ॥ अत्रोच्यते ॥ यद्यप्यन्नमयादिभ्य इव आनन्दमयादन्योऽन्तर आत्मेति न श्रूयते, तथापि नानन्दमयस्य ब्रह्मत्वम् ॥ यत आनन्दमयं प्रकृत्य श्रूयते–"तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा" [ तैत्ति० उ० २ । ५ । २ ] इति ॥ तत्र यद्ब्रह्म मन्त्रवर्णे प्रकृतं–"सत्यं ज्ञानमनन्तं ब्रह्म" [ तै० उ० २ । १ । १ ] इति, तदिह "ब्रह्म पुच्छं प्रतिष्ठा" [ तै० उ० २ । ५ । २ ] इत्युच्यते ॥ तद्विजिज्ञापयिषयैवान्नमयादय आनन्दमयपर्यन्ताः पञ्चकोशाः कल्प्यन्ते ॥ तत्र कुतः प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गः ॥ नन्वानन्दमयस्यावयवत्वेन "ब्रह्मपुच्छं प्रतिष्ठा" [ तै० उ० २ । ५ । २ ] इत्युच्यते । अन्नमयादीनामिवेदं पुच्छं प्रतिष्ठेत्यादि । तत्र कथं ब्रह्मणः स्वप्रधानत्वं शक्यं विज्ञातुम् ॥

---

रत्नप्रभा ।

आद्यम् अङ्गीकरोति–अत्रोच्यते यद्यपीति ॥ विकारप्रायपाठानुगृहीतमयट्छ्रुतेः सावयवत्वलिङ्गाच्चेत्याह–तथापीति ॥ इष्टार्थस्य दृष्ट्या जातं सुखं प्रियम् । स्मृत्या मोदः । स चाभ्यासात् प्रकृष्टः प्रमोदः । आनन्दः तु कारणं बिम्बचैतन्यम् आत्मा शिरःपुच्छयोर्मध्यकायः ब्रह्म शुद्धमिति श्रुत्यर्थः ॥ द्वितीयं प्रत्याह–तत्र यदिति ॥ यत् मन्त्रे प्रकृतं गुहानिहितत्वेन सर्वान्तरं ब्रह्म तदिह पुच्छवाक्ये ब्रह्मशब्दात् प्रत्यभिज्ञायते । तस्यैव विज्ञापनेच्छया पञ्चकोशरूपा गुहा प्रपञ्चिता । तत्र तात्पर्यं नास्तीति वक्तुं कल्प्यन्त इत्युक्तम् । एवं पुच्छवाक्ये प्रकृतस्वप्रधानब्रह्मपरे सति न प्रकृतहान्यादिदोष इत्यर्थः ॥ ब्रह्मणः प्रधानत्वं पुच्छश्रुतिविरुद्धमिति शंकते–नन्विति ॥ तत्र ब्रह्मशब्दात् प्रकृत-

भामती ।

यप्रायलेखबाधश्च विकारप्रायलेखबाधेन तुल्यः । ब्रह्मपदमानन्दमयपदमानन्दपदमिति त्रितयलंघनं त्वधिकम् ।

आनन्दगिरीय–न्यायनिर्णयः ।

न्यदान्तरमुक्तमित्याशंक्याऽऽह–आनन्देति । ब्रह्मण्यान्तरत्वमश्रुतं पुच्छत्वं तु श्रुतमित्यर्थः । तस्मादान्तरस्यानुक्तौ प्राकरणिकमर्थमाह–तेनेति । तस्याब्रह्मत्वे दोषमाह–अन्यथेति । किमानन्दमयादान्तरत्वेनान्यस्यानुक्तेस्तस्य ब्रह्मत्वं किंवाऽन्यस्यैवानुक्तेरिति विकल्पयति–अत्रेति । तत्राऽऽनन्दमयादान्तरस्याश्रुतिमुपेत्य ब्रह्मत्वं प्रत्याह–यद्यपीति । अन्यस्य पुच्छब्रह्मणोऽभिधानादिति हेतुं ब्रुवन्द्वितीयं निराह–यत इति । इष्टार्थदृष्टौ व्यक्तं हर्षमात्रं प्रियमिष्टस्मृतौ हर्षो मोदः स चाभ्यासात्प्रकृष्टः प्रमोदः सुखमात्रमानन्दः । मन्त्रवर्णोक्तं ब्रह्म पुच्छवाक्ये ब्रह्मशब्दात्प्रत्यभिज्ञातम् । ब्रह्मत्वे त्वानन्दमयस्य ब्रह्मशब्दस्यान्यत्र वृत्तिरानन्दमयशब्दस्य ब्रह्मण्यप्रयुक्तस्य तस्मिन्प्रयुक्तिश्चेत्ययुक्तं स्यादिति श्रुतितात्पर्यमाह–तत्रेति । आनन्दमयस्याब्रह्मत्वे तदुक्तिवैयर्थ्यमाशंक्यान्नमयादिवत्पुच्छब्रह्मज्ञापनार्था तदुक्तिरित्याह–तदिति । यदुक्तमानन्दमयस्याब्रह्मत्वे प्रकृतहानमप्रकृतप्रक्रिया चेति तत्राऽऽह–तत्रेति । पुच्छब्रह्मवाक्यस्य स्वप्रधानब्रह्मार्थत्वे सतीति यावत् । पुच्छश्रुतिविरोधान्न तस्य स्वप्रधानार्थतेति शङ्कते–नन्विति । पुच्छशब्दस्यात्रावयवार्थत्वाभावे प्रकरणविरोधमाह–अन्नेति । पुच्छश्रुतेरवयवार्थत्वे फलितमाह–तत्रेति । स्वप्रधानब्रह्माधिकाराद्ब्रह्मशब्दात्तथैव तत्प्रत्यभिज्ञाने पुच्छशब्दविरोधे सत्येकस्मिन्वाक्ये प्रथमचरमश्रुतशब्दयोराद्यस्यानुपसंजात-

---

१ आनन्दमयशब्दोऽवयववाचको न ब्रह्मवाचकः । तत्र हेतुमाह–अन्नमयादीनामिवेति ।

प्रकृतत्वादिति ब्रूमः॥ नन्वानन्दमयावयवत्वेनापि ब्रह्मणि विज्ञायमाने न प्रकृतत्वं हीयते आनन्दमयस्य ब्रह्मत्वादिति॥ अत्रोच्यते॥ तथा सति तदेव ब्रह्मानन्दमय आत्मावयवी, तदेव च ब्रह्म पुच्छं प्रतिष्ठावयव इत्यसामञ्जस्यं स्यात्॥ अन्यतरपरिग्रहे तु युक्तं ब्रह्म पुच्छं प्रतिष्ठेत्यत्रैव ब्रह्मनिर्देश आश्रयितुं, ब्रह्मशब्दसंयोगात्, नानन्दमयवाक्ये ब्रह्मशब्दसंयोगाभावादिति॥ अपि च "ब्रह्म पुच्छं प्रतिष्ठा" [ तै० उ० २ । ५ ] इति उक्त्वेदमुच्यते-"तदप्येष श्लोको भवति। असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरिति" [तैत्ति०२।६] इति॥ अस्मिंश्च श्लोकेऽननुकृष्यानन्दमयं ब्रह्मण एव भावाभाववेदनयोर्गुणदोषाभिधानाद्गम्यते "ब्रह्म पुच्छं प्रतिष्ठा" [ तैत्ति० २।५ ] इत्यत्र ब्रह्मण एव स्वप्रधानत्वमिति॥ न चानन्दमयस्यात्मनो भावाभावशङ्का युक्ता प्रियमोदादिविशेषस्य आनन्दमयस्य सर्वलोकप्रसिद्धत्वात्॥ कथं पुनः स्वप्रधानं सद्ब्रह्मानन्दमयस्य पुच्छत्वेन निर्दिश्यते "ब्रह्म पुच्छं

रत्नप्रभा।

स्वप्रधानब्रह्मप्रत्यभिज्ञाने सति। पुच्छशब्दविरोधप्राप्तावेकस्मिन् वाक्ये प्रथमचरमश्रुतशब्दयोराद्यस्यानुपसञ्जातविरोधिनो बलीयस्त्वात् पुच्छशब्देन प्राप्तगुणत्वस्य बाध इति मत्वाह-**प्रकृतत्वादिति**॥ प्रकरणस्यान्यथासिद्धिमाह-**नन्विति**॥ एकस्यैव गुणत्वं प्रधानत्वं च विरुद्धमित्याह-**अत्रोच्यत इति**॥ तत्र विरोधनिरासायान्यतरस्मिन् वाक्ये ब्रह्मस्वीकारे पुच्छवाक्ये ब्रह्म स्वीकार्यमित्याह-**अन्यतरेति**॥ वाक्यशेषाच्चैवमित्याह-**अपि चेति**॥ **तत्** तत्र ब्रह्मणि। श्लोकोऽपीत्यर्थः॥ पुच्छशब्दस्य गतिं पृच्छति-**कथं पुनरिति**॥ त्वयाऽपि पुच्छशब्दस्य मुख्यार्थो वक्तुमशक्यः। ब्रह्मण आनन्दमयलांगूलत्वाभावात्, पुच्छवल्लिलक्षणायां चाधारलक्षणा युक्ता, प्रतिष्ठापदयोगात्, ब्रह्मशब्दस्य मुख्यार्थलाभाच्च। त्वत्पक्षे ब्रह्म-

भामती।

तस्मान्मुख्यत्रितयलंघनादसाधीयान्पूर्वः पक्षः। मुख्यत्रयानुगुण्येन तूत्तर एव पक्षो युक्तः। अपि चानन्दमयपदस्य ब्रह्मार्थत्वे, 'ब्रह्म पुच्छम्' इति न समञ्जसम्। न हि तदेवावयव्यवयवश्चेति युक्तम्। आधारपरत्वे च पुच्छशब्दस्य, प्रतिष्ठेत्येतदप्युपपन्नतरं भवति। आनन्दमयस्य चान्तरत्वमन्नमयादिकोशापेक्षया। ब्रह्मणस्त्वान्तरत्वमानन्दमयादर्थाद्गम्यत इति न श्रुत्योक्तम्। एवं चान्नमयादिवदानन्दमयस्य प्रियाद्यवयवयोगो युक्तः। वाङ्मनसागोचरे तु परब्रह्मण्युपाधिमन्तर्भाव्य प्रियाद्यवयवयोगः, प्राचुर्यं च, क्लेशेन व्याख्यायेयाताम्। तथा च मान्त्रवर्णिकस्य ब्रह्मण एव 'ब्रह्म पुच्छं प्रतिष्ठा' इति स्वप्रधानस्या-

आनन्दगिरीय-न्यायनिर्णयः।

विरोधिनो बलीयस्त्वात्पुच्छत्वेन गुणत्वबाधया स्वप्रधानब्रह्मधीरित्याह-**प्रकृतत्वादिति**। अन्यथाऽपि प्रकृतत्वं स्यादित्याह-**नन्विति**[1]। किं प्रकृतं ब्रह्माऽऽनन्दमयवाक्ये पुच्छवाक्ये चोच्यते किंवैकत्रेति विकल्पयति-**अत्रेति**। प्रथमं प्रत्याह-**तथेति**। अवयवावयवित्वस्य कल्पितत्वेऽप्यन्नमयादिष्विवैकत्र गुणप्रधानत्वायोगात्। यदि द्वितीयस्तत्राऽऽह-**अन्यतरेति**। अन्यतरस्मिन्वाक्ये ब्रह्मोक्तिस्वीकारे सतीत्यर्थः। वाक्यशेषादपि पुच्छवाक्य एवोच्यते स्वप्रधानं ब्रह्मेत्याह-**अपि चेति**। श्लोकस्याऽऽनन्दमयार्थत्वमाशंक्य तात्पर्यमाह-**अस्मिंश्चेति**। प्रतिष्ठेत्यत्रैवेति संबन्धः। आनन्दमयस्यैव ब्रह्मणो भावाभावधियोर्गुणदोषोक्तिरित्याशङ्क्याऽऽह-**न चेति**। पुच्छवाक्ये ब्रह्मशब्देन स्वप्रधानोक्तौ पुच्छशब्दस्य का गतिरिति पृच्छति-**कथमिति**। तस्य ब्रह्मणि वृत्तिमात्रं वाऽभिप्रेयते किं मुख्या वा वृत्तिः। आद्ये

१ अन्यथापि प्रकृतत्वं स्यादित्याह-नन्वानन्देति।

प्रतिष्ठा " [ तै० उ० २ । ५ ] इति ॥ नैष दोषः । पुच्छवत्पुच्छं प्रतिष्ठा परायणमेकनीडं लौकिकस्यानन्दजातस्य ब्रह्मानन्द इत्येतदनेन विवक्ष्यते ॥ नावयवत्वम् । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" [ बृ० ४ । ३ । ३२ ] इति श्रुत्यन्तरात् ॥ अपि चानन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेषं ब्रह्माभ्युपगन्तव्यम् ॥ निर्विशेषं तु ब्रह्म वाक्यशेषे श्रूयते ॥ वाङ्मनसयोरगोचरत्वाभिधानात्—"यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" [ तै० उ० २ । ९ ] इति ॥ अपि चानन्दप्रचुर इत्युक्ते दुःखास्तित्वमपि गम्यते । प्राचुर्यस्य लोके प्रतियोग्यल्पत्वापेक्षत्वात् ॥ तथा च सति "यत्र नान्यत् पश्यति, नान्यच्छृणोति, नान्यद्विजानाति, स भूमा" [ छा० ७ ।२४।१ ] इति भूम्नि ब्रह्मणि तद्व्यतिरिक्ताभावश्रुतिरुपरुध्येत[1] । प्रतिशरीरं च प्रियादिभेदादानन्दमयस्यापि—

रत्नप्रभा ।

पदस्याप्यवयवलक्षकत्वादित्याह—नैष दोष इति ॥ पुच्छमित्याधारत्वमात्रमुक्तम् । प्रतिष्ठेत्येकनीडत्वम् । एकं मुख्यं नीडम् अधिष्ठानं सोपादानस्य जगत इत्यर्थः । ननु वृत्तिकारैरपि तैत्तिरीयवाक्यं ब्रह्मणि समन्वितं दृष्टं, तत्र किमुदाहरणभेदेनेत्याशंक्याह—अपि चेति ॥ यत्र सविशेषत्वं तत्र वाङ्मनसगोचरत्वमिति व्याप्तेरत्र व्यापकाभावोक्त्या निर्विशेषमुच्यत इत्याह—निर्विशेषमिति ॥ निवर्तन्ते अशक्ता इत्यर्थः । सविशेषस्य मृषात्वादभयं च युक्तम् । अतो निर्विशेषज्ञानार्थं पुच्छवाक्यमेवोदाहरणमिति भावः । प्राचुर्यार्थकमयटा सविशेषोक्तौ निर्विशेषश्रुतिबाध उक्तः । दोषान्तरमाह—अपि चेति ॥ प्रत्ययार्थत्वेन प्रधानस्य प्राचुर्यस्य प्रकृत्यर्थो विशेषणम् । विशेषणस्य यः प्रतियोगी विरोधीति तस्याल्पत्वमपेक्षते । यथा-विप्रमयो ग्राम इति शूद्राल्पत्वम् । अस्तु को दोषस्तत्राह—तथा चेति ॥ प्रकृत्यर्थप्राधान्ये त्वयं दोषो नास्ति । प्रचुरप्रकाशः सवितेत्यत्र तमसोल्पस्याप्यभानात् । परं त्वानन्दमयपदस्य प्रचुरानन्दे लक्षणादोषः स्यादिति मन्तव्यम् । किंच भिन्नत्वाद् घटवन्न ब्रह्मेत्याह—प्रतिशरीरमिति ॥ नन्वभ्यस्यमानानन्दपदं लक्षण-

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

पूर्वोक्तपृथिव्यादिपुच्छेष्वाधारत्वदृष्ट्या ब्रह्मण्यपि सर्वाधारे लक्षणया पुच्छपदमित्याह—नेति । न द्वितीयः, प्रतिष्ठाशब्दविरोधादित्याह—प्रतिष्ठेति । पुच्छत्वेऽपि परायणत्वं वारयति—एकेति । नीडत्वमाश्रितापेक्षं तदाह—लौकिकस्येति । पूर्वस्योत्तरेण निर्णयान्नावयवार्थतेति फलितमाह—अनेनेति । उक्तेऽर्थे बृहदारण्यकं संवादयति—एतस्येति । ननु वृत्तिकारैरपि तैत्तिरीयकवाक्यं ब्रह्मण्येव समन्वितमिष्टं तत्र किमुदाहरणभेदेनेत्याशंक्याऽऽह—अपि चेति । नन्विह सविशेषमेव ब्रह्मेष्टं वाक्यशेषे रागादिमतोर्वाङ्मनसयोरगोचरो ब्रह्म शुद्धधियोस्तु गोचर इत्यभ्युपगमादित्याशंक्य सविशेषस्य मृषात्वादप्राप्तनिषेधापाताच्च मैवमित्याह—निर्विशेषं त्विति । अतोऽभीष्टनिर्विशेषब्रह्मसिद्ध्ये पुच्छवाक्यमेवोदाहर्तव्यमिति भावः ॥ मयटो विकारार्थत्वोक्त्या प्राचुर्यार्थत्वं निरस्यता पुच्छवाक्ये स्वप्रधानब्रह्मोक्तिरुक्ता । संप्रति प्राचुर्यार्थत्वे दोषान्तरमाह—अपि चेति । स्वप्रकृत्यर्थप्रतियोग्यल्पतामत्रैवानपेक्ष्य स्थानान्तरस्थतत्सजातीयाल्पत्वापेक्षामात्रेण मयटोऽप्रयोगादित्यर्थः । अतिमधुरे रुच्यर्थं रसान्तरानुवेधवदानन्दे प्रीत्युत्कर्षार्थमीषद्दुःखानुषक्तिरिष्टेत्याशंक्याऽऽह—तथा चेति । प्राचुर्यार्थताभावान्मयटो नाऽऽनन्दमयो ब्रह्मेत्यत्रैव हेत्वन्तरमाह—प्रतिशरीरं चेति । प्रतिदेहं सातिशयत्वेन भिन्नादानन्दमयाद्ब्रह्म सर्वानुगतमन्यदेवेत्यर्थः ।

[1] विरुध्येतेत्यर्थः ।

भिन्नत्वम् । ब्रह्म तु न प्रतिशरीरं भिद्यते—"सत्यं ज्ञानमनन्तं ब्रह्म" [ तै० उ० २ । १ । १ ] इत्यानन्त्यश्रुतेः । "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" [ श्वेता० ६ । ११ ] इति च श्रुत्यन्तरात् ॥ न चानन्दमयस्याभ्यासः श्रूयते प्रातिपदिकार्थमात्रमेव हि सर्वत्राभ्यस्यते "रसो वै सः । रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति" [ प्र० उ० २ । ७ ] "सैषानन्दस्य मीमांसा भवति" [ तै० उ० २ । ८ ] "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" [ तै० उ० २ । ९ ] इति, "आनन्दो ब्रह्मेति व्यजानाद्" [ तैत्ति० ३।६ ] इति च । यदि चानन्दमयशब्दस्य ब्रह्मविषयत्वं निश्चितं भवेत् तत उत्तरेष्वप्यानन्दमयाभ्यासः कल्प्येत । न त्वानन्दमयस्य ब्रह्मत्वमस्ति । प्रियशिरस्त्वादिभिर्हेतुभिरित्यवोचाम । तस्माच्छ्रुत्यन्तरे—"विज्ञानमानन्दं ब्रह्म" [ बृ० ३ । ९ । २८ ] इति आनन्दप्रातिपदिकस्य ब्रह्मणि प्रयोगदर्शनाद् "यदेष आकाश आनन्दो न स्याद्" [ तै० उ० २ । ७ ] इत्यादिर्ब्रह्मविषयः प्रयोगः । न त्वानन्दमयाभ्यास इत्यवगन्तव्यम् ॥ यस्त्वयं मयडन्तस्यैवानन्दशब्दस्याभ्यासः "एतमानन्दमयमात्मानमुपसङ्क्रामति" [ तै० उ० २ । ८ ] इति, न तस्य ब्रह्मविषयत्वमस्ति । विकारात्मनामेवान्नमयादीनामनात्मनामुपसङ्क्रमितव्यानां प्रवाहे पठितत्वात् ॥ नन्वानन्दमयस्योपसङ्क्रमितव्यस्यान्नमयादिवदब्रह्मत्वे सति नैव विदुषो ब्रह्मप्राप्तिफलं

---

रत्नप्रभा ।

यानन्दमयपरमित्यभ्याससिद्धिरित्यत आह—यदि चेति ॥ आनन्दमयस्य ब्रह्मत्वे निर्णीते सत्यानन्दपदस्य तत्परत्वज्ञानादभ्याससिद्धिः तत्सिद्धौ तन्निर्णय इति परस्पराश्रय इति भावः । अयमभ्यासः पुच्छब्रह्मण इत्याह—तस्मादिति ॥ उपसंक्रमणं बाधः । ननु स य एवंविदिति ब्रह्मविदं प्रक्रम्योपसंक्रमणवाक्येन फलं निर्दिश्यते तत्तस्याब्रह्मत्वेन सिध्यतीति शंकते—नन्विति ॥ उपसंक्रमणं प्राप्तिरित्यङ्गीकृत्य विशि-

भामती ।

भिधानात्, तस्यैवाधिकारो नानन्दमयस्येति । 'सोऽकामयत' इत्याद्या अपि श्रुतयो ब्रह्मविषया नान-

आनन्दगिरीय-न्यायनिर्णयः ।

यत्त्वभ्यासादानन्दमयो ब्रह्मेति तत्र किमानन्दमयशब्दस्याभ्यासः किंवाऽऽनन्दशब्दस्येति विकल्प्याऽऽद्येऽसिद्धिमाह—न चेति । आनन्दमयं प्रकृत्य ब्रह्मणि प्रयुक्तपूर्वोनन्दशब्दस्याभ्यासो हेतुरिति द्वितीयं निरस्यति—यदि चेति । आनन्दमयस्य ब्रह्मत्वे प्रातिपदिकमात्राभ्यासोऽपि प्रकृतानन्दमयार्थः । ततस्तस्य ब्रह्मताधीरित्यन्योन्याश्रयतेति भावः । आनन्दपदाभ्यासस्तर्हि किंविषयः पुच्छवाक्योक्तब्रह्मविषय इत्याह—तस्मादिति । आनन्दाभ्यासस्याऽऽनन्दमयार्थत्वायोगस्तच्छब्दार्थः । मयडन्तस्याप्यभ्यासात्कथं तदभ्याससिद्धिस्तत्राऽऽह—यस्त्विति । उपसंक्रमितव्यानां विवेकेन त्याज्यानामित्यर्थः । अन्नमयादावुपसंक्रमस्य विद्वत्फलाप्त्यर्थत्वादानन्दमयस्याब्रह्मत्वे ब्रह्माप्तेरनुक्तेः प्रक्रमभङ्ग इति शङ्कते—नन्विति । किमिहोपसंक्रमणं प्राप्तिरतिक्रमो वा । आद्येऽवयविप्राप्त्याऽवयवप्राप्तेरार्थिकत्वात्पुच्छब्रह्माप्तिरुक्तैव । द्वितीये न ह्यतिक्रमस्य परतीरासिवत्कोशातिक्रमस्य ब्रह्मासित्वात्तत्प्राप्तिरर्थाद्रुक्तेत्याह—

निर्दिष्टं भवेत् ॥ नैष दोषः । आनन्दमयोपसङ्क्रमणनिर्देशेनैव विदुषः पुच्छप्रतिष्ठाभूतब्रह्मप्राप्तेः फलस्य निर्दिष्टत्वात् । "तदप्येष श्लोको भवति" [ तै० उ० २ । ६ ] "यतो वाचो निवर्तन्ते" [ तै० उ० २ । ९ ] इत्यादिना च प्रपंच्यमानत्वात् ॥ या त्वानन्दमयसन्निधाने "सोऽकामयत बहु स्यां प्रजायेयेति" [ तै०उ० २।६।२ ] इतीयं श्रुतिरुदाहृता, सा "ब्रह्म पुच्छं प्रतिष्ठा" [ तै० उ० २ । ५ ] इत्यनेन सन्निहिततरेण ब्रह्मणा सम्बध्यमाना नानन्दमयस्य ब्रह्मतां प्रतिबोधयति ॥ तदपेक्षत्वाच्चोत्तरस्य ग्रन्थस्य-"रसो वै सः" [ तै० उ० २ । ७ ] इत्यादेर्नानन्दमयविषयता ॥ ननु "सोऽकामयत" [ तै० उ० २ । ६ । २ ] इति ब्रह्मणि पुँल्लिङ्गनिर्देशो नोपपद्यते ॥ नायं दोषः ॥ "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" [ तै०उ० २ । १ । २ ] इत्यत्र पुँल्लिङ्गेनाप्यात्मशब्देन ब्रह्मणः प्रकृतत्वात् ॥ यत्तु "भार्गवी वारुणी विद्या" [ तै० उ० ३। ६ ] "आनन्दो ब्रह्मेति व्यजानात्" [ तै० उ० २ । ६ ] इति तस्यां मयडश्रवणात्प्रियशिरस्त्वाद्यश्रवणाच्च युक्तमानन्दस्य ब्रह्मत्वम् ॥ तस्मादणुमात्रमपि विशेषमनाश्रित्य न स्वत एव प्रियशिरस्त्वादि ब्रह्मण उपपद्यते ॥ न चेह सविशेषं ब्रह्म प्रतिपिपादयिषितम् ॥ वाङ्मनसगोचरातिक्रमश्रुतेः ॥ तस्मादन्नमयादिष्विवानन्दमयेऽपि विकारार्थ एव मयड् विज्ञेयः । न प्राचुर्यार्थः ॥ सूत्राणि त्वेवं व्याख्येयानि ।

रत्नप्रभा ।

च्छप्राप्त्युक्त्या विशेषणप्राप्तिः फलमुक्तमित्याह-नैष इति ॥ ज्ञानेन कोशानां बाधस्तदिति सिद्धान्ते, बाधावधिप्रत्यगानन्दलाभोऽर्थादुक्त उत्तरश्लोकेन स्फुटीकृत इत्याह-तदपीति ॥ तदपेक्षत्वादिति । कामयितृपुच्छब्रह्मविषयत्वादित्यर्थः ।यदुक्तं पञ्चमस्थानस्थत्वादानन्दमये ब्रह्मवल्लीसमाप्ता भृगुवल्लीवदिति, तत्राह-यत्त्विति ॥ या त्वित्यर्थः । मयट्छ्रुत्या, सावयवत्वादिलिङ्गेन च, स्थानं बाध्यमिति भावः । गोचरातिक्रमः गोचरत्वाभावः । वेदसूत्रयोर्विरोधे गुणे त्वन्याय्यकल्पनेति सूत्राणि अन्यथा नेतव्यानीत्याह-सूत्राणीति ॥

भामती ।

न्दमयविषया इत्यर्थसंक्षेपः । सुगममन्यत् ॥ सूत्राणि त्वेवं व्याख्येयानीति । वेदसूत्रयोर्विरोधे 'गुणे

आनन्दगिरीय-न्यायनिर्णयः ।

नैष इति । ब्रह्मप्तेर्मन्त्रेण वक्ष्यमाणत्वाच्च तदनुक्तिरसिद्धेत्याह-तदपीति । यत्तु सोऽकामयतेत्याद्यानन्दमयार्थं सत्तद्ब्रह्मत्वबोधीति तत्राऽऽह-या त्विति । रसो वै स इत्यादेरुत्तरस्याऽऽनन्दमयार्थत्वमुक्तं प्रत्याह-तदपेक्षत्वादिति । सोऽकामयतेत्यादि ब्रह्मण्ययुक्तं नपुंसके पुँल्लिङ्गायोगादिति शङ्कते-नन्विति । प्रक्रमेण समाधत्ते-नायमिति । यत्तु भृगुवल्ल्यां पञ्चमपर्यायस्य ब्रह्मार्थत्वादिहापि तादर्थ्यं स्थानादिति तत्राऽऽह-या त्विति । इह मयटो विकारार्थस्य प्रियशिरस्त्वादेश्च श्रुतेरानन्दमयस्याब्रह्मतेति शेषः । ब्रह्मणो निर्विशेषस्य नाऽऽनन्दमयतेत्युपसंहरति-तस्मादिति । इष्टदृष्टेस्तल्लाभात्तत्स्मृतेश्चाभिव्यक्ताः सुखविशेषास्तन्मात्रं च प्रियादिशब्दार्थ इत्युक्तम् । सत्त्वोपसर्जनात्तमसस्तदुपसर्जनाद्रजसो द्वयोरुपसर्जनात्सत्त्वात्केवलाच्चाभिव्यक्तं सुखं तत्तच्छब्दवाच्यमित्याचार्याः । तेन विषयसंबन्धं सत्त्वादिसंबन्धं वा विशेषमीषन्मात्रमप्यनाश्रित्य ब्रह्मणः स्वतो न प्रियशिरस्त्वादि युक्तम् । तस्मादानन्दमयस्य सविशेषत्वात्प्रतिपाद्या ब्रह्मणोऽन्यतेत्यर्थः । इहापि सविशेषमेव प्रतिपाद्यमित्याशंक्योक्तं स्मारयति-न चेति । परमतनिरासमुपसंहरति- तस्मादिति । स्वमते सूत्राणामननुगुणत्वमाशंक्य तानि योजयितुमुपक्रमते-सूत्राणीति ।

१ उपसंक्रमणम् ।

"ब्रह्म पुच्छं प्रतिष्ठा" [तै०उ०२।५] इत्यत्र किमानन्दमयस्यावयवत्वेन ब्रह्म विवक्ष्यते-उत-स्वप्रधानत्वेनेति ॥ पुच्छशब्दादवयवत्वेनेति प्राप्ते ॥ उच्यते ॥ "आनन्दमयोऽभ्यासाद्" [ ब्र० सू० १ । १ ।१२ ] आनन्दमय आत्मेत्यत्र ब्रह्म पुच्छं प्रतिष्ठेति स्वप्रधानमेव ब्रह्मोपदिश्यते । अभ्यासात्-"असन्नेव स भवति" [ तै० उ० २ । ६ । १ ] इत्यस्मिन्निगमनश्लोके ब्रह्मण एव केवलस्याभ्यस्यमानत्वात् ॥ "विकारशब्दान्नेति चेन्न प्राचुर्यात्" ॥ [ब्र० सू०१। १ । १३ ] विकारशब्देनावयवशब्दोऽभिमेतः॥ पुच्छमित्यवयवशब्दात् ॥ न स्वप्रधानत्वं ब्रह्मण इति यदुक्तं, तस्य परिहारो वक्तव्यः ॥ अत्रोच्यते ॥ नायं दोषः ॥ प्राचुर्यादप्यवयवशब्दोपपत्तेः ॥ प्राचुर्यं प्रायापत्तिः, अवयवप्रायवचनमित्यर्थः ॥ अन्नमयादीनां हि शिरआदिषु पुच्छान्तेष्ववयवेषूक्तेष्वानन्दमयस्यापि शिरआदीन्यवयवान्तराण्युक्त्वाऽवयवप्रायापत्त्या ब्रह्म पुच्छं प्रतिष्ठेत्याह ॥ नावयवविवक्षया ॥ यत्कारणमभ्यासादिति स्वप्रधानत्वं ब्रह्मणः समर्थितम् ॥

---

रत्नप्रभा ।

पूर्वमीक्षतेः संशयाभावादिति युक्त्या गौणप्रायपाठो न निश्चायक इत्युक्तम् । तर्हि अत्र पुच्छपदस्याधारावयवयोर्लक्षणासाम्यात् संशयोऽस्तीत्यवयवप्रायपाठो निश्चायक इति पूर्वाधिकरणसिद्धान्तयुक्त्यभावेन पूर्वपक्षयति-पुच्छशब्दादिति ॥ तथा च प्रत्युदाहरणसङ्गतिः पूर्वपक्षे सगुणोपास्तिः, सिद्धान्ते निर्गुणप्रमितिः फलम् । वेदान्तवाक्यसमन्वयोक्तेः श्रुत्यादिसंगतयः स्फुटा एव । सूत्रस्थानन्दमयपदेन तद्वाक्यस्थं ब्रह्मपदं लक्ष्यते । विक्रियतेऽनेनेति विकारः अवयवः ॥ प्रायापत्तिरिति । अवयवक्रमस्य बुद्धौ प्राप्तिरित्यर्थः ॥ अत्र हि प्रकृतस्य ब्रह्मणो ज्ञानार्थं कोशाः पक्षित्वेन कल्प्यन्ते । नात्र तात्पर्यमस्ति । तत्रानन्दमयस्यापि अवयवान्तरोक्त्यनन्तरं कस्मिंश्चित् पुच्छे वक्तव्ये प्रकृतं ब्रह्म पुच्छपदेनोक्तम् । तस्या-

भामती ।

त्वन्याय्यकल्पना' इति सूत्राण्यन्यथा नेतव्यानि । आनन्दमयशब्देन तद्वाक्यस्थ--'ब्रह्म पुच्छं प्रतिष्ठा' इत्येतद्गतं ब्रह्मपदमुपलक्ष्यते । एतदुक्तं भवति-आनन्दमय इत्यादिवाक्ये यत् 'ब्रह्म पुच्छं प्रतिष्ठा' इति ब्रह्मपदं तत्स्वप्रधानमेवेति । यत्तु ब्रह्माधिकरणमिति वक्तव्ये 'ब्रह्म पुच्छम्' इत्याह श्रुतिः, तत्कस्य हेतोः, पूर्वमवयवप्रधानप्रयोगात्तत्प्रयोगस्यैव बुद्धौ संनिधानात् तेनापि चाधिकरणलक्षणोपपत्तेरिति ।

आनन्दगिरीय-न्यायनिर्णयः ।

व्याख्यामेवाऽऽख्यातुं विषयमुक्त्वा पुच्छब्रह्मशब्दाभ्यां संशयमाह-ब्रह्मेति । स्वप्रधानत्वेनेति संशये सतीति शेषः । पूर्वाधिकरणे मुख्येक्षणाद्ब्रह्मनिर्णये गौणः प्रायपाठो बाधित इह त्वाधारमात्रत्वेऽवयवमात्रत्वे च पुच्छशब्दस्य लाक्षणिकत्वसाम्येऽवयवप्रायदृष्टेरवयवार्थतेति संगत्या पूर्वपक्षयति-पुच्छेति । तैत्तिरीयोपनिषदः स्पष्टब्रह्मलिङ्गाया निर्गुणब्रह्मान्वयोक्तेः श्रुत्यादिसंगतयः । परपक्षे पूर्वोत्तरपक्षयोरुपास्तिरेव फलम् । इह पूर्वपक्षे तथा सिद्धान्ते प्रमितिः । पूर्वपक्षमनूद्य सिद्धान्तयति-इति प्राप्त इति । स्वयूथ्यव्याख्यां व्यावृत्य स्वाभिमतां व्याख्यामाह-आनन्दमय इति । आनन्दमयशब्देन पञ्चमपर्यायस्थपुच्छवाक्यस्थं ब्रह्मपदमुपलक्ष्य तेन स्वप्रधानमेव ब्रह्मोच्यत इति प्रतिज्ञायां हेतुं व्याख्याति-असन्नेवेति । पूर्वपक्षबीजमनुभाष्य दूषयति-विकारेति । वाचकत्वाभावादभिप्रेत इत्युक्तम् । परिहारभागमवतार्य व्याकरोति-अत्रेत्यादिना । ब्रह्माधिकरणमिति वाच्ये पूर्वत्रावयवप्रधानप्रयोगात्तस्य बुद्धिस्थत्वात्तेनाप्यधिकरणलक्षणात्पुच्छोक्तिरिति तात्पर्यमाह-अवयवेति । तदेव प्रपञ्चयति-अत्रेति । तत्र गमकमाह-यदिति । इतश्च पुच्छवाक्ये पुच्छशब्देनावयवो नोच्यते किंत्वाधारो लक्ष्यत इत्याह-

**"तद्धेतुव्यपदेशाच्च" [ ब्रह्मसू० १ । १ । १४ ]॥ सर्वस्य च विकारजातस्य सानन्दमयस्य कारणत्वेन ब्रह्म व्यपदिश्यते—"इदं सर्वमसृजत यदिदं किञ्च" [तैत्ति० २।६ ] इति ॥ न च कारणं सद्ब्रह्म स्वविकारस्या-**

रत्नप्रभा ।

नन्दमयाधारत्वेनावश्यं वक्तव्यत्वादित्यर्थः—**तद्धेतुव्यपदेशाच्च** [ ब्र०सू० १ । १।१४] तस्य ब्रह्मणः सर्वकार्यहेतुत्वव्यपदेशात् प्रियादिविशिष्टत्वाकारेणानन्दमयस्य जीवस्य कार्यत्वात्तं प्रति शेषत्वं ब्रह्मणो न युक्तमित्यर्थः । **"मान्त्रवर्णिकमेव च गीयते"** [ ब्र. सू. १ । १ । १५ ] "ब्रह्मविदाप्नोति परम्" इति यस्य ज्ञानान्मुक्तिरुक्ता, यत् सत्यं ज्ञानमिति मन्त्रोक्तं ब्रह्म, तदत्रैव पुच्छवाक्ये गीयते । ब्रह्मपदसंयोगात् । नानन्दमयवाक्य इत्यर्थः। **"नेतरोऽनुपपत्तेः"** [ ब्र. सू. १ । १ । १६ ] इतर आनन्दमयो जीवोऽत्र न प्रतिपाद्यः । सर्वस्रष्टृत्वाद्यनुपपत्तेरित्यर्थः । **"भेदव्यपदेशाच्च"** [ ब्र. सू. १ । १ । १७ ] अयमानन्दमयो ब्रह्म, रसं लब्ध्वानन्दी भवतीति भेदोक्तेश्च तस्याप्रतिपाद्यतेत्यर्थः । आनन्दमयो ब्रह्म तैत्तिरीयकपञ्चमस्थानस्थत्वात् भृगुवल्लीस्थानन्दवदित्याशंक्याह—**"कामाच्च नानुमानापेक्षा"** [ब्र. सू. १ । १ । १८ ] काम्यत इति काम आनन्दः । तस्य भृगुवल्ल्यां पञ्चमस्य ब्रह्मत्वदृष्टेरानन्दमयस्यापि ब्रह्मत्वानुमानापेक्षा न कार्या । विकारार्थकमयड्विरोधादित्यर्थः । भेदव्यपदेशश्चेत् सगुणं ब्रह्मात्र वेद्यं स्यादित्याशंक्याह—**"अस्मिन्नस्य च तद्योगं शास्ति"** [ ब्र. सू. १ । १ । १९ ] गुहानिहितत्वेन प्रतीचि स एक इत्युपसंहृते पुच्छवाक्योक्ते ब्रह्मण्यहमेव परंब्रह्मेति प्रबोधवत् आनन्दमयस्य यदा-

भामती ।

**मान्त्रवर्णिकमेव च गीयते** ॥ (१५) ॥ यत् 'सत्यं ज्ञानम्' इत्यादिना मन्त्रवर्णेन ब्रह्मोक्तं तदेतदुपायभूतेन ब्राह्मणेन स्वप्राधान्येन गीयते—'ब्रह्म पुच्छं प्रतिष्ठा' इति । अवयववचनत्वे त्वस्य मन्त्रे प्राधान्यं ब्राह्मणे त्वप्राधान्यमित्युपायोपेययोर्मन्त्रब्राह्मणयोर्विप्रतिपत्तिः स्यादिति ॥ **नेतरोऽनुपपत्तेः** ॥ (१६) ॥ अत्र 'इतश्चानन्दमयः' इति भाष्यस्य स्थाने 'इतश्च ब्रह्म पुच्छं प्रतिष्ठा' इति पठितव्यम् ॥ **भेदव्यपदेशाच्च** ॥ (१७) ॥ अत्रापि 'इतश्चानन्दमयः' इत्यस्य च 'आनन्दमयाधिकारे' इत्यस्य च भाष्यस्य स्थाने 'ब्रह्म पुच्छं प्रतिष्ठा' इति 'ब्रह्मपुच्छाधिकारे' इति च पठितव्यम् ॥ **कामाच्च नानुमानापेक्षा** ॥ (१८) ॥ **अस्मिन्नस्य च तद्योगं शास्ति** ॥ (१९) ॥ इत्यनयोरपि सूत्रयोर्भाष्ये आनन्दमयस्थाने 'ब्रह्म पुच्छं प्रतिष्ठा' इति पाठो द्रष्टव्यः ॥ **तद्धेतुव्यपदेशाच्च** ॥ (१४) ॥ विकारस्यानन्दमयस्य ब्रह्म पुच्छमवयव-

आनन्दगिरीय—न्यायनिर्णयः ।

**तद्धेत्विति** । तद्व्याचष्टे—**सर्वस्येति** । तथाऽपि कस्मादानन्दमयावयवत्वं ब्रह्मणो नेष्यते तत्राऽऽह—**न चेति** । इतश्च नाऽऽनन्दमयः परमात्मा । यतः सत्यमित्यादिमन्त्रवर्णेन यद्ब्रह्मोक्तं तदेवाऽऽनन्दमयशब्देन विशिष्टद्वारा लक्ष्यमाणजीवचैतन्यस्य स्वरूपमिति पुच्छवाक्येन तत्त्वमसीतिवद्गीयते । ब्रह्मविदाप्नोतीति ब्रह्मविदस्तत्प्राप्त्यभिधानेन ब्रह्मात्मनोरैक्योपक्रमात् । "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इत्यैक्योपसंहारात् । मध्येऽपि विशिष्टद्वारा स्वरूपैक्ये तात्पर्यस्य युक्तत्वादित्याह—**मान्त्रवर्णिकमिति** । इतश्च पुच्छवाक्यस्थं ब्रह्मैव स्वप्रधानं प्रतिपाद्यमितरस्त्वानन्दमयो न प्रतिपाद्यो वैषयिकप्रियादिमत्त्वेन तत्र मुख्यस्रष्टृत्वाद्यनुपपत्तेरित्याह—**नेतर इति** । इतश्च नाऽऽनन्दमयोऽत्र प्रतिपाद्यते । ब्रह्मानन्दप्रतिबिम्बितं रसशब्दितं लब्ध्वाऽयमानन्दमयः स्वयमानन्दी भवतीति ब्रह्मणो भेदेन तस्योक्तेर्ब्रह्मत्वायोगादित्याह—**भेदेनेति** । ननु भृगुवल्ल्यामानन्दस्य ब्रह्मत्वादानन्दमयस्यापि ब्रह्मत्वं पञ्चमपर्यायस्थत्वादनुमीयते तत्राऽऽह—**कामाच्चेति** । काम्यत इति काम आनन्दस्तस्य ब्रह्मत्वदृष्टेर्नानुमानेना-

**नन्दमयस्य मुख्यया वृत्त्याऽवयव उपपद्यते ॥ अपराण्यपि सूत्राणि यथासम्भवं पुच्छवाक्यनिर्दिष्टस्यैव ब्रह्मण उपपादकानि द्रष्टव्यानि ॥ १९ ॥ इत्यानन्दमयाधिकरणम् ॥ ६ ॥**

## अन्तस्तद्धर्मोपदेशात् ॥ २० ॥ ( ७ ) ॥

**इदमाम्नायते "अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः" "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी, तस्योदिति नाम, स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद" [ छान्दो० १ । ६ ।**

रत्नप्रभा ।

हीति शास्त्रे ब्रह्मभावं शास्ति-अतो निर्गुणब्रह्मैक्यज्ञानार्थं जीवभेदानुवाद इत्यभिप्रेत्याह-**अपराण्यपीति** ॥ १९॥ ( ६ ) ॥ छान्दोग्यवाक्यमुदाहरति-**अथ य इति** ॥ अथेत्युपास्तिप्रारम्भार्थः । **हिरण्मयः** ज्योतिर्विकारः । **पुरुषः** पूर्णोऽपि मूर्तिमानुपासकैर्दृश्यते । मूर्त्तिमाह-**हिरण्येति** ॥ **प्रणखः** नखाग्रम् । तेन सहेत्यभिविधावाङ् । नेत्रयोर्विशेषमाह-**तस्येति** ॥ कपेर्मर्कटस्य आसः पुच्छभागोऽत्यन्ततेजस्वी तत्तुल्यं **पुण्डरीकं यथा** दीप्तिमदेवं तस्य पुरुषस्य **अक्षिणी** । सद्योविकसितरक्ताम्भोजनयन इत्यर्थः । उपासनार्थमादित्यमण्डलं स्थानं रूपं चोक्त्वा नाम करोति-**तस्योदिति** ॥ उन्नाम निर्वक्ति-**स इति** ॥ **उदितः** उद्गतः । सर्वपाप्मास्पृष्ट इत्यर्थः । उपासनार्थं नामज्ञानफलमाह-**उदेति हेति** ॥

भामती ।

श्चेत्कथं सर्वस्यास्य विकारजातस्य सानन्दमयस्य ब्रह्म पुच्छं कारणमुच्येत 'इदं सर्वमसृजत, यदिदं किंच' इति श्रुत्या । न ह्यानन्दमयविकारावयवो ब्रह्म विकारः सन् सर्वस्य कारणमुपपद्यते । तस्मादानन्दमयविकारावयवो ब्रह्मेति तदवयवयोग्यानन्दमयो विकार इह नोपास्यत्वेन विवक्षितः, किंतु स्वप्रधानमिह ब्रह्म पुच्छं ज्ञेयत्वेनेति सिद्धम्॥ १९॥ ( ६ ) ॥ **अन्तस्तद्धर्मोपदेशात्** । पूर्वस्मिन्नधिकरणेऽपास्तसमस्तविशेषब्रह्मप्रतिपत्त्यर्थमुपायतामात्रेण पञ्च कोशा उपाधयः स्थिताः, न तु विवक्षिताः । ब्रह्मैव तु प्रधानं 'ब्रह्म पुच्छं प्रतिष्ठा' इति ज्ञेयत्वेनोपक्षिप्तमिति निर्णीतम् । संप्रति तु ब्रह्म विवक्षितोपाधिभेदमुपास्यत्वेनोपक्षिप्यते, न तु विद्या-

आनन्दगिरीय-न्यायनिर्णयः ।

ऽऽनन्दमयस्यापि ब्रह्मत्वमपेक्षितव्यम् । विकारार्थमयड्विरोधादित्यर्थः । इतोऽपि नाऽऽनन्दमयोऽत्र प्रतिपाद्यते । पुच्छवाक्योक्ते ब्रह्मणि प्रतिबुद्धस्याऽऽनन्दमयस्य यदा हीत्यादिना तत्प्राप्तिमोक्षाभिधानात्तस्मादानन्दमयशब्दवाच्यस्याप्रतिपाद्यत्वात्तल्लक्ष्यस्य ब्रह्मणोऽव्यतिरेकात्पुच्छवाक्यस्थं ब्रह्मैवात्र स्वप्रधानं प्रतिपाद्यमिति तत्प्रमित्या कैवल्यं फलतीत्याह-**अस्मिन्निति** । तदेतदाह-**अपराण्यपीति** ॥ १९ ॥ ( ६ ) ॥ समन्वयस्य सविशेषपरत्वमपोद्योत्सर्गः स्थापितः । अधुनाऽपवादार्थत्वेनाधिकरणमवतारयति-**अन्तरिति** । छान्दोग्यस्थं वाक्यमुदाहरति-**इदमिति** । ऋक्सामयोः पृथिव्यग्न्याद्यात्मत्वोक्त्यनन्तरमुपास्तिप्रस्तावार्थोऽथशब्दः । य एष इति शास्त्रप्रसिद्धिः संनिधिश्चोक्ता । तस्योपास्त्यर्थमाधिदैविकं स्थानमाह-**अन्तरिति** । आदित्यमण्डलस्य मध्ये स्थित इति यावत् । ध्यानार्थमेव रूपविशेषमाह-**हिरण्मय इति** । ज्योतिर्मय इत्यर्थः । स्थानकृतं परिच्छेदं व्यवच्छिनत्ति-**पुरुष इति** । तत्रावहितधियामनुभवं प्रमाणयति-**दृश्यत इति** । तर्हि पुरुषत्वात्पूर्णस्य कथमुपास्तिस्तत्राऽऽह-**हिरण्येति** । तद्वज्ज्योतिर्मयान्येवास्य श्मश्रूणि केशाश्चेति तथोक्तः । किं बहुनाऽऽप्रणखात्प्रणखो नखाग्रं तेन सह सर्व एव सुवर्णो ज्योतिर्मयः । चक्षुषोर्विशेषमाह-**तस्येति** । कपेर्मर्कटस्याऽऽसः पृष्ठभागोऽत्यन्ततेजस्वी तत्तुल्यम् । पुण्डरीकं यथाऽत्यन्तदीप्तिमत्तथाऽस्य देवस्याक्षिणी प्रकृष्टदीप्तिमती । ध्यानार्थमेव नाम करोति-**तस्येति** । कथं तस्योदितिनामत्वं तदाह-**स इति** । उदित उद्गतः सकार्यसर्वपापास्पृष्ट इत्यर्थः ।

६-७ ] इत्यधिदैवतम् ॥ अथाध्यात्मम् "अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते" [ छान्दो० ४ । ५ । १ ] इत्यादि । तत्र संशयः ॥ किं विद्याकर्मातिशयवशात्प्राप्तोत्कर्षः कश्चित्संसारी सूर्यमण्डले चक्षुषि चोपास्यत्वेन श्रूयते, किंवा नित्यसिद्धः परमेश्वर इति ॥ किं तावत्प्राप्तम् । संसारीति ॥ कुतः ॥ रूपवत्त्वश्रवणात् ॥ आदित्यपुरुषे तावद्धिरण्यश्मश्रुरित्यादिरूपमुदाहृतम् ॥ अक्षिपुरुषेऽपि तदेवातिदेशेन प्राप्यते-"तस्यैतस्य तदेव रूपं यदमुष्य रूपम्" [ छा० १ । ७ । ५ ] इति ॥ न च परमेश्वरस्य रूपवत्त्वं युक्तम्-"अशब्दमस्पर्शमरूपमव्ययम्" [ कौ० १।३।१५ ] इति श्रुतेः ॥ आधारश्रवणाच्च-"य एषोऽन्तरादित्ये" [ छा० १ । ६ । ६ ] "य एषोऽन्तरक्षिणि" [ छा० ४ । ५ । १ ] इति ॥ न ह्यनाधारस्य स्वमहिमप्रतिष्ठस्य सर्वव्यापिनः परमेश्वरस्याधार उपदिश्येत "स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि" [ छा० ७ । २४ । १ ] इति

रत्नप्रभा ।

देवतास्थानमादित्यमधिकृत्योपास्त्युक्त्यनन्तरमात्मानं देहमधिकृत्यापि तदुक्तिरित्याह-**अथेति** ॥ पूर्वत्र ब्रह्मपदमानन्दमयपदमानन्दपदाभ्यासश्चेति मुख्यत्रितयादिबहुप्रमाणवशान्निर्गुणनिर्णयवद्रूपवत्त्वादिबहुप्रमाणवशाज्जीवो हिरण्मय इति पूर्वसिद्धान्तदृष्टान्तसङ्गत्या पूर्वमुत्सर्गतः सिद्धनिर्गुणसमन्वयस्यापवादार्थं पूर्वपक्षयति-**संसारीति** ॥ अत्र पूर्वोत्तरपक्षयोः जीवब्रह्मणोरुपास्तिः फलम् । अक्षिणीत्याधारश्रवणाच्च संसा-

भामती ।

कर्मातिशयलब्धोत्कर्षो जीवात्मादित्यपदवेदनीय इति निर्णीयते । तत्र 'मर्यादाधाररूपाणि संसारिणि परे न तु । तस्मादुपास्यः संसारी कर्मानधिकृतो रविः ॥' हिरण्यश्मश्रुः-इत्यादिरूपश्रवणात्, 'य एषोऽन्तरादित्ये', 'य एषोऽन्तरक्षिणि' इति चाधारभेदश्रवणात्, 'ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च' इत्यैश्वर्यमर्यादाश्रुतेश्च संसार्येव कार्यकारणसंघातात्मको रूपादिसंपन्न इहोपास्यः, न तु परमात्मा 'अशब्दमस्पर्शम्' इत्यादिश्रुतिभिः अपास्तसमस्तरूपश्च, 'स्वे महिम्नि' इत्यादिश्रुतिभिरपाकृताधारश्च, 'एष सर्वेश्वरः' इत्यादिश्रुतिभिरधिगतनिर्मर्यादैश्वर्यश्च शक्य उपास्यत्वेनेह प्रतिपत्तुम् । सर्वपाप्मविरहश्चादित्यपुरुषे संभवति, शास्त्रस्य मनुष्याधिकारतया देवतायाः पुण्यपापयोरनधिकारात् । रूपादिमत्त्वान्यथानुपपत्त्या च कार्यकारणात्मके जीवे उपास्यत्वेन विवक्षिते यत्तावद्गाथात्मकतयास्य सर्वा-

आनन्दगिरीय-न्यायनिर्णयः ।

ध्यानफलमुदेतीति । आदिशब्दात्तस्य ऋक्च साम च गेष्णावित्याद्युक्तमधिदैवतं देवतामधिकृत्योपास्तिवाक्यमित्यर्थः । आधिदैवध्यानोक्त्यनन्तरमात्मानं देहमधिकृत्यापि तदुक्तिरित्याह-**अथेति** । ऋक्सामयोर्वाक्प्राणाद्यात्मत्वोक्त्यानन्तर्यमथेत्युक्तम् । आदिशब्दात्सैवर्क्तत्सामेत्याद्युक्तम् । स्थानद्वयस्थं पुरुषं विषयीकृत्य रूपवत्त्वश्रुत्या सर्वपापास्पर्शश्रुत्या च संशयमाह-**तत्रेति** । कश्चिदित्यादित्यक्षेत्रज्ञ उक्तः । पूर्वसूत्रे ब्रह्मपदमानन्दमयपदमानन्दपदार्थाभ्यासश्चेति मुख्यत्रयार्थबहुप्रमाणवशान्निर्विशेषनिर्णयवद्रूपवत्त्वादिबहुप्रमाणात्संसारी हिरण्मयः पुरुष इति संगत्या पूर्वपक्षमाकांक्षापूर्वकमाह-**किं तावदिति** । स्फुटब्रह्मलिङ्गोक्तश्रुतेः सगुणे ब्रह्मण्यन्वयोक्तेः श्रुत्यादिसंगतयः । पूर्वोत्तरपक्षयोरपरस्य परस्य चोपास्तिरेव फलम् । सर्वैरुपास्यत्वाय पर एव कस्मान्नेति पृष्ट्वा हेतुमाह-**कुत इति** । चाक्षुषे पुरुषे यथोक्तं रूपं न श्रुतमित्याशंक्याऽऽह-**अक्षीति** । परस्यैव स्थानभेदाद्रूपवत्त्वमुपदेशातिदेशाभ्यामिति चेन्नेत्याह-**न चेति** । परापरिग्रहे हेत्वन्तरमाह-**आधारेति** । अनन्तशक्तित्वात्तस्याप्याधारश्रुतिरित्याशंक्याऽऽह-**न हीति** । परस्यानाधारत्वे स्वमहिमप्रतिष्ठत्वं हेतुस्तत्र मानं-**स भगव इति** । तत्रैव हेत्वन्तरं सर्वव्यापित्वं तत्रापि

"आकाशवत्सर्वगतश्च नित्यः" इति च श्रुती भवतः ॥ ऐश्वर्यमर्यादाश्रुतेश्च–"स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च" [ छा० १ । ६ । ८ ] इत्यादित्यपुरुषस्यैश्वर्यमर्यादा ॥ "स एष चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च" [ छा० १ । ६ । ६ ] इत्यक्षिपुरुषस्य ॥ न च परमेश्वरस्य मर्यादावदैश्वर्यं युक्तम्–"एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" [ बृ० ४ । ४ । २२ ] इत्यविशेषश्रुतेः ॥ तस्मान्नाक्ष्यादित्ययोरन्तः पर-

रत्नप्रभा ।

रीति सम्बन्धः । श्रुतिमाह–स एष इति ॥ आदित्यस्थः पुरुषः । अमुष्माद् आदित्यादूर्ध्वगा ये केचन लोकास्तेषाम् ईश्वरो देवभोगानां चेत्यर्थः । स एषोऽक्षिस्थः पुरुष एतस्माद् अक्ष्णोऽधस्तना ये लोका ये च मनुष्यकामाः भोगाः, तेषामीश्वर इति मर्यादा श्रूयते । अतः श्रुतेश्च संसारीत्यर्थः । एष सर्वेश्वर इत्यविशेषश्रुतेरिति सम्बन्धः । भूताधिपतिः यमः भूतपाल इन्द्रादिश्च एष एव । किञ्च जलानामसंकराय लोके विधारको यथा सेतुः एवम् एषां लोकानां वर्णाश्रमादीनां मर्यादा हेतुत्वात् सेतुरेष एव । अतः सर्वेश्वर इत्यर्थः । सूत्रं व्याचष्टे–य एष इति ॥ यद्यप्येकस्मिन् वाक्ये प्रथमश्रुतानुसारेण चरमं नेयम् । तथाप्यत्र प्रथमं श्रुतं रूपवत्त्वं निष्फलं ध्यानार्थमीश्वरे नेतुं शक्यं च, सर्वपापासङ्गित्वं सर्वात्मैकत्वं तु सफलं जीवे नेतुमशक्यं चेति प्रबलम् । न च " न ह वै देवान्पापं गच्छति"

भामती ।

त्मकत्वं श्रूयते तत्कथंचिदादित्यपुरुषस्यैव स्तुतिरिति आदित्यपुरुष एवोपास्यो न परमात्मेत्येवं प्राप्तम् । अनाधारत्वे च नित्यत्वं सर्वगतत्वं च हेतुः अनित्यं हि कार्यं कारणाधारमिति नानाधारं, नित्यमप्यसर्वगतं यत्तस्मादधरभावेनास्थितं तदेव । तस्योत्तरस्याधार इति नानाधारं, तस्मादुभयमुक्तम् । एवं प्राप्तेऽभिधीयते–'अन्तस्तद्धर्मोपदेशात्' । 'सार्वात्म्यसर्वदुरितविरहाभ्यामिहोच्यते । ब्रह्मैवाव्यभिचारिभ्यां सर्वहेतुर्विकारवत् ॥' नामनिरुक्तेन हि सर्वपाप्मापादानतयास्योदय उच्यते । न चादित्यस्य देवतायाः कर्मानधिकारेऽपि सर्वपाप्मविरहः प्राग्भवीयधर्माधर्मरूपपाप्मसंभवे सति । न चैतेषां प्राग्भवीयो धर्म एवास्ति न पाप्मेति सांप्रतम् । विद्याकर्मातिशयसमुदाचारेऽप्यनादिभवपरंपरोपार्जितानां पाप्मनामपि प्रसुप्तानां संभवात् । न च श्रुतिप्रामाण्यादादित्यशरीराभिमानिनः सर्वपाप्मविरह इति युक्तं, ब्रह्मविषयत्वेना-

आनन्दगिरीय–न्यायनिर्णयः ।

मानमाह–आकाशवदिति । ईश्वराग्रहे हेत्वन्तरमाह–ऐश्वर्येति । स एष इत्याधिदैविकपुरुषोक्तिः । अमुष्मादादित्यादूर्ध्वगा ये लोकास्तेषामीशिता ये च देवानां कामा भोगास्तेषां चेत्यर्थः । स एष इत्याध्यात्मिकपुरुषोक्तिरेतस्माच्चक्षुषः सकाशादर्वाग्गता ये लोकास्तेषामीशिता ये च मनुष्याणां कामा भोगास्तेषां चेत्येतस्य मर्यादावदैश्वर्यमुक्तमित्यर्थः । परस्यापि ध्यानार्थं तादृगैश्वर्यं स्यान्नेत्याह–न चेति । एष सर्वेश्वर इत्यविशेषश्रुतेरिति संबन्धः । कथमेतस्य सर्वेश्वरत्वं यतो भूतानां नियन्ता यमोऽस्ति नेत्याह–एष इति । कथं पुरो भूतानामधिष्ठाय पालयिता पालयितुरिन्द्रादेः सत्त्वात्तत्राऽऽह–एष भूतेति । तथाऽपि ब्रह्मा मर्यादास्थापकोऽस्ति कुतोऽस्य सर्वेश्वरत्वं तत्राऽऽह–एष इति । यथा मृद्दारुमयः सेतुर्जलव्यूहस्य क्षेत्रसंपदामसंभेदाय धारयिता तथैषोऽपि सर्वेषां वर्णादीनामसंकराय धारयिता स्यादित्यर्थः । मर्यादाधाररूपश्रुतेरादित्यक्षेत्रज्ञ एवात्रोपास्य इत्युपसंहरति–तस्मादिति । तस्य कर्मानधिकारात्सर्वपाप्मविगमः । सर्वात्मत्वमुपासनायै स्तुत्यर्थमनूद्यत इति भावः ।

**मेश्वर इति ॥ एवं प्राप्ते—ब्रूमः ॥ अन्तस्तद्धर्मोपदेशादिति ॥ "य एषोऽन्तरादित्ये य एषोऽन्तराक्षिणि" [ छा० ४ । ५ । १ ] इति च श्रूयमाणः पुरुषः स परमेश्वर एव ॥ न संसारी ॥ कुतः ॥ तद्धर्मोपदेशात्—तस्य हि परमेश्वरस्य धर्मा इहोपदिष्टाः ॥ तद्यथा—"तस्योदिति नाम" [ छा० १ । ६ । ७ ] इति श्रावयित्वा अस्यादित्यपुरुषस्य नाम "स एष सर्वेभ्यः पाप्मभ्य उदितः" [ छा० १ । ६ । ७ ] इति सर्वपाप्मापगमेन निर्वक्ति ॥ तदेव च कृतनिर्वचनं नामाक्षिपुरुषस्याप्यतिदिशति "यन्नाम तन्नाम" [ छा० १ । ७ । ५ ] इति ॥ सर्वपाप्मापगमश्च परमात्मन एव श्रूयते "य आत्मा अपहतपाप्मा" [ छा० ८ । ७ । १ ] इत्यादौ ॥ तथा चाक्षुषे पुरुषे "सैव ऋक् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म" [ छा० १ । ७ । ५ ]**

रत्नप्रभा ।

[ बृह० १ । ५ । २० ] इति श्रुतेरादित्यजीवस्यापि पाप्मास्पर्शित्वमिति वाच्यम् । श्रुतेरधुना कर्मानधिकारिणां देवानां क्रियमाणपाप्मासम्बन्धे तत्फलास्पर्शे वा तात्पर्यात् । तेषां सञ्चितपापाभावे "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" [ भग०गी० ९।२१ ] इत्ययोगादित्यभिप्रेत्याह—**सर्वपाप्मापगमश्च परमात्मन एवेति**॥सार्वात्म्यमाह—**तथेति**॥अत्र **तच्छब्दैः** चाक्षुषः पुरुष उच्यते । ऋगाद्यपेक्षया लिङ्गव्यत्ययः॥**उक्थं** शस्त्रविशेषः । तत्साहचर्यात् **साम** स्तोत्रम् । उक्थादन्यच्छस्त्रम् **ऋग्** उच्यते । यजुर्वेदो **यजुः** । **ब्रह्म**

भामती ।

प्यस्याः प्रामाण्योपपत्तेः । न च विनिगमनाहेत्वभावः, तत्रतत्र सर्वपाप्मविरहस्य भूयोभूयो ब्रह्मण्येव श्रवणात् । तस्यैव चेह प्रत्यभिज्ञायमानस्य विनिगमनाहेतोर्विद्यमानत्वात् । अपि च सार्वात्म्यं जगत्कारणस्य ब्रह्मण एवोपपद्यते, कारणादभेदात्कार्यजातस्य, ब्रह्मणश्च जगत्कारणत्वात् । आदित्यशरीराभिमानिनस्तु जीवात्मनो न जगत्कारणत्वम् । न च मुख्यार्थसंभवे प्राशस्त्यलक्षणया स्तुत्यर्थता युक्ता । रूपवत्त्वं चास्य परानुग्रहाय कायनिर्माणेन वा, तद्विकारतया वा सर्वस्य कार्यजातस्य, विकारस्य च विकारवतोऽनन्यत्वात्तादृशरूपभेदेनोपदिश्यते, यथा 'सर्वगन्धः सर्वरसः' इति । न च ब्रह्मनिर्मितं मायारूपमनुवदच्छास्त्रमशास्त्रं भवति, अपि तु तां कुर्वत्, इति नाशास्त्रत्वप्रसङ्गः । यत्र तु ब्रह्म निरस्तसमस्तोपाधिभेदं ज्ञेयत्वेनोपक्षिप्यते, तत्र शास्त्रम्—'अशब्दमस्पर्शमरूपमव्ययम्' इति प्रवर्तते । तस्माद्रूपवत्त्वमपि परमात्मन्युपपद्यते । एतेनैव मर्यादाधारभेदावपि व्याख्यातौ । अपि चादित्यदेहाभिमानिनः संसारिणोऽन्त-

आनन्दगिरीय—न्यायनिर्णयः ।

पूर्वपक्षमनूद्य सूत्रमवतार्य प्रतिज्ञां व्याकरोति—**एवमित्यादिना** । प्रथमश्रुतरूपवत्त्वादिना चरमश्रुतसर्वपाप्मविगमादेर्नेयत्वान्न परस्य प्राप्तिरित्याह—**कुत इति** । फलवत्पाप्मविगमादिलिङ्गस्य चरमस्यापि तच्छून्यत्वेनाविवक्षितालिङ्गादाद्यादपि बलीयस्त्वात्तद्वशेनेतरन्नेयमित्याह—**तद्धर्मेति** । इहेति स्थानद्वयस्थपुरुषोक्तिः । आदित्यक्षेत्रज्ञस्यापि कर्मानधिकारात्पाप्मास्पर्शो युक्तः "न ह वै देवान्पापम्" इति श्रुतेरित्याशंक्याऽऽह—**सर्वेति** । देवादिषु पश्वादिवत्कर्मानधिकारेऽपि प्राचि भवे संचितपापयोगात्तदल्पत्वान्न ह वै देवानित्युक्तेर्न जीवः सर्वपापास्पृष्टः प्रदेशान्तरे च तस्य परस्मिन्नेव श्रुतेरत्रापि तद्दृष्ट्या तत्प्रत्यभिज्ञानात्तस्यैवोपास्यतेति भावः । सार्वात्म्यमपि श्रुतं न संसारिणि युक्तमित्याह—**तथेति** । तत्र तच्छब्दैश्चाक्षुषनरोक्तिः ऋगादिविधेयापेक्षया विलक्षणलिङ्गोक्तिः । उक्थं शस्त्रविशेषः । तत्साहचर्यात्तत्सामस्तोत्रमुक्थादन्यच्छस्त्रमृगुच्यते । ब्रह्म त्रयो वेदाः ऋगाद्यात्मना चाक्षुषस्य संसारि-

**इत्यृक्सामाद्यात्मकतां निर्धारयति ॥ सा च परमेश्वरस्योपपद्यते ॥ सर्वकारणत्वात्सर्वात्मकत्वोपपत्तेः । पृथिव्यग्न्याद्यात्मके चाधिदैवतमृक्सामे वाक्प्राणाद्यात्मके चाध्यात्ममनुक्रम्याह ॥ "तस्यर्क्च साम च गेष्णौ" [ छा० १ । ६ । ८ ] इत्यधिदैवतम् ॥ तथाध्यात्ममपि—"यावमुष्य गेष्णौ तौ गेष्णौ" [ छा० १ । ७ । ५ ] इति ॥ तच्च सर्वात्मकत्वे सत्येवोपपद्यते ॥ "तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः" [ छा० १ । ७ । ६ ] इति च लौकिकेष्वपि गानेष्वस्यैव गीयमानत्वं दर्शयति ॥ तच्च परमेश्वरपरिग्रहे घटते "यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ॥" [ १० । ४१ ] इतिभगवद्गीतादर्शनात् ॥ लोककामेशितृत्वमपि—**

---

रत्नप्रभा ।

त्रयो वेदा इत्यर्थः ॥ **पृथिव्यग्न्याद्यात्मक इति** । अधिदैवतमृक्—पृथिव्यन्तरिक्षद्युनक्षत्रादित्यगतशुक्लभारूपा **पञ्चविधा** श्रुत्युक्ता । साम च—अग्निवाय्वादित्यचन्द्रादित्यगतातिकृष्णरूपमुक्तं **पञ्चविधम्** । अध्यात्मं तु—ऋग्वाक्चक्षुःश्रोत्राक्षिस्थशुक्लभारूपा **चतुर्विधा** । साम च प्राणच्छायात्ममनोऽक्षिगतातिनीलरूपं **चतुर्विधमुक्तम्** । एवं क्रमेण ऋक्सामे अनुक्रम्याह श्रुतिः- **तस्येति** ॥ यौ सर्वात्मकऋक्सामात्मकौ **गेष्णावमुष्य** आदित्यस्थस्य तौ एवाक्षिस्थस्य **गेष्णौ** पर्वणीत्यर्थः ॥ **तच्चेति** । ऋक्सामगेष्णत्वमित्यर्थः । सर्वगानगेयत्वं लिङ्गान्तरमाह—**तद्य इति** । **तत्** तत्र लोके धनस्य सनिर्लाभो येषां ते **धनसनयो** विभूतिमन्त इत्यर्थः । ननु लोके राजानो गीयन्ते, नेश्वर इत्यत आह—**यद्यदिति** । पशुवित्तादिः **विभूतिः** । श्रीः कान्तिः । **ऊर्जितं** बलं, तद्युक्तं सत्त्वं राजादिकं

भामती ।

र्यामी भेदेनोक्तः, स एवान्तरादित्य इत्यन्तः श्रुतिसाम्येन प्रत्यभिज्ञायमानो भवितुमर्हति । **तस्मात्ते धनसनय इति** । धनवन्तो विभूतिमन्त इति यावत् । कस्मात्पुनर्विभूतिमत्त्वं परमेश्वरपरिग्रहे घटत इत्यत आह—**यद्यद्विभूतिमदिति** । सर्वात्मकत्वेऽपि विभूतिमत्स्वेव परमेश्वरस्वरूपाभिव्यक्तिः, न त्वविद्यातमःपिहितपरमेश्वरस्वरूपेष्वविभूतिमत्स्वित्यर्थः ॥ **लोककामेशितृत्वमपीति** । अतोऽत्यन्तापारार्थ्यन्यायेन

आनन्दगिरीय-न्यायनिर्णयः ।

त्वेऽपि स्तुतिरुपास्त्यर्थमित्याशंक्य मुख्यसंभवे नामुख्यकल्पनेत्याह—**सा चेति** । तत्रैव हेत्वन्तरमाह—**पृथिवीति** । ऋगधिदैवतं पृथिव्यन्तरिक्षद्युनक्षत्रादित्यगतशुक्लभारूपा । साम चाग्निवाय्वादित्यचन्द्रादित्यगतपरः कृष्णाख्यातिकृष्णरूपमियमेवर्गग्निः सामेत्यादिनोक्तम् अध्यात्मं च वाक्चक्षुःश्रोत्राक्षिगतशुक्लभालक्षणा तावद्गुक्ता । साम च प्राणच्छायात्ममनोक्षिस्थकृष्णभारूपं वागेव ऋक्प्राणः सामेत्यादिनोक्तमेवमुभयत्रोक्तरूपे ऋक्सामे क्रमेणोक्त्वा पुरुषस्योक्तप्रकारकर्चाभिहितप्रकारं साम चेत्येते द्वे गेष्णौ पादपर्वणी इति देवतायामुक्त्वाऽऽत्मन्यपि तयोर्ऋक्सामयोरतिदेशेन गेष्णत्वमुक्तमित्यर्थः । तदपि संसारिविषयं किं न स्यान्नेत्याह—**तच्चेति** । तत्रैव हेत्वन्तरमाह—**तद्य इति** । व्यवहारभूमिस्तच्छब्दार्थः । धनसनयो धनस्य लब्धारो विभूतिमन्त इत्यर्थः । राजादीनामपि श्रीमतां गीयमानत्वदृष्टेरन्यथासिद्धिमाशंक्याऽऽह—**तच्चेति** । उक्तेऽर्थे स्मृतिमनुकूलयति—**यद्यदिति** । धनादिसमृद्धिमत्त्वं विभूतिमत्त्वम् । कान्तिमत्त्वं श्रीमत्त्वम् । बलवत्त्वमौर्जित्यम् । ईश्वरपक्षे हेत्वन्तरमाह—**लोकेति** । निरंकुशमनन्याधीनं सर्वपा-

---

१ सर्वात्मन एवोप० पा० ।

निरङ्कुशं श्रूयमाणं परमेश्वरं गमयति॥यत्तूक्तं हिरण्यश्मश्रुरित्यादिरूपश्रवणं परमेश्वरे नोपपद्यते इति॥अत्र ब्रूमः॥स्यात्परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम् ॥ "माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं मैवं मां द्रष्टुमर्हसि" इति स्मरणात् ॥ अपि च यत्र तु निरस्तसर्वविशेषं पारमेश्वरं रूपमुपदिश्यते,भवति तत्र शास्त्रम्—"अशब्दमस्पर्शमरूपमव्ययम्" [ कठ० १ । ३ । १५ ] इत्यादि । सर्वकारणत्वात्तु विकारधर्मैरपि कैश्चिद्विशिष्टः परमेश्वर उपास्यत्वेन निर्दिश्यते—"सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः" [ छा० ३ । १४ । २ ] इत्यादिना । तथा हिरण्यश्मश्रुत्वादिनिर्देशोऽपि भविष्यति ॥ यदप्याधारश्रवणान्न परमेश्वर इति अत्रोच्यते ॥ स्वमहिमप्रतिष्ठस्याप्याधारविशेषोपदेश उपासनार्थो भविष्यति ॥ सर्वगतत्वाद्ब्रह्मणो व्योमवत्सर्वान्तरत्वोपपत्तेः ॥ ऐश्वर्यमर्यादाश्रवणमप्यध्यात्माधिदैवतविभागापेक्षमुपासनार्थमेव ॥ तस्मात्परमेश्वर एवाक्ष्यादित्ययोरन्तरुपदिश्यते ॥ २० ॥

## भेदव्यपदेशाच्चान्यः ॥ २१ ॥

**अस्ति चाऽऽदित्यादिशरीराभिमानिभ्यो जीवेभ्योऽन्य ईश्वरोऽन्तर्यामी ॥**

रत्नप्रभा ।

मदंश एवेत्युक्तेः तद्वानमीश्वरस्यैवेत्यर्थः । **निरङ्कुशम्** अनन्याधीनम् । **एषा** विचित्ररूपा मूर्तिः **माया** विकृतित्वान्मायानया सृष्टेत्यर्थः । **यदुक्तमशब्दमित्यादिवाक्यं, तत्** ज्ञेयपरमित्याह—**अपि चेति** ॥ तर्हि रूपं कुतः, तत्राह—**सर्वेति** ॥ यत्र तूपास्यत्वेनोच्यते, तत्रेत्यध्याहृत्य सर्वकारणत्वात् प्राप्तरूपवत्त्वं सर्वकर्मेत्यादिश्रुत्या निर्दिश्यत इति **योजना** । मर्यादावदैश्वर्यमीश्वरस्य नेत्युक्तं निराकरोति—**ऐश्वर्येति** ॥ अध्यात्माधिदैवतध्यानयोर्विभागः—पृथक्प्रयोगः, तदपेक्षमेव न त्वैश्वर्यस्य परिच्छेदार्थमित्यर्थः ॥ २० ॥ ननु उपास्योद्देशेनोपास्तिविधेर्विधेयक्रियाकर्मणो व्रीह्यादिवदन्यतः सिद्धिर्वाच्येत्याशंक्याह—**भेदेति** ॥ आदित्यजीवादीश्वरस्य भेदोक्तेः श्रुत्यन्तरे जीवादन्य ईश्वरः सिद्ध इति सूत्रार्थमाह—**अस्तीति** ॥ आदित्ये

भामती ।—०

आनन्दगिरीय–न्यायनिर्णयः ।

प्मविरहादिना तस्यैवोपास्यतेत्युक्त्वा परोक्तमनुवदति—**यत्त्विति** । रूपवत्त्वं नावश्यं संसारिलिङ्गमित्याह—**अत्रेति** । मायामयस्यापि रूपस्य हिरण्यश्मश्रुत्वादिनियमे हेतुमाह—**इच्छेति** । तथाविधरूपोपयोगमाह—**साधकेति** । तस्येच्छाऽपि मायामयीति मत्वाऽऽह—**मायेति** । यथादृष्टि देहादिवैशिष्ट्यमीश्वरस्य तात्त्विकमित्याशंक्याऽऽह—**सर्वेति** । अरूपश्रुतिविरुद्धं रूपवत्त्वमित्युक्तमाशंक्य विषयभेदमाह—**अपि चेति** । तात्त्विकमैश्वरं रूपमाश्रित्याशब्दादिशास्त्रे कथं तस्य रूपादिमत्त्वोक्तिस्तत्राऽऽह—**सर्वेति** । निर्विशेषमेव ब्रह्मात्र प्रतिपाद्यं तज्ज्ञानादेव मुक्तिरित्याशंक्योपास्तिवाक्यत्वात्सविशेषोक्तिरित्याह—**तथेति** । स्वमहिमप्रतिष्ठस्याऽऽधारायोगादत्र चाऽऽधारश्रुतेरीश्वरादार्थान्तरतेत्युक्तमनुवदति—**यदपीति** । आधारानपेक्षस्यापि फलवशात्तदुक्तेर्नानीश्वरतेत्याह—**अत्रेति** । किमित्युपासनार्थे तदुक्तिः साक्षादेव किं न स्यात्तत्राऽऽह—**सर्वगतत्वादिति** । मर्यादावदैश्वर्यमीश्वरस्य नेत्युक्तं प्रत्याह—**ऐश्वर्येति** । एकस्यैवेश्वरस्य स्थानभेदावच्छेदादैश्वर्यमर्यादाकरणं पृथगनुध्यानार्थं न परिच्छेदप्राप्त्यर्थमित्यर्थः । परोक्तलिङ्गानामन्यथात्वे फलितमाह—**तस्मादिति** ॥ २० ॥ उपास्योद्देशेनोपास्तिविधेर्विधेयक्रियाकर्मणोर्व्रीह्यादिवदन्यतः सिद्धिर्वाच्येत्याशङ्क्याऽऽह—**भेदेति** । आदित्यक्षेत्रज्ञादन्तर्यामिणः श्रुत्यन्तरे भेदोक्तेस्ततोऽन्य ईश्वरः सिद्ध इत्यक्षरार्थमाह—**अस्तीति** ।

१ श्मश्रुत्वादिरूपवत्त्वश्रवणमिति क्वचित्पाठः ।

"य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः" [ बृह० ३। ७।९ ] इतिश्रुत्यन्तरे भेदव्यपदेशात् ॥ तत्र ह्यादित्यादन्तरोयमादित्यो न वेदेति वेदितुरादित्याद्विज्ञानात्मनोऽन्योऽन्तर्यामीति स्पष्टं निर्दिश्यते, स एवेहाप्यन्तरादित्ये पुरुषो भवितुमर्हति॥श्रुतिसामान्यात्॥तस्मात्परमेश्वरं एवेहोपदिश्यत इति सिद्धम् ॥ २१ ॥ इत्यन्तरधिकरणम् ॥ ७ ॥

## आकाशस्तल्लिङ्गात् ॥ २२ ॥ ( ८ ) ॥

इदमामनन्ति "अस्य लोकस्य का गतिरिति ॥ आकाश इति होवाच। सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति। आकाशो ह्येवैभ्यो ज्यायान्। आकाशः परायणम्" [ छा० १। ९। १ ] इति ॥ तत्र संशयः। किमाकाशब्देन परं ब्रह्माभिधीयते-

---

रत्नप्रभा।

स्थितरश्मिनिरासार्थमादित्यादन्तर इति। जीवं निरस्यति-**यमिति**॥ अशरीरस्य कथं नियन्तृत्वं तत्राह-**यस्येति**। अन्तर्यामिपदार्थमाह-**य इति**॥ तस्यानात्मत्वनिरासायाह-**एष त इति**॥ ते तव स्वरूपमित्यर्थः॥ आदित्यान्तरत्वश्रुतेः समानत्वादित्यर्थः। तस्मात्पर एवादित्यादिस्थानक उद्गीथे उपास्य इति सिद्धम्॥ २१॥ (७)॥ भवतु रूपवत्त्वादिदुर्बललिङ्गानां पापास्पर्शित्वाद्यव्यभिचारिब्रह्मलिङ्गैरन्यथानयनम्। इह त्वाकाशपदश्रुतिः लिङ्गाद्बलीयसीति प्रत्युदाहरणेन प्राप्ते प्रत्याह-**आकाशस्तल्लिंगादिति**॥ छान्दोग्यवाक्यमुदाहरति-**इदमिति**॥ शालावत्यो ब्राह्मणो जैवलिं राजानं पृच्छति-अस्य पृथ्वीलोकस्यान्यस्य

भामती।

निरङ्कुशमैश्वर्यमित्यर्थः ॥ २० ॥ २१ ॥ ( ७ )॥ **आकाशस्तल्लिंगात्**। पूर्वस्मिन्नधिकरणे ब्रह्मणोऽसाधारणधर्मदर्शनाद्विवक्षितोपाधिनोऽस्यैवोपासना, न त्वादित्यशरीराभिमानिनो जीवात्मन इति निरूपितम्। इदानीं त्वसाधारणधर्मदर्शनात्तदेवोद्गीथे संपाद्योपास्यत्वेनोपदिश्यते, न भूताकाश इति निरूप्यते। तत्र 'आकाश इति होवाच' इति किं मुख्याकाशपदानुरोधेन 'अस्य लोकस्य का गतिः' इति 'सर्वाणि ह वा इमानि भूतानि' इति च 'ज्यायान्' इति च 'परायणम्' इति च कथंचिद्व्याख्यायताम्, उतैतदनु-

आनन्दगिरीय-न्यायनिर्णयः।

आदित्यमण्डले स्थितरश्मिपुञ्जस्यापि स्यादित्यत उक्तमादित्यादिति। तज्जीवं व्युदस्यति-**यमिति**। तस्य देहित्वे जीवत्वमदेहित्वे न नियन्तृतेत्याशंक्याऽऽह-**यस्येति**। इतश्चाऽऽदित्यजीवादन्योऽसावित्याह-**य इति**। तस्य ताटस्थ्यं वारयति-**एष इति**। श्रुत्यन्तरस्याप्यनीश्वरविषयत्वमाशंक्याऽऽह-**तत्रेति**। तथाऽपि प्रत्यभिज्ञापकाभावान्नेह तदुपास्तिरित्याशंक्याऽऽह-**स एवेति**। आदित्यान्तस्थत्वश्रुतिसाम्यात्प्रत्यभिज्ञा पर एवोद्गीथे ध्येयत्वेनोपदिश्यत इत्युपसंहरति-**तस्मादिति** ॥ २१ ॥ ( ७ ) ॥ पूर्वत्राव्यभिचारिलिङ्गेन रूपवत्त्वाद्यन्यथा नीतमिह तु लिङ्गान्न श्रुतिरन्यथयितव्येति प्राप्ते प्रत्याह-**आकाश इति**। छान्दोग्यवाक्यमेवोदाहरति-**इदमिति**। हन्ताहमेतद्भगवत्तो वेदानीत्युपसन्नः शालावत्यो विद्धीति जैवलिनोक्तेः पृच्छति-**अस्येति**। सर्वस्यैव प्रपञ्चस्य प्रतिष्ठाप्रश्ने प्रवाहणस्योत्तरमाह-**आकाश इति**। कथं भूताकाशः सर्वजगत्प्रतिष्ठा तत्राऽऽह-**सर्वाणीति**। उपनिषदां तदभिज्ञानां च प्रसिद्धमेतदिति द्योतकौ निपातौ निमित्तमात्रत्वं निराकर्तुं विशिनष्टि-**आकाशमिति**। भूताकाशव्यावृत्तये हेत्वन्तरमाह-**आकाशो हीति**। तत्रैव हेत्वन्तरं सूचयति-**आकाश इति**। विचारबीजं संशयमाह-**तत्रेति**। अनतिप्रसङ्गार्थं प्रश्नद्वारा

---

१. "सार्वात्म्यसर्वदुरितविरहाभ्यामिहोच्यते। ब्रह्मैवाव्यभिचारिभ्यां सर्वहेतुर्विकारवत् ॥ १ ॥" इति क्वचिट्टिप्पणी दृश्यते।

उत भूताकाशमिति ॥ कुतः संशयः ॥ उभयत्र प्रयोगदर्शनात् ॥ भूतविशेषे तावत्सुप्रसिद्धो लोकवेदयोराकाशशब्दः ॥ ब्रह्मण्यपि क्वचित् प्रयुज्यमानो दृश्यते ॥ यत्र वाक्यशेषवशादसाधारणगुणश्रवणाद्वा निर्धारितं ब्रह्म भवति, यथा—"यदेष आकाश आनन्दो न स्याद्" [ तै० २ । ७ ] इति, "आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" [ छा० ८ । १४ ] इति चैवमादौ ॥ अतः संशयः—किं पुनरत्र युक्तम् ॥ भूताकाशमिति ॥ कुतः ॥ तद्धि प्रसिद्धतरेण प्रयोगेण शीघ्रं बुद्धिमारोहति, न चायमाकाशशब्द उभयोः साधारणः शक्यो विज्ञातुम् ।

रत्नप्रभा ।

च कः आधार इति । राजा ब्रूते—आकाश इति हेति—**यदेष आकाश इति** । आनन्दत्वस्यासाधारणस्य श्रवणादाकाशो ब्रह्मेत्यवधारितम् । **आकाशो वै नामे**त्यत्र तद्ब्रह्मेति वाक्यशेषादिति विभागः । **निर्वहिता** उत्पत्तिस्थितिहेतुः । **ते** नामरूपे । **यदन्तरा** यस्माद्भिन्ने, यत्र कल्पितत्वेन मध्ये स्त इति वार्थः । अत्र पूर्वपक्षे भूताकाशात्मनोद्गीथोपास्तिः, सिद्धान्ते ब्रह्मात्मना इति फलम् । उपास्ये स्पष्टब्रह्मलिङ्गवाक्य-

भामती ।

रोधेनाकाशशब्दो भक्त्या परात्मनि व्याख्यायतामिति । तत्र 'प्रथमत्वात्प्रधानत्वादाकाशं मुख्यमेव नः । तदानुगुण्येनान्यानि व्याख्येयानीति निश्चयः ॥' 'अस्य लोकस्य का गतिः' इति प्रश्नोत्तरे 'आकाश इति होवाच' इत्याकाशस्य गतित्वेन प्रतिपाद्यतया प्राधान्यात्, 'सर्वाणि ह वा' इत्यादीनां तु तद्विशेषणतया गुणत्वात्, 'गुणे त्वन्याय्यकल्पना' इति बहून्यप्यप्रधानानि प्रधानानुरोधेन नेतव्यानि । अपि च 'आकाश इति होवाच' इत्युत्तरे प्रथमावगतमाकाशमनुपजातविरोधि, तेन तदनुरक्तायां बुद्धौ यद्यदेव तदेकवाक्यगतमुपनिपतति तत्तज्जघन्यतया उपसंजातविरोधि तदानुगुण्येनैव व्यवस्थानमर्हति । न च क्वचिदाकाशशब्दो भक्त्या ब्रह्मणि प्रयुक्त इति सर्वत्र तेन तत्परेण भवितव्यम् । न हि गङ्गायां घोष इत्यत्र गङ्गापदमनुपपत्त्या तीरपरमिति यादांसि गङ्गायामित्यत्राप्यनेन तत्परेण भवितव्यम् । संभवश्चोभयत्र तुल्यः । न च ब्रह्मण्यप्याकाशशब्दो मुख्यः, अनेकार्थत्वस्यान्याय्यत्वात्, भक्त्या च ब्रह्मणि प्रयोगदर्शनोपपत्तेः । लोके चास्य नभसि निरूढतरत्वात्, तत्पूर्वकत्वाच्च वैदिकार्थप्रतीतेर्वैपरीत्यानुपपत्तेः । तदानुगुण्येन च 'सर्वाणि ह वा' इत्यादीनि भाष्यकृता स्वयमेव नीतानि । तस्माद्भूताकाशमेवात्रोपास्य-

आनन्दगिरीय—न्यायनिर्णयः ।

निमित्तमाह—**कुत इति** । क्वचिदित्युक्तं स्पष्टयति—**यत्रेति** । असाधारणगुणश्रुतेराकाशशब्दस्य ब्रह्मार्थत्वे दृष्टान्तो—**यथेति** । असाधारणेनाऽऽनन्देनान्यत्रासंभावितेन सामानाधिकरण्यादाकाशो ब्रह्मेत्यर्थः । वाक्यशेषादाकाशस्य ब्रह्मत्वे दृष्टान्तमाह—**आकाश इति** । निपातावाकाशस्य नामरूपोपलक्षितसर्वप्रपञ्चनिर्वाहकत्वप्रसिद्ध्यर्थौ । ते नामरूपे यदन्तरा यस्मादन्ये यस्य वा मध्ये स्तः, तन्नामरूपास्पृष्टं ब्रह्मेति वाक्यशेषादत्राऽऽकाशो ब्रह्मेत्यर्थः । य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेत इत्यादिवाक्यसंग्रहार्थमादिपदम् । यथैवमादावाकाशो ब्रह्म तथाऽत्रापीति योजना । रूढिनिरूढिभ्यां संशयमुपसंहरति—**अत इति** । विमृश्य पूर्वपक्षयति—**किं पुनरिति** । स्फुटब्रह्मलिङ्गोक्तश्रुतेरुद्गीथे संपाद्योपास्ये ब्रह्मणि समन्वयोक्तेः संगतयः पूर्वपक्षेभूताकाशदृष्ट्योद्गीथोपास्तिः सिद्धान्ते ब्रह्मदृष्ट्येति फलम् । वैदिकप्रयोगस्य तादृक्प्रयोगाद्ब्रह्मार्थत्वे सिद्धे कुतो भूताकाशार्थतेति शङ्कित्वा हेतुमाह—**कुत इति** । प्रथमश्रुताकाशश्रुत्या भूतार्थे रूढया चरमश्रुतब्रह्मलिङ्गबाधान्न श्रुत्यन्तरेण ब्रह्मार्थतेत्यर्थः । ब्रह्मण्यपि साधारणत्वान्नाऽऽकाशश्रुतिर्ब्रह्मलिङ्गबाधिकेत्याशंक्याऽऽह—**न चेति** । एकस्यापि गोशब्दस्यानेकार्थत्वमगत्याऽभीष्टं

**अनेकार्थत्वप्रसङ्गात् ॥ तस्माद्ब्रह्मणि गौण आकाशशब्दो भवितुमर्हति ॥ विभुत्वादिभिर्हि बहुभिर्धर्मैः सदृशमाकाशेन ब्रह्म भवति ॥ न च मुख्यसम्भवे गौणोऽर्थो ग्रहणमर्हति ॥ सम्भवति चेह मुख्यस्यैवाकाशस्य ग्रहणम् ॥ ननु भूताकाशपरिग्रहे वाक्यशेषो नोपपद्यते-"सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते" [ छा० १।९।१ ] इत्यादिः ॥ नैष दोषः ॥ भूताकाशस्यापि वाय्वादिक्रमेण कारणत्वोपपत्तेः ॥ विज्ञायते हि-"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः ॥ आकाशाद्वायुः ॥ वायोरग्निः" [ तै० २।१ ] इत्यादि ॥ ज्यायस्त्वपरायणत्वे अपि भूतान्तरापेक्षयोपपद्येते भूताकाशस्यापि ॥ तस्मादाकाशशब्देन भूताकाशस्य ग्रहणमिति ॥ एवं प्राप्ते ब्रूमः ॥ "आकाशस्तल्लिंगात्"-आकाशशब्देनेह ब्रह्मणो ग्रहणं युक्तम् ॥ कुतः ॥ "तल्लिंगात्"-परस्य हि ब्रह्मण इदं लिंगं-"सर्वाणि ह वा इमानि भूतानि आकाशा-**

रत्नप्रभा ।

समन्वयोक्तेरापादं श्रुत्यादिसंगतयः । स्पष्टमत्र भाष्यम् । तेजःप्रभृतिषु वाय्वादेरपि कारणत्वाद् एव-

भामती ।

त्वेनोपदिश्यते, न परमात्मेति प्राप्तम् । एवं प्राप्तेऽभिधीयते-**आकाशशब्देन ब्रह्मणो ग्रहणम्** । **कुतः, तल्लिङ्गात्** । तथाहि-'सामानाधिकरण्येन प्रश्नतत्प्रतिवाक्ययोः । पौर्वापर्यपरामर्शोत्प्रधानत्वेऽपि गौणता ॥' यद्यप्याकाशपदं प्रधानार्थं तथापि यत्पृष्टं तदेव प्रतिवक्तव्यम् । न खल्वनुन्मत्त आम्रान्पृष्टः कोविदारानाचष्टे । तदिह, 'अस्य लोकस्य का गतिः' इति प्रश्नो दृश्यमाननामरूपप्रपञ्चमात्रगतिविषय इति तदनुरोधाय एव सर्वस्य लोकस्य गतिः स एवाकाशशब्देन प्रतिवक्तव्यः । न च भूताकाशः सर्वस्य लोकस्य गतिः, तस्यापि लोकमध्यपातित्वात् । तदेव तस्य गतिरित्यनुपपत्तेः । न चोत्तरे भूताकाशश्रवणाद्भूताकाशकार्यमेव पृष्टमिति युक्तं, प्रश्नस्य प्रथमावगतस्यानुपजातविरोधिनो लोकसामान्यविषयस्योपजातविरोधिनोत्तरेण संकोचानुपपत्तेस्तदनुरोधेनोत्तरव्याख्यानात् । न च प्रश्नेन पूर्वपक्षरूपेणानवस्थितार्थेनोत्तरं व्यवस्थितार्थं न शक्यं नियन्तुमिति युक्तं, तन्निमित्तानामज्ञानसंशयविपर्यासानामनवस्थानेऽपि तस्य स्वविषये व्यवस्थानात् । अन्यथोत्तरस्यानालम्बनत्वापत्तेर्वैयधिकरण्यापत्तेर्वा । अपि चोत्तरेऽपि बहुसमञ्जसम् । तथाहि-'सर्वाणि ह वा इमानि भूतान्याकाशादेव

आनन्दगिरीय-न्यायनिर्णयः ।

ब्रह्मणि त्वाकाशशब्दो गौणत्वेनापि गच्छतीत्याह-**तस्मादिति** । गौणत्वार्थं गुणयोगमाह-**विभुत्वेति** । गुणवृत्तेरपि शब्दवृत्तित्वात्तया किं न ब्रह्म गृह्यते तत्राऽऽह-**न चेति** । ननु नेह मुख्यं संभवति तत्र सर्वकारणत्वयोगादतो मुख्यगौणयोर्मुख्ये संप्रत्ययन्यायस्यानवकाशत्वं तत्राऽऽह-**संभवतीति** । तदेव साधयितुं शङ्कयति-**नन्विति** । आकाशस्य प्रथमश्रुतत्वेनासंजातविरोधित्वात्तद्बुद्धौ तदेकवाक्यस्थमुपस्थितं सर्वमुपजातविरोधित्वात्तदानुगुण्येन नेयमित्याह-**नेति** । तत्रैव तैत्तिरीयकश्रुतिसंवादमाह-**विज्ञायते हीति** । तथाऽपि कथं वाक्यशेषो भूताकाशे स्यात्तत्राऽऽह-**ज्यायस्त्वेति** । भूताकाशेऽपि शेषोपपत्तौ फलितमाह-**तस्मादिति** । भूताकाशदृष्ट्योद्गीथोपास्तिरिति प्राप्तमनूद्य सिद्धान्तयति-**एवमिति** । रूढ्या प्रयोगबाहुल्याच्च सिद्धभूताकाशत्यागे न हेतुरिति शंकित्वा हेतुमादाय व्याचष्टे-**कुत इति** । ननु वादिनः सर्वयोनित्वं ब्रह्मणो नेच्छन्ति

१ "प्रथमत्वात्प्रधानत्वादाकाशं मुख्यमेव नः । पदानुगुण्येनान्यानि व्याख्येयानीति निश्चयः ॥ १ ॥" इति क्वचिट्टिप्पणी दृश्यते ।

देव समुत्पद्यन्ते" [छा० १।९।१] इति ॥ परस्माद्धि ब्रह्मणो भूतानामुत्पत्तिरिति वेदान्तेषु मर्यादा ॥ ननु भूताकाशस्यापि वाय्वादिक्रमेण कारणत्वं दर्शितम् ॥ सत्यं दर्शितम् ॥ तथापि मूलकारणस्य ब्रह्मणोऽपरिग्रहादाकाशादेवेत्यवधारणं, सर्वाणीति च भूतविशेषणं, नानुकूलं स्यात् ॥ तथा–"आकाशं प्रत्यस्तं यन्ति" [छा० १।९।१] इति ब्रह्मलिंगम् ॥ "आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" इति च जायस्त्वपरायणत्वे ॥ ज्यायस्त्वं ह्यनापेक्षिकं परमात्मन्येवैकस्मिन्नाम्नातं–"ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः" [छा० ३।१४।३] इति ॥ तथा परायणत्वमपि परमकारणत्वात्परमात्मन्येवोपपन्नतरम् ॥ श्रुतिश्च भवति–"विज्ञानमानन्दं ब्रह्म रातेर्दातुः परायणम्" [बृह० ३।९।२८] इति ॥ अपि चान्तवत्त्वदोषेण शालावत्यस्य पक्षं निन्दित्वाऽनन्तं किंचिद्वक्तुकामेन जैवलिना-

रत्नप्रभा ।

कारश्रुतिबाधः, सर्वश्रुतेश्चाकाशातिरिक्तविषयत्वेन संकोचः स्यादित्याह–**सत्यं दर्शितमिति** ॥ ब्रह्मणस्तु सर्वात्मकत्वात्तस्मादेव सर्वमिति श्रुतिर्युक्तेति भावः । **तथा** सर्वलयाधारत्वं निरतिशयमहत्त्वं स्थितावपि परमाश्रयत्वमित्येतानि स्पष्टानि ब्रह्मलिङ्गानीत्याह–**तथा आकाशमित्यादिना** ॥ **रातेः** धनस्य **दातुः** । **रातिरिति** पाठे बन्धुरित्यर्थः । लिङ्गान्तरमाह–**अपि चेति** । दाल्भ्यशालावत्यौ ब्राह्मणौ राजा चेति

भामती ।

समुत्पद्यन्ते' इति सर्वशब्दः कथंचिदल्पविषयो व्याख्येयः । एवमेवकारोऽप्यसमञ्जसः । न खल्वपामाकाश एव कारणमपि तु तेजोऽपि । एवमन्नस्यापि नाकाशमेव कारणमपि तु पावकपाथसी अपि । मूलकारणविवक्षायां तु ब्रह्मण्येवावधारणं समञ्जसम् । असमञ्जसं तु भूताकाशे । एवं सर्वेषां भूतानां लयो ब्रह्मण्येव । एवं सर्वेभ्यो ज्यायस्त्वं ब्रह्मण एव । परमयनं ब्रह्मैव । तस्मात्सर्वेषां लोकानामिति प्रश्नेनोपक्रमात्, उत्तरे च तत्तदसाधारणब्रह्मगुणपरामर्शात् पृष्टायाश्च गतेः परमयनमित्यसाधारणब्रह्मगुणोपसंहारात्, भूयसीनां श्रुतीनामनुग्रहाय 'त्यजेदेकं कुलस्यार्थे' इतिवद्वरमाकाशपदमात्रमसमञ्जसमस्तु । एतावता हि बहु समञ्जसं स्यात् । न चाकाशस्य प्राधान्यमुत्तरे, किंतु पृष्टार्थत्वादुत्तरस्य, लोकसामान्यगतेश्च पृष्टत्वात्, 'परायणम्' इति च तस्यैवोपसंहाराद्ब्रह्मैव प्रधानम् । तथा च तदर्थं सत् आकाशपदं प्रधानार्थं भवति, नान्यथा । तस्माद्ब्रह्मैव प्रधानमाकाशपदेनेहोपास्यत्वेनोपक्षिप्तं, न भूताकाशमिति सिद्धम् । **अपि च,** अस्यैवोपक्रमे 'अन्तवत्किल ते साम' इति **अन्तवत्त्वदोषेण शालावत्यस्येति** । न चाकाशशब्दो गौणोऽपि विलम्बितप्रतिपत्तिः, तत्रतत्र ब्रह्मण्याकाशशब्दस्य तत्पर्या-

आनन्दगिरीय–न्यायनिर्णयः ।

तत्राऽऽह–**परस्माद्धीति** । तस्यान्यथासिद्धिं स्मारयति–**नन्विति** । उक्तमुपेत्य प्रत्याह–**सत्यमिति** । तत्रतत्र तेजःप्रभृतिषु वाय्वादेरपि कारणत्वादवधारणासिद्धिर्मूलकारणापेक्षायां ब्रह्मण्येव तद्युक्तम् । सर्वाणीति भूतविशेषणं च भूताकाशपक्षे वाय्वादौ संकुचितं स्यात्तस्मान्नान्यथासिद्धिरित्यर्थः । सर्वभूतोत्पादकत्ववत्तल्लयाधारत्वमपि ब्रह्मलिङ्गमित्याह–**तथेति** । ब्रह्मणो लिङ्गद्वयमाह–**आकाशो हीति** । भूताकाशस्यापि ज्यायस्त्वादि सापेक्षमुक्तमित्याशंक्याऽऽह–**ज्यायस्त्वमिति** । नैरपेक्ष्यधिया तरपो वचनम् । न केवलं युक्त्याऽस्य परायणत्वं श्रुतेरपीत्याह–**श्रुतिरिति** । रातेर्धनस्य दातुर्यजमानस्येति । रातिरितिपाठे बन्धुरित्यर्थः । आकाशो ब्रह्मेत्यत्र लिङ्गान्तरमाह–**अपि चेति** । शालावत्यो दाल्भ्यो जैवलिरित्युद्गीथविद्याकुशलानां किं परायणमुद्गीथस्येति विचारे स्वर्गलोक एवेति दाल्भ्योक्तं निरस्यायं लोक इति

ऽऽकाशः परिगृहीतः ॥ तत्राकाशमुद्गीथे सम्पाद्योपसंहरति-"स एष परो वरीयानुद्गीथः स एषोऽनन्तः" [ छा० १।९।२ ] इति ॥ तच्चानन्त्यं ब्रह्म-लिंगम् ॥ यत्पुनरुक्तं भूताकाशं प्रसिद्धिबलेन प्रथमतरं प्रतीयत इति ॥ अत्र ब्रूमः ॥ प्रथमतरं प्रतीतमपि सद्वाक्यशेषगतान्ब्रह्मगुणान्दृष्ट्वा न परिगृह्यते ॥ दर्शितश्च ब्रह्मण्यप्याकाशशब्दः-"आकाशो वै नामरूपयोर्निर्वहिता" [ छा० ८ । १४ । १.] इत्यादौ ॥ तथा आकाशपर्यायवाचिनामपि ब्रह्मणि प्रयोगो दृश्यते-"ऋचो अक्षरे परमे व्योमन् ॥ यस्मिन्

रत्नप्रभा ।

त्रय उद्गीथविद्याकुशला विचारयामासुः,-किमुद्गीथस्य परायणमिति । तत्र स्वर्गादागताभिरद्भिर्जीवितेन प्राणेन क्रियमाणोद्गीथस्य स्वर्ग एव परायणमिति दाल्भ्यपक्षमप्रतिष्ठादोषेण शालावत्यो निन्दित्वा स्वर्गस्यापि कर्मद्वारा हेतुरयं लोकः प्रतिष्ठेत्युवाच । तं शालावत्यस्य पक्षम् "अन्तवद्वै किल ते शालावत्य साम" [ छा. १ । ८ । ८ ] इति राजा निन्दित्वाऽनन्तमेवाकाशं वक्ति । भूताकाशोक्तावन्तवत्त्वदोषतादवस्थ्यादित्यर्थः । नन्वाकाशोऽनन्त इति न श्रुतमित्याशङ्क्याह-तं चेति ॥ उद्गीथ आकाश एवेति सम्पादनादुद्गीथस्यानन्तत्वादिकं, न स्वत इति भावः । स उद्गीथावयव ॐकार एषः आकाशात्मकः परः रसतमत्वादिगुणैरुत्कृष्टः । अतोऽक्षरान्तरेभ्यो वरीयान् श्रेष्ठ इत्यर्थः ॥ पर इति । अव्ययं, सकारान्तं वा । परः कृत्स्नमिति प्रयोगात् । परश्चासौ वरेभ्योऽतिशयेन वरः परोवरीयान् इत्यर्थः । प्राथम्यात्, श्रुतित्वाच्चाकाशशब्दो बलीयानित्युक्तं स्मारयति-यत्पुनरिति ॥ एवकारसर्वशब्दानुगृहीतानन्यादिबहुलिङ्गानामनुग्रहाय, "त्यजेदेकं कुलस्यार्थे" इति न्यायेनैकस्याः श्रुतेर्बाधो युक्त इत्याह-अत्र ब्रूम इति ॥ आकाशपदाद्भूतस्यैव प्रथमप्रतीतिरिति नियमो नास्तीत्यपिशब्देन द्योतितम् । तत्र युक्तिमाह-दर्शितश्चेति ॥ आकाशपदाद्गौणार्थस्य ब्रह्मणोऽपि प्रथमप्रतीतिरस्ति, तस्य तत्पर्यायाणां च ब्रह्मणि प्रयोगप्राचुर्यादिति भावः । अक्षरे कूटस्थे । व्योमन् व्योम्नि । ऋचः वेदाः सन्ति प्रमाणत्वेन यस्मिन्न

भामती ।

यस्य च प्रयोगप्राचुर्यादत्यन्ताभ्यासेनास्यापि मुख्यवत्प्रतिपत्तेरविलम्बनादिति दर्शनार्थं ब्रह्मणि प्रयोगप्राचुर्यं वैदिकं निदर्शितं भाष्यकृता । तत्रैव च प्रथमावगतानुगुण्येनोत्तरं नीयते, यत्र तदन्यथा कर्तुं

आनन्दगिरीय-न्यायनिर्णयः ।

शालावत्योक्तावन्तवद्वै किल ते शालावत्य सामेति पृथिवीलोकस्यान्तवत्त्वात्प्रतिष्ठत्वं निन्दित्वा जैवलिना साम प्रतिष्ठारूपमनन्तमेव विवक्षता गृहीतमाकाशं नान्तवद्युक्तमतो ब्रह्मैवाऽऽकाशमित्यर्थः । नन्वनन्तमाकाशमिह नोपसंह्रियते किंतूद्गीथस्तत्कथमानन्त्यादाकाशो ब्रह्म तत्राऽऽह-तं चेति । स एष इत्याकाशात्मत्वोक्तिः । देशतोऽनन्तत्वं परत्वम् । गुणत उत्कृष्टत्वं वरीयस्त्वम् । कालतो वस्तुतश्चापरिच्छिन्नत्वमानन्त्यम् । परेभ्यः स्वरादिभ्योऽतिशयेन श्रैष्ठ्यं वा परोवरीयस्त्वम् । तथाऽपि कथमाकाशो ब्रह्म तत्राऽऽह-तच्चेति । नाब्रह्मणस्त्रिधाऽऽनन्त्यं तेनोपक्रमोपसंहारप्रतिपाद्यतात्पर्यवदानन्त्यमाकाशस्य ब्रह्मत्वबोधीत्यर्थः । श्रुतिबाधो लिङ्गान्न दृष्ट इत्युक्तमनुवदति-यदिति । "त्यजेदेकं कुलस्यार्थे" इतिन्यायाद्भूयसीनां ब्रह्मलिङ्गश्रुतीनामनुग्रहायाऽऽकाशश्रुतेरेकस्या बाध इत्याह-अत्रेति । किंचाऽऽकाशशब्दस्य ब्रह्मणि प्रयोगप्राचुर्यादत्यन्ताभ्यासेन गौणादपि तस्मादाद्या धीः स्यादित्याह-दर्शितश्चेति । नाऽऽकाशशब्दस्यैव ब्रह्मणि बहुकृत्वः प्रयोगस्तत्पर्यायाणां चेत्याह-तथेति । व्योमन्व्योम्नि परमे प्रकृष्टेऽक्षरे

१ तद्वाक्येतिपाठान्तरम् । २ "ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥१॥" इति न्यायवाक्यशेषो बोध्यः ।

देवा अधि विश्वे निषेदुः" [ ऋ० सं० १ । १६४ । ३९ ] "सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता" [ तै० ३ । ६ ] "ॐ ३ कं ब्रह्म खं ब्रह्म" [ छा० ४ । १० । ५ ] " खं पुराणम्" [ बृह० ५ । १ ] इति चैवमादौ ॥ वाक्योपक्रमेऽपि वर्तमानस्याकाशशब्दस्य वाक्यशेषवशाद्युक्ता ब्रह्मविषयत्वावधारणा "अग्निरधीतेऽनुवाकम्" इति हि वाक्योपक्रमगतोऽप्यग्निशब्दो माणवकविषयो दृश्यते ॥ तस्मादाकाशशब्दं ब्रह्मेति सिद्धम् ॥ २२ ॥ इत्याकाशाधिकरणम् ॥ ८ ॥

## अत एव प्राणः ॥ २३ ॥ ( ९ ) ॥

उद्गीथे "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता" [ छा० १ । १० । ९ ]

---

रत्नप्रभा ।

अक्षरे विश्वे देवा अधिष्ठिता इत्यर्थः । ॐकारः कं सुखं ब्रह्म, खं व्यापकमित्युपासीत । श्रुत्यन्तरप्रयोगमाह—खं पुराणमिति ॥ व्यापि अनादि ब्रह्मेत्यर्थः । "ॐ कं ब्रह्म खं ब्रह्म" इति छान्दोग्यम्, "ॐ खं ब्रह्म खं पुराणम्" इति बृहदारण्यकमिति भेदः । किंच तत्रैव प्रथमानुसारेणोत्तरं नेयं यत्र तन्नेतुं शक्यं, यत्र त्वशक्यं तत्रोत्तरानुसारेण प्रथमं नेयमित्याह—वाक्येति ॥ तस्मादुपास्ये ब्रह्मणि वाक्यं समन्वितमित्युपसंहरति—तस्मादिति ॥ २२ ॥ ( ८ ) ॥ आकाशवाक्योक्तन्यायं तदुत्तरवाक्येऽतिदिशति—अत एव प्राणः ॥ उद्गीथप्रकरणमिति ज्ञापनार्थम् "उद्गीथे" इति भाष्यपदम् । उद्गीथ

भामती ।

शक्यम् । यत्र तु न शक्यं तत्रोत्तरानुगुण्येनैव प्रथमं नीयत इत्याह—वाक्योपक्रमेऽपीति ॥ २२ ॥ (८)॥
अत एव प्राणः । उद्गीथे—'या देवता प्रस्तावमन्वायत्ता' इत्युपक्रम्य श्रूयते—'कतमा सा देवतेति प्राण इति होवाच' उषस्तिश्चाक्रायणः । उद्गीथोपासनप्रसङ्गेन प्रस्तावोपासनमप्युद्गीथ इत्युक्तं भाष्यकृता । प्रस्ताव इति साम्नो भक्तिविशेषस्तमन्वायत्ता अनुगता प्राणो देवता । अत्र प्राणशब्दस्य ब्रह्मणि वायुविकारे च दर्शनात्संशयः—किमयं ब्रह्मवचन उत वायुविकारवचन इति । तत्र अत एव ब्रह्मलिङ्गादेव प्राणोऽपि ब्रह्मैव न वायुविकार इति युक्तम् । यद्येवं तेनैव गतार्थमेतदिति कोऽधिकरणान्तरस्यारम्भार्थः । तत्रोच्यते—'अर्थे श्रुत्यैकगम्ये हि श्रुतिमेवाद्रियामहे । मानान्तरावगम्ये तु तद्वशात्तद्व्यवस्थितिः ॥' ब्रह्मणो वा सर्वभूतकारणत्वम्, आकाशस्य वा वाय्वादिभूतकारणत्वं प्रति नागमादृते मानान्तरं प्रभवति । तत्र

आनन्दगिरीय—न्यायनिर्णयः ।

स्कूटस्थे ब्रह्मणि ऋगुपलक्षिताः सर्वे वेदा ज्ञापकाः सन्ति यस्मिन्नक्षरे विश्वेदेवा अधि निषेदुरधिष्ठिता स्वरूपत्वेन प्रविष्टा इत्यर्थः । भार्गवी भृगुणा प्राप्ता वारुणी वरुणेनोक्ता सैषा विद्याऽऽनन्दो ब्रह्मेति व्यजानादिति प्रकृता परस्मिन्ब्रह्मणि व्योम्नि स्थितेत्यर्थः । ओंकारस्य प्रतीकत्वेन वाचकत्वेन लक्षकत्वेन वा ब्रह्मत्वमुक्तमोमिति । कं सुखं तस्यार्थेन्द्रिययोगजत्वं वारयितुं खमिति । तस्य भूताकाशत्वं व्यासेद्धुं पुराणमित्युक्तम् । किंच तत्रैव प्रथमानुगुण्येनोत्तरं नीयते यत्र तन्नेतुं शक्यं यत्र त्वशक्यं तत्रोत्तरानुगुण्येनेतरन्नेयमित्याह—वाक्येति । तत्र दृष्टान्तोऽग्निरिति । आकाशश्रुतेर्गौणत्वे फलितमुपसंहरति—तस्मादिति ॥२२॥ ( ८ ) ॥ आकाशवाक्योक्तमनन्तरवाक्येऽतिदिशति—अत एवेति । तत्रोदाहरणमुद्गीथ इति । परोवरीयांसमुद्गीथमुपास्त इत्युक्तत्वात् । अथातः शौव उद्गीथ इति च वक्ष्यमाणत्वादुद्गीथाधिकारे प्रासङ्गिकं प्रस्तावध्यानमिति वक्तुमुद्गीथ इत्युक्तम् । कश्चिदुषस्तिश्चाक्रायणो नाम धनार्थं राज्ञो यज्ञं गत्वा ज्ञानवैभवं स्वस्य प्रकटयन्प्रस्तोतारमुवाच । हे प्रस्तोतर्या देवता प्रस्तावं भक्तिविशेषमन्वायत्ता तां चेदविद्वान्मम विदुषः संनिधौ प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति । स भीतः

---

१ आकाशं ब्रह्मेतीति पाठान्तरम् ।

इत्युपक्रम्य श्रूयते "कतमा सा देवतेति" "प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता" [ छा० १ । ११ । ४-५ ] इति ॥ तत्र संशयनिर्णयौ पूर्ववदेव द्रष्टव्यौ ॥ "प्राणबन्धनꣳ हि सोम्य मनः" [ छा० ६ । ८ । २ ] "प्राणस्य प्राणम्" [ बृ० ४ । ४ । १८ ] इति चैवमादौ ब्रह्मविषयः प्राणशब्दो दृश्यते ॥ वायुविकारे तु प्रसिद्धतरो लोकवेदयोः॥ अत इह प्राणशब्देन कतरस्योपादानं युक्तमिति भवति संशयः-किं पुनरत्र युक्तं वायुविकारस्य पञ्चवृत्तेः प्राणस्योपादानं युक्तम् ॥ तत्र हि प्रसिद्धतरः प्राणशब्द इत्यवोचाम ॥ ननु पूर्ववदिहापि तल्लिंगाद्ब्रह्मण एव ग्रहणं युक्तम् । इहापि हि वाक्यशेषे भूतानां संवेशनोद्गमनं पारमेश्वरं

रत्नप्रभा ।

प्रकरणे श्रूयते इत्यन्वयः ॥ कश्चिदृषिश्चाक्रायणः प्रस्तोतारमुवाच,हे प्रस्तोतः या देवता प्रस्तावं सामभक्तिमनुगता ध्यानार्थं,तां चेद्देवतामज्ञात्वा मम विदुषो निकटे प्रस्तोष्यसि मूर्धा ते पतिष्यतीति । ततो भीतः सन् पप्रच्छ, कतमा सा देवतेति । उत्तरम्-**प्राण इति** ॥ **प्राणम्** अभिलक्ष्य सम्यक् विशन्ति लीयन्ते तमभिलक्ष्य **उज्जिहते** । उत्पद्यन्त इत्यर्थः।अतिदेशत्वात् पूर्ववत् संशयादि द्रष्टव्यमित्युक्तं विवृणोति-**प्राणेति** ॥ मनउपाधिको जीवः प्राणेन ब्रह्मणा बध्यते सुषुप्तावेकीभवति, **प्राणस्य** वायोः **प्राणं** प्रेरकं तस्य सत्तास्फूर्तिप्रदमात्मानं ये विदुः, ते ब्रह्मविद इत्यर्थः ॥ पूर्वेण गतार्थत्वात् पृथक्सूत्रं व्यर्थमिति शङ्कते-**ननु पूर्ववदिति** ॥ अधिकाशङ्कानिरासार्थमतिदेशसूत्रमिति मत्वा शङ्कामाह-

भामती ।

पौर्वापर्यपर्यालोचनया यत्रार्थे समञ्जस आगमः स एवार्थस्तस्य गृह्यते, त्यज्यते चेतरः । इह तु संवेशनोद्गमने भूतानां प्राणं प्रत्युच्यमाने किं ब्रह्म प्रत्युच्येते आहो वायुविकारं प्रतीति विशये 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति' इत्यादिकायाः श्रुतेः सर्वभूतसारेन्द्रियसंवेशनोद्गमनप्रतिपादनद्वारा सर्वभूतसंवेशनोद्गमनप्रतिपादिकाया मानान्तरानुग्रहलब्धसामर्थ्याया बलात्संवेशनोद्गमने वायुविकारस्यैव प्राणस्य, न ब्रह्मणः । अपि चात्रोद्गीथप्रतिहारयोः सामभक्त्योर्ब्रह्मणोऽन्ये आदित्यश्चान्नं च देवते अभिहिते

आनन्दगिरीय-न्यायनिर्णयः ।

सम्पप्रच्छ कतमेत्यादिना, प्रतिवचनं **प्राण इति** । मुख्यप्राणं व्यावर्तयति-**सर्वाणीति** । प्राणमभिलक्ष्य लयकाले संविशन्ति जन्मकाले तमेवाभिलक्ष्योज्जिहत उद्गच्छन्ति सैषा परा देवता प्रस्तावं भक्तिविशेषमनुगतेत्यर्थः । अतिदेशकृतमर्थमाह-**तत्रेति** । आकाशशब्दस्योभयत्र प्रयुक्तेः संशयेऽपि प्राणशब्दस्य नैवमिति कुतः संशयादिस्तत्राऽऽह-**प्राणेति** । मनःशब्दलक्ष्यं तत्साक्षिचैतन्यं प्राणे परस्मिन्नैक्येन स्थितमित्यर्थः । ये प्राणस्य पञ्चवृत्तेर्वायुविकारस्य प्राणं सत्तास्फूर्तिदमात्मानं विदुस्ते ब्रह्म जानन्तीत्याह-**प्राणस्येति** । अमृतः प्राणो ब्रह्मैवेत्यादिसंग्रहार्थमादिपदम् । तथाऽपि कुतः संशयस्तत्राऽऽह-**वायुविति** । हेतुमुक्त्वा फलमाह-**अत इति** । इहेति प्रस्ताववाक्योक्तिः । अनन्तार्थपरोपक्रमोपसंहाराभ्यामाकाशस्य ब्रह्मत्वेऽप्यत्र ब्रह्मासाधारणधर्मोपक्रमाद्यदृष्टेर्न ब्रह्मतेति धिया विमृश्य पूर्वपक्षयति-**किमिति** । प्रस्तावश्रुतेः स्पष्टब्रह्मलिङ्गतया ब्रह्मणि प्रस्तावेऽध्यस्य ध्येये समन्वयोक्तेः संगतयः । पूर्वपक्षे प्राणदृष्ट्या प्रास्तावोपास्तिः सिद्धान्ते ब्रह्मदृष्ट्येति फलम् । वैदिकप्राणशब्दस्य तादृक्प्रयुक्तिसिद्धे ब्रह्मणि वाचकत्वमाशंक्याऽऽह-**तत्रेति** । तात्पर्यरहितलौकिकवैदिकप्रयोगत्यागात्तात्पर्यवदनेकलिङ्गात्पूर्वन्यायेन ब्रह्म ग्राह्यमिति शंकते-**नन्विति** । ज्यायस्त्वादि लिङ्गमत्र नास्तीत्याशंक्याऽऽह-**इहेति** । अन्यथासिद्धेर्न श्रुति-

१ प्रस्तावं साम्नो भक्तिविशेषमनुगतेत्यर्थः । २ ( भक्तिः ) भाग इत्यर्थः ।

कर्म प्रतीयते ॥ न मुख्येऽपि प्राणे भूतसंवेशनोद्गमनस्य दर्शनात् ॥ एवं ह्याम्नायते—"यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः स यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्ते" [श० प० ब्रा० १० । ३ । ३ । ६ ] इति ॥ प्रत्यक्षश्चैतत्—स्वापकाले प्राणवृत्तावपरिलुप्यमानायामिन्द्रियवृत्तयः परिलुप्यन्ते । प्रबोधकाले च पुनः प्रादुर्भवन्तीतीन्द्रियसारत्वाच्च भूतानामविरुद्धो मुख्ये प्राणेऽपि भूतसंवेशनोद्गमनवादी वाक्यशेषः ॥ अपि चादित्योऽन्नश्चोद्गीथप्रतिहारयोर्देवते प्रस्तावदेवतायाः प्राणस्यानन्तरं निर्दिश्येते ॥ न च तयोर्ब्रह्मत्वमस्ति । तत्सामान्याच्च प्राणस्यापि न ब्रह्मत्वमित्येवं प्राप्ते—सूत्रकार आह—"अत

रत्नप्रभा ।

न मुख्येऽपीति ॥ तर्हि तदा चक्षुः अपि एति इति एवम्प्रकारेण सर्वत्र सम्बन्धः । नन्वत्रेन्द्रियाणां प्राणे लयोदयौ श्रूयेते तावता महाभूतलयादिप्रतिपादकवाक्यशेषोपपत्तिः कथमित्यत आह—इन्द्रियसारत्वादिति ॥ "इत्यस्य ह्येष रसः" [ बृ० २ । ३ । ९ ] इति श्रुतेरिन्द्रियाणि लिङ्गात्मरूपाणि अपञ्चीकृतभूतानां साराणि तेषां लयाद्युक्त्या भूतानामपि प्राणे लयादिसिद्धेः वाक्यशेषोपपत्तिरित्यर्थः । अब्रह्मसहपाठाच्च प्राणो न ब्रह्मेत्याह—अपि चेति ॥ उद्गातृप्रतिहर्तृभ्यामुद्गीथे प्रतिहारे च का देवतेति पृष्टेन चाक्रायणेनादित्योऽन्नं च निर्दिश्येते, "आदित्य इति होवाच" "अन्नमिति होवाच" इति श्रुतावि-

भामती ।

कार्यकारणसंघातरूपे, तत्साहचर्यात्प्राणोऽपि कार्यकारणसंघातरूप एव देवता भवितुमर्हति । निरस्तोऽप्ययमर्थ ईक्षत्यधिकरणे, पूर्वोक्तपूर्वपक्षहेतूपोद्वलनाय पुनरुपन्यस्तः । तस्माद्वायुविकार एवात्र प्राणशब्दार्थ इति प्राप्तम् । एवं प्राप्तेऽभिधीयते—'पुंवाक्यस्य बलीयस्त्वं मानान्तरसमागमात् । अपौरुषेये वाक्ये तत्संगतिः किं करिष्यति ॥' नो खलु स्वतःसिद्धप्रमाणभावमपौरुषेयं वचः स्वविषयज्ञानोत्पादे वा तद्व्यवहारे वा मानान्तरमपेक्षते, तस्यापौरुषेयस्य निरस्तसमस्तदोषाशङ्कस्य स्वत एव निश्चायकत्वात्, निश्चयपूर्वकत्वाद्व्यवहारप्रवृत्तेः । तस्मादसंवादिनो वा चक्षुष इव रूपे त्वगिन्द्रियसंवादिनो वा तस्यैव द्रव्ये नादार्ढ्यं दार्ढ्यं वा । तेन स्तामिन्द्रियमात्रसंवेशनोद्गमने वायुविकारे प्राणे । सर्वभूतसंवेशनोद्गमने तु न ततो वाक्यात्प्रतीयेते । प्रतीतौ वा तत्रापि प्राणो ब्रह्मैव भवेन्न वायुविकारः । 'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' इत्यत्र वाक्ये यथा प्राणशब्दो ब्रह्मवचनः । न चास्मिन्वायु-

आनन्दगिरीय—न्यायनिर्णयः ।

बाधकतेत्याह—नेति । तदेवं वैदिकं दर्शनमाह—एवं हीति । तर्हि तस्यामवस्थायामिति यावत् । वागनुक्तकर्मेन्द्रियोपलक्षणम् । चक्षुःश्रोत्रे तादृग्बुद्धीन्द्रियाणाम् । बुद्धिरपि मनसा लक्ष्यते । प्राणस्यापि स्वापे बुद्ध्यादिवल्लयान्न लयस्थानतेत्याशंक्याऽऽह—प्रत्यक्षं चेति । ननु भूतानामुत्पत्त्यादिवाक्यशेषे श्रुतं भूतशब्दश्च प्राणिसमूहस्य महाभूतानां च वाचको नेन्द्रियमात्रस्य तन्न प्राणे वाक्यशेषः सिद्धस्तत्राऽऽह—इन्द्रियेति । भूतेष्विन्द्रियाणि सूक्ष्मत्वाद्धोक्तृसामीप्याच्च साराण्यतस्तेषां लयोदयोक्त्येतरेषामपि तत्सिद्धेः शेषघटनेत्यर्थः । अब्रह्मसाहचर्याच्च प्राणो न ब्रह्मेत्याह—अपि चेति । उद्गात्रा कतमा सा देवतोद्गीथमन्वायत्तेति पृष्टश्चाक्रायणः प्रत्युवाचाऽऽदित्य इति । प्रतिहर्त्रा च कतमा सा देवता प्रतिहारमन्वायत्तेति पृष्टोऽन्नमित्युवाचेत्यादिना भक्तिदेवते कार्यकरणवत्यावादित्यान्ने उक्ते । तयोरब्रह्मणोः संनिधानात्प्राणस्यापि भक्तिदेवतात्वादब्रह्मतेत्यर्थः । संनिध्यनुगृहीतप्रथमश्रुतप्राणश्रुत्या वायुविकारसिद्धौ तद्दृष्ट्या प्रस्तावोपास्तिरित्युपसंहर्तुमितिशब्दः । पूर्वपक्षमनूद्य सिद्धान्तयति—एवमिति । ज्यायस्त्वादिवन्नात्र लिङ्गं

१ अधिकरणान्तरारम्भबीजं तु—"अर्थे श्रुत्येकगम्ये हि श्रुतिमेवाद्रियामहे । मानान्तरावगम्ये तु तद्वशा ब्रह्मवस्थितिः ॥ १ ॥" इति ।

**एव प्राणः" [ व्या० सू० १ । १ । २३ ] इति ॥ तल्लिंगादिति पूर्वसूत्रे निर्दिष्टम् ॥ अत एव तल्लिंगात् प्राणशब्दमपि परं ब्रह्म भवितुमर्हति ॥ प्राणस्यापि हि ब्रह्मलिंगसम्बन्धः श्रूयते-"सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति, प्राणमभ्युज्जिहते" [ छा० १ । ११ । ५ ] इति प्राणनिमित्तौ सर्वेषां भूतानामुत्पत्तिप्रलयावुच्यमानौ प्राणस्य ब्रह्मतां गमयतः ॥ ननूक्तं मुख्यप्राणपरिग्रहेऽपि संवेशनोद्गमनदर्शनमविरुद्धं स्वापप्रबोधयोर्दर्शनादिति ॥ अत्रोच्यते ॥ स्वापप्रबोधयोरिन्द्रियाणामेव केवलानां प्राणाश्रयं संवेशनोद्गमनं दृश्यते ॥ न सर्वेषां भूतानाम् ॥ इह तु सेन्द्रियाणां सशरीराणाञ्च जीवाविष्टानां भूतानाम् ॥ "सर्वाणि ह वा इमानि भूतानि" [ छा० १ । ११ । ५ ] इति श्रुतेः ॥ यदाऽपि भूतश्रुतिः महाभूतविषया परिगृह्यते, तदापि ब्रह्मलिंगत्वमविरुद्धम् ॥ ननु सहापि विषयैरिन्द्रियाणां स्वापप्रबोधयोः प्राणेऽप्ययं प्राणाच्च प्रभवं शृणुमः-"यदा सुप्तः स्वप्नं न कश्चन पश्यति, अथास्मिन्प्राण एवैकधा भवति, तदैनं वाक् सर्वैर्नामभिः सहाप्येति" [ कौ० ३ । ३ ]**

---

रत्नप्रभा ।

त्यर्थः । **सामान्यं** सन्निधानम् । सन्निध्यनुगृहीतप्रथमश्रुतप्राणश्रुत्या मुख्यप्राणनिर्णये तदृष्ट्या प्रस्तावोपास्तिरिति पूर्वपक्षफलम् । **सिद्धान्ते** ब्रह्मदृष्टिरूपोपास्तिः । अस्याधिकरणस्यातिदेशत्वमेव पूर्वेण सङ्गतिरिति विभागः । भवन्तीति भूतानीति व्युत्पत्त्या यत्किञ्चिद्भवनधर्मकं कार्यमात्रं, तस्य लयोदयौ वायुविकारे प्राणेन युक्ताविति उक्त्वा भूतशब्दस्य रूढ्यर्थग्रहेऽपि लयादेर्ब्रह्मनिर्णायकत्वमित्याह-**यदापीति** ॥ भौतिकप्राणस्य भूतयोनित्वायोगादित्यर्थः । तस्य तद्योनित्वं श्रुत्या शंकते-**नन्विति** ॥ **अथ यदा** सुषुप्तौ जीवः **प्राणे** ब्रह्मण्येकीभवति **तदा एनं** प्राणं सविषया वागादयोऽपि यन्तीत्यर्थः । अत्र जीवाभिन्नत्वे

भामती ।

विकारे सर्वेषां भूतानां संवेशनोद्गमने मानान्तरेण दृश्येते । न च मानान्तरसिद्धसंवादेन्द्रियसंवेशनोद्गमनवाक्यदार्ढ्यात्सर्वभूतसंवेशनोद्गमनवाक्यं कथंचिदिन्द्रियविषयतया व्याख्यानमर्हति, स्वतःसिद्धप्रमाणभावस्य स्वभावदृढस्य मानान्तरानुपयोगात् । न चास्य तेनैकवाक्यता । एकवाक्यतायां च तदपि ब्रह्मपरमेव स्यादित्युक्तम् । इन्द्रियसंवेशनोद्गमनं त्वव्युत्पात्यानुवादेनापि घटिष्यते, एकं वृणीते द्वौ वृणीते इतिवत् । न तु सर्वशब्दार्थः संकोचमर्हति । तस्मात्प्रस्तावभक्तिं प्राणशब्दाभिधेयब्रह्मदृष्ट्योपासीत, न

आनन्दगिरीय-न्यायनिर्णयः ।

भातीत्याशंक्याऽऽह-**प्राणस्येति** । ब्रह्मलिङ्गं स्फोरयितुं श्रुतेरर्थमाह-**प्राणेति** । वाक्यशेषस्यान्यथासिद्धिं स्मारयति-**नन्विति** । स्वापाद्युक्तेः संवर्गविद्याधिकारात्प्रकृतोक्तेश्चोद्गीथसंबन्धान्नानयोरेकवाक्यतेत्याह-**अत्रेति** । किंच, वाक्यशेषस्थो भूतशब्दो योगाद्विकारजातं ब्रूयाद्रूढ्या वा महाभूतानि । आद्ये प्रकृतवाक्यस्य न स्वापादिवाक्येन तुल्यार्थतेत्याह-**स्वापेति** । प्रकृतश्रुतेर्विकारमात्रलयाद्यर्थत्वे सर्वशब्दश्रुतिमनुकूलयति-**सर्वाणीति** । तथा च प्राणार्थत्वेऽपि स्वापोक्तेर्नास्यास्तादर्थ्यम् । न हि विकारमात्रं संवेशनादि परस्मादन्यत्र लभ्यमित्यर्थः । कल्पान्तरं प्रत्याह-**यदेति** । प्राणस्य भौतिकत्वान्न महाभूतयोनितेत्यर्थः । भूतत्वेन विकारजातग्रहेऽपि न मुख्यप्राणप्रत्युक्तिरिति शंकते-**नन्विति** । प्राणशब्दलक्ष्ये चिदात्मनि जीवैक्यापत्तौ भेदकवागाद्युपाधीनां जडं प्राणमुद्दिश्य लयः स्यादित्याह-**तदेति** । जीवैनैकतया प्राप्यत्वलि-

इति ॥ अत्र[1] तत्रापि तल्लिङ्गात्प्राणशब्दं ब्रह्मैव ॥ यत्पुनरन्नादित्यसन्निधानात्प्राणस्याब्रह्मत्वमिति ॥ तदयुक्तम् ॥ वाक्यशेषबलेन प्राणशब्दस्य ब्रह्मविषयतायां प्रतीयमानायां सन्निधानस्याकिञ्चित्करत्वात् ॥ यत्पुनः प्राणशब्दस्य पञ्चवृत्तौ प्रसिद्धतरत्वं, तदाकाशशब्दस्येव[2] प्रतिविधेयम्[3] ॥ तस्मात्सिद्धं प्रस्तावदेवतायाः प्राणस्य ब्रह्मत्वम् ॥ अत्र केचिदुदाहरन्ति—"प्राणस्य प्राणं प्राणबन्धनं हि सोम्य मनः" इति च ॥ तदप्ययुक्तम् । शब्दभेदात्, प्रकरणाच्च, संशयानुपपत्तेः ॥ यथा—पितुः पितेति प्रयोगेऽन्यः षष्ठीनिर्दिष्टात्प्रथमानिर्दिष्टः पितुः पितेति गम्यते, तद्वत्प्राणस्य प्राणमिति शब्दभेदात्प्रसिद्धात्प्राणादन्यः प्राणस्य प्राणमिति निश्चीयते ॥ न हि स एव तस्येति भेदनिर्देशार्हो भवति ॥ यस्य च प्रकरणे यो निर्दिश्यते नामान्तरेणापि, स एव तत्र प्रकरणे निर्दिष्ट इति गम्यते ॥ यथा—ज्योतिष्टोमाधिकारे—"वसन्तेवसन्ते ज्योतिषा यजेत" इत्यत्र ज्योतिश्शब्दो ज्योतिष्टोमविषयो भवति । तथा—परस्य ब्रह्मणः प्रकरणे "प्राणबन्धनं हि सोम्य मनः" [ छा० ६ । ८ । २ ] इति श्रुतः प्राणशब्दो वायुविकारमात्रं कथमवगमयेद् । अतः संशयाविषयत्वान्नैतदुदाहरणं युक्तम् ॥ प्रस्तावदेवतायान्तु प्राणे संशयपूर्वपक्षनिर्णया उपपादिताः ॥२३ ॥ इति प्राणाधिकरणम् ॥ ( ९ ) ॥

---

रत्नप्रभा ।

सर्वलयाधारत्वलिङ्गान्न मुख्यः प्राण इत्याह—**तत्रापीति**॥वाक्यान्तरसन्निध्यपेक्षया स्ववाक्यगतं लिङ्गं बलीय इत्याह—**तदयुक्तमिति** ॥ एकवाक्यत्वं वाक्यशेषः।तस्य बलं तद्गतं लिङ्गं तेनेत्यर्थः।प्राणमेवेत्यवधारणेन सर्वभूतप्रकृतित्वलिङ्गेन च प्राणपदेन तत्कारणं ब्रह्म लक्ष्यमित्याह—**तदाकाशशब्दस्येवेति**—वृत्तिकृतामुदाहरणं संशयाभावेनायुक्तमित्याह—**अत्रेत्यादिना**॥शब्दभेदमुक्त्वा प्रकरणं प्रपञ्चयति—**यस्य चेति** ॥२३॥ (९) ॥

भामती ।

वायुविकारदृष्टयेति सिद्धम् । तथा चोपासकस्य प्राणप्राप्तिः कर्मसमृद्धिर्वा फलं भवतीति ॥ **वाक्यशेषबलेनेति** । वाक्यात्संनिधानं दुर्बलमित्यर्थः । उदाहरणान्तरं तु निगदव्याख्यानेन भाष्येण दूषितम्॥२३॥(९)॥

आनन्दगिरीय—न्यायनिर्णयः ।

ज्ञादशेषविकारलयस्थानत्वलिङ्गाच्च न मुख्यप्राणार्थत्वं तस्यापीत्याह—**तत्रेति** । संनिधेरधिकाशंकामुक्तामनुभाषते—**यदिति** । लिङ्गेन बाध्यः संनिधिरित्याह—**तदिति** । एकवाक्यत्वं वाक्यशेषस्तद्बलं तद्गतं लिङ्गं तेन ब्रह्मता प्राणस्य स्थिता स्ववाक्यस्थलिङ्गस्य वाक्यान्तरस्थसंनिधेर्बलीयस्त्वादतो नास्याब्रह्मतेत्यर्थः । संनिधेरब्रह्मताभावेऽपि प्राणस्य श्रुतेरब्रह्मतेत्याशंक्याऽऽह—**यदिति** । जगत्प्रकृतित्वावधारणोपबृंहितं प्रतिपिपादयिषितं देवताशब्दितं चेतनत्वं प्राणश्रुतिं बाधित्वा ब्रह्म लक्षयतीत्याह—**तदिति** । प्राणशब्देन कारणब्रह्मलक्षणात्तद्दृष्ट्या प्रस्तावोपास्तिमुपसंहरति—**तस्मादिति** । वृत्तिकृतामुदाहरणमाह—**अत्रेति** । सर्वत्र संदिग्धं वाक्यमुदाहृत्य निर्णीयत इदं त्वसंदेहान्नैवमिति दूषयति—**तदिति** । शब्दभेदं विवृणोति—**यथेति** । प्राणस्य पञ्चधावृत्तिहेतुस्तत्साक्षी तस्य प्राण इत्युच्यते । राहोः शिर इतिवद्व्यपदेशमाशंक्य घटो घटस्येत्यदृष्टेर्नैवमित्याह—**न हीति** । प्रकरणं प्रपञ्चयति—**यस्येति** । तदेव दृष्टान्तेन स्पष्टयति—**यथेति**। प्राणः परमात्मा बन्धनमाश्रयः स्वरूपं यस्येति विग्रहः । वाक्ययोर्निश्चितार्थत्वे फलितमाह—**अत इति** । त्वदुदाहरणेऽपि वाक्यशेषविरोधात्तुल्यमसंदिग्धत्वमित्याशंक्याऽऽह—**प्रस्तावेति** ॥ २३ ॥ ( ९ ) ॥

---

१ अत्र वाक्ये पूर्वोक्तवाक्येपीत्यर्थः । २ प्राणशब्दस्येति पाठान्तरम् । ३ समाधेयम् ।

## ज्योतिश्चरणाभिधानात् ॥ २४ ॥ (१०) ॥

**इदमामनन्ति "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः"[छा०३।१३।७] इति तत्र संशयः-किमिह ज्योतिःशब्देनादित्यादिकं ज्योतिरभिधीयते, किंवा पर आत्मेति ॥ अर्थान्तरविषयस्यापि शब्दस्य तल्लिङ्गाद्ब्रह्मविषयत्वमुक्तम् । इह तल्लिङ्गमेवास्ति नास्तीति विचार्यते ॥ किं तावत्प्राप्तम् । आदित्यादिकमेव ज्योतिःशब्देन परिगृह्यते इति ॥**

रत्नप्रभा ।

**ज्योतिश्चरणाभिधानात्** । छान्दोग्यमेवोदाहरति-**इदमिति** ॥ गायत्र्युपाधिकब्रह्मोपास्त्यानन्तर्यार्थोऽथ शब्दः । अतो **दिवो** द्युलोकात् **परः** परस्ताद् **यत्** ज्योतिर्दीप्यते तद्यदिदमिति जाठराग्नावध्यस्यते । कुत्र दीप्यते, तत्राह-**विश्वत इति** ॥ विश्वस्मात् प्राणिवर्गादुपरि सर्वस्मात् भूरादिलोकादुपरि ये लोकास्तेषूत्तमेषु न विद्यन्ते उत्तमा येभ्य इत्यनुत्तमेषु सर्वसंसारमण्डलातीतं परं ज्योतिरिदमेव यद्देहस्थमित्यर्थः । अस्य पूर्वेणागतार्थत्वं वदन् प्रत्युदाहरणसङ्गतिमाह-**अर्थान्तरेति** ॥ अत्र स्ववाक्ये स्पष्टब्रह्मलिङ्गाभावेऽपि "पादोस्य" इति पूर्ववाक्ये भूतपादत्वं लिङ्गमस्तीति **पादसङ्गतिः** । पूर्वोत्तरपक्षयोर्जडब्रह्मज्योतिषोरुपास्तिः फलमिति भेदः । नन्वज्ञानतमोविरोधित्वाद् ब्रह्मापि ज्योतिःपदशक्यतया प्रसिद्धमस्ति नेत्याह-

भामती ।

**ज्योतिश्चरणाभिधानात्** । इदमामनन्ति-'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः' इति । यज्ज्योतिरतो दिवो द्युलोकात्परं दीप्यते प्रकाशते विश्वतःपृष्ठेषु विश्वेषामुपरि । असंकुचद्वृत्तिरयं विश्वशब्दोऽनवयवत्वेन संसारमण्डलं ब्रूत इति दर्शयितुमाह-**सर्वतः पृष्ठेषूत्तमेषु** । न चेदमुत्तममात्रम् अपि तु सर्वोत्तममित्याह-**अनुत्तमेषु** । नास्त्येभ्योऽन्य उत्तम इत्यर्थः । 'इदं वात्र तद्यदिदमस्मिन्पुरुषेऽन्तर्ज्योतिः' त्वग्राह्येण शारीरेणोष्मणा, श्रोत्रग्राह्येण च पिहितकर्णेन पुंसा घोषेण लिङ्गेनानुमीयते । तत्र शारीरस्योष्मणस्त्वचा दर्शनं दृष्टिः, घोषस्य च श्रवणं श्रुतिः, तयोश्च दृष्टिश्रुती ज्योतिष एव, तल्लिङ्गेन तदनुमानादिति । अत्र संशयः-किं ज्योतिःशब्दः तेज उत ब्रह्मेति । किं तावत्प्राप्तं, तेज इति । कुतः, गौणमुख्यग्रहणविषये मुख्यग्रहणस्य 'औत्सर्गिकत्वाद्वाक्यस्थतेजोलिङ्गोपलम्भनात् । वाक्यान्तरेणानियमात्तदर्थाप्रतिसं-

आनन्दगिरीय-न्यायनिर्णयः ।

आकाशवायुवाक्ययोर्ब्रह्मार्थत्वोक्त्या तेजोवाक्यस्यापि तदर्थत्वमाह-**ज्योतिरिति** । छान्दोग्यवाक्यं पठति-**इदमिति** । गायत्र्युपाधिब्रह्मोपास्त्यनन्तरमुपास्त्यन्तरोक्त्यर्थोऽथशब्दः । अतो दिवो द्युलोकात्परः परस्ताद्यज्ज्योतिर्दीप्यते तदिदमिति जाठरे ज्योतिष्यध्यस्यते । कुत्र तद्दीप्यते तत्राऽऽह-**लोकेष्विति** । तेऽपि क्व सन्ति तत्राऽऽह-**विश्वत इति** । विश्वस्मात्प्राणिवर्गादुपरिष्टादित्यर्थः । तेषां प्रसिद्धलोकप्रवेशमाशंक्याऽऽह-**सर्वत इति** । सर्वस्माद्भूरादिलोकादुपरीत्यर्थः । उत्तमा न विद्यन्ते येभ्यस्तेऽनुत्तमास्तेषु । तथापि कथं तेषामुत्कर्षस्तत्राऽऽह-**उत्तमेष्विति** । इदंशब्दार्थं स्फुटयति-**यदिति** । ज्योतिःशब्दस्य लोके तेजसि रूढेः श्रुतौ चाऽऽत्मनि निरूढेर्विचारबीजं संशयमाह-**तत्रेति** । आकाशादिशब्दस्यार्थान्तरे रूढस्यापि ब्रह्मार्थत्वसिद्धेस्तेनैतद्गतमित्यसंशयान्न पृथगारम्यमित्याशंक्याऽऽह-**अर्थान्तरेति** । स्ववाक्ये ज्योतिषो ब्रह्मलिङ्गभावादुक्तन्यायानवतारादगतार्थतेत्यर्थः । वाक्यशेषस्थब्रह्मलिङ्गात्प्राणादिशब्दस्य गौणतोक्ता प्रकृते ब्रह्मलिङ्गादृष्टेस्तेजोलिङ्गस्यैव दृष्टेरौत्सर्गिकमुख्यसंप्रत्ययस्य नापवाद इत्याकांक्षाद्वारा पूर्वपक्षयति-**किं तावदिति** । कौक्षेये ज्योतिष्यारोप्योपास्ये परस्मिन्ब्रह्मण्युक्तश्रुतेः समन्वयोक्तेः श्रुत्यादि-

**कुतः ॥ प्रसिद्धेः—तमो ज्योतिरिति हीमौ शब्दौ परस्परप्रतिद्वन्द्विविषयौ प्रसिद्धौ ॥ चक्षुर्वृत्तेर्निरोधकं शार्वरादिकं तम उच्यते। तस्या एवानुग्राहकमादित्यादिकं ज्योतिः, तथा दीप्यते इतीयमपि श्रुतिरादित्यादिविषया प्रसिद्धा ॥ न हि रूपादिहीनं ब्रह्म दीप्यत इति मुख्यां श्रुतिमर्हति ॥ द्युमर्यादत्वश्रुतेश्च—न हि चराचरबीजस्य ब्रह्मणः सर्वात्मकस्य द्यौर्मर्यादा युक्ता ॥ कार्यस्य तु ज्योतिषः परिच्छिन्नस्य द्यौर्मर्यादा स्यात्। परो दिवो ज्योतिरिति च ब्राह्मणम् ॥**

रत्नप्रभा।

चक्षुरिति ॥ शर्वर्यां रात्रौ भवं शार्वरम्। नीलमिति यावत्। अनेनावरकत्वाद्रूपवत्त्वाच्च कुड्यवद्भावरूपं तम इत्यर्थादुक्तं भवति। ज्योतिःश्रुतेरनुग्राहकलिङ्गान्याह—तथेत्यादिना ॥ भास्वररूपात्मिका दीप्तिस्तेजस एव लिङ्गमित्याह—न हीति॥मास्तु मर्यादेत्याशङ्क्य श्रुतत्वान्मैवमित्याह—परो दिव इति। मर्यादां ब्रूत इति

भामती।

धितः॥' बलवद्बाधकोपनिपातेन खल्वाकाशप्राणशब्दौ मुख्यार्थत्वात्प्रच्याव्यान्यत्र प्रतिष्ठापितौ। तदिह ज्योतिष्पदस्य मुख्यतेजोवचनत्वे बाधकस्तावत्स्ववाक्यशेषो नास्ति। प्रत्युत तेजोलिङ्गमेव 'दीप्यते' इति। कौक्षेयज्योतिःसारूप्यं च चक्षुष्यो रूपवान् श्रुतो विश्रुतो भवतीत्यल्पफलत्वं च स्ववाक्ये श्रूयते। न जातु ज्वलनापरनामा दीप्तिर्विना तेजो ब्रह्मणि संभवति। न कौक्षेयज्योतिःसारूप्यमृते बाह्यात्तेजसो ब्रह्मण्यस्ति। न चौष्ण्यघोषलिङ्गदर्शनश्रवणमुदर्यात्तेजसोऽन्यत्र ब्रह्मण्युपपद्यते। न च महाफलं ब्रह्मोपासनमणीयसे फलाय कल्पते। उदर्ये तु तेजस्यध्यस्य बाह्यं तेज उपासनमेतत् फलानुरूपं युज्यते। तदेतत्तेजोलिङ्गम्। एतदुपोद्बलनाय च निरस्तमपि मर्यादाधारवत्त्वमुपन्यस्तम्, इह तन्निरासकारणाभावात्। न च मर्यादावत्त्वं तेजोराशेर्न संभवति, तस्य सौर्यादेः सावयवत्वेन तदेकदेशमर्यादासंभवात् तस्य चोपास्यत्वेन विधानात्, ब्रह्मणस्त्वनवयवस्यावयवोपासनानुपपत्तेः, अवयवकल्पनायाश्च सत्यां गतावनवकल्पनात्। न च 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति ब्रह्मप्रतिपादकं वाक्यान्तरं, 'यदतः परो दिवो ज्योतिः' इति ज्योतिःशब्दं ब्रह्मणि व्यवस्थापयतीति युक्तम्। न हि संनिधानमात्राद्वाक्यान्तरेण वाक्यान्तरगता श्रुतिः शक्या मुख्यार्थाच्च्यावयितुम्। न च वाक्यान्तरेऽधिकरणत्वेन द्यौः श्रुता दिव इति मर्यादाश्रुतौ शक्या प्रत्यभिज्ञातुम्। अपि च वाक्यान्तरस्यापि ब्रह्मार्थत्वं प्रसाध्यमेव नाद्यापि सिद्ध्यति, तत्कथं तेन नियन्तुं ब्रह्मपरतया 'यदतः परः' इति वाक्यं शक्यम्। तस्मात्तेज एव ज्योतिर्न ब्रह्मेति

आनन्दगिरीय—न्यायनिर्णयः।

संगतयः। स्ववाक्ये स्पष्टब्रह्मलिङ्गाभावेऽपि ब्रह्मप्रत्यभिज्ञापकलिङ्गस्यैव तथात्वात्पादसंगतिः। फलं पूर्वपक्षे कौक्षेये ज्योतिष्यादित्यादिदृष्टयोपास्तिः सिद्धान्ते ब्रह्मदृष्टयेति। ज्योतिःशब्दस्य प्रकाशवाचित्वाच्चित्प्रकाशं हित्वा किमिति लौकिकप्रकाशार्थतेति शङ्कते—कुत इति। तमोविरोधिनि ज्योतिःशब्दस्य रूढेस्तेजसस्तथात्वात्तदेवात्र ज्योतिरित्याह—प्रसिद्धेरिति। तामेव स्फोरयति—तम इति। अज्ञानतमोविरोधि ब्रह्मापि तर्हि ज्योतिरिति तत्राऽऽह—चक्षुरिति। अर्थावरकत्वेन निरोधकत्वोक्त्या भावत्वमपि द्योतितम्। रूपित्वेनापि तद्वक्तुं विशिनष्टि—शार्वरादिकमिति। एवमपि कुतो ज्योतिर्निश्चितमित्याशङ्क्य प्रतिपक्षनिर्णयादित्याह—तस्या इति। ज्योतिःश्रुत्या तेजो ज्योतिरित्युक्त्वा तत्रैव लिङ्गमाह—तथेति। ब्रह्मण्यपि युक्ता दीप्तिरित्यन्यथासिद्धिं वारयति—न हीति। रूपादिमतः सावयवस्यैव दीप्तियोगादित्यर्थः। कार्ये ज्योतिषि लिङ्गान्तरमाह—द्युमर्यादत्वेति। अन्यथासिद्धिं निरस्यति—न हीति। असिद्धिं प्रत्याह—कार्यस्येति। ज्योतिषो द्युमर्यादत्वश्रुतिरेव कीदृशी तत्राऽऽह—पर इति। ब्रह्मवत्कार्यस्यापि मर्यादा-

१ समाधत्ते इत्यर्थः।

**ननु कार्यस्यापि ज्योतिषः सर्वत्र गम्यमानत्वाद् द्युमर्यादावत्त्वमसमञ्जसम् ॥ अस्तु तर्ह्यत्रिवृत्कृतं तेजः प्रथमजम् ॥ न ॥ अत्रिवृत्कृतस्य तेजसः प्रयोजनाभावादिति ॥ इदमेव प्रयोजनं यदुपास्यत्वमिति चेत् ॥ न ॥ प्रयोजनान्तरप्रयुक्तस्यैवादित्यादेरुपास्यत्वदर्शनात् । "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" [ छा० ६ । ३ । ३ ] इति चाविशेषश्रुतेः ॥ न चात्रिवृत्कृतस्यापि तेजसो द्युमर्यादत्वं प्रसिद्धम्॥ अस्तु तर्हि त्रिवृत्कृतमेव तत्तेजो ज्योतिश्शब्दम् ॥ ननूक्तमर्वागपि दिवोऽवगम्यतेऽग्न्यादिकं ज्योतिरिति ॥ नैष दोषः सर्वत्रापि गम्यमानस्य ज्योतिषः परो दिव इति उपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते ॥**

रत्नप्रभा ।

शेषः । ब्रह्मवत् कार्यस्यापि मर्यादायोगान्निरर्थकं ब्राह्मणमिति कश्चिदाक्षिपति—**नन्विति** ॥ एकदेशी ब्रूते—**अस्त्विति** ॥ स्वर्गादौ जातं किञ्चिदतीन्द्रियं तेजो दिवः परस्तादस्ति श्रुतिप्रामाण्यादित्यर्थः । अध्ययनविध्युपात्तश्रुतेर्निष्फलं वस्तु नार्थ इत्याक्षेप्ता ब्रूते—**नेति** ॥ ध्यानं फलमित्याशंक्य निष्फलस्य क्वापि ध्यानं नास्तीत्याह—**इदमेवेत्यादिना** ॥ प्रयोजनान्तरं तमोनाशादिकम् अत्रिवृत्कृतं तेजोऽङ्गीकृत्याफलत्वमुक्त्वा तदेव नास्तीत्याह—**तासामिति** ॥ तेजोऽबन्नानां देवतानामेकैकान् द्विधा विभज्य पुनश्चैकैकं भागं द्वेधा कृत्वा स्वभागादितरभागयोर्निक्षिप्य तन्त्रिगुणरज्जुवत्त्रिवृतं करवाणीत्यविशेषोक्तेर्नास्त्यत्रिवृत्कृतं किञ्चिदित्यर्थः ॥ किञ्चात्र "यदतः परः" इति यच्छब्देनान्यतः प्रसिद्धं द्युमर्यादत्वं ध्यानायानूद्यते । न चात्रिवृत्कृतस्य तस्य तत् क्वचित् प्रसिद्धमित्याह—**न चेति** ॥ एकदेशिमते निरस्ते साक्षात् पूर्वपक्षी ब्रूते—**अस्तु तर्हीति** ॥ प्रदेशविशेषः दिवः परस्ताद्देदीप्यमानः सूर्यादितेजोऽवयवविशेषः तस्य परिग्रह उपासनार्थो न विरुध्यत इत्यन्वयः । स एव कौक्षेये ज्योतिषि उपास्यते । तस्यापि तेजस्त्वादिति भावः ।

भामती ।

प्राप्तम् । तेजःकथनप्रस्तावे तमःकथनं प्रतिपक्षोपन्यासेन प्रतिपक्षान्तरे दृढा प्रतीतिर्भवतीत्येतदर्थम् ॥ **चक्षुर्वृत्तेर्निरोधकमिति** । अर्थावरकत्वेन । आक्षेप्ताह—**ननु कार्यस्यापीति** । समाधातैकदेशी ब्रूते—**अस्तु तर्हीति** । यत्तेजोऽबन्नाभ्यामसंपृक्तं तदत्रिवृत्कृतमुच्यते । आक्षेप्ता दूषयति—**नेति** । न हि तत्क्वचिदप्युपयुज्यते, सर्वास्वर्थक्रियासु त्रिवृत्कृतस्यैवोपयोगादित्यर्थः । एकदेशिनः शंकामाह—**इदमेवेति** । आक्षेप्ता निराकरोति—**न प्रयोजनान्तरेति** । 'एकैकां त्रिवृतं करवाणि' इति तेजःप्रभृत्युपासनामात्रविषया श्रुतिर्न संकोचयितुं युक्तेत्यर्थः । एवमेकदेशिनि दूषिते परमसमाधाता पूर्वपक्षी ब्रूते—**अस्तु तर्हि त्रिवृत्कृतमेवेति** । भामिनी युक्ता । यद्यप्याधारबहुत्वश्रुतिर्ब्रह्मण्यपि कल्पितोपाधिनिबन्धना कथंचिदुपप-

आनन्दगिरीय—न्यायनिर्णयः ।

योगादनर्थकं ब्राह्मणमित्याक्षिपति—**नन्विति** । चोदकैकदेशी परिहरति—**अस्त्विति** । त्रिवृत्कृतं तेजो दिवोऽर्वागपि गम्यते तथाऽपीतरत्ततः परस्ताद्भविष्यति वेदस्यादुष्टत्वेनाऽऽनर्थक्यायोगादित्यर्थः । त्रिवृत्कृतस्यैवार्थक्रियावत्त्वादफलेऽन्यस्मिन्न वाक्यप्रामाण्यमित्याक्षेप्ता ब्रूते—**नेति** । पूर्ववादिदेशीयः शङ्कते—**इदमेवेति** । निष्फलस्योपास्यताऽपि नेत्याक्षेप्ताऽऽह—**नेति** । अत्रिवृत्कृतं तेजोऽङ्गीकृत्याफलत्वमुक्त्वा तदेव नेत्याह—**तासामिति** । देवतानां तेजोबन्नानामेकैकां देवतां द्विधाद्विधा विभज्य पुनरेकैकं भागं तथा कृत्वा तदितरयोर्निक्षिप्य त्रिगुणरज्जुवत्त्रिवृतं करवाणीत्यविशेषोक्तेर्नात्रिवृत्कृतं तेजोऽस्तीत्यर्थः । तदस्तित्वेपि यच्छब्दोपबन्धात्सिद्धवत्परामर्शादन्यतस्तस्य द्युमर्यादत्वं वाच्यं तन्नास्तीत्याह—**न चेति** । पूर्वपक्षैकदेशिनि परेण परास्ते परमपूर्ववाद्याह—**अस्त्विति** । तत्राऽऽक्षेप्ता स्वोक्तं स्मारयति—**नन्विति** ।

१ पूर्वोक्ताक्षेपं स्मारयति—नन्विति । २ समाधत्त इत्यर्थः ।

न तु निष्प्रदेशस्य ब्रह्मणः प्रदेशविशेषकल्पना भागिनी । "सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु" [ छा० ३।१३।७ ] इति चाधारबहुत्वश्रुतिः कार्ये ज्योतिषि उपपद्यतेतराम् ॥ "इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः" [ छा०३।१३।७ ] इति च कौक्षेये ज्योतिषि परं ज्योतिरध्यस्यमानं दृश्यते ॥ सारूप्यनिमित्ताश्चाध्यासा भवन्ति ॥ यथा—"तस्य भूरिति शिर एकं शिर एकमेतदक्षरम्" [ बृ०५।५।३ ] इति । कौक्षेयस्य तु ज्योतिषः प्रसिद्धमब्रह्मत्वम् ॥ "तस्यैषा दृष्टिः" [ छा० ३।१३।७ ] "तस्यैषा श्रुतिः" [ छा० ३ । १३ । ७ ] इति चौष्ण्यघोषविशिष्टत्वस्य श्रवणात् ॥ "तदेतदृष्टञ्च श्रुतञ्चेत्युपासीत" [ छा० ३ । १३।७ ] इति च श्रुतेः ॥ "चक्षुष्यः श्रुतो भवति, य एवं वेद" [ छा० ३ । १३ । ७ ] इति चाल्पफलश्रवणादब्रह्मत्वम् ॥ महते हि फलाय ब्रह्मोपासनमिष्यते ॥ न चान्यदपि किञ्चित्स्ववाक्ये प्राणाकाशवज्ज्योतिषोऽस्ति ब्रह्मलिङ्गम् ॥ न च पूर्वस्मिन्नपि

रत्नप्रभा ।

ब्रह्मणोऽपि ध्यानार्थं प्रदेशस्थत्वं कल्प्यतां नेत्याह—न त्विति ॥ निष्प्रदेशस्य निरवयवस्य ॥ विशेषेऽति । दिवः परस्ताद्देदीप्यमानब्रह्मावयवकल्पना भागिनी युक्ता नवेत्यन्वयः । अप्रामाणिकगौरवापातादिति भावः । ततः किं, तत्राह—सारूप्येति ॥ यथा एकत्वसाम्याद्भूरिति व्याहृतौ प्रजापतेः शिरोदृष्टिः श्रुता, तथा—जाठराग्नावब्रह्मत्वं घोषादिश्रुत्या सिद्धमिति जडज्योतिर्द्वयं साम्यं वाच्यमित्यर्थः । यद्देहस्पर्शनेनौष्ण्यज्ञानं प्रसिद्धं सैषा तस्य जाठराग्नेर्दृष्टिः, यत् कर्णपिधानेन घोषश्रवणं, सैषा तस्य श्रुतिरित्यर्थः । ज्योतिषो जडत्वे लिङ्गान्तरमाह—तदेतादिति ॥ ज्योतिरित्यर्थः । चक्षुष्यः चक्षुर्हितः सुन्दरः श्रुतो विख्यातः ॥ न चान्यदपीति । ब्रह्मलिंगमपि किञ्चिदन्यन्नास्तीत्यन्वयः। ननु "त्रिपादस्यामृतं दिवि" इति पूर्ववाक्योक्तं ब्रह्मात्र ज्योतिःपदेन गृह्यतामित्याशंक्याह—न चेति ॥ ननु सर्वात्मकत्वामृतत्वाभ्यां ब्रह्मोक्तमित्यत आह—

भामती ।

द्यते, तथापि यथा कार्ये ज्योतिष्यतिशयेनोपपद्यते न तथात्रेत्यत उक्तम्—उपपद्यतेतरामिति । प्राकृतं

आनन्दगिरीय—न्यायनिर्णयः ।

पूर्ववाद्याह—नेति । तर्हि ब्रह्मण एव ध्यानार्थो देशविशेषः स्यान्नेत्याह— न त्विति । अप्रदेशस्य प्रदेशकल्पना गौरवादयुक्तेत्यर्थः । इतश्च कार्यमेव ज्योतिरत्रोपास्यमित्याह—सर्वत इति । ब्रह्मण्यवच्छेदकल्पनयाऽऽधारबहुत्वयोगेऽपि कार्ये ज्योतिषि स्वतस्तत्सिद्धिरित्यतिशयमाह—तरामिति । उपास्यज्योतिषो ब्रह्मत्वाभावे हेत्वन्तरमाह—इदमिति । अध्यासेऽपि ज्योतिर्ब्रह्मास्तु नेत्याह—सारूप्येति । तत्र मानमाह—यथेति । एकत्वसाम्याद्भूरित्यस्मिन्नक्षरे प्रजापतेः शिरोदृष्टिरुक्ता तथाऽत्रापि सारूप्यं वाच्यमन्यथाऽध्यासासिद्धेरित्यर्थः । कौक्षेयमपि ज्योतिश्चैतन्यमेवेत्यनध्यासात्तादात्म्योक्तिरित्याशङ्क्याऽऽह—कौक्षेयस्येति । शब्दस्पर्शवत्त्वाभ्यामपि तदब्रह्मेत्याह—तस्येति । एषा दृष्टिर्यदेतदुष्णिमानं स्पर्शेन विजानात्येषा श्रुतिर्यत्कर्णावपिधाय निनदमिव शृणोतीति शेषः । दृष्टश्रुतिलिङ्गत्वान्न ज्योतिषोऽपि तदुच्यते तच्चाविवक्षितमित्याशङ्क्योपास्यत्वश्रुतेर्नैवमित्याह—तदेतदिति । तदब्रह्मत्वे हेत्वन्तरमाह—चक्षुष्य इति । चक्षुष्यो दर्शनीयः । श्रुतो विश्रुतः । ब्रह्मोपास्तिफलमपि किं न स्यात्तत्राऽऽह—महते हीति । मुक्तिफला ब्रह्मोपास्तिर्नाल्पफला युक्तेत्यर्थः । बहून्यब्रह्मलिङ्गानि स्ववाक्यस्यान्युक्त्वा ब्रह्मलिङ्गं किमपि तत्र नास्तीत्याह—न चेति । ज्योतिषो ब्रह्मलिङ्गमपि किंचिदन्यन्नास्तीति संबन्धः । ननु पूर्ववाक्ये त्रिपादस्यामृतं दिवीत्युक्तं ब्रह्मैवात्र द्युसंबन्धात्प्रत्यभिज्ञायते तत्र यच्छब्दपरामृष्टे ज्योतिःशब्दो वर्तते नेत्याह—न चेति ।

वाक्ये ब्रह्म निर्दिष्टमस्ति "गायत्री वा इदं सर्वं भूतम्" [ छा० ३ । १२ । १ ] इति छन्दोनिर्देशात् ॥ अथापि कथञ्चित्पूर्वस्मिन्वाक्ये ब्रह्म निर्दिष्टं स्यात् ॥ एवमपि न तस्येह प्रत्यभिज्ञानमस्ति ॥ तत्र हि-"त्रिपादस्यामृतं दिवि" [ छा० ३ । १२ । ६ ] इति द्यौरधिकरणत्वेन श्रूयते ॥ अत्र पुनः "परो दिवो ज्योतिः" [ छा० ३ । १३ । ७ ] इति द्यौर्मर्यादात्वेन । तस्मात्प्राकृतं ज्योतिरिह ग्राह्यमिति ॥ एवं प्राप्ते ब्रूमः ज्योतिरिह ब्रह्म ग्राह्यम् ॥ कुतः ॥ चरणाभिधानात् पादाभिधानादित्यर्थः ॥ पूर्वस्मिन् हि वाक्ये चतुष्पाद्ब्रह्म निर्दिष्टं-"तावानस्य महिमा । ततो ज्यायाँश्च पुरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति ।" [ छा० ३ ।

रत्नप्रभा ।

अथापीति॥ कथंचित् छन्दोद्वारेत्यर्थः। "दिवि" "दिवः"इति विभक्तिभेदान्न प्रत्यभिज्ञेत्यर्थः। प्रकृतेर्जातं प्राकृतम् । कार्यमित्यर्थः । आचारं निरस्यति-पादेति॥"गायत्री वा इदं सर्वं भूतम्" "वाग्वै गायत्री" "येयं पृथिवी" "यदिदम्" "शरीरम्" "यद्" "अस्मिन् पुरुषे" "हृदय इमे प्राणाः" [छां०३।१२। १-२-३] इति भूतवाक्पृथिवीशरीरहृदयप्राणात्मिका षड्विधा षड्भिरक्षरैश्चतुष्पदा गायत्रीति।यदुक्तं तावान् तत्परिमाणः सर्वः प्रपञ्चः अस्य गायत्र्यनुगतस्य ब्रह्मणो महिमा विभूतिः । पुरुषस्तु पूर्णब्रह्मरूपः । ततः प्रपञ्चात् । ज्यायान् अधिकः । आधिक्यमेवाह-पाद इति ॥ सर्वं जगदेकः पादोंशः "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" [ भग० गी० १० । ४२ ] इति स्मृतेः । अस्य पुरुषस्य दिवि स्वप्रकाशस्वरूपे त्रिपादमृतरूपमस्ति । दिवि सूर्यमण्डले वा ध्यानार्थमस्ति कल्पिताज्जगतो ब्रह्मस्वरूपमनन्तमस्तीत्यर्थः । यथा-लोके पादात् पादत्रयमधिकं तथेदमधिकमिति बोधनार्थं त्रिपाद-

भामती ।

प्रकृतेर्जातं, कार्यमिति यावत् । एवं प्राप्त उच्यते-'सर्वनामप्रसिद्धार्थे प्रसाध्यार्थविघातकृत् । प्रसिद्ध्यपेक्षि सत्पूर्ववाक्यस्थमपकर्षति ॥ तद्बलात्तेन नेयानि तेजोलिङ्गान्यपि ध्रुवम् । ब्रह्मण्येव प्रधानं हि ब्रह्मच्छन्दो न तत्र तु ॥' औत्सर्गिकं तावद्यदप्रसिद्धार्थानुवादकत्वं यद्विधिविभक्तिमप्यपूर्वार्थावबोधनस्वभावात्प्रच्यावयति । यथा 'यस्याहिताग्नेरग्निर्गृहान्दहेत्' 'यस्योभयं हविरार्तिमार्च्छेत्' इति । यत्र पुनस्तत्प्रसिद्धमन्यतो न कथंचिदाप्यते, तत्र वचनानि त्वपूर्वत्वादिति सर्वनाम्नः प्रसिद्धार्थत्वं बलादपनीयते । यथा 'यदाग्नेयोऽष्टाकपालो भवति' इति । तदिह 'यदतः परो दिवो ज्योतिः' इति यच्छब्दसामर्थ्यात् द्युमर्यादेनापि ज्योतिषा प्रसिद्धेन भवितव्यम् । न च तस्य प्रमाणान्तरतः प्रसिद्धिरस्ति । पूर्ववाक्ये च द्युसंबन्धि

आनन्दगिरीय-न्यायनिर्णयः ।

सर्वात्मत्वभूतादिपादत्वाभ्यां तदेतद्ब्रह्मेति वाक्याच्चोक्तमेव पूर्ववाक्ये ब्रह्मेत्याशङ्क्याऽऽह-अथापीति । सप्तमीपञ्चमीभ्यामुक्तिभेदान्न तत्प्रत्यभिज्ञेति साधयति-तत्रेति । ब्रह्मलिङ्गाभावात्तेजोलिङ्गभावात्तदेव कौक्षेयज्योतिष्यारोप्योपास्यमित्युपसंहरति-तस्मादिति । प्राकृतं प्रकृतेर्जातं कार्यमित्यर्थः । पूर्वपक्षानुवादेन सूत्रमवतार्य प्रतिज्ञार्थमाह-एवमिति । निश्चितब्रह्मलिंगं विना नास्य ब्रह्मतेति शङ्कित्वा हेतुमाह-कुत इति। रमणीयचरणा इत्यादौ चरणशब्दस्य चारित्रार्थत्वादत्रापि तथेत्यसांगत्यमाशङ्क्याऽऽह-पादेति । पादवाचिपदमस्मिन्वाक्ये न दृष्टमिति चेत्तत्राऽऽह-पूर्वस्मिन्निति । गायत्री वा इदं सर्वं भूतमित्यादिना भूतपृथिवीशरीरहृदयवाक्प्राणैः षड्विधा चतुष्पदा गायत्रीत्युक्तमेतदनुगतब्रह्मणस्तावान्महिमा विभूतिर्यावानयं प्रपञ्चो वस्तुतस्त्वयं पुरुषस्ततो ज्यायान्महत्तरः । तदेव स्फुटयति-पादोऽस्येति । सर्वाणि

१ चतुर्विंशत्यक्षरायाः त्रिपद्याः षडक्षरक्रमेण विभागे चतुष्पदीयं भवतीत्यर्थः । २ "गायत्री वा इदं सर्वम्" इत्यादिना छान्दोग्ये यदुक्तमित्यर्थः ।

१२ । ६] इत्यनेन मन्त्रेण । तत्र यच्चतुष्पदो ब्रह्मणस्त्रिपादमृतं द्युसम्बन्धिरूपं निर्दिष्टं, तदेवेह द्युसम्बन्धान्निर्दिष्टमिति प्रत्यभिज्ञायते ॥ तत्परित्यज्य प्राकृतं ज्योतिः कल्पयतः प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम् ॥ न केवलं ज्योतिर्वाक्य एव ब्रह्मानुवृत्तिः । परस्यामपि हि शाण्डिल्यविद्यायामनुवर्तिष्यते ब्रह्म ॥ तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम् ॥ यत्तूक्तं "ज्योतिर्दीप्यते" [ छा० ३ । १३ । ७ ] इति च एतौ शब्दौ कार्ये ज्योतिषि प्रसिद्धाविति ॥ नायं दोषः ॥ प्रकरणात् । ब्रह्मा-

रत्नप्रभा ।

मृतमित्युक्तं, न त्रिपात्त्वं विवक्षितमिति मन्तव्यम् "यदतः परः" इति यच्छब्दस्य प्रसिद्धार्थवाचित्वात् पूर्ववाक्यप्रसिद्धं ब्रह्म ग्राह्यमित्याह—तत्रेति ॥ ननु "यदाग्नेयोऽष्टाकपालः" इत्यत्र यत्पदस्याप्रकृतार्थकत्वं दृष्टमित्यत आह—तत्परित्यज्येति ॥ तत्र यागस्यान्यतः प्रसिद्धेरभावेनापूर्वत्वादगत्या यदोऽप्रसिद्धार्थत्वमाश्रितम् । इह तु पूर्ववाक्यप्रसिद्धस्य ब्रह्मणो द्युसम्बन्धेन प्रत्यभिज्ञातस्य यदर्थत्वनिश्चयाद्यत्पदैकार्थकज्योतिःपदस्यापि स एवार्थ इत्यर्थः । सन्दंशन्यायादप्येवमित्याह—न केवलमिति ॥ "सर्वं खल्विदं ब्रह्म" [ छां० ३ । १४ । १ ] इत्युत्तरत्र ब्रह्मानुवृत्तेर्मध्यस्थं ज्योतिर्वाक्यं ब्रह्मपरमित्यर्थः ॥ प्रकरणादिति । प्रकृतापेक्षयत्पदश्रुत्या द्युसम्बन्धभूतपादत्वादिलिंगैश्चेत्यर्थः । अतः प्रकरणाज्ज्योतिःश्रुतिबाधो न

भामती ।

त्रिपाद्ब्रह्म प्रसिद्धमिति प्रसिद्ध्यपेक्षायां तदेव संबध्यते । न च प्रधानस्य प्रातिपदिकार्थस्य तत्त्वेन प्रत्यभिज्ञाने तद्विशेषणस्य विभक्त्यर्थस्यान्यतामात्रेणान्यता युक्ता । एवं च तद्वाक्यस्थानि तेजोलिङ्गान्यसमञ्जसानीति ब्रह्मण्येव गमयितव्यानि, गमितानि च भाष्यकृता । तत्र ज्योतिर्ब्रह्मविकार इति ज्योतिषा ब्रह्मैवोपलक्ष्यते । अथ वा प्रकाशमात्रवचनो ज्योतिःशब्दः, प्रकाशश्च ब्रह्मेति ब्रह्मणि मुख्य इति ज्योतिर्ब्रह्मेति सिद्धम् ॥ प्रकृतहानाप्रकृतप्रक्रिये इति । प्रसिद्ध्यपेक्षायां पूर्ववाक्यगतं प्रकृतं संनिहितम्, अप्रसिद्धं तु कल्प्यं न प्रकृतम् । अत एवोक्तम्—कल्पयत इति । संदंशन्यायमाह—न केवलमिति । परस्यापि

आनन्दगिरीय—न्यायनिर्णयः ।

भूतान्यस्य ब्रह्मण एकः पादः । अस्यैव त्रिपादमृतं दिवि द्योतनवति स्वात्मनि स्थितम् । यथा कार्षापणश्चतुर्धा विभक्तः पादादेकस्मात्पादत्रयीकृतो महानेवं पुरुषो वास्तवोऽवास्तवात्प्रपञ्चान्महानित्यर्थः । पूर्वं ब्रह्मोक्तावपि कथमुक्तहेतुना ज्योतिषो ब्रह्मतेत्याशङ्क्याऽऽह—तत्रेति । लिंगोपस्थापिताद्ब्रह्मणः श्रुत्युपस्थापिततेजसो बलीयस्त्वेऽपि यच्छब्दार्थे ज्योतिषि संनिधापकमानापेक्षायां त्रिपाद् ब्रह्मणो ध्याने विनियोगाकांक्षस्यानन्तरवाक्ये श्रुत्युक्तेर्विजातीयमानाकांक्षश्रुत्युक्ततेजोभिधानाल्लिंगोपनीतातिसंनिहितसजातीयश्रुतिसिद्धैकवाक्यताकांक्षब्रह्मोक्तिर्यच्छब्दस्य युक्ता । तस्माद्यच्छब्दार्थे प्रयुक्तो ज्योतिःशब्दो ब्रह्मार्थ इति भावः । यच्छब्दस्य ब्रह्मार्थत्वं हित्वा तेजोवाचित्वे बुद्धिगौरवमुक्त्वा दोषान्तरमाह—तदिति । पूर्ववाक्यस्थे ब्रह्मणि द्युसंबन्धाज्ज्योतिर्वाक्येऽपि प्रत्यभिज्ञाते यच्छब्दार्थे तत्समानाधिकृतज्योतिःशब्दप्रवृत्तिरित्युक्तम् । संप्रति सर्वं खल्विदं ब्रह्मेत्युत्तरवाक्येऽपि ब्रह्मानुवृत्तेर्मध्यस्थमपि ज्योतिर्वाक्यं तत्परमेवेति संदंशन्यायमाह—नेति । प्रकरणलिङ्गश्रुतिसिद्धमर्थमुपसंहरति—तस्मादिति । श्रुतिलिङ्गाभ्यामुक्तमनुवदति—यत्त्विति । मानत्रयान्मानद्वयं दुर्बलमिति दूषयति—नायमिति । प्रकरणं श्रुतिलिङ्गयोरुपलक्षणम् । ब्रह्मणो व्यवच्छिद्य तेजःसमर्पकत्वं विशेषकत्वं तदभावोऽविशेषकत्वम् । ब्रह्मणि यथोक्तशब्दानुपपत्तौ कथं

१ न केवलं पूर्ववाक्याज्ज्यो पा० ।

वगमे सत्यनयोः शब्दयोरविशेषकत्वाद् दीप्यमानकार्यज्योतिरुपलक्षिते ब्रह्मण्यपि प्रयोगसम्भवात् । "येन सूर्यस्तपति तेजसेद्धः" [ तै० ब्रा० ३ । १२ । ९ । ७ ] इति च मन्त्रवर्णात् ॥ यद्वा-नायं ज्योतिश्शब्दश्चक्षुर्वृत्तेरेवानुग्राहके तेजसि वर्तते ॥ अन्यत्रापि प्रयोगदर्शनात्-"वाचैवायं ज्योतिषाऽऽस्ते" [ बृ० ४ । ३ । ५ ] "मनोज्योतिर्जुषताम्" [ तै० ब्रा० १ । ६ । ३ । ३] इति च ॥ तस्माद्यद्यत्कस्यचिदवभासकं तत्तज्ज्योतिश्शब्देनाभिधीयते ॥ तथा सति ब्रह्मणोऽपि चैतन्यरूपस्य समस्तजगदवभासहेतुत्वादुपपन्नो ज्योतिश्शब्दः । "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" [ मुण्ड० २ । २ । ११ ] "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" [ बृ० ४ । ४ । १६ ] इत्यादिश्रुतिभ्यश्च ॥

---

रत्नप्रभा ।

युक्त इति निरस्तम् ॥ **अविशेषकत्वादिति** । ब्रह्मव्यावर्तकत्वाभावादित्यर्थः । **येन तेजसा** चैतन्येन **इद्धः** प्रकाशितः **सूर्यस्तपति** प्रकाशयति तं बृहन्तमवेदविन्न मनुत इत्यर्थः । ज्योतिश्शब्दस्य कार्यज्योतिष्येव शक्तिरित्यंगीकृत्य कारणब्रह्मलक्षकत्वमुक्त्वा ब्रह्मण्यपि शक्तिमाह-**यद्वेति** ॥ गाढान्धकारे **वाचैव ज्योतिषा** लोक आसनादिव्यवहारं करोतीत्यर्थः । आज्यं **जुषतां** पिबताम् । **मनो ज्योतिः** प्रकाशकं भवतीत्याज्यस्तुतिः । यथा-गच्छन्तमनुगच्छतः स्वस्यापि गतिरस्ति, तथा सर्वस्य स्वनिष्ठं भानं स्यादित्यत आह-**तस्य भासेति** ॥ तत् कालानवच्छिन्नं ब्रह्म सूर्यादिज्योतिषां साक्षिभूतम् "आयुरमृतम्" इति च **देवा उपासते** इत्यर्थः । ज्योतिषोऽग्नित्ववद् द्युमर्यादत्वादिकं ध्यानार्थं कल्पितं ब्रह्मणो युक्त-

भामती ।-०

आनन्दगिरीय-न्यायनिर्णयः ।

तयोरविशेषकत्वं तत्राऽऽह-**दीप्यमानेति** । कार्यवाचिशब्दाभ्यां कारणलक्षणे सर्वैरपि शब्दैर्ब्रह्मणो लक्षणा स्यादित्याशङ्क्य सूर्यादिज्योतिषो विशेषयोगे मानमाह-**येनेति** । येन तेजसा चैतन्यज्योतिषेद्धो दीप्तः सूर्यः सर्वमपि जगत्तपति प्रकाशयति तज्ज्योतिरात्मानं बृहन्तमनतिशयमहत्त्ववन्तमवेदविन्न मनुत इति योजना । कार्ये रूढिमुपेत्य कारणे लाक्षणिको ज्योतिःशब्द इत्युक्तम् । इदानीं कारणेऽपि ब्रह्मणि मुख्य एवेत्याह-**यद्वेति** । शान्ते सूर्यादौ तिमिरावृते जगति वाचैव ज्योतिषाऽयं कार्यकरणात्मा पुरुषो व्यवहारमासनादिकं करोतीत्यर्थः । मनोभासकत्वाज्ज्योतिस्तच्चाऽऽज्यं जुषतां सेवतां तेन वाक्येन चक्षुर्द्वारा विषयीकृतेनादुष्टतया दृष्टेन यज्ञमिमं केनापि हेतुना विच्छिन्नमप्रासानुष्ठानं संदधात्वक्षतं कुर्यादित्यर्थः । एकस्य शब्दस्य कथमनेकार्थतेत्याशङ्क्य निमित्तभेदेनानेकत्र वृत्तेः शक्त्यैक्यान्मैवमित्याह-**तस्मादिति** । भासकत्वमेकं निमित्तीकृत्यानेकत्र ज्योतिःशब्देपि कथमसौ ब्रह्मणि स्यादित्याशङ्क्याऽऽह-**तथेति** । तस्य सर्वजगद्भासकत्वे मानमाह-**तमेवेति** । पूर्वार्धे विषयसप्तम्या परामृष्टस्तच्छब्दार्थः । गच्छन्तमनुगच्छतीत्युक्ते स्वगतगतिवदनुभानेपि स्वगतभानमाशङ्क्याऽऽह-**तस्येति** । न केवलं भासकत्वाद्ब्रह्मणि ज्योतिःशब्दस्तस्मिन्प्रयुक्तत्वाच्चेत्याह-**तादिति** । यस्मादर्वागेव संवत्सरोऽहोभिः परिवर्तते तं परमात्मानमिन्द्रादयो देवा ज्योतिषामादित्यादीनां ज्योतिर्भासकं जगतो जीवनं कूटस्थमिति च ध्यायन्तीत्यर्थः । अत्रायं पुरुषः स्वयंज्योतिरित्यादिवाक्यमादिशब्दार्थः । ज्योतिषामपि तज्ज्योतिरित्यादिस्मृतिसंग्रहार्थश्चकारः । ज्योतिःश्रुतेर्दीप्तिलिङ्गस्य चान्यथासिद्धत्वेऽपि द्युमर्यादत्वमनन्यथासिद्धमित्याशङ्क्याऽऽह-

यदप्युक्तं द्युमर्यादत्वं सर्वगतस्य ब्रह्मणो नोपपद्यत इति ॥ अत्रोच्यते ॥ सर्वगतस्यापि ब्रह्मण उपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते ॥ ननूक्तं निष्प्रदेशस्य ब्रह्मणः प्रदेशविशेषकल्पना नोपपद्यत इति ॥ नायं दोषः ॥ निष्प्रदेशस्यापि ब्रह्मण उपाधिविशेषसम्बन्धात्प्रदेशविशेषकल्पनोपपत्तेः । तथाहि "आदित्ये" [ छा० १ । ६ । ६ ] "चक्षुषि" [ छा०१।७।५ ] "हृदये" [ छा० ३ । १४ । ३ ] इति प्रदेशविशेषसम्बन्धीनि ब्रह्मण उपासनानि श्रूयन्ते ॥ एतेन "विश्वतः पृष्ठेषु" [ छा० ३ । १३ । ७ ] इत्याधारबहुत्वमुपपादितम् ॥ यदप्येतदुक्तम्—औष्ण्यघोषाभ्यामनुमिते कौक्षेये कार्ये ज्योतिष्यध्यस्यमानत्वात्परमपि दिवः कार्यं ज्योतिरेवेति ॥ तदप्ययुक्तम् । परस्यापि ब्रह्मणो नामादिप्रतीकत्ववत्कौक्षेयज्योतिःप्रतीकत्वोपपत्तेः । "दृष्टश्च श्रुतश्चेत्युपासीत" [ छा० ३ । १३ । ७ ] इति तु प्रतीकद्वारकं दृष्टत्वं श्रुतत्वं च भविष्यति ॥ यदप्यल्पफलश्रवणान्न ब्रह्मेति ॥ तदप्यनुपपन्नम् । न हीयते फलाय ब्रह्माश्रयणीयमियते नेति नियमे हेतुरस्ति ॥ यत्र हि निरस्तसर्वविशेषसम्बन्धं परं ब्रह्मात्मत्वेनोपदिश्यते, तत्रैकरूपमेव फलं मोक्ष इत्यवगम्यते ॥ यत्र तु गुणविशेषसम्बन्धं प्रतीकविशेषसम्बन्धं वा ब्रह्मोपदिश्यते, तत्र संसार-

रत्नप्रभा ।

मित्याह—अत्रोच्यते इत्यादिना ॥ दिवः परमित्यन्वयः । आरोप्यस्य ध्येयस्यालम्बनस्य च सादृश्यनियमो नास्तीत्याह—परस्यापीति ॥ भविष्यति ब्रह्म ज्योतिष इति शेषः । तं यथायथोपासते, तथा फलं भवतीति श्रुतेरित्याह—न हीयत इति ॥ ज्ञानफलवदुपास्तिफलमेकरूपं किं न स्यादत आह—यत्र हीति ॥ ज्ञेयैकत्वादित्यर्थः । ध्येयं तु नानेत्याह—यत्र त्विति ॥ ईश्वरो जीवरूपेणान्नमत्तीति

भामती ।

ब्रह्मणो नामादिप्रतीकत्ववदिति । कौक्षेयं हि ज्योतिर्जीवभावेनानुप्रविष्टस्य परमात्मनो विकारः,

आनन्दगिरीय—न्यायनिर्णयः ।

यदपीति । प्रमित्यर्थत्वेनोपास्त्यर्थत्वेन वा मर्यादावत्त्वं नोपपद्यते । तत्राऽऽद्यमङ्गीकरोति—अत्रेति । द्वितीयं प्रत्याह—सर्वेति । योषितोऽग्नित्ववद्ब्रह्मणोऽपि द्युमर्यादावत्त्वमारोप्योपास्तिरविरुद्धेत्यर्थः । अप्रदेशस्य प्रदेशकल्पने गौरवमुक्तं स्मारयति—नन्विति । स्वतो वा तत्कल्पनानुपपत्तिरुपाधितो वा तत्राऽऽद्यमुपेत्यान्त्यं प्रत्याह—नायमिति । न चेदमपूर्वं कल्प्यते तादृक्कल्पनानामन्यत्रापि दृष्टेरित्याह—तथेति । ब्रह्मणि कथमाधारबहुत्वं तत्राऽऽह—एतेनेति । द्युमर्यादत्ववदाध्यानार्थत्वेनेत्यर्थः । अत्राध्यासस्य सारूप्यकृतत्वादब्रह्मण्यध्यस्यमानमपि ज्योतिरब्रह्मेत्युक्तमनुभाषते—यदपीति । आरोपस्य सारूप्याधीनत्वं व्यभिचारयति—तदपीति । उपास्तिस्थानत्वमत्र प्रतीकत्वमारोप्य ज्योतिषो दृष्टत्वादिश्रुतेर्ब्रह्मणस्तदयोगादब्रह्मतेत्याशंक्याऽऽह—दृष्टं चेति । जाठरज्योतिषो दृष्टत्वादिकृतं तत्रोपास्यब्रह्मणो दृष्टत्वादीत्यर्थः । लिङ्गान्तरमनूद्य प्रत्याह—यदपीति।वाजिनामग्निरहस्यगतां "तं यथा यथा" इत्यादिश्रुतिमाश्रित्यानुपपत्तिं स्फोरयति—न हीति । ब्रह्मधियो मुक्तिफलत्वात्तदैकरूप्यादल्पफलत्वं न तदुपास्तेरित्याशंक्याऽऽह—यत्रेति । ब्रह्मविषयत्वात्प्रस्तुतोपास्तेरपि मुक्तिफलतेत्याशंक्याऽऽह—यत्र त्विति । स वा

१ प्रतीकं नाम आत्मोपासनाधिष्ठानमनात्मभूतं वस्तु इति तैत्तिरीयोपनिषद्भाष्यदीपिकायां शिक्षायाम् । २ न हि इयते इति पदच्छेदः ।

गोचराण्येवोच्चावचानि फलानि दृश्यन्ते-"अन्नादो वसुदानो विन्दते वसु य एवं वेद" [ बृह०४।४।२४ ] इत्याद्यासु श्रुतिषु ॥ यद्यपि न स्ववाक्ये किञ्चिज्ज्योतिषो ब्रह्मलिङ्गमस्ति ॥ तथापि पूर्वस्मिन्वाक्ये दृश्यमानं ग्रहीतव्यं भवति ॥ तदुक्तं सूत्रकारेण "ज्योतिश्चरणाभिधानाद्"[व्या०सू० १ । १ । २४ ] इति॥ कथं पुनर्वाक्यान्तरगतेन ब्रह्मसन्निधानेन ज्योतिः-श्रुतिः स्वविषयात्प्रच्याव्य शक्या व्यावर्तयितुम् ॥ नैष दोषः ॥ "यदतः परो दिवो ज्योतिः" [ छा० ३ । १३ । ७ ] इति प्रथमतरपठितेन यच्छब्देन सर्वनाम्ना द्युसम्बन्धात्प्रत्यभिज्ञायमाने पूर्ववाक्यनिर्दिष्टे ब्रह्मणि स्वसामर्थ्येन परामृष्टे सत्यर्थाज्ज्योतिःशब्दस्यापि ब्रह्मविषयत्वोपपत्तेः ॥ तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम् ॥ २४ ॥

## छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम् ॥ २५ ॥

रत्नप्रभा ।

अन्नादोऽन्नस्याऽऽसमन्तादाता वा । वसु हिरण्यं ददातीति वसुदान इति गुणविशेषसम्बन्धं यो वेद स धनं विन्दते दीप्ताग्निश्च भवति "नाम्नो वागुत्तमा मनो वा प्रतीकं वाचो भूयः" इति प्रतीकविशेषध्यान-श्रुतिसंग्रहार्थमाद्यपदम् । सन्निधेः श्रुतिर्बलीयसीति शङ्कते-कथं पुनरिति ॥ अथ प्रथमश्रुत्यनुसारेण चरमश्रुतिर्नीयत इत्याह-नैष इति ॥ सर्वनाम्ना स्वसामर्थ्येन स्वस्य सर्वनाम्नः सामर्थ्यं सन्निहितवाचित्वं तद्बलेन परामृष्टे सतीति योजना ॥ अर्थाद्यत्पदसामानाधिकरण्यादित्यर्थः ॥२४॥ छन्दोऽभिधानाद्ब्रह्म प्रकृतं

भामती ।

जीवाभावे देहस्य शैत्यात्, जीवतश्चौष्ण्याज्ज्ञायते । तस्मात्तत्प्रतीकस्योपासनमुपपन्नम् । शेषं निगदव्याख्यातं भाष्यम् ॥ २४ ॥ छन्दोभिधानान्नेति चेत् न तथा चेतोर्पणनिगदात्तथाहि दर्शनम् । पूर्ववाक्यस्य हि ब्रह्मार्थत्वे सिद्धे स्यादेतदेवं, न तु तद्ब्रह्मार्थम्, अपि तु गायत्र्यर्थम् । 'गायत्री वा इदं सर्वं भूतं यदिदं किंच' इति गायत्रीं प्रकृत्येदं श्रूयते-'त्रिपादस्यामृतं दिवि' इति । ननु 'आकाशस्तल्लिङ्गात्' इत्यनेनैव गतार्थमेतत् । तथाहि-'तावानस्य महिमा' इत्यस्यामृचि ब्रह्म चतुष्पादुक्तम् । सैव च 'तदेतदृचाभ्यनूक्तम्' इत्यनेन संगमिता ब्रह्मलिङ्गम् । एवं 'गायत्री वा इदं सर्वम्' इत्यक्षरसंनिवेशमात्रस्य गायत्र्या न सर्वत्वमुपपद्यते । न च भूतपृथिवीशरीरहृदयवाक्प्राणात्मत्वं गायत्र्याः स्वरूपेण संभवति । न च ब्रह्मपुरुषसंबन्धित्वमस्ति गायत्र्याः । तस्माद्गायत्रीद्वारा ब्रह्मण एवोपासना न गायत्र्या इति पूर्वेणैव गतार्थत्वादनारम्भणीयमे-

आनन्दगिरीय-न्यायनिर्णयः ।

एष महानज आत्मेत्युक्तो जीवात्मनाऽन्नादो वसु धनं कर्मफलं तद्दाता पररूपेणेत्युक्त्वा यः कश्चिदुक्त-गुणमात्मानमुपास्ते स धनं लभते दीप्ताग्निश्च भवतीत्याह-अन्नाद इति । आदिपदेन परोवरीय एव ह्यास्मिँल्लोके जीवनमित्यादि गृहीतम् । यदुक्तं न स्ववाक्ये ज्योतिषो ब्रह्मलिङ्गमिति तत्राऽऽह-यद्यपीति । उक्तेऽर्थे सूत्रानुगुण्यमाह-तदुक्तमिति । प्रकरणेन श्रुतिरबाध्येत्याह-कथमिति । न प्रकरणादेव श्रुतिर्बाध्या प्रकरण-लिङ्गानुगृहीतप्रथमश्रुतयच्छब्दश्रुत्येत्याह-नेत्यादिना । द्युसंबन्धादिति प्रधानस्य द्युसंबन्धस्य प्रातिपदि-कार्थस्यैक्येन प्रत्यभिज्ञानात्तद्विशेषणस्य मर्यादाधारविभक्त्यर्थस्यान्यत्वमात्रेण नान्यतेत्यर्थः । यच्छब्देन परामृष्टे सतीति संबन्धः । स्वसामर्थ्येन सर्वनाम्नः संनिहितपरामर्शित्ववशेनेत्यर्थः । अर्थाद्यच्छब्दसामाना-धिकरण्यबलादित्यर्थः । मानमुक्त्वा मेयमुपसंहरति-तस्मादिति ॥ २४ ॥ पूर्ववाक्यस्य च्छन्दोविषयत्वान्न ब्रह्म प्रकृतमित्युक्तमनूद्य निराकरोति-छन्दोभिधानादिति । तत्रानुवादभागं व्याख्याय चोद्यस्य

१ विषयाच्छक्या प्रच्यावयितुमिति पा० ।

अथ यदुक्तं पूर्वस्मिन्नपि वाक्ये न ब्रह्माभिहितमस्ति "गायत्री वा इदं सर्वं भूतं यदिदं किञ्च" [ छां० ३।१२।१ ] इति गायत्र्याख्यस्य च्छन्दसोऽभिहितत्वादिति, तत्परिहर्तव्यम् ॥ कथं पुनश्छन्दोऽभिधानान्न ब्रह्माभिहितमिति शक्यते वक्तुं, यावता "तावानस्य महिमा" [ छां० ३। १२। ६ ] इत्येतस्यामृचि चतुष्पाद्ब्रह्म दर्शितम् ॥ नैतदस्ति ॥ "गायत्री वा इदं सर्वम्" [ छा० ३। १२।१ ] इति गायत्रीमुपक्रम्य तामेव भूतपृथिवीशरीरहृदयवाक्प्राणप्रभेदैर्व्याख्याय "सैषा चतुष्पदा षड्विधा गायत्री । तदेतदृचाभ्यनूक्तम् । तावानस्य महिमा" [ छां० ३।१२।६ ] इति तस्यामेव व्याख्यातरूपायां गायत्र्यामुदाहृतो मंत्रः कथमकस्माद्ब्रह्म चतुष्पादभिदध्यात् ॥ योऽपि तत्र "यद्वै तद्ब्रह्म" [ छा० ३। १२। ७ ] इति ब्रह्मशब्दः, सोऽपि छन्दसः प्रकृतत्वाच्छन्दोविषय एव ॥ "य एतामेवं ब्रह्मो-

रत्नप्रभा ।

नास्तीति शङ्कामेकदेशी दूषयति—कथमिति ॥ शङ्कां साधयति—नैतदित्यादिना ॥ चतुष्पदत्वादिकं पूर्वमेव व्याख्यातम्—य एतामेवमिति ॥ वेदरहस्यभूतां मधुविद्याम् एवम् उक्तरीत्या यः कश्चिद्

भामती ।

तत् । न च पूर्वन्यायस्मारणे सूत्रसंदर्भ एतावान्युक्तः । अत्रोच्यते—अस्त्यधिका शंका । तथाहि—गायत्रीद्वारा ब्रह्मोपासनेति कोऽर्थः, गायत्रीविकारोपाधिनो ब्रह्मण उपासनेति । न च तदुपाधिनस्तदवच्छिन्नस्य सर्वात्मत्वं, उपाधेरवच्छेदात् । न हि घटावच्छिन्नं नभोऽनवच्छिन्नं भवति । तस्मादस्य सर्वात्मत्वादिकं स्तुत्यर्थं, तद्वरं गायत्र्या एवास्तु स्तुतिः कयाचित्प्रणाल्या । 'वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च' इत्यादिश्रुतिभ्यः । तथा च 'गायत्री वा इदं सर्वम्' इत्युपक्रमे गायत्र्या एव हृदयादिभिर्व्याख्या । व्याख्याय च 'सैषा चतुष्पदा षड्विधा गायत्री' इत्युपसंहारो गायत्र्यामेव समञ्जसो भवति । ब्रह्मणि तु सर्वमेतदसमञ्जसमिति । 'यद्वै तद्ब्रह्म' इति च ब्रह्मशब्दश्छन्दोविषय एव, यथा 'एतां ब्रह्मोपनिषदम्' इत्यत्र वेदोपनिष-

आनन्दगिरीय-न्यायनिर्णयः ।

समाधियोग्यतामाह—अथेत्यादिना । पूर्ववाक्ये छन्दसोऽन्यस्य वाऽभिधानेऽपि ब्रह्मोक्तमेवेत्येकदेशी शङ्कते—कथमिति । मन्त्रस्य ब्राह्मणोक्तार्थत्वाद्ब्राह्मणे गायत्रीकथनान्मन्त्रेऽपि न ब्रह्म प्रकाश्यत इति सौत्रं हेतुं साधयन्पूर्ववाद्याह—नैतदिति । गायत्री वा इदं सर्वं भूतं यदिदं किंचेति सर्वात्मिकां गायत्रीमुक्त्वा वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते चेति तस्याः सर्वभूतमय्या वागात्मत्वमाख्याय या वै सा गायत्रीयं वाव सा येयं पृथिवी या वै सा पृथिवीयं वाव सा यदिदं शरीरमस्मिन्हीमे प्राणाः प्रतिष्ठिता यद्वै शरीरमिदं तद्धृदयमस्मिन्हीमे प्राणाः प्रतिष्ठिता इति पृथिव्या भूताधारत्वात्सर्वभूतमयगायत्रीत्वं शरीरहृदययोर्भूतात्मकप्राणाश्रयत्वादिति प्रकृतां गायत्रीं भूतादिप्रकारैरुक्त्वा सैषा षडक्षरैः पादैश्चतुष्पदा सती छन्दोरूपा गायत्री वाग्भूतपृथिवीशरीरप्राणहृदयभेदैः षट्प्रकारेत्युपसंहृत्य तस्यां श्रुतो मन्त्रो न शक्तो ब्रह्म वक्तुमिति हेतुसिद्धिरित्यर्थः । मन्त्रानन्तरं यद्वै तद्ब्रह्मेति ब्रह्मशब्दान्मन्त्रेऽपि ब्रह्मोक्तमित्याशङ्क्याऽऽह—योऽपीति । न प्रकरणाद् ब्रह्मशब्दस्य च्छन्दोवाचित्वं तस्य सर्वोपनिषदि परमात्मार्थत्वप्रसिद्धेरित्याशङ्क्य वेदविषये प्रयोगात्तदेकदेशगायत्र्यामपि तस्योपपत्तिरित्याह—य इति । यः कश्चिद्धयतैतां प्रकृतां ब्रह्मोपनिषदं वेदरहस्यं मधुविद्यारूपं वेद तस्मै विदुषे नोदेति नास्तमेति सविता सदैवाहर्भवत्यतो विद्वानुदयास्तमयापरिच्छेद्यं नित्यं ब्रह्मैव भवतीति ब्रह्मपदं वेदे प्रयुक्तमित्यर्थः । मन्त्रब्राह्मणयोरैकार्थ्याद् ब्रह्मशब्दस्य प्रकृतच्छन्दोगामित्वाद्भूताद्यध्यासेन ध्येयगायत्रीच्छन्दोवाचित्वे मन्त्रस्य स्थिते

पनिषदं वेद" [ छां० ३ । ११ । ३ ] इत्यत्र हि वेदोपनिषदमिति व्याचक्षते ॥ तस्माच्छन्दोऽभिधानान्न ब्रह्मणः प्रकृतत्वमिति चेत् ॥ नैष दोषः ॥ तथा चेतोऽर्पणनिगदात्—तथा गायत्र्याख्यच्छन्दोद्वारेण तदनुगते ब्रह्मणि चेतसोऽर्पणं चित्तसमाधानमनेन ब्राह्मणवाक्येन निगद्यते—"गायत्री वा इदं सर्वम्" [ छां० ३ । १२ । १ ] इति ॥ न ह्यक्षरसन्निवेशमात्राया गायत्र्याः सर्वात्मकत्वं सम्भवति ॥ तस्माद्यद्गायत्र्याख्यविकारेऽनुगतं जगत्कारणं ब्रह्म तदिह "सर्वम्" [ छा० ३ । १२ । १ ] इत्युच्यते, यथा—"सर्वं खल्विदं ब्रह्म" [ छा० ३।१४।१ ] इति ॥ कार्यञ्च कारणादव्यतिरिक्तमिति वक्ष्यामः—"तदनन्यत्वमारम्भणशब्दादिभ्यः" [ व्या० सू०२। १ । १५ ] इत्यत्र ॥ तथान्यत्रापि विकारद्वारेण ब्रह्मण उपासनं दृश्यते—"एतं ह्येव बह्वृचा महत्युक्थे मीमाꣳसन्ते । एतमग्नावध्वर्यव—

रत्नप्रभा ।

वेद तस्योदयास्तमयरहितब्रह्मप्राप्तिर्भवतीत्यर्थः । तथा च वेदत्वाद् गायत्र्यां ब्रह्मशब्दो युक्त इति भावः । गायत्रीशब्देन तदुपादानत्वेनानुगतब्रह्मलक्षणायां बीजमनुपपत्तिमाह—न ह्यक्षरेति ॥ ब्रह्मणोऽपि कथं सर्वात्मकत्वं तत्राह—कार्यञ्चेति ॥ न च गायत्र्या ध्यानार्थं सर्वात्मकत्वारोप इति वाच्यम् । स्वतः सर्वात्मनो ध्यानसम्भवेनासदारोपायोगादिति भावः । तथाहि दर्शनमिति सूत्रशेषं व्याचष्टे—तथान्यत्रेति ॥ दृश्यत इति दर्शनं दृष्टमित्यर्थः । एतं परमात्मानं बह्वृचा ऋग्वेदिनो महत्युक्थे शास्त्रे तदनुगतमुपासते । एतमेव अग्निरहस्ये "तमेतमग्निरित्यध्वर्यव उपासते" इति श्रुतेः यजुर्वेदिनोऽग्नौ उपासते ।

भामती ।

द्युच्यते । तस्माद्गायत्रीछन्दोऽभिधानान्न ब्रह्मविषयमेतदिति प्राप्तम् । एवं प्राप्तेऽभिधीयते—न । कुतः, तथा चेतोर्पणनिगदात् । गायत्र्याख्यच्छन्दोद्वारेण गायत्रीरूपविकारानुगते ब्रह्मणि चेतोर्पणं चित्तसमाधानमनेन ब्राह्मणवाक्येन निगद्यते । एतदुक्तं भवति—न गायत्री ब्रह्मणोऽवच्छेदिका, उत्पलस्येव नीलत्वं, येन तदवच्छिन्नत्वमन्यत्र न स्यादवच्छेदकविरहात् । किंतु यदेतद्ब्रह्म सर्वात्मकं सर्वकारणं तत्स्वरूपेणाशक्योपदेशमिति तद्विकारगायत्रीद्वारेणोपलक्ष्यते । गायत्र्याः सर्वच्छन्दोव्याप्त्या च सवनत्रयव्याप्त्या च द्विजातिद्वितीयजन्मजननीतया च श्रुतेर्विकारेषु मध्ये प्राधान्येन द्वारत्वोपपत्तेः । न चान्यत्रोपलक्षणाभावेन नोपलक्ष्यं प्रतीयते । न हि कुण्डलेनोपलक्षितं कण्ठरूपं कुण्डलवियोगेऽपि पश्चात्प्रतीयमानमप्रतीयमानं

आनन्दगिरीय—न्यायनिर्णयः ।

फलितमाह—तस्मादिति । सिद्धान्तभागेनार्थमुक्त्वा हेतुमादाय व्याचष्टे—नेत्यादिना । गायत्रीशब्दस्य मुख्यार्थसिद्ध्यर्थं गायत्रीमात्रमेव गृह्यतामित्याशंक्याऽऽह—न हीति । नभसो घटावच्छिन्नस्यानवच्छिन्नत्वायोगवद्ब्रह्मणो गायत्रीविशिष्टस्य न सर्वत्वमित्याशंक्य गायत्र्युपलक्षितब्रह्मणः सर्वत्वमित्याह—तस्मादिति । गायत्रीशब्देन छन्दोमात्रोक्तौ सर्वभूतादिरूपत्वस्यासदारोपत्वापाताद्ब्रह्मोक्तौ कार्यकारणयोस्तादात्म्ये सदारोपात्तच्छब्देन तदनुगतं ब्रह्मोपलक्ष्य तदुपास्तिर्विधेयेत्यर्थः । कार्यकारणयोरभेदोक्तिरन्यत्रापि दृष्टेत्याह—यथेति । त्वन्मतेऽपि कार्यकारणयोरत्यन्तभेदादसदारोपापत्तिरित्याशङ्क्याऽऽह—कार्यं चेति । सर्वं खल्वित्यत्र कार्यमात्रवाचिसर्वशब्देन कारणब्रह्मणो लक्ष्यत्वेऽपि कार्यैकदेशार्थगायत्रीशब्देन कुतो लक्ष्येतेत्याशङ्क्य "तथाहि दर्शनम्" इत्यस्यार्थमाह— तथेति।एतमेव परमात्मानमृग्वेदिनो महति कस्मिंश्चिदुक्थाख्ये शास्त्रे तदनुगतमुपासते । अध्वर्यवो यजुर्वेदिनोऽग्नौ क्रतौ तदनुश्रितमेतमनु-

१ गायत्र्या विकारे इति क्वचित्पाठः ।

एतं महाव्रते छन्दोगाः" [ऐ०आ० ३।२।३।१२] इति ॥ तस्मादस्ति छन्दोऽभिधानेऽपि पूर्वस्मिन्वाक्ये चतुष्पाद्ब्रह्म निर्दिष्टम् ॥ तदेव ज्योतिर्वाक्येऽपि परामृश्यते–उपासनान्तरविधानाय ॥ अपर आह–साक्षादेव गायत्रीशब्देन ब्रह्म प्रतिपाद्यते ॥ संख्यासामान्यात् ॥ यथा–गायत्री चतुष्पदा षडक्षरैः पादैस्तथा ब्रह्म चतुष्पात् ॥ तथाऽन्यत्रापि छन्दोऽभिधायी शब्दोऽर्थान्तरे संख्यासामान्यात्प्रयुज्यमानो दृश्यते । तद्यथा–"ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्" [ छां० ४।३।८ ] इत्युपक्रम्याह–

रत्नप्रभा ।

**एतमेव छान्दोगाः** सामवेदिनो **महाव्रते** क्रतौ उपासते, इति ऐतरेयारण्यके दृष्टमित्यर्थः । गायत्रीशब्दो ब्रह्मलक्षक इति व्याख्याय गौण इत्याह–**अपर इति** ॥ **साक्षादेव** वाच्यार्थग्रहणं विनैवेति यावत् । पूर्वं तूपास्यतया गायत्रीपदेनाजहल्लक्षणया गायत्रीब्रह्मणी द्वे अपि लक्षिते । न च "गायत्री" "सर्वम्" इत्यन्वयासम्भवः । घटो रूपीति पदार्थैकदेशे व्यक्तौ रूपान्वयवद् गायत्रीपदार्थैकदेशे गायत्र्यनुगते ब्रह्मणि प्रधाने सर्वात्मकत्वान्वयसम्भवादिति भावः । तथा च सूत्रे **सिद्धान्तभागस्यायमर्थः । तथा** गायत्रीवच्चतुष्पात्त्वगुणसामान्यात्, चेतो ब्रह्मणि समर्प्यते येन स चेतोऽर्पणो गायत्रीशब्दस्तेन ब्रह्मण एव निगदाद् अभिधानात्, छन्दोऽभिधानमसिद्धमिति । अधुना "तथाहि दर्शनम्" इति शेषं व्याचष्टे–**तथेति** ॥ संवर्गविद्यायामधिदैवमग्निसूर्यचन्द्राम्भांसि वायौ लीयन्ते, अध्यात्मं वाक्चक्षुश्श्रोत्रमनांसि प्राणमपियन्तीत्युक्तम् । **ते वा एते पञ्चान्ये** आधिदैविकाः, **पञ्चान्ये** आध्यात्मिकास्ते मिलित्वा दशसंख्याकाः सन्तः–**कृतम्**–इत्युच्यन्ते । सन्ति हि कृतत्रेताद्वापरकलिसंज्ञकानि **चत्वारि द्यूतानि** क्रमेण चतुरङ्कत्र्यङ्कद्वयङ्कैकांकानि । तत्र कृतं दशात्मकं भवति । चतुर्ष्वङ्केषु त्रयाणां त्रिषु द्वयोर्द्वयोरेकस्य चान्तर्भावात् । तथा च दशत्वगुणेन वाय्वादयः कृतशब्देनोच्यन्ते । एवं कृतत्वं वाय्वादीनामु-

भामती ।

भवति । तद्रूपप्रत्यायनमात्रोपयोगित्वादुपलक्षणानामनवच्छेदकत्वात् । तदेवं गायत्रीशब्दस्य मुख्यार्थत्वे गायत्र्या ब्रह्मोपलक्ष्यत इत्युक्तम् । संप्रति तु गायत्रीशब्दः संख्यासामान्याद्गौण्या वृत्त्या ब्रह्मण्येव वर्तत इति दर्शयति–**अपर आहेति** । तथाहि–षडक्षरैः पादैर्यथा गायत्री चतुष्पदा, एवं ब्रह्मापि चतुष्पात् । सर्वाणि हि भूतानि स्थावरजङ्गमान्यस्यैकः पादः । दिवि द्योतनवति चैतन्यरूपे । स्वात्मनीति यावत् । त्रयः पादाः । अथ वा दिव्याकाशे त्रयः पादाः । तथाहि श्रुतिः–'इदं वाव तद्योऽयं वहिर्धा पुरुषादाकाशः'

आनन्दगिरीय–न्यायनिर्णयः ।

संदधते । सामवेदिनो महाव्रते क्रतावेतमनुसंदधतीत्यैतरेयके दृष्टमित्यर्थः । हेतुमुपेत्य तस्यासाधकत्वमुपसंहरति–**तस्मादिति** । तथाऽपि ज्योतिर्वाक्ये किं जातमित्याशङ्क्य प्रकृतपरामर्शियच्छब्दमाश्रित्याऽऽह–**तदेवेति** । परामर्शफलमाह–**उपासनान्तरेति** । गायत्रीपदं ब्रह्मणि लाक्षणिकमित्युक्त्वा तस्य गौणत्वं ब्रुवाणः सिद्धान्तभागं विधान्तरेण व्याकरोति–**अपर इति** । साक्षाद्विकारानवच्छेदेनेत्यर्थः । तथा गायत्रीवच्चतुष्पात्त्वसाम्येन ब्रह्मणि येन गायत्रीशब्देन चेतः समर्प्यते तेन ब्रह्मण एव निगदान्न पूर्वं छन्दः प्रकृतमित्यर्थः संख्यासाम्यं साधयति–**यथेति** । तस्याश्चतुष्पात्त्वं व्यनक्ति–**षडिति** । स्थावरजङ्गमानि सर्वाणि भूतान्यस्यैकः पादः । दिवि द्योतनवति चिदात्मनि प्रसिद्धायां वा दिवि त्रयः पादा अस्येति ब्रह्मणश्चतुष्पात्त्वमाह–**तथेति** । चतुष्पात्त्वसाम्याद्ब्रह्मणि गायत्रीपदप्रयोगेऽतिप्रसक्तिमाशंक्य श्रौतप्रयोगानियतार्थत्वे दृष्टान्तमाह–**तथेति** । तदेवोदाहरति–**तद्यथेति** । संवर्गविद्यायामधिदैवमग्निसूर्यचन्द्राम्भांसि वायौ लीयन्तेऽध्यात्मं प्राणे वाक्चक्षुःश्रोत्रमनांसीत्युक्तम् । ते वायुना

१ वायुना सह आध्यात्मिकेभ्योन्ये । २ प्राणेन सह अधिदैविकेभ्योन्ये ।

**"सैषा विराडन्नादी"[छा०४।३।८]इति॥अस्मिन् पक्षे ब्रह्मैवाभिहितमिति न छन्दोऽभिधानम् । सर्वथाऽप्यस्ति पूर्वस्मिन्वाक्ये प्रकृतं ब्रह्म ॥ २५ ॥**

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

**इतश्चैवमभ्युपगन्तव्यमस्ति पूर्वस्मिन्वाक्ये प्रकृतं ब्रह्मेति ।**

रत्नप्रभा ।

पक्रम्याह—**सैषेति** ॥ विधेयापेक्षया स्त्रीलिङ्गनिर्देशः । विराट्पदं छन्दोवाचकम् "दशाक्षरा विराड्" इति श्रुतेः । दशत्वसाम्येन वाय्वादयो **विराडित्युच्यन्ते** । एवञ्च दशत्वद्वारा वाय्वादिषु कृतत्वं विराट्त्वञ्च ध्येयम् । तत्र विराट्त्वध्यानात्सर्वमस्यान्नं भवति । "अन्नं विराड्" इति श्रुतेः । कृतत्वध्यानादन्नादो भवति । कृतद्यूतस्यान्नादत्वात् । कृतं हि स्वीयचतुरंकेषु त्र्यंकादिकमन्तर्भावयदन्नमत्तीव लक्ष्यते । अत एव कृतजयादितरद्यूतजयः श्रुत्युक्तः"कृतायविजितायाधरेऽयाः संयन्ति"इति । अयः—द्यूतम् । कृतसंज्ञोऽयः—**कृतायः** । स विजितो येन तस्मै । **अधरेऽयाः** त्र्यङ्कादयः अयाः **संयन्ति** उपनमन्ते । तेन जिता भवन्तीत्यर्थः । एवञ्च सा वाय्वादिदशात्मिका एषा कृतशब्दिता विराडन्नम् । कृतत्वादन्नादिनीत्यर्थः । **सर्वथापीति** । गायत्रीतिपदस्य लक्षकत्वे गौणत्वेऽपि चेत्यर्थः । अत्रापर आहेत्यपरपदेन गौणत्वं स्वमतं नेति द्योतयति । अजहल्लक्षणापक्षे हि वाग्वै गायत्रीति वागात्मत्वं गायति च त्रायते चेति निरुक्तनामकञ्च गायत्र्या उपाधित्वेनोपास्यत्वादुपपन्नतरम् । गौणपक्षे गायत्रीत्यागात्तदुभयं सर्वात्मकत्वमात्रेणोपपादनीयम् । एवं गायत्रीपदस्य स्वार्थत्यागोऽप्रसिद्धचतुष्पात्त्वगुणद्वारा विप्रकृष्टलक्षणा चेति बहुसमञ्जसम् ॥ २९ ॥ **ननु** "गायत्री वा इदं सर्वम्" इति प्रथमगायत्रीश्रुतेः कथं लक्षणेत्याशंक्य वाक्यशेषगतसर्वात्मकत्वाद्यनेकबलवत्प्रमाणसंवादेन ब्रह्मणि तात्पर्यावगमादित्याह—**भूतादिपादेति** ॥ पदार्थमाह—**इतश्चेति**॥

भामती ।

तद्धि तस्य जागरितस्थानम् । जाग्रत्खल्वयं बाह्यान्पदार्थान्वेद । तथा च—'अयं वाव स योऽयमन्तःपुरुष आकाशः' शरीरमध्य इत्यर्थः । तद्धि तस्य स्वप्नस्थानम् । तथा—'अयं वाव स योऽयमन्तर्हृदय आकाशः' हृदयपुण्डरीक इत्यर्थः । तद्धि तस्य सुषुप्तिस्थानम् । तदेत् 'त्रिपादस्यामृतं दिवि' इत्युक्तम् । तदेवं चतुष्पात्त्वसामान्याद्गायत्रीशब्देन ब्रह्मोच्यत इति ॥ **अस्मिन्पक्षे ब्रह्मैवाभिहितमिति** । ब्रह्मपरत्वादभिहि-

आनन्दगिरीय-न्यायनिर्णयः ।

सह पञ्चाऽऽध्यात्मिकेभ्योऽन्य एते प्राणेन सहाऽऽधिदैविकेभ्योऽन्ये पञ्च ते सर्वे दश सन्तस्तत्कृतं कृतायोपलक्षितं द्यूतं भवति । अत्र हि चतुरंकायद्यूतगतचतुरंकवच्चत्वारः पदार्थाः सन्ति । त्र्यंकायवत्त्रयः । द्व्यंकायवद्द्वौ । एकांकायवदेकश्च । द्यूते च चतुरंकायः कृतसंज्ञकः स च दशात्मकश्चतुर्ध्वंकेषु त्रयाणां त्रिषु द्वयोस्तयोरेकस्य चान्तर्भावाद्वायुप्रभृतयोऽपि दश तस्मात्तेऽपि कृतमित्युपक्रम्याऽऽह—**सैषेति** । विधेयाभिप्रायः[1] स्त्रीलिङ्गनिर्देशः । दशसंख्यात्वाद्विराडन्नं दशाक्षरा विराडन्नं विराडिति श्रुतेः । कृतत्वाच्च साऽन्नादिनी । कृते खल्वन्नभूता दशसंख्याऽन्तर्भवत्यतस्तामत्तीवेत्यन्नादिनी विराडित्युच्यते । तथा चान्नादत्वेनापि गुणेन वाय्वादीनामुपास्यता । तत्र यथा संख्यासाम्याद्विराट्शब्दो वाय्वादिषु तथा गायत्रीशब्दोऽपि चतुष्पात्त्वसाम्याद् ब्रह्मणीत्यर्थः । तथाहीत्यादि व्याख्यायास्य पूर्वस्माद्विशेषमाह—**अस्मिन्निति** । अभिहितं तात्पर्यगम्यमिति यावत् । न च्छन्दोभिधानं न तत्र तात्पर्यमित्यर्थः । यद्यपि पूर्वं विकारस्थं ब्रह्म गायत्रीपदाल्लक्षणया तात्पर्यतोऽभिहितं तथाऽपि गौणप्रयोगे वाक्यस्थो गुणस्तात्पर्याल्लभ्यते लक्षणायां तु वाच्यसंबन्धादर्थान्तरे तात्पर्यमिति भेदः । लाक्षणिकत्वं गौणत्वं वा कतरत्तर्हीष्टं तदाह—**सर्वथेति** ॥२५॥ श्रुत्यादिष्वाद्यैकमानादुत्तरानेकमानं बलवद्धि संवादस्य तात्पर्यहेतुत्वादिति न्यायेनापि गायत्रीशब्दं ब्रह्मेत्याह—**भूतादीति** । चशब्दमेवंशब्दं च व्याकरोति—**इतश्चेति** । तदेव स्फुटयति—

१ विधेयाभिप्रायेण स्त्रीलिङ्गनिर्देशः ।

यतो भूतादीन्पादान्व्यपदिशति ॥ भूतपृथिवीशरीरहृदयानि हि निर्दिश्याह–"सैषा चतुष्पदा षड्विधा गायत्री" [ छा० ३ । १२ । ५ ] इति ॥ न हि ब्रह्मानाश्रयणे केवलस्य च्छन्दसो भूतादयः पादा उपपद्यन्ते ॥ अपि च ब्रह्मानाश्रयणे नेयमृक् सम्बध्येत–"तावानस्य महिमा" [ छा० ३ । १२ । ६ ] इति ॥ अनया हि ऋचा स्वरसेन ब्रह्मैवाभिधीयते । "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" [ छा० ३ । १२ । ६ ] इति सर्वात्मत्वोपपत्तेः ॥ पुरुषसूक्तेऽपीयमृग् ब्रह्मपरतयैव समाम्नायते ॥ स्मृतिश्च–ब्रह्मण एवंरूपतां दर्शयति–"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" [ भ० गी० १० । ४२ ] इति "यद्वै तद्ब्रह्म" [ छा० ३ । १२ । ७ ] इति च निर्देशः ॥ एवं सति मुख्यार्थ उपपद्यते ॥ "ते वा एते पञ्च ब्रह्मपुरुषाः" [ छा० ३ । १३ । ६ ] इति च । "हृदयसुषिषु ब्रह्मपुरुषः" इति श्रुतिः ब्रह्मसम्बन्धितायां विवक्षितायां सम्भवति ॥

रत्नप्रभा ।

सूत्रस्थादिपदार्थं दर्शयति—**भूतपृथिवीति** ॥ अत्र सूत्रभाष्यकारयोर्भूतादिभिश्चतुष्पदा गायत्रीति सम्मतम् । षडक्षरैश्चतुष्पात्त्वं वृत्तिकारोक्तमप्रसिद्धम् । चकारसूचितं युक्त्यन्तरमाह—**अपि चेति** ॥ ब्रह्मपरसूक्तोत्पन्नत्वाच्च तस्यास्तत्परत्वमित्याह—**पुरुषेति** ॥ ब्रह्मपदस्य च्छन्दोवाचित्वमुक्तं निरस्यति—**यद्वै तद् ब्रह्मेति** ॥ पूर्वस्यामृचि ब्रह्मोक्तावित्यर्थः । हृदयस्य चतुर्दिक्षूर्ध्वे च पञ्चसुषयः सन्ति । तेषु ब्रह्मस्थानहृन्नगरस्य प्रागादिद्वारेषु क्रमेण प्राणव्यानापानसमानोदानाः पञ्च द्वारपाला इति ध्यानार्थं श्रुत्या कल्पितम् । तत्र हृदयच्छिद्रस्थप्राणेषु ब्रह्मपुरुषत्वश्रुतिर्हृदि गायत्र्याख्यब्रह्मण उपासनासम्बन्धितायां ब्रह्मणो द्वारपालत्वाद्ब्रह्मपुरुषा इति सम्भवतीत्याह—**पञ्च ब्रह्मेति** ॥ २६ ॥

भामती ।

तमित्युक्तम् ॥ २५ ॥ **षड्विधेति** । भूतपृथिवीशरीरहृदयवाक्प्राणा इति षट् प्रकारा गायत्र्याख्यस्य ब्रह्मणः श्रूयन्ते । **पञ्च ब्रह्मपुरुषा इति च, हृदयसुषिषु ब्रह्मपुरुषश्रुतिर्ब्रह्मसंबन्धितायां विवक्षितायां संभवति** । अस्यार्थः—हृदयस्यास्य खलु पञ्च सुषयः पञ्च छिद्राणि । तानि च देवैः प्राणादिभी रक्ष्यमाणानि स्वर्गप्राप्तिद्वाराणीति देवसुषयः । तथाहि—हृदयस्य यत्प्राङ्मुखं छिद्रं तत्स्थो यो वायुः स प्राणः, तेन हि प्रयाणकाले संचरते स्वर्गलोकं, स एव चक्षुः, स एवादित्य इत्यर्थः । 'आदित्यो ह वै बाह्यः प्राणः' इति श्रुतेः । अथ योऽस्य दक्षिणः सुषिस्तत्स्थो वायुविशेषो व्यानः । तत्संबद्धं श्रोत्रं तच्चन्द्रमाः,

आनन्दगिरीय–न्यायनिर्णयः ।

**यत इति** । व्यपदिशति गायत्री वा इत्यादिश्रुतिरिति शेषः । भूतादीन्येवोच्यन्ते न तेषां पादत्वमित्याशंक्याऽऽह—**भूतेति** । पादैः षडक्षरैश्चतुष्पात्त्वेऽप्यनन्तरोक्तभूतादीनां पादत्वं सैषेत्यादिशब्दादित्यर्थः । तत्रान्यार्थत्वेनोक्तावपि वाक्प्राणावुपेत्य षड्विधत्वम् । भूतादिपादत्वस्यान्यथासिद्धिं प्रत्याह—**नहीति** । चकारसूचितं युक्त्यन्तरमाह—**अपि चेति** । छन्दोङ्गीकारे कथमृचोऽसंगतिस्तत्राऽऽह—**अनयेति** । उत्तरार्धेन पूर्वार्धविवरणेनोच्यमानसार्वात्म्यस्य सर्वकारणे ब्रह्मण्युपपत्तेरिति स्वारस्यमेव दर्शयन्नुक्तेऽर्थे हिशब्दसूचितं हेतुमाह—**पादोऽस्येति** । ब्रह्माधिकारोत्पत्तेरपि तत्परत्वमृचो वाच्यमित्याह—**पुरुषेति** । ब्रह्मविषयस्मृत्यर्थस्यात्र प्रत्यभिज्ञानाच्च तथेत्याह—**स्मृतिश्चेति** । यत्तु मन्त्रानन्तरमाविब्रह्मशब्दस्य छन्दोविषयत्वं तद्दूषयति—**यदिति** । एवं सति पूर्ववाक्ये ब्रह्मोपगमे सतीत्यर्थः । इतोऽपि पूर्वं ब्रह्मोक्तमित्याह—**पञ्चेति** । गायत्र्याख्यब्रह्मणो हार्दस्योपास्त्यङ्गत्वेन द्वारपालादिगुणविध्यर्थं तस्य ह वा

१ हृदयादीनीति पाठान्तरम् ।

**तस्मादस्ति पूर्वस्मिन्वाक्ये प्रकृतं ब्रह्म ॥ तदेव ब्रह्म ज्योतिर्वाक्ये द्युसम्बन्धात्प्रत्यभिज्ञायमानं परामृश्यत इति स्थितम् ॥ २६ ॥**

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥ ( ११ ) ॥

**यदप्येतदुक्तं पूर्वत्र-"त्रिपादस्यामृतं दिवीति" [ छा० ३ । १२ । ६ ] सप्तम्या द्यौराधारत्वेनोपदिष्टा, इह पुनः "अथ यदतः परो दिवः" [ छा० ३ । १३ । ७ ] इति पञ्चम्या मर्यादात्वेन । तस्मादुपदेशभेदान्न तस्येह प्रत्यभिज्ञानमस्तीति ॥ तत्परिहर्तव्यम् ॥ अत्रोच्यते-नायं दोषः । उभयस्मिन्नप्यविरोधात् । उभयस्मिन्नपि सप्तम्यन्ते पञ्चम्यन्ते चोपदेशेन प्रत्यभिज्ञानं विरुध्यते॥यथा-लोके वृक्षाग्रेण सम्बद्धोऽपि श्येन उभयथोपदिश्यमानो दृश्यते-वृक्षाग्रे श्येनो वृक्षाग्रात्परतः श्येन इति च ।**

---

रत्नप्रभा ।

"दिवि" "दिवः" इति विभक्तिभेदात् प्रकृतप्रत्यभिज्ञा नास्तीत्युक्तं नोपेक्षणीयमित्याह-**तत्परिहर्तव्यमिति** ॥ परिहारं प्रतिजानीते-**अत्रेति** ॥ सूत्रे नञर्थं वदन् परिहारमाह-**नायमिति** ॥ एवं सर्वत्र व्याख्येयम् ॥ प्रधानप्रातिपदिकार्थद्युसम्बन्धेन प्रत्यभिज्ञाया विभक्त्यर्थभेदो न प्रतिबन्धकः । कथंचिदाधारस्यापि मर्यादात्वसम्भवात् । यथा-वृक्षाग्रं स्वलग्नभागावच्छिन्नश्येनस्याधारः सन्नेव स्वालग्नभागावच्छि-

भामती ।

'श्रोत्रेण सृष्टा दिशश्चन्द्रमाश्च' इति श्रुतेः । अथ योऽस्य प्रत्यङ्मुखः सुषिस्तत्स्थो वायुविशेषोऽपानः स च वाक्संबन्धाद्वाक्, 'वाग्वा अग्निः' इति श्रुतेः । अथ योऽस्योदङ्मुखः सुषिस्तत्स्थो वायुविशेषः स समानः, तत्संबद्धं मनः, तत्पर्जन्यो देवता । अथ योऽस्योर्ध्वः सुषिस्तत्स्थो वायुविशेषः स उदानः, पादतलादारभ्योर्ध्वं नयनात् । स वायुस्तदाधारश्चाकाशो देवता । ते वा एते पञ्च सुषयः । तत्संबद्धाः पञ्च हार्दस्य ब्रह्मणः पुरुषा न गायत्र्यामक्षरसंनिवेशमात्रे संभवन्ति, किंतु ब्रह्मण्येवेति ॥ २६ ॥ **यथा लोक इति** । यदाधारत्वं मुख्यं दिवस्तदा कथंचिन्मर्यादा व्याख्येया । यो हि श्येनो वृक्षाग्रे वस्तुतोऽस्ति स च ततः परोऽप्यस्त्येव । अर्वाग्भागातिरिक्तमध्यपरभागस्थस्य तस्यैव वृक्षात्परतोऽवस्थानात् । एवं च बाह्यद्युभागातिरिक्तशारीरहार्दद्युभागस्थस्य ब्रह्मणो बाह्यात् द्युभागात्परतोऽवस्थानमुपपन्नम् । यदा तु मर्यादैव मुख्यतया प्राधान्येन विवक्षिता तदा लक्षणयाधारत्वं व्याख्येयम् । यथा गङ्गायां घोष इत्यत्र सामीप्यादिति । तदि-

आनन्दगिरीय-न्यायनिर्णयः ।

एतस्य हृदयस्य पञ्च देवसुषय इत्यादिवाक्यं तत्र च ते वा एते पञ्च ब्रह्मपुरुषा इति प्राच्यादिहृदयच्छिद्रेषु हार्दब्रह्मसंबन्धाद्ब्रह्मपुरुषश्रुतिरतोऽप्यस्ति पूर्वं ब्रह्मोक्तमित्यर्थः । गायत्रीवाक्यस्य च्छन्दोमात्रार्थत्वाभावे फलितमाह—**तस्मादिति** । परामृश्यते यच्छब्देनेति शेषः ॥ २६ ॥ द्युसंबन्धात्प्रत्यभिज्ञेत्यत्रानुपपत्तिमुद्भाव्य दूषयति-**उपदेशेति** । अनुवादं विभजते-**यदपीति** । तस्य पूर्ववाक्यस्थस्य चतुष्पदो ब्रह्मण इति यावत् । चोद्यस्य समूलतया समाधियोग्यतामाह-**तदिति** । तत्र समाधिसत्त्वं ब्रुवाणः सूत्रावयवं पातयति-**अत्रेति** । उपदेशभेदो दोषो नेति नञर्थमुक्त्वा हेतुमाह-**नायमिति** । हेतुं व्याकरोति-**उभयस्मिन्निति** । यदाऽऽधारत्वं दिवो मुख्यं तदा कथंचिन्मर्यादा वाच्येति दृष्टान्तमाह-**यथेति** । श्येनो वृक्षाग्रे स्थितोऽपि परतोऽस्त्येवाप्रलग्नभागातिरिक्तोपरिभागस्थस्य तस्यैवाप्राप्तपरतोऽवस्थानादतो वृक्षाग्रस्य श्येनं प्रत्याधारत्वे मुख्ये तस्मात्परतः श्येन इत्यत्र श्येनशब्दोऽप्रलग्नावयवादूर्ध्वावयवावच्छिन्नावयविलक्षक

एवं दिव्येव सद् ब्रह्म दिवः परमित्युपदिश्यते ॥ अपर आह–यथा लोके वृक्षाग्रेणासम्बद्धोऽपि श्येन उभयथोपदिश्यमानो दृश्यते वृक्षाग्रे श्येनो वृक्षाग्रात्परतः श्येन इति च, एवं च दिवः परमपि सद् ब्रह्म दिवीत्युपदिश्यते॥तस्मादस्ति पूर्वनिर्दिष्टस्य ब्रह्मण इह प्रत्यभिज्ञानम् ॥ अतः परमेव ब्रह्म ज्योतिश्शब्दमिति सिद्धम् ॥ २७ ॥ इति ज्योतिश्चरणाधिकरणम् ॥१०॥

## प्राणस्तथानुगमात् ॥ २८ ॥

अस्ति कौषीतकिब्राह्मणोपनिषदीन्द्रप्रतर्दनाख्यायिका "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम–युद्धेन च पौरुषेण च" [ कौ० ३।१] इत्यारभ्याम्नाता ॥ तस्यां श्रूयते "स होवाच प्राणोऽस्मि प्रज्ञात्मा

---

रत्नप्रभा ।

न्नस्य तस्यैव मर्यादा भवति, **एवं दिवि** सूर्ये हार्दाकाशे वा मुख्ये आधारे सद् ब्रह्म दिवो मर्यादात्वं तदलभ्माकाशावच्छिन्नं ब्रह्म प्रति, कल्पयित्वा दिवः परमित्युच्यत इत्यर्थः । यद्याकाशेन अनवच्छिन्नं ब्रह्म गृहीत्वा पञ्चम्या दिवो मर्यादात्वमेव मुख्यं, तदा गङ्गायां घोष इतिवत् सप्तम्या सामीप्यलक्षणयाऽऽधारत्वं व्याख्येयमित्याह–**अपर इति** ॥ सम्बद्धं प्रति, आधारत्वं मुख्यं पूर्वमुक्तं दिव्येव सदिति । असम्बद्धं प्रति मर्यादात्वं मुख्यमधुनोच्यते–**दिवः परमपीति** भेदः । तस्माज्ज्योतिर्वाक्यमुपास्ये ब्रह्मणि समन्वितमिति सिद्धम् ॥२७॥(१०)॥ **प्राणस्तथानुगमात्** । दिवोदासस्यापत्यं दैवोदासिः **प्रतर्दनो** नाम राजा युद्धेन पुरुषकारेण च कारणेनेन्द्रस्य प्रेमास्पदं गृहं जगाम । तं ह इन्द्र उवाच–प्रतर्दन वरं ते ददामीति । स होवाच प्रतर्दनः–यं त्वं मर्त्याय हिततमं मन्यसे तं वरं त्वमेवालोच्य मह्यं देहीति । तत इन्द्र इदमाह–प्राणोऽस्मीत्यादि । मुख्यं प्राणं निरसितुं प्रज्ञात्मत्वमुक्तम् । निर्विशेषचिन्मात्रं निरस्यति–

भामती ।

दमुक्तम्–**अपर आहेति** ।अत एव दिवः परमपीत्युक्तम्॥२७॥(१०)॥ **प्राणस्तथानुगमात्** । 'अनेकलिङ्गसंदोहे बलवत्कस्य किं भवेत् । लिङ्गिनो लिङ्गमित्यत्र चिन्त्यते प्रागचिन्तितम् ॥' मुख्यप्राणजीवदेवताब्रह्मणामनेकेषां लिङ्गानि बहूनि संप्लवन्ते, तत्कतमदत्र लिङ्गं, लिङ्गाभासं च कतमदित्यत्र विचार्यते । न चायमर्थः 'अत एव प्राणः' इत्यत्र विचारितः । स्यादेतत् । हिततमपुरुषार्थसिद्धिश्च निखिलभ्रूणहत्यादिपापापरामर्शश्च प्रज्ञात्मत्वं चानन्दादिश्च न मुख्ये प्राणे संभवन्ति।तथा'एष साधु कर्म कारयति' 'एष लोकाधिपतिः' इत्याद्यपि । जीवे तु प्रज्ञात्मत्वं कथंचिद्भवेदितरेषां त्वसंभवः । वक्तृत्वं च वाक्करणव्यापारवत्त्वं यद्यपि परमात्मनि स्वरूपेण न संभवति तथाप्यनन्यथासिद्धबहुब्रह्मलिङ्गविरोधपरिहाराय जीवद्वारेण ब्रह्म-

आनन्दगिरीय–न्यायनिर्णयः ।

इत्यर्थः । ब्रह्मणः श्येनवदवयवाभावादाधारेऽमुख्ये मर्यादा भूताकाशापेक्षयेति दार्ष्टान्तिकमाह–**एवमिति** । दिवि द्योतनवति स्वे महिम्नि हार्दे वा नभसीत्यर्थः । दिवो भूताकाशाद्बाह्याद्बाह्याद्वा तस्मादित्यर्थः । यदाऽनौपाधिकं ब्रह्माऽऽकाशास्पृष्टं गृहीत्वा पञ्चम्येव मुख्या तदा सामीप्यं सप्तमी लक्षयतीत्याह–**अपर इति** । भूतादिपादत्वलिङ्गात्तावानस्येति मन्त्राल्लिङ्गाद्यद्वै तद्ब्रह्मेतिवाक्याद्गायत्रीशब्दस्य ब्रह्मार्थत्वादुपदेशभेदेऽप्यर्थैक्यादप्रत्यभिज्ञायोगाद्युक्ताऽस्य प्रत्यभिज्ञेत्यवान्तरप्रकृतमुपसंहरति–**तस्मादिति** । प्रत्यभिज्ञातस्य यच्छब्दपरामर्शे तदेव ज्योतिरिति परमप्रकृतमुपसंहरति–**अत इति** ॥ २७ ॥ ( १० ) ॥ अनन्यथासिद्धतात्पर्यवद्ब्रह्मलिङ्गादुक्तवाक्यानां ब्रह्मपरत्वेऽपि प्रातर्दने वाक्ये पदार्थानामनेकेषामनेकलिङ्गदृष्ट्या कस्यानुसारात्किं नेयमित्याकांक्षायामाह–**प्राण इति** । विषयं वक्तुमुपक्रममनुक्रामति–**अस्तीति** । प्रतर्दनस्य राज्ञो लोकप्रसिद्धवर्यौ निपातौ । दिवोदासस्यापत्यं दैवोदासिस्तत्प्रियं प्रेमास्पदं धाम गृहं तद्गतौ हेतुर्युद्धे

तं मामायुरमृतमित्युपास्स्व" [ ३।२] इति ॥ तथोत्तरत्रापि-"अथ खलु प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति" [ ३ । ३ ] इति ॥ तथा "न वाचं विजिज्ञासीत वक्तारं विद्यात्" [ कौषी० ३ । ८ ] इत्यादि ॥ अन्ते च "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः" [ कौषी० ३। ८ ] इत्यादि ॥ तत्र संशयः-किमिह प्राणशब्देन वायुमात्रमभिधीयते-उत-देवतात्मा-उत-जीवः,-अथ वा-परं ब्रह्मेति । ननु "अत एव प्राणः" [ व्या० सू० १ । १ । २३ ॥ इत्यत्र वर्णितं प्राणशब्दस्य ब्रह्मपरत्वमिहापि च ब्रह्मलिङ्गमस्ति-"आनन्दोऽजरोऽमृतः" [ कौषी० ३ । ८ ] इत्यादि ॥ कथमिह पुनस्संशयस्सम्भवति ॥ अनेकलिङ्गदर्शनादिति ब्रूमः । न केवलमिह ब्रह्मलिङ्गमेवोपलभ्यते ॥ सन्ति हि इतर-

रत्नप्रभा ।

**तं मामिति** ॥ इदं प्राणस्येन्द्रदेवतात्वे लिङ्गम् । मुख्यप्राणत्वे लिङ्गमाह-**अथेति**॥ वागादीनां देहधारणशक्त्यभावनिश्चयानन्तरमित्यर्थः।प्राणस्य देहधारकत्वमुत्थापकत्वञ्च प्रसिद्धमिति वक्तुं खल्वित्युक्तम् । प्राणस्य जीवत्वे वक्तृत्वं लिंगमाह-**न वाचमिति** ॥ आनन्दत्वादिकं ब्रह्मलिङ्गमाह-**अन्ते चेति**॥ अनेकेषु लिङ्गेषु दृश्यमानेषु बलाबलनिर्णयार्थमिदमधिकरणमित्यगतार्थतामाह-**अनेकलिंगेति** ॥ पूर्वत्र प्रकृतब्रह्मवाचकयच्छब्दबलाज्ज्योतिःश्रुतिः ब्रह्मपरेत्युक्तम् । न तथेह प्राणश्रुतिभङ्गे किञ्चिद्बलमस्ति । मिथोविरुद्धानेकलिङ्गानामनिश्चा-

भामती ।

प्येव कथंचिद्व्याख्येयं, जीवस्य ब्रह्मणोऽभेदात् । तथा च श्रुतिः-'यद्वाचानभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि' इति वाग्वदनस्य ब्रह्म कारणमित्याह । शरीरधारणमपि यद्यपि मुख्यप्राणस्यैव तथापि प्राणव्यापारस्य परमात्मायत्तत्वात्परमात्मन एव । यद्यपि चात्रेन्द्रदेवताया विग्रहवत्या लिङ्गमस्ति, तथाहि-इन्द्रधामगतं प्रतर्दनं प्रतीन्द्र उवाच, 'मामेव विजानीहि' इत्युपक्रम्य, 'प्राणोऽस्मि प्रज्ञात्मा' इत्यात्मनि प्राणशब्दमुच्चचार । प्रज्ञात्मत्वं चास्योपपद्यते, देवतानामप्रतिहतज्ञानशक्तित्वात् । सामर्थ्यातिशयाच्चेन्द्रस्य हिततमपुरुषार्थहेतुत्वमपि । मनुष्याधिकारत्वाच्छास्त्रस्य देवान्प्रत्यप्रवृत्तेर्भ्रूणहत्यादिपापापरामर्शस्योपपत्तेः । लोकाधिपत्यं चेन्द्रस्य । लोकपालत्वात् । आनन्दादिरूपत्वं च स्वर्गस्यैवानन्दत्वात् । 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति स्मृतेश्चामृतत्वमिन्द्रस्य । 'त्वाष्ट्रमहनम्' इत्याद्या च विग्रहवत्त्वेन स्तुतिस्तत्रैवोपपद्यते । तथापि परमपुरुषार्थस्यापवर्गस्य परब्रह्मज्ञानादन्यतोऽनवाप्तेः, परमानन्दरूपस्य मुख्यस्यामृतत्वस्याजरत्वस्य च ब्रह्मरूपाव्यभिचारात्, अध्यात्मसंबन्धभूम्नश्च पराचीनेन्द्रेऽनुपपत्तेः, इन्द्रस्य देवताया

आनन्दगिरीय-न्यायनिर्णयः ।

नेति । तत्करणेन पुरुषकारप्रदर्शनेन चेत्यर्थः । आम्नातेति तं हेन्द्र उवाच प्रतर्दन वरं ते ददानीति स होवाच प्रतर्दनस्त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इत्याद्याख्यायिका श्रुतेत्यर्थः । मुख्यप्राणव्यावृत्त्यर्थं प्रज्ञात्मेति । निर्विशेषं चिन्मात्रं व्यावर्तयति-**तं मामिति** । देवतासंभावनार्थं वाक्यमुक्त्वा प्राणसंभावनार्थमाह-**तथेति** । देहधारणं न वागादिकृतमित्युक्त्यनन्तरमित्यथशब्दार्थः । प्राणस्य तत्कार्यं प्रसिद्धमिति खल्वित्युक्तम् । जीवं संभावयितुमाह-**तथेति** । परमात्मानं संभावयति-**अन्ते चेति** । आदिपदेन स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानित्याद्युक्तम् । विषयमुक्त्वाऽनेकलिङ्गदृष्ट्या संशयमाह-**तत्रेति** । गतार्थत्वेन तमाक्षिपति-**नन्विति** । ब्रह्मलिङ्गात्प्राणशब्दस्य ब्रह्मणि वृत्तिरुक्ता प्रकृते कथमित्याशङ्क्याऽऽह-**इहापीति** । एष लोकाधिपतिरित्यादिसंग्रहायाऽऽदिपदम् । अनेकेषु लिङ्गेषु, दृष्टेषु कतमल्लिङ्गं लिङ्गाभासं वा कतमदिति संशयं निरसितुमधिकरणमित्याह-**अनेकेति** । तदेव विवृणोति-**नेत्यादिना** । न गन्धं विजिज्ञासीत घ्रातारं विद्यादित्यादिपदेनोक्तम् । अनेकलिङ्गानि दर्शयित्वा

लिङ्गान्यपि-"मामेव विजानीहि" [ कौषी० ३ । १ ] इतीन्द्रस्य वचनं देवतात्मलिङ्गम् ॥ इदं शरीरं परिगृह्योत्थापयतीति प्राणलिङ्गम् । "न वाचं विजिज्ञासीत वक्तारं विद्याद्" [ कौषी० ३ । ८ ] इत्यादि जीवलिङ्गम् ॥ अत उपपन्नः संशयः ॥ तत्र प्रसिद्धो वायुः प्राणः ॥ इति प्राप्ते उच्यते ॥ प्राणशब्दं ब्रह्म विज्ञेयम् ॥ कुतः ॥ "तथानुगमात्" ॥ तथा हि ॥ पौर्वापर्येण पर्यालोच्यमाने वाक्ये पदार्थानां समन्वयो ब्रह्मप्रतिपादनपर उपलभ्यते ॥ उपक्रमे तावद् वरं वृणीष्वेतीन्द्रेणोक्तः प्रतर्दनः परमपुरुषार्थं वरमुपचिक्षेप-"त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" [ कौषी० ३ । १ ] इति ॥ तस्मै हिततमत्वेनोपदिश्यमानः प्राणः कथं परमात्मा न स्यात् ॥ न ह्यन्यत्र परमात्मज्ञानाद्धिततमप्राप्तिरस्ति "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" [ श्वेता० ३ । ८ ] इत्यादिश्रुतिभ्यः ॥ तथा "स यो मां वेद न ह वै तस्य केनचन कर्मणा लोको मीयते न स्तेयेन न भ्रूणहत्यया" [ कौषी०

---

रत्नप्रभा ।

यकत्वादिति प्रत्युदाहरणसङ्गत्या पूर्वपक्षयति-**तत्रेति** ॥ पूर्वं प्रधानप्रातिपदिकार्थबलाद्विभक्त्यर्थबाधवद्वाक्यार्थज्ञानं प्रति हेतुत्वेन प्रधानानेकपदार्थबलादेकवाक्यताभङ्ग इति दृष्टान्तसङ्गतिर्वाऽस्तु । **पूर्वपक्षे** प्राणाद्यनेकोपास्तिः **सिद्धान्ते** प्रत्यग्ब्रह्मधीरिति विवेकः । **तथा** ब्रह्मपरत्वेन पदानामन्वयावगमादिति हेत्वर्थमाह-**तथा हीति** ॥ हिततमत्वकर्मक्षयादिपदार्थानां सम्बन्धो ब्रह्मणि तात्पर्यनिश्चायक उपलभ्यत इत्युक्तं विवृणोति-**उपक्रम इत्यादिना** ॥ यं मन्यसे तं वरं त्वमेव प्रयच्छेत्यर्थः । **स यः** कश्चित् **मां**

भामती ।

आत्मनि प्रतिबुद्धस्य चरमदेहस्य वामदेवस्येव प्रारब्धविपाककर्माशयमात्रं भोगेन क्षपयतो ब्रह्मण एव सर्वमेतत्कल्पत इति विग्रहवदिन्द्रजीवप्राणवायुपरित्यागेन ब्रह्मैवात्र प्राणशब्दं प्रतीयत इति पूर्वपक्षाभावादनारभ्यमेतदिति । अत्रोच्यते-'यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः' इति यस्यैव प्राणस्य प्रज्ञात्मन उपास्यत्वमुक्तं तस्यैव प्राणस्य प्रज्ञात्मना सहोत्क्रमणमुच्यते । न च

आनन्दगिरीय-न्यायनिर्णयः ।

तत्कार्यमाह-**अत इति** । पूर्वत्र प्रकृतत्रिपाद्ब्रह्मपरामर्शियच्छब्दसमानाधिकृता ज्योतिःश्रुतिस्तदर्थेत्युक्तमिह न तथाविधमसाधारणं किंचिदस्ति प्राणस्य ब्रह्मत्वे मानमिति प्रसिद्ध्यनतिक्रमात्प्राणो वायुरेवेत्याह-**तत्रेति** । स्फुटब्रह्मलिङ्गानां कौषीतकिश्रुतीनां ब्रह्मण्यन्वयोक्तेः श्रुत्यादिसंगतयः । पूर्वपक्षे प्राणदेवताजीवानामन्यतमोपास्तिः फलं सिद्धान्ते ब्रह्मोपास्तिः । मुख्यप्राणपक्षमनूद्य सूत्रमादाय प्रतिज्ञां विभजते-**इति प्राप्त इति** । लिङ्गान्तरेषु सत्सु कुतोऽस्य ब्रह्मार्थतेत्याह-**कुत इति** । तेषां वक्ष्यमाणान्यथासिद्धिं मत्वा हेतुमाह-**तथेति** । ब्रह्मप्रतिपादनपरत्वेनैव पदानामन्वयदृष्टेरित्यर्थः । हेत्वर्थं प्रपञ्चयति-**तथा हीति** । तत्राऽऽदावुपक्रमे पदानां ब्रह्मण्यन्वयमाह-**उपक्रम इति** । यं त्वं मनुष्यायातिशयेन हितं मन्यसे तं वरमभिलषितं मह्यं त्वमेव वृणीष्व प्रयच्छेति प्रतर्दनेनोक्ते मामेवेत्यादिना प्राणस्योच्यमानस्य न युक्ता वायुविकारतेत्याह-**तस्मा इति**।उपास्तेरचिन्त्यशक्तित्वात्प्राणोपास्तिरेव मोक्षहेतुरलं ब्रह्मधियेत्याशंक्याऽऽह-**न हीति** । एवकारार्थमाह-**नान्य इति** । आदिशब्देन "तमेवं विद्वान्" इत्याद्या श्रुतिरुक्ता । उपक्रमवन्मध्येऽपि पदानां ब्रह्मण्यन्वयमाह-**तथेति** । स यः कश्चिदधिकृतो मां ब्रह्मरूपं साक्षादनुभवति तस्य विदुषो लोको मोक्षो महताऽपि पातकेन न मीयते न हिंस्यते न प्रतिबध्यते, ज्ञानमाहात्म्येन सर्वस्यापि पापस्य दग्धत्वादित्याह-**स य इति** । केनचन कर्मणेत्युक्तं स्पष्टयति-**नेत्यादिना** । न मातृवधेन न पितृ-

**३ । १ ] इत्यादि च ब्रह्मपरिग्रहे घटते॥ ब्रह्मविज्ञाने हि सर्वकर्मक्षयः प्रसिद्धः–"क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" [ मुण्ड० २ । २ । ८ ] इत्याद्यासु श्रुतिषु॥ प्रज्ञात्मत्वं च ब्रह्मपक्ष एवोपपद्यते॥ न ह्यचेतनस्य वायोः प्रज्ञात्मत्वं सम्भवति॥ तथोपसंहारेऽपि–"आनन्दोऽजरोऽमृतः" [ कौषी० ३ । ८ ] इत्यानन्दत्वादीनि न ब्रह्मणोऽन्यत्र सम्यक् सम्भवन्ति॥ "स न साधुना कर्मणा भूयान् भवति नो एवाऽसाधुना कनीयानेष ह्येव साधु कर्म कारयति" [ कौषी० ३ । २८ ] "तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति । तं यमेभ्यो लोकेभ्योऽधो निनीषते" [ कौषी० ३ । ८ ] इति "एष लोकाधिपतिरेष लोकपाल एष लोकेशः" [ कौषी० ३ । ८ ] इति च॥ सर्वमेतत्परस्मिन्ब्रह्मण्याश्रीयमाणेनुगन्तुं शक्यते, न मुख्ये प्राणे । तस्मात्प्राणो ब्रह्म॥२८॥**

---

रत्नप्रभा ।

ब्रह्मरूपं वेद साक्षादनुभवति तस्य विदुषो लोको मोक्षो महताऽपि पातकेन न ह मीयते नैव हिंस्यते न प्रतिबध्यते । ज्ञानाग्निना कर्मतूलराशेर्दग्धत्वादित्याह–**स य इति**॥ साध्वसाधुनी पुण्यपापे ताभ्यामस्पृष्टत्वं तत्कारयितृत्वं निरंकुशैश्वर्यं च सर्वमेतदित्यर्थः॥ २८॥ अहङ्कारवादेन स्वात्मवाचक-

भामती ।

ब्रह्मण्यभेदे द्विवचनं, न सहभावः; न चोत्क्रमणम् । तस्माद्वायुरेव प्राणः । जीवश्च प्रज्ञात्मा । सह प्रवृत्तिनिवृत्त्या भक्त्यैकत्वमनयोरुपचरितं 'यो वै प्राणः' इत्यादिना । आनन्दामराजरापहतपाप्मत्वादयश्च ब्रह्मणि प्राणे भविष्यन्ति । तस्माद्यथायोगं त्रय एवात्रोपास्याः । न चैष वाक्यभेदो दोषमावहति । वाक्यार्थावगमस्य पदार्थावगमपूर्वकत्वात् । पदार्थानां चोक्तेन मार्गेण स्वातन्त्र्यात् । तस्मादुपास्यभेदादुपासात्रैविध्यमिति पूर्वः पक्षः । सिद्धान्तस्तु–सत्यं पदार्थावगमोपायो वाक्यार्थावगमः, न तु पदार्थावगमपराण्येव पदानि, अपि त्वेकवाक्यार्थावगमपराणि । तमेव त्वेकं वाक्यार्थं पदार्थावगममन्तरेण न शक्नुवन्ति कर्तुमित्यन्तरा तदर्थमेव तमप्यवगमयन्ति, तेन पदानि विशिष्टैकार्थाववोधनस्वरसान्येव बलवद्बाधकोपनिपातान्नानार्थबोधपरतां नीयन्ते । यथाहुः–'संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते' इति । तेन यथोपांशुयाजवाक्ये जामितादोषोपक्रमे तत्प्रतिसमाधानोपसंहारे चैकवाक्यत्वाय 'प्रजापतिरुपांशु यष्टव्यः' इत्यादयो न पृथग्विधयः किंत्वर्थवादा इति निर्णीतं, तथेहापि 'मामेव विजानीहि' इत्युपक्रम्य 'प्राणोऽस्मि प्रज्ञात्मा' इत्युक्त्वान्ते 'स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः' इत्युपसंहाराद्ब्रह्मण्येकवाक्यत्वावगतौ सत्यां जीवमुख्यप्राणलिङ्गे अपि तदनुगुणतया नेतव्ये । अन्यथा वाक्यभेदप्रसङ्गात् । यत्पुनर्भेददर्शनं 'सह ह्येतौ' इति, तज्ज्ञानक्रियाशक्तिभेदेन बुद्धिप्राणयोः प्रत्यगात्मोपाधिभूतयोर्निर्देशः प्रत्यगात्मानमेवोपलक्षयितुम् ।

आनन्दगिरीय–न्यायनिर्णयः ।

वधेनेत्यादि वक्तुमादिपदम् । श्रुतस्य सवपापदाहस्यान्यथा सिद्धिं प्रत्याह–**ब्रह्मेति** । एवं न हास्येत्यादिश्रुतिसंग्रहार्थमेवमाद्यास्वित्युक्तम् । इतश्च ब्रह्मैव प्राणशब्दमित्याह–**ब्रह्मेति** । अन्ययोगव्यावृत्तिमाह–**न हीति** । प्रक्रमादिवदुपसंहारेऽपि पदानां ब्रह्मार्थत्वमाह–**तथेति** । आनन्दस्य दुःखाभावत्वान्मुख्येऽपि प्राणे योगाददेहस्य जरामरणयोरभावादजरत्वादेरपि तत्रोपपत्तेर्नोपसंहारस्य ब्रह्मार्थतेत्याशङ्क्याऽऽह–**आनन्दत्वादीनीति** । प्राणशब्दं ब्रह्मेत्यत्र लिङ्गान्तराण्याह–**स नेत्यादिना** । धर्माद्यस्पृष्टत्वं तत्कारयितृत्वं तदीशितृत्वं च सर्वमुक्तम् । उक्तलिङ्गफलमाह–**तस्मादिति** ॥ २८ ॥ देवतापक्षमुत्थाप्य प्रत्याह–

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥२९॥**

यदुक्तं प्राणो ब्रह्मेति, तदाक्षिप्यते–न परं ब्रह्म प्राणशब्दम् ॥ कस्मात् ॥ वक्तुरात्मोपदेशात्–वक्ता हीन्द्रो नाम कश्चिद्विग्रहवान्देवताविशेषः स्वमात्मानं प्रतर्दनायाचचक्षे–"मामेव विजानीहि" [कौषी० ३ । १] इत्युपक्रम्य "प्राणोऽस्मि प्रज्ञात्मा" [कौषी० ३ । २] इत्यहङ्कारवादेन स एष वक्तुरात्मत्वेनोपदिश्यमानः प्राणः कथं ब्रह्म स्यात् ॥ न हि ब्रह्मणो वक्तृत्वं सम्भवति–"अवागमनाः" [बृह० ३ । ८ । ८] इत्यादिश्रुतिभ्यः॥ तथा विग्रहसम्बन्धिभिरेव ब्रह्मण्यसम्भवद्भिर्धर्मैरात्मानं तुष्टाव–"त्रिशीर्षाणं त्वाष्ट्रमहनम्, अरुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छम्" [कौषी० ३ । १] इत्येवमादिभिः ॥ प्राणत्वं चेन्द्रस्य बलवत्त्वादुपपद्यते ॥ "प्राणो वै बलम्" [बृ० ५ । १४ । ४] इति हि विज्ञायते ॥ बलस्य चेन्द्रो देवता प्रसिद्धा ॥ या च काचन बलकृतिरिन्द्रकर्मैव तदिति हि पठन्ति ॥ प्रज्ञात्मत्वमप्यप्रतिहतज्ञानत्वाद्देवतात्मनः सम्भवति ॥ अप्रतिहतज्ञाना देवता इति हि वदन्ति ॥ निश्चिते चैवं देवतात्मोपदेशे हितत-

---

रत्नप्रभा ।

शब्दैः आचचक्षे उक्तवानित्यर्थः । वाक्यस्य इन्द्रोपासनापरत्वे लिङ्गान्तरमाह–**तथा विग्रहेति** ॥ त्रीणि शीर्षाणि यस्येति त्रिशीर्षा त्वष्टुः पुत्रो विश्वरूपो नाम ब्राह्मणः तं हतवानस्मि । रौति यथार्थं शब्दयतीति रुद् वेदान्तवाक्यं तन्मुखे येषां ते रुन्मुखास्तेभ्योऽन्यान् वेदान्तबहिर्मुखान् **यतीन्** अरण्यश्वभ्यो दत्तवानस्मीत्यर्थः । इन्द्रे प्राणशब्दोपपत्तिमाह–**प्राणत्वं चेति** ॥ **पठन्ति** लौकिका अपीत्यर्थः । बलवाचिना प्राणशब्देन बलदेवता लक्ष्यत इति भावः । इन्द्रो हितप्रदातृत्वाद्धिततमः कर्मानधिकारादपाप इत्येवं व्याख्येयानीत्याह–**निश्चिते चेति** ॥ किमिन्द्रपदेन विग्रहोपलक्षितं चिन्मात्रमुच्यते उत–विग्रहः । आद्ये

भामती ।

अत एवोपलक्ष्यस्य प्रत्यगात्मस्वरूपस्याभेदमुपलक्षणं भेदेनोपलक्षयति–'प्राण एव प्रज्ञात्मा' इति । 'तस्माद-

आनन्दगिरीय–न्यायनिर्णयः ।

**नेत्यादिना** । चोद्यतात्पर्यमाह–**यदुक्तमिति** । तत्र नञर्थमाह–**नेति** । उक्तहेतुषु सत्सु निषेधासिद्धिरित्याह–**कस्मादिति** । हेतुमादाय व्याचष्टे–**वक्तुरिति** । अहंकारवादेनेति क्रियापदेन संबध्यते । कथमितिसूचितानुपपत्तिं स्फुटयति–**न हीति** । "अवाक्यनादरः" इत्यादिश्रुतिरादिशब्दार्थः । ब्रह्मणो वक्तृत्वाभावादत्र वक्त्रा स्वस्यैव ज्ञेयत्वोक्तेरिन्द्रोपास्तिपरं वाक्यमित्यत्रैव हेत्वन्तरमाह–**तथेति** । त्रीणि शीर्षाणि शिरांसि यस्य स त्रिशीर्षा विश्वरूपः, स च त्वाष्ट्रस्त्वष्टुरपत्यं तमहनं हतवानस्मि । रौति यथार्थं शब्दयतीति रुद्वेदान्तवाक्यं तत्र मुखं येषां ते रुन्मुखास्ततोऽन्ये चारुन्मुखास्तान्वेदान्तबहिर्मुखानित्यर्थः । सालावृका वन्यश्वानः । "बह्वीः संध्या अतिक्रम्य दिवि प्रह्लादीनमतृणम्" इत्यादिरादिशब्दार्थः । तथाऽपि प्राणशब्दान्नेन्द्रस्योपास्यतेत्याशङ्क्याऽऽह–**प्राणत्वं चेति** । बलवत्त्वाद्बलशब्दोपचारेऽपि कथं प्राणशब्दस्येत्याशङ्क्याऽऽह–**प्राण इति** । बलवत्त्वमेवेन्द्रस्य कथं तत्राऽऽह–**बलस्येति** । प्रसिद्धिं लौकिकत्वेन प्रकटयति–**येति**। तथाऽपि प्रज्ञात्मत्वविरोधादनुपास्यता नेत्याह–**प्रज्ञेति** । कथमप्रतिहतज्ञानत्वं लोकवेदप्रसिद्धेरित्याह–**अप्रतिहतेति** । तथाऽपि हिततमपुरुषार्थहेतुत्वाद्युक्तिविरोधे कुतोऽस्योपास्यता तत्राऽऽह–**निश्चिते चेति** । शक्रस्यतिशयाद्युक्तपुमर्थहेतुत्वं कर्मानधिकाराद् भ्रूणहत्याद्यपरामृष्टत्वं लोकपालत्वाल्लोकाधिपत्यं स्वर्गस्याऽऽनन्दत्वादानन्दत्वममृतत्वाजरत्वे चाऽऽभूतसंप्लवं स्थितेरिति भावः । आक्षेपमुपसंहरति–

मत्वादिवचनानि यथासम्भवं तद्विषयाण्येव योजयितव्यानि ॥ तस्माद्वक्तुरिन्द्रस्यात्मोपदेशान्न प्राणो ब्रह्मेत्याक्षिप्य प्रतिसमाधीयते—अध्यात्मसम्बन्धभूमा ह्यस्मिन्निति ॥ अध्यात्मसम्बन्धः प्रत्यगात्मसम्बन्धः—तस्य भूमा बाहुल्यमस्मिन्नध्याये उपलभ्यते—"यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुः" [ कौषी० ३ । २ ] इति प्राणस्यैव प्रज्ञात्मनः प्रत्यग्भूतस्यायुष्प्रदानोपसंहारयोः स्वातन्त्र्यं दर्शयति ॥ न देवताविशेषस्य पराचीनस्य ॥ तथा "अस्तित्वे च प्राणानां निश्श्रेयसम्" [कौषी०३। २ ] इत्यध्यात्ममेवेन्द्रियाश्रयं प्राणं दर्शयति ॥ तथा "प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" [ कौषी० ३ । ३ ] इति, "न वाचं विजिज्ञासीत वक्तारं विद्याद्" [ कौषी० ३।८ ] इति चोपक्रम्य "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः" [ कौषी० ३ । ८ ] "स एष प्राण एव प्रज्ञात्मा" [ कौषी० ४ । २० ] "आनन्दोऽजरोऽमृतः" [ कौषी० ३ । ८ ] इति विषयेन्द्रियव्यवहारैरनाभिभूतं प्रत्यगात्मानमेवो-

---

रत्नप्रभा ।

वाक्यस्य ब्रह्मपरत्वं सिद्धम् । न द्वितीय इत्याह—अध्यात्मेति ॥ आत्मनि देहेऽधिगत इत्यध्यात्मं प्रत्यगात्मा स सम्बध्यते यैः शरीरस्थत्वादिभिरिन्द्रतनावसम्भावितैर्धर्मैस्ते अध्यात्मसम्बन्धास्तेषां भूमेत्यर्थः ॥ आयुः अत्र देहे प्राणवायुसञ्चारः । अस्तित्वे प्राणस्थितौ प्राणानाम् इन्द्रियाणां स्थितिरित्यर्थतः श्रुतिमाह—अस्तित्व इति ॥ अथातो निःश्रेयसादानमित्याद्या श्रुतिः । इन्द्रियस्थापकत्ववद्देहोत्थापकत्वमाह—तथेति ॥ वक्तृत्वमुक्त्वा सर्वाधिष्ठानत्वं दर्शितमित्याह—इति चोपक्रम्येति ॥ तत् तत्र नानाप्रपञ्चस्यात्मनि कल्पनायाम् । यथा दृष्टान्तः । लोके प्रसिद्धस्य रथस्यारेषु नेमिनाभ्योर्मध्यस्थशलाकासु चक्रोपान्तरूपा नेमिरर्पिता नाभौ चक्रपिण्डिकायामराः अर्पिता एवंभूतानि पञ्च पृथिव्यादीनि, मीयन्त इति मात्राः भोग्याः शब्दादयः पञ्चेति दश—भूतमात्राः प्रज्ञामात्रासु दशसु अर्पिताः इन्द्रियजाः पञ्च शब्दादिविषयप्रज्ञाः । मीयन्ते आभिरिति मात्राः पञ्चधीन्द्रियाणि । नेमिवद् ग्राह्यं ग्राहकेषु अरेषु कल्पितमित्युक्त्वा नाभिस्थानीये प्राणे सर्वं कल्पितमित्याह—प्राणेऽर्पिता इति ॥ स प्राणो मम स्वरूपमित्याह—

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

तस्मादिति । तमनूद्य समाधिमवतारयति—इत्याक्षिप्येति । तस्यार्थमाह—अध्यात्मेति । अस्मिन्नध्याये यत्र मामेव विजानीहीत्यादि श्रूयते तत्रेति यावत् । बाहुल्यमेवाऽऽह—यावद्धीति । तस्यार्थमाह—प्राणस्येति । एवकारार्थमाह—नेति । तथेत्यायुष्प्रदानोपसंहारयोः स्वातन्त्र्यवदित्यर्थः । अस्तित्वे प्राणस्थितौ प्राणानामिन्द्रियाणां स्थितिरित्यथातो निःश्रेयसादानमित्याद्यर्थतो गृहीत्वा तदर्थमाह—अस्तित्वे चेति । इन्द्रियाणां प्राणाश्रयत्ववदिति तथार्थः । इत्यध्यात्ममेव प्राणस्य देहधारयितृत्वमाहेति शेषः । इतश्च देवता न प्राण इत्याह—नेति । इति च प्रत्यगात्मन एव वक्तृत्वमुक्तमिति शेषः । देवतात्मनोऽपि वक्तृत्वान्न वाचमित्याद्यविरुद्धमित्याशङ्क्याऽऽह—उपक्रम्येति । तत्र च प्रज्ञामात्राणां भूतमात्राणां च नानात्वं नेत्यत्र दृष्टान्तो यथेति । यथा लोके प्रसिद्धस्य रथस्यारेषु मध्यवर्तिशलाकासु चक्रोपान्तनेमिरर्पितश्चक्रपिण्डिकायां च नाभावराः, तथा भूतान्येव पृथिव्यादीनि शब्दादयश्च विषया मीयन्त इति मात्राः प्रज्ञामात्रासु स्वविषयज्ञानेष्विन्द्रियेषु चार्पितास्तदधीनत्वात्तद्व्यवहारस्य ताश्च प्रज्ञामात्राः प्राणे परस्मिन्नर्पिताः । स च प्राणः परमात्मा तल्लिङ्गादित्याह—स इति । वाक्यतात्पर्यमाह—विषयेति । स प्राणो

पसंहरति "स म आत्मेति विद्याद्" [ कौषी० ३ । ८ ] इति चोपसंहारः प्रत्यगात्मपरिग्रहे साधुः । न पराचीनपरिग्रहे ॥ "अयमात्मा ब्रह्म सर्वानुभूः" [ बृह० २ । ५ । १९ ] इति च श्रुत्यन्तरम् ॥ तस्मादध्यात्मसम्बन्धबाहुल्याद्ब्रह्मोपदेश एवायम् ॥ न देवतात्मोपदेशः ॥ २९ ॥ कथं तर्हि वक्तुरात्मोपदेशः–

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥

इन्द्रो नाम देवतात्मा स्वमात्मानं परमात्मत्वेनाहमेव परं ब्रह्मेत्यार्षेण दर्शनेन यथाशास्त्रं पश्यन्नुपदिशति स्म–"मामेव विजानीहि" [ कौषी० ३ । १ ] इति ॥ यथा "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे । अहं मनुरभवं सूर्यश्चेति" [बृह०१।४।१०] तद्वत् ॥ "तद्यो यो देवानां प्रत्यबुध्यत, स एव तदभवद्" [ बृह० १ । ४ । १० ] इति श्रुतेः ॥ यत्पुनरुक्तं "मामेव विजानीहि" [ कौषी० ३ । १ ] इत्युक्त्वा विग्रहधर्मैरिन्द्र आत्मानं तुष्टाव त्वाष्ट्रवधादिभिरिति ॥ तत्परिहर्तव्यमत्रोच्यते ॥ न ॥ त्वाष्ट्रवधादीनां विज्ञेयेन्द्रस्तुत्यर्थत्वेनोपन्यासः ॥ यस्मादेवङ्कर्माहं, तस्मान्मां विजानीहीति ॥ कथं तर्हि ॥ विज्ञानस्तुत्यर्थत्वेन ॥ यत्कारणं त्वाष्ट्रवधादीनि साहसानि उपन्यस्य परेण विज्ञानस्तुतिमनुसन्दधाति–"तस्य मे तत्र लोम च नामीयत । स यो मां वेद । न ह वै तस्य केन

---

रत्नप्रभा ।

स म इति ॥ तर्हि प्रत्यगात्मनि समन्वयो न तु ब्रह्मणि, तत्राह–अयमिति॥२९॥ अहङ्कारवादस्य गतिं पृच्छति–कथमिति ॥ सूत्रमुत्तरम् । तद्व्याख्याति–इन्द्र इति ॥ जन्मान्तरकृतश्रवणादिना अस्मिन् जन्मनि स्वतःसिद्धं दर्शनमार्षम् ॥ विज्ञेयेन्द्रस्तुत्यर्थ उपन्यासः ॥ न चेत् कथं तर्हि स इति पृच्छति–कथं तर्हीति ॥ ब्रह्मज्ञानस्तुत्यर्थः स इत्याह––विज्ञानेति ॥ नियामकं ब्रूते–यदिति ॥ परेण तस्य मे

भामती ।

नन्यथासिद्धब्रह्मलिङ्गानुसारतः । एकवाक्यबलात्प्राण जीवलिङ्गोपपादनम्' इति संग्रहः ॥ २८ ॥ २९ ॥

आनन्दगिरीय–न्यायनिर्णयः ।

ममाऽऽत्मेत्यात्मशब्दसामानाधिकरण्याच्च प्राणशब्दस्य न देवतार्थतेत्याह–स म इति । तर्हि प्रत्यगात्मनि समन्वयो न ब्रह्मणि तत्राऽऽह–अयमिति । सूत्रार्थमुपसंहरति––तस्मादिति ॥ २९ ॥ अनन्यथासिद्धलिङ्गैः श्रुतितात्पर्याच्च प्राणस्य ब्रह्मत्वे देवतालिङ्गानां गतिर्वाच्येति पृच्छति–कथमिति । सूत्रमुत्तरम् । तद्व्याख्याति–इन्द्र इति । कथं तस्य गुर्वाद्यभावे ज्ञानं तत्राऽऽह–आर्षेणेति । तस्य तर्हि प्रतिभात्वेनामानत्वं नेत्याह–यथेति । श्रवणाद्यभावे कुतो ब्रह्मास्मीति धीस्तद्विधिविरोधात्तत्राऽऽह–यथेति । जन्मान्तरीयश्रवणादेराधुनिकधीरविरुद्धेति भावः । अध्ययनाभावे कथं यथाशास्त्रमैक्यधीरित्याशंक्य देवताधिकरणन्यायेनाऽऽह–तदिति । इन्द्रश्चेद् ब्रह्मात्मना स्वात्मानमुपदिशति कथं त्वाष्ट्रवधादिना स्तुतिस्तत्राऽऽह–यदिति । नेयं विज्ञेयस्तुतिरपि तु विज्ञानस्तुतिरित्याह––अत्रेति । तत्र गमकमाह–यदिति । तत्र क्रूरकर्मणि निमित्ते सतीत्यर्थः । कथमत्र ज्ञानस्तुतिस्तत्राऽऽह–एतदिति । तस्मान्महाभाग्येयं ज्ञानमिति शेषः । त्वदीयज्ञानस्यैवंरूपत्वेऽपि किमधिकृतस्य स्यात्तदाह–स य इति ।

चन कर्मणा लोको मीयते" [ कौषी० ३ । १ ] इत्यादिना ॥ एतदुक्तं भवति ॥ यस्मादीदृशान्यपि क्रूराणि कर्माणि कृतवतो मम ब्रह्मभूतस्य लोमापि न हिंस्यते स योऽन्योऽपि मां वेद न तस्य केनचिदपि कर्मणा लोको हिंस्यत इति ॥ विज्ञेयं तु ब्रह्मैव प्राणोऽस्मि प्रज्ञात्मेति वक्ष्यमाणम् ॥ तस्माद्ब्रह्मवाक्यमेतत् ॥ ३० ॥

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ १ ॥ १ ॥ ३१ ॥ ( ११ ) ॥**

इति श्रीवैयासिक्यां शारीरकमीमांसायां प्रथमस्याध्यायस्य प्रथमः पादस्समाप्तः ॥

यद्यप्याध्यात्मसम्बन्धभूमदर्शनान्न पराचीनस्य देवतात्मन उपदेशः ॥ तथाऽपि न ब्रह्मवाक्यं भवितुमर्हति ॥ कुतः ॥ जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च ॥ जीवस्य तावदस्मिन्वाक्ये विस्पष्टं लिङ्गमुपलभ्यते—"न वाचं विजिज्ञासीत वक्तारं विद्याद्" [ कौषी० ३ । ८ ] इत्यादि ॥ अत्र हि वागादिभिः करणैर्व्यापृतस्य कार्यकरणाध्यक्षस्य जीवस्य विज्ञेयत्वमभिधीयते ॥ तथा मुख्यप्राणलिङ्गमपि "अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" [ कौषी० ३ । ३ ] इति ॥ शरीरधारणं च मुख्यप्राणस्य धर्मः ॥ प्राणसंवादे वागादीन्प्राणान्प्रकृत्य—"तान्व-

रत्नप्रभा ।

इत्यादिना वाक्येनेत्यन्वयः । स्तुतिमाह—एतदुक्तमिति ॥ तस्माज्ज्ञानं श्रेष्ठमिति शेषः । स्तुतज्ञानविषय इन्द्र इत्यत आह—विज्ञेयं त्विति ॥ ३० ॥ देहोत्थापनं जीवलिङ्गं किं न स्यात्तत्राह—शरीरधारणं चेति ॥ सर्वे वागादयः प्राणा अहमहं श्रेष्ठ इति विवदमानाः प्रजापतिमुपजग्मुः । स च तानुवाच यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरं पतिष्यति स वः श्रेष्ठ इति । तथा क्रमेण वागादिषूत्क्रान्तेष्वपि मूकादिभावेन शरीरं स्वस्थमस्थात् । मुख्यप्राणस्य तु उच्चिक्रमिषायां सर्वेषां व्याकु-

भामती ।

॥ ३० ॥ न ब्रह्मवाक्यं भवितुमर्हतीति । नैष संदर्भो ब्रह्मवाक्यमेव भवितुमर्हतीति, किंतु तथायोगं

आनन्दगिरीय-न्यायनिर्णयः ।

ननु स्तूयमानज्ञानस्य ज्ञेयाकांक्षायामिन्द्र एव संबध्यते नेत्याह—विज्ञेयं त्विति । अध्यात्मबाहुल्यात्पराचीनदेवतोक्त्ययोगात्प्राणोऽस्मीत्यादि ब्रह्मार्थमेवेत्युपसंहरति—तस्मादिति ॥ ३० ॥ प्रकारान्तरेण ब्रह्मपरत्वमाक्षिप्य समाधत्ते—जीवेति । प्राणोऽस्मीत्यादि देवतापरं नेत्युक्तमङ्गीकरोति—यद्यपीति । तर्हि ब्रह्मपक्ष एवायं परिशिष्यते नेत्याह—तथाऽपीति । पूर्वोत्तरपक्षयोरनुपपत्तिरयुक्तेत्याह—कुत इति । देवतापक्षस्यातिफल्गुतया निरासेऽपि पक्षान्तरसद्भावान्नैवमित्याह—जीवेति । तत्राऽऽद्यं व्यनक्ति—जीवस्येति । वक्तुरेवात्र वेद्यता भाति न किंचिज्जीवलिङ्गमित्याशंक्याऽऽह—अत्रेति । द्वितीयं विवृणोति—तथेति । वक्तृत्वाद्युपदेशानन्तर्यमथशब्दार्थः । देहोत्थापनमपि जीवलिङ्गं किं न स्यात्तत्राऽऽह—शरीरेति । वागादयः सर्वे प्रत्येकं श्रेष्ठत्वमात्मनो मन्यमानास्तन्निर्दिधारयिषया प्रजापतिमुपजग्मुः । स च तानुवाच—यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरमिव भवति स वः श्रेष्ठ इति । तस्मिन्नेवमुक्तवति क्रमेण वागादिषूत्क्रान्तेष्वपि मूकादिभावेन शरीरं स्वस्थमस्थान्मुख्यस्य प्राणस्योच्चिक्रमिषायां सर्वेषां व्याकुलत्वात्तौ तान्प्रति प्राणो व्याहृतवान्मा मोहमापद्यथ यतोऽहमेवैतत्करोमि । किं तत्पञ्चधा प्राणादिभेदेना-

१ पासनात्रैवीति पाठः क्वचित् ।

रिष्ठः प्राण उवाच, मा मोहमापद्यथाऽहमेवैतत्पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति" [ प्रश्न० २ । ३ ] इति श्रवणात् ॥ ये त्विमं शरीरं परिगृह्योति पठन्ति, तेषामिमं जीवमिन्द्रियग्रामं वा परिगृह्य शरीरमुत्थापयतीति व्याख्येयम् । प्रज्ञात्मत्वमपि जीवे तावच्चेतनत्वादुपपन्नम् । मुख्येऽपि प्राणे प्रज्ञासाधनप्राणान्तराश्रयत्वादुपपन्नमेव ॥ जीवमुख्यप्राणपरिग्रहे च प्राणप्रज्ञात्मनोः सहवृत्तित्वेनाभेदेन निर्देशः स्वरूपेण च भेदनिर्देश इत्युभयथा निर्देश उपपद्यते—"यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः" [ कौषी० ३ । ३ ] "सह ह्येतावस्मिञ्छरीरे वसतः सहोत्क्रामतः" [ कौषी० ३।४] इति ॥ ब्रह्मपरिग्रहे तु किं कस्माद्भिद्येत ॥ तस्मादिह जीवमुख्यप्राणयोरन्यतर उभौ वा प्रतीयाताम् । न ब्रह्मेति चेत् ॥ नैतदेवम् ॥ उपासात्रैविध्यात् । एवं सति त्रिविधमुपासनं प्रसज्येत—जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनं चेति ॥ न चैतदेकस्मिन्वाक्येऽभ्युपगन्तुं युक्तम् ॥ उपक्रमोपसंहाराभ्यां हि—

---

रत्नप्रभा ।

त्वासौ तान् वागादीन् वरिष्ठः प्राण उवाच यूयं मा मोहमापद्यथ यतः अहमेवैतत् करोमि । किं तत् । पञ्चधा प्राणापानादिभावेन आत्मानं विभज्य एतद्वाति गच्छतीति वानं तदेव बाणम् अस्थिरं शरीरम् अवष्टभ्य आश्रित्य धारयामीत्यर्थः ॥ द्विवचनसहवासोत्क्रान्तिश्रुतेश्च न ब्रह्म ग्राह्यमित्याह—जीवमुख्येति ॥ अभेदनिर्देशमाह—यो वा इति ॥ भेदमाह—सहेति ॥ यदि जीवमुख्यप्राणयोर्लिङ्गादुपास्यत्वं, तर्हि ब्रह्मणोऽपि लिङ्गानामुक्तत्वादुपासनं स्यात् । न चेष्टापत्तिः । उपक्रमादिना निश्चितैकवाक्यताभङ्गप्रसङ्गादित्याह—नैतदेवमित्यादिना ॥ न च स्वतन्त्रपदार्थभेदाद्वाक्यभेदः किं न स्यादिति वाच्यम् । जीवमुख्यप्राणयोरुक्तलिङ्गानां ब्रह्मणि नेतुं शक्यतया स्वातन्त्र्यासिद्धेः, अफलपदार्थस्य फलवद्वाक्यार्थशेषत्वेन प्रधानवाक्यार्थानुसारेण तल्लिङ्गनयनस्योचितत्वाच्च । न हि प्रधानवाक्यार्थब्रह्मलिङ्गमन्यथा नेतुं

भामती ।

किंचिदत्र जीववाक्यं, किंचिन्मुख्यप्राणवाक्यं, किंचिद्ब्रह्मवाक्यमित्यर्थः ॥ प्रज्ञासाधनप्राणान्तरामयत्वादिति । प्राणान्तराणीन्द्रियाणि, तानि हि मुख्ये प्राणे प्रतिष्ठितानि । जीवमुख्यप्राणयोरन्यतर इत्युपक्रम-

आनन्दगिरीय—न्यायनिर्णयः ।

ऽऽत्मानं विभज्यैतद्बाणं वाति गच्छतीति वानं तदेव बाणमस्थिरं शरीरमवष्टभ्य विधारयामीत्युक्तेर्न देहधारणमन्यस्येत्यर्थः । क्वचिदिममित्युक्तेर्न देहधारणमिष्टमित्याशङ्क्याऽऽह—ये त्विति । कथमुपहिते जीवात्मन्यचेतने च प्राणे प्रज्ञात्मत्वं तत्राऽऽह—प्रज्ञेति । द्विवचनसहभावोत्क्रमणश्रवणादपि न ब्रह्म ग्राह्यमित्याह—जीवेति । अभेदनिर्देशमाह—यो वा इति । भेदनिर्देशमाह—सहेति । ब्रह्मपक्षेऽप्यभेदोपपत्तिमाशंक्यांगीकृत्य भेदानुपपत्तिमाह—ब्रह्मेति । अमृतत्वादीन्यपि यथायोगं नेयानीत्युपसंहरति—तस्मादिति । इहेति प्रकृतसंदर्भोक्तिः । अन्यतर इत्युपक्रममात्रमुभाविति तत्त्वम् । ब्रह्म त्वानन्दादिश्रुतेरावश्यकं न ब्रह्मेति तन्मात्रव्यावृत्तिः । तथा च जीवमुख्यप्राणब्रह्मणां यथायथमुपास्तिरिष्टा । न च प्राणोऽस्मीत्युपक्रमात्स एष प्राण एवेत्युपसंहाराच्च वाक्यैक्यावगतेरेकार्थत्वम् । वाक्यार्थावगमस्य पदार्थावगमजन्यत्वेनोपजीव्याद्दौर्बल्यात् । न चैवं सर्वत्र वाक्यार्थभङ्गो गुणप्रधानभूतपदार्थधियो वाक्यार्थैक्याविरोधित्वात् । अत्र तु पदार्थानां स्वातन्त्र्यं नैकवाक्यतेति भावः । परिहारमवतार्य व्याचष्टे—नैतदिति । अस्तूपास्तित्रैविध्यं नेत्याह—न चेति । अर्थभेदे वाक्यभेदात्कथं सिद्धवदेकवाक्यत्वोक्तिस्तत्राऽऽह—उपक्रमेति ।

---

१ इदमित्यस्य स्थाने इममिति पूर्वोक्तकौषीतकिब्राह्मणे इत्यर्थः ॥ २ या वै इति क्वचित्पुस्तकेषु पाठः ।

वाक्यैकत्वमवगम्यते ॥ "मामेव विजानीहि" [ कौषी० ३ । १ ] इत्युपक्रम्य "प्राणोऽस्मिन्प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व" [कौषी० ३।२] इत्युक्त्वाऽन्ते "स एष प्राण एव प्रज्ञात्मा" [कौषी०४।२०] "आनन्दोऽजरोऽमृतः" [कौषी०३।८] इत्येकरूपावुपक्रमोपसंहारौ दृश्येते ॥ तत्रार्थैकत्वं युक्तमाश्रयितुम् ॥ न च ब्रह्मलिङ्गमन्यपरत्वेन परिणेतुं शक्यम् ॥ दशानां भूतमात्राणां प्रज्ञामात्राणां च ब्रह्मणोऽन्यत्रार्पणानुपपत्तेः ॥ आश्रितत्वाच्च–अन्यत्रापि ब्रह्मलिङ्गवशात्प्राणशब्दस्य ब्रह्मणि प्रवृत्तेः–इहापि च हिततमोपन्यासादिब्रह्मलिङ्गयोगाद्ब्रह्मोपदेश एवायमिति गम्यते ॥ यत्तु मुख्यप्राणलिंगं दर्शितम्–"इदं शरीरं परिगृह्योत्थापयति" [ कौषी० ३ । ३ ] इति ॥ तदसत् ॥ प्राणव्यापारस्यापि परमात्मायत्तत्वात्परमात्मन्युपचरितुं शक्यत्वात्–"न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" [ कठ० २ । ५ । ५ ॥ ] इति श्रुतेः ॥ यदपि "न वाचं विजिज्ञासीत वक्तारं विद्याद्" [ कौषी० ३ । ८ ] इत्यादि जीवलिङ्गं दर्शितम् ॥ तदपि न ब्रह्मपक्षं निवारयति ॥ न हि जीवो नामात्यन्तभिन्नो ब्रह्मणः–"तत्त्वमसि" [ छा० ८ । ७–१६ ] "अहं ब्रह्मास्मि" [ बृह० १ । ४ । १० ] इत्यादिश्रुतिभ्यः ॥ बुद्ध्याद्युपाधिकृतं तु विशेषमाश्रित्य ब्रह्मैव सञ्जीवः कर्ता भोक्ता चेत्युच्यते ॥

---

रत्नप्रभा ।

शक्यम् । न वा तदुचितमित्याह–न च ब्रह्मलिंगमिति ॥ सूत्रशेषं व्याचष्टे–आश्रितत्वाच्चेति॥अन्यत्र "अत एव प्राणः" [ व्या० सू० १।१।२३ ] इत्यादौ वृत्तेराश्रितत्वाद् इहापि तस्य ब्रह्मलिङ्गस्य योगाद् ब्रह्मपर एव प्राणशब्द इत्यर्थः । प्राणादिलिङ्गानि सर्वात्मके ब्रह्मण्यनायासेन नेतुं शक्यानीत्याह–यत्त्वित्यादिना ॥ यस्मिन्नेतौ प्रेर्यत्वेन स्थितौ तेन इतरेण ब्रह्मणा सर्वे प्राणादिव्यापारं कुर्वन्तीत्यर्थः ।

भामती ।

मात्रम् । उभावित्ति तु पूर्वपक्षतत्त्वम् । ब्रह्म तु ध्रुवम् ॥ न ब्रह्मेति । न ब्रह्मैवेत्यर्थः ॥ दशानां भूतमात्राणामिति । पञ्च शब्दादयः, पञ्च पृथिव्यादय इति दश भूतमात्राः । पञ्च बुद्धीन्द्रियाणि पञ्च बुद्धय

आनन्दगिरीय–न्यायनिर्णयः ।

तदेव स्फुटयति–मामेवेति । वाक्यैक्येऽपि किमित्यर्थभेदो न स्यात्तत्राऽऽह–तत्रेति । पदार्थधियो वाक्यार्थधीहेतुत्वेऽपि वाक्यार्थबोधस्योद्देश्यत्वेन प्राधान्यात्पदानां पदार्थबोधे फले पर्यवसानाभावात्तस्य नान्तरीयकत्वात्प्रधानीभूतवाक्यार्थस्योपक्रमोपसंहारैकरूप्यावगतस्य युक्तमैक्यमिति भावः । उपासनात्रैविध्यनिरासाय ब्रह्मलिंगं जीवादिविषयं नेयमित्याशंक्याऽऽह–न चेति । पञ्च शब्दादयः पञ्च पृथिव्यादयश्च दशभूतमात्राः पञ्च बुद्धीन्द्रियाणि पञ्च बुद्धय इति दश प्रज्ञामात्राः । यद्वा–ज्ञानेन्द्रियार्थाः पञ्च कर्मेन्द्रियार्थाश्च पञ्चेति दश भूतमात्रा द्विविधानीन्द्रियाणि प्रज्ञामात्रा दशेति भावः । प्राणशब्दस्य ब्रह्मण्यवृत्तेस्त्रैविध्यं तथापि स्यादित्याशंक्याऽऽह—आश्रितत्वाच्चेति । तत्र ब्रह्मलिङ्गाद्ब्रह्मणि वृत्तिराश्रिता प्रकृते कथमित्याशंक्याह–इहापीति । प्राणस्य ब्रह्मत्वे मुख्यप्राणलिंगं विरुध्येतेत्याशंक्याऽऽह–यत्त्विति । प्राणव्यापारस्य परमात्मायत्तत्वे मानमाह–नेति । कारणस्य कार्याकारेण स्थितस्य तद्धर्मेणापि संबन्धात्कार्यस्य व्यावृत्तस्य कार्यान्तरेष्वपि स्थितकारणधर्मेणासंबन्धात्प्राणादिलिङ्गानि ब्रह्मणि युज्यन्ते न तल्लिङ्गानि तत्रेति भावः । जीवलिङ्गमपि ब्रह्माविरोधीत्यनुवादपूर्वकमाह–यदपीति । कथं तर्हि ब्रह्मण एव सतो जीवस्य संसारित्वं तत्राऽऽह–बुद्ध्यादीति । जीवो ब्रह्मैव चेन्न तस्य वक्तृत्वं तस्य ब्रह्मत्वविरोधित्वात्तत्राऽऽह–

तस्योपाधिकृतविशेषपरित्यागेन स्वरूपं ब्रह्म प्रदर्शयितुं—"न वाचं विजिज्ञासीत वक्तारं विद्याद्" [ कौषी० ३ । ८ ] इत्यादिना प्रत्यगात्माभिमुखीकरणार्थमुपदेशो न विरुध्यते । "यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" [ केन० १ । ५] इत्यादि च श्रुत्यन्तरं वचनादिक्रियाव्यापृतस्यैवात्मनो ब्रह्मत्वं दर्शयति ॥ यत्पुनरेतदुक्तं "सह ह्येतावस्मिञ्छरीरे वसतः सहोत्क्रामतः" [ कौषी० २ । ४ ] इति प्राणप्रज्ञात्मनोर्भेददर्शनं ब्रह्मवादिनो नोपपद्यत इति ॥ नैष दोषः ॥ ज्ञानक्रियाशक्तिद्वयाश्रययोर्बुद्धिप्राणयोः प्रत्यगात्मोपाधिभूतयोर्भेदनिर्देशोपपत्तेः ॥ उपाधिद्वयोपहितस्य तु प्रत्यगात्मनः स्वरूपेणाभेद इत्यतः प्राण एव प्रज्ञात्मेत्येकीकरणमविरुद्धम्॥ अथ वा नोपासात्रैविध्याश्रितत्वादिह तद्योगादित्यस्यायमन्योऽर्थः—न ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं विरुध्यते ॥ कथम् ॥ उपासात्रैविध्यात्—त्रिविधमिह ब्रह्मोपासनं विवक्षितं प्राणधर्मेण, प्रज्ञाधर्मेण, स्वधर्मेण च । तत्र "आयुरमृतमित्युपास्वायुः

---

रत्नप्रभा ।

**विशेषं** परिच्छेदाभिमानमित्यर्थः । वक्तारं विद्यादिति न वक्तुर्ज्ञेयत्वमुच्यते । तस्य लोकसिद्धत्वात् । किन्तु तस्य ब्रह्मत्वं बोध्यते । तद्बोधाभिमुख्याय लिङ्गादय इत्यत्र श्रुत्यन्तरमाह—**यद्वा चेति** ॥ येन चैतन्येन **वागभ्युद्यते** स्वकार्याभिमुख्येन प्रेर्यते **तदेव** वागादेरगम्यं ब्रह्मेत्यर्थः ॥ तत्त्वम्पदवाक्ययोः स्वरूपतो भेदस्ताभ्यामुपलक्ष्यात्मस्वरूपाभेदादेकत्वं निर्दिश्यत इत्याह—**नैष दोष इति** ॥ स्वमतेन सूत्रं व्याख्याय वृत्तिकृन्मतेन व्याचष्टे—**अथ वेति** ॥ उपासनात्रित्वप्रसङ्गादिति पूर्वमुक्तम् । अत्र त्रिप्रकारकस्यैकब्रह्मविशेष्यकस्यैकस्योपासनस्य विवक्षितत्वादित्यर्थः । अतो न वाक्यभेद इति भावः । देहे चेष्टात्मकजीवनहेतुत्वं प्राणस्यायुष्ट्वं, देहापेक्षया तस्या मुक्तेरवस्थानादमृतत्वम्, उत्थापयतीत्युक्थत्वम्, इति **प्राणधर्मः** ।

भामती ।

इति दश प्रज्ञामात्राः।तदेवं स्वमतेन व्याख्याय प्राचां वृत्तिकृतां मतेन व्याचष्टे—**अथ वेति**।पूर्वं प्राणस्यैकमुपासनमपरं जीवस्यापरं ब्रह्मण इत्युपासनात्रैविध्येन वाक्यभेदप्रसङ्गो दूषणमुक्तम् । इह तु ब्रह्मण एकस्यैवोपासा

आनन्दगिरीय—न्यायनिर्णयः ।

**तस्येति** । वक्तारं विद्यादिति न विधिर्वक्तृत्वस्याध्यक्षत्वात्किंतु तदुद्देशेनाप्रसिद्धं ब्रह्मत्वं विधित्सितमित्यर्थः । प्रत्यगात्माभिमुख्योऽर्थो लिङ्गादिरिति समन्वयसूत्रेऽपि दर्शितमित्याशयेनाऽऽह—**प्रत्यगिति** । तत्र तलवकारश्रुतिमाह—**यद्वाचेति** । येन चैतन्येन वागभ्युद्यते प्रेर्यते वदनसामर्थ्यमापाद्यते तदेव वागादेरगम्यं ब्रह्मेत्यर्थः । तस्य तात्पर्यमाह—**वचनादीति** । द्विवचनसहभावोत्क्रमणश्रवणं सिद्धान्ते दुर्योजमित्युक्तमनूद्य दूषयति—**यदित्यादिना** । उपाधिभेदात्तद्विशिष्टस्य भिन्नतेति विशिनष्टि—**प्रत्यगिति** । अभेदस्तर्हि कथं तत्राऽऽह—**उपाधीति** । उपहितद्वारोपलक्षितस्येत्यर्थः । स्वमते सूत्रावयवं व्याख्याय वृत्तिकारमते व्याकरोति—**अथवेति** । तत्र नञर्थमाह—**नेति** । ब्रह्मवाक्यत्वे जीवप्राणयोरध्येयत्वात्तल्लिङ्गविरोधोऽस्त्येवेत्याह—**कथमिति** । हेतुमुक्त्वा व्याख्याति—**उपासेति** । स्वतन्त्राणां त्रयाणामुपास्तौ वाक्यभेदो न त्वेकस्यैव ब्रह्मणस्तद्धर्मैरित्यर्थः । उक्तमेव विभजते—**तत्रेति** । प्राणो हि भूतानामायुरिति श्रुत्यन्तरेणाऽऽह—**आयुरिति** । तस्याऽऽयुष्ट्वं जीवनस्य तदधीनत्वात्प्राणस्यैव देहाद्युत्थापकत्वं तस्मादित्युच्यत उत्थापयति देहादीत्युक्थं प्राणः । सहवासः सहोत्क्रान्तिश्चेत्युक्त्यानन्तर्यमथशब्दार्थः । अस्या जीवाख्यप्रज्ञायाः संबन्धीनि भूत्वा सर्वाणि भूतानि तद्दृश्यत्वेन कल्पितानि वस्तुतो यथैकं भवन्ति तथा तद्वस्तु व्याख्यास्याम इत्युप-

प्राणः'' [ कौषी० ३ । २ ] इति ''इदं शरीरं परिगृह्योत्थापयति'' [ कौषी० ३ । ३ ] इति तस्माद् ''एतदेवोक्थमुपासीत'' [ कौषी०३।३ ] इति च प्राणधर्मः ॥ अथ ''यथास्यै प्रज्ञायै सर्वाणि भूतानि एकं भवन्ति तद्व्याख्यास्यामः'' [ कौषी० ३ । ४ ] इत्युपक्रम्य ''वागेवास्या एकमङ्गमदूदुहत्तस्यै नाम परस्तात्प्रतिविहिता भूतमात्रा''.[ कौषी० ३ । ५ ] ''प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति''[ कौषी० ३।६] इत्यादिः जीवधर्मः । ''ता वा एता–

रत्नप्रभा ।

जीवधर्ममाह–अथेति ॥ बुद्धिप्राणयोः सहस्थित्युत्क्रान्त्युक्त्यनन्तरमित्यर्थः । अत्र प्रज्ञापदेन साभासा जीवाख्या बुद्धिरुच्यते । तस्याः सम्बन्धीनि दृश्यानि सर्वाणि भूतानि यथैकं भवन्ति अधिष्ठानचिदात्मना, तथा व्याख्यास्याम इत्युपक्रम्योक्तम्–वागेवेत्यादि । चक्षुरेवास्याः एकमङ्गमदूदुहदित्यादिपर्यायाणां संक्षिप्तार्थ उच्यते । उत्पन्नायाः असत्कल्पायाः साभासबुद्धेर्नामप्रपञ्चविषयित्वमर्धशरीरम्, अर्थात्मकरूपप्रपञ्चविषयित्वमर्धशरीरमिति मिलित्वा विषयित्वाख्यं पूर्णं शरीरमिन्द्रियसाध्यम् । तत्र कर्मेन्द्रियेषु वागेव अस्याः प्रज्ञाया एकमंगं देहार्धम् अदूदुहत् पूरयामास । वागिन्द्रियद्वारा नामप्रपञ्चविषयित्वं बुद्धिर्लभत इत्यर्थः । चतुर्थी षष्ठ्यर्था । तस्याः पुनर्नाम[1] किल चक्षुरादिना प्रतिविहिता ज्ञापिता भूतमात्रा[4] रूपाद्यर्थरूपा परस्ताद् अपरार्धे कारणं भवति । ज्ञानकरणद्वाराऽर्थप्रपञ्चविषयित्वं बुद्धिः प्राप्नोतीत्यर्थः । एवं बुद्धेः सर्वार्थद्रष्टृत्वमुपपाद्य तन्निष्ठचित्प्रतिबिम्बद्वारा साक्षिणि द्रष्टृत्वाध्यासमाह–प्रज्ञयेति । बुद्धिद्वारा चिदात्मा वाचम् इन्द्रियं समारुह्य तस्याः प्रेरको भूत्वा वाचा करणेन सर्वाणि नामानि वक्तव्यत्वेन आप्नोति, चक्षुषा सर्वाणि रूपाणि पश्यतीत्येवं द्रष्टा भवतीत्यर्थः । तथा च सर्वद्रष्टृत्वं चिदात्मनि द्रष्टृत्वाध्यासनिमित्तत्वं च बुद्धेर्धर्म इत्युक्तं भवति । सर्वाधारत्वानन्दत्वादिर्ब्रह्मधर्म इत्याह–ता वा इति ॥ दशत्वं व्याख्यातम् । प्रज्ञाः इन्द्रियजाः, ताः अधिकृत्य ग्राह्यभूतमात्रा वर्त्तन्ते ।

भामती ।

त्रयविशिष्टस्य विधानान्न वाक्यभेद इत्यभिमानः प्राचां वृत्तिकृताम् । तदेतदालोचनीयं कथं न वाक्यभेद इति । युक्तं 'सोमेन यजेत' इत्यादौ सोमादिगुणविशिष्टयागविधानं, तद्गुणविशिष्टस्यापूर्वस्य कर्मणोऽप्राप्तस्य विधिविषयत्वात् । इह तु सिद्धरूपं ब्रह्म न विधिविषयो भवितुमर्हति,, अभावार्थत्वात् भावार्थस्य विधिवि-

आनन्दगिरीय–न्यायनिर्णयः ।

क्रम्योक्तं वागेवेत्यादि । बुद्धेः साभासायाः स्वरूपतो जातत्वेऽपि विषयित्वमिन्द्रियसाध्यम् । तत्र कर्मेन्द्रियेषु मध्ये वागेवास्याः प्रज्ञाया देहार्धमेकमङ्गमदूदुहद्रेचितवती पूरयामास नामरूपात्मा प्रपञ्चो विषयस्तत्र नामप्रपञ्चे वाग्द्वारा प्रविष्टा धीस्तं प्रति विषयित्वमाप्नोतीत्यर्थः । तस्याः प्रज्ञायाः पुनर्नाम किल परस्तादपरभागे चक्षुरादिना प्रतिविहिता समुत्थापिता भूतमात्रा रूपादिरूपा चक्षुरादिना रूपाद्यर्पणेन बुद्धेरपरभागरूपं रूपप्रपञ्चं प्रति विषयित्वं निर्वर्त्यत इत्याह–तस्या इति । बुद्ध्युपहितचैतन्यद्वारा स्वरूपे द्रष्टृत्वाध्यासमाह–प्रज्ञयेति । तया द्वारा चिदात्मा वाचं करणं प्रति कर्तृत्वाध्यासमनुभूय वाचा करणेन सर्वाणि नामानि वक्तव्यत्वेनाऽऽप्नोति चक्षुषा सर्वाणि रूपाणि पश्यतीत्येवं द्रष्टृत्वमनुभवतीत्यर्थः । सर्वभूतविषयित्वमात्मनि विशिष्टद्रष्टृत्वादिकरत्वं च बुद्धेर्धर्म इत्युक्तम् । सर्वाधारत्वानन्दत्वादि ब्रह्मधर्म इत्याह–ता वा एता इति । उक्ता भूतमात्राः प्रज्ञाशब्दितेन्द्रियाणि तदुत्थज्ञानानि

१ एकीभवन्तीति क्वचित्पुस्तके पाठो दृश्यते । २ दुग्धायाः प्रज्ञायाः । ३ विषयत्वेन नामलक्षणा । ४ भूतसूक्ष्मम् ।

दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा (अ)धिभूतम् । यद्धि भूतमात्रा न स्युः, न प्रज्ञामात्राः स्युः ॥ यद्धि प्रज्ञामात्रा न स्युः, न भूतमात्राः स्युः ॥ न ह्यन्यतरतो रूपं किञ्चन सिध्येत् । नो एवैतन्नाना, तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः स वा एष प्राण एव प्रज्ञात्मा'' [ कौषी० ३ । ९ ] इत्यादिर्ब्रह्मधर्मः ॥ तस्माद्ब्रह्मण एवैतदुपाधिद्वयधर्मेण स्वधर्मेण चैकमुपासनं त्रिविधं विवक्षितम् ॥ अन्यत्रापि मनोमयः प्राणशरीर इत्यादावुपाधिधर्मेण ब्रह्मण उपासनमाश्रितम् । इहापि तद्युज्यते॥वाक्यस्योपक्रमोपसंहाराभ्यामेकार्थत्वावगमात्।प्राण—

रत्नप्रभा ।

**प्रज्ञामात्राः** इन्द्रियाणि ग्राह्यं भूतजातमधिकृत्य वर्तन्त इति ग्राह्यग्राहकयोर्मिथः सापेक्षत्वमुक्तं साधयति—**यदिति** ॥ तदेव स्फुटयति—**न हीति** ॥ ग्राह्येण ग्राह्यस्वरूपं न सिद्ध्यति । किन्तु ग्राहकेण । एवं ग्राहकमपि ग्राह्यमनपेक्ष्य न सिध्यति । तस्मात् सापेक्षत्वादेतद् ग्राह्यग्राहकद्वयं वस्तुतो न भिन्नम् । किन्तु चिदात्मन्यारोपितमित्याह—**नो इति** ॥ **तद्यथेत्यादि** । कृतव्याख्यानम् । सूत्रार्थमुपसंहरति—**तस्मादिति** ॥ अन्यधर्मेणान्यस्योपासनं कथमित्याशंक्याऽऽश्रितत्वादित्याह—**अन्यत्रापीति** ॥ **उपाधिर्जीवः** । **तत्**

**अन्यधर्मेणोपासनम्** । **इयमसंगता व्याख्या । तथाहि न** तावदारुण्याद्यनेकगुणविशिष्टप्राप्तक्रयणवद् उपासात्रयविशिष्टस्य ब्रह्मणो विधिः संभवति । सिद्धस्य विध्यनर्हत्वात् । **नापि** ब्रह्मानुवादेनोपासात्रयविधिः । वाक्यभेदात् । **न च** नानाधर्मविशिष्टमेकमुपासनं विधीयत इति **वाच्यम्** । तादृशविधिवाक्यस्यात्राश्रवणात् । **न च** ''तं मामायुरमृतमित्युपास्व'' [ कौषी० ३ । २ ] इत्यत्र मामिति जीवेन आयुरिति प्राणेन अमृतमिति ब्रह्मणा स्वस्वधर्मवता विशिष्टोपासनाविधिरिति **वाच्यम्** । सर्वेषां धर्माणामश्रवणाद् ब्रह्मश्रुतेश्च । ''प्राणो वा अमृतम्'' इति प्राणस्यैवामृतत्वश्रुतेः । अत्र उपासनाविधिलुब्धेन ''वक्तारं वि-

भामती ।

षयत्वनियमात् । वाक्यान्तरेभ्यश्च ब्रह्मावगतेः प्राप्तत्वात्तदनूद्याप्राप्तोपासा भावार्थो विधेयस्तस्य च भेदाद्विध्यावृत्तिलक्षणो वाक्यभेदोऽतिस्फुट इति भाष्यकृता नोद्घाटितः, स्वव्याख्यानेनैवोक्तप्रायत्वादिति सर्वमवदा-

आनन्दगिरीय—न्यायनिर्णयः ।

न्याधिकृत्य प्रवर्तन्ते । प्रज्ञामात्राश्चोक्ता भूतशब्दितानि पृथिव्यादीनि शब्दादीनि चाधिकृत्य भवन्ति । ग्राह्यग्राहकयोर्मिथः सापेक्षकत्वं साधयति—**यदिति** । तदेव स्पष्टयति—**न हीति** । अन्योन्यापेक्षमप्येतद्विषयविषयिद्वयं न द्वैतपक्षवन्नाना वस्तुतो भिन्नं किंत्वेकस्मिन्नेवाऽऽरोपितमित्याह—**नो इति** । तद्यथेत्यादि व्याख्यातम् । नोपासात्रैविध्यादित्यस्यार्थमुपसंहरति—**तस्मादिति** । अन्यधर्मेणान्यस्योपासनं कथमित्याशंक्याऽऽश्रितत्वादित्याह—**अन्यत्रापीति** । तत्रोपक्रमे ब्रह्मणः श्रुतत्वायुक्ता मनोमयत्वादिविशिष्टस्योपास्तिरिह कथमित्याशंक्य तद्योगादित्याह—**इहापीति** । उपास्तेस्तर्हि कथं त्रैविध्यं तत्राऽऽह—**प्राणेति** । वाक्यभेदस्तु ब्रह्मण एकस्यैवोपासात्रैविध्योक्त्या प्रत्युक्तः । किमत्रोपासात्रयविशिष्टं ब्रह्म विधेयमुत ब्रह्मविशिष्टमुपासात्रयं किंवा तदनुवादेन तदाश्रित्योपासात्रयम् । नाऽऽद्यः । ब्रह्मणः सिद्धत्वाद्विध्यनर्हत्वात् । न द्वितीयः । वाक्यान्तरेभ्यो ब्रह्मणो ज्ञातत्वात् । न तृतीयः । ब्रह्मानुवादेनोपास्तिविधावेकविशेष्यावशीकाराद्उपास्तीनां मिथोसंबन्धात्प्रत्युपास्तिविध्यावृत्त्या वाक्यभेदादित्येकीयव्याख्यामुपेक्ष्य स्वप-

१ यद्वेति पाठान्तरम् । २ भूतमात्रा न स्युरिति पाठान्तरम् ।

**प्रज्ञाब्रह्मलिङ्गावगमाच्च ॥ तस्माद्ब्रह्मवाक्यमेतदिति सिद्धम् ॥ १॥१॥३१॥ इतीन्द्रप्राणा ( प्रतर्दना ) धिकरणं समाप्तम् ॥११॥ इति श्रीमत्पदवाक्यप्रमाणपारावारीणपरमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्य-श्रीमच्छङ्करभगवत्पूज्यपादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये स्पष्टब्रह्मलिंगकवाक्यविचारो नाम प्रथमाध्यायस्य प्रथमः पादः समाप्तः॥१।१॥**

---

रत्नप्रभा ।

यात्'' [ कौषी० ३।८] ''एतदेवोक्थमुपासीत'' [ कौषी० ३।३] ''स म आत्मेति विद्यात्'' [ कौषी० ३ । ८ ] इति जीवप्राणब्रह्मोपासनविधयः–अन्ये गुणविधय इति स्वीकृत्यैकवाक्यत्वं त्याज्यम् ॥ तन्नायुक्तम् । उपक्रमादिनैकवाक्यतानिर्णयात् । तस्माज्ज्ञेयप्रत्यग्ब्रह्मपरमिदं वाक्यमित्युपसंहरति–**तस्मादिति** ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्यव्याख्यायां रत्नप्रभायां प्रथमाध्यायस्य प्रथमः पादः समाप्तः ॥ १ ॥ १ ॥

भामती ।

तम् ॥ ३१ ॥ इति श्रीवाचस्पतिमिश्रविरचिते भाष्यविभागे भामत्यां प्रथमस्याध्यायस्य प्रथमः पादः॥१॥१॥

आनन्दगिरीय–न्यायनिर्णयः ।

क्षमुपसंहरति–**तस्मादिति** । प्राकरणिकत्वेऽपि ब्रह्मणोऽवान्तरवाक्यभेदेन श्रवणादिवद्विविदिषार्थे यज्ञादिवच्चोपास्तित्रयं विधेयम् । विधेयत्रयधर्मवद्ब्रह्मोपास्तिश्चैकेति कुतो वाक्यभेद इत्येके । तन्न । अन्तस्तद्धर्माधिकरणेन गतत्वात् । तत्र हि सार्वात्म्यसर्वदुरितविरहाभ्यां सर्वकारणे ब्रह्मणि सिद्धे रूपवत्त्वादिकार्यधर्मा नीतास्तथाऽत्रापि प्रागुक्तन्यायेन प्राणादिधर्माणां ब्रह्मणि संभवान्न पृथग्विचारावसरः । तस्माज्जीवप्राणब्रह्माणि सहोपास्यानि ब्रह्मैव वा प्रतिपाद्यमिति पदार्थवाक्यार्थयोर्बलाबलज्ञानेन संदिह्य दिवो दिवीत्यत्र प्रधानप्रकृत्यर्थाभेदेन गुणभूतप्रत्ययार्थभेदनयनवदत्रापि स्वतन्त्रप्राणादिपदार्थभेददृष्टौ तदपेक्षत्वेन गुणभूतवाक्यार्थदृष्टेरन्यथानयनात्पदार्थबुद्धेर्वाक्यार्थबुद्ध्योपजीव्यत्वेन स्वातन्त्र्याद्वाक्यैक्यं भंक्त्वा त्रीणि सहोपास्यानीति प्राप्य्य पदानां वाक्यार्थबोधोद्देशेन प्रवृत्तत्वात्पदार्थबोधस्य नान्तरीयकत्वाद्वाक्यार्थबोधप्राधान्यादुपक्रमोपसंहारैकरूप्यसिद्धप्रधानवाक्यार्थभङ्गायोगात्प्राणादिलिङ्गानां च ब्रह्मणि नीतत्वादनन्यथासिद्धब्रह्मलिङ्गाद्ब्रह्मैवात्र प्रतिपाद्यमिति सिद्धान्तयितव्यम् । सर्वथाऽपि प्रातर्दनं वाक्यं ब्रह्मणि ज्ञेये समन्वितमिति ॥३१॥(११)॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि ( ज्ञान ) विरचिते शारीरकभाष्यन्यायनिर्णये प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥

**॥ इति प्रथमस्याध्यायस्य स्पष्टब्रह्मलिङ्गश्रुतिसमन्वयाख्यः प्रथमः पादः ॥**

# प्रथमाध्याये द्वितीयः पादः २.

ॐ नमः परमात्मने ॥ तत्र प्रथमाध्याये अस्पष्टब्रह्मलिंगकोपास्यवाक्यजातविचारो नाम द्वितीयः पाद आरभ्यते ॥ प्रथमे पादे "जन्माद्यस्य यतः"[ब्र०सू० १।१।२] इत्याकाशादेः समस्तस्य जगतो जन्मादिकारणं ब्रह्मेत्युक्तम् ॥ तस्य समस्तजगत्कारणस्य ब्रह्मणो व्यापित्वं नित्यत्वं सर्वज्ञत्वं सर्वशक्तित्वं सर्वात्मकत्वमित्येवञ्जातीयका धर्मा उक्ता एव भवन्ति ॥ अर्थान्तरप्रसिद्धानां च केषाञ्चिच्छब्दानां ब्रह्मविषयत्वे हेतुप्रतिपादनेन कानिचिद्वाक्यानि स्पष्टब्रह्मलिंगानि सन्दिह्यमानानि ब्रह्मपरतया निर्णीतानि ॥ पुनरप्यन्यानि वाक्यान्यस्पष्टब्रह्मलिंगानि सन्दिह्यन्ते—किं परं ब्रह्म प्रतिपादयन्ति, आहोस्विद्—अर्थान्तरं किञ्चिदिति ॥ तन्निर्णयाय द्वितीयतृतीयपादावारभ्येते—

## सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥ २ ॥ ( १ ) ॥

---

रत्नप्रभा ।

ॐ नमः परमात्मने ॥ श्रीरामं सिद्धमत्तारं गुहाशयिनमन्तरम् । अन्तर्यामिणमज्ञेयं वैश्वानरमहं भजे ॥ १ ॥ पूर्वपादेनोत्तरपादयोः सङ्गतिं वक्तुं वृत्तमनुवदति—प्रथम इति ॥ जगत्कारणत्वोक्त्या व्यापित्वादिकमर्थात् सिद्धम् । तदुपजीव्योत्तरं पादद्वयं प्रवर्त्तत इति **हेतुहेतुमद्भावः संगतिः** । कथं पादभेद इत्याशङ्क्य पादानां प्रमेयभेदमाह—अर्थान्तरेति ॥ आकाशादिशब्दानां स्पष्टब्रह्मलिंगैर्ब्रह्मणि समन्वयो दर्शितः । अस्पष्टब्रह्मलिङ्गवाक्यसमन्वयः पादद्वये वक्ष्यते । प्रायेणोपास्यज्ञेयब्रह्मभेदात् पादयोरवान्तरभेद

भामती ।

अथ द्वितीयं पादमारिप्सुः पूर्वोक्तमर्थं स्मारयति वक्ष्यमाणोपयोगितया—प्रथमे पाद इति । उत्तरत्र हि ब्रह्मणो व्यापित्वनित्यत्वादयः सिद्धवद्धेतुतयोपदेक्ष्यन्ते । न चैते साक्षात्पूर्वमुपपादिता इति कथं हेतुभावेन न शक्या उपदेष्टुमित्यत उक्तम्—समस्तजगत्कारणस्येति । यद्यप्येते न पूर्वं कण्ठत उक्तास्तथापि ब्रह्मणो जगज्जन्मादिकारणत्वोपपादनेनाधिकरणसिद्धान्तन्यायेनोपक्षिप्ता इत्युपपन्नस्तेषामुत्तरत्र हेतुभावेनोपन्यास इत्यर्थः ॥ अर्थान्तरप्रसिद्धानां चेति । यत्रार्थान्तरप्रसिद्धा एवाकाशप्राणज्योतिरादयो ब्रह्मणि व्याख्यायन्ते, तदव्यभिचारिलिङ्गश्रवणात् । तत्र कैव कथा मनोमयादीनामर्थान्तरे प्रसिद्धानां पदानां ब्रह्मगोचरत्वनिर्णयं प्रतीत्यभिप्रायः । पूर्वपक्षाभिप्रायं त्वग्रे दर्शयिष्यामः । सर्वत्र प्रसिद्धो-

आनन्दगिरीय—न्यायनिर्णयः ।

पूर्वोपजीवनेनोत्तरोत्थानाद्धेतुहेतुमत्त्वं संबन्धं वक्तुं वृत्तमनुद्रवति—प्रथम इति । कारणत्वमात्रं नात्रोपयुक्तं व्यापित्वादेरपि सिद्धवद्धेतुतयोपादानादतस्तदनुक्तौ कथं संगतिरित्याशंक्याऽऽह—तस्येति । उक्तमुपजीव्योत्तरप्रवृत्तौ कथं पादभेद इत्याशंक्याह—अर्थान्तरेति । उत्तरपादद्वयस्यानधिगतमर्थमाह—पुनरिति । पूर्वं भूताकाशादिषु रूढाकाशादिशब्दानां ब्रह्मपरत्वे तल्लिङ्गादितिहेतूक्त्या स्पष्टब्रह्मलिङ्गानि नीतानि । अथास्पष्टब्रह्मलिङ्गवाक्यान्यर्थान्तरार्थतया शङ्क्यमानानि ब्रह्मणि नीयन्ते । तत्र द्वितीयतृतीयपादयोरवान्तरभेदस्तु प्रायशः सविशेषनिर्विशेषार्थतया रूढियोगबहुलतया वेति भावः । पूर्वं जीवलिङ्गबाधया ब्रह्मपरत्ववन्मनोमयादिवाक्येऽपि तद्बाधेन तत्परत्वमाह—सर्वत्रेति । छान्दोग्यवाक्यमुदाहरति—

---

१ इदं पदं क्वचिन्न दृश्यते ।

**इदमाम्नायते-"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत । अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति ॥ स क्रतुं कुर्वीत ॥ १ ॥ मनोमयः प्राणशरीरो भारूपः" [ छा० ३ । १४ । २ ] इत्यादि ॥ तत्र संशयः-किमिह मनोमयत्वादिभिर्धर्मैः शारीर आत्मोपास्यत्वेनोपदिश्यते-आहोस्वित्-परं ब्रह्मेति ॥ किं तावत्प्राप्तम् ॥ शारीर इति ॥ कुतः ॥ तस्य हि कार्यकरणाधिपतेः प्रसिद्धो**

---

रत्नप्रभा ।

इति भावः । छान्दोग्यमुदाहरति-**इदमिति** ॥ तस्माज्जायत इति तज्जम्, तस्मिन् लीयत इति तल्लम्, तस्मिन्ननिति चेष्टत इति तदनम् । तज्जञ्च तल्लञ्च तदनञ्चेति तज्जलान् । कर्मधारयेऽस्मिन् शाकपार्थिवन्यायेन मध्यपदस्य तच्छब्दस्य लोपः । तज्जलानमिति वाच्ये छान्दसोऽवयवलोपः । **इतिशब्दः** हेतौ । सर्वमिदं जगद्ब्रह्मैव । तद्विवर्त्तत्वादित्यर्थः । ब्रह्मणि मित्रामित्रभेदाभावाच्छान्तो रागादिरहितो भवेदिति गुणविधिः । स क्रतुमुपासनं कुर्वीतेति विहितोपासनस्योपासीतेत्यनुवादात् फलमाह-**अथेति** ॥ **क्रतुमयः** संकल्पविकार इत्यर्थः । पुरुषस्य ध्यानविकारत्वं स्फुटयति-**यथेति** ॥ इह यद्ध्यायति मृत्वा ध्यानमहिम्ना,तद्ध्येयरूपेण जायत इत्यर्थः । **क्रतुमयः** सङ्कल्पप्रधान इति वाऽर्थः।क्रतोर्विषयमाह-**मन इति**॥ ब्रह्मेत्युपक्रमान्मनोमयं प्राणशरीरं भारूपं सत्यसंकल्पमन्तर्हृदये ध्येयमित्यर्थः।पूर्वत्र ब्रह्मलिंगैरब्रह्मलिङ्गबाध उक्तः । न. तथेहोपक्रमे ब्रह्मणो लिङ्गमस्ति । किन्तु प्रकरणम् । तच्च शान्तिगुणविधानार्थमन्यथासिद्धम् । अतो जीवलिंगं बलीय इति प्रत्युदाहरणेन पूर्वपक्षयति-**शारीर इत्यादिना** ॥ श्रुतिमाशंक्यान्यथासिद्ध्या परिहरति-

भामती ।

**पदेशात्** । **इदमाम्नायते** । **सर्वं खल्विदं ब्रह्म** । कुतः, **तज्जलानिति** । यतस्तस्माद्ब्रह्मणो जायत इति तज्जं, तस्मिंश्च लीयत इति तल्लं, तस्मिंश्चानिति स्थितिकाले चेष्टत इति तदनं जगत्, तस्मात्सर्वं खल्विदं जगद्ब्रह्म । अतः कः कस्मिन्रज्यते कश्च कं द्वेष्टीति रागद्वेषरहितः शान्तः सन्नुपासीत । **अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीर इत्यादि** । तत्र संशयः-किमिह मनोमयत्वादिभिर्धर्मैः शारीर आत्मोपास्यत्वेनोपदिश्यते आहोस्विद्ब्रह्मेति । किं तावत्प्राप्तं शारीरो जीव इति । कुतः । 'क्रतुम्' इत्यादिवाक्येन विहितां

आनन्दगिरीय-न्यायनिर्णयः ।

**इदमिति** । सर्वं जगद्ब्रह्मैवेत्यत्र हेतुमाह-**तज्जेति** । तस्माज्जायत इति तज्जम् । तस्मिँल्लीयत इति तल्लम् । तस्मिन्ननिति चेष्टत इति तदनम् । तज्जं च तल्लं च तदनं च तदिति तज्जलानवयवलोपश्छान्दसः । इति हेतौ यस्मादेवं जगत्तस्माद्ब्रह्मैव सर्वं जगदित्यर्थः । अतो धियो रागादिविषयाभावादुपासीत स शान्तः स्यादित्याह-**शान्त इति** । गुणं विधाय गुणिविधित्सया पुंप्रयत्नस्य साफल्यमाह-**अथेति** । पुरुषोऽधिकृतः क्रतुमयः संकल्पप्रधानस्तत्र हेतुर्यथेति । ज्ञानं कर्म वा यथाऽस्मिन्देहे स्थितः संकल्पयते तथा तदनुसारेण फलं परत्र लभते सोऽधिकृतः क्रतुं ध्यानं कुर्वीत । किं ध्यायेदित्याकांक्षायामाह-**मनोमय इति** । विभक्तिव्यत्ययेन मनोमयं प्राणशरीरं ध्यायेदित्यर्थः । आदिशब्दाद्भारूपः सत्यसंकल्प इत्यादि गृहीतम् । मनोमयत्वादीनां प्रकृतब्रह्मानपेक्षत्वसापेक्षत्वाभ्यां संदेहमाह-**तत्रेति** । एकवाक्यस्थब्रह्माब्रह्मलिङ्गयोर्ब्रह्मलिङ्गवशादब्रह्मलिङ्गं नीतमिह ब्रह्माब्रह्मप्रकरणलिङ्गसंनिपाते किं युक्तमिति पृच्छति-**किमिति** । सर्वमित्यादिश्रुतेः सविशेषार्थोया ध्येये ब्रह्मण्यन्वयोक्तेः श्रुत्यादिसंगतयः । पूर्वपक्षे जीवस्य सिद्धान्ते परस्योपास्तिः फलम् । रात्रिसत्रन्यायेनोपास्त्या वाक्यशेषस्थो जीवः संबध्यत इति पूर्वपक्षयति-**शारीर इति** । विश्वजिन्न्यायेन सर्वाभीष्टं ब्रह्मैव मनोमयादौ विशेष्याकांक्षायामुपास्तिसंबन्धीत्याह-**कुत इति** । विशेष्याकाङ्क्षायामपि जीव एव लिङ्गबलीयस्तया संबध्यत इत्याह-**तस्येति** । तदन्यथासिद्धिं प्रत्याह-

मन आदिभिः सम्बन्धः । न तु परस्य ब्रह्मणः—"अप्राणो ह्यमनाः शुभ्रः" [ मुण्ड० २ । १ । २ ] इत्यादिश्रुतिभ्यः ॥ ननु "सर्वं खल्विदं ब्रह्म" [ छा० ३ । १४ । १ ] इति स्वशब्देनैव ब्रह्मोपात्तं, कथमिह शारीर आत्मोपास्य इत्याशङ्क्यते ॥ नैष दोषः ॥ नेदं वाक्यं ब्रह्मोपासनाविधिपरम् ॥ किं तर्हि ॥ शमविधिपरम्—यत् कारणं "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" [ छा० ३ । १४ । १ ] इत्याह ॥ एतदुक्तं भवति ॥ यस्मात्सर्वमिदं विकारजातं ब्रह्मैव । तज्जत्वात्तल्लत्वात्तदनत्वाच्च ॥ न च सर्वस्यैकात्मत्वे रागादयः सम्भवन्ति ॥ तस्माच्छान्त उपासीतेति ॥ न च शमविधिपरत्वे सत्यनेन वाक्येन ब्रह्मोपासनं नियन्तुं शक्यते । उपासनं तु स क्रतुं कुर्वीतेत्यनेन विधीयते ॥ क्रतुः सङ्कल्पो ध्यानमित्यर्थः ॥ तस्य च विषयत्वेन श्रूयते—"मनोमयः प्राणशरीरः" [ छा० ३ । १४ । २ ] इति जीवलिंगम् ॥ अतो ब्रूमो जीवविषयमेतदुपासनमिति ॥ "सर्वकर्मा सर्वकामः" [ छां० ३ । १४ । २ ] इत्याद्यपि श्रूयमाणं पर्यायेण जीवविषयमुपपद्यते ॥ "एष म आत्माऽन्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा" [ छां० ३ । १४ । ३ ] इति च हृदयायतनत्वमणीयस्त्वं चाराग्रमात्रस्य जीवस्यावकल्पते नापरिच्छिन्नस्य ब्रह्मणः ॥ ननु "ज्यायान्पृथिव्याः"

रत्नप्रभा ।

नैष दोष इति॥शमविधिपरत्वे हेतुमाह—यत्कारणमिति॥ यत एवमाह, तस्माच्छमविधिपरमित्यन्वयः॥न च शमेति । शमध्यानयोर्विधौ वाक्यभेदापत्तिरित्यर्थः । जन्मपरम्परया जीवस्यापि सर्वकर्मत्वादिसम्भवमाह—सर्वकर्मेति॥सर्वाणि कर्माणि यस्य । सर्वे कामा भोग्या यस्य । सर्वगन्धः सर्वरस इत्यादिः—आदिशब्दार्थः॥ आराग्रमात्रस्येति । तोत्रप्रोतायश्शलाकाग्रपरिमाणस्येत्यर्थः । सर्वत्र प्रसिद्धब्रह्मण एवात्रोपास्यत्वोपदेशान्न

भामती ।

क्रतुभावनामनूद्य 'सर्वम्' इत्यादिवाक्यं शमगुणे विधिः । तथा च 'सर्वं खल्विदं ब्रह्म' इति वाक्यं प्रथमपठितमप्यर्थालोचनया परमेव, तदर्थोपजीवित्वात् । एवं च संकल्पविधिः प्रथमो निर्विषयः सन्नपर्यवस्यन्विषयापेक्षः स्वयमनिर्वृत्तो न विध्यन्तरेणोपजीवितुं शक्यः, अनुपपादकत्वात् । तस्माच्छान्ततागुणविधानात्पूर्वमेव 'मनोमयः प्राणशरीरः' इत्यादिभिर्विषयोपनायकैः संबध्यते । मनोमयत्वादि च कार्यकारणसंघातात्मनो जीवात्मन एव निरूढमिति जीवात्मनोपास्येनोपरक्तोपासना न पश्चात् ब्रह्मणा संबद्धुमर्हति, उत्पत्तिशिष्टगुणावरोधात् । न च 'सर्वं खल्विदम्' इति वाक्यं ब्रह्मपरमपि तु शमहेतुवन्निगदार्थवादः शान्त-

आनन्दगिरीय–न्यायनिर्णयः ।

नेति । आदिपदेन "आवागमना" इत्याद्या श्रुतिरुक्ता । श्रुत्या शङ्कते—नन्विति । न लिङ्गं श्रुत्या बाध्यमित्याह—नैष इति । किं पूर्ववाक्ये ब्रह्मोपास्तिर्विहितेत्युच्यते किं वा प्रकृतं ब्रह्मैवोत्तरत्र संबद्धमिति नाऽऽद्य इत्याह—नेदमिति । शमविधिपरत्वे हेतुर्यदिति । उपासीतेत्युपास्तिविधौ श्रुते कथं गुणविधिस्तत्राह—एतदिति । सर्वस्यैकात्मत्वेऽपि कथं शमविधिस्तत्राऽऽह—न चेति । तर्हि शमो ध्यानमित्युभयं विधीयतां नेत्याह—न चेति । वाक्यभेदापत्तेरिति भावः । दध्ना जुहोतीति होमानुवादेन गुणविधिवदिहापि शमविधौ वाक्यान्तरसिद्धोपास्तिरनूद्यत इत्याह—उपासनं त्विति । क्रतुरेव तत्र विधीयते नोपास्तिरित्याशंक्योक्तं क्रतुरिति द्वितीयं प्रत्याह—तस्य चेति । ब्रह्मैव मनोमयादिशब्दमित्याशंक्य मनआदियोगस्य जीवलिङ्गत्वान्नेत्याह—जीवेति । तस्योपास्यत्वे वाक्यशेषस्थं सर्वकर्मत्वादि कथमित्याशंक्य क्रमेणेत्याह—सर्वेति । जीवपक्षे लिंगद्वयमाह—एष इति । जीवे ज्यायस्त्वायोगं शङ्कते—नन्विति । किं ज्यायस्त्वमणीयस्त्वं

**[ छां० ३ । १४ । ३ ] इत्याद्यपि न परिच्छिन्नेऽवकल्पते-इति॥ अत्र ब्रूमः॥ न तावदणीयस्त्वं ज्यायस्त्वं चोभयमेकस्मिन् समाश्रयितुं शक्यम्। विरोधात्॥ अन्यतराश्रयणे च प्रथमश्रुतत्वादणीयस्त्वं युक्तमाश्रयितुम्॥ ज्यायस्त्वं तु ब्रह्मभावापेक्षया भविष्यतीति॥ निश्चिते च जीवविषयत्वे यदन्ते ब्रह्मसंकीर्तनमेतद्ब्रह्मेति तदपि प्रकृतपरामर्शार्थत्वाज्जीवविषयमेव॥ तस्मान्मनोमयत्वादिभिर्धर्मैर्जीव उपास्य इति एवं प्राप्ते ब्रूमः॥ परमेव ब्रह्म मनोमयत्वादिभिर्धर्मैरुपास्यम्॥ कुतः॥ सर्वत्र प्रसिद्धोपदेशात्-यत्सर्वेषु वेदान्तेषु प्रसिद्धं ब्रह्मशब्दस्यालम्बनं जगत्कारणमिह च "सर्वं खल्विदं ब्रह्म" [ छां० ३ । १४ । १ ] इति वाक्योपक्रमे श्रुतम्।**

---

रत्नप्रभा।

जीव उपास्य इति सूत्रार्थमाह-**सर्वत्रेति**॥ यत्र फलं नोच्यते, तत्र पूर्वोत्तरपक्षसिद्धिः फलमिति मन्तव्यम्। यद्यपि निराकांक्षं ब्रह्म। तथापि मनः प्रचुरमुपाधिरस्य प्राणः शरीरमस्येति समासान्तर्गतसर्वनाम्नः सन्निहितविशेष्याकांक्षत्वाद् ब्रह्म सम्बध्यते। "स्योनं ते सदनं कृणोमि" इति संस्कारार्थ-

भामती।

ताविधिपरः, 'शूर्पेण जुहोति' 'तेन ह्यन्नं क्रियते' इतिवत्। न चान्यपरादपि ब्रह्मापेक्षिततया स्वीक्रियत इति युक्तं, मनोमयत्वादिभिर्धर्मैर्जीवे सुप्रसिद्धैर्जीवविषयसमर्पणेनानपेक्षितत्वात्। सर्वकर्मत्वादि तु जीवस्य पर्यायेण भविष्यति। एवं चाणीयस्त्वमप्युपपन्नम्। परमात्मनस्त्वपरिमेयस्य तदनुपपत्तिः। प्रथमावगतेन चाणीयस्त्वेन ज्यायस्त्वं तदनुगुणतया व्याख्येयम्। व्याख्यातं च भाष्यकृता। एवं कर्मकर्तृव्यपदेशः सप्तमीप्रथमान्तता चाभेदेऽपि जीवात्मनि कथंचिद्भेदोपचारेण राहोः शिर इतिवद् द्रष्टव्या। 'एतद् ब्रह्म' इति च जीवविषयं जीवस्यापि देहादिबृंहणत्वेन ब्रह्मत्वात्। एवं सत्यसंकल्पत्वादयोऽपि परमात्मवर्तिनो जीवेऽपि संभवन्ति, तदव्यतिरेकात्। तस्माज्जीव एवोपास्यत्वेनात्र विवक्षितः, न परमात्मेति प्राप्तम्। एवं प्राप्तेऽभिधीयते-'समासः सर्वनामार्थः संनिकृष्टमपेक्षते। तद्धितार्थोऽपि सामान्यं नापेक्षाया निवर्तकः॥ तस्मादपेक्षितं ब्रह्म ग्राह्यमन्यपरादपि। तथा च सत्यसंकल्पप्रभृतीनां यथार्थता॥' भवेदेतदेवं यदि प्राणशरीर इत्यादीनां-साक्षाज्जीववाचकत्वं भवेत्। न त्वेतदस्ति। तथाहि-प्राणः शरीरमस्येति सर्वनामार्थो बहुव्रीहिः संनिहितं च सर्वनामार्थं संप्राप्य तदभिधानं पर्यवस्येत्। तत्र मनोमयपदं पर्यवसिताभिधानं तदभिधानपर्यवसानायालं, तदेव तु मनोविकारो वा मनःप्रचुरं वा किमर्थमित्यद्यापि न विज्ञायते। यत्रैष शब्दः समवेतार्थो भवति स समासार्थः। न चैष जीव एव समवेतार्थो न ब्रह्मणीति, तस्य 'अप्राणो ह्यमनाः'

आनन्दगिरीय-न्यायनिर्णयः।

चोभयं सत्यमन्यतरद्वेति विकल्पयति-**अत्रेति**। आद्यं दूषयति-**न तावदिति**। द्वितीयं निराह-**अन्यतरेति**। तत्राऽऽराग्रमात्रस्य जीवस्य युक्तमिति तस्यैवोपास्यतेत्यर्थः। श्रुत्या ज्यायस्त्वस्यात्यन्तबाधे श्रुतिबाधमाशंक्याऽऽह-**ज्यायस्त्वं त्विति**। जीवपक्षे कथमन्ते ब्रह्मपदं तत्राऽऽह-**निश्चिते चेति**। जीवेऽपि देहादिबृंहणाज्ज्यायस्त्वन्यायाद्वा ब्रह्मतेत्यर्थः। "एतमितः प्रेत्याभिसंभवितास्मि" इति कर्मकर्तृव्यपदेशात् "अन्तरात्मन्पुरुषः" इति च तुल्याधिकारे भेदोक्तेर्न जीवस्योपास्यतेत्याशंक्य साधनफलावस्थापेक्षया कर्मकर्तृत्वस्यान्यस्य च स्वे महिम्नीतिवदुपचाराज्जीवस्यैवोपास्यतेत्युपसंहरति-**तस्मादिति**। पूर्वपक्षमनूद्य सिद्धान्तयन्सूत्राद्बहिरेव प्रतिजानीते-**एवमिति**। मनोमयादिशब्दा ध्येये जीवे भान्ति न ब्रह्म तथेत्याह-**कुत इति**। सूत्रमादाय व्याचष्टे-**सर्वत्रेति**। रात्रिसत्रन्यायस्य लघुत्वेऽपि जीवगामित्वेनाफलत्वाद्विश्वजिन्न्यायस्य गुरोरपि ब्रह्मगामित्वेन फलवतः श्रुतितात्पर्यगमकस्य बलीयस्त्वाद् ब्रह्मैवात्रोपास्यमिति भावः। किं च मनोमयत्वादिलिङ्गं बाधित्वा ब्रह्मश्रुत्या ब्रह्मैवोपास्यमित्याह-**इह चेति**। किंचाफललिङ्गोपनीतं जीवं

तदेव मनोमयत्वादिधर्मैर्विशिष्टमुपदिश्यत इति युक्तम् ॥ एवं च प्रकृतहानाप्रकृतप्रक्रिये न भविष्यतः ॥ ननु वाक्योपक्रमे शमविधिविवक्षया ब्रह्म निर्दिष्टं न स्वविवक्षयेत्युक्तम् ॥ अत्रोच्यते ॥ यद्यपि शमविधिविवक्षया ब्रह्म निर्दिष्टम् ॥ तथापि मनोमयत्वादिषूपदिश्यमानेषु तदेव ब्रह्म सन्निहितं भवति ॥ जीवस्तु न सन्निहितो न च स्वशब्देनोपात्त इति वैषम्यम् ॥ १ ॥

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

वक्तुमिष्टा विवक्षिताः ॥ यद्यप्यपौरुषेये वेदे वक्तुरभावान्नेच्छार्थः

रत्नप्रभा ।

सदनस्य निराकांक्षस्यापि तस्मिन् सीदेति साकांक्षतच्छब्देन परामर्शदर्शनादित्याह—अत्रोच्यत इति ॥ स्योनं पात्रं ते पुरोडाशस्येति श्रुत्यर्थः । जीवोऽपि लिङ्गात् सन्निहित इत्यत आह—जीवस्त्विति ॥ इदं लिङ्गद्वयं लोकसिद्धं जीवं न सन्निधापयति । दुःखिन उपास्त्ययोग्यत्वात् फलाभावाच्च । अतो विश्वजिन्न्यायेन सर्वाभिलषितमानन्दरूपं ब्रह्मैवोपासनाक्रियानुबन्धीति भावः । किञ्च ब्रह्मपदश्रुत्या लिङ्गबाध इत्याह—न चेति ॥ अन्यतराकांक्षानुगृहीतं फलवत् प्रकरणं विफललिङ्गाद्बलीय इति समुदायार्थः ॥ १ ॥ वस्तुनो विवक्षायाः फलमुपादानं स्वीकारः । स च प्रकृतेषु गुणेष्वस्तीति विवक्षो-

भामती ।

इत्यादिभिस्तद्विरहप्रतिपादनादिति युक्तम्, तस्यापि सर्वविकारकारणतया, विकाराणां च स्वकारणादभेदात्तेषां च मनोमयतया ब्रह्मणस्तत्कारणस्य मनोमयत्वोपपत्तेः । स्यादेतत् । जीवस्य साक्षान्मनोमयत्वादयः, ब्रह्मणस्तु तद्द्वारा । तत्र प्रथमं द्वारस्य बुद्धिस्थत्वात्तदेवोपास्यमस्तु, न पुनर्जघन्यं ब्रह्म । ब्रह्मलिङ्गानि च जीवस्य ब्रह्मणोऽभेदाज्जीवेऽप्युपपत्स्यन्ते । तदेतदत्र संप्रधार्यम् । किं ब्रह्मलिङ्गैर्जीवानां तदभिन्नानामस्तु तद्वत्ता, तथा च जीवस्य मनोमयत्वादिभिः प्रथममवगमात्तस्यैवोपास्यत्वम्, उत न जीवस्य ब्रह्मलिङ्गवत्ता तदभिन्नस्यापि। जीवलिङ्गैस्तु ब्रह्म तद्वत्, तथा च ब्रह्मलिङ्गानां दर्शनात्, तेषां च जीवेऽनुपपत्तेर्ब्रह्मैवोपास्यमिति। वयं तु पश्यामः—'समारोप्यस्य रूपेण विषयो रूपवान् भवेत् । विषयस्य तु रूपेण समारोप्यं न रूपवत् ॥' समारोपितस्य हि रूपेण भुजङ्गस्य भीषणत्वादिना रज्जू रूपवती, न तु रज्जुरूपेणाभिगम्यत्वादिना भुजङ्गो रूपवान् । तदा भुजङ्गस्यैवाभावात्किं रूपवत् । भुजङ्गदशायां तु न नास्ति वास्तवी रज्जुः । तदिह समारोपितजीवरूपेण वस्तुसद्ब्रह्म रूपवद्युज्यते, न तु ब्रह्मरूपैर्नित्यत्वादिभिर्जीवस्तद्वान्भवितुमर्हति, तस्य तदानीमसंभवात् । तस्माद्ब्रह्मलिङ्गदर्शनाज्जीवे च तदसंभवाद्ब्रह्मैवोपास्यं न जीव इति सिद्धम् । एतदुपलक्षणाय च 'सर्वं खल्विदं ब्रह्म' इति वाक्यमुपन्यस्तमिति ॥ १ ॥ यद्यप्यपौरुषेय इति । शास्त्रयोनित्वेऽपीश्वरस्य पूर्वपूर्वसृष्टिरचितसं-

आनन्दगिरीय—न्यायनिर्णयः ।

हित्वा फलवत्प्रकरणप्राप्तं ब्रह्म ग्राह्यमित्याह—एवमिति । प्राणः शरीरमस्येति समासगतसर्वनाम्ना संनिहितार्थेन प्रकृतं ब्रह्म हित्वा जीवमप्रकृतमिच्छतः प्रकृतहानिरप्रकृतप्रक्रिया चेत्यर्थः । आगतो राजपुरुषस्तं भोजयेदितिवदन्यशेषस्य ब्रह्मणः सर्वनामादिना न परामर्शः स्यादित्याशंकते—नन्विति । तस्मिन्सीदेत्यादौ सदनस्येवोपसर्जनस्यापि परामर्शमाह—अत्रेति । जीवस्यापि लिङ्गादस्ति संनिधिरित्याशंक्य तस्योपास्तिधियो विशेषणवैयर्थ्यादविवक्षितं लिङ्गमित्याह—जीवस्त्विति । तथाऽपि मनोमयादिशब्दात्तदुक्तिर्नेत्याह—न चेति । तस्य तदवाचित्वादित्यर्थः । वैषम्यं जीवब्रह्मणोरिति शेषः ॥ १ ॥ इतश्च ब्रह्मैवात्रोपास्यमित्याह—विवक्षितेति । ननु शास्त्रयोनित्वेऽपीश्वरस्य रचनायामस्वातन्त्र्यादपौरुषेयत्वं वेदस्योक्तम् । तत्र वक्तुरभावादियं विवक्षितपदं कथं विगृह्यते तत्राऽऽह—यद्यपीति । विवक्षितस्योपादानादुपास्ताद्युपादानस्य विव-

संभवति ॥ तथाप्युपादानेन फलेनोपचर्यते ॥ लोके हि यच्छब्दाभिहितमुपादेयं भवति तद्विवक्षितमित्युच्यते, यदनुपादेयं तदविवक्षितमिति। तद्वद्वेदेऽप्युपादेयत्वेनाभिहितं विवक्षितं भवतीतरदविवक्षितम् ॥ उपादानानुपादाने तु वेदवाक्यतात्पर्यातात्पर्याभ्यामवगम्येते ॥ तदिह ये विवक्षिता गुणा उपासनायामुपादेयत्वेनोपदिष्टाः सत्यसङ्कल्पप्रभृतयः ते परस्मिन्ब्रह्मण्युपपद्यन्ते । सत्यसङ्कल्पत्वं हि सृष्टिस्थितिसंहारेष्वप्रतिबन्धशक्तित्वात्परमात्मन एवावकल्पते ॥ परमात्मगुणत्वेन च-"य आत्माऽपहतपाप्मा" [ छां० ८। ७।१] इत्यत्र "सत्यकामस्सत्यसङ्कल्पः" [ छां० ८ । ७ । १ ] इति श्रुतम् ॥ "आकाशात्मा" [ छां० ३ । १४ । २ ] इत्यादिना-आकाशवदात्माऽस्येत्यर्थः ॥ सर्वगतत्वादिभिर्धर्मैः संभवत्याकाशेन साम्यं ब्रह्मणः, "ज्यायान्पृथिव्याः" [ छा० ३। १४। ३ ] इत्यादिना चैतदेव दर्शयति॥ यदाप्याकाश आत्माऽस्येति व्याख्यायते, तदापि संभवति सर्वजगत्कारणस्य सर्वात्मनो ब्रह्मण आकाशात्मत्वम्। अत एव सर्वकर्मेत्यादि-एवमिहोपास्यतया विवक्षिता गुणा ब्रह्मण्युपपद्यन्ते ॥ यत्पुनरुक्तं "मनोमयः प्राणशरीरः" [ छां० ३ । १४ । २ ] इति जीवलिंगं न तद्ब्रह्मण्युपपद्यत इति॥ तदपि ब्रह्मण्युपपद्यत इति ब्रूमः-

रत्नप्रभा ।

पचार इत्याह-तथाप्युपादानेनेति॥नन्विदं ग्राह्यमिदं त्याज्यमिति धीर्विवक्षाधीना वेदे कुतः स्यादित्यत आह-उपादानानुपादाने त्विति ॥ तात्पर्यं नाम फलवदर्थप्रतीत्यनुकूलत्वं शब्दधर्मः । उपक्रमादिना तस्य ज्ञानात्तयोरवगम इत्यर्थः॥ तदिहेति । तत् तस्मात् तात्पर्यवत्त्वादित्यर्थः । सर्वात्मत्वे प्रमाणमाह-

भामती ।

दर्थापेक्षरचनत्वेनास्वातन्त्र्यादपौरुषेयत्वाभिधानं, तथा चास्वातन्त्र्येण विवक्षा नास्तीत्युक्तम् । परिग्रहपरित्यागौ चोपादानानुपादाने उक्ते, न तूपादेयत्वमेव । अन्यथोद्देश्यतयानुपादेयस्य ग्रहादेरविवक्षितत्वेन चमसादावपि संमार्गप्रसङ्गात् । तस्मादनुपादेयत्वेऽपि ग्रह उद्देश्यतया परिगृहीतो विवक्षितः । तद्गतं त्वेकत्वमवच्छेदकत्वेन वर्जितमविवक्षितम् । इच्छानिच्छे च भक्तितः । तदिदमुक्तम्-वेदवाक्यतात्पर्यातात्पर्याभ्यामवगम्येते इति । यत्परं वेदवाक्यं तत्तेनोपात्तं विवक्षितम्, अतत्परेण चानुपात्तमवि-

आनन्दगिरीय-न्यायनिर्णयः ।

क्षाफलस्य सत्यसंकल्पादिगुणेषु दृष्टेर्विवक्षितत्वमुपचर्य विग्रह इत्यर्थः । उक्तोपचारस्यालौकिकत्वं प्रत्याह-लोकेपीति । विवक्षितत्वोपादेयत्वयोरन्योन्याश्रयत्वमाशंक्याऽऽह-उपादानेति । परिग्रहपरित्यागावुपादानानुपादाने । प्रसङ्गागतमुक्त्वा सूत्रं व्याचष्टे-तदिहेति । तच्छब्दो यथोक्तसमासोपपत्तिपरामर्शी । प्रकृतं प्रकरणमिहेत्युक्तम् । ब्रह्मण्येव सत्यसंकल्पत्वं साधयति-सत्येति । श्रुतिरपि युक्तिवदिहास्तीत्याह-परमात्मेति । आकाशात्मत्वं वक्तुं तन्निरुक्तिं करोति-आकाशेति । कथं जडाजडयोः साम्यं तदाह-सर्वेति । ज्यायस्त्वं सर्वगतत्वसाधकमित्याह-ज्यायानिति । आकाशात्मत्वस्य निरुक्त्यन्तरमाशंक्याङ्गीकरोति-यदेति । सर्वात्मत्वमत एवेत्युक्तम् । आदिपदं सर्वकामादिसंग्रहार्थम् । उक्तामुपपत्तिमुपसंहरति-एवमिति । इहेति प्रकरणोक्तिस्तेन तदेवोपास्यमिति शेषः । ध्येयस्यापि मनोमयत्वादेर्ब्रह्मणि नोपपत्तिरित्याशंक्याऽऽह-यत्त्विति । तस्यापि ब्रह्मण्युपपत्तिमाह-तदपीति । कथं जीवगामिनो

१ तिवद्ध्रश. पा. । तिहतश. पा. ।

सर्वात्मत्वाद्धि ब्रह्मणो जीवसम्बन्धीनि मनोमयत्वादीनि ब्रह्मसम्बन्धीनि भवन्ति ॥ तथा च ब्रह्मविषये श्रुतिस्मृती भवतः—"त्वं स्त्री, त्वं पुमानसि, त्वं कुमारः,–उत–वा कुमारी, त्वं जीर्णो दण्डेन वञ्चसि, त्वं जातो भवसि विश्वतोमुखः" [ श्वेता० ४ । ३ ] इति, "सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतश्श्रुतिमल्लोके सर्वमावृत्य तिष्ठति" [ श्वेता० ३ । १६ ] इति च । "अप्राणो ह्यमनाः शुभ्रः" [ मुण्ड० २ । १ । २ ] इति श्रुतिः शुद्धब्रह्मविषया, इयं तु मनोमयः प्राणशरीर इति सगुणब्रह्मविषयेति विशेषः ॥ अतो विवक्षितगुणोपपत्तेः परमेव ब्रह्मेहोपास्यत्वेनोपदिष्टमिति गम्यते ॥ २ ॥

## अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

पूर्वेण सूत्रेण ब्रह्मणि विवक्षितानां गुणानामुपपत्तिरुक्ता ॥ अनेन तु शारीरे तेषामनुपपत्तिरुच्यते ॥ तुशब्दोऽवधारणार्थः ॥ ब्रह्मैवोक्तेन न्यायेन मनोमयत्वादिगुणम् ॥ न तु शारीरो जीवो मनोमयत्वादिगुणः, "यत्कारणं सत्यसङ्कल्प आकाशात्मा" [ छां० ३ । १४ । २ ] "अवाक्यनादरः" [ छां० ३ । १४ । ३ ] "ज्यायान्पृथिव्याः" [ छां० ३ । १४ । ३ ] इत्येवञ्जातीयका गुणा न शारीरे आञ्जस्येनोपपद्यन्ते ॥

रत्नप्रभा ।

तथा चेति ॥ जीर्णः स्थविरो यो दण्डेन वञ्चतिं गच्छति सोऽपि त्वमेव । यो जातो बालः स त्वम् एव सर्वतः सर्वासु दिक्षु श्रुतयः श्रोत्राण्यस्येति सर्वतश्श्रुतिमत् सर्वजन्तूनां प्रसिद्धाः पाण्यादयः । तस्येति सर्वात्मत्वोक्तिः ॥ २ ॥ ननु जीवधर्माश्चेद्ब्रह्मणि योज्यन्ते, तर्हि ब्रह्मधर्मा एव जीवे किमिति न योज्यन्ते, तत्राह—अनुपपत्तेरिति ॥ सूत्रं व्याचष्टे—पूर्वेणेति ॥ सर्वात्मत्वादिः उक्तन्यायः ॥ कल्पितस्य धर्मा अधिष्ठाने सम्बध्यन्ते, न अधिष्ठानधर्माः कल्पिते इति भावः । वागेव वाकः सोऽस्यास्तीति वाकी न वाकी अवाकी अनिन्द्रिय इत्यर्थः । कुत्राप्यादरः कामोऽस्य नास्तीति अनादरः । नित्यतृप्त इत्यर्थः ॥ ज्यायस्त्वाद्यनुपपत्तौ शारीर इति परिच्छेदो हेतुः सूत्रोक्तः ।

भामती ।

वक्षितमित्यर्थः ॥ २ ॥ स्यादेतत् । यथा सत्यसंकल्पत्वादयो ब्रह्मण्युपपद्यन्ते, एवं शारीरेऽप्युपपत्स्यन्ते, शारीरस्य ब्रह्मणोऽभेदात् । शारीरगुणा इव मनोमयत्वादयो ब्रह्मणीत्यत आह सूत्रकारः—अनुपपत्तेस्तु

आनन्दगिरीय–न्यायनिर्णयः ।

ब्रह्मणि सिद्धिस्तत्राह—सर्वेति । जीवस्यैवासाधारणं मनोमयत्वादीत्युपेत्य ब्रह्मण्युपपत्तिमुक्त्वा तस्य साधारण्ये मानमाह—तथा चेति । जीर्णः स्थविरो भूत्वा यो दण्डेन वञ्चति गच्छति सोऽपि त्वमेव । सर्वतः सर्वासु दिक्षु श्रुतयः श्रोत्राण्यस्यैवेति सर्वतःश्रुतिमत् । ब्रह्मणि मनोमयत्वादि वदतः श्रुत्यन्तरविरोधमाशंक्याऽऽह—अप्राणो हीति । सूत्रार्थमुपसंहरति—अत इति ॥ २ ॥ ब्रह्मणि जीवगतं मनोमयत्वादीष्टं चेद् ब्रह्मगतमपि सत्यसंकल्पत्वाद्यभेदाज्जीवेऽस्तु नेत्याह—अनुपपत्तेस्त्विवति । सूत्रं व्याख्यातुं संगतिमाह—पूर्वेणेति । आरोप्यरूपेण विषयस्यैव रूपित्वं, न विपरीतं न हि रज्ज्वा रूपेण सर्पो रूपवानित्यर्थः । अवधारणमेव स्फोरयन्नेत्यादि विभजते—ब्रह्मेति । सर्वात्मत्वादिरुक्तो न्यायः । अनुपपत्तेरिति व्याचष्टे—यदिति । वागेव वाकः सोऽस्यास्तीति वाकी न वाक्यवाकी वागादिसर्वेन्द्रियरहित इत्यर्थः । आप्तकामत्वान्न कुत्रचिदादरोऽस्तीत्यनादरः । शारीरत्वमीश्वरेऽपि व्यापिनि स्यादिति शङ्कते—

शारीर इति शरीरे भव इत्यर्थः॥ नन्वीश्वरोऽपि शरीरे भवति ॥ सत्यम्॥ शरीरे भवति न तु शरीर एव भवति-"ज्यायान्पृथिव्या ज्यायानन्तरिक्षाद्" [ छां० ३ । १४ । ३ ] "आकाशवत्सर्वगतश्च नित्यः" इति च व्यापित्वश्रवणात् ॥ जीवस्तु शरीर एव भवति ॥ तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्त्यभावात् ॥ ३ ॥

## कर्मकर्त्तृव्यपदेशाच्च ॥ ४ ॥

इतश्च न शारीरो मनोमयत्वादिगुणः, यस्मात्कर्मकर्तृव्यपदेशो भवति- "एतमितः प्रेत्याभिसंभवितास्मि" इति । एतमिति प्रकृतं मनोमयत्वादिगुणमुपास्यमात्मानं कर्मत्वेन प्राप्यत्वेन व्यपदिशति । "अभिसंभवितास्मि" [ छां० ३ । १४ । १ ] इति शारीरमुपासकं कर्तृत्वेन प्रापकत्वेन ॥ अभिसंभवितास्मीति ॥ प्राप्तास्मीत्यर्थः । न च सत्यां गतावेकस्य कर्मकर्तृव्यपदेशो युक्तः ॥ तथोपास्योपासकभावोऽपि भेदाधिष्ठान एव ॥ तस्मादपि न शारीरो मनोमयत्वादिविशिष्टः ॥ ४ ॥

## शब्दविशेषात् ॥ ५ ॥

इतश्च शरीरादन्यो मनोमयत्वादिगुणः। यस्माच्छब्दविशेषो भवति समानप्रकरणे श्रुत्यन्तरे "यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन्पुरुषो हिरण्मयः" [ शत० ब्रा० १० । ६ । ३ । २ ] इति शारीरस्यात्मनो यः शब्दोऽभिधायकः सप्तम्यन्तोऽन्तरात्मन्निति ॥ तस्माद्विशिष्टोऽन्यः प्रथमान्तः पुरुषशब्दो मनोमयत्वादिविशिष्टस्यात्मनोऽभिधायकः ॥ तस्मात्तयोर्भेदोऽधिगम्यते ॥ ५ ॥

---

रत्नप्रभा ।

स तु जीवस्यैव नेश्वरस्येत्याह-सत्यमित्यादिना ॥ ३ ॥ कर्मकर्तृव्यपदेशाच्च । प्रापकत्वेन व्यपदिशतीति सम्बन्धः । कर्मकर्त्तृव्यपदेशपदस्यार्थान्तरमाह-तथोपास्येति ॥ ४ ॥ शब्दविशेषात् । एकार्थत्वं प्रकरणस्य समानत्वम् । अन्तरात्मन्निति । विभक्तिलोपश्छान्दसः । शब्दयोर्विशेषो विभक्तिभेदः । तस्मात्तदर्थयोर्भेद इति सूत्रार्थः ॥ ५ ॥ स्मृतौ हृदिस्थस्य जीवाद्भेदोक्तेरत्रापि हृदिस्थो

भामती ।

न शारीरः ॥ ३ ॥ ४ ॥ ५ ॥ यत्तदवोचाम समारोप्यधर्माः समारोपविषये संभवन्ति, न तु विषयधर्माः

आनन्दगिरीय-न्यायनिर्णयः ।

नन्विति । अयोगव्यवच्छेदमङ्गीकृत्यान्ययोगव्यवच्छेदाभावान्नेत्याह—सत्यमिति । अन्ययोगाव्यवच्छेदे हेतुः-ज्यायानिति । जीवे वा कथं विशिष्टं शारीरत्वं तत्राऽऽह-जीवस्त्विति ॥ ३ ॥ जीवस्य मनोमयत्वादिगुणत्वाभावे हेत्वन्तरम्—कर्मेति । पूर्वसूत्रान्नेत्याद्याकृष्य चशब्दार्थमाह—इतश्चेति । प्राप्यप्रापकत्वेन कर्मकर्तृव्यपदेशं विशदयति—एतमिति । वाक्यं व्याकरोति-एतमित्यादिना । प्रापकत्वेन व्यपदिशतीति संबन्धः । मामहं जानामीतिवद्व्यपदेशमाशंक्याऽऽह-न चेति । कर्मकर्तृव्यपदेशो सूत्राभिप्रेतं प्रकारान्तरमाह-उपास्येति । उक्तव्यपदेशफलमाह-तस्मादिति ॥ ४ ॥ तत्रैव हेत्वन्तरमाह-शब्देति । सूत्रे हेत्वन्तरद्योतकाभावमाशङ्क्य पूर्वसूत्रस्थं चशब्दमाकृष्य व्याकरोति-इतश्चेति । समानप्रकरणत्वमेकविद्याविषयत्वम् । अन्तरात्मन्निति च्छान्दसो विभक्तिलोपः । शब्दभेदफलमाह-तस्मादिति ॥ ५ ॥ आत्मान्तःस्थितस्यान्यस्यायोगे स्वे महिम्नीतिवदुपचारादेव शब्दभेदः स्यादित्युक्तमा-

## स्मृतेश्च ॥ ६ ॥

स्मृतिश्च शारीरपरमात्मानौ भेदेन दर्शयति—"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया" [ भ० गी० १८ । ६८ ] इत्याद्या ॥ अत्राह-कः पुनरयं शारीरो नाम परमात्मनोऽन्यो यः प्रतिषिध्यते-"अनुपपत्तेस्तु न शारीरः" [ व्या० सू० १ । २ । ३ ] इत्यादिना ॥ श्रुतिस्तु-"नान्योऽतोऽस्ति द्रष्टा, नान्योऽतोऽस्ति श्रोता" [ बृह० ३ । ७ । २३ ] इत्येवञ्जातीयका परमात्मनोऽन्यमात्मानं वारयति ॥ तथा स्मृतिरपि-"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" [ भ० गी० १३।२ ] इत्येवञ्जातीयकेति ॥ अत्रोच्यते । सत्यमेवमेतत् ॥ पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते ॥ यथा-घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभः परिच्छिन्नवदवभासते, तद्वत् ॥ तदपेक्षया च कर्मत्वकर्तृत्वादिभेदव्यवहारो न विरुध्यते ॥ प्राक्-"तत्त्वमसि" [ छा० ६ । ८ । ७-१५ ] इत्यात्मैकत्वोपदेशग्रहणात् ॥ गृहीते त्वात्मैकत्वे बन्धमोक्षादिसर्वव्यवहारपरिसमाप्तिरेव स्यात् ॥ ६ ॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

रत्नप्रभा ।

मनोमय ईश्वर इत्याह—स्मृतेश्चेति ॥ भूतानि जीवान् । यन्त्रं शरीरम् । अत्र सूत्रकृता सत्यभेद उक्त इति भ्रान्तिनिरासायेक्षत्यधिकरणे निरस्तमपि चोद्यमुद्भाव्य निरस्यति—अत्राहेत्यादिना ॥ त्वदुक्तरीत्या वस्तुत एकत्वमेव भेदस्तु कल्पितः सूत्रेष्वनूद्यत इत्याह—सत्यमिति ॥ ६ ॥ अर्भकमोको यस्य सोऽर्भकौकाः तस्य भावः तत्त्वं तस्मात् । आर्थिकमल्पत्वम् अणीयानित्यल्पत्ववाचकशब्देनापि श्रुतमि-

भामती ।

समारोप्य इति । तस्येत उत्थानम् । अत्राह चोदकः—कः पुनरयं शारीरो नामेति । न तावद्भेदप्रतिषेधाद्भेदव्यपदेशाच्च भेदाभेदावेकत्र तात्त्विकौ भवितुमर्हतो विरोधादित्युक्तम् । तस्मादेकमिह तात्त्विकमतात्त्विकं चेतरत्, तत्र पौर्वापर्येणाद्वैतप्रतिपादनपरत्वाद्वेदान्तानां द्वैतग्राहिणश्च मानान्तरस्याभावात्तद्बाधनाच्च ।

आनन्दगिरीय—न्यायनिर्णयः ।

शङ्कयाऽऽह—स्मृतेश्चेति । हृदि स्थितस्य शारीराद्भेदः स्मृत्योच्यते ततो मनोमयत्वादिविशिष्टो हृदि स्थितोऽन्यः शारीरादिति नोपचारशंकेति व्याचष्टे—स्मृतिश्चेति । तमेव शरणं गच्छेत्यादिवाक्यमादिशब्दार्थः । ईक्षत्यधिकरणे निरस्तमपि चोद्यं प्रसङ्गादुद्भावयति—अत्रेति । श्रुतिस्मृतिभ्यां भेदवादः सप्तम्यर्थः । ननु नान्यत्वं साध्यते किंत्वन्यस्य मनोमयत्वादि निषिध्यते तत्राऽऽह—य इति । विवक्षितगुणवत्त्वेन जीवस्य ध्येयत्वनिषेधानुपपत्त्या तदन्यत्वधीरित्यर्थः । परस्यांशो विकारो वा जीवो नामेत्याशङ्क्य श्रुतिस्मृतिविरोधान्नैवमित्याह—श्रुतिरिति । न च भेदाभेदाभ्यां श्रुतिस्मृत्यविरोधस्तदयोगादिति । किं वस्तुतोऽन्यो जीवो नास्ति किं वोपाधितोऽपीति विकल्पयति—अत्रेति । आद्यमङ्गीकरोति—सत्यमिति । द्वितीयं दूषयति—पर इति । अपरिच्छिन्नस्योपाधिना परिच्छिन्नत्वदृष्टिं दृष्टान्तेन स्पष्टयति—यथेति । श्रुतौ स्मृतौ च कर्मकर्तृत्वादिव्यवहारात्पारमार्थिक एव भेद इत्याशंक्याऽऽह—तदिति । अबाधाद्भेदव्यवहारस्य तात्त्विकत्वमाशंक्य प्रागूर्ध्वं वा बोधादबाध इति विकल्प्याऽऽद्यमनुजानाति—प्रागिति । द्वितीयं प्रत्याह—गृहीते त्विति ॥ ६ ॥ जैवं लिङ्गद्वयं निरस्यति—अर्भकेति । अर्भकमोको यस्य

अर्भकमल्पमोको नीडम् एष मे आत्मान्तर्हृदयमितिपरिच्छिन्नायतनत्वात् ॥ स्वशब्देन चाणीयान्व्रीहेर्वा यवाद्वेत्यणीयस्त्वव्यपदेशाच्छारीर एवाराग्रमात्रो जीव इहोपदिश्यते ॥ न सर्वगतः परमात्मेति यदुक्तं, तत्परिहर्तव्यम् ॥ अत्रोच्यते ॥ नायं दोषः ॥ न तावत्परिच्छिन्नदेशस्य सर्वगतत्वव्यपदेशः कथमप्युपपद्यते ॥ सर्वगतस्य तु सर्वदेशेषु विद्यमानत्वात्परिच्छिन्नदेशव्यपदेशोऽपि कयाचिदपेक्षया संभवति ॥ यथा समस्तवसुधाधिपतिरपि हि सन्नयोध्याधिपतिरिति व्यपदिश्यते ॥ कया पुनरपेक्षया सर्वगतः सन्नीश्वरोऽर्भकौका अणीयांश्च व्यपदिश्यत इति ॥ निचाय्यत्वादेवमिति ब्रूमः ॥ स एवमणीयस्त्वादिगुणगणोपेत ईश्वरस्तत्र हृदयपुण्डरीके निचाय्यो द्रष्टव्य उपदिश्यते, यथा शालग्रामे हरिः ॥ तत्रास्य बुद्धिविज्ञानं ग्राहकम् ।

---

रत्नप्रभा ।

त्याह—स्वशब्देनेति । नायं दोष इत्युक्तं विवृणोति—न तावदिति ॥ कथमपि ब्रह्मभावापेक्षयाऽपीत्यर्थः । परिच्छेदत्यागं विना ब्रह्मत्वासम्भवात् तत्त्यागे च ब्रह्मण एवोपास्यत्वमायातीति भावः । विभोः परिच्छेदोक्तौ दृष्टान्तमाह—यथा समस्तेति ॥ सर्वेश्वरस्यायोध्यायां स्थित्यपेक्षया परिच्छेदोक्तिवदल्पहृदि ध्येयत्वेन तथोक्तिरित्यर्थः । ननु किमिति हृदयमेव प्रायेणोच्यते, तत्राह—तत्रेति ॥ हृदये

भामती ।

तेनाद्वैतमेव परमार्थः । तथा च 'अनुपपत्तेस्तु' इत्याद्यसंगतार्थमित्यर्थः । परिहरति—सत्यमेवैतत् । पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिर्विच्छिद्यमानो बालैः शारीर इत्युपचर्यते । अनाद्यविद्यावच्छेदलब्धजीवभावः पर एवात्मा स्वतो भेदेनावभासते । तादृशां च जीवानामविद्या, न तु निरुपाधिनो ब्रह्मणः । न चाविद्यायां सत्यां जीवात्मविभागः, सति च जीवात्मविभागे तदाश्रयाऽविद्येत्यन्योन्याश्रयमिति सांप्रतम् । अनादित्वेन जीवाविद्ययोर्बीजाङ्कुरवदनवक्लृप्तेरयोगात् । न च सर्वज्ञस्य सर्वशक्तेश्च स्वतः कुतोऽकस्मात्संसारिता, यो हि परतन्त्रः सोऽन्येन बन्धनागारे प्रवेश्येत, न तु स्वतन्त्र इति वाच्यम् । न हि तद्भागस्य जीवस्य संप्रतितनी बन्धनागारप्रवेशिता, येनानुयुज्येत, किंत्वियमनादिः पूर्वपूर्वकर्मविद्यासंस्कारनिबन्धना नानुयोगमर्हति । न चैतावता ईश्वरस्यानीशता न ह्युपकरणाद्यपेक्षिता कर्तुः

आनन्दगिरीय-न्यायनिर्णयः ।

सोऽर्भकौकास्तस्य भावस्तत्त्वं तस्मादितियावत् । अर्भकशब्दस्य शिशुविषयत्वनिषेधार्थमल्पमिति पर्यायत्वोक्तिः । ओकःशब्दस्याप्रसिद्धार्थतां व्यवच्छिनत्ति—नीडमिति । वाक्यार्थं वदन्नाशङ्कां विवृणोति—एष इति । तत्र लिङ्गयोः संभावनार्थं विशिनष्टि—आराग्रेति । परत्र तदसंभावनार्थं—सर्वगत इति । तस्यानुपेक्षणीयत्वमाह—तदिति । परिहारभागमवतारयति—अत्रेति । अणीयस्त्वमुपेत्य ज्यायस्त्वं वा बाध्यं तदपि वा कथंचिदनुगन्तव्यम् । नाऽऽद्यः, श्रुतस्य बाधायोगादित्याह—नायमिति । द्वितीयं प्रत्याह—न तावदिति । त्वयाऽपि ज्यायस्त्वमुपेत्याणीयस्त्वं बाध्यते तदपि वा कथंचिदनुगम्यते । नाऽऽद्यः, श्रुतबाधायोगसाम्यात् । न द्वितीयो, ज्यायसोऽणीयस्त्वस्य सर्वथैवायुक्तत्वात्तत्राऽऽह—सर्वेति । अपरिच्छिन्नस्य परिच्छिन्नदेशोक्तौ दृष्टान्तमाह—समस्तेति । तत्र पुरवासापेक्षया व्यपदेशेऽपि कथमिहेति पृच्छति—कयेति । सूत्रावयवमुत्तरमवतार्य व्याचष्टे—निचाय्यत्वादिति । सर्वगतस्य कथमेकदेशे द्रष्टव्यत्वं तत्राऽऽह—यथेति । तत्र शास्त्रप्रामाण्यात्तथाऽस्तु, प्रस्तुते कथं तत्राऽऽह—तत्रेति । बुद्धिविज्ञानमित्यन्तःकरणस्य प्रमाणजा वृत्तिरुक्ता । सर्वगतस्य कुतो हृदय एव मानग्राह्यत्वं तत्राऽऽह—

सर्वगतोऽपीश्वरस्तत्रोपास्यमानः प्रसीदति ॥ व्योमवच्चैतद् द्रष्टव्यम्–यथा सर्वगतमपि सद्व्योम सूचीपाशाद्यपेक्षयाऽर्भकौकोऽणीयश्च व्यपदिश्यते, एवं ब्रह्मापि ॥ तदेवं निचाय्यत्वापेक्षं ब्रह्मणोऽर्भकौकस्त्वमणीयस्त्वं च न पारमार्थिकम्॥ तत्र यदाशङ्क्यते हृदयायतनत्वाद्ब्रह्मणो हृदयायतनानां च प्रतिशरीरं भिन्नत्वाद्भिन्नायतनानां च शुकादीनामनेकत्वसावयवत्वाऽनित्यत्वादिदोषदर्शनाद्ब्रह्मणोऽपि तत्प्रसङ्ग इति तदपि परिहृतं भवति ॥७॥

## सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

व्योमवत्सर्वगतस्य ब्रह्मणः सर्वप्राणिहृदयसम्बन्धाच्चिद्रूपतया च शारीराद्विशिष्टत्वात्सुखदुःखादिसंभोगोऽप्यविशिष्टः प्रसज्येत । एकत्वाच्च ॥ न हि परस्मादात्मनोऽन्यः कश्चिदात्मा संसारी विद्यते–"नान्योऽतोऽस्ति विज्ञाता" [ बृ० ३ । ७ । २३ ] इत्यादिश्रुतिभ्यः ॥ तस्मात्परस्यैव संसारसम्भोगप्राप्तिरिति चेत् ॥ न ॥ वैशेष्यात्–न तावत्सर्वप्राणिहृदयसम्बन्धाच्छारीराद्ब्रह्मणः सम्भोगप्रसङ्गः ॥ वैशेष्यात्–विशेषो हि भवति शारीरपरमेश्वरयोः ॥ एकः कर्त्ता भोक्ता धर्माधर्मसाधनः सुखदुःखादिमांश्च ॥ एकस्तद्विपरीतोऽपहतपाप्मत्वादिगुणः ॥ एतस्मादनयोर्विशेषादेकस्य भोगो नेतरस्य ॥

---

रत्नप्रभा ।

परमात्मनो बुद्धिवृत्तिर्ग्राहिका भवति । अत ईश्वराभिव्यक्तिस्थानत्वात्तदुक्तिरित्यर्थः । व्योमदृष्टान्तासिना शङ्कालताऽपि काचिच्छिन्नेत्याह–तत्र यदाशंक्यत इत्यादिना ॥ भिन्नायतनत्वेऽपि व्योम्नः सत्यभेदाद्यभावादिति भावः ॥ ७ ॥ ब्रह्मणो हार्दत्वेऽनिष्टसंभोगापत्तेर्जीव एव हार्द उपास्य इति शङ्कां व्याचष्टे–व्योमवदिति ॥ ब्रह्म, भोक्तृ स्यात्, हार्दत्वे सति चेतनत्वाज्जीवाभिन्नत्वाच्च जीववदित्युक्तं निरस्यति–न वैशेष्यादिति ॥ धर्माधर्मवत्त्वमुपाधिरित्यर्थः । अयमेव विशेषो वैशेष्यम् । स्वार्थे ष्यञ् प्रत्ययः, विशेषस्यातिशयार्थो वा । धर्मादेः स्वाश्रये फलहेतुत्वमतिशयः । तस्मादिति सूत्रार्थः । किंच विभवो बहव आत्मान इति वादिनामेकस्मिन् देहे सर्वात्मनां भोक्तृत्वप्रसङ्गः स्वकर्मार्जित एव देहे

भामती ।

स्वातन्त्र्यं विहन्ति । तस्माद्यत्किंचिदेतदपीति ॥ ६ ॥ ७ ॥ विशेषादिति वक्तव्ये वैशेष्याभिधानमात्यन्तिकं

आनन्दगिरीय–न्यायनिर्णयः ।

सर्वेति । अपरिच्छिन्नस्य परिच्छिन्नायतनत्वादिव्यपदेशं सौत्रोदाहरणेन साधयति–व्योमवदिति । ब्रह्मापि हृदयापेक्षया द्विधोक्तिभागिति शेषः । दार्ष्टान्तिकमुपसंहरति–तदेवमिति।हृदयायतनस्यातात्त्विकत्वे चोद्यान्तरमपि निरस्तमित्याह–तत्रेति । न हि परोपाधिपरिच्छेदादनित्यत्वादि युक्तं व्योम्नोऽदृष्टेरिति भावः ॥ ७॥ हार्दत्वे ब्रह्मणोऽनिष्टप्रसङ्गाज्जीवस्यैव हार्दस्योपास्यतेति शंकित्वा समाधत्ते–संभोगेति । चोद्यं प्रपञ्चयति–व्योमवदिति । सर्वबुद्धिसंबन्धेऽपि नभोवदभोगमाशङ्क्योक्तम्–चिदिति । तथाऽपि भोगहेतुसंबद्धस्यैव भोगो नेतरस्येत्याशङ्क्याऽऽह–एकत्वाच्चेति । तत्प्रपञ्चयति–न हीति । अनिष्टप्रसङ्गं निगमयति तस्मादिति । उत्तरमादत्ते–नेति । यत्तु बुद्धिस्थत्वे सति चैतन्याद् ब्रह्मणो भोक्तृत्वं जीववदिति तत्राऽऽह–न तावदिति । हेतुं विवृणोति–विशेषो हीति । धर्माधर्मवत्त्वस्यैव भोगप्रयोजकत्वादप्रयोजको हेतुरित्यर्थः । उक्तवैशेष्यफलमाह–एतस्मादिति । साधनव्याप्तिमाशंक्यान्यत्र धर्मादित्यादि-

---

१ शरीरेणावि पाठान्तरम् ।

यदि च सान्निधानमात्रेण वस्तुशक्तिमनाश्रित्य कार्यसम्बन्धोऽभ्युपगम्येताऽऽकाशादीनामपि दाहादिप्रसङ्गः ॥ सर्वगतानेकात्मवादिनामपि समावेतौ चोद्यपरिहारौ ॥ यद्यप्येकत्वाद्ब्रह्मण आत्मान्तराभावाच्छारीरस्य भोगेन ब्रह्मणो भोगप्रसङ्ग इति ॥ अत्र वदामः॥इदं तावद्देवानाम्प्रियः प्रष्टव्यः—कथमयं त्वया आत्मान्तराभावोऽध्यवसित इति । "तत्त्वमसि" [ छां० ६ । ८ । ७–१५ ] "अहं ब्रह्मास्मि" [ बृ० १ । ४ । १० ] "नान्योऽतोऽस्ति विज्ञाता" [ बृ० ३ । ७ । २३ ] इत्यादिशास्त्रेभ्य इति चेत्, यथाशास्त्रं तर्हि शास्त्रीयोऽर्थः प्रतिपत्तव्यो न तत्रार्धजरतीयं लभ्यम् ॥ शास्त्रं च "तत्त्वमसि" [ छां० ६ । ८ । ७–१५ ] इत्यपहतपाप्मत्वादिविशेषणं ब्रह्म शारीरस्यात्मत्वेनोपदिशच्छारीरस्यैव तावदुपभोक्तृत्वं वारयति ॥ कुतस्तदुपभोगेन ब्रह्मण उपभोगप्रसङ्गः । अथागृहीतं शारीरस्य ब्रह्मणैकत्वं तदा मिथ्याज्ञाननिमित्तःशारीरस्योपभोगो न तेन परमार्थरूपस्य ब्रह्मणः संस्पर्शः ॥ न हि बालैस्तलमलिनतादिभिर्व्योम्नि विकल्प्यमाने तलमलिनतादिविशिष्टमेव परमार्थतो व्योम भवति ॥

रत्नप्रभा ।

भोग इति परिहारश्च तुल्य इति न वयं पर्यनुयोज्या इत्याह—**सर्वगतेति** ॥ वस्तुतस्तेषामेव भोगसासाङ्कर्यमित्यग्रे वक्ष्यते । ब्रह्मणो जीवाभिन्नत्वं श्रुत्या निश्चित्य तेन भोक्तृत्वानुमाने उपजीव्यश्रुतिबाधमाह—**यथाशास्त्रमिति** ॥ अर्धं मुखमात्रं जरत्या वृद्धायाः कामयते नाङ्गानीति सोऽयमर्धजरतीयन्यायः । स चात्र न युक्तः । न ह्यभेदमङ्गीकृत्याऽभोक्तृत्वं त्यक्तुं युक्तं, श्रुत्यैवाभेदसिद्ध्यर्थं भोक्तृत्ववारणादित्याह—**शास्त्रं चेति** ॥ नन्वेकत्वं मया श्रुत्या न गृहीतं येनोपजीव्यश्रुत्या बाधः स्यात्, किन्तु त्वदुक्त्या गृहीतमित्याशंक्य बिम्बप्रतिबिम्बयोः कल्पितभेदेन भोक्तृत्वाभोक्तृत्वव्यवस्थोपपत्तेरप्रयोजको हेतुरित्याह—**अथ गृहीतमित्यादिना** ॥ कल्पितासङ्गित्वमधिष्ठानस्य वैशेष्यमित्यस्मिन्नर्थेऽपि सूत्रं पातयति—

भामती ।

विशेषं प्रतिपादयितुम् । तथाह्यविद्याकल्पितः सुखादिसंभोगोऽविद्यात्मन एव जीवस्य युज्यते । न तु

आनन्दगिरीय-न्यायनिर्णयः ।

श्रुतिविरोधान्नैवमित्याह—**यदि चेति** । किंच, जीवा विभवो बहवश्चेति स्थितावेकस्मिन्देहदेशे सर्वसंनिध्यविशेषात्तुल्यो भोगः स्यान्न चेन्नैकस्यापि । स्वकर्मार्जिते देहे भोगो नान्यत्रेति चेद्द्वयमपि तथैवाभिदधीमहीत्याह—**सर्वेति** । ब्रह्मणो भोक्त्रभिन्नत्वाद्भोक्तृतेत्युक्तमनुभाषते—**यद्यपीति** । तत्र प्रतिज्ञैवायुक्तेत्याह—**अत्रेति** । तदयुक्तिं वक्तुं पृच्छति—**इदमिति** । किमेकत्वमज्ञातं ज्ञातं वा । आद्ये हेत्वसिद्धिः । द्वितीये तद्धीर्मदुक्तेः शास्त्राद्वेति प्रश्नमेव प्रकटयति—**कथमिति** । अन्त्यमादत्ते—**तत्त्वमिति** । शास्त्रानुसरणे तदतिक्रमणमयुक्तमित्याह—**यथेति** । न हि कुक्कुटादेरेकदेशो भोगाय पच्यत एकदेशस्तु प्रसवाय कल्प्यते विरोधादित्याह—**नेति** । ऐक्यं बोधयदपि शास्त्रं न संसारं वारयति तत्कथमर्धजरतीयप्रसक्तिरित्याशंक्याऽऽह—**शास्त्रं चेति** । संसारिणो ब्रह्मणैक्यबोधनायोगाज्जीवस्य संसारित्वनिरासद्वारा शास्त्रमैक्यं बोधयत्यशोधितपदार्थस्य वाक्यार्थज्ञानाभावादित्यर्थः । त्वदुक्तेरैक्यं ज्ञातं न शास्त्रादिति द्वितीयमुत्थापयति—**अथेति** । तत्र वास्तवे भोक्तृत्वे साध्ये साध्य-

१ ब्रह्मशक्तीत्यर्थः ।

 

तदाह–न ॥ वैशेष्यादिति नैकत्वेऽपि शारीरस्योपभोगेन ब्रह्मण उपभोगप्रसङ्गः ॥ वैशेष्यात्–विशेषो हि भवति मिथ्याज्ञानसम्यग्ज्ञानयोः । मिथ्याज्ञानकल्पित उपभोगः ॥ सम्यग्ज्ञानदृष्टमेकत्वम् ॥ न च मिथ्याज्ञानकल्पितेनोपभोगेन सम्यग्ज्ञानदृष्टं वस्तु संस्पृश्यते ॥ तस्मान्नोपभोगगन्धोऽपि शक्य ईश्वरस्य कल्पयितुम् ॥ ८ ॥ ॥ इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १ ॥

## अत्ता चराचरग्रहणात् ॥ ९ ॥ ( २ ) ॥

कठवल्लीषु पठ्यते "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ॥ मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" [ १ । २ । २५ ] इति ॥ अत्र कश्चिदोदनोपसेचनसूचितोऽत्ता प्रतीयते ॥ तत्र किमग्निरत्ता स्याद्,–उत–जीवः–

रत्नप्रभा ।

तदाहेति ॥ ब्रह्मणो हार्दत्वे बाधकाभावाच्छाण्डिल्यविद्यावाक्यं ब्रह्मण्युपास्ये समन्वितमिति सिद्धम् ॥ ॥ ८ ॥ ( १ ) ॥ अत्ता चराचरग्रहणात् ॥ यस्य ब्रह्मक्षत्रादिजगद्–ओदनो मृत्युः सर्वप्राणिमारकोऽपि यस्योपसेचनम् ओदनसंस्कारकघृतप्रायः सोऽत्ता । यत्र शुद्धे चिन्मात्रेऽभेदकल्पनया वर्तते तच्छुद्धं ब्रह्म इत्था इत्थम् ईश्वरस्याप्यधिष्ठानभूतं को वेद, चित्तशुद्ध्याद्युपायं विना कोऽपि न जाना-

भामती ।

निर्मृष्टनिखिलविद्यातद्वासनस्य शुद्धबुद्धमुक्तस्वभावस्य परमात्मन इत्यर्थः । शेषमतिरोहितार्थम् ॥ ८ ॥(१)॥ अत्ता चराचरग्रहणात् । कठवल्लीषु पठ्यते–यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स इति । अत्र चादनीयौदनोपसेचनसूचितः कश्चिदत्ता प्रतीयते । अत्तृत्वं च भोक्तृता वा संहर्तृता वा स्यात् । न च प्रस्तुतस्य परमात्मनो भोक्तृतास्ति, 'अनश्नन्न्योऽअभिचाकशीति' इति श्रुत्या भोक्तृताप्रतिषेधात् । जीवात्मनश्च भोक्तृताविधानात्–'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति । तद्यदि भोक्तृत्वमत्तृत्वं ततो मुक्तसंशयं जीवात्मैव प्रतिपत्तव्यः । ब्रह्मक्षत्रादि चास्य कार्यकारणसंघातो भोगायतनतया वा साक्षाद्वा संभवति भोग्यम् । अथ तु संहर्तृता भोक्तृता, ततस्त्रयाणामग्निजीवपरमात्मनां प्रश्नोपन्यासोपलब्धेः संहर्तृत्वस्याविशेषाद्भवति संशयः–किमत्ता अग्निराहो जीव उताहो परमात्मेति । तत्रौदनस्य भोग्यत्वेन लोके प्रसिद्धेर्भोक्तृत्वमेव प्रथमं बुद्धौ विपरिवर्तते, चरमं तु संहर्तृत्वमिति भोक्तैवात्ता । तथा स जीव एव । 'न जायते म्रियते' इति च तस्यैव स्तुतिः । संहारकालेऽपि संस्कारमात्रेण तस्यावस्थानात् । दुर्ज्ञानत्वं च तस्य सूक्ष्मत्वात् । तस्माज्जीव एवात्तेहोपास्यत इति प्राप्तम् । यदि तु संहर्तृत्वमत्तृत्वं तथाप्यग्निरत्ता, 'अग्निरन्नादः' इति श्रुतिप्रसिद्धिभ्याम् । एवं प्राप्ते-

आनन्दगिरीय–न्यायनिर्णयः ।

वैकल्यमवास्तवे सिद्धसाध्यतेति मत्वाऽऽह–तदेति । तदेव दृष्टान्तेनाऽऽह–न हीति । तत्र सूत्रभागमवतार्य योजयति–तदाहेति । तयोर्विशेषेऽपि कथं ब्रह्मणि वस्तुतो भोगाभावस्तत्राऽऽह—न चेति । हेतुद्वयनिरासमुपसंहरति–तस्मान्नेति । मनोमयत्वादिविशिष्टस्यैवेश्वरस्य ध्यानार्थं हार्दत्वेऽपि निर्दोषत्वात्तस्मिन्नेव शाण्डिल्यविद्यावेद्ये सर्वमित्यादिवाक्यं समन्वितमित्यर्थः ॥ ८ ॥ ( १ ) ॥ ईश्वरस्याभोक्तृत्वे नात्तृत्वमपीत्याशङ्क्याह–अत्तेति । उदाहरति–कठेति । यस्य परस्याऽऽत्मनो ब्रह्म च क्षत्रं चोभे जाती प्रसिद्धान्नवदोदनौ भवतो यस्य मृत्युः सर्वमारकः सन्नुपसेचनमोदनमिश्रघृतवत्तिष्ठति यत्र सोऽत्ता कारणात्मा वर्तते तं निर्विशेषमात्मानं नाविरतो दुश्चरितादितिमन्त्रोक्तोपायवान्यथा वेदेत्थमन्यस्तद्रहितो न वेदेत्यर्थः । अत्तुरत्राश्रवणात् ... सिद्धेऽत्तरि विचारमूलं संशयमाह–तत्रेति ।

**अथ वा–परमात्मेति संशयः ॥ विशेषानवधारणात्–त्रयाणां चाग्निजीव-परमात्मनामस्मिन् ग्रन्थे प्रश्नोपन्यासोपलब्धेः ॥ किं तावत्प्राप्तम् ? अग्निरत्तेति ॥ कुतः ॥ "अग्निरन्नादः" [ बृह० १ । ४ । ६ ] इति श्रुतिप्रसिद्धिभ्याम् ॥ जीवो वाऽत्ता स्यात्–"तयोरन्यः पिप्पलं स्वाद्वत्ति" [मुण्ड० ३ । १ । १ ] इति दर्शनात् ॥ न परमात्मा–"अनश्नन्नन्यो अभिचाकशीति" [ मुण्ड० ३ । १ । १ ] इति दर्शनादिति ॥ एवं प्राप्ते ब्रूमः ॥ अत्तात्र परमात्मा भवितुमर्हति ॥ कुतः ॥ "चराचरग्रहणात्" चराचरं हि स्थावरजङ्गमं मृत्यूपसेचनमिहाद्यत्वेन प्रतीयते ॥ तादृशस्य चाद्यस्य**

रत्नप्रभा ।

तीत्यर्थः । संशयबीजमाह–**विशेषेति** ॥ "स त्वमग्निं प्रब्रूहि" [ कठ० १ । १३ ] इत्यग्नेः, "येयं प्रेते विचिकित्सा" [ कठ० १ । २१ ] जीवस्य, "अन्यत्र धर्माद्" [ कठ० २ । १४ ] इति ब्रह्मणः प्रश्नः । "लोकादिमग्निं तमुवाच" [ कठ० १ । १५ ] इत्यग्नेः, "हन्त त इदं प्रवक्ष्यामि" [ कठ० २ । ६ ] इतीतरयोः प्रतिवचनमुपलभ्यत इत्यर्थः । पूर्वत्र ब्रह्मणो भोक्तृत्वं नास्तीत्युक्तं, तदुपजीव्य पूर्वपक्षयति–**किं तावदिति** ॥ अग्निप्रकरणमतीतमित्यरुचेराह–**जीवो वेति** ॥ **पूर्वपक्षे** जीवोपास्तिः **सिद्धान्ते** निर्विशेषब्रह्मज्ञानमिति फलभेदः । ओदनशब्दो भोग्यवाचीति **पूर्वपक्षः** । **सिद्धान्तस्तु** ब्रह्मक्षत्रशब्दैरुपस्थापितकार्यमात्रे गौण ओदनशब्दः । गुणश्चात्र मृत्यूपसेचनपदेन सन्निधापितं

भामती ।

ऽभिधीयते–अत्तात्र परमात्मा, कुतः, चराचरग्रहणात् । 'उभे यस्यौदनः' इति, 'मृत्युर्यस्योपसेचनम्' इति च श्रूयते । तत्र यदि जीवस्य भोगायतनतया तत्साधनतया च कार्यकारणसंघातः स्थितः, न तर्ह्योदनः । नह्योदनो भोगायतनं, नापि भोगसाधनं, अपि तु भोग्यः । न च भोगायतनस्य भोगसाधनस्य वा भोग्यत्वं मुख्यम् । न चात्र मृत्युरुपसेचनतया कल्प्यते । न च जीवस्य कार्यकरणसंघातो ब्रह्मक्षत्रादिरूपो भक्ष्यः, कस्यचित्क्रूरसत्त्वस्य व्याघ्रादेः कश्चिद्भवेत्, न तु सर्वथा सर्वजीवस्य । तेन ब्रह्मक्षत्रविषयमपि सर्वजीवस्यात्तृत्वं न व्याप्नोति, किमङ्ग पुनर्मृत्यूपसेचनग्यात्तं चराचरम् । न चौदनपदात्प्रथमावगतभोग्यत्वानुरोधेन यथासंभवमत्तृत्वं योज्यत इति युक्तम् । न ह्योदनपदं श्रुत्या भोग्यत्वमाह, किंतु लक्षणया । न च

आनन्दगिरीय–न्यायनिर्णयः ।

विशेषानवधारणोत्थः संशयस्त्रिष्वेव कथं नियम्यते तत्राऽऽह–**त्रयाणामिति** । स त्वमग्निमित्यादिरग्नेर्येयं प्रेते विचिकित्सेत्यादिर्जीवस्यान्यत्र धर्मादित्यादिर्ब्रह्मणः प्रश्नः प्रतिवचनमपि लोकादिमग्निमित्याद्यग्नेर्हन्त त इदमित्यादीतरयोरेवं त्रयाणामेव तयोरिहोपलब्धेस्त्रिष्वेव संशयो विशेषानुपलब्धेरित्यर्थः । पठितकठश्रुतेर्निर्विशेषब्रह्मणि समन्वयोक्त्या श्रुत्यादिसंगतिं गृहीत्वा पूर्वपक्षयति–**किं तावदिति** । पूर्वपक्षेऽग्नेर्जीवस्य वोपास्तिः सिद्धान्ते निर्विशेषवस्तुधीरिति फलम् । विशेषेऽनवधृते कुतोऽवधृतिरित्याह–**कुत इति** । अग्निरन्नादोऽन्नपतिरितिश्रुतेरग्नेरन्नादत्वप्रसिद्धेश्च विशेषधीरित्याह–**अग्निरिति** । अग्न्यधिकारमतिक्रम्याध्यात्माधिकारे तदुक्त्ययोगादोदनशब्दस्य च भोग्यत्वगुणाद् ब्रह्मक्षत्रवृत्तेर्भोक्तृगमकत्वादग्नेश्च संहर्तृत्वेऽपि भोक्तृत्वाभावान्नाग्न्युपास्तिरिहेत्यपरितोषादाह–**जीवो वेति** । ओदनशब्देन कर्मफलोक्तेर्मृत्युशब्दस्य तदनुगुणत्वान्न जायत इत्यादेश्च जीवे योगात्तदुपास्तिरत्रेति भावः । ओदनशब्देन ब्रह्मक्षत्रवृत्तिना जगल्लक्षणात्तत्संहर्तृत्वस्य परस्मिन्प्रसिद्धेस्तद्धीरेवात्रेष्टेत्याशंक्याह–**नेति** । श्रुतिलक्षणाविषये श्रुतेर्न्याय्यत्वादोदनशब्दस्य भोग्यार्थत्वाद्ब्रह्मक्षत्रयोश्च भोग्यत्वाद्भोक्तृत्वस्य परस्मिन्वारितत्वान्न तत्परतेत्यर्थः । पूर्वपक्षमनूद्य सिद्धान्तयति–**एवमिति** । साधिते जीवपक्षे परस्मिन्को हेतुरिति पृच्छति–**कुत इति** । हेतुमुक्त्वा व्याचष्टे–**चरेति** । तदत्तृत्वस्यान्यथासिद्धिं निराह–**तादृशस्येति** । हेतोः पक्षधर्मतामाह–

न परमात्मनोऽन्यः कार्त्स्न्येनात्ता संभवति ॥ परमात्मा तु विकारजातं संहरन्सर्वमत्तीत्युपपद्यते ॥ नन्विह चराचरग्रहणं नोपलभ्यते । तत्कथं सिद्धवच्चराचरग्रहणं हेतुत्वेनोपादीयते ॥ नैष दोषः ॥ मृत्यूपसेचनत्वेन सर्वस्य प्राणिनिकायस्य प्रतीयमानत्वाद्ब्रह्मक्षत्त्रयोश्च प्राधान्यात्प्रदर्शनार्थत्वोपपत्तेः ॥ यत्तु परमात्मनोऽपि नात्तृत्वं सम्भवति–"अनश्नन्नन्यो अभिचाकशीति" [ मुण्ड० ३ । १ । १ ] इति दर्शनादिति ॥ अत्रोच्यते॥ कर्मफलभोगस्य प्रतिषेधकमेतद्दर्शनम् ॥ तस्य सन्निहितत्वात् ॥ न विकारसंहारस्य प्रतिषेधकम् ॥ सर्ववेदान्तेषु सृष्टिस्थितिसंहारकारणत्वेन ब्रह्मणः प्रसिद्धत्वात् ॥ तस्मात्परमात्मैवेहात्ता भवितुमर्हति ॥ ९ ॥

## प्रकरणाच्च ॥ १० ॥

इतश्च परमात्मैवेहात्ता भवितुमर्हति ॥ यत्कारणं–प्रकरणमिदं परमात्मनः–"न जायते म्रियते वा विपश्चिद्" [ कठ० १।२।१८ ] इत्यादि ॥ प्रकृतग्रहणं च न्याय्यम् ॥ "क इत्था वेद यत्र सः" [ कठ० २ । २५ ] इति च दुर्विज्ञानत्वं परमात्मलिङ्गम् ॥ १० ॥ इत्यत्रधिकरणम् ॥ २ ॥

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥ ( ३ ) ॥

कठवल्लीष्वेव पठ्यते–"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे

---

रत्नप्रभा ।

प्रसिद्धौदनगतं विनाश्यत्वं गृह्यते । गौणशब्दस्य सन्निहितगुणग्राहित्वात् । तथा च सर्वस्य विनाश्यत्वेन भानाल्लिङ्गादीश्वरोऽत्तेत्याह–नैष दोष इति।।तस्य सन्निहितत्वादिति । "पिप्पलं स्वाद्वत्ति" इति भोगस्य पूर्वोक्तत्वादित्यर्थः ॥ ९ ॥ १० ॥ ( २ ) ॥ अत्तृवाक्यानन्तरवाक्यस्यापि ज्ञेयात्मनि समन्वयमाह–गुहामिति ॥ ऋतम् अवश्यम्भावि कर्मफलं पिबन्तौ भुञ्जानौ सुकृतस्य कर्मणो लोके कार्ये देहे

भामती ।

लाक्षणिकभोग्यत्वानुरोधेन 'मृत्युर्यस्योपसेचनम्' इति च 'ब्रह्म च क्षत्रं च' इति च श्रुती संकोचमर्हतः । न च ब्रह्मक्षत्रे एवात्र विवक्षिते, मृत्यूपसेचनेन प्राणभृन्मात्रोपस्थापनात् । प्राणिषु प्रधानत्वेन च ब्रह्मक्षत्रोपन्यासस्योपपत्तेः, अन्यनिवृत्तेरशाब्दत्वात्, अनर्थत्वाच्च । तथा च चराचरसंहर्तृत्वं परमात्मन एव । नाग्नेः । नापि जीवस्य । तथा च 'न जायते म्रियते वा विपश्चित्' इति ब्रह्मणः प्रकृतस्य न हानं भविष्यति । 'क इत्था वेद यत्र सः' इति च दुर्ज्ञानतोपपत्स्यते । जीवस्य तु सर्वलोकप्रसिद्धस्य न दुर्ज्ञानता । तस्मादत्ता परमात्मैवेति सिद्धम् ॥ ९ ॥ १० ॥ (२) ॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ।

आनन्दगिरीय–न्यायनिर्णयः ।

परमेति । ब्रह्मक्षत्रयोरेव मृत्यूपसेचनयोरत्र दृष्टेरसिद्धो हेतुरिति शङ्कते–नन्विति । ओदनशब्देन ब्रह्मक्षत्रवृत्तिना मृत्यूपसेचनसंनिधानादोदनस्थं नाश्यत्वमाश्रित्य ब्रह्मक्षत्रशब्दाभ्यां जगल्लक्ष्यते तेन तन्नाशकत्वलिङ्गाद् ब्रह्मात्र भातीत्याह–नैष इति। निषेधश्रुत्या परस्य नात्तृतेत्युक्तमनूद्य तस्य गतिमाह–यत्त्विति। तयोरित्यादिना कर्मफलभोगस्य पूर्वोक्तत्वं संनिहितत्वम् । अविशेषेण विकारसंहारस्यापि किमित्येतन्न निषेधकं सर्ववेदान्तविरोधादित्याह–नेत्यादिना । लैङ्गिकमर्थमुपसंहरति–तस्मादिति ॥ ९ ॥ परमात्मैवात्तेत्यत्र मानान्तरमाह–प्रकरणाच्चेति । सूत्रं व्याचष्टे–इतश्चेति । प्रकृतत्वमप्रयोजकमित्याशंक्योक्तं प्रकृतेति । न्याय्यमप्रकृतग्रहादिति शेषः । इतश्च परमात्मैवात्तेत्याह–क इति । यस्येत्यादि वाक्यं ज्ञेये परमात्मनि मायाद्वारा सर्वसंहर्तर्यन्वितमित्यर्थः ॥ १० ॥ ( २ ) ॥ पूर्वोदाहृतानन्तरमन्त्रार्थनिर्णयार्थमाह–गुहामिति । संगतिं वदन्विषयमाह–कठेति । ऋतं सत्यमावश्यकं कर्मफलं पिबन्तौ भुञ्जानौ सुकृतस्य

परार्ध्ये । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" [ कठ० । १ । ३ । १ ] इति ॥ तत्र संशयः-किमिह बुद्धिजीवौ निर्दिष्टौ-उत-जीवपरमात्मानाविति ॥ यदि बुद्धिजीवौ ततो बुद्धिप्रधानात्कार्यकरणसंघाताद्विलक्षणो जीवः प्रतिपादितो भवति ॥ तदपीह प्रतिपादयितव्यम् । "येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके,नायमस्तीति चैके।एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः" [कठ०।१।१।२०] इति पृष्टत्वात् ॥ अथ जीवपरमात्मानौ ततो जीवाद्विलक्षणः परमात्मा प्रतिपादितो भवति ॥ तदपीह प्रतिपादयितव्यम् । "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्॥ अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद" [ कठ० १। २ । २४] इति पृष्टत्वात्॥ अत्राहाऽऽक्षेप्ता-उभावप्येतौ पक्षौ न संभवतः ॥ कस्मात्॥ ऋतपानं हि कर्मफलोपभोगः "सुकृतस्य लोके" इति

---

रत्नप्रभा ।

परस्य ब्रह्मणोऽर्धं स्थानमर्हतीति परार्ध्यं हृदयं परमं श्रेष्ठं तस्मिन् या गुहा नभोरूपा बुद्धिरूपा वा तां प्रविश्य स्थितौ छायातपवत् मिथोविरुद्धौ तौ च ब्रह्मविदः कर्मिणश्च वदन्ति त्रिर्नाचिकेतोऽग्निश्चितो यैस्ते त्रिणाचिकेताः । तेऽपि वदन्तीत्यर्थः । नाचिकेतवाक्यानामध्ययनं तदर्थज्ञानं तदनुष्ठानं चेति त्रित्वं बोध्यम् । बुद्ध्यवच्छिन्नजीवस्य परमात्मनश्च प्रकृतत्वात्संशयमाह-तत्रेति ॥ पूर्वोत्तरपक्षयोः फलं स्वयमेवाह-यदीत्यादिना ॥ तदपि जीवस्य बुद्धिवैलक्षण्यमपीत्यर्थः । मनुष्ये प्रेते मृते सति येयं विचिकित्सा संशयः । परलोकभोक्ताऽस्तीत्येके, नास्तीत्यन्ये । अतस्त्वयोपदिष्टोऽहमेतदात्मतत्त्वं जानीयामित्यर्थः ॥ तदपीति । परमात्मस्वरूपमपीत्यर्थः । उभयोर्भोक्तृत्वायोगेन संशयमाक्षिपति-अत्राहेति ॥ छत्रिपदेन गन्तार इव पिबत्पदेनाजहल्लक्षणया प्रविष्टावुच्येते इत्याह-

भामती ।

संशयमाह-तत्रेति । पूर्वपक्षे प्रयोजनमाह-यदि बुद्धिजीवाविति । सिद्धान्ते प्रयोजनमाह-अथ जीवपरमात्मानाविति । औत्सर्गिकस्य मुख्यतावलात्पूर्वसिद्धान्तपक्षासंभवेन पक्षान्तरं कल्पयिष्यत इति मन्वानः संशयमाक्षिपति-अत्राहाक्षेप्तेति । ऋतं सत्यम् । अवश्यंभावीति यावत् । समाधत्ते-

आनन्दगिरीय-न्यायनिर्णयः ।

लोके सम्यगर्जितस्यादृष्टस्य कार्ये देहे वर्तमानौ परस्य ब्रह्मणोऽर्धं स्थानमर्हतीति परार्धं हृदयं तस्मिन्परमे श्रेष्ठे या गुहा नभोलक्षणा तां प्रविश्य स्थितौ छायातपवन्मिथो विरुद्धौ तौ च ब्रह्मविदः कर्मिणश्च वदन्ति । त्रिर्नाचिकेतोऽग्निश्चितो यैस्ते त्रिणाचिकेतास्तेऽपि वदन्तीत्यर्थः । बुद्ध्यवच्छिन्नस्य जीवस्य परस्य च प्रकृतत्वादृतपानकर्तृत्वस्य जीवेन सह बुद्धेरिव परस्यापि च्छत्रिन्यायेन लाक्षणिकत्वाविशेषाच्च संशयमाह-तत्रेति । वाक्यभेदशङ्कां परिहरन्पूर्वपक्षे फलमाह-यदीति । प्रकृतं प्रतिपाद्यं कुतो जीवस्तथेति तत्राऽऽह-तदपीति । जीवतत्त्वं तदर्थः । प्रकरणं सप्तम्यर्थः । मनुष्ये प्रेते मृते सति येयं विचिकित्सा संशयः परलोकभोक्ताऽस्तीत्येके नास्तीति चान्ये त्वयोपदिष्टोऽहमेतत्तत्त्वं ज्ञातुमिच्छामीत्यर्थः । वराणां पितुः सौमनस्यमग्निविद्याऽऽत्मविद्येत्येतेषामिति निर्धारणे षष्ठी । सिद्धान्तेऽपि वाक्यभेदं वारयन्फलमाह-अथेत्यादिना । जीवविलक्षणस्य ब्रह्मणोऽप्रकृतत्वात्कथं प्रतिपाद्यतेत्याशङ्क्याऽऽह-तदपीति । परमात्मस्वरूपं तदित्युक्तमन्यत्रेत्यन्यदिति यावत् । कृताकृतात्कारणात्कार्याच्चेत्यर्थः । चकाराभ्यां भवतो ग्रहणम् । उभयोर्भोक्तृत्वायोगेन संशयमाक्षिपति-अत्रेति । प्रकृतत्वात्तदुपपत्तौ तदसंभावना नास्तीत्याह-कस्मादिति । पक्षयोरसंभावनां वक्तुमृतपानशब्दार्थमाह-ऋतेति । तत्कर्त्रोर्देहयोगदृष्टेरिति हेतुमाह-सुकृतस्येति । तथाऽपि कथं पक्षयोरनुपप-

लिङ्गात् ॥ तच्च चेतनस्य क्षेत्रज्ञस्य संभवति । नाचेतनाया बुद्धेः ॥ "पिबन्तौ" इति च द्विवचनेन द्वयोः पानं दर्शयति श्रुतिः ॥ अतो बुद्धिक्षेत्रज्ञपक्षस्तावन्न सम्भवति ॥ अत एव क्षेत्रज्ञपरमात्मपक्षोऽपि न सम्भवति ॥ चेतनेऽपि परमात्मनि ऋतपानासम्भवात् ॥ "अनश्नन्नन्यो अभिचाकशीति" [ मुण्ड० ३ । १ । १ ] इति मन्त्रवर्णादिति ॥ अत्रोच्यते ॥ नैष दोषः ॥ छत्रिणो गच्छन्तीत्येकेनापि च्छत्रिणा बहूनां छत्रित्वोपचारदर्शनादेवमेकेनापि पिबता द्वौ पिबन्तावुच्येयाताम् ॥ यद्वा–जीवस्तावत्पिबति । ईश्वरस्तु पाययति । पाययन्नपि पिबतीत्युच्यते ॥ पाचयितर्यपि पक्तृत्वप्रसिद्धिदर्शनात् ॥ बुद्धिक्षेत्रज्ञपरिग्रहोऽपि सम्भवति ॥ करणे कर्तृत्वोपचारात् ॥ एधांसि पचन्तीति प्रयोगदर्शनात् ॥ न चाध्यात्माधिकारेऽन्यौ कौचिद् द्वावृतं पिबन्तौ सम्भवतः ॥ तस्माद् बुद्धिजीवौ स्यातां,

रत्नप्रभा ।

**अत्रोच्यत इति** ॥ पानकर्तृवाचिपदेन पानानुकूलौ वा लक्ष्याविति आह–**यद्वेति** ॥ नियतपूर्वभाविकृतिमत्त्वरूपमनुकूलत्वं कर्तृकारयित्रोः साधारणम् । यः कारयति स करोत्येवेति न्यायादिति भावः । अत्र प्रकृतिर्मुख्यार्था प्रत्यये लक्षणा । **मिश्रास्तु** कृतिः प्रत्ययार्थो मुख्यः प्रकृत्या त्वजहल्लक्षणया पायनं लक्ष्यमित्याहुः । **पूर्वपक्षे** पिबन्ताविति कर्तृवाचिशतृप्रत्ययेन बुद्धिजीवसाधारणं कारकत्वं लक्ष्यमित्याह–**बुद्धीति** ॥ **एधांसि** काष्ठानि । पचन्तीत्याख्यातेन कारकत्वं लक्ष्यं, प्रकृतिस्तु मुख्यैवेति भावः । मुख्यपातारौ प्रसिद्धपक्षिणौ ग्राह्यावित्यत आह–**न चेति** ॥ ब्रह्मक्षत्रपदस्य सन्निहित-

भामती ।

**अत्रोच्यत इति** । अध्यात्माधिकारादन्यौ तावत्पातारावशक्यौ कल्पयितुम् तदिह बुद्धेरचैतन्येन परमात्मनश्च भोक्तृत्वनिषेधेन जीवात्मैवैकः पाता परिशिष्यत इति 'सृष्टीरुपदधाति' इतिवद्द्विवचनानुरोधादपिबत्संसृष्टतां स्वार्थस्य पिबच्छब्दो लक्षयन्स्वार्थमजहदितरेतरयुक्तपिबदपिबत्परो भवतीत्यर्थः । अस्तु वा मुख्य एव, तथापि न दोष इत्याह–**यद्वेति** । स्वातन्त्र्यलक्षणं हि कर्तृत्वं, तच्च पातुरिव पाययितुरप्यस्तीति सोऽपि कर्ता । अत एव चाहुः–'यः कारयति स करोत्येव' इति । एवं करणस्यापि स्वातन्त्र्यविवक्षया कथंचित्कर्तृत्वं, यथा काष्ठानि पचन्तीति । तस्मान्मुख्यत्वेऽप्यविरोध इति । तदेवं संशयं समाधाय पूर्वपक्षं गृह्णाति–

आनन्दगिरीय–न्यायनिर्णयः ।

त्तिरित्याशंक्य पूर्वपक्षानुपपत्तिमाह- **तच्चेतनस्येति** । अस्तु जीवस्यैव चेतनत्वादृतपानं मा वाऽचेतनाया बुद्धेर्भूत्तथाऽपि का क्षतिस्तत्राऽऽह–**पिबन्ताविति** । जीवस्यैव पातृत्वं न बुद्धेरिति स्थिते फलितमाह–**अत इति** । द्वयोरुक्तं पानायोगं हेतूकृत्य सिद्धान्तयोगमाह–**अत एवेति** । बुद्धेरचैतन्यात्पानायोगेऽपि परस्य चैतन्यात्तद्योगमाशंक्याह–**चेतनेऽपीति** । संशयायोगादधिकरणाक्षेपमनूद्य परिहरति–**अत्रेति** । किं पक्षद्वयं कथंचिदपि नोपपद्यते किंवा कथंचिद्योगेऽपि सम्यक्पक्षान्तरमस्ति ? नाऽऽद्य इत्याह–**नैष इति** । सिद्धान्तोपपत्तिं विधान्तरेणाऽऽह—**यद्वेति** । तथाऽपि कथं पिबन्ताविति द्विवचनं तत्राऽऽह—**पाययन्निति** । प्रधानकर्तरि प्रयोगो गुणकर्तरि कथमित्याशंक्याऽऽह—**पाचयितरीति** । यः कारयति स करोत्येवेति न्यायादित्यर्थः । पूर्वपक्षेऽपि द्विवचनोपपत्तिमाह—**बुद्धीति** । संभवति द्विवचनमिति शेषः । कर्तरि यो व्यपदेशः स कथं करणे स्यात्तत्राऽऽह–**एधांसीति** । कथंचिदुपपत्तिं पक्षयोरुक्त्वा द्वितीयं निराह–**न चेति** । पक्षद्वयं संभाव्याधिकरणारम्भमुपसंहरति–**तस्मादिति** । ब्रह्मक्षत्र-शब्दस्य संनिहितमृत्युपदादनित्यवस्तुपरत्ववदिहापि पिबच्छब्दस्य संनिहितगुहाप्रवेशादिना बुद्धिक्षेत्रज्ञपर-

**जीवपरमात्मानौ वेति संशयः ॥ किं तावत्प्राप्तम् ॥ बुद्धिक्षेत्रज्ञाविति ॥ कुतः॥गुहां प्रविष्टाविति विशेषणात॥ यदि शरीरं गुहा, यदि वा हृदयम्, उभयथापि बुद्धिक्षेत्रज्ञौ गुहां प्रविष्टावुपपद्येते ॥ न च सति सम्भवे सर्वगतस्य ब्रह्मणो विशिष्टदेशत्वं युक्तं कल्पयितुम् "सुकृतस्य लोके" [ कठ० १।३।१ ] इति च कर्मगोचरानतिक्रमं दर्शयति ॥ परमात्मा तु न सुकृतस्य दुष्कृतस्य वा गोचरे वर्तते-"न कर्मणा वर्धते नो कनीयान्" [ बृ० ४।४।२३ ] इति श्रुतेः ॥ "छायातपौ" [ कठ० १।३।१ ] इति चेतनाचेतनयोर्निर्देश उपपद्यते ॥ छायातपवत्परस्परस्य विलक्षणत्वात् ॥ तस्माद् बुद्धिक्षेत्रज्ञाविहोच्येयातामिति ॥ एवं प्राप्ते ब्रूमः ॥ विज्ञानात्म-**

रत्नप्रभा।

मृत्युपदादनित्यवस्तुपरत्ववदिहापि पिबत्पदस्य सन्निहितगुहापदाद्बुद्धिजीवपरतेति दृष्टान्तेन पूर्वपक्षयति-**किं तावदिति ॥ गोचरं** फलम्। एकस्मिञ्जातिमति क्लृप्ते सजातीयमेव द्वितीयं ग्राह्यम्। व्यक्तिमात्रग्रहे लाघवान्न विजातीयम्। जातिव्यक्त्युभयकल्पनागौरवात्। न चास्तु कारकत्वेन सजातीया बुद्धिरेव जीवस्य द्वितीयेति वाच्यम्। चेतनत्वस्य जीवस्वभावस्य कारकत्वादन्तरङ्गत्वात्। तथा च लोके द्वितीय-

भामती।

**बुद्धिक्षेत्रज्ञाविति**। 'नियताधारता बुद्धिजीवसंभविनी नहि। क्लेशात्कल्पयितुं युक्ता सर्वगे परमात्मनि॥' न च पिबन्तावितिवत्प्रविष्टपदमपि लाक्षणिकं युक्तं, सति मुख्यार्थत्वे लाक्षणिकार्थत्वायोगात्, बुद्धिजीवयोश्च गुहाप्रवेशोपपत्तेः। अपि च 'सुकृतस्य लोके' इति सुकृतलोकव्यवस्थानेन कर्मगोचरानतिक्रम उक्तः। बुद्धिजीवौ च कर्मगोचरमनतिक्रान्तौ। जीवो हि भोक्तृतया बुद्धिश्च भोगसाधनतया धर्मस्य गोचरे स्थितौ, न तु ब्रह्म, तस्यातदायत्वात, किंच छायातपाविति तमःप्रकाशावुक्तौ। न च जीवः परमात्मनोऽभिन्नस्तमः, प्रकाशरूपत्वात्। बुद्धिस्तु जडतया तम इति शक्योपदेष्टुम्। तस्माद्बुद्धिजीवावत्र कथ्येते। तत्रापि प्रेते विचिकित्सापनुत्तये बुद्धेर्भेदेन परलोकी जीवो दर्शनीय इति बुद्धिरुच्यते। एवं प्राप्तेऽभिधीयते-'ऋतपानेन जीवात्मा निश्चितोऽस्य द्वितीयता। ब्रह्मणैव सरूपेण न तु बुद्ध्या विरूपया॥ १॥ प्रथमं सद्वितीयत्वे ब्रह्मणावगते सति। गुहाश्रयत्वं चरमं व्याख्येयमविरोधतः॥ २॥' गौः सद्वितीयेत्युक्ते सजातीयेनैव गवान्तरेणावगम्यते, न तु विजातीयेनाश्वादिना। तदिह चेतनो जीवः सरूपेण चेतनान्तरेणैव ब्रह्मणा सद्वितीयः प्रतीयते, न त्वचेतनया विरूपया बुद्ध्या। तदेवम् 'ऋतं पिबन्तौ' इत्यत्र प्रथममवगते ब्रह्मणि तदनुरोधेन चरमं गुहाश्रयत्वं शालग्रामे हरिरितिवद्व्याख्येयम्। बहुलं हि गुहाश्रयत्वं ब्रह्मणः श्रुतय आहुः।

आनन्दगिरीय-न्यायनिर्णयः।

तेति विमृश्य पूर्वपक्षयति-**किं तावदिति**। ऋतमिति श्रुतेर्निर्विशेषे ब्रह्मण्यन्वयोक्तेः श्रुत्यादिसंगतयः। परस्यापि प्रकृतत्वाज्जीवाद्वितीयत्वं किं न स्यादित्याह-**कुत इति**। सूत्रावयवेनोत्तरं-**गुहामिति**। हेतुमेव स्फुटयति-**यदीति**। जीवाद्वितीयं ब्रह्मैव गुहां प्रविष्टं "यो वेद निहितं गुहायाम्" इति श्रुतेरित्याशंक्याऽऽह-**न चेति**। इतश्च न ब्रह्म गुहां प्रविष्टमित्याह-**सुकृतस्येति**। ब्रह्मणोऽपि सुकृतलोकवर्तित्वमाशंक्याऽऽह-**परमात्मेति**। पूर्वपक्षे हेत्वन्तरमाह-**छायेति**। बुद्धेर्द्वितीयजीवज्ञानार्थं वाक्यमित्युपसंहरति-**तस्मादिति**। सिद्धान्तसूत्रमादायाऽऽत्मानाविति प्रतिज्ञां व्याकरोति-**एवमिति**। इहेति

१ उपनिषत्पुस्तकेषु च "न वर्द्धते कर्मणा नो कनीयानित्येव पाठ उपलभ्यते। सूत्रभाष्ये पुस्तके न कर्मणा वर्द्धते नो कनीयानित्येव पाठो दृश्यते।

**परमात्मानाविहोच्येयाताम् ॥ कस्मात् ॥ आत्मानौ हि तावुभावपि चेतनौ समानस्वभावौ ॥ संख्याश्रवणे च समानस्वभावेष्वेव लोके प्रतीतिर्दृश्यते—अस्य गोर्द्वितीयोऽन्वेष्टव्य इति ह्युक्ते गौरेव द्वितीयोऽन्विष्यते, नाश्वः पुरुषो वा ॥ तदिह ऋतपानेन लिङ्गेन निश्चिते विज्ञानात्मनि द्वितीयान्वेषणायां समानस्वभावश्चेतनः परमात्मैव प्रतीयते ॥ ननूक्तं गुहाहितत्वदर्शनान्न परमात्मा प्रत्येतव्य इति ॥ गुहाहितत्वदर्शनादेव परमात्मा प्रत्येतव्य इति वदामः ॥ गुहाहितत्वं तु श्रुतिस्मृतिष्वसकृत्परमात्मन एव दृश्यते—"गुहाहितं गह्वरेष्ठं पुराणम्" [ कठ० १ । २ । १२ ] "यो वेद निहितं गुहायां परमे व्योमन्" [ तै० २ । १ ] "आत्मानमन्विच्छ गुहां प्रविष्टम्" इत्याद्यासु ॥ सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थो देशविशेषोपदेशो न विरुध्यत इत्येतदप्युक्तमेव ॥ सुकृतलोकवर्तित्वं तु च्छत्रित्ववदेकस्मिन्नपि वर्तमानमुभयोरविरुद्धम् ॥ "छायातपौ" [ कठ० १ । ३ । १ ] इत्यप्यविरुद्धम् ॥ छायातपवत्परस्परविलक्षणत्वात्संसारित्वासंसारित्वयोः ॥ अविद्याकृतत्वात्संसारित्वस्य,**

---

रत्नप्रभा ।

स्यान्तरङ्गजातिमत्त्वदर्शनाज्जीवस्य द्वितीयश्चेतन एवेति सूत्रार्थमाह—**संख्याश्रवणे चेति** ॥ गुहायां बुद्धौ स्थितं, गह्वरे अनेकानर्थसंकुले देहे स्थितं, **पुराणम्** अनादिपुरुषं, विदित्वा हर्षशोकौ जहाति । परमश्रेष्ठ **व्योमन्** हार्दाकाशे या गुहा बुद्धिः तस्यां **निहितं** ब्रह्म **यो** वेद सोऽश्नुते सर्वान् कामानित्यन्वयः ।

भामती ।

तदिदमुक्तम्—**तद्दर्शनादिति** । तस्य ब्रह्मणो गुहाश्रयत्वस्य श्रुतिषु दर्शनादिति । एवंच प्रथमावगतब्रह्मानुरोधेन सुकृतलोकवर्तित्वमपि तस्य लक्षणया छत्रिन्यायेन गमयितव्यम् । छायातपत्वमपि जीवस्याविद्या-

आनन्दगिरीय—न्यायनिर्णयः ।

प्रकृतमन्त्रोक्तिः । पूर्णतया प्रवेशानर्हं ब्रह्म कुतोऽद्वितीयं जीवस्येत्याह—**कस्मादिति** । हीत्युक्तं हेतुमाह—**आत्मानौ हीति** । चेतनत्वेन समन्वयाज्जीवे पातरि सिद्धे द्वितीयत्वेन परस्याऽऽदानं युक्तमित्यर्थः । तत्र किं नियामकमित्याशंक्य तद्दर्शनादिति व्याचष्टे—**संख्येति** । लौकिकीं दृष्टिमेव दृष्टान्तेनाऽऽह—**अस्येति** । एकस्य चेतनत्वे द्वितीयस्यापि तद्धीस्तदेवासिद्धमित्याशङ्क्याऽऽह—**तदिति** । तत्तत्रेत्यं लौकिकदर्शने सतीति यावत् । इहेति वाक्योक्तिः । संप्रतिपन्नां जातिमुपजीव्य निर्विशेषान्तरग्रहे बुद्धिलाघवाद्विजातीयग्रहे तद्गौरवात्परमात्मैव द्वितीयो जीवस्येति सूचयति—**समानेति** । कारकत्वेन बुद्धेरपि जीवसाम्यमाशंक्य तस्य बहिरङ्गत्वाच्चेतनस्य स्वभावत्वेनान्तरङ्गत्वान्मैवमित्याह—**चेतन इति** । बहिरङ्गमपि कारकत्वमेव ग्राह्यं गुहाहितत्वलिङ्गादिति शङ्कते—**नन्विति** । तत्रापि तद्दर्शनादित्युत्तरमाह—**गुहेति** । तदेव स्फुटयति—**गुहेत्यादिना** । परस्मिन्गुहाहितत्वोक्तेस्तात्पर्यं वक्तुमसकृदित्युक्तम् । गुहायां बुद्धावाहितं निक्षिप्तं गह्वरे बहुविधानर्थसंकटे देहे स्थितं पुराणं चिरंतनं परं विदित्वा हर्षादि जहातीति संबन्धः । परमे बाह्याकाशापेक्षया प्रकृष्टे व्योमन्यन्तःकरणावच्छिन्ने भूताकाशे निहितं परं यो वेद सोऽश्नुते सर्वान्कामानिति संबन्धः । अन्विच्छ विचार्य निर्धारयेत्यर्थः । प्रवेशवाक्यसंग्रहार्थमादिपदम् । यत्तु सर्वगतस्य ब्रह्मणो न विशिष्टदेशतेति तत्राऽऽह—**सर्वेति** । यत्तु परस्य न सुकृतलोकवर्तितेति तत्राऽऽह—**सुकृतेति** । यदपि च्छायातपाविति चेतनाचेतनोक्तिरिति तत्राऽऽह—**छायेति** ।

पारमार्थिकत्वाच्चासंसारित्वस्य ॥ तस्माद्विज्ञानात्मपरमात्मानौ गुहां प्रविष्टौ गृह्येते ॥ ११ ॥ कुतश्च विज्ञानात्मपरमात्मानौ गृह्येते—

## विशेषणाच्च ॥ १२ ॥

विशेषणं च विज्ञानात्मपरमात्मनोरेव सम्भवति "आत्मानं रथिनं विद्धि शरीरं रथमेव तु" [ कठ० १ । ३ । ३ ] इत्यादिना परेण ग्रन्थेन रथिरथादिरूपककल्पनया विज्ञानात्मानं रथिनं संसारमोक्षयोर्गन्तारं कल्पयति ॥ "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" [ कठ० १ । ३ । ९ ] इति परमात्मानं गन्तव्यं कल्पयति ॥ तथा "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" [ कठ० १ । २ । १२ ] इति पूर्वस्मिन्नपि ग्रन्थे मन्तृमन्तव्यत्वेनैतावेव विशेषितौ ॥ प्रकरणं चेदं परमात्मनः ॥ ब्रह्मविदो वदन्तीति च वक्तृविशेषोपादानं परमात्मपरिग्रहे घटते ॥ तस्मादिह जीवपरमात्मानावुच्येयाताम् ॥ एष एव न्यायः—"द्वा सुपर्णा

---

रत्नप्रभा ।

अन्विच्छ विचारयेत्यर्थः ॥ ११ ॥ विशेषणं गन्तृगन्तव्यत्वादिकं लिङ्गमाह—**विशेषणाच्चेति** ॥ **सः** जीवोऽध्वनः संसारमार्गस्य **परमं पारम्** । किं तत् । विष्णोर्व्यापनशीलस्य परमात्मनः **पदं** स्वरूपम् **आप्नोतीत्यर्थः** । दुर्दर्शं दुर्ज्ञानं तत्र हेतुः—**गूढं** मायावृतं मायानुप्रविष्टं पश्चाद् गुहानिहितं गुहाद्वारा **गह्वरेष्ठम्** । एवं बहिरागतमात्मानम**ध्यात्मयोगः** स्थूलसूक्ष्मकारणदेहलयक्रमेण प्रत्यगात्मनि चित्तसमाधानं तेनाधिगमो महावाक्यजा वृत्तिः, तया विदित्वेत्यर्थः । ऋतपानमन्त्रे जीवानुवादेन वाक्यार्थज्ञानाय तत्पदार्थो ब्रह्म प्रतिपाद्यत इति उपसंहरति—**तस्मादिहेति** ॥ उक्तन्यायमतिदिशति—**एष इति** ॥

भामती ।

श्रयतया ब्रह्मणश्च शुद्धप्रकाशस्वभावस्य तदनाश्रयतया मन्तव्यम् ॥ ११ ॥ इममेव न्यायं 'द्वा सुपर्णा' इत्यत्राप्युदाहरणे कृत्वाचिन्तया योजयति—**एष एव न्याय इति** । अत्रापि किं बुद्धिजीवौ, उत जीवप-

आनन्दगिरीय-न्यायनिर्णयः ।

तद्वैलक्षण्ये तद्वतोरपि तत्सिद्धिरिति हेतुं साधयति—**अविद्येति** । प्रथमश्रुतचेतनत्ववशाच्चरमश्रुतं गुहाप्रवेशादि नेयमित्युपसंहरति—**तस्मादिति** ॥ ११ ॥ धर्मविशिष्टतया विलक्षणग्रहे बुद्धिरेव स्वतो विलक्षणा ग्राह्येति मन्वानो हेत्वन्तरं पृच्छति—**कुतश्चेति** । परमात्मा साधारणलिङ्गपरं सूत्रं व्याचष्टे—**विशेषणं चेति** । न बुद्धिजीवयोरित्येवकारार्थः । जीवविशेषणं विशदयति—**आत्मानमिति** । रथित्वकल्पनाफलं सूच्यते—**संसारेति** । परस्य विशेषणमाह—**स इति** । जीवः सर्वनामार्थः । अध्वनः संसारमार्गस्य पारमेव विशिनष्टि—**तदिति** । व्यापनशीलस्य ब्रह्मणः स्वरूपं तदित्यर्थः । परमं कार्यकारणातीतं पदं तदेव ज्ञेयं नान्यदित्यर्थः । किंचोत्तरवाक्यवत्पूर्वमपि जीवेश्वरयोरेव विशेषणादृतपानवाक्ये जीवद्वितीयत्वमीशस्यैवेत्याह—**तथेति** । दुर्दर्शं सूक्ष्मत्वाद्दुर्ज्ञानं तत एव गूढमनुप्रविष्टं गहनतां गतमीश्वरमध्यात्मयोगः प्रत्यगात्मन्येव चित्तसमाधानं तत्सहकृताद्वाक्यादधिगमो ब्रह्मात्मैक्यव्यञ्जकचित्तवृत्तिविशेषस्तेनाहमेवेति निश्चित्य धीरो विद्वान्हर्षाद्युपलक्षितं संसारं त्यजतीत्यर्थः । चकारसूचितमर्थमाह—**प्रकरणं चेति** । न च पृष्टत्वाविशेषाज्जीवस्यापीदं प्रकरणं तस्य ब्रह्मत्वेन प्रतिपाद्यत्वादविरोधादिति भावः । जीवद्वितीयत्वं परस्यैवेत्यत्र हेत्वन्तरमाह—**ब्रह्मेति** । ब्रह्मपक्षे हेतुबाहुल्यादृतं पिबन्तावित्यत्र जीवानुवादेन तदतिरिक्तो वाक्यार्थान्वयितदर्थशोधनाय परात्मा प्रतिपाद्यत इत्युपसंहरति—**तस्मादिति** । उक्तन्यायमन्यत्र संचारयति—**एष इति** । द्वा सुपर्णेत्यादौ सर्वत्र द्विवचनस्याऽऽकारश्छा

सयुजा सखायौ" [ मुण्ड० ३।१।१ ] [ श्वेता० ४।६। ] इत्येवमादिष्वपि। तत्रापि ह्यध्यात्माधिकारान्न प्राकृतौ सुपर्णावुच्येते "तयोरन्यः पिप्पलं स्वाद्वत्ति" [मुण्ड० ३ । १ । १ ] [ श्वेता० ४ ।६] इत्यदनलिङ्गाद्विज्ञानात्मा भवति ॥ "अनश्नन्नन्यो अभिचाकशीति"[ मुण्ड० ३ । १ । १][ श्वेता० ४ । ६ ] इत्यनशनचेतनत्वाभ्यां परमात्मा ॥ अनन्तरे च मन्त्रे तावेव द्रष्टृद्रष्टव्यभावेन विशिनष्टि–"समाने वृक्षे पुरुषो निमग्नो अनीशया शोचति मुह्यमानः ॥ जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" [ मुण्ड० ३ । १ । २ ] इति ॥ अपर आह–द्वा सुपर्णेति नेयमृगस्याधिकरणस्य सिद्धान्तं भजते ॥ पैङ्गिरहस्यब्राह्मणेनान्यथाव्याख्यातत्वात्–"तयोरन्यः पिप्पलं स्वाद्वत्ति"[मुण्ड० ३।१।१]इति सत्त्वम्,"अनश्नन्नन्यो अभिचाकशीतिं" [ मुंड० ३ । १ । १ ]इत्यनश्नन्नन्योऽभिपश्यति

रत्नप्रभा ।

द्वा द्वौ छान्दसो द्विवचनस्याकारः । सुपर्णाविव सहैव युज्येते नियम्यनियामकभावेनेति सयुजौ । सखायौ चेतनत्वेन तुल्यस्वभावौ समानम् एकं वृक्षं छेदनयोग्यं शरीरमाश्रित्य स्थितावित्यर्थः । गुहां प्रविष्टाविति यावत् । एतावात्मानौ तल्लिङ्गदर्शनादित्याह–तयोरन्य इति ॥ विशेषणाच्चेत्याह–अनन्तरे चेति ॥ अनीशया स्वस्येश्वरत्वाप्रतीत्या देहनिमग्नः पुरुषो जीवः शोचति । निमग्नपदार्थमाह–मुह्यमान इति ॥ नरोऽहमिति भ्रान्त इत्यर्थः । जुष्टं ध्यानादिना सेवितं यदा ध्यानपरिपाकदशायाम् ईशमन्यं विशिष्टरूपाद्भिन्नं शोधितचिन्मात्रं प्रत्यक्त्वेन पश्यति तदा अस्य महिमानं स्वरूपमेति प्राप्नोतीव ततो वीतशोको भवतीत्यर्थः ॥ द्वा सुपर्णेति वाक्यं जीवेश्वरपरमिति कृत्वा चिन्तितम् । अधुना कृतां चिन्तामुद्घाटयति–अपर इति ॥ अन्यथा बुद्धिविलक्षणत्वं पदलक्ष्यपरत्वेनेत्यर्थः । सत्त्वं बुद्धिरिति

भामती ।

रमात्मानाविति संशय्य करणरूपाया अपि बुद्धेरेधांसि पचन्तीतिवत्कर्तृत्वोपचाराद्बुद्धिजीवाविह पूर्वपक्षयित्वा सिद्धान्तयितव्यम् । सिद्धान्तश्च भाष्यकृता स्फोरितः । तद्दर्शनादिति च 'समाने वृक्षे पुरुषो निमग्नः' इत्यत्र मन्त्रे । न खलु मुख्ये कर्तृत्वे संभवति करणे कर्तृत्वोपचारो युक्त इति कृत्वा चिन्तामुद्घाटयति–अपर आह ।

आनन्दगिरीय–न्यायनिर्णयः ।

न्दसः । द्वौ सुपर्णाविव सहैव युज्येते नियम्यनियामकत्वेनेति सयुजौ सखायौ चेतनत्वेन समानस्वभावौ समानं नियम्यत्वेन तुल्यं वृक्षं छेदनयोग्यं शरीरं परिषस्वजाते समाश्रितावित्यर्थः । पक्षिणौ कौचिदत्र प्रतीयेते न जीवेशौ ततो नेदमुदाहरणं तत्राऽऽह–तत्रेति । तदनेन गुहां प्रविष्टाविति व्याख्यातम् । आत्मानौ हीति व्याचष्टे–तयोरिति । तद्दर्शनादित्युभयोर्लिङ्गदर्शनादिति व्याख्येयम् । विशेषणाच्चेति व्याकरोति–अनन्तरे चेति । आत्मेश्वरयोस्तुल्यो वृक्षो, देहस्तस्मिञ्जीवो मनुष्योऽहमित्यभिनिवेशवाननीशयाऽविद्यया मुह्यमानस्तत्त्वमजानन्ननिशं शोचति संसारमनुभवति जुष्टं ध्यानादिना सेवितं यदा तत्प्रकर्षदशायामन्यं बिम्बभूतमीशशब्दलक्ष्यं प्रत्यक्त्वेन पश्यति तदाऽऽस्यैवाऽऽत्मत्वेन दृष्टस्य महिमानं स्वरूपं प्राप्नोति, ततश्च वीतशोको विगतसंसारो भवति तत्र हेतुरितिशब्देनोक्तो बन्धहेत्वविद्यादेर्ज्ञानाग्निना दग्धत्वादित्यर्थः । न चात्र जीवोक्तावनश्नन्नित्ययोगाद् बुद्धिग्रहे चाभिचाकशीतीत्यसंभवात्पूर्वपक्षासिद्धिः । करणे कर्तृत्वोपचारादभिचाकशीतीति बुद्धावपि सिद्धत्वाज्जीवे चैतन्यमात्रादनशनसंभवात् । मुख्ये कर्तृत्वे संभवति कर्तृत्वोपचारो नेति सिद्धान्ताभिप्रायः । क्त्वाचिन्तया द्वा सुपर्णेत्यादेरेतदधिकरणोदाहरणमुक्त्वा क्त्वाचिन्तामुद्घाटयति–अपर इति । अन्यथा सिद्धान्ताननुगुणत्वेनेति यावत् । सत्त्वमिति बुद्धिरुक्ता ।

ज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ इति ॥ सत्त्वशब्दो जीवः, क्षेत्रज्ञशब्दः परमात्मेति यदुच्यते तन्न ॥ सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणशारीरपरतया प्रसिद्धत्वात्तत्रैव च व्याख्यातत्वात् । "तदेतत्सत्त्वं येन स्वप्नं पश्यत्यथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ" इति नाप्यस्याधिकरणस्य पूर्वपक्षं भजते ॥ न ह्यत्र शारीरः क्षेत्रज्ञः कर्तृत्वभोक्तृत्वादिसंसारधर्मेणोपेतो विवक्ष्यते ॥ कथं तर्हि सर्वसंसारधर्मापेतो ब्रह्मस्वभावश्चैतन्यमात्रस्वरूपः—"अनश्नन्नन्यो अभिचाकशीति" [ कठ० ३ । १ । १ ] इति "अनश्नन्नन्योऽभिपश्यति ज्ञः" इति वचनात् । "तत्त्वमसि" [ छां० ६ । ८ । ७–१५ ] "क्षेत्रज्ञं चापि मां विद्धि" [ भ० गी० १३।२ ] इत्यादिश्रुतिस्मृतिभ्यश्च ॥ तावता च विद्योपसंहारदर्शनमेवमेवावकल्प्यते "तावेतौ सत्त्वक्षेत्रज्ञौ न ह वा एवं विदि किञ्चन रज आध्वंसते" इत्यादि॥

---

रत्नप्रभा ।

शङ्कते—सत्त्वशब्द इति ॥ बुद्धिजीवौ चेत्पूर्वपक्षार्थः स्यादित्यत आह—नापीति ॥ पूर्वपक्षार्थस्तदा स्याद् यद्यत्र बुद्धिभिन्नः संसारी प्रतिपाद्येत । न ह्यत्र संसारी विवक्ष्यते । किन्तु शोधितत्वमर्थो ब्रह्मेत्यर्थः । श्रुतिस्मृतिभ्यां चायमर्थो युक्त इति शेषः । तावता मन्त्रव्याख्यामात्रेण । एवमेव जीवस्य ब्रह्मत्वोक्त्यैव । न हि जीवो बुद्धिभिन्न इति विवेकमात्रेणोपसंहारो युक्तः । भेदज्ञानस्य भ्रान्तित्वादैक्यस्यावेति भावः । अविद्या विदुषि किमपि स्वकार्यं नाऽऽध्वंसते न सम्पादयति । ज्ञानाग्निना स्वस्या एव दग्धत्वादित्यर्थः । अविद्या नागच्छतीति वाऽर्थः । जीवस्य ब्रह्मत्वपरमिदं वाक्यमिति पक्षे शङ्कते—

भामती ।

सत्त्वं बुद्धिः । शङ्कते—सत्त्वशब्द इति । सिद्धान्तार्थं ब्राह्मणं व्याचष्ट इत्यर्थः । निराकरोति—तन्नेति । येन स्वप्नं पश्यतीति । येनेति करणमुपदिशति । ततश्च भिन्नं कर्तारं क्षेत्रज्ञम् । योऽयं शारीर उपद्रष्टेति । अस्तु तर्ह्यस्याधिकरणस्य पूर्वपक्ष एव ब्राह्मणार्थः, वचनविरोधे न्यायस्याभासत्वादित्यत आह—नाप्यस्याधिकरणस्य पूर्वपक्षं भजत इति । एवं हि पूर्वपक्षमस्य भजेत, यदि हि क्षेत्रज्ञे संसारिणि पर्यवस्येत । तस्य तु ब्रह्मरूपतायां पर्यवस्यन्न पूर्वपक्षमपि स्वीकरोतीत्यर्थः । अपि च । तावेतौ सत्त्वक्षेत्रज्ञौ न ह वा एवंविदि किंचन रजआध्वंसत इति । रजोऽविद्या नाध्वंसनं संश्लेषमेवंविदि करोतीति । एतावतैव विद्योपसंहाराज्जीवस्य ब्रह्मात्मतापरतास्य लक्ष्यत इत्याह—तावता चेति ।

आनन्दगिरीय—न्यायनिर्णयः ।

सिद्धान्तार्थं व्याचष्टे ब्राह्मणमिति शंकते—सत्त्वेति । प्रसिद्ध्या प्रत्याह—तन्नेति । ब्राह्मणविरोधाच्च न तदन्यथा व्याख्येयमित्याह—तत्रैवेति । प्रकृतं ब्राह्मणं सप्तम्यर्थः । सत्त्वव्याख्यानानन्तर्यमथशब्दार्थः । सत्त्वस्य करणत्वात्क्षेत्रज्ञस्य कर्तृत्वान्न तयोरैक्यमित्यर्थः । तावेतौ करणत्वेन कर्तृत्वेन च भिन्नावित्यर्थः । सिद्धान्ताभजनेऽपि पूर्वपक्षमृगेषा भजेतेत्याशंक्याह—नापीति । द्वितीयस्य ब्रह्मरूपेणैव प्रतिपादनादिति हेतुमाह—न हीति । अत्रेति मन्त्रब्राह्मणोक्तिः । न चायं वाक्यार्थो न युक्तः श्रुतिस्मृतिसिद्धत्वादित्याह—तत्त्वमिति । इतश्च जीवस्य ब्रह्मत्वदृष्टिरत्रेष्टेत्याह—तावतेति । मन्त्रव्याख्यामात्रेण विद्योपसंहारदर्शनं जीवस्य ब्रह्मत्वोपदेशे घटते, न सत्त्वक्षेत्रज्ञविवेकमात्रेण भेदधियो मिथ्याधीत्वादित्यर्थः । अविद्यावस्तिफलोक्तिरपि ब्रह्मात्मताज्ञानमिह गमयतीत्याह—न हेति । जीवस्य ब्रह्मत्वोक्तिपरमिदं वाक्यमित्यत्र

कथं पुनरस्मिन्पक्षे "तयोरन्यः पिप्पलं स्वाद्वत्ति" [ कठ० ३ । १ । १ ] इति सत्त्वमित्यचेतने सत्त्वे भोक्तृत्ववचनमिति ॥ उच्यते ॥ नेयं श्रुतिरचेतनस्य सत्त्वस्य भोक्तृत्वं वक्ष्यामीति प्रवृत्ता ॥ किं तर्हि ॥ चेतनस्य क्षेत्रज्ञस्याभोक्तृत्वं ब्रह्मस्वभावतां वक्ष्यामीति ॥ तदर्थं सुखादिविक्रियावति सत्त्वे भोक्तृत्वमध्यारोपयति ॥ इदं हि कर्तृत्वं भोक्तृत्वं च सत्त्वक्षेत्रज्ञयोरितरेतरस्वभावाविवेककृतं कल्प्यते॥परमार्थतस्तु नान्यतरस्यापि सम्भवति ॥ अचेतनत्वात्सत्त्वस्य, अविक्रियत्वाच्च क्षेत्रज्ञस्य ॥ अविद्याप्रत्युपस्थापितस्वभावत्वाच्च सत्त्वस्य सुतरां न सम्भवति ॥ तथा च श्रुतिः—"यत्र वान्यदिव स्यात्तत्रान्योऽन्यत्पश्येद्" इत्यादिना स्वप्नदृष्टहस्त्यादिव्यवहारवदविद्याविषय एव कर्तृत्वादिव्यवहारं दर्शयति ॥ "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येद्" [ बृ० ४ । ५ । १५ ] इत्यादिना च

रत्नप्रभा ।

**कथमिति** ॥ बुद्धेर्भोक्तृत्वोक्तावतात्पर्यान्नात्र युक्तिचिन्तया मनः खेदनीयमित्याह—**उच्यत इति** ॥ **तदर्थं** ब्रह्मत्वबोधनार्थं भोक्तृत्वमुपाधिमस्तके निक्षिपतीत्यर्थः । **वस्तुतो** जीवस्याभोक्तृत्वे भोक्तृत्वधीः कथमित्यत आह—**इदं हीति** ॥ चित्तादात्म्येन कल्पिता बुद्धिः सुखादिरूपेण परिणमते बुद्ध्यविवेकाच्चिदात्मनः सुखादिरूपवृत्तिव्यक्तचैतन्यवत्त्वं भोक्तृत्वं भातीत्यर्थः । भोक्तृत्वमाविद्यकं न वस्तुत इत्यत्र मानमाह—**तथा चेति** ॥ **यत्र**ाविद्याकाले चैतन्यं भिन्नमिव भवति, **तदा** द्रष्टृत्वादिकम् । न वस्तुनि ज्ञात इत्यर्थः ॥ तस्माद् "ऋतं पिबन्तौ" [ कठ० १३ । १ ] इति वाक्यमेव गुहाधिकरणविषय इति

भामती ।

चोदयति—**कथं पुनरिति** । निराकरोति—**उच्यते—नेयं श्रुतिरिति** । अनश्नन् जीवो ब्रह्माभिचाकशीतीत्युक्ते शंकेत, यदि जीवो ब्रह्मात्मा नाश्नाति, कथं तर्ह्यस्मिन्भोक्तृत्वावगमः, चैतन्यसमानाधिकरणं हि भोक्तृत्वमवभासत इति । तन्निरासायाह श्रुतिः—'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति । एतदुक्तं भवति—नेदं भोक्तृत्वं जीवस्य तत्त्वतः, अपि तु बुद्धिसत्त्वं सुखादिरूपपरिणतं चितिच्छायापत्त्योपपन्नचैतन्यमिव भुंक्ते, न तु तत्त्वतो जीवः परमात्मा भुंक्ते । तदेतदध्यासभाष्ये कृतव्याख्यानम् । तदनेन कृत्वाचिन्तोद्घा-

आनन्दगिरीय—न्यायनिर्णयः ।

शंकते—**कथमिति** । बुद्धेर्भोक्तृत्वोक्तावतात्पर्यान्न तत्रोपपत्तिरन्वेष्येत्याह—**उच्यत इति** । क तर्हि श्रुतेस्तात्पर्यं तत्राऽऽह—**किं तर्हीति** । इतिपदं प्रवृत्तेति पूर्वेण संबध्यते । का तर्हि बुद्धेर्भोक्तृत्वधियो गतिस्तत्राऽऽह—**तदर्थमिति** । जीवस्य ब्रह्मत्वसिद्ध्यर्थमिति यावत् । चैतन्यच्छायापन्ना धीः सुखादिना परिणमते, तत्र पुरुषोऽपि भोक्तृत्वमिवानुभवति न तत्त्वत इति वक्तुमध्यारोपयतीत्युक्तम् । कुत्रत्यं भोक्तृत्वं बुद्धावारोप्यते तत्राऽऽह—**इदं हीति** । न हि भ्रान्तेरभ्रान्तिपूर्वकत्वं दण्डस्याप्सु वक्रतावदित्युक्तं **परमार्थतस्त्विति** । सत्त्वस्य वस्तुतो भोक्तृत्वाभावे हेत्वन्तरम**विद्येति** । मिथ्याभोक्तृत्वे मानमाह—**तथा चेति** । यत्र यस्यामविद्यावस्थायां वैशब्दो निश्चयार्थोऽन्यदिवाऽऽभासभूतं नानात्वं दृष्टं स्यात्तत्राऽऽविद्यकबुद्ध्यादिसंबन्धादन्यो भूत्वाऽन्यच्चक्षुषा पश्येदन्यच्च श्रोत्रेण शृणुयादित्यर्थः । उक्तवाक्यतात्पर्यमाह—**स्वप्नेति** । वस्तुतो भोक्तृत्वाभावे श्रुतिमाह—**यत्र त्विति** । यस्यां विद्यावस्थायामस्य विदुषः सर्वं पूर्णं ब्रह्मैवाभूत्तत्राविद्याक्षये भेदभ्रमाभावादारब्धकर्मणा कार्यकरणव्यापारेऽपि स्वगतव्यापारानभिमानात्केन करणेन कं विषयं कः कर्ता पश्येदित्याक्षेपः । अनेनापि वाक्येन श्रुत्युक्तमर्थमाह—**विवेकिन इति** । एवं जीवस्य भोक्तृत्वादेर्मिथ्यात्वात्तदपोहेन तस्य ब्रह्मतामाह पैङ्गिब्राह्मणमिति । पूर्वोत्तरपक्षानतुगुणत्वादनुदाहरणत्वेऽपि कृत्वाचिन्तया द्वा सुपर्णेत्यादीहोदाहृतम् । तत्राप्रपञ्चे प्रत्यग्ब्रह्मण्यन्वितम् । ऋतं पिबन्ताविति तु जीवद्वितीये पर-

**विवेकिनः कर्तृत्वादिव्यवहारं वारयति ॥१२॥ इति गुहाप्रविष्टाधिकरणं समाप्तम् ॥ ३ ॥**

## अन्तर उपपत्तेः ॥ १३ ॥ ( ४ ) ॥

**"य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । तद्यद्यप्यस्मिन्त्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति" [ छां० ४ । १५ । १ ] इत्यादि श्रूयते ॥ तत्र संशयः-किमयं प्रतिबिम्बा-**

रत्नप्रभा ।

स्थितम् ॥ १२ ॥ ( ३ ) ॥ उपकोसलविद्यावाक्यमुदाहरति-**य इति** ॥ **तद्** अक्षिस्थानमसङ्गत्वेन ब्रह्मणोऽनुरूपं यतः अस्मिन् क्षिप्तं **वर्त्मनी** पक्ष्मणी एव गच्छतीत्यर्थः । दर्शनस्य लौकिकत्वशास्त्रीयत्वाभ्यां संशयमाह-**तत्रेति** ॥ पूर्वत्र पिबन्ताविति प्रथमश्रुतचेतनत्वानुसारेण चरमश्रुताः गुहाप्रवेशादयो नीताः, तद्वदिहापि दृश्यत इति चाक्षुषत्वानुसारेणामृतत्वादयो ध्यानार्थं कल्पितत्वेन नेया इति दृष्टान्तेन पूर्वपक्ष-

भामती ।

टिता ॥ १२ ॥(३)॥ **अन्तर उपपत्तेः** । ननु 'अन्तस्तद्धर्मोपदेशात्' इत्यनेनैवैतद्गतार्थम् । सन्ति खल्वत्राप्यमृतत्वाभयत्वादयो ब्रह्मधर्माः प्रतिबिम्बजीवदेवतास्वसंभविनः । तस्माद् ब्रह्मधर्मोपदेशाद् ब्रह्मैवात्र विवक्षितम् । साक्षाच्च ब्रह्मशब्दोपादानात् । उच्यते-'एष दृश्यत इत्येतत्प्रत्यक्षेऽर्थे प्रयुज्यते । परोक्षं ब्रह्म न तथा प्रतिबिम्बे तु युज्यते ॥ १ ॥ उपक्रमवशात्पूर्वमितरेषां हि वर्णनम् । ऋतं न्यायेन येनैव स खल्वत्रानुषज्यते ॥ २ ॥' । 'ऋतं पिबन्तौ' इत्यत्र हि जीवपरमात्मानौ प्रथममवगताविति तदनुरोधेन गुहाप्रवेशादयः पश्चादवगता व्याख्याताः, तद्वदिहापि 'य एषोऽक्षिणि पुरुषो दृश्यते' इति प्रत्यक्षाभिधानात्प्रथममवगते छायापुरुषे तदनुरोधेनामृतत्वाभयत्वादयः स्तुत्या कथंचिद्व्याख्येयाः । तत्र चामृतत्वं कतिपयक्षणावस्थानात्, अभयत्वमचेतनत्वात्, पुरुषत्वं पुरुषाकारत्वात्, आत्मत्वं कनीनिकायतनत्वात्, ब्रह्मरूपत्वमुक्तरूपामृतत्वादियोगात् । एवं वामनीत्वादयोऽप्यस्य स्तुत्यैव कथंचिन्नेतव्याः । कं च खं चेत्यादि तु वाक्यमग्नीनां नाचार्यवाक्यं नियन्तुमर्हति । 'आचार्यस्तु ते गतिं वक्ता' इति च गत्यन्तराभिप्रायं, न तूक्तपरिशिष्टाभिप्रायम् । तस्माच्छायापुरुष एवात्रोपास्य इति पूर्वः पक्षः । संभवमात्रेण तु जीवदेवते उपन्यस्ते, बाधकान्तरोपदर्शनाय चैष दृश्यत इत्यस्यात्राभावात् । अन्तस्तद्धर्मोपदेशादित्यनेन निराकृतत्वात् । एवं प्राप्त उच्यते-**य एष इति** । 'अनिष्पन्नाभिधाने द्वे सर्वनामपदे सती । प्राप्य संनिहितस्यार्थं भवेतामभिधातृणी॥' संनिहिताश्च पुरुषात्मादिशब्दास्ते च न यावत्स्वार्थमभिदधति तावत्सर्वनामभ्यां नार्थतुषोऽप्यभिधीयत इति कुतस्तदर्थस्यापरोक्षता । पुरुषात्मशब्दौ च सर्वनामनिरपेक्षौ स्वरसतो जीवे वा परमात्मनि वा वर्तेते इति । न च तयोश्चक्षुषि प्रत्यक्षदर्शनमिति निरपेक्षपुरुषपदप्रत्यायितार्थानुरोधेन य एष इति दृश्यत इति च यथासंभवं व्याख्येयम् । व्याख्यातं च सिद्धवदुपादानं शास्त्राद्यपेक्षं विद्वद्विषयं प्ररोचनार्थम् । विदुषः शास्त्रत उपलब्धिरेव दृढतया प्रत्यक्षवदुपचर्यते प्रशंसार्थमित्यर्थः । अपि च तदेव चरमं प्रथमानुगुणतया नीयते यन्नेतुं शक्यम्, अल्पं च । इह त्वमृतत्वादयो

आनन्दगिरीय-न्यायनिर्णयः ।

स्मिन्निति स्थितम् ॥ १२ ॥ ( ३ )॥ पिबन्ताविति द्वित्वश्रुत्या चेतनत्वेन तुल्यजीवपरदृष्ट्यनुसाराच्चरमश्रुता गुहाप्रवेशादयो नीतास्तर्हि दृश्यत इति प्रत्यक्षत्वोक्त्या छायात्मगत्यनुरोधादमृतत्वादयः स्तुत्या कथंचिन्नेया इत्याशङ्क्याऽऽह-**अन्तर इति** । उपकोसलविद्यावाक्यमुदाहरति-**य इति** । छायां निरसितुं विशिनष्टि-**एतदिति** । क्रियापदेनेतिपदं संबध्यते । स्थानस्य ब्रह्मानुरूप्यमाह-**तदिति** । वर्त्मनी पक्ष्मस्थाने । एतं संयद्वाम इत्यादि ग्रहीतुमादिपदम् । दर्शनस्य लौकिकत्वशास्त्रीयत्वाभ्यां संशयमाह-**तत्रेति** ।

त्माऽक्ष्यधिकरणो निर्दिश्यते, अथ विज्ञानात्मा, उत देवतात्मेन्द्रियस्याधिष्ठाता अथवेश्वर इति । किं तावत्प्राप्तम् । छायात्मा पुरुषप्रतिरूप इति ॥ कुतः ॥ तस्य दृश्यमानत्वप्रसिद्धेः—"य एषोऽक्षिणि पुरुषो दृश्यते" इति च प्रसिद्धवदुपदेशात् ॥ विज्ञानात्मनो वा अयं निर्देश इति युक्तम् । स हि चक्षुषा रूपं पश्यंश्चक्षुषि सन्निहितो भवति ॥ आत्मशब्दश्चास्मिन्पक्षेऽनुकूलो भवति ॥ आदित्यपुरुषो वा चक्षुषोऽनुग्राहकः प्रतीयते—"रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः" [ बृ० ५ । ५ । २ ] इति श्रुतेः ॥ अमृतत्वादीनां देवतात्मन्यपि कथञ्चित्सम्भवात् ॥ नेश्वरः ॥ स्थानविशेषनिर्देशादिति ॥ एवं प्राप्ते ब्रूमः ॥ परमेश्वर एवाक्षण्यभ्यन्तरः पुरुष इहोपदिष्ट इति ॥ कस्मात् ॥ "उपपत्तेः"—उपपद्यते हि परमेश्वरे गुणजातमिहोपदिश्यमानम् ॥ आत्मत्वं तावन्मुख्यया वृत्त्या परमेश्वरे उपपद्यते—

---

रत्नप्रभा ।

यति—छायात्मेति ॥ पूर्वपक्षे प्रतिबिम्बोपास्तिः, सिद्धान्ते ब्रह्मोपास्तिरिति फलम् ॥ प्रसिद्धवदिति । चाक्षुषत्वेनेत्यर्थः । सम्भावनामात्रेण पक्षान्तरमाह—विज्ञानात्मन इत्यादिना ॥ "मनो ब्रह्म" इतिवदेतद्ब्रह्मेति इति वाक्यस्येतिपदशिरस्कत्वान्न स्वार्थपरत्वमिति पूर्वपक्षः । "मनो ब्रह्मेत्युपासीत" इत्यत्र इतिपदस्य प्रत्ययपरत्वात् । इह च ब्रह्मेत्युवाचेत्यन्वयेन इतिपदस्योक्तिसम्बन्धिनोऽर्थपरत्वाद्वैषम्यमिति सिद्धान्तयति—परमेश्वर एवेति ॥ बहुप्रमाणसंवादस्तात्पर्यानुग्राहक इति न्यायानुगृहीताभ्यामात्मब्रह्मश्रुतिभ्यां

भामती ।

बहवश्चाशक्याश्च नेतुम् । न हि स्वसत्ताक्षणावस्थानमात्रममृतत्वं भवति । तथा सति किं नाम नामृतं स्यादिति व्यर्थममृतपदम् । भयाभये अपि चेतनधर्मौ नाचेतने संभवतः । एवं वामनीत्वादयोऽप्यन्यत्र ब्रह्मणो नेतुमशक्याः । प्रत्यक्षव्यपदेशश्चोपपादितः । तदिदमुक्तम्—उपपत्तेरिति । 'एतदमृतमभयमेत-

आनन्दगिरीय—न्यायनिर्णयः ।

तदुक्तिसंभावनार्थं विशिनष्टि—अक्षीति । देवतां संभावयितुमिन्द्रियस्येति । आत्मशब्दात्पक्षद्वयमाह—अथेत्यादिना । प्रथमश्रुतवशाच्चरमश्रुतं नेयमिति पूर्वन्यायेन विमृश्य पूर्वपक्षमाह—किमिति । उक्तश्रुतेः सविशेषे ब्रह्मण्यन्वयोक्तेः श्रुत्यादिसंगतयः । पूर्वपक्षे छायात्मोपास्तिर्ब्रह्मोपास्तिः सिद्धान्ते फलम् । अमृतत्वादेरयोगान्न च्छायात्मेति शङ्कते—कुत इति । मनो ब्रह्मेत्यादिवदितिशब्दशिरस्कत्वेन वाक्यस्याविवक्षितार्थत्वं मत्वाऽऽह—तस्येति । तथाऽपि कथं छायात्मनि वामनीत्वादिकमित्याशङ्क्य चाक्षुषत्वस्यान्यत्रायोगादुपक्रमदृष्ट्या तदपि स्तुत्या नेयमित्याह—य इति । प्रसिद्धवदुपदेशश्चाक्षुषत्वोक्तिरेव । चकारः शङ्कानिरासी । संभावनामात्रेण पक्षान्तरमाह—विज्ञानेति । तस्य सर्वदेहसाधारण्यात्कुतोऽक्षिस्थानत्वं तत्राऽऽह—स हीति । संनिधिमात्रस्यातिप्रसङ्गित्वमाशङ्क्य हेत्वन्तरमाह—आत्मेति । संभावितं पक्षान्तरमाह—आदित्येति । तस्य चक्षुषि विशेषसंनिधिं सूचयति—चक्षुष इति । तस्य तस्मिन्ननुग्राहकत्वेन संनिधौ मानमाह—रश्मिभिरिति । एतदमृतमित्यादि कल्पद्वये कथं तदाह—अमृतत्वेति । जीवपक्षसंग्रहार्थोऽपिशब्दः । कथंचिदित्यौपचारिकोक्तिः । तेषां मुख्यत्वासंभवादीश्वरो गृह्यतामित्याशङ्क्य प्रथमदृष्टलिङ्गविरोधान्मैवमित्याह—नेति । सुखविशिष्टब्रह्मप्रकरणं नास्तीति कृत्वाचिन्तया प्राप्तं पक्षमनुभाष्य सिद्धान्तमुत्थाप्य प्रतिज्ञार्थमाह—एवमिति । उक्तेषु पक्षान्तरेषु नियमासिद्धिरित्याह—कस्मादिति । हेतुमादाय व्याकरोति—उपपत्तेरिति । इहेत्यक्षिपुरुषोक्तिः । उपपत्तिमेव स्फोरयति—आत्मत्वमिति । गौणमुख्ययोर्मुख्ये संप्रत्ययन्यायं सूचयति—मुख्ययेति । तत्राऽऽत्मत्वस्य मुख्यत्वे गमक-

"स आत्मा तत्त्वमसि" [छा० ६।८।७-१५] इति श्रुतेः ॥ अमृतत्वाभयत्वे च तस्मिन्नसकृच्छ्रुतौ श्रूयेते ॥ तथा परमेश्वरानुरूपमेतदक्षिस्थानम् । यथा हि परमेश्वरः सर्वदोषैरलिप्तोऽपहतपाप्मत्वादिश्रवणात्, तथाऽक्षिस्थानं सर्वलेपरहितमुपदिष्टं-"तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति" इति श्रुतेः ॥ संयद्वामत्वादिगुणोपदेशश्च तस्मिन्नवकल्पते "एतं संयद्वाम इत्याचक्षते। एतं हि सर्वाणि वामान्यभिसंयन्ति" [छा० ४।१५।२] "एष उ एव वामनीरेष हि सर्वाणि वामानि नयति" [४।१५।२] "एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति" [छा० ४।१५।२] इति च ॥ अत उपपत्तेरन्तरः परमेश्वरः ॥ १३ ॥

---

रत्नप्रभा ।

दृश्यत्वलिङ्गं बाध्यमित्याह-संयद्वामेति ॥ वामानि कर्मफलानि एतम् अक्षिपुरुषमभिलक्ष्य संयन्ति उत्पद्यन्ते । सर्वफलोदयहेतुरित्यर्थः । लोकानां फलदाताप्ययमेवेत्याह-वामनीरिति ॥ नयति फलानि लोकान्प्रापयतीत्यर्थः । भामानि भानानि नयत्ययमित्याह-भामनीरिति । सर्वार्थप्रकाशक इत्यर्थः ॥ १३ ॥ स्थानादिव्यपदेशाच्च । स्थाननामरूपाणां ध्यानार्थं श्रुत्यन्तरेऽप्युपदेशादक्षिस्थानत्वो-

भामती ।

ब्रह्म' इत्युक्ते स्यादाशङ्का, ननु सर्वगतस्येश्वरस्य कस्माद्विशेषेण चक्षुरेव स्थानमुपदिश्यत इति, तत्परिहरति श्रुतिः-'तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति' इति । वर्त्मनी पक्षस्थाने । एतदुक्तं भवति-निर्लेपस्येश्वरस्य निर्लेपं चक्षुरेव स्थानमनुरूपमिति । तदिदमुक्तम्-तथा परमेश्वरानुरूपमिति संयद्वामादिगुणोपदेशश्च तस्मिन् ब्रह्मणि कल्पते घटते, समवेतार्थत्वात् । प्रतिबिम्बादिषु त्वसमवेतार्थः । वामनीयानि संभजनीयानि शोभनीयानि पुण्यफलानि वामानि । संयन्ति संगच्छमानानि वामान्यनेनेति संयद्वामः परमात्मा । तत्कारणत्वात्पुण्यफलोत्पत्तेस्तेन पुण्यफलानि संगच्छन्ते । स एव पुण्यफलानि वामानि नयति लोकमिति वामनीः । एष एव भामनीः । भामानि भानानि नयति लोकमिति भामनीः । तदुक्तं श्रुत्या-'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति ॥ १३ ॥

आनन्दगिरीय-न्यायनिर्णयः ।

माह-स इति । ईश्वरपक्षे हेत्वन्तरमाह-अमृतत्वेति । ईश्वरपक्षे हेत्वन्तरमाह-तथेति । अमृतत्वादिवदित्यर्थः । आनुकूल्यमेव स्फोरयति-यथेति । तत्तत्र लोके यद्यपि यदपि किंचिदस्मिन्नक्षिणि सर्पिर्घृतमुदकं वा सिञ्चति क्षिपति तत्सर्वं वर्त्मनी पक्ष्मस्थाने एव गच्छति तेन न लिप्यते चक्षुरित्यर्थः । इति ह स्मोपाध्यायो वदतीत्यादाविव तिशब्दस्योक्तार्थावच्छेदेनोक्तियोगिनोऽर्थपरत्वदृष्टेरिति होवाचेत्यत्रापीतिशब्दस्यार्थावच्छेदेनोक्तियोगादर्थपरत्वदृष्टेरात्मब्रह्मश्रुतिभ्याममृतत्वादिलिङ्गाच्च दृश्यत इति च्छायात्मलिङ्गं बाध्यमित्यर्थः । किंचोपक्रमस्थैकलिङ्गाद्वाक्यशेषस्थानेकलिङ्गानि बलवन्ति संवादस्य तात्पर्यहेतुत्वादित्याह-संयदिति । कुतोऽस्य संयद्वामत्वं तत्राऽऽह-एतं हीति । वामानि कर्मफलान्येतमक्षिपुरुषं हेतुमाश्रित्याभिसंयन्त्युत्पद्यन्ते सर्वफलोदयहेतुरयमित्यर्थः । वामनीरप्ययमेव पुमानित्याह-एष इति । तदुपपादयति-एष हीति । वामानि शोभनानि लोकं प्रापयति लोकस्य सर्वशुभप्रापकोऽयमित्यर्थः । भामनीरप्ययमेवेत्याह-एष इति । भामानि भानानि सर्वत्र नयतीति भामनीरयमेव प्रकाशकः सर्वत्रेत्यर्थः । तदेव स्फुटयति-एष हीति । प्रथमश्रुतस्यापि चरमश्रुतैरनेकैरन्यथयितव्यत्वमुपसंहरति-अत इति ॥ १३ ॥ पूर्वपक्षबीजं

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

कथं पुनराकाशवत्सर्वगतस्य ब्रह्मणोऽक्ष्यल्पं स्थानमुपपद्यते इति ॥ अत्रोच्यते ॥ भवेदेषाऽनवक्लृप्तिः, यद्येतदेवैकं स्थानमस्य निर्दिष्टं भवेत् ॥ सन्ति हि अन्यान्यपि पृथिव्यादीनि स्थानान्यस्य निर्दिष्टानि–"यः पृथिव्यां तिष्ठन्" [ बृ० ३ । ७ । ३ ] इत्यादिना ॥ तेषु हि चक्षुरपि निर्दिष्टं–"यश्चक्षुषि तिष्ठन्" [ बृ० ३ । ७ । ३ ] इति ॥ स्थानादिव्यपदेशादित्यादिग्रहणेनैतद्दर्शयति ॥ न केवलं स्थानमेवैकमनुचितं ब्रह्मणो निर्दिश्यते ॥ किं तर्हि ॥ नामरूपमित्येवंजातीयकमप्यनामरूपस्य ब्रह्मणोऽनुचितं निर्दिश्यमानं दृश्यते–"तस्योदिति नाम" [ छा० १ । ६ ।६] "हिरण्यश्मश्रुः" [ छा० १ । ६ । ७ । ] इत्यादि ॥ निर्गुणमपि सद्ब्रह्म नामरूपगतैर्गुणैः सगुणमुपासनार्थं तत्रतत्रोपदिश्यते, इत्येतदप्युक्तमेव ॥ सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थं स्थानविशेषो न विरुध्यते शालग्राम इव विष्णोरित्येतदप्युक्तमेव ॥ १४ ॥

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

अपि च, नैवात्र विवदितव्यम् ॥ किम् ॥ ब्रह्मास्मिन्वाक्येऽभिधीयते न वेति ॥

---

रत्नप्रभा ।

क्तिरत्र न दोष इति सूत्रयोजना ॥ अनवक्लृप्तिः अक्लृप्तकल्पना तदा भवेद्, यद्यत्रैव निर्दिष्टं भवेदित्यन्वयः ॥ नन्वनुचितबाहुल्योक्तिरसमाधानमित्याशंक्य युक्तिमाह–निर्गुणमपीति ॥ १४ ॥ प्रकरणादपि ब्रह्म ग्राह्यमित्याह–सुखविशिष्टेति ॥ ध्यानार्थं भेदकल्पनया सुखगुणविशिष्टस्य ब्रह्मणः प्रकृतस्य य एष इति सर्वनाम्नाभिधानादन्तरः परमात्मा स्यादिति सूत्रार्थः ॥ ननु प्रकरणात्प्रबलेन

भामती ।

स्थानादिव्यपदेशाच्च । आशंकोत्तरमिदं सूत्रम् । आशंकामाह–कथं पुनरिति । स्थानिनो हि स्थानं महद्दृष्टं, यथा यादसामब्धिः । तत्कथमत्यल्पं चक्षुरधिष्ठानं परमात्मनः परममहत इति शंकार्थः । परिहरति–अत्रोच्यत इति । स्थानान्यादयो येषां ते स्थानादयो नामरूपप्रकारास्तेषां व्यपदेशात्सर्वगतस्यैकस्थाननियमो नावकल्पते । न तु नानास्थानत्वं नभस इव नानासूचीपाशादिस्थानत्वम् । विशेषतस्तु ब्रह्मणस्तानि तान्युपासनास्थानानीति तैरस्य युक्तो व्यपदेशः ॥ १४ ॥ अपि च प्रकृतानुसारादपि ब्रह्मैवात्र प्रत्येतव्यं, न तु प्रतिबिम्बजीवदेवता इत्याह सूत्रकारः–सुखविशिष्टाभिधानादेव च । एवं खल्वाख्यायते–उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास । तस्याचार्यस्य द्वादश वर्षाण्यग्नीनुपचचार । स चाचार्योऽन्यान्ब्रह्मचारिणः स्वाध्यायं ग्राहयित्वा समावर्तयामास । तमेवैकमुपकोसलं न समावर्तयति स्म । जायया च तत्समावर्तनायार्थितोऽपि तद्वचनमवधीर्याचार्यः प्रोषितवान् ।

आनन्दगिरीय–न्यायनिर्णयः ।

दूषयति–स्थानादीति । स्थानान्यादयो येषां नामरूपाणां तेषां व्यपदेशान्न परस्याक्षिस्थानत्वानुपपत्तिरिति योजना । यादसामम्भोधिरिव स्थानिनः स्थानं महद्दृष्टमिति शङ्कते–कथमिति । व्योम्नः सूचीपाशादिवदक्ष्यादिस्थानत्वं महतोऽपि परस्य स्यादित्याह–अत्रेति । एवंजातीयकशब्देन गुणजातं गृहीतम् । निर्गुणस्य गुणसंबन्धोक्तिरप्ययुक्ता तत्कथमनेकदुर्घटप्रकटनमेव समाधिरित्याशङ्क्याऽऽह–निर्गुणमिति । चकारार्थमाह–सर्वेति ॥ १४ ॥ प्रकरणादपि ब्रह्मैवात्र ग्राह्यमित्याह–सुखेति । हेत्वन्तरपरं सूत्रं स्फोरयितुं चकारार्थमाह–अपि चेति । तदेव वाक्यं प्रतिजानीते–नैवेति । विवादस्याका-

**सुखविशिष्टाभिधानादेव ब्रह्मत्वं सिद्धम् ॥ सुखविशिष्टं हि ब्रह्म ॥ यद्वाक्योपक्रमे प्रक्रान्तं–"प्राणो ब्रह्म, कं ब्रह्म, खं ब्रह्म" [ छा० ४।१०। ५ ] इति, तदेवेहाभिहितम् ॥ प्रकृतपरिग्रहस्य न्याय्यत्वात् ॥ "आचार्यस्तु ते गतिं वक्ता" [ छा० ४। १४। १ ] इति च गतिमात्राभिधानप्रतिज्ञानात् ॥ कथं पुनर्वाक्योपक्रमे सुखविशिष्टं ब्रह्म विज्ञायत इति ॥ उच्यते ॥ "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" [ छा० ४। १०। ५ ] इत्येतदग्नीनां वचनं श्रुत्वोपकोसल उवाच । "विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामि" [ छा० ४। १०। ५ ] इति तत्रेदं प्रतिवचनम् ॥ "यद्वाव कं तदेव खं यदेव खं तदेव कम्" [ छा० ४। १०। ५ ] इति ॥**

रत्नप्रभा ।

दृश्यत्वलिङ्गेनोपस्थापितश्छायात्मा सर्वनामार्थ इत्यत आह–**आचार्यस्त्विति** ॥ उपकोसलो नाम कश्चिद् ब्रह्मचारी जाबालस्याचार्यस्याग्नीन् द्वादश वत्सरान् परिचचार । तमनुपदिश्य देशान्तरगते जाबाले गार्हपत्याद्यग्निभिर्दयया प्राणो ब्रह्मेत्यात्मविद्यामुपदिश्योक्तम्–**आचार्यस्त्विति** ॥ तवात्मविद्याफलावाप्तये। मार्गमर्चिरादिकं वदिष्यतीत्यर्थः । पश्चादाचार्येणागत्य य एषोऽक्षिणीत्युक्त्वार्चिरादिका गतिरुक्ता । तथा चाग्निभिरुक्तात्मविद्यावाक्यस्य गतिवाक्येनैकवाक्यता वाच्या। सा च सर्वनाम्ना प्रकृतात्मग्रहे निर्वहतीत्येकवाक्यतानिर्वाहकं प्रकरणं वाक्यभेदकाल्लिङ्गाद्बलवदिति भावः । श्रुतिं व्याचष्टे–**उच्यत इति** ॥ **प्राणः** च सूत्रात्मा बृहत्त्वाद् ब्रह्मेति यत्तज्जानामि । कं विषयसुखं खं च भूताकाशं ब्रह्मत्वेन ज्ञातुं न शक्नोमीत्यर्थः । खं कथम्भूतं यत्कं तदेव खमिति सुखेन विशेषितस्य खस्य भूतत्वनिरासः । तथा कं कथम्भूतं यत् खं तदेव कमिति विभुत्वेन विशेषितस्य कस्य जन्यत्वनिरास इति व्यतिरेकमुखेनाह–

भामती ।

ततोऽतिदूनमानसमग्निपरिचरणकुशलमुपकोसलमुपेत्य त्रयोऽग्नयः करुणापराधीनचेतसः श्रद्दधानायास्मै दृढभक्तये समेत्य ब्रह्मविद्यामूचिरे–'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति । अथोपकोसल उवाच, विजानाम्यहं प्राणो ब्रह्मेति, स हि सूत्रात्मा विभूतिमत्तया ब्रह्मरूपाविर्भावाद् ब्रह्मेति । किंतु कं च खं च ब्रह्मेत्येतन्न विजानामि । न हि विषयेन्द्रियसंपर्कजं सुखमनित्यं लोकसिद्धं खं च भूताकाशमचेतनं ब्रह्म भवितुमर्हति । अथैनमग्नयः प्रत्यूचुः–'यद्वाव कं तदेव खं यदेव खं तदेव कम्' इति । एवं संभूयोक्त्वा प्रत्येकं च स्वविषयां विद्यामूचुः–'पृथिव्यग्निरन्नमादित्यः' इत्यादिना । पुनस्त एनं संभूयोचुः, एषा सोम्य तेऽस्मद्विद्या प्रत्येकमुक्ता स्वविषया विद्या, आत्मविद्या चास्माभिः संभूय पूर्वमुक्ता प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति, आचार्यस्तु ते गतिं वक्ता, ब्रह्मविद्येयमुक्तास्माभिर्गतिमात्रं त्ववशिष्टं नोक्तं, तत्तु विद्याफलप्राप्तये जाबालस्तवाचार्यो वक्ष्यतीत्युक्त्वाग्नय उपरेमिरे । एवं व्यवस्थिते 'यद्वाव कं तदेव खं यदेव

आनन्दगिरीय-न्यायनिर्णयः ।

र्यत्वे हेतुमाह–**सुखेति** । ब्रह्मणो विशिष्टस्योपक्रमस्थास्याक्षिवाक्येऽपि निर्देशादक्ष्याधारस्य पुंसो ब्रह्मतेत्युक्तमेव विवृणोति–**सुखेत्यादिना** । प्रक्रान्तत्वेऽपि ब्रह्मणोऽक्षिवाक्ये किं जातं तदाह–**तदेवेति** । प्रकृतपरिग्रहस्याक्षिवाक्ये यच्छब्देनेति शेषः । दृश्यत इति लिङ्गोपनीतच्छायात्मार्थो यच्छब्दः । लिङ्गस्य प्रकरणाद्बलीयस्त्वादित्याशङ्क्य तथात्वे वाक्यभेदाद्गतिमात्रोक्तिशेषाचैकवाक्यत्वाकांक्षायां तदापादकप्रकरणस्य लिङ्गात्प्राबल्यात्प्रकृतं ब्रह्मैव यच्छब्दोक्तमित्याह–**आचार्यस्त्विति** ॥ उक्तं व्यक्तीकर्तुं शङ्कते–**कथमिति** । तत्र ब्रह्मोक्तिं वक्तुमुपक्रमं दर्शयति–**उच्यत इति** । प्राणस्य सूत्रात्मनो बृहत्त्वाद्युक्तं ब्रह्मत्वं कथं पुनरर्थेन्द्रिययोगजं सुखं खं च भूताकाशं तद्ब्रह्मेति ज्ञातुं शक्यमित्याह–**एतदिति** ॥ शंकायामुत्तरम्–**तत्रेति** । प्रत्येकं

**तत्र खंशब्दो भूताकाशे निरूढो लोके ॥ यदि तस्य विशेषणत्वेन कंशब्दः सुखवाची नोपादीयेत, तथा सति केवले भूताकाशे ब्रह्मशब्दो नामादिष्विव प्रतीकाभिप्रायेण प्रयुक्त इति प्रतीतिः स्यात् ॥ तथा कंशब्दस्य विषयेन्द्रियसम्पर्कजनिते सामये सुखे प्रसिद्धत्वात् ॥ यदि तस्य खंशब्दो विशेषणत्वेन नोपादीयेत लौकिकं सुखं ब्रह्मेति प्रतीतिः स्यात् ॥ इतरेतरविशेषितौ तु कंखंशब्दौ सुखात्मकं ब्रह्म गमयतः ॥ तत्र द्वितीये ब्रह्मशब्देऽनुपादीयमाने कं खं ब्रह्मेत्येवोच्यमाने कंशब्दस्य विशेषणत्वेनैवोपयुक्तत्वात्सुखस्य गुणस्याध्येयत्वं स्यात् ॥ तन्मा भूदित्युभयोः कंखंशब्दयोः ब्रह्मशब्दशिरस्त्वं–"कं ब्रह्म खं ब्रह्म" [ छा० ४ । १० । ५ ] इति ॥ इष्टं हि सुखस्यापि गुणस्य गुणिवद्ध्येयत्वम् ॥ तदेवं वाक्योपक्रमे सुख-**

---

रत्नप्रभा ।

**तत्र खमित्यादिना ।** "आत्मविद्या" [ छां० ४ । १४।१ ] इति श्रुतिविरोधात्प्रतीकध्यानमत्रानिष्टमिति भावः॥**सामय इति ।** आमयो दोषः–साधनपारतन्त्र्यानित्यत्वादिः, तत्सहित इत्यर्थः ॥ प्रत्येकग्रहणे दोषमुक्त्वा द्वयोर्ग्रहणे फलितमाह–**इतरेतरेति** ॥ विशेषितार्थकावित्यर्थः । नन्वेकं ब्रह्मैवात्र ध्येयं चेद् ब्रह्मपदान्तरं किमर्थमित्यत आह–**तत्रेति** ॥ विशेषणत्वेन खस्य भूतत्वव्यावर्त्तकत्वेनेत्यर्थः । ब्रह्मशब्दः शिरो ययोस्तत्त्वमिति विग्रहः । अध्येयत्वे को दोषस्तत्राह—**इष्टं हीति** ॥ मार्गोक्त्या सगुणविद्यात्वावगमादिति

भामती ।

'खं तदेव कम्' इत्येतद्व्याचष्टे भाष्यकारः–**तत्र खंशब्द इति** ॥ **प्रतीकाभिप्रायेणेति** । आश्रयान्तरप्रत्ययस्याश्रयान्तरे क्षेपः प्रतीकः । यथा ब्रह्मशब्दः परमात्मविषयो नामादिषु क्षिप्यते । इदमेव तद् ब्रह्म ज्ञेयं यन्नामेति । तथेदमेव तद् ब्रह्म यद्भूताकाशमिति प्रतीतिः स्यात् । न चैतत्प्रतीकत्वमिष्टम् । लौकिकस्य सुखस्य साधनपारतन्त्र्यं क्षयिष्णुता चामयस्तेन सह वर्तत इति सामयं सुखम् । तदेवं व्यतिरेके दोषमुक्त्वोभयान्वये गुणमाह–**इतरेतरविशेषितौ त्विति** । तदर्थयोर्विशेषितत्वाच्छब्दावपि विशेषितावुच्येते । सुखशब्दसमानाधिकरणो हि खंशब्दो भूताकाशमर्थं परित्यज्य ब्रह्मणि गुणयोगेन वर्तते । तादृशा च खेन सुखं विशिष्यमाणं सामयाद्व्यावृत्तं निरामयं भवति । तस्मादुपपन्नमुभयोपादानम् । ब्रह्मशब्दाभ्यासस्य प्रयोजनमाह–**तत्र द्वितीय इति** । ब्रह्मपदं कंपदस्योपरि प्रयुज्यमानं शिरः, एवं खंपदस्यापि ब्रह्मपदं शिरो ययोः कंखंपदयोस्ते ब्रह्मशिरसी, तयोर्भावो ब्रह्मशिरस्त्वम् । अस्तु प्रस्तुते किमायातमित्यत आह–**तदेवं वाक्योपक्रम इति** । नन्वग्निभिः पूर्वं निर्दिश्यतां ब्रह्म, 'य एषोऽक्षिणि'

आनन्दगिरीय–न्यायनिर्णयः ।

ब्रह्मत्वमजानतो मिथोवैशिष्ट्योक्तौ कथं धीरित्याशंक्य खंशब्दस्येतरव्यभिचारे दोषमाह–**तत्र खमिति** । प्रतीकां नामाऽऽश्रयान्तरप्रत्ययस्याऽऽश्रयान्तरे क्षेपः । न चायं तदुपदेशः । अप्रतीकालम्बनान्नयतीति न्यायेन वक्ष्यमाणगतिविरोधादिति भावः । कंशब्दस्यापीतरव्यभिचारे दोषमाह–**तथेति** । क्षयिता पारतन्त्र्यादि वाऽऽमयः । न च तस्मिन्ब्रह्मदृष्टिरुक्तन्यायादित्यर्थः । व्यतिरेके दोषमुक्त्वोभयग्रहे गुणमाह–**इतरेतरेति** । अर्थयोर्विशेषितत्वेन शब्दावपि विशेषितावुक्तौ । कंशब्देन विशेषितो हि खंशब्दो भूताकाशं त्यक्त्वा तद्गुणयोगाद्ब्रह्मणि वर्तते । कमपि खेन विशेषितं निरामयं भवति । तथा च यथोक्तौ शब्दावनवच्छिन्नसुखगुणकं ब्रह्म गमयित्वा चरितार्थावित्यर्थः । एकस्यैव ब्रह्मणो ध्येयत्वाद्ब्रह्मपदाभ्यासो वृथेत्याशंक्याऽऽह–**तत्रेति** । विशेषणत्वेनाऽऽकाशविशेषणार्पकत्वेनेति यावत् । उपरि प्रयोगाद्ब्रह्मपदं शिरो ययोस्ते ब्रह्मशिरसी तयोर्भावो ब्रह्मशिरस्त्वम् ॥ सुखस्याध्येयत्वमेवास्तु को दोष इत्याशङ्क्याऽऽह–**इष्टं हीति** । मार्गोक्त्या सगुणविद्यात्वदृष्टेरित्यर्थः । ब्रह्मणः [illegible]–**तदेवमिति** । तत्रैव हेत्वन्तरमाह–

विशिष्टं ब्रह्मोपदिष्टम् ॥ प्रत्येकं च गार्हपत्यादयोऽग्नयः स्वंस्वं महिमानमुपदिश्य-"एषा सोम्य तेऽस्मद्विद्याऽऽत्मविद्या च" [ छां० ४ । १४ । १ ] इत्युपसंहरन्तः पूर्वत्र ब्रह्म निर्दिष्टमिति ज्ञापयन्ति ॥ "आचार्यस्तु ते गतिं वक्ता" [ छां० ४ । १४ । १ ] इति च गतिमात्राभिधानप्रतिज्ञानमर्थान्तरविवक्षां वारयति ॥ "यथा पुष्करपलाशे आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते" [ छां० ४ । १४ । ३ ] इति चाक्षिस्थानं पुरुषं विजानतः पापेनानुपघातं ब्रुवन्नक्षिस्थानस्य

रत्नप्रभा ।

भावः । आत्मविद्यापदेनोपसंहारादपि प्रकृतं ब्रह्मेत्याह—**प्रत्येकं चेति** ॥ पृथिव्यग्निरन्नमादित्य इति मम चतस्रस्तनवो विभूतिरिति **गार्हपत्य** उपदिदेश, आपो दिशो नक्षत्राणि चन्द्रमा इति **अन्वाहार्यपचन** उवाच, प्राण आकाशो द्यौर्विद्युदिति स्वमहिमानम**आहवनीयो** जगादेति भावः । इयमस्माकमग्नीनां विद्या प्रत्येकमुक्ता । आत्मविद्या तु पूर्वमस्माभिर्मिलित्वा प्राणो ब्रह्मेत्युक्तेत्यर्थः ॥ "उच्यतामग्निभिर्ब्रह्मच्छायात्मा गुरुणोच्यताम् । वक्तृभेदात्" इति तत्राह—**आचार्यस्त्विति**॥ एकवाक्यतानिश्चयाद्वक्तृभेदेऽपि नार्थभेद

भामती ।

इत्याचार्यवाक्येऽपि तदेवानुवर्तनीयमिति तु कुत इत्याह—**आचार्यस्तु ते गतिं वक्तेति च गतिमात्राभिधानमिति** । यद्यप्येते भिन्नवक्तृणी वाक्ये तथापि पूर्वेण वक्त्रा एकवाक्यतां गमिते, गतिमात्राभिधानात् । किमुक्तं भवति, तुभ्यं ब्रह्मविद्यास्माभिरुपदिष्टा, तद्विदस्तु गतिर्नोक्ता, तां च किंचिदधिकमाध्येयं पूरयित्वाचार्यो वक्ष्यतीति । तदनेन पूर्वासंबद्धार्थान्तरविवक्षा वारितेति । अथैवमग्निभिरुपदिष्टे प्रोषित आचार्यः कालेनाजगाम, आगतश्च वीक्ष्योपकोसलमुवाच, ब्रह्मविद इव ते सोम्य मुखं प्रसन्नं भाति, कोऽनु त्वामनुशशासेति । उपकोशलस्तु ह्रीणो भीतश्च को नु मामनुशिष्यात् भगवन् प्रोषिते त्वयीत्यापाततोऽपह्नाय निर्वध्यमानो यथावदग्नीनामनुशासनमवोचत् । तदुपश्रुत्य चाचार्यः सुचिरं क्लिष्ट उपकोसले समुपजातदयार्द्रहृदयः प्रत्युवाच, सोम्य किल तुभ्यमग्नयो न ब्रह्म साकल्येनावोचन्, तदहं तुभ्यं साकल्येन वक्ष्यामि, यदनुभवमाहात्म्यात् 'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' इत्येवमुक्तवत्याचार्य आहोपकोसलः, ब्रवीतु मे भगवानिति, तस्मै होवाचाचार्योऽर्चिरादिकां गतिं वक्तुमनाः, यदुक्तमग्निभिः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति तत्पूरणाय 'एषोऽक्षिणि पुरुषो दृश्यते' इत्यादि । एतदुक्तं भवति—आचार्येण ये सुखं ब्रह्माक्षिस्थानं संयद्वामं वामनीभामनीत्येवंगुणकं प्राणसहितमुपासते ते सर्वेऽपहतपाप्मानोऽन्यत्कर्म कुर्वन्तु मा वाकार्षुः, अर्चिषमर्चिरभिमानिनीं देवतामभिसंभ-

आनन्दगिरीय-न्यायनिर्णयः ।

**प्रत्येकं चेति** । उपकोसलं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इतीमा मे चतस्रस्तनवो य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मीति । अन्वाहार्यपचनोऽपि तदनुशासनमकरोदापो दिशो नक्षत्राणि चन्द्रमा इति मे तनवो य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मीति । आहवनीयोऽपि तदनुशासनं कृतवान्प्राण आकाशो द्यौर्विद्युदिति मम तनवो य एष विद्युति पुरुषः सोऽहमस्मीत्येवमेते प्रत्येकमग्नयः स्वंस्वं महिमानं विभूतिं पृथिव्यादिविस्तारमुक्त्वैषा सोम्य ते तुभ्यं प्रत्येकमुक्ताऽस्मद्विद्याऽग्निविषया पूर्वं च संभूय प्राणो ब्रह्मेत्यादिनाऽऽत्मविद्योक्ताऽस्माभिरित्युपसंहरन्तो ब्रह्मोपक्रमं दर्शयन्तीत्यर्थः । अग्निवाक्ये ब्रह्मोक्तमपि किमित्याचार्यवाक्येऽनुवर्तते वक्तृभेदादर्थभेदसिद्धेरित्याशङ्क्याऽऽह—**आचार्यस्त्विति** । वक्तृभेदेऽप्येकवाक्यतासाकांक्षत्वात्पूर्वोत्तरवाक्ययोरेकार्थत्वं वाक्यैक्यसंभवे तद्भेदस्यायोगादित्यर्थः । फलोक्तेरपि सिद्धमक्षिस्थस्य ब्रह्मत्व मित्याह—**यथेति** । प्रकृतपुरुषविदो हि पापाद्यनुपहतत्वं फलमुक्तं तच्च तदधिगमाधिकरणे ब्रह्मधियोऽभिधास्यते तेनास्य ब्रह्मत्वमित्यर्थः । आचार्येण गतिमात्रे वाच्ये किमित्यधिकं सोऽभिदधीतेत्याशंक्यापेक्षितं

पुरुषस्य ब्रह्मत्वं दर्शयति ॥ तस्मात्प्रकृतस्यैव ब्रह्मणोऽक्षिस्थानतां संयद्वामत्वादिगुणतां चोक्त्वा अर्चिरादिकां तद्विदो गतिं वक्ष्यामीति उपक्रमते "य एषोऽक्षिणि पुरुषो दृश्यते । एष आत्मेति होवाच" [ छां० ४ । १५ । १ ] इति ॥ १५ ॥

श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

इतश्चाक्षिस्थानः पुरुषः परमेश्वरः ॥ यस्माच्छ्रुतोपनिषत्कस्य श्रुतरहस्यविज्ञानस्य ब्रह्मविदो या गतिर्देवयानाख्या प्रसिद्धा श्रुतौ—"अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्याऽऽदित्यमभिजयन्ते एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते" [ प्रश्न० १ । १० ] इति ॥ स्मृतावपि "अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायणम् ॥ तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" [ भग० गी०

---

रत्नप्रभा ।

इत्यर्थः ॥ १९ ॥ श्रुतोपनिषत्कगत्यभिधानाच्च । श्रुता अनुष्ठिता उपनिषद् रहस्यं सगुणब्रह्मोपासनं येन तस्य या गतिः श्रुतौ स्मृतौ च प्रसिद्धा तस्या अत्राभिधानाल्लिङ्गादिति सूत्रार्थमाह—इतश्चेति ॥ यस्माद्दृश्यते तत्तस्मादिहेत्यन्वयः । श्रुतिमाह—अथेति ॥ देहपातानन्तरमित्यर्थः । स्वधर्मः तपः । तपोब्रह्मचर्यश्रद्धाविद्याभिः आत्मानं ध्यात्वा तया ध्यानविद्ययोत्तरं देवयानमार्गं प्राप्यते नोत्तरेण पथा आदित्यद्वारा सगुणब्रह्मस्थानं गच्छन्ति । एतद्वै ब्रह्म प्राणानां व्यष्टिसमष्टिरूपाणाम् आयतनं लिङ्गात्मकं हिरण्यगर्भरूपं वस्तुतः एतद् अमृतादिरूपं निर्गुणं सर्वाधिष्ठानम् । अतः कार्यब्रह्म प्राप्य तत्स्वरूपं निर्गुणं ज्ञात्वा मुच्यन्त इत्यर्थः । अग्निरेव ज्योतिर्देवता । एवमहराद्या देवता एव स्मृतौ उक्ताः । अस्मिन्

भामती ।

वन्ति प्रतिपद्यन्ते, अर्चिषोऽहरहर्देवताम्, अह्न आपूर्यमाणपक्षं शुक्लपक्षदेवतां, ततः षण्मासान्, येषु मासेषूत्तरां दिशमेति सविता ते षण्मासा उत्तरायण तद्देवतां प्रतिपद्यन्ते तेभ्यो मासेभ्यः संवत्सरदेवतां, तत आदित्यम्, आदित्याच्चन्द्रमसं, चन्द्रमसो विद्युतं, तत्र स्थितानेतान्पुरुषः कश्चिद् ब्रह्मलोकादवतीर्यामानवोऽमानव्यां सृष्टौ भवः । ब्रह्मलोकभव इति यावत् । स तादृशः पुरुष एतान्सत्यलोकस्थं कार्यं ब्रह्म गमयति, स एष देवपथो देवैरर्चिरादिभिर्नेतृभिरुपलक्षित इति देवपथः, स एव च ब्रह्मणा गन्तव्येनोपलक्षित इति ब्रह्मपथः, एतेन पथा प्रतिपद्यमानाः सत्यलोकस्थं ब्रह्म इमं मानवं मनोः सर्गं किं भूतमावर्तं जन्मजरामरणपौनःपुन्यमावृत्तिस्तत्कर्तावर्तो मानवो लोकस्तं नावर्तन्ते । तथा च स्मृतिः—'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' ॥ १९ ॥ तदनेनोपाख्यानव्याख्यानेन

आनन्दगिरीय—न्यायनिर्णयः ।

पूरयित्वा गतिर्वाच्येत्युपसंहरन्नाह—तस्मादिति । पूर्वापरालोचनायामेकवाक्यत्वनिश्चयादित्यर्थः ॥ १९ ॥ प्रकरणादक्षिस्थस्य ब्रह्मत्वमुक्त्वा लिङ्गादपि तथेत्याह—श्रुतेति । श्रुता संवृत्तोपनिषद्रहस्यं ज्ञानं यस्य स तथा तस्य या देवयानाख्या गतिरागमसिद्धा तस्याश्चाक्षुषपुरुषवेदिन्यभिधानात्तद्ब्रह्मतेत्यर्थः । चकारार्थमाह—इतश्चेति । अवशिष्टं व्याचष्टे—यस्मादिति । या गतिः श्रुतौ स्मृतौ च प्रसिद्धा सैवेहाभिधीयमानेति संबन्धः । श्रुतिमाह—अथेति । देहपातानन्तर्यमथशब्दार्थः । तपोब्रह्मचर्याद्युपायेनाऽऽत्मानमनुसंधाय तद्विषया ध्यानाख्यया हेतुनोत्तरमार्गमर्चिराद्युपलक्षितं प्राप्य तेनाऽऽदित्यद्वारा कार्यं ब्रह्माऽऽप्नुवन्तीत्यर्थः । ब्रह्म विशिनष्टि—एतदिति । व्यष्टिसमष्टिकरणात्मकं हैरण्यगर्भं पदमित्यर्थः । तस्यैव वास्तवं रूपमाह—एतदिति । उक्तविशेषणसिद्ध्यर्थं हेतुमाह—एतस्मादिति । गतिविषयां श्रुतिमुक्त्वा स्मृतिमाह—अग्निरिति । अग्न्यादिशब्दैस्तत्राभिमानिन्यो देवता गृह्यन्ते । प्रश्नपूर्वकं तत्र विशेषमाह—तत्रेति

८ । २४ ] इति ॥ सैवेहाक्षिपुरुषविदोऽभिधीयमाना दृश्यते ॥ "अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसम्भवन्ति" [ छां० ४ । १५ । ५ ] इत्युपक्रम्य "आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः" "स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते" [ छां० ४ । १५ ।५-६ ] इति ॥ तदिह ब्रह्मविद्विषयया प्रसिद्धचा गत्याऽक्षिस्थानस्य ब्रह्मत्वं निश्चीयते ॥ १६ ॥

## अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥

यत्पुनरुक्तं छायात्मा विज्ञानात्मा देवतात्मा वा स्यादक्षिस्थान इति ॥ अत्रोच्यते ॥ न च्छायात्मादिरितर इह ग्रहणमर्हति ॥ कस्माद् ॥ अनवस्थितेः ॥ न तावच्छायात्मनश्चक्षुषि नित्यमवस्थानं सम्भवति ॥ यदैव हि कश्चित्पुरुषश्चक्षुरासीदति, तदा चक्षुषि पुरुषच्छाया दृश्यते ॥ अपगते

रत्नप्रभा।

उपासके मृते सति यदि पुत्रादयः शव्यं शवसंस्कारादिकं कुर्वन्ति, यदि च न कुर्वन्ति, उभयथाप्युपास्तिमहिम्ना अर्चिरादिदेवान् क्रमेण गच्छन्ति । अर्चिषम् अग्निं ततोऽहरहः शुक्लपक्षं—तत उत्तरायणं—तस्मात्संवत्सरं—ततो देवलोकं—ततो वायुं—वायोरादित्यं—ततश्चन्द्रं चन्द्राद् विद्युतं गत्वा तत्र विद्युल्लोके स्थितानुपासकान् अमानवः पुरुषो ब्रह्मलोकादागत्य कार्यब्रह्मलोकं प्रापयति । एषोऽर्चिरादिभिर्देवैर्विशिष्टः—देवपथः, गन्तव्येन ब्रह्मणा योगाद् ब्रह्मपथः च । एतेन कार्यं ब्रह्मप्रतिपद्यमाना उपासकाः इमं मानवं मनोः सर्गम् आवर्त्तं जन्ममरणावृत्तियुक्तं नावर्तन्ते नागच्छन्तीत्यर्थः ॥ १६ ॥ ( ४ ) ॥ चक्षुरासीदतीति । उपगच्छतीत्यर्थः । अनवस्थितस्योपास्यत्वं सदा न सिध्यतीति भावः । किञ्च व्यवधाना-

भामती।

श्रुतोपनिषत्कगत्यभिधानाच्च इत्यपि सूत्रं व्याख्यातम् ॥ १६ ॥ अनवस्थितेरसंभवाच्च नेतरः । 'य एषोऽक्षिणि' इति नित्यवच्छ्रुतमनित्ये छायापुरुषे नावकल्पते । कल्पनागौरवं चास्मिन्पक्षे प्रसज्यत

आनन्दगिरीय-न्यायनिर्णयः।

पथो देवयानस्य प्रामाणिकत्वेऽपि प्रकृते किमायातमित्याशंक्योक्तम्—सैवेति । इहेत्युक्तां श्रुतिमाह—अथेति । देहपातानन्तर्यमेवाथेत्युक्तमस्मिन्नुपासके प्रारब्धकर्मसमाप्त्यामृते यदि पुत्रा ज्ञातयो वा शव्यं शवसंबन्धिसंस्कारादिकर्म कुर्वन्ति, यदि वा न, द्विधाऽप्यप्रतिहतधीफलास्तेऽर्चिरभिमानिनीं देवतां प्राप्नुवन्ति तदाह—यदु चेति । आर्चिषोऽहर्देवतां ततः शुक्लपक्षदेवतां ततः षण्मासोपलक्षितोत्तरायणदेवतां ततः संवत्सराभिमानिनीं देवतां ततश्चाऽऽदित्यं ततश्चन्द्रं ततो विद्युतमाप्नुवन्ति । तत्तत्र स्थितानुपासकान्ब्रह्मलोकादागत्यामानवः पुरुषो गन्तव्यं ब्रह्म प्रापयतीत्याह—इत्युपक्रम्येति । देवैर्नेतृभिरधिष्ठितः पन्था देवपथो ब्रह्मणा गन्तव्यत्वेनोपलक्षितो ब्रह्मपथः । एतेन पथा कार्यं ब्रह्म प्रतिपद्यमानाः पुनरिमं मनोः सर्गं जन्ममरणाद्यावृत्तियुक्तं नाऽऽवर्तन्ते न प्रविशन्तीत्याह—एष इति । तथाऽपि प्रकृते किं जातं तदाह—तदिति । प्रकरणमिहेत्युक्तम् ॥ १६ ॥ सिद्धान्तमुपपाद्य परोक्तं प्रत्याह—अनवस्थितेरिति । तद्व्याकर्तुं व्यावर्त्यमनुकीर्तयति—यदिति । सूत्रमुत्तरत्वेन योजयति—अत्रेति । इहेति स्थानं वाक्यं चोक्तम् । प्रश्नपूर्वकं हेतुं छायात्मनि व्याचष्टे—कस्मादिति । उक्तमन्वयव्यतिरेकाभ्यां व्यनक्ति—यदेति । स्वचक्षुषि

१ [ १ । २ । १३ ] व्याससूत्रभाष्ये ।

तस्मिन्न दृश्यते ॥ "य एषोऽक्षिणि पुरुषः" [ छां० ४।१५।१ ] इति श्रुतिः ॥ सन्निधानात्त्वे चक्षुषि दृश्यमानं पुरुषमुपास्यत्वेनोपदिशति ॥ न चोपासनाकाले छायाकरं कञ्चित्पुरुषं चक्षुस्समीपे सन्निधाप्योपास्त इति युक्तं कल्पयितुम् ॥ "अस्यैव शरीरस्य नाशमन्वेष नश्यति" [ छां० ८।९।१ ] इति श्रुतिश्छायात्मनोऽनवस्थितत्वं दर्शयति॥ असम्भवाच्च—तस्मिन्नमृतत्वादीनां गुणानां न च्छायात्मनि प्रतीतिः। तथा विज्ञानात्मनोऽपि साधारणे कृत्स्नशरीरेन्द्रियसम्बन्धे सति चक्षुष्येवावस्थितत्वं वक्तुं न शक्यम्॥ ब्रह्मणस्तु सर्वव्यापिनोऽपि दृष्ट उपलब्ध्यर्थो हृदयादिदेशविशेषसम्बन्धः॥ समानश्च विज्ञानात्मन्यप्यमृतत्वादीनां गुणानामसम्भवः ॥ यद्यपि विज्ञानात्मा परमात्मनोऽनन्य एव ॥ तथाप्यविद्याकामकर्मकृतं तस्मिन्मर्त्यत्वमध्यारोपितं भयं चेत्यमृतत्वाभयत्वे नोपपद्येते ॥ संयद्वामत्वादयश्चैतस्मिन्ननैश्वर्यादनुपपन्ना एव ॥ देवतात्मनस्तु "रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः" [ बृह० ५ । ५ । २ ] इति श्रुतेः ॥ यद्यपि चक्षुष्यवस्थानं स्यात्॥ तथाप्यात्मत्वं तावन्न सम्भवति ॥ पराग्रूपत्वात् ॥ अमृतत्वादयोऽपि न सम्भवन्ति ॥ उत्पत्तिप्रलयश्रवणात् ॥ अमरत्वमपि देवानां चिरकालावस्थानापेक्षम् ॥ ऐश्वर्यमपि परमेश्वरायत्तं न स्वाभाविकम् ॥ "भीषास्माद्वातः पवते भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम

---

रत्नप्रभा ।

त्वाक्षिस्थ उपास्यः । न च तस्य स्वचक्षुषा दर्शनं सम्भवतीत्याह—य एष इति ॥ अस्तु तर्हि परेण दृश्यमानस्योपास्तिरित्यत आह—न चेति ॥ कल्पनागौरवादित्यर्थः ॥ युक्तिसिद्धानवस्थितत्वे श्रुतिमाह—अस्येति ॥ छायाकरस्य विम्बस्य नाशमदर्शनमनुसृत्यैष छायात्मा नश्यतीत्यर्थः ॥ जीवं निरस्यति—तथेति ॥जात्यन्धस्याप्यहमित्यविशेषेण जीवस्याभिव्यक्तेश्चक्षुरेव स्थानमित्ययुक्तमित्यर्थः ॥ दृष्ट इति । श्रुताविति शेषः । ननु "चक्षोः सूर्यो अजायत" "सूर्योऽस्तमेति" इति वाक्यममरा देवा इति प्रसिद्धिवाधितमित्याशंक्याह—अमरत्वमपीति ॥ भीषा भयेन अस्माद् ईश्वराद्वायुश्चलति । अग्निश्चेन्द्रश्च

भामती ।

इत्याह—न चोपासनाकाल इति ॥ तथा विज्ञानात्मनोऽपीति । विज्ञानात्मनो हि न प्रदेशे उपा-

आनन्दगिरीय—न्यायनिर्णयः ।

नित्यं संनिध्यभावेऽपि यत्र क्वापि च्छायात्मनः संभवादुपास्यतेत्याशङ्क्याऽऽह—य इति । दृश्यत इत्युक्ते स्वेनान्येन वेत्यविशेषाचरमश्रुतत्वाच प्रथमश्रुतमक्षि स्वकीयमेव युक्तं संनिधेः स्वस्मिन्नतिशयादित्याह—संनिधानादिति । तर्हि पुरुषान्तरं संनिधाप्य स्वचक्षुषि तद्दृश्यस्योपास्यता स्यादित्याशङ्क्य गौरवान्नेत्याह—न चेति । युक्त्याऽनवस्थितत्वमुक्त्वा तत्रैव श्रुतिमाह—अस्येति । छायाकरस्येत्यर्थः । आनन्तर्यार्थोऽनुशब्दः । एष शब्दश्छायात्मार्थः । हेत्वन्तरमादाय व्याख्याति—असंभवाच्चेति । जीवनिरासेऽप्यनवस्थितिं व्याचष्टे—तथेति । छायात्मवदित्यर्थः । न हि तस्य चक्षुष्येव व्यक्तियोग्यता येन तत्रोपास्तिर्विनाऽपि स्थानविशेषमहमिति व्यक्तेरित्यर्थः । तर्हि ब्रह्मणोऽपि सर्वत्र सत्त्वान्न चक्षुष्येव स्थितिस्तत्राऽऽह—ब्रह्मणस्त्विति । दृष्टः श्रुताविति शेषः । हेत्वन्तरं जीवेऽपि योजयति—समानश्चेति । जीवस्य ब्रह्माभेदाच्चात्रामृतत्वादि स्यादित्याशंक्याऽऽह—यद्यपीति । अनवस्थितिर्देवतात्मन्यसिद्धेत्याशंक्य हेत्वन्तरेण निराह—देवतेति । देवेष्वमरत्वप्रसिद्धिवाधितं तदुत्पत्त्यादिवाक्यमित्याशंक्याऽऽह—अमरत्वमिति । संयद्वामत्वादिकमपि न तत्रेत्याह—ऐश्वर्यमिति । तस्यैश्वर्यत्वे भयश्रुतिं च मानमाह—भीषेति । भयेनास्मादी-

इति" [ तैत्ति० २ । ८।१ ] इति मन्त्रवर्णात् ॥ तस्मात्परमेश्वर एवायमक्षिस्थानः प्रत्येतव्यः ॥ अस्मिंश्च पक्षे दृश्यत इति प्रसिद्धवदुपादानं शास्त्रापेक्षं विद्वद्विषयं प्ररोचनार्थमिति व्याख्येयम् ॥ १७ ॥ इत्यन्तराधिकरणम् ॥ ४ ॥

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥ ( ५ ) ॥

"य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयति" [ बृ० ३ । ७ । १ ] इत्युपक्रम्य श्रूयते-"यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरोयं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आ-

रत्नप्रभा ।

स्वस्वकार्यं कुरुतः । उक्तापेक्षया पञ्चमो मृत्युः समाप्तायुषां निकटे धावतीत्यर्थः । ईश्वरपक्षे दृश्यत इत्ययुक्तं तत्राह-**अस्मिन्निति** ॥ दर्शनमनुभवः । तस्य शास्त्रे श्रुतस्य शास्त्रमेव करणं कल्प्यं सन्निधानात् । तथा च शास्त्रकरणको विद्वदनुभव उपासनास्तुत्यर्थ उच्यत इत्यर्थः । तस्मादुपकोसलविद्यावाक्यमुपास्ये ब्रह्मणि समन्वितमिति सिद्धम् ॥ १७ ( ४ ) ॥ बृहदारण्यकवाक्यमुदाहरति-**य इति** ॥ अतर्न्यामिब्रा-

भामती ।

सनाऽन्यत्र दृष्टचरी, ब्रह्मणस्तु तत्र श्रुतपूर्वेत्यर्थः । भीषा भिया । अस्मात् ब्रह्मणः । शेषमतिरोहितार्थम् ॥ १७ ॥ **अन्तर्याम्यधिदवादिषु तद्धर्मव्यपदेशात्** । 'स्वकर्मोपार्जितं देहं तेनान्यच्च नियच्छति । तक्षादिरशरीरस्तु नात्मान्तर्यामितां भजेत् ॥ १ ॥'. प्रवृत्तिनियमलक्षणं हि कार्यं चेतनस्य शरीरिणः स्वशरीरेन्द्रियादौ वा शरीरेण वा वास्यादौ दृष्टं नाशरीरस्य ब्रह्मणो भवितुमर्हति । न हि जातु वटाङ्कुरः कुटजबीजाज्जायते । तदनेन 'जन्माद्यस्य यतः' इत्येतदप्याक्षिप्तं वेदितव्यम् । तस्मात्परमात्मनः शरीरेन्द्रियादिरहितस्यान्तर्यामित्वाभावात्, प्रधानस्य वा पृथिव्याद्यभिमानवत्या देवताया वाणिमाद्यैश्वर्ययोगिनो वा जीवात्मनो वान्तर्यामिता स्यात् । तत्र यद्यपि प्रधानस्यादृष्टत्वाश्रुतत्वामतत्वाविज्ञातत्वानि सन्ति, तथापि तस्याचेतनस्य द्रष्टृत्वश्रोतृत्वमन्तृत्वविज्ञातृत्वानां श्रुतानाममभावात्, अनात्मत्वाच्च 'एष त आत्मा' इति श्रुतेरनुपपत्तेर्न प्रधानस्यान्तर्यामिता । यद्यपि पृथिव्याद्यभिमानिनो देवस्यात्मत्वमस्ति, अदृष्टत्वादयश्च सह द्रष्टृत्वादिभिरुपपद्यन्ते, शरीरेन्द्रियादियोगश्च, पृथिव्येव यस्यायतनमग्निर्लोको मनो ज्योतिः इत्यादिश्रुतेः, तथापि तस्य प्रतिनियतनियमनात् 'यः सर्वाँल्लोकानन्तरो यमयति यः सर्वाणि भूतान्यन्तरो यम-

आनन्दगिरीय-न्यायनिर्णयः ।

श्वरात्पवते चलति वायुरित्यर्थः । पक्षत्रयायोगे फलितमाह-**तस्मादिति** । ईश्वरेऽपि दृश्यत इत्ययुक्तं तस्यादृश्यत्वादित्याशंक्याऽऽह-**अस्मिन्निति** । उपलब्धिर्दर्शनं तत्र शास्त्रीयदर्शनस्य शास्त्रमेव संनिहितं करणमिति विद्वत्प्रसिद्धं शास्त्रीयमेव दर्शनं सिद्धवदनूद्यते, तत्राज्ञानामनुरागार्थमित्यर्थः । शास्त्रादीत्यादिपदं विद्वदनुभवार्थम् । तद्विषयदर्शनोक्तेरुपयोगमाह-**प्ररोचनेति** । उक्तं तत्त्वदर्शनमयोग्यमित्युक्ते न तद्दर्शने फलवति भवत्यभिरुचिरित्यर्थः । तदेवमुपकोसलवाक्यं सविशेषे ब्रह्मण्यन्वितमिति ॥ १७ ॥ ( ४ ) ॥ स्थानादिव्यपदेशसूत्रे पृथिव्यादीनि ब्रह्मणः स्थानानीत्युक्तं तदसिद्धिमाशंक्याऽऽह-**अन्तर्यामीति** ॥ अन्तर्यामिब्राह्मणमुदाहरति-**य इति** । मनुष्यादिभिर्देवादिभिश्चाधिष्ठितमिममम् च लोकं योऽन्तरो यमयति यश्च लोकद्वयवर्तीति भूतान्यन्तरः सन्यमयति तं किं वेत्थेत्यन्तर्यामिणमुपक्रम्य श्रुतमित्यर्थः । पृथिव्यां तिष्ठन्नन्तर्यामीत्युक्ते सर्वत्रापि चराचरे प्रसक्तावुक्तं-**पृथिव्या इति** ॥ तद्देवतां प्रत्याह-**यमिति** । ईश्वरस्याप्यकार्यकरणस्य न नियन्तृतेत्याशंक्याऽऽह-**यस्येति** । नियम्यकार्यकरणैरेव नियन्तृत्वम् । फलितमाह-**य इति** ॥ तस्याताटस्थ्यमाह-**एष इति** । ते मम चेत्यर्थः । आदिपदं योऽप्सु तिष्ठन्नित्यादिसंग्रहार्थम् ।

त्मान्तर्याम्यमृतः" [ बृ० ३ । ७।३ ] इत्यादि ॥ अत्राधिदैवतमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चिदन्तरवस्थितो यमयितान्तर्यामी श्रूयते ॥ स किमधिदेवाद्यभिमानी देवतात्मा कश्चित्, किंवा प्राप्ताणिमाद्यैश्वर्यः कश्चिद्योगी, किंवा परमात्मा, किंवाऽर्थान्तरं किञ्चिदित्यपूर्वसञ्ज्ञादर्शनात्संशयः ॥ किं तावन्नः प्रतिभाति ॥ सञ्ज्ञाया अप्रसिद्धत्वात्सञ्ज्ञिनाऽप्यप्रसिद्धेनार्थान्तरेण[2] केनचिद् भवितव्यमिति ॥ अथ वा नानिरूपितरूपमर्थान्तरं शक्यमस्तीत्यभ्युपगन्तुम् ॥ अन्तर्यामिशब्दश्चाऽन्तर्यमनयोगेन प्रवृत्तो नात्यन्तमप्रसिद्धः ॥ तस्मात्पृथिव्याद्यभिमानी कश्चिद्देवोऽन्तर्यामी स्यात् ॥ तथा च श्रूयते—"पृथिव्येव यस्यायतनमग्नि-

रत्नप्रभा ।

ह्मणे प्रतीयमानार्थमाह—**अत्रेति**॥"यः पृथिव्याम्" [बृ० ३।७।३] इत्यादिना देवताः पृथिव्याद्या अधिकृत्य यमयिता श्रूयते।**तथा** यः सर्वेषु लोकेष्विति **अधिलोकम्**।यः सर्वेषु वेदेष्विति—**अधिवेदम्** । यः सर्वेषु यज्ञेष्विति **अधियज्ञम्** । यः सर्वेषु भूतेष्विति—**अधिभूतम्**॥"यः प्राणे तिष्ठन्"[बृ० ३।७।१६]इत्यादि"य आत्मनि" [बृ०।३।७।] इत्यन्तमध्यात्मं चेति विभागः । अशरीरस्य नियन्तृत्वसम्भवासम्भवाभ्यां संशयः पूर्वत्रेश्वरस्याक्षिस्थानत्वसिद्धये पृथिव्यादिस्थाननिर्देशो दृष्टान्त उक्तः । त स्य दृष्टान्तवाक्यस्येश्वरपरत्वमत्राक्षिप्य समाधीयत इति आक्षेपसङ्गतिः । अतः पूर्वफलेनास्य फलवत्त्वम् । अवान्तरफलं तु **पूर्वपक्षे** अनीश्वरोपास्तिः **सिद्धान्ते** प्रत्यग्ब्रह्मज्ञानमिति मन्तव्यम् । स्वयमेवारुचिं वदन् पक्षान्तरमाह—**अथ वेति ॥** अनिश्चितार्थे फलाभावेनाफलस्य वेदार्थत्वायोगादिति भावः ॥ **तथा चेति । यस्य** देवस्य । **आयतनं**

भामती ।

यति' इति श्रुतिविरोधादनुपपत्तेः, योगी तु यद्यपि लोकभूतवशितया सर्वाँल्लोकान्सर्वाणि च भूतानि नियन्तुमर्हति तत्रतत्रानेकविधदेहेन्द्रियादिनिर्माणेन 'स एकधा भवति त्रिधा भवति' इत्यादिश्रुतिभ्यः, तथापि 'जगद्व्यापारवर्जं प्रकरणात्' इति वक्ष्यमाणेन न्यायेन विकारविषये विद्यासिद्धानां व्यापाराभावात्सोऽपि नान्तर्यामी । तस्मात्पारिशेष्याज्जीव एव चेतनो देहेन्द्रियादिमान् द्रष्टृत्वादिसंपन्नः स्वयमदृश्यादिः स्वात्मनि वृत्तिविरोधात् । अमृतश्च, देहेन्द्रियादिनाशेऽप्यनाशात् । अन्यथामुष्मिकफलोपभोगाभावेन कृतविप्रणाशाकृताभ्यागमप्रसङ्गात् । 'य आत्मनि तिष्ठन्' इति चाभेदेऽपि कथंचिद्भेदोपचारात् 'स भगवः कस्मिन्प्रतिष्ठितः स्वे महिम्नि'इतिवत् । 'यमात्मा न वेद' इति च स्वात्मनि वृत्तिविरोधाभिप्रायम्।

आनन्दगिरीय—न्यायनिर्णयः ।

आपातिकं[1] श्रुत्यर्थमाह—**अत्रेति** । यः पृथिव्यामित्याद्यधिदैवतम् । यः सर्वेषु लोकेष्वित्यधिलोकम् । यः सर्वेषु वेदेष्वित्यधिवेदम् । यः सर्वेषु यज्ञेष्वित्यधियज्ञम् । यः सर्वेषु भूतेष्वित्यधिभूतम् । यः प्राणेष्वित्यादि य आत्मनीत्यन्तमध्यात्ममिति भेदः । अदेहस्य नियन्तृत्वासंभवसंभवाभ्यां संशयमाह—**स किमिति** । अर्थान्तरे संदिह्यमाने हेतुमाह—**अपूर्वेति** । दृश्यत इति श्रुतिर्बहुतरलिङ्गाद्यनुरोधेनार्थविशेषपरतया नीताऽत्र त्वन्तर्यामिशब्दस्याप्रसिद्धार्थत्वान्नार्थो निर्णीतो डित्थादिशब्दवदित्याह—**किं तावदिति** । अन्तर्यामिब्राह्मणस्य सविशेषे ब्रह्मण्यन्वयोक्तेः संगतयः । पूर्वपक्षे विशिष्टस्य योगिनोऽन्तर्यामिणः सिद्धान्ते परस्यैव तस्योपास्तिरिति फलम् । तत्र पूर्वपक्षाभासमाह—**संज्ञाया इति** । अध्ययनविध्युपात्तस्य पुमर्थान्वयध्रौव्यादनिर्धारितस्य तदयोगादन्तर्यामिरूपं निर्धारणीयमिति पक्षान्तरमाह—**अथ वेति** । अप्रसिद्धत्वात्संज्ञायाः संज्ञिनाऽपि तथा भाव्यं व्याप्तेरित्याशंक्याऽऽह—**अन्तर्यामीति** । अर्थान्तरायोगे फलितमाह—**तस्मादिति** । तत्र शाकल्यवाक्यं प्रमाणयति—**तथा चेति** । आयतनं शरीरं लोको लोक्यतेऽनेनेत्यसाधारणं ज्योतिः

१ आपाततः श्रुत्यर्थमाह—अत्रेति । २ [illegible] पाठान्तरम् ।

लोको मनो ज्योतिः" [ बृ० ३ । ९ । २६ ] इत्यादि ॥ स च कार्यकरणवत्त्वात्पृथिव्यादीनन्तस्तिष्ठन्यमयतीति युक्तं देवात्मनो यमयितृत्वम् ॥ योगिनो वा कस्यचित्सिद्धस्य सर्वानुप्रवेशेन यमयितृत्वं स्यात् ॥ न तु परमात्मा प्रतीयेत ॥ अकार्यकरणवत्त्वादित्येवं प्राप्ते-इदमुच्यते ॥ योऽन्तर्याम्यधिदैवादिषु श्रूयते स परमात्मैव स्यान्नान्य इति ॥ कुतः ॥ तद्धर्मव्यपदेशात्-तस्य हि परमात्मनो धर्मा इह निर्दिश्यमाना दृश्यन्ते ॥ पृथिव्यादि तावदधिदैवादिभेदभिन्नं समस्तं विकारजातमन्तस्तिष्ठन्यमयतीति परमात्मनो यमयितृत्वं धर्म उपपद्यते ॥ सर्वविकारकारणत्वे सति सर्वशक्त्युपपत्तेः । "एष त आत्मान्तर्याम्यमृतः" [ बृह० ३ । ७।३ ] इति चात्मत्वामृतत्वे मुख्ये परमात्मन उपपद्येते ॥ "यं पृथिवी न वेद" [ बृह० ३ । ७ । ३ ] इति च पृथिवीदेवताया अविज्ञेयमन्तर्यामिणं ब्रुवन्देवतात्मनोऽन्यमन्तर्यामिणं दर्शयति ॥ पृथिवीदेवता ह्यहमस्मि पृथिवीत्यात्मानं विजानीयात् ॥ तथा "अदृष्टः" [ बृ० ३ । ७ । ३ ] "अश्रुतः" [ बृ० ३ । ७ । ३ ] इत्यादिव्यपदेशो रूपादिविहीनत्वात् परमात्मन उपपद्यत इति ॥ यत्तु कार्यकरणहीनस्य परमात्मनो यमयितृत्वं नोपपद्यत इति ॥ नैष दोषः ॥

---

रत्नप्रभा ।

शरीरम् । लोक्यतेऽनेनेति लोकः चक्षुः । ज्योतिः सर्वार्थप्रकाशकं मन इत्यर्थः । उपक्रमादिनाऽन्तर्याम्यैक्यनिश्चयादनेकदेवपक्षो न युक्त इत्यरुचेराह-योगिनो वेति ॥ आगन्तुकसिद्धस्यान्तर्यामित्वे सिद्धसाधनकल्पनागौरवान्नित्यसिद्ध एवान्तर्यामीति सिद्धान्तयति-एवं प्राप्त इति ॥ देवतानिरासे हेत्वन्तरमाह-यं पृथिवीति ॥ ईश्वरो न नियन्ताऽशरीरत्वाद्घटवदित्युक्तं निरस्यति-नैष दोष इति ॥ नियम्यातिरि-

भामती ।

'यस्यात्मा शरीरम्' इत्यादि च सर्वं 'स्वे महिम्नि' इतिवद्योजनीयम् । यदि पुनरात्मनोऽपि नियन्तुरन्यो

आनन्दगिरीय-न्यायनिर्णयः ।

साधारणं करणं सशरीरा देवता चक्षुर्मनोभ्यां सर्वं वेत्तीत्यर्थः । यस्तं विद्यात्स एव वेदितेत्यादि ग्रहीतुमादिपदम् । ईश्वरेऽपि सर्वमिदं स्यादित्याशंक्याऽऽह-स चेति । उपक्रमोपसंहाराभ्यामेकस्मिन्नन्तर्यामिणि सिद्धे कथं पृथिव्याद्यनेकदेवतोक्तिरित्याऽऽह-योगिनो वेति । यदनुग्रहाद्योगिनो नियमनादिसामर्थ्यं स किमित्युपेक्ष्यते तत्राऽऽह-न त्विति । विशिष्टस्य योगिनोऽन्तर्यामिणो ध्यानार्थं ब्राह्मणमित्युपसंहर्तुमितिशब्दः । सिद्धान्तयति-एवमिति । प्रतिज्ञातेऽर्थे प्रश्नपूर्वकं हेतुमुपस्थाप्य व्याचष्टे-कुत इति । इहेत्यन्तर्यामिग्रहणम्, के ते परस्यासाधारणा धर्मा येऽन्तर्यामिणि व्यपदिश्यन्ते तत्र सर्वनियन्तृत्वं तावदाह-पृथिव्यादीति । साधनाधीनशक्त्या तद्वतो ज्ञाने तद्धियोपेक्षणाद्धीगौरवान्नित्यसिद्धशक्त्येश्वरग्रहे लाघवात्तस्यैव सर्वनियन्तृतेति भावः । परस्यैवासाधारणधर्मद्वयमाह-एष इति । देवपक्षे दोषान्तरमाह-यमिति । एकस्य कर्मकर्तृत्वायोगात्पृथिव्यपि देवता न स्वात्मानं जानीयादिति कुतस्ततोऽन्यत्वं तत्राऽऽह-पृथिवीति । अहमित्यात्मधीः सर्वेषामनुभवसिद्धा देवतायामपि नापह्नोतुं शक्येत्यर्थः । इतोऽपि परमात्मैवान्तर्यामीत्याह-तथेति । अकार्यकरणत्वान्न परोऽन्तर्यामी घटवदित्युक्तमनुवदति-यत्त्विति । किमीश्वरस्य नियम्यातिरिक्तदेहादिराहित्यं वा देहाद्यसंबन्धो वा तत्राभोक्तृत्वं वा हेतू क्रियते । नाऽऽद्यः । तक्षादेः स्वदेहादिनियमने देहान्तराद्यभावेन व्यभिचारात् । द्वितीये स्वाविद्यार्जितदेहादेरीश्वरेण संबन्धादसिद्धिः । तृतीये त्वभोक्तृत्वादीश्वरो न नियन्तेत्यत्राचेतनत्वमुपाधिः । न च मुक्तात्मसु साध्याव्याप्तिः । तेषामीश्वराभेदेन पक्षत्वादिति विवक्षन्नाह-नैष इति । ईश्वरस्य नियन्तृत्वे कार्यकारणवत्त्वमपि शक्यम-

यान्नियच्छति तत्कार्यकरणैरेव तस्य कार्यकरणवत्त्वोपपत्तेः ॥ तस्याप्यन्यो नियन्तेत्यनवस्थादोषश्च न सम्भवति । भेदाभावात् ॥ भेदे हि सत्यनवस्थादोषोपपत्तिः ॥ तस्मात्परमात्मैवान्तर्यामी ॥ १८ ॥

## न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

स्यादेतद् अदृष्टत्वादयो धर्माः सांख्यस्मृतिकल्पितस्य प्रधानस्याप्युपपद्यन्ते ॥ रूपादिहीनतया तस्य तैरभ्युपगमात्—"अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः" [ मनुस्मृ० १ । ५ ] इति हि स्मरन्ति ॥ तस्यापि नियन्तृत्वं सर्वविकारकारणत्वादुपपद्यते ॥ तस्मात्प्रधानमन्तर्यामिशब्दं स्यात् ॥

रत्नप्रभा ।

क्षशरीरशून्यत्वं वा हेतुः, शरीरासम्बन्धित्वं वा । आद्ये स्वदेहनियन्तारि जीवे व्यभिचारः । द्वितीयस्तु—असिद्धः । ईश्वरस्य स्वाविद्योपार्जितसर्वसम्बन्धित्वादित्याह—यान्नियच्छतीति ॥ सशरीरो नियन्तेति लोकदृष्टिमनुसृत्यैतदुक्तम् । वस्तुतस्तु चेतनसान्निध्याज्जडस्य व्यापारो नियमनम् । तच्छक्तिमत्त्वं नियन्तृत्वम् । तच्चाचिन्त्यमायाशक्तेश्चिदात्मनः शरीरं विनैवोपपन्नम् । कार्यकरणसंघातात्मको देहो ग्राह्यः । तेन लिङ्गदेहस्य व्यावृत्तिः । ननु देहनियन्तुर्जीवस्यान्यो नियन्ता चेत् तस्याप्यन्यः, अत आह—इत्यनवस्थेति॥ निरंकुशं सर्वनियन्तृत्वमीश्वरस्य श्रुतम् । तस्या नियन्त्रन्तरानुमाने श्रुतिबाध इति नानवस्थेत्यर्थः । यद्वा ईश्वराद्भेदकल्पनया जीवस्य नियन्तृत्वोक्तेः सत्यभेदाभावान्नानवस्थेत्यर्थः ॥१८॥ प्रधानं महदादिक्रमेण कथं प्रवर्तेत इति तर्कस्याविषय इत्याह—अप्रतर्क्यमिति ॥ रूपादिहीनत्वादविज्ञेयं सर्वतो दिक्षु प्रसुप्तमिव

भामती ।

नियन्ता भवेत् वेदिता वा ततस्तस्याप्यन्य इत्यनवस्था स्यात् । सर्वलोकभूतनियन्तृत्वं च जीवस्यादृष्टद्वारा । तदुपार्जितौ हि धर्माधर्मौ नियच्छत इत्यनया द्वारा जीवो नियच्छति । एकवचनं च जात्यभिप्रायम् । तस्माज्जीवात्मैवान्तर्यामी, न परमात्मेति । एवं प्राप्तेऽभिधीयते—'देहेन्द्रियादिनियमे नास्य देहेन्द्रियान्तरम् । तत्कर्मोपार्जितं तच्चेत्तदविद्यार्जितं जगत् ॥' श्रुतिस्मृतीतिहासपुराणेषु तावदत्रभवतः सर्वज्ञस्य सर्वशक्तेः परमेश्वरस्य जगद्योनित्वमवगम्यते । न तत्पृथग्जनसाधारण्यानुमानाभासेनागमविरोधिना शक्यमपह्नोतुम् । तथा च सर्वं विकारजातं तदविद्याशक्तिपरिणामस्तस्य शरीरेन्द्रियस्थाने वर्तत इति यथायथं पृथिव्यादिदेवतादिकार्यकरणैस्तानेव पृथिव्यादिदेवतादीञ्छक्नोति नियन्तुम् । न चानवस्था । न हि नियन्त्रन्तरं तेन नियम्यते, किंतु यो जीवो नियन्ता लोकसिद्धः स परमात्मैवोपाध्यवच्छेदकल्पितभेदस्तथा व्याख्यायत इत्यसकृदावेदितं, तत् नियन्त्रन्तरं, कुतश्चानवस्था । तथा च 'नान्योऽतोऽस्ति द्रष्टा' इत्याद्या अपि श्रुतय उपपन्नार्थाः ।

आनन्दगिरीय—न्यायनिर्णयः ।

स्मदादिवदनुमातुमित्याशंक्य नियम्यकार्यकरणवत्त्वे सिद्धसाधनमतिरिक्तवत्त्वे श्रुतिविरुद्धतेत्याह—यानिति । स्वदेहादिनियन्तुरपि जीवस्यान्यो नियन्ता चेत्तस्याप्यन्यो नियन्ता स्यादविशेषादित्याशंक्याऽऽह—तस्यापीति । निरंकुशं सर्वनियन्तृत्वं श्रौतम् । न च तादृशि सर्वनियन्तरि भेदः । न चानुमानं श्रुतिबाधितमुत्तिष्ठति तन्नानवस्थेत्यर्थः । योगिपक्षे तु स्यादनवस्थेत्याह—भेदे हीति । तत्रापि नियन्तृत्वं क्वापि तिष्ठति चेदिष्टसिद्धिरिति भावः । सूत्रार्थमुपसंहरति—तस्मादिति ॥ १८ ॥ सूत्रव्यावर्त्यां शंकामाह—स्यादेतदिति । यौक्तिकेऽर्थे स्मृतिमपि संवादयति—अप्रतर्क्यमिति । इत्थं महदादिरूपेण प्रधानं किमिति प्रवर्तते कस्मान्नान्यथेति तर्कस्याविषयो गूढत्वादित्यर्थः । रूपादिराहित्यादविज्ञेयं चक्षुराद्यग्राह्यं प्रसुप्तमिव सर्वतः सर्वासु दिक्षु जडिमव्याप्तमित्यर्थः । कथं तस्याचेतनस्यान्तर्यामित्वं तत्राऽऽह—तस्येति । अदृष्टत्वादीनां प्रधाने संभवे फलितमाह—तस्मादिति । प्रागेव प्रत्युक्तं प्रधानं किमिति पुनः शंक्यते तत्राऽऽह—

ईक्षतेर्नाशब्दमित्यत्र निराकृतमपि सत्प्रधानमिहादृष्टत्वादिव्यपदेशसम्भवेन पुनराशङ्क्यते ॥ अत उत्तरमुच्यते—न च स्मार्तं प्रधानमन्तर्यामिशब्दं भवितुमर्हति ॥ कस्मात् ॥ अतद्धर्माभिलापात् ॥ यद्यप्यदृष्टत्वादिव्यपदेशः प्रधानस्य सम्भवति ॥ तथापि न द्रष्टृत्वादिव्यपदेशः सम्भवति ॥ प्रधानस्याचेतनत्वेन तैरभ्युपगमात् ॥ "अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाता" [बृ० ३।७।२३] इति हि वाक्यशेष इह भवति ॥ आत्मत्वमपि न प्रधानस्योपपद्यते ॥१९॥ ॥ यदि प्रधानमात्मत्वद्रष्टृत्वाद्यसम्भवान्नान्तर्याम्यभ्युपगम्यते, शारीरस्तर्ह्यन्तर्यामी भवतु ॥ शारीरो हि चेतनत्वाद्द्रष्टा श्रोता मन्ता विज्ञाता च भवति ॥ आत्मा च प्रत्यक्त्वात् ॥ अमृतश्च धर्माधर्मफलोपभोगोपपत्तेः ॥ अदृष्टत्वादयश्च धर्माः शारीरे सुप्रसिद्धाः ॥ दर्शनादिक्रियायाः कर्तरि प्रवृत्तिविरोधात् । "न दृष्टेर्द्रष्टारं पश्येः" [बृ० ३।४।२] इत्यादिश्रुतिभ्यश्च । तस्य च

---

रत्नप्रभा ।

तिष्ठति । जडत्वादित्यर्थः । अतद् अप्रधानं चेतनं तस्य धर्माणामभिधानादिति हेत्वर्थः ॥ १९ ॥ उत्तरसूत्रनिरस्याशंकामाह—यदि प्रधानमित्यादिना ॥ अमृतश्चेति । विनाशिनो देहान्तरभोगानुपपत्तेरित्यर्थः । यथा—देवदत्तकर्तृकगमनक्रियाया ग्रामः कर्म न देवदत्तः, तथात्मकर्तृकदर्शनादिक्रियाया अनात्मा विषयः । न त्वात्मा । क्रियायाः कर्तृविषयत्वायोगादित्याह—कर्तरीति ॥ क्रियायां गुणः कर्ता ।

भामती ।

परमार्थतोऽन्तर्यामिणोऽन्यस्य जीवात्मनो द्रष्टुरभावात् । अविद्याकल्पितजीवपरमात्मभेदाश्रयास्तु ज्ञातृज्ञेयभेदश्रुतयः, प्रत्यक्षादीनि प्रमाणानि, संसारानुभवः, विधिनिषेधशास्त्राणि च । एवं चाधिदैवादिष्वेकस्यैवान्तर्यामिणः प्रत्यभिज्ञानं समञ्जसं भवति, 'यः सर्वाँल्लोकान्' 'यः सर्वाणि भूतानि' इत्यत्र य इत्येकवचनमुपपद्यते । अमृतत्वं च परमात्मनि समञ्जसं नान्यत्र । 'य आत्मनि तिष्ठन्' इत्यादौ चाभेदेऽपि भेदोपचारक्लेशो न भविष्यति । तस्मात्परमात्मान्तर्यामी न जीवादिरिति सिद्धम् । पृथिव्यादि स्तनयित्न्वन्तमधिदैवम् । 'यः सर्वेषु लोकेषु' इत्यधिलोकम् । 'यः सर्वेषु वेदेषु' इत्यधिवेदम् । 'यः सर्वेषु यज्ञेषु' इत्यधियज्ञम् । 'यः सर्वेषु भूतेषु' इत्यधिभूतम् । प्राणाद्यात्मान्तमध्यात्मम् । संज्ञाया अप्रसिद्धत्वादित्युपक्रममात्रं पूर्वः पक्षः ॥ १९ ॥ दर्शनादिक्रियायाः कर्तरि प्रवृत्तिविरोधात् । कर्तरि आत्मनि

आनन्दगिरीय—न्यायनिर्णयः ।

ईक्षतेरिति । प्रासङ्गिकशंकोत्तरत्वेन सूत्रमादाय व्याकरोति—अत इति । अदृष्टत्वादिसंभवात्प्रधानस्यान्तर्यामित्वमुक्तमित्याशंक्य हेतुमाह—कस्मादिति । हेत्वसिद्धिं शंकित्वा तदर्थमाह—यद्यपीति । अन्तर्यामिणि द्रष्टृत्वादिव्यपदेशं दर्शयति—अदृष्ट इति । इहेति ब्राह्मणोक्तिः । प्रधानपक्षे दोषान्तरमाह—आत्मत्वमिति ॥ १९ ॥ उत्तरसूत्रव्यावर्त्यां शंकामाह—यदीति । द्रष्टृत्वाद्यसंभवस्य तत्रापि तुल्यत्वमाशंक्योक्तं—शारीरो हीति । तथाऽपि कथं तत्रामृतत्वं स हि देहापाये म्रियते तत्राऽऽह—अमृतश्चेति । अन्यथाऽकृताभ्यागमादिप्रसङ्गात्, "जीवापेतं वाव" इत्यादिश्रुतेश्चेत्यर्थः । तथाऽपि कथमदृष्टत्वादीनां तत्रोपपत्तिस्तत्राह—स्याह्यंधीव्याप्यत्वात्तत्राऽऽह—अदृष्टत्वेति । सकर्मिका क्रिया कर्म व्याप्नोति न कर्तारं, तेन कर्तर्यात्मनि दर्शनादिवृत्तौ कर्तृत्वेन गुणत्वं कर्मत्वेन प्राधान्यं चेत्येकस्यां क्रियायां युगपद्गुणप्रधानत्वविरोधादिति हेतुमाह—दर्शनादीति । जीवस्यादृष्टत्वादयो न केवलं यौक्तिकाः किंतु श्रौताश्चेत्याह—नेति । लौकिक्या दृष्टेर्बुद्धिपरिणतेर्द्रष्टारमात्मानं तयैव दृष्ट्या त्वं न पश्येर्न शक्नोषि द्रष्टुमित्यर्थः । न श्रुतेः श्रोतारमित्यादिसंग्रहार्थमादिपदम् । तथाऽपि कथं तस्यान्तर्यामित्वं नियम्यनिविष्टत्वात्तत्राऽऽह—तस्येति । अन्तर्यामिधर्माणां शारीरे

कार्यकरणसंघातमन्तर्यमयितुं शीलम् । भोक्तृत्वात् ॥ तस्माच्छारीरो-ऽन्तर्यामीति ॥ अत उत्तरं पठति–

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

नेति पूर्वसूत्रादनुवर्तते ॥ शारीरश्च नान्तर्यामी इष्यते ॥ कः स्यात् ॥ यद्यपि द्रष्टृत्वादयो धर्मास्तस्य सम्भवन्ति ॥ तथापि घटाकाशवदुपाधि-परिच्छिन्नत्वान्न स कार्त्स्न्येन पृथिव्यादिष्वन्तरवस्थातुं नियन्तुं च श-क्नोति ॥ अपि च–उभयेऽपि हि शाखिनः काण्वा माध्यन्दिनाश्चान्तर्या-मिणो भेदेनैनं शारीरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधी-यते । "यो विज्ञाने तिष्ठन्" [ बृ० ३ । ७ । २२ ] इति काण्वाः । "य आत्मनि तिष्ठन्" इति माध्यन्दिनाः । "य आत्मनि तिष्ठन्" इत्यस्मिंस्तावत्पाठे भवत्यात्मशब्दः शारीरस्य वाचकः ॥ "यो विज्ञाने तिष्ठन्" इत्यस्मिन्नपि पाठे विज्ञानशब्देन शारीर उच्यते ॥ विज्ञानमयो हि शारीरः ॥ तस्माच्छारीरादन्य ईश्वरोऽन्तर्यामीति सिद्धम् ॥ कथं पुनरेकस्मिन्देहे द्वौ द्रष्टारावुपपद्येते । यश्चायमीश्वरोऽन्त-र्यामी यश्चायमितरः शारीरः ॥ का पुनरिहानुपपत्तिः "नान्योऽतोऽस्ति द्रष्टा" [ बृ० ३ । ७ । २३ ] इत्यादि श्रुतिवचनं विरुध्येत ॥ अत्र हि प्रकृ-तादन्तर्यामिणोऽन्यं द्रष्टारं श्रोतारं मन्तारं विज्ञातारं चात्मानं प्रतिषे-

---

रत्नप्रभा ।

प्रधानं कर्म । तत्रैकस्यां क्रियायामेकस्य गुणत्वप्रधानत्वयोर्विरोधान्न कर्तुः कर्मत्वमित्यर्थः, ॥ दृष्टेः द्रष्टारम् आत्मानं तया दृश्यया दृष्टया न विषयीकुर्या इत्यादिश्रुतेश्चादृष्टत्वादिधर्माः शारीरस्येत्याह– नेतीति ॥ अपिशब्दसूचितहेतुमुक्त्वा कण्ठोक्तं हेतुमाह–अपि चोभयेऽपीति ॥ भेदेनेति सूत्रात्तात्त्विकभेदे भ्रान्तिं निरसितुं शंकते–कथमिति ॥ नन्वत्रैको भोक्ता जीवः, ईश्वरस्त्वभोक्तेति, न विरोध इति शङ्कते– का पुनरिति ॥ तयोर्भेदः श्रुतिविरुद्ध इति पूर्ववाद्याह–नान्य इति ॥ स एव श्रुत्यर्थमाह–अत्रेति ॥ श्रुतेः

भामती ।–०

आनन्दगिरीय–न्यायनिर्णयः ।

संभावनाफलमाह–तस्मादिति । सूत्रमवतारयति–अत इति । अपेक्षितं पूरयित्वा प्रतिज्ञां विभजते– नेत्यादिना । चकारादनुवृत्तिर्द्रष्टृत्वादिधर्माणां संभवात्तदन्तर्यामित्वं दुर्वारमिति शंकते–कस्मादिति । चशब्दसूचितं ब्रुवन्परिहरति–यद्यपीति । उभयेऽपीत्यादि व्याकरोति–अपि चेति । माध्यंदिनपाठे भेदोक्तिं व्यनक्ति–य आत्मनीति । काण्वानां पाठे भेदोक्तिं व्यनक्ति–यो विज्ञान इति । काण्वपाठे शारीरवाचिपदाभावात्कुतो भेदोक्तिस्तत्राऽऽह–विज्ञानेति । विज्ञानशब्दस्य बुद्ध्यर्थस्य कथं शारीरे वृत्ति-रित्याशङ्क्य रूढ्यभावेऽपि वृत्त्यन्तरमाह–विज्ञानेति । भेदोक्तिफलमाह–तस्मादिति । भेदेनेत्यादिसूत्रा-त्तात्त्विकभेदाशङ्कां निरसितुं शङ्कते–कथमिति । द्रष्टृद्वयमेव विशिनष्टि–यश्चेति । न खल्वेकस्मिन्देहे द्रष्टृद्वयं युक्तं विरुद्धाभिप्रायानेकचेतनाधिष्ठितस्य देहस्याव्यवस्थितत्वप्रसङ्गादित्यर्थः । कश्चित्कार्यकरणसंहतो भोक्ता तद्रहितोऽन्योऽधिष्ठाता पश्यत्येवेति विभागे नावद्यमिति शंकते–का पुनरिति । अनुपपत्तिमाह– नेति । विरोधं स्फोरयितुं प्रतीतमर्थमाह–अत्रेति । अस्मिन्याम्ये मैत्र एवाद्वितीय इतिवत्तत्तुल्यद्रष्ट्रन्तर-

धति ॥ नियन्त्रन्तरप्रतिषेधार्थमेतद्वचनमिति चेत् ॥ न ॥ नियन्त्रन्तराप्रसङ्गात्। अविशेषश्रवणाच्च ॥ अत्रोच्यते ॥ अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशः। न पारमार्थिकः॥ एको हि प्रत्यगात्मा भवति। न द्वौ प्रत्यगात्मानौ सम्भवतः ॥ एकस्यैव तु भेदव्यवहार उपाधिकृतः। यथा—घटाकाशो महाकाश इति ॥ ततश्च ज्ञातृज्ञेयादिभेदश्रुतयः प्रत्यक्षादीनि च प्रमाणानि संसारानुभवो विधिप्रतिषेधशास्त्रं चेति सर्वमेतदुपपद्यते ॥ तथा च श्रुतिः—"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" [बृ० २। ४। १४] इत्यविद्याविषये सर्वव्यवहारं दर्शयति॥ "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं जिघ्रेत्तत्केन कं पश्येद्" [बृ० २। ४। १४] इति विद्याविषये सर्वव्यवहारं वारयति ॥ २० ॥ इत्यन्तर्याम्यधिकरणम् ॥ ५ ॥

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥ (६) ॥

"अथ परा। यया तदक्षरमधिगम्यते" [मुण्ड० १।१।५] "यत्तदद्रेश्य-

---

रत्नप्रभा।

रर्थान्तरमाशंक्य निषेधति—नियन्त्रन्तरेत्यादिना ॥ न केवलमप्रसक्तप्रतिषेधः। किन्त्वविशेषेण द्रष्ट्रन्तरनिषेधश्रुतेरन्तर्याम्यन्तरनिषेधार्थत्वे बाधश्चेत्याह—अविशेषेति ॥ तस्मात्सूत्रे "य आत्मनि तिष्ठन्" इति श्रुतौ च द्रष्टृभेदोक्तिर्युक्ता"नान्यः"इति वाक्यशेषे भेदनिरासादिति प्राप्तभेद उपाधिकल्पितः श्रुतिसूत्राभ्यामनूद्यत इति समाधत्ते—अत्रोच्यत इति ॥ भेदः सत्यः किं न स्यादत आह—एको हीति ॥ गौरवेण द्वयोरहन्धीगोचरत्वासम्भवादेक एव तद्गोचरः। तदगोचरस्य घटवदनात्मत्वान्नात्मभेदः सत्य इत्यर्थः॥ ततश्चेति। कल्पितभेदाङ्गीकाराद्भेदापेक्षं सर्वं युज्यत इत्यर्थः। तस्मादन्तर्यामिब्राह्मणं ज्ञेये ब्रह्मणि समन्वितमिति सिद्धम् ॥ २० ॥ (५) ॥ मुण्डकवाक्यमुदाहरति—अथेति ॥ कर्मविद्यारूपापरविद्योक्त्यनन्तरम्। यया निर्गुणं ज्ञायते परा सोच्यते॥ तामेव विषयोक्त्या निर्दिशति—यत्तदिति ॥ अद्रेश्यम्

भामती।

प्रवृत्तिविरोधादित्यर्थः ॥२०॥ (५) ॥ अदृश्यत्वादिगुणको धर्मोक्तेः। अथ परा। यया तदक्षरमधिगम्यते। यत्तदद्रेश्यं बुद्धीन्द्रियाविषयः। अग्राह्यं कर्मेन्द्रियागोचरः। अगोत्रं कारणरहितम्। अवर्णं

आनन्दगिरीय-न्यायनिर्णयः।

निवारकमेव तदिति—शंकते—नियन्त्रन्तरेति। सर्वनियन्तुः स्वनियन्त्रानियन्तव्यत्वशंकाभावान्नान्योऽतोऽस्ति नियन्ता द्रष्टेतिविशेषाश्रुतेश्च नैवमित्याह—नेति। आत्मनि तिष्ठन्नित्यौपाधिकभेदार्थं वाक्यं नान्योऽतोऽस्तीति तु तत्त्वविषयमिति परिहरति—अत्रेति। भेदोक्तेस्तत्त्वविषयत्वं निषेधोक्तेश्चातत्त्वविषयतेति वैपरीत्यमाशंक्याऽऽह—एको हीति। प्रत्यक्त्वात्मत्वयोरेकत्रैव मुख्यत्वादित्यर्थः। एकत्वमेव तत्त्वं चेत्कुतो भेदोक्तिस्तत्राऽऽह—एकस्येति। औपाधिकभेदोक्तिमुदाहरति—यथेति। तात्त्विकभेदाभावे कथं श्रुत्याद्युपपत्तिस्तत्राऽऽह—ततश्चेति प्राप्तृप्रास्यादिसंग्रहार्थमादिपदम्। आविद्याद्भेदाद्व्यवहारमात्रसिद्धावन्वयव्यतिरेकश्रुतिमाह—तथा चेति। आविद्यभेदानुवादेन नियन्तृनियम्यत्वम्। वस्तुतस्त्वद्वितीयः परमात्मा तत्राविद्यया सर्वनियन्तर्यन्वितमन्तर्यामिब्राह्मणं तस्यानुध्यानादापरोक्ष्यान्मोक्ष इति भावः॥ २० ॥ (५) ॥ अदृष्टत्वादीनां प्रधानगामित्वेऽपि द्रष्टृत्वादीनां तत्रायोगान्न तदन्तर्यामीत्युक्तम्। तर्हि भूतयोनिवाक्ये द्रष्टृत्वादीनामनुक्तेरदृश्यत्वादिगुणको भूतयोनिः प्रधानमेवेत्याशंक्याऽऽह—अदृश्यत्वादीति। अथर्वणवाक्यमाह—अथेति। अपरविद्योक्त्यनन्तरं या परा विद्योच्यते तां विशिनष्टि—ययेति। अक्षरं वर्णसमुदायाद्व्यवच्छिनत्ति—यदिति। अद्रेश्यमदृश्यं ज्ञानेन्द्रियाविषयोऽग्राह्यं कर्मेन्द्रियाविषयोऽगोत्रं वंशशून्य-

मग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः'' [ मुण्ड० १ । १ । ६ ] इति श्रूयते ॥ तत्र संशयः ॥ किमयमदृश्यत्वादिगुणको भूतयोनिः प्रधानं स्याद्, उत शारीरः, आहोस्वित् परमेश्वर इति ॥ तत्र प्रधानमचेतनं भूतयोनिरिति युक्तम् । अचेतनानामेव तत्र दृष्टान्तत्वेनोपादानाद्—''यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम्''

रत्नप्रभा ।

अदृश्यं ज्ञानेन्द्रियैः अग्राह्यं, कर्मेन्द्रियैश्च । गोत्रं वंशः, वर्णः ब्राह्मणत्वादिजातिः । चक्षुःश्रोत्रशून्यम्—अचक्षुश्श्रोत्रम् ॥ पाणिपादशून्यम् अपाणिपादं—ज्ञानकर्मेन्द्रियविकलमित्यर्थः । विभुं प्रभुम् । सुसूक्ष्मं दुर्ज्ञेयत्वात् । नित्याव्ययपदाभ्यां नाशापक्षययोर्निरासः । भूतानां योनिं प्रकृतिं, यत् पश्यन्ति, धीराः पण्डिताः, तद् अक्षरं, तद्विद्या परेत्यन्वयः । अदृश्यत्वादिगुणानां ब्रह्मप्रधानसाधारणत्वात् संशयः । पूर्ववद् द्रष्टृत्वादीनां चेतनधर्माणामत्राश्रुतेरस्तु प्रधानमिति प्रत्युदाहरणेन पूर्वपक्षयति—तत्रेति ॥ पूर्वपक्षे प्रधानाद्युपास्तिः, सिद्धान्ते निर्गुणधीरिति फलम् । उर्णनाभिः लूताकीटः । तन्तून् स्वदेहात् सृजति उपसंहरति चेत्यर्थः । सतः जीवतः । ननु पूर्वं निरस्तं प्रधानं कथमुत्थाप्यते तत्राह—

भामती ।

ब्राह्मणत्वादिहीनम् । न केवलमिन्द्रियाणामविषयः । इन्द्रियाण्यप्यस्य न सन्तीत्याह—अचक्षुःश्रोत्रमिति । बुद्धीन्द्रियाण्युपलक्षयति । अपाणिपादमिति कर्मेन्द्रियाणि । नित्यं, विभुं प्रभुं, सर्वगतं, सुसूक्ष्मं दुर्विज्ञानत्वात् । स्यादेतत् । नित्यं सत्किं परिणामि नित्यं, नेत्याह—अव्ययम् । कूटस्थनित्यमित्यर्थः । 'परिणामो विवर्तो वा सरूपस्योपलभ्यते । चिदात्मना तु सारूप्यं जडानां नोपपद्यते ॥ १ ॥ जडं प्रधानमेवातो जगद्योनिः प्रतीयताम् । योनिशब्दो निमित्तं चेत्कुतो जीवनिराक्रिया ॥ २ ॥' परिणममानसरूपा एव हि परिणामा दृष्टाः । यथोर्णनाभिलालापरिणामा लूतातन्तवस्तत्सरूपाः, तथा विवर्ता अपि विवर्तमानसरूपा एव न विरूपाः । यथा रज्जुविवर्ता धारोरगादयो रज्जुसरूपाः । न जातु रज्ज्वां कुञ्जर इति विपर्यस्यन्ति । न च हेमपिण्डपरिणामो भवति लूतातन्तुः । तत्कस्य हेतोः अत्यन्तवैरूप्यात् । तस्मात्प्रधानमेव जडं जडस्य जगतो योनिरिति युज्यते । स्वविकारानश्नुत इति तदक्षरम् । 'यः सर्वज्ञः सर्ववित्, इति चाक्षरात्परात्परस्याख्यानम्, 'अक्षरात्परतः परः' इति श्रुतेः । न हि परस्मादात्मनोऽर्वाग्वि-

आनन्दगिरीय—न्यायनिर्णयः ।

अवर्णं जातिहीनम् । न केवलमिन्द्रियाविषयस्तद्धीनं चेत्याह—अचक्षुरिति । न विद्येते चक्षुःश्रोत्रे यस्य तत्तथा । चक्षुःश्रोत्रोक्तिरनुक्तज्ञानेन्द्रियोपलक्षणार्थम् । कर्मेन्द्रियराहित्यमाह—अपाणीति । पाणिश्च पादश्च पाणिपादं तन्नास्ति यस्य तत्तथा । उभयोक्तिरनुक्तकर्मेन्द्रियोपलक्षणम् । नित्यमनाशोपलक्षितसत्ताकम् । विभुं प्रभुं सर्वगतं सर्वकल्पनाधिष्ठानम् । सुसूक्ष्मं दुर्ज्ञानत्वात्तदव्ययमपक्षयाभावाद्यथोक्तमक्षरं भूतयोनिं भूतकारणं धीराः पण्डिताः पश्यन्ति तदक्षरं ययाऽधिगम्यते सा परा विद्येत्यर्थः । अदृश्यत्वादिसाधारणधर्मदृष्ट्या संशयमाह—तत्रेति । भूतयोनिः सप्तम्यर्थः । साधारणस्याप्यन्तर्यामिशब्दस्य लाघवसाहाय्यान्नियन्तृत्वादिनेश्वरपरत्वमुक्तम् । इहापि साधारणादृश्यत्वादिधर्मस्याचेतनदृष्टान्तोपादानबलात्प्रधाननिष्ठतेति पूर्वपक्षमाह—तत्रेति । भूतयोनिवाक्यस्य निर्विशेषे ब्रह्मण्यन्वयोक्तेः संगतयः । पूर्वपक्षे प्रधानस्य शारीरस्य वा ध्यानं सिद्धान्ते निर्विशेषवस्तुधीरिति फलम् । दृष्टान्तदार्ष्टान्तिकयोस्तुल्यतानियमाद्दृष्टान्तस्याचेतनत्वाद्दार्ष्टान्तिकस्यापि भूतयोनेरचेतनत्वमिति हेतुमाह—अचेतनानामिति । ऊर्णनाभिर्लूताकीटः । स्वदेहाव्यतिरिक्तिपयस्तन्तून्सृजत्युपसंहरति चेत्यर्थः । सतो विद्यमानाज्जीवत इति यावत् । इहेति

[मुण्ड० १।१।७] इति ॥ नन्वूर्णनाभिः पुरुषश्च चेतनाविह दृष्टान्तत्वेनोपात्तौ ॥ नेति ब्रूमः ॥ न हि केवलस्य चेतनस्य तत्र सूत्रयोनित्वं केशलोमयोनित्वं चास्ति ॥ चेतनाधिष्ठितं ह्यचेतनमूर्णनाभिशरीरं सूत्रस्य योनिः पुरुषशरीरं च केशलोम्नामिति प्रसिद्धम् ॥ अपि च पूर्वत्राऽदृष्टत्वाद्यभिलापसम्भवेऽपि द्रष्टृत्वाद्यभिलापासम्भवान्न प्रधानमभ्युपगतम् ॥ इह त्वदृश्यत्वादयो धर्माः प्रधाने सम्भवन्ति ॥ नात्र विरुध्यमानो धर्मः कश्चिदभिलप्यते ॥ ननु "यः सर्वज्ञः सर्ववित्" [मुण्ड० १।१।९] इत्ययं वाक्यशेषोऽचेतने प्रधाने न सम्भवति। कथं प्रधानं भूतयोनिः प्रतिज्ञायत इति ॥ अत्रोच्यते ॥ "यया तदक्षरमधिगम्यते"–"यत्तद्द्रेश्यम्" [मुण्ड० १।१।५–६] इत्यक्षरशब्देनादृश्यत्वादिगुणकं भूतयोनिं श्रावयित्वा पुनरन्ते श्रावयिष्यति–"अक्षरात्परतः परः" [मुण्ड० २।१।२] इति ॥ तत्र यः परोऽक्षरात् श्रुतः, सः–सर्वज्ञः सर्व-

रत्नप्रभा।

**अपि चेति** ॥ अत्र प्रधाने विरुध्यमानोऽसम्भावितो वाक्यशेषः श्रुत इति शङ्कते–**ननु य इति** ॥ पञ्चम्यन्ताक्षरश्रुत्या भूतप्रकृतेः प्रत्यभिज्ञानात् प्रथमान्तपरशब्दोक्तस्य जगन्निमित्तेश्वरस्य सर्वज्ञत्वादिकमित्याह-**अत्रोच्यत**

भामती।

कारजातस्य च परस्तात्प्रधानादृतेऽन्यदक्षरं संभवति। अतो यः प्रधानात्परः परमात्मा स सर्ववित्। भूतयोनिस्त्वक्षरं प्रधानमेव, तच्च सांख्याभिमतमेवास्तु। अथ तस्याप्रामाणिकत्वान्न तत्र परितुष्यति, अस्तु तर्हि नामरूपबीजशक्तिभूतमव्याकृतं भूतसूक्ष्मं, प्रधीयते हि तेन विकारजातमिति प्रधानं, तत्खलु जडमनिर्वाच्यमनिर्वाच्यस्य जडस्य प्रपञ्चस्योपादानं युज्यते, सारूप्यात्। ननु चिदात्मानिर्वाच्यः, विरूपो हि सः। अचेतनानामिति भाष्यं सारूप्यप्रतिपादनपरम्। स्यादेतत्। स्मार्तप्रधाननिराकरणेनैवैतदपि निराकृतप्रायं, तत्कुतोऽस्य शंकेत्यत आह–**अपि च पूर्वत्रादृष्टत्वादीति**। सति वाधकेऽस्यानाश्रयणं, इह तु वाधकं नास्तीत्यर्थः। तेन 'तदैक्षत' इत्यादावुपचर्यतां ब्रह्मणो जगद्योनिताऽविद्याशक्त्याश्रयत्वेन। इह त्वविद्याशक्तेरेव जगद्योनित्वसंभवे न द्वारद्वारिभावो युक्त इति प्रधानमेवात्र वाक्ये जगद्योनिरुच्यत इति पूर्वः पक्षः। अथ योनिशब्दो निमित्तकारणपरस्तथापि ब्रह्मैव निमित्तं न तु जीवात्मेति विनिगमनायां न हेतुरस्तीति संशयेन पूर्वः पक्षः। अत्रोच्यते–'अक्षरस्य जगद्योनिभावमुक्त्वा ह्यनन्तरम्। यः सर्वज्ञ

आनन्दगिरीय–न्यायनिर्णयः।

सर्गावस्थोक्तिः। दृष्टान्तमाक्षिप्य समाधत्ते–**नन्विति**। इहेत्यक्षराद्विश्वोत्पत्तावित्यर्थः। केवलचेतनस्य वा कारणत्वं चेतनाधिष्ठिताचेतनस्य वा? तत्राऽऽद्यं प्रत्याह–**न हीति**। शरीरस्यापि तत्रान्वयव्यतिरेकित्वादित्यर्थः। द्वितीयमङ्गीकरोति–**चेतनेति**। दार्ष्टान्तिकेऽपि चेतनाधिष्ठितं प्रधानं जगद्धेतुरिति भावः। पूर्वं प्रधानस्य प्रत्युक्तत्वात्कथं पुनस्तदाशंका, तत्राऽऽह–**अपि चेति**। इहेत्यत्रेति च भूतयोनिवाक्योक्तिः। विरुध्यमानत्वमप्रधानविषयत्वम्। यद्वाऽत्रेति प्रधानमुक्तम्। विरुध्यमानत्वं धर्मस्य तस्मिन्नसंभवित्वम्। स्वन्नाक्ये प्रधाने विरुद्धधर्माभावेऽपि वाक्यशेषे सोऽस्तीति शंकते–**नन्विति**। भूतयोनेरक्षरस्य पञ्चम्यन्ताक्षरश्रुत्या प्रत्यभिज्ञानात्प्रथमान्तपरशब्दोक्तस्य सर्वज्ञत्वादीति वाक्यशेषस्याक्षरातिरिक्तं विषयं दर्शयन्नाह–**अत्रेति**। अक्षरस्य जगद्योनित्वमुक्त्वा यः सर्वज्ञः सर्वविदिति सर्वज्ञस्य तदुक्तेर्लिङ्गप्रत्यभिज्ञानादक्षरस्यैव सर्वज्ञत्वादीति चेन्नाक्षरश्रुतिप्रत्यभिज्ञातो लिङ्गप्रत्यभिज्ञाया दुर्बलत्वाद्येनाक्षरं पुरुषं वेदेति चेतनेऽपि भूत-

१ वास्ति इति क्वचित्पुस्तके पाठः।

वित् च सम्भविष्यति । प्रधानमेव त्वक्षरशब्दनिर्दिष्टं भूतयोनिः ॥ यदा तु योनिशब्दो निमित्तवाची, तदा शारीरोऽपि भूतयोनिः स्यात् ॥ धर्माधर्माभ्यां भूतजातस्योपार्जनादिति ॥ एवं प्राप्तेऽभिधीयते ॥ योऽयमदृश्यत्वादिगुणको भूतयोनिः स परमेश्वर एव स्यान्नान्य इति ॥ कथमेतदवगम्यते । धर्मोक्तेः—परमेश्वरस्य हि धर्म इहोच्यमानो दृश्यते "यः सर्वज्ञः सर्ववित्" [ मुण्ड० १ । १ । ९ ] इति ॥ न हि प्रधानस्याचेतनस्य शारीरस्य वोपाधिपरिच्छिन्नदृष्टेः सर्वज्ञत्वं सर्ववित्त्वं वा सम्भवति ॥ नन्वक्षरशब्दनिर्दिष्टाद्भूतयोनेः परस्यैवैतत्सर्वज्ञत्वं सर्ववित्त्वं च, न भूतयोनिविषयमित्युक्तम् ॥ अत्रोच्यते ॥ नैवं सम्भवति ॥ यत्कारणम्—"अक्षरात्सम्भवतीह विश्वम्" [ मुण्ड० १ । १ । ७ ] इति प्रकृतं भूतयोनिमिह जायमानप्रकृतित्वेन निर्दिश्यानन्तरमपि जायमानप्रकृतित्वेनैव

रत्नप्रभा ।

इति ॥ सन्दिग्धे तु वाक्यशेषादिति न्यायेन सिद्धान्तयति—**एवं प्राप्त इति** ॥ चेतनाचेतनत्वेन सन्दिग्धे भूतयोनौ यः सर्वज्ञ इति वाक्यशेषादीश्वरत्वनिर्णय इत्युक्तम् । वाक्यशेषे भूतयोनेः प्रत्यभिज्ञापकाभावादिति शङ्कते—**नन्विति** ॥ "जनिकर्तुः प्रकृतिः" [ पाणि० १ । ४ । ३० ] इति सूत्रेण प्रकृतेरपादानसञ्ज्ञायां पञ्चमीस्मरणादक्षरात् सम्भवतीति प्रकृतित्वेनोक्ताक्षरस्य भूतयोनेर्वाक्यशेषे तस्मादिति प्रकृतित्वलिङ्गेन प्रत्यभिज्ञानमस्तीति समाधत्ते—**अत्रोच्यत इति** ॥ **एतत् कार्यं, ब्रह्म** सूक्ष्मात्मकं, **नामरूपं स्थूलं, ततोऽन्नं** व्रीह्यादीत्यर्थः । **यदुक्तं** पञ्चम्यन्ताक्षरश्रुत्या भूतयोनेः प्रत्यभिज्ञानादचेतन-

भामती ।

इति श्रुत्या सर्वज्ञस्य स उच्यते ॥ १ ॥ तेन निर्देशसामान्यात्प्रत्यभिज्ञानतः स्फुटम् । अक्षरं सर्वविद्विश्वयोनिर्नाचेतनं भवेत् ॥ २ ॥ अक्षरात्परत इति श्रुतिस्त्वव्याकृते मता । अश्नुते यत्स्वकार्याणि ततोऽव्याकृतमक्षरम् ॥ ३ ॥' नेह तिरोहितमिवास्ति किंचित् । यत्तु सारूप्याभावान्न चिदात्मनः परिणामः प्रपञ्च इति । अद्धा । 'विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः । अनादिवासनोद्भूतो न सारूप्यमपेक्षते ॥ १ ॥' न खलु बाह्यसारूप्यनिबन्धन एव सर्वो विभ्रम इति नियमनिमित्तमस्ति । आन्तरादपि कामक्रोधभयोन्मादस्वप्नादेर्मनसादपराधात्सारूप्यानपेक्षात्तस्यतस्य विभ्रमस्य दर्शनात् । अपि च हेतुमति विभ्रमे तदभावादनुयोगो युज्यते । अनाद्यविद्यातद्वासनाप्रवाहपतितस्तु नानुयोगमर्हति । तस्मात्

आनन्दगिरीय—न्यायनिर्णयः ।

योनौ श्रुत्या प्रत्यभिज्ञानाज्जगत्प्रकृतित्वलिङ्गानुगृहीतश्रुतिप्रत्यभिज्ञया केवलश्रुतिप्रत्यभिज्ञा बाध्येति चेत् । न । तस्मादिति निमित्तेऽपि पञ्चमीसंभवात् । न चैवमपि प्रत्यभिज्ञायाः साम्यमचेतनदृष्टान्तानुगृहीतप्रत्यभिज्ञाप्राबल्यात्तस्मात्प्रधानमेव भूतयोनिरित्याह—**प्रधानमेवेति**। सर्वज्ञाद्विवेकायात्र प्रधानं ग्राह्यमित्युक्त्वा जीवो देहाद्यतिरिक्तोऽभ्युदयनिःश्रेयसाप्तये निरूप्यतेऽत्रेति पक्षान्तरमाह—**यदेति** । योनिशब्दस्य प्रकृत्यर्थत्वे निमित्तार्थत्वे च प्रधानस्य सर्वज्ञाद्विविक्तस्य जीवस्य वा देहाद्यतिरिक्तस्य द्विविधपुमर्थाप्तये ध्यानार्थमेतदित्युपसंहर्तुमितिशब्दः । सिद्धान्तसूत्रमवतारयति—**एवमिति** । तत्र प्रतिज्ञां व्याचष्टे—**योऽयमिति** । प्रधानादौ संभवति नियमासिद्धिरित्याह—**कथमिति** । नियामकं हेतुमवतार्य व्याचष्टे—**धर्मेति** । भूतयोनिरिहेत्युक्तः । हेतोरन्यथासिद्धिं धुनीते—**न हीति** । 'अक्ताः शर्करा उपदधाति' इत्यत्र 'तेजो वै घृतम्'इति शेषान्निर्णयवदिहापि साधारणोपक्रमस्थस्यादृश्यत्वादेः शेषाद्ब्रह्मनिष्ठता निर्णेयेत्यर्थः । वाक्यशेषो भूतयोनिविषयो नेत्युक्तं स्मारयति—**नन्विति**। "जनिकर्तुः प्रकृतिः" इति स्मृतेरक्षरादिति पञ्चम्या जायमानप्रकृतित्वेनोक्तमक्षरं तस्मादेतद्ब्रह्मेत्यत्रापि पञ्चम्या प्रत्यभिज्ञायते तेन भूतयोन्यर्थ एव वाक्यशेष इत्याह—**अत्रेति** । तस्मादविशेषेण

सर्वज्ञं निर्दिशति-"यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" [ मुण्ड० १ । १ । ९ ] इति ॥ तस्मान्निर्देशसाम्येन प्रत्यभिज्ञायमानत्वात्प्रकृतस्यैवाक्षरस्य भूतयोनेः सर्वज्ञत्वं सर्ववित्त्वं च धर्म उच्यत इति गम्यते ॥ "अक्षरात्परतः परः" [ मुण्डक० २ । १ । २ ] इत्यत्रापि न प्रकृताद् भूतयोनेरक्षरात्परतः कश्चिदभिधीयते ॥ कथमेतदवगम्यते । "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" [ मुण्ड० १ । २ । १३ ] इति प्रकृतस्यैवाक्षरस्य भूतयोनेरदृश्यत्वादिगुणकस्य वक्तव्यत्वेन प्रतिज्ञातत्वात् ॥ कथं तर्हि "अक्षरात्परतः परः" [ मुण्ड० २ । १ । २ ] इति व्यपदिश्यत इति ॥ उत्तरसूत्रे तद्वक्ष्यामः ॥ अपि चात्र द्वे विद्ये वेदितव्ये उक्ते "परा चैवापरा च" [ मुण्ड० १ । १ । ४ ] इति ॥ तत्रापरामृग्वेदादिलक्षणां विद्यामुक्त्वा ब्रवीति "अथ परा यया तदक्षरमधिगम्यते" [ मुण्ड० १ । १ । ५ ] इत्यादि । तत्र परस्या विद्याया विषयत्वेनाक्षरं श्रुतम् ॥ यदि पुनः परमेश्वरादन्यदृश्यत्वादिगुणकमक्षरं परिकल्प्येत, नेयं परा विद्या स्यात् ॥ परापरविभागो ह्ययं

रत्नप्रभा ।

त्वमिति, तत्राह-अक्षरात्परत इति ॥ नायमक्षरशब्दो भूतयोनिं परामृशति परविद्याधिगम्यत्वेनोक्तस्याक्षरस्य भूतयोनेरक्षरं पुरुषं वेदेत्यक्षरश्रुत्या वेद्यत्वलिङ्गवत्या पूर्वमेव ब्रह्मत्वेन परामर्शादित्याह-येनेति ॥ येन ज्ञानेन, अक्षरं भूतयोनिं सर्वज्ञं पुरुषं वेद तां ब्रह्मविद्यां योग्याय शिष्याय प्रब्रूयादित्युपक्रम्य "अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः" [ मुण्डक० २ । १ । २ ] इति उच्यमानः परो भूतयोनिरिति गम्यत इत्यर्थः । तर्हि पञ्चम्यन्ताक्षरशब्दार्थः क इत्याशंक्याज्ञानमिति वक्ष्यत इत्याह-कथमिति ॥ परविद्येति समाख्ययाऽपि तद्विषयस्य ब्रह्मत्वमित्याह-अपि चेति ॥ ननु प्रधानविद्याऽपि कारणविषयत्वात् परेत्यत आह-परापरविभागो हीति ॥ अनित्यफलत्वेनापरविद्यां निन्दित्वा मुक्त्यर्थिने ब्रह्मविद्यां प्रोवा-

भामती ।

परमात्मविवर्ततया प्रपञ्चस्तद्योनिः, भुजङ्ग इव रज्जुविवर्ततया तद्योनिः, न तु तत्परिणामतया । तस्मात्तद्धर्मसर्ववित्त्वोक्तेर्लिङ्गात् 'यत्तदद्रेश्यम्' इत्यत्र ब्रह्मैवोपदिश्यते ज्ञेयत्वेन, न तु प्रधानं जीवात्मा वोपास्यत्वेनेति सिद्धम् । न केवलं लिङ्गादपि तु 'परा विद्या' इति समाख्यानादप्येतदेव प्रतिपत्तव्यमित्याह-अपिच द्वे विद्ये इति ।

आनन्दगिरीय-न्यायनिर्णयः ।

सर्वज्ञादिविशेषण सर्वविदो ज्ञानमयतपःसहितात्कार्यं ब्रह्म सूक्ष्मभूतात्मकं नाम रूपं च स्थूलभूतात्मकमन्नं च व्रीहियवादि सर्वं भौतिकं तद्द्वारा सत्तां प्राप्नोतीत्याह-तस्मादिति। लिङ्गप्रत्यभिज्ञाफलमाह-तस्मादिति। श्रुतिप्रत्यभिज्ञा लिङ्गप्रत्यभिज्ञातो बलवती दर्शितेत्याशंक्य पञ्चम्यन्ताक्षरपदं न प्रकृताक्षरगामीत्याह-अक्षरादिति । तत्र गमकं पृच्छति-कथमिति। चेतने भूतयोनौ प्रथममेव श्रुतिप्रत्यभिज्ञानादित्याह-येनेति । येन ज्ञानेनाक्षरं प्रकृतं भूतयोनिं सर्वज्ञं पुरुषं सत्यं वेद तां ब्रह्मविद्यामुपसन्नाय शान्तायाऽऽचार्यः प्रोवाच प्रब्रूयादित्युपक्रम्याक्षरात्परतः पर इत्युच्यमानः परो न भूतयोनेरतिरिच्यते । तथा च क्वचिज्जगत्प्रकृतित्वं क्वचित्तन्निमित्ततेति न वैषम्यमिति भावः । पञ्चम्यन्ताक्षरपदस्य भूतयोन्यर्थत्वाभावे तद्वाक्यं वाच्यमिति शंकते-कथमिति । तत्र भाविनं परिहारं सूचयति-उत्तरेति । परा विद्येति समाख्यानादपि भूतयोनेरक्षरस्य ब्रह्मतेत्याह-अपि चेति । भूतयोनेरपरविद्यागम्यत्वं निराह-तत्रेति । उदाहृते वाक्ये प्रतीतमर्थमाह-तत्रेति । तथाऽपि प्रधानं जीवो वा परविद्यागम्यमक्षरं स्यादित्याशंक्याऽऽह-यदीति । कार्यकारणविषयतया भोक्तृभोग्यविषयतया वा परापरविभागमाशंक्याऽऽह-परेति । प्रधानादिविद्या मुक्तिफलतया परा स्यादित्या-

विद्ययोरभ्युदयनिश्श्रेयसफलतया परिकल्प्यते ॥ न च प्रधानविद्या नि-श्श्रेयसफला केनचिदभ्युपगम्यते ॥ तिस्रश्च विद्याः प्रतिज्ञायेरन् ॥ त्व-त्पक्षे अक्षराद्भूतयोनेः परस्य परमात्मनः प्रतिपाद्यमानत्वात् ॥ द्वे एव तु विद्ये वेदितव्ये इह निर्दिष्टे "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" [ मुण्ड० १ । १ । ३ ] इति चैकविज्ञानेन सर्वविज्ञानापे-क्षणं सर्वात्मके ब्रह्मणि विवक्ष्यमाणेऽवकल्प्यते ॥ नाचेतनमात्रैकाय-तने प्रधाने भोग्यव्यतिरिक्ते वा भोक्तरि ॥ अपि च "स ब्रह्मविद्यां सर्व-विद्याप्रतिष्ठामथर्वाय ज्येष्ठाय पुत्राय प्राह" [ मुण्ड० १ । १ । १ ] इति ॥ ब्रह्मविद्यां प्राधान्येनोपक्रम्य परापरविभागेन परां विद्यामक्षराधिगामिनीं दर्शयंस्तस्या ब्रह्मविद्यात्वं दर्शयति ॥ सा च ब्रह्मविद्यासमाख्या तदधिगम्य-स्याक्षरस्याऽब्रह्मत्वे बाधिता स्यात् ॥ अपरा ऋग्वेदादिलक्षणा कर्मविद्या ब्रह्मविद्योपक्रमे उपन्यस्यते ब्रह्मविद्याप्रशंसायै—"प्लवा ह्येते अदृढा यज्ञरूपा—

---

रत्नप्रभा ।

चेति वाक्यशेषोक्तेरित्यर्थः । अस्तु प्रधानविद्याऽपि मुक्तिफलत्वेन परेत्यत आह—**न चेति** ॥ **ननु यः सर्वज्ञ** इत्यग्रे परविद्याविषय उच्यते । अद्रेश्यवाक्येन तु प्रधानविद्योच्यते इति, अत आह—**तिस्रश्चेति** ॥ इतश्च भूतयोनेर्ब्रह्मत्वमित्याह—**कस्मिन्निति** ॥ अचेतनमात्रस्यैकायतनमुपादानं तज्ज्ञानात् कार्यज्ञानेऽपि तदका-र्याणामात्मनां ज्ञानं न भवति । एवं जीवे ज्ञाते तदकार्यस्य भोग्यस्य ज्ञानं न भवतीत्यर्थः । ब्रह्मवि-द्याशब्दाच्च भूतयोनिर्ब्रह्मेत्याह—**अपि चेति** ॥ **स ब्रह्मविद्यां** सर्वविद्यानां प्रतिष्ठां समाप्तिभूमिं ब्रह्म-विद्यामुवाच । ब्रह्मणि सर्वविद्यानां विद्याफलानां चान्तर्भावाद्ब्रह्मविद्या सर्वविद्याप्रतिष्ठा । नन्वपरविद्या परप्रकरणे किमर्थमुक्तेत्यत आह—**अपरेति** ॥ प्लवन्ते गच्छन्तीति **प्लवाः** विनाशिनः, **अदृढाः** नित्यफ-

भामती ।

लिङ्गान्तरमाह—**कस्मिन्नु भगव इति** । भोगा भोग्यास्तेभ्यो व्यतिरिक्ते भोक्तरि । अवच्छिन्नो हि जीवात्मा भोग्येभ्यो विषयेभ्यो व्यतिरिक्त इति तज्ज्ञानेन न सर्वं ज्ञातं भवति । समा-ख्यान्तरमाह—**अपि च स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामिति** । **प्लवा ह्येते अदृढा यज्ञरूपा**

आनन्दगिरीय—न्यायनिर्णयः ।

शंक्याऽऽह—**न चेति** । जडमात्रस्य तद्युक्ताजडस्य वा धीर्न मुक्तिहेतुश्चिन्मात्रधियस्तद्भावादित्यर्थः । यदि प्रधानस्य जीवस्य वा भूतयोनित्वेन तद्विद्या परविद्या तदोत्तरत्रोच्यमानसर्वज्ञविज्ञानस्यापीष्टत्वाद्द्वे विद्ये इति द्वित्वश्रवणं न स्यादित्याह—**तिस्रश्चेति** । इष्टापत्तिं प्रत्याचष्टे—**द्वे इति** । इहेत्युपक्रमोक्तिः । इतश्च भूतयो-निवाक्यं ब्रह्मनिष्ठमित्याह—**कस्मिन्निति** । एकविज्ञानेन सर्वं विज्ञानं पक्षान्तरेऽपि स्यादित्याशंक्याऽऽह— **नेति** । अचेतनस्य भोग्यमात्रस्यैकमयनमाश्रयस्तस्मिन्नित्यर्थः । मात्रशब्देनाऽऽत्मभ्यो भेदमाह । प्रधाने ज्ञाते भोग्यवर्गज्ञानेऽपि न भोक्तृज्ञानमित्यर्थः । जीवपक्षे तज्ज्ञाने भोग्यधीरपि नेत्याह—**भोग्येति** । ब्रह्म-विद्येति समाख्ययाऽपि भूतयोनेर्ब्रह्मतेत्याह—**अपि चेति** । सर्वविद्यानां प्रतिष्ठा समाप्तिर्यस्यां ततो निर-तिशयपुरुषार्थलाभात्तां ब्रह्मविद्यां सर्वविद्यावेद्यवस्त्वधिष्ठानविषयतया वा सर्वविद्याप्रतिष्ठामथर्वनाम्ने कुत्रचि-त्सृष्टावाद्याय पुत्राय स ब्रह्मोक्तवानित्यर्थः । ब्रह्मा देवानामिति वक्ता तत्रोपक्रान्त एवेत्याशंक्याऽऽह— **प्राधान्येति** । तथाऽऽपि कथमक्षरस्य ब्रह्मत्वं तदाह—**सा चेति** । ब्रह्मविद्योपक्रमेऽप्यपरविद्यावदक्षरवि-द्याऽपि ब्रह्मविद्या मा भूदित्याशंक्य प्रक्रान्ताया अन्यत्रानुक्तिवदत्राप्यनुक्तौ बाधादक्षरविद्या ब्रह्मविद्यैवेत्याह— **अपरेति** । तस्यास्तत्प्रशंसार्थत्वं कथं तत्राऽऽह—**प्लवा हीति** । प्लवन्ते गच्छन्तीति प्लवा विनाशिनस्तत्प्रसिद्धौ हिशब्दस्तदेवोत्पत्त्यादिमत्त्वेन साधयति—**अदृढा इति** । के ते ? यज्ञरूपा यज्ञो रूपमुपाधिर्येषां ते तथा ।

अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति" [ मुण्ड० १ । २ । ७ ] इत्येवमादिनिन्दावचनात् ॥ निन्दित्वा चापरां विद्यां, ततो विरक्तस्य परविद्याधिकारं दर्शयति-"परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" [ मुण्ड० १ । २ । १२ ] इति ॥ यत्तूक्तमचेतनानां पृथिव्यादीनां दृष्टान्तत्वेनोपादानाद्दार्ष्टान्तिकेनाप्यचेतनेन भूतयोनिना भवितव्यमिति ॥ तदयुक्तम् ॥ न हि दृष्टान्तदार्ष्टान्तिकयोरत्यन्तसाम्येन भवितव्यमिति नियमोऽस्ति ॥ अपि च स्थूलाः पृथिव्यादयो दृष्टान्तत्वेनोपात्ता इति न स्थूल एव दार्ष्टान्तिको भूतयोनिरभ्युपगम्यते ॥ तस्माददृश्यत्वादिगुणको भूतयोनिः परमेश्वर एव ॥ २१ ॥

---

रत्नप्रभा ।

लसम्पादनाशक्ताः, षोडशर्त्विजः । पत्नी यजमानश्चेति-**अष्टादश** यज्ञेन नाम निमित्तेन रूप्यन्त इति **यज्ञरूपाः** । तथाहि-ऋतुषु याजयन्ति यज्ञं कारयन्तीति-**ऋत्विजः** । यजत इति **यजमानः** । "पत्युर्नो यज्ञसंयोगे" [ पाणि० ४ । १ । ३ । ३ ] इति सूत्रेण पतिशब्दस्य नकारान्तादेशो यज्ञसम्बन्धे विहित इति **पत्नी** । एवमृत्विगादिनामप्रवृत्तिनिमित्तं यज्ञ इति यज्ञरूपाः, **येष्ववरम्** अनित्यफलकं कर्म श्रुत्युक्तम्, एतदेव कर्म **श्रेयः** नान्यदात्मज्ञानमिति ये **मूढाः** तुष्यन्ति, **ते पुनः** पुनर्जन्ममरणमाप्नुवन्तीत्यर्थः । **तद्विज्ञानार्थं गुरुमभिगच्छेदे**वेति नियमः । ब्रह्मनिष्ठस्याप्यनधीतवेदस्य गुरुत्वं वारयति-**श्रोत्रियमिति**॥ कार्यमुपादानाभिन्नमित्यंशे दृष्टान्तः । सर्वसाम्ये तवाप्यनिष्टापत्तेरित्याह-**अपि च स्थूला इति** ॥ ११ ॥

भामती ।

**अष्टादशेति** । प्लवन्ते गच्छन्ति अस्थायिन इति प्लवाः । अत एवादृढाः । के ते यज्ञरूपाः । रूप्यन्तेऽनेनेति रूपं, यज्ञो रूपमुपाधिर्येषां ते यज्ञरूपाः । ते तु षोडशर्त्विजः । ऋतुयजनेनोपाधिना ऋत्विक्शब्दः प्रवृत्त इति यज्ञोपाधय ऋत्विजः । एवं यजमानोऽपि यज्ञोपाधिरेव । एवं पत्नी, 'पत्युर्नो यज्ञसंयोगे' इति स्मरणात् । त एतेऽष्टादश यज्ञरूपाः, येष्वृत्विगादिपूक्तं कर्म यज्ञः । यदाश्रयो यज्ञ इत्यर्थः । तच्च कर्मावरं स्वर्गाद्यवरफलत्वात् । अपियन्ति प्राप्नुवन्ति । **न हि दृष्टान्तदार्ष्टान्तिकयोः**

आनन्दगिरीय-न्यायनिर्णयः ।

ऋत्विगादिशब्दस्य यज्ञोपाधिकत्वादष्टादश । षोडशर्त्विजः पत्नी यजमानश्च । क्षयिफलत्वादवरं कर्म येषु यदाश्रयमुक्तं श्रुत्या विहितमेतदेव कर्म श्रेयोहेतुर्न ब्रह्मधीरिति ये मूढा हृष्यन्ति ते पुनःपुनर्जरापूर्वं मरणमेवाऽऽप्नुवन्तीत्यर्थः । आदिपदमविद्यायामन्तरे वर्तमाना इत्यादिसंग्रहार्थम् । इतश्च परविद्याशेषत्वेनैवापरविद्योक्तिरित्याह-**निन्दित्वेति** । प्रत्यक्षादिना कर्मसाध्याँल्लोकाननित्यतया ज्ञात्वा निर्वेदं वैराग्यमायाद्गच्छेत्कुर्यात् । कथं नास्त्यकृतो मोक्षः कृतेन कर्मणा नित्यफलार्थी चाहं तस्मात्किं कर्मणेति विरक्तस्तस्य ब्रह्मणो विज्ञानार्थं गुरुमेवाभिगच्छेद्गुरुपादोपसर्पणं कृत्वा मुक्तिहेतुज्ञानाय श्रवणादि कुर्यादित्यर्थः । "रिक्तहस्तस्तु नोपेयाद्राजानं दैवतं गुरुम्" इति न्यायेन समित्पाणिरित्युक्तम् । श्रोत्रियमित्यादिनाऽध्ययनहीनस्य वाऽकर्मिणो वा गुरुत्वं वार्यते । कर्मनिन्दया ततो विरक्तस्याधिकारोक्तेरक्षरविद्या ब्रह्मविद्यैवेति समुदायार्थः । पूर्वपक्षबीजमनुभाषते-**यत्त्विति** । सर्वथा वा साम्यमंशेन वा ? नाऽऽद्य इत्याह-**तदयुक्तमिति** । सर्वथा साम्ये परस्याप्यनिष्टापत्तिमाह-**अपि चेति** । कार्यस्य कारणाव्यतिरेको विवक्षितोंऽशस्तेन साम्यमिष्टमेवेति मत्वोपसंहरति-**तस्मादिति** ॥ २१ ॥ भूतयोनेर्ब्रह्मत्वे हेत्वन्तरमाह-

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

इतश्च परमेश्वर एव भूतयोनिः, नेतरौ शारीरः प्रधानं वा ॥ कस्मात् ॥ विशेषणभेदव्यपदेशाभ्याम् । विशिनष्टि हि प्रकृतं भूतयोनिं शारीराद्विलक्षणत्वेन—"दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रः" [ मुण्ड० २ । १ ।२ ] इत्यादि ॥ न ह्येतद्दिव्यत्वादिविशेषणमविद्याप्रत्युपस्थापितनामरूपपरिच्छेदाभिमानिनस्तद्धर्मांश्च स्वात्मनि कल्पयतः शारीरस्योपपद्यते ॥ तस्मात्साक्षादौपनिषदः पुरुष इहोच्यते ॥ तथा प्रधानादपि प्रकृतं भूतयोनिं भेदेन व्यपदिशति-"अक्षरात्परतः परः" [ मुण्ड० २ । १ । २ ] इति ॥ अक्षरमव्याकृतं नामरूपबीजशक्तिरूपं भूत-

---

रत्नप्रभा ।

विशेषणान्न जीवः, भेदोक्तेर्न प्रधानमिति हेतुद्वयं विभज्य व्याचष्टे-**विशिनष्टि हीत्यादिना** ॥ **दिव्यः** द्योतनात्मकः स्वयंज्योतिः । **अमूर्तः** पूर्णः **पुरुषः** पुरिशयः प्रत्यगात्मा, **बाह्यं**—स्थूलम्-**आभ्यन्तरं**—सकारणं सूक्ष्मं ताभ्यां सहाधिष्ठानत्वेन तिष्ठति **सबाह्याभ्यन्तरः**, हिं तथा श्रुतिषु प्रसिद्ध इत्यर्थः । अविद्याकृतं नामरूपात्मकं शरीरं, तेन परिच्छेदोऽल्पत्वम् । तस्य शरीरस्य धर्मान् जाड्यमूर्तत्वादीनित्यर्थः । नन्वक्षरशब्देन प्रधानोक्तावशब्दत्वं प्रधानस्य प्रतिज्ञातं बाध्येत, तत्राह—**अक्षरमव्याकृतमिति** ॥ अश्नोति व्याप्नोति स्वविकारजातमिति **अक्षरम् अव्याकृतम्** अव्यक्तम् अनादीति यावत् । नामरूपयोर्बीजमीश्वरः, तस्य शक्तिरूपं परतन्त्रत्वादुपादानमपि शक्तिरित्युक्तम् । भूतानां सूक्ष्माः संस्कारा यत्र तद् **भूतसूक्ष्मम्** । ईश्वरश्चिन्मात्र आश्रयो यस्य तत्तया । **तस्यैव** चिन्मात्रस्य, जीवेश्वरभेदोपाधिभूतम् । यत्तु ईश्वर आश्रयो विषयो यस्येति नानाजीववादिनां व्याख्यानम्, **तद्भाष्यवहिर्भूतम्** । "एतस्मिन्। खल्वक्षरे आकाश ओतश्च प्रोतश्च" [ बृ० ३ । ८ । ११ ] इत्योतप्रोतभावेनाव्याकृतस्य चिदाश्रयत्वश्रुतेराश्रयपदलक्षणाया निर्मूलत्वात् । न हि मूलप्रकृतेर्भेदे किञ्चिन्मानमस्ति । न च "इन्द्रो मायाभिः" [ बृ० । २ । ५ । १९ ] इति श्रुतिर्मानम् "अजामेकाम्" [ श्वेता० ४ । ५ ] इत्याद्यनेक-

भामती ।

इत्युक्ताभिप्रायम् ॥ २१ ॥ **विशेषणभेदव्यपदेशाभ्यां च नेतरौ** । विशेषणं हेतुं व्याचष्टे—**विशिनष्टि हीति** । शारीरादित्युपलक्षणम् । प्रधानादित्यपि द्रष्टव्यम् । भेदव्यपदेशं व्याचष्टे—**तथा प्रधानादपीति** । स्यादेतत् । किमागमिकं सांख्याभिमतं प्रधानं, तथा च वहुसमञ्जसं स्यादित्यत आह—

आनन्दगिरीय—न्यायनिर्णयः ।

**विशेषणेति**।चकारार्थमाह—**इतश्चेति**।एवकारार्थमाह—**नेतराविति**।इतःशब्दार्थं स्फुटयन्प्रश्नपूर्वं हेतुद्वयमाह—**कस्मादिति** । विशेषणान्न जीवो भेदोक्तेर्न प्रधानमिति विभज्य व्याकुर्वन्नाद्यं व्याचष्टे—**विशिनष्टीति**।दिव्यो द्योतनात्मकः स्वयज्योतिस्तत्र श्रुत्यन्तरप्रसिद्धयर्थो हिशब्दः।अमूर्तत्वं पूर्णत्वम्।आकाशाद्विशेषमाह—**पुरुषइति**। कार्यकारणाभ्यां परिच्छेदमाशंक्याऽऽह—**सबाह्येति** । बाह्यं कार्यमभ्यन्तरं कारणं ताभ्यां कल्पिताभ्यां सहाधिष्ठानत्वेन तिष्ठति तस्य सर्वकल्पनाधिष्ठानत्वे श्रुतिप्रसिद्धयर्थो हिशब्दः । जन्माद्यभावेन कौटस्थ्यमाह—**अज इति** । प्राणमनोभ्यां संसर्गाभेदाभावात्परिशुद्धिमाह—**अप्राणो हीति** । शारीरस्यापि विशेषणं स्यादित्याशंक्याऽऽह—**न हीति** । तद्धर्मा नामरूपादिधर्मा दृश्यत्वादयः । विशेषणस्यानन्यथासिद्धिफलमाह—**तस्मादिति** । विशेषणस्य तुल्यत्वेऽपि द्वितीयं हेतुं प्रधानपक्षे योजयति—**तथेति** । भेदोक्तिं व्यनक्ति—**अक्षरमिति** । किं तदव्याकृतं तदाह—नामेति । तयोर्बीजमीश्वरः शक्तिरूपं तत्परतन्त्रत्वाद्भूतानां लीनानां

सूक्ष्ममीश्वराश्रयं तस्यैवोपाधिभूतं सर्वस्माद्विकारात्परो योऽविकारः तस्मात्परतः पर इति भेदेन व्यपदेशात्परमात्मानमिह विवक्षितं दर्शयति॥ नात्र प्रधानं नाम किञ्चित्स्वतन्त्रं तत्त्वमभ्युपगम्यते । तस्माद्भेदव्यपदेश उच्यते ॥ किं तर्हि । यदि प्रधानमपि कल्प्यमानं श्रुत्यविरोधेनाव्याकृतादिशब्दवाच्यं भूतसूक्ष्मं परिकल्प्येत, परिकल्प्यताम् ॥तस्माद्भेदव्यपदेशात्परमेश्वरो भूतयोनिरित्येतदिह प्रतिपाद्यते ॥ २२ ॥ कुतश्च परमेश्वरो भूतयोनिः ?

## रूपोपन्यासाच्च ॥ २३ ॥

रत्नप्रभा ।

श्रुतिबलेन लाघवतर्कसहायेन तस्याः श्रुतेर्बुद्धिभेदेन मायाभेदानुवादित्वात् । तदुक्तं सुरेश्वराचार्यैः— "स्वतस्त्वविद्याभेदोऽत्र मनागपि न विद्यते" इति । सांख्ययोगाचार्याः पुराणेतिहासकर्तारश्च मूलप्रकृत्यैक्यं वदन्ति । नन्वविद्यैक्ये बन्धमुक्तिव्यवस्था कथम् । न च व्यवस्था नास्तीति वाच्यम् । श्रवणे प्रवृत्त्यादिबाधापातादिति चेत् । उच्यते । ये ह्यविद्यानानात्वमिच्छन्ति, तैरपि परिणामित्वेन सांशत्वमविद्याया अङ्गीकार्यम् । तथा चानर्थात्मकस्वीयसङ्घातात्मना परिणताऽविद्यांशोपहितजीवभेदाद्व्यवस्था सिध्यति । यस्य ज्ञानमन्तःकरणे जायते तस्यान्तःकरणपरिणाम्यज्ञानांशनाशो मुक्तिरिति । एवं च श्रोतुः स्वरूपानन्दप्राप्तिः, श्रवणादौ प्रवृत्तिर्विद्वदनुभवो जीवन्मुक्तिशास्त्रं चेति सर्वमबाधितं भवति । न चैवं नानाजीवपक्षादविशेषः । मूलप्रकृतिनानात्वाभावादित्यलम् । परत्वे हेतुः—अविकार इति ॥ ननु सूत्रकृता श्रुतौ प्रधानाद्भेदव्यपदेश उक्तः, तत्र कथमज्ञानाद्भेदोक्तिर्व्याख्यायते तत्राह—नात्रेति॥ कार्यात्मना प्रधीयत इति प्रधानम् अज्ञानमेव । ततोऽन्यस्याप्रामाणिकत्वादित्यर्थः । अतोऽत्राज्ञानमेव भूतयोनिरिति पूर्वपक्षं कृत्वा निरस्यते । तन्निरासेनार्थात्सांख्यकल्पितप्रधाननिरास इति मन्तव्यम् ॥ २२ ॥ वृत्तिकृन्मतेनादौ

भामती ।

नात्र प्रधानं नाम किंचिदिति ॥ २२ ॥ रूपोपन्यासाच्च । तदेतत्परमतेनाक्षेपसमाधानाभ्यां

आनन्दगिरीय-न्यायनिर्णयः ।

सूक्ष्मं संस्काररूपं वर्ततेऽत्रेति भूतसूक्ष्ममीश्वरपदलक्ष्यं स्वरूपमाश्रयोऽस्येति तथोक्तम् । अन्यस्य तत्कार्यत्वेन तदाश्रयत्वात्तस्यैवेश्वरो जीवो जगदिति बुद्धावुपाधित्वेन स्थितं विकारहेतुत्वाद्विकारश्चेत्यर्थः । ननु नामरूपयोर्बीजं शक्तिरूपं चाव्याकृतम् । यद्वा—नामरूपे एव बीजे तयोः शक्तिरूपं तदेव तच्च भूतसूक्ष्मं तत्कारणत्वादीश्वराश्रयमित्याश्रयशब्दो विषयार्थस्तस्यैवेश्वरस्य जीवत्वं प्राप्तस्य बुद्ध्यादिद्वारा कर्तृत्वादावुपाधिभूतमिति व्याख्येयं भाष्यमिति चेत् । मैवम् । आश्रयशब्दस्य श्रुतार्थत्यागायोगाज्जीवत्वापत्तेश्चाव्याकृतसंबन्धकृतत्वात्परिशुद्धे चिद्धातौ तत्संबन्धध्रौव्यादतो भाष्यबहिर्भूतो नानाजीववादः । अक्षरशब्दार्थमुक्त्वा परिशिष्टं व्याचष्टे—तस्मादिति । इहेति प्रकृतवाक्योक्तिः । प्रधानाद्ब्रह्मणो भेदे प्रधानमिष्टमसतोऽप्रतियोगित्वादित्याशंक्याऽऽह—नात्रेति । प्रतियोग्यनङ्गीकारे कथं भेदोक्तिस्तत्राऽऽह—किं तर्हीति । भूतसूक्ष्मं भूतानां सूक्ष्मं कारणमित्यर्थः । इहेति श्रुतिसूत्रयोरुक्तिः ॥ २२ ॥ भूतयोनेरीश्वरत्वे हेत्वन्तरमाह—कुतश्चेति । रूपोपन्यासाच्च नेतरावित्यनुषङ्गः । वृत्तिकारमतेन व्याकरोति—

१ इहेति श्रुतिसूत्रयोरुक्तिः ।

अपि च–" अक्षरात्परतः परः " [ मुण्डक० २ । १ । २ ] इत्यस्यानन्तरम् " एतस्माज्जायते प्राणः " [ मुण्डक० २ । १ । ३ ] इति प्राणप्रभृतीनां पृथिवीपर्यन्तानां तत्त्वानां सर्गमुक्त्वा तस्यैव भूतयोनेः सर्वविकारात्मकं रूपमुपन्यस्यमानं पश्यामः–" अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा " [ मुण्डक० २ । १ । ४ ] इति ॥ तच्च परमेश्वरस्यैवोचितम् । सर्वविकारकारणत्वात्॥न शारीरस्य तनुमहिम्नः॥ नापि प्रधानस्यायं रूपोपन्यासः सम्भवति ॥ सर्वभूतान्तरात्मत्वासम्भवात् ॥ तस्मात्परमेश्वर एव भूतयोनिर्नेतराविति गम्यते ॥ कथं पुनर्भूतयोनेरयं रूपोपन्यास इति गम्यते ॥ प्रकरणाद् "एषः" [ मुण्ड० २।१। ४ ]इति च प्रकृतानुकर्षणाद्भूतयोनिं हि प्रकृत्य "एतस्माज्जायते प्राणः" [ मुण्ड० २ । १ । ३ ] " एष सर्वभूतान्तरात्मा " [ मुण्ड० २ । १ । ४ ] इत्यादिवचनं भूतयोनिविषयमेव भवति । यथोपाध्यायं प्रकृत्य–एतस्मादधीष्व एष वेदवेदाङ्गपारग इति वचनमुपाध्यायविषयं भवति, तद्वत् ॥ कथं पुनरदृश्यत्वादिगुणकस्य भूतयोनेर्विग्रहवद्रूपं सम्भवति ॥ सर्वात्मत्वविवक्षयेदमुच्यते, न तु विग्रहवत्त्वविवक्षयेत्यदोषः, " अहमन्नमहमन्नादः " [ तै० ३ । १० । ६ ] इत्यादिवत् ॥ अन्ये पुनर्मन्यन्ते,–नायं भूतयोनेः रूपोपन्यासः । जायमानत्वेनोपन्यासात्–" एतस्माज्जायते प्राणो

---

रत्नप्रभा ।

सूत्रं व्याचष्टे–अपि चेत्यादिना ॥ "मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः पृथिवी" [ मुण्डक० २ । १ । ३ ] इति श्रुतिः "अग्निर्द्युलोकः असौ वाव लोको गोतमाग्निः" इति श्रुतेः । विवृताः वेदाः वागित्यन्वयः । पद्भ्यां पादावित्यर्थः । यस्येदं रूपं स एष सर्वप्राणिनामन्तरात्मेत्यर्थः॥ तनुमहिम्न इति । अल्पशक्तेरित्यर्थः । यथा कश्चिद् ब्रह्मवित् स्वस्य सर्वात्मत्वप्रकटनार्थमहमन्नमिति साम गायति, न त्वन्नत्वादिकमात्मनो विवक्षति अफलत्वात्, तथेहापीत्याह–अहमन्नमिति ॥ वृत्तिकृद्व्याख्यां दूषयति–अन्ये पुनरिति ॥ एष सर्वभूतान्तरात्मा सूत्रात्मा । एतस्माद् भूतयोनेर्जायत इति श्रुत्यन्वयेन

भामती ।

व्याख्याय स्वमतेन व्याचष्टे–अन्ये पुनर्मन्यन्त इति । पुनःशब्दोपि पूर्वस्माद्विशेषं द्योतयन्नस्येष्टतां

आनन्दगिरीय–न्यायनिर्णयः ।

अपि चेति । "अग्निर्द्युलोकोऽसौ वाव लोको गौतमाग्निः" इति श्रुतेः । पद्भ्यामिति प्रथमार्थे पादौ पृथिवी यस्य स एष सर्वभूतानामन्तश्चाऽऽत्मा चेत्यर्थः । एवं रूपोपन्यासेऽपि किं स्यात्तदाह–तच्चेति । अन्यथासिद्धिं प्रत्याह–नेति । तनुमहिमत्वं परिच्छिन्नशक्तित्वम् । प्रधानविषयत्वं तस्य दूषयति–नापीति । अनन्यथासिद्धिफलमाह–तस्मादिति । मानाभावेन शंकते–कथमिति । मानं वदन्नुत्तरमाह–प्रकरणादिति । प्रकृतत्वेऽपि भूतयोनेरग्निर्मूर्धेत्यादौ कथमनुवृत्तिस्तत्राऽऽह–एष इति । तदेव स्फुटयति–भूतेति । दृष्टान्तेनैतदेव स्फुटयति–यथेति । अदृश्यत्वादिधर्मकस्य विग्रहवद्रूपं कथमित्याक्षिपति–कथमिति । समाधत्ते–सर्वेति । यथा कश्चिद्ब्रह्मात्मचिदात्मनः सर्वात्मत्वविवक्षयाऽहमन्नमहमन्नाद इति साम गायति न त्वन्नान्नादत्वमात्मनोऽभिप्रैति तस्यापुमर्थत्वात्तथेहापीत्याह–अहमिति । एकदेशिनं दूषयति–अन्ये पुनरिति । हेत्वसिद्धिमाशंक्य पूर्वोत्तरवाक्येषु जायमानत्वेन तत्तदर्थोक्तिरिहापि जायमानत्वेनोक्तिरस्तीत्याह–एतस्मादिति । यथा सूर्यो द्युलोकाग्नेः समिध इव भासकः सोऽपि तस्मादेव जायत

मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" [ मुण्डक० २ । १ । ३ ] इति हि पूर्वत्र प्राणादिपृथिव्यन्तं तत्त्वजातं जायमानत्वेन निरदिक्षत् ॥ उत्तरत्रापि च-"तस्मादग्निस्समिधो यस्य सूर्यः" [ मुण्डक० २ । १ । ५ ] इत्येवमादि,-"अतश्च सर्वा ओषधयो रसश्च" [ मुण्डक० २ । १ । ९ ] इत्येवमन्तं, जायमानत्वेनैव निर्देक्ष्यति ॥ इहैव कथमकस्मादन्तराले भूतयोनेः रूपमुपन्यस्येत ॥ सर्वात्मत्वमपि सृष्टिं परिसमाप्योपदेक्ष्यति-"पुरुष एवेदं विश्वं कर्म" [ मुण्डक० २ । १ । १० ] इत्यादिना ॥ श्रुतिस्मृत्योश्च त्रैलोक्यशरीरस्य प्रजापतेर्जन्मादिनिर्दिश्यमानमुपलभामहे-"हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम" [ ऋ० सं० १० । १२१ । १ ] इति ॥ समवर्ततेति । अजायतेत्यर्थः ॥ तथा-"स वै शरीरी प्रथमस्स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत" इति च ॥ विकारपुरुषस्यापि सर्व-

रत्नप्रभा ।

हिरण्यगर्भस्यात्र जायमानत्वेनोपन्यासादित्यर्थः । निरदिक्षद् अवोचदित्यर्थः । अग्निः द्युलोको यस्य समिद्रूपः सूर्यः सोऽपि द्युलोकाग्निः । तस्मादजायतेत्यर्थः । "तस्यादित्य एव समित्" [ छां० ५ । ४ । १ ] इति श्रुत्यन्तरात् । अतो मध्येऽपि सृष्टिरेव वाच्या न रूपमिति भावः । यदुक्तमग्निर्मूर्धेत्यत्र भूतयोनेः सर्वात्मत्वं विवक्षितमिति, तन्नेत्याह-सर्वात्मत्वमपीति ॥ ननु हिरण्यगर्भस्य जन्माऽन्यत्रानुक्तं कथमत्र वक्तव्यं, तत्राह-श्रुतीति ॥ अग्रे समवर्तत जातः सन् भूतग्रामस्य एकः पतिरीश्वरप्रसादादभवत् । सः सूत्रात्मा द्यामिमां पृथिवीं च स्थूलं सर्वमधारयत् । कशब्दस्य प्रजापतिसंज्ञात्वे सर्वनामत्वाभावेन स्मा इत्ययोगादेकारलोपेन एकस्मै देवाय प्राणात्मने हविषा विधेम परिचरेमेति व्याख्येयम् । "कतम एको देव इति प्राणः" [ बृ० ३ । ९ । ९ ] इति श्रुतेः । यद्वा यस्मादयं जातस्तस्मै एकस्मै देवाय इत्यर्थः । "एको देवः सर्वभूतेषु गूढः" [ श्वेताश्व० ६ । ११ ] इति श्रुत्यन्तरात् । ननु तस्य भूतान्तरात्मत्वं कथम् ? तत्राह-विकारेति ॥ पूर्वकल्पे प्रकृष्टोपासनकर्मसमुच्चयानुष्ठानाद-

भामती ।

सूचयति । जायमानवर्गमध्यपतितस्याग्निमूर्धादिरूपवतः सति जायमानत्वसंभवे नाकस्माजनकत्वकल्पनं युक्तम् । प्रकरणं खल्वेतद्विश्वयोनेः, संनिधिश्च जायमानानाम् । संनिधेश्च प्रकरणं बलीय इति जायमानपरित्यागेन विश्वयोनेरेव प्रकरणिनो रूपाभिधानमिति चेत् न, प्रकरणिनः शरीरेन्द्रियादिरहितस्य विग्रहवत्त्वविरोधात् । न चैतावता मूर्धादिश्रुतयः प्रकरणविरोधात्स्वार्थत्यागेन सर्वात्मतामात्रपरा इति युक्तम्, श्रुतेरत्यन्तविप्रकृष्टार्थात्प्रकरणाद्बलीयस्त्वात् । सिद्धे च प्रकरणिनाऽसंबन्धे जायमानमध्यपातित्वं जाय-

आनन्दगिरीय-न्यायनिर्णयः ।

इत्यर्थः । तथाऽपि मध्ये परस्यैव रूपमुक्तमित्याशंक्य वाक्यभेदान्नेत्याह-इहेति । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्तदर्थं सार्वात्म्ये वक्तव्ये तदेवेदमुक्तमन्यत्रानुक्तेरित्याशंक्याऽऽह-सर्वात्मत्वमिति । उत्तरत्रोक्तावपि तस्यैवेदमपि सार्वात्म्यमन्यस्यायोगादित्याशंक्याऽऽह-श्रुतीति । कस्मै प्रजापतये। विधेम परिचरेम। हिरण्यगर्भः सृष्ट्यादाववर्तिष्टेत्येतावदिहोक्तं न जन्मेत्याशंक्याऽऽह-समवर्ततेति । स जातः सन्भूतग्रामस्येश्वराज्ञया पतिर्बभूवेति शेषदर्शनादित्यर्थः । अस्तु श्रुत्यादिसिद्धं जन्म तस्य कथं सर्वभूतान्तरात्मत्वं तत्राऽऽह-विकारेति । पूर्वकल्पे प्रकृष्टधीकर्मानुष्ठाता कश्चिद्यजमानः कल्पादौ हिरण्यगर्भतया प्रादुर्बभूव

भूतान्तरात्मत्वं सम्भवति ॥ प्राणात्मना सर्वभूतानामध्यात्ममवस्थानात् ॥ अस्मिन्पक्षे "पुरुष एवेदं विश्वं कर्म" [ मुण्डक० २ । १ । १० ] इत्यादिसर्वरूपोपन्यासः परमेश्वरप्रतिपत्तिहेतुरिति व्याख्येयम् ॥ २३ ॥
इत्यदृश्यत्वाद्यधिकरणम् ॥ ६ ॥

## वैश्वानरस्साधारणशब्दविशेषात् ॥ २४ ॥ (७) ॥

"को न आत्मा किं ब्रह्म" [ छां०५।११।१ ] इति, "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" [ छां० ५ । ११ । ६ ] इति चोपक्रम्य द्युसूर्यवाय्वाकाशवारिपृथिवीनां सुतेजस्त्वादिगुणयोगमेकैकोपासननिन्दया च वैश्वानरं प्रति, एषां मूर्धादिभावमुपदिश्याम्नायते—

रत्नप्रभा ।

स्मिन् कल्पे सर्वप्राणिव्यष्टिलिङ्गानां व्यापकं सर्वप्राण्यन्तर्गतं ज्ञानकर्मेन्द्रियप्राणात्मकसमष्टिलिङ्गशरीरं जायते । तद्रूपस्य सूत्रात्मनः सर्वभूतान्तरात्मत्वं युक्तमित्यर्थः । स्वपक्षे सूत्रार्थमाह—**अस्मिन्पक्ष इति** ॥ **कर्म** सफलं सर्वं श्रौतस्मार्तादिकं तपश्च, **पुरुष एव** इति सर्वान्तरत्वरूपोपन्यासाच्च भूतयोनौ ज्ञेये वाक्यं समन्वितमित्यर्थः ॥ २३ ॥ ( ६ ) ॥ छान्दोग्यमुदाहरति—**को न इति** ॥ प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनकवुडिला मिलित्वा मीमांसाञ्चक्रुः—"**को न आत्मा किं ब्रह्म**" [ छां० ५ । ११ । १ ] इति । आत्मैव ब्रह्मेति ज्ञापनार्थं पदद्वयम् । ते पञ्चापि निश्चयार्थमुद्दालकमाजग्मुः । सोऽपि सम्यङ् न वेदेति तेनोद्दालकेन सह षडप्यश्वपतिं कैकेयं राजानमागत्योचुः—"आत्मानम्" [ छां० ५ । ११ । ६ ] इति "अध्येषि" [ छां० ५ । ११ । ६ ] "स्मरसि तमेव नो ब्रूहि" [ छां० ५ । ११ । ६ ] इति । राजा तु तेषां भ्रान्तिनिरासार्थं तान्प्रत्येकमपृच्छत्—"कं त्वमात्मानमुपास्से" "कंकं त्वमात्मानमुपास्से" [ छां० ५ । १२–१७ । १ ] इति । ते च प्राचीनशालादयः क्रमेण तं प्रत्येकमूचुः । "दिवमेव" [ छां० ५ । १२ । १ ] अहं वैश्वानरं वेद्मि । " आदित्यमेव" [ छां० ५ । १३ । १ ] अहं वेद्मि । "वायु-

भामती ।

मानग्रहणे कारणमुपन्यस्तं भाष्यकृता । तस्माद्धिरण्यगर्भ एव भगवान् प्राणात्मना सर्वभूतान्तरः कार्यो निर्दिश्यत इति सांप्रतम् । तत्किमिदानीं सूत्रमनवधेयमेव, नेत्याह—**अस्मिन्पक्ष इति** । प्रकरणात् ॥ २३ ॥ ( ६ ) ॥ **वैश्वानरः साधारणशब्दविशेषात्** । प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलाः समेत्य मीमांसां चक्रुः—**को न आत्मा किं ब्रह्मेति** । आत्मेत्युक्ते जीवात्मनि प्रत्ययो मा भूदत उक्तं किं ब्रह्मेति । ते च मीमांसमाना निश्चयमनधिगच्छन्तः कैकेयराजं वैश्वानरविद्याविदमुपसेदुः । उपसद्य चोचुः—**आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि** स्मरसि **तमेव नो ब्रूहीत्युपक्रम्य द्युसूर्यवाय्वाकाशवारिपृथिवीनामिति** । अयमर्थः—वैश्वानरस्य भगवतो द्यौर्मूर्धा सुतेजाः । चक्षुश्च विश्वरूपः सूर्यः ।

आनन्दगिरीय—न्यायनिर्णयः ।

तस्य सर्वप्राणाद्यधिष्ठातृत्वादधिष्ठात्रधिष्ठेययोरभेदात्प्राणात्मना सर्वभूतानामध्यात्मं देहे स्थितेर्जीयमानेऽपि सार्वात्म्यं सिद्धमित्यर्थः । नन्वपञ्चीकृतभूताद्यभिमानिनो हिरण्यगर्भस्य विग्रहविशिष्टरूपेण तदधिष्ठेयप्राणादिजन्मानन्तरं जन्मोच्यते चेत्कस्तर्हि सूत्रार्थस्तत्राऽऽह—**अस्मिन्निति** । विश्वं सर्वं कर्म ससाध्यं तपो ज्ञानं च पुरुष एवेति सार्वात्म्यरूपोपन्यासात्परमात्मैव भूतयोनिरित्यर्थः । न विलक्षणत्वादित्यत्र परिणामस्य सारूप्यापेक्षाप्रतिक्षेपाद्विवर्तस्य च शंखपीतिमादौ विसदृशेऽपि दर्शनात्तदपेक्षानियमाद्भूतयोनिवाक्यं निर्विशेषे ब्रह्मण्यन्वितमिति भावः ॥ २३ ॥ ( ६ ) ॥ रूपोपन्यासप्रसङ्गात्त्रैलोक्यदेहो वैश्वानरः पर इत्याह—**वैश्वानर इति** । विषयं वक्तुं वाक्योपक्रममाह—**को न इति** । आत्मनोऽसंसारित्वार्थं ब्रह्मपदम् । तस्याऽऽपरोक्ष्यार्थमात्मपदम् । प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलाः समेत्य मीमांसां चक्रुस्ते च निश्चिचीषयोद्दालक-

"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥ तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपो-प्राणः पृथग्वर्त्मात्मा सन्देहो

रत्नप्रभा ।

मेव" [ छां० ५ । १४ । १ ] "आकाशमेव" [ छां० ५ । १५ । १ ] "अप एव" [ छां० ५ । १६ । १ ] "पृथिवीमेव" [ छां० ५ । १७ । १ ] अहं वेद्मीति । ततो राजा द्युसूर्यादीनां षण्णां यथाक्रमेण सुतेजस्त्वविश्वरूपत्वपृथग्वर्त्मात्मत्वबहुलत्वरयित्वप्रतिष्ठात्वगुणान्विधाय भवन्तो यदि मामपृष्ट्वा द्युसूर्यादिषु भगवतो वैश्वानरस्याङ्गेष्वेव प्रत्येकं वैश्वानरत्वदृष्ट्यो भवेयुः, तदा क्रमेण मूर्धपातान्धत्वप्राणोत्क्रमणदेहविशीर्णत्वबस्तिभेदपादशोषा भवतां स्युरिति प्रत्येकोपासनं निन्दित्वा, सुतेजस्त्वगुणको द्युलोकोऽस्यात्मनो वैश्वानरस्य मूर्धा, विश्वरूपत्वगुणकः सूर्यो यस्य चक्षुरित्येवं, द्युसूर्यादीनां मूर्धादिभावमुपदिश्य समस्तवैश्वानरध्यानविधिराम्नायते—**यस्त्वेतमिति** ॥ आभिमुख्येनापरोक्षतया विश्वं विमिमीते जानातीति **अभिविमानः** । तं सर्वज्ञं **सः** तदुपासकः सर्वत्र भोगं भुंक्त इत्यर्थः । **लोकाः** भूरादयः, **भूतानि** शरीराणि, **आत्मानो** जीवाः, इति भेदः । सुष्टु तेजः कान्तिर्यस्य द्युलोकस्य स **सुतेजाः** विश्वानि रूपाणि अस्य सूर्यस्य—"एष शुक्ल एष नीलः" [ छां० ८ । ६ । १ ] इति श्रुतेः । पृथङ् नानाविधं वर्त्मगमनम् आत्मा स्वभावो यस्य वायोः, स नानागतित्वगुणकोऽस्य प्राणः ।

भामती ।

प्राणो वायुः पृथग्वर्त्मात्मा पृथक् वर्त्म यस्य वायोः स पृथग्वर्त्मा स एवात्मा स्वभावो यस्य स पृथग्वर्त्मात्मा । संदेहो देहस्य मध्यभागः स आकाशो बहुलः सर्वगतत्वात् । बस्तिरेव रयिः आपः, यतोऽद्भ्योऽन्नमन्नाच्च रयिर्धनं तस्मादापो रयिरुक्तास्तासां च मूत्रीभूतानां बस्तिः स्थानमिति बस्तिरेव रयिरित्युक्तम् । पादौ पृथिवी तत्र प्रतिष्ठानात् । तदेवं वैश्वानरावयवेषु द्युसूर्यानिलाकाशजलावनिषु मूर्धचक्षुःप्राणसंदेहबस्तिपादेष्वेकैकस्मिन् वैश्वानरबुद्ध्वा विपरीततयोपासकानां प्राचीनशालादीनां मूर्धपातान्धत्वप्राणोत्क्रमणदेहशीर्णताबस्तिभेदपादश्लथीभावदूषणैरुपासनानां निन्दया मूर्धादिसमस्तभावमुपदिश्याम्नायते—'यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्' इति । स सर्वेषु लोकेषु द्युप्रभृतिषु, सर्वेषु भूतेषु स्थावरजङ्गमेषु, सर्वेष्वात्मसु देहेन्द्रियमनोबुद्धिजीवेष्वन्नमत्ति । सर्वसंबन्धिफलमाप्नोतीत्यर्थः । अथास्य

आनन्दगिरीय-न्यायनिर्णयः ।

माजग्मुः, सोऽपि न वेद सम्यगिति सह तेन षडपि ते कैकेयराजमश्वपतिमागत्योचुरात्मानमेवेत्याद्यध्येषि स्मरसि । स च तेषां विपरीतधीनिरासेन सम्यग्धीजिग्राहयिषया तानेव पप्रच्छ । औपमन्यव कं त्वमात्मानमुपास्से दिवमेवेत्याहेत्तरो राजा पुनरुवाचैष सुतेजा वैश्वानरो यं त्वमात्मानमुपास्से मूर्धा त्वयमात्मनो मूर्धा ते व्यपतिष्यद्यन्मां नाऽऽगमिष्य इति । ततः सत्ययज्ञमपृच्छत्स चाऽऽदित्यमूचे ततश्चैष विश्वरूप आत्मा चक्षुस्त्वेतदात्मन इत्यन्धोऽभविष्यो यन्मां नाऽऽगमिष्य इति राजाऽभाषत । एवं क्रमेण द्युसूर्यादीनां सुतेजस्त्वविश्वरूपत्वपृथग्वर्त्मात्मत्वबहुलत्वरयित्वपादगुणयोगं विधाय मूर्धापातान्धत्वप्राणोत्क्रमणदेहविशीर्णताबस्तिभेदपादशोषणैरेकैकोपास्तिनिन्दया च तेषां वैश्वानरं प्रति मूर्धादिभावमुक्त्वा समस्तोपासनमाम्नातं **यस्त्वेतमित्यादिना** । आभिमुख्येन विश्वं मिमीते जानातीत्यभिविमानस्तं प्रादेशपरिमाणमुपास्ते यस्तस्य सर्वलोकाद्याश्रयं फलमित्यर्थः । लोका भोगभूमयो भूतानि तत्तदुपाधयो भोक्तारस्त्वात्मान इति भेदः । तत्तत्संबन्धिफलभाक्त्वमन्नमत्तीत्युच्यते । ध्यानफलमुक्त्वा ध्येयरूपमाह—**तस्येति** । सुतेजस्त्वगुणा द्यौर्वैश्वानरस्य मूर्धा । निपातावेतत्प्रसिद्ध्यर्थौ । विश्वत्वगुणः सूर्यस्तस्य चक्षुः 'एष शुक्ल एष नीलः' इत्यादिश्रुतेः ।

१ पृथग्वर्त्मात्मेति शांकरादिसंप्रदायपाठः । रामानुजमते तु आत्मशब्दरहितः पाठः ।

बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः" [ छां० ५ । १८ । १–२ ] इत्यादि । अत्र संशयः–किं वैश्वानरशब्देन जाठरोऽग्निरुपदिश्यते, उत भूताग्निरथ तदभिमानिनी देवता, अथ वा–शारीरः, आहोस्वित्–परमेश्वर इति ॥ किं पुनरत्र संशयकारणम् ॥ वैश्वानर इति जाठरभूताग्निदेवतानां साधारणशब्दप्रयोगादात्मेति च शारीरपरमेश्वरयोः ॥ तत्र–कस्योपादानं न्याय्यं कस्य वा हानमिति भवति संशयः ॥ किं तावत्प्राप्तम् ॥ जाठरोऽग्निरिति ॥ कुतः ॥ तत्र हि विशेषेण क्वचित्प्रयोगो दृश्यते–"अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते" [ बृ० ५ । ९ ] इत्यादौ ॥ अग्निमात्रं वा स्यात्सामान्येनापि प्रयोगदर्शनाद्–"विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्"

---

रत्नप्रभा ।

बहुलत्वं व्यापित्वं तद्गुण आकाशः,अस्य सन्देहो देहमध्यम्।रयित्वं धनत्वं तद्गुणा आपो यस्य,बस्तिर्मूत्रस्थानम् प्रतिष्ठात्वगुणा पृथिवी तस्य पादौ । तस्य होमाधारत्वं सम्पादयति–उर एवेत्यादिना ॥ पूर्वमुपक्रमस्थादृश्यत्वादिसाधारणधर्मस्य वाक्यशेषस्थसर्वज्ञत्वादिलिङ्गेन ब्रह्मनिष्ठत्वमुक्तं तद्वदत्राप्युपक्रमस्थसाधारणवैश्वानरशब्दस्य वाक्यशेषस्थहोमाधारत्वलिङ्गेन जाठरनिष्ठत्वमिति दृष्टान्तेन पूर्वपक्षयति–किं तावदित्यादिना ॥ पूर्वोत्तरपक्षयोर्जाठरब्रह्मणोर्ध्यानं फलम् । यदद्यते, तदन्नं येन पच्यते सोऽयं पुरुषशरीरेऽन्तरस्तीत्यर्थः । पक्षान्तरमाह–अग्निमात्रं चेति ॥ विश्वस्मै भुवनाय वैश्वानरम् अग्निम् अह्नां केतुं चिह्नं सूर्यं देवाः अकृण्वन् कृतवन्तः । सूर्योदये दिनव्यवहारादित्यर्थः । स्याद्वैश्वानर इत्यनुषङ्गः । हि यस्मात्

भामती ।

वैश्वानरस्य भोक्तुर्भोजनस्याग्निहोत्रतासंपिपादयिषयाह श्रुतिः–उर एव वेदिः । वेदिसारूप्यात् । लोमानि बर्हिः आस्तीर्णबर्हिःसारूप्यात् । हृदयं गार्हपत्यः । हृदयानन्तरं मनोऽन्वाहार्यपचनः । आस्यमाहवनीयः तत्र हि तदन्नं हूयते । ननु 'को न आत्मा किं ब्रह्म' इत्युपक्रमे आत्मब्रह्मशब्दयोः परमात्मनि रूढत्वेन तदुपरक्तायां बुद्धौ वैश्वानराग्न्यादयः शब्दास्तदनुरोधेन परमात्मन्येव कथंचिन्नेतुं युज्यन्ते न तु प्रथमावगतौ ब्रह्मात्मशब्दौ चरमावगतवैश्वानरादिपदानुरोधेनान्यथयितुं युज्येते । यद्यपि च वाजस-

आनन्दगिरीय–न्यायनिर्णयः ।

पृथङ्नाना वर्त्म गमनमात्मा स्वरूपमस्येति तथा नानागतिर्वगुणो वायुरस्य प्राणः । बहुलत्वगुण आकाशः संदेहोऽस्य देहमध्यम् । रयिर्धनं तद्गुणा आपोऽस्य बस्तिस्थमुदकम् । पृथिव्यां वैश्वानरस्य प्रतिष्ठानात्तस्य पादौ पृथिव्येव । तस्य होमाधारत्वसंपादनायोक्तमुर एवेत्यादि । तद्यद्भक्तं प्रथममागच्छेदित्यादिवाक्यमादिशब्दार्थः । तत्र श्रुतौ वैश्वानरोऽनात्माऽऽत्मा वेति संशयं हृदि निधायाऽऽद्ये पक्षत्रयं द्वितीये पक्षद्वयमाह–तत्रेति । संशयहेतुं प्रश्नपूर्वकमाह–किमिति । सत्यां सामग्र्यां कार्यध्रौव्यं फलितमाह–तत्रेति । वाक्योपक्रमस्थादृश्यत्वादिसाधारणधर्मस्य वाक्यशेषस्थसर्वज्ञत्वाद्युक्त्या ब्रह्मविषयत्ववदिहाप्युपक्रमगतसाधारणशब्दस्य शेषस्थहोमाधारत्वलिङ्गेन प्रसिद्ध्यनुगृहीतेन जाठरार्थत्वसिद्धेस्तस्यैवोपास्यतेति विमृश्य पूर्वपक्षमाह–किमिति । वैश्वानरविद्याश्रुतेः सविशेषब्रह्मण्यन्वयोक्तेः संगतयः । पूर्वपक्षे जाठराग्नेः सिद्धान्ते ब्रह्मणो ध्यानं फलम् । साधारणे शब्दे कुतो विशेषप्रतिज्ञेत्याह–कुत इति । प्रतिज्ञाविशेषे हेतुमाह–तत्रेति । योऽयं वैश्वानरोऽग्निः सोऽयं पुरुषाकारे देहेऽन्तरित्युक्त्वा तमेव विशिनष्टि–येनेति । पक्षान्तरमाह–अग्नीति । तन्मात्रग्रहे हेतुः–सामान्येनेति । विश्वस्मै भुवनाय वैश्वानरमग्निमह्नां

[ ऋ० सं० १० । ८८ । १२ ] इत्यादौ ॥ अग्निशरीरा वा देवता स्यात् । तस्यामपि प्रयोगदर्शनात्—"वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः" [ ऋ० सं० १ । ९८ । १ ] इत्येवमाद्यायाः श्रुतेर्देवतायामैश्वर्याद्युपेतायां सम्भवात् ॥ अथात्मशब्दसामानाधिकरण्याद् उपक्रमे च "को न आत्मा किं तद्ब्रह्म" [ छां० ५ । ११ । १ ] इति केवलात्मशब्दप्रयोगादात्मशब्दवशेन वैश्वानरशब्दः परिणेय इति ॥ उच्यते ॥ तथापि शारीर आत्मा स्यात् ॥ तस्य भोक्तृत्वेन वैश्वानरसन्निकर्षात् ॥ प्रादेशमात्रमिति च विशेषणस्य तस्मिन्नुपाधिपरिच्छिन्ने सम्भवात् ॥ तस्मान्नेश्वरो वैश्वानर इति ॥ एवं प्राप्ते । तत इदमुच्यते ॥ वैश्वानरः परमात्मा भवितुमर्हति ॥ कुतः ॥ साधारणशब्दविशेषात्—साधारणशब्दयोर्विशेषस्साधारणशब्दविशेषः ॥ यद्यप्येतावुभावप्यात्मवैश्वानरशब्दौ साधारणशब्दौ—वैश्वानरशब्दस्तु त्रयाणां

---

रत्नप्रभा ।

कं सुखप्रदो भुवनानां राजा वैश्वानरोऽभिमुखा श्रीरस्येति अभिश्रीः ईश्वरः । तस्मात्तस्य वैश्वानरस्य सुमतौ वयं स्याम । तस्यास्मद्विषया शुभमतिर्भवत्वित्यर्थः । पक्षत्रयेऽप्यरुचिं वदन्कल्पान्तरमाह—अथेत्यादिना ॥ "आत्मा वैश्वानरः" इति श्रुतेरित्यर्थः। केवलत्वं वैश्वानरशब्दशून्यत्वम् । अत्र जाठरो वैश्वानर इति मुख्यः पूर्वपक्षः प्राणाग्निहोत्रहोमाधारत्वलिङ्गात् । तस्य देहव्यापित्वादात्मत्वं, श्रुत्या द्युमूर्द्धत्वादिकल्पनया बृहत्त्वाद्ब्रह्मत्वमिति ध्येयम् । सिद्धान्तयति—तत इदमिति ॥ साधारण-

भामती ।

नेयिनां वैश्वानरविद्योपक्रमे 'वैश्वानरं ह वै भगवान् संप्रति वेद तं नो ब्रूहि' इत्यत्र नात्मब्रह्मशब्दौ स्तः, तथापि तत्समानार्थं छान्दोग्यवाक्यं तदुपक्रममिति तेन निश्चितार्थेन तदविरोधेन वाजसनेयिवाक्यार्थो निश्चीयते ।

आनन्दगिरीय—न्यायनिर्णयः ।

केतुं चिह्नं सूर्यमकृण्वन्कृतवन्तो देवास्तदुदये दिनव्यवहारादित्यर्थः । कल्पान्तरमाह—अग्नीति । तदभिमानिदेवताग्रहे हेतुः—तस्यामिति । वैश्वानरस्य देवस्य सुमतौ शोभनबुद्धौ वयं स्याम भवेम तस्यास्मद्विषया सुमतिर्भवत्वित्यर्थः । तत्र हेतू—राजा हीति । यस्माद्भुवनानामयं राजा कं सुखं सुखहेतुरभिमुखा श्रीरस्येत्यभिश्रीरीश्वरस्तमात्तस्य सुमतौ स्यामेत्यर्थः । हिकमित्येकं पदमित्येके । तत्राप्ययमेवार्थः । प्रयोगत्रयेऽपि तुल्यप्रयोगग्रहार्थमादिपदम् । कथं देवतार्थत्वमस्य प्रयोगस्येति तदाह—एवमाद्याया इति । ऐश्वर्यादीत्यादिपदं धर्मज्ञानवैराग्यादिसंग्रहार्थम् । पक्षत्रयेऽप्यपरितोषमाह—अथेति । वाजसनेयकेऽग्निवैश्वानरशब्दाभ्यामेवोपक्रमान्नेश्वरार्थतेति पक्षान्तरमाह—तथाऽपीति । शारीरे लक्षणया वैश्वानरशब्दोपपत्तिमाह—तस्येति । तत्रैव हेत्वन्तरमाह—प्रादेशेति । भूताग्निदेवताजीवविषयं पक्षत्रयमुपक्रममात्रं प्राणाहुत्याधारत्वादेर्द्युमूर्धत्वादेश्चायोगात् । हृदयं गार्हपत्य इत्यादिना हि देहावयवाः संनिहितस्यौदर्यस्याग्नेर्गार्हपत्यादित्वेन कल्प्यन्ते । आस्यमाहवनीयस्तद्यद्भक्तं तद्धोमीयमिति च जाठरस्य मुखानुस्यूतस्य प्राणाहुत्याधारस्याऽऽहवनीयत्वेनाऽऽस्यं कल्प्यते । न च द्युमूर्धत्वादेस्तत्रासंभवः । स होवाच मूर्धानमुपदिशन्नेष वा अतिष्ठा वैश्वानर इत्यादिना मूर्धादीनां द्युलोकाद्यात्मना संपादनात्तैर्जाठरस्यापि द्युमूर्धत्वादिसिद्धेरारोपितद्युमूर्धत्वादिना बृहत्त्वात्तस्यैव ब्रह्मत्वमापन्नादात्मत्वम् । न च ब्रह्मण्यपि द्युमूर्धत्वादेरारोपो जाठरे तत्कल्पनायाः श्रौतत्वेन विशेषादतो जाठरोपास्तिपरं वाक्यमित्युपसंहरति—तस्मादिति । सिद्धान्तयति—तत इति । हेतुं प्रश्नपूर्वकमादाय व्याचष्टे—कुत इति । कौ तौ साधारणौ शब्दौ को वा तयोर्विशेषस्तत्राऽऽह—यद्यपीति । नायं परमात्मगमको विशेषस्तस्य निर्विशेषस्य द्युमूर्धत्वाद्ययोगादित्याशंक्याऽऽह—

साधारणः । आत्मशब्दश्च द्वयोः ॥ तथापि विशेषो दृश्यते । येन परमेश्वरपरत्वं तयोरभ्युपगम्यते—"तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः" [ छां० ५ । १८ । २ ] इत्यादि ॥ अत्र हि परमेश्वर एव द्युमूर्द्धत्वादिविशिष्टोऽवस्थान्तरगतः प्रत्यगात्मत्वेनोपन्यस्त आध्यानायेति गम्यते ॥ कारणत्वात्—कारणस्य हि सर्वाभिः कार्यगताभिरवस्थाभिरवस्थावत्त्वाद् द्युलोकाद्यवयवत्वमुपपद्यते ॥ "स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" [ छां० ५ । १८ । १ ] इति च सर्वलोकाद्याश्रयं फलं श्रूयमाणं परमकारणपरिग्रहे सम्भवति ॥ "एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" [ छां० ५ । २४ । ३ ] इति तद्विदः सर्वपाप[1]प्रदाहश्रवणं, "को न आत्मा किं तद्ब्रह्म" [ छां० ५ । ११ । १ ] इति चात्मब्रह्मशब्दाभ्यामुपक्रम इत्येवमन्तानि[2] ब्रह्मलिंगानि परमेश्वरमेवावगमयन्ति ॥ तस्मात्परमेश्वर एव वैश्वानरः ॥ २४ ॥

**स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥**

इतश्च परमेश्वर एव वैश्वानरः । यस्मात्परमेश्वरस्यैवाग्निरास्यं द्यौर्मूर्धेतीदृशं त्रैलोक्यात्मकं रूपं स्मर्यते—( श्लो० ) "यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशश्श्रोत्रे तस्मै लोकात्मने नमः ॥१॥"

---

रत्नप्रभा ।

श्रुत्योरुपक्रमस्थयोर्विशेषात्प्रथमश्रुतमुख्यत्रैलोक्यशरीरलिङ्गात्सर्वात्मकेश्वरपरत्वं युक्तम् । न चरमश्रुतकल्पितहोमाधारत्वलिङ्गेन जाठरपरत्वमित्यर्थः । ननु निर्विशेषस्य कुतो विशेष इत्यत आह—अत्र हीति ॥ अवस्थान्तरगतः त्रैलोक्यात्मना स्थित इत्यर्थः । जाठरस्यापि ध्यानार्थं विशेषकल्पनेति चेत् । न, असत्कल्पनापत्तेः । ईश्वरस्य तु उपादानत्वाद्विशेषः सन्नेव ध्यानार्थमुच्यतामित्याह—कारणत्वादिति ॥ लिङ्गान्तराण्याह—स सर्वेष्वित्यादिना ॥ यथाग्नौ विक्षिप्तमिषीकातूलं दह्यते, एवं हास्य विदुष इत्यर्थः ॥ २४ ॥ स्मर्यमाणमनुमानं स्यादिति । नन्वसदारोपेणापि स्तुतिसम्भवान्न मूलश्रुत्यपेक्षे-

भामती ।

निश्चितार्थेन ह्यनिश्चितार्थं व्यवस्थाप्यते, नानिश्चितार्थेन निश्चितार्थम्।कर्मवच्च ब्रह्मापि सर्वशाखाप्रत्ययमेकमेव ।

आनन्दगिरीय—न्यायनिर्णयः ।

अत्रेति । अवस्थान्तरमध्यात्ममधिदैवमित्येवंरूपं तस्य तथैवोपन्यासफलमाह—आध्यानायेति । कथं परस्यावस्थान्तरभाक्त्वं तदाह—कारणत्वादिति । तदेव स्फुटयति—कारणस्येति । एतेन जाठरे द्युमूर्धत्वादि प्रत्युक्तम् । वैश्वानरोपासकस्य सर्वलोकाद्याश्रयफलश्रुतेश्च वैश्वानरस्येश्वरत्वमित्याह—स इति । वैश्वानरविदः सर्वपाप्मदाहश्रुतेश्च तस्य परत्वं तद्विज्ञाने तद्दाहप्रसिद्धेरित्याह—एवं हेति । यथाऽग्नौ क्षिप्तमिषीकातूलं दह्यत एवमस्य विदुषः सर्वाणि कर्माण्यनर्थहेतवो दह्यन्त इत्यर्थः । उपक्रमादपि तस्य परमात्मता तयोस्तत्रैव रूढेर्जाठरे त्वमुख्यत्वादित्याह—को न इति । उक्तलिङ्गानां फलमाह—इत्येवमेतानीति । श्रुतिलिङ्गसिद्धमुपसंहरति—तस्मादिति ॥ २४ ॥ स्मृत्या च श्रुत्यर्थः शक्यो निर्णेतुमित्याह—स्मर्यमाणमिति । तत्र प्रतिज्ञां पूरयति—इतश्चेति । सूत्रं व्याकुर्वन्नितःशब्दार्थमाह—यस्मादिति । स्मृतिमुदाहरति—यस्येति ।

---

१ पाप्मप्रदाहेति क्वचित्पाठान्तरम् । २ इत्येवमेतानि लिङ्गानीति क्वचित्पाठान्तरम् । इत्येवमन्तानि लिङ्गानीतिपाठान्तरं क्वचित् ।

[ विष्णुपुराणे ] इति, तत्स्मर्यमाणं रूपं मूलभूतां श्रुतिमनुमापयदस्य वैश्वानरशब्दस्य परमेश्वरपरत्वेन अनुमानं लिङ्गं गमकं स्यादित्यर्थः ॥ इतिशब्दो हेत्वर्थे-यस्मादिदं गमकं लिङ्गं, तस्मादपि वैश्वानरः परमात्मैवेत्यर्थः ॥ यद्यपि स्तुतिरियं तस्मै लोकात्मने नम इति ॥ स्तुतित्वमपि नासति मूलभूते वेदवाक्ये सम्यगीदृशेन रूपेण सम्भवति ॥ "द्यां मूर्द्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे। दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता" इत्येवञ्जातीयका च स्मृतिरिहोदाहर्तव्या ॥ २५ ॥

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥ २६ ॥**

अत्राह-न परमेश्वरो वैश्वानरो भवितुमर्हति ॥ कुतः ॥ शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च-शब्दस्तावद्-वैश्वानरशब्दो न परमेश्वरे सम्भवति ॥ अर्थान्तरे रूढत्वात् ॥ तथाऽग्निशब्दः "स एषोऽग्निर्वैश्वानरः" [ शत० ब्रा० १० । ६ । १ । ११ ] इति। आदिशब्दाद् "हृदयं गार्हपत्यः" [ छां० ५।

रत्नप्रभा।

त्याशंक्याह-यद्यपि स्तुतिरिति ॥ तथापीति पदमर्थतः पठति-स्तुतित्वमपीति ॥ द्युमूर्धत्वादिरूपेण स्तुतिर्नरमात्रेण कर्तुमशक्या विनाश्रुतिमित्यर्थः। सता रूपेण स्तुतिसम्भवान्नासदारोप इति भावः ॥२५॥ शब्दादीनां गतिं वक्तुमुक्तसिद्धान्तमाक्षिप्य समाधत्ते-शब्दादिभ्य इति ॥ "स एषोऽग्निर्वैश्वानरः" [ शत० ब्रा० १० ।६।१।११ ] इत्यग्निरहस्ये वैश्वानरविद्यायां श्रुतोऽग्निशब्द ईश्वरे न सम्भवतीत्यन्वयः। सूत्रस्थादिशब्दार्थमाह-आदिशब्दादिति ॥ भक्तम् अन्नं होमीयं होमसाधनम्। तेन प्राणाग्निहोत्रं

भामती।

न च द्युमूर्धत्वादिकं जाठरभूताग्निदेवताजीवात्मनामन्यतमस्यापि संभवति। न च सर्वलोकाश्रयफलभागिता, न च सर्वपाप्मप्रदाह इति पारिशेष्यात्परमात्मैव वैश्वनर इति निश्चिते कुतः पुनरियमाशङ्का-शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेदिति। उच्यते-तदेवोपक्रमानुरोधेनान्यथा नीयते, यन्नेतुं शक्यम्। अशक्यौ च

आनन्दगिरीय-न्यायनिर्णयः।

तस्याः श्रुतिवन्मानत्वं व्युदस्य तद्द्वारा तदाह-तदिति। इतिशब्दस्य वाक्यसमाप्त्यर्थत्वं व्यावर्त्य हेत्वर्थत्वं व्यनक्ति-यस्मादिति। स्तुतेरसदारोपेऽपि संभवान्न मूलश्रुत्यपेक्षेत्याशंक्याऽऽह-यद्यपीति। सद्रूपेण स्तुतित्वमौत्सर्गिकमसति श्रुत्यपवादे दुर्वारमित्यर्थः। अस्तुतिरूपामपि स्मृतिमाह-द्यामिति। इहेति त्रैलोक्यदेहस्य वैश्वानरस्येश्वरतायामित्यर्थः ॥ २५ ॥ सिद्धान्तं विधान्तरेणाऽऽक्षिप्य समाधत्ते-शब्दादिभ्य इति। आक्षेपं विवृण्वन्नर्थमाह-अत्रेति। स्थितः सिद्धान्तः सप्तम्यर्थः। श्रुत्यादिना वैश्वानरस्योक्तेश्वरत्वाक्षेपे प्रश्नद्वारा हेतुमादत्ते-कुत इति। तत्र शब्दं व्याचष्टे-शब्द इति। ईश्वरस्य विरोधीति शेषः। तदेव स्फोरयति-वैश्वानरेति। शब्दान्तरमाह-तथेति। सोऽपि श्रौतो वैश्वानरशब्दवदीश्वरे न संभवतीति योजना। आदिशब्दोपात्तं लिङ्गमाह-आदीति। बहूक्त्यर्थं लिङ्गान्तरमाह-

१ "स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" इति भाष्यलक्षणानुसारेण भाष्यपदस्यैवेदं व्याख्यानं नान्यस्येति। एवमन्यत्रापि। २ स्तुतित्वमपि न सम्भवतीत्यस्यान्वयः। ३ पुरुषविधमपि चैनमिति पाठान्तरम्। ४ यथा वैश्वानरशब्दस्तथेत्यर्थः।

१८ । २ ] इत्याद्यग्नित्रेताप्रकल्पनं, "तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्" [ छां०५।१९।१ ] इत्यादिना च प्राणाहुत्यधिकरणतासङ्कीर्तनम् । एतेभ्यो हेतुभ्यो जाठरो वैश्वानरः प्रत्येतव्यः॥ तथान्तःप्रतिष्ठानमपि श्रूयते—"पुरुषेऽन्तःप्रतिष्ठितं वेद" [ शत० ब्रा० १० । ६ । १ । ११ ] इति ॥ तच्च जाठरे सम्भवति ॥ यदप्युक्तं "मूर्धैव सुतेजाः" [ छां० ५ । १८ । २ ] इत्यादेर्विशेषात्कारणात्परमात्मा वैश्वानर इति ॥ अत्र ब्रूमः ॥ कुतो ह्येष निर्णयः—यदुभयथापि विशेषप्रतिभाने सति परमेश्वरविषय एव विशेष आश्रयणीयो न जाठरविषय इति ॥ अथ वा भूताग्नेरन्तर्बहिश्चावतिष्ठमानस्यैष निर्देशो भविष्यति ॥ तस्यापि हि द्युलोकादिसम्बन्धो मन्त्रवर्णादवगम्यते—"यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्षम्" [ ऋ० सं० १० । ८८ । ३ ] इत्यादौ ॥ अथ वा तच्छरीराया

रत्नप्रभा ।

कार्यमित्यर्थः । वाजसनेयिनामग्निरहस्ये सप्रपञ्चां वैश्वानरविद्यामुक्त्वा—"स यो हैतमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद स सर्वत्रान्नमत्ति" [ शत० ब्रा० १० । ६ । १ । ११ ] इत्युक्तं देहान्तरस्थत्वं जाठरे सम्भवति प्रसिद्धेरित्याह—**तथेति** ॥ अत्र सूत्रे आदिपदेनैवान्तःप्रतिष्ठानस्य ग्रहे सम्भवति पृथगुक्तिः साधारणलिङ्गत्वद्योतनार्था । शब्दादिबलादिदमपि जाठरं गमयतीत्यभ्युच्चयः । **यद्यपि** द्युमूर्द्धत्वादिविशेष ईश्वरपक्षपाती होमाधारत्वादिर्जाठरपक्षपातीति प्रतिभानं समम्, **तथापि** पारमेश्वरो विशेषो जाठरे न सम्भवतीति बलवानित्यत आह—**अथ वेति** ॥ **एषः** द्युमूर्द्धत्वादिनिर्देश इत्यर्थः । **इमां** पृथिवीं, द्यामपि, ते एव द्यावापृथिव्यौ **रोदसी**, तयोर्मध्यम् **अन्तरिक्षं** च **यो** भूताग्निः, भानुरूपेण **आततान** व्याप्तवान्, स ध्यातव्य इत्यर्थः । जडमात्रस्य न ध्येयत्वमित्यत आह—**अथ वेति**॥

भामती ।

वैश्वानराग्निशब्दावन्यथा नेतुमिति शंकितुरभिमानः । अपि चान्तःप्रतिष्ठितत्वं च प्रादेशमात्रत्वं च न सर्वव्यापिनोऽपरिमाणस्य च परब्रह्मणः संभवतः । न च प्राणाहुत्यधिकरणताऽन्यत्र जाठराग्नेर्युज्यते । न च गार्हपत्यादिहृदयादिता ब्रह्मणः संभविनी । तस्माद्यथायोगं जाठरभूताग्निदेवताजीवानामन्यतमो वैश्वानरः,

आनन्दगिरीय—न्यायनिर्णयः ।

**तद्यदिति** । अपेक्षितां प्रतिज्ञां पूरयति—**एतेभ्य इति** । वाजसनेयकेऽग्निरहस्ये वैश्वानरेऽग्निशब्दात्तस्य परस्मिन्नयोगात्तत्सामान्याच्छान्दोग्येऽपि वैश्वानरोऽग्निरेव, स चाऽऽहुत्याधारत्वादिलिङ्गाज्जाठर एवेति भावः । तत्रैव लिङ्गान्तरमाह—**तथेति** । यथोक्तहेतुभ्यो वैश्वानरो नेश्वरस्तथा वक्ष्यमाणहेतोरपीत्यर्थः । अन्तःप्रतिष्ठानमपि वैश्वानरस्येति शेषः । अग्निरहस्ये सप्रपञ्चां वैश्वानरविद्यामुक्त्वा स यो हैतमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद स सर्वलोकाद्याश्रयं फलमत्तीत्युक्तं पुरुषेऽन्तःप्रतिष्ठितश्चाग्निर्जाठर एव प्रसिद्धेरित्यर्थः । तथाऽपि वाजसनेयके द्युमूर्धत्वादिश्रवणान्न जाठरः स्यादित्युक्तमनुवदति—**यदपीति** । अनेकलिङ्गानुगृहीतानन्यथासिद्धवैश्वानराग्निश्रुतिभ्यामेकं लिङ्गं नेयमित्याह—**अत्रेति** । जाठरेऽपि द्युमूर्धत्वादि कथंचिन्नीतमिति भावः । न जाठरे मुख्यं द्युमूर्धत्वादीत्यपरितोषादाह—**अथ वेति** । एष निर्देशो वैश्वानराग्निशब्दाभ्यामन्तःप्रतिष्ठानोक्त्या चेति शेषः । तत्रापि कुतो द्युमूर्धत्वादि सिद्धं तत्राऽऽह—**तस्यापीति** । अपिरीश्वरदृष्टान्तार्थः । इमां पृथिवीमुत द्यामपि द्यावापृथिव्यावेव रोदसी यो भानुरूपेणाऽऽततान व्याप्तवानन्तरिक्षं च तयोर्मध्यमाततान स देवो द्युलोकाद्यवयवो ध्येय इत्यर्थः । परिच्छिन्नभूताग्नेर्न द्युलोकाद्यवयवत्वमित्यरुच्या कल्पान्तरमाह—**अथ वेति** । द्युमूर्धत्वादिविशेषस्यान्यथासिद्धत्वे फलितमाह—

१ इत्येतेभ्य इत्यर्थः । २ट मूले पाठान्तरम् ।

देवताया ऐश्वर्ययोगाद् द्युलोकाद्यवयवत्वं सम्भवति॥ तस्मान्न परमेश्वरो वैश्वानर इति॥ अत्रोच्यते॥ न तथा दृष्ट्युपदेशादिति-न शब्दादिभ्यः कारणेभ्यः परमेश्वरस्य प्रत्याख्यानं युक्तम्॥ कुतः॥ तथा जाठरापरित्यागेन दृष्ट्युपदेशात्। परमेश्वरदृष्टिर्हि जाठरे वैश्वानरे इहोपदिश्यते-"मनो ब्रह्मेत्युपासीत" [छां० ३। १८। १] इत्यादिवत्॥ अथ वा जाठरवैश्वानरोपाधिः परमेश्वर इह द्रष्टव्यत्वेनोपदिश्यते-"मनोमयः प्राणशरीरो भारूपः" [छां० ३। १४। २] इत्यादिवत्॥ यदि चेह परमेश्वरो न विवक्ष्येत, केवल एव जाठरोऽग्निर्विवक्ष्येत, ततो "मूर्धैव सुतेजाः" [छां० ५। १८। १] इत्यादेर्विशेषस्यासम्भव एव स्यात्॥ यथा तु देवताभूताग्निव्यपाश्रयेणाप्ययं विशेष उपपादयितुं न शक्यते, तथोत्तरसूत्रे वक्ष्यामः॥ यदि च केवल एव जाठरो विवक्ष्येत,

---

रत्नप्रभा।

सिद्धान्तयति-न तथा दृष्ट्युपदेशादितीति॥ परमेश्वरदृष्ट्योपास्यजाठराग्निप्रतीकवाचकाभ्यामग्निवैश्वानरशब्दाभ्यां द्युमूर्द्धत्वादिमानीश्वरो लक्ष्य इत्युक्त्वा कल्पान्तरमाह-अथ वा जाठर इति॥ अस्मिन्पक्षे प्राधान्येनेश्वरोपास्यता, पूर्वत्र गुणतयेति भेदः। उपाधिवाचिभ्यां पदाभ्यामुपहितो लक्ष्य इत्यर्थः। लक्षणाबीजमसम्भवं व्याचष्टे-यदि चेति॥ पुरुषमपीत्यादिसूत्रशेषं व्याचष्टे-यदि च केवल इति॥

भामती।

न तु ब्रह्म। तथा च ब्रह्मात्मशब्दावुपक्रमगतावप्यन्यथा नेतव्यौ। द्युमूर्धत्वादयश्च स्तुतिमात्रम्। अथवा अग्निशरीराया देवताया ऐश्वर्ययोगात् द्युमूर्धत्वादय उपपद्यन्त इति शंकितुरभिसंधिः। अत्रोत्तरम्-न। कुतः, तथा दृष्ट्युपदेशात्। अद्धा चरममनन्यथासिद्धं प्रथमावगतमन्यथयति। न त्वत्र चरमस्यानन्यथासिद्धिः, प्रतीकोपदेशेन वा मनो ब्रह्मेतिवत्, तदुपाध्युपदेशेन वा मनोमयः प्राणशरीरो भारूप इतिवदुपपत्तेः। व्युत्पत्त्या वा वैश्वनराग्निशब्दयोर्ब्रह्मवचनत्वान्नान्यथासिद्धिः। तथा च ब्रह्माश्रयस्य प्रत्ययस्याश्रयान्तरे जाठरवैश्वानराह्वये क्षेपेण वा जाठरवैश्वानरोपाधिनि वा ब्रह्मण्युपास्ये वैश्वानरधर्माणां ब्रह्मधर्माणां च समावेश उपपद्यते। असंभवादिति सूत्रावयवं व्याचष्टे-यदि चेह परमेश्वरो न विवक्ष्येतेति। पुरुषमपि चैनमधीयत इति सूत्रावयवं व्याचष्टे-यदि च केवल एवेति। न ब्रह्मोपाधितया नापि प्रतीकतयेत्यर्थः। न केवलमन्तःप्रतिष्ठितं पुरुषमपीत्यपेरर्थः। अत एव यत्पुरुष इति पुरुषमनूद्य न वैश्वानरो विधीयते। तथा सति पुरुषे वैश्वनरदृष्टिरुपदिश्येत। एवं च परमेश्वरदृष्टिर्हि जाठरे वैश्वानर इहोपदिश्यत इति भाष्यं विरुध्येत। श्रुतिविरोधश्च। 'स यो हैतमेवमग्निं वैश्वानरं पुरुषं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति वैश्वानरस्य हि पुरुषत्ववेदनमत्रानूद्यते, न तु पुरुषस्य वैश्वानरत्ववेदनम्। तस्मात् 'स एषो-

आनन्दगिरीय-न्यायनिर्णयः।

तस्मादिति। परिहारमवतारयति-अत्रेति। तदक्षराणि व्याचष्टे-नेत्यादिना। दृष्ट्युपदेशं सदृष्टान्तं स्पष्टयति-परमेति। ब्रह्मप्रतीकस्य जाठरस्योपास्यतेष्टेति शिष्ट्वा सूत्रावयवं तदुपाधिनो ब्रह्मण एवोपास्यतेति विधान्तरेण व्याकरोति-अथ वेति। जाठरप्रतीकत्वात्तदुपाधित्वाद्वा परस्मिन्नपि लक्षणयाऽग्न्यादिशब्दसिद्धौ न तस्य तल्लिङ्गान्यथाकरणे शक्तिरिति भावः। असंभवादिति व्याचष्टे-यदि चेति। उपास्यर्थत्वेऽपि जाठरे द्युमूर्धत्वादेरसत एवाऽऽरोपः स्यान्न च सति संभवे स युक्त इत्यर्थः। अस्तु तर्हि देवतादिविषयत्वं विशेषस्येत्याशंक्याऽऽह-यथेति। पुरुषमपीत्यादि विभजते-यदि चेति। ब्रह्मोपाधित्वतत्प्रतीकत्वयोरसत्त्वं कैवल्यं तस्य सर्वलोकाद्याश्रयं फलमिति शेषः। पुरुषत्वेऽपि कथं ब्रह्मणस्तदन्तःप्रतिष्ठितत्वं

पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं तस्य स्यात् । न तु पुरुषत्वम् ॥ पुरुषमपि चैनमधीयते वाजसनेयिनः—"स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेन्तःप्रतिष्ठितं वेद" [ शत० ब्रा० १० । ६ । १ । ११ ] इति ॥ परमेश्वरस्य तु सर्वात्मत्वात्पुरुषत्वं पुरुषेऽन्तःप्रतिष्ठितत्वं चोभयमुपपद्यते ॥ ये तु पुरुषविधमपि चैनमधीयते इति सूत्रावयवं पठन्ति, तेषामेषोऽर्थः—केवलजाठरपरिग्रहे पुरुषेन्तःप्रतिष्ठितत्वं केवलं स्यात् । न तु पुरुषविधत्वम् ॥ पुरुषविधमपि चैनमधीयते वाजसनेयिनः—"पुरुषविधं पुरुषेन्तःप्रतष्ठितं वेद" [ शत० ब्रा० १० । ६ । १ । ११ ] इति ॥ पुरुषविधत्वं च प्रकरणात्—यदधिदैवतं द्युमूर्धत्वादिपृथिवीप्रतिष्ठितत्वान्तं, यच्चाध्यात्मं प्रसिद्धं मूर्धत्वादिचुबुकप्रतिष्ठितत्वान्तं, तत्परिगृह्यते ॥ २६ ॥

## अत एव न देवता भूतं च ॥ २७ ॥

यत्पुनरुक्तं भूताग्नेरपि मन्त्रवर्णे द्युलोकादिसम्बन्धदर्शनात्—"मूर्धैव सुतेजाः" [ छां० ५ । १८ । १ ] इत्याद्यवयवकल्पनं तस्यैव भविष्यति तच्छरीराया देवताया ऐश्वर्ययोगादिति ॥ तत्परिहर्तव्यम् ॥ अत्रोच्यते ॥ अत एवोक्तेभ्यो हेतुभ्यो न देवता वैश्वानरः ॥ तथा भूताग्निरपि

रत्नप्रभा ।

ईश्वरप्रतीकत्वोपाधित्वशून्य इत्यर्थो विवक्ष्येत, तदेति शेषः । यद् यः पुरुषः पूर्णः, स एषोऽग्निः वैश्वानरशब्दितजाठरोपाधिक इति श्रुत्यर्थः । यः वेद, स सर्वत्र भुंक्त इत्यर्थः ॥ पुरुषत्वं पूर्णत्वमचेतनस्य जाठरस्य नेत्युक्त्वा पाठान्तरे पुरुषविधत्वं देहाकारत्वं तस्य नेत्याह—ये त्विति ॥ ननु जाठरस्यापि देहव्यापित्वात् तद्विधत्वं स्यादित्यत आह—पुरुषविधत्वं च प्रकरणादिति ॥ न देहव्यापित्वं पुरुषविधत्वम् । किन्तु विराड्देहाकारत्वमधिदैवं पुरुषविधत्वम्, अध्यात्मं चोपासकमूर्द्धादिचुबुकान्तेष्वङ्गेषु सम्पन्नत्वमीश्वरस्य पुरुषविधत्वमित्यर्थः ॥२६॥ईश्वरस्याङ्गेषु सम्पत्तिर्वक्ष्यते। एवं जाठरं निरस्य पक्षद्वयं निरस्यति—अत एवेति॥ सूत्रं व्याचष्टे—यत्पुनरित्यादिना ॥ द्युमूर्द्धत्वादिः, सर्वलोकफलभाक्त्वं, सर्वपाप्मप्रदाहः, इति आत्मब्रह्म-

भामती ।

ऽग्निर्वैश्वानरो यत्' इति यदः पूर्वेण संबन्धः, पुरुष इति तत्र पुरुषदृष्टेरुपदेश इति युक्तम् ॥ २४ ॥ ॥ २५ ॥ २६ ॥ अत एव न देवता भूतं च । अत एवैतेभ्यः श्रुतिस्मृत्यवगतद्युमूर्धत्वादिसंबन्धसर्वलोकाश्रयफलभागित्वसर्वपाप्मप्रदाहात्मब्रह्मपदोपक्रमेभ्यो हेतुभ्य इत्यर्थः । 'यो भानुना पृथिवीं द्यामुतेमाम्' इति मन्त्रवर्णोऽपि न केवलौष्ण्यप्रकाशविभवमात्रस्य भूताग्नेरिममीदृशं महिमानमाह, अपि तु

आनन्दगिरीय—न्यायनिर्णयः ।

तत्राऽऽह—परमेति । पाठान्तरमादाय व्याचष्टे—ये त्विति । जाठरस्याचेतनत्वात्पुरुषत्ववन्न तद्विधत्वमपीत्यर्थः । ब्रह्मणोऽपि पुरुषत्वमेव न तद्विधत्वमित्याशंक्याऽऽह—पुरुषेति । तच्च ब्रह्मण्युपास्त्यर्थं स्यादिति भावः ॥ २६ ॥ द्युमूर्धत्वादिविशेषस्य जाठरविषयत्वं संदूष्य देवतादिविषयत्वं दूषयति—अत एवेति । सूत्रं व्याकर्तुं व्यावर्त्यं पक्षद्वयमनूद्य तस्य निरस्यत्वमाह—यदिति । सूत्रमुत्थाप्य व्याकरोति—अत्रेति । द्युमूर्धत्वादिसंबन्धसर्वलोकाद्याश्रयफलभाक्त्वसर्वपाप्मदाहात्मब्रह्मोपक्रमा उक्ता हेतवः । भूतदेवतयोरपि द्युमूर्ध-

१ भविष्यतीतीति बहुषु पुस्तकेषु पाठान्तरं दृश्यते।

न वैश्वानरः ॥ न हि भूताग्नेरौष्ण्यप्रकाशमात्रात्मकस्य द्युमूर्धत्वादिकल्पनोपपद्यते ॥ विकारस्य विकारान्तरात्मत्वासम्भवात् ॥ तथा देवतायाः सत्यप्यैश्वर्ययोगे न द्युमूर्द्धत्वादिकल्पना सम्भवति ॥ अकारणत्वात् । परमेश्वराधीनैश्वर्यत्वाच्च ॥ आत्मशब्दासम्भवश्च सर्वेष्वेषु पक्षेषु स्थित एव ॥ २७ ॥

## साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

पूर्वं जाठराग्निप्रतीको जाठराग्न्युपाधिको वा परमेश्वर उपास्य इत्युक्तमन्तःप्रतिष्ठितत्वाद्यनुरोधेन ॥ इदानीं तु विनैव प्रतीकोपाधिकल्पनाभ्यां साक्षादपि परमेश्वरोपासनपरिग्रहे न कश्चिद्विरोध इति जैमिनिराचार्यो मन्यते ॥ ननु जाठराग्न्यपरिग्रहेऽन्तःप्रतिष्ठितत्ववचनं शब्दादीनि च कारणानि विरुद्ध्येरन्निति ॥ अत्रोच्यते ॥ अन्तःप्रतिष्ठितत्ववचनं तावन्न विरुध्यते ॥ न हीह "पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद"

रत्नप्रभा ।

शब्दोपक्रम एते उक्तहेतवः । तानेव स्मारयति—न हि भूताग्नेरित्यादिना ॥ "यो भानुना" [ऋ० सं० १०। ९८।३] इति मन्त्रेणेश्वरदृष्टया महिमोक्त इति भावः॥२७॥पूर्वमग्निवैश्वानरशब्दावीश्वरलक्षकावित्युक्तम् । अधुना प्रतीकोपाधिपरित्यागेन विराट्पुरुषाकारस्य भगवतो वैश्वानरस्याध्यात्ममूर्धादिचुबुकान्तेषु सम्पाद्योपास्यत्वाङ्गीकारेऽपि न शब्दादिविरोधः । शब्दयोरीश्वरे योगवृत्त्या मुख्यत्वात् । अन्तःस्थत्वादीनां च तत्र सम्भवादित्याह—साक्षादपीति ॥ साक्षात्पदस्यार्थमाह—विनैवेति ॥ जाठराग्निसम्बन्धं विनेश्वरस्योपास्यत्वेऽपि शब्दाद्यविरोधं जैमिनिर्मन्यत इत्यर्थः । इदमन्तःस्थत्वमुदरस्थत्वरूपं नोच्यते । किन्तु नखादिशिखान्तावयवसमुदायात्मकपुरुषशरीरे मूर्धादिचुबुकान्ताङ्गानि वृक्षे शाखावत्प्रतिष्ठितानि । तेषु सम्पन्नो वैश्वानरः पुरुषेऽन्तःप्रतिष्ठित इत्युच्यते । अतो यथा शाखास्थस्य पक्षिणो वृक्षान्तःस्थत्वं, तथा वैश्वानरस्य पुरुषान्तःस्थत्वमित्याह—न हीह पुरुषविधमित्यादिना ॥ अग्न्यादिशब्दस्येश्वरवाचित्वाज्जाठराग्ने-

भामती ।

ब्रह्मविकारतया ताद्रूप्येणेति भावः ॥ २७ ॥ साक्षादप्यविरोधं जैमिनिः । यदेतत्प्रकृतं मूर्धादिषु चुबुकान्तेषु पुरुषावयवेषु द्युप्रभृतीन्पृथिवीपर्यन्तांस्त्रैलोक्यात्मनो वैश्वानरस्यावयवान् संपाद्य पुरुषविधत्वं कल्पितं तदभिप्रायेणेदमुच्यते 'पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति । अत्रावयवसंपत्त्या पुरुषविधत्वं कार्यकारणसमुदायरूपपुरुषावयवमूर्धादिचुबुकान्तःप्रतिष्ठानाच्च पुरुषेऽन्तःप्रतिष्ठितत्वं समुदायमध्यपतितत्वा-

आनन्दगिरीय—न्यायनिर्णयः ।

त्वादि सिध्यतीत्युक्तं प्रत्याह—न हीति । किंच, न देवताया निरङ्कुशमैश्वर्यं किंत्वीश्वरायत्तमतस्तस्यैव सर्वकारणस्य मूर्धद्युत्वादीत्याह—परमेश्वरेति । पक्षत्रयसाधारणं दोषमाह—आत्मेति । चकारो ब्रह्मशब्दायोगस्य सर्वपाप्मदाहाद्ययोगस्य च समुच्चयार्थः ॥ २७ ॥ वाजसनेयकेऽग्निशब्दं जाठरार्थमुपेत्य परस्मिन्नपि तत्संबन्धाल्लक्षणां स्वीकृत्य ब्रह्मोपास्तिरित्युक्तम् । इदानीमत्राध्यग्न्यादिशब्दो ब्रह्मार्थः । ततो यदधिदैवं द्युलोकादिपृथिव्यन्तं यच्चाध्यात्मं मूर्धादिचुबुकान्तं रूपं तदनुगतं ब्रह्मैवोपास्यं न जाठरावच्छिन्नमित्याह—साक्षादिति । वृत्तमनूद्य सूत्रार्थं विवृणोति—पूर्वमित्यादिना । जाठरस्य प्रतीकादित्वेन ग्रहे हेतुं सूचयति—अन्तरिति । साक्षादीश्वरोपास्तौ विरोधं शंकयते—नन्विति । विरोधं व्युदस्यति—अत्रेति । अन्तःप्रतिष्ठितत्वोक्तेर्जाठराग्रहेऽप्यविरोधं प्रतिज्ञाय हेतुमाह—न हीति । इहेति वाजसनेयकोक्तिः । अन्तःप्रतिष्ठि-

१ प्यैश्वर्ये न इति पाठान्तरम् ।

[ शत० ब्रा० १० । ६ । १ । ११ ] इति जाठराग्न्यभिप्रायेणेदमुच्यते ॥ तस्याप्रकृतत्वादसंशब्दितत्वाच्च ॥ कथं तर्हि यत्प्रकृतं मूर्द्धादिषु चुबुकान्तेषु पुरुषावयवेषु पुरुषविधत्वं कल्पितं तदभिप्रायेणेदमुच्यते—"पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" [ शत० ब्रा० १० । ६ । १ । ११ ] इति ॥ यथा वृक्षे शाखां प्रतिष्ठितां पश्यतीति, तद्वत् ॥ अथ वा यः प्रकृतः परमात्माऽध्यात्ममधिदैवतं च पुरुषविधात्वोपाधिः, तस्य यत्केवलं साक्षिरूपं तदभिप्रायेणदमुच्यते "पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" [ शत० ब्रा० १० । ६ । १ । ११ ] इति ॥ निश्चिते च पूर्वापरालोचनवशेन परमात्मपरिग्रहे तद्विषय एव वैश्वानरशब्दः केनचिद्योगेन वर्तिष्यते—विश्वश्चायं नरश्च, विश्वेषां वाऽयं नरः, विश्वे वा नरा अस्येति विश्वानरः परमात्मा । सर्वात्मत्वात् ॥ विश्वानर एव वैश्वानरः ॥ तद्धितोऽनन्यार्थो राक्षसवायसादिवत् ॥ अग्निशब्दोऽप्यग्रणीत्वादियोगाश्रय-

रत्नप्रभा ।

रसंशब्दितत्वम् । अत्रेश्वरस्य पुरुषावयवेषु सम्पादनात् पुरुषविधत्वमन्तःस्थत्वं चेत्यर्थः । पक्षान्तरमाह—अथ वेति ॥ पुरुषविधत्वं पूर्ववत् । अन्तःस्थत्वं माध्यस्थ्यम् । साक्षित्वमित्यर्थः । एवमन्तःस्थत्वमीश्वरे व्याख्याय शब्दादीनि व्याचष्टे—निश्चिते चेति ॥ विश्वश्चायं नरो जीवः च सर्वात्मत्वात् । विश्वेषां विकाराणां वा नरः कर्त्ता । विश्वे सर्वे नराः जीवाः अस्य आत्मत्वेन नियम्यत्वेन वा सन्तीति विश्वानरः । रक्ष एव राक्षस इतिवत्स्वार्थे तद्धितप्रत्ययः । "नरे संज्ञायाम्" [ पाणि० सू० ६ । ३ । १२९ ] इति पूर्वपदस्य दीर्घता । अगिधातोर्गत्यर्थस्य निप्रत्ययान्तस्य रूपमग्निरिति । अङ्गयति गमयत्यग्रं कर्मफलं प्रापयतीति अग्निरग्रणीरुक्तः । अभितोऽगतीति वा अग्निः । वैश्वानरोपासकस्यातिथिभो-

भामती ।

तदवयवानां समुदायिनाम् । अत्रैव निदर्शनमाह—यथा वृक्षे शाखामिति । शाखाकाण्डमूलस्कन्धसमुदाये प्रतिष्ठिता शाखा तन्मध्यपतिता भवतीत्यर्थः । समाधानान्तरमाह—अथ वेति । अन्तःप्रतिष्ठत्वं माध्यस्थ्यं, तेन साक्षित्वं लक्षयति । एतदुक्तं भवति वैश्वानरः परमात्मा चराचरसाक्षीति । पूर्वपक्षिणोऽनुशयमुन्मूलयति—निश्चिते चेति । विश्वात्मकत्वात् वैश्वानरः प्रत्यगात्मा-

आनन्दगिरीय—न्यायनिर्णयः ।

तत्वमिदमा परामृष्टम् । प्रकरणोपपदयोरभावाज्जाठरानभिप्रायेऽपि पुरुषशब्देन करशिरश्चरणादिमतोऽभिधानात्कथं तद्विधत्वं तदन्तःप्रतिष्ठितत्वं वा परस्यापीत्याशंक्याऽऽह—कथमिति । पुरुषावयवसंपत्त्या तद्विधत्वं कार्यकारणसमुदायात्मनि तस्मिन्मूर्धादिचुबुकान्तावयवस्थितेश्च पुरुषेऽन्तःप्रतिष्ठितत्वं समुदायिनां समुदायमध्यपातित्वादित्याह—यथेति । अन्तःप्रतिष्ठितत्वेन माध्यस्थ्येन साक्षीव लक्ष्यत इति पक्षान्तरमाह—अथ वेति । अन्तःप्रतिष्ठितत्वोक्तेरविरोधमुक्त्वा वैश्वानरशब्दस्याविरोधमाह—निश्चिते चेति । तस्य तत्रारूढेर्न तद्विषयतेत्याशंक्याऽऽह—केनेति । सर्वात्मत्वमाश्रित्य योगवृत्तिमेव कथयति—विश्वश्चेति । सर्वकारणत्वेन योगवृत्तिमाह—विश्वेषामिति । सर्वेश्वरत्वेनापि तामाह—विश्वे वेति । सर्वात्मत्वं सर्वकारणत्वं सर्वेश्वरत्वोपलक्षणम् । तथाऽपि विश्वनर इति स्यात्कथं वैश्वानर इत्युच्यते तत्राऽऽह—विश्वेति । "नरे संज्ञायाम्" इति दीर्घता । अण्प्रत्ययस्तर्हि कथं तत्राऽऽह—तद्धित इति । अनन्यार्थत्वं प्रकृत्यर्थातिरिक्तार्थशून्यत्वम् । तथाऽपि कथं परस्मिन्नग्निपदं तदाह—अग्नीति । अगेर्धातोर्गत्यर्थस्य निप्रत्ययान्तस्याग्निरिति रूपं

णेन परमात्मविषय एव भविष्यति ॥ गार्हपत्यादिकल्पनं प्राणाहुत्यधिकरणत्वं च परमात्मनोऽपि सर्वात्मत्वादुपपद्यते ॥ २८ ॥ कथं पुनः परमेश्वरपरिग्रहे प्रादेशमात्रश्रुतिरुपपद्यते इति, तां व्याख्यातुमारभते—

अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

अतिमात्रस्यापि परमेश्वरस्य प्रादेशमात्रत्वमभिव्यक्तिनिमित्तं स्यात् ॥ अभिव्यज्यते किल प्रादेशमात्रपरिमाणः परमेश्वर उपासकानां कृते ॥ प्रदेशविशेषेषु हृदयादिषूपलब्धिस्थानेषु विशेषेणाभिव्यज्यते ॥ अतः परमेश्वरेऽपि प्रादेशमात्रश्रुतिरभिव्यक्तेरुपपद्यत इति, आश्मरथ्य आचार्यो मन्यते ॥ २९ ॥

अनुस्मृतेर्बादरिः ॥ ३० ॥

प्रादेशमात्रहृदयप्रतिष्ठेन वाऽयं मनसाऽनुस्मर्यते ॥ तेन प्रादेशमात्र इत्युच्यते ॥ यथा-प्रस्थमिता यवाः प्रस्था इत्युच्यन्ते, तद्वत् ॥ यद्यपि च यवेषु स्वगतमेव परिमाणं प्रस्थसम्बन्धाद्व्यज्यते न चेह परमेश्वर-

---

रत्नप्रभा ।

जनात्पूर्वं प्राणाग्निहोत्रं विद्याङ्गत्वेन विहितम् । तदर्थमग्नित्रेतादिकल्पनं प्रधानाविरोधेन नेतव्यमित्याह—गार्हपत्येति ॥ २८ ॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ मात्रां परिमाणमतिक्रान्तोऽतिमात्रः तस्य । विभोरित्यर्थः । उपासकानां कृतऽनुग्रहाय प्रादेशमात्रोऽभिव्यज्यते । प्रदेशेषु वा मीयतेऽभिव्यज्यत इति प्रादेशमात्रः ॥ २९ ॥ मतान्तरमाह—अनुस्मृतेरिति ॥ प्रादेशेन मनसा मितः प्रादे-

भामती ।

विश्वेषां वायं नरः, तद्विकारत्वाद्विश्वप्रपञ्चस्य । विश्वे नरा जीवा वात्मानोऽस्य तादात्म्येनेति ॥ २८ ॥ अभिव्यक्तेरित्याश्मरथ्यः । साकल्येनोपलम्भासंभवादुपासकानामनुग्रहायानन्तोऽपि परमेश्वरः प्रादेशमात्रमात्मानमभिव्यनक्तीत्याह—अतिमात्रस्यापीति । अतिक्रान्तो मात्रां परिमाणमतिमात्रः । उपासकानां कृते । उपासकार्थमिति यावत् । व्याख्यान्तरमाह—प्रदेशेषु वेति ॥ २९ ॥ ३० ॥

आनन्दगिरीय-न्यायनिर्णयः ।

तत्राङ्गयति गमयति जगतोऽग्रं जन्म प्रापयतीत्यग्निरप्रणीरुक्तः । आदिशब्दादभितोगतत्वं सर्वज्ञातृत्वं च गृहीतम् । एवं वाजिशाखायामपि परोपास्तिसिद्धौ न तद्बलाच्छान्दोग्यवाक्यं विघटनीयमित्युक्तम् । यत्तु च्छान्दोग्ये परस्मिन्नसंभवे लिङ्गमुक्तं तत्राऽऽह—गार्हपत्यादीति ॥ २८ ॥ सूत्रत्रयमाकांक्षाद्वाराऽऽदत्ते—कथमिति । मतभेदेन व्याख्यामेवं दर्शयन्नादावाश्मरथ्यमतमाह—अभिव्यक्तेरिति । विभोरीश्वरस्यायुक्ता प्रादेशमात्रतेति शंकां निरस्यन्व्याकरोति—अतिमात्रस्येति । अतिक्रान्ता मात्राः परिमाणं येन तस्येति यावत् । अभिव्यक्तिनिमित्तं प्रादेशमात्रत्वमित्येतदेव व्यनक्ति—अभिव्यज्यत इति । स्वाभाविकाणिमाद्यैश्वर्यख्यापनार्थं महतोऽपीश्वरस्योपासकान्प्रति सूक्ष्मत्वेन व्यक्तिरिति द्योतयति—किलेति । नियमेन प्रादेशमात्रतया व्यक्तौ हेत्वभावान्नेयं व्याख्येत्याशंक्याऽऽह—प्रदेशेष्विति । अभिव्यक्तिफलमाह—अत इति ॥ २९ ॥ मतान्तरमाह—अनुस्मृतेरिति । व्याचष्टे-प्रादेशेति । पूर्वेण विकल्पार्थो वाशब्दः । अभिव्यञ्जकस्थं परिमाणमभिव्यङ्ग्ये भातीत्येतद्दृष्टान्तेनाऽऽह—यथेति । वैषम्यमाशंक्य प्रत्याह—यद्यपीति । हृदयस्थं परिमाणं मनःप्रभवस्मृतावारोपितं स्मृत्यैक्येनाध्यस्तस्मर्यमाणेश्वरेऽध्यस्तमालम्बनमिति यथाकथंचिदित्युक्तम् । स्मृतिगतपरिमाणस्य हृदयद्वाराऽऽरोपितस्य स्मर्यमाणे कथमारोपो विषयवि-

गतं किञ्चित्परिमाणमस्ति यद्धृदयसम्बन्धाद्वृत्त्यज्येत ॥ तथापि प्रयुक्तायाः प्रादेशमात्रश्रुतेः सम्भवति यथाकथञ्चिदनुस्मरणमालम्बनमित्युच्यते । प्रादेशमात्रत्वेन वाऽयमप्रादेशमात्रोऽनुस्मरणीयः प्रादेशमात्रश्रुत्यर्थवत्तायै ॥ एवमनुस्मृतिनिमित्ता परमेश्वरे प्रादेशमात्रश्रुतिरिति, बादरिराचार्यो मन्यते ॥ ३० ॥

## सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥

सम्पत्तिनिमित्ता वा स्यात्प्रादेशमात्रश्रुतिः ॥ कुतः ॥ तथाहि समानप्रकरणं वाजसनेयिब्राह्मणं—द्युप्रभृतीन्पृथिवीपर्यन्तांस्त्रैलोक्यात्मनो वैश्वानरस्यावयवानध्यात्ममूर्धप्रभृतिषु चुबुकपर्यन्तेषु देहावयवेषु सम्पादयत्प्रादेशमात्रसम्पत्तिं परमेश्वरस्य दर्शयति । 'प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसम्पन्नाः तथा नु व एतान्वक्ष्यामि यथाप्रादेमात्रमेवाभिसम्पादयिष्यामीति । स होवाच मूर्धानमुपदिशन्नुवाच, एष वा अतिष्ठा वैश्वानरः, इति चक्षुषी उपदिशन्नुवाच, एष वै सुतेजा

रत्नप्रभा ।

शमात्र इत्यर्थः ॥ यथाकथञ्चिदिति । मनःस्थं प्रादेशमात्रत्वं स्मृतिद्वारा स्मर्यमाणे कल्पितं श्रुतेरालम्बनमित्यर्थः ॥ सूत्रस्यार्थान्तरमाह—प्रादेशेति ॥ ३० ॥ सम्प्रति श्रुत्युक्तां प्रादेशमात्रश्रुतेर्गतिमाह—सम्पत्तेरिति ॥ ब्राह्मणं पठति—प्रादेशमात्रमिवेति ॥अपरिच्छिन्नमपीश्वरं प्रादेशमात्रत्वेन सम्पत्त्या कल्पितं सम्यग्विदितवन्तो देवाः तमेवेश्वरम् अभि प्रत्यक्त्वेन सम्पन्नाः प्राप्तवन्तः ह वै पूर्वकाले । ततः वः युष्मभ्यं, तथा द्युप्रभृतीनवयवान् वक्ष्यामि, यथाप्रादेशमात्रं प्रादेशपरिमाणमनतिक्रम्य मूर्धाद्यध्यात्माङ्गेषु वैश्वानरं सम्पादयिष्यामीति प्राचीनशालादीन्प्रति राजा प्रतिज्ञाय स्वकीयमूर्धानमुपदिशन्करेण दर्शयन्नुवाच एष वै मे मूर्धा भूरादीँल्लोकानतीत्य उपरि तिष्ठतीति अतिष्ठा असौ द्युलोको वैश्वानरः । तस्य मूर्धेति यावत् । अध्यात्ममूर्धावेदेनाधिदैवमूर्धा सम्पाद्य ध्येय इत्यर्थः । एवं चक्षुरादिषूहनीयम् । स्वकीयचक्षुषी दर्शयन् एष वै सुतेजाः सूर्यो वैश्वानरस्य चक्षुरिति उवाच । नासिकापदेन तन्निष्ठः प्राणो

भामती ।

संपत्तेरिति जैमिनिः । मूर्धानमुपक्रम्य चुबुकान्तो हि कायप्रदेशः प्रादेशमात्रः । तत्रैव त्रैलोक्यात्मनो वैश्वानरस्यावयवान्संपादयन्प्रादेशमात्रं वैश्वानरं दर्शयति ॥ ३१ ॥ अत्रैव जाबालश्रुतिसंवादमाह सूत्रकारः—

आनन्दगिरीय—न्यायनिर्णयः ।

षयित्वेन भेदादित्याशंक्य व्याख्यान्तरमाह—प्रादेशेति । उपसंहरति—एवमिति ॥ ३० ॥ प्रादेशमात्रश्रुतेर्विषयं कथंचिदुक्त्वा साक्षादेव श्रुत्युक्तं विषयमाह—संपत्तेरिति । प्रतिज्ञां विभजते—संपत्तीति । संपत्तिरत्राश्रुतेति पृच्छति—कुत इति । उत्तरम्—तथाहीति । तदेव ब्राह्मणमुदाहरति—प्रादेशेति । परमेश्वरमप्रादेशमात्रमपि संपादनेन प्रादेशमात्रमिव सम्यग्विदितवन्तो देवास्तमेवेश्वरं पूर्वमभिसंपन्नास्ततो वो युष्मभ्यं तथा द्युप्रभृतीनेतानवयवान्वक्ष्यामि यथा प्रादेशपरिमाणं वैश्वानरं संपादयिष्यामीत्यौपमन्यवप्रभृतीन्प्रति वक्तव्यत्वेन प्रतिज्ञायाश्वपती राजोवाच किं कुर्वन्नित्युक्ते स्वस्य मूर्धानमुपदिशन्कराग्रेण दर्शयन्नेष वै लोकान्भूरादीनतीत्य तिष्ठतीत्यतिष्ठा द्यौर्वैश्वानरस्यावयव इति प्रसिद्धे मूर्धनि वैश्वानरस्याधिदैवं यो मूर्धा द्युलोकस्तदृष्टिः कर्तव्येत्यर्थः । स्वकीये चक्षुषी दर्शयन्नुवाचैष वै सुतेजाः शोभनतेजःसहितः सूर्योऽधिदैवं वैश्वानरस्य चक्षुरिति प्रसिद्धयोश्चक्षुषोर्वैश्वानरस्याधिदैवं यदादित्याख्यं चक्षुस्तदृष्टिरित्यर्थः । अध्या-

वैश्वानरः, इति नासिके उपदिशन्नुवाच, एष वै पृथग्वर्त्मात्मा वैश्वानरः, इति मुख्यमाकाशमुपदिशन्नुवाच, एष वै बहुलो वैश्वानरः, इति मुख्या अप उपदिशन्नुवाच,-एष वै रयिर्वैश्वानरः, इति चुबुकमुपदिशन्नुवाच, एष वै प्रतिष्ठा वैश्वानरः, इति" [ शत० ब्रा० ] चुबुकमित्यधरं मुखफलकमुच्यते ॥ यद्यपि वाजसनेयके द्यौरतिष्ठात्वगुणा समाम्नायते, आदित्यश्च सुतेजस्त्वगुणः ॥ छान्दोग्ये पुनर्द्यौः सुतेजस्त्वगुणा समाम्नायते । आदित्यश्च विश्वरूपत्वगुणः ॥ तथापि नैतावता विशेषेण किञ्चिद्धीयते ॥ प्रादेशमात्रश्रुतेरविशेषात् । सर्वशाखाप्रत्ययत्वाच्च ॥ सम्पत्तिनिमित्तां प्रादेशमात्रश्रुतिं युक्ततरां जैमिनिराचार्यो मन्यते ॥ ३१ ॥

## आमनन्ति चैनमस्मिन् ॥ ३२ ॥

॥ इति श्रीवैयासिक्यां शारीरकमीमांसायां प्रथमाध्यायस्य द्वितीयः पादस्समाप्तः ॥

---

रत्नप्रभा ।

लक्ष्यते । तस्मिन्नाध्यात्मिकप्राणेऽधिदैवप्राणस्य वायोर्दृष्टिमाह-नासिके इति ॥ अत्र सर्वत्र वैश्वानरशब्दः-तदङ्गपरः । मुखस्थं मुख्यं तस्मिन्नधिदैवं बहुलाकाशदृष्टिः मुखस्थलालारूपास्वप्सु रयिशब्दिततदीयबस्तिस्थोदकदृष्टिः चुबुके प्रतिष्ठा पादरूपा पृथिवी द्रष्टव्या । ननु गुणवैषम्येण विद्ययोर्भेदादग्निरहस्यश्रुत्यनुसारेण च्छान्दोग्यस्थप्रादेशमात्रश्रुतिः कथं व्याख्येयेत्याशंक्याह-यद्यपीत्यादिना ॥ एतावता अल्पवैषम्येण बहुतरप्रत्यभिज्ञासिद्धं विद्यैक्यं न हीयते शाखाभेदेऽपि सर्वशाखासु प्रतीयमानं वैश्वानराद्युपासनम् । एकमिति न्यायस्य वक्ष्यमाणत्वाच्च । अतिष्ठात्वगुणश्छान्दोग्ये उपसंहर्तव्यः । विश्वरूपत्वगुणश्च वाजिभिर्ग्राह्यः । तथा च द्युसूर्ययोः सुतेजस्त्वं सममतिष्ठात्वविश्वरूपत्वयोर्व्यवस्था । यद्वा शाखाभेदेन गुणव्यवस्थाऽस्तु, न विद्याभेद इति भावः ॥३१॥ प्रादेशत्वस्य सम्पत्तिप्रयुक्तत्वे श्रुत्यन्तरं संवादयति-आमन-

भामती ।

आमनन्ति चैनमस्मिन् । अविमुक्ते अविद्योपाधिकल्पितावच्छेदे जीवात्मनि स खल्वविमुक्तः । तस्मिन्प्रति-

आनन्दगिरीय-न्यायनिर्णयः ।

त्मप्रसिद्धयोर्नासिकयोर्वैश्वानरस्याधिदैवं यो वायुः प्राणस्तद्दृष्टिरित्याह-नासिके इति । अध्यात्ममुखावच्छिन्ने नभसि वैश्वानरस्य यदधिदैवं संदेहाख्यं नभस्तद्धीरित्याह-मुख्यमिति । मुखसंभवास्वप्सु वैश्वानरस्याधिदैवं या बस्तिस्थानीया आपस्तद्दृष्टिमाह-मुख्या इति । प्रसिद्धे चुबुके वैश्वानरस्य याऽधिदैवं पादाख्या पृथिवी तद्दृष्टिमाह-चुबुकमिति । ननु च्छान्दोग्यवाजसनेयकयोर्नैका विद्या गुणवैषम्यादतो न वाजसनेयकानुसारेण च्छान्दोग्ये प्रादेशमात्रश्रुतिर्नेतव्येति तत्राऽऽह-यद्यपीति । अल्पवैषम्येऽपि बहुतररूपप्रत्यभिज्ञानाद्विद्यैक्यमित्यर्थः । विद्यैक्यं किंचिदित्युक्तं तथाऽपि प्रकरणभेदाद्विद्याभेदमाशंक्याऽऽह-सर्वेति । न्यायस्य गुणोपसंहाराधिकारे वक्ष्यमाणत्वाद्वाजसनेयकस्थातिष्ठागुणश्छान्दोग्ये तद्वत्तश्च विश्वरूपगुणोऽन्यत्र ज्ञेय इत्यर्थः । छान्दोग्यवदितरत्र को न आत्मा किं ब्रह्मेत्युपक्रमाभावान्न विद्यैक्यमित्याशंक्य स एषोऽग्निर्वैश्वानरो यत्पुरुष इत्युपसंहारे पुरुषोद्देशेनाग्रणीत्वादिविधेरुपक्रमेऽपि तस्यैवावगमात्पुरुषस्य च परमात्मत्वादुभयत्र विद्यैक्याद्वाजसनेयकानुरोधाच्छान्दोग्ये प्रादेशमात्रश्रुतिरित्युपसंहरति-संपत्तीति ॥३१॥ प्रादेशमात्रश्रुतिः संपत्तिनिमित्तेत्यत्र श्रुत्यन्तरमाह-आमनन्तीति । सूत्रं व्याकरोति-

आमनन्ति च एनं परमेश्वरमस्मिन्मूर्धचुबुकान्तराले जाबालाः । "य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति वरणायां नास्यां च मध्ये प्रतिष्ठित इति । का वै वरणा का च नासीति" [ जाबाल० २ ] तत्र चेमामेव नासिकां वरणा, नासीति निरुच्य सर्वाणीन्द्रियकृतानि पापानि वारयति सा वरणा, सर्वाणीन्द्रियकृतानि पापानि नाशयतीति सा नासी इति । पुनरप्यामनन्ति–"कतमच्चास्य स्थानं भवतीति । भ्रुवोर्घ्राणस्य च यः सन्धिः स एष द्युलोकस्य परस्य च सन्धिर्भवति" [ जाबाल० २ ] इति ॥ तस्मादुपपन्ना परमेश्वरे प्रादेशमात्रश्रुतिः ॥ अभिविमानश्रुतिः प्रत्यगात्मत्वाभिप्राया । प्रत्यगात्मतया सर्वैः प्राणिभिरभिविमीयत इति अभिविमानः । अभिगतो वाऽयं प्रत्यगात्मत्वाद्,

रत्नप्रभा ।

न्तीति ॥ य एषोऽनन्तः अपरिच्छिन्नः अतः अव्यक्तो दुर्विज्ञेयः तं कथं जानीयामित्यत्रेः प्रश्ने याज्ञवल्क्यस्योत्तरं–स ईश्वरः अविमुक्ते कामादिभिर्बद्धे जीवे भेदकल्पनया प्रतिष्ठितः-उपास्यः । पुनरत्रिप्रश्नः–स इति । उत्तरं–वरणायामिति ॥ एवं प्रश्नोत्तरे अग्रेऽपि ज्ञेये । तत्र च श्रुतौ इमामेव भ्रूसहितां नासिकां निरुच्येति भाष्ययोजना । सर्वानिन्द्रियकृतान्दोषान्वारयतीति वरणा भ्रूः । सर्वान्दोषान्नाशयतीति नासी नासिकेति निर्वचनं श्रुतम् । नासाभ्रुवोर्जीवद्वारेश्वरस्थानत्वध्यानात्पापवारकत्वमिति मन्तव्यम् । तयोर्मध्येऽपि विशिष्य जीवस्य स्थानं पृच्छति–कतमादिति ॥ भ्रुवोरिति । उत्तरम् । प्राणस्येति पाठेपि घ्राणस्येत्यर्थः । स एष सन्धिर्द्युलोकस्य स्वर्गस्य परस्य च ब्रह्मलोकस्य सन्धित्वेन ध्येय इत्याह–स एष इति ॥ आभिमुख्येनाहं ब्रह्मेति विमीयते ज्ञायते इति अभिविमानः प्रत्यगात्मा । अभिगतश्चासौ विमानश्च । सर्वस्वरूपत्वे सत्यानन्त्यान्मानमत्र परिमाणम् । अभिविमिमीते

भामती ।

ष्ठितः परमात्मा, तादात्म्यात् । अत एव हि श्रुतिः–'अनेन जीवेनात्मना' इति । अविद्याकल्पितत्वेन

आनन्दगिरीय–न्यायनिर्णयः ।

आमनन्ति चेति । य एष प्रसिद्धः परमात्मा नाशाभावादनन्तः, स्वरूपेणानभिव्यक्तेरव्यक्तस्तं कथं विजानीयामित्यत्रिप्रश्ने याज्ञवल्क्यस्योत्तरम्–स इति । स हि परमात्मा जीवात्मन्यविमुक्ते व्यवहारतः संसारिणि प्रतिष्ठितः परस्यैव प्रत्यक्त्वादित्यर्थः । पुनरत्रिरपृच्छत्–स इति । तत्र याज्ञवल्क्यो ब्रूते–वरणायामिति । वरणा भ्रूः । प्रश्नान्तरं भूमिकापूर्वमादत्ते–तत्र चेति । प्रकृता श्रुतिः सप्तम्यर्थः । इमामेव प्रसिद्धां भ्रूसहितां नासिकां वारयति नाशयतीति वरणासहिता नासीति निश्चयेनोक्त्वेत्यर्थः । अविमुक्तस्य स्थानभूता का वै वरणा का च नासीति प्रश्नस्य प्रत्युक्तिः सर्वानिन्द्रियवृत्तिकृतान्दोषान्वारयति तेन वरणेति । सर्वानिन्द्रियवृत्तिकृतान्पाप्मनो नाशयति तेन नासीति । नियम्यजीवाधिष्ठानत्वद्वारा नियन्तुरीश्वरस्याधिष्ठानत्वान्नासाभ्रुवोः पाप्मवारकत्वादिसिद्धिः । तयोर्मध्येऽपि स्थानविशेषगवेषणया पृच्छति–कतमं चेति । याज्ञवल्क्यस्त्वाह–भ्रुवोरिति । प्राणो नासिक्यस्तयोर्मध्यं द्युलोकस्य स्वर्गस्य परस्य च ब्रह्मलोकस्य संधित्वेन ध्येयमित्याह–स इति । श्रुत्यन्तरसंवादफलमाह–तस्मादिति । विशेषणान्तरं घटयति–अभिविमानेति । प्रत्यक्त्वेन सर्ववेद्यत्वं सर्वात्मत्वे सत्यानन्त्यं सर्वकारणत्वं वा निमित्तीकृत्याभिप्रायमेव प्रकटयति–प्रत्यगिति । परमेश्वरे साधकसत्त्वाज्जाठरादौ तदभावात्परोपास्तिपरं वैश्वानरवाक्यमित्युपसंहरति–

विमानश्च मानवियोगादिति अभिविमानः। अभिविमिमीते वा सर्वं जगत् कारणत्वादिति अभिविमानः। तस्मात्परमेश्वर एव वैश्वानर इति सिद्धम् ॥ १ ॥ २ ॥ ३२ ॥ इति वैश्वानराधिकरणम् ॥ ७ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणपरमहंसपरिव्राजकाचार्यगोविन्दभगवत्पादपूज्यपादशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्येऽस्पष्टब्रह्मलिङ्गकोपास्यवाक्यजातविचारो नाम प्रथमाध्यायस्य द्वितीयः पादः समाप्तः ॥ १ । २ ॥

---

रत्नप्रभा।

निर्मिमीते। तस्माद्वैश्वानरवाक्यमुपास्ये ब्रह्मणि समन्वितमिति सिद्धम् ॥ १ ॥ २ ॥ ३२ ॥ (७) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्यव्याख्यायां भाष्यरत्नप्रभायां प्रथमाध्यायस्य द्वितीयः पादः समाप्तः ॥ १ । २ ॥

भामती।

भेदमाश्रित्याधाराधेयभावः। वरणा भ्रूः। शेषमतिरोहितार्थम् ॥ ३२ ॥ (७) ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकमीमांसाभाष्यविभागे भामत्यां प्रथमाध्यायस्य द्वितीयः पादः ॥ १ ॥ २ ॥

आनन्दगिरीय-न्यायनिर्णयः।

तस्मादिति। सविशेषप्रचुराणां वा रूढिबहुलानां वाऽन्यतरत्रास्पष्टलिङ्गानां वा वाक्यानां ब्रह्मण्यन्वयः सिद्ध इति पादार्थं निगमयति—इति सिद्धमिति ॥ ३२ ॥ (७) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि ( ज्ञान ) विरचिते शारीरकभाष्यन्यायनिर्णये प्रथमाध्यायस्य द्वितीयः पादः ॥ १ ॥ २ ॥

॥ इति प्रथमस्याध्यायस्याऽस्पष्टब्रह्मलिङ्गकोपास्यवाक्यजातविचाराख्यो द्वितीयः पादः ॥



# प्रथमाध्याये तृतीयः पादः ३.

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥ ३ ॥ १ ॥ ( १ ) ॥

इदं श्रूयते–"यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः" [ मुण्ड० २।२।५ ] इति । अत्र यदेतद् द्युप्रभृतीनामोतत्ववचनादायतनं किञ्चिदवगम्यते, तत्किं परं ब्रह्म स्यादाहोस्विदर्थान्तरमिति सन्दिह्यते ॥

रत्नप्रभा ।

ॐ नमो ब्रह्मणे । द्युभ्वोतभूमपदमक्षरमीक्षणीयं श्रीराममल्पहृदि भान्तमधीशितारम् । इन्द्रादिवेद्यमखिलस्य च शासितारं ज्योतिर्नभःपदमनिद्रमजं भजेऽहम् ॥ १ ॥ एवं रूढिपदबहुलानां प्रायेण सविशेषवाक्यानां समन्वयो द्वितीयपादे दर्शितः । अधुना यौगिकपदबहुलानां निर्विशेषप्रधानानां वाक्यानां समन्वयं वक्तुं तृतीयपादः प्रारभ्यते। अतोऽत्राधिकरणानां श्रुत्यध्यायपादसङ्गतयः। तत्र पूर्वमुपक्रमस्थसाधारणशब्दस्य वाक्यशेषस्थद्युमूर्द्धत्वादिना ब्रह्मपरत्वमुक्तम् । तद्वदत्राप्युपक्रमस्थसाधारणायतनत्वस्य वाक्यशेषस्थसेतुश्रुत्या वस्तुतः परिच्छिन्ने प्रधानादौ व्यवस्थेति दृष्टान्तलक्षणाधिकरणसङ्गतिः । पूर्वपक्षे प्रधानाद्युपास्तिः, सिद्धान्ते निर्विशेषब्रह्मधीरिति फलम् । मुण्डकवाक्यमुदाहरति–**इदमिति** ॥ यस्मिन् लोकत्रयात्मा विराट् **प्राणैः सर्वैः सह मनः** सूत्रात्मकम् । **च**कारादव्याकृतं कारणम् **ओतं** कल्पितं तदपवादेन **तमेव** अधिष्ठानात्मानं प्रत्यगभिन्नं **जानथ** श्रवणादिना । **अन्याः** अनात्मवाचो **विमुञ्चथ** विशेषेण निश्शेषं त्यजथ । **एषः** वाग्विमोकपूर्वकात्मसाक्षात्कारः । अमृतस्य मोक्षस्यासारापारदुर्वारसंसारवारिधेः परपारस्य सेतुरिव **सेतुः** प्रापक इति मातृवच्छ्रुतिर्मुमुक्षूनुपदिशति । तत्रायतनत्वस्य साधारणधर्मस्य दर्शनात्संशयमाह–**तत्किमिति** ॥ अमृतस्य ब्रह्मणः सेतुरिति षष्ठ्या ब्रह्मणो भिन्नत्वेन सेतोः श्रुतत्वादेषशब्दपरामृष्टं द्युभ्वाद्यायतनमब्रह्मैव सेतुरिव

भामती ।

**द्युभ्वाद्यायतनं स्वशब्दात्** । इह ज्ञेयत्वेन ब्रह्मोपक्षिप्यते । तत्र 'पारवत्त्वेन सेतुत्वाद्भेदे षष्ठ्याः प्रयोगतः । द्युभ्वाद्यायतनं युक्तं नामृतं ब्रह्म कर्हिचित् ॥' पारावारमध्यपाती हि सेतुः ताभ्यामवच्छिद्यमानो जलविधारको लोके दृष्टः, न तु बन्धनहेतुमात्रम् । हडिनिगडादिष्वपि प्रयोगप्रसङ्गात् । न चानव-

आनन्दगिरीय–न्यायनिर्णयः ।

पूर्वस्मिन्पादे सविशेषवस्तुप्रचुराणां वाक्यानां ब्रह्मपरतोक्ता, संप्रति निर्विशेषब्रह्मप्रचुराणां तेषां तत्परतां वक्तुं पादान्तरमारभ्यते । तत्र पूर्वाधिकरणे त्रैलोक्यात्मा वैश्वानरः परमात्मेत्युक्तं तर्हि त्रैलोक्यायतनमन्यदित्याशंक्याऽऽह–**द्युभ्वादीति** । यद्वोपक्रमस्थश्रुतेर्वाक्यशेषस्थलिङ्गेनान्यपरत्वमुक्तं तत्प्रसङ्गेन जगदायतनत्वस्यानेकसाधारणस्य वाक्यशेषस्थात्मश्रुत्या ब्रह्मपरत्वमाह–**द्युभ्वादीति** । आथर्वणवाक्यमुदाहरति–**इदमिति** । लोकत्रयकल्पनाधिष्ठानत्वोक्त्या पञ्चीकृतभूतपञ्चकाधिष्ठानत्वमाह–**यस्मिन्निति** । कार्यब्रह्माख्यसमष्ट्यन्तःकरणस्य तत्रैव कल्पितत्वमाह–**मन इति** । इन्द्रियसमष्टिदेवतानां तत्रैव कल्पितत्वं सूचयति–**सहेति** । चकाराद्भूतसूक्ष्माव्याकृतेश्वरान्तर्यामिणामध्यस्तत्वं ध्वनितम् । मायाख्यां प्रकृतिं कल्पितकार्यपरम्परां च श्रुत्युदिततर्काग्निना विलाप्य तमेवाधिष्ठानभूतमद्वयमात्मानं जानथेति मुमुक्षून्प्रत्याह–**तमेवेति** । वाच्यवाचककल्पनानामैक्यापरोक्षप्रमित्या बाधमाह–**अन्या इति** । एष वाग्विमोकपूर्वकस्तत्त्वसाक्षात्कारः सोपादानसंसारनिवृत्तित्वेनामृतत्वस्य व्यवस्थापक इत्याह–**अमृतस्येति** । आयतनशब्दाश्रुतेर्नेदमुदाहरणमित्याशंक्याऽऽह–**अत्रेति** । आयतनत्वसाधारणधर्मदृष्ट्या संशयमाह–**तदिति** । अर्थान्तरं प्रधानम् । उपक्रमस्थस्य साधारणशब्दस्य वाक्यशेषगतद्युमूर्धत्वादिलिङ्गेनेश्वरार्थत्ववदिहाप्युपक्रमस्थसाधारणायतन-

**तत्रार्थान्तरं किमप्यायतनं स्यादिति प्राप्तम् ॥ कस्मात् । अमृतस्यैष सेतुरिति श्रवणात् । पारवान् हि लोके सेतुः प्रख्यातः ॥ न च परस्य ब्रह्मणः पारवत्त्वं शक्यमभ्युपगन्तुम् । "अनन्तमपारम्" [बृ० २।४।१२] इति श्रवणात् ॥ अर्थान्तरे चायतने परिगृह्यमाणे स्मृतिप्रसिद्धं प्रधानं परिग्रहीतव्यम् ॥ तस्य हि कारणत्वादायतनत्वोपपत्तेः ॥ श्रुतिप्रसिद्धो वा वायुः स्याद्– "वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकस्सर्वाणि च भूतानि सन्दृब्धानि भवन्ति" [ बृ० ३ । ७ । २ ] इति ॥ वायोरपि**

रत्नप्रभा ।

सेतुरित्याह–**अमृतस्येति** ॥ भेदश्रवणात् सेतुरिति श्रवणाच्चेत्यर्थः । तत्र भेदश्रवणं व्याख्यातं, सेतुश्रवणं स्वयं विवृणोति–**पारवानिति** ॥ अनन्तं कालतः । अपारं देशतः । जलविधारकमुख्यसेतोर्ग्रहणासम्भवाद् गौणसेतुग्रहे कर्त्तव्ये मुख्यसेत्वविनाभूतपारवत्त्वगुणवानेव कश्चिद् ग्राह्यः, न तु मुख्यस्यानियतविधारणगुणवानीश्वर इति भावः । यथा लोके मणयः सूत्रेण ग्रथिता एवं हे गौतम समष्टिलिङ्गात्मकवायुना स्थूलानि सर्वाणि **संदृब्धानि** ग्रथितानि भवन्तीति श्रुत्यर्थः ॥ आत्मशब्दात्पक्षद्वयमप्ययुक्तमित्यत

भामती ।

च्छिन्नं ब्रह्म सेतुभावमनुभवति । न चामृतं सद्ब्रह्मामृतस्य सेतुरिति युज्यते । न च ब्रह्मणोऽन्यदमृतमस्ति, यस्य तत्सेतुः स्यात् । न चाभेदे षष्ठ्याः प्रयोगो दृष्टपूर्वः । तदिदमुक्तम्–**अमृतस्यैष सेतुरिति श्रवणादिति** । अमृतस्येति श्रवणात्, सेतुरिति श्रवणात्, इति योजना । तत्रामृतस्येति श्रवणादिति विशदतया न व्याख्यातम् । सेतुरिति श्रवणादिति व्याचष्टे–**पारवानिति** । तथा च पारवत्यमृतव्यतिरिक्ते सेतावनुश्रीयमाणे प्रधानं वा सांख्यपरिकल्पितं भवेत् । तत् खलु स्वकार्योपहितमर्यादतया पुरुषं यावदगच्छद्भवतीति पारवत्, भवति च द्युभ्वाद्यायतनं, तत्प्रकृतित्वात्, प्रकृत्यायतनत्वाच्च विकाराणां, भवति चात्मात्मशब्दस्य स्वभाववचनत्वात्, प्रकाशात्मा प्रदीप इतिवत् । भवति चास्य ज्ञानमपवर्गोपयोगि, तदभावे प्रधानाद्विवेकेन पुरुषस्यानवधारणादपवर्गानुपपत्तेः । यदि त्वस्मिन्प्रमाणाभावेन न परितुष्यसि, अस्तु तर्हि नामरूपबीजशक्तिभूतमव्याकृतं भूतसूक्ष्मं द्युभ्वाद्यायतनं, तस्मिन् प्रामाणिके सर्वस्योक्तस्योपपत्तेः । एतदपि प्रधानोपन्यासेन सूचितम् । अथ तु साक्षाच्छ्रुत्युक्तं द्युभ्वाद्यायतनमाद्रियसे, ततो वायुरेवास्तु । 'वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति' इति श्रुतेः । यदि त्वात्मशब्दाभिधेयत्वं न विद्यत इति न परितुष्यसि, भवतु तर्हि शारीरः,

आनन्दगिरीय–न्यायनिर्णयः ।

त्वस्य वाक्यशेषगतसेतुश्रुत्या परिच्छिन्ने सेतुशब्दार्थे व्यवस्येति पूर्वपक्षयति–**तत्रेति** । निर्विशेषे ब्रह्मण्युक्तश्रुत्यन्वयोक्तेः संगतयः । पूर्वपक्षे प्रधानोपास्तिः सिद्धान्ते परमेश्वरधीरिति फलम् । आयतनत्वस्य ब्रह्मण्यपि योगात्नार्थान्तरमित्याशंक्य प्रत्याह–**कस्मादिति** । अमृतस्येति श्रवणादेष सेतुरिति च श्रवणादिति योजना । अमृतस्येति षष्ठीप्रयोगाद्ब्रह्मणः स्वयममृतत्वादन्यस्यामृतस्याभावाच्चत्प्रयोगो ब्रह्मणि नेति मत्वा सेतुश्रुतिं विशदयति–**पारवानिति** । तथाऽपि कुतो न ब्रह्मणः सेतुत्वं तत्राऽऽह–**न चेति** । आनन्त्यमनौपचारिकमित्यपारमित्युक्तम् । उभयत्रापि सेतुशब्दस्य मुख्यार्थत्वायोगेऽपि विधरणस्याऽऽगन्तुकस्याऽऽश्रयणान्निजसिद्धपरिच्छिन्नाश्रयणं युक्तमिति भावः । किं तदर्थान्तरं तदाह–**अर्थान्तरे चेति** । श्रुत्युक्तमायतनं श्रौतमेवोचितं न स्मार्तमित्याशंक्याऽऽह–**श्रुतीति** । वायोरायतनत्वं साधयति–**वायुरिति** । सर्वगतस्य तन्त्वादिवत्कुतः सूत्रतेत्याशंक्य सूक्ष्मतया सूत्रवदवस्थानादित्याह–**वायुनेति** । आकाशस्यापि सूत्रवदन्तर्वर्तनमस्तीत्याशंक्यास्य सर्वं प्रत्येकस्वभावतया विधारकत्वमाह–**अयं चेति** । संदृब्धानि संग्र-

विधारणत्वश्रवणात् ॥ शारीरो वा स्यात् ॥ तस्यापि भोक्तृत्वाद्भोग्यं प्रपञ्चं प्रत्यायतनत्वोपपत्तेरिति ॥ एवं प्राप्ते इदमाह-द्युभ्वाद्यायतनमिति ॥ द्यौश्च भूश्च द्युभुवौ द्युभुवावादी यस्य तदिदं द्युभ्वादि । यदेतस्मिन्वाक्ये द्यौः पृथिव्यन्तरिक्षं मनः प्राणा इत्येवमात्मकं जगदोतत्वेन निर्दिष्टं, तस्यायतनं परं ब्रह्म भवितुमर्हति ॥ कुतः । स्वशब्दाद्, आत्मशब्दादित्यर्थः ॥ आत्मशब्दो हीह भवति-"तमेवैकं जानथ आत्मानम्" [ मुण्ड० २ । २ । ५ ] इति । आत्मशब्दश्च परमात्मपरिग्रहे सम्यगवकल्पते नार्थान्तरपरिग्रहे ॥ क्वचिच्च स्वशब्देनैव ब्रह्मण आयतनत्वं श्रूयते-"सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः" [ छां० ६ । ८ । ४ ]

---

रत्नप्रभा ।

आह-शारीरो वेति ॥ सद्वितीयत्वेन सेतुशब्दोपपत्तेश्चेत्यर्थः । नन्वात्मशब्दो जीवे सम्भवतीत्यत आह-आत्मशब्दश्चेति ॥ उपाधिपरिच्छिन्नस्य जीवस्य सर्ववस्तुप्रत्यक्त्वं मुख्यं नास्तीत्यर्थः । उपक्रमस्थसाधारणायतनत्वस्य गौणसेतुत्वलिङ्गात्प्रथमश्रुतात्मश्रुत्या ब्रह्मत्वनिश्चय इति भावः । स्वशब्दादित्यस्यार्थान्तरमाह-क्वचिच्चेति ॥ प्रजानामुत्पत्तौ सदेव मूलं स्थितावायतनं लये प्रतिष्ठेति ब्रह्मवाचिसत्पदेन छान्दोग्ये

भामती ।

तस्य भोक्तुर्भोग्यान् द्युप्रभृतीन्प्रत्यायतनत्वात् । यदि पुनरस्य द्युभ्वाद्यायतनस्य सार्वज्ञ्यश्रुतेरत्रापि न परितुष्यसि, भवतु ततो हिरण्यगर्भ एव भगवान् सर्वज्ञः सूत्रात्मा द्युभ्वाद्यायतनम् । तस्य हि कार्यत्वेन पारवत्त्वं चामृतात्परब्रह्मणो भेदश्चेत्यादि सर्वमुपपद्यते । अयमपि 'वायुना वै गौतम सूत्रेण' इति श्रुतिमुपन्यस्यता सूचितः । तस्मादयं द्युप्रभृतीनामायतनमित्येवं प्राप्तेऽभिधीयते । द्युभ्वाद्यायतनं परं ब्रह्मैव, न प्रधानाव्याकृतवायुशारीरहिरण्यगर्भाः । कुतः, स्वशब्दात् । 'धारणाद्वाऽमृतत्वस्य साधनाद्वाऽस्य सेतुता । पूर्वपक्षेऽपि मुख्यार्थः सेतुशब्दो हि नेष्यते ॥' । न हि मृदारुमयो मूर्तः पारावारमध्यवर्ती पाथसां विधारको लोकसिद्धः सेतुः प्रधानं वाव्याकृतं वा वायुर्वा जीवो वा सूत्रात्मा वाभ्युपेयते । किंतु पारवत्तामात्रपरो लाक्षणिकः सेतुशब्दोऽभ्युपेयः । सोऽस्माकं पारवत्तावर्जं विधरणत्वमात्रेण योगमात्राद्रूढिं परित्यज्य

आनन्दगिरीय-न्यायनिर्णयः ।

थितानि विधृतानीत्यर्थः । आयतनस्याऽऽत्मत्वश्रुतेर्नैवमित्याशंक्याऽऽह-शारीरो वेति । तस्य परिच्छिन्नत्वान्न सर्वविधारकतेत्याशंक्य कर्मोपास्त्यादिद्वारा सर्वस्थितिहेतुत्वमाह-तस्येति । विश्वायतनत्वेन प्रधानस्य वायोर्भोक्तुर्वा ध्यानार्थं वाक्यमित्युपसंहर्तुमितिशब्दः । पूर्वपक्षमनूद्योत्तरपक्षप्रतिज्ञामादाय विगृह्णाति-एवमिति । 'न भूसुधियोः' इति निषेधाद्द्युभ्वादीतियणादेशासिद्धिरिति चेन्न । 'गतिकारकोपपदाभ्यामन्यपूर्वस्य नेष्यते' इति विशेषणादस्य च कारकोपपदत्वात् । द्वंद्वे द्वयोः समत्वादुपपदत्वं दिवो नेति चेन्न । समत्वेऽपि प्रथमप्रयुक्ताया दिवश्चरमप्रयुक्तां भुवं प्रत्युपपदत्वमारोप्य समासे यणादेशसिद्धेः । न च द्वंद्वे समस्यमानानां समत्वनियमो राजपुरुषादिषु व्यभिचारात् । तस्माद्वर्षाभ्वादिवद्द्युभ्वादीत्यविरुद्धम् । द्वंद्वे तद्गुणसंविज्ञाने च कृते तस्याऽऽयतनमिति स्थिते प्रतिज्ञाया विवक्षितमर्थमाह-यदिति । जगदायतनत्वस्यान्यत्रापि योगे विशेषोक्तिरयुक्तेत्याह-कुत इति । तत्र हेतुमादाय योजयति-स्वशब्दादिति । आयतनशब्दसमानाधिकृतात्मशब्दस्यादृष्टिमाशंक्याऽऽह-आत्मेति । जीवादावपि तदुपपत्तिमाशङ्क्योक्तमात्मशब्दश्चेति । पक्षान्तरे मुख्यमाप्त्याद्ययुक्तमित्यर्थः । स्वशब्देन ब्रह्मोक्त्वा तस्यासाधारणसच्छब्देनाऽऽयतनत्वोक्तिरिति योजनान्तरमाह-क्वचिच्चेति । स्वस्याऽऽयतनस्यासाधारणायतनशब्दादिति योजनान्तरं मत्वा श्रुतिमाह-सदिति । सतो निमित्तत्वेनैव मूलत्वं प्रत्याह-सदायतना इति । असमवायिकारणस्यैव सतः स्थितिहेतुत्वमेवेत्याशङ्क्याऽऽह-सत्प्रतिष्ठा इति । स्वशब्देन ब्रह्मोक्त्वा तदसाधारणपुरुषशब्देन ब्रह्मश-

इति ॥ स्वशब्देनैव चेह पुरस्तादुपरिष्टाच्च ब्रह्म सङ्कीर्त्यते-"पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्" [ मुण्डक०२ । १। १० ] इति, "ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण" [ मुण्डक०२ । २ । ११ ] इति च ॥ तत्र त्वायतनायतनवद्भावश्रवणात् । सर्वं ब्रह्मेति च सामानाधिकरण्यात् ॥ यथाऽनेकात्मको वृक्षः शाखास्कन्धो मूलं चेति, एवं नानारसो विचित्र आत्मेत्याशङ्का सम्भवति । तां निवर्तयितुं सावधारणमाह-"तमेवैकं जानथ आत्मानम्" [ मुण्ड० । २ । २ । ५ ] इति ॥ एतदुक्तं भवति ॥ न कार्यप्रपञ्चविशिष्टो विचित्र आत्मा विज्ञेयः ॥ किं तर्हि ॥ अविद्याकृतं कार्यप्रपञ्चं विद्यया प्रविलापयन्तस्तमेवैकमायतनभूतमात्मानं जानीथैकरसमिति ॥ यथा-यस्मिन्नास्ते देवदत्तः, तदानयेत्युक्ते आसनमेवानयति, न देवदत्तं, तद्वदायतनभूतस्यैवैकरसस्यात्मनो विज्ञेयत्वमुपदिश्यते ॥ विकारानृताभिसन्धस्य चापवादः श्रूयते-"मृत्यो-

रत्नप्रभा ।

ब्रह्मण आयतनत्वश्रुतेरत्रापि तथेत्यर्थः ॥ अर्थान्तरमाह-स्वशब्देनैवेति ॥ यस्मिन् द्यौरिति वाक्यात् पूर्वोत्तरवाक्ययोः । पुरुषब्रह्मादिशब्देन ब्रह्मसङ्कीर्तनान्मध्येऽपि ब्रह्म ग्राह्यमित्यर्थः । पुरुष इति पूर्ववाक्यम् । ब्रह्मैवेत्युत्तरवाक्यम् । सर्वासु दिक्षु स्थितं सर्वं ब्रह्मैवेत्यर्थः ॥ उत्तरेणोत्तरस्यां दिशि उदाहृतवाक्यस्य सविशेषब्रह्मपरत्वमाशङ्क्य वाक्यं व्याचष्टे-तत्रेत्यादिना ॥ सामानाधिकरण्याद्विचित्र आत्मेति सम्बन्धः । यस्मिन्सर्वमोतं तमेवैकमित्येवकारैकशब्दाभ्यां निर्विशेषं ज्ञेयमित्युक्त्वा हेत्वन्तरमाह-विकारानृतेति ॥

भामती ।

प्रवर्त्स्यतीति । जीवानाममृतत्वपदप्राप्तिसाधनत्वं वात्मज्ञानस्य पारवत एव लक्षयिष्यति । अमृतशब्दश्च भावप्रधानः । यथा 'द्व्येकयोर्द्विवचनैकवचने' इत्यत्र द्वित्वैकत्वे द्व्येकशब्दार्थौ, अन्यथा द्व्येकेष्विति स्यात् । तदिदमुक्तं भाष्यकृता-अमृतत्वसाधनत्वादिति । तथा चामृतस्येति च सेतुरिति च ब्रह्मणि द्युभ्वाद्यायतने उपपत्स्येते । अत्र च स्वशब्दादिति तन्त्रोच्चरितमात्मशब्दादिति च सदायतना इति सच्छब्दादिति च ब्रह्मशब्दादिति च सूचयति । सर्वे ह्येतेऽस्य स्वशब्दाः । स्यादेतत् । आयतनायतनवद्भावः सर्वं ब्रह्मेति च सामानाधिकरण्यं हिरण्यगर्भेऽप्युपपद्यते । तथा च स एवात्रास्त्वमृतत्वस्य सेतुरित्याशङ्क्य श्रुतिवाक्येन सावधारणेनोत्तरमाह-तत्रायतनायतनवद्भावश्रवणादिति । विकाररूपेऽनृतेऽनिर्वाच्येऽभि-

आनन्दगिरीय-न्यायनिर्णयः ।

ब्देन परशब्देनामृतशब्देन चोक्तेरित्यर्थान्तरमाह-स्वशब्देनेति । इहेति प्रकरणोक्तिः । यस्मिन्द्यौरित्यादिवाक्यात्पूर्वोत्तरवाक्ययोर्ब्रह्मोक्तेर्मध्येऽपि तदेव युक्तमादिमध्यावसानानामैकार्थ्ये वाक्यैक्यादित्यर्थः । पुरस्ताद्ब्रह्मोक्तिमाह-पुरुष इति । । परस्तादपि तदुक्तिमाह-ब्रह्मैवेति । पुरस्तात्पूर्वस्यां दिशि पश्चात्पश्चिमायां दक्षिणतो दक्षिणस्यामुत्तरेणोत्तरस्यां यदिदं दृश्यते तद्ब्रह्मैवेत्यर्थः । सर्वत्र ब्रह्मोक्तावपि तदनेकरसत्वमाशंक्याऽऽह-तत्रेति । उक्तवाक्यं सप्तम्यर्थः । सामानाधिकरण्याद्विचित्र आत्मेत्याशंका संभवतीति संबन्धः । वैचित्र्यं दृष्टान्तेनाऽऽह-यथेति । कथं तर्हि तन्निरसनं तदाह-तामिति । जगदायतनं ब्रह्म ज्ञेयमित्युक्ते कुतस्तदैकरस्यं तत्राऽऽह-एतदिति । तथाऽपि कथं प्रपञ्चायतनस्य निष्कृष्य ज्ञानं तत्राऽऽह-यथेति । एकशब्दादेवकाराच्चाऽऽयतनपदलक्ष्यमेकरसं ब्रह्माऽऽत्मत्वेन ज्ञेयमित्युक्त्वा तत्रैव हेत्वन्तरमाह-विकारेति । वाचारम्भणश्रुतेर्दृश्यत्वादित्युक्तेश्च विकारो मिथ्या तस्मिन्ननृतेऽनिर्वाच्येऽभिसंधाऽभिमानो यस्य

स्स मृत्युमाप्नोति य इह नानेव पश्यति" [ कठ० २ । ४ । ११ ] इति ॥ सर्वं ब्रह्मेति तु सामानाधिकरण्यं प्रपञ्चविलापनार्थम् । नानेकरसताप्रतिपादनार्थम् ॥ "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" [ बृ० ४ । ५ । १३ ] इत्येकरसताश्रवणात् ॥ तस्माद्द्युभ्वाद्यायतनं परं ब्रह्म ॥ यत्तूक्तं सेतुश्रुतेः सेतोश्च पारवत्त्वोपपत्तेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भवितव्यमिति ॥ अत्रोच्यते ॥ विधारणत्वमात्रमेव सेतुश्रुत्या विवक्ष्यते ॥ न पारवत्त्वादि ॥ न हि मृद्दारुमयो लोके सेतुर्दृष्ट इत्यत्रापि मृद्दारुमय एव सेतुरभ्युपगम्यते ॥ सेतुशब्दार्थोऽपि विधारणत्वमात्रमेव ॥ न पारवत्त्वादि ॥ षिञो बन्धनकर्मणः सेतुशब्दव्युत्पत्तेः ॥

रत्नप्रभा ।

विकारे[1] अनृते कल्पिते अभिसन्धोऽभिमानो यस्य तस्यानर्थमाक्त्वेन निन्दाश्रुतेश्च कूटस्थसत्यं ज्ञेयमित्यर्थः । कथं तर्हि सामानाधिकरण्यं तत्राह—**सर्वं ब्रह्मेति** ॥ यश्चोरः स स्थाणुरितिवद्, यत्सर्वं तद्ब्रह्मेति सर्वोद्देशेन ब्रह्मत्वविधानाद् बाधनार्थं, न तु यद्ब्रह्म तत्सर्वमिति नानारसत्वार्थमित्यर्थः । तत्र नियामकमाह—**स यथेति** ॥ लवणपिण्डोऽन्तर्बहिश्च रसान्तरशून्यः सर्वो लवणैकरसो **यथा**, एवमरे मैत्रेयि चिदेकरस आत्मेत्यर्थः । **यद्यपि** पारवत्त्वसावयवत्वादिकं मुख्यसेतव्यभिचारि । **तथापि** सेतोर्जलादिबन्धनरूपं यद्विधारणं तदेव व्यभिचारित्वेऽपि सेतुपदार्थैकदेशत्वाद्गुणत्वेन ग्राह्यम् । न तु सेतुपदार्थबहिर्भूतं पारवत्त्वादिकमित्याह—**अत्रोच्यत इति** ॥ दृष्टत्वात्तद्ग्रहेऽतिप्रसङ्गमाह—**न हीति** ॥ **अत्र** श्रुतौ । परेणेति **शेषः** । विधारणस्य शब्दार्थत्वं स्फुटयति—**षिञ इति** ॥ सिनोति बध्नातीति सेतुपदार्थैकदेशो विधारणमित्यर्थः । तथा चामृतपदस्य भावप्रधानत्वादमृतत्वस्य सेतुर्विधारकं ब्रह्म अस्यैवामृतत्वं नान्यस्येत्यर्थः ॥

भामती ।

संधानं यस्य स तथोक्तः । भेदप्रपञ्चं सत्यमभिमन्यमान इति यावत् । तस्यापवादो दोषः श्रूयते—**मृत्योरिति** । **सर्वं ब्रह्मेति त्विति** । यत्सर्वमविद्यारोपितं तत्सर्वं परमार्थतो ब्रह्म । न तु यद्ब्रह्म तत्सर्वं

आनन्दगिरीय—न्यायनिर्णयः ।

तस्येति यावत् । द्वैतं सत्यं पश्यतो निन्दाश्रुतेरप्येकरसं ब्रह्मेत्यर्थः । ब्रह्मैकरस्यं सामानाधिकरण्यश्रुतिविरुद्धमित्याशंक्य पुरुषः स्थाणुरितिवज्जाड्यादिना विरुद्धस्य द्वैतस्य ब्रह्मणा सामानाधिकरण्यं बाधार्थमित्याह—**सर्वमिति** । यदविद्यारोपितं तत्सर्वं वस्तुतो ब्रह्म न तु यद्ब्रह्म तत्सर्वमतो न श्रुतिविरुद्धमित्यर्थः । ब्रह्मानूद्य सर्वत्वविधावप्रसिद्धानुवादेन प्रसिद्धविधिप्रसक्तिरित्यभिप्रेत्य ब्रह्मणो नानारसत्वे श्रुत्यन्तरविरोधमाह—**स यथेति** । सैन्धवखिल्योऽन्तर्बहिर्विभागहीनः सर्वात्मना लवणैकरसो यथा तथाऽऽत्माऽपि सर्वथा चिदेकरसमूर्तिरिति श्रुत्यर्थः । ब्रह्मणश्चिदेकरसस्य प्रतिपाद्यत्वे फलितमाह—**तस्मादिति** । तस्यैकरस्यात्प्रधानादेस्तद्विरहादित्यर्थः । सेतुश्रुतेर्गतिं वक्तुमुक्तमनुवदति—**यत्त्विति** । तस्याविवक्षितां गतिमाह—**अत्रेति** । अत्रेति सप्तम्या भावप्रधानममृतं वाक्यं चोक्तम् । सावयवत्वाचेतनत्वादि वक्तुमादिपदम् । ननु सेतुनाऽविनाभूतत्वात्पारवत्त्वादेरत्र तच्छब्दाद्धीरिति चेन्नेत्याह—**न हीति** । अत्रापीति प्रकृतवाक्योक्तिः । अभ्युपगम्यत परेणापीति शेषः । विधारणत्वस्याऽऽगन्तुकत्वात्पारवत्त्वादेः स्वाभाव्यात्तदेव सेतुश्रुत्या ग्राह्यमिति चेत्तत्राऽऽह—**सेत्विति** । गुणवृत्त्याऽपि शब्दैकदेशार्थविधरणगुणस्वीकरणमेव युक्तं न त्वत्यन्तबहिरर्थपारवत्त्वाद्यङ्गीकरणं मुख्यार्थैकदेशलाभेन विधरणस्य बुद्धिस्थत्वादमृतस्येति षष्ठी च ब्रह्मपक्षे भावार्थस्वीका-

[1] विकाररूपे अनृते इत्यर्थः ।

अपर आह-"तमेवैकं जानथ आत्मानम्" [ मुण्ड० २ । २ । ५ ] इति । यदेतत्सङ्कीर्तितमात्मज्ञानं, यच्चैतद् "अन्या वाचो विमुञ्चथ" [ मुण्ड० २ । २ । ५ ] इति वाग्विमोचनं, तदत्रामृतत्वसाधनत्वादमृतस्यैष सेतुरिति सेतुश्रुत्या सङ्कीर्त्यते । न तु द्युभ्वाद्यायतनम् ॥ तत्र यदुक्तं सेतुश्रुतेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भवितव्यमित्येतदयुक्तम्-॥ १ ॥

## मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

इतश्च परमेव ब्रह्म द्युभ्वाद्यायतनम् । यस्मान्मुक्तोपसृप्यताऽस्य व्यपदिश्यमाना दृश्यते ॥ मुक्तैरुपसृप्यं मुक्तोपसृप्यम् ॥ देहादिष्वनात्मस्वहमस्मीत्यात्मबुद्धिरविद्या ॥ ततस्तत्पूजनादौ रागः, तत्परिभवादौ द्वेषः, तदुच्छेददर्शनाद्भयं मोहश्चेत्येवमयमनन्तभेदोऽनर्थव्रातस्सन्ततस्सर्वेषां नः प्रत्यक्षः ॥ तद्विपर्ययेणाऽविद्या रागद्वेषादिदोषमुक्तैरुपसृप्यं गम्यमेत-

---

रत्नप्रभा ।

यद्वा द्युभ्वाद्याधारो ब्रह्म न सेतुशब्दार्थः । किन्त्वव्यवहितं ज्ञानमित्याह-**अपर इति** ॥ फलितमाह-**तत्र यदुक्तमिति** ॥ ज्ञाने सेतौ गृहीते सतीत्यर्थः ॥ १ ॥ मुक्तैरुपसृप्यं प्रत्यक्त्वेन प्राप्यं यद्ब्रह्म तस्यात्रोक्तेरिति सूत्रार्थः । मुक्तिप्रतियोगिनं बन्धं दर्शयति-**देहादिष्विति** ॥ **तद्विपर्ययेणेति** । उक्तपञ्चक्लेशात्मकबन्धनिवृत्त्याऽऽत्मना स्थितमित्यर्थः । **यथा**-नद्यः गङ्गाद्याः नामरूपे विहाय समुद्रात्मना तिष्ठन्ति, **तथा**

भामती ।

मित्यर्थः । **अपर आहेति** । नात्र द्युभ्वाद्यायतनस्य सेतुता येन पारवत्ता स्यात् । किंतु 'जानथ' इति यज्ज्ञानं कीर्तितं, यश्च 'वाचो विमुञ्चथ'इति वाग्विमोकः, तस्यामृतत्वसाधनत्वेन सेतुतोच्यते । तच्चोभयमपि पारवदेव । न च प्रधान्यादेष इति सर्वनाम्ना द्युभ्वाद्यायतनमात्मैव परामृश्यते, न तु तज्ज्ञानवाग्विमोचने इति सांप्रतम् । वाग्विमोचनात्मज्ञानभावनयोरेव विधेयत्वेन प्राधान्यात् । आत्मनस्तु द्रव्यस्याव्यापारतयाऽविधेयत्वात् । विधेयस्य व्यापारस्यैव व्यापारवतोऽमृतत्वसाधनत्वात्।न चेदमैकान्तिकं यत्प्रधानमेव सर्वनाम्ना परामृश्यते । क्वचिदयोग्यतया प्रधानमुत्सृज्य योग्यतया गुणोऽपि परामृश्यते ॥ १ ॥ **मुक्तोपसृप्यं व्यपदेशात्** । द्युभ्वाद्यायतनं प्रकृत्याविद्यादिदोषमुक्तैरुपसृप्यं व्यपदिश्यते-'भिद्यते हृदयग्रन्थिः' इत्यादिना । तेन तत् द्युभ्वाद्यायतनविषयमेव । ब्रह्मणश्च मुक्तोपसृप्यत्वं 'यदा सर्वे प्रमुच्यन्ते' इत्यादौ श्रुत्यन्तरे प्रसिद्धम् । तस्मान्मुक्तोपसृप्यत्वात् द्युभ्वाद्यायतनं ब्रह्मेति निश्चीयते । हृदयग्रन्थिश्चाविद्यारागद्वेषभयमोहाः । मोहश्च विषादः, शोकः । परं हिरण्यगर्भाद्यवरं यस्य तद्ब्रह्म तथोक्तम् । तस्मिन्ब्रह्मणि यद्दृष्टं दर्शनं तस्मिंस्तदर्थमिति यावत् । यथा 'चर्मणि द्वीपिनं हन्ति' इति चर्मार्थमिति गम्यते । नामरूपादि-

आनन्दगिरीय-न्यायनिर्णयः ।

रादिति भावः । सेतुशब्दं ब्रह्मेत्युपेत्य सेतुश्रुतेर्गतिमुक्त्वा विषयान्तरोक्त्याऽपि तद्गतिमाह-**अपर इति** । सेतुशब्दस्य वाग्विमोकपूर्वकमात्मज्ञानमर्थो न ब्रह्मेति स्थिते फलितमाह-**तत्रेति** ॥ १ ॥ द्युभ्वाद्यायतनं ब्रह्मेत्यत्र हेत्वन्तरमाह-**मुक्तेति** । तद्व्याख्यातुं प्रतिज्ञां पूरयति-**इतश्चेति** । इतःशब्दार्थं स्पष्टयति-**यस्मादिति** । मुक्तेन ब्रह्मणा कुतस्तदेवोपसृप्यमित्याशंक्याऽऽह-**मुक्तैरिति** । बन्धविश्लेषं मुक्तिशब्दार्थं वक्तुं बन्धमनुवदति-**देहादिष्विति** । अविद्याफलमाह-**तत इति** । अनर्थसमुदायस्य सम्यग्ज्ञानादृते विच्छेदाभावं सूचयति-**संतत इति** । तत्र स्वानुभवं प्रमाणयति-**सर्वेषामिति** । बन्धमनूद्य तद्विश्लेषं मोक्षमाचक्षाणः सूत्रं योजयति-**तदिति** । उक्तमुक्त्यनन्तरं प्राप्यं ब्रह्मेति श्रुतिरसिद्धेति शंकते-

---

१ रूपगस्यते तादिति पाठान्तरम् ।

दिति द्युभ्वाद्यायतनं प्रकृत्य व्यपदेशो भवति ॥ कथम् ॥ "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" [ मुण्डक० २ । २ । ८ ] इत्युक्त्वा ब्रवीति-"तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" [ मुण्डक० ३।२।८ ] इति ब्रह्मणश्च मुक्तोपसृप्यत्वं प्रसिद्धं शास्त्रे-"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" [ बृह० ४ । ४ । ७ ] इत्येवमादौ ॥ प्रधानादीनां तु न क्वचिन्मुक्तोपसृप्यत्वं प्रसिद्धमस्ति ॥ अपि च-"तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ" [ मुण्डक० २ । २ । ५ ] इति वाग्विमोकपूर्वकं विज्ञेयत्वमिह द्युभ्वाद्यायतनस्योच्यते ॥ तच्च श्रुत्यन्तरे ब्रह्मणो दृष्टम्-"तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः। नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तद्" [ बृह०४।४।२१]इति ।

रत्नप्रभा ।

ब्रह्मात्मविदपि संसारं विहाय **परात्** कारणादव्यक्तात् **परं** पूर्णं स्वयंज्योतिरानन्दं प्रत्यक्त्वेन प्राप्य तिष्ठतीत्याह-**तथा विद्वानिति** ॥ इदं प्रधानादेः किं न स्यादत आह-**ब्रह्मणश्चेति** ॥ **अस्य मुमुक्षोः** हृदीति पदेनात्मधर्मत्वं कामानां निरस्तं **यदा** कामनिवृत्तिः **अथ तदा अमृतो भवति** मरणहेत्वभावान्न केवलमनर्थनिवृत्तिः । किन्त्वत्र देहे तिष्ठन्नेव **ब्रह्म** आनन्दम् । अश्नुते इत्यर्थः । लिङ्गान्तरमाह-**अपि चेति** ॥ **धीरः** विवेकी **तमेव** आत्मानं **विज्ञाय** विशुद्धं लक्ष्यपदार्थं ज्ञात्वा वाक्यार्थज्ञानं **कुर्यात्** । ज्ञानार्थिनो ज्ञानप्रतिबन्धककर्मकाण्डादेर्वैमुख्यमाह-**नेति** ॥ **बहूनि**त्युक्त्वा अल्पान्वेदान्तशब्दानङ्गीकरोति । "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च" [ पा० शिक्षा १३ ] इति । एतानि वागिन्द्रियस्थानत्वाद्वाक्यशब्देनोच्यन्ते । तेषां शोषणमात्रमना-

भामती ।

त्यप्यविद्याभिप्रायम् । **कामा येऽस्य हृदि श्रिता इति** । कामा इत्यविद्यामुपलक्षयति ॥ २ ॥

आनन्दगिरीय-न्यायनिर्णयः ।

**कथमिति** । मुक्तौ श्रुतिमाह-**भिद्यत इति** । तथाऽपि कथं द्युभ्वाद्यायतनस्य मुक्तोपसृप्यत्वं तत्रापि श्रुतिमाह-**इत्युक्त्वेति** । यथा नद्यो गङ्गाद्या नामरूपाभ्यां निर्मुक्ताः समुद्रं प्राप्य तदात्मनाऽवतिष्ठन्ते । तथा विद्वानपि साक्षात्कृतब्रह्मा तद्बलादेव नामरूपादविद्यातत्कार्यात्मनो विमुक्तः परादव्याकृतात्परमस्पृष्टानर्थं पुरुषं पूर्णमात्मानं दिव्यमखण्डं चिद्धातुमुपैत्यात्मत्वेनाऽऽप्नोतीत्यर्थः । प्रधानादीनामन्यतमस्यापि मुक्तोपसृप्यत्वसिद्धेरन्यथासिद्धिरित्याशंक्याऽऽह-**ब्रह्मणश्चेति** । ज्ञानावस्था यदेत्युक्ता । मुमुक्षुरस्येत्युक्तः । हृदीत्युक्त्या कामानामात्मनिष्ठता निरस्ता । प्रतिबन्धाभावावस्थां वक्तुमथेत्युक्तम् । अत्रेति जीवदवस्थोक्तिः । 'स यो ह वै तत्परमं ब्रह्म वेद' इत्यादिसंग्रहार्थमादिपदम् । परपक्षव्यावृत्तिं स्फोरयति-**प्रधानादीनां त्विति** । क्वचिदिति श्रुतिस्मृतिलोकोक्तिः । वाग्विमुक्तेर्ज्ञेयत्वव्यपदेशादपि द्युभ्वाद्यायतनं ब्रह्मेति व्याख्यान्तरमाह-**अपि चेति** । इहेत्युदाहरणोक्तिः । वाग्विमोकद्वारा द्युभ्वाद्यायतनस्य ज्ञेयत्वोक्तावपि कुतस्तद्ब्रह्मैव तत्राऽऽह-**तच्चेति** । धीरो विवेकज्ञानी विज्ञानं पदार्थज्ञानं प्रज्ञा वाक्यार्थधीर्ज्ञातपदार्थस्यैव हि वाक्यार्थधीः । ब्राह्मणपदमनुक्तद्विजोपलक्षणम् । वाक्यार्थधीहेतुत्वेन कर्मकाण्डवैमुख्यमधिकारिणा कार्यमित्याह-**नेति** । बहूनिति विशेषणादात्मार्थोपनिषदनुचिन्तनमनुज्ञातम् । अनात्मार्थशब्दानामननुसंधेयत्वे हेतुः-**वाच इति**। अष्टावपि स्थानानि वाक्शब्देनोक्तानि । ताल्वादिशोषणमेव बहुशब्दानुचिन्तनं न फलवदित्यर्थः । मुक्तो-

१ स्थिता इति क्वचिदेव पाठः ।

तस्मादपि द्युभ्वाद्यायतनं परं ब्रह्म ॥ २ ॥

## नानुमानमतच्छब्दात् ॥ ३ ॥

यथा ब्रह्मणः प्रतिपादको वैशेषिको हेतुरुक्तः, नैवमर्थान्तरस्य वैशेषिको हेतुः प्रतिपादकोऽस्तीत्याह–"नानुमानं" सांख्यस्मृतिपरिकल्पितं प्रधानमिह द्युभ्वाद्यायतनत्वेन प्रतिपत्तव्यम् ॥ कस्मात् ॥ "अतच्छब्दात्"–तस्याचेतनस्य प्रधानस्य प्रतिपादकश्शब्दः तच्छब्दो, न तच्छब्दोऽतच्छब्दः ॥ न ह्यत्राचेतनस्य प्रधानस्य प्रतिपादकः कश्चिच्छब्दोऽस्ति ॥ येनाचेतनं प्रधानं कारणत्वेनायतनत्वेन वाऽवगम्येत ॥ तद्विपरीतस्य चेतनस्य प्रतिपादकश्शब्दोऽत्रास्ति–"यः सर्वज्ञस्सर्ववित्"[मुण्ड०१।१।९] इत्यादिः ॥ अत एव न वायुरपीह द्युभ्वाद्यायतनत्वेनाश्रीयते ॥ ३ ॥

## प्राणभृच्च ॥ ४ ॥

यद्यपि प्राणभृतो विज्ञानात्मन आत्मत्वं चेतनत्वं च सम्भवति ॥ तथाऽप्युपाधिपरिच्छिन्नज्ञानस्य सर्वज्ञत्वाद्यसम्भवे सत्यस्मादेवातच्छब्दात्प्राणभृदपि न द्युभ्वाद्यायतनत्वेनाश्रयितव्यः ॥ न चोपाधिपरिच्छिन्नस्या-

---

रत्नप्रभा ।

त्मशब्दोच्चारणफलम् । तद्ध्यानान्मनसो ग्लानिमात्रमित्यर्थः ॥ २ ॥ वैशेषिक इति ॥ असाधारण आत्मशब्दादिरित्यर्थः । अतच्छब्दादित्यस्यार्थान्तरमाह–तद्विपरीतस्येति ॥ अत एव अतच्छब्दादेव ॥ ॥ ३ ॥ प्राणभृच्चेति । सूत्रे चकारः पूर्वसूत्रस्थनञोऽनुषङ्गार्थः । सर्वज्ञपदसमानाधिकरण आत्मशब्दो न जीववाचीत्यतच्छब्दस्तस्मादित्यर्थः ॥ ननु "नानुमानप्राणभृतावतच्छब्दाद्" [ व्या० सू० १ । ३ ।

भामती ।

नानुमानमतच्छब्दात् । नानुमानमित्युपलक्षणम् । नाव्याकृतमित्यपि द्रष्टव्यं, हेतोरुभयत्रापि साम्यात् ॥ ॥ ३ ॥ प्राणभृच्च । चेनातच्छब्दत्वं हेतुरनुकृष्यते । स्वयं च भाष्यकृदत्र हेतुमाह–न चोपाधिपरिच्छिन्नस्येति । न सम्यक् संभवति । नाञ्जसमित्यर्थः । भोग्यत्वेन हि आयतनत्वमिति क्लिष्टम् । स्यादेतत् । यद्यतच्छब्दत्वादित्यत्रापि हेतुरनुकृष्टव्यः, हन्त कस्मात्पृथग्योगकरणं, यावता ' न प्राणभृदनुमाने' इत्येक

आनन्दगिरीय–न्यायनिर्णयः ।

परामृष्टत्वोक्तिफलमाह–तस्मादिति ॥ २ ॥ सिद्धान्तमुक्त्वा प्रधानपक्षं निषेधति–नेति । सूत्रतात्पर्यमाह–यथेति । वैशेषिकत्वमसाधारणत्वम् । तदक्षराणि व्याचष्टे–नेत्यादिना । इहेति वाक्योक्तिः । प्रश्नपूर्वकं हेतुमुक्त्वा व्याचष्टे–कस्मादित्यादिना । प्रकरणमत्रेत्युक्तम् । प्रधानसाधकशब्दाभावे फलमाह–येनेति । प्रधानवाचिशब्दस्य सत्त्वेनेति यावत् । न तथा तद्वाचिशब्दोऽस्तीति शेषः । अतच्छब्दादित्यर्थान्तरमाह–तदिति । सप्तमी पूर्ववत् । प्रधानस्य द्युभ्वाद्यायतनत्वाभावेऽपि सूत्रात्मनः स्यादित्याशंक्याऽऽह–अत इति । अतच्छब्दादित्यतःशब्दार्थः ॥ ३ ॥ अस्तु तर्हि शारीरो द्युभ्वाद्यायतनं तस्मिन्नात्मत्वादियोगात्तत्राऽऽह–प्राणभृच्चेति । तद्व्याचष्टे–यद्यपीति । भोग्यस्य भोक्तृशेषत्वात्तस्याऽऽयतनत्वमुक्तमाशंक्याऽऽह–न चेति । जीवस्यादृष्टद्वारा द्युभ्वादिनिमित्तत्वेऽपि न साक्षात्तदायतनत्वमौपाधिकत्वेनाविभुत्वादित्यर्थः । नन्वतच्छब्दादिति हेतुरिहापि चेदनुकृष्यते तर्हि न प्राणभृदनुमाने अतच्छब्दादि-

---

१ नानुमानिकमिति पाठान्तरं क्वचित् ।

ऽविभोः प्राणभृतो द्युभ्वाद्यायतनत्वमपि सम्यक् सम्भवति ॥ पृथग्योगकरणमुत्तरार्थम् ॥४॥ कुतश्च न प्राणभृद् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः–

**भेदव्यपदेशात् ॥ ५ ॥**

भेदव्यपदेशश्चेह भवति–"तमेवैकं जानथ आत्मानम्" [ मुण्ड० २ । २।५] इति ज्ञेयज्ञातृभावेन ॥ तत्र प्राणभृत्तावन्मुमुक्षुत्वाज्ज्ञाता, परिशेषादात्मशब्दवाच्यं ब्रह्म ज्ञेयं द्युभ्वाद्यायतनमिति गम्यते ॥ न प्राणभृत् ॥ ५ ॥ कुतश्च न प्राणभृद् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः–

**प्रकरणात् ॥ ६ ॥**

प्रकरणाच्चेदं परमात्मनः–"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" [ मुण्ड० १ । १ । ३ ] इत्येकविज्ञानेन सर्वविज्ञानापेक्षणात् ॥ परमात्मनि हि सर्वात्मके विज्ञाते सर्वमिदं विज्ञातं स्यात् ॥ न केवले प्राणभृति ॥ ६ ॥ कुतश्च न प्राणभृद् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः–

**स्थित्यदनाभ्यां च ॥ ७ ॥**

---

रत्नप्रभा ।

३ ] इत्येकमेव सूत्रं किमर्थं न कृतम् । उभयनिरासहेतोरेकत्वादित्यत आह–**पृथगिति** ॥ **योगः** सूत्रम् । उत्तरसूत्रस्थहेतूनां जीवमात्रनिरासेनान्वयेऽपि सुबोधार्थं **प्राणभृच्चेति** पृथक् सूत्रकरणमित्यर्थः ॥ ४ ॥ तानेव हेतूनाकांक्षाद्वारा व्याचष्टे–**कुतश्च** **नेत्यादिना** ॥ **यद्यपि** विशुद्धः प्रत्यगात्मैवात्र ज्ञेयः । **तथापि** जीवत्वाकारेण ज्ञातुर्ज्ञेयाद्भेदान्न ज्ञेयरूपत्वमित्यर्थः । एवं च जीवत्वलिङ्गविशिष्टत्वेन जीवस्य द्युभ्वादिवाक्यार्थत्वं निरस्यते । न शुद्धरूपेणेति मन्तव्यम् ॥ ५ ॥ ६ ॥ ननु स्थित्येश्वरस्य, अदनाज्जीवस्य,

भामती ।

एव योगः कस्मान्न कृत इत्यत आह–**पृथगिति** । 'भेदव्यपदेशात्' इत्यादिना हि प्राणभृदेव निषिध्यते, न प्रधानं, तच्चैकयोगकरणे दुर्विज्ञानं स्यादिति ॥ ४ ॥ ५ ॥ **प्रकरणात्** । न खलु हिरण्यगर्भादिषु ज्ञातेषु सर्वं ज्ञातं भवति किंतु ब्रह्मण्येवेति ॥ ६ ॥ **स्थित्यदनाभ्यां च** । यदि जीवो हिरण्य-

आनन्दगिरीय–न्यायनिर्णयः ।

त्येकमेव सूत्रमस्तु तत्राऽऽह–**पृथगिति** । उत्तरसूत्रैः प्राणभृदेव निरस्यते न प्रधानं तच्चैकसूत्रकरणे दुर्ज्ञानं तेनोत्तरसूत्रेषु जीवमात्रनिरासज्ञापनार्थं पृथक्करणं सूत्रयोरित्यर्थः ॥ ४ ॥ परिच्छेदस्याऽऽभासत्वाद्ब्रह्मैक्याभिप्रायेण सर्वज्ञत्वमायतनत्वं च जीवेऽपि स्यादिति मत्वा पृच्छति–**कुतश्चेति** । सूत्रमुत्तरम्–**भेदेति** । विभजते–**भेदेत्यादिना** । इहेत्युदाहरणोक्तिः । तथाऽपि ज्ञेयमायतनं प्राणभृदस्तु नेत्याह–**तत्रेति** । निर्धारणार्था सप्तमी ॥ ५ ॥ भिन्नस्य ब्रह्मणो ज्ञेयत्वनिरासेन स्वात्मानमेव जानथेति वचनपर्यवसानाज्जीवस्याऽऽयतनत्वज्ञेयत्वनिरासे हेत्वन्तरं वाच्यमित्याह–**कुतश्चेति** । सूत्रमुत्तरमादाय व्याचष्टे–**प्रकरणं चेति** । तस्य परमात्मविषयत्वे हेतुमाह–**कस्मिन्निति** । प्राणभृति ज्ञातेऽपि तच्छेषत्वेन सर्वविज्ञानात्तद्विषयत्वं प्रकरणस्येत्याशंक्याऽऽह–**परमात्मनीति** ॥ ६ ॥ जीवस्योपाध्यैक्येनाविवक्षितत्वात्तज्ज्ञानेऽपि सर्वज्ञानसिद्धेस्तस्याऽऽयतनत्वाद्यभावे हेत्वन्तरं वाच्यमित्याशंक्य सूत्रेण परिहरति–**कुतश्चेत्यादिना** ।

---

१ तथाहि–यदि पृथग्योगो न स्यात्तर्हि प्रधानप्राणोभयविषयको भेदव्यपदेशो भवेत् । तथा सति तमेवैकं जानथेत्यत्र ज्ञातृभावेन भेदव्यपदेशस्य प्रधानेऽसंभवाद्विरुध्यत इति बोध्यम् ।

द्युभ्वाद्यायतनं च प्रकृत्य-"द्वा सुपर्णा सयुजा सखायौ" [ मुण्ड० ३ । १ । १ ] [ श्वेता० ४ । ६ ] इत्यत्र स्थित्यदने निर्दिश्येते ॥ "तयोरन्यः पिप्पलं स्वाद्वत्ति" [ मुण्ड० ३ । १ । १ ] [ श्वेता० ४ । ६ ] इति कर्मफलाशनम्, "अनश्नन्नन्योऽअभिचाकशीति" [ मुण्ड० ३ । १ । १ ] [ श्वेता० ४ । ६ ] इत्यौदासीन्येनावस्थानं च ॥ ताभ्यां च स्थित्यदनाभ्यामीश्वरक्षेत्रज्ञौ तत्र गृह्येते ॥ यदि चेश्वरो द्युभ्वाद्यायतनत्वेन विवक्षितः, ततस्तस्य प्रकृतस्येश्वरस्य क्षेत्रज्ञात्पृथग्वचनमवकल्पते ॥ अन्यथा ह्यप्रकृतवचनमाकस्मिकमसम्बद्धं स्यात् ॥ ननु तवापि क्षेत्रज्ञस्येश्वरात्पृथग्वचनमाकस्मिकमेव प्रसज्येत ॥ न ॥ तस्याविवक्षितत्वात्-क्षेत्रज्ञो हि कर्तृत्वेन भोक्तृत्वेन च प्रतिशरीरं बुद्ध्याद्युपाधिसम्बद्धो[1] लोकत एव प्रसिद्धः । नासौ श्रुत्या तात्पर्येण विवक्ष्यते ॥ ईश्वरस्तु लोकतोऽप्रसिद्धत्वाच्छ्रुत्या तात्पर्येण विवक्ष्यते इति न तस्याकस्मिकवचनं युक्तम् ॥ "गुहां प्रविष्टावात्मानौ हि" ॥ [ व्या० सू० १ । २ । ११ ] इत्यत्राप्येतद्दर्शितं-द्वा सुपर्णेत्यस्यामृचीश्वरक्षेत्रज्ञावुच्येते इति ॥ यदाऽपि पैङ्ग्युपनिषत्कृतेन व्याख्यानेनास्यामृचि सत्त्वक्षेत्रज्ञावुच्येते, तदाऽपि न

रत्नप्रभा ।

द्वा सुपर्णेत्यत्रोक्तावपि ईश्वर आयतनवाक्येन किमर्थं ग्राह्य इत्यत आह-यदि चेश्वर इति ॥ अत्र चेश्वरः शुद्धचिन्मात्रो ग्राह्यः । न सर्वज्ञत्वादिविशिष्टः । तस्यात्राप्रतिपाद्यत्वात् । तथा चाप्रतिपाद्यार्थस्याकस्मान्मध्ये वचनासम्भवादाद्यवाक्येन ग्रहणं कार्यमित्यभिसन्धिः । तमज्ञात्वाऽऽशङ्कते-ननु तवापीति ॥ ब्रह्मस्वरूपप्रतिपादनार्थमकस्मादप्रकृतस्यापि लोकप्रसिद्धस्य जीवस्यानुवादसम्भव इति परिहरति-नेति ॥ ननु द्वा सुपर्णेत्यत्र बुद्धिजीवयोरुक्तेः कथमिदं सूत्रमित्यत आह-गुहामिति ॥ स्थित्यदनाभ्यामीश्वरक्षेत्रज्ञयोरनुवादेनैक्यं दर्शितमित्यर्थः ॥ नन्वत्र जीवेशौ, नानुवाद्यौ, पैङ्ग्याख्याविरोधादतः सूत्रासङ्गतिरित्यत आह-यदापीति ॥ तदापि सूत्रस्यासङ्गतिर्नास्तीत्यर्थः ॥ अदनवाक्येन बुद्धिमनूद्य, स्थितिवाक्येन

भामती ।

गर्भो वा द्युभ्वाद्यायतनं भवेत्, ततस्तत्प्रकृत्या 'अनश्नन्नन्योऽअभिचाकशीति' इति परमात्माभिधानमाकस्मिकं प्रसज्येत । न च हिरण्यगर्भ उदासीनः, तस्यापि भोक्तृत्वात् । न च जीवात्मैव द्युभ्वाद्यायतनं, तथा सति स एवात्र कथ्यते, तत्कथनाय च ब्रह्मापि कथ्यते, अन्यथा सिद्धान्तेऽपि जीवात्मकथनमाकस्मिकं स्यादिति वाच्यम् । यतोऽनधिगतार्थावबोधनस्वरसेनाम्नायेन प्राणभृन्मात्रप्रसिद्धजीवात्माधिगमायात्यन्तानवगतमलौकिकं ब्रह्मावबोध्यत इति सुभाषितम् ॥ यदापि पैङ्ग्युपनिषत्कृतेन व्याख्यानेनेति ।

आनन्दगिरीय-न्यायनिर्णयः ।

व्याचष्टे-द्युभ्वादीति । निर्देशमेव दर्शयति-तयोरिति । विभक्त्यर्थमाह-ताभ्यां चेति । स्थित्येश्वरस्यादनाज्जीवस्य संग्रहेऽपि कथमीश्वरस्यैव विश्वायतनत्वं तदाह-यदीति । ईश्वरस्याऽऽयतनत्वेनाप्रकृतत्वे जीवात्पृथक्कथनानुपपत्तिरित्युक्तमेव व्यतिरेकद्वाराऽऽह-अन्यथेति । जीवस्याप्यायतनत्वेनाप्रकृतत्वे तुल्याऽनुपपत्तिरिति शंकते-नन्विति । तस्यैक्यार्थं लोकसिद्धस्यानुवादत्वान्नैवमित्याह-नेति । जीवस्यापूर्वत्वाभावेनाप्रतिपाद्यत्वमेव प्रकटयति-क्षेत्रज्ञो हीति । ईश्वरस्यापि लोकवादिसिद्धत्वादप्रतिपाद्यतेत्याशंक्याऽऽह-ईश्वरस्त्विति । तयोरित्यदौ बुद्धिजीवयोरेवोक्तत्वात्कथमिदं सूत्रं तत्राऽऽह-गुहामिति । गुहाधिकरणे नेदमुदाहरणमृतं पिबन्तावित्युदाहृतत्वात्तत्राऽऽह-यदेति । तर्हि परानुक्तेर्बुद्धिजीवयोरेवोक्त-

१ बुद्ध्युपाधिसम्बद्ध इति पाठान्तरम् । २ इत्यत्र भाष्ये इत्यर्थः ।

विरोधः कश्चित् ॥ कथम् ॥ प्राणभृद्धीह घटादिच्छिद्रवत्सत्त्वाद्युपाध्यभिमानित्वेन प्रतिशरीरं गृह्यमाणो द्युभ्वाद्यायतनं न भवतीति प्रतिषिध्यते ॥ यस्तु सर्वशरीरेषूपाधिभिर्विनोपलक्ष्यते, परमात्मैव, स भवति॥ यथा–घटादिच्छिद्राणि घटादिभिरुपाधिभिर्विनोपलक्ष्यमाणानि महाकाश एव भवन्ति, तद्वत्प्राणभृतः परस्मादन्यत्वानुपपत्तेः प्रतिषेधो नोपपद्यते ॥ तस्मात्सत्त्वाद्युपाध्यभिमानिन एव द्युभ्वाद्यायतनत्वप्रतिषेधः ॥ तस्मात्परमेव ब्रह्म द्युभ्वाद्यायतनम् ॥ तदेतद् "अदृश्यत्वादिगुणको धर्मोक्तेः" [ व्या० सू० १ । २ । २१ ] इत्यनेनैव सिद्धम् ॥ तस्यैव हि भूतयोनिवाक्यस्य मध्ये इदं पठितं "यस्मिन्द्यौः पृथिवी चान्तरिक्षम्" [ मुण्ड० २ । २ । ५ ] इति ॥ प्रपञ्चार्थं तु पुनरुपन्यस्तम् ॥ ७ ॥ इति द्युभ्वाद्यधिकरणम् ॥ १ ॥

## भूमा सम्प्रसादादध्युपदेशात् ॥ ८ ॥

इदं समामनन्ति "भूमा त्वेव विजिज्ञासितव्य इति–

---

रत्नप्रभा ।

बुद्ध्यादिविलक्षणशुद्धप्रत्यग्ब्रह्मणो ज्ञेयस्योक्तेर्द्युभ्वादिवाक्ये तदेव ग्राह्यं न बुद्ध्युपहितो जीव इति सूत्रसङ्गतिमाह–कथमित्यादिना ॥ नन्वत्रानुपहितो जीव उक्तो न परं ब्रह्मेत्यत आह–यस्त्विति ॥ पौनरुक्त्यं शङ्कते–तदेतदिति ॥ द्युभ्वादिवाक्यस्य ब्रह्मपरत्वमित्यर्थः । समाधत्ते–प्रपञ्चार्थमिति ॥ सेतुशब्दव्याख्यानेन भूतयोनेः प्रत्यगात्मत्वस्फुटीकरणमित्यर्थः । तस्मान्मुण्डकोपनिषद्, ब्रह्मणि समन्वितेति सिद्धम् ॥ ७ ॥ ( १ ) ॥ छान्दोग्यमुदाहरति–इदमिति ॥ नाल्पे सुखमस्ति । भूमैव सुखम् । तस्मान्नि-

भामती ।

तत्र हि 'अनश्नन्नन्योऽभिचाकशीति' इति जीव उपाधिरहितेन रूपेण ब्रह्मस्वभाव उदासीनोऽभोक्ता दर्शितः । तदर्थमेवाचेतनस्य बुद्धिसत्त्वस्यापरमार्थिकं भोक्तृत्वमुक्तम् । तथा चेत्थंभूतं जीवं कथयतानेन मन्त्रवर्णेन द्युभ्वाद्यायतनं ब्रह्मैव कथितं भवति, उपाध्यवच्छिन्नश्च जीवः प्रतिषिद्धो भवतीति न पैङ्गिब्राह्मणविरोध इत्यर्थः ॥ प्रपञ्चार्थमिति । तन्मध्ये न पठितमिति कृत्वाचिन्तयेदमधिकरणं प्रवृत्तमित्यर्थः ॥ ७ ॥ ( १ ) ॥ भूमा संप्रसादादध्युपदेशात् । नारदः खलु देवर्षिः कर्मविदनात्मवित्तया

आनन्दगिरीय–न्यायनिर्णयः ।

स्यात्कथं परस्याधिगतिरित्याह–कथमिति । जीवस्यापि परात्मत्वेनात्रेष्टत्वादुपाध्यनादराद्युपहितनिषेधेऽपि तदस्पृष्टस्य परस्याऽऽयतनत्वमित्याह–प्राणेति । कथमेकस्यैवोपाधिविशिष्टत्वाविशिष्टत्वेन भेदाभेदौ तत्राऽऽह–यथेति । प्राणभृतोऽनुपहितस्यात्रेष्टस्येति शेषः । तस्य चेदायतनत्वं न निषिध्यते किंविषयस्तर्हि निषेधस्तत्राऽऽह–तस्मादिति । पक्षान्तरायोगे सिद्धान्तमुपसंहरति–तस्मादिति । इतश्चाऽऽयतनवाक्यं ज्ञेयब्रह्मपरमित्याह–तदिति । तेनैव सिद्धत्वे हेतुमाह–तस्येति । तर्हि गतार्थमधिकरणमनर्थकमित्याशङ्क्य भूतयोनिवाक्यमध्यस्थं नैतदिति कृत्वाचिन्तयेदमधिकरणमित्याह–प्रपञ्चार्थमिति ॥ ७ ॥ ( १ ) ॥ आत्मशब्दाद् द्युभ्वाद्यायतनं ब्रह्मेत्युक्तं तत्राऽऽत्मशब्दः 'तरति शोकमात्मवित्' इत्यत्र ब्रह्मणि प्राणे प्रयोगादनैन्तिकः स्यादित्याशंक्याऽऽह–भूमेति । पूर्णसुखात्मनि निर्विशेषे ब्रह्मणि भूमविद्याश्रुतेरन्वयोक्तेः संगतिरिति मत्वा छान्दोग्यवाक्यं पठति–इदमिति । नाल्पे सुखमस्ति भूमैव सुखं . तस्मान्निरतिशयं सुखमिच्छता भूमैव विशेषेण ज्ञातुमेष्टव्यो न परिच्छिन्नमिति सनत्कुमारोक्तिमादत्ते–भूमा त्विति । तदुपश्रुत्य

---

१ उपाधिभिरिति क्वचिन्नोपलभ्यते । २ भूतयोनिभूताक्षरनिरूपकवाक्यमध्ये इत्यर्थः ।

**भूमानं भगवो विजिज्ञास इति ॥ १ ॥ यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्''[छां०७।२३।२४।१।२] इत्यादि ॥ तत्र संशयः ॥ किं प्राणो भूमा स्याद् आहोस्वित् परमात्मेति ॥ कुतः संशयः ॥ भूमेति तावद्बहुत्वमभिधीयते-''बहोर्लोपो भू च बहोः'' [पा० सू० ६।४।१५८] इति**

रत्नप्रभा।

रतिशयसुखार्थिना भूमैव विचार्य इति नारदं प्रति सनत्कुमारेणोक्ते सति नारदो ब्रूते-**भूमानमिति** ॥ भूम्नो लक्षणमद्वितीयत्वमाह-**यत्रेति** ॥ भूमलक्षणं परिच्छिन्नलक्षणोक्त्या स्फुटयति-**अथेति** ॥ अत्र संशयबीजं प्रश्नपूर्वकमाह-**कुत इत्यादिना** ॥ बहोर्भाव इति विग्रहे ''पृथ्वादिभ्य इमनिज्वा'' [पाणि० सू० ५।१।१२२] इतीमनिच्प्रत्यये कृते ''बहोर्लोपो भू च बहोः'' इति सूत्रेण बहोः परस्येमनिच्प्रत्ययस्यादेरिकारस्य लोपः स्याद्बहोः स्थाने भूरित्यादेशश्च स्यादित्युक्तेर्भूमन्निति शब्दो निष्पन्नः। तस्य भावार्थकेमनिच्प्रत्ययान्तत्वाद्बहुत्वं वाच्यम्। तत्किं धर्मिकमित्याकांक्षायां सन्निहितप्रकरणस्थः प्राणो धर्मी भाति, वाक्योपक्रमस्थ आत्माऽपि स्वप्रतिपादनापेक्षो धर्मित्वेन भातीति सन्निहितव्यवहितप्रकर-

भामती।

शोच्यमात्मानं मन्यमानो भगवन्तमात्मज्ञमाजानिसिद्धं महायोगिनं सनत्कुमारमुपससाद। उपसद्य चोवाच, भगवन्, अनात्मज्ञताजनितशोकसागरपारमुत्तारयतु मां भगवानिति। तदुपश्रुत्य सनत्कुमारेण 'नाम ब्रह्मेत्युपास्स्व' इत्युक्ते नारदेन पृष्टं किं नाम्नोऽस्ति भूय इति। तत्र सनत्कुमारस्य प्रतिवचनम्-'वाग्वाव नाम्नो भूयसी' इति। तदेवं नारदसनत्कुमारयोर्भूयसी प्रश्नोत्तरे वागिन्द्रियमुपक्रम्य मनःसंकल्पचित्तध्यानविज्ञानबलान्नतोयवायुसहिततेजोनभःस्मराशाप्राणेषु पर्यवसिते। कर्तव्याकर्तव्यविवेकः संकल्पः, तस्य कारणं पूर्वापरविषयनिमित्तप्रयोजननिरूपणं चित्तम्। स्मरः स्मरणम्। प्राणस्य च समस्तक्रियाकारकफलभेदेन पित्राद्यात्मत्वेन च रथारनाभिदृष्टान्तेन सर्वप्रतिष्ठत्वेन च प्राणभूयस्त्वदर्शिनोऽतिवादित्वेन च नामादिप्रपञ्चादाशान्ताद्भूयस्त्वमुक्त्वाऽपृष्ट एव नारदेन सनत्कुमार एकग्रन्थेन 'एष तु वा अतिवदति यः सत्येनातिवदति' इति सत्यादीन्कृतिपर्यन्तानुक्त्वोपदिदेश-'सुखं त्वेव विजिज्ञासितव्यम्' इति। तदुपश्रुत्य नारदेन 'सुखं त्वेव भगवो विजिज्ञासे' इत्युक्ते सनत्कुमारः 'यो वै भूमा तत्सुखम्' इत्युपक्रम्य भूमानं व्युत्पादयांबभूव-'यत्र नान्यत्पश्यति' इत्यादिना। तदीदृशे विषये विचार आरभ्यते। तत्र संशयः-किं प्राणो भूमा स्यादाहो परमात्मेति। भावभवित्रोस्तादात्म्यविवक्षया सामानाधिकरण्यं संशयस्य बीजमुक्तं भाष्यकृता। तत्र 'एतस्मिन् ग्रन्थसंदर्भे यदुक्ताद्भूयसोऽन्यतः। उच्यमानं तु तद्भूय उच्यते प्रश्नपूर्वकम् ॥' न च प्राणात् किं भूय इति पृष्टम्। नापि भूमा वाऽस्माद्भूयानिति प्रत्युक्तम्। तस्मात्प्राणभूयस्त्वाभिधानानन्तरमपृष्टेन भूमोच्यमानः प्राणस्यैव भवितुमर्हति। अपि च भूमेति भावो

आनन्दगिरीय-न्यायनिर्णयः।

नारदो भगवन्, भूमानमेव विशेषेण ज्ञातुमिच्छामीति पृच्छति सनत्कुमारम्-**भूमानमिति**। भूम्नो लक्षणमाह-**यत्रेति**। व्यवहारातीतं पूर्णं वस्तु भूमेत्यर्थः। लक्षणं व्यतिरेकेण स्फोरयितुं परिच्छिन्नस्य लक्षणमाह-**अथेति**। अन्वयवद्व्यतिरेकस्यापीष्टसिद्धौ हेतुत्वद्योतकोऽथशब्दः। आदिपदं 'यो वै भूमा तदमृतम्' इत्यादिसंग्रहार्थम्। उक्ते वाक्ये भूम्नि संशयमाह-**तत्रेति**। निर्बीजे संशयेऽतिप्रसङ्गात्पृच्छति-**कुत इति**। तत्र हेतुं वक्तुं भूमशब्दार्थमाह-**भूमेतीति**। बहोर्भाव इति विग्रहे ''पृथ्वादिभ्य इमनिज्वा'' इतीमन्प्रत्यये कृते ''बहोर्लोपो भू च बहोः'' इति सूत्रेण बहोरुत्तरस्येमन्प्रत्ययस्येकारलोपे बहोः स्थाने भूशब्दादेशे च भूमन्निति प्रातिपदिकं सिध्यति। तस्य च भावार्थे विहितेमन्प्रत्ययान्तत्वाद्बहुत्ववाचितेत्यर्थः।

भूमशब्दस्य भावप्रत्ययान्ततास्मरणात् ॥ किमात्मकं पुनस्तद्बहुत्वमिति विशेषाकांक्षायां—"प्राणो वा आशाया भूयान्" [ छां० ७ । १५ । १ ] इति सन्निधानात्प्राणो भूमेति प्रतिभाति ॥ तथा—"श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य परं पारं तारयतु" [ छां० ७ । १ । ३ ] इति प्रकरणोत्थानात्परमात्मा भूमा इत्यपि प्रतिभाति ॥ तत्र कस्योपादानं न्याय्यं, कस्य वा हानमिति भवति संशयः ॥ किं तावत्प्राप्तम् ॥ प्राणो भूमेति ॥ कस्मात् ॥ भूयः प्रश्नप्रतिवचनदर्शनात् । यथा हि—"अस्ति भगवो नाम्नो भूयः" [ छां० ७ । १ । ५ ] इति, "वाग्वाव नाम्नो भूयसी" [ छां० ७ । २ । १ ] इति, तथा "अस्ति भगवो वाचो भूयः" [ छां० ७ । २ । २ ] इति, "मनो वाव वाचो भूयः" [ छां० ७ । ३ । १ ] इति च नामादिभ्यो ह्या प्राणाद्भूयः प्रश्नप्रतिवचनप्रवाहाः प्रवृत्ताः ॥

---

रत्नप्रभा ।

णाभ्यां संशय इत्यर्थः ॥ पूर्वमात्मशब्दाद् द्युभ्वाद्यायतनं ब्रह्मेत्युक्तम् । तदयुक्तम् । "तरति शोकमात्मविद्" [ छां० ७ । १ । ३ ] इत्यब्रह्मण्यप्यात्मशब्दप्रयोगादित्याक्षेपसङ्गत्या पूर्वपक्षयति—प्राणो भूमेति ॥ धर्मधर्मिणोरभेदात्सामानाधिकरण्यं द्रष्टव्यम् । पूर्वोत्तरपक्षयोः प्राणोपास्तिः, ब्रह्मज्ञानं च फलं क्रमेण मन्तव्यम् । अत्राध्याये भूयः प्रश्नोत्तरभेदादर्थभेदो दृश्यते । भूमा तु प्राणात्परं भूयः प्रश्नं विनैवोक्तलिङ्गेन प्राणादभिन्न इत्याह—कस्मादित्यादिना ॥ प्राणाद्भूय इति न दृश्यत इति पूर्वेण सम्बन्धः ।

भामती ।

न भवितारमन्तरेण शक्यो निरूपयितुमिति भवितारमपेक्षमाणः प्राणस्यानन्तर्येण बुद्धिसंनिधानात्तमेव भवितारं प्राप्य निर्वृणोति । 'यस्योभयं हविरार्तिमार्छेत्' इत्यत्रार्तिरिवार्तं हविः । यथाहुः । 'मृष्यामहे हविषा विशेषणम्' इति । न चात्मनः प्रकरणादात्मैव बुद्धिस्थ इति तस्यैव भूमा स्यादिति युक्तम् । सनत्कुमारस्य 'नाम ब्रह्मेत्युपास्स्व' इति प्रतीकोपदेशरूपेणोत्तरेण नारदप्रश्नस्यापि तद्विषयत्वेन परमात्मोपदेशप्रकरणस्यानुत्थानात् । अतद्विषयत्वे चोत्तरस्य प्रश्नोत्तरयोर्वैयधिकरण्येन विप्रतिपत्तेरप्रामाण्यप्रसङ्गात् । तस्मादसति प्रकरणे प्राणस्यानन्तर्यात्तस्यैव भूमेति युक्तम् । तदेतत्संशयबीजं दर्शयता भाष्यकारेण सूचितं पूर्वपक्षसाधनमिति न पुनरुक्तम् । न च भूयोभूयः प्रश्नात्परमात्मैव नारदेन जिज्ञासित इति युक्तम् । प्राणोपदेशानन्तरं तस्योपरमात् । तदेवं प्राण एव भूमेति स्थिते यद्यत्तद्विरोधितया वचः प्रतिभाति तत्तदनुगुणतया नेयम् । नीतं च भाष्यकृता । स्यादेतत् । 'एष तु वा अतिवदति' इति

आनन्दगिरीय—न्यायनिर्णयः ।

तथाऽपि संशये को हेतुरित्याशंक्यावान्तरप्रकरणं महाप्रकरणं चेत्याह—किमित्यादिना । तथा संनिधानात्प्राणभानवदित्यर्थः । भावभवित्रोस्तादात्म्यविवक्षया प्राणो भूमा परमात्मा भूमेति सामानाधिकरण्यम् । सत्यां सामग्र्यां कार्यसिद्धिफलमाह—तत्रेति । आकांक्षापूर्वकं पूर्वपक्षं गृह्णाति—किमिति । पूर्वपक्षे प्राणोपास्तिरुत्तरपक्षे परमात्मधीरिति फलम् । अवान्तरप्रकरणस्य संनिहितत्वेऽपि महाप्रकरणशेषत्वेन दुर्बलत्वान्न प्राणस्य प्रमेयतेत्याह—कस्मादिति । महाप्रकरणादवान्तरप्रकरणस्य प्राबल्यार्थं लिङ्गमाह—भूय इति । प्राणादूर्ध्वं महत्तरार्थविषयत्वेन प्रश्नस्य प्रतिवचनस्य वाऽदृष्टेरित्यर्थः । अन्यत्र तदभावेऽपि मेयभेदधीवदत्रापि स्यादित्याशंक्यास्मिन्प्रकरणे तयोः सतोरेवार्थभेदभानान्मैवमित्याह—यथेति । दृष्टिविषयत्वेन निषेध्यं प्रश्नादिकमभिनयति—अस्तीति । ननु 'एष तु वा अतिवदति' इति तुशब्देन प्राणविदोऽतिवादित्वं व्यावर्त्य 'यः सत्ये-

नैवं प्राणात्परं भूयः प्रश्नप्रतिवचनं दृश्यते–अस्ति भगवः प्राणाद्भूय इति, अदो वाव प्राणाद्भूय इति । प्राणमेव तु नामादिभ्य आशान्तेभ्यो भूयांसं "प्राणो वा आशाया भूयान्" [ छां० ७ । १५ । १ ] इत्यादिना सप्रपञ्चमुक्त्वा प्राणदर्शिनश्चातिवादित्वम् "अतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत" [ छां० ७ । १५ । ४ ] इत्यभ्यनुज्ञाय, "एष तु वा अतिवदति यः सत्येनातिवदति" [ छां० ७ । १६ । १ ] इति प्राणव्रतमतिवादित्वमनुकृष्यापरित्यज्यैव प्राणं सत्यादिपरम्परया भूमानं समवतारयन्–प्राणमेव भूमानं मन्यते इति गम्यते ॥ कथं पुनः प्राणे भूमनि व्याख्यायमाने–"यत्र नान्यत्पश्यति" [ छां० ७ । २४ । १ ] इत्येतद्भूम्नो लक्षणपरं वचनं व्याख्यायेतेति ॥ उच्यते ॥ सुषुप्त्यवस्थायां प्राणग्रस्तेषु करणेषु दर्शनादिव्यवहारनिवृत्तिदर्शनात्सम्भवति प्राणस्यापि यत्र नान्यत्पश्यतीत्यादि तल्लक्षणम् ॥ तथा च श्रुतिः "न शृणोति न पश्यति" [ प्रश्न० ४ । २ ] इत्यादिना सर्वकरणव्यापारप्रत्यस्तमयरूपां सुषुप्त्यवस्थामुक्त्वा "प्राणाग्नय एवैतस्मिन्पुरे जाग्रति" [ प्रश्न० ४ । ३ ] इति तस्यामेवावस्थायां पञ्चवृत्तेः प्राणस्य जागरणं ब्रुवती

रत्नप्रभा ।

नन्वेष तु वा अतिवदतीति तुशब्देन प्राणप्रकरणविच्छेदान्न प्राणो भूमेत्यत आह–प्राणमेवेति ॥ नामाद्याशान्तानुपास्यानतीत्य प्राणं श्रेष्ठं वदतीत्यतिवादी प्राणवित् । तं प्रति अतिवाद्यसीति केनचित् प्रश्ने कृते अस्मीति ब्रूयात् । नाहमतिवादीत्यपह्नवं न कुर्यादित्युक्तं प्राणविदम्, "एषः" इति परामृश्य सत्यवचनध्यानमननश्रद्धादिधर्मपरम्परां विधाय भूमोपदेशान्न प्रकरणविच्छेदः । तुशब्दो नामाद्युपासकस्यातिवादित्वनिरासार्थ इत्यर्थः । भूम्नो लक्षणवचनं सुखत्वममृतत्वं च प्राणे प्रश्नपूर्वकं योजयति–कथं पुनरित्यादिना ॥ प्राणग्रस्तेषु प्राणे लीनेषु । न शृणोति । सुप्तः पुरुष इति शेषः । "गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचन आहवनीयः प्राणः" इति श्रुतेः । प्राणाः अग्नयः इह पुरे शरीरे जाग्रति

भामती ।

तुशब्देन प्राणदर्शिनोऽतिवादिनो व्यवच्छिद्य सत्येनातिवादित्वं वदन् कथं प्राणस्य भूमानमभिदधीतेत्यत आह–प्राणमेव त्विति । प्राणदर्शिनश्चातिवादित्वमिति । नामाद्याशान्तमतीत्य वदनशीलत्वमित्यर्थः । एतदुक्तं भवति–नायं तुशब्दः प्राणातिवादित्वाद्व्यवच्छिनत्ति, अपि तु तदतिवादित्वमपरित्यज्य प्रत्युत तदनुकृष्य तस्यैव प्राणस्य सत्यस्य श्रवणमननश्रद्धानिष्ठाकृतिभिर्विज्ञानाय निश्चयाय सत्येनाति-

आनन्दगिरीय–न्यायनिर्णयः ।

नातिवदति[१] इति सत्येनातिवदनं वदन्प्राणं भूमानं न मृष्यते तत्राऽऽह–प्राणमिति । अतिवादित्वलिङ्गेन प्राणस्य प्रत्यभिज्ञानादेष इति प्रकृताकर्षणात्प्रकरणाविच्छेदादतिवादित्वे सत्यशब्दस्य सत्यवदनगुणविधायकत्वात्तुशब्दस्यापि नामाद्याशान्तवादिनोऽतिवादित्वव्यावर्तकत्वात्प्राणं गृहीत्वैव सत्यादिद्वारा भूम्नोऽवतारात्तस्यैव भूमतेत्यर्थः । प्राणपक्षे लक्षणविरोधं शङ्कते–कथमिति । अवस्थाविशेषमाश्रित्याऽऽह–उच्यत इति । लोकप्रसिद्ध्या संभावितं श्रुत्या स्पष्टयति–तथा चेति । 'गार्हपत्यो ह वा एषोऽपानः' इत्यादिनाऽग्नित्वेन निरूपितत्वात्प्राणा एवाग्नयस्ते च पुरे शरीरेऽभिमानतो गृहीते स्वापेऽपि व्यापारवन्तो भवन्तीत्यर्थः । यद्वा—तत्राप्यात्मन्येव लक्षणं तस्यास्तत्प्राधान्यादित्या-

१ दाक्षिणात्ये दक्षिणाग्निः ।

प्राणप्रधानां सुषुप्त्यवस्थां दर्शयति ॥ यच्चैतद् भूम्नः सुखत्वं श्रुतं—"यो वै भूमा तत्सुखम्" [ छां० ७ । २३ ] इति, तदप्यविरुद्धम् ॥ "यत्रैष देवः स्वप्नान्न पश्यत्यथ यदेतस्मिञ्छरीरे सुखं भवति" [ प्रश्न० ४ । ६ ] इति सुषुप्त्यवस्थायामेव सुखश्रवणात् ॥ यच्च "यो वै भूमा तदमृतम्" [ छां० ७ । २४ । १ ] इति, तदपि प्राणस्याविरुद्धम् ॥ "प्राणो वा अमृतम्" [ कौ० ब्रा० ३ । २ ] इति श्रुतेः ॥ कथं पुनः प्राणं भूमानं मन्यमानस्य "तरति शोकमात्मविद्" [ छां० ७ । १ । ३ ] इत्यात्मविविदिषया प्रकरणस्योत्थानमुपपद्यते ॥ प्राण एवेहात्मा विवक्षित इति ब्रूमः ॥ तथाहि—"प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः" [ छां० ७ । १५ । १] इति प्राणमेव सर्वात्मानं करोति । "यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वं समर्पितम्" [ छां० ७ । १५ । १ ] इति च सर्वात्मत्वारनाभिनिदर्शनाभ्यां च सम्भवति वैपुल्यात्मिका भूमरूपता प्राणस्य ॥ तस्मात्प्राणो भूमेत्येवं प्राप्तम् ॥ तत इदमुच्यते ॥ परमात्मैवेह भूमा भ-

रत्नप्रभा ।

सव्यापारा एव तिष्ठन्तीत्यर्थः । देवः जीवः । अथ तदा—स्वप्नदर्शनकाले । सुखश्रवणात्प्राणस्य सुखत्वमविरुद्धमित्यन्वयः । आत्मपदेनोपक्रमविरोधं परिहरति—**प्राण एवेति** ॥ प्राणस्यात्मत्वं कथमित्याशंक्य श्रुतत्वादित्याह—**तथाहीति** ॥ सर्वं समर्पितमिति च सर्वाधिष्ठानं प्राणं स्वीकरोति श्रुतिरित्यन्वयः । अत आत्मत्वं प्राणेऽपि मुख्यमिति भावः । भूमरूपत्वं योजयति—**सर्वात्मत्वेति** ॥

भामती ।

वदतीति प्राणव्रतमेवातिवादित्वमुच्यते । तुशब्दो नामाद्यतिवादित्वाद्व्यवच्छिनत्ति । न नामाद्याशान्तवाद्यतिवादि, अपि तु सत्यप्राणवाद्यतिवादीत्यर्थः । अत्र चागमाचार्योपदेशाभ्यां सत्यस्य श्रवणम् । अथागमाविरोधिन्यायनिवेशनं मननं, मत्वा च गुरुशिष्यसब्रह्मचारिभिरनुसूयुभिः सह संवाद्य तत्त्वं श्रद्धत्ते । श्रद्धानन्तरं च विषयान्तरदर्शी विरक्तस्ततो व्यावृत्तस्तत्त्वज्ञानाभ्यासं करोति, सेयमस्य कृतिः प्रयत्नः । अथ तत्त्वज्ञानाभ्यासनिष्ठा भवति, यदनन्तरमेव तत्त्वविज्ञानमनुभवः प्रादुर्भवति । तदेतद्वाह्या अप्याहुः—'भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानम्' इति भावनाप्रकर्षपर्यन्ता निष्ठा तस्माज्जायते तत्त्वानुभव इति । तस्मात्प्राण एव भूमेति प्राप्तेऽभिधीयते—'एष तु वा अतिवदति यः सत्येनातिवदति'

आनन्दगिरीय—न्यायनिर्णयः ।

शंक्य तथा चेत्यादि योज्यम् । 'यो वै भूमा तत्सुखम्' इति प्राणपक्षे कथं निर्वक्ष्यते तत्राऽऽह—**यच्चेति** । यस्यामवस्थायामेष देवो बुद्ध्याद्युपाधिको जीवः स्वप्नानुच्चावचान्नोपलभते तदा यत्सुखं तदस्मिञ्शरीरे भवति नोपायान्तरसाध्यमिति श्रुत्यर्थः । सुषुप्तेश्च प्राणप्राधान्यात्तस्यैव तत्सुखमिति शेषः । भूम्नोऽमृतत्वश्रुत्या प्राणादर्थान्तरत्वं प्राणस्याल्पत्वेन मर्त्यत्वादित्याशंक्याऽऽह—**यच्चेति** । प्राणे भूम्नि प्रकरणविरोधं शंकते—**कथमिति** । प्राणस्यैवात्राऽऽत्मत्वान्न तद्विरोधोऽस्तीत्याह—**प्राण एवेति** । संभवति मुख्येऽर्थे किमित्यात्मशब्देन गौणार्थग्रहणमित्याशंक्य सार्वात्म्यादात्मशब्दस्तत्र मुख्य एवेत्याह—**तथाहीति** । प्राणस्य सर्वकल्पनाधिष्ठानत्वाच्च मुख्यात्मत्वमित्याह—**यथेति** । तथाऽपि परमात्मैव सर्वकारणत्वान्मुख्यो भूमा प्राणस्तु नैवमित्याशंक्याऽऽह—**सर्वेति** । प्राणस्य सिद्धे भूमत्वे तदुपास्तिपरं भूमवाक्यमित्युपसंहरति—**तस्मादिति** । पूर्वपक्षमनूद्य सिद्धान्तयति—**एवमिति** । तत्र प्रतिज्ञां व्याकरोति—**परमात्मेति** । प्राणो

वितुमर्हति । न प्राणः ॥ कस्मात् ॥ सम्प्रसादादध्युपदेशात्-सम्प्रसाद इति सुषुप्तं स्थानमुच्यते । सम्यक् प्रसीदत्यस्मिन्निति निर्वचनात् ॥ तथा बृहदारण्यके च स्वप्नजागरितस्थानाभ्यां सह पाठात् ॥ तस्यां च सम्प्रसादावस्थायां प्राणो जागर्तीति प्राणोऽत्र सम्प्रसादोऽभिप्रेयते ॥ प्राणादूर्ध्वं भूम्न उपदिश्यमानत्वादित्यर्थः ॥ प्राण एव चेद्भूमा स्यात्स एव तस्मादूर्ध्वमुपदिश्येतेत्यश्लिष्टमेतत्स्यात् ॥ न हि नामैव नाम्नो भूय इति नाम्न ऊर्ध्वमुपदिष्टम् ॥ किं तर्हि ॥ नाम्नोऽन्यदर्थान्तरमुपदिष्टं वागाख्यं "वाग्वाव नाम्नो भूयसी" [ छां० ७।२।१ ] इति ॥ तथा वागादिभ्योऽप्या प्राणादर्थान्तरमेव तत्रतत्रोर्ध्वमुपदिष्टम् ॥ तद्वत्प्राणादप्यूर्ध्वमुपदिश्यमानो भूमा प्राणादर्थान्तरभूतो भवितुमर्हति ॥ नन्विह नास्ति प्रश्नः-

रत्नप्रभा ।

सम्प्रसादशब्देन प्राणं लक्षयितुं मुख्यार्थं दर्शयति—सम्प्रसाद इति ॥ "स वा एष एतस्मिन् सम्प्रसादे स्थित्वा पुनराद्रवति" [ बृ० ४ । ३ । १९ ] इति प्रयोगाच्च तत्पदं सुषुप्तिवाचकमित्याह-बृहदिति ॥ वाच्यार्थसम्बन्धात्प्राणो लक्ष्य इत्याह-तस्यां चेति ॥ अत्र सूत्र इत्यर्थः । भूमा, प्राणाद्भिन्नः, अत्राध्याये तस्मादूर्ध्वमुपदिष्टत्वान्नामादेरूर्ध्वमुपदिष्टवागादिवदित्यर्थः । विपक्षे हेतूच्छेदं बाधकमाह-प्राण एव चेदिति ॥ स्वस्यैव स्वस्मादूर्ध्वमुपदिष्टत्वमयुक्तं नामादिषु अदृष्टं चेत्यर्थः । हेत्वसिद्धिं शङ्कते-नन्विहेति ॥ प्रकृतप्राणवित्परामर्शक एषशब्दो न भवति । तस्य यच्छ-

भामती ।

इत्युक्त्वा भूमोच्यते । तत्र सत्यशब्दः परमार्थे निरूढवृत्तिः श्रुत्या परमार्थमाह । परमार्थश्च परमात्मैव । ततो ह्यन्यद्विकारजातमनृतं कयाचिदपेक्षया कथंचित्सत्यमुच्यते । तथा च 'एष तु वा अतिवदति यः सत्येनातिवदति' इति ब्रह्मणोऽतिवादित्वं श्रुत्याऽन्यनिरपेक्षया लिङ्गादिभ्यो बलीयस्यावगमितं कथमिव संनिधानमात्रात् श्रुत्याद्यपेक्षादतिदुर्बलात्कथंचित्प्राणविषयत्वेन शक्यं व्याख्यातुम् । एवं च प्राणादूर्ध्वं ब्रह्मणि भूमावगम्यमानो न प्राणविषयो भवितुमर्हति, किंतु सत्यस्य परमात्मन एव । एवं चानात्मविद आत्मानं विविदिषोर्नारदस्य प्रश्ने परमात्मानमेवास्मै व्याख्यास्यामीत्यभिसंधिमान्सनत्कुमारः सोपानारोहणन्यायेन स्थूलादारभ्य तत्तद्भूमव्युत्पादनक्रमेण भूमानमतिदुर्ज्ञानतया परमसूक्ष्मं व्युत्पादयामास । न च प्रश्नपूर्वता-

आनन्दगिरीय-न्यायनिर्णयः ।

भूमेत्युक्तत्वान्नेयं प्रतिज्ञेति शंकते-कस्मादिति । सौत्रं हेतुमादत्ते-संप्रसादादिति । 'एष संप्रसादः' इति संप्रसादशब्दस्य जीवार्थत्वादत्रापि तस्मात्परत्वोक्त्या न प्राणप्रत्युक्तिरित्याशंक्य संप्रसादशब्दस्य विवक्षितं वक्तुं प्रसिद्धमर्थमाह-संप्रसाद इति । जीवे सुप्तौ च शक्तिकल्पनायां गौरवं शंकित्वोक्तं सम्यगिति । न केवलं निरुक्त्या संप्रसादशब्दः स्वापविषयः किंतु 'स एष एतस्मिन्संप्रसादे रत्वा' इत्यादिप्रयोगादपीत्याह-बृहदिति । तर्हि स्वापादुपर्युपदेशस्ततोऽन्यस्य प्राणस्यापि स्यादित्याशंक्यावस्थावाचिशब्दस्य लक्षणया प्राणविषयत्वमाह-तस्यां चेति । संप्रसादशब्दस्य लाक्षणिकार्थग्रहे सिद्धं हेत्वर्थमाह-प्राणादिति । भूम्नो धर्म्याकांक्षायां ब्रह्मणः सत्यस्याधिकाराच्चदेव संबध्यत इति भावः । प्राणे हेतोरयोगमाह-प्राण इति । दृष्टान्तद्वारोक्तं व्यनक्ति-न हीति । अस्मिन्प्रकरणे यस्मादूर्ध्वं यो निर्दिश्यते स ततोऽतिरिच्यते प्राणाच्चोपरिष्टादुपदिष्टो भूमेति सोऽपि ततोऽन्यः स्यादिति भावः । तत्रतत्रेति पर्यायभेदोक्तिः । हेत्वसिद्धिं शंकते-नन्विति । प्रतिवचनद्वारा प्रश्नकल्पनामाशंक्योक्त-

१ संप्रसादपदम् ।

अस्ति भगवः प्राणाद् भूय इति, नापि प्रतिवचनमस्ति–प्राणाद्दो वाव भूयोऽस्तीति ॥ कथं प्राणादधि भूमोपदिश्यत इत्युच्यते । प्राणविषयमेव चातिवादित्वमुत्तरत्रानुकृष्यमाणं पश्यामः–"एष तु वा अतिवदति यः सत्येनातिवदति" [ छां० ७ । १६ । १ ] इति ॥ तस्मान्नास्ति प्राणादध्युपदेश इति ॥ अत्रोच्यते ॥ न तावत्प्राणविषयस्यैवातिवादित्वस्यैतदनुकर्षणमिति शक्यं वक्तुं विशेषवादाद्यः सत्येनातिवदतीति ॥ ननु विशेषवादोऽप्ययं प्राणविषय एव भविष्यति ॥ कथम् ॥ यथैषोऽग्निहोत्री यः सत्यं वदतीत्युक्ते न सत्यवदनेनाग्निहोत्रित्वम् ॥ केन तर्हि ॥ अग्निहोत्रेणैव ॥ सत्यवदनं त्वग्निहोत्रिणो विशेष उच्यते ॥ तथा "एष तु वा अतिवदति यः सत्येनातिवदति" [ छां० ७ । १६ ] इत्युक्तेन सत्यवदनेनातिवादित्वम् ॥ केन तर्हि ॥ प्रकृतेन प्राणविज्ञानेनैव ॥ सत्यवदनं तु प्राणविदो विशेषो विवक्ष्यत इति ॥ नेति ब्रूमः ॥ श्रुत्यर्थपरित्यागप्रसङ्गात्–श्रुत्या ह्यत्र सत्यवदनेनातिवादित्वं प्रतीयते यः सत्येनातिवदति सोऽतिवदतीति ॥ नात्र प्राणविज्ञानस्य सङ्कीर्तनमस्ति । प्रकरणात्तु प्राण-

रत्नप्रभा ।

ब्दपरतन्त्रत्वेन सत्यादिवादित्वाचित्वात् । अतः प्राणप्रकरणं विच्छिन्नमिति हेतुसिद्धिरित्याह–अत्रोच्यत इति ॥ सत्येनातिवादित्वं विशेषः । तद्वतो य एष इत्युक्तेर्न पूर्वानुकर्ष इत्यर्थः । य एष प्राणविदतिवदति इत्यनूद्य स सत्यं वदेदिति विधानान्न प्राणप्रकरणविच्छेदः इति दृष्टान्तेन शङ्कते–नन्विति ॥ सत्यशब्दो ह्यबाधिते रूढः, ब्रह्मवाचकः । तदन्यस्य मिथ्यात्वात् । सत्यवचने त्वबाधितार्थसम्बन्धाल्लाक्षणिक इति नात्र लक्ष्यवचनविधिरित्याह–नेति ब्रूम इति ॥ किंच सत्येन ब्रह्मणातिवदतीति तृतीयाश्रुत्या ब्रह्मकरणकमतिवादित्वं श्रुतम् । तस्य प्रकरणाद् बाधो न युक्त इत्याह–श्रुत्या हीत्यादिना ॥ नात्रेति । सत्यवाक्ये इत्यर्थः ॥ एवं सत्येनेतिश्रुत्या प्रकरणं बाध्यमित्युक्त्वा तुशब्देनापि तद्बाधमाह–

भामती ।

प्रवाहपतितेनोत्तरेण सर्वेण प्रश्नपूर्वेणैव भवितव्यमिति नियमोऽस्तीत्यादिसुगमेन भाष्येण व्युत्पादितम् । विज्ञानादिसाधनपरम्परा मननश्रद्धादिः, प्राणान्ते चानुशासने तावन्मात्रेणैव प्रकरणसमासेन प्राणस्या-

आनन्दगिरीय–न्यायनिर्णयः ।

नापीति । स्वपक्षे पूर्वपक्षी हेतोः सत्त्वमाह–प्राणेति । सिद्धान्ते हेत्वसिद्धिं निगमयति–तस्मादिति । सिद्धान्ती हेतुसमर्थनार्थमाह–अत्रेति । तत्र परकीयहेतुं निरस्यति–न तावदिति । एषशब्दस्य यच्छब्दपारतन्त्र्यान्न प्रकृतप्राणपरामर्शित्वमतोऽवान्तरप्रकरणं विच्छिन्नमित्युक्तं शंकते–नन्विति । सत्यस्य प्रधानत्वाद्विशेषवादस्य तद्विषयत्वमेव न प्राणविषयतेत्याह–कथमिति । सत्यशब्दो यथार्थोक्तिवाचीत्यङ्गीकृत्य दृष्टान्तेन प्रत्याह–यथेति । तृतीयाश्रुत्या साधकतमार्थया सत्यज्ञानेनातिवादित्वान्तरविधानात्प्रकरणेन श्रुत्यर्थपरित्यागासिद्धिरित्याह–नेतीति । श्रुत्यर्थमेव स्फुटयति–श्रुत्येति । वाक्यमत्रेत्युक्तम् । अतिवादित्वलिङ्गप्रत्यभिज्ञातप्राणस्यैव प्रतिपाद्यत्वे सत्यशब्दस्तदीयगुणविधायकः स्यादित्युक्तमित्याशंक्याऽऽह–नेति । अतिवादित्ववाक्यं सप्तम्यर्थः । का तर्हि प्राणविज्ञानस्य प्रसक्तिस्तत्राऽऽह–प्रकरणात्त्विति । संबध्येतातिवादित्वे हेतुत्वेनेति शेषः । प्रकरणस्य प्रमाणत्वात्तत्कृतोऽपि संबन्धोऽनुरोद्धव्य इत्याशंक्याऽऽह–

१ प्राणाद्वाव भूयोस्तीति पाठान्तरम् ।

विज्ञानं सम्बद्ध्येत॥ तत्र प्रकरणानुरोधेन श्रुतिः परित्यक्ता स्यात्॥ प्रकृतव्यावृत्त्यर्थश्च तुशब्दो न सङ्गच्छेत-"एष तु वा अतिवदति" [छां० ७। १६] इति॥ "सत्यं त्वेव विजिज्ञासितव्यम्" [छां० ७। १६] इति च प्रयत्नान्तरकरणमर्थान्तरविवक्षां सूचयति॥ तस्माद्यथैकवेदप्रशंसायां प्रकृतायामेष तु महाब्राह्मणो यश्चतुरो वेदानधीते इत्येकवेदेभ्योऽर्थान्तरभूतश्चतुर्वेदः प्रशस्यते, तादृगेवैतद्द्रष्टव्यम्॥ न च प्रश्नप्रतिवचनरूपयैवार्थान्तरविवक्षया भवितव्यमिति नियमोऽस्ति॥ प्रकृतसम्बन्धासम्भवकारितत्वादर्थान्तरविवक्षायाः॥ तत्र प्राणान्तमनुशासनं श्रुत्वा तूष्णींभूतं नारदं स्वयमेव सनत्कुमारो व्युत्पादयति॥ यत्प्राणविज्ञानेन विकारानृतविषयेणातिवादित्वमनतिवादित्वमेव, तद् "एष तु वा अतिवदति यः सत्येनातिवदति" [छां० ७। १६] इति॥ तत्र सत्यमिति परं ब्रह्मोच्यते॥ परमार्थरूपत्वात्-"सत्यं ज्ञानमनन्तं ब्रह्म" [तैत्ति० २। १। १] इति च श्रुत्यन्तरात्॥ तथा व्युत्पादिताय नारदाय "सोऽहं

---

रत्नप्रभा।

**प्रकृतेति**॥ विजिज्ञास्यत्वलिङ्गाच्च पूर्वोक्ताद्भिन्नमित्याह-**सत्यं त्वेवेति**॥ प्रकरणविच्छेदे दृष्टान्तमाह-**तस्मादिति**॥ श्रुतिलिङ्गबलाद् **एतत्** सत्यं प्रकृतात् प्राणात्प्राधान्येन भिन्नं द्रष्टव्यमित्यर्थः। एवमतिवादित्वस्य ब्रह्मसम्बन्धोक्त्या प्राणलिङ्गत्वं **निरस्तम्**। यत्तु प्रश्नं विनोक्तत्वलिङ्गाद् भूमा प्राण इति। **तन्न**। तस्याप्रयोजकत्वादित्याह-**न चेति**॥ प्रश्नभेदादर्थभेद इति न नियमः। एकस्यात्मनो मैत्रेय्या बहुशः पृष्टत्वात्प्रश्नं विनोक्तचतुर्वेदस्य प्रकृतैकवेदाद्भिन्नत्वदर्शनाच्चेत्यर्थः। तत्र **यथा** चतुर्वेदत्वस्य प्रकृतासम्बन्धादर्थभेदः, एवमिहापीति स्फुटयति-**तत्रेत्यादिना**॥ सत्यपदेन प्राणोक्तिरित्यत आह-**तत्र सत्यमितीति**॥ **विज्ञानं** निदिध्यासनम्। **आदिपदात्**-मननश्रद्धाश्रवणमनश्शुद्धिनिष्ठातद्धेतुकर्माणि गृह्यन्ते। इमान्यपि श्रवणादीनि

भामती।

न्यायत्तत्तोच्येत। तदभिधाने हि सापेक्षत्वेन न प्रकरणं समाप्येत। तस्मान्नेदं प्राणस्य प्रकरणमपि तु

आनन्दगिरीय-न्यायनिर्णयः।

**तत्रेति**। न परं प्रकरणानुरोधेन तृतीयाश्रुतिर्विरुध्येत किंतु तुशब्दश्चेत्याह-**प्रकृतेति**। न च लिङ्गोपेतप्रकरणं श्रुतिमात्राद्बलीयो लिङ्गस्यातद्विषयोक्तेरिति भावः। यत्तु सत्यशब्दस्य गुणविधिपरत्वं तन्न वाक्यान्तरविरोधादित्याह-**सत्यं त्विति**। तुशब्देनाङ्गविशेषविधिः सूच्यते किंवा प्रकृतव्यावृत्तिरितिसंदेहापोहार्थमाह-**तस्मादिति**। अवान्तराधिकारविच्छेदादिति हेत्वर्थः। प्राणादेरर्थान्तरं सत्यं प्रशंसितुं सत्यज्ञानेनातिवादित्वमुक्तमित्याह-**तादृगिति**। यत्तूक्तं प्राणादधि भूयः प्रश्नप्रत्युक्ती नेति तत्राऽऽह-**न चेति**। किं तर्हि कारणमर्थान्तरविवक्षायामित्याशंक्याऽऽह-**प्रकृतेति**। असति प्रकृतिसंबन्धायोगे सतोरपि प्रश्नप्रतिवचनयोरर्थैक्यस्य मैत्रेय्यादौ दृष्टत्वात्तदभावेऽपि प्रकृतसंबन्धायोगे तद्भेदस्य दर्शनात्प्रश्नादिसत्त्वमर्थान्तरत्वानिमित्तमिति भावः। 'नापृष्टः कस्यचिद् ब्रूयात्' इति स्मृतेरप्रश्ने प्रत्युक्तिरयुक्तेत्याशंक्यापृष्टेनापि बोधनीयः शिष्यो जिज्ञासुरिति मत्वाऽऽह-**तत्रेति**। सत्यामर्थान्तरविवक्षायामिति यावत्। तदेवाभिनयति-**यदिति**। सत्यशब्दार्थो भूमापि परस्मादर्थान्तरमित्याशंक्याऽऽह-**तत्रेति**। वाक्यं सप्तम्यर्थः। परस्मिन्ब्रह्मणि सत्यशब्दस्य प्रयुक्तपूर्वकत्वाच्च तद्विषयतेत्याह-**सत्यमिति**। तथाऽपि विज्ञानमननश्रद्धानिष्ठाकृतीनामन्यतमो भूमा न सत्यं ब्रह्मेत्याशंक्याऽऽह-**तथेति**। तेषां साधनत्वादेव फलभूतभूमतासिद्धिरित्यर्थः।

---

१ प्रवृत्तायामिति पाठान्तरम्।

भगवः सत्येनातिवदानि" [ छां० ७ । १६ ] इत्येवम्प्रवृत्ताय विज्ञानादिसाधनपरम्परया भूमानमुपादेशति ॥ तत्र यत्प्राणादधि सत्यं वक्तव्यं प्रतिज्ञातं, तदेवेह भूमेत्युच्यत इति गम्यते ॥ तस्मादस्ति प्राणादधि भूम्न उपदेश इति । अतः प्राणादन्यः परमात्मा भूमा भवितुमर्हति ॥ एवं चेहात्मविविदिषया प्रकरणस्योत्थानमुपपन्नं भविष्यति ॥ प्राण एवेहात्मा विवक्षित इति एतदपि नोपपद्यते ॥ न हि प्राणस्य मुख्यया वृत्त्याऽऽत्मत्वमस्ति ॥ न चान्यत्र परमात्मज्ञानाच्छोकविनिवृत्तिरस्ति—"नान्यः पन्था विद्यतेऽयनाय" [ श्वेता० ६ । १५ । ] इति श्रुत्यन्तरात् ॥ "तं मां भगवाञ्छोकस्य पारं तारयतु" [ छां० ७ । १ । ३ ] इति चोपक्रम्योपसंहरति—"तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः" [ छां० ७ । २६ । २ ] इति ॥ तम इति शोकादिकारणमविद्योच्यते ॥ प्राणान्ते चानुशासने न प्राणस्यान्यायत्ततोच्येत ॥ आत्मनः प्राण इति च ब्राह्मणम् ॥ प्रकरणान्ते च परमात्मविवक्षा भविष्यति ॥ भूमात्र प्राण एवेति चेत् ॥ न ॥ "स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि" [ छां० ७ । २४ । १ ] इत्यादिना

---

रत्नप्रभा ।

ज्ञेयस्य सत्यस्य ब्रह्मत्वे लिङ्गानि । एवं श्रुतिलिङ्गैः प्राणस्यावान्तरप्रकरणं बाधित्वा प्रस्तुतं सत्यं ब्रह्म भूमपदोक्तब्रह्मत्वधर्मीत्याह—तत्र यदिति ॥ किञ्च "सन्निहितादपि व्यवहितं साकांक्षं बलीयः" इति न्यायेन सन्निहितं निराकांक्षं प्राणं दृष्ट्वा वाक्योपक्रमस्थ आत्मा स्वप्रतिपादनाय भूमवाक्यापेक्ष इह भूमा ग्राह्य इत्याह—एवं चेति ॥ किंच "शोकस्य पारम्" [ छां० ७ । १ । ३ ] इत्युपक्रम्य "तमसः पारम्" [ छां० ७ । २६ ] इत्युपसंहाराच्छोकस्य मूलोच्छेदं विना तरणायोगाच्च शोकपदेन मूलतमो गृह्यते तन्निवर्तकज्ञानगम्यत्वलिङ्गादात्मा ब्रह्मेत्याह—न चान्यत्रेति ॥ ब्राह्मणमात्मायत्तत्वं प्राणस्य वदतीति सम्बन्धः । नन्विदं चरमं ब्राह्मणं ब्रह्मपरमस्तु । ततः प्रागुक्तो भूमा प्राण इति शङ्कते—प्रकरणान्त इति ॥ तच्छब्देन भूमानुकर्षान्मैवमित्याह—नेति ॥ ८ ॥ भूम्नो ब्रह्मत्वे लिङ्गान्तरमाह—

भामती ।

यदायत्तः प्राणस्तस्य, स चात्मेत्यात्मन एव प्रकरणम् । शङ्कते—प्रकरणान्त इति । प्राणप्रकरणसमाप्तावित्यर्थः । निराकरोति—न । स भगव इति । संदंशन्यायेन हि भूम्न एतत्प्रकरणं, स चेद्भूमा प्राणः,

आनन्दगिरीय—न्यायनिर्णयः ।

तथाऽपि कथं सत्यस्यैव तथात्वमत आह—तत्रेति । हेतूक्तिद्वारा भूमोपदेशे प्रस्तुते सतीत्यर्थः । इहेति वाक्योक्तिः । हेत्वसिद्धिमुद्धृत्य फलितमाह—तस्मादिति । परात्मा भूमेत्यत्र महाप्रकरणमनुगृहीतमिति हेत्वन्तरमाह—एवं चेति । यत्तु प्राणविषयत्वमात्मशब्दस्योक्तं तदनूद्य दूषयति—प्राण इति । शोकनिवृत्तिवाक्यमिहेत्युक्तम् । विशिष्टफलदृष्टेरपि परात्मैवाऽऽत्मशब्दार्थो न प्राण इत्याह—न चेति । नात्र मुख्यं शोकतरणं किंत्वौपचारिकमित्याशंक्योपक्रमोपसंहारैकरूप्यान्मैवमित्याह—तमिति । उपक्रमे शोकस्योपसंहारे तमसो निवृत्तिवचनाद्विप्रतिपत्तिमाशंक्याऽऽह—तम इतीति । कारणनिवृत्त्या कार्यनिवृत्तिरुपसंहारे कार्यनिवृत्त्या कारणनिवृत्तिरुपक्रमे विवक्षितेत्यविप्रतिपत्तिरित्यर्थः । किंच प्राणो यदायत्तस्तस्येदं प्रकरणमित्यात्मैव प्रकरणी भूमेत्याह—प्राणान्ते चेति । प्राणस्यान्यायत्ततैव कुतोऽत्रोच्यते तत्राऽऽह—आत्मत इति । प्राणाधिकारसमाप्तौ परात्मवचनात्पूर्वोक्तस्य भूम्नो न परमात्मतेति शंकते—प्रकरणेति । भूम्न एव सर्वनाम्नाऽनुकर्षणाद्वाक्यशेषस्यापि तदर्थत्वात्तस्यैवेदं प्रकरणमिति न प्राणस्य भूमतेत्याह—नेत्यादिना ।

**भूम्न एवाऽऽप्रकरणसमाप्तेरनुकर्षात् ॥ वैपुल्यात्मिका च भूमरूपता सर्वकारणत्वात्परमात्मनः सुतरामुपपद्यते ॥ ८ ॥**

## धर्मोपपत्तेश्च ॥ ९ ॥

**अपि च ये भूम्नि श्रूयन्ते धर्मास्ते परमात्मन्युपपद्यन्ते ॥ यत्र "नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" [ छां० ७ । २४ । १ ] इति । दर्शनादिव्यवहाराभावं भूमन्यवगमयति ॥ परमात्मनि चायं दर्शनादिव्यवहाराभावोऽवगतः—"यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येद्" [ बृह० ४ । ५ । १५ ] इति श्रुत्यन्तरात् ॥ योऽप्यसौ सुषुप्त्यवस्थायां दर्शनादिव्यवहाराभाव उक्तः सोऽप्यात्मन एवासङ्गत्वविवक्षया उक्तः ॥ न प्राणस्वभावविवक्षया ॥ परमात्मप्रकरणात् ॥ यदपि तस्यामवस्थायां सुखमुक्तम्, तदप्यात्मन एव सुखरूपत्वविवक्षयोक्तम् ॥ यत आह—"एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" [ बृह० ४ । ३ । ३२ ] इति ॥ इहापि "यो वै भूमा तत्सुखं, नाल्पे सुखमस्ति, भूमैव सुखम्" [ छां० ७ । २३ ] इति सामयसुखनिराकरणेन ब्रह्मैव सुखं भूमानं दर्शयति—"यो वै भूमा तदमृतम्" [ छां० ७ । २४ । १ ] इत्यमृतत्वमपीह श्रूयमाणं परमकारणं गमयति ॥ विकाराणाममृतत्वस्याऽऽपेक्षिकत्वाद्—**

---

रत्नप्रभा ।

**धर्मेति सूत्रम्॥** यदुक्तं भूम्नो लक्षणं सुखत्वममृतत्वं च प्राणेषु योज्यमिति, तदनूद्य विघटयति—**योऽप्यसावित्यादिना** ॥ सति बुद्ध्याद्युपाधावात्मनो द्रष्टृत्वादिस्तदभावे सुषुप्तौ तदभाव इत्यसङ्गत्वज्ञानार्थं प्रश्नोपनिषदि "न शृणोति न पश्यति" [ प्रश्न० ४ । २ ] इति परमात्मानं प्रकृत्योक्तम् । **तथा** तत्रैवात्मनः सुखत्वमुक्तं, न प्राणस्य । यतः श्रुत्यन्तरमात्मन एव सुखत्वमाह, तस्मादित्यर्थः । **आमयः** नाशादिदोषः ।

भामती ।

प्राणस्यैतत्प्रकरणं भवेत् । तच्चायुक्तमित्युक्तम् ॥ ८ ॥ न केवलं श्रुतेर्भूमात्मता परमात्मनः, लिङ्गादपीत्याह सूत्रकारः—**धर्मोपपत्तेश्च** । यदपि पूर्वपक्षिणा कथंचिन्नीतं तदनुभाष्य भाष्यकारो दूषयति—**योऽप्यसौ सुषुप्तावस्थायामिति** । सुषुप्तावस्थायामिन्द्रियाद्यसङ्गात्मैव । न प्राणः । परमात्मप्रकरणात् ।

आनन्दगिरीय-न्यायनिर्णयः ।

किंच, भूमरूपताऽपि प्राणे न मुख्येत्याह—**वैपुल्येति** । प्राणस्य स्वविकारापेक्षया भूमत्वेऽपि न मुख्यमिति वक्तुं सुतरामित्युक्तम् ॥ ८ ॥ परो भूमेत्यत्र लिङ्गान्तरमाह—**धर्मेति** । सूत्रं व्याकरोति—**अपि चेति** । उपपत्तिं दर्शयितुं भूम्नि दर्शनाद्यभावं दर्शयति—**यत्रेति** । कथमेतावता परात्मधीस्तत्राऽऽह—**परमात्मनीति** । प्राणेऽपि तदुपपत्तिरुक्तेत्याशंक्याऽऽह—**योऽपीति** । उक्तो 'न शृणोति' इत्यादिनेति शेषः । प्राणस्वभावविवक्षया तस्यानुक्तत्वे हेतुमाह—**परमात्मेति** । तत्प्रकरणे 'न शृणोति' इत्यादेरुक्तेरित्यर्थः । स्वप्नजागरितयोः सति मनसि दर्शनादिव्यवहारात्तदभावे स्वापे तदभावादन्वयव्यतिरेकाभ्यां मनोधीनो[१] दर्शनादिर्नाऽऽत्मकृतः स तु स्वतोऽलिङ्ग इति मत्वा 'न शृणोति' इत्यादिना सर्वव्यवहाराभावः[२] सुषुप्तावुक्तो न प्राणविवक्षया परप्रकरणविरोधादित्यर्थः । भूम्नः श्रुतं सुखत्वं प्राणेऽपि स्यादित्युक्तं प्रत्याह—**यदपीति** । तस्य सुखत्वे मानमाह—**यत इति** । इतश्चाऽऽत्मन एव सुखत्वमित्याह—**इहापीति** । तस्यैव सुखत्वं प्रतियोगिप्रत्युक्त्या स्फुटयति—**नेति** । उक्तश्रुतेरर्थमाह—**सामयेति** । आमयेन दुःखेन सहितं सामयम् । धर्मद्वयमुक्त्वा धर्मान्तरमाह—**यो वा इति** । प्राणस्यापि दर्शितममृतत्वमित्याशंक्याऽऽह—**विकाराणामिति** ।

---

१ बुद्ध्याद्युपाध्यभावे । २ आत्मनो द्रष्टृत्वाभावः ।

"अतोऽन्यदार्तम्" [ बृ० ३ । ४ । २ ] इति च श्रुत्यन्तरात् ॥ तथा च सत्यत्वं स्वमहिमप्रतिष्ठितत्वं सर्वगतत्वं सर्वात्मत्वमिति चैते धर्माः श्रूयमाणाः परमात्मन्येवोपपद्यन्ते । नान्यत्र ॥ तस्माद्भूमा परमात्मेति सिद्धम् ॥ ९ ॥ इति भूमाधिकरणम् ॥ २ ॥

## अक्षरमम्बरान्तधृतेः ॥ १० ॥ ( ३ ) ॥

"कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति" "स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु" [बृह० ३।८।७–८] इत्यादि श्रूयते ॥ तत्र

रत्नप्रभा ।

तत्सहितं सामयम् । आर्तं नश्वरम् । "स एवाधस्तात्स उपरिष्टाद्" [ छां० ७ । २५ । १ ] इति सर्वगतत्वं, "स एवेदं सर्वम्" [ छां० ७ । २५ । १ ] इति सर्वात्मत्वं च श्रुतम् । तस्माद्भूमाध्यायो निर्गुणे समन्वितं इति सिद्धम् ॥ ९ ॥ ( २ ) ॥ बृहदारण्यकं पठति—**कस्मिन्निति** ॥ "यद्भूतं भवच्च भविष्यच्च" [ बृ० ३ । ८ । ३] तत्सर्वं कस्मिन्नोतमिति गार्ग्या पृष्टेन मुनिना याज्ञवल्क्येनाव्याकृताकाशः कार्यमात्राश्रय उक्तः । आकाशः कस्मिन्नोत इति द्वितीयप्रश्ने **सः** मुनिरुवाच । **तत्** अव्याकृतस्याधिकरणम् । **एतदक्षरम्** अस्थूलादिरूपमित्यर्थः । उभयत्राक्षरशब्दप्रयोगात्संशयः । **यथा**—सत्यशब्दो

भामती ।

**अन्यदार्तम्** । विनश्वरमित्यर्थः । अतिरोहितार्थमन्यत् ॥ ९ ॥ (३) ॥ **अक्षरमम्बरान्तधृतेः** । अक्षरशब्दः समुदायप्रसिद्ध्या वर्णेषु रूढः । परमात्मनि चावयवप्रसिद्ध्या यौगिकः । अवयवप्रसिद्धेश्च समुदायप्रसिद्धिर्बलीयसीति वर्णा एवाक्षरम् । न च वर्णेष्वाकाशस्योतत्वप्रोतत्वे नोपपद्येते, सर्वस्यैव रूपधेयस्य नामधेयात्मकत्वात् । सर्वं हि रूपधेयं नामधेयसंभिन्नमनुभूयते, गौरयं वृक्षोऽयमिति । न चोपायत्वात्तत्संभेदसंभवः । न हि धूमोपाया वह्निधीर्धूमसंभिन्नं वह्निमवगाहते धूमोऽयं वह्निरिति, किंतु वैयधिकरण्येन धूमाद्वह्निरिति । भवति तु नामधेयसंभिन्नो रूपधेयप्रत्ययो डित्थोऽयमिति । अपि च शब्दानुपायेऽपि रूपधेयप्रत्यये लिङ्गेन्द्रियजन्मनि नामसंभेदो दृष्टः । तस्मान्नामसंभिन्ना पृथिव्यादयोऽम्बरान्ता नाम्ना ग्रथिताश्च विद्धाश्च, नामानि च ओंकारात्मकानि तद्व्याप्तत्वात् । तद्यथा 'शंकुना सर्वाणि पर्णानि संतृण्णान्येवमोङ्कारेण सर्वा वाक्' इति श्रुतेः । अत ओंकारात्मकाः पृथिव्यादयोऽम्बरान्ता इति वर्णा एवाक्षरं न परमात्मेति प्राप्तम् । एवं प्राप्तेऽभिधीयते—अक्षरं परमात्मैव, न तु वार्णाः । कुतः । अम्बरान्तधृतेः । न खल्वम्बरान्तानि

आनन्दगिरीय–न्यायनिर्णयः ।

इतश्च न प्राणस्य मुख्यममृतत्वमित्याह—**अत इति** । आर्तमार्तिग्रस्तं नाशीति यावत् । प्रकृतोपयुक्तानि धर्मान्तराण्याह—**तथेति** । 'स एवाधस्तात्स उपरिष्टात्' इत्यादिना सर्वगतत्वं 'स एवेदं सर्वम्' इति सर्वात्मत्वमुक्तम् । श्रुतिलिङ्गप्रकरणेभ्यो भूमा परमात्मेति तत्प्रतिपत्त्यर्थं भूमवाक्यमित्युपसंहरति—**तस्मादिति** ॥ ९ ॥ (२) ॥ भूम्नि श्रुतधर्माणां परत्रोपपत्त्या परो भूमेत्युक्तमधुना तेनैव न्यायेनाक्षरे श्रुतजगद्विधारणस्य परस्मिन्नुपपत्तेरक्षरं परं ब्रह्मेत्याह—**अक्षरमिति** । बृहदारण्यकवाक्यं पठति—**कस्मिन्निति** । यदूर्ध्वं दिवो यदधस्तात्पृथिव्या ये चोभे द्यावापृथिव्यौ यदन्तरिक्षं यद्भूतं भवद्भविष्यच्च तत्सर्वं कस्मिन्नोतं प्रोतं चेति प्रश्ने याज्ञवल्क्येनाऽऽकाशे तदोतं च प्रोतं चेति निरस्ते गार्गी पुनरपृच्छदाकाशोऽव्याकृताख्यः कस्मिन्नोतप्रोतत्वेन तिष्ठतीति याज्ञवल्क्यस्त्वाह हे गार्गि यत्त्वया पृष्टमाकाशस्याधिकरणं तदेतदक्षरमस्थूलादिविशेषणं ब्रह्मविदो वदन्तीत्युदाहरणार्थः । उभयत्राक्षरशब्दप्रयोगप्रतीत्या संशयमाह—**तत्रेति** । सत्यशब्दस्य ब्रह्मणि मुख्यत्वात्परो भूमेत्युक्तत्वादत्राप्य-

१ वर्णे परमात्मनि चेत्यर्थः ।

**संशयः ॥ किमक्षरशब्देन वर्ण उच्यते, किंवा पर एवेश्वर इति ॥ तत्राक्षरसमाम्नाय इत्यादावक्षरशब्दस्य वर्णे प्रसिद्धत्वात्प्रसिद्ध्यतिक्रमस्य चायुक्तत्वात् ॥ ॐकार एवेदं सर्वमित्यादौ च श्रुत्यन्तरे वर्णस्याप्युपास्य-**

रत्नप्रभा ।

ब्रह्मणि रूढ इति ब्रह्म भूमेत्युक्तं, तथाऽक्षरशब्दो वर्णे रूढ इति दृष्टान्तेन पूर्वपक्षः, तत्रोङ्कारोपास्तिः फलं, सिद्धान्ते निर्गुणब्रह्मधीरिति विवेकः । ननु न क्षरतीत्यचलत्वानाशित्वयोगाद्ब्रह्मण्यप्यक्षरशब्दो मुख्य इत्यत आह–प्रसिद्ध्यतिक्रमस्येति ॥ "रूढिर्योगमपहरति" इति न्यायादित्यर्थः । वर्णस्योङ्कारस्य सर्वाश्रयत्वं कथमित्याशंक्य ध्यानार्थमिदम् । यथा–श्रुत्यन्तरे सर्वात्मत्वमित्याह–ॐकार इति ॥ प्रश्नप्रतिवचनाभ्यामाकाशान्तजगदाधारत्वे तात्पर्यनिश्चयान्न ध्यानार्थता । अतस्तल्लिङ्गबलाद्रूढिं बाधित्वा

भामती ।

पृथिव्यादीनि वर्णा धारयितुमर्हन्ति, किंतु परमात्मैव । तेषां परमात्मविकारत्वात् । न च नामधेयात्मकं रूपधेयमिति युक्तं; स्वरूपभेदात्, उपायभेदात्, अर्थक्रियाभेदाच्च । तथाहि–शब्दत्वसामान्यात्मकानि श्रोत्रग्राह्याण्यभिधेयप्रत्ययार्थक्रियाणि नामधेयान्यनुभूयन्ते । रूपधेयानि तु घटपटादीनि घटत्वपटत्वादिसामान्यात्मकानि चक्षुरादीन्द्रियग्राह्याणि मधुधारणप्रावरणाद्यर्थक्रियाणि च भेदेनानुभूयन्ते इति कुतो नामसंभेदः । न च डित्थोऽयमिति शब्दसामानाधिकरण्यप्रत्ययः । न खलु शब्दात्मकोऽयं पिण्ड इत्यनुभवः, किंतु यो नानादेशकालसंप्लुतः पिण्डः सोऽयं संनिहितदेशकाल इत्यर्थः । संज्ञा तु गृहीतसंबन्धैरत्यन्ताभ्यासात्पिण्डाभिनिवेशिन्येव संस्कारोद्बोधसंपातायाता स्मर्यते । यथाहुः–'यत्संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम् । पिण्ड एव हि दृष्टः सन्संज्ञां स्मारयितुं क्षमः ॥ १ ॥ संज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं न बाधते । संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा ॥ २ ॥' इति । न च वर्णातिरिक्ते स्फोटात्मनि अलौकिकेऽक्षरपदप्रसिद्धिरस्ति लोके । न चैष प्रामाणिक इत्युपरिष्टात्प्रवेदयिष्यते । निवेदितं चास्माभिस्तत्त्वविन्दौ । तस्माच्छोत्रग्राह्याणां वर्णानामम्बरान्तधृतेरनुपपत्तेः समुदायप्रसिद्धिबाधनादवयवप्रसिद्ध्या परमात्मैवाक्षरमिति सिद्धम् । ये तु प्रधानं पूर्वपक्षयित्वानेन सूत्रेण परमात्मैवाक्षरमिति सिद्धान्तयन्ति तैरम्बरान्तधृतेरित्यनेन कथं प्रधानं निराक्रियत इति वाच्यम् । अथ नाधिकरणत्वमात्रं धृतिः अपि तु प्रशासनाधिकरणता । तथा च श्रुतिः–'एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इति । तथाप्यम्बरान्तधृतेरित्यनर्थकम् । एतावद्वक्तव्यम्–अक्षरं प्रशासनादिति । एतावतैव प्रधाननिराकरणसिद्धेः । तस्माद्वर्णाक्षरतानिराक्रियैवास्यार्थः । न च स्थूलादीनां वर्णेष्वप्राप्तेरस्थूलमित्यादिनिषेधानुपपत्तेर्वर्णेषु शंकैव नास्तीति वाच्यम् । न ह्यवश्यं प्राप्तिपूर्वका एव प्रतिषेधा भवन्ति, अप्राप्ते-

आनन्दगिरीय–न्यायनिर्णयः ।

क्षरशब्दस्य वर्णे मुख्यत्वादोंकार एवाक्षरमिति पूर्वपक्षयति–तत्रेत्यादिना । अक्षरब्राह्मणस्य निर्विशेषे ब्रह्मण्यन्वयोक्तेः संगतयः । ओंकारोपास्तिर्ब्रह्मधीरित्युभयत्र फलम् । न क्षरतीत्यक्षरमित्यवयवप्रसिद्ध्या परस्मिन्नपि शब्दोपपत्तिमाशंक्य 'रूढिर्योगमपहरति' इति न्यायेनाऽऽह–प्रसिद्धीति । वर्णपक्षे तस्याम्बरान्तधारणायोगादपुमर्थत्वाच्च तद्ध्यानाद्ब्रह्मैव ग्राह्यमित्याशंक्याऽऽह–ओंकार इति । उपास्तिद्वारा पुमर्थत्वे सिद्धेऽभिधेयस्य च गौरयं वृक्षोऽयमिति शब्दसामानाधिकरण्याद्भूमाग्निवदुपायोपेयतामात्रेण तद्योगादतदुपाये लिङ्गाद्युत्थज्ञाने नामसंभेदादभिधानाभिधेययोरैक्यादोंकारमात्रतायाश्च सर्वस्य श्रुतत्वात्तदुक्तिरित्यर्थः । रूढेरिदं ब्राह्मणमोंकारोपास्तिपरमित्युपसंहरति–वर्ण इति । पूर्वपक्षमनूद्य सिद्धान्तमवतार्य प्रतिज्ञां व्या-

१ प्रसिद्धिव्यतिक्रमस्येति पाठान्तरम् । २ पूर्वपक्षे ।

त्वेन सर्वात्मकत्वावधारणाद्वर्ण एवाक्षरशब्द इति ॥ एवं प्राप्ते उच्यते ॥ पर एवात्माक्षरशब्दवाच्यः॥ कस्माद् "अम्बरान्तधृतेः"–पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणात् । तत्र हि पृथिव्यादेः समस्तस्य विकारजातस्य कालत्रयविभक्तस्य "आकाशे तदोतं च प्रोतं च" [ बृह० ३ । ८ । ४ ] इत्याकाशे प्रतिष्ठितत्वमुक्त्वा "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" [ बृह० ३ । ८ । ७ ] इत्यनेन प्रश्नेनेदमक्षरमवतारितम् ॥ तथा चोपसंहृतम् "एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" [ बृह० ३ । ८ । ११ ] इति । न चेयमम्बरान्तधृतिर्ब्रह्मणोऽन्यत्र सम्भवति ॥ यदप्योङ्कार एवेदं सर्वमिति ॥ तदपि ब्रह्मप्रतिपत्तिसाधनत्वात्स्तुत्यर्थं द्रष्टव्यम् ॥ तस्मान्न क्षरत्यश्नुते चेति नित्यत्वव्यापित्वाभ्यामक्षरं परमेव ब्रह्म ॥ स्यादेतत्–कार्यस्य चेत्कारणाधीनत्वमम्बरान्तधृतिरभ्युपगम्यते, प्रधानकारणवादिनोऽपीयमुपपद्यते ॥ कथम् ॥ अम्बरान्तधृतेर्ब्रह्मप्रतिपत्तिरिति ॥ १० ॥ अत उत्तरं पठति–

## सा च प्रशासनात् ॥ ११ ॥

सा चाम्बरान्तधृतिः परमेश्वरस्यैव कर्म ॥ कस्मात् । "प्रशासनात्"–प्रशासनं हीह श्रूयते–"एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" [ बृ० ३ । ८ । ९ ] इत्यादि ॥

---

रत्नप्रभा ।

योगवृत्तिर्ग्राह्येति सिद्धान्तयति–एवमित्यादिना ॥ आकाशं भूतं कृत्वा शङ्कते–स्यादेतदिति ॥ १० ॥ चेतनकर्तृकशिक्षाया अत्र श्रुतेर्मैवमित्याह–सा चेति ॥ सूत्रं व्याचष्टे–सा चेति ॥ चकार आकाशस्य भूतत्वनिरासार्थः । भूताकाशस्य कार्यान्तःपतिनः श्रुतसर्वकार्याश्रयत्वायोगादव्याकृतमज्ञानमेवाकाशः प्रधानशब्दित इति तदाश्रयत्वाच्चाक्षरं न प्रधानमित्यर्थः । विधृतौ विषयत्वेन धृतौ ॥ ११ ॥

भामती ।

ष्वपि नित्यानुवादानां दर्शनात् । यथा नान्तरिक्षे न दिवीत्यग्निचयननिषेधानुवादः । तस्मात् यत्किंचिदेतत् ॥ १० ॥ सा च प्रशासनात् । प्रशासनमाज्ञा चेतनधर्मो नाचेतने प्रधाने वाऽव्याकृते वा

आनन्दगिरीय–न्यायनिर्णयः ।

करोति–एवमिति । रूढेरोंकारविषयत्वमक्षरशब्दस्योक्तं, तत्कथं प्रतिज्ञेत्याह–कस्मादिति । हेतुमुक्त्वा व्याकरोति–अम्बरान्तेति । आकाशस्यैव प्रश्ने श्रवणात्तदधिकरणं पृष्टं न पृथिव्यादेरित्याशंक्याऽऽह–तत्रेति । तथाऽपि 'रूढिर्योगाद्बलीयसी' इत्युक्तमित्याशंक्य तात्पर्यवदम्बरान्तधृतिलिङ्गसंगतयोगवृत्तिर्बलीयसीत्युपेत्योपक्रमोपसंहारयोरैकरूप्यावगमात्तात्पर्यसिद्धिरित्याह–तथा चेति । लिङ्गस्यान्यथासिद्धिं प्रत्याह–न चेति । ओंकारस्य सर्वात्मत्वश्रुतेस्तत्र संभवति लिङ्गमित्याशंक्याऽऽह–यदपीति । स्वरूपभेदादुपायोपेयभेदादर्थक्रियाभेदाच्च शब्दार्थयोरभेदासिद्धिरित्यर्थः । प्रकृते रूढेर्योगस्य बलीयस्त्वे फलितमाह–तस्मान्नेति ॥ १० ॥ उत्तरसूत्रापोह्यं चोद्यमाह–स्यादिति । केयमम्बरान्तधृतिस्तन्निमित्तत्वं तदुपादानत्वं वा । नाऽऽद्यः । घटकुलालवदाश्रयाश्रयित्वायोगात् । द्वितीये व्यभिचारादसाधकतेति मत्वा फलितमाह–कथमिति । सूत्रमवतारयति–अत इति । प्रतिज्ञां व्याचष्टे–सा चेति । प्रधानस्यापि तदुपपत्तेरुक्तत्वादवधारणासिद्धिरित्याह–कस्मादिति । हेतुमुत्थाप्य नियमं साधयति–प्रशासनादिति । अक्षरस्य सूर्यादी

प्रशासनं च पारमेश्वरं कर्म, नाचेतनस्य प्रशासनं सम्भवति ॥ न ह्यचेतनानां घटादिकारणानां मृदादीनां घटादिविषयं प्रशासनमस्ति ॥ ११ ॥

## अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अन्यभावव्यावृत्तेश्च कारणाद्ब्रह्मैवाक्षरशब्दवाच्यम् ॥ तस्यैवाम्बरान्तधृतिः कर्म नान्यस्य कस्यचित् ॥ किमिदमन्यभावव्यावृत्तेरिति ॥ अन्यस्य भावोऽन्यभावः । तस्माद्व्यावृत्तिरन्यभावव्यावृत्तिरिति ॥ एतदुक्तं भवति ॥ यदन्यद्ब्रह्मणोऽक्षरशब्दवाच्यमिहाशंक्यते, तद्भावादिदमम्बरान्तविधारणमक्षरं व्यावर्तयति श्रुतिः-"तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतꣳ श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ" [ बृ० ३ । ८ । ११ ] इति ॥ तत्रादृष्टत्वादिव्यपदेशः प्रधानस्यापि सम्भवति ॥ द्रष्टृत्वादिव्यपदेशस्तु न तस्य सम्भवति अचेतनत्वात् ॥ तथा "नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ" [ बृह० ३ । ८ । ११ ] इत्यात्मभेदप्रतिषेधान्न शारीरस्याप्युपाधिमतोऽक्षरशब्दवाच्यत्वम्-"अचक्षुष्कमश्रोत्रमवागमनः" [ बृह० ३ । ८ । ८ ] इति चोपाधिमत्ताप्रतिषेधात् ॥ न हि निरुपाधिकश्शारीरो नाम भवति ॥

---

रत्नप्रभा ।

प्रश्नपूर्वकं सूत्रं व्याकरोति-**किमिदमिति** ॥ घटत्वाद्व्यावृत्तिरिति भ्रान्तिं निरस्यति-**एतदिति** ॥ अम्बरान्तस्याधारमक्षरं श्रुतिरचेतनत्वाद्व्यावर्तयतीत्यर्थः । जीवनिरासपरत्वेनापि सूत्रं योजयति-**तथेति** ॥ अन्यभावः-भेदः । तन्निषेधादिति सूत्रार्थः । तर्हि शोधितो जीव एवाक्षरं न पर इत्यत आह-**न हीति** ॥

भामती ।

संभवति । न च मुख्यार्थसंभवे कूलं पिपतिषतीतिवद्भाक्तत्वमुचितमिति भावः ॥ ११ ॥ **अन्यभावव्यावृत्तेश्च** । अम्बरान्तविधरणस्याक्षरस्येश्वरायदन्यद्वर्णा था प्रधानं वाऽव्याकृतं वा तेषामन्येषां भावोऽन्यभावस्तमत्यन्तं व्यावर्तयति श्रुतिः-'तद्वा एतदक्षरं गार्गि' इत्यादिका । अनेनैव सूत्रेण जीवस्याप्यक्षरता निषिद्धेत्यत आह-**तथेति** । 'नान्यत्' इत्यादिकया हि श्रुत्यात्मभेदः प्रतिषिध्यते । तथा चोपाधिभेदाद्भिन्ना जीवा निषिद्धा भवन्त्यभेदाभिधानादित्यर्थः । इतोऽपि न शारीरस्याक्षरशब्दतेत्याह-**अचक्षुष्कमिति** । अक्षरस्य चक्षुराद्युपाधिं वारयन्ती श्रुतिरौपाधिकस्य जीवस्याक्षरतां निषेधतीत्यर्थः । तस्माद्वर्णप्रधानाव्याकृतजीवानामसंभवात्, संभवाच्च परमात्मनः, परमात्मैवाक्षरमिति

आनन्दगिरीय-न्यायनिर्णयः ।

प्रशासने श्रुतेऽपि कथमीश्वरत्वं तत्राऽऽह-**प्रशासनं चेति** । तस्यान्यथासिद्धिं धुनीते-**नेति** । तस्यापि स्वकार्ये प्रशासनं सिध्यति नेत्याह-**न हीति** । तथा चाऽऽज्ञाख्यप्रशासनलिङ्गान्न प्रधानमक्षरमित्यर्थः ॥ ११ ॥ ओंकारादिनिरासेन ब्रह्मादाने हेत्वन्तरमाह-**अन्येति** । प्रतिज्ञाभ्यां सूत्रं योजयति-**अन्यभावेति** । हेत्वर्थं प्रश्नपूर्वकमाह-**किमित्यादिना** । अन्यभावाद्व्यावृत्त्याऽक्षरस्याभावत्वं विधेयमितिभ्रमन्यावृत्त्यर्थमभिप्रेतमर्थमाह-**एतदिति** । प्रधानमन्यदित्युक्तम् । इहेति प्रकृतोदाहरणम् । प्रधानस्यापि रूपादिराहित्याददृष्टत्वादियोगादुक्तश्रुतौ कुतोऽक्षरस्य ततो व्यावृत्तिस्तत्राऽऽह-**तत्रेति** । एतेन सूत्रेणाक्षरत्वं जीवस्यापि निरस्तमित्याह-**तथेति** । अक्षरमतःशब्दार्थः । इतश्च जीवस्य नाक्षरशब्दतेत्याह-**अचक्षुष्कमिति** । उपाधिसंबन्धनिषेधेऽपि तद्वतो निषेधाभावाद्युक्तं तस्याक्षरत्वमित्याशंक्याऽऽह-**न हीति** । अन-

तस्मात्परमेव ब्रह्माक्षरमिति निश्चयः ॥ १२ ॥ इत्यक्षराधिकरणम् ॥ ३ ॥

## ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥ ( ४ ) ॥

"एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेति" [ प्रश्न० ५ । २ ] इति प्रकृत्य श्रूयते "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत" [ प्रश्न० ५ । ५ ] इति ॥ किमस्मिन्वाक्ये परं ब्रह्माभिध्यातव्यमुपदिश्यते,—आहोस्विद्-अपरमिति एतेनैवायतनेन परमपरं चैकतरमन्वेतीति प्रकृतत्वात्संशयः ॥

रत्नप्रभा ।

शोधिते जीवत्वं नास्तीत्यर्थः । तस्माद्गार्गिब्राह्मणं निर्गुणाक्षरे समन्वितमिति सिद्धम् ॥ १२ ॥ ( ३ ) ॥ प्रश्नोपनिषदमुदाहरति—**एतदिति** ॥ पिप्पलादो गुरुः सत्यकामेन पृष्टो ब्रूते—हे सत्यकाम **परं** निर्गुणम् **अपरं** सगुणं च ब्रह्मैतदेव योऽयमोङ्कारः । स हि प्रतिमेव विष्णोस्तस्य प्रतीकः—**तस्मात्** प्रणवं ब्रह्मात्मना विद्वान् **एतेन** एवोङ्कारध्यानेन **आयतनेन** प्राप्तिसाधनेन यथाध्यानं परमपरं च **अन्वेति** प्राप्नोतीति प्रकृत्य मध्ये एकमात्रद्विमात्रोङ्कारयोर्ध्यानमुक्त्वा ब्रवीति—**यः पुनरिति** ॥ इत्थम्भावे तृतीया । ब्रह्मोङ्कारयोरभेदोपक्रमात् । **यो** ह्यकारादिमात्रात्रये एकस्या मात्राया अकारस्य ऋग्यादिकं जाग्रदादिविभूतिं च जानाति, **तेन** सम्यग् ज्ञाता एकमात्रा । **यस्योङ्कारस्य, सः एकमात्रः** । **एवं** मात्राद्वयस्य सम्यग्विभूतिज्ञाने **द्विमात्रः तथा** त्रिमात्रः । तमोङ्कारं पुरुषं **योऽभिध्यायीत, स** ॐकारविभूतित्वेन ध्यातैः सामभिः सूर्यद्वारा ब्रह्मलोकं गत्वा परमात्मानं पुरुषम् ईक्षत इत्यर्थः । संशयं तद्बीजं चाह—**किमित्यादिना** ॥ **अस्मिन्** त्रिमात्रवाक्य इत्यर्थः । पूर्वत्र पूर्वपक्षत्वेनोक्ते ॐकारे बुद्धिस्थं ध्यातव्यं निश्चीयत इति **प्रसंगसंगतिः । यद्वा** पूर्वत्र वर्णे रूढस्याक्षरशब्दस्य लिङ्गाद्ब्रह्मणि वृत्तिरुक्ता, **तद्वदत्रापि** ब्रह्मलोकप्राप्ति-

भामती ।

सिद्धम्॥१२॥(३)॥**ईक्षतिकर्मव्यपदेशात्सः** । 'कार्यब्रह्मजनप्राप्तिफलत्वादर्थभेदतः । दर्शनध्यानयोर्ध्येयमपरं ब्रह्म गम्यते॥' 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेः सर्वगतपरब्रह्मवेदने तद्भावापत्तौ 'स सामभिरुन्नीयते ब्रह्मलोकम्' इति न देशविशेषप्राप्तिरुपपद्यते । तस्मादपरमेव ब्रह्मेह ध्येयत्वेन चोद्यते । न चेक्षणस्य लोके तत्त्वविषयत्वेन प्रसिद्धेः परस्यैव ब्रह्मणस्तथाभावात्, ध्यायतेश्च तेन समानविषयत्वात्, परब्रह्मविषयमेव ध्यान-

आनन्दगिरीय—न्यायनिर्णयः ।

न्यथासिद्धलिङ्गसङ्ख्योगवृत्त्या ज्ञेयब्रह्मपरमक्षरब्राह्मणमित्युपसंहरति—**तस्मादिति** ॥ १२ ॥ ( ३ ) ॥ ओंकारस्याक्षरत्वेन पूर्वपक्षे बुद्धिसांनिध्यात्तेन ध्यातव्यं पुरुषं निरूपयति—**ईक्षतीति** । आथर्वणवाक्यं पठति—**एतदिति** । पिप्पलादो नामाऽऽचार्यः सत्यकामेन पृष्टो व्याचष्टे । हे सत्यकाम परं निर्विशेषमपरं च कार्यं यद्ब्रह्म तदेतदेव योऽयमोंकारः स हि प्रतिमेव विष्णोस्तस्य प्रतीकस्तस्मात्प्रणवं ब्रह्मात्मना विद्वानेतेनोंकारध्यानेनाऽऽयतनेन प्राप्तिसाधनेन परापरयोरेकतरं यथाध्यानमनुगच्छतीति प्रकृत्यैकमात्रद्विमात्रोपास्तिं दर्शयित्वा ब्रवीति—यः पुनरोमित्येतदक्षरं त्रिमात्रमिति । त्रिमात्रेणेति तृतीया द्वितीयात्वेन नेया। ब्रह्मोंकाराभेदोपक्रमात्तथाविधमक्षरं सूर्यान्तस्थं परं ध्यायीत । स सूर्यं प्राप्तः सामभिर्ब्रह्मलोकं प्रति नीयत इत्युदाहरणार्थः । सनिमित्तं संशयमाह—**किमिति** । अक्षरशब्दस्य वर्णे रूढस्यापि जगदायतनत्वलिङ्गेन जघन्या योगवृत्तिराश्रिता तथा देशपरिच्छिन्नफलश्रुतिलिङ्गेन परशब्दस्याऽऽपेक्षिकपरत्वविशिष्टे हिरण्यगर्भे

१ गार्गीशब्दस्य "ङ्यापोस्संज्ञाछन्दसोर्बहुलम्" [ ६ । ३ । ६३ ] इति ह्रस्वो बोध्यः । २ त्रिमात्रेणेति तृतीया । ३ प्रश्नोपनिषदि पंचमप्रश्ने "एतद्वै तत्सत्यकाम परं चापरं च ब्रह्म यदोंकार इत्येवमभेदोपक्रम इति ध्येयम् ।

तत्रापरमिदं ब्रह्मेति प्राप्तम् ॥ कस्मात् ॥ "स तेजसि सूर्ये सम्पन्नः" [ प्रश्न० ५ । ५ ] "स सामभिरुन्नीयते ब्रह्मलोकम्" [ प्रश्न० ५ । ५ ] इति च तद्विदो देशपरिच्छिन्नस्य फलस्योच्यमानत्वात् ॥ न हि परब्रह्मविदेशपरिच्छिन्नं फलमश्नुवीतेति युक्तम् ॥ सर्वगतत्वात्परस्य ब्रह्मणः ॥ नन्वपरब्रह्मपरिग्रहे परं पुरुषमिति विशेषणं नोपपद्यते ॥ नैष दोषः ॥ पिण्डापेक्षया प्राणस्य परत्वोपपत्तेरिति ॥ एवं प्राप्तेऽभिधीयते ॥ परमेव ब्रह्मेहाभिध्यातव्यमुपदिश्यते ॥ कस्मात् ॥ ईक्षतिकर्मव्यपदेशात्-ईक्षतिर्दर्शनम् ॥ दर्शनव्याप्यमीक्षतिकर्म ॥ ईक्षतिकर्मत्वेनास्याभिध्यातव्यस्य पुरुषस्य वाक्यशेषे व्यपदेशो भवति, "स एतस्माज्जीवघ-

रत्नप्रभा ।

लिङ्गात्परशब्दस्य हिरण्यगर्भे वृत्तिरिति दृष्टान्तेन पूर्वपक्षयति-तत्रापरमिति ॥ कार्यपरब्रह्मणोरुपास्तिरुभयत्र फलम्[1] । सः उपासकः । सूर्ये सम्पन्नः प्रविष्टः । ननु वसुदान ईश्वर इति ध्यानाद् "विन्दते वसु" [ बृ० ४ । ४ । २४ ] इत्यल्पमपि फलं ब्रह्मोपासकस्य श्रुतमित्यत आह-न हीति ॥ अन्यत्र तथात्वेऽपि अत्र परवित्परमपरविदपरमन्वेतीत्युपक्रमात्परविदोऽपरप्राप्तिरयुक्ता । उपक्रमविरोधात् । न चात्र परप्राप्तिरेवोक्तेति वाच्यम् । परस्य सर्वगतत्वादत्रैव प्राप्तिसम्भवेन सूर्यद्वारा गतिवैयर्थ्यात् । तस्मादुपक्रमानुगृहीतादपरप्राप्तिरूपाल्लिङ्गात्परं पुरुषमिति परश्रुतिर्बाध्येत्यर्थः । परश्रुतेर्गतिं पृच्छति-नन्विति ॥ पिण्डः-स्थूलो विराट् । तदपेक्षया सूत्रस्य परत्वमिति समाध्यर्थः ॥ सूत्रे सशब्द ईश्वरपर इति प्रतिज्ञातत्वेन तं व्याचष्टे-परमेवेति ॥ सः उपासक एतस्माद् हिरण्यगर्भात् परं पुरुषं ब्रह्माह-

भामती ।

मिति सांप्रतम्, समानविषयत्वस्यैवासिद्धेः । परो हि पुरुषो ध्यानविषयः, परात्परस्तु दर्शनविषयः । न च तत्त्वविषयमेव सर्वं दर्शनम्, अनृतविषयस्यापि तस्य दर्शनात् । न च मननं दर्शनं, तच्च तत्त्वविषयमेवेति सांप्रतम् । मननाद्भेदेन तत्रतत्र दर्शनस्य निर्देशात् । न च मननमपि तर्कापरनामावश्यं तत्त्वविषयम् । यथाहुः-'तर्कोऽप्रतिष्ठः' इति । तस्मादपरमेव ब्रह्मेह ध्येयम् । तस्य च परत्वं शरीरापेक्षयेति । एवं प्राप्त उच्यते-'ईक्षणध्यानयोरेकः कार्यकारणभूतयोः । अर्थे औत्सर्गिकं तत्त्वविषयत्वं यथेक्षतेः ॥' । ध्यानस्य हि साक्षात्कारः फलम् । साक्षात्कारश्चोत्सर्गतस्तत्त्वविषयः । क्वचित्तु बाधकोपनिपाते समारोपितगोचरो भवेत् ।

आनन्दगिरीय-न्यायनिर्णयः ।

वृत्तिरिति पूर्वपक्षयति-तत्रेति । उक्तश्रुतेर्ध्येये ब्रह्मणि समन्वयोक्तेः संगतयः । अपरस्य परस्य वा ब्रह्मणो ध्यानं पूर्वोत्तरपक्षयोः फलम् । ननु परापरत्वेन ब्रह्म विभज्य परमभिध्यायीतेति विशेषोक्तौ कुतः शंकेति शंकते-कस्मादिति । परायोगिफलोक्त्या शंकायाः सावकाशत्वमाह-स इति । उपासकः सर्वनामार्थः । कथं यथोक्तं फलं परस्मिन्नसंभावितं तदाह-न हीति । तद्विदोऽपि तथाभावादिति शेषः । विशेषणानुपपत्तिं शंकते-नन्विति । तदुपपत्तिमाह-नेति । पिण्डः स्थूलो देहः । प्राणः सूत्रात्मा । अपरब्रह्मोपास्तिपरं वाक्यमित्युपसंहर्तुमितिशब्दः । पूर्वपक्षमनूद्य सिद्धान्तयति-एवमिति । तत्र प्रतिज्ञां पूरयति-परमेवेति । लिङ्गाद् ध्यायतेरपरविषयत्वोक्तेर्नैयमासिद्धिरित्याह-कस्मादिति । सौत्रं हेतुमाह-ईक्षतीति । ईक्षतेर्धातोरीक्षणमेव कर्म तद्व्यपदेशान्नापेक्षितधीरित्याशंक्य व्याकरोति-ईक्षतिरिति । तथाऽपि तदेव क्रियात्वात्कर्मेति भ्रान्तिं प्रत्याह-दर्शनेति । तस्य व्यपदेशादित्युक्ते पक्षधर्मत्वासिद्धिमाशंक्यापेक्षितं पूरयन्विवक्षितमर्थमाह-ईक्षतीति । ईक्षणविषयत्वेन वाक्यशेषे निर्दिश्यमानमपि ब्रह्मापरमेवेत्याशंक्याऽऽह-

---

१ कार्यब्रह्मणो हिरण्यगर्भस्योपास्तिः पूर्वपक्षे फलं, परब्रह्मण उपास्तिः, सिद्धान्ते फलमिति विवेकः ।

नात्परात्परं पुरिशयं पुरुषमीक्षते" [ प्रश्न० ५ । ५ ] इति ॥ तत्राभिध्यायतेरतथाभूतमपि वस्तु कर्म भवति ॥ मनोरथकल्पितस्यापि अभिध्यायतिकर्मत्वात् ॥ ईक्षतेस्तु तथाभूतमेव वस्तु लोके कर्म दृष्टमित्यतः परमात्मैवायं सम्यग्दर्शनविषयभूत ईक्षतिकर्मत्वेन व्यपदिष्ट इति गम्यते ॥ स एव चेह परपुरुषशब्दाभ्याममभिध्यातव्यः प्रत्यभिज्ञायते ॥ नन्वभिध्याने परपुरुष उक्तः ॥ ईक्षणे तु परात्परः ॥ कथमितर इतरत्र प्रत्यभिज्ञायत इति ॥ अत्रोच्यते ॥ परपुरुषशब्दौ तावदुभयत्र साधारणौ ॥ न चात्र जीवघनशब्देन प्रकृतोऽभिध्यातव्यः परः पुरुषः परामृश्यते ॥ येन

रत्नप्रभा ।

मितीक्षत इत्यर्थः । नन्वीक्षणविषयोऽप्यपरोऽस्तु तत्राह—**तत्राभिध्यायतेरिति** ॥ नन्वीक्षणं प्रमात्वाद्विषयसत्यतामपेक्षत इति भवतु सत्यः पर ईक्षणीयः । ध्यातव्यस्त्वसत्योऽपरः किं न स्यादित्यत आह—**स एवेति** ॥ श्रुतिभ्यां प्रत्यभिज्ञानात् स एवायमिति सौत्रः सशब्दो व्याख्यातः । अत्रैवं सूत्रयोजना—ओंकारे यो ध्येयः सः पर एवात्मा । वाक्यशेषे ईक्षणीयत्वोक्तेः । अत्र च श्रुतिप्रत्यभिज्ञानात् स एवायमिति । ननु शब्दभेदान्न प्रत्यभिज्ञेति शङ्कते—**नन्विति** ॥ परात्पर इति शब्दभेदमङ्गीकृत्य श्रुतिभ्यामुक्तप्रत्यभिज्ञाया अविरोधमाह—**अत्रेति** ॥ नन्वेतस्माज्जीवघनात्परादित्येतत्पदेनोपक्रान्तध्यातव्यपरामर्शादीक्षणीयः परात्मा ध्येयादन्य इत्यत आह—**न चात्रेति**॥ ध्यानस्य तत्फलेक्षणस्य च लोके समानविषयत्वाद्ध्येय एवेक्षणीयः । एवं चोपक्रमोपसंहारयोरेकवाक्यता भवतीति भावः । "स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनाद्" [ प्रश्न० ५ । ५ ] इत्येतत्पदेन सन्निहिततरो ब्रह्मलोकस्वामी परामृश्यत

भामती ।

न चासत्यपवादे शक्य उत्सर्गस्त्यक्तुम् । तथा चास्य तत्त्वविषयत्वात्तत्कारणस्य ध्यानस्यापि तत्त्वविषयत्वम् । अपि च वाक्यशेषेणैकवाक्यत्वसंभवे न वाक्यभेदो युज्यते । संभवति च परपुरुषविषयत्वेनार्थप्रत्यभिज्ञानात् समभिव्याहाराच्चैकवाक्यता । तदनुरोधेन च परात्पर इत्यत्र परादिति जीवघनविषयं द्रष्टव्यम् । तस्मात्तु परः पुरुषो ध्यातव्यश्च द्रष्टव्यश्च भवति । तदिदमुक्तम्—**न चात्र जीवघनशब्देन प्रकृतोऽभिध्यातव्यः परः पुरुषः परामृश्यते** । किंतु जीवघनात् परात् परो यो ध्यातव्यो द्रष्टव्यश्च तमेव कथयितुं जीवघनो जीवः खिल्यभावमुपाधिवशादापन्नः स उच्यते । 'स सामभिरुन्नीयते ब्रह्मलोकम्' इत्यनन्तरवाक्यनिर्दिष्टो ब्रह्मलोको वा जीवघनः । स हि समस्तकरणात्मनः सूत्रात्मनो हिरण्यगर्भस्य भगवतो निवासभूमितया करणपरिवृतानां जीवानां संघात इति भवति जीवघनः । तदेवं त्रिमात्रोङ्कारायतनं

आनन्दगिरीय-न्यायनिर्णयः ।

**तत्रेति** । ईक्षतिध्यायत्योर्निर्धारणार्था सप्तमी । रजतादिदृष्टेराभासत्वात्तथाभूतमेवेत्यवभ्रियते । अत एव दर्शनविशेषणं सम्यगिति । अस्तु तर्हीक्षतिकर्मणोऽन्यस्यैव ध्येयत्वमित्याशंक्य सौत्रं सशब्दं व्याचष्टे—**स एवेति** । निर्देशवैषम्यान्न प्रत्यभिज्ञेति शंकते—**नन्विति** । वैषम्यमुपेत्य प्रत्यभिज्ञोपपत्तिमाह—**अत्रेति** । एतच्छब्दस्य प्रकृतगामित्वाद्ध्यायतिकर्मणश्च प्रकृतत्वात्तस्यैवैतच्छब्दसमानाधिकृतपञ्चम्यन्तपरशब्देन प्रत्यभिज्ञानादभिध्यातव्यविषयपरशब्दस्य वाक्यशेषे जीवघनविषयत्वाज्जीवघनोऽभिध्यातव्यस्तस्मात्परात्परः परमेश्वरोऽन्य एवेक्षतिकर्मभूत इत्याशंक्याऽऽह—**न चेति** । यो ध्येयः स एव तद्रुत्थसम्यग्धियोऽपीक्षणस्य विषयः संभवत्येकवाक्यत्वे वाक्यभेदस्यायोगादेतच्छब्दस्य संनिहितपरामर्शित्वेऽपि संनिहिततरजीवघनविषयत्वाज्जीवघनशब्दस्य च ध्येयविषयत्वाभावात्तस्येक्षितव्यस्य चैकतेत्यर्थः । उपक्रमोपसंहारयोरेकवाक्यतार्थमुपक्रमे यो ध्यातव्यः स एवोपसंहारेऽपीक्षणगोचरश्चेत्तर्हि जीवघनशब्दस्य पृथगर्थो वक्तव्यो न हि

तस्मात्परात्परोऽयमीक्षितव्यः पुरुषोऽन्यः स्यात् ॥ कस्तर्हि ॥ जीवघन इत्युच्यते-घनो-मूर्तिः, जीवलक्षणो घनो-जीवघनः, सैन्धवखिल्यवद्यः परमात्मनो जीवरूपः खिल्यभाव उपाधिकृतः, परश्च विषयेन्द्रियेभ्यः, सोऽत्र जीवघन इति ॥ अपर आह-"स सामभिरुन्नीयते ब्रह्मलोकम्" [ प्रश्न० ५ । ५ ] इति अतीतानन्तरवाक्यनिर्दिष्टो यो ब्रह्मलोकः, परश्च लोकान्तरेभ्यः, सोऽत्र जीवघन इत्युच्यते ॥ जीवानां हि सर्वेषां करणपरिवृतानां सर्वकरणात्मनि हिरण्यगर्भे ब्रह्मलोकनिवासिनि सङ्घातोपपत्तेर्भवति ब्रह्मलोको जीवघनः ॥ तस्मात्परो यः परमात्मेक्षणकर्मभूतः स एवाभिध्यानेऽपि कर्मभूत इति गम्यते ॥ "परं पुरुषम्" [ प्रश्न० ५ । ५ ] इति च विशेषणं परमात्मपरिग्रह एवावकल्पते ॥ परो हि पुरुषः परमात्मैव भवति ॥ यस्मात्परं किंचिदन्यन्नास्ति-"पुरुषान्न परं किञ्चित्सा काष्ठा सा परागतिः" [ कठ० ३ । ११ ] इति च श्रुत्यन्तरात् ॥ परं चापरं च ब्रह्म यदोङ्कार इति च विभज्यानन्तरमोङ्कारेण परं पुरुषमभिध्यातव्यं ब्रुवन्परमेव ब्रह्म परं पुरुषं गमयति ॥ "यथा पादोदर-

रत्नप्रभा ।

इति प्रश्नपूर्वकं व्याचष्टे-कस्तर्हीत्यादिना ॥ "मूर्तौ घनः" [ पाणि० सू० ३ । ३ । ७७ ] इति सूत्रादिति भावः । सैन्धवखिल्यो लवणपिण्डः । खिल्यवदल्पो भावः परिच्छेदो यस्य सः-खिल्यभावः । एतत्पदेन ब्रह्मलोको वा परामृश्यत इत्याह-अपर इति॥जीवघनशब्दस्य ब्रह्मलोके लक्षणां दर्शयति-जीवानां हीति ॥ व्यष्टिकरणाभिमानिनां जीवानां घनः संघातो यस्मिन् सर्वकरणाभिमानिनि स जीवघनः,तत्स्वामिकत्वात्परम्परासम्बन्धेन लोको लक्ष्य इत्यर्थः। तस्मात्परः सर्वलोकातीतः शुद्ध इत्यर्थः । परपुरुषशब्दस्य परमात्मनि मुख्यत्वाच्च स एव ध्येय इत्याह-परमिति ॥ यस्मात्परं नापरमस्ति किंचित्स एव मुख्यः परः । न तु पिण्डात्परः सूत्रात्मेत्यर्थः । किंच परशब्देनोपक्रमे निश्चितं ब्रह्मैवात्र वाक्यशेषे ध्यातव्यमित्याह-परं चापरं चेति ॥ पापनिवृत्तिलिङ्गाच्चेत्याह-यथेति ॥ पादोदरः सर्पः ।

भामती ।

परमेव ब्रह्मोपास्यम् । अत एव चास्य देशविशेषाधिगतिः फलमुपाधिमत्त्वात् , क्रमेण च सम्यग्दर्शनोत्पत्तौ मुक्तिः । 'ब्रह्म वेद ब्रह्मैव भवति' इति तु निरुपाधिब्रह्मवेदनविषया श्रुतिः । अपरं तु ब्रह्मैकैकमात्रा-

आनन्दगिरीय-न्यायनिर्णयः ।

जीवघनपदं प्रमत्तगीतमिति शंकते-कस्तर्हीति । 'मूर्तौ घनः' इति सूत्रेणाऽऽह-उच्यत इति । षष्ठीसमासं व्यावर्तयति-जीवेति । उक्तमर्थं दृष्टान्तेनाऽऽह-सैन्धवेति । खिल्यभावोऽल्पत्वम् । कथमनवच्छिन्नस्य परस्याल्पत्वं तत्राऽऽह-उपाधीति । तत्र पञ्चम्यन्तपरशब्दोपपत्तिमाह-परश्चेति । एतच्छब्दस्य प्रकृतपरामर्शित्वमाश्रित्य पक्षान्तरमाह-अपर इति । कया वृत्त्या जीवघनशब्दो ब्रह्मलोकं ब्रूते तत्राऽऽह-जीवानामिति । परिच्छिन्नकरणावच्छिन्नानामनवच्छिन्नकरणात्मनि हिरण्यगर्भेऽन्तर्भावात्तस्य जीवपूर्णतया तद्घनत्वाल्लोकोऽपि जीवघन इत्युपचर्यत इत्यर्थः।तस्य कारणत्वात्परमात्मा परस्तस्मादित्याह-तस्मादिति।ईक्षणध्यानयोः कार्यकारणभावादेकविषयतेत्याह-स एवेति । परस्यैव ध्यातव्यत्वे विशेषणमनुकूलयति-परमिति । विराडपेक्षया परत्वं सूत्रेऽपीत्युक्तमाशंक्य मुख्यं परत्वमुत्सर्गतो ब्रह्मण्येवेत्याह-परो हीति । "यस्मात्परं नापरमस्ति किंचित्" इति श्रुत्या परमात्मानं विशिनष्टि-यस्मादिति । ईश्वरस्य परमपुरुषार्थत्वे मानमाह-पुरुषादिति । परापरे ब्रह्मणी प्रकृत्य परशब्देनापरस्य व्यावर्तनादपि परमेव ब्रह्म ध्यातव्यमित्याह-परं चेति । न केवलमुपक्रमादेवं किंतु फलोक्तेरपीत्याह-यथेति । पादोदरः सर्पः । पूर्वपक्षबीजमनूद्य

स्त्वचा विनिर्मुच्यते, एवं ह वै स पाप्मना विनिर्मुक्तः" [ प्रश्न० ५ । ५ ] इति पाप्मविनिर्मोकफलवचनं परमात्मानमिहाभिध्यातव्यं सूचयति ॥ अथ यदुक्तं परमात्माभिध्यायिनो न देशपरिच्छिन्नं फलं युज्यत इति ॥ अत्रोच्यते ॥ त्रिमात्रेणोङ्कारेणालम्बनेन परमात्मानमभिध्यायतः फलं ब्रह्मलोकप्राप्तिः ॥ क्रमेण च सम्यग्दर्शनोत्पत्तिरिति क्रममुक्त्यभिप्रायमेतद्भविष्यतीत्यदोषः ॥ १३ ॥ इतीक्षतिकर्माधिकरणम् ॥ ४ ॥

## दहर उत्तरेभ्यः ॥ १४ ॥ ( ५ ) ॥

"अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं, तद्वाव विजिज्ञासितव्यम्" [ छां० ८ । १ । १ ] इत्यादि वाक्यं समाम्नायते ॥ तत्र योऽयं दहरे हृदयपुण्डरीके दहर

रत्नप्रभा ।

ओंकारे परब्रह्मोपासनया सूर्यद्वारा ब्रह्मलोकं गत्वा परब्रह्मेक्षित्वा तदेव शान्तमभयं प्राप्नोतीत्यविरोधमाह—अत्रोच्यत इति ॥ एवमेकवाक्यतासमर्थनप्रकरणानुगृहीतपरपुरुषश्रुतिभ्यां परब्रह्मप्रत्यभिज्ञया ब्रह्मलोकप्राप्तिलिङ्गं बाधित्वा वाक्यं प्रणवध्येये ब्रह्मणि समन्वितमिति सिद्धम् ॥ १३ ॥ ( ४ ) ॥ दहर उत्तरेभ्यः । छान्दोग्यमुदाहरति—अथेति ॥ भूमविद्यानन्तरं दहरविद्याप्रारम्भार्थोऽथशब्दः । ब्रह्मणोऽभिव्यक्तिस्थानत्वाद्ब्रह्मपुरं शरीरम् । अस्मिन् यत् प्रसिद्धं दहरम् अल्पं हृत्पद्मं तस्मिन् हृदये यद् अन्तराकाशशब्दितं ब्रह्म तदन्वेष्टव्यं विचार्य ज्ञेयमित्यर्थः । अत्राकाशो जिज्ञास्यस्तदन्तःस्थं वेति प्रथमं संशयः कल्प्यः ॥ तत्र

भामती ।

यतनमुपास्यमिति मन्तव्यम् ॥ १३ ॥ ( ४ ) ॥ दहर उत्तरेभ्यः । 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरम्' सूक्ष्मं गुहाप्रायं पुण्डरीकसंनिवेशं वेश्म 'दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्' । आगमाचार्योपदेशाभ्यां श्रवणं च तदविरोधिना तर्केण मननं च, तदन्वेषणम् । तत्पूर्वकेण चादरनैरन्तर्यदीर्घकालासेवितेन ध्यानाभ्यासपरिपाकेन साक्षात्कारो विज्ञानम् । विशिष्टं हि तज्ज्ञानं पूर्वेभ्यः । तदिच्छा विजिज्ञासनम् । अत्र संशयमाह तत्रेति । तत्र प्रथमं तावदेवं संशयः—किं दहराकाशादन्यदेव किंचिदन्वे-

आनन्दगिरीय—न्यायनिर्णयः ।

दूषयति—अथेत्यादिना । परिशुद्धब्रह्मैक्यज्ञाने देशपरिच्छिन्नं फलमयुक्तम् । ओंकारोपाधिब्रह्मोपास्तौ तदविरुद्धमित्यर्थः । कथं तर्हि पुरुषमीक्षत इति तत्राऽऽह—क्रमेणेति । ब्रह्मलोके सम्यग्दर्शनोत्पत्तौ मोक्षं विवक्षित्वेक्षतिवाक्यमित्यर्थः । एकवाक्यताकांक्षप्रकरणानुगृहीतश्रुतिप्रत्यभिज्ञाया देशपरिच्छिन्नफलत्वलिङ्गानुगृहीतप्रत्यभिज्ञातो बलीयस्त्वाद्ध्यातव्यं परमेवेत्युपसंहरति—अदोष इति ॥ १३ ॥ ( ४ ) ॥ "परात्परं पुरिशयं पुरुषम्" इत्यादिवाक्याद्ध्यातव्यपुरुषनिर्णये परस्य पुरिशयमिति पुरसंबन्धसिद्धेरयमपि पुरसंबन्धी दहराकाशो ब्रह्मेत्याह—दहर इति । छान्दोग्यवाक्यमुदाहरति—अथेति । भूमविद्यानन्तरं विद्यान्तरारम्भार्थोऽथशब्दः । यदिदमिति प्रसिद्धं हृदयं परामृष्टम् अस्मिन्निति प्रत्यक्षत्वोक्तिः । ब्रह्मपुरं शरीरम् । दहरं सूक्ष्मम् । पुण्डरीकं तदाकारत्वात्प्रकृतं हृदयमेव तत्र परस्य नित्यसंनिधेर्वेश्मशब्दः । संनिहितं हृदयं सप्तम्या परामृश्य तस्यातिसूक्ष्मस्य परस्य तत्र सदा स्थितिं सूचयन्वेश्मत्वमेव विशदयति—दहर इति । व्यवहितमपि हृदयं योग्यत्वात्तच्छब्देनोक्त्वा तदन्तराकाशस्य विचार्यतां ज्ञेयतां च दर्शयति—तस्मिन्निति । तस्मिन्निति सप्तम्या हृदयोक्तेस्तदन्तस्थं दहराकाशमन्वेष्यं जिज्ञास्यं च । किंवा तस्याः संनिहिततरदहराकाशार्थत्वात्तदन्तस्थं किंचिदन्विष्य ज्ञेयमिति संशयं सूचयति—तत्रेति । वाक्यं सप्तम्यर्थः । यदाऽऽकाशोऽन्विष्य

**आकाशः श्रुतः स किम्भूताकाशोऽथ विज्ञानात्मा अथ वा परमात्मेति संशय्यते ॥ कुतः संशयः ॥ आकाशब्रह्मपुरशब्दाभ्याम् ॥ आकाशशब्दो ह्ययं भूताकाशे परस्मिंश्च प्रयुज्यमानो दृश्यते ॥ तत्र-किम्भूताकाश एव दहरः स्यात्, किंवा पर इति संशयः ॥ तथा ब्रह्मपुरमिति किं जीवोऽत्र ब्रह्मनामा, तस्येदं पुरं शरीरं ब्रह्मपुरम्,अथ वा-परस्यैव ब्रह्मणः पुरं ब्रह्मपुरमिति।तत्र जीवस्य परस्य वान्यतरस्य पुरस्वामिनो दहराकाशत्वे संशयः॥ तत्राकाशशब्दस्य भूताकाशे रूढत्वाद्भूताकाश एव दहरशब्द इति प्राप्तम्॥ तस्य च दहराऽऽयतनापेक्षया दहरत्वं-"यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" [छां०८।१।२] इति च बाह्याभ्यन्तरभावकृतभेदस्योप-**

---

रत्नप्रभा ।

यद्याकाशः, तदा संशयद्वयम् । तत्राकाशशब्दादेकं संशयमुक्त्वा ब्रह्मपुरशब्दात्संशयान्तरमाह-**तथा ब्रह्मपुरमितीति** ॥ अत्र शब्दे जीवस्य ब्रह्मणो वा पुरमिति संशयः । **तत्र** तस्मिन् संशये सतीति योजना । परपुरुषशब्दस्य ब्रह्मणि मुख्यत्वाद्ब्रह्म ध्येयमित्युक्तम्, तथेहाप्याकाशपदस्य भूताकाशे रूढत्वाद्भूताकाशो ध्येय इति दृष्टान्तेन पूर्वपक्षयति-**तत्राकाशेत्यादिना** ॥ दहरवाक्यस्यानन्तरं प्रजापतिवाक्यस्य च सगुणे निर्गुणे च समन्वयोक्तेः **श्रुत्यादिसंगतयः** । **पूर्वपक्षे** भूताकाशाद्युपास्तिः, सिद्धान्ते सगुणब्रह्मोपास्त्या निर्गुणधीरिति फलभेदः । न च "आकाशस्तल्लिंगाद्" [ १ । १ । २२ ] इत्यनेनास्य पुनरुक्तता शङ्कनीया । अत्र "तस्मिन्यदन्तस्तदन्वेष्टव्यम्" [ छां० ८ । १ । १ ] इत्याकाशान्तस्थस्यान्वेष्टव्यत्वादिलिङ्गान्वयेन दहराकाशस्य ब्रह्मत्वे स्पष्टलिङ्गाभावात् । ननु भूताकाशस्याल्पत्वं कथम् ? एकस्योपमानत्वमुपमेयत्वं च कथम् ? "उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च" [ छां० ८ । १ । ३ ] इत्यादिनाऽश्रुतसर्वाश्रयत्वं च कथम् ? इत्याशङ्क्य क्रमेण परिहरति-**तस्येत्यादिना** ॥ हृदयापेक्षया अल्पत्वं ध्यानार्थं कल्पितभेदात् सादृश्यं, स्वत एकत्वात्सर्वाश्रयत्वमि-

भामती ।

ष्टव्यं विजिज्ञासितव्यं च उत दहराकाश इति । यदापि दहराकाशोऽन्वेष्टव्यस्तदापि किं भूताकाश आहो शारीर आत्मा किं वा परमात्मेति । संशयहेतुं पृच्छति-**कुत इति** । तद्धेतुमाह-**आकाशब्रह्मपुरशब्दाभ्यामिति** । तत्र प्रथमं तावद्भूताकाश एव दहर इति पूर्वपक्षयति-**तत्राकाशशब्दस्य भूताकाशे रूढत्वादिति** । एष तु बहुतरोत्तरसंदर्भविरोधात्तुच्छः पूर्वपक्ष इत्यपरितोषेण पक्षान्तरमालम्बते पूर्व-

आनन्दगिरीय-न्यायनिर्णयः ।

ज्ञेयस्तदा प्राप्तं संशयमाह-**स इति** । द्वितीये संशये प्रश्नपूर्वकं हेतुमाह-**कुत इति** । द्वयोरपि पक्षत्रयोपनायकत्वं व्यावर्तयन्नाकाशशब्दाधीनं पक्षद्वयमाह-**आकाशेति** । शब्दान्तरात्पक्षद्वयप्राप्तिमाह-**तथेति** । इतिशब्दः संशयशब्देन संबध्यते । नन्वयमन्यः संशयो न प्रकृतस्तस्यान्यादृशत्वात्तत्राऽऽह-**तत्रेति** । उक्ते संशये सतीति यावत् । परपुरुषशब्दस्य ब्रह्मणि मुख्यत्वाद्ब्रह्मैव ध्येयमित्युक्तमिहाप्याकाशशब्दस्य भूताकाशे रूढेस्तस्यैवोपास्यतेति पूर्वपक्षमाह-**तत्रेति** । दहरवाक्यस्य सोपाधिके ब्रह्मण्यन्वयोक्तौ तत्र प्रवृत्तस्य निरुपाधिकं बुभुत्समानस्य तस्मिन्प्राजापत्यवाक्यान्वयोक्तेः संगतयः । पूर्वपक्षे भूताकाशादिध्यानं सिद्धान्ते परोपास्तिद्वारा प्रतिपत्तिरिति फलम् । न च 'आकाशस्तल्लिङ्गात्' इत्यनेन गतत्वात्पूर्वपक्षानुत्थानं तत्र वाक्यशेषस्थलिङ्गानामाकाशविषयत्वात् । प्रकृते तेषां तदन्तस्थविषयत्वेन तदविषयत्वादिति । उपास्यर्थं ब्रह्मणो दहरत्वेऽपि भूताकाशस्य तदयोगात्कुतो ग्रहणं तत्राऽऽह-**तस्येति** । तद्ध्यानेनापि वाक्यशेषस्थं फलं संपद्यते वाक्यादित्यर्थः।सति भेदे सादृश्ये चोपमानोपमेयभावादेकत्र तदसिद्धिरित्याशंक्याऽऽह-**यावानिति** ।

---

१ छान्दोग्येऽष्टमाध्याये सप्तमादिषु खण्डेषु ।

मानोपमेयभावः॥द्यावापृथिव्यादि च तस्मिन्नन्तस्समाहितम्। अवकाशात्मनाकाशस्यैकत्वात् ॥ अथ वा जीवो दहर इति प्राप्तम् ॥ ब्रह्मपुरशब्दात् ॥ जीवस्य हीदं पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते ॥ तस्य स्वकर्मणोपार्जितत्वात् ॥ भक्त्या च तस्य ब्रह्मशब्दवाच्यत्वम् ॥ न हि परस्य ब्रह्मणश्शरीरेण स्वस्वामिभावस्सम्बन्धोऽस्ति ॥ तत्र पुरस्वामिनः पुरैकदेशेऽवस्थानं दृष्टम् । यथा—राज्ञः ॥ मनउपाधिकश्च जीवः ॥

---

रत्नप्रभा ।

त्यर्थः । ननु "एष आत्मा" इत्यात्मशब्दो भूते न युक्त इत्यरुचेराह—अथ वेति ॥ भक्त्येति। चैतन्यगुणयोगेनेत्यर्थः ॥ मुख्यं ब्रह्म गृह्यतामित्यत आह—न हीति ॥ अस्तु पुरस्वामी जीवः, हृदयस्थाकाशस्तु ब्रह्मेत्यत आह—तत्रेति ॥ पुरस्वामिन एव तदन्तःस्थत्वसम्भवान्नान्यापेक्षेत्यर्थः, व्यापिनोऽन्तःस्थत्वं कथमित्यत आह—मन इति ॥ आकाशपदेन दहरमनुकृष्योक्तोपमादिकं ब्रह्माभेदवि-

भामती ।

पक्षी—अथ वा जीवो दहर इति प्राप्तम् । युक्तमित्यर्थः । तत्र 'आधेयत्वाद्विशेषाच्च पुरं जीवस्य युज्यते । देहो न ब्रह्मणो युक्तो हेतुद्वयवियोगतः ॥' असाधारण्येन हि व्यपदेशा भवन्ति । तद्यथा क्षितिजलपवनबीजादिसामग्रीसमवधानजन्माप्यंकुरः शालिबीजेन व्यपदिश्यते शाल्यंकुर इति । न तु क्षित्यादिभिः, तेषां कार्यान्तरेष्वपि साधारण्यात् । तदिह शरीरं ब्रह्मविकारोऽपि न ब्रह्मणा व्यपदेष्टव्यम्, ब्रह्मणः सर्वविकारकारणत्वेनातिसाधारण्यात् । जीवभेदधर्माधर्मोपार्जितं तदित्यसाधारणकारणत्वाज्जीवेन व्यपदिश्यत इति युक्तम् । अपि च ब्रह्मपुर इति सप्तम्यधिकरणे स्मर्यते, तेनाधेयेनानेन संबद्धव्यम् । न च ब्रह्मणः स्वे महिम्नि व्यवस्थितस्यानाधेयस्याधारसंबन्धः कल्पते । जीवस्त्वाराग्रमात्र इत्याधेयो भवति । तस्माद्ब्रह्मशब्दो रूढिं परित्यज्य देहादिबृंहणतया जीवे यौगिको वा भाक्तो वा व्याख्येयः । चैतन्यं च भक्तिः । उपधानानुपधाने तु विशेषः । वाच्यत्वं गम्यत्वम् । स्यादेतत् । जीवस्य पुरं भवतु शरीरं, पुण्डरीकदहरगोचरता त्वन्यस्य भविष्यति, वत्सराजस्य पुर इवोज्जयिन्यां मैत्रस्य सद्मेत्यत आह—तत्र पुरस्वामिन इति । अयमर्थः—वेश्म खल्वधिकरणमनिर्दिष्टाधेयमाधेयविशेषापेक्षायां पुरस्वामिनः प्रकृतत्वात्तेनैवाधेयेन संबद्धं सदनपेक्षं नाधेयान्तरेण संबन्धं कल्पयति । ननु तथापि शरीरमेवास्य भोगायतनमिति को हृदयपुण्डरीकस्य विशेषो यत्तदेवास्य सद्मेत्यत आह—मन उपाधिकश्च जीव इति । ननु

आनन्दगिरीय—न्यायनिर्णयः ।

ब्रह्मणि द्यावापृथिव्यादीनामन्तःसमाधानं कारणत्वात्तदभावादाकाशे नैवमित्याशंक्याऽऽह—द्यावापृथिव्यादीति । दहरे कथं तत्समाधानं तत्राऽऽह—अवकाशेति । अपहतपाप्मत्वादि तस्मिन्नित्यानुवादः । सत्यकामत्वादि ध्यानार्थमध्यस्तमिति भावः । एष आत्मेत्यात्मशब्दसामञ्जस्यार्थं पक्षान्तरमाह—अथ वेति । ब्रह्मशब्दस्यामुख्यत्वाज्जीवे तच्छब्दात्परस्मिञ्झटिति बुद्धिस्थे कुतो जीवोक्तिरित्याशंक्य पुरसंबन्धस्य तत्रैव संभवादित्याह—जीवस्येति । तस्यापि पुरेण कः संबन्धस्तत्राऽऽह—तस्येति । तथाऽपि तस्मिन्नौपाधिके कथं ब्रह्मपदं तत्राऽऽह—भक्त्येति । चैतन्यगुणयोगेनेत्यर्थः । गौणमुख्ययोर्मुख्ये संप्रत्ययमाशंक्योक्तं—न हीति । कार्यकारणसंबन्धस्य साधारण्यादसाधारण्येन व्यपदेशाज्जीवकर्मार्जितं शरीरं तेनैव व्यपदेश्यमित्यर्थः । तस्य जीवपुरत्वेऽपि राजपुरे मैत्रसद्मवत्पुण्डरीकदहरगेहता ब्रह्मणोऽस्तु तत्राऽऽह—तत्रेति । वेश्मनः खल्वाधारस्याऽऽधेयापेक्षायां पुरस्वामिना ध्येयेन संबन्धान्नान्यापेक्षेत्यर्थः । जीवस्य देहेन विशेषसंबन्धेऽपि हृदयेन तदभावात्कथं तस्यैव तद्वेश्मता तत्राऽऽह—मन इति । तस्यापि चञ्चलत्वात्

**मनश्च प्रायेण हृदये प्रतिष्ठितमित्यतो जीवस्यैवेदं हृदयान्तरवस्थानं स्यात्॥ दहरत्वमपि तस्यैवाराग्रोपमितत्वादवकल्पते ॥ आकाशोपमितत्वादि च ब्रह्माभेदविवक्षया भविष्यति ॥ न चात्र दहरस्याकाशस्यान्वेष्टव्यत्वं विजिज्ञासितव्यत्वं च श्रूयते ॥ "तस्मिन्यदन्तः" [छां०८।१।१] इति परविशेषणत्वेनोपादानादिति ॥ अत उत्तरं ब्रूमः ॥ परमेश्वर एवात्र दहर आकाशो भवितुमर्हति॥ न भूताकाशो, जीवो वा॥ कस्मात्॥ उत्तरेभ्यो वाक्यशेषगतेभ्यो हेतुभ्यः॥ तथाहि-अन्वेष्टव्यतयाऽभिहितस्य दहराकाशस्य-"तं चेद् ब्रूयुः"[छां०८।१।२]इत्युपक्रम्य-"किं तदत्र विद्यते यदन्वे-**

रत्नप्रभा ।

वक्षया भविष्यतीत्याह-**आकाशेति** ॥ **ननु** जीवस्याकाशपदार्थत्वमयुक्तमित्याशंक्य तर्हि भूताकाश एव दहरोऽस्तु तस्मिन्नन्तःस्थं किंचिद्ध्येयमिति पक्षान्तरमाह-**न चात्रेति** ॥ परमन्तःस्थं वस्तु । **तद्विशेषणत्वेन** आधारत्वेन दहराकाशस्य तच्छब्देनोपादानादित्यर्थः ॥ यद्वा-अन्वेष्यत्वादिलिङ्गाद्दहरस्य ब्रह्मत्वनिश्चयाद् "आकाशस्तल्लिंगाद्" [ १ । १ । २२ ] इत्यनेन गतार्थत्वमिति शंकात्र निरसनीया । अन्वेष्यत्वादेः परविशेषणत्वेन ग्रहणाद् दहरस्य ब्रह्मत्वे लिङ्गं नास्तीत्यर्थः । अपहतपाप्मत्वादिलिङ्गोपेतात्मश्रुत्या केवलाकाशश्रुतिर्बाध्येति सिद्धान्तयति-**परमेश्वर इत्यादिना** ॥ आकाशस्याक्षेपपूर्वकमिति **सम्बन्धः** । **तम्** आचार्यं प्रति **यदि** ब्रूयुः हृदयमेव तावदल्पम् । तत्रत्याकाशोऽल्पतरः

भामती ।

मनोऽपि चलतया सकलदेहवृत्तिपर्यायेणेत्यत आह-**मनश्च प्रायेणेति** । आकाशशब्दश्चारूपत्वादिना सामान्येन जीवे भाक्तः । अस्तु वा भूताकाश एवायमाकाशशब्दो 'दहरोऽस्मिन्नन्तराकाशः' इति, तथाप्यदोष इत्याह-**न चात्र दहरस्याकाशस्यान्वेष्यत्वमिति** । एवं प्राप्त उच्यते-भूताकाशस्य तावन्न दहरत्वं, 'यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इत्युपमानविरोधात् । तथाहि-'तेन तस्योपमेयत्वं रामरावणयुद्धवत् । अगत्या भेदमारोप्य गतौ सत्यां न युज्यते ॥' । अस्ति तु दहराकाशस्य ब्रह्मत्वेन भूताकाशाद्भेदेनोपमानस्य गतिः । न चानवच्छिन्नपरिमाणमवच्छिन्नं भवति । तथा सत्यवच्छेदानुपपत्तेः । न भूताकाशमानत्वं ब्रह्मणोऽत्र विधीयते, येन 'ज्यायानाकाशात्' इति श्रुतिविरोधः स्यात्,

आनन्दगिरीय-न्यायनिर्णयः ।

हृदयेनासाधारण्यं तत्राऽऽह-**मनश्चेति** । तथाऽपि तस्य सर्वगतस्य कुतो दहरत्वं तत्राऽऽह-**दहरत्वमिति** । दहरत्वादेव तर्हि नाऽऽकाशोपमितत्वादीत्याशंक्याह-**आकाशेति** । यद्वाक्यमपेक्ष्यैतत्कल्प्यते तदेव ब्रह्माऽऽकाशशब्दं लाघवादित्याशंक्याऽऽद्ये संशये पूर्वपक्षमाह-**न चेति** । परविशेषणत्वेनेत्यत्र परो दहराकाश उपादानात्तस्मिन्निति सप्तम्यन्ततच्छब्दस्येति शेषः । यद्वा-परशब्दोऽन्तस्थवस्तुविषयस्तद्विशेषणत्वेन तस्मिन्निति दहराकाशस्योक्तेरित्यर्थः । तच्छब्दस्य संनिकृष्टान्वययोगे विप्रकृष्टान्वयस्य जघन्यत्वादाकाशान्तर्गतं ध्येयमिति भावः । भूताकाशस्य जीवस्य वा दहराकाशान्तस्थस्य वा ध्यानार्थं दहरवाक्यमुपसंहर्तुमितिशब्दः । सिद्धान्तयति-**अत इति** । तत्र प्रतिज्ञां व्याचष्टे-**परमेश्वर इति** । प्रतिज्ञायां प्रश्नद्वारा हेतूनाह-**कस्मादिति** । तानेव विवृणोति-**तथा हीति** । विहितस्य तदन्वेष्टव्यमित्यादिनेति शेषः । आकाशस्याऽऽक्षेपपूर्वकमिति संबन्धः । तमाचार्यं प्रति शिष्या यदि ब्रूयुरित्याक्षेपमुपक्रम्यावतायैंति योजना । आक्षेपप्रकारमाह-**किं तदिति** । पुण्डरीकमेव तावदल्पमल्पतरं च तदन्तर्गतमाकाशं, तथा च किं तदत्रात्यल्पेऽस्ति तच्छ्रुतियुक्तिभ्यामन्वेष्यं यद्वाव साक्षात्कर्तव्यमित्यल्पतादोषेण दहरस्य ज्ञेय-

१ आकाशपदस्य भूताकाशमात्रे रूढत्वादिति शेषः ।

ष्टव्यं यद्वाव विजिज्ञासितव्यम्" [ छां० ८ । १ । २ ] इत्येवमाक्षेपपूर्वकं प्रतिसमाधानवचनं भवति "स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः । उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते" [ छां०८।१।३ ] इत्यादि ॥ तत्र पुण्डरीकदहरत्वेन प्राप्तदहरत्वस्याकाशस्य प्रसिद्धाकाशौपम्येन दहरत्वं निवर्तयन् भूताकाशत्वं दहरस्याकाशस्य निवर्तयतीति गम्यते ॥ यद्यप्याकाशशब्दो भूताकाशे रूढः ॥ तथापि तेनैव तस्योपमा नोपपद्यत इति भूताकाशशङ्का निवर्तिता भवति ॥ नन्वेकस्याप्याकाशस्य बाह्याभ्यन्तरत्वकल्पितेन भेदेनोपमानोपमेयभावस्सम्भवतीत्युक्तम् ॥ नैवं सम्भवति । अगतिका हीयं गतिर्यत्काल्पनिकभेदाश्रयणम् ॥ अपि च कल्पयित्वा भेदमुपमानोपमेयभावं वर्णयतः परिच्छिन्नत्वादभ्यन्तराकाशस्य न बाह्याकाशपरिमाणत्वमुपपद्येत ॥ ननु परमेश्वरस्यापि–"ज्यायानाकाशाद्" [ शत० ब्रा० १०।६। ३ । २ ] इति श्रुत्यन्तरान्नैवाकाशपरिमाणत्वमुपपद्यते ॥ नैष दोषः ॥ पुण्डरीकवेष्टनप्राप्तदहरत्वनिवृत्तिपरत्वाद्वाक्यस्य, न तावत्त्वप्रतिपादनपरत्वम् ॥ उभयप्रति-

रत्नप्रभा ।

किं तदत्राल्पे विद्यते,यद्विचार्य ज्ञेयमिति, तदा सः आचार्यो ब्रूयाद् । आकाशस्य अल्पतानिवृत्तिमित्यर्थः । वाक्यस्य तात्पर्यमाह–तत्रेति ॥ निवर्तयति आचार्य इति शेषः । नन्वाकाशशब्देन रूढ्या भूताकाशस्य भानात्कथं तन्निवृत्तिरित्याशंक्याह–यद्यपीति ॥ ननु "रामरावणयोर्युद्धं रामरावणयोरिव" इत्यभेदेऽप्युपमा दृष्टेति चेत् । न ॥ अभेदे सादृश्यस्यानन्वयेन युद्धस्य निरुपमत्वे तात्पर्यादयमनन्वयालंकार इति काव्यविदः । पूर्वोक्तमनूद्य निरस्यति–नन्वित्यादिना । "सीताऽऽश्लिष्ट इवाऽऽभाति कोदण्डप्रभया युतः" इत्यादौ प्रभायोगसीताऽऽश्लेषरूपविशेषणभेदाद्भेदाश्रयणमेकस्यैव श्रीरामस्योपमानोपमेयभावसिद्ध्यर्थमगत्या कृतमित्यनुदाहरणं द्रष्टव्यम् ॥ नैवमत्राश्रयणं युक्तम् ॥ वाक्यस्याल्पत्वनिवृत्तिपरत्वेन गतिसद्भावात् । किंच हार्दाकाशस्याऽऽन्तरत्वात्यागे अल्पत्वेन व्यापकबाह्याकाशसादृश्यं न युक्तमित्याह–अपि चेति ॥ आन्तरत्वत्यागे तु अत्यन्ताभेदान्न सादृश्यमिति भावः । ननु हार्दाकाशस्याल्पत्वनिवृत्तौ तावत्त्वे च तात्पर्यं किं न स्यादित्यत आह–उभयेति ॥ अतोऽल्पत्वनिवृत्तावेव तात्पर्यमिति भावः ॥

भामती ।

अपि तु भूताकाशोपमानेन पुण्डरीकोपाधिप्राप्तं दहरत्वं निवर्त्यते।अपि च सर्वे एवोत्तरे हेतवो दहराकाशस्य

आनन्दगिरीय–न्यायनिर्णयः ।

त्वमाक्षिप्य समाहितमित्यर्थः । तदेव दर्शयति–स इति । आचार्यः सर्वनामार्थः । अस्मिन्निति हार्दाकाशोक्तिः । उभावग्निश्च वायुश्चेत्यादिसंग्रहार्थमादिपदम् । तस्य विवक्षितमर्थमाह–तत्रेति । निवर्तयन्नित्याचार्यो गृह्यते । आकाशशब्दस्य भूताकाशे रूढत्वात्कथंऽनुपपत्त्या तन्निवर्तनं तत्राऽऽह–यद्यपीति । परोक्तिं स्मारयित्वा निरस्यति–नन्वित्यादिना । गत्यन्तराभावादारोपितभेदेनोपमानस्य क्वाचित्कत्वेऽपि सत्यां गतौ तदसिद्धिरित्यर्थः । सादृश्ये सत्युपमानोपमेयत्वं दृष्टम् । न चोपाधिपरिच्छिन्नान्तराकाशस्य महत्प(हाप)रिमाणेन बाह्याकाशेन सादृश्यमित्याह–अपि चेति । तर्हि परस्यापि भूताकाशो नोपमानमतुल्यपरिमाणत्वादित्याह–नन्विति । नेदं वाक्यं भूताकाशतुल्यत्वविषयं किंतु शंकिताल्पत्वव्यावृत्तिपरमित्याह–नेति । निवृत्तौ तावत्त्वे च वाक्यतात्पर्यमाशंक्योक्तम्–उभयेति । न च संभवत्येकवाक्यत्वे वाक्यभेदः । न च तावत्त्वमेव प्रतिपाद्यमफलत्वान्न च शंकितदहरत्वनिवृत्तिरेव फलं तत्रैव वाक्यतात्पर्यप्रसङ्गान्न च

१ आकाशपरिमाणत्वे च ।

पादने हि वाक्यं भिद्येत ॥ न च कल्पितभेदे पुण्डरीकवेष्टिते आकाशैकदेशे द्यावापृथिव्यादीनामन्तःसमाधानमुपपद्यते ॥ "एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" [ छां० ८ । १ । ५ ] इति चात्मत्वापहतपाप्मत्वादयश्च गुणा न भूताकाश सम्भवन्ति ॥ यद्यप्यात्मशब्दो जीवे सम्भवति । तथापीतरेभ्यः कारणेभ्यो जीवाशङ्कापि निवर्तिता भवति ॥ न ह्युपाधिपरिच्छिन्नस्याराग्रोपमितस्य जीवस्य पुण्डरीकवेष्टनकृतं दहरत्वं शक्यं निवर्तयितुम् ॥ ब्रह्माभेदविवक्षया जीवस्य सर्वगतत्वादि विवक्ष्येतेति चेद्, यदात्मतया जीवस्य सर्वगतत्वादि विवक्ष्येत तस्यैव ब्रह्मणः साक्षात्सर्वगतत्वादि विवक्ष्यतामिति युक्तम् ॥ यदप्युक्तं ब्रह्मपुरमिति जीवेन पुरस्योपलक्षितत्वाद्राज्ञ इव जीवस्यैवेदं पुरस्वामिनः पुरैकदेशवर्तित्वम-

रत्नप्रभा ।

एवमाकाशोपमितत्वाद्दहराकाशो न भूतमित्युक्तम् । सर्वाश्रयत्वादिलिंगेभ्यश्च तथेत्याह—**न चेत्यादिना** ॥ विगता जिघत्सा जग्धुमिच्छा यस्य सोऽयं **विजिघत्सः** । बुभुक्षाशून्य इत्यर्थः । प्रथमश्रुतब्रह्मशब्देन तत्सापेक्षचरमश्रुतषष्ठीविभक्त्यर्थः सम्बन्धो नेयः । न तु ब्रह्मणः पुरमिति षष्ठ्यर्थः स्वस्वामिभावो ग्राह्यः ।

भामती ।

भूताकाशत्वं व्यासेधन्तीत्याह—**न च कल्पितभेद इति** । नापि दहराकाशो जीव इत्याह—**यद्यप्यात्मशब्द इति** । 'उपलब्धेरधिष्ठानं ब्रह्मणो देह इष्यते । तेनासाधारणत्वेन देहो ब्रह्मपुरं भवेत् ॥' देहे हि ब्रह्मोपलभ्यत इत्यसाधारणतया देहो ब्रह्मपुरमिति व्यपदिश्यते, न तु ब्रह्मविकारतया । तथा च ब्रह्मशब्दार्थो मुख्यो भवति । अस्तु वा ब्रह्मपुरं जीवपुरं तथापि यथा वत्सराजस्य पुरे उज्जयिन्यां मैत्रस्य सद्म भवति, एवं जीवस्य पुरे हृत्पुण्डरीकं ब्रह्मसदनं भविष्यति, उत्तरेभ्यो ब्रह्मलिङ्गेभ्यो ब्रह्मणोऽवधारणात् । ब्रह्मणो हि बाधके प्रमाणे बलीयसि जीवस्य च साधके प्रमाणे सति ब्रह्मलिङ्गानि कथंचिदभेदविवक्षया जीवे व्याख्यायन्ते । न चेह ब्रह्मणो बाधकं प्रमाणं, साधकं वास्ति जीवस्य । ब्रह्मपुरव्यपदेशश्चोपपादितो ब्रह्मोपलब्धिस्थानतया । अर्भकौकस्त्वं चोक्तम् । तस्मात् सति संभवे ब्रह्मणि, तल्लिङ्गानां नाब्रह्मणि व्याख्यानमुचितमिति ब्रह्मैव दहराकाशो न जीवभूताकाशाविति । श्रवणमननमनुविद्य ब्रह्मानुभूय चरणं चारस्तेषां कामेषु चरणं भवतीत्यर्थः । स्यादेतत् । दहराकाशस्यान्वेष्यत्वे सिद्धे तत्र विचारो युज्यते, न तु तदन्वेष्टव्यम्, अपि तु तदाधारमन्यदेव किंचिदित्युक्तमित्यनुभाषते—**यदप्येतदिति** ।

आनन्दगिरीय-न्यायनिर्णयः ।

साक्षादेव तत्सिद्धावार्थिकत्वकल्पना युक्तेति भावः । भूताकाशाग्रहे लिङ्गान्तरमाह—**न चेति**। तत्रैव हेत्वन्तरम्—**एष इति** । विगता जिघत्सा खादितुमिच्छा यस्य स तथा । चकारादुक्तं सर्वमाकाशस्यैकदेशे नोपपद्यत इति संबन्धः । तदेव स्पष्टयति—**आत्मत्वेति** । न तावद्भूताकाशे संभवत्यात्मत्वमचैतन्यान्न चापहतपाप्मत्वादेर्नित्यानुवादत्वं नापि सत्यकामत्वादेरारोपितत्वमगतिका हीयं गतिरुपक्रमस्थाकाशश्रुतेश्चोपसंहारस्थात्मश्रुतिरुक्तलिङ्गसंगता बलीयसी प्रत्ययसंवादादित्याकाशशब्दं ब्रह्मैवेति भावः । आकाशोपमितत्वादिहेतुभ्यो भूताकाशं निरस्य तद्बलादेव जीवमपि निरस्यति—**यद्यपीति** । ननु कथमाकाशोपमितत्वं जीवशंकानिवर्तकं तस्यापि तदुपमितत्वेन शंकितदहरत्वनिवृत्त्योपमानपर्यवसानात्तत्राऽऽह—**न हीति** । तादात्म्येन शंकते—**ब्रह्मेति** । आदिपदं सर्वाधारत्वादिसंग्रहार्थम् । लाघवेन प्रत्याह—**यदिति**। ब्रह्मपुरशब्दाज्जीवोपादानमुक्तमनुवदति—**यदपीति**।

१ शब्दत्वमिति पाठान्तरम् ।

स्त्विति ॥ अत्र ब्रूमः ॥ परस्यैवेदं ब्रह्मणः पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते ॥ ब्रह्मशब्दस्य तस्मिन्मुख्यत्वात् ॥ तस्याप्यस्ति पुरेणानेन सम्बन्धः ॥ उपलब्ध्यधिष्ठानत्वात्—"स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" [ प्रश्न० ५ । ५ ] "स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः" [ बृह० २ । ५ । १८ ] इत्यादिश्रुतिभ्यः ॥ अथ वा जीवपुरे एवास्मिन्ब्रह्म सन्निहितमुपलक्ष्यते ॥ यथा शालग्रामे विष्णुः सन्निहित इति, तद्वत् ॥ "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" [ छां० ८ । १ । ६ ] इति च कर्मणामन्तवत्फलत्वमुक्त्वा "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति" [ छां० ८ । १ । ६ ] इति प्रकृतदहराकाशविज्ञानस्यानन्तफलत्वं वदन्परात्मत्वमस्य सूचयति ॥ यदप्येतदुक्तं न दहरस्या-

रत्नप्रभा ।

निरपेक्षेण तत्सापेक्षं बाध्यमिति न्यायादित्याह—अत्र ब्रूम इति ॥ शरीरस्य ब्रह्मणा तदुपलब्धिस्थानत्वरूपे सम्बन्धे मानमाह—स इति ॥ पूर्षु शरीरेषु, पुरि हृदये शय इति पुरुष इत्यन्वयः । ननु ब्रह्मशब्दस्य जीवेऽप्यन्नादिना शरीरवृद्धिहेतौ मुख्यत्वान्न षष्ठ्यर्थः कथंचिन्नेय इत्यत आह—अथ वेति ॥ बृहयति देहमिति ब्रह्म—जीवः, तत्स्वामिके पुरे । हृदयं ब्रह्मवेश्म भवतु, राजपुरे मैत्रसद्मवदित्यर्थः ॥ अनन्तफललिङ्गादपि दहरः परमात्मेत्याह—तद्यथेति ॥ अथ कर्मफलाद्वैराग्यानन्तरम् इह जीवद्दशायाम् आत्मानं दहरं तदाश्रितांश्च सत्यकामादिगुणानाचार्योपदेशम् अनुविद्य ध्यानेनानुभूय ये परलोकं गच्छन्ति तेषां सर्वलोकेष्वनन्तमैश्वर्यं स्वेच्छया संचलनादिकं भवतीत्यर्थः ॥ दहरे उक्तलिङ्गान्यन्यथासिद्धानि तेषां तदन्तःस्थगुणत्वादित्युक्तं स्मारयित्वा दूषयति—यदपीत्यादिना ॥ उत्तरत्राकाशस्य स्वरूप-

भामती ।

अनुभाषितं दूषयति—अत्र ब्रूम इति । यद्याकाशाधारमन्यदन्वेष्टव्यं भवेत्तदेवोपरि व्युत्पादनीयम्, आका-

आनन्दगिरीय—न्यायनिर्णयः ।

प्रथमश्रुतब्रह्मशब्देन चरमश्रुतविभक्त्यर्थो नेतव्य इत्याह—अत्रेति । ब्रह्मणः पुरमित्यत्र स्वस्वामित्वं षष्ठ्यर्थं हित्वा ब्रह्मशब्दो मुख्यार्थः स्वीकर्तव्यः प्रत्ययार्थस्य प्रकृत्यर्थापेक्षस्य दौर्बल्यादित्यर्थः । ननु ब्रह्मपक्षे प्रत्ययस्य निरालम्बनत्वमेव जीवपक्षे प्रकृत्यालम्बनं कथंचिदस्ति तदर्थस्यब्रह्माभेदात्तत्राऽऽह—तस्येति । ब्रह्मणः शरीरमुपलब्ध्यधिष्ठानमित्यत्र मानमाह—स इति । सर्वासु पूर्ष्विति व्यपदिश्य पुरिशय इति विशेषणं हृदयसंबन्धविवक्षया नेयम् । आदिपदं 'यो वेद निहितं गुहायाम्' इत्यादिसंग्रहार्थम् । ननु शारीरः शरीरमन्नपानाभ्यवहरणेन बृंहयतीति तस्मिन्मुख्यं ब्रह्मत्वं तस्य च स्वकर्मार्जितत्वादसाधारणं शरीरं तथा च प्रकृतिप्रत्ययौ जीवे मुख्याविति तत्राऽऽह—अथ वेति । शारीरसंबद्धमेव वेश्मोत्तरहेतुभ्यो ब्रह्मणाऽपि संबध्यते । दृष्टं हि राजपुरे मैत्रसद्मेत्यर्थः । किंच, कर्मफलनित्यतानिवृत्त्या दहरज्ञानस्यानन्तफलत्वश्रुतेर्दहरस्य परत्वमित्याह—तद्यथेति । कर्मणस्तत्फलाच्चोपेक्षानन्तर्यमर्थशब्दार्थः । इह जीवत्येव देहे दहरमात्मानं तदाश्रितांश्च सत्यकामादिगुणानाचार्योपदेशमनुविद्यानुभूय ये परलोकं व्रजन्ति तेषां सर्वेषु लोकेषु कामचारः स्वेच्छया चरणमप्रतिहतमनन्तमैश्वर्यमित्यर्थः । श्रुतितात्पर्यमाह—प्रकृतेति । वदन्नित्याचार्यो वेदो वोक्तः । दहराकाशस्यान्वेष्यत्वादिसिद्धौ तत्र विचारो न तु तदस्ति, तस्मिन्यदन्तरित्यन्तस्य विशेषणत्वादन्वेषणादेरिति तत्राऽऽह—यदपीति । उत्तरत्राऽऽकाशस्वरूपप्रतिपादनानुपपत्त्या

१ दन्त्यादिरेव पठ्यतेयं दाक्षिणदेशे । उत्तरे तालव्यादिरेव । तथा च सालिग्राम इतीकारघटितपाठ एव दक्षिणदेशे प्रायः ।

काशस्यान्वेष्टव्यत्वं विजिज्ञासितव्यत्वं च श्रुतं परविशेषणत्वेनोपादानादिति ॥ अत्र ब्रूमः ॥ यद्याकाशो नान्वेष्टव्यत्वेनोक्तः स्याद् "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्याद्याकाशस्वरूपप्रदर्शनं नोपयुज्येत ॥ नन्वेतदप्यन्तर्वर्तिवस्तुसद्भावदर्शनायैव प्रदर्श्यते-"तं चेद् ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्" [ छां० ८। १। २ ] इत्याक्षिप्य परिहारावसरे आकाशौपम्योपक्रमेण द्यावापृथिव्यादीनामन्तस्समाहितत्वदर्शनात् ॥ नैतदेवम् ॥ एवं हि सति यदन्तस्समाहितं द्यावापृथिव्यादि तदन्वेष्टव्यं विजिज्ञासितव्यं चोक्तं स्यात् ॥ तत्र वाक्यशेषो नोपपद्येत ॥ "अस्मिन्कामाः समाहिताः एष आत्मापहतपाप्मा" [ छां० ८। १। ५ ] इति हि प्रकृतं द्यावापृथिव्यादिसमाधानाधारमाकाशमाकृष्याथ "य इहात्मानमनुविद्य व्रजन्त्येतांश्च

---

रत्नप्रभा।

प्रतिपादनान्यथानुपपत्त्या पूर्वं तस्यान्वेष्यत्वादिकमित्यत्रान्यथोपपत्तिं शङ्कते-नन्विति ॥ एतद् आकाशस्वरूपमाक्षेपबीजमाकाशस्याल्पत्वमुपमया निरस्यान्तःस्थवस्तूक्तेः तदन्तःस्थमेव ध्येयमित्यर्थः। तर्हि जगदेव ध्येयं स्यादित्याह-नैतदेवमिति ॥ अस्तु को दोषः, तत्राह-तत्रेति ॥ सर्वनामभ्यां दहराकाशमाकृष्यात्मत्वादिगुणानुक्त्वा गुणैस्सह तस्यैव ध्येयत्वं वाक्यशेषो ब्रूते। तद्विरोध इत्यर्थः। "तस्मिन्यदन्तः"

भामती।

शव्युत्पादनं तु क्वोपयुज्यत इत्यर्थः। चोदयति-नन्वेतदपीति। आकाशकथनमपि तदन्तर्वर्तिवस्तुसद्भावप्रदर्शनायैव। अथाकाशपरमेव कस्मान्न भवतीत्यत आह-तं चेद् ब्रूयुरिति। आचार्येण हि 'दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इत्युपदिष्टेऽन्तेवासिनाक्षिप्तम्-'किं तदत्र विद्यते यदन्वेष्टव्यम्'। पुण्डरीकमेव तावत्सूक्ष्मतरं, तदवरुद्धमाकाशं सूक्ष्मतमम्। तस्मिन्सूक्ष्मतमे किमपरमस्ति। नास्त्येवेत्यर्थः। तत् किमन्वेष्टव्यमिति। तदस्मिन्नाक्षेपे परिसमाप्ते समाधानावसर आचार्यस्याकाशोपमानोपक्रमं वचः-'उभे अस्मिन्द्यावापृथिवी समाहिते' इति। तस्मात्पुण्डरीकावरुद्धाकाशाश्रये द्यावापृथिव्यावेवान्वेष्टव्ये उपदिष्टे, नाकाश इत्यर्थः। परिहरति-नैतदेवम् ॥ एवं हीति। स्यादेतत्। एवमेवैतत्। नो खल्वभ्युपगमा एव दोषत्वेन चोद्यन्त इत्यत आह-तत्र वाक्यशेष इति। वाक्यशेषो हि दहराकाशात्मवेदनस्य फलवत्त्वं ब्रूते, यच्च फलवत् तत्कर्तव्यतया चोद्यते, यच्च कर्तव्यं तदिच्छतीति 'तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इति तद्दहराकाशविषयमवतिष्ठते। स्यादेतत्। द्यावापृथिव्यावेवात्मानौ भविष्यतः, ताभ्यामेवात्मा लक्षयिष्यते, आकाशशब्दवत्। ततश्चाकाशाधारौ तावेव परामृश्येते इत्यत आह-अस्मिन्कामाः समाहिताः प्रतिष्ठिताः ॥ एष आत्मापहतपाप्मेति। अनेन प्रकृतं द्यावापृथिव्यादिसमाधानाधारमाकाशमाकृष्य। द्यावापृथिव्यभिधानव्यवहितमपीति

आनन्दगिरीय-न्यायनिर्णयः।

तस्य ज्ञेयत्वमन्तःसमाहितैः सहेष्टमित्याह-अत्रेति। तत्प्रतिपादनमन्यथोपपन्नमिति शंकते-नन्विति। कथमेतदवगम्यते तत्राऽऽह-तमिति। 'किं तदत्र' इत्याक्षेपाद् 'उभे अस्मिन्' इति चान्तस्थवस्तूक्त्या समाधानाधारत्वमेवाऽऽकाशस्येत्यर्थः। तस्याऽऽधारमात्रत्वविवक्षायामाधेयस्यैव ध्येयत्वं स्यादित्याह-नैतदिति। अस्तु को दोषस्तत्राऽऽह-तत्रेति। दहराकाशस्य प्रकृतस्यैतच्छब्देन परामर्शात्तद्वेदनस्य फलवत्त्वश्रुतेस्तदेव ध्येयम्। न चैतच्छब्देन द्यावापृथिवीभ्यां व्यवधानान्नाऽऽकाशाकर्षणमस्मिन्नेष इति चैकवचनात्तस्यैव परा-

सत्यान्कामान्'' [ छां० ८ । १ । ६ ] इति समुच्चयार्थेन चशब्देनात्मानं कामाधारमाश्रितांश्च कामान्विज्ञेयान्वाक्यशेषो दर्शयति ॥ तस्माद्वाक्योपक्रमेऽपि दहर एवाकाशो हृदयपुण्डरीकाधिष्ठानः सहान्तस्स्थैस्समाहितैः पृथिव्यादिभिस्सत्यैश्च कामैर्विज्ञेय उक्त इति गम्यते ॥ स चोक्तेभ्यो हेतुभ्यः परमेश्वर इति ॥ १४ ॥

## गतिशब्दाभ्यां तथा हि दृष्टं लिंगं च ॥ १५ ॥

दहरः परमेश्वर उत्तरेभ्यो हेतुभ्य इत्युक्तम् ॥ त एवोत्तरे हेतव इदानीं प्रपञ्च्यन्ते ॥ इतश्च परमेश्वर एव दहरः ॥ यस्माद्दहरवाक्यशेषे परमेश्वरस्यैव प्रतिपादकौ गतिशब्दौ भवतः ॥ ''इमाः सर्वाः प्रजा अहरहर्ग-

---

रत्नप्रभा ।

[ छां ८ । १ । १ ] इति तत्पदेन व्यवहितमपि हृदयं योग्यतया ग्राह्यमित्याह—**तस्मादिति** ॥ यद्वा आकाशस्तस्मिन्यदन्तस्तदुभयमन्वेष्टव्यमिति योजनां सूचयति—**सहान्तःस्थैरिति** ॥ १४ ॥ दहराकाशस्य ब्रह्मत्वे हेत्वन्तरमाह—**गतीति** ॥ प्रजा जीवा **एतं** हृदयस्थं दहरं ब्रह्मस्वरूपं लोकम् **अहरहः** प्रत्यहं

भामती ।

शेषः । ननु सत्यकामज्ञानस्यैतत्फलं, तदनन्तरं निर्देशात्, न तु दहराकाशवेदनस्येत्यत आह—**समुच्चयार्थेन चशब्देनेति** । 'अस्मिन्कामाः' इति च 'एषः' इति चैकवचनान्तं न द्वे द्यावापृथिव्यौ परामृष्टुमर्हतीति दहराकाश एव परामृष्टव्य इति समुदायार्थः । तदनेन क्रमेण 'तस्मिन्यदन्त.' इत्यत्र तच्छब्दोऽनन्तरमप्याकाशमतिलंध्य हृत्पुण्डरीकं परामृशतीत्युक्तं भवति । तस्मिन् हृत्पुण्डरीके यदन्तराकाशं तदन्वेष्टव्यमित्यर्थः ॥ १४ ॥ **गतिशब्दाभ्यां तथाहि दृष्टं लिंगं च** । उत्तरेभ्य इत्यस्य प्रपञ्चः । एतमेव दहराकाशं प्रक्रम्य बताहो कष्टमिदं वर्तते जन्तूनां तत्त्वावबोधविकलानां, यदेभिः स्वाधीनमपि ब्रह्म न प्राप्यते । तद्यथा चिरंतननिरूढनिबिडमलपिहितानां कलधौतशकलानां पथि पतितानामुपर्युपरि संचरद्भिरपि पान्थैर्धनायद्भिर्ग्रावखण्डनिवहविभ्रमेणैतानि नोपादीयन्त इत्यभिसंधिमती साद्भुतमिव सखेदमिव श्रुतिः प्रवर्तते—'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' इति । स्वापकाले हि सर्व एवायं विद्वानविद्वांश्च जीवलोको हृत्पुण्डरीकाश्रयं दहराकाशाख्यं ब्रह्मलोकं प्राप्तोऽप्यनाद्यविद्यातमःपटलपिहितदृष्टितया ब्रह्मभूयमापन्नोऽहमस्मीति न वेद । सोऽयं ब्रह्मलोकशब्दस्तद्गतिश्च प्रत्यहं जीवलोकस्य दहराकाशस्यैव ब्रह्मरूपलोकतामाहतुः । तदेतदाह भाष्यकारः—**इतश्च परमेश्वर एव दहरो यस्माद्दहरवाक्यशेष इति** । तदनेन गतिशब्दौ व्याख्यातौ । 'तथा हि दृष्टम्' इति सूत्रावयवं

आनन्दगिरीय—न्यायनिर्णयः ।

मर्शयोग्यत्वादित्यर्थः । सत्यकामवेदनस्यैतत्फलं तदानन्तर्यान्न दहराकाशबुद्धेरित्याशंक्याऽऽह—**समुच्चयेति** । ''संदिग्धस्य वाक्यशेषान्निर्णयः'' इति न्यायादादौ तस्मिन्यदन्तरिति तच्छब्दोऽनन्तरमप्याकाशमभिलङ्घ्य हृत्पुण्डरीकं परामृशति । तत्र यदन्तराकाशं तदन्वेष्टव्यं विजिज्ञासितव्यं चेत्युपसंहरति—**तस्मादिति** । नन्वेतच्छब्दस्य संनिहितार्थत्वाज्जीवात्मनः सर्वान्प्रति संनिहिततरत्वात्तस्यैव तादर्थ्यात्कामानां च तत्र समाहितत्वेन समुच्चयसिद्धेस्तत्परं वाक्यमित्याशंक्य विजातीयाध्यक्षादिसिद्धजीवात्सजातीयश्रुतिसिद्धदहराकाशाख्यपरमात्मपरामर्शो लाघवाज्जीवे चापहतपाप्मत्वाद्ययोगाद्वाक्यभेदापत्तेर्मैवमित्याह—**स चेति** ॥ १४ ॥ दहराकाशस्येश्वरत्वे हेत्वन्तरमाह—**गतीति** । उत्तरसूत्रसंदर्भस्य परमसंगतिमाह—**दहर इति** । अवतारितसूत्रस्यावान्तरसंगतिमाह—**इतश्चेति** । इतःशब्दार्थमाह—**यस्मादिति** । तावेवोदाहरति—**इमा इति** । प्रजाश्चिदाभासा

च्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" [ छां० ८।३।२ ] इति। तत्र प्रकृतं दहरं ब्रह्मलोकशब्देनाभिधाय तद्विषया गतिः प्रजाशब्दवाच्यानां जीवानाम् अभिधीयमाना दहरस्य ब्रह्मतां गमयति ॥ तथा ह्यहरहर्जीवानां सुषुप्त्यवस्थायां ब्रह्मविषयं गमनं दृष्टं श्रुत्यन्तरे-"सता सोम्य तदा सम्पन्नो भवति" [ छां० ६।८।१ ] इत्येवमादौ। लोकेऽपि किल गाढं सुषुप्तमाचक्षते-ब्रह्मीभूतो ब्रह्मतां गत इति ॥ तथा ब्रह्मलोकशब्दोऽपि प्रकृते दहरे प्रयुज्यमानो जीवभूताकाशाशङ्कां निवर्तयन्ब्रह्मतामस्य गमयति ॥ ननु कमलासनलोकमपि ब्रह्मलोकशब्दो गमयेत् ॥ गमयेद्यदि ब्रह्मणो लोक इति षष्ठीसमासवृत्त्या व्युत्पाद्येत ॥ सामानाधिकरण्यवृत्त्या तु व्युत्पाद्यमानो ब्रह्मैव लोको ब्रह्मलोक इति परमेव ब्रह्म गमयिष्यति ॥

रत्नप्रभा।

स्वापे गच्छन्त्यः तदात्मना स्थिता अप्यनृताज्ञानेनावृताः तं न जानन्ति। अतः पुनरुत्तिष्ठन्तीत्यर्थः॥ नन्वेतत्पदपरामृष्टदहरस्य स्वापे जीवगम्यत्वेऽपि ब्रह्मत्वे किमायातमित्याशंक्य तथा हि दृष्टमिति व्याचष्टे-**तथा हीति**॥ लोकेऽपि दृष्टमित्यर्थान्तरमाह-**लोकेऽपीति**॥ गतिलिङ्गं व्याख्याय शब्दं व्याचष्टे-**तथेति**॥ जीवभूताकाशयोर्ब्रह्मलोकशब्दस्याप्रसिद्धेरिति भावः। ब्रह्मण्यपि तस्या[१]प्रसिद्धिं शङ्कते-**नन्विति**॥ निषादस्थपतिन्यायेन समाधत्ते-**गमयेदिति**॥ षष्ठे चिन्तितम् "स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्" [ जै० सू० ६।१।५१ ] रौद्रीमिष्टिं विधाय एतया निषादस्थपतिं याजयेदित्याम्नायते। तत्र निषादानां स्थपतिः स्वामीति षष्ठीसमासेन त्रैवर्णिको ग्राह्यः। अग्निविद्यादिसामर्थ्यात्। न तु निषादश्चासौ स्थपतिरिति कर्मधारयेण निषादो ग्राह्योऽसामर्थ्यादिति प्राप्ते **सिद्धान्तः** निषाद एव स्थपतिः स्यान्निषादशब्दस्य निषादे शक्तत्वात् तस्याश्रुतषष्ठ्यर्थसम्बन्धलक्षकत्वकल्पनाऽयोगात्। श्रुतद्वितीयाविभक्तेः पूर्वपदसम्बन्धकल्पनायां लाघवात्। अतो निषादस्येष्टिसामर्थ्यमात्रं कल्प्यमिति। तद्वद्ब्रह्म-

भामती।

व्याचष्टे-**तथाह्यहरहर्जीवानामिति**। वेदे च लोके च दृष्टम्। यद्यपि सुषुप्तस्य ब्रह्मभावे लौकिकं न प्रमाणान्तरमस्ति, तथापि वैदिकीमेव प्रसिद्धिं स्थापयितुमुच्यते, ईदृशी नामेयं वैदिकी प्रसिद्धिर्यल्लोकेऽपि गीयत इति। यथा श्रुत्यन्तरे यथा च लोके तथेह ब्रह्मलोकशब्दोऽपीति योजना। 'लिङ्गं च' इति सूत्रावयवव्याख्यानं चोद्यमुखेनावतारयति-**ननु कमलासनलोकमपीति**। परिहरति-**गमयेद्यदि ब्रह्मणो लोक इति**। अत्र तावन्निषादस्थपतिन्यायेन षष्ठीसमासात्कर्मधारयो बलीयानिति स्थित-

आनन्दगिरीय-न्यायनिर्णयः।

जीवाः। अहरहः स्वापे। कथं तर्हि पुनरुत्थानं तत्राऽऽह-**एतमिति**। उक्तगतिशब्दयोर्विवक्षितमर्थमाह-**तत्रेति**। श्रुतिः सप्तम्यर्थः। एतच्छब्दाज्जीवानां स्वापे दहरगमनेऽपि तस्य ब्रह्मत्वे किमायातं तदाह-**तथा हीति**। अध्यायभेदधिया श्रुत्यन्तरशब्दः। 'स्वमपीतो भवति' इत्यादिवाक्यमादिपदार्थः। तथाहीत्यादिसूत्रावयवस्यार्थान्तरमाह-**लोकेऽपीति**। प्रसिद्धेः श्रुतिमूलत्वात्तत्प्रामाण्यायानुदाहार्यत्वेऽपीदृशी नामेयं वैदिकी प्रसिद्धिरियं लोकेऽप्यस्तीति श्रुतिप्रामाण्यदार्ढ्याय तदुक्तिरिति मत्वा किलेत्युक्तम्। दहरस्य ब्रह्मत्वधीहेतुतां गतेरुक्त्वा शब्दस्यापि कथयति-**तथेति**। गतिवदित्येतत्। शब्दस्य सिद्धान्तानुगुण्यं नेति शंकते-**नन्विति**। षष्ठीविभक्त्यश्रुतेस्तदर्थलक्षणायां गौरवान्नास्य लोकार्थतेत्याह-**गमयेदिति**। तथाऽपि कुतोऽस्य ब्रह्मार्थतेत्याशंक्य निषादस्थपत्यधिकरणन्यायेनाऽऽह-**सामानाधिकरण्येति**। ननु तेनैव न्यायेन

१ ब्रह्मलोकशब्दस्य। २ एतदुत्तरसूत्रं, "लिङ्गदर्शनाच्च" ( जै० सू० ६।१।५२ ) आभ्यां सूत्राभ्यां निषादस्थपत्यधिकरणं त्रयोदशम्।

एतदेव चाहरहर्ब्रह्मलोकगमनं दृष्टं ब्रह्मलोकशब्दस्य सामानाधिकरण्यवृत्तिपरिग्रहे लिङ्गम् ॥ न ह्यहरहरिमाः प्रजाः कार्यब्रह्मलोकं सत्यलोकाख्यं गच्छन्तीति शक्यं कल्पयितुम् ॥ १५ ॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

धृतेश्च हेतोः परमेश्वर एवायं दहरः ॥ कथम् ? "दहरोऽस्मिन्नन्तराकाशः" [ छां० ८ । १ । १ ] इति हि प्रकृत्याऽऽकाशौपम्यपूर्वकं तस्मिन्सर्वसमाधानमुक्त्वा तस्मिन्नेव चात्मशब्दं प्रयुज्याऽपहतपाप्मत्वादिगुणयोगं चोपदिश्य तमेवाऽनतिवृत्तप्रकरणं निर्दिशति—"अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय" [ छां० ८ । ४ । १ ] इति ॥ तत्र विधृतिरित्यात्मशब्दसामानाधिकरण्याद्विधारयितोच्यते ॥ क्तिचः कर्तरि स्मरणात् ॥

---

रत्नप्रभा ।

लोकशब्दे कर्मधारय इत्यर्थः ॥ कर्मधारये लिङ्गं चास्तीति व्याचष्टे—एतदेवेति ॥ सूत्रे चकार उक्तन्यायसमुच्चयार्थः ॥ १९ ॥ सर्वजगद्धारणलिङ्गाच्च दहरः पर इत्याह—धृतेरिति ॥ नन्वथशब्दाद्दहरप्रकरणं विच्छिद्य श्रुता धृतिर्न दहरलिङ्गमिति शङ्कते—कथमिति ॥ य आत्मेति प्रकृतापकर्षादथशब्दो दहरस्य धृतिगुणविधिप्रारम्भार्थमित्याह—दहरोऽस्मिन्नित्यादिना ॥ श्रुतौ विधृतिशब्दः कर्तृवाचित्वात् क्तिजन्तः । सूत्रे तु महिमशब्दसामानाधिकरण्याद्धृतिशब्दः क्तिन्नन्तो विधारणं ब्रूते । "स्त्रियां क्तिन्" [ पाणि० सू० ३ । ३ । ९४ ] इति भावे क्तिनो विधानादिति विभागः । सेतुः असङ्करहेतुः, विधृतिस्तु स्थितिहेतु-

भामती ।

मेव, तथापीह षष्ठीसमासनिराकरणेन कर्मधारयसमासस्थापनाय लिङ्गमप्यधिकमस्तीति तदप्युक्तं सूत्रकारेण । तथाहि- लोकवेदप्रसिद्धाहरहर्ब्रह्मलोकप्राप्त्यभिधानमेव लिंगं कमलासनलोकप्राप्तेर्विपक्षादसंभवाद्व्यावर्तमानं षष्ठीसमासाशंकां व्यावर्तयद्दहराकाशप्राप्तावेवावतिष्ठते, न च दहराकाशो ब्रह्मणो लोकः किंतु तद्ब्रह्मेति ब्रह्म च तल्लोकश्चेति कर्मधारयः सिद्धो भवति । लोक्यत इति लोकः । हृत्पुण्डरीकस्थः खल्वयं लोक्यते । यत्खलु पुण्डरीकस्थमन्तःकरणं तस्मिन्विशुद्धे प्रत्याहृतेतरकरणानां योगिनां निर्मल इवोदके चन्द्रमसो विम्बमतिस्वच्छं चैतन्यं ज्योतिःस्वरूपं ब्रह्मावलोक्यत इति ॥ १९ ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः । सौत्रो धृतिशब्दो भाववचनः । धृतेश्च परमेश्वर एव दहराकाशः । कुतः,

आनन्दगिरीय—न्यायनिर्णयः ।

विशेषणसमासो न युक्तस्तन्न्यायाविषयत्वादेकस्य शब्दस्यार्थद्वयसाधारण्ये गुरुलघुचिन्तायां लघुर्ग्राह्य इति न्यायः । तथा सति लोकविशेषे प्रयोगबाहुल्यात्तस्यैवाऽऽदौ बुद्धिस्थत्वात्कुतो ब्रह्मविषयत्वमित्याशंक्य तत्र 'लिङ्गं च' इत्युत्तरत्वेन योजयति—एतदेवेति । तस्य लिङ्गत्वं स्फुटयति—न हीति ॥ १९ ॥ सर्वजगद्धारणस्य परमात्मलिङ्गस्य दहरे दर्शनाच्च तस्य परत्वमित्याह—धृतेश्चेति । अस्य धृत्यात्मनो महिम्नो दहरे श्रुतस्यास्मिन्नीश्वरे श्रुत्यन्तरेषूपलब्धेस्तस्येश्वरत्वमित्यर्थः । सूत्रं व्याचष्टे—धृतेरिति । अथशब्देन प्रकरणं विच्छिद्य विधृतिशब्दात्कथं दहरस्य विधारकत्वमित्याह—कथमिति । प्रकृतगामिना यच्छब्देनाऽऽत्मशब्देन च दहरस्यैव बुद्धिस्थत्वान्न प्रकरणविच्छेदकोऽथशब्दः किंतु वाक्योपक्रमद्योतीत्याह—दहरोऽस्मिन्नित्यादिना । श्रौतविधृतिशब्दस्यार्थमाह—तत्रेति । स्त्रियां भावे क्तिन्विधानान्न विधृतिशब्देन दहरस्य विधारकत्वमित्याशंक्य प्रकृतिशब्दवदयं न क्तिन्प्रत्ययान्तः किंतु क्तिच्प्रत्ययान्त इत्याह—क्तिच इति । सेतुशब्देनापि

यथोदकसन्तानस्य विधारयिता लोके सेतुः क्षेत्रसम्पदामसम्भेदाय, एवमयमात्मा एषामध्यात्मादिभेदभिन्नानां लोकानां वर्णाश्रमादीनां च विधारयिता सेतुरसम्भेदायासंकरायेति ॥ एवमिह प्रकृते दहरे विधारणलक्षणं महिमानं दर्शयति ॥ अयं च महिमा परमेश्वर एव श्रुत्यन्तरादुपलभ्यते-"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" [ बृ० ३ । ८ । ९ ] इत्यादेः ॥ तथान्यत्रापि निश्चिते परमेश्वरवाक्ये श्रूयते-"एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" [ बृ० ४ । ४ । २२ ] इति । एवं धृतेश्च हेतोः परमेश्वर एवायं दहरः ॥ १६ ॥

## प्रसिद्धेश्च ॥ १७ ॥

इतश्च परमेश्वर एव "दहरोस्मिन्नन्तराकाशः" [ छां० ८ । १ । १ ] इत्युच्यते ॥ यत्कारणमाकाशशब्दः परमेश्वरे प्रसिद्धः ॥ "आकाशो वै

रत्नप्रभा ।

रित्यपौनरुक्त्यमाह-यथोदकेति ॥ सूत्रं योजयति-एवमिहेति ॥ धृतेश्च दहरः परः अस्य धृतिरूपस्य नियमस्य च महिम्नः अस्मिन् परमात्मन्येव श्रुत्यन्तरे उपलब्धेरिति सूत्रार्थः । धृतेश्चेति चकारात् सेतुपदोक्तनियामकत्वलिङ्गं ग्राह्यम् । तत्र नियमने श्रुत्यन्तरोपलब्धिमाह-एतस्येति ॥ धृतौ तामाह-तथेति ॥ १६ ॥ प्रसिद्धेश्च आ समन्तात् काशते दीप्यत इति स्वयंज्योतिषि ब्रह्मण्याकाशशब्दस्य

भामती ।

अस्य धारणलक्षणस्य महिम्नोऽस्मिन्नेवेश्वर एव श्रुत्यन्तरेषूपलब्धेः । निगदव्याख्यानमस्य भाष्यम् ॥ १६ ॥ प्रसिद्धेश्च । न चेयमाकाशशब्दस्य ब्रह्मणि लक्ष्यमाणविभुत्वादिगुणयोगाद्वृत्तिः सांप्रतिकी, यथा रथाङ्गनामा चक्रवाक इति लक्षणा, किंत्वत्यन्तनिरूढेति सूत्रार्थः । ये त्वाकाशशब्दो ब्रह्मण्यपि मुख्य एव नभोवदित्याचक्षते, तैः 'अन्यायश्चानेकार्थत्वम्' इति च 'अनन्यलभ्यः शब्दार्थः' इति च मीमांसकानां मुद्राभेदः कृतः । लभ्यते ह्याकाशशब्दाद्विभुत्वादिगुणयोगेनापि ब्रह्म । न च ब्रह्मण्येव मुख्यो नभसि तु तेनैव गुणयोगेन वर्त्स्यतीति वाच्यम् । लोकाधीनावधारणत्वेन शब्दार्थसंबन्धस्य वैदिकपदार्थप्रत्ययस्य तत्पूर्वकत्वात् । ननु 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति व्यतिरेकनिर्देशान्न लक्षणा युक्ता । न हि भवति गङ्गायाः कूलमिति विवक्षिते गङ्गाया गंगेति प्रयोगः । तत्किमिदानीं 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया' इत्यसाधुर्वैदिकः प्रयोगः । न च पौर्णमास्यमावास्याशब्दा-

आनन्दगिरीय-न्यायनिर्णयः ।

विधारकोक्त्या पौनरुक्त्यमाशंक्य दृष्टान्तेनासंकरहेतुत्वं सेतुशब्दस्यार्थमाह-यथेति । इतिशब्दः श्रुत्यक्षराथसमाप्त्यर्थः । उक्तेऽर्थे सूत्रं योजयति-एवमिति । तथाऽपि कथं दहरस्येश्वरत्वं तत्राऽऽह-अयं चेति । द्यावापृथिव्यादिस्थितिरक्षराधीनेति विद्वद्वाक्यमादिशब्दार्थः । प्रकारान्तरेण धृतिमाचष्टे-तथेति । निश्चितत्वं संदेहस्याप्यविषयत्वम् । राजकुमारव्यावृत्त्यर्थं भूताधिपतिरित्युक्तम् । लोकपालात्मनाऽपि परस्यैवावस्थानं वक्तुं भूतपालपदम् । विधारकतया सेतुरिवेति सर्वव्यवस्थापकत्वमाह-सेतुरिति । तदेव स्फुटयति-एषामिति । सूत्रार्थमुपसंहरति-एवमिति ॥ १६ ॥ दहरस्य परत्वे हेत्वन्तरम्-प्रसिद्धेश्चेति । चकारार्थमाह-इतश्चेति । इतःशब्दार्थं स्फुटयति-यदिति । नास्ति लौकिकी प्रसिद्धिरिति श्रौतीं प्रसिद्धिमाह-आकाश इति । 'यदेष आकाश आनन्दो न स्यात्'इति ग्रहीतुमादिपदम् । ब्रह्मण्याकाशशब्दप्रसिद्ध्यु-

नामरूपयोर्निर्वहितौ" [ छां० ८ । १४ ] "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" [ छां० १ । ९ । १ ] इत्यादिप्रयोगदर्शनात् ॥ जीवे तु न क्वचिदाकाशशब्दः प्रयुज्यमानो दृश्यते ॥ भूताकाशस्तु सत्यामप्याकाशशब्दप्रसिद्धावुपमानोपमेयभावाद्यसम्भवान्न ग्रहीतव्य इत्युक्तम् १७

## इतरपरामर्शात्स इति चेन्नाऽसम्भवात् ॥ १८ ॥

यदि वाक्यशेषबलेन दहर इति परमेश्वरः परिगृह्येत अस्तीतरस्यापि जीवस्य वाक्यशेषे परामर्शः—"अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच" [ छां० ८ । ३ । ४ ] इति ॥ अत्र हि सम्प्रसादशब्दश्श्रुत्यन्तरे सुषुप्तावस्थायां दृष्टत्वादवस्थावन्तं जीवं शक्नोत्युपस्थापयितुं, नार्थान्तरम् ॥

रत्नप्रभा ।

विभुत्वगुणतो वा प्रसिद्धिः प्रयोगप्राचुर्यम् ॥ १७ ॥ यदि एष "आत्मापहतपाप्मेत्यादिवाक्यशेषबलेन दहरः परः" [ छां० ८।१।५ ] इति । तर्हि जीवोऽपीत्याशंक्य निषेधति—इतरेति ॥ जीवस्यापि वाक्यशेषमाह—अथेति ॥ दहरोक्त्यनन्तरं मुक्तोपसृप्यं शुद्धं ब्रह्मोच्यते य एष सम्प्रसादः जीवः अस्मात् कार्यकरणसंघातात् सम्यग् उत्थाय आत्मानं तस्माद्विविच्य विविक्तम् आत्मानं स्वेन ब्रह्मरूपेणाभिनिष्पद्य साक्षात्कृत्य तदेव प्रत्यक् परं ज्योतिः उपसम्पद्यते प्राप्नोतीति व्याख्येयम् । यथा मुखं व्यादाय स्वपितीति वाक्यं सुप्त्वा मुखं व्यादत्ते इति व्याख्यायते, तद्वत् । ज्योतिषोऽनात्मत्वं निरस्यति—एष इति ॥ सम्प्रसादे "रत्वा चरित्वा" [ बृ० ४ । ३ । १५ ] इति श्रुत्यन्तरम् । अवस्थावदुत्थानमपि जीवस्य लिङ्गमित्याह-

भामती ।

वाय्वेयादिषु मुख्यौ । यच्चोक्तं यत्र शब्दादर्थप्रतीतिस्तत्र लक्षणा, यत्र पुनरन्याऽर्थे निश्चिते शब्दप्रयोगस्तत्र वाचकत्वमेवेति, तदयुक्तम् । उभयस्यापि व्यभिचारात् । 'सोमेन यजेत' इति शब्दादर्थः प्रतीयते । न चात्र कस्यचिल्लाक्षणिकत्वमृते वाक्यार्थात् । न च 'य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्याम्' इत्यत्र पौर्णमास्यमावास्याशब्दौ न लाक्षणिकौ । तस्माद्यत्किंचिदेतदिति ॥१७॥ इतरपरामर्शात्स इति चेन्नासंभवात् । सम्यक् प्रसीदत्यस्मिन् जीवो विषयेन्द्रियसंयोगजनितं कालुष्यं जहातीति सुषुप्तिः संप्रसादो जीवस्यावस्थाभेदः न ब्रह्मणः । तथा शरीरात्समुत्थानमपि शरीराश्रयस्य जीवस्य, न त्वनाश्रयस्य ब्रह्मणः । तस्माद्यथा पूर्वोक्तैर्वाक्यशेषगतैर्लिङ्गैर्ब्रह्मावगम्यते दहराकाशः, एवं वाक्यशेषगताभ्यामेव संप्रसादसमुत्थानाभ्यां दहराकाशो जीवः कस्मान्नावगम्यते । तस्मान्नास्ति विनि-

आनन्दगिरीय—न्यायनिर्णयः ।

क्त्या जीवपक्षोऽपि निरस्त इत्याह—जीवे त्विति । क्वचिल्लोके वेदे चेत्यर्थः । तर्हि लोकवेदप्रसिद्धेर्भूताकाशो गृह्यतां नेत्याह—भूतेति ॥ १७ ॥ विनिगमनहेत्वभावं मन्वानस्य प्रत्यवस्थानं प्रत्याह—इतरेति । तत्र चोद्यं व्याचष्टे—यदीति । वाक्यशेषमेवाऽऽह—अथेति । दहराकाशाख्यसोपाधिकवस्तूक्त्यनन्तरमित्येतत् । सर्वनामभ्यां विद्वानुक्तः । तमेव सुप्तं सर्वकालुष्यविनिर्मुक्तं वक्ति—संप्रसाद इति । अस्मादभिमानद्वयविषयादिति यावत् । शरीरशब्दो देहद्वयार्थः । ततः समुत्थानं विविक्तात्मज्ञानवत्त्वं तत्फलं स्वरूपेणाभिनिष्पत्तिस्तत्त्वसाक्षात्कारस्तत्फलमाह—परमिति । उपसंपद्याभिनिष्पद्यत इति, मुखं व्यादाय स्वपितीतिवत् । ज्योतिःशब्दस्य सूर्यादिविषयत्वं निषेधति—एष इति । कुतो वाक्यशेषस्य जीवविषयत्वं तत्राऽऽह—अत्रेति । संप्रसादे 'रत्वा चरित्वा' इत्यादि बृहदारण्यकं श्रुत्यन्तरम् । अवस्थावत्त्ववद्देहादुत्थानमपि जीव-

तथा शरीरव्यपाश्रयस्यैव जीवस्य शरीरात्समुत्थानं सम्भवति॥ यथाऽऽकाशव्यपाश्रयाणां वाय्वादीनामाकाशात्समुत्थानं, तद्वत्। यथा-चादृष्टोऽपि लोके परमेश्वरविषय आकाशशब्दः परमेश्वरधर्मसमभिव्याहारात् "आकाशो वै नामरूपयोर्निर्वहिता" [छां० ८।१४] इत्येवमादौ परमेश्वरविषयोऽभ्युपगतः, एवं जीवविषयोऽपि भविष्यति॥ तस्मादितरपरामर्शाद् "दहरोऽस्मिन्नन्तराकाशः" [छां० ८।१।१] इत्यत्र स एव जीव उच्यते इति चेत्॥ नैतदेवं स्यात्॥ कस्माद्॥ असम्भवात्॥ न हि जीवो बुद्ध्याद्युपाधिपरिच्छेदाभिमानी सन्नाकाशेनोपमीयेत॥ न चोपाधिधर्मानभिमन्यमानस्यापहतपाप्मत्वादयो धर्मास्सम्भवन्ति॥ प्रपञ्चितं चैतत्प्रथमसूत्रे॥ अतिरेकाशंकापरिहाराय तु पुनरुपन्यस्तम्॥ पठिष्यति चोपरिष्टाद् "अन्यार्थश्च परामर्शः" [व्या० सू० १।३।२०] इति॥ १८॥ इति दहराधिकरणम्॥ ५॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु॥ १९॥ (६)॥

**इतरपरामर्शाद्या जीवाशङ्का जाता सा असम्भवान्निराकृता॥**

---

रत्नप्रभा।

**तथेति**॥ तदाश्रितस्य तस्मात् समुत्थाने दृष्टान्तः—**यथेति**॥ ननु क्वाप्याकाशशब्दो जीवे न दृष्ट इत्याशंक्योक्तावस्योत्थानलिङ्गबलात्कल्प्य इत्याह—**यथा चेति**॥ नियामकाभावाज्जीवो दहरः किं न स्यादिति प्राप्ते नियामकमाह—**नैतदित्यादिना**॥ दहरे श्रुतधर्माणामसम्भवान्न जीवो दहर इत्यर्थः स्तर्हि पुनरुक्तिस्तत्राह—**अतिरेकेति**॥ उत्तराच्चेत्यधिकाशंकानिरासार्थमित्यर्थः। का तर्हि जीवपरामर्शस्य गतिः, तत्राह—**पठिष्यतीति**॥ जीवस्य स्वापस्थानभूतब्रह्मज्ञानार्थोऽयं परामर्श इति वक्ष्यते॥१८॥ (५)॥ असम्भवादिति हेतोरसिद्धिमाशङ्क्य परिहरति—**उत्तराच्चेत्यादि सूत्रम्**। निराकृताया जीवाशंकायाः प्रजा-

भामती।

गमनेति शङ्कार्थः। 'नासंभवात्'। संप्रसादसमुत्थानाभ्यां हि जीवपरामर्शो न जीवपरः, किंतु तदीयतात्त्विकरूपब्रह्मभावपरः। तथा चैष परामर्शो ब्रह्मण एवेति न संप्रसादसमुत्थाने जीवलिङ्गम्, अपि तु ब्रह्मण एव तादर्थ्यादित्यग्रे वक्ष्यते। आकाशोपमानादयस्तु ब्रह्माव्यभिचारिणश्च ब्रह्मपराश्चेत्यस्ति विनिगमनेत्यर्थः॥ १८॥(५)॥ **उत्तराच्चेदाविर्भूतस्वरूपस्तु**। दहराकाशमेव प्रकृत्योपाख्यायते—यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्, तमात्मानं विविदिषन्तौ सुरासुरराजाविन्द्रविरोचनौ समित्पाणी प्रजापतिं

आनन्दगिरीय—न्यायनिर्णयः।

लिङ्गमित्याह—**तथेति**। देहाश्रयश्चेत्कथं तस्मादुत्तिष्ठेत्तत्राऽऽह—**यथेति**। जीवे न क्वचिदाकाशशब्दोऽस्तीत्युक्तं विनिगमनमित्याशंक्य ब्रह्मणि तद्धर्माभिव्यवहारात्तच्छब्दवज्जीवेऽपि वाक्यशेषलिङ्गात्तत्प्रसिद्धिः स्यादित्याह—**यथा चेति**। चोद्यमुपसंहरति—**तस्मादिति**। दहरशेषे जीवपरामर्शेऽपि न तेन दहरो जीवः स्यादिति नञर्थमाह—**नैतदिति**। तत्र प्रश्नपूर्वकं हेतुमाह—**कस्मादिति**। यदाकाशोपमितत्वं दहरस्य श्रुतं तन्न जीवे संभवतीति विभजते—**न हीति**। अपहतपाप्मत्वादीनामपि दहरोक्तानां जीवे न संभावनेत्याह—**न चेति**। उपाधिधर्माः पाप्मादयः। ब्रह्माभेदाज्जीवेऽपि सर्वमेतद्युक्तमित्याशंक्याऽऽह—**प्रपञ्चितं चेति**। तर्हि पुनरुक्तिस्तत्राऽऽह—**अतिरेकेति**। का तर्हि जीवपरामर्शस्य गतिस्तत्राऽऽह—**पठिष्यतीति**। जीवपरामर्शो जीवस्य स्वापाधारपरात्मधीशेष इत्यर्थः॥ १८॥ (५)॥ उक्तासंभवस्यासिद्धिमाशंक्य परिहरति—**उत्तराच्चेदिति**। चोद्यस्य वृत्तमनूद्य तात्पर्यमाह—**इतरपरामर्शादिति**। निराकृताशंकोत्थाने निराकरणा-

अथेदानीं मृतस्यैवामृतसेकात्पुनः समुत्थानं जीवाशङ्कायाः क्रियते । उत्तरस्मात्प्राजापत्याद्वाक्यात्। तत्र हि "य आत्माऽपहतपाप्मा" [ छां०८।७।१] इत्यपहतपाप्मत्वादिगुणकमात्मानमन्वेष्टव्यं विजिज्ञासितव्यं च प्रतिज्ञाय–"य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मा" [ छां० ८ । ७ । ४ ] इति ब्रुवन्नक्षिस्थं द्रष्टारं जीवमात्मानं निर्दिशति ॥ "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" [ छां० ८ । ९ । (३।८) । ( १० । ४ ) ] इति च तमेव पुनः परामृश्य "य एष स्वप्ने महीयमानश्चरत्येष आत्मा" [ छां० ८ । १० । १ ] इति । "तद्यत्रैतत्सुप्तस्समस्तस्सम्प्रसन्नः स्वप्नं न विजानात्येष

रत्नप्रभा ।

पतिवाक्यबलात्पुनः समुत्थानं क्रियते । तत्र जीवस्यैवापहतपाप्मत्वादिग्रहणेनासम्भवासिद्धेरित्यर्थः ॥ कथं तत्र जीवोक्तिस्तत्राह–तत्र हीत्यादिना ॥ यद्यप्युपक्रमे जीवशब्दो नास्ति । तथाप्यपहतपाप्मत्वादिगुणकमात्मानमुपक्रम्य तस्य जाग्रदाद्यवस्थात्रयोपन्यासादवस्थालिङ्गेन जीवनिश्चयात्तस्यैव ते गुणाः सम्भवन्तीति समुदायार्थः । इन्द्रं प्रजापतिर्ब्रूते–य एष इति ॥ प्राधान्यादक्षिग्रहणम् । सर्वैरिन्द्रियैर्विषयदर्शनरूपजाग्रदवस्थापन्नमित्याह–द्रष्टारमिति ॥ महीयमानः वासनामयैर्विषयैः पूज्यमान इति स्वप्नपर्याये, तद्यत्रेति,

भामती ।

वरिवसितुमाजग्मतुः । आगत्य च द्वात्रिंशतं वर्षाणि तत्परिचरणपरौ ब्रह्मचर्यमूषतुः । अथैतौ प्रजापतिरुवाच, किंकामाविहस्थौ युवामिति । तावूचतुः, य आत्माऽपहतपाप्मा तमावां विविदिषाव इति । ततः प्रजापतिरुवाच, य एषोऽक्षिणि पुरुषो दृश्यते एष आत्माऽपहतपाप्मत्वादिगुणः, यद्विज्ञानात्सर्वलोककामावाप्तिः । एतदमृतमभयम् । अथैतच्छ्रुत्वैतावप्रक्षीणकल्मषावरणतया छायापुरुषं जगृहतुः । प्रजापतिं च पप्रच्छतुः, अथ योऽयं भगवोऽप्सु दृश्यते, यश्चादर्शे, यश्च खड्गादौ कतम एतेष्वसौ अथ वैक एव सर्वेष्विति । तमेतयोः श्रुत्वा प्रश्नं प्रजापतिर्बताहो सुदूरमुद्भ्रान्तावेतौ, अस्माभिरक्षिस्थान आत्मोपदिष्टः, एतौ च छायापुरुषं प्रतिपन्नौ, तद्यदि वयं भ्रान्तौ स्थ इति ब्रूमस्ततः स्वात्मनि समारोपितपाण्डित्यबहुमानौ विमानितौ सन्तौ दौर्मनस्येन यथावदुपदेशं न गृह्णीयाताम्, इत्यनयोराशयमनुरुध्य यथार्थं ग्राहयिष्याम इत्यभिसंधिमान्प्रत्युवाच, उदशराव आत्मानमवेक्षेथामस्मिन्यत्पश्यथस्तद् ब्रूतमिति । तौ च दृष्ट्वा संतुष्टहृदयौ नाब्रूताम् । अथ प्रजापतिरेतौ विपरीतग्राहिणौ मा भूतामित्याशयवान्पप्रच्छ, किमत्रापश्य-

आनन्दगिरीय–न्यायनिर्णयः ।

पर्यवसानमाशंक्याऽऽह–अथेति । पुनस्तदुत्थाने हेतुमाह–उत्तरस्मादिति । प्राजापत्ये वाक्ये जीवेऽप्यपहतपाप्मत्वादिश्रुतेरसंभवो नेति शंकत इत्यर्थः । कथं तत्र जीवोक्तिस्तत्राऽऽह–तत्रेति । प्रतिज्ञावाक्यस्य परमात्मविषयत्वमाशंक्याऽऽद्यपर्यायस्य जीवविषयत्वादुपक्रमस्यापि तथेत्याह–य इति । ननु च्छायात्मैवास्मिन्पर्याये प्रतिपाद्यते दृश्यमानत्वस्य तस्मिन्मुख्यत्वान्नेत्याह–द्रष्टारमिति । परप्रतिपत्त्यर्थं पञ्चकोशोक्तिवद्ब्रह्मप्रतिपत्त्यर्थं प्राणाद्युक्तिवच्च ब्रह्मार्थं जीवोक्तिरपि स्यादित्याशंक्य द्वितीयतृतीययोरपि तद्विषयत्वमाह–एतं त्विति । उत्तरत्रान्यस्यानुक्तेर्नान्यार्था जीवोक्तिरित्यर्थः । 'अन्तर उपपत्तेः' इत्यत्र परस्याक्षिस्थानताया दर्शितत्वादाद्यपर्यायस्य परविषयत्वादुत्तरयोरपि तद्विषयतेत्याशंक्याऽऽह–य इति । स्वप्ने वासनामयैर्विषयैर्महीयमानता परस्यैव रुक्माभं स्वप्नधीगम्यमित्युक्तेरित्याशंक्याऽऽह–तदिति । तदेतदिति संवन्धः । यत्र यस्यामवस्थायां तदेतत्स्वपनं यथा स्यात्तथा सुप्तः स्वापावस्थां प्राप्तो भवति तस्यामवस्थायामुपसंहृतकरणग्रामस्तद्द्वयापारकृतकालुष्यहीनः स्वप्नमज्ञानमात्रतया विलापयन्मुक्ताद्द्वयावृत्तस्तैजसानन्तरभावी प्राज्ञो ज्ञानक्रियां विना स्वरूपचैतन्येनाज्ञान-

आत्मा" [ छां० ८ । ११ । १ ] इति च जीवमेवावस्थान्तरगतं व्याचष्टे॥ तस्यैव चापहतपाप्मत्वादि दर्शयति "एतदमृतमभयमेतद्ब्रह्म" [ छां०८। ११।१ ] इति । "नाऽह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि" [ छां० ८ । ११ । १ ] इति च सुषुप्तावस्थायां दोषमुपलभ्य "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद्"

रत्नप्रभा ।

सुषुप्तिपर्याये च जीवमेव प्रजापतिर्व्याचष्टे इत्यन्वयः । यत्र काले तदेतत् स्वप्नं यथा स्यात्तथा सुप्तः सम्यग् अस्तो निरस्तः करणग्रामो यस्य स समस्तः । अत एवोपहृतकरणत्वात्कृतकालुष्यहीनः संप्रसन्नः स्वप्नं प्रपञ्चमज्ञानमात्रत्वेन विलापयति । अतोऽज्ञानसत्त्वान्मुक्ताद्विलक्षणः प्राज्ञ एषः स्वचैतन्येन कारणशरीरसाक्षी तस्य साक्ष्यस्य सत्तास्फूर्तिप्रदत्वादात्मेत्यर्थः । चतुर्थपर्याये ब्रह्मोक्तेः तस्यैवापहतपाप्मत्वादिगुणा इत्याशंक्य तस्यापि पर्यायस्य जीवपरत्वमाह—नाहेति ॥ अहेति—निपातः खेदार्थे । खिद्यमानो हीन्द्र उवाच न खलु सुप्तः पुमान् अयं सम्प्रति सुषुप्त्यवस्थायाम् अयं देवदत्तोऽहमिति एवम् आत्मानं जानाति । नो एव नैव इमानि भूतानि जानाति किन्तु विनाशमेव प्राप्तो भवति । नाहमत्र भोग्यं पश्यामि इति दोषमुपलभ्य पुनः प्रजापतिमुपससाद । तं दोषं श्रुत्वा प्रजापतिराह—एतमिति ॥ . एत-

भामती ।

तमिति । तौ होचतुः, यथैवावामतिचिरब्रह्मचर्यचरणसमुपजातायतनखलोमादिमन्तावेवमावयोः प्रतिरूपकं नखलोमादिमदुदशरावेऽपश्यावेति । पुनरेतयोश्छायात्मविभ्रममपनिनीषुर्यथैव हि छायापुरुष उपजनापायधर्मभेदेनावगम्यमान आत्मलक्षणविरहान्नात्मैवेवमेवेदं शरीरं नात्मा,किंतु ततो भिन्नमित्यन्वयव्यतिरेकाभ्यामेतौ जानीयातामित्याशयवान् प्रजापतिरुवाच,साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वा पुनरुदशरावे पश्यतमात्मानं, यच्चात्र पश्यथस्तद् ब्रूतमिति । तौ च साध्वलंकृतौ सुवसनौ छिन्ननखलोमानौ भूत्वा तथैव चक्रतुः । पुनश्च प्रजापतिना पृष्टौ तामेव छायामात्मानमूचतुः । तदुपश्रुत्य प्रजापतिरहो बताद्यापि न प्रशान्त एनयोर्विभ्रमः, तद्यथाभिमतमेवात्मतत्त्वं कथयामि तावत् । कालेन कल्मषे क्षीणेऽस्मद्वचनसंदर्भपौर्वापर्यपर्यालोचनयात्मतत्त्वं प्रतिपत्स्येते स्वयमेवेति मत्वोवाच, एष आत्मैतदमृतमभयमेतद्ब्रह्मेति । तयोर्विरोचनो देहानुपातित्वाच्छायाया देह एवात्मतत्त्वमिति मत्वा निजसदनमागत्य तथैवासुरानुपदिदेश । देवेन्द्रस्त्वप्राप्तनिजसदनोऽध्वन्येव किंचिद्विरलकल्मषतया छायात्मनि शरीरगुणदोषानुविधायिनि तंतं दोषं परिभावयन् नाहमत्र छायात्मदर्शने भोग्यं पश्यामीति प्रजापतिसमीपं समित्पाणिः पुनरेयाय । आगतश्च प्रजापतिनागमनकारणं पृष्टः पथि परिभावितं जगाद । प्रजापतिस्तु सुव्याख्यातमप्यात्मतत्त्वमक्षीणकल्मषावरणतया नाग्रहीः, तत्पुनरपि तत्प्रक्षयाय चरापराणि द्वात्रिंशतं वर्षाणि ब्रह्मचर्यम्, अथ प्रक्षीणकल्मषाय ते अहमेतमेवात्मानं भूयोऽनुव्याख्यास्यामीत्यवोचत् । स च तथा चरितब्रह्मचर्यः सुरेन्द्रः प्रजापतिमुपससाद । उपसन्नाय चास्मै प्रजापतिर्व्याचष्टे, य आत्मापहतपाप्मादिलक्षणोऽक्षणि दर्शितः सोऽयं य एष स्वप्ने महीयमानो वनितादिभिरनेकधा स्वप्नोपभोगान् भुञ्जानो विहरतीति । अस्मिन्नपि देवेन्द्रो भयं ददर्श ।

आनन्दगिरीय—न्यायनिर्णयः ।

साक्षी साक्ष्यस्य देहादेः सत्तास्फूर्तिप्रदत्वेन चाऽऽत्मेत्यर्थः । तथा चावस्थावत्त्वाज्जीवोऽयमिति श्रुत्यर्थं संक्षिप्याऽऽह—जीवमिति । स्वप्नावस्थातोऽन्या स्वापावस्थाऽवस्थान्तरम् । तथाऽपि तस्मिन्नपहतपाप्मत्वादि कथमित्याशंक्य विनाऽपि ब्रह्मरूपतामुपास्त्या तद्धीरित्याह—तस्येति । 'य आत्माऽपहतपाप्मा' इत्यादिनोपक्रान्तः स परमात्मतया चतुर्थपर्याये कथ्यते, तेन तत्प्रतिपादनसिद्धिरित्याशंक्य चतुर्थपर्यायस्यापि जीवविषयत्वमाह—नाहेति । अहेति निपातः खेदार्थे । खिद्यमानो हीन्द्रः प्रोवाचायं सुप्तः पुमानय-

[ छां० ८।११।३ ] इति चोपक्रम्य शरीरसम्बन्धनिन्दापूर्वकम् "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" [ छां० ८।१२।२ ] इति जीवशरीरात्समु-

रत्नप्रभा ।

स्मात् प्रकृतादात्मनः अन्यत्र अन्यं न व्याख्यास्यामीत्युपक्रम्य "मघवन्मर्त्यं वा इदं शरीरम्" [ छां०

भामती ।

यद्यप्ययं छायापुरुषवन्न शरीरधर्माननुपतति, तथापि शोकभयादिविविधबाधानुभवान्न तत्राप्यस्ति स्वस्तिप्राप्तिरित्युक्तवति मघवति पुनरपराणि चर द्वात्रिंशतं वर्षाणि स्वच्छं ब्रह्मचर्यमिदानीमप्यक्षीणकल्पषोऽसीत्यूचे प्रजापतिः । अथास्मिन्नेवंकारमुपसन्ने मघवति प्रजापतिरुवाच, य एष आत्मापहतपाप्मादिगुणो दर्शितोऽक्षणि च स्वप्ने च स एष यो विषयेन्द्रियसंयोगविरहात्प्रसन्नः सुषुप्तावस्थायामिति । अत्रापि नेन्द्रो निर्ववार । यथा हि जाग्रद्वा स्वप्नगतो वाऽयमहमस्मीति इमानि भूतानि चेति विजानाति नैवं सुषुप्तः किंचिदपि वेदयते, तदा खल्वयमचेतयमानोऽभावं प्राप्त इव भवति । तदिह का निर्वृतिरिति । एवमुक्तवति मघवति बताद्यापि न ते कल्मषक्षयोऽभूत् । तत्पुनरपराणि चर पञ्च वर्षाणि ब्रह्मचर्यमित्यवोचत्प्रजापतिः । तदेवमस्य मघोनस्त्रिभिः पर्यायैर्व्यतीयुः षण्णवतिवर्षाणि । चतुर्थे च पर्याये पञ्च वर्षाणीत्येकोत्तरं शतं वर्षाणि ब्रह्मचर्यं चरतः सहस्राक्षस्य संपेदिरे । अथास्मै ब्रह्मचर्यसंपदुन्मृदितकल्मषाय मघवते य एषोऽक्षिणि यश्च स्वप्ने यश्च सुषुप्ते अनुस्यूत एष आत्मापहतपाप्मादिगुणो दर्शितः, तमेव 'मघवन् मर्त्यं वै शरीरम्' इत्यादिना विस्पष्टं व्याचष्टे प्रजापतिः । अयमस्याभिसंधिः—यावत्किंचित् सुखं दुःखमागमापायि तत्सर्वं शरीरेन्द्रियान्तःकरणसंबन्धि, न त्वात्मनः । स पुनरेतानेव शरीरादीन् अनाद्यविद्यावासनावशादात्मत्वेनाभिप्रतीतस्तद्गतेन सुखदुःखेन तद्वन्तमात्मानमनुमन्यमानोऽनुतप्यते । यदा त्वयमपहतपाप्मत्वादिलक्षणमुदासीनमात्मानं देहादिभ्यो विविक्तमनुभवति, अथास्य शरीरवतोऽप्यशरीरस्य न देहादिधर्मसुखदुःखप्रसङ्गोऽस्तीति नानुतप्यते, केवलमयं निजे चैतन्यानन्दघने रूपे व्यवस्थितः समस्तलोककामान् प्राप्तो भवति । एतस्यैव हि परमानन्दस्य मात्राः सर्वे कामाः । दुःखं त्वविद्यानिर्माणमिति न विद्वानाप्नोति । 'अशीलितोपनिषदां व्यामोह इह जायते । तेषामनुग्रहायेदमुपाख्यानमवर्तयम् ॥' एवं व्यवस्थित उत्तराद्वाक्यसंदर्भात्प्राजापत्यात् अक्षणि च स्वप्ने च सुषुप्ते च चतुर्थे च पर्याये 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय' इति जीवात्मैवापहतपाप्मादिगुणः श्रुत्योच्यते । नो खलु परस्याक्षिस्थानं संभवति । नापि स्वप्नाद्यवस्थायोगः । नापि शरीरात्समुत्थानम् । तस्माद्यस्यैतत् सर्वं सोऽपहतपाप्मादिगुणः श्रुत्योक्तः । जीवस्य चैतत् सर्वमिति स एवापहतपाप्मादिगुणः श्रुत्योक्त इति नापहतपाप्मादिभिः परं ब्रह्म गम्यते । ननु जीवस्यापहतपाप्मत्वादयो न संभवन्तीत्युक्तम् । वचनाद्भविष्यन्ति । किमिव वचनं न कुर्यात् । नास्ति वचनस्यातिभारः । न च मानान्तरविरोधः । न हि जीवः पाप्मादिस्वभावः, किंतु वाग्बुद्धिशरीरारम्भसंभवोऽस्य पाप्मादिः शरीराद्यभावे न भवति धूम इव धूम-

आनन्दगिरीय—न्यायनिर्णयः ।

मस्म्यहमित्येवं नाऽऽत्मानमस्यामवस्थायां जानाति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीत्येवं स्वापे दोषं दृष्ट्वा पुनरुपससादेत्यर्थः । तं प्रजापतिरुवाचैतं त्वेवेति प्रकृतमेवाऽऽत्मानं ते तुभ्यं पुनरपि व्याख्यास्यामि नैतस्मादन्यमित्युपक्रमार्थः । तथाऽपि जीवस्यापहतपाप्मत्वाद्युपगमेऽध्यक्षादिविरोधो न हेत्वधीनस्य देहोत्तरकालं जीवेऽपि योगादित्याह—शरीरेति । मघवन्मर्त्यं वा इदमित्यादिना देहसंबन्धं निन्दित्वा तस्मादुत्थितं जीवमेवोत्तमपुरुषमेष संप्रसादोऽस्मादित्यादिना दर्शयतीति योजना

**त्थितमुत्तमं पुरुषं दर्शयति ॥ तस्मादस्ति सम्भवो जीवे पारमेश्वराणां धर्माणाम् ॥ अतो "दहरोऽस्मिन्नन्तराकाशः" [ छां० ८ । १ । १ ] इति जीव एवोक्त इति चेत्कश्चिद् ब्रूयात्, तं प्रतिब्रूयादाविर्भूतस्वरूपस्त्विवति ॥ तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः ॥ नोत्तरस्मादपि वाक्यादिह जीवस्याशंका सम्भवतीत्यर्थः ॥ कस्मात् ॥ यतस्तत्राप्याविर्भूतस्वरूपो जीवो विवक्ष्यते ॥ आविर्भूतं स्वरूपमस्येत्याविर्भूतस्वरूपः ॥ भूतपूर्वगत्या जीववचनम् ॥ एतदुक्तं भवति ॥ "य एषोऽक्षिणि" [ छां० ८ । ७ । ४ ] इत्यक्षिलक्षितं द्रष्टारं निर्दिश्योदशरावब्राह्मणेनैनं शरी-**

रत्नप्रभा ।

८ । १२ । १ ] इति निन्दापूर्वकं जीवमेव दर्शयतीत्यर्थः । **तस्मात्** प्रजापतिवाक्यात् । **अतः** सम्भवासिद्धेः । सिद्धान्तयति—**तं प्रतीति** ॥ अवस्थात्रयाच्छोधनेनाविर्भूतम् । **शोधितत्वम्** अर्थस्य वाक्योत्थवृत्त्यभिव्यक्तत्वमित्यर्थः ॥ तर्हि सूत्रे पुँल्लिंगेन जीवोक्तिः कथं ? ज्ञानेन जीवत्वस्य निवृत्तत्वादित्यत आह—**भूतपूर्वेति** ॥ ज्ञानात्पूर्वमविद्यातत्कार्यप्रतिबिम्बितत्वरूपं जीवत्वमभूदिति कृत्वा ज्ञानानन्तरं ब्रह्मरूपोपि जीवनाम्नोच्यत इत्यर्थः ॥ विश्वतैजसप्राज्ञतुरीयपर्यायचतुष्टयात्मकप्रजापतिवाक्यस्य तात्पर्यमाह—**एतदिति** ॥ जन्मनाशवत्त्वात्प्रतिबिम्बवद्बिम्बदेहो नात्मेति ज्ञापनार्थं प्रजापतिरिन्द्रविरोचनौ प्रत्युवाच—"उदशरावे आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतम्" [ छां० ८ । ८ । १ ] इत्यादिब्राह्मणेनेत्याह—**उदशरावेति** ॥ उदकपूर्णे शरावे प्रतिबिम्बात्मानं देहं दृष्ट्वा स्वस्याज्ञातं यत्तन्मह्यं वाच्यमित्युक्तश्रुत्यर्थः ॥

भामती ।

ध्वजाभाव इति शङ्कार्थः । निराकरोति—**तं प्रतिब्रूयाद् आविर्भूतस्वरूपस्तु** । अयमभिसंधिः—पौर्वापर्यालोचनया तावदुपनिषदां शुद्धबुद्धमुक्तमेकमप्रपञ्चं ब्रह्म तदतिरिक्तं च सर्वं तद्विवर्तो रज्जोरिव भुजङ्ग इत्यत्र तात्पर्यमवगम्यते । तथा च जीवोऽप्यविद्याकल्पितदेहेन्द्रियाद्युपहितं रूपं ब्रह्मणो न तु स्वाभाविकः । एवं च नापहतपाप्मत्वादयस्तस्मिन्नविद्योपाधौ संभविनः । आविर्भूतब्रह्मरूपे तु निरुपाधौ संभवन्तो ब्रह्मण एव न जीवस्य । एवं च ब्रह्मैवापहतपाप्मादिगुणं श्रुत्युक्तमिति तदेव दहराकाशो न जीव इति । स्यादेतत् । स्वरूपाविर्भावे चेद्ब्रह्मैव न जीवः, तर्हि विप्रतिषिद्धमिदमभिधीयते जीव आविर्भूतस्वरूप इति, अत आह—**भूतपूर्वगत्येति** ॥ **उदशरावब्राह्मणेनेति** । यथैव हि मघोनः प्रतिबिम्बान्युदशराव उपजनापायधर्मकाण्यात्मलक्षणविरहान्नात्मा, एवं देहेन्द्रियाद्यप्युपजनापायधर्मकं नात्मेत्युदशरावदृष्टान्तेन शरी-

आनन्दगिरीय—न्यायनिर्णयः ।

असंभवासिद्धिं निगमयति—**तस्मादिति** । हेत्वसिद्धिफलमाह—**अत इति** । सिद्धान्तमादत्ते—**तं प्रतीति** । आविर्भावस्य विशेषविषयत्वात्तदर्थस्तुशब्दो वृथेत्याशंक्याऽऽह—**तुशब्द इति** । पक्षव्यावृत्तिमेव स्फुटयति—**नेति** । इहेति दहरवाक्योक्तिः । पर्यायचतुष्टयस्य जीवार्थत्वात्कुतस्तदाशंका नेति शंकते—**कस्मादिति** । सौत्रं हेतुमाह—**यत इति** । पर्यायचतुष्टयं सप्तम्यर्थः । पुँल्लिङ्गसूचितं बहुव्रीहिसमासमाह—**आविर्भूतमिति** । तस्य ब्रह्मत्वात्कथं जीवो विशेष्यते तत्राऽऽह—**भूतेति** । अविद्यातत्कार्यप्रतिबिम्बितत्वेन चिद्धातोर्जीवभावोऽभूदिति बिम्बब्रह्मैक्यज्ञानेऽपि जीवत्वोक्तिरित्यर्थः । स्वरूपाविर्भावेऽपि जीवस्य जीवत्वानपायात्कुतो ब्रह्मतेत्याशंक्य प्राजापत्यवाक्यतात्पर्यमाह—**एतदिति** । अवस्थाविशेषविशिष्टस्य परैक्यायोगमाशंक्याऽऽह—**अक्षीति** । उपजनापायवत्त्वात्प्रतिबिम्बवदनात्मा देहादिरिति वक्तुमुदशराव आत्मानमवेक्ष्य यदात्मनो रूपं न विजानीथस्तन्मे ब्रूतमित्युत्तरो ग्रन्थ इत्याह—**उदशरावेति** । प्रकृतो द्रष्टा द्वितीयार्थः ।

रात्मतया व्युत्थाप्य "एतं त्वेव ते" [ छां ८ । ९ । ४ ] इति पुनस्तमेव व्याख्येयत्वेनाकृष्य स्वप्नसुषुप्तोपन्यासक्रमेण "परं ज्योतिरुपसम्पद्य स्वेन रूपेभिनिष्पद्यते" [ छां० ८ । १२ । २ ] इति ॥ यदस्य पारमार्थिकं स्वरूपं ब्रह्म, तद्रूपतयैनं जीवं व्याचष्टे ॥ न जैवेन रूपेण ॥ यत्परं ज्योतिरुपसम्पत्तव्यं श्रुतं तत्परं ब्रह्म ॥ तच्चापहतपाप्मत्वादिधर्मकम् ॥ तदेव च जीवस्य पारमार्थिकं स्वरूपम् । तत्त्वमसीत्यादिशास्त्रेभ्यः ॥ नेतरदुपाधिकल्पितम् ॥ यावदेव हि स्थाणाविव पुरुषबुद्धिं द्वैतलक्षणामविद्यां निर्वर्तयन्कूटस्थनित्यदृक्स्वरूपमात्मानमहं ब्रह्मास्मीति न प्रतिपद्यते, तावज्जीवस्य जीवत्वम् ॥ यदा तु देहेन्द्रियमनोबुद्धिसंघाताद्व्युत्थाप्य श्रुत्या प्रतिबोध्यते—नासि त्वं देहेन्द्रियमनोबुद्धिसंघातः, नासि संसारी—किं तर्हि—तद्यत्सत्यं स आत्मा चैतन्यमात्रस्वरूपस्तत्त्वमसीति, तदा कूटस्थनित्यदृक्स्वरूपमात्मानं प्रतिबुध्यास्माच्छरीराद्यभिमानात्समुत्तिष्ठन्स एव कूटस्थनित्यदृक्स्वरूप आत्मा भवति ॥ "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" [ मुण्ड० ३ । २ । ९ ] इत्यादिश्रुतिभ्यः ॥ तदेव चास्य पारमार्थिकं स्वरूपम् । येन शरीरात्समुत्थाय स्वेन रूपेणाभिनिष्पद्यते ॥

---

रत्नप्रभा ।

व्युत्थाप्य विचार्य अभिनिष्पद्यते इत्यत्रैतदुक्तं भवतीति **सम्बन्धः** । किमुक्तमित्यत आह—**यदस्येति** ॥ जीवत्वरूपेण जीवं न व्याचष्टे । लोकसिद्धत्वात् । किंतु तमनूद्य परस्परव्यभिचारिणीभ्योऽवस्थाभ्यो विविच्य ब्रह्मस्वरूपं बोधयति । अतो यद्ब्रह्म तदेवापहतपाप्मत्वादिधर्मकं न जीव इत्युक्तं भवति । शोधितस्य ब्रह्माभेदेन तद्धर्मोक्तिरित्यर्थः । एवमवस्थोपन्यासस्य विवेकार्थत्वान्न जीवलिङ्गत्वम् । एतदमृतमभयमेतद्ब्रह्मेतिलिंगोपेतश्रुतिविरोधादिति मन्तव्यम् । ननु जीवत्वब्रह्मत्वविरुद्धधर्मवतोः कथमभेदस्तत्राह—**तदेवेति** ॥ अन्वयव्यतिरेकाभ्यां जीवत्वस्याविद्याकल्पितत्वादविरोध इति मत्वा दृष्टान्तेनान्वयमाह—**यावदिति** । व्यतिरेकमाह—**यदेति** । अविद्यायां सत्यां जीवत्वं वाक्योत्थप्रबोधात्तन्निवृत्तौ तन्निवृत्तिरित्याविद्यकं तदित्यर्थः ॥ संसारित्वस्य कल्पितत्वे सिद्धं निगमयति—**तदेव चास्येति** ॥ "समुत्थाय परं ज्योतिरुप-

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

व्युत्थापनं बाधः । प्रकरणविच्छेदं व्यावर्तयति—**एतमिति** । अवस्थानां व्यभिचारित्वेन कल्पितत्वात्तदस्पृष्टं वस्तूपदेष्टुमवस्थोक्तिरिति तदुक्तिफलमाह—**स्वप्नेति** । परं ज्योतिरित्यादिश्रुतेस्तात्पर्यमाह—**यदिति** । परं ज्योतिरेवोपसंपत्तव्यं श्रूयते न ब्रह्मेत्याशंक्याऽऽह—**यत्तदिति** । यत्तु जीवस्य नापहतपाप्मत्वादीति तत्राऽऽह—**तच्चेति** । जीवस्य ब्रह्माभेदात्तद्रूपेण स्वाभाविकाविर्भूतापहतपाप्मत्वादिस्वरूपं तद्वदतिवाक्यमित्यर्थः । कथं मिथोविरुद्धयोर्जीवब्रह्मणोरैक्यं, तत्राऽऽह—**तदेवेति** । विरुद्धत्वबुद्धौ कथं शास्त्रमपि तद्बोधीत्याशंक्याऽऽह—**नेतरदिति** । प्रातीतिकविरुद्धाकारस्यौपाधिकत्वादागमावगतं स्वाभाविकमैक्यमविरुद्धमित्यर्थः । अविद्यान्वयव्यतिरेकाभ्यां संसारित्वस्याविद्यात्वं वक्तुं दृष्टान्तेनान्वयमाह—**यावदिति** । व्यतिरेकमाह—**यदेति** । व्युत्थापनद्वारा प्रतिबोधनमभिनयति—**नासीति** । व्युत्थापनफलमसंसारित्वमुक्त्वा तत्फलमाकांक्षापूर्वकमाह—**किमिति** । शास्त्रीयमात्मज्ञानमनूद्य तत्फलमाह—**तदेति** । विदुषो ब्रह्मत्वे मानमाह—**स इति** । किमित्यन्यतरस्य कल्पितत्वं द्वयोरपि वस्तुत्वं किं न स्यात्तत्राऽऽह—**तदेवेति** । शरीरविशिष्टं रूपं कल्पितमन्यथा तस्माद्व्युत्थितस्य स्वेनाभिनिष्पत्त्ययोगादित्यर्थः । स्वेन रूपेणाभिनिष्-

**कथं पुनः स्वं च रूपं स्वेनैव च निष्पद्यत इति सम्भवति कूटस्थनित्यस्य। सुवर्णादीनां तु द्रव्यान्तरसम्पर्कादभिभूतस्वरूपाणामनभिव्यक्ताऽसाधारणविशेषाणां क्षारप्रक्षेपादिभिश्शोध्यमानानां स्वरूपेणाभिनिष्पत्तिः स्यात्। तथा नक्षत्रादीनामहन्यभिभूतप्रकाशानामभिभावकवियोगे रात्रौ स्वरूपेणाभिनिष्पत्तिः स्यात्। न तु तथा चैतन्यज्योतिषो नित्यस्य केनचिदभिभवः सम्भवति। असंसर्गित्वाद्, व्योम्न इव दृष्टविरोधाच्च। दृष्टिश्रुतिमतिविज्ञातयो हि जीवस्य स्वरूपम्। तच्च शरीरादसमुत्थितस्यापि जीवस्य सदा निष्पन्नमेव दृश्यते। सर्वो हि जीवः पश्यञ्छृण्वन्मन्वानो विजानन्व्यवहरति। अन्यथा व्यवहारानुपपत्तिः। तच्चेच्छरीरात्समुत्थितस्य निष्पद्येत। प्राक्समुत्थानाद्दृष्टो व्यवहारो विरुध्येत। अतः**

रत्नप्रभा।

संपद्य स्वेन रूपेणाभिनिष्पद्यते'' [ छां० ८। १२। २ ] इति श्रुतिं व्याख्यातुमाक्षिपति–**कथं पुनरित्यादिना**॥ कूटस्थनित्यस्य स्वं रूपमित्यन्वयः। मलसङ्गिनो हि क्रियया मलनाशादभिव्यक्तिः, न तु कूटस्थस्यासंगिन इत्याह–**सुवर्णेति**॥ द्रव्यान्तरं पार्थिवो मलः॥ **अभिभूतेति**। अस्य व्याख्यानमनभिव्यक्तेति। **असाधारणो** भास्वरत्वादिः। **अभिभावकः** सौरालोकः। जीवस्वरूपस्याभिभवे बाधकमाह–**दृष्टीति**॥ "विज्ञानघन एव" [ बृ० २। ४। १२ ] इति श्रुत्या चिन्मात्रस्तावदात्मा। तच्चैतन्यं चक्षुरादिजन्यवृत्तिव्यक्तं दृष्ट्यादिपदवाच्यं सद्व्यवहारांगं जीवस्य स्वरूपं भवतीति तस्याभिभूतत्वे दृष्टो व्यवहारो विरुध्येत। हेत्वभावाद्व्यवहारो न स्यादित्यर्थः। अज्ञस्यापि स्वरूपं वृत्तिषु व्यक्तमित्यंगीकार्यम्। व्यवहारदर्शनादित्याह–**तच्चेति**॥ अन्यथेत्युक्तं स्फुटयति–**तच्चेदिति**॥ स्वरूपं चेज्ज्ञानिन एव व्यज्येत, ज्ञानात्पूर्वं व्यवहारोच्छित्तिरित्यर्थः॥ **अतः** सदैव व्यक्तस्वरूपत्वादित्यर्थः। सदा वृत्तिषु व्यक्तस्य

भामती।

रात्मताया व्युत्थानं बाध इति चोदयति–**कथं पुनः स्वं च रूपमिति**। द्रव्यान्तरसंसृष्टं हि तेनाभिभूतं तस्माद्विविच्यमानं व्यज्यते हेमतारकादि। कूटस्थनित्यस्य पुनरन्येनासंसृष्टस्य कुतो विवेचनाद-

आनन्दगिरीय-न्यायनिर्णयः।

त्तिरित्यत्र विरोधं चोदयति–**कथमिति**। तत्र हेतुं सूचयति–**कूटस्थेति**। विशेषणव्यावृत्तिमाह–**सुवर्णादीनामिति**। पार्थिवं रजो द्रव्यान्तरम्। असाधारणो विशेषः स्वर्णत्वभास्वरत्वादिः। दाहच्छेदादिसंग्रहार्थमादिपदम्। स्वर्णादिवन्नक्षत्रादीनामभिभावकद्रव्यसंपर्कविनाशेऽपि स्वरूपाभिनिष्पत्तिवत्प्रकृतेऽपि स्यादित्याशंक्याऽऽह–**तथेति**। स्वर्णादीनामिवेति यावत्। अभिभावकं सावित्रं तेजोऽभीष्टम्। दार्ष्टान्तिके वैषम्यमाह–**न त्विति**। द्रव्यान्तरसंसृष्टं तेनाभिभूतं ततो विविक्तमभिव्यक्तिमर्हति कूटस्थनित्यं त्वन्येनासंपृक्तमसङ्गाद्वितीयं ततो विवेकद्वारा नाभिव्यक्तिभागित्यर्थः। वस्तुतोऽसंसर्गित्वे व्योमोदाहरणम्। जीवस्याभिभूतस्वरूपतया ज्ञानात्तदभिव्यक्तिः स्वरूपेणाभिनिष्पत्तिरित्याशंक्याऽऽह–**दृष्टेति**। जीवस्वरूपस्यानभिव्यक्तौ दृष्टः सर्वो व्यवहारो विरुध्येत। तस्याहमिति तद्धीपूर्वकत्वात्तथा च तदनभिव्यक्तिरयुक्तेत्यर्थः। उक्तमेव व्यक्तीकुर्वन्नादौ तदीयं स्वरूपमनुवदति–**दृष्टीति**। 'विज्ञानघन एव' इत्यादिश्रुतेश्चिन्मात्रस्वभावस्तावदात्मा तच्चैतन्यं चक्षुरादिद्वारा व्यज्यमानं दृष्ट्यादिशब्दितमतो दृष्ट्यादयोऽस्य स्वरूपमित्यर्थः। अथोक्तं रूपमदेहस्यैव व्यज्यते सदेहस्य तद्व्यक्तिविरोधित्वान्न हि देहसंबन्धे जीवस्यासाधारणं रूपं प्रकटीभवति। तत्राऽऽह–**तच्चेति**। तामेव दृष्टिं व्याचष्टे–**सर्वो हीति**। सदा दृष्ट्यादिरूपं जीवस्य व्यक्तमित्यत्रार्थापत्तिमाह–**अन्यथेति**। अनुपपत्तिमेव स्फुटयति–**तच्चेदिति**। दृष्ट्यादिरूपं सर्वनामार्थः। निष्पत्तिरभिव्यक्तिः। जीवस्य सदा स्वरूपव्यक्तौ फलितमाह–**अत इति**। कालपरिपाकनिमित्तं प्रयत्नविशेषनिमित्तं

किमात्मकमिदं शरीरात्समुत्थानं किमात्मिका च स्वरूपेणाभिनिष्पत्तिः—इति ॥ अत्रोच्यते ॥ प्राग्विवेकविज्ञानोत्पत्तेः शरीरेन्द्रियमनोबुद्धिविषयवेदनोपाधिभिरविविक्तमिव जीवस्य दृष्ट्यादि ज्योतिस्स्वरूपं भवति । यथा शुद्धस्य स्फटिकस्य स्वाच्छयं शौक्ल्यं च स्वरूपं प्राग्विवेकग्रहणाद्रक्तनीलाद्युपाधिभिरविविक्तमिव भवति ॥ प्रमाणजनितविवेकग्रहणात्तु पराचीनस्फटिकः स्वाच्छ्येन शौक्ल्येन च स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते, प्रागपि तथैव सन्, तथा देहाद्युपाध्यविविक्तस्यैव सतो जीवस्य श्रुतिकृतं विवेकविज्ञानं शरीरात्समुत्थानं विवेकविज्ञानफलं स्वरूपेणाभिनिष्पत्तिः केवलात्मस्वरूपावगतिः ॥

---

रत्नप्रभा ।

वस्तुतोऽसङ्गस्यात्मन आविद्यकदेहाद्यविवेकरूपस्य मलसङ्गस्य सत्त्वात्तद्विवेकापेक्षया समुत्थानादिश्रुतिरित्युत्तरमाह—अत्रेति ॥ वेदना हर्षशोकादिः । अविविक्तमिवेति तादात्म्यस्य सङ्गस्य कल्पितत्वमुक्तम् । तत्र कल्पितसंगे दृष्टान्तः—यथेति ॥ श्रुतिकृतमिति । त्वंपदार्थश्रुत्या "योऽयं विज्ञानमयः प्राणेषु" [ बृ० ४ । ४ । २२ ] इत्याद्यया सिद्धमित्यर्थः । प्राणादिभिन्नशुद्धत्वम्पदार्थज्ञानस्य वाक्यार्थसाक्षात्कारः फलमित्याह—केवलेति ॥ सशरीरत्वस्य सत्यत्वात्समुत्थानमुत्क्रान्तिरिति व्याख्येयम् । न विवेक इत्याशंक्याह—

भामती ।

भिव्यक्तिः । न च संसारावस्थायां जीवोऽनभिव्यक्तः । दृष्ट्यादयो ह्यस्य स्वरूपं, ते च संसारावस्थायां भासन्त इति कथं जीवरूपं न भासत इत्यर्थः । परिहरति—प्राग्विवेकज्ञानोत्पत्तेरिति । अयमर्थः—यद्यप्यस्य कूटस्थनित्यस्यान्यसंसर्गो न वस्तुतोऽस्ति, यद्यपि च संसारावस्थायामस्य दृष्ट्यादिरूपं चकास्ति, तथाप्यनिर्वाच्यानाद्यविद्यावशादविद्याकल्पितैरेव देहेन्द्रियादिभिरसंसृष्टमपि संसृष्टमिव विविक्तमप्यविविक्तमिव दृष्ट्यादिरूपमस्य प्रथते । तथा च देहेन्द्रियादिगतैस्तापादिभिस्तापादिमदिव भवतीति । उपपादितं चैतद्विस्तरेणाध्यासभाष्य इति नेहोपपाद्यते । यद्यपि स्फटिकादयो जपाकुसुमादिसंनिहिताः, संनिधानं च संयुक्तसंयोगात्मकम्, तथा च संयुक्ताः, तथापि न साक्षाज्जपादिकुसुमसंयोगिन इत्येतावता दृष्टान्तिता इति । वेदना हर्षभयशोकादयः । दार्ष्टान्तिके योजयति—तथा देहादीति । 'संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्येतद्विभजते—श्रुतिकृतं विवेकविज्ञानमिति । तदनेन श्रवणमननध्यानाभ्यासाद्विवेकविज्ञानमुक्त्वा तस्य विवेकविज्ञानस्य फलं केवलात्मरूपसाक्षात्कारः स्वरूपेणाभिनिष्पत्तिः, स च साक्षात्कारो वृत्तिरूपः प्रपञ्चमात्रं प्रविलापयन् स्वयमपि प्रपञ्चरूपत्वात्कतकफलवत्प्रलीयते । तथा च निर्मृष्टनिखिलप्रपञ्चजालमनुपसर्गमपराधीनप्रकाशमात्मज्योतिः सिद्धं भवति । तदिदमुक्तम्—परं ज्योतिरुपसंपद्येति । अत्र चोपसंपत्तावुत्तरकालायामपि क्त्वाप्रयोगो मुखं व्यादाय स्वपितीतिवन्मन्तव्यः । यदा

आनन्दगिरीय—न्यायनिर्णयः ।

वेति संदेहादाह—किमिति । कालकृतप्रतिबन्धध्वंसोपाधिका वा पुरुषव्यापारोपाधिका वेति संशयादुक्तम्—किमात्मिकेति । वस्तुतोऽसंसर्गेऽपि देहादिभिरविद्यया संसृष्टमिवास्य दृष्ट्यादिरूपमतस्तद्विवेकापेक्षया स्वरूपाभिनिष्पत्तिरित्युत्तरमाह—अत्रेति । वेदना हर्षादयः । मिथ्यासंसृष्टत्वे दृष्टान्तः—यथेति । विवेकादूर्ध्वं स्वरूपेणाभिनिष्पत्तिरपि दृष्टेत्याह—प्रमाणेति । उच्यत इत्युक्तितात्पर्यमाह—प्रागपीति । शरीरात्समुत्थायेत्यादिश्रुत्यर्थं दर्शयन्दार्ष्टान्तिकमाह—तथेति । श्रुतिकृतमन्वयव्यतिरेकसहितया 'योऽयं विज्ञानमयः' इत्यादिश्रुत्या सिद्धमिति यावत् । विवेकज्ञानं त्वंपदार्थशोधनम् । स्वरूपाभिनिष्पत्तिमेव विवेकफलभूतं विशिनष्टि—केवलेति । ननु देहादुत्थानं नामोत्क्रमणं न पदार्थशोधनं सदेहत्वं च वास्तवं नाऽविद्यं

तथा विवेकाविवेकमात्रेणैवात्मनोऽशरीरत्वं सशरीरत्वं च मन्त्रवर्णात् । "अशरीरं शरीरेषु"[कठ०१।२।२२]इति "शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते" [ भग०गी०१३।३१ ] इति च सशरीरत्वाशरीरत्वविशेषाभावस्मरणात् ॥ तस्माद्विवेकविज्ञानाभावादनाविर्भूतस्वरूपः सन्विवेकविज्ञानादाविर्भूतस्वरूप इत्युच्यते ॥ न त्वन्यादृशावाविर्भावानाविर्भावौ स्वरूपस्य सम्भवतः । स्वरूपत्वादेव ॥ एवं मिथ्याज्ञानकृत एव जीवपरमेश्वरयोर्भेदः । न वस्तुकृतः । व्योमवदसङ्गत्वाविशेषात् ॥ कुतश्चैतदेवं प्रतिपत्तव्यम् । यतः "य एषोऽक्षिणि पुरुषो दृश्यते" [ छां० ८ । ७ । ४ ] इत्युपदिश्य "एतदमृतमभयमेतद्ब्रह्म" [ छां० ८ । ७ । ४ ] इत्युपदिशति । योऽक्षिणि प्रसिद्धो द्रष्टा द्रष्टृत्वेन विभाव्यते सोऽमृताऽभयलक्षणाद्ब्रह्मणोऽन्यश्चेत्स्यात्ततोऽमृताऽभयब्रह्मसामानाधिकरण्यं न स्यात् ॥

रत्नप्रभा ।

**तथा विवेकेति** ॥ उक्तश्रुत्यनुसारेणेत्यर्थः । "शरीरेष्वशरीरम् अवस्थितम्" [ कठ० १ । २ । २२ ] इति श्रुतेः । अविवेकमात्रकल्पितं सशरीरत्वम् । अतो विवेक एव समुत्थानमित्यर्थः । **ननु** स्वकर्मार्जिते शरीरे भोगस्यापरिहार्यत्वात् कथं जीवत एव स्वरूपाविर्भाव इत्यत आह—**शरीरस्थोऽपीति** ॥ अशरीरवच्छरीरस्थस्यापि बन्धाभावस्मृतेर्जीवतो मुक्तिर्युक्तेत्यर्थः । अविरुद्धे श्रुत्यर्थे सूत्रशेषोक्तयुक्तमित्याह—**तस्मादिति** ॥ **अन्यादृशौ** । सत्यावित्यर्थः । ज्ञानाज्ञानकृतौ आविर्भावतिरोभावाविति स्थिते भेदोऽप्यंशांशित्वकृतो निरस्त इत्याह—**एवमिति** ॥ अंशादिशून्यत्वम् **असंगत्वम्** । आत्मा, द्रव्यत्वव्याप्यजातिशून्यः, विभुत्वात्, व्योमवदित्यात्मैक्यसिद्धेर्भेदो मिथ्येत्यर्थः । प्रजापतिवाक्याच्च भेदो मिथ्येत्याकांक्षापूर्वकमाह—**कुतश्चेत्यादिना** ॥ एतद्भेदस्य सत्यत्वमेव नास्तीति कुत इत्यन्वयः ।

भामती ।

च विवेकसाक्षात्कारः शरीरात्समुत्थानं, न तु शरीरापादानकं गमनम्, तदा तत्सशरीरस्यापि संभवति प्रारब्धकार्यकर्मक्षयस्य पुरस्तादित्याह—**तथा विवेकाविवेकमात्रेणेति** । न केवलं 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिभ्यो जीवस्य परमात्मनोऽभेदः, प्राजापत्यवाक्यसंदर्भपर्यालोचनयाप्येवमेव प्रतिपत्तव्यमित्याह—**कुतश्चैतदेवं प्रतिपत्तव्यमिति** । स्यादेतत् । प्रतिच्छायात्मवज्जीवं परमात्मनो वस्तुतो भिन्नमप्यमृताभयात्मत्वेन ग्राहयित्वा पश्चात्परमात्मानममृताभयादिमन्तं प्रजापतिर्ग्राहयति, न त्वयं

आनन्दगिरीय—न्यायनिर्णयः ।

प्रसिद्धिविरोधात्तत्राऽऽह—**तथेति** । उक्तश्रुत्यनुरोधेनेति यावत् । देहासंबन्धिनो देहे स्थितिरित्युक्ते विरोधं निरसितुं विवेकतोऽदेहत्वमविवेकतः सदेहत्वं मान्त्रवर्णिकमित्यर्थः । स्वकर्मार्जिते देहे दुःखादिभोगस्यावर्जनीयत्वान्न जीवतः स्वरूपाविर्भाव इत्याशंक्याऽऽह—**शरीरेति** । अशरीरवदित्यपेरर्थः । जीवतोऽपि स्वरूपस्याऽऽविर्भावः स्यादिति शेषः । अविरुद्धे श्रुत्यर्थे सौत्रमाविर्भावपदं युक्तमित्याह—**तस्मादिति** । मुख्यावेव तौ किं न स्यातां तत्राऽऽह—**न त्विति** । ज्ञानाज्ञानाभ्यामाविर्भावानाविर्भावावित्येवं स्थिते सत्यंशांशित्वादिकृतो भेदोऽपि निरस्त इत्याह—**एवमिति** । न्यायसहितश्रुत्या जीवब्रह्मणोर्भेदो मिथ्येत्युक्त्वा संप्रति प्राजापत्यवाक्यादपि तद्भेदो मिथ्येत्याह—**कुतश्चेति** । एतद्भिन्नस्य जीवस्याप्रतिपाद्यत्वम् । तन्नास्तित्वमेवमित्युच्यते । कुतःशब्दोक्तं हेत्वन्तरं स्फोरयति—**यत इति** । अतो ब्रह्म प्रत्यग्भूतमत्र प्रतिपाद्यमिति शेषः । उक्तं व्यतिरेकेण विवृणोति—**योऽक्षिणीति** । श्रुतिलिङ्गाभ्यां केवलं जीवलिङ्गं बाधित्वा जीवो ब्रह्मतयोच्यते नान्यत्वेनेत्यर्थः । प्रतीकाभिप्रायेण च्छायया ब्रह्मणः सामानाधिकरण्यं न जीवेनेति नास्ति लिङ्गमित्या-

नापि प्रतिच्छायात्माऽयमक्षिलक्षितो निर्दिश्यते ॥ प्रजापतेर्मृषावादित्वप्रसङ्गात् ॥ तथा द्वितीयेऽपि पर्याये "य एष स्वप्ने महीयमानश्चरति" [छां० ८।१०।१] इति न प्रथमपर्यायनिर्दिष्टादक्षिपुरुषाद्द्रष्टुरन्यो निर्दिष्टः ॥ "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" [छां० ८।९।३] इत्युपक्रमात् ॥ किं चाहमद्य स्वप्ने हस्तिनमद्राक्षं, नेदानीं तं पश्यामीति दृष्टमेव प्रतिबुद्धः प्रत्याचष्टे ॥ द्रष्टारं तु तमेव प्रत्यभिजानाति य एवाहं स्वप्नमद्राक्षं स एवाहं जागरितं पश्यामीति ॥ तथा तृतीयेऽपि पर्याये "न हि खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति, नो एवेमानि भूतानि" [छां० ८।११।२] इति सुषुप्तावस्थायां विशेषविज्ञानाभावमेव दर्शयति । न विज्ञातारं प्रतिषेधति ॥ यत्तु तत्र "विनाशमेवापीतो भवति" [छां० ८।११।१] इति, तदपि विशेषविज्ञानविनाशाभिप्रायमेव । न विज्ञातृविनाशाभिप्रायम् ॥ "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते अविनाशित्वात्" [बृ० ४।३।३०] इति

रत्नप्रभा ।

छायायां ब्रह्मदृष्टिपरमिदं वाक्यं, नाभेदपरमित्यत आह—नापीति ॥ यस्य ज्ञानात्कृतकृत्यता सर्वकामप्राप्तिस्तमात्मानमन्विच्छाव इति प्रवृत्तयोरिन्द्रविरोचनयोर्यद्यनात्मच्छायां प्रजापतिर्ब्रूयात्तदा मृषावादी स्यादित्यर्थः । प्रथमवद्द्वितीयादिपर्याये व्यावृत्तास्ववस्थासु अनुस्यूतात्मा ब्रह्मत्वेनोक्त इत्याह—तथेति ॥ अवस्थाभेदेऽप्यनुस्यूतौ युक्तिमाह—किंचेति ॥ सुषुप्तौ ज्ञातुर्व्यावृत्तिमाशंक्याह—तथा तृतीय इति ॥ सुषुप्तौ निर्विकल्पज्ञानरूप आत्मास्तीत्यत्र बृहदारण्यकश्रुतिमाह—न हीति ॥ बुद्धेस्साक्षिणो नाशो

भामती ।

जीवस्य परमात्मभावमाचष्टे छायात्मन इवेत्यत आह—नापि प्रतिच्छायात्मायमक्षिलक्षित इति । अक्षिलक्षितोऽप्यात्मैवोपदिश्यते न च्छायात्मा । तस्मादसिद्धो दृष्टान्त इत्यर्थः । किंच, द्वितीयादिष्वपि पर्यायेषु 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इत्युपक्रमात्प्रथमपर्यायनिर्दिष्टो न छायापुरुषः, अपि तु ततोऽन्यो द्रष्टात्मेति दर्शयति, अन्यथा प्रजापतेः प्रतारकत्वप्रसङ्गादित्यत आह—तथा द्वितीयेऽपीति । अथ छायापुरुष एव जीवः कस्मान्न भवति । तथा च छायापुरुष एवैतमिति परामृश्यत इत्यत आह—किंचाहमद्य स्वप्ने हस्तिनमिति । किंचेति समुच्चयाभिधानं पूर्वोपपत्तिसाहित्यं ब्रूते, तच्च शङ्कानिराकरणद्वारेण । छायापुरुषोऽस्थायी, स्थायी चायमात्मा चकास्ति, प्रत्यभिज्ञानादित्यर्थः । न हि खल्वयमेवमिति । अयं सुषुप्तः । संप्रति सुषुप्तावस्थायाम् । अहमात्मानमहंकारास्पदमात्मानम् । न जानाति । केन प्रकारेण न जानातीत्यत आह—अयमहमस्मीमानि भूतानि चेति । यथा जागृतौ स्वप्ने

आनन्दगिरीय—न्यायनिर्णयः ।

शंक्याऽऽह—नापीति । उपास्तिविध्यश्रवणात्प्रतिपादकत्वसंभवे प्रतीकोक्तिकल्पनायोगादात्मान्वेषणाय प्रवृत्तयोः सुरासुरराजयोरनात्मानं वदन्प्रजापतिर्मृषावादी विप्रलम्भकः स्यादतो ब्रह्मणो जीवेन सामानाधिकरण्याल्लिङ्गासिद्धिरित्यर्थः । द्वितीये पर्याये जीवस्यावस्थावैशिष्ट्यदृष्टेराद्येऽपि पर्याये न ब्रह्मैक्यमिष्टमित्याशंक्याऽऽह—तथेति । आद्ये पर्याये जीवब्रह्मसामानाधिकरण्यात्तदैक्यवदित्यर्थः । अवस्थानां व्यभिचारित्वाज्जीवस्यासङ्गत्वाद्युक्ता द्वितीयपर्यायस्यैक्यपरतेति भावः । अवस्थाव्यभिचारे तद्वतोऽपि तद्भावात्कुतोऽसङ्गतेत्याशंक्याऽऽह—किंचेति । आत्मनो ज्ञानरूपत्वात्तस्य च स्वापेऽभावात्कथं तदव्यभिचारितेत्याशंक्याऽऽह—तथेति । पर्यायद्वयं दृष्टान्तयितुं तथेत्युक्तम् । विज्ञातृनिषेधे परामर्शासिद्धिरिति भावः । ज्ञातुरभावोक्तिरपि तत्रास्तीत्याशंक्याऽऽह—यत्त्विति । तत्र बृहदारण्यकश्रुतिं संवादयति—न हीति । आत्मनः

श्रुत्यन्तरात् ॥ तथा चतुर्थेऽपि पर्याये "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद्" [ छां० ८ । ११ । ३ ] इत्युपक्रम्य "मघवन्मर्त्यं वा इदꣳ शरीरम्" [ छां० ८ । १२ । १ ] इत्यादिना प्रपञ्चेन शरीराद्युपाधिसम्बन्धप्रत्याख्यानेन सम्प्रसादशब्दोदितं जीवं "स्वेन रूपेणाभिनिष्पद्यते" [ छां० ८ । १२ । २ ] इति ब्रह्मस्वरूपापन्नं दर्शयन्न परस्माद्ब्रह्मणोऽमृताभयस्वरूपादन्यं जीवं दर्शयति ॥ केचित्तु परमात्मविवक्षायाम् "एतं त्वेव ते" [ छां० ८ । ९ । ४ ] इति जीवाकर्षणमन्याय्यं मन्यमाना एतमेव वाक्योपक्रमसूचितमपहतपाप्मत्वादिगुणकमात्मानं "ते भूयोऽनुव्याख्यास्यामि" [ छां० ८ । ९ । ४ ] इति कल्पयन्ति ॥ तेषामेतमिति सन्निहितावलम्बिनी सर्वनामश्रुतिर्विप्रकृष्येत ॥ भूयश्श्रुतिश्चोपरुध्येत ॥ पर्यायान्तराभिहितस्य पर्यायान्तरेऽनभिधीयमानत्वात् ॥ "एतं त्वेव ते" [ छां० ८ । ९ । ४ ] इति च प्रतिज्ञाय प्राक् चतुर्थात्पर्यायादन्यमन्यं व्याचक्षाणस्य प्रजापतेः प्रतारकत्वं प्रसज्येत ॥ तस्माद्यदविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृभोक्तृरागद्वेषादिदोषकलुषितमनेकानर्थ-

---

रत्नप्रभा ।

नास्ति । नाशकाभावादित्यर्थः । एवमवस्थाभिरसङ्गत्वेनोक्त आत्मैव तुरीयेऽपि ब्रह्मत्वेनोक्त इत्याह—**तथेति** ॥ श्रुतेरेकदेशिव्याख्यां दूषयति-**केचित्त्विति** ॥ जीवपरयोर्भेदादिति भावः । श्रुतिबाधान्मैवमित्याह-**तेषामिति**॥ सन्निहितो जीव एव सर्वनामार्थ इत्यर्थः । उक्तस्य पुनरुक्तौ भूय इति युज्यते । त्वत्पक्षे तूपक्रान्तपरमात्मनश्चतुर्थ एवोक्तेस्तद्बाध इत्याह—**भूय इति** ॥ लोकसिद्धजीवानुवादेन ब्रह्मत्वं बोध्यत इति स्वमतमुपसंहरति—**तस्मा-**

भामती ।

**च्चेति** । 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्' इत्यनेनाविनाशित्वं सिद्धवद्धेतूकुर्वता सुप्तोत्थितस्यात्मप्रत्यभिज्ञानमुक्तम्, य एवाहं जागरित्वा सुप्तः स एवैतर्हि जागर्मीति । आचार्यदेशीयमतमाह—**केचित्त्विति** । यदि ह्येतमित्यनेनानन्तरोक्तं चक्षुरधिष्ठानं पुरुषं परामृश्य तस्यात्मत्वमुच्येत ततो न भवेच्छायापुरुषः । न त्वेतदस्ति । वाक्योपक्रमसूचितस्य परमात्मनः परामर्शात् । न खलु जीवात्मनोऽपहतपाप्मत्वादिगुणसंभव इत्यर्थः । तदेतद्दूषयति—**तेषामेतमिति** । सुबोधम् । मतान्तरमाह—

आनन्दगिरीय—न्यायनिर्णयः ।

स्वभावभूतविज्ञप्तेर्नान्यथाभावो योग्यत्वादित्यर्थः । पर्यायत्रयवच्चतुर्थपर्यायालोचनायामपि ब्रह्माव्यतिरिक्तजीवस्य प्रतिपाद्यत्वमित्याह—**तथेति** । कथमुपहितस्यानुपहितपरैक्यमित्याशंक्याऽऽह—**मघवन्निति** । संप्रसादस्यैव परेणैक्यमुच्यते न जीवस्येत्याशंक्याऽऽह—**संप्रसादेति** । स्वरूपेणाभिनिष्पत्तिवचनाद्ब्रह्मस्वरूपापन्नत्वेऽपि न ततोऽन्यत्वं निरस्यते भिन्नाभिन्नत्वादित्याशंक्य विरोधादेकोपाधौ तदयोगादभेदाभावे स्वरूपाभिनिष्पत्तेरयुक्तत्वात्तद्गतभेदस्य कल्पितत्वमेवेत्याह—**नेति** । एकदेशिव्याख्यामनुवदति—**केचित्त्विति** । जीवस्यापहतपाप्मत्वाद्ययोगात्तदाकर्षणस्यान्याय्यत्वम् । कथं तर्हि प्रकृतानुगुणतया वाक्यं व्याख्यायत एतच्छब्देन पूर्वपर्यायेषु प्रकृतजीवानाकर्षणे तदालम्बनाभावाद्वाक्यार्थधियोऽनुदयात्तत्राऽऽह—**एतमिति**। सर्वनामश्रुत्या दूषयति—**तेषामिति**। किंचोपक्रमसूचितोऽर्थश्चतुर्थ एव पर्याये सर्वनामार्थः सर्वत्र वा ? तत्राऽऽद्यं प्रत्याह—**भूयःश्रुतिश्चेति** । उपक्रान्तोऽर्थः सर्वत्र सर्वनामार्थोऽपि न प्रतिपाद्यकोटिनिवेशीति द्वितीयमाशंक्याऽऽह—**एतं त्विति** । स्वयूथ्यमतायोगे फलितमाह—**तस्मादिति** । ब्रह्मैव जीवस्तदित्थं कथमित्याशंक्याऽऽह—**कर्त्रिति** । तस्य विलापनयोग्यतामाह—**अनेकेति** । कथं तर्हि तत्परिहाण्या पारमार्थिकरूपापत्तिरि-

योगि तद्विलयनेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं स्वरूपं विद्यया प्रतिपाद्यते ॥ सर्पादिविलयनेनेव रज्ज्वादीन् ॥ अपरे तु वादिनः पारमार्थिकमेव जैवं रूपमिति मन्यन्ते ॥ अस्मदीयाश्च केचित्तेषां सर्वेषामात्मैकत्वसम्यग्दर्शनप्रतिपक्षभूतानां प्रतिषेधायेदं शारीरकमारब्धम् ॥ एक एव परमेश्वरः कूटस्थनित्यो विज्ञानधातुरविद्यया मायया मायाविवदनेकधा विभाव्यते । नान्यो विज्ञानधातुरस्तीति ॥ यत्त्विदं परमेश्वरवाक्ये जीवमाशङ्क्य प्रतिषेधति सूत्रकारः–"नासम्भवाद्" [ व्या० सू० १ । ३ । १८ ] इत्यादिना ॥ तत्रायमभिप्रायः ॥ नित्यशुद्धबुद्धमुक्तस्वभावे कूटस्थनित्ये एकस्मिन्नसङ्गे

रत्नप्रभा ।

दिति ॥ व्याख्यानान्तरासम्भवादित्यर्थः । विलयनं शोधनम् । विद्यया महावाक्येनेति यावत् । ये तु संसारं सत्यमिच्छन्ति, तेषामिदं शारीरकमेवोत्तरमित्याह–अपरे त्वित्यादिना ॥ शारीरकस्यार्थं संक्षेपेणोपादिशति–एक एवेति ॥ अविद्यामाययोर्भेदं निरसितुं सामानाधिकरण्यम् । आवरणविक्षेपशक्तिरूपशब्दप्रवृत्तिनिमित्तभेदात् सह प्रयोगः । ब्रह्मैवाविद्यया संसरति । न ततोऽन्यो जीव इति शारीरकार्थ इत्यर्थः । तर्हि सूत्रकारः किमिति भेदं ब्रूते तत्राह–यत्त्विति ॥ परमात्मनोऽसंसारि-

भामती ।

अपरे तु वादिन इति । यदि न जीवः कर्ता भोक्ता च वस्तुतो भवेत्, ततस्तदाश्रयाः कर्मविधय उपरुध्येरन् । सूत्रकारवचनं च 'नासंभवात्' इति कुप्येत । तत्खलु ब्रह्मणो गुणानां जीवेऽसंभवमाह । न चाभेदे ब्रह्मणो जीवानां ब्रह्मगुणानामसंभवो जीवेष्विति तेषामभिप्रायः । तेषां वादिनां शारीरकेणैवोत्तरं दत्तम् । तथाहि–पौर्वापर्यपर्यालोचनया वेदान्तानामेकमद्वयमात्मतत्त्वं, जीवास्त्वविद्योपधानकल्पिता इत्यत्र तात्पर्यमवगम्यते । न च वस्तुसतो ब्रह्मणो गुणाः समारोपितेषु जीवेषु संभवन्ति । नो खलु वस्तुसत्या

आनन्दगिरीय–न्यायनिर्णयः ।

त्याशंक्य सदृष्टान्तमाह–तदिति । रज्ज्वादीनेषा रज्जुरित्यादिविद्यया पुरोवर्त्यधिष्ठानमिति शेषः । पौर्वापर्यालोचनया प्राजापत्यवाक्ये जीवानुवादेन ब्रह्मत्वं तस्येष्टमित्युक्तम् । संप्रति सूत्रसामर्थ्यात्प्रत्यक्षादिप्रामाण्याच्च जैवं रूपं वास्तवमिति मतान्तरमाह–अपरे त्विति । शारीरकमेव तेषामुत्तरमित्याह–तेषामिति । तत्प्रतिषेधार्थं नैतदारब्धं सम्यग्ज्ञानार्थत्वादित्याशङ्क्याऽऽह–आत्मेति । कथमिदमेव तेषामुत्तरमित्युक्ते तदर्थं संगृह्णाति–एक इति । तस्य परिणामित्वं वारयति–कूटस्थेति । ज्ञानादिगुणवत्त्वं प्रत्याह–विज्ञानेति । कथं तस्यैकत्वं चेतनाचेतनभेदधीविरोधादित्याशंक्याऽऽह–अविद्ययेति । माया ततोऽन्येति वादं व्युदसितुं माययेत्युक्तम् । साधारणासाधारणप्रपञ्चभेदस्याप्रामाणिकत्वादविद्यादिभेदे च मानाभावादेकस्मादेवाज्ञानाद्विचित्रशक्तितो विश्वधीसंभवे तद्भेदे गौरवान्न सोऽस्तीत्यर्थः । एकस्यानेकधा भानं नाविद्याऽपि दृष्टमित्याशंक्य विवर्तानुगुणं दृष्टान्तमाह–मायावीति । 'नान्योऽतोऽस्ति' इत्यादिश्रुतेरवधारणार्थमाह–नेति । शारीरकार्थसंक्षेपसमाप्ताविति शब्दः । श्रुतिसामर्थ्यादतिरिक्तजीवाभावेऽपि सूत्रसामर्थ्यादन्यो जीवोऽस्तीत्याशंक्याऽऽह–यत्त्विति । आदिशब्देन 'नेतरोऽनुपपत्तेः' इति गृह्यते । संसारिणो जीवाद्भेदोक्त्या यावदीश्वरस्यासंसारित्वं नोच्यते तावदभेदव्यपदेशेऽपि जीवस्यासंसारित्वं न सिध्यतीत्यापातिकं भेदं सूत्रकारोऽनुवदतीत्याह–तत्रेति । तत्रतत्र श्रुतिस्मृतीतिहासपुराणेषु प्रमितं परमात्मरूपमनूद्य ततो विपरीतं प्रातीतिकं जीवरूपं तत्र कल्पितमिति सोदाहरणमाह–नित्येति । कथं तर्हि तस्य निरसनमित्या-

परमात्मनि तद्विपरीतं जैवं रूपं व्योम्नीव तलमलादिपरिकल्पितं तदात्मैकत्वप्रतिपादनपरैर्वाक्यैर्न्यायोपेतैर्द्वैतवादप्रतिषेधैश्चापनेष्यामीति परमात्मनो जीवादन्यत्वं द्रढयति ॥ जीवस्य तु न परस्मादन्यत्वं प्रतिपिपादयिषति । किंत्वनुवदत्येवाविद्याकल्पितं लोकप्रसिद्धं जीवभेदम् ॥ एवं हि स्वाभाविककर्तृत्वभोक्तृत्वानुवादेन प्रवृत्ताः कर्मविधयो न विरुध्यन्त इति मन्यते ॥ प्रतिपाद्यं तु शास्त्रार्थमात्मैकत्वमेव दर्शयति—"शास्त्रदृष्ट्या तूपदेशो वामदेववद्" [ ब्र॰ सू॰ १।१।३० ] इत्यादिना ॥ वर्णितश्चास्माभिर्विद्वदविद्वद्भेदेन कर्मविधिविरोधपरिहारः ॥ १९ ॥

## अन्यार्थश्च परामर्शः ॥ २० ॥

अथ यो दहरवाक्यशेषे जीवपरामर्शो दर्शितः—"अथ य एष सम्प्रसादः"

रत्नप्रभा ।

त्वसिद्ध्यर्थं जीवाद्भेदं द्रढयति । तस्याऽसंसारित्वनिश्चयाभावे तदभेदोक्तावपि जीवस्य संसारित्वानपायादित्यर्थः ॥ अधिष्ठानस्य कल्पिताद्भेदेऽपि कल्पितस्याधिष्ठानान्न पृथक् सत्त्वमित्याह—**जीवस्य त्विति** ॥ कल्पितभेदानुमानस्य फलमाह—**एवं हीति** ॥ सूत्रेष्वभेदो नोक्त इति भ्रान्तिं निरस्यति—**प्रतिपाद्यमिति** ॥ "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" [ ब्र॰ सू॰ ४।१।३ ] इत्यादिसूत्राणि—**आदिपदार्थः** । नन्वद्वैतस्य शास्त्रार्थत्वे द्वैतापेक्षविधिविरोधस्तत्राह—**वर्णितश्चेति** ॥ अद्वैतमजानतः कल्पितद्वैताश्रया विधयो न विदुष इति सर्वमुपपन्नमित्यर्थः ॥ १९ ॥ एवं प्रजापतिवाक्ये जीवानुवादेन ब्रह्मण एवापहतपाप्मत्वाद्युक्तेः जीवे तदसम्भवान्न जीवो दहर इत्युक्तम् । तर्हि जीवपरामर्शस्य का गतिरित्यत आह—**अन्यार्थश्चेति** ॥ सूत्रं व्याचष्टे—**अथेत्यादिना** ॥ प्रकृते दहरे विशेषो गुणतस्तदुपदेशोऽपि नेत्यर्थः । तत्र

भामती ।

रज्ज्वा धर्माः सैव्यत्वादयः समारोपिते भुजङ्गे संभविनः । न च समारोपितो भुजङ्गो रज्ज्वा भिन्नः । तस्मान्न सूत्रव्याकोपः । अविद्याकल्पितं च कर्तृत्वभोक्तृत्वं यथालोकसिद्धमुपाश्रित्य कर्मविधयः प्रवृत्ताः, श्येनादिविधय इव निषिद्धेऽपि 'न हिंस्यात्सर्वा भूतानि' इति साध्यांशेऽभिचारेऽतिक्रान्तनिषेधं पुरुषमाश्रित्याविद्यावत्पुरुषाश्रयत्वाच्छास्त्रस्येत्युक्तम् । तदिदमाह—**तेषां सर्वेषामिति** ॥ १९ ॥ ननु ब्रह्म चेदत्र वक्तव्यं कृतं जीवपरामर्शेनेत्युक्तमित्यत आह—**अन्यार्थश्च परामर्शः** । जीवस्योपाधिकल्पितस्य ब्रह्मभाव उप-

आनन्दगिरीय-न्यायनिर्णयः ।

शंक्याऽऽह—**तदात्मेति** । वाक्यानि तत्त्वमसीत्यादीनि । जीवब्रह्मणोश्चैतन्याविशेषात्तदाकारेणाऽऽकारान्तरेण वा भेदायोगो न्यायः । नेह नानेत्यादयो द्वैतवादनिषेधाः । परस्य जीवादन्यत्वे तस्यापि ततोऽन्यत्वं स्यादित्याशंक्याऽऽह—**जीवस्येति** । अधिष्ठानस्याऽऽरोप्यादन्यत्वेऽपि न तस्याधिष्ठानादन्यतेत्यर्थः । कथं तर्हि तस्य परस्मादन्यत्वं तत्राऽऽह—**किंत्विति** । अनुवादस्य प्रमित्यपेक्षां प्रत्याह—**अविद्येति** । अपूर्वत्वाभावाच्च तस्याप्रतिपाद्यतेत्याह—**लोकेति** । जीवभेदस्याप्रामाणिकत्वे कुतो निरधिकाराणां विधीनां प्रामाण्यमित्याशंक्यानुवादफलमाह—**एवं हीति** । ननु जीवब्रह्मणोरैक्यं न क्वापि सूत्रकारो मुखतो वदति किंतु सर्वत्र भेदमेवातो नैक्यमिष्टं तत्राऽऽह—**प्रतिपाद्यं त्विति** । आदिपदमात्मेति तूपगच्छन्तीत्यादिसंग्रहार्थम् 'विद्वान्यजेत' इत्यादिश्रुत्या कर्मस्वात्मविदोऽधिकारात्कर्तृत्वादेर्वास्तवत्वे कुतो जीवस्य ब्रह्मैक्यं तदैक्ये वा कुतो विधिविरोधो नेत्याशंक्य विशिष्टस्यामुख्यात्मत्वात्तद्विदश्च कर्माधिकारान्मुख्यात्मविद्यावतस्तत्त्यागाधिकारान्न काण्डयोर्विरोधोऽस्तीत्युक्तं स्मारयति—**वर्णितश्चेति** । ॥ १९ ॥ जीवानुवादेन ब्रह्मताविधाने विरोधाभावात्प्राजापत्यवाक्ये जीवस्याप्रतिपाद्यत्वान्न तदवष्टम्भेन दहरवाक्ये जीवाशंक्येत्युक्तमिदानीं दहरवाक्यशेषस्य गतिमाह—**अन्यार्थश्चेति** । सूत्रव्यावर्त्यां शंकामाह—**अथेति** । वाक्यभेदप्रसङ्ग

[छां०८।३।४] इत्यादिः, स दहरे परमेश्वरे व्याख्यायमाने न जीवोपासनोपदेशो न प्रकृतविशेषोपदेश इत्यनर्थकत्वं प्राप्नोतीत्यत आह—अन्यार्थोऽयं जीवपरामर्शः । न जीवस्वरूपपर्यवसायी ॥ किं तर्हि ? परमेश्वरस्वरूपपर्यवसायी ॥ कथम् ? सम्प्रसादशब्दोदितो जीवो जागरितव्यवहारे देहेन्द्रियपञ्जराध्यक्षो भूत्वा तद्वासनानिर्मितांश्च स्वप्नान्नाडीचरोऽनुभूय श्रान्तश्शरणं प्रेप्सुरुभयरूपादपि शरीराभिमानात्समुत्थाय सुषुप्तावस्थायां परं ज्योतिराकाशशब्दितं परं ब्रह्मोपसम्पद्य विशेषविज्ञानवत्त्वं च परित्यज्य स्वेन रूपेणाभिनिष्पद्यते, यदस्योपसम्पत्तव्यं परं ज्योतिः, येन स्वेन रूपेणायमभिनिष्पद्यते एष आत्मापहतपाप्मत्वादिगुण उपास्य इत्येवमर्थोऽयं जीवपरामर्शः परमेश्वरवादिनोऽप्युपपद्यते ॥ २० ॥

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

यदप्युक्तं "दहरोऽस्मिन्नन्तराकाशः" [ छां० ८ । १ । १ ] इत्याकाशस्याल्पत्वं श्रूयमाणं परमेश्वरे नोपपद्यते । जीवस्य त्वाराग्रोपमितस्याल्पत्वमवकल्पत इति ॥ तस्य परिहारो वक्तव्यः ॥ उक्तो ह्यस्य परिहारः परमेश्वरस्यापेक्षिकमल्पत्वमवकल्पत इति "अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च" [ व्या० सू० १ । २ । ७ ] इत्यत्र, स एव इह परिहारोऽनुसन्धातव्य इति सूचयति ॥ श्रुत्यैव चेदमल्पत्वं प्रत्युक्तं प्रसिद्धेनाकाशेनोपमिमानया—"यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृ—

---

रत्नप्रभा ।

दहरवाक्यशेषरूपं सम्प्रसादवाक्यमाशंकापूर्वकं दहरब्रह्मपरत्वेन व्याचष्टे—कथमित्यादिना ॥ २० ॥ उपास्यत्वादल्पत्वमुक्तमिति व्याख्याय श्रुत्या निरस्तमित्यर्थान्तरमाह—श्रुत्यैव चेदमिति ॥ एवं दहरवाक्यं प्रजापतिवाक्यं

भामती ।

देष्टव्यः, न चासौ जीवमपरामृश्य शक्य उपदेष्टुमिति तिसृष्ववस्थासु जीवः परामृष्टः । तद्भावप्रविलयनं तस्य पारमार्थिकं ब्रह्मभावं दर्शयितुमित्यर्थः ॥ २० ॥ अल्पश्रुतेरिति चेत्तदुक्तम् । निगदव्याख्या-

आनन्दगिरीय—न्यायनिर्णयः ।

हेतूक्त्योक्तं—न जीवेति । प्रकृतो विशेषो दहराकाशस्तस्यापि नायमुपदेशस्तस्याजीवत्वादित्याह—नेति । उत्तरत्वेन सूत्रमवतार्य व्याकरोति—अत इति । अन्यार्थत्वमेवाऽऽकांक्षाद्वारा स्फोरयति—किं तर्हीति । संप्रसादपदे जीववादिनि श्रुते नेश्वरपरत्वं वाक्यस्येत्याक्षिपति—कथमिति । व्याख्यया वाक्यस्य परस्मिन्नेव तात्पर्यमाह—संप्रसादेति । तादात्म्यविषयत्वं सम्बन्धविषयत्वं चोभयरूपत्वं देहद्वयविषयत्वं वा । यत्तु जीवस्य नापहतपाप्मत्वादीति तत्राऽऽह—यदिति ॥ २० ॥ जीवपरामर्शस्य गतिमुक्त्वा दहरश्रुतेः शंकाद्वारा गतिमाह—अल्पेति । शंकाभागं विभजते—यदपीति । तस्य परममहत्त्वादित्यर्थः । जीवेऽपि कथमल्पा श्रुतिर्महत्त्वाविशेषात्तत्राऽऽह—जीवस्येति । तदुक्तमित्येतद्व्याचष्टे—उक्तो हीति । तमेव स्मारयति—परमेति । कुत्रेदं समाधानमुक्तं तत्राऽऽह—अर्भकेति । तथाऽपि परस्य परममहतो नास्ति दहरत्वमित्यत्र किमायातं तत्राऽऽह—स एवेति । तदुक्तमित्यस्य व्याख्यान्तरमाह—श्रुत्येति । तदेवं श्रुतिलिङ्गाभ्यां दहरवाक्यं ध्येये परस्मिन्नन्वितं प्राजापत्यवाक्यं तु ज्ञेये परस्मिन्नन्वितमिति स्थितम् ॥ २१ ॥ ( ६ ) ॥ 'परं ज्योतिरुपसंपद्य' इत्यादिवाक्यार्थविचारप्रसङ्गात् 'तच्छुभ्रं ज्योतिषां ज्योतिः' इति वाक्योक्तपरज्योतिष्ट्वसाधकं न तत्रेत्या-

दय आकाशः" [ छां० ८। १। ३ ] इति ॥ २१ ॥ इत्युत्तराधिकरणम् ॥६॥

## अनुकृतेस्तस्य च ॥ २२ ॥ ( ७ )॥

"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" [ मुण्ड० २। २।११][कठ० ५।१५] इति समामनन्ति॥ तत्र-यं भान्तमनुभाति सर्वं यस्य च भासा सर्वमिदं विभाति, स किं तेजोधातुः कश्चिद् उत प्राज्ञ आत्मेति

रत्नप्रभा ।

च सगुणे निर्गुणे च समन्वितमिति सिद्धम् ॥२१॥ (६)॥ **अनुकृतेस्तस्य च** । मुण्डकवाक्यमुदाहरति-**न तत्रेति** ॥ तस्मिन्ब्रह्मणि विषये न भाति । तं न भासयतीति यावत् । यदा चन्द्रभास्करादिर्न भासयति, तदा अल्पदीप्तेरग्नेः का कथेत्याह-**कुत इति** ॥ किंच सर्वस्य सूर्यादेस्तद्भास्यत्वान्न तद्भासकत्वमित्याह-**तमेवेति** ॥ अनुगमनवदनुभानं स्वगतभानकृतमिति शङ्कां निरस्यति-**तस्येति** ॥ तत्रेति सप्तम्याः सति विषये च साधारण्यात्संशयमाह-**तत्रेति** ॥ पूर्वत्रात्मश्रुत्यादिबलादाकाशशब्दस्य रूढित्यागादीश्वरे वृत्तिराश्रिता, तथेहापि सतिसप्तमीबलाद्वर्तमानार्थत्यागेन यस्मिन्सति सूर्यादयो न भास्यन्ति स तेजोविशेष उपास्य इति भविष्यदर्थे वृत्तिराश्रयणीया । अधुना भासमाने सूर्यादौ न भातीति विरोधा-

भामती ।

तेन भाष्येण व्याख्यातम् ॥२१॥(६)॥ **अनुकृतेस्तस्य च** । 'अभानं तेजसो दृष्टं सति तेजोऽन्तरे यतः। तेजोधात्वन्तरं तस्मादनुकाराच्च गम्यते ॥' बलीयसा हि सौर्येण तेजसा मन्दं तेजश्चन्द्रतारकाद्यभिभूयमानं दृष्टं, न तु तेजसोऽन्येन । येऽपि पिधायकाः प्रदीपस्य गृहघटादयो न ते स्वभासा प्रदीपं भासयितुमीशते । श्रूयते च-'तस्य भासा सर्वमिदं विभाति' इति । सर्वशब्दः प्रकृतसूर्याद्यपेक्षः । न चातुल्यरूपेऽनुभानमित्यनुकारः संभवति । न हि गावो वराहमनुधावन्तीति कृष्णविहङ्गानुधावनमुपपद्यते गवाम्, अपि तु तादृशसूकरानुधावनम् । तस्माद्यद्यपि 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतम्' इति ब्रह्म प्रकृतं, तथाप्यभिभवानुकारसामर्थ्यलक्षणेन लिङ्गेन प्रकरणबाधया तेजोधातुरवगम्यते, न तु ब्रह्म, लिङ्गानुपपत्तेः । तत्र तं तस्येति च सर्वनामपदानि प्रदर्शनीयमेवावमृक्ष्यन्ति । न च तच्छब्दः पूर्वोक्तपरामर्शीति नियमः समस्ति । न हि 'तेन रक्तं रागात्' 'तस्यापत्यम्' इत्यादौ पूर्वोक्तं किंचिदस्ति । तस्मात्प्रमाणान्तराप्रतीतमपि तेजोऽन्तरमलौकिकं शब्दादुपास्यत्वेन गम्यत इति प्राप्ते उच्यते-'ब्रह्मण्येव हि तल्लिङ्गं न तु तेजस्यलौकिके । तस्मान्न तदुपास्यत्वं ब्रह्म ज्ञेयं तु गम्यते ॥' 'तमेव भान्तम्' इत्यत्र किमलौकिकं तेजः कल्पयित्वा सूर्यादीनामनुभानमुपपाद्यताम्, किंवा 'भारूपः सत्यसंकल्पः' इति श्रुत्यन्तरप्रसिद्धेन ब्रह्मणो

आनन्दगिरीय-न्यायनिर्णयः।

दिवाक्यं विमृशति-**अनुकृतेरिति** । आथर्वणवाक्यमादत्ते-**न तत्रेति** । सूर्यस्यानाभासकत्वेऽपि रात्राविव चन्द्रादेर्भासकत्वं नेत्याह-**नेति** । विद्युतामपि फल्गुत्वमनुभवसिद्धमिति मत्वोक्तं-**नेमा इति** । कैमुतिकन्यायमाह-**कुत इति** । इतश्च सूर्यादेर्न ब्रह्मणि भासकत्वमित्याह-**तमेवेति** । अनुगमनवदनुभानं स्वगतभानकृतमित्याशंक्याऽऽह-**तस्येति** । उक्ते वाक्ये विषयं निष्कृष्य सप्तम्याः सतिविषये च साधारण्यहेतोः संशयमाह-**तत्रेति** । पूर्वत्राऽऽत्मश्रुत्याद्यविरोधादाकाशशब्दस्य रूढित्यागेनेश्वरे वृत्तिरुक्ता तथेहापि सतिसप्तम्यां योग्यानुपलब्धिविरोधान्न भातीत्यस्य वर्तमानार्थतात्यागाद्यस्मिन्सति सूर्यो न भास्यति स

१ व्यासाधिकरणमालारीत्योत्तराधिकरणं पृथक्, कल्पतरुरीत्या तूत्तराधिकरणं नास्त्येव, एतदन्तं दहराधिकरणमेवेति सिद्धान्तः । २ तेन ब्रह्मणा भास्यत्वादित्यर्थः । ३ गच्छन्तमनुगच्छतीति प्रयोगप्रतीतानुगमनवत् ।

विचिकित्सायां तेजोधातुरिति तावत्प्राप्तम् ॥ कुतः ? तेजोधातूनामेव सूर्यादीनां भानप्रतिषेधात् । तेजस्स्वभावकं हि चन्द्रतारकादि तेजःस्वभावके एव सूर्ये भासमानेऽहनि न भासत इति प्रसिद्धम् ॥ तथा सह सूर्येण सर्वमिदं चन्द्रतारकादि यस्मिन्न भासते, सोऽपि तेजस्स्वभावक एव कश्चिदित्यवगम्यते ॥ अनुभानमपि तेजस्स्वभावक एवोपपद्यते । समानस्वभावकेष्वनुकारदर्शनात्॥ गच्छन्तमनुगच्छतीतिवत्॥तस्मात्तेजोधातुः कश्चिदिति ॥ एवं प्राप्ते ब्रूमः ॥ प्राज्ञ एवायमात्मा भवितुमर्हति ॥ कस्मात् ? "अनुकृतेः" । अनुकरणमनुकृतिः । यदेतत् "तमेव भान्तमनुभाति सर्वम्" [ मुण्ड०२।२।११ ] इत्यनुभानं, तत्प्राज्ञपरिग्रहेऽवकल्पते । "भारूपः सत्यसङ्कल्पः" [ छां० ३ । १४ । २ ] इति हि प्राज्ञमात्मानमामनन्ति ॥ न तु तेजोधातुं कश्चित्सूर्यादयोऽनुभान्तीति प्रसिद्धम् ॥ समत्वाच्च तेजोधातूनां सूर्यादीनाम् । न तेजोधातुमन्यं प्रत्यपेक्षास्ति ।

---

रत्नप्रभा ।

दिति दृष्टान्तेन पूर्वपक्षयति—**तेजोधातुरिति** ॥ तेजोध्यानं निर्गुणस्वयंज्योतिरात्मज्ञानमित्युभयत्र फलम् । तेजोधातुत्वे लिङ्गमाह—**तेजोधातूनामेवेति** ॥ यत्तेजसोऽभिभावकं तत्तेज इति व्याप्तिमाह—**तेजस्स्वभावकमिति** ॥ यस्मिन्सति यन्न भाति तदनु तद्भातीति विरुद्धमित्यत आह—**अनुभानमपीति** ॥ ततो निकृष्टभानं विवक्षितमिति भावः । मुख्यसम्भवे विवक्षानुपपत्तेर्मुख्यानुभानलिङ्गात्सर्वभासकः परमात्मा स्वप्रकाशकोऽत्र ग्राह्य इति सिद्धान्तमाह—**प्राज्ञ एवेति** ॥ प्राज्ञत्वं स्वप्रकाशकत्वं भासकत्वार्थमुक्तम् ॥ तत्र श्रुतिमाह—**भारूप इति** ॥ मानाभावाच्च तेजोधातुर्न ग्राह्य इत्याह—**न त्विति** ॥ किञ्च सूर्यादयः, तेजोऽन्तरभानमनु न भान्ति, तेजस्त्वात्, प्रदीपवदित्याह—**समत्वाच्चेति** ॥ योऽयमनुकरोति स तज्जा-

भामती ।

भानेन सूर्यादीनां भानमुपपाद्यतामिति विशये न श्रुतसंभवेऽश्रुतस्य कल्पना युज्यत इत्यप्रसिद्धं नालौकिकमुपास्यं तेजो युज्यते, अपि तु श्रुतिप्रसिद्धं ब्रह्मैवं ज्ञेयमिति । तदेतदाह—**प्राज्ञ एवात्मा भवितुमर्हति** । विरोधमाह—**समत्वाच्चेति** । ननु स्वप्रतिभाने सूर्यादयश्चाक्षुषं तेजोऽपेक्षन्ते । न ह्यन्धेनैते

आनन्दगिरीय—न्यायनिर्णयः ।

तेजोधातुरुपास्यत्वेनोच्यत इति पूर्वपक्षमाह—**तेज इति** । उक्तार्थर्वणश्रुतेर्निर्विशेषे ज्ञेये ब्रह्मण्यन्वयोक्तेः श्रुत्यादिसंगतयः । पूर्वपक्षे तेजोधातोर्ध्यानं सिद्धान्ते निर्विशेषब्रह्मधीरिति फलभेदः । सप्तम्या विषयेऽपि संभवादध्याहारस्यायुक्तत्वान्न तेजोधातुरिति शंकते—**कुत इति** । विषयसप्तम्या णिजध्याहारादितरत्र लिङ्गानुग्रहात्तेजोधातुरेवायमित्याह—**तेजोधातूनामिति** । कुतोऽस्य तेजोधातोर्लिङ्गतेत्याशंक्याऽऽह—**तेजःस्वभावकमिति** । प्रसिद्धिमनुरुध्य दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—**तथेति** । यस्मिंस्सति यन्न भाति तत्तमनुभातीति विरुद्धमिति कुतः सतिसप्तमीत्याशंक्याऽऽह—**अनुभानमिति** । तमनुभातीति तदपेक्षया निकृष्टप्रकाशत्वमिष्टमित्यर्थः । अनुभानस्याविरोधित्वात्प्रागुक्तलिङ्गाच्च कस्यचित्तेजोधातोरुपास्यताऽत्राभीष्टेत्युपसंहरति—**तस्मादिति** । पूर्वपक्षमनूद्य सिद्धान्तमवतार्य प्रतिज्ञामध्याहरति—**एवमिति** । लिङ्गसिद्धं तेजोधातुं त्यक्त्वा कुतोऽयं नियमः स्यादिति शंकते—**कस्मादिति** । हेतुमादाय व्याकरोति—**अनुकृतेरिति** । किं तदनुकरणं तदाह—**यदेतदिति** । तेजसामनुभानं कथं प्राज्ञं ज्ञापयतीत्याशंक्य श्रुत्यन्तरे तस्य भारूपत्वावधारणादित्याह—**भारूप इति** । तेजोन्तरे मानाभावाच्च न तदिह ग्राह्यमित्यनुमानस्यान्यथासिद्धिं निराह—**न त्विति** । न चेदमेव वाक्यं तत्र मानमन्यपरस्य मानान्तरविरोधे देवताधिकरणन्यायानवतारादिति भावः । विरोधाच्चानुमानं परपक्षे न स्यादित्याह—**समत्वाच्चेति** । ननु सूर्यादयश्चाक्षुषं तेजो-

यं भान्तमनुभायुः । न हि प्रदीपः प्रदीपान्तरमनुभाति ॥ यदप्युक्तं समानस्वभावकेष्वनुकारो दृश्यत इति ॥ नायमेकान्तो नियमोऽस्ति ॥ भिन्नस्वभावकेष्वपि ह्यनुकारो दृश्यते । यथा-सुतप्तोऽयःपिण्डोऽग्न्यनुकृतिरग्निं दहन्तमनुदहति । भौमं वा रजो वायुं वहन्तमनुवहतीति ॥ अनुकृतेरित्यनुभानमसूसुचत् ॥ तस्य चेतिं चतुर्थं पादमस्य श्लोकस्य सूचयति- "तस्य भासा सर्वमिदं विभाति" [ मुण्ड० २ । २ । ११ ] इति च तद्धेतुकं भानं सूर्यादेरुच्यमानं प्राज्ञमात्मानं गमयति । "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" [ बृ० ४ । ४ । १६ ] इति हि प्राज्ञमात्मानमामनन्ति ॥ तेजोऽन्तरेण तु सूर्यादितेजो विभातीत्यप्रसिद्धं विरुद्धं च ॥

रत्नप्रभा ।

तीय इति नियमो नास्तीत्याह-नायमेकान्त इति ॥ पौनरुक्त्यमाशंक्योक्तानुवादपूर्वकं सूत्रोक्तं हेत्वन्तरं व्याचष्टे-अनुकृतेरितीति ॥ तमेव भान्तमित्येवकारोक्तं तद्भानं विना सर्वस्य पृथग्भानाभावरूपमनुभानमकृतेरित्यनेनोक्तम् । तस्य चेति सर्वभासकत्वमुक्तमित्यपौनरुक्त्यमित्यर्थः । आत्मनः सूर्यादिभासकत्वे श्रुत्यन्तरप्रसिद्धमविरुद्धं चेत्याह-तद्देवा इति ॥ सर्वशब्दः प्रकृतसूर्यादिवाचकत्वेन व्याख्यातः ॥ सम्प्रति

भामती ।

दृश्यन्ते । तथा तदेव चाक्षुषं तेजो बाह्यसौर्यादितेजआप्यायितं रूपादि प्रकाशयति नानाप्यायितम्, अन्धकारेऽपि रूपदर्शनप्रसङ्गादित्यत आह-यं भान्तमनुभायुरिति । न हि तेजोऽन्तरस्य तेजोऽन्तरापेक्षां व्यासेधामः, किंतु तद्भानमनुभानम् । न च लोचनभानमनुभान्ति सूर्यादयः । तदिदमुक्तम्-न हि प्रदीप इति । पूर्वपक्षमनुभाष्य व्यभिचारमाह-यदप्युक्तमिति । एतदुक्तं भवति-यदि स्वरूपसाम्याभावमभिप्रेत्यानुकारो निराक्रियते, तदा व्यभिचारः । अथ क्रियासाम्याभावं, सोऽसिद्धः । अस्ति हि वायुरजसोः स्वरूपविसदृशयोरपि नियतदिग्देशवहनक्रियासाम्यम् । वह्न्ययःपिण्डयोस्तु यद्यपि दहनक्रिया न भिद्यते तथापि द्रव्यभेदेन क्रियाभेदं कल्पयित्वा क्रियासादृश्यं व्याख्येयम् । तदेवमनुकृतेरिति विभज्य तस्य चेति सूत्रावयवं विभजते-तस्य चेति चतुर्थमिति । ज्योतिषां सूर्यादीनां ब्रह्म ज्योतिः प्रकाशकमित्यर्थः । तेजोऽन्तरेणानिन्द्रियभावमापन्नेन सूर्यादितेजो विभातीत्यप्रसिद्धम् । सर्वशब्दस्य हि स्वरसतो निःशेषाभिधानं वृत्तिः । सा तेजोधातावलौकिके रूपमात्रप्रकाशके संकुचेत् । ब्रह्मणि तु निःशे-

आनन्दगिरीय-न्यायनिर्णयः ।

ऽपेक्ष्य भासन्ते चक्षुष्मतस्तद्भानात्तत्राऽऽह-यमिति । चक्षुषोऽनुद्भूतप्रकाशत्वात्तज्जन्यज्ञानविषयत्वे सूर्यादेर्न सजातीयापेक्षेति भावः । तदेव दृष्टान्तेन स्पष्टयति-न हीति । पूर्ववादिनोक्तमनुभाषते-यदपीति । गच्छन्तमनुगच्छतीति समानस्वभावकेष्वनुकारादनुमानात्तेजसां सूर्यादीनां सति यस्मिन्भानं निषिध्यते सोऽपि कश्चित्तेजोधातुरित्यनुवादार्थः । अनुकारः स्वभावसाम्यमपेक्षते क्रियासाम्यं वा ? नाऽऽद्य इत्याह-नायमिति । द्वितीयमङ्गीकुर्वन्नाह-भौमं वेति । अग्न्ययःपिण्डयोर्दहनक्रियाभेदाभावेऽपि द्रव्यभेदेन क्रियाभेदं कल्पयित्वा क्रियासाम्यं, वायुरजसोस्तु नियतदिग्देशगमनमस्त्येव प्रकृतेऽपि सूर्यादेर्ब्रह्मणश्च तुल्यं भानमिति भावः । हेतोरसूत्रानुसारित्वमाशंक्योक्तमनुकृतेरितीति । सूत्रस्य द्वितीयं पदं हेत्वन्तरत्वेनावतारयति-तस्य चेति । चतुर्थपादोपात्तं हेत्वन्तरं स्फोरयति-तस्येति । कथमेतावता तस्य प्राज्ञत्वं तत्राऽऽह-तदिति । स्वपक्षे मानमुक्त्वा परपक्षे तदभावमाह-तेजोन्तरेणेति । न केवलं मानाभावस्तद्विरोधश्चेत्याह-विरुद्धं चेति । प्रकृतसूर्यादिविषयतया सर्वशब्दो व्याख्यातः, संप्रति तस्याः संकुचद्वृत्तित्वं मत्वा

१ सूत्रस्थं तस्य चेति पदम् ।

तेजोऽन्तरेण तेजोऽन्तरस्य प्रतिघातात् ॥ अथ वा न सूर्यादीनामेव श्लोकपरिपठितानामिदं तद्धेतुकं विभानमुच्यते ॥ किं तर्हि । "सर्वमिदम्" [ मुण्ड० २ । २ । ११ ] इत्यविशेषश्रुतेस्सर्वस्यैवास्य नामरूपक्रियाकारकफलजातस्य याऽभिव्यक्तिः, सा ब्रह्मज्योतिःसत्तानिमित्ता ॥ यथा सूर्यादिज्योतिस्सत्तानिमित्ता सर्वस्य रूपजातस्याभिव्यक्तिः, तद्वत् । "न तत्र सूर्यो भाति" [ मुण्ड० २ । २ । ११ ] इति च तत्रशब्दमाहरन्प्रकृतग्रहणं दर्शयति ॥ प्रकृतं च ब्रह्म—"यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतम्" [ मुण्ड० २ । २ । ५ ] इत्यादिना ॥ अनन्तरं च "हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः" [ मुण्ड० २ । २ । १० ] इति ॥ कथम् ॥ तज्ज्योतिषां ज्योतिरित्यत इदमुत्थितं "न तत्र सूर्यो भाति" [ मुण्ड० २ । २ । ११ ] इति ॥ यदप्युक्तं सूर्यादीनां तेजसां भानप्रतिषेधस्तेजोधातावेवान्यस्मिन्नवकल्पते सूर्य

रत्नप्रभा ।

तस्यासंकुचद्वृत्तितां मत्वाऽर्थान्तरमाह—अथ वेति ॥ तत्रेति सर्वनामश्रुत्या प्रकृतं ब्रह्म ग्राह्यमित्याह—न तत्र सूर्य इति ॥ किंच स्पष्टब्रह्मपरपूर्वमन्त्राकांक्षापूरकत्वादयं मन्त्रो ब्रह्मपर इत्याह—अनन्तरं चेति ॥ हिरण्मये ज्योतिर्मये अन्नमयाद्यपेक्षया परे कोशे आनन्दमयाख्ये पुच्छशब्दितं ब्रह्म विरजम् आगन्तुकमलशून्यम् । निष्कलं निरवयवम् । शुभ्रं नैसर्गिकमलशून्यं सूर्यादिसाक्षिभूतं ब्रह्मवित्प्रसिद्धमित्यर्थः । सतिसप्तमीपक्षमनुवदति—यदपीति ॥ सूर्याद्यभिभावकतेजोधातौ प्रामाणिके तस्येह ग्रहणशङ्का स्यात् । न

भामती ।

षजगदवभासके न सर्वशब्दस्य वृत्तिः संकुचतीति—तत्रशब्दमाहरन्निति । सर्वत्र खल्वयं तत्रशब्दः पूर्वोक्तपरामर्शी । 'तेन रक्तं रागात्' इत्यादावपि प्रकृतेः परस्मिन्प्रत्ययेऽर्थभेदेऽन्वाख्यायमाने प्रातिपदिकप्रकृत्यर्थस्य पूर्ववृत्तत्वमस्तीति तेनेति तत्परामर्शान्न व्यभिचारः । तथा च सर्वनामश्रुतिरेव ब्रह्मोपस्थापयति । तेन भवतु नाम प्रकरणाल्लिङ्गं बलीयः, श्रुतिस्तु लिङ्गाद्बलीयसीति श्रौतमिह ब्रह्मैव गम्यत इति । अपि चापेक्षितानपेक्षिताभिधानयोरपेक्षिताभिधानं युक्तं, दृष्टार्थत्वादित्याह—अनन्तरं च हिरण्मये परे कोश इति । अस्मिन्वाक्ये ज्योतिषां ज्योतिरित्युक्तं, तत्र कथं तज्ज्योतिषां ज्योतिरित्यपेक्षायामिदमुपतिष्ठते—न तत्र सूर्य इति । स्वातन्त्र्येण तूच्यमानेऽनपेक्षितं स्याददृष्टार्थमिति ।

आनन्दगिरीय—न्यायनिर्णयः ।

व्याख्यान्तरमाह—अथ वेति । कुतो ब्रह्मज्योतिर्गतविकारातिरेकेण तत्सत्तामात्रायत्तं सर्वभानं तत्राऽऽह—यथेति । प्रकरणादपि ब्रह्मैवात्र ग्राह्यमित्याह—नेति । सर्वनाम्ना प्रकृतपरामर्शेऽपि कुतो ब्रह्म गृह्यते तत्राऽऽह—प्रकृतं चेति । प्रकृतमपि ब्रह्म व्यवहितत्वान्नेह संबन्धार्हमित्याशंक्याऽऽह—अनन्तरं चेति । हिरण्मयो ज्योतिर्मयोऽन्नमयाद्यपेक्षया परश्चायं कोशो यमानन्दमयमाचक्षते तत्र 'ब्रह्म पुच्छं प्रतिष्ठा' इति यत्प्रतिष्ठाभूतं ब्रह्म तत्प्रतिष्ठितं तच्च विरजमागन्तुकमलविकलं निष्कलं निरवयवं शुभ्रं नैसर्गिकदोषरहितम् । ज्योतिषां सूर्यादीनां ज्योतिरवभासकं तच्च विदुषामनुभवसिद्धमित्यर्थः । उदाहरणमपेक्ष्याव्यवहितं ब्रह्मेत्युक्तम् । संप्रत्यपेक्षितानपेक्षिताभिधानयोरपेक्षिताभिधानं न्याय्यमाकांक्षापूरकत्वेन दृष्टार्थत्वादिति विवक्षित्वोक्तम्—कथमिति । स्पष्टब्रह्मवादिपूर्वमन्त्राकांक्षापूरकत्वादुत्तरोऽपि मन्त्रो ब्रह्मपर इत्यर्थः । सतिसप्तमीमादायोक्तमनुभाषते—यदपीति । सूर्याद्यभिभावके तेजोधातौ प्रामाणिके तस्येह ग्रहो न वेति चिन्ता ।

**श्वेतरेषामिति ॥ तत्र तु स एव तेजोधातुरन्यो न सम्भवतीत्युपपादितम् ॥ ब्रह्मण्यपि चैषां भानप्रतिषेधोऽवकल्पते । यतो यदुपलभ्यते तत्सर्वं ब्रह्मणैव ज्योतिषोपलभ्यते । ब्रह्म तु नान्येन ज्योतिषोपलभ्यते । स्वयंज्योतिस्स्वरूपत्वात् ॥ येन सूर्यादयस्तस्मिन् भायुः । ब्रह्म ह्यन्यद्व्यनक्ति । न तु ब्रह्मान्येन व्यज्यते–"आत्मनैवायं ज्योतिषास्ते" [ बृ० ४ । ३ । ६ ] "अगृह्यो न हि गृह्यते" [ बृ० ३ । ९ । २६ ] इत्यादिश्रुतिभ्यः ॥ २२ ॥**

## अपि च स्मर्यते ॥ २३ ॥

**अपि चेदं रूपं प्राज्ञस्यैवात्मनः स्मर्यते । भगवद्गीतासु "न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" [ ८ । २१ । ] [ १५ । ६ ] इति । "यदादित्यगतं तेजो जगद्भासयतेऽखि-**

---

रत्नप्रभा ।

तत्र प्रमाणमस्तीत्याह–**तत्रेति** ॥ सिद्धान्ते तत्रेति वाक्यार्थः कथमित्याशंक्याह–**ब्रह्मण्यपीति** ॥ सतिसप्तमीपक्षे न भातीति श्रुतं वर्तमानत्वं त्यक्त्वा तस्मिन् सति न भास्यन्तीत्यश्रुतभविष्यत्त्वं कल्पनीयं प्रत्यक्षविरोधनिरासाय । विषयसप्तमीपक्षे तु न भासयतीत्यश्रुतणिजध्याहारमात्रं कल्प्यम् । न श्रुतत्याग इति लाघवम् । अतो ब्रह्मणि विषये सूर्यादेर्भासकत्वनिषेधेन ब्रह्मभास्यत्वमुच्यत इत्यर्थः ॥ येनान्यभास्यत्वेन हेतुना सूर्यादयस्तस्मिन्ब्रह्मणि विषये भासकाः स्युः तथा तु ब्रह्मान्येन नोपलभ्यते स्वप्रकाशत्वादिति **योजना** । उक्तमेव श्रुत्यन्तरेण द्रढयति—**ब्रह्मेति** ॥ स्वप्रकाशत्वेऽन्याभास्यत्वे च श्रुतिद्वयम् । ग्रहणायोग्यत्वादग्राह्य इत्यर्थः ॥२२॥ णिजध्याहारपक्षे स्मृतिबलमप्यस्तीत्याह–**अपि चेति** ॥ सूत्रं व्याचष्टे–**अपि चेति** ॥

भामती ।

**ब्रह्मण्यपि चैषां भानप्रतिषेधोऽवकल्पत इति।** अयमभिप्रायः–'न तत्र सूर्यो भाति' इति नेयं सतिसप्तमी, यतः सूर्यादीनां तस्मिन् सत्यभिभवः प्रतीयेत । अपि तु विषयसप्तमी । तेन न तत्र ब्रह्मणि प्रकाशयितव्ये सूर्यादयः प्रकाशकतया भान्ति, किंतु ब्रह्मैव सूर्यादिषु प्रकाशयितव्येषु प्रकाशकत्वेन भाति । तच्च स्वयंप्रकाशम्, **अगृह्यो न हि गृह्यत इत्यादिश्रुतिभ्य इति** ॥ २२ ॥ **अपि च स्मर्यते** ॥ **न तद्भासयत इति** । ब्रह्मणोऽग्राह्यत्वमुक्तम् । **यदादित्यगतम्** इत्यनेन तस्यैव ग्राहकत्वमुक्तमिति ॥२३॥ (७)॥

आनन्दगिरीय–न्यायनिर्णयः ।

तद्भावे मानाभावान्न सोऽस्तीत्याह–**तत्रेति** । ननु ब्रह्मणि प्रामाणिकेऽपि तस्मिन्सति सूर्यादयो न भान्ति तस्य सदाभावात्तेषां सदाभानाभावप्रसङ्गात्तत्राऽऽह–**ब्रह्मणीति** । तत्रेति न सतिसप्तमी किंतु विषयसप्तमी ततो ब्रह्मणि विषये सूर्यादयो न भान्ति, ब्रह्मैव तेषु प्रकाशकत्वेन भातीत्यर्थः । यद्वा–सतिसप्तमीं गृहीत्वा तेजोन्तरोक्तौ न भातीति वर्तमानापदेशे मानान्तरविरोधान्न भास्यतीति लक्षणायां श्रुतत्यागेनाश्रुतस्वीकारे गौरवात्तदत्यागेनाध्याहारे लाघवान्न भासयतीति णिजर्थमध्याहृत्य सूर्याद्यभास्यं ब्रह्मैव तद्भासकमिहाभीष्टमिति भावः । यस्माद्घटादिरुपलभ्यते तदपि ब्रह्मणोपलभ्यते चेद्ब्रह्मापि केनचिदन्येनोपलभ्येताविशेषादित्याशंक्याऽऽह–**ब्रह्म त्विति** । येनोपलभ्यत्वेन सूर्यादयस्तस्मिन्ब्रह्मणि विषये भायुस्तथा ब्रह्म नान्येनोपलभ्यते स्वयंज्योतिःस्वरूपत्वादन्यकृतोपलम्भानपेक्षणादित्यक्षरयोजना । तदुपपादयति–**ब्रह्म हीति** । स्वप्रकाशस्य प्रकाश्यत्वादर्शनादशेषप्रकाशकं ब्रह्म नान्यप्रकाश्यमित्यर्थः । ब्रह्मणः स्वयंज्योतिष्ट्वे सर्वभासकत्वे मानमाह–**आत्मनेति** । तस्यान्यानवभास्यत्वेऽपि श्रुतिमाह–**अगृह्य इति** ॥ २२ ॥ णिजध्याहारेण ब्रह्मणः सूर्याद्यविषयत्वे श्रुत्युक्ते स्मृतिमाह–**अपीति** । सूत्रं व्याकरोति–**अपि चेति** । तत्राग्राह्यत्वे स्मृतिमाह–**न तदिति** । ग्राहकत्वेऽपि तामाह–**यदादित्येति** । तदेवं 'न तत्र' इत्यादिवाक्यं

लम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" [ १५ । १२ ] इति च ॥ २३ ॥ इत्यनुकृत्यधिकरणम् ॥ ७ ॥

## शब्दादेव प्रमितः ॥ २४ ॥ ( ८ ) ॥

"अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" [ कठ० २ । ४ । १२ ] इति श्रूयते । तथा "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्व एतद्वै तत्" [ कठ० २ । ४ । १३ ] इति च ॥ तत्र योऽयमंगुष्ठमात्रः पुरुषः श्रूयते । स किं विज्ञानात्मा किंवा परमात्मेति संशयः । तत्र परिमाणोपदेशाद्विज्ञानात्मेति तावत्प्राप्तम् ॥

रत्नप्रभा ।

अभास्यत्वे सर्वभासकत्वे च श्लोकद्वयं द्रष्टव्यम् । तस्मादनुभानमन्त्रो ब्रह्मणि समन्वित इति सिद्धम् ॥ २३ ॥ (७) ॥ **शब्दादेव प्रमितः** ॥ काठकवाक्यं पठति—**अङ्गुष्ठेति** ॥ **पुरुषः** पूर्णोऽपि **आत्मनि** देहे **मध्ये** अंगुष्ठमात्रे हृदये **तिष्ठति** इत्यंगुमाष्ठमात्र इत्युच्यते । तस्यैव परमात्मत्ववादिवाक्यान्तरमाह—**तथेति** ॥ **अधूमकमिति** पठनीयम् । योऽगुष्ठमात्रो जीवः स वस्तुतो निर्धूमज्योतिर्वन्निर्मलप्रकाशरूप इति त्वमर्थं संशोध्य तस्य ब्रह्मत्वमाह—**ईशान इति** ॥ तस्याद्वितीयत्वमाह—**स एवेति** ॥ कालत्रयेऽपि स एवास्ति । नान्यत् । यन्नचिकेतसा पृष्टं ब्रह्म, तदेतदेवेत्यर्थः । परिमाणेशानशब्दाभ्यां संशयमाह—**तत्रेति** ॥ यथानुभानादिलिङ्गाण्णिजध्याहारेण सूर्याद्यगोचरो ब्रह्मेत्युक्तं, तथा प्रथमश्रुतपरिमाणलिङ्गाज्जीवप्रतीतावीशानोऽस्मीति ध्यायेदिति विध्यध्याहारेण ध्यानपरं वाक्यमिति पूर्वपक्षयति—**तत्र परिमाणेति** ॥ **पूर्वपक्षे** ब्रह्मदृष्ट्या जीवो-

भामती ।

**शब्दादेव प्रमितः** । 'नाञ्जसा मानभेदोऽस्ति परस्मिन्मानवर्जिते । भूतभव्येशिता जीवे नाञ्जसी तेन संशयः ॥' किमंगुष्ठमात्रश्रुत्यनुग्रहाय जीवोपासनापरमेतद्वाक्यमस्तु, तदनुरोधेन चेशानश्रुतिः कथंचिद्व्याख्यायताम्, आहोस्विदीशानश्रुत्यनुग्रहाय ब्रह्मपरमेतदस्तु, तदनुरोधेनांगुष्ठमात्रश्रुतिः कथंचिन्नीयताम् । तत्रान्यतरस्यान्यतरानुरोधविषये प्रथमानुरोधो न्याय्य इत्यंगुष्ठश्रुत्यनुरोधेनेशानश्रुतिर्नेतव्या । अपि च

आनन्दगिरीय—न्यायनिर्णयः ।

ज्योतिषां ज्योतिषि ज्ञेये परस्मिन्नन्वितमिति ॥ २३ ॥ ( ७ ) ॥ परस्य ज्योतिष्ट्वोक्तेर्ज्योतिरिवेत्युपमीयमानपुरुषस्य ततोऽर्थान्तरत्वमाशंक्योक्तम्—**शब्दादिति** । काठकवाक्यं पठति—**अंगुष्ठेति** । स्वाभाविकं परिच्छेदं वारयति—**पुरुष इति** । पूर्णत्वात्सर्वत्रोपलब्धेर्नांगुष्ठमात्रतेत्याशंक्य विशेषव्यक्तिस्थानद्वारा तद्योगमाह—**मध्य इति** । आत्मनि देहे मध्ये हृदयसद्मनीत्यर्थः । तस्यैव परात्मत्ववादिवाक्यान्तरमाह—**तथेति** । अधूमकं ज्योतिरकलुषितमेकरूपं प्रकाशमात्रं यथा दृष्टं तथाऽयमपि कूटस्थप्रकाशधातुरित्याह—**ज्योतिरिति** । ज्योतिष्परत्वादधूमकमिति लिङ्गव्यत्ययः । शोधितत्वमर्थस्य तदर्थतामाह—**ईशान इति** । भूतभव्यग्रहणं भवतोऽपि प्रदर्शनार्थम् । कालत्रयपरिच्छेदस्य नियन्तेति यावत् । अद्वितीयत्वमाह—**स एवेति** । वर्तमाने काले स एवास्ति श्वो भविष्यत्यपि काले स एव भविताऽतीतेऽपि काले स एवाऽऽसीद्यन्नचिकेतसा पृष्टम् 'अन्यत्र धर्मात्' इत्यादिना तदेतदेवेत्याह—**एतदिति** । विषयमनूद्य परिमाणोक्तेरीशानशब्दाच्च संशयमाह—**तत्रेति** । पूर्वत्रानुभानादिना विषयसप्तम्या णिजध्याहारेण सूर्यादेरगोचरो ब्रह्मेत्युक्तं तथेहापि परिमाणलिङ्गाज्जीवमादायेशानोऽस्मीति चेतो धारयेदिति विध्यध्याहारेणोपास्तिपरं वाक्यमिति पूर्वपक्षयति—**तत्रेति** । पठितकाठकश्रुतेर्निर्विशेषे प्रत्यग्ब्रह्मण्यन्वयोक्तेः श्रुत्यादिसंगतयः । पूर्वपक्षे जीवस्योपास्तिः सिद्धान्ते तस्यैव परमात्मतया धीरिति फलभेदः । परस्योपासनायै क्वचित्परिमाणोक्तावपि वस्तुपरत्वेन त्वदिष्टे वाक्ये तदयोगाज्जीवग्रहोऽत्रेति मत्वोक्तं—**परिमाणेति** । श्रुतेरेव लिङ्गा-

१ जीवमित्यर्थः । २ अंगुष्ठमात्र इति परिमाणशब्दः ।

न ह्यनन्ताऽऽयामविस्तारस्य परमात्मनोऽङ्गुष्ठमात्रपरिमाणमुपदिश्येत ॥ विज्ञानात्मनस्तूपाधिमत्त्वात्सम्भवति कथाचित्कल्पनयाऽङ्गुष्ठमात्रत्वम् ॥ स्मृतेश्च "अथ सत्यवतः कायात्पाशबद्धं वशङ्गतम् । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलाद्" [ म० भार० ३ । १२७ । १७ ] इति । न हि परमेश्वरो बलाद्यमेन निष्क्रष्टुं शक्यः। तेन तत्र संसार्यङ्गुष्ठमात्रो निश्चितः। स एवेहापीति ॥ एवं प्राप्ते ब्रूमः ॥ परमात्मैवायमङ्गुष्ठमात्रपरिमितः पुरुषो भवितुमर्हति ॥ कस्मात्? शब्दात्-"ईशानो भूत-

रत्नप्रभा।

पास्ति:, सिद्धान्ते तु प्रत्यग्ब्रह्मैक्यज्ञानं फलमिति मन्तव्यम् । आयामः दैर्घ्यं विस्तारः महत्त्वमिति भेदः ॥ कथाचिदिति । अंगुष्ठमात्रहृदयस्य विज्ञानशब्दितबुद्ध्यभेदाध्यासकल्पनयेत्यर्थः ॥ स्मृतिसंवादादप्यङ्गुष्ठमात्रो जीव इत्याह-स्मृतेश्चेति ॥ अथ मरणानन्तरम् । यमपाशैर्बद्धं कर्मवशं प्राप्तमित्यर्थः । तत्रापीश्वरः किं न स्यादित्यत आह-न हीति ॥ "प्रभवति संयमने ममापि विष्णुः" इति यमस्येश्वरनियम्यत्वस्मरणादिति भावः । भूतभव्यस्येत्युपपदाद्बाधकाभावाच्च ईशान इतीशत्वशब्दान्निरंकुशमीशिता भाति इति श्रुत्या लिंगं बाध्यमिति सिद्धान्तयति-परमात्मैवेति ॥ प्रकरणाच्च

भामती।

युक्तं हृत्पुण्डरीकदहरस्थानत्वं परमात्मनः, स्थानभेदनिर्देशात् । तद्धि तस्योपलब्धिस्थानं, शालग्राम इव कमलनाभस्य भगवतः । न च तथेहांगुष्ठमात्रश्रुत्या स्थानभेदो निर्दिष्टः,परिमाणमात्रनिर्देशात् । न च 'मध्य आत्मनि' इत्यत्र स्थानभेदोऽवगम्यते । आत्मशब्दो ह्ययं स्वभाववचनो वा जीववचनो वा ब्रह्मवचनो वा स्यात् । तत्र स्वभावस्य स्वभवित्रधीननिरूपणतया स्वस्य च भवितुरनिर्देशान्न ज्ञायते कस्य मध्य इति । न च जीवपरयोरस्ति मध्यमञ्जसेति नैष स्थाननिर्देशो विस्पष्टः । स्पष्टस्तु परिमाणनिर्देशः । परिमाणभेदश्च परस्मिन्न संभवतीति जीवात्मैवांगुष्ठमात्रः । स खल्वन्तःकरणाद्युपाधिकल्पितो भागः परमात्मनः । अन्तःकरणं च प्रायेण हृत्कमलकोशस्थानं, हृत्कमलकोशश्च मनुष्याणामंगुष्ठमात्र इति तदवच्छिन्नो जीवात्माप्यंगुष्ठमात्रः, नभ इव वंशपर्वावच्छिन्नमरत्निमात्रम् । अपि च जीवात्मनः स्पष्टमंगुष्ठमात्रत्वं स्मर्यते- 'अंगुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इति । न हि सर्वेशस्य ब्रह्मणो यमेन बलान्निष्कर्षः कल्पते । यमो हि जगौ-'हरिगुरुवशगोऽस्मि न स्वतन्त्रः प्रभवति संयमने ममापि विष्णुः' इति । तेनांगुष्ठमात्र-

आनन्दगिरीय-न्यायनिर्णयः।

द्बलीयस्त्वादीशानश्रुत्या परमात्मावगतौ कुतो जीवशंक्येत्याशंक्य परमात्मनि परिमाणोक्तेरत्यन्तबाधाज्जीवे कतिपयेशितृत्वादीशानत्वसिद्धेर्गौणी श्रुतिरित्याशयेनाऽऽह-न हीति । जीवस्यापि विभुत्वादुक्तपरिमाणासिद्धिरित्याशंक्याऽऽह-विज्ञानेति । कथाचिदिति हृदयकमलकोशस्य जीवोपलब्धिस्थानस्यांगुष्ठमात्रतयेत्यर्थः । किंच, यथा सति विषये च साधारणी सप्तमी 'न तद्वासयते' इतिस्मृत्या विषये व्यवस्थापिता तथा परिमाणमपि जैवमैश्वरं वेति संशये सति 'अंगुष्ठमात्रं निश्चकर्ष' इति स्मृत्या निश्चयसिद्धिरित्याह-स्मृतेश्चेति । मरणानन्तर्यमथशब्दार्थः । तत्रापि परमात्मैव प्रतिप्राद्योऽस्तु नेत्याह-न हीति । 'प्रभवति संयमने ममापि विष्णुः' इति यमस्य तदधीनत्वस्मृतेरित्यर्थः । स्मृतेः संसारिविषयत्वं निगमयति-तेनेति । निश्चितार्थस्मृत्या संदिग्धार्थश्रुतेरपि जीवार्थतैवेत्याह-स इति । वाक्यस्य जीवगामित्वे स्थिते तस्येशानोऽस्मीति ध्यानं फलतीत्युपसंहर्तुमितिशब्दः । पूर्वपक्षमनूद्य सिद्धान्तमवतार्य प्रतिज्ञां व्याकरोति-एवमिति । जीवे लिङ्गसिद्धे नियमासिद्धिरित्याह-कस्मादिति । श्रुतिलिङ्गयोः श्रुतिर्बलीयसीति मत्वा हेतुमाह-शब्दादिति । जीवेऽपि कतिपयेशितृत्वादविरुद्धा श्रुतिरित्युक्तं तन्न भूतभव्यस्येत्यविशेषश्रुतेरि-

१ अथ सत्यवत इति पूर्वोक्तस्मृतौ ।

भव्यस्य'' [ कठ० ४ । १२ ] इति ॥ न ह्यन्यः परमेश्वराद्भूतभव्यस्य निरंकुशमीशिता ॥ ''एतद्वै तद्'' [ कठ० ४ । १२ ] इति च प्रकृतं पृष्टमिहानुसन्दधाति । एतद्वै तत्, यत्पृष्टं ब्रह्मेत्यर्थः ॥ पृष्टं चेह ब्रह्म ॥ ''अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद'' [ कठ० २ । १४ ] इति ॥ शब्दादेवेत्यभिधानश्रुतेरेवेशान इति परमेश्वरोऽवगम्यत इत्यर्थः ॥ २४ ॥ कथं पुनः सर्वगतस्य परमात्मनः परिमाणोपदेश इति ॥ अत्र ब्रूमः–

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

सर्वगतस्यापि परमात्मनो हृदयेऽवस्थानमपेक्ष्यांगुष्ठमात्रत्वमिदमुच्यते, आकाशस्येव वंशपर्वापेक्षमरत्निमात्रत्वम् ॥ न ह्यञ्जसाऽतिमात्रस्यैव परमात्मनोऽङ्गुष्ठमात्रत्वमुपपद्यते ॥ न चान्यः परमात्मन इह ग्रहणमर्हति, ईशानशब्दादिभ्य इत्युक्तम् ॥ ननु प्रतिप्राणिभेदं हृदयानामनवस्थित-

रत्नप्रभा ।

ब्रह्मपरमिदं वाक्यमित्याह–एतदिति ॥ शब्दः वाक्यं लिङ्गाद्दुर्बलमित्याशंक्याह–शब्दादिति ॥ २४ ॥ **हृद्यपेक्षया तु मनुष्याधिकारत्वात्** करः सकनिष्ठिको ऽरत्निः । मुख्यांगुष्ठमात्रो जीवो गृह्यतां किं गौणग्रहणेनेत्यत आह–न **चान्य इति** ॥ सति सम्भवे मुख्यग्रहो न्याय्यः । अत्र तु श्रुति-

भामती ।

त्वस्य जीवे निश्चयादापेक्षिकं किंचिद्भूतभव्यं प्रति जीवस्येशानत्वं व्याख्येयम् । **'एतद्वै तत्'** इति च प्रत्यक्षजीवरूपं परामृशति । तस्माज्जीवात्मैवात्रोपास्य इति प्राप्तम् । एवं प्राप्तेऽभिधीयते–'प्रश्नोत्तरत्वादीशानश्रवणस्याविशेषतः । जीवस्य ब्रह्मरूपत्वप्रत्यायनपरं वचः ॥' इह हि भूतभव्यमात्रं प्रति निरंकुशमीशानत्वं प्रतीयते । प्राक् पृष्टं चात्र ब्रह्म 'अन्यत्र धर्मादन्यत्राधर्मात्' इत्यादिना । तदनन्तरस्य संदर्भस्य तत्प्रतिवचनतोचितेति 'एतद्वै तत्' इति ब्रह्माभिधानं युक्तम् । तथा चांगुष्ठमात्रतया यद्यपि जीवोऽवगम्यते तथापि न तत्परमेतद्वाक्यं, किन्त्वंगुष्ठमात्रस्य जीवस्य ब्रह्मरूपताप्रतिपादनपरम् । एवं निरंकुशमीशानत्वं न संकोचयितव्यम् । न च ब्रह्मप्रश्नोत्तरता हातव्या । तेन यथा 'तत्त्वमसि' इति विज्ञानात्मनस्त्वंपदार्थस्य तदिति परमात्मनैकत्वं प्रतिपाद्यते, तथेहाप्यंगुष्ठपरिमितस्य विज्ञानात्मन ईशानश्रुत्या ब्रह्मभावः प्रतिपाद्य इति युक्तम् ॥ २४ ॥ **हृद्यपेक्षया तु मनुष्याधिकारत्वात्** ॥ **सर्वगतस्यापि परब्रह्मणो हृदयेऽवस्थानमपेक्ष्येति** जीवाभिप्रायम् । न चान्यः परमात्मन इह ग्रहणमर्हतीति न

आनन्दगिरीय–न्यायनिर्णयः ।

त्याह–**न हीति** । प्रकरणमपीश्वरविषयमित्याह–**एतदिति** । उक्तमर्थं वाक्ययोजनया स्पष्टयति–**एतद्वा इति** । जीवस्यैव पृष्टत्वेन प्रकृतत्वमाशंक्योक्तम्–**पृष्टं चेति** । उपहिते तु जीवे कालत्रयापरिच्छेद्यत्वकार्यकारणास्पृष्टत्वं च दुर्योजमिति भावः । सूत्रे शब्दादिति वाक्योक्तेस्तस्य लिङ्गाद्दुर्बलत्वाद्बलवतो लिङ्गाज्जीवोक्तिः स्यादित्याशंक्याऽऽह–**शब्दादिति** । श्रुतिलिङ्गविरोधे श्रुतिरेव बाधिका न लिङ्गमिति मर्यादां वक्तुं सूत्रभाष्ययोरेवकारः ॥ २४ ॥ सिद्धान्ते परस्य विभुत्वादंगुष्ठमात्रत्वमयुक्तमित्युत्तरसूत्रव्यावर्त्यमाह–**कथमिति** । सूत्रमवतारयति–**अत्रेति** । तदवयवं व्याचष्टे–**सर्वेति** । तुशब्दसूचितं दृष्टान्तमाह–**आकाशस्येति** । करः सकनिष्ठिकोऽरत्निः । किमिति हृद्यवस्थानादंगुष्ठमात्रत्वं परस्य गौणमिष्टं तत्राऽऽह–**न हीति** । तर्हि परिमाणमुख्यत्वाय जीव एव गृह्यतां नेत्याह—**न चेति** । मुख्यसंभवे गौणमुख्ययोर्मुख्ये संप्रत्ययो मुख्यासंभवश्चात्रोक्तस्तेन गौणं परिमाणमित्यर्थः । सूत्रावयवमवलम्ब्य शंकामाह–**नन्विति** । तदुत्तरत्वेन तं

**त्वात्तदपेक्षमप्यंगुष्ठमात्रत्वं नोपपद्यत इति ॥ अत उत्तरमुच्यते ॥ मनुष्याधिकारत्वादिति–शास्त्रं ह्यविशेषप्रवृत्तमपि मनुष्यानेवाधिकरोति शक्तत्वादर्थित्वादपर्युदस्तत्वादुपनयनादिशास्त्राच्चेति ॥ वर्णितमेतदधिकारलक्षणे, मनुष्याणां च नियतपरिमाणः कायः । औचित्येन नियतप-**

रत्नप्रभा ।

विरोधादसम्भव इति गौणग्रह इत्यर्थः ॥ **मनुष्यानेवेति** । त्रैवर्णिकानेवेत्यर्थः ॥ **शक्तत्वादिति** । अनेन पश्वादीनां देवानामृषीणां चाधिकारो बाधितः । तत्र पश्वादीनां शास्त्रार्थज्ञानादिसामग्र्यभावात्कर्मण्यशक्तिः । इन्द्रादेः स्वदेवताके कर्मणि स्वोद्देशेन द्रव्यत्यागायोगादशक्तिः । ऋषीणामार्षेयवरणे ऋष्यन्तराभावादशक्तिः ॥ **अर्थित्वादिति** । अनेन निष्कामानां मुमुक्षूणां स्थावराणां चाधिकारो वारितः । तत्र मुमुक्षूणां शुद्ध्यर्थित्वे नित्यादिष्वधिकारो न काम्येषु । शुद्धचित्तानां मोक्षार्थित्वे श्रवणादिषु व्यञ्जकेष्वधिकारो, न कर्मस्विति मन्तव्यम् ॥ शूद्रस्याधिकारं निरस्यति–**अपर्युदस्तत्वादिति** ॥ "शूद्रो यज्ञेऽनवक्लृप्तः" [ तै० सं० ७ । १ । १ । ६ ] इति पर्युदासात्, "उपनयीत" "तमध्यापयीत" इति शास्त्राच्च न शूद्रस्य वैदिके कर्मण्यधिकारः । तस्यैकजातित्वस्मृतेरुपनयनप्रयुक्तद्विजातित्वाभावेन वेदाध्ययनाभावात् । अत्रापेक्षितो न्यायः षष्ठाध्याये वर्णित इत्याह–**वर्णितमिति** ॥ "स्वर्गकामो यजेत" [ वेदद्वये ] इत्यादिशास्त्रस्याविशेषेण सर्वान्फलार्थिनः प्रति प्रवृत्तत्वात्प्राणिमात्रस्य सुखार्थित्वाच्च फलार्थे कर्मणि पश्वादीनामप्यधिकार इत्याशंक्योक्तरीत्या तेषां शक्त्याद्यभावात्स्वर्गकामपदं मनुष्यपरतया संकोच्य मनुष्याधिकारत्वे स्थापिते चातुर्वर्ण्याधिकारत्वमाशंक्य "वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः" इति त्रयाणामेवाग्निसम्बन्धश्रवणात्तेषामेवाधिकार इति वर्णितमित्यर्थः । प्रस्तुते किमायातं तत्राह–**मनुष्याणाञ्चेति** ॥ प्रायेण सप्तवितस्तिपरिमितो मनुष्यदेह इत्यर्थः । एवमंगुष्ठशब्दः हृत्परिमाणवाचकः

भामती ।

जीवपरमेतद्वाक्यमित्यर्थः । **मनुष्यानेवेति** । त्रैवर्णिकानेव । **अर्थित्वादिति** अन्तःसंज्ञानां मोक्षमाणानां च काम्येषु कर्मस्वधिकारं निषेधति । **शक्तत्वादिति** । तिर्यग्देवर्षीणामशक्तानामधिकारं निवर्तयति । **उपनयना-**

आनन्दगिरीय–न्यायनिर्णयः ।

पातयति–**अत इति** । स्वर्गकामादिवाक्ये स्वर्गादिकामिन एवाविशेषेणाधिकारित्वं न मनुष्यस्येत्याशंक्याऽऽह–**शास्त्रमिति** । मनुष्यशब्दस्त्रैवर्णिकविषयः । तेषां शास्त्राधिकारे हेतुमाह–**शक्तत्वादिति** । तेन तिरश्चां देवतानामृषीणां चाधिकारो वारितः । तिर्यञ्चो वेदार्थज्ञानादिसामग्र्यभावाद्यक्तमशक्ताः । देवानां स्वदेवत्ये कर्मण्यात्मोद्देशेन द्रव्यत्यागायोगादशक्तिः । ऋषीणामार्षेयवरणादौ तदभावात् । स्थावराणां मुमुक्षूणां च कर्मण्यधिकारं निवर्तयति–**अर्थित्वादिति** । मुमुक्षोः शुद्ध्यर्थं नित्येष्वधिकारेऽपि काम्येषु तदभावः । शूद्राधिकारं वारयति–**अपर्युदस्तत्वादिति** । ते हि: 'शूद्रो यज्ञेऽनवक्लृप्तः' इति पर्युदासान्न वैदिके कर्मण्यधिकारिणः । तत्रैव हेत्वन्तरमाह–**उपनयनादिति** । न हि शूद्राणामेकजातित्वस्मृतेरुपनयनं तदभावे कुतोऽध्ययनं तस्य तदङ्गत्वादध्ययनाभावे कुतस्तदर्थेऽधिकारः । अत्र चापेक्षितन्यायस्य षष्ठेऽध्याये सिद्धत्वान्नेह तदर्थं यत्यत इत्याह–**इति वर्णितमिति** । फलार्थे कर्मणि तिर्यगादेरपि सुखकामस्याधिकारः स स्वर्गकामश्रुतेरविशेषादित्याशंक्याङ्गश्रुत्यर्थवत्त्वाय समर्थविषयतया तिर्यगादेस्तदभावेन स्वर्गकामपदं संकोच्य मनुष्याधिकारत्वे स्थिते चातुर्वर्ण्यमधिकरोति शास्त्रमिति प्राप्य "वसन्ते ब्राह्मणोऽग्नीनादधीत । ग्रीष्मे, राजन्यः शरदि वैश्यः" इति त्रयाणामेवाग्निसंबन्धश्रवणात्तेषामेवाधिकार इति प्रतिष्ठापितमित्यर्थः । मनुष्याणामपि कथमुच्चावचावयवानां नियतपरिमाणं हृदयं तत्राऽऽह–**मनुष्याणां चेति** । अस्मदादिदेहस्यापि परिमाणमनियतं दृष्टं तत्राऽऽह–**औचित्येनेति** । देहस्य नियतपरिमाणत्वेऽपि हृदयस्य किमायातं तदाह-

१ पूर्वमीमांसायां जैमिनिना षष्ठे ध्याये प्रथमे पादे २५–३८ सूत्रपर्यन्तं शूद्रस्यानाधिकाराधिकरणे ।

रिमाणमेव चैषामङ्गुष्ठमात्रं हृदयम् ॥ अतो मनुष्याधिकारत्वाच्छास्त्रस्य मनुष्यहृदयावस्थानापेक्षमङ्गुष्ठमात्रत्वमुपपन्नं परमात्मनः ॥ यदप्युक्तं परिमाणोपदेशात्स्मृतेश्च संसार्येवायमङ्गुष्ठमात्रः प्रत्येतव्य इति ॥ तत्प्रत्युच्यते ॥ "स आत्मा तत्त्वमसि" [ छा० ६ । ८ । ७ ] इत्यादिवत्संसारिण एव सतोऽङ्गुष्ठमात्रस्य ब्रह्मत्वमिदमुपदिश्यत इति ॥ द्विरूपा हि वेदान्तवाक्यानां प्रवृत्तिः—क्वचित्परमात्मस्वरूपनिरूपणपरा । क्वचिद्विज्ञानात्मनः परमात्मैकत्वोपदेशपरा ॥ तदत्र विज्ञानात्मनः परमात्मनैकत्वमुपदिश्यते नाङ्गुष्ठमात्रत्वं कस्यचित् ॥ एतमेवार्थं परेण स्पष्टीकरिष्यति—"अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण । तं विद्याच्छुक्रममृतम्" [ कठ० ६ । १७ ] इति ॥ २५ ॥ इति प्रमिताधिकरणम् ॥ ८ ॥

## तदुपर्यपि बादरायणस्सम्भवात् ॥ २६ ॥ ( ९ ) ॥

रत्नप्रभा ।

तत्रस्थं ब्रह्म लक्षयतीत्युक्तम् । सम्प्रति तच्छब्देनांगुष्ठमात्रजीवमनूद्यायमीशान इति ब्रह्माभेदो बोध्य इति वक्तुमुक्तमनुवदति—यदपीति ॥ प्रतिपाद्याभेदविरोधादनुवाद्यांगुष्ठमात्रत्वं बाध्यम् । तात्पर्यार्थस्य बलवत्त्वादित्याह—तत्प्रतीति ॥ क्वचिद् अस्थूलमित्यादौ । क्वचिद् तत्त्वमसीत्यादौ । एकत्वार्थे वाक्यशेषमनुकूलयति—एतमिति ॥ श्रुतिर्यमो वा कर्त्ता द्रष्टव्यः । तं जीवम् । प्रवृहेत् पृथक् कुर्यात् । धैर्येण बलवदिन्द्रियनिग्रहादिना तं विविक्तमात्मानम् । शुक्रं स्वप्रकाशम् अमृतं कूटस्थं ब्रह्म जानीयादित्यर्थः । तस्मात्कठवाक्यं प्रत्यग्ब्रह्मणि ज्ञेये समन्वितमिति सिद्धम् ॥ २५ ॥ ( ८ ) ॥ शास्त्रस्य मनुष्याधिकारत्वे देवादीनां ब्रह्मविद्यायामप्यनधिकारः स्यादित्याशंक्याह—तदुपर्यपि बादरायणः सम्भवादिति ॥ ननु

भामती ।

दिशास्त्राच्चेति । शूद्राणामनधिकारितां दर्शयति । यदप्युक्तं परिमाणोपदेशात्स्मृतेश्चेति । यद्येतत्परमात्मपरं किमिति तर्हि जीव इहोच्यते । ननु परमात्मैवोच्यताम् । उच्यते च जीवः, तस्माज्जीवपरमेवेति भावः । परिहरति—तत्प्रत्युच्यत इति । जीवस्य हि तत्त्वं परमात्मभावः, तद्वक्तव्यम्, न च तज्जीवमनभिधाय शक्यं वक्तुमिति जीव उच्यत इत्यर्थः ॥२५॥ (८) ॥ तदुपर्यपि बादरायणः संभवात् ।

आनन्दगिरीय—न्यायनिर्णयः ।

नियतेति । परस्मिन्परिमाणोक्तेर्योगमुपसंहरति—अत इति । अंगुष्ठमात्रपुरुषस्य जीवत्वेऽपि वाक्यस्य परार्थतेति वक्तुमुक्तमनुवदति—यदपीति । परमात्मपरे वाक्येऽनूद्यमानजीवस्थमंगुष्ठमात्रत्वं प्रतिपाद्यमानपरात्मधर्मविरोधाद्बाध्यं प्रतिपाद्यस्य तात्पर्यविषयत्वादित्याह—तदिति । परमात्मपरे वाक्ये तस्यैव वक्तव्यत्वे कुतो जीवोक्तिरित्याशंक्य वाक्यप्रवृत्तेर्द्वैरूप्यमाह—द्विरूपेति । कथं प्रकृते वाक्यप्रवृत्तिस्तत्राऽऽह—तदत्रेति । न हि परैक्यं जीवस्योक्तिं विना शक्यं वक्तुमिति तदुक्तिरित्यर्थः । प्रत्यक्षादिविरोधे किमुत्तरं तत्राऽऽह—एतमिति । विरुद्धांशत्यागेनाविरुद्धांशलक्षणयैक्ये वाक्यार्थे न विरोधधीरित्यर्थः । यतोऽन्तरात्मा पुरुषत्वात्पूर्णोऽपि जनानां हृदये सदा संनिविष्टस्ततोऽङ्गुष्ठमात्र इति त्वमर्थानुवादः । तस्यान्वयव्यतिरेकाभ्यां तदनुसारिश्रुत्या च शोध्यत्वमाह—तमिति । शरीरं स्थूलं सूक्ष्मं च प्रवृहेत्पृथक्कुर्यात् । धैर्येण शमादिनेति यावत् । तं च विविक्तमात्मानं विशुद्धममृतं ब्रह्मैव जानीयादित्याह—तमिति । तदेवं काठकवाक्यं प्रत्यग्ब्रह्मणि ज्ञातव्ये समन्वितमिति ॥ २५ ॥ ( ८ ) ॥ मनुष्याधिकारत्वादित्युक्तेरमनुष्याणां देवादीनामनधिकारमाशंक्योक्तम्—तदुपर्यपीति । निर्गुणविद्याहेतुवेदान्तविचारादिषु देवादीनामधिकारोऽस्ति ।

**अंगुष्ठमात्रश्रुतिर्मनुष्यहृदयापेक्षा मनुष्याधिकारत्वाच्छास्त्रस्येत्युक्तम् ॥ तत्प्रसङ्गेनेदमुच्यते ॥ बाढं मनुष्यानधिकरोति शास्त्रं न तु मनुष्यानेवेतीह ब्रह्मज्ञाने नियमोऽस्ति ॥ तेषां मनुष्याणामुपरिष्टाद्ये देवादयस्तानप्यधिकरोति शास्त्रमिति बादरायण आचार्यो मन्यते ॥ कस्मात् ? सम्भवात् । सम्भवति हि तेषामप्यर्थित्वाद्यधिकारकारणम् ॥ तत्रार्थित्वं तावन्मोक्षविषयं देवादीनामपि सम्भवति विकारवि-**

रत्नप्रभा ।

समन्वयाध्यायेऽधिकारचिन्ता न सङ्गतेत्यत आह—**अङ्गुष्ठेति** ॥ स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः । अत्र मनुष्याधिकारत्वोक्त्या स्मृतानां देवादीनां वेदान्तश्रवणादावधिकारोऽस्ति न वेति सन्देहे भोगासक्तानां वैराग्याद्यसम्भवान्नेति प्राप्ते सिद्धान्तमाह—**बाढमिति** ॥ एवमधिकारविचारात्मकाधिकरणद्वयस्य प्रासङ्गिकी संगतिः । अत्र पूर्वपक्षे देवादीनां ज्ञानानधिकाराद्देवत्वप्राप्तिद्वारा क्रममुक्तिफलासु दहराद्युपासनासु क्रममुक्त्यर्थिनां मनुष्याणामप्रवृत्तिः फलम् । सिद्धान्ते तु प्रवृत्तिः । उपासनाभिर्देवत्वं प्राप्तानां श्रवणादिना ज्ञानान्मुक्तिसम्भवादिति सफलोऽयं विचारः । ननु भोगासक्तानां तेषां मोक्षार्थित्वाभावान्नाधिकार इत्यत आह—**अर्थित्वं तावदिति** ॥ विकारत्वेनानृतविषयसुखस्य क्षयासूयादिदोषदृष्ट्या निरतिशयसुखमोक्षार्थित्वं सत्त्वप्रकृतीनां देवानां सम्भवतीत्यर्थः ॥ नन्विन्द्राय स्वाहेत्यादौ चतुर्थ्यन्त-

भामती ।

देवर्षीणां ब्रह्मविज्ञानाधिकारचिन्ता समन्वयलक्षणेऽसंगतेत्यस्याः प्रासङ्गिकीं संगतिं दर्शयितुं प्रसङ्गमाह—**अंगुष्ठमात्रश्रुतिरिति** । स्यादेतत् । देवादीनां विविधविचित्रानन्दभोगभोगिनां वैराग्याभावान्नार्थित्वं ब्रह्मविद्यायामित्यत आह—**तत्रार्थित्वं तावन्मोक्षविषयमिति** । क्षयातिशययोगस्य स्वर्गाद्युपभोगेऽपि भावादस्ति वैराग्यमित्यर्थः । ननु देवादीनां विग्रहाद्यभावेनेन्द्रियार्थसंनिकर्षजायाः प्रमाणादिवृत्ते-

आनन्दगिरीय—न्यायनिर्णयः ।

न वेति सामर्थ्याद्यसंभवसंभवाभ्यां संदेहे शास्त्रसांगत्येऽपि लक्षणासंगतेयं चिन्तेत्याशंक्य प्रासङ्गिकीं संगतिमाह—**अङ्गुष्ठेति** । अत्र चाधिकारनिरूपणद्वारा मन्त्रार्थवादादीनां प्राप्तिविरोधयोरसतोर्देवताविग्रहादावन्वयोक्तेरध्यायसंगतिः । मन्त्रादिप्रामाण्ये न्यायसाम्याद्रुपसदनादिगिरामधिकार्यादिसमर्प (र्पि)काणां श्रुतेऽर्थे प्रामाण्यात्तत्त्वमादिवचसोऽपि ब्रह्मैक्ये पर्यवसानमिति श्रुतिशास्त्राध्यायपादसंगतयः । पूर्वपक्षे मन्त्राद्यप्रामाण्याद्रुपगमनादिगिरामपि स्वार्थे तदयोगात्तत्त्वमादेरपि नैक्यनिष्ठतेति फलम् । सिद्धान्ते तत्तत्प्रामाण्यस्य तत्तदर्थे संभवात्तत्त्वमस्यादेरपि संभवत्यैक्यनिष्ठतेति फलम् । यद्वा—देवतादीनामनधिकारंन्यायेन क्रममुक्तिफलोपास्तिषु भोगद्वारा मोक्षकाममनुष्यप्रवृत्तिरप्यनियतेति पूर्वपक्षे फलम् । सिद्धान्ते देवाद्यधिकारविचारस्य देवादिप्रवृत्त्यङ्गत्वाभावेऽपि यथोक्तोपास्तिषु मनुष्यप्रवृत्त्यर्थं साक्षान्मोक्षफलनिर्गुणविद्यायां तेषामपि प्रवृत्तिरिति प्रयोजनम् । तत्राऽऽदौ सिद्धान्तमेव दर्शयन्मनुष्याधिकारत्वं शास्त्रस्यायोगव्यवच्छेदादन्ययागव्यवच्छेदाद्वेति विकल्प्याऽऽद्यमङ्गीकरोति—**बाढमिति** । द्वितीयं दूषयति—**न त्विति** । नियमाभावं सूत्राक्षरव्याख्यया विशदयति—**तेषामिति** । ब्रह्मविद्यातदङ्गविधयो देवादीन्नाधिकुर्वन्ति वैदिकविधित्वादग्निहोत्रादिविधिवदिति शंकते—**कस्मादिति** । अनुमानमग्रे दूष्यमादौ हेतुमुत्थाप्य व्याचष्टे—**संभवादिति** । ननु देवतादीनां विविधभोगभाजामवैराग्यान्न मोक्षेऽर्थित्वं तत्राऽऽह—**तत्रेति** । वैषयिकसुखस्यानित्यत्वपारतन्त्र्यादिदोषदृष्ट्या तत्र वैराग्यसिद्धौ परमपुरुषार्थतया मोक्षेऽर्थित्वं महाधियां तेषामुदेष्यतीत्यर्थः । चतुर्थ्यन्तशब्दातिरिक्तदेवताभावात्तस्याश्च विग्रहायोगान्न ज्ञानहेत्वनुष्ठानशक्तिरित्याशंक्याऽऽह—

१ देवानाम् ।

षयविभूत्यनित्यत्वालोचनादिनिमित्तम् ॥ तथा सामर्थ्यमपि तेषां सम्भवति मन्त्रार्थवादेतिहासपुराणलोकेभ्यो विग्रहत्वाद्यवगमात् ॥ न च तेषां कश्चित्प्रतिषेधोऽस्ति ॥ न चोपनयनशास्त्रेणैषामाधिकारो निवर्त्येत ॥ उपनयनस्य वेदाध्ययनार्थत्वात् ॥ तेषां च स्वयंप्रतिभातवेदत्वात् ॥ अपि चैषां विद्याग्रहणार्थं ब्रह्मचर्यादि दर्शयति—"एकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास" [ छां०८ । ११ । ३ ] "भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति" [तै०उ०३।१]इत्यादि ॥ यदपि कर्मस्वनधिकारकारणमुक्तं—"न देवानां देवतान्तराभावात्" "न ऋषीणामार्षेयान्तराभावाद्" इति ॥ न तद्विद्यास्वस्ति । न हीन्द्रादीनां

रत्नप्रभा ।

शब्दातिरिक्ता विग्रहवती देवता नास्ति । शब्दस्य चासामर्थ्यान्नाधिकार इत्यत आह—तथेति ॥ अर्थित्ववदित्यर्थः । अपर्युदस्तत्वमाह—न च तेषामिति ॥ "शूद्रो यज्ञेऽनवक्लृप्तः" [ तै० सं ७ । १ । १ । ६ ] इतिवद्देवादीनां विद्याधिकारनिषेधो नास्तीत्यर्थः । ननु विग्रहवत्त्वेन दृष्टसामर्थ्ये सत्यप्युपनयनाभावाच्छास्त्रीयसामर्थ्यं नास्तीत्यत आह—न चेति ॥ जन्मान्तराध्ययनबलात्स्वयमेव प्रतिभाताः स्मृताः वेदाः येषां ते तथा तद्भावादित्यर्थः । बालादिषु प्रविष्टपिशाचादीनां वेदोद्घोषदर्शनात् । देवयोनीनां जन्मान्तरस्मरणमस्तीति स्मृतवेदान्तानामर्थविचारो युक्त इत्यर्थः । देवानां च ऋषीणां च विद्याधिकारे कारणमर्थित्वादिकमुक्त्वा श्रौतं गुरुकुलवासादिलिङ्गमाह—अपि चेति ॥ ननु ब्रह्मविद्या, देवादीन्नाधिकरोति, वेदार्थत्वाद्, अग्निहोत्रवदित्यत आह—यदपीति ॥ देवानां कर्मसु नाधिकारः, देवतान्तराणामुद्देश्यानामभावादिति **प्रथमसूत्रार्थः** । ऋषीणामनधिकारः, ऋष्यन्तराभावात् ऋषियुक्ते कर्मण्यशक्तेरिति **द्वितीयसूत्रार्थः** । असामर्थ्यमुपाधिरिति परिहरति—न तदिति ॥ असामर्थ्यरूपं कारणमित्यर्थः ।

भामती ।

रनुपपत्तेरविद्वत्तया सामर्थ्याभावेन नाधिकार इत्यत आह—तथा **सामर्थ्यमपि तेषामिति** । यथा च मन्त्रादिभ्यस्तदवगमस्तथोपरिष्टादुपपादयिष्यते । ननु शूद्रवदुपनयनासंभवेनाध्ययनाभावात्तेषामनधिकार इत्यत आह—न **चोपनयनशास्त्रेणेति** । न खलु विधिवद्गुरुमुखाद्गृह्यमाणो वेदः फलवत्कर्मब्रह्मावबोधहेतुः, अपि त्वध्ययनोत्तरकालं निगमनिरुक्तव्याकरणादिविदितपदतदर्थसंगतेरधिगतशाब्दन्यायतत्त्वस्य पुंसः स्मर्यमाणः । स च मनुष्याणामिह जन्मनीव देवादीनां प्राचि भवे विधिवदधीत आम्नाय इह जन्मनि स्मर्यमाणः । अत एव स्वयं प्रतिभातो वेदः संभवतीत्यर्थः । न च कर्मानधिकारे ब्रह्मविद्यानधिकारो भवतीत्याह—यदपि **कर्मस्वनधिकारकारणमुक्तमिति** । वस्वादीनां हि न वस्वाद्यन्तरमस्ति । नापि

आनन्दगिरीय—न्यायनिर्णयः ।

**तथेति** । तयोः सतोरपि शूद्रवदनधिकारं शंकित्वोक्तम्—**न चेति** । त्रैवर्णिकानामेवोपनयनाद्देवादीनां तदभावे वैदिकशक्त्यभावान्नाधिकार इत्याशंक्याऽऽह—**न चेति** । तर्हि तदभावादङ्गिनोऽध्ययनस्याभावे कुतो वेदार्थेऽधिकारस्तत्राऽऽह—**तेषां चेति**। जन्ममरणव्यवधानेऽपि भूतप्रेतादिषु स्मृतिदर्शनान्न तदस्मृतिरिति भावः । तथाऽपि पूर्वोक्तानुमाने जाग्रति कुतो देवादयो ब्रह्मविद्यायामधिक्रियेरन्नित्याशंक्य कालातीतत्वमाह—**अपि चेति** । ब्रह्मचर्यादीत्यादिपदेनोपगमनशुश्रूषादि गृह्यते । द्वितीयमादिपदं सनत्कुमारनारदसंवादादिसंग्रहार्थम् । न केवलं लिङ्गविरोधादेव कालातीतत्वं किंतु 'तद्यो यो देवानाम्' इत्यादिवाक्यविरोधादपीति मत्वाऽऽह—**यदपीति** । देवानां कर्मसु नाधिकारो देवतान्तराणामुद्देश्यानामभावात्तदनुष्ठानाशक्तेरिति सूत्रार्थः । ऋषीणामपि भृग्वादीनामार्षेयकर्मणि नाधिकारो भृग्वाद्यन्तराभावात्तद्युक्ते कर्मण्यशक्तेरिति सूत्रान्तरार्थः । अधिकारहेत्वसत्त्वं ज्ञानेऽपि तुल्यं तेषामिति कुतो वाक्यार्थधीरित्येतद्दूषयति—**न तदिति** ।

**विद्यास्वधिक्रियमाणानामिन्द्राद्युद्देशेन किंचित्कृत्यमस्ति । न च भृग्वादीनां भृग्वादिसगोत्रतया ॥ तस्माद्देवादीनामपि विद्यास्वधिकारः केन वार्यते ॥ देवाद्यधिकारेऽप्यङ्गुष्ठमात्रश्रुतिः स्वांगुष्ठापेक्षया न विरुध्यते ॥ २६ ॥**

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

**स्यादेतद्-यदि विग्रहवत्त्वाद्यभ्युपगमेन देवादीनां विद्यास्वधिकारो वर्ण्येत विग्रहवत्त्वाद्, ऋत्विगादिवदिन्द्रादीनामपि स्वरूपसन्निधानेन कर्माङ्गभावोऽभ्युपगम्येत, तदा च विरोधः कर्मणि स्यात् ॥ न हीन्द्रादीनां स्वरूपसन्निधानेन यागेऽङ्गभावो दृश्यते । न च सम्भवति ॥ बहुषु यागेषु**

रत्नप्रभा ।

न ह्यस्ति येनासामर्थ्यं स्यादिति शेषः । "तद्योयो देवानां प्रत्यबुध्यत स एव तदभवत्, तथर्षीणाम्" इति वाक्यत्राधोऽप्यनुमानस्य द्रष्टव्यः । ननु देवादीन्प्रति अंगुष्ठमात्रश्रुतिः कथम् । तेषां महादेहत्वेन हृदयस्यास्मदंगुष्ठमात्रत्वाभावात् । अतः श्रुतिषु तेषां नाधिकार इत्यत आह-**देवाद्यधिकारेऽपीति** ॥ ॥ २६ ॥ ननु मन्त्रादीनां प्रतीयमानविग्रहवत्त्वे तात्पर्यं कल्पयित्वा देवादीनामधिकार उक्तः । स चायुक्तः । अन्यपराणां तेषां प्रत्यक्षादिविरोधेन स्वार्थे तात्पर्यकल्पनानुपपत्तेरित्याक्षिप्य सूत्रचतुष्टयेन परिहरति-**विरोधः कर्मणीत्यादिना** ॥ **वर्ण्येत** । तर्हीति शेषः । स्वरूपं विग्रहः । अभ्युपगमे प्रत्यक्षेण देवता दृश्येत । न च दृश्यते । अतो योग्यानुपलब्ध्या देवताया विग्रहवत्त्या अभावात्सम्प्रदानकारकाभावेन कर्मनिष्पत्तिर्न स्यादित्याह-**तदा चेति** ॥ विग्रहस्याङ्गत्वमनुपलब्धिबाधितं, युक्त्या च न सम्भवतीत्याह-**न चेति** ॥ तस्मादर्थोपहितशब्द एव देवता । तस्या अचेतनत्वान्न विद्याधिकार इति शंकार्थः

भामती ।

भृग्वादीनां भृग्वाद्यन्तरमस्ति । प्राचां वसुभृगुप्रभृतीनां क्षीणाधिकारत्वेनेदानीं देवर्षित्वाभावादित्यर्थः ॥२६॥ **विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्** । मन्त्रादिपदसमन्वयात्प्रतीयमानोऽर्थः प्रमाणान्तराविरोधे सत्युपेयः, न तु विरोधे । प्रमाणान्तरविरुद्धं चेदं विग्रहवत्त्वादि देवतायाः । तस्मात् 'यजमानः प्रस्तरः' इत्यादिवदुपचरितार्थो मन्त्रादिर्व्याख्येयः । तथा च विग्रहाद्यभावाच्छब्दोपहितार्थोऽर्थोपहितो वा शब्दो देवतेत्यचेतनत्वान्न तस्याः क्वचिदप्यधिकार इति शङ्कार्थः । निराकरोति-**न** । कस्मात् ।

आनन्दगिरीय-न्यायनिर्णयः ।

तदेव स्पष्टयति-**न हीति** । साधकबाधकसत्त्वासत्त्वफलमाह-**तस्मादिति** । ननु देवादीनामधिकारे कथमंगुष्ठमात्रश्रुतिर्न हि तेषां महादेहानां हृदयमंगुष्ठमात्रं तत्राऽऽह-**देवादीति** । साधारणी खल्वंगुष्ठमात्रश्रुतिस्तत्रतत्र तत्तदंगुष्ठपरिमितहृदयापेक्षया निर्वक्ष्यतीत्यर्थः ॥ २६ ॥ मन्त्रादिप्रामाण्येन विग्रहादिमत्त्वं गृहीत्वा देवतादीनामधिकारो निरूपितः । संप्रति देवताविग्रहादिवादिमन्त्रादीनामन्यपराणामविरोधे प्रामाण्यात्प्रत्यक्षादिविरोधमाशंक्य परिहर्तुं सूत्रचतुष्टये स्थिते प्रथमं कर्मणि विरोधमाशंक्य परिहरति-**विरोध इति** । मानान्तरविरुद्धेऽर्थे मन्त्रादीनामन्यपराणामप्रामाण्याद्विग्रहवद्देवतादिविषयाणां तेषामुपचरितार्थतया शब्दोपहितोऽर्थस्तदुपहितो वा शब्दो देवादिरित्यचेतनत्वात्तस्य नाधिकारसिद्धिरित्यभिसंधाय शंकां विभजते-**स्यादेतदिति** । अभ्युपगम्यतामिन्द्रादीनामध्वर्युप्रभृतिवदध्वरे स्वरूपसंनिधानेनाङ्गत्वं तत्राऽऽह-**तदा चेति** । कथं विरोधप्रसक्तिस्तत्राऽऽह-**न हीति** । दर्शनाभावमुक्त्वा युक्त्यभावमाह-**न चेति** । इन्द्रादीनां स्वरूपसंनिधिद्वारा यागाङ्गत्वायोगे हेतुमाह-**बहुष्विति** । उद्दिश्यत्यागत्वाद्यागस्य न विरोधोऽस्ती-

युगपदेकस्येन्द्रस्य स्वरूपसन्निधानानुपपत्तेरिति चेत्॥ नायमस्ति विरोधः॥ कस्माद्? अनेकप्रतिपत्तेः—एकस्यापि देवतात्मनो युगपदनेकस्वरूपप्रतिपत्तिः सम्भवति॥ कथमेतदवगम्यते॥ दर्शनात्—तथाहि "कति देवाः" [बृ० ३।९।१] इत्युपक्रम्य "त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा" [बृ० ३।९।१] इति निरुच्य "कतमे ते" [बृ० ३।९।१] इत्यस्यां पृच्छायां "महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः" [बृ० ३।९।२] इति ब्रुवती श्रुतिरेकैकस्य देवतात्मनो युगपदनेकरूपतां दर्शयति॥

रत्नप्रभा।

परिहरति—नायमिति॥ एकस्यापि देवस्य योगबलादनेकदेहप्राप्तिः श्रुतिस्मृतिदर्शनात्सम्भवति। अतो न कर्मणि विरोध इति व्याचष्टे—कस्मादित्यादिना॥ वैश्वदेवशस्त्रे शस्यमानदेवाः कतीति शाकल्येन पृष्टे याज्ञवल्क्यो निविदा त्रयश्चेत्यादिरूपया उत्तरं ददौ। निविन्नाम शस्यमानदेवसंख्यावाचकः शब्दः। षडधिकानि त्रीणि शतानि त्रीणि सहस्राणीति संख्योक्तौ संख्येयस्वरूपप्रश्ने महिमानो विभूतयः सर्वे देवा एषां त्रयस्त्रिंशद्देवानाम्। अष्टौ—वसवः, एकादश रुद्राः, द्वादशाऽऽदित्याः, इन्द्रः, प्रजापतिश्चेति—त्रयस्त्रिंशद्देवाः॥ तेऽपि षण्णामग्निपृथिवीवाय्वन्तरिक्षादित्यदिवां महिमानः। तेऽपि षट्सु देवेषु

भामती।

अनेकरूपप्रतिपत्तेः। सैव कुत इत्यत आह—दर्शनात्। श्रुतिषु स्मृतिषु च। तथाहि—एकस्यानेककायनिर्माणमदर्शनाद्वा न युज्यते, बाधदर्शनाद्वा। तत्रादर्शनमसिद्धं, श्रुतिस्मृतिभ्यां दर्शनात्। न हि लौकिकेन प्रमाणेनादृष्टत्वादागमेन दृष्टमदृष्टं भवति, मा भूद्यागादीनामपि स्वर्गादिसाधनत्वमदृष्टमिति। मनुष्यशरीरस्य मातापितृसंयोगजत्वनियमादसति पित्रोः संयोगे कुतः संभवः, संभवे वानग्नितोऽपि धूमः स्यादिति बाधदर्शनमिति चेत्। हन्त किं शरीरत्वेन हेतुना देवादिशरीरमपि मातापितृसंयोगजं सिषाधयिषसि। तथा चानेकान्तो हेत्वाभासः, स्वेदजोद्भिज्जानां शरीराणामतद्धेतुत्वात्। इच्छामात्रनिर्माणत्वं देहादीनामदृष्टचरमिति चेत्, न। भूतोपादानत्वेनेच्छामात्रनिर्माणत्वासिद्धेः। भूतवशिनां हि देवादीनां नानाकायचिकीर्षावशाद्भूतक्रियोत्पत्तौ भूतानां परस्परसंयोगेन नानाकायसमुत्पादात्। दृष्टा च वशिन इच्छावशाद्वश्ये क्रिया, यथा विषविद्याविद इच्छामात्रेण विषशकलप्रेरणम्। न च विषविद्याविदो दर्शनेनाधिष्ठानदर्शनाद्व्यवहितविप्रकृष्टभूतादर्शनाद्देवादीनां कथमधिष्ठानमिति वाच्यम्। काचाभ्रपटलपिहितस्य विप्रकृष्टस्य च भौमशनैश्चरादेर्दर्शनेन व्यभिचारात्। असक्ताश्च दृष्टयो देवादीनां काचाभ्रपटलादिवन्महीमहीधरादिभिर्न व्यवधीयन्ते। न चास्मदादिवत्तेषां शरीरित्वेन व्यवहितविप्रकृष्टादिदर्शनासंभवोऽनुमीयत इति वाच्यम्, आगमविरोधिनोऽनुमानस्योत्पादायोगात्। अन्तर्धानं चाञ्जनादिना मनुजानामिव तेषां प्रभवतामुपपद्यते, तेन संनिहितानामपि न क्रतुदेशे दर्शनं भविष्यति। तस्मात्सूक्तम्—अनेकप्रतिपत्तेरिति—तथाहि कति देवा इत्युपक्रम्येति। वैश्वदेवशस्त्रस्य हि निविदि 'कति देवाः' इत्युपक्रम्य निविदैवोत्तरं दत्तं शाकल्याय याज्ञवल्क्येन—त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति। निविन्नाम शस्य-

आनन्दगिरीय—न्यायनिर्णयः।

त्याह—नायमिति। विरोधमङ्गीकृत्यापि परिहर्तुं प्रश्नपूर्वकं हेतुमादाय व्याख्याति—कस्मादिति। एकस्य युगपदनेकत्वापत्तिर्विरुद्धेत्याह—कथमिति। प्रामाणिकत्वेन विरोधं समाधत्ते—दर्शनादिति। तत्र श्रौतं दर्शनमाह—तथा हीति। वैश्वदेवस्य निविदि कति देवाः शस्यमाना इति शाकल्येन पृष्टे याज्ञवल्क्यस्योत्तरं त्रयश्चेति। शस्यमानदेवतासंख्यावाचिमन्त्रपदं निविदुच्यते। षडधिकत्रिशताधिकत्रिसहस्रं देवा इति संख्यानिर्णयानन्तरं संख्येयप्रश्ने वसवोऽष्टावेकादश रुद्रा द्वादशाऽऽदित्याः प्रजापतिरिन्द्रश्चेति त्रयस्त्रिंशद्देवेषु पूर्वेषामन्तर्भावो दर्शित इत्याह—कतम इति। अन्तर्भावश्रुतेस्तात्पर्यमाह—एकैकस्येति। तेऽपि देवाः

**तथा त्रयस्त्रिंशतोऽपि षडाद्यन्तर्भावक्रमेण "कतम एको देवः" [ बृ० ३ । ९ । ९ ] इति "प्राण इति" [ बृ० ३ । ९ । ९ ] प्राणैकरूपतां देवानां दर्शयन्ती तस्यैवैकस्य प्राणस्य युगपदनेकरूपतां दर्शयति॥ तथा स्मृतिरपि-"आत्मनो वै शरीराणि बहूनि भरतर्षभ । योगी कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥ प्राप्नुयाद्विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत् । संक्षिपेच्च**

रत्नप्रभा ।

अन्तर्भवन्ति, षट् देवास्त्रिषु लोकेषु, त्रयश्च द्वयोरन्नप्राणयोः, द्वौ च एकस्मिन् प्राणे हिरण्यगर्भे, अन्तर्भवत इति दर्शितमित्यर्थः ॥ **त्रयस्त्रिंशतोऽपि** । देवानामिति **सम्बन्धः** । दर्शनं श्रौतं व्याख्याय स्मार्तं व्याचष्टे-**तथा स्मृतिरिति**॥ बलं योगसिद्धिम् । "अणिमा महिमा चैव लघिमा प्राप्तिरीशता । प्राकाम्यं च वशित्वं च यत्रकामावसायिता" [ मार्कण्डेयपु० ] इति **अष्टैश्वर्याणि** । क्षणेन अणुर्महान् लघुर्गुरुश्च भवति योगी । अङ्गुल्या चन्द्रस्पर्शः **प्राप्तिः** । **ईशता** सृष्टिशक्तिः । **प्राकाम्यम्** इच्छानभिघातः ।

भामती ।

मानदेवतासंख्यावाचकानि मन्त्रपदानि । एतदुक्तं भवति-वैश्वदेवस्य निविदि कति देवाः शस्यमानाः प्रसंख्याता इति शाकल्येन पृष्टे याज्ञवल्क्यस्योत्तरं-'त्रयश्च त्री च शता' इत्यादि । यावत्संख्याका वैश्वदेवनिविदि संख्याता देवास्त एतावन्त इति । पुनश्च शाकल्येन 'कतमे ते' इति संख्येयेषु पृष्टेषु याज्ञवल्क्यस्योत्तरम्-**महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति** । अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रश्च प्रजापतिश्चेति त्रयस्त्रिंशद्देवाः । तत्राग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चेति वसवः । एते हि प्राणिनां कर्मफलाश्रयेण कार्यकारणसंघातरूपेण परिणमन्तो जगदिदं सर्वं वासयन्ति, तस्माद्वसवः । कतमे रुद्रा इति दशेमे पुरुषे प्राणाः । बुद्धिकर्मेन्द्रियाणि दश, एकादशं च मन इति । तदेतानि प्राणाः, तद्वृत्तित्वात् । ते हि प्रायणकाल उत्क्रामन्तः पुरुषं रोदयन्तीति रुद्राः । कतम आदित्या इति द्वादशमासाः संवत्सरस्यावयवाः पुनःपुनः परिवर्तमानाः प्राणभृतामायूंषि च कर्मफलोपभोगं चादापयन्तीत्यादित्याः । अशनिरिन्द्रः, सा हि बलं, सा हीन्द्रस्य परमा ईशता, तया हि सर्वान्प्राणिनः प्रमापयति, तेन स्तनयित्नुरशनिरिन्द्रः । यज्ञः प्रजापतिरिति, यज्ञसाधनं च यज्ञरूपं च पशवः प्रजापतिः। एत एव त्रयस्त्रिंशद्देवाः षण्णामग्निपृथिवीवाय्वन्तरिक्षादित्यदिवां महिमानो न ततो भिद्यन्ते । षडेव तु देवाः । ते तु षडग्निं पृथिवीं चैकीकृत्यान्तरिक्षं वायुं चैकीकृत्य दिवं चादित्यं चैकीकृत्य त्रयो लोकास्त्रय एव देवा भवन्ति । एत एव च त्रयोऽन्नप्राणयोरन्तर्भवन्तोऽन्नप्राणौ द्वौ देवौ भवतः । तावप्यध्यर्धो देव एकः । कतमोऽध्यर्धः, योऽयं वायुः पवते । कथमयमेक एवाध्यर्धः, यदस्मिन्सति सर्वमिदमध्यर्धं वृद्धिं प्राप्नोति तेनाध्यर्ध इति । कतम एक इति, स एवाध्यर्धः प्राण एको ब्रह्म । सर्वदेवात्मत्वेन बृहत्त्वाद्ब्रह्म तदेव त्यदित्याचक्षते परोक्षाभिधायकेन शब्देन । तस्मादेकस्यैव देवस्य महिमवशाद्युगपदनेकदेवरूपतामाह श्रुतिः । स्मृतिश्च निगदव्याख्याता । अपि च पृथग्जनानामप्युपायानुष्ठानवशात्प्राप्ताणिमाद्यैश्वर्याणां युगपन्नानाकायनिर्माणं श्रूयते, तत्र कैव कथा देवानां स्वभावसिद्धाना-

आनन्दगिरीय-न्यायनिर्णयः ।

षण्णामग्निपृथिवीवाय्वन्तरिक्षादित्यदिवां महिमानस्ते त्रयाणां लोकानां ते च द्वयोरन्नप्राणयोस्तौ चैकस्य प्राणस्येति प्राणस्य सर्वे महिमान इत्येकस्यानेकरूपताधीरित्याह-**तथेति** । त्रयस्त्रिंशतोऽपि देवानामिति संबन्धः । श्रौतं दर्शनमुक्त्वा स्मार्तं दर्शनमाह-**तथेति** । बलं योगमाहात्म्यम् । तेषामर्थक्रियामाह-**तैश्चेति** । तेषां भोगायतनत्वमाह-**प्राप्नुयादिति** । परलोकहितत्वमाह-**कैश्चिदिति** । तत्पारवश्यं पुंसो निरस्यति-**संक्षिपेच्चेति** । योगिनामनेकरूपप्रतिपत्तावपि देवानां किं जातं तदाह-

पुनस्तानि सूर्यो रश्मिगणानिव" इत्येवञ्जातीयिका प्राप्ताणिमाद्यैश्वर्याणां योगिनामपि युगपदनेकशरीरयोगं दर्शयति ॥ किमु वक्तव्यमाजानसिद्धानां देवानाम् ॥ अनेकरूपप्रतिपत्तिसम्भवाच्चैकैका देवता बहुभी रूपैरात्मानं प्रविभज्य बहुषु यागेषु युगपदङ्गभावं गच्छति । परैश्च न दृश्यतेऽन्तर्धानादिशक्तियोगादित्युपपद्यते ॥ "अनेकप्रतिपत्तेर्दर्शनाद्" इत्यस्यापरा व्याख्या–विग्रहवतामपि कर्माङ्गभावचोदनास्वनेका प्रतिपत्तिर्दृश्यते ॥ क्वचिदेकोऽपि विग्रहवाननेकत्र युगपदङ्गभाव न गच्छति ॥ यथा–बहुभिर्भोजयद्भिर्नैको ब्राह्मणो युगपद्भोज्यते ॥ क्वचित्त्वेकोऽपि विग्रहवाननेकत्र युगपदङ्गभावं गच्छति । यथा–बहुभिर्नमस्कुर्वाणैरेको ब्राह्मणो युगपन्नमस्क्रियते, तद्वदिहोद्देशपरित्यागात्मकत्वाद्यागस्य विग्रहवतीमप्येकां देवतामुद्दिश्य बहवः स्वंस्वं द्रव्यं युगपत्परित्यक्ष्यन्तीति विग्रहवत्त्वेऽपि देवानां न किञ्चित्कर्मणि विरुध्यते ॥ २७ ॥

## शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥

मा नाम विग्रहवत्त्वे देवादीनामभ्युपगम्यमाने कर्मणि कश्चिद्विरोधः

---

रत्नप्रभा ।

वशित्वं नियमनशक्तिः । सङ्कल्पमात्रादिष्टलाभो यत्रकामावसायिता इति भेदः ॥ आजानसिद्धानां जन्मना सिद्धानामित्यर्थः । फलितमाह–अनेकेति ॥ अनेकेषु कर्मस्वेकस्य प्रतिपत्तिरङ्गभावः । तस्य लोके दर्शनादिति वक्तुं व्यतिरेकमाह–क्वचिदेक इति ॥ प्रकृतोपयुक्तमन्वयदृष्टान्तमाह–क्वचिदिति ॥ ॥ २७ ॥ कर्मण्यविरोधमङ्गीकृत्य शब्दप्रामाण्यविरोधमाशंक्य परिहरति–शब्द इति चेदिति ॥

भामती ।

मित्याह–प्राप्ताणिमाद्यैश्वर्याणां योगिनामिति । अणिमा लघिमा महिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं यत्रकामावसायितेत्यैश्वर्याणि ॥ अपरा व्याख्येति । अनेकत्र कर्मणि युगपदङ्गभावप्रतिपत्तिरङ्गभावगमनं, तस्य दर्शनात् । तदेव परिस्फुटं व्यतिरेकं तावदाह–क्वचिदेक इति । न खलु बहुषु श्राद्धेष्वेको ब्राह्मणो युगपदङ्गभावं गन्तुमर्हति । एकस्यानेकत्र युगपदङ्गभावमाह–क्वचिच्चैक इति । यथैकं ब्राह्मणमुद्दिश्य युगपन्नमस्कारः क्रियते बहुभिस्तथा स्वस्थानस्थितामेकां देवतामुद्दिश्य बहुभिर्यजमानैर्नानादेशावस्थितैर्युगपद्धविस्त्यज्यते, तस्याश्च तत्रासंनिहिताया अप्यङ्गभावो भवति । अस्ति हि तस्या युगपद्विप्रकृष्टानेकार्थोपलम्भसामर्थ्यमित्युपपादितम् ॥ २७ ॥ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमाना-

आनन्दगिरीय–न्यायनिर्णयः ।

प्राप्तेति । "अणिमा लघिमा चैव महिमा प्राप्तिरीशता । प्राकाम्यं च वशित्वं च यत्रकामावसायिता" ॥ इत्यष्टैश्वर्याणि । अपिशब्दसूचितमर्थमाह–किम्विति । आजानसिद्धानां जन्मनैव प्राप्तातिशयानामित्यर्थः । तथाऽपि प्रकृते किं जातं तदाह—अनेकेति । श्रुतिस्मृतिभ्यां युक्तिविरोधे समाहितेऽपि प्रतीतिविरोधस्य कः समाधिस्तत्राऽऽह–परैश्चेति । आदिशब्देन परदृष्टिप्रतिबन्धो गृह्यते । उक्तन्यायाद्युज्यते देवादीनां विग्रहवत्त्वोपगमेन विद्यास्वधिकार इति शेषः । संनिहितस्यैवाङ्गतेति न नियमोऽसंनिहितस्यापि युगपदनेकत्र कर्मण्यङ्गभावप्रतिपत्तिरङ्गभावगमनं तस्य दर्शनादित्यर्थान्तरमाह—अनेकेति । तदेव स्पष्टयितुं व्यतिरेकं सोदाहरणमाह–क्वचिदिति । संप्रत्यमीष्टाङ्गत्वार्थमन्वयं सदृष्टान्तमाचष्टे–क्वचिच्चेति । अन्वयव्यतिरेकसिद्धमर्थं प्रकृते योजयति–तद्वदिति । असंनिधानेऽपि देवताया विप्रकृष्टानेकार्थदृष्टिशक्तेर्युगपदनेकत्राङ्गता सिद्धेत्यर्थः । कर्मण्यविरोधमुपसंहरति–इति विग्रहेति ॥ २७ ॥ तत्राविरोधेऽपि देवतादीनां विग्रहवत्त्वे शब्दे प्रामाण्यविरोधमाशंक्य प्रत्याह–शब्द इति चेदिति । शंकां विभजते–मा नामेति।

**प्रसज्जि । शब्दे तु विरोधः प्रसज्येत ॥ कथम् ॥ औत्पत्तिकं हि शब्दस्यार्थेन सम्बन्धमाश्रित्यानपेक्षत्वादिति वेदस्य प्रामाण्यं स्थापितम् ॥ इदानीं तु विग्रहवती देवताऽभ्युपगम्यमाना यद्यप्यैश्वर्ययोगाद्युगपदनेककर्मसम्बन्धीनि हवींषि भुञ्जीत । तथापि विग्रहयोगादस्मदादिवज्जननमरणवती सेति नित्यस्य शब्दस्य नित्येनार्थेन नित्यसम्बन्धे प्रतीयमाने यद्वैदिके शब्दे प्रामाण्यं स्थितं तस्य विरोधः स्यादिति चेत् ॥ नायमप्यस्ति विरोधः ॥ कस्मात् ॥ "अतः प्रभवात्" अत एव हि वैदिकाच्छब्दाद्देवादिकं जगत्प्रभवति ॥ ननु "जन्माद्यस्य यतः" [ व्या० सू० १ । १ । २ ] इति ब्रह्मप्रभवत्वं जगतोऽवधारितम् । कथमिह शब्दप्रभवत्वमुच्यते ॥**

रत्नप्रभा ।

**माप्रसञ्जि** प्रसक्तो मा भून्नामेत्यर्थः॥औत्पत्तिकसूत्रे शब्दार्थयोरनाद्यो:सम्बन्धस्यानादित्वाद्वेदस्य मानान्तरानपेक्षत्वेन प्रामाण्यमुक्तम् । इदानीमनित्यविग्रहव्यक्त्यभ्युपगमे तत्सम्बन्धस्याप्यनित्यत्वान्मानान्तरेण व्यक्तिं ज्ञात्वा शब्दस्य संकेतः पुंसा कर्तव्य इति मानान्तरापेक्षत्वात्प्रामाण्यस्य विरोधः स्यादित्याह—**कथमित्यादिना** ॥ किं ? शब्दानामनित्यतया सम्बन्धस्य कार्यत्वमापाद्यते—उत—अर्थानामनित्यतया, **नाद्य** इत्याह—**नायमपीति** ॥ कर्मण्यविरोधवदित्य**पेरर्थः** । देवादिव्यक्तिहेतुत्वेन प्रागेव शब्दानां सत्त्वान्नानित्यत्वमिति भावः । अत्र पूर्वापरविरोधं शंकते—**नन्विति** ॥ शब्दस्य निमित्तत्वेन ब्रह्मसहकारित्वादविरोध इत्याशंक्य **द्वितीयं** कल्पमु-

भामती ।

**भ्याम्** । गोत्वादिवत्पूर्वावमर्शाभावादुपाधेरप्येकस्याप्रतीतेः पाचकादिवदाकाशादिशब्दवद्व्यक्तिवचना एव वस्वादिशब्दाः तस्याश्च नित्यत्वात्तया सह संबन्धो नित्यो भवेत् । विग्रहादियोगे तु सावयवत्वेन वस्वादीनामनित्यत्वात्ततः पूर्वं वस्वादिशब्दो न स्वार्थेन संबद्ध आसीत्, स्वार्थस्यैवाभावात् । ततश्चोत्पन्ने वस्वादौ वस्वादिशब्दसंबन्धः प्रादुर्भवन्देवदत्तादिशब्दसंबन्धवत्पुरुषबुद्धिप्रभव इति तत्पूर्वको वाक्यार्थप्रत्ययोऽपि पुरुषबुद्ध्यधीनः स्यात् । पुरुषबुद्धिश्च मानान्तराधीनजन्मेति मानान्तरापेक्षया प्रामाण्यं वेदस्य व्याहन्येतेति शङ्कार्थः । उत्तरम्—न । **अतः प्रभवात्** । वसुत्वादिजातिवाचकाच्छब्दात्तज्जातीयां व्यक्तिं चिकीर्षितां बुद्धावालिख्य तस्याः प्रभवनम् । तदिदं तत्प्रभवत्वम् । एतदुक्तं भवति—यद्यपि न शब्द उपादानकारणं वस्वादीनां ब्रह्मोपादानत्वात्, तथापि निमित्तकारणमुक्तेन क्रमेण । न चैतावता शब्दार्थसंबन्धस्यानित्यत्वं, वसुत्वादिजातेर्वा तदुपाधेर्वा यया कयाचिदाकृत्यावच्छिन्नस्य नित्यत्वादिति । इममेवार्थमाक्षेपसमाधानाभ्यां विभजते—**ननु जन्माद्यस्य यत इति** । ते निगदव्याख्याते । तत्किमिदानीं स्वयंभुवा वाङ् निर्मिता कालिदासादिभिरिव कुमारसंभवादि, तथा च तदेव प्रमाणान्तरापेक्षवाक्यत्वादप्रामाण्य-

आनन्दगिरीय—न्यायनिर्णयः ।

शब्दस्याऽऽकृत्यर्थत्वात्तत्र विरोधो नेति शङ्कते—**कथमिति** । गोत्वादिवद्वस्वादिषु पूर्वापरापरामर्शादुपाधेरपि पाचकत्वादिवददृष्टेराकाशादिशब्दवद्व्यक्तिवचनो वस्वादिशब्द इति मत्वाऽऽह—**औत्पत्तिकं हीति** । अस्माभिरपि तथैव तदिष्टमिति न तस्य विरोधोऽऽस्तीत्याशंक्याऽऽह—**इदानीं त्विति** । व्यक्तीनामनित्यत्वात्तत्संबन्धस्यापि संकेतवदनित्यतया पुंधीकृतत्वान्मानान्तरापेक्षपुंधीप्रभवशब्दार्थसंबन्धाधीनवाक्यार्थधियोऽपि मानान्तरापेक्षत्वाद्वेदस्यामानत्वं स्यादित्यर्थः । परिहारस्थं नञर्थमाह—**नायमिति** । कर्मण्यविरोधं दृष्टान्तयितुमपिशब्दः । तत्र प्रश्नपूर्वकं हेतुमुक्त्वा व्याचष्टे—**कस्मादिति** । तथा च देवादिजगद्धेतुत्वेन शब्दस्य नित्यत्वात्तदनित्यत्वकृतो दोषो नास्तीति शेषः । पूर्वापरविरोधं शङ्कते—**नन्विति** ।

१ जैमिनीयसूत्रे १ अध्याये १ पादे ३ सूत्रे । २ प्रलीयमाने इति पाठान्तरम् ।

अपि च यदि नाम वैदिकाच्छब्दादस्य प्रभवोऽभ्युपगतः, कथमेतावता विरोधः शब्दे परिहृतः । यावता वसवो रुद्रा आदित्या विश्वेदेवा मरुत इत्येतेऽर्था अनित्या एव उत्पत्तिमत्त्वात् । तदनित्यत्वे च तद्वाचिनां वैदिकानां वस्वादिशब्दानामनित्यत्वं केन निवार्यते ॥ प्रसिद्धं हि लोके देवदत्तस्य पुत्रे उत्पन्ने यज्ञदत्त इति तस्य नाम क्रियते इति ॥ तस्माद्विरोध एव शब्द इति चेत् ॥ न ॥ गवादिशब्दार्थसम्बन्धनित्यत्वदर्शनात् ॥ न हि गवादिव्यक्तीनामुत्पत्तिमत्त्वे तदाकृतीनामप्युत्पत्तिमत्त्वं स्यात् ॥ द्रव्यगुणकर्मणां हि व्यक्तय एवोत्पद्यन्ते, नाकृतयः ॥ आकृतिभिश्च शब्दानां सम्बन्धो, न व्यक्तिभिः ॥ व्यक्तीनामानन्त्यात्सम्बन्धग्रहणानु-

---

रत्नप्रभा ।

त्थापयति—अपि चेति ॥ अनित्यत्वं सादित्वम् । व्यक्तिरूपार्थानामनित्यतया शब्दानां सम्बन्धस्यानित्यत्वं दुर्वारम् । तस्मात्पौरुषेयसम्बन्धसापेक्षत्वादप्रामाण्यविरोध इत्यर्थः । न च व्यक्तीनामनित्यत्वेपि घटत्वादिजातिसमवायवच्छब्दसम्बन्धोऽपि नित्यस्स्यादिति वाच्यम् । उभयाश्रितसम्बन्धस्यान्यतराभावे स्थित्ययोगेन दृष्टान्तासिद्धेरिति भावः । यथा गोत्वादयो गवादिशब्दवाच्याः, तथा वसुत्वाद्याकृतयो वस्वादिशब्दार्थाः, न व्यक्तय इति परिहरति—नेत्यादिना ॥ शब्दानां तदर्थानां जातीनां च नित्यत्वात्तत्सम्बन्धोऽपि नित्य इति प्रतिपादयति—न हीत्यादिना ॥ व्यक्तीनामानन्त्यादिति । न च गोत्वावच्छेदेन व्यक्तिषु शक्तिः सुग्रहेति वाच्यम् । सामान्यस्याप्रत्यासत्तित्वेन सर्वव्यक्त्युपस्थित्यभावाद्, गोत्वं शक्यतावच्छेदकमिति ग्रहापेक्षया गोत्वं शक्यमिति लाघवान्निरूढजहल्लक्षणया व्यक्तेर्लाभेनानन्यलभ्यत्वाभावाच्चेति भावः । यद्वा केवलव्यक्तिषु शक्तिरत्र निरस्यते । व्युत्पत्तिज्ञानं विनैव व्यक्तेश्शब्दशक्त्यायत्तजातिज्ञानविषयत्वेन उभयशक्तेरावश्यकत्वात् । तथा च नित्यजातितादात्म्येन व्यक्तेरनादित्वात्तत्सम्बन्धोऽप्यनादिः । सत्कार्यवादात् । अत एव वाक्यवृत्तौ तत्त्वमस्यादिवाक्ये भागलक्षणोक्ता युज्यते । केवलसामान्यस्यावाच्यत्वेऽखण्डार्थस्य वाच्यैकदेशत्वाभावात्—"अतः प्रभवाद्" इति सूत्रस्वारस्याच्च केवलव्यक्तिनिरास इति गम्यते । केवलव्यक्तिवचनाः खलु डित्थादिशब्दा अर्थानन्तरभाविनः सांकेतिकाः । गवादिशब्दास्तु—व्यक्तिप्रभवहेतुत्वेन प्रागेव सन्तीति न व्यक्तिमात्रवचनाः सांकेतिकाः, किन्तु स्थूलसूक्ष्मभावेनानुस्यूतव्यक्त्यविनाभूतसामान्यवचना इति मन्तव्यम् । न चेन्द्रादिव्यक्तेरेकत्वेन जात्यभावादाकाशशब्दवदिन्द्रचन्द्रादिशब्दाः केवलव्यक्तिवचना इति साम्प्रतम् । अतीतानागतव्यक्तिभेदेन जात्युपपत्तेरित्यलं प्रपञ्चेन ॥

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

शब्दस्य निमित्तत्वाद्ब्रह्मणश्चोपादानत्वादुभयप्रभवत्वं जगतो युक्तमित्याशंक्याऽऽह—अपि चेति । आकृतेः शब्दार्थतया विरोधसमाधिरित्याशंक्याऽऽह—यावतेति । मानाभावान्न वसुत्वादिजातिरस्ति तद्व्यक्तीनां जनिमत्त्वादनित्यतेति नाविरोध इत्यर्थः । व्यक्तीनामनित्यत्वेऽपि वाचकशब्दनित्यतया सुकरो विरोधसमाधिरित्याशंक्याऽऽह—तदिति । जगतः शब्दप्रभवत्वमुपेत्य विरोधमुक्त्वा शब्दस्यार्थोत्पत्त्युत्तरकालत्वादर्थस्य ततो जन्मायोगात्तदेव नास्तीत्याह—प्रसिद्धं हीति । विरोधं निगमयति—तस्मादिति । वस्वादिशब्दार्थसंबन्धनित्यत्वं दृष्टान्तेन वदन्नुत्तरमाह—नेति । तत्रापि व्यक्तेरनित्यत्वान्न संबन्धनित्यतेत्याशंक्याऽऽह—न हीति । व्यक्तिभिरभेदाज्जातिरपि जातेत्याशंक्योक्तम्—द्रव्येति । अभेदवद्भेदस्यापि भावान्नित्यमनेकसमवेतं सामान्यमिति च स्थितेरिति हिशब्दार्थः । आकृतीनामुत्पत्त्यभावेऽपि कुतः संबन्धनित्यता तत्राऽऽह—आकृतिभिश्चेति । तास्त्वाकृतिद्वारा लक्षणया शाब्द्यो भवन्तीति भावः । दृष्टान्तमुपसंहरति—

---

१ एतत्सूत्रैकदेशस्वारस्यादित्यर्थः ।

पपत्तेः ॥ व्यक्तिषूत्पद्यमानास्वप्याकृतीनां नित्यत्वान्न गवादिशब्देषु कश्चिद्विरोधो दृश्यते ॥ तथा देवादिव्यक्तिप्रभवाभ्युपगमेप्याकृतिनित्यत्वान्न कश्चिद्वस्वादिशब्देषु विरोध इति द्रष्टव्यम् ॥ आकृतिविशेषस्तु देवादीनां मन्त्रार्थवादादिभ्यो विग्रहवत्त्वाद्यवगमादवगन्तव्यः ॥ स्थानविशेषसम्बन्धनिमित्ताश्चेन्द्रादिशब्दाः, सेनापत्यादिशब्दवत् ॥ ततश्च योयस्तत्तत्स्थानमधितिष्ठति सस इन्द्रादिशब्दैरभिधीयते इति न दोषो भवति ॥ न चेदं शब्दप्रभवत्वं ब्रह्मप्रभवत्ववदुपादानकारणत्वाभिप्रायेणोच्यते ॥ कथं तर्हि स्थिते वाचकात्मना नित्ये शब्दे नित्यार्थसम्बन्धिनि शब्दव्यवहारयोग्यार्थव्यक्तिनिष्पत्तिः ॥ अतः प्रभव इत्युच्यते ॥ कथं पुनरवगम्यते शब्दात्प्रभवति जगदिति ॥ "प्रत्यक्षानुमानाभ्याम्"-प्रत्यक्षं श्रुतिः । प्रामाण्यं प्रत्यनपेक्षत्वात् अनुमानं स्मृतिः । प्रामाण्यं प्रति सापेक्षत्वात् । ते हि शब्दपूर्वां सृष्टिं दर्शयतः-"एत इति वै प्रजापतिर्दे-

---

रत्नप्रभा ।

दृष्टान्तमुपसंहृत्य दार्ष्टान्तिकमाह-**व्यक्तिष्वित्यादिना** ॥ **आकृतिः** जातिः । ननु का सा व्यक्तिः, यदनुगतेन्द्रत्वादिजातिः शब्दार्थः स्यादित्यत आह-**आकृतिविशेषस्त्विति** ॥ "वज्रहस्तः पुरन्दरः" इत्यादिभ्य इत्यर्थः । इन्द्रादिशब्दानां जातिः इन्द्रादिषु प्रवृत्तिनिमित्तमित्युक्त्वा उपाधिनिमित्तत्वमाह-**स्थानेति** ॥ व्यक्तिप्रलयेऽपि स्थानस्य स्थायित्वाच्छब्दार्थसम्बन्धनित्यतेत्यत आह-**ततश्चेति** ॥ उक्तं पूर्वापरविरोधं परिहरति-**न चेति** ॥ शब्दो निमित्तमित्यविरोधं मत्वा सूत्रशेषमवतारयति-**कथं पुनरिति** ॥ स्मृत्या स्वप्रामाण्यार्थं मूलश्रुतिरनुमीयत इति **अनुमानं** स्मृतिः । "एतैः असृग्रमिन्दवस्तिरःपवित्रमाशवः विश्वान्यभिसौभगा" [छन्दोगब्राह्मण०] इत्येतन्मन्त्रस्थैः पदैः स्मृत्वा ब्रह्मा देवादीनसृजत । तत्र **एत इति**

भामती ।-०

आनन्दगिरीय-न्यायनिर्णयः ।

**व्यक्तिष्विति** । गवादिशब्दार्थसंबन्धनित्यत्वेपि प्रकृते किमित्याशंक्य दार्ष्टान्तिकमाह-**तथेति** । उक्तो देवादिष्वाकृत्यभावः साधकाभावादित्याशंक्याऽऽह-**आकृतीति** । अनेकत्र साकल्येन वर्तमाना जातिरित्यङ्गीकारादिन्द्रादीनां मन्त्रादिसिद्धविग्रहादिपञ्चकवतां पूर्वापरव्यक्त्यनुगता जातिरनुगतधीवेद्या न विरुध्यते । वस्वादिशब्दा जातिवाचिनो बहुषु प्रयुज्यमानाखण्डशब्दत्वात्पटादिशब्दवदिति चानुमानादित्यर्थः । इन्द्रादिशब्दानामुपाधिनिमित्तत्वं पक्षान्तरमाह-**स्थानेति** । औपाधिकत्वपक्षे शब्दार्थमनूद्यावान्तरलयेऽपि विरोधाभावमाह-**ततश्चेति** । यत्तु पूर्वापरविरोध इति तत्राऽऽह-**न चेति** । तर्हि कथम् 'अतः प्रभवात्' इत्युक्तं तत्राऽऽह-**कथमिति** । उक्तेऽर्थे मानं पृष्ट्वोत्तरपदमवतारयति-**कथमित्यादिना** । नन्वैन्द्रियकं प्रत्यक्षं जगतः शाब्दप्रभवत्वे नास्ति तत्राऽऽह-**प्रत्यक्षमिति** । तत्रापि श्रुतौ प्रत्यक्षशब्दे हेतुमाह-**प्रामाण्यमिति** । तथाऽपि तत्रानुमानं कथं प्रमाणं तत्राऽऽह-**अनुमानमिति** । तत्रापि प्रवृत्तिनिमित्तमाह-**प्रामाण्यमिति** । अव्यभिचारिलिङ्गोत्थत्वादनुमानस्य स्वतःप्रामाण्येऽव्युत्पत्तौ सापेक्षत्वमात्रसाम्यादनुमानशब्दः स्मृताविति भावः । पञ्चम्याऽभीष्टमर्थमाह-**ते हीति** । तत्र श्रुतिमाह-**एत इति** । "एते असृग्रमिन्दवस्तिरःपवित्रमाशवः । विश्वान्यभिसौभगा" इत्येतन्मन्त्रस्थपदैः स्मृत्वा देवादीन्ब्रह्मा ससर्ज । तत्र संनिहितवाचकैतच्छब्दो देवानां करणेष्वनुग्राहकत्वेन संनिहितानां स्मारकः । असृगुधिरं तत्प्रधानदेहरमणान्मनुष्याणामसृग्रशब्दः स्मारकः । इन्दुमण्डलमध्यस्थपितॄणामिन्दुशब्दः स्मारकः । पवित्रं सोमं स्वान्तस्तिरःकुर्वतां ग्रहाणां तिरःपवित्रशब्दः स्मारकः । ऋचोऽस्तुवतां स्तोत्राणां गीतिरूपाणामाशवः शब्दः स्मारकः । स्तोत्रानन्तरं प्रयोगं विशतां शस्त्राणां विश्वशब्दः स्मारकः । व्यापिवस्तुवाच्यभिशब्दसं-

 

वानमृजतासृग्रमिति मनुष्यानिन्दव इति पितॄँस्तिरःपवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्याः प्रजाः" इति श्रुतिः ॥ तथाऽन्यत्रापि "स मनसा वाचं मिथुनं समभवद्" [ बृ० १ । २ । ४ ] इत्यादिना तत्रतत्र शब्दपूर्विका सृष्टिः श्राव्यते ॥ स्मृतिरपि–"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥" इति । उत्सर्गोऽप्ययं वाचः सम्प्रदायप्रवर्तनात्मको द्रष्टव्यः । अनादिनिधनाया अन्यादृशस्योत्सर्गस्यासम्भवात् ॥ तथा–"नामरूपे च भूतानां कर्मणां च प्रवर्तनम् । वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ।" इति । "सर्वेषां च स नामानि कर्माणि च पृथक्पृथक् । वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥" [ मनु० १ । २१ ] इति च ॥ अपि च चिकीर्षितमर्थमनुतिष्ठं-

रत्नप्रभा ।

पदं सर्वनामत्वाद्देवानां स्मारकम् । असृग् रुधिरम्, तत्प्रधाने देहे रमन्त इति असृग्रा मनुष्याः । चन्द्रस्थानां पितॄणाम् इन्दुशब्दः स्मारकः । पवित्रं सोमं स्वान्तस्तिरस्कुर्वतां ग्रहाणां तिरःपवित्रशब्दः, ऋचोऽनुवतां स्तोत्राणां गीतिरूपाणाम्–आशुशब्दः, "ऋच्यध्यूढं साम" इति श्रुतेः, स्तोत्रानन्तरं प्रयोगं विशतां शस्त्राणां विश्वशब्दः, सर्वत्र सौभाग्ययुक्तानामभिसौभगशब्दः स्मारक इति छन्दोगब्राह्मणवाक्यार्थः । सः प्रजापतिर्मनसा वाचं त्रयीमिथुनं समभवत् । मनोवाग्रूपं मिथुनं सम्भावितवान् । मनसा त्रयीप्रकाशितां सृष्टिमालोचितवानित्यर्थः । "रश्मिरित्येवादित्यमसृजत" इत्यादिश्रुतिः–आदिशब्दार्थः । सम्प्रदायः गुरुशिष्यपरम्पराध्ययनम् । संस्थाः अवस्थाः या प्रजापतिसृष्टिः सा शब्दपूर्विका, सृष्टित्वात्, प्रत्यक्षघटादिवदिति प्रत्यक्षानुमानाभ्यामित्यस्यार्थान्तरमाह–अपि । चेति ॥

भामती ।

मापतितमित्यत आह–उत्सर्गोऽप्ययं वाचः संप्रदायप्रवर्तनात्मक इति । संप्रदायो गुरुशिष्यपरम्परयाध्ययनम् । एतदुक्तं भवति–स्वयंभुवो वेदकर्तृत्वेऽपि न कालिदासादिवत्स्वतन्त्रत्वमपि तु पूर्वसृष्ट्यनुसारेण । एतच्चास्माभिरुपपादितम् । उपपदायिष्यति चाग्रे भाष्यकारः । अपि चायत्वेऽप्येतद्दृश्यते । तद्दर्शनात्प्राचामपि कर्तॄणां तथाभावोऽनुमीयत इत्याह–अपि च चिकीर्षितमिति । आक्षिपति–

आनन्दगिरीय–न्यायनिर्णयः ।

युक्तः सौभगेति शब्दः सौभाग्यवाचकस्तेनाभिसौभगेति निरतिशयसौभाग्यार्थः शब्दोऽन्यासां प्रजानां स्मारकः । तथा च तत्तत्पदेन तत्तद्देवादीन्स्मृत्वा प्रजापतिः सृष्टवानिति शब्दपूर्विका सृष्टिः श्रौतीत्यर्थः । तत्रैव श्रुत्यन्तरमाह—तथेति । स प्रजापतिर्मनसा सह वाचं मिथुनभावमभवद्भावयत्त्रयीप्रकाशितां सृष्टिं मनसाऽऽलोचितवानित्यर्थः । 'स भूरिति व्याहरत्स भूमिमसृजत' इत्यादिवाक्यमादिशब्दार्थः । तत्रतत्रेत्याम्नायप्रदेशोक्तिः, तत्र स्मृतिमाह–स्मृतीति । रूपसर्गात्प्राथम्यमादावित्युक्तम् । संप्रदायातिरेकेणाप्राप्तिर्दिव्यत्वम् । अस्त्वेवं शब्दसृष्टिस्तथाऽपि कथं तत्पूर्वाऽर्थसृष्टिस्तत्राऽऽह–यत इति । उत्सृष्टत्वोक्त्या पौरुषेयत्वमाशङ्क्योक्तमुत्सर्गोऽपीति । संप्रदायो गुरुशिष्यपरम्पराध्ययनम् । उत्सृष्टिरेव किं न स्यात्तत्राऽऽह–अनादीति । कर्मणां प्रवर्तनं सतामनुष्ठापनमुक्तम् । सर्वेषामित्यत्र कर्मणां सृष्टिरेवोक्तेति भेदः । संस्थाशब्दो रूपभेदग्राही । अस्मदादिषु पटाद्युत्पत्तेः शब्दपूर्वकत्वप्रात्यक्ष्याजगतोऽपि सृष्टेस्तत्पूर्वकत्वमनुमेयमिति प्रत्यक्षानुमानाभ्यामित्यत्रार्थान्तरमाह–अपि चेति । कल्पकालीना सृष्टिः शब्दपूर्विका सृष्टित्वादिदानींतनसृष्टिवत् । विमतः शब्दार्थसंबन्धव्यवहारस्तदर्थसंबन्धानुस्मृतिपूर्वकोऽभिधानाभिधेयसंबन्धव्य-

**न्तस्य वाचकं शब्दं पूर्वं स्मृत्वा पश्चात्तमर्थमनुतिष्ठतीति सर्वेषां नः प्रत्यक्षमेतत् ॥ तथा प्रजापतेरपि स्रष्टुः सृष्टेः पूर्वं वैदिकाः शब्दा मनसि प्रादुर्बभूवुः । पश्चात्तदनुगतानर्थान् ससर्जेति गम्यते ॥ तथा च श्रुतिः "स भूरिति व्याहरन्त्स भूमिमसृजत" [ तै० ब्रा० २।२।४।२ ] इत्येवमादिका भूरादिशब्देभ्य एव मनसि प्रादुर्भूतेभ्यो भूरादींल्लोकान्सृष्टान्दर्शयति ॥ किमात्मकं पुनः शब्दमभिप्रेत्येदं शब्दप्रभवत्वमुच्यते ॥ स्फोटमित्याह ॥**

---

रत्नप्रभा ।

अतः प्रभवत्वप्रसङ्गाच्छब्दस्वरूपं वक्तुमुक्तमाक्षिपति-**किमात्मकमिति** ॥ वर्णरूपं तदतिरिक्तस्फोटरूपं चेति **किंशब्दार्थः** । तत्र वर्णानामनित्यत्वात् स्फोटस्य चासत्त्वात् न जगद्धेतुत्वमित्याक्षेपे द्वितीयपक्षं वैयाकरणो गृह्णाति-**स्फोटमिति** ॥ स्फुटयते वर्णैर्व्यज्यत इति स्फोटो वर्णव्यङ्ग्योऽर्थस्य व्यञ्जको

भामती ।

**किमात्मकं पुनरिति** । अयमभिसंधिः-वाचकशब्दप्रभवत्वं हि देवानामभ्युपेतव्यम्, अवाचकेन तेषां बुद्धावनालेखनात् । तत्र न तावद्गवादीनां वकारादयो वर्णा वाचकाः, तेषां प्रत्युच्चारणमन्यत्वेनाशक्यसंगतिग्रहत्वात्, अगृहीतसंगतेश्च वाचकत्वेऽतिप्रसङ्गात् । अपि चैते प्रत्येकं वा वाक्यार्थमभिदधीरन्, मिलिता वा । न तावत्प्रत्येकम्, एकवर्णोच्चारणानन्तरमर्थप्रत्ययादर्शनात्, वर्णान्तरोच्चारणानर्थक्यप्रसङ्गाच्च । नापि मिलिताः, तेषामेकवक्तृप्रयुज्यमानानां रूपतो व्यक्तितो वा प्रतिक्षणमपवर्गिणां मिथः साहित्यसंभवाभावात् । न च प्रत्येकसमुदायाभ्यामन्यः प्रकारः संभवति । न च स्वरूपसाहित्याभावेऽपि वर्णानामाग्नेयादीनामिव संस्कारद्वारकमस्ति साहित्यमिति सांप्रतं, विकल्पासहत्वात् । को नु खल्वयं संस्कारोऽभिमतः, किमपूर्वमाग्नेयादिजन्यमिव, किंवा भावनापरनामा स्मृतिप्रसवबीजम् । न तावत्प्रथमः कल्पः । न हि शब्दः स्वरूपतोऽङ्गतो वाऽविदितोऽविदितसंगतिरर्थधीहेतुरिन्द्रियवत् । उच्चरितस्य बधिरेणागृहीतस्य गृहीतस्य वाऽगृहीतसंगतेरप्रत्यायकत्वात् । तस्माद्विदितो विदितसंगतिर्विदितसमस्तज्ञापनाङ्गश्च शब्दो धूमवत्प्रत्यायकोऽभ्युपेयः । तथा चापूर्वाभिधानोऽस्य संस्कारः प्रत्यायनाङ्गमित्यर्थप्रत्ययात्प्रागवगन्तव्यः । न च तदा तस्यावगमोपायोऽस्ति । अर्थप्रत्ययात्तु तदवगमं समर्थयमानोदुरुत्तरमितरेतराश्रयमाविशति, संस्कारावसायादर्थप्रत्ययः, ततश्च तदवसाय इति । भावनाभिधानस्तु संस्कारः स्मृतिप्रसवसामर्थ्यमात्मनः । न च तदेवार्थप्रत्ययप्रसवसामर्थ्यमपि भवितुमर्हति । नापि तस्यैव सामर्थ्यस्य सामर्थ्यान्तरम् । न हि यैव वह्नेर्दहनशक्तिः सैव तस्य प्रकाशनशक्तिः । नापि दहनशक्तेः प्रकाशनशक्तिः । अपि च व्युत्क्रमेणोच्चरितेभ्यो वर्णेभ्यः सैवास्ति स्मृतिबीजं वासनेत्यर्थप्रत्ययः प्रसज्येत । न चास्ति । तस्मान्न कथंचिदपि वर्णा अर्थधीहेतवः । नापि तदतिरिक्तः स्फोटात्मा । तस्यानुभवानारोहात् । अर्थधियस्तु कार्यात्तदवगमे परस्पराश्रयप्रसङ्ग इत्युक्तप्रायम् । सत्तामात्रेण तु तस्य नित्यस्यार्थधीहेतुभावे सर्वदार्थप्रत्ययोत्पादप्रसङ्गः, निरपेक्षस्य हेतोः सदातनत्वात् । तस्माद्वाचकाच्छब्दाद्वाच्योत्पाद इत्यनुपपन्नमिति । अत्राचार्यदेशीय आह-**स्फोटमित्याहेति** । मृष्यामहे न वर्णाः प्रत्यायका इति न स्फोट-

आनन्दगिरीय-न्यायनिर्णयः ।

वहारत्वात्संप्रतिपन्नवदित्याह-**तथेति** । प्रत्यक्षादिसिद्धेऽर्थे तैत्तिरीयश्रुतिमाह-**तथा चेति** । 'स भुव इति व्याहरत्सोऽन्तरिक्षमसृजत' इत्यादिरादिशब्दार्थः । उक्तश्रुतेस्तात्पर्यमाह-**भूरादीति** । यदुक्तं जगतः शब्दप्रभवत्वं तदाक्षिपति-**किमात्मकमिति** । वर्णातिरिक्तं शब्दमुपेत्य ततो वा जगदुत्पत्तिरिष्टा वर्णेभ्यो वा । नाऽऽद्यः । वर्णातिरिक्ते वाचके शब्दे मानाभावात् । नेतरः । वर्णानामुत्पन्नप्रध्वंसिनां जगद्धेतुत्वासिद्धेरित्यर्थः । तत्र वैयाकरणो वक्ष्यमाणं मानं मत्वाऽऽद्यं पक्षमालम्बते-**स्फोटमिति** । स्फुटयते व्यज्यते

**वर्णपक्षे हिं तेषामुत्पन्नप्रध्वंसित्वान्नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यनुपपन्नं स्यात् ॥ उत्पन्नप्रध्वंसिनश्च वर्णाः, प्रत्युच्चारणमन्यथा चान्यथा च प्रतीयमानत्वात् ॥ तथा ह्यदृश्यमानोऽपि पुरुषविशेषोऽध्ययनध्वनिश्रवणादेव विशेषतो निर्धार्यते, देवदत्तोऽयमधीते यज्ञदत्तोऽयमधीत इति ॥ न चायं वर्णविषयोऽन्यथात्वप्रत्ययो मिथ्याज्ञानम् ॥ बाधकप्रत्ययाभावात् ॥ न च वर्णेभ्योऽर्थावगतिर्युक्ता ॥ न ह्येकैको वर्णोऽर्थं प्रत्याययेत् ॥ व्यभिचारात् ॥ न च**

रत्नप्रभा ।

गवादिशब्दो नित्यः, तमभिप्रेत्येदमुच्यते इति पूर्वेणान्वयः । सै एव आद्यपक्षं दूषयति—**वर्णेति** ॥ सोऽयं गकार इति प्रत्यभिज्ञया वर्णनित्यत्वसिद्धेर्नानुपपत्तिरित्यत आह—**उत्पन्नेति** ॥ तारत्वमन्द्रत्वादिविरुद्धधर्मवत्त्वेन तारो गकारो मन्द्रो गकार इति प्रतीयमानगकारस्य भेदानुमानात्प्रत्यभिज्ञा गत्वजातिविषयेत्यर्थः । ननु विरुद्धधर्मज्ञानं ध्वन्युपाधिकं भ्रम इत्यत आह—**न चेति** ॥ तथा च वर्णानामनित्यत्वान्न जगद्धेतुत्वमिति भावः । किंच तेषामर्थबोधकत्वायोगात् स्फोटोऽङ्गीकार्य इत्याह—**न च वर्णेभ्य इत्यादिना** ॥ **व्यभिचारात्** एकस्माद्वर्णादर्थप्रतीत्यदर्शनाद्, वर्णान्तरवैयर्थ्यप्रसङ्गाच्चेत्यर्थः । तर्हि वर्णानां समुदायो बोधक इत्याशंक्य क्षणिकानां सँ नास्तीत्याह—**न चेति** ॥ वर्णानां स्वतः साहित्याभावेऽपि

भामती ।

इति तु न मृष्यामः । तदनुभवानन्तरं विदितसंगतेरर्थधीसमुत्पादात् । न च वर्णातिरिक्तस्य तस्यानुभवो नास्ति । गौरित्येकं पदं, गामानय शुक्लामित्येकं वाक्यमिति । नानावर्णपदातिरिक्तैकपदवाक्यावगतेः सर्वजनीनत्वात् । न चायमसति बाधके एकपदवाक्यानुभवः शक्यो मिथ्येति वक्तुम् । नाप्यौपाधिकः । उपाधिः खल्वेकधीग्राह्यता वा स्यात्, एकार्थधीहेतुता वा । न तावदेकधीगोचराणां धवखदिरपलाशानामेकनिर्भासः प्रत्ययः समस्ति । तथा सति धवखदिरपलाशा इति न जातु स्यात् । नाप्येकार्थधीहेतुता । तद्धेतुत्वस्य वर्णेषु न्यासेधात् । तद्धेतुत्वेन तु साहित्यकल्पनेऽन्योन्याश्रयप्रसङ्गः । साहित्यात्तद्धेतुत्वं तद्धेतुत्वाच्च साहित्यमिति । तस्मादयमबाधितोऽनुपाधिश्च पदवाक्यगोचर एकनिर्भासो वर्णातिरिक्तं वाचकमेकमवलम्बते स स्फोट इति । तं च ध्वनयः प्रत्येकं व्यञ्जयन्तोऽपि न द्रागित्येव विशदयन्ति, येन द्रागर्थधीः स्यात् । अपि तु रत्नतत्त्वज्ञानवद्यथास्वं द्वित्रिचतुष्पञ्चषड्दर्शनजनितसंस्कारपरिपाकसचिवचेतोलब्धजन्मनि चरमे चेतसि चकास्ति विशदं पदवाक्यतत्त्वमिति प्रागुत्पन्नायास्तदनन्तरमर्थधिय उदय इति नोत्तरेषामानर्थक्यं ध्वनीनाम् । नापि प्राचां, तदभावे तज्जनितसंस्कारतत्परिपाकाभावेनानु-

आनन्दगिरीय—न्यायनिर्णयः ।

वर्णैरिति स्फोटोऽर्थव्यञ्जकः शब्दस्तमर्थसृष्टौ हेतुमभिप्रेत्येदमुक्तं तस्य नित्यत्वात्कारणत्वसंभवादित्यर्थः । वर्णानामेव प्रत्यभिज्ञया नित्यानां जगद्धेतुत्वसिद्धौ न स्फोटकल्पनेत्याशंक्य प्रत्यभिज्ञाया जातिगामित्वान्मैवमित्याह—**वर्णेति** । हेत्वसिद्धिमाशंक्याऽऽह—**उत्पन्नेति** । तदपि न संमतमित्याशंक्य पुरुषविशेषानुमापकत्वेन तत्संमतिं साधयति—**तथा हीति** । वर्णेष्वन्यथात्वधियो ध्वन्युपाधिकत्वेन मिथ्यात्वान्न तदनित्यत्वसाधकतेत्याशंक्याऽऽह—**न चेति** । वर्णानामुत्पत्तिमत्त्वात्तत्प्रभवत्वं जगतो नेत्युक्त्वा तेषामवाचकत्वादपिं तथेति वक्तुमर्थप्रत्यायकत्वं प्रत्याचष्टे—**न चेति** । किमेकैकस्माद्वर्णादर्थधीरुत समुदायादिति विकल्प्याऽऽद्यं दूषयति—**न हीति** । एकैकोक्तावर्थधियोऽदृष्टेर्वर्णान्तरोक्तिवैयर्थ्याच्चेत्यर्थः । द्वितीयं प्रत्याह—**न चेति** । तेषामुच्चारणस्य क्रमवत्त्वाद्योगपद्यानुपलब्धेरभावाधिगमान्न तद्धीरित्यर्थः । वर्णानां स्वरूपतो-

१ वैयाकरणः । २ समुदायः ।

**वर्णसमुदायप्रत्ययोऽस्ति ॥ क्रमवत्त्वाद्वर्णानाम् ॥ पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितोऽन्त्यो वर्णोऽर्थं प्रत्याययिष्यतीति यद्युच्येत ॥ तन्न ॥ सम्बन्धग्रहणापेक्षो हि शब्दः स्वयं प्रतीयमानोऽर्थं प्रत्याययेद्धूमादिवत्॥ न च पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितस्यान्त्यवर्णस्य प्रतीतिरस्ति अप्रत्यक्षत्वात्संस्काराणाम् ॥ कार्यप्रत्यायितैः संस्कारैः सहितोऽन्त्यवर्णोऽर्थं प्रत्याययिष्यतीति चेत् ॥ न ॥ संस्कारकार्यस्यापि स्मरणस्य क्रमवर्तित्वात् ॥ तस्मात्स्फोट एव शब्दः । स चैकैकवर्णप्रत्य-**

---

रत्नप्रभा ।

संस्कारलक्षणाऽपूर्वद्वारा साहित्यमाग्नेयादियागानामिवेति शंकते—**पूर्वेति** ॥ किमयं संस्कारो वर्णैर्जनितोऽपूर्वाख्यः कश्चिद् उत वर्णानुभवजनितो भावनाख्यः । नाद्यः, मानाभावात् । किंचायमज्ञातो ज्ञातो वाऽर्थधीहेतुः ? नाद्य इत्याह—**तन्नेति** ॥ संस्कारसहितः शब्दो ज्ञात एव अर्थधीहेतुः, सम्बन्धग्रहणमपेक्ष्य बोधकत्वाद्, धूमादिवदित्यर्थः । द्वितीये किं प्रत्यक्षेण ज्ञात उत कार्यलिङ्गेन ? नाद्य इत्याह—**न चेति** ॥ द्वितीयं शङ्कते—**कार्येति** ॥ कार्यम्—अर्थधीः । तस्यां जातायां संस्कारप्रत्ययः । तस्मिन् ज्ञाते सा—इति परस्पराश्रयेण दूषयति—**नेति** ॥ पदार्थस्मरणस्यापि पदज्ञानानन्तरभावित्वात्तेन संस्कारसहितान्त्यवर्णात्मकपदस्य ज्ञानं न युक्तमित्यक्षरार्थः ॥ **अपिशब्दः** परस्पराश्रयद्योतनार्थः । एतेन भावनासंस्कारपक्षोऽपि निरस्तः । तस्य वर्णस्मृतिमात्रहेतुत्वेनार्थधीहेतुत्वायोगात् । न चान्त्यवर्णसाहित्यादर्थधीहेतुत्वं, केवलसंस्कारस्य तु वर्णस्मृतिमात्रहेतुत्वमिति वाच्यम् । अर्थधीपूर्वकाले भावनाया ज्ञानाभावेनार्थधीहेतुत्वायोगात् । न च वर्णस्मरणेनानुमिता सा—अन्त्यवर्णसहिता—अर्थधीहेतुरिति वाच्यम् । तत्कार्यस्य क्रमिकस्य वर्णस्मरणस्याप्यन्त्यवर्णानुभवानन्तरभावित्वेन तेनाननुमितभावनानामन्त्यवर्णसाहित्याभावादिति भावः । वर्णानामर्थबोधकत्वासम्भवे फलमाह—**तस्मादिति** ॥ स्फोटेऽपि किं मानमित्याशंक्यैकं पदमिति प्रत्यक्षं प्रमाणमित्याह—**स चेति**॥ यथा रत्नतत्त्वं बहुभिश्चाक्षुषप्रत्ययैः स्फुटं भासते,तथा गवादिपदस्फोटो गकाराद्ये-

भामती ।

ग्रहाभावात् । अन्त्यस्य चेतसः केवलस्याजनकत्वात् । न च पदप्रत्ययवत् प्रत्येकमव्यक्तामर्थधियमाधास्यन्ति प्राञ्चो वर्णाः, चरमस्तु तत्सचिवः स्फुटतरामिति युक्तम् । व्यक्ताव्यक्तावभासितायाः प्रत्यक्षज्ञाननियमात् । स्फोटज्ञानस्य च प्रत्यक्षत्वात् । अर्थधियस्त्वप्रत्यक्षाया मानान्तरजन्मनो व्यक्त एवोपजनो न वा स्यान्न

आनन्दगिरीय—न्यायनिर्णयः ।

ऽसाहित्येऽपि संस्कारद्वारा साहित्यमाग्नेयादिवदित्याह—**पूर्वेति** । अज्ञातो ज्ञातो वा सोऽर्थधीहेतुरिति विकल्प्याऽऽद्यं निराह—**तन्नेति** । उच्चरितस्य बधिरेणागृहीतस्याप्यगृहीतसंगतेरप्रत्यायकत्वादित्यर्थः । ज्ञातस्य ज्ञापकत्वे दृष्टान्तो धूमादिवदिति । द्वितीयेऽध्यक्षेणानुमानेन वा तद्धीरिति विकल्प्याऽऽद्यं निरस्यति—**न चेति** । द्वितीयं शंकते—**कार्येति** । अर्थधीः स्मरणं वा कार्यम् । नाऽऽद्यः, संस्कारावगतेरर्थधीस्ततश्च सेत्यन्योन्याश्रयणादित्याह—**नेति** । यदि द्वितीयस्तत्राऽऽह—**संस्कारेति** । स्मरणस्यापीति संबन्धः । क्रमभाविस्मरणानुमितसंस्काराणामपि क्रमभावेनासाहित्यान्न तत्सहितान्त्यवर्णधीरित्यर्थः । वर्णानां वाचकत्वायोगे फलितमाह—**तस्मादिति** । ननु वर्णानामर्थप्रत्यायकत्वासिद्धावर्थधीदृष्ट्या तद्धेतुत्वेन वा स्फोटो गम्यते मानान्तराद्वा । नाऽऽद्यः । तदवगतेरर्थधीस्तया च सेत्यन्योन्याश्रयणान्न च सत्तामात्रेण स्फोटोऽर्थधीहेतुः सदा तदापातात् । न द्वितीयस्तदनुपलब्धेस्तत्राऽऽह—**स चेति** । स चैकप्रत्ययविषयतया प्रत्यवभासत इति संबन्धः । वर्णान्वयव्यतिरेकनियमादर्थधियो वर्णा एव शब्द इत्याशंक्य तेषां स्फोटव्यञ्जकत्वेनान्यथासिद्धेर्मैवमित्याह—**एकैकेति** । एकैकवर्णप्रत्ययैराहितं संस्काराख्यं बीजं यस्मि-

याहितसंस्कारबीजेऽन्त्यवर्णप्रत्ययजनितपरिपाके प्रत्ययिन्येकप्रत्ययविषयतया झडिति प्रत्यवभासते ॥ न चायमेकप्रत्ययो वर्णविषया स्मृतिः ॥ वर्णानामनेकत्वादेकप्रत्ययविषयत्वानुपपत्तेः ॥ तस्य च प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वान्नित्यत्वम् ॥ भेदप्रत्ययस्य वर्णविषयत्वात् ॥ तस्मान्नित्याच्छब्दात्स्फोटरूपादभिधायकात्क्रियाकारकफललक्षणं जगदभिधेयभूतं प्रभवतीति ॥ वर्णा एव तु शब्द इति भगवानुपवर्षः ॥

रत्नप्रभा ।

कैकवर्णकृतप्रत्ययैः स्फोटविषयैः आहिताः संस्कारा बीजं यस्मिन् चित्ते तस्मिन्, अन्त्यवर्णकृतप्रत्ययेन जनितः परिपाकोऽन्त्यः संस्कारो यस्मिंस्तस्मिन्, **प्रत्ययिनि** चित्ते **एकं** गौरितिपदमिति **प्रत्ययः** प्रत्यक्षस्तद्विषयतया स्पष्टमवभासत इत्यर्थः । अनेन वर्णान्वयव्यतिरेकयोः स्फोटज्ञानेऽन्यथासिद्धिः । न चैकस्माद्वर्णात्सम्यक् स्फोटाभिव्यक्तिः, येन वर्णान्तरवैयर्थ्यम् । किन्तु रत्नवद्बहुप्रत्ययसंस्कृते चित्ते सम्यक् स्फोटाभिव्यक्तिरित्युक्तं भवति । नन्वेकं पदमेकं वाक्यमिति प्रत्ययस्य पदवाक्यस्फोटयोर्न प्रामाण्यं, तस्य वर्णसमूहालम्बनस्मृतित्वादित्याशंक्य निषेधति—**न चेति** ॥ स्फोटस्य जगद्धेतुत्वार्थं नित्यत्वमाह—**तस्य चेति** ॥ ननु तदेवेदं पदमिति प्रत्यभिज्ञा भ्रमः, उदात्तादिभेदप्रत्ययादित्यत आह—**भेदेति** ॥ आचार्यसम्प्रदायोक्तिपूर्वकं सिद्धान्तयति—**वर्णा एवेति** ॥ वर्णातिरिक्तस्फोटात्मकशब्दस्यानुभवानारोहादित्यर्थः । सादृश्यदोषादियं भ्रान्तिरिति

भामती ।

पुनरस्फुट इति न समः समाधिः । तस्मान्नित्यः स्फोट एव वाचको न वर्णा इति । तदेतदाचार्यदेशीयमतं स्वमतमुपपादयन्नपाकरोति—**वर्णा एव तु न शब्द इति** । एवं हि वर्णातिरिक्तः स्फोटोऽभ्युपेयेत, यदि वर्णानां वाचकत्वं न संभवेत्, स चानुभवपद्धतिमध्यासीत । द्विधा चावाचकत्वं वर्णानां, क्षणिकत्वेनाशक्यसंगतिग्रहत्वाद्वा व्यस्तसमस्तप्रकारद्वयाभावाद्वा । न तावत्प्रथमः कल्पः । वर्णानां क्षणिकत्वे मानाभावात् । ननु वर्णानां प्रत्युच्चारणमन्यत्वं सर्वजनप्रसिद्धम् । न । प्रत्यभिज्ञायमानत्वात् । न चासत्यप्येकत्वे ज्वालादिवत्सादृश्यनिबन्धनमेतत् प्रत्यभिज्ञानमिति सांप्रतम् । सादृश्यनिबन्धनत्वमस्य बलवद्बाधकोपनिपाताद्वा स्थीयेत, क्वचिज्ज्वालादौ व्यभिचारदर्शनाद्वा । तत्र क्वचिद्व्यभिचारदर्शनेन तदुत्प्रेक्षायामुच्यते वृद्धैः स्वतःप्रामाण्यवादिभिः—'उत्प्रेक्षेत हि यो मोहादज्ञातमपि बाधनम् । स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् ॥' इति । प्रपञ्चितं चैतदस्माभिर्न्यायकणिकायाम् । न चेदं प्रत्यभिज्ञानं गत्वादिजातिविषयं न गादिव्यक्तिविषयं, तासां प्रतिनरं भेदोपलम्भादत एव शब्दभेदोपलम्भाद्वक्तृभेद उन्नीयते 'सोमशर्माधीते न विष्णुशर्मा' इति युक्तम् । यतो बहुषु गकारमुच्चारयत्सु निपुणमनुभवः परीक्ष्यताम् । यथा कालाक्षीं च स्वस्तिमतीं चेक्षमाणस्य व्यक्तिभेदप्रथायां सत्यामेव तदनुगतमेकं सामान्यं प्रथते, तथा किं गकारादिषु भेदेन प्रथमानेष्वेव गत्वमेकं तदनुगतं चकास्ति, किंवा यथा गोत्वमाजानत एकं

आनन्दगिरीय–न्यायनिर्णयः ।

न्प्रत्ययिनि चित्ते तस्मिन्निति यावत् । न चान्त्यवर्णानर्थक्यं तद्बीजन्यातिशयवत्त्वाच्चित्तस्येत्याह—**अन्त्येति** । यथा नानादर्शनसंस्कारपरिपाकसचिवे चेतसि रत्नतत्त्वं चकास्ति तथा यथोक्ते चित्ते विना विचारं सहसैवैकोऽयं शब्द इति धीविषयतया स्फोटो भातीत्याह—**एकेति** । अन्योन्याश्रयमपाकर्तुं झटितीत्युक्तम् । एकधियो वर्णविषयस्मृतित्वान्न स्फोटसाधकतेत्याशंक्याऽऽह—**न चेति** । अनेकेष्वेकत्वबुद्धेर्भ्रमत्वात्पदादिधीगोचरः स्फोट एवेत्यर्थः । स्फोटस्याप्युत्पन्नप्रध्वंसित्वान्न जगद्धेतुतेत्याशंक्याऽऽह—**तस्य चेति** । पुरुषभेदानुमापकतया प्रत्युच्चारणं भिन्नत्वात्कुतोऽस्य नित्यत्वं तत्राऽऽह—**भेदेति** । स्फोटवादमुपसंहरति—**तस्मादिति** । आचार्यसंप्रदायोक्तिपूर्वकं सिद्धान्तमाह—**वर्णा इति** । गौरित्युक्ते गकारौकारविसर्जनीयातिरिक्तस्य स्वतन्त्रस्य वा श्रोत्रेणाग्रहणादुपवर्षाचार्यो वर्णानामेव तु शब्दत्वं पश्यतीत्यर्थः । तेषां क्षणिक-

**ननूत्पन्नप्रध्वंसित्वं वर्णानामुक्तम् ॥ तन्न ॥ त एवेति प्रत्यभिज्ञानात् ॥ सादृश्यात्प्रत्यभिज्ञानं केशादिष्विवेति चेत् ॥ न ॥ प्रत्यभिज्ञानस्य प्रमाणान्तरेण बाधानुपपत्तेः ॥ प्रत्यभिज्ञानमाकृतिनिमित्तमिति चेत् ॥ न ॥ व्यक्तिप्रत्यभिज्ञानात् ॥ यदि हि प्रत्युच्चारणं गवादिव्यक्तिवदन्या अन्या वर्णव्यक्तयः प्रतीयेरंस्ततत आकृतिनिमित्तं प्रत्यभिज्ञानं स्यात् ॥ न त्वेतदस्ति ॥ वर्णव्यक्तय एव हि प्रत्युच्चारणं प्रत्यभिज्ञायन्ते । द्विर्गोशब्द उच्चारित इति हि प्रतिपत्तिः । न तु द्वौ गोशब्दाविति ॥ ननु वर्णा अप्युच्चारणभेदेन भिन्नाः प्रतीयन्ते देवदत्तयज्ञदत्तयोरध्ययनध्वनिश्रवणादेव भेदप्रतीतेरित्युक्तम् ॥ अत्राभिधीयते ॥ सति वर्णविषये निश्चिते प्रत्यभिज्ञाने संयोगविभागाभिव्यङ्ग्यत्वाद्वर्णानामभिव्यञ्जकवैचित्र्यनिमित्तोऽयं वर्ण-**

रत्नप्रभा ।

शङ्कते–**सादृश्यादिति** ॥ वपनानन्तरं त एवेमे केशा इति धीर्भ्रान्तिरिति युक्तम् । भेदधीविरोधात् । स एवायं वर्ण इति धीस्तु प्रमैव । बाधकाभावादित्याह–**नेति** ॥ गोत्वादिप्रत्यभिज्ञावद्वर्णेषु प्रत्यभिज्ञा गत्वादिविषयेति शङ्कते–**प्रत्यभिज्ञानमिति** ॥ व्यक्तिभेदे सिद्धे प्रत्यभिज्ञाया जातिविषयत्वं स्यात् । यत्त्वया पीतं जलं तदेव मया पीतमित्यादौ न तथेह व्यक्तिभेदः सिद्ध इति परिहरति–**न व्यक्तीति** ॥ **न त्वेतदिति** । व्यक्त्यन्यत्वज्ञानमित्यर्थः । उदात्तत्वादिविरुद्धधर्मत्वाद्व्यक्तिभेदोऽनुमानसिद्ध इत्यनुवदति–**नन्विति** ॥ भेदप्रत्ययस्य कुम्भकूपाकाशभेदप्रत्ययवदौपाधिकभेदविषयत्वादन्यथासिद्धेः । अनन्यथासिद्धव्यक्त्यैक्यप्रत्यभिज्ञया निरपेक्षस्वरूपालम्बनया बाध इत्युत्तरमाह–**अत्रेति** ॥ ताल्वादिदेशैः कोष्ठस्थवायुसंयोगविभागाभ्यां विचित्राभ्यां व्यङ्ग्यत्वाद्वर्णेषु वैचित्र्यधीरित्यर्थः । कल्पनागौरवाच्च वर्णेषु

भामती ।

भिन्नदेशपरिमाणसंस्थानव्यक्त्युपधानभेदाद्भिन्नदेशमिवाल्पमिव महदिव दीर्घमिव वामनमिव तथा गव्यक्तिराजानत एकापि व्यञ्जकभेदात्तद्धर्मानुपातिनीव प्रथत इति भवन्त एव विदांकुर्वन्तु । तत्र गव्यक्तिभेदमङ्गीकृत्यापि यो गत्वस्यैकस्य परोपधानभेदकल्पनाप्रयासः स वरं गव्यक्तावेवास्तु किमन्तर्गडुना गत्वेनाभ्युपेतेन । यथाहुः–'तेन यत्प्रार्थ्यते जातेस्तद्वर्णादेव लभ्यते । व्यक्तिलभ्यं तु नादेभ्य इति गत्वादिधीर्वृथा ॥' न च स्वस्तिमत्यादिवत् गव्यक्तिभेदप्रत्ययः स्फुटः–प्रत्युच्चारणमस्ति । तथा सति दश गकारानुदचारयच्चैत्र इति हि प्रत्ययः स्यात् । न स्यादशकृत्व उदचारयद्गकारमिति । न चैष जात्यभिप्रायोऽभ्यासो यथा शतकृत्वस्तित्तिरीनुपायुंक्त देवदत्त इति । अत्र हि सोरस्ताडं क्रन्दतोऽपि गकारादि-

आनन्दगिरीय–न्यायनिर्णयः ।

त्वान्न जगद्धेतुतेत्युक्तं स्मारयति–**नन्विति** । प्रत्यभिज्ञया स्थायित्वसिद्धेर्न क्षणिकतेत्याह–**तन्नेति** । प्रयत्नानन्तरीयकतया वर्णानां भेदसिद्धेरन्यथासिद्धा प्रत्यभिज्ञेत्याह–**सादृश्यादिति** । किं क्वचिद्व्यभिचारदृष्टेरेवं बाधदृष्टेर्वा । नाऽऽद्यः । सर्वत्र संशयप्रसङ्गात् । ज्वालादौ तु प्रभावैतत्यादिकार्यानुपपत्त्या तथात्वादिह तदभावादित्याह–**नेति** । न द्वितीय इत्याह–**प्रत्यभिज्ञानस्येति** । गवादौ जातिप्रत्यभिज्ञादृष्टेरिहापि तथेति शंकते–**प्रत्यभिज्ञानमिति** । यत्र जातिप्रत्यभिज्ञा तत्र व्यक्तिभेदो दृष्टः, प्रकृते तदभावान्न जातिविषयतेत्याह–**न व्यक्तीति** । तदेव स्फुटयति–**यदि हीति** । युक्तितो व्यक्तिविषया प्रत्यभिज्ञेत्युक्त्वा प्रतीतितोऽपि तथेत्याह–**वर्णेति** । हिशब्दसूचितमनुभवमभिनयति–**द्विरिति** । दहनतुहिनवद्विरुद्धधर्मवत्त्वाद्धर्मिभेदः स्यादिति शङ्कते–**नन्विति** । भेदप्रत्ययेऽपि प्रत्यभिज्ञाया निरपेक्षस्वरूपविषयत्वेन प्राबल्यात्तस्य च सापेक्षभेदविषयत्वेन दौर्बल्यादेकस्यामाकाशव्यक्तौ कुम्भाकाशः कूपाकाश इतिवद्व्यञ्जकवायुसंयोगविभागवैचित्र्याद्वर्णेषु वैचित्र्यधीर्न स्वत इत्याह–**अत्रेति** । कल्पनागौरवाच्च वर्णेषु स्वतो वैचित्र्यं

विषयो विचित्रः प्रत्ययो न स्वरूपनिमित्तः ॥ अपि च वर्णव्यक्तिभेदवादिनापि प्रत्यभिज्ञानसिद्धये वर्णाकृतयः कल्पयितव्याः ॥ तासु च परोपाधिको भेदप्रत्यय इत्यभ्युपगन्तव्यम् ॥ तद्वरं वर्णव्यक्तिष्वेव परोपाधिको भेदप्रत्ययः, स्वरूपनिमित्तं च प्रत्यभिज्ञानमिति कल्पनालाघवम् ॥ एष एव च वर्णविषयस्य भेदप्रत्ययस्य बाधकः प्रत्ययो, यत्प्रत्यभिज्ञानम् ॥ कथं तर्ह्येकस्मिन्काले बहूनामुच्चारयतामेक एव सन् गकारो युगपदनेकरूपः स्याद्, उदात्तश्चानुदात्तश्च स्वरितश्च सानुनासिकश्च निरनुनासिकश्च–इति ॥ अथ वा–ध्वनिकृतोऽयं प्रत्यय-

रत्नप्रभा ।

स्वतो भेदो नास्तीत्याह–**अपि चेति** ॥ अनन्ताः गकारादिव्यक्तयः, तासु प्रत्यभिज्ञानार्थं गत्वादिजातयः, तासु चोदात्तत्वादिभेदस्यौपाधिकत्वमिति कल्पनाद्वरं वर्णव्यक्तिभेदमात्रस्यौपाधिकत्वकल्पनमिति व्यक्त्यानन्त्यस्य जातीनां च कल्पनमयुक्तमित्यर्थः ॥ ननु भेदस्य बाधकाभावान्नौपाधिकत्वमित्यत आह–**एष इति** ॥ अस्तु तर्हि प्रत्ययद्वयप्रामाण्याय भेदाभेदयोः[1] सत्यत्वं तत्राह–**कथं तर्हीति** ॥ उभयोरेकत्र विरोधाद्भेद औपाधिक एवेत्यर्थः । ननु वायुसंयोगादेरतीन्द्रियत्वान्न तद्गतवैचित्र्यस्योदात्तत्वादेर्वर्णेषु प्रत्यक्षारोपः सम्भवतीत्यरुचिं वदिष्यन् स्वमतमाह–**अथ वेति** ॥ ध्वनिधर्मा उदात्तत्वादयो ध्वन्य-

भामती ।

व्यक्तौ लोकस्योच्चारणाभ्यासप्रत्ययस्य विनिर्वृत्तिः । चोदकः प्रत्यभिज्ञानबाधकमुत्थापयति–**कथं ह्येकस्मिन्काले बहूनामुच्चारयतामिति** । यद् युगपद्विरुद्धधर्मसंसर्गवत् तत् नाना, यथा गवाश्वादिर्द्विशफैकशफकेशरगलकम्बलादिमान् । युगपदुदात्तानुदात्तादिविरुद्धधर्मसंसर्गवांश्चायं वर्णः । तस्मान्नाना भवितुमर्हति । न चोदात्तादयो व्यञ्जकधर्माः, न वर्णधर्मा इति सांप्रतम् । व्यञ्जका ह्यस्य वायवः । तेषामश्रावणत्वे कथं तद्धर्माः श्रावणाः स्युः । इदं तावदत्र वक्तव्यम् । न हि गुणगोचरमिन्द्रियं गुणिनमपि गोचरयति, मा भूवन् घ्राणरसनश्रोत्राणां गन्धरसशब्दगोचराणां तद्वन्तः पृथिव्युदकाकाशा गोचराः । एवं च मा नाम भूद्वायुगोचरं श्रोत्रम्, तद्गुणांस्तूदात्तादीन् गोचरयिष्यति । ते च शब्दासंसर्गाग्रहात् शब्दधर्मत्वेनाध्यवसीयन्ते । न च शब्दस्य प्रत्यभिज्ञानावधृतैकत्वस्य स्वरूपत उदात्तादयो धर्माः परस्परविरोधिनोऽपर्यायेण संभवन्ति । तस्माद्यथा मुखस्यैकस्य मणिकृपाणदर्पणाद्युपधानवशान्नानादेशपरिमाणसंस्थानभेदविभ्रमः, एवमेकस्यापि वर्णस्य व्यञ्जकध्वनिनिबन्धनोऽयं विरुद्धनानाधर्मसंसर्गविभ्रमः, न तु भाविको नानाधर्मसंसर्ग इति स्थितेऽभ्युपेत्य परिहारमाह भाष्यकारः–**अथ वा ध्वनिकृत इति** । अथ वेति पूर्वपक्षं व्यावर्तयति । भवेतां नाम गुणगुणिनावेकेन्द्रियग्राह्यौ, तथाप्यदोषः । ध्वनीनामपि शब्द-

आनन्दगिरीय–न्यायनिर्णयः ।

नास्तीत्याह–**अपि चेति** । भेदधीहेतोस्त्वयाऽपि कल्प्यत्वात्तुल्या कल्पनेत्याशंक्य जातिकल्पना तवाधिकेत्याह–**तास्विति** । कथं तर्हि भेदाभेदधियावित्याशंक्याऽऽह–**तद्वरं वर्णेति** । नायमौपाधिको भ्रमो बाधकाभावादित्याशंक्याऽऽह–**एष इति** । एकत्वनानात्वयोरेकत्र वास्तवत्वोपपत्तौ किमिति बाध्यबाधकत्वं तत्राऽऽह–**कथं हीति** । एकस्य युगपदनेकरूपत्वानुपपत्तिसहकृतमेकत्वप्रत्यभिज्ञानं भेदधियो बाधकमेवेत्यर्थः । कण्ठादिदेशैः सह कोष्ठनिष्ठस्य वायोः संयोगविभागयोर्व्यञ्जकत्वमुपेत्य वर्णेषु भेदधीर्न स्वरूपकृतेति परमतमुक्त्वा स्वमतमाह–**अथ वेति** । अत्र प्रश्नपूर्वकं वर्णेभ्यो ध्वनिं निष्कर्षति–

[1] भेदाभेदयोः ।

**भेदो न वर्णकृत इत्यदोषः ॥ कः पुनरयं ध्वनिर्नाम । यो दूरादाकर्णयतो वर्णविवेकमप्रतिपद्यमानस्य कर्णपथमवतरति । प्रत्यासीदतश्च मन्दत्वपटुत्वादिभेदं वर्णेष्वासञ्जयति ॥ तन्निबन्धनाश्चोदात्तादयो विशेषा न वर्णस्वरूपनिबन्धनाः । वर्णानां प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वात् ॥ एवं सति सालम्बना उदात्तादिप्रत्यया भविष्यन्ति ॥ इतरथा हि वर्णानां प्रत्यभिज्ञायमानानां निर्भेदत्वात्संयोगविभागकृता उदात्तादिभेदाः कल्पेरन् ॥ संयोगविभागानां चाप्रत्यक्षत्वान्न तदाश्रया विशेषा वर्णेष्वध्यवसितुं शक्यन्त इत्यतो निरालम्बना एवैते उदात्तादिप्रत्ययाः स्युः ॥**

रत्नप्रभा ।

भेदाध्यासाद्वर्णेषु भान्तीत्यर्थः । प्रश्नपूर्वकं ध्वनिस्वरूपमाह—**क इति** ॥ अवतरति स्वध्वनिरिति शेषः । वर्णातिरिक्तः शब्दः—ध्वनिरित्यर्थः । समीपं गतस्य पुंसस्तारत्वमन्द्रत्वादिधर्मान् स्वगतान्वर्णेषु स एवारोपयतीत्याह—**प्रत्यासीदतश्चेति** ॥ आदिपदं विवृणोति—**तदिति** ॥ नन्वव्यक्तवर्ण एव ध्वनिर्नातिरिक्त इत्यत आह—**वर्णानामिति** ॥ प्रत्युच्चारणं वर्णा अनुवर्तन्ते ध्वनिर्व्यावर्तत इति भेद इत्यर्थः । अन्यथाऽवाचिके जपे वर्णेषु अव्यक्तेषु ध्वनिबुद्धिः स्याद्, दुन्दुभ्यादिध्वनौ शब्दत्वमात्रेण गृह्यमाणे अयमव्यक्तो वर्ण इति धीः स्यादिति मन्तव्यम् । एवं ध्वन्युपाधिकत्वे स्वमते गुणं वदन्वायूपाधिकत्वे पूर्वोक्तामरुचिं दर्शयति—**एवं चेत्यादिना** ॥ अस्तु को दोषस्तत्राह—**संयोगेति** ॥ वायुसंयोगादेरश्रावणत्वादित्यर्थः । तस्माच्छ्रावणध्वनिरेवोदात्तत्वाद्यारोपोपाधिरिति भावः । एवं विरुद्धधर्मकध्वनीनां भेदेऽपि न

भामती ।

वच्छ्रावणत्वात् । ध्वनिस्वरूपं प्रश्नपूर्वकं वर्णेभ्यो निष्कर्षयति—**कः पुनरयमिति** । न चायमनिर्धारितविशेषवर्णत्वसामान्यमात्रप्रत्ययो न तु वर्णातिरिक्ततदभिव्यञ्जकध्वनिप्रत्यय इति सांप्रतम् । तस्यानुनासिकत्वादिभेदभिन्नस्य गादिव्यक्तिवत्प्रत्यभिज्ञानाभावात्, अप्रत्यभिज्ञायमानस्य चैकत्वाभावेन सामान्यभावानुपपत्तेः । तस्मादवर्णात्मको वैष शब्दः, शब्दातिरिक्तो वा ध्वनिः, शब्दव्यञ्जकः श्रावणोऽभ्युपेयः उभयथापि चाक्षु व्यञ्जनेषु च तत्तद्ध्वनिभेदोपधानेनानुनासिकत्वादयोऽवगम्यमानास्तद्धर्मा एव शब्दे प्रतीयन्ते न तु स्वतः शब्दस्य धर्माः । तथा च येषामनुनासिकत्वादयो धर्माः परस्परविरुद्धा भासन्ते भवतु तेषां ध्वनीनामनित्यता । न हि तेषु प्रत्यभिज्ञानमस्ति । येषु तु वर्णेषु प्रत्यभिज्ञानं न तेषामनुनासिकत्वादयो धर्मा इति नानित्याः ॥ **एवं च सति सालम्बना इति** । यद्येष परस्याग्रहो धर्मिण्य-

आनन्दगिरीय—न्यायनिर्णयः ।

**कः पुनरित्यादिना** । अवतरति स ध्वनिरिति शेषः । वर्णातिरिक्तशब्दो ध्वनिरित्यर्थः । स एव प्रत्यासन्नस्य पुंसो वर्णेषु स्वधर्मानारोपयतीत्याह—**प्रत्यासीदतश्चेति** । वर्णेषूदात्तादिवत्षड्जत्वादिरपि स्वाभाविकः स्यादित्याशंक्याऽऽह—**तदिति** ॥ वर्णानामेवाव्यक्तानां ध्वनित्वे कुतो भेदधीस्तेषु तत्कृतेत्याशंक्याऽऽह—**वर्णानामिति** । ध्वनेश्च सानुनासिकत्वादिभेदवतस्तदभावात्तेभ्योऽऽर्थान्तरत्वात्तत्कृता तेषु भेदधीर्युक्तेत्यर्थः । एतेन तस्य जातित्वमपि प्रत्युक्तम् । वायुसंयोगविभागयोर्व्यञ्जकत्वं हित्वा किमिति ध्वनीनां तदुपगतं तत्राऽऽह—**एवं चेति** । पक्षान्तरेऽपि तुल्यमेषां सालम्बनत्वमित्याशंक्याऽऽह—**इतरथेति** । अस्तु कल्पना का हानिस्तत्राऽऽह—**संयोगेति** । अप्रत्यक्षत्वमश्रावणत्वम् । पूर्वत्रापरितोषे हेतूक्तिसमासावितिशब्दः । अपरितोषहेतुसत्त्वे प्रथमपक्षायोगं फलमाह—**अत इति** । वर्णमात्रस्याप्रत्यभिज्ञानादुदात्तादिमत्तयैव तद्धा-

१ पटुत्वमृदुत्वादीति पाठान्तरम् । २ ध्वनिः । ३ संयोगविभागकृतो भेद इति शेषः ।

अपि च नैवैतदभिनिवेष्टव्यमुदात्तादिभेदेन वर्णानां प्रत्यभिज्ञायमानानां भेदो भवेदिति ॥ न ह्यन्यस्य भेदेनान्यस्याभिद्यमानस्य भेदो भवितुमर्हति ॥ न हि व्यक्तिभेदेन जातिं भिन्नां मन्यन्ते ॥ वर्णेभ्यश्चार्थप्रतीतेः सम्भवात्स्फोटकल्पनाऽनर्थिका ॥ न कल्पयाम्यहं स्फोटं प्रत्यक्षमेव त्वेनमवगच्छामि ॥ एकैकवर्णग्रहणाहितसंस्कारायां बुद्धौ झटिति प्रत्यवभासनादिति चेत् ॥ न ॥ अस्या अपि बुद्धेर्वर्णविषयत्वात् । एकैकवर्णग्रहणोत्तरकाला हीयमेका बुद्धिर्गौरिति समस्तवर्णविषया नार्थान्तरविषया ॥ कथमेतदवगम्यते ॥ यतोऽस्यामपि बुद्धौ गकारादयो

रत्नप्रभा ।

तेष्वनुगता वर्णा भिद्यन्त इत्युक्तम् । तदेव दृष्टान्तेन द्रढयति–**अपि चेति** ॥ यथा खण्डमुण्डादिविरुद्धानेकव्यक्तिष्वभिन्नं गोत्वं, तथा ध्वनिषु वर्णा अभिन्ना एवेत्यर्थः । उदात्तादिर्ध्वनिः । तद्भेदेन हेतुना वर्णानामपीति योजना । प्रत्यभिज्ञाविरोधादित्यक्षरार्थः । यद्वा उदात्तत्वादिभेदविशिष्टतया प्रत्यभिज्ञायमानत्वाद्वर्णानां भेद इत्याशंक्य दृष्टान्तेन निरस्यति—**अपि चेति** ॥ वर्णानां स्थायित्वं प्रसाध्य तेषामेव वाचकत्वं वक्तुं स्फोटं विघटयति–**वर्णेभ्यश्चेति** ॥ कल्पनामसहमान आशंकते–**नेति** ॥ चक्षुषा दर्पणयुक्तायां बुद्धौ मुखवत्, श्रोत्रेण श्रवणयुक्तायां बुद्धौ विनैव हेत्वन्तरं स्फोटः प्रत्यक्ष इत्याह–**झटितीति** ॥ यस्यां संविदि योऽर्थो भासते, सा तत्र प्रमाणम् । एकपदमिति बुद्धौ वर्णा एव स्फुरन्ति, नातिरिक्तः स्फोटः प्रमाणमित्याह–**नास्या अपीत्यादिना** ॥ ननु गोपदबुद्धेः स्फोटो विषयः ।

भामती ।

गृह्यमाणे तद्धर्मा न शक्या ग्रहीतुमिति, एवं नामास्तु तथा तुष्यतु परः । तथाप्यदोष इत्यर्थः । तदनेन प्रबन्धेन क्षणिकत्वेन वर्णानामशक्यसंगतिग्रहतया यदवाचकत्वमापादितं वर्णानां तदपाकृतम् । व्यस्तसमस्तप्रकारद्वयासंभवेन तु यदासञ्जितं तन्निराचिकीर्षुराह–**वर्णेभ्यश्चार्थप्रतीतेरिति** । कल्पनाममृष्यमाण एकदेश्याह–**न कल्पयामीति** । निराकरोति–**न अस्या अपि बुद्धेरिति** । निरूपयतु तावद्गौरित्येकं पदमिति धियमायुष्मान् । किमियं पूर्वानुभूतान्गकारादीनेव सामस्त्येनावगाहते किंवा गकाराद्यतिरिक्तं, गवयमिव वराहादिभ्यो विलक्षणम् । यदि गकारादिविलक्षणमवभासयेत्, गकारादिरूपितः प्रत्ययो न स्यात् । न हि वराहधीर्महिषरूपितं वराहमवगाहते । पदतत्त्वमेकं प्रत्येकमभिव्यञ्जयन्तो ध्वनयः प्रयत्नभेदभिन्नास्तुल्यस्थानकरणनिष्पाद्यतयान्योन्यविसदृशतत्तत्पदव्यञ्जकध्वनिसादृश्येन स्वव्यञ्जनीयस्यैकस्य पदतत्त्वस्य मिथो विसदृशानेकपदसादृश्यान्यापादयन्तः सादृश्योपधानभेदादेकमप्यभागमपि नानेव भागवदिव

आनन्दगिरीय–न्यायनिर्णयः ।

नात्तदारोपकल्पनानुपपत्तेर्द्वितीयोऽपि पक्षो नेत्याशंक्याऽऽह–**अपि चेति** । विरुद्धधर्मत्वादग्निज्वालादिवद्भेदः स्यादित्याशंक्याऽऽह–**न हीति** । तदेवोदाहरणेन स्फोरयति—**न हीति** । खण्डमुण्डाद्युपरक्ततया प्रत्यभिज्ञायमानगोत्ववदुदात्तादिमत्त्वेन भातानामपि वर्णानां न तात्त्विकं नानात्वमिति भावः । प्रत्यभिज्ञया स्थायित्वं वर्णानामुक्त्वा तेषामेव वाचकत्वं वक्तुं स्फोटं विघटयति–**वर्णेभ्यश्चेति** । कल्पनाममृष्यन्नाह–**नेति** । कथं तर्हि तद्धीस्तत्राऽऽह–**प्रत्यक्षमिति** । तथा स्फोटावगतिं स्फुटयति–**एकैकेति** । वर्णेषु व्यञ्जकेषु दृष्टेषु तद्व्यङ्ग्यतया स्फोटो विनैव संप्रयोगं चकास्तीत्याह–**झटितीति** । यः खल्वाकारो यस्यां बुद्धौ स्फुरति स तदालम्बनम् । न चात्र कश्चिदाकारो वर्णातिरिक्तो भाति । तेनास्या वर्णगामित्वान्नातिरिक्ते स्फोटे मानतेत्याह–**नास्या इति** । वर्णगामित्वमस्यास्तद्भानोत्तरत्वादसिद्धमित्याशंक्याऽऽह–**एकैकेति** । सर्ववर्णविषयत्वे तदितरस्फोटविषयत्वे च तुल्ये न पक्षपातहेतुरिति शंकते—**कथमिति** । पक्षपाते हेतुमाह–**यत इति** । गौरितिबुद्धौ गकारादिवर्णानामेवानुवृत्तावपि कुतोऽस्यास्तदालम्बनत्वं स्फोट-

**वर्णा अनुवर्त्तन्ते, न तु दकारादयः ॥ यदि ह्यस्या बुद्धेर्गकारादिभ्यो-ऽर्थान्तरं स्फोटो विषयः स्यात्ततो दकारादय इव गकारादयोऽप्यस्या बुद्धेर्व्यावर्तेरन् ॥ न तु तथास्ति ॥ तस्मादियमेकबुद्धिर्वर्णविषयैव स्मृतिः ॥ नन्वनेकत्वाद्वर्णानां नैकबुद्धिविषयतोपपद्यत इत्युक्तम् ॥ तत्प्रति ब्रूमः ॥ सम्भवत्यनेकस्याप्येकबुद्धिविषयत्वम्-पंक्तिर्वनं सेना दश शतं सहस्र-मित्यादिदर्शनात् ॥ या तु गौरित्येकोऽयं शब्द इति बुद्धिः, सा बहुष्वेव**

रत्नप्रभा ।

गकारादीनां तु व्यञ्जकत्वादनुवृत्तिरित्यत आह—**यदि हीति** ॥ व्यंग्यत्वह्निबुद्धौ व्यञ्जकधूमानुवृत्ते-रदर्शनादित्यर्थः । वर्णसमूहालम्बनत्वोपपत्तेर्न स्फोटः कल्पनीयः, पदार्थान्तरकल्पनागौरवादित्याह—**तस्मादिति** ॥ अनेकस्याप्यौपाधिकमेकत्वं युक्तमित्याह—**सम्भवतीति** ॥ ननु तत्रैकदेशादिरुपाधि-रस्ति, प्रकृते क उपाधिरित्यत आह—**या त्विति** ॥ एकार्थे शक्तमेकं पदं, प्रधानार्थे एकस्मिन् तात्प-र्यवदेकं वाक्यमित्येकार्थसम्बन्धादेकत्वोपचार इत्यर्थः । न चैकपदत्वे ज्ञाते एकार्थज्ञानम्, अस्मिन् ज्ञाते तदित्यन्योन्याश्रय इति वाच्यम् । उत्तमवृद्धोक्तानां वर्णानां क्रमेणान्त्यवर्णश्रवणानन्तरं बालस्यैकस्मृ-त्यारूढानां मध्यमवृद्धस्य प्रवृत्त्यादिलिङ्गानुमितैकार्थधीहेतुत्वनिश्चये सत्येकपदवाक्यत्वनिश्चयात् । वर्ण-

भामती ।

भासयन्ति, मुखमिवैकं नियतवर्णपरिमाणस्थानसंस्थानभेदमपि मणिकृपाणदर्पणादयोऽनेकमनेकवर्णपरिमाणसं-स्थानभेदम् । एवं च कल्पिता एवास्य भागा वर्णा इति चेत्, तत्किमिदानीं वर्णभेदानसत्यपि बाधके मिथ्येति वक्तुमध्यवसितोऽसि । एकधीरेव नानात्वस्य बाधिकेति चेत्, हन्तास्यां नाना वर्णाः प्रथन्त इति नानात्वावभास एवैकत्वं कस्मान्न बाधते । अथ वा वनसेनादिबुद्धिवदेकत्वनानात्वे न विरुद्धे । नो खलु सेनावनबुद्धी गजपदातितुरगादीनां चम्पकाशोककिंशुकादीनां च भेदमपबाधमाने उदीयेते, अपि तु भिन्नानामेव सतां केनचिदेकेनोपाधिनावच्छिन्नानामेकत्वमापादयतः । न च परोपाधिकेनैकत्वेन स्वाभाविकं नानात्वं विरुध्यते । न ह्यौपचारिकमग्नित्वं माणवकस्य स्वाभाविकनरत्वविरोधि । तस्मात्प्रत्येक-वर्णानुभवजनितभावनानिचयलब्धजन्मनि निखिलवर्णावगाहिनि स्मृतिज्ञान एकस्मिन्भासमानानां वर्णानां तदेकविज्ञानविषयतया वैकार्थधीहेतुतया वैकत्वमौपचारिकमवगन्तव्यम् । न चैकार्थधीहेतुत्वेनैकत्वमेकत्वेन चैकार्थधीहेतुभाव इति परस्पराश्रयम् । न ह्यर्थप्रत्ययात्पूर्वमेतावन्तो वर्णा एकस्मृतिसमारोहिणो न प्रथन्ते ।

आनन्दगिरीय-न्यायनिर्णयः ।

व्यञ्जकत्वेनापि तदनुवृत्तियोगादित्याशंक्याह—**यदीति** । न खल्वस्यां बुद्धौ विषयभूतस्फोटव्यञ्जकतया वर्णानुवृत्तिर्वह्निबुद्धाविव धूमस्य लक्ष्यबुद्धौ लक्षणस्य भानासिद्धेरिति भावः । नन्वस्या बुद्धेः स्फोटाविष-यत्वे न वर्णविषयत्वमपि तेषां प्रागेव प्रत्येकं दृष्टतया प्रकृतबुद्ध्यनपेक्षत्वात्तत्राऽऽह—**तस्मादिति** । अनेके-ष्वेकत्वबुद्धेर्भ्रमत्वमुक्तं स्मारयति—**नन्विति** । अनेकस्य निरुपाधिकैकबुद्ध्यविषयत्वेऽपि सोपाधिकतया तद्विषयत्वं स्यादित्याह—**तदिति** । तत्रैकदेशसंबन्धादिनिबन्धना धीरिह तु किंकृतेत्याशंक्याऽऽह—**या त्विति** । न चैकार्थधीहेतुत्वे सत्येकपदत्वं तस्मिंश्च तद्धीहेतुत्वमित्यन्योन्याश्रयत्वमर्थज्ञानात्पूर्वं केषांचि-द्वर्णानामेकस्मृत्यारूढानामेकार्थधीहेतुत्वादेकपदत्वनिश्चयात् । न चानेकसंस्काराणां नैकस्मृतिहेतुत्वम् । कुश-काशादिष्वनेकसंस्कारजन्यैकस्मृतिदर्शनात् । क्रमवद्वर्णसंस्काराणां स्थायित्वादन्त्यवर्णदृष्ट्यनन्तरं साहित्या-त्तेषां सर्ववर्णविषयैकस्मृतिहेतुत्वसिद्धेरिति भावः । वर्णानामेकस्मृत्यारोहिणामेकपदत्वे पदविशेषसिद्धौ क्रमा-

१ न तु तथास्तीति क्वाचित्क एव पाठः । २ द्विर्गौरिति समस्तवर्णेति पाठान्तरम् । ३ पंक्तिर्वनसेनादौ । ४ एकार्थे । ५ एकपदत्वज्ञानम् ।

वर्णेषु एकार्थावच्छेदनिबन्धनौपचारिकी वनसेनादिबुद्धिवदेव ॥ अत्राह-यदि वर्णा एव सामस्त्येनैकबुद्धिविषयतामापद्यमानाः पदं स्युः, ततो जारा राजा कपिः पिक इत्यादिषु पदविशेषप्रतिपत्तिर्न स्यात् ॥ त एव हि वर्णा इतरत्र चेतर एव प्रत्यवभासन्त इति ॥ अत्र वदामः ॥ सत्यपि समस्तवर्णप्रत्यवमर्शे यथा—क्रमानुरोधिन्य एव पिपीलिकाः पङ्क्तिबुद्धिमारोहन्ति, एवं क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोक्ष्यन्ति ॥ तत्र वर्णानामविशेषेऽपि क्रमविशेषकृता पदविशेषप्रतिपत्तिर्न विरुध्यते ॥ वृद्धव्यवहारे चेमे वर्णाः क्रमाद्यनुगृहीता गृहीतार्थविशेषसम्बन्धास्सन्तः स्वव्यवहारेऽप्येकैकवर्णग्रहणानन्तरं समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्यवभासमानास्तन्तमर्थमव्यभिचारेण प्रत्याययिष्यन्तीति वर्णवादिनो लघीयसी कल्पना ॥ स्फोटवादिनस्तु दृष्टहानिरदृष्टकल्पना च ॥ वर्णाश्चेमे क्रमेण गृह्यमाणाः स्फोटं व्यञ्जयन्ति ॥ स स्फोटोऽर्थं

रत्नप्रभा ।

साम्येऽपि पदभेददृष्टेर्वर्णातिरिक्तं पदं स्फोटाख्यमंगीकार्यमिति शङ्कते—अत्राहेति ॥ क्रमभेदाद्वर्णेष्वेव पदभेददृष्टिरिति परिहरति—अत्रेति ॥ ननु नित्यविभूनां वर्णानां कथं क्रमः, ? कथं वा ? पदत्वज्ञानेनार्थधीहेतुत्वं तत्राह—वृद्धेति ॥ व्युत्पत्तिदशायामुचारणक्रमेण उपलब्धिक्रममुपलभ्यमानवर्णेष्वारोप्यैते वर्णा एतत्क्रमैतत्संख्यावन्त एतदर्थशक्ता इति गृहीताः सन्तः श्रोतुः प्रवृत्तिकाले तथैव स्मृत्यारूढाः स्वस्वार्थं बोधयन्तीत्यर्थः । स्थायिवर्णवादमुपसंहरति—वर्णेति ॥ दृष्टं वर्णानामर्थबोधकत्वम् । अदृष्टः

भामती ।

न च तत्प्रथानन्तरं वृद्धस्यार्थधीर्नोन्नीयते, तदुन्नयनाच्च तेषामेकार्थधियं प्रति कारकत्वमेकमवगम्यैकपदत्वाध्यवसानमिति नान्योन्याश्रयम् । न चैकस्मृतिसमारोहिणां क्रमाक्रमविपरीतक्रमप्रयुक्तानामभेदो वर्णानामिति यथाकथंचित्प्रयुक्तेभ्य एतेभ्योऽर्थप्रत्ययप्रसङ्ग इति वाच्यम् । उक्तं हि—'यावन्तो यादृशा ये च पदार्थप्रतिपादने । वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः ॥' इति । ननु पंक्तिबुद्धावेकस्यामक्रमायामपि वास्तवी शालादीनामस्ति पंक्तिरिति तथैव प्रथा युक्ता, न च तथेह वर्णानां नित्यानां विभूनं चास्ति वास्तवः क्रमः, प्रत्ययोपाधिस्तु भवेत्, स चैक इति, कुतस्त्यः क्रम एषामिति चेत् । न एकस्यामपि स्मृतौ वर्णरूपवत्क्रमवत्पूर्वानुभूततापरामर्शात् । तथाहि—जारा—राजेति पदयोः प्रथयन्त्योः स्मृतिधियोस्तत्त्वेऽपि वर्णानां क्रमभेदात्पदभेदः स्फुटतरं चकास्ति । तथा च नाक्रमविपरीतक्रमप्रयुक्तानाम-

आनन्दगिरीय—न्यायनिर्णयः ।

पेक्षा न स्यादित्याह—अत्रेति । तदपेक्षाभावे हेतुः—त एवेति । दृष्टान्तेन प्रत्याह—अत्रेति । क्रमानुरोधिनां वर्णानां पदधीविषयत्वे फलितमाह—तत्रेति । कथमेतेषां वर्णानामेतावतामेतत्क्रमकाणामेतत्पदत्वमित्यादिविशेषधीस्तत्राऽऽह—वृद्धेति । व्युत्पत्तिदशा वृद्धव्यवहारः । क्रमादीत्यादिशब्देन संख्या गृह्यते । स्वव्यवहारो मध्यमवृद्धस्य प्रवृत्त्यवस्था । तादृशत्वं व्युत्पत्तिदशादृष्टक्रमाद्यनुगृहीतत्वम् । तंतमर्थं गृहीतसंबन्धप्रतियोगिनमिति यावत् । 'यावन्तो यादृशा ये च यदर्थप्रतिपादकाः । वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः ॥' इति न्यायेनाऽऽह—इति वर्णेति । स्फोटवादिनस्तु यद्दृष्टं वर्णानामर्थबोधकत्वं तस्य हानिरदृष्टस्य स्फोटस्य कल्पना सा च गौरवदुष्टेत्याह—स्फोटेति । किंच, येन हेतुना वर्णानामर्थव्यञ्जकत्वं निरस्तं तेनैव तेषां न स्फोटव्यञ्जकत्वमपि । यदि कथंचिदमी स्फोटं भासयेयुस्तर्हि तथैवार्थमिति युक्तं लाघवादित्याह—वर्णाश्चेति । स्फोटपक्षं प्रतिक्षिपता वर्णपक्षः समर्थितः । संप्रति वर्णानामनित्यत्वेऽपि

**व्यनक्तीति गरीयसी कल्पना स्यात् ॥ अथापि नाम प्रत्युच्चारणमन्ये-ऽन्ये च वर्णाः स्युः । तथापि प्रत्यभिज्ञालम्बनभावेन वर्णसामान्यानाम-वश्याभ्युपगम्यत्वाद्या वर्णेष्वर्थप्रतिपादनप्रक्रिया रचिता, सा सामान्ये-षु सञ्चारयितव्या ॥ ततश्च नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यविरुद्धम् ॥ २८ ॥**

## अत एव च नित्यत्वम् ॥ २९ ॥

**स्वतन्त्रस्य कर्तुरस्मरणादिति स्थिते वेदस्य नित्यत्वे देवादिव्यक्तिप्रभ-वाभ्युपगमेन तस्य विरोधमाशंक्य "अतः प्रभवाद्" [ १ । ३ । २८ ] इति परिहृत्येदानीं तदेव वेदस्य नित्यत्वं स्थितं द्रढयति-अत एव च नित्यत्वमि-ति । अत एव च नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वाद्वेदशब्दनित्य-त्वमपि प्रत्येतव्यम् । तथा च मन्त्रवर्णः,-"यज्ञेन वाचः पदवीयमायन्तामन्व-विन्दन्नृषिषु प्रविष्टाम्" [ ऋ० सं० १० । ७१ । ३] इति स्थितामेव वाच-**

---

रत्नप्रभा ।

स्फोटः । सम्प्रति वर्णानामस्थिरत्वमंगीकृत्य प्रौढिवादेन स्फोटं विघटयति-**अथापीति** ॥ स्थिराणि गत्वादिसामान्यानि क्रमविशेषवन्ति गृहीतसङ्गतिकानि अर्थबोधकानीति क्लृप्तेषु सामान्येषु प्रक्रिया सञ्चारयितव्या न त्वक्लृप्तः स्फोटः कल्पनीय इत्यर्थः । वर्णानां स्थायित्ववाचकत्वयोः सिद्धौ फलितमाह-**ततश्चेति ॥ २८ ॥** पूर्वतन्त्रवृत्तानुवादपूर्वकं सूत्रं व्याचष्टे-**कर्तुरित्यादिना** ॥ पूर्वतन्त्रसिद्धमेव वेदस्य नित्यत्वं देवादिव्यक्तिसृष्टौ तद्वाचकशब्दस्यापि सृष्टेरसिद्धमित्याशंक्य नित्याकृतिवाचकाच्छब्दा-द्व्यक्तिजन्मोक्त्या सांकेतिकत्वं निरस्य वेदः, अवान्तरप्रलयावस्थायी, जगद्धेतुत्वादीश्वरवदित्यनुमा-नेन द्रढयतीत्यर्थः । **यज्ञेन** पूर्वसुकृतेन । **वाचः** वेदस्य लाभयोग्यतां प्राप्ताः सन्तो याज्ञिकाः **ताम्**

भामती ।

विशेषः स्मृतिबुद्ध्यवेकस्यां वर्णानां क्रमप्रयुक्तानाम् । यथाहुः-'पदावधारणोपायान्बहूनिच्छन्ति सूरयः । क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृतीः ॥' इति । शेषमतिरोहितार्थम् । दिङ्मात्रमत्र सूचितं, विस्तरस्तु तत्त्वबिन्दावगन्तव्य इति । अलं वा नैयायिकैर्विवादेन । सन्त्वनित्या एव वर्णास्तथापि गत्वाद्यवच्छेदे-नैव संगतिग्रहोऽनादिश्च व्यवहारः सेत्स्यतीत्याह-**अथापि नामेति ॥ २८ ॥ अत एव च नित्य-त्वम् ।** ननु प्राच्यामेव मीमांसायां वेदस्य नित्यत्वं सिद्धं तत्किं पुनः साध्यत इत्यत आह-**स्वतन्त्रस्य कर्तुरस्मरणादेव हि स्थिते वेदस्य नित्यत्व इति ।** न ह्यनित्याज्जगदुत्पत्तुमर्हति, तस्याप्युत्पत्तिम-

आनन्दगिरीय-न्यायनिर्णयः ।

गोत्वादिजात्यभेदेनैव संगतिधीरनादिव्यवहारश्चेति प्रौढिमारूढः सन्नाह-**अथापीति** । अर्थप्रतिपादन-प्रक्रिया "वर्णेभ्यश्चार्थप्रतीतेः संभवात्"इत्याद्या । वर्णानां नित्यत्ववाचकत्वयोः सिद्धौ फलितमाह-**ततश्चेति ॥ २८ ॥** जगतः शब्दजत्वमुक्तमुपजीव्य शब्दनित्यत्वमाह-**अत एवेति** । पूर्वमीमांसायामेव वेदनित्य-त्वस्य सिद्धत्वादिह तन्नित्यत्वसाधनमकिंचित्करमित्याशंक्य सूत्रतात्पर्यमाह-**कर्तुरिति** । पूर्वतन्त्रसिद्धमेव वेदनित्यत्वं देवादिजगदुत्पत्तौ वाचकशब्दस्यापि तद्भावादयुक्तमिति शंकिते शब्दादेव नित्याकृतिमतस्तज्ज-न्मेति समाहितमेवं वेदोऽवान्तरप्रलयस्थायी जगद्धेतुत्वादीश्वरवदित्यनुमानेन दृढीकर्तुमिदं सूत्रमित्यर्थः । तत्तात्पर्यमुक्त्वाऽक्षराणि व्याकरोति-**अत इति** । अनुमानसिद्धेऽर्थे श्रुतिमनुकूलयति-**तथा चेति** । यज्ञेन पुण्येन कर्मणा वाचो वेदस्य पदवीयं मार्गयोग्यतां ग्रहणयोग्यतामायन्नाप्तवन्तस्ततस्तां वाचमृषिषु प्रविष्टां विद्यमानामन्वविन्दन्ननुलब्धवन्तो याज्ञिका इति यावत् । तस्य तात्पर्यमाह-**स्थितामिति** । अनु-

मनुविन्नां दर्शयति। वेदव्यासश्चैवमेव स्मरति—"युगान्तेऽन्तर्हितान्वेदान्से-तिहासान्महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा" इति ॥२९॥

**समाननामरूपत्वाच्चाऽऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥३०॥**

अथापि स्याद् यदि पश्वादिव्यक्तिवद्देवादिव्यक्तयोऽपि सन्तत्यैवोत्पद्येरन्, निरुध्येरंश्च ॥ ततोऽभिधानाभिधेयाभिधातृव्यवहाराविच्छेदात्सम्बन्धनित्यत्वेन विरोधः शब्दे परिह्रियेत ॥ यदा तु खलु सकलं त्रैलोक्यं परित्यक्तनामरूपं निर्लेपं प्रलीयते प्रभवति चाभिनवमिति श्रुतिस्मृतिवादा

रत्नप्रभा ।

ऋषिषु स्थितां लब्धवन्त इति मन्त्रार्थः। **अनुविन्नाम्** उपलब्धाम्। **पूर्वम्** अवान्तरकल्पादौ ॥ २९॥ ननु महाप्रलये जातेरप्यसत्त्वाच्छब्दार्थसम्बन्धानित्यत्वमित्याशंक्याह—**समानेति** ॥ सूत्रं निरस्याशङ्कामाह—**अथापीति** ॥ व्यक्तिसन्तत्याः जातीनाम् अवान्तरप्रलये सत्त्वात्सम्बन्धस्तिष्ठति व्यवहाराविच्छेदाज्ज्ञायते चेति वेदस्यानपेक्षत्वेन प्रामाण्ये न कश्चिद्विरोधः स्यात्। निर्लेपलये तु सम्बन्धनाशात्पुनः सृष्टौ केनचित्पुंसा संकेतः कर्तव्य इति पुरुषबुद्धिसापेक्षत्वेन वेदस्याप्रामाण्यम्, अध्यापकस्याश्रयस्य नाशादाश्रितस्यानित्यत्वं च प्राप्तमित्यर्थः। महाप्रलयेऽपि निर्लेपलयोऽसिद्धः। सत्कार्यवादात्। तथा च संस्कारात्मना शब्दार्थतत्सम्बन्धानां सतामेव पुनः सृष्टावभिव्यक्तेर्नानित्यत्वम्। अभिव्यक्तानां पूर्वकल्पीयना-

भामती ।

त्वेन सापेक्षत्वात्। तस्मान्नित्यो वेदः, जगदुत्पत्तिहेतुत्वात्, ईश्वरवदिति सिद्धमेव नित्यत्वमनेन दृढीकृतम्। शेषमतिरोहितार्थम् ॥ २९ ॥ **समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च।** शङ्कापदोत्तरत्वात्सूत्रस्य शङ्कापदानि पठति—**अथापि स्यादिति**। अभिधानाभिधेयाविच्छेदे हि संबन्धनित्यत्वं भवेत्। एवमध्यापकाध्येतृपरंपराविच्छेदे वेदस्य नित्यत्वं स्यात्। निरन्वयस्य तु जगतः प्रविलयेऽत्यन्तासतश्चापूर्वस्योत्पादेऽभिधानाभिधेयावत्यन्तमुच्छिन्नाविति किमाश्रयः संबन्धः स्यात्। अध्यापकाध्येतृसंतानविच्छेदे च किमाश्रयो वेदः स्यात्। न च जीवास्तद्वासनावासिताः सन्तीति वाच्यम्। अन्तःकरणाद्युपाधिकल्पिता हि ते तद्विच्छेदे न स्थातुमर्हन्ति। न च ब्रह्मणस्तद्वासना, तस्य विद्यात्मनः शुद्धस्वभावस्य तदयोगात्। ब्रह्मणश्च सृष्ट्यादावन्तःकरणानि तदवच्छिन्नाश्च जीवाः प्रादुर्भवन्तो न पूर्वकर्मविद्यावासनावन्तो भवितुमर्हन्ति, अपूर्वत्वात्। तस्माद्विरुद्धमिदं शब्दार्थसंबन्धवेदनित्यत्वं सृष्टिप्रलया-

आनन्दगिरीय—न्यायनिर्णयः ।

विन्नामनुलब्धामित्येतत्। तत्रैव स्मृतिमाह—**वेदेति**। वेदान्कर्मज्ञानार्थान्मन्त्रब्राह्मणवादान्। सेतिहासानितिहासशब्दितनानार्थवादोपेतान्प्रसिद्धेतिहाससहितान्वा तेषामप्यवान्तरप्रलये सत्त्वात्। पूर्वमवान्तरसर्गादावित्यर्थः। तपसाऽपि न तल्लाभोऽध्यापकाभावादित्याशंक्याऽऽह—**अनुज्ञाता इति** ॥ २९ ॥ महाप्रलये जातेरपि सत्त्वासिद्धेः शब्दार्थसंबन्धानित्यत्वमाशंक्य प्रत्याह—**समानेति**। सूत्रव्यावर्त्यामाशंकामाह—**अथापीति**। अवान्तरलये शब्दार्थसंबन्धानित्यत्वाभावेऽपीति यावत्। तत्र विरोधसमाधिमुक्तमङ्गीकरोति—**यदीति**। अभिधातृशब्देनाध्यापकाध्येतारावुक्तौ। अभिधानाभिधेयव्यवहाराविच्छेदे संबन्धनित्यत्वमध्यापकाध्येतृपरम्पराविच्छेदे च वेदनित्यतेत्यविरोध इत्यर्थः। महाप्रलये तु नाविरोध इत्याह—**यदा त्विति**। जगतो निरन्वयनाशेऽत्यन्तापूर्वस्य चोत्पत्तौ संबन्धनित्यत्वाद्यसिद्धिः संबन्धिनोरभावे तदभावादध्यापकाद्यभावे वाऽऽश्रयाभावाद्ब्रह्मणश्च केवलस्यातदाश्रयत्वादतो महाप्रलये विरोधतादवस्थ्यमित्यर्थः। तं परिहर्तुं

१ ज्ञायते वेति पाठान्तरमन्यपुस्तके ।

**वदन्ति, तदा कथमविरोध इति ॥ तत्रेदमभिधीयते ॥ समाननामरूपत्वादिति । तदापि संसारस्यानादित्वं तावदभ्युपगन्तव्यम् । प्रतिपादयिष्यति चाचार्यः संसारस्यानादित्वम्–"न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च" [ व्या० सू० २ । १ । ३६ ] इति ॥ अनादौ च संसारे यथा–स्वापप्रबोधयोः प्रलयप्रभवश्रवणेऽपि पूर्वप्रबोधवदुत्तरप्रबोधेऽपि व्यवहारान्न कश्चिद्विरोधः, एवं कल्पान्तरप्रभवप्रलययोरपीति द्रष्टव्यम् ॥ स्वापप्रबोधयोश्च प्रलयप्रभवौ श्रूयेते–"यदा सुप्तः स्वप्नं न कश्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति, तदैनं वाक्**

---

रत्नप्रभा ।

मरूपसमानत्वान्न सङ्केतः केनचित्कार्यः । विषमसृष्टौ हि संकेतापेक्षा, न तुल्यसृष्टाविति परिहरति–**तत्रेदमित्यादिना** ॥ नन्वाद्यसृष्टौ संकेतः केनचित्कार्य इत्यत आह–**तदापीति** ॥ महासर्गमहाप्रलयप्रवृत्तावपीत्यर्थः । नन्वस्त्वनादिसंसारे सम्बन्धस्यानादित्वं, तथापि महाप्रलयव्यवधानादस्मरणे कथं वेदार्थव्यवहारस्तत्राह–**अनादौ चेति** ॥ न कश्चिद्विरोधः शब्दार्थसम्बन्धस्मरणादेरिति शेषः । स्वापप्रबोधयोर्लयसर्गासिद्धिमाशंक्य श्रुतिमाह–**स्वापेति** ॥ अथ तदा सुषुप्तौ प्राणे परमात्मनि जीव एकीभवति ।

भामती ।

भ्युपगमेनेति । अभिधातृग्रहणेनाध्यापकाध्येतारावुक्तौ । शङ्कां निराकर्तुं सूत्रमवतारयति–**तत्रेदमभिधीयते समाननामरूपत्वादिति** । यद्यपि महाप्रलयसमये नान्तःकरणादयः समुदाचरद्वृत्तयः सन्ति तथापि स्वकारणेऽनिर्वाच्यायामविद्यायां मीनाः सूक्ष्मेण शक्तिरूपेण कर्मविक्षेपकाविद्यावासनाभिः सहावतिष्ठन्त एव । तथा च स्मृतिः–'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥' इति । ते चावधिं प्राप्य परमेश्वरेच्छाप्रचोदिता यथा कूर्मदेहे निलीनान्यङ्गानि ततो निःसरन्ति, यथा वा वर्षापाये प्राप्तमृद्भावानि मण्डूकशरीराणि तद्वासनावासिततया घनघनाघनासारसुहितानि पुनर्मण्डूकदेहभावमनुभवन्ति, तथा पूर्ववासनावशात्पूर्वसमाननामरूपाण्युत्पद्यन्ते । एतदुक्तं भवति–यद्यपीश्वरात्प्रभवः संसारमण्डलस्य, तथापीश्वरः प्राणभृत्कर्माविद्यासहकारी तदनुरूपमेव सृजति । न च सर्गप्रलयप्रवाहस्यानादितामन्तरेणैतदुपपद्यत इति सर्गप्रलयाभ्युपगमेऽपि संसारानादिता न विरुध्यत इति । तदिदमुक्तम्–**उपपद्यते चाप्युपलभ्यते च** आगमत इति । स्यादेतत् । भवत्वनादिता संसारस्य, तथापि महाप्रलयान्तरिते कुतः स्मरणं वेदानामित्यत आह–**अनादौ च संसारे यथा स्वापप्रबोधयोरिति** । यद्यपि प्राणमात्रावशेषतातन्निःशेषते सुषुप्तप्रलयावस्थयोर्विशेषः, तथापि कर्मविक्षेपसंस्कारसहितलयलक्षणाविद्यावशेषतासाम्येन स्वापप्रलयावस्थयोरभेद इति द्रष्टव्यम् । ननु नापर्यायेण सर्वेषां सुषुप्तावस्था, केषांचित्तदा प्रबोधात्, तेभ्यश्च सुप्तोत्थितानां ग्रहणसंभवात्,

आनन्दगिरीय–न्यायनिर्णयः ।

सूत्रं पातयति–**तत्रेति** । तदिदं व्याकुर्वन्ननादित्वं संसारस्य प्रतिजानीते–**तदाऽपीति** । महाप्रलयमहासर्गाङ्गीकारेऽपीति यावत् । तत्र वक्ष्यमाणन्यायं हेतूकरोति–**प्रतिपादयिष्यतीति** । तस्यानादित्वेऽपि महाप्रलयव्यवधानादस्मरणे वेदानां कुतस्तदीयो व्यवहारस्तत्राऽऽह–**अनादौ चेति** । न कश्चिद्विरोधः शब्दार्थसंबन्धनित्यत्वादेरिति शेषः।स्वापे लये च प्राणमात्रावशेषानवशेषाभ्यां विशेषेऽपि कर्मविक्षेपसंस्कारसहिताविद्यावशेषतासाम्यादनयोः साम्यम् । कथं पुनः स्वापे प्रलयस्य प्रबोधे च प्रभवस्य श्रवणं तदाह–**स्वापेति** । यदेत्युपक्रमादथशब्दस्तदेत्यर्थे । प्राणः परमात्मा । सुषुप्तस्य परस्मिन्नेकीभावावस्था तदेत्युक्ता । एनं प्रकृतं प्राणं परमात्मानमन्तर्बहिरिन्द्रियाणि सविषयाणि स्वापे परमात्मनि लीनानीत्यर्थः ।

---

१ श्रुतिरस्तीति निरूपयितुमाहेत्यर्थः ।

सर्वैर्नामभिः सहाप्येति, चक्षुस्सर्वै रूपैस्सहाप्येति, श्रोत्रं सर्वैश्शब्दैस्सहाप्येति, मनस्सर्वैर्ध्यानैस्सहाप्येति, स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतस्सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनस्सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" [ कौषी० उ० ३ । ३ ] इति ॥ स्यादेतत्—स्वापे पुरुषान्तरव्यवहाराविच्छेदात्स्वयं च सुषुप्तप्रबुद्धस्य पूर्वं प्रबोधव्यवहारानुसन्धानसम्भवादविरुद्धम् ॥ महाप्रलये तु सर्वव्यवहारोच्छेदाज्जन्मान्तरव्यवहारवच्च कल्पान्तरव्यवहारस्यानुसन्धातुमशक्यत्वाद्वैषम्यमिति ॥ नैष दोषः ॥ सत्यपि सर्वव्यवहारोच्छेदिनि महाप्रलये परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसन्धानोपपत्तेः ॥ यद्यपि प्राकृताः प्राणिनो न जन्मान्तरव्यवहारमनुसन्दधाना दृश्यन्ते इति, न तत्प्राकृतवदीश्वराणां भवितव्यम् । यथा हि प्राणित्वाविशेषेऽपि मनुष्यादिस्तम्ब-

---

रत्नप्रभा ।

एनं प्राणं स जीवस्तदैतीति शेषः । **एतस्मात्** प्राणात्मनः । **आयतनम्** गोलकम् । आनन्तर्ये पञ्चमी **प्राणेभ्य** इत्यादौ द्रष्टव्या । स्वप्नवत्कल्पितस्याज्ञातसत्त्वाभावाद्दर्शनं सृष्टिः, अदर्शनं लयः इति दृष्टिसृष्टिपक्षः श्रुत्यभिप्रेत इति भावः । दृष्टान्तवैषम्यमाशंक्य परिहरति—**स्यादित्यादिना** ॥ **विरुद्धम्** अनुसन्धानादिकमिति शेषः । हिरण्यगर्भादयः, पूर्वकल्पानुसन्धानशून्याः, संसारित्वाद्, [illegible]दादिवदित्याशंक्याह—**यद्यपीति**॥इति यद्यपि तथापि न प्राकृतवदिति **योजना** । ज्ञानादेर्निकर्षवदुत्कर्षोऽप्यङ्गीकार्यः, बाधाभावादिति न्यायानुगृहीतश्रुत्यादिभिः सामान्यतो दृष्टानुमानं बाध्यमित्याह—**यथा हीत्यादिना** ॥ ननु

भामती ।

प्रायणकालविप्रकर्षयोश्च वासनोच्छेदकारणयोरभावेन सत्यां वासनायां स्मरणोपपत्तेः शब्दार्थसंबन्धवेदव्यवहारानुच्छेदो युज्यते । महाप्रलयस्त्वपर्यायेण प्राणभृन्मात्रवर्ती, प्रायणकालविप्रकर्षौ च तत्र संस्कारमात्रोच्छेदहेतू स्त इति कुतः सुषुप्तवत्पूर्वप्रबोधव्यवहारवदुत्तरप्रबोधव्यवहार इति चोदयति—**स्यादेतत्—स्वाप इति** । परिहरति—**नैष दोषः** । **सत्यपि व्यवहारोच्छेदिनीति** । अयमभिसंधिः—न तावत्प्रायणकालविप्रकर्षौ सर्वसंस्कारोच्छेदकौ, पूर्वाभ्यस्तस्मृत्यनुबंधाज्जातस्य हर्षभयशोकसंप्रतिपत्तेरनुपपत्तेः । मनुष्यजन्मवासनानां चानेकजात्यन्तरसहस्रव्यवहितानां पुनर्मनुष्यजातिसंवर्तकेन कर्मणाऽभिव्यक्त्यभावप्रसङ्गात्। तस्मान्निकृष्टधियामपि यत्र सत्यपि प्रायणकालविप्रकर्षादौ पूर्ववासनानुवृत्तिः, तत्र कैव कथा परमेश्वरानुग्रहेण धर्मज्ञानवैराग्यैश्वर्यातिशयसंपन्नानां हिरण्यगर्भप्रभृतीनां महाधियाम् । यथा वा आ च मनुष्येभ्य

आनन्दगिरीय—न्यायनिर्णयः ।

प्रबोधे तस्मादेव जगतो जन्मोदाहरति—**स इति** । स सुषुप्तः पुरुषः । यथेत्यस्मात्प्रागुपक्रमवशात्तदेति द्रष्टव्यम् । एतस्मादात्मन इत्यत्रापादानं प्राणः परमात्मैव सर्वे प्राणा वागादयस्तेभ्योऽनन्तरं तदनुग्राहका देवा अग्न्यादयस्तदनन्तरं लोकाः शब्दादिविषयाः । कल्पितस्याज्ञातसत्त्वाभावाद्दृष्ट्यदृष्टिभ्यामुत्पत्तिलयावुक्तौ । व्यावहारिकसत्त्वे त्वनास्थाश्रुतेरित्यनुसंधानयोगायोगाभ्यां दृष्टान्तदार्ष्टान्तिकवैषम्यं शङ्कते—**स्यादिति** । सर्वेषां यौगपद्येनास्वापात्तदा प्रबुद्धेभ्यः सुप्तानां पुनर्व्यवहारग्रहात्कालविप्रकर्षस्य मरणस्य च वासनोच्छेदिनोऽभावात्तत्र स्मरणम् । इह तु विमतो न जन्मान्तरव्यवहारानुसंधानार्हो जनिमृतिव्यवहितत्वादस्मदादिवदित्यनुमानान्न स्मरणमतो दृष्टान्ते शब्दार्थसंबन्धनित्यत्वाद्यविरुद्धं दार्ष्टान्तिके नैवमित्यर्थः।हिरण्यगर्भादीनामनुसंधानसिद्धेर्न वैषम्यमित्याह—**नैष इति**।तेषामस्मदादिसाम्यमाशंक्योक्तम्—**यद्यपीति**। इतिशब्दो यद्यपीत्यनेन संबध्यते। तथाऽपि न प्राकृतवदिति वक्तव्यम्। उक्तमर्थं दृष्टान्तेन साधयति—**यथेति**।

पर्यन्तेषु ज्ञानैश्वर्यादिप्रतिबन्धः परेणपरेण भूयान् भवन्दृश्यते, तथा मनुष्यादिष्वेव हिरण्यगर्भपर्यन्तेषु ज्ञानैश्वर्याद्यभिव्यक्तिरपि परेणपरेण भूयसी भवतीत्येतच्छ्रुतिस्मृतिवादेष्वसकृच्छ्रूयमाणं न शक्यं नास्तीति वदितुम् ॥ ततश्चातीतकल्पानुष्ठितप्रकृष्टज्ञानकर्मणामीश्वराणां हिरण्यगर्भादीनां वर्तमानकल्पादौ प्रादुर्भवतां परमेश्वरानुगृहीतानां सुप्तप्रतिबुद्धवत्कल्पान्तरव्यवहारानुसन्धानोपपत्तिः ॥ तथा च श्रुतिः–"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तꣳ ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" [ श्वेता० ६ । १८ ] इति ॥ स्मरन्ति च शौनकादयो मधुच्छन्दःप्रभृतिभिर्ऋषिभिर्दाशतय्यो दृष्टा इति ॥ प्रतिवेदं

रत्नप्रभा ।

तथापि पूर्वकल्पेश्वराणां मुक्तत्वादस्मिन्कल्पे कोऽनुसन्धातेत्यत आह–**ततश्चेति** ॥ ज्ञानाद्युत्कर्षादित्यर्थः । मुक्तेभ्योऽन्येऽनुसन्धातार इति भावः । परमेश्वरानुगृहीतानां ज्ञानातिशये पूर्वोक्तश्रुतिस्मृतिवादानाह–**तथा चेति** ॥ **पूर्वं** कल्पादौ सृजति **तस्मै च** ब्रह्मणे **प्रहिणोति** गमयति तस्य बुद्धौ वेदानाविर्भावयति **यस्तं** देवं स्वात्माकारं महावाक्योत्थबुद्धौ प्रकाशमानं **शरणं** परममभयस्थानं निःश्रेयसरूपमहं प्रपद्य इत्यर्थः । न केवलमेकस्यैव ज्ञानातिशयः । किन्तु बहूनां शाखाद्रष्टॄणामिति विश्वासार्थमाह–**स्मरन्तीति** ॥ ऋग्वेदो दशमण्डलावयवत्वान् । तत्र भवा ऋचः **दाशतय्यः** । वेदान्तरेऽपि काण्डसूक्तमन्त्राणां द्रष्टारो बोधायनादिभिः स्मृता इत्याह–**प्रतीति** ॥ **किञ्च** मन्त्राणामृष्यादिज्ञानावश्यकत्वज्ञा-

भामती ।

आ च कृमिभ्यो ज्ञानादीनामनुभूयते निकर्षः, एवमा मनुष्येभ्य एवम् आ च भगवतो हिरण्यगर्भाज्ज्ञानादीनां प्रकर्षोऽपि संभाव्यते । तथा च तदभिवदन्तो वेदस्मृतिवादाः प्रामाण्यमप्रत्यूहमश्नुवते । एवं चात्रभवतां हिरण्यगर्भादीनां परमेश्वरानुगृहीतानामुपपद्यते कल्पान्तरसंबन्धिनिखिलव्यवहारानुसंधानमिति । सुगममन्यत् । स्यादेतत् । अस्तु कल्पान्तरव्यवहारानुसंधानं तेषाम् । अस्यां तु सृष्टावन्य एव वेदाः, अन्य एव चैषामर्थाः, अन्य एव वर्णाश्रमाः, धर्माच्चानर्थोऽर्थश्चाधर्मात्, अनर्थश्चेप्सितोऽर्थश्चानीप्सितः, अपूर्वत्वात्सर्गस्य । तस्मात्कृतमत्र कल्पान्तरव्यवहारानुसंधानेन, अकिंचित्करत्वात् । तथा च पूर्वव्यवहारोच्छे-

आनन्दगिरीय–न्यायनिर्णयः ।

आ मानुषादा च स्थाणोर्ज्ञानादिप्रतिबन्धस्योत्तरोत्तरमुत्कर्षप्रतीतिं प्रमाणयति–**दृश्यत इति** । आ मनुष्यादा च हिरण्यगर्भादुत्तरोत्तरज्ञानाद्याधिक्ये मानमाह–**इत्येतदिति** । 'हिरण्यगर्भः समवर्तत' इत्यादयः श्रुतिवादाः । 'ज्ञानमप्रतिमं यस्य' इत्यादयः स्मृतिवादाः । तेषामुक्तेऽर्थे तात्पर्यलिङ्गमभ्यासमाह–**असकृदिति** । पूर्वकल्पीयेश्वराणां कल्पान्तरे मुक्तत्वात्कथं व्यवहितानुसंधानं तत्राऽऽह–**ततश्चेति** । पुरुषविशेषाणां व्यवहितानुसंधानयोगस्य स्थितत्वादिति यावत् । पुरुषविशेषानेवाऽऽह–**अतीतेति** । ईश्वराणां तद्भावनाभाजां यजमानानामित्यर्थः । प्रादुर्भवतां हिरण्यगर्भादिभावेनेति शेषः । तेषां व्यवहितव्यवहारानुसंधाने हेतुमाह–**परमेश्वरेति** । हिरण्यगर्भस्य परानुग्रहे मानमाह–**तथा चेति** । विपूर्वो दधातिः करोत्यर्थः । पूर्वं कल्पादौ प्रहिणोति ददाति । लटश्चोभयत्राविवक्षा । आत्माकारबुद्धौ प्रकाशत इति तथोक्तस्तत्त्वमस्यादिवाक्योत्थधीवृत्तिव्याप्यमित्येतत् । शरणं मुक्त्यालम्बनमित्यर्थः । न केवलमेकस्यैव प्रतिभानं येनाविश्वासः किंतु तत्तच्छाखाद्रष्टारोऽपि बहवः सन्तीत्याह–**स्मरन्तीति** । ऋग्वेदो दशमण्डलात्मको मण्डलानां दशतयमत्रास्तीति दाशतय्यस्तत्र भवा ऋचः । ऋग्वेदातिरिक्तेष्वपि वेदेषु काण्डसूक्तमन्त्रादिदृशो बोधायनादिभिः स्मृता इत्याह–**प्रतीति** । एवमेव मधुच्छन्दःप्रभृतिवदेवेत्यर्थः । किंचर्ष्यादिधीपूर्वमनुष्ठानं दर्शयन्ती श्रुतिस्तांस्ता-

चैवमेव काण्डर्ष्यादयः स्मर्यन्ते ॥ श्रुतिरप्यृषिज्ञानपूर्वकमेव मन्त्रेणानुष्ठानं दर्शयति—"यो ह वा अविदिताऽऽर्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छेति गर्त्तं वा प्रपद्यते" इत्युपक्रम्य "तस्मादेतानि मन्त्रेमन्त्रे विद्यात्" इति ॥ प्राणिनां च सुखप्राप्तये धर्मो विधीयते, दुःखपरिहाराय चाधर्मः प्रतिषिध्यते ॥ दृष्टानुश्रविकसुखदुःखविषयौ च रागद्वेषौ भवतो, न विलक्षणविषयाविति ॥ अतो धर्माधर्मफलभूतोत्तरोत्तरा सृष्टिर्निष्पद्यमाना पूर्वसृष्टिसदृश्येव निष्पद्यते ॥ स्मृतिश्च भवति—"तेषां ये यानि कर्माणि प्राक्सृष्ट्यां

रत्नप्रभा ।

पिका श्रुतिर्मन्त्रदृगृषीणां ज्ञानातिशयं दर्शयतीत्याह—**श्रुतिरपीति** ॥ **आर्षेयः**—ऋषियोगः । **छन्दः** गायत्र्यादि । **दैवतम्** अग्न्यादि । **ब्राह्मणं** विनियोगः । एतान्यविदितानि यस्मिन्मन्त्रे तेनेत्यर्थः ॥ **स्थाणुं** स्थावरम् । **गर्तं** नरकम् । तथा च ज्ञानाधिकैः कल्पान्तरितं वेदं स्मृत्वा व्यवहारस्य प्रवर्तितत्वाद्वेदस्यानादित्वमनपेक्षत्वं चाविरुद्धमिति भावः । अधुना समाननामरूपत्वं प्रपञ्चयति—**प्राणिनां चेति** ॥ ततः किं, तत्राह—**दृष्टेति** ॥ ऐहिकामुष्मिकविषयसुखरागकृतधर्मस्य फलं पश्वादिकं दृष्टपश्वादिसदृशमिति युक्तम् । विसदृशे कामाभावेन हेत्वभावात् । तथा दृष्टदुःखद्वेषकृताधर्मफलं दृष्टसदृशदुःखमेव । न सुखम् । कृतहान्यादिदोषापत्तेरित्यर्थः । तर्कितेऽर्थे मानमाह—**स्मृतिश्चेति** ॥ उत्तरसृष्टिः, पूर्वसृष्टिसजातीया, कर्मफलत्वात्, पूर्वसृष्टिवदित्यनुमानं च—शब्दार्थः । **तेषां** प्राणिनां मध्ये । **तान्येव** तज्जातीयान्येव । तानि

भामती ।

दाच्छन्दार्थसंबन्धश्च वेदश्चानित्यौ प्रसज्येयातामित आह—**प्राणिनां च सुखप्राप्तय इति** । यथावस्तुस्वभावसामर्थ्यं हि सर्गः प्रवर्तते, न तु स्वभावसामर्थ्यमन्यथयितुमर्हति । न हि जातु सुखं तत्त्वेन जिहास्यते, दुःखं चोपादित्स्यते । न च जातु धर्माधर्मयोः सामर्थ्यविपर्ययो भवति । न हि मृत्पिण्डात्पटः, घटश्च तन्तुभ्यो जायते । तथा सति वस्तुसामर्थ्यनियमाभावात्सर्वं सर्वस्माद्भवेदिति पिपासुरपि दहनमाहृत्य पिपासामुपशमयेत्, शीतार्तो वा तोयमाहृत्य शीतार्तिमिति । तेन सृष्ट्यन्तरेऽपि ब्रह्महत्यादिरनर्थहेतुरेवार्थहेतुश्च यागादिरित्यानुपूर्व्यं सिद्धम् । एवं य एव वेदा अस्मिन्कल्पे त एव कल्पान्तरे, त एव चैषामर्थाः,

आनन्दगिरीय—न्यायनिर्णयः ।

ऋषीन्मन्त्रदृशो दर्शयतीत्याह—**श्रुतिरिति** । तत्रतत्र प्रथममृष्यादिज्ञानं विनाऽनुष्ठाने दोषमाह—**यो हेति** । आर्षेयमृषिसंबन्धश्छन्दो गायत्र्यादि दैवतमग्न्यादि ब्राह्मणं विनियोगो न विदितान्येतानि यस्य मन्त्रस्य तेन याजयति यागं कारयत्यध्यापयत्यध्ययनं कारयति स्थाणुं स्थावरं गर्तं नरकम् । ऋष्याद्यज्ञाने दोषित्वं तच्छब्दार्थः । भूतप्रेतादीनां जन्मान्तरानुस्मरणदर्शनन्यायानुगृहीतानामृष्यादिषु स्मृत्यादिप्रमितकल्पान्तरीयवेदानुस्मरणसूचकश्रौतलिङ्गानां कल्पान्तरव्यवहारानुस्मरणसाधकत्वम् । न च कालविप्रकर्षस्य जन्मनाशयोश्च सर्वसंस्कारोच्छेदकत्वं पूर्वाभ्यस्तस्मृत्यनुसंधानाज्जातमात्रस्य हर्षादिदृष्टेरित्यर्थः । कल्पान्तरानुसंधानेन व्यवहारप्रवर्तनयोगात्पूर्वकल्पतुल्यैवोत्तरकल्पप्रवृत्तिरित्युक्तम् । संप्रति सृष्टिनिमित्तादृष्टमहिम्नाऽपि पूर्वसदृश्येवोत्तरसृष्टिरित्याह—**प्राणिनां चेति** । कथमेतावता पूर्वसृष्टिसादृश्यमुत्तर ष्टेरित्याशंक्याऽऽह—**दृष्टेति** । अन्वयव्यतिरेकसिद्धत्वं दृष्टत्वम् । आगममात्रप्रतिपन्नत्वमानुश्रविकत्वम् । विशिष्टसंस्थानपश्वादिकामनया कृतं कर्म तादृशं पश्वादि भावयतीति दृष्टविषयरागाद्यधीनकर्मफलभूतसृष्टेः श्लिष्टं पूर्वसृष्टिसादृश्यमित्यर्थः । पूर्वोत्तरसृष्टिसादृश्ये मानमाह—**स्मृतिश्चेति** । तेषां सृज्यमानानां प्राणिनामिति निर्धारणे षष्ठी । तेषां पौनःपुन्येन सृज्यमानतया सर्गस्य प्रवाहात्मनाऽनादित्वं द्योत्यते । पूर्वकृतकर्मपारवश्यमुत्तरसृष्टौ किमिति प्राणि-

प्रतिपेदिरे । तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनःपुनः ॥ हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते । तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते" इति ॥ प्रलीयमानमपि चेदं जगच्छक्त्यवशेषमेव प्रलीयते, शक्तिमूलमेव च प्रभवति॥ इतरथाऽऽकस्मिकत्वप्रसङ्गात्॥ न चानेकाकाराः शक्तयः शक्याः कल्पयितुम् ॥ ततश्च विच्छिद्यविच्छिद्याप्युद्भवतां भूरादिलोकप्रवाहाणां देवतिर्यङ्मनुष्यलक्षणानां च प्राणिनिकायप्रवाहाणां वर्णाश्रमधर्मफलव्यवस्थानां चानादौ संसारे नियतत्वमिन्द्रियविषयसम्बन्धनियतत्ववत्प्रत्येतव्यम्॥ न हीन्द्रियविषयसम्बन्धादेर्व्यवहारस्य प्रतिसर्गमन्यथात्वं षष्ठेन्द्रि-

रत्नप्रभा ।

दर्शयंस्तत्प्राप्तौ हेतुमाह-**हिंस्रेति** ॥ कर्माणि विहितनिषिद्धत्वाकारेणाऽपूर्वं क्रियात्वेन संस्कारं च जनयन्ति । तत्रापूर्वात्फलं भुङ्क्ते संस्कारभावितत्वात्, पुनस्तज्जातीयानि करोतीत्यर्थः । संस्कारे लिंगमाह-**तस्मादिति** ॥ संस्कारवशादेव पुण्यं पापं वा रोचते । अतोऽभिरुचिलिङ्गात्पुण्यापुण्यसंस्कारोऽनुमेयः । स एव-**स्वभावः प्रकृतिः** । **वासनेति** च गीयते । एवं कर्मणा सृष्टिसादृश्यमुक्त्वा स्वोपादाने लीनकार्यसंस्काररूपशक्तिबलादपि सादृश्यमाह-**प्रलीयमानमिति** ॥ **इतरथा** संस्कारप्रलये जगद्वैचित्र्यस्याकस्मिकत्वं स्यादित्यर्थः । ननु जगद्वैचित्र्यकारिण्योऽन्याः शक्तयः कल्प्यन्तां, तत्राह-**न चेति** ॥ अविद्यायां लीनकार्यात्मकसंस्कारादन्याः शक्तयो न कल्प्याः । मानाभावाद्गौरवाच्च । स्वोपादाने लीनकार्यरूपा शक्तिस्तु "महान्यग्रोधस्तिष्ठति ॥ १ ॥ श्रद्धत्स्व सोम्य" [ छां० ६ । १२ । १ ] इति श्रुतिसिद्धा । अतोऽविद्यातत्कार्यादन्याः शक्तयो न सन्ति । आत्माविद्यैव तच्छक्तिरिति सिद्धान्त इत्यर्थः । निमित्तेष्वप्युपादानस्थकार्यमेवाविद्यावटनया शक्तिरन्या वेत्यनाग्रहः । उपादाने कार्यसंस्कारसिद्धेः फलमाह-**ततश्चेति** ॥ यथा सुप्तोत्थितस्य पूर्वचक्षुर्जातीयमेव चक्षुर्जायते तच्च रूपजातीयमेव गृह्णाति न रसादिकम्, एवं भोग्यलोकाः भोगाश्रयाः प्राणिनिकाया भोगहेतुकर्माणि संस्कारबलात्पूर्वलोकादितुल्यान्येवेति नियम इत्यर्थः । **निकायाः** समूहाः । दृष्टान्तासिद्धिमाशंक्याह-**न हीति** ॥ यथा षष्ठेन्द्रियस्य मनसोऽसाधारणविषयो नास्ति । सुखादेः साक्षिवेद्यत्वात्, तथा व्यवहारान्यथात्वमसदित्यर्थः ॥ षष्ठ-

भामती ।

त एव च वर्णाश्रमाः । दृष्टसाधर्म्यसंभवे तद्वैधर्म्यकल्पनमनुमानागमविरुद्धम् । 'आगमाश्चेह भूयांसो

आनन्दगिरीय-न्यायनिर्णयः ।

नामित्याशंक्याऽऽह-**हिंस्रेति** । व्यवस्थया धर्माधर्मसंस्कृतत्वं कथं तेषामिष्टं तत्राऽऽह-**तस्मादिति** । संप्रतितनधर्मादिरुचिदृष्ट्या प्राचि भवेऽपि तत्तद्भावितत्वधीरित्यर्थः । यत्तु निर्लेपं प्रलीयते जगदिति तत्राऽऽह-**प्रलीयमानमिति** । ततश्चोपासनशक्तिनियमादपि पूर्वसदृश्येवोत्तरसृष्टिरित्यर्थः । कार्यस्य कारणमात्रत्वात्तन्नाशान्नोत्तरसृष्टेः सादृश्यमित्याशंक्याऽऽह-**शक्तीति** । निरन्वयनाशेन नवस्योदये दोषमाह-**इतरथेति** । शक्तिवैचित्र्याद्विचित्रसृष्टिमाशंक्याऽऽह-**न चेति** । अविद्याशक्तेरेकस्यास्तत्तत्कार्ये शक्तिभेदकल्पने गौरवादात्मा विद्यैव नः शक्तिरिति स्थितेरित्यर्थः । पूर्वोत्तरसृष्टिसादृश्ये फलितमाह-**ततश्चेति** । विच्छिद्य महाप्रलयव्यवधानेनापीत्यर्थः । भूरादिलोकप्रवाहा भोगभूमयः । देवादिप्राणिसमूहो भोक्तृवर्गः । वर्णाश्रमादिव्यवस्थास्तदीयधर्माधर्मे इति भेदः । दृष्टान्तं स्पष्टयति-**न हीति** । 'मनःषष्ठानीन्द्रियाणि' इति स्मृतेः षष्ठमिन्द्रियं मनस्तस्य नासाधारणो विषयः सुखादेरपि साक्षिमात्रगम्यत्वात्तत्तुल्यमत्यन्तासदिति यावत् । यद्वा-षष्ठमिन्द्रियं ज्ञानेन्द्रियेषु कर्मेन्द्रियेषु वा नास्ति तद्विषयस्तु दूरापास्तस्तथा व्यवहारान्यथात्वं प्रतिकल्पमशक्यं कल्पयितुम् । न हि कस्यांचिदपि सृष्टौ नेत्रश्रोत्रादेर्गोचरविपर्ययो दृष्टः । तथा सर्वकल्पेषु

यविषयकल्पं शक्यमुत्प्रेक्षितुम् ॥ अतश्च सर्वकल्पानां तुल्यव्यवहारत्वात्, कल्पान्तरव्यवहारानुसन्धानक्षमत्वाच्चेश्वराणां समाननामरूपा एव प्रतिसर्गं विशेषाः प्रादुर्भवन्ति ॥ समाननामरूपत्वाच्चाऽऽवृत्तावपि महासर्गमहाप्रलयलक्षणायां जगतोऽभ्युपगम्यमानायां न कश्चिच्छब्दप्रामाण्यादिविरोधः॥ समाननामरूपतां च श्रुतिस्मृती दर्शयतः—"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ॥ दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः" [ ऋ० सं० १० । १९० । ३ । ] इति ॥ यथा पूर्वस्मिन्कल्पे सूर्याचन्द्रमःप्रभृति जगत् कृतं, तथास्मिन्नपि कल्पे परमेश्वरोऽकल्पयदित्यर्थः॥ तथा "अग्निर्वा अकामयत अन्नादो देवानां स्यामिति । स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपद्" [ तै०ब्रा० ३ । १ । ४ । १ ] इति नक्षत्रेष्टिविधौ योऽग्निर्निरवपद्यस्मै वाग्नये निरवपत्तयोः समाननामरूपतां दर्शयतीत्येवञ्जातीयिका श्रुतिरिहोदाहर्तव्या ॥ स्मृतिरपि—"ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥ यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ यथाभिमानिनोऽतीतास्तुल्यास्ते

रत्नप्रभा ।

मिन्द्रियं, तद्विषयश्चासन्निति वार्थः । उक्तार्थं संक्षिपति—**अतश्चेति** ॥ व्यवहारसाम्यात्सम्भवाच्च व्यवह्रियमाणा व्यक्तयः समाना एवेत्यर्थः । सूत्रं योजयति—**समानेत्यादिना** ॥ भाविदृष्ट्या यजमानः **अग्निः अन्नादः** अग्निरहं स्यामिति कामयित्वा कृत्तिकानक्षत्राभिमानिदेवाय **अग्नये** अष्टसु कपालेषु पचनीयं हविर्निरुप्तवानित्यर्थः । नक्षत्रव्यक्तिबहुत्वाद्बहुवचनम् * । स्मृतौ वेदेष्विति विषयसप्तमी । **शर्वर्यन्ते** प्रलयान्ते । ऋतूनां वसन्तादीनां, **लिंगानि** नवपल्लवादीनि । **पर्यये** घटीयन्त्रवदावृत्तौ । **भावाः**

भामती ।

भाष्यकारेण दर्शिताः । श्रुतिस्मृतिपुराणाख्यास्तद्व्याकोपोऽन्यथा भवेत् ॥' तस्मात्सुष्ठूक्तम्—**समाननामरूपत्वाच्चावृत्तावप्यविरोध इति** । 'अग्निर्वा अकामयत' इति भाविनीं वृत्तिमाश्रित्य यजमान एवा-

आनन्दगिरीय—न्यायनिर्णयः ।

लोकलोकितद्धर्मनियमसिद्धिरित्यर्थः । उक्तमर्थं संक्षिप्य निगमयन्प्रकृतसूत्राक्षराणि योजयति—**अतश्चेति** । समाननामरूपाणां विशेषाणां प्रतिसर्गं सर्गेऽपि कुतो विरोधसमाधिस्तत्राऽऽह—**समानेति** । प्रादुर्भवतां विशेषाणां समाननामरूपत्वे मानमाह—**समानेति**। उक्तं व्याकर्तुं श्रुतिं व्याचष्टे—**यथेति** । तत्रैव श्रुत्यन्तरमाह—**तथेति** । भाविवृत्त्या यजमानोऽग्निरुच्यतेऽग्नेरन्यन्तराभावात् । यजमानश्चैवं कामयित्वा किं कृतवानिति तदाह—**स इति** । कृत्तिकाभ्यः कृत्तिकानक्षत्रदेवतायै । बहुवचनं नक्षत्रबहुत्वात्। अष्टाकपालमष्टसु कपालेषु पचनीयं निरवपन्निरुप्तवान्, उक्तपुरोडाशहविष्कामिष्टिं कृतवानित्यर्थः। उक्तश्रुतेस्तात्पर्यमाह—**नक्षत्रेति**। 'मित्रो वा अकामयत चन्द्रमा वा अकामयत' इत्येवंविधा श्रुतिरेवंजातीयका। पूर्वोत्तरसृष्ट्योः समाननामरूपत्वमिहेत्युक्तम्। स्मृतिरपीह द्रष्टव्येति संबन्धः । वेदेष्विति विषयसप्तमी । शर्वर्यन्ते प्रलयान्ते ऋतुलिङ्गानि वसन्तादी-

१ सूर्यशब्दे "देवताद्वन्द्वे च" [पा० सू० ६।३।२६] इत्यानङादेशेन दीर्घः । * इतोऽग्रे—"ननु यजमानोऽग्निर्भावी उद्देश्याग्निना समाननामरूपः कल्पान्तरे भवति । एवं 'रुद्रो वा अकामयत' 'विष्णुर्वा अकामयत' इत्यत्रापि तथा वक्तव्यं, तदयुक्तम् । न ह्यग्नेरिव विष्णुरुद्रयोरधिकारिपुरुषत्वं, तयोर्जगत्कारणत्वश्रवणात् । एक एव रुद्रो नेति 'एको विष्णुः' इत्यादिश्रुतिस्मृतिविरोधादिति" कस्मिंश्चित्पुस्तके एतावानधिकः पाठो दृश्यते ।

साम्प्रतैरिह । देवा देवैरतीतैर्हि रूपैर्नामभिरेव च" इत्येवञ्जातीयिका द्रष्टव्या ॥ ३० ॥

## मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥

इह देवादीनामपि ब्रह्मविद्यायामस्त्यधिकार इति यत्प्रतिज्ञातं तत्पर्यावर्त्यते ॥ देवादीनामनधिकारं जैमिनिराचार्यो मन्यते ॥ कस्मात् ॥ मध्वादिष्वसम्भवात्-ब्रह्मविद्याधिकाराभ्युपगमे हि विद्यात्वाविशेषान्मध्वादिविद्यास्वप्यधिकारोऽभ्युपगम्येत । न चैवं सम्भवति ॥ कथम् ॥ "असावादित्यो देवमधु" [ छां० ३ । १ । १ ] इत्यत्र मनुष्या आदित्यं मध्वध्यासेनोपासीरन् ॥ देवादिषु ह्युपासकेष्वभ्युपगम्यमानेषु आदित्यः कमन्यमादित्यमुपासीत ॥ पुनश्चादित्यव्यपाश्रयाणि पञ्च रोहितादीन्यमृ-

रत्नप्रभा ।

पदार्थाः । तुल्या इति शेषः । तस्माज्जन्मनाशवद्विग्रहाङ्गीकारेऽपि कर्मणि शब्दे च विरोधाभावाद्देवानामस्ति विद्याधिकार इति स्थितम् ॥ ३० ॥ आक्षिपति-**मध्वादिष्विति** ॥ ब्रह्मविद्या, देवादीन्नाधिकरोति, विद्यात्वात्, मध्वादिविद्यावदित्यर्थः । दृष्टान्तं विवृणोति-**कथमित्यादिना** ॥ द्युलोकाख्यवंशदण्डे अन्तरिक्षरूपे मध्वपूपे स्थितः आदित्यो देवानां मोदनान्मध्विव मध्वित्यारोप्य ध्यानं कार्यम् । तत्रादित्यस्याधिकारो न युक्तः । ध्यातृध्येयभेदाभावादित्याह-**देवादिष्विति** ॥ अस्तु वस्वादीनां तत्राधिकार इति आशङ्क्य तेषामपि च ध्येयत्वात्प्राप्यत्वाच्च न ध्यातृत्वमित्याह-**पुनश्चेति** ॥ चतुर्वेदोक्तकर्माणि प्रणवश्चेति

भामती ।

म्निरुच्यते । न ह्यग्नेर्देवतान्तरमग्निरस्ति ॥ ३० ॥ **मध्वादिष्वसंभवादनधिकारं जैमिनिः** । ब्रह्मविद्यास्वधिकारं देवर्षीणां ब्रुवाणः प्रष्टव्यो जायते, किं सर्वासु ब्रह्मविद्यास्वविशेषेण सर्वेषां किंवा कासुचिदेव केषांचित् । यद्यविशेषेण सर्वासु, ततो मध्वादिविद्यास्वसंभवः । **कथम् । असौ वा आदित्यो देवमध्वित्यत्र हि मनुष्या आदित्यं मध्वध्यासेनोपासीरन्** । उपास्योपासकभावो हि भेदाधिष्ठानो न स्वात्मन्यादित्यस्य देवतायाः संभवति । न चादित्यान्तरमस्ति प्राचामादित्यानामस्मिन्कल्पे क्षीणाधिकारत्वात् । **पुनश्चादित्यव्यपाश्रयाणि पञ्च रोहितादीन्युपक्रम्येति** । अयमर्थः-'असौ वा आदित्यो देवमधु' इति देवानां मोदहेतुत्वान्मध्विव मधु । भ्रामरमधुसारूप्यमाहास्य श्रुतिः-'तस्य मधुनो द्यौरेव तिरश्चीनवंशः । अन्तरिक्षं मध्वपूपः' आदित्यस्य हि मधुनोऽपूपः पटलमन्तरिक्षमाकाशं, तत्रावस्थानात् । यानि च सोमाज्यपयःप्रभृतीन्यग्नौ हूयन्ते तान्यादित्यरश्मिभिरग्निसंवलितैरुत्पन्नपाकान्यमृतीभावमापन्नान्यादित्यमण्डलमृङ्-

आनन्दगिरीय-न्यायनिर्णयः ।

नामृतूनां चिह्नानि नवकिसलयप्रसूनादीनि । पर्यये पर्याये पौनःपुन्येन परिवर्तने । ये चक्षुराद्यभिमानिनोऽतीता देवास्ते सांप्रतैर्देवैरिह चक्षुराद्यभिमानिभिस्तुल्या इति योजना ॥ ३० ॥ देवानां विग्रहवत्त्वे सर्गप्रलयोपगमे च कर्मणि शब्दे च विरोधमाशंक्य समाधिरुक्तः । संप्रति 'तदुपर्यपि' इत्यत्रोक्तमधिकारमाक्षिपति-**मध्वादिष्विति** । पूर्वपक्षसूत्रतात्पर्यमाह-**इहेति** । प्रतिज्ञाभागस्याक्षरार्थमाह-**देवादीनामिति** । तेषां समर्थिताधिकारस्याऽऽक्षेपो न युक्त इत्याह-**कस्मादिति** । तत्र हेतुमवतार्य व्याकरोति-**मध्वादिष्विति** । मधुविद्यायां देवानामधिकारायोगं वक्तुं पृच्छति-**कथमिति** । तेषामनुपासकत्वार्थमुपास्यान्तरसत्त्वमाह-**असाविति** । किमर्थं मनुष्यग्रहणं तत्राऽऽह-**देवादिष्विति** । उपास्योपासकभावस्य भेदापेक्षत्वात्प्राचामादित्यानामस्मिन्कल्पे क्षीणाधिकारत्वेनाऽऽदित्यत्वाभावादादित्य एव मधुदृष्टिरादित्यस्यायुक्तेत्यर्थः । तर्हि देवतान्तराणामुक्तोपास्त्यधिकारित्वं नेत्याह-**पुनश्चेति** । लोहितं शुक्लं कृष्णं परं कृष्णं

१ व्यपाश्रयाणि ( आदित्य ) विषयाणीत्यर्थः ।

तान्यनुपक्रम्य वसवो रुद्रा आदित्या मरुतः साध्याश्च पञ्च देवगणाः क्रमेण तत्तदमृतमुपजीवन्तीत्युपदिश्य "स य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति" [ छा० ३ । ६ । २ ] इत्यादिना वस्वाद्युपजीव्यान्यमृतानि विजानतां वस्वादिमहिमप्राप्तिं दर्शयति ॥ वस्वादयस्तु—कानन्यान्वस्वादीनमृतोपजीविनो विजानीयुः, कं चान्यं वस्वादिमहिमानं प्रेप्सेयुः ॥ तथा "अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः" [ छां० ३ । १८ । २ ] "वायुर्वाव संवर्गः"

रत्नप्रभा ।

पञ्च कुसुमानि, तेभ्यः सोमाज्यादिद्रव्याणि हुतानि, लोहितशुक्लकृष्णपरकृष्णगोपाख्यानि[2] पञ्चामृतानि, तत्तन्मन्त्रभागमधुकरैः प्रागाद्यूर्ध्वान्तपञ्चदिगवस्थिताभिरादित्यरश्मिनाडीभिर्मध्ययूपस्थितच्छिद्ररूपाभिरादित्यमण्डलमानीतानि यशस्तेजइन्द्रियवीर्यान्नात्मना परिणतानि, पञ्चदिक्षु स्थितैर्वस्वादिभिरुपजीव्यानीति, ध्यायतां वस्वादिप्राप्तिरुक्तेत्यर्थः । सूत्रस्थादिपदार्थमाह—तथाग्निरिति ॥ आकाशब्रह्मणः—च-

भामती ।

मन्त्रमधुपैर्नीयन्ते । यथा हि भ्रमराः पुष्पेभ्य आहृत्य मकरन्दं स्वस्थानमानयन्त्येवमृङ्मन्त्रभ्रमराः प्रयोगसमवेतार्थस्मारणादिभिर्ऋग्वेदविहितेभ्यः कर्मकुसुमेभ्यः आहृत्य तन्निष्पन्नं मकरन्दमादित्यमण्डलं लोहिताभिरस्य प्राचीभी रश्मिनाडीभिरानयन्ति तदमृतं वसव उपजीवन्ति । अथास्यादित्यमधुनो दक्षिणाभी रश्मिनाडीभिः शुक्लाभिर्यजुर्वेदविहितकर्मकुसुमेभ्य आहृत्याग्नौ हुतं सोमादि पूर्ववदमृतभावमापन्नं यजुर्वेदमन्त्रभ्रमरा आदित्यमण्डलमानयन्ति, तदेतदमृतं रुद्रा उपजीवन्ति । अथास्यादित्यमधुनः प्रतीचीभी रश्मिनाडीभिः कृष्णाभिः सामवेदविहितकर्मकुसुमेभ्य आहृत्याग्नौ हुतं सोमादि पूर्ववदमृतभावमापन्नं साममन्त्रस्तोत्रभ्रमरा आदित्यमण्डलमानयन्ति, तदमृतमादित्या उपजीवन्ति । अथास्यादित्यमधुन उदीचीभिरतिकृष्णाभी रश्मिनाडीभिरथर्ववेदविहितेभ्यः कर्मकुसुमेभ्य आहृत्याग्नौ हुतं सोमादि पूर्ववदमृतभावमापन्नमथर्वाङ्गिरसमन्त्रभ्रमराः, तथाश्वमेधवाचःस्तोमकर्मकुसुमाद् इतिहासपुराणमन्त्रभ्रमराः, आदित्यमण्डलमानयन्ति । अश्वमेधे वाचःस्तोमे पारिप्लवं शंसन्ति इति श्रवणादितिहासपुराणमन्त्राणामप्यस्ति प्रयोगः । तदमृतं मरुत उपजीवन्ति । अथास्य या आदित्यमधुन ऊर्ध्वा रश्मिनाड्यो गोप्यास्ताभिरुपासनभ्रमराः प्रणवकुसुमादाहृत्यादित्यमण्डलमानयन्ति, तदमृतमुपजीवन्ति साध्याः । ता एता आदित्यव्यपाश्रयाः पञ्च रोहितादयो रश्मिनाड्य ऋगादिसंबद्धाः क्रमेणोपदिश्येति योजना । एतदेवामृतं दृष्ट्वोपलभ्य यथास्वं समस्तैः करणैर्यशस्तेजइन्द्रियसाकल्यवीर्यान्नाद्यान्यमृतं तदुपलभ्यादित्ये तृप्यति । तेन खल्वमृतेन देवानां वस्वादीनां मोदनं विदधदादित्यो मधु । एतदुक्तं भवति—न केवलमुपास्योपासकभाव एकस्मिन्विरुध्यते, अपि तु ज्ञातृज्ञेयभावश्च प्राप्यप्रापकभावश्चेति ॥ तथाग्निः पाद इति । अधिदैवतं खल्वाकाशे ब्रह्मदृष्टिविधानार्थमुक्तम् । आकाशस्य हि सर्वगतत्वं रूपादिहीनत्वं च ब्रह्मणा सारूप्यं, तस्य चैतस्याकाशस्य ब्रह्मणश्चत्वारः पादा अग्न्यादयः 'अग्निः पादः' इत्यादिना दर्शिताः । यथा हि गोः पादा न गवा वियुज्यन्त, एवमग्न्यादयोऽपि नाकाशेन सर्वगतेनेत्याकाशस्य पादाः । तदेवमाकाशस्य चतुष्पदो ब्रह्मदृष्टिं विधाय स्वरूपेण वायुं संवर्गगुणकमुपास्यं विधातुं महीकरोति—वायुर्वाव संवर्गः । तथा स्वरूपेणैवादित्यं ब्रह्म-

आनन्दगिरीय—न्यायनिर्णयः ।

मध्ये क्षोभत इवेत्युक्तानि पञ्च रोहितादीन्यमृतानि प्रागाद्यूर्ध्वदेशस्थितरश्मिनाडीभिस्तत्तद्वेदोक्तकर्मकुसुमेभ्यस्तत्तद्वैदिकमन्त्रमधुकरैरादित्यमण्डलमानीतानि सोमाज्यपयःप्रभृतिद्रव्याहुतिनिष्पन्नानि[1] यशस्तेजोवीर्यमिन्द्रियमित्येवमात्मकान्यादित्यमधुसंबन्धीनि वस्वाद्युपजीव्यानि चिन्तयतां फलं वस्वाद्याप्तिरुच्यते तेषामुपासकत्वे कर्मकर्तृविरोधः स्यादित्यर्थः । आदिशब्दार्थं व्याचष्टे—तथेति । कर्मकर्तृविरोधसाम्यादित्यर्थः -

१ द्रव्याहुतिनिष्पन्नानीति पाठान्तरम् । २ रोहितेति पाठान्तरम् ।

[छां० ४।३।१] "आदित्यो ब्रह्मेत्यादेशः" [छां० ३।१९।१] इत्यादिषु देवतात्मोपासनेषु न तेषामेव देवतात्मनामधिकारः सम्भवति॥ तथा "इमावेव गौतमभरद्वाजावयमेव गौतमोऽयं भरद्वाजः" [बृ० २।२।४] इत्यादिष्वृषिसम्बन्धेषूपासनेषु न तेषामेवर्षीणामधिकारः सम्भवति॥ ३१॥ कुतश्च देवादीनामनधिकारः—

## ज्योतिषि भावाच्च॥ ३२॥

यदिदं ज्योतिर्मण्डलं द्युस्थानमहोरात्राभ्यां बम्भ्रमज्जगदवभासयति, तस्मिन्नादित्यादयो देवतावचनाः शब्दाः प्रयुज्यन्ते, लोकप्रसिद्धेर्वाक्यशेषप्रसिद्धेश्च॥ न च ज्योतिर्मण्डलस्य हृदयादिना विग्रहेण चेतनतयाऽर्थित्वादिना वा योगोऽवगन्तुं शक्यते, मृदादिवदचेतनत्वावगमात्॥ एतेना-

रत्नप्रभा।

त्वारः पादाः। द्वौ कर्णौ, द्वे नेत्रे, द्वे नासिके, एका वागिति सप्तस्विन्द्रियेषु शिरश्चमसतीरस्थेषु सप्तर्षिध्यानं कार्यमित्याह—**तथेमावेवेति**॥ अयं दक्षिणः कर्णः गौतमः, वामः भरद्वाजः। एवं दक्षिणनेत्रनासिके विश्वामित्रवसिष्ठौ वामे जमदग्निकश्यपौ। वागत्रिरित्यर्थः। अत्र ऋषीणां ध्येयत्वान्नाधिकारः॥ ३१॥ किञ्च विग्रहाभावाद्देवादीनां न क्वाप्यधिकार इत्याह—**ज्योतिषि भावाच्चेति**॥ **आदित्यः** सूर्यश्चन्द्रः शुक्रोऽङ्गारक इत्यादिशब्दानां ज्योतिःपिण्डेषु प्रयोगस्य **भावात्** सत्त्वान्न विग्रहवान्देवः कश्चिदस्तीत्यर्थः। "आदित्यः पुरस्तादुदेता पश्चादस्तमेता" [छां० ३।४।६] इति मधुविद्यावाक्यशेषे ज्योतिष्येवादित्यशब्दः प्रसिद्धः। तर्हि ज्योतिःपिण्डानामेवाधिकारोऽस्तु तत्राह—**न चेति**॥ अग्न्यादीनामधिकारमाशंक्याह—**एतेनेति**॥ अग्निर्वायुर्भूमिरित्यादिशब्दानामचेतनवाचित्वेनेत्यर्थः। सिद्धान्ती शङ्कते—

भामती।

दृष्ट्योपास्यं विधातुं महीकरोति—**आदित्यो ब्रह्मेत्यादेशः** उपदेशः। अतिरोहितार्थमन्यत्॥ ३१॥ यद्युच्येत नाविशेषेण सर्वेषां देवर्षीणां सर्वासु ब्रह्मविद्यास्वधिकारः, किंतु यथासंभवमिति। तत्रेदमुपतिष्ठते—**ज्योतिषि भावाच्च**। लौकिकौ ह्यादित्यादिशब्दप्रयोगप्रत्ययौ ज्योतिर्मण्डलादिषु दृष्टौ। न चैतेषामस्ति

आनन्दगिरीय—न्यायनिर्णयः।

तथाऽपि कथमृषीणामनधिकारस्तत्राऽऽह—**तथेति**। सप्तसु शीर्षण्यप्राणेषु द्वयोर्द्वयोर्गौतमादिदृष्ट्योपास्तिः। दक्षिणः कर्णो गोतमो भरद्वाजश्चक्षुर्दक्षिणं विश्वामित्रो वामं जमदग्निरित्यादि। न च तत्र तेषामेवाधिकारो विरोधादित्यर्थः॥ ३१॥ क्वचिदनधिकारान्न सर्वत्रानधिकारो ब्राह्मणस्य राजसूयाधिकारेऽपि बृहस्पतिसवेऽधिकारादिति शंकते—**कुतश्चेति**। देवादीनां विग्रहाद्यभावादनधिकारं सार्वत्रिकं साधयति—**ज्योतिषीति**। सूत्रं विभजते—**यदिति**। आदित्यः सविता पूषा चन्द्रमा नक्षत्रमित्यादिशब्दानां ज्योतिर्मण्डलविषयत्वे प्रसिद्धिद्वयं प्रमाणयति—**लोकेति**। 'यावदादित्यः पुरस्तादुदेता' इत्यादिः 'असौ वा आदित्यो देवमधु' इत्यादिवाक्यशेषः। उदयास्तमयौ च ज्योतिर्मण्डलस्योपलभ्येते, तेन तदेवाऽऽदित्यपदोक्तमस्तु तर्हि तस्यैवाधिकारस्तत्राऽऽह—**न चेति**। आदित्यादीनामचैतन्यादनधिकारेऽपि चैतन्यादग्न्यादीनामधिकारः स्यादित्याशंक्याऽऽह—**एतेनेति**। न खल्वादित्यादिभ्योऽग्न्यादयो विशिष्यन्ते येन तेषां चेतनत्वादधिकारितेत्यर्थः। देवादीनां विग्रहाद्यपरिग्रहादनधिकारितेत्युक्तममृष्यमाणः सिद्धान्ती शंकते—

१ बृहदारण्यकोपनिषदि २ अध्याये २ ब्राह्मणे ३–४ भागयोस्स्पष्टमिदम्।

ग्न्यादयो व्याख्याताः ॥ स्यादेतत्—मन्त्रार्थवादेतिहासपुराणलोकेभ्यो देवादीनां विग्रहवत्त्वाद्यवगमादयमदोष इति ॥ नेत्युच्यते ॥ न तावल्लोको नाम किञ्चित्स्वतन्त्रं प्रमाणमस्ति ॥ प्रत्यक्षादिभ्य एव ह्यविचारित विशेषेभ्यः प्रमाणेभ्यः प्रसिध्यन्नर्थो लोकात्प्रसिध्यतीत्युच्यते ॥ न चात्र प्रत्यक्षादीनामन्यतमं प्रमाणमस्ति ॥ इतिहासपुराणमपि पौरुषे-

रत्नप्रभा ।

**स्यादेतदित्यादिना** ॥ "वज्रहस्तः पुरन्दरः" इत्यादयः **मन्त्राः** । "सोऽरोदीद्" इत्यादयः अर्थवादाः । "इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः । ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः ॥" इत्यादीनि **इतिहासपुराणानि** । लोकेऽपि यमं दण्डहस्तं लिखन्ति, इन्द्रं वज्रहस्तमिति विग्रहादिपञ्चकस्याभावाद् अनधिकारदोषो नास्तीत्यर्थः । "विग्रहो हविषां भोग ऐश्वर्यञ्च प्रसन्नता । फलप्रदानमित्येतत् पञ्चकं विग्रहादिकम् ॥" मानाभावादेतन्नास्तीति दूषयति—**नेत्यादिना** । **न चात्रेति** ॥ विग्रहादावित्यर्थः ।

भामती ।

चैतन्यम् । न ह्येतेषु देवदत्तादिवत्तदनुरूपा दृश्यन्ते चेष्टाः । **स्यादेतत्** । **मन्त्रार्थवादेतिहासपुराणलोकेभ्य इति** । तत्र 'जगृभ्माते दक्षिणमिन्द्रहस्तम्' इति च, 'काशिरिन्द्र इत्' इति च । काशिर्मुष्टिः । तथा 'तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे । इन्द्रो वृत्राणि जिघ्नते' इति विग्रहवत्त्वं देवताया मन्त्रार्थवादा अभिवदन्ति । तथा हविर्भोजनं देवताया दर्शयन्ति 'अद्धीन्द्र पिब च प्रस्थितस्य' इत्यादयः । तथैशनम्—'इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत्पर्वतानाम् । इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्य इन्द्रः' इति, तथा 'ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः' इति । तथा वरिवसितारं प्रति देवतायाः प्रसादं प्रसन्नायाश्च फलदानं दर्शयति—'आहुतिभिरेव देवान् हुतादः प्रीणाति तस्मै प्रीता इषमूर्जं च यच्छन्ति' इति, 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति च । धर्मशास्त्रकारा अप्याहुः—'ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः ।' इति पुराणवचांसि च भूयांसि देवताविग्रहादिपञ्चकप्रपञ्चमाचक्षते । लौकिका अपि देवताविग्रहादिपञ्चकं स्मरन्ति चोपचरन्ति च । तथाहि—यमं दण्डहस्तमालिखन्ति, वरुणं पाशहस्तम्, इन्द्रं वज्रहस्तम् । कथयन्ति च देवता हविर्भुज इति । तथैशनामिमामाहुः—देवग्रामो देवक्षेत्रमिति । तथास्याः प्रसादं च प्रसन्नायाश्च फलादानमाहुः—प्रसन्नोऽस्य पशुपतिः पुत्रोऽस्य जातः । प्रसन्नोऽस्य धनदो धनमनेन लब्धमिति । तदेतत्पूर्वपक्षी दूषयति—**नेत्युच्यते । न हि तावल्लोको नामेति** । न खलु प्रत्यक्षादिव्यतिरिक्तो लोको नाम प्रमाणान्तरमस्ति, किंतु प्रत्यक्षादिमूला लोकप्रसिद्धिः सत्यतामश्नुते, तदभावे त्वन्धपरम्परावन्मूलाभावाद्विप्लवते । न च विग्रहादौ प्रत्यक्षादीनामन्यतममस्ति प्रमाणम् । न चेतिहासादि मूलं भवितुमर्हति, तस्यापि पौरुषेयत्वेन प्रत्यक्षाद्यपेक्षणात् । प्रत्यक्षादीनां चात्राभावादित्याह—**इतिहासपुराणमपीति** । ननूक्तं मन्त्रार्थवादेभ्यो विग्रहादि-

आनन्दगिरीय—न्यायनिर्णयः ।

**स्यादिति** । 'वज्रहस्तः पुरंदरः' इत्यादयो मन्त्राः । 'प्रजापतिरात्मनो वपामुदखिदत्' इत्यादयोऽर्थवादाः । "इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः । ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः" ॥ इत्यादीनीतिहासपुराणानि । लोकेऽपि यमं दण्डहस्तमालिखन्ति, वरुणं पाशहस्तम् । अतो मन्त्रादिप्रामाण्याद्देवादीनां विग्रहादियोगाद्विद्याधिकारितेत्यर्थः । विग्रहवत्त्वादीत्यादिशब्देन हविर्भोजनं तृप्तिरैश्वर्यं फलदानं च गृहीतम् । देवादीनां विग्रहादिपञ्चकं प्रामाणिकमित्युक्तं दूषयति—**नेतीति** । यदुक्तं लोकतो विग्रहादिधीरिति तत्राऽऽह—**न तावदिति** । तर्हि प्रत्यक्षादिप्रसिद्धितो लोकप्रसिद्धेर्न भेदस्तत्राऽऽह—**प्रत्यक्षादिभ्य इति** । अस्तु तर्हि तन्मूला लोकप्रसिद्धिर्नेत्याह—**न चेति** । देवताविग्रहादिपञ्चके सप्तम्यर्थः । तर्हि लोकप्रसिद्धेरितिहासपुराणं मूलं तत्राऽऽह—**इतिहासेति** । तस्य यन्मूलं तदेव लोकप्रसिद्धेर्मूलमिति

१ वस्वादिपञ्चकमित्यर्थः ।

**यत्वात्प्रमाणान्तरमूलतामाकांक्षति ॥ अर्थवादा अपि विधिनैकवाक्यत्वात्स्तुत्यर्थाः सन्तो न पार्थगर्थ्येन देवादीनां विग्रहादिसद्भावे कारणभावं प्रतिपद्यन्ते ॥ मन्त्रा अपि श्रुत्यादिविनियुक्ताः प्रयोगसमवायिनोऽभिधानार्था न कस्यचिदर्थस्य प्रमाणमित्याचक्षते ॥ तस्मादभावो देवादीनामधिकारस्य ॥ ३२ ॥**

## भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

**तुशब्दः पूर्वपक्षं व्यावर्तयति ॥ बादरायणस्त्वाचार्यो भावमधिकारस्य देवादीनामपि मन्यते ॥ यद्यपि मध्वादिविद्यासु देवतादिव्यामिश्रास्व-**

रत्नप्रभा ।

अर्थवादाः, मन्त्रा वा मूलमित्याशंक्याह—**अर्थवादा इत्यादिना** ॥ व्रीह्यादिवत्प्रयोगविधिगृहीता मन्त्राः प्रयोगसम्बन्धार्थाभिधानार्थाः । नाज्ञातविग्रहादिपरा इति **मीमांसका** आचक्षत इत्यर्थः । **तस्माद्** विग्रहाभावादित्यर्थः ॥ ३२ ॥ सूत्राभ्यां प्राप्तं पूर्वपक्षं निरस्यति—**तुशब्द इत्यादिना** ॥ ब्रह्मविद्या, देवादीन्नाधिकरोति, विद्यात्वात्, मध्वादिविद्यावदित्युक्तहेतुरप्रयोजक इत्याह—**यद्यपीति** ॥ दर्शादिकं, न

भामती ।

पञ्चकप्रसिद्धिरिति, अत आह—**अर्थवादा अपीति** । विध्युद्देशेनैकवाक्यतामापद्यमाना अर्थवादा विधिविषयप्राशस्त्यलक्षणापरा न स्वार्थे प्रमाणं भवितुमर्हन्ति । 'यत्परः शब्दः स शब्दार्थः' इति हि शाब्दन्यायविदः । प्रमाणान्तरेण तु यत्र स्वार्थेऽपि समर्थ्यते, यथा वायोः क्षेपिष्ठत्वम्, तत्र प्रमाणान्तरवशात्सोऽभ्युपेयते न तु शब्दसामर्थ्यात् । यत्र तु न प्रमाणान्तरमस्ति, यथा विग्रहादिपञ्चके, सोऽर्थः शब्दादेवावगन्तव्यः । अतत्परश्च शब्दो न तदवगमयितुमलमिति । तदवगमपरस्य तत्रापि तात्पर्यमभ्युपेतव्यम् । न चैकं वाक्यमुभयपरं भवतीति वाक्यं भिद्येत । न च संभवत्येकवाक्यत्वे वाक्यभेदो युज्यते । तस्मात्प्रमाणान्तरानधिगता विग्रहादिमत्ता अन्यपराच्छब्दादवगन्तव्येति मनोरथमात्रमित्यर्थः । मन्त्राश्च व्रीह्यादिवच्छ्रुत्यादिभिस्तत्रतत्र विनियुज्यमानाः प्रमाणभावाननुप्रवेशिनः कथमुपयुज्यन्तां तेषुतेषु कर्मस्वित्यपेक्षायां दृष्टे प्रकारे संभवति नादृष्टकल्पनोचिता । दृष्टश्च प्रकारः प्रयोगसमवेतार्थस्मारणं, स्मृत्वा चानुतिष्ठन्ति खल्वनुष्ठातारः पदार्थान् । औत्सर्गिकी चार्थपरता पदानामित्यपेक्षितप्रयोगसमवेतार्थस्मरणतात्पर्याणां मन्त्राणां नानधिगते विग्रहादावपि तात्पर्यं युज्यत इति न तेभ्योऽपि तत्सिद्धिः । तस्माद्देवताविग्रहवत्तादिभावग्राहकप्रमाणाभावात् प्राप्ता षष्ठप्रमाणगोचरतास्येति प्राप्तम् ॥ ३२ ॥ एवं प्राप्तेऽभिधीयते—**भावं तु बादरायणोऽस्ति हि** ॥ **तुशब्दः पूर्वपक्षं व्यावर्तयति** इत्यादि

आनन्दगिरिय—न्यायनिर्णयः ।

वेदस्तु तर्हि निर्मूलं तल्लोकप्रसिद्धेर्मूलं पौरुषेयगिरां मूलाभावे प्रामाण्यासिद्धेः । न च तस्य यन्मूलं तदेव लोकप्रसिद्धेर्मूलं तन्मूलतया संभावितार्थवादमन्त्राणां निरसिष्यमाणत्वादिति भावः । अपौरुषेयाणामर्थवादानां तर्हि लोकप्रसिद्धिमूलत्वं नार्थवादाधिकरणविरोधादित्याह—**अर्थवादा इति** । मन्त्राणां तर्हि स्तुत्यर्थत्वाभावात्तन्मूलतेत्याशंक्याऽऽह—**मन्त्रा इति** । व्रीह्यादिवत्कर्मणि श्रुतिलिङ्गादिविनियुक्तानां तेषां दृष्टद्वारोपकारे सत्यदृष्टकल्पनायोगादर्थपरत्वस्य शब्दानामौत्सर्गिकत्वात्प्रयोगसमवेतार्थस्मृतावेव तात्पर्यं नाज्ञातदेवताविग्रहादावपि तात्पर्यभेदे वाक्यभेदादिति मत्वा मन्त्राधिकरणमुक्तेऽर्थे प्रमाणयति—**इत्याचक्षत इति** । विग्रहादिपञ्चके मानाभावे फलितमाह—**तस्मादिति** ॥ ३२ ॥ सूत्राभ्यां पूर्वपक्षे सिद्धान्तयति—**भावं त्विति** । तत्र परपक्षनिषेधं स्वपक्षप्रतिज्ञां च विभजते—**तुशब्द इति** । यदुक्तं ब्रह्मविद्या देवादीन्नाधिकरोति विद्यात्वान्मध्वादिविद्यावदिति, तत्र मध्वादिविद्यानां देवादिव्यामिश्रत्वात्त तास्तानधिकुर्वन्ति, न विद्यात्वात् । ब्रह्मविद्या तु न व्यामिश्रेत्यतस्तानप्यधिकरोतीत्यप्रयोजकत्वमाह—**यद्यपीति** । तत्र देवादीनामधिकारस्य संभवे

सम्भवोऽधिकारस्य॥ तथाप्यस्ति हि शुद्धायां ब्रह्मविद्यायां सम्भवोऽर्थित्वसामर्थ्याप्रतिषेधाद्यपेक्षत्वादधिकारस्य ॥ न च क्वचिदसम्भव इत्येतावता यत्र सम्भवस्तत्राप्यधिकारोऽपोद्येत ॥ मनुष्याणामपि न सर्वेषां ब्राह्मणादीनां सर्वेषु राजसूयादिष्वधिकारः सम्भवति ॥ तत्र यो न्यायः सोऽत्रापि भविष्यति ॥ ब्रह्मविद्यां च प्रकृत्य भवति लिङ्गदर्शनं श्रौतं देवाद्यधिकारस्य सूचकम्—"तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्" [ बृ० १ । ४ । १० ] इति "ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्" इति "इन्द्रो ह वै देवानामभि प्रवव्राज विरोचनोऽसुराणाम्" [ छां० ८ । ७ । २ ] इत्यादि च ॥ स्मार्तमपि—गन्धर्वयाज्ञवल्क्यसंवादादि ॥ यदप्युक्तं ज्योतिषि भावाच्चेति ॥ अत्र ब्रूमः ॥ ज्योतिरादिविषया अपि आदित्यादयो देवतावचनाः शब्दाच्चेतनाव-

---

रत्नप्रभा ।

ब्राह्मणमधिकरोति, कर्मत्वाद्, राजसूयादिवदित्याभाससाम्यं विद्यात्वहेतोराह—न चेति ॥ यत्र यस्याधिकारः सम्भवति स तत्राधिकारीति न्यायस्तुल्य इत्यर्थः ॥ यतः सर्वेषां सर्वत्राधिकारो न सम्भवति ततो न चापोद्येतेत्यन्वयः । तत् ब्रह्म योयः देवादीनां मध्ये प्रत्यक्त्वेन अबुध्यत सः तत् ब्रह्माभवदित्यर्थः । ते ह देवाः ऊचुः—अन्योन्यम् । ततः इन्द्रविरोचनौ सुरासुरराजौ प्रजापतिं ब्रह्मविद्याप्रदं जग्मतुरिति च लिङ्गमस्तीत्यर्थः । किमत्र ब्रह्मामृतमिति गन्धर्वप्रश्ने याज्ञवल्क्य उवाच तमिति मोक्षधर्मेषु श्रुतं देवादीनामधिकारलिङ्गमित्याह—स्मार्तमिति ॥ यथा बालानां गोलकेषु चक्षुरादिपदयोगेऽपि शास्त्रज्ञैर्गोलकातिरिक्तेन्द्रियाणि स्वीक्रियन्ते, तथा ज्योतिरादौ सूर्यादिशब्दप्रयोगेऽपि विग्रहवद्देवताः स्वीकार्या इत्याह—ज्योतिरादीति ॥ तथा चेतनत्वेन व्यवहारादित्यर्थः । एकस्य जडचेतनोभयरूपत्वं कथं तत्राह—

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

हेतुमाह—अर्थित्वेति । वैराग्यादिब्रह्मचर्यादिसंग्रहार्थमादिपदम् । द्विविधसामर्थ्यस्यैव योग्यताख्यस्याधिकारकारणत्वेऽपि तत्प्रयोजकत्वेनार्थित्वाद्यास्थेयम् । अतिप्रसङ्गपक्षबाधकोपहतं चेदमनुमानमित्याह—नेति । राजसूयाद्यनधिकृतस्यापि ब्राह्मणस्य बृहस्पतिसवे प्रामाण्यादधिकारः । प्रकृते तु कथमित्याशंक्याऽऽह—ब्रह्मेति । तत्र ब्रह्मवेदनात्सर्वभावे स्थिते देवानां मध्ये योयो देवः प्रतिबुद्धवानात्मानमहं ब्रह्मास्मीति सस प्रतिबोद्धैव तद्ब्रह्माभवत् । तथाऽपि जातित्रयस्यैव विद्याधिकारमाशंक्याऽऽह—ते हेति । ते देवाश्चासुराश्चान्योन्यमुक्तवन्तः किल हन्त यद्यनुमतिर्भवतां तर्हि तमात्मानं विचारयामः, यं विचारितो ज्ञात्वा सर्वाणि फलान्याप्नोतीत्युक्त्वा विद्याग्रहणायेन्द्रविरोचनौ प्रजापतिमाजग्मतुरित्यर्थः । चकारो बृहदारण्यकश्रुत्या छान्दोग्यश्रुतेः समुच्चयार्थः । श्रौतलिङ्गेनानुमानबाधं दर्शयित्वा स्मार्तेनापि तद्बाधं दर्शयति—स्मार्तमिति।"किमत्र ब्रह्म अमृतं किं स्विद्वेद्यमनुत्तमम्।चिन्तयेत्तत्र वै गत्वा गन्धर्वो मामपृच्छत ॥ विश्वावसुस्ततो राजा वेदान्तज्ञानकोविदः ।" इति मोक्षधर्मे जनकयाज्ञवल्क्यसंवादात्प्रह्लादाजगरसंवादाच्चोक्तानुमानासिद्धिरित्यर्थः । आदित्यादिशब्दानां ज्योतिर्मण्डलविषयत्वात्तस्याचेतनस्य विग्रहादिरहितस्य नाधिकारोऽस्तीत्युक्तं तत्राऽऽह—यदपीति । गोलकादिषु प्रयुक्तचक्षुरादिशब्दानामतिरिक्तेन्द्रियार्थत्ववदादित्यादिशब्दानां ज्योतिरादिषु प्रयोगेऽपि तदतिरिक्ते चेतने प्रवृत्तिरित्याह—ज्योतिरिति । दृष्टान्तेऽति-

न्तमैश्वर्याद्युपेतं तंतं देवतात्मानं समर्पयन्ति ॥ मन्त्रार्थवादेषु तथा व्यवहारात् ॥ अस्ति ह्यैश्वर्ययोगाद्देवतानां ज्योतिराद्यात्मभिश्चावस्थातुं यथेष्टं च तंतं विग्रहं ग्रहीतुं सामर्थ्यम् ॥ तथाहि श्रूयते सुब्रह्मण्यार्थवादे "मेधातिथेर्मेषेति । मेधातिथिं ह काण्वायनमिन्द्रो मेषो भूत्वा जहार" [ षड्विंशतिब्रा० १ । १ ] इति ॥ स्मर्यते च–"आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह" इति ॥ मृदादिष्वपि :चेतनाधिष्ठातारोऽभ्युपगम्यन्ते "मृदब्रवीद् ।" "आपोऽब्रुवन्"[ शत० ब्रा० ६ । १ । ३ ।२,४] इत्यादिदर्शनात् ॥ ज्योतिरादेस्तु भूतधातोरादित्यादिष्वप्यचेतनत्वमभ्युपगम्यते ॥ चेतनास्त्वधिष्ठातारो देवतात्मानो, मन्त्रार्थवादादिषु व्यवहारादित्युक्तम् ॥ यदप्युक्तं मन्त्रार्थवादयोरन्यार्थत्वान्न देवताविग्रहादिप्रकाशनसामर्थ्यमिति ॥ अत्र ब्रूमः ॥

रत्नप्रभा ।

**अस्ति हीति** ॥ **तथाहि**–विग्रहवत्तया देवव्यवहारः श्रूयते । **सुब्रह्मण्यः** उद्गातृगणस्थः ऋत्विक् । तत्सम्बन्धी **योऽर्थवाद** इन्द्रागच्छेत्यादिः, तत्र मेधातिथेर्मेषेतीन्द्रसम्बोधनं श्रुतम् । तद्व्याचष्टे–**मेधेति** ॥ मुनिं मेषो भूत्वा जहारेति ज्ञापनार्थं मेषेतीन्द्रसम्बोधनमित्यर्थः । यदुक्तमादित्यादयो मृदादिवदचेतना एवेति । **तन्न** । सर्वत्र जडाजडांशद्वयसत्त्वादित्याह–**मृदिति** ॥ आदित्यादौ को जडभागः, कश्चेतनांश इति, तत्राह–**ज्योतिरादेस्त्विति** ॥ मन्त्रादिकं, पदशक्त्या भासमानविग्रहादौ स्वार्थे न प्रमाणम्, अन्यपरत्वात्, विषं भुंक्ष्वेतिवाक्यवदित्याह–**यदपीति** ॥ अन्यपरादपि वाक्याद्बाधाभावे स्वार्थो ग्राह्य इत्याह–**अत्र ब्रूम इति** ॥ तात्पर्यशून्येऽप्यर्थे प्रत्ययमात्रेणास्तित्वमुदाहरति–

भामती ।

**भूतधातोरादित्यादिष्वचेतनत्वमभ्युपगम्यते** इत्यन्तमतिरोहितार्थम् । **मन्त्रार्थवादादिव्यवहारादिति** । आदिग्रहणेनेतिहासपुराणधर्मशास्त्राणि गृह्यन्ते । मन्त्रादीनां व्यवहारः प्रवृत्तिस्तस्य दर्शनादिति । पूर्वपक्षमनुभाषते–**यदप्युक्तमिति** । एकदेशिमतेन तावत्परिहरति–**अत्र ब्रूम इति** । तदेतत्पूर्वपक्षिणमुत्थाप्य

आनन्दगिरीय–न्यायनिर्णयः ।

रिक्तेन्द्रियसत्त्वे मानवत्प्रकृते तन्नास्तीत्याशंक्याऽऽह–**मन्त्रेति** । यथा चेतने देवतात्मन्यादित्यादिशब्दस्तथा मन्त्रादिषु शाब्दव्यवहारादिति हेत्वर्थः । कथं तर्हि ज्योतिरादिष्वादित्यादिशब्दस्तत्राऽऽह–**अस्तीति** । देवादीनामनेकरूपप्रतिपत्तियोगाच्चेतनाचेतनयोरादित्यादिशब्दानां मुख्यत्वसिद्धिरित्यर्थः । देवादीनां विविधविग्रहग्रहसामर्थ्ये मानमाह–**तथाहीति** । सुब्रह्मण्यो नामोद्गातृगणप्रविष्टः कश्चिदृत्विग्विशेषस्तत्संबद्धार्थवाद 'इन्द्राऽऽगच्छ' इत्यादिस्तत्र मेधातिथेर्मेषेतीन्द्रसंबोधनं मन्त्रपदं श्रुतं तद्व्याचष्टे–**मेधेति** । इन्द्रस्य नानाविग्रहग्रहयोगेऽपि देवतान्तरस्य किमित्याशंक्याऽऽह–**स्मर्यते चेति** । धर्मो वायुरिन्द्रश्च पुरुषो भूत्वा तामेवोपजग्मुः । अश्विनौ च पुरुषौ भूत्वा माद्रीमुपजग्मतुरिति महाभारते प्रसिद्धमित्यर्थः । यत्तु मृदादिवदचेतनत्वं तत्राधिष्ठातृविवक्षयाऽधिष्ठेयविवक्षया वाऽचेतनत्वम् । प्रथमं प्रत्याह–**मृदादिष्विति** । तेष्वधिष्ठातृचेतनोपगमे मानमाह–**मृदिति** । आदिशब्देन वागादिसंवादो गृहीतः । द्वितीये दार्ष्टान्तिकेऽपि तदिष्टमेवेत्याह–**ज्योतिरादेरिति**।मृदादिष्वधिष्ठातृचैतन्ये मानवदत्र तदभावादधिष्ठेयवदधिष्ठातुरपि न चैतन्यमित्याशंक्याऽऽह–**चेतनास्त्विति** । मन्त्रादयो न स्वार्थे मानमन्यपरवाक्यत्वाद्विषभक्षणवाक्यवदित्युक्तमनुवदति–**यदपीति** । यस्मान्मानाद्यस्मिन्नबाधिता धीस्तस्मात्तद्भावः सिध्यति यत्र तु यतो मानान्न तथा धीर्न ततस्तत्सिद्धिरित्युत्सर्गस्तथा च मन्त्रादिभ्योऽपि स्वार्थे चेदबाधिता धीस्ततस्तेषां तत्र प्रामाण्यमित्याह–**अत्रेति**।

प्रत्ययाप्रत्ययौ हि सद्भावासद्भावयोः कारणं, नान्यार्थत्वमनन्यार्थत्वं वा ॥ तथाहि–अन्यार्थमपि प्रस्थितः पथि पतितं तृणपर्णाद्यस्तीत्येव प्रतिपद्यते ॥ अत्राह–विषम उपन्यासः–तत्र हि तृणपर्णादिविषयं प्रत्यक्षं प्रवृत्तमस्ति, येन तदस्तित्वं प्रतिपद्यते ॥ अत्र पुनर्विध्युद्देशैकवाक्यभावेन स्तुत्यर्थेऽर्थवादे न पार्थगर्थ्येन वृत्तान्तविषया प्रवृत्तिः शक्याध्यवसातुम् ॥ न हि महावाक्येऽर्थप्रत्यायकेऽवान्तरवाक्यस्य पृथक्प्रत्यायकत्वमस्ति । यथा–"न सुरां पिबेद्" इति नञ्वति वाक्ये पदत्रयसम्बन्धात्सुरापानप्रतिषेध एवैकोऽर्थोऽवगम्यते "न पुनः सुरां पिबेद्" इति

रत्नप्रभा ।

तथाहीति ॥ तृणादौ प्रत्ययोऽस्ति विग्रहादौ स नास्तीति वैषम्यं शङ्कते–अत्राहेति ॥ विध्युद्देशो वाक्यम् । तदेकवाक्यतया प्रशस्तो विधिरित्येवार्थवादेषु प्रत्ययः । वृत्तान्तो भूतार्थो, विग्रहादिः, तद्विषयः प्रत्ययो नास्तीत्यर्थः । नन्ववान्तरवाक्येन विग्रहादिप्रत्ययोऽस्त्वित्यत आह–न हीति ॥ सुरापानप्रत्ययोऽपि स्यादि-

भामती ।

दूषयति–अत्राह पूर्वपक्षी । शाब्दी खल्वियं गतिः, यत्तात्पर्याधीनवृत्तित्वं नाम । न ह्यन्यपरः शब्दोऽन्यत्र प्रमाणं भवितुमर्हति । न हि श्वित्रिनिर्णेजनपरं श्वेतो धावतीति वाक्यमितः सारमेयगमनं गमयितुमर्हति । न च नञ्वति महावाक्येऽवान्तरवाक्यार्थो विधिरूपः शक्योऽवगन्तुम् । न च प्रत्ययमात्रात्सोऽप्यर्थोऽस्य भवति, तत्प्रत्ययस्य भ्रान्तित्वात् । न पुनः प्रत्यक्षादीनामियं गतिः । न ह्युदकाहरणार्थिना घटदर्शनायोन्मीलितं चक्षुर्घटपटौ वा पटं वा केवलं नोपलभते । तदेवमेकदेशिनि पूर्वपक्षिणा दूषिते परमसिद्धान्तवाद्याह–अत्रोच्यते विषम उपन्यास इति । अयमभिसंधिः–लोके विशिष्टार्थप्रत्यायनाय पदानि प्रयुक्तानि तदन्तरेण न स्वार्थमात्रस्मारणे पर्यवस्यन्ति । न हि स्वार्थस्मारणमात्राय लोके पदानां प्रयोगो दृष्टपूर्वः । वाक्यार्थे तु दृश्यते । न चैतान्यस्मारितस्वार्थानि साक्षाद्वाक्यार्थं प्रत्याययितुमीशते इति स्वार्थस्मारणं वाक्यार्थमितयेऽवान्तरव्यापारः कल्पितः पदानाम् । न च यदर्थं यत्तत्तेन विना पर्यवस्यतीति न स्वार्थमात्राभिधाने पर्यवसानं पदानाम् । न च नञ्वति वाक्ये विधानपर्यवसानम् । तथा सति नञ्पदमनर्थकं स्यात् । यथाहुः–'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् । वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फले ॥ वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् । पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥' इति । सेयमेकस्मिन्वाक्ये गतिः । यत्र तु वाक्यस्यैकस्य वाक्यान्तरेण संबन्धस्तत्र लोकानु-

आनन्दगिरीय–न्यायनिर्णयः ।

अनन्यार्थत्वे स्वार्थे प्रामाण्यमन्यथा नेत्युक्तमाशंक्याऽऽह–नेति । न हि विषभक्षणवाक्यमन्यार्थत्वान्न स्वार्थे मानं किंतु मानान्तरविरोधात् । अवेक्षणस्य च संस्कारार्थस्य स्वार्थपरिच्छेदकत्वात् । न च तथाविधं वाक्यं न परिच्छेदकं संवादविसंवादयोरसतोरवान्तरतात्पर्यात्तत्परिच्छेदध्रौव्यात् । न चानन्यार्थत्वं प्रामाण्ये प्रयोजकमबाधितस्वार्थज्ञाने तदभावेन प्रामाण्याभावादृष्टेरित्यर्थः । अन्यार्थत्वमप्रयोजकमित्यत्र दृष्टान्तमाह–तथा हीति । प्रतिसंयोगिवस्तुतात्पर्यानपेक्षमेव मानं चक्षुः । वाक्यं तु यत्र तात्पर्यं तत्र मानं न प्रत्यर्थमिति वैशेष्यमाह–अत्रेति । विध्युद्देशो विधिवाक्यं विधिरुद्दिश्यतेऽनेनेति व्युत्पत्तेः स्तुत्यर्थत्वं विधेः प्राशस्त्यलक्षणापरत्वम् । वृत्तान्तो भूतार्थः । महावाक्यान्तरवाक्यभेदेन पृथक्प्रत्यायकत्वं मन्त्रादेर्विधेश्चेत्याशंक्याऽऽह–न हीति । तत्र दृष्टान्तः–यथेति । पदद्वयसंबन्धाद्विधिरपि तत्र भात्यप्राप्तनिषेधायोगादित्याशंक्याऽऽह–नेति । न प्रत्ययमात्रादर्थसिद्धिस्तत्प्रत्ययस्य रागप्राप्ततया भ्रमत्वात्तत्प्राप्तस्य च रजतादिवन्निषेधादित्यर्थः । यद्यपि पदैकवाक्यतायां नार्थान्तरधीर्विशिष्टबोधनप्रयुक्तपदानामन्यत्रापर्यवसानात्तथाऽपि वाक्यैकवाक्यतायां द्वाराऽर्थे वाक्यार्थधीः । यथा देवदत्तस्य गौः क्रेतव्या बहुक्षीरे-

१ अध्यवसायियितुमिति क्वचित्पुस्तके पाठः ।

पदद्वयसम्बन्धात्सुरापानविधिरपीति ॥ अत्रोच्यते ॥ विषम उपन्यासः-युक्तं यत्सुरापानप्रतिषेधे पदान्वयस्यैकत्वादवान्तरवाक्यार्थस्याग्रहणम् ॥ विध्युद्देशार्थवादयोस्त्वर्थवादस्थानि पदानि पृथगन्वयं वृत्तान्तविषयं प्रतिपद्यानन्तरं कैमर्थ्यवशेन कामं विधेस्तावकत्वं प्रतिपद्यन्ते ॥ यथा हि-"वायव्यꣳ श्वेतमालभेत भूतिकामः" [ तै० सं० २ । १ । १ ]

रत्नप्रभा ।

ति भावः । पदैकवाक्यत्ववाक्यैकवाक्यत्ववैषम्यान्मैवमित्याह-अत्रोच्यत इति ॥ नञ्पदमेकं यदा सुरां पिबेदिति पदाभ्यामन्वेति, तदा पदैकवाक्यमेकमेवार्थानुभवं करोति । न तु पदद्वयं पृथक् सुरापानं बोधयति । तस्य विधौ निषेधानुपपत्तेः । वाक्यार्थानुभवं प्रत्यद्वारत्वात् । अर्थवादस्तु भूतार्थसंसर्गस्तुतिद्वारं बोधयन्विधिना वाक्यैकवाक्यतां भजत इत्यस्ति विग्रहाद्यनुभव इत्यर्थः । नन्वर्थवादस्थपदानामवान्तरसंसर्गबोधकत्वं विना साक्षादेव विध्यन्वयोऽस्तु, तत्राह-यथा हीति ॥ साक्षादन्वयायोगं दर्शयति-

भामती ।

सारतो भूतार्थव्युत्पत्तौ च सिद्धायामेकैकस्य वाक्यस्य तत्तद्विशिष्टार्थप्रत्यायनेन पर्यवसितवृत्तिनः पश्चात्कुतश्चिद्धेतोः प्रयोजनान्तरापेक्षायामन्वयः कल्प्यते । यथा 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति वायव्यं श्वेतमालभेत' इत्यत्र । इह हि यदि न स्वाध्यायाध्ययनविधिः स्वाध्यायशब्दवाच्यं वेदराशिं पुरुषार्थतामनेष्यत्ततो भूतार्थमात्रपर्यवसिता नार्थवादा विध्युद्देशेनैकवाक्यतामागमिष्यन् । तस्मात् स्वाध्यायविधिवशात्कैमर्थ्याकांक्षायां वृत्तान्तादिगोचराः सन्तस्तत्प्रत्यायनद्वारेण विधेयप्राशस्त्यं लक्षयन्ति, न पुनरविवक्षितस्वार्था एव तल्लक्षणे प्रभवन्ति, तथा सति लक्षणैव न भवेत् । अभिधेयाविनाभावस्य तद्बीजस्याभावात् । अत एव गङ्गायां घोष इत्यत्र गङ्गाशब्दः स्वार्थसंबद्धमेव तीरं लक्षयति न तु समुद्रतीरं, तत्कस्य हेतोः, स्वार्थप्रत्यासत्त्यभावात् । न चैतत्सर्वं स्वार्थाविवक्षायां कल्पते । अत एव यत्र प्रमाणान्तरविरुद्धार्था अर्थवादा दृश्यन्ते, यथा-'आदित्यो वै यूपः' 'यजमानः प्रस्तरः' इत्येवमादयः । तत्र यथा प्रमाणान्तराविरोधः, यथा च स्तुत्यर्थता, तदुभयसिद्ध्यर्थं 'गुणवादस्तु' इति च 'तत्सिद्धिः' इति चासूत्रयज्जैमिनिः । तस्माद्यत्र सोऽर्थोऽर्थवादानां प्रमाणान्तरविरुद्धस्तत्र गुणवादेन प्राशस्त्यलक्षणेति लक्षितलक्षणा । यत्र तु प्रमाणान्तरसंवादस्तत्र प्रमाणान्तरादिवार्थवादादपि सोऽर्थः प्रसिध्यति, द्वयोः परस्परानपेक्षयोः प्रत्यक्षानुमानयोरिवैकत्रार्थे प्रवृत्तेः । प्रमात्रपेक्षया त्वनुवादकत्वम् । प्रमाता ह्यव्युत्पन्नः प्रथमं यथा प्रत्यक्षादिभ्योऽर्थमवगच्छति न तथाम्नायतः, तत्र व्युत्पत्त्याद्यपेक्षत्वात् । न तु प्रमाणापेक्षया, द्वयोः स्वार्थेऽनपेक्षत्वादित्युक्तम् । नन्वेवं मानान्तरविरोधेऽपि कस्माद्गुणवादो भवति, यावता शब्दविरोधे मानान्तरमेव कस्मान्न बाध्यते, वेदान्तैरिवाद्वैतविषयैः प्रत्यक्षादयः प्रपञ्चगोचराः, कस्माद्वाऽर्थवादवद्वेदान्ता अपि गुणवादेन न नीयन्ते । अत्रोच्यते-लोकानुसारतो द्विविधो हि विषयः शब्दानाम्, द्वारतश्च तात्पर्यतश्च । यथैकस्मिन्वाक्ये पदानां पदार्था द्वारतो वाक्यार्थश्च तात्पर्यतो विषयः, एवं वाक्यद्वयैकवाक्यतायामपि । यथेयं देवदत्तीया गौः क्रेतव्येत्येकं वाक्यम्, एषा बहुक्षीरेत्यपरं तदस्य बहुक्षीरत्वप्रतिपादनं द्वारम् । तात्पर्यं तु क्रेतव्येति वाक्यान्तरार्थे । तत्र यद्द्वारतस्तत्प्रमाणान्तरविरोधेऽन्यथा नीयते।यथा विषं भक्षयेति वाक्यं मा अस्य गृहे भुङ्क्ष्वेति वाक्यान्तरार्थपरं सत् । यत्र तु तात्पर्यं तत्र मानान्तरविरोधे पौरुषेयमप्रमाणमेव भवति । वेदान्तास्तु पौर्वापर्यपर्यालोचनया निरस्तसमस्तभेदप्रपञ्चब्रह्मप्रतिपादनपरा अपौरुषेयतया स्वतःसिद्धतात्त्विकप्रमाणभावाः संतस्तात्त्विकप्रमाणभावा-

आनन्दगिरीय-न्यायनिर्णयः ।

त्युक्तं बहुक्षीरत्वद्वारा क्रयणे तात्पर्यमित्युभयं तात्पर्यभेदाद्भाति तथेहापीत्याह-अत्रेति । आर्थवादिकानां पदानां साक्षादेव विध्यन्वये किमिति पृथगन्वयप्रतिपत्तिस्तत्राऽऽह-यथा हीति । अर्थवादस्थपदानां

इत्यत्र विध्युद्देशवर्तिनां वायव्यादिपदानां विधिना सम्बन्धः ॥ नैवं—"वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति । स एवैनं भूतिं गमयति" [ तै० सं० २ । १ । १ ] इत्येषामर्थवादगतानां पदानां न हि भवति वायुर्वाऽऽलभेत क्षेपिष्ठा देवता वाऽऽलभेतेत्यादि॥ वायुस्वभावसङ्कीर्तनेन त्ववान्तरमन्वयं प्रतिपद्यैवं विशिष्टदैवत्यमिदं कर्मेति विधिं स्तुवन्ति ॥ तद्यत्र योऽवान्तरवाक्यार्थः प्रमाणान्तरगोचरो भवति, तत्र तदनुवादेनार्थवादः प्रवर्तते ॥ यत्र प्रमाणान्तरविरुद्धः, तत्र गुणवादेन ॥ यत्र तु तदुभयं नास्ति, तत्र किं प्रमाणान्तराभावाद् गुण-

---

रत्नप्रभा ।

न हीति ॥ अर्थवादात्सर्वत्र स्वार्थग्रहणमाशंक्यार्थवादान्विभजते—तद्यत्रेति ॥ तत् तत्र अर्थवादेषु यत्र "अग्निर्हिमस्य भेषजम्" इत्यादावित्यर्थः । "आदित्यो यूपः" इत्यभेदो बाधित इति तेजस्वित्वगुणवादः । यत्र "वज्रहस्तः पुरन्दरः" इत्यादौ मानान्तरसंवादविसंवादौ न स्तः, तत्र भूतार्थवाद इत्यर्थ इति विमृश्येत्यध्याहारः । विग्रहार्थवादः, स्वार्थेऽपि तात्पर्यवान्, अन्यपरत्वे सत्यज्ञानाबाधितार्थकशब्दत्वात्,

भामती ।

त्प्रत्यक्षादीनि प्रच्याव्य सांव्यवहारिके तस्मिन्व्यवस्थापयन्ति । न च 'आदित्यो वै यूपः' इति वाक्यमादित्यस्य यूपत्वप्रतिपादनपरमपि तु यूपस्तुतिपरम् । तस्मात्प्रमाणान्तरविरोधे द्वारभूतो विषयो गुणवादेन नीयते । यत्र तु प्रमाणान्तरं विरोधकं नास्ति, यथा देवताविग्रहादौ, तत्र द्वारतोऽपि विषयः प्रतीयमानो न शक्यस्त्यक्तुम् । न च गुणवादेन नेतुं, को हि मुख्ये संभवति गौणमाश्रयेदतिप्रसङ्गात् । तथा सत्यनधिगतं विग्रहादि प्रतिपादयत् वाक्यं भिद्येतेति चेत् अद्धा । भिन्नमेवैतद्वाक्यम् । तथा सति तात्पर्यभेदोऽपीति चेत् । न । द्वारतोऽपि तदवगतौ तात्पर्यान्तरकल्पनाऽयोगात् । न च यस्य यत्र न तात्पर्यं तस्य तत्राप्रामाण्यं, तथा सति विशिष्टपरं वाक्यं विशेषणेष्वप्रमाणमिति विशिष्टपरमपि न स्यात्, विशेषणाविषयत्वात् । विशिष्टविषयत्वेन तु तदाक्षेपे परस्पराश्रयत्वम् । आक्षेपाद्विशेषणप्रतिपत्तौ सत्यां विशिष्टविषयत्वं विशिष्टविषयत्वाच्च तदाक्षेपः । तस्माद्विशिष्टप्रत्ययपरेभ्योऽपि विशेषणानि प्रतीयमानानि तस्यैव वाक्यस्य विषयत्वेनानिच्छताप्यभ्युपेयानि यथा, तथान्यपरेभ्योऽप्यर्थवादवाक्येभ्यो देवताविग्रहादयः प्रतीयमाना असति प्रमाणान्तरविरोधे न युक्तास्त्यक्तुम् । न हि मुख्यार्थसंभवे गुणवादो युज्यते । न च भूतार्थमप्यपौरुषेयं वचो मानान्तरापेक्षं स्वार्थे, येन मानान्तरासंभवे भवेदप्रमाणमित्युक्तम् । स्यादेतत् । तात्पर्यैक्येऽपि यदि वाक्यभेदः, कथं तर्ह्यर्थैकत्वाद्देकं वाक्यम् । न । तत्रतत्र यथास्वं तत्तत्पदार्थविशिष्टैकपदार्थप्रतीतिपर्यवसानसंभवात् । स तु पदार्थान्तरविशिष्टः पदार्थ एकः क्वचिद् द्वारभूत क्वचिद् द्वारीत्येतावान् विशेषः । नन्वेवं सति ओदनं भुक्त्वा ग्रामं गच्छतीत्यत्रापि वाक्यभेदप्रसङ्गः । अन्यो हि संसर्ग ओदनं

आनन्दगिरीय—न्यायनिर्णयः ।

विधिना साक्षादसंबन्धे योग्यत्वाभावं हेतुमाह—न हीति । कथं तर्हि विधिना तेषामन्वयस्तत्राऽऽह—वाय्विति । अध्ययनविध्युपात्तस्याक्षरमात्रस्यापि नैष्फल्यायोगात्तत्फलाकांक्षायामर्थवादानां विधेयस्तुतिलक्षणया तदेकवाक्यत्वम् । न चान्वयभेदेऽपि वाक्यभेदस्तात्पर्यभेदस्य तद्भेदकस्याभावादित्यर्थः । तर्हि सर्वत्रार्थवादानां स्वार्थे प्रामाण्यात् 'अग्निर्हिमस्य' इत्याद्यपि स्वार्थे प्रमाणं नेत्याह—तदिति । मानान्तरसंवादाभावादादित्यो यूप इत्यादीनां स्वार्थे प्रामाण्यमाशंक्योक्तम्—यत्रेति । "वज्रहस्तः पुरंदरः" इत्यादिषु संवादविसंवादयोरभावेऽपि संदेहान्न स्वार्थे मानतेत्याशंक्याऽऽह—यत्र त्विति । इतिशब्दादूर्ध्वं विचार्येत्यध्याहार्यम् । उक्तं हि—"विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः" इति । यत्र विद्यमानार्थत्वं तत्र संवादो दृष्टः, प्रकृते तदभावात्किं गुणवादः किंवा यत्र विरोधस्त-

वादः स्याद्-आहोस्वित्-प्रमाणान्तराविरोधाद्विद्यमानार्थवाद इति प्रतीतिशरणैर्विद्यमानार्थवाद आश्रयणीयो न गुणवादः ॥ एतेन मन्त्रो व्याख्यातः ॥ अपि च, विधिभिरेवेन्द्रादिदेवत्यानि हवींषि चोदयद्भिरपेक्षितमिन्द्रादीनां स्वरूपम् । न हि स्वरूपरहिता इन्द्रादयश्चेतस्यारोपयितुं शक्यन्ते ॥ न च चेतस्यनारूढायै तस्यैतस्यै देवतायै हविः प्रदातुं शक्यते ॥ श्रावयति च-"यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा

रत्नप्रभा ।

प्रयाजादिवाक्यवदिति न्यायं मन्त्रेष्वतिदिशति-एतेनेति ॥ वेदान्तानुवादगुणवादानां निरासाय हेतौ पदानि । न चोभयपरत्वे वाक्यभेदः । अवान्तरार्थस्य महावाक्यार्थद्वारत्वादिति भावः । विध्यनुपपत्त्यापि स्वर्गवद्देवताविग्रहोऽङ्गीकार्य इत्याह-अपि चेति ॥ ननु क्लेशात्मके कर्मणि विधिः फलं विना अनुपपन्न इति भवतु "यन्न दुःखेन संभिन्नम्" इत्यर्थवादसिद्धः स्वर्गो विधिप्रमाणकः । विग्रहं विना विधेः कानुपपत्तिस्तामाह-न हीति ॥ उद्दिश्य त्यागानुपपत्त्या चेतस्यारोहोऽङ्गीकार्य इत्यत्र श्रुतिमप्याह-यस्या इति ॥ अतश्चेतस्यारोहार्थः विग्रह एष्टव्यः । किञ्च कर्मप्रकरणपाठाद्विग्रहप्रमितिरपि प्रयाजवत्कर्माङ्ग-

भामती ।

भुक्त्वेति, अन्यस्तु ग्रामं गच्छतीति । न । एकत्र प्रतीतेरपर्यवसानात् । भुक्त्वेति हि समानकर्तृकता पूर्वकालता च प्रतीयते । न चेयं प्रतीतिरपरकालक्रियान्तरप्रत्ययमन्तरेण पर्यवस्यति । तस्माद्यावति पदसमूहे पदाहिताः पदार्थस्मृतयः पर्यवस्यन्ति तावदेकं वाक्यम् । अर्थवादवाक्ये चैताः पर्यवस्यन्ति विनैव विधिवाक्यं विशिष्टार्थप्रतीतेः । न च द्वाभ्यां द्वाभ्यां पदाभ्यां विशिष्टार्थप्रत्ययपर्यवसानात् पञ्चषट्पदवति वाक्ये एकस्मिन्नानात्वप्रसङ्गः । नानात्वेऽपि विशेषणानां विशेष्यस्यैकत्वात्, तस्य च सकृच्छ्रुतस्य प्रधानभूतस्य गुणभूतविशेषणानुरोधेनावर्तनायोगात् । प्रधानभेदे तु वाक्यभेद एव । तस्माद्विधिवाक्यादर्थवादवाक्यमन्यदिति वाक्ययोरेव स्वस्ववाक्यार्थप्रत्ययावसितव्यापारयोः पश्चात्कुतश्चिदपेक्षायां परस्परान्वय इति सिद्धम् । अपि च विधिभिरेवेन्द्रादिदैवत्यानीति । देवतामुद्दिश्य हविरवमृश्य च तद्विषयस्वत्वत्याग इति यागशरीरम् । न च चेतस्यनालिखिता देवतोद्देष्टुं शक्या । न च रूपरहिता चेतसि शक्यत आलेखितुमिति यागविधिनैव तद्रूपापेक्षिणा यादृशमन्यपरेभ्योऽपि मन्त्रार्थवादेभ्यस्तद्रूपमवगतं तदभ्युपेयते, रूपान्तरकल्पनायां मानाभावात् । मन्त्रार्थवादयोरत्यन्तपरोक्षवृत्तिप्रसङ्गाच्च । यथा हि

आनन्दगिरीय-न्यायनिर्णयः ।

श्रेय तद्दृष्टेरिह तदभावाद्विद्यमानार्थतेति संदेहे मानानां स्वतोमानत्वाद्विद्यमानार्थता, सति च मुख्ये गुणान्याश्रयणादर्थवादवाक्यानि स्वार्थप्रमितावनन्यार्थान्येव फलवशादन्यार्थानि विधिप्रकरणस्थानुवादविरोधविधुरवाक्यत्वात्प्रयाजादिवाक्यवदित्यनुमानादित्याह-प्रतीतीति।अर्थवादानां संवादविसंवादासत्त्वे स्वार्थे प्रामाण्योक्त्या मन्त्राणामपि तदुक्तमेवेत्यतिदिशति-एतेनेति । तस्यापि संवादाद्यभावे स्वार्थे मानत्वाविशेषात्प्रतीते देवतारूपे प्रामाण्यमावश्यकमित्यर्थः । न केवलं मन्त्रादिप्रमाणकमेव देवतारूपं विधिप्रमाणकमपीत्युपादानं प्रमाणयति-अपि चेति । यथा स्वर्गकामवाक्ये विध्यपेक्षितं स्वर्गरूपं 'यन्न दुःखेन संभिन्नम्' इत्यर्थवादसिद्धं विधिप्रमाणकं तथा यागविधिनैव देवतारूपापेक्षणादर्थवादादिसिद्धमपि तद्रूपं तत्प्रमाणकमेवेत्यर्थः । कथमिन्द्रादिस्वरूपापेक्षा विधीनां ते हि करणेतिकर्तव्यतासाध्यमात्रापेक्षिणस्तत्राऽऽह-न हीति।दर्शपूर्णमासाधिकारपाठात्प्रयाजाद्यनुष्ठानादेवापूर्वसिद्धिः। तथौत्सर्गिकप्रतीतिकार्यर्थवादप्रमितदेवताप्रमितिमतो यागादपूर्वसिद्धिरविशेषादित्यर्थः । चेतसि देवतारूपारोपणमपि मा भूत्तत्संप्रदानकहविर्दानकस्य तदपेक्षत्वाभावादित्याशंक्याऽऽह-न चेति । देवतामुद्दिश्य हविरवमृश्य तदीयस्वत्वत्यागात्मकत्वाद्यागस्येत्यर्थः । न केवलं यागदेहालोचनया चेतसि देवतारोपः किंतु श्रूयमाणत्वाच्चेत्याह-श्रावयतीति । विध्य-

ध्यायेद्वषट् करिष्यन्" [ऐ० ब्रा० ३।८।१] इति॥ न च शब्दमात्रमर्थस्वरूपं सम्भवति। शब्दार्थयोर्भेदात् ॥ तत्र यादृशं मन्त्रार्थवादयोरिन्द्रादीनां स्वरूपमवगतं न तत्तादृशं शब्दप्रमाणकेन प्रत्याख्यातुं युक्तम् ॥ इतिहासपुराणमपि व्याख्यातेन मार्गेण सम्भवन्मन्त्रार्थवादमूलत्वात्प्रभवति देवताविग्रहादि साधयितुम् ॥ प्रत्यक्षादिमूलमपि सम्भवति॥ भवति ह्यस्माकमप्रत्यक्षमपि चिरन्तनानां प्रत्यक्षम्॥तथा च व्यासादयो देवादिभिः

रत्नप्रभा।

त्वेनांगीकार्या। तां विना कर्मापूर्वासिद्धेः। किञ्च सुप्रसन्नविग्रहवद्देवतां त्यक्त्वा शब्दमात्रं देवतेति भक्तिरयुक्तेत्याह–**न च शब्देति** ॥ न चाऽऽकृतिमात्रं शब्दशक्यमस्तु किं विग्रहेणेति वाच्यम्। निर्व्यक्त्याकृत्ययोगात्। अतः शब्दस्यार्थाकांक्षायां मन्त्रादिप्रमितविग्रहोऽङ्गीकार्य इत्याह–**तत्रेति** ॥ एवं मन्त्रार्थवादमूलकमितिहासादिकमपि विग्रहे मानमित्याह–**इतिहासेति** ॥ प्रमाणत्वेन संभवदित्यर्थः। व्यासादीनां योगिनां देवतादिप्रत्यक्षमपीतिहासादेर्मूलमित्याह–**प्रत्यक्षेति** ॥ व्यासादयो, देवतादिप्रत्यक्षशून्याः,

भामती।

'व्रात्यो व्रात्यस्तोमेन यजते' इति व्रात्यस्वरूपापेक्षायां यस्य पिता पितामहो वा सोमं न पिबेत् स व्रात्य इति व्रात्यस्वरूपमवगतं व्रात्यस्तोमविध्यपेक्षितं सद्विधिप्रमाणकं भवति, यथा वा स्वर्गस्य रूपमलौकिकं 'स्वर्गकामो यजेत' इति विधिनापेक्षितं सदर्थवादतोऽवगम्यमानं विधिप्रमाणकम्, तथा देवतारूपमपि। ननूद्देशो रूपज्ञानमपेक्षते न पुना रूपसत्तामपि, देवतायाः समारोपेणापि च रूपज्ञानमुपपद्यत इति समारोपितमेव रूपं देवताया मन्त्रार्थवादैरुच्यते। सत्यं, रूपज्ञानमपेक्षते। तच्चान्यतोऽसंभवान्मन्त्रार्थवादेभ्य एव। तस्य तु रूपस्यासति बाधकेऽनुभवारूढं तथाभावं परित्यज्यान्यथात्वमननुभूयमानमसांप्रतं कल्पयितुम्। तस्माद्विध्यपेक्षितमन्त्रार्थवादैरन्यपरैरपि देवतारूपं बुद्धावुपनिधीयमानं विधिप्रमाणकमेवेति युक्तम्। स्यादेतत्। विध्यपेक्षायामन्यपरादपि वाक्यादवगतोऽर्थः स्वीक्रियते, तदपेक्षैव तु नास्ति, शब्दरूपस्य देवताभावात्, तस्य च मानान्तरवेद्यत्वादित्यत आह–**न च शब्दमात्रमिति**। न केवलं मन्त्रार्थवादतो विग्रहादिसिद्धिः, अपि तु इतिहासपुराणलोकस्मरणेभ्यो मन्त्रार्थवादमूलेभ्यो वा प्रत्यक्षादमूलेभ्यो वेत्याह–**इतिहासेति**।

आनन्दगिरीय–न्यायनिर्णयः।

पेक्षायां मन्त्रादिभ्यो देवताविग्रहादि ग्राह्यं तदपेक्षैव नास्ति शब्दरूपस्यैव देवतात्वात्तस्य च मानान्तरसिद्धत्वात्तत्राऽऽह–**न चेति**। विमता बुद्धिः शब्दातिरिक्तार्थाकारा कारकबुद्धित्वात्कर्तृबुद्धिवत्। न च मन्त्ररूपकारकबुद्धौ व्यभिचारस्तत्रापि 'ऐन्द्र्या गार्हपत्यम्' इत्यादिकारकत्ववादिशब्दातिरिक्तमन्त्ररूपार्थाकारबुद्धित्वोपगमादिति भावः। ननु तथाऽपि देवतारूपज्ञानमुद्देशोऽपेक्षते न तद्रूपसत्त्वमारोपादपि तद्धीयोगाद्योषिदग्निधीवत्तत्राऽऽह–**तत्रेति**। दृष्टस्यासति बाधके न मिथ्यात्वम्। न च कर्मणो देवतागुणत्वात्तस्मादेव फलोत्पादे यागस्य फलवत्त्वविरोधोऽपूर्ववद्देवताप्रसादस्यापि यागावान्तरव्यापारत्वादित्यर्थः। न केवलं मन्त्रार्थवादेभ्यो देवताविग्रहादिसिद्धिः किं त्वितिहासपुराणादपीत्याह–**इतिहासेति**। मन्त्रादावुक्तप्रामाण्यप्रकारो व्याख्यातो मार्गः। न केवलं मन्त्राद्येव तन्मूलं किंतु प्रत्यक्षाद्यपीत्याह–**प्रत्यक्षादीति**। ननु न तत्तस्य मूलं न हि देवादिविषयमस्मदादीनामस्ति प्रत्यक्षं तत्राऽऽह–**भवतीति**। व्यासादीनां तद्विषयं प्रत्यक्षमस्तीत्यत्र मानमाह–**तथा चेति**। न चाऽऽर्षं प्रत्यक्षमितिहासादिसिद्धं तच्च तन्मूलतया मानमित्यन्योन्याश्रयत्वमार्षप्रत्यक्षस्य योगिप्रत्यक्षान्तर्भूतस्यानुमानागमाभ्यामेव सिद्धत्वादितिहासादौ च तन्मूलत्वव्यक्तीकरणाय तदनुवादादित्यर्थः। ननु पूर्वेऽपि व्यासादयो न देवादीन्प्रत्यक्षयन्ति प्राणित्वा-

१ देवतेत्युक्तिरिति पाठो बहुषु पुस्तकेषु।

**प्रत्यक्षं व्यवहरन्तीति स्मर्यते ॥ यस्तु ब्रूयादिदानीन्तनानामिव पूर्वेषामपि नास्ति देवादिभिर्व्यवहर्तुं सामर्थ्यमिति, स जगद्वैचित्र्यं प्रतिषेधेत् ॥ इदानीमिव च नान्यदापि सार्वभौमः क्षत्रियोऽस्तीति ब्रूयात् ॥ ततश्च राजसूयादिचोदना-उपरुन्ध्यात् ॥ इदानीमिव च कालान्तरेऽप्यव्यवस्थितप्रायान्वर्णाश्रमधर्मान्प्रतिजानीत ॥ ततश्च व्यवस्थाविधायिशास्त्रमनर्थकं स्यात् ॥ तस्माद्धर्मोत्कर्षवशाच्चिरन्तना देवादिभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते ॥ अपि च स्मरन्ति-"स्वाध्यायादिष्टदेवतासम्प्रयोगः" [ योग० सू० २ । ४४ ] इत्यादि ॥ योगोऽप्यणिमाद्यैश्वर्यप्राप्तिफलकः स्मर्यमाणो न शक्यते साहसमात्रेण प्रत्याख्यातुम् ॥ श्रुतिश्च योगमाहात्म्यं प्रख्यापयति-"पृथ्व्यप्तेजोऽनिलखे समुत्थिते पञ्चा-**

रत्नप्रभा ।

प्राणित्वाद्, अस्मद्वदित्यनुमानमतिप्रसंगेन दूषयति-**यस्त्वित्यादिना** ॥ सर्वं, घटाभिन्नं, वस्तुत्वात्, घटवदिति जगद्वैचित्र्यं नास्तीत्यपि स ब्रूयात् । तथा क्षत्रियाभावं वर्णाश्रमाभावं वर्णाश्रमाद्यव्यवस्थां च ब्रूयात् । निरंकुशबुद्धित्वात् । तथा च राजसूयादिशास्त्रस्य कृतादियुगधर्मव्यवस्थाशास्त्रस्य बाध इत्यर्थः । योगसूत्रार्थादपि देवादिप्रत्यक्षसिद्धिरित्याह-**अपि चेति** ॥ मन्त्रजपाद्देवसान्निध्यं, तत्संभाषणं चेति **सूत्रार्थः** । योगमाहात्म्यस्य श्रुतिस्मृतिसिद्धत्वाद्योगिनामस्ति देवादिप्रत्यक्षमित्याह-**योग इति**॥पादतलादा जानोर्जानोरा नाभेर्नाभेरा ग्रीवाया ग्रीवायाश्चाऽऽकेशप्ररोहं ततश्चाब्रह्मरन्ध्रं पृथिव्यादिपञ्चके समुत्थिते धारणजाते योगगुणे चाणिमादिके प्रवृत्ते योगाभिव्यक्तं तेजोमयं शरीरं प्राप्तस्य योगिनो न रोगादिस्पर्शः

भामती ।

**श्लिष्यते** युज्यते । निगदव्याख्यातमन्यत् । तदेवं मन्त्रार्थवादादिसिद्धे देवताविग्रहादौ गुर्वादिपूजावद्देवतापूजात्मको यागो देवताप्रसादादिद्वारेण सफलोऽवकल्पते । अचेतनस्य तु पूजामप्रतिपद्यमानस्य तदनुपपत्तिः । न चैवं यज्ञकर्मणो देवतां प्रति गुणभावाद्देवतातः फलोत्पादे : यागभावनायाः श्रुतं फलवत्त्वं । यागस्य च तां प्रति तत्फलांशं वा प्रतिश्रुतं करणत्वं हातव्यम् । यागभावनाया एव हि फलवत्या यागलक्षणस्वकरणावान्तरव्यापारत्वाद्देवताभोजनप्रसादादीनाम्, कृषिकर्मण इव तत्तदवान्तरव्यापारस्य सस्याधिगमसाधनत्वम् । आग्नेयादीनामिवोत्पत्तिपरमापूर्वावान्तरव्यापाराणां भवन्मते स्वर्गसाधनत्वम् । तस्मात्कर्मणो अपूर्वावान्तरव्यापारस्य वा देवताप्रसादावान्तरव्यापारस्य वा फलवत्त्वात् प्रधानत्वमुभयस्मिन्नपि पक्षे समानं, न तु देवताया विग्रहादिमत्याः प्राधान्यमिति न धर्ममीमांसायाः सूत्रम्-

आनन्दगिरीय-न्यायनिर्णयः ।

दस्मदादिवदित्यनुमानान्न योगिप्रत्यक्षं तन्मूलमिति शंकते-**यस्त्विति** । सामान्यतो दृष्टमतिप्रसक्त्या प्रत्याचष्टे-**स इति** । विमतं घटमात्रं वस्तुत्वाद्घटवदित्यपि संभवादित्यर्थः । अतीतानागतौ कालौ सार्वभौमशून्यौ कालत्वाद्वर्तमानवदित्यतिप्रसङ्गान्तरमाह-**इदानीमिवेति** । तत्रापि सिद्धसाध्यत्वं प्रत्याह-**ततश्चेति** । विमतः कालोऽव्यवस्थितप्रायवर्णाश्रमशाली कालत्वात्संमतवदित्यतिप्रसङ्गान्तरमाह-**इदानीमिवेति** । तत्रापि सिद्धसाध्यत्वमाशङ्क्याऽऽह-**ततश्चेति** । व्यवस्थाविधायि तत्तद्युगेषु तत्तद्वर्णाश्रमयोगितया तत्तदसंकीर्णधर्मबोधकमित्यर्थः । सामान्यतो दृष्टस्यातिप्रसक्तिप्रहतत्वे फलितमाह-**तस्मादिति** । इष्टदेवतासाक्षात्कारोद्देशेन जपविधानादपि युक्तमेतदित्याह-**अपि चेति** । आदिपदेन संयोगफलं देवतासाक्षात्कारस्तत्फलं व्यवहारश्चोच्यते । योगशास्त्रादपि योगिनो देवतादिभिः सह प्रत्यक्षं व्यवहरन्तीति दृष्टमित्याह-**योगोऽपीति** । न केवलं योगशास्त्राद्योगमाहात्म्यधीः किंतु श्रुतेरपीत्याह-**श्रुतिश्चेति** ।

१ पृथ्व्याप्यतेज इति पाठ इदानीन्तनोपनिषन्मूलपुस्तके ।

त्मके योगगुणे प्रवृत्ते । न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम्" [ श्वेता० २ । १२ ] इति ॥ ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं नास्मदीयेन सामर्थ्येनोपमातुं युक्तम् ॥ तस्मात्समूलमितिहासपुराणम् ॥ लोकप्रसिद्धिरपि न सति सम्भवे निरालम्बनाध्यवसातुं युक्ता ॥ तस्मादुपपन्नो मन्त्रादिभ्यो देवादीनां विग्रहवत्त्वाद्यवगमः ॥ ततश्चार्थित्वादिसम्भवादुपपन्नो देवादीनामपि ब्रह्मविद्यायामधिकारः ॥ क्रममुक्तिदर्शनान्यप्येवमेवोपपद्यन्ते ॥ ३३ ॥ इति देवता-( तदुपर्य ) धिकरणम् ॥ ९ ॥

## शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥३४॥ (१०) ॥

यथा मनुष्याधिकारनियममपोह्य देवादीनामपि विद्यास्वधिकार उक्तः तथैव द्विजात्यधिकारनियमापवादेन शूद्रस्याप्यधिकारः स्यादित्येतामा-

---

रत्नप्रभा ।

इत्यर्थः ॥ चित्रकारादिप्रसिद्धिरपि विग्रहे मानमित्याह—**लोकेति** ॥ अधिकरणार्थमुपसंहरति—**तस्मादिति**॥ चिन्तायाः फलमाह—**क्रमेति** ॥ **एवमेव** देवादीनां ब्रह्मविद्याधिकारे सत्येव देवत्वप्राप्तिद्वारा मुक्तिफलान्युपासनानि युज्यन्ते देवानामनधिकारे ज्ञानाभावात्क्रममुक्त्यर्थिनामुपासनेषु प्रवृत्तिर्न स्यात् । अतोऽधिकारनिर्णयात्प्रवृत्तिसिद्धिरिति भावः ॥ ३३ ॥ ( ९ ) ॥ **शुगस्य—सूच्यते हि** । पूर्वेणास्य दृष्टान्तसङ्गतिमाह—**यथेति** ॥ पूर्वत्र देवादीनामधिकारसिद्ध्यर्थं मन्त्रादीनां भूतार्थे विग्रहादौ समन्वयोक्त्या वेदान्ता-

भामती ।

'अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं गुणत्वे देवताश्रुतिः' इति विरुध्यते । तस्मात्सिद्धो देवतानां प्रायेण ब्रह्मविद्यास्वधिकार इति ॥ ३३ ॥ (९) ॥ **शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ।** अवान्तरसंगतिं कुर्वन्नधिकरणतात्पर्यमाह—**यथा मनुष्याधिकारेति** । शङ्काबीजमाह—

आनन्दगिरीय—न्यायनिर्णयः ।

पादतलमारभ्याऽऽजानोर्जानोरा नाभेर्नाभेराग्रीवं ग्रीवायाश्चाऽऽकेशप्ररोहं ततश्चाऽऽब्रह्मरन्ध्रं क्रमेण पृथिव्यादिधारणया पृथिव्यादिपञ्चात्मके भूतसमुदाये समुत्थिते प्रतिपत्तिद्वारा वशीकृते योगगुणे चाणिमादौ प्रवृत्ते योगाभिव्यक्तं तेजोमयं देहं प्राप्तस्य योगिनो न जरादिसंगतिरित्यर्थः । किंच,मन्त्रादिदृशामृषीणां शक्तिरस्मदादिशक्तिसदृशी नेत्यभ्युपगन्तव्यम् । तथा व्यासादीनामपि शक्तेरस्मदादिशक्यतिशायितया न तत्प्रत्यक्षं प्रतिक्षेप्तुं शक्यमित्याह—**ऋषीणामिति** । सिद्धे व्यासादीनामतीन्द्रियार्थदर्शित्वे फलितमाह—**तस्मादिति** । तथा चेतिहासादिप्रामाण्याद्देवताविग्रहादिपञ्चकसिद्धिरित्यर्थः । लोकप्रसिद्ध्याऽपि तत्सिद्धिरित्याह—**लोकेति** । प्रमाणस्यादुष्टत्वे प्रमेयसिद्धिरवश्यंभाविनीत्यवान्तरप्रकृतमुपसंहरति—**तस्मादिति** । तेषां विग्रहवत्त्वादौ सिद्धे प्रकृते किमित्याशङ्क्य परमप्रकृतमुपसंहरति—**ततश्चेति** । किंच, ब्रह्मलोकादिप्राप्तानां देवादिभावं प्राप्तानां तत्रोत्पन्नापरोक्षधियां मुक्तिवादीन्यपि श्रुतिस्मृतिवाक्यानि देवादीनामधिकारं सूचयन्तीति तेषां विद्याधिकारे श्रुतार्थापत्तिमाह—**क्रमेति** ॥ ३३ ॥ ( ९ ) ॥ मनुष्याधिकारनियमापवादेन देवादीनामधिकारवद्द्विजात्यधिकारनियमं निरस्य शूद्रस्यापि स्यादधिकारः संवर्गविद्याधिकारिणि जानश्रुतौ शूद्रशब्दादित्याशङ्क्याऽऽह—**शुगस्येति** । प्रासङ्गिकीं संगतिं वदन्नधिकरणस्य तात्पर्यमाह—**यथेति** । पूर्वत्रात्रैवर्णिकदेवाद्यधिकारोक्त्या मन्त्रादीनां स्वार्थे समन्वयः साधितः । संप्रति विद्याधिकारिणि शूद्रशब्ददृष्टेर्जातिशूद्रस्यापि विद्याहेतुवेदान्तविचारादिष्वधिकारमाशंक्य शूद्रशब्दस्य क्षत्रिये समन्वयोक्तेरेतदध्यायान्तर्भावोऽस्य युक्तः । आर्थवादिकशूद्रशब्दस्यैव पौर्वापर्यालोचनया वेदान्तानां स्वार्थे समन्वयसिद्धेः श्रुत्यादिसं-

**शङ्कां निवर्तयितुमिदमधिकरणमारभ्यते ॥ तत्र शूद्रस्याप्यधिकारः स्यादिति तावत्प्राप्तम् । अर्थित्वसामर्थ्ययोः सम्भवात्-"तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" [ तै० सं० ७।१।१।६ ] इतिवच्छूद्रो विद्यायामनवक्लृप्त इति च निषेधाश्रवणात् ॥ यच्च कर्मस्वनधिकारकारणं शूद्रस्यानग्नित्वं, न तद्विद्यास्वधिकारस्यापवादकं लिंगम् ॥ न ह्याहवनीयादिरहितेन विद्या वेदितुं न शक्यते ॥ भवति च लिङ्गं शूद्राधिकारस्योपोद्बलकं-संवर्गविद्यायां हि जानश्रुतिं पौत्रायणं शुश्रूषुं शूद्रशब्देन**

रत्नप्रभा ।

नामपि भूतार्थे ब्रह्मणि समन्वयो दृढीकृतः । अत्रापि शूद्रशब्दस्य श्रौतस्य क्षत्रिये समन्वयोक्त्या स दृढीक्रियत इत्यधिकरणद्वयस्य प्रासंगिकस्यास्मिन्समन्वयाध्यायेऽन्तर्भाव इति मन्तव्यम् । पूर्वपक्षे शूद्रस्याऽपि द्विजवद्वेदान्तश्रवणे प्रवृत्तिः सिद्धान्ते तदभाव इति फलम् । अत्र वेदान्तविचारो विषयः । स किं शूद्रमधिकरोति न वेति संभवासंभवाभ्यां सन्देहे पूर्वपक्षमाह-**तत्र शूद्रस्यापीत्यादिना** । **तस्माद्** अनग्नित्वाद् **अनवक्लृप्तः** असमर्थः । विद्यार्थिनि शूद्रशब्दप्रयोगाल्लिङ्गादपि शूद्रस्याधिकार इत्याह-**भवति चेति** ॥ जानश्रुतिः किल षट् शतानि गवां, रथं च रैक्काय गुरवे निवेद्य मां शिक्षये-

भामती ।

**तत्रेति** । निर्मृष्टनिखिलदुःखानुषङ्गे शाश्वतिक आनन्दे कस्य नाम चेतनस्यार्थिता नास्ति, येनार्थिताया अभावाच्छूद्रो नाधिक्रियेत।नाप्यस्य ब्रह्मज्ञाने सामर्थ्याभावः । द्विविधं हि सामर्थ्यं निजं चागन्तुकं च । तत्र द्विजातीनामिव शूद्राणां श्रवणादिसामर्थ्यं निजमप्रतिहतम् । अध्ययनाभावादागन्तुकसामर्थ्याभावे सत्यनधिकार इति चेत्, हन्त, आधानाभावे सत्यग्न्यभावादग्निसाध्ये कर्मणि मा भूदधिकारः । न च ब्रह्मविद्यायामग्निः साधनमिति किमित्यनाहिताग्नयो नाधिक्रियन्ते । न चाध्ययनाभावात्तत्साधनायामनधिकारो ब्रह्मविद्यायामिति सांप्रतम् । यतो युक्तं 'यदाहवनीये जुहोति' इत्याहवनीयस्य होमाधिकरणतया विधानात्तद्रूपस्यालौकिकतयानारभ्याधीतवाक्यविहितादाधानादन्यतोऽनधिगमादाधानस्य च द्विजातिसंबन्धितया विधानात्तत्साध्योऽग्निरलौकिको न शूद्रस्यास्तीति नाहवनीयादिसाध्ये कर्मणि शूद्रस्याधिकार इति । न च तथा ब्रह्मविद्यायामलौकिकमस्ति साधनं यच्छूद्रस्य न स्यात् । अध्ययननियम इति चेत् । न । विकल्पासहत्वात् । तदध्ययनं पुरुषार्थे वा नियम्येत, यथा धनार्जने प्रतिग्रहादि । क्रत्वर्थे वा, यथा 'व्रीहीनवहन्ति' इत्यवघातः । न तावत् क्रत्वर्थे । न हि 'स्वाध्यायोऽध्येतव्यः' इति कंचित् क्रतुं प्रकृत्य पठ्यते, यथा दर्शपूर्णमासं प्रकृत्य 'व्रीहीनवहन्ति' इति । न चानारभ्याधीतमप्यव्यभिचरितक्रतुसंबन्धितया क्रतुमुपस्थापयति, येन वाक्येनैव क्रतुना संबध्येताध्ययनम् । न हि यथा जुह्वादि अव्यभिचरितक्रतुसंबद्धमेवं

आनन्दगिरीय-न्यायनिर्णयः ।

गतयः पूर्वपक्षे जातिशूद्रस्यापि ब्रह्मविद्यायां त्रैवर्णिकादविशेषः, सिद्धान्ते ततो विशेषः फलति । ब्रह्मविद्या विषयः । तस्यां शूद्रस्याधिकारोऽस्ति न वेत्यधिकारहेतुसत्त्वासत्त्वाभ्यां संदेहे पूर्वपक्षयति-**तत्रेति** । सत्यपि लौकिके सामर्थ्ये शास्त्रीयसामर्थ्याभावादनधिकारसाशंक्याऽऽह-**तस्मादिति** । अनग्नित्वादित्यर्थः । अनवक्लृप्तत्वमयोग्यत्वम् । कर्मानधिकारे तेनैव न्यायेन विद्यायामपि नाधिकारस्तत्राऽऽह-**यच्चेति** । किमाहवनीयाद्यभावादनधिकारः शूद्रस्य विद्यायामुच्यते किंवाऽधिकारे मानाभावात्तत्राऽऽद्यं दूषयति-**न हीति** । विद्याया दृष्टसाधनत्वादाहवनीयादेस्तत्राकिंचित्करत्वात्तद्रहितस्यापि तद्धेतुमतस्तत्प्राप्तिरिति भावः । द्वितीयं निराह-**भवतीति** । अहेति खेदार्थो निपातः । हारेण सहित इत्वा रथः स तवैव हे शूद्र गोभिः सहास्तु किमनेनात्यल्पेन गार्हस्थ्यं निर्वोढुमसमर्थेनेति रैक्को जानश्रुतिं विद्याधिकारिणं शूद्रशब्देनोक्त्वा-

१ ब्रह्मणि समन्वयः ।

परामृशति—"अह हारेत्वा शूद्र तवैव सह गोभिरस्तु" [ छां०४।२।३ ] इति ॥ विदुरप्रभृतयश्च शूद्रयोनिप्रभवा विशिष्टविज्ञानसम्पन्नाः स्मर्यन्ते॥ तस्मादधिक्रियते शूद्रो विद्यास्विति॥एवं प्राप्ते ब्रूमः॥न शूद्रस्याधिकारो वेदाध्ययनाभावात ॥ अधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियते ॥न च शूद्रस्य वेदाध्ययनमस्ति॥उपनयनपूर्वकत्वाद्वेदाध्ययनस्य॥उपनयनस्य च वर्णत्रयविषयत्वात् ॥ यत्त्वर्थित्वं, न तदसति सामर्थ्येऽधिकारकारणं

रत्नप्रभा ।

त्युवाच । ततो रैक्को विधुरः कन्यार्थी सन्निदमुवाच ॥ **अहेति** । निपातः खेदार्थः । हारेण निष्केण युक्त इत्वा—गन्ता रथः—**हारेत्वा** स च गोभिस्सह हे शूद्र तवैवास्तु किमल्पेनानेन मम गार्हस्थ्यानुपयोगिनेति भावः । अर्थित्वादिसंभवे श्रेयस्साधने प्रवृत्तिरुचिता । स्वाभाविकत्वादिति न्यायोपेताल्लिङ्गादित्याह—**तस्मादिति** ॥ सूत्राद्बहिरेव सिद्धान्तयति—**न शूद्रस्याधिकार इत्यादिना** ॥ आपाततो विदितो वेदार्थो येन तस्येत्यर्थः । अध्ययनविधिना संस्कृतो वेदः, तदुत्थमापातज्ञानञ्च वेदार्थविचारेषु शास्त्रीयं

भामती ।

स्वाध्याय इति । तस्मान्नैष क्रत्वर्थे नियमः । नापि पुरुषार्थे । पुरुषेच्छाधीनप्रवृत्तिर्हि पुरुषार्थो भवति, यथा फलं तदुपायो वा । तदुपायेऽपि हि विधितः प्राक् सामान्यरूपा प्रवृत्तिः पुरुषेच्छानिबन्धनैव । इतिकर्तव्यतासु तु सामान्यतो विशेषतश्च प्रवृत्तिर्विधिपराधीनैव । न ह्यनधिगतकरणभेद इतिकर्तव्यतासु घटते । तस्माद्विध्यधीनप्रवृत्तितयाऽङ्गानां क्रत्वर्थता । क्रतुरिति हि विधिविषयेण विधिं परामृशति विषयिणम् । तेनार्थ्यते विषयीक्रियत इति क्रत्वर्थः । न चाध्ययनं वा स्वाध्यायो वा तदर्थज्ञानं वा प्राग्विधेः पुरुषेच्छाधीनप्रवृत्तिः, येन पुरुषार्थः स्यात् । यदि चाध्ययनेनैवार्थावबोधरूपं नियम्येत ततो मानान्तरविरोधः । तद्रूपस्य विनाप्यध्ययनं पुस्तकादिपाठेनाप्यधिगमात् । तस्मात् 'सुवर्णं भार्यम्' इतिवदध्ययनादेव फलं कल्पनीयम् । तथा चाध्ययनविधेरनियामकत्वाच्छूद्रस्याध्ययनेन वा पुस्तकादिपाठेन वा सामर्थ्यमस्तीति सोऽपि ब्रह्मविद्यायामधिक्रियेत । मा भूदाध्ययनाभावात्सर्वत्र ब्रह्मविद्यायामधिकारः, संवर्गविद्यायां तु भविष्यति । 'अह हारेत्वा शूद्र' इति शूद्रं संबोध्य तस्याः प्रवृत्तेः । न चैष शूद्रशब्दः कयाचिदवयवव्युत्पत्त्याऽशूद्रे वर्तनीयः, अवयवप्रसिद्धितः समुदायप्रसिद्धेरनपेक्षतया बलीयस्त्वात् । तस्माद्यथाऽनधीयानस्येष्टौ निषादस्थपतेरधिकारो वचनसामर्थ्यादेवं संवर्गविद्यायां शूद्रस्याधिकारो भविष्यतीति प्राप्तम् । **एवं प्राप्ते ब्रूमः—न शूद्रस्याधिकारः वेदाध्ययनाभावादिति** । अयमभिसंधिः—यद्यपि 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिर्न किंचित्फलवत्कर्मारभ्याम्नातः, नाप्यव्यभिचरितक्रतुसंबन्धपदार्थ-

आनन्दगिरीय—न्यायनिर्णयः ।

नित्यर्थः । न केवलं शूद्राधिकारे श्रौतं लिङ्गं स्मार्तमपीत्याह—**विदुरेति** । अर्थित्वादिमतः साधने फलवति स्वाभाविकी प्रवृत्तिरितिन्यायानुगृहीतेन 'तद्यो यो देवानाम्' इति ब्रह्मधीसंबन्धलिंगेन देवादीनामधिकारो यथोक्तस्तथाऽत्राप्यर्थित्वादिमतः शूद्रशब्देन परामर्शलिङ्गादस्त्यधिकारस्तस्येत्युपसंहरति—**तस्मादिति** । सूत्राद्बहिरेव सिद्धान्तयति—**एवमिति** । अध्ययनाभावेऽपि किमित्यधिकारो विद्याहेतुषु नेष्यते तत्राऽऽह—**अधीतेति** । साङ्गाध्ययनविधिरदृष्टसंस्कारसहितवेदवाक्योत्थप्रमितिमत एवोत्तरविधिष्वधिकारो नान्यस्येति नियमयन्वैदिकेषु ब्रह्मधीफलपर्यन्तोपायविधिषु शूद्रस्यानधीयानस्याधिकारं वारयतीति भावः । अध्ययनमपि तर्हि तस्य किं न स्यात्तत्राऽऽह—**न चेति** । उपनयनमपि तस्य स्यादित्याशंक्याऽऽह—**उपनयनस्येति** । वक्ष्यते हि तस्य वर्णत्रयविषयत्वम् । यदुक्तमर्थित्वसामर्थ्ययोः संभवादिति तत्रार्थित्वमुपेत्य सामर्थ्यं प्रत्याह—**यत्त्विति** । सामर्थ्यमपि तस्य संभवतीत्याशंक्य लौकिकं वैदिकं

**भवति ॥ सामर्थ्यमपि न लौकिकं केवलमधिकारकारणं भवति ॥ शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात् । शास्त्रीयस्य च सामर्थ्यस्याध्ययननिराकरणेन निराकृतत्वात् । यच्चेदं "शूद्रो यज्ञेऽनवक्लृप्तः" [ तै० सं० ७ । १ । १ । ६ ] इति तन्न्यायपूर्वकत्वाद्विद्यायामप्यनवक्लृप्तत्वं द्योतयति । न्यायस्य साधारणत्वात् ॥ यत्पुनः संवर्गविद्यायां शूद्रशब्दश्रवणं लिङ्गं मन्यसे, न तल्लिङ्गम् । न्यायाभावात् ॥ न्यायोक्तेर्हि**

रत्नप्रभा ।

सामर्थ्यम् । तदभावाच्छूद्रस्यार्थित्वादिसंभवन्यायासिद्धेर्नास्ति वेदान्तविचाराधिकार इत्यर्थः । यद्वाऽध्ययनसंस्कृतेन वेदेन विदितो निश्चितो वेदार्थो येन, तस्य वेदार्थेषु विधिष्वधिकारः । नान्यस्य अनधीतवेदस्याऽपि । वेदार्थानुष्ठानाधिकारेऽध्ययनविधिवैयर्थ्यापातात् । अतः फलपर्यन्तब्रह्मविद्यासाधनेषु श्रवणादिविधिषु शूद्रस्यानधिकार इत्यर्थः । अधीतवेदार्थज्ञानवत्त्वरूपस्याध्ययनविधिलभ्यस्य सामर्थ्यस्याभावादिति न्यायस्य तुल्यत्वाद्यज्ञपदं वेदार्थोपलक्षणार्थमित्याह—**न्यायस्य साधारणत्वादिति** ॥ तस्माच्छूद्र इत्येतच्छब्दपरामृष्टन्यायस्य यज्ञब्रह्मविद्ययोस्तुल्यत्वादित्यर्थः । पूर्वोक्तं लिङ्गं दूषयति—**यदिति** ॥ असामर्थ्यन्या-

भामती ।

गतः, न हि जुह्वादिवत्स्वाध्यायोऽव्यभिचरितक्रतुसंबन्धः, तथापि स्वाध्यायस्याध्ययनसंस्कारविधिरध्ययनस्यापेक्षितोपायतामवगमयन् किं पिण्डपितृयज्ञवत् स्वर्गं वा, सुवर्णं भार्यमितिवदर्थवादिकं वा फलं कल्पयित्वा विनियोगभङ्गेन स्वाध्यायेनाधीयीतेत्येवमर्थः कल्पतां, किंवा परम्परयाप्यन्यतोऽपेक्षितमधिगम्य निर्वृणोत्विति विषये, न दृष्टद्वारेण परम्परयाप्यन्यतोऽपेक्षितप्रतिलम्भे च यथाश्रुतिविनियोगोपपत्तौ च संभवन्त्यां श्रुतविनियोगभङ्गेनाध्ययनादेवाश्रुतादृष्टफलकल्पनोचिता । दृष्टश्च स्वाध्यायाध्ययनसंस्कारः । तेन हि पुरुषेण स प्राप्यते, प्राप्तश्च फलवत्कर्मब्रह्मावबोधमभ्युदयनिःश्रेयसप्रयोजनमुपजनयति, न तु सुवर्णधारणादौ दृष्टद्वारेण किंचित् परम्परयाप्यस्त्यपेक्षितं पुरुषस्य, तस्माद्विपरिवृत्य साक्षाद्धारणादेव विनियोगभङ्गेन फलं कल्प्यते । यदा चाध्ययनसंस्कृतेन स्वाध्यायेन फलवत्कर्मब्रह्मावबोधो भाव्यमानोऽभ्युदयनिःश्रेयसप्रयोजन इति स्थापितं तदा यस्याध्ययनं तस्यैव कर्मब्रह्मावबोधोऽभ्युदयनिःश्रेयसप्रयोजनो नान्यस्य, यस्य चोपनयनसंस्कारस्तस्यैवाध्ययनं, स च द्विजातीनामेवेत्युपनयनाभावेनाध्ययनसंस्काराभावात् पुस्तकादिपठितस्वाध्यायजन्योऽर्थावबोधः शूद्राणां न फलाय कल्पत इति शास्त्रीयसामर्थ्याभावान्न शूद्रो ब्रह्मविद्यायामधिक्रियत इति सिद्धम् । **यज्ञेऽनवक्लृप्त इति** । यज्ञग्रहणमुपलक्षणार्थम् । विद्यायामनवक्लृप्त इत्यपि द्रष्टव्यम् । सिद्धवदभिधानस्य न्यायपूर्वकत्वान्न्यायस्य चोभयत्र साम्यात् । द्वितीयं पूर्वपक्षमनुभाषते—**यत्पुनः संवर्गविद्यायामिति** । दूषयति—**न तल्लिङ्गम्** । कुतः । **न्यायाभावात्** ।

आनन्दगिरीय—न्यायनिर्णयः ।

वेति विकल्प्याऽऽद्यं निराह—**सामर्थ्यमिति** । ननु लिखितपाठादिना प्राप्तस्वाध्यायादर्थधीयोगादस्ति तस्य वैदिकमपि सामर्थ्यम् । न च निषिद्धाध्ययनाद्दुरितोदयभयान्न प्रवर्तते लिखितपाठादिजनितविद्यया तन्निबर्हणात्तत्राऽऽह—**शास्त्रीयस्येति** । लिखितपाठादिजन्यविद्यया दुरितनिवृत्तावध्ययनविध्यानर्थक्यान्नैवमित्यर्थः । यत्तु 'शूद्रो विद्यायामनवक्लृप्तः' इति पर्युदासो न श्रुत इति तत्राऽऽह—**यच्चेति** । संस्कृतवेदार्थज्ञानाभावेनासामर्थ्यस्य यज्ञवज्ज्ञानेऽपि तुल्यत्वाद्यज्ञोक्तेरुपलक्षणत्वादनधिकारो ज्ञानेऽपि वाचनिकः शूद्रस्येत्याह—**न्यायस्येति** । पूर्वपक्षबीजमनुभाष्य दूषयति—**यदिति** । तदभावेऽपि स्वतन्त्रमेव लिङ्गदर्शनं द्योतकमित्याशङ्क्याऽऽह—**न्यायेति** । 'निषादस्थपतिं याजयेत्' इतिवच्चोदनाभावादर्थवादस्थशूद्रशब्दस्य चान्यतः सिद्धा-

१ न्यायोक्ते हीति पाठान्तरम् ।

**लिङ्गदर्शनं द्योतकं भवति । न चात्र न्यायोऽस्ति ॥ कामश्चायं शूद्रशब्दः संवर्गविद्यायामेवैकस्यां शूद्रमधिकुर्यात् । तद्विषयत्वात् । न सर्वासु विद्यासु । अर्थवादस्थत्वान्न तु क्वचिदप्ययं शूद्रमधिकर्तुमुत्सहते ॥ शक्यते चायं शूद्रशब्दोऽधिकृतविषये योजयितुम् ॥ कथमिति ॥ उच्यते ।**

रत्नप्रभा ।

येनार्थित्वादिसम्भवन्यायस्य निरस्तत्वादित्यर्थः । **ननु** निषादस्थपतिं याजयेदित्यत्राध्ययनाभावेऽपि निषादशब्दान्निषादस्येष्टाविव शूद्रशब्दाच्छूद्रस्य विद्यायामधिकारोऽस्त्वित्याशंक्य संवर्गविद्यायामधिकारमङ्गीकरोति—**काममिति** ॥ **तद्विषयत्वात्** तत्र श्रुतत्वादित्यर्थः । **वस्तुतस्तु** विधिवाक्यस्थत्वान्निषादशब्दोऽप्यधिकारिसमर्पकः । शूद्रशब्दस्तु विद्याविधिपरार्थवादस्थो नाधिकारिणं बोधयति । असामर्थ्यन्यायविरोधेनान्यपरशब्दस्य स्वार्थबोधित्वासम्भवादिति मत्वाङ्गीकारं त्यजति—**अर्थवादेति** ॥ तर्हि शूद्रशब्दस्यात्र श्रुतस्य कोऽर्थ इत्याशंक्य सूत्रेणार्थमाह—**शक्यते चेत्यादिना** ॥ जानश्रुतिर्नाम राजा निदाघसमये रात्रौ प्रासादतले सुष्वाप । तदा तदीयान्नदानादिगुणगणतोषिताः ऋषयोऽस्य

भामती ।

न तावच्छूद्रः संवर्गविद्यायां साक्षाच्चोद्यते, यथा 'एतया निषादस्थपतिं याजयेत्' इति निषादस्थपतिः । किंत्वर्थवादगतोऽयं शूद्रशब्दः, स चान्यतः सिद्धमर्थमवद्योतयति न तु प्रापयतीत्यध्वरमीमांसकाः । अस्माकं तु अन्यपरादपि वाक्यादसति बाधके प्रमाणान्तरेणार्थोऽवगम्यमानो विधिना चापेक्षितः स्वीक्रियत एव । न्यायश्चास्मिन्नर्थे उक्तो बाधकः । न च विध्यपेक्षास्ति, द्विजात्यधिकारप्रतिलम्भेन विधेः पर्यवसानात् । विध्युद्देशगतत्वे त्वयं न्यायोऽपोद्यते वचनबलान्निषादस्थपतिवन्न त्वेष विध्युद्देशगत इत्युक्तम् । तस्मान्नार्थवादमात्राच्छूद्राधिकारसिद्धिरिति भावः । अपि च किमर्थवादबलाद्विद्यामात्रेऽधिकारः शूद्रस्य कल्पते संवर्गविद्यायां वा । न तावद्विद्यामात्र इत्याह—**कामं चायमिति** । न हि संवर्गविद्यायामर्थवादः श्रुतो विद्यामात्रेऽधिकारिणमुपनयत्यतिप्रसङ्गात् । अस्तु तर्हि संवर्गविद्यायामेव शूद्रस्याधिकार इत्यत आह—**अर्थवादस्थत्वादिति** । तत्किमेतच्छूद्रपदं प्रमत्तगीतं, न चैतद्युक्तं, तुल्यं हि सांप्रदायिकमित्यत आह—**शक्यते चायं शूद्रशब्द इति** । एवं किलात्रोपाख्यायते—जानश्रुतिः पौत्रायणो बहुदायी श्रद्धादेयो बहुपाक्यः प्रियातिथिर्बभूव । स च तेषुतेषु ग्रामनगरशृङ्गाटकेषु विविधानामन्नपानानां पूर्णानतिथिभ्य आवसथान् कारयामास । सर्वत एत्यैतेष्वावसथेषु ममान्नपानमर्थिन उपयोक्ष्यन्त इति । अथास्य राज्ञो दानशौण्डस्य गुणगरिमसंतोषिताः सन्तो देवर्षयो हंसरूपमास्थाय तदनुग्रहाय तस्य निदाघसमये दोषा हर्म्यतलस्थस्योपरि मालामाबध्याजग्मुः । तेषामग्रेसरं हंसं संबोध्य पृष्ठतः पत-

आनन्दगिरीय—न्यायनिर्णयः ।

र्थावद्योतिनः स्वतोऽप्रापकत्वादन्यपरस्य मानान्तराविरोध एव प्रामाण्यादत्र न्यायविरोधस्योक्तत्वादसाधकं लिङ्गमित्यर्थः । शूद्राधिकारेऽपि तर्हि लिङ्गानुग्राहको न्यायोऽस्तु नेत्याह—**न चेति** । किं चार्थवादवशाद्विद्यामात्रे वा शूद्राधिकारः संवर्गविद्यायामेव वा ? नाऽऽद्य इत्याह—**कामं चेति** । तद्विषयत्वात्संवर्गविद्याविषयार्थवादस्थत्वादस्येति यावत् । संवर्गविद्याधिकारे शूद्रशब्दसिद्धे विद्यात्वादन्यत्रापि तदधिकारोऽस्त्विति द्वितीयमाशंक्याऽऽह—**अर्थवादेति** । तर्हि वैदिकशूद्रपदस्याऽऽनर्थक्यमित्याशंक्य सूत्रं योजयति—**शक्यते चेति** । जात्यन्तरे रूढस्य कथमन्यार्थतेति शंकते—**कथमिति** । यौगिकार्थसंनिधावदृष्टरूढिग्रहाद्वरं दृष्टयोगग्रहणमित्याह—**उच्यत इति** । जानश्रुती राजा बहुविधान्नपानदानशूरो ग्रीष्मे रात्रौ हर्म्ये सुष्वाप । तस्योर्ध्वमन्तरिक्षे दृष्टिगोचरं हंसेषु गच्छत्सु पृष्ठगामी हंसो हंसमग्रेसरं प्रत्युवाच । किं न पश्यसि परमधार्मिकस्य जानश्रुतेर्ज्योतिर्द्युलोकसंलग्नं तत्त्वां धक्ष्यतीति । ततः सोऽब्रवीत्कमेनं वराकं

"कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ" [ छां० ४ । १ । ३ ] इत्यस्माद्धंसवाक्यादात्मनोऽनादरं श्रुतवतो जानश्रुतेः पौत्रायणस्य शुगुत्पेदे । तामृषी रैक्वः शूद्रशब्देनानेन सूचयांबभूवात्मनः परोक्षज्ञानस्य[1] ख्यापनायेति गम्यते । जातिशूद्रस्यानधिकारात् ॥ कथं पुनः शूद्रशब्देन

रत्नप्रभा ।

हितार्थं हंसा भूत्वा मालारूपेण तस्योपरि आजग्मुः । तेषु पाश्चात्यो हंसोऽग्रेसरं हंसमुवाच—भोभो मल्लाक्ष किं न पश्यसि जानश्रुतेरस्य तेजः स्वर्गं व्याप्य स्थितं, तत्त्वां धक्ष्यति, न गच्छेति । तमग्रेसर उवाच-कमपि एनं वराकं विद्याहीनं सन्तमरे सयुग्वानं—युग्वा गन्त्री शकटी तया सह स्थितं, रैक्वमिव एतद् वचनमात्थ । रैक्वस्य हि ब्रह्मिष्ठस्य तेजो दुरतिक्रमं, नास्य अनात्मज्ञस्येत्यर्थः । अस्मद्वचनात् खिन्नो राजा शकटलिङ्गेन रैक्वं ज्ञात्वा विद्यावान् भविष्यतीति हंसानामभिप्रायः । कम् उ अरे इति पदच्छेदः ॥ उशब्दः—अप्यर्थः । तेषां हंसानामनादरवाक्यश्रवणादस्य राज्ञः शुगुत्पन्ना । सा शूद्रशब्देन रैक्वेन सूच्यते, हीति सूत्रान्वयः । श्रुतयौगिकार्थलाभे सति अनन्वितरूढ्यर्थस्त्याज्य इति न्यायद्योतनार्थो

भामती ।

नेकतमो हंसः साद्भुतमभ्युवाद । भोभो मल्लाक्षमल्लाक्ष, जानश्रुतेरस्य पौत्रायणस्य द्युलोक आयतं ज्योतिस्तन्मा प्रसांक्षीर्मैतत्त्वा धाक्षीदिति । तमेवमुक्तवन्तमग्रगामी हंसः प्रत्युवाच । कं वरमेनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ । अयमर्थः—वर इति सोपहासमवरसाह । अथ वा वरो वराकोऽयं जानश्रुतिः । कमित्याक्षेपे । यस्मादयं वराकस्तस्मात्कमेनं किंभूतमेतं सन्तं प्राणिमात्रं रैक्वमिव सयुग्वानमात्थ । युग्वा-गन्त्री शकटी तया सह वर्तत इति सयुग्वा रैक्वस्तमिव कमेनं प्राणिमात्रं जानश्रुतिमात्थ । रैक्वस्य हि ज्योतिरसह्यं न त्वेतस्य प्राणिमात्रस्य । तस्य हि भगवतः पुण्यज्ञानसंभारसंभृतस्य रैक्वस्य ब्रह्मविदो धर्मे त्रैलोक्योदरवर्तिप्राणभृन्मात्रधर्मोऽन्तर्भवति न पुना रैक्वधर्मकक्षां कस्यचिद्धर्मोऽवगाहत इति । अथैष हंस-वचनादात्मनोऽत्यन्तनिकर्षमुत्कर्षकाष्ठां च रैक्वस्योपश्रुत्य विषण्णमानसो जानश्रुतिः कितव इवाक्षपराजितः पौनःपुन्येन निःश्वसन्नुद्वेलं कथंकथमपि निशीथमतिवाहयांबभूव । ततो निशावसानपिशुनमनि-भृतवन्दारुवृन्दप्रारब्धस्तुतिसहस्रसंवलितं मङ्गलतूर्यनिर्घोषमाकर्ण्य तल्पतलस्थ एव राजा एकपदे यन्तार-माहूयादिदेश, वयस्य, रैक्वाह्वयं ब्रह्मविदमेकरतिं सयुग्वानमतिविविक्तेषु तेषुतेषु विपिननगनिकुञ्जनदी-पुलिनादिप्रदेशेष्वन्विष्य प्रयत्नतोऽस्मभ्यमाचक्ष्वेति । स च तत्रतत्रान्विष्यन् क्वचिदतिविविक्ते देशे शकट-स्याधस्तात् पामानं कण्डूयमानं ब्राह्मणायनमद्राक्षीत् । तं च दृष्ट्वा रैक्वोऽयं भवितेतिप्रतिभावानुपविश्य सविनयमप्राक्षीत्, त्वमसि हे भगवन्, सयुग्वा रैक्व इति । तस्य च रैक्वभावानुमतिं च तैस्तैरिङ्गितैर्गो-र्हस्येच्छां धनायां चोन्नीय यन्ता राज्ञे निवेदयामास । राजा तु तं निशम्य गवां षट्शतानि निष्कं च हारं चाश्वतरीरथं चादाय सत्वरं रैक्वं प्रतिचक्रमे । गत्वा चाभ्युवाद । हे रैक्व, गवां षट्शतानीमानि निष्कश्च हारश्चायमश्वतरीरथः, एतदादत्स्व, अनुशाधि मां भगवन्निति । तमेवमुक्तवन्तं प्रति साटोपं च सस्पृहं चोवाच रैक्वः । अह हारेत्वा शूद्र, तवैव सह गोभिरस्त्विति । अहेति निपातः साटोपमा-मन्त्रणे । हारेण युक्ता इत्वा गन्त्री रथो हारेत्वा स गोभिः सह तवैवास्तु, किमेतन्मात्रेण मम धनेनाक-

आनन्दगिरीय-न्यायनिर्णयः ।

प्राणिमात्रं सन्तमरे सयुग्वानमिव रैक्वमेतद्वचनं ब्रवीषि । उशब्दोऽवधारणे । युग्वा गन्त्री तया सह वर्तते यो रैक्वो यस्य धीफले कर्मफलं सर्वमन्तर्भूतं स एवैतदुक्तियोग्यो नायमज्ञो राजेत्यर्थः । श्रुतिमेतामाश्रित्य शुगस्येत्याद्यक्षराणि योजयति—इत्यस्मादिति । उत्पन्नशोकसूचनमनुपयोगीत्याशंक्याऽऽह—आत्मन इति । शूद्रशब्दस्य मुख्यार्थत्यागे हेतुमाह—जातीति । तदाद्रवणादित्यस्य शंकामाह—कथमिति ।

[1] परोक्षताज्ञापनायेति पाठान्तरम् ।

शुगुत्पन्ना सूच्यते इति ॥ उच्यते ॥ तदाद्रवणाच्छुचमभिदुद्राव, शुचा वाभिदुद्रुवे, शुचा वा रैक्वमभिदुद्रावेति शूद्राऽवयवार्थसम्भवात्, रूढार्थस्य चासम्भवात् । दृश्यते चायमर्थोऽस्यामाख्यायिकायाम् ॥ ३४ ॥

## क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

इतश्च न जातिशूद्रो जानश्रुतिः ॥ यत्कारणं प्रकरणनिरूपणेन क्षत्रियत्वमस्योत्तरत्र चैत्ररथेनाभिप्रतारिणा क्षत्रियेण समभिव्याहाराल्लिङ्गाद्गम्यते॥ उत्तरत्र हि संवर्गविद्यावाक्यशेषे चैत्ररथिरभिप्रतारी क्षत्रियः सङ्कीर्त्यते-"अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं सूदेन परि-

रत्नप्रभा ।

हिशब्दः । तदाद्रवणात् तया शुचा आद्रवणात् शूद्रः शोकं प्राप्तवान्, शुचा वा कर्त्र्या राजा अभिदुद्रुवे प्राप्तः, शुचा वा करणेन रैक्वं गतवानित्यर्थः ॥ ३४ ॥ शूद्रशब्दस्य यौगिकत्वे लिङ्गमाह-क्षत्रियत्वेति ॥ संवर्गविद्याविध्यन्तरमर्थवाद आरभ्यते । शुनकस्यापत्यं कपिगोत्रं पुरोहितमभिप्रतारिनामकं राजानं च, कक्षसेनस्यापत्यं सूदेन परिविष्यमाणौ तौ भोक्तुमुपविष्टौ बटुर्भिक्षितवानित्यर्थः । नन्वस्य चैत्ररथित्वं

भामती ।

त्ववर्तिनो गार्हस्थ्यस्य निर्वाहानुपयोगिनेति भावः । आहर त्वेति तु पाठोऽनर्थकतया च गोभिः सहेत्यत्र प्रतिसंबन्ध्यनुपादानेन चाचार्यैर्दूषितः । तदस्यामाख्यायिकायां शक्यः शूद्रशब्देन जानश्रुती राजन्योऽप्यवयवव्युत्पत्त्या वक्तुम् । स हि रैक्वः परोक्षज्ञतां चिख्यापयिषुरात्मनो जानश्रुतेः शूद्रेति शुचं सूचयामास । कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यत इति । उच्यते-तदाद्रवणात् । तद्व्याचष्टे-शुचमभिदुद्राव जानश्रुतिः, शुचं प्राप्तवानित्यर्थः । शुचा वा जानश्रुतिः दुद्रुवे । शुचा प्राप्त इत्यर्थः । अथवा शुचा रैक्वं जानश्रुतिर्दुद्राव गतवान् । तस्मात्तदाद्रवणादिति तच्छब्देन शुग्वा जानश्रुतिर्वा रैक्वो वा परामृश्यत इत्युक्तम् ॥ ३४ ॥ क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिंगात् । इतश्च न जातिशूद्रो जानश्रुतिः । यत्कारणं प्रकरणनिरूपणे क्रियमाणे क्षत्रियत्वमस्य जानश्रुतेरवगम्यते चैत्ररथेन लिङ्गादिति व्याचक्षाणः प्रकरणं निरूपयति-उत्तरत्र हि संवर्गविद्यावाक्यशेषे । चैत्ररथेनाभिप्रतारिणा निश्चितक्षत्रियत्वेन समानायां संवर्गविद्यायां समभिव्याहारात्लिङ्गात्संदिग्धक्षत्रियभावो जानश्रुतिः क्षत्रियो निश्चीयते । 'अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं सूदेन परिविष्यमाणौ ब्रह्मचारी

आनन्दगिरीय-न्यायनिर्णयः ।

व्याख्येयमादाय त्रिधा व्याख्याति-उच्यत इति । शुचं शोकमभिदुद्राव प्राप्तवानित्यर्थः । शुचा वा कर्त्र्या स्वयमभिदुद्रुवे प्राप्त इत्यर्थः । शुचा वा करणभूतया रैक्वं गतवानित्यर्थः । एवं तावत्तदाद्रवणादिति तच्छब्देन शुग्जानश्रुती रैक्वो वा गृह्यते । उक्तव्युत्पत्त्या शूद्रशब्दस्याधिकृतार्थत्वे पूर्वोक्तं न्यायं सूचयति-अवयवेति । हंसवाक्यादात्मनोऽनादरं श्रुत्वा जानश्रुतेः शुगुत्पन्नेत्येतदेव कथं गम्यते येनासौ शूद्रशब्देन सूच्यते तत्राऽऽह-दृश्यते चेति ॥ ३४ ॥ शूद्रशब्दस्य यौगिकत्वे हेत्वन्तरमाह-क्षत्रियत्वेति । चशब्दार्थमाह-इतश्चेति । हेत्वन्तरमेव स्फोरयति-यदिति । कथमभिप्रतारिणश्चैत्ररथित्वं चैत्ररथस्य वा कथं क्षत्रियत्वं कथं वा जानश्रुतेस्तेन समभिव्याहारस्तस्मिन्सत्यपि वा कथं तस्य क्षत्रियत्वं तदाह-उत्तरत्रेति । संवर्गविद्याविध्यनन्तरमर्थवादारम्भार्थोऽथशब्दो हशब्दो वृत्तान्तावद्योती । शौनकः शुनकस्यापत्यं कापेयं कपिगोत्रं पुरोहितमभिप्रतारिणं च नाम्ना राजानं काक्षसेनिं कक्षसेनस्यापत्यं तौ भोक्तुमुपविष्टौ सूदेन परिविष्यमाणौ ब्रह्मचारी भिक्षितवानित्यर्थः । ब्रह्मचारिभिक्षयाऽस्याशूद्रत्वेऽपि कथं

१ शूद्रः । अवेति परामृश्यते ।

विष्यमाणो ब्रह्मचारी बिभिक्षे" [ छां० ४ । ३ । ५ ] इति ॥ चैत्ररथित्वं चाभिप्रतारिणः कापेययोगादवगन्तव्यम् । कापेययोगो हि चैत्ररथस्यावगतः-"एतेन वै चैत्ररथं कापेया अयाजयन्" [ ताण्ड्यब्रा० २० । १२ । ५ ] इति ॥ समानान्वयानां च प्रायेण समानान्वया याजका भवन्ति । "तस्माच्चैत्ररथिर्नामैकः क्षत्रपतिरजायत" इति च क्षत्रपतित्वावगमात्क्षत्रियत्वमस्यावगन्तव्यम् ॥ तेन क्षत्रियेणाभिप्रतारिणा सह समानायां विद्यायां सङ्कीर्तनं जानश्रुतेरपि क्षत्रियत्वं सूचयति ॥ समानानामेव हि प्रायेण समभिव्याहारा भवन्ति ॥ क्षत्तृप्रेषणाद्यैश्वर्ययोगाच्च जानश्रुतेः क्षत्रियत्वावगतिः ॥ अतो न जातिशूद्रस्याधिकारः ॥ ३५ ॥

## संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

रत्नप्रभा ।

न श्रुतमित्यत आह-चैत्ररथित्वञ्चेति ॥ एतेन द्विरात्रेणेति छान्दोग्यश्रुत्यैव पूर्वं चित्ररथस्य कापेययोग उक्तः । अभिप्रतारिणोऽपि तद्योगात् चित्ररथवंश्यत्वं निश्चीयते । राजवंश्यानां हि प्रायेण पुरोहितवंश्याः याजका भवन्तीत्यर्थः । नन्वस्त्वभिप्रतारिणः चैत्ररथित्वम् । तावता कथं क्षत्रियत्वं तत्राह-तस्मादिति॥ चित्ररथादित्यर्थः । क्षत्ता सूतः । तस्य रैक्वान्वेषणाय प्रेषणम्, अन्नगोदानादिकं च जानश्रुतेः क्षत्रियत्वे लिङ्गम् । अत्र शूद्रशब्दो यौगिक एवेति न शूद्रस्याधिकार इति स्थितम्॥३५॥ तत्र लिङ्गान्तरमाह-संस्का-

भामती ।

बिभिक्षे' इति प्रसिद्धयाजकत्वेन कापेयेनाभिप्रतारिणो योगः प्रतीयते । ब्रह्मचारिभिक्षया चास्याशूद्रत्वमवगम्यते । न हि जातु ब्रह्मचारी शूद्रान् भिक्षते। याजकेन च कापेयेन योगाद्याज्योऽभिप्रतारी। क्षत्रियत्वं चास्य चैत्ररथित्वात् ।'तस्माच्चैत्ररथी नामैकः क्षत्रपतिरजायत' इति वचनात् । चैत्ररथित्वं चास्य कापेयेन याजकेन योगात् एतेन वै चित्ररथं कापेया अयाजयन्निति छन्दोगानां द्विरात्रे श्रूयते । तेन चित्ररथस्य याजकाः । कापेयाः । एष चाभिप्रतारी चित्ररथादन्यः सन्नेव कापेयानां याज्यो भवति । यदि चैत्ररथिः स्यात् समानान्वयानां हि प्रायेण समानान्वया याजका भवन्ति । तस्माच्चैत्ररथित्वादभिप्रतारी काक्षसेनिः क्षत्रियः । तत्समभिव्याहाराच्च जानश्रुतिरपि क्षत्रियः संभाव्यते । इतश्च क्षत्रियो जानश्रुतिरित्याह-क्षत्तृप्रेषणाद्यैश्वर्ययोगाच्च । क्षत्तृप्रेषणे चार्थसंभवे च तादृशस्य वदान्यप्रष्ठस्यैश्वर्यं प्रायेण क्षत्रियस्य दृष्टं युधिष्ठिरादिवदिति ॥ ३५ ॥ संस्कारपरामर्शात्तदभावाभिलापाच्च । न केवलमुपनीताध्ययनविधि-

आनन्दगिरीय-न्यायनिर्णयः ।

चैत्ररथित्वं तदाह-चैत्रेति[1] । कापेययोगेऽपि कथं तस्य चैत्ररथित्वप्रथा तत्राऽऽह-कापेयेति । अवगतिमेव च्छान्दोग्यश्रुत्या स्फुटयति-एतेनेति । द्विरात्रेणेति यावत् । चित्ररथस्य कापेययोगेऽपि कथमभिप्रतारिणश्चैत्ररथित्वं तत्राऽऽह-समानेति । चित्ररथस्य याजकेन कापेयेन योगाद्याज्योऽभिप्रतारी चैत्ररथिः सिद्धस्तत्तत्पुरोहितवंश्यानामेव तत्तद्राजवंश्येषु प्रायो याजकत्वाच्चैत्ररथित्वाच्च क्षत्रियोऽभिप्रतारी चित्ररथस्य क्षत्रियत्वात्तद्वंश्यस्य तद्योगादित्यर्थः । वचनादपि तस्य क्षत्रियत्वमित्याह-तस्मादिति । चित्ररथादित्यर्थः । तथाऽपि क्षत्रियत्वे किं जातं जानश्रुतेरित्याशंक्याऽऽह-तेनेति । समभिव्याहारेऽपि कुतोऽस्य क्षत्रियत्वं तत्राऽऽह-समानानामिति । शिष्याचार्ययोः स्वामिभृत्ययोश्च समभिव्याहारेऽपि वैषम्यमस्तीति प्रायेणेत्युक्तम् । तस्य क्षत्रियत्वे हेत्वन्तरमाह-क्षत्त्रिति । आदिशब्देन गोदानादिसंग्रहः । क्षत्रियत्वे संवर्गविद्याधिकारिणः सिद्धे फलितमाह-अत इति ॥ ३५ ॥ शूद्रस्यानधिकारे लिङ्गान्तरमाह-संस्कारेति । चश-

१ चित्रेति पाठान्तरम् । २ चित्रेति पाठान्तरम् । मूलग्रन्थेऽत्र द्रष्टव्यः । ३ न्ययाजिनां चेतिपाठान्तरम् ।

इतश्च न शूद्रस्याधिकारो यद्विद्याप्रदेशेषूपनयनादयः संस्काराः परामृश्यन्ते । "तं होपनिन्ये" [ शत० ब्रा० ११ । ५ । ३ । १३ ] "अधीहि भगव इति होपससाद" [ छां० ७ । १ । १ ] "ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः" [ प्रश्न० १ । १ ] इति च "तान्हानुपनीयैव" [ छां० ५ । ११ । ७ ] इत्यपि प्रदर्शितैवोपनयनप्राप्तिर्भवति ॥ शूद्रस्य च संस्काराभावोऽभिलप्यते ॥ शूद्रश्चतुर्थो वर्ण एकजातिरित्येकजातित्वस्मरणात्, "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति" [ मनु० १० । १२६ ] इत्यादिभिश्च ॥ ३६ ॥

रत्नप्रभा ।

रेति ॥ उपनयनं वेदग्रहणाङ्गं शूद्रस्य नास्तीति पूर्वमुक्तम् । इह विद्याग्रहणाङ्गस्योपनयनसंस्कारस्य सर्वत्र परामर्शाच्छूद्रस्य तदभावान्न विद्याधिकार इत्युच्यते । भाष्ये आदिपदेन अध्ययनगुरुशुश्रूषादयो गृह्यन्ते । तं शिष्यम् आचार्य उपनीतवानित्यर्थः । नारदोऽपि विद्यार्थी मन्त्रमुच्चारयन्सनत्कुमारमुपगत इत्याह—अधीति ॥ उपदिशेति यावत् । ब्रह्मपराः वेदपारगाः, सगुणब्रह्मनिष्ठाः परं निर्गुणं ब्रह्मान्वेषमाणाः । एषः पिप्पलादः तत् जिज्ञासितं सर्वं वक्ष्यतीति निश्चित्य ते भरद्वाजादयः षडृषयः तमुपगता इत्यर्थः । ननु वैश्वानरविद्यायामृषीन्राजा अनुपनीयैव विद्यामुवाचेति श्रुतेरनुपनीतस्याप्यस्ति विद्याधिकार इत्यत आह—तानाहेति ॥ "ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे" [ छां० ५ । ११ । ७ ] इति पूर्ववाक्ये ब्राह्मणा उपनयनार्थमागता इति उपनयनप्राप्तिं दर्शयित्वा निषिध्यते । हीनवर्णेन उत्तमवर्णाः अनुपनीयैव उपदेष्टव्या इत्याचारज्ञापनार्थमित्यर्थः॥ एकजातिः अनुपनीतः पातकम् अभक्ष्यभक्षणकृतम् ॥ ३६ ॥ सत्यकामः किल मृतपितृको जाबालां मातरमपृच्छत्—किंगोत्रोऽहमिति । तं मातोवाच—भर्तृसेवाव्यग्रतयाहमपि तव पितुर्गोत्रं न जानामि, जाबाला तु नामाह-

भामती ।

परामर्शेन न शूद्रस्याधिकारः किंतु तेषुतेषु विद्योपदेशप्रदेशेषूपनयनसंस्कारपरामर्शात् शूद्रस्य तदभावाभिधानाद्ब्रह्मविद्यायामनधिकार इति । नन्वनुपनीतस्यापि ब्रह्मोपदेशः श्रूयते—'तान्हानुपनीयैव' इति । तथा शूद्रस्यानुपनीतस्यैवाधिकारो भविष्यतीत्यत आह—तान्हानुपनीयैवेत्यपि प्रदर्शितैवोपनयनप्राप्तिः । प्राप्तिपूर्वकत्वात्प्रतिषेधस्य येषामुपनयनं प्राप्तं तेषामेव तन्निषिध्यते । तच्च द्विजातीनामिति

आनन्दगिरीय—न्यायनिर्णयः ।

न्दार्थमाह—इतश्चेति । हेत्वन्तरं स्फोरयति—यदिति । आदिशब्देनाध्ययनाचार्यशुश्रूषादयो गृह्यन्ते । परामर्शं विशदयति—तं हेति । विद्यार्थिनं शिष्यमाचार्यः किलोपनीतवाननुपनीताय विद्यादानायोगादिति यावत् । सनत्कुमारं प्रति नारदोऽपि विद्यार्थी मन्त्रमुच्चारयन्नुपसत्तिं कृतवानित्याह—अधीहीति । भारद्वाजादयः षड् ऋषयः परं ब्रह्म परत्वेनावगतवन्त इति ब्रह्मपरास्तद्ध्याननिष्ठाश्च ब्रह्मनिष्ठाः परं च परमार्थभूतं ब्रह्म विचारयन्तो निर्णयार्थमेष पिप्पलादस्तज्जिज्ञासितं सर्वं वक्ष्यतीति निश्चित्य रिक्तहस्तानां गुरूपगमनायोगं मन्यमानाः समित्पाणयस्तमुपसन्नाः किलेत्याह—ब्रह्मेति । अनुपनीतानामपि वैश्वानरविद्यायामधिकारश्रुतेरनियतमुपनयनमित्याशंक्याऽऽह—तानिति । औपमन्यवप्रभृतीन्ब्राह्मणाननुपनीयैवाश्वपती राजोवाचेति निषेधात्तस्य प्राप्तिपूर्वत्वात्प्राप्तोपनयनानां द्विजानामेवाधिकार इत्यर्थः । संस्कारपरामर्शादिति व्याख्यायावशिष्टं व्याचष्टे—शूद्रस्येति । एकजातिरुपनयनरहितः । पातकं भक्ष्याभक्ष्यविभागाभावकृतम् । आदिशब्देन 'पशु ह वा एतत्' इत्यादि गृह्यते ॥ ३६ ॥ शूद्रस्य विद्यानधि-

१ चतुर्थ एकजातिस्तु शूद्र इति मनुना १० ऽध्याये ५ श्लो० उक्तम् ।

## तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

**इतश्च न शूद्रस्याधिकारः ॥ यत्सत्यवचनेन शूद्रत्वाभावे निर्द्धारिते जाबालं गौतम उपनेतुमनुशासितुं च प्रववृते-"नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याऽऽहरोप त्वा नेष्ये न सत्यादगाः" [ छां० ४ । ४ । ५ ] इति श्रुतिलिङ्गात् ॥ ३७ ॥**

## श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥

रत्नप्रभा ।

मस्मि, सत्यकामो नाम त्वमसीत्येतावज्जानामीति । ततः स जाबालो गौतममागत्य तेन किंगोत्रोऽसीति पृष्ट उवाच नाहं गोत्रं वेद्मि । न माता वेत्ति । परन्तु मे मात्रा कथितमुपनयनार्थमाचार्यं गत्वा सत्यकामो जाबालोऽस्मीति ब्रूहीति । अनेन सत्यवचनेन तस्य शूद्रत्वाभावो निर्धारितः । अब्राह्मण एतत्सत्यं विविच्य वक्तुं नार्हतीति निर्धार्य, हे सोम्य सत्यात् त्वं नागाः सत्यं न त्यक्तवानसि । अतस्त्वामुपनेष्ये । तदर्थं समिधमाहरेति गौतमस्य प्रवृत्तेश्च लिङ्गात् न शूद्रस्याधिकार इत्याह-**तदभावनिर्द्धारणे च प्रवृत्तेरिति** ॥ ३७ ॥ स्मृत्या श्रवणादिनिषेधाच्च नाधिकार इत्याह-**श्रवणेति** ॥ **अस्य शूद्रस्य द्विजैः पठ्य-**

भामती ।

द्विजातय एव निषिद्धोपनयना अधिक्रियन्ते न शूद्र इति ॥ ३६ ॥ **तदभावनिर्धारणे च प्रवृत्तेः** । सत्यकामो ह वै जाबालः प्रमीतपितृकः स्वां मातरं जबालां पप्रच्छ, अहमाचार्यकुले ब्रह्मचर्यं चरिष्यामि, तद्ब्रवीतु भवती किंगोत्रोऽहमिति । साऽब्रवीत् । त्वज्जनकपरिचरणपरतया नाहमज्ञासिषं गोत्रं तवेति । स त्वाचार्यं गौतममुपससाद । उपसद्योवाच, हे भगवन्, ब्रह्मचर्यमुपेयां त्वयीति । स होवाच, नाविज्ञातगोत्र उपनीयत इति किंगोत्रोऽसीति । अथोवाच सत्यकामो नाहं वेद स्वं गोत्रं, स्वां मातरं जबालामपृच्छं, सापि न वेदेति । तदुपश्रुत्याभ्यधाद्गौतमः, नाद्विजन्मन आर्जवयुक्तमीदृशं वचः, तेनास्मिन्न शूद्रत्वसंभावनास्तीति त्वां द्विजातिजन्मानमुपनेष्य इत्युपनेतुमनुशासितुं च जाबालं गौतमः प्रवृत्तः । तेनापि शूद्रस्य नाधिकार इति विज्ञायते ॥ **न सत्यादगा इति** । न सत्यमतिक्रान्तवानसीति ॥ ३७ ॥ **श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च** । निगदव्याख्यानेन भाष्येण व्याख्यातम् । अतिरोहितार्थम-

आनन्दगिरीय-न्यायनिर्णयः ।

कारे लिङ्गान्तरमाह-**तदभावेति** । चकारार्थमाह-**इतश्चेति** । तदेव स्फुटयति-**यदिति** । सत्यकामो जाबालो ब्रह्मचर्यकालमालक्ष्य प्रमीतपितृकः स्वां मातरं जबालामपृच्छद्भगवति कस्यचिद्गुरोरावासमासाद्य ब्रह्मचर्यमाचरितुमिच्छामि ब्रवीतु भवती किंगोत्रोऽहमिति । सा तु त्वत्पितृचरणपरतया नाहं तदवेदिषं जबालाऽहमस्मि त्वं जाबालोऽसीत्येतावदवगतमवादीत् । ततः सत्यकामो गौतममभ्येत्याभ्यभाषत ब्रह्मचर्यं भगवति चरितुमिच्छाम्यनुगृह्णातु मां भवानिति । ततो गौतमेन किंगोत्रोऽसीति पृष्टो नाहं वेद नापि मातेति तेनोक्ते तदीयसत्यवचनेन शूद्रस्य मायावित्वयोगात्तदशूद्रत्वे सिद्धे तमुपनेतुमध्यापयितुं चाऽऽचार्यो यस्मात्प्रवृत्तस्तस्मान्न शूद्रस्याधिकारोऽस्तीत्यर्थः।कथमुक्तनीत्या गौतमस्य प्रवृत्त्यौन्मुख्यं तत्राऽऽह-**नेति** । एतत्सत्यवचनं विवक्तुं विविच्य निःसंदिग्धं वक्तुमित्येतत् । 'न सत्यादगाः' सत्यवचनान्नातिगतोऽसीत्यर्थः ॥ ३७ ॥ श्रौतमिव लिङ्गं शूद्रस्य विद्यानधिकारे स्मार्तं तद्दर्शयति-**श्रवणेति** । तद्व्याकरोति-

१ स्मृतेश्चेति भिन्नं सूत्रं केषांचिन्मते दृश्यते ।

इतश्च न शूद्रस्याधिकारः ॥ यदस्य स्मृतेः श्रवणाध्ययनार्थप्रतिषेधो भवति ॥ वेदश्रवणप्रतिषेधो, वेदाध्ययनप्रतिषेधः, तदर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते ॥ श्रवणप्रतिषेधस्तावद् "अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्" इति । "पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्" इति च ॥ अत एवाध्ययनप्रतिषेधः ॥ यस्य हि समीपेऽपि नाध्येतव्यं भवति, स कथं श्रुतिमधीयीत ॥ भवति च वेदोच्चारणे जिह्वाच्छेदो, धारणे शरीरभेद इति ॥ अत एव चार्थात्तदर्थज्ञानानुष्ठानयोः प्रतिषेधो भवति-"न शूद्राय मतिं दद्याद्" इति "द्विजातीनामध्ययनमिज्या दानम्" इति च ॥ येषां पुनः पूर्वकृतसंस्कारवशाद्विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिस्तेषां न शक्यते फलप्राप्तिः प्रतिबद्धुं, ज्ञानस्यैकान्तिकफलत्वात् ॥ "श्रावयेच्चतुरो वर्णान्" इति चेतिहासपुराणाधिगमे चातुर्वर्ण्याधिकारस्मरणात् ॥ वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम् ॥ ३८ ॥ इत्यपशूद्राधिकरणम् ॥ १० ॥

---

रत्नप्रभा ।

मानं वेदं प्रमादाच्छृण्वतः सीसलाक्षाभ्यां तप्ताभ्यां श्रोत्रद्वयपूरणं प्रायश्चित्तं कार्यमित्यर्थः । पद्यु पादयुक्तम् । सञ्चरिष्णुरूपमिति यावत् । भवति च स्मृतिरिति शेषः । मतिं वेदार्थज्ञानम् । दानं नित्यं निषिध्यते शूद्रस्य । नैमित्तिकं तु दानमस्त्येव । यदुक्तं विदुरादीनां ज्ञानित्वं दृष्टमिति, तत्राह-येषामिति ॥ सिद्धानां सिद्धेर्दुरपह्नवत्वेऽपि साधकैः शूद्रैः कथं ज्ञानं लब्धव्यमित्यत आह-श्रावये-

भामती ।-०

आनन्दगिरीय-न्यायनिर्णयः ।

इतश्चेति । उक्तमेव विभजते-वेदेति । तत्र श्रवणप्रतिषेधं स्वहस्तयति-श्रवणेति । पठ्यमानं वेदं समीपे प्रमादादेव शृण्वतः शूद्रस्य प्रत्यवायप्रायश्चित्तालोचनायां सीसलाक्षाभ्यां संतप्ताभ्यामतिद्रुताभ्यां श्रोत्रद्वयपूरणं कार्यमित्यर्थः । पद्यु पदा युक्तं संचारसमर्थमिति यावत् । श्रवणनिषेधादेवार्थादध्ययननिषेधोऽपि सिध्यतीत्याह-अत इति । तदेव स्फुटयति-यस्येति । न केवलमार्थिकोऽध्ययननिषेधः श्रौतश्चेत्याह-भवतीति । अध्ययननिषेधानुपपत्त्या ज्ञानानुष्ठानयोरपि स सिध्यतीत्याह-अत इति । साक्षादपि ज्ञाननिषेधमाह-भवतीति । अनुष्ठाननिषेधमपि शाब्दं दर्शयति-द्विजातीनामिति । दानमत्र नित्यमिष्टं नैमित्तिकस्य शूद्रेऽपि योगात् । यत्तु विदुरादीनां ज्ञानित्वं स्मृतिसिद्धमिति तत्राऽऽह-येषामिति । साधकस्याधिकारचिन्ता न सिद्धस्येत्याह-तेषामिति । विदुरादीनां ज्ञानाभावस्य स्मृतिविरोधेन दुर्वचत्वादुत्पन्नज्ञानानां तेषां मुक्तिरेव, सामग्र्याः साध्याव्यभिचारादित्यर्थः । कुतस्तर्हि शूद्राणां ज्ञानोत्पत्तिस्तत्राऽऽह-श्रावयेदिति । कुत्र तर्हि तदधिकारो वार्यते तत्राऽऽह-वेदेति । आर्थवादिकशूद्रशब्दस्योक्तनीत्या क्षत्रियेऽन्वयान्न जातिशूद्रस्य वेदद्वाराऽधिकारो विद्यायामित्युपसंहरति-इति स्थितमिति ॥ ३८ ॥ ( १० ) ॥ बहुलिङ्गविरोधादेकस्य शूद्रशब्दस्य मुख्यार्थबाधवद्वायुसहितजगत्कम्पनाश्रयत्वभयहेतुत्वामृतत्वसाधनत्वलिङ्गैर्बहुभिर्विरोधात्प्राणश्रुतेरेकस्या मुख्यार्थत्यागमाह-

---

१ पूर्वसंस्कारेति पाठान्तरम् ।

## कम्पनात् ॥ ३९ ॥ ( ११ ) ॥

**अवसितः प्रासङ्गिकोऽधिकारविचारः ॥ प्रकृतामेव इदानीं वाक्यार्थविचारणां प्रवर्तयिष्यामः ॥ "यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति" [ कठ० ६ । २ ] इति ॥ एतद्वाक्यम् "एजृ कम्पने" इति धात्वर्थानुगमाल्लक्षितम् ॥ अस्मिन्वाक्ये सर्वमिदं जगत्प्राणाश्रयं स्पन्दते ॥ महच्च किञ्चिद्भयकारणं वज्रशब्दितमुद्यतम् । तद्विज्ञानाच्चामृतत्वप्राप्तिरिति श्रूयते ॥ तत्र कोऽसौ प्राणः, किञ्च तद्भयानकं वज्रमित्यप्रतिपत्तेर्विचारे क्रियमाणे प्राप्तं ताव-**

रत्नप्रभा ।

दिति॥३८॥(१०)॥ कम्पनात् । अस्यापि प्रासङ्गिकत्वमाशंक्याह—**अवसित इति** ॥ समाप्त इत्यर्थः । काठकं पठति—**यदिदमिति** ॥ सर्वं जगत् प्राणात् **निस्सृतम्** उत्पन्नम्, प्राणे चिदात्मनि प्रेरके सति । **एजते** चेष्टते । तच्च प्राणाख्यं कारणं **महद्** ब्रह्म । बिभेत्यस्मादिति **भयम्**, तस्मिन् भयहेतुत्वे दृष्टान्तमाह—**वज्रमिति** ॥ **यथोद्यतं** वज्रं भयं, **तथे**त्यर्थः ॥ ये तत्प्राणाख्यं ब्रह्म निर्विशेषं विदुस्ते मुक्ता भवन्तीत्याह—**य इति** ॥ नन्वस्मिन्सूत्रे कथमिदं वाक्यमुदाहृतमित्यत आह—**एतदिति** ॥ एजत्यर्थस्य सूत्रितत्वादेजतिपदयुक्तं वाक्यमुदाहृतमित्यर्थः । प्रासङ्गिकाधिकारचिन्तयास्य सङ्गतिर्नापेक्षितेति "शब्दादेव प्रमितः" [ व्या० सू० १ । ३ । २३ ] इत्यनेनोच्यते । तत्रांगुष्ठवाक्ये जीवानुवादो ब्रह्मैक्यज्ञानार्थ इत्युक्तम् । न तथेह प्राणानुवाद ऐक्यज्ञानार्थः संभवति । प्राणस्वरूपेण कल्पितस्यैक्यायोगात् । अतः

भामती ।

न्यत् ॥ ३८ ॥ **कम्पनात् ।** प्राणवज्रश्रुतिबलाद्वाक्यं प्रकरणं च भंक्त्वा वायुः पञ्चवृत्तिराध्यात्मिको बाह्यश्चात्र प्रतिपाद्यः । तथाहि—प्राणशब्दो मुख्यो वायावाध्यात्मिके, वज्रशब्दश्चाशनौ । अशनिश्च वायुपरिणामः । वायुरेव हि बाह्यो धूमज्योतिःसलिलसंवलितः पर्जन्यभावेन परिणतो विद्युत्स्तनयित्नुवृष्ट्यशनिभावेन विवर्तते । यद्यपि च सर्वं जगदिति सवायुकं प्रतीयते तथापि सर्वशब्द आपेक्षिकोऽपि न स्वाभिधेयं जहाति किंतु संकुचद्वृत्तिर्भवति । प्राणवज्रशब्दौ तु ब्रह्मविषयत्वे स्वार्थमेव त्यजतः । तस्मात् स्वार्थत्यागाद्वरं वृत्तिसंकोचः, स्वार्थलेशावस्थानात् । अमृतशब्दोऽपि मरणाभाववचनो न सार्वकालिकं तदभावं ब्रूते, ज्योतिर्जीवितयापि तदुपपत्तेः । यथा अमृता देवा इति । तस्मात्प्राणवज्रश्रुत्यनुरोधाद्वायुरेवात्र विवक्षितो न ब्रह्मेति प्राप्तम् । एवं प्राप्त उच्यते—**कम्पनात् ।** सवायुकस्य जगतः कम्पनात्, परमात्मैव शब्दात्प्रमित इति मण्डूकप्लुत्यानुषज्जते । ब्रह्मणो हि बिभ्यदेतज्जगत्कृत्स्नं स्वव्यापारे नियमेन प्रवर्तते न तु मर्यादामतिवर्तते । एतदुक्तं भवति—न श्रुतिसंकोचमात्रं श्रुत्यर्थपरित्यागे हेतुः, अपि तु पूर्वा-

आनन्दगिरीय-न्यायनिर्णयः ।

**कम्पनादिति** । आ पादसमाप्तेरुत्तरसंदर्भस्य संगतिमाह—**अवसित इति** । अस्याधिकरणस्योदाहरणतया काठकवाक्यं पठति—**यदिति** । यत्किंचेदमविशिष्टं जगत्तत्सर्वं प्राणे निमित्ते सत्येजति चेष्टते तच्च तस्मादेव निःसृतमुत्पन्नम् । तच्च प्राणाख्यं जगत्कारणं महदपरिच्छिन्नं बिभेत्यस्मादिति भयम् । तदेव भयहेतुत्वं निरूपयति—**वज्रमिति** । उद्यतं वज्रमिवेत्यर्थः । प्राणतत्त्वधियोऽमृतत्वहेतुमाह—**य इति** । सूत्राक्षरानुगमान्नेदमुदाहरणमित्याशंक्याऽऽह—**एतदिति** । एजतिधात्वर्थस्य कम्पनस्य सूत्रणादेजतिपदयुक्तमेतद्वाक्यं सूत्रितमित्यर्थः । वाक्ये प्रातीतिकमर्थं संक्षिप्याऽऽह—**अस्मिन्निति** । सहेतुकं संशयमुक्त्वा श्रुत्या पूर्वपक्षयति—**तत्रेत्यादिना** । "शब्दादेव प्रमितः" [ ब्र० सू० १-३-२४ ] इत्यत्र ब्रह्मवाक्ये जीवानुवादो ब्रह्मैक्यज्ञानायेत्युक्तम् । इह तु प्राणस्य स्वरूपेण कल्पितस्य न ब्रह्मैक्यं यतोऽनूद्येत तस्मा-

१ अनिश्चयात्संशयादिति यावत् ।

त्प्रसिद्धेः पञ्चवृत्तिर्वायुः प्राण इति ॥ प्रसिद्धेरेव चाशनिर्वज्रं स्याद्वायोश्चेदं माहात्म्यं संकीर्त्यते ॥ कथम् ॥ सर्वमिदं जगत्पञ्चवृत्तौ वायौ प्राणशब्दिते प्रतिष्ठायैजति वायुनिमित्तमेव च महद्भयानकं वज्रमुद्यम्यते ॥ वायौ हि पर्जन्यभावेन विवर्तमाने विद्युत्स्तनयित्नुवृष्ट्यशनयो विवर्तन्त इत्याचक्षते ॥ वायुविज्ञानादेव चेदममृतत्वम् ॥ तथाहि श्रुत्यन्तरम्—"वायुरेव व्यष्टिर्वायुस्समष्टिरप पुनर्मृत्युं जयति य एवं वेद" इति॥ तस्माद्वायुरयमिह प्रतिपत्तव्य इति ॥ एवं प्राप्ते ब्रूमः । ब्रह्मैवेदमिह प्रतिपत्तव्यम् ॥ कुतः॥ पूर्वोत्तरालोचनात्—पूर्वोत्तरयोर्हि ग्रन्थभागयोर्ब्रह्मैव निर्दिश्यमानमुपलभामहे । इहैव कथमकस्मादन्तराले वायुं निर्दिश्यमानं प्रतिपद्येमहि ॥ पूर्वत्र तावत्—"तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लो-

रत्नप्रभा ।

प्राणोपास्तिपरं वाक्यमिति प्रत्युदाहरणेन पूर्वपक्षयति—**प्रसिद्धेः पञ्चवृत्तिरिति** ॥ ननु "अत एव प्राणः" [ ब्र०सू० १।१।२३ ] इत्यादौ ब्रह्मणि लिङ्गात्प्राणश्रुतिर्नीता । अत्रापि सर्वचेष्टाभयहेतुत्वं ब्रह्मलिङ्गमस्तीति नास्ति पूर्वपक्षावसरः, गतार्थत्वादित्यत आह—**वायोश्चेति** ॥ **प्रतिष्ठाय** स्थितिं लब्ध्वा प्राणे वायौ निमित्ते जगच्चलतीति प्रसिद्धम् । अतः स्पष्टं ब्रह्मलिङ्गं नास्तीति भावः । वज्रलिङ्गाच्च वायुरित्याह—**वाय्विति** ॥ **व्यष्टिः** विशेषः । **समष्टिः** सामान्यम् । सूत्राद्बहिरेव सिद्धान्तं प्रतिजानीते—**ब्रह्मैवेति** ॥ पूर्वोत्तरवाक्यैकवाक्यतानुगृहीतं सर्वाश्रयत्वं लिङ्गं वाक्यभेदकप्राणश्रुतेर्बाधकमित्याह—**पूर्वत्रेत्यादिना** ॥

भामती ।

परवाक्यैकवाक्यताप्रकरणाभ्यां संवलितः श्रुतिसंकोचः । तदिदमुक्तम्—**पूर्वापरयोर्ग्रन्थभागयोर्ब्रह्मैव निर्दिश्यमानमुपलभामहे । इहैव कथमन्तराले वायुं निर्दिश्यमानं प्रतिपद्येमहीति** । तदनेन

आनन्दगिरीय—न्यायनिर्णयः ।

दुपास्तिविधिरिति प्रत्यवस्थीयते । सिद्धान्ते तु निर्विशेषे ब्रह्मण्युक्तश्रुत्यन्वयादस्ति श्रुत्यादिसंगतिः । फलं तु पूर्वोत्तरपक्षयोरुपास्तिर्ज्ञानं चेति । नन्वतिदेशाधिकरणे प्रातर्दने विचारे च प्राणशब्दस्य ब्रह्मार्थत्वमुक्तं तथेहापीत्यनर्थकमधिकरणम् । मैवम् । 'प्राणमेवाभिसंविशन्ति' इत्यत्र निरपेक्षकारणत्वपरैवकारवत् 'प्राणोऽस्मि प्रज्ञात्मा' इत्यादावुपक्रमोपसंहारैकरूप्यवच्चात्र तदभावादगतार्थत्वादित्यभिप्रेत्याऽऽह—**वायोश्चेति** । जगत्कम्पनहेतुत्वं ब्रह्मलिङ्गमिहापि भाति तत्कथं वायोरिदं माहात्म्यमित्याह—**कथमिति** । उक्तलिङ्गमन्यथयति—**सर्वमिति** । तथाऽपि जगद्भयहेतुत्वं ब्रह्मलिङ्गमित्याशंक्याऽऽह—**वाय्विति** । न तावदत्रोपमा तद्वाचकाभावात् । न च ब्रह्मनिमित्तं भयानकं वज्रमुद्यम्यते मानाभावात् । न चेदमेव मानं वायुनिमित्तत्वेन तदुद्यमनोक्तेरित्यर्थः । कथं वायोरपि वज्रोद्यमहेतुत्वं तत्रापि मानाभावाद्वाक्यस्य साधारण्यात्तत्राऽऽह—**वायौ हीति** । तथाऽपि ज्ञानस्यामृतत्वहेतुत्वं ब्रह्मलिङ्गमित्याशंक्याऽऽह—**वाय्विति** । तत्र बृहदारण्यकमनुकूलयति—**तथाहीति** । व्यष्टिर्विशेषः । समष्टिः सामान्यम् । प्राणवज्रश्रुतिभ्यां सिद्धमुपसंहरति—**तस्मादिति** । आध्यात्मिकाधिदैविकवायूपास्त्यर्थं वाक्यमित्युक्तमनूद्य सिद्धान्तयति—**एवमिति** । बहिरेव प्रतिजानीते—**ब्रह्मेति** । वाक्यस्य वायूपास्तिपरत्वे श्रौते कुतो ब्रह्मधीरित्याह—**कुत इति** । पूर्वोत्तरवाक्यैकवाक्यतानुगृहीतं सर्वलोकाश्रयत्वादिलिङ्गं प्राणश्रुतेर्बाधकमित्याह—**पूर्वेति** । तत्र वाक्यैकवाक्यत्वं विवृणोति—**पूर्वोत्तरयोरिति** । तथाऽप्येजतिवाक्ये वायुरुच्यतामित्याशंक्य वाक्यैक्यसंभवे न तद्भेत्तव्यमित्याह—**इहैवेति** । पूर्ववाक्यस्य कुतो ब्रह्मार्थत्वं तत्राऽऽह—**पूर्वत्रेति** । शुक्रं शुभ्रं ज्योतिष्मत्तस्यैव पूर्णतामाह—**तद्ब्रह्मेति** । तस्य कूटस्थतामाह—**तदेवेति** । तस्य सर्वाधिष्ठानतामाह—**तस्मिन्निति** । तदेव व्यतिरेक-

काः श्रितास्सर्वे तदु नात्येति कश्चन" [ कठ० ५ । ८ ] इति ब्रह्मनिर्दिष्टं, तदेवेहापि सन्निधानात् "जगत्सर्वं प्राण एजति" [ कठ० ६ । २ ] इति च लोकाश्रयत्वप्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते ॥ प्राणशब्दोऽप्ययं परमात्मन्येव प्रयुक्तः—"प्राणस्य प्राणम्" [ बृ० ४ । ४।१८ ] इति दर्शनात् ॥ एजयितृत्वमपीदं परमात्मन एवोपपद्यते न वायुमात्रस्य॥ तथा चोक्तम्—"न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" [ कठ० ५ । ५ ] इति ॥ उत्तरत्रापि—"भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" [ कठ० ६ । ३ ] इति ब्रह्मैव निर्देक्ष्यते न वायुः । सवायुकस्य जगतो भयहेतुत्वाभिधानात् ॥ तदेवेहापि सन्निधानात् "महद्भयं वज्रमुद्यतम्" [कठ० ६ । २ ] इति च भयहेतुत्वप्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते ॥ वज्रशब्दोऽप्ययम्भयहेतुत्वसामान्यात्प्रयुक्तः ॥ यथा हि वज्रमुद्यतं ममैव शिरसि निपतेद्, यद्यहमस्य शासनं न कुर्यामित्यनेन भयेन जनो नियमेन राजादिशासने प्रवर्तते, एवमिदमग्निवायुसूर्यादिकं जगत् अस्मादेव ब्रह्मणो बिभ्यन्नियमेन स्वव्यापारे प्रवर्तते इति भयानकं वज्रोपमितं ब्रह्म ॥ तथा च ब्रह्मविषयं श्रुत्यन्तरम्—"भीषास्माद्वातः पवते भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः"[तै० उ०

---

रत्नप्रभा ।

शुक्रं स्वप्रकाशम् । तदु नात्येति ब्रह्मानाश्रितः कोऽपि लोको नास्त्येवेत्युकारार्थः । सौत्रलिङ्गं व्याचष्टे—एजयितृत्वमिति ॥ सवायुकस्य सर्वस्य कम्पनश्रवणादपि प्राणः परात्मैवेत्यर्थः । ब्रह्मणि वज्रशब्दः कथमित्याशंक्य गौण इत्याह—वज्रशब्द इति ॥ बृहदारण्यके "वायुरेव व्यष्टिः" [ ३ । ३ । २ ] इत्यत्र "अपपुनर्मृत्युम्" [ ३ । ३ । २ ] इत्यपमृत्युजयरूपमापेक्षिकममृतत्वमुच्यते । न मुख्यामृतत्वम् । तत्रैव वायूपास्तिप्रकरणं सामाप्य "अथ हैनमुषस्तः चाक्रायणः पप्रच्छ" [ बृ० ३ । ४ । १ ] इति

भामती ।

वाक्यैकवाक्यता दर्शिता । प्रकरणादपि इति भाष्येण प्रकरणमुक्तम् । यत्खलु पृष्टं तदेव प्रधानं प्रतिवक्तव्यमिति तस्य प्रकरणम् । पृष्टादन्यस्मिंस्तूच्यमाने शास्त्रमप्रमाणं भवेदसंबद्धप्रलापित्वात् । यत्तु

आनन्दगिरीय—न्यायनिर्णयः ।

मुखेना(णा)ऽऽह—तदु नेति । तथाऽपि कथं तदेवात्र वाच्यमित्याशंक्य प्रकरणाल्लिङ्गप्रत्यभिज्ञानाच्चेत्याह—तदेवेति । प्राणश्रुत्या मुख्यप्राणे सिद्धे कथं प्रकरणादिनाऽर्थान्तरधीरित्याशंक्याऽऽह—प्राणेति । एकवाक्यताकांक्षप्रकरणानुगृहीतबहुलिङ्गविरोधे ब्रह्मणि प्रयुक्तपूर्वप्राणशब्दस्य न मुख्यार्थोऽस्तीत्यर्थः । उत्सूत्रं सिद्धान्तमुक्त्वा सर्वजगत्कम्पहेतुत्वं लिङ्गान्तरं सूत्रयोजनया दर्शयति—एजयितृत्वमिति । तत्र हेतुः—तथा चेति । केन तर्हि मर्त्यानां जीवनं तत्राऽऽह—इतरेणेति । इतरं स्फोरयति—यस्मिन्निति । पूर्वत्र ब्रह्मोक्तेरत्रापि तदेकवाक्यत्वात्तदेवोक्तमित्युक्तम्, इदानीमुत्तरवाक्येऽपि—ब्रह्मोक्तिमाह—उत्तरत्रेति । अस्येश्वरस्य भयादग्निसूर्यौ तपतः । इन्द्रादयः स्वव्यापारेषु धावन्ति । मृत्योरुक्तानपेक्ष्य पञ्चमत्वम् । कथमत्र ब्रह्मोक्तं वायुरेवाग्न्यादिभयकारणं किं न स्यात्तत्राऽऽह—सवायुकस्येति । तथाऽपि कथं प्रकृते ब्रह्मोक्तिरित्याशंक्य प्रकरणानुगृहीतभयहेतुत्वलिङ्गप्रत्यभिज्ञानादित्याह—तदेवेति । अशनौ प्रसिद्धवज्रशब्दस्य ब्रह्मविरोधित्वान्नात्र ब्रह्मोक्तमित्याशंक्याऽऽह—वज्रेति । तस्य भयहेतौ ब्रह्मणि प्रवृत्तिं दृष्टान्तेन स्फुटयति—यथेति । भयहेतुत्वस्य श्रुत्यन्तरे ब्रह्मणः सिद्धेस्तत्प्रत्यभिज्ञानादपि ब्रह्मैवेदमित्याह—तथा चेति । भीषा

२।८।१ ] इत्यमृतत्वफलश्रवणादपि ब्रह्मैवेदमिति गम्यते ॥ ब्रह्मज्ञानाद्धि चामृतत्वप्राप्तिः—"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" [ श्वेता० ६ । १५ ] इति मन्त्रवर्णात् ॥ यत्तु वायुविज्ञानात्क्वचिदमृतत्वमभिहितं, तदापेक्षिकम् ॥ तत्रैव च प्रकरणान्तरकरणेन परमात्मानमभिधाय "अतोऽन्यदार्तम्" [ बृ० ३ । ४ । २ ] इति वाय्वादेरार्तत्वाभिधानात् ॥ प्रकरणादप्यत्र परमात्मनिश्चयः—"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद" [ कठ० २।१४ ] इति परमात्मनः पृष्टत्वात् ॥ ३९ ॥ इति कम्पनाधिकरणम् ॥ ११ ॥

## ज्योतिर्दर्शनात् ॥ ४० ॥ ( १२ ) ॥

"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" [ छां० ८ । १२ । ३ ] इति श्रूयते ॥ तत्र संशय्यते किं ज्योतिश्शब्दं चक्षुर्विषयं तमोऽपहं तेजः, किं वा परं ब्रह्मेति ॥

रत्नप्रभा ।

ज्ञेयात्मानमुक्त्वा वाय्वादेर्नाशित्वोक्तेरित्याह—यत्तु वाय्वित्यादिना ॥ तस्मात्काठकवाक्यं ज्ञेये समन्वितमिति सिद्धम् ॥ ३९ ॥ ( ११ ) ॥ ज्योतिर्दर्शनात् ॥ छान्दोग्ये प्रजापतिविद्यावाक्यमाह—एष इति ॥ परं ज्योतिश्श्रुतिभ्यां संशयमाह—तत्रेति ॥ घटादिविषयावरकतमोनाशकं सौरमित्यर्थः । पूर्वत्र ब्रह्मप्रकरणस्यानुग्राहकः सर्वजगच्चेष्टाहेतुत्वादियोगोऽस्तीति प्राणश्रुतिर्ब्रह्मणि नीता, न तथात्र "य आत्मापहत-

भामती ।

वायुविज्ञानात्क्वचिदमृतत्वमभिहितमापेक्षिकं तदिति । 'अपपुनर्मृत्युं जयति' इति श्रुत्या ह्यपमृत्योर्विजय उक्तो न तु परममृत्युविजय इत्यापेक्षिकत्वं, तच्च तत्रैव प्रकरणान्तरकरणेन हेतुना । न केवलमपश्रुत्या तदापेक्षिकमपि तु परमात्मानमभिधाय 'अतोऽन्यदार्तम्' इति वाय्वादेरार्तत्वाभिधानात् । न ह्यार्ताभ्यासादनार्तो भवतीति भावः ॥ ३९ ॥ ज्योतिर्दर्शनात् । अत्र हि ज्योतिःशब्दस्य तेजसि मुख्यत्वात्, ब्रह्मणि जघन्यत्वात्, प्रकरणाच्च श्रुतेर्बलीयस्त्वात्, पूर्ववच्छ्रुतिसंकोचस्य चात्राभावात्, प्रत्युत ब्रह्मज्योतिःपक्षे क्त्वाश्रुतेः पूर्वकालार्थायाः पीडनप्रसङ्गात्, समुत्थानश्रुतेश्च तेज एव ज्योतिः । तथाहि—समुत्थानमुद्गमनमुच्यते, न तु विवेकविज्ञानम् । उद्गमनं च तेजःपक्षेऽर्चिरादिमार्गेणोपपद्यते । आदित्यश्चार्चिराद्यपेक्षया परं ज्योतिर्भवतीति तदुपसंपद्य तस्य समीपे भूत्वा स्वेन रूपेणाभिनिष्पद्यते, कार्यब्रह्मलोकप्राप्तौ क्रमेण मुच्यते । ब्रह्मज्योतिःपक्षे तु ब्रह्म भूत्वा का परा स्वरूपनिष्पत्तिः । न च देहा-

आनन्दगिरीय—न्यायनिर्णयः ।

भयेनास्माद्ब्रह्मणो निमित्तादिति यावत् । ब्रह्मैवात्र प्रतिपाद्यमित्यत्र लिङ्गान्तरमाह—अमृतत्वेति । श्रुतस्य फलस्य ब्रह्मधिया व्याप्तिमाह—ब्रह्मेति । व्याप्तिभङ्गमुक्तमनूद्य प्रत्याह—यत्त्विति । 'अप पुनर्मृत्युं जयति' इत्यपमृत्युजयस्योक्तेरित्यर्थः । तस्याऽऽपेक्षिकत्वे हेत्वन्तरमाह—तत्रैवेति । पञ्चमेऽध्याये सूत्रोक्त्यनन्तरमेव परमात्मानमन्तर्यामिणं प्रकृत्य ततोऽन्यस्य नाशित्वोक्तेर्वायुज्ञानाधीनममृतत्वमापेक्षिकमित्यर्थः । एजतिवाक्ये ब्रह्मैव प्रतिपाद्यमित्यत्र मानान्तरमाह—प्रकरणादिति । तस्य परमात्मविषयत्वे हेतुमाह—अन्यत्रेति । ॥ ३९ ॥ ( ११ ) ॥ बहुलिङ्गविरोधेन श्रुतिबाधवत्प्रकरणानुगृहीतोत्तमपुरुषश्रुत्या ज्योतिःश्रुतेर्मुख्यार्थबाधमाह—ज्योतिरिति । दहराधिकरणे ज्योतिःशब्दं ब्रह्मेति सिद्धवदादाय ब्रह्मरूपेणोच्यते जीव इत्युक्तम् । इदानीं ब्रह्मैव ज्योतिःशब्दमित्येतद्विशदयितुं तदेव वाक्यमाह—एष इति । परं ज्योतिरिति श्रुतिभ्यां संशयमाह—तत्रेति । चक्षुषो विषयो घटादिस्तस्याऽऽवरकं बाह्यं तमस्तदपहतिकारणमादित्याख्यं तेजस्तदिह

१ ब्रह्मणीति शेषः ।

**किं तावत्प्राप्तम् । प्रसिद्धमेव तेजः, ज्योतिश्शब्दमिति-कुतः ॥ तत्र ज्योतिश्शब्दस्य रूढत्वात् ॥ "ज्योतिश्चरणाभिधानाद्" [ ब्र०सू० १।१।२४ ] इत्यत्र हि प्रकरणाज्ज्योतिश्शब्दस्स्वार्थं परित्यज्य ब्रह्मणि वर्तते ॥ न चेह तद्वत्किञ्चित्स्वार्थपरित्यागे, कारणं दृश्यते ॥ तथा च नाडीखण्डे-"अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते"[छां०**

रत्नप्रभा ।

पाप्मा" [ छां० ८ । ७ । १ ] इति प्रकरणस्यानुग्राहकं पश्याम इति प्रत्युदाहरणेन पूर्वपक्षमाह-**प्रसिद्धमेवेत्यादिना** ॥ पूर्वपक्षे सूर्योपास्तिः, सिद्धान्ते ब्रह्मज्ञानान्मुक्तिरिति फलम् । ननु "ज्योतिरधिकरणे" [ वा० सु० १ । १ । २४ ] ज्योतिश्शब्दस्य ब्रह्मणि वृत्तेरुक्तत्वात्कथं पूर्वपक्ष इत्यत आह-**ज्योतिरिति** ॥ तत्र गायत्रीवाक्ये प्रकृतब्रह्मपरामर्शकयच्छब्दसामानाधिकरण्याज्ज्योतिश्शब्दस्य स्वार्थत्यागः कृतः । तथात्र स्वार्थत्यागे हेत्वदर्शनात्पूर्वपक्ष इत्यर्थः । ज्योतिश्श्रुतेरनुग्राहकत्वेनार्चिरादिमार्गस्थत्वं लिङ्गमाह-**तथा चेति** ॥ "या वा एता हृदयस्य नाड्यः" [ छां० ८ । ६ । १] इति कण्डिकया नाडीनां रश्मीनां च मिथः संश्लेषमुक्त्वा-**अथ** संज्ञालोपानन्तरम् । **यत्र** काले **एतत्** मरणं यथा स्यात्तथोत्**क्रामति, अथ** तदा **एतैः** नाडीसंश्लिष्टरश्मिभिः ऊर्ध्वं सन्नुपरि गच्छति । गत्वाऽऽदित्यं ब्रह्मलोकद्वारभूतं गच्छतीत्यभिहितम् । **तथैवा**त्रापि शरीरात्समुत्थाय मृत्वा परं ज्योतिरादित्याख्यमुपसम्पद्य तद्वारा ब्रह्मलोकं गत्वा स्वस्वरूपेणा-

भामती ।

दिविविक्तब्रह्मस्वरूपसाक्षात्कारो वृत्तिरूपोऽभिनिष्पत्तिः । सा हि ब्रह्मभूयात्प्राचीना न तु पराचीना । सेयमुपसंपद्येति क्त्वाश्रुतेः पीडा । तस्मात्तिसृभिः श्रुतिभिः प्रकरणबाधनात्तेज एवात्र ज्योतिरिति प्राप्तम् ।

आनन्दगिरीय-न्यायनिर्णयः ।

ज्योतिरुच्यते ज्योतिःश्रुतेस्तत्र रूढत्वादित्येकः पक्षः । ज्योतिर्विशेषणस्य परत्वस्य निरतिशयत्वस्या ब्रह्मणोऽन्यत्रायोगात्तदेव ज्योतिरिति पक्षान्तरम् । प्रश्नपूर्वकं पूर्वपक्षयति-**किमिति** । न च प्रकरणात्प्राणस्येव ज्योतिषो ब्रह्मत्वं तत्र सर्वशब्दश्रुतिसंकोचवत्प्रकृते प्रकरणानुग्राहकाभावात्परशब्दस्य विशेषणार्थस्य विशेष्यानुसारेणाऽऽदित्येऽपि नेयत्वादुक्तश्रुतेर्निर्विशेषे ब्रह्मण्यन्वयोक्तेः श्रुत्यादिसंगतयः । पूर्वोत्तरपक्षयोरादित्योपास्त्या क्रममुक्तिर्ब्रह्मज्ञानान्मुक्तिरिति फलभेदः । सर्वशब्दस्येवात्र कस्याश्चिदपि श्रुतेरसंकोचात्प्रागिवेहापि 'समुत्थाय' इत्यादिश्रुत्यसंकोचाद्वा युक्तमादित्यग्रहणमिति भावः । प्रसिद्धस्याप्रतिपाद्यत्वात्तद्ग्रहणं नेति शंकते-**कुत इति** । अप्रतिपाद्यत्वेऽपि तस्योपास्यत्वेनाऽऽदेयत्वमाह-**तत्रेति** । ज्योतिरधिकरणन्यायेनास्यापि निर्णयात्पूर्वपक्षानुत्थानादनारम्यमेतदधिकरणमित्याशंक्याऽऽह-**ज्योतिरिति** । ब्रह्मणो गायत्रीवाक्ये प्रकृतत्वात्तस्य सर्वनाम्ना परामृष्टस्य द्युसंबन्धलिङ्गात्प्रत्यभिज्ञानात्तत्र ज्योतिःशब्दो ब्रह्मणि प्रसिद्धिमुल्लंघ्य नीतः । न च तथाऽस्मिन्वाक्ये ज्योतिःशब्दस्य स्वार्थत्यागे हेतुरदृष्टत्वादित्यगतार्थतेत्यर्थः । नन्वत्रापि परं ज्योतिरिति ज्योतिषो विशेषणं स्वरूपाभिनिष्पत्तिरुत्तमपुरुषत्वं चाऽऽदित्येऽनुपपन्नं ज्योतिःशब्दस्य प्रसिद्धार्थत्यागे हेतुरस्तु नेत्याह-**तथा चेति** । 'अथ या एता हृदयस्य नाड्यः' इत्यादिना (ना)डीखण्डः । तत्राऽऽदित्यग्रहानुरोधेन मुमुक्षोस्तत्प्राप्तिरभिहितेति संबन्धः । विशेषज्ञानोपरमानन्तर्यमथशब्दार्थः । यत्रेत्यारब्धकर्मावसानकालोक्तिः । एतदुत्क्रमणं यथा तथेति क्रियाविशेषणम् । अस्मादभिमानविषयाद्देहादुत्क्रमणं यदा करोत्यथ तदैतैरादित्यस्य रश्मिभिरालम्बनैरूर्ध्वः सन्नाक्रमत उपरि गच्छतीत्युपक्रम्याऽऽदित्यं गच्छतीत्युपसंपत्तव्यस्य ज्योतिषो यथाऽऽदित्यत्वं तथा श्रुतं तस्यापि परत्वमर्चिरादिभ्यो युक्तं समुत्थायोपसंपद्येति च पूर्वकालार्थक्त्वाश्रुतेर्ब्रह्मपक्षे बाधाद्देहाभिमानत्यागरूपमुत्थानं कृत्वोपसंपद्य कार्यब्रह्मलोकं गत्वा स्वेन रूपेणाभिनिष्पद्यते स चोत्तमः पुरुष इत्यङ्गीकारे सर्वाविरोधादादित्यपक्षो ज्योतिःश्रुत्या क्त्वाश्रुतिभ्यां चाभ्युपेय इत्यर्थः । मार्गपर्वभूतादित्योपास्त्या तत्प्राप्तिद्वारा क्रममुक्तिपरं

८।६।५] इति मुमुक्षोरादित्यप्राप्तिरभिहिता ॥ तस्मात्प्रसिद्धमेव तेजो ज्योतिश्शब्दमिति ॥ एवं प्राप्ते ब्रूमः ॥ परमेव ब्रह्म ज्योतिश्शब्दम् । कस्मात् ॥ दर्शनात्—तस्य हीह प्रकरणे वक्तव्यत्वेनानुवृत्तिर्दृश्यते । "य आत्मापहतपाप्मा" [ छां० ८।७।१ ] इत्यपहतपाप्मत्वादिगुणकस्यात्मनः प्रकरणादावन्वेष्टव्यत्वेन विजिज्ञासितव्यत्वेन च प्रतिज्ञानात् "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" [ छां० ८।२।३ ] इति चानुसन्धानात् ॥ "अशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः" [ छां० ८।

रत्नप्रभा ।

भिनिष्पद्यत इति वक्तव्यम् । समुत्थायोपसम्पद्येति क्त्वाश्रुतिभ्यां ज्योतिषोऽर्चिरादिमार्गस्थत्वमानादित्यर्थः । अतो मार्गस्थसूर्योपास्त्या क्रममुक्तिपरं वाक्यमिति प्राप्ते सिद्धान्तयति—**एवमिति** ॥ व्याख्येयत्वेनोपक्रान्तः आत्मैवात्र ज्योतिश्शब्देन व्याख्येय इति ज्योतिर्वाक्येनैकवाक्यताप्रयोजकप्रकरणानुगृहीतोत्तमपुरुषश्रुत्या वाक्यभेदकज्योतिश्श्रुतिर्बाध्येति भावः । अशरीरत्वफललिङ्गाद्ब्रह्मैव ज्योतिः, न सूर्य इत्याह—**अशरीरमिति** ॥ न च सूर्यप्राप्त्या क्रमेणाशरीरत्वं स्यादिति वाच्यम् । परत्वेन विशेषितस्य ज्योतिष एव "स

भामती ।

एवं प्राप्तेऽभिधीयते—**परमेव ब्रह्म ज्योतिःशब्दम् । कस्मात् । दर्शनात् । तस्य हीह प्रकरणे अनुवृत्तिर्दृश्यते** । यत्खलु प्रतिज्ञायते, यच्च मध्ये परामृश्यते, यच्चोपसंह्रियते, स एव प्रधानं प्रकरणार्थः । तदन्तःपातिनस्तु सर्वे तदनुगुणतया नेतव्याः । न तु श्रुत्यनुरोधमात्रेण प्रकरणादपकृष्टव्या इति हि लोकस्थितिः । अन्यथोपांशुयाजवाक्ये जामितादोषोपक्रमे तत्प्रतिसमाधानोपसंहारे च तदन्तःपातिनो 'विष्णुरुपांशु यष्टव्यः' इत्यादयो विधिश्रुत्यनुरोधेन पृथग्विधयः प्रसज्येरन् । तत्किमिदानीं 'तिस्र एव साह्नस्योपसदः कार्या द्वादशाहीनस्य' इति प्रकरणानुरोधात्समुदायप्रसिद्धिवलल्ब्धमहर्गणाभिधानं परित्यज्याहीनशब्दः कथमप्यवयवव्युत्पत्त्या साह्नं ज्योतिष्टोममभिधाय तत्रैव द्वादशोपसत्तां विधत्ताम् । स हि कृत्स्नविधानान्न कुतश्चिदपि हीयते क्रतोरित्यहीनः शक्यो वक्तुम् । मैवम् । अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति श्रुत्या प्रकरणबाधनान्न द्वादशोपसत्तामहीनगुणयुक्ते ज्योतिष्टोमे शक्नोति विधातुम् । नाप्यतोऽपकृष्टं सदहर्गणस्य विधत्ते । परप्रकरणेऽन्यधर्मविधेरन्याय्यत्वात् । असंबद्धपदव्यवायविच्छिन्नस्य प्रकरणस्य पुनरनुसंधानक्लेशात् । तेनानपकृष्टेनैव द्वादशाहीनस्येतिवाक्येन साह्नस्य तिस्र उपसदः कार्या इति विधिं स्तोतुं द्वादशाहविहिता द्वादशोपसत्ता तत्प्रकृतित्वेन च सर्वाहीनेषु प्राप्ता निवीतादिवदनूद्यते । तस्मादहीनश्रुत्या प्रकरणबाधेऽपि न द्वादशाहीनस्येति वाक्यस्य प्रकरणादपकर्षः । ज्योतिष्टोमप्रकरणाम्नातस्य पूर्षाद्यनुमन्त्रणमन्त्रस्य यल्लिङ्गबलात्प्रकरणबाधेनापकर्षस्तदगत्या । पौष्णादौ च कर्मणि तस्यार्थवत्त्वात् । इह त्वपकृष्टस्यार्चिरादिमार्गोपदेशे फलस्योपायमार्गप्रतिपादकेऽतिविशदे 'एष संप्रसादः'[१] इति वाक्यस्याविशदैकदेशमात्रप्रतिपादकस्य निष्प्रयोजनत्वात् । न च द्वादशाहीनस्येतिवद्यथोक्तात्मध्यानसाधनानुष्ठानं स्तोतुमेष संप्रसाद इति वचनमर्चिरादिमार्गमनुवदतीति युक्तम्, स्तुतिलक्ष-

आनन्दगिरीय—न्यायनिर्णयः ।

वाक्यमित्युपसंहरति—**तस्मादिति** । पूर्वपक्षमनूद्य सिद्धान्तमवतार्य प्रतिज्ञामाह—**एवमिति** । श्रुतिभिस्तेजसो प्राह्यत्वे कुतो ब्रह्मधीरिति पृच्छति—**कस्मादिति** । हेतुमादाय व्याचष्टे—**दर्शनादिति** । परस्य ब्रह्मणोऽस्मिन्प्रकरणे वक्तव्यत्वेनानुवृत्तिदर्शनं हेतुना साधयति—**य इति** । प्रकरणाविच्छेदं कथयति—**एतमिति** । किंचार्चिराद्यपेक्षया परं ज्योतिरादित्यश्चेत्तत्प्राप्त्या विदुषो नाशरीरत्वमादित्यस्य देवतात्मनः सशरीरत्वान्न च तत्प्राप्त्या स्वरूपाभिनिष्पत्तिरन्यस्यान्यात्मतायोगादित्याह—**अशरीरमिति** । उपास्त्या

१ विषयवाक्ये श्रूयते पदद्वयम् ।

**१२ । १ ] इति च अशरीरतायै ज्योतिस्सम्पत्तेरस्याभिधानात् ॥ ब्रह्मभावाच्चान्यत्राशरीरतानुपपत्तेः ॥ "परं ज्योतिः" [ छां ८ । ३ । ४ ] "स उत्तमः पुरुषः" [ छां० ८ । १२ । ३ ] इति च विशेषणात् ॥ यत्तूक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति ॥ नासावात्यन्तिको मोक्षः । गत्युत्क्रान्तिसम्बन्धात् ॥ न हि आत्यन्तिके मोक्षे गत्युत्क्रान्ती स्त इति वक्ष्यामः ॥ ४० ॥
इति ज्योतिर्दर्शनाधिकरणम् ॥ १२ ॥**

रत्नप्रभा ।

उत्तमः" [ छां० ८ । १२ । ३ ] इति परामर्शेनाशरीरत्वनिश्चयादित्याह—**परमिति** ॥ पूर्वोक्तलिङ्गं दूषयति—**यत्त्विति** ॥ नाडीखण्डे दहरोपासकस्य या सूर्यप्राप्तिरुक्ता स न मोक्ष इति युक्ता सूर्योक्तिः । अत्र तु प्रजापतिवाक्ये निर्गुणविद्यायामर्चिरादिगतिस्थसूर्यस्यानन्वयादनर्थकत्वाच्छ्रुतिव्यत्यासेन स्वरूपं साक्षात्कृत्य परं ज्योतिस्तदेवोपसम्पद्यत इति व्याख्येयमिति भावः ॥ ४० ॥ ( १२ ) ॥

भामती ।

णायां स्वाभिधेयसंसर्गतात्पर्यपरित्यागप्रसङ्गात् । द्वादशाहीनस्येति तु वाक्ये स्वार्थसंसर्गतात्पर्ये प्रकरणविच्छेदस्य प्राप्तानुवादमात्रस्य चाप्रयोजनत्वमिति स्तुत्यर्थो लक्ष्यते । न चैतद्दोषभयात्समुदायप्रसिद्धिमुल्लङ्घ्यावयवप्रसिद्धिमुपाश्रित्य साह्नस्यैव द्वादशोपसत्तां विधातुमर्हति, त्रित्वद्वादशत्वयोर्विकल्पप्रसङ्गात् । न च सत्यां गतौ विकल्पो न्याय्यः । साह्नाहीनपदयोश्च प्रकृतज्योतिष्टोमाभिधायिनोरानर्थक्यप्रङ्गात् । प्रकरणादेव तदवगतेः । इह तु स्वार्थसंसर्गतात्पर्ये नोक्तदोषप्रसङ्ग इति पौर्वापर्यालोचनया प्रकरणानुरोधाद्रूढिमपि पूर्वकालतामपि परित्यज्य प्रकरणानुगुण्येन ज्योतिः परं ब्रह्म प्रतीयते । यत्तूक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति । नासावात्यन्तिको मोक्षः, किंतु कार्यब्रह्मलोकप्राप्तिः । न च क्रममुक्त्यभिप्रायं स्वेन रूपेणाभिनिष्पद्यत इति वचनम् । न ह्येतत्प्रकरणोक्तब्रह्मतत्त्वविदुषो गत्युत्क्रान्ती स्तः । तथा च श्रुतिः—'न तस्मात् प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते' इति । न च तद्द्वारेण क्रममुक्तिः । अर्चिरादिमार्गस्य हि कार्यब्रह्मलोकप्रापकत्वं न तु ब्रह्मभूयहेतुभावः । जीवस्य तु निरुपाधिनित्यशुद्धबुद्धब्रह्मभावसाक्षात्कारहेतुके मोक्षे कृतमर्चिरादिमार्गेण कार्यब्रह्मलोकप्राप्त्या । अत्रापि ब्रह्मविदस्तदुपपत्तेः । तस्मान्न ज्योतिरादित्यमुपसंपद्य संप्रसादस्य जीवस्य स्वेन रूपेण पारमार्थिकेन ब्रह्मणाभिनिष्पत्तिराञ्जसीति श्रुतेरत्रापि क्लेशः । अपि च परं ज्योतिः स उत्तमपुरुष इतीहैवोपरिष्टाद्विशेषणात्तेजसो व्यावर्त्य पुरुषविषयत्वेनावस्था-

आनन्दगिरीय–न्यायनिर्णयः ।

तत्प्राप्तावशरीरत्वमाशंक्याऽऽह—**ब्रह्मेति** । इतश्चात्र ब्रह्मैव ज्योतिरित्याह—**परमिति** । शरीरादुत्थितस्यानन्तरमुपसंपत्तव्यत्वमादित्यस्य नाडीखण्डे दृष्टमिति लिङ्गानुगृहीतां ज्योतिरादिश्रुतिमपहतपाप्मत्वादिपरमात्मप्रकरणानुगृहीतोत्तमपुरुषादिश्रुत्या बाधित्वा परं ब्रह्म ज्योतिरास्थेयमेकवाक्यतापादकफलवत्प्रकरणोपेतश्रुतेर्विफललिङ्गसंगतिश्रुतितो बलीयसीत्वादस्यं हि निर्गुणविद्यायां श्रुताशरीरताफलायामर्चिराद्यनवतारादादित्यानर्थक्यान्मार्गपर्वत्वेन तस्य सगुणविद्यासूपदिष्टत्वादेवोत्कर्षायोगादत्र ज्योतिर्मात्रश्रुतेर्मार्गानुक्तेरादित्योक्तौ श्रुतित्रयानर्थक्यात् 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायाद्बलवत्प्रकरणोपेतप्रागुक्तश्रुत्या ब्रह्मैव ज्योतिरिति भावः । परोक्तमनुभाष्य दूषयति—**यत्त्विति** । आत्यन्तिकेऽपि मोक्षे तदुभयं स्यादित्याशंक्य वादर्यधिकरणविरोधान्मैवमित्याह—**न हीति** । पूर्वापरालोचनायामत्र क्रममुक्त्यप्रतीतेर्बाधित्वा क्त्वाश्रुतिं परस्य ज्योतिषो ब्रह्मणः प्राप्तिरेव स्वरूपाभिनिष्पत्तिस्तस्यैवोत्तमपुरुषतेत्युपेत्य वाक्यस्य ब्रह्मपरत्वमास्थेयमतो ब्रह्मज्ञानात्तत्प्राप्तिरिति भावः ॥ ४० ॥ ( १२ ) ॥ प्रकरणोपेतोत्तमपुरुषादिश्रुत्या ज्योतिरादिश्रुते-

१ छान्दोग्ये ८ ऽध्याये ६ खण्डान्तर्गतपरखण्डस्येदं नाम ।

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥ (१३) ॥

"आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा" [ छां० ८ । १४ । १ ] इति श्रूयते । तत्किमाकाशशब्दं परं ब्रह्म, किंवा प्रसिद्धमेव भूताकाशमिति विचारे भूतपरिग्रहो युक्तः । आकाशशब्दस्य तस्मिन् रूढत्वात् ॥ नामरूपनिर्वहणस्य चावकाशदानद्वारेण तस्मिन्योजयितुं शक्यत्वात् ॥ स्रष्टृत्वादेश्च स्पष्टस्य ब्रह्मलिङ्गस्याश्रवणादिति ॥ एवं प्राप्ते इदमभिधीयते ॥ परमेव ब्रह्मेहाकाशशब्दं भवितुमर्हति ॥ कस्मात् ॥ अर्थान्तरत्वादिव्यपदेशात्–"ते यदन्तरा तद्ब्रह्म"

---

रत्नप्रभा ।

आकाशोऽर्थान्तरत्वादि व्यपदेशात् ॥ छान्दोग्यमुदाहरति–आकाश इति ॥ यथोपक्रमबलाज्ज्योतिश्श्रुतिबाधः, तथाऽऽकाशोपक्रमाद्ब्रह्मादिशब्दबाध इति दृष्टान्तेन पूर्वपक्षयति–भूतेति ॥ श्रुतैर्गुणैराकाशोपास्तिर्निर्गुणब्रह्मज्ञानं चेत्युभयत्र फलम् । "आकाशस्तल्लिङ्गाद्" [ व्या० सू० १।१।२२ ] इत्यनेन पौनरुक्त्यमाशंक्य तद्वदत्र स्पष्टलिङ्गाश्रवणादिति परिहरति–स्रष्टृत्वादेश्चेति ॥ "वै नाम" [ छां० ८ । १४ । १ ] इति प्रसिद्धिलिङ्गस्याकाशश्रुतेश्च वाक्यशेषगताभ्यां ब्रह्मात्मश्रुतिभ्यामनेकलिङ्गोपेताभ्यां बाधो युक्तः । यत्र बहुप्रमाणसंवादः तत्र, वाक्यस्य तात्पर्यमिति निर्णयादिति सिद्धान्तयति—परमेवेत्या-

भामती ।

पनाज्ज्योतिष्पदस्य, परमेव ब्रह्म ज्योतिः न तु तेज इति सिद्धम् ॥४०॥(१२)॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् । यद्यपि 'आकाशस्तल्लिङ्गात्' इत्यत्र ब्रह्मलिङ्गदर्शनादाकाशः परमात्मेति व्युत्पादितं, तथापि तद्वदत्र परमात्मलिङ्गदर्शनाभावान्नामरूपनिर्वहणस्य भूताकाशेऽप्यवकाशदानेनोपपत्तेरकस्माच्च रूढिपरित्यागस्यायोगात्, नामरूपे अन्तरा ब्रह्मेति च नाकाशस्य नामरूपयोर्निर्वहितुरन्तरालत्वमाह, अपि तु ब्रह्मणः, तेन भूताकाशो नामरूपयोर्निर्वहिता । ब्रह्म चैतयोरन्तरालं मध्यं सारमिति यावत् । न तु निर्वोढैव ब्रह्म, अन्तरालं वा निर्वोढृ । तस्मात्प्रसिद्धेर्भूताकाशो न तु ब्रह्मेति प्राप्तम् । एवं प्राप्त उच्यते–परमेवाकाशं ब्रह्म, कस्मात्, अर्थान्तरत्वादिव्यपदेशात् । नामरूपमात्रनिर्वाहकमिहाकाशमुच्यते ।

आनन्दगिरीय–न्यायनिर्णयः ।

बाध उक्तः । इदानीमात्मब्रह्मश्रुतिभ्यां लिङ्गानुगृहीताभ्यामाकाशश्रुतेर्बाधमाह–आकाश इति । छान्दोग्यवाक्यमुदाहरति–आकाश इति । आकाशब्रह्मश्रुतिभ्यां संशयमुक्त्वा पूर्वपक्षयति–तादित्यादिना । यथोपक्रमादर्थान्तरे प्रसिद्धोऽपि ज्योतिःशब्दः स्वार्थात्प्रच्यावितस्तथाऽऽकाशोपक्रमाद्ब्रह्मादिशब्दः स्वार्थात्प्रच्याव्यतामिति मत्वा हेतुमाह–आकाशेति । निर्विशेषे ब्रह्मण्युक्तश्रुतेरन्वयोक्तेः श्रुत्यादिसंगतयः । पूर्वपक्षे वाय्वादिमात्राधिष्ठानाकाशात्मकब्रह्मोपास्त्या क्रममुक्तिः । सिद्धान्ते सर्वाधिष्ठानब्रह्मधिया साक्षान्मुक्तिरिति फलभेदः । रूढिग्रहे तस्य नामरूपनिर्वहणमयुक्तमित्याशंक्य नामरूपशब्दाभ्यां प्रसिद्धदेवदत्तादिसंज्ञानां सितासितादिरूपाणां च स्वीकारात्तदाश्रयावकाशदानद्वारा भूताकाशेऽपि तन्निर्वहणं युक्तमित्याह–नामेति । "आकाशस्तल्लिङ्गात्" [ ब्र० सू० १–१–२२ ] इत्यनेन गतार्थत्वमाशंक्याऽऽह–स्रष्टृत्वादेश्चेति । तत्र हि सर्वजगदुत्पत्तेरेवकारसिद्धनिरपेक्षकारणत्वस्य प्रश्नप्रत्युक्तिसामानाधिकरण्यसामर्थ्यस्य च दृष्टेर्ब्रह्मपरत्वं नैवमिह तत्परत्वे किंचिदसाधारणं लिङ्गमित्यगतार्थतेत्यर्थः । तस्य च श्रुत्या प्रसिद्धवदुपादानात्प्रमितस्य बृहत्त्वाद्ब्रह्मत्वमाभूतसंप्लवस्थानादमृतत्वमाप्नोतीत्यात्मत्वं व्यापित्वात् । तस्मान्नामादिवद् भूताकाशोपास्त्यर्थं वाक्यमित्यर्थः । पूर्वपक्षमनूद्य सूत्रमवतार्य प्रतिज्ञां व्याकरोति–एवमिति । आकाशशब्दाद् भूताकाशो भाति कुतो ब्रह्मधीरित्याह–कस्मादिति । हेतुमादायार्थान्तरत्वव्यपदेशं विशदयति–अर्थान्तरत्वादीति । भूताकाशस्यापि नामरूपाभ्यामर्थान्तरत्वं देवदत्तादिशब्दस्य

[छां० ८।१४।१] इति हि नामरूपाभ्यामर्थान्तरभूतमाकाशं व्यपदिशति ॥ न च ब्रह्मणोऽन्यन्नामरूपाभ्यामर्थान्तरं सम्भवति । सर्वस्य विकारजातस्य नामरूपाभ्यामेव व्याकृतत्वात् ॥ नामरूपयोरपि निर्वहणं निरंकुशं न ब्रह्मणोऽन्यत्र सम्भवति ॥ "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" [छां० ६।३।२] इति ब्रह्मकर्तृत्वश्रवणात् ॥ ननु जीवस्यापि प्रत्यक्षं नामरूपविषयं निर्वोढृत्वमस्ति ॥ बाढमस्ति ॥ अभेदस्त्वत्र विवक्षितः नामरूपनिर्वहणाभिधानादेव च स्रष्टृत्वादि ब्रह्मलिङ्गमभिहितं भवति "तद्ब्रह्म तदमृतं स आत्मा" [छां० ८।१४] इति च ब्रह्मवादस्य लिङ्गानि ॥ "आकाशस्तल्लिङ्गात्" [व्या० सू० १।१।२२] इत्यस्यायं प्रपञ्चः ॥ ४१ ॥ इत्यर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १३ ॥

---

रत्नप्रभा ।

दिना ॥ नामरूपे शब्दार्थौ । तदन्तःपातिनस्तद्भिन्नत्वं तत्कर्तृत्वं चायुक्तमित्यर्थः । नामादिकर्तृत्वं न ब्रह्मलिंगं जीवस्यत्वादिति शङ्कते—नन्विति ॥ अनेन जीवेनेत्यत्र जीवस्य ब्रह्माभेदेन तत्कर्तृत्वमुच्यते साक्षादयोगादिति परिहरति—बाढमिति ॥ यच्चोक्तं स्पष्टं लिंगं नास्तीति, तत्राह—नामेति ॥ तर्हि पुनरुक्तिस्तत्राह—आकाशेति ॥ तस्यैव साधकोऽयं विचारः, अत्राकाशशब्दस्य ब्रह्मणि वृत्तिं सिद्धवत्कृत्य तत्र संशयादिप्रवृत्तेरुक्तत्वादिति न पौनरुक्त्यमिति भावः ॥ ४१ ॥ (१३)॥

भामती ।

भूताकाशं च विकारत्वेन नामरूपान्तःपाति सत् कथमात्मानमुद्वहेत् । न हि सुशिक्षितोऽपि विज्ञानी स्वेन स्कन्धेनात्मानं वोढुमुत्सहते । न च नामरूपश्रुतिरविशेषतः प्रवृत्ता भूताकाशवर्जं नामरूपान्तरे संकोचयितुं सति संभवे युज्यते । न च निर्वाहकत्वं निरंकुशमवगतं ब्रह्मलिङ्गं कथंचित्क्लेशेन परतन्त्रे नेतुमुचितम्'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि'इति च स्रष्टृत्वमतिस्फुटं ब्रह्मलिङ्गमत्र प्रतीयते । ब्रह्मरूपतया च जीवस्य व्याकर्तृत्वे ब्रह्मण एव व्याकर्तृत्वमुक्तम्।एवं च निर्वहितुरेवान्तरालत्तोपपत्तेरन्यो निर्व-

आनन्दगिरीय-न्यायनिर्णयः ।

नामत्वान्नीलपीतादे रूपत्वात्ताभ्यामन्यत्वस्य भूताकाशे सिद्धत्वादित्याशंक्याऽऽह—न चेति।यत्र नामरूपशब्दौ संभूयोक्तौ तत्र शब्दार्थावेव श्रुतिषु गृह्येते 'तन्नामरूपाभ्यामेव' इत्यादौ तथा दृष्टेः । न च शब्दार्थान्तर्भूतस्य भूताकाशस्य ततोऽर्थान्तरत्वमित्यर्थः । किंच भूताकाशमपि विकारतया नामरूपान्तर्भूतं कथमात्मानमुद्वहेन्न च तन्निर्वाहकत्वं निरंकुशं श्रुतं परतन्त्रभूताकाशे कथंचिन्नेयमित्याह—नामेति । अन्यत्र तन्निर्वहणस्य ब्रह्मकर्तृकत्वसिद्धेस्तदेवात्रापि प्रत्यभिज्ञातमित्याह—अनेनेति । नामरूपनिर्वाहकत्वमादिशब्दोक्तं न ब्रह्मसाधारणमिति शंकते—नन्विति । जीवस्य तन्निर्वाहकत्वेऽपि ब्रह्माभेदात्तस्य ब्रह्मसाधारणतेत्याह—बाढमिति । स्रष्टृत्वादिब्रह्मलिङ्गमिह नेत्युक्तं प्रत्याह—नामेति । आकाशशब्दस्य ब्रह्मार्थत्वे लिङ्गान्येव सन्ति भूताकाशार्थत्वे श्रुतिलिङ्गे स्तः । तथा च केवललिङ्गेभ्यस्तयोर्बलीयस्त्वाद्भूताकाशग्रहणमित्याशंक्यात्रापि ब्रह्मात्मश्रुती विद्येते इत्याह—तदिति । उपक्रमस्थाकाशश्रुतेः 'आकाशो वै नाम' इति प्रसिद्धलिङ्गाच्च नामरूपनिर्वहणतदर्थान्तरत्वामृतत्वलिङ्गानुगृहीते ब्रह्मात्मश्रुती बलवत्याविति भावः । "आकाशस्तल्लिङ्गात्" [ब्र० सू० १-१-२२] इत्यत्रोपक्रमोपसंहाराभ्यां प्रतिपाद्यतया तात्पर्यवदानन्यलिङ्गादाकाशस्य ब्रह्मत्वमुक्तमिहापि श्रुत्यन्तरसिद्धनामादिनिर्वाहकत्वसंवादेन तात्पर्यवल्लिङ्गादाकाशस्य ब्रह्मत्वमुच्यते तत्कथं पृथगारम्भ इत्याशंक्याऽऽह—आकाश इति । तत्र स्रष्टृत्वस्पाष्ट्यवदिह नेति विशेषोऽस्तीति भावः ॥ ४१ ॥ (१३) ॥ श्रुत्युपेतलिङ्गेन श्रुतेर्बाधमुक्त्वा लिङ्गेन लिङ्ग-

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥ ( १४ ) ॥

व्यपदेशादित्यनुवर्तते ॥ बृहदारण्यके षष्ठे प्रपाठके—"कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" [ बृ० ४ । ३ । ७ ] इत्युपक्रम्य भूयानात्मविषयः प्रपञ्चः कृतः ॥ तत्किं संसारिस्वरूपमात्रा-न्वाख्यानपरं वाक्यम्, उतासंसारिस्वरूपप्रतिपादनपरमिति संशयः ॥ किं तावत्प्राप्तम् ॥ संसारिस्वरूपमात्रविषयमेवेति ॥ कुतः ॥ उपक्रमोप-संहाराभ्याम्—उपक्रमे "योऽयं विज्ञानमयः प्राणेषु" [ बृ० ४ । ३ । ७ ] इति शारीरलिङ्गाद्, उपसंहारे च "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु" [ बृ० ४ । ४ । २२ ] इति तदपरित्यागान्मध्येऽपि बुद्धान्ताद्यवस्थोपन्यासेन तस्यैव प्रपञ्चनादिति ॥ एवं प्राप्ते ब्रूमः ॥

रत्नप्रभा ।

सुषुप्त्युत्क्रान्त्योर्भेदेन । अहंधीगम्येषु कतम आत्मेति जनकप्रश्ने याज्ञवल्क्य आह—योऽय-मिति ॥ विज्ञानं बुद्धिस्तन्मयस्तत्प्रायः । सप्तमी व्यतिरेकार्था । प्राणबुद्धिभ्यां भिन्न इत्यर्थः ॥ वृत्तेर-ज्ञानाच्च भेदमाह—अन्तर्ज्योतिरिति ॥ पुरुषः पूर्ण इत्यर्थः । उभयलिङ्गानां दर्शनात्संशयमाह—तत्किमिति ॥ पूर्वत्र नामरूपाभ्यां भेदोक्तेराकाशो ब्रह्मेत्युक्तम् । तदयुक्तम् । "प्राज्ञेनात्मना सम्परि-ष्वक्तः" [ बृ० ४ । ३ । २१ ] इत्यभिन्नेऽपि जीवात्मनि भेदोक्तिवदौपचारिकभेदोक्तिसम्भवादिति आक्षेपसंगतिः । पूर्वपक्षे कर्मकर्तृजीवस्तुतिः, सिद्धान्ते जीवानुवादेन ततः कल्पितभेदभिन्नस्य प्राज्ञस्य परमात्मनः स्वरूपैक्यप्रमितिरिति फलम् । बुद्धान्तः जाग्रदवस्था । आदिमध्यावसानेषु जीवोक्तेर्जीवस्ता-

भामती ।

हिताऽन्यच्चान्तरालमित्यर्थभेदकल्पनापि न युक्ता । तथा च ते नामरूपे यदन्तरेत्ययमर्थान्तरव्यपदेश उपपन्नो भवत्याकाशस्य । तस्मादर्थान्तरव्यपदेशात्, तथा 'तद्ब्रह्म तदमृतम्' इति व्यपदेशाद्ब्रह्मैवाकाशमिति सिद्धम् ॥ ४१ ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन । 'आदिमध्यावसानेषु संसारिप्रतिपादनात् । तत्परे ग्रन्थ-संदर्भे सर्वं तत्रैव योज्यते ॥' संसार्येव तावदात्माहंकारास्पदं प्राणादिपरीतः सर्वजनसिद्धः । तमेव च 'योऽयं विज्ञानमयः प्राणेषु' इत्यादिश्रुतिसंदर्भ आदिमध्यावसानेष्वामृशतीति तदनुवादपरो भवितुमर्हति ।

आनन्दगिरीय—न्यायनिर्णयः ।

स्यैव बाधमाह—सुषुप्तीति । साकांक्षत्वं वारयति—व्यपदेशादिति । षष्ठाध्यायवाक्यजातं विषयत्वेनोदा-हरति—बृहदिति । देहादीनामन्यतमो वा तदतिरिक्तो वाऽऽत्मेति जनकस्य प्रश्ने याज्ञवल्क्यस्योत्तरं योऽयमिति । विज्ञानं बुद्धिस्तन्मयस्तत्प्रायः । प्राणेषु हृदीति व्यतिरेकार्थे सप्तम्यौ । प्राणबुद्ध्यतिरिक्त इत्यर्थः । बुद्धिवृत्तेर्विविनक्ति—अन्तरिति । अज्ञानाद्भिनत्ति—ज्योतिरिति । पुरुषः पूर्णो योऽयमेवंभूतः स आत्मेत्यर्थः । तदेव वाक्यमधिकृत्योपक्रमस्थविज्ञानमयशब्दादुपसंहारस्थसर्वेशानादिशब्दाच्च संशयमाह—तदिति । अंगुष्ठमात्रश्रुतावुपक्रमोपसंहारौ न जीवार्थावत्र तथेत्यगतार्थत्वं मत्वा प्रश्नपूर्वकं पूर्वपक्षयति—किं तावदिति । नामरूपाभ्यां भेदवादादाकाशं ब्रह्मेत्युक्ते भेदवादो नैकान्तोऽसत्यपि भेदे 'प्राज्ञेना-ऽऽत्मना संपरिष्वक्तः' इति भेदोपचारादित्याशंक्यात्रापि मुख्यभेदसाधनादधिकरणसंगतिः । षष्ठाध्यायस्य निर्विशेषे ब्रह्मण्यन्वयोक्तेः श्रुत्यादिसंगतयः । पूर्वपक्षे जीवानुवादेन कर्तृस्तुतिः सिद्धान्ते तदनुवादेन तद्या-थार्थ्यधीरिति फलभेदः । जीवे महानित्याद्ययुक्तमित्याह—कुत इति । आदिमध्यावसानेषु जीवोक्तेस्तत्परे संदर्भे महानज इत्यादि तत्रैव कथंचिन्नेयमित्याह—उपक्रम इति । जीवानुवादेन कर्मापेक्षितकर्तृ-स्तुत्या तदधिकार सिद्धिरत्रेष्टेत्युपसंहर्तुमिति शब्दः । पूर्वपक्षमनुभाष्य सिद्धान्तयन्बहिरेव प्रतिज्ञा-माह—एवमिति । उपक्रमोपसंहारपरामर्शानां जीवार्थतया तत्परे संदर्भे कथमीश्वरोक्तिरित्याह—

परमेश्वरोपदेशपरमेवेदं वाक्यम् । न शरीरमात्रान्वाख्यानपरम्॥कस्मात्॥ सुषुप्तावुत्क्रान्तौ च शारीराद्भेदेन परमेश्वरस्य व्यपदेशात् । सुषुप्तौ तावद् "अयं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" [ बृ० ४ । ३ । २१ ] इति शारीराद्भेदेन परमेश्वरं व्यपदिशति ॥ तत्र पुरुषश्शारीरः स्यात् ॥ तस्य वेदितृत्वात् ॥ बाह्याभ्यन्तरवेदनप्रसङ्गे सति तत्प्रतिषेधसम्भवात् ॥ प्राज्ञः-परमेश्वरः सर्वज्ञत्वलक्षणया प्रज्ञया नित्यम-वियोगात् ॥ तथोत्क्रान्तावपि "अयं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याति" [ बृ० ४ । ३ । ३५ ] इति जीवाद्भेदेन परमेश्वरं व्यपदि-शति ॥ तत्रापि शारीरो जीवः स्यात् । शरीरस्वामित्वात् ॥ प्राज्ञस्तु स

रत्नप्रभा ।

वक्तमिदं वाक्यमिति प्राप्ते सिद्धान्तयति-**परमेश्वर इत्यादिना** ॥ वाक्यस्य जीवस्तावकत्वे जीवाद्भेदेन प्राज्ञस्याज्ञातस्योक्तिरसङ्गता स्यात् । अतो ज्ञाताज्ञातसन्निपाते ज्ञातानुवादेनाज्ञातं प्रतिपादनीयम् । अपूर्वे वाक्यतात्पर्यमिति न्यायादिति सिद्धान्ततात्पर्यम् । पुरुषः शरीरं प्राज्ञो जीव इति भ्रान्तिं वारयति-**तत्र पुरुष इत्यादिना** ॥ देहस्य वेदनाप्रसक्तेर्निषेधायोगात्पुरुषो जीव एव । प्राज्ञस्तु रूढया पर एवेत्यर्थः । **अन्वारूढः** अधिष्ठितः । **उत्सर्जन्** घोराञ्छब्दान्मुञ्चन् । बुद्धौ ध्यायन्त्यां ध्यायतीव

भामती ।

एवं च संसार्यात्मैव किंचिदपेक्ष्य महान्, संसारस्य चानादित्वेनानादित्वादज उच्यते, न तु तदतिरिक्तः कश्चिदत्र नित्यशुद्धबुद्धमुक्तस्वभावः प्रतिपाद्यः । यत्तु सुषुप्त्युत्क्रान्त्योः प्राज्ञेनात्मना संपरिष्वक्त इति भेदं मन्यसे, नासौ भेदः किंत्वयमात्मशब्दः स्वभाववचनः; तेन सुषुप्त्युत्क्रान्त्यवस्थायां विशेषविषयाभावा-त्संपिण्डितप्रज्ञेन प्राज्ञेनात्मना स्वभावेन परिष्वक्तो न किंचिद्वेदेत्यभेदेऽपि भेदवदुपचारेण योजनीयम् । यथाहुः-'प्राज्ञः संपिण्डितप्रज्ञः' इति । पत्यादयश्च शब्दाः संसारिण्येव कार्यकरणसंघातात्मकस्य जगतो जीवकर्मार्जिततया तद्भोग्यतया च योजनीयाः । तस्मात्संसार्येवानूद्यते न तु परमात्मा प्रतिपाद्यत इति प्राप्तम् । एवं प्राप्तेऽभिधीयते-सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशादित्यनुवर्तते । अयमभिसंधिः-किं संसारि-णोऽन्यः परमात्मा नास्ति, तस्मात्संसार्यात्मपरं 'योऽयं विज्ञानमयः प्राणेषु' इति वाक्यम्, आहोस्वि-दिह संसारिव्यतिरेकेण परमात्मनोऽसंकीर्तनात्संसारिणश्चादिमध्यावसानेष्ववमर्शनात्संसार्यात्मपरं, न ताव-त्संसार्यतिरिक्तस्य तस्याभावः । तत्प्रतिपादका हि शतश आगमाः 'ईक्षतेर्नाशब्दम्' 'गतिसामान्यात्' इत्यादिभिः सूत्रसंदर्भैरुपपादिताः । न चात्रापि संसार्यतिरिक्तपरमात्मसंकीर्तनाभावः, सुषुप्त्युत्क्रान्त्योस्त-त्संकीर्तनात् । न च प्राज्ञस्य परमात्मनो जीवाद्भेदेन संकीर्तनं सति संभवे 'राहोः शिरः' इतिवदौपचारिकं युक्तम् । न च प्राज्ञशब्दः प्रज्ञाप्रकर्षशालिनि निरूढवृत्तिः कथंचिदज्ञविषयो व्याख्यातुमुचितः । न च

आनन्दगिरीय-न्यायनिर्णयः ।

**कस्मादिति** । तत्र हेतुं सोपस्कारमवतारयति-**सुषुप्ताविति**।सौषुप्तं भेदवादमुदाहरति-**सुषुप्तौ तावदिति**। करशिरश्चरणादिमति शरीरे पुरुषशब्दात्कुतः शारीरात्परस्य भेदस्तत्राऽऽह-**तत्रेति** । तस्य वेदितृत्वेपि प्रकृते-वेदितृत्वं नापेक्ष्यं तदा बाह्यान्तरार्थधीनिषेधादित्याशंक्याऽऽह-**बाह्येति** । पुरुषस्य शारीरत्वेपि प्रकर्षे-णाज्ञ इति व्युत्पत्त्या प्राज्ञशब्देनापि तस्यैवोक्तेर्भेदोक्तेरौपाचारिकत्वान्न शारीरात्परस्य भेदोक्तिरित्याशंक्या-ऽऽह-**प्राज्ञ इति** । योगाद्रूढेर्बलीयस्त्वं मत्वा हेतुमाह-**सर्वेति** । औत्क्रान्तिकीमपि भेदोक्तिं दर्शयति-**तथेति** । अन्वारूढोऽधिष्ठित उत्सर्जन्नानावेदनातः शब्दं कुर्वन्निति यावत् । शारीरशब्दस्य शरीरसंब-न्धिमात्रत्वात्प्राज्ञस्य प्रज्ञातिशयत्वात्कुतो भेदधीरित्याशंक्य रूढिबलीयस्त्वन्यायेनाऽऽह-**तत्रेत्यादिना** ।

एव परमेश्वरः ॥ तस्मात्सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात्परमेश्वर एवात्र विवक्षित इति गम्यते ॥ यदुक्तमाद्यन्तमध्येषु शारीरलिङ्गात्तत्परत्वमस्य वाक्यस्येति ॥ अत्र ब्रूमः ॥ उपक्रमे तावद् "योऽयं विज्ञानमयः प्राणेषु" [ बृ० ४ । ३ । ७ ] इति न संसारिस्वरूपं विवक्षितम् ॥ किं तर्हि ॥ अनूद्य संसारिस्वरूपं परेण ब्रह्मणाऽस्यैकतां विवक्षति॥ यतः "ध्यायतीव लेलायतीव" [ बृ० ४ । ३ । ७ ] इत्येवमाद्युत्तरग्रन्थप्रवृत्तिस्संसारिधर्मनिराकरणपरा लक्ष्यते ॥ तथोपसंहारेऽपि यथोपक्रममेवोपसंहरति—"स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु" [ बृ० ४ । ४ । २२ ] इति ॥ योऽयं विज्ञानमयः प्राणेषु संसारी लक्ष्यते स वा एष महानज आत्मा परमेश्वर एवास्माभिः प्रतिपादित इत्यर्थः ॥ यस्तु मध्ये बुद्धान्ताद्यवस्थोपन्यासात्संसारिस्वरूपविवक्षां मन्यते, स प्राचीमपि दिशं प्रस्थापितः, प्रतीचीमपि दिशं प्रतिष्ठेत । यतो न बुद्धान्ताद्यवस्थोपन्यासेनावस्थावत्त्वं संसारित्वं वा विवक्षितम्॥ किं तर्हि अवस्थारहितत्वमसंसारित्वं च विवक्षति ॥ कथमेतदवगम्यते ॥ यद् "अत ऊर्ध्वं विमोक्षायैव

---

रत्नप्रभा ।

चलन्त्यां चलतीव **वस्तुतः** सर्वविक्रियाशून्य इत्युक्तेर्न संसारिणि तात्पर्यमित्याह—**यत इति** ॥ उपक्रमवदुपसंहारवाक्येऽप्यैक्यं विवक्षितमित्याह—**तथेति** ॥ व्याचष्टे—**योऽयमिति** ॥ अवस्थोपन्यासस्य त्वमर्थशुद्धिद्वारैक्यपरत्वान्न जीवलिङ्गत्वमित्याह—**यतो न बुद्धान्तेति** ॥ प्रश्नोत्तराभ्यामसंसारित्वं गम्यत इत्याह—**यदत ऊर्ध्वमिति** ॥ कामादिविवेकानन्तरमित्यर्थः ॥ **इति चेति** । **यद्** यस्माद्वक्ति, तस्मादवग-

भामती ।

प्रज्ञाप्रकर्षोऽसंकुचद्वृत्तिर्विदितसमस्तवेदितव्यात्सर्वविदोऽन्यत्र संभवति । न चेत्थंभूतो जीवात्मा । तस्मात्सुषुप्त्युत्क्रान्त्योर्भेदेन जीवात्प्राज्ञस्य परमात्मनो व्यपदेशात् 'योऽयं विज्ञानमयः' इत्यादिना जीवात्मानं लोकसिद्धमनूद्य तस्य परमात्मभावोऽनधिगतः प्रतिपाद्यते । न च जीवात्मानुवादमात्रपराण्येतानि वचांसि । अनधिगतार्थावबोधनपरं हि शाब्दं प्रमाणं, न त्वनुवादमात्रनिष्ठं भवितुमर्हति । अत एव च संसारिणः परमात्मभावविधानायादिमध्यावसानेष्वनुवाद्यतयाऽवमर्शो उपपद्यते । एवं च महत्त्वं चाजत्वं च सर्वगतस्य नित्यस्यात्मनः संभवान्नापेक्षिकं कल्पयिष्यते । **यस्तु मध्ये बुद्धान्ताद्यवस्थोपन्यासादिति** । नाने-

आनन्दगिरीय—न्यायनिर्णयः ।

भेदोक्तिफलमाह—**तस्मादिति** । पूर्वपक्षवीजमनुभाष्य दूषयति—**यदुक्तमिति** । उपक्रमस्य संसार्यर्थत्वं निरस्यति—**उपक्रम इति** । तस्य प्रश्नद्वारा विषयमाह—**किमिति** । अनुवादमात्रमेवात्रेष्टं किं न स्यादित्याशंक्याऽऽह—**यत इति** । बुद्धौ ध्यायन्त्यामात्मा ध्यायतीव चलन्त्यां चलतीव वस्तुतो न ध्यायति न चलतीत्यर्थः । उपसंहारानुसारेणोपक्रमस्यैकस्मिन्वाक्ये नेयत्वात्तस्य संसार्यर्थत्वादुपक्रमस्य तदर्थतेत्याशंक्याऽऽह—**तथेति** । तस्य परमार्थत्वं वाक्यार्थोक्त्या वक्ति—**योऽयमिति** । परामर्शस्य संसारिगामित्वमुक्तमनूद्य पूर्वापरविरोधेन प्रत्याह—**यस्त्विति** । बुद्धान्तो जागरितम् । संसारिस्वरूपबुद्धेर्वाक्यानानुगुणत्वे हेतुमाह—**यत इति** । अवस्थावत्त्वेन संसारित्वे दृष्टेऽपि तद्राहित्यमभिप्रेतमित्यत्र नियामकं पृच्छति—**कथमिति** । एकस्मिन्वाक्ये प्रसिद्धाप्रसिद्धयोर्लिङ्गेषु प्रसिद्धार्थानुवादेनाप्रसिद्धार्थ एव प्रतिपाद्यो वाक्यस्यापूर्वार्थत्वायेति न्यायेन जीवलिङ्गैस्तदनुवादेन तस्य ब्रह्मता वाक्येनोच्यतेऽन्यथा प्रश्नायोगादित्याह—**यदिति** । अतः कामादिविवेकानन्तरं विमोक्षाय तदौपमिकसाक्षात्कारायैव ब्रूहीति पुनःपुना राजा यस्मात्पृच्छति

ब्रूहि" [ बृ०४।३।१४-१५-१६-३३ ] इति पदेपदे पृच्छति ॥ यच्च-"यदत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः" [ बृ० ४ । ३ । १५-१६ ] इति पदेपदे प्रतिवक्ति ॥ "अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति" [ बृ० ४ । ३ । २२ ] इति च ॥ तस्मादसंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यम् ॥४२॥

## पत्यादिशब्देभ्यः ॥ ४३ ॥

इति श्रीवैयासिक्यां शारीरकमीमांसायां प्रथमाध्यायस्य तृतीयः पादस्समाप्तः ॥

इतश्चासंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यम् ॥ यदस्मिन्वाक्ये पत्यादिशब्दा असंसारिस्वरूपप्रतिपादनास्संसारिस्वभावप्रतिषेधनाश्च भवन्ति । तत्र "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः" [ बृ० ४ । ४।२२] इत्येवंजातीयका असंसारिस्वभावप्रतिपादनाः-"स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्" [ बृ० ४ । ४ । २२ ] इत्येवंजातीयकास्संसारिस्वभावप्रतिषेधनाः ॥ तस्मादसंसारी परमेश्वर

रत्नप्रभा ।

म्यत इति योजना । तेन अवस्थाधर्मेण अनन्वागतः अस्पष्टः भवति असङ्गत्वात्सुषुप्तावध्यात्मतत्त्वं पुण्यपापाभ्यामस्पृष्टं भवति । हि यस्मादात्मा सुषुप्तौ सर्वशोकातीतः, तस्माद्धृदयस्यैव सर्वशोका इति श्रुत्यर्थः ॥ ४२ ॥ वाक्यस्य ब्रह्मात्मैक्यपरत्वे हेत्वन्तरमाह-पत्यादीति ॥ सूत्रं व्याचष्टे-इतश्चेति ॥ वशी स्वतन्त्रः अपराधीन इति यावत् । ईशानः नियमनशक्तिमान् । शक्तेः कार्यमाधिपत्यमिति भेदः ।

भामती ।

नावस्थावत्त्वं विवक्ष्यते । अपि त्ववस्थानामुपजनापायधर्मकत्वेन तदतिरिक्तमवस्थारहितं परमात्मानं विवक्षति, उपरितनवाक्यसंदर्भालोचनादिति ॥ ४२ ॥ पत्यादिशब्देभ्यः । सर्वस्य वशी । वशः सामर्थ्यं सर्वस्य जगतः प्रभवत्ययम्, व्यूहावस्थानसमर्थ इति । अत एव सर्वस्येशानः, सामर्थ्येन ह्ययमुक्तेन सर्वस्येष्टे, तदिच्छानुविधानाज्जगतः । अत एव सर्वस्याधिपतिः सर्वस्य नियन्ता । अन्तर्यामीति यावत् । किंच स एवंभूतो हृद्यन्तर्ज्योतिः पुरुषो विज्ञानमयो न साधुना कर्मणा भूयानुत्कृष्टो भवतीत्येवमाद्याः श्रुतयोऽसंसारिणं परमात्मानमेव प्रतिपादयन्ति । तस्माज्जीवात्मानं मानान्तरसिद्धमनूद्य तस्य

आनन्दगिरीय-न्यायनिर्णयः ।

तस्मात्प्रश्नसामर्थ्यात्प्रतीचो ब्रह्मता प्रतिपाद्येत्यर्थः । न केवलं प्रश्नसामर्थ्यादेवमुत्तरसामर्थ्यादपीत्याह-यच्चेति । तेन जाग्रद्भोगादिनाऽनन्वागतोऽस्पृष्टो भवति । असङ्गत्वादिति प्रत्युक्तेरित्यर्थः । प्रतिवचनान्तरं दर्शयति-अनन्वागतमिति । आत्मतत्त्वं पुण्यपापाभ्यामनाघ्रातमिति यावत् । तदा सुप्तौ हृदयस्य बुद्धेः संबन्धिनः शोकान्कामादीनशेषानतिक्रान्तो भवतीत्याह-तीर्णो हीति । अनुवादमात्रस्य प्रश्नप्रत्युक्तिभ्यामयोगे फलितमाह-तस्मादिति ॥ ४२ ॥ वाक्यस्यासंसारिपरत्वे हेत्वन्तरमाह-पत्यादीति । सूत्रे हेत्वन्तरद्योतिचकाराभावात्तदविषयत्वमाशङ्क्य व्याचष्टे-इतश्चेति । तत्र हेतुभावं योजयति-यदिति । तत्रासंसारिविषयं शब्दजातमुदाहरति-सर्वस्येति । स्वाधीनं सर्वमपि नियन्तुं शक्तिरस्तीति वक्तुं द्वितीयं विशेषणम् । स्वाधीनं स्वनियम्यं च सर्वमधिष्ठाय पालयतीति वक्तुं तृतीयम् । संसारिस्वभावनिषेधकं शब्दजातमादत्ते-स नेति । श्रुतिलिङ्गसिद्धमुपसंहरति-तस्मादिति । निर्वि-

 

इहोक्त इत्यवगम्यते ॥ १ ॥ ३ ॥ ४३ ॥ इति सुषुप्त्युत्क्रान्त्यधिकरणम् ॥ १४ ॥

इति श्रीमत्पद्वाक्यप्रमाणपारावारीणपरमहंसपरिव्राजकाचार्यगोविन्द-भगवत्पादपूज्यशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमच्छारीरक-मीमांसाभाष्ये विद्यासाधननिर्णयो नाम प्रथमाध्यायस्य तृतीयः पादस्समाप्तः ॥ १ ॥ ३ ॥

---

रत्नप्रभा ।

तस्माच्छोधितत्वमर्थैक्ये षेष्ठाध्यायसमन्वय इति सिद्धम् ॥ १ ॥ ३ ॥ ४३ ॥ ( १४ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्यव्याख्यायां भाष्यरत्नप्रभायां प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥ १ ॥ ३ ॥

भामती ।

ब्रह्मभावप्रतिपादनपरो 'योऽयं विज्ञानमयः' इत्यादिवाक्यसंदर्भ इति सिद्धम् ॥ ४३ ॥ ( १४ ) ॥

इति श्रीमद्वाचस्पतिमिश्रविरचितशारीरकभगवत्पादभाष्यविभागे भामत्यां प्रथमस्याध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥

आनन्दगिरीय—न्यायनिर्णयः ।

शेषप्रचुराणां वाक्यानां सिद्धोऽन्वयो ब्रह्मणीति पादार्थमुपसंहरति—इत्यवगम्यत इति ॥ ४३ ॥ (१४) ॥

इति श्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि (ज्ञान) विरचिते शारीरकन्यायनिर्णये प्रथमाध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥

**॥ इति प्रथमाध्यायस्य विद्यासाधननिर्णयाख्यस्तृतीयः पादः ॥**

---

१ बृहदारण्यस्थेत्यादिः ।

# प्रथमाध्याये चतुर्थः पादः ४.

## आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥ ४ ॥ १ ॥ (१) ॥

ब्रह्मजिज्ञासां प्रतिज्ञाय ब्रह्मणो लक्षणमुक्तं "जन्माद्यस्य यतः" [ व्या० सू० १ । १ । २ ] इति ॥ तल्लक्षणं प्रधानस्यापि समानमित्याशंक्य तदशब्दत्वेन निराकृतम् "ईक्षतेर्नाशब्दम्" [ व्या० सू० १ । १ । ५ ] इति ॥ गतिसामान्यं च वेदान्तवाक्यानां ब्रह्मकारणवादं प्रति विद्यते न प्रधानकारणवादं प्रतीति प्रपञ्चितं गतेन ग्रन्थेन ॥ इदन्त्विदानीमवशिष्टमाशंक्यते ॥ यदुक्तं प्रधानस्याशब्दत्वम् ॥ तदसिद्धम् ॥ कासुचिच्छाखासु

रत्नप्रभा ।

ॐ ब्रह्मणे नमः । अव्यक्तेशमजं पञ्चजनाधारं च कारणम् । वेदितव्यं प्रियं वन्दे प्रकृतिं पुरुषं परम् ॥ १ ॥

**आनुमानिकम्०** । अस्मिन्पादेऽधिकरणत्रयस्येक्षत्यधिकरणेन सङ्गतिं वक्तुं वृत्तमनुवदति-**ब्रह्मेति** ॥ **तदशब्दत्वेन** प्रधानस्य वैदिकशब्दशून्यत्वेनेत्यर्थः ॥ ईक्षत्यधिकरणे गतिसामान्यमशब्दत्वञ्च प्रतिज्ञातम् । तत्र ब्रह्मणि वेदान्तानां गतिसामान्यं प्रपञ्चितम् । अधुना प्रधानस्याशब्दत्वमसिद्धमित्याशंक्य निरूप्यत इति **आक्षेपसंगतिः** । तेनाशब्दत्वनिरूपणेन ब्रह्मणि वेदान्तानां समन्वयो दृढीकृतो भवति **अध्यायसंगतिरपि**-अधिकरणत्रयस्य ज्ञेया । अत्राव्यक्तपदं विषयः । तत्, किं प्रधानपरं पूर्वोक्तशरीरपरं वेति स्मृतिप्रकरणाभ्यां संशये पूर्वमप्रसिद्धब्रह्मपरत्वं यथा षष्ठाध्यायस्य[१] दर्शितं, तद्वदव्यक्तपदमप्रसिद्धप्रधानपरमिति पूर्वपक्षयति-**आनुमानिकमपीति**॥ अपिशब्दाद्ब्रह्मांगीकारेणायमशब्दत्वाक्षेप इति सूचयति । तथा च ब्रह्मप्रधानयोर्विकल्पेन कारणत्वाद्ब्रह्मण्येव वेदान्तानां समन्वय इति नियमासिद्धिः फलं,

भामती ।

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च** । स्यादेतत् । ब्रह्मजिज्ञासां प्रतिज्ञाय ब्रह्मणो लक्षणमुक्तम्-'जन्माद्यस्य यतः' इति । तच्चेदं लक्षणं न प्रधानादौ गतं, येन व्यभिचारादलक्षणं स्यात्, किंतु ब्रह्मण्येवेति 'ईक्षतेर्नाशब्दम्' इति प्रतिपादितम् । गतिसामान्यं च वेदान्तवाक्यानां ब्रह्मकारणवादं प्रति विद्यते,न प्रधानकारणवादं प्रतीति प्रपञ्चितमधस्तनेन सूत्रसंदर्भेण । तत्किमवशिष्यते यदर्थमुत्तरः संदर्भ आरभ्यते । न च 'महतः परमव्यक्तम्' इत्यादीनां प्रधाने समन्वयेऽपि व्यभिचारः। न ह्येते प्रधानकारणत्वं जगत आहुः, अपि तु प्रधानसद्भावमात्रम् । न च तत्सद्भावमात्रेण 'जन्माद्यस्य यतः' इति ब्रह्मलक्षणस्य किंचिद्धीयते । तस्मादनर्थक उत्तरः संदर्भ इत्यत आह-**ब्रह्मजिज्ञासां प्रतिज्ञायेति** । न प्रधानसद्भावमात्रं प्रतिपादयन्ति 'महतः परमव्यक्तम्' 'अजामेकाम्' इत्यादयः,

आनन्दगिरीय-न्यायनिर्णयः ।

प्रसिद्धगोचरलिङ्गस्याप्रसिद्धगोचरलिङ्गेन बाध्यत्ववत्प्रकरणोपेतस्थानात्तत्तुल्यस्थानस्यैव बाधमाशंकाद्वारा कथयति-**आनुमानिकमिति** । वेदान्तानां ब्रह्मणि समन्वयार्थमध्यायारम्भादत्र तदभावादध्यायासंगतिमाशंक्य वृत्तं कीर्तयति-**ब्रह्मेति** । तदशब्दत्वेन प्रधानवादिवैदिकशब्दशून्यत्वेनेत्यर्थः । ब्रह्मणोऽपि तुल्यमशब्दत्वमित्याशंक्याऽऽह-**गतीति** । तर्हि समन्वयस्य सिद्धत्वात्कृतं पादेनेत्याशंक्याऽऽह-**इदमिति** । अवशिष्टमनाशंकितमनिराकृतं चेत्यर्थः । शङ्कामेव दर्शयति-**यदिति** । प्रतीत्या प्रधानार्पकत्वेऽपि वस्तुतो नेति वक्तुमाभासपदम् । ननु प्रधानस्य स्वरूपमेवार्प्यते न जगत्कारणत्वं तत्कुतोऽतिव्याप्तिः शंक्यते

१ बृहदारण्यकषष्ठाध्यायस्येत्यर्थः ।

प्रधानसमर्पणाभासानां शब्दानां श्रूयमाणत्वात् ॥ अतः प्रधानस्य कारणत्वं वेदसिद्धमेव महद्भिः परमर्षिभिः कपिलप्रभृतिभिः परिगृहीतमिति प्रसज्यते ॥ तद्यावत्तेषां शब्दानामन्यपरत्वं न प्रतिपाद्यते, तावत्सर्वज्ञं ब्रह्म जगतः कारणमिति प्रतिपादितमप्याकुली भवेत् ॥ अतस्तेषामन्यपरत्वं दर्शयितुं परः सन्दर्भः प्रवर्तते ॥ "आनुमानिकमपि"—अनुमाननिरूपितमपि प्रधानमेकेषां शाखिनां शब्दवदुपलभ्यते ॥ काठके हि पठ्यते—"महतः परमव्यक्तमव्यक्तात्पुरुषः परः" [ १ । ३ । ११ ] इति ॥ तत्र य एव यन्नामानो यत्क्रमाश्च महदव्यक्तपुरुषाः स्मृतिप्रसिद्धाः, त एवेह प्रत्यभिज्ञायन्ते ॥ तत्राव्यक्तमिति स्मृतिप्रसिद्धेश्शब्दादिहीनत्वाच्च, न व्यक्तमव्यक्तमिति व्युत्पत्तिसम्भवात्स्मृतिप्रसिद्धं प्रधानमभिधीयते ॥

रत्नप्रभा ।

सिद्धान्ते नियमसिद्धिरिति विवेकः । पदविचारत्वादधिकरणानाम्—एतत्पादसंगतिर्बोध्या ॥ स्मार्तक्रमरूढिभ्यामव्यक्तशब्दः प्रधानपरः । शब्दस्पर्शादिशून्यत्वेन योगसम्भवाच्चेत्याह—शब्दादीति ॥

भामती ।

किंतु जगत्कारणं प्रधानमिति । 'महतः परम्' इत्यत्र हि परशब्दोऽविप्रकृष्टपूर्वकालत्वमाह । तथा च कारणत्वम् । 'अजामेकाम्' इत्यादीनां तु कारणत्वाभिधानमतिस्फुटम् । एवं च लक्षणव्यभिचारादव्यभिचाराय युक्त उत्तरसंदर्भारम्भ इति । पूर्वपक्षयति—तत्र य एवेति । सांख्यप्रवादरूढिमाह—तत्राव्यक्तमिति । सांख्यस्मृतिप्रसिद्धेर्न केवलं रूढिः, अवयवप्रसिद्ध्याप्ययमेवार्थोऽवगम्यत इत्याह—न व्यक्तमिति । शान्तघोरमूढशब्दादिहीनत्वाच्चेति श्रुतिरुक्ता । स्मृतिश्च सांख्यीया । न्यायश्च—'भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ कारणमस्त्यव्यक्तम्' इति ।

आनन्दगिरीय—न्यायनिर्णयः ।

तत्राऽऽह—अत इति । 'महतः परमव्यक्तम्' इत्यत्राव्यक्तस्य प्रधानस्य कारणत्वं परशब्दाद्गम्यते स हि प्रकर्षवाची । प्रकर्षश्च महतो व्यक्तस्य तत्कारणत्वम् 'अजामेकाम्' इत्यादौ साक्षादेव प्रधानस्य कारणतासिद्धिः । कपिलादिस्मृतयश्चोक्तश्रुत्यनुसारिण्यस्तदर्थाः । तेन श्रुतिस्मृतिसिद्धा प्रधानकारणतेत्यतिव्याप्तिरित्यर्थः । तथाऽपि कारणत्वं तद्वादिवाक्योक्तेर्ब्रह्मणो युक्तं षोडशिग्रहणवत्कारणे विकल्पसंभवात्तत्राऽऽह—तदिति । क्रियायामिव वस्तुनि विकल्पायोगादिति भावः । सूत्रितं प्रधानाशब्दत्वं समन्वयदार्ढ्याय प्रपञ्चयितुं पादारम्भ इत्यस्यैव संगतिरित्युपसंहरति—अत इति । पूर्वं प्रधानाद्येव वेदान्तार्थ इत्युक्ते तन्निषेधेन सर्ववेदान्तेषु ब्रह्मधीरुक्ता तामुपेत्याधुना प्रधानाद्यपि कारणत्वेन समन्वयार्थो न चानेककारणवैयर्थ्यं कल्पभेदेन व्यवस्थानादित्याह—आनुमानिकमिति । अपिशब्दादेकशब्दाच्च ब्रह्माङ्गीकारेण पूर्वपक्षो विचारश्चायं काचित्क इति सूचितम् । अव्यक्तपदं प्रधानपरं शरीरपरं वेति स्मार्तक्रमश्रौतपारिशेष्याभ्यामुभयप्रत्यभिज्ञया संशये प्रसिद्धजीवोक्तिभङ्गेनाप्रसिद्धब्रह्मोक्तिवत्प्रसिद्धप्रधानोक्तिपरमेव काठकवाक्यमिति पूर्वपक्षयन्नुपलब्धिमुदाहरति—काठके हीति । अत्र प्रधानस्याशब्दत्वप्रतिपादनेन समन्वयदार्ढ्यादस्ति श्रुत्यादिसंगतिः । पूर्वपक्षे प्रधानस्यापि शब्दवत्त्वाद्ब्रह्मण्यन्वयानियतिः सिद्धान्ते तस्याशब्दत्वाद्ब्रह्मण्यन्वयनियतिरिति फलभेदः । कथमत्र प्रधानमव्यक्तपदादुक्तमित्याशंक्य प्रधाने स्थानं मानमाह—तत्रेति । स्मृतिः सांख्यस्मृतिः । श्रुतिः सप्तम्यर्थः । अव्यक्तश्रुतिरपि प्रधाने मानमित्याह—तत्रेति । सांख्यस्मृतिसिद्धप्रधानस्याव्यक्तशब्देनोक्तौ तदीयां रूढिं हेतू करोति—स्मृतीति । पारिभाषिकत्वादव्यक्तशब्दस्यानिर्णायकत्वमाशङ्क्योक्तम्—शब्दादीति । रूढियोगाभ्यामव्यक्तशब्दस्य प्रधानवाचित्वे फलितमाह—

**अतस्तस्य शब्दवत्त्वादशब्दत्वमनुपपन्नम् ॥ तदेव प्रधानं च जगतः कारणम् । श्रुतिस्मृतिन्यायप्रसिद्धिभ्य इति चेत् ॥ नैतदेवम् ॥ न ह्येतत्काठकवाक्यं स्मृतिप्रसिद्धयोर्महदव्यक्तयोरस्तित्वपरम् ॥ न ह्यत्र यादृशं स्मृतिप्रसिद्धं स्वतन्त्रं कारणं त्रिगुणं प्रधानं तादृशं प्रत्यभिज्ञायते ॥ शब्दमात्रं ह्यत्राव्यक्तमिति प्रत्यभिज्ञायते ॥ स च न व्यक्तमव्यक्तमिति यौगिकत्वादन्यस्मिन्नपि सूक्ष्मे दुर्लक्ष्ये च प्रयुज्यते ॥ न चायं कस्मिंश्चिद्रूढः ॥ या तु प्रधानवादिनां रूढिः, सा तेषामेव पारिभाषिकी सती न वेदार्थनिरूपणे कारणभावं प्रतिपद्यते ॥**

---

रत्नप्रभा ।

प्रधानस्य वैदिकशब्दवाच्यत्वे का क्षतिरित्यत आह-**तदेवेति** ॥ "अजामेकाम्" [ श्वेता० ४ । ९ ] इत्याद्या श्रुतिः, "हेतुः प्रकृतिरुच्यते" इत्याद्या स्मृतिः, यदल्पं तज्जडप्रकृतिकमिति न्यायः । ततो ब्रह्मैव कारणमिति मतक्षतिरिति भावः । सूत्रे नञर्थं वदन् सिद्धान्तयति-**नैतदिति** ॥ प्रधानं वैदिकं नेत्यत्र तात्पर्याभावं हेतुमाह—**न हीति** ॥ ननु प्रधानस्यात्र प्रत्यभिज्ञानाद्वैदिकत्वमित्यत आह-**न ह्यत्रेति** ॥ **ननु** शब्दप्रत्यभिज्ञायामर्थोऽपि प्रत्यभिज्ञायते इत्याशंक्य यौगिकाच्छब्दादसति नियामके नार्थविशेषधीरित्याह-**स चेति** ॥ रूढया तद्धीरित्याशंक्य रूढिः किं लौकिकी स्मार्ता वा, नाद्या इत्याह—**न चेति** ॥ द्वितीयं प्रत्याह-**या त्विति** ॥ पुरुषसंकेतो नानादिवेदार्थनिर्णयहेतुः । पुंमतेर्विचित्रत्वादित्यर्थः । **यत्तु**

भामती ।

रूपशब्दाद्यात्मकत्वेनाव्यक्तत्वानुपपत्तेः । तस्मात्प्रधानमेवाव्यक्तमुच्यत इति प्राप्ते, उच्यते-**नैतदेवम् । न ह्येतत्काठकं वाक्यमिति** । लौकिकी हि प्रसिद्धा रूढिर्वेदार्थनिर्णये निमित्तं, तदुपायत्वात् । यथाहुः-'य एव लौकिकाः शब्दास्त एव वैदिकास्त एव चैषामर्थाः' इति । न तु परीक्षकाणां पारिभाषिकी, पौरुषेयी हि सा न वेदार्थनिर्णयनिबन्धनसिद्धौषधादिप्रसिद्धिवत् । तस्माद्रूढितस्तावन्न प्रधानं प्रतीयते । योगस्त्वन्यत्रापि तुल्यः । तदेवमव्यक्तश्रुतावन्यथासिद्धायां प्रकरणपरिशेषाभ्यां शरीरगोचरोऽयमव्यक्तशब्दः । यथा चास्य तद्गोचरत्वमुपपद्यते तथाग्रे दर्शयिष्यति । तेषु शरीरादिषु मध्ये विषयांस्तद्गोचरान् विद्धि । यथाश्वोऽध्वानमालम्ब्य चलत्येवमिन्द्रियहयाः स्वगोचरमालम्ब्येति । आत्मा न च 'महतः परमव्यक्तम्' इति प्रकरणपरिशेषाभ्यामव्यक्तपदं शरीरगोचरम् । शरीरस्य शान्तघोरमूढ-

आनन्दगिरीय-न्यायनिर्णयः ।

**तस्येति** । तथाऽपि कारणत्वं तस्याशब्दमित्याशंक्याऽऽह-**तदिति** । श्रुतिः 'अजामेकाम्' इत्याद्या । स्मृतिः सांख्यीया । "विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान्" इत्याद्या च । 'भेदानां परिमाणात्' इत्यादिन्या ( र्न्या ) यः । न च प्रकरणपारिशेष्याभ्यां शरीरमव्यक्तं तस्य स्पष्टत्वेन तच्छब्दानर्हत्वादतो जगत्कारणस्य प्रधानस्य शब्दवत्त्वान्न गतिसामान्यमित्यर्थः । स्थानादिभिरुक्तं प्रत्याह-**नैतदिति** । तत्राऽऽदौ श्रुतिं निराह-**न हीति** । कुतो न तदस्तित्वपरं स्मार्तप्रधानस्यैवात्र प्रत्यभिज्ञानान्नेत्याह-**न हीति** । यादृशमित्यस्य व्याख्यानं-**स्वतन्त्रमित्यादि** । सांख्यस्मृतिसिद्धाव्यक्तशब्दस्य श्रुतावपि प्रयोगात्तेन प्रत्यभिज्ञातं प्रधानमित्युक्तमाशंक्याऽऽह-**शब्देति** । शब्दस्यार्थव्याप्तेरर्थस्यापि प्रत्यभिज्ञानमाशंक्य यौगिकत्वात्तदेकार्थासिद्धिरित्याह-**स चेति** । रूढ्या तन्मात्रसिद्धौ कुतो योगादुर्बलादर्थान्तरं शंक्यते तत्राऽऽह-**न चेति** । परस्य प्रधाने रूढिरव्यक्तशब्दस्यास्तीत्याशंक्याऽऽह-**या त्विति** । न हि परीक्षकाणां पारिभाषिकी प्रसिद्धिर्वेदार्थनिर्णयनिमित्तं परीक्षकविप्रतिपत्त्या वेदार्थेऽपि तत्प्रसङ्गाल्लौकिकी प्रसिद्धी

न च क्रममात्रसामान्यात्समानार्थप्रतिपत्तिर्भवत्यसति तद्रूपप्रत्यभिज्ञाने ॥ न ह्यश्वस्थाने गां पश्यन्नश्वोऽयमित्यमूढोऽध्यवस्यति ॥ प्रकरणनिरूपणायां चात्र न परपरिकल्पितं प्रधानं प्रतीयते । "शरीररूपकविन्यस्तगृहीतेः" शरीरं ह्यत्र रथरूपकविन्यस्तमव्यक्तशब्देन परिगृह्यते ॥ कुतः ॥ प्रकरणात्, परिशेषाच्च–तथा ह्यनन्तरातीतो ग्रन्थ आत्मशरीरादीनां रथिरथादिरूपककॢप्तिं दर्शयति–"आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ इन्द्रियाणि

---

रत्नप्रभा ।

स्मार्तक्रमप्रत्यभिज्ञया क्रमिकार्थः स्मार्त एवेति, तत्राह–**न च क्रमेति** ॥ स्थानात्तद्रूपप्रत्यभिज्ञानशङ्कायामसतीत्यनन्वयान्नञो व्यत्यासेनातद्रूपस्य तद्रूपविरुद्धस्य प्रत्यभिज्ञाने सतीत्यर्थः । पूर्वज्ञानतत्कार्यस्य स्थाने तद्विरुद्धार्थज्ञाने सति तस्य धीर्नास्तीत्यत्र दृष्टान्तमाह–**न हीति** ॥ प्रकृते नास्ति विरुद्धज्ञानमित्याशंक्य प्रकरणाच्छरीरज्ञानमस्तीत्याह–**प्रकरणेति** ॥ शरीरमेव रूपकेण रथसादृश्येन विन्यस्तं–**शरीररूपकविन्यस्तम्**–तस्य पूर्ववाक्ये आत्मबुद्ध्योर्मध्यस्थानपतितस्यात्रापि मध्यस्थेनाव्यक्तशब्देन ग्रहणान्न प्रधानस्य वैदिकत्वमिति **सूत्रार्थः** । स्मार्तक्रमः किमिति त्यक्तव्य इत्याशंक्य श्रौतक्रमस्य प्रकरणाद्यनुग्रहेण बलवत्त्वादित्याह–**कुत इत्यादिना** ॥ तदुभयं विवृणोति–**तथाहीति** ॥ **रूपककॢप्तिः** सादृश्यकल्पना । प्रग्रहः अश्वरशना । यदा बुद्धिसारथिर्विवेकी, तदा मनसेन्द्रियहयान् विषमविषयमार्गादाकर्षति । यद्यविवेकी, तदा मनोरशनाबद्धांस्तान्प्रवर्तयतीति मनसः

भामती.।

भोक्तेत्याहुर्मनीषिणः । कथम्, इन्द्रियमनोयुक्तं योगो यथा भवति । इन्द्रियार्थमनःसंनिकर्षेण ह्यात्मा गन्धादीनां भोक्ता । प्रधानस्याकांक्षातो वचनं प्रकरणमिति गन्तव्यं विष्णोः परमं पदं प्रधानमिति

आनन्दगिरीय–न्यायनिर्णयः ।

रूढिस्तथा 'य एव च लौकिकाः शब्दास्त एव वैदिकास्त एव चैषामर्थाः' इति न्यायादित्यर्थः । श्रुतिं दूषयित्वा स्थानं दूषयति–**न चेति** । मात्रचोऽर्थं स्फुटयति–**असतीति** । स्थानस्यापि नास्ति तद्रूपप्रत्यभिज्ञापेक्षा स्वत एव प्रमाणत्वेन निश्चायकत्वादित्याशंक्य तद्रूपविपरीतप्रत्यभिज्ञासत्त्वमत्रेष्टमिति मत्वा विपरीतरूपज्ञाने स्थानादर्थासिद्धौ दृष्टान्तमाह–**न हीति** । कथं तर्हीह विपरीतरूपप्रत्यभिज्ञेत्याशंक्य सूत्रभागमवतार्य विभजते–**प्रकरणेति** । "आत्मानं रथिनं विद्धि" इत्यस्मिन्वाक्ये बुद्ध्यात्मनोर्मध्ये शरीरस्य श्रुतत्वात्तदेवात्रापि महच्छब्दितबुद्धिपुरुषमध्यस्थमव्यक्तशब्देन गृह्यते । श्रौतक्रमस्य स्मार्तक्रमाद्बलीयस्त्वादित्यर्थः । उभयोरपि स्थानत्वात्कुतः श्रौतं स्थानमास्थाय शरीरमेव ग्राह्यमित्याह–**कुत इति** । प्रकरणाद्यनुगृहीतत्वेन श्रौतक्रमस्य प्राबल्यादित्याह–**प्रकरणादिति** । तदुभयं वक्तुमुपक्रमते–**तथाहीति** । तत्र प्रकरणं विविच्य दर्शयति–**अतीतेति** । रूपककॢप्तिः सादृश्यकल्पना । आत्मनो भोक्तृ रथित्वं शरीराख्यरथस्वामित्वम् । तत्र हि भोक्ता प्रधानं स्थूलं शरीरं भोगायतनत्वेन गुणतया रथवदवधेयमित्याह–**आत्मानमिति** । विवेकाविवेकप्रधानवृत्तिभ्यां बुद्धिरेव शरीरद्वारा सुखदुःखे भोक्तारमुपनयतीति मत्वाऽऽह–**बुद्धिमिति** । मनसाऽश्वरशनास्थानीयेन विवेकिना विषयेभ्यः श्रोत्रादीनि निगृह्यन्ते तेनाविवेकिना तेषु प्रवर्त्यन्ते तेन मनसो युक्तं प्रग्रहत्वमित्याह–**मन इति** । असंयतानीन्द्रियाणि पुरुषं संसारानर्थं संयतानि मुक्तिद्वारं प्रापयन्तीत्याह–**इन्द्रियाणीति** । यथाऽश्वोऽश्वानमालक्ष्य चरत्येवमिन्द्रियहयाः स्वार्थ-

हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" [ कठ० ३ । ४ ] इति । तैश्चेन्द्रियादिभिरसंयतैस्संसारमधिगच्छति ॥ संयतैस्तु "अध्वनः पारं" [ कठ० ३ । ९ ] "तद्विष्णोः परमं पदम्" [ कठ० ३ । ९ ] "आप्नोति" [ कठ० ३ । ९ ] इति दर्शयित्वा-किं तदध्वनः पारं विष्णोः परमं पदमित्यस्यामाकांक्षायां तेभ्य एव प्रकृतेभ्य इन्द्रियादिभ्यः परत्वेन परमात्मानमध्वनः पारं तद्विष्णोः परमं पदं "दर्शयति"-"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ १० ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" [ कठ० ३ । ११ ] इति ॥ तत्र य एवेन्द्रियादयः पूर्वस्यां रथरूपककल्पनायामश्वादिभावेन प्रकृताः, त एवेह परिगृह्यन्ते ॥ प्रकृतहानाप्रकृतप्रक्रियापरिहाराय ॥ तत्रेन्द्रियमनोबुद्धयस्तावत्पूर्वत्रेह च समानशब्दा एव ॥ अर्थास्तु ये शब्दादयो विषया इन्द्रियहयगोचरत्वेन निर्दिष्टाः,

---

रत्नप्रभा ।

प्रग्रहत्वं युक्तम् । तेषु हयेषु । गोचरान् मार्गान् । ननु स्वतश्चिदात्मनो भोगसम्भवात् किं रथादिनेत्यत आह-आत्मेति ॥ आत्मा देहः । देहादिसङ्गकल्पनया भोक्तृत्वम् । न स्वतः । असङ्गत्वादित्यर्थः । अधुना रथादिभिर्गन्तव्यं वदन्नाकांक्षापूर्वकमुत्तरवाक्यमाह-तैश्चेत्यादिना ॥ शरीरस्य प्रकृतत्वेऽप्यव्यक्तपदेन प्रधानं गृह्यतामित्यत आह-तत्र य एवेति ॥ एवं प्रकरणं शोधयित्वा शरीरस्य परिशेषतामानयति-तत्रेन्द्रियेत्यादिना ॥ अर्थानां पूर्वमनुक्तिशंकां वारयन्परत्वमुपपादयति-अर्था इति ॥ गृह्णन्ति पुरुषपशुं

भामती ।

तदाकांक्षामवतारयति-तैश्चेन्द्रियादिभिरसंयतैरिति । असंयमाभिधानं व्यतिरेकमुखेन संयमावदातीकरणम् । परशब्दः श्रेष्ठवचनः । नन्वान्तरत्वेन यदि श्रेष्ठत्वं तदेन्द्रियाणामेव बाह्येभ्यो गन्धादिभ्यः श्रेष्ठत्वं स्यादित्यत आह-अर्था ये शब्दादय इति । नान्तरत्वेन श्रेष्ठत्वमपि तु प्रधानतया, तच्च विवक्षाधीनं, ग्रहेभ्यश्चेन्द्रियेभ्योऽतिग्रहतयार्थानां प्राधान्यं श्रुत्या विवक्षितमितीन्द्रियेभ्योऽर्थानां प्राधान्यात्परत्वं भवति । घ्राणजिह्वावाक्चक्षुःश्रोत्रमनोहस्तत्वचो हि इन्द्रियाणि श्रुत्याष्टौ ग्रहा उक्ताः । गृह्णन्ति वशीकुर्वन्ति खल्वेतानि पुरुषपशुमिति । न चैतानि स्वरूपतो वशीकर्तुमीशते, यावदस्मै पुरुषपशवे गन्धरसनामरूपशब्दकामकर्मस्पर्शान्नोपहरन्ति । अत एव गन्धादयोऽष्टावतिग्रहाः, तदुपहारेण ग्रहाणां ग्रह-

आनन्दगिरीय-न्यायनिर्णयः ।

मुपलभ्य चरन्तीत्याह-विषयानिति । शरीरादिषु मध्ये शब्दादीन्विषयानिन्द्रियहयगोचरानाहुरिति योजना । ननु मार्गे रथिनो रथाद्यपेक्षा न भोगे चिद्रूपतया स्वभावेनैव तद्योगादतो देहादीनां रथादिकल्पनावैषम्यं तत्राऽऽह-आत्मेति । आत्मा भोक्तेत्याहुरिति संबन्धः । तस्यासङ्गस्यार्थेन्द्रियासंनिकर्षे भोगायोगादिन्द्रियमनोयोगो यथा भवतीति क्रियाविशेषणेन तस्य भोक्तृत्वमुपपादयति-इन्द्रियेति । यद्वाऽऽत्मा देहो देहेन्द्रियादिषु युक्तमात्मानं भोक्तेत्याहुरिति योजना प्राकरणिकसंबन्धस्याऽऽकांक्षाधीनत्वात्पूर्ववाक्यस्थदेहस्याव्यक्तशब्दाकांक्षां वक्तुं रथादिरूपककल्पनाफलं वदन्परमपदस्य प्रकरणिनो मुख्यस्याऽऽकांक्षामवतारयति-तैश्चेति । परमपदस्य स्वरूपे परत्वे चाऽऽकांक्षामाह-किमिति । आकांक्षाद्वयशान्तयेऽनन्तरं ग्रन्थमादत्ते-तेभ्य इति । पूर्ववाक्ये शरीरस्य प्रकृतत्वेऽपि प्रधानमेवात्राव्यक्तमित्याशंक्याऽऽह-तत्रेति । प्रकरणं प्रदर्श्य परिशेषं दर्शयितुमारभते-तत्रेति । पूर्वत्रानुक्तानामर्थानामिहोक्तिवत्प्रधानस्यापि स्यादित्याशंक्य तेषां विषयशब्देनोक्तेर्नैवमित्याह-अर्था इति । अर्थशब्देन विषयोक्तिर्युक्ता विषयाणा-

**तेषां चेन्द्रियेभ्यः परत्वम्, इन्द्रियाणां च ग्रहत्वं, विषयाणामतिग्रहत्वमिति श्रुतिप्रसिद्धेः। विषयेभ्यश्च मनसः परत्वम् । मनोमूलत्वाद्विषयेन्द्रियव्यवहारस्य। मनसस्तु परा बुद्धिः। बुद्धिं ह्यारुह्य भोग्यजातं भोक्तारमुपसर्पति। बुद्धेरात्मा महान्परः । यस्स "आत्मानं रथिनं विद्धि" [ कठ० ३ । ३ ] इति रथित्वेनोपक्षिप्तः ॥ कुतः ॥ आत्मशब्दाद्भोक्तुश्च भोगोपकरणात्परत्वोपपत्तेः। महत्त्वं चास्य स्वामित्वादुपपन्नम् ॥ अथ वा— "मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः ।**

रत्नप्रभा ।

बध्नन्तीति ग्रहा इन्द्रियाणि । तेषां ग्रहत्वं विषयाधीनम् । असति विषये तेषामकिञ्चित्करत्वात् । ततो ग्रहेभ्यः श्रेष्ठाः अतिग्रहाः । "विषयाः" इति बृहदारण्यके श्रवणात् । परत्वं श्रैष्ठ्याभिप्रायम् । न त्वान्तरत्वेनेति भावः। सविकल्पकं ज्ञानं **मनः**। निर्विकल्पकं निश्चयात्मिका **बुद्धिः** । आत्मशब्दात्स एव बुद्धेः परः । प्रत्यभिज्ञायत इति शेषः। हिरण्यगर्भाभेदेन ब्रह्मादिपदवेद्या समष्टिबुद्धिः **महानि**त्याह—**अथ वेति** ॥ ( १ ) मननशक्तिः, ( २ ) व्यापिनी, ( ३ ) भाविनिश्चयः, ( ४ ) ब्रह्मा आत्मा, ( ५ ) भोग्यवर्गाश्रयः, ( ६ ) तात्कालिकनिश्चयः, ( ७ ) कीर्तिशक्तिः, ( ८ ) नियमनशक्तिः,

भामती ।

त्वोपपत्तेः । तदिदमुक्तम्—**इन्द्रियाणां ग्रहत्वं विषयाणामतिग्रहत्वमिति श्रुतिप्रसिद्धेरिति** । ग्रहत्वेनेन्द्रियैः साम्येऽपि मनसः स्वगतेन विशेषेणार्थेभ्यः परत्वमाह—**विषयेभ्यश्च मनसः परत्वमिति** । कस्मात्पुमान् रथित्वेनोपक्षिप्तो गृह्यत इत्यत आह—**आत्मशब्दादिति** । तत्प्रत्यभिज्ञानादित्यर्थः । श्रेष्ठत्वे हेतुमाह—**भोक्तुश्चेति** । तदनेन जीवात्मा स्वामितया महानुक्तः । अथ वा श्रुतिस्मृतिभ्यां हैरण्यगर्भी बुद्धिरात्मशब्देनोच्यत इत्याह—**अथ वेति पूरिति** । भोग्यजातस्य बुद्धिरधिकरणमिति बुद्धिः पूः तदेवं सर्वासां बुद्धीनां प्रथमजहिरण्यगर्भबुद्ध्येकनीडतया हिरण्यगर्भबुद्धेर्महत्त्वं चापनादा ( चोपादाना ) त्मत्वं च । अत एव बुद्धिमात्रात्पृथक्करणमुपपन्नम् । नन्वेतस्मिन्पक्षे हिरण्यगर्भबुद्धेरात्मत्वान्न रथिन आत्मनो

आनन्दगिरीय—न्यायनिर्णयः ।

मिन्द्रियेभ्योऽन्तरङ्गेभ्यो बाह्यतया परत्वायोगादित्याशंक्याऽऽह—**तेषां चेति** । आन्तरत्वेन श्रेष्ठत्वाभावेऽपि तेषामतिग्रहतया ग्रहरूपेन्द्रियापेक्षया प्राधान्यस्य श्रुत्युक्तत्वात्परत्वम् 'अष्टौ ग्रहा अष्टावतिग्रहाः' इतिश्रुत्या घ्राणजिह्वावाक्चक्षुःश्रोत्रमनोहस्तत्वगिन्द्रियेभ्यो ग्रहेभ्यो गन्धरसनामरूपशब्दकामकर्मस्पर्शविषया अतिग्रहा उक्तास्तत्र गृह्णन्ति वशीकुर्वन्ति पुरुषमिति ग्रहा इन्द्रियाणि तेषामपि ग्राहकत्वं विषयाधीनमित्यतिग्रहा विषयास्तेनातिग्रहतया तेषां प्राधान्यमित्यर्थः। तर्हि कथमर्थेभ्यो मनसः परत्वं तस्यापि ग्रहत्वेन घ्राणादिसाम्यादित्याशंक्य स्वगतविशेषणार्थेभ्यस्तस्य परत्वमाह—**विषयेभ्यश्चेति** । तथाऽपि कथं बुद्धेर्मनसः सकाशात्परत्वं तयोर्भोक्तारं प्रत्यविशेषादित्याशंक्याऽऽह—**मनसस्त्विति** । निश्चयद्वारा विषया भोक्तुरुपकुर्वन्ति निश्चयश्च बुद्धिरिति संशयात्मकमनसो बुद्धिप्राधान्यमित्यर्थः । बुद्ध्युपहितस्याऽऽत्मनस्ततो न परत्वं महत्त्वं चेत्याशंक्य यो रथित्वेन पूर्वत्रोक्तः सोऽत्र गृह्यत इत्याह—**बुद्धेरिति** । तत्प्रत्यभिज्ञानं तत्र हेतूकुर्वंस्तद्धेतुमाह—**आत्मेति** । यत्तु कथमस्य परत्वमिति तत्राऽऽह—**भोक्तुश्चेति** । यत्पुनर्न तस्य महत्त्वमिति तत्राऽऽह—**महत्त्वं चेति** । तर्हि महतः परमव्यक्तमिति न वक्तव्यं किं त्वात्मनः परमिति महच्छब्दस्याऽऽत्मवाचित्वादित्याशंक्याऽऽह—**अथ वेति** । संकल्पविकल्परूपमननशक्त्या हैरण्यगर्भी बुद्धिर्मनस्तस्या व्यष्टिमनःसु समष्टितया व्याप्तिमाह—**महानिति**।संकल्पादिशक्तितया तर्हि संदेहात्मत्वं तत्राऽऽह—**मतिरिति**। महत्त्वमुपपादयति—**ब्रह्मेति** । भोग्यजाताधारत्वमाह—**पूरिति** । निश्चयात्मत्वमाह—**बुद्धिरिति** । कीर्तिशक्तिमत्त्वमाह—**ख्यातिरिति** । नियमनशक्तिमत्त्वमाह—**ईश्वर इति** । लोके यत्प्रकृष्टं ज्ञानं ततोऽनतिरेकमाह—

प्रज्ञा संविच्चितिश्चैव स्मृतिश्च परिपठ्यते" [म०भा०१३।१०।११ ] इति स्मृतेः "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" [श्वेता०६।१८] इति च श्रुतेः ॥ या प्रथमजस्य हिरण्यगर्भस्य बुद्धिः, सा सर्वासां बुद्धीनां परमा प्रतिष्ठा सेह-महानात्मेत्युच्यते ॥ सा च पूर्वत्र बुद्धिग्रहणेनैव गृहीता सती हिरुगिहोपदिश्यते ॥ तस्या अपि अस्मदीयाभ्यो बुद्धिभ्यः परत्वोपपत्तेः ॥ एतस्मिँस्तु पक्षे परमात्मविषयेणैव परेण पुरुषग्रहणेन रथिन आत्मनो ग्रहणं द्रष्टव्यम् ॥ परमार्थतस्तु परमात्मविज्ञानात्मनोर्भेदाभावात् ॥ तदेवं शरीरमेवैकं परिशिष्यते ॥ तेषु इतराणीन्द्रियादीनि प्रकृतान्येव परमपददिदर्शयिषया समनुक्रामन्परिशिष्यमाणेनेहान्त्येनाव्यक्तशब्देन परिशिष्यमाणं प्रकृतं शरीरं "दर्शयति" इति गम्यते ॥ शरीरेन्द्रियमनोबुद्धिविषयवेदनासंयुक्तस्य ह्यविद्यावतो भोक्तुः शरीरादीनां रथादिरूपकल्पनया संसारमोक्षगतिनिरूपणेन प्रत्यगात्मब्रह्मावगतिरिह

रत्नप्रभा ।

( ९ ) त्रैकालनिश्चयः, (१०) संविद्-अभिव्यञ्जिका, (११) चिद्-अध्यस्ता, (१२) अतीतसर्वार्थग्राहिणी, समष्टिबुद्धिरित्यर्थः ॥ हिरण्यगर्भस्येयं बुद्धिरस्तीत्यत्र श्रुतिमाह-य इति ॥ नन्वप्रकृता सा कथमुच्यते । तदुक्तौ च प्रधानेन किमपराद्धमित्यत आह-सा चेति ॥ हिरुक् पृथक् । पूर्वं व्यष्टिबुद्ध्यभेदेनोक्ता, अत्र ततो भेदेन परत्वमुच्यत इत्यर्थः। तर्हि रथरथिनौ द्वौ परिशिष्टौ स्यातां,नेत्याह-एतस्मिंस्त्विति॥ अतो रथ एव परिशिष्ट इत्याह-तदेवमिति ॥ तेषु पूर्वोक्तेषु षट्पदार्थेष्वित्यर्थः । परिशेषस्य फलमाह-इतराणीति ॥ वेदोऽयमिति शेषः । दर्शयति चेति सूत्रभागो व्याख्यातः । किञ्च ब्रह्मात्मैकत्वपरे ग्रन्थे भेदवादिनां प्रधानस्यावकाशो नास्तीत्याह-शरीरेत्यादिना ॥ भोगो वेदना । काठकग्रन्थस्यैक्य-

भामती ।

भोक्तुरत्रोपादानमिति न रथमात्रं परिशिष्यतेऽपि तु रथवानपीत्यत आह-एतस्मिंस्तु पक्ष इति । यथा हि समारोपितं प्रतिबिम्बं बिम्बान्न वस्तुतो भिद्यते, तथा न परमात्मनो विज्ञानात्मा वस्तुतो भिद्यत इति परमात्मैव रथवानिहोपात्तस्तेन रथमात्रं परिशिष्टमिति । अथ रथादिरूपककल्पनायाः शरीरादिषु किं प्रयोजनमित्यत आह-शरीरेन्द्रियमनोबुद्धिविषयवेदनासंयुक्तस्य हीति । वेदना सुखाद्यनुभवः । प्रत्यर्थमञ्चतीति प्रत्यगात्मेह जीवोऽभिमतस्तस्य ब्रह्मावगतिः । न च जीवस्य ब्रह्मत्वं मानान्तरसिद्धं,

आनन्दगिरीय-न्यायनिर्णयः ।

प्रज्ञेति । तत्फलमपि ततो नार्थान्तरविषयमित्याह-संविदिति । चित्प्रधानत्वमाह-चितिरिति । ज्ञातसर्वार्थानुसंधानशक्तिमाह-स्मृतिश्चेति । सर्वत्र विद्वत्प्रसिद्धिमनुकूलयति-परिपठ्यत इति । श्रुतिरपि हिरण्यगर्भबुद्धौ वेदाविर्भावमीश्वरानुग्रहवशादभिवदन्ती तदीयां बुद्धिमुक्तलक्षणां विवक्षतीत्याह-य इति । परत्वं तस्याः साधयति-सर्वासामिति । तर्हि पूर्वत्रानुक्तहिरण्यगर्भबुद्धेरिव प्रधानस्यापीहोक्तिः स्यान्नेत्याह-सा चेति । हिरुगिति पृथक्त्वोक्तिः । कथं बुद्धेरेव परा बुद्धिरित्याशंक्य सर्वासामित्यत्रोक्तं स्फुटयति-तस्या इति । व्यष्टिबुद्ध्याश्रयत्वात्परा समष्टिबुद्धिरिति बुद्धेरित्यादिना तदुक्तिरविरुद्धेत्यर्थः । तर्हि पूर्वोक्तस्य रथिनोऽनुक्तिवदिह शरीरस्यापि च रथस्य स्यादित्याशंक्याऽऽह-एतस्मिन्निति । ननु पुरुषोक्त्या न रथिग्रहस्तस्य जीवत्वात्पुरुषस्य परमात्मत्वात्तत्राऽऽह-परमार्थत इति । परिशेषमुपसंहरति-तदेवमिति । प्रकरणपरिशेषाभ्यामव्यक्तं शरीरमिति प्रतिज्ञातं निगमयति-इतराणीति । देहादिषु रथादिकल्पनाफलालोचनायामपि शरीरमेवाव्यक्तमित्याह-शरीरेति । सुखादिर्वेदना । देहादिसंयोगे हेतुरविद्यावत इति । तत्संयोगफलमाह-भोक्तुरिति । देहादिव्यतिरेकबोधाधीनमात्मनो ब्रह्मत्वाधिगतिफलम् ।

विवक्षिता ॥ तथा च—"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" [कठ० ३।१२ ] वैष्णवस्य परमपदस्य दुरवगमत्वमुक्त्वा तदवगमार्थं योगं दर्शयति—"यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि" [ कठ० १ । १३ ] इति । एतदुक्तं भवति ॥ वाचं मनसि संयच्छेत् ॥ वागादिबाह्येन्द्रियव्यापारमुत्सृज्य मनोमात्रेणावतिष्ठेत ॥ मनोऽपि विषयविकल्पाभिमुखं विकल्पदोषदर्शनेन ज्ञानशब्दोदितायां बुद्धावध्यवसायस्वभावायां धारयेत् ॥ तामपि बुद्धिं महत्यात्मनि भोक्तर्यग्र्यायां वा बुद्धौ सूक्ष्मतापादनेन नियच्छेत् ॥ महान्तं त्वात्मानं शान्त आत्मनि प्रकरणवति परस्मिन्पुरुषे परस्यां काष्ठायां प्रतिष्ठापयेदिति ॥ तदेवं पूर्वापरालोचनायां नास्त्यत्र परपरिकल्पितस्य प्रधानस्यावकाशः ॥ १ ॥

## सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

उक्तमेतत्—प्रकरणपरिशेषाभ्यां शरीरमव्यक्तशब्दं न प्रधानमिति ॥ इदमिदानीमाशंक्यते ॥ कथमव्यक्तशब्दार्हत्वं शरीरस्य । यावता स्थूल-

रत्नप्रभा ।

तात्पर्ये गूढत्वज्ञेयत्वज्ञानहेतुयोगविधयो लिङ्गानि सन्तीत्याह—**तथा चे**त्यादिना ॥ अग्र्या समाधिपरिपाकजा ॥ **वागिति** । अत्र द्वितीयालोपश्छान्दसः । **मनसीति** दैर्घ्यं च ॥१॥ **सूक्ष्मं त्विति**॥ शंकोत्तरत्वेन सूत्रं व्याचष्टे—**उक्तमेत**दित्यादिना ॥ कार्यकारणयोरभेदान्मूलप्रकृतिवाचकाव्यक्तशब्देन विकारो लक्ष्यत इत्यर्थः॥

भामती ।

येनात्र नागमोऽपेक्ष्येतेत्याह—**तथा चेति** । वागिति छान्दसो द्वितीयालोपः । शेषमतिरोहितार्थम् ॥ १ ॥ पूर्वपक्षिणोऽनुशयबीजनिराकरणपरं सूत्रम्—**सूक्ष्मं तु तदर्हत्वात्** । प्रकृतेर्विकाराणामनन्यत्वात्प्रकृतेरव्य-

आनन्दगिरीय—न्यायनिर्णयः ।

न च प्रतियोगिनो देहादेरग्रहे तद्व्यतिरेकधीः । तथा चेन्द्रियादिवदेव शरीरमपि ग्राह्यमित्यव्यक्तशब्दस्य तदर्थतेत्यर्थः । प्रत्यग्ब्रह्मधीरिहाभीष्टेति कथं दृष्टिरित्याशंक्याऽऽत्मनो दुर्बोधत्वोक्त्या तद्धीहेतुविधिरित्याह—**तथा चेति** । अप्रकाशस्वभावत्वं व्यासेधति—**दृश्यते त्विति** । श्रवणादिपरिपाकानन्तर्यमाह—**अग्र्येति** । सूक्ष्मार्थविषयतया सूक्ष्मत्वं तन्निष्ठानामेवोक्तबुद्धिद्वारा तद्दर्शनं न बहिर्मुखाणामित्याह—**सूक्ष्मेति** । वाक्यतात्पर्यमाह—**वैष्णवस्येति** । कुतस्तर्हि तद्धीरित्याशंक्यानन्तरवाक्यमवतारयति—**तदिति** । ब्रह्मात्मधीसाधनविधायि वाक्यं व्याकरोति—**एतदिति** । वागिति द्वितीयालोपस्य च्छान्दसत्वाद्वाचमित्युक्तम् । वाचो ग्रहणं बाह्येन्द्रियोपलक्षणमित्युपेत्य वाक्यार्थमाह—**वागादीति** । तथा च सति मनसि संकल्पादिसंभवान्नैकरसब्रह्मधीरित्याशंक्याऽऽह—**मनोऽपीति** । बुद्धेरपि विषयप्रावण्यात्तस्यां सत्यां न ब्रह्मधीरित्याशंक्याऽऽह—**तामिति** । महत्यात्मनि पृथगवस्थिते नैक्यधीरित्याशंक्याऽऽह—**महान्तं त्विति** । तस्याधिष्ठानान्तरं नेति सूचयति—**परस्यामिति** । प्रकरणात्परिशेषाच्चाव्यक्तपदं शरीरमेव दर्शयतीति पूर्वत्र व्याख्यातं दर्शयति—**चेति** । विधान्तरेऽपि पुनर्व्याख्यायाधुना सूत्रार्थमुपसंहरति—**तदेवमिति** ॥ १ ॥ अव्यक्तपदस्य देहे प्रवृत्तियोग्यत्वमाह—**सूक्ष्मं त्विति** । शंकोत्तरत्वेन व्याख्यातुं वृत्तमनूद्य शङ्कां दर्शयति—**उक्तमिति** । प्रवृत्तिनिमित्ताभावान्न शरीरमव्यक्तशब्दमिति शङ्कामेव विशदयति—**कथमिति** । दुर्निरूपत्वं तत्राव्यक्तशब्दप्रवृत्तिनिमित्तमित्याशङ्क्याऽऽह—**यावतेति** । स्पष्टतरत्वेन व्यक्तशब्दार्हत्वेऽपि

त्वात्स्पष्टतरमिदं शरीरं व्यक्तशब्दार्हम् ॥ अस्पष्टवचनस्त्वव्यक्तशब्द इति ॥ अत उत्तरमुच्यते ॥ "सूक्ष्मं तु" इह कारणात्मना शरीरं विवक्ष्यते। सूक्ष्मस्याव्यक्तशब्दार्हत्वात् ॥ यद्यपि स्थूलमिदं शरीरं, न स्वयमव्यक्तशब्दमर्हति ॥ तथापि तस्य त्वारम्भकं भूतसूक्ष्ममव्यक्तशब्दमर्हति॥ प्रकृतिशब्दश्च विकारे दृष्टः। यथा-"गोभिः श्रीणीत मत्सरम्" [ ऋ० सं० ९। ४६। ४ ] इति ॥ श्रुतिश्च-"तद्धेदं तर्ह्यव्याकृतमासीद्" [ बृ० १। ४। ७ ] इति ॥ इदमेव व्याकृतं नामरूपविभिन्नं जगत्प्रागवस्थायां परित्यक्तव्याकृतनामरूपं बीजशक्त्यवस्थमव्यक्तशब्दयोग्यं दर्शयति ॥२॥

## तदधीनत्वादर्थवत्॥ ३ ॥

अत्राह-यदि जगदिदमनभिव्यक्तनामरूपं बीजात्मकं प्रागवस्थमव्यक्तशब्दार्हमभ्युपगम्येत, तदात्मना च शरीरस्याप्यव्यक्तशब्दार्हत्वं प्रतिज्ञायेत, स एव तर्हि प्रधानकारणवाद एवं सत्यापद्येत।

---

रत्नप्रभा।

गोभिः गोविकारैः पयोभिः मत्सरं सोमं श्रीणीत मिश्रितं कुर्यादिति यावत्। "श्रीञ् पाके" इति धातोर्लोटि मध्यमपुरुषबहुवचनमेतत्। अव्यक्तात्मना कार्यस्याव्यक्तशब्दयोग्यत्वे मानमाह-श्रुतिश्चेति ॥ तर्हि प्रागवस्थायाम् इदं जगद् अव्याकृतमासीत्, ह किलेत्यर्थः॥ बीजरूपा शक्तिः संस्कारस्तदवस्थम्॥ ॥२॥ तदिति॥ अपसिद्धान्तशंकोत्तरत्वेन सूत्रं व्याचष्टे-अत्राहेत्यादिना ॥ तर्हि तदा। एवं सति सूक्ष्म-

भामती।

क्तत्वं विकार उपचर्यते। यथा 'गोभिः श्रीणीत' इति गोशब्दस्तद्विकारे पयसि। अव्यक्तात्कारणात् विकाराणामनन्यत्वेनाव्यक्तशब्दार्हत्वे प्रमाणमाह-तथा च श्रुतिरिति। अव्याकृतमव्यक्तमित्यनर्थान्तरत्। नन्वेवं सति प्रधानमेवाभ्युपेतं भवति, सुखदुःखमोहात्मकं हि जगदेवंभूतादेव कारणाद्भवितुमर्हति, कारणात्मकत्वात्कार्यस्य। यच्च तस्य सुखात्मकत्वं तत्सत्त्वम्। यच्च तस्य दुःखात्मकत्वं तद्रजः। यच्च तस्य मोहात्मकत्वं तत्तमः। तथा चाव्यक्तं प्रधानमेवाभ्युपेतमिति ॥२॥ शंकानिराकरणार्थं सूत्रम्-तदधीनत्वादर्थवत्।

आनन्दगिरीय-न्यायनिर्णयः।

तस्मिन्नव्यक्तपदं किं नोच्यते तत्राऽऽह-अस्पष्टेति। उत्तरत्वेन सूत्रमवतार्य तदक्षराणि व्याकरोति-अत इति। इहेत्युदाहरणोक्तिः स्थूलस्य देहस्य कुतः सूक्ष्मत्वं तदाह-कारणेति। अव्यक्तशब्देन कारणात्मना सूक्ष्मस्य देहस्य वक्तुमिष्टत्वे हेतुमाह-सूक्ष्मस्येति। अक्षरार्थमुक्त्वा प्रवृत्तिनिमित्तं व्यक्तीकर्तुं विवक्षितमर्थमाह-यद्यपीति। भूतसूक्ष्मस्याव्यक्तशब्दार्हत्वेऽपि किं जातं स्थूलस्य देहस्येत्याशंक्याऽऽह-प्रकृतीति। प्रकृतेर्विकाराणामनन्यत्वाद्विकारे प्रकृतेरव्यक्तत्वमुपचरितमित्यर्थः। प्रकृतिशब्दस्य विकारे प्रयोगे श्रौतं दृष्टान्तमाह-यथेति। गोभिस्तद्विकारैः पयोभिर्मत्सरं सोमम्। श्रीणीत "श्रीञ्पाके" इत्यस्य धातोर्लोटि मध्यमपुरुषबहुवचनम्। विकारापन्नं कुर्यात्। पाकार्थत्वेऽपि हिरण्येन श्रीणीतेतिवदत्र संबन्धार्थत्वं श्रीणातेरिष्टम्। तथा कारणवाचकमव्यक्तपदं तदभिन्नकार्ये भवत्यौपचारिकमित्यर्थः। अव्यक्तात्कारणाद्विकाराणामनन्यत्वे हेतुमाह-श्रुतिश्चेति। अव्यक्तमव्याकृतमित्यनर्थान्तरमित्युपेत्य व्याचष्टे-इदमिति। तदा तस्य स्वरूपेणासत्त्वं व्यावर्तयति-बीजेति। बीजमेव शक्तिरतीन्द्रियत्वात्तदात्मना स्थितमिति यावत् ॥ २ ॥ उक्तश्रुत्या प्रधानप्रसक्तिं प्रत्याह-तदधीनत्वादिति। तद्व्याख्यातुमादौ व्यावर्त्यां शङ्कां दर्शयति-अत्रेति। प्रकृता श्रुतिः सप्तम्यर्थः। जगतोऽव्यक्तशब्दार्हत्वमिदानीमविवक्षितं, शरीरस्य तु कारणात्मना तच्छब्दत्वं प्रतिज्ञातमित्याशंक्याऽऽह-तदात्मनेति। सिद्धान्तमनूद्यानिष्टं प्रसञ्जयति-स एवेति। तर्हि तस्यां प्रागवस्थायामेवं सति प्रागवस्थं जगदव्यक्तशब्दयोग्यमित्यादाविष्टे सती-

अस्यैव जगतः प्रागवस्थायाः प्रधानत्वेनाभ्युपगमादिति॥ अत्रोच्यते॥ यदि वयं स्वतन्त्रां काञ्चित्प्रागवस्थां जगतः कारणत्वेनाभ्युपगच्छेम, प्रसञ्जयेम तदा प्रधानकारणवादम्। परमेश्वराधीना त्वियमस्माभिः प्रागवस्था जगतोऽभ्युपगम्यते। न स्वतन्त्रा॥ सा चावश्यमभ्युपगन्तव्या। अर्थवती हि सा। न हि तया विना परमेश्वरस्य स्रष्टृत्वं सिध्यति। शक्तिरहितस्य तस्य प्रवृत्त्यनुपपत्तेः॥ मुक्तानां च पुनरनुत्पत्तिः॥ कुतः॥ विद्यया तस्या बीजशक्तेर्दाहात्। अविद्यात्मिका हि सा बीजशक्तिरव्यक्तशब्दनिर्देश्या

रत्नप्रभा।

शब्दितप्रागवस्थाभ्युपगमे सति। ईश्वरे कल्पिता तन्नियम्येत्यंगीकारान्नापसिद्धान्त इत्याह—**अत्रोच्यत इत्यादिना**॥ कूटस्थब्रह्मणः स्रष्टृत्वसिद्ध्यर्थमविद्या स्वीकार्येत्युक्तम्। बन्धमुक्तिव्यवस्थार्थमपि सा स्वीकार्येत्याह—**मुक्तानामिति**॥ यन्नाशान्मुक्तिः सा स्वीकार्या। तां विनैव सृष्टौ मुक्तानां पुनर्बन्धापत्तिरित्यर्थः। तस्याः परकल्पितसत्यस्वतन्त्रप्रधानाद्वैलक्षण्यमाह—**अविद्येत्यादिना**॥

भामती।

प्रधानं हि सांख्यानां सेश्वराणामनीश्वराणां वेश्वरात् क्षेत्रज्ञेभ्यो वा वस्तुतो भिन्नं शक्यं निर्वक्तुम्। ब्रह्मणस्त्वियमविद्या शक्तिर्मायादिशब्दवाच्या न शक्या तत्त्वेनान्यत्वेन वा निर्वक्तुम्। इदमेवास्या अव्यक्तत्वं यदनिर्वाच्यत्वं नाम। सोऽयमव्याकृतवादस्य प्रधानवादाद्भेदः। अविद्याशक्तेश्चेश्वराधीनत्वं, तदाश्रयत्वात्। न च द्रव्यमात्रमशक्तं कार्यायालमिति शक्तेरर्थवत्त्वम्। तदिदमुक्तम्—**अर्थवदिति**। स्यादेतत्। यदि ब्रह्मणोऽविद्याशक्त्या संसारः प्रजायते हन्त मुक्तानामपि पुनरुत्पादप्रसङ्गः, तस्याः प्रधानवत्तादवस्थ्यात्। तद्विनाशे वा समस्तसंसारोच्छेदः, तन्मूलाविद्याशक्तेः समुच्छेदादित्यत आह—**मुक्तानां च पुनः** बन्धस्य **अनुत्पत्तिः। कुतः। विद्यया तस्या बीजशक्तेर्दाहात्**। अयमभिसंधिः—न वयं प्रधानवदविद्यां सर्वजीवेष्वेकामाचक्ष्महे, येनैवमुपालभेमहि, किंत्वियं प्रतिजीवं भिद्यते। तेन यस्यैव जीवस्य विद्योत्पन्ना तस्यैवाविद्यापनीयते न जीवान्तरस्य, भिन्नाधिकरणयोर्विद्याविद्ययोरविरोधात्, तत्कुतः समस्तसंसारोच्छेदप्रसङ्गः। प्रधानवादिनां त्वेष दोषः। प्रधानस्यैकत्वेन तदुच्छेदे सर्वोच्छेदोऽनुच्छेदे वा न कस्यचिदित्यनिर्मोक्षप्रसङ्गः। प्रधानाभेदेऽपि चैतदविवेकख्यातिलक्षणाविद्यासदसत्त्वनिबन्धनौ बन्धमोक्षौ, तर्हि कृतं प्रधानेन, अविद्यासदसद्भावाभ्यामेव तदुपपत्तेः। न चाविद्योपाधिभेदाधीनो जीवभेदो जीवभेदाधीनश्चाविद्योपाधिभेद इति परस्पराश्रयादुभयासिद्धिरिति सांप्रतम्। अनादित्वाद्बीजांकुरवदुभयसिद्धेः। अविद्यात्वमात्रेण चैकत्वोपचारोऽव्यक्तमिति चाव्याकृतमिति चेति। नन्वेव-

आनन्दगिरीय—न्यायनिर्णयः।

त्यर्थः। सुखदुःखमोहात्मकं कार्यं तादृगेव कारणं गमयतीति हेतुमाह—**अस्यैवेति**। तत्र सूत्रमुत्तरत्वेन व्याकर्तुं भूमिकां करोति—**अत्रेति**। कथं तर्हि भवद्भिरभ्युपगम्यते तदाह—**परमेति**। तस्यैव जगदुपादानत्वादानर्थक्यादेषा नोपेयेत्याशंक्याऽऽह—**सा चेति**। तदधीनत्वादिति व्याख्यायार्थवदित्यंशं व्याख्याति—**अर्थवतीति**। तदेव समर्थयते—**न हीति**। कूटस्थासङ्गाद्वयस्य ब्रह्मणः स्रष्टृत्वानुपपत्त्या मायाशक्तिरेष्टव्येत्युक्तम्। इदानीं बन्धमोक्षव्यवस्थानुपपत्तेश्चेत्याह—**मुक्तानां चेति**। यस्यां सत्यां जननमरणादिः संसारो यन्निवृत्त्या तन्निवृत्तिः सा मायाशक्तिरेष्टव्येत्यर्थः। ननु न बीजशक्तिर्विद्यया दह्यते वस्तुत्वादात्मवन्नेत्याह—**अविद्येति**। केचित्तु प्रतिजीवमविद्याशक्तिभेदमिच्छन्ति। तन्न। अव्यक्ताव्याकृतादिशब्दायास्तस्या भेदकाभावादेकत्वेऽपि स्वरूपतः विचित्रकार्यकरत्वादित्याह—**अव्यक्तेति**। न च तस्या जीवा-

परमेश्वराश्रया मायामयी महासुषुप्तिः ॥ यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः ॥ तदेतदव्यक्तं क्वचिदाकाशशब्दनिर्दिष्टम्—"एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" [ बृ० ३ । ८ । ११ ] इति श्रुतेः, क्वचिदक्षरशब्दोदितम्—"अक्षरात्परतः परः" [ मुं० २। १। २ ] इति श्रुतेः, क्वचिन्मायेति सूचितम्—"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" [ श्वेता० ४ । १० ] इतिमन्त्रवर्णात् ॥ अव्यक्ता हि सा माया । तत्त्वान्यत्वनिरूपणस्याशक्यत्वात् ॥ तदिदं—" महतः परमव्यक्तम् " [ कठ० । ३ । ११ ] इत्युक्तम् । अव्यक्तप्रभवत्वान्महतः । यदा हैरण्यगर्भी बुद्धिर्महान्, यदा तु जीवो महान्, तदाप्यव्यक्ताधीनत्वाज्जीवभावस्य "महतः परमव्यक्तम्" [ कठ० ३।११ ] इत्युक्तम् ॥ अविद्या ह्यव्यक्तम् । अविद्यावत्त्वेनैव जीवस्य

रत्नप्रभा ।

मायामयी प्रसिद्धमायोपमिता । लोके मायाविनो मायावत्परतन्त्रेत्यर्थः । जीवभेदोपाधित्वेनापि सा स्वीकार्येत्याह—महासुषुप्तिरिति ॥ बुद्ध्याद्युपाधिभेदाज्जीवा इति बहूक्तिः । अविद्यायां श्रुतिमप्याह—तदेतदिति ॥ आकाशहेतुत्वादाकाशः, ज्ञानं विना अन्ताभावादक्षरम्, विचित्रकारित्वान्मायेति भेदः । इदानीमविद्याया ब्रह्माभेदान्यत्वाभ्यामनिर्वाच्यत्वेनाव्यक्तशब्दार्हत्वमाह—अव्यक्तेति ॥ तस्य महत्परत्वं कथमित्यत आह—तदिदमिति ॥ यदा बुद्धिर्महांस्तदा तद्धेतुत्वात्परत्वमित्यन्वयः । प्रतिबिम्बस्योपाधिपरतन्त्रत्वादुपाधेः प्रतिबिम्बात्परत्वमाह—यदा त्विति ॥ हेतुं स्फुटयति—अविद्येति ॥ अव्यक्तस्य परत्वेऽपि शरीरस्य किं

भामती ।

मविद्यैव जगद्बीजमिति कृतमीश्वरेणेत्यत आह—परमेश्वराश्रयेति । न ह्यचेतनं चेतनानधिष्ठितं कार्याय पर्याप्तमिति स्वकार्यं कर्तुं परमेश्वरं निमित्ततयोपादानतया चाश्रयते, प्रपञ्चविभ्रमस्य हीश्वराधिष्ठानत्वमहिविभ्रमस्येव रज्ज्वधिष्ठानत्वम्, तेन यथाहिविभ्रमो रज्जूपादान एवं प्रपञ्चविभ्रम ईश्वरोपादानः, तस्माज्जीवाधिकरणाप्यविद्या निमित्ततया विषयतया चेश्वरमाश्रयत इतीश्वराश्रयेत्युच्यते, न त्वाधारतया, विद्यास्वभावे ब्रह्मणि तदनुपपत्तेरिति । अत एवाह—यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवा इति । यस्यामविद्यायां सत्यां शेरते जीवाः । जीवानां स्वरूपं वास्तवं ब्रह्म, तद्बोधरहिताः शेरत इति लय उक्तः । संसारिण इति विक्षेप उक्तः । अव्यक्ताधीनत्वाज्जीवभावस्येति ।

आनन्दगिरीय-न्यायनिर्णयः ।

श्रयत्वं जीवशब्दवाच्यस्य कल्पितत्वात्तदविद्यारूपत्वात्तच्छब्दलक्ष्यस्य ब्रह्माव्यतिरेकादित्याह—परमेश्वरेति । मायाविद्ययोर्भेदादीश्वरस्य मायाश्रयत्वं जीवानामविद्याश्रयतेति वदन्तं प्रत्याह—मायामयीति । यथा मायाविनो माया परतन्त्रा तथैषाऽपीत्यर्थः । प्रतीतौ तस्याश्चेतनापेक्षायामाह—महासुषुप्तिरिति । अग्रहवत्त्वेन विपर्यासवत्त्वेन चानन्तजीवनिर्भासहेतुत्वेनापि साऽर्थवतीत्याह—यस्यामिति । अर्थापत्त्या मायाशक्तेः सत्त्वमुक्त्वा तत्रैव श्रुतिमाह—तदिति । अनवच्छिन्नत्वादाकाशत्वं तत्त्वज्ञानं विनाऽनिवृत्तेरक्षरत्वं विचित्रकार्यत्वान्मायात्वमिति भेदः । इदानीमनिर्वाच्यत्वेनाव्यक्तशब्दार्हत्वमाह—अव्यक्तेति । उक्तमर्थं प्रकृतश्रुत्या योजयति—तदिदमिति । कुतस्तस्य महतः सकाशात्परत्वमित्याशंक्य बुद्धिपक्षे तावदुपपत्तिमाह—अव्यक्तेति । युक्तं हि कार्यात्कारणस्य परत्वमिति भावः । जीवपक्षेऽपि परत्वोपपत्तिमाह—यदा त्विति । दृष्टं हि राजादेः स्वाधीनादमात्यादेः परत्वमिति भावः । कुतो जीवभावस्याव्यक्ताधीनत्वमविद्याधीनत्वादित्याशंक्याव्यक्तस्योक्तं स्वरूपं स्मारयति—अविद्येति । संप्रति जीवभावस्य तदधीनत्वमाह—अविद्यावत्त्वेनेति ।

सर्वस्संव्यवहारस्सन्ततो वर्तते ॥ तच्चाव्यक्तगतं महतः परत्वमभेदोपचारात्तद्विकारे शरीरे परिकल्प्यते॥सत्यपि शरीरवदिन्द्रियादीनां तद्विकारत्वाविशेषे शरीरस्यैवाभेदोपचारादव्यक्तशब्देन ग्रहणम् ॥ इन्द्रियादीनां स्वशब्दैरेव गृहीतत्वात्, परिशिष्टत्वाच्च शरीरस्य ॥ अन्ये तु वर्णयन्ति–द्विविधं हि शरीरं स्थूलं सूक्ष्मं च। स्थूलं यदिदमुपलभ्यते। सूक्ष्मं यदुत्तरत्र वक्ष्यते–"तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्" ॥ [ ब्र० सू० ३ । १ । १ ] इति ॥ तच्चोभयमपि शरीरमविशेषात्पूर्वं रथत्वेन संकीर्तितम् ॥ इह तु सूक्ष्ममव्यक्तशब्देन परिगृह्यते ॥ सूक्ष्मस्याव्यक्तशब्दार्हत्वात् ॥ "तदधीनत्वाच्च" बन्धमोक्षव्यवहारस्य जीवात्तस्य परत्वम् । यथा–अर्थाधीनत्वादिन्द्रियव्यापारस्येन्द्रियेभ्यः परत्वमर्थानामिति ॥ तैस्त्वेतद्वक्तव्यम् ॥ अविशेषेण शरीरद्वयस्य पूर्वत्र रथत्वेन सङ्कीर्तितत्वात्समानयोः प्रकृतत्वपरिशिष्टत्वयोः कथं सूक्ष्ममेव

---

रत्नप्रभा ।

जातं तदाह–तच्चेति ॥ नन्विन्द्रियादीनामप्यव्यक्ताभेदादव्यक्तत्वं परत्वं च किमिति नोच्यते तत्राह–सत्यपीति ॥ सूत्रद्वयस्य वृत्तिकृद्व्याख्यानमुत्थापयति–अन्ये त्विति ॥ पञ्चीकृतभूतानां सूक्ष्मा अवयवाः स्थूलदेहारम्भकाः । सूक्ष्मशरीरं प्रति जीवः लिङ्गस्याश्रयत्वेन नियतमस्तीति वक्ष्यते । देहान्तरप्राप्तौ तेन युक्तो गच्छति परलोकमित्यर्थः । कथं तस्य महतो जीवात्परत्वमित्याशंक्य द्वितीयसूत्रं व्याचष्टे–तदधीनत्वाच्चेति ॥ अर्थवदिति सूत्रस्थदृष्टान्तमाह–यथेति ॥ तद्व्याख्यानं दूषयति–तैरिति ॥ अव्य-

भामती ।

यद्यपि जीवाव्यक्तयोरनादित्वेनानियतं पौर्वापर्यं तथाप्यव्यक्तस्य पूर्वत्वं विवक्षित्वैतदुक्तम् । सत्यपि शरीरवदिन्द्रियादीनामिति । गोबलीवर्दपदवदेतद् द्रष्टव्यम् । आचार्यदेशीयमतमाह–अन्ये त्विति । एतद्दूषयति–तैस्त्विति । प्रकरणपारिशेष्ययोरुभयत्र तुल्यत्वान्नैकग्रहणनियमहेतुरस्ति । शङ्कते–आम्नातस्यार्थमिति । अव्यक्तपदमेव स्थूलशरीरव्यावृत्तिहेतुर्व्यक्तत्वात्तस्येति शङ्कार्थः । निराकरोति–न । एकवाक्यताधीनत्वादिति । प्रकृतहान्यप्रकृतप्रक्रियाऽप्रसङ्गेनैकवाक्यत्वे संभवति न वाक्यभेदो युज्यते । न चाकांक्षां विनैकवाक्यत्वम्, उभयं च प्रकृतमित्युभयं ग्राह्यत्वेनेहाकांक्षितमित्येकाभिधायकमपि पदं शरीरद्वयपरम् । न च मुख्यया वृत्त्याऽतत्परमित्यौपचारिकं न भवति । यथोपहन्तृमात्रनिराकरणाकांक्षायां काकपदं प्रयुज्यमानं श्वादिसर्वहन्तृपरं विज्ञायते । यथाहुः–'काकेभ्यो रक्ष्यतामन्नमिति बालोऽपि नोदितः । उपघातप्रधानत्वान्न श्वादिभ्यो न रक्षति ॥' इति । ननु न शरीरद्वयस्यात्राकांक्षा । किंतु दुःशोधत्वा-

आनन्दगिरीय–न्यायनिर्णयः ।

तथाऽपि कथं शरीरस्य महतः सकाशात्परत्वं तत्राऽऽह–तच्चेति । इन्द्रियादीनामपि प्रकृत्यभेदादव्यक्तत्वं परत्वं च तुल्यमिति कुतः शरीरस्यैवेह ग्रहणमित्याशंक्याऽऽह–सत्यपीति । आचार्यदेशीयमतमुत्थापयति–अन्ये त्विति । तन्मतेऽपि सूत्रद्वयं योजयितुं पातनिकामाह–द्विविधमिति । तस्य द्विविधस्यापि प्रामाणिकत्वमाह–स्थूलमिति । देहद्वयस्याप्रस्तुतत्वमाशंक्याऽऽह–तच्चेति । भूमिकां कृत्वा 'सूक्ष्मं तु' इति सूत्रावयवं व्याकरोति–इहेति । पूर्ववाक्ये द्वयोः संनिधौ सूक्ष्मस्यैवात्र ग्रहे को हेतुरित्याशंक्य 'तदर्हत्वात्' इति इत्यर्थमाह–सूक्ष्मस्येति । कथं तर्हि तस्य महतो जीवात्परत्वमित्याशंक्य द्वितीये सूत्रे तदधीनत्वं व्याचष्टे–तदधीनत्वाच्चेति । सूक्ष्मदेहाधीनौ विवेकाविवेकाभ्यां बन्धमोक्षौ तेन तद्वतो जीवात्परत्वमित्यर्थः । तत्र सौत्रं दृष्टान्तमाह–यथेति । इतिशब्दो दार्ष्टान्तिकद्योती वृत्तिकारमतसमाप्त्यर्थश्च । वृत्तिकृतां मतं निराचष्टे–तैस्त्विति । अव्यक्तपदमेव व्यक्तस्थूलदेहव्यावृत्तिहेतुरित्याह–

शरीरमिह गृह्यते न पुनः स्थूलमपीति ॥ आम्नातस्यार्थं प्रतिपत्तुं प्रभवामो, नाम्नातं पर्यनुयोक्तुम् । आम्नातं चाव्यक्तपदं सूक्ष्ममेव प्रतिपादयितुं शक्नोति, नेतरद् । व्यक्तत्वात्तस्येति चेत् ॥ न । एकवाक्यताधीनत्वादर्थप्रतिपत्तेः ॥ न हीमे पूर्वोत्तरे आम्नाते एकवाक्यतामनापद्य कञ्चिदर्थं प्रतिपादयतः । प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात् ॥ न चाकांक्षामन्तरेणैकवाक्यताप्रतिपत्तिरस्ति । तत्राविशिष्टायां शरीरद्वयस्य ग्राह्यत्वाकांक्षायां यथाकांक्षं सम्बन्धेऽनभ्युपगम्यमाने एकवाक्यतैव बाधिता भवति, कुत आम्नातस्यार्थस्य प्रतिपत्तिः ॥ न चैवं मन्तव्यम्-दुःशोधत्वात्सूक्ष्मस्यैव शरीरस्येह ग्रहणम् । स्थूलस्य तु दृष्टबीभत्सतया सुशोधत्वादग्रहणमिति ॥ यतो नैवेह शोधनं कस्यचिद्विवक्ष्यते । न ह्यत्र शोधनविधायि किञ्चिदाख्यातमस्ति । अनन्तरनिर्दिष्टत्वाच्च-किम्-

रत्नप्रभा ।

क्तपदबलात्प्रकृतमपि स्थूलं त्यज्यत इति शंकते-आम्नातस्येति ॥ एकार्थबोधकानां शब्दानां मिथ आकांक्षायै एकस्यां बुद्धावारूढत्वम् एकवाक्यता । तव मते तस्या अभावात्कुतोऽर्थबोध इति समाधत्ते-नेति ॥ तां विनाप्यर्थधीः किं न स्यादित्यत आह-न हीति ॥ शरीरशब्देन रूढ्या स्थूलं प्रकृतम् । तस्य हानिः । अप्रकृतस्य भूतसूक्ष्मस्याव्यक्तपदेन ग्रहणमन्याय्यं स्यादित्यर्थः ॥ अस्त्वेकवाक्यतेत्यत आह-न चेति ॥ ततः किं तत्राह-तत्रेति ॥ आकांक्षया वाक्यैकवाक्यत्वे सति प्रकृतं शरीरद्वयमव्यक्तपदेन ग्राह्यम् । आकांक्षायास्तुल्यत्वादिति भावः । अनात्मनिश्चयः शुद्धिः । तदर्थं सूक्ष्ममेवाकांक्षितं ग्राह्यम् । तस्य सूक्ष्मत्वेनात्माभेदेन गृहीतस्य दुश्शोधत्वात्, स्थूलस्य दृष्टदौर्गन्ध्यादिना लशुनादिवदनात्मत्वधीवैराग्ययोः सुलभत्वादिति शंकते-न चैवमिति ॥ दृष्टा बीभत्सा घृणा यस्मिंस्तस्य भावस्तयेत्यर्थः । दूषयति-यत इति ॥ वैराग्याय शुद्धिरत्र न विवक्षिता । विध्यभावात् । किन्तु वैष्णवं परमं पदं विवक्षितमिति तद्दर्शनार्थं प्रकृतं स्थूलमेवाव्यक्तपदेन ग्राह्यमिति भावः । किञ्च सूक्ष्मस्य लिङ्गान्तःपातिन इन्द्रियादिग्रहणे-

भामती ।

त्सूक्ष्मस्यैव शरीरस्य, न तु षाट्कौशिकस्य स्थूलस्य । एतद्धि दृष्टबीभत्सतया सुकरं वैराग्यविषयत्वेन शोधयितुमित्यत आह-न चैवं मन्तव्यमिति । विष्णोः परमं पदमवगमयितुं परमत्र प्रतिपाद्यत्वेन प्रस्तुतं न तु वैराग्याय शोधनमित्यर्थः । अलं वा विवादेन, भवतु सूक्ष्ममेव शरीरं परिशोध्यं, तथापि न

आनन्दगिरीय-न्यायनिर्णयः ।

आम्नातस्येति । आम्नातमपि पदमुभयसाधारणमित्याशंक्याऽऽह-आम्नातं चेति । पूर्वोत्तराम्नातयोरेकवाक्यताधीनत्वादर्थदृष्टेस्त्वन्मते चैकवाक्यताभावात्कुतोऽर्थधीः कुतश्चाव्यक्तशब्देन स्थूलदेहनिवृत्तिरित्याह-नेति । एकवाक्यताधीनाऽर्थधीरित्येतदेव कथमित्याशंक्याऽऽह-न हीति । शरीरशब्दस्य स्थूलशरीरे रूढेस्तस्य प्रकृतस्य हानं भूतसूक्ष्मस्याप्रकृतस्याव्यक्तशब्दत्वप्रक्रिया च निष्प्रमाणिकाऽऽयाता स्यादित्याह-प्रकृतेति । पूर्वोत्तराम्नाते तर्ह्येकवाक्यतामापद्यैवार्थं प्रतिपादयेतां तत्राऽऽह-न चेति । अस्तु तर्हि तद्वशादेकवाक्यतापत्तिस्तत्राऽऽह-तत्रेति । आकांक्षाया वाक्यैक्यधीहेतुत्वे सतीति यावत् । उभयमपि प्रकृतत्वाद्ग्राह्यत्वेनाऽऽकांक्षितं तेन तद्द्वारा पदप्रवृत्तेरव्यक्तपदस्योभयत्रापि प्रवृत्तौ प्रकरणपारिशेष्ययोस्तुल्यत्वान्नैकत्र नियमोऽस्तीत्यर्थः । सूक्ष्मस्यैव देहस्याऽऽकांक्षा दुःशोधत्वात्तस्याऽऽत्मनोऽतिसंनिकृष्टस्य सहसा ततो निष्क्रष्टुमशक्यत्वादन्यस्य तु दुष्टत्वेन दृष्टत्वादात्मनो निष्कर्षस्य सुकरत्वादित्याशंक्याऽऽह-न चेति । कुतो न मन्तव्यं तत्राऽऽह-यत इति । इहेति प्रकरणोक्तिः । वैराग्याय शोधनमत्र नेष्टमिति कथं गम्यते तत्राऽऽह-न हीति किं तर्हि विवक्षितं तदाह-अनन्तरेति । तस्यतस्य परत्वेन बद्धमात्परमपद-

" तद्विष्णोः परमं पदम् " [ कठ० ३ । ९ ] इति, इदमिह विवक्ष्यते । तथाहि इदमस्मात्परमिदमस्मात्परमित्युक्त्वा " पुरुषान्न परं किञ्चिद् " [ कठ० । ३ । ११ ] इत्याह ॥ सर्वथापि त्वानुमानिकनिराकरणोपपत्तेस्तथा नामास्तु, न नः किञ्चिच्छिद्यते ॥ ३ ॥

## ज्ञेयत्वावचनाच्च ॥ ४ ॥

ज्ञेयत्वेन च सांख्यैः प्रधानं स्मर्यते गुणपुरुषान्तरज्ञानात्कैवल्यमिति वदद्भिः । न हि गुणस्वरूपमज्ञात्वा गुणेभ्यः पुरुषस्यान्तरं शक्यं ज्ञातुमिति ॥ क्वचिच्च विभूतिविशेषप्राप्तये प्रधानं ज्ञेयमिति स्मरन्ति ॥ न चेदमिहाव्यक्तं ज्ञेयत्वेनोच्यते । पदमात्रं ह्यव्यक्तशब्दः । नेहाव्यक्तं ज्ञातव्यमुपासितव्यं चेति वाक्यमस्ति ॥ न चानुपदिष्टं पदार्थज्ञानं पुरुषार्थ-

रत्नप्रभा ।

नैव ग्रहणान्न पृथगव्यक्तशरीरपदाभ्यां ग्रहः । अभ्युपेत्याऽऽह—**सर्वथेति** ॥ स्थूलस्य सूक्ष्मस्य वा ग्रहेऽपीत्यर्थः ॥ **तथा नामेति** । सूक्ष्ममेवाव्यक्तमस्त्वित्यर्थः ॥ ३ ॥ अत्राव्यक्तं प्रधानं नेत्यत्र हेत्वन्तरार्थं सूत्रम्—**ज्ञेयत्वेति** ॥ सत्त्वादिगुणरूपात्प्रधानात्पुरुषस्यान्तरं भेदस्तज्ज्ञानादित्यर्थः । "न हि शक्यमिति" च वदद्भिः प्रधानं ज्ञेयत्वेन स्मर्यते इति **सम्बन्धः** । न केवलं भेदप्रतियोगित्वेन प्रधानस्य ज्ञेयत्वं तैरिष्टम् । किन्तु तस्योपासनयाऽणिमादिप्राप्तयेपीत्याह—**क्वचिच्चेति** । ज्ञानविध्यभावेऽप्यव्यक्तपदजन्यज्ञानगम्यत्वमार्थिकं ज्ञेयत्वमस्तीत्यत आह—**न चानुपदिष्टमिति** ॥ उपदिष्टं हि ज्ञानं फलवदिति ज्ञातुं शक्यम् । निष्फलस्योपदेशायोगाद् अव्यक्तस्य च ज्ञानानुपदेशात्सफलज्ञानगम्यत्वासिद्धिरित्यर्थः ॥ फलितमाह—

भामती ।

सांख्याभिमतमत्र प्रधानं परमित्यभ्युपेत्याह—**सर्वथापि त्विति** ॥ ३ ॥ **ज्ञेयत्वावचनाच्च** । इतोऽपि नायमव्यक्तशब्दः सांख्याभिमतप्रधानपरः । सांख्यैः खलु प्रधानाद्विवेकेन पुरुषं निःश्रेयसाय ज्ञातुं च विभूत्यै च प्रधानं ज्ञेयत्वेनोपक्षिप्यते । न चेह जानीयादिति चोपासीतेति वा विधिविभक्तिश्रुतिरस्ति,

आनन्दगिरीय—न्यायनिर्णयः ।

मेव कथमत्राभीष्टं तत्राऽऽह—**तथाहीति** । परमपददिदर्शयिषया पारम्पर्यमत्राभीष्टमिति पूर्वोत्तरालोचनातो भातीत्यर्थः । किंचाव्यक्तपदेन स्थूलमेव शरीरमुक्तं, 'बुद्धिं तु सारथिं विद्धि' इत्यादिना सूक्ष्मदेहस्य विभक्तत्वेन रथकल्पनाविषयत्वात्तस्य शरीरपदेनानुक्तत्वादिहापि 'मनसस्तु परा बुद्धिः' इति गृहीतत्वेनापरिशेषादिति मत्वोपेत्यापि दूषयति—**सर्वथेति** । स्थूलसूक्ष्मयोरन्यतरग्रहेऽपीति यावत् । तथा नामास्त्विति त्वदिच्छया सूक्ष्मदेहस्यैवाव्यक्तशब्दत्वं स्यादित्यर्थः । किंचिदिति प्रधानवादनिराकरणमुक्तम् ॥ ३ ॥ प्रधानस्याव्यक्तशब्दावाच्यत्वे हेत्वन्तरमाह—**ज्ञेयत्वेति** । तद्व्याख्यातुं पातनिकां करोति—**ज्ञेयत्वेनेति** । गुणानां पुरुषाणां चान्तरं विवेकस्तस्यैव मुक्तिहेतुत्वेन ज्ञेयत्वमिष्टं न प्रधानस्येत्याशंक्यार्थान्तरस्यापि तदिष्टमित्याह—**न हीति** । इति गुणत्रयसाम्यावस्थारूपप्रधानस्यापि ज्ञेयत्वमिति शेषः । तथाऽपि विवेकगुणतया प्रधानस्य ज्ञेयत्वं न स्वप्रधानतयेत्याशंक्य प्रकृतिलयादिसिद्ध्यर्थं स्वप्रधानतयापि तज्ज्ञेयत्वमिष्टमित्याह—**क्वचिच्चेति** । इहापि ज्ञेयत्वमव्यक्तशब्देनोक्तमित्याशंक्य सूत्रार्थमाह—**न चेति** । तदेव स्पष्टयति—**पदेति** । नन्वव्यक्तशब्दे प्रयुक्ते तदर्थस्यार्थादेव ज्ञेयत्वमज्ञाते शब्दाप्रयोगान्नेत्याह—**न चेति** । आर्थिकधियोऽपुमर्थत्वसंभवाच्छाब्दमेव फलवज्ज्ञानं न चाव्यक्ते तयाविधा धीरित्यर्थः ॥

१ गुणः प्रधानमुच्यते सत्त्वरजस्तमोरूपत्वात्तस्य । २ महतः परमव्यक्तमित्यत्र ।

मिति शक्यं प्रतिपत्तुम् ॥ तस्मादपि नाव्यक्तशब्देन प्रधानमभिधीयते ॥ अस्माकं तु रथरूपककल्पितशरीराद्यनुसरणेन विष्णोरेव परमं पदं दर्शयितुमयमुपन्यास इत्यनवद्यम् ॥ ४ ॥

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

अत्राह सांख्यः "ज्ञेयत्वावचनाद्" [ व्या० सू० १ । ४ ।४] इत्यसिद्धम् ॥ कथम् ॥ श्रूयते ह्युत्तरत्राव्यक्तशब्दोदितस्य प्रधानस्य ज्ञेयत्ववचनम्-"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते" [ कठ० ३ । १५ ] इति ॥ अत्र हि यादृशं शब्दादिहीनं प्रधानं महतः परं स्मृतौ निरूपितं, तादृशमेव निचाय्यत्वेन निर्दिष्टम् ॥ तस्मात्प्रधानमेवेदम् । तदेव चाव्यक्तशब्दनिर्दिष्टमिति ॥ अत्र ब्रूमः ॥ नेह प्रधानं निचाय्यत्वेन निर्दिष्टम् ॥ प्राज्ञो हीह परमात्मा निचाय्यत्वेन निर्दिष्ट इति गम्यते ॥ कुतः ॥ प्रकरणात्-प्राज्ञस्य हि प्रकरणं विततं वर्तते-"पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" । इत्यादिनिर्देशाद्, "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" [ कठ० ३ । १२ ] इति च दुर्ज्ञानत्ववचनेन तस्यैव ज्ञेयत्वाकांक्षणाद् ॥ "यच्छेद्वाङ्मनसी प्राज्ञः" [ कठ० ३ । १३ ] इति च

---

रत्नप्रभा ।

तस्मादिति ॥ सांख्येष्टसफलज्ञानगम्यत्वावचनाच्चेत्यर्थः । ननु शरीरस्यापि ज्ञेयत्वानुक्तेः कथमिह ग्रहणं, तत्राह-अस्माकं त्विति ॥ अस्मन्मते विष्ण्वाख्यपदस्यैकस्यैव ज्ञेयत्वात्तद्दर्शनार्थमव्यक्तपदेन शरीरोपन्यासो युक्त इत्यर्थः ॥ ४ ॥ साधारणशब्दमात्रान्न प्रधानस्य प्रत्यभिज्ञा । स्मार्तलिङ्गस्यानुक्त्यानियामकाभावादिति तात्पर्यलिङ्गोक्तिमाशंक्य निषेधति-वदतीति ॥ अत्र हि तादृशमेव निर्दिष्टमित्यन्वयः ।

भामती ।

अपि त्वव्यक्तपदमात्रम् । न चैतावता सांख्यस्मृतिप्रत्यभिज्ञानं भवतीति भावः ॥ ४ ॥ ज्ञेयत्वावचनस्यासिद्धिमाशंक्य तत्सिद्धिप्रदर्शनार्थं सूत्रम्-वदतीति चेन्न प्राज्ञो हि प्रकरणात् । निगदव्याख्यात-

आनन्दगिरीय-न्यायनिर्णयः ।

पञ्चम्यर्थमनूद्य चकारचोद्यमाह-तस्मादिति । त्वन्मतेऽप्युक्तनीत्याऽव्यक्तपदमनर्थकमित्याशंक्याऽऽह-अस्माकं त्विति । परमपदस्य सर्वस्मात्परत्वज्ञानार्थं देहाद्युपन्यासोऽस्मत्पक्षे स्यादित्यव्यक्तशब्देन स्थूलदेहोक्तिरर्थवतीत्यर्थः ॥ ४ ॥ ज्ञेयत्वावचनस्यासिद्धिमाशंक्य परिहरति-वदतीत्यादिना । चोद्यं विवृणोति-अत्रेति । उक्तहेतोर्न प्रधानमव्यक्तमित्युक्ते सतीत्यर्थः । साधितत्वान्नासिद्धिरिति शङ्कते-कथमिति । वाक्यशेषेणोत्तरम्-श्रूयते हीति । अशब्दमित्यादिषु प्रत्येकं नित्यशब्दः संबध्यते । ननु निष्प्रपञ्चं ब्रह्मोक्त्वा तस्य प्रत्यक्त्वेन ज्ञानान्मुक्तिरत्रोच्यते न प्रधानस्यात्र प्रसङ्गोऽस्ति तत्राऽऽह-अत्रेति । शब्दादिशून्यतया स्मार्तप्रधानस्य प्रत्यभिज्ञानात्तदेवात्रोक्तमित्याह-तस्मादिति । तथाऽपि 'महतः परमव्यक्तम्' इत्यत्र किं जातं तदाह-तदेवेति । उत्तरमाह-अत्रेति । तत्र नञोऽर्थमाह-नेहेति । कस्य तर्हि ज्ञेयत्वेनात्रोक्तिस्तत्राऽऽह-प्राज्ञो हीति । प्रधानेऽपि संभवति परमात्मग्रहे को हेतुरित्याह-कुत इति तत्र हेतुमुक्त्वा विभजते-प्रकरणादिति । परमात्मप्रकरणस्य प्रकृतत्वे हेतुमाह-पुरुषादिति । इतश्चाशब्दादिवाक्ये परस्यैवाऽऽत्मनो ज्ञेयत्वमित्याह-एष इति । तत्रैव हेत्वन्तरमाह-तस्यैवेति । 'दृश्यते त्वग्र्यया बुद्ध्या' इत्यादि तदाकांक्षणम् । तस्यैव ज्ञेयत्वमित्यत्र हेत्वन्तरमाह-यच्छेदिति । फलविशेष-

तज्ज्ञानायैव वागादिसंयमस्य विहितत्वात्, मृत्युमुखप्रमोक्षणफलत्वाच्च॥ न हि प्रधानमात्रं निचाय्य मृत्युमुखात्प्रमुच्यत इति सांख्यैरिष्यते ॥ चेतनात्मविज्ञानाद्धि मृत्युमुखात्प्रमुच्यत इति तेषामभ्युपगमः ॥ सर्वेषु च वेदान्तेषु प्राज्ञस्यैवात्मनोऽशब्दादिधर्मत्वमभिलप्यते ॥ तस्मान्न प्रधानस्यात्र ज्ञेयत्वमव्यक्तशब्दनिर्दिष्टत्वं वा ॥ ५ ॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

इतश्च न प्रधानस्याव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वा । यस्मात्त्रयाणामेव पदार्थानामग्निजीवपरमात्मनामस्मिन् ग्रन्थे कठवल्लीषु वरप्रदानसामर्थ्याद्वक्तव्यतयोपन्यासो दृश्यते । तद्विषय एव च प्रश्नः। नातोऽन्यस्य प्रश्न उपन्यासो वास्ति ॥ तत्र तावत्—"सत्वमग्निꣳ स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्" [कठ० १।१३ ] इत्यग्निविषयः प्रश्नः । "येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः" [ कठ० १।२० ] इति जीवविषयः प्रश्नः ।

रत्नप्रभा ।

स्पष्टमन्यत् ॥ ५ ॥ किञ्चात्र कठवल्ल्यां प्रधानस्य प्रश्नोत्तरयोरसत्त्वान्न ग्रहणमित्याह—**त्रयाणामिति** ॥ मृत्युना नचिकेतसम्प्रति त्रीन्वरान्वृणीष्वेत्युक्तः त्रयाणामेव प्रश्नो नचिकेतसा कृतः, उपन्यासश्च मृत्युना कृतः । नान्यस्येत्यर्थः । प्रश्नत्रयं क्रमेण पठति—**तत्र तावदिति** ॥ हे मृत्यो स मह्यं दत्तवरः—त्वं स्वर्गहेतुम् अग्निं स्मरसि । प्रेते मृते देहादन्योऽस्ति न वेति संशयोऽस्ति । अतः **एतद्** आत्मतत्त्वं सन्दिग्धं

भामती ।

मस्य भाष्यम् ॥ ५ ॥ **त्रयाणामेव चैवमुपन्यासः प्रश्नश्च** । वरप्रदानोपक्रमा हि मृत्युनचिकेतःसंवादवाक्यप्रवृत्तिरा समाप्तेः कठवल्लीनां लक्ष्यते । मृत्युर्नचिकेतसे कुपितेन पित्रा प्रहिताय तुष्टस्त्रीन्वरान् प्रददौ । नचिकेतास्तु प्रथमेन वरेण पितुः सौमनस्यं वव्रे, द्वितीयेनाग्निविद्याम्, तृतीयेनात्मविद्याम् । 'वराणामेष वरस्तृतीयः' इति वचनात् । न तु तत्र वरप्रदाने प्रधानगोचरे स्तः प्रश्नप्रतिवचने । तस्मात्कठवल्लीष्वग्निजीवपरमात्मपरैव वाक्यप्रवृत्तिर्न त्वनुपक्रान्तप्रधानपरा भवितुमर्हतीत्याह—**इतश्च न प्रधानस्याव्यक्तशब्दवाच्यत्वमिति** । 'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्' इत्यनेन व्यवहितं जीवविषयं 'यथा तु मरणं प्राप्यात्मा भवति गौतम' इत्यादि प्रतिवचनमिति योजना । अत्राह चोदकः—किं जीवपरमात्मनोरेक एव प्रश्नः, किं वान्यो जीवस्य 'येयं प्रेते' मनुष्य इति प्रश्नः, अन्यश्च परमात्मनः 'अन्यत्र

आनन्दगिरीय—न्यायनिर्णयः ।

श्रुतेरपि परस्यैव ज्ञेयत्वमित्याह—**मृत्यिवति** । प्रधानेऽपि तदविरुद्धमित्याशंक्याऽऽह—**न हीति** । कथं तर्हि तेषामभ्युपगमस्तत्राऽऽह—**चेतनेति** । सर्वोपनिषदालोचनायामपि परस्यैव ज्ञेयत्वमत्रेष्टमित्याह—**सर्वेष्विति** । तुल्यश्रुतिसिद्धब्रह्मोक्तिसंभवे विजातीयस्मृतिसिद्धप्रधानोक्त्ययोगान्न प्रधानधीरित्युपसंहरति—**तस्मादिति** ॥ ५ ॥ प्रतिज्ञाद्वये युक्त्यन्तरमाह—**त्रयाणामिति** । प्राथमिकं चकारं प्रतिज्ञापरत्वेन व्याकरोति—**इतश्चेति** । प्रधानस्याप्रक्रान्तत्वमितःशब्दार्थं स्फुटयति—**यस्मादिति** । कठानां वल्लीभिरवच्छिन्ने ग्रन्थे त्रयाणामेव प्रश्नप्रतिवचने दृष्टे मृत्योर्नचिकेतसं प्रति वरत्रयदानस्यान्यथानुपपत्तेरित्यर्थः । सौत्रमेवकारं व्याचष्टे—**नेति** । क्रमेण प्रश्नत्रयमुदाहरति—**तत्रेत्यादिना** । हे मृत्यो स मदर्थं दत्तवरस्त्वं स्वर्ग्यं स्वर्गहेतुमग्निमध्येषि स्मरसि तेन तद्विषयां विद्यां मदर्थं वदेत्यर्थः । मनुष्ये तद्देहे प्रेते त्यक्तप्राणे संति येयं विचिकित्सा तामेव पक्षभेदेन दर्शयति—**अस्तीति** । संदिग्धमात्मतत्त्वमेतदित्युक्तम् । प्रतिवचनत्रय-

"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद" [ कठ० २।१४ ] इति परमात्मविषयः ॥ प्रतिवचनमपि-" लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा " [ कठ० १ । १५ ] इत्यग्निविषयम् । " हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । यथा च मरणं प्राप्यात्मा भवति गौतम ॥ ६ ॥ योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् " [ कठ० ५ । ७ ] इति व्यवहितं जीवविषयम् ॥ " न जायते म्रियते वा विपश्चिद् " [ कठ० २ । १८ ] इत्यादि बहुप्रपञ्चं परमात्मविषयम् ॥ नैवं प्रधानविषयः प्रश्नोऽस्ति ॥ अपृष्टत्वादनुपन्यसनीयत्वं तस्येति ॥ अत्राह ॥ योऽयमात्मविषयः प्रश्नः-" येयं प्रेते विचिकित्सा मनुष्ये अस्ति " [ कठ० १ । २१ ] इति किं स एवायम्-"अन्यत्र धर्मादन्यत्राधर्माद्" [ कठ० २ । १४ ] इति पुनरनुकृष्यते, किंवा ततोऽन्योऽयमपूर्वः प्रश्न उत्थाप्यत इति ॥ किञ्चातस्स एवायं प्रश्नः पुनरनु-

---

रत्नप्रभा ।

जानीयामित्यर्थः । क्रमेणोत्तरत्रयमाह-प्रतिवचनमपीति ॥ लोकहेतुविराडात्मनोपास्यत्वात् लोकादिश्चित्योऽग्निस्तं मृत्युरुवाच नचिकेतसे याः स्वरूपतः । यावतीः संख्यातः । यथा वा क्रमेण अग्निश्चीयते तत्सर्वमुवाचेत्यर्थः । हन्तेदानीं ब्रह्म वक्ष्यामीति ब्रह्मवाक्येन जीवप्रश्नाद्व्यवहितमपि "यथा च मरणं प्राप्य" इत्यादिवाक्यं जीवविषयम् । उत्तरयोग्यत्वादित्यर्थः । वाक्यार्थस्तु आत्मा मरणं प्राप्य यथा भवति, तथा वक्ष्यामीति । प्रतिज्ञातमाह-योनिमिति ॥ चराचरदेहप्राप्तौ निमित्तमाह-यथेति ॥ श्रुतमुपासनम् । सूत्रे आद्यश्चकारो यत इत्यर्थे । एवं च "त्रयाणामेवोपन्यासः प्रश्नश्च" यतः, अतो न प्रधानमव्यक्तमिति योजना । उक्तार्थे सूत्रमाक्षिपति-अत्राहेति ॥ एकः प्रश्नः, द्वौ प्रश्नौ वेति पक्षद्वये फलितं पृच्छति-किञ्चात इति ॥सप्तम्यर्थे तसिः । अत्र च पक्षद्वयेऽपि किमित्यर्थः । प्रश्नैक्ये सूत्रासङ्गतिः । भेदे प्रधानस्य श्रौतत्वसिद्धिरिति पूर्ववाद्याह-स एवेत्यादिना ॥ प्रश्नैक्यपक्षमादाय सिद्धा-

भामती ।

धर्मात्' इत्यादिः । एकत्वे सूत्रविरोधस्त्रयाणामिति । भेदे तु सौमनस्यावाप्त्यग्न्यात्मज्ञानविषयवरत्रयप्रदानानन्तर्भावोऽन्यत्र धर्मादित्यादेः प्रश्नस्य । तुरीयवरान्तरकल्पनायां वा तृतीय इति श्रुतिबाधप्रसङ्गः ।

आनन्दगिरीय-न्यायनिर्णयः ।

मपि क्रमेण कथयति-प्रतीति । लोकहेतुविराड्दृष्ट्योपास्यत्वाल्लोकादिश्चित्योऽग्निस्तमुक्तवान्मृत्युर्नचिकेतसे । याः स्वरूपतो यावतीः संख्यातो यथा वाऽग्निश्चीयते तत्सर्वमुवाचेति संबन्धः । हन्तेदानीं गुह्यं गोप्यं सनातनं चिरंतनं ब्रह्म ते तुभ्यं प्रवक्ष्यामीति प्रतिज्ञाय जीवमपि ब्रवीति—यथेति । आत्मा मरणं प्राप्य यथा भवति तथा च वक्ष्यामीति योजना । कथं स मरणे भवति तत्राऽऽह-योनिमिति । मृतानां पुनर्विचित्रजन्मापत्तौ निमित्तमाह-यथेति । यथाश्रुतमिति । येन यादृशं देवताज्ञानमनुष्ठितं स तदनुरूपामेव योनिं प्राप्नोतीत्यर्थः । "देवैरत्रापि विचिकित्सितं पुरा" इत्यारभ्य "यस्मिन्नेतावुपाश्रितौ" इत्यन्तेन संदर्भेण परमात्मप्रतिवचनरूपेण जीवप्रश्नाद्व्यवहितमपि यथोक्तं वचो योग्यत्वाज्जीवविषयमित्याह-व्यवहितमिति । एवमिति सूत्रावयवार्थं विवृणोति-नैवमिति । सूत्राक्षराणि योजयित्वा तदर्थोक्त्यर्थमाक्षिपति-अत्रेति । परापरार्थे प्रश्नप्रस्तावे सतीति यावत् । उक्तिप्रकारं प्रकटयति-योऽयमिति । इतिशब्दो विमर्शावसानद्योती । कल्पद्वयेऽपि फलं पृच्छति-किंचेति । तत्राऽऽद्यमनूद्य सूत्रावयवायोगं फलमाह-स एवेति । कल्पान्तरमनूद्याऽऽक्षेप्ता स्वपक्षसिद्धिं फलमाह-

कृष्यते इति यद्युच्येत, तदा द्वयोरात्मविषययोः प्रश्नयोरेकतापत्तेरग्निविषय आत्मविषयश्च द्वावेव प्रश्नाविति । अतो न वक्तव्यं त्रयाणां प्रश्नोपन्यासाविति ॥ अथान्योऽयमपूर्वः प्रश्न उत्थाप्यत इति यद्युच्येत, ततो यथैव वरप्रदानव्यतिरेकेण प्रश्नकल्पनायामदोषः, एवं प्रश्नव्यतिरेकेणापि प्रधानोपन्यासकल्पनायामदोषः स्यादिति ॥ अत्रोच्यते ॥ नैवं वयमिह वरदानव्यतिरेकेण प्रश्नं कञ्चित्कल्पयामः । वाक्योपक्रमसामर्थ्यात् ॥ वरप्रदानोपक्रमा हि मृत्युनचिकेतस्संवादरूपा वाक्यप्रवृत्तिरा समाप्तेः कठवल्लीनां लक्ष्यते । मृत्युः किल नचिकेतसे पित्रा प्रहिताय त्रीन्वरान्प्रददौ । नचिकेताः किल तेषां प्रथमेन वरेण पितुः सौमनस्यं वव्रे, द्वितीयेनाग्निविद्यां, तृतीयेनात्मविद्यां, "येयं प्रेते" [ कठ० १ । २१ ] इति "वराणामेष वरस्तृतीयः" [ कठ० १ । २१ ] इति लिङ्गात् ॥ तत्र यदि "अन्यत्र धर्माद्" [ कठ० २ । १४ ] इत्यन्योऽयमपूर्वः प्रश्न उत्थाप्येत, ततो वर-

---

रत्नप्रभा ।

न्याह—अत्रोच्यत इति ॥ येन प्रधानसिद्धिः स्यादिति शेषः । चतुर्थप्रश्नकल्पने वरत्रित्वोपक्रमविरोधः स्यादिति विवृणोति—वरेत्यादिना ॥ वरप्रदानमुपक्रमो यस्याः सा । प्रहिताय यमलोकं प्रति प्रेषिताय इतः पुनः मर्त्यलोकं प्राप्तस्य मम पिता यथापूर्वं सुमनाः स्यादिति प्रथमं वव्रे । ननु द्वितीयवरो जीवविद्या, तृतीयो ब्रह्मविद्येति प्रश्नभेदः किं न स्यादित्यत आह—येयमिति ॥ "प्रेते" [ कठ० १ । २१ ] इत्युपक्रम्य तृतीयत्वोक्तिलिङ्गाज्जीवात्मविद्यैव तृतीयो वर इत्यर्थः । एवं वाक्योपक्रमे सति प्रश्नान्तरं न युक्तमित्याह—तत्रेति ॥ मरणधर्मायस्पर्शलिङ्गाभ्यां प्रष्टव्ययोर्जीवेश्वरयोर्भेदात्प्रश्नभेदसिद्धेर्वाक्य-

भामती ।

वरप्रदानान्तर्भावे प्रश्नस्य तद्वत् प्रधानाख्यानमप्यनन्तर्भूतं वरप्रदानेऽस्तु महतः परमव्यक्तमित्याक्षेपः । परिहरति—अत्रोच्यते, नैवं वयमिहेति । वस्तुतो जीवपरमात्मनोरभेदात्प्रष्टव्याभेदेनैक एव प्रश्नः । अत एव प्रतिवचनमप्येकम् । सूत्रं त्ववास्तवभेदाभिप्रायम् । वास्तवश्च जीवपरमात्मनोर्भेदस्तत्रतत्र श्रुत्युपन्यासेन भगवता भाष्यकारेण दर्शितः । तथा जीवविषयस्यास्तित्वनास्तित्वप्रश्नस्येत्यादि । 'येयं प्रेते' इति हि नचिकेतसः प्रश्नमुपश्रुत्य तत्तत्कामविषयमलोभं चास्य प्रतीत्य मृत्युः 'विद्याभीप्सिनं नचिकेतसं

आनन्दगिरीय—न्यायनिर्णयः ।

अथेत्यादिना । न चाऽऽत्मज्ञानवरदानान्तर्भूतमेव परमात्मज्ञानमपि प्रधानज्ञानस्यापि तदन्तर्भावसंभवादिति भावः । सूत्रावयवविरोधमग्रे परिहरिष्यन्नाद्यं पक्षमङ्गीकृत्याऽऽह—अत्रेति । द्वितीयस्त्वनभ्युपगमादेव परास्त इत्याह—नैवेति । प्रकृतो ग्रन्थः सप्तम्यर्थः । अतो न प्रधानोक्तिप्रसक्तिरिति शेषः । वरदानं विनाऽपूर्वप्रश्नकल्पनाभावे हेतुमाह—वाक्येति । कथं वाक्योपक्रमस्तद्विरोधो वा प्रश्नान्तरोपगमे कथमित्याशंक्य वाक्योपक्रमं दर्शयति—वरेति । उपक्रमानुसारित्वमुपसंहारस्यापि सूचयति—आ समाप्तेरिति । आद्यन्तयोरेकरूपतया वाक्यवृत्तिमेव विशदयति—मृत्युरिति । वरदानतदुपादानविषयाख्यायिकाद्योतनार्थमुभयत्र किलेत्युक्तम् । वरत्रयमेव विशेषतो बुभुत्स(त्स्य)मानं प्रकटयति—नचिकेता इति । ननु पितुः सौमनस्यं वरो न भवति तत्र प्रश्नाभावात्किं त्वग्निजीवपरात्मार्थाः प्रश्नरूपा वरास्तेषु प्रत्युक्तेरपि भावात्तत्राऽऽह—येयमिति । प्रेते सतीत्युपक्रमे सतीति शेषः । वाक्योपक्रमं दर्शयित्वा प्रश्नान्तरकल्पने तद्विरोधं दर्शयति—तत्रेति । वाक्य

प्रदानव्यतिरेकेणापि प्रश्नकल्पनाद्वाक्यं बाध्येत ॥ ननु प्रष्टव्यभेदादपूर्वोऽयं प्रश्नो भवितुमर्हति । पूर्वो हि प्रश्नो जीवविषयः । येयं प्रेते विचिकित्सा मनुष्येऽस्ति नास्तीति विचिकित्साभिधानात् ॥ जीवश्च धर्मादिगोचरत्वान्न "अन्यत्र धर्माद्" इति प्रश्नमर्हति । प्राज्ञस्तु धर्माद्यतीतत्वाद् "अन्यत्र धर्माद्" इति प्रश्नमर्हतीति ॥ प्रश्नच्छाया च न समाना लक्ष्यते । पूर्वस्यास्तित्वनास्तित्वविषयत्वादुत्तरस्य धर्माद्यतीतवस्तुविषयत्वाच्च ॥ तस्मात्प्रत्यभिज्ञानाभावात्प्रश्नभेदः ॥ न ॥ पूर्वस्यैवोत्तरत्रानुकर्षणमिति चेत्॥न॥ जीवप्राज्ञयोरेकत्वाभ्युपगमात्। भवेत्प्रष्टव्यभेदात्प्रश्नभेदः, यद्यन्यो जीवः प्राज्ञात्स्यात् ॥ न त्वन्यत्वमस्ति "तत्त्वमसि" [ छां० ६। ८ । ७ ] इत्यादिश्रुत्यन्तरेभ्यः ॥ इह चाऽन्यत्र धर्मादित्यस्य प्रश्नस्य प्रतिवचनं-"न जायते म्रियते वा विपश्चिद्" [ कठ० २ । १८ ] इति जन्ममरणप्रतिषेधेन प्रतिपाद्यमानं शारीरपरमेश्वरयोरभेदं दर्शयति ॥ सति हि प्रसङ्गे प्रतिषेधो भागी भवति ॥ प्रसङ्गश्च जन्ममरणयोः शरीरसंस्पर्शाच्छारीरस्य भवति, न परमेश्वरस्य ॥ तथा-"स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति । महान्तं विभुमात्मानं मत्वा धीरो न शोचति" [ कठ० ४ । ४ ] इति स्वप्नजागरितदृशो जीवस्यैव महत्त्वविभु-

---

रत्नप्रभा ।

बाधो युक्त इति शङ्कते-नन्वित्यादिना ॥ गोचरत्वाद् आश्रयत्वात् । न केवलं प्रष्टव्यभेदात्प्रश्नभेदः । किन्तु प्रश्नवाक्ययोः सादृश्याभावादपीत्याह-प्रश्नच्छायेति ॥ प्रष्टव्यभेदोऽसिद्ध इति परिहरति-नेत्यादिना ॥ किञ्च ब्रह्मप्रश्ने जन्मादिनिषेधेन जीवस्वरूपं वदन्यमस्तयोरैक्यं सूचयतीत्याह-इह चान्यत्रेति ॥ तन्निषेधवाक्ये जीवोक्तिरसिद्धेत्यत आह-सतीति ॥ भागी युक्तः । तस्मादविद्यया जीवस्य प्राप्तजन्मादिनिषेधेन स्वरूपमुक्तमित्यर्थः ॥ किञ्च जीवो, ब्रह्माभिन्नः, मोक्षहेतुज्ञानविषयत्वाद्, ब्रह्मवदित्याह-तथेति ॥ अन्तोऽवस्था येन । साक्षिणा प्रमाता पश्यति तमात्मानमिति सम्बन्धः । हेतोर-

भामती ।-०

आनन्दगिरीय-न्यायनिर्णयः ।

बलात्प्रश्नैक्यमयुक्तं लिङ्गात्तद्भेदसिद्धेरिति शङ्कते-नन्विति । प्रष्टव्यभेदं स्पष्टयति-पूर्वो हीति । न हि तस्य परविषयत्वं तत्रास्ति नास्तीतिविचिकित्सायोगात्तस्य सदेकतानत्वादित्यर्थः । तथाऽपि न प्रष्टव्यभेदो द्वितीयेऽपि प्रश्ने जीवस्यैवोक्तेरित्याशंक्याऽऽह-जीवश्चेति । कस्तर्हि द्वितीयप्रश्नार्थो न परो जीवादन्योऽस्ति तत्राऽऽह-प्राज्ञस्त्विति । धर्मादिगोचरत्वागोचरत्वाभ्यां तद्भेदधीरित्यर्थः । अर्थस्वभावालोचनया प्रश्नभेदमुक्त्वा प्रश्नस्वभावालोचनयाऽपि तद्भेदमाह-प्रश्नेति । वैषम्यं स्फोरयति-पूर्वस्येति । आर्थे शाब्दे च वैषम्ये फलितमाह-तस्मादिति । प्रष्टव्यभेदादुक्तं प्रश्नभेदं प्रत्याह-नेति । तदेव व्यतिरेकद्वारा स्फोरयति-भवेदिति । ननु प्राज्ञादन्यो जीवो वादिभिरिष्यते नेत्याह-न त्विति । कठश्रुतिमपेक्ष्यान्तरशब्दः । एतद्वाक्यगतलिङ्गेभ्योऽपि जीवपरयोरैक्यं वक्तुं क्रमेण लिङ्गान्युपन्यस्यति-इहेति । यद्यपि परमात्मप्रश्नस्य प्रत्युक्तिं जन्मादिनिषेधेन मृत्युराह तथाऽपि कथमैक्यं तत्राऽऽह-सतीति । अप्रसक्तनिषेधस्यातिप्रसङ्गित्वात्प्रसङ्गे सत्येव निषेधो युक्तश्चेज्जीवस्यापि ब्रह्मवन्नित्यत्वाज्जन्माद्ययोगान्न तन्निषेधः स्यादित्याशंक्याऽऽह-प्रसंगश्चेति । परस्मिन्नेवाविद्यया देहयोगाज्जन्मादिप्रसङ्गादध्यस्तात्तद्धर्मैन्युदासेन जीवतत्त्ववेदनमेव परप्रश्नस्योत्तरं मन्वानस्तयोरैक्यं सूचयतीत्यर्थः । तत्रैव लिङ्गान्तरमाह-तथेति । अन्तशब्दो मध्यवाची। येन साक्षिणा लोको भूयोभूयः पश्यति तमात्मानमिति संबन्धः । वाक्यतात्पर्यमाह-स्वप्नेति । यद्यपि

त्वविशेषणस्य मननेन शोकविच्छेदं दर्शयन्न प्राज्ञादन्यो जीव इति दर्शयति ॥ प्राज्ञविज्ञानाद्धि शोकविच्छेद इति वेदान्तसिद्धान्तः ॥ तथाऽग्रे "यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" [ कठ० ४ । १० ] इति जीवप्राज्ञभेददृष्टिमपवदति ॥ तथा जीवविषयस्यास्तित्वनास्तित्वप्रश्नस्यानन्तरम् "अन्यं वरं नचिकेतो वृणीष्व" [ कठ० १ । २२ ] इत्यारभ्य मृत्युना तैस्तैः कामैः प्रलोभ्यमानोऽपि नचिकेता यदा न चचाल, तदैनं मृत्युरभ्युदयनिश्श्रेयसविभागप्रदर्शनेन विद्याविद्याविभागप्रदर्शनेन च "विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त" [ कठ० २ । ४ ] इति प्रशस्य प्रश्नमपि तदीयं प्रशंसन्यदुवाच—"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति"

---

रत्नप्रभा ।

प्रयोजकत्वमाशंक्य तमेव विदित्वेत्यादिश्रुतिविरोधमाह—**प्राज्ञेति** ॥ किञ्चाभेदमुक्त्वा भेदस्य निन्दितत्वादभेद एव सत्य इत्याह—**तथेति** ॥ इह देहे **यत्** चैतन्यं **तदेव** । अमुत्र सूर्यादौ, एवम् इह अखण्डैकरसे ब्रह्मणि **यो नानेव** मिथ्या भेदं **पश्यति सः** भेददर्शी मरणान्मरणं प्राप्नोति । संसारभयान्न मुच्यत इत्यर्थः ॥ **किञ्च** जीवप्रश्नानन्तरं "तं दुर्दर्शम्" इति यदुत्तरमुवाच तेनाप्युत्तरेणाभेदो गम्यत इति सम्बन्धः । प्रष्टृप्रश्नयोः प्रशंसयापि लिंगेन पृष्टस्य जीवस्य दौर्लभ्यत्वद्योतनाद्ब्रह्मत्वसिद्धिरित्याह—**अन्यं वरमित्यादिना** ॥ पुत्रादिकं वृणीष्वेत्युक्तेऽपि, विषयांस्तुच्छीकृत्यात्मज्ञानान्न चचाल "नान्यं तस्मान्नचिकेता वृणीते" [ कठ० । १ । ३० ] इति श्रवणात् । **तदा** सन्तुष्टो यमः "अन्यच्छ्रेयोऽन्यदुतैव प्रेयः" [ कठ० २ । १ ] इति भोगापवर्गयोर्वैलक्षण्यं प्रतिज्ञाय "दूरमेते विपरीते विषूची अविद्या या च विद्या" [ कठ० २ । ४ ] इति दर्शितवानित्यर्थः । **प्रेयः** प्रियतमं स्वर्गादिकम् । **विषूची** विरुद्धफले । **अविद्या** कर्म । **विद्या** तत्त्वधीः । **विद्याभीप्सिनं** विद्यार्थिनं त्वामहं मन्ये । यतः **त्वा** त्वां **बहवो**ऽपि कामाः पुत्रादयो मया दीयमाना दुर्लभा अपि **नालोलुपन्त** लोभवन्तं न

भामती ।

मन्ये' इत्यादिना नचिकेतसं प्रशस्य प्रश्नमपि तदीयं प्रशंसन्नस्मिन्प्रश्ने ब्रह्मैवोत्तरमुवाच—**तं दुर्दर्शमिति** । यदि पुनर्जीवात्प्राज्ञो भिद्येत, जीवगोचरः प्रश्नः, प्राज्ञगोचरं चोत्तरमिति किं केन संगच्छेत ।

आनन्दगिरीय—न्यायनिर्णयः ।

जीवतत्त्वधिया शोकोच्छित्तिस्तथाऽपि कथं जीवप्राज्ञयोरैक्यं तत्राऽऽह—**प्राज्ञेति** । 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्यादिदर्शनादिति शेषः । इतश्च तयोरैक्यमित्याह—**तथेति** । इह देहे यच्चैतन्यं तदेवामुत्र परत्राऽऽदित्यादावसंसारि ब्रह्म यच्चामुत्र तदेवेह देहेऽनुप्रविष्टमित्यन्योन्यैक्यमित्यर्थः । भेददृष्ट्यपवादाच्च तयोरैक्यमित्याह—**मृत्योरिति** । यः कश्चिदिह ब्रह्मात्मनि नानेव मिथ्याभेदं पश्यति स मरणं प्राप्नोति पुनःपुनर्म्रियते न पुमर्थभागित्यर्थः । जीवप्रश्नानन्तरं तत्तत्कामोक्तिपूर्वकं प्रलोभनेनातिदुर्लभत्वख्यापनादपि जीवो ब्रह्मात्मनाऽभीष्ट इत्याह—**तथेति** । अधिकारित्वजिज्ञासनादपि जीवस्य ब्रह्मात्मना प्रतिपाद्यतेत्याह—**यदेति** । "नान्यं तस्मात्" इत्यादिश्रुतेरचलनं नचिकेतसोऽवसीयते । वक्ष्यमाणविद्याया मुक्तिहेतुत्वख्यापनादपि जीवस्य ब्रह्मात्मतावदनमित्याह—**तदेति** । "अन्यच्छ्रेयोऽन्यदुतैव प्रेयः" इत्याद्यभ्युदयनिःश्रेयसविभागोक्तिः । "दूरमेते विपरीते" इत्यादिविद्याविद्याविभागगीरिति विभागः । त्वा त्वां बहवोऽपि कामा नालोलुपन्त श्रेयसो विच्छेदं न कृतवन्तस्ततो विद्यार्थिनं त्वां मन्येऽहमिति योजना ।

[ कठ० २ । १२ ] इति ॥ तेनापि जीवप्राज्ञयोरभेद एवेह विवक्षित इति गम्यते ॥ यत्प्रश्ननिमित्ताश्च प्रशंसां महतीं मृत्योः प्रत्यपद्यत नचिकेताः । यदि तं विहाय प्रशंसानन्तरमन्यमेव प्रश्नमुपक्षिपेदस्थान एव सा सर्वा प्रशंसा प्रसारिता स्यात् ॥ तस्माद् "येयं प्रेते" [ का० १ । २० ] इत्यस्यैव प्रश्नस्यैतदनुकर्षणम् "अन्यत्र धर्माद्" इति ॥ यत्तु प्रश्नच्छायावैलक्षण्यमुक्तम् ॥ तददूषणम् ॥ तदीयस्यैव विशेषस्य पुनः पृच्छ्यमानत्वात् ॥ पूर्वत्र हि देहादिव्यतिरिक्तस्यात्मनोऽस्तित्वं पृष्टम् । उत्तरत्र तु तस्यैवासंसारित्वं पृच्छ्यत इति ॥ यावद्ध्यविद्या न निवर्तते, तावद्धर्मादिगोचरत्वं, जीवस्य जीवत्वं च न निवर्तते ॥ तन्निवर्तनेन तु प्राज्ञ एव "तत्त्वमसि" [ छां० ६ । ८ । ७ ] इति श्रुत्या प्रत्याय्यते ॥ न चाविद्यावत्त्वे तदपगमे च वस्तुनः कश्चिद्विशेषोऽस्ति । यथा-कश्चित्सन्तमसे पतितां काञ्चिद्रज्जुमहिं मन्यमानस्ततो भीतो वेपमानः पलायते । तं चापरो ब्रूयात्-मा भैषीः नायमहिः, रज्जुरेषेति । स च तदुपश्रुत्याऽहिकृतं भयमुत्सृजेद्वेपथुं पलायनं च । न त्वहिबुद्धिकाले तदपगमकाले च वस्तुनः कश्चिद्विशेषः स्यात्-तथैवैतदपि द्रष्टव्यम् ॥ ततश्च "न जायते म्रियते वा" इत्येवमाद्यपि भवत्यस्तित्वप्रश्नस्य प्रतिवचनम् ॥ सूत्रं त्वविद्याकल्पितजीवप्राज्ञभेदापेक्षया योजयितव्यम् ॥ एकत्वेऽपि ह्यात्मविषयस्य

---

रत्नप्रभा ।

कृतवन्त इति प्रष्टारं स्तुत्वा प्रश्नमपि "त्वादृङ् नो भूयान्नचिकेतः प्रष्टा" [ कठ० २ । ९ ] इति स्तुवन्नित्यक्षरार्थः । इयं प्रशंसा प्रश्नभेदपक्षे न घटत इत्याह-यत्प्रश्नेति ॥ यत्प्रश्नेन स्तुतिं लब्धवांस्तं प्रश्नं विहाय यद्यन्यदेवोत्थापयेत्तर्ह्यनवसरे स्तुतिः कृता स्यादित्यर्थः । तस्मादिति । प्रष्टव्यभेदाभावादित्यर्थः ॥ प्रश्नवाक्यव्यक्त्योः सादृश्याभावात्प्रश्नभेद इत्युक्तं निरस्यति-यत्त्वित्यादिना ॥ धर्माद्याश्रयस्य जीवस्य ब्रह्मत्वं कथमित्यत आह-यावदिति ॥ अविद्यानाशानन्तरं ब्रह्मत्वं चेदागन्तुकमनित्यं च स्यादित्यत आह-न चाविद्यावत्त्व इति ॥ जीवस्य ब्रह्मत्वे स्वाभाविके सति ब्रह्मप्रश्नस्य यदुत्तरं तज्जीवप्रश्नस्यापि भवतीति लाभं दर्शयति । ततश्च "न जायते" [ कठ० २ । १७ ] इति जीवब्रह्मैक्ये त्रयाणामिति सूत्रं कथमित्यत आह-सूत्रं त्विति ॥ कल्पितभेदात्प्रश्नभेदकल्पनेत्याह-

भामती ।-०

आनन्दगिरीय-न्यायनिर्णयः ।

'त्वादृङ् नो भूयात्' इति प्रश्नं प्रशंसन्यदुवाच तेनापीति संबन्धः । जीवप्रश्नस्य परमात्मवाक्येनोत्तरोक्तेरपि तयोरैक्यमित्याह-तमिति । प्रशंसानुपपत्तिरपि प्रश्नयोरैक्यं गमयतीत्याह-यदिति । यद्विषयः प्रश्नो यत्प्रश्नस्तं विहायेति संबन्धः । प्रस्तुतप्रश्नवाची तच्छब्दः । प्रष्टव्यभेदाभावे फलितमाह-तस्मादिति । प्रश्नस्वभावालोचनया प्रष्टव्यभेदमुक्तमनूद्य प्रत्याह-यत्त्विति । विशेषमेव दर्शयति-पूर्वत्रेति । विशेषोक्तिसमाप्ताविति शब्दः जीवस्य धर्मादिमतो न तद्रहितब्रह्मैक्यमिति प्रष्टव्यभेदमाशंक्याऽऽह-यावदिति । कथं तर्हि जीवस्याविद्यावतस्तद्धीनब्रह्मैक्यं तत्राऽऽह-तदिति । अविद्यानिवृत्त्युत्तरकालत्वादैक्यस्य तर्हि कृतकत्वेनानित्यत्वं नेत्याह-न चेति । उक्तं दृष्टान्तेन स्पष्टयति-यथेत्यादिना । जीवब्रह्मैक्ये वरदानोपक्रमाविरोधमुक्त्वा जीवप्रश्नस्याव्यवहितप्रत्युक्तिमत्त्वं लाभान्तरमाह-ततश्चेति । जीवब्रह्मणोरैक्येन प्रश्नैक्ये कथं त्रयाणामिति सूत्रं तत्राऽऽह-सूत्रं त्विति । योजनामभिनयति-एकत्वेऽपीति । कल्पित-

---

१ तन्निवृत्तौ तु इति पाठान्तरम् ।

प्रश्नस्य प्रायणावस्थायां देहव्यतिरिक्तास्तित्वमात्रविचिकित्सनात्, कर्तृत्वादिसंसारस्वभावानपोहनाच्च, पूर्वस्य पर्यायस्य जीवविषयत्वमुत्प्रेक्ष्यते ॥ उत्तरस्य तु धर्माद्यत्ययसङ्कीर्तनात्प्राज्ञविषयत्वमिति ॥ ततश्च युक्ताग्निजीवपरमात्मकल्पना ॥ प्रधानकल्पनायां तु न वरप्रदानं न प्रश्नो न प्रतिवचनमिति वैषम्यम् ॥ ६ ॥

## महद्वच्च ॥ ७ ॥

यथा–महच्छब्दः सांख्यैस्सत्तामात्रेऽपि प्रथमजे प्रयुक्तो न तमेव वैदिकेऽपि प्रयोगेऽभिधत्ते । "बुद्धेरात्मा महान्परः" [ कठ० ३।१० ] "महान्तं विभुमात्मानम्" [ कठ० २।२२] "वेदाहमेतं पुरुषं महान्तम्" [ श्वेता० ३ । ८ ] इत्येवमादावात्मशब्दप्रयोगादिभ्यो हेतुभ्यः–तथाऽव्यक्तशब्दोऽपि न वैदिके प्रयोगे प्रधानमभिधातुमर्हति ॥ अतश्च नास्त्यानुमानिकस्य शब्दवत्त्वम् ॥ ७ ॥ इत्यानुमानिकाधिकरणम् ॥ १ ॥

---

रत्नप्रभा ।

**ततश्चेति** ॥ परमात्मनः सकाशात्प्रधानस्य वैषम्यम् । अनात्मत्वेन तृतीयवरान्तर्भावायोगादिति भावः ॥६॥ श्रौतोऽव्यक्तशब्दो, न सांख्यासाधारणतत्त्वगोचरः, वैदिकशब्दत्वात्, महच्छब्दवदित्याह–**महद्वच्चेति** ॥ सूत्रं व्याचष्टे–**यथेत्यादिना** ॥ न चाकाशादिशब्दे व्यभिचारः । आकाशादेर्मतान्तरसाधारणत्वेन सांख्यासाधारणत्वासिद्धेः साध्यस्यापि सत्त्वादिति मन्तव्यम् । **सत्तामात्रे** सत्त्वप्रधानप्रकृतेराद्यपरिणामे । निर्विकल्पकबुद्धावित्यर्थः । "आत्मा महान्" [ कठ० ३ । १० ] इत्यात्मशब्दप्रयोगात्, तं "मत्वा–न शोचति" [ कठ०२।२२ ] "तमसः परस्ताद्" [श्वेता०३।८] इत्यादिना शोकात्ययतमःपरत्वादिभ्यश्च महच्छब्दः सांख्यतत्त्वं नाभिधत्त इति **सम्बन्धः** । अधिकरणार्थमुपसंहरति–**अतश्चेति** ॥ ७ ॥ (१) ॥

भामती ।

अपि च यद्विषयं प्रश्नमुपश्रुत्य मृत्युनैष प्रशंसितो नचिकेताः यदि तमेव भूयः पृच्छेत्तदुत्तरे चावदध्यात्, ततः प्रशंसा दृष्टार्था स्यात्, प्रश्नान्तरे त्ववस्थाने प्रसारिता सत्यदृष्टार्था स्यादित्याह–**यत्प्रश्नेति** । यस्मिन् प्रश्नो यत्प्रश्नः । शेषमतिरोहितार्थम् ॥ ६ ॥ **महद्वच्च** । अनेन सांख्यप्रसिद्धेर्वैदिकप्रसिद्ध्या विरोधान्न सांख्यप्रसिद्धिर्वेद आदर्तव्येत्युक्तम् । सांख्यानां महत्तत्त्वं सत्तामात्रं, पुरुषार्थक्रियाक्षमं सत्तस्य भावः सत्ता तन्मात्रं महत्तत्त्वमिति । याया पुरुषार्थक्रिया शब्दाद्युपभोगलक्षणा च सत्त्वपुरुषान्यताख्यातिलक्षणा च सा सर्वा महति बुद्धौ समाप्यत इति महत्तत्त्वं सत्तामात्रमुच्यत इति ॥ ७ ॥ ( १ ) ॥

आनन्दगिरीय–न्यायनिर्णयः ।

भेदेन सूत्रयोजनाप्रकारसमाप्ताविति शब्दः । कल्पितभेदेन प्रश्नभेदे फलितमाह–**ततश्चेति** । परमात्मकल्पनावत्प्रधानकल्पनाऽपि किं न स्यात्तत्राऽऽह–**प्रधानेति** । वैषम्यं परस्मात्प्रधानस्येति शेषः ॥ ६ ॥ सांख्यप्रसिद्धेर्वेदप्रसिद्ध्या विरोधाच्च न सा वेदार्थनिर्णयहेतुरित्याह–**महद्वच्चेति** । दृष्टान्तं व्याचष्टे–**यथेति** । भोगापवर्गपुरुषार्थस्य महच्छब्दितबुद्धिकार्यत्वात्पुरुषापेक्षितफलकारणं सदुच्यते तत्र भावप्रत्ययोऽपि स्वरूपार्थो न सामान्यवाची कार्यानुमेयं महत्न प्रत्यक्षमिति मात्रशब्दस्तस्मिन्प्रथमजे प्रयुक्तोऽपीति संबन्धः । वैदिकप्रयोगमेवाऽऽह–**बुद्धेरिति** । तत्र महच्छब्देन सांख्यीयमहतोऽनुक्तौ हेतुमाह–**आत्मेति** । आदिशब्देन फलभेदोक्तिपुरुषशब्दप्रयोगादयो गृह्यन्ते सूत्रेऽभीष्टं दार्ष्टान्तिकमाह–**तथेति** । "महतः परम्" इत्यत्राव्यक्तस्याप्रधानत्वे फलितमुपसंहरति–**अतश्चेति** ॥ ७ ॥ ( १ ) ॥ कारणवाचकाव्यक्तशब्देन कार्यं शरीरं लक्ष्यमित्युक्तमिदानीं धर्मवाचिलोहितादिपदैस्तद्धर्मीणि तेजोबन्नानि लक्ष्यन्त इत्युपेत्याजात-

## चमसवदविशेषात् ॥ ८ ॥ ( २ ) ॥

पुनरपि प्रधानवादी-अशब्दत्वं प्रधानस्यासिद्धमित्याह ॥ कस्मात् ॥ मन्त्रवर्णाद्-"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजास्सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" [ श्वेता० ४ । ५ ] इति ॥ अत्र हि मन्त्रे लोहितशुक्लकृष्णशब्दै रजस्सत्त्वतमांस्यभिधीयन्ते ॥ लोहितं रजः । रञ्जनात्मकत्वात् ॥ शुक्लं सत्त्वम् । प्रकाशात्मकत्वात् ॥ कृष्णं तमः । आवरणात्मकत्वात् ॥ तेषां साम्या-

रत्नप्रभा ।

**चमसवदविशेषात्** ॥ अत्राऽजापदं विषयः, तत्किं प्रधानपरं मायापरं वेति रूढ्यर्थासम्भवात्संशये पूर्वत्राव्यक्तशब्दमात्रेण प्रधानस्याप्रत्यभिज्ञायामप्यत्र त्रिगुणत्वादिलिंगोपेतादजापदात्प्रत्यभिज्ञास्तीति प्रत्युदाहरणेन पूर्वपक्षयति-**पुनरपीति** ॥ फलं पूर्वपक्षे ब्रह्मणि समन्वयासिद्धिः, सिद्धान्ते तत्सिद्धिरिति पूर्ववद् द्रष्टव्यम् । रागहेतुत्वादिगुणयोगाद्रोहितादिशब्दै रजआदिगुणलाभेऽपि कथं प्रधानलाभः, तत्राह-**तेषां साम्येति** ॥ अवयवाः प्रधानस्य रजआदयस्तेषां धर्माः रञ्जकत्वादयः तैर्निमित्तैः लोहितादिशब्दैः प्रधानमुच्यते इत्यर्थः ॥ गुणाभेदात्प्रधानलाभ इति भावः । तत्रा-

भामती ।

**चमसवदविशेषात्** । अजाशब्दो यद्यपि छागायां रूढस्तथाप्यध्यात्मविद्याधिकारान्न तत्र वर्तितुमर्हति । तस्माद्रूढेरसंभवाद्योगेन वर्तयितव्यः । तत्र किं स्वतन्त्रं प्रधानमनेन मन्त्रवर्णेनानूद्यतामुत पारमेश्वरी मायाशक्तिस्तेजोबन्नन्याक्रियाकारणमुच्यताम् । किं तावत्प्राप्तं, प्रधानमेवेति । तथाहि-यादृशं प्रधानं सांख्यैः स्मर्यते तादृशमेवास्मिन्नन्यूनानतिरिक्तं प्रतीयते । सा हि प्रधानलक्षणा प्रकृतिर्न जायत इत्यजा च एका च लोहितशुक्लकृष्णा च । यद्यपि लोहितत्वादयो वर्णा न रजःप्रभृतिषु सन्ति, तथापि लोहितं कुसुम्भादि रञ्जयति, रजोऽपि रञ्जयतीति लोहितम् । एवं प्रसन्नं पाथः शुक्लं, सत्त्वमपि प्रसन्नमिति शुक्लम् । एवमावरकं मेघादि कृष्णं, तमोऽप्यावरकमिति कृष्णम् । परेणापि नाव्याकृतस्य स्वरूपेण लोहितत्वादियोग आस्थेयः, किंतु तत्कार्यस्य तेजोबन्नस्य रोहितत्वादिकारण उपचरणीयम् । कार्यसारूप्येण वा कारणे कल्पनीयं, तदस्माकमपि तुल्यम् । 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति त्वात्मभेदश्रवणात् सांख्यस्मृतेरेवात्र मन्त्रवर्णे प्रत्यभिज्ञानं न त्वव्याकृतप्रक्रियायाः । तस्यामैकात्म्याभ्युपगमेनात्मभेदाभावात् । तस्मात्स्वतन्त्रं प्रधानं नाशब्दमिति प्राप्तम् । **तेषां साम्याव-**

आनन्दगिरीय-न्यायनिर्णयः ।

मन्त्रस्य प्रधानपरत्वं प्रत्याह-**चमसवदिति** । अजाशब्दस्य च्छागतोऽपकृष्टस्य प्रधानमाययोस्तेजोबन्ने च गुणतो वृत्तियोगादजामन्त्रः प्रधानपरो वा तेजोबन्नाख्यावान्तरप्रकृतिमायारूपपरमप्रकृत्योरन्यतरपरो वेति संशये पूर्वपक्षयति-**पुनरिति** । प्रधानस्याशब्दतायाः साधितत्वादस्थाने प्रत्यवस्थानमित्याह-**कस्मादिति** । प्रधानस्यार्थतोऽप्रत्यविज्ञानात्तस्याव्यक्तपदावाच्यत्वेऽपि त्रिगुणत्वादिनाऽजामन्त्रे तत्प्रत्यभिज्ञानात्तत्परतेति मत्वाऽऽह-**मन्त्रेति** । अजामन्त्रस्याप्रधानपरत्वात्तदशब्दत्वोक्त्या समन्वयस्यैव दार्ढ्योत्पादादिसंगतयः । पूर्वपक्षे प्रधानस्य शब्दवत्त्वेन गतिसामान्यासिद्धिः सिद्धान्ते तस्याशब्दत्वात्तत्सिद्धिरिति फलभेदः । मन्त्रवर्णमेवानुक्रामति-**अजामिति** । प्रधानस्य रूपराहित्यादेतत्प्रतिपाद्यत्वं नास्तीत्याशंक्याऽऽह-**अत्रेति** । रूढ्यभावे कथमभिधानं गुणवृत्त्येत्याह-**लोहितमिति** । कुसुम्भवदम्भोवन्मेघवच्च तेषां तथात्वेऽपि प्रधानस्य किमायातं तदाह-**तेषामिति** । अवयवधर्मैरवयवाः प्रधानस्य सत्त्वादयस्तेषां धर्माः शुक्लादयस्तैरित्यर्थः । लोहितादिशब्दानां रञ्जनीयत्वादिगुणयोगाद्रजआदिपरत्वे व्यवहितलक्षणा स्याद्धर्मिणां तेजो-

वस्थाऽवयवधर्मैर्व्यपदिश्यते लोहितशुक्लकृष्णेति ॥ न जायत इति चाऽजा स्यात्। "मूलप्रकृतिरविकृतिः" [ सां० का० ३] इत्यभ्युपगमात् ॥ नन्वजाशब्दश्छागायां रूढः ॥ बाढम् ॥ सा तु रूढिरिह नाश्रयितुं शक्या। विद्याप्रकरणात् ॥ सा च बह्वीः प्रजास्त्रैगुण्यान्विता जनयति । तां प्रकृतिम्, अजो ह्येकः पुरुषः जुषमाणः प्रीयमाणः सेवमानो वा अनुशेते तामेवाविद्ययाऽऽत्मत्वेनोपगम्य सुखी दुःखी मूढोऽहमित्यविवेकितया संसरति । अन्यः पुनः अजः पुरुषः उत्पन्नविवेकज्ञानो विरक्तः जहाति एनां प्रकृतिम्, भुक्तभोगां कृतभोगापवर्गां परित्यजति ॥

रत्नप्रभा ।

जाशब्दं योजयति—नेति ॥ रूढिर्योगमपहरतीति न्यायेन शङ्कते—नन्विति ॥ रूढ्यसम्भवाद्योग आश्रयणीय इत्याह—बाढमिति ॥ अजाशब्दितप्रकृतित्वपुरुषभेदलिङ्गाभ्यामपि प्रधानप्रत्यभिज्ञेत्याह—सा चेत्यादिना ॥ प्रजायन्त इति प्रजाः महदादयः । त्रैगुण्यं सुखदुःखमोहाः । अनुशयनं विवृणोति—तामेवाविद्ययेति ॥ अविवेकेनेत्यर्थः । विषयधीः—भोगः । गुणभिन्नात्मख्यातिः—अपवर्गः ॥

भामती ।

स्थाऽवयवधर्मैरिति । अवयवाः प्रधानस्यैकस्य सत्त्वरजस्तमांसि तेषां धर्मा लोहितत्वादयस्तैरिति । प्रजास्त्रैगुण्यान्विता इति । सुखदुःखमोहात्मिकाः । तथाहि—मैत्रदारेषु नर्मदायां मैत्रस्य सुखं तत् कस्य हेतोः, तं प्रति सत्त्वस्य समुद्भवात् । तथा च तत्सपत्नीनां दुःखं, तत् कस्य होतोः, ताः प्रति रजःसमुद्भवात्, तथा चैत्रस्य तामविन्दतो मोहो विषादः, स कस्य हेतोः, तं प्रति तमःसमुद्भवात् । नर्मदया च सर्वे भावा व्याख्याताः । तदिदं त्रैगुण्यान्वितत्वं प्रजानाम् । अनुशेत इति व्याचष्टे—तामेवाविद्ययेति । विषया हि शब्दादयः प्रकृतिविकारास्त्रैगुण्येन सुखदुःखमोहात्मान इन्द्रियमनोऽहंकारप्रणालिकया बुद्धिसत्त्वमपसंक्रामन्ति । तेन तद्बुद्धिसत्त्वं प्रधानविकारः सुखदुःखमोहात्मकं शब्दादिरूपेण परिणमते । चितिशक्तिस्त्वपरिणामिन्यप्रतिसंक्रमापि बुद्धिसत्त्वादात्मनो विवेकमबुध्यमाना बुद्धिवृत्त्यैव विपर्यासेनाविद्यया बुद्धिस्थान्सुखादीनात्मन्यभिमन्यमाना सुखादिमतीव भवति। तदिदमुक्तम्—सुखी दुःखी मूढोऽहमित्यविवेकतया संसरति । एकः । सत्त्वपुरुषान्यताख्यातिसमुन्मूलितनिखिलवासनाविद्यानुबन्धस्त्वन्यो जहात्येनां प्रकृतिम् । तदिदमुक्तम्—अन्यः पुनरिति । भुक्तभोगामिति व्याचष्टे—कृतभोगापवर्गाम् । शब्दाद्युपलब्धिर्भोगः । गुणपुरुषान्यताख्यातिरपवर्गः । अपवृज्यते हि तया पुरुष इति । एवं प्राप्तेऽभिधीयते—न तावत् 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इत्येतदात्मभेदप्रतिपादनपरमपि तु सिद्धमात्मभेदमनूद्य बन्धमोक्षौ प्रतिपादयतीति । स चानूदितो भेदः 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इत्यादिश्रुतिभिरात्मैकत्वप्रतिपादनपराभिर्विरोधात्काल्पनिकोऽवतिष्ठते । तथा च न सांख्यप्रक्रियाप्रत्यभिज्ञानमित्यजावाक्यं चमसवाक्यवत्परिप्लवमानं न स्वतन्त्रप्रधा-

आनन्दगिरीय—न्यायनिर्णयः ।

वन्नानां ग्रहे नैवमित्याशंक्य तेषु जनिमत्त्वादाकृत्यभावाच्चाजाशब्दायोगान्न तल्लक्षणेत्याह—नेति । 'रूढिर्योगमपहरति' इति न्यायेन शंकते—नन्विति । रूढ्ययोगे योगवृत्त्यादानं युक्तमित्याह—बाढमिति । वाक्यशेषस्य प्रधानानुगुण्याच्च मन्त्रस्य तत्परतेत्याह—सा चेति । त्रैगुण्यान्विताः सुखदुःखमोहान्विताः । आत्मभेदवादित्वाच्च मन्त्रस्य प्रधानपरतेत्याह—तामिति । अनुशयनमेव विशदयति—तामेवेति । चतुर्थं पादं व्याकरोति—अन्य इति । भुक्तभोगामिति व्याचष्टे—कृतेति । शब्दाद्युपलब्धिर्भोगः । गुणपुरुषान्यताधीरपवृज्यतेऽनेनेत्यपवर्गः । स्वरूपस्थितेरकृतकत्वात्पुनर्मुक्तिवचनाच्चाजामन्त्रस्य प्रधानवादानुकूल्ये

मुच्यत इत्यर्थः॥ तस्माच्छ्रुतिमूलैव प्रधानादिकल्पना कापिलानामिति॥ एवं प्राप्ते ब्रूमः॥ नानेन मन्त्रेण श्रुतिमूलत्वं सांख्यवादस्य शक्यमाश्रयितुम्॥ न ह्ययं मन्त्रः स्वातन्त्र्येण कञ्चिदपि वादं समर्थयितुमुत्सहते॥ सर्वत्रापि यया कयाचित्कल्पनयाऽजात्वादिसम्पादनोपपत्तेस्सांख्यवाद एवेहाभिप्रेत इति विशेषावधारणकारणाभावात्। चमसवद्-यथा हि-"अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः"[बृ० २।२।३] इत्यस्मिन्मन्त्रे स्वातन्त्र्येणायं नामासौ चमसोऽभिप्रेत इति न शक्यते निरूपयितुम्। सर्वत्रापि यथाकथञ्चिदर्वाग्बिलत्वादिकल्पनोपपत्तेः॥ एवमिहाप्यविशेषोऽजामेकामित्यस्य मन्त्रस्य नास्मिन्मन्त्रे प्रधानमेवाऽजाऽभिप्रेतेति शक्यते नियन्तुम्॥ ८॥ तत्र तु "इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः" [बृ० २।२।३] इति वाक्यशेषाच्चमसविशेषप्रतिपत्तिर्भवति॥ इह पुनः केयमजा प्रतिपत्तव्येति॥ अत्र ब्रूमः-

## ज्योतिरुपक्रमा तु तथा ह्यधीयत एके॥ ९॥

परमेश्वरादुत्पन्ना ज्योतिःप्रमुखा तेजोऽबन्नलक्षणा चतुर्विधस्य भूतग्रामस्य प्रकृतिभूतेयमजा प्रतिपत्तव्या॥ तुशब्दोऽवधारणार्थः भूतत्रय-

---

रत्नप्रभा।

सिद्धान्तयति-एवं प्राप्त इति॥ मायादावपि साधारणान्मन्त्राद्विशेषार्थग्रहो न युक्तः विशेषग्रहहेतोः प्रकरणादेरभावादिति हेतुं व्याख्याय दृष्टान्तं व्याचष्टे-चमसवदिति॥ सर्वत्र गिरिगुहादावपि॥८॥उत्तरसूत्रव्यावर्त्याशङ्कामाह-तत्र त्विदमिति॥ ज्योतिः०॥ चतुर्विधस्येति। जरायुजा-

भामती।

ननिश्चयाय पर्याप्तम्। तदिदमुक्तं सूत्रकृता-'चमसवदविशेषात्' इति॥ ८॥ उत्तरसूत्रमवतारयितुं शङ्कते-तत्र त्विदं तच्छिर इति। सूत्रमवतारयति-अत्र ब्रूमः। ज्योतिरुपक्रमा तु तथा ह्यधीयत एके। सर्वशाखाप्रत्ययमेकं ब्रह्मेति स्थितौ शाखान्तरोक्तरोहितादिगुणयोगिनी तेजोबन्नलक्षणा जरायुजाण्डजस्वेदजोद्भिज्जचतुर्विधभूतग्रामप्रकृतिभूतेयमजा प्रतिपत्तव्या, 'रोहितशुक्लकृष्णाम्' इति रोहितादिरूपतया तस्या एव प्रत्यभिज्ञानात्। न तु सांख्यपरिकल्पिता प्रकृतिः तस्या अप्रामाणिकतया श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्, रञ्जनादिना च रोहिताद्युपचारस्य सति मुख्यार्थसंभवेऽयोगात्।

आनन्दगिरीय-न्यायनिर्णयः।

फलितमाह-तस्मादिति। पूर्वपक्षमनूद्य सिद्धान्तयति-एवमिति। सौत्रहेतुसाध्यां प्रतिज्ञां पूरयति-नेति। तदेव स्पष्टयति-न हीति। तत्र हेत्वपेक्षायां प्रकरणोपपदवाक्यशेषाभावादिति सौत्रं हेतुं व्याचष्टे-सर्वत्रेति। दृष्टान्तमादाय कर्माङ्गं व्यावर्त्योपनिषत्प्रसिद्धं चमसं दर्शयति-चमसवदिति। अर्वाग्बिलत्वादिना विशेषसिद्धिमाशंक्याऽऽह-सर्वत्रेति। गिरिगुहादावित्यर्थः। दृष्टान्तस्थमर्थं दार्ष्टान्तिके योजयति-एवमिति॥ ८॥ सूत्रान्तरमवतारयितुं चोदयति-तत्रेति। दृष्टान्तवाक्यं सप्तम्यर्थः। इहेत्यजामन्त्रोक्तिः। चमसदृष्टान्तवदजामन्त्रे विशेषाश्रवणात्प्रधानमेव स्मार्तं ग्राह्यमित्यर्थः। सूत्रमवतारयति-अत्रेति। विजातीयस्मृतेः सजातीयश्रुतेः संनिधेर्लाघवेन श्रुत्यन्तरादर्थनिर्णयोऽजामन्त्रस्येति व्याचष्टे-परमेश्वरादिति। "तत्तेजोऽसृजत" इत्यादिश्रुतेर्विशेषणम्। जरायुजाण्डजस्वेदजोद्भिज्जभेदाच्चातुर्विध्यम्। इयमजेति। मान्त्रवर्णिकी प्रकृतिरुक्ता। ज्योतिरुपक्रमेति विशेषोक्तौ तुशब्देन विशेषणीर्थेत्याशंक्याऽऽह-तुशब्द इति। अवधारणारूपमर्थमेव स्फोरयति-भूतेति। स्मृतिमनुसृत्य गुणत्रया-

लक्षणैवेयमजा विज्ञेया न गुणत्रयलक्षणा ॥ कस्मात् ॥ "तथा ह्येके शाखिनस्तेजोऽबन्नानां परमेश्वरादुत्पत्तिमाम्नाय तेषामेव रोहितादिरूपतामामनन्ति–"यदग्ने रोहितं रूपं, तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य" [छां० ६।४। १ ] इति ॥ तान्येवेह तेजोऽबन्नानि प्रत्यभिज्ञायन्ते। रोहितादिशब्दसामान्यात्–रोहितादीनाञ्च शब्दानां रूपविशेषेषु मुख्यत्वाद्, भाक्तत्वाच्च गुणविषयत्वस्य ॥ असन्दिग्धेन च सन्दिग्धस्य निगमनं न्याय्यं मन्यन्ते, तथेहापि ब्रह्मवादिनो वदन्ति ॥ "किं कारणं ब्रह्म" [ श्वेता० १ । १] इत्युपक्रम्य "ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्" [ श्वेता० १ । १ ] इति, पारमेश्वर्याश्च शक्तेस्समस्त-

रत्नप्रभा ।

ण्डजस्वेदजोद्भिज्जस्वरूपस्येत्यर्थः । स्मृत्युक्ता कुतो न ग्राह्येति शंक्यते–कस्मादिति ॥ श्रुतेः श्रुत्यन्तरादर्थग्रहो युक्तः । साजात्यान्मूलानपेक्षत्वाच्चेत्याह–तथा हीति ॥ शाखिनः छन्दोगाः । किञ्च रोहितादिशब्दैरपि द्रव्यलक्षणा न्याय्या । अव्यवधानात् । न तु रञ्जनीयत्वादिगुणव्यवहिता सत्त्वादिगुणलक्षणेत्याह–रोहितादीनाञ्चेति ॥ ननु शाखान्तरेण शाखान्तरस्थमन्त्रस्य निर्णयः कथमित्यत आह–असन्दिग्धेनेति ॥ सर्वशाखाप्रत्ययन्यायादिति भावः । यथा शाखान्तरवाक्यान्न प्रधानग्रहः–तथेहापि ॥ श्वेताश्वतरोपनिषदि मायाप्रकरणान्न तद्ग्रह इत्याह–तथेति ॥ सृष्ट्यादौ किं सहायं ब्रह्मेति विमृश्यते । ब्रह्मवादिनो ध्यानाख्ययोगेन परमात्मानमनुप्रविष्टाः सन्तः तत्रैव देवस्यात्मभूतामैक्येनाध्यस्तां शक्तिं परतन्त्रां मायां सत्त्वादिगुणवतीं ब्रह्मणः सहायमपश्यन्नित्यन्वयः । मायाया एकत्वेऽपि तदंशानां जीवोपाधीनां तत्तत्संघातयोनीनामविद्याख्यानां भेदाद्वीप्सा । अव्याकृते अनभि-

भामती ।

तदिदमुक्तम्–रोहितादीनां शब्दानामिति । अजापदस्य च समुदायप्रसिद्धिपरित्यागेन न जायत इत्यवयवप्रसिद्ध्याश्रयणे दोषप्रसङ्गात् । अत्र तु रूपककल्पनायां समुदायप्रसिद्धेरेवानपेक्षायाः स्वीकारात् । अपि चायमपि श्रुतिकलापोऽस्मद्दर्शनानुगुणो न सांख्यस्मृत्यनुगुण इत्याह–तथेहापीति । किं कारणं ब्रह्मेत्युपक्रम्येति । ब्रह्मस्वरूपं तावज्जगत्कारणं न भवति, विशुद्धत्वात्तस्य । यथाहुः–'पुरुषस्य तु शुद्धस्य नाशुद्धा विकृतिर्भवेत्' इत्याशयवतीव श्रुतिः पृच्छति । किं कारणम् । यस्य ब्रह्मणो जगदुत्पत्तिस्तत् किं कारणं ब्रह्मेत्यर्थः । ते ब्रह्मविदो ध्यानयोगेनात्मानं गताः प्राप्ता अपश्यन्निति योजना ।

आनन्दगिरीय–न्यायनिर्णयः ।

त्मिका कुतोऽसौ नेष्टेत्याह–कस्मादिति । सूत्रावयवेनोत्तरमाह–तथेति । छान्दोग्ये तेजोबन्नानामीश्वरकार्याणां रोहितादिरूपवतामुक्तत्वेऽपि किमित्यजामन्त्रे तान्येव वक्तव्यानीत्येकार्थत्वे हेत्वभावादित्याशंक्याऽऽह–तानीति । स्मार्ते प्रधानेऽपि रोहितादिशब्दानां नीतत्वात्तदेव किमित्यत्र न ग्राह्यमित्याशंक्य मुख्यसंभवे रञ्जनादिना रोहिताद्युपचारस्यायोगादित्याह–रोहितादीनां चेति । शाखान्तरीयवाक्येन(ण) शाखान्तरस्थं वाक्यं कथं निर्णेतव्यमित्याशंक्य सर्वशाखाप्रत्ययन्यायादित्याह–असंदिग्धेनेति । न परशाखान्तरस्थवाक्यादिष्टसिद्धिः किंतु पूर्वापरालोचनायामियमपि श्वेताश्वतरश्रुतिरस्मदनुगुणेत्याह–तथेति । ब्रह्मणः शुद्धत्वान्न जगद्धेतुतेति पृच्छति–किमिति । यज्जगत्कारणं तत् किं ब्रह्म किं वाऽन्यदिति वा प्रश्नः, जगदुत्पत्तौ किमुपकरणवद्ब्रह्मेति वा । ते ब्रह्मवादिनोऽनया रीत्या विमृश्य ध्यानाख्येन योगेनानुगताः परमात्मानमनुप्रविष्टास्तस्यैव देवस्याऽऽत्मभूतामैक्येनाध्यस्तां मायाशक्तिं गुणत्रयात्मिकां त्रिगुणजगन्निर्माणसहकारिणीमपश्यन्निति श्रुतेरजामन्त्रस्यापि मूलप्रकृतिविषयतेत्यर्थः । न केवलमुपक्रमादेवमुपसंहारादपीत्याह–

जगद्विधायिन्या वाक्योपक्रमेऽवगमात्॥ वाक्यशेषेऽपि-"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" [ श्वेता० ४ । १० ] इति, "यो योनिंयोनिमधितिष्ठत्येकः" [ श्वेता ४ । ११ ] इति च तस्या एवावगमात्। न स्वतन्त्रा काचित्प्रकृतिः प्रधानं नामाजामन्त्रेणाम्नायत इति शक्यते वक्तुम् ॥ प्रकरणात्तु सैव दैवी शक्तिरव्याकृतनामरूपा नामरूपयोः प्रागवस्थानेनापि मन्त्रेणाम्नायत इत्युच्यते ॥ तस्याश्च स्वविकारविषयेण त्रैरूप्येण त्रैरूप्यमुक्तम् ॥ ९ ॥ कथं पुनस्तेजोऽबन्नानां त्रैरूप्येण विरूपाऽजा प्रतिपत्तुं शक्यते यावता, न तावत्तेजोऽबन्नेष्वजाकृतिरस्ति ॥ न च तेजोऽबन्नानां जातिश्रवणादजातिनिमित्तोऽप्यजाशब्दस्सम्भवतीति ॥ अत उत्तरं पठति—

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

रत्नप्रभा ।

व्यक्ते नामरूपे यस्यां सा । अनेन "तद्धेदं तर्ह्यव्याकृतमासीद्" इति श्रुत्यन्तरप्रसिद्धिरुक्ता । तस्यां शक्तौ व्यक्ताव्यक्तकार्यलिङ्गकानुमानं सूचयति-**नामेति** ॥ मायाया रोहितादिरूपवत्त्वं कथमित्यत आह-**तस्या इति** ॥ **विषयः** आश्रयः । एवं प्रकरणबलान्मायैवाऽजेति भाष्यकृन्मतम् । छान्दोग्यश्रुत्या तेजोऽबन्नलक्षणाऽवान्तरप्रकृतिरजेति । सूत्रकृन्मतेनोत्तरसूत्रव्यावर्त्यं शंकते॥९॥ **कथमिति** ॥ किं तेजोऽबन्नेष्वजाशब्दो रूढः, न जायत इति यौगिको वा? नाद्यः, तेष्वजात्वजातेरसत्त्वादित्याह-**यावतेति** ॥ यत इत्यर्थः । अतो न रूढ इति शेषः । न द्वितीयः-इत्याह-**न चेति**॥ **जातिः** जन्म । **अजातिः** अजन्म, लौकिकयाऽजाशब्दसादृश्यकल्पनया तेजोऽबन्नानामजात्वोपदेशाद्गौणोऽयं शब्द इति परिहरति-**कल्पनेति**॥

भामती ।

**यो योनिंयोनिमिति** । अविद्या शक्तिर्योनिः, सा च प्रतिजीवं नानेत्युक्तमतो वीप्सोपपन्ना । शेषमतिरोहितार्थम् ॥ ९ ॥ सूत्रान्तरमवतारयितुं शङ्कते-**कथं पुनरिति** । अजाकृतिर्जातिस्तेजोऽबन्नेषु नास्ति । न च तेजोऽबन्नानां जन्मश्रवणादजन्मनिमित्तोऽप्यजाशब्दः संभवतीत्याह-**न च तेजोबन्नानामिति** । सूत्रमवतारयति-**अत उत्तरं पठति** ॥ **कल्पनोपदेशाच्च मध्वादिवदविरोधः** । ननु किं छागा

आनन्दगिरीय-न्यायनिर्णयः ।

**वाक्येति** । परकीये प्रधाने मायाशब्दं वारयति-**मायिनं त्विति** । अविद्याशक्तिर्योनिस्तस्याश्चाभेदेऽपि कार्यभेदेन भेदाद्वीप्सा । न च सा परेष्टा प्रकृतिरेकस्य देवस्य तदधिष्ठातृत्वश्रुतेः । पूर्वोत्तरविरोधादजामन्त्रस्य प्रधानार्थत्वाभावे स्थिते तदुभयानुगुण्यान्मायाशक्तिविषयत्वमेव तस्येत्याह-**प्रकरणात्त्विति** । दैव्याः शक्तेः 'तद्धेदं तर्ह्यव्याकृतम्' इति श्रुत्यन्तरप्रसिद्धिं सूचयति—**अव्याकृतेति** । तस्यामभिव्यक्तनामरूपकार्यलिङ्गकमनुमानमाह—**नामेति** । पूर्वोत्तरवाक्याभ्यामिवेति वक्तुमपिशब्दः ।[१] कथमस्मिन्पक्षे 'लोहितशुक्लकृष्णाम्' इति कारणभूतमायाशक्तेस्त्रैरूप्यं वैश्वरूप्यात्तत्राऽऽह—**तस्याश्चेति** ॥९॥ अवान्तरपरमप्रकृत्योरन्यतरार्थत्वे मन्त्रस्योक्ते सत्यवान्तरप्रकृत्यर्थत्वमभ्युपगन्नाह-**कथमिति** । काऽनुपपत्तिरित्याशंक्य रूढ्या योगाद्वा तद्धीरिति विकल्प्याऽऽद्यं दूषयति-**यावतेति** । आकृतिर्जातिः द्वितीयं प्रत्याह-**न चेति** । जातिर्जन्म तदभावोऽजातिरेवं रूढियोगाभ्यां यस्मादजाशब्देन तेजोबन्नाख्या प्रकृतिर्न ज्ञातुं शक्या तस्मान्नाजामन्त्रस्यावान्तरप्रकृत्यर्थतेत्यर्थः । तत्र सूत्रमुत्तरमित्याह-**अत इति** । पक्षद्वयमनङ्गी-

१ तेजोबन्नात्मना त्रै इति पाठान्तरम् ।

नायमजाकृतिनिमित्तोऽजाशब्दः । नापि यौगिकः । किं तर्हि ॥ कल्पनोपदेशोऽयम्—अजारूपकक्लृप्तिस्तेजोऽबन्नलक्षणायाश्चराचरयोनेरुपदिश्यते । यथा हि—लोके यदृच्छया काचिदजा रोहितशुक्लकृष्णवर्णा स्याद्बहुबर्करा सरूपबर्करा च । तां च कश्चिदजो जुषमाणोऽनुशयीत कश्चिच्चैनां भुक्तभोगां जह्यात्, एवमियमपि तेजोऽबन्नलक्षणा भूतप्रकृतिस्त्रिवर्णा बहुसरूपं चराचरलक्षणं विकारजातं जनयति । अविदुषा च क्षेत्रज्ञेनोपभुज्यते । विदुषा च परित्यज्यते इति ॥ न चेदमाशंकितव्यमेकः क्षेत्रज्ञोऽनुशेतेऽन्यो जहातीति ॥ अतः क्षेत्रज्ञभेदः पारमार्थिकः परेषामिष्टः प्राप्नोतीति ॥ न हीयं क्षेत्रज्ञभेदप्रतिपिपादयिषा । किन्तु बन्धमोक्षव्यवस्थाप्रतिपिपादयिषैषा ॥ प्रसिद्धं तु भेदमनूद्य बन्धमोक्षव्यवस्था प्रतिपाद्यते । भेदस्तूपाधिनिमित्तो मिथ्याज्ञानकल्पितो न पारमार्थिकः—"एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा" [ श्वेता० ६ । ११ ] इत्यादिश्रुतिभ्यः ॥ "मध्वादिवद्" यथाऽऽदित्यस्याऽमधुनो मधुत्वं, वाचश्चाऽधेनोर्धेनुत्वं द्युलोकादीनां चाऽनग्नीनामग्नित्वमित्येवञ्जातीयकं कल्प्यते, एवमिदमनजाया अजात्वं कल्प्यत इत्यर्थः ॥ तस्मादविरोधस्तेजोऽबन्नेष्वजाशब्दप्रयोगस्य ॥ १० ॥ इति चमसाधिकरणम् ॥ २ ॥

---

रत्नप्रभा ।

अनियमः यदृच्छा । वर्करः बालपशुः । यदुक्तं जीवभेदेन प्रधानवादप्रत्यभिज्ञेति, तन्नेत्याह—न चेदमिति ॥ व्यवस्थार्थो भेदोऽप्यर्थात्प्रतिपाद्यत इत्याह—प्रसिद्धन्त्विति ॥ सत्य एव प्रसिद्ध इत्यत आह—भेदस्त्विति ॥ कल्पनोपदेशे दृष्टान्तं व्याचष्टे—मध्विति ॥ न च योगस्य मुख्यवृत्तित्वात्तेन प्रधानग्रहो न्याय्य इति वाच्यम् । रूढार्थानपेक्षाद्योगात्तदाश्रितगुणलक्षणाया बलीयस्त्वात् । गुणवृत्तौ हि रूढिराश्रिता भवति । तथा च रोहितादिशब्दसमभिव्याहारानुगृहीतया रूढ्याश्रितया गुणवृत्त्या प्रधाने योगं बाधित्वाऽवान्तरप्रकृतिरजाशब्देन ग्राह्या । यथा—मध्वादिशब्दैः प्रसिद्धमध्वाद्याश्रितगुणलक्षणया आदित्यादयो गृह्यन्ते, तद्वत् । तस्मादशब्दं प्रधानमिति सिद्धम् ॥ १० ॥ (२) ॥

भामती ।

लोहितशुक्लकृष्णैव, अन्यादृशीनामपि छागानामुपलम्भादित्यत आह—यदृच्छयेति । बहुवर्करा बहुशावा। शेषं

आनन्दगिरीय—न्यायनिर्णयः ।

कारपरास्तमित्याह—नायमिति । अजाशब्दस्तर्हि कथमवान्तरप्रकृतौ वर्तते तत्राऽऽह—किमिति । कल्पनोपदेशं दर्शयति—अजेति । तमेवोपदेशं दृष्टान्तेन स्पष्टयति—यथेति । ननु छागा न लोहितशुक्लकृष्णैवान्यथाऽपि भानात्तत्राऽऽह—यदृच्छयेति । बर्करो बालपशुः । यत्तु क्षेत्रज्ञभेदोपलम्भात्प्रधानवादप्रत्यभिज्ञेति तत्राऽऽह—न चेति । तत्र हेतुः—न हीति । व्यवस्थावादि शास्त्रं तदर्थं भेदमपि साधयिष्यतीत्याशंक्याऽऽह—प्रसिद्धं त्विति । प्रमाणातिरेकेण प्रसिद्ध्ययोगात्तत्प्रसिद्धस्य तस्य प्रामाणिकतया वस्तुतेत्याशंक्याऽऽह—भेदस्त्विति । कथं तस्य कल्पितत्वमित्याशंक्यैक्यवादिवाक्यवशादित्याह—एक इति । श्रुत्यन्तरमैक्यवादि संग्रहीतुमादिपदम् । दृष्टान्तमवतार्य व्याचष्टे—मध्वादिवदिति । रोहितादिशब्दानां रञ्जनीयत्वादिगुणसामान्यव्यवधानेन रजःसत्त्वादिव्यवहितलक्षणानुगृहीतामजाशब्दस्य योगवृत्तिं प्रधाने बाधित्वा रोहितादिगुणसंहतिप्रधानं तेजोबन्नमजाकारं परिकल्प्याजाशब्दस्य रूढिग्रहो युक्तः समुदायप्रसिद्धित्यागेनावयवप्रसिद्ध्याश्रयणस्यायुक्तत्वादिह च रूपकल्पनया समुदायप्रसिद्धेरनपेक्षायोगादिति चकारार्थमभिप्रेत्याविरोधं व्याकुर्वन्नुपसंहरति—तस्मादिति । तथा चाजामन्त्रस्यावान्तरपरम-

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥ ( ३ ) ॥

**एवम्परिहृतेऽप्यजामन्त्रे पुनरप्यन्यस्मान्मन्त्रात्सांख्यः प्रत्यवतिष्ठते— "यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः। तमेवमन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्" [ बृ० ४ । ४ । १७ ] इत्यस्मिन्मन्त्रे पञ्च पञ्चजना इति पञ्चसङ्ख्याविषयाऽपरा पञ्चसंख्या श्रूयते ॥ पञ्चशब्दद्वयदर्शनात् ॥ त एते पञ्च पञ्चकाः पञ्चविंशतिस्सम्पद्यन्ते ॥ तया च पञ्चविंशतिसंख्यया याव-**

रत्नप्रभा ।

**न संख्योपसंग्रहाद्** । पञ्चजनशब्दः सांख्यतत्त्वपरोऽन्यपरो वेति योगरूढयोरनिश्चयात्संशये **यथा** तत्त्वविद्याधिकारे छागायां तात्पर्याभावादजापदे रूढित्यागः, **तथा** पञ्चमनुष्येषु तात्पर्याभावात्पंचजनशब्देन रूढिं त्यक्त्वा तत्त्वानि ग्राह्याणीति दृष्टान्तसङ्गतिं सूचयन्मन्त्रमुदाहृत्य पूर्वपक्षयति—**एवमित्यादिना** ॥ फलं पूर्ववत् । प्राणचक्षुश्श्रोत्रान्नमनांसि वाक्यशेषस्थाः **पञ्चजनाः पञ्च** । तत्र चत्वारः सूत्रम् अन्नं विराट् तयोः कारणम् **अव्याकृतम्** आकाशश्च यस्मिन्नध्यस्तास्तमेवात्मानममृतं ब्रह्म मन्ये । तस्मान्मननाद्विद्वानहममृतोऽस्मीति मन्त्रदृशो वचनम् । **नन्वस्तु** पञ्चत्वविशिष्टेषु पञ्चजनेषु पुनः पञ्चत्वान्वयात्पञ्चविंशतिसंख्याप्रतीतिस्तावता **कथं** सांख्यतत्त्वग्रह इत्याशंक्य संख्याया धर्म्याकांक्षायां तत्त्वानि ग्राह्याणीत्याह—**तयेति** ॥ जगतो मूलभूता प्रकृतिः—त्रिगुणात्मकं प्रधानम-

भामती ।

निगदव्याख्यातम् ॥ १० ॥ (२) ॥ **न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च** । अवान्तरसंगतिमाह—**एवं परिहृतेऽपीति** । पञ्चजना इति हि समासार्थः पञ्चसंख्यया संबध्यते न च 'दिक्संख्ये संज्ञायाम्' इति समासविधानान्मनुजेषु निरूढोऽयं पञ्चजनशब्द इति वाच्यम् । तथा हि सति पञ्चमनुजा इति स्यात् । एवं चात्मनि पञ्चमनुजानामाकाशस्य च प्रतिष्ठानमिति निस्तात्पर्यं, सर्वस्यैव प्रतिष्ठानात् । तस्माद्रूढेरसंभवात्तत्त्यागेनात्र योग आस्थेयः । जनशब्दश्च कथंचित्तत्त्वेषु व्याख्येयः । तत्रापि किं पञ्च प्राणादयो वाक्यशेषगता विवक्ष्यन्ते उत तदतिरिक्ता अन्य एव वा केचित् तत्र पौर्वापर्यपर्यालोचनया काण्वमाध्यंदिनवाक्ययोर्विरोधात् । एकत्र हि ज्योतिषा पञ्चत्वमन्येनेतरत्र । न च षोडशिग्रहणवद्विकल्पसंभवः । अनुष्ठानं हि विकल्प्यते न वस्तु । वस्तुतत्त्वकथा चेयं नानुष्ठानकथा, विध्यभावात् ।

आनन्दगिरीय—न्यायनिर्णयः ।

प्रकृत्योरन्यतरार्थत्वेनाप्रधानविषयत्वात्तस्याशब्दत्वं सिद्धमित्यर्थः ॥ १० ॥ ( २ ) ॥ अजाशब्दस्य योगं निरस्याजामन्त्रस्य प्रधानार्थत्वं निरस्तम् । इदानीं पञ्चजनशब्दस्य योगनिरासेन यस्मिन्नित्यादिमन्त्रस्य प्रधानार्थत्वं निरस्यति—**न संख्येति** । पञ्चजनमन्त्रः सांख्यीयतत्त्वपरो वाऽर्थान्तरपरो वेति योगरूढ्यविनिगमाद्विशये संगतिमाह—**एवमिति** । अध्यात्माधिकारे प्रसिद्धच्छागाया अयोगादजा तेजआदिकेत्युक्तमत्रापि प्रसिद्धमनुष्यग्रहे वाक्यस्य निस्तात्पर्यादवयववृत्त्या सांख्यतत्त्वपरतेति संगतिरित्यर्थः । पञ्चजनमन्त्रस्याप्रधानपरत्वेन तदशब्दत्वोक्त्या समन्वयदृढीकरणात्पादादिसंगतिः । पूर्वपक्षे प्रधानाशब्दत्वनिवृत्त्या गतिसामान्यासिद्धिः सिद्धान्ते तदशब्दत्वस्थित्या तत्सिद्धिरिति फलम् । तमेव मन्त्रं बृहदारण्यकस्थं पठति—**यस्मिन्निति** । पञ्चजना वाक्यशेषस्थाः प्राणादयः पञ्चाव्याकृताख्यश्चाऽऽकाशो यस्मिन्प्रतिष्ठितस्तमेव निष्प्रपञ्चब्रह्मात्मकममृतमात्मानं मन्ये । यद्यपि पूर्वं मर्त्योऽभूवं तथाऽपीदानीं विद्वानमृतोऽस्मीति मन्त्रदृशो वचनम् । कथमस्मान्मन्त्रात्प्रत्यवस्थानं सांख्यस्येत्याशंक्याऽऽह—**अस्मिन्निति** । तथाऽपि कथं सांख्यवादप्रसङ्गस्तत्राऽऽह—**त इति** । पञ्चविंशतिसंख्यादृष्टावपि सांख्यीयतत्त्वासिद्धिरित्याशंक्य संख्यैव संख्येयाकांक्षायां स्मृतिसिद्धतत्त्वानि संगृह्णातीत्याह—**तयेति** । न चाऽऽधारत्वेनाऽऽत्मनोऽवस्थाना-

न्तस्संख्येया आकाङ्क्ष्यन्ते तावन्त्येव च तत्त्वानि सांख्यैः संख्यायन्ते— "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः " [ सा० कौ० ३ ] इति ॥ तया श्रुतिप्रसिद्धया पञ्चविंशतिसंख्यया तेषां स्मृतिप्रसिद्धानां पञ्चविंशतितत्त्वानामुपसंग्रहात्प्राप्तं पुनः श्रुतिमत्त्वमेव प्रधानादीनाम् ॥ ततो ब्रूमः ॥

रत्नप्रभा ।

नादित्वाद् **अविकृतिः** । कस्यचित्कार्यं न भवतीत्यर्थः ॥ महदहङ्कारपञ्चतन्मात्राणीति **सप्तप्रकृतयो, विकृतयश्च** । तत्र **महान्**—प्रधानस्य विकृतिः, अहङ्कारस्य प्रकृतिः। **अहंकारः** तामसः—पञ्चतन्मात्राणां शब्दादीनां प्रकृतिः, **सात्त्विकः**—एकादशेन्द्रियाणाम् । **पञ्च तन्मात्राश्च**—पञ्चानां स्थूलभूतानामाकाशादीनां प्रकृतयः पञ्च स्थूलभूतान्येतान्येकादशेन्द्रियाणि चेति षोडशसंख्याको गणः—विकार एव, न प्रकृतिः । तत्त्वान्तरोपादानत्वाभावात् । **पुरुषस्तु** उदासीन इति **सांख्यकारिकार्थः** । संख्यया तत्त्वानामुपसंग्रहात्

भामती ।

तस्मात्कानिचिदेव तत्त्वानीह पञ्च प्रत्येकं पञ्चसंख्यायोगीनि पञ्चविंशतितत्त्वानि भवन्ति । सांख्यैश्च प्रकृत्यादीनि पञ्चविंशति तत्त्वानि स्मर्यन्त इति तान्येवानेन मन्त्रेणोच्यन्त इति नाशब्दं प्रधानादि । न चाधारत्वेनात्मनो व्यवस्थानात्स्वात्मनि चाधाराधेयभावस्य विरोधात् आकाशस्य च व्यतिरेचनात् त्रयोविंशतिर्जना इति स्यान्न पञ्च पञ्चजना इति वाच्यम् । सत्यप्याकाशात्मनोर्व्यतिरेचने मूलप्रकृतिभागैः सत्त्वरजस्तमोभिः पञ्चविंशतिसंख्योपपत्तेः। तथा च सत्यात्माकाशाभ्यां सप्तविंशतिसंख्यायां पञ्चविंशतितत्त्वानीति स्वसिद्धान्तव्याकोप इति चेत्, न मूलप्रकृतित्वमात्रेणैकीकृत्य सत्त्वरजस्तमांसि पञ्चविंशतितत्त्वोपपत्तेः । हिरूभावेन तु तेषां सप्तविंशतित्वाविरोधः। तस्मान्नाशब्दी सांख्यस्मृतिरिति प्राप्तम् । मूलप्रकृतिः प्रधानम् । नासावन्यस्य विकृतिरपि तु प्रकृतिरेव तदिदमुक्तम्—**मूलेति** । महदहंकारपञ्चतन्मात्राणि प्रकृतयश्च विकृतयश्च । तथाहि—महत्तत्त्वमहंकारस्य तत्त्वान्तरस्य प्रकृतिर्मूलप्रकृतेस्तु विकृतिः । एवमहंकारतत्त्वं महतो विकृतिः, प्रकृतिश्च तदेव तामसं सत् पञ्चतन्मात्राणाम् । तदेव सात्त्विकं सत् प्रकृतिरेकादशेन्द्रियाणाम् । पञ्चतन्मात्राणि चाहंकारस्य विकृतिराकाशादीनां पञ्चानां प्रकृतिः । तदिदमुक्तम्—**महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारः** । षोडशसंख्यावच्छिन्नो गणो विकार एव । पञ्चभूतान्यतन्मात्राण्येकादशेन्द्रियाणीति षोडशको गणः । यद्यपि पृथिव्यादयो गोघटादीनां प्रकृतिस्तथापि न ते पृथिव्यादिभ्यस्तत्त्वान्तरमिति न प्रकृतिः । तत्त्वान्तरोपादानत्वं चेह प्रकृतित्वमभिमतं नोपादानमात्रत्वमित्यविरोधः । पुरुषस्तु कूटस्थनित्योऽपरिणामी न कस्यचित्प्रकृतिर्नापि विकृतिरिति । एवं प्राप्तेऽभिधीयते—

आनन्दगिरीय—न्यायनिर्णयः ।

दाकाशस्य च पृथक्कथनाच्चयोविंशतिर्जना इति वाच्यं, मूलप्रकृतिं सत्त्वादिभिर्विभज्य पञ्चविंशतित्वकल्पनात् । न चैवमात्माकाशाभ्यां सप्तविंशतित्वं गुणानां मूलप्रकृतिमात्रेणैकीकरणादित्यभिप्रेत्याऽऽह—**तावन्तीति** । तत्र सांख्यस्मृतिमाह- **मूलेति** । अविकृतिरन्यस्य कस्यचिद्विकारो नेति यावत् । महदहंकारपञ्चतन्मात्राणि सप्त प्रकृतिविकृतयः । महानहंकारस्य प्रकृतिर्मूलप्रकृतेर्विकृतिः । अहंकारोऽपि तामसस्तन्मात्राणां प्रकृतिः सात्त्विकस्त्वेकादशेन्द्रियाणाम् । तन्मात्राण्याकाशादीनां स्थूलानां प्रकृतयः । पञ्च भूतान्येकादशेन्द्रियाणि षोडशको गुणो विकार एव । पृथिव्यादीनां घटादिप्रकृतित्वेऽपि तत्त्वान्तराप्रकृतित्वाद्विकृतय एव । पुरुषस्तु कौटस्थ्यात्प्रकृतिविकृतित्वविरहीत्यर्थः । संख्योपसंग्रहादिति व्याकुर्वन्पूर्वपक्षमुपसंहरति—**तयेति** । सिद्धान्तसूत्रमवतार्य प्रतिज्ञां विभजते—**न त इति** । श्रुत्युक्तसंख्याऽपेक्षितसंख्येयविशेषार्पणं

**"न संख्योपसंग्रहादपि"** प्रधानादीनां श्रुतिमत्त्वं प्रत्याशा कर्तव्या ॥ कस्मात्॥**"नानाभावात्"**—नाना ह्येतानि पञ्चविंशतिस्तत्त्वानि नैषां पञ्चशःपञ्चशस्साधारणो धर्मोऽस्ति । येन पञ्चविंशतेरन्तरालेऽपराः पञ्चपञ्च संख्या निविशेरन्। न ह्येकनिबन्धनमन्तरेण नानाभूतेषु द्वित्वादिकाः संख्या निविशन्ते ॥ अथोच्येत—पञ्चविंशतिसंख्यैवेयमवयवद्वारेण लक्ष्यते । यथा- "पञ्च सप्त च वर्षाणि न ववर्ष शतक्रतुः" इति द्वादशवार्षिकीमनावृष्टिं कथयन्ति, तद्वदिति ॥ तदपि नोपपद्यते ॥ अयमेवास्मिन्पक्षे दोषः ।

रत्नप्रभा ।

शब्दवत्त्वमिति प्राप्ते सिद्धान्तयति—**नेति** ॥ नानात्वमिष्टमित्यत आह—**नैषामिति** ॥ पञ्चसुपञ्चसु साधारणस्येतरपञ्चकाद्व्यावृत्तस्य धर्मस्याभावेऽत्र नानात्वं विवक्षितमित्यर्थः । यद्यपि ज्ञानकर्मेन्द्रियेषु दशसु ज्ञानकरणत्वं कर्मकरणत्वं च पञ्चकद्वयेऽस्ति पञ्चतन्मात्रासु पञ्चसु स्थूलप्रकृतित्वं च, तथापि यस्मिन्नित्यात्मन आकाशस्य च पृथगुक्तेः सत्त्वरजस्तमोमहदहङ्काराः पञ्च कर्तव्याः । मनश्चत्वारि भूतानि च पञ्चास्मिन्पञ्चकद्वये मियोऽनुवृत्तेतरपञ्चकव्यावृत्तकधर्मो[1] नास्तीत्यभिप्रायः । मास्त्वित्यत आह—**येनेति** ॥ धर्मेणेत्यर्थः । तदेव स्फुटयति—**न हीति** ॥ महासंख्यायामवान्तरसंख्याः प्रविशन्ति । यथा—द्वावश्विनौ, सप्त सप्तर्षयोऽष्टौ वसवश्चेति प्रजापतिः सप्तदशेत्यत्राश्वित्वादिकमादाय द्वित्वादयः प्रविशन्ति । नान्यथेत्यर्थः । पञ्चशब्दद्वयेन स्ववाच्यन्यूनसंख्याद्वारेण तद्वाच्या महासंख्यैव लक्ष्यत इति सदृष्टान्तं शंकते—**अथेति** ॥ मुख्यार्थस्य वक्ष्यमाणत्वाल्लक्षणा न युक्तेति परिहरति—**तदपि नेति** ॥ पञ्चजनशब्दयो-

भामती ।

**न संख्योपसंग्रहादपि प्रधानादीनां श्रुतिमत्त्वाशङ्का कर्तव्या । कस्मात् नानाभावात् । नाना ह्येतानि पञ्चविंशतितत्त्वानि । नैषां पञ्चशःपञ्चशः साधारणधर्मोऽस्ति** । न खलु सत्त्वरजस्तमोमहदहंकाराणामेकः क्रिया वा गुणो वा द्रव्यं वा जातिर्वा धर्मः पञ्चतन्मात्रादिभ्यो व्यावृत्तः सत्त्वादिषु चानुगतः कश्चिदस्ति । नापि पृथिव्यप्तेजोवायुघ्राणान्तम् । नापि रसनचक्षुस्त्वक्श्रोत्रवाचाम् । नापि पाणिपादपायूपस्थमनसां, येनैकेनासाधारणेनोपगृहीताः पञ्च पञ्चका भवितुमर्हन्ति । पूर्वपक्षैकदेशिनमुत्थापयति- **अथोच्येत पञ्चविंशतिसंख्यैवेयमिति** । यद्यपि परस्यां संख्यायामवान्तरसंख्या द्वित्वादिका नास्ति तथापि तत्पूर्वं तस्याः संभवात् पौर्वापर्यलक्षणया प्रत्यासत्त्या परसंख्योपलक्षणार्थं पूर्वसंख्योपन्यस्यत इति दूषयति—**अयमेवास्मिन्पक्षे दोष इति** । न च पञ्चशब्दो जनशब्देन समस्तोऽसमस्तः शक्यो

आनन्दगिरीय—न्यायनिर्णयः ।

स्मृतेर्युक्तं तयोर्मूलमूलित्वादित्याह—**कस्मादिति** । सौत्रं हेतुमुपादाय व्याचष्टे—**नानेति** । नानात्वमेव न विरुद्धमित्याशंक्याभिप्रेतं नानात्वमाह—**नैषामिति** । न हि सत्त्वरजस्तमोमहदहंकाराणां क्रियागुणजातीनामन्यतमस्तन्मात्रादिभ्यो व्यावृत्तः सत्त्वादिषु चानुवृत्तः कश्चिदेको धर्मोऽस्ति । नापि पृथिव्यप्तेजोवायुघ्राणानामुक्तो धर्मः संभवत्याकाशस्य पृथगुक्तेरप्रवेशात् । एवं रसनादिष्वपि पञ्चशः साधारणधर्मवैधुर्यमिति भावः । किं तेनानुपयोगिनेत्याशंक्याऽऽह—**येनेति** । पञ्चविंशतिसंख्यान्तराले पञ्चानामपि पञ्चसंख्यानां भावात्तथोक्तिरित्याशंक्याऽऽह—**न हीति** । त्रयस्त्रिंशद्देवा इति महासंख्यायामष्टौ वसव इत्यवान्तरसंख्या साधारणधर्माधीना तथाऽत्रापि न साधारणधर्माद्दते महासंख्यायामवान्तरसंख्यासिद्धिरित्यर्थः । अपरसंख्यापूर्वत्वात्परसंख्यायास्तत्पौर्वापर्यलक्षणप्रत्यासत्त्या परसंख्यालक्षणार्थमपरसंख्योक्तिरिति पूर्वपक्षदेशीयश्चोदयति—**अथेति** । तदेवोदाहरणेन स्फोरयति—**यथेति** । असमासमङ्गीकृत्य पञ्चशब्दद्वयदर्शनेऽपि पञ्चसंख्याद्वयरूपावान्तरसंख्यया पञ्चविंशतिलक्षणमहासंख्योपलक्ष्यत्वे श्रुतिसंभवे लक्षणा न युक्तेति परिहरति—**तदिति** । किंच पञ्चशब्दस्य जनशब्देन समस्तत्वात्पञ्चसंख्याद्वयासिद्धा तद्द्वारा पञ्चविं-

१ व्यावृत्तधर्मो नास्तीति पाठान्तरं पुस्तकान्तरे ।

**यल्लक्षणाऽऽश्रयणीया स्यात् ॥ परश्चात्र पञ्चशब्दो जनशब्देन समस्तः पञ्चजना इति ॥ पारिभाषिकेण स्वरेणैकपदत्वनिश्चयात् ॥ प्रयोगान्तरे च "पञ्चानां त्वा पञ्चजनानाम्" [ तै० सं० १ । ६ । १ । २ ] इत्यै-**

रत्नप्रभा ।

रसमासमंगीकृत्य पञ्चविंशतिसंख्याप्रतीतिर्निरस्ता । सम्प्रति समासनिश्चयान्न तत्प्रतीतिरित्याह–**परश्चेति** ॥ समासहेतुमाह–**पारिभाषिकेणेति** ॥ **अयमर्थः**–अस्मिन्मन्त्रे **प्रथमः** पञ्चशब्दः आद्युदात्तः । **द्वितीयः** सर्वानुदात्तः । जनशब्दश्चान्तोदात्तः । तथा च न द्वितीयपञ्चशब्दजनशब्दयोः समासं विनान्त्यस्याकारस्योदात्तत्वं पूर्वेषामनुदात्तत्वं च घटते । "समासस्य" [ पाणि० सू० ६ । १ । २२३ ] इति सूत्रेण समासस्यान्तोदात्तविधानात् । "अनुदात्तं पदमेकवर्जम्" [ पा० सू० ६ । १ । १५८ ] इति च सूत्रेण यस्मिन्पदे उदात्तः स्वरितो वा यस्य वर्णस्य विधीयते तमेकं वर्जयित्वावशिष्टं तत्पदमनुदात्ताच्कं भवतीति विधानादेव मान्त्रिकान्तोदात्तस्वरेणैकपदत्वनिश्चयः । भाषिकाख्ये तु शतपथब्राह्मणस्वरविधायकग्रन्थे "स्वरितोऽनुदात्तो वा" इति सूत्रेण यो मन्त्रदशायामनुदात्तः स्वरितो वा, स ब्राह्मणदशायामुदात्तो भवतीत्यपवाद आश्रितः । तथा चान्त्यादाकारात्पूर्वेषामनुदात्तानामुदात्तत्वं ब्राह्मणावस्थायां प्राप्तम् । "उदात्तमनुदात्तमनन्त्यम्" इति सूत्रेण मन्त्रदशायाम् उदात्तस्य अन्त्यस्य परलग्नतयोच्चार्यमाणस्य अनुदात्तत्वं विहितम् । तथा चात्र नकारादुपरितनः आकारः आकाशश्चेत्यनेन श्लिष्टतया पठ्यमानोऽनुदात्तो भवति । अयं मन्त्रानुदात्तस्वरः **पारिभाषिकः** । तेन ब्राह्मणस्वरेणैकपदत्वं निश्चीयत इति । **प्रकटार्थकारैस्तु** पाठकप्रसिद्धान्तोदात्तस्वरः पारिभाषिक इति व्याख्यातम् । तद्व्याख्यानं कल्पतरुकारैर्दूषितम् । अन्तानुदात्तं हि समाम्नातारः पञ्चजनशब्दमधीयत इति पाठकप्रसिद्धिरसिद्धेति । **तथा च** "पञ्च पञ्चजनाः" इति मान्त्रिकान्तोदात्तः स्वरः, "यस्मिन्पञ्च पञ्चजनाः" [ बृ० ४ । ४ । १७ ] इत्यन्तानुदात्तो ब्राह्मणस्वरः, इति विभागः । उभयथापि ऐकपद्यात्समाससिद्धिरिति । तैत्तिरीयकप्रयोगादप्येकपदत्वमित्याह–**प्रयोगान्तरे चेति** ॥ आज्य त्वा त्वाम् । **पञ्चानां** पञ्चजनानां देव-

भामती ।

वक्तुमित्याह—**परश्चात्र पञ्चशब्द इति** । ननु भवतु समासस्तथापि किमित्यत आह—

आनन्दगिरीय–न्यायनिर्णयः ।

शतिसंख्याऽपि न सिध्यतीत्याह–**परश्चेति** । समस्तत्वे हेतुमाह–**पारिभाषिकेणेति** । अन्तानुदात्तस्वरो भाषिकग्रन्थसिद्धोऽत्र पारिभाषिकः । तथाहि प्रथमोऽस्मिन्मन्त्रे पञ्चशब्दो भवत्युदात्तो द्वितीयः सर्वानुदात्तो जनशब्दश्चान्तोदात्तस्तथा च न द्वितीयपञ्चशब्दजनशब्दयोः समासमन्तरेणान्त्यस्याऽऽकारस्योदात्तत्वमितरेषां चानुदात्तत्वं 'समासस्य' इति सूत्रेण समासस्यान्तोदात्तत्वविधानात्, "अनुदात्तं पदमेकवर्जम्" [ पा० सू० ६-१-१५८ ] इति च सूत्रेणोदात्तः स्वरितो वा यस्मिन्पदे विधीयते तदेकं हित्वा शिष्टस्यानुदात्तत्वं स्मर्यते । एवमन्तोदात्तस्वरबलात्तत्र समासो निर्धारितः । भाषिके तु शतपथब्राह्मणस्वरविधायकग्रन्थे 'स्वरितोऽनुदात्तो वा' इति सूत्रेण यो मन्त्रदशायामनुदात्तः स्वरितो वा स ब्राह्मणावस्थायामुदात्तो भवतीत्यपवादः स्वीकृतः । ततश्चान्त्यादाकारादितरेषामनुदात्तादीनां ब्राह्मणदशायामुदात्तत्वं प्राप्तम् 'उदात्तमनुदात्तमनन्त्यम्' इति सूत्रेण मन्त्रदशायामुदात्तस्यानन्त्यस्य परलग्नतयोच्चार्यमाणस्यानुदात्तत्वं विहितं तदत्राऽऽकारो नकारादुपरितनः सन्नाकाशश्चेत्यनेन लग्नतयोच्चार्यमाणोऽनुदात्तो भवति स चैवमन्तानुदात्तस्वरः पारिभाषिकः । अन्तोदात्तो भाषिका इति पक्षे त्वध्ययनविरोधः । तेन पारिभाषिकेण स्वरेणैकपदत्वनिश्चयादसमासासिद्धिरिति भावः । अन्यत्र चैवंविधप्रयोगस्यैकपदत्वनिश्चयादिहापि तत्सामान्यादेकपदतेति समासे हेत्वन्तरमाह–**प्रयोगान्तरे चेति** । 'आज्यमसि' इत्याज्यस्या-

१ भाषिके त्विति पाठान्तरं पुस्तकान्तरे ।

**कपद्यैकस्वर्यैकविभक्तिकत्वावगमात्, समस्तत्वाच्च न वीप्सा पञ्चपञ्चेति ॥ तेन न पञ्चकद्वयग्रहणं पञ्चपञ्चेति ॥ न च पञ्चसंख्याया एकस्याः पञ्चसंख्याऽपरया विशेषणं पञ्च पञ्चका इति ॥ उपसर्जनस्य विशेषणेनासंयोगात् ॥ नन्वापन्नपंचसंख्याका जना एव पुनः पंचसंख्यया विशेष्यमाणाः पंचविंशतिः प्रत्येष्यन्ते । यथा-पंच पंचपूल्य इति-पंचविंशतिः पूलाः प्रती-**

रत्नप्रभा ।

विशेषणाम् । **यन्त्राय** धर्त्राय गृह्णामीत्याज्यग्रहणमन्त्रशेषः । देवतानां कर्मणि यन्त्रवदवस्थितं शरीरं, तदेव धर्त्रमिहामुत्र भोगाधारस्तस्मै, तस्यावैकल्यार्थमिति यजमानोक्तिः । अस्तु समासः, ततः किमित्यत आह-**समस्तत्वाच्चेति** ॥ आवृत्तिः-**वीप्सा** तदभावे पञ्चकद्वयाग्रहणात्पञ्चविंशतिसंख्याप्रतीतिरसिद्धेति भावः । जनपञ्चकमेकं, पञ्चकानां पञ्चकं द्वितीयमिति पञ्चकद्वयम् । तस्य पञ्चपञ्चेति ग्रहणं नेत्यक्षरार्थः । **किञ्चाऽसमस्तपक्षेऽपि-किं** पञ्चशब्दद्वयोक्तयोः पञ्चत्वयोः परस्परान्वयः, **किंवा** तयोः शुद्धजनैरन्वयः। अथ वा-पञ्चत्वविशिष्टैर्जनैरपरस्य पञ्चत्वस्यान्वयः।**नाद्यः**-इत्याह-**न च पञ्चसंख्याया इतिं** ॥ **विशेषणम्** अन्वयः । अनन्वये हेतुमाह-**उपसर्जनस्येति** ॥ अप्रधानानां सर्वेषां प्रधानेन विशेष्येणैवान्वयो वाच्यः । गुणानां परस्परान्वये वाक्यभेदापातादित्यर्थः । द्वितीये दशसंख्याप्रतीतिः स्यात्, न पञ्चविंशतिसंख्याप्रतीतिः । **तृतीयम्** उत्थापयति-**नन्विति** ॥ पञ्चत्वविशिष्टेषु पञ्चत्वान्तरान्वये विशेषणीभूतपञ्चत्वेऽपि पञ्चत्वान्वयात्पञ्चविंशतित्वप्रतीतिरित्यर्थः । दृष्टान्तवैषम्येण परिहरति-

भामती ।

**समस्तत्वाच्चेति**। अपि च वीप्सायां पञ्चकद्वयग्रहणे दशैव तत्त्वानीति न सांख्यस्मृतिप्रत्यभिज्ञानमित्यसमासमभ्युपेत्याह-**न च पञ्चकद्वयग्रहणं पञ्च पञ्चेति** । न चैका पञ्चसंख्या पञ्चसंख्यान्तरेण शक्या विशेष्टुम् । पञ्चशब्दस्य संख्योपसर्जनद्रव्यवचनत्वेन संख्याया उपसर्जनतया विशेषणेनासंयोगादित्याह-**एकस्याः पञ्चसंख्याया इति**। तदेवं पूर्वपक्षैकदेशिनि दूषिते परमपूर्वपक्षिणमुत्थापयति-**नन्वापन्नपञ्चसंख्याका जना एवेति**।

आनन्दगिरीय-न्यायनिर्णयः ।

धिकारादाज्यं संबोध्य "पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामि" इति तैत्तिरीयकश्रुतेः, पञ्चानां पञ्चजनानां देवताविशेषणानां कृते यन्त्रवद्व्यवस्थितं यन्मदीयं शरीरं तदेव धर्त्रमैहिकामुष्मिकभोगधारणसमर्थं तद्वैकल्यार्थं गृह्णामीति यजमानोक्तिः । समासेऽपि किं स्यात्तत्राऽऽह-**समस्तत्वाच्चेति** । वीप्साभावे पञ्चसंख्याद्वयासिद्धेस्तद्द्वारा पञ्चविंशतिसंख्याया न लक्ष्यतेत्यर्थः । किंचासमासेऽपि पञ्चशब्दद्वयप्रयोगे दशानामेव लाभान्न 'सांख्यस्मृतिप्रत्यभिज्ञेत्याह-**न चेति** । पञ्चपंचेति पञ्चकद्वयग्रहेऽपि दशैव तत्त्वानि सिध्यन्ति । न पञ्चविंशतेस्तत्त्वानां प्रत्यभिज्ञेत्यर्थः । यद्वा-समास एव पञ्चपंचेति पञ्चकद्वयाग्रहान्न लक्षणयाऽपि पञ्चविंशतिसंख्याधीरित्यर्थः । नन्वसमासेऽपि वीप्सां हित्वा दण्डिन्यायेन जायमानाजायमानसाधारणजनशब्दोक्ततत्त्वविशेषणीभूतपञ्चसंख्याविशेषणत्वादाद्यपञ्चसंख्यायाः सांख्यीयपञ्चविंशतिधीरिति नेत्याह-**न चेति** । शुक्लादिशब्दवत्पञ्चशब्दस्य संख्योपसर्जनद्रव्यपरत्वाद्गुणभूतसंख्याया न संख्यान्तरेण विशेषणम् । तथा सति विशेष्येण द्रव्येण विशेषणेन च संख्यया युगपदाकृष्टा संख्या नैकेनाप्यन्वियादित्याह-**उपसर्जनस्येति** । न खलूपसर्जनमुपसर्जनान्तरेण साक्षादेव संबध्यते प्रधानानुयायित्वात्तेषां मिथःसंगत्ययोगादतः संख्ययोर्विशेषणविशेष्यतया न पराभीष्टसंख्याधीरित्यर्थः । नानाभावेन दूषितमपि परमपूर्वपक्षिणं संख्यान्तरानाकांक्षानोपसर्जनन्यायाभ्यां दूषयितुमुत्थापयति-**नन्विति** । प्राप्तपञ्चसंख्याकानां जनानां पञ्चसंख्यया विशेषणे पञ्चविंशतितत्त्वधीरित्येतद्दृष्टान्तेन साधयति-**यथेति** । जायन्त इति जनाः

१ पञ्चाधिकाः पञ्चजनाः पञ्चपञ्चजनाः-इत्यर्थात् । २ पूलाः तृणखण्डाः ।

यन्ते तद्वत् ॥ नेति ब्रूमः ॥ युक्तं यत्पंचपूलीशब्दस्य समाहाराभिप्रायकत्वात्कतीति सत्यां भेदाकांक्षयां पंच पंचपूल्य इति विशेषणम् । इह तु पंचजना इत्यादित एव भेदोपादानात्कतीत्यसत्यां भेदाकांक्षायां न पंच पंचजना इति विशेषणं भवेत् ॥ भवदपीदं विशेषणं पंचसंख्याया एव भवेत् ॥ तत्र चोक्तो दोषः ॥ तस्मात्पंच पंचजना इति न पंचविंशतितत्त्वाभिप्रायम् ॥ "अतिरेकाच्च" न पंचविंशतितत्त्वाभिप्रायम् ॥ अतिरेको हि भवत्यात्माकाशाभ्यां पंचविंशतिसंख्यायाः ॥ आत्मा तावदिह प्रतिष्ठां

रत्नप्रभा ।

**नेति ब्रूम इति** ॥ पञ्चानां पूलानां समाहार इत्यत्र "संख्यापूर्वो द्विगुः" [ पा० सू० २ । १ । ५२ ] इति समासो विहितः । ततो "द्विगोः" [ पा० सू० ४ । १ । २१ ] इति सूत्रेण ङीपो विधानात्समाहारप्रतीतौ समाहाराः कतीत्याकांक्षायां सत्यां पञ्चेतिपदान्तरान्वयो युक्तः । पञ्चजना इत्यत्र तु ङीवन्तत्वाभावेन समाहारस्याप्रतीतेः । जनानां चादित एव पञ्चत्वोपादानात्संख्याकांक्षया असत्त्वात्पञ्चेति पदान्तरं नान्वेति । आकांक्षाधीनत्वादन्वयस्येत्यर्थः । **भेदः** विशेषणम् । **ननु** जनानां निराकांक्षत्वेऽपि तद्विशेषणीभूतपञ्चत्वानि कतीत्याकांक्षायां पञ्चत्वान्तरं विशेषणं भवत्वित्याशङ्कते—**भवदपीति** ॥ नोपसर्जनस्योपसर्जनान्तरेणान्वयः । किन्तु प्रधानेनैवेति न्यायविरोध उक्त इति परिहरति—**तत्र चेति** ॥ एवं नानाभावादिति व्याख्यायातिरेकाच्चेति व्याचष्टे—**अतिरेकाच्चेत्यादिना** ॥ **अतिरेकः**

भामती ।

अत्र तावद्रूढौ सत्यां न योगः संभवतीति वक्ष्यते । तथापि यौगिकं पञ्चजनशब्दमभ्युपेत्य दूषयति—**युक्तं यत्पञ्चपूलीशब्दस्येति** । पञ्चपूलीत्यत्र यद्यपि पृथक्त्वैकार्थसमवायिनी पञ्चसंख्यावच्छेदिकास्ति तथापीह समुदायिनोऽवच्छिनत्ति न समुदायं समासपदगम्यमतस्तस्मिन् कति ते समुदाया इत्यपेक्षायां पदान्तराभिहिता पञ्चसंख्या संबध्यते पञ्चेति । पञ्चजना इत्यत्र तु पञ्चसंख्ययोत्पत्तिशिष्टया जनानामवच्छिन्नत्वात्समुदायस्य च पञ्चपूलीवदत्राप्रतीतेर्न पदान्तराभिहिता संख्या संबध्यते । स्यादेतत् । संख्येयानां जनानां मा भूच्छब्दान्तरवाच्यसंख्यावच्छेदः । पञ्चसंख्यायास्तु तयावच्छेदो भविष्यति । न हि साप्यवच्छिन्नेत्यत आह—**भवदपीदं विशेषणमिति** । उक्तोऽत्र दोषः । न ह्युपसर्जनं विशेषणेन युज्यते पञ्चशब्द एव तावत्संख्येयोपसर्जनसंख्यामाह, विशेषतस्तु पञ्चजना इत्यत्र समासे । विशेषणापेक्षायां तु न समासः स्यात्, असामर्थ्यात् । न हि भवति ऋद्धस्य राजपुरुष इति समासोऽपि तु ( पद ) वृत्तिरेव ऋद्धस्य राज्ञः पुरुष इति । सापेक्षत्वेनासामर्थ्यादित्यर्थः । **अतिरेकाच्चेति** । अभ्युच्चयमात्रम् । यदि सत्त्वरजस्तमांसि प्रधानेनैकीकृत्यात्माकाशौ

आनन्दगिरीय—न्यायनिर्णयः ।

पञ्च च ते जनाश्चेति पञ्चजना इति यौगिकत्वमुपेत्य प्रत्याह—**नेतीति** । दृष्टान्ते संख्यान्तराकांक्षां दर्शयति—**युक्तमिति** । द्विगुसमासेन समाहाराभिधानात्पदान्तरोक्तसंख्यया समाहारोऽवच्छेत्तुं युक्तः । उत्पत्तिशिष्टया तुल्यपदस्थसंख्यया समाहारिणः पूला अवच्छिद्यन्ते तेन पञ्चपूलीत्यत्रास्याकांक्षेति विशेषणविशेष्यधीरित्यर्थः । दार्ष्टान्तिके नैवमाकांक्षेत्याह—**इहेति** । पञ्चजना इत्यत्र ङीवन्तत्वाश्रुत्या समाहारादृष्टेर्जनानां च स्वगतसंख्यावच्छिन्नत्वान्न संख्यान्तराकांक्षेति कुतो विशेषणविशेष्यतेत्यर्थः । जनानामुत्पत्तिशिष्टसंख्यावरुद्धानां शब्दान्तरोक्तसंख्यानवरोधेऽपि पञ्चसंख्यायाः संख्यान्तरानवरुद्धत्वात्तयाऽवरोधः स्यादित्याशंक्य नोपसर्जनन्यायमवतारयति—**भवदिति** । इष्टापत्तिमाशंक्याऽऽह—**तत्रेति** । विशेषणविशेष्ययोरेव योगो न विशेषणयोरन्योपसर्जनत्वादित्युक्तमित्यर्थः । नानाभावादिना सिद्धमुपसंहरति—**तस्मादिति** । पञ्चपञ्चजनशब्दो न पञ्चविंशतितत्त्ववाचीत्यत्र सूत्रावयवं हेत्वन्तरमाह—**अतिरेकाच्चेति** । तदेव स्फोरयति—**अतिरेको हीति** । तत्राऽऽत्मकृतसंख्यातिरेकं विवृणोति—**आत्मेति** । इहेति मन्त्रोक्तिः ।

प्रत्याधारत्वेन निर्दिष्टः । "यस्मिन्" [ बृ० ४ । ४ । १७ । ] इति सप्तमीसूचितस्य "तमेवमन्य आत्मानम्" [ बृ० ४ । ४ । १७ । इत्यात्मत्वेनानुकर्षणात् ॥ आत्मा च चेतनः पुरुषः । स च पंचविंशतावन्तर्गत एवेति न तस्यैवाधारत्वमाधेयत्वं च युज्यते ॥ अर्थान्तरपरिग्रहे च तत्त्वसंख्यातिरेकः सिद्धान्तविरुद्धः प्रसज्येत ॥ तथा-"आकाशश्च प्रतिष्ठितः" [ बृ० ४।४।१७ ] इत्याकाशस्यापि पंचविंशतावन्तर्गतस्य न पृथगुपादानं न्याय्यम् । अर्थान्तरपरिग्रहे चोक्तं दूषणम् । कथं च संख्यामात्रश्रवणे सत्यश्रुतानां पंचविंशतितत्त्वानामुपसंग्रहः प्रतीयेत । जनशब्दस्य तत्त्वेष्वरूढत्वात् । अर्थान्तरोपसंग्रहेऽपि संख्योपपत्तेः ॥ कथं तर्हि पञ्च पञ्चजना इति,

---

रत्नप्रभा ।

आधिक्यम् । जनशब्दितपञ्चविंशतितत्त्वेषु आत्माऽन्तर्भूतो न वा? नाद्य इत्युक्त्वा द्वितीये दोषमाह-अर्थान्तरेति ॥ तथाऽऽकाशं विकल्प्य दूषयति-तथेति ॥ उक्तो दोषः संख्याधिक्यम् । पञ्चविंशतिजना आत्माकाशौ चेति सप्तविंशतिसंख्या स्यादित्यर्थः । न च सत्त्वरजस्तमसां पृथग्गणनया सैष्टेति वाच्यम् । आकाशस्य पृथगुक्तिवैयर्थ्यात्, यस्मिन्निति आत्मनि तत्त्वानां प्रतिष्ठोक्तिविरोधात्, तव मते स्वतन्त्रप्रधानस्यैवानाधारत्वात्, "नेह नानास्ति" इति वाक्यशेषविरोधाच्च तव सत्यद्वैतवादित्वात् । किञ्च पञ्चविंशतिसंख्याप्रतीतावपि न सांख्यतत्त्वानां ग्रहणमित्याह-कथञ्चेति ॥ किं जनशब्दात्तत्त्वग्रहः-उत संख्येति कथंशब्दार्थः । नाद्यः-इत्याह-जनेति ॥ न द्वितीयः-इत्याह-अर्थान्तरेति ॥ किं तदर्थान्तरं यदर्थकमिदं वाक्यमिति पृच्छति-कथमिति ॥ पञ्च च ते जनाश्चेति कर्मधारयादि-

भामती ।

तत्त्वेभ्यो व्यतिरिच्येते तदा सिद्धान्तव्याकोपः । अथ तु सत्त्वरजस्तमांसि मिथो भेदेन विवक्ष्यन्ते तथापि वस्तुतत्त्वव्यवस्थापने आधारत्वेनात्मा निष्कृष्यताम् । आधेयान्तरेभ्यस्त्वाकाशस्याधेयस्य व्यतिरेचनमनर्थकमिति गमयितव्यम् । कथं च संख्यामात्रश्रवणे सतीति । 'दिक्संख्ये संज्ञायाम्' इति संज्ञायां समासस्मरणात् पञ्चजनशब्दस्तावदयं क्वचिन्निरूढः । न च रूढौ सत्यामवयवप्रसिद्धेर्ग्रहणं, सापेक्षत्वात्, निरपेक्षत्वाच्च रूढेः । तद्यदि रूढौ मुख्योऽर्थः प्राप्यते ततः स एव ग्रहीतव्योऽथ त्वसौ न वाक्ये संबन्धार्हः पूर्वापरवाक्यविरोधी वा । ततो रूढ्यपरित्यागेनैव वृत्त्यन्तरेणार्थान्तरं कल्पयित्वा वाक्यमुपपादनीयम् । यथा 'श्येनेनाभिचरन् यजेत' इति श्येनशब्दः शकुनिविशेषे निरूढवृत्तिस्तदपरित्यागेनैव निपत्यादानसादृश्येनार्थवादिकेन क्रतुविशेषे वर्तते, तथा पञ्चजनशब्दोऽवयवार्थयोगानपेक्ष एकस्मिन्नपि वर्तते । यथा सप्त-

आनन्दगिरीय-न्यायनिर्णयः ।

यच्छब्दस्य सर्वनामत्वेन साधारण्यात्कथं तस्मादात्मधीरित्याशंक्याऽऽह-यस्मिन्निति । आधारत्वेनाऽऽत्मनिर्देशेऽपि तस्य तत्त्वान्तर्भावान्नातिरेकः स्यादित्याशंक्याऽऽह-आत्मा चेति । आधारानन्तर्भावे दोषमाह-अर्थान्तरेति । आत्मनेवाऽऽकाशेनापि संख्यातिरेकं दर्शयति-तथेति । स हि तत्त्वेष्वन्तर्भूतो न वेति विकल्प्याऽऽद्ये दोषमाह-आकाशश्चेति । द्वितीयं प्रत्याह-अर्थान्तरेति । न च सत्त्वरजस्तमांसि प्रधानेनैकीकृत्याऽऽत्माकाशौ पृथगुक्तौ तत्र पञ्चपञ्चजना इति पञ्चविंशतितत्त्वानां पृथगुक्तेरपसिद्धान्ताद्गुणानां मिथोभेदे आधारत्वेनाऽऽत्मनिष्कर्षेऽपि नभसो नाऽऽधेयान्तरेभ्यो युक्ता पृथगुक्तिरिति भावः । किंच पञ्चविंशतिसंख्यादृष्टावपि न सांख्यीयत्वधीः संख्येयमात्रेण संख्याया युक्तत्वादित्याह-कथं चेति । कथं तत्त्वानामश्रुतत्वं-जनशब्देन श्रुतत्वात्तत्राऽऽह-जनेति । संख्यैव संख्येयं कल्पयन्ती सांख्यीयतत्त्वानि विषयीकरिष्यतीत्यर्थोपपत्तिमाशंक्याऽऽह-अर्थान्तरेति । किं तर्हि तदर्थान्तरं येन वाक्यस्योपपत्तिरिति पृच्छति-कथमिति । कर्म-

उच्यते । "दिक्संख्ये संज्ञायाम्" [ पा०सू०२।१।५० ] इति विशेषस्मरणात्संज्ञायामेव पञ्चशब्दस्य जनशब्देन समासः ॥ ततश्च रूढत्वाभिप्रायेणैव केचित्पञ्चजना नाम विवक्ष्यन्ते, न सांख्यतत्त्वाभिप्रायेण ॥ ते कतीत्यस्यामाकांक्षायां पुनः पंचेति प्रयुज्यते । पंचजना नाम केचित्, ते पंचेत्यर्थः ॥ सप्तर्षयः सप्तेति यथा ॥ ११ ॥ के पुनस्ते पंचजना नामेति, तदुच्यते—

## प्राणादयो वाक्यशेषात् ॥ १२ ॥

"यस्मिन्पंच पंचजनाः" [ बृ० ४ । ४ । १७ ] इत्यत उत्तरस्मिन्मन्त्रे ब्रह्मस्वरूपनिरूपणाय प्राणादयः पंच निर्दिष्टाः "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः" [ बृ० ४ । ४ । १८ ] इति ॥ तेऽत्र वाक्यशेषगताः सान्निधानात्पंचजना इति विवक्ष्यन्ते॥ कथं पुनः प्राणादिषु जनशब्दप्रयोगः ।

---

रत्नप्रभा ।

समासान्तरात् संज्ञासमासस्याऽऽप्तोक्त्या बलवत्त्वं तावदाह—उच्यत इति ॥ दिग्वाचिनः संख्यावाचिनश्च शब्दाः संज्ञायां गम्यमानायां सुबन्तेनोत्तरपदेन समस्यन्ते । यथा—दक्षिणाग्निः सप्तर्षय इत्यादि । अयं च समासस्तत्पुरुषभेदः ॥ ११ ॥ पञ्चजनशब्दस्य संज्ञात्वमुक्त्वा संज्ञिकथनार्थं सूत्रं गृह्णाति—के पुनस्त इति ॥ श्रुतौ उतशब्दः—अप्यर्थः । ये प्राणादिप्रेरकं तत्साक्षिणमात्मानं विदुस्ते ब्रह्मविद इत्यर्थः । पञ्चजनशब्दस्य प्राणादिषु कया वृत्त्या प्रयोग इति शङ्कते—कथं पुनरिति ॥ यथा तव तत्त्वेषु

भामती ।

र्षिशब्दो वसिष्ट एकस्मिन् सप्तसु च वर्तते । न चैष तत्त्वेषु रूढः । पञ्चविंशतिसंख्यानुरोधेन तत्त्वेषु वर्तयितव्यः । रूढौ सत्यां पञ्चविंशतेरेव संख्याया अभावात्कथं तत्त्वेषु वर्तते ॥ ११ ॥ एवं च के ते पञ्चजना इत्यपेक्षायां किं वाक्यशेषगताः प्राणादयो गृह्यन्तामुत पञ्चविंशतिस्तत्त्वानीति विशये तत्त्वानामप्रामाणिकत्वात्, प्राणादीनां च वाक्यशेषे श्रवणात्तत्परित्यागे श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्प्राणादय एव पञ्चजनाः । न च काण्वमाध्यन्दिनयोर्विरोधान्न प्राणादीनां वाक्यशेषगतानामपि ग्रहणमिति सांप्रतम्, विरोधेऽपि तुल्यबलतया षोडशिग्रहणाग्रहणवद्विकल्पोपपत्तेः । न चेयं वस्तुस्वरूपकथा, अपि तूपासनानुष्ठानविधिः, 'मनसैवानुद्रष्टव्यम्' इति विधिश्रवणात् । कथं पुनः प्राणादिषु जनशब्दप्रयोग इतिं ।

आनन्दगिरीय—न्यायनिर्णयः ।

धारयाचनेकयोगेऽपि संज्ञासमासं बलवत्तरमाप्तोक्तेरुपेत्यात्र परेष्टसंख्याधीरेव नेति परिहरति—उच्यत इति । दिग्वाचिनः संख्यावाचिनश्च शब्दाः संज्ञायां विषये सुबन्तेन समस्यन्ते दक्षिणाग्निः सप्तर्षय इति दर्शनात्स तु समासस्तत्पुरुषसंज्ञ इति स्मृतेरित्यर्थः । संज्ञात्वेऽपि पाचकशब्दवदवयववृत्त्या पञ्चजनशब्दस्य बोधकत्वमाशंक्योक्तम्—ततश्चेति । सति संज्ञात्वे पंचजनशब्दोऽवयवार्थयोगानपेक्षत्वादेकस्मिन्नपि वसिष्ठे सप्तर्षिशब्दवदेकत्रापि भवतीति भावः । प्राथमिकपंचशब्दस्यान्वयमाकांक्षया दर्शयति—त इति । वाक्यार्थं सदृष्टान्तं स्पष्टयति—पञ्चेति ॥ ११ ॥ स्वरूपविशेषासिद्धौ श्रुतेरप्रामाण्यात्तद्विशेषसाधकस्य चादृष्टेस्तत्प्रामाण्ये संदिहानः शंकते—के पुनरिति । सूत्रेणोत्तरमाह—तदिति । तद्व्याकुर्वन्निर्णायकमाह—यस्मिन्निति । अप्यर्थे श्रुतावुतशब्दः । येऽपि प्राणादीनां प्राणनादिसाधकमात्मानं विदुस्ते ब्रह्म निश्चितवन्त इति योजना । पञ्चजनशब्दो लोके प्राणादिष्वगृहीतसंगतिस्तान्कथमाचक्षीतेति शंकते—कथमिति । यथा सत्येत्युक्ते सत्यभामा गम्यते, तथा जनशब्दो भाष्ये पंचजनविषयः । किं पंचजन-

तत्त्वेषु वा कथं जनशब्दप्रयोगः। समाने तु प्रसिद्ध्यतिक्रमे वाक्यशेषवशात्प्राणादय एव ग्रहीतव्या भवन्ति ॥ जनसम्बन्धाच्च प्राणादयो जनशब्दभाजो भवन्ति ॥ जनवचनश्च पुरुषशब्दः प्राणेषु प्रयुक्तः—"ते वा एते पंच ब्रह्मपुरुषाः" [ छां० ३ । १३ । ६ ] इति । अत्र ". प्राणो ह पिता प्राणो ह माता" [ छां० ७ । १५ । १ ] इत्यादि च ब्राह्मणम् ॥ समासबलाच्च समुदायस्य रूढत्वमविरुद्धम् ॥ कथं पुनरसति प्रथमप्रयोगे रूढिः शक्याऽऽश्रयितुम् ॥ शक्योद्भिदादि-

रत्नप्रभा।

जनशब्दस्य लक्षणया प्रयोगः, तथा मम प्राणादिषु पञ्चजनशब्दस्य लक्षणयेत्याह—**तत्त्वेष्विति** ॥ तर्हि रूढ्यतिक्रमसाम्यात्तत्त्वान्येव ग्राह्याणीत्यत आह—**समाने त्विति** ॥ सन्निहितसजातीयानपेक्षश्रुतिस्था एव ग्राह्याः । न तु व्यवहितविजातीयसापेक्षस्मृतिस्था इत्यर्थः । लक्षणाबीजसम्बन्धमाह—**जनेति** ॥ जनः पञ्चजन इति पर्यायः । पुरुषपित्रादिशब्दवच्च पञ्चजनशब्दस्य प्राणादिलक्षकत्वं युक्तमित्याह—**जनवचनश्चेति** ॥ ननु जायन्त इति जनाः महदादयः जनकत्वाज्जनः प्रधानमिति योगसम्भवे किमिति रूढिमाश्रित्य लक्षणावृत्त्या प्रयास इत्यत आह—**समासेति** ॥ यथा—अश्वकर्णशब्दस्य वर्णसमुदायस्य वृक्षे रूढिः, एवं पञ्चजनशब्दस्य रूढिरेव नावयवशक्त्यात्मको योग इत्यर्थः । पूर्वकालिकप्रयोगाभावान्न रूढिरित्याक्षिपति—**कथमिति** ॥ "स्युः पुमांसः पञ्चजनाः" इति [ मनुष्यवर्गे ] अमरकोशादौ प्रयोगोऽस्त्येव । तद्भावमङ्गीकृत्याप्याह—**शक्येति** ॥ जनसम्बन्धाच्चेति पूर्वभाष्ये नरेषु

भामती।

जनवाचकः शब्दो जनशब्दः । पञ्चजनशब्द इति यावत् । तस्य कथं प्राणादिष्वजनेषु प्रयोग इति व्याख्येयम् । अन्यथा तु प्रत्यस्तमितावयवार्थे समुदायशब्दार्थे जनशब्दार्थो नास्तीत्यपर्यनुयोग एव । रूढ्यपरित्यागेनैव वृत्त्यन्तरं दर्शयति—**जनसंबन्धाच्चेति** । जनशब्दभाजः पञ्चजनशब्दभाजः । ननु सत्यामवयवप्रसिद्धौ समुदायशक्तिकल्पनमनुपपन्नं, संभवति च पञ्चविंशत्यां तत्त्वेष्ववयवप्रसिद्धिरित्यत आह—**समासबलाच्चेति** । स्यादेतत् । समासबलाचेद्रूढिरास्थीयते हन्त न दृष्टस्तर्हि तस्य प्रयोगोऽश्वकर्णादिवद्वृक्षादिषु । तथा च लोकप्रसिद्ध्यभावान्न रूढिरित्याक्षिपति—**कथं पुनरसतीति** । जनेषु तावत्पञ्चजनशब्दस्य प्रथमः प्रयोगो लोकेषु दृष्ट इत्यसति प्रथमप्रयोग इत्यसिद्धमिति स्थवीयस्तयानभिधायाभ्युपेत्य प्रथमप्रयोगाभावं समाधत्ते—**शक्योद्भिदादिवदिति** । आचार्यदेशीयानां मतभेदेष्वपि न पञ्चविंशतिस्तत्त्वानि

आनन्दगिरीय—न्यायनिर्णयः।

शब्दस्य सांख्यीयतत्त्वविषयत्वं प्राणाद्यविषयत्वं वा । नाऽऽद्यः, तेष्वपि शक्त्यग्रहणसाम्यादित्याह—**तत्त्वेष्विति** । द्वितीयं प्रत्याह—**समाने त्विति** । कया तर्हि वृत्त्या पंचजनशब्देन प्राणादिधीर्लक्षणयेत्याह—**जनेति** । किंच पंचजनपर्यायस्य पुरुषशब्दस्य प्राणेषु प्रयुक्तपूर्वत्वाद्युक्ता तेषां पंचजनशब्दतेत्याह—**जनेति** । किंच पंचजनपर्यायस्य पुरुषशब्दस्य प्राणे प्रयुक्तत्वं व्यनक्ति—**ते वा इति** । ते खल्वेते हृदयच्छिद्रेषु पूर्वदक्षिणपश्चिमोत्तरोर्ध्वेषु पंचसु पंच प्राणादयो ब्रह्मणो हार्दस्य पुरुषस्य द्वारपाला इत्यत्र प्राणादिषु पुरुषशब्दोऽस्तीत्यर्थः । प्राणस्य सर्वात्मत्वादपि तदात्मकानां तेषां युक्ता पंचजनशब्दतेत्याह—**प्राणो हेति** । अवयवप्रसिद्धिसंभवे समुदायप्रसिद्धिरयुक्ता । संभवति पंचविंशत्यां तत्त्वेष्ववयवप्रसिद्धिः । पंच च ते जनाश्चेति व्युत्पत्तेः तत्त्वानां च जायमानाजायमानानां छत्रिन्यायेन जनशब्दितानां पंचसंख्यावतां पंचसंख्यावत्त्वे पंचविंशतित्वसिद्धिरित्याशंक्याऽऽह—**समासेति** । रूढिमाक्षिपति—**कथमिति** । जनशब्दितमनुष्येषु पंचजनशब्दस्य दृष्टत्वात्प्रथमप्रयोगाभावासिद्धावपि तदभावमुपेत्य दृष्टान्तमाह—**शक्येति** ।

वदित्याह–प्रसिद्धार्थसन्निधानेन ह्यप्रसिद्धार्थः शब्दः प्रयुज्यमानस्समभिव्याहारात्तद्विषयो नियम्यते । यथा "उद्भिदा यजेत" "यूपं छिनत्ति" "वेदिं करोति" इति, तथाऽयमपि पंचजनशब्दस्समासान्वाख्यानादवगतसंज्ञाभावस्संज्ञयाकाङ्क्षी वाक्यशेषसमभिव्याहृतेषु प्राणादिषु वर्तिष्यते ॥ कैश्चित्तु देवाः पितरो गन्धर्वा असुरा रक्षांसि च पंच पंचजना व्याख्याताः ॥ अन्यैश्चत्वारो वर्णा निषादपंचमाः परिगृहीताः ॥ क्वचिच्च–"यत्पांचजन्यया विशा" [ऋ० सं० ८।५३।७] इति प्रजापरः

---

रत्नप्रभा ।

पञ्चजनशब्दस्य रूढिमाश्रित्य प्राणादिषु लक्षणोक्ता । इह तु प्रौढवादेन प्राणादिषु रूढिरुच्यत इति मन्तव्यम् । संगृहीतं विवृणोति–**प्रसिद्धेत्यादिना** ॥ "उद्भिदा यजेत पशुकामः" इत्यत्रोद्भित्पदं विधेयगुणार्थकं कर्मनामधेयं वेति **संशये** खनित्रादावुद्भित्पदस्य प्रसिद्धेर्योगनामत्वे प्रसिद्धिविरोधाज्ज्योतिष्टोमे गुणविधिरिति प्राप्ते राद्धान्तः । **यजेत** यागेनेष्टं भावयेदित्यर्थः । ततश्चोद्भिदेत्यप्रसिद्धस्य तृतीयान्तस्य यागेनेत्यनेन प्रसिद्धार्थकेन सामानाधिकरण्येन तन्नामत्वं निश्चीयते । उद्भिनत्ति पशून् साधयतीति प्रसिद्धेरविरोधादप्रकृतज्योतिष्टोमे गुणविध्ययोगात्, तद्विधौ चोद्भिदाख्यगुणवता यागेनेति मत्वर्थसम्बन्धलक्षणाप्रसङ्गाच्चेति कर्मनामैवोद्भित्पदम् । **तथा** छिनत्तीति प्रसिद्धार्थच्छेदनयोग्यार्थकशब्दसमभिव्याहाराद्दारुविशेषो **यूपशब्दार्थः** । करोतीति समभिव्याहाराद्वेदिशब्दार्थः संस्कारयोग्यस्थण्डिलविशेष इति गम्यते । **तथा** प्रसिद्धार्थकप्राणादिशब्दसमभिव्याहारात् **पञ्चजनशब्दः** प्राणाद्यर्थक इति निश्चीयत इत्यर्थः । एकदेशिनां मतद्वयमाह–**कैश्चिदित्यादिना** ॥ शूद्रयां ब्राह्मणाज्जातः **निषादः** । श्रुत्या पञ्चजनशब्दस्यार्थान्तरमाह–**क्वचिच्चेति** ॥ पाञ्चजन्यया प्रजया विशतीति विट् तया विशा पुरुषरूपयेन्द्रस्याह्वानार्थं घोषाः सृष्टा इति यत्तद्युक्तम् । घोषातिरेकेणेन्द्राह्वानायोगादिति श्रुत्यनुसारेण प्रजामात्र-

भामती ।

सिध्यन्ति । परमार्थतस्तु पञ्चजना वाक्यशेषगता एवेत्याशयवानाह–**कैश्चित्त्विति** । शेषमतिरोहि-

आनन्दगिरीय–न्यायनिर्णयः ।

संग्रहवाक्यं विवृणोति–**प्रसिद्धेति** । तत्रोद्भिदधिकरणमुदाहरति—**यथेति** । 'उद्भिदा यजेत पशुकामः' इत्यत्रोद्भित्पदं विधेयगुणार्पकं वा कर्मनाम वेति संशये खनित्रादावुद्भिच्छब्दस्य प्रसिद्धेर्नामत्वे च यजतितुल्यार्थत्वेनाऽऽनर्थक्याज्ज्योतिष्टोमे गुणविधिरिति प्राप्ते यजेतेति यागेन भावयेदित्यर्थकल्पनादुद्भिदेति करणार्थपदस्य तत्सामानाधिकरण्यात्तदेकार्थत्वादुद्भिद्वतेति कल्पने मत्वर्थलक्षणापातादुद्भिदा यागं भावयेद्यागेन पशुमिति वैयधिकरण्ये च यागस्य फलं प्रति साधनत्वं गुणं प्रति साध्यत्वमिति वैरूप्याद्विध्यावृत्त्या वाक्यभेदाच्चोद्भिनत्ति साधयति पशुमिति यागेऽपि प्रसिद्धियोगादत्र नामत्वसिद्धौ चान्यत्र 'समे दर्शपूर्णमासाभ्यां यजेत्' इत्यादौ नामवद्यागानुवादेन गुणफलविधिसंभवाज्ज्योतिष्टोमे वा प्रकृते गुणविध्ययोगात्कर्मनामैव संनिहितयज्यनुरोधादुद्भित्पदमिति राद्धान्तितमित्यर्थः । संग्रहवाक्यस्थादिशब्दोपात्तमुदाहरणद्वयमाह–**यूपमिति** । छिनत्तीतिप्रसिद्धार्थपदसमभिव्याहाराद्यूपपदस्य तदर्थश्छेदनयोग्यो दारुविशेषो गम्यते । वेदिं करोतीति च करोतिसमभिव्याहाराद्वेद्यर्थः संस्कारयोग्यः स्थण्डिलविशेषः सिद्ध इत्यर्थः । दृष्टान्तत्रयार्थं दार्ष्टान्तिके योजयति–**तथेति** । आचार्यदेशीयानां मतद्वयमाह–**कैश्चिदित्यादिना** । शूद्रायां ब्राह्मणाज्जातो निषादः । श्रुत्यन्तरानुसारेण संभावितं पक्षान्तरमाह–**क्वचिच्चेति** । पाञ्चजन्यया प्रजया विशतीति विशा पुरुषरूपया यदिन्द्राह्वाननिमित्तं घोषा असृक्षत सृष्टास्तद्युक्तं घोषातिरेकेण तदाह्वानायोगादित्यत्र प्रजापरः प्रयोगो दृष्टः । ततोऽत्र पंचसंख्याया उप-

प्रयोगः पंचजनशब्दस्य दृश्यते । तत्परिग्रहेऽपीह न कश्चिद्विरोधः ॥ आचार्यस्तु न पंचविंशतेस्तत्त्वानामिह प्रतीतिरस्तीत्येवम्परतया "प्राणादयो वाक्यशेषाद्" इति जगाद ॥ १२ ॥ भवेयुस्तावत्प्राणादयः पंचजना माध्यन्दिनानाम् । येऽन्नं प्राणादिष्वामनन्ति ॥ काण्वानां तु कथं प्राणादयः पंचजना भवेयुः । येऽन्नं प्राणादिषु नामनन्तीति ॥ अत उत्तरं पठति—

## ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

असत्यपि काण्वानामन्ने ज्योतिषा तेषां पञ्चसंख्या पूर्यते ॥ तेऽपि हि "यस्मिन्पंच पंचजनाः" [ बृ० ४ । ४ । १७ ] इत्यतः पूर्वस्मिन्मन्त्रे ब्रह्मस्वरूपनिरूपणायैव ज्योतिरधीयते-"तद्देवा ज्योतिषां ज्योतिः" [ बृ० ४ । ४ । १६ ] इति ॥ कथं पुनरुभयेषामपि तुल्यवदिदं ज्योतिः पठ्यमानं समानमन्त्रगतया पंचसंख्यया केषाञ्चिद् गृह्यते केषाञ्चिन्नेति ॥ अपेक्षाभेदादित्याह—माध्यन्दिनानां हि समानमन्त्रपठितप्राणादिपंचजनलाभान्नास्मिन्मन्त्रान्तरपठिते ज्योतिष्यपेक्षा भवति ॥ तदलाभात्तु काण्वानां भवत्यपेक्षा ॥ अपेक्षाभेदाच्च समानेऽपि मन्त्रे ज्योतिषो ग्रहणाग्रहणे । यथा—समानेऽप्यतिरात्रे वचनभेदात्षोडशिनो ग्रहणाग्रहणे

रत्नप्रभा ।

ग्रहेऽपि न विरोध इत्यर्थः । सूत्रविरोधमाशंक्याह—आचार्यस्त्विति ॥ अतः सांख्यतत्त्वातिरिक्तयत्किञ्चित्परतया पंचजनशब्दव्याख्यायामविरोध इति भावः ॥ १२ ॥ शंकोत्तरत्वेन सूत्रं गृह्णाति—भवेयुरिति ॥ ज्योतिषां सूर्यादीनां ज्योतिस्तद्ब्रह्म देवा उपासत इत्यर्थः । नन्विदं षष्ठ्यन्तज्योतिःपदोक्तं सूर्यादिकं ज्योतिः शाखाद्वयेऽप्यस्ति, तत्काण्वानां पञ्चत्वपूरणाय गृह्यते नान्येषामिति विकल्पो न युक्त इति शङ्कते—कथं पुनरिति ॥ आकांक्षाविशेषाद्विकल्पो युक्त इत्याह सिद्धान्ती—अपेक्षेति ॥ यथाऽतिरात्रे षोडशिनं गृह्णाति न गृह्णातीति वाक्यभेदाद्विकल्पः, तद्वच्छाखाभेदेनान्नपाठापाठाभ्यां ज्योतिषो विकल्प इत्यर्थः । ननु क्रियायां विकल्पो युक्तः न वस्तुनीति चेत् । सत्यम् । अत्रापि शाखाभेदेन सान्ना ज्योतिःसहिता वा प्राणादयो यत्र प्रतिष्ठितास्तन्मनसाऽनुद्रष्टव्यमिति ध्यानक्रियायां विकल्पोपपत्तिरित्यन-

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

लक्षणत्वात्पंचजनशब्देन सर्वप्रजाग्रहणमित्यर्थः । उक्तपक्षान्यतमग्रहेऽपि सांख्यनिरासयोगात्प्रधानस्याशब्दत्वसिद्धेरस्माकं न विशेषपक्षपातोऽस्तीत्याह—तदिति । आचार्यवचनं विरुध्यते तस्य प्राणादिविषयत्वादित्याशंक्य व्याख्यान्तराभावधिया तन्न प्रवृत्तमित्याह—आचार्यस्त्विति ॥ १२ ॥ सूत्रान्तरमवतारयितुं श्रुत्योर्मिथो विरोधं चोदयति—भवेयुरिति । सूत्रमुत्तरत्वेनावतारयति—अत इति । तद्व्याकरोति—असत्यपीति । ज्योतिरपि पंचसंख्यापूरकमात्मातिरिक्तं काण्वश्रुतावश्रुतमित्याशंक्याऽऽह—तेऽपीति । यत्पूर्वकालापरिच्छेद्यमुक्तं तज्ज्योतिषामादित्यादीनां भासकममृतत्वेनाऽऽयुष्ट्वेन जीवनगुणवत्तयोपासते देवास्तेनाऽऽयुष्मन्तस्ते जाता इत्याह—तदिति । अस्मिन्मन्त्रे षष्ठ्यन्तज्योतिषा पंचसंख्यापूरणं न त्वात्मज्योतिषा तस्यैकस्याऽऽधाराधेयत्वायोगात् । केषांचित्पंचसंख्यापूरकं ज्योतिरन्येषां नेति न विकल्पो वस्तुनीति शंकते—कथमिति । ग्राहकसामर्थ्यभेदादविरोधमाह—अपेक्षेति । तदेव स्फुटयति—माध्यंदिनानामिति । तथाऽपि कथमेकस्यैव ज्योतिषस्तुल्ये मन्त्रे ग्रहाग्रहौ, न हि वस्तुनि विकल्पोऽस्ति तत्राऽऽह—अपेक्षेति । उक्तं दृष्टान्तेन स्पष्टयति—यथेति । विरोधेऽपि तुल्यबलत्वाज्ज्योतिर्विहाय वाक्यशेषस्याना-

तद्वत् ॥ तदेवं न तावच्छ्रुतिप्रसिद्धिः काचित्प्रधानविषयाऽस्ति ॥ स्मृतिन्यायप्रसिद्धी तु परिहरिष्येते ॥१३॥ इति सङ्ख्योपसङ्ग्रहाधिकरणम् ॥३॥

**कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥ ( ४ ) ॥**

प्रतिपादितं ब्रह्मणो लक्षणं, प्रतिपादितं च ब्रह्मविषयं गतिसामान्यं वेदान्तवाक्यानाम् ॥ प्रतिपादितं च प्रधानस्याशब्दत्वम् ॥ तत्रेदमपरमाशङ्क्यते—न जन्मादिकारणत्वं ब्रह्मणः, ब्रह्मविषयं वा

रत्नप्रभा ।

वद्यम् । उक्तं प्रधानस्याशब्दत्वमुपसंहरति—**तदेवमिति** ॥ तथापि स्मृतियुक्तिभ्यां प्रधानमेव जगत्कारणमित्यत आह—**स्मृतीति** ॥१३॥ (३) ॥ **कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः** । पूर्वग्रन्थेनास्य सङ्गतिं वक्तुं वृत्तमनुवदति—**प्रतिपादितमिति** ॥ अधिकरणत्रयेण प्रधानस्याश्रौतत्वोक्त्या जगत्कारणत्वलक्षणेन ब्रह्मण एव बुद्धिस्थता । तस्मिन्नेव बुद्धिस्थे निर्विशेषे ब्रह्मणि वेदान्तानां समन्वय इति साधितं पूर्वसूत्रसन्दर्भेण । तत्र लक्षणसमन्वययोरसिद्धिरेव । श्रुतीनां विरोधदर्शनादित्याक्षेपरूपान्तेनास्य सङ्गतिमाह—**तत्रेति** ॥ न चाविरोधचिन्ताया द्वितीयाध्याये सङ्गतिर्नास्मिन्नध्याये इति वाच्यम् । सिद्धे समन्वये स्मृत्यादिमानान्तरविरोधनिरासस्य द्वितीयाध्यायार्थत्वात्तत्पदवाच्यजगत्कारणवादिश्रुतीनां

भामती ।

तार्थम् ॥ १२॥ १३॥ (३) ॥ **कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः** । अथ समन्वयलक्षणे केयमकाण्डे विरोधाविरोधचिन्ता, भविता हि तस्याः स्थानमविरोधलक्षणमित्यत आह—**प्रतिपादितं ब्रह्मण इति** । अयमर्थः—नानैकशाखागततत्तद्वाक्यालोचनया वाक्यार्थावगमे पर्यवसिते सति प्रमाणान्तरविरोधेन वाक्यार्थावगतेरप्रामाण्यमाशङ्क्याविरोधव्युत्पादनेन प्रामाण्यव्यवस्थापनमविरोधलक्षणार्थः । प्रासङ्गिकं तु तत्र सृष्टिविषयाणां वाक्यानां परस्परमविरोधप्रतिपादनं न तु लक्षणार्थः । तत्प्रयोजनं च तत्रैव प्रतिपादयिष्यते । इह तु—वाक्यानां सृष्टिप्रतिपादकानां परस्परविरोधे ब्रह्मणि जगद्योनौ न समन्वयः सेद्धुमर्हति । तथा च न जगत्कारणत्वं ब्रह्मणो लक्षणं, न च तत्र गतिसामान्यं, न च तत्सिद्धये प्रधानस्याशब्दत्वप्रतिपादनं, तस्माद्वाक्यानां विरोधाविरोधाभ्यामुक्तार्थाक्षेपसमाधानाभ्यां समन्वय एवोपपाद्यत इति समन्वयलक्षणे संगत-

आनन्दगिरीय—न्यायनिर्णयः ।

मेव प्राणादीनां सान्नानां क्वचिद्ग्रहणमन्यत्र सज्योतिषां तेषामेव ग्रहणं क्रियायामिव वस्तुन्यपि दृष्टिक्रियायां विकल्पसिद्धेरिति मत्वाऽऽह—**तद्वदिति** । पंचजनमन्त्रात्प्रधानस्य श्रुतिमत्त्वाभावेऽपि प्रकारान्तरेण तस्य तद्वत्त्वमाशंक्य तद्विषयत्वेन संभावितश्रुतीनामन्यविषयत्वेन नीतत्वान्मैवमित्याह—**तदेवमिति** । तथाऽपि न ब्रह्मणि समन्वयः प्रधानार्थस्मृतिन्यायविरोधादित्याशंक्य भाविनं समाधिं सूचयति—**स्मृतिरिति** । ॥ १३ ॥ ( ३ ) ॥ पूर्वाधिकरणत्रयेण प्रधाननिराकरणेन वेदान्तानां ब्रह्मकारणत्वं प्रत्यविगीतत्वमुक्तम् । इदानीं कारणविषयाणां तेषां मिथो व्याहतार्थत्वेन स्वतो निश्चायकत्वान्मानान्तरसिद्धप्रधानलक्षकत्वे गतिसामान्यासिद्धिरित्याशंक्याऽऽह—**कारणत्वेन चेति** । अधिकरणतात्पर्यं वक्तुं जन्मादिसूत्रे वृत्तं कीर्तयति—**प्रतिपादितमिति** । शास्त्रयोनित्वाधिकरणमारभ्याऽऽनुमानिकसूत्रात्प्राक्तनाधिकरणानां तात्पर्यमनुवदति—**प्रतिपादितमिति** । अधिकरणत्रयार्थमनुवदति—**प्रतिपादितं चेति** । संप्रति कारणे ब्रह्मण्यन्वयपर्यवसानाय कारणविषयवाक्याना ( णा ) मविरोधार्थमधिकरणमारभमाणो जगत्कारणवादिवाक्यानि ब्रह्मणि मानं न वेति विप्रतिपत्तेर्विशये पूर्वत्रान्नज्योतिषोर्विकल्पेन निर्देशादविरोधे सिद्धेऽपि प्रकृते सिद्धे कारणे विकल्पायोगाद्विरोधे सत्यप्रामाण्यमिति पूर्वपक्षमाह—**तत्रेति** । कारणत्वं ब्रह्मणो गतिसामान्याद्युक्तमित्याशंक्याऽऽह—**ब्रह्मेति** । न चाविरोधार्थमधिकरणं नेह संगतमिति वाच्यं, समन्वयतो वाक्यार्थज्ञाने माना-

**गतिसामान्यं वेदान्तवाक्यानां प्रतिपादयितुं शक्यम् ॥ कस्मात् ॥ विगानदर्शनात्-प्रतिवेदान्तं ह्यन्याऽन्या सृष्टिरुपलभ्यते क्रमादिवैचित्र्यात्। तथाहि क्वचिद् "आत्मन आकाशस्सम्भूतः" [ तै० उ० २ । १ ] इत्याकाशादिका सृष्टिराम्नायते ॥ क्वचित्तेजआदिका-"तत्तेजोऽसृजत"[छां०**

रत्नप्रभा ।

मिथो विरोधाद्वाच्यार्थानिश्चयेन लक्ष्ये समन्वयासिद्धौ प्राप्तायां तत्साधकाविरोधचिन्ताया अत्रैव सङ्गतत्वात् । न चैवं सृष्टिश्रुतीनामप्यविरोधोऽत्रैव चिन्तनीय इति वाच्यम् । स्वप्नवत्कल्पितसृष्टौ विरोधस्यैवाभावात् । किमर्थं तर्हि द्वितीये तच्चिन्तनम् । स्थूलबुद्धिसमाधानार्थमिति ब्रूमः । इह तु सूक्ष्मदर्शां वाक्यार्थे समन्वयज्ञानाय तत्पदार्थश्रुतिविरोधः परिह्रियते । यद्यपि त्वम्पदार्थश्रुतिविरोधोऽत्र परिहर्तव्यः। तथापि प्रथमसूत्रेण बन्धमिथ्यात्वसूचनादविरोधस्सिद्धः । प्रपञ्चस्तु स्थूलबुद्धिसमाधानप्रसंगेन भविष्यतीति मन्यते सूत्रकारः । अत्र जगत्कारणश्रुतयो विषयः । ताः किं ब्रह्मणि मानं न वेति संशये अन्नज्योतिषोः संख्यादृष्टिक्रियायां विकल्पेऽपि कारणे वस्तुन्यसद्वा सद्वा कारणमित्यादिविकल्पसम्भवादप्रामाण्यमिति प्रत्युदाहरणेन पूर्वपक्षयन्नुक्ताक्षेपं विवृणोति-प्रतिवेदान्तमित्यादिना ॥ वेदान्तानां समन्वयसाधनात् श्रुत्यध्यायसङ्गतिः । असदादिपदानां सत्कारणे समन्वयोक्तेः पादसङ्गतिः । पूर्वपक्षे समन्वयासिद्धिः फलं, सिद्धान्ते तत्सिद्धिरिति विवेकः । क्रमाक्रमाभ्यां सृष्टिविरोधं तावद्दर्शयति-तथाहि क्वचिदित्यादिना ॥ स परमात्मा लोकानसृजत । अम्मयशरीरप्रचुरस्वर्गलोकोऽम्भश्शब्दार्थः । सूर्य-

भामती ।

मिदमधिकरणम् । 'वाक्यानां कारणे कार्ये परस्परविरोधतः । समन्वयो जगद्योनौ न सिध्यति परात्मनि॥' 'सदेव सोम्येदमग्र आसीत्' इत्यादीनां कारणविषयाणां, 'असद्वा इदमग्र आसीत्' इत्यादिभिर्वाक्यैः कारणविषयैर्विरोधः । कार्यविषयाणामपि विभिन्नक्रमाक्रमोत्पत्तिप्रतिपादकानां विरोधः । तथाहि-कानिचिदन्यकर्तृकां जगदुत्पत्तिमाचक्षते वाक्यानि । कानिचित्स्वयंकर्तृकाम् । सृष्ट्या च कार्येण तत्कारणतया ब्रह्म लक्षितम् । सृष्टिविप्रतिपत्तौ तत्कारणतायां ब्रह्मलक्षणे विप्रतिपत्तौ सत्यां भवति तल्लक्ष्ये ब्रह्मण्यपि विप्रतिपत्तिः । तस्माद्ब्रह्मणि समन्वयाभावान्न समन्वयगम्यं ब्रह्म । वेदान्तास्तु कर्त्रादिप्रतिपादनेन कर्मविधिपरतयोपचरितार्था अविवक्षितार्था वा जपोपयोगिन इति प्राप्तम् । क्रमादीति । आदिग्रहणेनाक्रमो गृह्यते । एवं प्राप्त उच्यते-' सर्गक्रमविवादेऽपि न स स्रष्टरि विद्यते । सतस्त्वसद्वचो भक्त्या निराकार्यतया क्वचित् ॥' न तावदस्ति सृष्टिक्रमे विगानं, श्रुतीनामविरोधात् । तथाहि-अनेकशिल्पपर्यवदातो

आनन्दगिरीय-न्यायनिर्णयः ।

न्तरविरोधाशङ्कानिरासस्याविरोधाध्यायार्थत्वादिह च कारणविषयवाक्यानामेव मिथोविरोधान्न समन्वयो ब्रह्मणीत्याशंक्य तन्निरासेनैव समन्वयस्यैव साध्यत्वादध्यायसंगतिसिद्धेः कार्यश्रुतिविरोधस्यापीह परिहर्तुं शक्यत्वेऽपि वेदान्तानां न कार्ये तात्पर्यमिति ज्ञापयितुं नात्र परिह्रियते कार्यस्यापि प्रतिपाद्यत्वमुपेत्योत्तरत्र तदीयश्रुतिविरोधः परिहरिष्यत एतेन श्रुतिशास्त्रसंगती सिद्धे । क्वचित्कासत्पदस्य कर्मकर्तृप्रयोगस्य चासद्वादपरत्वं स्वभाववादपरत्वं च व्युदस्य गतिसामान्यस्थापनात्पादसंगतिः । पूर्वपक्षे कार्यद्वारा स्वतश्च कारणे विप्रतिपत्त्या तल्लक्षिते परस्मिन्नपि तदापत्तेर्न कारणे तुरीये च समन्वयधीरिति गतिसामान्यासिद्धिः । सिद्धान्ते ब्रह्मणि कारणत्वस्य कल्पितत्वात्तत्र वस्तुतोऽविवादात्तल्लक्षिते सत्यज्ञानादिलक्षणे तस्मिन्नन्वयसिद्धेर्गतिसामान्यसिद्धिः । प्रतिपादितस्यासिद्धिरयुक्तेति शङ्कते-कस्मादिति । कार्ये कारणे च विप्रतिपत्तिदर्शनादुक्तस्यापि भवत्यसिद्धिरित्याह-विगानेति । कार्यविषयं विगानं तावद्दर्शयति-प्रतीति। क्रमादीत्यादिशब्दादक्रमो गृह्यते । क्रमवैचित्र्यकृतं विगानमाह-क्वचिदिति । आदिशब्दार्थमक्रमं कथ-

६।२।३] इति ॥ क्वचित्प्राणादिका–"स प्राणमसृजत । प्राणाच्छ्रद्धाम्" [प्रश्न० ६।४] इति ॥ क्वचिदक्रमेणैव लोकानामुत्पत्तिराम्नायते "स इमाँल्लोकानसृजताम्भो मरीचिर्मरमापः" [ऐ० आं० २।४।१।२।३] इति ॥ तथा क्वचिदसत्पूर्विका सृष्टिः पठ्यते–"असद्वा इदमग्र आसीत् । ततो वै सदजायत" [तै० उ० २।७] इति ॥ "असदेवेदमग्र आसीत् । तत्सदासीत् । तत्सत्यमभवद्" [छां० ३।१९।१] इति च ॥ क्वचिदसद्वादनिराकरणेन सत्पूर्विका प्रक्रिया प्रतिज्ञायते–"तद्धैक आहुरसदेवेदमग्र आसीद्" [छां०६।२।१] इत्युपक्रम्य, "कुतस्तु खलु सोम्यैवं स्यादिति होवाच । कथमसतस्सज्जायेतेति ॥ सदेव सोम्येदमग्र आसीद्" [६।२।२] इति क्वचित्स्वयंकर्तृकैव व्याक्रिया जगतो निगद्यते–"तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत"

रत्नप्रभा ।

रश्मिव्याप्तोऽन्तरिक्षलोकः–**मरीचयः** । **मरः** मर्त्यलोकः । अब्बहुलाः पाताललोकाः, **आप** इति श्रुत्यर्थः । सृष्टिविरोधमुक्त्वा कारणविरोधमाह–**तथेति** ॥ **असद्** अनभिव्यक्तनामरूपात्मकं कारणम् । **ततः** कारणात् । **सद्** अभिव्यक्तम् । एतत्तुल्यार्थं छान्दोग्यवाक्यमाह–**असदेवेति**॥ किं शून्यमेव नेत्याह–**तत्सदिति**॥अबाधितं ब्रह्मैवासीदित्यर्थः।तद्ब्रह्मात्मना स्थितं जगत्सृष्टिकाले सम्यगभिव्यक्तमभवत् । **प्रक्रिया** सृष्टिः **तत्** तत्र कारणे **एके** बाह्यास्तेषां मतं श्रुतिरेव दूषयति–**कुत इति**॥कुत एवं पदयोरर्थमाह–**कथमिति**॥ स्वमतमाह–**सदिति** ॥ **तदिदं** जगद् ह किल **तर्हि** प्राक्काले। **अव्याकृतं** कारणात्मकमासीत् । श्रुतीनां

भामती ।

देवदत्तः प्रथमं चक्रदण्डादि करोति, अथ तदुपकरणः कुम्भं, कुम्भोपकरणश्चाहरत्युदकम्, उदकोपकरणश्च संयवनेन गोधूमकणिकानां करोति पिण्डं, पिण्डोपकरणस्तु पचति घृतपूर्णं, तदस्य देवदत्तस्य सर्वत्रैतस्मिन् कर्तृत्वाच्छक्यं वक्तुं देवदत्ताच्चक्रादि संभूतं तस्माच्चक्रादेः कुम्भादीति । शक्यं च देवदत्तात्कुम्भः समुद्भूतस्तस्मादुदकाहरणादीत्यादि । न ह्यस्त्यसंभवः सर्वत्रास्मिन् कार्यजाते क्रमवत्यपि देवदत्तस्य साक्षात्कर्तृत्वानुस्यूतत्वात् । तथेहापि यद्यप्याकाशादिक्रमेणैव सृष्टिस्तथाप्याकाशानलानिलादौ तत्रतत्र साक्षात् परमेश्वरस्य कर्तृत्वाच्छक्यं वक्तुं परमेश्वरादाकाशः संभूत इति । शक्यं च वक्तुं परमेश्वरादनलः संभूत इत्यादि । यदि त्वाकाशाद्वायुर्वायोस्तेज इत्युक्त्वा तेजसो वायुर्वायोराकाश इति ब्रूयाद्भवेद्विरोधः । न चैतदस्ति । तस्मादमूषामविवादः श्रुतीनाम् । एवं 'स इमाँल्लोकानसृजत' इत्युपक्रमाभिधायिन्यपि श्रुतिरविरुद्धा । एषा हि स्वव्या-

आनन्दगिरीय–न्यायनिर्णयः ।

यति–**क्वचिदिति** । ईक्षिता परः सर्वनामार्थः । लोकान्विशिनष्टि–**अम्भ इति** । अम्मयशरीरप्रचुरः स्वर्गो लोकोऽम्भःशब्दार्थः । **मरीचिरिति** रश्मिप्रधानोऽन्तरिक्षलोकः । **मर** इति मरणप्रधानोऽयं लोकः । **आप** इत्यब्बहुलः पाताललोक इति विवेकः । कार्ये विप्रतिपत्तिवत्कारणेऽपि सा दृष्टेत्याह–**तथेति** । इदमसदिवाव्यक्तमग्रे प्रागवस्थायामिति यावत् । ततोऽनभिव्यक्तनामरूपात्कारणादभिव्यक्तनामरूपं जगज्जातमनभिव्यक्तमेव हि व्यक्तं भवतीत्याह–**तत इति** । छान्दोग्यश्रुतिस्तैत्तिरीयश्रुत्या तुल्यार्थेत्याह–**असदिति** । तत्समभवत्तत्कारणं यदात्मनाऽऽसीत्तत्सदर्थक्रियोन्मुखं कार्यरूपेण च संवृत्तमित्यर्थः । तथाऽपि कुतो विप्रतिपत्तिस्तत्राऽऽह–**क्वचिदिति** । प्रक्रिया सृष्टिः । तत्तत्र कारणे केचिदाहुः । तेषां मतं दूषयति–**कुतस्त्विति** । तदेव स्फुटयति–**कथमिति** । व्यतिरेकमुक्त्वाऽन्वयमाह–**सत्त्विति** । विप्रतिपत्त्यन्तरमाह–**क्वचिदिति** । तदिदं जगत्तर्हि प्रागवस्थायामव्याकृतकारणमासीत्तत्किल शब्दा-

१ मरीचीरिति क्वचित्पाठो दृश्यते । २ उपनिषदि "सत्त्वेव सोम्य" इति तुशब्दघटितः पाठो दृश्यते ।

[ बृ० १ । ४ । ७ ] इति ॥ एवमनेकधा विप्रतिपत्तेर्वस्तुनि च विकल्पस्यानुपपत्तेर्न वेदान्तवाक्यानां जगत्कारणावधारणपरता न्याय्या ॥ स्मृतिन्यायप्रसिद्धिभ्यां तु कारणान्तरपरिग्रहो न्याय्य इति ॥ एवं प्राप्ते ब्रूमः ॥ सत्यपि प्रतिवेदान्तं सृज्यमानेष्वाकाशादिषु क्रमादिद्वारके विगाने न स्रष्टरि किञ्चिद्विगानमस्ति ॥ कुतः ॥ यथाव्यपदिष्टोक्तेः—यथाभूतो ह्येकस्मिन्वेदान्ते सर्वज्ञस्सर्वेश्वरस्सर्वात्मैकोऽद्वितीयः कारणत्वेन व्यपदिष्टः, तथाभूत एव वेदांतान्तरेष्वपि व्यपदिश्यते ॥ तद्यथा—"सत्यं ज्ञानमनन्तं ब्रह्म" [ तै० उ० २ । १ ] इति ॥ अत्र तावज्ज्ञानशब्देन परेण च तद्विषयेण कामयितृत्ववचनेन चेतनं ब्रह्म न्यरूपयदपरप्रयोज्यत्वेनेश्वरं कारणमब्रवीत् ॥ तद्विषयेणैव परेणाऽऽत्मशब्देन शरीरादिकोशपरम्परया चान्तराऽन्तरानुप्रवेशनेन सर्वेषामंतः प्रत्यगात्मानं निरधार-

रत्नप्रभा ।

विरोधमुपसंहरति—**एवमिति** ॥ किमत्र न्याय्यमित्याशंक्य मानान्तरसिद्धप्रधानलक्षकत्वं वेदान्तानां न्याय्यमित्याह—**स्मृतीति** ॥ तत्र सृष्टौ विरोधमङ्गीकृत्य स्रष्टरि विरोधं परिहरति—**सत्यपीति** ॥ आकाशादिषु ब्रह्मणः कारणत्वे विरोधो नैवास्तीति प्रतिज्ञायां हेतुमाह—**कुत इति** ॥ यथाभूतत्वमेवाह—**सर्वज्ञ इति** ॥ कारणस्य सर्वज्ञत्वादिकं प्रतिवेदान्तं दृश्यत इत्याह—**तद्यथेत्यादिना** ॥ **तद्विषयेण** ब्रह्मविषयेण । **चेतनं** सर्वज्ञम्, "तदात्मानं स्वयमकुरुत" [ तै० २ । ७ । १ ] इति श्रुतेरपरप्रयोज्यत्वम् । "तस्माद्वा एतस्मा-

भामती ।

पारमभिधानक्रमेण कुर्वती नाभिधेयानां क्रमं निरुणद्धि । ते तु यथाक्रमावस्थिता एवाक्रमेणोच्यन्ते । यथा क्रमवन्ति ज्ञानानि जानातीति । तदेवमविगानम् । अभ्युपेत्य तु विगानमुच्यते—सृष्टौ खल्वेतद्विगानम् । स्रष्टा तु सर्ववेदान्तवाक्येष्वनुस्यूतः परमेश्वरः प्रतीयते । नात्र श्रुतिविगानं मात्रयाप्यस्ति । न च सृष्टिविगानं स्रष्टरि तदधीननिरूपणे विगानमावहतीति वाच्यम् । न ह्येष स्रष्टृत्वमात्रेणोच्यतेऽपि तु 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिना रूपेणोच्यते स्रष्टा । तच्चास्य रूपं सर्ववेदान्तवाक्यानुगतम् । तज्ज्ञानं च फलवत् ।

आनन्दगिरीय—न्यायनिर्णयः ।

त्मनाऽर्थात्मना च व्याक्रियत व्यक्तमभवदित्यर्थः । विप्रतिपत्तीरुपसंहृत्य तत्फलमाह—**एवमिति** । **वस्तुनीति** कार्यकारणयोरुक्तिः । किं तर्हि न्याय्यं मानान्तरेण कारणे निश्चिते वेदान्तानां तल्लक्षकत्वमित्याह—**स्मृतीति** । स्मृतिः सांख्यस्मृतिः । न्यायो 'भेदानां परिमाणात्' इत्यादिः । कारणान्तरं प्रधानम् । कार्यद्वारा स्वतश्च कारणे विप्रतिपत्तेस्तल्लक्ष्येऽपि परत्र तद्वाशङ्कतिसामान्यासिद्धिरिति पूर्वपक्षमनूद्य सिद्धान्तयति—**एवमिति** । कार्ये विप्रतिपत्तिमुपेत्य कारणे तां निराकुर्वन्प्रतिजानीते—**सत्यपीति** । स्रष्टरि यत्कारणत्वं तस्मिन्निति शेषः । तत्रापि विप्रतिपत्तिरुक्तेति शंकते—**कुत इति** । हेतुमुक्त्वा व्याचष्टे—**यथेति** । यथाभूतत्वं विशिनष्टि—**सर्वेत्यादिना** । सर्वकारणत्वोपयुक्तमाद्यं विशेषणद्वयं तेन फलितं तृतीयं तेनोपलक्षितं तुरीयगोचरमवशिष्टम् । वेदान्तानां मिथोविप्रतिपत्त्यभावं मत्वोक्तम्—**तथेति** । मिथोविरुद्धार्थत्वेनानिश्चायकानां सर्वशब्दानां मानान्तरसिद्धप्रधानलक्षणाश्रयणाद्वरं बहुशब्दानुरोधेन कतिपयलक्षणाश्रयणं लाघवादिति वक्तुमनेकशब्दानामविरोधं तावदाह—**तद्यथेति** । तद्विषयेणेत्यत्र तच्छब्दो ब्रह्मार्थः । 'सोऽकामयत' इति कामयितृत्ववचनं जगदुपादानस्य ब्रह्मणः सृज्यमानज्ञतया सर्वज्ञतोक्तेत्याह—**चेतनमिति** । अपरप्रयोज्यत्वम् 'इदं सर्वमसृजत' इति स्वातन्त्र्यं तेन सर्वेश्वरत्वं दर्शितमित्याह—**अपरेति** । सर्वात्मत्वमपि संगीतमित्याह—**तदिति** । तत्पदं पूर्ववत्सत्यादिवाक्यापेक्षया तस्मादित्यादिवाक्यस्यात्मशब्दस्य परत्वं तस्य सर्वप्रत्यक्त्वमप्युक्तमित्याह—**शरीरादीति** । एकत्वमपि तस्यो-

यत् ॥ "बहु स्यां प्रजायेयेति" [ तै० उ० २ । ६ ] इति चाऽऽत्मविषयेण बहुभवनानुशंसनेन सृज्यमानानां विकाराणां स्रष्टुरभेदमभाषत ॥ तथा "इदं सर्वमसृजत यदिदं किञ्च" [ तै० उ० २ । ६ ] इति समस्तजगत्सृष्टिनिर्देशेन प्राक् सृष्टेरद्वितीयं स्रष्टारमाचष्टे ॥ तदत्र यल्लक्षणं ब्रह्मकारणत्वेन विज्ञातं, तल्लक्षणमेवान्यत्रापि विज्ञायते । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" [ छां० ६ । २ । १ ] "तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत" [ छां० ६ । २ । ३ ] इति ॥ तथा "आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत् स ऐक्षत लोकान्नु सृजै" [ ऐ० आ० २ । ४ । १ । १ । २ ] इति च ॥ एवंजातीयकस्य कारणस्वरूपनिरूपणपरस्य वाक्यजातस्य प्रतिवेदान्तमविगीतार्थत्वात् कार्यविषयं तु विगानं दृश्यते—क्वचिदाकाशादिका सृष्टिः, क्वचित्तेज आदिकेत्येवंजातीयकम् ॥ न च कार्यविषयेण विगानेन कारणमपि ब्रह्म सर्ववेदान्तेष्वविगीतमधिगम्यमानमविवक्षितं भवितुमर्हतीति शक्यते

रत्नप्रभा ।

दात्मनः" [ तै० उ० १ । २ ] इति प्रत्यगात्मत्वं स्वस्य, बहुरूपत्वकामनया स्थितिकालेऽप्यद्वितीयत्वम् । यथा तैत्तिरियके सर्वज्ञत्वादिकं कारणस्य, तथा छान्दोग्यादावपि दृश्यते इत्याह—तदत्र यल्लक्षणमिति ॥ मिषत् सव्यापारम् । अविगीतार्थत्वाद् अविरुद्धार्थकत्वात्कारणे नास्ति विप्रतिपत्तिरिति शेषः ॥ तथापि कार्ये विरोधात्कारणेऽपि विरोधः स्यादित्याशंक्य निषेधति—कार्यविषयन्त्वित्यादिना ॥ स्वप्नसृष्टीनां प्रत्यहमन्यथात्वेन सोऽहमिति प्रत्यभिज्ञायमाने द्रष्टर्यपि नानात्वं प्रसज्येते-

भामती ।

'ब्रह्मविदाप्नोति परम्' 'तरति शोकमात्मवित्' इत्यादिश्रुतेः । सृष्टिज्ञानस्य तु न फलं श्रूयते । तेन 'फलवत्संनिधावफलं तदङ्गम्' इति सृष्टिविज्ञानं स्रष्टृब्रह्मविज्ञानाङ्गं तदनुगुणं सद्ब्रह्मज्ञानावतारोपायतया व्याख्येयम् । तथा च श्रुतिः—'अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छ' इत्यादिका । शुङ्गेनाग्रेण । कार्येणेति यावत् । तस्मान्न सृष्टिविप्रतिपत्तिः स्रष्टरि विप्रतिपत्तिमावहति । अपि तु 'गुणे त्वन्यायकल्पना' इति तदनुगुणतया व्याख्येया । यच्च कारणे विगानम्—'असद्वा इदमग्र आसीत्' इति, तदपि 'तदप्येष श्लोको भवति' इति पूर्वप्रकृतं सद्ब्रह्माकृष्य 'असदेवेदमग्र आसीत्' इत्युच्यमानं त्वसतोऽभिधानेऽसंबद्धं स्यात् । श्रुत्यन्तरेण च मानान्तरेण च विरोधः । तस्मादौपचारिकं व्याख्येयम् । 'तद्धैक आहुरसदेवेदमग्र आसीत्' इति तु निरा-

आनन्दगिरीय—न्यायनिर्णयः ।

क्तमित्याह—बहु स्यामिति । अद्वितीयत्वमपि तस्यैवोक्तमित्याह—तथेति । तैत्तिरीये यथोक्तब्रह्मोक्तावपि कुतो वेदान्तान्तरेषु तदुक्तिरित्याशंक्याऽऽह—तदिति । तत्राऽऽदौ छन्दोगश्रुतिमाह—सदिति । 'एकमेवाद्वितीयम्' इत्येकत्वाद्वितीयत्वयोरुक्तिः । 'तदैक्षत' इति सर्वजगदीक्षणश्रुत्या सर्वज्ञत्वोक्तिः । 'ऐतदात्म्यमिदं सर्वम्' इति सर्वात्मत्वोक्तिः । 'बहु स्याम्' इति स्वातन्त्र्योक्तेरैश्वर्यगीः । ऐतरेयश्रुतावपि तादृग्ब्रह्मोक्तमित्याह—तथेति । इति चैकत्वाद्वितीयत्वादि पूर्वश्रुताविवोक्तमिति शेषः । यथोक्तं ब्रह्माथर्वणादावपि कथितमित्याह—एवमिति। अविगीतार्थत्वान्न कारणे विप्रतिपत्तिरिति शेषः। कथं तर्हि कार्यवाक्यानि तानि तद्द्वारा कारणे विगानं सूचयन्ति तत्राऽऽह—कार्येति । तर्हि कार्यद्वारा कारणे ब्रह्मण्यपि विगानमुक्तं नेत्याह—न चेति । स्थाण्वादिविप्रतिपत्त्या घटादिष्वसाधारणस्वरूपनिरूपितेष्वपि तदापत्तिरिति प्रसङ्गः । ननु स्थाण्वादेर्घटादेश्च भेदान्न तद्द्वारा घटादौ विप्रतिपत्तिः कार्यकारणयोस्त्वभेदात्कार्यद्वारा कारणेऽपि

वक्तुम् ॥ अतिप्रसङ्गात् ॥ समाधास्यति चाचार्यः कार्यविषयं विगानं "न वियदश्रुतेः" [ ब्र॰ सू॰ २ । ३ । १ ] इत्यारभ्य ॥ भवेदपि कार्यस्य विगीतत्वमप्रतिपाद्यत्वात् ॥ न ह्ययं सृष्ट्यादिप्रपञ्चः प्रतिपिपादयिषितः ॥ न हि तत्प्रतिबद्धः कश्चित्पुरुषार्थो दृश्यते श्रूयते वा ॥ न च कल्पयितुं शक्यते ॥ उपक्रमोपसंहाराभ्यां तत्रतत्र ब्रह्मविषयैर्वाक्यैस्साकमेकवाक्यताया गम्यमानत्वात् ॥ दर्शयति च सृष्ट्यादिप्रपञ्चस्य ब्रह्मप्रतिपत्त्यर्थताम्-"अन्नेन सोम्य शुङ्गेनाऽऽपो मूलमन्विच्छाद्भिस्सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ" [ छां॰ ६ । ८ । ४ ] इति ॥ मृदादिदृष्टान्तैश्च कार्यस्य कारणेनाऽभेदं वदितुं सृष्ट्यादिप्रपञ्चः श्राव्यत इति गम्यते ॥ तथा च सम्प्रदायविदो वदन्ति- "मृल्लोहविस्फुलिङ्गाद्यैस्सृष्टिर्या चोदितान्यथा । उपायस्सोऽवताराय नास्ति भेदः कथञ्चन" [ माण्डू॰ कारि॰ ३ । १५ ] इति ॥ ब्रह्मप्रतिप-

रत्नप्रभा ।

त्याह-**अतिप्रसंगादिति** ॥ सृष्टिविरोधमंगीकृत्य स्रष्टरि न विरोध इत्युक्तम् । अधुनाङ्गीकारं त्यजति- **समाधास्यति चेति** ॥ किमर्थं तर्हि श्रुतयः सृष्टिमन्यथाऽन्यथा वदन्तीत्याशंक्य सृष्टावतात्पर्यज्ञापनायेत्याह-**भवेदित्यादिना** ॥ अतात्पर्यार्थविरोधो न दोषायेत्यत्र तात्पर्यं साधयति-**न हीति** ॥ फलवद्ब्रह्मवाक्यशेषत्वेन सृष्टिवाक्यानामर्थवत्त्वसम्भवान्न स्वार्थे पृथक् फलं कल्प्यम् । वाक्यभेदापत्तेरित्याह-**न च कल्पयितुमिति** ॥ न्यायादेकवाक्यत्वं सिद्धं श्रुतिरपि दर्शयतीत्याह-**दर्शयति चेति** ॥ शुंगेन कार्येण लिङ्गेन । कारणब्रह्मज्ञानार्थत्वं सृष्टिश्रुतीनामुक्त्वा कारणस्याद्वयत्वज्ञानं फलान्तरमाह-**मृदादीति** ॥ एवं निष्फलायामन्यार्थायां सृष्टौ तात्पर्याभावाद्विरोधो न दोष इत्यत्र वृद्धसम्मतिमाह-**तथा चेति** ॥ **अन्यथान्यथेति**-वीप्सा द्रष्टव्या । **अवताराय** ब्रह्मधीजन्मने । अतस्तदन्यथात्वेऽपि ब्रह्मणि न भेदः । ज्ञेये न विगानमित्यर्थः । ब्रह्मज्ञानस्य सृष्टिशेषित्वमुक्तम् । तन्निर्वाहाय तस्य फलमाह-**ब्रह्मेति** ॥ मृत्युमत्येती-

भामती ।

कार्यतयोपन्यस्तमिति न कारणे विवाद इति । सूत्रे चशब्दस्त्वर्थः पूर्वपक्षं निवर्तयति । आकाशादिषु सृज्यमानेषु क्रमविगानेऽपि न स्रष्टरि विगानम् । कुतः । यथैकस्यां श्रुतौ व्यपदिष्टः परमेश्वरः सर्वस्य कर्ता तथैव श्रुत्यन्तरेषूक्तेः, केन रूपेण, कारणत्वेन, अपरः कल्पो यथा व्यपदिष्टः क्रम आकाशादिषु, 'आत्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी' इति, तस्यैव क्रमस्यानपबाधनेन 'तत्तेजो-

आनन्दगिरीय-न्यायनिर्णयः ।

स्यात्तत्राऽऽह-**समाधास्यतीति** । सृष्टिवाक्यानां सृष्टौ तात्पर्यमुपेत्य कार्यविगानसमाधिरुक्तस्तेषां तत्र तात्पर्यमेव नास्तीत्याह-**भवेदिति** । हेतुं साधयति-**न हीति** । तस्य प्रतिपादयितुमिष्टत्वाभावं स्पष्टयति-**न हीति** । पूषा प्रपिष्टभाग इत्यादौ विधिवद्विश्वजिदादौ फलवचात्र फलं कल्प्यमित्याशंक्य 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायात्फलवद्वाक्यसंनिध्याम्नातानां तेनैकवाक्यत्वान्नैवमित्याह-**न चेति** । न्यायादेकवाक्यत्वमुक्त्वा श्रुतेरपि तत्सिद्धिरित्याह-**दर्शयतीति** । शुङ्गं कार्यम् । सृष्टिवाक्यानां स्वार्थातात्पर्यं युक्त्याऽपीत्याह-**मृदादीति** । दृष्टान्तेषु कार्यकारणयोरभेदाज्जगतोऽपि ब्रह्माभेदः साध्यते, दृष्टान्तदार्ष्टान्तिकयोस्तुल्यत्वादित्यर्थः । सृष्ट्यादिप्रपञ्चस्याविवक्षितत्वे वृद्धसंमतिमाह-**तथा चेति** । लोहं सुवर्णमन्यथाऽन्यथेति वीप्सा ज्ञेया । अवताराय ब्रह्मात्मैक्यबुद्धेरिति शेषः । प्रतिपाद्ये ब्रह्मणि नास्ति भेदो न विगानमित्यर्थः । सृष्टिवाक्यानां फलवद्वाक्यसंबन्धार्थं ब्रह्मवाक्योत्थधियः फलवत्त्वमाह-**ब्रह्मेति** ।

त्तिसम्बद्धं तु फलं श्रूयते–"ब्रह्मविदाप्नोति परम्" [ तै० उ० २ । १ ] "तरति शोकमात्मवित्" [ छां० ७ । १ । ३ ] "तमेव विदित्वा अतिमृत्युमेति" [ श्वेता० ३ । ८ ] इति च ॥ प्रत्यक्षावगमं चेदं फलं "तत्त्वमसि" [ छां० ६ । ८ । ७–१६ ] इत्यसंसार्यात्मत्वप्रतिपत्तौ सत्यां संसार्यात्मत्वव्यावृत्तेः ॥१४॥ यत्पुनः कारणविषयं विगानं दर्शितम्–"असद्वा इदमग्र आसीद्" [ तै०उ० २।७] इत्यादि तत्परिहर्तव्यम् ॥ अत्रोच्यते—

## समाकर्षात्[2] ॥ १५ ॥

"असद्वा इदमग्र आसीद्" [ तै० उ० २ । ७ ] इति नात्रासन्निरात्मकं कारणत्वेन श्राव्यते ॥ यतः–"असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति" [ तै० उ० ६ । १ ] इत्यसद्वादापवादेनास्तित्वलक्षणं ब्रह्मान्नमयादिकोशपरम्परया प्रत्यगात्मानं निर्धार्य "सोऽकामयत" [ तै० २ । ६ । २ ] इति तमेव प्रकृतं समाकृष्य सप्रपञ्चां सृष्टिं तस्माच्छ्रावयित्वा "तत्सत्यमित्याचक्षते" [तै० २ । ६ । ३ ] इति चोपसंहृत्य "तदप्येष श्लोको भवति" [ तै० २ । ६ । ३ ] इति तस्मिन्नेव प्रकृतेऽर्थे श्लोकमिममुदाहरति "असद्वा इदमग्र आसीद्" [ तै० २।७।१] इति ॥ यदि त्वसन्निरात्मकमस्मिञ् श्लोकेऽभिप्रेयेत, ततोऽन्यसमाकर्षणेऽन्यस्योदाहरणादसम्बद्धं वाक्यमापद्येत ।

---

रत्नप्रभा ।

त्यन्वयः ॥ १४ ॥ एवं सृष्टिद्वारकं विरोधमुत्सूत्रं समाधाय कारणस्य सदसत्त्वादिना साक्षाच्छ्रुतिविरोधनिरासार्थं सूत्रमादत्ते–यत्पुनरिति ॥ यतोऽस्तित्वलक्षणं ब्रह्म निर्धार्य तस्मिन्नेव श्लोकमुदाहरति । अतोऽत्र श्लोके निरात्मकमसन्न श्राव्यत इति योजना । तत् तत्र सदात्मनि । श्लोकः मन्त्रो भवति ।

भामती ।

ऽसृजत' इत्यादिकाया अपि सृष्टेरुक्तेर्न सृष्टावपि विगानम् ॥ १४ ॥ नन्वेकत्रात्मन आकाशकारणत्वेनोक्तिरन्यत्र च तेजःकारणत्वेन, तत्कथमविगानमिति । अत आह–कारणत्वेनेति । हेतौ तृतीया । सर्वत्राकाशानलानिलादौ साक्षात्कारणत्वेनात्मनः । प्रपंचितं चैतदधस्तात् । व्याक्रियत इति च कर्मकर्तरि

आनन्दगिरीय–न्यायनिर्णयः ।

मृत्युमत्येतीत्यन्वयः । विदुषामनुभवसिद्धं चैतदित्याह–प्रत्यक्षेति । ननु विद्वद्भिरपि नास्माभिरिदमवगम्यते तत्राऽऽह–तत्त्वमिति ॥ १४ ॥ सृष्टिवाक्यानां स्वार्थे तात्पर्याभावमुक्त्वा कारणे परोक्तं विगानमनूद्य तस्य परिहारयोग्यत्वमाह–यदिति । तत्र परिहारत्वेन सूत्रमवतारयति–अत्रेति । तैत्तिरीयश्रुत्यनुसारेण व्याख्यातुं प्रतिज्ञां पूरयति–असदिति । मन्त्रब्राह्मणयोरैकार्थ्याद्ब्राह्मणस्यासंदिग्धतया कारणार्थत्वान्मन्त्रस्यापि तादर्थ्यमेवेति पूर्वापरानुसंधानेन साधयति–यत इति । ब्रह्मास्तित्वलक्षणं निर्धार्य तस्मिन्नेव श्लोकमुदाहरतीति संबन्धः । कोशपञ्चकोक्तिद्वारा तस्य प्रत्यक्त्वमुक्तमित्याह—अन्नेति । ब्रह्मणः सत्त्वे प्रत्यक्त्वेऽपि कारणस्यास्तित्वं कथमित्याशंक्य सूत्रं योजयति–स इति । 'इदं सर्वमसृजत यदिदं किं च' इत्याद्या सृष्टिश्रुतिः । उपक्रमोपसंहारयोरैकरूप्याद्वाक्यस्य कारणास्तित्वे तात्पर्यं सिध्यतीत्याह–तदिति । मन्त्रब्राह्मणयोरैकार्थ्ये नियामकाभावाद्ब्राह्मणस्य कारणास्तित्वार्थत्वेऽपि मन्त्रस्य तन्न स्यादित्याशंक्याऽऽह–तदपीति । व्यतिरेकद्वारोक्तं स्फोरयति–यदीति । कथं तर्हि सति कारणेऽसच्छब्दप्रवृत्तिः

---

१ प्रतिपत्तिप्रतिबद्धमिति पाठान्तरम् । २ समाकर्षणादिति क्वचित्पाठो दृश्यते ।

तस्मान्नामरूपव्याकृतवस्तुविषयः प्रायेण सच्छब्दः प्रसिद्ध इति तद्व्याकरणाभावापेक्षया प्रागुत्पत्तेस्सदेव ब्रह्माऽसदिवाऽऽसीदित्युपचर्यते ॥ एषैव "असदेवेदमग्र आसीद्" [ छां० ३ । १९।१ ] इत्यत्रापि योजना ॥ "तत् सदासीद्" [ छां० ३ । १९ । १ ] इति समाकर्षणात् ॥ अत्यन्ताभावाभ्युपगमे हि तत्, सदासीदिति किं समाकृष्येत ॥ "तद्धैक आहुरसदेवेदमग्र आसीद्" [ छां० ६ । २ । १ ] इत्यत्रापि न श्रुत्यन्तराभिप्रायेणाऽयमेकीयमतोपन्यासः । क्रियायामिव वस्तुनि विकल्पस्यासम्भवात् ॥ तस्माच्छ्रुतिपरिगृहीतसत्पक्षदार्ढ्यायैवायं मन्दमतिपरिकल्पितस्यासत्पक्षस्योपन्यस्य निरास इति द्रष्टव्यम् ॥ "तद्धेदं तर्ह्यव्याकृतमासीद्" [ बृ० १ । ४ । ७ ] इत्यत्रापि न निरध्यक्षस्य जगतो व्याकरणं कथ्यते । "स एष इह प्रविष्ट आनखाग्रेभ्यः" [ बृ० १ । ४ । ७ ] इत्यध्यक्षस्य व्याकृतकार्यानुप्रवेशित्वेन समाकर्षात् ॥ निरध्यक्षे व्याकरणाभ्युपगमे ह्यनन्तरेण प्रकृतावलम्बिना "सः" इत्यनेन सर्वनाम्ना कः

---

रत्नप्रभा ।

सदात्मसमाकर्षादतीन्द्रियार्थकासत्पदेन ब्रह्म लक्ष्यत इत्याह–तस्मादिति ॥ न च प्रधानमेव लक्ष्यतामिति वाच्यम् । चेतनार्थकब्रह्मादिशब्दानामनेकेषां लक्षणायां गौरवादिति भावः । तित्तिरिश्रुतौ सूत्रं योजयित्वा छान्दोग्यादौ योजयति–एषैवेति ॥ सदेकार्थकतत्पदेन पूर्वोक्तासतः समाकर्षान्न शून्यत्वमित्यर्थः । नन्वसत्पदलक्षणा न युक्ता । श्रुतिभिरेव स्वमतभेदेनोदितानुदितहोमवद्विकल्पस्य दर्शितत्वादित्यत आह–तद्धैक इति ॥ एके शाखिन इत्यर्थो न भवति किन्तु अनादिसंसारचक्रस्था वेदबाह्या इत्यर्थः । शून्यनिरासेन श्रुतिभिः सद्वादस्यैवेष्टत्वात्तासां विरोधस्फूर्त्तिनिरासाय लक्षणा युक्तेति भावः । यदुक्तं कचिदकर्तृका सृष्टिः कथितेति, तन्नेत्याह–तद्धेदमिति । अध्यक्षः कर्त्ता । ननु कर्त्रभाव एव

भामती ।

कर्मणि वा रूपं, न चेतनमतिरिक्तं कर्तारं प्रतिक्षिपति किंतूपस्थापयति । न हि लूयते केदारः स्वयमेवेति वा लूयते केदार इति वा लवितारं देवदत्तादिं प्रतिक्षिपति । अपि तूपस्थापयत्येव । तस्मात्सर्वमवदा-

आनन्दगिरीय–न्यायनिर्णयः ।

श्रुतिर्हि वाक्याद्बलीयसीत्याशंक्योपचाराद्युक्ता श्रुतिरित्याह—तस्मादिति । सदेवेत्यत्र नामादिव्याकरणात्प्रागेव ब्रह्मणि सच्छब्दोऽस्तीति प्रायेणेत्युक्तम् । तैत्तिरीयकश्रुतावुक्तन्यायं बृहदारण्यकच्छान्दोग्यश्रुतावतिदिशति–एषेति । ननु तैत्तिरीयके ब्राह्मणोक्तेऽर्थे मन्त्रोक्तेस्तयोरैकार्थ्याधुक्तं कारणास्तित्वार्थत्वमिह तदभावात्कथं सदर्थत्वं तत्राऽऽह–तदिति । पूर्वमसदेव पुनः सद्भवतीति समाकर्षोपपत्तिमाशंक्याऽऽह–अत्यन्तेति।शशविषाणादौ कालान्तरेऽपि सत्त्वानुपलम्भादासीच्छब्दस्य तच्छब्दस्य सच्छब्दस्य वाऽयोगादत्यन्तासत्त्वे समाकर्षासिद्धिरित्यर्थः । उक्तन्यायं छान्दोग्येऽपि योजयति–तद्धेति । उदितानुदितहोमवद्विरुद्धार्थत्वेऽपि प्रामाण्यसिद्धेः शाखान्तरीयाभिप्रायेणैकीयमतोक्तौ का हानिरित्याशंक्याऽऽह–क्रियायामिति । तर्हि का गतिरेकीयमतोक्तेरित्याशंक्याऽऽह–तस्मादिति । सत्त्वेव सोम्येति समाकर्षादित्यत्रापि सूत्रं नेयम् । यत्तु स्वयंकर्तृकत्वमव्याकृतवाक्ये श्रुतं तद्दूषयति–तद्धेदमिति । तत्रापि हेतुत्वेन सूत्रं योजयति–स इति । ननु सर्वनामप्रसिद्धार्थं नाप्रसिद्धमुत्थापयति तत्राऽऽह–निरध्यक्षेति । यद्यपि यन्मदन्यदित्यत्रोक्तो मच्छब्दार्थः स इति सर्वनाम्ना परामृश्यते तथाऽप्यव्याकृतवाक्येऽध्यक्षस्यासंनिहितत्वे कार्यानुप्रवेशित्वेनैष इति संनिहितावलम्बिना परामृष्टव्याभावात्तद्विरोधः स्यादित्यर्थः । तथाऽपि कथं परामृ-

कार्यानुप्रवेशित्वेन समाकृष्येत ॥ चेतनस्य चायमात्मनश्शरीरेऽनुप्रवेशः श्रूयते ॥ अनुप्रविष्टस्य चेतनत्वश्रवणात् ॥ "पश्यँश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनः" [ बृ० १ । ४ । ७ ] इति ॥ अपि च यादृशमिदमद्यत्वे नामरूपाभ्यां व्याक्रियमाणं जगत्साध्यक्षं व्याक्रियते, एवमादिसर्गेऽपीति गम्यते ॥ दृष्टविपरीतकल्पनानुपपत्तेः ॥ श्रुत्यन्तरमपि "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि":[छां० ६।३।२]इति साध्यक्षामेव जगतो व्याक्रियां दर्शयति॥ व्याक्रियत इत्यपि कर्मकर्तरि लकारस्सत्येव परमेश्वरे कर्तरि सौकर्यमपेक्ष्य द्रष्टव्यः ॥ यथा–लूयते केदारस्स्वयमेवेति सत्येव पूर्णके लवितरि ॥ यद्वा कर्मण्येवैष लकारोऽर्थाक्षिप्तं कर्त्रन्तरमपेक्ष्य द्रष्टव्यः । यथा–गम्यते ग्राम इति ॥ १५ ॥ इति कारणत्वाधिकरणम् ॥ ४ ॥

## जगद्वाचित्वात् ॥ १६ ॥ ( ५ ) ॥

कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे श्रूयते–"यो वै बालाक एतेषां

---

रत्नप्रभा ।

परामृश्यत इत्यत आह–**चेतनस्य चायमिति** ॥ चक्षुर्द्रष्टा श्रोत्रं श्रोता मनो मन्तेत्युच्यते इत्यर्थः । आद्यकार्यं, सकर्तृकं, कार्यत्वाद्, घटवदित्याह–**अपि चेति** ॥ अद्यत्वे इदानीम् । ननु कर्मकारकादन्यस्य कर्तुः सत्त्वे कर्मण एव कर्तृवाचिलकारो विरुद्ध इत्यत आह–**व्याक्रियत इति** ॥ अनायासेन सिद्धिमपेक्ष्य कर्मणः कर्तृत्वमुपचर्यत इत्यर्थः । व्याक्रियते जगत् स्वयमेव निष्पन्नमिति व्याख्याय केनचिद्व्याकृतमिति व्याचष्टे–**यद्वेति** ॥ अतः श्रुतीनामविरोधात्कारणद्वारा समन्वय इति सिद्धम् ॥ १५ ॥ ( ४ ) ॥ जगद्वाचित्वात् । विषयमाह–**कौषीतकीति** ॥ बलाकाया अपत्यं बालाकिर्ब्राह्मणस्तं प्रति राजोवाच–**यो वा इति** ॥ न केवलमादित्यादीनां कर्त्ता, किन्तु सर्वस्य

भामती ।

तम् ॥ १५ ॥ जगद्वाचित्वात् । ननु 'ब्रह्म ते ब्रवाणि' इति ब्रह्माभिधानप्रकरणात्, उपसंहारे च 'सर्वान् पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यं पर्येति य एवं वेद' इति निरतिशयफलश्रवणाद्ब्रह्मवेदनादन्यत्र तदसंभवात्, आदित्यचन्द्रादिगतपुरुषकर्तृत्वस्य च 'यस्य वैतत्कर्म' इति चास्यासत्यवच्छेदे सर्वनाम्ना प्रत्यक्षसिद्धस्य जगतः परामर्शेन, जगत्कर्तृत्वस्य च ब्रह्मणोऽन्यत्रासंभवात्कथं जीवमुख्य-

आनन्दगिरीय–न्यायनिर्णयः ।

ष्टस्याध्यक्षत्वं तत्राऽऽह–**चेतनस्येति** । कार्यानुप्रविष्टस्य कुतश्चेतनत्वं तत्राऽऽह–**प्रविष्टस्येति** । पश्यन्नात्मा चष्ट इति चक्षुरुक्तस्तथाऽसौ कर्तृव्युत्पत्त्या श्रोत्रादिसंज्ञो भवति । इतश्च जगतो व्याकरणं साध्यक्षमेवेत्याह–**अपि चेति** । विमतं सकर्तृकं कार्यत्वाद्घटवदित्याह–**यादृशमिति** । घटस्य सकर्तृकत्वेऽपि क्षित्यादेस्तन्नेति व्यवस्थामाशंक्याऽऽह–**दृष्टेति** । न केवलमनुमानाज्जगतो व्याक्रिया साध्यक्षा किंतु च्छान्दोग्यश्रुतेरपीत्याह–**श्रुत्यन्तरमिति** । बृहदारण्यकापेक्षयाऽन्तरशब्दः । श्रुत्यनुमानाभ्यां जगतः सकर्तृकत्वे कर्मकर्तरि लकारश्रुतिरयुक्तेत्याशंक्याऽऽह–**व्याक्रियत इति** । तत्र संप्रतिपत्त्यर्थं दृष्टान्तमाह–**यथेति** । कर्मकर्तरि लकार इत्येतदुक्तं कर्मण्येवासावित्याह–**यद्वेति** । कथं तर्हि जगतः सकर्तृकत्वं तत्राऽऽह–**अर्थेति** । तत्रापि लोकसिद्धं दृष्टान्तमाह–**यथेति** । तदेवं श्रुतीनामविगानाद्ब्रह्मणि गतिसामान्यं सिद्धम् ॥ १५ ॥ ( ४ ) ॥ बहूनां मिथोविरुद्धार्थानामविरोधेनैककारणार्थत्ववदेकस्य शब्दस्यानेकार्थस्य विशेषार्थत्वेन वाक्यस्य कारणपरत्वमाह–**जगदिति** । अधिकरणस्य विषयमाह–**कौषीतकीति** । श्रुतिं दर्शयन्नजातशत्रूक्तिमाह–**यो वा इति** । एतेषामादित्यादीनाम् । न केवलं जगदेकदेशस्य कर्ता

पुरुषाणां कर्त्ता यस्य वैतत्कर्म स वै वेदितव्यः" [ ४ । १९ ] इति । तत्र किं जीवो वेदितव्यत्वेनोपदिश्यते, उत मुख्यः प्राणः, उत परमात्मेति विशयः, किं तावत्प्राप्तम् ॥ प्राण इति ॥ कुतः ॥ यस्य वैतत् कर्मेति श्रवणात् । परिस्पन्दलक्षणस्य च कर्मणः प्राणाश्रयत्वात् ॥ वाक्यशेषे च "अथास्मिन्प्राण एवैकधा भवति" [ कौ० ब्रा० ३ । ३ ] इति प्राणशब्ददर्शनात् । प्राणशब्दस्य च मुख्ये प्राणे प्रसिद्धत्वात् ॥ ये चैते पुरस्ताद्बालाकिना "आदित्ये पुरुषः" [ कौ० ब्रा० ४ । ३ ]. "चन्द्रमसि पुरुषः" [ कौ० ब्रा० ४ । ४ ] इत्येवमादयः पुरुषा निर्दिष्टाः, तेषामपि भवति प्राणः कर्त्ता । प्राणावस्थाविशेषत्वादादित्यादिदेवतात्मनाम् । "कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते" [ बृ०

रत्नप्रभा ।

जगत इत्याह—यस्येति ॥ एतत् जगद् यस्य कर्म क्रियते इति व्युत्पत्त्या कार्यमित्यर्थः । कर्मेतिशब्दस्य योगरूढिभ्यां संशयमाह—तत्रेति ॥ पूर्वत्रैकवाक्यस्थसदादिशब्दबलादसच्छब्दो नीतः । इह तु वाक्यभेदाद्ब्रह्म ते ब्रवाणीतिबालाकिवाक्यस्थब्रह्मशब्देन प्राणादिशब्दो ब्रह्मपरत्वेन नेतुमशक्य इति प्रत्युदाहरणेन पूर्वपक्षमाह—किं तावदिति ॥ पूर्वपक्षे वाक्यस्य प्राणाद्युपास्तिपरत्वाद्ब्रह्मणि समन्वयासिद्धिः सिद्धान्ते ज्ञेये समन्वयसिद्धिरिति फलम् । अथ सुषुप्तौ द्रष्टेति शेषः । श्रुतं पुरुषकर्तृत्वं प्राणस्य कथमित्यत आह—ये चैत इति ॥ सूत्रात्मकप्राणस्य विकाराः सूर्यादय इत्यत्र मानमाह—कतम इति ॥ यस्य

भामती ।

प्राणाशङ्का । उच्यते—ब्रह्म ते ब्रवाणीति बालाकिना गार्ग्येण ब्रह्माभिधानं प्रतिज्ञाय तत्तदादित्यादिगताब्रह्मपुरुषाभिधानेन न तावद्ब्रह्मोक्तम् । यस्य चाजातशत्रोः 'यो वै बालाके एतेषां पुरुषाणां कर्त्ता यस्य वैतत्कर्म' इति वाक्यं न तेन ब्रह्माभिधानं प्रतिज्ञातम् । न चान्यदीयेनोपक्रमेणान्यस्य वाक्यं शक्यं नियन्तुम् । तस्मादजातशत्रोर्वाक्यसंदर्भपौर्वापर्यपर्यालोचनया योऽस्यार्थः प्रतिभाति स एव ग्राह्यः । अत्र

आनन्दगिरीय-न्यायनिर्णयः ।

किंतु जगतः सर्वस्येत्याह—यस्येति । सामान्यविशेषार्थवाक्याभ्यां जगत्कर्ता ततो निष्कृष्टो द्रष्टव्य इत्याह—स इति । कर्मशब्दस्य रूढियोगाभ्यां संशयमाह—तत्रेति । विमृश्य पूर्वपक्षमाह—किमिति । प्राणस्य प्रथमप्राप्तौ हेतुं पृच्छति—कुत इति । एकवाक्ये सति सच्छब्दादसच्छब्दो नीतो वाक्यभेदे कर्मशब्दो ब्रह्मशब्दान्न शक्यो नेतुम् । अत्राप्येकवाक्यत्वे यथोत्तरसच्छब्दात्प्राचीनोऽसच्छब्दो नीतस्तथोत्तरकर्मशब्दाद्ब्रह्मशब्दस्य नयनमिति मत्वा हेतुमाह—यस्येति । काचित्कहैरण्यगर्भमतद्योतिकर्मशब्दस्य ब्रह्मानुगुण्योक्तिद्वारा गतिसामान्यं संसाध्य समन्वयसाधनात्पादादिसंगतिः । पूर्वपक्षे प्राणजीवान्यतरस्य वेदितव्यतया ब्रह्मणि गतिसामान्यासिद्धिरुत्तरत्र परस्यैव तथात्वात्तत्सिद्धिरिति फलम् । श्रुतेऽपि कर्मशब्दे कथं प्राणधीरन्यत्रापि तद्योगात्तत्राऽऽह—परिस्पन्देति । कर्मशब्दस्य क्रियादृष्टसाधारण्यादसाधारणप्रमाणाभावे कथं परिस्पन्देन प्राणधीस्तत्राऽऽह—वाक्येति । करणोपरमानन्तर्यमथशब्दार्थः । प्राणशब्दस्यापि साधारण्यादनिर्णयं शंकित्वोक्तम्—प्राणेति । पुरुषकर्तृत्वेनोक्तस्य न प्राणत्वं तस्य तदकर्तृत्वादित्याशंक्याऽऽह—ये चेति । आदित्यादीनां प्राणावस्थाविशेषत्वे मानमाह—कतम इति । "महिमान एवैते" इत्यादिना पूर्वोक्तदेवतानां प्रश्नप्रत्युक्तिभ्यां प्राणत्वोक्त्या तदवस्थात्वमुक्तमित्यर्थः । वाक्यान्तरे च लिङ्गस्यामूर्तरसस्य त्यदिति परोक्षसूत्रत्वोक्तेस्तस्येह त्यदिति प्राणत्वेन प्रत्यभिज्ञानात्तस्य लिङ्गरूपादित्यादिदेवतात्वमित्याह—स इति ।

१ र० टीकायामेतदितिप्रतीकमुपादाय जगदिति व्याख्यानाद् वैतदिति वैशिष्ट्येन पाठोयुक्तः न तु वै इति तदिति च भिन्नपदत्वेन युक्त इति भाति ।

३ । ९ । ९ ] इति श्रुत्यन्तरप्रसिद्धेः ॥ जीवो वाऽयमिह वेदितव्यतयोपदिश्यते । तस्यापि धर्माधर्मलक्षणं कर्म शक्यते श्रावयितुम्—"यस्य वैतत्कर्म" [ कौ० ब्रा० ४ । १९ ] इति ॥ सोऽपि भोक्तृत्वाद्भोगोपकरणभूतानामेतेषां पुरुषाणां कर्त्तोपपद्यते॥ वाक्यशेषे च जीवलिङ्गमवगम्यते । यत्कारणं वेदितव्यतयोपन्यस्तस्य पुरुषाणां कर्तुर्वेदनायोपेतं बालाकिं प्रति बुबोधयिषुरजातशत्रुस्सुप्तं पुरुषमामन्त्र्यामन्त्रणशब्दा-

रत्नप्रभा ।

महिमानः सर्वे देवा इति पूर्ववाक्ये दर्शितम् अतः सर्वदेवात्मकत्वात् स प्राणो ब्रह्म, यत्परोक्षम् । शास्त्रैकवेद्यत्वादित्यर्थः । पूर्वपक्षान्तरमाह—**जीवो वेति** ॥ **यत्कारणं** यस्माज्जीवं बोधयति, तस्मादस्ति सुप्तोत्थापनं जीवलिङ्गमिति **योजना** । "तौ ह पुरुषं सुप्तमाजग्मतुः" [ बृ० २ । १ । १९ ] तं राजा हे "बृहन् पाण्डुरवासः सोमराजन्" [ बृ० २ । १ । १९ ] इति **आमन्त्र्य** सम्बोध्य सम्बो-

भामती ।

च कर्मशब्दस्तावद्व्यापारे निरूढवृत्तिः । कार्ये तु क्रियत इति व्युत्पत्त्या वर्तते । न च रूढौ सत्यां व्युत्पत्तिर्युक्ताश्रयितुम् । न च ब्रह्मण उदासीनस्यापरिणामिनो व्यापारवत्ता । वाक्यशेषे च 'अथास्मिन् प्राण एवैकधा भवति' इति श्रवणात्परिस्पन्दलक्षणस्य च कर्मणो यत्रोपपत्तिः स एव वेदितव्यतयोपदिश्यते । आदित्यादिगतपुरुषकर्तृत्वं च प्राणस्योपपद्यते, हिरण्यगर्भरूपप्राणावस्थाविशेषत्वादादित्यादिदेवतानाम् । 'कतम एको देवः प्राणः' इति श्रुतेः । उपक्रमानुरोधेन चोपसंहारे सर्वशब्दः सर्वान् पाप्मन इति च सर्वेषां भूतानामिति चापेक्षिकवृत्तिर्बहून् पाप्मनो बहूनां भूतानामित्येवंपरो द्रष्टव्यः । एकस्मिन् वाक्ये उपक्रमानुरोधादुपसंहारो वर्णनीयः । यदि तु दृप्तबालाकिमब्रह्मणि ब्रह्माभिधायिनमपोद्याजातशत्रोर्वचनं ब्रह्मविषयमेवान्यथा तु तदुक्ताद्विशेषं विवक्षोरब्रह्माभिधानमसंबद्धं स्यादिति मन्यते, तथापि नैतद्ब्रह्माभिधानं भवितुमर्हति, अपि तु जीवाभिधानमेव, यत्कारणं वेदितव्यतयोपन्यस्तस्य पुरुषाणां कर्तुर्वेदनायोपेतं बालाकिं प्रति बुबोधयिषुरजातशत्रुः सुप्तं पुरुषमामन्त्र्यामन्त्रणशब्दाश्रवणात् प्राणादीनामभोक्तृत्वमस्वामित्वं प्रतिबोध्य यष्टिघातोत्थानात् प्राणादिव्यतिरिक्तं जीवं भोक्तारं स्वामिनं प्रतिबोधयति । परस्तादपि 'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एनमात्मानं भुञ्जन्ति' इति श्रवणात् । यथा श्रेष्ठी प्रधानः पुरुषः स्वैर्भृत्यैः करणभूतैर्विषयान् भुङ्क्ते, यथा वा स्वा भृत्याः श्रेष्ठिनं भुञ्जन्ति । ते हि श्रेष्ठिनमशनाच्छादनादिग्रहणेन भुञ्जन्ति । एवमेवैष प्रज्ञात्मा जीव एतैरादित्यादिगतैरात्मभिर्विषयान् भुंक्ते । ते ह्यादित्यादय आलोकवृष्ट्यादिना साचिव्यमाचरन्तो जीवात्मानं भोजयन्ति, जीवात्मानमपि यजमानं तदुत्सृष्टहविरादानादादित्यादयो भुञ्जन्ति, तस्माज्जीवात्मैव ब्रह्मणोऽभेदाद्ब्रह्मेह वेदितव्यतयोपदिश्यते । **यस्य वैतत्कर्म इति** । जीवप्रयुक्तानां देहेन्द्रियादीनां कर्म जीवस्य भवति । कर्मजन्यत्वाद्वा धर्माधर्मयोः कर्मशब्दवाच्यत्वं रूढ्यनुसारात् । तौ च धर्माधर्मौ जीवस्य । धर्माधर्माक्षिप्तत्वाच्चादित्यादीनां भोगोपकरणानां तेष्वपि जीवस्य कर्तृत्वमुपपन्नम् । उपपन्नं च प्राणभृत्त्वाज्जीवस्य प्राणशब्दत्वम् । ये च प्रश्नप्रतिवचने—'क्वैष एतद् बालाके पुरुषोऽशयिष्ट यदा सुप्तः स्वप्नं न कंचन पश्यति'

आनन्दगिरीय—न्यायनिर्णयः ।

पक्षान्तरमाह—**जीवो वेति** । तस्मिन्नमूर्ते कर्मशब्दायोगमाशंक्याऽऽह—**तस्येति** । तथाऽपि तत्तुमहिम्नोऽस्य नाऽऽदित्यादिकर्तृत्वमित्याशंक्यादृष्टद्वारा तद्योगमाह—**सोऽपीति** । कर्मशब्दस्य साधारणस्यादृष्टार्थत्वमुपेत्य कथं जीवोक्तिरित्याशंक्याऽऽह—**वाक्येति** । तदेव स्फुटयति—**यदिति** । "तौ ह सुप्तं पुरुषमाजग्मतुस्तमेतैर्नामभिरामन्त्रयांचक्रे बृहत्पाण्डरवासः सोम राजन्निति स नोत्तस्थौ" इत्यादिना

श्रवणात्प्राणादीनामभोक्तृत्वं प्रतिबोध्य यष्टिघातोत्थानात्प्राणादिव्यतिरिक्तं जीवं भोक्तारं प्रतिबोधयति ॥ तथा परस्तादपि जीवलिङ्गमवगम्यते-"तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाःश्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते एवमेवैते आत्मान एतमात्मानं भुञ्जन्ति" [ कौ० ब्रा० ४ । २० ] इति ॥ प्राणभृत्त्वाच्च जीवस्योपपन्नं प्राणशब्दत्वम् ॥ तस्माज्जीवमुख्यप्राणयोरन्यतर इह ग्रहणीयो, न परमेश्वरः ॥ तल्लिङ्गाऽनवगमादिति ॥ एवं प्राप्ते ब्रूमः ॥ परमेश्वर एवायमेतेषां पुरुषाणां कर्त्ता स्यात् ॥ कस्मात् ॥ उपक्रमसामर्थ्यात् । इह हि बाला-

रत्नप्रभा ।

धनानभिज्ञत्वात्प्राणादेरनात्मत्वमुक्त्वा यष्ट्याघातेनोत्थाप्य जीवं बोधितवानित्यर्थः । श्रेष्ठी प्रधानः । स्वैः भृत्यैर्ज्ञातिभिरुपहृतं भुंक्ते स्वा ज्ञातयश्च तमुपजीवन्ति, एवं जीवोऽप्यादित्यादिभिः प्रकाशादिना भोगोपकरणैः भुङ्क्ते ते च हविर्ग्रहणादिना जीवमुपजीवन्तीत्युक्तं भोक्तृत्वं जीवलिङ्गम् । ननु "प्राण एवैकधा भवति" [ कौ० ब्रा० ३ । ३] इति श्रुतः प्राणशब्दो जीवे कथमित्यत आह-**प्राणभृत्त्वाच्चेति**॥ सूत्राद्बहिरेव सिद्धान्तयति-**एवमिति** ॥ स च बालाकिर्ब्रह्मत्वभ्रान्त्या व्यष्टिलिङ्गरूपान्पुरुषानुक्त्वा राज्ञा

भामती ।

इति । अनयोरपि न स्पष्टं ब्रह्माभिधानमुपलभ्यते । जीवव्यतिरेकश्च प्राणात्मनो हिरण्यगर्भस्याप्युपपद्यते । तस्माज्जीवप्राणयोरन्यतर इह ग्राह्यो न परमेश्वर इति प्राप्तम् । एवं प्राप्ते उच्यते-'मृषावादिनमापोद्य बालाकिं ब्रह्मवादिनम् । राजा कथमसंबद्धं मिथ्या वा वक्तुमर्हति ॥' यथा हि केनचिन्मणिलक्षणज्ञमानिना काचे मणिरेष वेदितव्य इत्युक्ते परस्य काचोऽयं मणिर्न तल्लक्षणायोगादित्यभिधाय आत्मनो विशेषं जिज्ञापयिषोस्तत्त्वाभिधानमसंबद्धम् । अमणौ मण्यभिधानं न पूर्ववादिनो विशेषमापादयति स्वयमपि मृषाभिधानात् । तस्मादनेनोत्तरवादिना पूर्ववादिनो विशेषमापादयता मणितत्त्वमेव वक्तव्यम् । एवमजातशत्रुणा दृप्तबालाकेरब्रह्मवादिनो विशेषमात्मनो दर्शयता जीवप्राणाभिधाने असंबद्धमुक्तं स्यात् । तयोर्वाऽब्रह्मणोर्ब्रह्माभिधाने मिथ्याभिहितं स्यात् । तथा च न कश्चिद्विशेषो बालाकेर्गार्ग्यादजातशत्रोर्भवेत् । तस्मादनेन ब्रह्मतत्त्वमभिधातव्यम् । तथा सत्यस्य न मिथ्यावचम् । तस्मात् 'ब्रह्म ते ब्रवाणि' इति ब्रह्मणोपक्रमात्,

आनन्दगिरीय-न्यायनिर्णयः ।

संबोधनशब्दाश्रुतेरचेतनत्वेनानात्मत्वं प्राणादेरुक्तातिरिक्तजीवोक्तेर्वाक्यशेषस्तदर्थो न हि ततोऽन्यो भोक्ताऽस्तीत्यर्थः । इतोऽपि वेदितव्यो जीव एवेत्याह-**तथेति** । परस्तादित्यनन्तरवाक्यापेक्षया पश्चादिति यावत् । श्रेष्ठी प्रधानपुरुषः स्वैर्भृत्यैरुपकरणैरित्येतत् । भृत्या वा प्रधानमशनाच्छादनादिनोपजीवन्तीत्याह-**यथेति** । एवं जीवोऽप्यादित्यादिभिः प्रकाशादिना भोगोपकरणैर्भुंक्ते । भृत्यवदादित्यादयोऽपि जीवं हविर्ग्रहणादिनोपजीवन्तीत्याह-**एवमिति** । 'अथास्मिन्प्राण एवैकधा भवति' इति प्राणशब्दो जीवे कथं स्यात्तत्राऽऽह-**प्राणेति** । प्राणजीवयोरन्यतरस्य वेदितव्यत्वाद्गतिसामान्यासिद्धिरित्युपसंहरति-**तस्मादिति** । 'ब्रह्म ते ब्रवाणि' इत्युपक्रमादुपसंहारे च स्वाराज्यफलोक्तेः सर्वपाप्मदाहलिङ्गाक्रियत इति कर्मशब्दस्य जगदर्थत्वाच्चत्कर्तृत्वस्य परस्मिन्नेव युक्तत्वात्परमात्मैवायमित्याशंक्य बालाकिवाक्यादजातशत्रुवाक्यनियमायोगाद्योगरूढ्योश्च रूढेर्बलीयस्त्वात्फलोक्तेश्चोपचरितार्थत्वान्नैवमित्याह-**नेति** । पूर्वपक्षमनूद्य सूत्राद्बहिरेव सिद्धान्तयति-**एवमिति** । लिङ्गासिद्धेरीश्वरे निरस्ते नियमासिद्धिरिति शङ्कते-**कस्मादिति** । यद्वाक्यशेषे संदिग्धं तन्निश्चितेनोपक्रमेण नेतव्यमित्याह-**उपक्रमेति** । तत्सामर्थ्यं दर्शयितुमुपक्रममाह-**इहेति** । तद्वाक्ये ब्रह्मणोपक्रमेऽपि किमिति राज्ञो वाक्यं तद्विषयं नियम्यते न हि भ्रान्तवाक्यादभ्रान्त-

किरजातशत्रुणा सह "ब्रह्म ते ब्रवाणीति" [ बृ० २ । १ । १ ] संवदितुमुपचक्रमे । स च कतिचिदादित्याद्यधिकरणान्पुरुषान्मुख्यब्रह्मदृष्टिभाज उक्त्वा तूष्णीं बभूव ॥ तमजातशत्रुः "मृषा वै खलु मा संवादयिष्ठा ब्रह्म ते प्रब्रवाणीति" [ कौ० ब्रा० ४ । १९ ] अमुख्यब्रह्मवादितयाऽपोद्य तत्कर्त्तारमन्यं वेदितव्यतयोपचिक्षेप ॥ यदि सोऽप्यमुख्यब्रह्मदृष्टिभाक् स्यादुपक्रमो बाध्येत ॥ तस्मात्परमेश्वर एवायं भवितुमर्हति ॥ कर्तृत्वश्चैतेषां पुरुषाणाम् । न परमेश्वरादन्यस्य स्वातन्त्र्येणावकल्पते ॥ "यस्य वैतत्कर्म" [ कौ० ब्रा० ४ । १९ ] इत्यपि नायं परिस्पन्दलक्षणस्य धर्माधर्मलक्षणस्य वा कर्मणो निर्देशः ।

---

रत्नप्रभा ।

निरस्तस्तूष्णीं स्थितः । तदुक्तं ब्रह्म मृषेत्युक्त्वा राज्ञोच्यमानं ब्रह्मैवेति वक्तव्यम् । अन्यथा राज्ञोऽपि मृषावादित्वप्रसङ्गादित्याह—**यदि सोऽपीति** ॥ वेदितव्योऽपीत्यर्थः । मुख्यं पुरुषकर्तृत्वं ब्रह्मण एव लिङ्गम् । प्राणजीवयोस्तन्नियम्यत्वेनाऽस्वातन्त्र्यादित्याह—**कर्तृत्वं चेति** ॥ यदुक्तं चलनाऽदृष्टयोर्वाचकः कर्मशब्दः प्राणजीवयोरुपस्थापक इति, तन्नेत्याह—**यस्येति** ॥ अनेकार्थकाच्छब्दादन्यतरार्थस्य प्रकरणादुपपदाद्वा ग्रहणं न्याय्यम् । अत्र प्रकरणोपपदयोरसत्त्वात्कस्य ग्रहणमिति संशये पुरुषकर्तृपदसान्निध्यात्क्रियत इति

भामती ।

'सर्वान् पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यं पर्येति य एवं वेद' इति च सति संभवे सर्वश्रुतेरसंकोचान्निरतिशयेन फलेनोपसंहारात्, ब्रह्मवेदनादन्यतश्च तदनुपपत्तेः, आदित्यादिपुरुषकर्तृत्वस्य च स्वातन्त्र्यलक्षणस्य मुख्यस्य ब्रह्मण्येव संभवादन्येषां हिरण्यगर्भादीनां तत्पारतन्त्र्यात्, 'क्वैष एतद्बालाके' इत्यादेर्जीवाधिकरणभवनापादनप्रश्नस्य 'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन् प्राण एवैकधा भवति' इत्यादेरुत्तरस्य च ब्रह्मण्येवोपपत्तेर्ब्रह्मविषयत्वं निश्चीयते । अथ कस्मान्न भवतो हिरण्यगर्भगोचरे एव प्रश्नोत्तरे, तथा च नैताभ्यां ब्रह्मविषयत्वसिद्धिरित्येतन्निराचिकीर्षुः पठति—एतस्मादात्मनः प्राणा यथायथायतनं प्रतिष्ठन्त इति । एतदुक्तं भवति—आत्मैव भवति जीवप्राणादीनामधिकरणं नान्यदिति । यद्यपि च जीवो नात्मनो भिद्यते तथाप्युपाध्यवच्छिन्नस्य परमात्मनो जीवत्वेनोपाधिभेदाद्भेदमारोप्याधाराधेयभावो द्रष्टव्यः । एवं च जीवभवनाधारत्वमपादानत्वं च परमात्मन उपपन्नम् । तदेवं बालाक्यजातशत्रुसंवादवाक्यसंदर्भस्य ब्रह्मपरत्वे स्थिते **यस्य वैतत्कर्म** इति व्यापाराभिधाने न संगच्छत इति कर्मशब्दः कार्याभिधायी भवति, एतदिति सर्वनामपरामृष्टं च तत्कार्यं, सर्वनाम चेदं संनिहितपरामर्शि, न च किंचिदिह शब्दोक्तमस्ति संनिहितम् । न चादित्यादिपुरुषाः संनिहिता अपि परामर्शार्हाः । बहुत्वात् पुल्लिङ्गत्वाच्च ।

आनन्दगिरीय—न्यायनिर्णयः ।

वाक्यं नियन्तुं शक्यं तत्राऽऽह—**स चेति** । बालाकिना ब्रह्म नोक्तं चेत्तस्यैवोपक्रमो विरुध्येत राज्ञस्तु तथाऽनुपक्रमान्न तद्विरोधस्तेन तद्वाक्यस्याब्रह्मार्थतेत्याशंक्याऽऽह—**तमिति** । तथाऽपि कथं वेदितव्यस्य ब्रह्मत्वं तत्राऽऽह—**यदीति** । राज्ञा बालाकेरब्रह्मवादिनो विशेषमात्मनो दर्शयता मुख्यं ब्रह्मैव वाच्यमन्यथा स्वस्यापि मृषावादित्वात्ततोऽविशेषादित्यर्थः । उपक्रमसामर्थ्यसिद्धमुपसंहरति—**तस्मादिति** । इतश्चेश्वर एव वेदितव्य इत्याह—**कर्तृत्वं चेति** । प्राणावस्थाविशेषत्वादादित्यादीनां तस्य तत्कर्तृत्वं युक्तं भोक्तुरप्यदृष्टद्वारा भोगोपकरणादित्यादिकर्तृत्वं स्यादित्याशंक्य निरङ्कुशं तत्कर्तृत्वमीश्वरस्यैवेति विशिनष्टि—**स्वातन्त्र्येणेति** । किंच कर्मशब्दस्य चलनादृष्टयो रूढस्यान्यतरार्थत्वानियमात्क्रियत इति जगदर्थत्वात्तत्कर्तृत्वेन ब्रह्मैव ग्राह्यमित्याह—**यस्येति** । एतच्छब्दस्य प्रकृतार्थत्वात्तत्समभिव्याहृतकर्मशब्दस्य तद्वशादन्यतरार्थत्व-

**तयोरन्यतरस्याप्यप्रकृतत्वाद्, असंशब्दितत्वाच्च ॥ नापि पुरुषाणामयं निर्देशः "एतेषां पुरुषाणां कर्त्ता" [ कौ० ब्रा० ४ । १९ ] इत्येवं तेषां निर्दिष्टत्वात्, लिङ्गवचनविगानाच्च ॥ नापि पुरुषविषयस्य करोत्यर्थस्य क्रियाफलस्य वायं निर्देशः । कर्तृशब्देनैव तयोरुपात्तत्वात् । पारिशेष्यात्प्रत्यक्षसन्निहितं जगत्सर्वनाम्नैतच्छब्देन निर्दिश्यते ॥ क्रियत इति च तदेव जगत्कर्म ॥ ननु जगदप्यप्रकृतमसंशब्दितं च ॥ सत्यमेतत् ॥ तथाप्यसति विशेषोपादाने साधारणेनार्थेन सन्निधानेन सन्निहितवस्तुमात्रस्यायं निर्देश इति गम्यते । न विशिष्टस्य कस्यचित् । विशेषसन्नि-**

---

रत्नप्रभा ।

योगाज्जगद्ग्रहणमित्यर्थः । एतत्कर्मेतिप्रकृतपरामर्शात् पुरुषाः पूर्वोक्ताः कर्मशब्देन निर्दिश्यन्तामित्यत आह—**नापीति** ॥ पौनरुक्त्यापातात् पुरुषाणां नपुंसकैकवचनेन परामर्शायोगाच्चेत्यर्थः । **ननु** पुरुषोत्पादकस्य कर्त्तुर्व्यापारः करोत्यर्थ उत्पादनम् । तस्य फलं पुरुषजन्म । तदन्यतरवाची कर्मशब्दोऽस्त्वित्यत आह—**नापीति** ॥ **कर्तृशब्देनेति** ॥ क्रियाफलाभ्यां विना कर्तृत्वायोगात् कर्तृशब्देनैव तयोर्ग्रहणमित्यर्थः । जगतोऽपि प्रकरणोपपदे न स्त इत्युक्तमङ्गीकरोति—**सत्यमिति** ॥ प्रकरणादिकं हि सर्वनाम्नः संकोचकम् । तस्मिन्नसति सामान्येन बुद्धिस्थं सर्वमेव गृह्यते । अत्र च संकोचकासत्त्वात् सर्वार्थकेन सर्वनाम्ना बुद्धिस्थस्य कार्यमात्रस्य कर्मशब्दो वाचक इत्याह—**तथापीति** ॥ **किञ्च** जगदे-

भामती ।

एतदिति चैकस्य नपुंसकस्याभिधानात्, 'एतेषां पुरुषाणां कर्ता' इत्यनेनैव गतार्थत्वाच्च । तस्मादशब्दोक्तमपि प्रत्यक्षसिद्धं संबन्धार्हं जगदेव परामष्टव्यम् । **एतदुक्तं भवति** । अत्यल्पमिदमुच्यते, एतेषामादित्यादिगतानां जगदेकदेशभूतानां कर्तेति, किंतु कृत्स्नमेव जगद्यस्य कार्यमिति वाशब्देन सूच्यते । जीवप्राणशब्दौ च ब्रह्मपरौ जीवशब्दस्य ब्रह्मोपलक्षणपरत्वात् । न पुनर्ब्रह्मशब्दो जीवोपलक्षणपरः । तथा सति हि बहुसमञ्जसं स्यादित्युक्तम् । न चानधिगतार्थावबोधनस्वरसस्य शब्दस्याधिगतबोधनं युक्तम् । नाप्यनधिगतेनाधिगतोपलक्षणमुपपन्नम् । नच संभवत्येकवाक्यत्वे वाक्यभेदो न्याय्यः । वाक्यशेषानुरोधेन च जीवप्राणपरमात्मोपासनात्रयविधाने वाक्यत्रयं भवेत् । पौर्वापर्यपर्यालोचनया तु ब्रह्मोपासनपरत्वे एकवाक्यतैव । तस्मान्न जीवप्राणपरत्वमपि तु ब्रह्मपरत्वमेवेति सिद्धम् । स्यादेतत् । निर्दिश्यन्तां पुरुषाः कार्यास्तद्विषया तु कृतिरनिर्दिष्टा तत्फलं वा कार्यस्योत्पत्तिस्ते यस्येदं कर्मेति निर्देक्ष्येते, ततः कुतः पौनरुक्त्यमित्यत आह—**नापि पुरुषविषयस्येति** । एतदुक्तं भवति—कर्तृशब्देनैव कर्तारमभिदधता तयोरुपात्तत्वादाक्षिप्तत्वात् ।

आनन्दगिरीय-न्यायनिर्णयः ।

धीरित्याशंक्याऽऽह—**तयोरिति** । उपपदाभावाच्च तस्य नान्यतरार्थतेत्याह—**असंशब्दितत्वाच्चेति** । एतच्छब्देन प्रकृतगामिना प्रकृतत्वात्पुरुषा एव परामृश्यन्ते न जगदित्याशंक्याऽऽह—**नापीति** । तदनुक्तौ हेत्वन्तरमाह—**लिङ्गेति** । पुरुषाणां बहुत्वात्पुँल्लिङ्गशब्दवाच्यत्वादेतदित्येकस्य नपुंसकस्य चोक्तेर्न पुरुषोक्तिरित्यर्थः । पुरुषाणां पृथक्कथनेऽपि तदर्थक्रियायास्तत्फलस्य च कार्यजन्मनोऽनुक्तत्वादेतत्कर्मेति तदुक्तौ न पौनरुक्त्यमित्याशंक्याऽऽह—**नापीति** । क्रियातत्फले कर्तारं वदता कर्तृशब्देनैवाऽऽक्षिप्ते ताभ्यां कर्तुरवच्छेदादित्यर्थः । पारिशेषसिद्धमर्थमाह—**पारिशेष्यादिति** । तस्य कथं कर्मशब्दत्वं न हि तच्चलनमदृष्टं वा तत्राऽऽह—**क्रियत इति** । प्रकरणोपपदयोरसत्त्वाविशेषे सर्वनामसमानाधिकृतकर्मशब्दस्य कर्मव्युत्पत्त्या कुतो जगदर्थतेति शङ्कते—**नन्विति** । सर्वनाम्नः संनिहितार्थत्वादुपपदाद्यभावे विशेषे संकोचायोगादेतच्छब्दसहितकर्मशब्देन जगदेवोक्तमित्याह—**सत्यमिति** । किंचाप्रकृतत्वमपि जगतो नास्ति

धानाभावात् ॥ पूर्वत्र च जगदेकदेशभूतानां पुरुषाणां विशेषोपादानाद्-विशेषितं जगदेवेहोपादीयत इति गम्यते ॥ एतदुक्तं भवति—य एतेषां पुरुषाणां जगदेकदेशभूतानां कर्त्ता किमनेन विशेषेण, यस्य वा कृत्स्नमेव जगदविशेषितं कर्मेति ॥ वाशब्द एकदेशावच्छिन्नकर्तृत्वव्यावृत्त्यर्थः ॥ ये बालाकिना ब्रह्मत्वाभिमताः पुरुषाः कीर्तितास्तेषामब्रह्मत्वख्यापनाय विशेषोपादानम् ॥ एवं ब्राह्मणपरिव्राजकन्यायेन सामान्यविशेषाभ्यां जगतः कर्त्ता वेदितव्यतयोपदिश्यते ॥ परमेश्वरश्च सर्वजगतः कर्त्ता सर्ववेदान्तेष्ववधारितः ॥ १६ ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥

अथ यदुक्तं वाक्यशेषगताज्जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च तयोरेवान्यतरस्येह ग्रहणं न्याय्यं, न परमेश्वरस्येति ॥ तत्परिहर्तव्यमत्रोच्यते ॥ परिहृतं चैतत् "नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्" [ १ । १ । ३१ ] इत्यत्र ॥ त्रिविधं ह्यत्रोपासनमेवं सति प्रसज्येत–जीवोपासनं

---

रत्नप्रभा ।

कदेशोक्त्या जगत् प्रकृतमित्याह–पूर्वत्रेति ॥ जगद्ग्रहे पुरुषाणामपि ग्रहात् पृथगुक्तिर्व्यर्थेत्यत आह–एतदुक्तमिति ॥ स वेदितव्य इति सम्बन्धः । पुरुषमात्रनिरूपितं कर्तृत्वमिति भ्रान्तिनिरासार्थो वाशब्दः । ब्राह्मणा भोजयितव्याः परिव्राजकाश्चेत्यत्र यथा ब्राह्मणशब्दः परिव्राजकान्यविषयः, तथात्र कर्मशब्दः पुरुषान्यजगद्वाचीत्याह–एवमिति ॥ अस्तु जगत्कर्त्ता वेदितव्यः । परमेश्वरस्य किमायातमित्यत आह–परमेश्वरेति ॥ १६ ॥ सिद्धान्तमुक्त्वा पूर्वपक्षबीजमनूद्य दूषयति–जीवमुख्यप्राणलिंगान्नेति चेत्तद्व्याख्यातम् ॥ इति उक्तमेव स्मारयति–त्रिविधमिति ॥

भामती ।

न हि कृतिं विना कर्ता भवति । नापि कृतिर्भावनापराभिधाना भूतिमुत्पत्तिं विनेत्यर्थः । ननु यदीदमा-जगत्परामृष्टं ततस्तदन्तर्भूताः पुरुषा अपीति य एतेषां पुरुषाणामिति पुनरुक्तमित्यत आह–एतदुक्तं भवति–य एषां पुरुषाणामिति ॥ १६ ॥ १७ ॥ ननु 'प्राण एवैकधा भवति' इत्यादिकादपि वाक्याज्जीवा-

आनन्दगिरीय–न्यायनिर्णयः ।

तदेकदेशानां पुरुषाणां प्रकृतत्वात्तद्द्वारा कृत्स्नजगदुक्तियोगादित्याह–पूर्वत्रेति । तर्हि तन्मात्रमेव सर्वनाम्ना ग्राह्यं श्रुतिलक्षणयोः श्रुतेरौचित्यादित्याशंक्य तदत्यागान्मैवमित्याह–अविशेषितमिति । तर्हि सर्वनाम्ना जगद्ग्राहिणा पुरुषाणामपि ग्रहादेतेषामित्यादिपृथगुक्तिरनर्थिकेत्याशंक्याऽऽह–एतदिति । यस्य कृत्स्नं जगत्कर्म स वेदितव्य इति संबन्धः । वाशब्दाद्वेदितृविकल्पं प्रत्याह–वाशब्द इति । तथाऽपि 'पुरुषाणां कर्ता यस्य वैतत्कर्म' इति कुतो भेदोक्तिर्जगत्कर्तृत्वोक्तेरेवाऽऽदित्यादिकर्तृत्वसिद्धेरित्याशंक्याऽऽह–य इति । उक्तन्यायात्कर्मशब्दस्य जगदर्थत्वे वाक्यार्थमुपसंहरति–एवमिति । ब्राह्मणा भोजयितव्याः परिव्राजकाश्चेत्युक्ते सामान्यविशेषाभ्यां संनिहितसर्वब्राह्मणग्रहणवदत्रापि व्यपदेशाभ्यां सर्वजगत्कर्ता वेदितव्यत्वेनोक्त इत्यर्थः । तथाऽपि कथं वाक्यस्य ब्रह्मपरत्वमपरस्यापि जगत्कर्तुर्वेदितव्यत्वयोगात्तत्राऽऽह–परमेति । उपनिषद्गामैदंपर्यालोचनायामन्यस्य सर्वजगत्कर्तृत्वायोगादत्र कृत्स्नजगत्कर्ता वेदितव्यः पर एवेत्यर्थः ॥ १६ ॥ सिद्धान्तमुक्त्वा परोक्तमनूद्य प्रत्याह–जीवेति । अनुवादं विवृणोति–अथेति । सूत्रावयवेन परिहरति–अत्रेति । उक्तमेव संक्षिप्य स्मारयति–त्रिविधमिति । अस्तूपास्तित्रैविध्यं का क्षतिः ?

मुख्यप्राणोपासनं ब्रह्मोपासनं चेति॥ न चैतन्न्याय्यम्॥ उपक्रमोपसंहाराभ्यां हि ब्रह्मविषयत्वमस्य वाक्यस्यावगम्यते ॥ तत्रोपक्रमस्य तावद्ब्रह्मविषयत्वं दर्शितम् ॥ उपसंहारस्यापि निरतिशयफलश्रवणाद्ब्रह्मविषयत्वं दृश्यते-"सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद" [ कौ० ब्रा० ४ । २० ] इति ॥ नन्वेवं सति प्रतर्दनवाक्यनिर्णयेनैवेदमपि वाक्यं निर्णीयेत ॥ न निर्णीयते ॥ "यस्य वैतत्कर्म" इत्यस्य ब्रह्मविषयत्वेन तत्रानिर्धारितत्वात् ॥ तस्मादत्र जीवमुख्यप्राणशङ्का पुनरुत्पद्यमाना निवर्त्यते ॥ प्राणशब्दोऽपि ब्रह्मविषयो दृष्टः-"प्राणबन्धनं हि सोम्य मनः" [ छां० ६।८ । २ ] इति ॥ अत्र जीवलिङ्गमप्युपक्रमोपसंहारयोर्ब्रह्मविषयत्वादभेदाभिप्रायेण योजयितव्यम् ॥ १७॥

## अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

अपि च नैवात्र विवदितव्यं-जीवप्रधानं वेदं वाक्यं स्याद्, ब्रह्मप्रधानं वेति। यतोऽन्यार्थं जीवपरामर्शं ब्रह्मप्रतिपत्त्यर्थमस्मिन्वाक्ये जैमिनिराचार्यो मन्यते ॥ कस्मात् ॥ प्रश्नव्याख्यानाभ्याम्-प्रश्नस्तावत्सुप्तपुरुषप्रतिबोधनेन प्राणादिव्यतिरिक्ते जीवे प्रतिबोधिते पुनर्जीवव्यतिरिक्तविषयो

---

रत्नप्रभा ।

श्रैष्ठ्यं गुणाधिक्यम् । आधिपत्यं नियन्तृत्वम्, स्वाराज्यम् अनियम्यत्वमिति भेदः । सम्भवति एकवाक्यत्वे वाक्यभेदो हि नेष्यत इत्युक्तं चेत् पुनरुक्तिः स्यादिति शङ्कते-नन्वेवमिति ॥ कर्मशब्दस्य रूढ्या पूर्वपक्षप्राप्तौ तन्निरासार्थमस्यारम्भो युक्त इत्याह-नेत्यादिना ॥ प्राणशब्दजीवलिङ्गयोर्गतिमाह-प्राणशब्दोऽपीति ॥ १७ ॥ मनो जीवः । जीवलिङ्गेन ब्रह्मैव लक्ष्यते इत्युक्तम् । इदानीं तल्लिङ्गेन जीवोक्तिद्वारा ब्रह्म ग्राह्यमित्याह-अन्यार्थं तु जैमिनिः प्रश्नव्याख्याभ्यामपि चैवमेके इति॥ जीवपरा-

भामती ।-०

आनन्दगिरीय-न्यायनिर्णयः ।

तत्राऽऽह-न चेति । उपक्रमोपसंहारैकरूप्यसिद्धवाक्यैक्यभङ्गान्न त्रैविध्यमित्यर्थः । हेत्वसिद्धमाशंक्योक्तम्-तत्रेति । दर्शितमुपक्रमसामर्थ्यादित्यादिनेति शेषः । तथाऽपि कथमुपसंहारस्य ब्रह्मार्थत्वं तत्राऽऽह-उपसंहारस्येति । श्रैष्ठ्यं गुणाधिक्यम् । आधिपत्यमैश्वर्यम् । स्वाराज्यमनन्याधीनत्वम् । प्रातर्दनविचारेण गतत्वादधिकरणमिदमनर्थकमिति शङ्कते-नन्विति। तत्रोपक्रमोपसंहारैकरूप्यादेकवाक्यत्वे जीवप्राणलिङ्गे ब्रह्मपरतया नीते तुल्यमत्रापि वाक्यैक्यमिति नार्थोऽधिकरणस्येत्यर्थः । कर्मशब्दस्यात्र चलनादृष्टयो रूढेस्तद्वशाद्वाक्यस्य जीवप्राणान्यतरपरत्वाद्वाक्यभेदे शंकिते तन्निरासार्थमधिकरणमित्याह-नेत्यादिना । तस्मादनन्तरोक्ताद्यस्येत्यादिवाक्यादिति यावत् । प्रकृताधिकरणं सप्तम्यर्थः । यत्तु वाक्यशेषे प्राणशब्दान्मुख्यप्राणार्थं वाक्यमिति तत्राऽऽह-प्राणेति । मनस्तदुपाधिको जीवः प्राणबन्धनं परमात्माश्रयः । यत्तु वाक्यशेषे जीवलिङ्गं दृष्टमिति तत्राऽऽह-जीवेति ॥ १७ ॥ जीवलिङ्गेनापि लक्ष्यते प्रत्यग्ब्रह्मेत्युक्तमिदानीं तल्लिङ्गाज्जीवोक्तिमुपेत्य वाक्यतात्पर्यगम्यं ब्रह्मैवेत्याह-अन्यार्थं त्विति । इतश्च वाक्यं ब्रह्मार्थमेवेति सूत्रं व्याकरोति-अपि चेति । तत्र तुशब्दं व्याकुर्वन्प्रतिजानीते-नैवेति । तत्र हेतुत्वेनान्यार्थमित्यादि विभजते-यत इति । जीवपरामर्शस्य ब्रह्मप्रतिपत्त्यर्थत्वे हेतुं पृच्छति-कस्मादिति । सौत्रं पदमादाय प्रश्नं व्याचष्टे-प्रश्न इति । जीवाधिकरणभवनापादानविषयत्वाज्जीवातिरिक्तार्थता प्रश्नस्ये-

दृश्यते-"क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदागाद्" [ कौ० ब्रा० ४ । १९ ] इति ॥ प्रतिवचनमपि "यदा सुप्तः स्वप्नं न कश्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति" [ कौ० ब्रा० ४ । १९ ] इत्यादि, "एतस्मादात्मनः प्राणा यथाऽऽयतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" [ कौ० ब्रा०४।१९] इति च ॥ सुषुप्तिकाले च परेण ब्रह्मणा जीव एकतां गच्छति, परस्माच्च ब्रह्मणः प्राणादिकं जगज्जायत इति वेदान्तमर्यादा ॥ तस्माद्यत्रास्य जीवस्य निस्सम्बोधः-स्वच्छतारूपस्स्वाप उपाधिजनितविशेषविज्ञानरहितं स्वरूपं, यतस्तद्भ्रंशरूपमाग-

रत्नप्रभा ।

मर्शस्य जीवाधिकरणब्रह्मज्ञानार्थत्वे प्रश्नमाह-क्वैष इति ॥ हे बालाके एतत् शयनं विशेषज्ञानाभावरूपं यथा स्यात्तथाऽह एष पुरुषः क्वाशयिष्ट कस्मिन्नधिकरणे शयनं कृतवानित्यर्थः । एकीभावाश्रयज्ञानार्थं पृच्छति-क्व वा इति ॥ एतद् भवनमेकीभावरूपं यथा स्यात्तथा एष पुरुषः क्वाभूत् सुप्तः । केनैक्यं प्राप्नोतीति यावत् । उत्थानाऽपादानं पृच्छति-कुत इति॥एतद् आगमनमैक्यभ्रंशरूपं यथा स्यात्,तथा पुरुषः कुत आगत इत्यर्थः । प्रश्नमुक्त्वा व्याख्यानमाह-प्रतिवचनमिति॥ शयनभवनयोराधार उत्थानाऽपादानश्च प्राणशब्दितं ब्रह्मैवेत्यर्थः।उत्तरे प्राणोक्तेः प्रश्नोऽपि प्राणविषय इत्यत आह-सुषुप्तिकाले चेति॥ जगद्धेतुत्वजीवैक्याभ्यां प्राणोऽत्र ब्रह्मेत्यर्थः ॥ जीवोक्तेरन्यार्थत्वमुपसंहरति-तस्मादिति ॥ निस्सम्बोधता विशेषधीशून्यता । स्वच्छता विक्षेपमलशून्यता । भेदभ्रान्तिशून्यतास्वरूपमैक्यमाह-उपाधीति ॥

भामती ।

तिरिक्तः कुतः प्रतीयत इत्यतो वाक्यान्तरं पठति-एतस्मादात्मनः प्राणा इति । अपि च सर्ववेदान्तसिद्धमेतदित्याह-सुषुप्तिकाले चेति । वेदान्तप्रक्रियायामेवोपपत्तिमुपसंहारव्याजेनाह-तस्माद्यत्रास्य आत्मनो यतो निःसंबोधोऽतः स्वच्छतारूपमिव रूपमस्येति स्वच्छतारूपो न तु स्वच्छतैव । लयविक्षेपसंस्कारयोस्तत्र भावात् । समुदाचरद्वृत्तिविक्षेपाभावमात्रेणोपमानम् । एतदेव विभजते-उपाधिभिः अन्तःकरणादिभिः जनितं यद्विशेषविज्ञानं घटपटादिविज्ञानं तद्रहितं स्वरूपमात्मनः यदि विज्ञानमित्येवोच्येत ततस्तदविशिष्टमनवच्छिन्नं सद्ब्रह्मैव स्यात्तच्च नित्यमिति नोपाधिजनितं नापि तद्रहितं स्वरूपं ब्रह्मस्वभावस्याप्रहाणात् । अत उक्तम्-विशेषेति । यदा तु लयलक्षणाविद्योपबृंहितो विक्षेपसंस्कारः समुदाचरति तदा विशेषविज्ञानोत्पादात्स्वप्नजागरावस्थातः परमात्मनो रूपाद् भ्रंशरूपमागमनमिति । न केवलं

आनन्दगिरीय-न्यायनिर्णयः ।

त्यर्थः । तत्राधिकरणप्रश्नमुदाहरति-क्वैष इति । हे बालाके शयनमेतद्यथा तथैष पुरुषः कस्मिन्नधिकरणे स्वापे शयनं कृतवानित्यर्थः । भवनायतनं पृच्छति-क्वेति । एतद्भवनं यथा स्यात्तथा क्वाऽऽश्रये सुप्तोऽभूदित्यर्थः । स्वापे शयनभवनयोराधारं पृष्ट्वोत्थानावस्थायामागमनापादानं पृच्छति-कुत इति । एतदागमनं यथा तथा कस्मादुद्बोधदशायामागादुत्थानं कृतवानित्यर्थः । व्याख्यानं व्याचष्टे-प्रतिवचनमिति । तत्र प्राणशब्दात्कुतो ब्रह्मधीस्तत्राऽऽह-एतस्मादिति । सर्वकारणत्वोक्तेरत्र ब्रह्म सिद्धमित्यर्थः । सर्ववेदान्तप्रसिद्धं चैतदित्याह-सुषुप्तीति । उक्तमर्थमुपसंहारव्याजेनोपपादयति-तस्मादिति । यतो निःसंबोधः स्वच्छतारूपः स्वापो विक्षेपाभावात्सोऽस्य जीवस्य यत्र भवति स परमात्मेति योज्यम् । ननु निःसंबोधित्वं स्वापस्यासिद्धं 'न हि द्रष्टुः' इत्यादिश्रुतेस्तत्राऽऽह-उपाधीति । अत एवोक्तं 'पश्यन्वै तन्न पश्यति' इति । आगत्यपादानमपि ब्रह्मैवेत्याह-यत इति । तद्भ्रंशेत्यत्र तच्छब्दः स्वापार्थः । न

मनं, सोऽत्र परमात्मा वेदितव्यतया श्रावित इति गम्यते ॥ अपि चैवमेके शाखिनो वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे स्पष्टं विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्तं परमात्मानमामनन्ति—"य एष विज्ञानमयः पुरुषः क्वैतदाभूत्कुत एतदागाद्" [ बृ० २ । २ । १६ ] इति प्रश्ने, प्रतिवचनेऽपि—"य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते" [ बृ० २ । २ । १७ ] आकाशशब्दश्च परमात्मनि प्रयुक्तः—"दहरोऽस्मिन्नन्तराकाशः" [ छां० ८ । १ । १ ] इति ॥ अत्र "सर्वं एत आत्मानो व्युच्चरन्ति" [ बृ० २ । २ । २० ] इति चोपाधिमतामात्मनामन्यतो व्युच्चरणमामनन्तः परमात्मानमेव कारणत्वेनाऽऽमनन्तीति गम्यते ॥ प्राणादिनिराकरणस्यापि सुप्तपुरुषोत्थापनेन प्राणादिव्यतिरिक्तोपदेशोऽभ्युच्चयः ॥ १८ ॥ इति जगद्वाचित्वाधिकरणम् ॥ ( ५ ) ॥

---

रत्नप्रभा ।

प्रश्नव्याख्यानयोर्ब्रह्मविषयत्वे शाखान्तरसंवादमाह—अपि चैवमेके शाखिन इति ॥ ननु तत्राकाशः सुषुप्तिस्थानमुक्तम् । न ब्रह्मेत्यत आह—आकाशेति ॥ उपाधिद्वारा प्रमात्रात्मजन्महेतुत्वाच्चाकाशो ब्रह्मेत्याह—सर्वं इति ॥ एवं जीवनिरासार्थकत्वेन सूत्रं व्याख्याय प्राणनिरासपरत्वेनापि व्याचष्टे—प्राणेति ॥ अस्मिन्वाक्ये प्राणोपदेशं ब्रह्मज्ञानार्थं मन्यते जैमिनिः । उक्तप्रश्नव्याख्यानाभ्यां वाक्यस्य ब्रह्मपरत्वात् । अपि चैके शाखिन एवमेव प्राणातिरिक्तं जीवात्मानमामनन्तः प्राणस्य वाक्यार्थत्वं वारयन्तीति सूत्रयोजना । अतिरिक्तजीवोपदेशः प्राणनिराकरणस्याप्यभ्युच्चयः, हेत्वन्तरमिति

भामती ।

कौषीतकिब्राह्मणे, वाजसनेयेऽप्येवमेव प्रश्नोत्तरयोर्जीवव्यतिरिक्तमामनन्ति परमात्मानमित्याह—अपि चैवमेक इति । नन्वत्राकाशं शयनस्थानं तत्कुतः परमात्मप्रत्यय इत्यत आह—आकाशशब्दश्चेति । न तावन्मुख्यस्याकाशस्यात्माधारत्वसंभवः । यदपि च द्वासप्ततिसहस्रहिताभिधाननाडीसंचारेण सुषुप्त्यवस्थायां पुरीतदवस्थानमुक्तं तदप्यन्तःकरणस्य । तस्मात् 'दहरोऽस्मिन्नन्तराकाशः' इतिवदाकाशशब्दः परमात्मनि मन्तव्य इति । प्रथमं भाष्यकृता जीवनिराकरणाय सूत्रमिदमवतारितम् । तत्र मन्दधियां नेदं प्राणनिराकरणायेति बुद्धिर्मा भूदित्याशयवानाह—प्राणनिराकरणस्यापीति । तौ ह बालाक्यजातशत्रू सुप्तं पुरुषमाजग्मतुः । तमजातशत्रुर्नामभिरामन्त्रयांचक्रे'बृहत् पाण्डुरवासः सोमराजन्' इति । स आमन्त्र्यमाणो नोत्तस्थौ । तं पाणिनापेषं बोधयांचकार । स होत्तस्थौ।'स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूत्,इत्यादि।

आनन्दगिरीय–न्यायनिर्णयः ।

केवलं कौषीतकिनां प्रश्नादिना जीवातिरिक्ताम्नानं किंतु वाजसनेयिनामपीत्याह—अपि चेति । तदेति स्वापोक्तिः । नन्वाकाशस्तत्र शयनस्थानमुक्तं न ब्रह्म तत्राऽऽह—आकाशेति । इतश्च प्रत्युक्तेर्ब्रह्मार्थतेत्याह—सर्वं इति । जीवनिरासतया सूत्रं व्याख्याय प्राणनिरासेऽपि तस्य तात्पर्यमाह—प्राणेति । अस्मिन्वाक्ये प्राणोपदेशमन्यार्थमेवातिरिक्तात्मप्रतिपत्त्यर्थं जैमिनिर्मन्यते । प्राणातिरिक्ताज्जीवादपि व्यतिरिक्तार्थाभ्यामुक्तप्रश्नप्रत्युक्तिभ्यां प्राणमात्रे वाक्यस्यापर्यवसानात् । किंच । वाजसनेयिनोऽपि यत्रैष एतदित्यादिना प्राणादिव्यतिरिक्तं जीवं वदन्तो वाक्यस्य परस्मिन्पर्यवसानं पश्यन्तीति सूत्रस्यात्र योजना । तदेवं जीवप्राणातिरिक्ते ब्रह्मणि दर्शितवाक्यान्वयादनपवादं वेदान्तानां ब्रह्मणि गतिसामान्यमिति ॥ १८ ॥ ॥ ( ५ ) ॥ जीवेतरपरविषयत्वे प्रश्नादिना वाक्यस्योक्ते जीवपरभेदमाशंक्याऽऽत्मशब्दोपक्रान्तस्य ब्रह्मधर्मव-

## वाक्यान्वयात् ॥ १९ ॥ ( ६ ) ॥

**बृहदारण्यके मैत्रेयीब्राह्मणेऽभिधीयते—"न वा अरे पत्युः कामाय" [ बृ० २ । ४ ।५] इत्युपक्रम्य "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदᳪ सर्वं विदितम्" [ बृ० २।४।५] इति ॥ तत्रैतद्विचिकित्स्यते—किं विज्ञानात्मैवायं द्रष्टव्यश्रोतव्यत्वादिरूपेणोपदिश्यते, आहोस्वित् परमात्मेति॥ कुतः पुनरेषा विचिकित्सा ॥ प्रियसंसूचितेनाऽऽत्मना भोक्त्रोपक्रमा-**

---

रत्नप्रभा ।

भाष्यार्थः । तस्मादिदं वाक्यं ब्रह्मणि समन्वितमिति सिद्धम् ॥१८॥ ( ५ ) ॥ **वाक्यान्वयात् ।** विषयवाक्यमाह—**बृहदिति** ॥ पत्यादेरात्मशेषत्वेन प्रियत्वादात्मैव सर्वशेषी प्रियतमः । अतोऽन्यत्परित्यज्याऽऽत्मैव द्रष्टव्यः । दर्शनार्थं श्रवणादिकं कार्यमित्यर्थः । **प्रियसंसूचितेनेति** ॥ पतिजायादिभिः प्रियैर्भोग्यैर्जीवतयानुमितेनेत्यर्थः । यथा "ब्रह्म ते ब्रवाणि" [बृ० २ । १ । १ ] इत्युपक्रमबलाद्वाक्यस्य ब्रह्मप-

भामती ।

सोऽयं सुप्तपुरुषोत्थापनेन प्राणादिव्यतिरिक्तोपदेश इति॥१८॥(५)॥ **वाक्यान्वयात्।** ननु मैत्रेयीब्राह्मणोपक्रमे याज्ञवल्क्येन गार्हस्थ्याश्रमादुत्तमाश्रमं यियासता मैत्रेय्या भार्यायाः कात्यायन्या सहार्थसंविभागकरण उक्ते मैत्रेयी याज्ञवल्क्यं पतिममृतत्वार्थिनी पप्रच्छ, यन्नु म इयं भगोः सर्वा पृथ्वी वित्तेन पूर्णा स्यात्किमहं तेनामृता स्यामुत नेति । तत्र नेति होवाच याज्ञवल्क्यः । यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेन । एवं वित्तेनामृतत्वाशा भवेद्यदि वित्तसाध्यानि कर्माण्यमृतत्वे उपयुज्येरन् । तदेव तु नास्ति,ज्ञानसाध्यत्वादमृतत्वस्य कर्मणां च ज्ञानविरोधिनां तत्सहभावित्वानुपपत्तेरिति भावः । सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूहि । अमृतत्वसाधनमिति शेषः । तत्रामृतत्वसाधनज्ञानोपन्यासाय वैराग्यपूर्वकत्वात्तस्य रागविषयेषु तेषु तेषु पतिजायादिषु वैराग्यमुत्पादयितुं याज्ञवल्क्यो 'न वा अरे पत्युः कामाय' इत्यादिवाक्यसंदर्भमुवाच । आत्मौपाधिकं हि प्रियत्वमेषां न तु साक्षात् प्रियाण्येतानि । तस्मादेतेभ्यः पतिजायादिभ्यो विरम्य यत्र साक्षात्प्रेम स एव **आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः** । वाशब्दोऽवधारणे । आत्मैव द्रष्टव्यः साक्षात्कर्तव्यः । एतत्साधनानि च श्रवणादीनि विहितानि श्रोतव्य इत्यादिना । कस्मात् । आत्मनो वा अरे दर्शनेन श्रवणादिसाधनेनेदं जगत्सर्वं विदितं भवतीति वाक्यशेषः । यतो नामरूपात्मकस्य जगतस्तत्त्वं पारमार्थिकं रूपमात्मैव भुजङ्गस्येव समारोपितस्य तत्त्वं रज्जुः । तस्मादात्मनि विदिते सर्वमिदं जगत्तत्त्वं विदितं भवति, रज्ज्वामिव विदितायां समारोपितस्य भुजङ्गस्य तत्त्वं विदितं भवति, यतस्तस्मादात्मैव द्रष्टव्यो न तु तदतिरिक्तं जगत् स्वरूपेण द्रष्टव्यम् । कुतः यतो 'ब्रह्म तं परादात्' ब्राह्मणजातिर्ब्राह्मणोऽहमित्येवमभिमान इति यावत् । परादात् पराकुर्यादमृतत्वपदात् । कं,

आनन्दगिरीय—न्यायनिर्णयः ।

त्तया मैत्रेयिब्राह्मणे निर्देशादौपाधिको भेदो वास्तवमैक्यमित्याह—**वाक्येति** । विषयवाक्यमादत्ते—**बृहदिति** । आत्मशेषत्वेन पत्यादेः सर्वस्य प्रियत्वादनन्यार्थतया निरुपाधिप्रियत्वेनानतिशयानन्दस्याऽऽत्मनो ज्ञातव्यत्वं मत्वाऽऽह—**न वा इति** । आत्मनो दर्शनयोग्यतामुक्त्वा तद्दर्शनमनूद्य तद्धेतुत्वेनाङ्गाङ्गितया श्रवणादीनि दर्शयति—**आत्मेति** । आत्मवेदने वेदितव्यान्तराभावात्कृतकृत्यतेत्याह—**आत्मन इति** । उक्तवाक्यस्थमात्मानमधिकृत्य संशयमाह—**तत्रेति** । प्रश्नपूर्वकं जीवब्रह्मलिङ्गदर्शनं संशयहेतुमाह—**कुत इति** । प्रियसंसूचितेन पतिजायादिभिः प्रियैर्भोग्यैरनुमितेन भोक्त्रेत्यर्थः । विमृश्य पूर्वपक्षयति—

द्विज्ञानात्मोपदेश इति प्रतिभाति ॥ तथाऽऽत्मविज्ञानेन सर्वविज्ञानोपदेशात्परमात्मोपदेश इति ॥ किं तावत्प्राप्तम् ॥ विज्ञानात्मोपदेश इति ॥ कस्मात् ॥ उपक्रमसामर्थ्यात्–पतिजायापुत्रवित्तादिकं हि भोग्यभूतं सर्वं जगदात्मार्थतया प्रियं भवतीति प्रियसंसूचितं भोक्तारमात्मानमुपक्रम्याऽनन्तरमिदमात्मनो दर्शनाद्युपदिश्यमानं कस्याऽन्यस्याऽऽत्मनस्स्यात् ॥ मध्येऽपीदं–"महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूते-

रत्नप्रभा।

त्वं, तथात्र जीवोपक्रमादस्य वाक्यस्य जीवपरत्वमिति दृष्टान्तेन पूर्वपक्षयति–किं तावदिति ॥ पूर्वपक्षे वाक्यस्य जीवोपास्तिपरत्वं, सिद्धान्ते ज्ञेये प्रत्यग्ब्रह्मणि समन्वय इति फलम्। इदं प्रत्यक् महदपरिच्छिन्नं भूतं सत्यमनन्तं नित्यमपारं सर्वगतञ्चिदेकरसम्। एतेभ्यः कार्यकारणात्मना जायमानेभ्यो भूतेभ्यः सामान्येनोत्थाय भूतोपाधिकं जन्मानुभूय तान्येव भूतानि लीयमानान्यनुसृत्य विनश्यति। औपा-

भामती।

योऽन्यत्रात्मनो ब्रह्म ब्राह्मणजातिं वेद। एवं क्षत्रियादिष्वपि द्रष्टव्यम्। आत्मैव जगतस्तत्त्वं न तु तदतिरिक्तं किंचित्तदिति। अत्रैव भगवती श्रुतिरुपपत्तिं दृष्टान्तप्रबन्धेनाह। यत् खलु यद्ग्रहं विना न शक्यते ग्रहीतुं तत्ततो न व्यतिरिच्यते। यथा रजतं शुक्तिकायाः, भुजङ्गो वा रज्जोः, दुन्दुभ्यादिशब्दसामान्याद्वा तत्तच्छब्दभेदाः। न गृह्यन्ते च चिद्रूपग्रहणं विना स्थितिकाले नामरूपाणि। तस्मान्न चिदात्मनो भिद्यन्ते। तदिदमुक्तम्–स यथा दुन्दुभेर्हन्यमानस्येति। दुन्दुभिग्रहणेन तद्गतं शब्दसामान्यमुपलक्षयति। न केवलं स्थितिकाले नामरूपप्रपञ्चश्चिदात्मातिरेकेणाग्रहणाच्चिदात्मनो न व्यतिरिच्यतेऽपि तु नामरूपोत्पत्तेः प्रागपि चिद्रूपावस्थानात् तदुपादानत्वाच्च नामरूपप्रपञ्चस्य तदनतिरेकः, रज्जूपादानस्येव भुजङ्गस्य रज्जोरनतिरेक इत्येतद्दृष्टान्तेन साधयति भगवती श्रुतिः–'स यथार्द्रैधोऽग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतदृग्वेदः' इत्यादिना चतुर्विधो मन्त्र उक्तः। इतिहास इत्यादिनाष्टविधं ब्राह्मणमुक्तम्। एतदुक्तं भवति–यथाग्निमात्रं प्रथममवगम्यते क्षुद्राणां विस्फुलिङ्गानामुपादानम्। अथ ततो विस्फुलिङ्गा व्युच्चरन्ति। न चैतेऽग्नेस्तत्त्वान्यत्वाभ्यां शक्यन्ते निर्वक्तुम्। एवमृग्वेदादयोऽप्यल्पप्रयत्नाद्ब्रह्मणो व्युच्चरन्तो न ततस्तत्त्वान्यत्वाभ्यां निरुच्यन्ते। ऋगादिभिर्नामोपलक्ष्यते। यदा च नामधेयस्येयं गतिस्तदा तत्पूर्वकस्य रूपधेयस्य कैव कथेति भावः। न केवलं तदुपादानत्वात्ततो न व्यतिरिच्यते नामरूपप्रपञ्चः, प्रलयसमये च तदनुप्रवेशात्ततो न व्यतिरिच्यते। यथा सामुद्रमेवाम्भः पृथिवीतेजःसंपर्कात् काठिन्यमुपगतं सैन्धवं खिल्यः, स हि स्वाकरे समुद्रे क्षिप्तोऽम्भ एव भवति, एवं चिदम्भोधौ लीनं जगच्चिदेव भवति न तु ततोऽतिरिच्यत इति। एतद्दृष्टान्तप्रबन्धेनाह–स यथा सर्वासामपामित्यादि। दृष्टान्तप्रबन्धमुक्त्वा दार्ष्टान्तिके योजयति–एवं वा अरे इदं महदिति। बृहत्त्वेन ब्रह्मोक्तम्। इदं ब्रह्मेत्यर्थः। भूतं सत्यम्। अनन्तं नित्यम्। अपारं सर्वगतम्॥ विज्ञानघनः। विज्ञानैकरस इति यावत्। एतेभ्यः कार्यकारणभावेन व्यवस्थितेभ्यो भूतेभ्यः

आनन्दगिरीय–न्यायनिर्णयः।

किं तावदिति। सत्युभयलिङ्गे विशेषदृष्टौ हेतुं पृच्छति—कस्मादिति। ब्रह्मोपक्रमात्तत्परत्ववदत्रापि जीवोपक्रमात्तत्परतेत्याह–उपक्रमेति। मैत्रेयीब्राह्मणस्य जीवमात्रत्वं निषिध्य ब्रह्मण्यन्वयोक्त्या गतिसामान्यदृढीकरणात्पादादिसंगतिः। पूर्वपक्षे ब्राह्मणस्य भोक्त्रर्थतया गतिसामान्यासिद्धौ ब्रह्मकारणत्वासिद्धिः सिद्धान्ते तस्य प्रत्यग्ब्रह्मार्थत्वेन गतिसामान्यसिद्धेस्तत्सिद्धिरिति फलभेदः। उपक्रमसामर्थ्यमेव स्फुटयन्नुपक्रमं दर्शयति–पतीति। जीवस्योपक्रान्तत्वेऽपि परस्य द्रष्टव्यत्वमाशंक्य तत्सामर्थ्यं कथयति–अनन्तरमिति। अन्यस्य दर्शनाद्युक्तावुपक्रमो भज्येतेत्यर्थः। इतश्च जीवस्यैव द्रष्टव्यतेत्याह–मध्येऽपीति। इदं प्रत्यक्तत्त्वम्। महदनवच्छिन्नम्। भूतं परमार्थसत्यम्। अनन्तं नित्यम्। अपारं सर्वगतम्। विज्ञा-

भ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति" [ बृ० २ । ४ । १२ ] इति ॥ प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यस्समुत्थानं विज्ञानात्मभावेन ब्रुवन्विविज्ञानात्मन एवेदं द्रष्टव्यत्वं दर्शयति ॥ तथा "विज्ञातारमरे केन विजानीयाद्" [ बृ० २ । ४ । १४ ] इति कर्तृवचनेन शब्देनोपसंहरन्विज्ञानात्मानमेवेहोपदिष्टं दर्शयति ॥ तस्मादात्मविज्ञानेन सर्वविज्ञानवचनं भोक्त्रर्थत्वाद्भोग्यजातस्यौपचारिकं द्रष्टव्यमिति ॥ एवं प्राप्ते ब्रूमः ॥ परमात्मोपदेश एवायम् ॥ कस्मात् ॥ वाक्यान्वयात्—

रत्नप्रभा ।

धिकमरणानन्तरं विशेषधीर्नास्तीति श्रुत्यर्थः । विज्ञातारं विज्ञानकर्तारम् । भोक्तरि ज्ञाते भोग्यं ज्ञातमित्युपचारः । मोक्षसाधनज्ञानगम्यत्वादिलिङ्गैर्वाक्यस्यान्वयाद्ब्रह्मण्येव तात्पर्यावगमाद्ब्रह्मप्रमापकत्वमिति सिद्धान्तयति—एवमिति ॥ वित्तेन तत्साध्येन कर्मणेत्यर्थः । भेदनिन्दापूर्वकमभेदसाधनेनैकविज्ञानात् सर्वविज्ञा-

भामती ।

समुत्थाय साम्येनोत्थाय । कार्यकारणसंघातस्य ह्यवच्छेदाद्दुःखित्वशोकित्वादयस्तदवच्छिन्ने चिदात्मनि तद्विपरीतेऽपि प्रतीयन्ते, यथोदकप्रतिबिम्बिते चन्द्रमसि तोयगताः कम्पादयः । तदिदं साम्येनोत्थानम् । यदा त्वागमाचार्योपदेशपूर्वकमननिदिध्यासनप्रकर्षपर्यन्तजोऽस्य ब्रह्मस्वरूपसाक्षात्कार उपावर्तते तदा निर्मृष्टनिखिलसवासनाविद्यामलस्य कार्यकारणसंघातभूतस्य विनाशे तान्येव भूतानि नश्यन्त्यनु तदुपाधिश्चिदात्मनः खिल्यभावो विनश्यति । ततो न प्रेत्य कार्यकारणभूतनिवृत्तौ रूपगन्धादिसंज्ञास्तीति । न प्रेत्य संज्ञास्तीति संज्ञामात्रनिषेधादात्मा नास्तीति मन्यमाना सा मैत्रेयी होवाच, अत्रैव मा भगवानमूमुहन्मोहितवान् न प्रेत्य संज्ञास्तीति । स होवाच याज्ञवल्क्यः स्वाभिप्रायं, द्वैते हि रूपादिविशेषसंज्ञानिबन्धनो दुःखित्वाद्यभिमानः । आनन्दज्ञानैकरसब्रह्माद्वयानुभवे तु तत् केन कं पश्येत्, ब्रह्म वा केन विजानीयात् । न हि तदास्य कर्मभावोऽस्ति स्वप्रकाशत्वात् । एतदुक्तं भवति—न संज्ञामात्रं मया व्यासेधि, किंतु विशेषसंज्ञेति । तदेवममृतत्वफलेनोपक्रमात्, मध्ये चात्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तदुपपादनात्, उपसंहारे च महद्भूतमनन्तमित्यादिना च ब्रह्मरूपाभिधानात्, द्वैतनिन्दया चाद्वैतगुणकीर्तनाद्ब्रह्मैव मैत्रेयीब्राह्मणे प्रतिपाद्यं न जीवात्मेति नास्ति पूर्वपक्ष इत्यनारम्यमेवेदमधिकरणम् । अत्रोच्यते—भोक्तृत्वज्ञातृताजीवरूपोत्थानसमाधये मैत्रेयीब्राह्मणे पूर्वपक्षेणोपक्रमः कृतः । पतिजायादिभोग्यसंबन्धो नाभोक्तुर्ब्रह्मणो युज्यते, नापि ज्ञानकर्तृत्वमकर्तुः साक्षाच्च महतो भूतस्य विज्ञानात्मभावेन समुत्थानाभिधानं विज्ञानात्मन एव द्रष्टव्यत्वमाह । अन्यथा ब्रह्मणो द्रष्टव्यत्वपरेऽस्मिन् ब्राह्मणे तस्य विज्ञानात्मत्वेन समुत्थानाभिधानमनुपयुक्तं स्यात्तस्य तु द्रष्टव्यत्वमुपयुज्यते इत्युपक्रममात्रं पूर्वपक्षः कृतः । भोक्त्रर्थत्वाच्च भोग्य-

आनन्दगिरीय—न्यायनिर्णयः ।

नघनो विज्ञानमात्रम् । तत्र जात्यन्तरासंमिश्रत्वमेवार्थः । स वै तेभ्यः कार्यकारणाकारपरिणतेभ्योऽविद्याभूतेभ्यः साम्येनोत्थाय जीवत्वमनुभूय तान्येव भूतानि ज्ञानाद्विनश्यन्त्यनु पश्चाद्विनश्यति विशेषात्मत्वं त्यजति न च तत्त्यागानन्तरमस्य रूपादिधीरस्तीत्यर्थः । ब्रह्मणो द्रष्टव्यत्वे तस्य जीवत्वेनोत्थानोक्तेरयोगात्तस्यैवात्र द्रष्टव्यतेति वाक्यार्थं संगृह्णाति—प्रकृतस्येति । ज्ञानकर्तृत्वोक्तेरुपक्रमादिवदुपसंहारस्यापि जीवपरत्वमाह—तथेति । जीवपक्षे कथमेकविज्ञानेन सर्वविज्ञानमित्याशंक्योपक्रमादिना तदौपचारिकमित्याह—तस्मादिति । भोक्तुर्भोग्यं प्रति प्राधान्यात्तज्ज्ञाने तद्धीरुपचरितेत्यर्थः । आदिमध्यावसानेभ्यो मैत्रेयीब्राह्मणस्य जीवेऽन्वयान्न ब्रह्मणि गतिसामान्यमित्येतदनूद्य सिद्धान्तमवतार्य बहिरेव प्रतिजानीते—एवमिति । जीवोपदेशस्य दर्शितत्वान्नियमासिद्धिरित्याह—कस्मादिति । नियामकं सूत्रमादायाक्षराणि व्याचष्टे—वाक्येति । आदिमध्यावसानेषु जीवे भाति ब्रह्म प्रतिवाक्यस्यान्वितावयवत्वं नेति शङ्कते—

वाक्यं हीदं पौर्वापर्येणाऽवेक्ष्यमाणं परमात्मानं प्रत्यन्वितावयवं लक्ष्यते ॥ कथमिति ॥ तदुपपाद्यते-"अमृतत्वस्य तु नाशास्ति वित्तेन" [ बृ० २ । ४ । २ ] इति याज्ञवल्क्याद्रुपश्रुत्य "येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहि" [ बृ० २ । ४ । ३ ] इत्यमृतत्वमाशासानायै मैत्रेय्यै याज्ञवल्क्य आत्मविज्ञानमुपदिशति ॥ न चान्यत्र परमात्मविज्ञानादमृतत्वमस्तीति श्रुतिस्मृतिवादा वदन्ति ॥ तथाऽऽत्मविज्ञानेन सर्वविज्ञानमुच्यमानं नान्यत्र परमकारणविज्ञानान्मुख्यमवकल्पते ॥ न चैतदौपचारिकमाश्रयितुं शक्यम् ॥ यत्कारणमात्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञायाऽनन्तरेण ग्रन्थेन तदेवोपपादयति-"ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद" [ बृ० २ । ४ । ६ ] इत्यादिना ॥ यो हि ब्रह्मक्षत्रादिकं जगदात्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावं पश्यति तं मिथ्यादर्शिनं तदेव मिथ्यादृष्टं ब्रह्मक्षत्रादिकं जगत्पराकरोतीति भेददृष्टिमपोद्य "इदꣳ सर्वं यदयमात्मा" [ बृ० २ । ४ । ६ ] इति सर्वस्य वस्तुजातस्याऽऽत्माऽव्यतिरेकमवतारयति ॥ दुन्दुभ्यादिदृष्टान्तैश्च तमेवाऽव्य-

रत्नप्रभा ।

नस्य समर्थनादौपचारिकत्वं न युक्तमित्याह-न चैतदौपचारिकमित्यादिना ॥ पराकरोति श्रेयोमार्गाद् भ्रंशयति । यथा दुन्दुभिशंखवीणाशब्दसामान्यग्रहणेनैव गृह्यमाणास्तदवान्तरविशेषाः शुक्तिग्रहणग्राह्यरजतवत् सामान्ये कल्पितास्ततो न भिद्यन्ते, एवमात्ममानभास्यं सर्वमात्ममात्रमिति निश्चितमित्याह-दुन्दुभ्यादीति ॥ एवमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मुख्यत्वाद्ब्रह्मनिश्चयः । सर्वस्रष्टृत्वलिङ्गा-

भामती ।-०

आनन्दगिरीय-न्यायनिर्णयः ।

कथमिति । जीवपरामर्शस्यान्यथासिद्धिं वक्ष्यमाणां विवक्षित्वाऽऽह-तदिति । वित्तेन तत्साध्येन कर्मणेत्यर्थः । कर्मसाधनं वित्तं न चेदिष्टं किं तर्हि तवेष्टं तदाह-यदेवेति । अमृतत्वसाधनत्वेनाऽऽत्मज्ञानस्योक्तेरात्मनो ज्ञातव्यस्य ब्रह्मतेत्यर्थः । अमृतत्वायोक्तमपि ज्ञानं जीवविषयं स्यादित्याशंक्याऽऽह-न चेति । ब्रह्मज्ञानं विना नामृतत्वमित्यत्र मानमाह-इति श्रुतीति । 'नान्यः पन्थाः' 'न कर्मणा' इत्यादयः श्रुतिवादाः 'ज्ञानादेव तु कैवल्यम्' इत्यादयः स्मृतिवादाः । इतश्च ब्रह्मपरमेव वाक्यमित्याह-तथेति । परस्य परमकारणत्वात्तज्ज्ञानाद्युक्तं सर्वज्ञानमिति विशिनष्टि-परमेति । भोक्त्रर्थत्वाद्भोग्यजातस्य सर्वविज्ञानं जीवेऽपि गौणं स्यात्किं मुख्येनेत्याशंक्य प्रतिपादनवैयर्थ्यान्मैवमित्याह-न चेति । भेददृष्टिनिन्दापूर्वकमभेदं वददिदं वाक्यमेकविज्ञानेन सर्वविज्ञानं वक्तीति वक्तुमस्यार्थमाह--यो हीति । जगतो ब्रह्माधीनस्य प्रातीतिकमन्यत्वमनुज्ञातुं स्वातन्त्र्येणेत्युक्तम् । पराकरोति पुरुषार्थात्पराकुर्यात्प्रच्यावयेदिति यावत् । किं चाऽऽत्मैव जगतस्तत्त्वमिति दृष्टान्तेन वदन्ती श्रुतिरेकधिया सर्वधियं साधयतीत्याह-दुन्दुभ्यादीति । यथा दुन्दुभेर्हन्यमानस्य यथा शंखस्य ध्मायमानस्य यथा वीणायै वाद्यमानायै न बाह्याञ्शब्दाञ्शक्नुयाद् ग्रहणायेत्यादिदृष्टान्तैर्दुन्दुभ्यादिशब्दसामान्याद्दुन्दुभ्यादिशब्दभेदामेदेनागृह्यमाणाः शुक्त्यग्रहे ग्राह्यरजतवत्तत्र कल्पितास्तथा चिद्रूपस्फुरणं विना स्थितिकाले स्फुरणशून्यं जगच्चिद्रूपे कल्पितमित्यैक्यमुक्तमित्यर्थः । एकविज्ञानेन सर्वविज्ञानस्योपपाद्यमानत्वात्तदनौपचारिकमिति प्रकरणं ब्रह्मविषयमित्युक्तम् । इदानीं द्रष्टव्यस्य

१ बृहदारण्यक ( २ । ४ । ५ ) श्रुतिरत्र कर्त्री । द्रष्टा अग्रिमोक्ताश्चात्रैव ।

तिरेकं द्रढयति ॥ "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः" [ बृ० २ । ४ । १० ] इत्यादिना च प्रकृतस्याऽऽत्मनो नामरूपकर्मप्रपञ्च-कारणतां व्याचक्षाणः परमात्मानमेवैनं गमयति ॥ तथैवैकाऽयनप्रक्रि-ययापि सविषयस्य सेन्द्रियस्य सान्तःकरणस्य प्रपञ्चस्यैकायनमनन्तरम-बाह्यं कृत्स्नं प्रज्ञानघनं व्याचक्षाणः परमात्मानमेवैनं गमयति ॥ तस्मा-त्परमात्मन एवायं दर्शनाद्युपदेश इति गम्यते ॥ १९ ॥ यत्पुनरुक्तं प्रिय-संसूचितोपक्रमाद्विज्ञानात्मन एवायं दर्शनाद्युपदेश इति ॥ अत्र ब्रूमः—

**प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः ॥ २० ॥**

अस्त्यत्र प्रतिज्ञा—"आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति" "इद९ सर्वं यदयमात्मा" [ बृ० २ । ४ । ५ ] [ ४ । ५७ ] इति च ॥ तस्याः प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिङ्गं, यत्प्रियसंसूचितस्यात्मनो द्रष्टव्य-त्वादिसंकीर्तनम् ॥ यदि हि विज्ञानात्मा परमात्मनोऽन्यस्स्यात्, ततः परमात्मविज्ञानेऽपि विज्ञानात्मा न विज्ञात इत्येकविज्ञानेन सर्वविज्ञानं यत्प्रतिज्ञातं, तद्धीयेत ॥ तस्मात्प्रतिज्ञासिद्ध्यर्थं विज्ञानात्मपरमात्म-नोरभेदांशेनोपक्रमणमित्याश्मरथ्य आचार्यो मन्यते ॥ २० ॥

---

रत्नप्रभा ।

दर्पीत्याह—अस्य महत इति ॥ ऋग्वेदादिकं—नाम इष्टं हुतमिति कर्म अयञ्च लोकः परश्च लोक इति रूपम् ॥ किञ्च "स यथा सर्वासामपां समुद्र एकाऽयनम्" [ बृ० २ । ४ । ११ ] इति खण्डिकया सर्वप्रपञ्चस्य मुख्यलयाधारत्वमात्मनो ब्रह्मत्वे लिङ्गमित्याह—तथैवैकायनेति ॥ १९ ॥ जीवब्रह्मणोर्भेदाभेदसत्त्वादभेदांशेनेदं जीवोपक्रमणं प्रतिज्ञासाधकमित्याश्मरथ्यमतम् ॥ २० ॥

भामती ।

जातस्येति । तदुपोद्बलनमात्रम् । सिद्धान्तस्तु निगदव्याख्यातेन भाष्येणोक्तः ॥ १९ ॥ तदेवं पौर्वा-पर्यालोचनया मैत्रेयीब्राह्मणस्य ब्रह्मदर्शनपरत्वे स्थिते मोक्त्रा जीवात्मनोपक्रममाचार्यदेशीयमतेन ताव-त्समाधत्ते सूत्रकारः—प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः । यथा हि वह्नेर्विकारा व्युच्चरन्तो विस्फुलिङ्गा न वह्नेरत्यन्तं भिद्यन्ते, तद्रूपनिरूपणत्वात्, नापि ततोऽत्यन्तमभिन्नाः, वह्नेरिव परस्परव्यावृत्त्यभावप्रसङ्गात्, तथा जीवात्मानोऽपि ब्रह्मविकारा न ब्रह्मणोऽत्यन्तं भिद्यन्ते, चिद्रूपत्वाभावप्रसङ्गात् । नाप्यत्यन्तं न भिद्यन्ते, परस्परं व्यावृत्त्यभावप्रसङ्गात्, सर्वज्ञं प्रत्युपदेशवैयर्थ्याच्च । तस्मात्कथंचिद्भेदो जीवात्मनामभेदश्च । तत्र तद्वि-ज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धये विज्ञानात्मपरमात्मनोरभेदमुपादाय परमात्मनि दर्शयितव्ये विज्ञानात्मनोपक्रम

आनन्दगिरीय-न्यायनिर्णयः ।

जगत्कारणत्वोक्तेरपि तद्वाक्यं ब्रह्मार्थमित्याह—अस्येति । किंच, 'स यथा सर्वासामपां समुद्र एकायनम्' इति दृष्टान्तेन ब्रह्मणः सर्वजगदवसानत्वेनाभिधानात्तद्विषयमेव द्रष्टव्यादिवाक्यमित्याह—तथेति । स्थित्यु-त्पत्तिलयोक्त्यालोचनातः सिद्धमुपसंहरति—तस्मादिति ॥ १९ ॥ उपक्रमसामर्थ्याज्जीवार्थत्वं वाक्य-स्योक्तमनुवदति—यदिति । तत्र सूत्रत्रयमवतारयति—अत्रेति । प्रथममाश्मरथ्यमतमाह—प्रतिज्ञेति । प्रति-ज्ञासिद्ध्यर्थं प्रतिज्ञामाह—अस्तीति । अत्रेति प्रकृतब्राह्मणवाक्योक्तिः । तदर्थं प्रतिज्ञान्तरमाह—इदमिति । ऐक्यप्रतिज्ञया सर्वविज्ञाने विवक्षितेऽपि जीवोपक्रमस्य किं जातं तदाह—तस्या इति । तदेव व्यतिरेकद्वारा स्पष्टयति—यदीति । 'प्रतिज्ञासिद्धेर्लिङ्गम्' इति व्याख्यायावशिष्टं व्याख्यास्यन्नुपसंहरति—तस्मादिति ।

## उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ २१ ॥

विज्ञानात्मन एव देहेन्द्रियमनोबुद्धिसंघातोपाधिसम्पर्कात्कलुषीभूतस्य ज्ञानध्यानादिसाधनानुष्ठानात्सम्प्रसन्नस्य देहादिसंघातादुत्क्रमिष्यतः परमात्मनैक्योपपत्तेरिदमभेदेनोपक्रमणमित्यौडुलोमिराचार्यो मन्यते । श्रुतिश्चैवं भवति-"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" [ छां० ८ । १२ । ३ ] इति ॥ क्वचिच्च जीवाश्रयमपि नामरूपं नदीनिदर्शनेन ज्ञापयति-"यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" [ मुण्ड० ३ । २ । ८ ] इति ॥ यथा लोके नद्यः स्वाश्रयमेव नामरूपं विहाय समुद्रमुपयन्ति, एवं जीवोऽपि स्वाश्रयमेव नामरूपं विहाय परं पुरुषमुपैतीति हि मंत्रार्थः प्रतीयते दृष्टान्तदार्ष्टान्तिकयोस्तुल्यतायै ॥ २१ ॥

## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनाऽवस्थानादुपपन्नमिदमभे-

रत्नप्रभा ।

उत्क्र०॥ सत्यसंसारदशायां भेद एव, मुक्तावेवाभेद इत्यौडुलोमिमतम् ॥ तत्र मानमाह-श्रुतिश्चेति ॥ समुत्थानम् उत्क्रान्तिः । ननु संसारस्यौपाधिकत्वात् सर्वदैवाभेद इत्याशंक्य दृष्टान्तबलेन संसारस्य स्वाभाविकत्वमित्याह-क्वचिच्चेति ॥ "यथा नद्यस्स्यन्दमानास्समुद्रेऽस्तं गच्छन्ति नामरूपेविहाय" [मुण्ड० ३।२।८ ] इति नदीनिदर्शनं व्याचष्टे-यथा लोक इति ॥ २१ ॥ सिद्धान्तमाह-अवस्थितेरिति ॥

भामती ।

इत्याश्मरथ्य आचार्यो मेने ॥ २० ॥ आचार्यदेशीयान्तरमतेन समाधत्ते-उत्क्रमिष्यत एवंभावादित्यौडुलोमिः । जीवो हि परमात्मनोऽत्यन्तं भिन्न एव सन् देहेन्द्रियमनोबुद्ध्युपधानसंपर्कात्सर्वदा कलुषः, तस्य च ज्ञानध्यानादिसाधनानुष्ठानात्संप्रसन्नस्य देहेन्द्रियादिसंघातादुत्क्रमिष्यतः परमात्मनैक्योपपत्तेरिदमभेदेनोदक्रमणम् । एतदुक्तं भवति-भविष्यन्तमभेदमुपादाय भेदकालेऽप्यभेद उक्तः । यथाहुः पाञ्चरात्रिकाः-'आ मुक्तेर्भेद एव स्याज्जीवस्य च परस्य च । मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः ॥' इति । अत्रैव श्रुतिमुपन्यस्यति-श्रुतिश्चैवमिति । पूर्वं देहेन्द्रियाद्युपाधिकृतं कलुषत्वमात्मन उक्तम् । संप्रति स्वाभाविकमेव जीवस्य नामरूपप्रपञ्चाश्रयत्वलक्षणं कालुष्यं पार्थिवानामणूनामिव श्यामत्वं केवलं पाकेनेव । ज्ञानध्यानादिना तदपनीय जीवः परात्परतरं पुरुषमुपैतीत्याह-क्वचिच्च जीवाश्रयमपीति । नदीनिदर्शनम् 'यथा सोम्येमा नद्यः' इति ॥ २१ ॥ तदेवमाचार्यदेशीयमतद्वयमुक्त्वात्रापरितुष्यन्नाचार्यमतमाह सूत्रकारः-अवस्थितेरिति काशकृत्स्नः । एतद्व्याचष्टे-अस्यैव परमात्मन इति । न जीव

आनन्दगिरीय-न्यायनिर्णयः ।

मेदाभेदवादद्योतनायाभेदांशेनेत्युक्तम् ॥ २० ॥ मतान्तरमाह-उत्क्रमिष्यत इति । विभजते-विज्ञानेति । मुक्तावेवाभेदः संसारे भेद एवेत्युक्तेऽर्थे मानमाह-श्रुतिश्चेति । अभिन्नस्यापि जीवस्यौपाधिकभेदविगमादभिनिष्पत्तिरौपचारिकीत्याशंक्य नामरूपाश्रयत्वकालुष्यस्य श्रुत्यन्तरे स्वाभाव्योक्तेः साध्य एवाभेदो न स्वभावत इत्याह-क्वचिदिति । उक्तं कालुष्यमपि किमित्यौपचारिकं न स्यादित्याशंक्य वाक्ये दृश्यमानमर्थमाह-यथेति । नदीनां नामरूपाश्रयत्वेऽपि कुतो जीवस्य तदाश्रयत्वं तत्राऽऽह-दृष्टान्तेति ॥ २१ ॥ सिद्धान्तमाह-अवस्थितेरिति । सूत्रं व्याचष्टे-अस्यैवेति । जीव-

देनोपक्रमणमिति काशकृत्स्न आचार्यो मन्यते । तथा च ब्राह्मणम्—"अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" [ छां० ६ । ३ । २ ] इत्येवञ्जातीयकं परस्यैवात्मनो जीवभावेनावस्थानं दर्शयति ॥ मन्त्रवर्णश्च—"सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते" [ तै० आ० ३ । १२ । ७ ] इत्येवञ्जातीयकः ॥ न च तेजःप्रभृतीनां सृष्टौ जीवस्य पृथक् सृष्टिः श्रुता । येन परस्मादात्मनोऽन्यस्तद्विकारो जीवः स्यात् ॥ काशकृत्स्नस्याचार्यस्याऽविकृतः परमेश्वरो जीवो नान्य इति मतम् ॥ आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतम् । तथापि प्रतिज्ञासिद्धेरिति स्वापेक्षत्वाभिधानात्कार्यकारणभावः कियानप्यभिप्रेत इति गम्यते ॥ औडुलोमिपक्षे

रत्नप्रभा ।

अत्यन्ताभेदज्ञापनार्थं जीवमुपक्रम्य द्रष्टव्यत्वादयो ब्रह्मधर्मा उक्ता इत्यर्थः । एतेन—जीवलिङ्गानां ब्रह्मपरत्वकथनार्थमिदमधिकरणं न भवति । प्रतर्दनाधिकरणे कथितत्वात् । नापि जीवानुवादेन ब्रह्मप्रतिपादनार्थम् । "सुषुप्त्युत्क्रान्त्योर्भेदेन" [ १ । ३ । ४२ ] इत्यत्र गतत्वात् । अतो व्यर्थमिदमधिकरणमिति निरस्तम् । जीवोद्देशेन ब्रह्मत्वप्रतिपादने भेदोऽप्यावश्यक इति भेदाभेदशङ्काप्राप्तौ कल्पितभेदेनोद्देश्यत्वादिकं, स्वतोऽत्यन्ताभेद इति ज्ञापनार्थमस्यारम्भात् । ज्ञायते चात्र लिङ्गमात्मशब्देनोपक्रान्तस्य जीवस्य धर्मिणो ब्रह्मणो धर्म्यन्तरस्य ग्रहणं विनैव ब्रह्मधर्मकथनम् । भेदाभेदयोस्तु धर्मिद्वयग्रहः स्यादिति मन्तव्यम् । धीरः सर्वज्ञः, सर्वाणि रूपाणि कार्याणि, विचित्य सृष्ट्वा, तेषां नामानि च कृत्वा तेषु बुद्ध्यादिषु प्रविश्याभिवदनादिकं कुर्वन् यो वर्तते, तं विद्वानिहैवामृतो भवतीति मन्त्रोऽपि जीवपरयोरैक्यं दर्शयतीत्याह—मन्त्रेति ॥ जीवस्य ब्रह्मविकारत्वान्नैक्यमित्यत आह—न च तेज इति ॥ मतत्रयं विभज्य दर्शयति—काशकृत्स्नस्येत्यादिना ॥ कियानपीति । अभेदवद्भेदोऽपीत्यर्थः । तत्रान्त्यस्य मतस्यो-

भामती ।

आत्मनोऽन्यः । नापि तद्विकारः, किंत्वात्मैवाविद्योपाधानकल्पितावच्छेदः । आकाश इव घटमणिकादिकल्पितावच्छेदो घटाकाशो मणिकाकाशो न तु परमाकाशादन्यस्तद्विकारो वा । ततश्च जीवात्मनोपक्रमः परमात्मनैवोपक्रमस्तस्य ततोऽभेदात् । स्थूलदर्शिलोकप्रतीतिसौकर्यायौपाधिकेनात्मरूपेणोपक्रमः कृतः । अत्रैव श्रुतिं प्रमाणयति—तथा चेति । अथ विकारः परमात्मनो जीवः कस्मान्न भवत्याकाशादिवदित्याह—न च तेजःप्रभृतीनामिति । न हि यथा तेजःप्रभृतीनामात्मविकारत्वं श्रूयते, एवं जीवस्येति । आचार्यत्रयमतं विभजते—काशकृत्स्नस्याचार्यस्येति । आत्यन्तिके सत्यभेदे कार्यकारणभावाभावादनात्यन्ति-

आनन्दगिरीय—न्यायनिर्णयः ।

परयोरभेदाज्जीवेनोपक्रमः परेणैवोपक्रमो भोक्त्रोपक्रमश्च स्थूलदर्शिलोकसौकर्यायेति भावः । परस्यैव जीवेनावस्थाने मानमाह—तथा चेति । न केवलं ब्राह्मणं परापरयोरैक्यं दर्शयति, किंतु मन्त्रश्चेत्याह—मन्त्रेति । धीरः सर्वज्ञः सर्वाणि रूपाणि चराचराणि शरीराणि विचित्य निर्माय तेषां नामानि च कृत्वा स्वयं तत्रानुप्रविश्याभिवदनादि कुर्वन्यो वर्तते तमेवंभूतं विद्वानिहैवामृतो भवतीति मन्त्रोऽपि परस्यैव जीवेन स्थितिमाहेत्यर्थः । तेजःप्रभृतीनामिव जीवस्य ब्रह्मकार्यत्वाद्ब्रह्मज्ञाने सर्वज्ञानसिद्धेरात्यन्तिकमैक्यं श्रुतमप्ययुक्तमित्याशंक्याऽऽह—न चेति । समीचीनसंग्रहार्थं पक्षत्रयं विभजते—काशेति । आश्मरथ्यपक्षेऽपि तुल्यं जीवस्य परस्मादनन्यत्वं नेत्याह—आश्मरथ्यस्येति । अभेदवद्भेदस्यापि भावात्कियानपीत्युक्तम् । आद्यपक्षादपि द्वितीयपक्षस्यानपेक्षितत्वार्थं तत्रत्यमर्थमाह—औडुलोमीति । अवस्थान्तरे बन्धमोक्षौ ।

१ पर एवेश्वर इति पाठान्तरम् । २ प्रथमाध्याये प्रथमे पादेऽन्तिमेधिकरणे इन्द्रप्राणाधिकरणापरनाम्नि
( २८–३८ सूत्रैः ) ३ तमेवं विद्वानमृत इह भवतीति पा० ।

**पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्येते ॥ तत्र काशकृत्स्नीयं मतं श्रुत्यनुसारीति गम्यते । प्रतिपिपादयिषितार्थानुसारात्-"तत्त्वमसि" [ छां० ६ । ८ । ७-१६ ] इत्यादिश्रुतिभ्यः ॥ एवं च सति तज्ज्ञानादमृतत्वमवकल्पते ॥ विकारात्मकत्वे हि जीवस्याभ्युपगम्यमाने विकारस्य प्रकृतिसम्बन्धे प्रलयप्रसङ्गान्न तज्ज्ञानादमृतत्वमवकल्पेत ॥ अतश्च स्वाश्रयस्य नामरूपस्यासम्भवादुपाध्याश्रयनामरूपं जीव उपचर्यते ॥ अत एवोत्पत्तिरपि जीवस्य क्वचिदग्निविस्फुलिङ्गोदाहरणेन श्राव्यमाणोपाध्याश्रयैव वेदितव्या ॥**

---

रत्नप्रभा।

पादेयत्वमाह-**तत्र काशकृत्स्नीयमिति** ॥ सोऽयं देवदत्त इतिवत्तत्त्वमस्यादिवाक्येभ्यः परापरयोरत्यन्ताभेदः प्रतिपादयितुमिष्टोऽर्थः, तदनुसारित्वादित्यर्थः । ज्ञानान्मुक्तिश्रुत्यन्यथानुपपत्त्याप्ययमेव पक्ष आदेय इत्याह-**एवञ्चेति** ॥ अत्यन्ताभेदे सतीत्यर्थः । कल्पितस्य भेदस्य ज्ञानान्निवृत्तिः सम्भवति, न सत्यस्येत्यपि द्रष्टव्यम् । **यदुक्तम्**-नदीदृष्टान्तात् संसारः स्वाभाविक इति, तन्नेत्याह-**अतश्चेति** ॥ अनामरूपब्रह्मत्वाज्जीवस्येत्यर्थः । उत्पत्तिश्रुत्या जीवस्य ब्रह्मणा भेदाभेदावित्यत आह-**अत एवेति** ॥ उत्पत्तेः स्वाभाविकत्वे मुक्त्ययोगादेवेत्यर्थः । अत्र **पूर्वपक्षे** बीजत्रयमुक्तं-जीवेनोपक्रमः, परस्यैव समुत्थानश्रुत्या जीवाभेदाभिधानं, विज्ञातृशब्दश्चेति । **तत्र आद्यं बीजं** त्रिसूत्र्या **निरस्तम्** । सम्प्रति

भामती ।

कोऽभेद आस्थेयः, तथा च कथंचिद्भेदोऽपीति तमास्थाय कार्यकारणभाव इति मतत्रयमुक्त्वा काशकृत्स्नीयमतं साधुत्वेन निर्धारयति-**तत्र** तेषु मध्ये **काशकृत्स्नीयं मतमिति** । आत्यन्तिके हि जीवपरमात्मनोरभेदे तात्त्विकेऽनाद्यविद्योपाधिकल्पितो भेदस्तत्त्वमसीति जीवात्मनो ब्रह्मभावतत्त्वोपदेशश्रवणमनननिदिध्यासनप्रकर्षपर्यन्तजन्मना साक्षात्कारेण विद्यया शक्यः समूलकाषं कषितुं, रज्ज्वामहिविभ्रम इव रज्जुतत्त्वसाक्षात्कारेण, राजपुत्रस्येव च म्लेच्छकुले वर्धमानस्यात्मनि समारोपितो म्लेच्छभावो राजपुत्रोऽसीति आप्तोपदेशेन । न तु मृद्विकारः शरावादिः शतशोऽपि मृन्मृदिति चिन्त्यमानस्तज्जन्मना मृद्भावसाक्षात्कारेण शक्यो निवर्तयितुं, तत्कस्य हेतोः, तस्यापि मृदो भिन्नाभिन्नस्य तात्त्विकत्वात्, वस्तुनस्तु ज्ञानेनोच्छेत्तुमशक्यत्वात्, सोऽयं प्रतिपिपादयिषितार्थानुसारः । अपि च जीवस्यात्मविकारत्वे तस्य ज्ञानध्यानादिसाधनानुष्ठानात् स्वप्रकृतावप्यये सति नामृतत्वस्याशास्तीत्यपुरुषार्थत्वममृतत्वप्राप्तिश्रुतिविरोधश्च । काशकृत्स्नमते त्वेतदुभयं नास्तीत्याह-**एवं च सतीति** । ननु यदि जीवो न विकारः किंतु ब्रह्मैव कथं तर्हि तस्मिन्नामरूपाश्रयत्वश्रुतिः, कथं च 'यथाग्नेः क्षुद्रा विस्फुलिङ्गाः' इति ब्रह्मविकारश्रुतिरित्याशंकामुपसंहारव्याजेन निराकरोति—**अतश्च स्वाश्रयस्येति** । यतः प्रतिपिपादयिषितार्थानुसार-

आनन्दगिरीय-न्यायनिर्णयः ।

संप्रत्यन्तिमस्याऽऽदेयत्वमाह-**तत्रेति** । इतरस्यापि द्वयस्य दर्शितं श्रुतिमूलत्वमित्याशंक्योक्तश्रुतेस्तत्रातात्पर्यान्मैवमित्याह-**प्रतीति** । पारोक्ष्यसद्वयत्वनिवृत्त्या तत्त्वमर्थयोरैक्यवादिवाक्यानुसारित्वादन्तिमस्याऽऽदेयतेत्यर्थः । कथमीदृग्वाक्यार्थस्येष्टत्वं तत्राऽऽह-**तत्त्वमिति** । किंच भेदाभेदयोर्वस्तुत्वे वस्तुभूतभेदस्य ज्ञानेनानुच्छेदाज्ज्ञानान्मुक्तिश्रुतिरयुक्ता स्यात्तस्मादात्यन्तिकमैक्यमेव तात्त्विकमित्याह-**एवं चेति** । चकारोऽवधारणे । जीवस्य ब्रह्मकार्यत्वेऽपि तत्तादात्म्यरूपममृतत्वं स्यादित्याशंक्याऽऽह-**विकारेति** । जीवस्योत्पत्तिप्रलयौ चेत्काण्डद्वयं विरुध्येतेति भावः । नदीदृष्टान्तेन स्वगतं नामरूपमन्यथा दृष्टान्तवैषम्यादतोऽन्यत्वमपीत्युक्तमित्याशंक्याऽऽह-**अतश्चेति** । आत्यन्तिकाभेदे ज्ञानादमृतत्वयोगादित्यतःशब्दार्थः । दृष्टान्तश्रुतेरन्यथाऽपि नेतुं शक्यत्वात्तदनुरोधात्तत्त्वमादिविरुद्धं न कल्प्यमिति भावः । जीवस्याग्निविस्फुलिङ्गदृष्टान्तात्प्राणादिवज्जन्मश्रुत्या भेदाभेदपक्षस्य प्रामाणिकत्वं तत्राऽऽह-**अत इति** । अनौपाधिके जन्मनि

यदप्युक्तं प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यस्समुत्थानं विज्ञानात्मभावेन दर्शयन्विज्ञानात्मन एवेदं द्रष्टव्यत्वं दर्शयतीति ॥ तत्रापीयमेव त्रिसूत्री योजयितव्या—"प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः" [ १ । ४ । २० ] इदमत्र प्रतिज्ञातम्—"आत्मनि विदिते सर्वमिदं विदितं भवति इद९ सर्वं यदयमात्मा" [ बृ० २।४।५ ] [ ४।५।७ ] इति च ॥ उपपादितं च सर्वस्य नामरूपकर्मप्रपञ्चस्य । एकप्रसवत्वादेकप्रलयत्वाच्च ॥ दुन्दुभ्यादिदृष्टान्तैश्च । कार्यकारणयोरव्यतिरेकप्रतिपादनात् ॥ तस्या एव प्रतिज्ञायास्सिद्धिं सूचयत्येतल्लिङ्गं—यन्महतो भूतस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन कथितमित्याश्मरथ्य आचार्यो मन्यते ॥ अभेदे हि सत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातमवकल्पत इति ॥ "उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः" [ व्या० १।४।२१] उत्क्रमिष्यतो विज्ञानात्मनो ज्ञानध्यानादिसामर्थ्यात्सम्प्रसन्नस्य परेणात्मनैक्यसम्भवादिदमभेदाभिधानमित्यौडुलोमिराचार्यो मन्यते ॥ "अवस्थितेरिति काशकृत्स्नः" [व्या० १। ४ । २२ ] अस्यैव परमात्मनोऽनेनापि विज्ञानाऽऽत्मभावेनाऽवस्थानादुपपन्नमिदमभेदाभिधानमिति काशकृत्स्न आचार्यो मन्यते । ननूच्छेदाभिधानमेतद्—"एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यति न

रत्नप्रभा ।

द्वितीयम् अनूद्य तयैव निराचष्टे—यदप्युक्तमित्यादिना ॥ आत्मज्ञानात् सर्वज्ञानं यत्प्रतिज्ञातं, तत्र हेतुः "इदं सर्वं यदयमात्मा" [ बृ० २ । ४ । ६ ] इत्यव्यतिरेक उक्तः । तस्य प्रतिपादनात्तदेव प्रतिज्ञातमुपपादितमिति योजना । एकस्मात् प्रसवो यस्य, एकस्मिन् प्रलयो यस्य, तद्भावादित्यर्थः । समुत्थानम् अभेदाभिधानमिति यावत् । जन्मनाशाबुक्तौ नाभेद इत्याक्षिप्य परिहरति—नन्वित्यादिना ॥

भामती ।

श्चामृतत्वप्रासिश्च विकारपक्षे न संभवतः, अतश्चेति योजना । द्वितीयपूर्वपक्षबीजमनयैव त्रिसूत्र्यापाकरोति—यदप्युक्तमिति । शेषमतिरोहितार्थं व्याख्यातार्थं च । तृतीयपूर्वपक्षबीजनिरासे काशकृत्स्नीयेनैवेत्यवधारणं तन्मताश्रयणेनैव तस्य शक्यनिरासत्वात् । ऐकान्तिके ह्यद्वैते आत्मनोऽन्यकर्मकरणे 'केन

आनन्दगिरीय—न्यायनिर्णयः ।

ज्ञानादमृतत्वासिद्धेश्चेत्यर्थः । द्वितीयं पूर्वपक्षबीजमनुभाषते—यदपीति । प्रकृतत्रिसूत्र्या प्रत्याह—तत्रापीति । योजनाप्रकारमेव दर्शयितुमाश्मरथ्यमतमाह—प्रतिज्ञेति।तद्व्याख्यातुं प्रतिज्ञास्वरूपमाह—इदमिति। आत्मनि विदिते विदितत्वं कथं प्रपञ्चे स्यादिति संदिहानं प्रत्याह—इदं सर्वमिति । सर्वस्याऽऽत्ममात्रत्वमुक्तमपि कुतो मुख्यमित्याशंक्याऽऽह—उपपादितं चेति । सर्वस्याऽऽत्ममात्रत्वमिति शेषः । उपपादनप्रकारं सूचयति—एकेति । 'स यथाऽऽर्द्रैधोग्नेः' इत्यादिनैकप्रसवत्वं 'स यथा सर्वासामपाम्' इत्यादिना चैकप्रलयत्वं सर्वस्योक्तम् । यच्च यस्मादुत्पद्यते यत्र च लीयते तत्ततो नातिरिच्यते यथा घटादि मृदादेस्तस्मादात्मप्रभवत्वादात्मप्रलयत्वाच्च सर्वस्य जगतस्तन्मात्रत्वं तथा चाऽऽत्मधिया सर्वधीरित्यर्थः । दृष्टान्तश्रुतेरपि सर्वस्य कार्यप्रपञ्चस्याऽऽत्ममात्रत्वसिद्धेर्मुख्यमेव प्रतिज्ञातमैक्यमित्याह—दुन्दुभ्यादीति । प्रतिज्ञां व्याख्यायावशिष्टं व्याचष्टे—तस्या इति । प्रतिज्ञां घटयितुं परस्य जीवत्वेनोत्थानं किमित्युच्यते तत्राऽऽह—अभेदे हीति । मतान्तरमाह—उत्क्रमिष्यत इति । सिद्धान्तमाह—अवस्थितेरिति । परापरयोरभेदाभिधानमिदमित्युक्तमाक्षिपति—नन्विति । विनाशोक्तेर्विपर्यान्तरसंभवादात्मन उच्छेदाविषयत्वा-

प्रेत्य संज्ञास्ति" [ बृ० २ । ४ । १२ ] इति कथमेतदभेदाभिधानम् ॥ नैष दोषः ॥ विशेषविज्ञानविनाशाभिप्रायमेतद्विनाशाभिधानम् । नात्मोच्छेदाभिप्रायम् ॥ "अत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्ति" [ बृ० २ । ४ । १२ ] इति पर्यनुयुज्य स्वयमेव श्रुत्याऽर्थान्तरस्य दर्शितत्वात् ॥ "न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति" [ बृ० ४ । ५ । १४ ] इति ॥ एतदुक्तं भवति॥ कूटस्थनित्य एवायं विज्ञानघन आत्मा नास्योच्छेदप्रसङ्गोऽस्ति॥ मात्राभिस्त्वस्य भूतेन्द्रियलक्षणाभिरविद्याकृताभिरसंसर्गो विद्यया भवति ॥ संसर्गाभावे च तत्कृतस्य विशेषविज्ञानस्याभावात् "न प्रेत्य संज्ञास्ति" [ बृ० २ । ४ । १२ ] इत्युक्तमिति ॥ यदप्युक्तं "विज्ञातारमरे केन विजानीयात्" [ बृ० २ । ४ । १४ ] इति कर्तृवचनेन शब्देनोपसंहाराद्विज्ञानात्मन एवेदं द्रष्टव्यत्वमिति ॥ तदपि काशकृत्स्नीयेनैव दर्शनेन परिहरणीयम् ॥ अपि च "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" [ बृ० २ । ४ । १४ ] इत्यारभ्याविद्याविषये तस्यैव दर्शनादिलक्षणं विशेषविज्ञानं प्रपञ्च्य "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येद्" [ बृ० ४ । ५ । १५ ] इत्यादिना विद्याविषये तस्यैव दर्शनादि-

---

रत्नप्रभा ।

मृतस्य संज्ञा नास्तीति वाक्येऽत्रैव मां मोहितवानसि ज्ञानरूपस्यात्मनो ज्ञानाभावे नाशप्रसङ्गादिति मैत्रेय्योक्तो मुनिराह—न वा अरे इति ॥ मोहं मोहकरवाक्यम् । अविनाशी नाशहेतुशून्यः । अत उच्छित्तिधर्मा नाशवान्न भवतीति अनुच्छित्तिधर्मा इत्यर्थः । तृतीयं बीजं तृतीयेन मतेनैव निरसनीयमित्याह—यदपीत्यादिना ॥ आद्यमतद्वये सत्यभेदांगीकारात् केनेत्याक्षेपो न युक्तः । काशकृत्स्नस्य मते त्वत्यन्ताभेदाद्विज्ञानस्य कारकाभावात् स युक्त इति श्रुत्यनुसारित्वात्तन्मते मनःकल्पितं विज्ञातृत्वं मुक्ते ब्रह्मात्मनि भूतपूर्वगत्योक्तमिति परिहरणीयमित्यर्थः । किञ्च पूर्वापरपर्यालोचनया वाक्यस्य मुक्तात्मपरत्वावगमाद्विज्ञातृत्वं कल्पितमेवानूद्यते इति न तल्लिंगेन जीवपरत्वमित्याह—अपि चेति ॥ आर्षेषु पक्षेषु

भामती ।

कं पश्येत्' इति आत्मनश्च कर्मत्वं 'विज्ञातारमरे केन विजानीयात्' इति शक्यं निषेद्धुम् । भेदाभेदपक्षे वैकान्तिके वा भेदे सर्वमेतदद्वैताश्रयमशक्यमित्यवधारणस्यार्थः । न केवलं काशकृत्स्नीयदर्शनाश्रयणेन भूतपूर्वगत्या विज्ञातृत्वमपि तु श्रुतिपौर्वापर्यपर्यालोचनयाप्येवमेवेत्याह—अपि च यत्र हीति । कस्मात्

आनन्दगिरीय-न्यायनिर्णयः ।

युक्तमभेदाभिधानमित्याह—नेति । अविशेषश्रुतेर्विशेषार्थत्वे नियामकमाह—अत्रेति । मोहं मोहनं वाक्यमिति यावत् । अविनाशीति विनाशायोग्यत्वमनुच्छित्तिधर्मेति विनाशायोगित्वमुक्तमिति भेदः । कथं तर्हि 'न प्रेत्य' इत्यादि तत्राऽऽह—मात्रेति । कथमेतावता मिथोविरोधसमाधिरित्याशंक्य श्रुतितात्पर्यमाह—एतदिति । तृतीयं पूर्वपक्षबीजमनुवदति—यदपीति । उपसंहारात्कर्तृत्वस्य च विज्ञानात्मन्येव संभवादिति शेषः । भेदाभेदवादे जीवस्येश्वरेण भिन्नेनावगतियोगात् 'विज्ञातारमरे केन' इत्याक्षेपायोगादत्यन्ताभेदे कर्मकरणयोरभावादाक्षेपसिद्धेरन्तिमपक्षस्यैवाऽऽदेयत्वमित्युत्तरमाह—तदपीति । तन्मते जीवपरयोरभेदाजीवस्य भ्रान्तं ज्ञातृत्वं भूतपूर्वगत्या तृजन्तेनोक्तमिति भावः । श्रुतिपौर्वापर्यालोचनायामपि जीवस्य भ्रान्तं ज्ञातृत्वमित्याह—अपि चेति । अन्वयव्यतिरेकाभ्यां द्वैतदृष्टेराविद्यत्वेऽपि प्रत्यग्दृष्टिरविद्यानपेक्षेत्या-

लक्षणस्य विशेषविज्ञानस्याभावमभिदधाति ॥ पुनश्च विषयाभावेऽप्यात्मानं विजानीयादित्याशङ्क्य "विज्ञातारमरे केन विजानीयाद्" [ बृ० ४ । ५ । १५ ] इत्याह ॥ ततश्च विशेषविज्ञानाभावोपपादनपरत्वाद्वाक्यस्य विज्ञानधातुरेव केवलस्सन् भूतपूर्वगत्या कर्तृवचनेन त्र्यृचा निर्दिष्ट इति गम्यते ॥ दर्शितं तु पुरस्तात्काशकृत्स्नीयस्य पक्षस्य श्रुतिमत्त्वम् ॥ अतश्च विज्ञानात्मपरमात्मनोरविद्याप्रत्युपस्थापितनामरूपरचितदेहाद्युपाधिनिमित्तो भेदो, न पारमार्थिक इत्येषोऽर्थस्सर्वैर्वेदान्तवादिभिरभ्युपगन्तव्यः ॥ "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"[छां० ६ । २ । १ ] "आत्मैवेदꣳ सर्वम्"[ छां० ७ । २५ । ३ ] "ब्रह्मैवेदꣳ सर्वम्" [ मु० २ । २ । ११ ] "इदꣳसर्वं यदयमात्मा"[ बृ० २ । ४ । ६ ] "नान्योऽतोऽस्ति द्रष्टा" [ बृ० ३ । ७ । २३ ] "नान्यतोऽस्ति द्रष्टृ" [ बृ०३।८।११ ] इत्येवंरूपाभ्यश्श्रुतिभ्यः स्मृतिभ्यश्च–"वासुदेवः सर्वमिति" [ भ० गी० ७ । १९ ] "क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत"[ भ०गी० १३ । २ ] "समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्" [ भ० गी० १३ । २७ ] इत्येवंरूपाभ्यः ॥ भेददर्शनापवादाच्च–"अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः" [ बृ० १ ।४।१० ] "मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" [ बृ० ४ । ४ । १९ ] इत्येवंजातीयकात् । "स वा एष महा-

---

रत्नप्रभा ।

काशकृत्स्नपक्षस्यैवाऽऽदेयत्वे किं बीजं, तदाह–**दर्शितमिति** ॥ **अतश्च**, श्रुतिमत्त्वाच्च । पुनरपि श्रुतिस्मृतिमत्त्वमाह–**सदेवेत्यादिना** ॥ हेतूनां भेदो न पारमार्थिक इति प्रतिज्ञया **सम्बन्धः** । भेदाभेदपक्षे जीवस्य जन्मादिविकारवत्त्वात्तन्निषेधो न स्यादित्याह–**स वा एष इति** ॥ भेदस्य सत्यत्वे तत्प्रमया

भामती ।

पुनः काशकृत्स्नस्य मतमास्थीयते नेतरेषामाचार्याणामित्यत आह–**दर्शितं तु पुरस्तादिति** । काशकृत्स्नीयस्य मतस्य श्रुतिप्रबन्धोपन्यासेन पुनः श्रुतिमत्त्वं स्मृतिमत्त्वं च उपसंहारोपक्रममाह–**अतश्चेति** । क्वचित्पाठ आतश्चेति । तस्मादवश्यं चेत्यर्थः । जननजरामरणभीतयो विक्रियास्तासां 'महानजः' इत्यादिना प्रतिषेधः । परिणामपक्षेऽन्यस्य चान्यभावपक्षे ऐकान्तिकाद्वैतप्रतिपादनपराः सर्वासां 'एकमेवाद्वितीयम्' इत्यादयः, द्वैतदर्शननिन्दापराश्च 'अन्योऽसावन्योऽहमस्मि' इत्यादयः, जन्मजरादिविक्रियाप्रतिषेधपराश्च 'एष महानजः' इत्यादयः श्रुतय उपरुध्येरन् । अपि च यदि जीवपरमात्मनोर्भेदाभेदावास्थीयेयातां ततस्तयोर्मिथो विरोधात्समुच्चयाभावादेकस्य बलीयस्त्वेनात्मनि निरपवादं विज्ञानं जायेत, बलीयसैकेन दुर्बलपक्षावलम्बिनो ज्ञानस्य बाधनात् । अथ त्वगृह्यमाणविशेषतया न बलाबलावधारणं, ततः संशये सति

आनन्दगिरीय–न्यायनिर्णयः ।

शंक्याऽऽह–**पुनश्चेति** । एकस्यैव कर्मकर्तृत्वविरोधादित्यर्थः । विज्ञातारमित्यादिवाक्यस्यान्यपरत्वे फलितमाह–**ततश्चेति** । ननु पक्षेषु त्रिषु सत्सु काशकृत्स्नस्यैव पक्षे पक्षपाते को हेतुस्तत्राऽऽह–**दर्शितं त्विति** । तस्य श्रुतिमत्त्वे फलितमुपसंहरति–**अतश्चेति** । उक्तार्थस्योपगन्तव्यत्वे श्रुतिस्मृतिमत्त्वं पुनरुपन्यस्यति–**सदित्यादिना** । इतोऽपि परापरयोराविद्यो भेदो न पारमार्थिक इत्याह–**भेदेति** । भेदाभेदवादेऽपि सर्वमेतदभेदांशाद्युक्तमित्याशंक्य तत्पक्षे जीवस्य कार्यत्वादात्मविक्रियानिषेधविरोधः स्यादित्याह–**स वा इति** । अभेदांशेन निषेधादिसिद्धेरेतदपि मतद्वयं श्रुतिमदेवेत्याशंक्य तत्पक्षे वैदिकात्मैक्य-

---

१ पक्षस्यैवेति पाठान्तरम् ।

**नज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म" [ बृ० ४ । ४ । २५ ] इति चात्मनि सर्वविक्रियाप्रतिषेधात् । अन्यथा च मुमुक्षूणां निरपवादविज्ञानानुपपत्तेः । सुनिश्चितार्थत्वानुपपत्तेश्च । निरपवादं हि विज्ञानं सर्वाकाङ्क्षानिवर्तकमात्मविषयमिष्यते—" वेदान्तविज्ञानसुनिश्चितार्थाः " [ मुण्ड० ३ । २ । ६ ] इति च श्रुतेः । "तत्र को मोहः कश्शोक एकत्वमनुपश्यतः" [ ईशा० ७ ] इति च । स्थितप्रज्ञलक्षणस्मृतेश्च । स्थिते च क्षेत्रज्ञपरमात्मैकत्वविषये सम्यग्दर्शने क्षेत्रज्ञः परमात्मेति नाममात्रभेदात्**

रत्नप्रभा ।

बाधादहं ब्रह्मेति निर्बाधं ज्ञानं न स्यादित्याह—**अन्यथा चेति** ॥ अभेदस्यापि सत्त्वात् प्रमेत्याशंक्य भेदाभेदयोर्विरोधात् संशयः स्यादित्याह—**सुनिश्चितेति** ॥ मास्तु निर्बाधज्ञानमित्यत आह—**निरपवादमिति** ॥ "अहं ब्रह्म" इत्यबाधितनिश्चयस्यैव शोकादिनिवर्तकत्वमित्यत्र स्मृतिमप्याह—**स्थितेति** ॥ आत्यन्तिकैकत्वे हि प्रज्ञा प्रतिष्ठिता भवति, न भेदाभेदयोरिति भावः । **ननु** जीवपरमात्मानौ, स्वतो भिन्नौ, अपर्यायनामवत्त्वात्, स्तम्भकुम्भवदित्यत आह—**स्थिते चेति** ॥ कथं तर्ह्वि-

भामती ।

न सुनिश्चितार्थमात्मनि ज्ञानं भवेत् । सुनिश्चितार्थं च ज्ञानं मोक्षोपायः श्रूयते—'वेदान्तविज्ञानसुनिश्चितार्थाः' इति । तदेतदाह—**अन्यथा मुमुक्षूणामिति** । 'एकत्वमनुपश्यतः' इति श्रुतिर्न पुनरेकत्वानेकत्वे अनुपश्यत इति । ननु यदि क्षेत्रज्ञपरमात्मनोरभेदो भाविकः । कथं तर्हि व्यपदेशबुद्धिभेदौ क्षेत्रज्ञः परमात्मेति । कथं च नित्यशुद्धबुद्धमुक्तस्वभावस्य भगवतः संसारिता । अविद्याकृतनामरूपोपाधिवशादिति चेत् । कस्येयमविद्या । न तावज्जीवस्य, तस्य परमात्मनो व्यतिरेकाभावात् । नापि परमात्मनः, तस्य विद्यैकरसस्याविद्याश्रयत्वानुपपत्तेः । तदत्र संसारित्वासंसारित्वविद्याविद्यावत्त्वरूपविरुद्धधर्मसंसर्गाद्बुद्धिव्यपदेशभेदाच्चास्ति जीवेश्वरयोर्भेदोऽपि भाविक इत्यत आह—**स्थिते च परमात्मक्षेत्रज्ञात्मैकत्वेति** । न तावद्भेदाभेदावेकत्र भाविकौ भवितुमर्हत इति विप्रपञ्चितं प्रथमे पादे । द्वैतदर्शननिन्दया चैकान्तिकाद्वैतप्रतिपादनपराः पौर्वापर्यालोचनया सर्वे वेदान्ताः प्रतीयन्ते । तत्र यथा बिम्बादवदातात्तात्त्विके प्रतिबिम्बानाममेदेऽपि नीलमणिकृपाणकाचाद्युपधानभेदात्काल्पनिको जीवानां भेदो बुद्धिव्यपदेशभेदौ वर्तयति, इदं बिम्बमवदातमिमानि च प्रतिबिम्बानि नीलोत्पलपलाशश्यामलानि वृत्तदीर्घादिभेदभाञ्जि बहूनीति, एवं परमात्मनः शुद्धस्वभावाज्जीवानामभेद ऐकान्तिकेऽप्यनिर्वचनीयानाद्यविद्योपधानभेदात्काल्पनिको जीवानां

आनन्दगिरीय-न्यायनिर्णयः ।

धियो निरपवादत्वायोगान्मुक्तेरसिद्धिरित्याह—**अन्यथेति** । भिन्नाभिन्नत्वमिति निश्चितार्था धीरनपवादेत्याशंक्य भेदाभेदयोर्विरोधादसमुच्चयादेकस्य बलीयस्त्वे तदितरज्ञानस्य बाधात्तुल्यबलत्वे संशयान्निरपवादत्वासिद्धिरित्याह—**सुनिश्चितेति** । ज्ञानं सिध्यति चेत्तावतैव पुमर्थसिद्धौ कृतं निरपवादत्वेनेत्याशंक्याऽऽह—**निरपवादं हीति** । न केवलमङ्गीकारमात्रं श्रुत्यनुकूलं चैतदित्याह—**वेदान्तेति** । ये यतयो यतनशीला नियतबाह्यकरणाः शुद्धबुद्धयश्च ते विषयवैतृष्ण्यद्वारा सर्वकर्मसंन्यासपूर्वकश्रवणाद्यनुष्ठानरूपाद्योगाभ्यासाद्वेदान्तकरणकसाक्षात्कारादपरोक्षीकृतात्मानो मुच्यन्त इत्यर्थः । इतश्चैकमेव तत्त्वं नानेकमपीत्याह—**तत्रेति** । एकत्वमाचार्योपदेशमनुपश्यतः शोकमोहोपलक्षितसर्वानर्थोपशान्तिरिति श्रूयते न त्वेकत्वनानात्वे अनुपश्यत इति श्रुतिरित्यर्थः । निरपवादमेवाऽऽत्मापरोक्ष्यं मोक्षापेक्षमित्यत्र स्मृतिमाह—**स्थितेति** । न हि भेदाभेदवादे स्मृतिसिद्धा स्थितप्रज्ञता ब्रह्मैवास्मीति ज्ञानस्थैर्यायोगादब्रह्मत्वस्यापि तद्विषयत्वात्तस्मादेकत्वमैकान्तिकमित्यर्थः । अस्तु तर्हि परापरयोर्नामभेदादविद्यावत्त्वतदभावाभ्यां रूपभेदाच्च घटपटादिवद्भेदभावः संसारावस्थायामिति नेत्याह—**स्थिते चेति** । आत्यन्तिकभेदे जीवस्य पूर्वसिद्धब्रह्मत्वायोगात्को-

क्षेत्रज्ञोऽयं परमात्मनो भिन्नः परमात्मायं क्षेत्रज्ञाद्भिन्न इत्येवञ्जातीयक आत्मभेदविषयोऽयं निर्बन्धो निरर्थकः ॥ एको ह्ययमात्मा नाममात्रभेदेन बहुधाऽभिधीयत इति ॥ न हि "सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायाम्" [तै० उ० २।१।१] इति काञ्चिदेवैकां गुहामधिकृत्यैतदुक्तम् ॥ न च ब्रह्मणोऽन्यो गुहायां निहितोऽस्ति–"तत्सृष्ट्वा तदेवानुप्राविशद्" [तै० २।६] इति स्रष्टुरेव प्रवेशश्रवणात् ॥ ये तु निर्बन्धं कुर्वन्ति, ते वेदान्तार्थं बाधमानाश्श्रेयोद्वारं सम्यग्दर्शनमेव बाधन्ते,

रत्नप्रभा ।

पर्यायनामभेद इत्याशंक्य जीवत्वेश्वरत्वादिनिमित्तभेदादित्याह–**एको हीति** ॥ किञ्च विद्यातज्जबुद्धिरूपायां गुहायां स्थितो जीवो भवति । तस्यामेव ब्रह्म निहितमितिश्रुतेः । स्थानैक्याज्जीव एव ब्रह्मेत्याह–**न हीति** ॥ **काञ्चिदेवैकामिति** । जीवस्थानादन्यामित्यर्थः । नन्वेकस्यां गुहायां द्वौ किं न स्यातामित्यत आह–**न चेति** ॥ स्रष्टुरेव प्रवेशेन जीवत्वान्न भेदः । नन्वत्यन्ताभेदे जीवस्य स्पष्टभानाद् ब्रह्मापि स्पष्टं स्याद् । अतः स्पष्टत्वास्पष्टत्वाभ्यां तयोर्भेद इति **चेत्** । न । दर्पणे प्रतिबिम्बस्यं स्फुटत्वेऽपि बिम्बस्यास्फुटत्ववत् कल्पितभेदेन विरुद्धधर्मव्यवस्थोपपत्तेः । सत्यभेदे येषामाग्रहस्तेषां दोषमाह–**ये त्विति** ॥ सोऽयमितिवत्तत्त्वमसीत्यकार्यकारणद्रव्यसामानाधिकरण्यादत्यन्ताभेदो वेदान्तार्थः । तद्बोध

भामती ।

भेदो बुद्धिव्यपदेशभेदावयं च परमात्मा शुद्धविज्ञानानन्दस्वभाव इमे च जीवा अविद्याशोकदुःखाद्युपद्रवभाज इति वर्तयति । अविद्योपधानं च यद्यपि विद्यास्वभावे परमात्मनि न साक्षादस्ति तथापि तत्प्रतिबिम्बकल्पजीवद्वारेण परस्मिन्नुच्यते । न चैवमन्योन्याश्रयो जीवविभागाश्रयाऽविद्या, अविद्याश्रयश्च जीवविभाग इति, बीजांकुरवदनादित्वात् । अत एव कानुदिश्यैष ईश्वरो मायामारचयत्यनर्थिकाम्, उद्देश्यानां सर्गादौ जीवानामभावात्, कथं चात्मानं संसारिणं विविधवेदनाभाजं कुर्यादित्याद्यनुयोगो निरवकाशः । न खल्वादिमान् संसारः, नाप्यादिमानविद्याजीवविभागः, येनानुयुज्येतेति । अत्र च नामग्रहणेनाविद्यामुपलक्षयति । स्यादेतत् । यदि न जीवात् ब्रह्म भिद्यते, हन्त जीवः स्फुट इति ब्रह्मापि तथा स्यात्, तथा च 'निहितं गुहायाम्' इति नोपपद्यत इत्यत आह–**न हि सत्यमिति** । यथा हि बिम्बस्य मणिकृपाणादयो गुहा एवं ब्रह्मणोऽपि प्रतिजीवं भिन्ना अविद्या गुहा इति । यथा प्रतिबिम्बेषु भासमानेषु बिम्बं तदभिन्नमपि गुह्यमेवं जीवेषु भासमानेषु तदभिन्नमपि ब्रह्म गुह्यम् । अस्तु तर्हि ब्रह्मणोऽन्यद्गुह्यमित्यत आह–**न च ब्रह्मणोऽन्य इति** । ये तु आश्मरथ्यप्रभृतयः **निर्बन्धं कुर्वन्ति ते वेदान्तार्थमिति** ।

आनन्दगिरीय–न्यायनिर्णयः ।

शकारादीनामपि पूर्वसिद्धकीटत्वानुपगमात्तत्सदृशस्यैवोत्पत्तेर्मोक्षासिद्धिः । न च बिम्बप्रतिबिम्बवदुपाधिकल्पितभेदयोस्तात्त्विकमैक्यं प्रातीतिकविरुद्धधर्माध्यासेन शक्यं बाधितुमिति भावः । निर्बन्धनैरर्थक्ये हेतुः–**एको हीति** । नामग्रहणं रूपोपलक्षणम् । इतिशब्दादुपरिष्टाद्यस्मादर्थो हिशब्दः संबन्धनीयः । ननु 'यो वेद निहितं गुहायाम्' इति परस्य गुहाहितत्वश्रुतेस्तस्यास्फुटत्वात्तद्विपरीताज्जीवाद्भेदः स्यान्नेत्याह–**न हीति** । गुहाशब्देनाविद्यान्तःकरणयोर्ग्रहणात्तत्र जीवभावेन प्रतिबिम्बितस्य ब्रह्मणः स्फुटत्वेऽपि बिम्बस्यानीयस्यास्फुटत्वं तस्यैव न विरुध्यतेऽविद्याशक्तेरघटमानविधानपटीयस्त्वादिति भावः । कांचिदेवैकामिति जीवभावेन प्रतिबिम्बाधारातिरिक्तामित्यर्थः । अस्तु तर्हि ब्रह्मणोऽन्यदेवान्तःकरणादि गुहां प्रविष्टं नेत्याह–**न चेति** । श्रोत्राकाशयोरिव जीवब्रह्मणोरङ्गाङ्गिभावादभेदवद्भेदोऽपि स्यादन्यथा जीवमुद्दिश्य ब्रह्मविधानायोगात् । अतस्तत्त्वमिति सामानाधिकरण्यं भेदाभेदविषयमित्याशंक्याऽऽह–**ये त्विति** । कार्यकारणत्व-

**कृतकमनित्ये च मोक्षं कल्पयन्ति, न्यायेन च न सङ्गच्छन्त इति ॥ २२ ॥**
**इति वाक्यान्वयाधिकरणम् ॥ ६ ॥**

रत्नप्रभा।

एव निःश्रेयससाधनम्। तस्य वाधो न युक्त इत्यर्थः। किञ्च भेदाभेदवादिनो ज्ञानकर्मभ्यां कृतकं मोक्षं कल्पयन्ति। तत्रानित्यत्वं दोषः। यत्तु कृतकमपि नित्यमिति, तच्च यत्क्रियासाध्यं तदनित्यमिति न्यायबाधितम्। अस्माकं त्वनर्थध्वंसस्य ज्ञानसाध्यत्वान्नित्यमुक्तात्ममात्रत्वाच्च नानित्यत्वदोष इति भावः।

भामती।

ब्रह्मणः सर्वात्मना भागशो वा परिणामाभ्युपगमे तस्य कार्यत्वादनित्यत्वाच्च तदाश्रितो मोक्षोऽपि तथा स्यात्। यदि त्वेवमपि मोक्षं नित्यमकृतकं ब्रूयुस्तत्राह—**न्यायेनेति**। एवं ये नदीसमुद्रनिदर्शनेनामुक्तेर्भेदं मुक्तस्य चाभेदं जीवस्यास्थिषत तेषामपि न्यायेनासंगतिः। नो जातु घटः पटो भवति। ननूक्तं यथा नदी समुद्रो भवतीति। का पुनर्नद्यभिमता आयुष्मतः। किं पाथःपरमाणव उतैषां संस्थानभेद आहोस्वित्तदारब्धोऽवयवी। तत्र संस्थानभेदस्य वावयविनो वा समुद्रनिवेशे विनाशात् कस्य समुद्रेणैकता। नदीपाथःपरमाणूनां तु समुद्रपाथःपरमाणुभ्यः पूर्वावस्थितेभ्यो भेद एव नाभेदः। एवं समुद्रादपि तेषां भेद एव। ये तु काशकृत्स्नीयमेव मतमास्थाय जीवं परमात्मनोंऽशमाचख्युस्तेषां कथं 'निष्कलं निष्क्रियं शान्तम्' इति न श्रुतिविरोधः। निष्कलमिति सावयवत्वं व्यासेधि न तु सांशत्वम्, अंशश्च जीवः परमात्मनो नभस इव कर्णनेमिमण्डलावच्छिन्नं नभः शब्दश्रवणयोग्यं, वायोरिव च शरीरावच्छिन्नः पञ्चवृत्तिः प्राण इति चेत्। न तावन्नभो नभसोंऽशः, तस्य तत्त्वात्। कर्णनेमिमण्डलावच्छिन्नमंश इति चेत्, हन्त तर्हि प्राप्ताप्राप्तविवेकेन कर्णनेमिमण्डलं वा तत्संयोगो वेत्युक्तं भवति। न च कर्णनेमिमण्डलं तस्यांशः, तस्य ततो भेदात्। तत्संयोगो नभोधर्मत्वात्तस्यांश इति चेत्। न, अनुपपत्तेः। नभोधर्मत्वे हि तदनवयवं सर्वत्राभिन्नमिति तत्संयोगः सर्वत्र प्रथेत। न ह्यस्ति संभवोऽनवयवमव्याप्य वर्तेत इति। तस्मात्तत्रास्ति चेद्व्याप्यैव। न चेद्व्याप्नोति तत्र नास्त्येव व्याप्यैवास्ति केवलं प्रतिसंबन्ध्यधीननिरूपणतया न सर्वत्र निरूप्यत इति चेत्, न नाम निरूप्यताम्। तत्संयुक्तं तु नभः श्रवणयोग्यं सर्वत्रास्तीति सर्वत्र श्रवणप्रसङ्गः। न च भेदाभेदयोरन्यतरेणांशः शक्यो निर्वक्तुम्। न चोभाभ्यां, विरुद्धयोरेकत्रासमवायादित्युक्तम्। तस्मादनिर्वचनीयानाद्यविद्यापरिकल्पित एवांशो नभसो न भाविक इति युक्तम्। न च काल्पनिको ज्ञानमात्रायत्तजीवितः कथमविज्ञायमानोऽस्ति, असंश्चांशः कथं शब्दश्रवणलक्षणाय कार्याय

आनन्दगिरीय—न्यायनिर्णयः।

शून्यद्रव्ययोरुद्देश्योपादेयत्वेन सामानाधिकरण्यं सोऽयमितिवदेकस्यैव द्रव्यस्यौपाधिकभेदापेक्षं न द्रव्यभेदमाकांक्षति। न च ब्रह्मणोंऽशो जीवो निष्कलश्रुतेः। न च श्रोत्रस्य कर्णनेमिमण्डलावच्छेदेऽपि नभसोंऽशत्वमवच्छेदकाभावे तन्मात्रत्वादतो जीवस्यापि ब्रह्मांशत्वाभावान्न भिन्नाभिन्नत्वम्। न च भेदः शास्त्रार्थो लौकिकत्वात्। अभेदस्य त्वैकान्तिकस्य शास्त्रीयत्वात्तदनुपगमे सम्यग्धीरेव मुक्तिहेतुर्बाधिता स्यादिति भावः। कर्मैव मुक्तिहेतुरिति कृतं सम्यग्धियेत्याशंक्याऽऽह—**कृतकमिति**। कृतकत्वेऽपि ध्वंसवन्नित्यतेत्याशंक्याऽऽह—**न्यायेनेति**। मोक्षो निरतिशयानन्दत्वेन भावत्वात्कृतकश्चेदनित्यः स्यादेवं बन्धध्वंसतया तस्याभावत्वेपि कृतकत्वे कथं नानित्यता ध्वंसध्वंसे च ध्वस्ताध्वस्तेर्बन्धस्य पुनरुत्पत्तावपुनरावृत्तिश्रुतिर्विरुध्येत। न च ध्वंसध्वंसेऽपि कारणाभावान्न ध्वस्तस्य पुनरुत्पत्तिस्तद्ध्वंसस्य प्रतियोगिभेदेनावस्थानात्। तदभेदे च तदुत्पत्तेरावश्यकत्वादतो न कर्मसाध्या मुक्तिः। न चास्मन्मते बन्धध्वंसोऽपि वस्तुव्यतिरिक्तोऽस्तीति भावः। तदेवं प्रत्यग्भूते ब्रह्मणि मैत्रेयीब्राह्मणमन्वितमित्युपसंहर्तुमितीत्युक्तम् ॥ २२ ॥ (६) ॥ यत्प्रतिज्ञा-

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥ ( ७ ) ॥

**यथाभ्युदयहेतुत्वाद्धर्मो जिज्ञास्यः, एवं निश्श्रेयसहेतुत्वाद्ब्रह्म जिज्ञास्यमित्युक्तम् । ब्रह्म च "जन्माद्यस्य यतः" [ व्या० सू० १।१।२ ] इति लक्षितम् ॥ तच्च लक्षणं घटरुचकादीनां मृत्सुवर्णादिवत्प्रकृतित्वे कुलालसुवर्णकारादिवन्निमित्तत्वे च समानमित्यतो भवति विमर्शः–किमात्मकं**

रत्नप्रभा ।

तस्मान्मैत्रेयीब्राह्मणं प्रत्यग्ब्रह्मणि समन्वितमिति सिद्धम् ॥ २२ ॥ (६) ॥ **प्रकृतिश्च प्रतिज्ञा०** । लक्षणसूत्रेणास्य सङ्गतिं वक्तुं वृत्तं स्मारयति–**यथेति** ॥ तत्र हि ब्रह्मणो बुद्धिस्थत्वार्थं सामान्यतो जगत्कारणत्वं लक्षणमुक्तम् । तेन बुद्धिस्थे ब्रह्मणि कृत्स्नवेदान्तसमन्वयं प्रतिपाद्य तत्कारणत्वं किं कर्तृत्वमात्रम् उत प्रकृतित्वकर्तृत्वोभयरूपमिति विशेषजिज्ञासायामिदमारभ्यते । तथा च सामान्यज्ञानस्य विशेषचिन्ताहेतुत्वात्तेनास्य सङ्गतिः । **यद्यपि** तदानन्तर्यमस्य युक्तम् । **तथापि** निश्चिततात्पर्यैर्वेदान्तैः कर्तृमात्रेश्वरमतनिरासः सुकर इति समन्वयान्ते इदं लिखितम् । लक्षणसूत्रस्याध्यायादिसङ्गतत्वादस्यापि **अध्यायादिसंगतिः** । पूर्वत्र सर्वविज्ञानप्रतिज्ञाया मुख्यत्वाद्वाक्यस्य जीवपरत्वं निरस्तम् । **तदयुक्तम्** । कर्त्रुपादानयोर्भेदेन

भामती ।

कल्पते, न जातु रज्ज्वामज्ञायमान उरगो भयकम्पादिकार्याय पर्याप्त इति वाच्यम् । अज्ञातत्वासिद्धेः कार्यव्यङ्ग्यत्वादस्य । कार्योत्पादात्पूर्वमज्ञातं कथं कार्योत्पादाङ्गमिति चेत् । न । पूर्वपूर्वकार्योत्पादव्यङ्ग्यत्वादसत्यपि ज्ञाने तत्संस्कारानुवृत्तेरनादित्वाच्च कल्पना तत्संस्कारप्रवाहस्य । अस्तु वानुपपत्तिरेव कार्यकारणयोर्मायात्मकत्वात् । अनुपपत्तिर्हि मायामुपोद्वलयत्यनुपपद्यमानार्थत्वान्मायायाः । अपि च भाविकांशवादिनां मते भाविकांशस्य ज्ञानेनोच्छेत्तुमशक्यत्वान्न ज्ञानध्यानसाधनो मोक्षः स्यात् । तदेवमाकाशांश इव श्रोत्रमनिर्वचनीयम् । एवं जीवो ब्रह्मणोंश इति काशकृत्स्नीयं मतमिति सिद्धम् ॥ २२ ॥ (६) ॥

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** । स्यादेतत् । वेदान्तानां ब्रह्मणि समन्वये दर्शिते समाप्तं समन्वयलक्षणमिति किमपरमवशिष्यते यदर्थमिदमारभ्यत इति शङ्कां निराकर्तुं संगतिं दर्शयन्नवशेषमाह–**यथाभ्युदयेति** । अत्र च लक्षणस्य संगतिमुक्त्वा लक्षणेनास्याधिकरणस्य संगतिरुक्ता । एतदुक्तं भवति–सत्यं जगत्कारणे ब्रह्मणि वेदान्तानामुक्तः समन्वयः । तत्र कारणभावस्योभयथा दर्शनाज्जगत्कारणत्वं ब्रह्मणः किं निमित्तत्वेनैव, उतोपादानत्वेनापि । तत्र यदि प्रथमः पक्षस्ततः उपादानकारणानुसरणे सांख्यस्मृतिसिद्धं प्रधानमभ्युपेयम् । तथा च 'जन्माद्यस्य यतः' इति ब्रह्मलक्षणमसाधु, अतिव्याप्तेः प्रधानेऽपि गतत्वात् । असंभवाद्वा । यदि तूत्तरः पक्षस्ततो नातिव्याप्तिर्नाप्यव्याप्तिरिति साधु लक्षणम् ।

आनन्दगिरीय–न्यायनिर्णयः ।

बलान्मैत्रेयीब्राह्मणस्य ब्रह्मपरत्वं तस्मादेवोपादानत्वं ब्रह्मणः साधयति–**प्रकृतिश्चेति** । व्यवहितसंबन्धादपौनरुक्त्यं वक्तुं वृत्तं कीर्तयति–**यथेति** । सदृष्टान्तमाद्यसूत्रार्थमनूद्य ब्रह्मलक्षणस्य कारणत्वस्य द्वितीयसूत्रार्थस्य विचारप्रतिज्ञया संगतिमाह–**ब्रह्म चेति** । ब्रह्मकारणत्वार्थाधिकरणस्य कारणविशेषविचारस्य च संबन्धोक्तिपूर्वकमवशिष्टमर्थमाचक्षाणः । सनिमित्तं संशयमाह–**तच्चेति** । जन्मादिसूत्रे त्वेतदधिकरणसिद्धवत्कारेणोभयकारणत्वोक्तिस्तदनन्तरमस्याऽऽरम्भ्यत्वेऽपि निर्णीततात्पर्यैर्वेदान्तैर्निमित्तत्वमात्रसाधकानुमितेर्विरोधोक्तिः सुकरेति समन्वयावसाने लिखितमेतदधिकरणमनुक्ते विषये समन्वयो दुःसाध्य इति कारणतामात्रं तत्रोक्तमिति भावः । ब्रह्मलक्षणस्याध्यायादिसंबन्धादस्यापि तद्योगिनस्तत्सिद्धिः । पूर्वपक्षे प्रतिज्ञागौणत्वं सिद्धान्ते तन्मुख्यत्वं फलमिति । समानधर्मदृष्ट्या विमर्शमेव विशदयति–**किमिति** । प्रतिज्ञाया मुख्यत्वेन वाक्यस्य

पुनर्ब्रह्मणः कारणत्वं स्यादिति ॥ तत्र निमित्तकारणमेव तावत्केवलं स्यादिति प्रतिभाति ॥ कस्माद् ॥ ईक्षापूर्वककर्तृत्वश्रवणाद्-ईक्षापूर्वकं हि ब्रह्मणः कर्तृत्वमवगम्यते-"स ईक्षाञ्चक्रे" [ प्रश्न० ६ । ३ ] "स प्राणमसृजत" [ प्रश्न० ६ । ४ ] इत्यादिश्रुतिभ्यः । ईक्षापूर्वकं च कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु दृष्टम् । अनेककारकपूर्विका च क्रियाफलसिद्धिर्लोके दृष्टा ॥ स च न्याय आदिकर्तर्यपि युक्तः संक्रमयितुम् ॥ ईश्वरत्वप्रसिद्धेश्च-ईश्वराणां हि राजवैवस्वतादीनां निमित्तकारणत्वमेव केवलं प्रतीयते, तद्वत्परमेश्वरस्यापि निमित्तकारणत्वमेव युक्तं प्रतिपत्तुम् ॥ कार्यञ्चेदं जगत्सावयवमचेतनमशुद्धं च दृश्यते । कारणेनापि तस्य तादृशेनैव भवितव्यम् । कार्यकारणयोः सारूप्यदर्शनात् ॥ ब्रह्म च नैवंलक्षणमवगम्यते-"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्"

---

रत्नप्रभा ।

प्रतिज्ञाया गौणत्वादित्याक्षिपति-तत्र निमित्तेत्यादिना । पूर्वोत्तरपक्षयोः द्वैताद्वैतसिद्धिः फलम् । ईक्षापूर्वकेति । ईक्षणश्रुत्या कर्तृत्वं निश्चितम् । तथा च ब्रह्म, न प्रकृतिः कर्तृत्वात्, यो यत्कर्ता, स तत्प्रकृतिर्न, यथा घटकर्ता कुलाल इत्यर्थः । जगद् भिन्नकर्त्रुपादानकं, कार्यत्वाद्, घटवदित्याह-अनेकेति ॥ ब्रह्म, नोपादानम्, ईश्वरत्वाद्, राजादिवदित्याह-ईश्वरत्वेति ॥ जगत्, न ब्रह्मप्रकृतिकं, तद्विलक्षणत्वाद्, यदित्थं तत्तथा, कुलालविलक्षणघटवदित्याह-कार्यञ्चेति ॥ निष्कलं निरवयवम् । निष्क्रियम् अचलम् । शान्तम् अपरिणामि । निरवद्यं निरस्तसमस्तदोषम् । तत्र हेतुः-निरञ्जनमिति ॥

भामती ।

सोऽयमवशेषः । तत्र 'ईक्षापूर्वककर्तृत्वं प्रभुत्वमसरूपता । निमित्तकारणेष्वेव नोपादानेषु कर्हिचित् ॥' तदिदमाह-तत्र निमित्तकारणमेव तावदिति । आगमस्य कारणमात्रे पर्यवसानादनुमानस्य तद्वि-

आनन्दगिरीय-न्यायनिर्णयः ।

जीवपरत्वे परास्ते निमित्तोपादानभेदाद् गौणी सेति पूर्वपक्षयति-तत्रेति । एवकारार्थं स्फुटयति-केवलमिति । तत्र मानं पृच्छति-कस्मादिति । न ब्रह्म कार्यद्रव्योपादानं चेतनत्वात्कर्तृत्वाच्च कुलालादिवदित्याह-ईक्षेति । हेतुद्वयं श्रुत्या स्फुटयति-ईक्षेत्यादिना । ब्रह्मणश्चेतनस्य कर्तुरेव कार्यद्रव्योपादानत्वे किं बाधकमित्याशंक्य कुलालादेरपि तत्प्रसक्तिरित्याह-ईक्षेति । अनुमानान्तरं वक्तुं या द्रव्योत्पत्तिः सा भिन्ननिमित्तोपादानपूर्वा यथा घटाद्युत्पत्तिरिति व्याप्तिमाह-अनेकेति । जगद् द्रव्योत्पत्तिर्भिन्ननिमित्तोपादानपूर्वा द्रव्योत्पत्तित्वाद्घटोत्पत्तिवदित्यनुमिनोति-स चेति । न ब्रह्म कार्यद्रव्योपादानमीश्वरत्वाल्लौकिकेश्वरवदित्याह-ईश्वरत्वेति । साध्यवैकल्यं प्रत्याह-ईश्वराणां हीति । दार्ष्टान्तिकं निगमयति-तद्वदिति । विमतमचेतनोपादानं कार्यद्रव्यत्वाद्घटवदित्याह-कार्यं चेति । कार्यत्वं साधयति-सावयवमिति । विमतं न ब्रह्मोपादानमचेतनत्वादशुद्धत्वाच्च घटादिवदित्याह-अचेतनमिति । तथाऽपि जगच्चेतनोपादानं किं न स्यात्तत्राऽऽह-कारणेनेति । ब्रह्मैव तर्हि तादृगस्तु नेत्याह-ब्रह्म चेति । निष्कलं निरवयवम् । निष्क्रियं परिणामपरिस्पन्दरहितम् । शान्तं रागद्वेषादिशून्यम् । निरवद्यं पुण्यापुण्यवर्जितम् । निरञ्जनं सुखदुःखादिभिरस्पृष्टम् । आदिशब्देन 'शुद्धमपापविद्धम्' इत्याद्या श्रुतिरुक्ता । ब्रह्मणश्चेन्न जगदुपादानत्वं तर्हि किं तदुपादानं, न हि निमित्तमात्राद्भावरूपं कार्यं तत्राऽऽह-

[ श्वेता० ६ । १९ ] इत्यादिश्रुतिभ्यः ॥ पारिशेष्याद्ब्रह्मणोऽन्यदुपादानकारणमशुद्ध्यादिगुणकं स्मृतिप्रसिद्धमभ्युपगन्तव्यम् । ब्रह्मकारणत्वश्रुतेर्निमित्तत्वमात्रे पर्यवसानादिति ॥ एवं प्राप्ते ब्रूमः ॥ प्रकृतिश्च उपादानकारणं च ब्रह्माऽभ्युपगन्तव्यम् ॥ निमित्तकारणं च ॥ न केवलं निमित्तकारणमेव ॥ कस्मात् ॥ प्रतिज्ञादृष्टान्तानुपरोधाद्-एवं हि प्रतिज्ञादृष्टान्तौ श्रौतौ नोपरुध्येते ॥ प्रतिज्ञा तावद्-"उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" [ छां० ६ । १ । २ ] इति । तत्र चैकेन विज्ञातेन सर्वमन्यदविज्ञातमपि विज्ञातं भवतीति प्रतीयते ॥ तच्चोपादानकारणविज्ञाने सर्वविज्ञानं सम्भवति । उपादानकारणाव्यतिरे-

---

रत्नप्रभा ।

अञ्जनतुल्यतमश्शून्यमित्यर्थः । तर्हि जगतः सदृशोपादानं किमित्यत आह-**पारिशेष्यादिति** ॥ ब्रह्मनिषेधे प्रधानं परिशिष्यत इत्यभिमन्यमानः सिद्धान्तयति-**प्रकृतिश्चेति** ॥ चकारान्निमित्तत्वग्रहः । एवमुभयरूपे कारणत्वे तयोरबाधो भवतीत्याह-**एवमिति**. ॥ कर्तृज्ञानादपि सर्वकार्यज्ञानं किं न स्यादित्यत

भामती ।

शेषनियममागमो न प्रतिक्षिपत्यपि त्वनुमन्यत एवेत्याह-**पारिशेष्याद्ब्रह्मणोऽन्यदिति** । ब्रह्मोपादानत्वस्य प्रसक्तस्य प्रतिषेधेऽन्यत्राप्रसङ्गात्सांख्यस्मृतिप्रसिद्धमानुमानिकं प्रधानं शिष्यत इति । एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानम् 'उत तमादेशम्' इत्यादिना, 'यथा सोम्यैकेन मृत्पिण्डेन' इति च दृष्टान्तः, परमात्मनः प्राधान्यं सूचयतः । यथा सोमशर्मणैकेन ज्ञातेन सर्वे कठा ज्ञाता भवन्ति । एवं प्राप्त उच्यते-**प्रकृतिश्च** । न केवलं ब्रह्म निमित्तकारणम्, कुतः, प्रतिज्ञादृष्टान्तयोरनुपरोधात् । निमित्तकारणत्वमात्रे तु तावुपरुध्येयाताम् । तथाहि-'न मुख्ये संभवत्यर्थे जघन्या वृत्तिरिष्यते । न चानुमानिकं युक्तमागमेनापबाधितम् ॥ सर्वे हि तावद्वेदान्ताः पौर्वापर्येण वीक्षिताः । ऐकान्तिकाद्वैतपरा द्वैतमात्रनिषेधतः ॥' तदिहापि प्रतिज्ञादृष्टान्तौ मुख्यार्थावेव युक्तौ न तु यजमानः प्रस्तर इतिवद्गुणकल्पनया नेतव्यौ, तस्यार्थवादस्यातत्परत्वात् । प्रतिज्ञादृष्टान्तवाक्ययोस्त्वद्वैतपरत्वादुपादानकारणात्मकत्वाच्चोपादेयस्य कार्यजातस्योपादानज्ञानेन तज्ज्ञानोपपत्तेः । निमित्तकारणं तु कार्यादत्यन्तभिन्नमिति न तज्ज्ञाने कार्यज्ञानं भवति । अतो ब्रह्मोपादानकारणं जगतः । न च ब्रह्मणोऽन्यन्निमित्तकारणं जगत इत्यपि युक्तम् । प्रतिज्ञादृष्टान्तोपरोधादेव । न हि तदानीं ब्रह्मणि ज्ञाते सर्वं विज्ञातं भवति । जगन्निमित्तकारणस्य ब्रह्मणोन्यस्य सर्वमध्यपातिनस्तज्ज्ञानेनाविज्ञानात् । यत इति च पञ्चमी न कारणमात्रे स्मर्यते अपि तु प्रकृतौ, 'जनिकर्तुः प्रकृतिः' इति । ततोऽपि प्रकृतित्वमवगच्छामः । दुन्दुभिग्रहणं दुन्दुभ्याघातग्रहणं च तद्गतशब्दत्वसामान्योपलक्ष-

आनन्दगिरीय-न्यायनिर्णयः ।

**पारिशेष्यादिति** । तत्र ब्रह्मण्युक्तमसारूप्यं नास्तीत्याह-**अशुद्ध्यादीति** । न च तस्याप्रमितत्वादनुपादानत्वमित्याह-**स्मृतीति** । ब्रह्मोपादानत्वस्य प्रसक्तस्य निषेधे सांख्यीयप्रधानादन्यत्राप्रसङ्गात्तदेव परिशेषतो जगदुपादानमित्यर्थः । 'सदेव' इत्यादिश्रुतेस्तर्हि का गतिरित्याशंक्यानुमानविरोधाद्विशेषे संकोच इत्याह-**ब्रह्मेति** : । जन्मादिसूत्रोक्तलक्षणस्यासंभावितत्वमितिशब्दोपसंहृतमनूद्य सिद्धान्तमवतार्य प्रतिज्ञां व्याकरोति-**एवमिति** । उक्तानुमानेषु जीवत्सु नोभयकारणतेति शङ्कते-**कस्मादिति** । हेतुमादाय व्याचष्टे-**प्रतिज्ञेति** । एवमित्युभयकारणत्वे सतीति यावत् । तयोरनुपरोधं वक्तुं प्रतिज्ञामाह-**प्रतिज्ञेति** । तद्वाक्यार्थमाह-**तत्रेति** । तदनुपरोधं स्वमते दर्शयति-**तच्चेति** । निमित्तकारणज्ञानादेव सर्वज्ञानं किं न

कात्कार्यस्य ॥ निमित्तकारणाव्यतिरेकस्तु कार्यस्य नास्ति । लोके तक्षणः प्रासादव्यतिरेकदर्शनात् ॥ दृष्टान्तोऽपि—"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" [ छां० ६ । १ । ४ ] इत्युपादानकारणगोचर एवाम्नायते ॥ तथा-"एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् ॥ एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्याद्" [ छां० ६ । १ । ५-६ ] इति च ॥ तथाऽन्यत्रापि-"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" [ मुण्ड० १ । १ । ३ ] इति प्रतिज्ञा ॥ "यथा पृथिव्यामोषधयः सम्भवन्ति" [ मुण्ड० १ । १ । ७ ] इति दृष्टान्तः ॥ तथा "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं१ सर्वं विदितम्" [ बृ० ४ । ५ । ६ ] इति प्रतिज्ञा । "स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः" [ बृ० ४ । ५ । ८ ] इति दृष्टान्तः ॥ एवं यथासम्भवं प्रतिवेदान्तं प्रतिज्ञादृष्टान्तौ प्रकृतित्व-

रत्नप्रभा ।

आह-निमित्तकारणाव्यतिरेकस्त्विति ॥ मृदादीनामुपादानानां दृष्टान्तत्वाद्दार्ष्टान्तिकस्य ब्रह्मण उपादानत्वं वाच्यमित्याह-दृष्टान्तोऽपीति ॥ वागारभ्यं नाममात्रं विकारो न वस्तुतोऽस्तीति सत्यकारणज्ञानाद्विकारज्ञानं युक्तमित्यर्थः । गतिसामान्यार्थं मुण्डकेऽपि प्रतिज्ञादृष्टान्तावाह-तथान्यत्रापीति ॥ बृहदारण्यकेऽपि तावाह-तथा-आत्मनीति ॥ घटः स्फुरति पटः स्फुरतीत्यनुगतस्फुरणं प्रकृतिः, तदतिरेकेण विकारा न सन्तीति सोऽयमर्थो यथा स्फुटः स्यात्तथा दृष्टान्तः स उच्यते । हन्यमानदुन्दुभिजन्याच्छब्दसामान्याद्बाह्यान् विशेषशब्दान् सामान्यग्रहणातिरेकेण पृथग् ग्रहीतुं श्रोता न शक्नुयात् । सामान्यस्य तु ग्रहणेन दुन्दुभ्याघातः शब्दविशेषो गृहीतो भवति । तस्य वा ग्रहणेन तदवान्तरविशेषशब्दो गृहीतो भवति । अतः शब्दसामान्यग्रहणग्राह्या विशेषाः सामान्ये कल्पिताः । तद्वदात्मभानभास्यघटादय आत्मनि कल्पिता इत्यर्थः । प्रतिज्ञादृष्टान्तानुपरोधाल्लिङ्गाद्ब्रह्मणः प्रकृतित्वमुक्त्वा पञ्चमी-

भामती ।-०

आनन्दगिरीय-न्यायनिर्णयः ।

स्यात्तत्राऽऽह-निमित्तेति । दृष्टान्तानुपरोधमाह-दृष्टान्तोऽपीति । मृदि ज्ञातायां तद्विकारस्य ज्ञेयत्वेनानवशेषे हेतुः-वाचेति । घटादेर्वाचारम्भणत्वं वस्तुतोऽसत्त्वं साधयति-नामेति । शून्यशेषत्वं निषेधति-मृत्तिकेति । विपरीतदृष्टान्तोऽपि स्यादिति शङ्कां निरसितुं दृष्टान्तान्तराण्याह-तथेति । गतिसामान्यार्थमाथर्वणगतौ प्रतिज्ञादृष्टान्तावाह-तथेति । बृहदारण्यकेऽपि तौ निर्दिशति-आत्मनीति । घटः प्रकाशते पटो वेत्यनुगतप्रकाशातिरेकेण घटादेरसिद्धेस्तत्रैव कल्पितत्वात्प्रकाशोऽनुगतोऽधिष्ठानं प्रकृतिरित्यनुगतः स दृष्टान्तो यथा तथोच्यते । बाह्यान्दुन्दुभिशब्दसामान्यबहिर्भूतानिति यावत् । दुन्दुभेस्तच्छब्दसामान्यस्येत्यर्थः । दुन्दुभ्याघातस्य जनकस्य जन्यतया संबन्धी वा शब्दो विशेषशब्द इत्यर्थः । वेदान्तत्रयगतं न्यायं वेदान्तान्तरेष्वतिदिशति-एवमिति । प्रतिज्ञाद्यनुपरोधलिङ्गादुपादानत्ववत्पञ्चमीश्रु-

१ अत्र प्राय उपनिषत्सु सणकारकः पाठः उपलभ्यते, स च छान्दस एव, णत्वविधायकशास्त्रदृष्ट्याऽनुनासिकस्यासिद्धत्वात् ।

साधनौ प्रत्येतव्यौ ॥ यत इतीयं पञ्चमी-"यतो वा इमानि भूतानि जायन्ते" [तै०३।१] इत्यत्र "जनिकर्तुः प्रकृतिः" [पा० सू० १।४।३०] इति विशेषस्मरणात्प्रकृतिलक्षण एवापादाने द्रष्टव्या ॥ निमित्तत्वन्त्वधिष्ठात्रन्तराभावादधिगन्तव्यम् ॥ यथा हि लोके मृत्सुवर्णादिकमुपादानकारणं कुलालसुवर्णकारादीनधिष्ठातॄनपेक्ष्य प्रवर्तते, नैवं ब्रह्मण उपादानकारणस्य सतोऽन्योऽधिष्ठातापेक्ष्योऽस्ति ॥ प्रागुत्पत्तेरेकमेवाद्वितीयमित्यवधारणात् ॥ अधिष्ठात्रन्तराभावोऽपि प्रतिज्ञादृष्टान्तानुपरोधादेवोदितो वेदितव्यः ॥ अधिष्ठातरि ह्युपादानादन्यस्मिन्नभ्युपगम्यमाने पुनरप्येकविज्ञानेन सर्वविज्ञानस्यासम्भवात्प्रतिज्ञादृष्टान्तोपरोध एव स्यात ॥ तस्मादधिष्ठात्रन्तराभावादात्मनः कर्तृत्वमुपादानान्तराभावाच्च प्रकृतित्वम् ॥ २३ ॥ कुतश्चात्मनः कर्तृत्वप्रकृतित्वे-

## अभिध्योपदेशाच्च ॥ २४ ॥

अभिध्योपदेशश्चात्मनः कर्तृत्वप्रकृतित्वे गमयति-"सोऽकामयत बहु स्यां प्रजायेयेति" [तै० २।६।२] इति "तदैक्षत बहु स्यां प्रजायेयेति" [छां० ६।२।३] इति च। तत्राभिध्यानपूर्विकायास्स्वातन्त्र्य-

---

रत्नप्रभा।

श्रुत्याप्याह-यत इति ॥ "यतो वा" इत्यत्र श्रुतौ यत इति पञ्चमी प्रकृतौ द्रष्टव्येत्यन्वयः। जनिकर्तुरिति ॥ जायमानस्य कार्यस्य प्रकृतिरपादानसंज्ञिका भवतीति सूत्रार्थः। संज्ञायाः फलम् "अपादाने पञ्चमी" [पा० २।३।२८] इतिसूत्रात् प्रकृतौ पञ्चमीलाभः। एवं ब्रह्मणः प्रकृतित्वं प्रसाध्य कर्तृत्वं साधयति-निमित्तत्वमिति ॥ ब्रह्म, स्वातिरिक्तकर्त्रधिष्ठेयं, प्रकृतित्वात्, मृदादिवदित्याद्यनुमानानामागमबाधमाह-प्रागुत्पत्तेरिति ॥ जगत्कर्तृ ब्रह्मैवेत्यत्रापि सूत्रं योजयति-अधिष्ठात्रन्तरेति ॥ ॥ २३ ॥ एकस्योभयरूपप्रकरणत्वमविरुद्धमिति सूत्रचतुष्टयेन साधयति-कुतश्चेत्यादिना ॥ अभिध्या

भामती।

णार्थम् ॥ २३ ॥ अनागतेच्छासंकल्पोऽभिध्या। एतया खलु स्वातन्त्र्यलक्षणेन कर्तृत्वेन निमित्तत्वं दर्शि-

आनन्दगिरीय-न्यायनिर्णयः।

त्याऽपि तद्धीरित्याह-यत इति। यत इत्यादिश्रुतौ यत इतीयं पञ्चम्यपि प्रकृतिरूपापादान एव द्रष्टव्येति संबन्धः। जाड्याद्धेद्ध एवेति निमित्तेऽपि पञ्चमीदृष्टेरुपादानत्वं कथं गमयेत्तत्राऽऽह-जनीति। जायमानस्य कार्यस्य प्रकृतिरुपादानमपादानसंज्ञं भवतीत्यपादाने पञ्चमीस्मरणान्न कारणामात्रे सा युक्तेत्यर्थः। यद्यपि सूत्रे प्रकृतिग्रहणं सर्वकारणसंग्रहार्थमित्युक्तं, तथाऽपि तदनादृत्य 'प्रकृतिश्च' इति सूत्रस्थप्रकृतिशब्दवदयमपीति मन्यते तथाऽपि कथं निमित्तत्वं तदाह-निमित्तत्वमिति। अधिष्ठात्रन्तराभावं व्यतिरेकदृष्टान्तेन साधयति-यथेति। अन्यस्याधिष्ठातुरपेक्षणीयस्यासत्त्वे हेतुमाह-प्रागिति। ब्रह्मणोऽन्यन्निमित्तं जगतो नेत्यत्रापि सूत्रावयवसामर्थ्यमाह-अधिष्ठात्रन्तरेति। उक्तमेव व्यतिरेकेण स्फोरयति-अधिष्ठातरीति। श्रुतिलिङ्गाभ्यां सिद्धमुपसंहरति-तस्मादिति ॥ २३ ॥ द्विधा हेतुत्वमेकस्य युक्तमिति वक्तुं सूत्रचतुष्टयमवतारयति-कुतश्चेति। स्रष्टव्यविषयसंकल्पोक्तेरुभयकारणत्वं तावदाह-अभिध्येति। प्रतिज्ञां पूरयन्नभिध्योपदेशं विशदयति-अभिध्येति। कथं तस्मात्कर्तृत्वप्रकृतित्वे गम्येते तत्राऽऽह-तत्रेति॥२४॥

प्रवृत्तेः कर्त्तेति गम्यते । बहु स्यामिति प्रत्यगात्मविषयत्वाद्बहुभवनाभिध्यानस्य प्रकृतिरित्यपि गम्यते ॥ २४ ॥

## साक्षाच्चोभयाम्नानात् ॥ २५ ॥

प्रकृतित्वस्यायमभ्युच्चयः-इतश्च प्रकृतिर्ब्रह्म । यत्कारणं साक्षाद्ब्रह्मैव कारणमुपादायोभौ प्रभवप्रलयावाम्नायेते-"सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति" [ छां० १ । ९ । १ ] इति ॥ यद्धि यस्मात्प्रभवति यस्मिंश्च प्रलीयते तत्तस्योपादानं प्रसिद्धम् । यथा-व्रीहियवादीनां पृथिवी ॥ साक्षादिति चोपादानान्तरानुपादानं दर्शयत्याकाशादेवेति ॥ प्रत्यस्तमयश्च नोपादानादन्यत्र कार्यस्य दृष्टः॥२५॥

## आत्मकृतेः परिणामात् ॥ २६ ॥

इतश्च प्रकृतिर्ब्रह्म यत्कारणं ब्रह्मप्रक्रियायां-"तदात्मानꣳ स्वयमकुरुत" [तै०२।७] इत्यात्मनः कर्मत्वं कर्त्तृत्वं च दर्शयति-आत्मानमिति कर्मत्वं, स्वयमकुरुतेति कर्त्तृत्वम् ॥ कथं पुनः पूर्वसिद्धस्य सतः कर्त्तृत्वेन व्यवस्थितस्य क्रियमाणत्वं शक्यं सम्पादयितुम् ॥

---

रत्नप्रभा ।

सृष्टिसङ्कल्पः ॥ २४ ॥ अभ्युच्चयः हेत्वन्तरम् । आकाशादेवेत्येवकारसूचितमुपादानान्तरानुपादानमग्रहणं साक्षादितिपदेन सूत्रकारो दर्शयतीति योजना ॥ २५ ॥ आत्मसम्बन्धिनी कृतिः आत्मकृतिः ॥ सम्बन्धश्चात्मनः कृतिं प्रति विषयत्वमाश्रयत्वञ्च । ननु कृतेराश्रयः सिद्धो भवति । विषयस्तु साध्यः । एकस्योभयं विरुद्धमित्याशङ्कते-कथं पुनरिति ॥ यथा मृदः साध्यपरिणामाभेदेन कृतिविषयत्वं,

भामती ।

तम् । 'बहु स्याम्' इति च स्वविषयत्तयोपादानत्वमुक्तम् ॥ २४ ॥ आकाशादेव । ब्रह्मण एवेत्यर्थः । साक्षादिति चेति सूत्रावयवमनूद्य तस्यार्थं व्याचष्टे-आकाशादेवेति । श्रुतिर्ब्रह्मणो जगदुपादानत्वमवधारयन्ती उपादानान्तराभावं साक्षादेव दर्शयतीति-साक्षादिति । सूत्रावयवेन दर्शितमिति योजना ॥ २५ ॥ आत्मकृतेः परिणामात् । प्रकृतिग्रहणमुपलक्षणं, निमित्तमित्यपि द्रष्टव्यं, कर्मत्वेनोपादानत्वात् कर्तृत्वेन च तत्प्रतिनिमित्तत्वात् ॥ कथं पुनरिति । सिद्धसाध्ययोरेकत्रासमवायो विरोधादिति ।

आनन्दगिरीय-न्यायनिर्णयः ।

निमित्तत्वमुपेत्योपादानत्वे हेत्वन्तरमाह-साक्षाच्चेति । सूत्रस्य तात्पर्यमाह-प्रकृतित्वस्येति । अक्षराणि व्याकरोति-इतश्चेति । आकाशस्य ब्रह्मत्वम् 'आकाशस्तल्लिङ्गात्' इत्युक्तम् । नन्वाकाशं ब्रह्मोक्त्वा सर्वभूतानां तदधीनप्रभवप्रलयाभिधानेऽपि कथं ब्रह्मणः सर्वभूतोपादानत्वं तत्राऽऽह-यद्धीति । सूत्रावयवसूचितमर्थमाह-साक्षादिति । आकाशादेवेत्येवकारसूचितमुपादानान्तरानुपादानं साक्षादितिपदेन सूत्रकारो दर्शयतीति योजना । उपादानान्तरव्यावृत्तिरेवकारार्थो न भवति किंतु निमित्तस्याऽऽकाशस्योपादानत्वव्यावृत्तिरित्याशंक्याऽऽह-प्रतीति । निमित्ते कार्यस्य लयादृष्टेराकाशस्य तन्मात्रत्वमत्र नेष्टमित्यर्थः ॥ २५ ॥ ब्रह्मणो जगन्निमित्तस्य तत्प्रकृतित्वे हेत्वन्तरमाह-आत्मेति । सूत्रं व्याकरोति-इतश्चेति । उक्तमेव विभज्य निर्दिशति-आत्मानमिति । पूर्वसिद्धस्य कर्तृत्वं क्रियमाणत्वं त्वसिद्धस्य तन्नोभयमेकस्य स्यादिति शङ्कते-कथमिति । सूत्रावयवमवतार्य व्याचष्टे-

परिणामादिति ब्रूमः ॥ पूर्वसिद्धोऽपि हि सन्नात्मा विशेषेण विकारात्मना परिणमयामासात्मानमिति ॥ विकारात्मना च परिणामो मृदाद्यासु प्रकृतिषूपलब्धः ॥ स्वयमिति च विशेषणान्निमित्तान्तरानपेक्षत्वमपि प्रतीयते ॥ परिणामादिति वा पृथक् सूत्रम् ॥ तस्यैषोऽर्थः—इतश्च प्रकृतिर्ब्रह्म यत्कारणम् । ब्रह्मण एव विकारात्मनायं परिणामः सामानाधिकरण्येनाम्नायते—"सच्च त्यच्चाभवत् । निरुक्तञ्चानिरुक्तं च" [ तै० २ । ६ ] इत्यादिनेति ॥ २६ ॥

**योनिश्च हि गीयते ॥ २७ ॥**

इतश्च प्रकृतिर्ब्रह्म । यत्कारणं ब्रह्मयोनिरित्यपि पठ्यते वेदान्तेषु—"कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्" [ मुण्ड० ३ । १ । ३ ] इति, "यद्भूतयोनिं

रत्नप्रभा ।

तद्वदात्मन इत्याह—**परिणामादिति** ॥ **आत्मानमिति** ॥ अविरोध इति शेषः । सिद्धस्यापि साध्यत्वे दृष्टान्तमाह—**विकारात्मनेति** ॥ ननु ब्रह्मण आत्मानमिति द्वितीयया कार्यात्मना साध्यत्वश्रुत्याऽस्तु प्रकृतित्वम् । कर्त्ता त्वन्योऽस्त्वित्यत आह—**स्वयमिति चेति** ॥ ब्रह्मणः कृतिकर्मत्वोपपादनार्थं परिणामादिति पदं व्याख्यायान्यथापि व्याचष्टे—**पृथक् सूत्रमिति** ॥ मृद्घट इतिवद्ब्रह्म सच्च त्यच्चेति परिणामसामानाधिकरण्यश्रुतेः ब्रह्मणः प्रकृतित्वमित्यर्थः । **सत्** प्रत्यक्षं भूतत्रयम् । **त्यत्** परोक्षं भूतद्वयं, **निरुक्तं** वक्तुं शक्यं घटादि **अनिरुक्तं** वक्तुमशक्यं कपोतरूपादिकं च ब्रह्मैवाभवदित्यर्थः ॥ अत्र सूत्रे परिणामशब्दः कार्यमात्रपरः । न तु सत्यकार्यात्मकपरिणामपरः तदनन्यत्वमिति विवर्तवादस्य वक्ष्यमाणत्वाद् ॥ ॥ २६ ॥ **योनिश्च हि गीयते** । योनिशब्दाच्च प्रकृतित्वमित्याह—**योनिश्चेति** ॥ **कर्त्तारं** क्रियाशक्तिमन्तम् । **ईशं** नियन्तारं, **पुरुषं** प्रत्यञ्चं, **ब्रह्म** पूर्णं, **योनिं** प्रकृतिं, धीरा ध्यानेन

भामती ।

**परिणामादिति ब्रूम इति** । पूर्वसिद्धस्याप्यनिर्वचनीयविकारात्मना परिणामोऽनिर्वचनीयत्वाद्भेदेनाभिन्न इवेति सिद्धस्यापि साध्यत्वमित्यर्थः । एकवाक्यत्वेन व्याख्याय परिणामादित्यवच्छिद्य व्याचष्टे-**परिणामादिति वेति** । सच्च त्यच्चेति द्वे ब्रह्मणो रूपे । सच्च सामान्यविशेषेणापरोक्षतया निर्वाच्यं पृथिव्यप्तेजोलक्षणम् । त्यच्च परोक्षमत एवानिर्वाच्यमिदंतया वाय्वाकाशलक्षणं, कथं च तद्ब्रह्मणो रूपं यदि तस्य ब्रह्मोपादानं, तस्मात्परिणामाद्ब्रह्म भूतानां प्रकृतिरिति ॥ २६ ॥ पूर्वपक्षिणोऽनुमानमनुभाष्यागमविरोधेन दूषयति—

आनन्दगिरीय—न्यायनिर्णयः ।

**परिणामादिति** । आत्मानमिति विशेषणादेतद्धीरित्यर्थः । इत्थं मिथ्यापरिणामेऽपि कथं विरोधसमाधिरित्याशङ्क्याऽऽह—**विकारेति** । एकेन रूपेण पूर्वसिद्धस्याप्यसिद्धरूपान्तरेण परिणामो दृष्टत्वाद्युक्तः स्यादित्यर्थः । श्रौतेन विशेषणान्तरेण सूचितमर्थमाह—**स्वयमिति** । आत्मकृतेरिति हेतुसाधनार्थं परिणामादिति पदमित्युक्तम् । संप्रति स्वतन्त्रहेत्वन्तरमेतदित्याह—**परिणामादिति वेति** । अर्थभेदाभावे कथं पार्थक्यं तत्राऽऽह—**तस्येति** । अर्थविशेषमेव दर्शयति—**इतश्चेति** । मृद्घटः सुवर्णं कुण्डलमितिवद्ब्रह्मणः सच्च त्यच्चेति जगतः सामानाधिकरण्यादुपादानत्वं निमित्ते तदयोगादित्यर्थः । **सत्** प्रत्यक्षं भूतत्रयम् । **त्यत्** परोक्षं भूतद्वयम् । **निरुक्तमिदमेवमितिनिर्वचनार्हम्** । ततोऽन्यदनिरुक्तम् ॥ २६ ॥ जगन्निमित्तस्यैव ब्रह्मणस्तत्प्रकृतित्वे हेत्वन्तरमाह—**योनिश्चेति** । वेदान्तानेव लेशतो दर्शयति—**कर्तारमिति** । क्रियाशक्तिवदीशनशक्तिरपि तस्यास्तीत्याह—**ईशमिति** । ताटस्थ्यं व्यावर्तयति—**पुरुषमिति** । तस्य पुरि शयानस्य परिच्छेदं व्यवच्छिनत्ति—**ब्रह्मेति** । आकाशादेरन्यत्वे कथं पूर्णता तत्राऽऽह—**योनिमिति** । अपश्यन्निति संबन्धः ।

परिपश्यन्ति धीराः'' [ मुण्ड० १ । १ । ६ ] इति च ॥ योनिशब्दश्च प्रकृतिवचनस्समधिगतो लोके पृथिवी योनिरोषधिवनस्पतीनामिति ॥ स्त्रीयोनेरप्यस्त्येवावयवद्वारेण गर्भं प्रत्युपादानकारणत्वम् ॥ क्वचित्स्थानवचनोऽपि योनिशब्दो दृष्टः–''योनिष्ट इन्द्र निषदे अकारि'' [ ऋ० सं० १ । १०४ । १ ] इति । वाक्यशेषात्तत्र प्रकृतिवचनता परिगृह्यते–''यथोर्णनाभिस्सृजते गृह्णते च'' [ मुण्ड० १ । १ । ७ ] इत्येवञ्जातीयकात् ॥ तदेवं प्रकृतित्वं ब्रह्मणः प्रसिद्धम् ॥ यत्पुनरिदमुक्तमीक्षापूर्वकं कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु लोके दृष्टं नोपादानेष्वित्यादि ॥ तत्प्रत्युच्यते ॥ न लोकवदिह भवितव्यम् । न ह्ययमनुमानगम्योऽर्थः । शब्दगम्यत्वात्त्वस्यार्थस्य यथाशब्दमिह भवितव्यम् ॥

रत्नप्रभा ।

पश्यन्तीत्यर्थः । नन्वनुपादानेऽपि स्त्रीयोनौ योनिशब्दो दृष्ट इत्यत आह–स्त्रीयोनेरिति ॥ शोणितमवयवशब्दार्थः । योनिशब्दस्य स्थानमप्यर्थो भवति । सोऽत्र भूतयोन्यादिशब्दैर्न ग्राह्यः । ऊर्णनाभ्यादिप्रकृतदृष्टान्तवाक्यशेषविरोधादित्याह–क्वचिदिति । हे इन्द्र ते तव निषदे उपवेशनाय योनिः स्थानं मया अकारि कृतमित्यर्थः ।पूर्वपक्षोक्तानुमानान्यनूद्याऽऽगमबाधमाह–यत्पुनरित्यादिना ॥ नन्वनुमानस्य श्रुत्यनपेक्षत्वान्न तया बाध इत्यत आह–न हीति ॥ जगत्कर्ता पक्षः श्रुत्यैव सिद्ध्यति । या कृतिः, सा शरीरजन्येति व्याप्तिविरोधेन नित्यकृतिमतोऽनुमानासम्भवादतः श्रौतमीश्वरं पक्षीकृत्याऽनुपादा-

भामती ।

यत्पुनरिति । एतदुक्तं भवति–ईश्वरो जगतो निमित्तकारणमेव ईक्षापूर्वकजगत्कर्तृत्वात्, कुम्भकर्तृकुलालवत् । अत्रेश्वरस्यासिद्धेराश्रयासिद्धो हेतुः पक्षश्चाप्रसिद्धविशेषः । यथाहुः–'नानुपलब्धे न्यायः प्रवर्तते' इति । आगमात्तत्सिद्धिरिति चेत्, हन्त तर्हि यादृशमीश्वरमागमो गमयति तादृशोऽभ्युपगन्तव्यः । स च निमित्तकारणं चोपादानकारणं चेश्वरमवगमयति । विशेष्याश्रयग्राह्यागमविरोधान्नानुमानमुदेतुमर्हतीति कुतस्तेन निमित्तत्वावधारणेत्यर्थः । इयं चोपादानपरिणामादिभाषा न विकाराभिप्रायेणापि तु यथा सर्पस्योपादानं रज्जुरेवं ब्रह्म जगदुपादानं द्रष्टव्यम् । न खलु नित्यस्य निष्कलस्य ब्रह्मणः सर्वात्मनैकदेशेन वा परिणामः संभवति, नित्यत्वादनेकदेशत्वादित्युक्तम् । न च मृदः शरावादयो भिद्यन्ते, न चाभिन्नाः, न वा

आनन्दगिरीय–न्यायनिर्णयः ।

यद्भूतयोनिमित्यत्र तदक्षरं परविद्याधिगम्यमिति संबन्धः । योनिशब्दे ब्रह्मणि प्रयुक्तेऽपि कथं तस्योपादानत्वं, न हि तस्य प्रकृत्यर्थत्वं प्रसिद्धं तत्राऽऽह–योनिशब्दश्चेति । ननूपादानत्वं विनाऽपि स्त्रीयोनौ योनिशब्दो दृश्यते तत्राऽऽह–स्त्रीति । अवयवशब्देन योनिप्रभवं शोणितं गृह्यते तर्हि योनिशब्दस्य श्रुतित्वात्प्रथमतो वक्तव्यत्वे किमर्थं पश्चादुच्यते तत्राऽऽह–क्वचिदिति । योनिः स्थानं ते तव भो इन्द्र निषदे निषदनायोपवेशनाय स्थित्यर्थमकारि कृतमित्यर्थः । योनिशब्दस्य व्यभिचारित्वेनाश्रुतित्वेनासाधकतेत्याशंक्याऽऽह–वाक्येति । भूतयोन्यादिवाक्यं सप्तम्यर्थः । वाक्यशेषशब्दो ब्रह्मादिपदस्याप्युपलक्षणः श्रुत्यादिसिद्धम् । सिद्धान्तमुपसंहरति–एवमिति । परोक्तमनुमानजातमपाकर्तुमनुवदति–यदिति । यथादृष्टमनुमेयमिह तु धर्मवन्नानुमानं युक्तं श्रुतिलिङ्गाभ्यां ब्रह्मणोऽन्यत्रैव सामान्यतो दृष्टानां सावकाशत्वेन दुर्बलत्वादित्याह–तदिति । किंच, श्रौतमीश्वरमनाश्रित्यानुमानमाश्रित्य वा ? नाऽऽद्यः, अप्रसिद्धविशेषणत्वादिप्रसङ्गादित्याह–न हीति । न द्वितीयो धर्मिग्राहकमानविरोधादित्याह–शब्देति ।

शब्दश्चेक्षितुरीश्वरस्य प्रकृतित्वं प्रतिपादयतीत्यवोचाम ॥ पुनश्चैतत्सर्वं विस्तरेण प्रतिपादयिष्यामः ॥ २७ ॥ इति प्रकृत्यधिकरणम् ॥ ७ ॥

## एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥ ( ८ ) ॥

इति श्रीवैयासिक्यां शारीरकमीमांसायां प्रथमाध्यायस्य तुरीयः पादः समाप्तः ॥

"ईक्षतेर्नाशब्दम्" [ व्या० सू० १ । १ । ५ ] इत्यारभ्य प्रधानकारणवादः सूत्रैरेव पुनःपुनराशंक्य निराकृतः ॥ तस्य हि पक्षस्योपोद्बलकानि कानिचिल्लिङ्गाभासानि वेदान्तेष्वापातेन ( मन्दमतीन् ) प्रतिभान्तीति । स च कार्यकारणानन्यत्वाभ्युपगमात्प्रत्यासन्नो वेदान्तवादस्य देवलप्रभृतिभिश्च कैश्चिद्धर्मसूत्रकारैस्स्वग्रन्थेष्वाश्रितः ॥

---

रत्नप्रभा ।

नत्वसाधने भवत्येवोपजीव्यया प्रकृतित्वबोधकश्रुत्या बाध इत्यर्थः । यदुक्तं विलक्षणत्वाद्ब्रह्मणो न जगदुपादानत्वमिति, तत्राह—पुनश्चेति ॥ "न विलक्षणत्वादस्य तथात्वं चशब्दात्" [ व्या०सू० २।१।४ ] इत्यारभ्येत्यर्थः । अत उभयरूपं कारणत्वं ब्रह्मणो लक्षणमिति सिद्धम् ॥ २७ ॥ ( ७ ) ॥ एतेन सर्वे व्याख्याताः । अस्यातिदेशाधिकरणस्य तात्पर्यं वक्तुं वृत्तमनुवदति—ईक्षतेरिति ॥ प्रधानवादस्य प्राधान्येन निराकरणे हेतुमाह—तस्य हीत्यादिना ॥ तर्ह्यण्वादिवादा उपेक्षणीया दुर्बलत्वादित्यत आह—

भामती ।

भिन्नाभिन्नाः,किंत्वनिर्वचनीया एव।यथाह श्रुतिः—'मृत्तिकेत्येव सत्यम्' इति । तस्मादद्वैतोपक्रमादुपसंहाराच्च सर्वे एव वेदान्ता ऐकान्तिकाद्वैतपराः सन्तः साक्षादेव क्वचिदद्वैतमाहुः, क्वचिद् द्वैतनिषेधेन, क्वचिद्ब्रह्मोपादानत्वेन जगतः। एतावतापि तावद्भेदो निषिद्धो भवति, न तूपादानत्वाभिधानमात्रेण विकारग्रह आस्थेयः। न हि वाक्यैकदेशस्यार्थोऽस्तीति ॥ २७॥ स्यादेतत् । मा भूत्प्रधानं जगदुपादानं तथापि न ब्रह्मोपादानत्वं सिध्यति, परमाण्वादीनामपि तदुपादानानामुपप्लवमानत्वात्, तेषामपि हि किंचिदुपोद्बलकमस्ति वैदिकं लिङ्गमित्याशङ्कामपनेतुमाह सूत्रकारः—एतेन सर्वे व्याख्याता व्याख्याताः । निगदव्याख्यातेन भाष्येण

आनन्दगिरीय—न्यायनिर्णयः ।

शब्दानुसारेणापि कथमुभयथा कारणत्वं तत्राऽऽह—शब्दश्चेति । योनिशब्दो यत इति पञ्चमी च शब्दार्थः । चकारात्प्रतिज्ञाद्यनुपरोधलिङ्गमपि गृहीतम् । शब्दावगतमपि वैलक्षण्यादियुक्तिविरोधादयुक्तमित्याशंक्याऽऽह—पुनश्चेति । युक्तिविरोधस्याग्रे निरासादागमविरुद्धानुमानस्य कालातीतत्वेनाप्रामाण्याद्यथागममुभयथा कारणत्वमिति भावः ॥ २७ ॥ ( ७ ) ॥ उक्तन्यायेन प्रधानस्याशब्दत्वेऽपि न ब्रह्मण्येव जगत्कारणे समन्वयः । 'अणोरणीयान्' 'अण्व्य इवेमा धानाः' 'असदेवेदम्' इत्यादिशब्दादणुस्वभावशून्यानां जगद्धेतुत्वसंभवादित्याशंक्याऽऽह—एतेनेति । अतिदेशेनाण्वादिवादं निरस्य जगद्धेतौ ब्रह्मणि समन्वयस्थापनादस्य श्रुत्यादिसंगतिः। फलं तु पूर्ववत् । अतिदेशाधिकरणस्य तात्पर्यं वक्तुं वृत्तं कीर्तयति—ईक्षतेरिति । तस्यैव विशेषतो निरासे हेतुमाह—तस्येति । प्रधानवादस्यैव प्राधान्येन निरासे हेत्वन्तरमाह—स चेति । न केवलमभ्यर्हितत्वात्तस्य प्राधान्यं स्मृतिमूलत्वादपीत्याह—देवलेति । उक्तहेतु-

---

१ अध्यायान्त एव प्रकृत्यधिकरणं समाप्यते, सर्वव्याख्यानाधिकरणं च पृथङ्नेति च केचिदाहुः ।

**तेन तत्प्रतिषेध एव यत्नोऽतीव कृतः । नाण्वादिकारणवादप्रतिषेधे । तेऽपि तु ब्रह्मकारणवादपक्षस्य प्रतिपक्षत्वात्प्रतिषेद्धव्याः ॥ तेषामप्युपोद्बलकं वैदिकं किञ्चिल्लिङ्गमापातेन मन्दमतीन्प्रति भायादित्यतः प्रधानमल्लनिबर्हणन्यायेनातिदिशति ॥ एतेन प्रधानकारणवादप्रतिषेधन्यायकलापेन सर्वेऽण्वादिकारणवादा अपि प्रतिषिद्धतया व्याख्याता वेदितव्याः ॥ तेषामपि प्रधानवदशब्दत्वाच्छब्दविरोधित्वाच्चेति ।**

---

रत्नप्रभा ।

**तेऽपि त्विति ॥** निर्मूलास्ते कथं प्रतिज्ञा इत्यत आह—**तेषामप्युपेति ।** तथाहि छान्दोग्ये जगत्कारणत्वज्ञापनार्थं पिता पुत्रमुवाच—आसां वटधानानां मध्ये एकां भिन्धीति, भिन्ना भगव इत्युवाच पुत्रः । पुनः पित्रा किमत्र पश्यसीत्युक्ते, न किञ्चन भगव इत्याह । तत्र पित्राऽणिमानं न पश्यसीत्युक्तम् । तथा च न किञ्चन शब्दाच्छून्यस्वभाववादौ प्रतीयेते । अणुशब्दात् परमाणुवाद इति । **एवम्** "असदेवेदमग्र आसीद्" [ छां० ३ । १९ । १ ] "अणोरणीयान्" [ कठ० २ । २० ] इत्यादि लिङ्गं द्रष्टव्यम् । अत्राण्वादिवादाः श्रौता न वेति संशये सत्यसदण्वादिशब्दबलाच्छ्रौता इति प्राप्तेऽतिदिशति—**एतेनेति ॥** अस्यातिदेशत्वान्न पृथक् सङ्गत्याद्यपेक्षा । न किञ्चनाऽसच्छब्दयोः प्रत्यक्षायोग्यवस्तुपरत्वादणुशब्दस्य सूक्ष्माभिप्रायत्वादशब्दत्वं, तेषां वादानां प्रधानवादवदश्रौतत्वं, ब्रह्मकारणश्रुतिबाधितत्वञ्च । तस्माद्ब्रह्मैव परमका-

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

फलमाह—**तेनेति ।** तर्हि तावतैव ब्रह्मकारणत्वसिद्धेरलमतिदेशेनेत्याशंक्याऽऽह—**तेऽपीति ।** अण्वादिवादानामशब्दत्वादेव निषेधे पुनरुत्थानाभावान्न निषेध्यतेत्याशंक्याऽऽह—**तेषामिति ।** 'अणोरणीयान्' इत्याद्यब्रह्मपरं ब्रह्मपरं वेत्यण्वादिशब्दस्य परमाण्वादिविषयत्वाविषयत्वाभ्यां संदेहे परमाणुष्वणुशब्दस्य प्रसिद्धत्वात्कुलालो मृदा घटं करोतीतिवत्पतत्रैर्द्यावापृथिवी देवः संजनयन्निति तेषां हेतुत्वोक्तेः 'असद्वा इदम्' 'असदेवेदम्' इति शून्यवादात् 'तन्नामरूपाभ्यामेव व्याक्रियत' इति कर्मकर्तरि लकारेण स्वभाववादादनुपादानं ब्रह्मेति प्रतीतेः 'अण्व्य इवेमा धानाः' इति च जगतो मृद्दृष्टान्ताद्ब्रह्मणः प्रकृतित्वे वटधानादृष्टान्तादण्वादीनामपि तत्प्रकृतित्वयोगाद्श्रुतिसामान्यासिद्धिरित्यर्थः । अथैवं पूर्वपक्षमानेऽपि किमिति सांख्यमतनिरसनन्यायेन तन्निरसनं क्रियते किमिति न विपरीतमित्याशंक्य पूर्वपक्षप्राप्तिमितिशब्दसमर्पितामनूद्य सिद्धान्तमाह—**अत इति ।** उक्तन्यायस्य तेषु प्राप्तिमाह—**तेषामिति ।** अणोरणीयानित्यात्मनः सूक्ष्मतया प्रत्यक्षाद्यगोचरत्ववचनात्पतत्रशब्दस्य परमाणुवाचकत्वासिद्धेरणुः पन्था इति ज्ञानमार्गस्तुतेः 'असदेवेदम्' इत्यादेः समाहितत्वान्मृदादिदृष्टान्तानां च प्रतिज्ञानुरोधित्वाद्धानादृष्टान्तस्यापि तदनुरोधेन भाक्तत्वादण्वादीनां प्रधानवदशब्दत्वाद्ब्रह्मकारणवादिशब्दविरोधित्वादुक्तान्यपि वाक्यानि ब्रह्मपराणीति ब्रह्मणि कारणे सिद्धः सम-

---

१ न्यायबलेनेति पाठान्तरम् ।

व्याख्याता व्याख्याता इति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति ॥ १ ॥ ४ ॥ २८ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारीणपरमहंसपरिव्राजकाचार्यगोविन्दभगवत्पादपूज्यशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये सन्दिग्धपदजातविचारो नाम समन्वयाख्यास्य प्रथमाध्यायस्य चतुर्थः पादः समाप्तः ॥ १ ॥ ४ ॥

---

रत्नप्रभा ।

रणम् । तस्मिन्नेव सर्वेषां वेदान्तानां समन्वय इति सिद्धम् ॥ १ ॥ ४ ॥ २८ ॥ ( ८ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शनभाष्यव्याख्यायां भाष्यरत्नप्रभायां प्रथमाध्यायस्य चतुर्थः पादः समाप्तः ॥ १ ॥ ४ ॥

भामती ।

व्याख्यातं सूत्रम् । 'प्रतिज्ञालक्षणं लक्ष्यमाणे पदसमन्वयः । वैदिकः स च तत्रैव नान्यत्रेत्यत्र साधितम्' ॥२८॥

इति श्रीमद्वाचस्पतिमिश्रविरचिते श्रीमच्छारीरकभाष्यविभागे भामत्यां प्रथमाध्यायस्य चतुर्थः पादः ॥१॥४॥

आनन्दगिरीय—न्यायनिर्णयः ।

न्वयो वेदान्तानामित्यर्थः । पुनरुक्तेस्तात्पर्यमाह—व्याख्याता इति ॥ २८ ॥ ( ८ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि (ज्ञान) कृते शारीरकभाष्यन्यायनिर्णये प्रथमाध्यायस्य चतुर्थः पादः ॥ १ ॥ ४ ॥

॥ इति प्रथमाध्यायस्य सन्दिग्धपदजातविचाराख्यश्चतुर्थः पादः ॥

## इति श्रीमद्ब्रह्मसूत्रशांकरभाष्ये समन्वयाख्यः प्रथमोऽध्यायः १.



तत्सद्ब्रह्मणे नमः ।

# अथ ब्रह्मसूत्रशांकरभाष्यम्

रत्नप्रभा–भामती–न्यायनिर्णय–टीकात्रयसमेतम् ।



## द्वितीयोऽध्यायः २.

### स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ २ । १ । १ ॥ (१) ॥

प्रथमेऽध्याये सर्वज्ञस्सर्वेश्वरो जगत उत्पत्तिकारणं मृत्सुवर्णादय इव घटरुचकादीनामुत्पन्नस्य जगतो नियन्तृत्वेन स्थितिकारणं मायावीव मायायाः प्रसारितस्य जगतः पुनस्स्वात्मन्येवोपसंहारकारणमवनिरिव चतुर्विधस्य भूतग्रामस्य, स एव च सर्वेषां न आत्मेत्येतद्वेदान्तवाक्यस-

---

रत्नप्रभा ।

ॐ ब्रह्मणे नमः । सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे । नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥ १ ॥ सांख्यादिस्मृतियुक्तिभिर्न चलितो वेदान्तसिद्धान्तगो निर्मूलैर्विविधागमैरविदितो व्योमादिजन्माऽऽव्ययः । उत्पत्त्यन्तविवर्जितश्चितिवपुर्व्यापी च कर्ताशको लिङ्गेन प्रथितोऽपि नामतनुकृत्तं जानकीशं भजे ॥ २ ॥ "नामरूपे व्याकरवाणि" इति श्रुतेः नामतनुकृदपि संज्ञामूर्तिव्याकर्ताऽपि लिङ्गशरीरोपाधिना कर्तेति, अंश इति च,प्रथितः प्रसिद्धो यः तं प्रत्यगभिन्नं परमात्मानं मूलप्रकृतिनियन्तारं भजे इत्यर्थः ॥ स्मृतिप्रसङ्गात् पूर्वोत्तराध्याययोर्विषयविषयिभावसङ्गतिं वक्तुं वृत्तं कीर्तयति–प्रथमेऽध्याय इति ॥ जन्मादि सूत्रमारभ्य जगदुत्पत्त्यादिकारणं ब्रह्मेति प्रतिपादितम् । "शास्त्रदृष्ट्या तूपदेशो वामदेववद्" [ व्या०

भामती ।

स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात् । वृत्तवर्तिष्यमाणयोः समन्वयविरोधपरिहारलक्षणयोः संगतिप्रदर्शनाय सुखग्रहणाय चैतयोः संक्षेपतस्तात्पर्यार्थमाह–प्रथमेऽध्याय इति । अनपेक्षवेदान्तवाक्यस्वरससिद्धसमन्वयलक्षणस्य विरोधतत्परिहाराभ्यामाक्षेपसमाधानकरणादनेन

आनन्दगिरीय–न्यायनिर्णयः ।

अतिदेशाधिकरणे प्रधानवदशब्दत्वं परमाण्वादीनामपीत्युक्तम् । संप्रति प्रधानस्य वैदिकशब्दवत्त्वाभावेऽपि स्मृतिरूपशब्दवत्त्वमाशंक्य परिहरति–स्मृतीति । पूर्वोत्तराध्याययोर्विषयविषयिभावसंबन्धं वक्तुं पूर्वाध्यायार्थं संक्षेपतोऽनुवदति–प्रथम इति । जन्मादिसूत्रमारभ्योत्पत्त्यादिकारणं ब्रह्मेति तत्रतत्रोक्तं पूर्वाध्यायार्थमनुभाष्याऽऽत्मभेदवादिसांख्यस्मृतिविरोधोद्भावनानुकूलत्वेन 'शास्त्रदृष्ट्या' इत्यादिप्रदेशेषु दर्शितमद्वितीयत्वमनुवदति–स एवेति । किंप्रमाणकमेतदित्याशंक्योक्तम्–एतदिति । चतुर्थपादार्थमुत्तरार्थम-

**मन्वयप्रतिपादनेन प्रतिपादितम् ॥ प्रधानादिकारणवादाश्चाऽशब्दत्वेन निराकृताः ॥ इदानीं स्वपक्षे स्मृतिन्यायविरोधपरिहारः प्रधानादिवादानाञ्च न्यायाभासोपबृंहितत्वं प्रतिवेदान्तञ्च सृष्ट्यादिप्रक्रियाया अविगीतत्वमित्यस्यार्थजातस्य प्रतिपादनाय द्वितीयोऽध्याय आरभ्यते ॥ तत्र प्रथमं तावत्स्मृतिविरोधमुपन्यस्य परिहरति-(स्मृत्य०२।१।१)॥ यदुक्तं ब्रह्मैव सर्वज्ञं जगतः कारणमिति॥ तदयुक्तम् ॥कुतः॥ स्मृत्यनवकाशदोषप्रसङ्गात्-**

रत्नप्रभा ।

सू० १ । १ । ३१ ] इत्यादिसूत्रेषु, स एवाद्वितीयः सर्वात्मेत्युक्तम् । "आनुमानिकमप्येकेषामिति चेन्न तथा चेतोर्पणनिगमात्तथाहि दर्शयति" [ व्या० सू० १ । ४ । १ ] इत्यादिना कारणान्तरस्याश्रौतत्वं दर्शितमित्यर्थः । **एवं** प्रथमाध्यायस्यार्थमनूद्य तस्मिन् विषये विरोधपरिहारविषयिणं द्वितीयाध्यायस्यार्थं पादशः संक्षिप्य कथयति—**इदानीमिति** ॥ अत्र **प्रथमपादे** समन्वयस्य सांख्यादिस्मृतियुक्तिभिर्विरोधपरिहारः क्रियते । **द्वितीयपादे** सांख्याद्यागमानां भ्रान्तिमूलत्वमविरोधाय कथ्यते ॥ **तृतीये** पादे प्रतिवेदान्तं सृष्टिश्रुतीनां जीवात्मश्रुतीनां च व्योमादिमहाभूतानां जन्मलयक्रमादिकथनेनाविरोधः प्रतिपाद्यते ॥ **चतुर्थपादे** लिङ्गशरीरश्रुतीनामविरोध इत्यर्थः । अयमेवार्थः सुखबोधार्थं श्लोकेन संगृहीतः—"द्वितीये स्मृतितर्काभ्यामविरोधोऽन्यदुष्टता । भूतभोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता" ॥ १ ॥ इति ॥ तत्राज्ञाते विषये विरोधशंकासमाध्ययोगात्समन्वयाध्यायानन्तर्यमविरोधाध्यायस्य युक्तम् । तत्र प्रथमाधिकरणस्य तात्पर्यमाह—**तत्र प्रथममिति** ॥ श्रौते समन्वये विरोधनिरासार्थत्वादस्य पादस्य श्रुतिशास्त्राध्यायसङ्गतयः । स्वमतस्थापनात्मकत्वात् सर्वेषामधिकरणानामेतत्पादसङ्गतिः । अत्र **पूर्वपक्षे** स्मृतिविरोधादुक्तसमन्वयासिद्धिः फलं, **सिद्धान्ते** तत्सिद्धिरिति विवेकः । तत्र ब्रह्मण्युक्तवेदान्तसमन्वयो **विषयः** । स किं सांख्यस्मृत्या विरुध्यते न वेति स्मृतिप्रामाण्याप्रामाण्याभ्यां **सन्देहे** पूर्वपक्षमाह—**यदुक्तमिति** ॥ तन्त्र्यन्ते व्युत्पाद्यन्ते तत्त्वान्यनेनेति तन्त्रं शास्त्रं कपि-
. . .

भामती ।

लक्षणेनास्ति विषयविषयिभावः संबन्धः । पूर्वलक्षणार्थो हि विषयस्तद्गोचरत्वादाक्षेपसमाधानयोरेष च विषयीति । तदेवमध्यायमवतार्य तदवयवमधिकरणमवतारयति—**तत्र प्रथमं तावदिति** । तन्त्र्यते व्युत्पाद्यते मोक्षसाधनमनेनेति तन्त्रं, तदेवाख्या यस्याः सा स्मृतिस्तन्त्राख्या परमर्षिणा कपिलेनादिविदुषा प्रणीता । अन्याश्चासुरिपञ्चशिखादिप्रणीताः स्मृतयस्तदनुसारिण्यः । न खल्वमूषां स्मृतीनां मन्वादिस्मृतिवदन्योऽवकाशः शक्यो वदितुमृते मोक्षसाधनप्रकाशनात् । तदपि चेन्नाभिदध्युरनवकाशाः सत्योऽप्रमाणं प्रसज्येरन् । तस्मात्तदविरोधेन कथंचिद्वेदान्ता व्याख्यातव्याः । पूर्वपक्षमाक्षिपति—

आनन्दगिरीय-न्यायनिर्णयः ।

**नुद्रवति—प्रधानादीति** । वृत्तमनुभाष्योत्तराध्यायार्थं पादशः संगृह्णाति—**इदानीमिति** । न्यायाभासोपबृंहितत्वं भ्रान्तिमूलत्वम् । तृतीयचतुर्थपादयोरर्थमाह—**प्रतिवेदान्तं चेति** । सृष्ट्यादीत्यादिशब्दः संख्याक्रमसंग्रहार्थः । तत्र तृतीये भूतभोक्तृविषयसृष्ट्यादिवाक्यानामविगानं चतुर्थे प्राणादिविषयसृष्ट्यादिवाक्यानामिति विभागः । उक्तसमन्वयस्याध्यक्षादिविरोधे तन्निरसनमनेनेति विषयविषयित्वं संबन्धः । तत्र पूर्वस्य विषयत्वादस्य विषयित्वान्निर्विषयविचारायोगाद्विषयसिद्ध्युत्तरकालत्वात्तद्विषयविचारस्येति पूर्वोत्तरत्वमनयोरुचितमिति भावः । अध्यायमवतार्य तदवयवमाद्याधिकरणमवतारयति—**तत्रेति** । समन्वये स्मृतिविरोधसमाधानार्थत्वादधिकरणस्य श्रुत्यादिसंगतयः । पूर्वपक्षे स्मृतिविरोधे समन्वयासिद्धिः । सिद्धान्ते तदविरोधे तत्सिद्धिः । उक्तश्चेतने जगदुपादाने समन्वयो विषयः स किं सांख्यस्मृत्या विरुध्यते न वेति तत्प्रामाण्याप्रामाण्याभ्यां संदेहे पूर्वपक्षमाह—**यदुक्तमिति** । हेतुत्वेन सूत्रपदमवतारयितुं पृच्छति—**कुत इति** ।

**स्मृतिश्च तन्त्राख्या परमर्षिप्रणीता शिष्टपरिगृहीता, अन्याश्च तदनुसारिण्यः स्मृतयः, एवं सत्यनवकाशाः प्रसज्येरन् ॥ तासु ह्यचेतनं प्रधानं स्वतन्त्रं जगतः कारणमुपनिबध्यते ॥ मन्वादिस्मृतयस्तावच्चोदनालक्षणेनाग्निहोत्रादिना धर्मजातेनापेक्षितमर्थं समर्पयन्त्यः सावकाशा भवन्ति—अस्य वर्णस्यास्मिन्काले ऽनेन विधानेनोपनयनमीदृशश्चाचार इत्थं वेदाध्ययनमित्थं समावर्त्तनमित्थं सहधर्मचारिणीसंयोग इति ॥ तथा पुरुषार्थांश्चतुर्वर्णाश्रमधर्मान्नानाविधान्विदधति ॥ नैवं कपिलादिस्मृतीनामनुष्ठेये विषयेऽवकाशोऽस्ति ॥ मोक्षसाधनमेव हि सम्यग्दर्शनमधिकृत्य ताः प्रणीताः ॥ यदि तत्राप्यनवकाशास्स्युरानर्थक्यमेवासां प्रसज्येत ॥ तस्मात्तदविरोधेन वेदान्ता व्याख्यातव्याः ॥ कथं पुनरीक्षत्यादिभ्यो हेतुभ्यो ब्रह्मैव सर्वज्ञं जगतः कारणमित्यवधारितः श्रुत्यर्थस्स्मृत्यनवकाशदोषप्रसङ्गेन पुनराक्षिप्यते ।**

---

रत्नप्रभा ।

लोक्तम् । अन्याश्च पञ्चशिखादिभिः प्रोक्ताः । **एवं सति** वेदान्तानामद्वयब्रह्मसमन्वये निरर्थकाः स्युरित्यर्थः । तासामपि ब्रह्मार्थकत्वमस्तीत्यविरोध इत्यत आह—**तासु हीति** ॥ ननु सांख्यस्मृतिप्रामाण्याय प्रधानवादग्रहे मन्वादिस्मृतीनामप्रामाण्यं स्यादित्याशंक्य तासां धर्मे सावकाशत्वात् प्रामाण्यं स्यादित्याह—**मन्वादीति** ॥ तर्हि सांख्यादिस्मृतीनामपि धर्मे तात्पर्येण प्रामाण्यमस्तु । तत्त्वं तु ब्रह्मैवेत्यविरोध इत्यत आह—**नैवमिति** ॥ तत्त्वे विकल्पानुपपत्तेर्निरवकाशस्मृत्यनुसारेण श्रुतिव्याख्यानमुचितम् । सावकाशनिरवकाशयोर्निरवकाशं बलीय इति न्यायादित्याह—**तस्मादिति** ॥ श्रुतिविरोधे स्मृत्यप्रामाण्यस्येष्टत्वात् पूर्वपक्षो न युक्त इति शङ्कते—**कथमिति** ॥ ये स्वातन्त्र्येण श्रुत्यर्थं ज्ञातुं

भामती ।

**कथं पुनरीक्षत्यादिभ्य इति** । प्रसाधितं खलु धर्ममीमांसायां 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इत्यत्र, यथा श्रुतिविरुद्धानां स्मृतीनां दुर्बलतयानपेक्षणीयत्वं तस्मान्न दुर्बलानुरोधेन बलीयसीनां श्रुतीनां

आनन्दगिरीय-न्यायनिर्णयः ।

सूत्रपदं हेतुमादाय व्याचष्टे—**स्मृतीति** । तन्त्र्यन्ते व्युत्पाद्यन्ते तत्त्वान्यनेनेति तन्त्रं शास्त्रं, तन्त्रमित्याख्या यस्याः सा तथेति यावत् । आप्तप्रणीतत्वेन प्रामाण्यं तस्याः सूचयति—**परमर्षीति** । बौद्धादिस्मृतिसाम्यव्यावृत्त्यर्थं विशिनष्टि—**शिष्टेति** । अन्याश्चेत्यासुरिपञ्चशिखादिप्रणीताः । **एवं सतीति** । ब्रह्म सर्वज्ञत्वादिविशेषणं जगत्कारणमित्युपगमे सतीत्यर्थः । सति विरोधे निरवकाशत्वाशंका, विरोधस्तु कथमित्याशंक्याऽऽह—**तासु हीति** । उक्तरूपाया मायाशक्तेर्जगत्कारणत्वेन सिद्धान्तेऽपि स्वीकृतत्वान्नास्ति विरोधाशंकेत्याशंक्याऽऽह—**स्वतन्त्रमिति** । सांख्यस्मृतीनां सावकाशत्वाय प्रधानवादोपादाने मन्वादिस्मृतीनां निरवकाशतेत्याशंक्य तात्पर्यविषयस्यानुष्ठेयस्याबाधात्तस्मिन्विषये तासामस्ति सावकाशत्वमित्याह—**मन्वादीति** । क्रत्वर्थसमर्पकत्वेन मन्वादिस्मृतीनां सावकाशत्वमभिनयति—**अस्येति** । न केवलं क्रत्वर्थप्रतिपादकतया सावकाशत्वं किंतु पुरुषार्थप्रतिपादकतयाऽपीत्याह—**तथेति** । नन्वनुष्ठेये विषये कपिलादिस्मृतयोऽपि सावकाशाः सत्यो ब्रह्मकारणवादेऽपि न निरवकाशा भविष्यन्ति नेत्याह—**नैवमिति** । तत्र हेतुमाह—**मोक्षेति** । परिशेषायातं फलितमाह—**यदीति** । सावकाशनिरवकाशयोर्निरवकाशं बलवदितिन्यायसिद्धमर्थं कथयति—**तस्मादिति** । पूर्वपक्षमाक्षिपति—**कथमिति** । मानान्तरनिरपेक्षया श्रुत्या ब्रह्मणि जगत्कारणेऽवधारिते तदपेक्षस्मृत्यवष्टम्भेन तदाक्षेपो न युक्तः सापेक्षनिरपेक्षयोर्निरपेक्षस्य बलवत्त्वा-

**भवेदयमनाक्षेपः स्वतन्त्रप्रज्ञानाम् । परतन्त्रप्रज्ञास्तु प्रायेण जनाः स्वातन्त्र्येण श्रुत्यर्थमवधारयितुमशक्नुवन्तः प्रख्यातप्रणेतृकासु स्मृतिष्ववलम्बेरन् ॥ तद्बलेन च श्रुत्यर्थं प्रतिपित्सेरन् ॥ अस्मत्कृते च व्याख्याने न विश्वस्युर्बहुमानात्स्मृतीनां प्रणेतृषु ॥ कपिलप्रभृतीनाञ्चार्षं ज्ञानमप्रतिहतं स्मर्यते ॥ श्रुतिश्च भवति—"ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानञ्च पश्येद्" [ श्वेता० ५ । २ ] इति ॥ तस्मान्नैषां मतमयथार्थं शक्यं सम्भावयितुम् ॥ तर्कावष्टम्भेन च तेऽर्थं प्रतिष्ठापयन्ति ॥ तस्मादपि स्मृतिबलेन वेदान्ता व्याख्येया इति पुनराक्षेपः ॥**

---

रत्नप्रभा ।

शक्नुवन्ति तेषामयं पूर्वपक्षो न भवेत् । सांख्यवृद्धेषु श्रद्धालूनां तु भवेदित्याह—**भवेदिति** ॥ तेषामतीन्द्रियार्थज्ञानवत्त्वाच्च तत्र श्रद्धा स्यादित्याह—**कपिलप्रभृतीनां चेति** ॥ "आदौ यो जायमानं च कपिलं जनयेदृषिम् । प्रसूतं विभृयाज्ज्ञानैस्तं पश्येत्परमेश्वरम्" ॥ १ ॥ इति श्रुतियोजना । **यथा** सांख्यस्मृतिविरोधाद्ब्रह्मवादस्त्याज्य इति त्वयोच्यते, **तथा** स्मृत्यन्तरविरोधात् प्रधानवादस्त्याज्य इति

भामती ।

युक्तमुपवर्णनम्, अपि तु स्वतःसिद्धप्रमाणभावाः श्रुतयो दुर्बला स्मृतीर्बाधन्त एवेति युक्तम् । पूर्वपक्षी समाधत्ते—**भवेदयमिति** । प्रसाधितोऽप्यर्थः श्रद्धाजडान्प्रति पुनः प्रसाध्यत इत्यर्थः । आपाततः समाधानमुक्त्वा परमसमाधानमाह पूर्वपक्षी—**कपिलप्रभृतीनां चार्षमिति** । अयमस्याभिसंधिः—ब्रह्म हि शास्त्रस्य कारणमुक्तं 'शास्त्रयोनित्वात्' इति, तेनैष वेदराशिर्ब्रह्मप्रभवः सन्नाजानसिद्धानावरणभूतार्थमात्रगोचरतद्बुद्धिपूर्वको यथा तथा कपिलादीनामपि श्रुतिस्मृतिप्रथिताजानसिद्धभावानां स्मृतयोऽनावरणसर्वविषयतद्बुद्धिप्रभवा इति न श्रुतिभ्योऽमूषामस्ति कश्चिद्विशेषः । न चैताः स्फुटतरं प्रधानादिप्रतिपादन-

आनन्दगिरीय—न्यायनिर्णयः ।

दित्यर्थः । स्वतन्त्रप्रज्ञानां परतन्त्रप्रज्ञानां वा यथोक्ताक्षेपानुपपत्तिरिति विकल्प्याऽऽद्यमङ्गीकरोति—**भवेदिति** । स्मृत्यपेक्षामन्तरेण पौर्वापर्यालोचनया श्रुतिवशादेव तदर्थप्रतिपत्तिसामर्थ्यं स्वतन्त्रप्रज्ञत्वम् । न हि तान्प्रति स्मृत्यवष्टम्भेनाऽऽक्षेपस्तु युक्तः श्रुत्यैव तेषां तदर्थप्रतिपत्तेरुपपत्तेरित्यर्थः । द्वितीयं प्रत्याह—**परतन्त्रेति** । अस्मदादीनां विना स्मृत्यपेक्षां स्वातन्त्र्येण वेदार्थनिर्णये सामर्थ्याभावात्तदर्थमवश्यंभाविन्यां पूर्वसिद्धस्मृत्यपेक्षायां सर्वज्ञकपिलादिप्रणीतस्मृतिविरोधेन श्रुत्यर्थनिश्चयायोगात्तदर्थस्योपचरितत्वोपपत्तौ स्मृत्यवष्टम्भेनाऽऽक्षेपः संभवतीत्यर्थः । स्मृत्यवष्टम्भमन्तरेणापि केषांचिद्वेदार्थनिर्णयः सिध्यति, न हि स्मृतिकर्तारः स्मृत्यन्तरापेक्षया तदर्थं निर्धारयन्तीत्यभिप्रायेण प्रायेणेत्युक्तम् । बौद्धादिस्मृत्यवष्टम्भव्यासेधार्थं प्रख्यातपदम् । तदवलम्बनफलमाह—**तद्बलेनेति** । श्रुत्यर्थं प्रतिपित्सेरन्नित्युपचरितं तदर्थं प्रतिपद्येरन्नित्यर्थः । श्रुतीनामुपचरितार्थप्रतिपित्सा न युक्ता मुख्येऽर्थे तासां शक्तितात्पर्ययोर्व्याख्यातत्वादित्याशंक्याऽऽह—**अस्मत्कृते चेति** । तत्राविश्वासे हेतुमाह—**बहुमानादिति** । अस्मदादिष्विव तेष्वपि बहुमानानुपपत्तिमाशंक्याऽऽह—**कपिलेति** । तेषामप्रतिहतज्ञानत्वप्रतिपादिका स्मृतिः सांख्यस्मृतिवदनिर्णीतप्रामाण्येत्याशंक्याऽऽह—**श्रुतिश्चेति** । यस्तावदग्रे सर्गादौ जायमानं कपिलनामानमृषिं स्थितिकाले च प्रसूतं भूतभविष्यद्वर्तमानार्थज्ञानैर्बिभर्ति पुष्णाति तमीश्वरं पश्येदिति योजना । योगिप्रत्यक्षमूलतया सांख्यस्मृतीनां श्रुत्यनपेक्षत्वात्तद्विरोधेऽपि नाप्रामाण्यमिति फलितमाह—**तस्मादिति** । तर्कमूलत्वाच्च कपिलादिस्मृतीनां प्राबल्यमित्याह—**तर्केति** । "प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्" इत्यादिना "यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः" इत्यन्तेन तर्कस्य निर्णायकत्वावगमात्तद्बलप्रवृत्तकपिलादिस्मृतीनां प्राबल्ये सिद्धे सिद्धमर्थमाह—**तस्मादिति** । मूलद्वयसाहित्येन

**तस्य समाधिर्नान्यस्मृत्यनवकाशदोषप्रसङ्गादिति ॥ यदि स्मृत्यनवकाशदोषप्रसङ्गेनेश्वरकारणवाद आक्षिप्येतैवमप्यन्या ईश्वरकारणवादिन्य स्मृतयोऽनवकाशाः प्रसज्येरन् ॥ ता उदाहरिष्यामः–"यत्तत्सूक्ष्ममविज्ञेयम्" इति परं ब्रह्म प्रकृत्य "स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते" इति चोक्त्वा "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" इत्याह ॥ तथाऽन्यत्रापि–"अव्यक्तं पुरुषे ब्रह्मन्निर्गुणे सम्प्रलीयते" इत्याह–"अतश्च संक्षेपमिमं शृणुध्वं नारायणः सर्वमिदं पुराणः । स सर्गकाले च करोति सर्गं संहारकाले च तदत्ति भूयः॥" इति पुराणे ॥ भगवद्गीतासु च–"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" [ ७ । ६ ] इति ॥ परमात्मानमेवं च प्रकृत्याऽऽपस्तम्बः पठति–"तस्मात्काया: (याः) प्रभवन्ति**

---

रत्नप्रभा ।

मयोच्यत इति सिद्धान्तयति–**तस्य समाधिरिति** ॥ **तस्माद्** ब्रह्मणः सकाशाद् **अव्यक्तं** मायायां लीनम् । सूक्ष्मात्मकं जगदिति यावत् । इतिहासवाक्यान्युक्त्वा पुराणसम्मतिमाह–**अतश्चेति** ॥ प्रभवत्यस्मादिति **प्रभवः** जन्महेतुः । प्रलीयते तस्मिन्निति **प्रलयः** लयाधिष्ठानम् । **तस्मात्** कर्तुरीश्वरात् । **कायाः** ब्रह्मादयः **प्रभवन्ति** । **स** एव मूलमुपादानम् । किं परिणामि ? न, शाश्वतिकः कूटस्थः ।

भामती ।

पराः शक्यन्तेऽन्यथयितुम् । तस्मात्तदनुरोधेन कथंचिच्छ्रुतय एव नेतव्याः । अपि च तर्कोऽपि कपिलादिस्मृतीरनुमन्यते, तस्मादप्येतदेव प्राप्तम् । एवं प्राप्त आह–**तस्य समाधिरिति** । यथा हि श्रुतीनामविगानं ब्रह्मणि गतिसामान्यात्, नैवं स्मृतीनामविगानमस्ति प्रधाने, तासां भूयसीनां ब्रह्मोपादानत्वप्रतिपादनपराणां तत्रतत्र दर्शनात् । तस्मादविगानाच्छ्रौत एवार्थ आस्थेयो न तु स्मार्तो विगानादिति ।

आनन्दगिरीय–न्यायनिर्णयः ।

बलवत्त्वसंभावनार्थोऽपिशब्दः । सांख्यस्मृतिविरोधं समन्वयस्य पूर्वपक्षमुक्त्वा सिद्धान्तयति–**तस्येति** । ब्रह्मकारणवादे सांख्यस्मृतिविरोधवत्प्रधानकारणवादेऽपि स्मृत्यन्तरविरोधान्न ब्रह्मवादिनं प्रत्येतदुद्भावनमुचितमिति व्याचष्टे–**यदीति** । श्रुत्यर्थे स्मृत्यवष्टम्भेनाऽऽक्षेपस्यावकाशो नास्तीत्यरुचिं सूचयति–**एवमपीति** । यासां स्मृतीनां प्रधानवादे निरवकाशत्वं ता दर्शयति–**ता इति** । 'तस्मादव्यक्तम्' इत्यत्र तच्छब्देन चेतनमेव कारणं परामृष्टमित्युपदेष्टुं चेतनस्य प्रकृतित्वमाह–**यत्तदिति** । सूक्ष्मत्वमतीन्द्रियत्वम् । अविज्ञेयत्वं प्रमाणान्तरावगाह्यत्वम् । तर्हि सर्वप्रमाणागोचरत्वान्नास्त्येव तदित्याशंक्य सर्वभूतानां सत्तास्फूर्तिप्रदत्वेन स्वतःसिद्धस्य दुरपह्नवत्वं मन्वानो ब्रूते–**स हीति** । कार्यलिङ्गकमनुमानमपि तत्र संभावनाहेतुरित्याशयवानाह–**तस्मादिति** । अव्यक्तशब्देनाव्याकृतकार्यं भूतसूक्ष्ममत्र विवक्षितमव्याकृतस्यानादित्वेनोत्पत्त्यनभ्युपगमान्निमित्तकारणत्वमेवात्र चेतनस्योक्तमिति सेश्वरसांख्यमतम् । अनादिनोऽपि चाव्यक्तस्य संभवत्येवेश्वराधीनत्वमित्याशंक्याऽऽह–**तथाऽन्यत्रेति** । अत्र त्वव्यक्तमिति भूतसूक्ष्मलयाधिकरणमव्याकृतं गृहीतम् । इतिहाससमर्पितेऽर्थे पौराणिकीं संमतिमाह–**अतश्चेति** । अन्तर्यामिव्यतिरिक्तवस्तुनो दुर्वचनत्वमतःशब्दार्थः । सर्वात्मत्वे कथमस्य नापक्षयः सर्वत्रापक्षयोपलम्भादित्याशंक्याऽऽह–**पुराण इति** । सर्वस्य तदन्तर्भावेऽपि तस्य सर्वस्मिन्ननन्तर्भावादिति हेतुमभिप्रेत्य सर्वात्मत्वं साधयति–**स सर्गेति** । उक्तेऽर्थे भागवतीं स्मृतिं संवादयति–**भगवद्गीतास्विति** । प्रभवत्यस्मादिति प्रभवो जन्महेतुः । प्रलीयतेऽस्मिन्निति प्रलयस्तद्धेतुः । तत्रैव कल्पसूत्रकारसंमतिमाह–**परमात्मानमिति** । तस्मादित्यात्मलाभान्न परमित्यादौ प्रकृतं परमात्मानं परामृशति । सर्वे काया ब्रह्मादयः स्तम्बपर्यन्ता देहास्तस्मात्प्रभवन्तीति निमित्तत्वमुक्तम् । समूलमित्युपादानत्वं विपरीतं वा । शश्वद्भवः शाश्वतिकोऽनादिः । स नित्यो नाशशून्य इत्यर्थः

सर्वे स मूलं शाश्वतिकस्स नित्यः" [ धर्मसू० १ । ८ । २३ । २ ] इति ॥ एवमनेकशस्स्मृतिष्वपीश्वरः कारणत्वेनोपादानत्वेन च प्रकाश्यते ॥ स्मृतिबलेन प्रत्यवतिष्ठमानस्य स्मृतिबलेनैवोत्तरं प्रवक्ष्यामीत्यतोऽयमन्यस्मृत्यनवकाशदोषोपन्यासः ॥ दर्शितं तु श्रुतीनामीश्वरकारणवादं प्रति तात्पर्यम् ॥ विप्रतिपत्तौ च स्मृतीनामवश्यकर्तव्येऽन्यतरपरिग्रहेऽन्यतरस्य परित्यागे च श्रुत्यनुसारिण्यस्स्मृतयः प्रमाणम् ॥ अनपेक्ष्या इतराः ॥ तदुक्तं प्रमाणलक्षणे—"विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" [ जैं० सू० १ । ३ । ३ ] इति ॥ न चातीन्द्रियानर्थाञ्छ्रुतिमन्तरेण कश्चिदुपलभत इति शक्यं सम्भावयितुम् ॥ निमित्ताभावात् ॥ शक्यं कपिलादीनां

रत्नप्रभा ।

अतः स नित्य इत्यर्थः । ननु श्रुतिविरोधः किमिति नोक्त इत्यत आह—स्मृतिबलेनेति ॥ स्मृतीनां मिथो विरोधे कथं तत्त्वनिर्णयस्तत्राह—दर्शितन्त्विति ॥ श्रुतिभिरेव तत्त्वनिर्णय इत्यर्थः । स्मृतीनां का गतिरित्यत आह—विप्रतिपत्तौ चेति ॥ वस्तुतत्त्वे स्मृतीनां मिथो विरोधे वस्तुनि विकल्पायोगात्क्लृप्तश्रुतिमूलाः स्मृतयः प्रमाणम् । इतरास्तु कल्प्यश्रुतिमूला न प्रमाणमित्यर्थः । क्लृप्तश्रुतिविरोधे स्मृतिर्न प्रमाणमित्यत्र जैमिनीयन्यायमाह—तदुक्तमिति ॥ औदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षश्रुतिविरुद्धा "सा सर्वा वेष्टयितव्या" इति स्मृतिर्मानं न वेति सन्देहे मूलश्रुत्यनुमानान्मानमिति प्राप्ते, सिद्धान्तः-क्लृप्तश्रुतिविरोधे स्मृतिप्रामाण्यम् अनपेक्षम् अपेक्षाशून्यम् । हेयमिति यावत् । हि यतः असति विरोधे श्रुत्यनुमानं भवति । अत्र तु विरोधे सति श्रुत्यनुमानायोगान्मूलाभावात् सर्ववेष्टनस्मृतिरप्रमाणमित्यर्थः । अस्तु सांख्यस्मृतिः प्रत्यक्षमूलेत्यत आह—न चेति ॥ योगिनां सिद्धिमहिम्नाऽतीन्द्रियज्ञानं सम्भावयितुं शक्यमिति शंकते—शक्यमिति ॥ कपिलादिभिः किलाऽऽदौ वेदप्रामाण्यं निश्चित्य

भामती ।

तत्किमिदानीं परस्परविगानात्सर्वा एव स्मृतयोऽत्रहेया इत्यत आह—विप्रतिपत्तौ च स्मृतीनामिति । न चातीन्द्रियार्थानिति । अर्वाग्दृगभिप्रायम् । शङ्कते—शक्यं कपिलादीनामिति । निराकरोति—

आनन्दगिरीय—न्यायनिर्णयः ।

उदाहृतस्मृतीनां तात्पर्यमाह—एवमिति । तात्पर्यलिङ्गमभ्यासं दर्शयति—अनेकश इति । ननु श्रुतिविरोधोपन्यासे संभावितें किमिति स्मृतिविरोधः सिद्धान्तिनोपन्यस्यते तत्राऽऽह—स्मृतीति । तर्हि स्मृतीनां परस्परविरोधे तत्त्वनिर्णयानुपपत्तिरित्याशंक्याऽऽह—दर्शितं त्विति । ततश्च मन्वादिस्मृतीनां श्रुतिमूलत्वेन प्राबल्यात्तदनुसारेण तत्त्वनिर्णयसिद्धिरित्यर्थः । नन्वनुमितश्रुतिमूलतया कपिलादिस्मृतीनामपि मन्वादिस्मृतिभिः समानबलत्वादनिर्णयतादवस्थ्ये विकल्पः स्यादिति नेत्याह—विप्रतिपत्तौ चेति । क्रियायामिव वस्तुनि विकल्पायोगाद्विरुद्धस्मृत्युपलब्धावन्यतरत्यागेनान्यतरस्वीकारध्रौव्ये क्लृप्तश्रुतिमूलाः स्मृतयो मानत्वेनापेक्ष्यन्ते कल्प्यश्रुतिमूलास्तु दुर्बलत्वादुपेक्ष्यन्ते तथा च तत्त्वनिर्णयोपपत्तिरित्यर्थः । ननु यत्र स्मृत्योर्विरोधस्तत्र तन्मूलयोः श्रुत्योर्विरोधपर्यवसानात्तयोश्च तुल्यबलतया व्यवस्थाऽऽस्थेयेति तत्राऽऽह—तदुक्तमिति । 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुतिविरुद्धा 'सर्वा वेष्टयितव्या' इति स्मृतिर्मानं न वेति संदेहे वेदार्थानुष्ठातॄणां स्मृतिभिर्मूलश्रुत्यनुमानात्प्रत्यक्षानुमितश्रुत्योश्च तुल्यबलत्वादुदितानुदितहोमवद्विकल्पसंभवान्मानमिति प्राप्ते प्रत्याह—विरोधे त्विति । श्रुतिविरोधे स्मृतीनां प्रामाण्यमनपेक्षमपेक्षावर्जितं हेयमिति यावत् । यतोऽसति विरोधे मूलश्रुत्यनुमानं प्रत्यक्षश्रुतिविरुद्धे त्वर्थे कुतः स्मृत्या श्रुत्यनुमानमर्थापहारेण मानस्याप्यपहारादतो मूलाभावादप्रमाणं सर्ववेष्टनस्मृतिः । तथा कपिलादिस्मृतिरपीत्यर्थः । ननु कपिलादिस्मृतेर्न श्रुतिमूलत्वेन प्रामाण्यमिष्यते किंतु प्रत्यक्षमूलत्वेनेत्याशंक्यायोगिप्रत्यक्षं योगिप्रत्यक्षं वा तन्मूलमिति विकल्प्याऽद्यं दूषयति—न चेति । द्वितीयं शङ्कते—शक्यमिति । अतीन्द्रियार्थोपलम्भनं संभा-

**सिद्धानामप्रतिहतज्ञानत्वादिति चेत् ॥ न ॥ सिद्धेरपि सापेक्षत्वात्- धर्मानुष्ठानापेक्षा हि सिद्धिः ॥ स च धर्मश्चोदनालक्षणः ॥ ततश्च पूर्वसिद्धायाश्चोदनाया अर्थो न पश्चिमसिद्धपुरुषवचनवशेनाऽतिशंकितुं शक्यते ॥ सिद्धव्यपाश्रयकल्पनायामपि बहुत्वात्सिद्धानां प्रदर्शितेन प्रकारेण स्मृतिविप्रतिपत्तौ सत्यां न श्रुतिव्यपाश्रयादन्यन्निर्णयकारण- मस्ति ॥ परतन्त्रप्रज्ञस्यापि नाकस्मात्स्मृतिविशेषविषयः पक्षपातो युक्तः ॥ कस्यचित्क्वचित्तु पक्षपाते सति पुरुषमतिवैरूप्येण[1] तत्त्वाव्यवस्थानप्रस-**

रत्नप्रभा ।

तदर्थस्य धर्मस्यानुष्ठानेन सिद्धिः सम्पादिता । तया सिद्ध्या प्रणीतस्मृत्यनुसारेणानादिश्रुतिपीडा न युक्तोपजीव्यविरोधादिति परिहरति-**न सिद्धेरपीति** ॥ **अतिशंकितुमिति** । श्रुतीनां मुख्यार्थमति- क्रम्योपचरितार्थत्वं शंकितुं न शक्यत इत्यर्थः । स्वतःसिद्धेर्वेदो नोपजीव्य इति चेन्नानीश्वरस्य स्वतः- सिद्धौ मानाभावात् । अङ्गीकृत्याप्याह-**सिद्धेति** ॥ सिद्धानां वचनमाश्रित्य वेदार्थकल्पनायामपि सिद्धोक्तीनां मिथो विरोधे श्रुत्याश्रितमन्वाद्युक्तिभिरेव वेदार्थनिर्णयो युक्त इत्यर्थः । श्रुतिरूपाश्रयं विना सिद्धोक्तिमात्रं न तत्त्वनिर्णयकारणमित्यक्षरार्थः । ननु मन्दमतेः सांख्यस्मृतौ श्रद्धा भवति । तस्य मतिः वेदान्तमार्गे कथमानेयेत्यत आह-**परतन्त्रेत्यादिना** ॥ ननु श्रुत्या कपिलस्य सर्वज्ञत्वोक्तेस्तन्मते श्रद्धा

भामती ।

**न । सिद्धेरपीति** । न तावत्कपिलादय ईश्वरवदाजानसिद्धाः, किंतु विनिश्चितवेदप्रामाण्यानां तेषां तदनुष्ठानवतां प्राचि भवेऽस्मिञ्जन्मनि सिद्धिः, अत एवाजानसिद्धा उच्यन्ते । यदस्मिन् जन्मनि न तैः सिद्ध्युपायोऽनुष्ठितः प्राग्भवीयवेदार्थानुष्ठानलब्धजन्मत्वात्तत्सिद्धीनाम् । तथा चावधृतवेदप्रामाण्यानां तद्वि- रुद्धार्थाभिधानं तदपवाधितमप्रमाणमेव । अप्रमाणेन च न वेदार्थोऽतिशंकितुं युक्तः प्रमाणसिद्धत्वात्तस्य । तदेवं वेदविरोधे सिद्धवचनमप्रमाणमुक्त्वा सिद्धानामपि परस्परविरोधे तद्वचनादनाश्वास इति पूर्वोक्तं स्मार- यति-**सिद्धव्यपाश्रयकल्पनायामपीति** । श्रद्धाजडान्बोधयति-**परतन्त्रप्रज्ञस्यापीति** । ननु श्रुति- श्चेत्कपिलादीनामनावरणभूतार्थगोचरज्ञानातिशयं बोधयति, कथं तेषां वचनमप्रमाणं, तदप्रामाण्ये श्रुते-

आनन्दगिरीय-न्यायनिर्णयः ।

वयितुमिति शेषः । किं तेषां साधनसाध्या सिद्धिराजानतो वेति विकल्प्याऽऽद्ये श्रुतिमन्तरेणातीन्द्रियार्थोप- लब्धिर्न सिध्यतीत्याह-**न सिद्धेरपीति** । योगमाहात्म्यरूपा सिद्धिस्तस्याः साधनसापेक्षत्ववदतीन्द्रिया- र्थोपलब्धिरपि कपिलादीनां श्रुत्यपेक्षेति वक्तुमपीत्युक्तम् । सिद्धेः सापेक्षत्वं स्फुटयति-**धर्मेति** । तथाऽपि कथमतीन्द्रियार्थोपलब्धेः श्रुत्यपेक्षेति तत्राऽऽह-**स चेति** । चोदनासूत्रप्रामाण्याद्धर्मस्य चोदनालक्षणत्वेऽपि कपिलादिवचनानुसारेण श्रुतेरर्थनिर्णये काऽनुपपत्तिरिति तत्राऽऽह-**ततश्चेति** । कपिलादीनां विनिश्चित- वेदप्रामाण्यानां तदर्थानुष्ठानवतां तत्प्रभावलब्धसिद्धीनां तद्विरुद्धार्थाभिधानासंभवात्तद्वचनात्प्रागेवावधृतप्रा- माण्यस्य वेदस्य तदनुरोधेनोपचरितार्थत्वकल्पनमनुचितमिति भावः । अतिशंकितुं मुख्यां वृत्तिमतीत्योप- चरितवृत्त्या शंकितुमिति यावत् । न द्वितीयः, कपिलादीनामीश्वरवदाजानसिद्धेरसिद्धत्वात्सिद्धत्वेऽपि तेषां बहुत्वात्तदुक्तिमाश्रित्य श्रुत्यर्थकल्पनायां तदैकमत्यस्यामानत्वादन्यस्मृत्यनवकाशन्यायेन स्मृतीनामेव मिथो विवादे श्रुत्यवष्टम्भं विना तास्वपि विश्वासाभावान्न तदनुसारेण श्रुत्यर्थनिर्धारणसिद्धिरित्याह-**सिद्धेति** । यत्तु परतन्त्रप्रज्ञत्वादस्माकमनिश्चितवेदार्थानां विरोधेन स्मृतेरप्रामाण्यमनाशंकनीयमपि तु स्मृत्यनुसारेण वेदार्थो निश्चयितव्यः । अन्यथा परतन्त्रप्रज्ञानां वेदार्थानिश्चयप्रसङ्गादिति तत्राऽऽह-**परतन्त्रेति** । कथं

१ वैश्वरूप्येणेतिपाठान्तरम् ।

ज्ञात् ॥ तस्मात्तस्यापि स्मृतिविप्रतिपत्त्युपन्यासेन श्रुत्यनुसारानुसार-विषयविवेचनेन च सन्मार्गे प्रज्ञा संग्रहणीया ॥ या तु श्रुतिः कपिलस्य ज्ञानातिशयं प्रदर्शयन्ती प्रदर्शिता, न तया श्रुतिविरुद्धमपि कापिलं मतं श्रद्धातुं शक्यं—कपिलमिति शब्दसामान्यमात्रत्वात् ॥ अन्यस्य च कपिलस्य सगरपुत्राणां प्रतप्तुर्वासुदेवनाम्नः स्मरणात् । अन्यार्थदर्शनस्य च प्राप्तिरहितस्यासाधकत्वात् । भवति चान्या मनोर्माहात्म्यं प्रख्यापयन्ती श्रुतिः—"यद्वै किञ्च मनुरवदत्तद्भेषजम्" [ तै० सं० २ । २ । १०।२] इति ॥ मनुना च—"सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि । समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति" [ १२ । ९१ ] इति सर्वात्मत्वदर्शनं प्रशंसता कापिलं मतं निन्द्यत इति गम्यते ॥ कपिलो हि

रत्नप्रभा ।

दुर्वारेत्यत आह—या त्विति ॥ कपिलशब्दमात्रेण सांख्यकर्ता श्रौत इति भ्रान्तिरयुक्ता । तस्य द्वैतवादिनः सर्वज्ञत्वायोगाद् । अत्र च सर्वज्ञानसम्भूतत्वेन श्रुतः कपिलो वासुदेवांश एव । स हि सर्वात्मत्वज्ञानं वैदिकं सांख्यमुपदिशतीति सर्वज्ञ इति भावः । प्रतप्तुः प्रदाहकस्य । किञ्च यः कपिलं ज्ञानैर्बिभर्ति तमीश्वरं पश्येदिति विधीयते । तथा चान्यार्थस्य ईश्वरप्रतिपत्तिशेषस्य कपिलसर्वज्ञत्वस्य दर्शनमनुवादः । तस्य मानान्तरेण प्राप्तिशून्यस्य स्वार्थसाधकत्वायोगात् । नानुवादमात्रात् सर्वज्ञत्वसिद्धिरित्याह—अन्यार्थेति ॥ द्वैतवादिनः कपिलस्य श्रौतत्वं निरस्य ब्रह्मवादिनो मनोः श्रौतत्वमाह—भवति-

भामती ।

रप्यप्रामाण्यप्रसङ्गादित्यत आह—या तु श्रुतिरिति । न तावत्सिद्धानां परस्परविरुद्धानि वचांसि प्रमाणं भवितुमर्हन्ति । न च विकल्पो वस्तुनि, सिद्धे तदनुपपत्तेः । अनुष्ठानमनागतोत्पाद्यं विकल्प्यते, न सिद्धम् । तस्य व्यवस्थानात् । तस्माच्छ्रुतिसामान्यमात्रेण भ्रमः सांख्यप्रणेता कपिलः श्रौत इति । स्यादेतत् । कपिल एव श्रौतो नान्ये मन्वादयः । ततश्च तेषां स्मृतिः कपिलस्मृतिविरुद्धावहेयेत्यत आह—भवति—

आनन्दगिरीय—न्यायनिर्णयः ।

तर्हि परिहृत्याव्यवस्थां तत्त्वं निर्णेतव्यं तत्राऽऽह—तस्मादिति । तस्यापीति तेन परतन्त्रप्रज्ञेनापीत्यर्थः । सन्मार्गः श्रुत्यनुसारिस्मृत्युक्तोऽर्थस्तत्र प्रज्ञासंग्रहस्तस्मिन्नेव बुद्धिस्थैर्यमित्यर्थः । ननु कपिलस्याप्रतिहतज्ञानत्वश्रवणात्तदुक्तस्मृत्यप्रामाण्याङ्गीकारे श्रुतिरेव विरुध्येतेत्याशंक्याऽऽह—या त्विति । कपिलशब्दश्रुत्यविरोधाय सावकाशानवकाशन्यायेन श्रुतिस्मृत्योर्व्यवस्थाऽऽस्थेयेत्याशंक्याऽऽह—कपिलमितीति । शब्दसामान्यादेव सांख्यप्रणेता कपिलः श्रौत इति भ्रान्तिरविवेकिनामित्यर्थः । श्रुतौ तर्हि कपिलशब्दस्य कोऽर्थः स्यादित्याशंक्याऽऽह—अन्यस्येति । वैदिको हि कपिलो वासुदेवनामा पितुरादेशादश्वमेधपशुमन्विष्य परिसरे पश्यतामिन्द्रचेष्टितमदृष्टवतां षष्टिसहस्रसंख्याजुषामात्मोपरोधिनां सगरसुतानां सहसैव भस्मीभावहेतुः सांख्यप्रणेतुरवैदिकादन्यः स्मर्यते । यत्रयत्र वैदिकत्वे सति वासुदेवांशत्वं तत्रतत्र सर्वात्मत्वोपदेष्टृत्वं दृष्टमिह तु तद्विरुद्धार्थोपदेष्टृत्वस्ततोऽन्यत्वमिति भावः । किंच, परमात्मप्रतिपत्तिपरमिदं वाक्यं यो ज्ञानैरग्रे प्रसूतं कपिलं बिभर्ति तं पश्येदिति दर्शनात् । न च तस्यानुग्राहकन्यायाभावे कपिलज्ञानातिशयावेदकत्वमित्याह—अन्यार्थेति । कपिलस्य द्वैतवादिनः श्रौतत्वं निरस्य सर्वात्मत्ववादिनो मनोः श्रौतत्वमाह—भवति चेति । मनोरपि कपिलेनैकवाक्यत्वं शंकित्वोक्तम्—मनुना चेति । सर्वात्मत्वप्रशंसायामपि कथं कापिलं मतं निन्दितमित्याशंक्य तद्दर्शयितुं तदीयं मतमाह—कपिलो हीति ।

न सर्वात्मत्वदर्शनमनुमन्यते आत्मभेदाभ्युपगमात् ॥ महाभारतेऽपि च-"बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु" इति विचार्य "बहवः पुरुषा राजन् सांख्ययोगविचारिणाम्" इति परपक्षमुपन्यस्य तद्व्युदासेन "बहूनां पुरुषाणां हि यथैका योनिरुच्यते । तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्" इत्युपक्रम्य "ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित् ॥ विश्वमूर्द्धा विश्वभुजो विश्वपादाक्षिनासिकः । एकश्चरति भूतेषु स्वैरचारी यथासुखम्" इति सर्वात्मतैव निर्द्धारिता ॥ श्रुतिश्च सर्वात्मतायां भवति "यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कश्शोक एकत्वमनुपश्यतः"[ईश० ७] इत्येवंविधा। अतश्चात्मभेदकल्पनयापि कापिलस्य तन्त्रं वेदविरुद्धं वेदानुसारिमनुव-

---

रत्नप्रभा ।

चेति ॥ इतिहासेऽपि कापिलमतनिन्दापूर्वकमद्वैतं दर्शितमित्याह-महाभारतेपि चेति । पुरुषाः आत्मानः किं वस्तुतो भिन्नाः-उत-सर्वदृश्यानां प्रत्यगात्मा एक इति विमर्शार्थः बहूनां पुरुषाकाराणां देहानां यथैका योनिः उपादानं पृथ्वी, तथा तं पुरुषम् आत्मानं विश्वं सर्वोपादानत्वेन सर्वात्मकं सर्वज्ञत्वादिगुणैः सम्पन्नं कथयिष्यामि । विश्वे सर्वे लोकप्रसिद्धा देवतिर्यङ्मनुष्यादीनां मूर्धानोऽस्यैवेति विश्वमूर्धा । एकस्यैव सर्वक्षेत्रेषु प्रतिबिम्बभावेन प्रविष्टत्वात् । एवं विश्वभुजत्वादियोजना । सर्वभूतेषु एकः चरति अवगच्छति । सर्वज्ञ इत्यर्थः । स्वैरचारी स्वतन्त्रः । नास्य नियन्ता कश्चिदस्ति । सर्वेश्वर इत्यर्थः ॥ यथासुखमिति । विशोकानन्दस्वरूप इति यावत् । कापिलतन्त्रस्य वेदमूलस्मृतिविरोधमुक्त्वा साक्षाद्वेदविरोधमाह-श्रुतिश्चेति ॥ यस्मिन् ज्ञानकाले । केवलं स्वतन्त्रप्रकृतिकल्पनयैव वेद-

भामती ।

चान्या मनोरिति । तस्याश्चागमान्तरसंवादमाह-महाभारतेऽपि चेति । न केवलं मनोः स्मृतिः स्मृत्यन्तरसंवादिनी, श्रुतिसंवादिन्यपीत्याह-श्रुतिश्चेति । उपसंहरति-अत इति । स्यादेतत् । भवतु

आनन्दगिरीय-न्यायनिर्णयः ।

पूर्वं कापिलमतस्य कारणविषये व्यासादिवचनविरोधो दर्शितः संप्रति सर्वात्मत्वविषयेऽपि व्यासवचनविरोधमाह-महाभारतेऽपीति । सर्वात्मतैव निर्धारितेत्युत्तरत्र संबन्धः । पुरुषा जीवास्ते किं स्वभावेनैव बहवः किं वैक एव परमात्मा बहूनां दृश्यानां स्वभाव इति पृच्छति-बहव इति । पूर्वपक्षमनुभाष्य तन्निरासेन सिद्धान्तमाह-बहव इत्यादिना । यथा पुरुषाणां तदाकाराणां बहूनां देहानामेका पृथिवी योनिरधिष्ठानमुच्यते तथा तमेकं पुरुषं परमात्मानं बहुलत्वेन प्रतिपन्नानां जीवानां वास्तवं स्वभावं विश्वं परिपूर्णं सर्वज्ञत्वादिगुणयुक्तं कथयिष्यामीत्याह-बहूनामिति । सर्वज्ञत्वादिगुणकस्य तद्विरुद्धप्रत्यगात्मैक्यमयुक्तमित्याशंक्य विरोधस्य प्रातीतिकत्वं मत्वोक्तम्-ममेति । सर्वान्तरात्मत्वे परस्मिन्नपि संसारित्वप्रसक्तिरित्याशंक्य वस्तुतस्तदभावमाह-सर्वेषामिति । किमिति तर्हि प्रत्यात्ममात्मभूतः परमात्मा नोपलभ्यते तत्राऽऽह-न ग्राह्य इति । तस्यासत्त्वं शंकित्वोक्तम्-विश्वेति । विश्वे मूर्धानोऽस्यैव सर्वत्र प्रतिबिम्बितत्वात् । तथा विश्वभुजादौ योज्यम् । परमात्मनः सर्वात्मत्वेनोक्तस्य निरपेक्षतया स्वतन्त्रस्य परमसुखरूपतामाह-एक इति । कापिलमतस्य वेदानुसारिस्मृतिविरोधमुक्त्वा साक्षादेव वेदविरोधमाह-श्रुतिश्चेति । यस्मिन्काले पुरुषस्य विजानतः स्वरूपतयाऽधिगतब्रह्मण एव सर्वत्र प्रतिबिम्बितत्वाद्भूतानि सर्वाण्यात्मैवाभूत्तस्मिन्काले शोकमोहोपलक्षितः सर्वोऽपि सकारणः संसारो विदुषो नास्तीति श्रुत्यर्थः । श्रुतिस्मृतिविरोधे परमतस्यानादेयत्वं सिद्धमित्युपसंहरति-अतश्चेति । इति-

चनविरुद्धश्च । न केवलं स्वतन्त्रप्रकृतिपरिकल्पनयैवेति ॥ वेदस्य हि निरपेक्षं स्वार्थे प्रामाण्यं रवेरिव रूपविषये । पुरुषवचसां तु मूलान्तरापेक्षं वक्तृस्मृतिव्यवहितश्चेति विप्रकर्षः ॥ तस्माद्वेदविरुद्धे विषये स्मृत्यनवकाशप्रसङ्गो न दोषः ॥ १ ॥ कुतश्च स्मृत्यनवकाशप्रसंगो न दोषः—

**इतरेषां चानुपलब्धेः ॥ २ ॥**

प्रधानादितराणि यानि प्रधानपरिणामत्वेन स्मृतौ कल्पितानि मह-

रत्नप्रभा ।

विरुद्धं न, किन्त्वात्मभेदकल्पनयापीति सिद्धमिति **सम्बन्धः** । स्मृतिविरोधे वेदस्यैवाप्रामाण्यं किं न स्यादित्यत आह—**वेदस्य ही ति** ॥ वेदस्य प्रामाण्यं स्वतःसिद्धमपौरुषेयत्वात् । पौरुषेयवाक्यानां स्वार्थस्मृतितन्मूलानुभवयोः कल्पनया प्रामाण्यं ज्ञेयमिति व्यवहितं परतः प्रामाण्यमिति **विप्रकर्षः**,श्रुतिस्मृत्योर्विशेष इत्यक्षरार्थः । समयोर्विरोधे हि निरवकाशेन सावकाशं बाध्यम् । इह स्वतः परतः प्रामाण्ययोर्वैषम्याज्झटिति निश्चितप्रामाण्येन चानुपसंजातविरोधिना वेदवाक्येन विरुद्धस्मृतेरेव बाध इति भावः ॥ **तस्मादिति** । विशेषादित्यर्थः । भ्रान्तिमूलत्वसम्भवादिति भावः ॥ १ ॥ महदहङ्कारौ तावदप्रसिद्धौ अहङ्कारप्रकृतिकत्वेन तन्मात्राण्यप्यप्रसिद्धानि स्मर्तुं न शक्यन्त इत्याह—**इतरेषाञ्चेति** ॥ ननु महतः परम॰

भामती ।

वेदविरुद्धं कापिलं वचस्तथापि द्वयोरपि पुरुषबुद्धिप्रभवतया को विनिगमनायां हेतुर्यतो वेदविरोधि कापिलं वचो नादरणीयमित्यत आह—**वेदस्य हि निरपेक्षमिति** । अयमभिसंधिः—सत्यं शास्त्रयोनिरीश्वरस्तथाप्यस्य न शास्त्रक्रियायामस्ति स्वातन्त्र्यं कपिलादीनामिव । स हि भगवान् यादृशं पूर्वस्मिन् सर्गे चकार शास्त्रं तदनुसारेणास्मिन्नपि सर्गे प्रणीतवान् । एवं पूर्वतरानुसारेण पूर्वस्मिन् पूर्वतमानुसारेण च पूर्वतर इत्यनादिरयं शास्त्रेश्वरयोः कार्यकारणभावः । तत्रेश्वरस्य न शास्त्रार्थज्ञानपूर्वा शास्त्रक्रिया, येनास्य कपिलादिवत्स्वातन्त्र्यं भवेत् । शास्त्रार्थज्ञानं चास्य स्वयमाविर्भवदपि न शास्त्रकारणतामुपैति, द्वयोरप्यपर्यायेणाविर्भावात् । शास्त्रं च स्वतो बोधकतया पुरुषस्वातन्त्र्याभावेन निरस्तसमस्तदोषाशंकं सदनपेक्षं साक्षादेव स्वार्थे प्रमाणम् । कपिलादिवचांसि तु स्वतन्त्रकपिलादिप्रणेतृकाणि तदर्थस्मृतिपूर्वकाणि, तदर्थस्मृतयश्च तदर्थानुभवपूर्वाः । तस्मात्तासामर्थप्रत्ययाङ्गप्रामाण्यविनिश्चयाय यावत्स्मृत्यनुभवौ कल्पेते तावत्स्वतःसिद्धप्रमाणभावानपेक्षयैव श्रुत्या स्वार्थो विनिश्चायित इति शीघ्रतरप्रवृत्तया श्रुत्या स्मृत्यर्थो बाध्यत इति युक्तम् ॥ १ ॥ **इतरेषां चानुपलब्धेः** । प्रधानस्य तावत्क्वचिद्वेदप्रदेशे वाक्याभासानि दृश्यन्ते, तद्विकाराणां तु महदादीनां तान्यपि न सन्ति । न च भूतेन्द्रियादिवन्महदादयो लोकसिद्धाः । तस्मादात्यन्तिकात् प्रमाणान्तरासंवादात् प्रमाणमूलत्वाच्च स्मृतेर्मूलाभावादभावो वन्ध्याया इव दौहित्र्यस्मृतेः । न

आनन्दगिरीय–न्यायनिर्णयः ।

शब्दः सिद्धमित्यनेन संबध्यते । वेदविरोधे स्मृतेरेव किमित्यप्रामाण्यं विपरीतं किं न स्यादित्याशंक्याऽऽह—**वेदस्येति** । ईश्वरकार्यत्वेऽपि तद्बुद्धीपूर्वकत्वाभावाद्वेदस्यापौरुषेयत्वेनानपेक्षत्वात्कपिलादिस्मृतीनां तु तदर्थस्मृतिपूर्वकत्वात्तदर्थस्मृतीनां च तदर्थानुभवपूर्वकत्वादुक्तप्रामाण्यनिश्चयाय स्मृत्यनुभवौ यावत्कल्प्येते तावदेव स्वतःसिद्धप्रामाण्यवेदवाक्यात्तदर्थो निश्चित इति झटिति प्रवृत्तवेदवाक्योत्थं ज्ञानमसंजातविरोधि स्मृतिविरोधे तत्प्रामाण्यस्य बाधकमिति भावः । विप्रकर्षो विशेषः श्रुतिस्मृत्योरिति यावत् । सिद्धे विशेषे फलितमाह—**तस्मादिति** ॥ १ ॥ उक्तेऽर्थे हेत्वन्तरपरत्वेनोत्तरसूत्रमुत्थापयति—**कुतश्चेति** । सूत्राक्षराणि व्याचष्टे—**प्रधानादिति** । तथा च मूलप्रमाणाभावादप्रमाणं महदादिविषया स्मृतिरिति शेषः । भूताना-

दादीनि, न तानि वेदे लोके वोपलभ्यन्ते॥ भूतेन्द्रियाणि तावल्लोकवेदप्रसिद्धत्वाच्छक्यन्ते स्मर्तुम्॥ अलोकवेदप्रसिद्धत्वात्तु महदादीनां षष्ठस्येवेन्द्रियार्थस्य न स्मृतिरवकल्पते॥ यदपि क्वचित्तत्परमिव श्रवणमवभासते तदप्यतत्परम्॥ व्याख्यातम्–"आनुमानिकमप्येकेषामिंतिचेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च" [ व्या० सू० १।४।१ ] इत्यत्र॥ कार्यस्मृतेरप्रामाण्यात्कारणस्मृतेरप्यप्रामाण्यं युक्तमित्यभिप्रायः॥ तस्मादपि न स्मृत्यनवकाशप्रसङ्गो दोषः॥ तर्कावष्टम्भं तु न विलक्षणत्वादित्यारभ्योन्मथिष्यति॥ २॥ इति स्मृत्यधिकरणम्॥ १॥

## एतेन योगः प्रत्युक्तः॥ ३॥ ( २ )॥

रत्नप्रभा।

व्यक्तमिति श्रुतिप्रसिद्धानि महदादीनीत्यत आह–यदपीति॥ सूत्रतात्पर्यमाह–कार्येति॥ सांख्यस्मृतेर्महदादिष्विव प्रधानेऽपि प्रामाण्यं नेति निश्चीयत इत्यर्थः। सांख्यस्मृतिबाधेऽपि तदुक्तयुक्तीनां कथं बाध इत्यत आह–तर्केति॥ २॥ ( १ )॥ ब्रह्मण्युक्तसमन्वयः प्रधानवादियोगस्मृत्या विरुध्यते न वेति सन्देहे पूर्वन्यायमतिदिशति–एतेन योगः प्रत्युक्तः॥ अतिदेशत्वात् पूर्ववत् सङ्गत्यादिकं द्रष्ट-

भामती।

चार्षज्ञानमत्र मूलमुपपद्यत इति युक्तम्। तस्मान्न कापिलस्मृतेः प्रधानोपादानत्वं जगत इति सिद्धम्॥ २॥ ( १ )॥

एतेन योगः प्रत्युक्तः। नानेन योगशास्त्रस्य हैरण्यगर्भपातञ्जलादेः सर्वथा प्रामाण्यं निराक्रियते, किंतु जगदुपादानस्वतन्त्रप्रधानतद्विकारमहदहंकारपञ्चतन्मात्रगोचरं प्रामाण्यं नास्तीत्युच्यते। न चैतावतैषामप्रामाण्यं भवितुमर्हति। यत्पराणि हि तानि तत्राप्रामाण्येऽप्रमाण्यमश्नुवीरन्। न चैतानि प्रधानादिसद्भावपराणि। किंतु योगस्वरूपतत्साधनतदवान्तरफलविभूतितत्परमफलकैवल्यव्युत्पादनपराणि। तच्च किंचिन्निमित्तीकृत्य व्युत्पाद्यमिति प्रधानं सविकारं निमित्तीकृतं, पुराणेष्विव सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितं तत्प्रतिपादनपरेषु, न तु तद्विवक्षितम्। अन्यपरादपि चान्यनिमित्तं तत्प्रतीयमानमभ्युपेयेत, यदि न मानान्तरेण विरुध्येत। अस्ति तु वेदान्तश्रुतिभिरस्य विरोध इत्युक्तम्। तस्मात्प्रमाणभूतादपि योगशास्त्रान्न प्रधानादिसिद्धिः। अत एव योगशास्त्रं व्युत्पादयिताह स्म भगवान् वार्षगण्यः–'गुणानां परमं रूपं न दृष्टिपथमृच्छति। यत्तु दृष्टिपथप्राप्तं तन्मायेव सुतुच्छकम्॥' इति योगं व्युत्पिपादयिषता निमित्तमात्रेणेह गुणा उक्ताः, न तु भावतः, तेषामतात्त्विकत्वादित्यर्थः। अलोकसिद्धानामपि प्रधाना-

आनन्दगिरीय–न्यायनिर्णयः।

मिन्द्रियाणां च लोकवेदप्रसिद्धत्वान्न तद्विषयस्मृत्यप्रामाण्यमित्याशंक्याङ्गीकरोति–भूतेति। तथाऽपि महदहंकारपञ्चतन्मात्राणां मूलाभावान्न स्मृतिः संभवतीत्याह–अलोकेति। महदादीनामपि 'महतः परमव्यक्तम्' इत्यादावस्ति प्रसिद्धिरित्याशंक्याऽऽह–यदपीति। महदादिस्मृतेर्मूलाभावात्तदप्रामाण्येऽपि किमायातं प्रधानस्मृतेरित्याशंक्य सूत्रस्य तात्पर्यमाह–कार्येति। सांख्यस्मृत्यप्रामाण्ये सिद्धे फलितमुपसंहरति–तस्मादिति। मूलप्रमाणाभावस्तच्छब्दार्थः। अपिना स्मृत्यादिविरोधः समुच्चितः। स्मृतिविरोधाभावेऽपि ब्रह्मकारणवादो न्यायविरोधान्न सिध्यतीत्याशंक्याऽऽह–तर्केति॥ २॥ ( १ )॥ सांख्यस्मृतेर्मन्वादिस्मृतिविरोधेऽपि योगस्मृतेर्न सोऽस्तीति मन्वादिस्मृतिष्वपि योगस्यानुमोदितत्वात्, तथा च प्रधानादिविषयेऽपि योगस्मृतेर्मानत्वात्तद्विरुद्धसमन्वयो न सिध्यतीत्याशंक्याऽऽह–एतेनेति। चेतनं जगदुपादानं वदतः समन्वयस्य प्रधानं वास्तवमीश्वराधिष्ठितं जगदुपादानमिति वदन्त्या योगस्मृत्या विरोधोऽस्ति न वेति

एतेन सांख्यस्मृतिप्रत्याख्यानेन, योगस्मृतिरपि प्रत्याख्याता द्रष्टव्येत्यतिदिशति ॥ तत्रापि श्रुतिविरोधेन प्रधानं स्वतन्त्रमेव कारणं, महदादीनि च कार्याण्यलोकवेदप्रसिद्धानि कल्प्यन्ते ॥ नन्वेवं सति समानन्यायत्वात्पूर्वेणैवैतद्गतं किमर्थं पुनरतिदिश्यते ॥ अस्ति ह्यत्राभ्यधिका शंका । सम्यग्दर्शनाभ्युपायो हि योगो वेदे विहितः–"श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [ बृ० २ । ४ । ५ ] इति "त्रिरुन्नतं स्थाप्य समं शरीरम्" [ श्वे०२।८ ] इत्यादिना चासनादिकल्पनापुरःसरं बहुप्रपञ्चं योगविधानं श्वेताश्वतरोपनिषदि दृश्यते ॥ लिङ्गानि च वैदिकानि योगविषयाणि सहस्रश उपलभ्यन्ते–"तां योगमिति

---

रत्नप्रभा ।

व्यम् । पूर्वत्रानुक्तनिरासं पूर्वपक्षमाह–अस्ति ह्यत्रेति ॥ निदिध्यासनं–योगः । त्रीणि उरोग्रीवाशिरांस्युन्नतानि यस्मिञ्छरीरे तत् त्र्युन्नतम् । त्रिरुन्नतमिति पाठश्चेच्छान्दसः । युञ्जीतेति शेषः । न केवलं योगे विधिः, किन्तु योगस्य ज्ञापकान्यर्थवादवाक्यान्यपि सन्तीत्याह–लिंगानि चेति ॥ तां पूर्वोक्तां धारणां योगविदो योगं परमं तप इति मन्यन्ते । उक्तामेतां ब्रह्मविद्यां योगविधिं ध्यान-

भामती ।

दीनामनादिपूर्वपक्षन्यायाभासोत्प्रेक्षितानामनुवाद्यत्वमुपपन्नम् । तदनेनाभिसंधिनाह–एतेन सांख्यस्मृतिप्रत्याख्यानेन योगस्मृतिरपि प्रधानादिविषयतया प्रत्याख्याता द्रष्टव्येति । अधिकरणान्तरारम्भमाक्षिपति–नन्वेवं सति समानन्यायत्वादिति । समाधत्ते–अस्त्यत्राभ्यधिका शंका । मा नाम सांख्यशास्त्रात्प्रधानसत्ता विज्ञायि । योगशास्त्रात्तु प्रधानादिसत्ता विज्ञापयिष्यते । बहुलं हि योगशास्त्राणां वेदेन सह संवादो दृश्यते । उपनिषदुपायस्य च तत्त्वज्ञानस्य योगापेक्षास्ति न जातु योगशास्त्रविहितं यमनियमादिबहिरङ्गमुपायमपहायान्तरङ्गं च धारणादिकमन्तरेणौपनिषदात्मतत्त्वसाक्षात्कार उदेतुमर्हति । तस्मादौपनिषदेन तत्त्वज्ञानेनापेक्षणात् संवादबाहुल्याच्च वेदेनाष्टकादिस्मृतिवद्योगस्मृतिः प्रमाणम् । ततश्च प्रमाणात्प्रधानादिप्रतीतेर्नाशब्दत्वम् । न च तदप्रमाणं प्रधानादौ, प्रमाणं च यमादाविति युक्तम् । तत्राप्रामाण्येऽन्यत्राप्यनाश्वासात् । यथाहुः–'प्रसरं न लभन्ते हि यावत्क्वचन मर्कटाः । नाभिद्रवन्ति ते तावत्पिशाचा वा स्वगोचरे ॥' इति । सेयं लब्धप्रसरा प्रधानादौ योगाप्रमाणतापिशाची

आनन्दगिरीय–न्यायनिर्णयः ।

प्रधानादिविषये तत्प्रामाण्याप्रामाण्याभ्यां संदेहे पूर्वपक्षमग्रे दर्शयिष्यन्नतिदेशसूत्रं व्याकरोति–एतेनेत्यादिना । श्रुत्यादिसंगतिचतुष्टयं फलं च पूर्वन्यायातिदेशत्वात्पूर्ववदत्रापि द्रष्टव्यम् । अर्थसाम्याभावे तुल्यन्यायाविषयत्वादतिदेशानुपपत्तिरित्याशंक्यार्थसाम्यमाह–तत्रापीति । अधिकाशंकाभावादधिकरणारम्भमाक्षिपति–नन्विति । एवं सतीति सांख्ययोगस्मृत्योरर्थसाम्ये सतीति यावत् । अधिकाशङ्कां दर्शयन्नधिकरणारम्भं समर्थयते–अस्तीति । तामेव दर्शयितुमादौ योगस्मृतेः श्रुतिमूलत्वमाह–सम्यगिति । ननु श्रवणमनननिदिध्यासनान्येवात्र सम्यग्धीहेतुत्वेन विधीयन्ते न त्वष्टाङ्गयोगविधिरत्रास्तीत्याशंक्य श्रुत्यन्तरमाह–त्रिरुन्नतमिति । त्रीणि देहग्रीवाशिरांस्युन्नतानि यस्मिन् । 'समं कायशिरोग्रीवं धारयन्' इत्यादिस्मृतेः । तच्छरीरं समं संस्थाप्य युञ्जीतेति योजना । न केवलं श्रुत्यनुगृहीतो योगः किंतु श्रौतलिङ्गानुगृहीतश्चेत्याह–लिंगानि चेति । तान्येव दर्शयति–तां योगमित्यादिना । इन्द्रियाणामन्तर्बहिर्भावेन व्यवस्थितानां स्थिरामविचालिनीं धारणामैकाग्र्यलक्षणां योगविदो योगं मन्यन्ते । यथोक्तमैकाग्र्यमेव परमं तप इति वक्तुं योगशब्दादुपरिष्टादितिशब्दः । एतां ब्रह्मविषयां विद्यां योगप्रकारं च सर्वं मृत्योः सकाशा-

मन्यन्ते स्थिरामिन्द्रियधारणाम्" [ कठ० २।६।११ ] इति, "विद्यामेतां योगविधिं च कृत्स्नम्" [ कठ० २।६।१८ ] इति चैवमादीनि ॥ योगशास्त्रेऽपि-"अथ तत्त्वदर्शनाभ्युपायो योगः" इति सम्यग्दर्शनाभ्युपायत्वेनैव योगोऽङ्गीक्रियते ॥ अतः सम्प्रतिपन्नार्थैकदेशत्वादष्टकादिस्मृतिवद्योगस्मृतिरप्यनपवदनीया भविष्यतीति । इयमप्यधिका शङ्कातिदेशेन निवर्त्यते ॥ अर्थैकदेशसम्प्रतिपत्तावप्यर्थैकदेशविप्रतिपत्तेः पूर्वोक्ताया दर्शनात्सतीष्वप्यध्यात्मविषयासु बह्वीषु स्मृतिषु सांख्ययोगस्मृत्योरेव निराकरणाय यत्नः कृतः ॥ सांख्ययोगौ हि परमपुरुषार्थसाधनत्वेन

रत्नप्रभा ।

प्रकारं च मृत्युप्रसादान्नचिकेता लब्ध्वा ब्रह्म प्राप्त इति सम्बन्धः[1] । योगस्मृतिः प्रधानादितत्त्वांशेऽपि प्रमाणत्वेन स्वीकार्या । सम्प्रतिपन्नः प्रामाणिकोऽर्थैकदेशो योगरूपो यस्यास्तत्त्वादित्यर्थः । "अष्टकाः कर्तव्याः" "गुरुरनुगन्तव्यः" इत्यादिश्रुतीनां वेदाविरुद्धार्थकत्वान्मूलश्रुत्यनुमानेन प्रामाण्यमुक्तं प्रमाणलक्षणे । एवं योगस्मृतेर्योगे प्रामाण्यात्तत्त्वांशेऽपि प्रामाण्यमिति पूर्वपक्षमनूद्य सिद्धान्तयति-इयमपीति ॥ ननु बौद्धादिस्मृतयोऽत्र किमिति न निराकृता इत्यत आह-सतीष्वपीति ॥

भामती ।

सर्वत्रैव दुर्वारा भवेदित्यस्याः प्रसरं निषेधता प्रधानाद्यभ्युपेयमिति नाशब्दं प्रधानमिति शङ्कार्थः । सा इयमप्यधिका शंकाऽतिदेशेन निवर्त्यते । निवृत्तिहेतुमाह-अर्थैकदेशसंप्रतिपत्तावपीति । यदि प्रधानादिसत्तापरं योगशास्त्रं भवेत्, भवेत्प्रत्यक्षवेदान्तश्रुतिविरोधेनाप्रमाणम् । तथा च तद्विहितेषु यमादिष्वप्यनाश्वासः स्यात् । तस्मान्न प्रधानादिपरं तत्, किंतु तन्निमित्तीकृत्य योगव्युत्पादनपरमित्युक्तम् । न चाविषयेऽप्रामाण्यं विषयेऽपि प्रामाण्यमुपहन्ति । न हि चक्षू रसादावप्रमाणं रूपेऽप्यप्रमाणं भवितुमर्हति । तस्माद्वेदान्तश्रुतिविरोधात्प्रधानादिरस्याविषयो न त्वप्रामाण्यमिति परमार्थः । स्यादेतत् । अध्यात्मविषयाः सन्ति सहस्रं स्मृतयो बौद्धार्हतकापालिकादीनां, ता अपि कस्मान्न निराक्रियन्त इत्यत आह-सतीष्वपीति । तासु खलु बहुलं वेदार्थविसंवादिनीषु शिष्टानादृतासु केश्चिदेव तु पुरुषापसदैः पशुप्रायैर्म्लेच्छादिभिः परिगृहीतासु वेदमूलत्वाशंकैव नास्तीति न निराकृताः, तद्विपरीतास्तु सांख्ययोग-

आनन्दगिरीय-न्यायनिर्णयः ।

नचिकेता लब्ध्वा ब्रह्म प्राप्तोऽभूदित्याह-विद्यामेतामिति । श्रुतिवल्लिङ्गानुगृहीतयोगस्य सम्यग्ज्ञानोपायत्वेऽपि किमायातं योगस्मृतेरित्याशंक्याऽऽह-योगशास्त्रेऽपीति । आत्मज्ञानस्य मोक्षोपायत्वनिश्चयात्तज्जिज्ञासानन्तरमित्यथशब्दार्थः । एवं योगस्य सम्यग्धीहेतुत्वमुपपाद्याधिकां शङ्कां दर्शयति—अत इति । योगः सम्यग्दर्शनोपायः संप्रतिपन्नार्थैकदेशस्तद्वत्त्वाद्योगस्मृतिरनिराकार्येत्यत्र दृष्टान्तमाह-अष्टकादीति । "अष्टकाः कर्तव्याः" । "गुरुरनुगन्तव्यः" । "तडागं खनितव्यम्" इत्यादिस्मृतयो न प्रमाणं धर्मस्य वेदैकप्रमाणकत्वादष्टकादेरिष्टसाधनत्वे वेदादृष्टेः स्मृतेश्च भ्रान्त्याऽपि संभवादिति प्राप्य वेदार्थानुष्ठातॄणामेव स्मृतिषु सनिबन्धनासु कर्तृत्वान्मूलभूतं वेदमनुमापयन्त्यः स्मृतयो मानमिति प्रमाणलक्षणे राद्धान्तितं, तथा योगस्मृतिरपि मानमित्यर्थः । अधिकां शङ्कामनूद्य तन्निवर्तकत्वेनातिदेशाधिकरणस्यार्थवत्त्वमाह-इयमिति । कथं तर्हि निराकरणं तदाह-अर्थैकदेशेति । योगस्मृतिर्योगविषये वेदाविसंवादान्मानमपि प्रधानादौ तद्विसंवादादमानमर्थवादस्य विधिशेषत्वेन प्रामाण्येऽपि विसंवादिनि स्वार्थे तदनभ्युपगमादित्यर्थः । नन्वध्यात्मविषयाः सन्ति सहस्रं बौद्धार्हतादिस्मृतयस्ताः किमित्युपदेशातिदेशाभ्यां न निराक्रियन्ते तत्राऽऽह-सतीष्वपीति । तत्र हेतूनाह-सांख्येत्यादिना । ननु लोके पशुसदृशानां

१ उपनिषद्वाक्येऽयं सम्बन्धो बोध्य इत्यर्थः ।

लोके प्रख्यातौ। शिष्टैश्च परिगृहीतौ लिङ्गेन च श्रौतेनोपबृंहितौ-"तत्कारणं सांख्ययोगाभिपन्नम्" "ज्ञात्वा देवं मुच्यते सर्वपाशैः" [ श्वेता० ६ । १३ ] इति ॥ निराकरणं तु न सांख्यज्ञानेन वेदनिरपेक्षेण योगमार्गेण वा निःश्रेयसमधिगम्यत इति ॥ श्रुतिर्हि वैदिकादात्मैकत्वविज्ञानादन्यन्निःश्रेयससाधनं वारयति-"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" [ श्वेता० ३।८ ] इति ॥ द्वैतिनो हि ते सांख्या योगाश्च नात्मैकत्वदर्शिनः ॥ यत्तु दर्शनमुक्तं-"तत्कारणं सांख्ययोगाभिपन्नम्" [ श्वेता० ६ । ३ ] इति वैदिकमेव तत्र ज्ञानं ध्यानं च सांख्ययोगशब्दाभ्यामभिलप्यते । प्रत्यासत्तेरित्यवगन्तव्यम् ॥ येन त्वंशेन न विरुध्यते तेनेष्टमेव सांख्ययोगस्मृत्योस्सावकाशत्वम् ॥ तद्यथा-"असङ्गो ह्ययं पुरुषः" [ बृ० ४ । ३ । ६ ] इत्येवमादिश्रुतिप्रसिद्धमेव पुरु-

रत्नप्रभा ।

तासां प्रतारकत्वेन प्रसिद्धत्वादशिष्टैः पशुप्रायैर्गृहीतत्वाद्वेदबाह्यत्वाच्चात्रोपेक्षेति भावः ॥ तत्कारणमिति । तेषां प्रकृतानां कामानां कारणं सांख्ययोगाभ्यां विवेकध्यानाभ्यामभिपन्नं प्रत्यक्तया प्राप्तं देवं ज्ञात्वा सर्वपाशैः अविद्यादिभिर्मुच्यत इत्यर्थः । समूलत्वे स्मृतिद्वयस्य निरासः किमिति कृत इत्यत आह-निराकरणन्त्विति ॥ इति हेतोः । कृतमिति शेषः ॥ प्रत्यासत्तेरिति । श्रुतिस्थसांख्ययोगशब्दयोः सजातीयश्रुत्यर्थग्राहित्वादिति यावत् । किं सर्वांशेषु स्मृत्यप्रामाण्यं नेत्याह-येन त्वंशेनेति ॥

भामती ।

स्मृतय इति ताः प्रधानादिपरतया व्युदस्यन्त इत्यर्थः । न सांख्यज्ञानेन वेदनिरपेक्षेणेति । प्रधानादिविषयेणेत्यर्थः । द्वैतिनो हि ते सांख्या योगाश्च । ये प्रधानादिपरतया तच्छास्त्रं व्याचक्षत इत्यर्थः । संख्या सम्यग्बुद्धिर्वैदिकी तया वर्तन्त इति सांख्याः । एवं योगो ध्यानम् उपायोपेययोरभेदविवक्षया । चित्तवृत्तिनिरोधो हि योगस्तस्योपायो ध्यानं प्रत्ययैकतानता । एतच्चोपलक्षणम् । अन्येऽपि यमनियमादयो बाह्या आन्तराश्च धारणादयो योगोपाया द्रष्टव्याः । एतेनाभ्युपगतवेदप्रामाण्यानां कणभक्षाक्षचर-

आनन्दगिरीय-न्यायनिर्णयः ।

प्राकृतानां परमपुरुषार्थसाधनत्वेन बौद्धादिदर्शनमपि प्रसिद्धमित्याशंक्याऽऽह-शिष्टैश्चेति । ननु शिष्टपरिग्रहस्यापि विशिष्टप्रमाणमूलत्वमेष्टव्यम् "आचाराच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनाम्" इति न्यायात्तत्राऽऽह-लिङ्गेन चेति।'एको बहूनां यो विदधाति कामान्'इत्युपक्रम्य श्रुतं तत्कारणमिति तेषां कामानां कारणं सांख्यैर्ज्ञानिभिर्योगैर्ध्यायिभिश्चाभिपन्नमाभिमुख्येन प्रत्यक्तया प्राप्तं देवं ज्ञात्वा सर्वपाशैरविद्यादिक्लेशैर्मुच्यत इत्यर्थः । तर्हि श्रुतिसिद्धत्वादिकारणवशान्निराकरणमशक्यमन्यथा श्रुत्यादिविरोधादित्याशंक्याऽऽह-निराकरणं त्विति । किमत्र प्रमाणमित्यपेक्षायामुक्तम्-श्रुतिर्हीति । ननु वैदिकादात्मज्ञानादेव सांख्यादयोऽपि निःश्रेयसं वदन्ति तत्कथमवैदिकत्वेन ते निरस्यन्ते तत्राऽऽह-द्वैतिनो हीति । तर्हि श्रौतस्य लिङ्गस्य का गतिरित्यत आह-यत्त्विति । प्रसिद्धिविरोधेन कथमभ्युपगम्यते प्रमाणवशादित्याह-प्रत्यासत्तेरिति । वैदिकी सम्यग्बुद्धिः संख्या तया सह वर्तत इति सांख्यं योगो ध्यानं चित्तवृत्तिनिरोधस्तस्य योगस्य तदुपायत्वात्प्रत्ययैकतानताया ध्यानस्य तेनाभेदोपचारादतः संनिकृष्टं सम्यग्ज्ञानं वैदिकं सांख्यादिशब्दितमित्यर्थः । तर्हि प्रसिद्धयोः सांख्ययोगस्मृत्योः सर्वथा नास्ति प्रामाण्यं नेत्याह-येन त्विति । अविरुद्धमंशमेव स्मृतिद्वयेऽपि विभज्य दर्शयति-तद्यथेति । प्रव्रज्यादीत्यादिशब्देन तद्धर्मसंग्रहः । अथो-

१ अभिपन्नमित्यस्य स्थानेऽधिगम्यमिति पाठो दृश्यत उपनिषत्पुस्तके ।

षस्य विशुद्धत्वं निर्गुणपुरुषनिरूपणेन सांख्यैरभ्युपगम्यते ॥ तथा च योगैरपि-"अथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः" [ जाबा० ५ ] इत्येवमादिश्रुतिप्रसिद्धमेव निवृत्तिनिष्ठत्वं प्रव्रज्याद्युपदेशेनानुगम्यते ॥ एतेन सर्वाणि तर्कस्मरणानि प्रतिवक्तव्यानि ॥ तान्यपि तर्कोपपत्तिभ्यां तत्त्वज्ञानायोपकुर्वन्तीति चेत् ॥ उपकुर्वन्तु नाम ॥ तत्त्वज्ञानं तु वेदान्तवाक्येभ्य एव भवति-"नावेदविन्मनुते तं बृहन्तम्" [ तै० ब्रा० ३ । १२ । ९ । ७ ] "तं त्वौपनिषदं पुरुषं पृच्छामि" [ बृ० २ । ९ । २६ ] इत्येवमादिश्रुतिभ्यः ॥ ३ ॥ इति योगप्रत्युक्त्यधिकरणम् ॥ २ ॥

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥ ( ३ ) ॥

ब्रह्मास्य जगतो निमित्तकारणं प्रकृतिश्चेत्यस्य पक्षस्याक्षेपः स्मृतिनिमित्तः परिहृतः ॥ तर्कनिमित्त इदानीमाक्षेपः परिह्रियते ॥ कुतः पुनरस्मिन्नवधारिते आगमार्थे तर्कनिमित्तस्याक्षेपस्यावकाशः ॥ ननु धर्म इव

रत्नप्रभा ।

ब्रह्मवादस्य कणभक्षादिभिर्विरोधमाशंक्यातिदिशति-एतेनेति ॥ श्रुतिविरोधेनेत्यर्थः । उपकारकबाधो न युक्त इत्याशंक्य योंऽश उपकारकः स न बाध्यः । किन्तु तत्त्वांश इत्याह-तान्यपीति ॥ तर्कः-अनुमानम् । तदनुग्राहिका युक्तिरुपपत्तिः ॥ ३ ॥ ( २ ) ॥ स्मृतीनामप्रामाण्यात्ताभिः समन्वयस्य न विरोध इति सिद्धान्तविलक्षणत्वाद् वृत्तानुवादेनास्याधिकरणस्य तात्पर्यमाह-ब्रह्मास्येति ॥ पूर्वपक्षमाक्षिपति-कुतः पुनरिति ॥ अनवकाशे हेतुमाह-ननु धर्म इवेति ॥ मानान्तरानपेक्षे वेदैक-

भामती ।

णादीनां सर्वाणि तर्कस्मरणानीति योजना । सुगममन्यत् ॥३॥ (२)॥ न विलक्षणत्वादस्य तथात्वं च शब्दात् । अवान्तरसंगतिमाह-ब्रह्मास्य जगतो निमित्तकारणं प्रकृतिश्चेत्यस्य पक्षस्येति । चोदयति-कुतः पुनरिति । समानविषयत्वे हि विरोधो भवेत् । न चेहास्ति समानविषयता, धर्मवद्ब्रह्म-

आनन्दगिरीय-न्यायनिर्णयः ।

क्तविधया सांख्ययोगस्मृतिविरोधाभावेऽपि काणादादिस्मृतिविरोधान्न समन्वयसिद्धिरित्यत आह-एतेनेति । सांख्ययोगस्मृतिनिराकरणन्यायेनेति यावत् । तेषां निराकर्तव्यतामसृष्यन्नाशङ्कते-तान्यपीति । तर्कोऽनुमानमनुग्राह्यं मानम् । उपपत्तिरनुग्राहिका युक्तिरिति भेदः । तर्कस्मरणानां तत्त्वज्ञानोपकारकत्वमङ्गीकरोति-उपकुर्वन्त्विति । तर्हि वैदिकवाक्येभ्यस्तेषां को विशेषस्तत्राऽऽह-तत्त्वज्ञानं त्विति । तत्र मानमाह-नावेदविदिति ॥ ३ ॥ ( २ )॥ तदेवं वेदविरुद्धानां स्मृतीनामप्रामाण्यान्न तद्विरोधः समन्वयस्येति समन्वयविरोधिनीनां स्मृतीनामाभासतामुक्त्वा तद्विरोधिनो न्यायस्याऽऽभासतां विवक्षुः सांख्ययोगन्यायस्याऽऽभासत्वार्थं पूर्वपक्षयति-न विलक्षणत्वादिति । चेतनाद्ब्रह्मणो जगदुत्पत्तिं ब्रुवन्समन्वयो विषयः स किमाकाशादि न चेतनप्रकृतिकं द्रव्यत्वाद्घटादिवदिति सांख्ययोगन्यायेन विरुध्यते न वेति तदनाभासत्वाभासत्वाभ्यां संदेहे पूर्वाधिकरणेनोत्तराधिकरणसंदर्भस्य संगतिमाह-ब्रह्मेति । अत्र च समन्वयस्य यथोक्तन्यायविरोधसमाधेरेव श्रुत्यादिसंगतयः । फलं तु पूर्वोत्तरपक्षयोः समन्वयासिद्धिस्तत्सिद्धिश्चेति । पूर्वपक्षमाक्षिपति-कुत इति । ब्रह्मणो मानान्तराविषयत्वेनातर्क्यत्वेन चानपेक्षाम्नायैकगम्यत्वात्तर्कागमयोरतुल्यार्थत्वेनाविरोधादागमार्थे तर्कनिमित्ताक्षेपस्य निरवकाशतेत्यर्थः । ननु तर्कोपकरणेतिकर्तव्यताया वेदान्तमीमांसायास्तर्कोपकरणत्वमुक्तं प्रथमसूत्रे, तथा च तर्कस्य वेदान्तैस्तुल्यार्थत्वमिष्टं करणोपकरणयोरेकार्थत्वावगमात्तत्राऽऽह-नन्विति । शक्तितात्पर्यावधारणे परं तर्कस्योपकरणत्वं न तु तस्य

ब्रह्मण्यप्यनपेक्ष आगमो भवितुमर्हति । भवेदयमवष्टम्भो यदि प्रमाणान्तरानवगाह्य आगममात्रप्रमेयोऽयमर्थः स्यादनुष्ठेयरूप इव धर्मः । परिनिष्पन्नरूपं तु ब्रह्मावगम्यते । परिनिष्पन्ने च वस्तुनि प्रमाणान्तराणामस्त्यवकाशः । यथा—पृथिव्यादिषु, यथा च श्रुतीनां परस्परविरोधे सत्येकवशेनेतरा नीयन्ते, एवं प्रमाणान्तरविरोधेऽपि तद्वशेनैव श्रुतिर्नीयते ॥ दृष्टसाधर्म्येण चादृष्टमर्थं समर्पयन्ती युक्तिरनुभवस्य सान्निकृष्यते ॥ विप्रकृष्यते तु श्रुतिरैतिह्यमात्रेण स्वार्थाभिधानात् ॥ अनुभवावसानं च ब्रह्मविज्ञानमविद्याया निवर्तकं मोक्षसाधनञ्च दृष्टफलतयेष्यते॥

रत्नप्रभा ।

समधिगम्ये ब्रह्मण्यनुमानात्मकतर्कस्याप्रवेशः । तेनाक्षेपस्यानवकाशः । भिन्नविषयत्वात्तर्कवेदयोरित्यर्थः । सिद्धस्य मानान्तरगम्यत्वादेकविषयत्वाद्विरोध इति पूर्वपक्षं समर्थयते—भवेदयमिति ॥ अवष्टम्भो दृष्टान्तः । नन्वेकविषयत्वेन विरोधेऽपि श्रुतिविरोधान्मानान्तरमेव बाध्यतामित्यत आह—यथा चेति ॥ प्रबलश्रुत्या दुर्बलश्रुतिबाधवन्निरवकाशमानान्तरेण लक्षणावृत्त्या सावकाशश्रुतिनयनं युक्तमित्यर्थः । किञ्च ब्रह्मसाक्षात्कारस्य मोक्षहेतुत्वेन प्रधानस्यान्तरङ्गं तर्कः, तस्यापरोक्षदृष्टान्तगोचरत्वेन प्रधानवदपरोक्षार्थविषयत्वात् । शब्दस्तु परोक्षार्थकत्वाद्बहिरङ्गम् । अतस्तर्केण बाध्य इत्याह—दृष्टेति ॥ ऐतिह्यमात्रेण परोक्षतयेति यावत् । अनुभवस्य प्राधान्यं दर्शयति—अनुभवावसानञ्चेति ॥ नैषा तर्केण मतिरित्यर्थवा-

भामती ।

णोऽपि मानान्तराविषयतयातर्क्यत्वेनानपेक्षाम्नायैकगोचरत्वादित्यर्थः । समाधत्ते—भवेदयमिति । 'मानान्तरस्याविषयः सिद्धवस्त्ववगाहिनः । धर्मोऽस्तु कार्यरूपत्वाद्ब्रह्म सिद्धं तु गोचरः ॥' तस्मात्समानविषयत्वादस्त्यत्र तर्कस्यावकाशः । नन्वस्तु विरोधः, तथापि तर्कादरे को हेतुरित्यत आह—यथा च श्रुतीनामिति । सावकाशा बह्व्योऽपि श्रुतयोऽनवकाशैकश्रुतिविरोधे तदनुगुणतया यथा नीयन्ते एवमनवकाशैकतर्कविरोधे तदनुगुणतया बह्व्योपि श्रुतयो गुणकल्पनादिभिर्व्याख्यानमर्हन्तीत्यर्थः । अपि च ब्रह्मसाक्षात्कारो विरोधितयानादिमविद्यां निवर्तयन् दृष्टेनैव रूपेण मोक्षसाधनमिष्यते । तत्र ब्रह्मसाक्षात्कारस्य मोक्षसाधनतया प्रधानस्यानुमानं दृष्टसाधर्म्येणादृष्टविषयं विषयतोऽन्तरङ्गं, बहिरङ्गं त्वत्यन्तपरोक्षगोचरं शाब्दं ज्ञानं,तेन प्रधानप्रत्यासत्त्याप्यनुमानमेव बलीय इत्याह—दृष्टसाधर्म्येण चेति।अपि च श्रुत्यापि ब्रह्मणि तर्कं

आनन्दगिरीय—न्यायनिर्णयः ।

ब्रह्मविषयता नैषा तर्केणेति श्रुतेरित्यर्थः । सिद्धस्य ब्रह्मणः साध्याद्धर्माद्वैलक्षण्येनाध्यक्षादिविषयत्वसंभवात्तर्कगम्यत्वमपि संभवत्यतस्तुल्यविषयत्वादागमार्थेऽपि तर्कनिमित्ताक्षेपस्यावकाशोऽस्तीति समाधत्ते—भवेदित्यादिना । एकविषयत्वेन विरोधेऽपि किमिति मानान्तरमेव श्रुतिविरोधान्न बाध्यते तत्र दृष्टान्तेनोत्तरमाह—यथा चेति । यथा सावकाशा भूयस्योऽपि श्रुतयो निरवकाशैकश्रुतिविरोधे तदनुरोधेन नीयन्ते तथा निरवकाशैकतर्कविरोधे तदनुगुणतया भूयस्योऽपि श्रुतयो गुणकल्पनया व्याख्येयाः सावकाशनिरवकाशयोर्निरवकाशस्य बलीयस्त्वादित्यर्थः । ब्रह्मण्याम्नायात्तर्कस्य बलीयस्त्वे हेत्वन्तरमाह—दृष्टेति । ब्रह्मसाक्षात्कारस्य मोक्षोपायतया प्राधान्यात्तत्र शब्दादपि परोक्षगोचरादपरोक्षार्थसाधर्म्यगोचरस्तर्कोऽन्तरङ्गमिति तस्यैव बलवत्त्वमित्यर्थः । ऐतिह्यमात्रेण प्रवादपारम्पर्यमात्रेण परोक्षतयेति यावत् । अनुभवस्य प्राधान्ये तर्कस्योक्तन्यायेन तस्मिन्नन्तरङ्गत्वादागमस्य च बहिरङ्गत्वाद् 'अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवत्' इति न्यायादुक्तं तर्कस्य बलवत्त्वम् । अनुभवप्राधान्यं तु नाद्यापि सिद्धमित्याशंक्याऽऽह—अनुभवेति । ननु ब्रह्मज्ञानं वैदिकत्वाद्धर्मवददृष्टफलमेष्टव्यं तत्कुतोऽस्यानुभवावसानाविद्यानिवर्तकत्वं तत्राऽऽह—मोक्षेति ।

श्रुतिरपि-"श्रोतव्यो मन्तव्यः" [ बृ० २ । ४ । ५ ] इति श्रवणव्यतिरेकेण मननं विदधती तर्कमप्यत्रादर्तव्यं दर्शयति ॥ अतस्तर्कनिमित्तः पुनराक्षेपः क्रियते-न विलक्षणत्वादस्येति-यदुक्तं चेतनं ब्रह्म जगतः प्रकृतिरिति ॥ तन्नोपपद्यते ॥ कस्मात् ॥ विलक्षणत्वादस्य विकारस्य प्रकृत्याः । इदं हि ब्रह्मकार्यत्वेनाभिप्रेयमाणं जगद्ब्रह्मविलक्षणमचेतनमशुद्धञ्च दृश्यते, ब्रह्म च जगद्विलक्षणं चेतनं शुद्धं च श्रूयते ॥ न च विलक्षणत्वे प्रकृतिविकारभावो दृष्टः । न हि रुचकादयो विकारा मृत्प्रकृतिका भवन्ति । शरावादयो वा सुवर्णप्रकृतिकाः । मृदैव तु मृदन्विता विकाराः क्रियन्ते । सुवर्णे च सुवर्णान्विताः । तथेदमपि जगदचेतनं सुखदुःखमोहान्वितं सदचेतनस्यैव सुखदुःखमोहात्मकस्य कारणस्य कार्यं भवितुमर्हति ॥ न विलक्षणस्य ब्रह्मणः ॥ ब्रह्मविलक्षणत्वञ्चास्य

रत्नप्रभा ।

देन तर्कस्य निषेधमाशंक्य विधिविरोधान्मैवमित्याह-श्रुतिरपीति ॥ एवं पूर्वपक्षं सम्भाव्य चेतनब्रह्मकारणवादिवेदान्तसमन्वयः, क्षित्यादिकं, न चेतनप्रकृतिकं, कार्यद्रव्यत्वाद्, घटवदिति सांख्ययोगन्यायेन विरुध्यते न वेति सन्देहे स्मृतेर्मूलाभावाद् दुर्बलत्वेऽप्यनुमानस्य व्याप्तिमूलत्वेन प्राबल्यात्तेन विरुध्यत इति प्रत्युदाहरणेन पूर्वपक्षयति-न विलक्षणत्वादिति ॥ पूर्वोत्तरपक्षयोः समन्वयासिद्धिस्तत्सिद्धिश्चेति पूर्ववत् फलम् । जगत्, न ब्रह्मप्रकृतिकं, तद्विलक्षणत्वाद्, यद्यद्विलक्षणं, तन्न तत्प्रकृतिकं, यथा-मृद्विलक्षणा रुचकादय इत्यर्थः ॥ सुखदुःखमोहाः सत्त्वरजस्तमांसि । तथा च जगत्,सुखदुःखमोहात्मकसामान्यप्रकृतिकं, तदन्वितत्वाद् यदित्थं, तत्तथा यथा-मृदन्विता घटादय इत्याह-मृदैवेति ॥ विलक्षणत्वं साधयति-ब्रह्मविलक्षणत्वञ्चेति ॥ यथा हि एक एव स्त्रीपिण्डः पतिसपत्न्युपपतीनां प्रीतिपरिताप-

भामती ।

आदृत इत्याह-श्रुतिरिति । सोऽयं ब्रह्मणो जगदुपादानत्वाक्षेपः पुनस्तर्केण प्रस्तूयते-'प्रकृत्या सह सारूप्यं विकाराणामवस्थितम् । जगद्ब्रह्मसरूपं च नेति नो तस्य विक्रिया ॥ विशुद्धं चेतनं ब्रह्म जगज्जडमशुद्धिभाक् । तेन प्रधानसारूप्यात्प्रधानस्यैव विक्रिया ॥' तथाहि-एक एव स्त्रीकायः सुखदुःखमो-

आनन्दगिरीय-न्यायनिर्णयः ।

अधिष्ठानसाक्षात्कारस्य शुक्त्यादिज्ञाने तदविद्यातत्कार्यनिवर्तकत्वदृष्टेर्ब्रह्मज्ञानस्यापि तर्कवशादसंभावनादिनिरासद्वारा साक्षात्कारावसायिनस्तदविद्यानिवर्तकत्वेनैव मुक्तिहेतुतेति नादृष्टफलतेत्यर्थः । यत्तु 'नैषा' इत्यादिश्रुतेर्ब्रह्मणि न प्रवेशस्तर्कस्येति तत्राऽऽह-श्रुतिरपीति । विधिविरोधेऽर्थवादश्रुतिरद्धीभवतीति भावः । ब्रह्मणि तर्कप्रवेशे फलितमाह-अत इति । सूत्रावयवमवतारितं व्याकरोति-यदुक्तमित्यादिना । ब्रह्मणो जगत्प्रकृतित्वं प्रतिपादितत्वान्नानुपपन्नमित्याह-कस्मादिति । तत्र सोपस्करं हेतुमाह-विलक्षणत्वादिति । जगद्ब्रह्मणोर्मिथो विलक्षणत्वं दृष्टिश्रुतिभ्यां स्पष्टयति-इदं हीति । तयोर्मिथो वैलक्षण्येऽपि किमायातमित्याशंक्याऽऽह-न चेति । अदृष्टत्वमेव स्पष्टयन्व्याप्तिमाह-न हीति । व्यतिरेकमुक्त्वाऽन्वयमाचष्टे-मृदैवेति । व्याप्तिमुक्त्वा पूर्वपक्षसाधकमनुमानमाह-तथेति । विमतं सुखदुःखमोहसामान्यप्रकृतिकं तदन्वितस्वभावत्वाद्यथा मृदन्वितस्वभावा घटादयो मृत्प्रकृतिकास्तथेत्यर्थः । सिद्धान्तं निषेद्धुमनुमानमाह-न विलक्षणस्येति । विमतं न ब्रह्मप्रकृतिकं तत्स्वभावेनाननुगतत्वाद्यथा मृत्स्वभावेनाननुगतं रुचकादि न मृत्प्रकृतिकं तद्वदित्यर्थः । किंच, न ब्रह्म जगत्प्रकृतिस्तस्मिन्ननुगतस्वभावत्वाद्यथा घटादिष्वननुगतं सुवर्णादि तत्प्रकृतिर्न भवति तद्वदित्यनुमानमभिप्रेत्याऽऽह-ब्रह्मेति । तत्राशुद्ध-

जगतोऽशुद्धचेतनत्वदर्शनादवगन्तव्यम् ॥ अशुद्धं हीदं जगत् । सुखदुःखमोहात्मकतया प्रीतिपरितापविषादादिहेतुत्वात्, स्वर्गनरकाद्युच्चावचप्रपञ्चत्वाच्च ॥ अचेतनं चेदं जगत् । चेतनं प्रति कार्यकारणभावेनोपकरणभावोपगमात् ॥ न हि साम्ये सत्युपकार्योपकारकभावो भवति । न हि प्रदीपौ परस्परस्योपकुरुतः ॥ ननु चेतनमपि कार्यकारणं स्वामिभृत्यन्यायेन भोक्तुरुपकरिष्यति ॥ न स्वामिभृत्ययोरप्यचेतनांशस्यैव चेतनं प्रत्युपकारकत्वात् । यो ह्येकस्य चेतनस्य परिग्रहे बुद्ध्यादिरचेतनभागस्स एवान्यस्य चेतनस्योपकरोति । न तु स्वयमेव चेतनश्चेतनान्तरस्य उपकरोत्यपकरोति वा । निरतिशया ह्यकर्तारश्चेतना इति सांख्या मन्यन्ते ॥ तस्मादचेतनं कार्यकारणम् ॥ न च काष्ठलोष्टादीनां चेतनत्वे किंचित्प्रमाणमस्ति ॥ प्रसिद्धश्चायं चेतनाचेतनविभागो लोके ॥

---

रत्नप्रभा ।

विषादादीन् करोति, एवमन्येऽपि भावा द्रष्टव्याः । तत्र प्रीतिः सुखम् । परितापः शोकः । विषादः भ्रमः । आदिपदाद् रागादिग्रहः । उभयोश्चेतनत्वेन साम्यादुपकार्योपकारकभावो न स्यादित्ययुक्तम् । स्वामिभृत्ययोर्व्यभिचारादिति शंकते—ननु चेतनमपीति ॥ भृत्यदेहस्यैव स्वामिचेतनोपकारकत्वान्न व्यभिचार इत्याह—नेत्यादिना ॥ उत्कर्षापकर्षशून्यत्वाच्चेतनानां मिथो नोपकारकत्वमित्याह—निरतिशया इति ॥ तस्माद् उपकारकत्वात् श्रुतचेतनप्रकृतिकत्वबलेन जगच्चेतनमेवेत्येकदेशिमतमुत्थापयति—

भामती ।

हात्मकतया पत्युश्च सपत्नीनां च चैत्रस्य च स्त्रैणस्य तामविन्दतोऽपर्यायं सुखदुःखविषादानाधत्ते । स्त्रिया च सर्वे भावा व्याख्याताः । तस्मात्सुखदुःखमोहात्मतया च स्वर्गनरकाद्युच्चावचप्रपञ्चतया च जगदशुद्धमचेतनं च ब्रह्म तु चेतनं विशुद्धं च, निरतिशयत्वात् । तस्मात्प्रधानस्याशुद्धस्याचेतनस्य विकारो जगन्न तु ब्रह्मण इति युक्तम् । ये तु चेतनब्रह्मविकारतया जगच्चैतन्यमाहुस्तान्प्रत्याह—अचेतनं चेदं जगदिति । व्यभिचारं चोदयति—ननु चेतनमपीति । परिहरति—न स्वामिभृत्ययोरपीति । ननु मा नाम साक्षाच्चेतनश्चेतनान्तरस्योपकार्षीत्, तत्कार्यकरणबुद्ध्यादिनियोगद्वारेण तूपकरिष्यतीत्यत आह—निरतिशया ह्यकर्तारश्चेतना इति । उपजनापायवद्धर्मयोगोऽतिशयः, तदभावो निरतिशयत्वम् । अत एव निर्व्यापारत्वादकर्तारः । तस्मात्तेषां बुद्ध्यादिप्रयोक्तृत्वमपि नास्तीत्यर्थः । चोदकोऽनुशयबीजमुद्घाट-

आनन्दगिरीय–न्यायनिर्णयः ।

त्वमुपपादयति—अशुद्धं हीति । विषादादीत्यादिपदेन रागद्वेषादयो गृह्यन्ते । नरकादीत्यादिशब्देन लोकभेदानां तत्रावस्थितप्राणिप्रभेदानां च ग्रहणम् । जगतोऽचेतनत्वं साधयति—अचेतनं चेति । चेतनत्वाविशेषेऽपि स्यादुपकार्योपकारकत्वं नेत्याह—न हीति । तदेव दृष्टान्तेन स्पष्टयति—न हि प्रदीपाविति । साम्ये सत्युपकार्योपकारकत्वं नास्तीत्यत्र व्यभिचारं चोदयति—नन्विति । स्वामिभृत्यन्यायं विघटयन्नुत्तरमाह—न स्वामीति । किं चेतनस्य साक्षादेव चेतनान्तरं प्रत्युपकारकत्वं किं वोपकारककार्यकरणाधिष्ठातृत्वेनेति विकल्प्याऽऽद्यं प्रत्याह—यो हीति । स एवेत्येवकारनिरस्यं दर्शयति—न त्विति । द्वितीयं निरस्यति—निरतिशया हीति । उपजनापायधर्मशून्यत्वं निरतिशयत्वम् । अत एवाकर्तृत्वमतिशयमन्तरेण सिध्यति तत्कथं परम्परयाऽपि चेतनानामनाधेयातिशयानामुपकार्योपकारकत्वमित्यर्थः । समयोरुपकार्योपकारकत्वासंभवे फलितमाह—तस्मादिति । किंच, कार्यकारणे चेतनत्वशंकाऽवकाशवती तत्र चेतनस्य सत्त्वात्काष्ठादिषु तदाशंकैव नोदेतीत्याह—न चेति । इतश्च जगतश्चेतनत्वमयुक्तमित्याह—प्रसिद्धश्चेति ।

तस्माद्ब्रह्मविलक्षणत्वान्नेदं जगत्तत्प्रकृतिकम् ॥ योऽपि कश्चिदाचक्षीत श्रुत्या जगतश्चेतनप्रकृतिकतां, तद्बलेनैव समस्तं जगच्चेतनमवगमिष्यामि ॥ प्रकृतिरूपस्य विकारेऽन्वयदर्शनात् ॥ अविभावनं तु चैतन्यस्य परिणामविशेषाद्भविष्यति ॥ यथा-स्पष्टचैतन्यानामप्यात्मनां स्वापमूर्च्छाद्यवस्थासु चैतन्यं न विभाव्यते, एवं काष्ठलोष्टादीनामपि चैतन्यं न विभावयिष्यते । एतस्मादेव च विभावितत्वाविभावितत्वकृताद्विशेषाद्रूपादिभावाभावाभ्यां च कार्यकारणानामात्मनां च चेतनत्वाविशेषेऽपि गुणप्रधानभावो न विरोत्स्यते । यथा च-पार्थिवत्वाविशेषेऽपि मांससूपौदनादीनां प्रत्यात्मवर्तिनो विशेषात्परस्परोपकारित्वं भवति, एवमिहापि भविष्यति ॥ प्रविभागप्रसिद्धिरप्यत एव न विरोत्स्यत इति ॥ तेनापि कथंचिच्चेतनत्वाचेतनत्वलक्षणं विलक्षणत्वं परिह्रियेत । शुद्ध्यशुद्धित्वलक्षणं तु विलक्षणत्वं नैव परिह्रियते ॥ न चेतरदपि विलक्षणत्वं परिहर्तुं शक्यत इत्याह-तथात्वं च शब्दादिति ॥ अनवगम्यमानमेव

रत्नप्रभा ।

योऽपीति॥घटादेश्चेतनत्वमनुपलब्धिबाधितमित्यत आह-अविभावनन्त्विति ॥ अंतःकरणान्यपरिणामत्वात् सतोऽपि चैतन्यस्यानुपलब्धिरित्यर्थः । अन्तःकरणादन्यस्य वृत्त्युपरागदशायामेव चैतन्याभिव्यक्तिर्नान्यदेति भावः । वृत्त्यभावे चैतन्यानभिव्यक्तौ दृष्टान्तः-यथेति ॥ आत्मानात्मनोश्चेतनत्वे स्वस्वामिभावः कुत इत्यत आह-एतस्मादेवेति ॥ साम्येपि प्रातिस्विकस्वरूपविशेषाच्छेषशेषित्वे दृष्टान्तः-यथा चेति ॥ चेतनाचेतनभेदः कथमित्यत आह-प्रविभागेति ॥ चैतन्याभिव्यक्त्यनभिव्यक्तिभ्यामित्यर्थः । सर्वस्य चेतनत्वमेकदेश्युक्तमङ्गीकृत्य सांख्यः परिहरति-तेनापि कथञ्चिदिति ॥ अङ्गीकारं त्यक्त्वा सूत्रशेषेण परिहरति-न चेत्यादिना ॥ इतरत् चेतनाचेतनत्वरूपं वैलक्षण्यम् । तथात्वशब्दार्थश्रुतार्थापत्तिः शब्देन

भामती ।

यति-योऽपीति । अभ्युपेत्यापाततः समाधानमाह-तेनापि कथंचिदिति । परमसमाधानं तु सूत्रावयवेन वक्तुं तमेवावतारयति-न चेतरदपि विलक्षणत्वमिति । सूत्रावयवाभिसंधिमाह-अनवगम्यमा-

आनन्दगिरीय-न्यायनिर्णयः ।

जगतोऽशुद्धत्वेऽचेतनत्वे च सिद्धे पूर्वोक्तमनुमानमुपसंहरति-तस्मादिति । श्रुतार्थापत्त्या चेतनत्वं जगतोऽवगतमिति सूत्रैकदेशव्यावर्त्यामाशंकां दर्शयति-योऽपीति । जगतश्चेतनप्रकृतिकत्वश्रुतिबलेन चेतनत्वावगतिरित्युक्तं व्यनक्ति-प्रकृतीति । अनुपलम्भपराहता श्रुतार्थापत्तिरमानमित्याशंक्याऽऽह-अविभावनं त्विति । समस्ते जगति सतोऽपि चैतन्यस्य तत्रतत्रान्तःकरणपरिणामादुपरागादनुपलब्धिरविरुद्धेत्यर्थः । स्वप्रकाशस्य चैतन्यस्य परिणामविशेषानुपरागादनुपलब्धिरसिद्धा स्वप्रकाशत्वविरोधादित्याशंक्य दृष्टान्तेन परिहरति-यथेत्यादिना । तर्हि चेतनत्वेन तुल्यानां कार्यकरणानामात्मनां च गुणप्रधानत्वाभावादुपकार्योपकारकत्वानुपपत्तिरुक्ता तदवस्थेत्याशंक्याऽऽह-एतस्मादिति । साम्येऽपि संभवत्युपकार्योपकारकत्वमित्येतदुदाहरणेन स्फोरयति-यथा चेति । प्रत्यात्मवर्तिनो विशेषात्तदसाधारणधर्मवशादित्यर्थः । सर्वस्यापि जगतश्चेतनत्वे कथं चेतनाचेतनविभागप्रसिद्धिरत आह-प्रविभागेति । अत एव विभावितत्वाविभावितत्वविशेषादेवेत्यर्थः । जगतश्चेतनत्वमुपेत्याऽऽपाततः समाधानमाह-तेनापीति । परमसमाधानं वक्तुं सूत्रावयवमवतारयति-न चेति । तस्याभिप्रायं दर्शयितुं परकीयाभिप्रायमनुवदति-अनवगम्यमानमिति । लोकानुरोधवैधुर्यं केवलं चेत्युक्तं संप्रति सूत्रावयवाभिप्रायमाह-

हीदं लोके समस्तस्य वस्तुनश्चेतनत्वं चेतनप्रकृतिकत्वश्रवणाच्छब्दशरणतया केवलयोत्प्रेक्षते ॥ तच्च शब्देनैव विरुध्यते ॥ यतः शब्दादपि तथात्वमवगम्यते—तथात्वमिति प्रकृतिविलक्षणत्वं कथयति—शब्द एव—“विज्ञानं चाविज्ञानं च” [ तै० २ । ६ । ३ ] इति ॥ कस्यचिद्विभागस्याचेतनतां श्रावयंश्चेतनाद्ब्रह्मणो विलक्षणमचेतनं जगच्छ्रावयति ॥ ४ ॥ ननु चेतनत्वमपि क्वचिदचेतनत्वाभिमतानां भूतेन्द्रियाणां श्रूयते । यथा—“मृदब्रवीद्” “आपोऽब्रुवन्” [ शत० ब्रा० ६ । १ । ३ । २ । ४ ] इति, “तत्तेज ऐक्षत” [ छां० ६ । २ । ३ ] “ता आप ऐक्षन्त” [ छां० ६ । २ । ४ ] इति चैवमाद्या भूतविषया चेतनत्वश्रुतिः ॥ इन्द्रियविषयापि—“ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः” [ बृ० ६ । १ । ७ ] इति । “ते ह वाचमूचुस्त्वन्न उद्गाय” [ बृ० १ । ३ । २ ] इति चैवमाद्येन्द्रियविषयेति अत उत्तरं पठति—

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

तुशब्द आशंकामपनुदति । न खलु “मृदब्रवीद्” इत्येवंजातीयिकया श्रुत्या भूतेन्द्रियाणां चेतनत्वमाशंकनीयम् । यतोऽभिमानिव्यपदेश एषा

---

रत्नप्रभा ।

बाध्येति भावः ॥ ४ ॥ श्रुतिसाहाय्यान्न बाध्येत्युत्तरसूत्रव्यावर्त्यं शङ्कते—नन्विति ॥ मृदादीनां वक्तृत्वादिश्रुतेः तदभिमानिविषयत्वात् । तथा “विज्ञानं चाविज्ञानञ्च” [ तै० २ । ६ । १ ] इति चेतनाचेतनविभागशब्दस्योपचरितार्थत्वं न युक्तमिति सांख्यः समाधत्ते—अभिमानीति ॥ संवदनं विवादः । न भूतमात्रमिन्द्रियमात्रं वा चेतनत्वेन व्यपदिश्यते । लोकवेदप्रसिद्धविभागबाधायोगादित्यर्थः । विशेषपद-

भामती ।

नमेव हीदमिति । शब्दार्थात् खलु चेतनप्रकृतित्वाच्चैतन्यं पृथिव्यादीनामवगम्यमानमुपोद्बलितं मानान्तरेण साक्षाच्छ्रूयमाणमप्यचैतन्यमन्यथयेत् । मानान्तराभावे त्वार्थोऽर्थः श्रुत्यर्थेनापबाधनीयः, न तु तद्बलेन श्रुत्यर्थोऽन्यथयितव्य इत्यर्थः ॥ ४ ॥ सूत्रान्तरमवतारयितुं चोदयति—ननु चेतनत्वमपि क्वचिदिति । न पृथिव्यादीनां चैतन्यमार्थमेव, किंतु भूयसीनां श्रुतिनां साक्षादेवार्थ इत्यर्थः । सूत्रमवतारयति—अत उत्तरं पठति—अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् । विभजते—तुशब्द इति । नैताः श्रुतयः साक्षान्मृदादीनां वागादीनां च चैतन्यमाहुः, अपि तु तदधिष्ठात्रीणां देवतानां चिदात्मनां, तेनैतच्छ्रुतिबलेन न मृदादीनां वागादीनां च चैतन्यमाशङ्कनीयमिति । कस्मात्पुनरेतदेवमित्यत आह—

आनन्दगिरीय—न्यायनिर्णयः ।

तत्रेति । श्रुतिविरोधे श्रुतार्थापत्तिरमानमिति भावः । विरोधमेव स्फोरयति—यत इति । अनुभवसमुच्चयार्थोऽपिशब्दः । न चायं शब्दो विभावितत्वाविभावितत्वविशेषापेक्षो भविष्यत्यौचारिकत्वप्रसङ्गान्मुख्यसंभवे तदयोगादिति भावः ॥ ४ ॥ केवलश्रुत्यपेक्षया तदनुगृहीतार्थापत्तेर्बलीयस्त्वाद्विभागश्रुत्यर्थस्यौपचारिकत्वमेवेति शङ्कते—नन्विति । यथाशब्दस्तथाशब्दमध्याहृत्येन्द्रियविषयाऽपि चेतनत्वश्रुतिरस्तीति संबध्यते । काऽसाविन्द्रियविषया श्रुतिरित्यपेक्षायामाह—ते हेति । मृदादिश्रुतिरभिमानिदेवताविषयतया मुख्यार्था सती विभागश्रुतेरुपचरितार्थतां न कल्पयतीति परिहरति—अत इति । सूत्रं व्याचष्टे—तुशब्द इति । आशंकापनोदप्रकारमेव प्रकटयति—न खल्विति । अत्र हेतुत्वेन सूत्रभागमादत्ते—यत इति । तस्यार्थमाह—

मृदाद्यभिमानिन्यो वागाद्यभिमानिन्यश्च चेतना देवता वदनसंवदनादिषु चेतनोचितेषु व्यवहारेषु व्यपदिश्यन्ते । न भूतेन्द्रियमात्रम् ॥ कस्माद् ॥ विशेषानुगतिभ्याम् । विशेषो हि भोक्तॄणां भूतेन्द्रियाणां च चेतनाचेतनप्रविभागलक्षणः प्रागभिहितः ॥ सर्वचेतनतायां चासौ नोपपद्येत ॥ अपि च कौषीतकिनः प्राणसंवादे करणमात्राशंकाविनिवृत्तयेऽधिष्ठातृचेतनपरिग्रहाय देवताशब्देन विशिषन्ति "एता ह वै देवता अहंश्रेयसे विवदमानाः" [ कौ० २ । १४ ] इति "ता वा एताः सर्वा देवताः प्राणे निश्श्रेयसं विदित्वा" [ कौषी० २ । २४ ] इति च । अनुगताश्च सर्वत्राभिमानिन्यश्चेतना देवता मन्त्रार्थवादेतिहासपुराणादिभ्योऽवगम्यन्ते । "अग्निर्वाग्भूत्वा मुखं प्राविशत्" [ ऐ० आ० २ । ४ । २ । ४ ] इत्येवमादिका च श्रुतिः करणेष्वनुग्राहिकां देवतामनुगतां दर्शयति । प्राणसंवादवाक्यशेषे च-"ते ह प्राणाः प्रजापतिं पितरमेत्योचुः" [ छां० ५ । १ । ७ ] इति श्रेष्ठत्वनिर्द्धारणाय प्रजापतिगमनं, तद्वचनाच्चैकैको-

रत्नप्रभा ।

स्यार्थान्तरमाह-अपि चेति ॥ अहंश्रेयसे स्वश्रेष्ठत्वाय प्राणाः विवदमाना इत्युक्तप्राणानां चेतनवाचिदेवतापदेन विशेषितत्वात्प्राणादिपदैरभिमानिव्यपदेश इत्यर्थः । प्राणे निश्श्रेयसं श्रेष्ठ्यं विदित्वा प्राणाधीना जाता इत्यर्थः । अनुगतिं बहुधा व्याचष्टे-अनुगताश्चेति ॥ तस्मै प्राणाय । बलिहरणं वागादिभिः स्वीयवसिष्ठत्वादिगुणसमर्पणं कृतम् । तेजआदीनामीक्षणं त्वयैवेक्षत्यधिकरणे [ व्या० सू० १ । १ । ५ ] चेतननिष्ठतया व्याख्यातं द्रष्टव्यमित्यर्थः । यस्मान्नास्ति जगतश्चेतनत्वं तस्मादितिपूर्वप-

भामती ।

विशेषानुगतिभ्याम् । तत्र विशेषं व्याचष्टे-विशेषो हीति । भोक्तॄणामुपकार्यत्वाद्भूतेन्द्रियाणां चोपकारकत्वात् साम्ये च तदनुपपत्तेः सर्वजनप्रसिद्धेश्च विज्ञानं चाभवत् इति श्रुतेश्च विशेषश्चेतनाचेतनलक्षणः प्रागुक्तः स नोपपद्येत । देवताशब्दकृतो वात्र विशेषो विशेषशब्देनोच्यत इत्याह—अपि च कौषीतकिनः प्राणसंवाद इति । अनुगतिं व्याचष्टे-अनुगताश्चेति । सर्वत्र भूतेन्द्रियादिष्वनुगता देवता अभिमानिनीरुपदिशन्ति मन्त्रादयः । अपि च भूयस्यः श्रुतयः 'अग्निर्वाग् भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इत्यादय इन्द्रियविशेषगता देवता दर्शयन्ति । देवताश्च क्षेत्रज्ञभेदाश्चेतनाः । तस्मान्नेन्द्रियादीनां चैतन्यं रूपत इति । अपि च प्राणसंवादवाक्यशेषे प्राणानामस्मदादिशरीराणामिव क्षेत्रज्ञाधिष्ठितानां व्यवहारं दर्शयन् प्राणानां क्षेत्रज्ञाधिष्ठानेन चैतन्यं द्रढयतीत्याह-प्राणसंवाद-

आनन्दगिरीय-न्यायनिर्णयः ।

मृदादीति । भूतमात्रमिन्द्रियमात्रं वा चेतनत्वेन व्यपदिश्यमानं न भवतीत्यत्र प्रश्नपूर्वकं हेतुद्वयमाह-कस्मादिति । तत्र विशेषं व्याचष्टे-विशेषो हीति । तस्यान्यथोपपत्तिं वारयति-सर्वेति । उपकार्योपकारकत्वाधिगतेः साम्ये च तदयोगात्प्रसिद्धिश्रुतिभ्यां चेतनाचेतनत्वविभागावगमात्केवलभूतेन्द्रियविषया नैषा श्रुतिरित्यर्थः । अविशेषेण विशेषं व्याख्याय प्राणेषु विशेषं विशेषतो व्याकरोति-अपि चेति । विशिषन्ति वागादीन्प्राणादीनिति शेषः । अहंश्रेयसे श्रेयानहमित्यस्मै प्रयोजनाय स्वकीयश्रेष्ठत्वायेत्यर्थः । निःश्रेयसं श्रेष्ठ्यं प्राणे ज्ञात्वा तदनुवर्तिन्यः सर्वा देवता बभूवुरित्यर्थः । इदानीमनुगतिमविशेषतो दर्शयति-अनुगताश्चेति । सर्वत्रेति भूतेन्द्रियादिग्रहणम् । संप्रति करणेष्वेव देवतानुगतिं श्रुतितो दर्शयति-अग्निरिति । करणेष्वेवानुगतिं विधान्तरेण निरूपयति-प्राणेति । क्षेत्रज्ञाधिष्ठितानां शरीराणामिव प्राणा-

त्क्रमणेनान्वयव्यतिरेकाभ्यां प्राणश्रैष्ठ्यप्रतिपत्तिः, "तस्मै बलिहरणम्" [ बृ० ६ । १ । १३ ] इति चैवंजातीयकोऽस्मदादिष्विव व्यवहारोऽनुगम्यमानोऽभिमानिव्यपदेशं द्रढयति । "तत्तेज ऐक्षत" [ छां० ६ । २ । ३] इत्यपि परस्या एव देवताया अधिष्ठात्र्याः स्वस्वविकारेष्वनुगताया इयमीक्षा व्यपदिश्यत इति द्रष्टव्यम् ॥ तस्माद्विलक्षणमेवेदं ब्रह्मणो जगत । विलक्षणत्वाच्च न ब्रह्मप्रकृतिकमित्याक्षिप्ते प्रतिविधत्ते ॥ ५ ॥

## दृश्यते तु ॥ ६ ॥

तुशब्दः पक्षं व्यावर्तयति, यदुक्तं विलक्षणत्वान्नेदं जगत ब्रह्मप्रकृतिकमिति ॥ नायमेकान्तः ॥ दृश्यते हि लोके चेतनत्वेन प्रसिद्धेभ्यः पुरुषादिभ्यो विलक्षणानां केशनखादीनामुत्पत्तिः । अचेतनत्वेन प्रसिद्धेभ्यो गोमयादिभ्यो वृश्चिकादीनाम् ॥ नन्वचेतनान्येव पुरुषादिशरीराण्यचेतनानां केशनखादीनां कारणानि । अचेतनान्येव वृश्चिकादिशरीराण्यचेतनानां गोमयादीनां कार्याणीति ॥ उच्यते ॥ एवमपि किञ्चिदचेतनं चेतनस्यायतनभावमुपगच्छति किञ्चिन्नेत्यस्त्येव वैलक्षण्यम् । महांश्चायं पारिणामिकस्स्वभावविप्रकर्षः । पुरुषादीनां केशनखादीनां च स्वरूपा-

रत्नप्रभा ।

क्षोपसंहारः ॥ ५ ॥ किं यत्किञ्चिद्वैलक्षण्यं हेतुः बहुवैलक्षण्यं वा—आद्ये व्यभिचारमाह—नायमेकान्तः॥ दृश्यते हीति ॥ हेतोरसत्त्वान्न व्यभिचार इति शंकते—नन्विति ॥ यत्किञ्चिद्वैलक्षण्यमस्तीति व्यभिचार इत्याह—उच्यत इति ॥ शरीरस्य केशादीनाञ्च प्राणित्वाप्राणित्वरूपं वैलक्षण्यमस्तीत्यर्थः । द्वितीयेऽपि तत्रैव व्यभिचारमाह—महानिति ॥ पारिणामिकः केशादीनां स्वगतपरिणामात्मक इत्यर्थः । किञ्च ययोः प्रकृतिविकारभावस्तयोः सादृश्यं वदता वक्तव्यं—किमात्यन्तिकं यत्किञ्चिद्वेति—आद्ये दोष-

भामती ।

वाक्यशेषे चेति ॥ तत्तेज ऐक्षतेत्यपीति । यद्यपि प्रथमेऽध्याये भाक्तत्वेन वर्णितं तथापि मुख्यतयापि कथंचिन्नेतुं शक्यमिति द्रष्टव्यम् । पूर्वपक्षमुपसंहरति—तस्मादिति ॥ ५ ॥ सिद्धान्तसूत्रम्—दृश्यते तु ।

आनन्दगिरीय—न्यायनिर्णयः ।

नामपि व्यवहारानुगतिं दर्शयन्ती श्रुतिस्तेषां क्षेत्रज्ञाधिष्ठानेनैव चैतन्यं द्रढयतीत्यर्थः । भूतेन्द्रियविषयचेतनत्वश्रुतेरभिमानिनिमित्ततां विशेषानुगतिभ्यामुक्त्वा भूतेषु चेतनत्वाभिधानस्याभिमानिनिमित्ततां विशेषतो दर्शयति—तत्तेज इति । सर्वस्य चेतनत्वासंभवे हेत्वसिद्धिसमाधिमुपसंहरति—तस्मादिति । तत्फलमनुमानं निगमयति—विलक्षणत्वाच्चेति । ब्रह्मणि समन्वयो यथोक्तन्यायविरोधान्न सिध्यतीति पूर्वपक्षमनुभाष्य सिद्धान्तमाह—इत्याक्षिप्त इति ॥ ५ ॥ सिद्धान्तसूत्रं विभजते—तुशब्द इति । व्यावर्त्यं पक्षमनूद्य तद्व्यावृत्तिप्रकारमेव विवृणोति—यदुक्तमिति । वैलक्षण्ये प्रकृतिविकृतिभावासिद्धिरिति नियमभङ्गे हेतुमाह—दृश्यते हीति । दृष्टान्ते वैलक्षण्यमसिद्धमिति शङ्कते—नन्विति । तत्राचेतनानां कार्यकारणभावमभ्युपेत्यैव वैलक्षण्यं साधयति—उच्यत इति । ईदृशं वैलक्षण्यमविवक्षितं कारणगतासाधारणधर्माननुगतिरूपं तु तदिष्टमित्याशंक्याऽऽह—महांश्चेति।पारिणामिकस्तत्तत्केशादिगतपरिणामात्मक इति यावत् रूपादीत्यादिशब्देन परिमाणादि परिगृह्यते । किंच वैलक्षण्यात्प्रकृतिविकृतित्वं प्रत्याचक्षाणः सालक्षण्यात्तदिच्छति । तच्च कारणधर्माणां सर्वेषामनुगमो वा कस्यचिदेव वा कारणस्वभावस्येति विकल्प्याऽऽद्ये दोष-

दिभेदात् ॥ तथा गोमयादीनां वृश्चिकादीनां च ॥ अत्यन्तसारूप्ये च प्रकृतिविकारभाव एव प्रलीयेत ॥ अथोच्येताऽस्ति कश्चित्पार्थिवत्वादिस्वभावः पुरुषादीनां केशनखादिष्वनुवर्तमानो गोमयादीनां च वृश्चिकादिष्विति ॥ ब्रह्मणोऽपि तर्हि सत्तालक्षणः स्वभाव आकाशादिष्वनुवर्तमानो दृश्यते। विलक्षणत्वेन च कारणेन ब्रह्मप्रकृतिकत्वं जगतो दूषयता किमशेषस्य ब्रह्मस्वभावस्याननुवर्तनं विलक्षणत्वमभिप्रेयते उत यस्य कस्यचित् ॥ अथ चैतन्यस्येति वक्तव्यम् । प्रथमे विकल्पे-समस्तप्रकृतिविकारोच्छेदप्रसङ्गः। न ह्यसत्यतिशये प्रकृतिविकारभाव इति भवति। द्वितीये चाप्रसिद्धत्वम् ॥ दृश्यते हि सत्तालक्षणो ब्रह्मस्वभाव आकाशादिष्वनुवर्तमान इत्युक्तम्। तृतीये तु दृष्टान्ताभावः ॥ किं हि यच्चैतन्येनानन्वितं तदब्रह्मप्रकृतिकं दृष्टमिति ब्रह्मवादिनं प्रत्युदाह्रियेत। समस्तस्य वस्तुजातस्य ब्रह्मप्रकृतिकत्वाभ्युपगमात् ॥ आगमविरोधस्तु प्रसिद्ध एव ॥ चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेत्यागमता-

---

रत्नप्रभा।

माह-अत्यन्तेति। द्वितीयम् ॥ आशंक्य ब्रह्मजगतोरपि तत्सत्त्वात् प्रकृतिविकृतित्वसिद्धिरित्याह-अथेत्यादिना ॥ विलक्षणत्वं विकल्प्य दूषणान्तरमाह-विलक्षणत्वेनेत्यादिना ॥ जगति समस्तस्य ब्रह्मस्वभावस्य चेतनत्वादेरननुवर्तनान्न ब्रह्मकार्यत्वमिति पक्षे सर्वसाम्ये प्रकृतिविकारत्वमित्युक्तं स्यात्-दसङ्गतमित्याह-प्रथमे इति ॥ तृतीये तु दृष्टान्ताभाव इति ॥ न च जगन्न ब्रह्मप्रकृतिकमचेतनत्वादविद्यावदिति दृष्टान्तोऽस्तीति वाच्यम्। अनादित्वस्योपाधित्वात्। न च ध्वंसे साध्यव्यापकता। तस्यापि कार्यसंस्कारात्मकस्य भावत्वेन ब्रह्मप्रकृतिकत्वादभावत्वाग्रहे चानादिभावत्वस्योपाधित्वादिति, सम्प्रति कल्पत्रयसाधारणं दोषमाह-आगमेति ॥ पूर्वोक्तमनूद्य ब्रह्मणः शुष्कतर्कविषयत्वासभवान्न तर्केणाक्षेप

भामती।

प्रकृतिविकारभावे हेतुं सारूप्यं विकल्प्य दूषयति—अत्यन्तसारूप्ये चेति। प्रकृतिविकारभावाभावहेतुं वैलक्षण्यं विकल्प्य दूषयति—विलक्षणत्वेन च कारणेनेति। सर्वस्वभावाननुवर्तनं प्रकृतिविकारभावाविरोधि। तदनुवर्तने तादात्म्येन प्रकृतिविकारभावाभावात्। मध्यमस्त्वसिद्धः। तृतीयस्तु निदर्शनाभावादसाधारण इत्यर्थः। अथ जगद्योनितयागमाद्ब्रह्मणोऽवगमादागमबाधितविषयत्वमनुमानस्य कस्मान्नोद्भाव्यत इत्यत आह-आगमविरोधस्त्विति। न चास्मिन्नागमैकसमधिगमनीये

आनन्दगिरीय-न्यायनिर्णयः।

माह-अत्यन्तेति। द्वितीयमुत्थापयति-अथेति। तर्हि जगद्ब्रह्मणोरपि किंचित्स्वभावानुगतिरूपसारूप्यसंभवान्न प्रकृतिविकृतित्वप्रत्याख्यानमित्याह-ब्रह्मणोऽपीति। प्रकृतिविकृतित्वहेतुं सालक्षण्यं विकल्प्य दूषयित्वा तदभावहेतुं वैलक्षण्यं विकल्पयति-विलक्षणत्वेनेति। आद्यमप्रयोजकत्वेन प्रत्याचष्टे-प्रथम इति। अस्तु समस्तस्य ब्रह्मस्वभावस्य जगत्यननुवर्तनमस्तु च जगतो ब्रह्मप्रकृतिकत्वं का हानिः। न च जगतो ब्रह्मप्रकृतिकत्वे समस्ततत्स्वभावस्य जगत्यनुवर्तनानुपपत्तिः सर्वस्यापि कार्ये सर्वकारणरूपानुवृत्तावसति विशेषे प्रकृतिविकृतित्वासिद्धेरित्युक्तमुपपादयति-न हीति। मध्यमकल्पमसिद्ध्या निरस्यति-द्वितीये चेति। अन्तिममसाधारणत्वेन निराकरोति-तृतीये त्विति। दृष्टान्ताभावमेव स्पष्टयति-किं हीति। आकाशादेर्दृष्टान्तत्वमाशंक्याऽऽह-समस्तस्येति। पक्षत्रयेऽपि साधारणं कालातीतत्वमाह-आगमेति। ब्रह्मणो मानान्तरगम्यत्वमङ्गीकृत्योक्तं तदपि नास्तीत्युक्तानुवादपूर्वकमाह-यत्त्विति। यथा

त्पर्यस्य प्रसाधितत्वात् ॥ यत्तूक्तं परिनिष्पन्नत्वाद्ब्रह्मणि प्रमाणान्तराणि सम्भवेयुरिति ॥ तदपि मनोरथमात्रम् ॥ रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षस्य गोचरः । लिङ्गाद्यभावाच्च नानुमानादीनाम् । आगममात्रसमधिगम्य एव त्वयमर्थो धर्मवत् ॥ तथा च श्रुतिः—"नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ" [ कठ० २ । ९ ] इति, "को अद्धा वेद क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टिः । अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव" [ ऋ० सं० १ । ३० । ६ ] इति चैते ऋचौ निजसिद्धानामपीश्वराणां दुर्बोधतां जगत्कारणस्य दर्शयतः ॥ स्मृतिरपि भवति—"अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम्" ॥ इति, "अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते" [ भ० गी० २ । २५ ] इति च ॥ "न मे विदुः सुरगणाः प्रभवं न महर्षयः । अहमादिर्हि देवानां महर्षीणां च सर्वशः" इति

रत्नप्रभा ।

इत्याह—यत्तूक्तमित्यादिना ॥ लिङ्गसादृश्यपदप्रवृत्तिनिमित्तानामभावादनुमानोपमानशब्दानामगोचरः । अतो ब्रह्म लक्षणया वेदैकवेद्यमित्यर्थः । एषा ब्रह्मणि मतिस्तर्केण स्वतन्त्रेण नापनेया न संपादनीया, यद्वा—कुतर्केण न बाधनीया । कुतार्किकाद् अन्येनैव वेदविदाऽऽचार्येण प्रोक्ता मतिः सुज्ञानाय अनुभवाय फलाय भवति । हे प्रेष्ठ प्रियतमेति नचिकेतसम्प्रति मृत्योर्वचनम् । इयं विविधा सृष्टिर्यतः आ समन्ताद्बभूव तं को वा अद्धा साक्षाद्वेद । तिष्ठतु वेदनम् क इह लोके तं प्रवोचत् प्रावोचत् । छान्दसो दीर्घलोपः । यथावद्वक्तापि नास्तीत्यर्थः । प्रभवं जन्म न विदुः । मम सर्वादित्वेन

भामती ।

ब्रह्मणि प्रमाणान्तरस्यावकाशोऽस्ति, येन तदुपादायागम आक्षिप्येतेत्याशयवानाह—यत्तूक्तं परिनिष्पन्नत्वाद्ब्रह्मणीति । यथा हि कार्यत्वाविशेषेऽपि 'आरोग्यकामः पथ्यमश्नीयात्' 'स्वरकामः सिकतां भक्षयेत्' इत्यादीनां मानान्तरापेक्षता, न तु 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादीनाम् । तत्कस्य हेतोः । अस्य कार्यभेदस्य प्रमाणान्तरागोचरत्वात् । एवंभूतत्वाविशेषेऽपि पृथिव्यादीनां मानान्तरगोचरत्वं, न तु भूतस्यापि ब्रह्मणः, तस्याम्नायैकगोचरस्यातिपतितसमस्तमानान्तरसीमतया स्मृत्यागमसिद्ध-

आनन्दगिरीय—न्यायनिर्णयः ।

कार्यत्वाविशेषेऽपि "आरोग्यकामः पथ्यमश्नीयात्" स्वर्गकामो यजेत" इत्यत्रैकस्य मानान्तरयोग्यत्वं नेतरस्येति स्वीकृतं तथा भूतत्वाविशेषेऽपि पृथिव्यादेर्मानान्तरगम्यत्वं ब्रह्मणस्त्वाम्नायैकगम्यतेति मन्वानः सन्नाह—आगममात्रेति । ब्रह्मणो मानान्तरायोग्यत्वे मानमाह—तथा चेति । ब्रह्मविषया मतिरेषा तर्केण नाऽपनेया नाऽऽपनीया न प्रापणीयेत्यर्थः । यद्वा—कुतर्केण नाऽऽपनेया निरस्या न भवति किं त्वन्येनैवाऽऽचार्येण वेदविदा प्रोक्ता सुज्ञानाय फलावसायिसाक्षात्काराय भवति हे प्रेष्ठ प्रियतमेति नचिकेतसं प्रति मृत्योर्वचनम् । क इह ब्रह्म व्यवहारभूमावद्धा साक्षाद्वेद । को वा तत्प्रावोचत् । छान्दसो दैर्घ्यलोपः । छन्दसि कालानियमाद्ब्रह्म प्रब्रूयादित्यर्थः । यतो यस्मात्परस्मादात्मनः सकाशादियं विसृष्टिर्विविधा सृष्टिर्बभूव स एव स्वरूपं वेद नान्य इति मन्त्रप्रतीकयोरर्थः । प्रतीकतो दर्शितयोर्मन्त्रयोस्तात्पर्यमाह—एते इति । ब्रह्मणस्तर्काद्यगोचरत्वे पौराणिकसंमतिमाह—अचिन्त्या इति । भावानामचिन्त्यत्वेन तर्कागोचरत्वेऽपि ब्रह्मणि किमायातमित्याशंक्य भगवद्वाक्यमुदाहरति—अव्यक्तोऽयमिति । कथमविकार्योऽयमित्याशंक्य जन्ममरणयोर्मानाभावादित्याह—न म इति । तेषामीश्वरप्रभवाप्रमितिकर्तृत्वे हेतुमाह—अहमिति । श्रुतिस्मृतिभ्यां ब्रह्मणस्तर्काविषयत्वे सिद्धे कथं श्रवणातिरिक्तमननविधानमित्याशंकामनुवदति—

र्षीणां च सर्वशः" इति चैवञ्जातीयिका ॥ यदपि श्रवणव्यतिरेकेण मननं विदधच्छब्द एव तर्कमप्यादर्तव्यं दर्शयतीत्युक्तम् ॥ नानेन मिषेण शुष्कतर्कस्यात्रात्मलाभस्सम्भवति ॥ श्रुत्यनुगृहीत एव ह्यत्र तर्कोऽनुभवाङ्गत्वेनाश्रीयते ॥ स्वप्नान्तबुद्धान्तयोरुभयोरितरेतरव्यभिचारादात्मनोऽनन्वागतत्वं, सम्प्रसादे च प्रपञ्चपरित्यागेन सदात्मना सम्पत्तेर्निष्प्रपञ्चसदात्मत्वं, प्रपञ्चस्य च ब्रह्मप्रभवत्वात् कार्यकारणानन्यत्वन्यायेन ब्रह्मा-

रत्नप्रभा ।

जन्माभावात् । मिषेण मननविधिव्याजेन । शुष्कः श्रुत्यनपेक्षः श्रुत्या तत्त्वे निश्चिते सत्यनु पश्चात् पुरुषदोषस्यासम्भावनादेर्निरासाय गृहीतः–श्रुत्यनुगृहीतः तमाह–स्वप्नान्तेति ॥ जीवस्यावस्थावतो देहादिप्रपञ्चयुक्तस्य निष्प्रपञ्चब्रह्मैक्यमसम्भवि, द्वैतग्राहिप्रमाणविरोधाद्ब्रह्मणश्चाद्वितीयत्वमयुक्तमित्येवं श्रौतार्थासम्भावनायां तन्निरासाय सर्वास्ववस्थासु आत्मन आनुगतस्य व्यभिचारिणीभिरवस्थाभिः अनन्वागतत्वम्, असंस्पृष्टत्वमवस्थानां स्वाभाविकत्वे वह्न्यौष्ण्यवदात्मव्यभिचारायोगात् सुषुप्तौ प्रपञ्चभ्रान्त्यभावे "सता सोम्य" [ छां० ६ । ८ । १ ] इत्युक्ताभेददर्शनान्निष्प्रपञ्चब्रह्मैक्यसम्भवः । यथा–घटादयो मृदभिन्नाः, तथा जगद्, ब्रह्माभिन्नं, तज्जत्वादित्यादिस्तर्क आश्रीयत इत्यर्थः । इतोऽन्यादृशस्य तर्कस्यात्र ब्रह्मण्यप्रवेशादस्य चानुकूलत्वान्न तर्केणाक्षेपावकाश इति भावः । ब्रह्मणि शुष्कतर्कस्याप्रवेशः सूत्र-

भामती ।

त्वादित्यर्थः । यदि स्मृत्यागमसिद्धं ब्रह्मणस्तर्काविषयत्वं, कथं तर्हि श्रवणातिरिक्तमननविधानमित्यत आह–यदपि श्रवणव्यतिरेकेणेति । तर्को हि प्रमाणविषयविवेचकतया तदितिकर्तव्यताभूतस्तदाश्रयोऽसति प्रमाणेऽनुग्राह्यस्याश्रयस्याभावाच्छुष्कतया नाद्रियते । यस्त्वागमप्रमाणाश्रयस्तद्विषयविवेचकस्तदविरोधी स मन्तव्य इति विधीयते । श्रुत्यनुगृहीतेति । श्रुत्याः श्रवणस्य पश्चादितिकर्तव्यतात्वेन गृहीतः । अनुभवाङ्गत्वेनेति । मतो हि भाव्यमानो भावनाया विषयतयानुभूतो भवतीति मननमनुभवाङ्गम् । आत्मनोऽनन्वागतत्वमिति । स्वप्नाद्यवस्थाभिरसंपृक्तत्वम् । उदासीनत्वमित्यर्थः । अपि च चेतनकारणवादिभिः कारणसालक्षण्येऽपि कार्यस्य कथञ्चिच्चैतन्याविर्भावानाविर्भावाभ्यां विज्ञानं चाविज्ञानं चाभवदिति जगत्करणे योजयितुं शक्यम् । अचेतनप्रधानकारणवादिनां तु दुर्योजमेतत् । न ह्यचेतनस्य जगत्कारणस्य विज्ञानरूपता संभविनी । चेतनस्य जगत्कारणस्य सुषुप्ताद्यव्यवस्थास्विव सतोऽपि चैतन्यस्यानाविर्भावतया शक्यमेव कथंचिदविज्ञानात्मत्वं योजयितुमि-

आनन्दगिरीय–न्यायनिर्णयः ।

यदपीति । मननविधानसामर्थ्यात्तर्कमात्रस्य ब्रह्मण्यनुप्रवेशो विवक्षितः श्रुत्यनुगृहीतस्य वेति विकल्प्याऽऽद्यं दूषयति–नानेनेति । मिषेण मननविधिव्याजेनेति यावत् । अनुग्राह्यमानहीनतया निरालम्बनत्वं तर्कस्य शुष्कत्वम् । तत्र हेतुं वदन्द्वितीयमङ्गीकरोति–श्रुतीति । श्रुत्यनुग्राहको हि तर्कस्तद्विषयासंभावनादिप्रतिबन्धप्रध्वंसेन ब्रह्मण्यनुभवाङ्गं तदननुगृहीतस्तु निरालम्बनत्वान्नात्रोपयुज्यते । तथा च तर्कमात्रस्यात्राप्रवेशात्तर्कविशेषस्य च श्रुतिद्वाराऽनुप्रवेशाविरोधात्तर्कागोचरत्वं मननविधानं चेत्यर्थः । श्रुत्याकांक्षितं तर्कमेव मननविधिविषयमुदाहरति–स्वप्नान्तेति । स्वप्नजागरितयोर्मिथो व्यभिचारादात्मनः स्वभावतस्तद्द्वत्त्वाभावादवस्थाद्वयेन तस्य स्वतोऽसंपृक्तत्वमतो जीवस्यावस्थावत्त्वेन नाब्रह्मत्वमित्यर्थः । तथाऽपि देहादितादात्म्येनाऽऽत्मनो भानान्न निष्प्रपञ्चब्रह्मतेत्याशंक्याऽऽह–संप्रसादे चेति । 'सता सोम्य तदा संपन्नो भवति' इति श्रुतेः सुषुप्ते निष्प्रपञ्चसदात्मत्वावगमादात्मनस्तथाविधब्रह्मत्वसिद्धिरित्यर्थः । द्वैतग्राहिप्रत्यक्षादिविरोधात्कथमात्मनोऽद्वितीयब्रह्मत्वमित्याशंक्य तज्जत्वादिहेतुना ब्रह्मातिरिक्तवस्त्वभावसिद्धेरध्यक्षादेर्नामतत्त्वावेदकप्रामाण्यादविरोधाद्युक्तमात्मनोऽद्वितीयब्रह्मत्वमित्याह–प्रपञ्चस्येति । ब्रह्मणि सावकाशं तर्कं दर्शि-

व्यतिरेक इत्येवञ्जातीयकः ॥ "तर्काप्रतिष्ठानाद्" [ व्या० सू० २ । १ । ११ ] इति केवलस्य तर्कस्य विप्रलम्भकत्वं दर्शयिष्यति ॥ योऽपि चेतनकारणश्रयणबलेनैव समस्तस्य जगतश्चेतनतामुत्प्रेक्षेत । तस्यापि "विज्ञानञ्चाविज्ञानञ्च" [ तै० उ० २।६।३] इति चेतनाचेतनविभागश्रवणं विभावनाविभावनाभ्यां चैतन्यस्य शक्यत एव योजयितुम् ॥ परस्यैव त्विदमपि विभागश्रवणं न युज्यते ॥ कथम् ॥ परमकारणस्य ह्यत्र समस्तजगदात्मना समवस्थानं श्राव्यते—"विज्ञानञ्चाविज्ञानञ्च" "अभवद्" [ तै० उ० १ । ६ । ३ ] इति ॥ तत्र यथा चेतनस्याचेतनभावो नोपपद्यते विलक्षणत्वाद्, एवमचेतनस्यापि चेतनभावो नोपपद्यते, प्रत्युक्तत्वात्तु विलक्षणत्वस्य ॥ यथा श्रुत्यैव चेतनं कारणं ग्रहीतव्यं भवति ॥ ६ ॥

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

रत्नप्रभा ।

सम्मत इत्याह—तर्काप्रतिष्ठानादिति ॥ विप्रलम्भकत्वम् अप्रमापकत्वम् । यदुक्तमेकदेशिना सर्वस्य जगतश्चेतनत्वोक्तौ विभागश्रुत्यनुपपत्तिरिति दूषणं सांख्येन । तन्न । तेनैकदेशिना विभागश्रुतेश्चैतन्याभिव्यक्त्यनभिव्यक्तिभ्यां योजयितुं शक्यत्वात् । सांख्यस्य त्विदं दूषणं वज्रलेपायते । प्रधानकार्यत्वे सर्वस्याचेतनत्वेन चेतनाचेतनकार्यविभागासम्भवादित्याह—योऽपीत्यादिना ॥ सिद्धान्ते चेतनाचेतनवैलक्षण्याङ्गीकारे कथं ब्रह्मणः प्रकृतित्वमित्यत आह—प्रत्युक्तत्वादिति ॥ अप्रयोजकत्वव्यभिचाराभ्यां निरस्तत्वादित्यर्थः॥६॥ कार्यमुत्पत्तेः प्रागसदेव स्यात् स्वविरुद्धकारणात्मना सत्त्वायोगादित्यपसिद्धान्तापत्तिमाशंक्य मिथ्यात्वात्कार्यस्य कालत्रयेऽपि कारणात्मना सत्त्वमविरुद्धमिति समाधत्ते—असदिति चेदित्यादिना ॥

भामती ।

त्याह—योऽपि चेतनकारणश्रवणबलेनेति । परस्यैव त्वचेतनप्रधानकारणवादिनः सांख्यस्य न युज्येत । प्रयुक्तत्वात्तु वैलक्षण्यस्येति । वैलक्षण्ये कार्यकारणभावो नास्तीत्यभ्युपेत्येदमुक्तम् । परमार्थतस्तु नास्माभिरेतदभ्युपेयत इत्यर्थः ॥ ६ ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् । न कारणात्कार्य-

आनन्दगिरीय—न्यायनिर्णयः ।

यित्वा श्रुत्यनुगृहीततर्कस्य तस्मिन्ननवकाशत्वं सूत्रकृतोऽपि संमतमित्याह—तर्केति । विप्रलम्भकत्वमर्थविशेषाव्यवस्थापकत्वम् । ब्रह्मणि निरालम्बनस्य तर्कस्याप्रवृत्तेः श्रुत्यनुगृहीतस्य प्रवृत्तावपि जगन्न ब्रह्मकार्यं चैतन्येनाननुगृहीतत्वादित्यस्य श्रुत्यनुगृहीतत्वाभावात्तद्विरोधिनो न प्रवृत्तिरित्युक्तमिदानीं घटः प्रकाशत इति प्रत्यक्षेण श्रुतार्थापत्त्या च जगतश्चैतन्यानुगमावगमादसिद्धं चैतन्येनानुगतत्वमित्याह—योऽपीति । श्रुतार्थापत्तेः श्रुतिविरोधे नास्ति मानतेत्युक्तमाशंक्याऽऽह—तस्यापीति । सावकाशानवकाशन्यायेन सावकाशा विभागश्रुतिरनवकाशार्थापत्त्या विभावनाविभावनविषयतया व्यवस्थापनीयेत्यर्थः । स्वमते विभागश्रुतिविरोधं समाधाय प्रधानवादे तद्विरोधमाह—परस्येति । घटः स्फुरतीति प्रत्यक्षसंग्रहार्थमपीत्युक्तम् । सत्त्वरजस्तमसामज्ञानात्मकत्वात्पुरुषस्य चातदात्मकत्वादस्मन्मते विभागश्रुतेर्नानुपपत्तिरिति शङ्कते—कथमिति । उक्तनीत्या विभागासंभवं वक्तुं श्रुत्यभिमतमर्थमाह—परमकारणस्येति । प्रधानस्यैव मूलकारणत्वादशेषजगदात्मनाऽवस्थानमित्याशंक्याऽऽह—तत्रेति । विभागश्रवणे सतीति यावत् । तर्हि त्वन्मतेऽपि चेतनस्याचेतनभावानुपपत्तिस्तुल्येत्याशंक्य चेतनस्यापि कारणस्य स्वापादाविव नाविर्भावितचैतन्यत्वमुक्तमित्याह—प्रत्युक्तत्वादिति । यद्वा—वैलक्षण्ये कार्यकारणत्वं नेत्युपेत्योक्तम् । वस्तुतस्त्वचेतनस्यापि चेतनकार्यत्वमविरुद्धं गोमयवृश्चिकादौ हेतोर्व्यभिचारस्योक्तत्वादित्याह—प्रत्युक्तत्वादिति ॥ ६ ॥ असत्कार्यवादापत्तिमाशंक्य परिहरति—असदिति चेदिति । तत्र चोद्यं विवृणोति—

यदि चेतनं शुद्धं शब्दादिहीनं च ब्रह्म तद्विपरीतस्याचेतनस्याशुद्धस्य शब्दादिमतश्च कार्यस्य कारणमिष्येत, असत्तर्हि कार्यं प्रागुत्पत्तेरिति प्रसज्येत ॥ अनिष्टं चैतत्सत्कार्यवादिनस्तवेति चेत् ॥ नैष दोषः॥ प्रतिषेधमात्रत्वात्-प्रतिषेधमात्रं हीदं, नास्य प्रतिषेध्यमस्ति । न ह्ययं प्रतिषेधः प्रागुत्पत्तेस्सत्त्वं कार्यस्य प्रतिषेद्धुं शक्नोति ॥ कथम् ॥ यथैव हीदानीमपीदं कार्यं कारणात्मना सद् एवं प्रागुत्पत्तेरपीति गम्यते ॥ न हीदानीमपीदं कार्यं कारणात्मानमन्तरेण स्वतन्त्रमेवास्ति । "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" [ बृ० २ । ४ । ६ ] इत्यादिश्रवणात् ॥ कारणात्मना तु सत्त्वं कार्यस्य प्रागुत्पत्तेरविशिष्टम् ॥ ननु शब्दादिहीनं ब्रह्म जगतः कारणम् ॥ बाढम् ॥ न तु शब्दादिमत्कार्यं कारणात्मना हीनं प्रागुत्पत्तेरिदानीं वाऽस्ति ॥ तेन न शक्यते वक्तुं प्रागुत्पत्तेरसत्कार्यमिति॥ विस्तरेण चैतत्कार्यकारणानन्यत्ववादे [ व्या० सू० २ । १ । ६ ] वक्ष्यामः ॥ ७ ॥

रत्नप्रभा ।

असत् स्यादिति सत्त्वप्रतिषेधो निरर्थक इत्यर्थः । कार्यसत्यत्वाभावे श्रुतिमाह-**सर्वं तमिति** ॥ मिथ्यात्वमजानतः शंकामनूद्य परिहरति-**नन्वित्यादिना** ॥ **विस्तरेण चैतदिति** । मिथ्या-

भामती ।

मभिन्नम्, अभेदे कार्यत्वानुपपत्तेः, कारणवत्स्वात्मनि वृत्तिविरोधात्, शुद्धयशुद्धयादिविरुद्धधर्मसंसर्गाच्च । अथ चिदात्मनः कारणस्य जगतः कार्योद्भेदः, तथा चेदं जगत्कार्यं सत्त्वेऽपि चिदात्मनः कारणस्य प्रागुत्पत्तेर्नास्ति, नास्ति चेदसदुत्पद्यत इति सत्कार्यवादव्याकोप इत्याह-**यदि चेतनं शुद्धमिति** । परिहरति-**नैष दोष इति** । कुतः, **प्रतिषेधमात्रत्वात्** । विभजते-**प्रतिषेधमात्रं हीदमिति** । प्रतिपादयिष्यति हि 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यत्र । यथा कार्यं स्वरूपेण सदसत्त्वाभ्यां न निर्वचनीयम् । अपि

आनन्दगिरीय-न्यायनिर्णयः ।

**यदीति** । कार्यकारणयोर्विरुद्धत्वात्कारणात्मना प्रागनवस्थानात्कार्यस्य प्रागसत्त्वं स्यादित्यर्थः । इष्टापत्तिमाशंक्य निराचष्टे-**अनिष्टं चेति**। कार्यासत्त्वमेतच्छब्दार्थः। तत्र हेतुं सूचयति-**सत्कार्यवादिन इति** । चेतनकार्यस्य कारणेऽवस्थानस्वीकारादित्यर्थः । नेत्यादि व्याकुर्वन्परिहरति-**नैष दोष इति** । प्राक्कालीनकार्यसत्त्वस्य प्रतिषेध्यत्वात्तदभावासिद्धिरित्याशंक्याऽऽह-**न हीति** । यथेह घटो नास्तीति घटसंसर्गसत्ता भूतले वर्तमानकाले निषिध्यते तथा प्रागसदिति कार्यस्य प्राक्कालीनं सत्त्वं शक्यं निषेद्धुमिति शङ्कते-**कथमिति** । कार्यस्य कारणात्मना सत्त्वं वा निषेध्यं सत्त्वान्तरं वा ? नाऽऽद्य इत्याह-**यथैवेति**। कारणात्मना सत्त्वस्य सदातनत्वान्न निषेध्यतेत्यर्थः । द्वितीयं प्रत्याह-**न हीति** । कारणसत्त्वातिरिक्तसत्त्वाभावे मानमाह-**सर्वमिति** । सत्यं कारणात्मनैव कार्यस्य सत्त्वं तदेव कालविशेषे निषेध्यमित्याशंक्याऽऽह-**कारणात्मनेति** । किं तदा कार्यं नास्ति किं वा कारणमपि । नाऽऽद्यः । सदाऽपि तस्य कारणातिरिक्तस्यासत्त्वाद्विशेषणवैयर्थ्यम् । न द्वितीयः । तस्य सर्वदा सत्त्वान्निषेधानवकाशादित्यर्थः । उक्तमभिप्रायमविद्वान्मिथो विरुद्धयोरैक्यायोगादसदेव शब्दादिमज्जगज्जायत इति शङ्कते-**नन्विति** । ब्रह्मणः शब्दादिहीनत्वमंगीकृत्य परिहरति-**बाढमिति** । तर्हि प्रागसदेव शब्दादिमज्जगदिदानीं जायते नेत्याह-**न त्विति** । ब्रह्मणः शब्दादिहीनत्वेऽपि शब्दाद्यात्मकस्य जगतो ब्रह्मणि कल्पितत्वान्न सत्त्वं वास्तवं पृथगस्तीत्यर्थः । कल्पितत्वमेव जगतो ब्रह्मणीति स्थिते फलितमाह-**तेनेति** । जगतो ब्रह्मणि कल्पितत्वमसंप्रतिपन्नमित्याशंक्याऽऽह-**विस्तरेणेति** ॥ ७ ॥ जगद्ब्रह्मणोरुक्तं कार्यकारणत्वममृष्यमाणश्चोदयति—

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

अत्राह—यदि स्थौल्यसावयवत्वाचेतनत्वपरिच्छिन्नत्वाशुद्ध्यादिधर्मकं कार्यं ब्रह्मकारणकमभ्युपगम्येत, तदा (अपीतौ) प्रलये प्रतिसंसृज्यमानं कार्यं कारणाविभागमापद्यमानं कारणमात्मीयेन धर्मेण दूषयेदित्यपीतौ कारणस्यापि ब्रह्मणः कार्यस्येवाशुद्ध्यादिरूपताप्रसङ्गात्सर्वज्ञं ब्रह्म जगतः कारणमित्यसमञ्जसमिदमौपनिषदं दर्शनम् ॥ अपि च समस्तस्य विभागस्याविभागप्राप्तेः पुनरुत्पत्तौ नियमकारणाभावाद्भोक्तृभोग्यादिविभागेनोत्पत्तिर्न प्राप्नोतीत्यसमञ्जसम् ॥ अपि च भोक्तॄणां परेण ब्रह्मणाऽविभागं गतानां कर्मादिनिमित्तप्रलयेऽपि पुनरुत्पत्तावभ्युपगम्यमानायां मुक्तानामपि पुनरुत्पत्तिप्रसङ्गादसमञ्जसम् । अथेदं जगदपीतावपि विभ-

---

रत्नप्रभा ।

त्वमित्यर्थः ॥ ७ ॥ सत्कार्यवादसिद्ध्यर्थं कार्यभेदं कारणस्यापि कार्यवदशुद्ध्यादिप्रसङ्ग इति शंकासूत्रं व्याचष्टे—अत्राहेति ॥ प्रतिसंसृज्यमानपदस्य व्याख्या—कारणे विभागेति ॥ यथा—जले लीयमानं लवणद्रव्यं जलं दूषयति, तद्वदित्यर्थः । सूत्रस्य योजनान्तरमाह—अपि चेति ॥ सर्वस्य कार्यस्याऽपीतौ कारणवदेकरूपत्वप्रसंगे इत्यर्थः । अर्थान्तरमाह—अपि चेति ॥ कर्मादीनामुत्पत्तिनिमित्तानां प्रलयेऽपि भोक्तॄणामुत्पत्तौ तद्वदेव मुक्तानामप्युत्पत्तिप्रसङ्गादित्यर्थः । शंकापूर्वकं व्याख्यान्तरमाह—अथेति ॥ यदि

भामती ।

तु कारणरूपेण शक्यं सत्त्वेन निर्वक्तुमिति । एवं च कारणसत्तैव कार्यस्य सत्ता न ततोऽन्येति कथं तदुत्पत्तेः प्राक् सति कारणे भवत्यसत् । स्वरूपेण तूत्पत्तेः प्रागुत्पन्नस्य ध्वस्तस्य वा सदसत्त्वाभ्यामनिर्वाच्यस्य न सतोऽसतो वोत्पत्तिरिति निर्विषयः सत्कार्यवादप्रतिषेध इत्यर्थः ॥ ७ ॥ अपीतौ तद्वत्प्रसंगादसमञ्जसम् । असामञ्जस्यं विभजते—अत्राह चोदकः, यदि स्थौल्येति । यथा हि यूषादिषु हिंगुसैन्धवादीनामविभागलक्षणो लयः स्वगतरसादिभिर्यूषं रूषयत्येवं ब्रह्मणि विशुद्ध्यादिधर्मिणि जगल्लीयमानमविभागं गच्छद्ब्रह्म स्वधर्मेण रूषयेत् । न चान्यथा लयो लोकसिद्ध इति भावः । कल्पान्तरेणासामञ्जस्यमाह—अपि च समस्तस्येति । न हि समुद्रस्य फेनोर्मिबुद्बुदादिपरिणामे, वा रज्ज्वां सर्पधारादिविभ्रमे वा नियमो दृष्टः । समुद्रो हि कदाचित्फेनोर्मिरूपेण परिणमते कदाचिद्बुद्बुदादिना, रज्ज्वां हि कश्चित्सर्प इति विपर्यस्यति कश्चिद्धारेति । न च क्रमनियमः सोऽयमत्र भोग्यादिविभागनियमः क्रमनियमश्चासमञ्जस इति । कल्पान्तरेणासामञ्जस्यमाह—अपि च भोक्तॄणामिति । कल्पान्तरं शङ्कापूर्वमाह—अथेद—

आनन्दगिरीय—न्यायनिर्णयः ।

अपीताविति । पूर्वपक्षसूत्रं व्याकरोति—अत्रेत्यादिना जगतो ब्रह्मकारणत्वं सप्तम्यर्थः । तमेवोक्तिप्रकारं प्रकटयति—यदीति । अशुद्ध्यादीत्यादिशब्देन रागद्वेषादिग्रहणम् । तदपीतावित्यत्र तत्पदं कार्येण संबध्यते । प्रतिसंसृज्यमानमित्यस्यार्थमाह—कारणेति । यथा क्षीरे संसृज्यमानमुदकं स्वधर्मेण क्षीरं दूषयति यथा वा लवणमुदके संबध्यमानमुदकं दूषयेत्तथा कार्यमपि कारणे युज्यमानं स्वधर्मेण कारणं दूषयतीत्याह—कारणमिति । कार्यसमानधर्मवत्त्वे ब्रह्मणः स्वीकृते फलितमाह—इत्यपीताविति । सूत्रस्य व्याख्यान्तरमाह—अपि चेति । सर्वस्य कार्यस्य प्रलये कारणवदेकरूप्यप्रसङ्गात्पुनर्विभागेनोत्पत्तौ हेत्वभावात्तदप्राप्तिरित्यसामञ्जस्यमित्यर्थः । प्रकारान्तरेणासामञ्जस्यमाह—अपि चेति । कर्मादीनां पुनरुत्पत्तिनिमित्तानां लये सत्यपीति यावत् । प्रलयावस्थायां कर्मादिप्रलये निमित्तमन्तरेणापि पुनर्भोक्तॄणामुत्पत्तौ तद्वदेव मुक्तानामपि पुनर्जन्मप्रसङ्गादसमञ्जसमिदं दर्शनमित्यर्थः । शङ्कापूर्वकं व्याख्यान्तरमाह—अथेति ।

क्तमेव परेण ब्रह्मणावतिष्ठेत, एवमप्यपीतिश्च न सम्भवति, कारणाव्यतिरिक्तश्च कार्यं न सम्भवतीत्यसमञ्जसमेवेति ॥ ८ ॥ अत्रोच्यते—

## न तु दृष्टान्तभावात् ॥ ९ ॥

नैवास्मदीये दर्शने किञ्चिदसामञ्जस्यमस्ति ॥ यत्तावदभिहितं कारणमपिगच्छत्कार्यं कारणमात्मीयेन धर्मेण दूषयेदिति, तददूषणम् ॥ कस्मात् ॥ दृष्टान्ताभावात्—सन्ति हि दृष्टान्ताः यथा—कारणमपि गच्छत्कार्यं कारणमात्मीयेन धर्मेण न दूषयति । तद्यथा शरावादयो मृत्प्रकृतिका विकारा विभागावस्थायामुच्चावचमध्यमप्रभेदास्सन्तः पुनः प्रकृतिमपि गच्छन्तो न तामात्मीयेन धर्मेण संसृजन्ति ॥ रुचकादयश्च सुवर्णविकारा अपीतौ न सुवर्णमात्मीयेन धर्मेण संसृजन्ति ॥ पृथिवीविकारश्चतुर्विधो भूतग्रामो न पृथिवीमपीतावात्मीयेन धर्मेण संसृजति ॥ तत्पक्षस्य तु न कश्चिद्दृष्टान्तोऽस्ति ॥ अपीतिरेव हि न सम्भवेद् यदि कारणे कार्यं स्वधर्मेणैवावतिष्ठेत ॥ अनन्यत्वेऽपि कार्यकारणयोः कार्यस्य कारणात्मत्वं

---

रत्नप्रभा ।

लयकालेऽपि कार्यं कारणाद्विभक्तं तर्हि स्थितिकालवल्लयाभावप्रसङ्गात् कार्येण द्वैतापत्तेश्चासमञ्जसमिदं दर्शनमित्यर्थः ॥ ८ ॥ अपीतौ जगत् स्वकारणं न दूषयति । कारणे लीनत्वान्मृदादिषु नीलघटादिवदिति सिद्धान्तसूत्रं व्याचष्टे—नैवेत्यादिना ॥ अपिगच्छत् लीयमानम् । विभागावस्था स्थितिकालः । त्वत्पक्षस्येति । मधुरजलं लवणस्याकारणमित्यदृष्टान्तः । किञ्च दूषकत्वे कार्यस्य स्थितिः स्याल्लवणवदित्याह—अपीतिरेवेति ॥ असति कार्ये तद्धर्मेण कारणस्य योगो न सम्भवति । धर्म्यसत्त्वे धर्माणामप्यसत्त्वादिति भावः । ननु सत्कार्यवादे लयेऽपि कार्यस्य कारणाभेदेन सत्त्वाद्दूषकत्वं स्यादित्यत आह—अनन्यत्वेऽपीति ॥ कल्पितस्याधिष्ठानधर्मवत्त्वम् । अभेदात् । नत्वधिष्ठानस्य कल्पितकार्यधर्मव-

भामती ।

मिति ॥८॥ सिद्धान्तसूत्रम्—न तु दृष्टान्तभावात् । नाविभागमात्रं लयोऽपि तु कारणे कार्यस्याविभागः । तत्र च तद्धर्मारूषणे सन्ति सहस्रं दृष्टान्ताः । तव तु कारणे कार्यस्य लये कार्यधर्मरूषणे न दृष्टान्तलवोऽप्यस्तीत्यर्थः । स्यादेतत् । यदि कार्यस्याविभागः कारणे, कथं कार्यधर्मारूषणं कारणस्येत्यत आह—अनन्यत्वेऽपीति । यथा रजतस्यारोपितस्य पारमार्थिकं रूपं शुक्तिर्न च शुक्ती रजतमेवमिदमपीत्यर्थः ।

आनन्दगिरीय—न्यायनिर्णयः ।

स्थिताविवेत्यपेरर्थः । ब्रह्मवादिनामित्थमनङ्गीकारं सूचयितुमेवमपीत्युक्तम् । यदि लयकालेऽपि कार्यं कारणाद्विभक्तं तदा स्थितिकालवल्लयाभावप्रसङ्गादसमञ्जसमेवेदं ब्रह्मकारणत्वमित्यर्थः ॥ ८ ॥ सिद्धान्तसूत्रमवतारयति—अत्रेति । तत्र तुशब्दस्यावधारणार्थत्वमुपेत्य प्रतिज्ञाभागं विभजते—नैवेति । तदेव दर्शयितुमादौ परोक्तमनुवदति—यत्तावदिति । कारणमपिगच्छत्तस्मिन्नविभागमापद्यमानमिति यावत् । तस्यादोषत्वं प्रतिज्ञाय प्रश्नपूर्वकं हेतुमवतार्य व्याचष्टे—तददूषणमिति । दृष्टान्तानेव विभजते—तद्यथेति । विभागावस्था स्थितिकालः । पुनरिति प्रलयकालोक्तिः चतुर्विधो भूतग्रामो जरायुजाण्डजस्वेदजोद्भिज्जरूपो भूतसमुदायः । अनेकदृष्टान्तोपादानं बुद्धिसौकर्यार्थम् । परपक्षस्यापि कश्चिद्दृष्टान्तो भविष्यतीत्याशंक्याऽऽह—त्वत्पक्षस्येति । क्षीरनीरादीनामकार्यकारणरूपत्वात्कारणे कार्यलये दृष्टान्तत्वासिद्धिरिति भावः । किंच, लयकाले कार्यधर्मस्थितौ कार्यस्यापि धर्मिणः स्थितेर्लयासिद्धिः कारणाश्रयत्वेन च तदवस्थाने स्फटिकलौहित्यवत्तद्धीर्भ्रान्तिः स्यादित्याह—अपीतिरेवेति । ननु प्रलयकाले कार्यधर्माश्चेन्नावतिष्ठेरन् तर्हि कारणधर्मा अपि तिष्ठेयुस्तयोरभेदात्तत्राऽऽह—अनन्यत्वेऽपीति । अधिष्ठानमे-

न तु कारणस्य कार्यात्मत्वम् । "आरम्भणशब्दादिभ्यः" [ ब्या० सू० २ । १ । १४ ] इति वक्ष्यामः ॥ अत्यल्पं चेदमुच्यते,—कार्यमपीतावात्मीयेन धर्मेण कारणं संसृजेदिति ॥ स्थितावपि हि समानोऽयं प्रसङ्गः । कार्यकारणयोरनन्यत्वाभ्युपगमात् ॥ "इद९ सर्वं यदयमात्मा" [ बृ० २ । ४ । ६ ] "आत्मैवेद९ सर्वम्" [ छां० ७ । २५ । २ ] "ब्रह्मैवेदममृतं पुरस्तात्" [ मु० २ । २ । ११ ] "सर्वं खल्विदं ब्रह्म" [ छां० ३ । १४ । १ ] इत्येवमाद्याभिर्हि श्रुतिभिरविशेषेण त्रिष्वपि कालेषु कार्यस्य कारणादनन्यत्वं श्राव्यते ॥ तत्र यः परिहारः कार्यस्य तद्धर्माणां चाविद्याध्यारोपितत्वान्न तैः कारणं संसृज्यत इति, अपीतावपि स समानः ॥ अस्ति चायमपरो दृष्टान्तः—यथा—स्वयं प्रसारितया मायया मायावी त्रिष्वपि कालेषु न संस्पृश्यते । अवस्तुत्वात्, एवं परमात्मापि संसारमायया न संस्पृश्यत इति ॥ यथा च स्वप्नदृगेकस्स्वप्नदर्शनमायया न संस्पृश्यत इति प्रबोधसम्प्रसादयोरनन्वागतत्वात्, एवमवस्थात्रयसाक्ष्येको-

रत्नप्रभा ।

त्वम् । तस्य कार्यात् पृथक् सत्त्वादित्यर्थः । किञ्चाऽपीताविति विशेषणं व्यर्थमिति प्रतिबन्द्या समाधत्ते—अत्यल्पं चेति ॥ परिणामदृष्टान्तं व्याख्याय विवर्तदृष्टान्तं व्याचष्टे—अस्ति चेति ॥ मायाव्यनुपादानमित्यरुच्या दृष्टान्तान्तरमाह—यथा चेति ॥ अस्त्येव स्वप्नकाले दृष्टसंसर्ग इत्यत आह—प्रबोधेति ॥ जाग्रत्सुषुप्त्योः स्वप्ने चात्मनोऽस्पर्शात् तत्कालेऽप्यस्पर्श इत्यर्थः । यदाऽज्ञस्य जीवस्याऽवस्थाभिरसंसर्गस्तदा सर्वज्ञस्य किं वाच्यमिति दार्ष्टान्तिकमाह—एवमिति ॥ जगज्जन्मस्थितिलया ईश्वरस्यावस्था-

भामती ।

अपि च स्थित्युत्पत्तिप्रलयकालेषु त्रिष्वपि कार्यस्य कारणादभेदमभिदधती श्रुतिरनतिशङ्कनीया सर्वैरेव वेदवादिभिः, तत्र स्थित्युत्पत्त्योर्यः परिहारः स प्रलयेऽपि समानः कार्यस्याविद्यासमारोपितत्वं नाम, तस्मान्नापीतिमात्रमनुयोज्यमित्याह—अत्यल्पं चेदमुच्यत इति । अस्ति चायमपरो दृष्टान्तः । यथा च स्वप्नदृगेक इति । लौकिकः पुरुषः । एवमवस्थात्रयसाक्ष्येक इति । अवस्थात्रयमुत्पत्तिस्थितिप्रलयाः ।

आनन्दगिरीय—न्यायनिर्णयः ।

वाऽऽरोपितस्य तत्त्वं न विपरीतमित्यर्थः । किंच, कार्यमात्मीयेन धर्मेण कारणं दूषयतीत्यत्रापीतिविशेषणमनर्थकमित्याह—अत्यल्पं चेति । विशेषणवैयर्थ्ये हेतुमाह—स्थिताविति । प्रसङ्गसाम्ये हेतुः—कार्येति । अभ्युपगमस्य मानमूलतां दर्शयति—इदमिति । इदमपि दूषणान्तरमेवेत्याशंक्याऽऽह—तत्रेति । कार्यस्याविद्यया विद्यमानत्वात्तेन कारणस्य वस्तुतोऽसंस्पर्शे दृष्टान्तमाह—अस्ति चेति । तत्र मायाविनो वस्तुत्वेऽपि तदीयमायाया अवस्तुत्वादिति हेतुमाह—अवस्तुत्वादिति । दृष्टान्तनिविष्टमर्थं दार्ष्टान्तिके योजयति—एवमिति । विधान्तरेण सूत्रयोजनासमाप्ताविति शब्दः । मायाविनो मायां प्रत्यनुपादानत्वान्नेदमनुरूपमुदाहरणमित्याशंक्याऽऽह—यथा चेति । एकोऽवस्थान्तरेऽपि स्वयमनुगच्छन्निति यावत् । तया तस्यासंस्पर्शे हेतुमाह—प्रबोधेति । जागरिते सुषुप्ते चानुगच्छतस्तस्य तयाऽनुगम्यमानत्वाभावादिति हेत्वर्थः । न हि स्वप्नदर्शनरूपा माया जागरादावनुवर्तमाना दृष्टेति भावः । चेतनोपादानत्वानुगुणं दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—एवमिति । अवस्थात्रयमुत्पत्तिस्थितिप्रलयरूपम् । स्वप्नदृशः स्वप्नदर्शनं मायामात्रमिति वस्तुतस्तेनास्पर्शेऽपि परमात्मनोऽवस्थात्रयेण संस्पर्शो दुर्वारस्तस्य वस्तुत्वादित्याशंक्याऽऽह—

ऽव्यभिचार्यवस्थात्रयेण व्यभिचारिणा न संस्पृश्यते ॥ मायामात्रं ह्येतत्, परमात्मनोऽवस्थात्रयात्मनावभासनं रज्ज्वा इव सर्पादिभावेनेति ॥ अत्रोक्तं वेदान्तार्थसंप्रदायविद्भिराचार्यैः-"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते । अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा" [ गौ० पा० का० १।१६ ] इति ॥ तत्र यदुक्तमपीतौ कारणस्यापि कार्यस्येव स्थौल्यादिदोषप्रसङ्ग इति ॥ एतदयुक्तम् ॥ यत्पुनरेतदुक्तं समस्तस्य विभागस्याऽविभागप्राप्तेः पुनर्विभागेनोत्पत्तौ नियमकारणं नोपपद्यत इति ॥ अयमप्यदोषः ॥ दृष्टान्तभावादेव । यथा हि सुषुप्तिसमाध्यादावपि सत्यां स्वाभाविक्यामविभागप्राप्तौ मिथ्याज्ञानस्यानपोदितत्वात्पूर्ववत्पुनः प्रबोधे विभागो भवति, एवमिहापि भविष्यति ॥ श्रुतिश्चात्र भवति-"इमास्सर्वाः प्रजास्सति सम्पद्य न विदुस्सति सम्पद्यामह इति त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तत्तदा भवन्ति" [ छां० ६ । ९ । ३ ] इति । यथा ह्यविभागेऽपि परमात्मनि मिथ्याज्ञानप्रतिबद्धो विभागव्यवहारस्स्वप्नवद-

रत्नप्रभा ।

त्रयम् । तदसंगित्वे वृद्धसम्मतिमाह-अत्रोक्तमिति ॥ यदा तत्त्वमसीत्युपदेशकाले । प्रबुध्यते मायानिद्रां त्यजति । तदा जन्मलयस्थित्यवस्थाशून्यमद्वैतमीश्वरमात्मत्वेनानुभवतीत्यर्थः । फलितमाह-तत्रेति ॥ द्वितीयमसामञ्जस्यमनूद्य तेनैव सूत्रेण परिहरति-यत्पुनरिति ॥ सुषुप्तावज्ञानसत्त्वे पुनर्विभागोत्पत्तौ च मानमाह-श्रुतिश्चेति ॥ सति ब्रह्मण्येकीभूय न विदुरित्यज्ञानोक्तिः । इह सुषुप्तेः प्राक् प्रबोधे येनयेन जात्यादिना विभक्ता भवन्ति तदा पुनरुत्थानकाले तथैव भवन्तीति विभागोक्तिः । ननु सुषुप्तौ पुनर्विभागशक्त्यज्ञानसत्त्वेपि सर्वप्रलये तत्सत्त्वं कुत इत्यत आह-यथा हीति ॥ यथा सुषुप्तौ परमात्मनि

भामती ।

कल्पान्तरेणासामञ्जस्ये कल्पान्तरेण दृष्टान्तभावं परिहारमाह-यत्पुनरेतदुक्तमिति । अविद्याशक्तेर्नैयत-

आनन्दगिरीय-न्यायनिर्णयः ।

मायामात्रमिति । अत्रापि सूत्रस्य विधान्तरेण योजनां विवक्षित्वेतिशब्दः । परमात्मनो वस्तुतोऽवस्थात्रयासंबन्धे वृद्धसंमतिमाह-अत्रेति । यदेत्याचार्यप्रतिबोधनावस्थोक्तिः । अजमित्युत्पत्त्यवस्थया स्पर्शशून्यत्वमनिद्रमिति लयावस्थयाऽस्वप्नमिति स्थित्यवस्थया चेति विवेक्तव्यम् । अद्वैतमिति पूर्णतोक्तिः । परस्यावस्थात्रयासंबन्धे फलितमाह-तत्रेति । उक्तमसामञ्जस्यान्तरमनुवदति-यत्पुनरिति । न त्वित्यादिसूत्रेण परिहरति-अयमपीति । दृष्टान्तभावमेव विभजते-यथा हीति । मिथ्याज्ञानस्य मिथ्याभूतस्याज्ञानस्येति यावत् । दृष्टान्ते संप्रतिपत्त्यभावं मन्वानं प्रत्याह-श्रुतिश्चेति । सुषुप्तिसमये सत्संपत्तेरज्ञानसद्भावस्य च श्रुतत्वेऽपि कथं सति संपन्नस्य पूर्ववत्पुनर्विभागेनोत्थानमित्याशंक्याऽऽह-त इहेति । सुषुप्तादयस्तच्छब्देन परामृश्यन्ते । इहेति पूर्वबोधादेरुक्तिः । यद्यदिति कर्मोपार्जितं जातिविशेषरूपमुक्तम् । तदा भवन्तीत्युत्तरप्रबोधादेरतीतवासनानुसारिणो ग्रहणम् । ननु न किंचिदवेदिषमित्युत्थितेन परामृश्यमानाज्ञानस्य सुषुप्ते सत्त्वात्पुनः प्रबोधे पूर्ववदुत्थानं युक्तम् । प्रलये तु तथाविधाज्ञानसद्भावे मानाभावात्कुतो विभागेनोत्पत्तिर्नियम्यते तत्राऽऽह-यथा हीति । तत्त्वज्ञानपर्यन्तं विभागव्यवहारस्याव्याहतत्वे दृष्टान्तमाह-स्वप्नवदिति । सुषुप्त्यवस्थायां परस्मिन्नज्ञाते ब्रह्मणि समस्तस्य कार्यजातस्य लीनत्वेऽपि लयस्याविद्याशेषत्वा

१ तत्रभवन्तो गौडपादाचार्या आचार्यपदेनोच्यन्ते ।

व्याहतस्स्थितौ दृश्यते, एवमपीतावपि मिथ्याज्ञानप्रतिबद्धैव विभागशक्तिरनुमास्यते ॥ एतेन मुक्तानां पुनरुत्पत्तिप्रसङ्गः प्रत्युक्तः ॥ सम्यग्ज्ञानेन मिथ्याज्ञानस्यापोदितत्वात् ॥ यः पुनरयमन्तेऽपरो विकल्प उत्प्रेक्षितोऽथेदं जगदपीतावपि विभक्तमेव परेण ब्रह्मणावतिष्ठेतेति । सोऽप्यनभ्युपगमादेव प्रतिषिद्धः ॥ तस्मात्समञ्जसमिदमौपनिषदं दर्शनम् ॥९॥

## स्वपक्षदोषाच्च ॥ १० ॥

स्वपक्षे चैते प्रतिवादिनस्साधारणा दोषाः प्रादुःष्युः ॥ कथमिति ॥ उच्यते ॥ यत्तावदभिहितं विलक्षणत्वान्नेदं जगद्ब्रह्मप्रकृतिकमिति, प्रधानप्रकृतिकतायामपि समानमेतच्छब्दादिहीनात्प्रधानाच्छब्दादिमतो जगत उत्पत्त्यभ्युपगमात् ॥ अत एव च विलक्षणकार्योत्पत्त्यभ्युपगमात्स-

रत्नप्रभा ।

सर्वकार्याणामविभागेऽपि पुनर्विभागहेत्वज्ञानशक्तिरस्ति, **एवम् अपीतौ** महाप्रलयेऽपि मिथ्याभूताज्ञानसम्बद्धा पुनः सृष्टिविभागशक्तिरनुमास्यते । यतः स्थिताविदानीं मिथ्याज्ञानकार्यो विभागव्यवहारस्तत्त्वबोधाभावात् स्वप्नवद्बाधितो दृश्यते । अतः कार्यदर्शनात् कारणसत्त्वसिद्धिरित्यर्थः । अज्ञानां जीवानां महाप्रलयेऽप्यज्ञानशक्तिनियमात् पुनर्जन्मनियम इति भावः ॥ **एतेनेति** । जन्मकारणाज्ञानशक्त्यभावेनेत्यर्थः ॥ ९ ॥ वैलक्षण्यादीनां सांख्यपक्षेऽपि दोषत्वान्नास्माभिस्तन्निरासप्रयासः कार्य इत्याह—**स्वपक्षेति** ॥ सूत्रं व्याचष्टे—**स्वेति** ॥ **प्रादुःष्युः** प्रादुर्भवेयुः ॥ **अत एवेति** । सत्यकार्यस्य विरुद्धकारणात्मना सत्त्वायोगात्सांख्यस्यैवायं दोषो न कार्यमिथ्यात्ववादिन इति मन्तव्यम् । अपीताविति सूत्रोक्तदोष-

भामती ।

त्वादुत्पत्तिनियम इत्यर्थः । **एतेनेति** । मिथ्याज्ञानविभागशक्तिप्रतिनियमेन मुक्तानां पुनरुत्पत्तिप्रसङ्गः प्रत्युक्तः, कारणाभावे कार्याभावस्य प्रतिनियमात्, तत्त्वज्ञानेन च सशक्तिनो मिथ्याज्ञानस्य समूलघातं निहतत्वादिति ॥ ९ ॥ **स्वपक्षदोषाच्च** । कार्यकारणयोर्वैलक्षण्यं तावत्समानमेवोभयोः पक्षयोः । प्रागु-

आनन्दगिरीय—न्यायनिर्णयः ।

त्पुनरुत्थितावुत्तरप्रबोधावस्थायां सौषुप्ताविद्यानिमित्तो विभागव्यवहारः स्वप्नावस्थायामिव यावत्तत्त्वज्ञानमबाधितोऽभ्युपगम्यते । तथा प्रलयावस्थायामपि विभागशक्तिर्विभक्तकार्यलयलक्षणा मिथ्याज्ञानशब्दिताविद्याप्रतिबद्धा तच्छेषैवानुमास्यते । विमतो लयः सावशेषस्तत्त्वज्ञानानधीनलयत्वात्सौषुप्तलयवत्तथा चाविद्याशक्तेर्नियतत्वादुत्पत्तिनियतिरित्यर्थः । असामञ्जस्यान्तरमुक्तमतिदेशेन शिथिलयति—**एतेनेति** । अविद्याशक्तिवशादेव पुनर्विभागेनोत्पत्तिरित्युक्तन्यायेनेति यावत् । तथाऽपि कथं तेषां पुनरुत्पत्तिप्रसङ्गो निवार्यते कारणाभावे कार्याभावादित्याह—**सम्यगिति** । परिचोदनापूर्वकमुक्तमसामञ्जस्यान्तरं निरस्यति—**यः पुनरिति** । आशंकितासामञ्जस्यनिरसनफलमुपसंहरति—**तस्मादिति** ॥ ९ ॥ स्वपक्षे विलक्षणत्वादिदोषान्परिहृत्य 'यश्चोभयोः' इत्यादिन्यायादनुद्भाव्यत्वमेव तेषामित्याह—**स्वपक्षेति** । सूत्राक्षराणि व्याचष्टे—**स्वपक्षे चेति** । तथा च वादिनं प्रत्यनुद्भाव्यता तेषामिति शेषः । ब्रह्मवादिन्युक्तानां विलक्षणत्वादीनां प्रधानवादिनि प्रसङ्गाभावात्कुतः साधारण्यमिति शङ्कते—**कथमिति** । प्रधानवादिनि दोषसाम्यमापादयितुमारभते—**उच्यत इति** । उक्तप्रकारमेव प्रकटयन्विलक्षणत्वादित्यत्रोक्तमनूद्य साम्यमाह—**यत्तावदिति** । 'असदिति चेत्' इत्यत्रोक्तस्यापि दोषस्य साधारण्यमाह—**अत एवेति** । अतःशब्दस्यैवार्थकथनं—विलक्षणेत्यादि । न हीदं कार्यं कारणेन विलक्षणं लक्ष्यमाणं कारणात्मना प्रागवस्थायां

१ अत एवेत्यस्याऽर्थोयम् ।

**मानः प्रागुत्पत्तेरसत्कार्यवादप्रसङ्गः ॥ तथाऽपीतौ कार्यस्य कारणाविभागाभ्युपगमात्तद्वत्प्रसङ्गोऽपि समानः ॥ तथा मृदितसर्वविशेषेषु विकारेष्वपीतावविभागात्मतां गतेष्विदमस्य पुरुषस्योपादानमिदमस्येति प्राक् प्रलयात्प्रतिपुरुषं ये नियता भेदा न ते तथैव पुनरुत्पत्तौ नियन्तुं शक्यन्ते॥ कारणाभावात् ॥ विनैव च कारणेन नियमेऽभ्युपगम्यमाने कारणाभावसाम्यान्मुक्तानामपि पुनर्बन्धप्रसङ्गः ॥ अथ केचिद्भेदा अपीतावविभागमापद्यन्ते केचिन्नेति चेत् ॥ ये नापद्यन्ते तेषां प्रधानकार्यत्वं न प्राप्नोतीत्येवमेते दोषास्साधारणत्वान्नान्यतरस्मिन्पक्षे चोदयितव्या भवन्तीत्यदोषतामेवैषां द्रढयति ॥ अवश्याश्रयितव्यत्वात् ॥ १० ॥**

## तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥ ११ ॥

---

रत्नप्रभा ।

चतुष्टयमाह-**तथापीताविति** ॥ कार्यवत्प्रधानस्य रूपादिमत्त्वप्रसङ्गः । इदं कर्मादिकमस्योपादानं भोग्यमस्य नेत्यनियमः । बद्धमुक्तव्यवस्था च । यदि व्यवस्थार्थं मुक्तानां भेदाः सङ्घातविशेषाः प्रधाने लीयन्ते, बद्धानां भेदास्तु न लीयन्त इत्युच्येत, तर्हि अलीनानां पुरुषवत् कार्यत्वव्याघात इत्यर्थः ॥ ॥ १० ॥ किञ्च तर्कस्य सम्भावितदोषत्वात्तेन निर्दोषवेदान्तसमन्वयो न बाध्य इत्याह-**तर्काप्रतिष्ठानादपीति** ॥ पुरुषमतीनां विचित्रत्वेऽपि कपिलस्य सर्वज्ञत्वात् तदीयतर्के विश्वास इति शङ्कते-

भामती ।

त्पत्तेरसत्कार्यवादप्रसङ्गोऽपीतौ तद्वत्प्रसङ्गश्च प्रधानोपादानपक्ष एव नास्मत्पक्ष इति यद्यप्युपरिष्टात्प्रतिपादयिष्यामस्तथापि गुडजिह्विकया समानत्वापादनमिदानीमिति मन्तव्यम् । इदमस्य पुरुषस्य सुखदुःखोपादानं क्लेशकर्माशयादीदमस्येति । सुगममन्यत् ॥ १० ॥ **तर्काप्रतिष्ठानादपि** । केवलागमगम्येऽर्थे स्वतन्त्रतर्काविषये न सांख्यादिवत् साधर्म्यवैधर्म्यमात्रेण तर्कः प्रवर्तनीयो येन प्रधानादिसिद्धिर्भवेत् । शुष्कतर्को हि स भवत्यप्रतिष्ठानात् । तदुक्तम्-'यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥' इति । न च महापुरुषपरिगृहीतत्वेन कस्यचित्तर्कस्य प्रतिष्ठा, महापुरुषाणामेव तार्किकाणां

आनन्दगिरीय-न्यायनिर्णयः ।

स्थातुमर्हति विरोधात् । नापि स्वेनैवाऽऽत्मना कार्यं प्रागुत्पत्तेर्वर्तितुं पारयति प्रलयप्रतिहतिप्रसङ्गात्तेन प्रागसदेव कार्यं भवन्मतेऽपीत्यर्थः । अपीतिसूत्रोक्तमसामञ्जस्यं परमतेऽपि प्रसञ्जयति-**तथेति** । यत्तु समस्तस्य विभागस्याविभागप्राप्तेः पुनरुत्पत्तौ नियामकाभावाद्भोक्तॄणां भोगस्य च विभागेनोत्पत्तिर्न प्राप्नोतीत्यत्राऽऽह-**तथा मृदितेति** । उपादानं सुखादिकारणं क्लेशकर्माशयादि । यत्तु मोक्तॄणां परेणाविभागं गतानामित्यादि तत्राऽऽह-**विनैवेति** । प्रतिपुरुषं प्रतिनियतान्भेदान्विधाय साधारणानामेव भेदानां प्रलयाभ्युपगमान्नातिप्रसक्तिरिति चोदयति-**अथेति** । ये प्रतिपुरुषं प्रतिनियता भेदास्ते नित्याः स्युरनित्या वा । नित्यत्वे पुरुषेषु गुणेषु वाऽन्तर्भावान्न प्रतिपुरुषं प्रतिनियमस्तदात्मत्वात्तत्साधारण्याच्चानित्यत्वे प्रधानकार्यत्वस्याऽऽवश्यकत्वात्तेषामपीतावविभागानापत्तिरयुक्तेति परिहरति-**ये नाऽऽपद्यन्त इति** । विलक्षणत्वादीनां साधारणत्वे फलितमाह-**इत्येवमिति** । तर्हि दोषसाम्यान्नान्यतरपक्षस्याऽऽदेयतेत्याशंक्यास्मत्पक्षे परिहारस्योक्तत्वान्नैवमित्याह-**इत्यदोषतामिति** ॥ १० ॥ विलक्षणत्वादितर्कावष्टम्भेन ब्रह्मकारणवादप्रतिक्षेपासंभवे हेत्वन्तरमाह-**तर्काप्रतिष्ठानादिति** । सौत्रमपि पदं व्याकरोति-

इतश्च नागमगम्येऽर्थे केवलेन तर्केण प्रत्यवस्थातव्यम् ॥ यस्मान्निरागमाः पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का अप्रतिष्ठिता भवन्ति ॥ उत्प्रेक्षाया निरङ्कुशत्वात् ॥ तथाहि कैश्चिदभियुक्तैर्यत्नेनोत्प्रेक्षितास्तर्का अभियुक्ततरैरन्यैराभास्यमाना दृश्यन्ते, तैरप्युत्प्रेक्षितास्ततोऽन्यैराभास्यन्त इति न प्रतिष्ठितत्वं तर्काणां शक्यं समाश्रयितुम् । पुरुषमतिवैरूप्यात् ॥ अथ कस्यचित्प्रसिद्धमाहात्म्यस्य कपिलस्यान्यस्य वा सम्मतस्तर्कः प्रतिष्ठित इत्याश्रीयेत, एवमप्यप्रतिष्ठितत्वमेव ॥ प्रसिद्धमाहात्म्याभिमतानामपि तीर्थकराणां कपिलकणभुक्प्रभृतीनां परस्परविप्रतिपत्तिदर्शनात् ॥ अथोच्येत—अन्यथा वयमनुमास्यामहे—यथा नाप्रतिष्ठादोषो भविष्यति । न हि प्रतिष्ठितस्तर्क एव नास्तीति शक्यते वक्तुम् ॥ एतदपि हि तर्काणामप्रतिष्ठितत्वं तर्केणैव प्रतिष्ठाप्यते । केषाञ्चित् तर्काणामप्रतिष्ठितत्वदर्शनेनाऽन्येषामपि तज्जातीयकानां तर्काणामप्रतिष्ठित-

रत्नप्रभा ।

**अथेति** ॥ कपिलो यदि सर्वज्ञः कणादो नेति का प्रमेति न्यायेन परिहरति—**एवमपीति** ॥ सूत्रमध्यस्थशंकाभागं व्याचष्टे—**अथोच्येतेति** ॥ विलक्षणत्वादितर्काणामप्रतिष्ठितत्वेऽपि व्याप्तिपक्षधर्मतासम्पन्नः कश्चित् तर्कः प्रतिष्ठितो भविष्यति । तेन प्रधानमनुमेयमित्यर्थः । ननु सोपि, अप्रतिष्ठितः, तर्कजातीयत्वाद्, विलक्षणत्वादिवदित्यत आह—**न हीति** ॥ तर्कजातीयत्वादिति तर्कः प्रतिष्ठितो न वा,—आद्ये—अत्रैवाप्रतिष्ठितत्वसाध्याभावाद्व्यभिचारः, द्वितीयेऽपि न—सर्वतर्काणामप्रतिष्ठितत्वं हेत्वभावादित्यभिसन्धिमानाह—**एतदपीति** ॥ किञ्चानागतपाकः, इष्टसाधनं, पाकत्वाद् अतीतपाकवदित्यादीष्टानिष्टसा-

भामती ।

मिथो विप्रतिपत्तेरिति । सूत्रे शङ्कते—**अन्यथानुमेयमिति चेत्** । तद्विभजते—**अन्यथा वयमनुमास्यामह इति** । नानुमानाभासव्यभिचारेणानुमानव्यभिचारः शङ्कनीयः, प्रत्यक्षादिष्वपि तदाभासव्यभिचारेण तत्प्रसङ्गात् । तस्मात् स्वाभाविकप्रतिबन्धवल्लिङ्गानुसरणे निपुणेनानुमात्रा भवितव्यं; ततश्चाप्रत्यूहं प्रधानं सेत्स्यतीति भावः । अपि च येन तर्केण तर्काणामप्रतिष्ठामाह स एव तर्कः प्रतिष्ठितोऽभ्युपेयः, तदप्रतिष्ठायामितराप्रतिष्ठानाभावादित्याह—**न हि प्रतिष्ठितस्तर्क एवेति** । अपि च तर्काप्रति-

आनन्दगिरीय—न्यायनिर्णयः ।

**इतश्चेति** । तर्कस्य कैवल्यमनुग्राह्यागमराहित्यम् । इतःशब्दार्थमेव स्फुटयति—**यस्मादिति** । आगममूलविकलानां कुतस्तर्काणां प्रादुर्भावस्तत्राऽऽह—**पुरुषेति** । औत्प्रेक्षिकतर्काणामप्रतिष्ठितत्वे हेतुमाह—**उत्प्रेक्षाया इति** । तर्काणामप्रतिष्ठितत्वं विवृणोति—**तथाहीति** । पुरुषमतीनामनेकरूपत्वेऽपि कपिलादौ पुरुषविशेषे माहात्म्यस्य प्रसिद्धत्वात्तदीयस्तर्कोऽप्रतिष्ठितो न भवतीति शंकते—**अथेति** । कपिलादेर्माहात्म्यप्रसिद्धिमभ्युपेत्य परिहरति—**एवमपीति** । अन्यथेत्यादिसूत्रावयवेन चोदयति—**अथोच्येतेति** । यथा तर्कस्य नाप्रतिष्ठितत्वदोषस्तथा व्याप्तिमनुसंधायासावुत्प्रेक्ष्यते । तथा च विलक्षणत्वादीनां व्यभिचारिणामसाधकत्वेऽपि व्याप्तिमतस्तर्कस्य साधकत्वसिद्धिरित्यर्थः । सोऽपि तर्कस्तर्कत्वादप्रतिष्ठितः स्यादित्याशंक्य सर्वस्य वा तर्कस्याप्रतिष्ठितत्वं कस्यचिदेवेति विकल्प्याऽऽद्यं दूषयति—**न हीति** । तत्र हेतुमाह—**एतदपीति** । तदेव स्पष्टयति—**केषाञ्चिदिति** । यस्तर्काणामप्रतिष्ठितत्वसाधकः स प्रतिष्ठितो न वा । प्रथमे कुतः सर्वतर्काप्रतिष्ठितत्वं तदुपपादके तर्के तदभावात् । द्वितीयेऽपि कुतः सर्वतर्काप्रतिष्ठितत्वं तत्प्रसाधक-

त्वप्रकल्पनात् ॥ सर्वतर्काप्रतिष्ठायाश्च सर्वलोकव्यवहारोच्छेदप्रसङ्गः ॥ अतीतवर्तमानाध्वसाम्येन ह्यनागतेऽप्यध्वनि सुखदुःखप्राप्तिपरिहाराय प्रवर्तमानो लोको दृश्यते ॥ श्रुत्यर्थविप्रतिपत्तौ चार्थाभासनिराकरणेन सम्यगर्थनिर्द्धारणं तर्केणैव वाक्यप्रवृत्तिनिरूपणरूपेण क्रियते ॥ मनुरपि चैवमेव मन्यते-"प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ॥ त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता" [ १२ । १०५ ] इति "आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" [ १२ । १०६ ] इति च ब्रुवन् ॥ अयमेव च तर्कस्यालङ्कारो यदप्रतिष्ठितत्वं नाम।

रत्नप्रभा ।

धनानुमानात्मकतर्कस्य प्रवृत्तिनिवृत्तिव्यवहारहेतुत्वान्नाप्रतिष्ठेत्याह-सर्वतर्केति ॥ अध्वा विषयः-पाकभोजनादिर्विषभक्षणादिश्च तत्सामान्येन पाकत्वादिना नागतविषये पाकादौ सुखदुःखहेतुत्वानुमित्या । प्रवृत्त्यादिरित्यर्थः । किञ्च पूर्वोत्तरमीमांसयोस्तर्केणैव वाक्यतात्पर्यनिर्णयस्य क्रियमाणत्वात् तर्कः प्रतिष्ठित इत्याह-श्रुत्यर्थेति ॥ मनुरपि केषाञ्चित् तर्काणां प्रतिष्ठां मन्यत इत्याह-मनुरिति ॥ धर्मस्य शुद्धिः अधर्माद्भेदनिर्णयः । कस्यचित् तर्कस्याप्रतिष्ठितत्वमङ्गीकरोति-अयमेवेति ॥ सर्वतर्काणां प्रतिष्ठायां पूर्वपक्ष एव न स्यादिति भावः।पूर्वपक्षतर्कवत् सिद्धान्ततर्कोऽप्यप्रतिष्ठितः, तर्कत्वाविशेषादिति वदन्तमुपहसति-

भामती ।

ष्ठायां सकललोकयात्रोच्छेदप्रसङ्गः । न च श्रुत्यर्थाभासनिराकरणेन तदर्थतत्त्वविनिश्चय इत्याह-सर्वतर्काप्रतिष्ठायां चेति । अपि च विचारात्मकस्तर्कस्तर्कितपूर्वपक्षपरित्यागेन तर्कितं राद्धान्तमनुजानाति । सति चैष पूर्वपक्षविषये तर्के प्रतिष्ठारहिते प्रवर्तते, तदभावे विचाराप्रवृत्तेः । तदिदमाह-अयमेव च

आनन्दगिरीय-न्यायनिर्णयः ।

तर्कस्यैवाप्रतिष्ठितत्वादित्यर्थः । लोकव्यवहारहेतुत्वादपि प्रतिष्ठितत्वं तर्कस्याऽऽस्तेयमित्याह-सर्वेति । तदेवोपपादयति-अतीतेति । अध्वा प्रवृत्तिनिवृत्तिव्यवहारविषयस्तत्सामान्यं तत्सजातीयत्वमनागतेऽध्वन्यननुभूते व्यवहारविषय इति यावत् । अनुभूतेष्टानिष्टसाधनजातीयसंदर्शनात्तस्यापि समीहितसाधनत्वमसमीहितसाधनत्वं वाऽनुमाय लोकस्तत्र प्रवर्तते ततो वा निवर्तते तदेवं लोकयात्रामुद्वहन्ननुमानाख्यस्तर्को नाप्रतिष्ठितो भवितुमर्हतीत्यर्थः । ननु लोकयात्रा यथाकथंचित्प्रतिष्ठितेनाप्रतिष्ठितेन वा तर्केण निर्वहति तस्यादृष्टत्वादेव दुर्निवारत्वाद्वेदार्थनिर्णयानुपयोगित्वात्तु तर्कस्याप्रतिष्ठितत्वं वैदिकैरुच्यते तत्राऽऽह-श्रुत्यर्थेति । पूर्वोत्तरतन्त्रप्रणयनानुपपत्त्या तर्कस्य प्रतिष्ठितत्वमेष्टव्यम् । न हि प्रतिष्ठिततर्कावष्टम्भमन्तरेण तन्त्राभ्यां वाक्यार्थनिर्धारणसिद्धिरिति भावः । न केवलं लौकिकवैदिकव्यवहारानुपपत्तिरेव तर्कस्य प्रतिष्ठितत्वे मानं, किंतु मनुवचनमपीत्याह-मनुरपीति । शास्त्रस्य नानाचार्यमुखप्राप्तसंप्रदायसाहित्यं विविधागमत्वम् । धर्मस्य शुद्धिरधर्मान्निष्कृष्य निर्धारणम् । तत्र शास्त्रं निर्धारितशक्तितात्पर्यवदव्यवधानेनोपयुक्तं प्रत्यक्षानुमाने तद्व्यवधानेनेति विभागः । अत्रानुमानं चेत्येतदुपजीव्यम् । आर्षो धर्मोपदेशो मन्वत्रिविष्णुहारीतयाज्ञवल्क्यादिप्रणीतं धर्मशास्त्रम् । वेदशास्त्राविरोधिनेतिविशेषणाद्धर्मनिर्णये शुष्कतर्कानुप्रवेशो नेति सूचितम् । धर्मशब्दाच्चात्र साधारणाद्ब्रह्मापि गृहीतम् । सर्वस्य तर्कस्याप्रतिष्ठितत्वपक्षमेवं दूषयित्वा कस्यचिदप्रतिष्ठितत्वमङ्गीकरोति-अयमेवेति । तदेवोपपादयति-एवं हीति । तर्को हि विचारात्मकस्तर्कितपूर्वपक्षप्रतिक्षेपमुखेन तर्कितसिद्धान्ताभ्युपगममूलं, स च पूर्वपक्षविषये तर्के प्रतिष्ठारहिते सति प्रवर्तते, तदप्रतिष्ठितत्वाभावे विफलतया विचाराप्रवृत्तेरित्यर्थः । पूर्वतर्कवदुत्तरतर्कस्यापि तर्कत्वादप्रतिष्ठितत्वमनुमेयमित्याशंक्याप्रतिष्ठितत्वे तर्कस्य मूलशैथिल्यादि प्रयोजकं न तर्कत्वमिति मत्वाऽऽह-

एवं हि सावद्यतर्कपरित्यागेन निरवद्यस्तर्कः प्रतिपत्तव्यो भवति ॥ न हि पूर्वजो मूढ आसीदित्यात्मनापि मूढेन भवितव्यमिति किञ्चिदस्ति प्रमाणम्॥तस्मान्न तर्काप्रतिष्ठानं दोष इति चेद् एवमप्यविमोक्षप्रसङ्गः । यद्यपि क्वचिद्विषये तर्कस्य प्रतिष्ठितत्वमुपलक्ष्यते, तथापि प्रकृते तावद्विषये प्रसज्यत एवाप्रतिष्ठितत्वदोषादनिर्मोक्षस्तर्कस्य । न हीदमतिगम्भीरं भावयाथात्म्यं मुक्तिनिबन्धनमागममन्तरेणोत्प्रेक्षितुमपि शक्यम् । रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षस्य गोचरः, लिङ्गाद्यभावाच्च नानुमानादीनामिति चावोचाम ॥ अपि च सम्यग्ज्ञानान्मोक्ष इति सर्वेषां मोक्षवादिनामभ्युपगमः ॥ तच्च सम्यग्ज्ञानमेकरूपम् । वस्तुतन्त्रत्वात् ॥ एकरूपेण ह्यवस्थितो योऽर्थः स परमार्थो लोके । तद्विषयं ज्ञानं सम्यग्ज्ञानमित्युच्यते । यथाऽग्निरुष्ण इति ॥ तत्रैवं सति सम्यग्ज्ञाने

---

रत्नप्रभा ।

न हीति॥क्वचित् तर्कस्य प्रतिष्ठायामपि जगत्कारणविशेषे तर्कस्य स्वातन्त्र्यं नास्तीति सूत्रशेषं व्याचष्टे—यद्यपीत्यादिना ॥ अतिगम्भीरत्वं ब्रह्मणो वेदान्यमानागम्यत्वम् । भावस्य जगत्कारणस्य । याथात्म्यम् अद्वयत्वम् । मुक्तिनिबन्धनं मुक्त्यालम्बनम् । परमानन्दचित्प्रभं दर्शयति—रूपादीति ॥ अविमोक्षो मुक्त्यभाव इत्यर्थान्तरमाह—अपि चेत्यादिना ॥ एकरूपवस्तुज्ञानस्य सम्यग्ज्ञानत्वेऽपि तर्कजन्यत्वं किं न स्यादित्यत आह—तत्रैवं सतीति ॥ तर्कोत्थज्ञानानां मिथो विप्रतिपत्तेर्न सम्यग्ज्ञानत्वं सम्यग्ज्ञाने

भामती ।

तर्कस्यालंकार इति । तामिमामाशंकां सूत्रेण परिहरति—एवमप्यविमोक्षप्रसंगः । न वयमन्यत्र तर्कमप्रमाणयामः, किंतु जगत्कारणसत्त्वे स्वाभाविकप्रतिबन्धवन्न लिङ्गमस्ति । यत्तु साधर्म्यवैधर्म्यमात्रं, तदप्रतिष्ठादोषान्न मुच्यत इति । कल्पान्तरेणानिर्मोक्षपदार्थमाह—अपि च सम्यग्ज्ञानान्मोक्ष इति । भूतार्थगोचरस्य हि सम्यग्ज्ञानस्य व्यवस्थितवस्तुगोचरतया व्यवस्थानं लोके दृष्टं, यथा प्रत्यक्षस्य । वैदिकं चेदं चेतनजगदुपादानविषयं विज्ञानं वेदोत्थतर्केतिकर्तव्यताकं वेदजनितं व्यवस्थितम् । वेदान-

आनन्दगिरीय—न्यायनिर्णयः ।

न हीति । अन्यथेत्यादिचोद्यविभजनमुपसंहरति—तस्मादिति । सर्वतर्काप्रतिष्ठाया दुरुपपादनत्वात्किंचित्तर्काप्रतिष्ठाया गुणत्वादित्यर्थः । परिहारमवतारयति—एवमपीति । प्रतिष्ठितोऽपि कश्चित्तर्कोऽस्तीति वा जगत्कारणविषयस्तर्कस्तथेति वा साध्यते तत्राऽऽद्यमङ्गीकरोति—यद्यपीति । द्वितीयं दूषयति—तथाऽपीति । जगत्कारणमपि कार्यलिङ्गकानुमानगोचरतया तर्कगम्यमित्याशंक्य कारणमात्रस्य तद्गम्यत्वेऽपि तद्गतैकत्वादिविशेषस्य नास्ति तद्गम्यतेत्याह—न हीति । अतिगम्भीरत्वमागमातिरेकिमानायोग्यत्वं भावयाथात्म्यं कारणगतमद्वितीयत्वं मुक्तिनिबन्धनं परमानन्दसचिदेकतानत्वम् । यदुक्तमतिगम्भीरत्वं तदेव प्रागुक्तं स्मारयन्नुपपादयति—रूपादीति । एवमपीत्यादिभागं विधान्तरेण व्याकर्तुमारभते—अपि चेति । तर्कप्रतिष्ठितत्ववादिनाऽपि तार्किकं वा वैदिकं वा ज्ञानं मोक्षसाधनं विवक्षितमिति विकल्प्याऽऽद्यं दूषयितुं संप्रतिपन्नमर्थमाह—सम्यगिति । तस्य तर्कसमुत्थत्वासंभवं वक्तुमेकरूपत्वमाह—तच्चेति । वस्तुतन्त्रत्वेपि स्थाणुपुरुषविषयज्ञानवदनेकरूपत्वमाशंक्याऽऽह—एकरूपेणेति । न हि स्थाणुर्वा पुरुषो वेति ज्ञानं वस्तुतन्त्रं किंतु पुरुषतन्त्रमिति भावः । ऐकरूप्येऽपि वस्तुनस्तस्य भ्रान्तिविकल्पितानि सन्त्येवानेकरूपाणीत्याशंक्याग्न्यौष्ण्यज्ञानवदेकरूपवस्तुविषयमेव सम्यग्ज्ञानमित्याह—तद्विषयमिति । मोक्षसाधनसम्यग्ज्ञानस्योक्तप्रकारेणैकरूप्येऽपि किमायातमिति तत्राऽऽह—तत्रेति । अविप्रतिपन्नमपि सम्यग्ज्ञानं तर्क-

पुरुषाणां विप्रतिपत्तिरनुपपन्ना ॥ तर्कज्ञानानान्त्वन्योन्यविरोधात्प्रसिद्धा विप्रतिपत्तिः ॥ यद्धि केनचित्तार्किकेणेदमेव सम्यग्ज्ञानमिति प्रतिपादितं, तदपरेण व्युत्थाप्यते तेनापि प्रतिष्ठापितं ततोऽपरेण व्युत्थाप्यत इति च प्रसिद्धं लोके ॥ कथमेकरूपानवस्थितविषयं तर्कप्रभवं सम्यग्ज्ञानं भवेत् ॥ न च प्रधानवादी तर्कविदां मुख्यः सर्वैस्तार्किकैः परिगृहीतः, येन तदीयं मतं सम्यग्ज्ञानमिति प्रतिपद्येमहि । न च शक्यन्तेऽतीतानागतवर्तमानास्तार्किका एकस्मिन्देशे काले च समाहर्तुं, येन तन्मतिरेकरूपैकार्थविषया सम्यङ्मतिरिति स्यात् ॥ वेदस्य तु नित्यत्वे विज्ञानोत्पत्तिहेतुत्वे च सति व्यवस्थितार्थविषयत्वोपपत्तेः, तज्जनितस्य ज्ञानस्य सम्यक्त्वमतीतानागतवर्तमानैस्सर्वैरपि तार्किकैरपह्नोतुमशक्यम् । अतः सिद्धमस्यैवौपनिषदस्य ज्ञानस्य सम्यग्ज्ञानत्वम् । अतोऽन्यत्र सम्यग्ज्ञानत्वानुपपत्तेस्संसाराविमोक्ष एव प्रसज्येत ॥ अत आगमवशेनागमानुसारितर्कवशेन च चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेति स्थितम् ॥ ११ ॥ इति नविलक्षणत्वाधिकरणम् ॥ ३ ॥

---

रत्नप्रभा ।

विप्रतिपत्त्ययोगादित्यर्थः । एकरूपेणानवस्थितो विषयो यस्य तत्, तर्कप्रभवं कथं सम्यग्ज्ञानं भवेदिति योजना । ननु सांख्यस्य श्रेष्ठत्वात् तज्ज्ञानं सम्यगित्याशंक्य हेत्वसिद्धिमाह—न च प्रधानेति ॥ ननु सर्वतार्किकैर्मिलित्वा निश्चिततर्कोत्था मतिर्मुक्तिहेतुरित्यत आह—न च शक्यन्त इति ॥ तस्मात्तर्कोत्थज्ञानान्मुक्त्ययोगात् तर्केण वेदान्तसमन्वयबाधो न युक्तस्तद्बाधे सम्यग्ज्ञानालाभेनानिर्मोक्षप्रसङ्गादिति सूत्रांशार्थमुपसंहरति—अतोऽन्यत्रेति ॥ समन्वयस्य तर्केणाविरोधे फलितमधिकरणार्थमुपसंहरति—अत आगमेति ॥ ११ ॥ ( ३ ) ॥ ब्रह्म जगदुपादानमिति ब्रुवन् वेदान्तसमन्वयो विषयः । स

भामती ।

पेक्षेण तु तर्केण जगत्कारणभेदमवस्थापयतां तार्किकाणामन्योन्यं विप्रतिपत्तेस्तत्त्वनिर्धारणकारणाभावान्न ततस्तत्त्वव्यवस्थेति न ततः सम्यग्ज्ञानम् । असम्यग्ज्ञानाच्च न संसाराद्विमोक्ष इत्यर्थः ॥ ११ ॥ ( ३ ) ॥

आनन्दगिरीय-न्यायनिर्णयः ।

समुत्थं भविष्यतीत्याशंक्याऽऽह—तर्केति । विप्रतिपत्तिमेव तार्किके ज्ञाने प्रकटयति—यद्धीति । व्युत्थापनं बाधनम् । सत्यां विप्रतिपत्तौ फलितमाह—कथमिति । एकरूपेणानवस्थितोऽर्थो विषयो यस्य ज्ञानस्य तत्तथा । प्रधानब्रह्मवादिनः सर्वोत्कृष्टतया सर्वैरिष्टत्वात्तदुत्प्रेक्षिततर्कप्रसूतं ज्ञानं सम्यग्ज्ञानं भविष्यतीत्याशंक्याह—न चेति । तैरपरिगृहीतत्वेऽपि तन्मतनिरासेन प्रधानवादिना स्वमतस्य स्थापितत्वात्तस्यैवाऽऽदेयत्वं सर्वतार्किकसंमतमित्याशंक्याऽऽह—न च शक्यन्त इति । एकरूपो योऽसावेकार्थः सांख्यैरुक्तस्तद्विषयेति यावत् । तर्कोत्थज्ञानं मोक्षहेतुरिति पक्षं प्रतिक्षिप्य वैदिकज्ञानं तथेत्यङ्गीकर्तुं वेदार्थेऽपि वेदविदां विवादात्तज्जन्यमपि ज्ञानमेकरूपं न भवतीत्याशंक्याऽऽह—वेदस्येति । स हि स्वसामर्थ्यादेकरूपार्थधीप्रसवहेतुः पुरुषमतिदोषात्त्वन्यथा प्रतिभासत इत्यर्थः । वैदिकस्य ज्ञानस्यासम्यग्ज्ञानत्वापादकत्वाभावे फलितमाह—अत इति । वैदिकादेव सम्यग्ज्ञानान्मोक्षसंभवात्पक्षान्तरेषु मोक्षहेतुसम्यग्ज्ञानाभावान्मोक्षासिद्धिरिति सूत्रावयवार्थमुपसंहरति—अतोऽन्यत्रेति । तर्कावष्टम्भेन ब्रह्मणि प्रत्यवस्थानासंभवं प्रसाध्य प्रकृतमधिकरणार्थमुपसंहरति—अत आगमवशेनेति ॥ ११ ॥ ( ३ ) ॥ समन्वयस्य सांख्यन्यायाविरोधेऽपि परमाण्वादिवादिभिरुद्भावितन्यायविरोधान्नासौ सिध्यति तेषां तार्किकत्वेन प्रसिद्धत्वात्तदीयन्याया-

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥ ( ४ ) ॥

**वैदिकस्य दर्शनस्य प्रत्यासन्नत्वाद् गुरुतरतर्कबलोपेतत्वाद् वेदानुसारिभिश्च कैश्चिच्छिष्टैः केनचिदंशेन परिगृहीतत्वात् प्रधानकारणवादं तावद्व्यपाश्रित्य यस्तर्कनिमित्त आक्षेपो वेदान्तवाक्येषूद्भावितः, स परिहृतः ॥ इदानीमण्वादिवादव्यपाश्रयेणापि कैश्चिन्मन्दमतिभिर्वेदान्तवाक्येषु पुनस्तर्कनिमित्त आक्षेप आशङ्क्यत इत्यतः प्रधानमल्लनिबर्हण-**

रत्नप्रभा ।

किं "यद्विभु, तन्न द्रव्योपादानम्" इति वैशेषिकादिन्यायेन विरुध्यते न वेति सन्देहे सांख्यवृद्धानां तर्काकुशलमतित्वेऽपि वैशेषिकादीनां तर्कमतिकुशलत्वप्रसिद्धेस्तदीयन्यायस्याबाधितत्वाद्विरुध्यत इति प्रत्युदाहरणेन प्राप्तेऽतिदिशति—**एतेनेति** ॥ फलं पूर्ववत् । ननु सांख्यमतस्योपदेशः । तार्किकमतस्यातिदेशः किमिति कृतः, वैपरीत्यस्यापि सम्भवादित्याशंक्य पूर्वोत्तरयोरुपदेशातिदेशभावे कारणमाह—**वैदिकस्येति** ॥ सत्कार्यत्वात्मासङ्गत्वस्वप्रकाशत्वाद्यंशैर्वेदान्तशास्त्रस्य प्रत्यासन्नः प्रधानवादः शिष्टैर्देवलादिभिः सत्कार्यत्वांशेन स्वीकृत इति प्रबलत्वादुपदेशः, अण्वादिवादानां निर्मूलत्वेन दुर्बलत्वादतिदेश इति

भामती ।

**एतेन शिष्टापरिग्रहा अपि व्याख्याताः ।** न कार्यं कारणादभिन्नमभेदे कारणरूपवत् कार्यत्वानुपपत्तेः, करोत्यर्थानुपपत्तेश्च । अभूतप्रादुर्भावनं हि तदर्थः । न चास्य कारणात्मत्वे किंचिदभूतमस्ति, यदर्थमयं पुरुषो यतेत । अभिव्यक्त्यर्थमिति चेत् । न, तस्या अपि कारणात्मत्वेन सत्त्वात्, असत्त्वे वाभिव्यङ्ग्यस्यापि तद्वत्प्रसङ्गेन कारणात्मत्वव्याघातात् । न हि तदेव तदानीमेवास्ति नास्ति चेति युज्यते । किंचेदं मणिमन्त्रौषधमिन्द्रजालं कार्येण शिक्षितं यदिदमजातानिरुद्धातिशयमव्यवधानमविदूरस्थानं च तस्यैव तदवस्थेन्द्रियस्य पुंसः कदाचित्प्रत्यक्षं परोक्षं च, येनास्य कदाचित्प्रत्यक्षमुपलम्भनं कदाचिदनुमानं कदाचिदागमः । कार्यान्तरव्यवधिरस्य पारोक्ष्यहेतुरिति चेत् । न, कार्यजातस्य सदातनत्वात् । अथापि स्यात् कार्यान्तराणि पिण्डकपालशर्कराचूर्णकणप्रभृतीनि कुम्भं व्यवदधते, ततः कुम्भस्य पारोक्ष्यं कदाचिदिति । तन्न, तस्य कार्यजातस्य कारणात्मनः सदातनत्वेन सर्वदा व्यवधानेन कुम्भस्यात्यन्तानुपलब्धिप्रसङ्गात् । कादाचित्कत्वे वा कार्यजातस्य न कारणात्मत्वं, नित्यत्वानित्यत्वलक्षणविरुद्धधर्मसंसर्गस्य भेदकत्वात् । भेदाभेदयोश्च परस्परविरोधेनैकत्र सहासंभव इत्युक्तम् । तस्मात् कारणात्कार्यमेकान्ततः एव भिन्नम् । न च भेदे गवाश्ववत् कार्यकारणभावानुपपत्तिरिति सांप्रतम्, अभेदेऽपि कारणरूपवत्तदनुपपत्ते-

आनन्दगिरीय—न्यायनिर्णयः ।

मामबाध्यत्वादित्याशंक्य तन्निरासायोक्तन्यायमतिदिशति—**एतेनेति** । अतिदेशत्वादुपदेशवत्पदादिसंगतिचतुष्टयं फलभेदश्च । चेतनाद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विषयः स किमीश्वरो न द्रव्योपादानं व्यापित्वाद्दिगादिवदित्यादिना तार्किकन्यायेन तदनाभासत्वाभासत्वाभ्यां विरुध्यते न वेति संदेहे पूर्वोत्तराधिकरणयोरुपदेशातिदेशभावेन संबन्धे कारणमाह—**वैदिकस्येति** । कार्यकारणयोरभेदस्याऽऽत्मनः स्वप्रकाशत्वासङ्गत्वयोः सम्यग्दर्शनस्यासहायस्य मुक्तिहेतुतेत्येवमादीनामभ्युपगमात्प्रत्यासन्नत्वम् । परिमाणसमन्वयादिर्गुरुतरस्तर्कः । देवलप्रभृतयः शिष्टाः । केनचिदंशेन कार्यकारणयोरनन्यत्वादिनेति यावत् । अण्वादीत्यादिपदेन स्वभावाभाववादौ गृहीतौ । तर्कनिमित्त आक्षेप इत्ययमर्थः । विमतं कार्यद्रव्यं नेश्वरोपादानकं गुणत्वानधिकरणत्वादीश्वरवत्।ईश्वरो न कार्यद्रव्योपादानं,कार्यद्रव्ये समानजातीयविशेषगुणारम्भकविशेषगुणानधिकरणत्वाद्व्यापित्वाद्वा दिगादिवत् । ब्रह्म चैतन्यं जगत्समवायिकारणविशेषगुणो न भवति, कार्ये समानजातीयविशेषगुणानारम्भकत्वाद्यथा तन्तुगतं शौक्ल्यं न घटसमवायिकारणविशेषगुण इत्येवंविधानुमानविरोधं समन्वयस्य कश्चिच्चोदयेदिति तामेतामाशंकां निराकर्तुमिदं सूत्रमित्याह—इत्यत इति । सूत्राक्ष-

न्यायेनातिदिशति ॥ परिगृह्यन्त इति परिग्रहा न परिग्रहा अपरिग्रहाः शिष्टानामपरिग्रहाः—"शिष्टापरिग्रहाः" "एतेन" प्रकृतेन प्रधानकारणवादनिराकरणकारणेन शिष्टैर्मनुव्यासप्रभृतिभिः केनचिदप्यंशेनापरिगृहीता येऽण्वादिकारणवादाः, तेऽपि प्रतिषिद्धतया व्याख्याताः निराकृता वेदितव्याः ॥ तुल्यत्वान्निराकरणकारणस्य नात्र पुनराशंकितव्यं किञ्चिदस्ति । तुल्यमत्रापि परमगम्भीरस्य जगत्कारणस्य तर्कानवगाह्यत्वं, तर्कस्य चाप्रतिष्ठितत्वमन्यथानुमानेऽप्यविमोक्ष आगमविरोधश्चेत्येवंजातीयकं निराकरणकारणम् ॥१२॥ इति शिष्टापरिग्रहाधिकरणम् ॥ ४॥

रत्नप्रभा ।

भावः । किं निराकरणकारणमिति प्रष्टव्यं नास्तीत्याह—तुल्यत्वादिति ॥ कारणमेवाह—तुल्यमिति ॥ यदुक्तं विभुत्वान्न द्रव्योपादानं ब्रह्मेति, तत्र पक्षसाधकत्वेन श्रुतेरुपजीव्यत्वात्तया बाधः । महापरिमाणवत्त्वस्य सर्वसंयोगित्वरूपविभुत्वस्य निर्गुणे ब्रह्मण्यसिद्धेश्चेति द्रष्टव्यम् । अतः समन्वयस्य तार्किकन्यायेन न विरोध इति सिद्धम् ॥ १२ ॥ ( ४ ) ॥ अद्वितीयाद्ब्रह्मणो जगत्सर्गादिवादी वेदान्तसमन्वयो

भामती ।

रुक्तत्वात् । अत्यन्तभेदे च कुम्भकुम्भकारयोर्निमित्तकभावस्य दर्शनात् । तस्मादन्यत्वाविशेषेऽपि समवायभेद एवोपादानोपादेयभावनियमहेतुः । यस्याभूत्वा भवतः समवायस्तदुपादेयं, यत्र च समवायस्तदुपादानम् । उपादानत्वं च कारणस्य कार्यादल्पपरिमाणस्य दृष्टं, यथा तन्त्वादीनां पटाद्युपादानानां पटादिभ्यो न्यूनपरिमाणत्वम् । चिदात्मनस्तु परममहत उपादानान्नात्यन्ताल्पपरिमाणमुपादेयं भवितुमर्हति । तस्माद्यत्रेदमल्पतारतम्यं विश्राम्यति यतो न क्षोदीयः संभवति तज्जगतो मूलकारणं परमाणुः । क्षोदीयोऽन्तरानन्त्ये तु मेरुराजसर्षपयोस्तुल्यपरिमाणत्वप्रसङ्गोऽनन्तावयवत्वादुभयोः । तस्मात् परममहतो ब्रह्मण उपादानादभिन्नमुपादेयं जगत्कार्यमभिदधती श्रुतिः प्रतिष्ठितप्रामाण्यतर्कविरोधात्सहस्रसंवत्सरसत्रगतसंवत्सरश्रुतिवत्कथंचिज्जघन्यत्ववृत्त्या व्याख्यायेत्यधिकं शंकमानं प्रति सांख्यदूषणमतिदिशति—एतेनेति । सूत्रेण । अस्यार्थः—कारणात् कार्यस्य भेदं 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यत्र निषेत्स्यामः । अविद्यासमारोपणेन च कार्यस्य न्यूनाधिकभावमप्यप्रयोजकत्वादुपेक्षिष्यामहे । तेन वैशेषिकाद्यभिमतस्य तर्कस्य शुष्कत्वेनाव्यवस्थितेः सूत्रमिदं सांख्यदूषणमतिदिशति । यत्र कथंचिद्वेदानुसारिणी मन्वादिभिः शिष्टैः परिगृहीतस्य सांख्यतर्कस्यैषा गतिस्तत्र परमाण्वादिवादस्यात्यन्तवेदबाह्यस्य मन्वाद्युपेक्षितस्य च कैव कथेति ॥ केनचिदंशेनेति । सृष्ट्यादयो हि व्युत्पाद्यास्ते च किंचित्सदसद्वा पूर्वपक्षन्यायोत्प्रेक्षितमप्यु-

आनन्दगिरीय—न्यायनिर्णयः ।

राणि व्याचष्टे—परिगृह्यत इति । शिष्टापरिग्रहशब्दस्य समासमुक्त्वा वाक्यार्थमाह—शिष्टैरिति । अतिदेशेन निराकरणे हेतुमाह—तुल्यत्वादिति । पूर्वोक्तानुमानेष्वदूषितेषु कथमिष्टसिद्धिरित्याशंक्याऽऽह—नात्रेति । समन्वयः सप्तम्यर्थः । गुणत्वानधिकरणत्वादित्यत्रानुपादानत्वस्यैवोपाधित्वादीश्वरो द्रव्योपादानवृत्तिद्रव्यत्वावान्तरजातिमानश्रावणविशेषगुणवत्त्वात्पृथिवीवदिति । परमतेन व्यापित्वादेः सत्प्रतिपक्षत्वात्कार्ये समानजातीयगुणान्तरानारम्भकत्वस्यातिलोहितवृश्चिकसमवायिकारणगोमयविशेषगुणश्यामत्वे व्यभिचारात् । विमतमीश्वरोपादानकमुपादानवत्त्वादीश्वरनिष्ठसंयोगवदित्यनुमानान्न प्रकृते समन्वये किंचिदाशंकितव्यमिति भावः । यदुक्तं तुल्यत्वान्निराकरणकारणस्येति तदेव व्यनक्ति—तुल्यमिति । वैशेषिकादिपक्षानुसारिचोद्यं सप्तम्यर्थः । तुल्यमत्रापि निराकरणकारणमिति संबन्धः । तदेवं प्रागुक्तं संक्षिपति—परमगम्भीरस्येत्यादिना ॥ १२ ॥ ( ४ ) ॥ वैशेषिकादितर्कविरोधं समन्वयस्य परिहृत्याध्यक्षादिविरोध-

१ अस्य निराकरणकारणमित्यनेन सम्बन्धः ।

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥ (५) ॥

अन्यथा पुनर्ब्रह्मकारणवादस्तर्कबलेनैवाक्षिप्यते ॥ यद्यपि श्रुतिः प्रमाणं स्वविषये भवति । तथापि प्रमाणान्तरेण विषयापहारेऽन्यपरा भवितुमर्हति ॥ यथा–मन्त्रार्थवादौ ॥ तर्कोऽपि हि स्वविषयादन्यत्राप्रतिष्ठितः स्यात् । यथा–धर्माधर्मयोः ॥ किमतः । यद्येवम्, अत इदमयुक्तं यत्प्रमाणान्तरप्रसिद्धार्थबाधनं श्रुतेः ॥ कथं पुनः प्रमाणान्तरप्रसिद्धोऽर्थः श्रुत्या बाध्यत इति ॥ अत्रोच्यते ॥ प्रसिद्धो ह्ययं भोक्तृभोग्यविभागो लोके,

---

रत्नप्रभा ।

विषयः । स किं यन्मिथोऽभिन्नं तन्नाद्वितीयकारणाभिन्नं यथा मृत्तन्तुजौ घटपटाविति तर्कसहितभेदप्रत्यक्षादिना विरुध्यते न वेति सन्देहे ब्रह्मणि तर्कस्याप्रतिष्ठितत्वेऽपि जगद्भेदे प्रतिष्ठितत्वाद्विरुध्यत इति पूर्वपक्षयति–**भोक्त्रापत्तेरिति** ॥ विरोधादद्वैतासिद्धिः पूर्वपक्षफलम्, सिद्धान्ते तत्सिद्धिरिति भेदः । अनपेक्षश्रुत्या स्वार्थनिर्णयात् तर्केणाक्षेपो न युक्त इत्युक्तमिति शङ्कते–**यद्यपीति** ॥ मानान्तरायोग्यश्रुत्यर्थे भवत्यनाक्षेपः । यस्त्वद्वितीयब्रह्माभेदाद्भूजलादीनामभेदो ब्रह्मोपादनकत्वश्रुतिविषयः, स "आदित्यो यूपः" इत्यर्थवादवन्मानान्तरयोग्य एवेति द्वैतप्रमाणैरपह्रियत इति समाधत्ते–**तथापीति** ॥ अन्यपरत्वं गौणार्थकत्वम् । स्वविषये जगद्भेदे तर्कस्य प्रतिष्ठितत्वात्तेनाक्षेप इत्याह–**तर्कोऽपीति** ॥ तर्कादेर्द्वैते प्रामाण्येऽपि सतः समन्वयविरोधे किमायातमिति शङ्कते–**किमत इति** ॥ पूर्वपक्षी समाधत्ते–**अत इति** ॥ तर्कादेः प्रामाण्याद् द्वैतबाधकत्वं श्रुतेरयुक्तमित्यद्वैतसमन्वयबाधो युक्त इत्यर्थः । इममर्थं शंकापूर्वकं स्पष्टयति–**कथमित्यादिना** ॥ ननु भोक्तृभोग्ययोर्मिथ एकत्वं केनोक्तमित्याशंक्य

भामती ।

दाहृत्य व्युत्पाद्यन्त इति केनचिदंशेनेत्युक्तम् । सुगममन्यत् ॥१२॥(४)॥ **भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्** । स्यादेतत् । अतिगम्भीरजगत्कारणविषयत्वं तर्कस्य नास्ति, केवलागमगम्यमेतदित्युक्तम्, तत्कथं पुनस्तर्कनिमित्त आक्षेप इत्यत आह–**यद्यपि श्रुतिः प्रमाणमिति** । प्रवृत्ता हि श्रुतिरनपेक्षतया स्वतःप्रमाणत्वेन न प्रमाणान्तरमपेक्षते । प्रवर्तमाना पुनः स्फुटतरप्रतिष्ठितप्रामाण्यतर्कविरोधेन मुख्यार्थात्प्रच्याव्य

आनन्दगिरीय–न्यायनिर्णयः ।

माशंक्य परिहरति–**भोक्त्रापत्तेरिति** । अद्वितीयाद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विषयः स किं द्वैतग्राहिप्रत्यक्षादिना विरुध्यते न वेति तस्य तत्त्वावेदकत्वानावेदकत्वाभ्यां संदेहे जगत्कारणे तर्कस्याप्रतिष्ठितत्वेऽपि जगद्भेदे तस्य प्रतिष्ठितत्वसंभवादद्वैतासिद्धिरित्यभिसंधाय पूर्वपक्षयति–**अन्यथेति** । समन्वयस्याध्यक्षादिविरोधसमाधानात्पादादिसंगतिसौलभ्यम् । फलं तु पूर्ववत्तर्कशब्दोऽनुमानविषयोऽवधारणमयोगव्यावृत्त्यर्थम् । आम्नायैकगम्ये मानान्तरनिमित्ताक्षेपस्यानवकाशत्वमाशंक्याऽऽह–**यद्यपीति** । निर्णीतार्थश्रुतिविरोधे मानान्तरस्यैवाप्रामाण्यमनिर्णीतार्था तु श्रुतिर्मानान्तरविरोधे सत्युपचरितार्था स्यादित्यर्थः । मानान्तरेण श्रुतेर्विषयापहारे सत्यन्यपरतेत्यत्रोदाहरणमाह–**यथेति** । यत्तु तर्कस्याप्रतिष्ठितत्वान्न श्रुत्यर्थे तन्निमित्तस्याऽऽक्षेपस्य सावकाशत्वमिति तत्राऽऽह–**तर्कोऽपीति** । श्रुतिवदित्यपेरर्थः । तर्कस्य स्वविषये प्रतिष्ठितत्वेऽपि श्रुत्या तुल्यविषयत्वाभावान्न तयोर्विरोधशंकेति शङ्कते–**किमत इति** । श्रुत्या सहैकविषयत्वाभावेऽपि स्वविषयस्थापनेनार्थात्तर्कस्य तद्विरोधे श्रुतिरमानं तदुत्तरकालत्वात्तत्प्रवृत्तेरिति मत्वाऽऽह–**अत इति** । श्रुतेः स्वार्थबोधनोपक्षयादन्यबाधस्यानवकाशत्वान्न विरोधशंकेति पुनः सिद्धान्ती शङ्कते–**कथमिति** । अद्वैतं स्वार्थं बोधयन्त्येव श्रुतिरर्थाद्द्वैतमपबाधमाना तद्विषयाध्यक्षादिभिर्विरुध्येतेति पूर्ववाद्याह–**उच्यत इति** । तत्राऽऽदावध्यक्षविरोधं श्रुतेर्दर्शयति–**प्रसिद्धो हीति** । लौकिकीं प्रसिद्धिमेव

**भोक्ता चेतनः शारीरः, भोग्याः शब्दादयो विषया इति ॥ यथा-भोक्ता देवदत्तो भोज्य ओदन इति ॥ तस्य च विभागस्याभावः प्रसज्येत। यदि भोक्ता भोग्यभावमापद्येत भोग्यं वा भोक्तृभावमापद्येत, तयोश्चेतरेतरभावापत्तिः परमकारणाद्ब्रह्मणोऽनन्यत्वात्प्रसज्येत ॥ न चास्य प्रसिद्धस्य विभागस्य बाधनं युक्तम्। यथा त्वद्यत्वे भोक्तृभोग्ययोर्विभागो दृष्टः, तथातीतानागतयोरपि कल्पयितव्यः ॥ तस्मात्प्रसिद्धस्यास्य भोक्तृभोग्यविभागस्याभावप्रसङ्गादयुक्तमिदं ब्रह्मकारणतावधारणमिति चेत्कश्चिच्चोदयेत् ॥ तं प्रति ब्रूयात्, स्याल्लोकवदिति ॥ उपपद्यत एवायमस्मत्पक्षेऽपि विभागः। एवं लोके दृष्टत्वात् ॥ तथाहि-समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विकाराणां फेनवीचीतरङ्गबुद्बुदादीनामितरेतरविभाग इतरेतरसंश्लेषादिलक्षणश्च व्यवहार उपलभ्यते ॥ न च समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विकारणां फेनतरङ्गादीनामितरेतरभावापत्तिर्भवति॥**

रत्नप्रभा।

श्रुतार्थापत्त्येत्याह-**तयोश्चेति** ॥ तयोरेकब्रह्माभेदश्रवणादेकत्वं कल्प्यते। एकस्मादभिन्नयोर्भेदे एकस्यापि भेदापत्तेः। ततश्च भेदो बाध्येतेत्यर्थः॥ इष्टापत्तिं वारयति-**न चास्येति** ॥ श्रुतेर्गौणार्थत्वेन सावकाशत्वान्निरवकाशद्वैतमानबाधो न युक्त इत्यर्थः। ननु विभागस्याधुनिकत्वादनाद्यद्वैतश्रुत्या बाध इत्यत आह-**यथेति** ॥ अतीतानागतकालौ, भोक्त्रादिविभागाश्रयौ, कालत्वाद्, वर्तमानकालवदित्यनुमानाद्विभागोऽनाद्यनन्त इत्यर्थः। एवं प्राप्ते परिणामदृष्टान्तेनापाततः सिद्धान्तमाह-**स्याल्लोकवदिति** ॥ दृष्टान्तेऽपि कथमेकसमुद्राभिन्नानां परिणामानां मिथो भेदः, कथं वा तेषां भेदे सत्येकस्मादभिन्नत्वमित्याशंक्य न हि दृष्टेऽनुपपत्तिरिति न्यायेनाह-**न चेति** ॥ एवं भोक्तृभोग्ययोर्मिथो भेदो ब्रह्माभेदश्चेत्याह-

भामती।

जघन्यवृत्तितां नीयते, यथा मन्त्रार्थवादावित्यर्थः। अतिरोहितार्थं भाष्यम्। **यथा त्वद्यत्व इति**। यद्यतीतानागतयोः सर्गयोरेव विभागो न भवेत् ततस्तदेवाद्यतनस्य विभागस्य बाधकं स्यात्, स्वप्नदर्शनस्येव जाग्रद्दर्शनम्। न त्वेतदस्ति। अबाधिताद्यतनदर्शनेन तयोरपि तथात्वानुमानादित्यर्थः। इमां शङ्कामापाततोऽविचारितलोकसिद्धदृष्टान्तोपदर्शनमात्रेण निराकरोति सूत्रकारः-**स्याल्लोकवत्** ॥१३॥(५)॥

आनन्दगिरीय-न्यायनिर्णयः।

दृष्टान्तद्वारेणाभिनयति-**भोक्तेति**। प्रसिद्धो विभागस्तथैवाऽऽस्तां श्रुतिश्च स्वार्थं बोधयिष्यति का हानिरित्याशंक्याऽऽह-**तस्य चेति**। भोक्तृभोग्ययोरेकता नास्माभिरुक्तेत्याशंक्याऽऽह-**तयोश्चेति**। अस्तु तर्हि श्रुत्याऽद्वैतं बोधयन्त्याबोधोऽस्येति नेत्याह-**न चेति**। श्रुतेरुपचरितार्थत्वेन सावकाशत्वान्निरवकाशं प्रत्यक्षं बलवदिति भावः। अनुमानविरोधमधुना श्रुतेरुपन्यस्यति-**यथेति**। विमतौ भोक्तृभोग्यविभागव्यवहारवन्तौ कालत्वाद्वर्तमानकालवत्। यद्वा विमतो विभागोऽबाधितो विभागत्वादिदानीन्तनविभागवदित्यर्थः। उक्ताध्यक्षानुमानविरोधादसिद्धिः समन्वयस्येत्युपसंहरति-**तस्मादिति**। तामिमामाशङ्कामापाततो लोकसिद्धदृष्टान्तावष्टम्भेन प्रत्याचष्टे-**तं प्रतीति**। सूत्रावयवं व्याकरोति-**उपपद्यत इति**। लोके दृष्टत्वमेव स्फुटयति-**तथा हीति**। इतरेतरसंश्लेषादीत्यादिशब्देन विश्लेषपरिमाणविशेषादि गृह्यते। ननु फेनादीनां समुद्रादभेदे परस्परभावापत्तेर्नेतरेतरविभागादि संभवति। न खल्वेकस्मादभिन्नानां मिथोभिन्नत्वमेकस्यैवोपपद्यते तत्राऽऽह-**न चेति**। फेनादीनां मिथोभिन्नत्वेनैकस्मादभिन्नत्वमन्यथा समुद्रस्यापि तदभेदेन भेदप्र-

न च तेषामितरेतरभावानापत्तावपि समुद्रात्मनोऽन्यत्वं भवति । एवमिहापि ॥ न च भोक्तृभोग्ययोरितरेतरभावापत्तिः ॥ न च परस्माद्ब्रह्मणोऽन्यत्वं भविष्यति । यद्यपि भोक्ता न ब्रह्मणो विकारः "तत्सृष्ट्वा तदेवानुप्राविशद्" [तै० अ०२।६] इति स्रष्टुरेवाविकृतस्य कार्यानुप्रवेशेन भोक्तृत्वश्रवणात् । तथापि कार्यमनुप्रविष्टस्यास्ति कार्योपाधिनिमित्तो विभागः, आकाशस्येव घटाद्युपाधिनिमित्तः इत्यतः परमकारणाद्ब्रह्मणोऽनन्यत्वेऽप्युपपन्नो भोक्तृभोग्यलक्षणो विभागः समुद्रतरङ्गादिन्यायेनेत्युक्तम् ॥ १३ ॥ इति भोक्त्रापत्त्यधिकरणम् ॥ ५ ॥

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥ ( ६ ) ॥

अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं स्याल्लोकवदिति

रत्नप्रभा ।

**एवमिहेति** ॥ जीवस्य ब्रह्मविकारत्वाभावाद्दृष्टान्तवैषम्यमिति शङ्कते—**यद्यपीति** ॥ औपाधिकं जन्मास्तीति तरङ्गादिसाम्यमाह—**तथापीति** ॥ **विभागः** जन्म यद्वा तथापीतिशब्देनैवोक्तः परिहारः । ननु भोक्तुः प्रतिदेहं विभागः कथमित्यत आह—**कार्यमनुप्रविष्टस्येति** ॥ औपाधिकविभागे फलितमुपसंहरति—**इत्यत इति** ॥ एकत्रब्रह्माभिन्नत्वेऽपि भोक्त्रादेस्तरङ्गादिवद्भेदाङ्गीकारान्नद्वैतमानेनाद्वैतसमन्वयस्य विरोध इत्यर्थः ॥ १३ ॥ ( ५ ) ॥ पूर्वस्मिन्नेव पूर्वपक्षे विवर्तवादेन मुख्यं समाधानमाह—**तदनन्यत्वमिति** ॥ समानविषयत्वं सङ्गतिं वदन्नुभयोः परिहारयोः परिणामविवर्ताश्रयत्वेनार्थभेदमाह—**अभ्युपगम्येति** ॥ प्रत्यक्षादीनामौत्सर्गिकप्रामाण्यमंगीकृत्य स्थूलबुद्धिसमाधानार्थं परिणामदृष्टान्तेन भेदाभेदावुक्तौ सम्प्रत्यङ्गीकृतं प्रामाण्यं तत्त्वावेदकत्वात् प्रच्याव्य व्यावहारिकत्वे स्थाप्यते । तथा च मिथ्याद्वैतग्राहिप्रमाणैरद्वैतश्रुतेर्न बाधः । एकस्यां रज्ज्वां दण्डस्रगादिद्वैतदर्शनादित्ययं मुख्यः परिहार इति भावः । एवम-

भामती ।

परिहाररहस्यमाह—**तदनन्यत्वमारम्भणशब्दादिभ्यः** । पूर्वस्मादविरोधादस्य विशेषाभिधानोपक्रमस्य विभागमाह—**अभ्युपगम्य चेममिति** । स्यादेतत् । यदि कारणात् परमार्थभूतादनन्यत्वमाकाशादेः

आनन्दगिरीय—न्यायनिर्णयः ।

सङ्गादित्याशंक्याऽऽह—**न च तेषामिति** । दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—**एवमिति** । इहेति ब्रह्मवादोक्तिः । फेनादीनां समुद्रकार्यत्वात्तदभेदेऽपि जीवानां ब्रह्माकार्यतया तदभेदायोगादस्ति वैलक्षण्यमित्याशंक्याऽऽह—**यद्यपीति** । तर्हि जीवब्रह्मणोरत्यन्ताभेदाद्भोक्तृविभागाभावाद्भोग्यस्यापि प्रतिनियमासिद्धेर्विभागावगाहिप्रमाणविरोधतादवस्थ्यमित्याशंक्याऽऽह—**तथाऽपीति** । दार्ष्टान्तिकमुपसंहरति—**इत्यत इति** । समुद्रतरङ्गादिन्यायेन समुद्रादभेदेऽपि फेनतरङ्गादीनां मिथोभेददृष्टान्तेनेत्यर्थः । विभागोपपत्तौ तद्विषयाध्यक्षादेरविरुद्धतेति युक्तमेव जगतो ब्रह्मकारणत्वमुक्तमित्यधिकरणार्थं निगमयति—**उक्तमिति** ॥ १३ ॥ ( ५ ) ॥ परिणामवादमवलम्ब्याऽऽपाततो विरोधं समाधाय विवर्तवादमाश्रित्य परमसमाधानमाह—**तदनन्यत्वमिति** । अद्वितीयब्रह्मणो जगत्सर्गवादिनः समन्वयस्य पूर्ववद्भेदग्राहिप्रत्यक्षादिविरोधसंदेहे पूर्वाधिकरणेऽपि भेदग्राहिमानाविरोधोपपादनात्पुनरुक्तिमाशंक्य संगतिं वदन्नगतार्थत्वमाह—**अभ्युपगम्येति** । अङ्गीकृत्य हि भेदग्राहिप्रमाणस्य प्रामाण्यं भेदाभेदयो रूपभेदेन विरोधः समाहितः । संप्रति स्वीकृतं प्रामाण्यं तत्त्वावेदकत्वात्प्रच्याव्य व्यावहारिकत्वे व्यवस्थाप्यते । तथा च विषयभेदादपौनरुक्त्यम् । संगतिफले तु पूर्ववदिति भावः । यथोक्तविभागस्य वस्तुतोऽसत्त्वे हेतुत्वेन तदन-

**परिहारोऽभिहितः, न त्वयं विभागः परमार्थतोऽस्ति । यस्मात्तयोः कार्यकारणयोरनन्यत्वमवगम्यते । कार्यमाकाशादिकं बहुप्रपञ्चं जगत् ॥ कारणं-परं ब्रह्म ॥ तस्मात्कारणात्परमार्थतः ( अनन्यत्वं ) व्यतिरेकेणाभावः कार्यस्यावगम्यते ॥ कुतः ॥ "आरम्भणशब्दादिभ्यः" । आरम्भणशब्दस्तावदेकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्तापेक्षायामुच्यते-"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" [ छां० ६ । ४ । १] इति, एतदुक्तं भवति ॥ एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृन्मयं घटशरावोदञ्चनादिकं मृदात्मत्वाविशेषाद्विज्ञातं भवेत् । यतो वाचार-**

---

रत्नप्रभा ।

द्वैतसमन्वयस्याविरोधार्थं द्वैतस्य मिथ्यात्वं साधयति-**यस्मात्तयोरिति** ॥ स्वरूपैक्ये कार्यकारणत्वव्याघात इत्यत आह-**व्यतिरेकेणेति** ॥ कारणात् पृथक् सत्त्वशून्यत्वं कार्यस्य साध्यते । नैक्यमित्यर्थः । वागारभ्यं नाममात्रं विकारो, न कारणात् पृथग् अस्तीत्येवकारार्थ इति श्रुतिं योजयति-**एतदुक्तमिति** ॥

भामती ।

प्रपञ्चस्य कार्यस्य कुतस्तर्हि न वैशेषिकाद्युक्तदोषप्रपञ्चावतार इत्यत आह-**व्यतिरेकेणाभावः कार्यस्यावगम्यत इति** । न खल्वनन्यत्वमित्यभेदं ब्रूमः, किंतु भेदं व्यासेधामः, ततश्च नाभेदाश्रयदोषप्रसङ्गः । किंत्वभेदं व्यासेधद्भिर्वैशेषिकादिभिरस्मासु साहायकमेवाचरितं भवति । भेदनिषेधहेतुं व्याचष्टे-**आरम्भणशब्दस्तावदिति** । एवं हि ब्रह्मविज्ञानेन सर्वं जगत्तत्त्वतो ज्ञायेत यदि ब्रह्मैव तत्त्वं जगतो भवेत् । यथा रज्ज्वां ज्ञातायां भुजङ्गतत्त्वं ज्ञातं भवति । सा हि तस्य तत्त्वम् । तत्त्वज्ञानं च ज्ञानमतोऽन्यन्मिथ्याज्ञानमज्ञानमेव । अत्रैव वैदिको दृष्टान्तः—**यथा सोम्यैकेन मृत्पिण्डेनेति** । स्यादेतत् । मृदि ज्ञातायां कथं मृन्मयं घटादि ज्ञातं भवति । न हि तन्मृदात्मकमित्युपपादितमधस्तात् तस्मात्तत्त्वतो भिन्नम् । न चान्यस्मिन्विज्ञातेऽन्यद्विज्ञातं भवतीत्यत आह श्रुतिः-'वाचारम्भणं विकारो नामधेयम्' । वाचया केवलमारभ्यते विकारजातं, न तु तत्त्वतोस्ति, यतो नामधेयमात्रमेतत् । यथा पुरुषस्य चैतन्यमिति राहोः शिर इति विकल्पमात्रम् । यथाहुर्विकल्पविदः-'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति । तथा चावस्तुतयानृतं विकारजातं, मृत्तिकेत्येव सत्यम् । तस्माद्घटशरावोदञ्चनादीनां तत्त्वं मृदेव, तेन मृदि

आनन्दगिरीय-न्यायनिर्णयः ।

न्यत्वमिति सूत्रावयवं विभजते-**यस्मादिति** । कार्ये विप्रतिपत्तिनिरासार्थं विशिनष्टि- **कार्यमिति** । कारणेऽपि विप्रतिपत्तिं निराकर्तुं विशेषमादत्ते-**कारणमिति** । कार्यकारणयोरनन्यत्वमित्युक्ते मिथोऽनन्यत्वं शंकितं व्यावर्तयति-**तस्मादिति** । ननु कार्यप्रपञ्चस्य भेदाभेदाभ्यामनिर्वाच्यतामिच्छन्कारणात्परमार्थतोऽनन्यत्वं व्याचक्षाणः स्वोक्तिविरोधं कथं नाधिगच्छति तत्राऽऽह-**व्यतिरेकेणेति** । यस्मादेवमवगम्यते तस्मात्परमार्थतो विभागो नास्तीति तद्ग्राहिमानं व्यावहारिकमानत्वात्तात्त्विकमानस्य समन्वयस्याविरोधीत्यर्थः । कार्यस्य कारणातिरेकेणाभावे हेतुं पृच्छति-**कुत इति** । बुभुत्सितहेतुविषयं सूत्रभागमवतारयति-**आरम्भणेति** । तत्र भेदनिषेधहेतुमारम्भणशब्दं व्याकरोति-**आरम्भणशब्दस्तावदिति** । घटादिविषयत्वादेष शब्दो जगद्विषयो न भवति, तत्कथं जगतो मिथ्यात्वं तेन सिध्यतीत्याशंक्य जगतो मिथ्यात्वसाधनार्थमादिष्टदृष्टान्तनिविष्टं वाचारम्भणत्वं दार्ष्टान्तिकेऽपि साम्यार्थमास्थेयमित्यभिप्रेत्याऽऽह—**एतदुक्तमिति** । परमार्थतो विज्ञातमिति संबन्धः । कथमन्यस्मिन्विदितेऽन्यद्विज्ञातं स्यादित्याशंक्याऽऽह-**यत इति** । कारणमपि विकारवदनृतमेव शब्दमात्रत्वाविशेषादित्याशं-

म्भणं विकारो नामधेयं वाचैव केवलमस्तीत्यारभ्यते, विकारः घटः शराव उदञ्चनं चेति । न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति ॥ नामधेयमात्रं ह्येतदनृतम् । मृत्तिकेत्येव सत्यमिति । एष ब्रह्मणो दृष्टान्त आम्नातः ॥ तत्र श्रुताद्वाचारम्भणशब्दाद्दार्ष्टान्तिकेऽपि ब्रह्मव्यतिरेकेण कार्यजातस्याभाव इति गम्यते ॥ पुनश्च तेजोऽबन्नानां ब्रह्मकार्यतामुक्त्वा तेजोऽबन्नकार्याणां तेजोऽबन्नव्यतिरेकेणाभावं ब्रवीति—"अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्" [ छां० ६। ४। १ ] इत्यादिना । आरम्भणशब्दादिभ्य इत्यादिशब्दाद् "ऐतदात्म्यमिदꣳ सर्वं, तत्सत्यं, स आत्मा, तत्त्वमसि" [ छां० ६ । ८ । ७।१६ ] "इदꣳ सर्वं यदयमात्मा" [बृ० २ । ४ । ६] "ब्रह्मैवेदꣳ सर्वम्" [मुण्ड० २ । २ । ११ ] "आत्मैवेदꣳ सर्वम्" [ छां० ७ । २५ । २] "नेह नानास्ति किञ्चन" [ बृ० ४ । ४ । २५ ] इत्येवमाद्यप्यात्मैकत्वप्रतिपादनपरं वचनजातमुदाहर्तव्यम् । न चान्यथा एकविज्ञानेन सर्वविज्ञानं सम्पद्यते । तस्माद्यथा घटकरकाद्याकाशानां महाकाशनन्यत्वं, यथा च मृगतृष्णिको-

रत्नप्रभा ।

आरम्भणशब्दार्थान्तरमाह—**पुनश्चेति** ॥ **अपागादग्नित्वम्** अपगतं कारणमात्रत्वात्, **त्रीणि** तेजोऽबन्नानां **रूपाणि** रूपतन्मात्रात्मकानि **सत्यं** तेषामपि सन्मात्रत्वात्, सदेव शिष्यत इत्यभिप्रायः । जीवजगतोर्ब्रह्मान्यत्वे प्रतिज्ञाबाध इत्याह—**न चान्यथेति** ॥ तयोरनन्यत्वे क्रमेण दृष्टान्तावाह—**तस्माद्यथेति** ॥ प्रतिज्ञाबलादित्यर्थः । दृष्टं प्रातीतिकं नष्टम् अनित्यं यत्स्वरूपं तद्रूपेण

भामती ।

ज्ञातायां येषां सर्वेषामेव तत्त्वं ज्ञातं भवति । तदिदमुक्तम्—**न चान्यथैकविज्ञानेन सर्वविज्ञानं संपद्यत इति** । निदर्शनान्तरद्वयं दर्शयन्नुपसंहरति—**तस्माद्यथा घटकरकाद्याकाशानामिति** । ये हि दृष्टनष्टस्वरूपा न ते वस्तुसन्तो यथा मृगतृष्णिकोदकादयः, तथा च सर्वं विकारजातं, तस्मादवस्तु सत् । तथाहि यदस्ति तदस्त्येव, यथा चिदात्मा । न ह्यसौ कदाचित् क्वचित् कथंचिद्वास्ति । किंतु सर्वदा सर्वत्र सर्वथास्त्येव, न नास्ति । न चैवं विकारजातं, तस्य कदाचित् कथंचित् कुत्रचिदवस्थानात् । तथाहि—सत्स्वभावं चेद्विकारजातं, कथं कदाचिदसत् । असत्स्वभावं चेत् कथं कदाचित् सत् । सदसतोरेकत्वविरोधात् । न हि रूपं कदाचित् क्वचित् कथंचिद्वा गन्धो भवति । अथ तस्य सदसत्त्वे धर्मौ, ते च स्वकारणाधीनजन्मतया कदाचिदेव भवतः, तर्हि विकारजातं दण्डायमानं सदातनमिति न

आनन्दगिरीय—न्यायनिर्णयः ।

व्याऽऽह—**मृत्तिकेति** । एवशब्देनेतिशब्दः संबध्यते । तथाऽपि ब्रह्मणि किमायातं तत्राऽऽह—**एष इति** । दृष्टान्तस्य कारणातिरिक्तकार्याभावविषयत्वेऽपि दार्ष्टान्तिकस्य नैवमित्याशंक्य फलितमाह—**तत्रेति** । संनिहितो दृष्टान्तः सतम्यर्थः । प्रकारान्तरेणाऽऽरम्भणशब्दं व्याचष्टे—**पुनश्चेति** । दृष्टान्तवशाद्दार्ष्टान्तिके ब्रह्मातिरेकिकार्याभावप्रतिपत्त्यनन्तरं चेत्यर्थः । ब्रह्मकार्याणां मिथ्यात्वं तत्कार्याणां मिथ्यात्वोक्त्याऽपि दर्शितमिति भावः । आदिशब्दं व्याख्याति—**आरम्भणेति** । एवमादीत्यादिशब्दात्तदात्मानं स्वयमकुरुतेत्यादि गृहीतम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुपपत्तिरपि भेदाभावे मानतया सौत्रेणाऽऽदिशब्देन गृहीतेत्याह—**न चेति** । यदि जगतो ब्रह्मैव तत्त्वं तदा तज्ज्ञानेन तत्त्वतो ज्ञायेत यथा रज्जुतत्त्वज्ञानेन भुजंगादितत्त्वम् । तत्त्वज्ञानमेव च ज्ञानं ततोऽन्यस्य मिथ्याज्ञानत्वेनाज्ञानत्वादिति भावः । सिद्धान्तमुपसंहरति—**तस्मादिति** । जीवप्रपञ्चयोर्ब्रह्मणोऽनन्यत्वे क्रमेण दृष्टान्तद्वयम् । तेषामुप-

**दकादीनामूषरादिभ्योऽनन्यत्वम्। दृष्टनष्टस्वरूपत्वात्स्वरूपेण त्वनुपाख्यत्वाद्, एवमस्य भोग्यभोक्त्रादिप्रपञ्चजातस्य ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यम्॥ नन्वनेकात्मकं ब्रह्म। यथा-वृक्षोऽनेकशाखः, एवमनेकशक्तिप्रवृत्तियुक्तं ब्रह्म। अत एकत्वं नानात्वं चोभयमपि सत्यमेव। यथा-वृक्ष इत्येकत्वं, शाखा इति च नानात्वम्। यथा च समुद्रात्मनैकत्वं, फेनतरङ्गाद्यात्मना नानात्वम्। यथा च मृदात्मनैकत्वं, घटशरावाद्यात्मना नानात्वम्। तत्र एकत्वांशेन ज्ञानान्मोक्षव्यवहारः**

---

रत्नप्रभा।

**अनुपाख्यत्वात्** सत्तास्फूर्तिशून्यत्वादनन्यत्वमिति सम्बन्धः। शुद्धाद्वैतं स्वमतमुक्त्वा भेदाभेदमतमुत्थापयति-**नन्विति**॥ अनेकाभिः शक्तिभिः तदधीनप्रवृत्तिभिः। परिणामैर्युक्तमित्यर्थः। भेदाभेदमते सर्व-

भामती।

विकारः कस्यचित्। अथासत्त्वसमये तन्नास्ति, कस्य तर्हि धर्मोऽसत्त्वम्। न हि धर्मिण्यप्रत्युत्पन्ने तद्धर्मोऽसत्त्वं प्रत्युत्पन्नमुपपद्यते। अथास्य न धर्मः किंत्वर्थान्तरमसत्त्वम्। किमायातं भावस्य। न हि घटे जाते पटस्य किंचिद्भवति। असत्त्वं भावविरोधीति चेत्। न। अकिंचित्करस्य तत्त्वानुपपत्तेः। किंचित्करत्वे वा तत्राप्यसत्त्वेन तदनुयोगसंभवात्। अथास्यासत्त्वं नाम किंचिन्न जायते किंतु स एव न भवति। यथाहुः--'न तस्य किंचिद्भवति न भवत्येव केवलम्' इति। अथैष प्रसज्यप्रतिषेधो निरुच्यतां, किं तत्स्वभावो भाव उत भावस्वभावः स इति। तत्र पूर्वस्मिन् कल्पे भावानां तत्स्वभावतया तुच्छतया जगच्छून्यं प्रसज्येत। तथा च भावानुभवाभावः। उत्तरस्मिंस्तु सर्वभावनित्यतया नाभावव्यवहारः स्यात्। कल्पनामात्रनिमित्तत्वेऽपि निषेधस्य भावनित्यतापत्तिस्तदवस्थैव। तस्माद्भिन्नमस्ति कारणाद्विकारजातं न वस्तु सत्। अतो विकारजातमनिर्वचनीयमनृतम्। तदनेन प्रमाणेन सिद्धमनृतत्वं विकारजातस्य कारणस्य निर्वाच्यतया सत्त्वं 'मृत्तिकेत्येव सत्यम्' इत्यादिना प्रबन्धेन दृष्टान्ततयानुवदति श्रुतिः। 'यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यं स दृष्टान्तः' इति चाक्षपादसूत्रं प्रमाणसिद्धो दृष्टान्त इत्येतत्परं, न पुनर्लोकसिद्धत्वमत्र विवक्षितम्, अन्यथा तेषां परमाण्वादिर्न दृष्टान्तः स्यात्। न हि परमाण्वादिर्नैसर्गिकवैनयिकबुद्ध्यतिशयरहितानां लौकिकानां सिद्ध इति। संप्रत्यनेकान्तवादिनमुत्थापयति-**नन्वनेकात्मकमिति**। अनेकाभिः शक्तिभिर्याः प्रवृत्तयो नानाकार्यसृष्टयस्तद्युक्तं ब्रह्मैकं नाना चेति। किमतो यद्येवमित्यत आह-**तत्रैकत्वांशेनेति**। यदि पुनरेकत्वमेव वस्तुसद्भवेत् ततो नानात्वाभावाद्वैदिकः कर्मकाण्डा-

आनन्दगिरीय-न्यायनिर्णयः।

रादिभ्योऽनन्यत्वे हेतुमाह-**दृष्टेति**। कदाचिद्दृष्टं पुनर्नष्टमनित्यमिति यावत्। तत्स्वभावत्वान्मृगतृष्णिकोदकादीनामूषरादिभ्यो भेदेन नास्तित्वम्। विमतमधिष्ठानातिरिक्तसत्ताशून्यं सावधित्वाच्चिदात्मवदिति व्यतिरेकानुमानादित्यर्थः। दृष्टग्रहणसूचितं प्रतीतिकालेऽपि सत्ताराहित्यं तत्रैव हेत्वन्तरमाह-**स्वरूपेणेति**। एकत्वैकान्ताभ्युपगमे द्वैतग्राहिप्रत्यक्षादिविरोधान्नाद्वितीये ब्रह्मणि समन्वयसिद्धिरिति पूर्वपक्षयन्ननेकान्तवादमुत्थापयति-**नन्विति**। एकस्यानेकात्मकत्वं विप्रतिषिद्धमित्याशंक्याऽऽह-**यथेति**। अनेकाभिः शक्तिभिश्चिद्रूपाभिस्तदधीनप्रवृत्तिभिश्च युक्तमिति यावत्। एकस्यानेकात्मकत्वे संभाविते फलितमाह-**अत इति**। उभयसत्यत्वमपि वृक्षदृष्टान्ते दृष्टमित्याह-**यथेति**। प्रतिपत्तिदार्ढ्यार्थमुदाहरणान्तरमाह-**यथा चेति**। अंशांशिभावेन जीवब्रह्मणोर्भिन्नाभिन्नत्वे दृष्टान्तावुक्त्वा कार्यकारणात्मना जगद्ब्रह्मणोस्तथात्वे दृष्टान्तमाह-**यथा चेति**। दृष्टान्तसामर्थ्याद्धुक्तार्थसंभावनायामपि मानं विना निर्धारणासिद्धिरित्याशंक्य व्यवस्थानुपपत्तिं प्रमाणयति-**तत्रेति**। विशिष्टदृष्टान्तप्रदर्शनानुपपत्तिरपि प्रकृतेऽर्थे प्रमाण-

सेत्स्यति । नानात्वांशेन तु कर्मकाण्डाश्रयौ लौकिकवैदिकव्यवहारौ सेत्स्यत इति ॥ एवं च मृदादिदृष्टान्ता अनुरूपा भविष्यन्तीति ॥ नैवं स्यात् ॥ मृत्तिकेत्येव सत्यमिति प्रकृतिमात्रस्य दृष्टान्ते सत्यत्वावधारणात् । वाचारम्भशब्देन च विकारजातस्यानृतत्वाभिधानात् । दार्ष्टान्तिकेऽपि "ऐतदात्म्यमिदꣳ सर्वं, तत्सत्यम्" [ छां० ६ । ८ । ७ ] इति च परमकारणस्यैवैकस्य सत्यत्वावधारणात् । "स आत्मा तत्त्वमसि श्वेतकेतो" [ छां० ६ । ८ । ७-१६ ] इति च शारीरस्य ब्रह्मभावोपदेशात् । स्वयं प्रसिद्धं ह्येतच्छारीरस्य ब्रह्मात्मत्वमुपदिश्यते, न यत्नान्तरप्रसाध्यम् । अतश्चेदं शास्त्रीयं ब्रह्मात्मत्वमभ्युपगम्यमानं स्वा-

रत्नप्रभा ।

व्यवस्थासिद्धिः । अत्यन्ताभेदे द्वैतमानबाध इत्यभिमानः । दूषयति—नैवं स्यादिति ॥ एवकारवाचारम्भणशब्दाभ्यां विकारसत्तानिषेधात् परिणामवादः श्रुतिबाह्य इत्यर्थः । किञ्च संसारस्य सत्यत्वे तद्विशिष्टस्य जीवस्य ब्रह्मैक्योपदेशो न स्याद् । विरोधादित्याह—स आत्मेति ॥ एकत्वं ज्ञानकर्मसमुच्चयसाध्यमित्युपदेशार्थमित्याशंक्यासीति पदविरोधान्मैवमित्याह—स्वयमिति ॥ अतस्तत्त्वज्ञानबाध्यत्वात् संसारित्वं मिथ्येत्याह—अतश्चेति ॥ स्वतस्सिद्धोपदेशादित्यर्थः । यदुक्तं व्यवहारार्थं नानात्वं सत्यमिति । तत्

भामती ।

श्रयो लौकिकश्च व्यवहारः समस्त एवोच्छिद्येत । ब्रह्मगोचराश्च श्रवणमननादयः सर्वे दत्तजलाञ्जलयः प्रसज्येरन् । एवं चानेकात्मकत्वे ब्रह्मणो मृदादिदृष्टान्ता अनुरूपा भविष्यन्तीति। तमिममनेकान्तवादं दूषयति—नैवं स्यादिति । इदं तावदत्र वक्तव्यम्, मृदात्मनैकत्वं घटशरावाद्यात्मना नानात्वमिति वदतः कार्यकारणयोः परस्परं किमभेदोऽभिमतः, आहो भेदः, उत भेदाभेदाविति । तत्राभेद ऐकान्तिके मृदात्मनेति च घटशरावाद्यात्मनेति चोल्लेखद्वयं नियमश्च नोपपद्यते । भेदे चोल्लेखद्वयनियमावुपपन्नौ, आत्मनेति त्वसमञ्जसम् । न ह्यन्यस्यान्य आत्मा भवति । न चानेकान्तवादः । भेदाभेदकल्पे तूल्लेखद्वयं भवेदपि । नियमस्त्वयुक्तः । न हि धर्मिणोः कार्यकारणयोः संकरे तद्धर्मयोरेकत्वनानात्वे न संकीर्येते इति संभवति । ततश्च मृदात्मनैकत्वं यावद्भवति तावद्घटशरावाद्यात्मनापि स्यात् । एवं घटशरावाद्यात्मना नानात्वं यावद्भवति तावन्मृदात्मना नानात्वं भवेत् । सोऽयं नियमः कार्यकारणयोरैकान्तिकं भेदमुपकल्पयति, अनिर्वचनीयतां वा कार्यस्य । पराक्रान्तं चास्माभिः प्रथमाध्याये तत् । आस्तां तावत् । तदेतद्युक्तिनिराकृतमनुवदन्तीं श्रुतिमुदाहरति—मृत्तिकेत्येव सत्यमिति । स्यादेतत् । न ब्रह्मणो जीवभावः काल्पनिकः, किंतु भाविकः । अंशो हि सः, तस्य कर्मसहितेन ज्ञानेन ब्रह्मभाव आधीयत इत्यत आह—स्वयं प्रसिद्धं हीति । स्वाभाविकस्यानादेरिति । यदुक्तं नानात्वांशेन तु कर्मकाण्डाश्रयो लौकिकश्च व्यवहारः

आनन्दगिरीय—न्यायनिर्णयः ।

मित्याह—एवं चेति । जीवजगतोर्ब्रह्मणो भिन्नाभिन्नत्वे प्रत्यक्षाद्यविरोधेऽपि केवलाभेदे तद्विरोधः स्यादेवेति प्राप्तभेदाभेदवादं दूषयति—नैवमिति । यदुक्तमेकत्वं नानात्वं चोभयमपि सत्यमिति तत्राऽऽह—मृत्तिकेति । न केवलमेवकारसामर्थ्याद्विकारानृतत्वं किंतु वाचारम्भणश्रुतेश्चेत्याह—वाचारम्भणेति । तथाऽपि कथमाकाशादिविकारवैतथ्यं दार्ष्टान्तिके पूर्वोक्तावधारणादेरभावादित्याशंक्य तत्रापि दृष्टान्तनिविष्टार्थानुशक्तेर्मैवमित्याह—दार्ष्टान्तिकेऽपीति । किंच, कार्यप्रपञ्चस्यापि ब्रह्मवत्सत्यत्वे तद्विशिष्टजीवस्य तद्भावोपदेशासिद्धिरित्याह—स आत्मेति । जीवस्य ब्रह्मैक्यं ध्यानादिसाध्यमभिसंधायोपदेशो भविष्यतीत्याशंक्याह—स्वयमिति । जीवब्रह्मणोः संसारित्वासंसारित्वेन विरुद्धत्वादैक्यायोगात्त्वं भविष्यतीति वाक्यविपरिणामः स्यादित्याशंक्याऽऽह—अतश्चेति । उपदेशवशादित्येतत् । स्वाभाविकस्यानाद्यविद्याकृतस्येति

भाविकस्य शारीरात्मत्वस्य बाधकं सम्पद्यते, रज्ज्वादिबुद्धय इव सर्पादिबुद्धीनाम् ॥ बाधिते च शारीरात्मत्वे तदाश्रयः समस्तः स्वाभाविको व्यवहारो बाधितो भवति । यत्प्रसिद्धये नानात्वांशोऽपरो ब्रह्मणः कल्प्येत ॥ दर्शयति च–"यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येद्" [बृ० २ । ४ । १३ ] इत्यादिना ब्रह्मात्मत्वदर्शिनं प्रति समस्तस्य क्रियाकारकफललक्षणस्य व्यवहारस्याभावम् ॥ न चायं व्यवहाराभावोऽवस्थाविशेषनिबद्धोऽभिधीयत इति युक्तं वक्तुम् ॥ "तत्त्वमसि" [ छां० ६ । ८ । ७–१६ ] इति ब्रह्मात्मभावस्यानवस्थाविशेषनिबन्धनत्वात् ॥ तस्करदृष्टान्तेन चानृताभिसन्धस्य बन्धनं सत्याभिसन्धस्य मोक्षं दर्शयन्नेकत्वमेवैकं पारमार्थिकं दर्शयति । मिथ्याज्ञानविजृम्भितं च नाना-

---

रत्नप्रभा ।

किं ज्ञानादूर्ध्वं व्यवहारार्थं प्राग्वा ? नाद्य इत्याह–बाधिते चेति ॥ स्वभावोऽत्राविद्या, तया कृतः स्वाभाविकः । ज्ञानादूर्ध्वं प्रमातृत्वादिव्यवहारस्याभावान्नानात्वं न कल्प्यमित्यर्थः न द्वितीयः–ज्ञानात् प्राक् कल्पितनानात्वेन व्यवहारोपपत्तौ नानात्वस्य सत्यत्वासिद्धेः । यत्तु प्रमातृत्वादिव्यवहारः सत्य एव मोक्षावस्थायां निवर्तत इति तन्नेत्याह–न चायमिति ॥ संसारसत्यत्वे तदवस्थायां जीवस्य ब्रह्मत्वं न स्यात् । भेदाभेदयोरेकदैकत्र विरोधात् । अतोऽसंसारिब्रह्माभेदस्य सदातनत्वावगमात् संसारोऽपि मिथ्यैवेत्यर्थः । किञ्च यथा लोके कश्चित् तस्करबुद्ध्या भटैर्गृहीतोऽनृतवादी चेत्तप्तपरशुं गृह्णाति । स दह्यते बध्यते च, तथा नानात्ववादी बध्यते । सत्यवादी चेन्न दह्यते मुच्यते च, तथैतदात्म्यमिदं सर्वमित्येकत्वदर्शी मुच्यत इति श्रुतदृष्टान्तेनैकत्वं सत्यं, नानात्वं मिथ्येत्याह—तस्करेति ॥

भामती ।

सेत्स्यतीति, तत्राह–बाधिते चेति । यावद्वाधं हि सर्वोऽयं व्यवहारः स्वप्नदशायामिव तदुपदर्शितपदार्थजातव्यवहारः । स च यथा जाग्रदवस्थायां बाधकान्निवर्तते एवं तत्त्वमस्यादिवाक्यपरिभावनाभ्यासपरिपाकभुवा शारीरस्य ब्रह्मात्मभावसाक्षात्कारेण बाधकेन निवर्तते । स्यादेतत् । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येत्' इत्यादिना मिथ्याज्ञानाधीनो व्यवहारः क्रियाकारकादिलक्षणः सम्यग्ज्ञानेनापनीयत इति न ब्रूते किंत्ववस्थाभेदाश्रयो व्यवहारोऽवस्थान्तरप्राप्त्या निवर्तते, यथा बालकस्य कामचारवादभक्षतोपनयनप्राप्तौ निवर्तते । न च तावतासौ मिथ्याज्ञाननिबन्धनो भवत्येवमत्रापीत्यत आह—न चायं व्यवहाराभाव इति । कुतः, तत्त्वमसीति ब्रह्मात्मभावस्येति । न खल्वेतद्वाक्यमवस्थाविशेषविनियतं ब्रह्मात्मभावमाह जीवस्य, अपि तु न भुजङ्गो रज्जुरियमितिवत् सदातनं तमभिवदति । अपि च सत्यानृताभिधानेनाप्येतदेव युक्तमित्याह–तस्करदृष्टान्तेन चेति ।

आनन्दगिरीय–न्यायनिर्णयः ।

यावत् । विरुद्धत्वस्य काल्पनिकत्वेनोपपत्तौ वाक्यस्वारस्यं भंक्त्वा विपरिणामकल्पना न युक्तेति भावः । यदुक्तं नानात्वांशेन सर्वव्यवहारोपपत्तिरिति तत्र किमैक्यज्ञानोत्तरकालीनव्यवहारसिद्धये भेदांशस्य सत्यत्वं कल्प्यते किंवा प्राक्तनव्यवहारसिद्ध्यर्थमिति विकल्प्याऽऽद्यं दूषयति–बाधिते चेति । प्रमातृत्वादिबाधात्तदाश्रयव्यवहारो नास्तीति व्यवहाराभावेऽर्थापत्तिमुक्त्वा श्रुतिमुपन्यस्यति–दर्शयतीति । द्वितीये प्राक्तनव्यवहारस्य भ्रान्तत्वमभ्रान्तत्वं वा । प्रथमे तथाविधव्यवहारस्य काल्पनिकभेदेनोपपत्तिरिति मत्वा चरमं निरस्यति–न चेति । तत्र श्रुतितात्पर्यविरोधं हेतुमाह–तत्त्वमिति । 'पुरुषं सोम्योत हस्तगृहीतमानयन्ति' इत्यादिना सत्यानृताभिसंधपुरुषनिदर्शनप्रदर्शनसामर्थ्यादपि सिद्धमैक्यस्यैव सत्यत्वमित्याह–तस्करेति ।

त्वम् । उभयसत्यतायां हि कथं व्यवहारगोचरोऽपि जन्तुरनृताभिसन्ध इत्युच्यते । "मृत्योस्स मृत्युमाप्नोति, य इह नानेव पश्यति" [बृ० ४ । ४ । १९ ] इति च भेददृष्टिमपवदन्नेतदेव दर्शयति ॥ न चास्मिन्दर्शने ज्ञानान्मोक्ष इत्युपपद्यते । सम्यग्ज्ञानापनोद्यस्य कस्यचिन्मिथ्याज्ञानस्य संसारकारणत्वेनानभ्युपगमात् । उभयस्य सत्यतायां हि कथमेकत्वज्ञानेन नानात्वज्ञानमपनुद्यत इत्युच्यते ॥ नन्वेकत्वैकान्ताभ्युपगमेन नानात्वाभावात्प्रत्यक्षादीनि लौकिकानि प्रमाणानि व्याहन्येरन् । निर्विषयत्वात्स्थाण्वादिष्विव पुरुषादिज्ञानानि ॥ तथा विधिप्रतिषेधशास्त्रमपि भेदापेक्षत्वात्तदभावे व्याहन्येत ॥ मोक्षशास्त्रस्यापि शिष्यशा-

---

रत्नप्रभा ।

व्यवहारगोचरो नानात्वव्यवहाराश्रयः । नानात्वनिन्दयाप्येकत्वमेव सत्यमित्याह—मृत्योरिति ॥ किञ्चास्मिन् भेदाभेदमते जीवस्य ब्रह्माभेदज्ञानाद्भेदज्ञाननिवृत्तेर्मुक्तिरिष्टा । सा न युक्ता । भेदज्ञानस्य भ्रमत्वानभ्युपगमात् । प्रमायाः प्रमान्तराबाध्यत्वादित्याह—न चास्मिन्निति ॥ वैपरीत्यस्यापि सम्भवादिति भावः । इदानीं प्रत्यक्षादिप्रामाण्यान्यथानुपपत्त्या नानात्वस्य सत्यत्वमिति पूर्वपक्षबीजमुद्घाटयति—नन्वित्यादिना ॥ एकत्वस्य एकान्तः कैवल्यं व्याहन्येरन् न प्रमाणानि स्युः । उपजीव्यप्रत्यक्षादिप्रामाण्याय वेदान्तानां भेदाभेदपरत्वमुचितमिति भावः । ननु कर्मकारकाणां यजमानादीनां विद्याकारकाणां शिष्यादीनां च कल्पित-

भामती ।

न चास्मिन्दर्शन इति । न हि जातु काष्ठस्य दण्डकमण्डलुकुण्डलशालिनः कुण्डलित्वज्ञानं दण्डवत्तां कमण्डलुमत्तां बाधते । तत् कस्य हेतोः । तेषां कुण्डलादीनां तस्मिन् भाविकत्वात् । तद्वदिहापि भाविकगोचरैकात्म्यज्ञानेन न नानात्वं भाविकमपवदनीयम् । न हि ज्ञानेन वस्त्वपनीयते, अपि तु मिथ्याज्ञानेनारोपितमित्यर्थः । चोदयति—नन्वेकत्वैकान्ताभ्युपगम इति । अबाधितानधिगतासंदिग्धविज्ञानसाधनं प्रमाणमिति प्रमाणसामान्यलक्षणोपपत्त्या प्रत्यक्षादीनि प्रमाणतामश्नुवते । एकत्वैकान्ताभ्युपगमे तु तेषां सर्वेषां भेदविषयाणां बाधितत्वादप्रामाण्यं प्रसज्येत । तथा विधिप्रतिषेधशास्त्रमपि भावनाभाव्यभावककरणेतिकर्तव्यताभेदापेक्षत्वाद्व्याहन्येत । तथा च नास्तिक्यम् । एकदेशाक्षेपेण च सर्ववेदाक्षेपाद्वेदान्तानामप्यप्रामाण्यमित्यभेदैकान्ताभ्युपगमहानिः । न केवलं विधिनिषेधाक्षेपेणास्य मोक्षशास्त्रस्याक्षेपः स्वरूपेणास्यापि भेदापेक्षत्वादित्याह—मोक्षशास्त्रस्यापीति । अपि चास्मिन् दर्शने वर्णपदवाक्यप्रकरणादीनामलीकत्वात्तत्प्रभवमद्वैतज्ञानमसमी-

आनन्दगिरीय—न्यायनिर्णयः ।

कथमेतावता सत्यत्वमेकस्यैव नियम्यते तत्राऽऽह—उभयेति । विपरीतमपि किं न स्यादित्यपेरर्थः । इतश्चैकत्वमेवैकं पारमार्थिकं न नानात्वमपीत्याह—मृत्योरिति । एकत्वधियो मुक्तिहेतुत्वोक्तिरपि भेदाभेदवादेऽनुपपन्नेत्याह—न चेति । भेदांशधियोऽभेदांशधिया बाध्यत्वादपनोदनीयाभावासिद्धिरित्याशंक्य वैपरीत्यस्यापि संभवान्मैवमित्याह—उभयेति । इदानीं पूर्ववादी स्वाभिप्रायं प्रकटयति—नन्विति । प्रत्यक्षादेरागमेन स्वसिद्ध्यर्थमपेक्ष्यमाणत्वाद्दृष्टव्यभिचारत्वादव्याकुलत्वादन्यत्रानवकाशत्वात्पूर्वभावित्वेन प्रतिष्ठितत्वात्पदपदार्थविभागव्यवहारहेतुत्वाच्च प्राबल्यात्तद्विरोधे सत्याम्नायतो नाऽऽत्यन्तिकमैक्यमादेयमिति भावः । निरालम्बनत्वेनाप्रामाण्ये दृष्टान्तः—स्थाण्वादिष्विवेति। न केवलमेकत्वैकान्ताभ्युपगमे प्रत्यक्षादिविरोधः किंतु कर्मकाण्डविरोधश्चेत्याह—तथेति । भेदापेक्षत्वाद्भावनाभाव्यकरणेतिकर्तव्यतादिसापेक्षत्वादिति यावत् । ननु प्रत्यक्षादीनां कर्मकाण्डस्य चाप्रामाण्यमद्वैतवादिनां नानिष्टं, ते हि ज्ञानकाण्डमेवैकं प्रमाणमाश्रयन्ते तत्राऽऽह—मोक्षशास्त्रस्येति।ननु मिथ्याभूतशिष्यादिभेदपराधीनस्य मोक्षशास्त्रस्य मिथ्यात्वेऽपि तत्प्रमेयस्य प्रत्यगैक्यस्य

**सित्रादिभेदापेक्षत्वात्तदभावे व्याघातः स्यात् ॥ कथं चानृतेन मोक्षशास्त्रेण प्रतिपादितस्यात्मैकत्वस्य सत्यत्वमुपपद्येत इति ॥ अत्रोच्यते, नैष दोषः ॥ सर्वव्यवहाराणामेव प्राग्ब्रह्मात्मताविज्ञानात्सत्यत्वोपपत्तेः, स्वप्नव्यवहारस्येव प्राग्बोधात् । यावद्धि न सत्यात्मैकत्वप्रतिपत्तिः, तावत्प्रमाणप्रमेयफललक्षणेषु विकारेष्वनृतबुद्धिर्न कस्यचिदुत्पद्यते । विकारानेव त्वहंममेत्यविद्यया आत्मात्मीयभावेन सर्वो जन्तुः प्रतिपद्यते स्वाभाविकीं ब्रह्मात्मतां हित्वा ॥ तस्मात्प्राग्ब्रह्मात्मताप्रतिबोधादुपपन्नः सर्वो लौकिको वैदिकश्च व्यवहारः ॥ यथा-सुप्तस्य प्राकृतस्य जनस्य स्वप्न उच्चावचान् भावान् पश्यतो निश्चितमेव प्रत्यक्षाभिमतं विज्ञानं भवति प्राक्प्रबोधात् ॥ न च प्रत्यक्षाभासाभिप्रायस्तत्काले**

रत्नप्रभा ।

भेदमाश्रित्य कर्मज्ञानकाण्डयोः प्रवृत्तेः स्वप्रमेयस्य धर्मादेरबाधात् प्रामाण्यमव्याहतमित्याशंक्याह— **कथं चानृतेनेति** ॥ धूलिकल्पितधूमेनानुमितस्य वह्नेरिव प्रमेयबाधापत्तेरिति भावः । तत्र द्वैतविषये प्रत्यक्षादीनां यावद्बाधं व्यावहारिकं प्रामाण्यमुपपद्यत इत्याह—**अत्रोच्यत इत्यादिना** ॥ **सत्यत्वं** बाधाभावः **बाधः** मिथ्यात्वनिश्चयः । वस्तुतो मिथ्यात्वेऽपि विकारेषु तन्निश्चयाभावेन प्रत्यक्षादिव्यवहारोपपत्तावुक्तदृष्टान्तं विवृणोति—**यथा सुप्तस्य प्राकृतस्येति** ॥ एवं द्वैतप्रमाणानां व्यवहारकाले बाधशून्यार्थबोधकत्वं व्यावहारिकं प्रामाण्यमुपपाद्याद्वैतप्रमाणानां वेदान्तानां सर्वकालेषु बाधशून्यब्रह्मबोधकत्वं तात्त्विकं

भामती ।

चीनं भवेत्, न खल्वलीकाद्धूमकेतनज्ञानं समीचीनमित्याह—**कथं चानृतेन मोक्षशास्त्रेणेति** । परिहरति—**अत्रोच्यत इति** । यद्यपि प्रत्यक्षादीनां तात्त्विकमबाधितत्वं नास्ति, युक्त्यागमाभ्यां बाधनात्, तथापि व्यवहारे बाधनाभावात्सांव्यवहारिकमबाधनम् । न हि प्रत्यक्षादिभिरर्थं परिच्छिद्य प्रवर्तमानो व्यवहारे विसंवाद्यते सांसारिकः कश्चित् । तस्मादबाधनान्न प्रमाणलक्षणमतिपतन्ति प्रत्यक्षादय इति । **सत्यत्वोपपत्तेरिति** । सत्यत्वाभिमानोपपत्तेरिति । ग्रहणकवाक्यमेतत् । विभजते—**यावद्धि न सत्यात्मैकत्वप्रतिपत्तिरिति** । विकारानेव तु शरीरादीनहमित्यात्ममभावेन पुत्रपश्वादीन्ममेत्यात्मीयभावेनेति योजना । **वैदिकश्चेति** । कर्मकाण्डमोक्षशास्त्रव्यवहारसमर्थना । 'स्वप्नव्यवहारस्येव' इति विभजते—**यथा सुप्तस्य**

आनन्दगिरीय—न्यायनिर्णयः ।

सत्यत्वादस्मत्पक्षसिद्धिरिति तत्राऽऽह—**कथं चेति** । प्रत्यक्षादिना काण्डद्वयेन च विरोधान्न समन्वयाधिगम्यैक्यं संभावितमिति चोदिते परिहरति—**अत्रेति** । यत्तावदेकत्वैकान्ताभ्युपगमे लौकिकवैदिकव्यवहारव्याहतिरिति तत्राऽऽह—**नैष दोष इति** । तत्त्वज्ञानादूर्ध्वं प्राचि वा काले व्यवहारानुपपत्तिरिति विकल्प्याऽऽद्यमङ्गीकृत्य द्वितीयं प्रत्याह—**सर्वव्यवहाराणामिति** । प्रत्यक्षादीनां द्वैतावगाहिनां तात्त्विकप्रमात्वाभावेऽपि व्यवहारे बाधाभावाद्व्यवहारसमर्थवस्त्वज्ञतारूपप्रामाण्यसिद्धेः सम्यग्ज्ञानात्पूर्वं सर्वव्यवहारसिद्धिरित्यर्थः । तत्त्वज्ञानात्पूर्वं सत्यत्वाभिमानद्वारा व्यवहारोपपत्तौ दृष्टान्तमाह—**स्वप्नेति** । आत्मनो ब्रह्मात्मतायाः स्वाभाविकत्वाद्विकारेष्वनृतत्वमनीषासमुन्मेषे कथं सर्वव्यवहारसिद्धिरित्याशंक्याऽऽह—**यावद्धीति** । तथाऽपि स्वभावसिद्धब्रह्मात्मतानुरोधेन विकारेष्वौदासीन्यसंभवात्कुतो व्यवहारोपपत्तिरित्याशंक्याऽऽह—**विकारानिति** । मिथ्याभिमानवतो वस्तुस्वाभाव्यमपहाय प्राक्तत्त्वज्ञानाद्व्यवहारोपपत्तिं निगमयति—**तस्मादिति** । यदुक्तं स्वप्नव्यवहारस्येव प्राग्बोधादिति तद्विवृणोति—**यथेति** । 'या निशा सर्वभूतानाम्' इत्यादिस्मृतेर्ज्ञानी व्यवहारावस्थायां सुप्तो भवति ततो व्यावर्तयति—**प्राकृतस्येति** । प्रत्यक्षाभिमतमित्युक्तत्वादाभासत्वाभिमाने प्राप्ते प्रत्याह—**न चेति** । उक्तदृष्टान्तवशात्तत्त्वज्ञानात्प्राच्यामवस्थायां प्रमाणादिषु सत्यत्वाभिमानद्वारा सर्वव्य-

**भवति, तद्वत् ॥ कथं त्वसत्येन वेदान्तवाक्येन सत्यस्य ब्रह्मात्मत्वस्य प्रतिपत्तिरुपपद्येत ॥ न हि रज्जुसर्पेण दष्टो म्रियते ॥ नापि मृगतृष्णिकाम्भसा पानावगाहनादिप्रयोजनं क्रियत इति । नैष दोषः ॥ शंकाविषादिनिमित्तमरणादिकार्योपलब्धेः । स्वप्नदर्शनावस्थस्य च सर्पदंशनोद-**

रत्नप्रभा ।

प्रामाण्यमुपपादयितुमुक्तशंकामनुवदति—**कथं त्वसत्येनेति** ॥ किमसत्यात्सत्यं न जायते, किमुत सत्यस्य ज्ञानम् । नाद्य इष्ट एव । न हि वयं वाक्योत्थज्ञानं सत्यमित्यंगीकुर्मः । अंगीकृत्यापि दृष्टान्तमाह—**नैष दोष इति** ॥ सर्पेण दष्टस्यापि दष्टत्वभ्रान्तिकल्पितविषात् सत्यमरणमूर्च्छादिदर्शनादसत्यात् सत्यं न जायत इत्यनियम इत्यर्थः । दृष्टान्तान्तरमाह—**स्वप्नेति** ॥ असत्यात् सर्पोदकादेः सत्यस्य दंशन-

भामती ।

**प्राकृतस्येति** । 'कथं चानृतेन मोक्षशास्त्रेण' इति यदुक्तं तदनुभाष्य दूषयति—**कथं त्वसत्येनेति** । शक्यमत्र वक्तुं श्रवणाद्युपाय आत्मसाक्षात्कारपर्यन्तो वेदान्तसमुत्थोऽपि ज्ञाननिचयोऽसत्यः सोऽपि हि वृत्तिरूपः कार्यतया निरोधधर्मा, यस्तु ब्रह्मस्वभावसाक्षात्कारोऽसौ न कार्यस्तत्स्वभावत्वात्, तस्मादचोद्यमेतत् कथमसत्यात्सत्योत्पाद इति । यत्खलु सत्यं न तदुत्पद्यत इति कुतस्तस्यासत्यादुत्पादः । यच्चोत्पद्यते तत्सर्वमसत्यमेव । सांव्यवहारिकं तु सत्यत्वं वृत्तिरूपस्य ब्रह्मसाक्षात्कारस्यैव श्रवणादीनामप्यभिन्नम् । तस्मादभ्युपेत्य वृत्तिस्वरूपस्य ब्रह्मसाक्षात्कारस्य परमार्थसत्यतां व्यभिचारोद्भावनमिति मन्तव्यम् । यद्यपि सांव्यवहारिकस्य सत्यादेव भयात्सत्यं मरणमुत्पद्यते तथापि भयहेतुरहिस्तज्ज्ञानं वाऽसत्यं ततो भयं सत्यं जायत इत्यसत्यात्सत्यस्योत्पत्तिरुक्ता । यद्यपि चाहिज्ञानमपि स्वरूपेण सत्तथापि न तज्ज्ञानत्वेन भयहेतुरपि त्वनिर्वाच्याहिरूषितत्वेन । अन्यथा रज्जुज्ञानादपि भयप्रसङ्गाज्ज्ञानत्वेनाविशेषात् । तस्मादनिर्वाच्याहिरूषितं ज्ञानमप्यनिर्वाच्यमिति सिद्धमसत्यादपि सत्यस्योपजन इति । न च ब्रूमः सर्वस्मादसत्यात्सत्यस्योपजनः, यतः समारोपितधूमभावाया धूममहिष्या वह्निज्ञानं सत्यं स्यात् । न हि चक्षुषो रूपज्ञानं सत्यमुपजायत इति रसादिज्ञानेनापि ततः सत्येन भवितव्यम् । यतो नियमो हि स तादृशः सत्यानां यतः कुतश्चित् किंचिदेव जायत इति। एवमसत्यानामपि नियमो यतः कुतश्चिदसत्यात्सत्यं कुतश्चिदसत्यं,यथा दीर्घत्वादेर्वर्णेषु समारोपितत्वाविशेषेऽप्यजीनमित्यतो ज्यानिविरहमवगच्छन्ति सत्यम् । अजिनमित्यतस्तु समारोपितदीर्घभावाज्ज्यानिविरहमवगच्छन्तो भवन्ति भ्रान्ताः । न चोभयत्र दीर्घसमारोपं प्रति कश्चिदस्ति भेदः । तस्मादुपपन्नमसत्यादपि सत्यस्योदय इति । निदर्शनान्तरमाह—**स्वप्नदर्शनावस्थस्येति** । यथा सांसारिको जाग्रद्भुजङ्गं दृष्ट्वा पलायते ततश्च न दंशवेदनामाप्नोति, पिपासुः सलिलमालोक्य पातुं प्रवर्तते तत-

आनन्दगिरीय—न्यायनिर्णयः ।

वहारसिद्धिरिति दार्ष्टान्तिकमाह—**तद्वदिति** । कथं चानृतेन मोक्षशास्त्रेणेत्युक्तमनुभाषते—**कथमिति** । असत्यान्न सत्यप्रतिपत्तिरित्यत्र दृष्टान्तमाह—**न हीति** । असत्यादपि मरणातिरिक्तं सत्यमेव कार्यं भविष्यतीत्याशंक्याऽऽह—**नापीति** । इतिशब्दो दार्ष्टान्तिकप्रदर्शनार्थः । सत्यस्यासत्यादुत्पत्तिर्वा प्रतिपत्तिर्वा प्रतिषिध्यते । नाऽऽद्यः । सत्यस्योत्पत्तेरनिष्टत्वादुत्पद्यमानस्य सर्वस्यैव वाचारम्भणत्वादित्यभिप्रेत्याह—**नैष दोष इति** । सत्यस्यापि केचिदुत्पत्तिमुपगच्छन्ति तत्पक्षेऽपि न दोष इत्याह—**शंकेति** । शङ्कायाः स्वरूपेण सत्यत्वेऽपि विषयविशेषितत्वेनासत्यतेति भावः । द्वितीयेऽपि सत्या वाऽसत्या वा प्रतिपत्तिरसत्यान्नेति विकल्प्याऽऽद्यं निरस्यति—**स्वप्नेति** । स्वप्नदर्शनवत्तत्कार्यस्यापि सर्पदंशनादेरसत्यत्वात्तद्विशेपि-

**कस्नानादिकार्यदर्शनात ॥ तत्कार्यमप्यनृतमेवेति चेद् ब्रूयाद् ॥ अत्र ब्रूमः ॥ यद्यपि स्वप्नदर्शनावस्थस्य सर्पदंशनोदकस्नानादिकार्यमनृतम् ॥ तथापि तदवगतिः सत्यमेव फलम् । प्रतिबुद्धस्याप्यबाध्यमानत्वात् ॥ न हि स्वप्नादुत्थितः स्वप्नदृष्टं सर्पदंशनोदकस्नानादिकार्यं मिथ्येति मन्यमानस्तदवगतिमपि मिथ्येति मन्यते कश्चित् ॥ एतेन स्वप्नदृशोऽवगत्यबाधनेन देहमात्रात्मवादो दूषितो वेदितव्यः ॥**

---

रत्नप्रभा ।

स्नानादिज्ञानस्य कार्यस्य दर्शनाद्व्यभिचार इत्यर्थः । यथाश्रुतमादाय शङ्कते–**तत्कार्यमपीति** ॥ उक्तमर्थं प्रकटयति–**अत्र ब्रूम इत्यादिना** ॥ अवगतिर्वृत्तिः घटादिवत् सत्यापि प्रातिभासिकस्वप्नदृष्टवस्तुनः फलं चैतन्यं वा वृत्त्यभिव्यक्तमवगतिशब्दार्थः । प्रसङ्गाद्देहात्मवादोऽपि निरस्त इत्याह–**एतेनेति** ॥ स्वप्नस्यावगतेः स्वप्नदेहधर्मत्वे उत्थितस्य "मया तादृशः स्वप्नोऽवगतः" इत्यबाधितावगतिप्रतिसन्धानं न स्यात् । अतो देहभेदेऽपि अनुसन्धानदर्शनाद्देहादन्योऽनुसन्धातेत्यर्थः । असत्यात्

भामती ।

स्तदासाद्य पायंपायमाप्यायितः सुखमनुभवति, एवं स्वप्नान्तिकेऽपि तदवस्थं सर्वमित्यसत्यात्कार्यसिद्धिः । शङ्कते–**तत्कार्यमप्यनृतमेवेति** । एवमपि नासत्यात्सत्यस्य सिद्धिरुक्तेत्यर्थः । परिहरति–**तत्र ब्रूमः** । **यद्यपि स्वप्नदर्शनावस्थस्येति** । लौकिको हि सुप्तोत्थितोऽवगम्यं बाधितं मन्यते न तदवगतिं, तेन यद्यपि परीक्षका अनिर्वाच्यरूपितामवगतिमनिर्वाच्यां निश्चिन्वन्ति तथापि लौकिकाभिप्रायेणैतदुक्तम् । अत्रान्तरे लौकायतिकानां मतमपाकरोति–**एतेन स्वप्नदृशोऽवगत्यबाधनेनेति** । यदा खल्वयं चैत्रस्तारक्षवीं व्यात्तविकटदंष्ट्राकरालवदनामुत्तब्धवभ्रमन्मस्तकावचुम्बिलांगूलामतिरोषारुणस्तब्धविशालवृत्तलोचनां रोमाञ्चसंचयोत्फुल्लभीषणां स्फटिकाचलभित्तिप्रतिबिम्बितामभ्यमित्रीणां तनुमास्थाय स्वप्ने प्रतिबुद्धो मानुषीमात्मानस्तनुं पश्यति तदोभयदेहानुगतमात्मानं प्रतिसंदधानो देहातिरिक्तमात्मानं निश्चिनोति, न तु देहमात्रम्, तन्मात्रत्वे देहवत्प्रतिसंधानाभावप्रसङ्गात् । कथं चैतदुपपद्येत यदि स्वप्नदृशोऽवगतिरबाधिता स्यात् । तद्बाधे तु प्रतिसंधानाभाव इति । असत्याच्च सत्यप्रतीतिः श्रुतिसिद्धान्वयव्यतिरेकसिद्धा

आनन्दगिरीय–न्यायनिर्णयः ।

तद्दर्शनमपि तथेति नासत्यात्सत्यप्रतिपत्त्युत्पत्ताविदमुदाहरणमिति शङ्कते–**तत्कार्यमपीति** । विषयस्यासत्यत्वेऽपि विषयिणो ज्ञानस्य सत्यत्वान्नैवमिति परिहरति–**तत्रेति** । नन्ववगतिशब्देन स्वरूपचैतन्यं वृत्तिज्ञानं वोच्यते । प्रथमे तस्याजन्यत्वादसत्यान्न सत्यप्रतिपत्त्युत्पत्तौ दृष्टान्तत्वम् । द्वितीये तस्य विषयातिरिक्ताकाराभावात् "अर्थेनैव विशेषो हि निराकारतया धियाम्" इत्यङ्गीकारात्तदनिर्वाच्यतायामनिर्वाच्यत्वेनासत्यत्वान्नासत्यात्सत्यप्रतिपत्त्युत्पत्तिस्तत्राऽऽह–**न हीति** । परपक्षे सत्यस्यापि ज्ञानस्य जन्यत्वाभ्युपगमादस्मत्पक्षे चाभिव्यक्तिस्वीकाराद् वृत्तिरूपस्यापि ज्ञानस्य लौकिकाभिप्रायेण सत्यत्वादसत्यात्सत्यप्रतिपत्त्युत्पत्तौ दृष्टान्तत्वमविरुद्धमिति भावः । नन्ववगतिर्न स्वरूपचैतन्यं नापि वृत्तिज्ञानं किंतु शरीराकारपरिणतभूतचतुष्टयनिविष्टं रूपादितुल्यं ज्ञानमिति लोकायतिकमतमाशंक्याऽऽह–**एतेनेति** । एतच्छब्दार्थमेव विशदयति–**स्वप्नदृश इति** । स्वप्नजाग्रद्देहयोर्व्यभिचारेऽपि प्रत्यभिज्ञानात्तदनुगतात्मैक्यसिद्धेश्चैतन्यस्य च देहधर्मत्वे रूपादिवत्तदनुपलब्धावनुपलब्धिप्रसङ्गादवगतेश्चाबाधात्तद्रूपस्याऽऽत्मनो देहद्वयातिरेकसिद्धेर्देहमात्रात्मवादो न युक्त इत्यर्थः । सत्या प्रतिपत्तिरसत्याद्भवतीत्युपपाद्य सत्यस्य प्रतिपत्तिर्नासत्यादिति पक्षं श्रुत्या निरा-

तथा च श्रुतिः—"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने । तस्मिन्स्वप्ननिदर्शने" [ छां०५।२।९ ] इत्यसत्येन स्वप्नदर्शनेन सत्यस्य फलस्य समृद्धेः प्राप्तिं दर्शयति ॥ तथा प्रत्यक्षदर्शनेषु केषुचिदरिष्टेषु जातेषु न चिरमिव जीविष्यतीति विद्यादित्युक्त्वा—"अथ यः स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति" [ ऐ० ३।२।४ ] इत्यादिना तेनासत्येनैव स्वप्नदर्शनेन सत्यं मरणं सूच्यत इति दर्शयति । प्रसिद्धं चेदं लोकेऽन्वयव्यतिरेककुशलानामीदृशेन स्वप्नदर्शनेन साध्वागमः सूच्यते, ईदृशेनासाध्वागम इति ॥ तथाऽकारादिसत्याक्षरप्रतिपत्तिर्दृष्टा रेखानृताक्षरप्रतिपत्तेः ॥ अपि चान्त्यमिदं प्रमाणमात्मै-

रत्नप्रभा ।

सत्यस्य ज्ञानं न जायत इति द्वितीयनियमस्य श्रुत्या व्यभिचारमाह—**तथा च श्रुतिरिति** ॥ न च स्त्रियो मिथ्यात्वेऽपि तद्दर्शनात् सत्यादेव सत्यायाः समृद्धेर्ज्ञानमिति वाच्यम् । विषयविशिष्टत्वेन दर्शनस्यापि मिथ्यात्वात्, प्रकृतेऽपि सत्ये ब्रह्मणि मिथ्यावेदानुगतचैतन्यज्ञानसम्भवाच्चेति भावः । असत्यात् सत्यस्येष्टस्य ज्ञानमुक्त्वानिष्टस्य ज्ञानमाह—**तथेति** ॥ असत्यात् सत्यस्य ज्ञाने दृष्टान्तान्तरमाह—**तथाऽकारादिति** ॥ रेखास्वकारत्वादिभ्रान्त्या सत्या अकारादयो ज्ञायन्त इति प्रसिद्धमित्यर्थः । एवमसत्यात् सत्यस्य जन्मोक्त्वा यदर्थक्रियाकारि, तत्सत्यमिति, नियमो भग्नः, अनृतात् सत्यस्य ज्ञानोक्त्या यदनृतकरणगम्यं, तद्बाध्यं, कूटलिङ्गानुमितवह्निवदिति व्याप्तिर्भग्ना । तथा च कल्पितानामपि वेदान्तानां सत्यब्रह्मबोधकत्वं सम्भवतीति तात्त्विकं प्रामाण्यमिति भावः । **यदुक्तमेकत्वनानात्वव्यवहारसिद्धये उभयं सत्यमिति** । **तन्न** । भेदस्य लोकसिद्धस्यापूर्वफलवदभेदविरोधेन सत्यत्वकल्पनायोगात् । **किञ्च** यद्युभयोरेकदा व्यवहारः स्यात्, **तदा** स्यादपि सत्यत्वम् । **नैवमस्ति** । एकत्वज्ञानेन चरमेणानपेक्षेण नानात्वस्य निश्शेषं बाधात् । शुक्तिज्ञानेनेव रजतस्येत्याह—**अपि चान्त्यमिति** ॥ ननूपजीव्यद्वैत-

भामती ।

चेत्याह—**तथा च श्रुतिरिति** । **तथाकारादीति** । यद्यपि रेखास्वरूपं सत्यं तथापि तद्यथासंकेतमसत्यम् । न हि संकेतयितारः संकेतयन्तीदृशेन रेखाभेदेनायं वर्णः प्रत्येतव्योपि त्वीदृशो रेखाभेदोऽकार ईदृशश्च ककार इति । तथा चासमीचीनात्संकेतात्समीचीनवर्णावगतिरिति सिद्धम् । यच्चोक्तमेकत्वांशेन ज्ञानमोक्षव्यवहारः सेत्स्यति, नानात्वांशेन तु कर्मकाण्डाश्रयो लौकिकश्च व्यवहारः सेत्स्यतीति, तत्राह—**अपि चान्त्यमिदं प्रमाणमिति** । यदि खल्वेकत्वानेकत्वनिबन्धनौ व्यवहारावेकस्य पुंसोऽपर्यायेण संभवतस्ततस्तदर्थमुभयसद्भावः कल्प्येत, न त्वेतदस्ति । न ह्येकत्वावगतिनिबन्धः कश्चिदस्ति व्यवहारः, तदवगतेः सर्वोत्तरत्वात् । तथाहि—'तत्त्वमसि' इत्यैकात्म्यावगतिः समस्तप्रमाणतत्फलतद्व्यवहारानपबाधमानैवोदीयते, नैतस्याः परस्तात्किंचिदनुकूलं प्रतिकूलं चास्ति, यदपेक्षेत, येन चेयं प्रतिक्षिप्येत, तत्रानुकूलप्रतिकूल-

आनन्दगिरीय—न्यायनिर्णयः ।

चष्टे—**तथा चेति** । असत्यात्सत्यप्रतिपत्त्युत्पत्तौ छान्दोग्यश्रुतिवदैतरेयकश्रुतिरपि भवतीत्याह—**तथेति** । सत्यस्य प्रतिपत्तिरसत्याद्भवति, तत्रान्वयव्यतिरेकावपि प्रमाणमित्याह—**प्रसिद्धं चेति** । असत्यात्सत्यस्य प्रतिपत्तौ दृष्टान्तान्तरमाह—**तथेति** । रेखास्वरूपस्य सत्यत्वेऽप्यकारादिरूपतया तथात्वाभावादसत्यात्सत्यप्रतिपत्तिरित्यभिसंधायानृतेति विशेषणम् । आगमादसत्यादेव सत्यस्य ब्रह्मात्मनः सुज्ञानत्वेऽपि पूर्वोक्तनीत्या बलवतोऽध्यक्षादेरागमबाध्यत्वं कथमित्याशंक्याऽऽह—**अपि चेति** । उक्तशङ्कानिवृत्त्यर्थमपि चेत्युक्तम् । निरपेक्षत्वे सत्युत्तरभाविप्रमाणत्वात्प्रत्यक्षादिबाधकत्वमागमस्येत्याह—**अन्त्यमिति** । आगमप्रामाण्यस्य फलपर्यन्तत्वात्तस्य क्रियासाध्यत्वात्तस्या भेदप्रमितिपूर्वकत्वात्कथमात्मैक्यज्ञानस्यान्त्यतेत्याशंक्याऽऽह—

कत्वस्य प्रतिपादकं, नातः परं किंचिदाकाङ्क्ष्यमस्ति ॥ यथा हि लोके यजेतेत्युक्ते किं केन कथमित्याकांक्ष्यते, नैवं "तत्त्वमसि" [ छान्दो० ६ । ८।७-१६] "अहं ब्रह्मास्मि" [बृ० २ । ४ । ९] इत्युक्ते किञ्चिदन्यदाकांक्ष्यमस्ति ॥ सर्वात्मैकत्वविषयत्वादवगतेः । सति ह्यन्यस्मिन्नवशिष्यमाणेऽर्थे आकांक्षा स्यात् । न त्वात्मैकत्वव्यतिरेकेणावशिष्यमाणोऽन्योऽर्थोऽस्ति । य आकांक्ष्येत ॥ न चेयमवगतिर्नोत्पद्यत इति शक्यं वक्तुम् । "तद्धास्य विजज्ञौ" [ केन० ३ । २ ] इत्यादिश्रुतिभ्यः । अवगतिसाधनानां च श्रवणादीनां वेदानुवचनादीनां च विधानात्॥न चेयमवगतिरनर्थिका भ्रान्तिर्वेति शक्यं वक्तुम् । अविद्यानिवृत्तिफलदर्शनात्, बाधक-

---

रत्नप्रभा ।

प्रमाणविरोधादेकत्वावगतिर्नोत्पद्यत इत्यत आह—न चेयमिति ॥ तत् किलात्मतत्त्वमस्य पितुर्वाक्यात् श्वेतकेतुर्विज्ञातवानिति ज्ञानोत्पत्तेः श्रुतत्वात्, सामग्रीसत्त्वाच्चेत्यर्थः । व्यावहारिकगुरुशिष्यादिभेदमुपजीव्य जायमानवाक्यार्थावगतेः प्रत्यक्षादिगतं व्यावहारिकं प्रामाण्यमुपजीव्यम् । तच्च पारमार्थिकैकत्वावगत्या न विरुध्यते । किन्तु तया विरोधादनुपजीव्यं प्रत्यक्षादेस्तात्त्विकं प्रामाण्यं बाध्यत इति भावः । किञ्चैकत्वावगतेः फलवत्प्रमात्वान्निष्फलो द्वैतभ्रमो बाध्य इत्याह—न चेयमिति ॥ ननु सर्वस्य द्वैतस्य मिथ्यात्वे स्वप्नो मिथ्या, जाग्रत्सत्यमित्यादिलौकिको व्यवहारः, सत्यं चानृतं च सत्यमभवदिति वैदिकश्च कथमित्याशंक्य यथा स्वप्ने इदं सत्यमिदमनृतमिति तात्कालिकबाधाबाधाभ्यां व्यवहारः, तथा

भामती ।

निवारणान्नातः परं किंचिदाकांक्ष्यमिति । न चेयमवगतिर्डुलिक्षीरप्रायेत्याह—न चेयमिति । स्यादेतत् । अन्त्या चेदियमवगतिर्निष्प्रयोजना ( तर्हि ) तथा च न प्रेक्षावद्भिरुपादीयेत, प्रयोजनवत्त्वे वा नान्त्या स्यादित्यत आह—न चेयमवगतिरनर्थिका कुतः अविद्यानिवृत्तिफलदर्शनात् । न हीयमुत्पन्ना सती पश्चादविद्यां निवर्तयति येन नान्त्या स्यात्, किंत्वविद्याविरोधिस्वभावतया तन्निवृत्त्यात्मैवोदयते । अविद्यानिवृत्तिश्च न तत्कार्यतया फलमपि त्विष्टतया, इष्टलक्षणत्वात्फलस्येति । प्रतिकूलं पराचीनं निराकर्तुमाह—भ्रान्तिर्वेति । कुतः, बाधकेति । स्यादेतत् । मा भूदेकत्वनिबन्धनो व्यवहारोऽनेकत्वनिबन्धनस्त्वस्ति, तदेव हि सकलामुद्वहति लोकयात्राम्, अतस्तत्सिद्ध्यर्थमनेकत्वस्य कल्पनीयं तात्त्विकत्वमित्यत आह—

आनन्दगिरीय-न्यायनिर्णयः ।

नात इति । तदेव व्यतिरेकदृष्टान्तेन स्पष्टयति—यथेति । तत्त्वमसीत्युक्ते सर्वाकांक्षोपशान्तिरित्यत्र हेतुमाह—सर्वात्मेति । या वाक्यादवगतिरुत्पद्यते सा सर्वस्य पूर्णस्य ब्रह्मणः प्रत्यगात्मनश्चैकरस्यमधिकृत्य भवति । तथा च प्रत्यगात्मातिरिक्तस्याऽऽकांक्षणीयस्यानवशिष्टत्वाद्युक्ता सर्वाकांक्षोपशान्तिरित्यर्थः । श्रुताद्वाक्यादवगतौ सत्यामवशिष्यमाणार्थाभावेनाऽऽकांक्षाभावं विवृणोति—सति हीति । प्रत्यक्षादिविरोधादवगतिरेवाद्वैतमवगाहमाना नोत्पद्यते कुतः सर्वाकांक्षानिवृत्तिरित्याशंक्याऽऽह—न चेति । अस्य पितुर्वचनात्तदात्मतत्त्वं श्वेतकेतुर्विज्ञातवान्किलेति यावत् । आदिशब्दात् "आनन्दो ब्रह्मेति व्यजानात्" इत्याद्या श्रुतिर्गृह्यते । किंचावगतिमुद्दिश्यान्तरङ्गबहिरङ्गसाधनविधानादपि तदुत्पत्तिरेष्टव्येत्याह—अवगतीति । नन्ववगतिरुत्पन्नाऽपि नार्थवती सिद्धेऽर्थे स्वरूपेण फलाभावान्मानान्तरविरोधाद्वा भ्रान्तिरेवेत्याशंक्याऽऽह—न चेयमिति । आनर्थक्याभावे हेतुमाह—अविद्येति । भ्रान्तित्वाभावे हेतुमाह—बाधकेति । न हि प्रत्यक्षादि बाधकं, तस्य कल्पितद्वैतविषयत्वेन तात्त्विकाद्वैतप्रमित्यविरोधित्वादित्यर्थः । ननु सर्वस्य कल्पितत्वे सत्यासत्यव्यवहारो लौकिको वैदिकश्च न स्यादित्याशंक्य स्वप्नदृष्टान्तेनोक्तं स्मार-

ज्ञानान्तराभावाच्च ॥ प्राक्चात्मैकत्वावगतेरव्याहतस्सर्वस्सत्यानृतव्यवहारो लौकिको वैदिकश्चेत्यवोचाम ॥ तस्मादन्त्येन प्रमाणेन प्रतिपादिते आत्मैकत्वे समस्तस्य प्राचीनस्य भेदव्यवहारस्य बाधितत्वान्नानेकात्मकब्रह्मकल्पनावकाशोऽस्ति ॥ ननु मृदादिदृष्टान्तप्रणयनात्परिणामवद्ब्रह्म शास्त्रस्याभिमतमिति गम्यते ॥ परिणामिनो हि मृदादयोऽर्था लोके समधिगता इति ॥ नेत्युच्यते ॥ "स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म" [ बृ० ४ । ४ । २५ ] "स एष नेति नेत्यात्मा" [ बृ० ४ । ४ । २२ ] "अस्थूलमनणु" [ बृ० ३ । ३ । ८ ] इत्याद्याभ्यस्सर्वविक्रियाप्रतिषेधश्रुतिभ्यो ब्रह्मणः कूटस्थत्वावगमात् । न ह्येकस्य ब्रह्मणः परिणामधर्मत्वं तद्रहितत्वं च शक्यं प्रतिपत्तुम् । स्थितिगतिवत्स्यादिति चेत् ॥ न ॥ कूटस्थस्येति विशेषणात् । न हि कूट-

रत्नप्रभा ।

दीर्घस्वप्नेऽपीत्युक्तस्वप्नदृष्टान्तं स्मारयति—**प्राक्चेति** ॥ व्यवहारार्थं नानात्वं सत्यमिति कल्पनमसङ्गतमित्युपसंहरति—**तस्मादिति** ॥ नेदं कल्पितं, किन्तु श्रुतमिति शङ्कते—**नन्विति** ॥ कार्यकारणयोरनन्यत्वांशे अयं दृष्टान्तः, न परिणामित्वे । ब्रह्मणः कूटस्थत्वश्रुतिविरोधादिति परिहरति—**नेत्युच्यत इति** ॥ सृष्टौ परिणामित्वम्, प्रलये तद्राहित्यं च क्रमेणाविरुद्धमिति दृष्टान्तेनाशंकते—**स्थितीति** ॥ कूटस्थस्य कदाचिदपि विक्रिया न युक्ता । कूटस्थत्वव्याघातादित्याह—**नेति** ॥ कूटस्थत्वासिद्धिमाशंक्याह-**कूटस्थस्येति** ॥ **कूटस्थस्य** निरवयवस्य पूर्वरूपत्यागेनावस्थान्तरात्मकपरिणामा-

भामती ।

**प्राक्चेति** । व्यवहारो हि बुद्धिपूर्वकारिणां बुद्ध्योपपद्यते, न त्वस्यास्तात्त्विकत्वेन, भ्रान्त्यापि तदुपपत्तेरित्यावेदितम् । सत्यं च तदविसंवादात्, अनृतं च विचारासहतयानिर्वाच्यत्वात् । अन्त्यस्यैकात्म्यज्ञानस्यानपेक्षतया बाधकत्वम्, अनेकत्वज्ञानस्य च प्रतियोगिग्रहापेक्षया दुर्बलत्वेन बाध्यत्वं वदन् प्रकृतमुपसंहरति—**तस्मादन्त्येन प्रमाणेनेति** । स्यादेतत् । न वयमनेकत्वव्यवहारसिद्ध्यर्थमनेकत्वस्य तात्त्विकत्वं कल्पयामः, किंतु श्रौतमेवास्य तात्त्विकत्वमिति चोदयति—**ननु मृदादीति** । परिहरति—**नेत्युच्यत इति** । मृदादिदृष्टान्तेन हि कथंचित्परिणाम उन्नेयः, न च शक्य उन्नेतुम्, 'मृत्तिकेत्येव सत्यम्' इति कारणमात्रसत्यत्वावधारणेन कार्यस्यानृतत्वप्रतिपादनात् । साक्षात्कूटस्थनित्यत्वप्रतिपादिकास्तु सन्ति सहस्रशः श्रुतय इति न परिणामधर्मता ब्रह्मणः । अथ कूटस्थस्यापि परिणामः कस्मान्न भवतीत्यत आह—**न ह्येकस्येति** । शङ्कते—**स्थितिगतिवदिति** । यथैकत्राणाश्रये गतिनिवृत्ती एवमेकस्मिन्ब्रह्मणि परिणामश्च तदभावश्च कौटस्थ्यं भविष्यत इति । निराकरोति—**न कूटस्थस्येति विशेषणादिति** । कूटस्थ-

आनन्दगिरीय—न्यायनिर्णयः ।

यति—**प्राक्चेति** । आगमादर्थवती सर्वाकांक्षाशान्तिहेतुर्ब्रह्मात्मप्रतिपत्तिर्भवतीति स्थिते फलितमाह—**तस्मादिति** ॥ कल्पनाममृष्यमाणः श्रौतमेव ब्रह्मणोऽनेकात्मकत्वमिति शङ्कते—**नन्विति** । कथं यथोक्तदृष्टान्तावष्टम्भात्परिणामि ब्रह्म श्रौतमित्याशंक्य दृष्टान्तदार्ष्टान्तिकयोः साम्यध्रौव्यादित्याह—**परिणामिनो हीति** । दृष्टान्तगतं विवक्षितमंशं हित्वा मानान्तरविरुद्धोंशो दार्ष्टान्तिके नाभ्युपेतव्योऽतिप्रसङ्गात् । अस्ति च परिणामित्वे ब्रह्मणो मानान्तरविरोधस्तस्य कौटस्थ्यश्रुतेरिति परिहरति—**नेत्युच्यत इति** । श्रुतिद्वयानुरोधात्कूटस्थत्वपरिणामित्वे स्यातामित्याशंक्य युगपत्क्रमेण वेति विकल्प्याऽऽद्यं विरोधेन निरस्यति—**न हीति** । द्वितीयं शङ्कते—**स्थितीति** । कूटस्थस्य ब्रह्मणो न परिणामितेति विशेषणान्न तस्य कदाचिदपि परिणामयोग्यता स्वरूपप्रच्युतिप्रसङ्गादित्याह—**नेति** । तदेव स्फुटयति—**न हीति** । परिणामिनां

**स्थस्य ब्रह्मणः स्थितिगतिवदनेकधर्माश्रयत्वं सम्भवति । कूटस्थं नित्यं च ब्रह्म । सर्वविक्रियाप्रतिषेधादित्यवोचाम ॥ न च यथा ब्रह्मण आत्मैकत्वदर्शनं मोक्षसाधनम्, एवं जगदाकारपरिणामित्वदर्शनमपि स्वतन्त्रमेव कस्मैचित्फलायाभिप्रेयेत ॥ प्रमाणाभावात् । कूटस्थब्रह्मात्मत्वविज्ञानादेव हि फलं दर्शयति शास्त्रं, "स एष नेतिनेत्यात्मा" [ बृ० ४ । २ । ४ ] इत्युपक्रम्य "अभयं वै जनक प्राप्तोऽसि" [ बृ० ४ । २ । ४] इत्येवञ्जातीयकम् ॥ तत्रैतत्सिद्धं भवति–ब्रह्मप्रकरणे सर्वधर्मविशेषरहितब्रह्मदर्शनादेव फलसिद्धौ सत्यां यत्तत्राफलं श्रूयते ब्रह्मणो जगदाकारपरिणामित्वादि, तद्ब्रह्मदर्शनोपायत्वेनैव विनियुज्यते, फलवत्सन्निधावफलं तदङ्गमितिवत्, न तु स्वतन्त्रफलाय कल्प्यते इति । न हि परिणामवत्त्वविज्ञानात्प-**

रत्नप्रभा ।

योगाच्छुक्तिरजतवद्विवर्त एव प्रपञ्च इति भावः । किञ्च निष्फलस्य जगतः फलवन्निष्प्रपञ्चब्रह्मधीशेषत्वेनानुवादान्न सत्यतेत्याह–**न च यथेत्यादिना** ॥ "तं यथायथोपासते तदेव भवति" इति श्रुतेः ब्रह्मणः परिणामित्वविज्ञानात् तत्प्राप्तिर्विदुषः फलमित्याशंक्याह–**न हि परिणामवत्त्वेति** ॥ "ब्रह्मविदाप्नोति परम्" [ तै० २ । १।१] इति श्रुतकूटस्थनित्यमोक्षफलसम्भवे दुःखानित्यपरिणामित्वफलकल्प-

भामती ।

नित्यता हि सदातनी स्वभावादप्रच्युतिः । सा कथं प्रच्युत्या न विरुध्यते । न च धर्मिणो व्यतिरिच्यते धर्मो येन तदुपजनापायेऽपि धर्मी कूटस्थः स्यात् । भेद ऐकान्तिके गवाश्ववद्धर्मधर्मिभावाभावात् । बाणादयस्तु परिणामिनः स्थित्या गत्या च परिणमन्त इति । अपि च स्वाध्यायाध्ययनविध्यापादितार्थवत्त्वस्य वेदराशेरेकेनापि वर्णेनानर्थकेन न भवितव्यं किं पुनरियता जगतो ब्रह्मयोनित्वप्रतिपादकेन वाक्यसंदर्भेण । तत्र फलवद्ब्रह्मदर्शनसमाम्नानसंनिधावफलं जगद्योनित्वं समाम्नायमानं तदर्थं सत्तदुपायतयावतिष्ठते नार्थान्तरार्थमित्याह–**न च यथा ब्रह्मण इति** । अतो न परिणामपरत्वमस्येत्यर्थः । तदनन्यत्वमि-

आनन्दगिरीय–न्यायनिर्णयः ।

हि बाणपाषाणादीनां क्रमेण स्थितिगती युक्ते न तु परिणामायोग्यस्य क्रमेण परिणामतद्राहित्ये ब्रह्मणः स्यातामित्यर्थः । ब्रह्मणि विरुद्धधर्मासंभवे कूटस्थत्वं हित्वा परिणामित्वमेवेष्यतामित्याशंक्याऽऽह–**कूटस्थं चेति** । अनवयवानवच्छिन्नकूटस्थब्रह्मणः स्वरूपादप्रच्युतस्वभावस्य सर्वप्रकारतद्विपरीतकार्याकारपरिणामश्रुत्यनुपपत्त्या कार्यप्रपञ्चस्य स्वरूपादप्रच्युतशुक्त्यादे रजतादिपरिणामवन्मिथ्याविवर्तत्वं सिध्यतीत्युक्तम् । संप्रति परिणामश्रुतेः स्वार्थे फलाभावादपि परिणामो न विवक्षित इत्याह–**न चेति** । यद्ब्रह्मज्ञानस्य फलं तदेव परिणामिब्रह्मज्ञानस्यापि शास्त्रमेव चात्र प्रमाणमित्याशंक्याऽऽह–**कूटस्थेति** । तर्हि परिणामिश्रुतीनामानर्थक्यादध्ययनविधिविरोधः स्यादित्याशंक्य फलवच्छेषतया साफल्यान्मैवमित्याह–**तत्रेति** । सृष्ट्यादिश्रुतीनां स्वार्थे फलवैकल्ये सतीति यावत् । तत्र मीमांसकसंमतमुदाहरणमाह–**फलवदिति** । यथा हि स्वर्गादिफलवतो दर्शपूर्णमासादेः संनिधाने श्रुतं प्रयाजादि स्वतो विफलं तदङ्गमित्यङ्गीक्रियते तथा सृष्ट्यादिदर्शनमपि ब्रह्मज्ञानशेषतया तत्फलेनैव फलवत्त्वात्तदङ्गमित्यर्थः । ननु प्रयाजादेः श्रूयमाणफलेनैव फलवत्त्वसंभवे फलवदङ्गत्वं किमित्यङ्गीकर्तव्यमित्याशंक्य प्रधानफलेनैव फलवत्त्वसिद्धौ फलान्तरकल्पने गौरवादङ्गेषु च फलश्रुतेरर्थवादत्वाङ्गीकारादित्याह–**न त्विति** । इतिशब्दः सिद्धं भवतीत्यनेन संबध्यते । 'तं यथायथोपासते तदेव भवति' इति श्रुत्या परिणामिब्रह्मज्ञानात्तत्प्राप्तिरेव फलमित्याशंक्याऽऽह–**न हीति** । 'तस्य तावदेव' इत्यादिना प्रतिपन्नं कैवल्यं विहाय सामान्यशास्त्रसिद्धफलाकर्षणे वाक्यभेदः

रिणामवत्त्वमात्मनः फलं स्यादिति वक्तुं युक्तम् ॥ कूटस्थनित्यत्वान्मोक्षस्य कूटस्थब्रह्मात्मवादिन एकत्वैकान्त्यादीशित्रीशितव्याभावे ईश्वरकारणप्रतिज्ञाविरोध इति चेत् ॥ न ॥ अविद्यात्मकनामरूपबीजव्याकरणापेक्षत्वात्सर्वज्ञत्वस्य । "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" [ तै० उ० २ । १ । २ ] इत्यादिवाक्येभ्यो नित्यशुद्धबुद्धमुक्तस्वरूपात्सर्वज्ञात्सर्वशक्तेरीश्वराज्जगदुत्पत्तिस्थितिप्रलयाः । नाचेतनात्प्रधानादन्यस्माद्वेत्येषोऽर्थः प्रतिज्ञातो "जन्माद्यस्य यतः" [ व्या० सू० १ । १ । २ ] इति ॥ सा प्रतिज्ञा तदवस्थैव । न तद्विरुद्धोऽर्थः पुनरिहोच्यते । कथं नोच्यते अत्यन्तमात्मन एकत्वमद्वितीयत्वं च ब्रुवता ॥ शृणु—यथा नोच्यते ॥ सर्वज्ञस्येश्वरस्य आत्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारप्रपञ्चबीजभूते, सर्वज्ञस्येश्वरस्य मायाशक्तिः प्रकृतिरिति च श्रुतिस्मृत्योरभिलप्येते ॥ ताभ्यामन्यः सर्वज्ञ ईश्वरः ।

---

रत्नप्रभा ।

नायोगादिति भावः । ननु पूर्वं "जन्माद्यस्य यतः" [ व्या० सू० १ । १। २] इति ईश्वरकारणप्रतिज्ञा कृता । अधुना "तदनन्यत्वमारम्भणशब्दादिभ्यः" [ व्या० सू० २ । १ । १४ ] इत्यत्यन्ताभेदप्रतिपादने ईशित्रीशितव्यभेदाभावात् तद्विरोधः स्यादिति शङ्कते—**कूटस्थेति** ॥ कल्पितद्वैतमपेक्ष्येश्वरत्वादिकं परमार्थतोऽनन्यत्वमित्यविरोधमाह—**नेत्यादिना** ॥ **अविद्यात्मके** चिदात्मनि लीने **नामरूपे** एव **बीजं**, तस्य **व्याकरणं** स्थूलात्मना सृष्टिः, तदपेक्षत्वादीश्वरत्वादेर्न विरोध इत्यर्थः । संगृहीतार्थं विवृणोति—**तस्मादित्यादिना** ॥ **तत्त्वान्यत्वाभ्यामिति** । नामरूपयोरीश्वरत्वं वक्तुमशक्यं जडत्वात्, नापीश्वरादन्यत्वं कल्पितस्य पृथक् सत्तास्फूर्त्योरभावादित्यर्थः । संस्कारात्मकनामरूपयोरविद्यैक्यविवक्षया ब्रूते—**मायेति** ॥ नामरूपे चेदीश्वरस्यात्मभूते, तर्हीश्वरो जड इत्यत आह—**ताभ्यामन्य इति** ॥ अन्यत्वे

भामती ।

त्यस्य सूत्रस्य प्रतिज्ञाविरोधं श्रुतिविरोधं च चोदयति—**कूटस्थब्रह्मात्मवादिन इति** । परिहरति—**न** । **अविद्यात्मक इति** । नाम च रूपं च ते एव बीजं तस्य व्याकरणं कार्यप्रपञ्चस्तदपेक्षत्वादैश्वर्यस्य ।

आनन्दगिरीय—न्यायनिर्णयः ।

स्यादिति भावः । कूटस्थाद्वयत्वे ब्रह्मणः श्रुतिप्रतिज्ञयोर्विरोधः स्यादिति शङ्कते—**कूटस्थेति** । विरोधद्वयं परिहरति—**नेत्यादिना** । अविद्यात्मके नामरूपे एव बीजं तस्य व्याकरणं कार्यप्रपञ्चस्तदपेक्षत्वादैश्वर्यस्य । प्रतिज्ञासूत्रस्य तदनुसारिश्रुतिवचनस्य च पारमार्थिककूटस्थाद्वयत्वे न विरोधोऽस्तीत्यर्थः । संग्रहवाक्यं विवृणोति—**तस्मादित्यादिना** । उक्तमेवार्थं चोद्यपरिहाराभ्यां स्फोरयति—**कथमित्यादिना** । नामरूपयोरात्मभूतत्वे वस्तुत्वशंकायामिवेत्युक्तसुपमार्थत्वमिवकारस्य वारयन्नाभासार्थत्वं स्फुटयति—**अविद्येति** । तयोरविद्याकल्पितत्वं साधयति—**तत्त्वान्यत्वाभ्यामिति** । न हीश्वरत्वेन ते निरुच्येते जडाजडयोरभेदायोगात् । नापि ततोऽन्यत्वेन निरुक्तिमर्हतः स्वातन्त्र्येण सत्तास्फूर्त्यसंभवात् । न हि जडमजडानपेक्षं सत्तास्फूर्तिमदुपलक्ष्यते जडत्वभङ्गप्रसङ्गात् । तस्मादविद्यात्मके नामरूपे इत्यर्थः । तयोश्च कार्यलिङ्गकमनुमानं प्रमाणयति—**संसारेति** । तयोराश्रयं विषयं च दर्शयति—**सर्वज्ञस्येति** । तयोरेव श्रुतिस्मृती प्रमाणयति—**मायेति** । 'मायां तु प्रकृतिं विद्यात्' 'देवात्मशक्तिम्' इत्येवंविधा श्रुतिः । 'प्रकृतिं पुरुषं चैव' 'माया ह्येषा' इत्येवंप्रकारा च स्मृतिः । नामरूपे चेदीश्वरात्मभूते तर्हि सोऽपि ताभ्यामभिन्नत्वात्तद्वदेव जडः स्यादित्याशंक्याऽऽह—**ताभ्यामिति** । ईश्वरस्य नामरूपाभ्यामर्थान्तरत्वे प्रमाणमाह—

"आकाशो वै नाम नामरूपयोर्निर्वहिता । ते यदन्तरा तद्ब्रह्म" [ छां० ८ । १४ । १ ] इति श्रुतेः । "नामरूपे व्याकरवाणि" [ छां० ६ । ३ । २ ] "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते" [ तै० उ० ३ । १२ । १६ ] "एकं बीजं बहुधा यः करोति" [ श्वेता० ६ । १२ ] इत्यादिश्रुतिभ्यश्च ॥ एवमविद्याकृतनामरूपोपाध्यनुरोधीश्वरो भवति ॥ व्योमेव घटकरकाद्युपाध्यनुरोधि ॥ स च स्वात्मभूतानेव घटाकाशस्थानीयानविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसङ्घातानुरोधिनो जीवाख्यान्विज्ञानात्मनः प्रतीष्टे व्यवहारविषये । तदेवमविद्यात्मकोपाधिपरिच्छेदापेक्ष्यमेवेश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तित्वं च । न परमार्थतः ॥ विद्ययाऽपास्तसर्वोपाधिस्वरूपे आत्मनीशित्रीशितव्यसर्वज्ञत्वादिव्यवहार उपपद्यते ॥ तथा चोक्तं—"यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" [ छां० ७ । २४ । १ ] इति, "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येद्" [ बृ० २ । ४ । १४ ] इत्यादि च ॥ एवं परमार्थावस्थायां सर्वव्यवहाराभावं वदन्ति वेदान्ताः

रत्नप्रभा ।

व्याकरणे च श्रुतिमाह—आकाश इत्यादिना ॥ अविद्याद्युपाधिना कल्पितभेदेन बिम्बस्थानस्येश्वरत्वं, प्रतिबिम्बभूतानां जीवानां नियम्यत्वमित्याह—स च स्वात्मभूतानिति ॥ न चात्र नानाजीवा भाष्योक्ता इति भ्रमितव्यम् । बुद्ध्यादिसंघातभेदेन भेदोक्तेः । अविद्याप्रतिबिम्बस्त्वेक एव जीव इत्युक्तम् । परमार्थत ईश्वरत्वादिद्वैताभावे श्रुतिमाह—तथा चेति ॥ कथं तर्हि कर्तृत्वादिकमित्यत आह—

भामती ।

एतदुक्तं भवति—न तात्त्विकमैश्वर्यं सर्वज्ञत्वं च ब्रह्मणः किंत्वविद्योपाधिकमिति तदाश्रयं प्रतिज्ञासूत्रं,

आनन्दगिरीय—न्यायनिर्णयः ।

आकाश इति । यत्तु नामरूपबीजव्याकरणापेक्षमैश्वर्यमिति तत्र तद्व्याकरणे प्रमाणमाह—नामरूपे इति । जीवस्य व्याकर्तृत्वं व्यासेद्धुं वाक्यान्तरमुदाहरति—सर्वाणीति । नामरूपव्याकरणस्य नानाविधत्वसिद्ध्यर्थं श्रुत्यन्तरं पठति—एकमिति । आदिशब्देन 'सच्च त्यच्चाभवत्' इत्याद्या श्रुतिर्गृह्यते । दर्शितश्रुतिभ्यो नामरूपव्याकरणमीश्वरायत्तं सिद्धं तदपेक्षं चास्यैश्वर्यमित्यर्थः । स्वाभाविकत्वादैश्वर्यस्य कुतो व्याकरणापेक्षेत्याशंक्याऽऽह—एवमिति । उक्तश्रुतिस्मृत्यनुरोधादविद्याकृते तदात्मके ये नामरूपे तद्रूपानवच्छिन्नोपाध्यभिव्यक्तश्चिदात्मा ताभ्यामेव नामरूपाभ्यां विरचितं विचित्रं प्रपञ्चं नियमयन्नीश्वरो नाम ततो न स्वाभाविकमैश्वर्यमित्यर्थः । ईश्वरस्योपाध्यनुरोधित्वे दृष्टान्तमाह—व्योमेति । अविद्याकृतजगदीशितृत्वेऽपि जीवानामतत्कृतत्वात्कुतस्तान्प्रत्यैश्वर्यमित्याशंक्याऽऽह—स चेति । स्वात्मभूतत्वे भेदाभावात्कुतो नियम्यतेत्याशंक्याऽऽह—घटेति । नन्नु घटवदुपाधेरनधिगमे कथमौपाधिकभेदानुरोधेन नियम्यनियन्तृत्वं कल्प्यते तत्राऽऽह—अविद्येति । ईश्वरस्येश्वरत्वं काल्पनिकमिति स्पष्टयितुं विशिनष्टि—व्यवहारेति । कल्पितमीश्वरत्वमित्युपपादितं निगमयति—तदेवमिति । सर्वज्ञत्वादिवदीश्वरत्वस्य वास्तवत्वमाशंक्याऽऽह—सर्वज्ञत्वमिति । सर्वज्ञत्वं चाविद्यात्मकोपाधिपरिच्छेदापेक्षमिति संबन्धः । पूर्वत्रोक्तेन प्रकारेणाविद्यात्मको योऽसावुपाधिस्तेन कृतो यो जीवप्रपञ्चाख्यः परिच्छेदस्तदपेक्षमिति यावत् । अन्वयमुखेनोक्तमर्थं व्यतिरेकद्वारा निरूपयति—नेत्यादिना । परमार्थतश्चिद्धातोरीश्वरत्वानुपपत्तौ श्रुतिं प्रमाणयति—तथा चेति । ननु परमार्थावस्थायां दर्शनादिव्यवहारराहित्यमिहोच्यते न पुनरीशित्रीशितव्यादिव्यवहारासत्त्वमित्याशंक्य दर्शनादिव्यवहाराभावस्योपलक्षणत्वादत्र समस्तव्यवहारराहित्यं विवक्षितमित्याह—एवमिति ।

सर्वे ॥ तथेश्वरगीतास्वपि-"न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥ नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः । अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ ॥ १५ ॥" [भ० गी० ५ अ० ] इति परमार्थावस्थायामीशित्रीशितव्यादिव्यवहाराभावः प्रदर्श्यते ॥ व्यवहारावस्थायां तूक्तश्श्रुतावपीश्वरादिव्यवहारः ॥ "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" [बृ ४ । ४ । २२] इति ॥ तथा चेश्वरगीतास्वपि-"ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया" [भ० गी० १८ । ६२] इति । सूत्रकारोऽपि परमार्थाभिप्रायेण "तदनन्यत्वम्" इत्याह । व्यवहाराभिप्रायेण तु "स्याल्लोकवद्" [व्या० सू० २ । १ । १३] इति महासमुद्रस्थानीयतां ब्रह्मणः कथयति ॥ अप्रत्याख्यायैव कार्यप्रपञ्चं परिणामप्रक्रियां चाश्रयति सगुणोपासनेषूपयुज्यत इति ॥ १४ ॥

## भावे चोपलब्धेः ॥ १५ ॥

---

रत्नप्रभा ।

**स्वभावस्त्विति** ॥ अनाद्यविद्यैव कर्तृत्वादिरूपेण प्रवर्तत इत्यर्थः । भक्ताभक्तयोः पापसुकृतनाशकत्वादीश्वरस्य वास्तवमीश्वरत्वमित्यत आह-**नादत्त इति** ॥ न संहरतीत्यर्थः । तेन स्वरूपज्ञानावरणेन कर्ताहमीश्वरो नियन्तेत्येवं भ्रमन्ति । उक्तार्थः सूत्रकारसम्मत इत्याह-**सूत्रकारोऽपीति** ॥ न केवलं लौकिकव्यवहारार्थं परिणामप्रक्रियाश्रयणम्,किन्तूपासनार्थं चेत्याह-**परिणामप्रक्रियां चेति**॥तदुक्तं-"कृपणधीः परिणाममुदीक्षते क्षपितकल्मषधीस्तु विवर्ततताम्"इति॥१४॥एवं तदनन्यत्वे प्रत्यक्षादिविरोधं परिहृत्यानुमानमाह-**भावे चेति**॥

भामती ।

तत्त्वाश्रयं तु तदनन्यत्वसूत्रम्, तेनाविरोधः । सुगममन्यत् ॥ १४ ॥ **भावे चोपलब्धेः** । कारणस्य भावः सत्ता चोपलम्भश्च तस्मिन् कार्यस्योपलब्धेर्भावाच । एतदुक्तं भवति-विषयपदं विषयविषयिपरं,

आनन्दगिरीय-न्यायनिर्णयः ।

बहुवचनं 'स एष नेतिनेत्यात्मा', 'अदृश्येऽनात्म्ये' 'यत्तदद्रेश्यम्' 'अस्थूलम्' इत्यादिवाक्यसंग्रहार्थम् । श्रौतेऽर्थे भगवतोऽपि संमतिमाह-**तथेति** । वेदान्तेष्विव भगवद्गीतास्वपि परमार्थावस्थायां व्यवहाराभावः प्रदर्श्यत इति संबन्धः । कथं तर्हि क्रियाकारकफलतत्संबन्धबुद्धिस्तत्राऽऽह-**स्वभावस्त्विति** । अनाद्यविद्यावशात्क्रियाकारकादिप्रवृत्तिरित्यर्थः । तथाऽपि भक्तानितरांश्चानुगृह्णन्निगृह्णंश्च तदीयसुकृतदुष्कृते परमेश्वरो वस्तुतो नाशयतीत्याशंक्याऽऽह-**नाऽऽदत्त इति** । सर्वेषां परमात्मैक्ये कुतः सुकृतदुष्कृतयोर्विभागेन प्रवृत्तिरित्याशंक्याऽऽह-**अज्ञानेनेति** । ऐश्वर्यादेर्वस्तुतोऽनुपपत्तिमुक्त्वा कल्पनयोपपत्तौ श्रुतिस्मृती क्रमेणोदाहरति- **व्यवहारेति** । श्रुताविवेश्वरगीतास्वपि व्यवहारावस्थायामीश्वरादिव्यवहार उक्त इति संबन्धः । परमार्थावस्थायां सर्वव्यवहाराभावे सूत्रकारस्यापि संमतिमाह-**सूत्रेति** । 'तदनन्यत्वम्' इत्यनेनायुक्तं कार्यमिथ्यात्वं कथ्यते स्याल्लोकवदिति पूर्वसूत्रे तत्सत्यत्ववचनादित्याशंक्याऽऽह-**व्यवहारेति** । आत्मकृतेः परिणामात्'क्षीरवद्धि'इत्यादिना परिणामोक्तेरेष्टव्यं कार्यप्रपञ्चस्य सत्यत्वमित्याशंक्यान्यार्थत्वात्परिणामवादस्य न तद्विवक्षेत्याह-**परिणामेति** ॥ १४ ॥ तदनन्यत्वमित्यस्य श्रुत्यादिविरोधः समाहितः संप्रति तदनन्यत्वे मानमनुमानमाह-**भावे चेति** । कारणभावे भाने च कार्यस्य

**इतश्च कारणादनन्यत्वं कार्यस्य । यत्कारणं भाव एव कारणस्य कार्यमुपलभ्यते । नाभावे ॥ तद्यथा सत्यां मृदि घट उपलभ्यते । सत्सु च तन्तुषु पट उपलभ्यते ॥ न च नियमेनान्यभावेऽन्यस्योपलब्धिर्दृष्टा । न ह्यश्वो गोरन्यः सन् गोर्भाव एवोपलभ्यते ॥ न च कुलालभाव एव घट उपलभ्यते । सत्यपि निमित्तनैमित्तिकभावेऽन्यत्वात् ॥ नन्वन्यस्य भावेऽप्यन्यस्योपलब्धिर्नियता दृश्यते—यथाऽग्निभाव एव धूमस्येति ॥ नेत्युच्यते ॥ उद्धापितेऽप्यग्नौ गोपालघुटिकादिधारितस्य धूमस्य दृश्यमानत्वात् । अथ धूमं कयाचिदवस्थया विशिंष्यात् । ईदृशो धूमो नासत्यग्नौ भवतीति ॥ नैवमपि कश्चिद्दोषः ॥ तद्भावानुरक्तां हि बुद्धिं कार्यकारणयोरनन्यत्वे**

---

रत्नप्रभा ।

कारणस्य भावे सत्त्वे उपलब्धौ च कार्यस्य सत्त्वादेः **उपलब्धेश्च** अनन्यत्वमिति सूत्रार्थः । घटो,मृदनन्यः, मृत्सत्त्वोपलब्धिक्षणनियतसत्त्वोपलब्धिमत्त्वात्, मृद्वत् ।अन्यत्वेऽप्ययं हेतुः किं न स्यादित्यप्रयोजकत्वमाशंक्य निरस्यति—**न चेति** ॥ मृद्घटयोरन्यत्वे गवाश्वयोरिव हेतूच्छित्तिः स्यादित्यर्थः । गवाश्वयोर्निमित्तनैमित्तिकत्वाभावाद्धेत्वभावः । अतो मृद्घटयोस्तेन हेतुना निमित्तादिभावः सिध्यति, नानन्यत्वमित्यर्थान्तरतामाशंक्याह—**न च कुलालेति** ॥ न चोपादानोपादेयभावेनार्थान्तरता । मृद्दृष्टान्ते तद्भावाभावेऽपि हेतुसत्त्वाद् अन्यत्वे गवाश्ववत् तद्भावायोगाच्चेति भावः । कुलालघटयोर्निमित्तादिभावे सत्यप्यन्यत्वात् कुलालसत्त्वनियतोपलब्धिर्घटस्य नैवेत्यक्षरार्थः । यथाश्रुतसूत्रस्थस्य हेतोर्व्यभिचारं शंकते—**नन्विति** ॥ अग्निभाव एव धूमोपलब्धिरिति नियमात्मको हेतुस्तत्र नास्तीत्याह—**नेति** ॥ अविच्छिन्नमूलदीर्घरेखावस्थधूमे नियमोऽस्तीति व्यभिचार इत्याशंकते—**अथेति** ॥ तद्भावनियतभावत्वे सति तद्बुद्ध्यनुरक्तबुद्धिविषयत्वस्य हेतोर्विवक्षितत्वान्न व्यभिचार इत्याह—**नैवमिति** ॥ आलोकबुद्ध्यनुरक्तबुद्धिग्राह्ये रूपे व्यभिचारनिरासाय सत्य-

भामती ।

विषयिपदमपि विषयिविषयपरं, तेन कारणोपलम्भभावयोरुपादेयोपलम्भभावादिति सूत्रार्थः संपद्यते । तथा च प्रभारूपानुविद्धबुद्धिबोध्येन चाक्षुषेण न व्यभिचारः, नापि वह्निभावाभावानुविधायिभावाभावेन धूमभेदेनेति सिद्धं भवति । तत्र यथोक्तहेतोरेकदेशाभिधानेनोपक्रमते भाष्यकारः—**इतश्च कारणादनन्यत्वं** भेदाभावः **कार्यस्य, यत्कारणं** यस्मात्कारणात् **भाव एव कारणस्येति** । अस्य व्यतिरेकमुखेन गमकत्वमाह—**न च नियमेनेति** । काकतालीयन्यायेनान्यभावेऽन्यदुपलभ्यते, न तु नियमेनेत्यर्थः । हेतुविशेषणाय व्यभिचारं चोदयति—**नन्वन्यस्य भावेऽपीति** । एकदेशिमतेन परिहरति—**नेत्युच्यत इति** । शङ्कैकदेशिपरिहारं दूषयित्वा परमार्थपरिहारमाह—**अथेति** । तदनेन हेतुविशेषणमुक्तम् । पाठा-

आनन्दगिरीय-न्यायनिर्णयः ।

भावाद्भानाच्च तस्य कारणादनन्यत्वमित्यर्थः । विमतं कारणानतिरिक्तं तद्भावभाननियतभावभानत्वात्तत्स्वरूपवदित्यनुमानं सूत्रयोजनया दर्शयितुं चकारार्थमाह—**इतश्चेति** । इतःशब्दार्थं स्फुटयन्नवशिष्टं व्याचष्टे—**यत्कारणमिति** । हेतुमुदाहरणारूढतया द्रढयति—**तद्यथेति** । सत्यपि घटे पटोपलब्धिदर्शनात्कारणभावे कार्योपलब्धिर्नाभेदसाधनमित्याशंक्याऽऽह—**न चेति** । अन्यस्य भावेऽन्यस्योपलब्धिरनियतेत्यत्र दृष्टान्तमाह—**न हीति** । ननु गवाश्वयोरकार्यकारणत्वादनियतोपलम्भेऽपि कार्यकारणयोरनन्यत्वमन्तरेणैव कार्यकारणत्वकृता नियतोपलब्धिरित्याशंक्याऽऽह—**न चेति** । नियमेनोपलम्भेऽपि नानन्यत्वमिति व्यभिचारं शङ्कते—**नन्विति** । धूममात्रस्याग्निना नियतोपलब्धिर्धूमविशेषस्य वेति विकल्प्याऽऽद्यं प्रत्याह—**नेत्युच्यत इति** । द्वितीयं शङ्कते—**अथेति** । ईदृशत्वं बहलोर्ध्वाग्रत्वादिविशिष्टत्वमसत्यग्नौ न भवति न भाति चेति द्रष्टव्यम् । धूमविशेषस्याग्निना नियतोपलब्धिमुपेत्य हेतुशिक्षया व्यभिचारं परिहरति—**नैवमिति** ।

हेतुं वयं वदामः ॥ न चासावग्निधूमयोर्विद्यते ॥ "भावाच्चोपलब्धेः" इति वा सूत्रम् ॥ न केवलं शब्दादेव कार्यकारणयोरनन्यत्वम् ॥ प्रत्यक्षोपलब्धेर्भावाच्च तयोरनन्यत्वमित्यर्थः ॥ भवति हि प्रत्यक्षोपलब्धिः कार्यकारणयोरनन्यत्वे ॥ तद्यथा तन्तुसंस्थाने पटे तन्तुव्यतिरेकेण पटो नाम कार्यं नैवोपलभ्यते ॥ केवलास्तु तन्तव आतानवितानवन्तः प्रत्यक्षमुपलभ्यन्ते ॥ तथा तन्तुष्वंशवोंशुषु तदवयवाः । अनया प्रत्यक्षोपलब्ध्या

रत्नप्रभा ।

न्तम् । आलोकाभावेऽपि घटादिरूपसत्त्वान्न व्यभिचारः । उक्तधूमविशेषस्याग्निबुद्धिं विनाप्युपलम्भात् न तत्र व्यभिचार इत्यर्थः । तथा च तयोः कार्यकारणयोः भावेन सत्तया अनुरक्तां सहकृतामिति भाष्यार्थः । यद्वा तद्भावः सामानाधिकरण्यं तद्विषयकबुद्धिग्राह्यत्वं हेतुं वदामः । मृद्घट इति सामानाधिकरण्यबुद्धिदर्शनादग्निर्धूम इत्यदर्शनादित्यर्थः । अनुमानार्थत्वेन सूत्रं व्याख्याय पाठान्तरेण प्रत्यक्षपरतया व्याचष्टे—भावाच्चेति ॥ पूर्वसूत्रोक्तारम्भणशब्दसमुच्चयार्थश्चकारः ॥ न चैकः पट इति प्रत्यक्षं पटस्य तन्तुभ्यः पृथक्सत्त्वे प्रमाणम् । अपृथक्सत्ताकमिथ्याकार्यविषयत्वेनाप्युपपत्तेः । अतः आतानवितानसंयोगवन्तस्तन्तव एव पट इति प्रत्यक्षोपलब्धेः सत्त्वादनन्यत्वमित्यर्थः । पटन्यायं तन्त्वादावतिदिशति—तथेत्यादिना ॥ प्रत्यक्षोपलब्ध्या तत्तत्कार्ये कारणमात्रं परिशिष्यत इत्यर्थः । यत्र प्रत्यक्षं नास्ति, तत्र कार्यं विमतं, कारणादभिन्नं, कार्यत्वात्, पटवदित्यनुमेयमित्याह—अनयेति ॥

भामती ।

न्तरेणेदमेव सूत्रं व्याचष्टे—न केवलं शब्दादेवेति । पट इति हि प्रत्यक्षबुद्ध्या तन्तव एवातानवितानावस्था आलम्ब्यन्ते, न तु तदतिरिक्तः पटः प्रत्यक्षमुपलभ्यते । एकत्वं तु तन्तूनामेकप्रावरणलक्षणार्थक्रियावच्छेदाद्बहूनामपि । यथैकदेशकालावच्छिन्ना धवखदिरपलाशादयो बहवोऽपि वनमिति । अर्थक्रियायां च प्रत्येकमसमर्था अप्यनारभ्यैवार्थान्तरं किंचिन्मिलिताः कुर्वन्तो दृश्यन्ते, यथा ग्रावाण उखाधारणमेकम्, एवमनारभ्यैवार्थान्तरं तन्तवो मिलिताः प्रावरणमेकं करिष्यन्ति । न च समवायाद्भिन्नयोरपि भेदानवसायः, अनवसाय इति सांप्रतम्, अन्योन्याश्रयत्वात् । भेदे हि सिद्धे समवायः समवायाच्च भेदः । न च भेदे साधनान्तरमस्ति, अर्थक्रियाव्यपदेशभेदयोरभेदेऽप्युपपत्तेरित्युपपादितम् । तस्माद्यत्किंचिदेतत् । अनया च दिशा मूलकारणं ब्रह्मैव परमार्थसत्, अवान्तरकारणानि च तन्त्वादयः सर्वेऽनिर्वाच्या एवेत्याह—तथा

आनन्दगिरीय—न्यायनिर्णयः ।

तद्भावानुविधायिभावत्वं तद्भानानुविधायिभानत्वं च कार्यस्य कारणादनन्यत्वे हेतुर्धूमविशेषस्य चाग्निभावानुविधायिभावत्वेऽपि न तद्भानानुविधायिभानत्वमग्निभानस्य धूमभानाधीनत्वात् न च तद्भानानुविधायिभानत्वमेवास्तु हेतुः प्रभाभानानुविधायिभाने चाक्षुषरूपे व्यभिचारात्तस्माद्विशिष्टहेत्ववष्टम्भात्कार्यस्य कारणादनन्यत्वमुचितमिति भावः । एतदेव सूत्रं पाठान्तरेण व्याकुर्वन्कार्यस्य कारणादनन्यत्वे मानान्तरमाह—भावाच्चेति । प्रत्यक्षोपलब्धिमेव प्रतिज्ञोदाहरणाभ्यां विवृणोति—भवति हीति । तन्तुव्यतिरेकेणाऽऽतानवितानाभ्यां पटो भातीत्याशङ्क्याऽऽह—केवलास्त्विति । बहुत्वेऽपि तन्तूनामेकप्रावरणार्थक्रियावच्छेदादेकशब्दगोचरत्वं बहूनामपि वर्णानामेकार्थबुद्धिहेतुत्ववदेकार्थक्रियाकारित्वं च तेषामविरुद्धमिति भावः । तन्तुव्यतिरिक्तपटाभाववदंशुव्यतिरिक्ततन्त्वभावोऽपि प्रत्यक्षः सिध्यतीत्याह—तथेति । अंशवोऽपि स्वावयवव्यतिरेकेण न सन्तीति प्रत्यक्षमित्याह—अंशुष्विति । ननु प्रत्यक्षे कार्यकारणभावे कार्यं कारणमात्रमिति शक्यं प्रत्यक्षयितुम्, यत्र त्वसौ प्रत्यक्षो न भवति तत्र कथमिति तत्राऽऽह—अनयेति । विमतं स्वोपादानाव्यतिरिक्तं कार्यत्वात्पटवदित्यनुमानं मूलकारणपर्यन्तं धावतीत्यर्थः । प्रत्यक्षानुमानाभ्यां फलित-

लोहितशुक्लकृष्णानि त्रीणि रूपाणि। ततो वायुमात्रमाकाशमात्रं चेत्यनुमेयम्॥ ततः परं ब्रह्मैकमेवाद्वितीयम्॥ तत्र सर्वप्रमाणानां निष्ठामवोचाम॥ १५॥

## सत्त्वाच्चावरस्य॥ १६॥

इतश्च कारणात्कार्यस्यानन्यत्वम्॥ यत्कारणं प्रागुत्पत्तेः कारणात्मनैव कारणे सत्त्वमवरकालीनस्य कार्यस्य श्रूयते॥ "सदेव सोम्येदमग्र आसीद्" [छां० ६।२।१] "आत्मा वा इदमेक एवाग्र आसीद्" [ऐ० आ० २।४।१।१] इत्यादाविदंशब्दगृहीतस्य कार्यस्य कारणेन सामानाधिकरण्यात्॥ यच्च यदात्मना यत्र न वर्तते, न तत्तत उत्पद्यते-यथा सिकताभ्यस्तैलम्॥ तस्मात्प्रागुत्पत्तेरनन्यत्वादुत्पन्नमप्यनन्यदेव कारणात्कार्यमित्यवगम्यते॥ यथा च कारणं ब्रह्म त्रिषु कालेषु

रत्नप्रभा।

कारणपरिशेषे प्रधानादिकं परिशिष्यताम्। न ब्रह्मेत्यत आह-तत्र सर्वेति॥ ब्रह्मणि वेदान्तानां सर्वेषां तात्पर्यस्योक्तत्वात् तदेवाद्वितीयं परिशिष्यते। न कारणान्तरम्। अप्रामाणिकत्वादिति भावः॥ १५॥ इदं जगत् सद् आत्मैवेति सामानाधिकरण्यश्रुत्या सृष्टेः प्राक् कार्यस्य कारणात्मना सत्त्वं श्रुतम्। तदन्यथानुपपत्त्योत्पन्नस्यापि जगतः कारणादनन्यत्वमित्याह सूत्रकारः-सत्त्वाच्चेति॥ श्रुत्यर्थे युक्तिमप्याह-यच्च यदात्मनेति॥ घटादिकं प्राक् मृदाद्यात्मना वर्तते। तत उत्पद्यमानत्वात्। सामान्यतो व्यतिरेकेण सिकताभ्यस्तैलवदित्यर्थः। कारणवत् कार्यस्यापि सत्त्वात् सत्त्वभेदे मानाभावात् कार्यस्य कारणादभिन्नसत्ताकत्वमिति सूत्रस्यार्थान्तरमाह-यथा चेति॥ इदानीं सतः कार्यस्य प्रागुत्तरकालयो-

भामती।

तन्तुष्विति॥ १५॥ सत्त्वाच्चावरस्य। विभजते-इतश्चेति। न केवलं श्रुतिः, उपपत्तिश्चात्र भवति यच्च यदात्मनेति। न हि तैलं सिकतात्मना सिकतायामस्ति यथा घटोऽस्ति मृदि मृदात्मना। प्रत्युत्पन्नो हि घटो मृदात्मनोपलभ्यते। नैवं प्रत्युत्पन्नं तैलं सिकतात्मना। तेन यथा सिकतायास्तैलं न जायत एवमात्मनोऽपि जगन्न जायेत, जायते च, तस्मादात्मात्मनासीदिति गम्यते। उपपत्त्यन्तरमाह-यथा च कारणं ब्रह्मेति। यथा हि घटः सर्वदा सर्वत्र घट एव न

आनन्दगिरीय-न्यायनिर्णयः।

मर्थमाह-तत इति। ब्रह्मैव मूलकारणं परमार्थसदवान्तरकारणानि त्वनिर्वाच्यानीत्यर्थः। कारणत्वाविशेषात्तत्त्वादिवद्ब्रह्मणोऽपि कारणान्तरमनुमेयमित्याशंक्याऽऽह-तत्रेति। सर्वजगद्भ्रमाधिष्ठानतया तस्याकल्पितत्वान्नाधिष्ठानान्तरापेक्षेति भावः॥ १५॥ कार्यस्य कारणादनन्यत्वे श्रुतार्थापत्तिं प्रमाणान्तरमाह-सत्त्वाच्चेति। श्रुतार्थापत्तिमेव स्फोरयितुं प्रथमं चशब्दव्याख्यानपूर्वकं श्रुतिमुदाहरति-इतश्चेति। प्रागुत्पत्तेः सत्त्वं कारणस्यैवात्र श्रुतं न कार्यस्येत्याशंक्याऽऽह-इदंशब्देति। यदिदानीं स्थूलकार्यं दृष्टं तस्य सृष्टेः प्राक्कारणसामानाधिकरण्यानुपपत्त्या तत्तादात्म्यावगमान्न वस्तुभेदोऽस्तीत्यर्थः। कार्यकारणयोरनन्यत्वे प्रमिते प्रमाणानुग्राहिकां युक्तिमपि समुच्चिनोति-यच्चेति। कार्यस्य प्रागवस्थायां कारणात्मना सत्त्वेऽपि निष्पन्नं ततो भिन्नं स्यादित्याशंक्याऽऽह-तस्मादिति। यथा सिकतास्वविद्यमानं तैलं न ततो जायते तथाऽऽत्मनोऽपि जगन्न जायेत यद्यात्मरूपेण प्रागवस्थायां नाऽऽसीज्जायते च तस्मादात्मात्मना प्रागासीदिति निश्चयसिद्धिरित्यर्थः। कार्यकारणयोरनन्यत्वे युक्त्यन्तरं वक्तुं भूमिकां करोति-यथा चेति। यथा घटः सदा घट एव न जातु पटो भवत्येवं सदपि कारणं सदा सदेव न कदाचि-

१ छान्दोग्ये ६ऽध्याये ४ खण्डे स्पष्टोयमर्थः।

सत्त्वं न व्यभिचरति, एवं कार्यमपि जगत्त्रिषु कालेषु सत्त्वं न व्यभिचरति ॥ एकं च पुनः सत्त्वम् । अतोऽप्यनन्यत्वं कारणात्कार्यस्य ॥ १६ ॥

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

ननु क्वचिदसत्त्वमपि प्रागुत्पत्तेः कार्यस्य व्यपदिशति श्रुतिः—"असदेवेदमग्र आसीद्" [ छां० ३ । १९ । १ ] इति, "असद्वा इदमग्र आसीद्" [ तै० उ० १ । २ । ७ । १ ] इति च ॥ तस्मादसद्व्यपदेशान्न प्रागुत्पत्तेः कार्यस्य सत्त्वमिति चेत् ॥ नेति ब्रूमः ॥ न ह्ययमत्यन्तासत्त्वाभिप्रायेण प्रागुत्पत्तेः कार्यस्यासद्व्यपदेशः ॥ किं तर्हि ॥ व्याकृतनामरूपत्वाद्धर्मादव्याकृतनामरूपत्वं धर्मान्तरम् । तेन धर्मान्तरेणायमसद्व्यपदेशः प्रागुत्पत्तेः सत एव कार्यस्य कारणरूपेणानन्यस्य ॥ कथमेतदवगम्यते ॥ "वाक्यशेषात्" । यदुपक्रमे सन्दिग्धार्थं वाक्यं तच्छेषान्निश्चीयते । इह च तावद् "असदेवेदमग्र आसीद्" [ छां० ३ । १९ । १ ] इत्यसच्छ-

रत्नप्रभा ।

रसत्त्वायोगात् सत्ताव्यभिचारः । तच्च सत्त्वं सर्वानुस्यूतचिन्मात्रमेकम् । तदभेदेन सती मृत्सन् घट इति भासमानयोः कार्यकारणयोरनन्यत्वमित्यर्थः । न चैवं घटपटयोरप्येकसत्त्वाभेदादनन्यत्वं स्यादिति वाच्यम् । वस्तुत एकसत्त्वात्मनाऽनन्यत्वस्येष्टत्वात् । तर्हि मृद्घटयोः को विशेषः । तादात्म्यमिति ब्रूमः । वस्तुतः सर्वत्र सत्त्वैक्येऽपि घटपटयोर्भेदेन सत्ताया भिन्नत्वात् न तादात्म्यम् । कार्यकारणयोर्भेदस्य सत्ताभेदकत्वाभावादभिन्नसत्ताकत्वं तादात्म्यमिति विशेषः ॥ १६ ॥ उक्तं कार्यस्य प्राक्कारणात्मना सत्त्वमसिद्धमित्याशंक्य समाधत्ते—असद्व्यपेति ॥ "अक्ताः शर्करा उपदध्याद्" इत्युपक्रमे

भामती ।

जात्वसौ क्वचित्पटो भवत्येवं सदपि सर्वत्र सर्वदा सदेव न तु क्वचित्कदाचिदसद्भवितुमर्हतीत्युपपादितमधस्तात् । तस्मात्कार्यं त्रिष्वपि कालेषु सदेव । सत्त्वं चेत् किमतो यद्येवमित्यत आह—एकं च पुनरिति । सत्त्वं चैकं कार्यकारणयोः । न हि प्रतिव्यक्ति सत्त्वं भिद्यते । ततश्चाभिन्नसत्तानन्यत्वादेते अपि मिथो न भिद्येते इति । न च ताभ्यामनन्यत्वात्सत्त्वस्यैव भेद इति युक्तम् । तथा सति हि सत्त्वस्य समारोपितत्वप्रसङ्गः । तत्र भेदाभेदयोरन्यतरसमारोपकल्पनायां किं तात्त्विकाभेदोपादानाभेदकल्पनास्तु, आहो तात्त्विकभेदोपादानाभेदकल्पनेति । वयं तु पश्यामो भेदग्रहस्य प्रतियोगिग्रहापेक्षत्वाद्भेदग्रहमन्तरेण च प्रतियोगिग्रहासंभवादन्योन्यसंश्रयापत्तेः, अभेदग्रहस्य च निरपेक्षतया तदनुपपत्तेरेकैकाश्रयत्वाच्च भेदस्यैकाभावे तदनुपपत्तेरभेदग्रहोपादानैव भेदकल्पनेति सर्वमवदातम् ॥ १६ ॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् । व्याकृतत्वाव्याकृतत्वे च धर्मावनिर्वचनीयौ । सूत्रमेतन्निगदव्याख्यातेन

आनन्दगिरीय–न्यायनिर्णयः ।

दसदिष्टं तथा कार्यमपि सच्चेन्न कदाचिदसद्भवितुमर्हतीत्यर्थः । कार्यकारणयोर्भेदेनापि सत्त्वसंभवादनन्यत्वं कथमित्याशंक्याऽऽह—एकं चेति । सतोऽसतो वा सद्भेदकत्वाभावात्तदेकतेत्यर्थः । अभिन्नसत्त्वाभिन्नत्वान्मिथोऽपि कार्यकारणे न भिद्येते सत्त्ववदिति फलितमाह—अतोऽपीति ॥ १६ ॥ प्रागुत्पत्तेः सत्त्वं कारणात्मना कार्यस्येत्युक्तमाक्षिप्य समाधत्ते—असदिति । तत्र चोद्यं विभजते—नन्वित्यादिना । परिहारभागमवतारयति—नेतीति । नञर्थमाह—न हीति । तर्हि केनाभिप्रायेणायमसद्व्यपदेश इत्याशंक्य धर्मान्तरेणेति व्याचष्टे—किं तर्हीति । तत्र प्रश्नपूर्वकं गमकं कथयति—कथमिति । सूत्रावयवं व्याख्याति—यदिति । अक्ताः शर्करा उपदधातीत्यत्र केनेति तैलघृतादौ संदेहे तेजो वै घृतमितिवाक्यशेषाद् घृतेनेति निश्चितमित्यर्थः । सामान्यन्यायं प्रकृते दर्शयति—इह चेति । असदेवेदमित्यादावसच्छब्देन तुच्छमु-

ब्देनोपक्रमे निर्दिष्टं यत्तदेव पुनस्तच्छब्देन परामृश्य सदिति विशिनष्टि "तत्सदासीद्" [ छां० ३ । १९ । १ ] इति । असतश्च पूर्वापरकालासम्बन्धादासीच्छब्दानुपपत्तेश्च । "असद्वा इदमग्र आसीद्" [ तै० उ० १ । २ । ७ । १ ] इत्यत्रापि "तदात्मानं स्वयमकुरुत" [ तै० उ० १ । २ । ७ । १ ] इति वाक्यशेषे विशेषणान्नात्यन्तासत्त्वम् ॥ तस्माद्धर्मान्तरेणैवायमसद्व्यपदेशः प्रागुत्पत्तेः कार्यस्य । नामरूपव्याकृतं हि वस्तु सच्छब्दार्हं लोके प्रसिद्धम् ॥ अतः प्राङ् नामरूपव्याकरणादसदिवासीदित्युपचर्यते ॥ १७ ॥

## युक्तेः शब्दान्तराच्च ॥ १८ ॥

युक्तेश्च प्रागुत्पत्तेः कार्यस्य सत्त्वमनन्यत्वं च कारणादवगम्यते । शब्दान्तराच्च-युक्तिस्तावद्वर्ण्यते । दधिघटरुचकाद्यर्थिभिः प्रतिनियतानि कारणानि क्षीरमृत्तिकासुवर्णादीन्युपादीयमानानि लोके दृश्यन्ते । न हि दध्यर्थिभिर्मृत्तिकोपादीयते । न घटाद्यर्थिभिः क्षीरम् । तदसत्कार्यवादेनोपपद्यते॥अविशिष्टे हि प्रागुत्पत्तेः सर्वत्र सर्वस्यासत्त्वे कस्मात्क्षीरादेव

---

रत्नप्रभा ।

केनाक्ता इति सन्देहे "तेजो घृतम्" इति वाक्यशेषात् घृतेनेति यथा निश्चयः, एवमत्रापि "तत्सद्" इति वाक्यशेषात् सन्निश्चय इत्यर्थः । आसीदित्यतीतकालसम्बन्धोक्तेश्चासदव्याकृतमेव । न शून्यमित्याह-असतश्च पूर्वापरेति ॥ उक्तन्यायं वाक्यान्तरेऽतिदिशति-असद्वेति ॥ क्रियमाणत्वविशेषणं शून्यस्यासम्भवीति भावः ॥ १७ ॥ सत्त्वानन्यत्वयोर्हेत्वन्तरमाह सूत्रकारः-युक्तेरिति ॥ दध्याद्यर्थिनां क्षीरादौ प्रवृत्त्यन्यथानुपपत्तिर्युक्तिः । तया कार्यस्य प्राक् कारणानन्यत्वेन सत्त्वं सिध्यतीत्यर्थः । असतोऽपि कार्यस्य तस्मादुत्पत्तेः कारणत्वधिया तत्र प्रवृत्तिरित्यन्यथोपपत्तिमाशंक्याह-अविशिष्टे हीति॥

भामती ।-०

आनन्दगिरीय-न्यायनिर्णयः ।

च्यते किंवा सदेवानभिव्यक्तनामरूपमिति संदेहे तत्सदासीदिति वाक्यशेषात्तुच्छव्यावृत्तं सदेवानभिव्यक्तनामरूपमसच्छब्दितमिति निश्चीयते तस्य तच्छब्देन परामृष्टस्य सच्छब्देन निर्देशादित्यर्थः । इतश्चात्र तुच्छमसच्छब्दवाच्यं न भवतीत्याह-असतश्चेति । असद्वा इदमित्यत्र तत्सदासीदिति वाक्यशेषाभावात्कुतो निश्चयसिद्धिरित्याशंक्याऽऽह-असद्वा इति । वाक्यशेषस्य सत्कार्यविषयत्वे फलितमाह-तस्मादिति । वृद्धव्यवहाराभावे कथमसच्छब्दस्य सति प्रयोग इत्याशंक्योपचारादित्याह-नामेति ॥ १७ ॥ ननु कार्यस्यासतोऽर्थान्तरत्वे सत्त्वमास्थेयं परस्परविरोधिनोर्विधान्तराभावात्तथा च कार्यस्यानिर्वाच्यत्वाभ्युपगमभङ्गप्रसङ्गादपसिद्धान्तः स्यादित्याशंक्य कारणस्यैवाप्राकृतकारणत्वस्य सत्त्वं कार्यस्य पुनरनिर्वाच्यत्वमेवेति प्रतिपादयितुं प्रक्रमते-युक्तेरिति । हेतुद्वयं प्रतिज्ञाद्वयेन योजयति-युक्तेश्चेति । काऽसौ युक्तिरित्यपेक्षायां युक्तिं प्रकटयन्नसदुत्पत्तिं तावत्प्रत्याह-युक्तिरिति । प्रतिनियममेव प्रकटयति-नेत्यादिना । कार्यार्थिनां प्रतिनियतकारणोपादानानुपपत्त्या कार्यस्य तत्र सत्त्वं सिध्यतीत्यर्थापत्तिमाह-तदिति । नन्वपेक्ष्यमाणघटादिजनकत्वान्मृदादिरेवोपादानं न तु मृदादौ घटादेः सत्त्वादित्यन्यथोपपत्तिरर्थापत्तेरिति तत्राऽऽह-अविशिष्टे हीति । नियामकाभावादसज्जननासंभवान्नान्यथोपपत्तिरित्यर्थः । निया-

दध्युत्पद्यते,न मृत्तिकायाः, मृत्तिकाया एव च घट उत्पद्यते, न क्षीरात् ॥ अथाविशिष्टेऽपि प्रागसत्त्वे क्षीर एव दध्नः कश्चिदतिशयः।न मृत्तिकायाम्। मृत्तिकायामेव च घटस्य कश्चिदतिशयो न क्षीरे इत्युच्येत, तर्ह्यतिशयवत्त्वात् प्रागवस्थायाः असत्कार्यवादहानिः । सत्कार्यवादसिद्धिश्च । शक्तिश्च कारणस्य कार्यनियमार्था कल्प्यमाना नान्याऽसती वा कार्यं नियच्छेत् । असत्त्वाविशेषात् । अन्यत्वाविशेषाच्च ॥ तस्मात्कारणस्याऽऽत्मभूता शक्तिः । शक्तेश्चात्मभूतं कार्यम् ॥ अपि च कार्यकारणयोर्द्रव्यगुणादीनां चाश्वमहिषवद्भेदबुद्ध्यभावात्तादात्म्यमभ्युपगन्तव्यम् ॥ समवायकल्पनायामपि समवायस्य समवायिभिः सम्बन्धेऽभ्युपगम्यमाने

---

रत्नप्रभा ।

असत उत्पत्त्यभावादुत्पत्तौ वा सर्वस्मात् सर्वोत्पत्तिप्रसङ्गात्तत्तदुपादानविशेषे प्रवृत्तिर्न स्यादित्यर्थः। तदुक्तं सांख्यवृद्धैः—"असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् । शक्तस्य शक्यकारणात्कारणाभावाच्च सत्कार्यम्" [ कारिकायाम् ९ ] इति । शक्तस्य कारणस्य शक्यकार्यकारित्वाच्छक्तिविषयस्य कार्यस्य सत्त्वमसतोऽशक्यत्वात् । किञ्च सत्कारणाभेदात् कार्यं सदित्युत्तरार्धार्थः । कार्यस्यासत्त्वेऽपि कुतश्चिदतिशयात् प्रवृत्तिनियमोपपत्तिरिति शंकते—अथेति ॥ अतिशयः कार्यधर्मः कारणधर्मो वा। आद्ये धर्मित्वात् प्रागवस्थारूपस्य कार्यस्य सत्त्वं दुर्वारमित्याह—तर्ह्यतिशयवत्त्वादिति ॥ द्वितीयेऽपि कार्यसत्त्वमायातीत्याह—शक्तिश्चेति ॥ कार्यकारणाभ्यामन्या कार्यवदसती वा शक्तिर्न कार्यनियामिका । यस्य कस्यचिदन्यस्य नरश्रृङ्गस्य वा नियामकत्वप्रसङ्गादन्यत्वासत्त्वयोः शक्तावन्यत्र चाविशेषात् । तस्मात्कारणात्मना लीनं कार्यमेवाभिव्यक्तिनियामकतया शक्तिरित्येष्टव्यम् । ततः सत्कार्यसिद्धिरित्यर्थः । किञ्च कार्यकारणयोरन्यत्वे मृद्घटौ भिन्नौ सन्ताविति भेदबुद्धिः स्यादित्याह—अपि चेति ॥ तयोरन्यत्वेऽपि समवायवशात् तथा बुद्धिर्नोदेतीत्याशंक्य समवायं दूषयति—समवायेति ॥ समवायः समवायिभिः सम्बद्धो न वा ? आद्ये—सम्बन्धः किं समवायः—उत स्वरूपम् । आद्ये समवायानवस्था। द्वितीये मृद्घटयोरपि स्वरूपसम्बन्धादेवोपपत्तेः समवायासिद्धिः । असम्बद्ध इति पक्षे दोषमाह—

भामती ।

भाष्येण व्याख्यातम् ॥ १७ ॥ युक्तेः शब्दान्तराच्च । अतिशयवत्त्वात्प्रागवस्थाया इति । अतिशयो हि धर्मो नासत्यतिशयवति कार्ये भवितुमर्हतीति । ननु न कार्यस्यातिशयो नियमहेतुरपि तु कारणस्य शक्तिभेदः, स चासत्यपि कार्ये कारणस्य सत्त्वात्सन्नेवेत्यत आह—शक्तिश्चेति । नान्या कार्यकारणाभ्यां, नाप्यसती कार्यात्मनेति योजना । अपि च कार्यकारणयोरिति । यद्यपि 'भावाच्चोपलब्धेः'

आनन्दगिरीय—न्यायनिर्णयः ।

मकमतिशयमाशङ्कते—अथेति । अतिशयो हि कार्यस्य कारणस्य वेति विकल्प्याऽऽद्ये धर्मस्य धर्मिपरतन्त्रत्वादपसिद्धान्तापत्तिरित्याह—अत इति । सार्वविभक्तिकत्वात्तसिः सप्तम्यर्थे शङ्कितपक्षवाची । प्रागवस्था दध्यादिकार्यावस्था । द्वितीयं दूषयति—शक्तिश्चेति । कारणस्य हि धर्मः शक्तिरतिशयशब्दिता नियामकत्वेनेष्टा कार्यकारणाभ्यामन्या कार्यात्मना चासती कार्यं न नियच्छेदित्यत्र हेतुमाह—असत्त्वेति । कार्यात्मना शक्तेरसत्त्वे तथैवानियामकत्वमसत्त्वस्योभयत्र तुल्यत्वात् । द्वाभ्यामन्यत्वे च तस्या न नियामकत्वं तयोरिवान्योन्यं शक्तेस्ताभ्यामन्यत्वस्येष्टत्वादित्यर्थः । शक्तेरसत्त्वेऽन्यत्वे च नियामकत्वासंभवे फलितमाह—तस्मादिति । तथा चापसिद्धान्ततादवस्थ्यमिति शेषः । असत्कार्यवादे दोषान्तरमाह—अपि चेति । भेदबुद्ध्यभावे समवायो निमित्तं न तु तादात्म्यमित्याशंक्य समवायस्तर्हि परतन्त्रः स्वतन्त्रो वेति विकल्प्याऽऽद्ये संबन्धद्वारा स्वभावाद्वा पारतन्त्र्यमिति पुनर्विकल्प्याऽऽद्यं प्रत्याह—समवायेति

**तस्यतस्यान्योऽन्यः सम्बन्धः कल्पयितव्य इत्यनवस्थाप्रसङ्गः ॥ अनभ्युपगम्यमाने वा विच्छेदप्रसङ्गः ॥ अथ समवायस्स्वयंसम्बन्धरूपत्वादनपेक्ष्यैवापरं सम्बन्धं सम्बध्यते, संयोगोऽपि तर्हि स्वयं सम्बन्धरूपत्वादनपेक्ष्यैव समवायं सम्बध्येत ॥ तादात्म्यप्रतीतेश्च द्रव्यगुणादीनां समवायकल्पनानर्थक्यम् ॥**

रत्नप्रभा ।

**अनभ्युपगम्यमाने इति** ॥ द्रव्यगुणादीनां विशिष्टधीविरहप्रसङ्गः । असम्बद्धस्य विशिष्टधीनियामकत्वायोगादित्यर्थः । विशिष्टधीनियामको हि सम्बन्धः । न तस्य नियामकान्तरापेक्षा । अनवस्थानात् । अतः स्वपरनिर्वाहकः समवाय इति शंकते—**अथेति** ॥ **सम्बध्यते** स्वस्य स्वसम्बन्धिनश्च विशिष्टधियं करोतीत्यर्थः । प्रतिबन्द्या दूषयति—**संयोगोऽपीति** ॥ यत्तु गुणत्वात्संयोगस्य समवायापेक्षा । न सम्बन्धत्वादिति । तन्न । धर्मत्वात् समवायस्यापि सम्बन्धान्तरापत्तेः । असम्बद्धस्याश्वत्वस्य गोधर्मत्वादर्शनात् । किञ्च 'निष्पापत्वादयो गुणाः' इति श्रुतिस्मृत्यादिषु 'व्यवहारादिष्टधर्मोः गुणः' इति परिभाषया समवायस्यापि गुणत्वाच्च । जातिविशेषो गुणत्वमिति परिभाषा तु समवायसिद्ध्युत्तरकालीना । नित्याऽनेकसमवेता जातिः—इति ज्ञानस्य समवायज्ञानाधीनत्वात् । अतः समवायसिद्धेः प्राक् संयोगस्य गुणत्वमसिद्धमिति दिक् । किञ्च प्रतीत्यनुसारेण वस्तु स्वीकार्यम् । अन्यथा गोप्रतीतेरश्व आलम्बनमित्यस्यापि सुवचत्वात् । तथा च मृद्घट इत्यभेदप्रतीतेरभेद एव स्वीकार्यः । ताभ्यामत्यन्तभिन्नस्य समवायस्य तन्नियामकत्वासम्भवादित्याह—**तादात्म्येति** ॥ एवं प्रतीत्यनुसारेण कार्यस्य कारणात्मना सत्त्वं,

भामती ।

इत्यत्रायमर्थ उक्तस्तथापि समवायदूषणाय पुनरवतारितः । **अनभ्युपगम्यमाने च** समवायस्य समवायिभ्यां संबन्धे विच्छेदप्रसङ्गोऽवयवावयविद्रव्यगुणादीनां मिथः । न ह्यसंबद्धः समवायिभ्यां समवायः समवायिनौ संबन्धयेदिति । शङ्कते—**अथ समवायः स्वयमिति** । यथा हि सत्त्वयोगाद्द्रव्यगुणकर्माणि सन्ति सत्त्वं तु स्वभावत एव सदिति न सत्त्वान्तरयोगमपेक्षते, तथा समवायः समवायिभ्यां संबद्धुं न संबन्धान्तरयोगमपेक्षते, स्वयं संबन्धरूपत्वादिति । तदेतत्सिद्धान्तान्तरविरोधापादनेन निराकरोति—**संयोगोऽपि तर्हीति** । न च संयोगस्य कार्यत्वात् कार्यस्य च समवायिकारणाधीनजन्मत्वात् असमवाये च तदनुपपत्तेः समवायकल्पना संयोग इति वाच्यम् । अजसंयोगे तदभावप्रसङ्गात् । अपि च, संबन्धाधीननिरूपणः समवायो यथा संबन्धिद्वयभेदे न भिद्यते तन्नाशे च न नश्यत्यपि तु नित्य एक एवं संयोगोऽपि भवेत् । ततः को दोषः । अथैतत्प्रसङ्गभिया संयोगवत्समवायोऽपि प्रतिसंबन्धिमिथुनं भिद्यते चानित्यश्चेत्यभ्युपेयते, तथा सति यथैकस्मान्निमित्तकारणादेव जायत एवं संयोगोऽपि निमित्तकारणादेव जनिष्यत इति समानम् । **तादात्म्यप्रतीतेश्चेति** । संबन्धावगमो हि संबन्धकल्पनाबीजं न तादात्म्या-

आनन्दगिरीय—न्यायनिर्णयः ।

समवायस्य स्वातन्त्र्यपक्षं दूषयति—**अनभ्युपगम्यमाने चेति** । समवायस्य समवायिभिः संबन्धो नेष्यते किंतु स्वातन्त्र्यमेवेत्यत्रावयवावयविनोर्द्रव्यगुणादीनां च विप्रकर्षः स्यात्संनिधापकाभावादित्यर्थः । स्वभावादेव समवायस्य पारतन्त्र्यमिति पक्षमुत्थापयति—**अथेति** । स्वपरनिर्वाहकत्वं संयोगस्यापि स्यादविशेषादिति परिहरति—**संयोगोऽपीति** । तर्कपादे चैतद्व्यक्तीभविष्यति । द्रव्यगुणादिषु समवायकल्पनामङ्गीकृत्य दोषमुक्त्वा तत्कल्पनैवायुक्तेत्याह—**तादात्म्येति** । सिद्धे हि भेदे द्रव्यगुणादीनां समवायसिद्धिः, समवायसिद्धौ च भेदसिद्धिरित्यन्योन्याश्रयता । न हि सामानाधिकरण्येन तादात्म्ये तेषां

**कथं च कार्यमवयविद्रव्यं कारणेष्ववयवद्रव्येषु वर्तमानं वर्तेत ॥ किं समस्तेष्ववयवेषु वर्तेतोत प्रत्यवयवम् । यदि तावत्समस्तेषु वर्तेत, ततोऽवयव्यनुपलब्धिः प्रसज्येत ॥ समस्तावयवसन्निकर्षस्याशक्यत्वात् । न हि बहुत्वं समस्तेष्वाश्रयेषु वर्तमानं व्यस्ताश्रयग्रहणेन गृह्यते ॥ अथाऽवयवशः समस्तेषु वर्तेत, तदाप्यारम्भकावयवव्यतिरेकेणावयविनोऽवयवाः कल्प्येरन् ॥ यैरवयवैरारम्भकेष्ववयवेष्ववयवशोऽवयवी वर्तेत । कोशावयवव्यतिरिक्तैर्ह्यवयवैरसिः कोशं व्याप्नोति ॥ अनवस्था चैवं प्रसज्येत ॥ तेषुतेष्ववयवेषु वर्तयितुमन्येषामन्येषामवयवानां कल्पनीयत्वात् ॥ अथ प्रत्यवयवं वर्तेत तदैकत्र व्यापारेऽन्यत्राव्यापारः स्यात् ॥**

---

रत्नप्रभा ।

स्वरूपेण तु मिथ्यात्वमित्युक्तम् । वृत्त्यनिरूपणाच्च तस्य मिथ्यात्वमित्याह—**कथं चेति** ॥ तत्र आद्यम् अनूद्यावयविनः पटादेस्तन्त्वादिष्ववयवेषु त्रित्वादिवत् स्वरूपेण वृत्तिः, उतावयवश इति विकल्प्य **आद्यं** दूषयति—**यदीत्यादिना** ॥ व्यासज्यवृत्तिवस्तुप्रत्यक्षस्य यावदाश्रयप्रत्यक्षजन्यत्वात् संवृतपटादेर्यावदवयवानामप्रत्यक्षत्वादप्रत्यक्षत्वं प्रसज्येतेत्यर्थः । **द्वितीयं** शङ्क्यते—**अथेति** ॥ यथा हस्ते कोशे चावयवशः खड्गो वर्तमानो हस्तमात्रग्रहेऽपि गृह्यते, एवं यत्किञ्चिदवयवग्रहेणावयविनो ग्रहसम्भवेऽप्यवयवानामनवस्था स्यादिति दूषयति—**तदापीति** ॥ **आद्यद्वितीयम्** उद्भाव्य दूषयति—**अथ प्रत्यवयवमित्यादिना** ॥ एकस्मिंस्तन्तौ पटवृत्तिकाले तन्त्वन्तरे वृत्तिर्न स्यात् । वृत्तावनेकत्वापत्तेरित्यर्थः । यथा युगपदनेकव्यक्तिषु

भामती ।

वगमः, तस्य नानात्वैकाश्रयसंबन्धविरोधादिति । वृत्तिविकल्पेनावयवातिरिक्तमवयविनं दूषयति—**कथं च कार्यमिति । समस्तेति** । मध्यपरभागयोरर्वाग्भागव्यवहितत्वात् । अथ समस्तावयवव्यासङ्ग्यपि कतिपयावयवस्थानो ग्रहीष्यत इत्यत आह—**न हि बहुत्वमिति । अथावयवश इति** । बहुत्वसंख्या हि स्वरूपेणैव व्यासज्य संख्येयेषु वर्तत इत्येकतमसंख्येयाग्रहणेऽपि न गृह्यते, समस्तव्यासङ्गित्वात्तद्रूपस्य । अवयवी तु न स्वरूपेणावयवान्व्याप्नोति, अपि त्ववयवशः । तेन यथा सूत्रमवयवैः कुसुमानि व्याप्नुवन्न समस्तकुसुमग्रहणमपेक्षते कतिपयकुसुमस्थानस्यापि तस्योपलब्धेः, एवमवयव्यपीति भावः । निराकरोति—**तदापीति** ।

आनन्दगिरीय—न्यायनिर्णयः ।

भाति स्वारसिको भेदः सिध्यतीति भावः । असत्कार्यवादनिरासेन कार्यस्य कारणे कल्पितत्वमुक्तम् । इदानीं कार्यस्य कारणे वृत्त्यनुपपत्तेश्च कल्पितत्वमित्याह—**कथं चेति** । कथंशब्दसूचितं विकल्पद्वयं विशदयति—**किमिति** । तत्राऽऽद्यमनूद्यावयविनः स्वरूपेण वाऽवयवेषु वृत्तिरवयवशो वेति विकल्प्याऽऽद्ये दोषमाह—**यदीत्यादिना** । तत्र हेतुमाह—**समस्तेति** । मध्यपरभागयोरर्वाग्भागव्यवहितत्वादित्यर्थः । सर्वावयवव्याप्तावपि कतिपयावयवसंनिकर्षादवयविनो दृष्टिरिष्टेत्याशंक्याऽऽह—**न हीति** । कल्पान्तरमुत्थापयति—**अथेति** । तथा च यथाऽवयवैः सूत्रं कुसुमानि व्याप्नुवत्कतिपयकुसुमग्रहणेऽपि गृह्यते तथा कतिपयावयवग्रहणेऽपि भवत्यवयविनो ग्रहणमित्यर्थः । तत्र किमारम्भकावयवैरेव तेष्ववयवी वर्तते किंवा तदतिरिक्तावयवैरिति विकल्प्याऽऽद्यं प्रत्याह—**तदाऽपीति** । यत्र यद्वर्तते तत्तदतिरिक्तावयवैरेव तत्र वर्तमानं दृष्टमिति दृष्टान्तगर्भं हेतुमाचष्टे—**कोशेति** । द्वितीयं दूषयति—**अनवस्थेति** । कल्पितानन्तावयवव्यवहिततया प्रकृतावयविनो दूरविप्रकर्षात्तन्तुनिष्ठत्वं पटस्य न स्यादिति भावः । कल्पान्तरमनुवदति—**अथेति** । तत्रापि क्रमेण वा प्रत्यवयवं वर्तेताक्रमेण वेति विकल्प्याऽऽद्ये दोषमाह—**तदेति** । तदेव दृष्टान्तेनोपपाद-

न हि देवदत्तः स्रुघ्ने सन्निधीयमानस्तदहरेव पाटलिपुत्रेऽपि सन्निधीयते ॥ युगपदनेकत्र वृत्तावनेकत्वप्रसङ्गः स्याद्देवदत्तयज्ञदत्तयोरिव स्रुघ्नपाटलिपुत्रनिवासिनोः ॥ गोत्वादिवत्प्रत्येकं परिसमाप्तेरदोष इति चेत् ॥ न ॥ तथा प्रतीत्यभावात् ॥ यदि गोत्वादिवत्प्रत्येकं परिसमाप्तोऽवयवी स्याद्, यथा गोत्वं प्रतिव्यक्ति प्रत्यक्षं गृह्यते, एवमवयव्यपि प्रत्यवयवं प्रत्यक्षं गृह्येत ॥ न चैवं नियतं गृह्यते ॥ प्रत्येकपरिसमाप्तौ चावयविनः कार्येणाधिकारात्तस्य चैकत्वाच्छृङ्गेणापि स्तनकार्यं कुर्यात् ॥ उरसा च पृष्ठकार्यम् ॥ न चैवं दृश्यते ॥ प्रागुत्पत्तेश्च कार्यस्यासत्त्वे उत्पत्तिरकर्तृका निरात्मिका च स्यात् । उत्पत्तिश्च नाम क्रिया । सा सकर्तृकैव भवितुमर्हति, गत्यादिवत् ॥ क्रिया च नाम स्याद्, अकर्तृका चेति विप्रतिषिध्येत ॥ घटस्य चोत्पत्तिरुच्यमाना न घटकर्तृका, किं तर्हि अन्यकर्तृकेति

रत्नप्रभा ।

वृत्तावपि जातेरनेकत्वदोषो नास्ति, तथाऽवयविन इत्याशंकते–गोत्वेति ॥ जातिवदवयविनो वृत्तिरसिद्धा । अनुभवाभावादिति परिहरति–न तथेति ॥ दोषान्तरमाह–प्रत्येकेति ॥ अधिकारासम्बन्धाद् यथा देवदत्तः स्वकार्यमध्ययनं ग्रामेऽरण्ये वा करोति । तथा गौरवयवी स्वकार्यं क्षीरादिकं शृङ्गपुच्छादावपि कुर्यादित्यर्थः । एवं वृत्त्यनिरूपणादनिर्वाच्यत्वं कार्यस्य दर्शितम् । सम्प्रत्यसत्कार्यवादे दोषान्तरमाह–प्रागिति ॥ यथा घटश्चलतीत्युक्ते चलनक्रियां प्रत्याश्रयत्वरूपं कर्तृत्वं घटस्य भाति तथा पटो जायत इति जनिक्रियाकर्तृत्वमनुभूयते । अतो जनिकर्तुः जनेः प्राक् सत्त्वं वाच्यम् । कर्तुरसत्त्वे क्रियाया अप्यसत्त्वापत्तेरित्यर्थः । जनेरनुभवसिद्धेऽपि सकर्तृकत्वे क्रियात्वेनानुमानमाह–उत्पत्तिश्चेति ॥ असतो घटस्योत्पत्तौ कर्तृत्वासम्भवेपि कुलालादेः सत्त्वात् कर्तृत्वमित्याशंक्याह–घटस्य चेति॥

भामती ।

शङ्कते–गोत्वादिवदिति । निराकरोति–नेति । यद्यपि गोत्वस्य सामान्यस्य विशेषा अनिर्वाच्या न परमार्थसन्तस्तथा च क्वास्य प्रत्येकपरिसमाप्तिरिति, तथाप्यभ्युपेत्येदमुदितमिति मन्तव्यम् । अकर्तृका यतोऽतो निरात्मिका स्यात् । कारणाभावे हि कार्यमनुत्पन्नं किं नाम भवेत् । अतो निरात्मकत्वमित्यर्थः । यद्युच्येत घटशब्दस्तदवयवेषु व्यापाराविष्टतया पूर्वापरीभावमापन्नेषु घटोपजननाभिमुखेषु तादर्थ्यनिमित्तादुपचारात्प्रयुज्यते, तेषां च सिद्धत्वेन कर्तृत्वमस्तीत्युपपद्यते घटो भवतीति प्रयोग इत्यत आह–घटस्य चोत्पत्तिरुच्यमानेति । उत्पादना हि सिद्धानां कपालकुलालादीनां व्यापारो नोत्पत्तिः ।

आनन्दगिरीय–न्यायनिर्णयः ।

यति–न हीति । द्वितीयं निराचष्टे–युगपदिति । यथा प्रतिव्यक्ति साकल्येन युगपद्वर्तमानं सामान्यं न भिद्यते तथाऽवयविनोऽपि वस्तुतो न भेदोऽस्तीति शङ्कते–गोत्वादिवदिति । वैषम्यं दर्शयन्दूषयति–न तथेति । तदेव स्पष्टयति–यदीति । प्रत्येकमवयवेष्ववयविनः परिसमाप्तिपक्षे दोषान्तरमाह–प्रत्येकेति । यद्धि गोत्वस्य शाबलेये कार्यं न तद्बाहुलेयेऽस्ति तथेहापि स्यादित्याशंक्याऽऽह–कार्येणेति । न हि गोत्वस्य कार्यान्वयः किंतु व्यक्तेरेव प्रकृते त्ववयवानां तदनन्वयादवयविनस्तद्भावात्तस्य सर्वत्रैक्यादर्थक्रियाव्यवस्थानुपपत्तिः । न च तत्तदवयवनिष्ठस्यैवावयविनस्तत्कार्यमवयवानां कार्यानन्वये सत्युक्तनियमायोगात्प्रतीत्या तन्नियमे युक्त्यभिमानित्वव्याघातादिति भावः । वृत्तिविकल्पानुपपत्त्या कार्यस्य कारणे कल्पितत्वं प्रसाध्यासत्कार्यवादे दोषान्तरमाह–प्रागिति । भवत्वकर्तृकत्वमित्याशंक्याऽऽश्रयरूपकारणाभावादुत्पत्तिक्रियाख्यं कार्यमनुत्पन्नं निरात्मकं स्यादित्याह–निरात्मिकेति । इतश्चोत्पत्तेरकर्तृकत्वमयुक्तमित्यनुमानेन दर्शयति–उत्पत्तिश्चेति । क्रियात्वेऽपि सकर्तृकत्वाभावे किं बाधकमित्याशंक्याऽऽह–क्रिया चेति । अस्तु तर्हि कारणाश्रयोत्पत्तिस्तथा च सिद्धसाध्यतेत्याशंक्याऽऽह–घटस्येति । घटोत्पत्तावुक्त-

कल्प्या स्यात् ॥ तथा कपालादीनामप्युत्पत्तिरुच्यमानाऽन्यकर्तृकैव कल्प्येत ॥ तथा च सति घट उत्पद्यत इत्युक्ते कुलालादीनि कारणान्युत्पद्यन्त इत्युक्तं स्यात् ॥ न च लोके घटोत्पत्तिरित्युक्ते कुलालादीनामप्युत्पद्यमानता प्रतीयते ॥ उत्पन्नताप्रतीतेश्च ॥ अथ स्वकारणसत्तासम्बन्ध एवोत्पत्तिरात्मलाभश्च कार्यस्येति चेत् ॥ कथमलब्धात्मकं सम्बध्येतेति वक्तव्यम् ॥ सतोर्हि द्वयोस्सम्बन्धस्सम्भवति ॥ न सदसतोः, असतोर्वा ॥ अभावस्य च निरुपाख्यत्वात्प्रागुत्पत्तेरिति मर्यादाकरणमनुपपन्नम् । सतां हि लोके क्षेत्रगृहादीनां मर्यादा दृष्टा नाभावस्य ॥

---

रत्नप्रभा ।

घटोत्पत्तिवदसत्कपालाद्युत्पत्तिरित्यतिदिशति-**तथेति** ॥ शंकामनूद्य दोषमाह-**तथा चेति** ॥ अनुभवविरोध इत्यर्थः । उत्पत्तिर्भावस्याद्या विक्रियेति स्वमतेन कार्यसत्त्वमानीतम् । सम्प्रति कार्यस्योत्पत्तिर्नाम स्वकारणे समवायः स्वस्मिन् सत्तासमवायो वेति तार्किकमतमाशंकते-**अथेति** ॥ तन्मतेनापि कार्यस्य सत्त्वमावश्यकम् । असतः सम्बन्धित्वायोगादित्याह-**कथमिति** ॥ **असतोर्वेति** दृष्टान्तोक्तिः । ननु नरशृङ्गादिवत् कार्यं सर्वदा सर्वत्रासन्न भवति । किन्तूत्पत्तेः प्रागू ध्वंसानन्तरं चासत् । मध्ये तु सदेवेति वैषम्यात् सम्बन्धित्वोपपत्तिरित्याशंक्याह-**अभावस्येति** । अत्राभावशब्दा असच्छब्दापरपर्याया व्याख्येयाः । असतः कालेनासम्बन्धात् प्राक्त्वं न युक्तमित्यर्थः । ननु कारकव्यापारादूर्ध्वभाविनः कार्यस्य

भामती ।

न चोत्पादनैवोत्पत्तिः, प्रयोज्यप्रयोजकव्यापारयोर्भेदात् । अभेदे वा घटमुत्पादयतीतिवद्घटमुत्पद्यत इत्यपि प्रसङ्गात् । तस्मात् करोतिकारयत्योरिव घटगोचरयोर्भृत्यस्वामिसमवेतयोरुत्पत्त्युत्पादनयोरधिष्ठानभेदोऽभ्युपेतव्यः, तत्र कपालकुलालादीनां सिद्धानामुत्पादनाधिष्ठानानां नोत्पत्त्यधिष्ठानत्वमस्तीति पारिशेष्याद्घट एव साध्य उत्पत्तेरधिष्ठानमेपितव्यः । न चासत्वसन्नधिष्ठानं भवितुमर्हतीति सत्त्वमस्याभ्युपेयम् । एवं च घटो भवतीति घटव्यापारस्य धातूपात्तत्वात्तत्रास्य कर्तृत्वमुपपद्यते, तण्डुलानामिव सतां विक्लित्तौ विक्लिद्यन्ति तण्डुला इति । शङ्कते-**अथ स्वकारणसत्तासंबन्ध एवोत्पत्तिरिति** । एतदुक्तं भवति-नोत्पत्तिर्नाम कश्चिद्व्यापारः, येनासिद्धस्य कथमत्र कर्तृत्वमित्यनुयुज्येत, किंतु स्वकारणसमवायः स्वसत्तासमवायो वा, स चासतोऽप्यविरुद्ध इति । सोऽप्यसतोऽनुपपन्न इत्याह-**कथमलब्धात्मकमिति** । अपि च प्रागुत्पत्तेरसत्त्वं कार्यस्येति कार्याभावस्य भावेन मर्यादाकरणमनुपपन्नमित्याह-**अभावस्य चेति** ।

आनन्दगिरीय-न्यायनिर्णयः ।

न्यायं कपालोत्पत्तावतिदिशति-**तथेति** । इष्टापत्तिमाशंक्य निराचष्टे-**तथा चेति** । उत्पादना हि कारकव्यापारो नोत्पत्तिर्न च तयोरैक्यं प्रयोज्यप्रयोजकव्यापारतया भिन्नत्वादन्यथा घटमुत्पादयतीतिवद्घटमुत्पाद्यत इति स्यादिति भावः । ननु घटो जायत इत्यत्र घटशब्दो घटजननोन्मुखेषु कारकेषु तादात्म्यनिमित्तोपचारात्प्रयुज्यते । तथा च घटोत्पत्त्युक्तौ कुलालादिकारकोत्पत्त्युक्तिरविरुद्धेति तत्राऽऽह-**न चेति** । सिद्धसाध्यत्वाभावेऽपि क्रियात्वहेतोरसिद्धिरिति शङ्कते-**अथेति** । स्वकारणसत्तासंबन्धः स्वकारणसमवायः सत्तासमवायो वेति यावत् । कार्यस्य क्रियारूपोत्पत्त्यनभ्युपगमे कथमात्मलाभः स्यादित्याशंक्याऽऽह-**आत्मलाभश्चेति**।क्रियात्वाभावमङ्गीकृत्योत्पत्तेः साश्रयत्वं साधयति-**कथमिति**।आक्षेपमेव विवृणोति-**सतोर्हीति** ।असतोर्वेति दृष्टान्तोक्तिः । उत्पत्तिः साश्रया संबन्धत्वात्संयोगवदित्यक्रियात्वेऽपि शक्यं साश्रयत्वं प्रतिपादयितुमिति भावः ।कार्यस्यासतोऽपि तदाश्रयत्वोपपत्तेः सिद्धसाध्यतेत्याशंक्य निरुपाख्यत्वं तद्विलक्षणत्वं वा कार्यस्य विवक्षितमिति विकल्प्याऽऽद्ये मर्यादाकरणानुपपत्तिरित्याह-**अभावस्येति** । कार्यशब्दितस्येति शेषः । अनुपपत्तिमेव स्फोरयति-**सतां हीति** । अभावस्य मर्यादा न दृष्ट-

न हि वन्ध्यापुत्रो राजा बभूव प्राक्पूर्णवर्मणोऽभिषेकादित्येवंजातीयकेन मर्यादाकरणेन निरुपाख्यो वन्ध्यापुत्रो राजा बभूव भवति भविष्यतीति वा विशेष्यते ॥ यदि च वन्ध्यापुत्रोपि कारकव्यापारादूर्ध्वमभविष्यत, तत इदमप्युपापत्स्यत, कार्याभावोऽपि कारकव्यापारादूर्ध्वं भविष्यतीति ॥ वयं तु पश्यामः । वन्ध्यापुत्रस्य कार्याभावस्य चाभावत्वाविशेषाद्यथा वन्ध्यापुत्रः कारकव्यापारादूर्ध्वं न भविष्यति, एवं कार्याभावोऽपि कारकव्यापारादूर्ध्वं न भविष्यतीति ॥ नन्वेवं सति कारकव्यापारोऽनर्थकः प्रसज्येत ॥ यथैव हि प्राक्सिद्धत्वात्कारणस्य स्वरूपसिद्धये न कश्चिद्व्याप्रियते, एवं प्राक्सिद्धत्वात्, तदनन्यत्वाच्च कार्यस्वरूपप्रसिद्धयेऽपि न कश्चिद्व्याप्रियेत ॥ व्याप्रियते च ॥ अतः कारकव्यापारार्थवत्त्वाय मन्यामहे प्रागुत्पत्तेरभावः कार्यस्येति ॥ नैष दोषः ॥

रत्नप्रभा ।

वन्ध्यापुत्रतुल्यत्वं कथमित्यत आह–**यदि चेति** ॥ **कार्याभावः** । असत्कार्यमित्यर्थः ॥ इति **उपापत्स्यत** उपपन्नमभविष्यदित्यन्वयः ॥ कस्तर्हि निर्णयः, तमाह–**वयं त्विति** ॥ "नासतो विद्यते भावः" [ भ० गी० २ । १६ ] इति स्मृतेरिति भावः । सत्कार्यवादे कारकवैयर्थ्यं शंकते–**नन्विति** ॥ सिद्धकारणानन्यत्वाच्च कार्यस्य सिद्धत्वमित्याह–**तदनन्यत्वाच्चेति** ॥ अनिर्वाच्यकार्यात्मना कारणस्याभिव्यक्त्यर्थः । कारकव्यापार इत्याह–**नैष दोष इति** ॥ कार्यसत्यत्वमिच्छतां सांख्यानां सत्कार्यवादे कारकवैयर्थ्यं दोष आपतति । अभिव्यक्तेरपि सत्त्वात् । अद्वैतवादिनां त्वघटितघटनावभासनचतुरमायामहिम्ना

भामती ।

स्यादेतत् । अत्यन्ताभावस्य वन्ध्यासुतस्य मा भून्मर्यादानुपाख्यो हि सः, घटप्रागभावस्य तु भविष्यता घटेनोपाख्येयस्यास्ति मर्यादेत्यत आह–**यदि वन्ध्यापुत्रः कारकव्यापारादिति** । उक्तमेतदधस्ताद्यथा न जातु घटः पटो भवत्येवमसदपि सन्न भवतीति । तस्मान्मृत्पिण्डे घटस्यासत्त्वेऽत्यन्तासत्त्वमेवेति । अत्रासत्कार्यवादी चोदयति–**नन्वेवं सतीति** । प्राक्प्रसिद्धमपि कार्यं कदाचित्कारणेन योजयितुं व्यापारोऽर्थवान्भवेदित्यत आह–**तदनन्यत्वाच्चेति** । परिहरति–**नैष दोष इति** । उक्तमेतद्यथा भुजङ्गतत्त्वं न रज्जोर्भिद्यते, रज्जुरेव हि तत्, काल्पनिकस्तु भेदः, एवं वस्तुतः कार्यतत्त्वं न कार-

आनन्दगिरीय–न्यायनिर्णयः ।

त्यत्र दृष्टान्तमाह–**न हीति** । कार्यस्य कारकव्यापारसाध्यतया निरुपाख्यवैलक्षण्यान्न वन्ध्यापुत्रतुल्यतेति द्वितीयमाशंक्याऽऽह–**यदि चेति** । घटप्रागभावस्य घटेन प्रतियोगिनोपाख्येयतया कारकव्यापारसाध्यत्वं युक्तं वन्ध्यापुत्रस्य तु नैवमित्याशंक्याऽऽह–**वयं त्विति** । विमतं न कारकव्यापारवदसत्त्वात्संमतवदिति भावः । कार्यस्यासत्त्वं निरस्यता सत्त्वमेव साधितमिति मन्वानश्चोदयति–**नन्विति** । कारकव्यापारो हि सत्कार्यवादे कार्यस्वरूपसिद्धये वा तदनन्यत्वसिद्धये वा ? नाऽऽद्य इत्याह–**यथेति** । द्वितीयं प्रत्याह–**तदनन्यत्वाच्चेति** । कार्यस्य कारणेनाभिन्नत्वस्य सत्कार्यवादे सदा भावान्न तादर्थ्येनापि कारकव्यापारोऽर्थवानित्यर्थः । मा तर्हि कारकव्यापारो भूदित्याशंक्याऽऽह–**व्याप्रियते चेति** । परमते कारकव्यापारस्याऽऽनर्थक्यात्तदर्थवत्त्वानुपपत्तिरसत्त्वं कार्यस्य प्राक्काले साधयतीति फलितमाह–**अत इति** । मायाविनो व्याघ्राद्याकारतापत्तौ मन्त्राद्यपेक्षावत्कारणस्यापि कार्याकारापत्तौ कारकव्यापारापेक्षाऽस्तीति समाधत्ते–**नैष दोष इति** । ननु प्रागपि कार्याकारोऽस्ति न वा । प्रथमे कारक-

यतः कार्याऽऽकारेण कारणं व्यवस्थापयतः कारकव्यापारस्यार्थवत्त्वमुपपद्यते ॥ कार्याऽऽकारोऽपि कारणस्यात्मभूत एव ॥ अनात्मभूतस्यानारभ्यत्वादित्यभाणि ॥ न च विशेषदर्शनमात्रेण वस्त्वन्यत्वं भवति । न हि देवदत्तः सङ्कोचितहस्तपादः प्रसारितहस्तपादश्च विशेषेण दृश्यमानोऽपि वस्त्वन्यत्वं गच्छति ॥ स एवेति प्रत्यभिज्ञानात् ॥ तथा प्रतिदिनमनेकसंस्थानानामपि पित्रादीनां न वस्त्वन्यत्वं भवति ॥ मम पिता, मम भ्राता, मम पुत्र इति प्रत्यभिज्ञानात् । जन्मच्छेदानन्तरितत्वात्तत्रतत्र युक्तं नान्यत्रेति चेत् ॥ न ॥ क्षीरादीनामपि दध्याद्याकारसंस्थानस्य प्रत्यक्षत्वात् । अदृश्यमानानामपि वटधानादीनां समानजातीयावयवान्तरोपचितानामंकुरादिभावेन दर्शनगोचरतापत्तौ जन्मसंज्ञा ॥ तेषामेवावयवानामपचयवशाददर्शनापत्तावुच्छेदसंज्ञा ॥

रत्नप्रभा ।

स्वप्नवद्यथादर्शनं सर्वमुपपन्नम् । विचार्यमाणे सर्वमयुक्तम् । युक्तत्वे द्वैतापत्तेरिति मुख्यं समाधानम् । समाधानान्तराभावात् । ननु कारणाद्भिन्नमसदेवोत्पद्यत इति समाधानं किं न स्यादित्याशंक्यासत्पक्षस्य दूषणमुक्तं स्मरेत्याह—कार्याकारोऽपीति ॥ अतः कारणाद्भेदाभेदाभ्यां दुर्निरूपस्य सदसद्विलक्षणस्यानिर्वाच्याभिव्यक्तिरनिर्वाच्यकारकव्यापाराणां फलमिति पक्ष एव श्रेयानिति भावः । ननु मृद्यदृष्टपृथुबुध्नत्वाद्यवस्थाविशेषो घटे दृश्यते । तथा च घटो, मृद्भिन्नः, तद्विरुद्धविशेषवत्त्वाद् वृक्षवदित्यत आह—न चेति ॥ वस्तुतोऽन्यत्वं सत्यो भेदः । हेतोर्व्यभिचारस्थलान्तरमाह—तथा प्रतिदिनमिति ॥ प्रत्यहं पित्रादिदेहस्यावस्थाभेदेऽपि जन्मनाशयोरभावादभेदो युक्तः । दार्ष्टान्तिके तु मृदादिनाशे सति घटादिकं जायत इति जन्मविनाशरूपविरुद्धधर्मवत्त्वात् कार्यकारणयोरभेदो न युक्त इति शङ्कते—जन्मेति ॥ कारणस्य नाशाभावाद्धेत्वसिद्धिरिति परिहरति—नेति ॥ दधिघटादिकार्यान्वितत्वेन क्षीरमृदादीनां प्रत्यक्षत्वान्नाशासिद्धिरित्यर्थः । ननु यत्रान्वयो दृश्यते तत्र हेत्वसिद्धावपि यत्रांकुरादौ बटबीजादीनामन्वयो न दृश्यते तत्र हेतुसत्त्वाद्वस्त्वन्यत्वं स्यादित्यत आह—अदृश्येति ॥ तत्राप्यंकुरादौ बीजाद्यवयवाना-

भामती ।

णाद्भिद्यते कारणस्वरूपमेव हि तत्, अनिर्वाच्यं तु कार्यरूपं भिन्नमिवाभिन्नमिव चावभासत इति । तदिदमुक्तम्—वस्त्वन्यत्वमिति । वस्तुतः परमार्थतोऽन्यत्वं न विशेषदर्शनमात्राद्भवति । सांव्यावहारिकं तु

आनन्दगिरीय–न्यायनिर्णयः ।

व्यापारवैयर्थ्यम् । चरमे त्वसदुत्पत्तिस्तत्राऽऽह—कार्याकारोऽपीति । रज्जुरिव भुजंगस्य कारणमेव कार्यस्य तत्त्वमतो निर्वाच्यं कार्यरूपं भिन्नमिव चान्नमिव च भात्यसत्कार्यवादस्य प्रागुक्तन्यायप्रत्युदस्तत्वादित्यर्थः । विवर्तवादेन परिहारमुक्त्वा परिणामवादेनापि परिहरति—न चेति । वस्त्वन्यत्वं परमार्थतो भिन्नत्वमिति यावत् । तदेव दृष्टान्तेन स्पष्टयति—न हीति । देवदत्ते विशेषदृष्टिमात्रेण वस्तुतोऽन्यत्वाभावे हेतुमाह—स एवेति । उक्तार्थमुदाहरणान्तरेण द्रढयति—तथेति । दृष्टान्ते जन्मोच्छेदव्यवधानाभावान्न वस्त्वन्यत्वमिति युक्तं, दार्ष्टान्तिके तु वस्त्वन्यत्वमेव जन्मोच्छेदरूपविरुद्धधर्माध्यासादिति शङ्कते—जन्मेति । हेत्वसिद्ध्या परिहरति—नेत्यादिना । क्षीरस्य मृदः सुवर्णादीनां च दधिघटरुचकादिभावस्याध्यक्षत्वात्संस्थाननाशेऽपि तदन्वयिन एवोपादानत्वाद्धेत्वसिद्धिरित्यर्थः । यत्रान्वयो दृश्यते तत्र हेत्वसिद्धावपि यत्र वटबीजादीनामंकुरादावन्वयो न दृश्यते जन्मविनाशव्यवधानात्तत्र वस्त्वन्यत्वमित्याशंक्याऽऽह—अदृश्यमानानामिति । तत्राप्यन्वयिनामवयवानां न स्त एव जन्मविनाशौ किंत्ववयवोपचयापचयनिमित्तस्त-

**तत्रेदृग्जन्मोच्छेदान्तरितत्वेन चेदम् ॥ अतः सत्त्वापत्तिः । सतश्चासत्त्वापत्तिः ॥ तथा सति गर्भवासिन उत्तानशायिनश्च भेदप्रसङ्गः ॥ तथा बाल्ययौवनस्थाविरेष्वपि भेदप्रसङ्गः ॥ पित्रादिव्यवहारलोपप्रसङ्गश्च॥ एतेन क्षणभङ्गवादः प्रतिवदितव्यः ॥ यस्य पुनः प्रागुत्पत्तेरसत्कार्यं, तस्य निर्विषयः कारकव्यापारः स्यात् ॥ अभावस्य विषयत्वानुपपत्तेः॥ आकाशहननप्रयोजनखड्गाद्यनेकायुधप्रयुक्तिवत् ॥ समवायिकारणविषयः कारकव्यापारः स्यादिति चेत् ॥ न ॥ अन्यविषयेण कारकव्यापारेणान्यनिष्पत्तेरतिप्रसङ्गात् ॥ समवायिकारणस्यैवात्मातिशयः कार्यमिति चेत् ॥ तर्हि सत्कार्यतापत्तिः ॥ तस्मात्क्षीरादीन्येव द्रव्याणि दध्यादिभावेनावतिष्ठमानानि कार्याख्यां लभन्त इति न कारणादन्यत्कार्यं वर्षशतेनापि शक्यं कल्पयितुम् ॥ तथा मूलकारणमेवान्त्यात्कार्यात्तेनतेन कार्याकारेण नटवत्सर्वव्यवहारास्पदत्वं प्रतिपद्यते ॥ एवं युक्तेः कार्यस्य प्रागुत्पत्तेस्सत्त्वमनन्यत्वं च कारणादवगम्यते ॥ शब्दान्तराच्चैतदवगम्यते ॥**

---

रत्नप्रभा ।

मन्वयान्न स्त एव जन्मविनाशौ । किन्त्ववयवान्तरोपचयापचयाभ्यां तद्व्यवहार इत्यर्थः । अस्तूपचयापचयलिङ्गेन वस्तुभेदानुमानं, ततोऽसत उत्पत्तिः, सतो नाश इत्याशंक्य व्यभिचारमाह—**तत्रेदृगिति** ॥ पितृदेहेऽपि भेदसत्त्वान्न व्यभिचार इत्यत्र बाधकमाह—**पित्रादीति** ॥ **एतेनेति** ॥ कारणस्य सर्वकार्येष्वन्वयकथनेनेत्यर्थः ॥ स्वपक्षे दोषं परिहृत्य परपक्षे प्रसञ्जयति—**यस्य पुनरिति** । असतः कार्यस्य कारकव्यापाराऽऽहितातिशयाश्रयत्वायोगादविषयत्वेऽपि मृदादेर्विषयत्वं स्यादिति शंकते—**समवायीति** ॥ समवायिकारणात् कार्यं भिन्नमभिन्नं वेति विकल्प्य—आद्यं—निरस्यति—**नेत्यादिना** ॥ द्वितीयम्—आशंक्येष्टापत्तिमाह—**समवायीति** ॥ कार्याणामवान्तरकारणानन्यत्वमुपसंहरति—**तस्मादिति** ॥ परमकारणानन्यत्वं फलितमाह—**तथा मूलेति** ॥ असत्कार्यवादे प्रतिज्ञाबाधः स्यादित्याह—

भामती ।

कथंचित्तत्त्वान्यत्वे भवत एवेत्यर्थः । अनयैव हि दिशैष संदर्भो योज्यः । असत्कार्यवादिनं प्रति दूषणान्तरमाह—**यस्य पुनरिति** । कार्यस्य कारणादभेदे सविषयत्वं कारकव्यापारस्य स्यान्नान्यथेत्यर्थः । **मूलकारणं** ब्रह्म । शब्दान्तराच्चेति सूत्रावयवमवतार्य व्याचष्टे—**एवं युक्तेः कार्यस्येति** । अतिरोहितार्थम् ॥ १८ ॥

आनन्दगिरीय-न्यायनिर्णयः ।

द्व्यवहार इति नास्ति वस्त्वन्यत्वमित्यर्थः । यथोक्तजन्मविनाशोपगमेनापि वस्त्वन्यत्वमनुमेयमित्याशंक्यानैकान्तिकत्वमाह—**तत्रेति** । बीजांकुरादाविति यावत् । व्यभिचारान्तरमाह—**तथेति** । अतिप्रसङ्गाच्च भेदानुमानमयुक्तमित्याह—**पित्रादीति** । अन्वयिकारणस्य प्रत्यभिज्ञायमानतया नित्यत्वसाधनेन क्षणभङ्गवादोऽपि प्रत्युक्तो वेदितव्य इति प्रसङ्गादतिदिशति—**एतेनेति** । स्वपक्षे दोषं परिहृत्य परपक्षे तं प्रसञ्जयति—**यस्येति** । तन्मते कारकव्यापारस्य कार्यप्रागभावो वा तत्समवायिकारणं वा विषयो नाऽऽद्य इत्याह—**अभावस्येति** । द्वितीयं शङ्कते—**समवायीति** । कार्यं समवायिकारणाद्भिन्नमभिन्नं वेति विकल्प्याऽऽद्यं निरस्यति—**नेत्यादिना** । द्वितीयं शंकित्वा दूषयति—**समवायीति** । असत्कार्यवादनिरसनफलमुपसंहरति—**तस्मादिति** । कार्यस्य कारणादभेदे कारकव्यापारस्य सविषयत्वं नान्यथेति तच्छब्दार्थः । कथं तर्हि प्रतिकार्यं क्षीरादिकारणभेदात्कारणत्वं ब्रह्मणः सिध्यतीत्याशंक्याऽऽह—**तथेति** । कारणान्नान्यत्कार्यमिति स्थिते सतीत्यर्थः । विवर्तवादं व्यक्तीकर्तुं नटवदित्युदाहरणम् । युक्तेरितिसूत्रावयवव्याख्यानमुपसंहरति—**एवमिति** । सूत्रावयवान्तरमुपादत्ते—**शब्दान्तराच्चेति** । युक्तेरिव शब्दादपि

पूर्वसूत्रेऽसद्व्यपदेशिनश्शब्दस्योदाहृतत्वात्, ततोऽन्यः सद्व्यपदेशी शब्दः शब्दान्तरं, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" [ छां० ६।२।१ ] इत्यादि "तद्धैक आहुरसदेवेदमग्र आसीद्" [ छां० ६ । २ । १ ] इति चासत्पक्षमुपक्षिप्य कथमसतः सज्जायेतेत्याक्षिप्य "सदेव सोम्येदमग्र आसीद्" [ छां० ६ । २ । २ ] इत्यवधारयति ॥ तत्रेदंशब्दवाच्यस्य कार्यस्य प्रागुत्पत्तेस्सच्छब्दवाच्येन कारणेन सामानाधिकरण्यस्य श्रूयमाणत्वात्सत्त्वानन्यत्वे प्रसिध्यतः॥ यदि तु प्रागुत्पत्तेरसत्कार्यं स्यात्पश्चाच्चोत्पद्यमानं कारणे समवेयात्, तदाऽन्यत्कारणात्स्यात् ॥ तत्र "येनाश्रुतं श्रुतं भवति" [ छां० ६ । १ । ३ ] इतीयं प्रतिज्ञा पीडयेत, सत्त्वानन्यत्वावगतेस्त्वियं प्रतिज्ञा समर्थ्यते ॥ १८ ॥

## पटवच्च ॥ १९ ॥

यथा च संवेष्टितः पटो न व्यक्तं गृह्यते किमयं पटः किं वाऽन्यद्द्रव्यमिति । स एव प्रसारितो यत्संवेष्टितं द्रव्यं तत्पट एवेति प्रसारणेनाभिव्यक्तो गृह्यते ॥ यथा च संवेष्टनसमये पट इति गृह्यमाणोऽपि न विशिष्टायामविस्तारो गृह्यते स एव प्रसारणसमये विशिष्टायामविस्तारो गृह्यते, न संवेष्टितरूपादयं भिन्नः पट इति ॥ एवं तन्त्वादिकारणावस्थं पटादिकार्यमस्पष्टं सत्तुरीवेमकुविन्दादिकारकव्यापारादिभिर्व्यक्तं स्पष्टं गृह्यते॥ अतः संवेष्टितपटप्रसारितपटन्यायेनैवान्यत्कारणात्कार्यमित्यर्थः ॥ १९ ॥

## यथा च प्राणादि ॥ २० ॥

---

रत्नप्रभा ।

यदि तु प्रागुत्पत्तेरिति ॥ १८ ॥ कार्यम्, उपादानाद्भिन्नं, तदुपलब्धावप्यनुपलभ्यमानत्वात् ततोऽधिकपरिमाणत्वाच्च मशकादिव शश इत्यत्र व्यभिचारार्थं सूत्रम्–पटवच्चेति- द्वितीयहेतोर्व्यभिचारं स्फुटयति– यथा च संवेष्टनेति ॥ आयामः दैर्घ्यम् ॥ १९ ॥ तत्रैव विलक्षणकार्यकारित्वं हेतुमाशंक्य व्यभिचारमाह सूत्रकारः–यथा च प्राणादीति ॥ एवं जीवजगतोर्ब्रह्मानन्यत्वात् प्रतिज्ञासिद्धिरित्यधिकरणार्थमुपसंहरति–

भामती ।

पटवच्च । यथा च प्राणादि– इति च सूत्रे निगदव्याख्यातेन भाष्येण व्याख्याते ॥१९॥२०॥ ( ६ ) ॥

आनन्दगिरीय–न्यायनिर्णयः ।

कार्यस्य सत्त्वमनन्यत्वं च सिध्यतीति वक्तव्ये कथमन्तरपदमन्तराले प्रयुज्यते तत्राऽऽह–पूर्वसूत्र इति । प्रकारान्तरेण शब्दान्तरं विभजते–तद्धैक इति । कारणस्येत्थं सत्त्वेऽपि कथं कार्यस्य सत्त्वसिद्धिरित्याशंक्याऽऽह–तत्रेति । उक्ता श्रुतिः सप्तम्यर्थः । प्रतिज्ञानुपपत्तेश्च न सत्कार्यवादानुपपत्तिरिति चकारसूचितामुपपत्तिमाह–यदि त्विति । कथं तर्हि प्रतिज्ञोपपद्यते तत्राह–सत्त्वेति ॥ १८ ॥ कार्यमुपादानाद्भिन्नं तदुपलब्धावप्यनुपलभ्यत्वात्ततोऽधिकपरिमाणत्वाच्च संमतवदित्यनुमानयोर्व्यभिचारमाह–पटवच्चेति । सूत्रं व्याचष्टे–यथा चेति । व्याख्यानान्तरमाह–यथा चेत्यादिना । दृष्टान्तनिविष्टमर्थं दार्ष्टान्तिके योजयति–एवमिति । तथाऽपि किमायातं जगद्ब्रह्मणोरित्याशंक्याऽऽह–अत इति । प्रागुक्तहेतोः सव्यभिचारत्वेन दुष्टत्वादिति यावत् ॥१९॥ कार्यमुपादानाद्भिन्नं भिन्नकार्यकरत्वात्संमतवदित्याशंक्य व्यभिचारमाह–यथा चेति।

---

१ अत्रायमनुमानप्रयोगः–कार्यमुपादानाद्भिन्नं विलक्षणकार्यकारित्वात्, सम्मतवदिति ।

यथा च लोके प्राणापानादिषु प्राणभेदेषु प्राणायामेन निरुद्धेषु कारणमात्ररूपेण वर्तमानेषु जीवनमात्रं कार्यं निर्वर्त्यते नाकुञ्चनप्रसारणादिकं कार्यान्तरम् ॥ तेष्वेव प्राणभेदेषु पुनः प्रवृत्तेषु जीवनादधिकमाकुञ्चनप्रसरणादिकमपि कार्यान्तरं निर्वर्त्यते ॥ न च प्राणभेदानां प्रभेदवतः प्राणादन्यत्वम् ॥ समीरणस्वभावाविशेषात् । एवं कार्यस्य कारणादनन्यत्वम् ॥ अतश्च कृत्स्नस्य जगतो ब्रह्मकार्यत्वात्तदनन्यत्वाच्च सिद्धैषा श्रौती प्रतिज्ञा "येनाऽश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" [ छां० ६ । १ । ३ ] इति ॥ २० ॥ इत्यारम्भणाधिकरणम् ॥ ६ ॥

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥ (७) ॥

अन्यथा पुनश्चेतनकारणवाद आक्षिप्यते । चेतनाद्धि जगत्प्रक्रियायामाश्रीयमाणायां हिताकरणादयो दोषाः प्रसज्यन्ते ॥ कुतः ॥ इतरव्यपदेशात् । इतरस्य शरीरस्य ब्रह्मात्मत्वं व्यपदिशति श्रुतिः–"स आत्मा तत्त्वमसि श्वेतकेतो" [ छां० ६ । ८ । ७–१६ ] इति प्रतिबोधनात् ॥

---

रत्नप्रभा ।

**अतश्च कृत्स्नस्येति** ॥ २० ॥ ( ६ ) ॥ **इतरेति** ॥ जीवाभिन्नं ब्रह्म जगत्कारणमितिवद्वेदान्तसमन्वयो विषयः । स यदि तादृग् ब्रह्म जगज्जनयेत्, तर्हि स्वानिष्टं नरकादिकं न जनयेत्, स्वतन्त्रचेतनत्वादिति न्यायेन विरुध्यते न वेति सन्देहे पूर्वोक्तजीवानन्यत्वमुपजीव्य जीवदोषा ब्रह्मणि प्रसज्येरन् इति पूर्वपक्षसूत्रं गृहीत्वा व्याचष्टे–**इतरव्यपदेशादित्यादिना** ॥ **पूर्वपक्षे** जीवाभिन्ने समन्वयासिद्धिः **सिद्धान्ते** तत्सिद्धिरिति फलम् । हिताकरणेत्यत्र नञ्प्रत्यासेनाहितकरणं दोषो व्याख्यातः । **आदि-**

भामती ।

**इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः** । यद्यपि शारीरात्परमात्मनो भेदमाहुः श्रुतयस्तथाप्यभेदमपि दर्शयन्ति श्रुतयो बह्वयः । न च भेदाभेदावेकत्र समवेतौ विरोधात्, न च भेदस्तात्त्विक इत्युक्तम् । तस्मात् परमात्मनः सर्वज्ञान्न शारीरस्तत्त्वतो भिद्यते । स एव त्वविद्योपधानभेदाद् घटकरकाद्याकाशवद्भेदेन प्रथते । उपहितं चास्य रूपं शारीरः, तेन मा नाम जीवाः परमात्मतामात्मनोऽनुभूवन्, परमात्मा तु तानात्मनोऽभिन्नाननुभवति । अननुभवे सार्वज्ञ्यव्याघातः । तथा चायं जीवान् बध्नन्नात्मानमेव बन्धी-

आनन्दगिरीय–न्यायनिर्णयः ।

सूत्रं विभजते—**यथा चेत्यादिना** । तेषामात्यन्तिकं निरोधं व्यासेधति—**कारणमात्रेति** । पुनः प्रवृत्तानां प्राणभेदानां भिन्नत्वमेवेत्याशंक्याऽऽह—**न चेति** । दृष्टान्तोक्तमर्थं दार्ष्टान्तिके दर्शयति—**एवमिति** । अधिकरणार्थमुपसंहरति–**अतश्चेति** ॥ २० ॥ ( ६ ) ॥ एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धये कार्यस्य कारणादनन्यत्वं वदता तेनैव न्यायेन जीवस्यापि ततोऽनन्यत्वमुक्तं तर्हि जीवधर्मा हिताकरणादयो ब्रह्मणि प्रसज्येरन्निति शङ्कते–**इतरव्यपदेशादिति** । जीवाभिन्नं ब्रह्म जगदुपादानं वदन्समन्वयो विषयः स किं यदि तादृग्ब्रह्म जगज्जनयेत्तर्हि स्वानिष्टं जनयेदिति न्यायेन विरुध्यते न वेति तदनाभासत्वाभासत्वाभ्यां संदेहे पूर्वपक्षसूत्रतात्पर्यमाह–**अन्यथेति** । समन्वयस्य न्यायविरोधसमाधानात्पादादिसंगतीरभिप्रेत्य फलं च पूर्ववत्पूर्वोत्तरपक्षयोर्विवक्षित्वाऽऽक्षेपं विवृण्वन्प्रतिज्ञाभागं विभजते–**चेतनाद्धीति**।यस्य ब्रह्मणः स्रष्टृत्वं न तस्य हितादिसंबन्धो यस्य च जीवस्य हितादिसंबन्धो न तस्य स्रष्टृत्वमित्याक्षिपति–**कुत इति**।सूत्रावयवेन परिहरति–**इतरेति**।इतरशब्दो जीवविषय इति व्याख्याय परमात्म

यद्वा-इतरस्य च ब्रह्मणश्शरीरात्मत्वं व्यपदिशति-"तत्सृष्ट्वा तदेवानुप्राविशद्" [तै० उ० १ । २ । ६ । २ ] इति स्रष्टुरेवाविकृतस्य ब्रह्मणः कार्यानुप्रवेशेन शरीरात्मत्वप्रदर्शनात् । "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" [छां० ६ । ३ । २] इति च परा देवता जीवमात्मशब्देन व्यपदिशन्ती न ब्रह्मणो भिन्नश्शारीर इति दर्शयति । तस्माद्यद्ब्रह्मणस्स्रष्टृत्वं तच्छारीरस्यैवेति ॥ अतश्च स्वतन्त्रः कर्ता सन् हितमेवात्मनस्सौमनस्यकरं कुर्यात् । नाहितं जन्ममरणजरारोगाद्यनेकानर्थजालम् । न हि कश्चिदपरतन्त्रो बन्धनागारमात्मनः कृत्वानुप्रविशति । न च स्वयमत्यन्तनिर्मलस्सन्नत्यन्तमलिनं देहमात्मत्वेनोपेयात् । कृतमपि कथञ्चिद्यद् दुःखकरं तदिच्छया जह्यात् । सुखकरञ्चोपाददीत । स्मरेच्च मयेदं जगद्बिम्बं विचित्रं विरचितमिति ॥ सर्वो हि लोकः स्पष्टं कार्यं कृत्वा स्मरति-मयेदं कृतमिति ॥ यथा च मायावी स्वयं प्रसारितां मायामिच्छयाऽनायासेनैवोपसंहरति, एवं शारीरोऽपीमां सृष्टिमुपसंहरेत । स्वकीयमपि तावच्छरीरं शारीरो न शक्नोत्यनायासेनोपसंहर्तुम् ॥ एवं हितक्रियाद्यदर्शनादन्यायाय्या चेतनाज्जगत्प्रक्रियेति मन्यते ॥ २१ ॥

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

रत्नप्रभा ।

पदोक्तं भ्रान्त्यादिकमापादयति-न च स्वयमित्यादिना ॥ २१ ॥ अधिकन्त्विति । जीवेशयोरभेदा-

भामती ।

यात् । तत्रेदमुक्तम्-न हि कश्चिदपरतन्त्रो बन्धनागारमात्मनः कृत्वानुप्रविशति-इत्यादि । तस्मान्न चेतनकारणं जगदिति पूर्वः पक्षः ॥ २१ ॥ अधिकं तु भेदनिर्देशात् । सत्यमयं परमात्मा सर्वज्ञ-

आनन्दगिरीय-न्यायनिर्णयः ।

विषय इति व्याख्यान्तरमाह-इतरस्य चेति । परिणामिब्रह्मणोऽनुप्रवेशपक्षं प्रतिक्षिपति-अविकृतस्येति । ब्रह्मकर्तृको व्यपदेश इतरव्यपदेश इति व्याख्यानान्तरमाह-अनेनेति । जीवब्रह्मणोरभेदे श्रुतिसिद्धे फलितमाह-तस्मादिति । भृत्यो राजादिना नियुक्तः स्वयमेव स्वस्यानर्थं कुर्वन्दृश्यते ततो विशिनष्टि-स्वतन्त्र इति । स्वतन्त्रस्याप्यज्ञस्य स्वानर्थकारित्वं संभवति ब्रह्मणस्तु सर्वज्ञस्य नैवमिति भावः । हितमेव विभजते-आत्मन इति । अहितं विशिनष्टि-जन्मेति॥ जीवस्योपाध्यविवेकात्परमात्माभेदमपश्यतो युक्तमनर्थकारित्वमित्याशंक्य तस्य परमात्मतामनुभवेऽपि परमात्मा जीवमात्माभिन्नमनुभवन्न तं बध्नीयादित्याह-न हीति । मिथ्याज्ञानमुक्त्वा तात्त्विकोऽनुप्रवेशोऽपि नास्तीत्याशंक्यातात्त्विकोऽपि न स्यादित्याह-न चेति । लीलया परस्याऽऽत्मनो जगत्कर्तृत्वमित्याशंक्याऽऽह-कृतमपीति । स्मर्तृत्वमपि प्रसज्येत सर्वज्ञत्वादित्याह-स्मरेच्चेति । अनुभूते स्मृतिनियमाभावान्नैवमित्याशंक्य स्पष्टत्वेन स्मृतियोग्यमेतदित्याह-सर्वो हीति । न चेश्वरस्यास्त्येव स्मर्तृत्वं जीवेऽपि तदभिन्ने तत्प्रसङ्गादिति भावः । जगतो मायामयत्वादुक्तदोषानवकाशात्तत्परिहारार्थमधिकरणमनारम्यमित्याशंक्याऽऽह-यथा चेति । शारीरस्यापि क्वचिदुपसंहर्तृत्वं दृष्टमित्यनिष्टापत्तिराहित्यमाशंक्याऽऽह-स्वमपीति । बुद्धिपूर्वकारी हितमेवाऽऽत्मनः सृजतीति न्यायविरोधाज्जीवाभिन्नाद्ब्रह्मणो विश्वसृष्ट्यादिनः समन्वयस्यासिद्धिरित्युपसंहरति-एवमिति । ब्रह्मानिष्टस्य कार्यप्रपञ्चस्य न कारणं चेतनत्वे सति स्वतन्त्रत्वाद्विवक्षितपुरुषवदिति भावः ॥ २१ ॥ सिद्धान्तसूत्रमवतारयति-अधिकं

तुशब्दः पूर्वपक्षं व्यावर्तयति। यत्सर्वज्ञं सर्वशक्ति ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं शारीरादधिकमन्यत्तद्वयं जगतस्स्रष्टृ ब्रूमः॥ न तस्मिन् हिताकरणादयो दोषाः प्रसज्यन्ते॥ न हि तस्य हितं किञ्चित्कर्तव्यमस्ति, अहितं वा परिहर्तव्यम्॥ नित्यमुक्तस्वभावत्वात्॥ न च तस्य ज्ञानप्रतिबन्धश्शक्तिप्रतिबन्धो वा क्वचिदप्यस्ति। सर्वज्ञत्वात्। सर्वशक्तित्वाच्च॥ शारीरस्त्वनेवंविधः। तस्मिन्न प्रसज्यन्ते हिताकरणादयो दोषाः॥ न तु तं वयं जगतस्स्रष्टारं ब्रूमः॥ कुत एतत्॥ भेदनिर्देशात्। "आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [बृ० २।४।५] "सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः" [छां० ८।७।१] "सता सोम्य तदा सम्पन्नो भवति" [छां० ६।८।१] "शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढः" [बृ० ४।३।३५] इत्येवञ्जातीयकः कर्तृकर्मादिभेदनिर्देशो जीवादधिकं ब्रह्म दर्शयति॥ नन्वभेदनिर्देशोऽपि दर्शितः—"तत्त्वमसि" [छां० ६।८।७-१६] इत्येवञ्जातीयकः। कथं भेदाभेदौ विरुद्धौ सम्भवेयाताम्॥ नैष दोषः॥ आकाशघटाकाशन्यायेनोभयसम्भवस्य तत्रतत्र प्रतिष्ठापितत्वात्॥

---

रत्नप्रभा।

ज्जीवजगतोर्दोषा ब्रह्मणि स्युः। ब्रह्मगताश्च सृष्टिसंहारसर्वस्मर्तृत्वादयो गुणा जीवे स्युः। न चेष्टापत्तिः। जीवस्य स्वशरीरेऽपि संहारसामर्थ्यादर्शनादिति प्राप्ते सिद्धान्तसूत्रं व्याचष्टे—तुशब्द इत्यादिना॥ जीवेश्वरयोर्लोके बिम्बप्रतिबिम्बयोरिव कल्पितभेदाङ्गीकाराद्धर्मव्यवस्थेति सिद्धान्तग्रन्थार्थः। यदि वयं जीवं स्रष्टारं ब्रूमः, तदा दोषाः प्रसज्यन्ते। न तु तं ब्रूम इत्यन्वयः॥ किञ्चाभेदज्ञानादूर्ध्वं

भामती।

त्वाद्यथा जीवान् वस्तुत आत्मनोऽभिन्नान् पश्यति, पश्यत्येवं न भावत एषां सुखदुःखादिवेदनासङ्गोऽस्त्यविद्यावशात्त्वेषां तद्वदभिमान इति। तथा च तेषां सुखदुःखादिवेदनायामप्यहमुदासीन इति न तेषां बन्धनागारनिवेशेऽप्यस्ति क्षतिः काचिन्ममेति न हिताकरणादिदोषापत्तिरिति राद्धान्तः। तदिदमुक्तम्—

आनन्दगिरीय—न्यायनिर्णयः।

त्विति। तद्व्याचष्टे—तुशब्द इति। यदुक्तं हिताकरणादयो दोषा ब्रह्मणि प्रादुष्ष्युरिति तत्राऽऽह—यत्सर्वज्ञमिति। तत्र हेतुमाह—न हीति। नित्यमुक्तस्यापि ब्रह्मणो मायाशक्तियोगाद्विश्वनिर्मातृत्वमविरुद्धमिति भावः। यत्तु कर्तृत्वेन स्मर्तृत्वेन च भवितव्यं स्वयमेव चोपसंहर्तव्यमिति तत्राऽऽह—न चेति। क्वचिदपि ज्ञानप्रतिबन्धो नेत्यत्र हेतुमाह—सर्वज्ञत्वादिति। क्वचिदपि शक्तिप्रतिबन्धो नास्तीत्यत्रापि हेतुमाह—सर्वशक्तित्वाच्चेति। तर्हि क्वचिदपि ज्ञानप्रतिबन्धाद्यभावादस्मदादिष्वपि स्मरणादिप्रसक्तिरित्याशंक्याऽऽह—शारीरस्त्विति। तदभेदात्परस्मिन्नपि स्रष्टरि तेषां प्रसक्तिमाशंक्योक्तम्—न त्विति। सत्यभेदे दर्शितव्यवस्थानुपपत्तिरिति शङ्कते—कुत इति। सूत्रावयवं हेतुमवतार्य व्याचष्टे—भेदनिर्देशादिति। कर्तृकर्मादीत्यादिशब्दो व्यक्तिभेदविषयः। सर्वस्यापि जीवब्रह्मणोर्भेदनिर्देशस्य कर्तृकर्मान्तर्भावात्। इदानीं पूर्ववादी पूर्वोक्तं स्मारयन्भेदनिर्देशस्यासाधकत्वमाशङ्कते—नन्विति। तुल्यबलतया द्वयोरपि निर्देशयोः साधकत्वमाशंक्याऽऽह—कथमिति। वास्तवमेकत्वमौपाधिकं नानात्वमित्युभयनिर्देशोपपत्तिरिति परिहरति—नैष दोष इति। इतश्च ब्रह्मगतं स्रष्टृत्वं जीवगतं

अपि च यदा तत्त्वमसीत्येवंजातीयकेनाभेदनिर्देशेनाभेदः प्रतिबोधितो भवत्यपगतं भवति, तदा जीवस्य संसारित्वं, ब्रह्मणश्च स्रष्टृत्वम्॥ समस्तस्य मिथ्याज्ञानविजृम्भितस्य भेदव्यवहारस्य सम्यग्ज्ञानेन बाधितत्वात् ॥ तत्र कुत एव सृष्टिः, कुतो वा हिताकरणादयो दोषाः ॥ अविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसंघातोपाध्यविवेककृता हि भ्रान्तिः ॥ हिताहितकरणादिलक्षणः संसारो, न तु परमार्थतोऽस्तीत्यसकृदवोचाम॥ जन्ममरणच्छेदनभेदनाद्यभिमानवत् ॥ अबाधिते तु भेदव्यवहारे "सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः" [ छां० ८ । ७ । १ ] इत्येवंजातीयकेन भेदनिर्देशेनावगम्यमानं ब्रह्मणोऽधिकत्वं हिताकरणादिदोषप्रसक्तिं निरुणद्धि ॥ ॥ २२ ॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

यथा च लोके पृथिवीत्वसामान्यान्वितानामप्यश्मनां केचिन्महार्हा मणयो वज्रवैडूर्यादयः, अन्ये मध्यमवीर्यास्सूर्यकान्तादयः, अन्ये प्रहीणाश्श्ववायसप्रक्षेपणार्हाः पाषाणा इत्यनेकविधं वैचित्र्यं दृश्यते, यथा चैकपृथिवीव्यपाश्रयाणामपि बीजानां बहुविधपत्रपुष्पफलगन्धरसादिवैचित्र्यं चन्दनकिम्पाकादिषूपलभ्यते, यथा चैकस्याप्यन्नरसस्य लोहितादीनि केशलोमादीनि च विचित्राणि कार्याणि भवन्ति, एवमेकस्यापि

---

रत्नप्रभा ।

वा दोषा आपाद्यन्ते पूर्वं वा—नाद्य इत्याह—अपि चेति ॥ उक्तं मिथ्याज्ञानविजृम्भितत्वं स्फुटयति—अविद्येति ॥ कर्तृत्वादिबुद्धिधर्माध्यासे देहधर्माध्यासं दृष्टान्तयति—जन्मेति ॥ द्वितीयं प्रत्याह—अबाधिते त्विति ॥ ज्ञानादूर्ध्वं स्रष्टृत्वादिधर्माणां बाधात् पूर्वं च कल्पितभेदेन व्यवस्थोपपत्तेर्न किञ्चिदवद्यमित्यर्थः ॥ २२ ॥ नन्वखण्डैकरूपे ब्रह्मणि कथं जीवेश्वरवैचित्र्यं कथञ्च तत्कार्यवैचित्र्यमित्यनुपपत्तिं दृष्टान्तैः परिहरति सूत्रकारः—अश्मादिवच्चेति ॥ किंपाको महातालफलम् । तत्तत्कार्यसंस्काररूपा-

भामती ।

अपि च यदा तत्त्वमसीति । अपि चेति चः पूर्वोपपत्तिसाहित्यं द्योतयति, नोपपत्त्यन्तरताम् ॥ २२ ॥ स्यादेतत् । यदि ब्रह्मविवर्तो जगत्, हन्त सर्वस्यैव जीववच्चैतन्यप्रसङ्ग इत्यत आह-अश्मादिवच्च तदनुपपत्तिः ॥

आनन्दगिरीय—न्यायनिर्णयः ।

वाहिताकरणादि परस्परं न संभवतीत्याह—अपि चेति । तत्त्वमसीतिवाक्यार्थज्ञानादूर्ध्वमभेदावगमाद्ब्रह्मणः स्रष्टृत्वं जीवस्य तस्य च हिताकरणादि ब्रह्मणः स्यादिति वा प्रागेव वा तदवगमादिति विकल्प्याऽऽद्ये दोषमाह—यदेति । भेदव्यवहारस्य मिथ्याज्ञानविजृम्भितत्वमसिद्धमित्याशंक्याऽऽह—अविद्येति । कार्यकारणाविवेककृता भ्रान्तिरित्यत्र दृष्टान्तमाह—जन्मेति । द्वितीयं प्रत्याह—अबाधिते त्विति ॥ २२ ॥ परस्यैवाविद्याकृतावच्छेदस्य जीवशब्दितस्य सुखदुःखादिसंबन्धो न तु तत्त्वतो जीवो वा तन्निष्ठदुःखादि वाऽस्तीति पश्यतो हिताकरणादिदोषासंस्पर्शाद्युक्तं तस्य जगत्कारणत्वमित्युक्तम् । इदानीं चिदात्मकत्वेनैकरूपस्य ब्रह्मणो जगत्कार्यं चेत्तदपि चेतनमेव स्यादित्याशंक्याह—अश्मादिवच्चेति । तत्र स्वरूपवैचित्र्यपरमश्मदृष्टान्तं व्याचष्टे—यथा चेति । धर्मवैचित्र्यदृष्टान्तमाह—यथा चैकेति । अर्थक्रियावैचित्र्यमुदाहरति—यथा चैकस्येति । दृष्टान्तत्रयस्य दार्ष्टान्तिकं दर्शयति—एवमिति । ब्रह्मणश्चेतनत्वात्तत्कार्यत्वे जगतोऽपि तथात्वं स्यात्तदभावान्न ब्रह्म जगत्कारणमिति परपरिकल्पितो दोषः । सौत्रस्य चकार-

ब्रह्मणो जीवप्राज्ञपृथक्त्वं कार्यवैचित्र्यं चोपपद्यत इति ॥ अतः-तदनुपपत्तिः परपरिकल्पितदोषानुपपत्तिरित्यर्थः ॥ श्रुतेश्च प्रामाण्याद्विकारस्य वाचारम्भणमात्रत्वात् स्वप्नदृश्यभाववैचित्र्यवच्चेत्यभ्युच्चयः ॥ २३ ॥ इतीतरव्यपदेशाधिकरणम् ॥ ७ ॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥ ( ८ ) ॥

**चेतनं ब्रह्मैकमद्वितीयं जगतः कारणमिति यदुक्तं तन्नोपपद्यते ॥ कस्माद् ॥**

---

रत्नप्रभा ।

नादिशक्तिभेदाद्वैचित्र्यमिति भावः । सूत्रस्थचकारार्थमाह-**श्रुतेश्चेति** ॥ ब्रह्म, जीवगतदोषवत्, जीवाभिन्नत्वात्, जीववदित्याद्यनुमानं स्वतःप्रमाणनिरवद्यत्वादिश्रुतिबाधितम् । किञ्च कर्तृत्वभोक्तृत्वादिविकारस्य मिथ्यात्वाज्जीवस्यैव तावद्दोषो नास्ति । कुतो बिम्बस्थानीयस्याशेषविशेषदर्शिनः परमेश्वरस्य दोषप्रसक्तिः । **यत्तु** ब्रह्म, न विचित्रकार्यप्रकृति, एकरूपत्वाद्, व्यतिरेकेण मृत्तन्त्वादिवदिति । **तन्न** । एकरूपे स्वप्नदृशीव विचित्रदृश्यवस्तुवैचित्र्यदर्शनेन व्यभिचारादित्यर्थः । तस्मात् प्रत्यगभिन्ने ब्रह्मणि समन्वयस्याविरोध इति सिद्धम् ॥२३॥ (७) ॥ **उपसंहारदर्शनादिति** ॥ असहायाद्ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विषयः । स किं यदसहायं तन्न कारणमिति लौकिकन्यायेन विरुध्यते न वेति सन्देहे पूर्वमौपाधिकजीवभेदाद्ब्रह्मणि जीवदोषा न प्रसज्यन्त इत्युक्तम् । सम्प्रति उपाधितोऽपि विभक्तं ब्रह्मणः प्रेरकादिकं सहकारि नास्ति । ईशनानात्वाभावादिति प्रत्युदाहरणेन पूर्वपक्षसूत्रांशं व्याचष्टे-**चेतनमि**-

भामती ।

अतिरोहितार्थेन भाष्येण व्याख्यातम् ॥ २३ ॥ ( ७ ) ॥ **उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि** । ब्रह्म खल्वेकमद्वितीयतया परानपेक्षं क्रमेणोत्पद्यमानस्य जगतो विविधविचित्ररूपस्योपादानमुपेयते तदनुपपन्नम् । न ह्येकरूपात्कार्यभेदो भवितुमर्हति, तस्याकस्मिकत्वप्रसङ्गात् । कारणभेदो हि कार्यभेदहेतुः क्षीरबीजादिभेदाद्दध्यंकुरादिकार्यभेददर्शनात् । न चाक्रमात्कारणात् कार्यक्रमो युज्यते, समर्थस्य क्षेपायोगाद-

आनन्दगिरीय-न्यायनिर्णयः ।

स्यार्थमाह-**श्रुतेश्चेति** । ब्रह्मकारणवादिन्याः श्रुतेरप्रामाण्ये हेत्वभावात्पूर्वपक्षानुमानं तद्विरोधादप्रमाणमित्यर्थः । ब्रह्म स्वाभिन्नं जीवं न पश्यति चेदसर्वज्ञं स्यात्पश्यति चेदात्मन्येव संसारं पश्येदित्याशङ्क्याऽऽह-**विकारस्येति** । यथा दर्पणादौ मलिनमात्मानं पश्यन्नपि मैत्रस्तस्य मिथ्यात्वं जानन्न तेनाऽऽत्मानं शोचति । तथा स्वाभिन्नं जीवं पश्यदपि ब्रह्म तद्गतत्वेन भातसंसारस्य वाचारम्भणमात्रत्वान्न तेनाऽऽत्मानं शोचितुमर्हतीत्यर्थः । यत्तु जगत्येकरूपब्रह्मकार्ये कुतो वैचित्र्यमिति तत्राऽऽह-**स्वप्नेति** । यथा स्वप्नदृश्यानां भावानामेकस्वप्नदृगधिष्ठानत्वेऽपि पण्डितमूर्खादिवैचित्र्यं दृष्टमेवमेकचिदात्माधिष्ठानत्वेऽपि जीवेश्वरादिवैचित्र्याविरोधाज्जगतश्चेतनकारणत्वमविरुद्धमिति भावः ॥ २३ ॥ ( ७ ) ॥ सजातीयभेदाभावावष्टम्भेन ब्रह्मणो जगद्धेतुत्वमाक्षिप्य परिहृतम् । इदानीं विजातीयभेदाभावमादाय तद्धेतुत्वमाक्षिप्य परिहरति-**उपसंहारदर्शनादिति** । असहायाद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विषयः स किं ब्रह्म नोपादानमसहायत्वात्संमतवदिति न्यायेन विरुध्यते न वेति तदनाभासत्वाभासत्वाभ्यां संदेहे पूर्वत्रौपाधिकभेदाद्धिताकरणादिदोषः समाहितः । संप्रत्युपाधितोऽपि विभक्तमधिष्ठात्रादि नास्तीश्वरनानात्वाभावात्ततश्च विचित्रकार्यानुपपत्तिरिति पूर्वपक्षमाह-**चेतनमिति** । अत्रापि समन्वयस्य न्यायविशेषविरोधसमाधानात्पूर्ववदेव पादादिसंगतिफले । प्रतिज्ञाते पूर्वपक्षे प्रश्नपूर्वकं हेतुमाह-**कस्मादिति** । लोके कारणभेदादेव कार्यभेददर्शनादन्यथा तदाकस्मिकत्वापातात्कार्यक्रमस्य च कारणक्रमापेक्षत्वादद्वितीये ब्रह्मणि क्रमवत्सहका-

उपसंहारदर्शनात् । इह हि लोके कुलालादयो घटपटादीनां कर्तारो मृद्दण्डचक्रसूत्राद्यनेककारकोपसंहारेण संगृहीतसाधनाः सन्तस्तत्तत्कार्यं कुर्वाणा दृश्यन्ते ॥ ब्रह्म चासहायं तवाभिप्रेतम् ॥ तस्य साधनान्तरानुपसंग्रहे सति कथं स्रष्टृत्वमुपपद्येत ॥ तस्मान्न ब्रह्म जगत्कारणमिति चेत् ॥ नैष दोषः ॥ यतः क्षीरवद् द्रव्यस्वभावविशेषादुपपद्यते ॥ यथा हि लोके क्षीरं जलं वा स्वयमेव दधिहिमभावेन परिणमतेऽनपेक्ष्य बाह्यं साधनं, तथेहापि भविष्यति ॥ ननु क्षीराद्यपि दध्यादिभावेन परिणममानमपेक्षत एव बाह्यं साधनमौष्ण्यादिकम् । कथमुच्यते क्षीरवद्धीति ॥ नैष दोषः ॥ स्वयमपि हि क्षीरं यां च यावतीं च परिणाममात्रामनुभवत्येव ॥ त्वार्यते त्वौष्ण्यादिना दधिभावाय ॥ यदि च स्वयं दधिभावशीलता न स्याद्, नैवौष्ण्यादिनापि बलाद्दधिभावमापद्येत ॥ न हि वायुराकाशो वौष्ण्या-

रत्नप्रभा ।

त्यादिना ॥ फलं पूर्ववत् । कारकाणाम् उपसंहारः—मेलनम् । उक्तन्यायस्य क्षीरादौ व्यभिचार इति सिद्धान्तयति—नैष दोष इति ॥ शुद्धस्य ब्रह्मणोऽकारणत्वमिष्टमेव । विशिष्टस्येश्वरस्य तु मायैव सहाय इति भावेनाह—बाह्यमिति ॥ क्षीरस्याप्यातञ्चनादिसहायोऽस्तीत्यसहायत्वहेतोर्न व्यभिचार इत्याशंक्य सहायाभावेऽपि यस्य कस्यचित् परिणामस्य क्षीरे दर्शनाद्व्यभिचारतादवस्थ्यमित्याह—नन्वित्यादिना ॥ तर्हि सहायो व्यर्थस्तत्राह—त्वार्यते इति ॥ ननु त्वार्यते क्षीरं दधिभावाय शैघ्र्यं कार्यत इति किमर्थं कल्प्यते, स्वतोऽशक्तं क्षीरं सहायेन शक्तं क्रियत इति किं न स्यात् । तत्राह—यदि चेति ॥ शक्तस्य

भामती ।

द्वितीयतया च क्रमवत्तत्सहकारिसमवधानानुपपत्तेः । तदिदमुक्तम्—इह हि लोक इति । एकैकं मृदादि कारकं तेषां तु सामग्र्यं साधनम्, ततो हि कार्यं साधयत्येव, तस्मान्नाद्वितीयं ब्रह्म जगदुपादानमिति प्राप्ते, उच्यते—क्षीरवद्धि । इदं तावद्भवान् पृष्टो व्याचष्टाम्—किं तात्त्विकमस्य रूपमपेक्ष्येदमुच्यते उतानादिनामरूपबीजसहितं काल्पनिकं सार्वज्ञ्यं सर्वशक्तित्वम् । तत्र पूर्वस्मिन् कल्पे किं नाम ततोऽद्वितीयादसहायादुपजायते । न हि तस्य शुद्धबुद्धमुक्तस्वभावस्य वस्तुसत्कार्यमस्ति । तथा च श्रुतिः—'न तस्य कार्यं करणं च विद्यते' इति । उत्तरस्मिंस्तु कल्पे यदि कुलालादिवदत्यन्तव्यतिरिक्तसहकारिकारणाभावादनुपादानत्वं साध्यते, ततः क्षीरादिभिर्व्यभिचारः । तेऽपि हि बाह्यचेतनादिकारणानपेक्षा एव कालपरि-

आनन्दगिरीय—न्यायनिर्णयः ।

रिसंबन्धाभावादेकरूप्याच्च न क्रमवद्विचित्ररूपजगज्जन्महेतुतेत्याह—इह हीति । अत्र साधनशब्दस्तत्सामग्रीं ब्रूते । ब्रह्म नोपादानमसहायत्वात्केवलमृद्वत् । ब्रह्म जगतो न निमित्तमसहायत्वात्केवलकुम्भकारवदिति मन्वानः सन्नाह—ब्रह्म चेति । उक्तानुमानफलमुपसंहरति—तस्मादिति । विशुद्धब्रह्मापेक्षया विशिष्टब्रह्मापेक्षया वेदमुच्यते? नाऽऽद्यः । सिद्धसाध्यत्वादित्यभिप्रेत्य द्वितीये तस्योपादानत्वनिषेधं दूषयति—नैष दोष इति । किं बाह्यसहकारिविरहादनुपादानत्वं किं वाऽऽन्तरसहकारिराहित्यादिति विकल्प्याऽऽद्यं व्यभिचारित्वेन निरस्यन्नुदाहरणं विवृणोति—यथा हीति । दृष्टान्ते विवदमानः शङ्कते—नन्विति । क्षीरादिषु स्वत एव कालपरिपाकवशेन परिणामदर्शनादसंप्रतिपत्तिरयुक्तेति परिहरति—नैष दोष इति । औष्ण्याद्यपेक्षा तत्रान्वयव्यतिरेकसिद्धेति कुतो नैरपेक्ष्यमित्याशंक्याऽऽह—त्वार्यते त्विति । त्वार्यते शैघ्र्यं कार्यते क्षीरं दधिभावायौष्ण्यादिना । किंचाशक्तस्य सहकार्यपेक्षयाऽपि कार्योत्पादकत्वादर्शनाद्दध्यादिभावे स्वतःसिद्धं क्षीरादेः सामर्थ्यमित्याह—यदि चेति । तदेव दृष्टान्तेन स्पष्टयति—न हीति । किमर्था तर्हि कारणसमग्र्यपेक्षेति

१ तावत्परिणाममात्रावत्तत्क्षीरमित्यध्याहर्तव्यं पूर्ववाक्यस्य नैराकांक्ष्याय ।

दिना बलाद्दधिभावमापद्यते ॥ साधनसामग्र्या च तस्य पूर्णता सम्पद्यते । परिपूर्णशक्तिकं तु ब्रह्म । न तस्यान्येन केनचित्पूर्णता सम्पादयितव्या ॥ श्रुतिश्च भवति—"न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" [ श्वेता० ६ । ८ ] इति ॥ तस्मादेकस्यापि ब्रह्मणो विचित्रशक्तियोगात्क्षीरादिवद्विचित्रपरिणाम उपपद्यते ॥ २४ ॥

## देवादिवदपि लोके ॥ २५ ॥

स्यादेतत्—उपपद्यते क्षीरादीनामचेतनानामनपेक्ष्यापि बाह्यं साधनं दध्यादिभावः ॥ दृष्टत्वात् ॥ चेतनाः पुनः कुलालादयस्साधनसामग्रीमपेक्ष्यैव तस्मैतस्मै कार्याय प्रवर्तमाना दृश्यन्ते ॥ कथं ब्रह्म चेतनं सदसहायं प्रवर्तेतेति ॥ देवादिवदिति ब्रूमः—यथा लोके देवाः पितर ऋषय इत्येवमादयो महाप्रभावाश्चेतना अपि सन्तोऽनपेक्ष्यैव किञ्चिद्बाह्यं साध-

---

रत्नप्रभा ।

सहायसम्पदा किं कार्यमित्यत्राह—साधनेति ॥ सहायविशेषाभावे कश्चिद्विकारः क्षीरस्य भवति । तत्र आतञ्चनप्रक्षेपौष्ण्याभ्यां तूत्तमदधिभावसामर्थ्यं व्यज्यते इत्यर्थः । तर्हि शक्तिव्यञ्जकोऽपि सहायो ब्रह्मणो वाच्यः । तत्राह—परिपूर्णेति ॥ निरपेक्षमायाशक्तिकमित्यर्थः । तादृशशक्तौ मानमाह—श्रुतिश्चेति ॥ २४ ॥ ननु ब्रह्म न कारणं चेतनत्वे सत्यसहायत्वान्मृदादिशून्यकुलालादिवदिति न क्षीरादौ व्यभिचार इति सूत्रव्यावर्त्यां शंकामाह—स्यादेतदिति ॥ तस्यापि हेतोर्देवादौ व्यभिचार इत्याह—देवादिवदिति ॥ लोक्यते ज्ञायतेऽर्थोऽनेनेति लोको मन्त्रार्थवादादिशास्त्रं वृद्धव्यवहारश्च, अभिध्यानं संकल्पः ।

भामती ।

वासवशेन स्वत एव परिणामान्तरमासादयन्ति । अत्रान्तरकारणानपेक्षत्वं हेतुः क्रियते, तदसिद्धम्, अनिर्वाच्यनागरूपबीजसहायत्वात् । तथा च श्रुतिः—'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति । कार्यक्रमेण तत्परिपाकोऽपि क्रमवानुन्नेयः । एकस्मादपि च विचित्रशक्तेः कारणादनेककार्योत्पादो दृश्यते । यथैकस्माद्वह्नेर्दाहपाकावेकस्माद्वा कर्मणः संयोगविभागसंस्काराः ॥ २४ ॥ यदि तु चेतनत्वे सतीति विशेषणान्न क्षीरादिभिर्व्यभिचारः, दृष्टा हि कुलालादयो बाह्यमृदाद्यपेक्षाः, चेतनं च ब्रह्मेति, तत्रेदमुपतिष्ठते—देवादिवदपि लोके । लोक्यतेऽनेनेति लोकः शब्द एव तस्मिन् ॥ २५ ॥ ( ८ ) ॥

आनन्दगिरीय-न्यायनिर्णयः ।

तत्राऽऽह—साधनेति । न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यत इति न्यायाद्विद्यमानैव क्षीरादिशक्तिः साधनसामग्र्योपचीयत इत्यर्थः । क्षीरादेर्बाह्यसाधनाभावेऽप्यान्तरसाधनसद्भावात्कारणता युक्ता, ब्रह्मणस्त्वैकरस्यान्नाऽऽन्तरमपि साधनमदृष्टादीष्टमिति कथं कारणतेति द्वितीयमाशंक्याऽऽह—परिपूर्णेति । ब्रह्म परिपूर्णशक्तिकमित्यत्र प्रमाणमाह—श्रुतिश्चेति । कार्यक्रमेण तच्छक्तिपरिपाकोऽपि क्रमवानुन्नेयः । शक्तिभेदाच्च तद्विशिष्टकारणेऽपि भेदसिद्धिरित्यभिसंधायोपसंहरति—तस्मादिति ॥ २४ ॥ चेतनत्वे सत्यसहायत्वादिति विशेषणादुक्तमनैकान्तिकत्वं परिहर्तुं शक्यमित्याशंक्याऽऽह—देवादिवदिति । सूत्रव्यावर्त्यामाशङ्कामाह—स्यादेतादिति । चेतनत्वविशेषणेन व्यभिचारनिवारणमाह—उपपद्यत इति । विशिष्टेन हेतुना ब्रह्मणो जगद्धेतुत्वं निषेद्धुं दृष्टान्तमाह—चेतना इति । विवक्षितमनुमानं निगमयति—कथमिति । विशिष्टस्यापि हेतोरनैकान्तिकत्वं तदवस्थमिति परिहरति—देवादिवदिति । तत्र दृष्टान्तं व्याचष्टे—यथेति । अस्मदादिभ्यो देवादिषु विशेषं दर्शयति—महाप्रभावा इति । तेषामपीश्वरानुग्रहसापेक्षत्वादसिद्धमसहायत्वमित्याशंक्याऽऽह—अनपेक्ष्येति । तथाऽपि शुक्रशोणितसंनिपातस्य मृद्दार्वादीनां चाभावे कुतो देहा-

नमैश्वर्यविशेषयोगादभिध्यानमात्रेण स्वत एव ह्यभूतपूर्वाणि बहूनि नानासंस्थानानि शरीराणि प्रासादादीनि रथादीनि च निर्मिमाणा उपलभ्यन्ते ॥ मन्त्रार्थवादेतिहासपुराणप्रामाण्यात् ॥ तन्तुनाभश्च स्वत एव तन्तून् सृजति, बलाका चान्तरेणैव शुक्रं स्तनयित्नुरवश्रवणाद्गर्भं धत्ते, पद्मिनी चानपेक्ष्य किञ्चित्प्रस्थानसाधनं सरोन्तरात्सरोऽन्तरं प्रतिष्ठते, एवं चेतनमपि ब्रह्मानपेक्ष्य बाह्यसाधनं स्वत एव जगत्स्रक्ष्यति ॥ स यदि ब्रूयाद्यदा ते देवादयो ब्रह्मणो दृष्टान्ता उपात्तास्ते दार्ष्टान्तिकेन ब्रह्मणा समानस्वभावा न भवन्ति ॥ शरीरमेव ह्यचेतनं देवादीनां शरीरान्तरादिविभूत्युत्पादने उपादानं, न तु चेतन आत्मा ॥ तन्तुनाभस्य च क्षुद्रतरजन्तुभक्षणाल्लाला कठिनतामापद्यमाना तन्तुर्भवति। बलाका च स्तनयित्नुरवश्रवणाद्गर्भं धत्ते। पद्मिनी च चेतनप्रयुक्ता सत्यचेतनेनैव शरीरेण सरोऽन्तरात्सरोऽन्तरमुपसर्पति वल्लीव वृक्षं, न तु स्वयमेवाचेतना सरोऽन्तरोपसर्पणे व्याप्रियते ॥ तस्मान्नैते ब्रह्मणो दृष्टान्ता इति ॥ तं प्रति ब्रूयात्। नायं दोषः ॥ कुलालादिदृष्टा-

रत्नप्रभा।

ननु देवाद्यूर्णनाभान्तदृष्टान्तेषु शरीरेषु चेतनत्वं नास्ति। बलाकापद्मिनीचेतनयोर्गर्भप्रस्थानकर्तृत्वे मेघशब्दशरीरं च सहायोऽस्ति। अतो विशिष्टहेतोर्न व्यभिचार इति शंकते—स यदि ब्रूयादित्यादिना ॥ व्यभिचारोऽस्तीति परिहृति—तं प्रति ब्रूयादिति ॥ अयं दोषः—दृष्टान्तवैषम्याख्यः। अत्र हि हेतौ चेतनत्वमहंधीविषयत्वरूपं चित्तादात्म्यापन्नदेहसाधारणं ग्राह्यम्। न तु मुख्यात्मत्वम्। तव कुलालदृष्टान्ते साधनवैकल्यापत्तेः। असहायत्वं च चेतनस्य स्वातिरिक्तहेतुशून्यत्वम्। तदुभयं देवादिषु अस्तीति व्यभिचारः। देहस्य स्वान्तःपातित्वेन स्वातिरिक्तत्वाभावात्। तथा च कुलालवैलक्षण्यं देवादीनां घटादिकार्ये स्वातिरिक्तानपेक्षत्वाद्देववैलक्षण्यं ब्रह्मणः देहस्याप्यनपेक्षणात् नरदेवादीनां कार्यारम्भे नास्त्येकरूपा सामग्री। श्रूयते हि महाभारते श्रीकृष्णस्य संकल्पमात्रेण द्रौपद्याः पटपरम्परोत्पत्तिः। अतः

भामती।—०

आनन्दगिरीय—न्यायनिर्णयः।

दीनां प्रासादादीनां च निर्माणमित्याशंक्याऽऽह—ऐश्वर्येति। अस्मदादिष्वसंभाव्यमानमैश्वर्यविशेषस्तद्वशेन योगस्तत्कार्यघटनसामर्थ्यं तस्मादिति यावत्। तत्तत्कार्योचितसामग्रीसंपत्तौ हेत्वन्तरमाह—अभिध्यानेति। संकल्पातिरिक्तकारणानपेक्षत्वमुक्तमेव मात्रशब्दार्थस्तस्यैव स्पष्टीकरणम्—स्वत एवेति। लोके नैवमुपलम्भोऽस्तीत्याशंक्याऽऽह—मन्त्रेति। सूत्रे लोकशब्देन लोक्यतेऽनेनेति व्युत्पत्त्या शास्त्रम्। अपिशब्देन वृद्धव्यवहारश्च संगृहीतः। यस्तु देवादिषु मन्त्रादिप्रामाण्ये च विप्रतिपद्यते तं प्रति लौकिकान्युदाहरणानि दर्शयति—तन्तुनाभश्चेति। उक्तदृष्टान्तानां दार्ष्टान्तिकमाह—एवमिति। देवादिदृष्टान्ते विशिष्टस्य हेतोर्न व्यभिचारस्तत्रोपादानांशे चेतनत्वाभावादिति शङ्कते—स यदीति। ऊर्णनाभदृष्टान्ते च तुल्यं व्यभिचारनिवारणमित्याह—तन्तुनाभस्येति। बलाकादृष्टान्ते चासहायत्वाभावाद्विशिष्टहेतोर्न व्यभिचारोऽस्तीत्याह—बलाका चेति। पद्मिनीदृष्टान्तेऽप्यूर्णनाभदृष्टान्तवद्व्यभिचारसमाधिरित्याह—पद्मिनी चेति। व्यभिचारपरिहारफलपूर्वोक्तानुमानोपपत्तिमाह—तस्मादिति। देवादिदेहस्याऽऽपन्नचैतन्यस्यैव देहादिकारणत्वान्न व्यभिचारसमाधिरिति समाधत्ते—तं प्रतीति। प्रागुक्तदृष्टान्तानामसंभवोऽयमुच्यते

न्तवैलक्षण्यमात्रस्य विवक्षितत्वादिति ॥ यथा हि कुलालादीनां देवादीनां च समाने चेतनत्वे कुलालादयः कार्यारम्भे बाह्यं साधनमपेक्षन्ते न देवादयः, तथा ब्रह्म चेतनमपि न बाह्यं साधनमपेक्षत इत्येतावद्वयं देवाद्युदाहरणेन विवक्ष्यामः ॥ तस्माद्यथैकस्य सामर्थ्यं दृष्टं तथा सर्वेषामेव भवितुमर्हतीति नास्त्येकान्त इत्यभिप्रायः ॥ २५ ॥ इत्युपसंहारदर्शनाधिकरणम् ॥ ८ ॥

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥ ( ९ ) ॥

चेतनमेकमद्वितीयं ब्रह्म क्षीरादिवद्देवादिवच्चानपेक्ष्य बाह्यसाधनं स्वयं परिणममाणं जगतः कारणमिति स्थितम् ॥ शास्त्रार्थपरिशुद्धये तु पुनराक्षिपति-कृत्स्नप्रसक्तिः, कृत्स्नस्य ब्रह्मणः कार्यरूपेण परिणामः प्राप्नोति । निरवयवत्वात् ॥ यदि ब्रह्म पृथिव्यादिवत्सावयवमभविष्यत्,

---

रत्नप्रभा ।

सिद्धमसहायस्यापि ब्रह्मणः कारणत्वम् ॥ २९ ॥ ( ८ ) ॥ कृत्स्नप्रसक्तिरिति ॥ क्षीरदृष्टान्तेन ब्रह्म परिणामीति भ्रमोत्पत्त्या पूर्वपक्षे प्राप्ते शास्त्रार्थो विवर्तः । न परिणाम इति निर्णयार्थमिदमधिकरणमिति पूर्वाधिकरणेनोत्तराधिकरणस्य कार्यत्वसङ्गतिमाह-चेतनमिति ॥ निरवयवाद् ब्रह्मणो जगत्सर्गं वदन् समन्वयो विषयः । स किं यन्निरवयवं तन्न परिणामीति न्यायेन विरुध्यते न वेति सन्देहे त्रिरुध्यत इति पूर्वपक्षसूत्रं व्याचष्टे-कृत्स्नेति ॥ ब्रह्म परिणामीति वदता वक्तव्यं-ब्रह्म निरवयवं सावयवं वा । आद्ये सर्वस्य ब्रह्मणः परिणामात्मना स्थितिः स्यादित्युक्तं व्यतिरेकदृष्टान्तेन विवृणोति-यदि ब्रह्मे-

भामती ।

कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा । ननु न ब्रह्मणस्तत्त्वतः परिणामो येन कार्त्स्न्यभागविकल्पेनाक्षिप्येत । अविद्याकल्पितेन तु नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मना तत्त्वान्यत्वाभ्यामनिर्वचनीयेन परिणामादिव्यवहारास्पदत्वं ब्रह्म प्रतिपद्यते। न च कल्पितं रूपं वस्तु स्पृशति। न हि चन्द्रमसि तैमिरिकस्य द्वित्वकल्पना चन्द्रमसो द्वित्वमावहति । तदनुपपत्त्या वा चन्द्रमसोऽनुपपत्तिः । तस्मादवास्तवी परिणामकल्पनानुपपद्यमानापि न परमार्थसतो ब्रह्मणोऽनुपपत्तिमावहति । तस्मात्पूर्वपक्षाभावादनारभ्यमिदमधिकरणमिति, अत आह-चेतनमेकम् । यद्यपि श्रुतिशतादैकान्तिकाद्वैतप्रतिपादनपरात् परिणामो वस्तुतो

आनन्दगिरीय-न्यायनिर्णयः ।

विवक्षितं वैलक्षण्यमेव स्पष्टयति-यथा हीति । सिद्धे व्यभिचारे फलितं सूत्रतात्पर्यमुपसंहरति-तस्मादिति । कुलालादेरिव ससहायस्यैव कारणत्वं ब्रह्मणो न शक्यं नियन्तुं देवादिवदसहायस्यापि तदुपपत्तेरिति भावः ॥ ॥२५॥(८)॥ पूर्वाधिकरणोक्तक्षीरादिदृष्टान्तात्परिणामित्वभ्रमे तन्निराकरणार्थमधिकरणमवतारयन्पूर्वपक्षयति-कृत्स्नप्रसक्तिरिति।निरवयवाद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विषयः।स किं सावयवस्यैव नानाकार्योपादानतेति न्यायेन विरुध्यते न वेति तदनाभासत्वाभासत्वाभ्यां संदेहे वक्ष्यमाणपूर्वपक्षस्य मायामयत्वेन परिहारादधिकरणानारम्भमाशंक्य संगतिमाह-चेतनमिति । शास्त्रार्थस्य परिशुद्धिर्नाम परिणामपराकरणेन विवर्तदृढीकरणं तदर्थमधिकरणारम्भे प्रथममाक्षेपसूत्रमित्यर्थः । अत्रापि समन्वयस्य न्यायविरोधसमाधानात्पादादिसंगतिचतुष्टयं फलं च द्रष्टव्यम् । यदि क्षीरमिव दध्यात्मना ब्रह्म जगदाकारेण परिणमेत्तदा साकल्येन वा तदेकदेशेन वा परिणमेदाद्यं प्रत्याह-कृत्स्नेति । ततश्च कारणभूतब्रह्माभावे तत्पराधीनस्य कार्यस्यापि सत्त्वायोगान्न किंचिदपि स्यादिति शेषः । द्वितीयं निरस्यति-यदीति । ब्रह्मणः सावयवत्वाभावादेकदेशपरिणामानुपप-

ततोऽस्यैकदेशः पर्यणंस्यद्, एकदेशश्चावास्थास्यत् ॥ निरवयवं तु ब्रह्म श्रुतिभ्योऽवगम्यते–"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" [श्वेता० ६।१९] "दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः" [मुण्ड० २।१।२] "इदं महद्भूतमनन्तमपारं विज्ञानघन एव" [बृ० २।४।१२] "स एष नेतिनेत्यात्मा" [बृ० ३।९।२६] "अस्थूलमनणु" [बृ० ३।८।८] इत्याद्याभ्यः सर्वविशेषप्रतिषेधिनीभ्यः ॥ ततश्चैकदेशपरिणामासम्भवात् कृत्स्नपरिणामप्रसक्तौ सत्यां मूलोच्छेदः प्रसज्येत ॥ द्रष्टव्यत्वोपदेशानर्थक्यं चापन्नम् ॥ अयत्नदृष्टत्वात्कार्यस्य ॥ तद्व्यतिरिक्तस्य च ब्रह्मणोऽसम्भवादजत्वादिशब्दकोपश्च॥ अथैतद्दोषपरिजिहीर्षया सावयवमेव ब्रह्माभ्युपगम्येत । तथापि ये निरवयवत्वस्य प्रतिपादकाश्शब्दा उदाहृतास्ते प्रकुप्येयुः ॥ सावयवत्वे चानित्यत्वप्रसङ्ग इति सर्वथायं पक्षो न घटयितुं शक्यत इत्याक्षिपति॥२६॥

## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुशब्देनाक्षेपं परिहरति । न खल्वस्मत्पक्षे कश्चिदपि दोषोऽस्ति–

रत्नप्रभा ।

त्यादिना ॥ पर्यणंस्यत् परिणतोऽभविष्यत् । एकदेशश्चावास्थास्यद् अपरिणतोऽभविष्यत् । उक्तश्रुतिभ्यो निरवयवत्वसिद्धेः । फलितं दोषमाह–ततश्चेति ॥ यदा परिणामव्यतिरेकेण मूलब्रह्मात्मा नाऽस्ति, तदात्मा द्रष्टव्य इत्युपदेशोऽर्थशून्यः स्यादिति दोषान्तरमाह–द्रष्टव्येति ॥ ब्रह्मणः परिणामात्मना जन्मनाशाङ्गीकारे "अजोऽमरः" [बृ० ४।४।२५] इति श्रुतिविरोधश्चेत्याह–अजत्वादीति ॥ सावयवत्वपक्षमाशंक्य सूत्रशेषेण परिहरति—अथेत्यादिना ॥ २६ ॥ परिणामपक्षो दुर्घट इति यदुक्तं, तदस्मदिष्टमेवेति विवर्तवादेन सिद्धान्तयति–श्रुतेरिति ॥ स्वपक्षे पूर्वोक्तदोषद्वयं नास्तीति सूत्रयोजनया दर्शयति–तुशब्देनेत्यादिना ॥ ईक्षितृत्वेन व्याकर्तृत्वेन चेक्षणीयव्याकर्तव्यप्रपञ्चात् पृथ-

भामती ।

निषिद्धस्तथापि क्षीरादिदेवतादृष्टान्तेन पुनस्तद्वास्तवत्वप्रसङ्गं पूर्वपक्षोपपत्त्या सर्वथायं पक्षो न घटयितुं शक्यत इत्यपवाध्य श्रुतेस्तु शब्दमूलत्वात्, 'आत्मनि चैवं विचित्राश्च हि' इति सूत्राभ्यां विवर्तदृढीक-

आनन्दगिरीय–न्यायनिर्णयः ।

त्तिरित्यर्थः । भवतु तर्हि ब्रह्मणः सावयवत्वं नेत्याह–निरवयवं त्विति । अमूर्तत्वादपि ब्रह्म निरवयवमित्याह–दिव्यो हीति । सर्वगतत्वनिरवयवत्वाभ्यां च तन्निरवयवमित्याह–इदमिति । आपेक्षिकमानन्त्यं वारयति–अपारमिति । विज्ञप्तितावन्मात्रत्वाच्च निरवयवमित्याह–विज्ञानेति । मूर्तामूर्तद्वैतनिषेधाच्च तथेत्याह–स एष इति । न हि ब्रह्मणः सावयवत्वमुपादानत्वेऽपि सुवर्णादिवत्प्रतिपत्तुं शक्यं श्रुतिविरोधादित्यर्थः । द्वितीयविकल्पासंभवे प्रथमविकल्पप्राप्तौ फलितमाह–ततश्चेति । कृत्स्नपरिणामपक्षे दोषान्तरमाह–द्रष्टव्यतेति । ब्रह्मणो द्रष्टव्यत्वसंभवात्कुतस्तदुपदेशानर्थक्यमित्याशंक्य परिणतं वा ब्रह्म तदतिरिक्तं वा द्रष्टव्यमिति विकल्प्याऽऽद्ये दोषमाह–अयत्नेति । द्वितीयं दूषयति- तद्व्यतिरिक्तस्येति । किंच, ब्रह्मणः साकल्येन कार्यात्मना जन्माभ्युपगमे 'न जायते म्रियते वा' इत्यादिश्रुतिस्मृतिविरोधः स्यादित्याह–अजत्वादीति । प्रथमपक्षदूषणं संक्षेपविस्तराभ्यामुक्त्वा द्वितीयपक्षदूषणं संक्षिप्तं विवृणोति–अथेत्यादिना । न केवलं शब्दविरोधो न्यायविरोधश्चेत्याह–सावयवत्वे चेति । पूर्वपक्षमुपसंहरति–सर्वथेति ॥ २६ ॥ सिद्धान्तसूत्रमादत्ते–श्रुतेरिति । परिणामवादमेवाऽऽश्रित्य प्रथमं व्याचष्टे–तुशब्देनेति । परिहारमेवाभिनयति–न खल्विति । यदुक्तं ब्रह्मणो जगदाकारेण परिणामे कृत्स्नप्रसक्तिरिति

न तावत् कृत्स्नप्रसक्तिरस्ति ॥ कुतः ॥ "श्रुतेः" यथैव हि ब्रह्मणो जगदुत्पत्तिः श्रूयते, एवं विकारव्यतिरेकेणापि ब्रह्मणोऽवस्थानं श्रूयते ॥ प्रकृतिविकारयोर्भेदेन व्यपदेशात् ॥ "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" [ छां० ६ । ३ । २ ] इति "तावानस्य महिमा । ततो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" [ छां० ३ । १२ । ६ ] इति चैवञ्जातीयकात् ॥ तथा हृदयायतनत्ववचनात्, सत्सम्पत्तिवचनाच्च । यदि च कृत्स्नं ब्रह्म कार्यभावेनोपयुक्तं स्यात् "सता सोम्य तदा सम्पन्नो भवति" [ छां० ६ । ८ । १ ] इति सुषुप्तिगतं विशेषणमनुपपन्नं स्यात् ॥ विकृतेन ब्रह्मणा नित्यं सम्पन्नत्वात् ॥ अविकृतस्य च ब्रह्मणोऽभावात् ॥ तथेन्द्रियगोचरत्वप्रतिषेधाद्ब्रह्मणो विकारस्य चेन्द्रियगोचरत्वोपपत्तेः ॥ तस्मादस्त्यविकृतं ब्रह्म ॥ न च निरवयवत्वशब्द-

---

रत्नप्रभा ।

गीश्वरसत्त्वश्रुतेर्न कृत्स्नप्रसक्तिरित्याह-**सेयं देवतेति** ॥ न्यूनाधिकभावेनापि पृथक्सत्त्वं श्रुतमित्याह-**तावानिति** ॥ इतश्चास्त्यविकृतं ब्रह्मेत्याह-**तथेति** ॥ "स वा एष आत्मा हृदि" [ छां० ८ । ३ । ३ ] इति श्रुतेरस्ति दृश्यातिरिक्तं ब्रह्म । **तदेति** ॥ सुषुप्तिकालरूपविशेषणाच्चेत्यर्थः । लिङ्गान्तरमाह-**तथेन्द्रियेति** ॥ भूम्यादेर्विकारस्येन्द्रियगोचरत्वात् "न चक्षुषा गृह्यते" [ मुण्डक० ३ । १ । ८ ] इत्यादिश्रुत्या ब्रह्मणस्तत्प्रतिषेधादवाङ्मनसगोचरत्वश्रुतेश्चास्ति कूटस्थं ब्रह्मेत्यर्थः । कृत्स्नप्रसक्तिदोषो नास्तीत्युक्त्वा द्वितीयदोषोऽपि नास्तीत्याह-**न चेति** ॥ ननु ब्रह्म कार्यात्मनाप्यस्ति, पृथगप्यस्ति चेत्, साव-

भामती ।

रणेनैकान्तिकाद्वयलक्षणः श्रुत्यर्थः परिशोध्यत इत्यर्थः । **तस्मादस्त्यविकृतं ब्रह्म** तत्त्वतः । **ननु शब्दे**-

आनन्दगिरीय-न्यायनिर्णयः ।

तत्राऽऽह-**न तावदिति** । निरवयवं ब्रह्म परिणमते च न च कृत्स्नमिति कुतः संभावनेति पृच्छति-**कुत इति** । श्रौतेऽर्थे नासंभावनेति परिहरति-**श्रुतेरिति** । यत्तु ब्रह्मणो विरुद्धाकारेण परिणामे मूलोच्छेदाद् द्रष्टव्यतोपदेशानर्थक्यमिति तत्परिहरन् हेतुं विवृणोति-**यथेति**।विकारातिरेकेण स्थितं ब्रह्मेति श्रुतिरश्रुता तत्कुतस्तथाविधं ब्रह्माधिकृत्य द्रष्टव्यतोपदेशस्यार्थवत्तेत्याशङ्क्याऽऽह-**प्रकृतीति** । तत्र द्रष्टृद्रष्टव्यत्वेन प्रवेष्टृप्रवेष्टव्यत्वेन व्याकर्तृव्याकार्यत्वेन च भेदव्यपदेशं दर्शयति-**सेयमिति** । व्याप्यव्यापकत्वेनापि भेदव्यपदेशोऽस्तीत्याऽऽह-**तावानिति** । अंशांशित्वेनापि भेदव्यपदेशमुदाहरति-**पादोऽस्येति** । इतश्चाविकृतमस्ति ब्रह्मेत्याह-**त्रिपादिति** । अविकृतब्रह्मास्तित्वे हेत्वन्तरमाह-**तथेति** । सर्वस्य ब्रह्मणो विकारात्मना समाप्तौ सर्वायतनत्वाद्विशेषेण हृदयायतनत्वं 'हृद्यन्तर्ज्योतिः' इत्यादिना नोच्येत तद्वचनादविकृतस्यैव हृद्यवस्थानसिद्धेस्तदस्तीतीत्यर्थः । अस्त्यविकृतं ब्रह्मेत्यत्र हेत्वन्तरमाह-**सदिति** । सुषुप्तौ जीवस्य सत्संपत्तिश्रुतिमात्रेण कथमविकृतमस्ति ब्रह्मेत्याशंक्याऽऽह-**यदि चेति** । कुतो विशेषणानुपपत्तिरित्याशंक्य विकृतेनाविकृतेन वा ब्रह्मणा संपत्तिः सुषुप्ताविष्टेति विकल्प्य क्रमेण दूषयन्ननुपपत्तिं प्रकटयति-**विकृतेनेत्यादिना** । किंच विकारस्येन्द्रियगोचरत्वात् 'न चक्षुषा गृह्यते नापि वाचा' इत्यादिना ब्रह्मणस्तद्गोचरत्वनिषेधात्तदस्ति विकारातिरिक्तमित्याह-**तथेति** । यत्तु परिणामित्वे ब्रह्मणो निरवयवत्वशब्दकोपः स्यादिति तत्राऽऽह-**न चेति** । श्रुत्याऽपि कथं विरुद्धोऽर्थः समर्प्यते तस्याः स्वार्थप्रतिपादनास्याविरोध-

व्याकोपोऽस्ति ॥ श्रूयमाणत्वादेव निरवयवत्वस्याप्यभ्युपगम्यमानत्वात् ॥ शब्दमूलं च ब्रह्म शब्दप्रमाणकं नेन्द्रियादिप्रमाणकम् ॥ तद्यथाशब्दमभ्युपगन्तव्यम् ॥ शब्दश्चोभयमपि ब्रह्मणः प्रतिपादयत्यकृत्स्नप्रसक्तिं निरवयवतां च ॥ लौकिकानामपि मणिमन्त्रौषधिप्रभृतीनां देशकालनिमित्तवैचित्र्यवशाच्छक्तयो विरुद्धानेककार्यविषया दृश्यन्ते ॥ ता अपि तावन्नोपदेशमन्तरेण केवलेन तर्केणावगन्तुं शक्यन्ते अस्य वस्तुन एतावत्य एतत्सहाया एतद्विषया एतत्प्रयोजनाश्च शक्तय इति । किमुताचिन्त्यप्रभावस्य ब्रह्मणो रूपं विना शब्देन न निरूप्येत ॥ तथा चाहुः पौराणिकाः–"अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम्" इति ॥ तस्माच्छब्दमूल एवातीन्द्रियार्थयाथात्म्याधिगमः ॥ ननु शब्देनापि न शक्यते विरुद्धोऽर्थः प्रत्याययितुं, निरवयवं च ब्रह्म परिणमते न च कृत्स्नमिति ॥ यदि निरवयवं ब्रह्म स्यात, नैव परिणमेत, कृत्स्नमेव वा परिणमेत ॥

---

रत्नप्रभा ।

यत्त्वं दुर्वारम् । निरवयवस्यैकस्य द्विधा सत्त्वायोगात् । अतो यद्द्विधाभूतं तत्सावयवमिति तर्कविरुद्धं ब्रह्मणो निरवयवत्वमिति विवर्तमजानतः शङ्कां गूढाशय एव परिहरति–**शब्दमूलश्चेति** ॥ यदा लौकिकानां प्रत्यक्षदृष्टानामपि शक्तिरचिन्त्या, तदा शब्दैकसमधिगम्यस्य ब्रह्मणः किमु वक्तव्यम् । अतो ब्रह्मणो निरवयवत्वं द्विधाभावश्चेत्युभयं यथाशब्दमभ्युपगन्तव्यम् । न तर्केण बाधनीयमित्यर्थः प्रकृतिभ्यः प्रत्यक्षदृष्टवस्तुस्वभावेभ्यो यत्परं विलक्षणं केवलोपदेशगम्यं तदचिन्त्यस्वरूपमिति **स्मृत्यर्थः** । आशयानवबोधेन शङ्कते–**ननु शब्देनापीति** ॥ यद्वा ब्रह्म परिणामीत्येकदेशिनामियं सिद्धान्तसूत्रव्याख्या दर्शिता । तामाक्षिपति–**नन्विति** ॥ शब्दस्य योग्यताज्ञानसापेक्षत्वादित्यर्थः । **ननु** ब्रह्म

भामती ।

नापीति चोद्यमविद्याकल्पितत्वोद्घाटनाथ । न हि निरवयवत्वसावयवत्वाभ्यां विधान्तरमस्त्येकनिषेधस्येतरविधाननान्तरीयकत्वात् । तेन प्रकारान्तराभावान्निरवयवत्वसावयवत्वयोश्च प्रकारयोरनुपपत्तेर्ग्रावप्लवना-

आनन्दगिरीय–न्यायनिर्णयः ।

सापेक्षत्वादित्याशंक्याऽऽह–**शब्देति** । ब्रह्मणः शब्दप्रमाणकत्वाद्यथाशब्दमिष्टत्वेऽपि कथमकृत्स्नपरिणामनिरवयवत्वयोरुपपत्तिस्तत्राऽऽह–**शब्दश्चेति** । तत्राकृत्स्नप्रसक्तौ भेदव्यपदेशश्रुतिरुक्ता निरवयवत्वे तु श्रुतिरुदाहृता पूर्वपक्षे । ननु निरवयवत्वपरिणामित्वे नैकाधिकरणे सिध्यतो मिथोविरुद्धत्वादौष्ण्यशैत्यवदित्याशंक्य श्रुतिविरोधान्मैवमिति मत्वा कैमुतिकन्यायमाह–**लौकिकानामपीति** । स्वरूपेण प्रत्यक्षादिसिद्धानामपि यत्र शक्तयस्तर्कागोचरास्तत्र किमु वक्तव्यं शब्दैकगम्यस्य तर्कागोचरत्वमित्यर्थः । उक्तेऽर्थे स्मृतिं संवादयति–**तथा चेति** । अचिन्त्यानां भावानामचिन्त्यत्वादेव तर्कायोग्यत्वेऽपि किं तदचिन्त्यमित्यपेक्षायामाह–**प्रकृतिभ्य इति** । प्रत्यक्षदृष्टपदार्थस्वभावेभ्यो यत्परं विलक्षणमाचार्याद्युपदेशगम्यं तदचिन्त्यमित्यर्थः । शब्दमूलं चेत्यादिना शब्दमूलत्वादित्येतद्व्याख्याय शब्दैकसमधिगम्यस्य ब्रह्मणस्तर्कागोचरत्वे फलितमाह–**तस्मादिति** । आकांक्षादिवशेन शब्दस्यार्थप्रत्यायकत्वाद्विरुद्धार्थप्रत्यायने चाऽऽकांक्षाद्यभावान्न शब्दस्यापि तथाविधार्थबोधकतेत्येकदेशिव्याख्यानमाक्षिपति–**नन्विति** । विरोधमेव दर्शयति–**निरवयवं चेति** । कथमयमर्थो विरुध्यते, न हि प्रमाणसिद्धं विरुद्धमुपयन्तीत्याशंक्य विरोधं प्रपञ्चयति–**यदीति** । सावयवेष्वेव क्षीरादिषु परिणामदृष्टेरित्यर्थः । विपक्षे कृत्स्नप्रसक्तितादवस्थ्यमित्याह–**कृत्स्नमेवेति** । यदि कथंचित्कृत्स्नप्रसक्तिः समाधीयते तदा निरवयवशब्दकोपः स्यादित्याशयवानाह–

अथ केनचिद्रूपेण परिणमेत केनचिद्रूपेणावतिष्ठेतेति रूपभेदकल्पनात् सावयवमेव प्रसज्येत ॥ क्रियाविषये हि "अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति" इत्येवञ्जातीयकायां विरोधप्रतीतावपि विकल्पाश्रयणं विरोधपरिहारकारणं भवति । पुरुषतन्त्रत्वादनुष्ठानस्य ॥ इह तु विकल्पाश्रयणेनापि न विरोधपरिहारः सम्भवति । अपुरुषतन्त्रत्वाद्वस्तुनः ॥ तस्माद् दुर्घटमेतदिति ॥ नैष दोषः ॥ अविद्याकल्पितरूपभेदाभ्युपगमात् ॥ न ह्यविद्याकल्पितेन रूपभेदेन सावयवं वस्तु सम्पद्यते ॥ न हि तिमिरोपहतनयनेनानेक इव चन्द्रमा दृश्यमानोऽनेक एव भवति । अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते ॥ पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठते । वाचारम्भणमात्रत्वाच्चाविद्याकल्पितस्य नामरूपभेदस्येति न निरवयवत्वं ब्रह्मणः कुप्यति ॥ न चेयं परिणामश्रुतिः

---

रत्नप्रभा ।

ब्रह्मसावयवं निरवयवं वेति विकल्पाश्रयणे सर्वश्रुतिसमाधानं स्यादित्यत आह—क्रियेति ॥ निरवयवत्वे ब्रह्मणः प्रकृतित्वश्रुतिविरोधः । सावयवत्वे निरवयवत्वशब्दविरोधः । विकल्पश्च वस्तुन्ययुक्तः । अतः प्रकारान्तरानुपलम्भाच्छ्रुतीनां प्रामाण्यं दुर्घटमिति प्राप्ते स्वाशयमुद्घाटयति—नैष दोष इति ॥ निरवयवस्य वस्तुनः कूटस्थस्याप्यविद्यया कल्पितनामरूपविकाराङ्गीकाराद्दुर्घटत्वदोषो नास्ति । वास्तवकौटस्थ्यस्य कल्पितविकारप्रकृतित्वेनाविरोधादित्यर्थः । रूपभेदाङ्गीकारे सावयवत्वं स्यादित्याशंक्योक्तं विवृणोति—न हीत्यादिना ॥ कृत्स्नप्रसक्तिं निरस्य दोषान्तरं निरस्यति—वाचारम्भणेति ॥ ननु श्रुतिप्रतिपाद्यस्य परिणामस्य कथं मिथ्यात्वं तत्राह—न चेयमिति ॥ निष्प्रपञ्चब्रह्मधीशेषत्वेन सृष्टिरनूद्यते

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

अथेति । एकत्रापि परिणामापरिणामौ षोडशिग्रहणाग्रहणवदविरुद्धावित्याशंक्याऽऽह—क्रियेति । इहेति ब्रह्मणि परिणामापरिणामयोरित्यर्थः । परिणामादिविषयो वस्तुशब्दः । स्वयूथ्यो व्याख्यानस्यानुपपन्नत्वमुपसंहरति—तस्मादिति । विवर्तवादमादाय सिद्धान्ती परिहरति—नैष दोष इति । निरवयवस्य ब्रह्मणो विकारास्पृष्टतयाऽवस्थानस्य विकारात्मना परिणामस्य च श्रूयमाणस्य मिथो विरोधे तात्त्विकं विकारास्पृष्टत्वं मायिकं च परिणामित्वमिति व्यवस्थायां नास्ति दौस्थ्यमित्यर्थः । रूपभेदमभ्युपगच्छतस्तत्सावयवत्वं दुर्वारमित्याशंक्याऽऽह—न हीति । तदेव दृष्टान्तेन स्पष्टयति—न हि तिमिरेति । नामरूपभेदश्चेदविद्याकृतस्तर्हि ब्रह्मणो न कारणत्वमविद्याया एव तद्भावादित्याशंक्याऽऽह—अविद्येति । नामरूपभेदसिद्धौ कारणत्वसिद्धिस्तत्सिद्धौ च नामरूपभेदसिद्धिरित्यन्योन्याश्रयतेत्याशंक्याऽऽह—व्याकृतेति । विवर्तवादेऽपि विरुद्धाकारप्राप्तौ पूर्वरूपनिवृत्तेस्तुल्या मूलोच्छित्तिरित्याशंक्यानिर्वाच्यरजताकारापत्तौ शुक्तिकादेरन्यथात्वादर्शनाद्ब्रह्मणोऽपि कल्पिताकारापत्तौ पूर्वरूपानिवृत्तेर्मैवमित्याह—तत्त्वेति । ब्रह्मणो मायाविवन्मायया सर्वव्यवहारास्पदत्वेऽपि कुतोऽस्यापरिणामित्वादिसिद्धिरित्याशंक्याऽऽह—पारमार्थिकेनेति । एवं कृत्स्नप्रसक्तिं निराकृत्य निरवयवत्वशब्दकोपं निराकरोति—वाचारम्भणेति । प्रतिपाद्यत्वं सृष्टेरभ्युपेत्यैतदुक्तं तदेव नास्तीत्याह—न चेति । किंपरा तर्हीयं श्रुतिरित्या-

परिणामप्रतिपादनार्था ॥ सत्प्रतिपत्तौ फलानवगमात् । सर्वव्यवहारहीनब्रह्मात्मभावप्रतिपादनार्था त्वेषा । तत्प्रतिपत्तौ फलावगमात् । "स एष नेति नेत्यात्मा" [बृ० ४ । २ । ४] इत्युपक्रम्याह—"अभयं वै जनक प्राप्तोऽसि" [बृ० ४ । २ । ४] इति ॥ तस्मादस्मत्पक्षे न कश्चिदपि दोषप्रसङ्गोऽस्ति ॥ २७ ॥

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

अपि च नैवात्र विवदितव्यम् ॥ कथम् ॥ एकस्मिन्ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः स्यादिति ॥ यत आत्मन्यप्येकस्मिन् स्वप्नदृशि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः पठ्यते "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान् पथः सृजते" [बृ० ४ । ३ । १०] इत्यादिना । लोकेऽपि देवादिषु मायाव्यादिषु च स्वरूपानुपमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयो दृश्यन्ते, तथैकस्मिन्नपि ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिर्भविष्यतीति ॥ २८ ॥

## स्वपक्षदोषाच्च ॥ २९ ॥

---

रत्नप्रभा ।

न प्रतिपाद्यते इत्यसकृदावेदितम् । अतो विवर्तवादे न कश्चिद्दोष इत्युपसंहरति—तस्मादिति ॥ ॥ २७ ॥ पूर्वावस्थानाशेनावस्थान्तरं परिणामः । यथा दुग्धस्य दधिभावः पूर्वरूपानुपमर्देनावस्थान्तरं विवर्तः । यथा शुक्तेः रजतभावः । तत्र ब्रह्मणो विवर्तोपादानत्वं स्वप्नसाक्षिदृष्टान्तेन दृढयन्मायावादं स्फुटयति सूत्रकारः—आत्मनि चेति ॥ रथयोगाः अश्वाः ॥ २८ ॥ किञ्च कृत्स्नप्रसक्त्यादीनां सांख्यादिपक्षेऽपि दोषत्वान्नास्मान्प्रत्युद्भावनीयत्वम् । यश्चोभयोः समो दोष इति न्यायादित्याह सूत्रकारः—स्वपक्षेति ॥ प्रधानस्य निरवयवत्वे कृत्स्नप्रसक्तिः । सावयवत्वे च निरवयवत्वा-

भामती ।

धर्थवादवदप्रमाणं शब्दः स्यादिति चोद्यार्थः।परिहारः सुगमः॥२६॥२७॥आत्मनि चैवं विचित्राश्च हि। अनेन स्फुटितो मायावादः । स्वप्नदृगात्मा हि मनसैव स्वरूपानुपमर्देन रथादीन् सृजति ॥२८॥ स्वपक्ष-

आनन्दगिरीय—न्यायनिर्णयः ।

शंक्याऽऽह—सर्वेति । ब्रह्मात्म्यैक्यप्रतिपादनपरतया सृष्टिवाक्यानां स्वशेषिविरोधित्वायोगान्नास्ति सृष्टौ तात्पर्यमित्यर्थः । ब्रह्मात्मप्रतिपत्तौ फलावगतिमुदाहरति—स एष इति । विवर्तवादे दोषाभावमुपसंहरति—तस्मादिति ॥ २७ ॥ उक्तं विवर्तवादं सूत्रकाराभिप्रेतत्वेन स्पष्टयति—आत्मनीति । सूत्रार्थं विवृण्वन्दृष्टान्तसद्भावाद्विवर्तवादे विवादो नास्तीत्याह—अपि चेति । विवादस्याकर्तव्यत्वे हेतुमाह—यत इति । दृष्टान्तदार्ष्टान्तिकयोरेकार्थत्वं विशिनष्टि—स्वप्नदृशीति । स्वप्नस्य स्मृतित्वाभ्युपगमाद्विरुद्धा सृष्टिरेव तत्र नास्तीति कुतोऽस्य दृष्टान्ततेत्याशंक्यापरोक्षतया स्वप्नस्यास्मृतित्वमभिप्रेत्याऽऽह—पठ्यत इति । स्वप्ने रथादीनामभावे कथं तत्प्रथेत्याशंक्याऽऽह—अथेति । आत्मनि चेति व्याख्याय विचित्राश्च हीति व्याचष्टे—लोकेऽपीति । एवमिति सूत्रपदं व्याकुर्वन्दार्ष्टान्तिकमाह—तथेति । इतिशब्दो विवर्तवादसमाप्त्यर्थः ॥ २८ ॥ 'यश्चोभयोः' इति न्यायेन कृत्स्नप्रसक्त्यादीनामनुद्भाव्यत्वं दर्शयति—स्वपक्षेति ।

---

१ "यश्चोभयोः समो दोषः परिहारोऽपि तत्समः । नैकस्तत्र नियोक्तव्यस्तादृगर्थविचारणे" इति न्यायशरीरम् ।

परेषामप्येष समानस्स्वपक्षे दोषः । प्रधानवादिनोऽपि हि निरवयवम् परिच्छिन्नं शब्दादिहीनं प्रधानं सावयवस्य परिच्छिन्नस्य शब्दादिमतः कार्यस्य कारणमिति स्वपक्षः । तत्रापि कृत्स्नप्रसक्तिर्निरवयवत्वात्प्रधानस्य प्राप्नोति । निरवयवत्वाभ्युपगमकोपो वा ॥ ननु नैव तैर्निरवयवं प्रधानमभ्युपगम्यते । सत्त्वरजस्तमांसि हि त्रयो गुणाः । तेषां साम्यावस्था प्रधानम् । तैरेवावयवैस्तत्सावयवमिति ॥ नैवञ्जातीयकेन सावयवत्वेन प्रकृतो दोषः परिहर्तुं पार्यते ॥ यतः सत्त्वरजस्तमसामप्येकैकस्य समानं निरवयवत्वम् । एकैकमेव चेतरद्वयानुगृहीतं सजातीयस्य प्रपञ्चस्योपादानमिति समानत्वात्स्वपक्षे दोषप्रसङ्गस्य ॥ तर्काप्रतिष्ठानात्सावयवत्वमेवेति चेत् ॥ एवमप्यनित्यत्वादिदो-

---

रत्नप्रभा ।

भ्युपगमविरोध इत्यत्र शङ्कते—नन्विति ॥ किं साम्यावस्था गुणानां विकारः समुदायो वा आद्ये तस्या न मूलप्रकृतित्वम् । विकारत्वात् । द्वितीये प्रपञ्चाभावः । समुदायस्यावस्तुत्वेन मूलाभावात् । अथ निरवयवा गुणा एव विविधपरिणामानां प्रकृतिरिति चेत् । तर्हि कृत्स्नप्रसक्तेर्मूलोच्छेदो दुर्वार इत्यभिप्रेत्य परिहरति—नैवमित्यादिना ॥ इति यतः, अतः समानत्वान्न वयं पर्यनुयोज्या इत्यन्वयः । प्रत्येकं सत्त्वादिकमितरगुणद्वयसचिवं निरवयवं यद्युपादानं तर्हि कृत्स्नस्योपादानस्य कार्यरूपत्वप्रसक्तेर्मूलोच्छेद इत्युक्ते निरवयवत्वसाधकतर्कस्याभासत्वाद्गुणानां सावयवत्वमेव परिणामित्वेन मृदादिवत् । अतो न कृत्स्नप्रसक्तिरेकदेशपरिणामसम्भवादिति शङ्कते—तर्केति ॥ एतद्दोषाभावेऽपि दोषान्तरं स्यादिति परिहरति—एवमपीति ॥ ननु गुणानामवयवास्तन्तुवदारम्भका न भवन्ति । किन्तु कार्यवैचित्र्यानुमि-

भामती ।

दोषाच्च । चोदयति—ननु नैवेति । परिहरति—नैवंजातीयकेनेति । यद्यपि समुदायः सावयवस्तथापि प्रत्येकं सत्त्वादयो निरवयवाः । न ह्यस्ति संभवः सत्त्वमात्रं परिणमते न रजस्तमसी इति । सर्वेषां संभूयपरिणामाभ्युपगमात् । प्रत्येकं चानवयवानां कृत्स्नपरिणामे मूलोच्छेद-

आनन्दगिरीय-न्यायनिर्णयः ।

सूत्राक्षराणि व्याचष्टे—परेषामिति । तथा च ब्रह्मवादिनि विशेषेणानुद्भाव्यतेति शेषः । तत्र प्रधानवादे दोषसाम्यं वक्तुं तत्पक्षमनुभाषते—प्रधानेति । दोषसाम्यमधुना दर्शयति—तत्रापीति । प्रधानं हि महदाद्याकारेण परिणममानं साकल्येन वा परिणमत एकदेशेन वा । प्रथमे निरवयवत्वात्प्रधानस्य कृत्स्नस्यैव कार्याकारेण परिणतत्वादवशिष्टस्याभावात्तदाश्रितस्य कार्यस्याप्ययोगात्कार्यं कारणं चेत्युभयमपि समुच्छिद्येत । द्वितीये प्रधानस्य निरवयवत्वस्वीकारो विरुध्येतेत्यर्थः । दोषद्वयं परिहर्तुं शङ्कते—नन्विति । निरवयवत्वानुपगमं स्फुटयितुं प्रधानस्वरूपमनुवदति—सत्त्वेति । कथमेतावता निरवयवत्वानभ्युपगमस्तत्राऽऽह—तैरिति । सावयवत्वे च प्रधानस्यैकदेशेन परिणामोऽवस्थानं चैकदेशेनेत्यङ्गीकारान्न कृत्स्नप्रसक्त्यादिदोषावकाशोऽस्तीत्यर्थः । उक्तं सावयवत्वमङ्गीकृत्य परिहरति—नेत्यादिना । तत्र हेतुमाह—यत इति । समुदायस्य सावयवत्वेऽपि प्रत्येकं सत्त्वादीनां निरवयवत्वात्तेषां च परिणामस्वीकारात्कृत्स्नपरिणामे मूलोच्छित्तिरेकदेशपरिणामे सावयवत्वमतो दोषद्वयं प्रधानवादे दुर्वारमित्यर्थः । संभूय सत्त्वादीनां परिणामपरिग्रहान्न दोषद्वयमित्याशंक्याऽऽह—एकैकमेवेति । समुदायस्यैव परिणामित्वे कार्यवैषम्यासिद्धिरिति भावः । एवं प्रधानवादे कृत्स्नप्रसक्त्यादिदोषसाम्यान्न तेन ब्रह्मवादिनि तदुद्भावनीयमित्युपसंहरति—समानत्वादिति । तर्काप्रतिष्ठानन्यायेन निरवयवत्वापादकतर्कस्याप्रतिष्ठानत्वात्प्रधानस्य सावयवत्वमेवेति शङ्कते—तर्केति । अभ्युपेतहानमपिना सूचयन्दूषयति—एवमपीति । आदिशब्देन घटादिवन्मूलकारण-

**षप्रसङ्गः ॥ अथ शक्तय एव कार्यवैचित्र्यसूचिता अवयवा इत्यभिप्रायः। तास्तु ब्रह्मवादिनोऽप्यविशिष्टाः। तथाऽणुवादिनोऽप्यणुरण्वन्तरेण संयुज्यमानो निरवयवत्वाद्यदि कार्त्स्न्येन संयुज्येत, ततः प्रथिमानुपपत्तेरणुमात्रत्वप्रसङ्गः॥ अथैकदेशेन संयुज्येत, तथापि निरवयवत्वाभ्युपगमकोप इति स्वपक्षेऽपि समान एष दोषः॥ समानत्वाच्च नान्यतरस्मिन्नेव पक्षे उपक्षेप्तव्यो भवति॥ परिहृतस्तु ब्रह्मवादिना स्वपक्षे दोषः॥ २९॥ इति कृत्स्नप्रसक्त्यधिकरणम्॥ ९॥**

---

रत्नप्रभा।

तास्तद्गताश्शक्तय इत्याशंक्य मायिकशक्तिभिर्ब्रह्मणोऽपि सावयवत्वं तुल्यमित्याह—**अथेत्यादिना**॥ अनुवादेऽपि दोषसाम्यमाह—**तथेति**॥ सांख्यवद्दोषः समान इति **सम्बन्धः**॥ निरवयवयोः परमाण्वोः संयोगो व्याप्यवृत्तिरव्याप्यवृत्तिर्वा ? आद्ये तत्कार्यस्य द्व्यणुकस्यैकपरमाणुमात्रत्वापत्तिः। प्रथिम्नोऽधिकपरिमाणस्यानुपपत्तेः। न ह्यणोरण्वन्तरेणोपर्यधः पार्श्वतश्च व्याप्तौ ततोऽधिकद्रव्यं सम्भवति। **द्वितीये** परमाण्वोः सावयवत्वापत्तिरित्यर्थः। ननु त्वं चोर इत्युक्ते त्वमपि चोर इतिवद्दोषसाम्योक्तिरयुक्तेत्यत आह—**परिहृतस्त्विति**॥ उक्तं हि मायावादे स्वप्नवत्सर्वं सामञ्जस्यम्। अतो निरवयवे ब्रह्मणि

भामती।

प्रसङ्गः। एकदेशपरिणामे वा सावयवत्वमनिष्टं प्रसज्येत। **तथाणुवादिनोऽपीति**। वैशेषिकाणां ह्यणुभ्यां संयुज्य द्व्यणुकमेकमारभ्यते, तैस्त्रिभिर्द्व्यणुकैस्त्र्यणुकमेकमारभ्यत इति प्रक्रिया। तत्र द्वयोरण्वोरनवयवयोः संयोगस्तावणू व्याप्नुयात्। अव्याप्नुवन्वा तत्र न वर्तेत। न ह्यस्ति संभवः स एव तदानीं तत्र वर्तते न वर्तते चेति। तथा चोपर्यधःपार्श्वस्थाः षडपि परमाणवः समानदेशा इति प्रथिमानुपपत्तेरणुमात्रः पिण्डः प्रसज्येत। अव्यापने वा षडवयवः परमाणुः स्यादित्यनवयवत्वव्याकोपः। अशक्यं च सावयवत्वमुपेतुं, तथा सत्यनन्तावयवत्वेन सुमेरुराजसर्षपयोः समानपरिमाणत्वप्रसङ्गः। तस्मात् समानो दोषः। आपातमात्रेण साम्यमुक्तम्, परमार्थतस्तु माविकं परिणामं वा कार्यकारणभावं वेच्छतामेष दुर्वारो दोषो न पुनरस्माकं मायावादिनामित्याह—**परिहृतस्त्विति**॥२९॥ (९)॥ विचित्रशक्तित्वमुक्तं ब्रह्मणः, तत्र श्रुत्युपन्या-

आनन्दगिरीय—न्यायनिर्णयः।

त्वासंभवोऽपि गृहीतः। घटादीनामिव द्रव्यावयवत्वेन प्रधानस्य सावयवत्वानभ्युपगमादनेकधर्मवत्तया तदङ्गीकारान्नानित्यत्वादिदोषप्रसक्तिरित्याह—**अथेति**। ब्रह्मणोऽपि कार्यवैचित्र्यसूचितविचित्रशक्तिरूपावयवोपगमादुक्तदोषसमाधिरित्याह—**ता इति**। प्रधानवादिनो दोषसाम्यमुक्त्वा परमाणुवादिनोऽपि तत्साम्यमाह—**तथेति**। अणुवादिनोऽपि समान एव दोष इत्यत्र संबन्धः। द्वाभ्यामणुभ्यां संयुज्यमानाभ्यां द्व्यणुकमारभ्यते त्रिभिर्द्व्यणुकैः संयुक्तैस्त्र्यणुकं त्र्यणुकैः संयुक्तैश्चतुरणुकमित्यस्यां प्रक्रियायामणुरण्वन्तरेण संयुज्यमानः कार्त्स्न्येन वा संयुज्यत एकदेशेन वेति विकल्प्याऽऽद्यमनूद्य दूषयति—**अणुरिति**। कार्त्स्न्येन संयोगे सत्येकस्मिन्परमाणौ परमाण्वन्तरस्य संमितत्वात्तदारब्धे द्व्यणुके परमाणोरधिकपरिमाणाभावात्तस्यापि पारिमाण्डल्यवत्त्वप्रसङ्गादणुत्वादिपरिमाणान्तराङ्गीकारविरोधः स्यादित्यर्थः। द्वितीयमनूद्य प्रत्याह—**अथेति**। तदेवं परमाणुवादिन्यपि प्रागुक्तदोषसाम्यान्न तेनापि ब्रह्मवादिनि तदुद्भावनमुचितमित्याह—**इति स्वपक्षेऽपीति**। त्वं चोर इत्युक्ते त्वमपि चोर इतिवत्स्वस्य दोषोद्भावने परस्यापि तदुद्भावनमात्रेण न तत्परिहारसिद्धिरित्याशंक्य परस्य यः परिहारः स एवास्माकमपीत्यभिप्रेत्याऽऽह—**समानत्वाच्चेति**। आपाततः साम्यमुक्त्वा पारमार्थिकं कार्यकारणत्वमिच्छतामेव चायं दोषो नास्माकं विवर्तवादिनां कार्यं कारणं च कल्पितमिच्छतामित्याह—**परिहृतस्त्विति** ॥ २९ ॥ (९)॥ पूर्वाधिकरणे ब्रह्मणो विचित्र-

## सर्वोपेता च तद्दर्शनात् ॥ ३० ॥ ( १० ) ॥

एकस्यापि ब्रह्मणो विचित्रशक्तियोगादुपपद्यते, विचित्रो विकारप्रपञ्च इत्युक्तम् ॥ तत्पुनः कथमवगम्यते विचित्रशक्तियुक्तं परं ब्रह्मेति ॥ तदुच्यते ॥ सर्वोपेता च तद्दर्शनात् । सर्वशक्तियुक्ता च परा देवतेत्यवगन्तव्यम्॥कुतः ॥"तद्दर्शनात्"तथाहि-दर्शयति श्रुतिः सर्वशक्तियोगं परस्या देवतायाः-" सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः" [ छां० ३ । १४ ।४] "सत्यकामस्सत्यसङ्कल्पः" [ छां० ८। ७। १ ] "यः सर्वज्ञः सर्वविद्" [ मुण्ड० १। १। ९ ] "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" [ बृ० ३ । ८ । ९ ] इत्येवञ्जातीयका ॥ ३० ॥

## विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

---

रत्नप्रभा ।

समन्वयस्याविरोध इति सिद्धम् ॥ २९ ॥ ( ९ ) ॥ सर्वोपेता । मायाशक्तिमतो ब्रह्मणो जगत्सर्गं वदतः समन्वयस्य अशरीरस्य न मायेति न्यायेन विरोधोऽस्ति न वेति सन्देहे न्यायस्य अनाभासत्वादस्तीति पूर्वपक्षे पूर्वोक्तशक्तिमत्त्वसमर्थनादेकविषयत्वं सङ्गतिं वदन् सिद्धान्तसूत्रं व्याचष्टे-एकस्येत्यादिना ॥ पूर्वोत्तरपक्षयोर्विरोधाविरोधौ फलमित्युक्तमेवापादसमाप्तेरवगन्तव्यम् । अभ्यात्तः अभितो व्याप्तः । अवाकी वागिन्द्रियशून्यः । अनादरः निष्कामः ॥ ३० ॥ पूर्वपक्षन्यायमनूद्य दूषयति-विकरणत्वादिति ॥ देवादिचेतनानां शक्तानामपि देहाभिमाने सत्येव कर्तृत्वं दृष्टम् । तदभावे सुषुप्तौ तन्न दृष्टम् अतो ब्रह्मणः शक्तत्वेऽप्यदेहत्वान्न कर्तृत्वम् । नाप्यदेहस्य शक्तिः सम्भवतीति शङ्कार्थः। विकरणस्य जीवस्य कर्तृत्वासम्भवेऽपीश्वरस्य सम्भवतीति "देवादिवदपि लोके" [ व्या० सू० २ । १ । २५ ] इत्यत्रोक्तम् । सशरीरस्य कल्पितस्य मायाश्रयत्वायोगात् निर्विशेषचिन्मात्रस्यैव मायाधि-

भामती ।

सपरं सूत्रम्-सर्वोपेता च तद्दर्शनात् ॥ ३० ॥ एतदाक्षेपसमाधानपरं सूत्रम्-विकरणत्वान्नेति चेत्तदुक्तम् । कुलालादिभ्यस्तावद्बाह्यकरणापेक्षेभ्यो देवादीनां बाह्यानपेक्षाणामान्तरकरणापेक्षसृष्टीनां प्रमाणेन दृष्टो यथा विशेषो नापह्नोतुं शक्यः, यथा तु जाग्रत्सृष्टेर्बाह्यकरणापेक्षायास्तदनपेक्षान्तरकरणमात्रसाध्या दृष्टा स्वप्ने रथादिसृष्टिरशक्यापह्नोतुम्, एवं सर्वशक्तेः परस्या देवताया आन्तरकरणानपेक्षाया जगत्सर्जनं

आनन्दगिरीय-न्यायनिर्णयः ।

शक्तियुक्तत्वाद्युक्तं कारणत्वमित्युक्तम् । इदानीं तस्य विचित्रशक्तित्वे प्रमाणमाह-सर्वोपेता चेति । मायाशक्तिमतो ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विषयस्तस्य किमशरीरस्य नास्ति मायेति न्यायेन विरोधोऽस्ति न वेति तदनाभासत्वाभासत्वाभ्यामेव संदेहे संगतिमाह-एकस्येति । प्रमाणप्रश्नपूर्वकं तदुपन्यासपरं सूत्रमादत्ते-तत्पुनरिति । पूर्ववदिहापि संगतिफले द्रष्टव्ये । सूत्राक्षराणि व्याचष्टे-सर्वेति । अवगतिहेतुं प्रश्नपूर्वकमाह-कुत इति । सिद्धान्तहेतुं नानाविधश्रुत्यवष्टम्भेन विवृणोति-तथा हीति ॥ ३० ॥ पूर्वपक्षमनुभाष्य दूषयति-विकरणत्वादिति । यद्यप्यन्तर्याम्यधिकरणे जगद्ब्रह्मणोर्मायार्जितत्वसंबन्धे सिद्धे कार्यकरणविरहिणोऽपि नियन्तृत्वमुक्तं तथाऽपि कार्यकरणविरहिणो मायासंबन्ध एव न संभवतीति विवक्षितत्वात्कुलालादीनां कार्यकरणवतां मृदाद्यधिष्ठातृत्वदर्शनाद्ब्रह्मणस्तद्धीनस्य नाधिष्ठातृत्वेन करणवत्त्व-

स्यादेतत्-विकरणां परां देवतां शास्ति शास्त्रम्-"अचक्षुष्कमश्रोत्रमवागमनाः" [बृ० ३ । ८ । ८] इत्येवञ्जातीयकम् । कथं सा सर्वशक्तियुक्तापि सती कार्याय प्रभवेत् । देवादयो हि चेतनास्सर्वशक्तियुक्ता अपि सन्त आध्यात्मिककार्यकरणसम्पन्ना एव तस्मैतस्मै कार्याय प्रभवन्तो विज्ञायन्ते ॥ कथं च "नेतिनेति" [बृ० ४ । ५ । १५] इति प्रतिषिद्धसर्वविशेषाया देवतायास्सर्वशक्तियोगस्सम्भवेदिति चेत् ॥ यदत्र वक्तव्यं तत्पुरस्तादेवोक्तम् । श्रुत्यवगाह्यमेवेदमतिगम्भीरं परं ब्रह्म । न तर्कावगाह्यं न च यथैकस्य सामर्थ्यं दृष्टं, तथान्यस्यापि सामर्थ्येन भवितव्यमिति नियमोऽस्तीति ॥ प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मणस्सर्वशक्तियोगस्सम्भवतीत्येतदप्यविद्याकल्पितरूपभेदोपन्यासेनोक्तमेव ॥ तथा च शास्त्रम् "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" [श्वेता० ३।१९] इत्यकरणस्यापि ब्रह्मणस्सर्वसामर्थ्ययोगं दर्शयति ॥३१॥
॥ इति सर्वोपेताधिकरणम् ॥ १० ॥

## न प्रयोजनवत्त्वात् ॥ ३२ ॥ ( ११ ) ॥

---

रत्नप्रभा ।

ष्टानत्वं युक्तमिति समाधानार्थः ॥ ३१ ॥ ( १० ) ॥ न प्रयोजनवत्त्वादिति ॥ परितृप्ताद् ब्रह्मणो

भामती ।

श्रूयमाणं न सामान्यतो दृष्टमात्रेणापह्नवमर्हतीति ॥३१॥(१०)॥ न प्रयोजनवत्त्वात् । न तावदुन्मत्तवदस्य मतिविभ्रमाज्जगत्प्रक्रिया, भ्रान्तस्य सर्वज्ञत्वानुपपत्तेः । तस्मात् प्रेक्षावतानेन जगत् कर्तव्यम् । प्रेक्षाव-

आनन्दगिरीय-न्यायनिर्णयः ।

मिति चोद्यं विवृणोति-स्यादेतदिति । ब्रह्मणः सर्वशक्तित्वादकार्यकरणत्वेऽपि कारणत्वमुपपन्नमित्याशंक्याऽऽह-कथं सेति । न हि कार्यकरणरहितस्य मुक्तवन्मायाशक्तिमत्त्वं तद्वत्त्वेऽपि न कार्यक्षमत्वं सुषुप्तवदित्यर्थः । सर्वशक्तियोगाद्देवादिवद्ब्रह्मणः संभवति विचित्रकार्यकर्त्वमित्याशंक्याह-देवादयो हीति । विज्ञायन्ते मन्त्रार्थवादादिष्विति शेषः । कथं सा सर्वशक्तियुक्ताऽपीत्यत्रापिना सूचितमर्थं स्फोरयति-कथं चेति । 'तदुक्तम्' इति सूत्रावयवेन परिहरति-यदत्रेति । किं तदुक्तमित्यपेक्षायां नविलक्षणत्वाधिकरणादावुक्तं स्मारयति-श्रुतीति । यत्तु कुलालादीनां कार्यकरणवतामेव मृदाद्यधिष्ठातृत्वोपलम्भाद्ब्रह्मणस्तद्रहितस्य नाधिष्ठातृत्वेन कारणत्वमिति तदपि परिहृतमित्याह-न चेति । न हि कार्यकारणविरहिणः सुषुप्तवदकार्यकरत्वं शक्यं नियन्तुं समुत्थानसमये शरीराद्यभिमानशून्यस्य देहेन्द्रियाद्युपादानव्यापारतत्तच्छक्तिमतोपलब्ध्या दृष्टान्तस्य साध्यविकलत्वादिति भावः । यत्तु ब्रह्मणो मायाशक्तिमत्त्वं मुक्तवदशरीरत्वादयुक्तमिति तदपि पुरस्तादेव परास्तमित्याह-प्रतिषिद्धेति । परमार्थतो व्यवहारतो वा मायाशक्तिमत्त्वाभावः साध्यते । नाऽऽद्यः, सिद्धसाधनत्वात् न द्वितीयः, मायायाश्चिन्मात्रे प्रतीतिसिद्धत्वात् । न चाज्ञोऽहमिति प्रतीतिर्जीवमधिकरोति तस्य ब्रह्मानतिरेकात्कल्पितस्य चाविद्यामयत्वेन विद्याश्रयत्वायोगादिति भावः । किंच, मायाविनां देहेन्द्रियवतां बाह्यं हेतुमनपेक्ष्य कार्यकरत्वदर्शनात्कुलालादीनां च तथाविधानामेव बाह्यसाधनव्यपेक्षाणामर्थक्रियाकारित्वात्तेषु दृष्टवैचित्र्यावष्टम्भादन्तरेणापि शरीरादिना ब्रह्मणि मायासंबन्धसिद्धिरित्यभिसंधाय प्रागुक्तानुमानद्वयस्याऽऽगमविरोधं दर्शयति-तथा चेति ॥ ३१ ॥ ( १० ) ॥ पूर्वं श्रुत्यवष्टम्भेन सर्वशक्ति ब्रह्मेत्युक्तं संप्रति शक्तस्यापि प्रयोजनाभिसंध्यभावादकर्तृत्वमित्याक्षिपति-न प्रयोजनवत्त्वादिति । परितृप्ताद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विषयः स किं ब्रह्म विना फलेन न

अन्यथा पुनश्चेतनकर्तृकत्वं जगत आक्षिपति-न खलु चेतनः परमात्मेदं जगद्बिम्बं विरचयितुमर्हति ॥ कुतः ॥ प्रयोजनवत्त्वात्प्रवृत्तीनाम् ॥ चेतनो हि लोके बुद्धिपूर्वकारी पुरुषः प्रवर्तमानो न मन्दोपक्रमामपि तावत्प्रवृत्तिमात्मप्रयोजनानुपयोगिनीमारभमाणो दृष्टः किमुत गुरुतरसंरम्भाम् ॥ भवति च लोकप्रसिद्ध्यनुवादिनी श्रुतिः "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति । आत्मनस्तु कामाय सर्वं प्रियं भवति" [ बृ० २ । ४ । ५ ] इति ॥ गुरुतरसंरम्भा चेयं प्रवृत्तिः यदुच्चावचप्रपञ्चं जगद्बिम्बं विरचयितव्यम् ॥ यदीयमपि प्रवृत्तिश्चेतनस्य परमात्मन आत्मप्रयोजनोपयोगिनी परिकल्प्येत, परितृप्तत्वं परमात्मनः श्रूयमाणं बाध्येत ॥ प्रयोजनाभावे वा प्रवृत्त्यभावोऽपि स्यात् ॥ अथ चेतनोऽपि सन्नुन्मत्तो बुद्ध्यपराधादन्तरेणैवात्मप्रयोजनं प्रवर्तमानो दृष्टः । तथा परमा-

---

रत्नप्रभा ।

जगत्सर्गं वदन् समन्वयो विषयः । स किमभ्रान्तश्चेतनो यः स निष्फलं वस्तु न रचयतीतिन्यायेन विरुध्यते न वेति सन्देहे पूर्वमदेहस्यापि श्रुतिबलात् शक्तत्वोक्त्या कर्तृत्वमुक्तम् । तदाक्षेपसङ्गत्या पूर्वपक्षसूत्रं व्याचष्टे-अन्यथेत्यादिना ॥ ईश्वरस्य फलाभावेऽपि परप्रयोजनाय सृष्टौ प्रवृत्तिरस्त्वित्याशंक्य श्रुतिमाह-भवति चेति ॥ या प्रेक्षावत्प्रवृत्तिः सा स्वफलार्थेति लोकप्रसिद्धिः । न च दयालुप्रवृत्तौ व्यभिचारः । तस्या अपि परदुःखासहनप्रयुक्तस्वचित्तव्याकुलतानिवृत्त्यर्थत्वादिति भावः । किञ्च गुरुतरायासस्य फलं वाच्यमित्याह-गुरुतरेति ॥ तर्हि अस्तीश्वरस्यापि प्रवृत्तिः स्वार्थेत्यत आह-यदीयमपीति ॥ अस्वार्थत्वे प्रवृत्त्यभावः पूर्वोक्तः स्यादित्यर्थः । ईश्वरः प्रेक्षावान्न भवतीत्याशंक्य श्रुतिविरोधमाह-अथेत्यादिना ॥ बुद्धेरपराधो विवेकाभावः ॥ ३२ ॥ उक्तन्यायस्य राज्ञां लीलायां

भामती ।

तश्च प्रवृत्तिः स्वपरहिताहितप्राप्तिपरिहारप्रयोजना सती नाप्रयोजनाल्पायासापि संभवति, किं पुनरपरिमेयानेकविधोच्चावचप्रपञ्चजगद्विभ्रमविरचना महाप्रयासा । अत एव लीलापि परास्ता । अल्पायाससाध्या हि सा । न चेयमप्यप्रयोजना, तस्या अपि सुखप्रयोजनवत्त्वात् । तादर्थ्येन वा प्रवृत्तौ तदभावे कृतार्थत्वानुपपत्तेः । परेषां चोपकार्याणामभावेन तदुपकारायां अपि प्रवृत्तेरयोगात् । तस्मात् प्रेक्षावत्प्रवृत्तिः

आनन्दगिरीय-न्यायनिर्णयः ।

सृजत्यभ्रान्तचेतनत्वाद्विवक्षितपुरुषवदिति न्यायेन विरुध्यते न वेति पूर्ववदेव संदेहे पूर्वपक्षसूत्रतात्पर्यमाह-अन्यथेति । पादादिसंगतिफले पूर्ववदुन्नेये । सूत्राक्षराणि व्याकुर्वन्नञोऽर्थमाह-न खल्विति । तत्र प्रश्नपूर्वकं हेतुमादाय व्याचष्टे-कुत इति । भ्रान्तस्याबुद्धिपूर्वकारिणः स्वपरप्रयोजनानुपयोगिन्यपि प्रवृत्तिर्दृष्टेति विशिनष्टि-बुद्धिपूर्वकारीति । लीलादौ फलाभावेऽपि प्रवृत्तिर्दृष्टेत्याशंक्य तत्रापि तात्कालिकमुद्देश्यफलाभावेऽपि फलमस्त्येवेति मत्वाऽऽह-न मन्देति । या चेतनस्याभ्रान्तस्य प्रवृत्तिः सा फलाभिसंधिपूर्विकेति व्याप्तिमुक्त्वा कैमुतिकन्यायमपिना सूचितं दर्शयति-किमुतेति । लीलादेरल्पायाससाध्यत्वेऽपि फलवत्त्वदर्शनान्महायाससाध्यजगतः सृष्टिरफला न श्लिष्टेत्यर्थः । फलाभिसंधिपूर्विका बुद्धिपूर्वकारिप्रवृत्तिरित्यत्र श्रुतिमुपन्यस्यति-भवति चेति । प्रवृत्त्याभासत्वाज्जगद्विरचनायां न फलापेक्षेत्याशंक्याऽऽह-गुरुतरेति । अस्तु तर्हि फलाभिसंधिपूर्विकैवेयमपि प्रवृत्तिरित्याशंक्य स्वस्य परस्य वा फलमुद्देश्यमिति विकल्प्याऽऽद्ये दोषमाह-यदीति । अस्मदादीनां गुरुतरसंरम्भाऽपीयं प्रवृत्तिरीश्वरस्यानायाससाध्या न प्रयोजनपूर्विकेत्याशंक्य ब्रह्म न जगत्कारणं साक्षात्परम्परया वा स्वफलविकलत्वात्तथाभूतलौकिकपुरुषवदित्याह-प्रयोजनाभावे वेति । दृष्टान्तेन शङ्कयित्वा दूषयति-अथेत्यादिना । बुद्ध्यपराधो विवेक-

त्मापि प्रवर्तिष्यत इत्युच्येत ॥ तथा सति सर्वज्ञत्वं परमात्मनः श्रूयमाणं बाध्येत ॥ तस्मादश्लिष्टा चेतनात्सृष्टिरिति ॥ ३२ ॥

## लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

तुशब्देनाक्षेपं परिहरति–तथा लोके कस्यचिदाप्तैषणस्य राज्ञो राजामात्यस्य वा व्यतिरिक्तं किञ्चित्प्रयोजनमनभिसन्धाय केवलं लीलारूपाः प्रवृत्तयः क्रीडाविहारेषु भवन्ति ॥ यथा चोच्छ्वासप्रश्वासादयोऽनभिसन्धाय बाह्यं किञ्चित्प्रयोजनान्तरं स्वभावादेव भवन्ति, एवमीश्वरस्याप्यनपेक्ष्य किञ्चित्प्रयोजनान्तरं स्वभावादेव केवलं लीलारूपा प्रवृत्तिर्भविष्यति । न हीश्वरस्य प्रयोजनान्तरं निरूप्यमाणं न्यायतः श्रुतितो

---

रत्नप्रभा ।

व्यभिचार इति सिद्धान्तसूत्रं व्याचष्टे–तुशब्देनेति ॥ व्यतिरिक्तं लीलातिरिक्तम् । क्रीडारूपा विहारा येषु रम्यदेशेषु तेष्वित्यर्थः । कदाचिद्राजादीनां लीलाया अपि किञ्चित् फलं सुखोल्लासादिकं सम्भाव्येत । तथापि निश्वासादौ प्रेक्षावत्प्रवृत्तित्वमस्ति न तु स्वस्य तत्रोद्देश्यं फलं किञ्चिदस्तीति व्यभिचारस्थलान्तरमाह–यथा चेति ॥ प्राणस्य स्वभावः–चलत्वं प्रारब्धं वा उच्छ्वासादिहेतुः । ईश्वरस्य स्वभावः–कालकर्मसहितमाया । नन्वीश्वरस्य जगद्रचनायाः केवललीलात्वं किमित्युच्यते । फलमेव किञ्चित् कल्प्यतां तत्राह–न हीति ॥ आप्तकामत्वव्याघातादित्यर्थः । नन्वीश्वरस्तूष्णीं किमिति न तिष्ठति । किमिति

भामती ।

प्रयोजनवत्तया व्याप्ता तदभावेऽनुपपन्ना ब्रह्मोपादानतां जगतः प्रतिक्षिपतीति प्राप्तम् ॥ ३२ ॥ एवं प्राप्तेऽभिधीयते–लोकवत्तु लीलाकैवल्यम् । भवेदेतदेवं यदि प्रेक्षावत्प्रवृत्तिः प्रयोजनवत्तया व्याप्ता भवेत् । ततस्तन्निवृत्तौ निवर्तेत, शिंशपात्वमिव वृक्षतानिवृत्तौ, न त्वेतदस्ति, प्रेक्षावतामननुसंहितप्रयोजनानामपि यादृच्छिकीषु क्रियासु प्रवृत्तिदर्शनात् । अन्यथा 'न कुर्वीत वृथा चेष्टाम्' इति धर्मसूत्रकृतां प्रतिषेधो निर्विषयः प्रसज्येत । न चोन्मत्तान् प्रत्येतत्सूत्रमर्थवत्, तेषां तदर्थबोधतदनुष्ठानानुपपत्तेः । अपि चादृष्टहेतुकौत्पत्तिकी श्वासप्रश्वासलक्षणा प्रेक्षावतां क्रिया प्रयोजनानुसंधानमन्तरेण दृष्टा । न चास्यां चेतनस्यापि चैतन्यमनुपयोगि, संप्रसादेऽपि भावादिति युक्तम्, प्राज्ञस्यापि चैतन्याप्रच्युतेः । अन्यथा मृतशरीरेऽपि श्वासप्रश्वासप्रवृत्तिप्रसङ्गात् । यथा च स्वार्थपरार्थसंपदासादितसमस्तकामानां कृतकृत्यतयाऽनाकुलमनसामकामानामेव लीलामात्रात्सत्यप्यनुनिष्पादिनि प्रयोजने नैव तदुद्देशेन प्रवृत्तिरेवं ब्रह्मणोऽपि

आनन्दगिरीय–न्यायनिर्णयः ।

वैधुर्यम् । नापि परप्रयोजनोपयोगिनी परस्येश्वरस्य प्रवृत्तिः प्रागुत्पत्तेरनुग्राह्याभावादिति मत्वोपसंहरति–तस्मादिति ॥ ३२ ॥ सिद्धान्तयति–लोकवत्त्विति । सूत्रं व्याचष्टे–तुशब्देनेति । यत्तु साक्षात्परम्परया वा स्वप्रयोजनाभावान्न ब्रह्म जगत्कारणमिति तत्र सुखोल्लासनिमित्तक्रीडायामुच्छ्वासादौ च फलाभिसंध्यभावादनैकान्तिको हेतुरित्याह–यथेति । एषणासंपत्तौ संभावितमुदाहरणद्वयमाह–राज्ञ इति । व्यतिरिक्तं लीलायाः सकाशादिति यावत् । क्रीडार्था विहारा देशविशेषाः संस्कृतास्तेष्विति यावत् । भवतु वा राजादीनां लीलारूपासु प्रवृत्तिष्वपि किंचिदुद्देश्यं प्रयोजनं तथाऽपि न निश्वासादिषु तथाविधं फलमुपलभ्यमित्यनैकान्तिकत्वतादवस्थ्यमित्याह–यथा चेति । दृष्टान्ते स्वभावो देहस्य प्राणादिमत्त्वं दार्ष्टान्तिके तु स्वभावोऽविद्येति द्रष्टव्यम् । अथेश्वरस्य जगद्बिम्बविरचना किमित्यविद्याकृतलीलामात्रत्वेनाफला कल्प्यते फलमेव किंचित्कल्प्यतामित्याशंक्याऽऽप्तकामत्वन्यायविरोधात्परमानन्दत्वश्रुतिविरोधाच्च नैवमित्याह–न हीति । ननु लीलादावस्मदादीनामकस्मादेव निवृत्तेरपि दर्शनादीश्वरस्यापि मायामय्यां लीलायां तथा-

**वा सम्भवति ॥ न च स्वभावः पर्यनुयोक्तुं शक्यते ॥ यद्यप्यस्माकमियं जगद्बिम्बविरचना गुरुतरसंरम्भेवाभाति । तथापि परमेश्वरस्य लीलैव केवलेयम् । अपरिमितशक्तित्वात् ॥ यदि नाम लोके लीलास्वपि किञ्चित्सूक्ष्मं प्रयोजनमुत्प्रेक्षेत । तथापि नैवात्र किञ्चित्प्रयोजनमुत्प्रेक्षितुं शक्यते । आप्तकामश्रुतेः ॥ नाप्यप्रवृत्तिः, उन्मत्तप्रवृत्तिर्वा । सृष्टिश्रुतेः, सर्वज्ञत्वश्रुतेश्च ॥ न चेयं परमार्थविषया सृष्टिश्रुतिः । अविद्याकल्पितनामरूपव्यवहारगोचरत्वात्, ब्रह्मात्मभावप्रतिपादनपरत्वाच्चेत्येतदपि नैव प्रस्मर्तव्यम् ॥ ३३ ॥ इति प्रयोजनवत्त्वाधिकरणम् ॥ ११ ॥**

रत्नप्रभा ।

त्वस्याफलां परेषां दुःखावहां सृष्टिं करोति, तत्राह–**न च स्वभाव इति** ॥ कालकर्मादिसामग्र्यां सत्यां सृष्टेरपरिहार्यत्वादित्यर्थः । यदुक्तं गुरुतरायासस्य फलं वाच्यमिति, तत्र हेत्वसिद्धिमाह–**यद्यपीत्यादिना** ॥ अल्पप्रवृत्तेरपि फलं वाच्यं लोके तथा दर्शनादित्यादितर्कस्यागमबाधमाह–**यदि नामेति** ॥ सृष्टिश्रुतेरप्रवृत्तिर्नास्ति, सर्वज्ञत्वश्रुतेरुन्मत्तता नास्तीति विभागः स्वप्नसृष्टिवदस्याः सृष्टेर्मायामात्रत्वान्न फलापेक्षेत्याह–**न चेयमिति** ॥ न च निष्फलसृष्टिश्रुतीनामानर्थक्यम् । सफलब्रह्म-

भामती ।

जगत्सर्जने प्रवृत्तिर्नानुपपन्ना । दृष्टं च यदल्पबलवीर्यबुद्धीनामशक्यमतिदुष्करं वा तदन्येषामनल्पबलवीर्यबुद्धीनां सुशकमीषत्करं वा । न हि वानरैर्मारुतिप्रभृतिभिर्निर्गैर्न बद्धो नीरनिधिरगाधो महासत्त्वानाम् । न चैष पार्थेन शिलीमुखैर्न बद्धः । न चायं न पीतः संक्षिप्य चुलुकेन हेलयैव कलशयोनिना महामुनिना । न चाद्यापि न दृश्यन्ते लीलामात्रविनिर्मितानि महाप्रासादप्रमदवनानि श्रीमन्नृगनरेन्द्राणामन्येषां मनसापि दुष्कराणि नरेश्वराणाम् । तस्मादुपपन्नं यदृच्छया वा स्वभावाद्वा लीलया वा जगत्सर्जनं भगवतो महेश्वरस्येति । अपि च नेयं पारमार्थिकी सृष्टिर्येनानुयुज्येत प्रयोजनम्, अपि त्वनाद्यविद्यानिबन्धना । अविद्या च स्वभावत एव कार्योन्मुखी न प्रयोजनमपेक्षते । न हि द्विचन्द्रालातचक्रगन्धर्वनगरादिविभ्रमाः समुद्दिष्टप्रयोजना भवन्ति । न च तत्कार्या विस्मयभयकम्पादयः स्वोत्पत्तौ प्रयोजनमपेक्षन्ते । सा च चैतन्यच्छुरिता जगदुत्पादहेतुरिति चेतनो जगद्योनिराख्यायत इत्याह–**न चेयं परमार्थविषयेति** । अपि च न ब्रह्म जगत्कारणमपि तत्तया विवक्षन्त्यागमा अपि तु जगति ब्रह्मात्मभावम् । तथा च सृष्टेरविवक्षायां तदाश्रयो दोषो निर्विषय एवेत्याशयेनाह–**ब्रह्मात्मभावेति** ॥ ३३ ॥ ( ११ ) ॥

आनन्दगिरीय–न्यायनिर्णयः ।

भावे विनाऽपि सम्यग्ज्ञानं संसारसमुच्छित्तिरिति तत्राऽऽह–**न चेति** । अनिर्वाच्या खल्वक्रिया परस्येश्वरस्य स्वभावो लीलेति । चोच्यते, तत्र न प्रातीतिकस्वभावायामनुपपत्तिरवतरतीत्यर्थः । यत्तु जगद्रचनाया गुरुतरसंरम्भत्वाद्भवितव्यं फलेनेति तत्रास्मद्दृष्ट्या वा तस्या गुरुतरसंरम्भत्वमीश्वरदृष्ट्या वेति विकल्प्याऽऽद्ये हेतुसद्भावेऽपि प्रागुक्तश्रुतिन्यायविरोधान्नानुमानप्रवृत्तिरित्यभिप्रेत्य द्वितीयं निरस्यति–**यद्यपीत्यादिना** । लीलास्वपि तात्कालिकं फलमुद्देश्यफलाभावेऽपि भातीत्युक्तमित्याशङ्क्याऽऽह–**यदीति** । ईश्वरप्रवृत्तिरत्रेत्युक्ता । किंचिदिति स्वकीयं परकीयं वेत्यर्थः । प्रयोजनाभावे चेत्यादिनोक्तं प्रत्याह–**नापीति** । किंच, सृष्टेरविद्यानिबन्धनत्वेनावस्तुत्वाद्गन्धर्वनगरादिभ्रमेष्विव न फलापेक्षेत्याह–**न चेति** । किंच, ब्रह्मात्मत्वधीपरत्वान्न सृष्टौ सृष्टिश्रुतीनां तात्पर्यमतः सृष्टेरविवक्षितत्वात्तदाश्रयो दोषो निर्विषयत्वान्न प्रसरतीत्याह–**ब्रह्मेति** । प्रकृतोपयोगित्वान्न तत्पुनरुक्तिरिति सूचयति–**इत्येतदपीति** ॥ ३३ ॥ ( ११ ) ॥

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥ ३४ ॥ ( १२ ) ॥

पुनश्च जगज्जन्मादिहेतुत्वमीश्वरस्याक्षिप्यते स्थूणानिखननन्यायेन–प्रतिज्ञातस्यार्थस्य दृढीकरणाय ॥ नेश्वरो जगतः कारणमुपपद्यते ॥ कुतः ॥ वैषम्यनैर्घृण्यप्रसङ्गात्–कांश्चिदत्यन्तसुखभाजः करोति देवादीन्, कांश्चिदत्यन्तदुःखभाजः पश्वादीन्, कांश्चिन्मध्यमभोगभाजो मनुष्यादीनित्येवं विषमां सृष्टिं निर्मिमाणस्येश्वरस्य पृथग्जनस्येव रागद्वेषोपपत्तेः श्रुतिस्मृत्यवधारितस्वच्छत्वादीश्वरस्वभावविलोपः प्रसज्येत ॥ तथा खलजनैरपि जुगुप्सितं निर्घृणत्वमतिक्रूरत्वं दुःखयोगविधानात्सर्वप्रजोपसंहरणाच्च प्रसज्येत ॥ तस्माद्वैषम्यनैर्घृण्यप्रसङ्गान्नेश्वरः कारणमिति॥एवं प्राप्ते

---

रत्नप्रभा ।

धीशेषत्वेनार्थवत्त्वादित्युक्तं न विस्मर्तव्यमित्यर्थः ॥ ३३ ॥ ( ११ ) ॥ वैषम्यनैर्घृण्ये नेति ॥ निर्दोषाद्ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विषयः । स किं "यो विषमकारी स दोषवान्" इति न्यायेन विरुध्यते, न वेति, सन्देहे पूर्वत्र लीलया, यत्स्रष्टृत्वमुक्तं, तदेव कर्मादिसापेक्षस्य न युक्तम् । अनीश्वरत्वापत्तेः, निरपेक्षत्वे रागादिदोषापत्तेः, इत्याक्षेपसङ्गत्या पूर्वपक्षयति–पुनश्चेत्यादिना ॥ ब्रह्मैव जगत्कारणमिति जन्मादिसूत्रे प्रतिज्ञातोऽर्थः । पृथग्जनः पामरः । 'निरवद्यं निरञ्जनम्' इति श्रुतिः, 'न मे द्वेष्योऽस्ति न प्रियः' इति स्मृतिः ॥ स्वच्छत्वादीति । आदिपदेन कूटस्थत्वग्रहः । स्वच्छत्वादिश्चासौ ईश्वरस्वभावश्चेति विग्रहः । निमित्तमनपेक्ष्य विषमकारित्वे वैषम्यादिदोषः स्यान्न त्वनपेक्षत्वमीश्वरस्यास्तीति सिद्धान्तयति–एवं प्राप्त इत्यादिना ॥ न च सापेक्षत्वे अनीश्वरत्वम्, सेवामपेक्ष्य फलदातरि

भामती ।

वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति। अतिरोहितोऽत्र पूर्वः पक्षः । उत्तरस्तूच्यते–उच्चावचमध्यमसुखदुःखभेदवत्प्राणभृत्प्रपञ्चं च सुखदुःखकारणं सुधाविषादि चानेकविधं विरचयतः प्राणभृद्भेदोपात्तपापपुण्यकर्माशयसहायस्यात्रभवतः परमेश्वरस्य न वैषम्यनैर्घृण्ये प्रसज्येते। न हि सभ्यः सभायां नियुक्तो युक्तवादिनं युक्तवाद्यसीति चायुक्तवादिनमयुक्तवाद्यसीति ब्रुवाणः, सभापतिर्वा युक्तवादिनमनुगृह्णन्नयुक्तवादिनं च निगृह्णन्नुरक्तो द्विष्टो वा भवत्यपि तु मध्यस्थ इति वीतरागद्वेष इति चाख्यायते, तद्वदीश्वरः पुण्यकर्माणमनुगृह्णन्नपुण्यकर्माणं

आनन्दगिरीय–न्यायनिर्णयः ।

पूर्वसूत्रे मायामय्या लीलया ब्रह्मणः स्रष्टृत्वमादिष्टं संप्रति सैव सापेक्षस्य न संभवत्यनीश्वरत्वप्रसङ्गान्निरपेक्षत्वे रागादिमत्त्वापत्तेरित्याक्षिप्य समाधत्ते–वैषम्येति । निरवद्याद्ब्रह्मणो जगत्सर्वं वदन्समन्वयो विषयः स किं यो विषमसृष्टिकारी स सावद्यो ब्रह्म च विषमं सृजतीति न्यायेन विरुध्यते न वेति यथापूर्वं संदेहे पूर्वपक्षमाह–पुनश्चेति । पुनराक्षेपस्य फलमाह–स्थूणेति । जगतो ब्रह्मैव कारणमिति प्रतिज्ञातोऽर्थस्तद्दृढीकरणमाक्षेपद्वारेणाधिकरणं कृत्यमित्यर्थः । पादादिसंगतिफले पूर्ववदुन्नेये । आक्षेपं विवृण्वन् 'वैषम्यनैर्घृण्ये न' इति सूत्रावयवं पूर्वपक्षे योजयन्नर्थमाह–नेश्वर इति । प्रश्नपूर्वकं हेतुं गृहीत्वा प्रथमं वैषम्यप्रसङ्गं प्रकटयति–कुत इत्यादिना । देवादीनामेवं वैषम्येऽपि कथमीश्वरस्य वैषम्यमित्याशङ्क्याऽऽह–इत्येवमिति । वैषम्येपि किं स्यादित्याशंक्योक्तम्–श्रुतीति । 'निष्कलं निष्क्रियम्' इत्याद्या श्रुतिः 'न मे द्वेष्योऽस्ति न प्रियः' । 'बलं बलवतां चाहं कामरागविवर्जितम्' इत्याद्या च स्मृतिः । स्वच्छत्वादीत्यादिशब्देन निष्क्रियत्वनिष्कलत्वादि गृह्यते । वैषम्यप्रसङ्गं प्रदर्श्य नैर्घृण्यप्रसङ्गं दर्शयति–तथेति । ब्रह्म परेणामर्थानर्थहेतुकार्यस्य न कारणं चेतनत्वे सत्यनवद्यत्वाद्विशिष्टपुरुषवदित्यभिप्रेत्योपसंहरति–तस्मादिति । पूर्वपक्षमनूद्य सिद्धान्तमवतार्य प्रतिजानीते–एवं प्राप्त इति । प्रश्नपूर्वकं हेतुमादत्ते–

ब्रूमः । "वैषम्यनैर्घृण्ये न" ईश्वरस्य प्रसज्येते ॥ कस्मात् ॥ "सापेक्षत्वात्" । यदि हि निरपेक्षः केवल ईश्वरो विषमां सृष्टिं निर्मिमीते, स्यातामेतौ दोषौ वैषम्यं नैर्घृण्यं च ॥ न तु निरपेक्षस्य निर्मातृत्वमस्ति । सापेक्षो हीश्वरो विषमां सृष्टिं निर्मिमीते॥किमपेक्षत इति चेत् ॥ धर्माधर्मावपेक्षत इति वदामः ॥ अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः । ईश्वरस्तु पर्जन्यवद्द्रष्टव्यः । यथा हि पर्जन्यो व्रीहियवादिसृष्टौ साधारणं कारणं भवति,व्रीहियवादिवैषम्ये तु तत्तद्बीजगतान्येवासाधारणानि सामर्थ्यानि कारणानि भवन्ति, एवमीश्वरो देवमनुष्यादिसृष्टौ साधारणं कारणं भवति देवमनुष्यादिवैषम्ये तु तत्तज्जीवगतान्येवासाधारणानि कर्माणि कारणानि भवन्ति ॥ एवमीश्वरः सापेक्षत्वान्न वैषम्यनैर्घृण्याभ्यां दुष्यति ॥ कथं पुनरवगम्यते । सापेक्ष ईश्वरो नीचमध्यमोत्तमं संसारं निर्मिमीत इति । "तथाहि दर्शयति" श्रुतिः-"एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते" [ कौषी० ३ । ८ ] इति ॥ "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" [ बृ० ४ । ४ । ५ ] इति च ॥ स्मृतिरपि प्राणिकर्मविशेषा-

रत्नप्रभा ।

राज्ञीश्वरत्वानपायात् । ननु तर्हि धर्माधर्माभ्यामेव विचित्रा सृष्टिरस्तु, किमीश्वरेणेत्यत आह-ईश्वरस्तु पर्जन्यवदिति ॥ साधारणहेतुसहितस्यैवासाधारणहेतोः कार्यकारित्वान्नेश्वरवैयर्थ्यम् । अन्यथा पर्जन्यवैयर्थ्यप्रसङ्गादिति भावः । यं जनम् । उन्निनीषते ऊर्ध्वं नेतुमिच्छति तं साधु कारयति, एष ईश्वर इत्यन्वयः ॥

भामती ।

च निगृह्णन्मध्यस्थ एव नामध्यस्थः । एवं ह्यसावमध्यस्थः स्याद्यद्यकल्याणकारिणमनुगृह्णीयात्कल्याणकारिणं च निगृह्णीयात् । न त्वेतदस्ति । तस्मान्न वैषम्यदोषः । अत एव न नैर्घृण्यमपि संहरतः समस्तान् प्राणभृतः । स हि प्राणभृत्कर्माशयानां वृत्तिनिरोधसमयः, तमतिलंघयन्नयमयुक्तकारी स्यात् । न च कर्मापेक्षायामीश्वरस्य ऐश्वर्यव्याघातः । न हि सेवादिकर्मभेदापेक्षः फलभेदप्रदः प्रभुरप्रभुर्भवति । न च 'एष ह्येव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधु कर्म कारयति तं यमधो

आनन्दगिरीय-न्यायनिर्णयः ।

कस्मादिति । व्यतिरेकद्वारा विभजते-यदि हीति । नैरपेक्ष्यमेव व्याचष्टे-केवल इति । उक्तमेवार्थमन्वयमुखेनान्वाचष्टे-सापेक्षो हीति । सापेक्षत्वे सत्यनीश्वरत्वापत्तिरिति विवक्षन्नाक्षिपति-किमिति । सेवादिभेदापेक्षया राजादीनां फलदानेऽपि नानीश्वरता दृष्टेति मन्वानः समाधत्ते-धर्मेति । सापेक्षत्वे फलं वदन्नुक्तमेव व्यनक्ति-अत इति । विषमा सृष्टिर्धर्मादिनिमित्ता चेत्कृतमीश्वरेणेत्याशंक्याऽऽह-ईश्वरस्त्विति । दृष्टान्तं विवृणोति-यथा हीति । व्रीहियवादिवैषम्यं तर्हि किंकृतमित्याशंक्याऽऽह-व्रीहीति । चेतनत्वे सत्यनवद्यत्वादिति हेतुं व्यभिचारयन्दार्ष्टान्तिकमाह-एवमिति । सेवादिभेदापेक्षया परेषामर्थानर्थौ कुर्वति राजादावनैकान्तिको हेतुरिति भावः । सापेक्षत्वफलमुपसंहरति-एवमिति । तया चाऽऽगमावधारितस्वच्छत्वादीश्वरस्वभावस्य नैव भङ्गोऽस्तीति भावः । सापेक्षस्येश्वरस्य विषमसृष्टिहेतुत्वे मानं पृच्छति-कथमिति । सूत्रावयवेनोत्तरमाह-तथाहीति । स्मृतिरपि श्रौतमर्थमनुगृह्णातीत्याह-स्मृतिरपीति । न च साध्वसाधुनी कर्मणी कारयित्वा स्वर्गं नरकं वा प्राणिनो नयन्नीश्वरो वैषम्यादिना कथं

पेक्षमेवेश्वरस्यानुग्रहीतृत्वं निग्रहीतृत्वं च दर्शयति "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" [ भ० गी० ४ । ११ ] इत्येवञ्जातीयका ॥ ३४ ॥

## न कर्माविभागादिति चेन्नाऽनादित्वात् ॥ ३५ ॥

"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" [ छां० ६ । २ । १ ] इति प्राक्सृष्टेरविभागावधारणान्नास्ति कर्म । यदपेक्ष्य विषमा सृष्टिः स्यात् । सृष्ट्युत्तरकाले हि शरीरादिविभागापेक्षं कर्म, कर्मापेक्षश्च शरीरादिविभाग इतीतरेतराश्रयत्वं प्रसज्येत ॥ अतो विभागादूर्ध्वं कर्मापेक्ष ईश्वरः प्रवर्ततां नाम । प्राक् तु विभागाद्वैचित्र्यनिमित्तस्य कर्मणोऽभावात्तुल्यैवाद्या सृष्टिः प्राप्नोतीति चेत् ॥ नैष दोषः ॥ अनादित्वात् संसारस्य । भवेदेष दोषो यद्यादिमान्संसारः स्यात् । अनादौ तु संसारे बीजाङ्कुरवद्धेतुहेतुमद्भावेन कर्मणः सर्गवैषम्यस्य च प्रवृत्तिर्न विरुध्यते॥३५॥

रत्नप्रभा ।

न च कञ्चिज्जनं साधु, कञ्चिदसाधु कर्म कारयतो वैषम्यं तदवस्थमिति वाच्यम् । अनादिपूर्वार्जितसाध्वसाधुवासनया स्वभावेन जनस्य तत्तत्कर्मसु प्रवृत्तावीश्वरस्य साधारणहेतुत्वात् । अतोऽनवद्य ईश्वर इति भावः ॥ ३४ ॥ प्रथमसर्गस्य वैषम्यहेतुकर्माभावादेकरूपत्वं स्यात्, तथा तदुत्तरकल्पानामपीत्याक्षिप्य समाधत्ते सूत्रकारः—न कर्मेति ॥ प्रथमसृष्टेः पश्चाद्भाविकर्मकृतं वैषम्यमित्याशंक्यान्योन्याश्रयमाह—सृष्ट्युत्तरेति ॥ आद्या सृष्टिरिति—उपलक्षणम् । आदावेकरूपत्वे मध्ये विषमकर्मोत्पत्तौ हेत्वभावेनोत्तरसृष्टानामपि तुल्य-

भामती ।

निनीषते' इति श्रुतेरीश्वर एव द्वेषपक्षपाताभ्यां साध्वसाधुनी कर्मणी कारयित्वा स्वर्गं नरकं वा लोकं नयति, तस्माद्वैषम्यदोषप्रसङ्गान्नेश्वरः कारणमिति वाच्यम्, विरोधात् । यस्मात् कर्म कारयित्वेश्वरः प्राणिनः सुखदुःखिनः सृजति इति श्रुतेरवगम्यते, तस्मान्न सृजतीति विरुद्धमभिधीयते । न च वैषम्यमात्रमत्र ब्रूमो न त्वीश्वरकारणत्वं व्यासेधाम इति वक्तव्यम् । किमतो यद्येवम् । तस्मादीश्वरस्य सवासनक्लेशापरामर्शमभिवदन्तीनां भूयसीनां श्रुतीनामनुग्रहायोन्निनीषतेऽधो निनीषत इत्येतदपि तज्जातीयपूर्वकर्माभ्यासवशात्प्राणिन इत्येवं नेयम् । यथाहुः—'जन्मजन्म यदभ्यस्तं दानमध्ययनं तपः । तेनैवाभ्यासयोगेन तच्चैवाभ्यसते नरः ॥' इति । अभ्युपेत्य च सृष्टेस्तात्त्विकत्वमिदमुक्तम् । अनिर्वाच्या तु सृष्टिरिति न प्रस्मर्तव्यमत्रापि । तथा च मायाकारस्येवाङ्गसाकल्यवैकल्यभेदेन विचित्रान् प्राणिनो दर्शयतो न वैषम्यदोषः, सहसा संहरतो वा न नैर्घृण्यम्, एवमस्यापि भगवतो विविधविचित्रप्रपञ्चमनिर्वाच्यं विश्वं दर्शयतः संहरतश्च स्वभावाद्वा लीलया वा न कश्चिद्दोषः ॥ ३४ ॥ इति स्थिते शङ्कापरिहारपरं सूत्रम्—न कर्माविभागादिति चेन्नानादित्वात् । शङ्कोत्तरे अतिरोहितार्थेन भाष्यग्रन्थेन व्याख्याते ॥ ३५ ॥

आनन्दगिरीय—न्यायनिर्णयः ।

न दुष्यतीति वाच्यम् । तज्जातीयपूर्वकर्माभ्यासात्तत्र प्रवृत्तानामेवेश्वरस्य प्रवर्तकत्वान्मायाविवच्च तस्य मायामयसृष्टिहेतोर्वैषम्यादिप्रसङ्गाभावादिति भावः ॥ ३४ ॥ सापेक्षत्वमाक्षिप्य समाधत्ते—न कर्मेति । चोद्यं व्याकुर्वन्प्राचीनं पराचीनं वा कर्मापेक्षमाणमिति विकल्प्याऽऽद्यं दूषयति—सदेवेति । द्वितीयं निरस्यति—सृष्टीति । पराचीनं हि कर्म प्रथमसृष्टेश्वरसृष्टेर्वा हेतुरिति विकल्प्याद्ये परस्पराश्रयत्वमुक्त्वा द्वितीयं प्रत्याह—अत इति । देवादिवैचित्र्यादूर्ध्वं कर्मवैचित्र्ये सति तदपेक्षयेश्वरस्य प्राणिषु सुखादिवैचित्र्यनिर्मातृत्वेऽपि प्राथमिकविचित्रसृष्टिहेत्वभावात्तदैकरूप्यं स्यादित्यर्थः । सूत्रावयवं व्याकुर्वन्नुत्तरमाह—नैष दोष इति । तदेव स्फोरयति—भवेदित्यादिना । सृष्टेरैकरूप्यं संसारस्य सादित्वेन नानाहेत्वभावाद्-

**कथं पुनरवगम्यतेऽनादिरेष संसार इति । अत उत्तरं पठति—**

## उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

**उपपद्यते च संसारस्यानादित्वम् । आदिमत्त्वे हि संसारस्याकस्मादुद्भूतेर्मुक्तानामपि पुनः संसारोद्भूतिप्रसङ्गोऽकृताभ्यागमप्रसंगश्च ॥ सुखदुःखादिवैषम्यस्य निर्निमित्तत्वात् । न चेश्वरो वैषम्यहेतुरित्युक्तम् ॥ न चाविद्या केवला वैषम्यस्य कारणम् । एकरूपत्वात् ॥ रागादिक्लेशवासनाक्षिप्तकर्मापेक्षा त्वविद्या वैषम्यकरी स्यात् ॥ न च कर्मान्तरेण**

---

रत्नप्रभा ।

त्वस्य दुर्वारत्वादिति द्रष्टव्यम् । परिहारः सुगमः ॥ ३५ ॥ प्रथमसर्गः कश्चिन्नास्तीत्यत्र प्रमाणं पृच्छति—**कथं पुनरिति** ॥ उपपत्तिसहितश्रुत्यादिकं प्रमाणमिति सूत्रव्याख्यया दर्शयति—**उपपद्यते इति** ॥ हेतुं विनैव सर्गाङ्गीकारे ज्ञानकर्मकाण्डवैयर्थ्यं स्यादित्यर्थः । ननु सुखादिवैषम्ये ईश्वरोऽविद्या वा हेतुरस्त्वित्याशंक्य क्रमेण दूषयति—**न चेश्वर इत्यादिना** ॥ कस्तर्हि हेतुः, तत्राह—**रागादीति** ॥ रागद्वेषमोहाः क्लेशाः, तेषां वासनाभिराक्षिप्तानि कर्माणि धर्माधर्मव्यामिश्ररूपाणि, तदपेक्षा त्वविद्या सुखादिसर्गवैचित्र्यहेतुः । तस्मादविद्यासहकारित्वेन क्लेशकर्मणामनादिप्रवाहोऽङ्गीकर्तव्य इति भावः । किंच सृष्टेः सादित्वे प्रथमशरीरस्योत्पत्तिर्न सम्भवति हेत्वभावात् । न च कर्म हेतुः । शरीरात्

भामती ।

अनादित्वादिति सिद्धवदुक्तं, तत्साधनार्थं सूत्रम्—**उपपद्यते चाप्युपलभ्यते च** । कृते कर्मणि पुण्ये पापे वा तत्फलं भोक्तारमध्यागच्छेत्, तथा च विधिनिषेधशास्त्रमनर्थकं भवेत् प्रवृत्तिनिवृत्त्यभावादिति । मोक्षशास्त्रस्य चोक्तमानर्थक्यम् । **न चाविद्या केवलेति** व्याभिप्रायम् । विक्षेपलक्षणाऽविद्यासंस्कारस्तु कार्यत्वात्स्वोत्पत्तौ पूर्वं विक्षेपमपेक्षते, विक्षेपश्च मिथ्याप्रत्ययो मोहापरनामा पुण्यापुण्यप्रवृत्तिहेतुभूतरागद्वेषनिदानं, स च रागादिभिः सहितः स्वकार्यैर्न शरीरं सुखदुःखभोगायतनमन्तरेण संभवति । न च रागद्वेषान्तरेण कर्म । न च भोगसहितं मोहमन्तरेण रागद्वेषौ, न च पूर्वशरीरमन्तरेण मोहादिरिति पूर्वपूर्वशरीरापेक्षो मोहादिरेवं पूर्वपूर्वमोहाद्यपेक्षं पूर्वपूर्वशरीरमित्यनादितैवात्र भगवती चित्तमनाकुलयति । तदेतदाह—**रागादिक्लेशवासनाक्षिप्तकर्मापेक्षा त्वविद्या वैषम्यकरी स्यादिति** । रागद्वेषमोहा रागादयस्त एव हि पुरुषं

आनन्दगिरीय—न्यायनिर्णयः ।

वति । तस्य त्वनादित्वे पूर्वपूर्वकर्मवैचित्र्यवशादुत्तरोत्तरविचित्रसृष्टिसिद्धिरित्यर्थः ॥ ३५ ॥ सिद्धवदुक्तस्य संसारानादित्वस्य समर्थनार्थमुत्तरसूत्रमुत्थापयति—**कथमिति** । सूत्रं व्याकरोति—**उपपद्यते चेति** । उपपत्तिमेव मोक्षकाण्डप्रामाण्यानुपपत्तिलक्षणां विवृणोति—**आदिमत्त्व इति** । अन्यथा कर्मकाण्डप्रामाण्यानुपपत्तेश्च संसारस्यानादित्वमादेयमित्याह—**अकृतेति** । अननुष्ठिते कर्मणि फलप्राप्तौ विधिनिषेधशास्त्रानर्थक्यमिति भावः । सुखादिवैषम्यस्य कर्मनिमित्तत्वाभावेऽपि निमित्तान्तरं भविष्यतीति चेत्तत्किमीश्वरः किं वाऽविद्याऽथ वा शरीरमिति विकल्प्याऽऽद्यं दूषयति—**न चेति** । उक्तमीश्वरस्तु पर्जन्यवदित्यादाविति शेषः । द्वितीयेऽपि केवलाविद्या वैषम्यहेतुरुत रागाद्यपेक्षेति विकल्प्याऽऽद्यं प्रत्याह—**न चाविद्येति** । स्वापादावदर्शनादिति भावः । कल्पान्तरे संसारस्यानादित्वं दुर्वारमिति मत्वाऽऽह—**रागादीति** । रागद्वेषमोहा रागादयस्ते च पुरुषं दुःखादिभिः क्लिश्यन्तीति क्लेशास्तेषां वासनाः कर्मप्रवृत्त्यनुगुणास्ताभिराक्षिप्तं धर्मादिलक्षणं कर्म तदपेक्षाऽविद्या स्वाश्रये सुखादिवैषम्यं करोत्यविद्या खल्वनादिरनिर्वाच्या चिन्मात्रे प्रतीचि वर्तमाना तत्र भ्रान्तिमुपनयति । सा च शोभनाशोभनाध्यासरूपा रागद्वेषद्वारा पुण्यापुण्ये निर्वर्तयति । ते च विचित्रे सुखदुःखे संचिनुत इत्यनाद्यविद्यायाः परम्परया वैषम्यहेतुत्वे संसारस्यानादित्वमावश्यकमुक्तविभ्रमादेरेव संसारत्वात्तस्य च प्रवाहरूपेणानादित्वादिति भावः । तृतीयं निरस्यति—**न चेति** ।

शरीरं सम्भवति ॥ न च शरीरमन्तरेण कर्म सम्भवतीतीतरेतराश्रयत्वप्रसंगः ॥ अनादित्वे तु बीजांकुरन्यायेनोपपत्तेर्न कश्चिद्दोषो भवति ॥ उपलभ्यते च संसारस्यानादित्वं श्रुतिस्मृत्योः । श्रुतौ तावद्–"अनेन जीवेनात्मना" [ छां० ६ । ३ ।२] इति सर्गप्रमुखे शारीरमात्मानं जीवशब्देन प्राणधारणनिमित्तेनाभिलपन्ननादिस्संसार इति दर्शयति ॥ आदिमत्त्वे तु ततः प्रागनवधारितः प्राणस्सन्कथं प्राणधारणनिमित्तेन जीवशब्देन सर्गप्रमुखेऽभिलप्येत ॥ न च धारयिष्यतीत्यतोऽभिलप्येत ॥ अनागताद्धि सम्बन्धादतीतः सम्बन्धो बलीयान् भवति । अभिनिष्पन्नत्वात् ॥ "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्" [ महानारा० ५ । ७ ] इति च मन्त्रवर्णः पूर्वकल्पसद्भावं दर्शयति ॥ स्मृतावप्यनादित्वं संसारस्योपलभ्यते–"न रूपमस्येह तथोपलभ्यते नान्तो

---

रत्नप्रभा ।

प्राक् कर्मासम्भवात् । तस्मात्कर्मशरीरयोरन्योन्याश्रयपरिहाराय सर्वैरेव वादिभिः संसारस्यानादित्वमङ्गीकार्यमित्याह–न चेति ॥ स्वर्गप्रमुखे सृष्ट्यादौ प्राग्धारितप्राणोऽपि सन् प्रत्यगात्मभाविधारणनिमित्तेन जीवशब्देनोच्यतामित्यत्राह–न च धारयिष्यतीति ॥ "गृहस्थः सदृशीं भार्यामुपेयाद्" इत्यादावगत्या भाविवृत्त्याश्रयणमिति भावः । अस्य संसारवृक्षस्य स्वरूपं सत्यं मिथ्या वेत्युपदेशं विना नोपलभ्यते । ज्ञानं विनान्तोऽपि नास्ति । नाप्यादिरुपलभ्यते । असत्वादेव न च सम्प्रतिष्ठा मध्ये स्थितिः । दृष्टनष्टस्वरूपत्वादिति गीतावाक्यार्थः । संसारस्यानादित्वेऽपि मिथ्यात्वाद् "एकमेवाद्वितीयम्"

भामती ।

संसारदुःखमनुभाव्य क्लेशयन्तीति क्लेशास्तेषां वासनाः कर्मप्रवृत्त्यनुगुणास्ताभिराक्षिप्तानि प्रवर्तितानि कर्माणि तदपेक्षा लयलक्षणा अविद्या । स्यादेतत् । भविष्यतापि व्यपदेशो दृष्टो यथा 'पुरोडाशकपालेन तुषानुपवपति' इति । अत आह–न च धारयिष्यतीत्यत इति । तदेवमनादित्वे सिद्धे 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति प्राक् सृष्टेरविभागावधारणं समुदाचरद्रूपरागादिनिषेधपरं न पुनरेतान्प्रत्यु-

आनन्दगिरीय–न्यायनिर्णयः ।

अस्तु तर्हि कर्मनिबन्धनं शरीरं वैषम्यकारणं तत्राऽऽह–न च शरीरमिति । कथं तर्हि परस्पराश्रयत्वं परिहर्तुं पार्यते तत्राऽऽह–अनादित्वे त्विति । उपपत्तेर्हेतुफलभावस्येति शेषः । संसारस्यानादित्वसाधनमुपपत्तिरनुग्राह्यमानाभावे न तदुपपादयितुमलमित्याशंक्य सूत्रावयवं व्याकरोति–उपलभ्यते चेति । संसारोऽनादिरित्येवंवादिन्यौ श्रुतिस्मृती नैव दृश्येते तत्कथमिदमीदृशमित्याशंक्य श्रौतं लिङ्गं संसारस्यानादित्वसाधकमादर्शयति–श्रुतौ तावदिति । शारीरस्याऽऽत्मनः सर्गप्रमुखे प्राणधारणनिमित्तेन जीवशब्देन परदेवतायाः परामृश्यमानत्वेऽपि कुतः संसारस्यानादित्वमित्याशंक्याऽऽह–आदिमत्त्वे त्विति । प्रागनवधारितप्राणः सन्नात्मा शारीर इति शेषः । ननु भाविनीं वृत्तिमाश्रित्याऽऽत्मनि जीवशब्दो 'गृहस्थः सदृशीं भार्याम्' इतिवद्भविष्यति नेत्याह–न चेति । संसारस्यानादित्वे श्रौतं लिङ्गान्तरमाह–सूर्येति । श्रुतौ स्मृतौ चोपलभ्यते संसारस्यानादित्वमिति प्रतिज्ञाय श्रौतमुपलम्भमुपदर्श्य स्मार्तमुपलम्भमुपदर्शयति–स्मृताविति । अस्य संसारवृक्षस्य परिकल्पितस्य रूपं पारमार्थिकमधिष्ठानं परं ब्रह्म तत्तया घटादिवत्प्राकृतैर्व्यवहारभूमौ नोपलभ्यते । न चान्तोऽवसानमन्तरेण ब्रह्मविद्यामस्य दृश्यते । आदिश्चासत्त्वादेवास्य नावसीयते । संप्रतिष्ठा मध्यं चास्य न प्रतिभाति । अनिर्वाच्यत्वादित्यर्थः । श्रुतिस्मृतिसिद्धेऽर्थे

**न चादिर्न च सम्प्रतिष्ठा" [ भ० गी० १५ । ३] इति ॥ पुराणे चातीतानामनागतानां च कल्पानां न परिमाणमस्तीति स्थापितम् ॥ ३६ ॥ इत्यवैषम्यनैर्घृण्याधिकरणम् ॥ १२ ॥**

## सर्वधर्मोपपत्तेश्च ॥ ३७ ॥ ( १३ ) ॥

इति वैयासिक्यां शारीरकमीमांसायां द्वितीयाध्यायस्य प्रथमः पादः समाप्तः ॥

**चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेत्यस्मिन्नवधारिते वेदार्थे परैरुपक्षिप्तान्विलक्षणत्वादीन्दोषान्पर्यहार्षीदाचार्यः ॥ इदानीं परपक्षप्रतिषेधप्रधानं प्रकरणं प्रारिप्समानस्स्वपक्षपरिग्रहप्रधानं प्रकरणमुपसंहरति ॥ यस्मादस्मिन्ब्रह्मणि कारणे परिगृह्यमाणे प्रदर्शितेन प्रकारेण सर्वे कारणधर्मा उपपद्यन्ते सर्वज्ञं सर्वशक्ति—**

---

रत्नप्रभा ।

[ छां० ६ । २ । १ ] इत्यवधारणमुपपन्नम् । तस्मान्निरवद्ये ब्रह्मणि समन्वयाविरोध इति सिद्धम् ॥ ॥ ३६ ॥ ( १२ ) ॥ **सर्वधर्मोपपत्तेश्च** । निर्गुणस्य ब्रह्मणो जगदुपादानत्ववादिवेदान्तसमन्वयो विषयः स किं निर्गुणं तन्नोपादानं यथा रूपमिति न्यायेन विरुध्यते न वेति सन्देहे भवत्वीश्वरस्य विषमसृष्टिनिमित्तत्वम् । तत्प्रयोजकस्य कर्मणः सत्त्वान्न तूपादानत्वम् । तद्व्यापकस्य सगुणत्वस्याभावादिति प्रत्युदाहरणेन प्राप्ते सिद्धान्तसूत्रतात्पर्यमाह—**चेतनमिति** ॥ विवर्तोपादानत्वं निर्गुणस्याप्यविरुद्धम् । अज्ञातत्वस्य भ्रमाधिष्ठानत्वप्रयोजकस्य सत्त्वात् । सगुणत्वं त्वव्यापकम् । शब्दादिदिगुणेषु नित्यत्वादिभ्रमदर्शनादिति भावः । यद्यपि सर्वज्ञत्वं सर्वशक्तित्वं च लोके कारणधर्मत्वेनाप्रसिद्धम् । तथापि यो यस्य कर्ता स तस्य सर्वस्य ज्ञाता शक्तश्चेति प्रसिद्धम् । ईश्वरस्यापि सर्वकर्तृत्वश्रवणात् प्रसिद्ध्यनुसारेणार्थान्निरतिशयसर्वज्ञत्वं, सर्वशक्तित्वं च,—सिध्यतीत्यभिसन्धायाह—**सर्वज्ञं सर्वशक्तीति** ॥

भामती ।

त्तानप्यपाकरोतीति सर्वमवदातम्॥३६॥(१२)॥ **सर्वधर्मोपपत्तेश्च** । अत्र **सर्वज्ञमिति** दृश्यते सर्वस्य चेतनाधिष्ठितस्यैव लोके प्रवृत्तिरिति लोकानुसारो दर्शितः । **सर्वशक्तीति** । सर्वस्य जगत उपादानकारणं

आनन्दगिरीय—न्यायनिर्णयः ।

पौराणिकीं संमतिमाह—**पुराणे चेति** ॥ ३६ ॥ ( १२ ) ॥ पूर्वाधिकरणे कर्मवशादीश्वरस्य विषमसृष्टिहेतुत्वमुक्तं तथाऽपि तस्य सगुणत्वमुपादानत्वान्मृदादिवदित्याशङ्क्याऽऽह—**सर्वधर्मेति** । निर्गुणस्य ब्रह्मणो जगदुपादानत्ववादिसमन्वयो विषयः, स किं यन्निर्गुणं न तदुपादानं यथा गन्ध इति न्यायेन विरुध्यते न वेति पूर्ववदेव संदेहे वृत्तमनूद्य संगतिमाह—**चेतनमित्यादिना** । निर्गुणस्य गन्धवदुपादानत्वायोगाद्ब्रह्मणः सगुणत्वे मृदादिवदुपादानत्वेन प्राप्ते विवर्ताधिष्ठानत्वस्यात्रोपादानत्वात्तस्य च निर्गुणेऽपि जात्यादावनित्यत्वाद्यारोपवदविरोधाद्युक्तं निर्गुणस्यापि ब्रह्मणो जगदुपादानत्वमिति राद्धान्तमभिसंधाय सूत्राक्षराणि व्याचष्टे—**यस्मादिति** । पादादिसंगतिचतुष्टयं फलं च पूर्वोत्तरपक्षयोर्यथापूर्वमवधेयम् । यद्यपि लोके सर्वज्ञत्वं कस्यचित्कारणस्य धर्मो न दृश्यते तथाऽपि कुलालादौ मृदादिप्रेरकत्वदर्शनाद्ब्रह्मण्यपि नियन्तरि तेन भवितव्यं तस्य सर्वप्रेरकत्वस्य श्रौतत्वादर्थादेव सर्वज्ञत्वसिद्धिरित्याह—**सर्वज्ञमिति** । एवं ब्रह्मणि सर्वशक्तिमत्त्वमपि शक्यमुपपादयितुमिति मत्वाऽऽह—**सर्वशक्तीति** । तेनोपादानत्वमुपपादितं सर्व-

महामायं च ब्रह्मेति ॥ तस्मादनतिशङ्कनीयमिदमौपनिषदं दर्शनमिति ॥ ॥ २ ॥ १ ॥ ३७ ॥ इति सर्वधर्मोपपत्त्यधिकरणम् ॥ १३ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणपरमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दपूज्यपादशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये सांख्ययोगकाणादादिभिस्तत्तर्कैश्च विरोधपरिहारो नाम द्वितीयस्याध्यायस्य प्रथमः पादः समाप्तः ॥ २ ॥ १ ॥

---

रत्नप्रभा ।

**महामायमिति** । कर्तृत्वोपादानत्वकथने सर्वशंकापङ्कक्षालनायोक्तम् । तस्मादौपनिषदसिद्धान्ते न कश्चिद्दोष इति सिद्धम् ॥ ३७ ॥ २ ॥ १ ॥ ( १३ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शनभाष्यव्याख्यायां ( भाष्य ) रत्नप्रभायां द्वितीयस्याध्यायस्य प्रथमः पादः समाप्तः ॥ २ ॥ १ ॥

भामती ।

निमित्तकारणं चेत्युपपादितम् । **महामायमिति** । सर्वानुपपत्तिशङ्का परास्ता । तस्माज्जगत्कारणं ब्रह्मेति सिद्धम् ॥ ३७ ॥ ( १३ ) ॥

इति श्रीवाचस्पतिमिश्रविरचिते भगवत्पादशारीरकभाष्यविभागे भामत्यां द्वितीयस्याध्यायस्य प्रथमः पादः ॥ २ ॥ १ ॥

आनन्दगिरीय–न्यायनिर्णयः ।

ज्ञत्वेन निमित्तत्वमिति भेदः । निर्गुणत्वादिप्रयुक्तसर्वानुपपत्तिशङ्कोपशान्तये विशिनष्टि—**महामायं चेति** । एतेन ब्रह्मण्यनवच्छिन्नं मायाविद्यादिशब्दितमनिर्वाच्यमज्ञानं कारणत्वादिसर्वव्यवहारनिर्वाहकमस्तीत्युक्तम् । यस्मादित्यस्यापेक्षितं पूरयन्पादार्थमुपसंहरति—**तस्मादिति** । स्मृतिन्यायविरोधः समन्वयस्य नास्तीति सिद्धमिति वक्तुमितिशब्दः ॥ ३७ ॥ ( १३ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि (ज्ञान) विरचिते श्रीमच्छारीरकभाष्यन्यायनिर्णये द्वितीयाध्यायस्य प्रथमः पादः समाप्तः ॥ २ ॥ १ ॥

॥ इति द्वितीयाध्यायस्य सांख्ययोगकाणादादिभिस्तत्तर्कैश्च विरोधपरिहाराख्यः प्रथमः पादः ॥

# द्वितीयाध्याये द्वितीयः पादः २.



## रचनानुपपत्तेश्च नानुमानम् ॥ २ ॥ २ ॥ १ ॥ ( १ ) ॥

यद्यपीदं वेदान्तवाक्यानामैदम्पर्यं निरूपयितुं शास्त्रं प्रवृत्तं न तर्कशास्त्रवत्केवलाभिर्युक्तिभिः कश्चित्सिद्धान्तं साधयितुं दूषयितुं वा प्रवृत्तम् । तथापि वेदान्तवाक्यानि व्याचक्षाणैस्सम्यग्दर्शनप्रतिपक्षभूतानि सांख्यादिदर्शनानि निराकरणीयानीति तदर्थः परः पादः प्रवर्तते ॥ वेदान्तार्थनिर्णयस्य च सम्यग्दर्शनार्थत्वात् । तन्निर्णयेन स्वपक्षस्थापनं

रत्नप्रभा ।

ॐ ब्रह्मणे नमः । सांख्यतार्किकबौद्धाश्च जैनाः पाशुपतादयः । यस्य तत्त्वं न जानन्ति तं वन्दे रघुपुङ्गवम् ॥ १ ॥ ब्रह्मणि सर्वधर्मोपपत्तिवत् प्रधानेऽपि तदुपपत्तिमाशंक्य निराचष्टे–रचनानुपपत्तेश्च नानुमानम् ॥ [ २ । २ । १ ] इति । ननु मुमुक्षूणां वाक्यार्थनिर्णयप्रतिबन्धनिरासाय वेदान्तानां तात्पर्यं निश्चेतुमिदं शास्त्रमारब्धम् । तच्च निर्दोषतया निश्चितम् । ततः परपक्षनिरासात्मकोऽयं पादोऽस्मिञ्छास्त्रे न सङ्गतः । तन्निरासस्य मुमुक्ष्वनपेक्षितत्वादित्याक्षिपति–यद्यपीति ॥ परपक्षनिराकरणं विना स्वपक्षस्थैर्यायोगात्, तत् कर्तव्यमित्याह–तथापीति ॥ तर्हि स्वपक्षस्थापनात् प्रागेव परपक्षप्रत्याख्यानं कार्यमित्यत आह–वेदान्तार्थेति ॥ वेदान्ततात्पर्यनिर्णयस्य फलवज्ज्ञानकरणान्तर्भावादभ्य-

भामती ।

**रचनानुपपत्तेश्च नानुमानम्** । स्यादेतत् । इह हि पादे स्वतन्त्रा वेदनिरपेक्षाः प्रधानादिसिद्धिविषयाः सांख्यादियुक्तयो निराकरिष्यन्ते । तदयुक्तमशास्त्राङ्गत्वात् । न हीदं शास्त्रमुच्छृंखलतर्कशास्त्रवत्प्रवृत्तमपि तु वेदान्तवाक्यानि ब्रह्मपराणीति पूर्वपक्षोत्तरपक्षाभ्यां विनिश्चेतुम् । तत्र कः प्रसङ्गः शुष्कतर्कवत्स्वतन्त्रयुक्तिनिराकरणस्येत्यत आह–यद्यपीदं वेदान्तवाक्यानामिति । न हि वेदान्तवाक्यानि निर्णेतव्यानीति निर्णीयन्ते, किंतु मोक्षमाणानां तत्त्वज्ञानोत्पादनाय । यथा च वेदान्तवाक्येभ्यो जगदुपादानं ब्रह्मावगम्यते, एवं सांख्याद्यनुमानेभ्यः प्रधानाद्यचेतनं जगदुपादानमवगम्यते । न चैतदेव चेतनोपादानमचेतनोपादानं चेति समुच्चेतुं शक्यं, विरोधात् । न च व्यवस्थिते वस्तुनि विकल्पो युज्यते । न चागमबाधितविषयतयानुमानमेत्र नोदीयत इति सांप्रतम् । सर्वज्ञप्रणीततया सांख्याद्यागमस्य वेदागमतुल्यत्वात् तद्बाधितस्यानुमानस्य प्रतिकृतिसिंहतुल्यतयाऽबाध्यत्वात् । तस्मात्तद्विरोधान्न ब्रह्मणि समन्वयो वेदान्तानां सिध्यतीति न ततस्तत्त्वज्ञानं सेद्धुमर्हति । न च तत्त्वज्ञानादृते मोक्ष इति स्वतन्त्राणागम्यनुमानानामाभासीकरणमिह शास्त्रे संगतमेवेति । यद्येवं ततः परकीयानुमाननिरास एव कस्मात्प्रथमं न कृत इत्यत आह–वेदान्तार्थनिर्णयस्य चेति । ननु वीतरागकथायां तत्त्वनिर्णयमात्रमुपयुज्यते न पुनः परपक्षाधि-

आनन्दगिरीय–न्यायनिर्णयः ।

ब्रह्मणि कारणत्वानुगुणेषु सर्वज्ञत्वादिषूक्तेषु प्रधानेऽपि तदुपपत्तिमाशंक्योक्तम्–रचनानुपपत्तेश्चेति । पूर्वपादेन समन्वये वादिभिरुत्प्रेक्षिता विलक्षणत्वादयो दोषा निरस्ताः । संप्रति परपक्षाणां भ्रान्तिमूलत्वं वक्तुं पादान्तरमारभ्यते । ननु तर्कशास्त्रवदस्य शास्त्रस्य तर्कप्रधानत्वाभावाद्वेदान्तवाक्यप्रधानत्वात्तेषां ब्रह्मणि तात्पर्यमेवात्र निरूपणीयं तदपेक्षितन्यायजातस्य समन्वयाध्याये सिद्धत्वात्परपक्षबाधकतर्कोक्तिस्तु नेहोपयुज्यते तत्किमनेन पादेनेति तत्राऽऽह–यद्यपीति । परपक्षप्रतिक्षेपमन्तरेण स्वपक्षावधारणायोगात्तन्निराकरणमपि प्रकृतोपयोगीति पादारम्भं समर्थयते–तथाऽपीति । स्वपक्षं निर्धारयितुं परपक्षो निराचिकीर्षितश्चेत्तदेव तर्हि प्रथमं किमिति न कृतमित्याशंक्याऽऽह–वेदान्तेति । परपक्षप्रतिषेधस्यापि तदर्थ-

प्रथमं कृतम् । तद्ध्यभ्यर्हितं परपक्षप्रत्याख्यानादिति ॥ ननु मुमुक्षूणां मोक्षसाधनत्वेन सम्यग्दर्शननिरूपणाय स्वपक्षस्थापनमेव केवलं कर्तुं युक्तम् । किं परपक्षनिराकरणेन परविद्वेषकरणेन ॥ बाढमेवम् । तथापि महाजनपरिगृहीतानि महान्ति सांख्यादितन्त्राणि सम्यग्दर्शनापदेशेन प्रवृत्तान्युपलभ्य भवेत्केषाञ्चिन्मन्दमतीनामेतान्यपि सम्यग्दर्शनायोपादेयानीत्यपेक्षा ॥ तथा युक्तिगाढत्वसम्भवेन सर्वज्ञभाषितत्वाच्च श्रद्धा च तेष्विति ॥ अतस्तदसारतोपपादनाय प्रयत्यते ॥ ननु "ईक्षतेर्नाशब्दम्" [ व्या० सू० १ । १ । ५ ] "कामाच्च नानुमानापेक्षा" [ व्या० सू० १ । १ । १८ ] "एतेन सर्वे व्याख्याताव्याख्याताः" [ व्या० सू० १ । ४ । २८ ] इति च पूर्वत्रापि सांख्यादिपक्षप्रतिक्षेपः कृतः । किं पुनः कृतकरणेनेति॥ तदुच्यते । सांख्यादयः स्वपक्षस्थापनाय वेदान्तवाक्या-

रत्नप्रभा ।

हितत्वम् । ननु रागद्वेषकरत्वात् परमतनिराकरणं न कार्यमिति शङ्कते—नन्विति ॥ तत्त्वनिर्णयप्रधाना खल्वियं कथा आरब्धा । तत्त्वनिर्णयश्च परमतेष्वश्रद्धां विना न सिध्यति । सा च तेषु भ्रान्तिमूलत्वनिश्चयं[1] विना न सिध्यति । स चेमं पादं विना नेति स्वसिद्धान्तसंरक्षणार्थत्वात् प्रधान[2]सिद्ध्यर्थत्वादयं पादोऽस्मिञ्छास्त्रे सङ्गतः । संगतत्वाद्वीतरागेणापि कर्तव्य इत्यभिसन्धायोक्ताङ्गीकारेण समाधत्ते—बाढमित्यादिना ॥ अपदेशेन व्याजेन । मन्दमतीनां तेषु श्रद्धानिमित्तानि बहूनि सन्तीति तन्निरासाय यत्नः क्रियत इत्यर्थः । स्वमतश्रद्धापरमतद्वेषौ तु प्रधानसिद्ध्यर्थत्वादङ्गीकृतौ । नाप्ययं द्वेषः । परपक्षत्वबुद्ध्या हि निरासो द्वेषमावहति । न तु तत्त्वनिर्णयेच्छया कृत इति मन्तव्यम् । पौनरुक्त्यं शङ्कते—नन्वीक्षतेरिति ॥ पूर्वं सांख्यादीनां श्रुत्यर्थानुग्राहकतर्कनिरासादश्रौतत्वमुक्तम् । संप्रति श्रुत्यनपेक्षास्तदीयाः स्वतन्त्रा युक्तयो निरस्यन्त इत्यर्थभेदान्न पुनरुक्तिरित्याह—तदुच्यत इति ॥

भामती ।

क्षेपः,स हि सरागतामावहतीति चोदयति—ननु मुमुक्षूणामिति।परिहरति—बाढमेवं तथापीति । तत्त्वनिर्णयावसाना वीतरागकथा।न च परपक्षदूषणमन्तरेण तत्त्वनिर्णयः शक्यः कर्तुमिति तत्त्वनिर्णयाय वीतरागेणापि परपक्षो दूष्यते न तु परपक्षतयेति न वीतरागकथात्वव्याहतिरित्यर्थः। पुनरुक्ततां परिचोद्य समाधत्ते—नन्वीक्षते-

आनन्दगिरीय—न्यायनिर्णयः ।

स्वमवशिष्टमित्याशंक्य करणस्येतिकर्तव्यतारूपादन्तरङ्गत्वाद्वाक्यनिरूपणस्यैव प्राथम्यमित्याह—तद्धीति । सम्यग्धीदार्ढ्याय स्वपक्षस्थापनानन्तरं परपक्षनिरसनमुचितमिति निगमयितुमितिशब्दः । वीतरागाणां मोक्षमाणानामपेक्षितमोक्षहेतुतया तत्त्वज्ञानमात्रमुपयुक्तं परपक्षाधिक्षेपस्तु वीतरागताविरोधित्वादयुक्त इति शङ्कते—नन्विति । मुमुक्षूणां मोक्षौपयिकत्वेन सम्यग्धीरेवोपयुक्तेत्युक्तमङ्गीकरोति—बाढमिति । किमिति तर्हि परपक्षनिराकरणं परविद्वेषकरणमभ्युपगतं तत्राऽऽह—तथाऽपीति । सांख्यादिदर्शनानां महाजनपरिगृहीतत्वात्प्रधानादिकारणपरतया महत्त्वात्तत्त्वज्ञानापदेशेन प्रवृत्तत्वात्तदीयानुमानानां सर्वज्ञप्रणीततया तुल्यबलत्वेन वेदान्तैरबाधाद्वस्तुनि विकल्पानुपपत्तेस्तदनिरासे तेष्वपि सम्यग्धीहेतुत्वभ्रमः स्यादतः सम्यग्धीदार्ढ्याय तन्निराकरणं कर्तव्यमिति तर्कपादारम्भः संभवतीत्यर्थः । पुनरुक्तिं शङ्कते—नन्विति । प्रधानपक्षनिराकरणं सूत्रकारस्य विवक्षितमित्यत्राभ्यासलिङ्गमाह—कामाच्चेति । तथाऽपि परमाण्वादिवादव्युदासार्थं पादारम्भो भविष्यतीत्याशंक्याऽऽह—एतेनेति । पूर्वं प्रधानादीनां श्रुतिमत्त्वं निरस्तमिदानीं युक्तिमत्त्वं निरस्यते—तेषामिति । विशेषं वदन्नुत्तरमाह—तदुच्यत इति । स्वपक्षे परैरुद्भावितदोषनिरा-

१ भ्रान्तिमूलत्वनिश्चयश्च । २ प्रधानं वेदान्तेषु मुख्यं ब्रह्म तत्सिद्ध्यर्थत्वादित्यर्थः ।

न्यप्युदाहृत्य स्वपक्षानुगुण्येनैव योजयन्तो व्याचक्षते ॥ तेषां यद्व्याख्यानं तद्व्याख्यानाभासं न सम्यग्व्याख्यानमित्येतावत्पूर्वत्र कृतम् ॥ इह तु वाक्यनिरपेक्षस्स्वतन्त्रस्तद्युक्तिप्रतिषेधः क्रियत इत्येष विशेषः ॥ तत्र सांख्या मन्यन्ते-यथा-घटशरावादयो भेदा मृदात्मतयाऽन्वीयमाना मृदात्मकसामान्यपूर्वका लोके दृष्टाः, तथा सर्वे एव बाह्याध्यात्मिका भेदाः सुखदुःखमोहात्मतयाऽन्वीयमानाः सुखदुःखमोहात्मकसामान्यपूर्वका भवितुमर्हन्ति ॥ यत्तत्सुखदुःखमोहात्मकसामान्यं तत्त्रिगुणं प्रधानं मृद्वदचेतनं चेतनस्य पुरुषस्यार्थं साधयितुं

रत्नप्रभा ।

प्रधानमचेतनं जगदुपादानमिति सांख्यसिद्धान्तोऽत्र विषयः । स किं प्रमाणमूलो, भ्रान्तिमूलो वेति सन्देहे "सर्वधर्मोपपत्तेश्च" इत्युक्तधर्माणां प्रधाने सम्भवात्तदेवोपादानमित्याक्षेपसंगत्या प्रमाणमूलत्वं दर्शयन्पूर्वपक्षमाह-तत्र सांख्या इति ॥ स्वसिद्धान्तज्ञानस्य परमतनिरासं प्रत्युपजीव्यत्वात्पादयोः संगतिः । परमतनिरासात्मकत्वात्सर्वेषामधिकरणानामेतत्पादसंगतिः । पूर्वपक्षे प्रमाणमूलमतविरोधादुक्तश्रुत्यर्थसमन्वयासिद्धिः फलम् । सिद्धान्ते तत्सिद्धिरिति आपादं द्रष्टव्यम् । श्रौतसमन्वयदार्ढ्यार्थत्वादस्य पादस्य श्रुतिसंगतिरिति विवेकः । भिद्यन्त इति भेदाः विकाराः । ये विकारा येनान्वितास्ते तत्प्रकृतिका इति व्याप्तिमाह-यथेति ॥ सर्वं कार्यं, सुखदुःखमोहात्मकवस्तुप्रकृतिकं, तदन्वितत्वाद्, घटादिवदित्यनुमानमाह-तथेति ॥ किमर्थं प्रधानं परिणमते तत्राह-चेतनस्येति ॥

भामती ।

रीति । तत्र सांख्या इति । यानि हि येन रूपेण स्थौल्यादा च सौक्ष्म्यात्समन्वीयन्ते तानि तत्कारणानि दृष्टानि, यथा घटादयो रुचकादयश्च स्थौल्यादा च सौक्ष्म्यान्मृत्सुवर्णान्वितास्तत्कारणाः, तथा चेदं बाह्यमाध्यात्मिकं च भावजातं सुखदुःखमोहात्मनान्वितमुपलभ्यते, तस्मात्तदपि सुखदुःखमोहात्मसामान्यकारणकं भवितुमर्हति । तत्र जगत्कारणस्य येयं सुखात्मता तत्सत्त्वं, या दुःखात्मता तद्रजः, या च मोहात्मता तत्तम इति त्रैगुण्यकारणसिद्धिः । तथाहि-प्रत्येकं भावास्त्रैगुण्यवन्तोऽनुभूयन्ते । यथा मैत्रदारेषु पद्मावत्यां मैत्रस्य सुखं,तत् कस्य हेतोः, तं प्रति सत्त्वगुणसमुद्भवात् । तत्सपत्नीनां च दुःखं, तत्कस्य हेतोः, ताः प्रत्यस्या रजोगुणसमुद्भवात् । चैत्रस्य तु स्त्रैणस्य तामविन्दतो

आनन्दगिरीय-न्यायनिर्णयः ।

सानन्तरं स्वतन्त्राणां परकीययुक्तीनां स्वतन्त्राभिरेव युक्तिभिः स्वपक्षं स्थापयितुं निरसनं कार्यमिति पादान्तरमर्थवदिति पादसंगतिरुक्ता । सांख्ययुक्तिनिरासस्य समन्वये तद्विरोधनिरसनद्वारा तद्दार्ढ्यार्थत्वादस्याधिकरणस्य पादादिसंगतयः । अत्र पूर्वपक्षे सांख्ययुक्तिविरोधादसिद्धिः समन्वयस्य फलति सिद्धान्ते तु तदविरोधात्तत्सिद्धिः । तत्र प्रधानमचेतनं जगदुपादानमिति सांख्यराद्धान्तो विषयः स किं प्रमाणमूलो भ्रान्तिमूलो वेति विप्रतिपत्तेः संदेहे पूर्वपक्षमाह-तत्रेति । सांख्यीयमनुमानं वक्तुं व्याप्तिमाह-यथेति । ये यत्स्वभावान्वितास्ते तत्स्वभाववस्तुप्रकृतिकाः, यथा घटादयो मृत्स्वभावान्वितास्तत्प्रकृतिका इत्यर्थः । पक्षधर्मतां हेतोर्दर्शयन्ननुमानमाह-तथेति । सर्वं कार्यं सुखदुःखमोहात्मकवस्तुप्रकृतिकं तत्स्वभावान्वितत्वाद्घटादिवदित्यर्थः । ननु सर्वस्य कार्यस्योपादानं सुखदुःखमोहात्मकं किंचिद्भविष्यति तथाऽपि कथं प्रधानसिद्धिस्तत्राऽऽह-यत्तदिति । सुखदुःखमोहात्मतैव सत्त्वरजस्तमोरूपतेति मन्वानो विशिनष्टि-तत्त्रिगुणमिति । कार्यमचेतनं दृष्ट्वा तत्कारणमपि तादृगेवानुमेयमित्याह-मृद्वदिति । किमर्थं तत्परिणमते तत्राऽऽह-चेतनस्येति । अर्थशब्दो भोगापवर्गार्थः । अचेतनस्य प्रयोजनपरिज्ञानाभावादप्रवृत्तिः ।

**स्वभावेनैव विचित्रेण विकारात्मना प्रवर्तत इति ॥ तथा परिमाणादिभिरपि लिङ्गैस्तदेव प्रधानमनुमिमते ॥ तत्र वदामः ॥**

रत्नप्रभा ।

**अर्थः** भोगापवर्गरूपः । तदर्थं स्वभावत एव प्रवर्तते, न तु केनचिच्चेतनेन प्रेर्यत इत्यर्थः । तदुक्तम्—"पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम्" [ सांख्यकारि० श्लो० ३१ ] इति । अनुमानान्तराणि तैरुक्तानि स्मारयति—**तथेति** ॥ उक्तं हि—"भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च । कार्यकारणविभागादविभागाद्वैश्वरूप्यस्य" [ सांख्यका० श्लो० १५ ] इत्यत्र कारिकायां समन्वयादिति लिङ्गं व्याख्यातम् । शिष्टानि व्याख्यायन्ते । **तथाहि**—क्षित्यादीनां भेदानां कारणम् अव्यक्तमस्ति, परिमितत्वाद्, घटवत् । न च दृष्टान्ते साध्यवैकल्यम् । घटोत्पत्तेः प्रागनभिव्यक्तघटादिरूपकार्यविशिष्टत्वेन मृदोऽप्यव्यक्तत्वात्, तथा घटादीनां कारणशक्तितः प्रवृत्तेर्महदादिकार्याणामपि कारणशक्तितः प्रवृत्तिर्वाच्या । तच्छक्तिमत्कारणम्—अव्यक्तम् । **किञ्च** कारणात्कार्यस्य विभागो जन्म दृश्यते, क्षितेर्मृत्तिका जायते । ततो घट इति । **एवमविभागः** प्रातिलोम्येन प्रलयो दृश्यते । घटस्य—मृत्तिकायां लयः । तस्याः—क्षितौ । क्षितेः—अप्सु । अपां—तेजसि—इत्येतौ विभागाविभागौ **वैश्वरूप्यस्य** विचित्रस्य भावजातस्य दृश्यमानौ पृथक्पक्षीकृतौ, क्वचित् कारणे विश्रान्तौ, विभागत्वाद्, अविभागत्वाच्च, मृदि घटविभागाविभागवदित्यर्थः । सिद्धान्तयति—**तत्र वदाम इति** ॥ **किमनुमानैरचेतनप्रकृतिकत्वं जगतः**

भामती ।

मोहो विषादः, तत् कस्य हेतोः, तं प्रत्यस्यास्तमोगुणसमुद्भवात् । पद्मावत्या च सर्वे भावा व्याख्याताः । तस्मात्सर्वं सुखदुःखमोहान्वितं जगत्तत्कारणं गम्यते । तच्च त्रिगुणं प्रधानं प्रधीयते क्रियतेऽनेन जगदिति, प्रधीयते निधीयतेऽस्मिन्प्रलयसमये जगदिति वा प्रधानम् । तच्च मृत्सुवर्णवदचेतनं चेतनस्य पुरुषस्य भोगापवर्गलक्षणमर्थं साधयितुं स्वभावत एव प्रवर्तते, न तु केनचित्प्रवर्त्यते । तथा ह्याहुः—'पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम्' इति । परिमाणादिभिरित्यादिग्रहणेन 'शक्तितः प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य' इत्यव्यक्तसिद्धिहेतवो गृह्यन्ते । एतांश्चोपरिष्टाद्व्याख्याय निराकरिष्यत इति । तदेतत्प्रधानानुमानं दूषयति—**तत्र वदाम इति**।यदि तावदचेतनं प्रधानमनधिष्ठितं चेतनेन प्रवर्तते स्वभावत एवेति साध्यते, तदयुक्तं, समन्वयादेर्हेतोश्चेतनानधिष्ठितत्वविरुद्धचेतनाधिष्ठितत्वेन मृत्सुवर्णादौ दृष्टान्त-

आनन्दगिरीय–न्यायनिर्णयः ।

"प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति न्यायादित्याशंक्याऽऽह—**स्वभावेनेति** । विचित्रो विविधो महदहंकारादिविकारस्तद्रूपेणेति यावत् 'भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य' इत्यव्यक्तसिद्धिहेतुषु परोक्तेषु समन्वयाख्यं हेतुमुपसंहर्तुमितिशब्दः । हेत्वन्तराण्यवतारयति—**तथेति** । भिद्यन्त इति भेदा विकारास्तेषां परिमाणमियत्ता ततो लिङ्गात्तदेव प्रधानमनुमिमते । विमतमविभक्तैकवस्तुप्रकृतिकं परिमितत्वाद् घटादिवत् । प्रवृत्तिशक्तिमत्त्वादपि तदेव प्रधानमनुमिन्वन्ति विमतं जडप्रकृतिकं सादित्वे सति प्रवृत्तिशक्तिमत्त्वाद्रथादिवत् । सादित्वात्प्रकृतिमात्रसिद्धौ तद्विशेषसिद्ध्यर्थं विशेषणम् । कारणकार्यविभागादपि लिङ्गात्तदेव निश्चिन्वन्ति । यत उत्पद्यते तत्कारणं यच्चोत्पद्यते तत्कार्यमित्येतयोर्लोकप्रसिद्धयोर्विभागः स च समयोरेव दृष्टः । तथा च जगत्प्रकृती तुल्यस्वभावे प्रकृतिविकारसंबन्धसंबन्धित्वान्मृद्घटवत् । वैश्वरूप्यं विचित्रनानारूपत्वं तस्याविभागादविभक्तजडवस्तुप्रकृतिगमकत्वादपि तदेवाध्यवस्यन्ति । विमतमेकजडवस्तुप्रकृतिकं विचित्ररचनात्मकत्वादेकबीजप्रसूतांकुरपुष्पफलादिवदित्यर्थः । समन्वयस्य सांख्ययुक्तिविरोधादसंभवे प्राप्ते सिद्धान्तयति—**तत्रेति** । यत्त्वनुमानैरचेतनप्रकृतिकं जगदिति तत्राचेतनप्रकृतिकत्वमात्रं जगतः साध्यं स्वतन्त्राचेतनप्रकृतिकत्वं वा । प्रथमे सिद्धसाधनमीश्वराधिष्ठितत्रि-

यदि दृष्टान्तबलेनैवैतन्निरूप्येत–नाचेतनं लोके चेतनानधिष्ठितं स्वतन्त्रं किञ्चिद्विशिष्टपुरुषार्थनिर्वर्तनसमर्थान्विकारान्विरचयद्दृष्टम्। गेहप्रासादशयनासनविहारभूम्यादयो हि लोके प्रज्ञावद्भिः शिल्पिभिर्यथाकालं सुखदुःखप्राप्तिपरिहारयोग्या रचिता दृश्यन्ते, तथेदं जगदखिलं पृथिव्यादि नानाकर्मफलोपभोगयोग्यं बाह्यमाध्यात्मिकं च शरीरादि नानाजात्यन्वितं प्रतिनियतावयवविन्यासमनेककर्मफलानुभवाधिष्ठानं दृश्यमानं प्रज्ञावद्भिस्सम्भावितमैश्शिल्पिभिर्मनसाप्यालोचयितुमशक्यं सत्कथमचेतनं प्रधानं रचयेत् ॥ लोष्टपाषाणादिष्वदृष्टत्वात् ॥ मृदादिष्वपि कुम्भकाराद्यधिष्ठितेषु विशिष्टाकारा रचना दृश्यते। तद्व-

रत्नप्रभा।

साध्यते, स्वतन्त्राचेतनप्रकृतिकत्वं वा। आद्ये सिद्धसाधनता। अस्माभिरनादित्रिगुणमायाङ्गीकारात्। द्वितीये घटादिदृष्टान्ते साध्याप्रसिद्धिरित्याह–**यदीति** ॥ स्वतन्त्रमचेतनं प्रकृतिरिति **एतद् दृष्टान्तबलेन तदा** निरूप्येत, **यदि** दृष्टान्तः क्वचित् स्यात्, न तु दृष्टः क्वचिदित्यन्वयः। स्वतन्त्रपदार्थमाह–**चेतनानधिष्ठितमिति** ॥ परकीयस्य साध्यस्याप्रसिद्धिमुक्त्वा सत्प्रतिपक्षं वक्तुं–यद्विचित्ररचनात्मकं कार्यं, तच्चेतनाधिष्ठिता चेतनप्रकृतिकमिति व्याप्तिमाह–**गेहेति** ॥ इदं जगत्, चेतनाधिष्ठिताचेतनप्रकृतिकं, कार्यत्वाद्, गेहवदिति **प्रयोगः**। विपक्षे विचित्ररचनानुपपत्तिरूपं सूत्रोक्तं बाधकतर्कं वक्तुं जगतो वैचित्र्यमाऽऽह–**तथेति** ॥ **बाह्यं** पृथिव्यादि भोग्यम्। आध्यात्मिकं, शरीरादि च, भोगाधिष्ठानमिति विभागः। प्रतिनियतोऽसाधारणोऽवयवानां विन्यासो रचना यस्य तदित्यर्थः। इत्थं विचित्रं जगत्, चेतनानधिष्ठिता जडप्रकृतिः, कथं रचयेत्। न कथमपीत्यर्थः। **यच्चेतनानधिष्ठितमचेतनं, तन्न** कार्यकारीति व्याप्तिमुक्ततर्कमूलभूतामाह–**लोष्टेति** ॥ चेतनाप्रेरितेषु लोष्टादिषु कार्यकारित्वादर्शनादित्यर्थः। **किञ्च** अनादिजडप्रकृतिः, चेतनाधिष्ठिता, परिणामित्वात्, मृदादिवदित्याह–**मृदिति** ॥

भामती।

धर्मिणि व्याप्तेरुपलब्धेर्विरुद्धत्वात्। न हि मृत्सुवर्णदार्वादयः कुलालहेमकाररथकारादिभिरधिष्ठिताः कुम्भ-

आनन्दगिरीय–न्यायनिर्णयः।

गुणात्मकमायाया जगत्प्रकृतिकत्वावगमात्। द्वितीये विरुद्धता सत्प्रतिपक्षसाधनता चेति मत्वाऽऽह–**यदीति**। स्वतन्त्रमचेतनं जगदुपादानमेतदित्युक्तम्। दृष्टान्तस्य साध्यविकलतामभिसंधायोक्तम्–**नाचेतनमिति**। स्वातन्त्र्यमेव व्याचष्टे–**चेतनेति**। यादृच्छिकवायुजलादिभूतान्तरसंपर्काधीनतया कार्यमात्रोत्पत्तावपि जलाहरणादिसमर्थघटादिकार्यजनकत्वं चेतनानधिष्ठितस्य मृदादेर्नास्तीति मन्वानो विशिनष्टि–**विशिष्टेति**। अधुना विरुद्धतां सप्रतिसाधनतां च दर्शयन्व्याप्तिमाह–**गेहेति**। यद्धि विचित्रं कार्यं तन्न स्वतन्त्राचेतनप्रकृतिकं यथा गृहप्रासादादीत्यर्थः। विचित्रकार्यत्वस्य पक्षधर्मतामादर्शयति–**तथेति**। जगद् द्विविधं बाह्यमाध्यात्मिकं च, बाह्यं पृथिव्यादि तद्विशिनष्टि–**नानेति**। नानाविधं कर्म शुभाशुभं व्यामिश्ररूपमस्य फलं सुखं दुःखं च तदुपभोगयोग्यं साधनमित्यर्थः। आध्यात्मिकं देहादिजगद्विशिनष्टि–**नानेत्यादिना**। देवतिर्यङ्मनुष्यत्वाद्या नानाविधा जातयस्ताभिरन्वितं तासामधिष्ठानमित्यर्थः। तस्य चेतनकृतत्वसंभावनार्थमाह–**प्रतिनियतेति**। प्रतिनियतावयवविन्यासा यत्र देहादौ तत्तथोक्तम्। देहाद्याश्रयस्यैवाऽऽत्मनः सुखाद्यनुभवात्तदधिष्ठानत्वं देहादेरौपचारिकमिति मत्वोक्तम्–**अनेककर्मेति**। विशिष्टरचनात्मकतां जगतो दर्शयति–**प्रज्ञावद्भिरिति**। तेन क्षेत्रज्ञानधिष्ठितप्रधानकार्यत्वं जगतोऽर्थादपास्तम्। विमतं न स्वतन्त्राचेतनकार्यं विचित्रकार्यत्वाद्विशिष्टरचनात्मकत्वाद्वा विशिष्टशिल्पिनिर्मितप्रासादादिवदित्यनुमानमाह–**कथमिति**। किंच, न प्रधानं जगत्कारणं केवलाचेतनत्वाल्लोष्टवदित्याह–**लोष्टेति**। किंच, विमतं विशिष्टचेतनाधिष्ठितमेव स्वकार्यकरमचेतनत्वान्मृदादिवदित्याह–**मृदादिष्वपीति**। ननु दृष्टा-

प्रधानस्यापि चेतनाधिष्ठितत्वप्रसङ्गः ॥ न च मृदाद्युपादानस्वरूपव्यपाश्रयेणैव धर्मेण मूलकारणमवधारणीयं, न बाह्यकुम्भकारादिव्यपाश्रयेणेति किंचिन्नियामकमस्ति ॥ न चैवं सति किञ्चिद्विरुध्यते । प्रत्युत श्रुतिरनुगृह्यते । चेतनकारणसमर्पणात् ॥ अतो रचनानुपपत्तेश्च हेतोर्नाचेतनं जगत्कारणमनुमातव्यं भवति ॥ अन्वयाद्यनुपपत्तेश्चेति च-शब्देन

रत्नप्रभा ।

ननु मृदादिदृष्टान्ते द्वयमप्यस्ति अचेतनत्वं चेतनाधिष्ठितत्वं चेति । तत्र परिणामित्वहेतोरचेतनत्वमेव व्यापकम् । मृदादिस्वरूपत्वेनान्तरङ्गत्वात् । न तु चेतनाधिष्ठितत्वं व्यापकम् । तस्य मृदादिबाह्यकुलालादिसापेक्षत्वेन बहिरंगत्वात् । तथा च परिणामित्वेऽपि मूलप्रकृतेरचेतनत्वधर्मेणैव योगो, न चेतनाधिष्ठितत्वेनेत्याशंक्य निषेधति—न चेति ॥ महानसदृष्टान्तेऽन्तरङ्गस्यापि महानसस्वरूपस्य धूमव्यापकत्वं नास्ति, तद्भिन्नस्य बहिरङ्गस्यापि वह्नेस्तदस्तीति, अन्तरङ्गत्वं व्यापकत्वे प्रयोजकं न भवतीति भावः । किञ्च यदचेतनं, तच्चेतनाधिष्ठितमेव परिणमते इत्यङ्गीकारे बाधकाभावात्, प्रत्युत श्रुत्यनुग्रहाच्च तथांगीकार्यमित्याह—न चैवं सतीति । सुखदुःखमोहान्वयादिति हेतोरसिद्धिद्योतनार्थः सूत्रे चकार इत्याह—अन्वयाद्यनुपपत्तेश्चेति ॥ नानुमानं युक्तमित्यर्थः ।

भामती ।

रुचकरथाद्युपाददते । तस्मात् कृतकत्वमिव नित्यत्वसाधनाय प्रयुक्तं साध्यविरुद्धेन व्याप्तं विरुद्धम्, एवं समन्वयादि चेतनानधिष्ठितत्वे साध्य इति रचनानुपपत्तेरिति दर्शितम् । यद्युच्येत दृष्टान्तधर्मिण्यचेतनं तावदुपादानं दृष्टं,तत्र यद्यपि तच्चेतनप्रयुक्तमपि दृश्यते, तथापि तत्प्रयुक्तत्वं हेतोरप्रयोजकं बहिरङ्गत्वात्, अन्तरङ्गं विचैतन्यमात्रमुपादानानुगतं हेतोः प्रयोजकम् । यथाहुः—'व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः प्रयोजकः' इति । तत्राह—न च मृदादीति । स्वभावप्रतिबद्धं हि व्याप्यं व्यापकमवगमयति । स च स्वभावप्रतिबन्धः शंकितसमारोपितोपाधिनिरासे सति निश्चीयते । तन्निश्चयश्चान्वयव्यतिरेकयोरायतते । तौ चान्वयव्यतिरेकौ न तथोपादानाचैतन्ये यथा चेतनप्रयुक्तत्वेऽतिपरिस्फुटौ । तदलमत्रान्तरङ्गत्वेनेति भावः । एवमपि चेतनप्रयुक्तत्वं नाभ्युपेयेत यदि प्रमाणान्तरविरोधो भवेत्, प्रत्युत श्रुतिरनुगुणतरात्रेत्याह—न चैवं सतीति । चकारेण सुखदुःखादिसमन्वयलक्षणस्य हेतोरसिद्धत्वं समुच्चिनोतीत्याह—अन्वयाद्यनुपपत्तेश्चेति । आन्तराः खल्वमी सुखदुःखमोहविषादा बाह्येभ्यश्चन्दनादिभ्योऽतिविच्छिन्नप्रत्ययप्रवेदनीयेभ्यो व्यतिरिक्ता अध्यक्षमीक्ष्यन्ते । यदि पुनरेते एव सुखदुःखादिस्वभावा भवेयुस्ततः स्वरूपत्वाद्धेमन्तेऽपि चन्दनः

आनन्दगिरीय–न्यायनिर्णयः ।

न्तधर्मिण्यचेतनं तावदुपादानं दृष्टं तत्र चेतनप्रयुक्तत्वे दृष्टेऽपि तत्प्रयुक्तत्वं बहिरङ्गत्वादप्रयोजकमचेतनत्वमात्रमुपादानगतमन्तरङ्गत्वात्प्रयोजकम् । तथा च यथा निषिद्धत्वप्रयुक्ता व्याप्तिरधर्मत्वस्य हिंसात्वेऽध्यस्यते तथा विशिष्टरचनात्मकत्वादावेकत्रसाधने प्रकृतिगताचेतनत्वचेतनाधिष्ठितत्वसाध्यद्वयवत्यन्तरङ्गाचेतनत्वप्रयुक्ता हेतुसाध्ययोर्व्याप्तिर्बहिरङ्गचेतनाधिष्ठितत्वेऽध्यस्तेति कुतो जगतश्चेतनाधिष्ठिताचेतनप्रकृतिकत्वमत आह—न चेति । नान्तरङ्गत्वबहिरङ्गत्वकृते व्यापकत्वाव्यापकत्वे किंत्वव्यभिचारव्यभिचारकृते । महानसादिस्वरूपस्यान्तरङ्गस्यापि व्यभिचाराद्धूमवत्त्वं प्रत्यव्यापकत्वाद्बहिरङ्गस्यापि वह्निसंयोगस्याव्यभिचाराद्व्यापकत्वादिति भावः । किंच, मृदादिगतचेतनप्रयुक्तत्वस्य जगत्प्रकृतावनुपगमो मानान्तरविरोधाद्वा तदनुग्रहाभावाद्वेति विकल्प्याऽऽद्यं दूषयति—न चैवमिति । मृदादिलौकिकप्रकृतिषु दृष्टचेतनप्रयुक्तत्वस्य जगत्प्रकृतावभ्युपगमे सतीति यावत् । द्वितीयं प्रत्याह—प्रत्युतेति । सप्रतिसाधनत्वादिफलमुपसंहरति—अत इति । पादस्याऽऽद्ये सूत्रे हेत्वन्तरानुक्तिपरे चशब्दानुपपत्तिरित्याशंक्याऽऽह—अन्वयादिति ।

**हेतोरसिद्धिं समुच्चिनोति । न हि बाह्याध्यात्मिकानां भेदानां सुखदुःखमोहात्मकतयाऽन्वय उपपद्यते । सुखादीनामन्तरत्वप्रतीतेः, शब्दादीनां चातद्रूपत्वप्रतीतेः, तन्निमित्तत्वप्रतीतेश्च ॥ शब्दाद्यविशेषेऽपि च भावनाविशेषात्सुखादिविशेषोपलब्धेः ॥ तथा परिमितानां भेदानां मूला-**

रत्नप्रभा ।

**आदिशब्दः** परिमाणादिग्रहार्थः । शब्दादीनां बाह्यत्वानुभवादान्तरसुखाद्यात्मकत्वमसिद्धम् । तन्निमित्तत्वाच्च । **न हि** निमित्तनैमित्तकयोरभेदेन योगोऽस्ति । दण्डघटयोरदर्शनादित्यर्थः । **किञ्च** यदि घटे मृद्वत् सुखादिकं शब्दादावन्वितं स्यात्, तर्हि सर्वैरविशेषेण सुखादिकमुपलभ्येत । घटे मृद्वत्त तथोपलब्धिरस्तीति योग्यानुपलब्ध्या हेत्वभावनिश्चय इत्याह—**शब्दादीति** ॥ विषयस्यैकत्वेऽपि पुरुषवासनावैचित्र्यात् कस्यचित्सुखबुद्धिः, कस्यचिद्दुःखबुद्धिः, कस्यचिन्मोहबुद्धिर्दृश्यते । अतो विषयाः सुखाद्यात्मका न भवन्तीत्यर्थः । एवं समन्वयादितिहेतुं दूषयित्वा परिमाणादिहेतून् दूषयति—**तथेति** ॥ बुद्ध्यादीनां परिमितत्वेन संसर्गपूर्वकत्वसिद्धौ संसृष्टान्यनेकानि सत्त्वरजस्तमांसि सिध्यन्ति । एकस्मिन् संसर्गासम्भवात् न ब्रह्मसिद्धिरिति सांख्यस्य भावः । **किमिदं** परिमितत्वम् । न तावद्देशतः परिच्छेदः । पक्षान्तर्गताकाशे तस्याभावेन भागासिद्धेः । **नापि** कालतः परिच्छेदः । सांख्यैः कालस्यानंगीका-

भामती ।

सुखः स्यात् । न हि चन्दनः कदाचिदचन्दनः । तथा निदाघेष्वपि कुंकुमपङ्कः सुखो भवेत् । न ह्यसौ कदाचिदकुंकुमपङ्क इति । एवं कण्टकः क्रमेलकस्य सुख इति मनुष्यादीनामपि प्राणभृतां सुखः स्यात् । न ह्यसौ कांश्चित्प्रत्येव कण्टक इति । तस्मादसुखादिस्वभावा अपि चन्दनकुंकुमादयो जातिकालावस्थाद्यपेक्षया सुखदुःखादिहेतवो न तु स्वयं सुखादिस्वभावा इति रमणीयम् । तस्मात्सुखादिरूपसमन्वयो भावानामसिद्ध इति नानेन तद्रूपं कारणमव्यक्तमुन्नीयत इति । तदिदमुक्तम्—**शब्दाद्यविशेषेऽपि च भावनाविशेषादिति** । भावना वासना संस्कारस्तद्विशेषात् । करभजन्मसंवर्तकं हि कर्म करभोचितामेव भावनामभिव्यनक्ति, यथास्मै कण्टका एव रोचन्ते । एवमन्यत्रापि द्रष्टव्यम् । परिमाणादिति सांख्यीयं हेतुमुपन्यस्यति—**तथा परिमितानां भेदानामिति** । संसर्गपूर्वकत्वे हि संसर्गस्यैकस्मिन्नद्वयेऽसंभवान्नानात्वैकार्थसमवेतस्य नानाकारणानि संसृष्टानि कल्पनीयानि, तानि च सत्त्वरजस्तमांस्येवेति भावः । तदेतत्परिमि-

आनन्दगिरीय—न्यायनिर्णयः ।

नाचेतनं जगत्कारणमनुमातव्यमिति पूर्वेण हेत्वन्तरं संबध्यते । ननु सर्वस्यापि कार्यस्य यथायथं सुखादिव्यञ्जकत्वेन तदन्वितत्वानुभवात्कथमन्वयानुपपत्तिस्तत्राऽऽह—**न हीति** । प्रत्यक्षविरुद्धतया कालात्ययापदिष्टत्वाच्चायुक्तः समन्वयहेतुरित्याह—**सुखादीनामिति** । किंच, शब्दादयो न सुखाद्यात्मानस्तन्निमित्तत्वाद्यन्निमित्तं न तत्तदात्मकं यथा कुलालादि कुम्भादिनिमित्तं न तदात्मकमिति प्रत्यनुमानमाह—**तन्निमित्तत्वेति** । किंच, शब्दाद्युपलभमानानां प्रत्येकमपर्यायेण सुखदुःखमोहप्रतीत्यभावाद्योग्यानुपलब्धिविरुद्धमनुमानमित्याह—**शब्दादीति** । भावना तत्तज्जातियोग्या वासना तद्विशेषादुष्ट्रादीनां कण्टकादौ सुखादिदर्शनात्स्वतः सुखादिरूपताभावाद्रूपादीनां सामान्यादीनां च द्रव्येष्वनुगतानामतदुपादानत्वादनैकान्तिकश्च समन्वयस्तस्मादनुपपत्तिः सिद्धेत्यर्थः । आदिशब्दोपात्तां परिमितत्वानुपपत्तिं कथयति—**तथेति** । तस्याः स्फुटीकरणार्थं परोक्तमनुमानमनुवदति—**परिमितानामिति** । अविभक्तमेकमनुगतं वस्तु संसर्गशब्देन लक्ष्यते । देशतो वा कालतो वा वस्तुतो वा परिमितत्वम् । आद्ये भागासिद्धिराकाशादिष्वभावात् । द्वितीये स्वरूपासिद्धिः पञ्चविंशतितत्त्वातिरिक्तकालानभ्युपगमात् । न च कारणमेव केनचिदुपाधिना कालशब्दवाच्यं तथा सति परिमितत्वस्य तद्व्याप्यत्वस्य पुरुषेष्वनैकान्तिकत्वादित्यभिप्रेत्य तृतीयं

ङ्कुरादीनां संसर्गपूर्वकत्वं दृष्ट्वा बाह्याध्यात्मिकानां भेदानां परिमितत्वात्संसर्गपूर्वकत्वमनुमिमानस्य सत्त्वरजस्तमसामपि संसर्गपूर्वकत्वप्रसङ्गः परिमितत्वाविशेषात् ॥ कार्यकारणभावस्तु प्रेक्षापूर्वनिर्मितानां शयनासनादीनां दृष्ट इति न कार्यकारणभावाद्बाह्याध्यात्मिकानां भेदानामचेतनपूर्वकत्वं शक्यं कल्पयितुम् ॥ १ ॥

## प्रवृत्तेश्च ॥ २ ॥

आस्तां तावदियं रचना । तत्सिद्ध्यर्था या प्रवृत्तिः साम्यावस्थानात्-

रत्नप्रभा ।

रात् । अविद्यागुणसंसर्गेण सिद्धसाधनाच्च । नापि वस्तुतः परिच्छेदः । सत्त्वादीनां परस्परं भिन्नत्वे सत्यपि साध्याभावेन व्यभिचारादित्याह—**सत्त्वेति** ॥ यदुक्तं कार्यकारणविभागो यत्र समाप्यते, तत्प्रधानमिति । तन्न, ब्रह्मणि मायायां वा समाप्तिसम्भवात् । न च यः कार्यस्य विभागः स चेतनानधिष्ठिताऽचेतने समाप्त इति व्याप्तिरस्ति सर्वत्राचेतनेषु चेतनाधिष्ठानदर्शनादित्याह—**कार्येति** ॥ **एतेनाविभागोऽपि व्याख्यातः** । यत्तु यत्परिमितं, तदव्यक्तप्रकृतिपूर्वकमिति व्याप्त्यन्तरं, तस्यापि गुणेष्वनादिषु परिमितेषु व्यभिचारः।**एतेन** सदृशयोरेव प्रकृतिविकाराभावादचेतनविकाराणामचेतनमेव प्रकृतिरिति **निरस्तम्**।चेतनाधिष्ठिताऽचेतनप्रकृतिकत्वेऽपि सादृश्योपपत्तेः।"नविलक्षणात्वाद्"[ व्या.सू. २।१।४] इत्यत्र सादृश्यनियमस्य निरस्तत्वाच्च । एवं चेतनाधीनकारणशक्तितः कार्यप्रवृत्तिसम्भवाच्छक्तितः प्रवृत्तिलिङ्गमन्यथासिद्धमिति भावः ॥ १ ॥ स्वतन्त्रमचेतनं कारणत्वेन नानुमातव्यम् । तस्य सृष्ट्यर्थं प्रवृत्तेरनुपपत्तेरिति चकारेणानुपपत्तिपदमनुषज्य सूत्रं योजनीयम् । रचनाप्रवृत्त्योः को भेद इत्याशङ्क्य प्रवृत्तिस्वरूपमाह—**साम्येति** । गुणानां किल साम्यावस्था तत्त्वानां प्रलयः । तदा न किञ्चित् कार्यं भवति ।

भामती ।

तत्वं सांख्यीयराद्धान्तालोचनेनानैकान्तिकमिति दूषयति—**सत्त्वरजस्तमसामिति** । यदि तावत्परिमितत्वमियत्ता, सा नभसोऽपि नास्तीत्यव्यापको हेतुः परिमाणादिति । अथ न योजनादिमितत्वं परिमाणमियत्ता नभसो ब्रूमः किं त्वव्यापिताम्, अव्यापि च नभस्तन्मात्रादेः । न हि कार्यं कारणव्यापि, किंतु कारणं कार्यव्यापीति परिमितं नभस्तन्मात्राद्यव्यापित्वात् । हन्त सत्त्वरजस्तमांस्यपि न परस्परं व्याप्नुवन्ति, न च तत्त्वान्तरपूर्वकत्वमेतेषामिति व्यभिचारः । न हि यथा तैः कार्यजातमाविष्टमेवं तानि परस्परं विशन्ति मिथः कार्यकारणभावाभावात् । परस्परसंसर्गस्त्वावेशश्चितिशक्तौ नास्ति । न हि चितिशक्तिः कूटस्थनित्या तैः संसृज्यते, ततश्च तदव्यापका गुणा इति परिमिताः । एवं चितिशक्तिरपि गुणैरसंसृष्टेति सापि परिमितत्यनैकान्तिकत्वं परिमितत्वस्य हेतोरिति । तथा कार्यकारणविभागोऽपि समन्वयवद्विरुद्ध इत्याह—**कार्यकारणभावस्त्विति** ॥ १ ॥ **प्रवृत्तेश्च** । न केवलं रचनाभेदा न चेतनाधिष्ठानमन्तरेण भवन्त्यपि तु साम्यावस्थायाः प्रच्युतिर्वैषम्यं, तथा च यदुद्भूतं बलीयस्तदङ्गयभिभूतं च तदनुगुणतया स्थितमङ्गम्, एवं हि

आनन्दगिरीय-न्यायनिर्णयः ।

प्रत्याह—**सत्त्वेति** । संसर्गपूर्वकत्वप्रसङ्ग इति गुणानां संसृष्टानेकवस्तुप्रकृतिकत्वप्रसक्तिरित्यर्थः । प्रकृतिविकारतुल्यस्वभावानुमानस्य प्रत्यनुमानविरोधमाह—**कार्येति** । विमतं न केवलाचेतनपूर्वकं कार्यत्वात्संप्रतिपन्नवदित्यर्थः ॥ १ ॥ यत्तु 'शक्तितः प्रवृत्तेश्च' इति तत्राऽऽह—**प्रवृत्तेश्चेति** । प्रवृत्तेश्चानुपपत्तेर्नाऽऽनुमानिकं कारणमिति योजना । यद्यपि स्वतन्त्रस्य कारणस्य प्रवृत्तिरत्र निरस्यते तथाऽपि तुल्यन्यायतया कार्यस्यापि सा निरस्तैव भवतीति 'शक्तितः प्रवृत्तेश्च' इत्यस्य हेतोर्विरुद्धतोपदर्शनमिदमित्याशयवानाह—**आस्तामिति** । का सा रचनार्था प्रवृत्तिर्यस्याः संप्रत्यनुपपत्तिरुपन्यस्यते तामाह—**साम्येति** । नन्वेवं

**प्रच्युतिस्सत्त्वरजस्तमसामङ्गाङ्गिभावरूपापत्तिर्विशिष्टकार्यस्याभिमुखप्रवृत्तता, सापि नाचेतनस्य प्रधानस्य स्वतन्त्रस्योपपद्यते ॥ मृदादिष्वदर्शनाद्रथादिषु च ॥ न हि मृदादयो रथादयो वा स्वयमचेतनास्सन्तश्चेतनैः कुलालादिभिरश्वादिभिर्वानधिष्ठिता विशिष्टकार्याभिमुखप्रवृत्तयो दृश्यन्ते ॥ दृष्टाच्चादृष्टसिद्धिः ॥ अतः प्रवृत्त्यनुपपत्तेरपि हेतोर्नाचेतनं जगत्कारणमनुमातव्यं भवति ॥ ननु चेतनस्यापि प्रवृत्तिः केवलस्य न दृष्टा ॥ सत्यमेतत् ॥**

रत्नप्रभा ।

प्रलयाभावप्रसङ्गात् । किन्त्वादौ साम्यच्युतिरूपं वैषम्यं भवति । ततः कस्यचिद्गुणस्याङ्गित्वमुद्भूतत्वेन प्राधान्यं, कस्यचिदङ्गत्वं शेषत्वमित्यङ्गाङ्गिभावो भवति । तस्मिन्सति महदादिकार्योत्पादनात्मिका प्रवृत्तिः । तया विविधकार्यविन्यासो रचनेति भेद इत्यर्थः । गुणानां प्रवृत्तिः—चेतनाधिष्ठानपूर्विका—प्रवृत्तित्वाद्रथादिप्रवृत्तिवदित्याह—**सापीति** । विपक्षे स्वतन्त्रे प्रवृत्त्यनुपपत्तिरित्यर्थः । **केचित्तु** भेदानां प्रवृत्तिशक्तिमत्त्वाच्चेतनानधिष्ठिताऽचेतनप्रकृतिकत्वमिति शक्तितः प्रवृत्तिरिति लिङ्गं **व्याचक्षते** । अस्यापि गुणेषु व्यभिचारः, कार्यत्वविशेषणे च विरुद्धता, प्रवृत्तिशक्तित्वे सति कार्यत्वस्य घटादिषु चेतनाधिष्ठितप्रकृतिकत्वेनोक्तसाध्यविरुद्धेन व्याप्तिदर्शनादिति "प्रवृत्तेश्च" इति सूत्रेण ज्ञापितम् । ननु लोके स्वतन्त्राचेतनानां प्रवृत्त्यदर्शनेऽपि प्रधाने सा प्रवृत्तिः सिध्यतु, तत्राह—**दृष्टाच्चेति** ॥ अनुमानशरणस्य तत्र दृष्टान्तं विनाऽतीन्द्रियार्थसिद्ध्ययोगादिति भावः । ननु प्रधानस्य प्रवृत्तिं खण्डयता चेतनस्य सृष्टौ प्रवृत्तिर्वाच्या । सा न युक्तेति सांख्यः शङ्कते—**नन्विति** । शुद्धचेतनस्य प्रवृत्त्ययोगमङ्गीकरोति—**सत्यमिति** ॥ तर्हि केवलस्याऽचेतनस्य प्रवृत्तिसिद्धिः । अन्यथा सृष्ट्ययोगात्,

भामती ।

गुणप्रधानभावे सत्यस्य महदादौ कार्ये या प्रवृत्तिः, सापि चेतनाधिष्ठानमेव गमयति । न हि चेतनाधिष्ठानमन्तरेण मृत्पिण्डे प्रधानेऽङ्गभावेन चक्रदण्डसलिलसूत्रादयोऽवतिष्ठन्ते । तस्मात्प्रवृत्तेरपि चेतनाधिष्ठानसिद्धिरिति 'शक्तितः प्रवृत्तेश्च' इत्ययमपि हेतुः सांख्यीयो विरुद्ध एवेत्युक्तं वक्रोक्त्या । अत्र सांख्यश्चोदयति—**ननु चेतनस्यापि प्रवृत्तिरिति** । अयमभिप्रायः—त्वया किलौपनिषदेनास्मद्धेतून् दूषयित्वा केवलस्य चेतनस्यैवान्यनिरपेक्षस्य जगदुपादानत्वं निमित्तत्वं च समर्थनीयम् । तदयुक्तम् । केवलस्य चेतनस्य प्रवृत्तेर्दृष्टान्तधर्मिण्यनुपलब्धेरिति । औपनिषदस्तु चेतनहेतुकां तावदेष सांख्यः प्रवृत्तिमभ्युपगच्छतु पश्चात् स्वपक्षमत एव समाधास्यामीत्यभिसंधिमानाह—**सत्यमेतत्** । न केवलस्य चेतनस्य प्रवृत्तिर्दृष्टेति । सांख्य

आनन्दगिरीय—न्यायनिर्णयः ।

रचना न पुना रचनार्थेत्याशंक्याह—**सत्त्वेति** । तस्या रचनार्थत्वं स्पष्टयति—**विशिष्टेति** । न हि साम्यावस्थायां प्रधानस्य विचित्रविकाररचनाभिमुख्येन प्रवृत्तिरवकल्पते तथा च गुणवैषम्यापत्तेर्भवति रचनार्थेत्यास्थेयमित्यर्थः । विमतं न प्रवृत्तिशक्तिमत्केवलाचेतनत्वात्संमतवदित्याह—**साऽपीति** । दृष्टान्तस्य साध्यवैकल्यमुद्धरति—**न हीति** । तेषु स्वतन्त्रेषु प्रवृत्त्यभावेऽपि प्रधाने तथाविधे सा स्यादिति व्यवस्थामाशंक्याऽऽह—**दृष्टाच्चेति** । अचेतनं मृदादि चेतनानधिष्ठितं प्रवृत्तिशक्तिशून्यं दृष्टं ततश्चादृष्टे प्रधानेऽपि स्वतन्त्रे प्रवृत्तिशक्तिराहित्यमिति कल्पनाया दृष्टानुसारित्वादित्यर्थः । अनुमानफलं निगमयति—**अत इति** । समन्वयाद्यनुपपत्तिं दृष्टान्तयितुमपिशब्दः । अचेतनस्य प्रवृत्तिं प्रतिषेधता केवलचेतनस्य वा तस्यैवाचेतनसंयुक्तस्य वा प्रवृत्तिर्विवक्षितेति विकल्प्याऽऽद्यं दूषयन्नाशङ्कते—**नन्विति** । केवलस्य चेतनस्य प्रवृत्तिरदृष्टेत्येतदङ्गीकरोति—**सत्यमिति** । तर्हि केवलस्याचेतनस्यैव प्रवृत्तिः स्यादित्याशंक्याऽऽह—

तथापि चेतनसंयुक्तस्य रथादेरचेतनस्य प्रवृत्तिर्दृष्टा, न त्वचेतनसंयुक्तस्य चेतनस्य प्रवृत्तिर्दृष्टा ॥ किं पुनरत्र युक्तं—यस्मिन्प्रवृत्तिर्दृष्टा तस्य सा, उत—यत्संयुक्तस्य दृष्टा तस्य सेति ॥ ननु यस्मिन्दृश्यते प्रवृत्तिस्तस्यैव सेति युक्तम् ॥ उभयोः प्रत्यक्षत्वात् ॥ न तु प्रवृत्त्याश्रयत्वेन केवलश्चेतनो रथादिवत्प्रत्यक्षः ॥ प्रवृत्त्याश्रयदेहादिसंयुक्तस्यैव तु चेतनस्य सद्भावसिद्धिः केवलाचेतनरथादिवैलक्षण्यं जीवद्देहस्य दृष्टमिति ॥ अत एव च प्रत्यक्षे देहे

रत्नप्रभा ।

तत्राह—तथापीति ॥ केवलस्य चेतनस्याप्रवृत्तावपि चेतनाऽचेतनयोर्मिथः सम्बन्धात् सृष्टिप्रवृत्तिरिति भावः ॥ इमं वेदान्तसिद्धान्तं सांख्यो दूषयति—न त्विति । सर्वा प्रवृत्तिरचेतनाश्रयैव दृष्टा, न त्वचेतनसम्बन्धेनापि चेतनस्य काचित्प्रवृत्तिर्दृष्टा । तस्मान्न चेतनात्सृष्टिरित्यर्थः ॥ मतद्वयं श्रुत्वा मध्यस्थः पृच्छति—किं पुनरिति ॥ यस्मिन्नचेतने रथादौ प्रवृत्तिर्दृष्टा, तस्यैव सा । न चेतनस्तत्र हेतुरिति किं सांख्यमतं साधु—उत—येन चेतनेनाश्वादिना संयोगादचेतनस्य प्रवृत्तिस्तत्प्रयुक्ता सेति वेदान्तिमतं वा साध्विति प्रश्नार्थः । सांख्य आह—नन्विति ॥ उभयोः प्रवृत्तितदाश्रययोरित्यर्थः । दृष्टाश्रयेणैव प्रवृत्तेरुपपत्तावदृष्टे चेतनप्रवृत्तिर्न कल्प्येति भावः । आत्मनोऽप्रत्यक्षत्वे कथं सिद्धिः, तत्राह—प्रवृत्तीति ॥ जीवद्देहस्य रथादिभ्यो वैलक्षण्यं प्राणादिमत्त्वं लिङ्गं दृष्टमिति कृत्वा चेतनस्य सिद्धिरित्यन्वयः । जीवद्देहः, सात्मकः, प्राणादिमत्त्वाद्, व्यतिरेकेण रथादिवदित्यात्मसिद्धिरित्यर्थः । देहप्रवृत्तिः स्वाश्रयादन्येन ज्ञानवता सह भूता, प्रवृत्तित्वाद्रथप्रवृत्तिवदित्यनुमानान्तरसूचनाय प्रवृत्त्याश्रयेत्युक्तम् । सद्भावसिद्धिरेव, न प्रवर्तकत्वमित्येवकारार्थः । अनुमितस्य सद्भावमात्रेण प्रवृत्तिहेतुत्वे सर्वत्राकाशस्यापि हेतुत्वप्रसङ्गादिति भावः । आत्मनोऽप्रत्यक्षत्वे चार्वाकाणां भ्रमोऽपि लिंगमित्याह—अत एवेति ॥ अप्रत्यक्षत्वादेवेत्यर्थः । देहान्यात्मनः प्रत्य-

भामती ।

आह—न त्वचेतनसंयुक्तस्येति । तुशब्द औपनिषदपक्षं व्यावर्तयति । अचेतनाश्रयैव सर्वा प्रवृत्तिर्दृश्यते न तु चेतनाश्रया काचिदपि । तस्मान्न चेतनस्य जगत्सर्जने प्रवृत्तिरित्यर्थः । अत्रौपनिषदो गूढाभिसंधिः प्रश्नपूर्वकं विमृशति—किं पुनरत्रेति । अत्रान्तरे सांख्यो ब्रूते—ननु यस्मिन्निति । न तावच्चे-

आनन्दगिरीय—न्यायनिर्णयः ।

तथाऽपीति । चेतनमात्रस्यादृष्टाऽपि प्रवृत्तिरुभयसंबन्धादुत्पद्यमाना किमित्यचेतनाधीना चेतनाधीनैव किं न स्यादित्यर्थः । उभयसंबन्धात्प्रवृत्त्युत्पत्तावपि चेतनस्य तदाश्रयत्वादर्शनादचेतनस्यैव तद्दर्शनात्तस्यैव प्रवृत्तिरिति मन्वानो द्वितीयं निराकुर्वन्नाशङ्कते—न त्विति । तुशब्दश्चेतनस्य जगत्सर्गे प्रवृत्तिरितिमतव्यावृत्त्यर्थः । सर्वप्रवृत्तिरचेतनाश्रयैव दृष्टा न तु चेतनाश्रया तन्न सिद्धान्तसिद्धिरित्यर्थः । तत्र प्रश्नपूर्वकं सिद्धान्ती गूढाभिसंधिर्विमृशति—किं पुनरिति । केवलस्य चेतनस्याचेतनस्य वा प्रवृत्त्यदर्शनदशायामिति सप्तम्यर्थः । यस्मिन्नित्यचेतनस्य रथादेरुक्तिः । तस्येति संयोगिनश्चेतनस्याभिधानम् । तत्र सांख्यो ब्रूते—नन्विति । युक्तत्वे हेतुमाह—उभयोरिति । प्रवृत्तितदाश्रययोरिति यावत् । आत्मनोऽपि प्रत्यक्षत्वात्प्रवृत्तितदाश्रययोस्तुल्यं प्रत्यक्षत्वं पक्षान्तरेऽपीत्याशंक्याऽऽह—न त्विति । प्रत्यक्षत्वाभावे कथमात्मसिद्धिरित्याशंक्यानुमानादित्याह—प्रवृत्तीति । अनुमानसिद्धस्य चेतनस्य न प्रवृत्त्याश्रयतेति दर्शयितुमेवकारः । कथमनुमानमित्यपेक्षायां तत्प्रकारं सूचयति—केवलेति । वैलक्षण्यं प्राणादिमत्त्वम् । इतिशब्दो यस्मादर्थे । जीवद्देहः सात्मकः प्राणादिमत्त्वान्न यः सात्मको न स प्राणादिमान्यथा रथ इत्यनुमानात्तत्सद्भावमात्रं सिध्यतीत्यर्थः । केवलचेतनो न प्रवृत्त्याश्रयतया प्रत्यक्षो भवतीत्यत्र लिङ्गमाह—अत एवेति । केवल-

सति दर्शनादसति चादर्शनाद्देहस्यैव चैतन्यमपीति लोकायतिकाः प्रतिपन्नाः॥तस्मादचेतनस्यैव प्रवृत्तिरिति॥तदभिधीयते॥न ब्रूमो यस्मिन्नचेतने प्रवृत्तिर्दृश्यते न तस्य सेति ॥ भवतु तस्यैव सा ॥ सापि चेतनाद्भवतीति ब्रूमः । तद्भावे भावात्तदभावे चाभावात् ॥ यथा काष्ठादिव्यपाश्रयापि दाहप्रकाशलक्षणा विक्रियाऽनुपलभ्यमानापि च केवले ज्वलने ज्वलनादेव भवति । तत्संयोगे दर्शनात्तद्वियोगे चादर्शनात् । तद्वत् ॥ लोकायतिकानामपि चेतन एव देहोऽचेतनानां रथादीनां प्रवर्तको दृष्ट इत्य-

---

रत्नप्रभा ।

क्षत्वे भ्रमासम्भवादिति भावः । **दर्शनात्**, प्रवृत्तिचैतन्ययोरिति शेषः । प्रवृत्तिं प्रत्याश्रयत्वमचेतनस्यैवेत्युक्तमङ्गीकृत्य चेतनस्य प्रयोजकत्वं सिद्धान्ती साधयति—**तदभिधीयत इति** ॥ रथादिप्रवृत्तावश्वादिचेतनस्यान्वयव्यतिरेकौ स्फुटौ । ताभ्यां चेतनस्य प्रवर्तकत्वं बाह्यानामपि सम्मतमित्याह—**लोकायतिकानामपीति** ॥ यः प्रवर्तकः सः, स्वयं प्रवृत्तिमानश्वादिवदिति व्याप्तेरात्मनि व्यापकाभावान्न प्रवर्तकत्व-

भामती ।

तनः प्रवृत्त्याश्रयतया तत्प्रयोजकतया वा प्रत्यक्षमीक्ष्यते, केवलं प्रवृत्तिस्तदाश्रयश्चाचेतनो देहरथादिः प्रत्यक्षेण प्रतीयते, तत्राचेतनस्य प्रवृत्तिस्तन्निमित्तैव न तु चेतननिमित्ता । सद्भावमात्रं तु तत्र चेतनस्य गम्यते रथादिवैलक्षण्याज्जीवद्देहस्य । न च सद्भावमात्रेण कारणत्वसिद्धिः मा भूदाकाश उत्पत्तिमतां घटादीनां निमित्तकारणमस्ति हि सर्वत्रेति । तदनेन देहातिरिक्ते सत्यपि चेतने तस्य न प्रवृत्तिं प्रति निमित्तभावोऽस्तीत्युक्तम् । यतश्चास्य न प्रवृत्तिहेतुभावोऽस्ति, अत एव प्रत्यक्षे देहे सति प्रवृत्तिदर्शनादसति चादर्शनाद्देहस्यैव चैतन्यमिति लौकायतिकाः प्रतिपन्नाः, तथा च न चिदात्मनिमित्ता प्रवृत्तिरिति सिद्धम् । तस्मान्न रचनायाः प्रवृत्तेर्वा चिदात्मकारणत्वसिद्धिर्जगत इति । औपनिषदः परिहरति—**तदभिधीयते । न ब्रूम इति ।** न तावत् प्रत्यक्षानुमानागमसिद्धः शारीरो वा परमात्मा वास्माभिरिदानीं साधनीयः,केवलमस्य प्रवृत्तिं प्रति कारणत्वं वक्तव्यम् । तत्र मृतशरीरे वा रथादौ वानधिष्ठिते चेतनेन प्रवृत्तेरदर्शनात् । तद्विपर्यये च प्रवृत्तिदर्शनादन्वयव्यतिरेकाभ्यां चेतनहेतुकत्वं प्रवृत्तेर्निश्चीयते, न तु चेतनसद्भावमात्रेण, येनातिप्रसङ्गो भवेत् । भूतचैतनिकानामपि चेतनाधिष्ठानादचेतनानां प्रवृत्तिरित्यत्राविवाद इत्याह—**लौकायतिकानामपीति ।** स्यादेतत् । देहः स्वयं चेतनः करचरणादिमान् स्वव्यापारेण प्रवर्तयतीति युक्तं, न तु तदतिरिक्तः कूटस्थ-

आनन्दगिरीय-न्यायनिर्णयः ।

श्चेतनो यतो न प्रत्यक्षी भवत्यत एव लोकायतानां विवादोऽन्यथा व्यतिरिक्तात्मनि विवादो न स्यादित्यर्थः । दर्शनात्प्रवृत्तेश्चैतन्यस्य चेत्यध्याहारः । चेतनाश्रयप्रवृत्तिरप्रत्यक्षा प्रत्यक्षा त्वचेतनाश्रयेति स्थिते फलितमाह—**तस्मादिति** । अचेतनस्य प्रवृत्तिमत्त्वमुपेत्य चेतनस्य तत्र प्रयोजकत्वमेष्टव्यमिति परिहरति—**तदभिधीयत इति ।** किमचेतनस्य प्रवृत्त्याश्रयत्वमेव साध्यते किं वा प्रवृत्तेश्चेतनानपेक्षत्वमपीति विकल्प्याऽऽद्यमङ्गीकरोति—**नेत्यादिना** । द्वितीयं प्रत्याह—**सा त्विति** । प्रवृत्तेश्चेतनकृतत्वेऽन्वयव्यतिरेकौ प्रमाणयति—**तद्भाव इति** । न च रथादौ प्राणाद्यभावेऽपि प्रवृत्त्यभावासंभवाद्व्यतिरेकासिद्धिः । प्राणादेरपि रथादिवदचेतनत्वाच्चेतनाधीनप्रवृत्तिकत्वानुमानात्प्राणादीनां च प्राणाद्यन्तराभावेऽपि प्रवृत्तिदर्शनादिति भावः । अन्यगताऽपि प्रवृत्तिरन्याधीनेत्यत्र दृष्टान्तमाह—**यथेति** । तत्राप्यन्वयव्यतिरेकौ दर्शयति—**तत्संयोग इति** । तथोक्ताभ्यामन्वयव्यतिरेकाभ्यामचेतने दृष्टाऽपि प्रवृत्तिश्चेतने संभवतीति चेतनकृतैवेत्याह—**तद्वदिति** । लोकयतमते चेतनस्यैवानुपगमात्कथमन्वयादिना तस्य प्रवृत्तौ प्रयोजकत्वमित्याशङ्क्याऽऽह—**लोकायतिकानामिति** । अचेतनस्य प्रवृत्तिमत्त्वेऽपि प्रवृत्तेश्चेतनाधीनत्वमावश्यकमिति सिद्धान्तिना स्वाभिसंधिरुक्तः । संप्रति प्रवृत्तिमतामेव राजप्रभृतीनां प्रवर्तकत्वोपलम्भादात्मनस्तदभावान्न

**विप्रतिषिद्धं चेतनस्य प्रवर्तकत्वम् ॥ ननु तव देहादिसंयुक्तस्याप्यात्मनो विज्ञानस्वरूपमात्रव्यतिरेकेण प्रवृत्त्यनुपपत्तेरनुपपन्नं प्रवर्तकत्वमिति चेत् ॥ न ॥ अयस्कान्तवद्रूपादिवच्च प्रवृत्तिरहितस्यापि प्रवर्तकत्वोपपत्तेः ॥ यथाऽयस्कान्तो मणिः स्वयं प्रवृत्तिरहितोऽप्ययसः प्रवर्तको भवति, यथा वा रूपादयो विषयास्स्वयं प्रवृत्तिरहिता अपि चक्षुरादीनां प्रवर्तका भवन्ति, एवं प्रवृत्तिरहितोऽपीश्वरस्सर्वगतस्सर्वात्मा सर्वज्ञस्सर्वशक्तिश्च सन्सर्वं प्रवर्तयेदित्युपपन्नम् ॥ एकत्वात्प्रवर्त्याभावे प्रवर्तकत्वानुपपत्तिरिति चेत् ॥ न ॥ अविद्याप्रत्युपस्थापितनामरूपमायावेशवशेनाऽसकृत्प्रत्युक्तत्वात् ॥ तस्मात्सम्भवति प्रवृत्तिस्सर्वज्ञकारणत्वे, न त्वचेतनकारणत्वे ॥ २ ॥**

---

रत्नप्रभा ।

मिति कश्चिच्छङ्कते—**नन्विति** ॥ मण्यादौ व्यभिचारान्न व्याप्तिरिति परिहरति—**नेति** । **वस्तुत** एकत्वेऽपि कल्पितं द्वैतं प्रवर्त्यमस्तीत्याह—**नाविद्येति** ॥ अविद्यया कल्पिते नामरूपप्रपञ्चे तयैवाविद्यारूपया मायया य आवेशश्चिदात्मनः कल्पितः सम्बन्धः तस्य वशः सामर्थ्यं तेनान्तर्यामित्वादिकमीश्वरस्येत्युक्तत्वान्न

भामती ।

नित्यश्चेतनो व्यापाररहितो ज्ञानैकस्वभावः प्रवृत्त्यभावात् प्रवर्तको युक्त इति चोदयति—**ननु तवेति** । परिहरति—**न अयस्कान्तवद्रूपादिवच्चेति** । **यथा च रूपादय इति** । सांख्यानां हि स्वदेशस्था रूपादय इन्द्रियं विकुर्वते, तेन तदिन्द्रियमर्थं प्राप्तमर्थाकारेण परिणमत इति स्थितिः । संप्रति चोदकः स्वाभिप्रायमाविष्करोति—**एकत्वादिति** । येषामचेतनं चेतनं चास्ति तेषामेतद्युज्यते वक्तुं चेतनाधिष्ठितमचेतनं प्रवर्तत इति । यथा योगिनामीश्वरवादिनाम् । येषां तु चेतनातिरिक्तं नास्त्यद्वैतवादिनां, तेषां प्रवर्त्याभावे कं प्रति प्रवर्तकत्वं चेतनस्येत्यर्थः । परिहरति—**न** । **अविद्येति** । कारणभूतया लयलक्षणयाऽविद्यया प्राक्सर्गोपचितेन च विक्षेपसंस्कारेण यत् प्रत्युपस्थापितं नामरूपं तदेव माया, तदावेशेनास्य चोद्यस्यासकृत्प्रत्युक्तत्वात् । एतदुक्तं भवति—नेयं सृष्टिर्वस्तुसती येनाद्वैतिनो वस्तुसतो द्वितीयस्याभावादनुयुज्येत । काल्पनिक्यां तु सृष्टावस्ति काल्पनिकं द्वितीयं सहायं मायामयम् । यथाहुः—'सहायास्तादृशा एव यादृशी भवितव्यता ।' इति । न चैवं ब्रह्मोपादानत्वव्याघातः, ब्रह्मण एव मायावेशेनोपादानत्वात्तदधिष्ठानत्वाज्जगद्विभ्रमस्य, रजतविभ्रमस्येव शुक्तिकाधिष्ठानस्य शुक्तिकोपादानत्वमिति निरवद्यम् ॥ २ ॥

आनन्दगिरीय—न्यायनिर्णयः ।

प्रवर्तकतेति शङ्कते—**नन्विति** । लोकसिद्धेन सांख्यसंमतेन च दृष्टान्तेन निराचष्टे—**नेत्यादिना** । लोकसिद्धदृष्टान्तं विवृणोति—**यथेति** । द्वितीयमुदाहरणं प्रपञ्चयति—**यथा वेति** । दृष्टान्तयोर्दार्ष्टान्तिकमाह—**एवमिति** । तस्य प्रवर्तकत्वार्थं प्रवर्त्यसंबन्धमाह—**सर्वगत इति** । सर्वमूर्तसंयोगं व्यावर्तयति—**सर्वात्मेति** । बुद्धिपूर्वकारिणो हि प्रवर्तकत्वं दृष्टमित्युपेत्यत्रापि तदापादयति—**सर्वज्ञ इति** । ईश्वरस्य सर्वप्रवर्तकत्वे युक्त्यन्तरमाह—**सर्वेति** । सर्वात्मेत्युक्तमद्वितीयत्वं श्रुत्या चोदयति—**एकत्वादिति** । कल्पितस्य द्वैतस्य प्रवर्त्यत्वसंभवान्मायोपाधिकस्येश्वरस्य प्रवर्तकत्वमविरुद्धमिति परिहरति—**नाविद्येति** । अनादिरनिर्वाच्याऽविद्या तया प्रत्युपस्थापिते कल्पिते नामरूपे एव मायाकार्यत्वान्माया तत्राऽऽवेशोऽध्यस्तचिदात्मसंबन्धस्तद्वशेन तस्येश्वरादिभावस्यासकृदुक्तत्वेनास्य चोद्यस्य प्रत्युक्तत्वान्नैवमित्यर्थः । स्वपक्षे रचनार्थप्रवृत्त्युपपत्तिमुपसंहरति—**तस्मादिति** । परमते तदनुपपत्तिं निगमयति—**न त्विति** ॥ २ ॥

## पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥

**स्यादेतद् । यथा क्षीरमचेतनं स्वभावेनैव वत्सविवृद्ध्यर्थं प्रवर्तते, यथा च जलमचेतनं स्वभावेनैव लोकोपकाराय स्यन्दते, एवं प्रधानमचेतनं स्वभावेनैव पुरुषार्थसिद्धये प्रवर्तिष्यत इति ॥ नैतत्साधूच्यते ॥ यतस्तत्रापि पयोऽम्बुनोश्चेतनाधिष्ठितयोरेव प्रवृत्तिरित्यनुमिमीमहे । उभयवादिप्रसिद्धे रथादावचेतने केवले प्रवृत्तेरदर्शनात् ॥ शास्त्रं च-"योऽप्सु तिष्ठन्नद्भ्योऽन्तरः" [ बृ० ३ । ७ । ४ ] "योऽपोऽन्तरो यमयति" [ बृ० ३ । ७ । ४] "एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते" [ बृ० ३ । ८ । ९ ] इत्येवञ्जातीयकं समस्तस्य लोकपरिस्पन्दितस्येश्वराधिष्ठिततां श्रावयति ॥ तस्मात्साध्यपक्षनिक्षिप्तत्वात्पयोऽम्बुवदित्यनुपन्यासः । चेतनायाश्च धेनोः स्नेहेच्छया पयसः प्रवर्तकत्वोपपत्तेः ॥ वत्सचोषणेन च पयस आकृष्यमाणत्वात् ॥ न चाम्बुनोऽप्यत्यन्तमनपेक्षा । निम्नभूम्याद्यपेक्षत्वात्स्यन्दनस्य ॥ चेतनापेक्षत्वं तु सर्वत्रोपदर्शि-**

---

रत्नप्रभा ।

चोद्यावसर इत्यर्थः ॥ २ ॥ अनादिजडस्य प्रवृत्तिः, चेतनाधीना, प्रवृत्तित्वाद्, रथादिप्रवृत्तिवदिति स्थितम् । तत्र क्षीरादौ व्यभिचारमाशङ्क्य तस्यापि पक्षसमत्वेन उक्तानुमानादागमेन च साध्यसिद्धेर्न व्यभिचार इति सूत्रं व्याचष्टे-**स्यादेतदित्यादिना** ॥ **साध्यपक्षेति** । साध्यवता पक्षेण तुल्यत्वादित्यर्थः । अनुपन्यासो न व्यभिचारभूमिरिति यावत् । क्षीरे प्रवर्तकत्वेन धेन्वादेः सत्त्वाच्च न व्यभिचार इत्याह-**चेतनायाश्चेति** ॥ उपदर्शितमनुमानागमाभ्यामिति शेषः । सूत्रकारस्य-"क्षीरवद्धि" [ व्या० सू० २ ।

भामती ।

**पयोम्बुवच्चेत्तत्रापि** । यथा पयोऽम्बुनोश्चेतनानधिष्ठितयोः स्वत एव प्रवृत्तिरेवं प्रधानस्यापीति शङ्कार्थः । तत्रापि चेतनाधिष्ठितत्वं साध्यं, न च साध्येनैव व्यभिचारः, तथा सत्यनुमानमात्रोच्छेदप्रसङ्गात्, सर्वत्रास्य सुलभत्वात् । न चासाध्यम् । अत्रापि चेतनाधिष्ठानस्यागमसिद्धत्वात् । न च सपक्षेण व्यभिचार इति शङ्कानिराकरणस्यार्थः । **साध्यपक्षे**त्युपलक्षणम् । सपक्षनिक्षिप्तत्वादित्यपि द्रष्टव्यम् । ननु 'उपसंहार-

आनन्दगिरीय-न्यायनिर्णयः ।

केवलचेतनस्य मृदादेरदृष्टाऽपि प्रवृत्तिस्तथाभूतस्यान्यस्य दृष्टेत्यचेतनकारणत्वपक्षेऽपि प्रवृत्तिः संभवतीति शंकित्वा परिहरति—**पयोम्बुवदिति** । सूत्रे शङ्काभागं विभजते-**स्यादेतदिति** । क्षीरस्यापि चेतनाधिष्ठितस्यैव प्रवृत्तिरित्याशंक्य विशिनष्टि-**स्वभावेनेति** । तत्प्रवृत्तेरर्थवत्त्वमाह—**वत्सेति** । केवलाचेतनस्याप्रवृत्तिरित्यत्र क्षीरे व्यभिचारमुक्त्वा जलेऽपि व्यभिचारमाह—**यथा चेति** । दार्ष्टान्तिकमाह-**एवमिति** । पुरुषार्थो भोगश्चापवर्गश्च । **तत्रापीति** परिहारमवतार्य व्याचष्टे-**नैतदिति** । कथमनुमानमित्युक्ते तत्प्रकारं सूचयति-**उभयवादीति** । विमता प्रवृत्तिश्चेतनाधिष्ठानपूर्विकाऽचेतनप्रवृत्तित्वात्संप्रतिपन्नप्रवृत्तिवदित्यनुमानात्पयोम्बुनोरपि पक्षान्तर्भावान्न व्यभिचाराशंकेत्यर्थः । किंच, शास्त्रेण तत्रापि चेतनाधिष्ठितत्वस्य सिद्धत्वेन सपक्षत्वान्न व्यभिचार इत्याह-**शास्त्रं चेति** । तस्यार्थं संक्षिपति-**समस्तस्येति** । शास्त्रानुमानाभ्यां सिद्धमर्थमुपसंहरति-**तस्मादिति** । साध्यपक्षनिक्षिप्तत्वं साध्यवति पक्षे प्रविष्टत्वमेव । तच्च सपक्षनिक्षिप्तत्वस्याप्युपलक्षणम् । अनुपन्यासो न व्यभिचारभूमिरित्यर्थः । इतश्च क्षीरदृष्टान्ते व्यभिचारो नास्तीत्याह-**चेतनायाश्चेति**। केवलाचेतनस्य पयसो न प्रवृत्तिरित्यत्र हेत्वन्तरमाह-**वत्सचोषणेनेति** । अम्बुदृष्टान्तेऽपि सर्वथानपेक्षत्वं चेतनानपेक्षत्वं वा प्रवृत्ताविति विकल्प्याऽऽद्यं दूषयति-**न चेति**। द्वितीयं निरस्यति-**चेतनेति**। उपदर्शितं, शास्त्रेणेति शेषः। सूत्रकारस्य पूर्वापरवि-

तम्, "उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" [ व्या० सू० २ । १ । २४ ] इत्यत्र तु बाह्यनिमित्तनिरपेक्षमपि स्वाश्रयं कार्यं भवतीत्येतल्लोकदृष्ट्या निदर्शितम् ॥ शास्त्रदृष्ट्या पुनः सर्वत्रैवेश्वरापेक्षत्वमापद्यमानं न पराणुद्यते ॥ ३ ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

सांख्यानां त्रयो गुणाः साम्येनावतिष्ठमानाः प्रधानम् । न तु तद्व्यतिरेकेण प्रधानस्य प्रवर्तकं निवर्तकं वा किञ्चिद्बाह्यमपेक्ष्यमवस्थितमस्ति ॥ पुरुषस्तूदासीनो न प्रवर्तको न निवर्तक इति ॥ अतोऽनपेक्षं प्रधानम् । अनपेक्षत्वाच्च कदाचित्प्रधानं महदाद्याकारेण परिणमते, कदाचिन्न परिणमत इत्येतदयुक्तम् । ईश्वरस्य तु सर्वज्ञत्वात्सर्वशक्तिमत्त्वान्महामायत्वाच्च प्रवृत्त्यप्रवृत्ती न विरुध्येते ॥ ४ ॥

---

रत्नप्रभा ।

१२४ ] " तत्रापि " इति च वक्तुः पूर्वापरविरोधमाशङ्क्य लोकदृष्ट्या शास्त्रदृष्ट्या च, सूत्रद्वयमित्यविरोधमाह—उपसंहारेति ॥ ३ ॥ अस्तु प्रधानस्यापि धर्मादि कर्म, पुरुषो वा प्रवर्तकः, इत्याशङ्क्य सूत्रं प्रवृत्तम् । तद्व्याचष्टे-सांख्यानामित्यादिना । प्रधानव्यतिरेकेण कर्मणोऽनवस्थितेः पुरुषस्योदासीनत्वात्कदाचित्सृष्टिप्रवृत्तिः, कदाचित् प्रलय इत्युक्तमित्यर्थः । कर्मणोऽपि प्रधानात्मकस्याऽचेतनत्वात्,

भामती ।

दर्शनात्' इत्यत्रानपेक्षस्य प्रवृत्तिर्दर्शिता, इह तु सर्वस्य चेतनापेक्षा प्रवृत्तिः प्रतिपाद्यत इति कुतो न विरोध इत्यत आह—उपसंहारदर्शनादिति । स्थूलदर्शिलोकाभिप्रायानुरोधेन तदुक्तं न तु परमार्थत इत्यर्थः ॥ ३ ॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् । यद्यपि सांख्यानामपि विचित्रकर्मवासनावासितं प्रधानं साम्यावस्थायामपि तथापि न कर्मवासनाः सर्गस्येशते, किंतु प्रधानमेव स्वकार्ये प्रवर्तमानमधर्मप्रतिबद्धं सन्न सुखमयीं सृष्टिं कर्तुमुत्सहत इति धर्मेणाधर्मप्रतिबन्धोऽपनीयते । एवमधर्मेण धर्मप्रतिबन्धोऽपनीयते दुःखमय्यां सृष्टौ । स्वयमेव च प्रधानमनपेक्ष्य सृष्टौ प्रवर्तते । यथाहुः—'निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्' इति । ततश्च प्रतिबन्धकापनयसाधने धर्माधर्मवासने अपि संनिहिते इत्यागन्तोरपेक्षणीयस्याभावात् सदैव साम्येन परिणमेत वैषम्येण वा, न त्वयं कादाचित्कः परिणामभेद उपपद्येत । ईश्वरस्य तु महामायस्य चेतनस्य लीलया वा यदृच्छया वा स्वभाववैचित्र्याद्वा कर्मपरिपाका-

आनन्दगिरीय—न्यायनिर्णयः ।

रोधमाशंक्य परिहरति—उपसंहारेति । लोकदृष्ट्या शास्त्रदृष्ट्या चेति सूत्रद्वयमविरुद्धमित्यर्थः॥३॥ प्रधानस्य स्वातन्त्र्येण प्रवृत्त्यसंभवेऽपि धर्माद्यपेक्षया प्रवृत्तिः स्यादित्याशंक्याऽऽह—व्यतिरेकेति । व्यतिरेकानवस्थितिं दर्शयितुं परपक्षमनुवदति—सांख्यानामिति । संप्रति व्यतिरेकानवस्थितिं दर्शयति—नेत्यादिना । धर्मादेः सत्त्वेऽपि प्रतिबन्धनिवृत्तिमात्रोपयोगादकादाचित्कत्वाच्च न कादाचित्कप्रवृत्त्यादिप्रयोजकतेति भावः । किंच, प्रधानान्तर्भूतत्वाद्धर्मादेर्न तत्प्रवृत्तिनिवृत्तिप्रयोजकत्वम् । न हि किंचिदपि प्रधानातिरिक्तं तन्मते संमतमस्ति । न च तदेव तत्प्रवृत्त्यादौ प्रयोजकीभवतीत्यभिप्रेत्याऽऽह—बाह्यमिति । मा भूद्धर्मादिप्रधानस्य प्रवर्तकं निवर्तकं वा पुरुषस्तु तथेत्याशंक्याऽऽह—पुरुषस्त्विति । अपेक्षणीयाभावादनपेक्षत्वे प्रधानस्याऽऽगन्तुकप्रवृत्तिनिवृत्त्योरनुपपत्तिरिति फलितमाह—इत्यत इति । परपक्षेऽनुपपत्तिमुक्त्वा स्वपक्षमुपपादयति—ईश्व-

## अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

**स्यादेतद् । यथा तृणपल्लवोदकादि निमित्तान्तरनिरपेक्षं स्वभावादेव क्षीराद्याकारेण परिणमते, एवं प्रधानमपि महदाद्याकारेण परिणंस्यत इति ॥ कथं निमित्तान्तरनिरपेक्षं तृणादीति गम्यते ॥ निमित्तान्तरानुपलम्भात् । यदि हि किञ्चिन्निमित्तान्तरमुपलभेमहि, ततो यथाकामं तेनतेन निमित्तेन तृणाद्युपादाय क्षीरं सम्पादयेमहि, न तु सम्पादयामहे । तस्मात्स्वाभाविकस्तृणादेः परिणामः । तथा प्रधानस्यापि स्यादिति ॥ अत्रोच्यते ॥ भवेत्तृणादिवत्प्रधानस्य स्वाभाविकः परिणामः । यदि तृणादेरपि स्वाभाविकः परिणामोऽभ्युपगम्येत । न त्वभ्युपगम्यते । निमित्तान्तरोपलब्धेः ॥ कथं निमित्तान्तरोपलब्धिरन्यत्राभावात् । धेन्वैव ह्युपभुक्तं तृणादि क्षीरीभवति ॥ न प्रहीणमनडुहाद्युपभुक्तं वा ॥ यदि हि निर्निमित्तमेतत्स्याद्धेनुशरीरसम्बन्धादन्यत्रापि तृणादि क्षीरीभवेत् ॥ न च यथाकामं मानुषैर्न शक्यं सम्पादयितुमित्येतावता निर्निमित्तं भवति ॥ भवति हि किञ्चित्कार्यं मानुषसम्पाद्यं,**

---

रत्नप्रभा ।

सदाऽसत्त्वाच्च,—न कादाचित्कप्रवृत्तिनियामकत्वमिति भावः ॥ ४ ॥ पुनरपि दृष्टान्तबलात्प्रधानस्य स्वत एव कादाचित्कप्रवृत्तिरित्याशङ्क्य निषेधति सूत्रकारः—**अन्यत्रेत्यादिना** ॥ पृच्छति—**कथमिति** ॥ उत्तरं—**निमित्तान्तरेति** ॥ धेन्वादिनिमित्तान्तरमस्तीति सिद्धान्तयति—**अत्रोच्यत इति** ॥ प्रहीणं नष्टम् । **यदुक्तं** क्षीरस्य स्वेच्छया सम्पादयितुमशक्यत्वात्स्वाभाविकत्वमिति **तत्राह—न च यथाकाममिति** ॥५॥

भामती ।

पेक्षस्य प्रवृत्तिनिवृत्ती उपपद्येते एवेति ॥ ४ ॥ **अन्यत्राभावाच्च न तृणादिवत्** । धेनूपयुक्तं हि तृणपल्लवादि यथा स्वभावत एव चेतनानपेक्षं क्षीरभावेन परिणमते न तु तत्र धेनुचैतन्यमपेक्ष्यते, उपयोगमात्रे तदपेक्षत्वात् । एवं प्रधानमपि स्वभावत एव परिणंस्यते कृतमत्र चेतनेनेति शङ्कार्थः । धेनूपयुक्तस्य तृणादेः क्षीरभावे किं निमित्तान्तरमात्रं निषिध्यते, उत चेतनम् । न तावन्निमित्तान्तरं, धेनुदेहस्थस्यौदर्यस्य वह्न्यादिभेदस्य निमित्तान्तरस्य संभवात् । बुद्धिपूर्वकारी तु तत्रापीश्वर एव सर्वज्ञः संभवतीति शङ्कानिरा-

आनन्दगिरीय—न्यायनिर्णयः ।

रस्येति॥४॥चेतनमचेतनं वा निमित्तमनपेक्ष्य प्रधानस्य परिणामो न युक्त इत्युक्तमिदानीं तदभावेऽपि प्रवृत्तेर्दृष्टत्वात्कथमनुपपत्तिरित्याशंक्याऽऽह—**अन्यत्रेति** ।सूत्रव्यावर्त्यामाशङ्कामाह—**स्यादेतदिति**।दृष्टान्ते निरपेक्षत्वनिश्चयहेतुं पृच्छति—**कथमिति**।योग्यानुपलब्धेस्तथेत्याह—**निमित्तान्तरेति** । तदनुपलब्धिमेव व्यतिरेकद्वारा स्फोरयति—**यदि हीति** । योग्यानुपलब्ध्या निमित्तान्तराभावे सिद्धे फलितं दृष्टान्तमुपसंहृत्य दार्ष्टान्तिकमुपसंहरति—**तस्मादिति** । धेन्वाश्चेतनस्य क्षीरपरिणामे नास्ति कारणता किंतु तृणाद्युपयोगेनोपकारितेति चोद्यमनूद्य सूत्रमवतारयति—**अत्रेति** । 'न तृणादिवत्' इति भागं विभजते—**भवेदिति** । आकांक्षापूर्वकं सूत्रावयवमादत्ते—**कथमिति** । तृणादेः सर्वत्र वा क्षीरीभावे निरपेक्षत्वं चेतने वेति विकल्प्याऽऽद्ये दोषमाह—**धेन्वैवेति** । एवकारव्यावर्त्यं कीर्तयति—**न प्रहीणमिति** । अनडुहाद्युपयुक्तमिति तु भाष्य उपयुक्तत्वं नाऽऽशङ्कास्पदम् । एतदेव व्यतिरेकद्वारा विवृणोति—**यदि हीति** । क्षीरीभवनं तृणादेरेतदित्युच्यते । यत्तु निमित्तान्तरोपलम्भे तेनैव निमित्तेन तृणान्युपादाय यथाकामं क्षीरं संपाद्यतामिति तत्राऽऽह—**न चेति** । चेतनानपेक्षत्वपक्षं प्रत्याह—**भवति हीति** । मनुष्याणां तृणादिना क्षीरसंपादनं

किञ्चिद्दैवसम्पाद्यम् ॥ मनुष्या अपि च शक्नुवन्त्येव स्वोचितेनोपायेन तृणाद्युपादाय क्षीरं सम्पादयितुम् ॥ प्रभूतं हि क्षीरं कामयमाना प्रभूतं घासं धेनुं चारयन्ति ॥ ततश्च प्रभूतं क्षीरं लभन्ते ॥ तस्मान्न तृणादिवत्स्वाभाविकः प्रधानस्य परिणामः ॥ ५ ॥

## अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

स्वाभाविकी प्रधानस्य प्रवृत्तिर्न भवतीति स्थापितम् ॥ अथापि नाम भवतश्श्रद्धामनुरुध्यमानास्स्वाभाविकीमेव प्रधानस्य प्रवृत्तिमभ्युपगच्छेम । तथापि दोषोनुषज्येतैव ॥ कुतः ॥ अर्थाभावात् ॥ यदि तावत्स्वाविकी प्रधानस्य प्रवृत्तिर्न किञ्चिदन्यदिहापेक्षत इत्युच्यते, ततो यथैव सहकारि किञ्चिन्नापेक्षते, एवं प्रयोजनमपि किञ्चिन्नापेक्षिष्यत इत्यतः प्रधानं पुरुषस्यार्थं साधयितुं प्रवर्तत इतीयं प्रतिज्ञा हीयेत ॥ स यदि ब्रूयात्सहकार्येव केवलं नापेक्षते न प्रयोजनमपीति, तथापि प्रधानप्रवृत्तेः प्रयोजनं विवेक्तव्यं–भोगो वा स्यादपवर्गो वोभयं वेति–भोगश्चेत्कीदृशोऽनाधेयातिशयस्य पुरुषस्य भोगो भवेत् अनिर्मोक्षप्रसङ्गश्च ॥ अपवर्गश्चेत्प्रागपि प्रवृत्तेरपवर्गस्य सिद्धत्वात्प्रवृत्तिरनर्थिका स्यात् ।

---

रत्नप्रभा ।

अभ्युपगमेप्यर्थेति । प्रधानस्य न स्वतः प्रवृत्तिः । स्वतः प्रवृत्त्यभ्युपगमे पुरुषार्थस्याप्यपेक्षाभावप्रसङ्गादित्येकोऽर्थः । तत्रेष्टापत्तिं निरस्यति–इत्यतः प्रधानमिति । उक्तप्रसङ्गस्येष्टत्वे प्रतिज्ञाहानिः स्यादित्यर्थः । अर्थासम्भवान्न स्वतः प्रवृत्तिरित्यर्थान्तरं शङ्कापूर्वकमाह–स यदीत्यादिना ॥ प्रयोजनमपेक्षितं चेद्वक्तव्यमित्याह–तथापीति ॥ कूटस्थे पुरुषे स्वतः सुखादिरूपस्यातिशयस्याऽऽधातुमशक्यत्वादध्यासा-

भामती ।

करणस्यार्थः । तदिदमुक्तम्–किंचिद्दैवसंपाद्यमिति ॥५॥ अभ्युपगमेऽप्यर्थाभावात् । पुरुषार्थापेक्षाभावप्रसङ्गात् । तदिदमुक्तम्–एवं प्रयोजनमपि किंचिन्नापेक्षिष्यत इति । अथ वा पुरुषार्थाभावादिति योज्यम् । तदिदमुक्तम्–तथापि प्रधानप्रवृत्तेः प्रयोजनं विवेक्तव्यमिति । न केवलं तात्त्विको भोगोऽनाधेयातिशयस्य कूटस्थनित्यस्य पुरुषस्य न संभवति, अनिर्मोक्षप्रसङ्गश्च । येन हि प्रयोजनेन प्रधानं प्रवर्तितं तदनेन कर्तव्यं, भोगेन चैतत्प्रवर्तितमिति तमेव कुर्यान्न मोक्षं, तेनाप्रवर्तितत्वादित्यर्थः । अपवर्ग-

आनन्दगिरीय–न्यायनिर्णयः ।

दुष्करमित्युपेत्योक्तमिदानीं तदेव नास्तीत्याह–मनुष्या इति । तेषामुचितोपायोपादानेन तृणान्यादाय क्षीरसंपादनसामर्थ्यमेवोदाहरति–प्रभूतमिति । तृणादेः स्वाभाविकपरिणामासंभवे स्थिते फलितमाह–तस्मादिति ॥ ५ ॥ प्रधानस्य स्वाभाविकीं प्रवृत्तिमुपेत्यापि दूषयति–अभ्युपगमेऽपीति । वृत्तमनूद्याभ्युपगमेऽपीति भागमपेक्षितं पूरयन्व्याकरोति–स्वाभाविकीति । प्रश्नपूर्वकं हेतुमादत्ते–कुत इति । पराभिप्रायमनूद्य प्रयोजनापेक्षाभावप्रसङ्गादित्येवंपरतया हेतुं व्याचष्टे–यदीति । प्रसङ्गफलं प्रतिज्ञाहानिं प्रदर्शयति–इत्यत इति । हेतोरर्थान्तरं वक्तुं शङ्कते–स यदीति । व्यवस्थापकाभावान्नैषा व्यवस्थेत्यभिप्रेत्यार्थासंभवादिति हेत्वर्थं वदन्विकल्पयति–तथाऽपीति । आद्यमनूद्याऽऽक्षिपति–भोगश्चेदिति । अनाधेयातिशयस्य सुखदुःखप्राप्तिपरिहाररूपातिशयशून्यस्येत्यर्थः । भोगार्थैव प्रधानप्रवृत्तिरित्यत्र दोषान्तरमाह–अनिर्मोक्षेति । न हि निरतिशयस्य पुरुषस्य स्वारसिकौ भोगापवर्गावङ्गीक्रियेते तेन प्रधानप्रवृत्तेर्भोगैकप्रधानप्रयोजनत्वे हेत्वभावान्नैव पुंसो मोक्षः सेद्धुमर्हेदित्यर्थः । द्वितीयमनूद्य दूषयति–अपवर्गश्चेदिति ।

**शब्दाद्यनुपलब्धिप्रसङ्गश्च-उभयार्थताभ्युपगमेऽपि भोक्तव्यानां प्रधानमात्राणामानन्त्यादनिर्मोक्षप्रसङ्ग एव ॥ न चौत्सुक्यनिवृत्त्यर्था प्रवृत्तिः ॥ न हि प्रधानस्याचेतनस्यौत्सुक्यं सम्भवति ॥ न च पुरुषस्य निर्मलस्य निष्कलस्यौत्सुक्यम् ॥ दृक्छक्तिसर्गशक्तिवैयर्थ्यभयाच्चेत्प्रवृत्तिस्तर्हि दृक्छक्त्यनुच्छेदवत्सर्गशक्त्यनुच्छेदात्संसारानुच्छेदादनिर्मोक्षप्रसङ्ग एव ॥**

---

रत्नप्रभा ।

नङ्गीकाराच्च भोगो न युक्तः । किञ्च प्रधानप्रवृत्तेर्भोगार्थत्वे मोक्षहेतुविवेकख्यात्यभावादनिर्मोक्षप्रसङ्गश्च । अपवर्गार्थत्वे स्वरूपावस्थानरूपमुक्तेः स्वतः सिद्धत्वात् प्रवृत्तिवैयर्थ्यं, भोगाभावप्रसङ्गश्चेत्यर्थः । तृतीयं दूषयति-**उभयार्थतेति** ॥ मीयन्ते भुज्यन्त इति-**मात्राः**-भोग्याः । "औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः पुरुषस्य विमोक्षार्थं प्रवर्तते, तद्वदव्यक्तम्" [ सांख्यका० श्लो० ५८ ] इति कारिकोक्तं दूषयति-**न चेति** ॥ **औत्सुक्यम्**-इच्छाविशेषः, केवलजडस्यात्मनो वा न युक्त इत्यर्थः ॥ अस्ति पुरुषस्य दृक्शक्तिः, चिद्रूपत्वात् । अस्ति च प्रधानस्य सर्गशक्तिः, त्रिगुणत्वात् । तयोः शक्त्योर्दृश्यसृष्टिं विना सार्थक्यायोगात् प्रधानस्य सृष्टौ प्रवृत्तिरिति **चेत्** । न शक्त्योर्नित्यत्वात् सृष्टिनित्यत्वापत्तिरित्याह-**दृक्शक्तीति** ॥ ६ ॥ पुरुषस्य प्रवर्तकत्वं निरस्तमपि दृष्टान्तेन पुनराशङ्क्य निषेधति-

भामती ।

**श्चेत्प्रागपीति** । चितेः सदा विशुद्धत्वान्नैतस्यां जातु कर्मानुभववासनाः सन्ति । प्रधानं तु तासामनादीनामाधारः । तथा च प्रधानप्रवृत्तेः प्राक् चितिर्मुक्तैवेति नापवर्गार्थमपि तत्प्रवृत्तिरिति । **शब्दाद्यनुपलब्धिप्रसंगश्च** । तदर्थमप्रवृत्तत्वात्प्रधानस्य । **उभयार्थताभ्युपगमेऽपीति** । न तावदपवर्गः साध्यस्तस्य प्रधानाप्रवृत्तिमात्रेण सिद्धत्वात् । भोगार्थं तु प्रवर्तेत । भोगस्य च सकृच्छब्दाद्युपलब्धिमात्रादेव समाप्तत्वान्न तदर्थं पुनः प्रधानं प्रवर्तेतेत्ययत्नसाध्यो मोक्षः स्यात् । निःशेषशब्दाद्युपभोगस्य चानन्त्येन समाप्तेरनुपपत्तेरनिर्मोक्षप्रसङ्गः । कृतभोगमपि प्रधानमा सत्त्वपुरुषान्यताख्यातेः क्रियासमभिहारेण भोजयतीति चेत्, अथ पुरुषार्थाय प्रवृत्तं किमर्थं सत्त्वपुरुषान्यताख्यातिं करोति । अपवर्गार्थमिति चेत्, हन्तायं सकृच्छब्दाद्युपभोगेन कृतप्रयोजनस्य प्रधानस्य निवृत्तिमात्रादेव सिध्यतीति कृतं सत्त्वान्यताख्यातिप्रतीक्षणेन। न चास्याः स्वरूपतः पुरुषार्थत्वम्। तस्मादुभयार्थमपि न प्रधानस्य प्रवृत्तिरुपपद्यत इति सिद्धोऽर्थाभावः । सुगममितरत् । शङ्कते-**दृक्शक्तीति** । पुरुषो हि दृक्शक्तिः । सा च दृश्यमन्तरेणानर्थिका स्यात् । न च स्वात्मन्यर्थवती, स्वात्मनि वृत्तिविरोधात् । प्रधानं च सर्गशक्तिः। सा च सर्जनीयमन्तरेणानर्थिका स्यादिति यत्प्रधानेन शब्दादि सृज्यते तदेव दृक्शक्तेर्दृश्यं भवतीति तदुभयार्थवत्त्वाय सर्जनमिति शङ्कार्थः । निराकरोति-**सर्गशक्त्यनुच्छे-**

आनन्दगिरीय-न्यायनिर्णयः ।

स्वरूपावस्थानस्य सदातनत्वादित्यर्थः । ननु बन्धप्रध्वंसरूपापवर्गसिद्ध्यर्थं प्रधानप्रवृत्तिरर्थवतीति चेन्न; प्रधानाविवेकं विना पुरुषे बन्धासिद्धेर्न च तदविवेकनिवृत्त्यर्था तत्प्रवृत्तिरिति युक्तम् । तथा सति हेत्वभावाद्भोगाभावप्रसङ्गादित्याह-**शब्दादीति** । तदुपलब्धेर्भोगत्वादित्यर्थः । तृतीयेऽपि कतिपयशब्दाद्युपलब्धिर्वा समस्ततदुपलब्धिर्वा भोग इति विकल्प्याऽऽद्ये सर्वेषामेकदैव मुक्तिः स्यादिति मन्वानो द्वितीयं प्रत्याह-**उभयार्थतेति** । औत्सुक्यनिवृत्त्यर्था प्रधानचेष्टेतीष्टत्वाद्यावदौत्सुक्यं तत्प्रवृत्तेर्नोक्तो दोषोऽस्तीत्याशंक्याऽऽह-**न चेति** । तद्धि प्रधानस्य वा पुरुषस्य वा ? नाऽऽद्य इत्याह-**न हीति** । औत्सुक्यापरपर्यायकुतूहलितायाश्चेतनगामित्वावगमादित्यर्थः । न द्वितीय इत्याह-**न चेति** । स्वरसतो हि पुरुषो निर्मलोऽभिलप्यते न तस्यौत्सुक्यरूपमलसंबन्धः सिध्यति । तेन पुरुषस्यापि न संभवत्यौत्सुक्यमित्यर्थः । अस्ति पुरुषस्य दृक्शक्तिर्न च सा दृश्यमन्तरेणार्थवती प्रधानस्य च सर्गशक्तिः सा सृष्टिं विनाऽनर्थिका । तथा चोभयविधशक्तिवैयर्थ्यपरिहारार्थं प्रधानप्रवृत्तिरिति शङ्कते-**दृक्शक्तीति** । तर्हि शक्त्योर्नित्यत्वात्तदर्थवत्त्वाय सदा प्रधानप्रवृत्तेर्मोक्षासिद्धिरिति दूषयति-**सर्गेति** । अर्थासंभवान्निरपेक्षस्यैव प्रधा-

तस्मात्प्रधानस्य पुरुषार्था प्रवृत्तिरित्येतदयुक्तम् ॥ ६ ॥

## पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥

स्यादेतद् । यथा कश्चित्पुरुषो दृक्छक्तिसम्पन्नः प्रवृत्तिशक्तिविहीनः पंगुरपरं पुरुषं प्रवृत्तिशक्तिसम्पन्नं दृक्छक्तिविहीनमन्धमधिष्ठाय प्रवर्तयति । यथा वाऽयस्कान्तो मणिस्स्वयमप्रवर्तमानोऽप्ययः प्रवर्तयति, एवं पुरुषः प्रधानं प्रवर्तयिष्यतीति दृष्टान्तप्रत्ययेन पुनः प्रत्यवस्थानम् ॥ अत्रोच्यते ॥ तथापि नैव दोषान्निर्मोक्षोऽस्ति ॥ अभ्युपेतहानं तावद्दोष आपतति । प्रधानस्य स्वतन्त्रस्य प्रवृत्त्यभ्युपगमात् । पुरुषस्य च प्रवर्त्तकत्वानभ्युपगमात्कथञ्चोदासीनः पुरुषः प्रधानं प्रवर्तयेत् ॥ पंगुरपि ह्यन्धं पुरुषं वागादिभिः प्रवर्तयति, नैवं पुरुषस्य कश्चित्प्रवर्तनव्यापारोऽस्ति । निष्क्रियत्वान्निर्गुणत्वाच्च ॥ नाप्ययस्कान्तवत्सन्निधिमात्रेण प्रवर्तयेत् ॥ सन्निधिनित्यत्वेन प्रवृत्तिनित्यत्वप्रसङ्गात् ॥ अयस्कान्तस्य त्वनित्य-

---

रत्नप्रभा ।

**पुरुषाश्मवदिति**॥ प्रधानस्य स्वातन्त्र्यं पुरुषस्यौदासीन्यं चाभ्युपेतं त्यज्यते इति वदन्तं सांख्यं प्रत्याह—**कथञ्चेति** ॥ पुरुषस्य परिस्पन्दः, प्रयत्नगुणो वा—नास्तीति वक्तुं हेतुद्वयम्। प्रधानपुरुषयोर्नित्यत्वाद्, व्यापित्वाच्च—नित्यः सन्निधिः । अश्मनस्तु **परिमार्जन**पूर्वत्वेन स्थापनमनित्यसन्निधिश्चेति व्यापारोऽस्तीत्यनुपन्यासः—न समदृष्टान्तोपन्यासो भवतीत्यर्थः । **ननु** चिज्जडयोर्द्रष्टृदृश्यभावयोग्यताऽस्ति, तया तद्भावः

भामती ।

**दवदिति** । यथा हि प्रधानस्य सर्गशक्तिरेकं पुरुषं प्रति चरितार्थापि पुरुषान्तरं प्रति प्रवर्ततेऽनुच्छेदात् । एवं दृक्शक्तिरपि तं पुरुषं प्रत्यर्थवत्त्वायानुच्छेदात्सर्वदा प्रवर्तेतेत्यनिर्मोक्षप्रसङ्गः । सकृद्दृश्यदर्शनेन वा चरितार्थत्वे न भूयः प्रवर्तेतेति सर्वेषामेकपदे निर्मोक्षः प्रसज्येतेति सहसा संसारः समुच्छिद्येतेति ॥ ६॥ **पुरुषाश्मवदिति चेत्तथापि** । नैव दोषात्प्रच्युतिरिति शेषः । मा भूत्पुरुषार्थस्य शक्त्यर्थवत्त्वस्य वा प्रवर्तकत्वम्, पुरुष एव दृक्शक्तिसंपन्नः पंगुरिव प्रवृत्तिशक्तिसंपन्नं प्रधानमन्धमिव प्रवर्तयिष्यतीति शङ्का । दोषादनिर्मोक्षमाह—**अभ्युपेतहानं तावदिति** । न केवलमभ्युपेतहानम्, अयुक्तं चैतद्भवद्दर्शनालोचनेनेत्याह—**कथं चोदासीन इति** । निष्क्रियत्वे साधनम्—**निर्गुणत्वादिति** । शेषमतिरोहितार्थम् ॥ ७ ॥

आनन्दगिरीय—न्यायनिर्णयः ।

नस्य प्रवृत्तिरित्येतदयुक्तमित्युपसंहरति—**तस्मादिति** ॥ ६ ॥ पुरुषस्य प्रवर्तकत्वं निरस्तमपि दृष्टान्तेन पुनराशंक्य निरस्यति—**पुरुषाश्मवदिति** । चोद्यं विभजते—**स्यादेतदिति** । पङ्गोरपि वागादिद्वारा प्रवर्तकत्वसंभवात्तद्विरहिणि पुरुषे न प्रवर्तकतेत्यपरितुष्यन्तं प्रत्याह—**यथा वेति**। दार्ष्टान्तिकमाह—**एवमिति**। पुरुषस्तूदासीनो न प्रवर्तको नापि निवर्तक इत्यत्रैव तत्प्रवर्तकत्वे प्रत्युक्ते कथं पुनराशंकोन्मिषेदित्याशंक्याऽऽह—**इति दृष्टान्तेति**। पूर्वपक्षमनूद्य सिद्धान्तमवतार्यापेक्षितं पूरयन्व्याकरोति—**अत्रेति** । कथं दोषानिवृत्तिरित्याशंक्यापसिद्धान्तापत्तिं तावदाह—**अभ्युपेतेति** । पुरुषस्य प्रधानप्रवर्तकत्वमङ्गीकुर्वतस्तत्प्रवर्तकत्वानभ्युपगमस्यासिद्धिरित्याशंक्याऽऽह—**कथं चेति** । न हि प्रवर्तकत्वमुदासीनस्य युक्तमुदासीनत्वव्याघातादित्यर्थः। पंगुदृष्टान्तं विघटयति—**पंगुरपीति** । पुरुषस्य प्रस्पन्दप्रयत्नव्यापारराहित्यं वक्तुं हेतुद्वयम् । अयस्कान्तदृष्टान्तेन स्वगतव्यापारमन्तरेणापि पुरुषस्य प्रवर्तकत्वमुपदिष्टमित्याशंक्याऽऽह—**नापीति** । अयस्कान्तसंनिधावयोवत्कदाचिदेव संनिधौ सत्यपि प्रवृत्तिः स्यादित्याशंक्याऽऽह—**अयस्कान्तस्येति** । परिमार्जनादीत्यादिशब्देन मुखाभिमुख्यसंपादनं संगृहीतम् । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमुक्त्वा फलितमाह—

सन्निधेरस्ति स्वव्यापारस्सन्निधिः, परिमार्जनाद्यपेक्षा चास्यास्तीत्यनुपन्यासः पुरुषाश्मवदिति ॥ तथा प्रधानस्याचैतन्यात्पुरुषस्य चौदासीन्यात्तृतीयस्य च तयोः सम्बन्धयितुरभावात्सम्बन्धानुपपत्तिः । योग्यतानिमित्ते सम्बन्धे योग्यतानुच्छेदादनिर्मोक्षप्रसंगः ॥ पूर्ववच्चेहाप्यर्थाभावो विकल्पयितव्यः ॥ परमात्मनस्तु स्वरूपव्यपाश्रयमौदासीन्यं मायाव्यपाश्रयं च प्रवर्तकत्वमित्यस्त्यतिशयः ॥ ७ ॥

## अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

इतश्च न प्रधानस्य प्रवृत्तिरवकल्पते । यद्धि सत्त्वरजस्तमसामन्योन्यगुणप्रधानभावमुत्सृज्य साम्येन स्वरूपमात्रेणावस्थानं सा प्रधानावस्था ॥ तस्यामवस्थायामनपेक्षस्वरूपाणां स्वरूपप्रणाशभयात्परस्परं प्रत्यङ्गाङ्गिभावानुपपत्तेः ॥

---

रत्नप्रभा ।

सम्बन्ध इत्यत आह—**योग्यतेति** ॥ चिज्जडत्वरूपाया योग्यताया नित्यत्वात्सम्बन्धनित्यत्वापत्तिरित्यर्थः । **यथा**—स्वतन्त्रप्रधानप्रवृत्तिपक्षो भोगोऽपवर्गः । उभयं वा—फलमिति विकल्प्य दूषितः, **एवं** पुरुषाधीनप्रधानप्रवृत्तिपक्षोऽपि फलाभावेन दूषणीय इत्याह—**पूर्ववच्चेति** ॥ सिद्धान्ते परमात्मन उदासीनस्य कथं प्रवर्तकत्वमित्याशङ्क्याह—**परमात्मेति** । सांख्यमते उभयं विरुद्धम् । सत्यत्वात् । अस्मन्मते कल्पिताकल्पितयोरविरोध इत्यतिशयः ॥ ७ ॥ किं प्रधानावस्था कूटस्थवन्नित्या उत विकारिणी? आद्ये दोषमाह—**तस्यामिति** ॥ अङ्गाङ्गिभावे साम्यस्वरूपनाशः स्यात्, ततः कौटस्थ्यभङ्ग इति भयादङ्गाङ्गित्वानुपपत्तेः

भामती ।

**अंगित्वानुपपत्तेश्च** । यदि प्रधानावस्था कूटस्थनित्या, ततो न तस्याः प्रच्युतिरनित्यत्वप्रसङ्गात् । यथाहुः—'नित्यं तमाहुर्विद्वांसो यः स्वभावो न नश्यति' इति तदिदमुक्तम्—**स्वरूपप्रणाशभयादिति** । अथ परिणामिनित्या । यथाहुः—'यस्मिन् विक्रियमाणेऽपि यत्तत्त्वं न विहन्यते तदपि नित्यम्' इति ।

आनन्दगिरीय—न्यायनिर्णयः ।

**इत्यनुपन्यास इति** । किंच प्रवर्त्यप्रवर्तकभावस्य संबन्धसापेक्षत्वात्प्रधाननिमित्तो वा पुरुषनिमित्तो वा तदुभयव्यतिरिक्तनिमित्तो वा संबन्धस्तयोरिति विकल्पयति—**तथेति** । सति विकल्पत्रये संबन्धानुपपत्तिरिति संबन्धः । नाऽऽद्य इत्याह—**प्रधानस्येति** । न द्वितीय इत्याह—**पुरुषस्येति** । न तृतीय इत्याह—**तृतीयस्येति** । प्रधानस्याचेतनत्वाद्दृश्यत्वे पुरुषस्य चेतनत्वाद् द्रष्टृत्वे योग्यताऽस्तीति तन्निमित्तो द्रष्टृदृश्यभाव एव संबन्धस्तयोरित्याशंक्याऽऽह—**योग्यतेति** । किंच, यथा स्वाभाविकप्रवृत्तिपक्षे विकल्प्यार्थाभावो दर्शितस्तथा पुरुषसंबन्धात्प्रधानप्रवृत्तिपक्षेऽपि भोगो वा फलमपवर्गो वा द्वयं वेत्येवं विकल्प्यार्थाभावो वक्तव्य इत्याह—**पूर्ववच्चेति** । नन्वयस्कान्तदृष्टान्तावष्टम्भेन भवताऽपि परमात्मा कूटस्थनित्य एव प्रवर्तकोऽभ्युपगतस्तथा चोक्तनीत्या त्वत्पक्षोऽपि न सिध्यति तत्राऽऽह—**परमात्मनस्त्विति** । अतिशयः सांख्याभिमतात्पुरुषादिति शेषः ॥ ७ ॥ प्रधानस्य स्वाभाविकी पुरुषसंनिधेर्वा न प्रवृत्तिरित्युक्तमिदानीं कस्यचिद् गुणस्य प्राधान्यं कस्यचिदुपसर्जनत्वमित्यपि वैषम्यमभ्युपगतं स्वतः परतो वा न संभवतीत्याह—**अंगित्वेति** । चकारसूचितां प्रतिज्ञां प्रकटीकरोति—**इतश्चेति** । पञ्चम्यर्थमेव दर्शयन्प्रधानावस्थामनुवदति—**यद्धीति** । सा च कूटस्था वा विकारिणी वेति विकल्प्याऽऽद्ये दोषमाह—**तस्यामिति** । अनपेक्षस्वरूपाणां परस्परानपेक्षाणां गुणप्रधानत्वहीनानामङ्गाङ्गित्वायोगात्कार्यानुत्पत्तिरित्यर्थः । द्वितीयं दूष-

बाह्यस्य च कस्यचित्क्षोभयितुरभावाद्गुणवैषम्यनिमित्तो महदाद्युत्पादो न स्यात् ॥ ८ ॥

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

अथापि–स्यादन्यथा वयमनुमिमीमहे–यथा नायमनन्तरो दोषः प्रसज्येत । न ह्यनपेक्षस्वभावाः कूटस्थाश्चास्माभिर्गुणा अभ्युपगम्यन्ते ॥ प्रमाणाभावात् । कार्यवशेन तु गुणानां स्वभावोऽभ्युपगम्यते । यथायथा कार्योत्पाद उपपद्यते, तथातथैतेषां स्वभावोऽभ्युपगन्तव्यः ॥ चलं गुणवृत्तमिति चास्त्यभ्युपगमः ॥ तस्मात्साम्यावस्थायामपि वैषम्योपगमयोग्या एव गुणा अवतिष्ठन्त इति ॥ एवमपि प्रधानस्य ज्ञशक्तिवियोगाद्रचनानुपपत्त्यादयः पूर्वोक्ता दोषास्तदवस्था एव ॥ ज्ञशक्तिमपि त्वनुमिमानः प्रतिवादित्वान्निवर्तेत । चेतनमेकमनेकप्रपञ्चस्य जगत उपादानमिति ब्रह्मवादप्रसंगात् ॥ वैषम्योपगमयोग्या अपि गुणाः साम्यावस्थायां निमित्ताभावान्नैव वैषम्यं भजेरन् । भजमाना वा निमित्ताभावाविशेषात्सर्वदैव वैषम्यं भजेरन्निति प्रसज्यत एवायमनन्तरोऽपि दोषः ॥९॥

---

रत्नप्रभा ।

सृष्ट्यनुपपत्तिरित्यर्थः । द्वितीयं दूषयति–बाह्यस्येति । चिरकालस्थितस्य साम्यस्य च्युतौ निमित्तं वाच्यम् । तन्नास्तीत्यर्थः ॥ ८ ॥ गुणानां मिथोऽनपेक्षस्वभावत्वान्न स्वतो वैषम्यमित्युक्तम् । तत्र हेत्वसिद्धिमाशङ्क्य सूत्रकारः परिहरति–अन्यथेति ॥ अनपेक्षस्वभावाद्–अन्यथा–सापेक्षत्वेन, गुणानामनुमानात्पूर्वसूत्रोक्तो दोषो न प्रसज्यते । न चैवमपसिद्धान्तः । कार्यानुसारेण गुणस्वभावस्वीकारादित्याह–चलं गुणवृत्तमिति ॥ पूर्वसूत्रोक्ताङ्गित्वानुपपत्तिदोषाभावमंगीकृत्य परिहरति–एवमपीति ॥ कार्यार्थे ज्ञानशक्तिकल्पने ब्रह्मवादः स्यादित्यर्थः । अङ्गीकारं त्यजति–वैषम्येति ॥ ९ ॥ सूत्रं व्याचष्टे–

भामती ।

तत्राह–बाह्यस्य चेति । यत्साम्यावस्थया सुचिरं पर्यणमत्कथं तदेवासति विलक्षणप्रत्ययोपनिपाते वैषम्यमुपैति। अनपेक्षस्य स्वतो वापि वैषम्ये न कदाचित्साम्यं भवेदित्यर्थः॥८॥ **अन्यथानुमितौ च ज्ञशक्तिवियोगात्।एवमपि प्रधानस्येति।** अङ्गित्वानुपपत्तिलक्षणो दोषस्तावन्न भवद्भिः शक्यः परिहर्तुमिति वक्ष्यामः। अभ्युपगम्याप्यस्यादोषत्वमुच्यत इत्यर्थः।संप्रत्यङ्गित्वानुपपत्तिमुपपादयति–**वैषम्योपगमयोग्या अपीति**९॥

आनन्दगिरीय–न्यायनिर्णयः ।

यति–बाह्यस्येति ॥ ८ ॥ गुणानामनपेक्षस्वभावत्वान्न स्वतो वैषम्यमित्यत्रासिद्धिमाशंक्य परिहरति–अन्यथेति । तत्रान्यथानुमितौ चेति भागं पूर्वपक्षत्वेन व्याकरोति–अथापीति । निरपेक्षेषु गुणेषु गुणप्रधानभावानुपपत्तावपीति यावत् । गुणानामङ्गाङ्गित्वानुपपत्त्या महदादिकार्यानुत्पत्तिरूपो दोषो यथा न भवति तथा मिथोनपेक्षत्वलक्षणस्वभावादन्यथा प्रकारान्तरेण गुणानन्योन्यसापेक्षानेव कल्पयामोऽतो न प्रागुक्तदोषप्रसक्तिरित्युक्तम् । प्रकारान्तरेण कल्पनामेव प्रकटयति–न हीति । तेषां मिथः सापेक्षत्वे विकारित्वे च तुल्यं प्रमाणासत्त्वमित्याशंक्याऽऽह–कार्येति । तथाऽपि कथं मिथः सापेक्षत्वं विकारित्वं वा गुणानामिति तत्राऽऽह–यथायथेति । अपसिद्धान्तं शंकित्वोक्तम्–चलमिति । उक्तोपगमफलमाह–तस्मादिति । पूर्वपक्षमनूद्य 'ज्ञशक्तिवियोगात्' इत्यादि व्याकुर्वन्परिहरति–एवमिति । येनयेन विना कार्यं नोपपद्यते तत्तदपि तद्वशादेवानुमेयमित्याशंक्याऽऽह–ज्ञेति । अनन्तरोक्तदोषनिरासं स्वीकृत्य व्यवहितदोषापत्तिमुक्त्वा संप्रत्यंगीकारं त्यजति–वैषम्येति । विपक्षे दण्डमाह–भजमाना वेति । अनन्तरो

## विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

**परस्परविरुद्धश्चायं सांख्यानामभ्युपगमः ॥ क्वचित्सप्तेन्द्रियाण्यनुक्रामन्ति ॥ क्वचिदेकादश ॥ तथा क्वचिन्महतस्तन्मात्रसर्गमुपदिशन्ति ॥ क्वचिदहङ्कारात् ॥ तथा क्वचित्त्रीण्यन्तःकरणानि वर्णयन्ति, क्वचिदेकमिति ॥ प्रसिद्ध एव तु श्रुत्येश्वरकारणवादिन्या ॥ विरोधस्तदनुवर्तिन्या च स्मृत्या ॥ तस्मादप्यसमञ्जसं सांख्यानां दर्शनमिति ॥ अत्राह-नन्वौपनिषदानामप्यसमञ्जसमेव दर्शनम् ॥ तप्यतापकयोर्जात्यन्तरभावानभ्युपगमात्-एकं हि ब्रह्म सर्वात्मकं सर्वस्य प्रपञ्चस्य कारणमभ्युपगच्छतात्मकस्यैवात्मनो विशेषौ तप्यतापकौ न जात्यन्तरभूतावित्यभ्युपग-**

---

रत्नप्रभा ।

**परस्परेति** ॥ त्वङ्मात्रमेव ज्ञानेन्द्रियमेकमनेकशब्दादिज्ञानकारणं, पञ्च कर्मेन्द्रियाणि, मनश्चेति **सप्तेन्द्रियाणि** । ज्ञानेन्द्रियाणि पञ्च, कर्मेन्द्रियाणि पञ्च, मनश्चेत्येकादश । बुद्धिरहङ्कारो मन इति त्रीणि । **एकमिति** । बुद्धिरेव । एवं पूर्वापरविरोधादिति व्याख्याय श्रुतिस्मृतिविप्रतिषेधाच्चेत्यर्थान्तरमाह-**प्रसिद्ध इति** । तस्माद् भ्रान्तिमूलत्वात्-सांख्यशास्त्रस्य । तेन निर्दोषवेदान्तसमन्वयस्याविरोध इति सिद्धम् । स्वमताऽसामञ्जस्यमसहमानः सांख्यः प्रत्यवतिष्ठते-**अत्राहेति** ॥ तप्यो जीवः । तापकः संसारः । तयोर्भेदानङ्गीकाराल्लोके प्रसिद्धस्तप्यतापकभावो लुप्येतेत्यर्थः । विवृणोति-**एकं हीति** ॥ तथा च भेदव्यवहारलोप इत्यसमञ्जसमित्यर्थः । ननु तयोरुपादानैक्येऽपि मिथो भेदोऽस्त्येव । यथा-एकवह्न्यात्मकयोरौष्ण्यप्रका-

भामती ।

**विप्रतिषेधाच्चासमञ्जसम्** । **क्वचित्सप्तेन्द्रियाणीति** । त्वङ्मात्रमेव हि बुद्धीन्द्रियमनेकरूपादिग्रहणसमर्थमेकं, कर्मेन्द्रियाणि पञ्च, सप्तमं च मन इति सप्तेन्द्रियाणि । **क्वचित् त्रीण्यन्तःकरणानि** । बुद्धिरहंकारो मन इति, **क्वचिदेकं** बुद्धिरिति । शेषमतिरोहितार्थम् । **अत्राह** सांख्यः-**नन्वौपनिषदानामपीति** । तप्यतापकभावस्तावदेकस्मिन्नोपपद्यते । न हि तपिरस्तिरिव कर्तृस्थभावकः, किंतु पचिरिव कर्मस्थभावकः । परसमवेतक्रियाफलशालि च कर्म । तथा च तप्येन कर्मणा तापकसमवेतक्रियाफलशालिना तापकादन्येन भवितव्यम् । अनन्यत्वे चैत्रस्येव गन्तुः स्वसमवेतगमनक्रियाफलनगरप्राप्तिशालिनोऽप्यकर्मत्वप्रसङ्गात् । अन्यत्वे तु तप्यस्य तापकाच्चैत्रसमवेतगमनक्रियाफलभाजो

आनन्दगिरीय-न्यायनिर्णयः ।

दोषो महदादिकार्योत्पादायोगः ॥ ९ ॥ इतश्चासंगतं सांख्यमतमित्याह-**विप्रतिषेधाच्चेति** । सूत्रं विभजते-**परस्परेति** । विरोधमुदाहरति-**क्वचिदिति** । त्वङ्मात्रमेव धीन्द्रियमनेकरूपादिधीसमर्थं कर्मेन्द्रियाणि पञ्च मनश्चेति सप्तेन्द्रियाणीत्यर्थः । पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाण्येकादशं मन इत्येकादशेन्द्रियाणीत्याह-**क्वचिदिति** । प्रकारान्तरेण विप्रतिषेधमाह-**तथेति** । तन्मात्रा भूतसूक्ष्माणि बुद्धिरहंकारो मन इति त्रीण्येकमिति बुद्धिरेवोच्यते । मियोविरोधसमाप्ताविति शब्दः । विप्रतिषेधशब्दस्यार्थान्तरमाह-**प्रसिद्ध इति** । सांख्यवादस्योक्तनीत्या भ्रान्तिमूलत्वात्तदीयन्यायविरोधो न समन्वयस्येत्युपसंहरति-**तस्मादिति** । सांख्यसमयस्यासामञ्जस्यादुपेक्षणीयत्वे प्रतिबन्द्या सांख्यश्चोदयति-**अत्रेति** । चोद्यं विवृणोति-**नन्विति** । सिद्धान्तस्यासामञ्जस्ये हेतुमाह-**तप्येति** । हेतुं साधयति-**एकं हीति** । प्रपञ्चस्य ब्रह्मातिरेकात्कुतस्तदैक्यं तत्राऽऽह-**सर्वेति** । तदपि कथं तत्राऽऽह-**सर्वस्येति** । न च तावेकस्य युक्तौ परसमवेतक्रियाफलशालि हि कर्म ततस्तापकात्तप्यस्य भेदोऽन्यथा तद्भावायोगात्तदयोगे च व्यवहारे विरोधादयुक्तं त्वन्मतमित्यर्थः । एकस्यैवाऽऽत्मनश्चेतनाचेतनात्मत्वात्तप्यतापकव्यवहारसिद्धौ नासाम-

न्तव्यं स्यात् ॥ यदि चैतौ तप्यतापकावेकस्यात्मनो विशेषौ स्यातां, स ताभ्यां तप्यतापकाभ्यां न निर्मुच्येतेति तापोपशान्तये सम्यग्दर्शनमुपदिशच्छास्त्रमनर्थकं स्यात् । न ह्यौष्ण्यप्रकाशधर्मकस्य प्रदीपस्य तदवस्थस्यैव ताभ्यां निर्मोक्ष उपपद्यते ॥ योऽपि जलवीचीतरंगफेनाद्युपन्यासः, तत्रापि जलात्मन एकस्य वीच्यादयो विशेषा आविर्भावतिरोभावरूपेण नित्या एवेति समानो जलात्मनो वीच्यादिभिरनिर्मोक्षः । प्रसिद्धश्चायं तप्यतापकयोर्जात्यन्तरभावो लोके । तथाहि—अर्थी चार्थश्चान्योन्यभिन्नौ लक्ष्येते, यद्यर्थिनः स्वतोऽन्योऽर्थो न स्याद्यस्यार्थिनो यद्विषयमर्थित्वं स तस्यार्थो नित्यसिद्ध एवेति तस्य तद्विषयमर्थित्वं न स्यात् । यथा प्रकाशात्मनः प्रदीपस्य प्रकाशाख्योऽर्थो नित्यसिद्ध एवेति न तस्य तद्विषयमर्थित्वं भवति । अप्राप्ते ह्यर्थेऽर्थिनोऽर्थित्वं स्यादिति । तथार्थस्याप्यर्थत्वं न स्यात् ॥ यदि स्यात्स्वार्थत्वमेव स्यात् ॥ न चैतदस्ति ॥

---

रत्नप्रभा ।

शयोः । अतो न व्यवहारलोप इत्याशङ्क्य वह्नेरिव ताभ्यामात्मनो मोक्षो न स्यादित्याह—यदि चेत्यादिना ॥ ननु सत्यपि धर्मिणि स्वभावनाशो मोक्ष उपपद्यते । सत्येव जले वीच्यादिनाशदर्शनादित्याशङ्क्य दृष्टान्तासिद्धिमाह—योऽपीति । किञ्च भेदांगीकारेऽपसिद्धान्तः, अनंगीकारे लोकप्रसिद्धिबाध इत्याह—प्रसिद्धश्चेति ॥ अर्थो ह्यर्जनाऽलाभादिनाऽर्थिनं तापयतीति तापकः । अर्थी तप्यः । तयोरभेदे बाधकमाह—यदीति ॥ अर्थिनोऽन्यस्याऽर्थस्याऽभावादर्थित्वाऽभाववदर्थादन्यस्यार्थिनोऽसत्त्वादर्थत्वाऽभावः प्रसज्येतेत्याह—तथार्थस्यापीति ॥ प्रसङ्गस्येष्टत्वं निराकरोति—न चैतदस्तीति ॥ अर्थत्वं हि काम-

भामती ।

गम्यस्येव नगरस्य तप्यत्वोपपत्तिः । तस्मादभेदे तप्यतापकभावो नोपपद्यत इति । दूषणान्तरमाह—यदि चेति । न हि स्वभावाद्भावो वियोजितुं शक्य इति भावः । जलधेश्च वीचितरङ्गफेनादयः स्वभावाः सन्त आविर्भावतिरोभावधर्माणो न तु तैर्जलधिः कदाचिदपि मुच्यते । न केवलं कर्मभावात्तप्यस्य तापकादन्यत्वमपि त्वनुभवसिद्धमपीत्याह—प्रसिद्धश्चायमिति । तथाहि—अर्थोऽप्युपार्जनरक्षणक्षयरागवृद्धिहिंसादोष-

आनन्दगिरीय—न्यायनिर्णयः ।

ग्रस्यमित्याशंक्याऽऽह—यदीति । किं तयोरात्मरूपत्वं तद्धर्मत्वं वेति विकल्प्याऽऽद्यं प्रत्याह—स इति । द्वितीयेऽपि तयोः स्वरूपान्तर्भावो बहिर्भावो वा । प्रथमे प्रागुक्तदोषानुषक्तिं दृष्टान्तेन स्पष्टयति—न हीति । औष्ण्यप्रकाशयोः स्वरूपत्वात्ताभ्यां दीपस्यानिर्मोक्षेऽपि तप्यतापकयोर्वीचीतरङ्गादिवद्धर्म्यनन्तर्भावाद्धर्मिणस्ताभ्यां पृथक्त्वान्नानिर्मुक्तिरिति पक्षान्तरमाशंक्याऽऽह—योऽपीति । वीचीतरङ्गादीनां जलधर्मत्वेऽपि तेभ्यो जलं पृथगिष्टं तथा तप्यतापकयोरात्मधर्मत्वेऽपि ताभ्यामात्मा पृथगिति योऽपि मोक्षसंभावनार्थमुपन्यासस्तत्रापि जलात्मनो वीच्यादिभिरनिर्मोक्षस्तेषां तत्संबन्धित्वेनाऽऽविर्भावादिना सदा सत्त्वात्तथाऽऽत्मन्यपि तप्यतापकयोरुद्भवादिना नित्यत्वादात्मनस्ताभ्यामनिर्मोक्षान्मोक्षशास्त्रानर्थक्यमित्यर्थः । कर्मकर्तृत्वात्तप्यतापकयोर्भिन्नत्ववत्प्रसिद्धत्वादपि तयोर्भिन्नत्वमित्याह—प्रसिद्धश्चेति । लौकिकीं प्रसिद्धिं प्रकटयति—तथाहीति । अर्थी तप्यस्तापकश्चार्थस्तयोर्भेदे तावदनुभवमाह—अर्थीति । तत्रैव युक्तिमाह—यदीति । तयोर्भेदानुपगमेऽर्थस्यार्थिमात्रत्वमर्थिनो वाऽर्थमात्रत्वं नाऽऽद्य इत्याह—यस्येति । नित्यप्राप्तेऽर्थे नार्थितेत्यत्र दृष्टान्तमाह—यथेति । दार्ष्टान्तिकं विवक्षन्नाह—अप्राप्ते हीति । स्वरूपत्वेन प्राप्तेऽर्थे नार्थिनोऽर्थित्वमिति शेषः । एवमर्थस्यार्थिमात्रत्वं नेत्युपसंहर्तुमितिशब्दः । अर्थिनोऽर्थमात्रत्वं प्रत्याह—तथेति । अर्थिनोऽर्थानतिरेके सतीति यावत् । अर्थिवदितिदृष्टान्तार्थोऽपिशब्दः । इष्टापत्तिमाशंक्याऽऽह—न चेति । अर्थस्य स्वार्थत्वे शेषत्वधर्मीविरोधः स्यादित्यर्थः । इतश्चार्थार्थिनोर्भिन्नतेत्याह—

**सम्बन्धिशब्दौ ह्येतावर्थी चार्थश्चेति ॥ द्वयोश्च सम्बन्धिनोस्सम्बन्धस्स्यान्नैकस्यैव ॥ तस्माद्भिन्नावेतावर्थार्थिनौ ॥ तथाऽनर्थानर्थिनावपि ॥ अर्थिनोऽनुकूलोऽर्थः । प्रतिकूलोऽनर्थः । ताभ्यामेकः पर्यायेणोभाभ्यां सम्बध्यते ॥ तत्रार्थस्याल्पीयस्त्वाद्भूयस्त्वाच्चानर्थस्योभावप्यर्थानर्थावनर्थ एवेति तापकः स उच्यते ॥ तप्यस्तु पुरुषः । य एकः पर्यायेणोभाभ्यां सम्बध्यत इति ॥ तयोस्तप्यतापकयोरेकात्मतायां मोक्षानुपपत्तिः ॥ जात्यन्तरभावे तु तत्संयोगहेतुपरिहारात्स्यादपि कदाचिन्मोक्षोपपत्तिरिति ॥**

---

रत्नप्रभा ।

नाविषयत्वम् । तच्च काम्यादन्यस्य कामयितुरसत्त्वान्न स्यात् । न हि स्वार्थत्वमस्ति । काम्यस्यैव कामयितृत्वायोगात् । तस्माद्भेदोऽङ्गीकार्य इत्यर्थः । इतश्च भेद इत्याह—**सम्बन्धीति** ॥ तथाऽनर्थानर्थिनावपि भिन्नावित्यन्वयः ॥ अर्थानर्थयोः स्वरूपोक्तिपूर्वकं तापकत्वं स्फुटयति—**अर्थिनोऽनुकूल इति** । अद्वैतमते मुक्तेरयोगमुक्त्वा स्वमते योगमाह—**जात्यन्तरेति** ॥ तया तप्यया बुद्ध्या पुरुषस्य **संयोगः** स्वस्वामिभावः तस्य हेतुरनादिरविवेकस्तस्य परिहारो विवेकः । तस्मान्नित्यमुक्तस्यापि पुरुषस्य कथञ्चिदुपचारान्मोक्षोपपत्तिरित्यर्थः । **यथा**—योद्धृगतौ जयपराजयौ राजन्युपचर्येते, **तथा** पुरुषादत्यन्तभिन्नबुद्धिगतौ

भामती ।

दर्शनादनर्थः सन्नर्थिनं दुनोति, तदर्थी तप्यस्तापकश्चार्थः, तौ चेमौ लोके प्रतीतभेदौ । अभेदे च दूषणान्युक्तानि । तत्कथमेकस्मिन्नद्वये भवितुमर्हत इत्यर्थः । तदेवमौपनिषदं मतमसमञ्जसमुक्त्वा सांख्यः स्वपक्षे तप्यतापकयोर्भेदे मोक्षमुपपादयति—**जात्यन्तरभावे त्विति** । दृग्दर्शनशक्त्योः किल संयोगस्तापनिदानं, तस्य हेतुरविवेकदर्शनसंस्कारोऽविद्या, सा च विवेकख्यात्या विद्यया विरोधित्वाद्विनिवर्त्यते, तन्निवृत्तौ तद्धेतुकः संयोगो निवर्तते, तन्निवृत्तौ च तत्कार्यस्तापो निवर्तते । तदुक्तं पञ्चशिखाचार्येण—'तत्संयोगहेतुविवर्जनात्स्यादयमात्यन्तिको दुःखप्रतीकारः' इति । अत्र च न साक्षात्पुरुषस्यापरिणामिनो बन्धमोक्षौ, किंतु बुद्धिसत्त्वस्यैव चितिच्छायापत्त्या लब्धचैतन्यस्य । तथाहि—इष्टानिष्टगुणस्वरूपावधारणमविभागापन्नमस्य भोगः, भोक्तृस्वरूपावधारणमपवर्गः, तेन हि बुद्धिसत्त्वमेवापवृज्यते, तथापि यथा जयः पराजयो वा योधेषु वर्तमानः प्राधान्यात्स्वामिन्यपदिश्यते, एवं बन्धमोक्षौ बुद्धिसत्त्वे वर्तमानौ कथंचित्पुरुषेऽपदिश्येते, स ह्यविभागापत्त्या तत्फलस्य भोक्तेति । तदेतदभिसंधायाह—**स्यादपि कदाचिन्मोक्षोपपत्तिरिति** ।

आनन्दगिरीय-न्यायनिर्णयः ।

**संबन्धीति** । तथाऽपि कथं भिन्नत्वं तत्राऽऽह—**द्वयोश्चेति** । अर्थार्थिभेदमनुभवयुक्तिसिद्धं निगमयति—**तस्मादिति** । अर्थार्थिनोरुक्तन्यायमनर्थानर्थिनोरपि संचारयति—**तथेति** । अर्थार्थिवत्तावपि भिन्नावेवेति संबन्धः । अर्थानर्थयोर्भेदमुदाहरति—**अर्थिन इति** । तर्हि कथमेकस्यैव विरुद्धधर्मद्वयं तत्राऽऽह—**ताभ्यामिति** । तप्यतापकयोर्भिन्नत्वप्रसिद्धिमुपक्रम्यान्यदेवोक्तम् । न चानर्थानर्थिनोस्तप्यतापकत्वेऽपि तदर्थार्थिनोरस्तीत्याशङ्क्याऽऽह—**तत्रेति** । तप्यतापकयोर्भिन्नत्वमुपपाद्य विपक्षे मोक्षासिद्धिं पूर्वोक्तामुपसंहरति—**इति तयोरिति** । त्वन्मतेऽपि भिन्नयोरेव तप्यतापकयोर्वीचीतरङ्गादिवदुद्भवाभिभवाभ्यां नित्यत्वात्कुतो मुक्तिरित्याशङ्क्य पूर्वपक्षी स्वपक्षे मोक्षसिद्धिमाह—**जात्यन्तरेति** । नन्वविवेकस्तप्यतापकयोः संयोगे हेतुस्तस्य विवेकान्निवृत्तिरिति मते नित्यादागन्तुकाद्वा ततस्तन्निवृत्तिराद्ये सदा मुक्तेः संसाराभावः । द्वितीये त्वागन्तुकस्य विवेकस्यानाधेयातिशये पुंस्यसंभवः । न च सत्त्वस्यैवासौ तस्यैव सम्यग्धिया मोक्षो बन्धश्च तदभावादिति पुंसो द्वयाभावापातान्मैवं बुद्धिसत्त्वस्थावपि बन्धमोक्षौ योद्धृगताविव जयपराजयौ स्वामिनि पुंस्युपचरितौ तस्य बुद्धिसत्त्वाविभागापत्त्या तत्फलभोक्तृत्वादिति मत्वाऽऽह—**स्यादपीति** ।

**अत्रोच्यते ॥ न एकत्वादेव तप्यतापकभावानुपपत्तेः ॥ भवेदेष दोषो यद्येकात्मतायां तप्यतापकावन्योन्यस्य विषयविषयिभावं प्रतिपद्येयाताम् । न त्वेतदस्ति ॥ एकत्वादेव॥ न ह्यग्निरेकस्सन्नात्मानं दहति प्रकाशयति वा ॥ सत्यप्यौष्ण्यप्रकाशादिधर्मभेदे परिणामित्वे च किमु कूटस्थे ब्रह्मण्येकस्मिंस्तप्यतापकभावस्सम्भवेत ॥ क्व पुनरयं तप्यतापकभावः स्यादिति ॥ उच्यते॥ किं न पश्यसि, कर्मभूतो जीवद्देहस्तप्यस्तापकस्सवितेति ॥ ननु तप्तिर्नाम दुःखम् । सा चेतयितुः । नाचेतनस्य देहस्य। यदि हि देहस्यैव तप्तिः स्यात, सा देहनाशे स्वयमेव नश्यतीति तन्नाशाय साधनं नैषितव्यं स्यादिति ॥ उच्यते ॥ देहाभावेपि केवलस्य चेतनस्य तप्तिर्न दृष्टा ॥**

---

रत्नप्रभा ।

बन्धमोक्षौ पुरुषे उपचर्येते । तदुक्तं सैव च बध्यते मुच्यत इति । सिद्धान्तयति—**अत्रेति** ॥ किं परमार्थदृष्ट्या तप्यतापकभावानुपपत्तिरुच्यते, व्यवहारदृष्ट्या वा ?—नाद्यः—इत्याह—**नैकत्वादेवेति** ॥ दोषत्वमिति शेषः। तस्यात्मदोषत्वं विवृणोति—**भवेदित्यादिना** ॥ एतत् तात्त्विकविषयविषयित्वं न त्वस्तीत्यर्थः । **यत्र** तप्यतापकभावो दृष्टः, **तत्रैवेति** । व्यवहारपक्षमादाय सिद्धान्ती ब्रूते—**किं न पश्यसीति** ॥ देहस्य तप्यत्वे देहात्मवादापत्तिरिति शङ्कते—**नन्विति** ॥ अचेतनस्यैव देहस्य तप्तिर्नेति वदता सांख्येन वक्तव्यम्—किं चेतनस्य केवलस्य तप्तिः,किं वा देहसंहतस्य उत—तप्तेः आहोस्वित्—सत्त्वस्य । नाद्यः—इत्याह **उच्यत इति** ॥

भामती ।

अत्रोच्यते—**न एकत्वादेव तप्यतापकभावानुपपत्तेः** । यत एकत्वे तप्यतापकभावो नोपपद्यत एकत्वादेव, तस्मात्सांव्यवहारिकभेदाश्रयस्तप्यतापकभावोऽस्माभिरभ्युपेयः । तापो हि सांव्यवहारिक एव न पारमार्थिक इत्यसकृदावेदितम् । **भवेदेष दोषो यद्येकात्मतायां तप्यतापकावन्योन्यस्य विषयविषयिभावं प्रतिपद्येयाताम्**इत्यस्मदभ्युपगम इति शेषः । सांख्योऽपि हि भेदाश्रयं तप्यतापकभावं ब्रुवाणो न पुरुषस्य तपिकर्मतामाख्यातुमर्हति, तस्यापरिणामितया तपिक्रियाजनितफलशालित्वानुपपत्तेः । केवलमनेन सत्त्वं तप्यमभ्युपेयं तापकं च रजः दर्शितविषयत्वात्तु बुद्धिसत्त्वे तप्ये तदविभागापत्त्या पुरुषोऽप्यनुतप्यत इव न तु तप्यतेऽपरिणामित्वादित्युक्तम् । तदविभागापत्तिश्चाविद्या, तथा चाविद्याकृतस्तप्यतापकभावस्त्वयाभ्युपेयः, सोऽयमस्माभिरुच्यमानः किमिति भवतः परुष इवाभाति। अपि च नित्यत्वाभ्युपगमाच्च

आनन्दगिरीय—न्यायनिर्णयः ।

अनिर्मोक्षप्रसक्तेरयुक्तमौपनिषदं मतमिति प्राप्तमनूद्य समाधिसत्त्वं सूचयति—**अत्रेति** । वस्तुत्वं तप्यतापकयोरुपेत्यानिर्मोक्षो विवक्ष्यते भ्रान्तित्वं वेति विकल्प्याऽऽद्यं निराह—**नेत्यादिना** । तदेव प्रपञ्चयति—**भवेदिति** । विषयविषयिभावं तात्त्विकमिति शेषः । ऐक्ये तात्त्विको विषयविषयिभावो नेत्यत्र दृष्टान्तमाह—**न हीति** । कैमुतिकन्यायार्थं सत्यपीत्युक्तम् । किमु कूटस्थे ब्रह्मणीत्यत्राऽऽक्षेपार्थे किंशब्दः । द्वितीयमवलम्बयितुं शंकयति—**क्वेति** । बाह्यस्याऽऽन्तरस्य वाऽऽश्रयस्तप्यतापकत्वस्य पृच्छ्यते प्रथमं प्रत्याह—**उच्यत इति** । द्वितीयमादाय शङ्कते—**नन्विति** । साऽपि लिङ्गदेहस्यैव स्यादित्याशंक्याह—**यदीति** । कल्पितात्मत्व लिङ्गगामित्वेनाऽऽन्तरस्य तस्य भ्रान्तिमात्रत्वमभ्युपेतमित्याह—**उच्यत इति** । यत्तु लिङ्गस्य नाशित्वात्तद्गततप्यतापकत्वस्य स्वयमेव नाशाद्वेत्वनुष्ठानानर्थक्यमिति तन्न । लिंगस्य यावदात्मभावित्वेनामुक्तेरवस्थानादित्याशयेनाऽऽह—**देहेति** । किंच, सांख्यस्यापि तप्यतापकत्वमाविद्यं पारिशेष्यसिद्धं, तप्तिर्हि तन्मते केवलस्य वा चेतनस्य संहतस्य वा तत्सेवा

न च त्वयापि तप्तिर्नाम विक्रिया चेतयितुः केवलस्येष्यते। नापि देहचेतनयोस्संहतत्वम् ॥ अशुद्ध्यादिदोषप्रसङ्गात्॥ न च तप्तेरेव तप्तिमभ्युपगच्छसीति कथं तवापि तप्यतापकभावः॥ सत्त्वं तप्यं, तापकं रज इति चेत ॥ न॥ ताभ्यां चेतनस्य संहतत्वानुपपत्तेः ॥ सत्त्वानुरोधित्वाच्चेतनोऽपि तप्यत इवेति चेत् ॥ परमार्थतस्तर्हि नैव तप्यत इत्यापतति । इवशब्दप्रयोगात् ॥ न चेत्तप्यते नेवशब्दो दोषाय ॥ न हि डुण्डुभः सर्प इवेत्येतावता सविषो भवति । सर्पो वा डुण्डुभ इवेत्येतावता निर्विषो भवति ॥ अतश्चाविद्याकृतोऽयं तप्यतापकभावो न पारमार्थिक इत्यभ्युपगन्तव्यमिति॥ नैवं सति ममापि किञ्चिद् दुष्यति॥ अथ पारमार्थिकमेव चेतनस्य तप्यत्वमभ्युपगच्छसि, तवैव सुतरामनिर्मोक्षः प्रसज्येत ॥ नित्यत्वाभ्युपगमाच्च तापकस्य ॥ तप्यतापकशक्त्योर्नित्यत्वेऽपि सनिमित्तसंयोगापेक्ष-

---

रत्नप्रभा ।

न द्वितीयतृतीयौ इत्याह—नापीत्यादिना ॥ चतुर्थं शंकते—सत्त्वमिति ॥ सत्त्वरजसोस्तप्यतापकत्वे पुरुषस्य बन्धाभावाच्छास्त्रारम्भवैयर्थ्यमिति परिहरति—न ताभ्यमिति ॥ असङ्गत्वेऽपि पुरुषस्य तप्यसत्त्वप्रतिबिम्बत्वात्तप्तिरिति शङ्कते—सत्त्वेति ॥ तर्हि जलचन्द्रस्य चलनवन्मिथ्यैव तप्तिरित्यस्मत्पक्ष आगत इत्याह—परमार्थत इति ॥ इवशब्दमात्रेण कथं मिथ्यातप्त्यागम इति चेत्तदुच्यते । इवशब्दस्तप्यबुद्धिसत्त्वसादृश्यं ब्रूते । तच्च सादृश्यं पुरुषस्य तप्यत्वरूपं चेत्, कल्पितमेव । वस्तुतस्तत्त्यभावादित्युपपादयति—न चेदिति ॥ पुरुषो वस्तुतस्तप्तिशून्यश्चेदिवशब्दो न दोषाय । मिथ्यातप्तिपरत्वादित्यर्थः । मिथ्यासादृश्यमेव दोष इति चेत् । नेत्याह—न हीति ॥ सविषत्वं निर्विषत्वं चेवशब्दार्थः कल्पित एव द्रष्टव्यः । सांख्यस्याऽऽविद्यके तप्यतापकत्वे सति ममापि किञ्चिन्न दुष्यति । किन्तु इष्टमेव सम्पन्नमित्यर्थः । यदि मिथ्यातप्यत्वाङ्गीकारेऽपसिद्धान्तः स्यादिति भीत्या सत्यं तप्यत्वं पुरुषस्योच्यते, तथाप्यपसिद्धान्तः । कौटस्थ्यहानादनिर्मोक्षश्च । सत्यस्यात्मवन्निवृत्त्ययोगादित्याह—अथेत्यादिना ॥ किञ्च रजसो नित्यत्वाद्दुःखसातत्यमित्याह—नित्यत्वेति ॥ अत्र सांख्यः शङ्कते—तप्येति ॥

भामती ।

तापकस्यानिर्मोक्षप्रसङ्गः । शङ्कते—तप्यतापकशक्त्योर्नित्यत्वेऽपीति । सहादर्शनेन निमित्तेन

आनन्दगिरीय-न्यायनिर्णयः ।

सत्त्वस्य वा नाऽऽद्य इत्याह—न चेति । न द्वितीय इत्याह—नापीति । न तृतीय इत्याह—न चेति । न च केवलस्य देहस्यैव तप्तिः 'नाचेतनस्य देहस्य' इत्युक्तत्वादित्याक्षिपति—कथमिति । चतुर्थं शंकते—सत्त्वमिति । तयोस्तप्यतापकत्वे तन्निवृत्तये हेत्वनुष्ठानं पुंसो न स्यादित्याह—नेति । सत्त्वरजोभ्यामविवेकात्तस्यापि तप्तिः स्यादित्याशंक्याऽऽह—ताभ्यामिति । आत्मनस्तप्तेः सत्त्वे प्रतिबिम्बितत्वाद्युक्ता तप्तिरितिं शङ्कते—सत्त्वेति। किमिवशब्दस्याऽऽभासोऽर्थः सादृश्यं वा। प्रथमं प्रत्याह—परमार्थ इति । क्वचिदिवशब्दस्य सादृश्येऽपि प्रयोगादिहापि तथेति द्वितीयं शङ्कित्वाऽऽह—न चेदिति । चेतनस्य तप्यत्वं कल्पितमकल्पितं वोपेत्येवशब्दः सादृश्ये प्रयुक्तः । नाऽऽद्यो वस्तुतोऽतप्यत्वे सादृश्यस्याकिंचित्करत्वादित्यर्थः । कथमिवशब्दस्योक्तसादृश्यस्याकिंचित्करत्वं तप्यमानसादृश्ये तप्यमानत्वयोगात्तत्राऽऽह—न हीति । पारिशेष्यं निगमयति—अतश्चेति । परमते तप्यतापकत्वस्याऽऽविद्यत्वे किं ते जातं तदाह—नैवमिति । अनिर्वाच्यत्वेनाऽऽविद्यत्वं तप्यत्वस्य मया नेष्टमिति कल्पान्तरमाह—अथेति । तप्तिक्रियायास्तत्संबन्धस्य च वस्तुत्वाज्ज्ञानादनिवृत्तेर्न मुक्तिरित्याह—तवैवेति । सुतरामित्युक्तमतिशयमाह—नित्यत्वेति । प्रधानं तापकम् । सांख्यः स्वपक्षे मोक्षसिद्धिं शङ्कते—तप्येतिं । निमित्तेनादर्शनेन सह वर्तत इति सनिमित्तः

त्वात्ततेः संयोगनिमित्तादर्शननिवृत्तावात्यन्तिकस्संयोगोपरमः । ततश्चात्यन्तिको मोक्ष उपपन्न इति चेत् ॥ न ॥ अदर्शनस्य तमसो नित्यत्वाभ्युपगमात् । गुणानां चोद्भवाभिभवयोरनियतत्वादनियतस्संयोगनिमित्तोपरम इति वियोगस्याप्यनियतत्वात्सांख्यस्यैवानिर्मोक्षोऽपरिहार्यस्स्यात् ॥ औपनिषदस्य त्वात्मैकत्वाभ्युपगमादेकस्य च विषयविष-

---

रत्नप्रभा ।

सत्त्वं, पुरुषो वा, तप्यशक्तिः । तापकशक्तिस्तु—रजः । निमित्तम्—अविवेकात्मकमदर्शनं—तमः । तेन सहितः सनिमित्तः संयोगः पुरुषस्य गुणस्वामित्वरूपः । तदपेक्षत्वादित्यर्थः । मोक्षः—तप्त्यभावः । निमित्तस्य निवृत्त्यभावान्न मोक्ष इति । सिद्धान्ती परिहरति—नेति । तमसो निवृत्त्यभावेऽपि विवेकेनोपरमान्मोक्ष इत्यत आह—गुणानां चेति ॥ चलं गुणवृत्तमित्यङ्गीकारादिति भावः । परपक्षे बन्धमोक्षानुपपत्तिमुक्त्वा स्वपक्षमुपसंहरति—औपनिषदस्य त्विति ॥ वस्तुत एकत्वेन बन्धाभावान्न मुक्त्यभावशङ्कावसरः । व्यवहारे तु भेदाङ्गीकारात् तप्यतापकभावो बन्धः । तत्त्वज्ञानात् तन्निवृत्तिश्चोपपद्यत इति

भामती ।

वर्तेत इति सनिमित्तः संयोगस्तदपेक्षत्वादिति । निराकरोति—न । अदर्शनस्य तमस इति । न तावत्पुरुषस्य ततिरित्युक्तम् । केवलमियं बुद्धिसत्त्वस्य तापकरजोजनिता, तस्य च बुद्धिसत्त्वस्य तामसविपर्यासादात्मनः पुरुषाद्भेदमपश्यतः पुरुषस्तप्यत इत्यभिमानः, न तु पुरुषो विपर्यासतुषेणापि युज्यते । तस्य तु बुद्धिसत्त्वस्य सात्त्विक्या विवेकख्यात्या तामसीयमविवेकख्यातिर्निवर्तनीया । न च सति तमसि मूले शक्यात्यन्तमुच्छेत्तुम् । तथा विच्छिन्नापि छिन्नवदरीव पुनस्तमसोद्भूतेन सत्त्वमभिभूय विवेकख्यातिमपोद्य शतशिखराऽविद्याविर्भाव्येतेति वतेयमपवर्गकथा तपस्विनो दत्तजलाञ्जलिः प्रसज्येत । अस्मत्पक्षे त्वदोष इत्याह—औपनिषदस्य त्विति । यथा हि मुखमवदातमपि मलिनादर्शतलोपाधिकल्पितप्रतिबिम्बभेदं मलिनतामुपैति, न च तद्वस्तुतो मलिनं, न च बिम्बात्प्रतिबिम्बं वस्तुतो भिद्यते, अथ तस्मिन् प्रतिबिम्बे मलिनादर्शोपधानान्मलिनता पदं लभते । तथा चात्मनो मलिनं मुखं पश्यन् देवदत्तस्तप्यते । यदा तूपाध्यपनयाद्बिम्बमेव कल्पनावशात् प्रतिबिम्बं तच्चावदातमिति तत्त्वमवगच्छति तदास्य तापः प्रशाम्यति न च मलिनं मे मुखमिति । एवमविद्योपधानकल्पितावच्छेदो जीवः परमात्मप्रतिबिम्बकल्पः कल्पितैरेव शब्दादिभिः संपर्कात्तप्यते न तु तत्त्वतः परमात्मनोऽस्ति तापः । यदा तु 'तत्त्वमसि' इति वाक्यश्रवणमननध्यानाभ्यासपरिपाकप्रकर्षपर्यन्तजोऽस्य साक्षात्कार उपजायते तदा जीवः शुद्धबुद्धतत्त्वस्वभावमात्मनोऽनुभवन् निर्मृष्टनिखिलसवासनक्लेशजालः केवलः स्वस्थो भवति, न चास्य पुनः संसारभयमस्ति तद्धेतोरवास्तवत्वेन समूलकापं कषितत्वात् । सांख्यस्य तु सतस्तमसोऽशक्यसमुच्छेदत्वादिति । तदिद-

आनन्दगिरीय—न्यायनिर्णयः ।

प्रकृतिपुरुषयोगस्तदपेक्षत्वादात्मनि तत्तेर्निमित्तनिवृत्त्या नैमित्तिकनिवृत्तौ शक्तिनित्यत्वेऽपि सर्वात्मना तापक्षयलक्षणो मोक्षः सिध्यतीत्यर्थः । अदर्शनस्याभावस्य नित्यत्वादनिवृत्तेस्तत्त्वान्तरेषु चानन्तर्भावात्तमस्यन्तर्भावमभ्युपेत्य प्रत्याह—नेति। उद्भूतेन तमसा तप्यतापकयोः संबंधोपपत्तेस्तात्त्वधिया तमसोऽभिभवे संबन्धाभावाद्बन्धध्वस्तिरित्याशंक्याऽऽह—गुणानां चेति। परपक्षे मोक्षसिद्धिं प्रसाध्य स्वपक्षे तदुपपत्तिमाह—औपनिषदस्येति। अनिर्मोक्षाशङ्का नेति संबन्धः। सा किं हेत्वभावाद्वा तप्यतापकयोः स्वाभाविकत्वाद्वा । नाऽऽद्य इत्याह—आत्मेति। न द्वितीय इत्याह—एकस्येति। तप्यतापकयोरस्वाभाविकत्वेऽपि विकारोपाधिकयोरुद्भवादिना

यिभावानुपपत्तेर्विकारभेदस्य च वाचारम्भणमात्रत्वश्रवणादनिर्मोक्षशङ्का स्वप्नेऽपि नोपजायते ॥ व्यवहारे तु यत्र यथा दृष्टस्तप्यतापकभावस्तत्र तथैव स इति न चोदयितव्यः परिहर्तव्यो वा भवति ॥ १० ॥ इति रचनानुपपत्त्यधिकरणम् ॥ १ ॥ प्रधानकारणवादो निराकृतः ॥

रत्नप्रभा ।

न चोद्यावसर इत्यर्थः ॥ १० ॥ ( १ ) ॥ वृत्तानुवादेन "महद्दीर्घवद्" [ व्या० सू० २ । २ । ११ ] इति स्वमतस्थापनात्मकाधिकरणस्य सङ्गतिमाह—प्रधानेति ॥ यद्यपि सांख्यमतनिरासानन्तरं परमाणुवादो निराकर्तव्यः । स्वमतस्थापनस्य स्मृतिपादे सङ्गतत्वात् । तथापि पूर्वत्र प्रधानगुणानां सुखादीनां जगत्यनन्वयात् प्रधानस्यानुपादानत्वमुक्तम् । तथा ब्रह्मगुणचैतन्यानन्वयाद्ब्रह्मणोऽपि नोपादानत्वमिति दोषो दृष्टान्तसङ्गतिलाभादत्र समाधीयत इत्यर्थः । चेतनाद्ब्रह्मणो जगत्सर्गवादी वेदान्तसमन्वयो विषयः । स किं—यः समवायिकारणगुणः सः, कार्यद्रव्ये स्वसमानजातीयगुणारम्भकः । तन्तुशौक्ल्यवदिति न्यायेन

भामती ।

मुक्तम्—विकारभेदस्य च वाचारम्भणमात्रत्वश्रवणादिति ॥ १० ॥ (१) ॥ प्रधानकारणवाद इति । यथैव प्रधानकारणवादो ब्रह्मकारणवादविरोध्येवं परमाणुकारणवादोऽप्यतः सोऽपि निराकर्तव्यः । 'एतेन शिष्टापरिग्रहा अपि व्याख्याताः' इत्यस्य प्रपञ्च आरभ्यते । तत्र वैशेषिका ब्रह्मकारणत्वं दूषयांबभूवुः । चेतनं चेदाकाशादीनामुपादानं तदारब्धमाकाशादि चेतनं स्यात् । कारणगुणक्रमेण हि कार्ये गुणारम्भो दृष्टः, यथा शुक्लैस्तन्तुभिरारब्धः पटः शुक्लः, न जात्वसौ कृष्णो भवति । एवं चेतनेनारब्धमाकाशादि चेतनं भवेन्न त्वचेतनम् । तस्मादचेतनोपादानमेव जगत् । तच्चाचेतनं परमाणवः । सूक्ष्मात् खलु स्थूलस्योत्पत्तिर्दृश्यते, यथा तन्तुभिः पटस्यैवमंशुभ्यस्तन्तूनामेवमपकर्षपर्यन्तं कारणद्रव्यमतिसूक्ष्ममनवयवमवतिष्ठते, तच्च परमाणु । तस्य तु सावयवत्वेऽभ्युपगम्यमानेऽनन्तावयवत्वेन सुमेरुराजसर्षपयोः समानपरिमाणत्वप्रसङ्ग इत्युक्तम् । तत्र च प्रथमं तावददृष्टवत्क्षेत्रज्ञसंयोगात्परमाणौ कर्म, ततोऽसौ परमाण्वन्तरेण संयुज्य द्व्यणुकमारभते । बहवस्तु परमाणवः संयुक्ता न सहसा स्थूलमारभन्ते, परमाणुत्वे सति बहुत्वात्, घटोपगृहीतपरमाणुवत् । यदि हि घटोपगृहीताः परमाणवो घटमारभेरन् न घटे प्रविभज्यमाने कपालशर्कराद्युपलभ्येत, तेषामनारब्धत्वात्, घटस्यैव तु तैरारब्धत्वात् । तथा सति मुद्गरप्रहाराद् घटविनाशे न किंचिदुपलभ्येत, तेषामनारब्धत्वात् । तदवयवानां परमाणूनामतीन्द्रियत्वात् । तस्मान्न बहूनां परमाणूनां द्रव्यं प्रति समवायिकारणत्वम्, अपि तु द्वावेव परमाणू द्व्यणुकमारभेते । तस्य चाणुत्वं परिमाणं परमाणुपरिमाणात् पारिमाण्डल्यादन्यदीश्वरबुद्धिमपेक्ष्योत्पन्ना द्वित्वसंख्यारभते । न च द्व्यणुकाभ्यां द्रव्यस्यारम्भः, वैयर्थ्यप्रसङ्गात् । तदपि हि द्व्यणुकमेव भवेन्न तु महत् । कारणबहुत्वमहत्त्वप्रचयविशेषेभ्यो हि महत्त्वस्योत्पत्तिः । न च द्व्यणुकयोर्महत्त्वमस्ति, यतस्ताभ्यामारब्धं महद्भवेत् । नापि तयोर्बहुत्वं, द्वित्वादेव । न च प्रचयभेदस्तूलपिण्डानामिव, तदवयवानामनवयवत्वेन प्रशिथिलावयवसंयोगभेदविरहात् । तस्माच्चेनापि तत्कारणद्व्यणुकवदणुनैव भवितव्यं, तथा च पुरुषोपभोगातिशयाभावाददृष्टनिमित्तत्वाच्च विश्वनिर्माणस्य भोगार्थत्वात्तत्कारणेन च द्व्यणुकेन तन्निष्पत्तेः कृतं द्व्यणुकाश्रयेण द्व्यणुकान्तरेणेत्यारम्भवैयर्थ्यात् । आरम्भार्थवत्त्वाय बहुभिरेव द्व्यणुकैस्त्र्यणुकं चतुरणुकं वा द्रव्यं महद्दीर्घमारब्धव्यम् । अस्ति हि तत्रतत्र

आनन्दगिरीय—न्यायनिर्णयः ।

नित्यत्वादनिर्मोक्षाशंकेत्याशंक्याऽऽह—विकारेति । आत्मैक्योपगमे कथं दृश्यमानं तप्यतापकत्वं, न खल्वेकस्मिन्नेवार्थार्थित्वादि युक्तमित्याशंक्य काल्पनिके व्यावहारिके तस्मिन्नानुपपत्तिरित्याह—व्यवहारे त्विति ॥ १० ॥ ( १ ) ॥ वृत्तं कीर्तयति—प्रधानेति । तस्य भ्रान्तिमूलत्वात्तदीययुक्तिविरोधः समन्व-

परमाणुकारणवाद इदानीं निराकर्तव्यः ॥ तत्रादौ तावद्योऽणुकारणवादिना ब्रह्मवादिनि दोष उत्प्रेक्ष्यते । स प्रतिसमाधीयते ॥ तत्रायं वैशेषिकाणामभ्युपगमः ॥ कारणद्रव्यसमवायिनो गुणाः कार्यद्रव्ये समानजातीयं गुणान्तरमारभन्ते। शुक्लेभ्यस्तन्तुभ्यश्शुक्लस्य पटस्य प्रसवदर्शनात्। तद्विपर्ययादर्शनाच्च ॥ तस्माच्चेतनस्य ब्रह्मणो जगत्कारणत्वेऽभ्युपगम्यमाने कार्येऽपि जगति चैतन्यं समवेयात् ॥ तददर्शनात्तु न चेतनं ब्रह्म जगत्कारणं भवितुमर्हतीति ॥ इममभ्युपगमं तदीययैव प्रक्रियया व्यभिचारयति—

**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥ ( २ ) ॥**

रत्नप्रभा ।

विरुध्यते न वेति सन्देहे न्यायस्याव्यभिचाराद्विरुध्यत इति प्राप्ते, व्यभिचारान्न विरोध इति सिद्धान्तसूत्रं

भामती ।

भोगभेदः । अस्ति च बहुत्वसंख्येश्वरबुद्धिमपेक्ष्योत्पन्नामहत्त्वपरिमाणयोनिः । त्र्यणुकादिभिरारब्धं तु कार्यद्रव्यं कारणबहुत्वाद्वा कारणमहत्त्वाद्वा कारणप्रचयभेदाद्वा महद्भवतीति प्रक्रिया । तदेतयैव प्रक्रियया कारणसमवायिनो गुणाः कार्यद्रव्ये समानजातीयमेव गुणान्तरमारभन्त इति दूषणमदूषणीक्रियते व्यभिचारादित्याह—महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् । यथा महद् द्रव्यं त्र्यणुकादि ह्रस्वाद् द्व्यणुका-

आनन्दगिरीय—न्यायनिर्णयः ।

यस्य नास्तीत्युक्तमित्यर्थः । वैशेषिकाधिकरणस्य तात्पर्यमाह—परमाण्विति । तस्य भ्रान्तिमूलत्वोक्त्या तदीययुक्तिविरोधो निरस्यः समन्वयस्येत्यर्थः । तन्निराकरणस्यास्मिन्नधिकरणेऽभावात्किमनेनेत्याशंक्याऽऽह—तत्रेति । स्वपक्षदोषनिरासस्य स्मृतिपादसंबन्धेऽपि प्रधानगुणानन्वयान्न चेज्जगत्तत्प्रकृतिकं तर्हि ब्रह्मविशेषगुणानन्वयान्न तत्प्रकृतिकमपि स्यादित्यवान्तरसंगतिलाभादिहेदमधिकरणमिति भावः । स्वपक्षदोषसमाधिद्वारा समन्वयदृढीकरणादध्यायादिसंगतयः । तत्र चेतनाद्ब्रह्मणो जगत्सर्गे श्रुत्यन्समन्वयो विषयस्तस्य वैशेषिकगुणारम्भानुमानेन विरोधोऽस्त्युत नेति तदनाभासत्वाभासत्वाभ्यां संदेहे पूर्वपक्षमाह—तत्रेति । पूर्वपक्षे वैशेषिकानुमानविरोधाद्ब्रह्मणि समन्वयासिद्धिः सिद्धान्ते तदविरोधात्तत्सिद्धिरिति फलभेदः । तदीयानुमानं ब्रह्मकारणनिराकरणपरं दर्शयितुं तदभ्युपगममभिनयति—कारणेति । समवायिकारणार्थं कारणपदमिति वक्तुं द्रव्यपदम् । गुणशब्दोऽसाधारणगुणार्थः । साधारणगुणानामारम्भकत्वेऽपि समवायिकारणस्थत्वानियमात् । कार्यस्य द्रव्यविशेषणं कार्यान्तरे तदनारम्भात् । गुणाश्च गुणान्तरमित्यत्रान्वयव्यतिरेकौ दर्शयति—शुक्लेभ्य इति । ब्रह्मचैतन्यं न द्रव्यसमवायिकारणविशेषगुणः समानजातीयविशेषगुणानारम्भकत्वात्संयोगवदित्यभिप्रेत्याऽऽह—तस्मादिति । न च चैतन्यस्य स्वरूपत्वेन गुणत्वासिद्धेः सिद्धसाध्यता, ज्ञानीतिवदहं ज्ञानमित्यदृष्टेस्तद्गुणत्वस्पाष्ट्यादिति भावः । घटः स्फुरतीति सामानाधिकरण्याद्घटादेस्तद्गुणत्वसिद्धेरसिद्धिरित्याशंक्य जनयितृव्यापारविषयतया घटो जायत इतिवत्प्रकाशयितृव्यापारकर्मतया सामानाधिकरण्यं न तद्गुणत्वादित्यसिद्धिं समुद्धरति—तदिति । ब्रह्म न द्रव्योपादानं तुल्यजातीयारम्भकविशेषगुणानाधारत्वाद्दिगादिवदिति भावः । स्मृतिपादे निरस्तमनुमानं किमिति पुनः शंकितमित्याशंक्य लौकिकपदार्थेषु तत्रोक्तेऽपि व्यभिचारे परप्रक्रियासिद्धेष्वेव पारिमाण्डल्यादिषु तमिदानीं दर्शयतीति विशेषमाह—इममिति। तदर्थं सूत्रमुदाहरति—महदिति। यथा महद्दीर्घं च त्र्यणुकं ह्रस्वेभ्योऽणुभ्यश्च द्व्यणुकेभ्यो जायते। वाशब्दश्चार्थः। यथा च परिमण्डलाभ्यां परमाणुभ्यां द्व्यणुकमपरिमण्डलमुत्पद्यते तथा चेतनाद्ब्रह्मणो जगदचेतनं स्यादिति सूत्रार्थः । इममर्थं स्फुटीकर्तुं परकीयप्रक्रियामनुवदति—

**एषा तेषां प्रक्रिया-परमाणवः किल कञ्चित्कालमनारब्धकार्या यथायोगं रूपादिमन्तः पारिमाण्डल्यपरिमाणास्तिष्ठन्ति । ते च पश्चाददृष्टादिपुरस्सराहसंयोगसचिवाश्च सन्तो द्व्यणुकादिक्रमेण कृत्स्नं कार्यजातमारभन्ते । कारणगुणाश्च कार्ये गुणान्तरम् ॥ यदा द्वौ परमाणू द्व्यणुकमारभेते, तदा परमाणुगता रूपादिगुणविशेषाश्शुक्लादयो द्व्यणुके शुक्लादीनपरानारभन्ते । परमाणुगुणविशेषस्तु पारिमाण्डल्यं न द्व्यणुके पारिमाण्डल्यमपरमारभते । द्व्यणुकस्य परिमाणान्तरयोगाभ्युपगमात् ॥ अणुत्वह्रस्वत्वे हि द्व्यणुकवर्तिनी परिमाणे वर्ण-**

रत्नप्रभा ।

व्याचष्टे-**एषेत्यादिना** ॥ यद्यपि "न विलक्षणत्वाद्-" [ ब्रा० सू० २ । १ । ४ ] इत्यत्र चेतनादचेतनसर्गः साधितः । तथापि वैशेषिकन्यायस्य तदीयप्रक्रियया व्यभिचारोक्त्यर्थत्वादस्य सूत्रस्य न गतार्थता । प्रलयकाले परमाणवो निश्चला असंयुक्तास्तिष्ठन्ति । सर्गकाले चादृष्टवदात्मसंयोगात्तेषु कर्म भवति । तेन संयोगाद् द्रव्यान्तरसृष्टिर्भवति । कारणगुणाः कार्ये गुणान्तरमारभन्त इति सामान्येन प्रक्रियामुक्त्वा विशेषतस्तामाह-**यदा द्वाविति** ॥ परमाणुः-परिमण्डलः । तद्गतं परिमाणं पारिमाण्डल्यमित्युच्यते । तत्र स्वसमानजातीयगुणारम्भकं न भवतीत्युक्तन्यायस्य व्यभिचार इति

भामती ।

जायते, न तु महत्त्वगुणोपजनने द्व्यणुकगतं महत्त्वमपेक्षते, तस्य ह्रस्वत्वात् । यथा वा तदेव त्र्यणुकादि दीर्घं ह्रस्वाद् द्व्यणुकाज्जायते, न तु तद्गतं दीर्घत्वमपेक्षते, तदभावात् । वाशब्दश्चार्थेऽनुक्तसमुच्चयार्थः । यथा द्व्यणुकमणुह्रस्वपरिमाणं परिमण्डलात् परमाणोरपरिमण्डलं जायत एवं चेतनाद्ब्रह्मणोऽचेतनं जगन्निष्पद्यत इति सूत्रयोजना । भाष्ये **परमाणुगुणविशेषस्त्विति** । पारिमाण्डल्यग्रहणमुपलक्षणम् । न द्व्यणुकेऽणुत्वमपि परमाणुवर्ति पारिमाण्डल्यमारभते, तस्य हि द्वित्वसंख्यायोनित्वादित्यपि द्रष्टव्यम् ।

आनन्दगिरीय-न्यायनिर्णयः ।

**एषेति** । तत्र प्रलयावस्थामुपन्यस्यति-**परमाणव इति** । चतुर्विधेषु तेषु प्रामाणिकसंमतिं सूचयति-**किलेति** । लयहेतुकर्मोद्रेकावस्था कंचित्कालमित्युक्ता । तत्र सर्वकार्यलयेऽपि पाकजपरमाणुगुणानामवस्थानमास्थायोक्तम्-**रूपादिमन्त इति** । पार्थिवपरमाणूनां चतुर्गुणत्वमाप्यपरमाणूनां त्रिगुणत्वं तैजसपरमाणूनां द्विगुणत्वं वायवीयपरमाणूनामेकगुणतेति विभागमाह-**यथेति** । परमाणुमात्रवृत्तिपरिमाणं दर्शयति-**पारिमाण्डल्येति** । तेषामारम्भक्रममाह-**ते च पश्चादिति** । सर्गहेतुकर्मोद्भवावस्था पश्चादित्युक्ता । असमवायिकारणं परमाणूनुक्त्वा निमित्तकारणमाह-**अदृष्टादीति** । आदिशब्देनेश्वरप्रयत्नाद्युच्यते । असमवायिकारणमाह-**संयोगेति** । अदृष्टवत्क्षेत्रज्ञसंयोगात्परमाणौ कर्म ततोऽण्वन्तरसंयोगाद् द्व्यणुकमारभ्यते । न च परमाणवो बहवः संयुक्ताः सहसा कार्यारम्भकाः परमाणुत्वे सति बहुत्वाद्घटोपगृहीतपरमाणुवत्, न च तेषामपि घटारम्भकतया साध्यवैकल्यं घटभङ्गे कपालादीनामनारब्धत्वादणूनां चातीन्द्रियत्वात्सर्वानुपलब्धिप्रसङ्गात् । न च द्वावपि परमाणू कार्यानारम्भकौ परमाणुत्वे सति द्वित्वाद्घटोपगृहीतपरमाणुद्वयवदिति युक्तं साध्यवैकल्यात् । द्व्यणुकानि च त्रीणि संभूय त्र्यणुकमुत्पादयन्ति तदनन्तरमारम्भकसंख्यानियमो नेति भावः । द्रव्याणि द्रव्यान्तरमारभन्त इति सूत्रार्थमुक्त्वा गुणाश्च गुणान्तरमिति सूत्रार्थमाह-**कारणेति** । कतिपयकारणगुणानामारम्भकत्वं सर्वेषां वेति वीक्षायामाद्यं व्युत्पादयति-**यदेति** । कल्पान्तरं दूषयति-**परमाण्विति** । अभ्युपगममेव साधयति-**अणुत्वेति** । इतश्च कतिपयगुणानामे-

यन्ति ॥ यदापि द्वे द्व्यणुके चतुरणुकमारभेते, तदापि समानं द्व्यणुकसमवायिनां शुक्लादीनामारम्भकत्वम् । द्व्यणुत्वह्रस्वत्वे तु द्व्यणुकसमवायिनी अपि नैवारभेते ॥ चतुरणुकस्य महत्त्वदीर्घत्वपरिमाणयोगाभ्युपगमात् ॥ यदापि बहवः परमाणवो बहूनि वा द्व्यणुकानि द्व्यणुकसहितो वा परमाणुः कार्यमारभन्ते, तदापि समानैषा योजना ॥ तदेवं यथा परमाणोः परिमण्डलात्सतोऽणु ह्रस्वं च द्व्यणुकं जायते, महद्दीर्घं च त्र्यणुकादि, न परिमण्डलम् । यथा वा द्व्यणुकादणोर्ह्रस्वाच्च सतो मह-

---

रत्नप्रभा ।

भावः । व्यभिचारस्थलान्तरमाह—यदापि द्वे इति ॥ द्वेद्वे इति शब्दद्वयं पठितव्यम् । एवं सति चतुर्भिर्द्व्यणुकैश्चतुरणुकारम्भे उपपद्यते । यथाश्रुते तु द्वाभ्यां द्व्यणुकाभ्यां महतश्चतुरणुकस्यारम्भो न युज्यते । कारणगतं महत्त्वं, बहुत्वं वा । विना कार्ये महत्त्वायोगादिति मन्तव्यम् । प्रकटार्थकारास्तु यद् द्वाभ्यां द्व्यणुकाभ्यामारब्धकार्ये महत्त्वं दृश्यते तस्य हेतुः प्रचयो नाम प्रशिथिलावयवसंयोग इति रावणप्रणीते भाष्ये दृश्यत इति चिरन्तनवैशेषिकदृष्टयेदं भाष्यमित्याहुः । सर्वथापि द्व्यणुकगतह्रस्वत्वाणुत्वपरिमाणयोरनारम्भकत्वाद्व्यभिचारः ॥ यद्यपि तार्किकाः द्वाभ्यामेव परमाणुभ्यां द्व्यणुकं, त्रिभिर्द्व्यणुकैस्त्र्यणुकमिति कल्पयन्ति । तथापि तर्कस्याप्रतिष्ठानान्न नियम इति मत्वा ब्रूते—यदापि बहव इति ॥ कारणगुणाः शुक्लादयः समानजातीयगुणारम्भकाः । कार्यद्रव्यपरिमाणं तु न कारणगुणपरिमाणारम्भ्यम् । किन्तु कारणगतसंख्यारम्भ्यमिति प्रक्रिया तुल्येत्यर्थः । एवं प्रक्रियां दर्शयित्वा सूत्रं योजयन्व्यभिचारमाह—तदेवमिति ॥ परमाणुभ्य एव महद्दीर्घं चेत्यनियतप्रक्रियामाश्रित्योक्तम् । नियतप्रक्रियामाश्रित्य व्यभिचारमाह—यथा वेति ॥ अणुह्रस्वेभ्यो द्व्यणुकेभ्योऽणुद्रव्यं न जायते, ह्रस्वमपि न जायत इति व्यभिचार

भामती ।

ह्रस्वपरिमण्डलाभ्यामिति सूत्रं गुणिपरं न गुणपरम् । यदापि द्वेद्वे द्व्यणुके इति पठितव्ये प्रमादादेकं द्वेपदं न पठितम् । एवं चतुरणुकमित्याद्युपपद्यते । इतरथा हि द्व्यणुकमेव तदपि स्यान्न तु महदित्युक्तम् । अथ वा द्वे इति द्वित्वे, यथा 'द्व्येकयोर्द्विवचनैकवचने' इति । अत्र हि द्वित्वैकत्वयोरित्यर्थः । अन्यथा द्व्येकेष्विति स्यात्संख्येयानां बहुत्वात् । तदेवं योजनीयम्—द्व्यणुकाधिकरणे ये द्वित्वे ते यदा चतुरणुकमारभेते संख्येयानां चतुर्णां द्व्यणुकानामारम्भकत्वात्तत्तद्गते द्वित्वसंख्ये अपि आरम्भिके इत्यर्थः । एवं व्यवस्थितायां वैशेषिकप्रक्रियायां तद्दूषणस्य व्यभिचार उक्तः । अथाव्यवस्थिता तथापि तदवस्थो व्यभिचार इत्याह—यदापि बहवः परमाणव इति । नाणु जायते नो ह्रस्वं जायते इति योजना । चोदयति—

आनन्दगिरीय—न्यायनिर्णयः ।

वाऽऽरम्भकत्वमित्याह—यदाऽपीति । द्व्यणुकेऽधिकरणे द्विशब्दस्य भावप्रधानत्वाद्वे द्वित्वे ते स्वाश्रयाणां चतुर्णां द्व्यणुकानां चतुरणुकारम्भकत्वात्तदारम्भके विवक्ष्येते । न हि द्वित्वद्वयं हित्वा तदाधाराणां द्व्यणुकानामारम्भकत्वम् । अथ वाऽणुकमिति द्व्यणुकमुक्तं, ते द्वित्वावच्छिन्ने यदा द्वित्वसंख्ययाऽवच्छिद्येते तदा द्वौ घटाविति वद्वे द्व्यणुके इत्युक्ते द्व्यणुकचतुष्टयं संपद्यते । एवं चतुर्णां द्व्यणुकानां चतुरणुकारम्भकत्वे स्थिते तद्गतानां गुणानां तुल्यजातीयारम्भकतेत्यर्थः । सर्वगुणानामनारम्भकत्वे हेत्वन्तरमाह—अणुत्वेति । व्यवस्थितां वैशेषिकप्रक्रियां प्रदर्श्याव्यवस्थितां दर्शयति—यदाऽपीति । कारणगुणानां केषांचिदारम्भकत्वं न सर्वेषामिति सर्वेषां तुल्यमित्याह—तदाऽपीति । व्यवस्थितामव्यवस्थितां च परप्रक्रियामुक्त्वा सूत्रं व्याकुर्वन्व्यभिचारमाह—तदेवमिति । तत्तत्र तस्यां प्रक्रियायामेवमुक्तप्रकारेणेति यावत् । अव्यवस्थितप्रक्रियामाश्रित्योक्तं—महदित्यादि । वाशब्दोऽनुक्ताणुह्रस्वकार्यसमुच्चयार्थ इति व्याचष्टे—यथा वेति । नाणु जायते नापि ह्रस्वं जायते त्र्यणुकादिति योजना । पारिमाण्डल्यादीनां तुल्यजातीयानारम्भकत्वे सिद्धे दार्ष्टान्तिकमाह—

दीर्घं च त्र्यणुकं जायते, नाणु, नो ह्रस्वम्, एवं चेतनाद्ब्रह्मणोऽचेतनं जगज्जनिष्यते इत्यभ्युपगमे किं तव च्छिन्नम् ॥ अथ मन्यसे-विरोधिना परिमाणान्तरेणाऽऽक्रान्तं कार्यद्रव्यं द्व्यणुकादीत्यतो नारम्भकाणि कारणगतानि पारिमाण्डल्यादीनीत्यभ्युपगच्छामि, न तु चेतनाविरोधिना गुणान्तरेण जगत आक्रान्तत्वमस्ति । येन कारणगता चेतना कार्ये चेतनान्तरं नारभेत ॥ न ह्यचेतना नाम चेतनाविरोधी कश्चिद् गुणोऽस्ति । चेतनाप्रतिषेधमात्रत्वात् ॥ तस्मात्पारिमाण्डल्यादिवैषम्यात्प्राप्नोति चेतनाया आरम्भकत्वमिति ॥ मैवं मंस्थाः ॥ यथा कारणे विद्यमानानामपि पारिमाण्डल्यादीनामनारम्भकत्वम् । एवं चैतन्यस्यापीत्यस्यांशस्य समानत्वात् ॥ न च परिमाणान्तराक्रान्तत्वं पारिमाण्डल्यादीनामनारम्भकत्वे कारणम् ॥ प्राक्परिमाणान्तरारम्भात्पारिमाण्डल्यादीनामारम्भकत्वोपपत्तेः । आरब्धमपि कार्यद्रव्यं प्राग्गुणारम्भात्क्षणमात्रमगुणं

---

रत्नप्रभा ।

इत्यर्थः । सूत्रे वाशब्दश्चार्थोऽनुक्ताणुसमुच्चयार्थः । तथा च ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घाणुवच्चेतनादचेतनं जायत इति सूत्रयोजना । तत्र ह्रस्वान्महद्दीर्घं त्र्यणुकं, परिमण्डलादणु द्व्यणुकमिति विभागः । दृष्टान्तवैषम्यं शङ्कते-**अथ मन्यस इति** ॥ अचेतनैव विरोधिगुण इत्यत आह-**न ह्यचेतनेति** ॥ कार्यद्रव्यस्य परिमाणान्तराऽऽक्रान्तत्वमङ्गीकृत्य विवक्षितांशसाम्यमाह-**मैवमिति** ॥ अङ्गीकारं त्यजति-**न चेति** ॥ उत्पन्नं हि परिमाणान्तरं विरोधि भवति । तदुत्पत्तेः प्राग्विरोध्यभावात् । द्व्यणुके पारिमाण्ड्ल्यारम्भः किं न स्यादित्यर्थः । ननु विरोधि परिमाणेन सहैव द्रव्यं जायत इत्यत आह-**आरब्धमपीति** ॥ सहोत्पत्तावपसिद्धान्तः । अतो विरोध्यभावः सिद्ध इति भावः । अणुत्वाद्यारम्भे व्यग्र-

भामती ।

**अथ मन्यसे विरोधिना परिमाणान्तरेण** स्वकारणद्वारेणाक्रान्तत्वादिति । परिहरति-**मैवं मंस्था इति** । कारणगता गुणा न कार्ये समानजातीयं गुणान्तरमारभन्त इत्येतावतैवेष्टसिद्धौ न तद्धेत्वनुसरणे खेदनीयं मन इत्यर्थः । अपि च सत्परिमाणान्तरमाक्रामति नोत्पत्तेश्च प्राक् परिमाणान्तरं सदिति कथमाक्रामेत् । न च तत्कारणमाक्रामति । पारिमाण्डल्यस्यापि समानजातीयस्य कारणस्याक्रमणहेतोर्भावेन समानबलतयोभयकार्यानुत्पादप्रसङ्गादित्याशयवानाह-**न च परिमाणान्तराक्रान्तत्वमिति** । न च परिमाणान्तरारम्भे व्यापृतता पारिमाण्डल्यादीनाम् । न च कारणबहुत्वादीनां संनिधानम-

आनन्दगिरीय-न्यायनिर्णयः ।

**एवमिति** । दृष्टान्तवैषम्यं चोदयति-**अथेति** । जगत्यपि तुल्यं विरोधिगुणाक्रान्तत्वमित्याशंक्याऽऽह-**न त्विति** । अचेतनायाश्चेतनाविरोधिन्या जगति भावाच्चेतनायाः सजातीयानारम्भकतेत्याशंक्याऽऽह-**न हीति** । विशेषगुणत्वाच्चेतनायाः साधारण्यात्पारिमाण्डल्यादेर्वैषम्यं मत्वा तत्फलमाह-**तस्मादिति** । ज्ञानवानस्मीति प्रत्ययस्य बुद्धिवृत्त्युपधानाधीनत्वाच्चैतन्यस्य स्वरूपत्वेन गुणत्वासिद्धौ विशेषगुणत्वस्य दूरापेतत्वं मत्वा विवक्षितांशे दृष्टान्तसिद्धिरित्याह-**मैवमिति** । न स्वभावादेव पारिमाण्डल्यादीनामनारम्भकत्वं किंतु विरोधिगुणसंनिपातात् । चैतन्यस्य तु तदभावादारम्भकतेत्याशंक्याऽऽह-**न चेति** । उत्पन्नं परिमाणान्तरं विरोधि भवतीति किमिति प्रागेव तदुत्पत्तेः स्वकार्यं पारिमाण्डल्यादि नाऽऽरभते ततः स्वभावादेव तस्यानारम्भकतेति भावः । जायमानं द्रव्यं परिमाणवदेव जायते तेनानवकाशादनारम्भकत्वं पारिमाण्डल्यादेरित्याशंक्याऽऽह-**आरब्धमिति** । परिमाणादिगुणारम्भे कार्यद्रव्यस्य समवायित्वेन पूर्व-

तिष्ठतीत्यभ्युपगमात् । न च परिमाणान्तरारम्भे व्यग्राणि पारिमाण्डल्यादीनि ॥ अतः स्वसमानजातीयं परिमाणान्तरं नारभन्ते । परिमाणान्तरस्यान्यहेतुत्वोपगमात् । "कारणबहुत्वात्" [ वै० सू० ७ । १ । ९ ] कारणमहत्त्वात्प्रचयविशेषाच्च महत् "तद्विपरीतमणु" [ वै० सू० ७।१।१० ] "एतेन दीर्घत्वह्रस्वत्वे व्याख्याते" [ वै० सू० ७।१।१७ ] इति हि काणभुजानि सूत्राणि ॥ न च सन्निधानविशेषात्कुतश्चित्कारणबहुत्वादीन्येवारभन्ते न पारिमाण्डल्यादीनीत्युच्येत ॥ द्रव्यान्तरे गुणान्तरे वारभ्यमाणे सर्वेषामेव कारणगुणानां स्वाश्रयसमवायाविशेषात् ॥ तस्मात्स्वभावादेव पारिमाण्डल्यादीनामनारम्भकत्वम् ॥ तथा

---

रत्नप्रभा ।

त्वात् पारिमाण्डल्यादेः स्वसमानगुणानारम्भकत्वमित्याशङ्क्य निषेधति—न चेति ॥ व्यग्रत्वम्—अन्यथासिद्धिः । तत्र हेतुः—परिमाणान्तरस्येति ॥ अन्यहेतुकत्वे सूत्राण्युदाहरति—कारणेति ॥ कारणानां द्व्यणुकानां बहुत्वात् त्र्यणुके महत्त्वम् । मृदो महत्त्वाद्घटे महत्त्वम् । द्वितूलपिण्डारब्धेति स्थूलतूलपिण्डे प्रचयादवयवसंयोगविशेषान्महत्त्वमित्यर्थः । महत्त्वविरुद्धमणुत्वं परमाणुगतद्वित्वसंख्यया द्व्यणुके भवतीत्याह—तदिति ॥ यन्महत्त्वस्याऽसमवायि कारणं, तदेव महत्त्वसमानाधिकरणस्य दीर्घत्वस्य । यच्चाणुत्वस्यासमवायिकारणं, तदेवाणुत्वाऽविनाभूतह्रस्वत्वस्यासमवायिकारणमित्यतिदिशति—एतेनेति ॥ अतो महत्त्वादौ अहेतुत्वात् पारिमाण्डल्यादीनां व्यग्रत्वमसिद्धमिति भावः । तेषां सन्निधिविशेषाभावान्न समानगुणारम्भकत्वमित्यपि न वाच्यमित्याह—न चेति ॥ पारिमाण्डल्यादीनामपि बहुत्वादिवत् समवायिकारणगतत्वाविशेषादित्यर्थः । तेषामनारम्भकत्वे कार्यद्रव्यस्य विरोधिगुणाक्रान्तत्वं व्यग्रत्वं सन्निधिर्वा न हेतुरित्युक्तिफलमाह—तस्मादिति ॥ यत्तु कारणगुणः स्वसमानगुणारम्भक इति व्याप्तेः सामान्यगुणेषु पारिमाण्डल्यादिषु व्यभिचारेऽपि यो द्रव्यसमवायिकारणगतो विशेषगुणः स स्वसमानजातीयगुणारम्भक

भामती ।

संनिधानं च पारिमाण्डल्यस्येत्याह—न च परिमाणान्तरारम्भे इति । व्यभिचारान्तरमाह—

आनन्दगिरीय—न्यायनिर्णयः ।

भावित्वध्रौव्ये प्रागेव तदारम्भात्पारिमाण्डल्यादेरारम्भकत्वावकाशोऽस्तीत्यर्थः । अणुत्वाद्यारम्भे व्यापृतत्वात्पारिमाण्डल्यादेः सजातीयानारम्भकतेत्याशंक्याऽऽह—न चेति । तत्र हेतुः—परिमाणान्तरस्येति । कथमन्यहेतुत्वं, तत्राऽऽप्तोक्तिमुदाहरति—कारणेति । बहुभिर्द्व्यणुकैरारब्धे त्र्यणुकादौ यन्महत्त्वं तस्य द्व्यणुकगतं बहुत्वमसमवायिकारणं कार्यद्रव्यं समवायिकारणम् । यत्पुनरयःपिण्डेन पञ्चाशत्पलेनारब्धं कार्यं तावत्पलमुपलभ्यते तन्महत्त्वे पिण्डस्य प्रचयः संयोगविशेषो हेतुः।महद्भिरवयवैरारब्धे पटे यन्महत्त्वं तस्य कारणमहत्त्वं हेतुरिति त्रिभ्यः कारणेभ्यो महत्त्वमित्यर्थः । यत्कारणबहुत्वादिभ्यो महत्त्वं त्र्यणुकादौ जातं ततो विपरीतं द्व्यणुकगतमणुत्वमीश्वरापेक्षाबुद्धिजन्यपरमाणुनिष्ठद्वित्वासमवायिकारणादुत्पद्यते तदाह—तदिति । द्वित्वमहत्त्वबहुत्वप्रचयेभ्यो यथासंभवं ह्रस्वत्वदीर्घत्वयोरुत्पत्तिरित्याह—एतेनेति । समस्तेन प्रकारेणेति यावत् ननु पारिमाण्डल्यादीनि संयोगादिभिर्व्यवहितानि कार्यद्रव्ये समानजातीयानारम्भकाणि प्रचयादयस्तु कारणस्थास्तन्निष्ठकार्यद्रव्यस्य संनिहितत्वात्तत्र महत्त्वाद्यारम्भकास्ततो न स्वभावादनारम्भकत्वं पारिमाण्डल्यादीनामिति तत्राऽऽह—न चेति । गुणो गुणिनि समवेतो व्याप्योऽव्याप्यो वा सर्वथा कारणस्थत्वं गुणानां कार्यारम्भे निमित्तम् । न च निरवयवाणुगुणानां संनिधिरसंनिधिर्वाऽऽरम्भोपयोगी संभवतीति भावः । परिशेषसिद्धमर्थमाह—तस्मादिति । दृष्टान्तमुपसंहृत्य दार्ष्टान्तिकमुपसंहरति—तथेति । किंच, कारण-

चेतनाया अपीति द्रष्टव्यम्। संयोगाच्च द्रव्यादीनां विलक्षणानामुत्पत्तिदर्शनात्समानजातीयोत्पत्तिव्यभिचारः। द्रव्ये प्रकृते गुणोदाहरणमयुक्तमिति चेत्॥ न॥ दृष्टान्तेन विलक्षणारम्भमात्रस्य विवक्षितत्वात्॥ न च द्रव्यस्य द्रव्यमेवोदाहर्तव्यं गुणस्य वा गुण एवेति कश्चिन्नियमे हेतुरस्ति॥ सूत्रकारोऽपि भवतां द्रव्यस्य गुणमुदाजहार "प्रत्यक्षाप्रत्यक्षाणामप्रत्यक्षत्वात्संयोगस्य पञ्चात्मकं न विद्यते" [ वै० सू० ४ । २ । २ ] इति। यथा प्रत्यक्षाप्रत्यक्षयोर्भूम्याकाशयोः समवयन्संयोगोऽप्रत्यक्षः, एवं प्रत्यक्षाऽप्रत्यक्षेषु पञ्चसु भूतेषु समवयच्छरीरमप्रत्यक्षं स्यात्। प्रत्यक्षं तु शरीरं दृश्यते॥ तस्मान्न पाञ्चभौतिकमिति॥ एतदुक्तं भवति गुणश्च संयोगो द्रव्यं शरीरम्। दृश्यते त्विति चात्रापि विलक्षणोत्पत्तिः प्रपञ्चिता॥ नन्वेवं सति तेनैव तद्गतम्॥ नेति ब्रूमः॥ तत्सांख्यं प्रत्युक्तम्। एतत्तु वैशेषिकं प्रति॥ नन्वतिदेशोऽपि समानन्यायतया कृतः, एतेन शिष्टापरिग्रहा अपि व्याख्याता इति॥

---

रत्नप्रभा ।

इति व्याप्तेश्चैतन्यस्य विशेषगुणत्वादारम्भकत्वं दुर्वारमिति। तन्मन्दम्। चित्रपटहेतुतन्तुगतेषु नीलादिरूपेषु विजातीयचित्ररूपहेतुषु व्यभिचाराच्चैतन्यस्यात्मत्वेन गुणत्वाभावाच्चेति मन्तव्यम्। तस्माच्चेतनाद्विजातीयारम्भो युक्त इति स्थितम्। तत्रोदाहरणान्तरमाह—संयोगाच्चेति॥ ननु चेतनं ब्रह्म कार्योपादानत्वाद् द्रव्यं,तन्न विलक्षणस्योपादानमिति प्रकृते किञ्चिद् द्रव्यमेव विलक्षणकार्यकरमुदाहर्तव्यं, न संयोगस्य गुणस्योदाहरणं युक्तमिति शङ्कते—द्रव्य इति॥ गुणाद् द्रव्यवच्चेतनादचेतनारम्भ इति विलक्षणारम्भकत्वांशेऽयं दृष्टान्त इति परिहरति—नेति॥ अनियमः कणादसम्मत इत्याह—सूत्रकारोऽपीति॥ एतावता कथमनियमस्तत्राह—एतदुक्तमिति॥ न विलक्षणत्वन्यायेन पुनरुक्त्यभावेऽप्यतिदेशाधिकरणेन पुनरुक्तिरिति शङ्कते—नन्वतिदेश इति॥ समानगुणारम्भनियमस्य पारिमाण्डल्यादिदृष्टान्तेन भङ्गार्थ-

भामती ।

संयोगाच्चेति।शङ्कते—द्रव्ये प्रकृत इति।निराकरोति—न।दृष्टान्तेनेति।न चास्माकमयमनियमः,भवतामपीत्याह—सूत्रकारोऽपीति। सूत्रं व्याचष्टे—यथा प्रत्यक्षाप्रत्यक्षयोरिति। शेषमतिरोहितार्थम्॥११॥(२)॥

आनन्दगिरीय—न्यायनिर्णयः ।

गुणाः सजातीयानामेवाऽऽरम्भकाः किंवा विजातीयानामपीति विकल्प्याऽऽद्यं प्रत्याह—संयोगाच्चेति। चेतनं ब्रह्म द्रव्यं जगतोऽचेतनस्य न समवायिकारणमिति प्रकृते चेतनमप्यचेतनोपादानं दृष्टमिति दृष्टान्ते वक्तव्ये संयोगगुणोदाहरणमयुक्तमिति शङ्कते—द्रव्य इति। अद्रव्यादपि संयोगाद्यथा द्रव्यं जायते तथा चेतनादचेतनं स्यादित्येतावन्मात्रमिष्टमित्याह—नेति। दृष्टान्तदार्ष्टान्तिकयोः सर्वथा साम्ये नास्ति मानमित्याह—न चेति। न केवलमयमस्माकमनियमो भवतामपीत्याह—सूत्रेति। सूत्रं व्याचष्टे—यथेति। कथमिदं सूत्रं नियमभङ्गोपयोगीत्याशंक्याऽऽह—एतदिति। कारणस्यविशेषगुणानां कार्ये तुल्यारम्भकत्वं न गुणमात्रस्येत्याशंक्याऽऽह—दृश्यते त्विति। तन्तुगतनीलपीतादिरूपाणां विशेषगुणानामपि तत्कार्ये पटे विजातीयचित्ररूपारम्भकत्वाभ्युपगमान्नायमपि नियम इति भावः। तर्हि गतार्थत्वादिदमधिकरणमनारम्यमिति शङ्कते—नन्विति। निराकार्यभेदान्न पौनरुक्त्यमित्याह—नेतीति। तथाऽपि शिष्टापरिग्रहाधिकरणेन पुनरुक्तिरिति शङ्कते—नन्विति। तत्र कारणं कार्यादूनपरिमाणमिति नियमो निरस्तोऽत्र तु कारणविशेषगुणस्य कार्ये तुल्यारम्भनियमो निरस्यत इति सत्यपि पुनरुक्तिपरिहारे रीतिसाम्यकृतं जामि-

सत्यमेतत् ॥ तस्यैव त्वयं वैशेषिकपरीक्षारम्भे तत्प्रक्रियानुगतेन निदर्शनेन प्रपञ्चः कृतः ॥ ११ ॥ इति महद्दीर्घाधिकरणम् ॥ २ ॥

## उभयथापि न कर्मातस्तदभावः ॥ १२ ॥ ( ३ ) ॥

इदानीं परमाणुकारणवादं निराकरोति । स च वाद इत्थं समुत्तिष्ठति । पटादीनि हि लोके सावयवानि द्रव्याणि स्वानुगतैस्संयोगसचिवैस्तन्त्वादिभिर्द्रव्यैरारभ्यमाणानि दृष्टानि ॥ तत्सामान्येन यावत्किंचित्सावयवं, तत्सर्वं स्वानुगतैरेव संयोगसचिवैस्तैस्तैर्द्रव्यैरारब्धमिति गम्य-

---

रत्नप्रभा ।

मस्यारम्भ इत्याह—सत्यमिति ॥ तस्यैव अतिदेशस्येत्यर्थः ॥ ११ ॥ ( २ ) ॥ वैशेषिकमतपरीक्षामारभते—उभयथापि न कर्मातस्तदभाव इति ॥ नास्य प्रासङ्गिकेन पूर्वाधिकरणेन संगतिरपेक्षितेति मन्वानः । प्रधानस्येश्वरानधिष्ठितस्याकारणत्वेऽपि परमाणूनां तदधिष्ठितानां कारणत्वमस्त्विति प्रत्युदाहरणसङ्गत्या सांख्याधिकरणानन्तर्यमस्य वदंस्तात्पर्यमाह—इदानीमिति ॥ द्व्यणुकादिक्रमेण परमाणुभिर्जगदारभ्यते इति वैशेषिकराद्धान्तोऽत्र विषयः । स किं मानमूलो भ्रान्तिमूलो वेति सन्देहे पूर्वपक्षयति—स चेति ॥ तैः पटादिभिः सामान्यं क्षित्यादेः कार्यद्रव्यत्वं, तेनेत्यर्थः । विमतं सावयवं क्षित्यादिकं, स्वन्यूनपरिमाणसंयोगसचिवानेकद्रव्यारब्धं कार्यद्रव्यत्वात्, पटादिवदिति प्रयोगः । स्वेष्टपरमाणुसि-

भामती ।

उभयथापि न कर्मातस्तदभावः । परमाणूनामाद्यस्य कर्मणः कारणाभ्युपगमेऽनभ्युपगमे वा न कर्मातस्तदभावस्तस्य द्व्यणुकादिक्रमेण सर्गस्याभावः।अथ वा यदणुसमवाय्यदृष्टमथ वा क्षेत्रज्ञसमवायि,उभयथापि तस्याचेतनस्य चेतनानधिष्ठितस्याप्रवृत्तेः कर्माभावोऽतस्तदभावः सर्गाभावः निमित्तकारणतामात्रेण त्वीश्वरस्याधिष्ठातृत्वमुपरिष्टान्निराकरिष्यते । अथ वा संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थमुभयथापि न कर्मातः सर्गहेतोः संयोगस्याभावात् प्रलयहेतोर्विभागस्याभावात्तदभावः । तयोः सर्गप्रलययोरभाव इत्यर्थः । तदेतत्सूत्रं तात्पर्यतो व्याचष्टे—इदानीं परमाणुकारणवादमिति । निराकार्यस्वरूपमुपपत्तिसहितमाह—स च वाद इति । स्वानुगतैः स्वसंबद्धैः । संबन्धश्चाधार्याधारभूत इह प्रत्ययहेतुः समवायः पञ्चमभूतस्यानवयवत्वात्

आनन्दगिरीय-न्यायनिर्णयः ।

त्वमुपेत्याऽऽह—सत्यमिति । तस्यैवेत्यतिदेशस्येति यावत् । वैशेषिकपरीक्षारम्भस्तदीयराद्धान्तस्य भ्रान्तिमूलत्वसाधनप्रक्रमः । तत्प्रक्रिया वैशेषिकप्रक्रिया पूर्वोक्ता तस्यामनुगतं निदर्शनं परकीयहेतुव्यभिचारोदाहरणं तेनेत्यर्थः ॥ ११ ॥ ( २ ) ॥ वैशेषिकगुणारम्भानुमानेन समन्वयस्य प्रासङ्गिकविरोधं परिहृत्य तन्मतविरोधं परिहर्तुमारभते—उभयथेति । नास्य प्रासङ्गिकानन्तराधिकरणेन संगतिरिति मन्वानः प्रधानं चेतनानधिष्ठितं न चेत्कारणं तर्हि परमाणवस्तदधिष्ठिता भवन्तु तथेति व्यवहितेन संगतिं गृहीत्वा तात्पर्यमाह—इदानीमिति । वैशेषिकराद्धान्तस्य भ्रान्तिमूलत्वोक्त्या तदीययुक्तिविरोधं निराकृत्य समन्वयदृढीकरणात्पादादिसंगतिः । पूर्वपक्षे प्रामाणिकपरकीयराद्धान्तविरोधे समन्वयस्यासिद्धिः सिद्धान्ते तदप्रामाणिकत्वासिद्ध्या भ्रान्तेन तेन विरोधाभावे तत्सिद्धिरिति फलम् । परमाणुभिर्द्व्यणुकादिक्रमेण चेतनाधिष्ठितैरारब्धं जगदिति वैशेषिकराद्धान्तो मानमूलो भ्रान्तिमूलो वेति विप्रतिपत्तेः संशये पूर्वपक्षमाह—स चेति । सामान्यतो दृष्टं वक्तुं व्याप्तिमाह—पटादीनीति । स्वानुगतैः स्वसमवायप्रतियोगिभिरित्यर्थः । मिथोसंयुक्ततन्त्वादीनां न पटाद्यारम्भकत्वमसमवाय्यभावादिति वक्तुं संयोगसचिवैरित्युक्तम् । यत्कार्यद्रव्यं तद्विशिष्टद्रव्यारब्धं यथा पटादीति व्याप्तिमुक्त्वाऽनुमानमाह—तदिति । तैः पटादिभिः सामान्यं कार्यद्रव्यत्वं तेनेति यावत् । किंचित्सावयवद्रव्यमिति क्षित्यादिचतुष्टयमुक्तम् । स्वानुगतैरित्यादि पूर्ववत् ।

ते ॥ स चायमवयवावयविविभागो यतो निवर्तते, सोऽपकर्षपर्यन्तगतः परमाणुः ॥ सर्वञ्चेदं गिरिसमुद्रादिकं जगत्सावयवं, सावयवत्वादाद्यन्तवत् ॥ न चाकारणेन कार्येण भवितव्यमिति ॥ अतः परमाणवो जगतः कारणमिति कणभुगभिप्रायः ॥ तानीमानि चत्वारि भूतानि भूम्यप्तेजःपवनाख्यानि सावयवान्युपलभ्य चतुर्विधाः परमाणवः परिकल्प्यन्ते ॥ तेषाञ्चापकर्षपर्यन्तगतत्वेन परतो विभागासम्भवाद्विनश्यतां पृथिव्यादीनां परमाणुपर्यन्तो विभागो भवति । स प्रलयकालः ॥ ततः सर्गकाले च वायवीयेष्वणुष्वदृष्टापेक्षं कर्मोत्पद्यते । तत्कर्म स्वाश्रयमणुमण्वन्तरेण संयुनक्ति । ततो द्व्यणुकादिक्रमेण वायुरुत्पद्यते । एवमग्निरेवमाप एवं पृथिवी एवं शरीरं सेन्द्रियमिति ॥ एवं सर्वमिदं जगदणुभ्यः सम्भवति ॥ अणुगतेभ्यश्च रूपादिभ्यो द्व्यणुकादिगतानि रूपादीनि

---

रत्नप्रभा ।

द्व्यर्थानि साध्यविशेषणानि । नन्वेतावता कथं परमाणुसिद्धिः, तत्राह—**स चायमिति** ॥ विमतं सावयवत्वं पक्षतावच्छेदकं यतो निवर्तते, स न्यूनपरिमाणस्यापकर्षस्य पर्यन्तत्वेनावसानभूमित्वेनावगतः परमाणुरित्यर्थः । यावत् सावयवमनुमानप्रवृत्तेः द्व्यणुकन्यूनद्रव्यं निरवयवं सिद्ध्यतीति भावः । जगन्नित्यत्ववादात् कार्यद्रव्यत्वहेत्वसिद्धिरिति वदन्तं प्रत्याह—**सर्वं चेति** ॥ विमतम्, आद्यन्तवत्, सावयवत्वात्, पटवदित्यर्थः । हेतोरसिद्धिं निरस्याप्रयोजकत्वं निरस्यति । **न चेति** ॥ ते कतिविधा इत्याकांक्षायामाह—**तानीति** ॥ प्रलये चैषामपि नाशान्न जगत्कारणत्वमित्याशंक्याह—**तेषां चेति** ॥ अवयवानां विभागानाशाद्वाऽऽश्रयिनो नाशः । परमाणूनां निरवयवत्वेनावयवविभागादेर्नाशहेतोरसम्भवान्न नाश इत्यर्थः । तेषां नित्यत्वे फलितं सृष्टिक्रममाह—**तत इति** ॥ एवं काणादमतस्य मानमूलत्वात्तेन वेदान्तसमन्वयस्य विरो-

भामती ।

**तानीमानि चत्वारि भूतानीति** । तत्र परमाणुकारणवादे इदमभिधीयते सूत्रम् । तत्र प्रथमं व्याख्या-

आनन्दगिरीय—न्यायनिर्णयः ।

तैस्तैर्द्रव्यैरिति वस्तुतश्चतुर्विधपरमाणूक्तिः । विमतं स्वपरिमाणादणुतरपरिमाणसंयोगसचिवसमानजातीयानेकद्रव्यारब्धं कार्यद्रव्यत्वाद् घटादिवदित्यर्थः । कथमेतावता परमाणुसिद्धिस्तत्राऽऽह—**स चेति** । यत्किंचित्सावयवं द्व्यणुकपर्यन्तं तत्सर्वमेवमारब्धमित्यनुमानप्रवृत्तेरणुपरिमाणा निरवयवाः कार्यद्रव्येण पार्थिवत्वादिना तुल्या नित्या वहवश्चाणवः सावयवानामारम्भकाः सिध्यन्तीत्यर्थः । अनाद्यनन्तत्वाज्जगतो हेत्वाकांक्षाभावान्न परमाणवस्तत्कारणमिति हेत्वसिद्धिमाशंक्याऽऽह—**सर्वं चेति** । विमतमाद्यन्तवत्सावयवत्वात्पटवदित्यर्थः । कार्यत्वेऽपि स्वभावादेवोत्पत्तेर्न कारणाकांक्षेत्याशंक्य विमतं सकारणकं कार्यत्वात्संमतवदित्याह—**न चेति** । तच्च किमित्याकांक्षायां सावयवस्य स्वतोऽल्पपरिमाणारभ्यत्वदृष्टेरणवो मूलकारणमिति काणादोऽभिप्रेतवानित्याह—**इत्यत इति** । ते कतिविधा इति तत्राऽऽह—**तानीति** । चत्वारीत्यवयविभूताभिप्रायं पञ्चमभूतस्यावयवाभावात् । तेऽपि मूर्तत्वादनित्याः पटवदित्याशंक्याऽऽह—**तेषां चेति** । कारणविभागात्कारणविनाशाद्वा कार्यद्रव्यस्य नाशस्तदभावादणुनित्यत्वं तदभावश्चाणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वान्महत्परिमाणतारतम्यवदित्यनुमानान्महत्त्वापकर्षविश्रान्तिभूमित्वेनाणूनां परतो विभागायोगादित्यर्थः । एकद्रव्यावशेषे प्रलयः स कथमनेकद्रव्यशेषे स्यादित्याशंक्य कार्यद्रव्यमात्रस्य युगपन्नाशो लय इत्याह—**स इति** । सृष्टिक्रममाचष्टे—**तत इति** । अदृष्टापेक्षमदृष्टवत्क्षेत्रज्ञसंयोगापेक्षमिति यावत् । कर्मासमवायिकारणं कार्यमाह—**तदिति** । संयोगादसमवायिनो द्व्यणुकोत्पत्तौ द्व्यणुकेभ्यस्त्र्यणुकादिजन्मेत्याह—**तत इति** । वायावुक्तं शिष्टे भूतत्रयेऽतिदिशति—**एवमिति** । भूतोत्पत्तिवद्भौतिकोत्पत्तिमाह—**एवमेवेति** । द्रव्योत्पत्तिं निगमयति—**एवमिति** । गुणोत्पत्तिक्रमं सूचयति—**अणिवति** । उक्तसर्गक्रमस्यालौकिकत्वं वारयति—

सम्भवन्ति ॥ तन्तुपटन्यायेनेति काणादा मन्यन्ते ॥ तत्रेदमभिधीयते ॥ विभागावस्थानां तावदणूनां संयोगः कर्मापेक्षोऽभ्युपगन्तव्यः । कर्मवतां तन्त्वादीनां संयोगदर्शनात् ॥ कर्मणश्च कार्यत्वान्निमित्तं किमप्यभ्युपगन्तव्यम् ॥ अनभ्युपगमे निमित्ताभावान्नाणुष्वाद्यं कर्म स्यात् ॥ अभ्युपगमेऽपि यदि प्रयत्नोऽभिघातादिर्वा यथा दृष्टं किमपि कर्मणो निमित्तमभ्युपगम्येत तस्यासम्भवान्नैवाणुष्वाद्यं कर्म स्यात् ॥ न हि तस्यामवस्थायामात्मगुणः प्रयत्नस्सम्भवति । शरीराभावात् ॥ शरीरप्रतिष्ठे हि मनस्यात्मनस्संयोगे सत्यात्मगुणः प्रयत्नो जायते ॥ एतेनाभिघाताद्यपि दृष्टं निमित्तं प्रत्याख्यातव्यम् ॥ सर्गोत्तरकालं

---

रत्नप्रभा ।

धादसिद्धिरिति पूर्वपक्षे फलम् । तस्य भ्रान्तिमूलत्वादविरोध इति सिद्धान्तयति—**तत्रेदमिति** ॥ प्रलये विभक्तानां परमाणूनामन्यतरकर्मणोभयकर्मणा वा संयोगो वाच्यः । कर्मणश्च निमित्तं प्रयत्नादिकं दृष्टम् । यथा प्रयत्नवदात्मसंयोगाद्देहचेष्टा, वाय्वाद्यभिघाताद्वृक्षादिचलनं, हस्तनोदनाद्–इष्वादिगमनं,–तद्वदणुकर्मणो दृष्टं निमित्तमभ्युपगम्यते **न वा द्वितीये** कर्मानुत्पत्तिः । **नाद्यः**, प्रयत्नादेः सृष्ट्युत्तरकालीनत्वादित्युभयथापि न कर्म सम्भवति । **अतः** कर्माऽसम्भवात् तस्य संयोगपूर्वकद्व्यणुकादिसर्गस्याऽभाव इति **सूत्रार्थः** । स्थिरस्य वेगवद् द्रव्यसंयोगविशेषोऽभिघातः । स एव चलस्य नोदनमिति भेदः । दृष्टनिमि-

भामती ।

माह—**कर्मवतामिति** । अभिघातादीत्यादिग्रहणेन नोदनसंस्कारगुरुत्वद्रवत्वानि गृह्यन्ते । नोदनसंस्कारावभिघातेन समानयोगक्षेमौ,गुरुत्वद्रवत्वे च परमाणुगते सदातने इति कर्मसातत्यप्रसङ्गः । द्वितीयं व्याख्यान-

आनन्दगिरीय–न्यायनिर्णयः ।

**तन्त्विति** । तन्तुभ्यः संयुक्तेभ्यो महान्पटो जायते तन्तुगताच्च रूपादेस्तत्र रूपादि दृष्टं तेन दृष्टान्तेनोक्तसर्गक्रमधीरित्यर्थः । पूर्वपक्षमुपसंहरति—**इति काणादा इति** । परमाणुमूलकारणत्वस्य प्रामाणिकत्वादर्थादस्ति विरोधः समन्वयस्येत्येवं प्राप्तमनूद्य सिद्धान्तमाह—**तत्रेति** । यत्तावदणुभ्यः संयुक्तेभ्यो द्व्यणुकादिक्रमेण जगज्जन्मेति तत्राऽऽह—**विभागेति** । अस्तु तर्हि तेषु कर्मकृतः संयोगस्तत्राऽऽह—**कर्मणश्चेति** । तच्चाभ्युपगम्यते न वा । द्वितीयं प्रत्याह—**अनभ्युपगम इति** । यद्यणूनां संयुक्तानां जगदारम्भकत्वं प्रामाणिकं तदा समन्वयस्यार्थाद्विरोधो न तदस्ति । आद्ये सर्गे परमाणवो न संयुक्ताः कर्मशून्यत्वादात्माकाशवत्ते च कर्मशून्यास्तद्धेतुहीनत्वात्तद्वदित्यर्थः । आद्यकर्महेतोरिष्टत्वाद्धेतुत्वसिद्धिरिति कल्पान्तरमाशंक्य निमित्तं दृष्टमदृष्टं वेति विकल्प्याऽऽद्यमनुवदति—**अभ्युपगमेपीति** । यथेदानीं देहचेष्टायां दृष्टं यत्नाख्यं निमित्तं तरुचलने पवनाभिघातः शरादेर्नोदनादि तथाऽणुष्वाद्यकर्मोत्पत्तौ यदि किंचिद्दृष्टं निमित्तमित्यर्थः । अभिघातादीत्यादिशब्देन नोदनगुरुत्ववेगस्थितिस्थापका गृह्यन्ते । क्रियाविशिष्टद्रव्यस्य द्रव्यान्तरेण संयोगविशेषोऽभिघातो यथोद्यमितनिपतितमुसलस्योदूखलेन संयोगः । नोदनं तु संयुक्तस्य यत्नविशेषापेक्षः स एव संयोगो यथाक्षेपानुकूल्यत्नापेक्षः संनद्धकरशरसंयोगो नोदनेन तुल्ययोगक्षेमः संस्कार इति विवेकः । तत्रास्य सर्वस्य सृष्ट्युत्तरकालत्वान्नाऽऽद्यकर्महेतुतेत्याह—**तस्येति** । आदिसर्गे यत्नायोगं साधयति—**न हीति** । आत्ममनःसंयोगस्य तदा भावात्तन्निमित्तप्रयत्नस्य कथमत्रायोगोक्तिस्तत्राऽऽह—**शरीरेति** । प्रयत्नोक्तन्यायेनाभिघाताद्यपि निरस्यति—**एतेनेति** । एतच्छब्दोक्तं स्फोरयति—**सर्गेति** ।

हि तत्सर्वं नाद्यस्य कर्मणो निमित्तं सम्भवति ॥ अथादृष्टमाद्यस्य कर्मणो निमित्तमित्युच्येत, तत्पुनरात्मसमवायि वा स्यादणुसमवायि वा ॥ उभयथापि नादृष्टनिमित्तमणुषु कर्मावकल्पेत ॥ अदृष्टस्याचेतनत्वात् ॥ न ह्यचेतनं चेतनेनानधिष्ठितं स्वतन्त्रं प्रवर्तते प्रवर्तयति वेति सांख्यपरीक्षायामभिहितम् ॥ आत्मनश्चानुत्पन्नचैतन्यस्य तस्यामवस्थायामचेतनत्वात् आत्मसमवायित्वाभ्युपगमाच्च नादृष्टमणुषु कर्मणो निमित्तं स्यात् ॥ असम्बन्धात् ॥ अदृष्टवता पुरुषेणास्त्यणूनां सम्बन्ध इति चेत्, सम्बन्धसातत्यात्प्रवृत्तिसातत्यप्रसङ्गः ॥ नियामकान्तराभावात् ॥ तदेवं नियतस्य कस्यचित्कर्मनिमित्तस्याभावान्नाणुष्वाद्यं कर्म स्यात् ॥ कर्माभावात्तन्निबन्धनस्संयोगो न स्यात् ॥ संयोगाभावाच्च तन्निबन्धनं द्व्यणुकादिकार्यजातं न स्यात् ॥ संयोगश्चाणो-

---

रत्नप्रभा ।

त्तामावेऽपि अदृष्टवदात्मसंयोगादणुषु कर्मेति शङ्कते—**अथादृष्टमिति**॥ विकल्पपुरःसरं दूषयति—**तत्पुनरिति**। जडात्मवदणोराश्रयत्वं किं न स्यादिति मत्वा विकल्पः कृत इति मन्तव्यम्। अत्रापि सूत्रं योजयति—**उभयथेति**॥ जीवाधिष्ठितमदृष्टं निमित्तमस्त्वित्यत आह—**आत्मनश्चेति** ॥ अचेतनत्वान्नाधिष्ठातृत्वमिति शेषः । भिन्नेश्वरस्याधिष्ठातृत्वमग्रे निराकरिष्यते । अचेतनत्वमदृष्टस्य कर्मनिमित्तत्वाभावे हेतुरुक्तः । हेत्वन्तरमाह—**आत्मसमवायित्वेति** ॥ गुरुत्ववददृष्टमपि स्वाश्रयसंयुक्ते क्रियाहेतुरिति शङ्कते—**अदृष्टवतेति** ॥ विभुसंयोगस्याणुषु सदा सत्त्वात् क्रियासातत्ये प्रलयाभावः स्यादिति दूषयति—**सम्बन्धेति** ॥ कादाचित्कप्रवृत्तेरदृष्टनियम्यत्वायोगेऽपीश्वरान्नियम इत्यत आह—**नियामकान्तरेति** ॥ यत् ज्ञानं तच्छरीरजन्यमिति व्याप्तिविरोधेन नित्यज्ञानासिद्धेस्तद्गुण ईश्वरो नास्ति । अस्तित्वेऽपि सदा सत्त्वान्न नियामकत्वमिति भावः । सूत्रार्थं निगमयति—**तदेवमिति** ॥ संयोगस्य हेतुत्वं खण्डयित्वा स्वरूपं खण्डयति—**संयोगश्चाणोरिति** ॥ संयोगस्य व्याप्यवृत्तित्वे एकस्मिन्नितरस्यान्तर्भावात् कार्यस्य पृथुत्वायोगात् सर्वं कार्यं

भामती ।

माशङ्कापूर्वमाह—**अथादृष्टं** धर्माधर्मौ । **आद्यस्य कर्मण इति** । **आत्मनश्च** क्षेत्रज्ञस्य **अनुत्पन्नचैतन्यस्येति** । **अदृष्टवता पुरुषेणेति** । संयुक्तसमवायसंबन्ध इत्यर्थः । **संवन्धसातत्यादिति** ।

आनन्दगिरीय-न्यायनिर्णयः ।

कल्पान्तरं शङ्कते—**अथेति** । दूषयितुं विकल्पयति—**तत्पुनरिति** । जडस्याऽऽत्मनोऽदृष्टाश्रयत्वमिच्छतामणवस्तथा किं न स्युरित्यणुसमवायि वेत्युक्तम् । कल्पद्वयमविशेषेण प्रत्याह—**उभयथेति** । अचेतनत्वेऽपि कुतो न कर्मनिमित्ततेत्याशङ्क्य स्वतन्त्रं चेतनाधिष्ठितं वा तत्तथेति विकल्प्याऽऽद्यं निराह—**न हीति** । द्वितीये तज्जीवाधिष्ठितमीश्वराधिष्ठितं वा ? नाऽऽद्य इत्याह—**आत्मनश्चेति** । नेतरस्तस्य नित्यसंनिहिततया कादाचित्कप्रवृत्तिहेतुत्वायोगात्तत्रापि निमित्तान्तरकल्पनेऽनवस्थानादिति चकारार्थः । अणुसमवायित्वपक्षं विशेषतो निरस्यति—**आत्मेति** । अदृष्टस्याणुभिरसंबन्धादसंबद्धस्य हेतुत्वेऽतिप्रसङ्गादित्याह—**असंबन्धादिति** । अणुसंयुक्तात्मसमवेतत्वाददृष्टस्याणुभिः संयुक्तसमवायादसंबन्धासिद्धिरिति शङ्कते—**अदृष्टवतेति** । आत्मनस्तर्हि सर्वगतत्वेन सदाऽणुसंबन्धादणुप्रवृत्तेरविच्छित्तिरिति दूषयति—**संबन्धेति** । अण्वात्मनोः संयोगस्याणुकर्मजत्वेऽपि तत्प्रवाहसातत्यात्प्रवृत्तिसातत्यमिति भावः । यद्यागन्तुकः संबन्धस्तस्य तर्हि निमित्तमदृष्टमन्यद्वा तत्र संयोगहेतुकर्मनिमित्तादृष्टापेक्षायामन्योन्याश्रयतेति मत्वा निमित्तान्तरं प्रत्याह—**नियामकान्तरेति** । कर्मनिमित्ताभावं सफलं निगमयति—**तदेवमिति** । कर्मशून्यत्वं सफलमुपसंहरति—**कर्मेति** । संयोगाभावफलमाह—**संयोगेति** । हेत्वभावादणुषु संयोगाद्यनुपपत्तिरुक्ता संप्रति तेषु संयोगस्वरूपमेवायुक्तमित्याह—**संयोगश्चेति** । सर्वात्मना संयोगे परमाणावेकस्मिन्नण्वन्तरान्त-

रण्वन्तरेण सर्वात्मना वा स्यादेकदेशेन वा ॥ सर्वात्मना चेद्, उपचयानुपपत्तेरणुमात्रत्वप्रसङ्गः । दृष्टविपर्ययप्रसङ्गश्च ॥ प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगस्य दृष्टत्वात् ॥ एकदेशेन चेत्, सावयवत्वप्रसङ्गः ॥ परमाणूनां कल्पिताः प्रदेशास्स्युरिति चेत्, कल्पितानामवस्तुत्वात् ॥ अवस्त्वेव संयोग इति वस्तुनः कार्यस्यासमवायिकारणं न स्यात् ॥ असति चासमवायिकारणे द्व्यणुकादिकार्यद्रव्यं नोत्पद्येत । यथा चादिसर्गे निमित्ताभावात्संयोगोत्पत्त्यर्थं कर्म नाणूनां सम्भवति, एवं महाप्रलयेऽपि विभागोत्पत्त्यर्थं कर्म नैवाणूनां सम्भवेत् ॥ न हि तत्रापि किञ्चिन्नियतं तन्निमित्तं दृष्टमस्ति ॥ अदृष्टमपि भोगप्रसिद्ध्यर्थं न प्रलयप्रसिद्ध्यर्थमिति ।

---

रत्नप्रभा ।

परमाणुमात्रं स्यादित्यर्थः । किञ्च सांशद्रव्ये संयोगस्यैकांशवृत्तित्वं दृष्टम् । तद्विरोधाद्व्याप्यवृत्तित्वं न कल्प्यमित्याह—**दृष्टेति** ॥ परमाणो संयोगः एकदेशेन चेदिति सम्बन्धः । दिग्भेदेन कल्पितप्रदेशस्य संयोगस्यापि कल्पितत्वात् ततः कार्यं नोत्पद्येत । उत्पन्नं वा मिथ्या स्यादित्यपसिद्धान्त इत्यर्थः । काणादानां सर्गप्रत्युक्तौ सूत्रं योजयित्वा प्रलयनिरासेऽपि सूत्रं योजयति—**यथा चेति** ॥ परमाणूनां कर्मणा

भामती ।

यद्यपि परमाणुक्षेत्रज्ञयोः संयोगः परमाणुकर्मजस्तथापि तत्प्रवाहस्य सातत्यमिति भावः । **सर्वात्मना** चेदुपचयाभावः । एकदेशेन हि संयोगे यावण्वोरेकदेशौ निरन्तरौ ताभ्यामन्ये एकदेशाः संयोगेनाव्याप्ता इति प्रथिमोपपद्यते । सर्वात्मना तु नैरन्तर्ये परमाणावेकस्मिन् परमाण्वन्तराण्यपि संमान्तीति न प्रथिमा स्यादित्यर्थः । शङ्कते—यद्यपि निष्प्रदेशाः परमाणवस्तथापि संयोगस्तयोरव्याप्यवृत्तिरेवंस्वभावत्वात् । कैषा वाचोयुक्तिर्निष्प्रदेशं संयोगो न व्याप्नोतीति । एषैव वाचोयुक्तिर्यद्यथा प्रतीयते तत्तथाभ्युपेयत इति तामिमां शङ्कां सूद्धारामाह—**परमाणूनां कल्पिता इति** । न ह्यस्ति संभवो निरवयव एकस्तदैव तेनैव संयुक्तश्चासंयुक्तश्चेति, भावाभावयोरेकस्मिन्नद्वये विरोधात् । अविरोधे वा न क्वचिदपि विरोधोऽवकाशमासादयेत । प्रतीतिस्तु प्रदेशकल्पनयापि कल्प्यते । तदिदमुक्तम्—**कल्पिताः प्रदेशा इति** । तथा च सूद्धारेयमिति तामुद्धरति—**कल्पितानामवस्तुत्वादिति** । तृतीयां व्याख्यामाह—**यथा चादिसर्ग इति** । नन्वभिघातनोदनादयः प्रलयारम्भसमये कस्माद्विभागारम्भककर्महेतवो न संभवन्त्यत आह—**न हि तत्रापि किंचिन्नियतमिति** । संभवन्त्यभिघातादयः कदाचित् क्वचित् । न त्वपर्यायेण सर्वस्मिन् । नियमहेतोरभावादित्यर्थः । **न प्रलयप्रसिद्ध्यर्थमिति** । यद्यपि शरीरादिप्रलयारम्भेऽस्ति दुःखभोगस्तथाप्यसौ

आनन्दगिरीय—न्यायनिर्णयः ।

भावात्तत्संयोगिनस्तदव्यासदेशाभावादेवमण्वन्तराण्यपि तस्मिन्नेव संमान्तीति कार्ये प्रथिमायोगात्तस्याणुमात्रतापत्तिरित्याह—**सर्वात्मनेति**। तत्रैव दोषान्तरमाह—**दृष्टेति** । प्रसङ्गमेव प्रकटयति—**प्रदेशेति** । द्वितीयमनुभाष्य दूषयति—**एकेति** । कल्पितदेशोपगमादिष्टापत्तिं शङ्कते—**परमाणूनामिति** । अवयवानां कल्पितत्वे संयोगतत्कार्ययोरपि तथात्वादपसिद्धान्तः स्यादित्याह—**कल्पितानामिति** । मा भूदसमवायिकारणं कार्यसिद्धिरेवामीष्टेत्याशङ्क्याऽऽह—**असतीति** । भावरूपकार्यं नासमवायिनं विनेति वक्तुं द्रव्यपदम् । काणादानां सर्गप्रत्युक्तौ सूत्रं योजयित्वा प्रलयप्रकारप्रत्युक्तावपि सूत्रं योजयति—**यथेति** । कथमसंभवः प्रलयात्प्रागवस्थायां विभागोत्पादककर्मनिमित्तस्य सर्वस्यापि संभवात्तर्हि दृष्टमदृष्टं वा ? नाऽऽद्य इत्याह—**न हीति** । तत्रेति प्रलयप्रयोजकविभागहेतुकर्मोक्तिः । अपिः सर्गहेतुसंयोगनिमित्तकर्मदृष्टान्तार्थः । किंचित्प्रलये कदाचिदभिघातादियोगेऽपि नापर्यायेण सर्वलये तदस्ति नियामकाभावादित्याह—**नियतमिति** । द्वितीयं दूषयति—**अदृष्टमिति** । देहादिलयारम्भे दुःखभेदभोगेऽपि पृथिव्यादिलये तदभावान्

**अतो निमित्ताभावान्न स्यादणूनां संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थं वा कर्म ॥ अतश्च संयोगविभागाभावात्तयोस्सर्गप्रलययोरभावः प्रसज्येत ॥ तस्मादनुपपन्नोऽयं परमाणुकारणवादः ॥ १२ ॥**

## समवायाभ्युपगमाच्चसाम्यादनवस्थितेः ॥ १३ ॥

**समवायाभ्युपगमाच्च तदभाव इति प्रकृतेनाणुकारणवादनिराकरणेन सम्बध्यते ॥ द्वाभ्यां चाणुभ्यां द्व्यणुकमुत्पद्यमानमत्यन्तभिन्नमणुभ्यामण्वोः समवैतीत्यभ्युपगम्यते भवता ॥ न चैवमभ्युपगच्छता शक्यतेऽणुकारणवादः समर्थयितुम् ॥ कुतः ॥ साम्यादनवस्थितेः–यथैव द्व्यणुभ्यामत्यन्तभिन्नं सद् द्व्यणुकं समवायलक्षणेन सम्बन्धेन ताभ्यां सम्बध्यते, एवं समवायोऽपि समवायिभ्योऽत्यन्तभिन्नः सन्समवायलक्षणेनान्येनैव सम्बन्धेन समवायिभिस्सम्बध्येत ॥ अत्यन्तभेदसाम्यात् ॥ ततश्च तस्य तस्यान्योऽन्यस्सम्बन्धः कल्पयितव्य इत्यनवस्थैव प्रसज्येत ॥**

---

रत्नप्रभा ।

संयोगात् सर्गः, विभागात् प्रलयः,–इति प्रक्रिया न युक्ता, युगपदनन्तपरमाणूनां विभागे नियतस्याभिघातादेर्दृष्टस्य निमित्तस्यासत्त्वात् । धर्माधर्मरूपादृष्टस्य सुखदुःखार्थत्वेन सुखदुःखशून्यप्रलयप्रयोजकत्वायोगान्नादृष्टनिमित्तेन कर्मणा विभागः सम्भवति । तथा च दृष्टादृष्टनिमित्तयोरसत्त्वादुभयथापि संयोगार्थत्वेन विभागार्थत्वेन च कर्म नास्ति । अतः कर्माभावात् तयोः संयोगविभागपूर्वकयोः सर्गप्रलययोरभाव इति **सूत्रयोजना ॥ १२ ॥ समवायाभ्युपगमाच्च तदभाव इति ॥** अणुवादासम्भव इति योग्यतया **सम्बध्यते** । द्व्यणुकसमवाययोः परमाणुभिन्नत्वसाम्याद् द्व्यणुकवत् समवायस्यापि समवा-

भामती ।

पृथिव्यादिप्रलये नास्तीत्यभिप्रेत्येदमुदितमिति मन्तव्यम् ॥ १२ ॥ **समवायाभ्युपगमाच्च साम्यादनवस्थितेः** । व्याचष्टे–**समवायाभ्युपगमाच्चेति** । न तावत् स्वतन्त्रः समवायोऽत्यन्तं भिन्नः समवायिभ्यां समवायिनौ घटयितुमर्हत्यतिप्रसङ्गात् । तस्मादनेन समवायिसंबन्धिना सता समवायिनौ घटनीयौ, तथा च समवायस्य संबन्धान्तरेण समवायिसंबन्धेऽभ्युपगम्यमानेऽनवस्था । अथासौ संबन्धिभ्यां संबन्धे न संबन्धान्तरमपेक्षते संबन्धिसंबन्धनपरमार्थत्वात् । तथाहि—नासौ भिन्नोऽपि संबन्धिनिरपेक्षो निरूप्यते । न च तस्मिन् सति संबन्धिनावसंबन्धिनौ भवतः । तस्मात् स्वभावादेव समवायः समवायिनोर्न संबन्धा-

आनन्दगिरीय–न्यायनिर्णयः ।

तस्य कर्मनिमित्तत्वमिति भावः । अणूनामाद्यस्यान्त्यस्य च कर्मणो निमित्तमस्ति वा न वा । अस्ति चेद्दृष्टमदृष्टं वा । दृष्टमपि यत्नोऽभिघातादि वा । अदृष्टमपि परमाणुष्वात्मनि वा । सर्वथाऽपि संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थमुभयथाऽपि न कर्म कर्माभावात्तयोः सर्गप्रलययोरभावः स्यादिति सूत्रयोजनामुपसंहरति–**अत इति** । परमाणुवादे सर्गाद्ययोगात्तस्य सिद्धा भ्रान्तिमूलतेति निगमयति–**तस्मादिति** १२॥ समवायस्वीकारादपि परमाणुवादस्यायुक्तत्वमाह–**समवायेति** । सूत्रं व्याचष्टे–**समवायेति** । तदभावोऽत्र सर्गाभावो लयाभावो वा । नोभयत्रापि समवायाभ्युपगमो हेतुरित्याशंक्याऽऽह–**अणुवादेति** । तस्य निराकरणमसंभवस्तेन समवायाभ्युपगमस्य संगतिरित्यर्थः । तदभ्युपगमं विभजते–**द्वाभ्यामिति** । हेत्वर्थमुक्त्वा तदभाव इति प्रतिज्ञार्थं स्फुटयति–**न चेति** । यथा पूर्वोक्तन्यायादणुकारणता समर्थयितुं न शक्यते तथा द्व्यणुकस्याण्वोः समवायस्वीकारादित्यत्र प्रश्नपूर्वकं हेतुमाह–**कुत इति** । समवायः स्वतन्त्रोऽस्वतन्त्रो वा । नाऽऽद्यः, स्वतन्त्रस्य घटकत्वेऽतिप्रसङ्गात् । द्वितीये समवायस्य संबन्धान्तरेण समवायिसंबन्धेऽनवस्थानान्नाणुकारणतेति हेतुं विभजते–**यथेत्यादिना** । किमप्रामाणिकत्वेन

नन्विह प्रत्ययग्राह्यस्समवायो नित्यसम्बद्ध एव समवायिभिर्गृह्यते । नासम्बद्धः सम्बन्धान्तरापेक्षो वा॥ततश्च न तस्यान्यस्सम्बन्धः कल्पयितव्यः॥ येनानवस्था प्रसज्येत ॥ नेत्युच्यते ॥ संयोगोऽप्येवं सति संयोगिभिर्नित्यसम्बद्ध एवेति समवायवन्नान्यं सम्बन्धमपेक्षते ॥ अथार्थान्तरत्वात्संयोगस्सम्बन्धान्तरमपेक्षेत । समवायोऽपि तर्ह्यर्थान्तरत्वात् सम्बन्धान्तरमपेक्षेत ॥ न च गुणत्वात्संयोगस्सम्बन्धान्तरमपेक्षते ॥ न समवायः, अगुणत्वादिति युज्यते वक्तुम् ॥ अपेक्षाकारणस्य तुल्यत्वात् । गुणपरिभाषायाश्चातन्त्रत्वात् ॥ तस्मादर्थान्तरं समवायमभ्युपगच्छतः प्रसज्येतैवानवस्था ॥ प्रसज्यमानायां चानवस्थायामेकासिद्धौ सर्वासिद्धेर्द्वाभ्यामणुभ्यां द्व्यणुकं नैवोत्पद्येत॥तस्मादप्यनुपपन्नः परमाणुकारणवादः १३॥

---

रत्नप्रभा ।

यान्तरमित्यनवस्थितिरित्यर्थः । नन्विह तन्तुषु पट इत्यादिविशिष्टधीनियामकः समवायो न सम्बन्धान्तरमपेक्षते । स्वरूपेणैव नित्यसम्बन्धत्वादिति शङ्कते—नन्विहेति॥संयोगस्यापि स्वरूपसम्बन्धोपपत्तेः समवायो न स्यादिति दूषयति—नेति ॥सम्बन्धिभिन्नत्वाच्चेदपेक्षा—समवायस्यापि तुल्या—गुणपरिभाषायाश्चेति ॥ गुणत्वाभावेऽपि कर्मसामान्यादीनां समवायाङ्गीकारादगुणत्वं समवायित्वे न व्यापकम् । नापि व्याप्यम् । गुणस्यापि समवायिवत् स्वरूपसम्बन्धसम्भवेन व्याप्त्यनुकूलतर्काभावात् । तस्मात्सम्बन्धिभिन्नत्वमेव सम्बन्धान्तरापेक्षायां कारणम् । तस्य समवायेऽपि तुल्यत्वादनवस्था दुर्वारा । सा च मूलक्षयकरी

भामती ।

न्तरेणेति नानवस्थेति चोदयति—नन्विह प्रत्ययग्राह्य इति । परिहरति—नेत्युच्यते । संयोगोऽप्येवमिति । तथाहि—संयोगोऽपि संबन्धिसंबन्धनपरमार्थः । न च भिन्नोऽपि संयोगिभ्यां विना निरूप्यते । न च तस्मिन् सति संयोगिनावसंयोगिनौ भवत इति तुल्यचर्चः । यद्युच्येत गुणः संयोगः,न च द्रव्यासमवेतो गुणो भवति,न चास्य समवायं विना समवेतत्वं,तस्मात्संयोगस्यास्ति समवाय इति शङ्कामपाकरोति—न च गुणत्वादिति । यद्यसमवायेऽस्यागुणत्वं भवति, कामं भवतु,न नः काचित्क्षतिः । तदिदमुक्तम्—गुणपरिभाषायाश्चेति । परमार्थतस्तु द्रव्याश्रयीत्युक्तम् । तच्च विनापि समवायं स्वरूपतः संयोगस्योपपद्यत एव । न च कार्यत्वात्समवाय्यसमवायिकारणापेक्षितया संयोगः समवायीति युक्तम्, अजसंयोगस्यातथात्व-

आनन्दगिरीय—न्यायनिर्णयः ।

समवायस्यायुक्तत्वमुतानवस्थयेति विकल्प्याऽऽद्यं दूषयन्नाशङ्कते—नन्विति । द्वितीयं प्रत्याह—नित्येति । एवकारार्थमाह—नेति । तथाऽपि संबन्धान्तरापेक्षायामनवस्थेत्याशंक्याऽऽह—संबन्धान्तरेति । वाशब्दो नञनुकर्षणार्थः । अनवस्थाभावं स्फोरयति—नेत्यादिना । समवायः समवायिभ्यां संबन्धान्तरं नापेक्षते संबन्धिसंबन्धनस्वभावत्वादतः स्वभावादेव समवायितन्त्रः समवायो न संबन्धान्तरेणेति नानवस्थेत्यर्थः । समवायस्य संबन्धिपारतन्त्र्यस्वभावं दूषयति—नेतीति । तस्य स्वाभाविके संबन्धिपारतन्त्र्ये संयोगस्यापि स्वतः संयोगितन्त्रत्वयोगात्तस्य संयोगिभ्यां समवायकल्पना न स्यादिति विपक्षे दोषमाह—संयोगोऽपीति । किंच, संयोगस्य संबन्धान्तरापेक्षायामर्थान्तरत्वं गुणत्वं वा हेतुस्तत्राऽऽद्यमाह—अथेति । समवायेऽपि तुल्यमेतदित्याह—समवायोऽपीति । द्वितीयमाशंक्याऽऽह—न चेति । अपेक्षाकारणस्यात्यन्तभिन्नत्वस्येत्यर्थः । समवायस्य संबन्धिभ्यां नात्यन्तभिन्नत्वं तथा किंतु गुणत्वमेव न च तदस्ति समवायस्येत्याशंक्याऽऽह—गुणेति । न हि गुणत्वं संबन्धान्तरापेक्षाहेतुः, कर्मादीनामपि तदपेक्षत्वादित्यर्थः । संयोगसमवाययोस्तुल्यत्वे फलितमाह—तस्मादिति । अनवस्थायां मूलक्षयकारित्वमाह—प्रसज्यमानायां चेति । सूत्रार्थमुपसंहरति—तस्मादिति ॥ १३ ॥ परमाणुवादायोगे हेत्वन्तरमाह—

## नित्यमेव च भावात् ॥ १४ ॥

**अपि चाणवः प्रवृत्तिस्वभावा वा, निवृत्तिस्वभावा वा, उभयस्वभावा वा, अनुभयस्वभावा वाभ्युपगम्येरन् ॥ गत्यन्तराभावात् ॥ चतुर्धापि नोपपद्यते प्रवृत्तिस्वभावत्वे नित्यमेव प्रवृत्तेर्भावात्प्रलयाभावप्रसंगः ॥ निवृत्तिस्वभावत्वेऽपि नित्यमेव निवृत्तेर्भावात्सर्गाभावप्रसङ्गः ॥ उभयस्वभावत्वं च विरोधादसमञ्जसम् ॥ अनुभयस्वभावत्वे तु निमित्तवशात्प्रवृत्तिनिवृत्त्योरभ्युपगम्यमानयोरदृष्टादेर्निमित्तस्य नित्यसन्निधानान्नित्यप्रवृत्तिप्रसंगात् ॥ अतन्त्रत्वेऽप्यदृष्टादेर्नित्याप्रवृत्तिप्रसंगात् ॥ तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥ १४ ॥**

## रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

**सावयवानां द्रव्याणामवयवशो विभज्यमानानां यतः परो विभागो न**

---

रत्नप्रभा ।

तथा समवायासिद्धौ समवेतद्व्यणुकासिद्धिरित्यर्थः ॥ १३ ॥ सूत्रं व्याचष्टे—**अपि चेति** ॥ अनुभयस्वभावत्वे नैमित्तिकप्रवृत्तिर्वाच्या । निमित्तं च कालादृष्टादिकं नित्यसन्निहितमिति नित्यमेव प्रवृत्तिप्रसङ्गः । तस्यानित्यत्वे प्रवृत्त्यभाव इत्यर्थः ॥ १४ ॥ किंच परमाणवः समवायिकारणवन्तः कारणापेक्षया स्थूला अनित्याश्च, रूपवत्त्वाद्रसवत्त्वाद्गन्धवत्त्वात्स्पर्शवत्त्वाद्घटवदिति सूत्रं योजयितुं परप्रक्रियामाह—**सावयवानामित्यादिना** ॥ नन्वत्र परमाणुत्वं पक्षतावच्छेदकं तद्विरुद्धं स्थूलत्वं कथं साध्यत इति चेत् । न । वायु-

भामती ।

प्रसङ्गात् । अपि च समवायस्यापि संबन्ध्यधीनसद्भावस्य संबन्धिनश्चैकस्य द्वयोर्वा विनाशित्वेन विनाशित्वात्कार्यत्वम् । न ह्यस्ति संभवो गुणो वा गुणगुणिनौ वावयवो वावयवावयविनौ वा न स्तोऽप्यस्ति च तयोः संबन्ध इति । तस्मात् कार्यः समवायः । तथा च यथैष निमित्तकारणमात्राधीनोत्पाद एवं संयोगोऽपि । अथ समवायोऽपि समवाय्यसमवायिकारणे अपेक्षते तथापि सैवानवस्थेति । तस्मात्समवायवत् संयोगोऽपि न संबन्धान्तरमपेक्षते । यद्युच्येत संबन्धिनावसौ घटयति नात्मानमपि संबन्धिभ्यां, तत् किमसावसंबद्ध एव संबन्धिभ्याम्, एवं चेदत्यन्तभिन्नोऽसंबद्धः कथं संबन्धिनौ संबन्धयेत् । संबन्धने वा हिमवद्विन्ध्यावपि संबन्धयेत् । तस्मात्संयोगः संयोगिनोः समवायेन संबद्ध इति वक्तव्यम् । तदेतत्समवायस्यापि समवायिसंबन्धे समानमन्यत्राभिनिवेशात् । तथा चानवस्थेति भावः ॥ १३ ॥ **नित्यमेव च भावात्** । प्रवृत्तेरप्रवृत्तेर्वेति शेषः । अतिरोहितार्थमस्य भाष्यम् ॥ १४ ॥ **रूपादिमत्त्वाच्च विपर्ययो दर्शनात्** । यत किल भूतभौतिकानां मूलकारणं तद्रूपादिमान् परमाणुर्नित्य इति भवद्भिरभ्युपेयते, तस्य चेद्रूपादिमत्त्वमभ्युपेयेत परमाणुत्वनित्यत्वविरुद्धे स्थौल्यानित्यत्वे प्रसज्येयातां, सोऽयं प्रसङ्ग एकधर्माभ्युपगमे धर्मान्तरस्य । नियता प्राप्तिर्हि प्रसङ्गलक्षणं, तदनेन प्रसङ्गेन जगत्कारणप्रसिद्धये प्रवृत्तं साधनं रूपादिमन्नित्यपरमाणुसिद्धेः प्रच्याव्य ब्रह्मगोचरतां नीयते । तदेतद्वैशेषिकाभ्युपगमोपन्यासपूर्वकमाह—**सावयवानां द्रव्याणा-**

आनन्दगिरीय-न्यायनिर्णयः ।

**नित्यमिति** । इतश्च तद्वादासिद्धिरिति चकारार्थमाह-**अपि चेति** । अनुपपत्तिं दर्शयितुं विकल्पयति—**अणव इति** । न्यूनत्वं वारयति—**गत्यन्तरेति** । विकल्पचतुष्टयस्यापि दुष्टत्वं प्रतिजानीते—**चतुर्धेति** । तत्राऽऽद्यस्य दुष्टत्वं स्पष्टयति—**प्रवृत्तीति** । द्वितीयेऽनुपपत्तिं स्फोरयति—**निवृत्तीति** । तृतीयस्य नोत्थानमेवेत्याह—**उभयेति** । चतुर्थं प्रत्याह—**अनुभयेति** । अदृष्टादि संनिहितमपि न प्रवर्तकमित्याशंक्याऽऽह—**अतन्त्रत्वेऽपीति** । पक्षचतुष्टयनिषेधफलमुपसंहरति—**तस्मादिति** ॥ १४ ॥ परमाणूनां परमकारणत्वं निराकृत्य निरवयवत्वादि निराकर्तुमारभते—**रूपादीति** । विपर्ययं दर्शयितुं परमतमनुवदति—**सावयवानामिति** ।

सम्भवति ते चतुर्विधा रूपादिमन्तः परमाणवश्चतुर्विधस्य रूपादिमतो भूतभौतिकस्यारम्भका नित्याश्चेति यद्वैशेषिका अभ्युपगच्छन्ति, स तेषामभ्युपगमो निरालम्बन एव ॥ यतो रूपादिमत्त्वात्परमाणूनामणुत्वनित्यत्वविपर्ययः प्रसज्येत ॥ परमकारणापेक्षया स्थूलत्वमनित्यत्वं च तेषामभिप्रेतविपरीतमापद्येतेत्यर्थः ॥ कुतः ॥ एवं लोके दृष्टत्वाद्-यद्धि लोके रूपादिमद्वस्तु तत्, स्वकारणापेक्षया स्थूलमनित्यं च दृष्टम् । तद्यथा पटस्तन्तूनपेक्ष्य स्थूलोऽनित्यश्च भवति । तन्तवश्चांशूनपेक्ष्य स्थूला अनित्याश्च भवन्ति ॥ तथा चामी परमाणवो रूपादिमन्तस्तैर-भ्युपगम्यन्ते ॥ तस्मात्तेऽपि कारणवन्तस्तदपेक्षया स्थूला अनित्याश्च प्राप्नुवन्ति ॥ यच्च नित्यत्वे कारणं तैरुक्तं—"सदकारणवन्नित्यम्" [वै० सू० ४ । १ । १] इति, तदप्येवं सत्यणुषु न सम्भवति ॥ उक्तेन

---

रत्नप्रभा ।

स्वतेजस्त्वादेः पृथगवच्छेदकत्वात् । न चाप्रयोजकता, कारणशून्यत्वे नित्यत्वे चात्मवद्रूपादिमत्त्वायोगात् । न च तर्हि वायुः कारणवानिति पृथक् साधने रूपादिहेतूनां भागासिद्ध्यभावेऽपि सिद्धसाधनता स्यादिति वाच्यम् । यत्र स्पर्शः तत् सकारणं, यत्र रूपं तत् सकारणमिति व्याप्तिग्रहकाले वायुत्वाद्यवच्छेदेन साध्यसिद्ध्यभावादिति भावः । परमाणवो नित्याः, सत्त्वे सति अकारणवत्त्वादात्मवदिति सत्प्रतिपक्षमुत्थाप्य विशेष्यासिद्ध्या दूषयति—यच्च नित्यत्व इति ॥ सत्त्वं भावत्वं प्रागभावनिरासार्थम् । नित्यत्वप्रतिषेधः सप्रतियोगिकः, अभावत्वाद्, घटाभाववदिति नित्यत्वस्य क्वचित् सिद्धौ कार्यमनित्यमिति विशेषतः कार्ये नित्यत्वप्रतिषेधात् कारणभूतपरमाणुषु नित्यत्वं सिध्यति । अन्यथा प्रतियोग्यभावे प्रति-

भामती ।

मिति । परमाणुनित्यत्वसाधनानि च तेषामुपन्यस्य दूषयति—यच्च नित्यत्वे कारणमिति सदिति

आनन्दगिरीय—न्यायनिर्णयः ।

यतो येभ्योऽवयवेभ्यः सकाशात्परः परस्ताद्भावीति यावत् । रूपादिमन्तो रूपरसगन्धस्पर्शेत्याद्यनुक्रमेण रूपमादौ विद्यते यस्य स्पर्शस्य स स्पर्शो रूपादिस्तदाश्रया इत्यर्थः । तेषां चातुर्विध्ये हेतुः—चतुर्विधस्येति । कार्यस्थं चातुर्विध्यं कारणेऽपि तत्कल्पयतीत्यर्थः । तेषां स्पर्शवत्त्वे हेतुमाह—रूपादिमत इति । कार्ये दृष्टं स्पर्शित्वं कारणेऽपि तत्कल्पकमित्यर्थः । आरम्भकान्तरापेक्षायामनवस्थानान्नाऽऽरम्भकाः स्युरिति मत्वाऽऽह—नित्याश्चेति । परोपगतिमनूद्य प्रत्याह—स इति । निरालम्बनत्वे हेतुः—यत इति । रूपादिमत्त्वं पक्षव्याप्त्यर्थं पूर्ववद्व्याख्येयम् । विमताः सावयवा नाशिनश्च स्पर्शित्वात्पटवदित्यनुमानात्परोपगतेर्निराश्रयतेत्यर्थः । अणूनां सावयवत्वायुक्तिर्व्याहतेत्याशंक्याऽऽह—परमेति । कारणवत्त्वस्य नाशित्वहेतुत्वे तस्यैव द्रव्यत्वविशेषितस्य सावयवत्वे हेतुत्वात्कुतोऽनुमेति शङ्कते—कुत इति । साधनव्याप्तिं मत्वा सूत्रावयवमवतारयति—एवमिति । दर्शनमेव विशदयन्व्याप्तिमाह—यद्धीति । स्पर्शवतः सावयवत्वमनित्यत्वं च दृष्टमित्यत्र दृष्टान्तमाह—तदिति दृष्टान्तबाहुल्यं सूचयति—तन्तवश्चेति । उपनयद्वारा पक्षधर्मतामाह—तथा चेति । अनुमानद्वयं निगमयति—तस्मादिति । पूर्वोक्तोपाधेः साधनव्याप्तिमभिप्रेतां प्रकटयितुं विशिनष्टि—कारणवन्त इति । पृथिवीत्वमनित्यमात्रवृत्ति स्पर्शवन्मात्रवृत्तित्वाद्घटत्ववदित्याद्यनुमानं चकारार्थः । परमाणवो नित्याः सत्त्वे सत्यकारणवत्त्वादात्मवदिति प्रत्यनुमानमुत्थापयति—यच्चेति । विशेष्यासिद्धिमाह—तदपीति । एवं सति परमाणूनां कारणवत्त्वे सतीत्यर्थः । तदेव कथं तदाह—उक्तेनेति । स्पर्शित्वेन परिच्छिन्नत्वेन चेत्यर्थः । नित्यत्वनिषेधस्तत्प्रतियोगिवस्तुपूर्वकः,

प्रकारेण कारणवत्त्वोपपत्तेः ॥ यदपि नित्यत्वे द्वितीयं कारणमुक्तं-"अनित्यमिति च विशेषतः प्रतिषेधभावः" [ वै० सू० ४ । १ । ४ ] इति, तदपि नावश्यं परमाणूनां नित्यत्वं साधयति ॥ असति हि यस्मिन्कस्मिंश्चिन्नित्ये वस्तुनि नित्यशब्देन नञः समासो नोपपद्यते, न पुनः परमाणुनित्यत्वमेवापेक्ष्यते ॥ तच्चास्त्येव नित्यं परमकारणं ब्रह्म ॥ न च शब्दार्थव्यवहारमात्रेण कस्यचिदर्थस्य प्रसिद्धिर्भवति ॥ प्रमाणान्तरसिद्धयोश्शब्दार्थयोर्व्यवहारावतारात् ॥ यदपि नित्यत्वे तृतीयं कारणमुक्तं-"अविद्या च" [ वै० सू० ४ । १ । ५ ] इति, तद्यद्येवं विव्रियेत सतां परिदृश्यमानकार्याणां कारणानां प्रत्यक्षेणाग्रहणम्, अविद्या इति, ततो द्व्यणुकनित्यताप्यापद्येत ॥

रत्नप्रभा ।

षेधानुपपत्तिरिति कणादोक्तमनूद्याऽन्यथासिद्ध्या दूषयति-यदपीति ॥ कार्ये नित्यत्वप्रतिषेधव्यवहारमङ्गीकृत्य ब्रह्मणि प्रतियोगिप्रसिद्धिरुक्ता । वस्तुतस्तु विशेषव्यवहार एवासिद्धः । कारणनित्यत्वस्य प्रमाणान्तरेण ज्ञानं विना कार्यमनित्यमिति व्यवहारायोगादित्याह-न च शब्देति ॥ यदि प्रमाणान्तरं कारणनित्यत्वे स्यात्, तदायं व्यवहारः समूलो भवति । ततो मूलज्ञानात् प्राग्व्यवहारमात्रान्न वस्तुसिद्धिः । वटे यक्षव्यवहारादपि तत्सिद्धिप्रसङ्गात् । मूलज्ञाने तु तेनैव विशेषसिद्धेर्व्यवहारोपन्यासवैयर्थ्यमिति भावः । एवं परमाणुनित्यत्वे काणादसूत्रद्वयं निरस्य तृतीयं निरस्यति-यदपीति ॥ सतामणूनां दृश्यमानस्थूलकार्याणां प्रत्यक्षेण कारणाज्ञानमविद्येति यदि सूत्रार्थः, तर्ह्यप्रत्यक्षकारणत्वं नित्यत्वे हेतुः स्यात् । तच्च द्व्यणुके । व्यभिचारादित्यर्थः । यद्यारम्भकद्रव्यशून्यत्वं हेतुविशेषणं, तदा विशेषवैयर्थ्यमापद्येत, पुन-

भामती ।

प्रागभावाद्व्यवच्छिनत्ति । अकारणवदिति घटादेः । यदपि द्वितीयमिति । लब्धरूपं हि क्वचित् किंचिदन्यत्र निषिध्यते । तेनानित्यमिति लौकिकेन निषेधेनान्यत्र नित्यत्वसद्भावः कल्पनीयः, ते चान्ये परमाणव इति । तन्न । आत्मन्यपि नित्यत्वोपपत्तेः । व्यपदेशस्य च प्रतीतिपूर्वकस्य तदभावे निर्मूलस्यापि दर्शनात् । यथेह वटे यक्ष इति । यदपि नित्यत्वे तृतीयं कारणमविद्येति । यदि सतां परमाणूनां परिदृश्यमानस्थूलकार्याणां प्रत्यक्षेण कारणाग्रहणमविद्या तया नित्यत्वम्, एवं सति द्व्यणुकस्यापि नित्य-

आनन्दगिरीय-न्यायनिर्णयः ।

निषेधत्वाद्, घटनिषेधवदित्यनुमानादणुनित्यत्वसिद्धौ तदनित्यत्वानुमानासिद्धिरित्यनुवदति-यदपीति। कार्यमनित्यमिति कार्ये विशेषतो नित्यत्वनिषेधो न स्याद्यदि कारणेऽप्यनित्यत्वमतोऽणूनां कारणानां नित्यतेति सूत्रार्थः । उभयसिद्धात्मनित्यत्वेनैव विशेषनिषेधसिद्धेरुक्तानुमानस्य सिद्धसाध्यत्वान्नाणुनित्यतासाधकतेत्याह—तदपीति । अनित्यमित्ययं कार्ये विशेषेण नित्यत्वनिषेध इत्यङ्गीकृत्योक्तं तदपि नास्तीत्याह—न चेति । मूलप्रमाणं विना शब्दादेव पौरुषेयाद्योऽर्थे व्यवहारस्तन्मात्रेणेति यावत् । अन्यथा वटे यक्षप्रसिद्धेरपि प्रामाण्यं स्यादिति मत्वा हेतुमाह-प्रमाणान्तरेति । अनित्यशब्दान्नित्यत्वनिषेधमात्रं सिद्धं न कार्ये तन्निषेधो येन कार्यप्रतियोगिनि कारणे नित्यत्वस्थितिर्विशेषस्तु मानान्तरादेव लभ्यते ततस्तस्मादेवाणुनित्यत्वसिद्धौ व्यर्थं पूर्वानुमानमित्यर्थः । परमाणवो नित्या अनुपलभ्यमानकारणत्वादात्मवदित्यनुमानान्तरमनुभाषते-यदपीति । प्रत्यक्षेणानुमानेन वा तदनुपलब्धिरिति विकल्प्याऽऽद्यमनुवदति-तदिति । सतामणूनां दृश्यमानस्थूलकार्याणां प्रत्यक्षेण कारणाग्रहणमविद्येति यदि सूत्रं व्याख्यायेतेति योजना । तर्हि द्व्यणुके व्यभिचारः स्यादित्याह-तत इति ।

१ अनित्य इति पाठान्तरम् । २ चरहितः पाठः क्वचित् ।

अथाद्रव्यवत्त्वे सतीति विशेष्येत।तथाप्यकारणवत्त्वमेव नित्यतानिमित्तमापद्येत॥तस्य च प्रागेवोक्तत्वाद् "अविद्या च" इति पुनरुक्तं स्यात्॥अथापि कारणविभागात्कारणविनाशाच्चान्यस्य तृतीयस्य विनाशहेतोरसम्भवोऽविद्या सा परमाणूनां नित्यत्वं ख्यापयतीति व्याख्यायेत ॥ न ॥ अवश्यं विनश्यद्वस्तु द्वाभ्यामेव हेतुभ्यां विनष्टुमर्हतीतिति नियमोऽस्ति ॥ संयोगसचिवे ह्यनेकस्मिंश्च द्रव्ये द्रव्यान्तरस्यारम्भकेऽभ्युपगम्यमाने एतदेवं स्यात् ॥ यदा त्वपास्तविशेषं सामान्यात्मकं कारणं विशेषवदवस्थान्तरमापद्यमानमारम्भकमभ्युपगम्यते, तदा घृतकाठिन्यविलयनव-

रत्नप्रभा ।

रुक्तिश्चेत्याह—अथेत्यादिना ॥ परमाणवो नित्याः, नाशकानुपलम्भादात्मवदिति सूत्रार्थमाशङ्कते—अथापीति ॥ तन्त्वाद्यवयवानां विभागान्नाशाद्वा पटादिनाशो दृष्टः । तच्च द्वयं निरवयवाणूनां नास्तीति नित्यत्वमित्यर्थः । परिणामवादमाश्रित्याणूनां नाशकं किञ्चित् सम्भवतीति परिहरति—नेति ॥ अवयवानां संयोगेन द्रव्यान्तरोत्पत्तिः—आरम्भ इति यदि मतं स्यात्, तदा द्रव्यविनाशो द्वाभ्यामेवेति नियमः स्यात्। नारम्भे मानमस्ति। संयुक्ततन्त्वन्यपटादर्शनात् । अतः कारणमेव स्वतो निर्विशेषं विशेषवदवस्थात्मना कार्यमित्यनुभवबलादास्थेयम्। तथा चाणूनामप्यविद्यापरिणामरूपाणां प्रलयनिमित्तेन कालादिना पिण्डात्मकस्वरूपतिरोभावेन कारणभावापत्तिर्विनाश उपपद्यते । यथा—अग्निसम्पर्काद् घृतकाठिन्यमवयवसंयोगस्यावयवानां च नाशं विनैव लीयते; तद्वत् । न च काठिन्यस्य संयोगविशेषत्वेन गुणत्वाद् द्रव्यनाशेऽनुदाहरणत्वमिति शंक्यम् । गुणवद् द्रव्यस्यापि कुतश्चिद्विनाश इत्यंशेनोदाहरणात् । गुणपरिभाषायाश्चातन्त्रत्वात् ।

भामती ।

त्वम् । अथाद्रव्यत्वे सतीति विशेष्येत तथा सति न द्व्यणुके व्यभिचारः, तस्यानेकद्रव्यत्वेनाविद्यमानद्रव्यत्वानुपपत्तेः । तथाप्यकारणवत्त्वमेव नित्यतानिमित्तमापद्येत यतोऽद्रव्यत्वमविद्यमानकारणभूतद्रव्यत्वमुच्यते, तथा च पुनरुक्तमित्याह—तस्य चेति । अपि चाद्रव्यत्वे सति सत्त्वादित्यत एवेष्टार्थसिद्धेरविद्येति व्यर्थम् । अथाविद्यापदेन द्रव्यविनाशकारणद्वयाविद्यमानत्वमुच्यते, द्विविधो हि द्रव्यनाशहेतुरवयवविनाशोऽवयवव्यतिषङ्गविनाशश्च, तदुभयं परमाणौ नास्ति, तस्मान्नित्यः परमाणुः । न च सुखादिभिर्व्यभिचारः, तेषामद्रव्यत्वादित्याह—अथापीति । निराकरोति—नावश्यमिति । यदि हि संयोगसचिवानि वहूनि द्रव्याणि द्रव्यान्तरमारभेरन्निति प्रक्रिया सिध्येत् सिध्येद् द्रव्यद्वयमेव (?) तद्विनाशकारणमिति । न त्वेतदस्ति, द्रव्यस्वरूपापरिज्ञानात् । न तावत् तन्त्वाधारस्तद्व्यतिरिक्तः पटो नामास्ति यः संयोगसचिवैस्तन्तुभिरारभ्येतेत्युक्तमधस्तात् । षट् पदार्थांश्च दूषयन्नग्रे वक्ष्यति । किंतु कारणमेव विशेषवदवस्थान्तरमापद्यमानं कार्यं, तच्च सामान्यात्मकम् । तथाहि—मृद्वा सुवर्णं वा सर्वेषु घटरुचकादिष्वनुगतं सामान्यमनुभूयते । न चैते घटरुचकादयो मृत्सुवर्णाभ्यां व्यतिरिच्यन्त इत्युक्तम् । अग्रे

आनन्दगिरीय—न्यायनिर्णयः ।

आरम्भकद्रव्यशून्यत्वे सति प्रत्यक्षेणानुपलब्धकारणत्वस्य हेतुत्वान्नैवमिति शङ्कते—अथेति । अद्रव्यत्वमविद्यमानकारणद्रव्यत्वं तावतैव नित्यत्वसिद्धौ विशेष्यवैयर्थ्यमित्याह—तथाऽपीति । अस्तु तावदेव तर्हि नित्यतानिमित्तं तत्राऽऽह—तस्येति । न चानुमानेन कारणानुपलब्धिः परिच्छिन्नत्वानुमानस्योक्तत्वादिति चकारार्थः । अवयवनाशोऽवयवव्यतिषङ्गनाशश्च द्रव्यनाशकारणं तदुभयासत्त्वमविद्यापदेनोच्यते । तथा च परमाणवो नित्या उभयनाशकारणशून्यत्वादात्मवदिति सूत्रार्थ इत्याह—अथापीति । हेत्वसिद्धिमाह—नेति । आरम्भवादानुपगमं नियमाभावे हेतुमाह—संयोगेति । परिणामवादे नाशहेत्वन्तरसंभवादसिद्धिरुद्धृतेत्याह—यदेति । न च घृतकाठिन्यनाशेऽपि कारणमवयवविभागादीति युक्तमणु-

न्मूर्त्यवस्थाविलयनेनापि विनाश उपपद्यते ॥ तस्माद्रूपादिमत्त्वात्स्यादभिप्रेतविपर्ययः परमाणूनाम् ॥ तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥१५॥

## उभयथा च दोषात् ॥ १६ ॥

**गन्धरसरूपस्पर्शगुणा स्थूला-पृथिवी, रूपरसस्पर्शगुणास्सूक्ष्माः-आपः,**

रत्नप्रभा ।

वस्तुतस्तु घृतं कठिनं द्रवमित्यनुस्यूतघृतपरिणामविशेषो द्रव्यमेव काठिन्यम् । न च द्रव्यत्वेपि अवयवविभागादेव तस्य नाश इति वाच्यम् । घृतस्य परिणामिन एकत्वेन विभागासम्भवात्, परमाणुकाठिन्यनाशे तदसम्भवाच्चेति भावः । किंच प्रलये "नासीद्रजो", "नान्यत् किञ्चन" इत्यणूनां नाशसिद्धिः । तस्मान्न तेषां परमकारणत्वमित्युपसंहरति-तस्मादिति ॥ १५ ॥ यद्यस्माद-

भामती ।

च वक्ष्यामः । तस्मान्मृत्सुवर्णे एव तेनतेनाकारेण परिणममाने घट इति च रुचक इति च कपालशर्कराकणमिति च शकलकणिकाचूर्णमिति च व्याख्यायेते । तत्रतत्रोपादानयोर्मृत्सुवर्णयोः प्रत्यभिज्ञानात् । न तु घटादयो वा कपालादिषु कपालादयो वा घटादिषु च रुचकादयो वा शकलादिषु शकलादयो वा रुचकादिषु प्रत्यभिज्ञायन्ते यत्र कार्यकारणभावो भवेत् । न च विनश्यन्तमेव घटक्षणं प्रतीत्य कपालक्षणोऽनुपादान एवोत्पद्यते तत्किमुपादानप्रत्यभिज्ञानेनेति वक्तव्यम्, एतस्या अपि वैनाशिकप्रक्रियाया उपरिष्टान्निराकरिष्यमाणत्वात् । तस्मादुपजनापायधर्माणो विशेषावस्थाः सामान्यस्योपादेयाः, सामान्यात्मा तूपादानम् । एवं व्यवस्थिते यथा सुवर्णद्रव्यं काठिन्यावस्थामपहाय द्रवावस्थया परिणतं न च तत्रावयवविभागः सन्नपि द्रवत्वे कारणं, परमाणूनां भवन्मते तदभावेन द्रवत्वानुपपत्तेः, तस्माद्यथा परमाणुद्रव्यमग्निसंयोगात्काठिन्यमपहाय द्रवत्वेन परिणमते, न च काठिन्यद्रवत्वे परमाणोरतिरिच्येते, एवं मृद्वा सुवर्णं वा सामान्यं पिण्डावस्थामपहाय कुलालहेमकारादिव्यापाराद् घटरुचकाद्यवस्थामापद्यते । न त्ववयवविनाशात्तत्संयोगविनाशाद्वा विनष्टुमर्हन्ति घटरुचकादयः । न हि कपालादयोऽस्योपादानं तत्संयोगो वाऽसमवायिकारणमपि तु सामान्यमुपादानं, तच्च नित्यम् । न च तत्संयोगसचिवमेकत्वात्, संयोगस्य द्विष्ठत्वेनैकस्मिन्नभावात् । तस्मात्सामान्यस्य परमार्थसतोऽनिर्वाच्या विशेषावस्थास्तदधिष्ठाना भुजङ्गादय इव रज्ज्वाद्युपादाना उपजनापायधर्माण इति सांप्रतम् । प्रकृतमुपसंहरति-तस्मादिति ॥ १५ ॥ उभयथा च दोषात् । अनुभूयते हि पृथिवी गन्धरूपरसस्पर्शात्मिका स्थूला, आपो रसरूपस्पर्शात्मिकाः सूक्ष्माः, रूपस्पर्शात्मकं तेजः सूक्ष्मतरं, स्पर्शात्मको वायुः सूक्ष्मतमः । पुराणेऽपि स्मर्यते-'आकाशं शब्दमात्रं तु स्पर्शमात्रं समाविशत् । द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मकोऽभवत् ॥ १ ॥ रूपं तथैवाविशतः शब्दस्पर्शगुणावुभौ । त्रिगुणस्तु ततो वह्निः स शब्दस्पर्शवान् भवेत् ॥ २ ॥ शब्दः स्पर्शश्च रूपं च रसमात्रं समाविशत् । तस्माच्चतुर्गुणा आपो विज्ञेयास्तु रसात्मिकाः॥३॥ शब्दः स्पर्शश्च रूपं च रसश्चेद्गन्धमाविशत् । संहतान् गन्धमात्रेण तानाचष्टे महीमिमाम् ॥४॥तस्मात्पञ्चगुणा भूमिः स्थूला भूतेषु दृश्यते । शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः॥ परस्परानुप्रवेशाद्धारयन्ति परस्परम्॥५॥,तेन गन्धादयः परस्परं संहन्यमाना पृथिव्यादयः। तथा च यथायथा संहन्यमानानामुपचयस्तथातथा संहतस्य स्थौल्यं,यथायथाऽपचयस्तथातथा सौक्ष्म्यतारतम्यं, तदेवमनुभवागमाभ्यामवस्थितमर्थं वैशेषिकैरनिच्छद्भिरप्यशक्यापह्नवमाह-गन्धेति । अस्तु

आनन्दगिरीय-न्यायनिर्णयः ।

काठिन्यस्य नाशकद्वयाभावेऽपि विनाशाङ्गीकारात् । न च तत्काठिन्यं न नश्यति तत्कार्येऽपि तदनाशापातात् । कारणगुणनाशद्वारा कार्ये तन्नाशाश्रयणात् । तस्मादण्वस्थां हित्वा ब्रह्मणः स्वरूपेणावस्थानमणुनाश इत्याशयेन घृतकाठिन्यमुदाहृतम् । प्रत्यनुमानायोगे फलितमाह-तस्मादिति । स्पर्शतत्त्वानुमानफलं निगमयति-तस्मादपीति ॥ १५ ॥ परमाणुवादानुपपत्तौ हेत्वन्तरमाह-उभयथा चेति । अणूनामतुल्यगुणत्वे तुल्यगुणत्वे च दोषध्रौव्यात्तद्वादासिद्धिरिति वक्तुमनुभवागमसिद्धमर्थमाह-गन्धेति ।

रूपस्पर्शगुणं सूक्ष्मतरं—तेजः, स्पर्शगुणस्सूक्ष्मतमः—वायुः । इत्येवमेतानि चत्वारि भूतान्युपचितापचितगुणानि स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमतारतम्योपेतानि च लोके लक्ष्यन्ते, तद्वत्परमाणवोऽप्युपचितापचितगुणाः कल्प्येरन्न वा ॥ उभयथापि च दोषानुषङ्गोऽपरिहार्य एव स्यात्—कल्प्यमाने तावदुपचितापचितगुणत्वे उपचितगुणानां मूर्त्युपचयादपरमाणुत्वप्रसङ्गः ॥ न चान्तरेणापि मूर्त्युपचयं गुणोपचयो भवतीत्युच्येत । कार्येषु भूतेषु गुणोपचये मूर्त्युपचयदर्शनात् ॥ अकल्प्यमाने तूपचितापचितगुणत्वे परमाणुत्वसाम्यप्रसिद्धये यदि तावत्सर्वे एकैकगुणा एव कल्प्येरन्, ततस्तेजसि स्पर्शस्योपलब्धिर्न स्यात् । अप्सु रूपस्पर्शयोः । पृथिव्यां च रसरूपस्पर्शानाम् ॥ कारणगुणपूर्वकत्वात्कार्यगुणानाम् । अथ सर्वे चतुर्गुणा एव कल्प्येरन्, ततोऽप्स्वपि गन्धस्योपलब्धिस्स्यात् । तेजसि गन्धरसयोः । वायौ च गन्धरूपरसानाम् ॥ न चैवं दृश्यते ॥ तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥ १६ ॥

---

रत्नप्रभा ।

धिकगुणवत्, तत्तस्मात् स्थूलमिति व्याप्तिमुक्त्वा विकल्पयति—तद्वदिति ॥ पार्थिवः परमाणुः अधिकगुणः, तत एकैकन्यूनगुणा जलादिपरमाणव इति कल्प्यते न वा । आद्ये—दोषमाह—कल्प्यमान इति॥ मूर्त्युपचयात् स्थौल्यादित्यर्थः । पार्थिवोऽणुः, आप्यात् स्थूलः, अधिकगुणत्वाद् घटवदित्येवं प्रयोक्तव्यः । अप्रयोजकत्वं निरस्यति—न चान्तरेणेति ॥ दृष्टविरोधः स्यादिति भावः । नेति पक्षे सर्वेषामणूनां साम्यार्थमेकैकगुणवत्त्वं वा स्याच्चतुर्गुणवत्त्वं वा । उभयथापि दोषमाह—अकल्प्यमाने त्वित्यादिना ॥ १६ ॥

भामती ।

तावच्छब्दो वैशेषिकैस्तस्य पृथिव्यादिगुणत्वेनानभ्युपगमादिति चत्वारि भूतानि चतुस्त्रिद्व्येकगुणान्युदाहृतवान् । अनुभवागमसिद्धमर्थमुक्त्वा विकल्प्य दूषयति—तद्वत् । स्थूलपृथिव्यादिवत् परमाणवोऽपीति । उपचितगुणानां मूर्त्युपचयात् उपचितसंहन्यमानानां संघातोपचयात् अपरमाणुत्वप्रसंगः स्थूलत्वादिति । यस्तु ब्रूते न गन्धादिसंघातः परमाणुरपि तु गन्धाद्याश्रयो द्रव्यं, न च गन्धादीनां तदाश्रयाणामुपचयेऽपि द्रव्यस्योपचयो भवितुमर्हत्यन्यत्वादिति, तं प्रत्याह—न चान्तरेणापि मूर्त्युपचयं द्रव्यस्वरूपोपचयमित्यर्थः । कुतः । कार्येषु भूतेषु गुणोपचये मूर्त्युपचयदर्शनात् । न तावत् परमाणवो रूपतो गृह्यन्ते किंतु कार्यद्वारा, कार्यं च न गन्धादिभ्यो भिन्नं यदा न तदाधारतया गृह्यतेऽपि तु तदात्मकतया, तथा च तेषामुपचये तदुपचितं दृष्टमिति परमाणुभिरपि तत्कारणैरेवं भवितव्यं, तथा चापरमाणुत्वं स्थूलत्वादित्यर्थः । द्वितीयं विकल्पं दूषयति—अकल्प्यमाने तूपचितापचितगुणत्व इति । अथ सर्वे चतुर्गुणा इति । यद्यप्यस्मिन् कल्पे सर्वेषां स्थौल्यप्रसङ्गस्तथाप्यतिस्फुटतयोपेक्ष्य दूषयति—ततोऽप्स्वपीति । वायो रूपवत्त्वेन चाक्षुषत्वप्रसङ्ग इत्यपि द्रष्टव्यम् ॥ १६ ॥

आनन्दगिरीय—न्यायनिर्णयः ।

शब्दस्य पृथिव्यादिगुणत्वेन परैरनिष्टत्वाच्चत्वारि भूतानि चतुस्त्रिद्व्येकगुणान्युदाहृत्य विकल्पयति—तद्वदिति । स्थूलपृथिव्यादिवदित्यर्थः । पक्षद्वयस्यापि दोषवत्त्वमाह—उभयथेति । आद्यमनूद्य दोषानुषक्तिं विशदयति—कल्प्यमान इति । मूर्त्युपचयः स्थौल्यम् । द्रव्यातिरिक्तानां गुणानामुपचयेऽपि किमिति द्रव्यस्य स्थौल्यं तत्राऽऽह—न चेति । तत्र कार्यलिङ्गकमनुमानं हेतुमाह—कार्येष्विति । कल्पान्तरमनुवदति—अकल्प्येति । सर्वेषामणुत्वाक्रान्तानां साम्यार्थमेकैकगुणत्वं वा चतुर्गुणत्वं वा? तत्राऽऽद्यमनूद्य प्रत्याह—परमाणुत्वेति । तेषामेकैकगुणत्वेऽपि किमिति कार्येषु नानागुणत्वं न स्यादित्याशङ्क्याऽऽह—कारणेति । द्वितीयमनूद्य निराह—अथेत्यादिना । इष्टापत्तिमाशङ्क्याऽऽह—न चेति । चतुर्गुणत्वे सर्वेषां स्थौल्याद्वायोश्चाक्षुषत्वं प्रसज्येत । एकैकगुणत्वेऽपि तारतम्यासिद्धिरिति मत्वोपसंहरति—तस्मादिति ॥ १६ ॥ न केवलमणुवादस्या-

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

प्रधानकारणवादो वेदविद्भिरपि कैश्चिन्मन्वादिभिस्सत्कार्यत्वाद्यंशोपजीवनाभिप्रायेणोपनिबद्धः ॥ अयं तु परमाणुकारणवादो न कैश्चिदपि शिष्टैः केनचिदप्यंशेन परिगृहीत इत्यत्यन्तमेवानादरणीयो वेदवादिभिः ॥ अपि च वैशेषिकास्तन्त्रार्थभूतान् षट् पदार्थान्द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यानत्यन्तभिन्नान् भिन्नलक्षणानभ्युपगच्छन्ति ॥ यथा मनुष्योऽश्वः शश इति ॥ तथात्वश्चाभ्युपगम्य तद्विरुद्धं द्रव्याधीनत्वं शेषाणामभ्युपगच्छन्ति ॥ तन्नोपपद्यते ॥ कथम् ॥ यथा हि लोके शशकुशपलाशप्रभृतीनामत्यन्तभिन्नानां सतां नेतरेतराधीनत्वं भवति, एवं द्रव्या-

---

रत्नप्रभा।

न केवलमनुवादस्यायुक्तत्वादुपेक्षा। किन्तु शिष्टबहिष्कृतत्वाद् ग्रन्थतोऽर्थतश्चाऽग्राह्यत्वमित्याह—**अपरिग्रहाच्चेति** ॥ चकारार्थं प्रपञ्चयितुमुपक्रमते—**अपि चेति** ॥ अत्यन्तभेदज्ञापकमाह—**भिन्नलक्षणानिति** ॥ **द्रव्यगुणकर्मणां** द्रव्यत्वगुणत्वकर्मत्वजातयो लक्षणानि, गुणाश्रयत्वाद्युपाधयो वा। निर्गुणत्वे सति जातिमदक्रियत्वं—**गुणलक्षणम्** ॥ संयोगविभागयोर्निरपेक्षकारणं—**कर्म**। नित्यमेकमनेकसमवेतं—**सामान्यम्**। नित्यद्रव्यवृत्तयः—**विशेषाः**। नित्यः सम्बन्धः—**समवायः** इति भिन्नानि लक्षणानि। तैर्मिथोऽत्यन्तभेदसिद्धिरित्यर्थः। **तथात्वम्** अत्यन्तभिन्नत्वम्। तेन विरुद्धं धर्मान्तरं

भामती।

**अपरिग्रहाच्चात्यन्तमनपेक्षा**। निगदव्याख्यातेन भाष्येण व्याख्यातम्। संप्रत्युत्सूत्रं भाष्यकृद्वैशेषिकतन्त्रं दूषयति—**अपि च वैशेषिका इति**। **द्रव्याधीनत्वं** द्रव्याधीननिरूपणत्वम्। न हि यथा गवाश्वमहिषमातङ्गाः

आनन्दगिरीय-न्यायनिर्णयः।

युक्तत्वं किंतु शिष्टापरिग्रहाद्ग्रन्थतोऽर्थतश्चोपेक्ष्यत्वमित्याह—**अपरिग्रहाच्चेति**। अत्यन्तमितिविशेषणसूचितमर्थमाह—**प्रधानेति**। सत्कार्यत्वादीत्यादिशब्देनाऽऽत्मनोऽसङ्गत्वचिद्रूपत्वादि गृह्यते। चकारसूचितमर्थमाह—**अपि चेति**। परमतस्य न्यायशून्यत्वं वक्तुं तदभ्युपगममाह—**वैशेषिका इति**। तेषां मिथस्तादात्म्यं वारयति—**अत्यन्तेति**। तत्र हेतुः—**भिन्नेति**। तत्र गुणवद् द्रव्यम्। सामान्यवत्त्वे सति प्रत्येकं द्रव्यत्वकर्मत्वयोरनाधारो गुणः। संयोगवियोगयोरसमवायिकारणजातीयं कर्म। नित्यमनेकसमवेतं सामान्यम्। नित्यद्रव्यस्वरूपसन्तो विशेषाः। नित्यः संबन्धः समवाय इति भिन्नलक्षणत्वम्। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव द्रव्याणि। रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वपरत्वापरत्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारगुरुत्वद्रवत्वस्नेहशब्दाश्चतुर्विंशतिर्गुणाः। उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चैव कर्माणि। परमपरं च द्विविधं सामान्यम्। अन्त्या विशेषास्त्वनन्ताः। समवायः पुनरेक एवेति मत्वाऽत्यन्तभेदे दृष्टान्तमाह—**यथेति**। अभ्युपगमान्तरमाह—**तथात्वमिति**। अत्यन्तभिन्नत्वमिति यावत्। मनुष्यादत्यन्तभिन्नानामश्वादीनां मनुष्यपारतन्त्र्यविरोधवद् द्रव्यादत्यन्तभिन्नानां गुणादीनामपि द्रव्यपारतन्त्र्यमत्यन्तभिन्नत्वेन विरुद्धमित्याह—**तदिति**। परमाणवः समवायश्चेत्युभयमत्यन्तमप्रसिद्धमितरत्प्रसिद्धमित्युपेत्यात्यन्तभिन्नत्वं प्रत्याह—**तन्नेति**। पारतन्त्र्यनिर्वाहकमत्यन्तभिन्नत्वं न तद्विरोधीत्याह—**कथमिति**। अत्यन्तभिन्नत्वं नित्यपारतन्त्र्यविरोधि दृष्टमिति व्याप्तिमाह—**यथेति**। विमतं न द्रव्याधीनं ततोऽत्यन्तभिन्नत्वाद्यद्यतोऽत्यन्तभिन्नं न तत्तदधीनं यथा कुशादयः शशादिभ्योऽत्यन्तभिन्नास्तदधीना नेत्यनुमानमाह—**एवमिति**। व्यतिरेकमुक्त्वाऽन्वयमाह—

दीनामप्यत्यन्ताभिन्नत्वान्नैव द्रव्याधीनत्वं गुणादीनां भवितुमर्हति ॥ अथ भवति द्रव्याधीनत्वं गुणादीनाम् । ततो द्रव्यभावे भावाद्द्रव्याभावेऽभावाद्द्रव्यमेव संस्थानादिभेदादनेकशब्दप्रत्ययभाग्भवति ॥ यथा देवदत्त एक एव सन्नवस्थान्तरयोगादनेकशब्दप्रत्ययभाग्भवति, तद्वत् ॥ तथा सति सांख्यसिद्धान्तप्रसङ्गः, स्वसिद्धान्तविरोधश्चाऽऽपद्येयाताम् ॥ नन्वग्नेरन्यस्यापि सतो धूमस्याग्न्यधीनत्वं दृश्यते । सत्यं दृश्यते । भेदप्रतीतेस्तु तत्राग्निधूमयोरन्यत्वं निश्चीयते । इह तु शुक्लः कम्बलो रोहिणी धेनुर्नीलमुत्पलमिति द्रव्यस्यैव तस्यतस्य तेनतेन विशेषेण प्रतीयमान-

---

रत्नप्रभा ।

धर्मधर्मिभावः । गुणादयो न द्रव्यधर्माः स्युः, ततोऽत्यन्तभिन्नत्वाच्छशकुशादिवदित्यर्थः । भेदे बाधकमुपन्यस्याभेदमाह—**अथ भवतीति** ॥ गुणादिषु तदधीनत्वं तावदन्वयव्यतिरेकसिद्धम् । तथा च गुणादयो, द्रव्याभिन्नाः, द्रव्याधीनत्वाद् यद्यस्माद्भिन्नं, तत् तदधीनं, यथा शशभिन्नः कुश इत्यर्थः । अभेदे द्रव्यं गुण इति शब्दप्रत्ययभेदः कथं, तत्राह—**द्रव्यमिति** ॥ कल्पितभेदोऽप्यस्तीत्याशयः । अन्यथाऽत्यन्तभेदवदत्यन्ताभेदेऽपि धर्मधर्मित्वायोगादिति मन्तव्यम् । अस्तु गुणादीनां द्रव्यतादात्म्यमिति वदन्तं तार्किकंमन्यं प्रत्याह—**तथा सतीति** ॥ **सांख्यो**ऽत्र वेदान्ती ग्राह्यः । **यद्वा** कापिलस्यापि तादात्म्यसिद्धान्त इति सांख्यग्रहणम् । **यद्यपि** तदधीनत्वं तद्धर्मत्वम् । तच्च धूमे नास्ति । अग्निं विनापि भावात् । **तथापि** तत्कार्यत्वं तदधीनत्वं मत्वा व्यभिचारं शङ्कते—**नन्विति** ॥ कार्यत्वमन्यत्वं चाङ्गीकरोति—**सत्यमिति** ॥ **तथापि** तादात्म्येन प्रतीयमानत्वस्य हेतोर्विवक्षितत्वान्न व्यभिचार इत्याशयः ।

भामती ।

परस्परानधीननिरूपणाः स्वतन्त्रा निरूप्यन्ते, वह्न्याद्यधीनोत्पत्तयो वा धूमादयो यथा वह्न्याद्यनधीननिरूपणाः स्वतन्त्रा निरूप्यन्ते, एवं गुणादयो न द्रव्याद्यनधीननिरूपणाः, अपि तु यदायदा निरूप्यन्ते तदातदा तदाकारतयैव प्रथन्ते न तु प्रथायामेषामस्ति स्वातन्त्र्यं, तस्मान्नातिरिच्यन्ते द्रव्यादपि तु द्रव्यमेव सामान्यरूपं तथातथा प्रथत इत्यर्थः । द्रव्यकार्यत्वमात्रं गुणादीनां द्रव्याधीनत्वमिति मन्वानश्चोदयति—**नन्वग्नेरन्यस्यापीति**। परिहरति—**भेदप्रतीतेरिति**। न तदधीनोत्पादतां तदधीनत्वमाचक्ष्महे किंतु तदाकारताम्,

आनन्दगिरीय—न्यायनिर्णयः ।

**अथेति** । विमतं द्रव्यादभिन्नं तद्भावाभावानुविधायिभावाभावत्वात्तद्वत्। न चाग्निभावाभावानुविधायिभावाभावे धूमे व्यभिचारस्तस्याग्निमानं विनाऽपि मानात् । गुणादेश्च द्रव्यमानं विना भाने तत्पारतन्त्र्याहतिरिति भावः। विमतं द्रव्याद्भिद्यते भिन्नशब्दप्रत्ययभाक्त्वाद् घटवदित्याशङ्क्य संस्थानादिभेदोपगमेन सिद्धसाध्यत्वमभिप्रेत्याऽऽह—**द्रव्यमिति** । आकारविशेषः संस्थानभेदोऽवस्थाभेदस्त्वादिशब्दार्थः । उक्तमर्थं दृष्टान्तेन साधयन्व्यभिचारमाह—**यथेति** । एकस्यानेकावस्थात्वं सांख्यसिद्धान्तस्तव त्वनेकस्य कल्पितत्वमेवातो न स्वमतसिद्धिरित्याशङ्क्य तथाऽपि तवापसिद्धान्तः स्यादित्याह—**तथेति** । निरस्तमेव विधान्तरेणापि निरसितुं शङ्कयति—**नन्विति** । न तदधीनत्वं तदभेदसाधकं तत्सामानाधिकरण्येन भानं तु तथा न तद्धूमेऽस्तीति परिहरति—**सत्यमिति** । तत्रेति व्यवहारभूमिरुक्ता । तुल्या गुणादेरपि द्रव्याद्भेदधीरित्याशङ्क्याऽऽह—**इह त्विति** । विवादस्थलं सप्तम्यर्थः । विमतं द्रव्यान्न भिद्यते तत्समानाधिकृतबुद्धिवोध्यत्वात्

त्वान्नैव द्रव्यगुणयोरग्निधूमयोरिव भेदप्रतीतिरस्ति ॥ तस्माद्द्रव्यात्मकता गुणस्य ॥ एतेन कर्मसामान्यविशेषसमवायानां द्रव्यात्मकता व्याख्याता ॥ गुणादीनां द्रव्याधीनत्वं द्रव्यगुणयोरयुतसिद्धत्वादिति यद्युच्येत, तत्पुनरयुतसिद्धत्वमपृथग्देशत्वं वा स्याद्, अपृथक्कालत्वं वा, अपृथक्स्वभावत्वं वा ॥ सर्वथापि नोपपद्यते ॥ अपृथग्देशत्वे तावत्स्वाभ्युपगमो विरुध्येत ॥ कथम् ॥ तन्त्वारब्धो हि पटस्तन्तुदेशोऽभ्युपगम्यते न पट-

रत्नप्रभा ।

अस्य हेतोरन्यथासिद्धिमाशङ्कते—**गुणादीनामिति** ॥ गुणादीनां द्रव्येणाभेदाभावेऽपि अयुतसिद्धत्वेन तादात्म्यप्रतीतिसिद्धिरित्यर्थः । दूषयितुं विकल्पयति—**तत्पुनरिति** ॥ शौक्ल्यस्य पटनिष्ठत्वात् पटस्य तन्तुदेशत्वात् पटशौक्ल्ययोरपृथग्देशत्वाभावाच्छुक्लः पट इति सामानाधिकरण्यप्रतीतिर्न स्यादिति—आद्यं दूषयति—**अपृथग्देशत्व इति** ॥ काणादसूत्रद्वयं व्याचष्टे—**तन्तवो हीति** ॥ स्वभावो हि स्वरूपम् । तस्यापृथक्त्वेऽस्मदिष्टाऽभेदसिद्धिरित्याह—**अपृथक्स्वभावत्व इति** ॥ अभेदे युक्तिमाह—

भामती ।

तथा च न व्यभिचार इत्यर्थः । शङ्कते—**गुणानां द्रव्याधीनत्वं द्रव्यगुणयोरयुतसिद्धत्वादिति यद्युच्येत** । यत्र हि द्वावाकारिणौ विभिन्नाभ्यामाकाराभ्यामवगम्येते तौ संबद्धासंबद्धौ वा वैयधिकरण्येन प्रतिभासेते, यथेह कुण्डे दधि यथा वा गौरश्व इति, न तथा गुणकर्मसामान्यविशेषसमवायाः, तेषां द्रव्याकारतयाकारान्तरायोगेन द्रव्यादाकारिणोऽन्यत्वेनाकारितया व्यवस्थानाभावात् । सेयमयुतसिद्धिः । तथा च सामानाधिकरण्येन प्रथेत्यर्थः । तामिमामयुतसिद्धिं विकल्प्य दूषयति—**तत्पुनरयुतसिद्धत्वमिति** । तत्रापृथग्देशत्वं तदभ्युपगमेन विरुध्यत इत्याह—**अपृथग्देशत्व इति** । यदि तु संयोगिनोः कार्ययोः संबन्धिभ्यामन्यदेशत्वं युतसिद्धिस्ततोऽन्याऽयुतसिद्धिः, नित्ययोस्तु संयोगिनोर्द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वं युतसिद्धिस्ततोऽन्याऽयुतसिद्धिः, तथा चाकाशपरमाण्वोः परमाण्वोश्च संयुक्तयोर्युतसिद्धिः सिद्धा भवति । गुणगुणिनोश्च शौक्ल्यपटयोरयुतसिद्धिः सिद्धा भवति । न हि तत्र शौक्ल्यपटाभ्यां संबन्धिभ्यामन्यदेशौ शौक्ल्यपटौ । सत्यपि पटस्य तदन्यतन्तुदेशत्वे शौक्ल्यस्य संबन्धिपटदेशत्वात् । तन्न । नित्ययोरात्माकाशयोरजसंयोगे उभयस्या अपि युतसिद्धेरभावात् । न हि तयोः पृथगाश्रयाश्रितत्वमनाश्रयत्वात् । नापि द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वममूर्तत्वेनोभयोरपि निष्क्रियत्वात् । न चाजसंयोगो नास्ति तस्यानुमानसिद्धत्वात् । तथाहि—आकाशमात्मसंयोगि, मूर्तद्रव्यसङ्गित्वात्, घटादिवदित्यनुमानम् । पृथगाश्रयाश्रयित्वपृथग्गतिमत्त्वलक्षणयुतसिद्धेरन्या त्वयुतसिद्धिर्यद्यपि नाभ्युपेतविरोधमावहति तथापि न सामानाधिकरण्यप्रथामुपपादयितुमर्हति । एवंलक्षणेऽपि हि समवाये गुणगुणिनोरभ्युपगम्यमाने संबद्धे इति प्रत्ययः स्यान्न तादात्म्यप्रत्ययः । अस्य चोपपादनाय समवाय आस्थीयते भवद्भिः । स चेदास्थितोऽपि

आनन्दगिरीय-न्यायनिर्णयः ।

संमतवदित्याह—**तस्मादिति** । गुणे दर्शितं न्यायं कर्मादावतिदिशति—**एतेनेति** । विमतं द्रव्याभिन्नं तत्सत्तास्फूर्तिव्यतिरिक्तसत्तास्फूर्तिशून्यत्वात्तत्स्वरूपवत् । न च साध्याविशिष्टता तन्मात्रत्वे साध्ये तन्मात्रसमानाधिकृतधीकृततत्सत्ताव्यतिरिक्तसत्तादिराहित्यस्य हेतुत्वादिति भावः । गुणादीनां द्रव्यसामानाधिकरण्येन भानं तदभिन्नत्वाभावेऽपि स्यादित्यन्यथासिद्धिं शङ्कते—**गुणानामिति** । उभयत्र गुणग्रहणं कर्मादेरुपलक्षणम् । तद्दूषयितुं विकल्पयति—**तदिति** । पक्षत्रये दोषं प्रतिजानीते—**सर्वथेति** । अपृथग्देशत्वं द्वयोरेकतरस्य वा ? तत्राऽऽद्ये दोषमाह—**अपृथगिति**। कथं स्वाभ्युपगमस्तद्विरोधो वा कथमित्याह—**कथमिति**।

देशः ॥ पटस्य तु गुणाश्शुक्लादयः पटदेशा अभ्युपगम्यन्ते न तन्तुदेशाः ॥ यथा चाहुः—"द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्" [ वै० सू० १ । १ । १० ] इति । तन्तवो हि कारणद्रव्याणि कार्यद्रव्यं पटमारभन्ते, तन्तुगताश्च गुणाश्शुक्लादयः कार्यद्रव्ये पटे शुक्लादिगुणान्तरमारभन्ते—इति हि तेऽभ्युपगच्छन्ति ॥ सोऽभ्युपगमो द्रव्यगुणयोरपृथग्देशत्वेऽभ्युपगम्यमाने बाध्येत ॥ अथापृथक्कालत्वमयुतसिद्धत्वमुच्येत, सव्यदक्षिणयोरपि गोविषाणयोरयुतसिद्धत्वं प्रसज्येत ॥ तथाऽपृथक्स्वभावत्वे त्वयुतसिद्धत्वे न द्रव्यगुणयोरात्मभेदस्सम्भवति ॥ तस्य तादात्म्येनैव प्रतीयमानत्वात् । युतसिद्धयोस्सम्बन्धस्संयोगः, अयुतसिद्धयोस्तु समवाय इत्ययमभ्युपगमो मृषैव तेषाम् ॥ प्राक्सिद्धस्य कार्यात्कारणस्यायुतसिद्धत्वानुपपत्तेः ॥ अथान्यतरापेक्ष एवायमभ्युपगमस्स्यादयुत-

---

रत्नप्रभा ।

तस्येति ॥ गुणस्येत्यर्थः।एव षट् पदार्थाः—अत्यन्तभिन्ना इति परसिद्धान्तोऽनुभवविरोधेन दूषितः । सिद्धान्तान्तरं दूषयति—युतेति ॥ अयुतसिद्धत्वं किम् उभयोः उत अन्यतरस्य । नाद्यः—इत्याह—प्रागिति ॥ द्वितीयम्—आशंक्य दूषयति—अथेत्यादिना ॥ कारणस्य पृथक्सिद्धत्वेऽपि कार्यमपृथक्सिद्धमित्युक्त-

भामती ।

न प्रत्ययमिममुपपादयेत् कृतं तत्कल्पनया । न च प्रत्यक्षः सामानाधिकरण्यप्रत्ययः समवायगोचरः, तद्विरुद्धार्थत्वात् । तद्गोचरत्वे हि पटे शुक्ल इत्येवमाकारः स्यान्न तु पटः शुक्ल इति । न च शुक्लपदस्य गुणविशिष्टगुणिपरत्वादेवं प्रथेति सांप्रतम् । न हि शब्दवृत्त्यनुसारि प्रत्यक्षम् । न ह्यग्निर्माणवक इत्युपचरिताग्निभावो माणवकः प्रत्यक्षेण दहनात्मना प्रथते । न चायमभेदविभ्रमः समवायनिबन्धनो भिन्नयोरपीति वाच्यं, गुणादिसद्भावे तद्भेदे च प्रत्यक्षानुभवादन्यस्य प्रमाणस्याभावात्तस्य च भ्रान्तत्वे सर्वाभावप्रसङ्गात् । तदाश्रयस्य तु भेदसाधनस्य तद्विरुद्धतयोत्थानासंभवात् । तदिदमुक्तम्—तस्य तादात्म्येनैव प्रतीयमानत्वादिति । अपि चायुतसिद्धशब्दोऽपृथगुत्पत्तौ मुख्यः, सा च भवन्मते न द्रव्यगुणयोरस्ति, द्रव्यस्य प्राक्सिद्धेर्गुणस्य च पश्चादुत्पत्तेः, तस्मान्मिथ्यावादोऽयमित्याह—युतसिद्धयोरिति । अथ भवतु कारणस्य युतसिद्धिः, कार्यस्य त्वयुतसिद्धिः कारणातिरेकेणाभावादित्याशंक्यान्यथा दूषयति—

आनन्दगिरीय—न्यायनिर्णयः ।

प्रथमं स्वाभ्युपगमं दर्शयति—तन्त्विति । तत्र काणादं सूत्रं प्रमाणयति—तथा चेति । उक्तोऽर्थोऽत्र न भातीत्याशङ्क्य व्याचष्टे—तन्तवो हीति । स्वाभ्युपगमं दर्शयित्वा तद्विरोधं दर्शयति—स इति । न च संबन्धिनोरन्यतरस्यापृथग्देशत्वमयुतसिद्धत्वं घटाकाशसंयोगे व्यभिचारात् । नापि पृथगाश्रयानाश्रितत्वं तथा परमाण्वाकाशसंबन्धे व्यभिचारात् । एतेन संबन्धिनोर्द्वयोरन्यतरस्य वा पृथगतिमत्त्वराहित्यं तथेति व्याख्यातम् । अजसंयोगपक्षे दिक्कालसंयोगे व्यभिचारात् । कालो दिशा संयुज्यते संयोगित्वाद् घटवदिति तत्सिद्धिः । न च मूर्तत्वादिरुपाधिः संयोगित्वस्यैव तद्व्यतिरेकप्रयोजकत्वादिति भावः । द्वितीयमुत्थाप्य निरस्यति—अथेत्यादिना । तृतीयमनूद्य प्रत्याह—अपृथगिति । तयोरात्मभेदायोगे हेतुमाह—तस्येति । न हि सामानाधिकरण्यधीः समवायार्था, पटे शुक्ल इति धीप्रसङ्गादित्यर्थः। गुणादीनां द्रव्यस्य चायुतसिद्धत्वं निरस्याभ्युपगमान्तरं निरस्यति—युतेति । अयुतसिद्धतोपगमः संबन्धिद्वयापेक्षोऽन्यतरापेक्षो वा? नाऽऽद्य इत्याह—प्रागिति । द्वितीयमुत्थापयति—अथेति । अयुतसिद्धत्व-

**सिद्धस्य कार्यस्य कारणेन सम्बन्धस्समवाय इति ॥ एवमपि प्रागसिद्धस्यालब्धात्मकस्य कार्यस्य कारणेन सम्बन्धो नोपपद्यते। द्वयायत्तत्वात्सम्बन्धस्य ॥ सिद्धं भूत्वा सम्बध्यत इति चेत्-प्राक्कारणसम्बन्धात्कार्यस्य सिद्धावभ्युपगम्यमानायामयुतसिद्ध्यभावात्कार्यकारणयोः संयोगविभागौ न विद्येते इतीदं दुरुक्तं स्यात् ॥ यथा चोत्पन्नमात्रस्याक्रियस्य कार्यद्रव्यस्य विभुभिराकाशादिभिर्द्रव्यान्तरैस्संबन्धस्संयोग एवाभ्युपगम्यते, न समवायः, एवं कारणद्रव्येणापि सम्बन्धस्संयोग एव स्यात्। न समवायः॥ नापि संयोगस्य समवायस्य वा सम्बन्धस्य सम्ब-**

रत्नप्रभा।

मुपेत्य सम्बन्धोऽसिद्धस्य सिद्धस्य वेति विकल्प्य आद्यं दूषयित्वा द्वितीयं शङ्कते-**सिद्धं भूत्वेति** ॥ सतोरप्राप्तयोः प्राप्तिः संयोग इत्यभ्युपगमात्तन्तुपटयोरपि संयोगापत्तिरित्यपसिद्धान्तः स्यादित्यर्थः। सद्योजातपटस्य क्रियाऽभावात् कथं संयोगः, तत्राह—**यथेति** ॥ किञ्च सम्बन्धस्यापि सम्बन्धेनाऽवस्थानादसम्बद्धस्याऽनियामकत्वात् सम्बन्धोऽपि दुर्निरूप इत्याह-**नापीति** ॥ सम्बन्धः सम्बन्धिभिन्नः, तद्वि-

भामती।

**एवमपीति**। संबन्धिद्वयाधीनसद्भावो हि संबन्धो नासत्येकस्मिन्नपि संबन्धिनि भवितुमर्हति। न च समवायो नित्यः स्वतन्त्र इति चोक्तमधस्तात्। न च कारणसमवायादनन्या कार्यस्योत्पत्तिरिति शक्यं वक्तुम्, एवं हि सति समवायस्य नित्यत्वाभ्युपगमात् कारणवैयर्थ्यप्रसङ्गः। उत्पत्तौ च समवायस्य सैव कार्यस्यास्तु किं समवायेन। सिद्धयोस्तु संबन्धे युतसिद्धिप्रसङ्गः। न चान्याऽयुतसिद्धिः संभवतीत्येतदुक्तम्। ततश्च यदुक्तं वैशेषिकैर्युतसिद्ध्यभावात् **कार्यकारणयोः संयोगविभागौ न विद्येते इतीदं दुरुक्तं स्यात्**। युतसिद्ध्यभावस्यैवाभावात्। एतेनाप्राप्तिसंयोगौ युतसिद्धिरित्यपि लक्षणमनुपपन्नम्। मा भूदप्राप्तिः कार्यकारणयोः, प्राप्तिस्त्वनयोः संयोग एव कस्मान्न भवति, तत्रास्या असंयोगत्वायान्या युतसिद्धिर्वक्तव्या। तथा च सैवोच्यतां किमनया परस्पराश्रयदोषग्रस्तया। न चान्या संभवतीत्युक्तम्। यद्युच्येताप्राप्तिपूर्विका प्राप्तिरन्यतरकर्मजोभयकर्मजा वा संयोगः, यथा स्थाणुश्येनयोर्मल्लयोर्वा। न च तन्तुपटयोः संबन्धस्तथा, उत्पन्नमात्रस्यैव पटस्य तन्तुसंबन्धात्। तस्मात्समवाय एवायमित्यत आह—**यथा चोत्पन्नमात्रस्येति**। संयोगजोऽपि हि संयोगो भवद्भिरभ्युपेयते न क्रियाज एवेत्यर्थः। न चाप्राप्तिपूर्विकैव प्राप्तिः संयोगः, आत्माकाशसंयोगे नित्ये तदभावात्, कार्यस्य चोत्पन्नमात्रस्यैकस्मिन् क्षणे कारणप्राप्तिविरहाच्चेति। अपि च संबन्धिरूपातिरिक्ते संबन्धे सिद्धे तदवान्तरभेदाय लक्षणभेदोऽनुश्रीयेत स एव तु संबन्ध्यतिरिक्तोऽसिद्धः, उक्तं हि परस्तादतिरिक्तः संबन्धिभ्यां संबन्धोऽसंबद्धो न संबन्धिनौ घटयितुमीष्टे। संबन्धिसंबन्धे चानवस्थितिः। तस्मादुपपत्त्यनुभवाभ्यां न कार्यस्य कारणादन्यत्वम्, अपि तु कारणस्यैवायमनिर्वाच्यः परिणामभेद इति। तस्मात् कार्यस्य कारणादनतिरेकात् किं केन संबद्धं, संयोगस्य च संयोगिभ्यामनतिरेकात् कस्तयोः संयोग इत्याह-**नापि संयोगस्येति**। विचा-

आनन्दगिरीय-न्यायनिर्णयः।

मुपेत्य समवायं दुदूषयिषुः संबन्धोऽसिद्धस्य सिद्धस्य वेति विकल्प्याऽऽद्यं निरस्यति-**एवमिति**। द्वितीयं शङ्कयति-**सिद्धमिति**। तर्हि सतोरप्राप्तयोः प्राप्तिः संयोगः, समवायस्तु नैवमित्युपगमात्कार्यकारणयोरपि संयोगापत्तिरित्याह-**प्रागिति**। क्रियापूर्वकः संबन्धः संयोगो, न च कार्यकारणयोः सोऽस्तीति समवायसिद्धिरित्याशङ्क्याऽऽह-**यथेति**। किंच, संबन्ध्यतिरिक्ते संबन्धे सिद्धे संयोगः समवाय इति विवेको न संबन्धोऽतिरिक्तोऽस्ति तस्य संबन्धिसंबन्धेऽनवस्थानादसंबन्धे नियमाकत्वायोगात। तथा च कार्यं न कारणे समवेतं किंतु कल्पितमेवेत्याह-**नापीति**। संबन्धः संबन्धिभ्यां वस्त्वन्तरं तद्विलक्षणशब्दधी-

न्धिव्यतिरेकेणास्तित्वे किञ्चित्प्रमाणमस्ति ॥ सम्बन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययदर्शनात्तयोरस्तित्वमिति चेत् ॥ न ॥ एकत्वेऽपि स्वरूपबाह्यरूपापेक्षयाऽनेकशब्दप्रत्ययदर्शनात् । यथैकोऽपि सन्देवदत्तो लोके स्वरूपं सम्बन्धिरूपं चापेक्ष्यानेकशब्दप्रत्ययभाग्भवति–मनुष्यो, ब्राह्मणः, श्रोत्रियो, वदान्यो, बालो, युवा, स्थविरः, पिता, पुत्रः, पौत्रो, भ्राता, जामातेति । यथा चैकापि सती रेखा स्थानान्यत्वेन निवेश्यमानैकदशशतसहस्रादिशब्दप्रत्ययभेदमनुभवति, तथा-सम्बन्धिनोरेव सम्बन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययार्हत्वम् । न व्यतिरिक्तवस्त्वस्तित्वेनेत्युपलब्धिलक्षणप्राप्तस्यानुपलब्धेरभावो वस्त्वन्तरस्य ॥ नापि सम्बन्धिविषयत्वे सम्बन्धशब्दप्रत्यययोः

---

रत्नप्रभा ।

लक्षणशब्दधीगम्यत्वाद्वस्त्वन्तरवदिति शङ्कते–सम्बन्धीति ॥ कल्पितभेदसाधने सिद्धसाधनता, वस्तुभेदसाधने तु व्यभिचार इति समाधत्ते–नैकत्वेऽपीति ॥ स्वरूपेणैव मनुष्यादिशब्दभागेव पुत्राद्यपेक्षया पितेत्यादिविलक्षणशब्दधीगम्यो भवति । न च भिद्यत इति व्यभिचार इत्यर्थः । फलितमाह–इत्युपलब्धीति ॥ विलक्षणशब्दधीगम्यत्वादित्युपलब्धिघटितेन लक्षणेन लिङ्गेन प्राप्तस्य वस्त्वन्तरस्य संयोगादेः सम्बन्धिव्यतिरेकेणानुपलब्धेरभावो निश्चीयत इत्यर्थः । न ह्यंगुलिद्वयस्य नैरन्तर्यातिरेकेण संयोग उपलभ्यते । समवायस्तु न कस्यापि क्वचिदप्यनुभवमारोहयतीति भावः । सम्बन्धस्य सम्बन्ध्यभेदे सम्बन्धिनः सदा सत्त्वात् सर्वदा सम्बन्धबुद्धिप्रसङ्ग इति शङ्कां निषेधति–नापीति ॥ परापेक्षया

भामती ।

रासहत्वेनानिर्वाच्यतामस्यापरिभावयन्नाशङ्कते–संबन्धिशब्दप्रत्ययव्यतिरेकेणेति । निराकरोति—न । एकत्वेऽपि स्वरूपबाह्यरूपापेक्षयेति । तत्तदनिर्वचनीयानेकविशेषावस्थाभेदापेक्षयैकस्मिन्नपि नानाबुद्धिव्यपदेशोपपत्तिरिति। यथैको देवदत्तःस्वगतविशेषापेक्षया मनुष्यो ब्राह्मणोऽवदातः,स्वगतावस्थाभेदापेक्षया बालो युवा स्थविरः,स्वक्रियाभेदापेक्षया श्रोत्रियः,परापेक्षया तु पिता पुत्रः पौत्रो भ्राता जामातेति। निदर्शनान्तरमाह–यथा चैकापि सती रेखेति । दार्ष्टान्तिके योजयति—तथा संबन्धिनोरिति। अंगुल्योर्नैरन्तर्यं संयोगः, दधिकुण्डयोरौत्तराधर्यं संयोगः। कार्यकारणयोस्तु तादात्म्येऽप्यनिर्वाच्यस्य कार्यस्य भेदं विवक्षित्वा संबन्धिनोरित्युक्तम् । नापि संबन्धिविषयत्वे संबन्धशब्दप्रत्यययोः,–इत्येतदप्यनिर्वाच्यभेदाभिप्रायम् । अपि-

आनन्दगिरीय–न्यायनिर्णयः ।

गम्यत्वाद्वस्त्वन्तरवदिति शङ्कते–संबन्धीति । तत्तदनिर्वाच्यानेकविशेषापेक्षयैकस्मिन्नपि नानाशब्दधियाविति सिद्धसाध्यत्वमाह–नेति । सव्यभिचारश्च हेतुरिति मन्वानो दर्शनं विशदयति–यथेति । स्वगतविशेषापेक्षया नानाशब्दधीभाक्त्वमुदाहरति–मनुष्येति । स्वगतावस्थापेक्षया तद्दर्शयति–बाल इति । स्वगतक्रियापेक्षया तदुपन्यस्यति–पितेति । व्यभिचारप्राचुर्यार्थमुदाहरणान्तरमाह–यथा चेति । दृष्टान्तस्थधर्मं दार्ष्टान्तिके योजयति–तथेति । परोक्तानुमाननिरासफलमुपसंहरति–इत्युपलब्धीति । उपलब्धिरेव गमकतया लक्षणं यस्य तेन योग्यत्वेन प्राप्तस्यानुपलब्धिस्तस्मिन्प्रमाणपञ्चकानुपपत्तिस्ततो वस्त्वन्तरस्य संबन्ध्यतिरिक्तसंबन्धस्याभावो निश्चितो योग्यानुपलब्धेरभावबोधित्वात्तस्मात्कार्त्स्न्यैकदेशाभ्यामन्तरालदेशशून्यावस्थार्थौ समवायसंयोगशब्दधीगम्यावित्यर्थः । संबन्धशब्दधियोः संबन्ध्यर्थत्वे तस्य सदा भावात्ते सदा स्यातामित्याशङ्क्याऽऽह—नापीति । स्वरूपेणांगुल्यो रूपरूपिणोश्च तत्तच्छब्दधीविषयत्वं

सन्ततभावप्रसङ्गः ॥ स्वरूपबाह्यरूपापेक्षयेत्युक्तोत्तरत्वात् ॥ तथाण्वात्ममनसामप्रदेशत्वान्न संयोगस्सम्भवति ॥ प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगदर्शनात् ॥ कल्पिताः प्रदेशा अण्वात्ममनसां भविष्यन्तीति चेत् ॥ न ॥ अविद्यमानार्थस्य कल्पनायां सर्वार्थसिद्धिप्रसंगात् ॥ इयानेवाविद्यमानो विरुद्धोऽविरुद्धो वार्थः कल्पनीयो नातोऽधिक इति नियमे हेत्वभावात् ॥ कल्पनायाश्च स्वायत्तत्वात्प्रभूतत्वसम्भवाच्च॥न च वैशेषिकैः कल्पितेभ्यष्षड्भ्यः पदार्थेभ्योऽन्येऽधिकाश्शतं सहस्रं वार्था न कल्पितव्या इति निवारको हेतुरस्ति ॥ तस्माद्यस्मै यस्मै यद्यद्रोचते तत्तत्सिध्येत । कश्चित्कृपालुः प्राणिनां दुःखबहुलस्संसार एव मा भूदिति कल्पयेत्,अन्यो वा व्यसनी मुक्तानामपि पुनरुत्पत्तिं

---

रत्नप्रभा ।

नैरन्तर्यावस्थायामंगुल्योः रूपरूपिणोश्च सम्बन्धि(न्ध)धीः, न स्वत इत्युक्तमित्यर्थः । पूर्वं परमाण्वोः संयोगनिरासेन द्व्यणुकादिसृष्टिर्निरस्ता । संप्रत्यदृष्टवदात्मनाऽणूनां संयोगोऽणुषु क्रियाहेतुः । आत्ममनसोः संयोगो बुद्ध्याद्यसमवायिकारणम् । तद्द्वयं निरस्यति—तथाण्वात्मेति॥निरस्तमपि कल्पितप्रदेशपक्षमतिप्रसङ्गाख्यदोषान्तरं वक्तुं पुनरुद्भावयति—कल्पिता इति ॥ कल्पनम् ऊहः। ऊहितार्थाः सन्तोऽसन्तो वा ? द्वितीये न संयोगसिद्धिः । स्वस्वभावयोरेकत्र वृत्त्यवच्छेदकासत्त्वात्, आद्ये तूहमात्रेण सर्वार्थसिद्धिप्रसङ्गः । ऊहस्य स्वाधीनत्वात् । प्रभूतत्वं—निरवधित्वम् । तत्सम्भवाच्चेत्यर्थः । यद्यूहात् सर्वसिद्धिः, तदा पदार्थबन्धमुक्तिनियमा लुप्येरन्नित्याह—न चेत्यादिना ॥ संयोगं दूषयित्वा समवायं दूषयति—

भामती ।

चादृष्टवत्क्षेत्रज्ञसंयोगात् परमाणुमनसोश्चाद्यं कर्म भवद्भिरिष्यते । 'अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि' इति वचनात् । न चाणुमनसोरात्मनाऽप्रदेशेन संयोगः संभवति । संभवे चाणुमनसोरात्मव्यापित्वात् परममहत्त्वेनानणुत्वप्रसङ्गात् । न च प्रदेशवृत्तिरनयोरात्मना संयोगोऽप्रदेशत्वादात्मनः, कल्पनायाश्च वस्तुतत्त्वव्यवस्थापनासहत्वादतिप्रसङ्गादित्याह—तथाऽण्वात्ममनसामिति ।

आनन्दगिरीय—न्यायनिर्णयः ।

नैरन्तर्यात्तु संबन्धशब्दधीगम्यतेत्येकत्वेऽपीत्यत्रोक्तत्वान्न यावत्संबन्धिसत्त्वं शब्दधीप्रसक्तिरित्यर्थः । किंच, सांशयोः संयोगेऽपि निरंशयोर्नासावित्याह—तथेति । द्व्यणुकादिकार्यहेतुरेव परमाण्वोः संयोगो निरस्तः । संप्रति ज्ञानाद्यसमवायिकारणमात्ममनःसंयोगमदृष्टवदात्मसंयोगं चाणूनां निरस्यति—अण्वात्मेति । आत्मनोऽप्रदेशत्वादणुमनसोस्तत्संयोगः सकलात्मवृत्तिरिति तयोरपि परममहत्त्वं स्यादिति भावः । असंभवे हेत्वन्तरमाह—प्रदेशेति । निरस्तमपि कल्पितप्रदेशं दोषान्तराभिधित्सयोद्भावयति—कल्पिता इति । कल्पनया तद्वस्तुनस्य सत्त्वमसत्त्वं वा । द्वितीये कल्पना वृथेति मत्वाऽऽद्यं प्रत्याह—नेत्यादिना । अविद्यमानस्य प्रदेशवत्त्वलक्षणस्यार्थस्य कल्पनया सत्त्वसिद्धाविति यावत् । तत्र हेतुः—इयानिति । कल्पकाधीनत्वात्कल्पनाया न तया सर्वार्थसिद्धिरित्याशङ्क्याऽऽह—कल्पनायाश्चेति । तथाऽपि परिमितत्वात्तस्या न सर्वार्थसाधकत्वं तत्राऽऽह—प्रभूतत्वेति । षण्णामेव पदार्थानां संभवान्न सर्वार्थसिद्धिरित्याशंक्याऽऽह—न चेति। निवारकाभावे फलं सर्वार्थसिद्धिमुपसंहरति—तस्मादिति । किंच, कल्पनया वस्तुसिद्धौ संसारमोक्षयोरनियतिरिति ब्रुवाणः संसारस्यानियतिमाह—कश्चिदिति । मुक्तेरनियतिमाह—अन्यो वेति ।

कल्पयेत्, कस्तयोर्निवारकस्स्यात् ॥ किञ्चान्यद् द्वाभ्यां परमाणुभ्यां निरवयवाभ्यां सावयवस्य द्व्यणुकस्याकाशेनेव संश्लेषानुपपत्तिः । न ह्याकाशस्य पृथिव्यादीनां च जतुकाष्ठवत्संश्लेषोऽस्ति ॥ कार्यकारणद्रव्ययोराश्रिताश्रयभावोऽन्यथा नोपपद्यत इत्यवश्यं कल्प्यस्समवाय इति चेत् ॥ न ॥ इतरेतराश्रयत्वात्-कार्यकारणयोर्हि भेदसिद्धावाश्रिताश्रयभावसिद्धिः, आश्रिताश्रयभावसिद्धौ च तयोर्भेदसिद्धिः, कुण्डबदरवदितीतरेतराश्रयता स्यात् ॥ न हि कार्यकारणयोर्भेद आश्रिताश्रयभावो वा वेदान्तवादिभिरभ्युपगम्यते । कारणस्यैव संस्थामात्रं कार्यमित्यभ्युपगमात् ॥ किञ्चान्यत्परमाणूनां परिच्छिन्नत्वाद्यावन्त्यो दिशष्षडष्टौ दश वा तावद्भिरवयवैस्सावयवास्ते स्युः ॥ सावयवत्वादनित्याश्चेति

रत्नप्रभा ।

**किञ्चान्यदिति**॥ तन्मते दूषणान्तरमुच्यत इत्यर्थः । **संश्लेषः** संग्रहः। यत एकाकर्षणेनापराकर्षणं, तस्यानुपपत्तिरित्यर्थः । द्व्यणुकं, निरवयवासमवेतं, सावयवत्वादाकाशासमवेतभूमिवदिति भावः । **ननु** द्व्यणुकस्यासमवेतत्वे तदाश्रितत्वं न स्यात् । सम्बन्धं विना तदयोगात् । **न च** संयोगादाश्रितत्वम् । कार्यद्रव्यस्य प्रकृत्यसंयोगादिति शङ्कते—**कार्येति** ॥ प्रकृतिविकारयोरभेदादाश्रयाश्रयिभावानुपपत्तिरिष्टेति परिहरति—**नेति** । भेदात् तद्भाव इति वदन्तं प्रत्याह—**इतरेतराश्रयत्वादिति** ॥ **कथं तर्हि** कार्यस्य कारणाश्रितत्वव्यवहारः । कल्पितभेदादित्याह—**कारणस्यैवेति** ॥ परमाणूनां निरवयवत्वमप्ययुक्तमित्याह—**किञ्चेति** ॥ परमाणवः, सावयवाः, अल्पत्वात्, घटवद्विपक्षे तेषां दिग्भेदावधित्वं न स्यादात्मवदित्यर्थः । **ननु** परमाण्वपेक्षया योऽयं प्राची दक्षिणेत्यादिदिग्भेदव्यवहारस्तदवधित्वेन येऽवयवास्त्वयोच्यन्ते त एव मम परमाणवः । तेऽपि सावयवाश्चेत् तदवयवा एवेत्येवं यतः परं न विभागः स एव निरवयवः परमाणुरिति

भामती ।

**किंचान्यत्** द्वाभ्यामणुभ्यां कारणाभ्यां सावयवस्य कार्यस्य **द्व्यणुकस्याकाशेनेव संश्लेषानुपपत्तिः**।संश्लेषः संग्रहो यत एकसंबन्ध्याकर्षे संबन्ध्यन्तराकर्षो भवति तस्यानुपपत्तिरिति।अत एव संयोगादन्यः **कार्यकारणद्रव्ययोराश्रयाश्रितभावोऽन्यथा नोपपद्यत इत्यवश्यं कल्पनीयः समवाय इति चेत्** । निराकरोति—**न** कुतः । **इतरेतराश्रयत्वात्** । तद्विभजते—**कार्यकारणयोर्हीति** । **किंचान्यत्, परमाणूनामिति** । ये हि परिच्छिन्नास्ते सावयवाः, यथा घटादयः । तथा च परमाणवः, तस्मात्सावयवा

आनन्दगिरीय—न्यायनिर्णयः ।

अवस्थाद्वये हेतुमाह—**कस्तयोरिति** । कार्यकारणयोरत्यन्तभेदे तथैवोपलब्धिप्राप्तौ समवायादेकत्वसिद्धिरित्याशङ्क्य विशेषतः समवायं दूषयति—**किंचेति** । दृष्टान्तं स्पष्टयति—**न हीति** । कार्यकारणयोरर्थापत्त्या समवायः सिध्यतीति शङ्कते—**कार्येति** । द्व्यणुकपरमाणू न समवायार्हौ सावयवनिरवयवद्रव्यत्वाद्भूम्याकाशवदित्यत्राकार्यकारणद्रव्यत्वात्तयोः समवायानर्हतेत्यप्रयोजकत्वमाशङ्क्याऽऽह—**नेत्यादिना** । अन्यतरव्यतिरेकेणान्यतरस्य सिद्धिसंभवे कथमेवमित्याशङ्क्याऽऽह—**न हीति** । कार्यस्य कारणानाश्रितत्वे स्वातन्त्र्यं स्यादित्याशङ्क्याऽऽह—**कारणस्येति** । परमाणूनां निरवयवत्वमुपेत्योक्तं तदेव नास्तीत्याह—**किंचेति** । परमाणवः सावयवाः परिच्छिन्नत्वाद् घटवत्परिच्छिन्नत्वं सावयवमात्रवृत्ति परिच्छिन्नमात्रवृत्तित्वाद् घटत्ववदित्यर्थः । तेषां सावयवत्वे दिग्भेदव्यवस्थापकत्वं हेतुरित्याह—**यावन्त्य इति** । सावयवत्वफलमाह—**सावयव-**

नित्यत्वनिरवयवत्वाभ्युपगमो बाध्येत ॥ यांस्त्वं दिग्भेदभेदिनोऽवयवान्कल्पयसि त एव मम परमाणव इति चेत् ॥ न ॥ स्थूलसूक्ष्मतारतम्यक्रमेण परमकारणाद्विनाशोपपत्तेः । यथा पृथिवी द्व्यणुकाद्यपेक्षया स्थूलतमा वस्तुभूतापि विनश्यति, ततस्सूक्ष्मं सूक्ष्मतरं च पृथिव्येकजातीयकं विनश्यति, ततो द्व्यणुकं, तथा परमाणवोऽपि पृथिव्येकजातीयकत्वाद्विनश्येयुः ॥ विनश्यन्तोऽप्यवयवविभागेनैव विनश्यन्तीति चेत् ॥ नायं दोषः ॥ यतो घृतकाठिन्यविलयनवदपि विनाशोपपत्तिमवोचाम ॥ यथा हि घृतसुवर्णादीनामविभज्यमानावयवानामप्यग्नि-

रत्नप्रभा ।

शङ्कते–**यांस्त्वमिति** ॥ परिहरति–**न स्थूलेति** ॥ **अयमर्थः**–यत्सर्वात्मना विभागायोग्यं वस्तु सः **परमाणुरिति** यद्युच्येत, तर्हि ब्रह्मण एव परमाणुसंज्ञा कृता स्यात् । तदन्यस्याल्पस्य दिग्विभागार्हत्वेनावयवविभागावश्यम्भावात् । **यदि** पृथिव्यादिजातीयाल्पपरिमाणविश्रान्तिभूमिर्यः सः **परमाणुरित्युच्येत**, तर्हि तस्य न मूलकारणत्वम् । विनाशित्वात् । घटवत् । न च हेत्वसिद्धिः । अणवः विनाशिनः, पृथिव्यादिजातीयत्वात्, घटवदिति साधनादिति । सम्प्रति निरवयवद्रव्यस्य नाशहेत्वभावात् आत्मवदविनाश इत्याशंक्य पूर्वोक्तं परिहारं स्मारयति–**विनश्यन्त इत्यादिना** ॥ ब्रह्मातिरिक्तस्य आज्ञानिकत्वाच्च द्रव्यस्य निरवयवत्वमसिद्धम् । निमित्तादृष्टादिनाशाद्विनाशः प्रलये सम्भवति । मुक्तौ ज्ञानादज्ञाननाशे तत्कार्याणुनाशसम्भव इति भावः । **यदुक्तं** यत्कार्यद्रव्यं तत्संयोगसचिवानेकद्रव्यारब्धमिति-

भामती ।

अनित्याः स्युः अपरिच्छिन्नत्वे चाकाशादिवत् परमाणुत्वव्याघातः । शङ्कते–**यांस्त्वमिति** । निराकरोति–**न स्थूलेति** । किं सूक्ष्मत्वात् परमाणवो न विनश्यन्त्यथ निरवयवतया । तत्र पूर्वस्मिन् कल्पे इदमुक्तम्–**वस्तुभूतापीति** । भवन्मते उत्तरं कल्पमाशंक्य निराकरोति–**विनश्यन्तोऽप्यवयवविभागेनेति** । **यथा हि घृतसुवर्णादीनामविभज्यमानावयवानामपीति** । यथा हि पिष्टपिण्डोऽविनश्यदवयवसंयोग एव प्रथते, प्रथमानश्चाश्वशफाकारतां नीयमानः पुरोडाशतामापद्यते, तत्र पिण्डो नश्यति पुरोडाशश्चोत्पद्यते, न हि तत्र पिण्डावयवसंयोगा विनश्यन्ति, अपि तु संयुक्ता एव सन्तः परं प्रथनेनं नुद्यमाना अधिकदेशव्यापका भवन्ति, एवमग्निसंयोगेन सुवर्णद्रव्यावयवाः संयुक्ता एव सन्तो द्रवीभावमापद्यन्ते, न तु मिथो विभज्यन्ते । तस्माद्यथाऽवयवसंयोगविनाशावन्तरेणापि सुवर्णपिण्डो विनश्यति,

आनन्दगिरीय–न्यायनिर्णयः ।

त्वादिति । उक्तानुमानफलमाह–**इति नित्यत्वेति** । ये दिग्भेदव्यवस्थापकास्त्वया परमाण्ववयवाः स्वीकृतास्त एव मम परमाणवस्तेऽपि सावयवाश्चेचदवयवा एवेत्येवं यतः परं न विभागः स परमाणुर्निरवयवः, स च नित्यः परिमाणतारतम्यविश्रान्त्याधारत्वादात्मवदिति शङ्कते–**यानिति** । किं सर्वथैव विभागायोग्यं वस्तु परमाणुरुतास्मदादिभिरविभज्यमानावयवम् । आद्ये न परमाणोर्दिग्भेदावधित्वं, मूलकारणस्य सन्मात्रस्यैव सर्वथा विभागायोग्यत्वात्तस्य च निरवयवत्वं सिद्धमेव । द्वितीये सन्मात्रान्मूलकारणादतिरिक्तं किंचन सूक्ष्मं वस्तु परमाणुरस्तु, स च विनष्टुमर्हति, पृथिव्यादिजातीयत्वात्पराभीष्टद्व्यणुकवदित्याह–**नेति** । दृष्टान्तं समर्थयते–**यथेति** । वस्तुभूताऽपीति परमतेनोक्तम् । दार्ष्टान्तिकं निगमयति–**तथेति** । नित्याः परमाणवो निरवयवद्रव्यत्वादात्मवदिति शङ्कते–**विनश्यन्त इति** । हेत्वसिद्ध्या समाधत्ते–**नायमिति** । उक्तमेव स्फुटयति–**यथेत्यादिना** । अवयवतत्संयोगविनाशौ विनाऽपि सुवर्णपिण्डो नश्यति विनाऽपि

संयोगाद्द्रवभावापत्त्या काठिन्यविनाशो भवति, एवं परमाणूनामपि परमकारणभावापत्त्या मूर्त्यादिविनाशो भविष्यति ॥ तथा कार्यारम्भोऽपि नावयवसंयोगेनैव केवलेन भवति । क्षीरजलादीनामन्तरेणाप्यवयवसंयोगान्तरं दधिहिमादिकार्यारम्भदर्शनात् ॥ तदेवमसारतरतर्कसन्दृब्धत्वादीश्वरकारणश्रुतिविरुद्धत्वाच्छ्रुतिप्रवणैश्च शिष्टैर्मन्वादिभिरपरिगृहीतत्वादत्यन्तमेवानपेक्षाऽस्मिन्परमाणुकारणवादे कार्या ॥ आर्यैः श्रेयोऽर्थिभिरिति वाक्यशेषः॥१७॥इति परमाणुजगदकारणत्वाधिकरणम् ३॥

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

रत्नप्रभा ।

तत्रेत्याह–**तथा कार्यारम्भोऽपीति** ॥ कैवल्यं, प्राधान्यं, कार्यद्रव्यस्थितावपि हेतुत्वात् । संयोगस्य क्षीरारम्भकसंयोगाद्दध्यारम्भकं न संयोगान्तरम् । तथा च दध्यादौ व्यभिचारान्न व्याप्तिरित्यर्थः । किंच यत् कार्यद्रव्यं,तत् द्रव्यान्तरारभ्यमित्येव व्याप्तिरस्तु । लाघवात् । न तु संयोगसचिवस्वन्यूनपरिमाणानेकद्रव्यारभ्यमिति । गौरवात् । दीर्घविस्तृतदुकूलारब्धरज्जौ न्यूनपरिमाणायां व्यभिचाराच न च रज्जुर्न द्रव्यान्तरमिति वाच्यम् । अवयविमात्रविप्लवापातात् । किंच निरवयवद्रव्यत्वस्यैकात्मवृत्तित्वे लाघवान्न निरवयवानेकाणुसिद्धिः । यत्त्वणुत्वतारतम्यविश्रान्तिभूमित्वेन तत्सिद्धिरिति । तन्न । त्र्यणुकत्वेनोक्तत्रुटिषु विश्रान्तेः । न च त एव त्रुटिनामानो जगद्धेतव इति वाच्यम् । पृथिवीत्यादिना सावयवत्वाऽनित्यत्वयोरनुमानात् । नचावयवत्वस्य कचिद् विश्रान्तौ परमाणुसिद्धिः, अविश्रान्तावनवस्थेति वाच्यम् । मायायां ब्रह्मणि वाऽवयवत्वविश्रान्तिसम्भवात् । अतो न किञ्चिदणुसद्भावे प्रमाणम् । निरवयवानां संयोगसमवाययोरसम्भवात् समवेतद्व्यणुकाद्यारम्भकत्वायोग इत्यादिबाधकमुक्तमेव । सम्प्रति "अपरिग्रहाच्च" इति सूत्रवाक्यशेषं पूरयन्नधिकरणार्थमुपसंहरति–**तदेवमिति** ॥ तस्माद्भ्रान्तिमूलेन वैशेषिकमतेन वेदान्ततात्पर्यस्याविरोध इति सिद्धम् ॥ १७ ॥ ( ३ )॥ वैशेषिकं निरस्य वैनाशिकं निरस्यति–**समुदाय इति** ॥ परिमाणभेदेन देहादेराशुतरविनाशाङ्गीकारादर्धवैनाशिको वैशेषिकः । तस्य

भामती ।

संयोगान्तरोत्पादमन्तरेण च सुवर्णे द्रव उपजायते, एवमन्तरेणाप्यवयवसंयोगविनाशं परमाणवो विनंक्ष्यन्त्यन्ये चोत्पत्स्यन्त इति सर्वमवदातम् ॥ १७ ॥ ( ३ )॥ **समुदाय उभयहेतुकेऽपि तदप्राप्तिः ।**

आनन्दगिरीय–न्यायनिर्णयः ।

संयोगान्तरं सुवर्णद्रवो जायते परमाणुकाठिन्यं च विभागं विना विनश्यति तद्गतद्रवश्च संयोगादृते भवति । न च काठिन्यद्रवौ तावद् द्रव्यातिरिक्तौ शक्यौ वक्तुम्।एवं विनैवावयवविभागविनाशौ परमाणवो विनङ्क्ष्यन्त्यन्ये चोत्पत्स्यन्त इत्यर्थः । मूर्तिशब्देन काठिन्यम् । आदिशब्देनावस्थाभेदादि गृह्यते । द्रव्यनाशस्यावस्थानाशो नोदाहरणमित्याशङ्क्यात्रापि परमाण्ववस्थानाश एव सर्वकार्याणां तदवस्थात्वादित्यभिप्रेत्य कार्यद्रव्यत्वहेतुं व्यभिचारयति–**तथेत्यादिना** । कार्यनाशस्यावयवनाशतद्विभागाधीनत्वनियमाभाववदित्यर्थः । तस्य केवलत्वं प्राधान्यम् । सति तस्मिन्कार्योत्पादस्य क्षेपाभावान्नियमाभावे हेतुमाह–**क्षीरेति** । आदिशब्देन लवणादि गृह्यते । क्षीराद्यनुगुणादवयवसंयोगादतिरिक्तो दध्याद्यनुगुणः संयोगोऽवयवसंयोगान्तरम् । दधिहिमादीत्यादिपदं जलाद्यर्थम् । दध्यादिषु सत्यपि कार्यद्रव्यत्वे विशिष्टानेकद्रव्यारब्धत्वासिद्धेरनैकान्त्यादित्यर्थः । एतेन कार्यद्रव्यं स्वपरिमाणादणुतरपरिमाणारब्धं कार्यद्रव्यत्वादित्यपास्तम् । यच्चाणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वादिति तत्राऽऽश्रयासिद्धिरित्यभिप्रेत्याधिकरणार्थमुपसंहरति–**तदेवमिति** । वाक्यशब्देनापरिग्रहसूत्रं गृह्यते ॥ १७ ॥ ( ३ ) ॥ वैशेषिकं निरस्य वैनाशिकं निरस्यति—**समुदाय इति** । आर्हतादिमतं हित्वा किमित्यनन्तरं वैनाशिक-

**वैशेषिकराद्धान्तो दुर्युक्तियोगाद्वेदविरोधाच्छिष्टापरिग्रहाच्च नापेक्षितव्य इत्युक्तम् ॥ सोर्धवैनाशिक इति वैनाशिकत्वसाम्यात्सर्ववैनाशिकराद्धान्तो नितरामनपेक्षितव्य इतीदमिदानीमुपपादयामः ॥ स च बहुप्रकारः प्रतिपत्तिभेदाद्विनेयभेदाद्वा ॥ तत्रैते त्रयो वादिनो भवन्ति—केचित्सर्वास्तित्ववादिनः, केचिद्विज्ञानास्तित्वमात्रवादिनः, अन्ये पुनस्सर्वशू-**

रत्नप्रभा ।

निरासानन्तरं सर्वक्षणिकवादी बुद्धिस्थो निरस्यत इति प्रसङ्गसङ्गतिमाह—**वैशेषिकेति** ॥ "नाभाव उपलब्धेः"[ब्या०सू० २।२।२७] इति निरसनीयसिद्धान्तादत्र निरस्यसिद्धान्तस्य भेदं वक्तुं तत्सिद्धान्तं विभजते—**स चेति** ॥ ननु सुगतप्रोक्तागमस्यैक्यात् कुतो बहुप्रकारता तत्राह—**प्रतिपत्तीति** ॥ एकस्यैवागमस्याख्यातुः शिष्यस्यावस्थाभेदेन बुद्धिभेदात् मन्दमध्यमोत्तमधियां शिष्याणां वा भेदाद्बहुप्रकारतेत्यर्थः । तानेव प्रकारानाह—**तत्रेति** ॥ सौत्रान्तिकः, वैभाषिकः, योगाचारः, माध्यमिकश्चेति—**चत्वारः शिष्याः** । तेष्वाद्ययोर्बाह्यार्थानां परोक्षत्वापरोक्षत्वविवादेऽप्यस्तित्वसम्प्रतिपत्तेस्तयोः सिद्धान्तमेकीकृत्य निरस्यत इत्याह—

भामती ।

अवान्तरसंगतिमाह—**वैशेषिकराद्धान्त इति**।वैशेषिकाः खल्वर्धवैनाशिकाः । ते हि परमाण्वाकाशदिक्कालात्ममनसां च सामान्यविशेषसमवायानां च गुणानां च केषांचिन्नित्यत्वमभ्युपेत्य शेषाणां निरन्वयविनाशमुपयन्ति, तेन तेऽर्धवैनाशिकाः । तेन तदुपन्यसो वैनाशिकत्वसाम्येन सर्ववैनाशिकान् स्मारयतीति तदनन्तरं वैनाशिकमतनिराकरणमिति । अर्धवैनाशिकानां स्थिरभाववादिनां समुदायारम्भ उपपद्येतापि, क्षणिकभाववादिनां त्वसौ दूरापेत इत्युपपादयिष्यामः । तेन **नितराम्** इत्युक्तम् । तदिदं दूषणाय वैनाशिकमतमुपन्यसितुं तत्प्रकारभेदानाह—**स च बहुप्रकार इति** । वादिवैचित्र्यात् खलु, केचित्सर्वास्तित्वमेव राद्धान्तं प्रतिपद्यन्ते । केचिज्ज्ञानमात्रास्तित्वम् । केचित्सर्वशून्यताम् । अथ त्वत्रभवतां सर्वज्ञानां तत्त्वप्रतिपत्तिभेदो न संभवति, तत्त्वस्यैकरूप्यादित्येतदपरितोषेणाह—**विनेयभेदाद्वा** । हीनमध्यमोत्कृष्टधियो हि शिष्या भवन्ति । तत्र ये हीनमतयस्ते सर्वास्तित्ववादेन तदाशयानुरोधाच्छून्यतायामवतार्यन्ते । ये तु मध्यमास्ते ज्ञानमात्रास्तित्वेन शून्यतायामवतार्यन्ते । ये तु प्रकृष्टमतयस्तेभ्यः साक्षादेव शून्यतातत्त्वं प्रतिपाद्यते । यथोक्तं बोधिचित्तविवरणे—'देशना लोकनाथानां सत्त्वाशयवशानुगाः ॥ भिद्यन्ते बहुधा लोक उपायैर्बहुभिः पुनः ॥ १ ॥ गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणा ॥ भिन्नापि देशनाऽभिन्ना शून्यताऽद्वयलक्षणा ॥२॥' इति । यद्यपि वैभाषिकसौत्रान्तिकयोरवान्तरमतभेदोऽस्ति, तथापि सर्वास्तितायामस्ति संप्रतिपत्तिरित्येकीकृत्योपन्यासः । तथा च त्रित्वमुपपन्नमिति पृथिवी खरस्वभावा,आपः स्नेहस्वभावाः,अग्निरुष्णस्व-

आनन्दगिरीय—न्यायनिर्णयः ।

मतं निरस्यते तत्राऽऽह—**वैशेषिकेति** । परिमाणभेदेन देहादेराशुतरविनाशित्वाङ्गीकारादर्धवैनाशिकत्वं वैशेषिकस्येति तन्निरासानन्तरं वैनाशिकत्वाविशेषाद् बुद्धिस्थं सर्ववैनाशिकनिरसनमित्यर्थः । वैशेषिका देहादेस्त्रिक्षणस्थायित्वमास्थितास्तथाऽपि तन्मते निरस्ते तन्मात्रमपि यैर्नेष्टं तन्मतमतिशयेन नापेक्षितव्यमित्याह—**नितरामिति** । तथाऽप्येकेनैवाधिकरणेन तन्निराससंभवे किमधिकरणद्वयेनेति तत्राऽऽह—**स चेति** । राद्धान्तस्यैक्याद्बहुप्रकारत्वायोगमाशङ्क्याऽऽह—**प्रतिपत्तीति** । उपदेष्टुः सर्वज्ञस्यैक्यात्कथं शिष्याणां तद्भेदस्तत्राह—**विनेयेति** । मन्दमध्यमोत्तमधियां शिष्याणां भेदात्तद्भेदसिद्धिरित्यर्थः । प्रतिपत्तिभेदावधारणार्थो वाशब्दो न विकल्पार्थः । तानेव दर्शयति—**तत्रेति** । सौत्रान्तिकवैभाषिकयोरवान्तरभेदेऽपि सर्वास्तित्वसंप्रतिपत्तेरेकीकृत्य त्रित्वमुपपादयति—**केचिदिति** । इदानीमाद्याधिकरणस्य प्रवृत्तिप्रकारमाह—

**न्यत्ववादिन इति ॥ तत्र ये सर्वास्तित्ववादिनो बाह्यमान्तरं च वस्त्वभ्युपगच्छन्ति भूतं, भौतिकं, चित्तं, चैत्तं च । तांस्तावत्प्रतिब्रूमः । तत्र-भूतं-पृथिवीधात्वादयः । भौतिकं-रूपादयश्चक्षुरादयश्च । चतुष्टये च पृथिव्यादिपरमाणवः खरस्नेहोष्णेरणस्वभावास्ते पृथिव्यादिभावेन संहन्यन्त इति मन्यन्ते॥तथा रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्च स्कन्धाः ॥**

रत्नप्रभा ।

**तत्र ये सर्वास्तित्वेति** ॥ भूतं भौतिकं—बाह्यं, चित्तञ्चैत्तञ्च—कामादि—आन्तरमिति विभागः । तत्र सन्दिह्यते—किं मानमूलो भ्रान्तिमूलो वा अयं सिद्धान्त इति । तत्र मानमूल इति पूर्वपक्षयन् सिद्धान्तं तदीयं दर्शयति—**तत्र भूतमिति** ॥ स्थिरः प्रपञ्चो ब्रह्महेतुक इति वेदान्तसिद्धान्तस्य मानमूलक्षणिकसिद्धान्तविरोधादसिद्धिः पूर्वपक्षे फलं, सिद्धान्ते तदविरोध इति ज्ञेयम् । पृथिव्यादिभूतचतुष्टयं विषयेन्द्रियात्मकं भौतिकं च, परमाणुसमुदाय एव नावयव्यन्तरमिति मत्वा परमाणून् विभजते—**चतुष्टये चेति** ॥ चतुर्विधा इत्यर्थः । **खरः** कठिनः । तत्स्वभावाः पार्थिवाः परमाणवः स्निग्धा आप्याः उष्णास्तैजसाः । **ईरणं** चलनस्वभावो वायव्यानामिति । बाह्यसमुदायमुक्त्वाऽऽध्यात्मिकसमुदायमाह—**तथेति** ॥ सविषयेन्द्रियाणि—**रूपस्कन्धः** । विषयाणां बाह्यत्वेऽपि देहस्थेन्द्रियग्राह्यत्वादाध्यात्मिकत्वम् । अहमहमित्यालयविज्ञानप्रवाहः—**विज्ञानस्कन्धः** । सुखाद्यनुभवः—**वेदनास्कन्धः** । गौरश्च इत्येवं नामविशिष्टसविकल्पकः प्रत्ययः—**संज्ञास्कन्धः** । रागद्वेषमोहधर्माधर्मः—**संस्कारस्कन्धः** । तत्र विज्ञानस्कन्धः, **चित्तम्**—आत्मेति गीयते । अन्ये **चत्वारः स्कन्धाः—चैत्ताः** । तेषां संघातः **आध्यात्मिकः**, सकललोकयात्रानिर्वाहक इत्यर्थः । अवयवातिरिक्तावयव्यनुपलब्धेरवयवाः शिष्यन्ते । **यत् सत्, तत्**

भामती ।

भावः । वायुरीरणस्वभावः ईरणं प्रेरणम् । भूतभौतिकानुक्त्वा चित्तचैत्तिकानाह—**तथा रूपेति** । रूप्यन्ते एभिरिति रूप्यन्त इति च व्युत्पत्त्या सविषयाणीन्द्रियाणि रूपस्कन्धः । यद्यपि रूप्यमाणाः पृथिव्यादयो बाह्यास्तथापि कायस्थत्वाद्वा इन्द्रियसंबन्धाद्वा भवन्त्याध्यात्मिकाः । विज्ञानस्कन्धोऽहमित्याकारो रूपादिविषय इन्द्रियादिजन्यो वा दण्डायमानः । वेदनास्कन्धो या प्रियाप्रियानुभयविषयस्पर्शे सुखदुःखतद्रहितविशेषावस्था चित्तस्य जायते स वेदनास्कन्धः । संज्ञास्कन्धः सविकल्पप्रत्ययः संज्ञासंसर्गयोग्यप्रतिभासः, यथा

आनन्दगिरीय—न्यायनिर्णयः ।

**तत्रेति** । बाह्यं विशिनष्टि—**भूतमिति** । आभ्यन्तरं कथयति—**चित्तमिति** । बाह्यार्थवादिबौद्धराद्धान्तो विषयः स किं प्रामाणिको भ्रान्तो वेति विप्रतिपत्तेः संदेहे पूर्वपक्षं विवृणोति—**तत्रेत्यादिना** । तस्य भ्रान्तत्वोपपादनेन समन्वयस्य तद्विरोधनिरासात्पादादिसंगतयः । तस्य प्रामाणिकत्वात्तद्विरोधे समन्वयासिद्धिर्भ्रान्तत्वाद्विरोधस्याभावात्तत्सिद्धिरित्युभयत्र फलसिद्धिः । धातुशब्दः स्वभाववचनः । आदिशब्देनापेजोवाय्वाकाशर्तवो गृह्यन्ते । विषयाणामिन्द्रियाणां च भौतिकशब्दवाच्यत्वमाह—**भौतिकमिति** । पृथिव्यादयश्च परमाणुपुञ्जा एव नावयव्यारम्भोऽस्तीति वक्तुं परमाणुस्वरूपमाह—**चतुष्टये चेति** । कठिनस्वभावाः पृथिवीपरमाणवः । स्नेहस्वभावा अप्परमाणवः । उष्णतास्वभावास्तेजःपरमाणवः । ईरणं चलनं तत्स्वभावा वायुपरमाणवः । तेषां चतुर्विधानां सर्गकाले संयोगापत्तिमाह—**त इति** । भूतभौतिकानुक्त्वा चित्तचैत्तानाह—**तथेति** । कर्मकरणव्युत्पत्तिभ्यां सविषयाणीन्द्रियाणि रूपस्कन्धः । रूप्यमाणपृथिव्यादीनां बाह्यत्वेऽपि देहस्थत्वादिन्द्रियसंबन्धाचाऽऽध्यात्मिकत्वम् । अहमिति प्रत्ययो विज्ञानस्कन्धः । सुखादिप्रत्ययो वेदनास्कन्धः । गौरश्च इत्यादिशब्दसंजल्पितप्रत्ययः संज्ञास्कन्धः । संस्कारस्कन्धस्तु रागादि धर्माधर्मौ च । तत्र विज्ञानस्कन्धश्चित्तम् । इतरे चैत्ताः । उक्तानां स्कन्धानां

तेऽप्याध्यात्मं सर्वव्यवहारास्पदभावेन संहन्यन्त इति मन्यन्ते॥ तत्रेद-मभिधीयते-योऽयमुभयहेतुक उभयप्रकारस्समुदायः परेषामभिप्रेतोऽणु-हेतुकश्च भूतभौतिकसंहतिरूपः स्कन्धहेतुकश्च पंचस्कन्धीरूपः, तस्मि-न्नुभयहेतुकेऽपि समुदायेऽभिप्रेयमाणे "तदप्राप्तिः" स्यात्-समुदाया-प्राप्तिः। समुदायभावानुपपत्तिरित्यर्थः॥ कुतः॥ समुदायिनामचेतन-त्वात्, चित्ताभिज्वलनस्य च समुदायसिद्ध्यधीनत्वात्, अन्यस्य च

रत्नप्रभा।

क्षणिकम्। यथा-विद्युदिति, तेषां क्षणिकत्वमिति मानमूलोऽयं सिद्धान्त इति प्राप्ते सिद्धान्तसूत्रं योज-यति--योऽयमिति॥ सर्गादौ परमाणूनां च स्कन्धानां च स्वतः संघातस्तावन्न सम्भवति।

भामती।

डित्थः कुण्डली गौरो ब्राह्मणो गच्छतीत्येवंजातीयकः। संस्कारस्कन्धो रागादयः क्लेशाः, उपक्लेशाश्च मदमानादयः, धर्माधर्मौ चेति। तदेतेषां समुदायः पञ्चस्कन्धी। तस्मिन्नुभयहेतुकेऽपीति। बाह्ये पृथिव्याद्यणुहेतुके भूतभौतिकसमुदाये, रूपविज्ञानादिस्कन्धहेतुके च समुदाय आध्यात्मिकेऽभिप्रेयमाणे तदप्राप्तिस्तस्य समुदायस्यायुक्तता। कुतः। समुदायिनामचेतनत्वात्। चेतनो हि कुलालादिः सर्वं मृद्दण्डाद्युपसंहृत्य समुदायात्मकं घटमारचयन् दृष्टः। न ह्यसति मृद्दण्डादिव्यापारिणि विदुषि कुलाले स्वय-मचेतना मृद्दण्डादयो व्यापृत्य जातु घटमारचयन्ति। न चासति कुविन्दे तन्तुवेमादयः पटं वयन्ते। तस्मात् कार्योत्पादस्तदनुगुणकारणसमवधानाधीनस्तदभावे न भवति। कार्योत्पादानुगुणं च कारणसमव-धानं चेतनप्रेक्षाधीनमसत्यां चेतनप्रेक्षायां न भवितुमुत्सहत इति कार्योत्पत्तिश्चेतनप्रेक्षाधीनत्वव्याप्ता व्यापकविरुद्धोपलब्ध्या चेतनानधिष्ठितेभ्यः कारणेभ्यो व्यावर्तमाना चेतनाधिष्ठितत्व एवावतिष्ठत इति प्रतिबन्धसिद्धिः। यद्युच्येत अद्धा चेतनाधीनैव कार्योत्पत्तिः, अस्ति तु चित्तं चेतनं, तद्धीन्द्रियादिविषय-स्पर्शे सत्यभिज्वलत् तत्कारणचक्रं यथायथा कार्याय पर्याप्तं तयातथा प्रकाशयदचेतनानि कारणान्य-धिष्ठाय कार्यमभिनिर्वर्तयतीति, तत्राह-चित्ताभिज्वलनस्य च समुदायसिद्ध्यधीनत्वात्। न खलु बाह्याभ्यन्तरसमुदायसिद्धिमन्तरेण चित्ताभिज्वलनं, ततस्तु तामिच्छन् दुरुत्तरमितरेतराश्रयमाविशेदिति। न च प्राग्भवीया चित्ताभिदीप्तिरुत्तरसमुदायं घटयति। घटनसमये तस्याश्चिरातीतत्वेन सामर्थ्यविरहात्।

आनन्दगिरीय-न्यायनिर्णयः।

समाहारं संघातं दर्शयति-तेऽपीति। उक्तस्य बाह्याध्यात्मिकभावजातस्याध्यक्षानुमानाभ्यां क्षणिकत्वे सिद्धे स्थायिनो ब्रह्मणो जगत्सर्गवादिनः समन्वयस्य विरोधोऽस्तीति प्राप्तमनूद्य सिद्धान्तयति-तत्रेति। सूत्रं व्याचष्टे-योऽयमिति। बाह्यत्वमाध्यात्मिकत्वं चोभयप्रकारत्वमुभयहेतुकमेवाऽऽह-अणिवति। बाह्ये भूतभौतिकसमुदाये पृथिव्यादिपरमाणुहेतुके रूपविज्ञानादिहेतुके चाऽऽध्यात्मिके समुदायेऽभिप्रेते तस्याप्राप्तिरयुक्तता स्यादित्याह-तस्मिन्निति। संहन्यमानानामव्यवधाने संघातानुपपत्तौ च न हेतुरित्या-क्षिपति--कुत इति। संघातः स्वतो वा परतो वा? नाऽऽद्य इत्याह--समुदायिनामिति। अण्वा-दीनामचैतन्यात्स्वातन्त्र्येण प्रवृत्त्यसिद्धेर्न स्वतः संघातो घटते। तथा च क्षणिकपक्षे सर्गादौ संघातयोगान्न तद्विरोधः समन्वयस्येत्यर्थः। परमपि संघातकारणं चित्ताभिज्वलनमन्यद्वा? तत्राऽऽद्यं दूषयति--चित्तेति। सिद्धे संघाते चित्ताभिज्वलनं ततः संघात इत्यन्योन्याश्रयान्न चित्ताभिज्वलनं तद्धेतुरित्यर्थः। अन्योऽपि संहन्ता चेतनोऽचेतनो वा। चेतनोऽपि भोक्ता प्रशासिता वा द्विधाऽपि स्थिरो वा क्षणिको वा। नाऽऽद्यः, अनभ्युपगमात्। न द्वितीयः, क्षणिकस्यान्वयव्यतिरेककालानवस्थानात्। भोक्तुश्च कारण-विन्यासविशेषज्ञानायोगात्सर्वज्ञस्य स्वतस्तज्ज्ञानेऽपि क्षणिकत्वात्कर्तृत्वासिद्धेरित्याह-अन्यस्येति। अचे-

**कस्यचिच्चेतनस्य भोक्तुः प्रशासितुर्वा स्थिरस्य संहन्तुरनभ्युपगमात्, निरपेक्षप्रवृत्त्यभ्युपगमे च प्रवृत्त्यनुपरमप्रसङ्गात्, आशयस्याप्यन्यत्वानन्यत्वाभ्यामनिरूप्यत्वात् क्षणिकत्वाभ्युपगमाच्च निर्व्यापारत्वात्तत्प्रवृत्त्यनुपपत्तेः ॥ तस्मात्समुदायानुपपत्तिः ॥ समुदायानुपपत्तौ च तदाश्रया लोकयात्रा लुप्येत ॥ १८ ॥**

---

रत्नप्रभा ।

अचेतनत्वात् । नापि चित्ताख्यमभिज्वलनं विज्ञानं समुदायहेतुः । संघाते देहाकारे जाते विज्ञानं, विज्ञाने जाते संघातः—इत्यन्योन्याश्रयात् । न च क्षणिकविज्ञानादन्यः कश्चिज्जीव ईश्वरो वा त्वयाभ्युपगम्यते, यः संघातकर्ता भवेत् । न च कर्त्तारमनपेक्ष्याऽणवः स्कन्धाश्च स्वयमेव संघातार्थं प्रवर्तन्त इति वाच्यम् । अनिर्मोक्षप्रसङ्गात् । नन्वालयविज्ञानसन्तानः संहन्तास्त्वित्यत आह—**आशयस्येति** ॥ आशेरतेऽस्मिन् रागादय इति आशयः—सन्तानः । स किं सन्तानिभ्यो विज्ञानिभ्योऽन्योऽनन्यो वा । आद्येऽपि स्थिरः क्षणिको वा ? नाद्यः, अस्मदिष्टनित्यात्मवादप्रसङ्गात् । **द्वितीये दोषमाह—क्षणिकत्वेति** ॥ क्षणिकस्य जन्मातिरिक्तव्यापारो नास्ति । तस्मात्तस्य परमाण्वादिमेलनार्थं प्रवृत्तिरनुपपन्ना । क्षणिकत्वव्याघातादित्यर्थः ॥ **एतेनाऽनन्यः** सन्तान इति पक्षो **निरस्तः** । क्षणिकस्य मेलकत्वानुपपत्तेः । तस्मात्संहन्तुरसत्त्वात् संघातानुपपत्तिरित्यर्थः ॥ १८ ॥ संहन्तुरभावेऽपि संघातोपपत्तिमा-

भामती ।

अस्मद्राद्धान्तवदन्यस्य **चेतनस्य भोक्तुः प्रशासितुर्वा स्थिरस्य संघातकर्तुरनभ्युपगमात्** । कारणविन्यासभेदं हि विद्वान् कर्ता भवति । न चान्वयव्यतिरेकावन्तरेण तद्विन्यासभेदं वेदितुमर्हति । न च स क्षणिकोऽन्वयव्यतिरेककालानवस्थायी ज्ञातुमन्वयव्यतिरेकावुत्सहते । अत उक्तम्—**स्थिरस्येति** । यद्युच्येत असमवहितान्येव कारणानि कार्यं करिष्यन्ति परस्परानपेक्षाणि, कृतमत्र समवधाययित्रा चेतनेनेत्यत आह—**निरपेक्षप्रवृत्त्यभ्युपगमे चेति** । यद्युच्यते अस्त्यालयविज्ञानमहंकारास्पदं पूर्वापरानुसंधातृ, तदेव कारणानां प्रतिसंधातृ भविष्यतीति, तत्राह—**आशयस्यापीति** । यत् खल्वेकं यदि स्थिरमास्थीयेत ततो नामान्तरेणात्मैव । अथ क्षणिकं, तत उक्तदोषापत्तिः । न च तत्संतानस्तस्यान्यत्वे नामान्तरेणात्माभ्युपगतोऽनन्यत्वे च विज्ञानमेव, तच्च क्षणिकमेवेत्युक्तदोषापत्तिः । आशेरतेऽस्मिन् कर्मानुभववासना इत्याशय आलयविज्ञानं तस्य । अपि च प्रवृत्तिः समुदायिनां व्यापारः । न च क्षणिकानां व्यापारो युज्यते । व्यापारो हि व्यापारवदाश्रयस्तत्कारणकश्च लोके प्रसिद्धः । तेन व्यापारवता व्यापारात्पूर्वं व्यापारसमये च भवितव्यम् । अन्यथा कारणत्वाश्रयत्वयोरयोगात् । न च समसमययोरस्ति कार्यकारणभावः । नापि भिन्नकालयोराधाराधेयभावः । तथा च क्षणिकत्वहानिरित्याह—**क्षणिकत्वाभ्युप-**

आनन्दगिरीय—न्यायनिर्णयः ।

तनोऽपि संहन्ता धर्मादिर्वा स्यादालयविज्ञानसंतानो वा । नाऽऽद्यः । तस्य पूर्ववच्चेतनाधीनप्रवृत्त्यनुपपत्तेः । स्वतश्चेत्प्रवृत्तिस्तदा धर्मादिप्रवृत्त्यनुपरमान्मोक्षासिद्धिरित्याह—**निरपेक्षेति** । आलयविज्ञानसंतानः संहन्तेति पक्षं प्रत्याह—**आशयस्येति** । आशेरतेऽस्मिन्कर्मानुभववासना इत्याशयः संतानस्तस्यापि संतानिभ्योऽन्यत्वमनन्यत्वं वा । द्विधाऽपि दुर्निरूपत्वान्न तस्य संहन्तृतेत्यर्थः । स खल्वन्यः स्थिरो वा क्षणिको वा । प्रथमेऽस्मदुक्तो भोक्तैव नामान्तरेणोक्तः स्यादिति मत्वा द्वितीये क्षणिकस्य व्यापारात्पूर्वं तत्काले वाऽभावात्तत्कारणत्वाश्रयत्वयोरसिद्धिरित्याह—**क्षणिकत्वेति** । एतेनानन्यत्वमपि प्रत्युक्तम् । संतानिनामपि क्षणिकत्वेनोक्तरीत्या व्यापारकारणत्वाद्ययोगात्तदभिन्नस्य संतानस्यापि तदसिद्धेरित्याह—**निर्व्यापारत्वादिति** । संहन्तुरभावे फलितमाह—**तस्मादिति** । यथाकथंचिल्लोकयात्रा सिध्यति चेत्किं समुदायेनेत्याशङ्क्याऽऽह—**समुदायेति** ॥ १८ ॥ संघातस्य निमित्तमाशङ्क्य निरस्यति—

**इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥**

**यद्यपि भोक्ता प्रशासिता वा कश्चिच्चेतनस्संहन्ता स्थिरो नाभ्युपगम्यते ॥ तथाप्यविद्यादीनामितरेतरकारणत्वादुपपद्यते लोकयात्रा ॥ तस्यांश्चोपपद्यमानायां न किञ्चिदपरमपेक्षितव्यमस्ति ॥**

रत्नप्रभा ।

शंक्य निषेधति–**इतरेति** ॥ कार्यं प्रति अयते गच्छतीति–प्रत्ययः कारणम् । अविद्यादिभिरेवा-

भामती ।

**गमाच्चेति ॥ १८ ॥ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् । यद्यपीति ।** अयमर्थः–संक्षेपतो हि प्रतीत्यसमुत्पादलक्षणमुक्तं बुद्धेन 'इदं प्रत्ययफलम्' इति । 'उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैषा धर्माणां धर्मता' । 'धर्मस्थितिता धर्मनियामकता प्रतीत्यसमुत्पादानुलोमता' इति । अथ पुनरयं प्रतीत्यसमुत्पादो द्वाभ्यां कारणाभ्यां भवति हेतूपनिबन्धतश्च प्रत्ययोपनिबन्धतश्च । स पुनर्द्विविधो–बाह्य आध्यात्मिकश्च । तत्र बाह्यस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धः–यदिदं बीजादङ्कुरोऽङ्कुरात्पत्रं पत्रात्काण्डं काण्डान्नालो नालाद्गर्भो गर्भाच्छूकः शूकात्पुष्पं पुष्पात्फलमिति । असति बीजेऽङ्कुरो न भवति, यावदसति पुष्पे फलं न भवति । सति तु बीजेऽङ्कुरो भवति, यावत् पुष्पे सति फलमिति । तत्र बीजस्य नैवं भवति ज्ञानमहमङ्कुरं निर्वर्तयामीति । अङ्कुरस्यापि नैवं भवति ज्ञानमहं बीजेन निर्वर्तित इति । एवं यावत्पुष्पस्य नैवं भवत्यहं फलं निर्वर्तयामीति । एवं फलस्यापि नैवं भवत्यहं पुष्पेणाभिनिर्वर्तितमिति । तस्मादसत्यपि चैतन्ये बीजादीनामसत्यपि चान्यस्मिन्नधिष्ठातरि कार्यकारणभावनियमो दृश्यते । उक्तो हेतूपनिबन्धः । प्रत्ययोपनिबन्धः प्रतीत्यसमुत्पादस्योच्यते । प्रत्ययो हेतूनां समवायः । हेतुंहेतुं प्रत्ययन्ते हेत्वन्तराणीति, तेषामयमानानां भावः प्रत्ययः । समवाय इति यावत् । यथा षण्णां धातूनां समवायाद्बीजहेतुरङ्कुरो जायते । तत्र च पृथिवीधातुर्बीजस्य संग्रहकृत्यं करोति यतोऽङ्कुरः कठिनो भवति अब्धातुर्बीजं स्नेहयति, तेजोधातुर्बीजं परिपाचयति, वायुधातुर्बीजमभिनिर्हरति यतोऽङ्कुरो बीजान्निर्गच्छति, आकाशधातुर्बीजस्यानावरणकृत्यं करोति, ऋतुरपि बीजस्य परिणामं करोति, तदेतेषामविकलानां धातूनां समवाये बीजे रोहत्यंकुरो जायते नान्यथा । तत्र पृथिवीधातोर्नैवं भवत्यहं बीजस्य संग्रहकृत्यं करोमीति, यावदृतोर्नैवं भवत्यहं बीजस्य परिणामं करोमीति । अंकुरस्यापि नैवं भवत्यहमेभिः प्रत्ययैर्निर्वर्तित इति । तथाध्यात्मिकः प्रतीत्यसमुत्पादो द्वाभ्यां कारणाभ्यां भवति हेतूपनिबन्धतः प्रत्ययोपनिबन्धतश्च । तत्रास्य हेतूपनिबन्धो यदिदमविद्याप्रत्ययाः संस्कारा यावज्जातिप्रत्ययं जरामरणादीति । अविद्या चेन्नाभविष्यन्नैव संस्कारा अजनिष्यन्त । एवं यावज्जातिः । जातिश्चेन्नाभविष्यन्नैव जराभरणादय उदपत्स्यन्त । तत्राविद्याया नैवं भवत्यहं संस्कारानभिनिर्वर्तयामीति । संस्काराणामपि नैवं भवति वयमविद्यया निर्वर्तिता इति । एवं यावज्जात्या अपि नैवं भवत्यहं जरामरणाद्यभिनिर्वर्तयामीति । जरामरणादीनामपि नैवं भवति वयं जात्यादिभिर्निर्वर्तिता इति । अथ च सत्स्वविद्यादिषु स्वयमचेतनेषु चेतनान्तरानधिष्ठितेष्वपि संस्कारादीनामुत्पत्तिः, बीजादिष्विव सत्स्वचेतनेषु चेतनान्तरानधिष्ठितेष्वप्यंकुरादीनाम् । इदं प्रतीत्य प्राप्येदमुत्पद्यत इत्येतावन्मात्रस्य दृष्टत्वाच्चेतनाधिष्ठानस्यानुपलब्धेः । सोऽयमाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धः । अथ प्रत्ययोपनिबन्धः–पृथिव्यप्तेजोवाय्वाकाशविज्ञानधातूनां समवायाद्भवति कायः । तत्र कायस्य

आनन्दगिरीय–न्यायनिर्णयः ।

**इतरेतरेति ।** पूर्वपक्षभागं विभजते–**यद्यपीति ।** तर्हि संघाताभावात्तदालम्बना लोकयात्रा न निर्वहेत्तत्राऽऽह–**तथाऽपीति ।** कार्यं प्रत्ययते जनकत्वेन गच्छतीति प्रत्ययशब्दस्य हेतुवाचित्वमुपेत्येतरेतरकारणत्वादित्युक्तम् । तथाऽपि संघातस्य निमित्तं वाच्यं, तत्राऽऽह–**तस्यां चेति ।** अविद्यादीनामेव तन्निमित्तत्वा-

**ते चाविद्यादयः–अविद्या, संस्कारो, विज्ञानं, नाम, रूपं, षडायतनं, स्पर्शो, वेदना, तृष्णा, उपादानं,–**

---

रत्नप्रभा ।

र्थात् संघातसिद्धौ व्यवहारोपपत्तिरित्यर्थः । अविद्यादीनाह–**ते चेति** ॥ क्षणिकेषु स्थिरत्वबुद्धिः–**अविद्या** । ततो रागद्वेषमोहाः–**संस्कारा** भवन्ति । तेभ्यो गर्भस्थस्याऽऽद्यं **विज्ञानम्** उत्पद्यते । तस्माच्चाऽऽलयविज्ञानात् पृथिव्यादिचतुष्टयं नामाश्रयत्वात्–**नाम**–भवति । ततो **रूपं** सितासितात्मकं शुक्रशोणितं निष्पद्यते । गर्भस्थकललबुद्बुदावस्था–**नामरूपशब्दार्थ इति निष्कर्षः** । विज्ञानं, पृथिव्यादिचतुष्टयं, रूपञ्चेति, **षडायतनानि** यस्येन्द्रियजातस्य तत् **षडायतनम्** । नामरूपेन्द्रियाणां मिथः संयोगः–**स्पर्शः** । ततः सुखादिका–**वेदना** । तया पुनर्विषय**तृष्णा** । तया प्रवृत्ति**रुपादानम्** ।

भामती ।

पृथिवीधातुः काठिन्यं निर्वर्तयति । अब्धातुः स्नेहयति कायम् । तेजोधातुः कायस्याशितपीते परिपाचयति । वायुधातुः कायस्य श्वासादि करोति । आकाशधातुः कायस्यान्तः सुषिरभावं करोति । यस्तु नामरूपांकुरमभिनिर्वर्तयति पञ्चविज्ञानकायसंयुक्तं सास्रवं च मनोविज्ञानं, सोऽयमुच्यते विज्ञानधातुः । यदा ह्याध्यात्मिकाः पृथिव्यादिधातवो भवन्त्यविकलास्तदा सर्वेषां समवायाद्भवति कायस्योत्पत्तिः । तत्र पृथिव्यादिधातूनां नैवं भवति वयं कायस्य काठिन्यादि निर्वर्तयाम इति । कायस्यापि नैवं भवति ज्ञानमहमेभिः प्रत्ययैरभिनिर्वर्तित इति । अथ च पृथिव्यादिधातुभ्योऽचेतनेभ्यश्चेतनान्तरानधिष्ठितेभ्योऽङ्कुरस्येव कायस्योत्पत्तिः । सोऽयं प्रतीत्यसमुत्पादो दृष्टत्वान्नान्यथयितव्यः । तत्रैतेष्वेव षट्सु धातुषु यैकसंज्ञा पिण्डसंज्ञा, नित्यसंज्ञा, सुखसंज्ञा, सत्त्वसंज्ञा, पुद्गलसंज्ञा, मनुष्यसंज्ञा, मातृदुहितृसंज्ञा, अहंकारममकारसंज्ञा, **सेयमविद्या** संसारानर्थसंभारस्य मूलकारणं, तस्यामविद्यायां सत्यां **संस्कारा** रागद्वेषमोहा विषयेषु प्रवर्तन्ते । वस्तुविषया विज्ञप्ति**र्विज्ञानं**, विज्ञानाच्चत्वारो रूपिण उपादानस्कन्धास्तन्नाम, तान्युपादाय रूपमभिनिर्वर्तते । तदैकध्यमभिसंक्षिप्य **नामरूपं** निरुच्यते शरीरस्यैव कललबुद्बुदाद्यवस्था, नामरूपसंमिश्रितानीन्द्रियाणि **षडायतनं**, नामरूपेन्द्रियाणां त्रयाणां संनिपातः **स्पर्शः**, स्पर्शा**द्वेदना** सुखादिका, वेदनायां सत्यां कर्तव्यमेतत्सुखं पुनर्मयेत्यध्यवसानं **तृष्णा** भवति । तत **उपादानं** वाक्कायचेष्टा

आनन्दगिरीय–न्यायनिर्णयः ।

नापेक्षणीयान्तरमस्तीत्यर्थः । के पुनरविद्यादयस्तत्राऽऽह–**ते चेति** । वक्ष्यमाणबुद्धिस्थपरामर्शी तच्छब्दः । क्षणिककार्यदुःखस्वभावेष्वर्थेषु स्थायिनित्यसुखबुद्धिरविद्या । तस्यां सत्यां संस्कारा रागद्वेषमोहविषयेषु भवन्ति । तेभ्यो गर्भस्थस्याऽऽद्यं विज्ञानमुत्पद्यते । तस्माच्चाऽऽलयविज्ञानात्पृथिव्यादिचतुष्टयमुपादानकारणं नामाश्रयत्वान्नाम निष्पद्यते । तच्च कारणत्वेन स्वीकृत्य सितासितादिरूपवच्छरीरमभिनिर्वर्तते । गर्भीभूतस्य शरीरस्य कललबुद्बुदाद्यवस्था नामरूपशब्दाभ्यामत्राभीष्टा जातेरुत्तरत्राभिधानात् । नामरूपसंमिश्रितानीन्द्रियाणि षडायतनं पृथिव्यादिधातवः षडायतनानि यस्य करणजातस्य तत्तथा । नामरूपेन्द्रियाणां मिथः संनिपातः स्पर्शः । ततः सुखादिका वेदना । तस्यां सत्यां कर्तव्यं सुखं मयेत्यध्यवसानं तृष्णा । ततो वाक्कायचेष्टा उपादानम् । ततो भवत्यस्माज्जन्मेति भवो धर्मादिः । तद्धेतुको देहोदयो जातिः । जातस्य देहस्य परिपाको जरा । देहनाशो मरणम् । म्रियमाणस्य साभिषङ्गस्य पुत्रादावन्तर्दाहः शोकः । तदुत्थं हा पुत्रेत्यादिप्रलपनं परिदेवना । शब्दादिज्ञानपञ्चकसंयुक्तमसाध्वनुभवनं दुःखम् । दुर्मनस्ता मानसं दुःखम् । इतिशब्दो यथोक्तपरामर्शार्थः । एवंजातीयकशब्दो मदमानाद्युपक्लेशसंग्रहार्थः । अविद्यादिहेतुका जन्मादयस्तद्धेतुकाश्चाविद्यादय इति घटीयन्त्रवदनवरतमावर्तनमेषामिति

**भवो, जातिः, जरा, मरणं, शोकः, परिदेवना, दुःखं, दुर्मनस्ते इत्येवञ्जातीयका इतरेतरहेतुकास्सौगते समये क्वचित्संक्षिप्ता निर्दिष्टाः, क्वचित्प्रपञ्चिताः ॥ सर्वेषामप्ययमविद्यादिकलापोऽप्रत्याख्येयः ॥ तदेवमविद्यादिकलापेऽपि परस्परनिमित्तनैमित्तिकभावेन घटीयन्त्रवदनिशमावर्तमानेऽर्थाऽक्षिप्त उपपन्नस्संघात इति चेत् ॥ तन्न ॥**

रत्नप्रभा ।

तेन भवत्यस्माज्जन्मेति-**भवो**-धर्मादिः । ततो **जातिः**-देहजन्म । पञ्चस्कन्धसमुदाय इति यावत् । जातानां स्कन्धानां परिपाको-**जरा** । नाशो-**मरणम्** । म्रियमाणस्य पुत्रादिस्नेहादन्तर्दाहः-**शोकः** । तेन हा पुत्रेत्यादिप्रलापः-**परिदेवना** । अनिष्टानुभवः-**दुःखम्** । तेन **दुर्मनस्ता**-मानसी व्यथा । इतिशब्दो मानापमानादिक्लेशसंग्रहार्थः । न केवलं सुगतानामेवाऽविद्यादयः सम्मताः । किन्तु सर्ववादिनामपीत्याह-**सर्वेषामिति** ॥ अविद्यादिहेतुका जन्मादयो जन्मादिहेतुकाश्चाविद्यादय इति मिथो हेतुहेतुमद्भावादर्थात् संघातसिद्धिरिति । शङ्कामुपसंहरति-**तदेवमिति** ॥ सिद्धान्तभागं व्याचष्टे-**तन्नेति** ॥

भामती ।

भवति । ततो **भवो** भवत्यस्माज्जन्मेति भवो धर्माधर्मौ, तद्धेतुकः स्कन्धप्रादुर्भावो **जातिः** जन्म । जन्महेतुका उत्तरे **जरामरणादयः** । जातानां स्कन्धानां परिपाको जरा । स्कन्धानां नाशो मरणम् । म्रियमाणस्य मूढस्य साभिषङ्गस्य पुत्रकलत्रादावन्तर्दाहः **शोकः** । तदुत्थं प्रलपनं हा मातः! हा तात! हा च मे पुत्रकलत्रादीति **परिदेवना** । पञ्चविज्ञानकार्यसंयुक्तमसाध्वनुभवनं **दुःखम्** । मानसं च दुःखं **दौर्मनस्यम्** । एवंजातीयकाश्चोपायास्त उपक्लेशा गृह्यन्ते । तेऽमी परस्परहेतुकाः, जन्मादिहेतुका अविद्यादयोऽविद्यादिहेतुकाश्च जन्मादयो घटीयन्त्रवदनिशमावर्तमानाः सन्तीति तदेतैरविद्यादिभिराक्षिप्तः **संघात** इति । तदेतद्दूषयति-**तन्न** । कुतः, **उत्पत्तिमात्रनिमित्तत्वादिति** । अयमभिसंधिः-यत् खलु हेतूपनिबद्धं कार्यं तदन्यानपेक्षं हेतुमात्राधीनोत्पादत्वादुत्पत्त्यतां नाम । पञ्चस्कन्धसमुदायस्तु प्रत्ययोपनिबद्धो न हेतुमात्राधीनोत्पत्तिः, अपि तु नानाहेतुसमवधानजन्मा । न च चेतनमन्तरेणान्यः संनिधापयितास्ति कारणानामित्युक्तम् । बीजादंकुरोत्पत्तेरपि प्रत्ययोपनिबद्धाया विवादाध्यासितत्वेन पक्षनिक्षिप्तत्वात् पक्षेण च व्यभिचारोद्भावनायामतिप्रसङ्गेन सर्वानुमानोच्छेदप्रसङ्गात् । स्यादेतत् । अनपेक्षा एवान्त्यक्षणप्राप्ताः क्षित्यादयोऽङ्कुरमारभन्ते । तेषां तूपसर्पणप्रत्ययवशात्परस्परसमवधानम् । न चैकस्मादेव कारणात्कार्यसिद्धेः किमन्यैः कारणैरिति वाच्यम् । कारणचक्रानन्तरं कार्योत्पादात् सिद्धमित्येव नास्ति । न चैकोऽपि तत्कारणसमर्थ इत्यन्य उदासत इति युक्तम् । न हि ते प्रेक्षावन्तो येनैवमालोचयेयुरस्मासु समर्थ एकोऽपि कार्ये इति कृतं नः संनिधिनेति । किंतूपसर्पणप्रत्ययाधीनपरस्परसंनिधानोत्पादा नानुत्पत्तुं नाप्यसंनिधातुमीशते । तांश्च सर्वाननपेक्षान् प्रतीत्य कार्यमपि न नोत्पत्तुमर्हति । न च स्वमहिम्ना सर्वे कार्य-

आनन्दगिरीय-न्यायनिर्णयः ।

मत्वा विशिनष्टि-**इतरेति** । अविद्यादीनां सत्त्वमेव कथमित्याशंक्य संक्षेपविस्तराभ्यामुक्तत्वात्तद्रूपं सौगतानां प्रसिद्धमित्याह-**सौगत इति** । न केवलं तेषामेव प्रसिद्धं किंतु सर्ववादिनामपीत्याह-**सर्वेषामिति** । आनुभविकार्थप्रत्याख्याने सर्वव्यवहारासिद्धिरिति भावः । अविद्यादीनां मिथो निमित्तनैमित्तिकत्वेऽपि कुतः संघातसिद्धिरित्याशंक्योपसंहरति-**तदेवमिति** । अविद्यादिरेव संघाताभावे न सिध्यतीत्यनुपपत्त्या तदाक्षेपे तदाश्रयः सर्वव्यवहारो निर्वहतीत्यर्थः । सिद्धान्तभागमवतारयति-**तन्नेति** । तत्र

१ पुत्रमरणनिमित्तान्तर्दाहेन ।

कस्मात् ॥ उत्पत्तिमात्रनिमित्तत्वात् । भवेदुपपन्नस्संघातो यदि संघातस्य किञ्चिन्निमित्तमवगम्येत । न त्ववगम्यते । यत इतरेतरप्रत्ययत्वेऽप्यविद्यादीनां पूर्वपूर्वमुत्तरोत्तरोऽस्योत्पत्तिमात्रनिमित्तं भवद्भवेत् ॥ न तु संघातोत्पत्तेः किञ्चिन्निमित्तं संभवति ॥ नन्वविद्यादिभिरर्थादाक्षिप्यते संघात इत्युक्तम् ॥ अत्रोच्यते ॥ यदि तावदयमभिप्रायः-अविद्यादयस्संघातमन्तरेणात्मानमलभमाना अपेक्षन्ते संघातमिति, ततस्तस्य संघातस्य निमित्तं वक्तव्यम् ॥ तच्च नित्येष्वप्यणुष्वभ्युपगम्यमानेष्वाश्रयाश्रयिभूतेषु च भोक्तृषु सत्सु न सम्भवतीत्युक्तं वैशेषिकपरीक्षायाम् ॥

---

रत्नप्रभा ।

अविद्यादीनामुत्तरोत्तरहेतुत्वमङ्गीकृत्य संघातहेत्वभावात् संघातो न स्यादित्युक्ते पूर्वोक्तं स्मारयति—नन्विति ॥ किमविद्यादयः संघातस्य गमकाः—उत—उत्पादका इति विकल्प्य आद्ये—संघातस्योत्पादकं किञ्चिद्वाच्यम् । तन्नास्तीत्याह—अत्रोच्यते यदीति ॥ आश्रयाश्रयिभूतेष्विति ॥ भोक्तृविशेषणम् । अदृष्टाश्रयेष्वित्यर्थः । यदा स्थिरेष्वणुषु संघातयोग्येषु कर्तृषु चादृष्टसहायेषु सत्सु ज्ञानाभावमात्रेण संहतिकर्तृत्वायोगात् संघातापत्तेर्निमित्तं नास्तीत्युक्तं, तदा क्षणिकपक्षे तन्नास्तीति किमु वक्तव्य·

भामती ।

मुत्पादयन्तोऽपि नानाकार्याणामीशते तत्रैव तेषां सामर्थ्यात् । न च कारणभेदात् कार्यभेदः, सामग्र्या एकत्वात् । तद्भेदस्य च कार्यनानात्वहेतुत्वात्तया दर्शनात् । तन्न । यद्यन्त्यक्षणप्राप्ता अनपेक्षाः स्वकार्योपजनने, हन्तानेन क्रमेण ततः पूर्वे ततः पूर्वे सर्वे एवानपेक्षास्तत्तत्स्वकार्योपजनन इति कुसूलस्थत्वाविशेषेऽपि येन बीजक्षणेन कुसूलस्थेन स्वकार्यक्षणपरम्परयांकुरोत्पत्तिसमर्थो बीजक्षणो जनयितव्यः सोऽनपेक्ष एव बीजक्षणः स्वकार्योपजनने एवं सर्व एव तदनन्तरानन्तरवर्तिनो बीजक्षणा अनपेक्षा इति कुसूलनिहितबीज एव स्यात् कृती कृषीवलः कृतमस्य दुःखबहुलेन कृषिकर्मणा । येन हि बीजक्षणेन स्वक्षणपरम्परयांकुरो जनयितव्यस्तस्यानपेक्षासौ क्षणपरम्परा कुसूल एवांकुरं करिष्यतीति । तस्मात्परस्परापेक्षा एवान्त्या वा मध्या वा पूर्वे वा क्षणाः कार्योपजनन इति वक्तव्यम् । यथाहुः—'न किंचिदेकमेकस्मात्सामग्र्याः सर्वसंभवः' इति । तच्चेदं समवधानं कारणानां विन्यासभेदतत्प्रयोजनाभिज्ञप्रेक्षावत्पूर्वकं दृष्टमिति नाचेतनाद्भवितुमर्हति । तदिदमुक्तम्-भवेदुपपन्नः संघतो यदि संघातस्य किंचिन्निमित्तमवगम्येतेति । इतरेतरप्रत्ययत्वेऽपीति । इतरेतरहेतुत्वेऽपीत्यर्थः । उक्तमभिसंधिमविद्वान् परिचोदयति—नन्वविद्यादिभिरर्थादाक्षिप्यत इति । परिहरति—अत्रोच्यते, यदि तावदिति । किमाक्षेप उत्पादनम्, आहो ज्ञापनम् । तत्र न तावत् कारणमन्यथानुपपद्यमानं कार्यमुत्पादयति, किंतु स्वसामर्थ्येन । तस्माज्ज्ञापनं वक्तव्यम् । तथा च ज्ञापितस्यान्यदुत्पादकं वक्तव्यं, तच्च स्थिरपक्षेऽपि सत्यपि च

आनन्दगिरीय—न्यायनिर्णयः ।

प्रश्नपूर्वकं हेतुमाह—कस्मादिति । हेतुं व्याचष्टे—भवेदिति । अविद्यादीनां मिथो निमित्तनैमित्तिकभावभाजां संघातनिमित्तत्वमाशंक्याऽऽह—यत इति । उत्तरसूत्रस्थमर्थमभिप्रेत्येहापिशब्दः । अविद्यादीनां मिथो हेतुहेतुमत्त्वेऽपि चेतनाधिष्ठानादृते संघातासिद्धिरित्युक्ते पूर्ववादी पूर्वोक्तं स्मारयति—नन्विति । किमविद्यादयः संघातस्य गमकाः किं वोत्पादका इति विकल्पयति—अत्रेति । तत्राऽऽद्यमनूद्य दूषयति—यदीति । गमकत्वपक्षे स्वरूपसिद्धिरन्यतो वाच्या, तच्चान्यन्नास्तीत्यर्थः । अणूनां स्कन्धानां चोभयविधसंघातनिमित्तत्वमाशंक्याऽऽह—तच्चेति । आश्रयांश्रयिभूतेष्विति भोक्तृविशेषणमदृष्टाश्रयेष्वित्यर्थः । अणुषु स्थिरेषु भोगहेत्वदृष्टविशिष्टेषु भोक्तृषु चोक्तविशेषणेषु स्वीकृतेषु सत्सु चेतनस्याधिष्ठातुरनुरूपस्याभावान्न संभवति

**किमङ्ग पुनः क्षणिकेष्वणुषु भोक्तृरहितेष्वाश्रयाश्रयिशून्येषु वाभ्युपगम्यमानेषु सम्भवेत् ॥ अथायमभिप्रायः-अविद्यादय एव संघातस्य निमित्तमिति ॥ कथं तमेवाश्रित्यात्मानं लभमानास्तस्यैव निमित्तं स्युः ॥ अथ मन्यसे संघाता एवानादौ संसारे सन्तत्यानुवर्तन्ते । तदाश्रयाश्चाविद्यादय इति । तदापि संघातात्संघातान्तरमुत्पद्यमानं नियमेन वा सदृशमेवोत्पद्येत, अनियमेन वा सदृशं विसदृशं वोत्पद्येत ॥ नियमाभ्युपगमे मनुष्यपुद्गलस्य देवतिर्यग्योनिनारक-**

रत्नप्रभा ।

मित्याह-**किमिति** ॥ आशयाश्रयः संघातकर्ता तच्छून्येष्वित्यर्थः । आश्रयाश्रयिशून्येष्विति पाठे उपकार्योपकारकत्वशून्येष्वित्यर्थः । द्वितीयं शङ्कते-**अथायमिति** ॥ संघातस्याऽविद्यादीनां चोत्पत्तौ अन्योन्याश्रयः स्यादिति दूषयति-**कथमिति** ॥ स्वाभाविकः खल्वयं संघातानां हेतुहेतुमद्भावेन प्रवाहो न संहन्तारमपेक्षते, पूर्वसंघाताश्रया अविद्यादय उत्तरसंघातप्रवर्तका इति नान्योन्याश्रयदोषोऽपीत्याशङ्कते-**अथ मन्यस इति** ॥ स्वभावस्य नियमानियमयोरपसिद्धान्तापातः स्यादिति परिहारार्थः ।

भामती ।

भोक्तर्यधिष्ठातारं चेतनमन्तरेण न संभवति, किमङ्ग पुनः क्षणिकेषु भावेषु । भोक्तुर्भोगेनापि कदाचिदाक्षिप्येत संघातः, स तु भोक्तापि नास्तीति दूरोत्सारितत्वं दर्शयति-**भोक्तृरहितेष्विति** । अपि च बहव उपकार्योपकारकभावेन स्थिताः कार्यं जनयन्ति । न च क्षणिकपक्ष उपकार्योपकारकभावोऽस्ति, भावस्योपकारानास्पदत्वात् । क्षणस्याभेद्यत्वादनुपकृतोपकृतत्वासंभवात् । कालभेदेन वा तदुपपत्तौ क्षणिकत्वव्याघातात् । तदिदमाह-**आश्रयाश्रयिशून्येषु चेति** । **अथायमभिप्राय इति** । यदा हि प्रत्ययोपनिबन्धनः प्रतीत्यसमुत्पादो भवेत्तदा चेतनोऽधिष्ठाताऽपेक्षेतापि, न तु प्रत्ययोपनिबन्धनोऽपि तु हेतूपनिबन्धनः । तथा च कृतमधिष्ठात्रा । हेतुः स्वभावत एव कार्यसंघातं करिष्यति केवल इति भावः । अस्तु तावद्यथा केवलाद्धेतोः कार्यं नोपजायत इति, अन्योन्याश्रयप्रसङ्गोऽस्मिन् पक्ष इत्याशयवानाह-**कथं तमेवेति** । संप्रति प्रत्ययोपनिबन्धनं प्रतीत्यसमुत्पादमास्थाय चोदयति-**अथ मन्यसे संघाता एवेति** । अस्थिरा अपि हि भावाः सदा संहता एवोदयन्ते व्ययन्ते च । न पुनरितस्ततोऽवस्थिताः केनचित् पुञ्जीक्रियन्ते । तथा च कृतमत्र संहन्त्रा चेतनेनेति भावः । **अनादौ** इति परस्पराश्रयं निवर्तयति । तदेतद्विकल्प्य दूषयति-**तदापि संघातादिति** । स खलु संघातसंततिवर्ती धर्माधर्माह्वयः संस्कारसंतानो यथायथं सुखदुःखे जनयन्नागन्तुकं कंचनानासाद्य स्वत एव जनयेत्, आसाद्य वा । अनासाद्यजनने

आनन्दगिरीय-न्यायनिर्णयः ।

संघातापत्तेर्निमित्तं किंचिदित्युक्तमित्यर्थः । कैमुतिकन्यायमपिना सूचितमाह-**किमिति** । अदृष्टाश्रयकर्तृराहित्यमाह-**आश्रयेति** । आश्रयाश्रयिशून्येष्विति पाठे तूपकार्योपकारकत्ववर्जितेष्वित्यर्थः । विशिष्टेष्वणुषु स्वीक्रियमाणेषु किं पुनः संघातापत्तेर्निमित्तं न किंचिदित्याक्षेपः । द्वितीयं शंकयति-**अथेति** । परस्पराश्रयत्वेन प्रत्याह-**कथमिति** । पूर्वपूर्वसंघातानामुत्तरोत्तरसंघातहेतुत्वात्तदाश्रयत्वाचाविद्यादीनां नान्योन्याश्रयत्वम् । न च संहन्तृचेतनापेक्षा स्वभावतो भावानां संहतानामेवोदयव्ययोपगमादित्याह-**अथेति** । तद् दूषयितुं विकल्पयति-**तदाऽपीति** । संघातवर्तिनोऽदृष्टस्याधिष्ठातृचेतनाभावात्तद्वशात्प्रतिनियतकार्योत्पादायोगे स्वभावादेवोत्पत्तिरास्थेया । तथा च पूर्यते गलति चेति पुद्गलं शरीरं तच्च मनुष्यशब्दितं तदुपेतः संघातो नियमपक्षे न जात्यन्तरमाग्भवेदित्याह-**नियमेति** । द्वितीयेऽपि व्यवस्थापकाभा-

१ आशयाश्रमशून्येष्विति पाठान्तरम् ।

प्राप्त्यभावः प्राप्नुयात् ॥ अनियमाभ्युपगमेऽपि मनुष्यपुद्गलः कदाचित्क्षणेन हस्ती भूत्वा देवो वा पुनर्मनुष्यो वा भवेदिति प्राप्नुयात् ॥ उभयमप्यभ्युपगमविरुद्धम् ॥ अपि च यद्भोगार्थस्संघातः स्यात्, स नास्ति स्थिरो भोक्तेति तवाभ्युपगमः ॥ ततश्च भोगो भोगार्थ एव । स नान्येन प्रार्थनीयः ॥ तथा मोक्षो मोक्षार्थ एवेति मुमुक्षुणा नान्येन भवितव्यम् ॥ अन्येन चेत्प्रार्थ्येतोभयं भोगमोक्षकालावस्थायिना तेन भवितव्यम् ॥ अवस्थायित्वे क्षणिकत्वाभ्युपगमविरोधः ॥ तस्मादितरेतरोत्पत्तिमात्रनिमित्तत्वमविद्यादीनां यदि भवेद्भवतु नाम न तु संघातः सिध्येत् ॥ भोक्त्रभावादित्यभिप्रायः ॥ १९ ॥

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

उक्तमेतदविद्यादीनामुत्पत्तिमात्रनिमित्तत्वान्न संघातसिद्धिरस्तीति ॥

रत्नप्रभा ।

पूर्यते गलति चेति पुद्गलः—देहः । किञ्च भोक्तुः क्षणिकत्वपक्षे भोगापवर्गव्यवहारोपि दुर्घट इत्याह—अपि चेति ॥ यो यदिच्छति स तत्काले नास्ति चेद् इच्छा व्यर्था । अस्ति चेत् क्षणिकत्वभङ्ग इत्यर्थः । प्रकृतं संघातनिरासमुपसंहरति—तस्मादिति ॥ १९ ॥ द्विविधो हि कार्यसमुत्पादः सुगतसम्मतः—हेत्वधीनः, कारणसमुदायाधीनश्चेति । तत्राऽविद्यातः संस्कारः, ततो विज्ञानमित्येवं रूपः—प्रथमः । पृथिव्यादिसमुदायात्कार्यं इत्येवं द्वितीयः । तत्र—आद्यम् अङ्गीकृत्य द्वितीयः संघातकर्त्रभावेन दूषितः । सम्प्रति आद्यं दूषयति सूत्रकारः—उत्तरेति ॥ क्षणिकोऽर्थः—

भामती ।

सदैव सुखदुःखे जनयेत्, समर्थस्यानपेक्षस्याक्षेपायोगात् । आसाद्य जनने तदासादनकारणं प्रेक्षावानभ्युपेयः । तथा च न प्रत्ययोपनिबन्धनः प्रतीत्यसमुत्पादः । तस्मादनेनागन्तुकानपेक्ष्य संघातसंतानस्यैव सदृशजनने विसदृशजनने वा स्वभाव आस्थेयः । तथा च भाष्योक्तं दूषणमिति । अपि च यद्भोगार्थः संघातः स्यादिति । अप्राप्तभोगो हि भोगार्थी भोगमाप्तुकामस्तत्साधने प्रवर्तेत इति प्रत्यात्मसिद्धम् । सेयं प्रवृत्तिर्भोगादन्यस्मिन् स्थिरे भोक्तरि भोगतत्साधनसमयव्यापिनि कल्प्यते नास्थिरे । न च भोगादनन्यस्मिन् । न हि भोगो भोगाय कल्पते नाप्यन्यो भोगायान्यस्य । एवं मोक्षेऽपि द्रष्टव्यम् । तत्र बुभुक्षुमुमुक्षू चेत् स्थिरावास्थीयेयातां तदाभ्युपेतहानम्, अस्थैर्ये वा प्रवृत्तिप्रसङ्ग इत्यर्थः । न तु संघातः सिध्येद्भोक्त्रभावादिति । भोक्त्रभावेन प्रवृत्त्यनुपपत्तेः कर्त्रभावः । ततः कर्माभावात्संघातासिद्धिरित्यर्थः ॥ १९ ॥ उत्तरोत्पादे च पूर्वनिरोधात् । पूर्वसूत्रेण संगतिमस्याह—उक्तमेतदिति ।

आनन्दगिरीय—न्यायनिर्णयः ।

येनाव्यवस्थामाह—अनियमेति । उभयत्रेष्टापत्तिं शंकित्वा निरस्यति—उभयमिति । न केवलं संघातानुपपत्त्या क्षणवादानुपपत्तिर्भोगापवर्गव्यवहारानुपपत्तेश्चेत्याह—अपि चेति । क्षणवादेऽपि बुभुक्षुणा भोगो मुमुक्षुणा मोक्षश्चार्थनीयौ तत्कुतो भोगापवर्गव्यवहारासिद्धिस्तत्राऽऽह—यदिति । अभ्युपगमफलमाह—ततश्चेति । भोगे दर्शितं न्यायं मोक्षेऽतिदिशति—तथेति । विपक्षे दण्डमाह—अन्येनेति । बुभुक्षोर्मुमुक्षोर्वा कालद्वयस्थायित्वमाशंक्याऽऽह—अवस्थायित्व इति । परिहारभागतात्पर्यमुपसंहरति—तस्मादिति ॥ १९ ॥ उपेत्यवादमिदानीं त्यजति—उत्तरेति । पूर्वसूत्रोक्तमनूद्यास्य सूत्रस्य तात्पर्यमाह—उक्तमिति । अविद्यादीनां मिथो हेतुत्वमुपेत्य संघातासिद्धिरुक्ता संप्रत्यन्योन्यहेतुत्वमपि नेति वक्तु-

तदपि तूत्पत्तिमात्रनिमित्तत्वं न सम्भवतीतीदमिदानीमुपपाद्यते ॥ क्षणभङ्गवादिनोऽयमभ्युपगमः–उत्तरस्मिन् क्षणे उत्पद्यमाने पूर्वक्षणो निरुध्यत इति ॥ न चैवमभ्युपगच्छता पूर्वोत्तरयोः क्षणयोर्हेतुफलभावश्शक्यते सम्पादयितुम् ॥ निरुध्यमानस्य निरुद्धस्य वा पूर्वक्षणस्याभावग्रस्तत्वादुत्तरक्षणहेतुत्वानुपपत्तेः ॥ अथ भावभूतः परिनिष्पन्नावस्थः पूर्वक्षण उत्तरक्षणस्य हेतुरित्यभिप्रायः ॥ तथापि नोपपद्यते–भावभूतस्य पुनर्व्यापारकल्पनायां क्षणान्तरसम्बन्धप्रसङ्गात् ॥ अथ भाव एवास्य व्यापार इत्यभिप्रायः ॥ तथापि नैवोपपद्यते–हेतुस्वभावानुपरक्तस्य

---

रत्नप्रभा।

क्षण इत्युच्यते। निरुध्यमानत्वं–विनाशकसान्निध्यम्। निरुद्धत्वम् अतीतत्वम्। ननु कार्यकाले विनाशग्रस्तत्वेऽपि पूर्वक्षणे सत्त्वात् क्षणिकार्थस्य हेतुत्वमक्षतमिति शङ्कते–अथ भावेति ॥ सद्रूप इत्यर्थः। किं हेतोरुत्पत्त्यतिरिक्तः कार्योत्पादनाख्यो व्यापारः अनतिरिक्तो वा? नाद्यः–इत्युक्त्वा द्वितीयं शङ्कते–अथेति॥ भावः उत्पत्तिः। उक्तं हि–"भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते" इति। येषां क्षणिकभावानां या भूतिः सैव क्रिया कारकञ्चेत्यर्थः। नष्टस्यापि निमित्तत्वं स्यान्नोपादानत्वम्। तथा च मृदादेर्घटादिकालासत्त्वे घटाद्यनुत्पत्तिः। सत्त्वे च क्षणिकत्वहानिरिति परिहरति–तथापीत्यादिना ॥ प्रथमप-

भामती।

हेतूपनिबन्धनं प्रतीत्यसमुत्पादमभ्युपेत्य प्रत्ययोपनिबन्धनः प्रतीत्यसमुत्पादो दूषितः। संप्रति हेतूपनिबन्धनमपि तं दूषयतीत्यर्थः। दूषणमाह–इदमिदानीमिति। निरुध्यमानस्येति। न तावद्वैशेषिकवन्निरोधकारणसांनिध्यं निरुध्यमानता स्वीक्रियते वैनाशिकैरकारणं विनाशमभ्युपगच्छद्भिस्तस्यानिष्टत्वात्। तस्माद्विनाशग्रस्तत्वमचिरनिरुद्धत्वं निरुध्यमानत्वं वक्तव्यम्। निरुद्धत्वं च चिरनिरुद्धत्वं विवक्षितं, तथा चोभयोरप्यभावग्रस्तत्वाद्धेतुत्वानुपपत्तिः। शङ्कते–अथ भावभूत इति। कारणस्य हि कार्योत्पादात् प्राक्कालसत्ताऽर्थवती न कार्यकाला, तदा कार्यस्य सिद्धत्वेन तत्सिद्ध्यर्थायाः, सत्ताया अनुपयोगादिति भावः। तदेतल्लोकदृष्ट्या दूषयति–भावभूतस्येति। भूत्वा व्यापृत्य भावाः प्रायेण हि कार्यं कुर्वन्तो लोके दृश्यन्ते। तथा च स्थिरत्वम्, इतरथा तु लोकविरोध इति। पुनः शङ्कते–अथ भाव एवेति। यथाहुः–'भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते' इति। भवत्वेवं व्यापारवत्ता तथापि क्षणिकस्य न कारणत्वमित्याह–तथापि नैवोपपद्यते क्षणिकस्य कारणभावः। मृत्सुवर्णकारणा हि घटादयश्च रुचकादयश्च मृत्सुवर्णात्मानोऽनुभूयन्ते। यदि च न कार्यसमये कारणं सत् कथं तेषां तदात्मनानुभवः। न च कारणसादृश्यं कार्यस्य न तु तादात्म्यमिति वाच्यम्। असति कस्यचिद्रूपस्यानुगमे सादृश्यस्या-

आनन्दगिरीय–न्यायनिर्णयः।

मिदं सूत्रमित्यर्थः। अविद्यादीनामन्योन्यनिमित्तत्वायोगं वक्तुं परपक्षमनुवदति–क्षणेति। तत्रानुपपत्तिं प्रतिजानीते–न चेति। काऽत्रानुपपत्तिरित्याशंक्य पूर्वक्षणस्योत्पादनव्यापारः समनन्तरक्षणे वा स्वसत्ताक्षणे वेति विकल्प्याऽऽद्यं प्रत्याह–निरुध्यमानस्येति। अचिरनिरुद्धत्वं निरुध्यमानत्वम्। निरोधहेतुसांनिध्यानुगमान्निरुद्धत्वं चिरनिरुद्धत्वम्। कल्पान्तरमुत्थापयति–अथेति। स्थायित्वं व्यवच्छिनत्ति–परिनिष्पन्नेति। कारणस्य कार्यात्पूर्वकाले सत्ताऽर्थवती न कार्यकाले तदा कार्यस्य सिद्धत्वेन तदर्थसत्तानुपयोगत्वादिति भावः। तत्रापि कार्यकारणत्वासिद्धिरित्याह–तथाऽपीति। कथं कारणस्योत्पादनं धर्मः स्वरूपं वा। नाऽऽद्य इत्याह–भावेति। कल्पान्तरमाह–अथेति। तत्रापि हेतुफलत्वस्य न संभावनेत्याह–तथाऽपीति। कथं हेतुस्वरूपं कार्यानन्वयि तदन्वयि वा। तत्र प्रथमं प्रत्याह–हेत्विति।

फलस्योत्पत्त्यसम्भवात् ॥ स्वभावोपरागाभ्युपगमे च हेतुस्वभावस्य फलकालावस्थायित्वे सति क्षणभङ्गाभ्युपगमत्यागप्रसङ्गः ॥ विनैव वा स्वभावोपरागेण हेतुफलभावमभ्युपगच्छतस्सर्वत्र तत्प्राप्तेरतिप्रसङ्गः ॥ अपि चोत्पादनिरोधौ नाम वस्तुनस्स्वरूपमेव वा स्याताम् । अवस्थान्तरं वा वस्त्वन्तरमेव वा ॥ सर्वथापि नोपपद्यते ॥ यदि तावद्वस्तुनस्स्वरूपमेवोत्पादनिरोधौ स्यातां, ततो वस्तुशब्द उत्पादनिरोधशब्दौ च पर्यायाः प्राप्नुयुः ॥ अथास्ति कश्चिद्विशेष इति मन्येत—उत्पादनिरोधशब्दाभ्यां मध्यवर्तिनो वस्तुन आद्यन्ताख्ये अवस्थे अभिलप्येते इति ॥ एवमप्याद्यन्तमध्यक्षणत्रयसम्बन्धित्वाद्वस्तुनः क्षणिकत्वाभ्युपगमहानिः ॥ अथात्यन्तव्यतिरिक्तावेवोत्पादनिरोधौ वस्तुनस्स्यातामश्वमहिषवत् ॥ ततो वस्तूत्पादनिरोधाभ्यामसंस्पृष्टमिति वस्तुनश्शाश्वतत्वप्रसङ्गः ॥ यदि च दर्शनादर्शने वस्तुन उत्पादनिरोधौ स्याताम् ॥ एवमपि द्रष्टृधर्मौ तौ न वस्तुधर्माविति वस्तुनश्शाश्वतत्वप्रसंग एव ॥ तस्मादप्यसङ्गतं सौगतं मतम् ॥ २० ॥

---

रत्नप्रभा ।

क्षोक्तदोषं द्रढयति—विनैवेति ॥ वस्तुनो जन्मध्वंसानिरूपणाच्च न क्षणिकत्वमित्याह—अपि चेति ॥ तयोः स्वरूपत्वे वस्तुन्यन्तर्भावात् वस्तुनोऽनाद्यनन्तत्वमित्यपि द्रष्टव्यम् । द्वितीयं शङ्कते—अथास्तीति ॥ विशेषमेवाह—उत्पादेति ॥ दूषयति—एवमपीति ॥ ताभ्यां संसर्गे । वस्तुनः क्षणिकत्वभङ्गः स्यात् । संसर्ग एव नास्तीति तृतीयकल्पम्—उत्थाप्य दूषयति—अथात्यन्तेति ॥ २० ॥ सूत्रं

भामती ।

प्यनुपपत्तेः । अनुगमे वा तदेव कारणं, तथा च तस्य कार्यतादात्म्यमिति सिद्धमक्षणिकत्वमित्यर्थः । सर्वथा वैलक्षण्ये तु हेतुफलभावस्तन्तुघटादावपि प्राप्त इत्यतिप्रसङ्ग इत्याह—विनैव वेति । न च तद्भावभावो नियामकः, तस्यैकस्मिन् क्षणेऽशक्यग्रहत्वात्, सामान्यस्य चाकारणत्वात् । कारणत्वे वा क्षणिकत्वहानेरसमत्पक्षपातप्रसङ्गाच्चेति भावः । अपि चोत्पादनिरोधयोर्विकल्पत्रयेऽपि वस्तुनः शाश्वतत्वप्रसङ्ग इत्याह—अपि चोत्पादनिरोधौ नामेति । पर्यायत्वापादनेऽपि नित्यत्वापादनं मन्तव्यम् । वस्तूत्पादनिरोधाभ्यामसंस्पृष्टमिति वस्तुनः शाश्वतत्वप्रसङ्गः । संसर्गेऽप्यसता संसर्गानुपपत्तेः । सत्त्वाभ्युपगमे

आनन्दगिरीय—न्यायनिर्णयः ।

तदनुपरागेऽपि तद्भावे हिमवद्विन्ध्ययोरपि तद्भावः स्यादिति भावः । कल्पान्तरं दूषयति—स्वभावेति । प्रथमपक्षोक्तदोषं प्रपञ्चयति—विनैवेति । न च कार्यस्य कारणसादृश्यं तन्निवारकं किंचिद्रूपानुगमाभावे तस्यैवासंभवादिति भावः । इतश्च क्षणवादासिद्धिरित्याह—अपि चेति । तदेव वक्तुमुत्पादनिरोधौ त्रेधा विकल्पयति—उत्पादेति । पक्षत्रयेऽपि वस्तुनो नित्यत्वप्रसङ्गान्न क्षणिकतेत्याह—सर्वथेति । तत्राऽऽद्यमनूद्य वस्तुनो नित्यत्वं प्रसञ्जयन्क्षणिकत्वासिद्धिमाह—यदीति । द्वितीयेऽपि क्षणिकत्वासिद्धितादवस्थ्यमाह—अथेत्यादिना । तमेव विशेषं दर्शयति—उत्पादेति । तृतीयमनूद्य क्षणिकत्वासिद्धिं स्फुटयति—अथेति । प्रकारान्तरमाशंक्य प्रत्याह—यदीति । उत्पादनिरोधयोर्दुर्निरूपत्वे फलमाह—तस्मादिति । संघातस्य हेतुफलत्वस्य चासिद्धिरपिशब्दार्थः ॥ २० ॥ किंचासति फलहेतौ फलमुत्पद्यते सत्येव

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

**क्षणभंगवादे पूर्वक्षणो निरोधग्रस्तत्वान्नोत्तरस्य क्षणस्य हेतुर्भवतीत्युक्तम्॥ अथासत्येव हेतौ फलोत्पत्तिं ब्रूयात् ॥ ततः प्रतिज्ञोपरोधः स्यात्, चतुर्विधान्हेतून्प्रतीत्य चित्तचैत्ता उत्पद्यन्त इतीयं प्रतिज्ञा हीयेत ॥ निर्हेतुकायां चोत्पत्तावप्रतिबन्धात्सर्वं सर्वत्रोत्पद्येत ॥ अथोत्तरक्षणोत्पत्तिं यावत्तावदवतिष्ठते पूर्वक्षण इति ब्रूयात् ॥ ततो यौगपद्यं हेतुफलयोः स्यात ॥ तथापि प्रतिज्ञोपरोध एव स्यात्-क्षणिकाः सर्वे संस्कारा इतीयं प्रतिज्ञोपरुध्येत ॥ २१ ॥**

---

रत्नप्रभा ।

व्याख्यातुं वृत्तं स्मारयति–**क्षणभङ्गेति** ॥ किं कार्योत्पत्तिर्निर्हेतुका सहेतुका वा । आद्ये प्रतिज्ञाहानिरित्याह–**अथाऽसत्येवेत्यादिना** ॥ विषयकरणसहकारिसंस्काराश्चतुर्विधा हेतवः । तान् **प्रतीत्य** प्राप्य चित्तं रूपादिविज्ञानं, चैत्ताश्चित्तात्मकाः सुखादयश्च, जायन्त इति **प्रतिज्ञार्थः** । **यथा**–नीलविज्ञानस्य नीलं वस्तु आलम्बनप्रत्ययो विषयः । चक्षुः करणम् अधिपतिप्रत्ययः, सहकारिप्रत्यय आलोकः । समन्तरपूर्वप्रत्ययः संस्कारः, इति भेदः । प्रतिज्ञाहानिपुरुषदोषमुक्त्वा वस्तुदोषमप्याह–**निर्हेतुकायाश्चेति**॥ सहेतुकत्वपक्षेऽन्वयिकारणस्य मृदादेः कार्यसहभावापत्त्या क्षणिकत्वप्रतिज्ञाहानिरिति सूत्रशेषं व्याचष्टे–**अथोत्तरक्षणेत्यादिना** ॥ सम्यक् क्रियन्त इति–संस्काराः । आद्यन्तवन्तो भावा इत्यर्थः ॥ २१ ॥

भामती ।

शाश्वतत्वमित्यपि द्रष्टव्यम् । शेषं निगदव्याख्यातम् ॥ २० ॥ **असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा** । नीलाभासस्य हि चित्तस्य नीलादालम्बनप्रत्ययान्नीलाकारता । समनन्तरप्रत्ययात्पूर्वविज्ञानाद्बोधरूपता । चक्षुषोऽधिपतिप्रत्ययाद्रूपग्रहणप्रतिनियमः । आलोकात्सहकारिप्रत्ययाद्धेतोः स्पष्टार्थता । एवं सुखादीनामपि चैत्तानां चित्ताभिन्नहेतुजानां चत्वार्येतान्येव कारणानि । सेयं प्रतिज्ञा चतुर्विधान् हेतून् प्रतीत्य चित्तचैत्ता उत्पद्यन्त इत्यभावकारणत्व उपरुध्येत । **अथोत्तरक्षणोत्पत्तिं यावदवतिष्ठत इति** । उत्पत्तिरुत्पद्यमानाद्भावादभिन्ना, तथा च क्षणिकत्वहानिरिति प्रतिज्ञाहानिः ॥ २१ ॥

आनन्दगिरीय–न्यायनिर्णयः ।

वेति विकल्प्याऽऽद्यं दूषयति–**असतीति** । सूत्रं व्याकर्तुं वृत्तं कीर्तयति–**क्षणेति** । तर्हि पूर्वक्षणस्योत्तरक्षणकारणत्वं मा भूत्तर्हि पूर्वक्षणाभावाद्वोत्तरक्षणस्योत्पत्तिस्तदभावे सति वा । नाऽऽद्यः । 'नासतोऽदृष्टत्वात्' इति वक्ष्यमाणत्वात् । द्वितीयमनुवदति–**अथेति** । निर्हेतुफलोत्पत्तिं प्रत्याह–**तत इति** । प्रतिज्ञोपरोधं स्फोरयति–**चतुर्विधानिति** । आलम्बनप्रत्ययः समनन्तरप्रत्ययोऽधिपतिप्रत्यय आलोकश्चेति चतुर्विधा हेतवस्तान्प्रतीत्य प्राप्य चित्तं चैत्ताश्च तदभिन्नाः सुखादयो जायन्ते । तत्र नीलाभासस्य चित्तस्य नीलादालम्बनप्रत्ययान्नीलाकारता । समनन्तरप्रत्ययात्पूर्वज्ञानाद्बोधरूपता । चक्षुषोऽधिपतिप्रत्ययाद्रूपग्रहणप्रतिनियमः । आलोकाद्धेतोः स्पष्टता । सुखादीनामपि चैत्तानां चित्ताभिन्नानामेतान्येव चत्वारि कारणानि । सेयं प्रतिज्ञा निर्हेतुफलोत्पत्तौ बाध्येतेत्यर्थः । तत्रैवातिप्रसङ्गं दोषान्तरमाह–**निर्हेतुकायां चेति** । अन्यथेति सूत्रावयवं शंकात्वेन व्याकरोति–**अथेति** । तथा च न प्रतिज्ञोपरोधातिप्रसङ्गाविति शेषः । उत्पत्तेरुत्पद्यमानाभेदमभ्युपयन्तं प्रति सूत्रावयवेनोत्तरमाह–**तत इति** । यौगपद्योपगमे का[illegible]हानिस्तत्राऽऽह–**तथाऽपीति** । पूर्ववदत्र प्रतिज्ञोपरोधो नास्तीत्याशंक्याऽऽह–**क्षणिका इति** । आद्यन्तवन्तो भावाः संस्काराः संस्क्रियन्ते समुत्पद्यन्त इति व्युत्पत्तेः ॥ २१ ॥ समुदायस्य

## प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

**अपि च वैनाशिकाः कल्पयन्ति-बुद्धिबोध्यं त्रयादन्यत्संस्कृतं, क्षणिकं चेति ॥ तदपि च त्रयं-प्रतिसंख्याऽप्रतिसंख्यानिरोधावाकाशं चेत्याचक्षते। त्रयमपि चैतदवस्त्वभावमात्रं निरुपाख्यमिति मन्यन्ते॥ बुद्धिपूर्वकः किल विनाशो भावानां प्रतिसंख्यानिरोधो नाम भाष्यते । तद्विपरीतोऽप्रतिसंख्यानिरोधः ॥ आवरणाभावमात्रमाकाशमिति ॥ तेषामाकाशं परस्तात्प्रत्याख्यास्यति ॥ निरोधद्वयमिदानीं प्रत्याचष्टे-प्रतिसंख्याऽप्रतिसंख्यानिरोधयोरप्राप्तिरसम्भव इत्यर्थः ॥ कस्मात् ॥ "अवि-**

---

रत्नप्रभा ।

एवमाद्यसूत्राभ्यां समुदायो निरस्तः । उत्तरसूत्राभ्यां कार्यकारणभावक्षणिकत्वे निरस्ते सम्प्रति तदभिमतं द्विविधं विनाशं दूषयति-**प्रतिसंख्येति** ॥ **संस्कृतम्**-उत्पाद्यम् । **बुद्धिबोध्यं** प्रमेयमात्रम् । त्रयात्तुच्छरूपादन्यदित्यर्थः । किं तत्त्रयं, तदाह-**तदपीति** ॥ **निरुपाख्यं** निःस्वरूपम् । **प्रतिसंख्या**-सन्तं भावमसन्तं करोमीत्येवंरूपा-**संख्या**-**बुद्धिः**-**प्रतिसंख्या** तया निरोधः कस्यचिद्भावस्य भवति । अबुद्धिपूर्वकस्तु स्तम्भादीनां स्वरसभंगुराणामित्याह-**विपरीत इति** ॥ परक्रियामुक्त्वा सूत्रं व्याचष्टे-**तेषामिति** ॥ **भावाः**-सन्तानिनः । **सन्तानो नाम**-भावानां हेतुफलभावेन प्रवाहः । तस्मिन् सन्ताने चरमक्षणः क्षणान्तरं करोति वा न वा, आद्ये चरमत्वव्याघातः । सन्तानाविच्छेदात् । द्वितीये चरमस्यासत्त्वप्रसङ्गः । अर्थक्रियाकारित्वं सत्त्वमिति तत्सिद्धान्तात् । चरमस्याऽसत्त्वे

भामती ।

**प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्** । भावप्रतीपा संख्या बुद्धिः प्रतिसंख्या, तया निरोधः प्रतिसंख्यानिरोधः । सन्तमिममसन्तं करोमीत्येवमाकारता च बुद्धेर्भावप्रतीपत्वम् । एतेनाप्रतिसंख्यानिरोधोऽपि व्याख्यातः । संतानगोचरो वा निरोधः, संतानिक्षणगोचरो वा । न तावत्संतानस्य निरोधः संभवति । हेतुफलभावेन हि व्यवस्थिताः संतानिन एवोदयव्ययधर्माणः संतानः । तत्र योऽसावन्त्यः संतानी यन्निरोधात्संतानोच्छेदेन भवितव्यं, स किं फलं किंचिदारभते न वा । आरभते चेत्, नान्त्यः । तथा च न संतानोच्छेदः । अनारम्भे तु भवेदन्त्यः सः, किंतु स्यादसन्, अर्थक्रियाकारितायाः सत्तालक्षणस्य विरहात् । तदसत्त्वे तज्जनकमप्यसज्जनकत्वेनासदित्यनेन क्रमेणासन्तः सर्व एव संतानिन इति तत्संतानो नितरामसन्निति कस्य प्रतिसंख्यया निरोधः । न च सभागानां संतानिनां हेतुफलभावः संतानः, तस्य विसभागोत्पादो निरोधः, विसभागोत्पादक एव च क्षणः संतानस्यान्त्यः । तथा सति रूपविज्ञानप्रवाहे

आनन्दगिरीय-न्यायनिर्णयः ।

कार्यकारणभावस्य क्षणिकत्वस्य चासिद्धिरुक्ता संप्रत्यभ्युपगमान्तरं प्रत्याह-**प्रतिसंख्येति** । सौगतमतासांगत्ये सूत्रस्य हेत्वन्तरपरत्वमाह-**अपि चेति** । तदेव वक्तुं तन्मतमनुभाषते-**वैनाशिका इति** । संस्कृतमुत्पाद्यं त्रयादन्यदित्युक्तम् । किं तत्त्रयं तदाह-**तदपीति** । तस्यापि क्षणिकत्वादुत्पाद्यत्वाच्च नान्यत्वप्रतियोगित्वमित्यशंक्याऽऽह-**त्रयमपीति** । वस्तुप्रतियोगिकान्यत्वं वस्त्वन्तरस्यापीत्याशंक्योक्तम्-**अभावेति** । अभावस्यापि प्रतियोगिद्वारा सोपाख्यत्वमित्याशंक्याऽऽह-**निरुपाख्यमिति** । प्रतीपा संख्या प्रतिसंख्या सन्तमिममसन्तं करोमीति धीस्तया निरोधस्तथेति व्युत्पादयति-**बुद्धीति** । स्तम्भादीनां प्रतिक्षणं स्वारसिको विनाश इत्यप्रतिसंख्यानिरोधं व्याचष्टे-**तद्विपरीत इति** । आवरणाभावव्यङ्ग्यं शब्दवद् द्रव्यं व्यवच्छेत्तुं मात्रपदम् । पराभ्युपगममुक्त्वा सूत्रविषयं परिशिनष्टि-**तेषामिति** । तात्पर्यमुक्त्वा प्रतिज्ञां विभजते-**प्रतिसंख्येति** । तत्र प्रश्नपूर्वकं हेतुमाह-**कस्मादिति** । हेतुं व्याख्यातुं

**च्छेदात्" । एतौ हि प्रतिसंख्याऽप्रतिसंख्यानिरोधौ सन्तानगोचरौ वा स्यातां भावगोचरौ वा ॥ न तावत्सन्तानगोचरौ सम्भवतः । सर्वेष्वपि सन्तानेषु सन्तानिनामविच्छिन्नेन हेतुफलभावेन सन्तानविच्छेदस्यासम्भवात् ॥ नापि भावगोचरौ सम्भवतः । न हि भावानां निरन्वयो निरुपाख्यो विनाशः सम्भवति ॥ सर्वास्वप्यवस्थासु प्रत्यभिज्ञानबलेनान्वय्यविच्छेददर्शनात् ॥ अस्पष्टप्रत्यभिज्ञानास्वप्यवस्थासु क्वचिद्दृष्टेनान्वय्यविच्छेदेनान्यत्रापि तदनुमानात् ॥ तस्मात्परपरिकल्पितस्य निरोधद्वयस्यानुपपत्तिः ॥ २२ ॥**

रत्नप्रभा ।

पूर्वेषामप्यसत्त्वप्रसङ्गः । अर्थक्रियाशून्यत्वात् । तस्मात्सन्तानस्याविच्छेदासम्भवान्निरोधाप्राप्तिरित्याह—**न तावदिति** ॥ न द्वितीयः—इत्याह—**नापीति** ॥ घटकपालचूर्णाद्यवस्थासु सेयं मृदिति प्रत्यभिज्ञानादन्वयभावस्य मृदादेर्नात्यन्तिकविनाश इत्यर्थः । बीजस्यांकुरादिषु प्रत्यभिज्ञानादर्शनादन्वयिनो विच्छेद इत्यत आह—**अस्पष्टेति** ॥ अंकुरादयः, अनुस्यूतान्वयिभावस्थाः, कार्यत्वात्, पटवदित्यन्वय्यविच्छेदसि-

भामती ।

रसादिविज्ञानोत्पत्तौ संतानोच्छेदप्रसङ्गः । कथंचित्सारूप्ये वा विसभागेऽप्यन्ततः सत्तया तदस्तीति न संतानोच्छेदः । तदनेनाभिसंधिनाह—**सर्वेष्वपि संतानेषु संतानिनामविच्छिन्नेन हेतुफलभावेन संतानविच्छेदस्यासंभवादिति । नापि भावगोचरौ संभवतः** प्रतिसंख्याऽप्रतिसंख्यानिरोधौ । अत्र तावदुत्पन्नमात्राप्रवृत्तस्य भावस्य न प्रतिसंख्यानिरोधः संभवति, तस्य पुरुषप्रयत्नापेक्षाभावादित्यस्त्येव दूषणं, तथापि दोषान्तरमुभयस्मिन्नपि निरोधे ब्रूते—**न हि भावानामिति** । यतो निरन्वयो विनाशो न संभवत्यतो निरुपाख्योऽपि न संभवति, तेनैवान्वयिना रूपेण भावस्य नष्टस्याप्युपाख्येयत्वात् । निरन्वयविनाशाभावे हेतुमाह—**सर्वास्वप्यवस्थास्विति** । यद्यदन्वयिरूपं तत्तत्परमार्थसद्भावः । अवस्थास्तु विशेषाख्या उपजनापायधर्माणः, तासां सर्वासामनिर्वचनीयतया स्वतो न परमार्थसत्त्वम् । अन्वय्येव तु रूपं तासां तत्त्वम् । तस्य च सर्वत्र प्रत्यभिज्ञायमानत्वान्न विनाश इत्यवस्थावतोऽविनाशान्नावस्थानां निरन्वयो विनाश इति । तासां तत्त्वस्यान्वयिनः सर्वत्राविच्छेदात् । स्यादेतत् । मृत्पिण्डमृद् घटमृत्कपालादिषु सर्वत्र मृत्तत्त्वप्रत्यभिज्ञानाद्भवत्वेवम् । तप्तोपलतलपतितनष्टस्य तूदबिन्दोः किमस्ति रूपमन्वयि प्रत्यभिज्ञायमानं, येनास्य न निरन्वयो नाशः स्यादित्यत आह—**अस्पष्टप्रत्यभिज्ञानास्वपीति** । अत्रापि

आनन्दगिरीय-न्यायनिर्णयः ।

विकल्पयति—**एतौ हीति** । भावशब्दः संतानिवाची । तत्राऽऽद्यं दूषयति—**तावदिति** । योऽसावन्त्यः संतानी स किंचिदारभते न वा । नाऽऽद्योऽन्त्यत्वासिद्धेः संतानानुच्छेदाच्च । द्वितीयेऽर्थक्रियाभावात्तदसत्त्वे तज्जनकमपि सर्वमसदित्यनेन क्रमेणासन्तः सर्वे संतानिनः स्युः । न च विजातीयक्षणोत्पादकत्वेनार्थक्रियाकारित्वं सजातीयानुत्पादकत्वेन च संतानोच्छित्तिरेकस्मिन्नेव संतानेऽनेकसंतानप्रसङ्गादतः संतानानुच्छेदान्न तद्गोचरौ निरोधावित्यर्थः । न द्वितीय इत्याह—**नापीति** । निरन्वयं व्याचष्टे—**निरुपाख्य इति** । घटकपालादिषु सर्वत्र सैवेयं मृदिति प्रत्यभिज्ञानादन्वयिनो नाशाभावावगतेरिति हेतुमाह—**सर्वास्विति** । बीजाङ्कुरादीनामुत्तरोत्तरकार्ये प्रत्यभिज्ञानाभावादन्वयिविच्छित्तिरित्याशंक्याऽऽह—**अस्पष्टेति** । तास्वपि नान्वयी विच्छिद्यते घटकपालादौ दृष्टेनान्वय्यविच्छेदेन विवादस्थलेऽपि तदनुमानात् । विमतं न निरन्वयविनाशि कार्यत्वाद् घटादिवदित्यर्थः । अन्वय्यविच्छेदेऽपि विच्छेदोऽवस्थानामात्यन्तिकः स्यादित्याशंक्य नावस्था निरन्वयनाशिन्यस्तासामनिर्वाच्यतयाऽन्वयिमात्रत्वात्तस्य च सत्त्वेनाधिष्ठानत्वादनाशादित्युपसंहरति—**तस्मादिति** ॥ २२ ॥ प्रतिसंख्यानिरोधान्तर्भूतमविद्यादिनिरोधं निरस्यति—

## उभयथा च दोषात् ॥ २३ ॥

योऽयमविद्यादिनिरोधः प्रतिसंख्याऽप्रतिसंख्यानिरोधान्तःपाती परपरिकल्पितस्स सम्यग्ज्ञानाद्वा सपरिकरात्स्यात्स्वयमेव वा । पूर्वस्मिन्विकल्पे निर्हेतुकविनाशाभ्युपगमहानिप्रसंगः । उत्तरस्मिंस्तु मार्गोपदेशानर्थक्यप्रसङ्गः ॥ एवमुभयथापि दोषप्रसंगादसमञ्जसमिदं दर्शनम् ॥ २३ ॥

## आकाशे चाविशेषात् ॥ २४ ॥

यच्च तेषामेवाभिप्रेतं निरोधद्वयमाकाशं च निरुपाख्यमिति । तत्र निरोधद्वयस्य निरुपाख्यत्वं पुरस्तान्निराकृतम् ॥ आकाशस्येदानीं निराक्रियते—आकाशे चायुक्तो निरुपाख्यत्वाभ्युपगमः । प्रतिसंख्याऽप्रतिसंख्यानिरोधयोरिव वस्तुत्वप्रतिपत्तेरविशेषात् । आगमप्रामाण्यात्तावत्—"आत्मन आकाशः सम्भूतः" [तै० उ० २ । १ । २] इत्यादि-

---

रत्नप्रभा ।

द्विरित्यर्थः । यस्माद्भावानां स्थायित्वं तस्मात्प्रतिक्षणनिरोधासम्भव इत्युपसंहारः ॥ २२ ॥ अविद्यादीनां प्रतिसंख्यानिरोधं तदभिमतं दूषयति—**उभयथेति** ॥ यमनियमादयः—**परिकराः** । सर्वं दुःखं क्षणिकमिति भावनोपदेशः—**मार्गोपदेशः** ॥ २३ ॥ **आगमप्रामाण्यादिति** । तत्राकाशस्य कार्यत्वोक्त्या घटादिवद्वस्तुत्वं प्रसिध्यतीत्यर्थः । नन्वागमप्रामाण्ये विप्रतिपन्नान् सुगतान् प्रति आकाशस्य वस्तुत्वं कथं

भामती ।

तत्तोयं तेजसा मार्तण्डमण्डलमम्बुदत्वाय नीयत इत्यनुमेयं, मृदादीनामन्वयिनामविच्छेददर्शनात् । शक्यं तत्र वक्तुम् 'उदविन्दौ च सिन्धौ च तोयभावौ न भिद्यते । विनष्टेऽपि ततो विन्दावस्ति तस्यान्वयोऽम्बुधौ ॥' तस्मान्न कश्चिदपि निरन्वयो नाश इति सिद्धम् ॥ २२ ॥ **उभयथा च दोषात्** । परिकरः सामग्री सम्यग्ज्ञानस्य यमनियमादिः श्रवणमननादिश्च । मार्गाः क्षणिकनैरात्म्यादिभावनाः । अतिरोहितमन्यत् ॥ २३ ॥ **आकाशे चाविशेषात्** । एतद्व्याचष्टे—**यच्च तेषामिति** । वेदप्रामाण्ये विप्रतिपन्नानपि प्रति शब्दगुणानुमेयत्वमाकाशस्य वक्तव्यम् । तथाहि—जातिमत्त्वेन सामान्यविशेषसमवायेभ्यो विभक्तस्य शब्दस्यास्पर्शत्वे सति बाह्यैकेन्द्रियग्राह्यत्वेन गन्धादिवद्गुणत्वमनुमितम् । नायमात्मगुणो बाह्येन्द्रियगोचरत्वात् । अत एव न मनोगुणः, तद्गुणानामप्रत्यक्षत्वात् । न पृथिव्यादिगुणः, तद्गुणगन्धादिसाहचर्यानुपलब्धेः । तस्माद्गुणो भूत्वा गन्धादिवदसाधारणेन्द्रियग्राह्यो

आनन्दगिरीय—न्यायनिर्णयः ।

**उभयथेति** । सूत्रं व्याकर्तुं विषयमुक्त्वा विकल्पयति—**योयमिति** । यमनियमादिसामग्री परिकरस्तत्सहितसम्यग्धीसाध्यश्चेदविद्यादिनिरोधस्तदा स्वमतहतिरित्याह—**पूर्वस्मिन्निति** । स्वयमेव चेदविद्यादिनिरोधस्तदा सर्वं क्षणिकमित्यादिभावनोपदेशवैयर्थ्यमित्याह—**उत्तरस्मिंस्त्विति** । सूत्रव्याख्यामुपसंहरति—**एवमिति** ॥ २३ ॥ निरोधद्वयं निरस्याऽऽकाशं निरस्यति—**आकाशे चेति** । सूत्रस्य संगतिमाह—**यच्चेति** । वृत्तमनूद्य पूर्वोत्तरसूत्रयोरपुनरुक्तं विषयमुक्त्वा प्रतिज्ञामाकाङ्क्षां पूरयन्व्याकरोति—**आकाशे चेति** । तत्र हेतुः—**प्रतिसंख्येति** । कथमावरणाभावमात्रे तस्मिन्वस्तुत्वधीस्तत्राऽऽह—**आगमेति** । तत्प्रामाण्येऽपि कथमाकाशे वस्तुत्वधीरित्याशंक्य तदुत्पत्तिवादिनीनां श्रुतीनां भूयस्त्वादित्याह—**आत्मन इति** । न हि निरुपाख्यं नरविषाणवदुत्पत्तुमर्हतीति भावः । आगमाप्रामाण्ये बौद्धा विवदन्ते तत्कथं तान्प्रत्यागमेन नभसो वस्तुत्व-

श्रुतिभ्य आकाशस्य च वस्तुत्वप्रसिद्धिः ॥ विप्रतिपन्नान्प्रति तु शब्दगुणानुमेयत्वं वक्तव्यम् ॥ गन्धादीनां गुणानां पृथिव्यादिवस्त्वाश्रयत्वदर्शनात् ॥ अपि चावरणाभावमात्रमाकाशमिच्छतस्तव एकस्मिन्सुपर्णे पतत्यावरणस्य विद्यमानत्वात्सुपर्णान्तरस्योत्पित्सतोऽनवकाशत्वप्रसंगः ॥ यत्रावरणाभावस्तत्र पतिष्यतीति चेत् ॥ येनावरणाभावो विशिष्यते तत्तर्हि वस्तुभूतमेवाकाशं स्यान्नावरणाभावमात्रम् ॥ अपि चावरणाभावमात्रमाकाशं मन्यमानस्य सौगतस्य स्वाभ्युपगमविरोधः प्रसज्येत–सौगते हि समये "पृथिवी–भगवन्किंसन्निश्रया" इत्यस्मिन्प्रश्नप्रतिवचनप्रवाहे पृथिव्यादीनामन्ते वायुः किंसन्निःश्रय इत्यस्य प्रश्नस्य प्रतिवचनं भवति "वायुराकाशसन्निश्रयः" इति । तदाऽऽकाशस्य वस्तुत्वेन समञ्जसं स्यात् ॥ तस्मादप्ययुक्तमाकाशस्यावस्तुत्वम् ॥ अपि च निरोधद्वयमाकाशं च त्रयमप्येतन्निरुपाख्यमवस्तु नित्यञ्चेति विप्रतिषिद्धम् । न ह्यवस्तुनो नित्यत्वमनित्यत्वं वा सम्भवति । वस्त्वा-

---

रत्नप्रभा।

सिध्यतीत्यत आह–विप्रतिपन्नानिति ॥ शब्दः, वस्तुनिष्ठः, गुणत्वाद्, गन्धादिवदित्यनुमानादाकाशस्य वस्तुत्वं सिध्यति । पृथिव्याद्यष्टद्रव्याणां श्रोत्रग्राह्यगुणाश्रयत्वायोगादित्यर्थः । आकाशस्य भावत्वं प्रसाध्याऽभावत्वं दूषयति–अपि चेति ॥ यथैकघटसत्त्वेऽपि घटसामान्याभावो नास्ति, तथैकपक्षिसत्त्वेऽपि मूर्तद्रव्यसामान्याभावात्मकाकाशो नास्त्येवेति पक्ष्यन्तरसञ्चारो न स्यादित्यर्थः । देशविशेषावच्छेदेनावरणाभावोऽस्तीत्याशंक्याभावावच्छेदकदेशविशेष एव–आकाशः । नाभाव इत्याह–यत्रेत्यादिना ॥ पतिष्यति पक्षी । सञ्चरिष्यतीत्यर्थः । आकाशस्यावस्तुत्वं स्वग्रन्थविरुद्धं चेत्याह–अपि चेति ॥ किं सम्यङ् निश्रय आश्रयोऽस्या इति–किंसन्निश्रया । अवस्तुनः शशविषाणस्याश्रयत्वादर्शनादिति भावः । व्याघातान्तरमाह–अपि चेति ॥ ध्वंसाप्रतियोगिताख्यो धर्मो नित्यत्वं नासति सम्भवति ।

भामती।

यद् द्रव्यमनुमापयति तदाकाशं पञ्चमं भूतं वस्त्विति । अपि चावरणाभावमाकाशमिच्छत इति ।

आनन्दगिरीय–न्यायनिर्णय ।

मुच्यते तत्राऽऽह–विप्रतिपन्नानिति । अनुमानमेव सूचयति–गन्धादीनामिति । शब्दो हि क्वचिदाश्रितो धर्मत्वाद्गन्धवदिति सामान्यतो धर्मसिद्धिः । शब्दश्च विशेषगुणोऽस्पर्शवत्त्वे सति बाह्यैकेन्द्रियग्राह्यजातिमत्त्वाद्गन्धवत् । स च प्रत्यक्षत्वे सत्ययावद् द्रव्यभावित्वेन स्पर्शवदसंबन्धाद्विशेषगुणतया दिक्कालमनोभिरसंसर्गाद्बाह्येन्द्रियग्राह्यतया चानात्मगुणत्वात्पारिशेष्यादष्टद्रव्यातिरिक्तद्रव्याश्रयस्तच्चाऽऽकाशमित्यर्थः । आगमादनुमानादनुभवाद्वा सोपाख्यमाकाशमित्युक्त्वाऽऽवरणाभावपक्षे दोषमाह–अपि चेति । यथैकघटसत्त्वेऽपि घटान्तरासत्त्वप्रयुक्त्या निर्घटं भूतलमित्यशक्यं वक्तुं, तथैकस्मिन्नावरणे सत्यावरणान्तराभावप्रयुक्त्याऽपि न तद्धीनतेति पक्ष्यन्तरसंचारो न स्यादित्यर्थः । देशावच्छेदेनाऽऽवरणाभावविभागं गृहीत्वा शंकते–यत्रेति । अभावस्य धर्मिप्रतियोग्यपेक्षत्वाद्धर्मिणो वस्तुत्वं स्यादित्याह–येनेति । इतश्चाऽऽकाशस्य वस्तुत्वमित्याह—अपि चेति । प्रसङ्गं प्रकटीकर्तुं स्वाभ्युपगममुपन्यस्यति–सौगते हीति । किं सम्यङ् निश्रितं निश्रयोऽधिकरणमस्या इति किंसंनिश्रया । कथमाकाशस्य वस्तुत्वाभावे तद्विरोधप्रसङ्गस्तत्राऽऽह–तदिति । आश्रयत्वं नावस्तुनो दृष्टमित्यर्थः । स्वाभ्युपगमविरोधप्रसङ्गफलमाह–तस्मादिति । निरोधद्वयस्याऽऽकाशस्य चावस्तुत्वे साधारणं दूषणमाह—अपि चेति । विप्रतिषेधं स्फोरयति–न हीति।

श्रयत्वाद्धर्मधर्मिव्यवहारस्य ॥ धर्मधर्मिभावे हि घटादिवद्वस्तुत्वमेव स्यान्न निरुपाख्यत्वम् ॥ २४ ॥

## अनुस्मृतेश्च ॥ २५ ॥

अपि च वैनाशिकः सर्वस्य वस्तुनः क्षणिकतामभ्युपयन्नुपलब्धुरपि क्षणिकतामभ्युपेयात् ॥ न च सा सम्भवति । "अनुस्मृतेः"—अनुभवमुपलब्धिमनूत्पद्यमानं स्मरणमेवानुस्मृतिः । सा चोपलब्ध्येककर्तृका सती सम्भवति । पुरुषान्तरोपलब्धिविषये पुरुषान्तरस्य स्मृत्यदर्शनात् ॥ कथं ह्यहमदोऽद्राक्षमिदं पश्यामीति च पूर्वोत्तरदर्शिन्येकस्मिन्नसति प्रत्ययस्स्यात् ॥ अपि च दर्शनस्मरणयोः कर्त्तर्येकस्मिन्प्रत्यक्षः प्रत्यभिज्ञाप्रत्ययः सर्वस्य प्रसिद्धोऽहमदोऽद्राक्षमिदं पश्यामीति ॥ यदि हि तयोर्भिन्नः कर्त्ता स्यात्, ततोऽहं स्मराम्यद्राक्षीदन्य इति प्रतीयात्, न त्वेवं प्रत्येति कश्चित् ॥ यत्रैवं प्रत्ययः, तत्र दर्शनस्मरणयोर्भिन्नमेव कर्त्तारं सर्वलोकोऽवगच्छति, स्मराम्यहमसावदोऽद्राक्षीदिति ॥

---

रत्नप्रभा ।

धर्मिणोऽसत्त्वव्याघातादित्यर्थः ॥ २४ ॥ आत्मनः क्षणिकत्वं दूषयति—अनुस्मृतेरिति ॥ अनुभवजन्या स्मृतिः—अनुस्मृतिः । तस्यामनुभवसमानाश्रयत्वात्तदुभयाश्रयात्मनः स्थायित्वमित्यर्थः । क्षणिकत्वज्ञानद्वयानुसन्धानं च न स्यादित्याह—कथं ह्यहमिति ॥ पूर्वदर्शनकर्तुरद्राक्षमिति स्मरणकर्त्रैक्यप्रत्यभिज्ञानाच्चात्मनः स्थायित्वमित्याह—अपि चेति ॥ योऽहमदः पूर्वमद्राक्षं स एवाहमद्य तत् स्मरामीति प्रत्यभिज्ञानाकारो द्रष्टव्यः । इदं पश्यामीति ज्ञानान्तरसम्बन्धकथनं—योऽहमद्राक्षं सोऽहं पश्यामीति प्रत्यभिज्ञानान्तरद्योतनार्थम् । विपक्षे बाधकमाह—यदि हीति ॥ द्रष्टृस्मर्त्रोर्भेदे अहं स्मरामि अन्योऽद्राक्षीदिति प्रतीतिः स्यादित्यत्र दृष्टान्तमाह—यत्रैवमिति ॥ प्रत्ययमाह—स्मरामीति ॥ स्मराम्यहमन्यो-

भामती ।

निषेध्यनिषेधाधिकरणनिरूपणाधीननिरूपणो निषेधो नासत्यधिकरणनिरूपणे शक्यो निरूपयितुम् । तच्चावरणाभावाधिकरणमाकाशं वस्त्विति । अतिरोहितार्थमन्यत् ॥ २४ ॥ अनुस्मृतेश्च । विभजते—अपि च वैनाशिकः सर्वस्य वस्तुन इति । यस्तु सत्यप्येतस्मिन्नुपलब्धृस्मर्त्रोरन्यत्वेऽपि समानायां संततौ कार्यकारणभावात् स्मृतिरुपपत्स्यत इति मन्यमानो न परितुष्यति तं प्रति प्रत्यभिज्ञासमाज्ञातप्रत्यक्षविरोधमाह—अपि च दर्शनस्मरणयोः कर्तरीति । ततोऽहमद्राक्षीदिति प्रतीयात्, अहं स्मराम्य-

आनन्दगिरीय—न्यायनिर्णयः ।

नाशाभावोपलक्षितसत्तायोगित्वं नित्यत्वम् । तद्विपरीतमनित्यत्वम् । तदुभयं न तुच्छस्य युक्तमित्यर्थः । वस्तुत्वाभावे धर्मधर्मिव्यवहाराविषयत्वमित्युक्तम् । इदानीं तद्विषयत्वे वस्तुत्वं स्यादित्याह—धर्मेति ॥ २४ ॥ संप्रत्यात्मनः स्थायित्वं विशेषतः साधयति—अनुस्मृतेश्चेति । सूत्रस्य वैनाशिकदर्शनानुपपत्तौ हेत्वन्तरपरत्वमाह—अपि चेति । तदेव वक्तुं परस्यावश्याश्रयणीयमर्थमाह—वैनाशिक इति । इष्टापत्तिमाशंक्याऽऽह—न चेति । उपलब्धुर्न क्षणिकता युक्तेत्यत्र हेतुमुक्त्वा व्याकरोति—अन्विति । अनुशब्दस्य व्यवच्छेद्याभावेऽपि स्मृत्युपलब्ध्योरेककर्तृकत्वार्थं विशेषणमित्याह—सा चेति । न केवलमुपलब्धिस्मृत्योरेवैककर्तृकत्वमुपलब्ध्योरपीत्याह—कथमिति । यस्तु सत्यपि भेदे संतानैक्यं स्मृतिप्रयोजकमिच्छति तं प्रत्याह—अपि चेति । पूर्वोत्तरप्रत्ययकर्तृभेदेऽपि संतानैक्यादेवंविधा धीरित्याशंक्याऽऽह—यदि हीति । कर्तृभेदे स्मराम्यहमन्योऽद्राक्षीदिति लोकस्य धीः स्यादित्यर्थः । ईदृश्येव धीरित्याशंक्याऽऽह—न त्विति । क्वचित्तादृश्या धियोऽनुभवासिद्धत्वमाशंक्याऽऽह—यत्रेति । कर्तृभेदावगतिमुदाहरति—स्मरामीति ।

**इह त्वहमदोऽद्राक्षमिति दर्शनस्मरणयोर्वैनाशिकोऽप्यात्मानमेवैकं कर्त्तारमवगच्छति, न नाहमित्यात्मनो दर्शनं निर्वृत्तं निह्नुते ॥ यथाऽग्निरनुष्णोऽप्रकाश इति वा ॥ तत्रैवं सत्येकस्य दर्शनस्मरणक्षणद्वयसम्बन्धे क्षणिकत्वाभ्युपगमहानिरपरिहार्या वैनाशिकस्य स्यात् ॥ तथाऽनन्तरामनन्तरामात्मन एव प्रतिपत्तिं प्रत्यभिजानन्नेककर्त्तृकाम् । ओत्तमादुच्छ्वासादतीताश्च प्रतिपत्तीरा जन्मन आत्मैककर्त्तृकाः प्रतिसन्दधानः कथं क्षणभंगवादी वैनाशिको नापत्रपेत ॥ स यदि ब्रूयात्सादृश्यादेतत्सम्पत्स्यत इति, तं प्रति ब्रूयात्–तेनेदं सदृशमिति द्वयायत्तत्वात्सादृश्यस्य क्षणभंगवादिनः सदृशयोर्द्वयोर्वस्तुनोर्ग्रहीतुरेकस्याभावात्सादृश्यनिमित्तं प्रतिसन्दधानमिति मिथ्याप्रलाप एव स्यात् ॥ स्याच्चेत्पूर्वो-**

रत्नप्रभा ।

ऽद्राक्षीदिति प्रत्ययो यत्र, तत्र भिन्नमेव कर्तारं लोकोऽवगच्छतीत्यविवादमित्यर्थः । प्रकृतप्रत्यभिज्ञाय तादृशभेदप्रत्ययस्य बाधकस्यादर्शनादात्मस्थायित्वं दुर्वारमित्याह–**इह त्वहमद इति** ॥ यथाग्नेरौष्ण्यादिकं न बाधते कश्चित् । **तथा** नाहमद्राक्षमिति पूर्वदर्शनं न निह्नुत इत्यनेन बाधाभावात् प्रत्यभिज्ञा प्रमेत्युक्तं भवति, **तथा** द्रष्टृस्मर्त्रोरैक्ये सति स्थायित्वं फलितमित्याह–**तत्रैवं सतीति** ॥ क्षणद्वयसम्बन्धेऽप्यात्मनस्तृतीयक्षणेभङ्गोऽस्त्विति वदन्तं प्रत्याह–**तथेति** ॥ वर्तमानदशामारभ्य ओत्तमाच्छ्वासाद्–आमरणाद् अनन्तरामनन्तरां स्वस्यैव प्रतिपत्तिमात्मैककर्तृकां प्रत्यभिजानन्ना जन्मनश्च वर्तमानदशापर्यन्तम् अतीताः प्रतिपत्तीः स्वकर्तृकाः प्रतिसन्दधानः सन्निति **योजना** । दीपज्वालास्विवाऽऽत्मनि प्रत्यभिज्ञानं सादृश्यदोषादिति शंकते–**स इति** ॥ सादृश्यज्ञानस्य धर्मिप्रतियोगिज्ञानाधीनत्वात् स्थिरस्य ज्ञातुरसत्त्वान्न सादृश्यज्ञानं सम्भवति । सत्त्वे वापसिद्धान्तः स्यादिति परिहरति–**तमित्यादिना** ॥ **स्यादेतत्**–न सादृश्यप्रत्ययः पूर्वोत्तरवस्तुद्वयज्ञानजन्यस्तद्वयसादृश्यावगाही । **किं तर्हि** । कश्चिदेष विकल्पः स्वाकारमेव बाह्यत्वेन विषयीकुर्वाणः क्षणान्तरास्पर्शी । अतो न स्थिरद्रष्ट्रपेक्षेति शंकते–**तेनेदमिति** ॥

भामती ।

न्यस्त्वद्राक्षीदित्यर्थः । प्रत्यभिज्ञाप्रत्यक्षविरोधप्रपञ्चस्तूत्तरः । **आ जन्मनः, आ चोत्तमादुच्छ्वासात्** । आ मरणादित्यर्थः । न च सादृश्यनिबन्धनं प्रत्यभिज्ञानं, पूर्वापरक्षणदर्शिन एकस्याभावे तदनुपपत्तेः । शङ्कते–**तेनेदं सदृशमिति** । अयमर्थः–विकल्पप्रत्ययोऽयं, विकल्पश्च स्वाकारं बाह्यतयाध्यवस्यति, न तु

आनन्दगिरीय–न्यायनिर्णयः ।

कश्चित्तयोर्विभिन्नकर्तृकत्वे दृष्टिस्मृतित्वाविशेषादहमदोऽद्राक्षमित्यत्रापि तयोर्भिन्नकर्तृकत्वमनुमेयमित्याशंक्यानुभवविरोधमाह–**इहेति**। अवगतिमनवगतिव्युदासेन स्फोरयति–**न नेति**। यदात्मनो दर्शनं पूर्वं निर्वृत्तं तदहं नाद्राक्षमिति न निह्नुते किं त्वनुमन्यते परोऽपीत्यर्थः । प्रत्यक्षविरोधादनुमानानुदये दृष्टान्तमाह–**यथेति** । एतद्घटस्मर्तैतद् घटानुभवितैतद् घटज्ञातृत्वात्संप्रतिपन्नव्यक्तिवदिति मत्वा फलितमाह–**तत्रेति** । दर्शने स्मरणे चोक्तरीत्या कर्त्रैक्ये सतीति यावत् । दृष्टिस्मृतिक्षणद्वयवर्तित्वमेकस्यास्मा भिरिष्यते क्षणिकत्वं त्वाशुतरविनाशित्वादित्याशंक्याऽऽह–**तथेति** । स्वरसभंगुरत्ववदाशुतरविनाशित्वमपि भावानां प्रत्यभिज्ञाविरुद्धमित्यर्थः । विरोधमेव स्फोरयति–**अनन्तरामिति** । वर्तमानदशामारभ्योत्तमादुच्छ्वासादा मरणादनन्तरामनन्तरां स्वस्यैव प्रतिपत्तिमात्मैककर्तृकां प्रत्यभिजानन्ना जन्मनश्च वर्तमानदशापर्यन्तमतीताः प्रतिपत्तीः स्वकीयाः स्वमात्रकर्तृकाः प्रतिसंदधानः सन्निति योजना । आत्मनि प्रत्यभिज्ञानं ज्वालादाविव सादृश्यकृता भ्रान्तिरिति शंकते–**स इति** । एकस्य पूर्वोत्तरक्षणद्वयतत्सादृश्यदृशोऽसत्त्वं सत्त्वं वेति विकल्पयति–**तमिति** । असत्त्वं प्रत्याह–**तेनेति** । सत्त्वमनूद्य निराह–**स्याच्चेदिति** । तेनेदं सदृशमित्ययं

तयोः क्षणयोः सादृश्यस्य ग्रहीतैकः ॥ तथा सत्येकस्य क्षणद्वयाव-स्थानात्क्षणिकत्वप्रतिज्ञा पीड्येत ॥ तेनेदं सदृशमिति प्रत्ययान्तरमेवेदं न पूर्वोत्तरक्षणद्वयग्रहणनिमित्तमिति चेत् ॥ न ॥ तेनेदमिति भिन्नपदा-र्थोपादानात् । प्रत्ययान्तरमेव चेत्सादृश्यविषयं स्यात् । तेनेदं सदृ-शमिति वाक्यप्रयोगोऽनर्थकः स्यात् ॥ सादृश्यमित्येव प्रयोगः प्राप्नु-यात् ॥ यदा हि लोकप्रसिद्धः पदार्थः परीक्षकैर्न परिगृह्यते, तदा स्वप-क्षसिद्धिः परपक्षदोषो वोभयमप्युच्यमानं परीक्षकाणामात्मनश्च यथा-

रत्नप्रभा ।

अत्र वक्तव्यम् । सादृश्यप्रत्यये । 'तेन' 'इदं' 'सदृशम्' इति वस्तुत्रयं भासते न वेति । नेति वदतः स्वानुभवविरोधः । किञ्चार्थभेदाभावात् पदत्रयप्रयोगो न स्यात् । तस्मात्पदत्रयेण मिथः संसृष्टभिन्नार्थ-भानादभानमसिद्धमिति परिहरति—न तेनेति ॥ अथ भासते वस्तुत्रयम् । तच्च प्रत्ययाभिन्नमेव, न बाह्यमिति चेत् । न । त्रयाणामेकप्रत्ययाभेदे मिथोऽप्यभेदापत्तेः। इष्टापत्तिरिति ब्रुवाणं विज्ञानवादिनं प्रत्याह-यदा हीति ॥ वस्तुत्रयं ज्ञेयं सादृश्यप्रत्ययाद्भिन्नं सर्वलोकप्रसिद्धम् । तच्च नांगीक्रियते स्थायिद्र-

भामती ।

तत्त्वतः पूर्वापरौ क्षणौ तयोः सादृश्यं वा गृह्णाति । तत्कथमेकस्यानेकदर्शिनः स्थिरस्य प्रसङ्ग इति । निराकरोति—न । तेनेदमिति भिन्नपदार्थोपादानादिति । नानापदार्थसंभिन्नवाक्यार्थाभासस्तावदयं विकल्पः प्रथते तत्रैते नानापदार्था न प्रथन्त इति ब्रुवाणः स्वसंवेदनं बाधेत । न चैकस्य ज्ञानस्य नाना-कारत्वं संभवति, एकत्वविरोधात् । न च तावन्त्येव ज्ञानानीति युक्तं, तथा सति प्रत्याकारं ज्ञानानां समाप्तेस्तेषां च परस्परवार्ताज्ञानाभावान्नानेत्येव न स्यात् । तस्मात् पूर्वापरक्षणतत्सादृश्यगोचरत्वं ज्ञानस्य वक्तव्यम् । न चैतत्पूर्वापरक्षणावस्थायिनमेकं ज्ञातारं विनेति क्षणभङ्गभङ्गप्रसङ्गः । यद्युच्येत अस्त्येतस्मिन् विकल्पे तेनेदं सदृशमिति पदद्वयप्रयोगो न त्विह तत्तेदन्तास्पदौ पदार्थौ तयोश्च सादृश्यमिति विवक्षितम्, अपि त्वेवमाकारता ज्ञानस्य कल्पितेति, तत्राह—यदा हि लोकप्रसिद्धः पदार्थ इति । एकाधिकरण-विप्रतिषिद्धधर्मद्वयाभ्युपगमो विवादः । तत्रैकः स्वपक्षं साधयत्यन्यश्च तत्साधनं दूषयति । न चैतत्सर्व-

आनन्दगिरीय—न्यायनिर्णयः ।

विकल्पप्रत्ययः, स च स्वाकारं बाह्यतयाऽध्यस्यति । तत्त्वतस्तु पूर्वापरौ क्षणौ तयोः सादृश्यं वा न गृह्णाति तत्कथमेकस्य द्रष्टुः स्थायितेति शंकते—तेनेति । वस्तुद्वयप्रत्ययादन्यत्वधिया सादृश्यप्रत्ययस्यान्तरशब्दस्त-थाऽपि तत्र वस्तुद्वयप्रत्ययस्य निमित्तत्वादेकेन क्षणत्रयस्थायिना भाव्यमित्याह—नेति । तेनेदं सदृश-मिति ज्ञाने तत्तेदंतावच्छिन्नावर्थौ तयोः सादृश्यं च किं न भासते । भासमाना वा विज्ञानस्याऽऽका-रास्तस्माज्ज्ञानाद्भिन्ना न वा । ज्ञानाकारत्वे ज्ञानमेकमनेकं वा । तत्राऽऽद्ये स्वसंवेदनविरोधः स्यादित्याह—तेनेति । भासमानानां त्रयाणां ज्ञानाकारत्वे तस्य चैक्ये व्याघातः । एकस्यानेकाकारत्वायोगात् । आकारभेदे च तद्भेदात् । न च ज्ञानानेकत्वमेकज्ञानेन हि नानापदार्थोल्लेखे नानेत्युल्लेखो न ज्ञानभेदः । परिशेषाज्ज्ञानाद्भिन्नोऽर्थस्तस्य च नानाकारस्य तत्तेदंतास्पदस्य तत्सादृश्यस्य च परामर्शः स्थायिन्या-त्मनि सति स्यादिति मत्वोक्तमेव व्यनक्ति—प्रत्ययान्तरमिति । ननु नार्थस्य ज्ञाने मानमवजानीमहे येन प्रतीतिं विरुध्येमहि किंतु सोऽर्थः प्रतीतावारोपितो न बहिरस्ति । न च प्रतीतितावन्मात्रेऽर्थस्य ज्ञाने-ऽध्यस्तत्वाच्चतश्च न ज्ञानस्यैकस्य नानार्थाकारत्वकृतो व्याघातो न च बाह्यार्थावगमस्तत्राऽऽह—यदेति । कल्पितोऽपि विज्ञानेऽर्थाकारस्तस्माद्भिन्नोऽभिन्नो वेति वक्तव्यम् । अनिर्वाच्यत्वानंगीकारात् । भिन्नत्वे ज्ञाना-

**र्थत्वेन न बुद्धिसन्तानमारोहति, एवमेवैषोऽर्थ इति निश्चितं यत्तदेव वक्तव्यम् ॥ ततोऽन्यदुच्यमानं बहुप्रलापित्वमात्मनः केवलं प्रख्यापयेत् ॥**

रत्नप्रभा।

ष्टप्रसङ्गभयेन, तर्हि तत्तदाकाराणां क्षणिकविज्ञानानां मिथोवार्तानभिज्ञत्वादेकस्मिन् धर्मिणि विरुद्धानेकपक्षस्फुरणात्मकविप्रतिपत्त्यसम्भवात् स्वपक्षसाधनादिव्यवहारो लुप्येत। अतो यथानुभवं ज्ञानज्ञेयभेदोऽङ्गीकार्यः। तथा च तेनेदं सदृशमिति बाह्यार्थयोर्ज्ञानपूर्वकं सादृश्यं जानत आत्मनः स्थायित्वं दुर्वारमित्यर्थः। **ननु** सन्त्येव बाह्यार्थाः क्षणिकस्वलक्षणा निर्विकल्पकग्राह्याः। सविकल्पाध्यवसेयास्तु स्थायित्वसादृश्यादयो बाह्याः कल्पिता अवभासन्ते। अतो विप्रतिपत्त्यादिव्यवहार इति बाह्यार्थवादमाशंक्य निरस्यति—**एवमेवेति ॥ यत्** प्रमाणसिद्धं, **तदेव वक्तव्यम्। न हि** क्षणिकत्वे किञ्चित् प्रगाणमस्ति। **न चेदानीं** घट इति प्रत्यक्षमवर्तमानकालासत्त्वं घटस्य गोचरयद्वर्तमानक्षणमात्रसत्स्वरूपे क्षणिकत्वे मानमिति **वाच्यम्।** तस्य वर्तमानत्वमात्रगोचरत्वेन कालान्तरासत्त्वासिद्धेः। **न च** यत् सत्, तत् क्षणिकमिति व्याप्तिरस्ति। विद्युदादेरपि द्वित्रिक्षणस्थायित्वेन

भामती।

ग्सति विकल्पानां बाह्यालम्बनत्वेऽसति च लोकप्रसिद्धपदार्थकत्वे भवितुमर्हति। ज्ञानाकारत्वे हि विकल्पप्रतिभासिनां नित्यत्वानित्यत्वादीनामेकार्थविषयत्वाभावात्, ज्ञानानां च धर्मिणां भेदान्न विरोधः। न ह्यात्मनित्यत्वं बुद्ध्यनित्यत्वं च ब्रुवाणौ विप्रतिपद्यते। न चालौकिकार्थेनानित्यशब्देनात्मनि विभुत्वं विवक्षित्वाऽनित्यशब्दं प्रयुञ्जानो लौकिकार्थं नित्यशब्दमात्मनि प्रयुञ्जानेन विप्रतिपद्यते। तस्मादनेन स्वपक्षं प्रतिष्ठापयिषता परपक्षसाधनं च निराचिकीर्षता विकल्पानां लोकसिद्धपदार्थकता बाह्यालम्बनता च वक्तव्या। यद्युच्येत द्विविधो हि विकल्पानां विषयो ग्राह्यश्चाध्यवसेयश्च। तत्र स्वाकारो ग्राह्योऽध्यवसेयस्तु बाह्यः। तथा च पक्षप्रतिपक्षपरिग्रहलक्षणा विप्रतिपत्तिः प्रसिद्धपदार्थकत्वं चोपपद्यत इत्यत आह—**एवमेवैषोऽर्थ इति निश्चितं यत्तदेव वक्तव्यं, ततोऽन्यदुच्यमानं बहुप्रलापित्वमात्मनः केवलं प्रख्यापयेत्।** अयमभिसंधिः—केयमध्यवसेयता बाह्यस्य। यदि ग्राह्यता न द्वैविध्यम्। अथान्या सोच्यतां, ननूक्ता तैरेव स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तिरिति। अथ विकल्पाकारस्य कोऽयमध्यवसायः। किं करणमाहो योजनमुतारोप इति। न तावत् करणम्। न ह्यन्यदन्यत् कर्तुं शक्यम्। न हि जातु सहस्रमपि शिल्पिनो घटं पटयितुमीशते। न चान्तरं बाह्येन योजयितुम्। अपि च तथा सति युक्त इति प्रत्ययः स्यात्। न चास्ति। आरोपोऽपि किं गृह्यमाणे बाह्ये उतागृह्यमाणे? यदि गृह्यमाणे तदा किं विकल्पेनाहो तत्समयजेनाविकल्पकेन। न तावद्विकल्पोऽभिलापसंसर्गयोग्यगोचरोऽशक्याभिलापसमयं स्वलक्षणं देशकालाननुगतं गोचरयितुमर्हति। यथाहुः—'अशक्यसमयो ह्यात्मा सुखादीनामनन्यभाक्। तेषामतः स्वसंवित्तिर्नाभिजल्पानुषङ्गिणी ॥' इति। न च तत्समयभाविना निर्विकल्पकेन गृह्यमाणे बाह्ये

आनन्दगिरीय–न्यायनिर्णयः।

न्तरवदकल्पितत्वं, तथाच तेनेदमिति सदृशमिति चभातानामर्थानामेकज्ञानाभेदोपगमे मिथोऽप्यभेदः स्यात्ततश्चान्योन्यभेदेन पदार्था लोकसिद्धा निह्नूयेरन्। ज्ञानाच्च ज्ञेयस्य भेदः प्रसिद्धः सोऽपि निह्नूयेत तदपह्नवे च स्वपक्षसाधनपरपक्षाक्षेपासिद्धिः। विकल्पप्रतिभासिनां नित्यत्वादीनामेकार्थनिष्ठत्वाभावादेकाधिकरणविप्रतिषिद्धधर्मद्वयोपगमरूपविप्रतिपत्तेरसंभवादिति भावः। तत्तेदंतादिरर्थो ज्ञानस्याऽऽन्तर आकार इति मतं बाह्यार्थवाददूषणमध्येऽपि प्रसङ्गादाशंक्य निरस्तम्। इदानीमस्ति बाह्योऽर्थः स तु क्षणिको निर्विकल्पके चकास्ति सविकल्पकप्रत्ययास्तु विकल्पास्तद्गतसादृश्याद्याकारेण निर्भासन्ते। तेन विप्रतिपत्त्यादिव्यवहारसिद्धिरिति बाह्यार्थवादमाशंक्य निरस्यति—**एवमिति। न हि** बाह्यस्यार्थस्य क्षणिकत्वं प्रमाणाभावान्न तावत्प्रत्यक्षं वर्तमानमर्थमवगाहमानं तस्यावर्तमानव्यावृत्तिं गमयति, तद्धि वर्तमान-

**न चायं सादृश्यात्संव्यवहारो युक्तः ॥ तद्भावावगमात् । तत्सदृशभावानवगमाच्च । भवेदपि कदाचिद्बाह्यवस्तुनि विप्रलम्भसम्भवात्तदेवेदं स्यात्तत्सदृशं वेति सन्देहः ॥ उपलब्धरि तु सन्देहोऽपि न कदाचिद्भवति स एवाहं स्यां तत्सदृशो वेति य एवाऽहं पूर्वेद्युरद्राक्षं स एवाहमद्य स्मरामीति निश्चितात्तद्भावोपलम्भात् ॥ तस्मादप्यनुपपन्नो वैनाशिकसमयः ॥ २५ ॥**

---

रत्नप्रभा ।

दृष्टान्ताभावात् । न च स्थायिनमनुमातारमन्तरेणानुमानं सम्भवति । तस्मादनुमानसिद्धार्थवक्ता तथागतोऽश्रद्धेयवचन इत्यर्थः । किञ्च सादृश्यं प्रत्यभिज्ञायां दोषतया निमित्तं, विषयतया वा । आद्येऽपि स्वरूपसत्, ज्ञातं वा । नाद्यः मन्दान्धकारे शुक्तिमात्रग्रहे श्वैत्याज्ञानेऽपि रूप्याभेदभ्रमापत्तेः । न द्वितीयः स्थायिज्ञातारं विना तज्ज्ञानासम्भवस्योक्तत्वात् । नापि विषयतया निमित्तमित्याह—न चेति ॥ सोऽहमित्युल्लेखात्तेनाहं सदृश इत्यनुल्लेखादित्यर्थः । सोऽहमिति प्रत्यभिज्ञाया भ्रमत्वं निरस्य संशयत्वं निरस्यति—भवेदिति ॥ जडार्थे प्रत्यभिज्ञातेऽपि बाधसम्भावनया संशयः कदाचित् स्यान्नात्मनीत्यर्थः । असन्दिग्धाविपर्यस्तप्रत्यभिज्ञाविरोधादात्मक्षणिकत्वमतमत्यन्तासङ्गतमित्युपसंहरति—तस्मादिति ॥ २५ ॥ "अभावः शशविषाणवदत्यन्तासन्नित्यङ्गीकृत्य मृदादिनाशादसतो घटादिकं

भामती ।

विकल्पेनागृहीते तत्र विकल्पः स्वाकारमारोपयितुमर्हति । न हि रजतज्ञानाप्रतिभासिनि पुरोवर्तिनि वस्तुनि रजतज्ञानेन शक्यं रजतमारोपयितुम् । अगृह्यमाणे तु बाह्ये स्वाकार इत्येव स्यान्न बाह्य इति । तथा च नारोपणम् । अपि चायं विकल्पः स्वसंवेदनं सन्तं विकल्पं किं वस्तुसन्तं स्वाकारं गृहीत्वा पश्चाद्बाह्यमारोपयति, अथ यदा स्वाकारं गृह्णाति तदैवारोपयति । न तावत् क्षणिकतया क्रमविरहिणो ज्ञानस्य क्रमवर्तिनी ग्रहणारोपणे कल्पेते । तस्माद्यदैव स्वाकारमनर्थं गृह्णाति तदैवार्थमारोपयतीति वक्तव्यम् । न चैतद्युज्यते । स्वाकारो हि स्वसंवेदनप्रत्यक्षतयातिविशदः । बाह्यं चारोप्यमाणमविशदं सत्ततोऽन्यदेव स्यान्न तु स्वाकारः समारोपितः । न च भेदाग्रहमात्रेण समारोपाभिधानं,वैशद्यावैशद्यरूपतया भेदग्रहस्योक्तत्वात् । अपि चागृह्यमाणे चेद्बाह्येऽबाह्यात्स्वलक्षणाद्भेदाग्रहेण तदभिमुखो प्रवृत्तिः, हन्त तर्हि त्रैलोक्यत एवानेन न भेदो गृहीत इति यत्र क्वचन प्रवर्तेताविशेषात् । एतेन ज्ञानाकारस्यैवालोकस्यापि बाह्यत्वसमारोपः प्रत्युक्तः । तस्मात्सुष्ठूक्तं 'ततोऽन्यदुच्यमानं बहुप्रलापित्वमात्मनः ख्यापयेत्' इति । अपि च सादृश्यनिबन्धनः संव्यवहारस्तेनेदं सदृशमित्येवमाकारबुद्धिनिबन्धनो भवेन्न तु तदेवेदमित्याकारबुद्धिनिबन्धन इत्याह—न चायं सादृश्यात्संव्यवहार इति । ननु ज्वालादिषु सादृश्यादसत्यामपि सादृश्यबुद्धौ तद्भावावगमनिबन्धनः संव्यहारो दृश्यते यथा तथेहापि भविष्यतीति पूर्वोपरितोषेणाह—भवेदपि कदाचिद्बाह्यवस्तुनीति । तथाहि—विविधजनसंकीर्णगोपुरेण पुरं निविशमानं नरान्तरेभ्य

आनन्दगिरीय—न्यायनिर्णयः ।

ताविशिष्टस्य तदैवान्यव्यावृत्तिं गमयेदन्यदा वा । प्रथमे नास्मत्पक्षक्षतिरेकस्यापर्यायेणानेककालकलितत्वानभ्युपगमात् । न द्वितीयः, विरोधमन्तरेण कालान्तरीयसत्त्वव्यवच्छेदकत्वानुपपत्तेः । नापि यत्सत्तत्क्षणिकं यथा दीपः सन्तश्च भावा इत्यनुमानं क्षणिकत्वसाधकं दृष्टान्तस्य साध्यविकलत्वात् । तस्य नाशित्वेऽपि विवक्षितक्षणिकत्वाभावात्तस्मादनिश्चितार्थवादिनो विप्रलम्भकत्वान्न प्रतिवादितेत्यर्थः । आत्मनि प्रत्यभिज्ञा न सादृश्यादित्यत्र हेत्वन्तरमाह—न चेति । प्रत्यभिज्ञाया विपर्यासाख्यमप्रामाण्यं निरस्य संशयाख्यमपि तन्निरस्यति—भवेदिति । संशयसामग्रीसत्त्वावस्था कदाचिदित्युक्ता । संभवो नानाकारत्वोपपत्तिः । संदेहोऽपीत्यपिना विपर्यासो दृष्टान्तितः । तत्र संदेहायोगे हेतुमाह—य इति । प्रत्यभिज्ञयाऽऽत्मनः स्थायित्वे फलितमाह—तस्मादिति ॥ २५ ॥ कारणाभावात्कार्योत्पत्तिरिति पक्षमवशिष्टं

## नासतोऽदृष्टत्वात् ॥ २६ ॥

**इतश्चानुपपन्नो वैनाशिकसमयः ॥ यतः स्थिरमनुयायि कारणमनभ्युपगच्छतामभावाद्भावोत्पत्तिरित्येतदापद्यते ॥ दर्शयन्ति चात्राभावाद्भावोत्पत्तिं "नानुपमृद्य प्रादुर्भावाद्" इति विनष्टाद्धि किल बीजादंकुर उत्पद्यते ॥ तथा विनष्टात्क्षीराद्दधि मृत्पिण्डाच्च घटः ॥ कूटस्थाच्चेत्कारणात्कार्यमुत्पद्येत, अविशेषात्सर्वं सर्वत उत्पद्येत ॥**

रत्नप्रभा।

जायते" इति सुगता वदन्ति। तद्दूषयति—**नासत इति** ॥ न केवलं बलादापद्यते। किन्तु स्वयं दर्शयन्ति च। द्वौ नञौ प्रकृतार्थं गमयतः। मृदादिकं उपमृद्य घटादेः प्रादुर्भावादितीममर्थमाह—**विनष्टादिति** ॥ कारणविनाशात् कार्यजन्मेत्यत्र युक्तिमाह—**कूटस्थादिति** ॥ विनाशशून्यादित्यर्थः। नित्यस्य निरतिशयस्य कार्यशक्तत्वे तत्कार्याणि सर्वाण्येकस्मिन्नेव क्षणे स्युः। तथा चोत्तरक्षणे कार्य्याभावादसत्त्वापत्तिः। न च सहकारिकृतातिशयक्रमात् कार्यक्रम इति युक्तम्। अतिशयस्यातिशयान्तरापेक्षायाम् अनवस्थानात् अनपेक्षायां कार्यस्याप्यतिशयानपेक्षत्वेन सहकारिवैयर्थ्यात्। तस्मान्न स्थायिभावात् कार्य्यजन्मेत्यर्थः। क्षणिकभावस्य हेतुत्वम् "उत्तरोत्पादे च" [ न्या० सू० २।२।

भामती।

आत्मनिर्धारणायासाधारणं चिह्नं विदधतमुपहसन्ति पाशुपतं पृथग्जना इति ॥ १९ ॥ **नासतोऽदृष्टत्वात्। इतश्चानुपपन्नो वैनाशिकसमय इति।** अस्थिरात् कार्योत्पत्तिमिच्छन्तो वैनाशिका अर्थादभावादेव भावोत्पत्तिमाहुः। उक्तमेतदधस्तात्। निरपेक्षात् कार्योत्पत्तौ पुरुषकर्मवैयर्थ्यम्। सापेक्षतायां च क्षणस्याभेद्यत्वेनोपकृतत्वानुपकृतत्वानुपपत्तेः, अनुपकारिणि चापेक्षाभावादक्षणिकत्वप्रसङ्गः। सापेक्षत्वानपेक्षत्वयोश्चान्यतरनिषेधस्यान्यतरविधाननान्तरीयकत्वेन प्रकारान्तराभावान्नास्थिराद्भावाद्भावोत्पत्तिरिति क्षणिकपक्षेऽर्थादभावाद्भावोत्पत्तिरिति परिशिष्यत इत्यर्थः। न केवलमर्थादापद्यते, दर्शयन्ति च—**नानुपमृद्य प्रादुर्भावात्** इति एतद्विभजते—**विनष्टाद्धि**। **किलेति**। किलकारोऽनिच्छायाम्। **कूटस्थाच्चेत्कारणात् कार्यमुत्पद्येतापि सर्वं सर्वत उत्पद्येत**। अयमभिसंधिः—कूटस्थो हि कार्यजननस्वभावो वा स्यादतत्स्वभावो वा। स चेत्कार्यजननस्वभावस्ततो यावदनेन कार्यं कर्तव्यं तावत्सहसैव कुर्यात्। समर्थस्य क्षेपायोगात्। अतत्स्वभावे तु न कदाचिदपि कुर्यात्। यद्युच्येत समर्थोऽपि क्रमवत्सहकारिसचिवः क्रमेण कार्याणि करोतीति। तदयुक्तम्। विकल्पासहत्वात्। किमस्य सहकारिणः

आनन्दगिरीय-न्यायनिर्णयः।

निराचष्टे—**नासत इति**। परमतायोगे हेत्वन्तरपरत्वं सूत्रस्य दर्शयति—**इतश्चेति**। तदेव स्फोरयति—**यत इति**। अस्थिरात्कारणात्कार्योत्पत्तिमिच्छतामभावाद्भावोत्पत्तिर्बलादापततीत्येव न किंतु स्वयमपि वैनाशिकास्तथोपयन्तीत्याह—**दर्शयन्तीति**। तद्व्याचष्टे—**विनष्टादिति**। हिशब्दस्तदिच्छायाम्। स्वानिच्छायां किलकारः। विनष्टाद्बीजादेरंकुरादिजन्मेत्यत्र युक्तिमाह—**कूटस्थादिति**। कारणं समर्थमसमर्थं वा। यद्यसमर्थं न कदाचिदपि कार्यं कुर्यात्। आद्ये समर्थस्य क्षेपायोगादपर्यायेणाशेषं कार्यं जनयेत्ततश्चोत्तरक्षणेऽर्थक्रियाभावादसत्त्वम्। न च समर्थमपि सहकारिसंनिधिमपेक्ष्य जनकं सहकारिणा वस्तुतोऽतिशयजनने तस्य समर्थत्वे सदा तज्जननादसमर्थत्वे कदाचिदपि तज्जन्मायोगात्सहकारिणोऽपि सहकार्यन्तरापेक्षायामनवस्थानाद्वस्तुनश्चातिशयस्य भेदे तस्यैव प्राप्ताप्राप्तविवेकेन जनकतया वस्तुनस्तदसिद्धिरभेदे तस्यैव जन्यतया क्षणिकस्य जनकत्वापत्तिरतिशयानाधाने सहकार्यपेक्षैव न स्यादि-

तस्मादभावग्रस्तेभ्यो बीजादिभ्योंकुरादीनामुत्पद्यमानत्वाद भावांद्भावोत्पत्तिरिति मन्यन्ते ॥ तत्रेदमुच्यते ॥ "नासतोऽदृष्टत्वात्" इति ॥ नाभावाद्भाव उत्पद्यते। यद्यभावाद्भाव उत्पद्येत,अभावत्वाविशेषात्कारणविशेषाभ्युपगमोऽनर्थकः स्यात्। न हि बीजादीनामुपमृदितानां योऽभावस्तस्य च शशविषाणादीनां च निःस्वभावत्वाविशेषादभावत्वे कश्चिद्विशेषोऽस्ति॥ येन बीजादेवांकुरो जायते क्षीरादेव दधीत्येवञ्जातीयकः कारणविशेषाभ्युपगमोऽर्थवान्स्यात्। निर्विशेषस्य त्वभावस्य कारणत्वाभ्युपगमे शशविषाणादिभ्योऽप्यंकुरादयो जायेरन्॥ न चैवं दृश्यते ॥ यदि पुनरभावस्यापि विशेषोऽभ्युपगम्येत, उत्पलादीनामिव नीलत्वादिस्ततो विशेषवत्त्वादेवाभावस्य भावत्वमुत्पलादिवत्प्रसज्येत॥ नाप्यभावः कस्यचिदुत्पत्तिहेतुः स्यात ॥ अभावत्वादेव-

रत्नप्रभा ।

२० ] इत्यत्र निरस्तम् । अभावस्य हेतुत्वनिरासार्थं सूत्रं व्याचष्टे—तत्रेदमिति ॥ यदि बीजाभावस्याभावान्तराद्विशेषः स्यात्, तदा विशेषवदभावद्वारा बीजादेवांकुर इति लोकायतिकानामभ्युपगमोऽर्थवान् स्यात्। न सोऽस्तीत्याह—येनेति ॥ सूत्रं योजयति—निर्विशेषस्येति ॥ शशविषाणादेः कार्यकारित्वस्यादृष्टत्वान्नाभावस्यासतो हेतुत्वमित्यर्थः । अस्त्वभावस्यापि विशेष इत्यत आह—यदीति ॥ अभावस्य हेतुत्वेऽतिप्रसङ्ग इति तर्कमुक्त्वानुमानमाह—नापीति ॥ अभावः, न हेतुः, असत्त्वात्, सम्मतवदित्यर्थः । अभावः, न प्रकृतिः, कार्याननिवतत्वाद् । यथा—शरावाद्यनन्वितस्तन्तुर्न शरावादिप्रकृतिरिति

भामती ।

कंचिदुपकारमादधति न वा । अनाधानेऽनुपकारितया सहकारिणो नापेक्षेरन् । आधानेऽपि भिन्नमभिन्नं वोपकारमादध्युः । अभेदे तदेवाभिहितमिति कौटस्थ्यं व्याहन्येत। भेदे तूपकारस्य तस्मिन् सति कार्यस्य भावादसति चाभावात्सत्यपि कूटस्थे कार्यानुत्पादादन्वयव्यतिरेकाभ्यामुपकार एव कार्यकारी न भाव इति नार्थक्रियाकारी भावः । तदुक्तम्—'वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम् । चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्फलः ॥' इति । तथा चाकिंचित्करादपि चेत् कूटस्थात्कार्यं जायेत, सर्वं सर्वस्माज्जायेतेति सूक्तम् । उपसंहरति—तस्मादभावग्रस्तेभ्य इति । तत्रेदमुच्यते। नासतोऽदृष्टत्वादिति । नाभावात् कार्योत्पत्तिः । कस्मात्। अदृष्टत्वात्। न हि शशविषाणादंकुरादीनां कार्याणामुत्पत्तिर्दृश्यते । यदि त्वभावाद्भावोत्पत्तिः स्यात्ततोऽभावत्वाविशेषात् शशविषाणादिभ्योऽप्यंकुरोत्पत्तिः। न ह्यभावो विशिष्यते । विशेषणयोगे वा सोऽपि भावः स्यान्न निरुपाख्य इत्यर्थः । विशेषणयोगमभावस्याभ्युपेत्याह—नाप्यभावः कस्यचिदुत्पत्तिहेतुरिति । अपि च यद्येनानन्वितं न तत्तस्य विकारः, यथा घटशरावोदञ्चनादयो हेम्नानन्विता न हेमविकाराः। अनन्विताश्चैते विकारा अभावेन। तस्मान्ना-

आनन्दगिरीय—न्यायनिर्णयः ।

त्यर्थः । कूटस्थस्य कारणत्वदौःस्थ्ये फलितमाह—तस्मादिति । परमतनिरासित्वेन सूत्रमवतार्य व्याचष्टे—तत्रेति । तदेव व्यतिरेकद्वारा साधयति—यदीति । बीजाद्यभावेभ्योऽङ्कुराद्युत्पत्तेस्तदभावसिद्धये कारणविशेषोपादानमित्याशंक्याऽऽह—न हीति । किंचाभावकारणवादिना तस्य निर्विशेषत्वं सविशेषत्वं वेष्टम् आद्यं दूषयति—निर्विशेषस्येति । एतेन 'नासतोऽदृष्टत्वात्' इति व्याख्यातम् । द्वितीयमनूद्य निरस्यति—यदीति । अभावस्य कारणत्वमुपेत्योक्तं तदेवायुक्तमित्याह—नापीतिं । कार्यस्वभावालोचनयाऽपि

**शशविषाणादिवत् ॥ अभावाच्च भावोत्पत्तावभावान्वितमेव सर्वं कार्यं स्यात् ॥ न चैवं दृश्यते ॥ सर्वस्य च वस्तुनः स्वेनस्वेन रूपेण भावात्मनैवोपलभ्यमानत्वात् । न च मृदन्विताः शरावादयो भावास्तन्त्वादिविकाराः केनचिदभ्युपगम्यन्ते ॥ मृद्विकारानेव तु मृदन्वितान् भावाँल्लोकः प्रत्येति॥ यत्तूक्तं स्वरूपोपमर्दमन्तरेण कस्यचित्कूटस्थस्य वस्तुनः**

रत्नप्रभा ।

तर्कपूर्वकमाह—**अभावाच्चेति** ॥ अतोऽन्वितत्वान्मृदादिर्भाव एव प्रकृतिरित्याह—**मृदिति** ॥ स्थायिनः कारणत्वायोगमुक्तमनूद्य दूषयति—**यत्तूक्तमित्यादिना** ॥ अनुभवबलात् स्थिरभावानामेव सहकारिसन्निधिक्रमेण कार्यक्रमहेतुत्वमङ्गीकार्यम् । न च शक्तस्य सहकार्यपेक्षा न युक्तेति वाच्यम् । यतोऽशक्तस्यापि नापेक्षेति असहकारि विश्वं स्यात् । ततः स्वर्णादौ स्वतोऽतिशयशून्येऽग्नितापादिसहकारिकृतातिशयक्रमाद्रुचकादिकार्यक्रमः । न चातिशयस्यातिशयान्तरानपेक्षत्वे कार्यस्याप्यनपेक्षेति वाच्यम् । घटस्य मृदनपेक्षत्वे कार्यत्वाविशेषात् घटस्यापि मृदनपेक्षाप्रसङ्गादन्वयव्यतिरेकाभ्यामपेक्षा सहकारिष्वपि तुल्या । **यदुक्तं** कार्याभावदशायां कारणस्यासत्त्वापत्तिरिति । **तन्न** । अकारणस्यापि बाधाभावेन सत्त्वोपपत्तेः । न ह्यर्थक्रियाकारित्वमेव **सत्त्वम्** । असतस्तदयोगेन सत्त्वस्य ततो भेदात् सतो ह्यर्थक्रियाकारित्वं नासतः । अतः कारणतावच्छेदकमबाधितस्वरूपात्मकं सत्त्वं कारणत्वाद्भिन्नमेव । तस्मादणुस्थूलस्थिरभावानां हेतुत्वमुपपन्नमिति भावः ।

भामती ।

भावविकाराः । भावविकारास्तु ते, भावस्य तेनान्वितत्वादित्याह—**अभावाच्च भावोत्पत्ताविति** । अभावकारणवादिनो वचनमनुभाष्य दूषयति—**यत्तूक्तमिति** । स्थिरोऽपि भावः क्रमवत्सहकारिसमवधानात् क्रमेण कार्याणि करोति । न चानुपकारकाः सहकारिणः । स चास्य सहकारिभिराधीयमान उपकारो न भिन्नो नाप्यभिन्नः । किंत्वनिर्वाच्य एव, अनिर्वाच्याच्च कार्यमप्यनिर्वाच्यमेव जायते । न चैतावता स्थिरस्याकारणत्वं, तदुपादानत्वात्कार्यस्य, रज्जूपादानत्वमिव भुजङ्गस्येत्युक्तम् । तथा च श्रुतिः—'मृत्तिकेत्येव सत्यम्' इति । अपि च येऽपि सर्वतो विलक्षणानि सुलक्षणानि वस्तुसन्त्यास्थिषत,तेषामपि किमिति बीजजातीयेभ्योंकुरजातीयान्येव जायन्ते कार्याणि, न तु क्रमेलकजातीयानि । न हि बीजाद्बीजान्तरस्य वा क्रमेलकस्य वात्यन्तवैलक्षण्ये कश्चिद्विशेषः । न च बीजांकुरत्वे सामान्ये परमार्थसती, येनैतयोर्भाविकः कार्यकारणभावो भवेत् । तस्मात्काल्पनिकादेव स्वलक्षणोपादानाद्बीजजातीयात्तथाविधस्यैवांकुरजातीयस्योत्पत्तिनियम आस्थेयः । अन्यथा कार्यहेतुकानुमानोच्छेदप्रसङ्गः । दिङ्मात्रमत्र सूचितम् । प्रपञ्चस्तु

आनन्दगिरीय—न्यायनिर्णयः ।

नाभावस्य कारणतेत्याह—**अभावादिति** । यद्येनानन्वितं न तत्तस्य कार्यं यथा हेम्नाऽनन्वितो घटो न हेम्नो विकारः । अनन्विताश्चाभावेन भावास्तस्मान्नाभावविकारा इत्यर्थः । किंच, यद्येनान्वितं तत्तस्य कार्यं यथा हेम्नाऽन्वितं रुचकादि तत्कार्यम् । अन्विताश्च भावेन भावास्तस्मात्तद्विकारा इत्याह—**सर्वस्येति** । भावान्वितत्वेऽपि कारणमन्वय्येवेत्यनियमादभावोऽपि कारणं किं न स्यादित्याशंक्याऽऽह—**न चेति** । आद्येऽनुमाने व्याप्तिमुक्त्वा द्वितीयेऽपि तामाह—**मृदिति** । अभावकारणवादिनोक्तमनुभाषते—**यत्त्विति** । स्थिरस्य कारणत्वं न दृश्यते न युज्यते वा । नाऽऽद्यः, अनुभवविरोधात् । न द्वितीयः, स्थिरस्यापि क्रमवत्सहकारिवशात्क्रमकारित्वाविरोधात् । न च सहकारिजन्यातिशयस्यैव कारणत्वं न स्थायिनस्तथात्वं भेदाभेदादिभिरनिर्वचनीयातिशयवतो वस्तुनो लोकसिद्धकारणत्वानिराकरणात् । न च समर्थत्वादपर्यायमशेषजनकत्वं तत्तत्कालीनकार्यजन्मसामर्थ्योपगमात् । न च सामर्थ्यासामर्थ्याभ्यां

कारणत्वानुपपत्तेरभावाद्भावोत्पत्तिर्भवितुमर्हतीति ॥ तदुक्तम् ॥ स्थिरस्वभावानामेव सुवर्णादीनां प्रत्यभिज्ञायमानानां रुचकादिकार्यकारणभावदर्शनात्॥येष्वपि बीजादिषु स्वरूपोपमर्दो लक्ष्यते,तेष्वपि नासावुपमृद्यमाना पूर्वावस्थोत्तरावस्थायाः कारणमभ्युपगम्यते॥अनुपमृद्यमानानामेवानुयायिनां बीजाद्यवयवानामंकुरादिकारणभावाभ्युपगमात् ॥ तस्मादसद्भ्यः शशविषाणादिभ्यः सदुत्पत्त्यदर्शनात्सद्भ्यश्च सुवर्णादिभ्यः सदुत्पत्तिदर्शनादनुपपन्नोऽयमभावाद्भावोत्पत्त्यभ्युपगमः ॥ अपि च चतुर्भ्यश्चित्तचैत्ता उत्पद्यन्ते, परमाणुभ्यश्च भूतभौतिकलक्षणः समुदाय उत्पद्यत इत्यभ्युपगम्य पुनरभावाद्भावोत्पत्तिं कल्पयद्भिरभ्युपगममपह्नुवानैर्वैनाशिकैः सर्वो लोक आकुलीक्रियते ॥ २६ ॥

## उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

यदि चाभावाद्भावोत्पत्तिरभ्युपगम्येत, एवं सत्युदासीनानामनीहमानानामपि जनानामभिमतसिद्धिः स्यात् ॥ अभावस्य सुलभत्वात्–कृषीवलस्य क्षेत्रकर्मण्यप्रयतमानस्यापि सस्यनिष्पत्तिः स्यात् ॥ कुलालस्य च मृत्संस्क्रियायामप्रयतमानस्याप्यमत्रोत्पत्तिः ॥ तन्तुवायस्यापि तन्तूनतन्वानस्यापि तन्वानस्येव वस्त्रलाभः ॥ स्वर्गापवर्गयोश्च न कश्चित्कथञ्चित्समीहेत ॥ न चैतद्युज्यतेऽभ्युपगम्यते वा केनचित् ॥ तस्मादनुपपन्नोऽयमभावाद्भावोत्पत्त्यभ्युपगमः ॥२७॥ इति समुदायाधिकरणम्॥४॥

## नाभाव उपलब्धेः ॥ २८ ॥ ( ५ ) ॥

---

रत्नप्रभा ।

पूर्वापरविरोधमप्याह–अपि चेति ॥ २६ ॥ अभावादुत्पत्तौ शशविषाणादप्युत्पत्तिः स्यादित्युक्तम् । अतिप्रसङ्गान्तरमाह–उदासीनानामिति ॥ अनीहमानानां प्रयत्नशून्यानाम् । अमत्रं–घटादिपात्रम् । तन्वानस्य–व्यापारयतः । तस्मादभ्रान्तिमूलेन क्षणिकत्वाद्यार्थवादेन कूटस्थनित्यब्रह्मसमन्वयस्य न विरोध इति सिद्धम् ॥ २७ ॥ ( ४ ) ॥ नाभाव उपलब्धेः । अखण्डनिर्विशेषब्रह्मविज्ञानं बाह्यार्थोपादानं

भामती ।

ब्रह्मतत्त्वसमीक्षान्यायकणिकयोः कृत इति नेह प्रतन्यते विस्तरभयात् ॥ २६ ॥ उदासीनानामपि चैवं सिद्धिः । भाष्यमस्य सुगमम् ॥ २७ ॥ ( ४ ) ॥ नाभाव उपलब्धेः । पूर्वाधिकरणसंगतिमाह–

आनन्दगिरीय–न्यायनिर्णयः ।

भावाभावभेदः कार्यभेदप्रतियोगिकशक्त्यशक्तियुक्तक्षणिकभावस्यैवाभेदसिद्धेरिति मत्वाऽऽह–तदिति । यत्तु विनष्टाद्धीति तत्राऽऽह–येष्विति । अंकुरादिषु पार्थिवादिस्वभावानामेव कारणत्वेऽपि बीजाद्यवयवानामिति परमतेनोक्तमुक्तेऽर्थे सूत्रं योजयन्नुपसंहरति–तस्मादिति । स्वाभ्युपगमविरोधादपि नाभावाद्भावोत्पत्तिरित्याह–अपि चेति ॥ २६ ॥ अभावकारणत्वे कारणविशेषोपादाने प्रवृत्तिरयुक्तेत्युक्तम् । इदानीं प्रवृत्तिमात्रमपि न युक्तमित्याह–उदासीनानामिति । सूत्रं विभजते–यदीति । अभाववादे सर्वलौकिकव्यवहारासिद्धिमुदाहरणैर्दर्शयति–कृषीति । पारलौकिकव्यवहारोऽपि परमते न स्यादित्याह–स्वर्गेति । उभयविधव्यवहारासत्त्वप्रसङ्गस्येष्टत्वं प्रत्याचष्टे–न चेति । सूत्रद्वयार्थमुपसंहरति–तस्मादिति ॥ २७ ॥ ( ४ ) ॥ विज्ञानस्य क्षणिकेनार्थेन सालम्बनत्वं निराकृत्य निरालम्बनत्वं निराकर्तुमारभते–नाभाव इति । रूपादिहीनं ब्रह्म जगदुपादानमिति वदतः समन्वयस्य क्षणिकं ज्ञानं नीलाद्याकारमिति

**एवं बाह्यार्थवादमाश्रित्य समुदायाप्राप्त्यादिषु दूषणेषूद्भावितेषु, विज्ञानवादी बौद्ध इदानीं प्रत्यवतिष्ठते । केषांचित्किल विनेयानां बाह्यवस्तुन्यभिनिवेशमालक्ष्य तदनुरोधेन बाह्यार्थवादप्रक्रियेयं विरचिता ॥ नासौ सुगताभिप्रायः ॥ तस्य तु विज्ञानैकस्कन्धवाद एवाभिप्रेतः ॥ तस्मिंश्च विज्ञानवादे बुद्ध्यारूढेन रूपेणान्तःस्थ एव प्रमाणप्रमेयफल-**

रत्नप्रभा ।

वदतां वेदान्तानां भिन्नं साकारं क्षणिकं विज्ञानं, न ततोऽन्योऽर्थोऽस्तीति **योगाचारमतेन** विरुध्यते न वेति तन्मतस्य मानभ्रान्तिमूलत्वाभ्यां **संशये** पूर्वोक्तबाह्यार्थवादनिरासमुपजीव्य पूर्वपक्षमाह -**एवमित्यादिना** ॥ पूर्वोत्तरपक्षयोः विरोधाविरोधौ फलम् । नन्वेकस्य सुगतागमस्य कथं बाह्यार्थसत्त्वासत्त्वयोस्तात्पर्यं विरोधादित्याशंक्याऽधिकारिभेदादविरोध इति वदन् विज्ञानवादिनः सुगताभिप्रायज्ञत्वेन मन्दाधिकारिभ्यो बाह्यार्थवादिभ्यः श्रैष्ठ्यमाह-**केषांचिदिति** ॥ उक्तं च धर्मकीर्तिना "देशना लोकनाथानां सत्त्वाशयवशानुगाः" इति सुगतानामुपदेशाः शिष्यमत्यनुसारिण इत्यर्थः । नन्वसति बाह्यार्थे मानमेयव्यवहारः कथं, तत्राह-**तस्मिन्निति** ॥ विज्ञानमेव कल्पितनीलाद्याकारत्वेन प्रमेयम्, अवभासात्मना मानफलं, शक्त्यात्मना मानं, शक्त्याश्रयत्वाकारेण प्रमातेति भेदकल्पनया व्यवहार इत्यर्थः ।

भामती ।

**एवमिति** । बाह्यार्थवादिभ्यो विज्ञानमात्रवादिनां सुगताभिप्रेततया विशेषमाह-**केषांचित्किलेति** । अथ प्रमाता प्रमाणं प्रमेयं प्रमितिरिति हि चतसृषु विधासु तत्त्वपरिसमाप्तिरासामन्यतमाभावेऽपि तत्त्वस्याव्यवस्थानात् । तस्मादनेन विज्ञानस्कन्धमात्रं तत्त्वं व्यवस्थापयता चतस्रो विधा एषितव्याः, तथा च न विज्ञानस्कन्धमात्रं तत्त्वम । न ह्यस्ति संभवो विज्ञानमात्रे चतस्रो विधाश्चेत्यत आह-**तस्मिंश्च विज्ञानवादे बुद्ध्यारूढेन रूपेणेति** । यद्यप्यनुभवान्नान्योऽनुभाव्योऽनुभविताऽनुभवनं, तथापि बुद्ध्यारूढेन बुद्धिपरिकल्पितेनान्तस्थ एवैष प्रमाणप्रमेयफलव्यवहारः प्रमातृव्यवहारश्चेत्यपि द्रष्टव्यम् । न पारमार्थिक इत्यर्थः । एवं च न सिद्धसाधनम् । न हि ब्रह्मवादिनो नीलाद्याकारां वित्तिमभ्युपगच्छन्ति, किंत्वनिर्वचनीयं नीलादीति । तथाहि-स्वरूपं विज्ञानस्यासत्याकारयुक्तं प्रमेयं प्रमेयप्रकाशनं प्रमाणफलं, तत्प्रकाशनशक्तिः प्रमाणम् । बाह्यवादिनोरपि वैभाषिकसौत्रान्तिकयोः काल्पनिक एव प्रमाणफलव्यव-

आनन्दगिरीय-न्यायनिर्णयः ।

योगाचारमतविरोधोऽस्ति न वेति तत्प्रामाणिकत्वभ्रान्तत्वाभ्यां संदेहे संगतिगर्भं पूर्वपक्षमवतारयति-**एवमिति** । विज्ञानवादस्य भ्रान्तिमूलतया समन्वयस्य तदविरोधोक्तेः संगतयः । पूर्वपक्षे विज्ञानवादस्य प्रामाणिकत्वात्तद्विरोधे समन्वयासिद्धिः सिद्धान्तेऽस्य भ्रान्तत्वात्तद्विरोधस्याऽऽभासत्वात्तत्सिद्धिरिति फलभेदः । बाह्यार्थवादिषु प्रत्युक्तेषु समानन्यायतया विज्ञानवादिनोऽपि प्रत्युक्तिसंभवात्कथं पृथगुत्थानमित्याशंक्य तेभ्यो विज्ञानमात्रवादिनः सुगताभिप्रायत्वेन विशेषमाह-**केषांचिदिति** । हीनधियामिति यावत् । बाह्येऽर्थे सुगतस्यानिच्छायां किलकारः । 'देशना लोकनाथानां सत्त्वाशयवशानुगाः' इति न्यायेनाऽऽह-**तदिति** । कस्तर्हि तस्याभिप्रायस्तत्राऽऽह-**तस्येति** । ननु मानमेयादिभेदोपगमे कथं विज्ञानमात्रवादोऽन्यथा कथं व्यवहारसिद्धिस्तत्राऽऽह-**तस्मिन्निति** । ज्ञानमेव कल्पितनीलाद्याकारतया मेयमवभासात्मतया फलं तच्छक्त्यात्मना मानं तदाश्रयतया मातेति विज्ञानवादेऽपि कल्पितमानादिभेदमुपेत्य सर्वव्यवहारसिद्धिरित्यर्थः । किंचार्थसारूप्यात्मना मानमवभासात्मना फलमिति सौत्रान्तिकाः । अनवभासव्यावृत्त्या फलं तच्छक्त्या मानमिति वैभाषिकाः । तेन तयोर्बाह्यमर्थमिच्छतोरपि कल्पितो भेदः क्षणिकस्याऽऽत्मनो द्वयकालानवस्थानात्तद्युक्तं विज्ञानवादे कल्पितभेदेनैव सर्वव्यवहारसाधनमित्याह-

बौद्धदर्शने सर्वदर्शनसंग्रहे तदुक्तं बोधचित्तविवरणे । 'भिन्ना हि देशनाभिन्ना शून्यताऽद्वयलक्षणा' इत्यादिनोक्तञ्च तत्रैव स्पष्टम् ।

**व्यवहारः सर्व उपपद्यते ॥ सत्यपि बाह्येऽर्थे बुद्ध्यारोहमन्तरेण प्रमाणादिव्यवहारानवतारात् ॥ कथं पुनरवगम्यतेऽन्तःस्थ एवायं सर्वव्यवहारो न विज्ञानव्यतिरिक्तो बाह्योऽर्थोऽस्तीति, तदसम्भवादित्याह ॥ स हि बाह्योऽर्थोऽभ्युपगम्यमानः परमाणवो वा स्युस्तत्समूहा वा स्तम्भादयः स्युः ॥ तत्र न तावत्परमाणवः स्तम्भादिप्रत्ययपरिच्छेद्या भवितुमर्हन्ति ॥ परमाण्वाभासज्ञानानुपपत्तेः ॥ नापि तत्समूहाः**

---

रत्नप्रभा ।

मुख्य एव भेदः किं न स्यादत आह—**सत्यपीति** ॥ न हि बुद्ध्यनारूढस्य नीलादेः प्रमेयत्वव्यवहारोऽस्ति । अतो बुद्ध्यारूढाकार एव प्रमेयं, न बाह्यमित्यर्थः । बाह्यार्थासत्त्वे प्रश्नपूर्वकं युक्तीरुपन्यस्यति—**कथमित्यादिना** ॥ ज्ञेयं, ज्ञानातिरेकेणाऽसत्, तदतिरेकेणासम्भवान्नरशृङ्गवदित्याह—**तदसम्भवादिति** ॥ असम्भवं विवृणोति—**स हीति** ॥ परमाणवश्चेदेकस्थूलस्तम्भ इति ज्ञानं न स्यात् ।

भामती ।

हारोऽभिमत इत्याह—**सत्यपि बाह्येऽर्थ इति** । भिन्नाधिकरणत्वे हि प्रमाणफलयोस्तद्भावो न स्यात् । न हि खदिरगोचरे परशौ पलाशे द्वैधीभावो भवति । तस्मादनयोरैकाधिकरण्यं वक्तव्यम् । कथं च तद्भवति । यदि ज्ञानस्थे एव प्रमाणफले भवतः । न च ज्ञानं स्वलक्षणमनंशमंशाभ्यां वस्तुसद्भ्यां युज्यते । तदेव ज्ञानमज्ञानव्यावृत्तिकल्पितज्ञानत्वांशं फलम् । अशक्तिव्यावृत्तिपरिकल्पितात्मानात्मप्रकाशनशक्त्यंशं प्रमाणम् । प्रमेयं त्वस्य बाह्यमेव । एवं सौत्रान्तिकसमयेऽपि । ज्ञानस्यार्थसारूप्यमनीलाकारव्यावृत्त्या कल्पितनीलाकारत्वं प्रमाणं व्यवस्थापनहेतुत्वात् । अज्ञानव्यावृत्तिकल्पितं च ज्ञानत्वं फलं व्यवस्थाप्यत्वात् । तथा चाहुः—'न हि वित्तिसत्तैव तद्वेदना युक्ता, तस्याः सर्वत्राविशेषात् । तां तु सारूप्यमाविशत्सरूपयत्तद् घटयेत्' इति । प्रश्नपूर्वकं बाह्यार्थाभाव उपपत्तीराह—**कथं पुनरवगम्यत इति** । स हि विज्ञानालम्बनत्वाभिमतो बाह्योऽर्थः परमाणुस्तावन्न संभवति । एकस्थूलनीलाभासं हि ज्ञानं न परमसूक्ष्मपरमाण्वाभासम् । न चान्याभासमन्यगोचरं भवितुमर्हति । अतिप्रसङ्गेन सर्वगोचरतया सर्वसर्वज्ञत्वप्रसङ्गात् । न च प्रतिभासधर्मः स्थौल्यमिति युक्तम् । विकल्पासहत्वात् । किमयं प्रतिभासस्य ज्ञानस्य धर्म उत प्रतिभासनकालेऽर्थस्य धर्मः । यदि पूर्वः कल्पः, अद्धा, तथा सति हि स्वांशालम्बनमेव विज्ञानमभ्युपेतं भवति । एवं च कः प्रतिकूलीभवत्यनुकूलमाचरति । द्वितीय इति चेत् । तथाहि—रूपपरिमाणव एव निरन्तरमुत्पन्ना एकविज्ञानोपारोहिणः स्थौल्यम् । न चात्र कस्यचिद्भ्रान्तता । न हि न ते रूपपरमाणवः । न च न निरन्तरमुत्पन्नाः । न चैकविज्ञानानुपारोहिणः । तेन मा भून्नीलत्वादिवत्परमाणुधर्मः, प्रत्येकं परमाणुष्वभावात् । प्रतिभासदशापन्नानां तु तेषां भविष्यति बहुत्वादिवत्सांवृतं स्थौल्यम् । यथाहुः—'ग्रहेऽनेकस्य चैकेन किंचिद्रूपं हि गृह्यते । सांवृतं प्रतिभासस्थं तदेकात्मन्यसंभवात् ॥ १ ॥ न च तद्दर्शनं भ्रान्तं नानावस्तुग्रहाद्यतः । सांवृतं ग्रहणं नान्यन्न च वस्तुग्रहो भ्रमः ॥ २ ॥' इति । तन्न । नैरन्तर्यावभासस्य भ्रान्तत्वात् । गन्धरसस्पर्शपरमाण्वन्तरिता हि ते रूपपरमाणवो न निरन्तराः । तस्मादारात्सान्तरेषु वृक्षेष्वेकघनवनप्रत्ययवदेष स्थूलप्रत्ययः परमाणुषु सान्तरेषु भ्रान्त एवेति पश्यामः । तस्मात् कल्पनापोढत्वेऽपि भ्रान्तत्वाद्घटादिप्रत्ययस्य पीतशंखादिज्ञानवन्न प्रत्यक्षता परमाणुगोचरत्वाभ्युपगमे । तदिदमुक्तम्, **न तावत्परमाणवः स्तम्भादिप्रत्ययपरिच्छेद्या भवितुमर्हन्ति । नापि**

आनन्दगिरीय—न्यायनिर्णयः ।

**सतीति** । उक्तमर्थं युक्त्या द्रढयितुं पृच्छति—**कथमिति** । विमतं न ज्ञानातिरिक्तं तदतिरेकेणानिरूप्यत्वान्नरविषाणवदित्याह—**तदिति** । तत्रासिद्धिमुद्धर्तुं विकल्पयति—**स हीति** । एकस्थूलनीलाभासज्ञानस्य तद्विपरीतपरमाणुगोचरतायोगान्न परमाणवस्तावत्तदालम्बनमित्याह—**तत्रेति** । द्वितीयं प्रत्याह—**नापीति** । स्तम्भाद्यवयविनां परमाणुभ्यो भेदे गवाश्ववदत्यन्तवैलक्षण्यमभेदे परमाणुमात्रतया स्थूलरू-

**स्तम्भादयः ॥ तेषां परमाणुभ्योऽन्यत्वानन्यत्वाभ्यां निरूपयितुमशक्यत्वात् ॥ एवं जात्यादीनपि प्रत्याचक्षीत ॥ अपि चानुभवमात्रेण साधारणात्मनो ज्ञानस्य जायमानस्य योऽयं प्रतिविषयं पक्षपातः- स्तम्भज्ञानं कुड्यज्ञानं घटज्ञानं पटज्ञानमिति, नासौ ज्ञानगतविशेषमन्तरेणोपपद्यत इत्यवश्यं विषयसारूप्यं ज्ञानस्याङ्गीकर्तव्यम् ॥ अङ्गीकृते च तस्मिन्विषयाकारस्य ज्ञानेनैवावरुद्धत्वादपार्थिका बाह्यार्थसद्भावकल्पना ॥ अपि च सहोपलम्भनियमादभेदो विषयविज्ञानयोरापतति ॥**

रत्नप्रभा ।

समूहस्त्वसन्नित्यर्थः । अवयव्यभावेऽपि जात्यादयो बाह्यार्थाः स्युः, तत्राह—**एवमिति** ॥ जातिगुणकर्मणां धर्मिणः सकाशादभेदेऽत्यन्तभेदे वा धर्मिवद्धर्म्यन्तरवच्च न धर्मधर्मिभावः भेदाभेदौ, च विरुद्धाविति न सन्ति जात्याद्यर्था इत्यर्थः । किञ्च ज्ञानस्य ज्ञेयसारूप्यरूपविशेषसम्बन्धाभावे सर्वविषयत्वापत्तेर्विशेषोऽङ्गीकार्यः । तथा च ज्ञानगतविशेषस्यैव ज्ञानेन विषयीकरणान्न बाह्यार्थसिद्धिः । मानाभावात्, गौरवाच्चेत्याह—**अपि चेति** ॥ **पक्षपातः** विषयविशेषवैशिष्ट्यव्यवहारः । किञ्च ज्ञेयं, ज्ञानाभिन्नं, ज्ञानोपलम्भक्षणनियतोपलम्भग्राह्यत्वात्, ज्ञानवदित्याह—**अपि चेति** । ज्ञानार्थयोर्वास्तव-

भामती ।

**तत्समूहा वा स्तम्भादयो**ऽवयविनः । तेषामभेदे परमाणुभ्यः परमाणव एव । तत्र चोक्तं दूषणम् । भेदे तु गवाश्वस्येवात्यन्तवैलक्षण्यमिति न तादात्म्यम् । समवायश्च निराकृत इति । एवं भेदाभेदविकल्पेन जातिगुणकर्मादीनपि प्रत्याचक्षीत । तस्माद्यद्यत्प्रतिभासते तस्य सर्वस्य विचारासहत्वात्, अप्रतिभासमानसद्भावे च प्रमाणाभावान्न बाह्यालम्बनाः प्रत्यया इति । अपि च न तावद्विज्ञानमिन्द्रियवन्निलीनमर्थं प्रत्यक्षयितुमर्हति । न हि यथेन्द्रियमर्थविषयं ज्ञानं जनयत्येवं विज्ञानमपरं विज्ञानं जनयितुमर्हति । तत्रापि समानत्वादनुयोगस्यानवस्थाप्रसङ्गात् । न चार्थाधारं प्राकट्यलक्षणं फलमाधातुमुत्सहते । अतीतानागतेषु तदसंभवात् । न ह्यस्ति संभवोऽप्रत्युत्पन्नो धर्मी धर्मश्चास्य प्रत्युत्पन्न इति । तस्माज्ज्ञानस्वरूपप्रत्यक्षतैवार्थप्रत्यक्षताऽभ्युपेया।तच्चानाकारं सदाजानतो भेदाभावात् कथमर्थभेदं व्यवस्थापयेदिति तद्भेदव्यवस्थापनायाकारभेदोऽस्यैषितव्यः । तदुक्तम्—'न हि वित्तिसत्तैव तद्वेदना युक्ता, तस्याः सर्वत्राविशेषात् । तां तु सारूप्यमाविशत्सरूपयत्तद्घटयेत्' इति । एकश्चायमाकारोऽनुभूयते । स चेद्विज्ञानस्य नार्थसद्भावे किंचन प्रमाणमस्तीत्याह—**अपि चानुभवमात्रेण साधारणात्मनो ज्ञानस्येति** । **अपि च सहोपलम्भनियमादिति** । यद्येन सह नियतसहोपलम्भनं तत्ततो न भिद्यते, यथैकस्माच्चन्द्रमसो द्वितीयश्चन्द्रमाः । नियतसहोपलम्भश्चार्थो ज्ञानेनेति व्यापकविरुद्धोपलब्धिः । निषेध्यो हि भेदः सहोपलम्भानिय-

आनन्दगिरीय—न्यायनिर्णयः ।

पेणात्रभासासिद्धिः परमाणूनामतथात्वादित्याह—**तेषामिति** । अवयवावयविरूपो बाह्यार्थो नास्ति चेन्मा भूज्जातिव्यक्त्यादिरूपस्तु स्यादित्याशंक्याऽऽह—**एवमिति** । जात्यादीनां व्यक्त्यादीनां चात्यन्तभिन्नत्वे स्वातन्त्र्यप्रसङ्गादत्यन्ताभिन्नत्वे तद्वदेवातद्भावाद्भिन्नाभिन्नत्वस्य विरुद्धत्वादवयवावयविभेदवज्जातिव्यक्त्यादिभेदोऽपि नास्तीत्यर्थः । दृष्टस्य सर्वस्य विचारासहत्वाददृष्टसत्त्वे मानाभावान्न बाह्यालम्बनाः प्रत्यया इत्युक्तम् । संप्रति तेषां बाह्यानालम्बनत्वे हेत्वन्तरमाह—**अपि चेति** । ज्ञानगतविशेषदृष्ट्यनुपपत्त्या नीलाद्याकारता तस्य सिद्धा, तदा च ज्ञानाकारस्यैव विषयत्वाद्व्यर्था बाह्यार्थकल्पना गौरवादित्यर्थः । इतश्च ज्ञेयं ज्ञानानान्यदित्याह—**अपि चेति** । यद्येन नियतसहोपलम्भनं तत्तेनाभिन्नं, यथैकेन चन्द्रमसा

**न ह्यनयोरेकस्यानुपलम्भेऽन्यस्योपलम्भोऽस्ति । न चैतत्स्वभावविवेके युक्तम् ॥ प्रतिबन्धकारणाभावात् ॥ तस्मादप्यर्थाभावः स्वप्नादिवच्चेदं द्रष्टव्यम् ॥ यथा हि स्वप्नमायामरीच्युदकगन्धर्वनगरादिप्रत्यया विनैव बाह्येनार्थेन ग्राह्यग्राहकाकारा भवन्ति, एवं जागरितगोचरा अपि स्तम्भादिप्रत्यया भवितुमर्हन्तीत्यवगम्यते ॥ प्रत्ययत्वाविशेषात् ॥**

रत्नप्रभा ।

भेदेऽपि सहोपलम्भनं स्यात् । ग्राह्यग्राहकभावादित्यत आह—**न चैतदिति** ॥ क्षणिकज्ञानस्यार्थेन सम्बन्धहेत्वभावान्न ग्राह्यग्राहकभाव इत्यर्थः । **किंच** जाग्रद्विज्ञानं, न बाह्यालम्बनं, विज्ञानत्वात्, स्वप्नादिज्ञानवदित्याह—**स्वप्नेति** ॥ विज्ञानानां वैचित्र्यानुपपत्तिबाधितमनुमानमिति शङ्कते—

भामती ।

भेन व्याप्तो यथा भिन्नावश्विनौ नावश्यं सहोपलभ्येते कदाचिदभ्रापिधानेऽन्यतरस्यैकस्योपलब्धेः । सोऽयमिह भेदव्यापकनियमविरुद्धो नियम उपलभ्यमानस्तद्व्याप्यं भेदं निवर्तयतीति । तदुक्तम्—'सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये ॥' इति । **स्वप्नादिवच्चेदं द्रष्टव्यम्** । योयः प्रत्ययः स सर्वो बाह्यानालम्बनः, यथा स्वप्नमायादिप्रत्ययः, तथा चैष विवादाध्यासितः प्रत्यय इति स्वभावहेतुः । बाह्यानालम्बनता हि प्रत्ययत्वमात्रानुबन्धिनी वृक्षतेव शिंशपात्वमात्रानुबन्धिनीति तन्मात्रानुबन्धिनि निरालम्बनत्वे साध्ये भवति प्रत्ययत्वं स्वभावहेतुः । अत्रान्तरे सौत्रान्तिकश्चोदयति—**कथं पुनरसति बाह्येऽर्थे** नीलमिदं पीतमित्यादि **प्रत्ययवैचित्र्यमुपपद्यते** । स हि मेने ये यस्मिन् सत्यपि कादाचित्कास्ते सर्वे तदतिरिक्तहेतुसापेक्षाः, यथाऽविवक्षत्यजिगमिषति मयि वचनगमनप्रतिभासाः प्रत्ययाश्चेतनसंतानान्तरसापेक्षाः । तथा च विवादाध्यासिताः सत्यप्यालयविज्ञानसंताने षडपि प्रवृत्तिप्रत्यया इति स्वभावहेतुः । यश्चासावालयविज्ञानसंतानातिरिक्तः कादाचित्कप्रवृत्तिज्ञानभेदहेतुः स बाह्योऽर्थ इति । वासनापरिपाकप्रत्ययकादाचित्कत्वात् कदाचिदुत्पाद इति चेत् । नन्वेकसंततिपतितानामालयविज्ञानानां तत्प्रवृत्तिविज्ञानजननशक्तिर्वासना, तस्याश्च स्वकार्योपजनं प्रत्याभिमुख्यं परिपाकस्तस्य च प्रत्ययः स्वसंतानवर्ती पूर्वक्षणः संतानान्तरापेक्षानभ्युपगमात्, तथा च सर्वेऽप्यालयसंतानपतिताः परिपाकहेतवो भवेयुः । न वा कश्चिदपि, आलयसंतानपातित्वाविशेषात् । क्षणभेदाच्छक्तिभेदस्तस्य च कादाचित्कत्वात्कार्यकादाचित्कत्वमिति चेत् । नन्वेत्रमेवस्यैव नीलज्ञानोपजनसामर्थ्यं तत्प्रबोधसामर्थ्यं चेति क्षणान्तरस्यैतन्न स्यात् । सत्त्वे वा कथं क्षणभेदात्सामर्थ्यभेद इत्यालयसंतानवर्तिनः सर्वे समर्था इति समर्थहेतुसद्भावे कार्यक्षेपानुपपत्तेः । स्वसंतानमात्राधीनत्वे निषेध्यस्य कादाचित्कत्वस्य विरुद्धं सदातनत्वं तस्योपलब्ध्या कादाचित्कत्वं निवर्तमानं हेत्वन्तरापेक्षत्वे व्यवतिष्ठत इति प्रतिबन्धसिद्धिः । न च ज्ञानसंतानान्तरनिबन्धनत्वं सर्वेषामिष्यते प्रवृत्तिविज्ञानानां विज्ञानवादिभिरपि तु कस्यचिदेव विच्छिन्नगमनवचनप्रतिभासस्य प्रवृत्तिविज्ञानस्य । अपि च सत्त्वान्तरसंताननिमित्तत्वे तस्यापि सदा संनिधानान्न

आनन्दगिरीय—न्यायनिर्णयः ।

द्वितीयश्चन्द्रमा नियतसहोपलम्भनं च ज्ञेयं ज्ञानेनेत्यर्थः । सहोपलम्भनियममेव स्फोरयति—**न हीति** । ज्ञानज्ञेययोः स्वभावभेदेऽपि ग्राह्यग्राहकत्वान्नियमः स्यादित्याशंक्याऽऽह—**न चेति** । क्षणिकस्य ज्ञानस्य ज्ञेयसंबन्धे हेत्वभावाद्ग्राह्यग्राहकत्वेनोक्तनियमासिद्धिरित्यर्थः । 'सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये' इत्युक्तमुपसंहरति—**तस्मादिति** । योयः प्रत्ययः स सर्वो बाह्यानालम्बनो यथा स्वप्नादिप्रत्ययस्तथा चैष विमतः प्रत्यय इत्याह—**स्वप्नेति** । दृष्टान्तस्य साध्यवैकल्यं परिहरति—**यथेति** । निर्दोषमनुमानं निगमयति—**एवमिति** । प्रत्ययवैचित्र्यानुपपत्तिरूपार्थापत्तिबाधित-

**कथं पुनरसति बाह्यार्थे प्रत्ययवैचित्र्यमुपपद्यते ॥ वासनावैचित्र्यादित्याह-अनादौ हि संसारे बीजांकुरवद्विज्ञानानां वासनानां चान्योन्यनिमित्तनैमित्तिकभावेन वैचित्र्यं न विप्रतिषिध्यते ॥ अपि चान्वयव्यतिरेकाभ्यां वासनानिमित्तमेव ज्ञानवैचित्र्यमित्यवगम्यते ॥**

---

रत्नप्रभा ।

**कथमिति**॥ अन्यथोपपत्त्या परिहरति-**वासनेति**॥ अनादिसन्तानान्तर्गतपूर्वज्ञानमेव-**वासना** तद्वशादनेकक्षणव्यवधानेऽपि नीलाद्याकारज्ञानवैचित्र्यं भवति । **यथा**-बीजवासनया कार्पासरक्तत्वं, तद्वदित्यर्थः । उभयवादिसम्मतत्वाच्च वासना एव ज्ञानवैचित्र्यहेतवो, न बाह्यार्था इत्याह-**अपि चेति** ॥ क्षणिक-

भामती ।

कादाचित्कत्वं स्यात् । न हि सत्त्वान्तरसंतानस्य देशतः कालतो वा विप्रकर्षसंभवः । विज्ञानवादे विज्ञानातिरिक्तदेशानभ्युपगमादमूर्तत्वाच्च विज्ञानानामदेशात्मकत्वात्संसारस्यादिमत्वप्रसङ्गेनापूर्वसत्त्वप्रादुर्भावानभ्युपगमाच्च न कालतोऽपि विप्रकर्षसंभवः । तस्मादसति बाह्येऽर्थे प्रत्ययवैचित्र्यानुपपत्तेरस्त्यानुमानिको बाह्यार्थ इति सौत्रान्तिकाः प्रतिपेदिरे, तन्निराकरोति-**वासनावैचित्र्यादित्याह** विज्ञानवादी । इदमत्राकूतम्-स्वसंतानमात्रप्रभवत्वेऽपि प्रत्ययकादाचित्कत्वोपपत्तौ संदिग्धविपक्षव्यावृत्तिकत्वेन हेतुरनैकान्तिकः। तथाहि-बाह्यनिमित्तकत्वेऽपि कथं कदाचित् नीलसंवेदनं कदाचित् पीतसंवेदनम् । बाह्यनीलपीतसंनिधानासंनिधानाभ्यामिति चेत् । अथ पीतसंनिधानेऽपि किमिति नीलज्ञानं न भवति, पीतज्ञानं भवति । तत्र तस्य सामर्थ्यादसामर्थ्याच्चेतरस्मिन्निति चेत् । कुतः पुनरयं सामर्थ्यासामर्थ्यभेदः । हेतुभेदादिति चेत् । एवं तर्हि क्षणानामपि स्वकारणभेदनिबन्धनः शक्तिभेदो भविष्यति । संतानिनो हि क्षणाः कार्यभेदहेतवस्ते च प्रतिकार्यं भिद्यन्ते च । न च संतानो नाम कश्चिदेक उत्पादकः क्षणानां यद्भेदात् क्षणा न भिद्येरन् । ननूक्तं न क्षणभेदाभेदाभ्यां शक्तिभेदाभेदौ, भिन्नानामपि क्षणानामेकसामर्थ्योपलब्धेः । अन्यथैक एव क्षणे नीलज्ञानजननसमर्थ इति न भूयो नीलज्ञानानि जायेरन् । तत्समर्थस्यातीतत्वात्, क्षणान्तराणां चासामर्थ्यात् । तस्मात् क्षणभेदेऽपि न सामर्थ्यभेदः, संतानभेदे तु सामर्थ्यं भिद्यत इति । तन्न । यदि भिन्नानां संतानानां नैकं सामर्थ्यं, हन्त तर्हि नीलसंतानानामपि मिथो भिन्नानां नैकमस्ति नीलाकाराधानसामर्थ्यमिति संनिधानेऽपि नीलसंतानान्तरस्य न नीलज्ञानमुपजायेत । तस्मात्संतानान्तराणामिव क्षणान्तराणामपि स्वकारणभेदाधीनोपजनानां केषांचिदेव सामर्थ्यभेदः केषांचिन्नेति वक्तव्यम् । तथा चैकालयज्ञानसंतानपतितेषु कस्यचिदेव ज्ञानक्षणस्य स तादृशः सामर्थ्यातिशयो वासनापरनामा स्वप्रत्ययासादितः । यतो नीलाकारं प्रवृत्तिविज्ञानं जायते न पीताकारम् । कस्यचित्तु स तादृशो यतः पीताकारं ज्ञानं न नीलाकारमिति वासनावैचित्र्यादेव स्वप्रत्ययासादिताज्ज्ञानवैचित्र्यसिद्धेर्न तदतिरिक्तार्थसद्भावे किंचनास्ति प्रमाणमिति पश्यामः । आलयविज्ञानसंतानपतितमेवासंविदितं ज्ञानं वासना तद्वैचित्र्यान्नीलाद्यनुभववैचित्र्यं, पूर्वनीलाद्यनुभववैचित्र्याच्च वासनावैचित्र्यमित्यनादितानयोर्विज्ञानवासनयोः । तस्मान्न परस्पराश्रयदोषसंभवो बीजांकुरसंतानवदिति । अन्वयव्यतिरेकाभ्यामपि वासनावैचित्र्यस्यैव ज्ञानवैचित्र्यहेतुता नार्थवैचित्र्यस्येत्याह-**अपि चान्वयव्यतिरेकाभ्यामिति** ।

आनन्दगिरीय-न्यायनिर्णयः ।

मनुमानमिति शंकते-**कथमिति** । अनादिसंततिपतितमसंविदितरूपं ज्ञानमेव वासना तद्वशादनेकव्यवधानेनापि नीलादिवासितमेव ज्ञानमुत्पद्यते कार्पासरक्ततावदित्यन्यथोपपत्तिमाह-**वासनेति** । वासनावैचित्र्याज्ज्ञानवैचित्र्यं ततश्च तद्वैचित्र्यमित्यन्योन्याश्रयत्वमाशंक्याऽऽह-**अनादौ हीति** । अन्वयव्यतिरेकाभ्यामपि वासनावैचित्र्यमेव ज्ञानवैचित्र्यहेतुर्नार्थवैचित्र्यमित्याह-**अपि चेति** । पूर्वानुभववासनाभावेऽप्य-

स्वप्नादिष्वन्तरेणाप्यर्थं वासनानिमित्तस्य ज्ञानवैचित्र्यस्योभाभ्यामप्यावाभ्यामभ्युपगम्यमानत्वात्॥ अन्तरेण तु वासनामर्थनिमित्तस्य ज्ञानवैचित्र्यस्य मयानभ्युपगम्यमानत्वात् ॥ तस्मादप्यभावो बाह्यस्यार्थस्येति ॥ एवं प्राप्ते ब्रूमः ॥ "नाभाव उपलब्धेः" इति । न खल्वभावो बाह्यस्यार्थस्याध्यवसातुं शक्यते ॥ कस्मात् ॥ "उपलब्धेः"—उपलभ्यते हि प्रतिप्रत्ययं बाह्योऽर्थः—स्तम्भः, कुड्यं, घटः, पट इति ॥ न चोपलभ्यमानस्यैवाभावो भवितुमर्हति । यथा हि कश्चिद्भुञ्जानो भुजिसाध्यायां तृप्तौ स्वयमनुभूयमानायामेवं ब्रूयान्नाहं भुञ्जे न वा तृप्यामीति, तद्वदिन्द्रियसन्निकर्षेण स्वयमुपलभमान एव बाह्यमर्थं नाहमुपलभे न च सोऽस्तीति ब्रुवन्कथमुपादेयवचनः स्यात् ॥ ननु नाहमेवं ब्रवीमि न कञ्चिदर्थमुपलभ इति । किन्तूपलब्धिव्यतिरिक्तं नोपलभ इति ब्रवीमि ॥ बाढमेवं ब्रवीषि—निरंकुशत्वात्ते तुण्डस्य ॥ न तु युक्त्युपेतं ब्रवीषि ॥ यत उपलब्धिव्यतिरेकोऽपि बलादर्थस्याभ्युपगन्तव्यः । उपलब्धेरेव ॥ न हि कश्चिदुपलब्धिमेव स्तम्भः, कुड्यं चेत्युपलभते ॥ उपलब्धिविषय-

---

रत्नप्रभा ।

विज्ञानमात्रवादस्य मानमूलत्वात्तेन नित्यविज्ञानवादो विरुध्यते इति प्राप्ते सिद्धान्तसूत्रं व्याचष्टे—नाभाव इत्यादिना ॥ किं बाह्यार्थस्यानुपलब्धेरभावः—उत—ज्ञानाद्भेदेनानुपलब्धेः । नाद्य इत्युक्तम्—उपलब्धेरिति ॥ द्वितीयं शङ्कते—ननु नाहमिति ॥ ज्ञानज्ञेययोर्विषयिविषयभावेन भेदस्य साक्षिप्रत्यक्षसिद्धत्वात् प्रत्यक्षविरुद्धमभेदाभिधानमित्याह—बाढमित्यादिना ॥ तद्वचनादपि जना बाह्यार्थं ज्ञाना-

भामती ।

एवं प्राप्ते ब्रूमः । नाभाव उपलब्धेरिति । न खल्वभावो बाह्यस्यार्थस्याध्यवसातुं शक्यते । स ह्युपलम्भाभावाद्वाध्यवसीयेत, सत्यप्युपलम्भे तस्य बाह्याविषयत्वाद्वा, सत्यपि बाह्यविषयत्वे बाह्यार्थबाधकप्रमाणसद्भावाद्वा । न तावत् सर्वथोपलम्भाभाव इति प्रश्नपूर्वकमाह—कस्मात् । उपलब्धेरिति । न हि स्फुटतरे सर्वजनीन उपलम्भे सति तदभावः शक्यो वक्तुमित्यर्थः । द्वितीयं पक्षमवलम्बते—ननु नाहमेवं ब्रवीमीति । निराकरोति—बाढमेवं ब्रवीषि । उपलब्धिग्राहिणा हि साक्षिणोपलब्धिर्गृह्यमाणा बाह्यविषयत्वेनैव गृह्यते नोपलब्धिमात्रमित्यर्थः ।

आनन्दगिरीय—न्यायनिर्णयः ।

पूर्वार्थसंनिधाने ज्ञानवैचित्र्यदर्शनादन्वयव्यतिरेकासिद्धिरित्याशंक्याऽऽह स्वप्नेति । अन्वयमुक्त्वा व्यतिरेकमाह—अन्तरेणेति । ज्ञानातिरिक्तज्ञेयस्योक्तरीत्या विचारासहत्वात्क्षणिकज्ञानमात्रवादस्य प्रामाणिकत्वादर्थान्नित्यज्ञानाद्ब्रह्मणो जगत्सर्गवादिनः समन्वयस्य विरोधोऽस्तीत्युपसंहरति—तस्मादिति । पूर्वपक्षमनूद्य सिद्धान्तयति—एवमिति । सूत्राक्षराणि व्याचष्टे—नेति । उपलभ्यमानमपि शुक्तिरजतादिवन्मिथ्येत्याशंक्याबाधान्मैवमित्याह—न चेति । उपलब्धिरेवासिद्धेत्याशंक्य सर्वथाऽनुपलब्धिर्वा ज्ञानातिरिक्तत्वेन वेति विकल्प्याऽऽद्ये दोषमाह—यथेति । द्वितीयमवलम्बते—नन्विति । प्रकाश्यप्रकाशकयोर्द्रवकठिनवद्विरुद्धयोर्भेदस्याध्यक्षत्वात्तद्बाधितमभेदवचनमित्याह—बाढमिति । निरंकुशत्वं नियामकराहित्यम् । परोक्तेरयुक्तत्वमेव साधयति—यत इति । किं तद्बलं व्यतिरिक्तोपलब्धिरित्याह—उपलब्धेरिति । हेतुमेव स्फुटयति—न हीति । उपलब्धिर्हि साक्षिणा बाह्यविषयत्वेनैव गृह्यते नोपलब्धिमात्रत्वेनेत्यर्थः । भव-

त्वेनैव तु स्तम्भकुड्यादीन्सर्वे लौकिका उपलभन्ते ॥ अतश्चैवमेव सर्वे लौकिका उपलभन्ते यत्प्रत्याचक्षाणा अपि बाह्यमर्थमेवमाचक्षते-यदन्तर्ज्ञेयरूपं तद्बहिर्वदवभासत इति ॥ तेऽपि हि सर्वलोकप्रसिद्धां बहिरवभासमानां संविदं प्रतिलभमानाः प्रत्याख्यातुकामाश्च बाह्यमर्थं बहिर्वदिति वत्कारं कुर्वन्ति ॥ इतरथा हि कस्माद्बहिर्वदिति ब्रूयुः ॥ न हि विष्णुमित्रो वन्ध्यापुत्रवदवभासत इति कश्चिदाचक्षीत । तस्माद्यथानुभवं तत्त्वमभ्युपगच्छद्भिर्बहिरेवावभासत इति युक्तमभ्युपगन्तुम् ॥ न तु बहिर्वदवभासत इति ॥ ननु बाह्यस्यार्थस्यासम्भवाद्बहिर्वदवभासत इत्यध्यवसितम् । नायं साधुरध्यवसायः ॥ यतः प्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ सम्भवासम्भवाववधा-

रत्नप्रभा ।

द्भेदेनैवोपलभन्त इत्याह—अतश्चेति ॥ बाह्यार्थस्यात्यन्तासत्त्वे प्रत्यक्षोपलम्भायोगात्, दृष्टान्तत्वासम्भवाच्च, बहिर्वच्छब्दो न स्यादित्याह—इतरथेति ॥ अबाधितभेदानुभवादेवकारो युक्तो न वत्कार इत्याह—तस्मादिति ॥ ज्ञेयार्थो ज्ञानातिरेकेणासन्नसम्भवादित्युक्तबाधाद्वत्करणमिति शङ्कते—नन्विति ॥ कोऽसौ असम्भवः—असत्त्वं वा, असत्त्वनिश्चयो वा, अयुक्तत्वं वा, उत्कटकोटिकसंशयात्मकसम्भवस्याभावो वा । नाद्यः, साध्याभेदात् । न द्वितीयः, स्थूलौ घटस्तम्भाविति समूहालम्बने स्थूलत्वद्वित्वघटत्वस्तम्भत्वरूपविरुद्धधर्मवतोरर्थयोरस्थूलादेकस्माद् द्व्यावगाहिविज्ञानाद्भेदसत्त्वनिश्चयेनासम्भवासिद्धेरित्याह—नायं साधुरिति ॥ सम्भवः—सत्तानिश्चयः—प्रमाणाधीनः । असम्भवः—असत्त्वनिश्चयः

भामती ।

अतश्च—इति वक्ष्यमाणोपपत्तिपरामर्शः। तृतीयं पक्षमालम्बते—ननु बाह्यस्यार्थस्यासंभवादिति। निराकरोति—नायं साधुरध्यवसाय इति । इदमत्राकूतम्—घटपटादयो हि स्थूला भासन्ते न तु परमसूक्ष्माः । तत्रेदं नानादिग्देशव्यापित्वलक्षणं स्थौल्यं यद्यपि ज्ञानाकारत्वेनावरणानावरणलक्षणेन विरुद्धधर्मसंसर्गेण युज्यते ज्ञानोपाधेरनावृतत्वादेव तथापि तद्देशत्वातद्देशत्वकम्पाकम्पत्वरक्तारक्तत्वलक्षणैर्विरुद्धधर्मसंसर्गैरस्य नानात्वं प्रसज्यमानं ज्ञानाकारत्वेऽपि न शक्यं शक्रेणापि वारयितुम्। व्यतिरेकाव्यतिरेकवृत्तिविकल्पौ च परमाणोरंशवत्त्वं चोपपादितानि वैशेषिकपरीक्षायाम् । तस्माद्बाह्यार्थवन्न ज्ञानेऽपि स्थौल्यसंभवः । न च तावत् परमाण्वाभासमेकज्ञानम्, एकस्य नानात्मत्वानुपपत्तेः । आकाराणां वा ज्ञानतादात्म्यादेकत्वप्रसङ्गात् । न च यावन्त आकारास्तावन्त्येव ज्ञानानि, तावतां ज्ञानानां मिथो वार्तानभिज्ञतया स्थूलानुभवाभावप्रसङ्गात् । न च तत्पृष्ठभावी समस्तज्ञानाकारसंकलनात्मक एकः स्थूलविकल्पो विजृम्भत इति सांप्रतम् । तस्यापि साकारतया स्थौल्यायोगात् । यथाह धर्मकीर्तिः—'तस्मान्नार्थे न च ज्ञाने स्थूलाभासस्तदात्मनः । एकत्र प्रतिषिद्धत्वाद्बहुष्वपि न संभवः ॥' इति । तस्माद्भवतापि ज्ञानाकारं स्थौल्यं समर्थयमानेन प्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ संभवासंभवावास्थेयौ । तथा चेदन्तास्पदमशक्यं ज्ञानाद्भिन्नं बाह्यमपह्नोतुमिति । यच्च ज्ञानस्य प्रत्यर्थं व्यवस्थायै विषयसारूप्यमास्थितं, नैतेन विषयोऽपह्नोतुं शक्यः, असत्यर्थे तत्सारू-

आनन्दगिरीय—न्यायनिर्णयः ।

द्वचनादपि बाह्यमर्थं लौकिकाभेदेनैव प्रतियन्तीत्याह—अतश्चेति । कथं यथोक्तं वाक्यं व्यतिरेकोपलब्धिसाधकमित्याशंक्याऽऽह—तेऽपीति । सर्वलोकप्रसिद्धबाह्यार्थधीप्रतिलम्भे हेतुमाह—इतरथेति । अत्यन्तासतोऽपि बाह्यार्थस्य दृष्टान्तत्वमाशंक्याऽऽह—न हीति । अबाधितव्यतिरेकोपलब्धौ वत्करणमयुक्तमिति फलितमाह—तस्मादिति । अनुमानतो बाधाद्युक्तं वत्करणमिति शङ्कते—नन्विति । अनुमानस्याबाधितविषयताऽपि हेतुः प्रत्यक्षविरोधे तदभावान्न तस्य बाधकतेत्याह—नायमिति । प्रमाणपूर्वकः संभवोऽर्थज्ञाने तदभावपूर्वकश्चासंभवो नरविषाणे निश्चितो बाह्यार्थे च प्रत्यक्षादिसंभवादसंभवाधीन-

र्येते ॥ न पुनः सम्भवासम्भवपूर्वके प्रमाणप्रवृत्त्यप्रवृत्ती ॥ यद्धि प्रत्यक्षादीनामन्यतमेनापि प्रमाणेनोपलभ्यते, तत्सम्भवति ॥ यत्तु न केनचिदपि प्रमाणेनोपलभ्यते तन्न सम्भवति ॥ इह तु यथास्वं सर्वैरेव प्रमाणैर्बाह्योऽर्थ उपलभमानः कथं व्यतिरेकाव्यतिरेकादिविकल्पैर्न सम्भवतीत्युच्येत । उपलब्धेरेव ॥ न च ज्ञानस्य विषयसारूप्याद्विषयनाशो भवति ॥ असति विषये विषयसारूप्यानुपपत्तेः । बहिरुपलब्धेश्च विषयस्य ॥ अत एव सहोपलम्भनियमोऽपि प्रत्ययविषययोरुपायोपेयभावहेतुकः, नाभेदहेतुक इत्यभ्युपगन्तव्यम् ॥

---

रत्नप्रभा ।

प्रमाणाभावाधीनः न वैपरीत्यमिति व्यवस्थामेव स्फुटयति—यद्धीति ॥ उक्तव्यवस्थायाः फलं बाह्यार्थस्य प्रत्यक्षादिभिः सम्भवं वदन्नेव तृतीयं दूषयति—इहेति ॥ प्रमाणनिश्चितबाह्यार्थस्य स्तम्भादेः परमाणुभ्यो भेदाभेदविकल्पैरयुक्तत्वमात्रेणासत्त्वनिश्चयो न युक्तस्त्वत्पक्षेऽप्ययुक्तत्वस्य तुल्यत्वात् । न ह्यस्थूलस्यैकस्य विज्ञानस्य स्थूलानेकसमूहालम्बनस्य विषयाभेदो युक्तः । स्थूलत्वानेकत्वप्रसङ्गात् । न चेष्टापत्तिः । समूहालम्बनोच्छेदे विज्ञानानां मिथो वार्तानभिज्ञतया विषयद्वित्वादिव्यवहारलोपापत्तेः । तस्मादयुक्तत्वेऽपि यथानुभवं व्यवहारयोग्योऽर्थः स्वीकार्यः । न चतुर्थः, निश्चिते तादृशसम्भवस्यानुपयोगात्तस्य क्वचित् प्रमाणप्रवृत्तेः पूर्वाङ्गत्वादिति भावः । यच्चोक्तं ज्ञातगतार्थसारूप्यस्यैव ज्ञानालम्बनत्वोपपत्तेर्बहिर्थाभाव इति, तत्राह—न चेति ॥ यत्तु गौरवमुक्तम् । तन्न दूषणम्, प्रामाणिकत्वादित्याह—बहिरिति ॥ यत एव ज्ञानार्थयोर्भेदः सर्वलोकसाक्ष्यनुभवसिद्धः । अत एव सहोपलम्भनियमोऽपि नाभेदसाधक इत्याह—अत एवेति ॥ यथा—चाक्षुषद्रव्यरूपस्यालोकोपलम्भनियतोपलब्धि-

भामती ।

(?)स्य तद्व्यवस्थायाश्चानुपपत्तेरित्याह—न च ज्ञानस्य विषयसारूप्यादिति । यश्च सहोपलम्भनियम उक्तः सोऽपि विकल्पं न सहते । यदि ज्ञानार्थयोः साहित्येनोपलम्भस्ततो विरुद्धो हेतुर्नाभेदं साधयितुमर्हति, साहित्यस्य तद्विरुद्धभेदव्याप्तत्वादभेदे तदनुपपत्तेः । अथैकोपलम्भनियमः । न । एकत्वस्यावाचकः सहशब्दः । अपि च किमेकत्वेनोपलम्भ आहो एक उपलम्भो ज्ञानार्थयोः । न तावदेकत्वेनोपलम्भ इत्याह—बहिरुपलब्धेश्च विषयस्य । अथैकोपलम्भनियमः, तत्राह—अत एव सहोपलम्भनियमोऽपि प्रत्ययविषययोरुपायोपेयभावहेतुको नाभेदहेतुक इत्यभ्युपगन्तव्यम् । यथा हि सर्वं चाक्षुषं प्रभा-

आनन्दगिरीय—न्यायनिर्णयः ।

स्तदसत्त्वाध्यवसायो न युक्त इत्यर्थः । संभवपूर्विका प्रमाणप्रवृत्तिरसंभवपूर्विका तदप्रवृत्तिरिति वैपरीत्यमाशंक्यान्योन्याश्रयत्वान्नैवमित्याह—नेति । संभाविते प्रमाणमित्युपगमस्तर्हि कथमित्याशंक्यात्र संभवासंभवयोर्निश्चयतदभावत्वादन्यत्र संभावनायाः संदेहत्वान्नानुपपत्तिरित्याह—यद्धीति । बाह्यार्थस्याध्यक्षादिसिद्धत्वेऽपि तस्यावयवादिभ्यो व्यतिरेकादिविकल्पासहत्वान्न संभावनेत्याशंक्याऽऽह इहेति । बाह्यार्थस्यायुक्तत्वमदृष्टत्वं वा? नाऽऽद्योऽङ्गीकारात् । नेतरो दृष्टविरोधात् । तस्मादिदंतास्पदं ज्ञानाद्भिन्नं बाह्यं वस्तु सिद्धमित्यर्थः । यत्तु प्रत्यर्थं ज्ञानस्य व्यवस्थायै विषयसारूप्ये तेनैव विषयाकारस्यावरुद्धत्वान्न पृथगर्थकल्पनेति तत्राऽऽह—न चेति । यत्तु कल्पनागौरवमिति तत्राऽऽह—बहिरिति । प्रामाणिकी कल्पना न दुष्यतीत्यर्थः । यत्तु 'सहोपलम्भनियमादभेदो नीलतद्धियोः' इति । तत्र सहोपलम्भः साहित्येनोपलम्भो वा स्यादेकोपलम्भो वा । प्रथमे साध्यसाधनयोर्व्याघातः साहित्यस्य भेदव्याप्तत्वात् । द्वितीये त्वेकत्वेनोपलब्धिर्वा स्यादेकैवोपलब्धिर्वा । नाऽऽद्यः, असिद्धेः । न हि बहिरुपलभ्यमानस्यार्थस्योपलब्ध्या सहैकत्वेनोपलब्धिः । न द्वितीयः, साक्षिवेद्यत्वाद् घटाद्युपलब्धेर्घटादेश्च तद्विषयत्वादसिद्धिताद‍वस्थ्यादित्याशयेनान्यथासिद्धिमाह—अत इति । भेदस्य प्रत्यक्षत्वादिति यावत् । परकीयानुमानानां

**अपि च घटज्ञानं पटज्ञानमिति विशेषणयोरेव घटपटयोर्भेदो, न विशेष्यस्य ज्ञानस्य ॥ यथा शुक्लो गौः, कृष्णा गौरिति शौक्ल्यकार्ष्ण्ययोरेव भेदो न गोत्वस्य ॥ द्वाभ्यां च भेद एकस्य सिद्धो भवति ॥ एकस्माच्च द्वयोः ॥ तस्मादर्थज्ञानयोर्भेदः ॥ तथा घटदर्शनं घटस्मरणमित्यत्रापि प्रतिपत्तव्यम् ॥ अत्रापि हि विशेष्ययोरेव दर्शनस्मरणयोर्भेदो, न विशेषणस्य घटस्य ॥ यथा क्षीरगन्धः क्षीररस इति विशेष्ययोरेव गन्धरसयोर्भेदो न विशेषणस्य क्षीरस्य तद्वत् ॥**

---

रत्नप्रभा ।

कत्वेऽपि नालोकाभेदः, तथाऽर्थस्य न ज्ञानाभेदः । भेदेऽपि ग्राह्यग्राहकभावेन नियमोपपत्तेः । न च ज्ञानस्य क्षणिकत्वात् स्वभिन्नग्राह्यसम्बन्धायोगः स्थायित्वादिति भावः । विज्ञानम्, अनेकार्थेभ्यो भिन्नम्, एकत्वाद्, गोत्ववदिति सत्प्रतिपक्षमाह—अपि चेति ॥ न च हेत्वसिद्धिः ज्ञानंज्ञानमित्येकाकारप्रतीतेः ज्ञानैकत्वनिश्चयात् । न च सा जातिविषया । व्यक्तिभेदानिश्चयादित्याह—न विशेष्यस्येति ॥ घटादेश्चैतन्याद्भेदमुक्त्वा वृत्तिज्ञानाद्भेदमाह—तथेति ॥ घटः, द्वाभ्यां भिन्नः, एकत्वात्, क्षीरवदित्यर्थः । ज्ञाना-

भामती ।

रूपानुविद्धं बुद्धिबोध्यं नियमेन मनुजैरुपलभ्यते, न चैतावता घटादिरूपं प्रभात्मकं भवति, किंतु प्रभोपायत्वान्नियमः, एवमिहाप्यात्मसाक्षिकानुभवोपायत्वादर्थस्यैकोपलम्भनियम इति । अपि च यत्रैकविज्ञानगोचरौ घटपटौ तत्रार्थभेदं विज्ञानभेदं चाध्यवस्यन्ति प्रतिपत्तारः । न चैतदैकात्म्येऽवकल्पत इत्याह—**अपि च घटज्ञानं पटज्ञानमिति** । तथार्थाभेदेऽपि विज्ञानभेददर्शनान्न विज्ञानात्मकत्वमर्थस्येत्याह—**तथा घटदर्शनं घटस्मरणमिति** । अपि च स्वरूपमात्रपर्यवसितं ज्ञानं ज्ञानान्तरवार्तानभिज्ञमिति ययोर्भेदस्ते द्वे न गृहीते इति भेदोऽपि तद्गतो न गृहीत इति । एवं क्षणिकशून्यानात्मत्वादयोऽप्यनेकप्रतिज्ञाहेतुदृष्टान्तज्ञानभेदसाध्याः । एवं स्वमसाधारणमन्यतो व्यावृत्तं लक्षणं यस्य तदपि यद्व्यावर्तते यतश्च व्यावर्तते तदनेकज्ञानसाध्यम् । एवं सामान्यलक्षणमपि विधिरूपमन्यापोहरूपं वाऽनेकज्ञानगम्यम् । एवं वास्यवासकभावोऽनेकज्ञानसाध्यः । एवमविद्योपप्लववशेन यत्सदसद्धर्मत्वं यथा नीलमिति सद्धर्मः, नरविषाणमित्यसद्धर्मः, अमूर्तमिति सदसद्धर्मः । शक्यं हि शशविषाणममूर्तं वक्तुम् । शक्यं च विज्ञानममूर्तं वक्तुम् । यथोक्तम्—'अनादिवासनोद्भूतविकल्पपरिनिष्ठितः । शब्दार्थस्त्रिविधो धर्मो भावाभावोभयाश्रयः ॥' इति । एवं मोक्षप्रतिज्ञा च यो मुच्यते यतश्च मुच्यते येन मुच्यते तदनेकज्ञानसाध्या । एवं विप्रतिपन्नं प्रतिपादयितुं प्रतिज्ञेति यत्प्रतिपादयति येन प्रतिपादयति यश्च पुरुषः प्रतिपाद्यते यश्च प्रतिपादयति तदनेकज्ञानसाध्येत्यसत्येकस्मिन्ननेकार्थज्ञानप्रतिसंधातरि नोपपद्यते । तत्सर्वं विज्ञानस्य स्वांशालम्बनेऽनुपपन्नमित्याह—

आनन्दगिरीय—न्यायनिर्णयः ।

प्रत्यनुमानविरोधमाह—**अपि चेति** । न विशेष्यस्येति प्रत्यभिज्ञानादैक्यसिद्धेरित्यर्थः । विशेषणभेदेऽपि विशेष्यभेदो नेत्यत्र दृष्टान्तमाह—**यथेति** । तथाऽपि कथं ज्ञानार्थभेदस्तत्राऽऽह—**द्वाभ्यामिति** । विमतमनेकस्माद्भिन्नमेकत्वाद्गोत्ववदित्यर्थः । विमतमेकस्मादन्यदनेकत्वात्संमतवदित्याह—**एकस्माच्चेति** । अनुमानद्वयफलं परानुमाने साध्यासिद्धिमाह—**तस्मादिति** । अर्थभेदेऽपि ज्ञानाभेदात्तयोर्भेदमुक्त्वा ज्ञेयाभेदेऽपि विज्ञानभेददृष्टेश्च तयोर्भिन्नतेत्याह—**तथेति** । यथा घटज्ञानं पटज्ञानमित्यत्र ज्ञेयभेदेऽपि ज्ञानाभेदात्तयोर्भिन्नत्वं तथाऽत्रापि ज्ञानभेदे ज्ञेयैक्यदृष्ट्या तद्भिन्नत्वधीरित्यर्थः । तदेव प्रकटयति—**अत्रापीति** । अनुमानद्वयं पूर्ववत् । स्वरूपापेक्षया ज्ञानस्याभेदेन नित्यत्वं वृत्त्युपधानापेक्षया चानित्यत्वमित्यविरोधः ।

**अपि च द्वयोर्विज्ञानयोः पूर्वोत्तरकालयोः स्वसंवेदनेनैवोपक्षीणयोरितरेतरग्राह्यग्राहकत्वानुपपत्तिः ॥ ततश्च विज्ञानभेदप्रतिज्ञा क्षणिकत्वादिधर्मप्रतिज्ञा स्वलक्षणसामान्यलक्षणवास्यवासकत्वाविद्योपप्लवसदसद्धर्मबन्धमोक्षादिप्रतिज्ञाश्च स्वशास्त्रगतास्ता हीयेरन् ॥**

रत्नप्रभा ।

भिन्नार्थानङ्गीकारे स्वशास्त्रव्यवहारलोपं बाधकमाह—**अपि चेति** ॥ क्रमिकयोः स्वप्रकाशयोः क्षणिकज्ञानयोर्मिथो ग्राह्यग्राहकत्वमयुक्तमभ्युपगतं च । तथा च तयोर्भेदप्रतिज्ञा न युक्ता धर्मिप्रतियोगिनोर्मिथः परेण चाग्रहेण भेदग्रहायोगात् । तथा च तयोर्भेदग्राहकस्थाय्यात्मा तद्भिन्न एष्टव्यः । एवं पक्षसाध्यहेतुदृष्टान्तभेदाभावे इदं क्षणिकमसदिति प्रतिज्ञा न युक्ता । सर्वतो व्यावृत्तं व्यक्तिमात्रत्वं स्वलक्षणम् अनेकानुगतं सामान्यमतद्व्यावृत्तिरूपमिति प्रतिज्ञा न युक्ता । सर्वानेकार्थानां ज्ञानमात्रत्वेन मिथः, परेण वा, दुर्ज्ञानत्वात् । उत्तरनीलज्ञानं वास्यं पूर्वनीलज्ञानं वासकमिति प्रतिज्ञा न युक्ता । तयोर्भिन्नस्य ज्ञातुरभावात् । किञ्च—अविद्योपप्लवः—अविद्यासंसर्गः तेन नीलमिति सद्धर्मः । नरविषाणमिति असद्धर्मः । अमूर्तमिति सदसद्धर्मः । सतो विज्ञानस्यासतो नरविषाणस्य चामूर्तत्वादिति प्रतिज्ञा दुर्लभा । अनेकार्थज्ञानसाध्यत्वात् । अज्ञानेनास्य बन्धो ज्ञानेनास्य मोक्ष इति च प्रतिज्ञा बह्वर्थज्ञानसाध्या । आदिपदेन सामान्यत इष्टं ग्राह्यमनिष्टं त्याज्यमिति शिष्यहितोपदेशोऽनेकज्ञानसाध्यो गृहीतः । तस्मात्प्रतिज्ञादिव्यव-

भामती ।

**अपि च द्वयोर्विज्ञानयोः पूर्वोत्तरकालयोरिति** । अपि च भेदाश्रयः कर्मफलभावो नाभिन्ने ज्ञाने भवितुमर्हति । नो खलु छिदा छिद्यते किंतु दारु । नापि पाकः पच्यतेऽपि तु तण्डुलाः । तदिहापि न ज्ञानं स्वांशेन ज्ञेयमात्मनि वृत्तिविरोधादपि तु तदतिरिक्तोऽर्थः, पाच्या इव तण्डुलाः पाकातिरिक्ता इति ।

आनन्दगिरीय—न्यायनिर्णयः ।

इतश्च ज्ञानातिरिक्तोऽर्थोऽस्तीत्याह—**अपि चेति** । हेत्वन्तरमेव वक्तुं स्वरूपमात्रनिष्ठं ज्ञानं त्वन्मते ज्ञानान्तरवार्तानभिज्ञमित्याह—**द्वयोरिति** । ज्ञानयोरन्योन्यग्राह्यग्राहकत्वाभावेऽपि कथमतिरिक्तार्थधीरित्याशंक्याऽऽह—**ततश्चेति** । इदमस्माद्भिन्नमिति धर्मप्रतियोग्यवच्छिन्नो भेदो भाति ज्ञानस्यैव धर्मित्वे प्रतियोगित्वे च । तेन द्वयोरग्रहाद्भेदप्रतिज्ञा ते न युक्ता; तेन तदुपपत्तये ज्ञानार्थयोर्भिन्नतेत्यर्थः । किंच, क्षणिकत्वं शून्यत्वमनात्मत्वमित्यादिधर्मप्रतिज्ञाऽपि ते हीयेतानेकप्रतिज्ञाहेतुदृष्टान्तज्ञानभेदसाध्यत्वात्तस्य च मिथोवार्तानभिज्ञत्वात्ततो भिन्नं ज्ञेयमित्याह—**क्षणिकत्वादीति** । स्वमसाधारणं सर्वतो व्यावृत्तं लक्षणं स्वलक्षणं तदपि येभ्यो व्यावृत्तं यच्च व्यावृत्तं तदनेकज्ञानापेक्षं, ज्ञानं च ज्ञानान्तरवार्तानभिज्ञमुक्तमतः स्वलक्षणप्रतिज्ञार्थमपि ज्ञानाद्भिन्नं ज्ञेयमित्याह—**स्वलक्षणेति** । सामान्यलक्षणमपि विधिरूपमन्यापोहरूपं वा भवत्यनेकधीसाध्यं न हि गोत्वं धर्मिणीनां प्रतियोगिनीनां वा व्यक्तीनामग्रहे गृह्यते तेन तत्प्रतिज्ञार्थमपि ज्ञानज्ञेययोरन्यत्वमित्याह—**सामान्येति** । पूर्वज्ञानमुत्तरज्ञानस्य नीलाद्याकारेण वासकं तच्च वास्यवासकत्वं त्वन्मतेऽनेकधीसाध्यमतस्तत्प्रतिज्ञार्थमपि ज्ञानज्ञेययोरन्यत्वमित्याह—**वास्येति** । अविद्योपप्लवोऽविद्यासंसर्गस्तेन नीलमिति सद्धर्मो नरविषाणमित्यसद्धर्मोऽमूर्तमित्युभयधर्मस्तत्प्रतिज्ञाऽपि बहुज्ञानसाध्यत्वादुक्तभेदावेदिकेत्याह—**अविद्येति** । बन्धप्रतिज्ञा च यो बध्यते यतश्च बध्यते तदनेकधीसाध्यत्वादुक्तभेदहेतुरित्याह—**बन्धेति** । मोक्षप्रतिज्ञा च यो मुच्यते यतश्च मुच्यते तदनेकज्ञानसाध्यत्वाद्भेदसाधनमित्याह—**मोक्षेति** । यच्च किंचित्प्रतिपादयितुं प्रत्याख्यातुं वा प्रतिज्ञायते तत्प्रतिज्ञाऽपि प्रतिपादयितृप्रतिपाद्याद्यनेकधीसाध्यत्वादिष्टभेदहेतुरित्यादिपदम् । एता हि प्रतिज्ञाः सौगतमते दृष्टा ज्ञानज्ञेयभेदानुपगमे विहिताः स्युस्तस्मात्तदर्थं ज्ञानज्ञेयान्यत्वमावश्यकमित्याह—**प्रतिज्ञाश्चेति** । ज्ञानातिरिक्तं

किञ्चान्यद्विज्ञानंविज्ञानमित्यभ्युपगच्छता बाह्योऽर्थः स्तम्भः, कुड्यमित्येवञ्जातीयकः कस्मान्नाभ्युपगम्यत इति वक्तव्यम् । विज्ञानमनुभूयत इति चेत ॥ बाह्योऽप्यर्थोऽनुभूयत एवेति युक्तमभ्युपगन्तुम् ॥ अथ विज्ञानं प्रकाशात्मकत्वात्प्रदीपवत्स्वयमेवानुभूयते, न तथा बाह्योऽप्यर्थ इति चेत ॥ अत्यन्तविरुद्धां स्वात्मनि क्रियामभ्युपगच्छस्यग्निरात्मानं दहतीतिवत ॥ अविरुद्धं तु लोकप्रसिद्धं स्वात्मव्यतिरिक्तेन विज्ञानेन बाह्योऽर्थोऽनुभूयत इति नेच्छसि ॥ अहो पाण्डित्यं महद्दर्शितम् ॥ न चार्थव्यतिरिक्तमपि विज्ञानं स्वयमेवानुभूयते ॥ स्वात्मनि क्रियाविरोधादेव ॥ ननु विज्ञानस्य स्वरूपव्यतिरिक्तग्राह्यत्वे तदप्यन्येन ग्राह्यं तदप्यन्येनेत्यनवस्था प्राप्नोति ॥ अपि च प्रदीपवदवभासात्मकत्वाज्ज्ञानस्य ज्ञानान्तरं कल्पयतः समत्वादवभास्यावभासकभावानुपपत्तेः कल्पनानर्थक्यमिति ॥

रत्नप्रभा ।

द्वाराय ग्राहकभेदोऽङ्गीकार्य इत्यर्थः । ज्ञानार्थयोर्भेदे युक्त्यन्तरमस्तीत्याह–किञ्चान्यदिति ॥ ज्ञानवदर्थस्याप्यनुभवाविशेषात् स्वीकारो युक्त इत्यर्थः । स्वविषयत्वाद्विज्ञानं स्वीक्रियते, नार्थः । परग्राह्यत्वादिति शङ्कते–अथ विज्ञानमिति ॥ विरुद्धं स्वीकृत्याविरुद्धं त्यजता बौद्धतनयेन मौढ्यं दर्शितमित्याह–अत्यन्तेति ॥ ज्ञानं स्ववेद्यमित्यङ्गीकृत्य मौर्ख्यमापादितम् । वस्तुतः स्ववेद्यत्वमयुक्तमित्याह–न चेति ॥ कर्त्तरि क्रियां प्रति गुणभूते प्रधानत्वाख्यकर्मत्वायोगात स्वकर्तृकवेदनकर्मत्वमसदित्यर्थः । न च स्वविषयत्वमात्रं स्ववेद्यत्वमिति वाच्यम् । अभेदे विषयित्वस्याप्यसम्भवादिति भावः । ज्ञानस्य स्ववेद्यत्वाभावे दोषद्वयं स्यादिति शङ्कते–नन्विति ॥ अनवस्था च साम्यञ्चेति दोषद्वयं परिहरति–

भामती ।

भूमिरचनापूर्वकमाह–किंचान्यत् । विज्ञानंविज्ञानमित्यभ्युपगच्छतेति । चोदयति–ननु विज्ञानस्य स्वरूपव्यतिरिक्तग्राह्यत्व इति । अयमर्थः–स्वरूपादतिरिक्तमर्थं चेद्विज्ञानं गृह्णाति ततस्तदप्रत्यक्षं सन्नार्थं प्रत्यक्षयितुमर्हति । न हि चक्षुरिव तन्निलीनमर्थे कंचनातिशयमाधत्ते, येनार्थमप्रत्यक्षं

आनन्दगिरीय-न्यायनिर्णयः ।

ज्ञेयमावश्यकमित्यत्रान्यच्च कारणमस्तीत्याह–किंचेति । तदेव वदन्विज्ञानेन तुल्यत्वं विज्ञेयस्य कथयति–विज्ञानमिति । व्यवहारदशायामबाधितासंदिग्धमानत्वाज्ज्ञानं शक्यमुपगन्तुमिति शङ्कते–विज्ञानमिति । तथा मानस्यार्थेऽपि तुल्यत्वात्तदुपगमो बलादापततीत्याह–बाह्योऽपीति । स्वसंवेद्यत्वाद्विज्ञानमिष्यते बाह्यार्थस्तु नैवमित्याह–अथेति । अविरुद्धं लोकसिद्धं च हित्वा विरुद्धमलौकिकं चाभ्युपयता मौढ्यमेवाऽऽत्मनो दर्शितं स्यादित्याह–अत्यन्तेति । ज्ञानं स्वसंवेद्यमथो नैवमिति भेदमुपेत्योक्तम् । इदानीं ज्ञानस्य न स्वसंवेद्यतेत्याह–न चेति । स्वात्मनि कर्तरि कर्मत्वं गृहीत्वा क्रियास्वीकारे कर्तृत्वेन गुणत्वं कर्मत्वेन प्राधान्यमित्यपर्यायमेकस्यां क्रियायामेकस्यैव गुणत्वं प्राधान्यं चेति विरुद्धमापद्येत तन्नार्थवज्ज्ञानमपि स्वसंवेद्यमित्यर्थः । कथं ते ज्ञानसिद्धिः । कर्मत्वातिरेकेण कर्मतया वा । नाऽऽद्यो धीकर्मतया सिद्धस्यैव सिद्धत्वाभिधानात् । न द्वितीयो ज्ञानान्तरकर्मत्वेऽनवस्थानात्तत्परिहारार्थं स्वकर्मतयैव तत्सिद्धिध्रौव्यादिति शङ्कते–नन्विति । इतश्च ज्ञानस्य न ज्ञानान्तरकर्मत्वमित्याह–अपि चेति । विमतं न स्वावान्तरजातीयप्रकाश्यं प्रकाशत्वाद्दीपवदित्याह–प्रदीपवदिति । ज्ञानान्तरं कल्पयतः कल्पनानर्थक्यमिति संबन्धः । तत्र हेतुः–समत्वादिति । अनवस्थाप्रसक्तिरनुमानं चेत्युभयमपि न साध-

**तदुभयमप्यसत् ॥ विज्ञानग्रहणमात्र एव विज्ञानसाक्षिणो ग्रहणाकांक्षानुत्पादादनवस्थाशंकानुपपत्तेः ॥ साक्षिप्रत्यययोश्च स्वभाववैषम्यादुपलब्ध्युपलभ्यभावोपपत्तेः । स्वयंसिद्धस्य च साक्षिणोऽप्रत्याख्येयत्वात् ॥**

रत्नप्रभा ।

**तदुभयमपीति** ॥ अनित्यज्ञानस्य जन्मादिमत्त्वेन घटवज्जडस्य स्वेन स्वीयजन्मादिग्रहायोगादस्ति ग्राहकाकांक्षा । साक्षिणस्तु सत्तायां स्फूर्तौ च निरपेक्षत्वान्नानवस्था । नापि साम्यम् । चिज्जडत्ववैषम्यादित्यर्थः । साक्षी केत्यत आह—**स्वयंसिद्धस्येति** ॥ निरपेक्षस्य साक्षिणोऽसत्त्वे क्षणिकविज्ञानभेदासिद्धेः सोऽङ्गीकार्य इत्यर्थः ।

भामती ।

सत्प्रत्यक्षयेत् । अपि तु तत्प्रत्यक्षतैवार्थप्रत्यक्षता । यथाहुः—'अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति' इति । तच्चेत् ज्ञानान्तरेण प्रतीयेत तदप्रतीतं नार्थविषयं ज्ञानमपरोक्षयितुमर्हति । एवं तत्तदित्यनवस्था । तस्मादनवस्थाया बिभ्यता वरं स्वात्मनि वृत्तिरास्थिता । अपि च यथा प्रदीपो न दीपान्तरमपेक्षते, एवं ज्ञानमपि न ज्ञानान्तरमपेक्षितुमर्हति समत्वादिति । तदेतत्परिहरति—**तदुभयमप्यसत् । विज्ञानग्रहणमात्र एव विज्ञानसाक्षिणो ग्रहणाकांक्षानुत्पादादनवस्थाशंकानुपपत्तेः** । अयमर्थः—सत्यमप्रत्यक्षस्योपलम्भस्य नार्थदृष्टिः प्रसिध्यति, न तूपलब्धारं प्रति तत्प्रत्यक्षत्वायोपलम्भान्तरं प्रार्थनीयम्, अपि तु तस्मिन्निन्द्रियार्थसंनिकर्षादन्तःकरणविकारभेद उत्पन्नमात्र एव प्रमातुरर्थश्चोपलम्भश्च प्रत्यक्षौ भवतः । अर्थो हि निलीनस्वभावः प्रमातारं प्रति स्वप्रत्यक्षत्वायान्तःकरणविकारभेदमनुभवमपेक्षते, अनुभवस्तु जडोऽपि स्वच्छतया चैतन्यबिम्बोद्ग्रहणाय नानुभवान्तरमपेक्षते, येनानवस्था भवेत् । न ह्यस्ति संभवोऽनुभव उत्पन्नश्च, न च प्रमातुः प्रत्यक्षो भवति, यथा नीलादिः । तस्माद्यथा छेत्ता छिदया छेद्यं वृक्षादि व्याप्नोति, न तु छिदा छिदान्तरेण, नापि छिदैव छेद्यो, किंतु स्वत एव देवदत्तादिः, यथा वा पक्ता पाक्यं पाकेन व्याप्नोति न तु पाकं पाकान्तरेण नापि पाक एव पक्ता किंतु स्वत एव देवदत्तादिः, एवं प्रमाता प्रमेयं नीलादि प्रमया व्याप्नोति न तु प्रमां प्रमान्तरेण, नापि प्रमैव प्रमात्री, किंतु स्वत एव प्रमायाः प्रमाता व्यापकः । न च प्रमातरि कूटस्थनित्यचैतन्ये प्रमापेक्षासंभवो यतः प्रमातुः प्रमायाः प्रमात्रन्तरापेक्षायामनवस्था भवेत् । तस्मात् सुष्ठूक्तं 'विज्ञानग्रहणमात्र एव विज्ञानसाक्षिणः प्रमातुः कूटस्थनित्यचैतन्यस्य ग्रहणाकांक्षानुत्पादात्' इति । यदुक्तं 'समत्वादवभास्यावभासकभावानुपपत्तेः' इति, तत्राह—**साक्षिप्रत्यययोश्च स्वभाववैषम्यादुपलब्ध्युपलभ्यभावोपपत्तेः** । मा भूत् ज्ञानयोः साम्येन ग्राह्यग्राहकभावः । ज्ञातृज्ञानयोस्तु वैषम्यादुपपद्यत एव । ग्राह्यत्वं च ज्ञानस्य न ग्राहकक्रियाजनितफलशालितया यथा बाह्यार्थस्य, फले फलान्तरानुपपत्तेः । यथाहुः—'न संविदर्यते फलत्वात्' इति । अपि तु प्रमातारं प्रति स्वतःसिद्धप्रकटतया । ग्राह्योऽप्यर्थः प्रमातारं प्रति सत्यां संविदि प्रकटः संविदपि प्रकटा । यथाहुरन्ये—'नास्याः कर्मभावो विद्यते' इति । स्यादेतत् । यत्प्रकाशते तदन्येन प्रकाश्यते यथा ज्ञानार्थौ, तथा च साक्षीति नास्ति प्रत्ययसाक्षिणोर्वैषम्यमित्यत आह—**स्वयंसिद्धस्य च साक्षिणोऽप्रत्याख्येयत्वात्** । तथाहि—अस्य साक्षिणः सदाऽसंदिग्धाविपरीतस्य नित्यसाक्षात्कारताऽनागन्तुक-

आनन्दगिरीय—न्यायनिर्णयः ।

कमिति दूषयति—**तदिति** । तत्रानवस्थाप्रसक्तेरसत्त्वं साधयति—**विज्ञानेति** । यदि बुद्धिवृत्तिग्रहावस्थायामेव तत्साक्षिणो ग्रहाकांक्षा तदाऽनवस्था न तु साऽस्ति साक्षिणः स्वयंसिद्धत्वादित्यर्थः । अनुमानं सिद्धसाध्यत्वेन निरस्यति—**साक्षीति** । यत्प्रकाशते तदन्येन प्रकाशते यथा ज्ञानार्थौ प्रकाशते च साक्षीति न धीसाक्षिणोर्वैलक्षण्यमित्याशंक्याऽऽह—**स्वयमिति** । सदैवासंदिग्धाविपर्ययस्तस्य साक्षिणो नित्यसाक्षात्कारत्वमनागन्तुकप्रकाशत्वे सिध्यति तेन तत्प्रत्याख्यानायोगादनुमानस्य सिद्धा सिद्धसाध्यते-

**किञ्चान्यत्प्रदीपवद्विज्ञानमवभासकान्तरनिरपेक्षं स्वयमेव प्रथत इति ब्रुवता प्रमाणागम्यं विज्ञानमनवगन्तृकमित्युक्तं स्यात् । शिलाघनमध्यस्थप्रदीपसहस्रप्रथनवत् ॥ बाढमेवम् ॥ अनुभवरूपत्वात्तु विज्ञानस्येष्टो नः पक्षस्त्वयानुज्ञात इति चेत् ॥ न ॥ अन्यस्यावगन्तुश्चक्षुरादिसाधनस्य प्रदीपादिप्रथनदर्शनात् ॥ अतो विज्ञानस्याप्यवभास्यत्वाविशेषात्सत्येवान्यस्मिन्नवगन्तरि प्रथनं प्रदीपवदवगम्यते ॥ साक्षिणोऽवगन्तुश्च स्वयंसिद्धतामुपक्षिपता स्वयं प्रथते विज्ञानमित्येष एव मम पक्षस्त्वया वाचोयुक्त्यन्तरेणाश्रित इति चेत् ॥**

---

रत्नप्रभा ।

अनित्यज्ञानस्वरूपसाधकत्वाच्च साक्षी स्वीकार्य इत्याह–**किञ्चेति** ॥ विज्ञानं ज्ञानान्तरानपेक्षमिति ब्रुवता तस्याप्रामाणिकत्वमुक्तं स्यात् । स्वयं प्रथनमिति ब्रुवता ज्ञातृशून्यत्वं चोक्तं स्यात् । तथा च ज्ञातृज्ञानाविषयत्वाच्छिलास्थप्रदीपवदसदेव विज्ञानं स्यात् । अतस्तत्साक्ष्येष्टव्य इत्यर्थः । विज्ञानस्य स्वान्यज्ञातृशून्यत्वमिष्टमेव त्वयाऽऽपाद्यते । न चासत्त्वापत्तिः,ज्ञात्रभावादिति वाच्यम् । स्वस्यैव ज्ञातृत्वादिति शाक्यः शङ्कते–**बाढमिति** ॥ अभेदे ज्ञातृज्ञेयत्वायोगात् ज्ञात्रन्तरमावश्यकमिति परिहरति–**नेति** ॥ विमतं विज्ञानं, स्वातिरिक्तवेद्यं, वेद्यत्वाद्देहवदित्यर्थः । अतिरिक्तः साक्षी किमन्यवेद्यः स्ववेद्यो वा । आद्ये अनवस्था, द्वितीये विज्ञानवाद एव भङ्ग्यन्तरेणोक्तः स्यादिति शङ्कते–**साक्षिण इति** ॥ त्वया विज्ञानं

भामती ।

प्रकाशत्वे घटते । तथाहि–प्रमाता संदिहानोऽप्यसंदिग्धो विपर्यस्यन्नप्यविपरीतः परोक्षमर्थमुत्प्रेक्षमाणोऽप्यपरोक्षः स्मरन्नप्यानुभविकः प्राणभृन्मात्रस्य । न चैतदन्याधीनसंवेदनत्वे घटते । अनवस्थाप्रसङ्गश्चोक्तः । तस्मात्स्वयंसिद्धतास्याऽनिच्छताप्यप्रत्याख्येया प्रमाणमार्गायत्तत्वादिति । किंचोक्तेन क्रमेण ज्ञानस्य स्वयमवगन्तृत्वाभावात्प्रमातुरनभ्युपगमे च **प्रदीपवद्विज्ञानमवभासकान्तरनिरपेक्षं स्वयमेव प्रथत इति ब्रुवताऽप्रमाणगम्यं विज्ञानमनवगन्तृकमित्युक्तं स्यात् । शिलाघनमध्यस्थप्रदीपसहस्रप्रथनवत्** । अवगन्तुश्चेत्कस्यचिदपि न प्रकाशते कृतमवगमेन स्वयंप्रकाशेनेति । विज्ञानमेवावगन्त्रिति मन्वानः शङ्कते–**बाढमेवम् । अनुभवरूपत्वादिति** । न फलस्य कर्तृत्वं कर्मत्वं वास्तीति प्रदीपवत्कर्त्रन्तरमेपितव्यं, तथा च न सिद्धसाधनमिति परिहरति–**न । अन्यस्यावगन्तुरिति** । ननु साक्षिस्थानेऽस्त्वस्मदभिमतमेव विज्ञानं तथा च नाम्न्येव विप्रतिपत्तिर्नार्थे इति शङ्कते–**साक्षिणोऽवगन्तुः स्वयंसिद्धतामुपक्षिपता** अभिप्रेयता **स्वयं प्रथते विज्ञानमित्येष एवेति** । निराकरोति–

आनन्दगिरीय–न्यायनिर्णयः ।

त्यर्थः । इतश्च साक्षिणो न प्रत्याख्यानमित्याह–**किंचेति** । यथा दीपो दीपान्तरं नापेक्षते तथा ज्ञानमपि ज्ञानान्तरानपेक्षमिति वदता मानागम्यं तदुक्तं स्यात्स्वसंवेद्यत्वे कर्मकर्तृत्वविरोधादन्यवेद्यत्वस्यानिष्टत्वात्स्वयमेव प्रथते तदिति ब्रुवता निःसाक्षिकं तदुक्तं स्यात् । तथा चोत्पन्नस्यापि तस्यानुत्पन्नसमत्वात्तत्प्रकाशकसाक्षी न शक्योऽपह्नोतुमित्याह–**प्रदीपवदिति** । प्रकाशमानस्याप्रामाणिकत्वमनवगन्तृकत्वं वा दूषणमित्याशंक्य दृष्टान्तमाह–**शिलेति** । ज्ञानस्यैवावगन्तृकत्वान्नान्यापेक्षेति शंकते–**बाढमिति** । ज्ञानं स्वातिरिक्तवेद्यं वेद्यत्वाद्दीपवदित्यनुमानान्न तस्य प्रमातृकतेत्याह–**नेति** । दर्शनादित्यन्तं व्याप्तिवचनम् । अतो विज्ञानस्येत्याद्यनुमानोक्तिरिति भेदः । साक्षिस्थाने मदिष्टं ज्ञानमेवास्तु ततो नास्ति विमतिरिति शङ्कते–**साक्षिण इति** । ज्ञानस्योत्पत्त्यादिमत्त्वात्तत्साधकेन भाव्यं क्रियात्वाच्च

न ॥ विज्ञानस्योत्पत्तिप्रध्वंसानेकत्वादिविशेषवत्त्वाभ्युपगमात् । अतः प्रदीपवद्विज्ञानस्यापि व्यतिरिक्तावगम्यत्वमस्माभिः प्रसाधितम् ॥ २८ ॥

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

यदुक्तं बाह्यार्थापलापिना स्वप्नादिप्रत्ययवज्जागरितगोचरा अपि स्तम्भादिप्रत्यया विनैव बाह्येनार्थेन भवेयुः । प्रत्ययत्वाविशेषादिति । तत्प्रति वक्तव्यम् ॥ अत्रोच्यते ॥ न स्वप्नादिप्रत्ययवज्जाग्रत्प्रत्यया भवितुमर्हन्ति ॥ कस्मात् ॥ वैधर्म्यात्–वैधर्म्यं हि भवति स्वप्नजागरितयोः–किं पुनर्वैधर्म्यम् ॥ बाधाबाधाविति ब्रूमः । बाध्यते हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य मिथ्यामयोपलब्धो महाजनसमागम इति ॥ न ह्यस्ति मम महाजनसमागमः । निद्राग्लानं तु मे मनो बभूव ।

---

रत्नप्रभा ।

जन्मविनाशयुक्तमुच्यते । अतः कार्यस्य जडत्वनियमात् स्वातिरिक्तवेद्यमस्माभिः साधितं कूटस्थचिदात्मनो ग्राहकानपेक्षत्वान्नानवस्थेति चोक्तम् । अतो महद्वैलक्षण्यमावयोरिति परिहरति–**न विज्ञानस्येति** ॥ २८ ॥ एवं वेद्यविज्ञानवदर्थस्याप्युपलब्धेर्न बाह्यार्थाभाव इत्युक्तम् । संप्रति जाग्रद्विज्ञानं स्वप्नादिविज्ञानवन्न बाह्यालम्बनमित्यनुमानं दूषयति–**वैधर्म्याच्चेति** ॥ किमत्र निर्विषयत्वं साध्यम्–उत–पारमार्थिकविषयशून्यत्वम्, अथ वा व्यावहारिकविषयशून्यत्वम् । नाद्यः, स्वप्नादिविभ्रमाणामपि मिथ्यार्थालम्बनत्वेन दृष्टान्ते साध्यवैकल्यात् । न द्वितीयः, सिद्धसाधनादिति सूत्रस्थचकारार्थः । तृतीये तु व्यवहारदशायां बाधितार्थग्राहित्वमुपाधिरित्याह–**बाध्यते हीत्यादिना** । निद्राग्लानमिति

भामती ।

**नेति** । भवन्ति हि विज्ञानस्योत्पादादयो धर्मा अभ्युपेतास्तथा चास्य फलतया नात्रगन्तृत्वं,कर्तृफलभावस्यैकत्र विरोधात्। किंतु प्रदीपादितुल्यतेत्यर्थः॥२८॥ **वैधर्म्याच्च न स्वप्नादिवत्।** बाधाबाधौ वैधर्म्यम्। स्वप्नप्रत्ययो बाधितो जाग्रत्प्रत्ययश्चाबाधितः । त्वयापि चावश्यं जाग्रत्प्रत्ययस्याबाधितत्वमास्थेयं, तेन हि स्वप्नप्रत्ययो बाधितो मिथ्येत्यवगम्यते । जाग्रत्प्रत्ययस्य तु बाध्यत्वे स्वप्नप्रत्ययस्यासौ न बाधको भवेत्। न हि बाध्यमेव बाधकं भवितुमर्हति। तथा च न स्वप्नप्रत्ययो मिथ्येति साध्यविकलो दृष्टान्तः स्यात् स्वप्नवदिति । तस्माद्बाधाबाधाभ्यां वैधर्म्यान्न स्वप्नप्रत्ययदृष्टान्तेन जाग्रत्प्रत्ययस्य शक्यं निरालम्बनत्वमध्यवसातुम् । **निद्राग्लान-**

आनन्दगिरीय–न्यायनिर्णयः ।

छिदिवत्कर्त्राश्रयत्वमित्यतिरिक्तज्ञातृत्वसिद्धिरित्याह–**नेति** । साक्षिज्ञानयोर्वैलक्षण्ये फलितमाह–**अत इति** ॥ २८ ॥ ज्ञानस्यापि ज्ञेयवदन्यवेद्यत्वाज्ज्ञानसत्ता चेज्ज्ञेयसत्ताऽपि दुर्वारेत्युक्तम् । इदानीं निरालम्बनत्वानुमानं प्रत्याह–**वैधर्म्याच्चेति** । तद्व्याख्यातुं व्यावर्त्यमनुवदति–**यदिति** । तस्य निरासयोग्यत्वमाह–**तदिति** । कथं तर्हि तन्निराकरणं तत्र सूत्रमादाय व्याकरोति–**अत्रेति** । मिथ्यात्वाविशेषादसिद्धं वैधर्म्यमित्याह–**किमिति** । तत्र साध्यं निरालम्बनत्वं सर्वथैवाऽऽलम्बनशून्यत्वं वा वास्तवसदालम्बनवैधुर्यं वा व्यावहारिकसदालम्बनहीनत्वं वा । आद्ये दृष्टान्तस्य साध्यविकलता तत्रापि काल्पनिकालम्बनवत्त्वोपगमात् । द्वितीये सिद्धसाध्यता । तृतीये बाध्यत्वस्य प्रयोजकत्वात्प्रत्ययत्वमप्रयोजकमित्याह–**बाधेति** । स्वप्नादिधियां व्यावहारिकसदालम्बनहीनत्वे बाध्यत्वं प्रयोजकमित्युक्तं प्रकटयति–**बाध्यते हीति** । बाधमेवाभिनयति–**मिथ्येति** । तस्य मिथ्यात्वे कथं प्रथेत्याशंक्याऽऽह–**न हीति।** निद्राग्लानमिति करणदोषोक्तिः । मायादिषु बाध्यत्वाभावेऽपि व्यावहारिकसदालम्बनशून्यत्वादुपाधेः

**तेनैषा भ्रान्तिरुद्भूवेति ॥ एवं मायादिष्वपि भवति यथायथं बाधः ॥ न चैवं जागरितोपलब्धं वस्तु स्तम्भादिकं कस्याञ्चिदप्यवस्थायां बाध्यते ॥ अपि च स्मृतिरेषा यत्स्वप्नदर्शनम् ॥ उपलब्धिस्तु जागरितदर्शनम् ॥ स्मृत्युपलब्ध्योश्च प्रत्यक्षमन्तरं स्वयमनुभूयतेऽर्थविप्रयोगसम्प्रयोगात्मकम्-इष्टं पुत्रं स्मरामि । नोपलभे । उपलब्धुमिच्छामीति ॥ तत्रैवं सति न शक्यते वक्तुं मिथ्या, जागरितोपलब्धिः, उपलब्धित्वात्, स्वप्नोपलब्धिवदित्युभयोरन्तरं स्वयमनुभवता । न च स्वानुभवापलापः प्राज्ञमानिभिर्युक्तः कर्तुम्॥अपि चानुभवविरोधप्रसङ्गात्-**

रत्नप्रभा ।

करणदोषोक्तिः । साधनव्यापकत्व निरासायाह-न **चैवमिति** ॥ किञ्च प्रमाणजाऽनुभव उपलब्धिः पक्षः, अप्रमाणजं स्वप्नज्ञानं दृष्टान्तः, इति वैधर्म्यान्तरम् । परमतेन स्वप्नस्य स्मृतित्वमङ्गीकृत्याह-**अपि चेति** ॥ स्मृतिप्रत्यक्षोपलब्ध्योर्वैधर्म्यान्तरमाह-**अर्थविप्रयोगेति** ॥ असम्बन्धश्चावर्तमानश्च स्मृतेरर्थो विषय इति निरालम्बनत्वमप्यस्याः कदाचिद्भवेत् । न संप्रयुक्तवर्तमानार्थमात्रग्राहिण्या उपलब्धेरिति भावः । पूर्वोक्तप्रमाणाप्रमाणजत्ववैधर्म्योक्तिफलमाह-**तत्रैवं सतीति** ॥ वैधर्म्ये सतीत्यर्थः । अप्रमाणजत्वोपाधेर्निरालम्बनत्वानुमानं न युक्तमिति भावः । वैधर्म्यासिद्धिं निरस्यति-**न चेति** ॥ बाधमप्याह-**अपि चेति** ॥ **वस्तुतो** घटाद्यनुभवस्य निरालम्बनत्वं धर्मो **यदि** स्यात्, **तदा** किं दृष्टान्ताग्रहेण प्रत्यक्षतोऽपि वक्तुं शक्यत्वात्, न हि वह्नेरौष्ण्यं दृष्टान्तेन वक्तव्यम् । **यदि** न वस्तुतो धर्मोऽस्ति, **तदापि** किं दृष्टान्तेन बाधितस्य दृष्टान्तसहस्रेणापि दुःसाध्यत्वात् । अतः स्वतो निरालम्बनत्वोक्तौ सालम्बनत्वानुभवबाधभिया त्वयानुमातुमारब्धम् ।

भामती ।

**मिति** । करणदोषाभिधानम् । मिथ्यात्वाय वैधर्म्यान्तरमाह-**अपि च स्मृतिरेवेति** । संस्कारमात्रजं हि विज्ञानं स्मृतिः । प्रत्युत्पन्नेन्द्रियसंप्रयोगलिङ्गशब्दसारूप्यान्यथानुपपद्यमानयोग्यप्रमाणानुत्पत्तिलक्षणसामग्रीप्रभवं तु ज्ञानमुपलब्धिः । तदिह निद्राणस्य सामग्र्यन्तरविरहात्संस्कारः परिशिष्यते, तेन संस्कारजत्वात्स्मृतिः, सापि च निद्रादोषाद्विपरीताऽवर्तमानमपि पित्रादि वर्तमानतया भासयति । तेन स्मृतेरेव तावदुपलब्धेर्विशेषस्तस्याश्च स्मृतेर्वैपरीत्यमिति । अतो महदन्तरमित्यर्थः । अपि च स्वतःप्रामाण्ये सिद्धे जाग्रत्प्रत्ययानां यथार्थत्वमनुभवसिद्धं नानुमानेनान्यथयितुं शक्यम्, अनुभवविरोधेन तदनुत्पादात् । अबाधितविषयताप्यनुमानोत्पादसामग्रीग्राह्यतया प्रमाणम् । न च कारणाभावे कार्यमुत्पत्तुमर्हतीत्याशयवानाह-**अपि चानुभव-**

आनन्दगिरीय-न्यायनिर्णयः ।

साध्याव्याप्तिरित्याशंक्याऽऽह-**एवमिति** । साधनव्याप्तिं निराह-**नैवमिति** । परमतेन स्वप्नस्य स्मृतित्वमुपेत्य सूत्रं विधान्तरेण योजयति-**अपि चेति** । तथाऽपि कथं वैधर्म्यं तदाह-**स्मृतीति** । किं तद्वैलक्षण्यं तदाह-**अर्थेति** । स्मृतेरर्थविप्रयोगमुदाहरति-**इष्टमिति** । स्वप्नजागरयोरेवं वैधर्म्येऽपि किमनुमानस्येत्याशंक्याऽऽह-**तत्रेति** । उक्तनीत्या तस्मिन्वैधर्म्ये स्थिते सतीति यावत् । अप्रमाकरणजत्वोपाधेर्न निरालम्बनत्वानुमानमित्यर्थः । उभयोरन्तरमसिद्धमित्याशंक्यानुभवविरोधान्मैवमित्याह-**न चेति** । इतश्च न निरालम्बनत्वानुमानमित्याह-**अपि चेति** । स्वतो जागरितधियां निरालम्बनत्वोक्तौ दृष्टिविरोधे तन्निरासार्थमनुमानमुच्यते तस्मिन्नुक्तेऽपि तद्विरोधतादवस्थ्यमिति कालात्ययापदिष्टत्वमाह--**अनुभवेति** ।

जागरितप्रत्ययानां स्वतो निरालम्बनतां वक्तुमशक्नुवता स्वप्नप्रत्ययसाधर्म्याद्वक्तुमिष्यते ॥ न हि यो यस्य स्वतो धर्मो न सम्भवति, सोऽन्यस्य साधर्म्यात्तस्य सम्भविष्यति । न ह्यग्निरुष्णोऽनुभूयमान उदकसाधर्म्याच्छीतो भविष्यति । दर्शितं तु वैधर्म्यं स्वप्नजागरितयोः ॥ २९ ॥

## न भावोऽनुपलब्धेः ॥ ३० ॥

यदप्युक्तं विनाप्यर्थेन ज्ञानवैचित्र्यं वासनावैचित्र्यादेवावकल्पत इति ॥ तत्प्रति वक्तव्यम् ॥ अत्रोच्यते ॥ न भावो वासनानामुपपद्यते ॥ त्वत्पक्षेऽनुपलब्धेर्बाह्यानामर्थानाम् ॥ अर्थोपलब्धिनिमित्ता हि प्रत्यर्थं नानारूपा वासना भवन्ति ॥ अनुपलभ्यमानेषु त्वर्थेषु किंनिमित्ता विचित्रा वासना भवेयुः ॥ अनादित्वेऽप्यन्धपरम्परान्यायेनाप्रतिष्ठैवानवस्था व्यवहारविलोपिनी स्यान्नाभिप्रायसिद्धिः ॥ यावप्यन्वयव्यतिरेकाव-

रत्नप्रभा ।

तथापि बाधो न मुञ्चतीत्यर्थः । उक्तोपाधिरपि न विस्मर्तव्य इत्याह—दर्शितं त्विति ॥ २९ ॥ सूत्रव्यावर्त्यं स्मारयित्वा दूषयति—यदप्युक्तमित्यादिना ॥ भावः—उत्पत्तिः सत्ता वा । ननु बाह्यार्थानुपलब्धावपि पूर्वपूर्ववासनाबलादुत्तरोत्तरविज्ञानवैचित्र्यमस्तु । बीजाङ्कुरवदनादित्वादित्यत आह—अनादित्वेऽपीति ॥ बीजादङ्कुरो दृष्ट इति, अदृष्टेऽपि तज्जातीययोः कार्यकारणभावकल्पना युक्ता । इत्वर्थानुभवनिरपेक्षवासनोत्पत्तेरादावेव कल्प्यत्वादनादित्वकल्पना . निर्मूलेति नाभिप्रेतधीवैचित्र्यसिद्धिरित्यर्थः । ननु निरपेक्षवासनानां सत्त्वे धीवैचित्र्यमसत्त्वे तु नेति स्वप्ने दृष्टमिति समूलाऽनवस्थेत्यत आह—याविति ॥ वासनानां बाह्यार्थानुभवकार्यत्वे सति नैरपेक्ष्यासिद्धिर्न त्वयापि दृष्टेत्यर्थः । कार्यत्व-

भामती ।

विरोधप्रसंगादिति ॥ २९ ॥ न भावोऽनुपलब्धेः । यथालोकदर्शनं चान्वयव्यतिरेकावनुध्रियमाणावर्थ एवोपलब्धेर्भवतो नार्थानपेक्षायां वासनायाम् । वासनाया अप्यर्थोपलब्ध्यधीनत्वदर्शनादित्यर्थः । अपि चाश्रयाभावादपि न लौकिकी. वासनोपपद्यते । न च क्षणिकमालयविज्ञानं वासनाधारो भवितुमर्हति । द्वयोर्युगपदुत्पद्यमानयोः सव्यदक्षिणशृङ्गवदाधाराधेयभावाभावात् ।

आनन्दगिरीय—न्यायनिर्णयः।

तद्विरोधेन स्वतो निरालम्बनत्वाभावेऽपि स्वप्नसाधर्म्यात्तद्भविष्यतीत्याशंक्याऽऽह—न चेति । स्वतोऽसतो धर्मस्यान्यसाधर्म्यादपि सत्त्वाभावे दृष्टान्तमाह—न हीति । वैधर्म्यमुक्त्वा साधर्म्यं वदतो विरोधमाशंक्याऽऽह—दर्शितं त्विति ॥ २९ ॥ चोद्यान्तरं निरसितुं सूत्रम्—न भाव इति । तद्व्याकर्तुं चोद्यमनूद्य तस्य निरासयोग्यत्वमाह—यदपीति । तन्निरासमेव सूत्रमवतार्य तदक्षरयोजनया दर्शयति—अत्रेति । तेषामनुपलब्धावपि वासनानां भावे काऽनुपपत्तिस्तत्राऽऽह—अर्थेति । निमित्तान्तरादपि तासां योगादलमर्थोपलब्ध्येत्याशंक्याऽऽह—अनुपलभ्येति । पूर्वपूर्वज्ञानं तत्संतानो वा वासना तेनानादित्वान्न निमित्तापेक्षेत्याशंक्याऽऽह—अनादित्वेऽपीति । पूर्वस्माद्बीजादिदानीमुत्पद्यमानमंकुरं दृष्ट्वमित्यदृष्टेऽपि तज्जातीययोरेव कार्यकारणत्वं युक्तम् । प्रकृते त्वर्थोपलब्धिनिरपेक्षवासनोदयादृष्टेरादावेव तस्य कल्प्यत्वादनवस्थानान्नाभीष्टधीवैचित्र्यधीरित्यर्थः । स्वप्नादावर्थधियं विनाऽपि वासनाकृतं धीवैचित्र्यं दृष्टमित्युक्तमाशंक्यानुवदति—याविति । तत्रापि बाह्यार्थधीनिमित्तत्वमस्ति वासनानामित्युक्तन्यायेन स्थिते-

१ न चेति पाठो न्यायनिर्णयसम्मतः ।

र्थापलापिनोपन्यस्तौ-वासनानिमित्तमेवेदं ज्ञानजातं, नार्थनिमित्तमिति, तावप्येवं सति प्रत्युक्तौ द्रष्टव्यौ ॥ विनार्थोपलब्ध्या वासनानुत्पत्तेः ॥ अपि च विनापि वासनाभिरर्थोपलब्ध्युपगमाद्विना त्वर्थोपलब्ध्या वासनोत्पत्त्यनभ्युपगमादर्थसद्भावमेवान्वयव्यतिरेकावपि प्रतिष्ठापयतः ॥ अपि च-वासना नाम संस्कारविशेषाः ॥ संस्काराश्च नाश्रयमन्तरेणावकल्पन्ते ॥ एवं लोके दृष्टत्वात् ॥ न च तव वासनाश्रयः कश्चिदस्ति । प्रमाणतोऽनुपलब्धेः ॥ ३० ॥

## क्षणिकत्वाच्च ॥ ३१ ॥

यदप्यालयविज्ञानं नाम वासनाश्रयत्वेन परिकल्पितं, तदपि क्षणिकत्वाभ्युपगमादनवस्थितस्वरूपं सत्प्रवृत्तिविज्ञानवन्न वासनानामधिकरणं भवितुमर्हति ॥ न हि कालत्रयसम्बन्धिन्येकस्मिन्नन्वयिन्यसति कूटस्थे

---

रत्नप्रभा ।

ग्राहकं व्यतिरेकमाह-विनेति ॥ अर्थानुभवकार्याणां वासनानां तदनपेक्षत्वायोगान्न त्वदुक्तान्वयादिदृष्टिरित्युक्तमभिनवार्थोपलब्धिवैचित्र्यस्य वासनानां विनापि भावेन व्यतिरेकव्यभिचाराच्च न क्वापि वासनामात्रकृतं धीवैचित्र्यम् । किन्त्वर्थानुभवे सति वासना, असति नेत्यन्वयव्यतिरेकाभ्यां वासनामूलानुभवावच्छेदकार्थवृत्तमेवेति बाह्यार्थसद्भावसिद्धिरित्याह-अपि चेति ॥ यः संस्कारः, स साश्रयो लोके दृष्टः, यथा वेगादिरिष्वाश्रयः । अतो विज्ञानसंस्काराणां न भावः । आश्रयानुपलब्धेरित्यर्थान्तरमाह-अपि चेति ॥ ३० ॥ अस्त्वालयविज्ञानमाश्रय इत्यत आह-क्षणिकत्वाच्चेति ॥ सूत्रं व्याचष्टे-यदपीति ॥ सहोत्पन्नयोः सव्येतरविषाणवदाश्रयाश्रयिभावायोगात् पौर्वापर्ये चाधेयक्षणे सतः आधारत्वायोगात्, सत्त्वे क्षणिकत्वव्याघातान्नाधारत्वमालयविज्ञानस्य, क्षणिकत्वान्नीलादिविज्ञानवदित्यर्थः । अस्तु तर्हि आलयविज्ञानसन्तानाश्रयाः वासना इत्यत आह-न हीति ॥ सविकारः, कूटस्थो वा,

भामती ।

प्रागुत्पन्नस्य चाधेयोत्पादसमयेऽसतः क्षणिकत्वव्याघात इत्याशयवानाह-अपि च वासना नामेति । शेषमतिरोहितार्थम् ॥ ३० ॥ क्षणिकत्वाच्च । स्यादेतत् । यदि साकारं विज्ञानं संभवति बाह्यश्चार्थः स्थूलसूक्ष्मविकल्पेनासंभवी हन्तैवमर्थज्ञाने सत्त्वेन तावद्विचारं न सहेते । नाप्यसत्त्वेन, असतो भासनायोगात् । नोभयत्वेन, विरोधात्सदसतोरेकत्रानुपपत्तेः । नाप्यनुभयत्वेन, एकनिषेधस्येतरविधाननान्तरीय-

आनन्दगिरीय-न्यायनिर्णयः ।

नान्वयादिसिद्धिरित्याह-ताविति । प्रत्युक्तिप्रकारं सूचयति-विनेति । इतश्चान्वयाद्यसिद्धिरित्याह-अपि चेति । अपूर्वार्थदृष्टावृत्तेऽपि वासनां धीवैचित्र्यदृष्टेर्न क्वापि वासनावैचित्र्यकृतं धीवैचित्र्यमतोऽन्वयव्यतिरेकावस्मदनुगुणावित्याह-विनाऽपीति । वासनासत्त्वमुपेत्य तद्वैचित्र्यान्न धीवैचित्र्यमित्युक्तमिदानीं त्वन्मते न तत्सत्त्वमेवेत्याह-अपि चेति । तदेव दर्शयितुं वासनास्वरूपमाह-वासना इति । उक्तलक्षणानामपि वासनानामस्मत्पक्षे काऽनुपपत्तिस्तत्राऽऽह-संस्काराश्चेति । तेषां कश्चिदाश्रयोऽपि स्यादित्याशंक्य विधान्तरेण सूत्रं योजयति--न चेति ॥ ३० ॥ आलयज्ञानं वासनाधारः स्यादित्याशंक्याऽऽह-क्षणिकत्वाच्चेति । सूत्रं व्याचष्टे-यदपीति । विमतं न वासनाधारत्वयोग्यं क्षणिकत्वाद्रूपादिधीवदित्यर्थः । क्षणिकत्वेऽपि संतत्या स्थिरमालयज्ञानं सर्वव्यवहारास्पदं स्यादित्याशंक्याऽऽह-न हीति । यद्येकः स्थायी कूटस्थो वा सर्वार्थदर्शी नेष्यते तदा देशाद्यपेक्षया वासनाधानं तदधीने

वा सर्वार्थदर्शिनि देशकालनिमित्तापेक्षवासनाधीनस्मृतिप्रतिसन्धानादिव्यवहारः सम्भवति ॥ स्थिरस्वरूपत्वे त्वालयविज्ञानस्य सिद्धान्तहानिः ॥ अपि च विज्ञानवादेऽपि क्षणिकत्वाभ्युपगमस्य समानत्वाद्यानि बाह्यार्थवादे क्षणिकत्वनिबन्धनानि दूषणान्युद्भावितान्युत्तरोत्पादे च पूर्वनिरोधादित्येवमादीनि, तानीहाप्यनुसन्धातव्यानि ॥ एवमेतौ द्वावपि वैनाशिकपक्षौ निराकृतौ बाह्यार्थवादिपक्षो विज्ञानवादिपक्षश्च ॥ शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय

रत्नप्रभा ।

स्थाय्यात्मा यदि नास्ति, तदा सन्तानस्यावस्तुत्वादेशाद्यपेक्षया—यद्वासनानामाधानं निक्षेपो, ये च स्मृतिप्रत्यभिज्ञे, यश्च तन्मूलो व्यवहारः,—तत् सर्वं न सम्भवतीत्यर्थः । यदि व्यवहारार्थम् आत्मस्थायित्वं, तदा—अपसिद्धान्त इत्याह—**स्थिरेति** ॥ सूत्रमतिदेशार्थत्वेनापि व्याचष्टे—**अपि चेति** ॥ मतद्वयनिरासमुपसंहरति—**एवमिति** ॥ ज्ञानज्ञेयात्मकस्य सर्वस्य सत्त्वासत्त्वाभ्यां विचारासहत्वाच्छून्यतावशिष्यत इति माध्यमिकपक्षस्यापि मानमूलत्वमाशंक्य सूत्रकारः किमिति न निराचकारेत्यत आह—**शून्येति** ॥ **आदरः** पृथक्सूत्रारम्भः न क्रियते । एतान्येव तन्मतनिरासार्थत्वेनापि योज्यन्त इत्यर्थः । **तथाहि** ज्ञानार्थयोर्नाभावः, प्रमाणत उपलब्धेः । **ननु** जाग्रत्स्वप्नौ, ज्ञानार्थशून्यौ, अवस्थात्वात्, सुषुप्तिवदित्यत आह—**वैधर्म्याच्च न स्वप्नादिवत्** ॥ [ व्या० सू० २ । २ । २९ । ] इति ॥ स्वप्नः आदिर्यस्याः सुषुप्तेः तद्वन्नेतरावस्थयोः शून्यत्वम् । उपलब्ध्यनुपलब्धिवैधर्म्यलक्षणाबाधितज्ञानार्थोपलब्धिबाधात् सुषुप्तावप्यात्मज्ञानसत्त्वेन साध्यवैकल्याच्च नानुमानमित्यर्थः । **किञ्च** निरधिष्ठाननिषेधायोगादधिष्ठानमेव तत्त्वं वाच्यम् । तस्य त्वन्मते न भावः । मानतोऽनुपलब्धेरित्याह—**न भावोऽनुपलब्धेः** ॥ [ व्या० सू० २ । २ । ३० ] इति ॥ ( [1]उपलब्ध्यनुपलब्धिलक्षणं यद्वैधर्म्यं तल्लक्ष्यते ·

भामती ।

कत्वात् । तस्माद्विचारासहत्वमेवास्तु तत्त्वं वस्तूनाम् । यथाहुः—'इदं वस्तु बलायातं यद्वदन्ति विपश्चितः । यथायथार्थाश्चिन्त्यन्ते विविच्यन्ते तथातथा ॥' इति । न क्वचिदपि पक्षे व्यवतिष्ठन्त इत्यर्थः । तदेतन्निराचिकीर्षुराह—**शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते** । लौकिकानि हि प्रमाणानि सदसत्त्वगोचराणि । तैः खलु सत्सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते । असच्चासदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते । सदसतोश्च विचारासहत्वं व्यवस्थापयता सर्वप्रमाणविप्रतिषिद्धं व्यवस्थापितं भवति । तथा च सर्वप्रमाणविप्रतिषेधान्नेयं व्यवस्थोपपद्यते । यद्युच्येत तात्त्विकं प्रामाण्यं प्रमाणानामनेन विचारेण व्युदस्यते न सांव्यवहारि-

आनन्दगिरीय—न्यायनिर्णयः ।

स्मृतिप्रत्यभिज्ञे प्रत्यक्षादिव्यवहारश्च न संभवति संतानस्यावस्तुनो वासनाद्याश्रयत्वायोगादित्यर्थः । व्यवहारनिर्वाहार्थमालयज्ञानस्य स्थायित्वं चेत्तत्राऽऽह—**स्थिरेति** । क्षणिकत्वसूत्रस्य व्याख्यानान्तरमाह—**अपि चेति** । मतद्वयनिरासमुपसंहरति—**एवमिति** । ज्ञानज्ञेययोः सत्त्वेन निरूपणात्प्रतीतस्यासत्त्वायोगाद्विरोधादेव सदसत्त्वयोरेकत्रासिद्धेरनिर्वाच्यत्वस्य चैकनिषेधेऽन्यतरविधिध्रौव्यादसंभवाद्विचारासहत्वमेवास्तु वस्तूनां तत्त्वमित्याशंक्याऽऽह—**शून्येति** । नाऽऽदरः क्रियते सूत्रान्तराणि न रच्यन्त एतान्येवाऽऽवृत्त्या योज्यन्ते तन्निरासायेति यावत् । तत्र ज्ञानार्थयोरभावः शून्यत्वं न युक्तं प्रमाणैस्तयोरुपलब्धेरित्याद्यसूत्रार्थ उक्तः । इदानीमतात्त्विकत्वं द्वैतस्य स्थापयितुमधिष्ठाने वस्तुनि वाच्ये तस्य त्वन्मते

१ कोष्ठस्थोऽयमधिको ग्रन्थः ।

**नादरः क्रियते । न ह्ययं सर्वप्रमाणसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम् ॥ अपवादाभावे उत्सर्गप्रसिद्धेः ॥ ३१ ॥**

## सर्वथानुपपत्तेश्च ॥ ३२ ॥

**किं बहुना । सर्वप्रकारेण यथायथायं वैनाशिकसमय उपपत्तिमत्त्वाय**

रत्नप्रभा ।

ऽनयेति सा चासौ अबाधितज्ञानार्थोपलब्धिः ) । तद्रूपबाधादित्यर्थः । तदर्थमाह–**न ह्ययमिति** ॥ यद्भाति तन्नासदित्युत्सर्गतः प्रपञ्चस्य न शून्यत्वम् । बाधाभावादित्यर्थः । न च सत्त्वासत्त्वाभ्यां विचारासहत्वादसत्त्वम् । मिथ्यात्वसम्भवादिति भावः । **क्षणिकत्वाच्च** [ न्या० सू० २ । २ । ३१ ] इति सूत्रं क्षणिकत्वोपदेशाच्चेति पठनीयम् । शून्यत्वविरुद्धक्षणिकत्वोपदेशादसङ्गतप्रलापी सुगत इत्यर्थः ॥ ३१ ॥ सुगतमतासाङ्गत्यमुपसंहरति–**सर्वथेति** ॥ सर्वज्ञस्य कथं विरुद्धप्रलापस्तत्राह–

भामती ।

कम् । तथा च भिन्नविषयत्वान्न सर्वप्रमाणविप्रतिषेध इत्यत आह–**न ह्ययं सर्वप्रमाणप्रसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम्** । प्रमाणानि हि स्वगोचरे प्रवर्तमानानि तत्त्वमिदमित्येव प्रवर्तन्ते । अतात्त्विकत्वं तु तद्गोचरस्यान्यतो बाधकादवगन्तव्यम् । न पुनः सांव्यवहारिकं नः प्रामाण्यं न तु तात्त्विकमित्येव प्रवर्तन्ते । बाधकं चातात्त्विकत्वमेषां तद्गोचरविपरीततत्त्वोपदर्शनेन दर्शयेत् । यथा शुक्तिकेयं न रजतं मरीचयो न तोयमेकश्चन्द्रो न चन्द्रद्वयमित्यादि, तद्वदिहापि समस्तप्रमाणगोचरविपरीततत्त्वान्तरव्यवस्थापनेनातात्त्विकत्वमेषां प्रमाणानां बाधकेन दर्शनीयं न त्वव्यवस्थापिततत्त्वान्तरेण प्रमाणानि शक्यानि बाधितुम् । विचारासहत्वं वस्तूनां तत्त्वं व्यवस्थापयद्बाधकमतात्त्विकत्वं प्रमाणानां दर्शयतीति चेत्, किं पुनरिदं विचारासहत्वं वस्तु यत्तत्त्वमभिमतं, किं तद्वस्तु परमार्थतः सदादीनामन्यतमत् केवलं विचारं न सहते, अथ विचारासहत्वेन निस्तत्त्वमेव । तत्र परमार्थतः सदादीनामन्यतमद्विचारं न सहत इति विप्रतिपिद्धम् । न सहते चेन्न सदादीनामन्यतमत् । अन्यतमच्चेत् कथं न विचारं सहते । अथ निस्तत्त्वं चेत् कथमन्यतमत्तत्त्वमव्यवस्थाप्य शक्यमेवं वक्तुम् । न च निस्तत्त्वतैव तत्त्वं भावानाम् । तथा सति हि तत्त्वाभावः स्यात् । सोऽपि च विचारं न सहत इत्युक्तं भवद्भिः । अपि चारोपितं निषेधनीयम् । आरोपश्च तत्त्वाधिष्ठानो दृष्टो यथा शुक्तिकादिषु रजतादेः । न चेत् किंचिदस्ति तत्त्वं कस्य कस्मिन्नारोपः । तस्मान्निष्प्रपञ्चं परमार्थसद्ब्रह्मानिर्वाच्यप्रपञ्चात्मनारोप्यते, तच्च तत्त्वं व्यवस्थाप्यातात्त्विकत्वेन सांव्यवहारिकत्वं प्रमाणानां बाधकेनोपपद्यत इति युक्तमुत्पश्यामः ॥ ३१ ॥

**सर्वथानुपपत्तेश्च** विभजते–**किं बहुना** उक्तेन **यथायथा** ग्रन्थतोऽर्थतश्च **अयं वैनाशिकसमय इति** । ग्रन्थतस्तावत्पश्यनातिष्ठनामिद्धपोपधाद्यसाधुपदप्रयोगः।अर्थतश्च नैरात्म्यमभ्युपेत्यालयविज्ञानं समस्त-

आनन्दगिरीय–न्यायनिर्णयः ।

न भावो मानतोऽनुपलब्धेस्तन्न शून्यतेति च वदन् 'न भावोऽनुपलब्धेः' इति सूत्रं योजयति–**न हीति** । न च स्वप्नादाविव जागरेऽपि ज्ञानार्थयोरसत्त्वं वस्तुतस्तदसत्त्वेऽपि व्यवहारतस्तदयोगाद्बाधाबाधाभ्यां वैधर्म्यात्प्रतीतितस्तदसत्त्वस्य दृष्टान्तेऽप्यसंमतेरिति वैधर्म्यसूत्रं नेयम् । 'क्षणिकत्वाच्च' इति सूत्रम् 'उपदेशाच्च' इत्युपस्कृत्य क्षणिकत्वशून्यत्वोपदेशाद्व्याहतव्यवहारता सुगतस्येति योज्यम् ॥ ३१ ॥ वर्णकद्वयार्थमुपसंहरति—**सर्वथेति** । उपसंहारसूत्रं विभजते—**किमिति** । यथायथेति ग्रन्थतोऽर्थतश्चेत्यर्थः । दर्शनमिति वा स्थानमिति वा वाच्ये पश्यन्नातिष्ठतेत्यलक्षणपदप्रयोगाद् ग्रन्थतस्तावन्नोपपत्तिः । अर्थतश्च नैरात्म्यमुपेत्याऽऽलयज्ञानं सर्वव्यवहारास्पदमित्युपगमात्प्रसिद्धेवानुपपत्तिरित्युपेत्य फलितमाह–

परीक्ष्यते तथातथा सिकताकूपवद्विदीर्यत एव न काञ्चिदप्यत्रोपपत्तिं पश्यामः ॥ अतश्चानुपपन्नो वैनाशिकतन्त्रव्यवहारः ॥ अपि च बाह्यार्थविज्ञानशून्यवादत्रयमितरेतरविरुद्धमुपदिशता सुगतेन स्पष्टीकृतमात्मनोऽसम्बद्धप्रलापित्वं, प्रद्वेषो वा प्रजासु विरुद्धार्थप्रतिपत्त्या विमुह्येयुरिमाः प्रजा इति ॥ सर्वथाप्यनादरणीयोऽयं सुगतसमयः श्रेयस्कामैरित्यभिप्रायः ॥ ३२ ॥ इत्युपलब्ध्यधिकरणम् ॥ ५ ॥

## नैकस्मिन्नसम्भवात् ॥ ३३ ॥ (६) ॥

निरस्तः सुगतसमयः ॥ विवसनसमय इदानीं निरस्यते । सप्त चैषां पदार्थाः सम्मता जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षा नाम । संक्षेपतस्तु

---

रत्नप्रभा ।

**प्रद्वेषो वेति** ॥ वेदबाह्या अत्र प्रजा ग्राह्याः । अतो भ्रान्त्येकमूलसुगतसिद्धान्तेन वेदान्तसिद्धान्तस्याविरोध इति सिद्धम् ॥ ३२ ॥ (५) ॥ **नैकस्मिन्नसम्भवात्** ॥ मुक्तकच्छमते निरस्ते मुक्ताम्बराणां मतं बुद्धिस्थं भवति । तन्निरस्यत इति प्रसङ्गसङ्गतिमाह—**निरस्त इति** ॥ एकरूपं ब्रह्मेति वैदिकसिद्धान्तस्यानेकान्तवादेन विरोधोऽस्ति न वेति तद्वादस्य मानभ्रान्तिमूलत्वाभ्यां सन्देहे मानमूलत्वात् विरोध इति पूर्वपक्षफलमभिसन्धाय तन्मतमुपन्यस्यति—**सप्त चेति** ॥ जीवाजीवौ **भोक्तृभोग्यौ** । विष-

भामती ।

वासनाधारमभ्युपगच्छन्नक्षरमात्मानमभ्युपैति । एवं क्षणिकत्वमभ्युपेत्य 'उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषा धर्माणां धर्मता धर्मस्थितिता' इति नित्यतामुपैतीत्यादि बह्वूहितव्यमिति ॥ ३२ ॥ (५) ॥ **नैकस्मिन्नसंभवात्** । निरस्तो मुक्तकच्छानां सुगतानां समयः, विवसनानां समय इदानीं निरस्यते । तत्समयमाह संक्षेपविस्तराभ्याम्—**सप्त चैषां पदार्थाः संमता इति** । तत्र संक्षेपमाह—**संक्षेपतस्तु**

आनन्दगिरीय—न्यायनिर्णयः ।

**अतश्चेति** । सौगतमतस्यानुपपन्नत्वे हेत्वन्तरं चकारसूचितमाह—**अपि चेति** । वस्तुनि विकल्पानुपपत्तेर्विरोधाच्च समुच्चयासिद्धिरिति वक्तुमितरेतरविरुद्धमित्युक्तम् । सर्वज्ञस्य भगवतो वासुदेवस्येतिहासपुराणयोर्बुद्धत्वप्रसिद्धेस्तस्यासंबद्धप्रलापित्वमयुक्तमित्याशंक्याऽऽह—**प्रद्वेषो वेति** । वैदिकपथविरुद्धजन्तूपलक्षणार्थं प्रजाग्रहणम् । चतुर्धाऽपि सुगतमतस्य वैदिकैरनादरणीयत्वान्न तद्विरोधो नित्यसच्चिदात्मनो ब्रह्मणो जगत्सर्गवादिनः समन्वयस्येति निगमयति—**सर्वथाऽपीति** ॥ ३२ ॥ ( ५ ) ॥ एवं मुक्तकच्छमते निरस्ते मुक्ताम्बराणां बुद्धिस्थत्वात्तन्मतं निरस्यति—**नैकस्मिन्निति** । एकरूपाद्ब्रह्मणो जगत्सर्गं वदन्समन्वयो विषयः, स किं सर्वमनैकान्तिकमिति मतेन विरुध्यते न वेति तत्प्रामाणिकत्वभ्रान्तत्वाभ्यां संदेहे संगतिमाह—**निरस्त इति** । समयमात्रसिद्धपञ्चस्कन्धादिपदार्थाश्रितन्यायाभासे निरस्ते पञ्चास्तिकायादिसामयिकपदार्थाश्रितन्यायाभाससंदब्धे मते बुद्धिस्थे तन्निरसनं युक्तमित्यर्थः । एकरूपब्रह्मसमन्वयविरोध्यनैकान्तवादभङ्गेन समन्वयदृढीकरणात्पादादिसंगतिः । पूर्वपक्षे तन्मतप्रामाण्यात्तद्विरोधे समन्वयासिद्धिः सिद्धान्ते तदप्रामाण्याद्भ्रान्तेन तेन विरोधस्याऽऽभासतया तत्सिद्धिरित्यभिसंधाय पूर्वपक्षयति—**सप्त चेति** । जीवाजीवौ भोक्तृभोग्यौ । मिथ्याप्रवृत्तिरास्रवः । संवरनिर्जरौ सम्यक्प्रवृत्ती । संबन्धस्तद्धेतुत्वात्कर्म । मोक्षस्तदुच्छित्तिरिति पदार्थाः सप्तेत्यर्थः । ननु भोक्तृभोग्ययोरितरेषामन्तर्भावात्कथं सप्तेत्युक्तं लक्षणभेदादवान्तरलक्ष्यभेदे सप्तेति न व्यवस्था तत्राऽऽह—**संक्षेपतस्त्विति** । नियमद्वे-

**द्वावेव पदार्थौ जीवाजीवाख्यौ ॥ यथायोगं तयोरेवेतरान्तर्भावादिति मन्यन्ते ॥ तयोरिममपरं प्रपञ्चमाचक्षते ॥ पञ्चास्तिकाया नाम—जीवाऽस्तिकायः, पुद्गलास्तिकायः, धर्मास्तिकायः, अधर्मास्तिकायः, आकाशास्तिकायश्चेति ॥ सर्वेषामप्येषामवान्तरप्रभेदान्बहुविधान्-**

रत्नप्रभा ।

याभिमुख्येन इन्द्रियाणां प्रवृत्तिः—**आस्रवः** । तां संवृणोतीति **संवरः** यमनियमादिः । निर्जरयति नाशयति कल्मषमिति—**निर्जरः**—तप्तशिलारोहणादिः । **बन्धः**—कर्म । **मोक्षः**—कर्मपाशनाशे सत्यलोकाकाशप्रविष्टस्य सततोर्ध्वगमनम् । नन्वास्रवादीनां भोग्यान्तर्भावात् कथं सप्तत्वमित्यत आह—**संक्षेपतस्त्विति** ॥ संक्षेपविस्तराभ्यामुक्तार्थेषु मध्यमरीत्या विस्तरान्तरमाह—**तयोरिति** ॥ **अस्तिकायशब्दः**—सांकेतिकः—पदार्थवाची । १ जीवश्चासौ अस्तिकायश्चेत्येवं विग्रहः । २ पूर्यन्ते गलन्तीति **पुद्गलाः**—परमाणुसंघाः—**कायाः** । ३ सम्यक् प्रवृत्त्यनुमेयः—**धर्मः** । ४ ऊर्ध्वगमनशीलस्य जीवस्य देहे स्थितिहेतुः—**अधर्मः** । ५ आवरणाभावः—**आकाश** इत्यर्थः । पञ्चपदार्थानामवान्तरभेदमाह—**सर्वेषामिति** ॥ **अयमर्थः जीवास्तिकायस्त्रिविधः** । १ कश्चिज्जीवो नित्यसिद्धः अर्हन्मुख्यः, २ केचित् साम्प्रतिकमुक्ताः, ३ केचिद्बद्धा इति ॥ **पुद्गलास्तिकायः षोढा**—४ पृथिव्यादीनि चत्वारि भूतानि ५ स्थावरं ६ जङ्गमं चेति। ७–८ प्रवृत्तिस्थितिलिङ्गौ धर्माधर्मौ उक्तौ । **आकाशास्तिकायो द्विविधः**—१ लोकाकाशः सांसारिकः, २ अलोकाकाशः मुक्ताश्रय इति । **बन्धाख्यं कर्म—अष्टविधम्** । ४ चत्वारि-घातिकर्माणि ४ चत्वार्यघातीनि । तत्र ज्ञानावरणीयं दर्शनावरणीयं मोहनीयमान्तर्यं चेति—**घातिकर्माणि** ।

भामती ।

**द्वावेव पदार्थाविति** । बोधात्मको जीवो जडवर्गस्त्वजीव इति । यथायोगं तयोर्जीवाजीवयोरिममपरं प्रपञ्चमाचक्षते । तमाह—**पञ्चास्तिकाया नामेति** । **सर्वेषामप्येषामवान्तरप्रभेदानिति** । जीवास्तिकायस्त्रिधा—बद्धो मुक्तो नित्यसिद्धश्चेति । पुद्गलास्तिकायः षोढा—पृथिव्यादीनि चत्वारि भूतानि स्थावरं जङ्गमं चेति । धर्मास्तिकायः प्रवृत्त्यनुमेयः, अधर्मास्तिकायः स्थित्यनुमेयः । आकाशास्तिकायो द्वेधा—लोकाकाशोऽलोकाकाशश्च । तत्रोपर्युपरि स्थितानां लोकानामन्तर्वर्ती लोकाकाशस्तेषामुपरि मोक्षस्थानमलोकाकाशः । तत्र हि न लोकाः सन्ति । तदेवं जीवाजीवपदार्थौ पञ्चधा प्रपञ्चितौ । आस्रवसंवरनिर्जरास्त्रयः पदार्थाः प्रवृत्तिलक्षणाः प्रपञ्च्यन्ते । द्विधा प्रवृत्तिः—सम्यङ् मिथ्या च । तत्र मिथ्या प्रवृत्तिरास्रवः । सम्यक्प्रवृत्ती तु संवरनिर्जरौ । आस्रावयति पुरुषं विषयेष्विति इन्द्रियप्रवृत्तिरास्रवः । इन्द्रियद्वारा हि पौरुषज्योतिर्विषयान् स्पृशद्रूपादिज्ञानरूपेण परिणमत इति । अन्ये तु कर्माण्यास्रवमाहुः । तानि हि कर्तारमभिव्याप्य स्रवन्ति कर्तारमनुगच्छन्तीत्यास्रवः । सेयं मिथ्याप्रवृत्तिरनर्थहेतुत्वात् । संवरनिर्जरौ च सम्यक्प्रवृत्ती । तत्र शमदमादिरूपा प्रवृत्तिः संवरः । सा ह्यास्रवस्रोतसो द्वारं संवृणोतीति संवर उच्यते । निर्जरस्त्वनादिकालप्रवृत्तिकषायकलुषपुण्यापुण्यप्रहाणहेतुस्तप्तशिलारोहणादिः । स हि निःशेषं पुण्यापुण्यं सुखदुःखोपभोगेन जरयतीति निर्जरः । बन्धोऽष्टविधं कर्म । तत्र घातिकर्म चतुर्विधम् । तद्यथा—ज्ञानावर-

आनन्दगिरीय—न्यायनिर्णयः ।

तुमाह—**यथेति** । आस्रवादीनामजीवे मोक्षस्य पक्षभेदादुभयत्रान्तर्भाव इति विभागः । संक्षेपविस्तराभ्यामुक्तपदार्थेषु विस्तरान्तरमाह—**तयोरिति** । अस्तीति कायते शब्द्यत इत्यस्तिकायशब्दः पारिभाषिकः पदार्थवाची । जीवश्चासावस्तिकायश्चेति कर्मधारयः । पूर्यन्ते गलन्तीति पुद्गलाः परमाणवस्तत्समूहोऽत्र पृथिव्यादिरुक्तः । कर्मधारयः सर्वत्र । धर्मास्तिकायः सम्यक्प्रवृत्त्यनुमेयः शास्त्रीयबाह्यप्रवृत्त्याऽऽन्तरोऽपूर्वाख्यो धर्मोऽनुमीयते । अधर्मास्तिकायः स्थित्यनुमेयः । ऊर्ध्वगमनशीलो जीवस्तस्य देहेऽवस्थानेनाधर्मोऽनुमीयते । आकाशास्तिकायस्त्वावरणाभावः । उक्तपदार्थानामवान्तरभेदमाह—**सर्वेषामिति** ।

**स्वसमयपरिकल्पितान्वर्णयन्ति ॥**

रत्नप्रभा ।

१ तत्त्वज्ञानान्न मुक्तिरिति ज्ञानम्—**आद्यं कर्म** । २ आर्हततन्त्रश्रवणान्न मुक्तिरिति ज्ञानं—**द्वितीयम्** । ३ बहुषु तीर्थंकरप्रदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं **मोहनीयम्** । ४ मोक्षमार्गप्रवृत्तिविघ्नकरणम्—**आन्तर्यम् इमानि चत्वारि** श्रेयोहन्तृत्वाद्—**घातिकर्माणि** ॥ **अथाऽघातीनि चत्वारि कर्माणि**— वेदनीयं, नामिकं, गोत्रिकम्, आयुष्कमिति । १ मम वेदितव्यं तत्त्वमस्तीत्यभिमानो **वेदनीयम्** । २ एतन्नामाहमस्मीत्यभिमानः—**नामिकम्** । ३ अहमत्र भवतो देशिकस्याऽर्हतः शिष्यवंशे प्रविष्टोऽस्मीत्यभिमानः—**गोत्रिकम्** । ४ शरीरस्थित्यर्थं कर्म—**आयुष्कम्** । ४ **अथ वा** शुक्रशोणितमिश्रितम्—**आयुष्कम्** । ३ तस्य तत्त्वज्ञानानुकूलदेहपरिणामशक्तिः—**गोत्रिकम्** । २ शक्तस्य तस्य द्रवीभावात्मककललावस्थाया बुद्बुदावस्थायाश्चाऽऽरम्भकः क्रियाविशेषः—**नामिकम्** । १ सक्रियस्य जाठराग्निवायुभ्यामीषद्घनीभावः—**वेदनीयम्** । तत्त्ववेदनानुकूलत्वात्तान्येतानि तत्त्वावेदकशुक्लपुद्गलार्थत्वादघातीनि । तदेतत् कर्माष्टकं जन्मार्थत्वाद्बन्धः आस्रवादिद्वारेति । इयं प्रक्रिया मानशून्येति द्योतयति—**स्वसमयपरिकल्पितानिति** ॥ स्वीय-

भामती ।

णीयं दर्शनावरणीयं मोहनीयमन्तरायमिति । तथा चत्वार्यघातिकर्माणि । तद्यथा—वेदनीयं नामिकं गोत्रिकमायुष्कं चेति । तत्र सम्यग्ज्ञानं न मोक्षसाधनं, न हि ज्ञानाद्वस्तुसिद्धिरतिप्रसङ्गादिति विपर्ययो ज्ञानावरणीयं कर्मोच्यते । आर्हतदर्शनाभ्यासान्न मोक्ष इति ज्ञानं दर्शनावरणीयं कर्म । बहुषु विप्रतिषिद्धेषु तीर्थकरैरुपदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयं कर्म । मोक्षमार्गप्रवृत्तानां तद्विघ्नकरं विज्ञानमन्तरायं कर्म । तानीमानि श्रेयोहन्तृत्वाद् घातिकर्माण्युच्यन्ते । अघातीनि कर्माणि, तद्यथा वेदनीयं कर्म शुक्लपुद्गलविपाकहेतुः, तद्धि बन्धोऽपि न निश्रेयसपरिपन्थि तत्त्वज्ञानाविघातकत्वात् । शुक्लपुद्गलारम्भकवेदनीयकर्मानुगुणं नामिकं कर्म, तद्धि शुक्लपुद्गलस्याद्यावस्थां कललबुद्बुदादिमारभते । गोत्रिकमव्याकृतं ततोऽप्याद्यं शक्तिरूपेणावस्थितम् । आयुष्कं त्वायुः कायति कथयत्युत्पादनद्वारेत्यायुष्कम् । तान्येतानि शुक्लपुद्गलाद्याश्रयत्वादघातीनि कर्माणि । तदेतत् कर्माष्टकं पुरुषं बध्नातीति बन्धः । विगलितसमस्तक्लेशतद्वासनस्यानावरणज्ञानस्य सुखैकतानस्यात्मन उपरि देशावस्थानं मोक्ष इत्येके । अन्ये तूर्ध्वगमनशीलो हि जीवो धर्माधर्मास्तिकायेन बद्धस्तद्विमोक्षाद्यदूर्ध्वं गच्छत्येव स मोक्ष इति । त एते

आनन्दगिरीय—न्यायनिर्णयः ।

तेषां मानयुक्तिहीनत्वं सूचयति—**स्वसमयेति** । जीवास्तिकायस्त्रेधा । बद्धो मुक्तो नित्यसिद्धश्च । तत्रार्हन्मुनिर्नित्यसिद्धः । इतरे केचित्साधनैर्मुक्ताः अन्ये बद्धा इति भेदः । पुद्गलास्तिकायः षोढा । पृथिव्यादिचत्वारि भूतानि स्थावरं जङ्गमं चेति । प्रवृत्तिस्थितिभ्यामनुमेयौ धर्माधर्मास्तिकायावुक्तौ । आकाशास्तिकायो द्वेधा लौकिकाकाशोऽलौकिकाकाशश्च । लोकानामन्तर्वर्ती लोकाकाशः । तदुपरि मोक्षस्थानमलोकाकाशः । आस्रवो मिथ्याप्रवृत्तिरुक्ता । आस्रावयति पुरुषं ज्ञानजननेन विषयेष्विति नानाविधेन्द्रियप्रवृत्तिरास्रव इत्येके । अपरे तु कर्तारमभिव्याप्य स्रवन्त्यागच्छन्तीति कर्माण्यास्रवमाचक्षते । सम्यक्प्रवृत्ती संवरनिर्जरौ । तत्राऽऽस्रवः स्रोतोद्वारं संवृणोतीति संवरः शमादिप्रवृत्तिः । निःशेषं पुण्यापुण्यं सुखदुःखोपभोगेन जरयतीति नर्जरस्तप्तशिलारोहणावरोहणादिः । बन्धो बध्नातीति कर्म तच्चाष्टविधम् । तत्र घातिकर्म चतुर्विधं ज्ञानावरणीयं दर्शनावरणीयं मोहनीयमान्तरीयमिति । सम्यग्ज्ञानं न मोक्षहेतुरिति ज्ञानं विज्ञानावरणीयम् । आर्हतमताभ्यासान्न मुक्तिरिति ज्ञानं दर्शनावरणीयम् । बहुषु तीर्थकरदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयम् । सन्मोक्षमार्गप्रवृत्तानां तत्प्रत्यूहकरं ज्ञानमान्तरीयम् । तान्येतानि श्रेयोहन्तृत्वाद् घातिकर्माणि । वेदनीयं नामिकं गोत्रिकमायु-

१ तीर्थंकर—इति सर्वत्र प्रसिद्धिः ।

**सर्वत्र चेमं सप्तभङ्गीनयं नाम न्यायमवतारयन्ति-स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्चेत्येवमेवैकत्वनित्यत्वादिष्वपीमं सप्तभङ्गीनयं योजयन्ति ॥**

रत्नप्रभा ।

तन्त्रसंकेतमात्रकल्पितानित्यर्थः । पदार्थानामुक्तानामनेकान्तत्वं वदन्तीत्याह-**सर्वत्रेति** ॥ अस्तित्वनास्तित्वादिविरुद्धधर्मद्वयमादाय वस्तुमात्रे न्यायं योजयन्ति । सप्तानामस्तित्वादीनां भङ्गानां समाहारः-**सप्तभंगी** । तस्या **नयो** न्यायः-घटादेर्हि सर्वात्मना सदेकरूपत्वे प्राप्यात्मनाप्यस्त्येव स इति तत्प्राप्तये यत्नो न स्यात् । अतो घटत्वादिरूपेण कथञ्चिदस्ति, प्राप्यत्वादिरूपेण कथञ्चिन्नास्तीत्येवमनेकरूपत्वं वस्तुमात्रस्यास्थेयमिति भावः । के ते सप्त भंगास्तानाह-**स्यादस्तीति** ॥ स्यादित्यव्ययं तिङन्तप्रतिरूपकं कथञ्चिदर्थकम् । स्यादस्ति कथंचिदस्तीत्यर्थः । एवमग्रेऽपि । १ तत्र वस्तुनोऽस्तित्ववाञ्छायां स्यादस्तीति **आद्यो भंगः** । २ प्रवर्त्तनास्तित्ववाञ्छायां स्यान्नास्तीति **द्वितीयो भंगः** । ३ क्रमेणोभयवाञ्छायां स्यादस्ति नास्ति चेति **तृतीयो भंगः** । ४ युगपदुभयवाञ्छायामस्ति नास्तीति शब्दद्वयस्य सकृद्वक्तुमशक्यत्वात् स्यादवक्तव्यत्वं **चतुर्थो भंगः** । ५ आद्यचतुर्थभङ्गयोर्वाञ्छायां स्यादस्ति चाऽवक्तव्यश्चेति **पञ्चमो भंगः** । ६ द्वितीयचतुर्थेच्छायां स्यान्नास्ति चाऽवक्तव्यश्चेति **षष्ठो भंगः** । ७ तृतीयचतुर्थेच्छायां स्यादस्ति नास्ति चाऽवक्तव्यश्चेति **सप्तमो भंग** इति विभागः । **एवमेकत्वमनेकत्वं चेति**

भामती ।

सप्त पदार्था जीवादयः सहावान्तरप्रभेदैरुपन्यस्ताः । तत्र **सर्वत्र चेमं सप्तभंगीनयं नाम न्यायमवतारयन्ति, स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्चेति** । स्याच्छब्दः खल्वयं

आनन्दगिरीय-न्यायनिर्णयः ।

च्छमित्यघातिकर्मापि चतुर्विधम् । ममेदं ज्ञातव्यमस्तीत्यभिमानो वेदनीयम् । एतन्नामास्तीत्यभिमानो नामिकम् । अस्य शिष्यवंशे पतितोऽस्मीत्यभिमानो गोत्रिकम् । शरीरयात्रानिमित्तं कर्माऽऽयुष्कम् । अथ वा सक्रियस्य बीजस्य पावकपवनवशादीषद्घनीभावः शरीराकारपरिणामहेतुर्वेदनीयम् । तच्छक्तिमति तस्मिन्बीजे कललाख्यद्रवावस्थायां बुद्बुदावस्थायां चाऽऽरम्भकक्रियाविशेषो नामिकम् । बीजस्य शरीराकारपरिणामशक्तिर्गोत्रिकम् । शुक्रशोणितव्यतिकरे जाते मिलितं तदुभयरूपमायुष्कम् । तान्येतानि शुक्लपुद्गलाश्रयत्वादघातीनि कर्माणि । तदेतत्कर्माष्टकं बध्नातीति बन्धः । यद्यपि पूर्वोक्तास्रवोऽपि बन्धस्तथाऽपि बन्धहेतुत्वादयमपि बन्ध इति द्रष्टव्यम् । आर्हतमुनिप्राप्तिः संततोर्ध्वगतिर्वा मुक्तिरित्यर्थः । तथाऽपि कथं वस्तु समस्तमनेकान्तमित्याशंक्याऽऽह-**सर्वत्रेति** । अस्तित्वनास्तित्वादाविति यावत् । सप्तानामेकान्तभंगानां समाहारः सप्तभंगी तस्या नयः । घटः सन्घटोऽसन्नित्येकस्यैव सदसत्त्वयोरध्यक्षत्वात्कालभेदोपाधिकल्पनायां कालस्यापि सन्नसन्निति प्रत्ययात्तत्रापि तत्कल्पनायामनवस्थानात्प्रत्यक्षमेव वस्तूनामनैकान्त्यमिति भावः । वस्तूनामेकान्तत्वभङ्गाः सप्त कथं कदा च प्रसरन्तीत्यपेक्षायामाह-**स्यादिति** । स्याच्छब्दस्तिङन्तप्रतिरूपको निपातोऽनेकान्तद्योती तेन स्यादस्ति कथंचिदस्तीत्यर्थः । तथोत्तरत्रापि योजना । उक्तं हि-"तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत् । स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते ॥ क्रमेणोभयवीक्षायां प्रयोगः समुदायवान् । युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः ॥ आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते । अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः ॥ समुच्चयेन युक्तस्य सप्तमो भङ्ग इष्यते" इति । सत्त्वादावुक्तमनैकान्तिकत्वमेकत्वादावतिदिशति-**एवमेवेति** । यदि वस्तु सत्त्वादीनामेकतमेन व्यवस्थितं तदा तस्य सर्वथा सर्वदा सर्वत्र सर्वात्मना

 

**अत्राचक्ष्महे ॥ नायमभ्युपगमो युक्त इति ॥ कुतः ॥ एकस्मिन्नसम्भवात्— न ह्येकस्मिन्धर्मिणि युगपत्सदसत्त्वादिविरुद्धधर्मसमावेशः सम्भवति**

रत्नप्रभा ।

द्वयमादाय स्यादेकः, स्यादनेकः, स्यादेकोऽनेकश्च, स्यादवक्तव्यः, स्यादेकोवक्तव्यः, स्यादनेकोऽवक्तव्यः, स्यादेकोऽनेकश्चावक्तव्यश्चेति, तथा स्यान्नित्यः, स्यादनित्य इत्याद्यूह्यम् । एवमनेकरूपत्वेन वस्तुनि प्राप्तित्यागादिव्यवहारः सम्भवति । एकरूपत्वे सर्वं सर्वत्र सर्वदास्त्येवेति व्यवहारविलोपापत्तिः स्यात् । तस्मादनेकान्तं सर्वमित्येकरूपब्रह्मवादबाध इति प्राप्ते सिद्धान्तयति—**अत्रेति** ॥ **यदस्ति, तत्** सर्वत्र सर्वदास्त्येव । **यथा**—ब्रह्मात्मा । **न चैवं** तत्प्राप्तये यत्नो न स्यादिति **वाच्यम्** । अप्राप्तिभ्रान्त्या यत्नसम्भवात् । **यन्नास्ति,** तन्नास्त्येव । **यथा**—शशविषाणादि । प्रपञ्चस्तु उभयविलक्षण एवेत्येकान्तवाद एव युक्तो नानेकान्तवादः । **तथाहि—किं** येनाकारेण वस्तुनः सत्त्वं तेनैवाकारेणासत्त्वम्—**उत** आकारान्तरेण । **द्वितीये** वस्तुन आकारान्तरमेवाऽसदिति वस्तुनः सदेकरूपत्वमेव । **न हि** दूरस्य ग्रामस्य प्राप्तेरसत्त्वे ग्रामोऽप्यसन् भवति । प्राप्यासत्त्वे प्राप्तियत्नानुपपत्तेः । अतो यथाव्यवहारं प्रपञ्चस्यैकरूपत्वमास्थेयम् । नाद्य इत्याह—**नायमिति** ॥ **ननु** विमतम्, अनेकात्मकं, वस्तुत्वान्नारसिंहवदिति चेत् । न । घट इदानीमस्त्येवेत्यनुभवबाधात् । **किञ्च** जीवादिपदार्थानां सप्तत्वं

भामती ।

निपातस्तिङन्तप्रतिरूपकोऽनेकान्तद्योती । यथाहुः—'वाक्येष्वनेकान्तद्योती गम्यं प्रतिविशेषणम् । स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपकः ॥' इति । यदि पुनरयमनेकान्तद्योतकः स्याच्छब्दो न भवेत् स्यादस्तीतिवाक्ये स्यात्पदमनर्थकं स्यात् तदिदमुक्तम्—'अर्थयोगित्वात्' इति । अनेकान्तद्योतकत्वे तु स्यादस्ति कथंचिदस्तीति स्यात्पदात्कथंचिदर्थोऽस्तीत्यनेनानुक्तः प्रतीयत इति नानर्थक्यम् । तथा च 'स्याद्वादः सर्वथैकान्तत्यागात्किंवृत्तचिद्विधेः । सप्तभङ्गनयापेक्षो हेयादेयविशेषकृत् ॥' किंवृत्ते प्रत्यये खल्वयं चिन्निपातविधिना सर्वथैकान्तत्यागात् सप्तस्वेकान्तेषु यो भङ्गस्तत्र यो नयस्तदपेक्षः सन् हेयोपादेयभेदाय स्याद्वादः कल्पते । तथाहि—यदि वस्त्वस्त्येवेत्येवैकान्ततस्तत् सर्वथा सर्वदा सर्वत्र सर्वात्मनास्त्येवेति न तदीप्साजिहासाभ्यां क्वचित् कदाचित् कथंचित् कश्चित् प्रवर्तेत निवर्तेत वा प्राप्ताप्रापणीयत्वात्, हेयहानानुपपत्तेश्च । अनेकान्तपक्षे तु कचित् कदाचित् कस्यचित् कथंचित् सत्त्वे हानोपादाने प्रेक्षावतां कल्पेते इति । तमेनं सप्तभङ्गीनयं दूषयति—**नैकस्मिन्नसंभवात्** । विभजते—**न ह्येकस्मिन्धर्मिणि** परमार्थसति परमार्थसतां **युगपत्सत्त्वादीनां धर्माणां** परस्परपरिहारस्वरूपाणां **समावेशः संभवति** ।

आनन्दगिरीय—न्यायनिर्णयः ।

नियमे तदीप्साजिहासाभ्यां प्रवृत्तिनिवृत्त्ययोगादप्रवृत्तिनिवृत्ति विश्वं स्यात् । अनैकान्तिकत्वे तु कस्यचित्कथंचित्केनचिदवस्थाने हानोपादाने प्रेक्षावतां प्रकल्प्येते तस्मादनैकान्तिकं सर्वमिति मतविरोधिसमन्वयो नेति भावः । पदार्थानां सत्त्वादिव्यवस्था वास्तवी व्यावहारिकी वा न संभवतीति विकल्प्याऽऽद्यमङ्गीकृत्य द्वितीये व्यवहारविरोधमभिप्रेत्य सिद्धान्तयति—**अत्रेति** । व्यवहारतो वस्तुतो वा नानैकान्तिकत्वमुपगन्तुं शक्यमिति प्रतिज्ञापरत्वेन नञ्पदं व्याचष्टे—**नायमिति** । तत्र प्रश्नपूर्वकं हेतुमाह—**कुत इति** । हेतुं विभजते—**न हीति** । एकत्र विरुद्धधर्मसमावेशासंभवादनैकान्तिकत्वस्य द्विधाऽप्ययोगादैकान्तिकत्वस्य च घटादिषु तत्त्वतोऽयोगेऽपि व्यवस्थयैव दृष्टव्यवहारदृष्टेर्व्यावहारिकत्वसिद्धेरयुक्तत्वाद्दिगम्बरपाद्धान्तस्य न तेन विरोधः समन्वयस्येत्यर्थः । विमतमनैकान्तिकं वस्तुत्वान्नरसिंहादिवदित्याशंक्य

**शीतोष्णवत् ॥ ये एते सप्त पदार्था निर्धारिता एतावन्त एवंरूपाश्चेति, ते तथैव वा स्युः, नैव वा तथा स्युः, इतरथा हि तथा वा स्युः, अतथा वेत्यनिर्धारितरूपं ज्ञानं संशयज्ञानवदप्रमाणमेव स्यात् ॥ नन्वनेकात्मकं वस्त्विति निर्द्धारितरूपमेव ज्ञानमुत्पद्यमानं संशयज्ञानवन्नाप्रमाणं भवितुमर्हतीति ॥ नेति ब्रूमः ॥ निरंकुशं ह्यनेकान्त्वं सर्ववस्तुषु प्रतिजानानस्य निर्द्धारणस्यापि वस्तुत्वाविशेषात्स्यादस्ति स्यान्नास्तीत्यादिविकल्पोपनिपातादनिर्धारणात्मकतैव स्यात् ॥ एवं निर्द्धारयितुर्निर्द्धारणफलस्य च स्यात्पक्षेऽस्तिता स्याच्च पक्षे नास्तितेति ॥ एवं सति कथं प्रमाणभूतः संस्तीर्थकरः[1] प्रमाणप्रमेयप्रमातृप्रमिति-**

रत्नप्रभा।

जीवत्वादिरूपं चास्त्येव नास्त्येवेति च नियतं वा। उत अनियतम्। आद्ये व्यभिचार इत्याह—**य इति** ॥ द्वितीये पादार्थनिश्चयो न स्यादित्याह—**इतरथेति** ॥ अनेकान्तं सर्वमित्येव निश्चय इति शङ्कते—**नन्विति** ॥ तस्य निश्चयरूपत्वं नियतमनियतं वा। आद्ये वस्तुत्वस्य तस्मिन्नेवैकरूपे निश्चये व्यभिचारः, द्वितीये तस्य संशयत्वं स्यादित्याह—**नेति ब्रूम इति** ॥ प्रमायामुक्तन्यायं प्रमात्रादावतिदिशति—**एवमिति** ॥ निर्धारणं फलं यस्य प्रमाणादेस्तस्येत्यर्थः। इत्येवं सर्वत्रानिर्धारणे सत्युपदेशो निष्कम्पप्रवृत्तिश्च न स्यादित्याह—**एवं सतीति** ॥ अनेकान्तवादे अस्तिकायपञ्चत्वमपि न स्यादित्याह—

भामती।

एतदुक्तं भवति—सत्यं यदस्ति वस्तुतस्तत्सर्वथा सर्वदा सर्वत्र सर्वात्मना निर्वचनीयेन रूपेणास्त्येव न नास्ति, यथा प्रत्यगात्मा। यत्तु क्वचित् कथंचित् कदाचित् केनचिदात्मनाऽस्तीत्युच्यते, यथा प्रपञ्चः, तद्व्यवहारतो न तु परमार्थतः, तस्य विचारासहत्वात्। न च प्रत्ययमात्रं वास्तवत्वं व्यवस्थापयति, शुक्तिमरुमरीचिकादिषु रजततोयादेरपि वास्तवत्वप्रसङ्गात्। लौकिकानामबाधेन तु तद्व्यवस्थायां देहात्माभिमानस्याप्यबाधेन तात्त्विकत्वे सति लोकायतमतापातेन नास्तिकत्वप्रसङ्गात्। पण्डितरूपाणां तु देहात्माभिमानस्य विचारतो बाधनं प्रपञ्चस्याप्यनैकान्तस्य तुल्यमिति। अपि च सदसत्त्वयोः परस्परविरुद्धत्वेन समुच्चयाभावे विकल्पः। न च वस्तुनि विकल्पः संभवति। तस्मात् स्थाणुर्वा पुरुषो वेति ज्ञानवत् सप्तत्वपञ्चत्वनिर्धारणस्य फलस्य निर्धारयितुश्च प्रमातुस्तत्करणस्य प्रमाणस्य च तत्प्रमेयस्य च सप्तत्वपञ्चत्वस्य सदसत्त्वसंशये साधु समर्थितं तीर्थकरत्वमृषभेणात्मनः। निर्धारणस्य चैकान्तसत्त्वे सर्वत्र नानेकान्तवाद इत्याह—**य एते सप्त पदार्था इति**। शेषमतिरोहितार्थम् ॥ ३३ ॥

आनन्दगिरीय–न्यायनिर्णयः।

हेतोरनैकान्तिकत्वमाह—**य इति**। संक्षेपविस्तराभ्यामुक्तसंख्यावत्त्वमेतावत्त्वम्। एवंरूपत्वमुक्तावान्तरभेदभाक्त्वम्। ननूक्तं पदार्थेषु वस्तुत्वे सत्यपि तथैवान्यथैव वेति नियमाभावात्तेष्वपि तथैवान्यथा वेत्यनिर्धारितज्ञानोपगमेनानैकान्तिकत्वाविशेषात्कुतो वस्तुत्वमनैकान्तिकं तत्राऽऽह—**इतरथेति**। स्थाणुर्वा पुरुषो वेति ज्ञानवत्पदार्थेषु सप्तत्वादिज्ञानस्याप्रामाण्यप्रसङ्गादसाधकत्वमुक्तं परिहरन्नाशङ्कते—**नन्विति**। अनेकात्मकं वस्त्विति ज्ञानस्य निर्धारितत्वे तत्रैव वस्तुत्वस्यानैकान्त्यान्नैवमिति दूषयति—**नेतीति**। निर्धारणे दर्शितन्यायं निर्धारयितृतत्करणतत्प्रमेयेष्वतिदिशति—**एवमिति**। निर्धारणं फलं यस्य मानादेस्तत्तथा तस्येति यावत्। चकारेण तन्मेयं सप्तत्वादि गृहीतम्। इतिशब्दोऽनिर्धारणात्मकतैव स्यादित्यनेन संबध्यते। अस्मदीये सिद्धान्ते परैरप्यापाद्यमाने का तस्य हानिरित्याशंक्याऽऽह—**एवमिति**। उपदेशा-

१ तीर्थंकर इति तु प्रसिद्धः सर्वत्र।

ध्वनिर्द्धारितारूपदेष्टुं शक्नुयात् ॥ कथं वा तदभिप्रायानुसारिणस्तदुपदिष्टेऽर्थेऽनिर्धारितरूपे प्रवर्तेरन् ॥ ऐकान्तिकफलत्वनिर्धारणे हि सति तत्साधनानुष्ठानाय सर्वो लोकोऽनाकुलः प्रवर्तते नान्यथा ॥ अतश्चानिर्धारितार्थं शास्त्रं प्रणयन्मत्तोन्मत्तवदनुपादेयवचनः स्यात् ॥ तथा पञ्चानामस्तिकायानां पञ्चत्वसंख्याऽस्ति वा नास्ति वेति विकल्प्यमाना स्यात्तावदेकस्मिन्पक्षे, पक्षान्तरे तु न स्यादित्यतो न्यूनसंख्यात्वमधिकसंख्यात्वं वा प्राप्नुयात् ॥ न चैषां पदार्थानामवक्तव्यत्वं सम्भवति ॥ अवक्तव्याश्चेन्नोच्येरन् ॥ उच्यन्ते चावक्तव्याश्चेति विप्रतिषिद्धम् ॥ उच्यमानाश्च तथैवावधार्यन्ते नावधार्यन्त इति च ॥ तथा तदवधारणफलं सम्यग्दर्शनमस्ति वा नास्ति वा, एवं तद्विपरीतमसम्यग्दर्शनमप्यस्ति वा नास्ति वेति प्रलपन्मत्तोन्मत्तपक्षस्यैव स्यात्, न प्रत्यायितस्य पक्षस्य स्वर्गापवर्गयोश्च पक्षे भावः पक्षे चाभावः, तथा पक्षे

---

रत्नप्रभा ।

तथा पञ्चानामिति ॥ यदुक्तमवक्तव्यत्वं,—तत् किं केनापि शब्देनावाच्यत्वम्—उत सकृदनेकशब्दावाच्यत्वम् । नाद्यः, व्याघातादित्याह—न चैषामिति॥ उच्यन्ते चावक्तव्यादिपदैरिति शेषः । न द्वितीयः, सकृदेकवक्तृमुखजाऽनेकशब्दानामप्रसिद्धेर्निषेधायोगात् शेषस्यापि मुखभेदात् । न चार्थस्य युगपद्विरुद्धधर्मवाञ्छायां वक्तुर्मूकत्वमात्रमवक्तव्यपदेन विवक्षितमिति वाच्यम् । तादृशवाञ्छाया एवाऽनुत्पत्तेरिति । किञ्च विरुद्धानेकप्रलापित्वादर्हन्नाप्त इत्याह—उच्यमानाश्चेत्यादिना ॥ इति च प्रलपन्नित्यन्वयः । अर्हन्निति शेषः । अनाप्तपक्षस्यैवान्तर्गतः स्यात् । नाप्तपक्षस्येत्यर्थः । इतश्चाऽसङ्गतोऽनेकान्तवाद इत्याह—स्वर्गेति ॥ किञ्चाऽनादिसिद्धोऽर्हन्मुनिः । अन्ये तु हेत्वनुष्ठानान्मुच्यन्ते । अननुष्ठानाद्बध्यन्त इत्यार्हततन्त्रावधृतस्वभावानां त्रिविधजीवानां त्रैविध्यनियमोऽपि न स्यादित्याह—

भामती—

आनन्दगिरीय—न्यायनिर्णयः ।

नुपपत्तिमुक्त्वा प्रवृत्तिरपि मुमुक्षूणामयुक्तेत्याह—कथं वेति । अनिश्चयेऽपि कृष्यादाविव प्रवृत्तिमाशंक्याऽऽमुष्मिकहेतौ निश्चयादृते न प्रवृत्तिरित्याह—ऐकान्तिकेति । निश्चयं विनाऽपि सर्वज्ञोक्त्या प्रवृत्तिः स्यादित्याशंक्यानिर्धारितार्थशास्त्रकर्तुः सर्वज्ञत्वासंमतेर्मैवमित्याह—अतश्चेति । सप्तपदार्थनियमवत्पञ्चास्तिकायनियमोऽपि नास्तीत्याह—तथेति । पञ्चत्वसंख्यानियमाभावे फलितमाह—इत्यत इति । किंच, संक्षिप्तानां प्रपञ्चितानां च पदार्थानां सर्वेषां शब्दैरवाच्यत्वं केनचिद्वेति विकल्प्य घटादेस्तच्छब्दवाच्यत्वेऽपि स्तम्भादिशब्दावाच्यत्वादाद्यमुपेत्य द्वितीयं प्रत्याह—न चेति । काऽत्रानुपपत्तिस्तत्राऽऽह—उच्यन्ते चेति । ननु सत्त्वादिरूपेण निर्धारणाभावादुच्यमानानामपि स्यादवक्तव्यतेति न व्याहतिरुक्तेर्निर्धारणपूर्वकत्वेऽपि तथैवेत्यनिर्धारणादवक्तव्यत्वसिद्धिस्तत्राऽऽह—उच्यमानाश्चेति । चकारो विप्रतिषिद्धमित्येतदनुकर्षणार्थः । सत्त्वाद्यनैकान्तिकत्वावधारणं निराकृत्य तत्फलं सम्यग्दर्शनं तद्विपरीतमसम्यग्दर्शनं चास्ति नास्ति वेति विकल्प्यमाने स्यादस्ति स्यान्नास्तीति प्रलपन्नाप्तो न स्यादित्याह—तथेति । इतश्चासंगतमार्हतं मतमित्याह—स्वर्गेति । किंचार्हन्नित्युक्तो नित्यमुक्तोऽनादिसिद्धो जीवः कश्चिद्धेत्वनुष्ठानान्मुच्यतेऽन्यस्तदभावाद्बध्यत एवमार्हते मते निश्चितस्वभावानामेषां तथात्वमस्ति न वेति विकल्प्यमाने

नित्यता पक्षेचानित्यतेत्यनवधारणायां प्रवृत्त्यनुपपत्तिः ॥ अनादिसिद्ध-जीवप्रभृतीनां च स्वशास्त्रावधृतस्वभावानामयथावधृतस्वभावत्वप्रसङ्गः ॥ एवं जीवादिषु पदार्थेष्वेकस्मिन्धर्मिणि सत्त्वासत्त्वयोर्विरुद्धयोर्धर्मयोरसम्भवात्-सत्त्वे चैकस्मिन्धर्मेऽसत्त्वस्य धर्मान्तरस्यासम्भवात्, असत्त्वे चैवं सत्त्वस्यासम्भवादसङ्गतमिदमार्हतं मतम् ॥ एतेनैकानेकनित्यानित्यव्यतिरिक्ताव्यतिरिक्ताद्यनेकान्ताभ्युपगमा निराकृता मन्तव्याः ॥ यत्तु पुद्गलसंज्ञकेभ्योऽणुभ्यः संघाताः सम्भवन्तीति कल्पयन्ति, तत्पूर्वेणैवाणुवादनिराकरणेन निराकृतं भवतीत्यतो न पृथक्तन्निराकरणाय प्रयत्यते ॥ ३३ ॥

## एवं चात्माऽकात्स्न्र्यम् ॥ ३४ ॥

यथैकस्मिन्धर्मिणि विरुद्धधर्मासम्भवो दोषः, स्याद्वादे प्रसक्तः, एवमात्मनोऽपि जीवस्याकात्स्न्र्यमपरो दोषः प्रसज्येत ॥ कथम् ॥ शरीरपरिमाणो हि जीव इत्यार्हता मन्यन्ते ॥ शरीरपरिमाणतायां च सत्यामकृत्स्नोऽसर्वगतः परिच्छिन्न आत्मेत्यतो घटादिवदनित्यत्वमात्मनः प्रसज्येत ॥ शरीराणां चानवस्थितपरिमाणत्वान्मनुष्यजीवो मनुष्यश-

रत्नप्रभा।

**अनादीति ॥** प्रपञ्चितं सूत्रार्थं निगमयति-**एवमिति** ॥ **एतेनेति** । सत्त्वासत्त्वयोरेकत्र निरासेनेत्यर्थः । परमाणुसंघाताः पृथिव्यादय इति दिगम्बरसिद्धान्तः किमिहि सूत्रकृतोपेक्षितः, तत्राह-**यत्त्विति** ॥ ॥ ३३ ॥ जीवस्य देहपरिमाणतां दूषयति-**एवं चेति** ॥ **अकात्स्न्र्यं** मध्यमपरिमाणत्वम् । तेनानित्यत्वं स्यादित्यर्थः । अर्थान्तरमाह-**शरीराणां चेति** ॥ **विपाकः**-कर्मणामभिव्यक्तिर्जीवस्य । कृत्स्न-

भामती।

**एवं चात्माऽकात्स्न्र्यम्** । एवं चेति चेन समुच्चयं द्योतयति । शरीरपरिमाणत्वे ह्यात्मनोऽकृत्स्नत्वं परिच्छिन्नत्वम् । तथा चानित्यत्वम् । ये हि परिच्छिन्नास्ते सर्वेऽनित्या यथा घटादयस्तथा चात्मेति।तदेतदाह-**यथैकस्मिन्धर्मिणीति** । इदं चापरमकृत्स्नत्वेन सूत्रितमित्याह-**शरीराणां चानवस्थितपरिमाणत्वादिति** । मनुष्यकायपरिमाणो हि जीवो न हस्तिकायं कृत्स्नं व्याप्तुमर्हत्यल्पत्वादित्यात्मनः कृत्स्नशरीराव्यापित्वादकात्स्न्र्यम्, तथा च न शरीरपरिमाणत्वमिति । तथा हस्तिशरीरं परित्यज्य यदा पुत्तिकाशरीरो भवति

आनन्दगिरीय-न्यायनिर्णयः।

स्यादस्ति स्यान्नास्तीत्यव्यवस्थायां शास्त्रावधृतस्वभावत्वासंभवात्तदप्रामाण्यप्रसक्तिरित्याह-**अनादीति** । सत्त्वासत्त्वयोरनैकान्तिकत्वायोगं सोपस्करमुपसंहरति-**एवमिति** । एवमेकत्वनित्यत्वादिष्वप्युक्तं प्रत्याह-**एतेनेति** । सत्त्वासत्त्वयोरनेकान्तोपगतिनिरासेनेति यावत् । परमाणुभ्यः स्थावरजङ्गमात्मानः संघाता भवन्तीति दिगम्बरास्तत्किमिति न निरस्यते तत्राऽऽह-**यत्त्विति** ॥ ३३ ॥ पूर्वोक्तदृष्टान्तेन स्याद्वादे दोषान्तरं समुच्चिनोति-**एवं चेति** । सूत्राक्षराणि व्याचष्टे-**यथेति** । परमतवदस्मन्मतेऽपि न दोषप्रसक्तिरित्याह-**कथमिति** । तत्प्रसङ्गार्थं परपक्षमाह-**शरीरेति** । तत्र दोषं प्रसञ्जयति-**शरीरेति** । आत्मत्वमनित्यवृत्ति परिच्छिन्नवृत्तित्वाद्घटवदिति प्रसङ्गार्थः । अकृत्स्नत्वेन सूचितं दोषान्तरमाह-**शरीराणां चेति** । कर्मणो विपाकः स्वफलं जनयितुमंकुरीभावः कृत्स्नं हस्तिशरीरं न व्याप्नुयात्तदेकदेशो जीवशून्यः स्यादित्यर्थः । पुत्तिकाशरीरे कृत्स्नो न संमीयेत

रीरपरिमाणो भूत्वा पुनः केनचित्कर्मविपाकेन हस्तिजन्म प्राप्नुवन्न कृत्स्नं हस्तिशरीरं व्याप्नुयात् ॥ पुत्तिकाजन्म च प्राप्नुवन्न कृत्स्नपुत्तिकाशरीरे सम्मीयेत ॥ समान एष एकस्मिन्नपि जन्मनि कौमारयौवनस्थाविरेषु दोषः ॥ स्यादेतत् । अनन्तावयवो जीवः तस्य त एवावयवा अल्पे शरीरे संकुचेयुर्महति च विकासेयुरिति । तेषां पुनरनन्तानां जीवावयवानां समानदेशत्वं प्रतिविहन्यते वा न वेति वक्तव्यम् ॥ प्रतिघाते तावन्नानन्तावयवाः परिच्छिन्ने देशे सम्मीयेरन् । अप्रतिघातेऽप्येकावयवदेशत्वोपपत्तेः सर्वेषामवयवानां प्रथिमानुपपत्तेर्जीवस्याणुमात्रत्वप्रसङ्गः स्यात् ॥ अपि च शरीरमात्रपरिच्छिन्नानां जीवावयवानामानन्त्यं नोत्प्रेक्षितुमपि शक्यम् ॥ ३४ ॥

---

रत्नप्रभा ।

गजशरीराव्याप्तित्वमकात्स्न्र्यम् । शरीरैकदेशो निर्जीवः स्यादित्यर्थः । पुत्तिकादेहे कृत्स्नो जीवो न प्रविशेत् । देहाद्बहिरपि जीवः स्यादित्यर्थः । किञ्च बालदेहमात्रः आत्मा ततः स्थूले युवदेहे क्वचित् स्यादिति कृत्स्नदेहः सजीवो न स्यादित्याह—**समान इति** ॥ **यथा**—दीपावयवानां घटे संकोचः, गेहे विकासः, **तथा** जीवावयवानामिति । देहमानत्वनियमं शङ्कते—**स्यादिति** ॥ दीपांशवज्जीवांशा भिन्नदेशा एकदेशाः वेति विकल्प्य **आद्ये** अल्पदेहाद्बहिरपि जीवः स्यादिति दूषयति—**तेषामित्यादिना** ॥ दीपस्य तु न घटाद्बहिः सत्त्वम् । अधिकावयवानां विनाशात् । **द्वितीयं** दूषयति—**अप्रतिघात इति** ॥ अवयवानां नित्यत्वं चासिद्धम् । अल्पत्वाद्दीपांशवदित्याह—**अपि चेति** ॥ ॥ ३४ ॥ **एवं** जीवावयवा नित्या इति मते देहमानत्वं **निरस्तम्** । सम्प्रति जीवस्य केचिदेव

भामती ।

तदा न तत्र कृत्स्नः पुत्तिकाशरीरे संमीयेतेत्यकात्स्न्र्यमात्मनः । सुगममन्यत् । चोदयति—**स्यादेतत्** । **अनन्तावयव इति** । यथा हि प्रदीपो वटमहाहर्म्योदरवर्ती संकोचविकाशवानेवं जीवोऽपि पुत्तिकाहस्तिदेहयोरित्यर्थः । तदेतद्विकल्प्य दूषयति—**तेषां पुनरनन्तानामिति** । न तावत्प्रदीपोऽत्र निदर्शनं भवितुमर्हति, अनित्यत्वप्रसङ्गात् । विशरारवो हि प्रदीपावयवाः, प्रदीपश्चावयवी प्रतिक्षणमुत्पत्तिनिरोधधर्मा, तस्मादनित्यत्वात्तस्य नास्थिरो जीवस्तदवयवाश्चाभ्युपेतव्याः । तथा च विकल्पद्वयोक्तं दूषणमिति । यच्च जीवावयवानामानन्त्यमुदितं तदनुपपन्नतरमित्याह—**अपि च शरीरमात्रेति** ॥ ३४ ॥ शङ्कापूर्वं सूत्रा-

आनन्दगिरीय—न्यायनिर्णयः ।

तस्मिन्ननन्तर्भूतस्ततो बहिरपि जीवः स्यादित्यर्थः । किंच, कौमारे स्वल्पपरिमाणो जीवस्तारुण्ये स्थाविरे च न कृत्स्नं शरीरं व्याप्नुयादित्याह—**समान इति** । यथा प्रदीपो घटप्रासादोदरे वर्तमानः संकोचविकासवानेवं जीवोऽपि पुत्तिकाहस्तिदेहयोरित्याह—**स्यादिति** । दीपावयवानां विशरणशीलत्वादवयविनश्च दीपस्य प्रतिक्षणमुत्पत्तिनिरोधवतोऽनित्यत्वान्नित्यात्मदृष्टान्तत्वासिद्धिरिति मत्वा विकल्पयति—**तेषामिति** । आद्ये देहाद्बहिरपि जीवोपगतिरित्याह—**प्रतिघात इति** । एकावयवदेशत्वेऽपि तथैवावयवानामवस्थाननियमाभावे परिमाणनियमो नाऽऽत्मनि स्यादिति द्वितीयं प्रत्याह—**अप्रतिघातेऽपीति** । जीवावयवानामानन्त्यमङ्गीकृत्योक्त्वा तदपि नास्तीत्याह—**अपि चेति** । परिमितत्वादित्यर्थः ॥ ३४ ॥

अथ पर्यायेण बृहच्छरीरप्रतिपत्तौ केचिज्जीवावयवा उपगच्छन्ति, तनुशरीरप्रतिपत्तौ च केचिदपगच्छन्तीत्युच्येत, तत्राप्युच्यते-

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

न च पर्यायेणाप्यवयवोपगमापगमाभ्यामेतद्देहपरिमाणत्वं जीवस्याविरोधेनोपपादयितुं शक्यते ॥ कुतः ॥ विकारादिदोषप्रसङ्गात्-अवयवोपगमापगमाभ्यां ह्यनिशमापूर्यमाणस्यापक्षीयमाणस्य च जीवस्य विक्रियावत्त्वं तावदपरिहार्यम् । विक्रियावत्त्वे च चर्मादिवदनित्यत्वं प्रसज्येत ॥ ततश्च बन्धमोक्षाभ्युपगमो बाध्येत, कर्माष्टकपरिवेष्टितस्य जीवस्यालाबुवत्संसारसागरे निमग्नस्य बन्धनोच्छेदादूर्ध्वगामित्वं भवतीति ॥ किञ्चान्यदागच्छतामपगच्छतां चावयवानामागमापायिधर्मवत्त्वादेवानात्मत्वं शरीरादिवत् । ततश्चावस्थितः कश्चिदवयव आत्मेति स्यात् ॥ न च स निरूपयितुं शक्यते अयमसाविति ॥ किंचान्यदागच्छन्तश्चैते जीवावयवाः कुतः प्रादुर्भवन्ति, अपगच्छन्तश्च क्व वा लीयन्त इति

---

रत्नप्रभा ।

कूटस्था अवयवाः, अन्ये त्वागमापायिन इति शङ्कते-अथेति ॥ बृहत्तनुकायातौ जीवस्याऽवयवागमोपायाभ्यां देहमानत्वमित्यर्थः । सूत्रेण परिहरति- तत्रापीति ॥ आगमापायौ-पर्यायः । किमागमापायिनामवयवानामात्मत्वमस्ति न वा ? आद्ये आह-विकारादिदोषेति॥कोऽसौ बन्धमोक्षाभ्युपगम इत्यत आह-कर्माष्टकेति॥ व्याख्यातमेतत् [व्या.सू.२।२।३१] । आद्यकल्पे दोषान्तरं वदन् कल्पान्तरमादाय दूषयति-किञ्चेति ॥ अवशिष्टकूटस्थावयवस्य दुर्ज्ञानत्वादात्मज्ञानाभावान्न मुक्तिरित्यर्थः। यथा दीपावयवानामाकारस्तेजः, तथाऽऽत्मावयवानामाकारकारणाभावान्नागमापायौ युक्तावित्याह-किञ्चेति ॥ सर्वजीवसाधारणः प्रतिजीवमसाधारणो वेत्यर्थः । किञ्चात्मन आगमापायिशीलावयवत्वे सति कियन्त

भामती ।

न्तरमवतारयति-अथ पर्यायेणेति । तत्राप्युच्यते-न च पर्यायादप्यविरोधो विकारादिभ्यः । कर्माष्टकमुक्तं ज्ञानावरणीयादि । किंचात्मनो नित्यत्वाभ्युपगमे आगच्छतामपगच्छतां चावयवानामि-

आनन्दगिरीय-न्यायनिर्णयः ।

बृहत्तनुदेहाप्ताववयवोपगमापगमाभ्यां जीवस्य देहपरिमाणताऽविरुद्धेत्याह-अथेति । चोद्योत्तरत्वेन सूत्रमादत्ते-तत्रापीति । प्रतिज्ञां विभजते-न चेति । प्रश्नपूर्वकं हेतुमाह-कुत इति । विकारप्रसङ्गं प्रकटयति-अवयवेति । आत्मनः समुद्रादिवद्विक्रियावत्त्वमिष्टमित्याशंक्याऽऽह-विक्रियेति । अनित्यत्वप्रसंगस्येष्टत्वं निराह-ततश्चेति । तदर्थं तदभ्युपगमं दर्शयति-कर्मेति । न चाऽऽत्मनोऽनित्यत्वे युक्तोऽयमुपगमो बन्धमोक्षान्वयिनोऽभावात् । न हि तौ स्वतन्त्रौ तद्भावे बन्धस्यानादित्वान्मुक्तस्य चानाशित्वान्नानित्यतेत्यर्थः । आदिशब्दसूचितमर्थमाह-किं चेति । यस्याऽऽत्मा सावयवस्तस्यावयवानामात्मत्वमवयविनो वा ? आद्येऽपि किमागमापायिनां तेषामात्मत्वं तद्धीनस्य वा कस्यचिदवयवस्येति विकल्प्याऽऽद्यं प्रत्याह-आगच्छतामिति । कल्पान्तरं परिशिष्टमादत्ते-ततश्चेति । तस्य विशेषतोपरिज्ञानादात्मज्ञानाभावादपवर्गासिद्धिरित्याह-न चेति । आद्ये कल्पे दोषान्तरमाह-किंचेति । अवयवप्रादुर्भावापादानत्वं तद्विलयाधारत्वं च महाभूतानां वा व्यतिरिक्तस्य वा कस्यचिदिति विमृश्याऽऽद्यं

वक्तव्यम् ॥ न हि भूतेभ्यः प्रादुर्भवेयुर्भूतेषु च निलीयेरन् ॥ अभौतिकत्वाज्जीवस्य ॥ नापि कश्चिदन्यः साधारणोऽसाधारणो वा जीवानामवयवाधारो निरूप्यते ॥ प्रमाणाभावात् ॥ किंचान्यदनवधृतस्वरूपश्चैवं सत्यात्मा स्यात् ॥ आगच्छतामपगच्छतां चावयवानामनियतपरिमाणत्वात् ॥ अत एवमादिदोषप्रसङ्गान्न पर्यायेणाप्यवयवोपगमापगमावात्मन आश्रयितुं शक्येते ॥ अथ वा पूर्वेण सूत्रेण शरीरपरिमाणस्यात्मन उपचितापचितशरीरान्तरप्रतिपत्तावकात्स्न्र्यप्रसञ्जनद्वारेणानित्यतायां चोदितायां पुनः पर्यायेण परिमाणानवस्थानेऽपि स्रोतःसन्ताननित्यतान्यायेनात्मनो नित्यता स्यात् ॥ यथा रक्तपटादीनां विज्ञानानवस्था-

रत्नप्रभा ।

आयान्त्यवयवाः ; कियन्तोऽपयन्तीत्यज्ञानादात्मनिश्चयाभावादनिर्मोक्षः स्यादित्याह—किंचेति ॥ अपि चावयवारब्धावयवित्वे जीवस्यानित्यत्वम्, अवयवसमूहत्वे चासत्त्वम्, आत्मत्वस्य यावदवयववृत्तित्वे यत्किञ्चिदवयवापायेऽपि सद्यःशरीरस्याचेतनत्वं, गोत्ववत् प्रत्येकं समाप्तौ एकस्मिन् शरीर आत्मनानात्वं स्यात् । अतो न देहपरिमाणत्वसावयवत्वे आत्मन इत्युपसंहरति—अत इति ॥ सूत्रस्यार्थान्तरमाह—अथ वेति ॥ स्थूलसूक्ष्मशरीरप्राप्तावकात्स्न्र्योक्तिद्वारेणाऽऽत्मानित्यतायामुक्तायां सुगतवत् सन्तानरूपेणाऽऽत्मनित्यतामाशंक्याऽनेनोत्तरमुच्यत इत्यन्वयः ॥ पर्यायेणेति । अस्य व्याख्या—स्रोत इति । देहभेदेन परिमाणस्यात्मनश्चाऽनवस्थानेऽपि—नाशेपि, स्रोतः—प्रवाहः । तदात्मकस्याऽऽत्मव्यक्तिसन्तानस्य नित्यतयाऽऽत्मनित्यता स्यादित्यत्र दृष्टान्तमाह—यथेति ॥ सिग्—वस्त्रं विगतं येभ्यः । ते विसिचो दिग-

भामती ।

यत्ताऽनिरूपणेन चात्मज्ञानाभावान्नापवर्ग इति भावः । अत एवमादिदोषप्रसंगादिति । आदिग्रहणसूचितं दोषं ब्रूमः । किंचैते जीवावयवाः प्रत्येकं वा चेतयेरन् समूहो वा । तेषां प्रत्येकं चैतन्ये बहूनां चेतनानामेकाभिप्रायत्वनियमाभावात् कदाचिद्विरुद्धदिक्क्रियत्वेन शरीरमुन्मथ्येत । समूहचैतन्ये तु हस्तिशरीरस्य पुत्तिकाशरीरत्वे द्वित्रावयवशेषो जीवो न चेतयेत् । विगलितबहुसमूहितया समूहस्याभावात्पुत्तिकाशरीरे इति । अथवेति । पूर्वसूत्रप्रसञ्जितायां जीवानित्यतायां बौद्धवत्संताननित्यतामाशंक्येदं सूत्रम्—

आनन्दगिरीय—न्यायनिर्णयः ।

प्रत्याह—न हीति । द्वितीयेऽपि प्रतिजीवमसाधारणः सर्वसाधारणो वेति विकल्प्य दूषयति—नापीति । तथा चाऽऽत्मज्ञानाभावादमुक्तिरेवेत्यर्थः । अवयवानां नाऽऽत्मत्वमवयविनस्तु तथात्वमिति मतं प्रत्याह—किंचेति । एवं सत्यात्मनोऽवयवित्वे सतीति यावत् । तत्र हेतुमाह—आगच्छतामिति । किंच, प्रत्येकमवयवा न चेतयेरन्नेकाभिप्रायत्वानियमात् । विरुद्धाभिप्रायतया विरुद्धविक्रियत्वेन शरीरोन्मथनप्रसङ्गः । न चावयवसमूहस्य चैतन्यं तस्य भेदाभेदाभ्यां दुर्भरणत्वादिति मत्वाऽऽह—अत इति । प्रकारप्रकारिणौ पञ्चमीभ्यामुक्तौ । प्रकारान्तरेण सूत्रमवतारयति—अथ वेति । तदेव दर्शयति—पूर्वेणेति । आत्माकात्स्न्र्यसूत्रेण प्रसञ्जितां तदनित्यतां संताननित्यतया सुगतवत्परिहर्तव्यामाशंक्येदं सूत्रमित्यर्थः । पर्यायेण शरीरव्यक्तिभेदेन परिमाणस्याऽऽत्मनिष्ठस्यैकरूपस्यानवस्थानादनवस्थितपरिमाणस्याऽऽत्मनोऽनित्यत्वे शंकितेऽपि स्रोतोरूपेण तत्परिमाणस्य च यः संतानस्तस्य नित्यतैव न्यायस्तेनेति यावत् । व्यक्तीनामनित्यत्वेऽपि संताननित्यत्वे दृष्टान्तः—यथेति । सिग्वस्त्रं विगतं येभ्यस्ते विसिचो विवसनास्तेषामपि पुत्तिकादेहहस्तिदेहादावात्मपरिमाणस्यानवस्थितत्वेऽपि तत्संताननित्यत्वेनाऽऽत्मनित्यत्वमाशंक्य सूत्रमि-

नेऽपि तत्सन्ताननित्यता, तद्वद्दिगम्बराणामपीत्याशंक्यानेन सूत्रेणोत्तरमुच्यते ॥ सन्तानस्य तावदवस्तुत्वे नैरात्म्यवादप्रसंगः ॥ वस्तुत्वेऽप्यात्मनो विकारादिदोषप्रसंगादस्य पक्षस्यानुपपत्तिरिति ॥ ३५ ॥

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

अपि चान्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वमिष्यते जैनैस्तद्वत्पूर्वयोरप्याद्यमध्यमयोर्जीवपरिमाणयोर्नित्यत्वप्रसंगादविशेषप्रसंगः स्यात् ॥ एकशरीरपरिमाणतैव स्यान्नोपचितापचितशरीरान्त-

### रत्नप्रभा ।

न्तराः, तेषामित्यर्थः ।"पर्यायात्"सन्तानादप्यात्मनित्यत्वस्य "अविरोधः"इति"न च"। कुतः। "विकारादिभ्यः" सन्तानस्यावस्तुनः आत्मत्वे शून्यवादः । सन्तानस्य वस्तुत्वे सन्तानव्यतिरेके च कूटस्थात्मवादः । अनतिरेके जन्मादिविकारो विनाशो मुक्त्यभाव इत्युक्तदोषः प्रसङ्गात्सन्तानात्मपक्षोऽनुपपन्न इति सूत्रार्थः ॥ ३५ ॥ यं स्थूलं वा, सूक्ष्मं वा—देहं गृह्णाति तद्देहपरिमाण एव जीव इति नियमं दूषयति—अन्त्येति ॥ अन्त्यशरीरपरिमाणस्यावस्थितेर्नित्यत्वदर्शनादुभयोराद्यमध्यमपरिमाणयोर्नित्यत्वप्रसङ्गादविशेषस्त्रयाणां नित्यपरिमाणानां साम्यं स्याद्विरुद्धपरिमाणानामेकत्रायोगादिति सूत्रयोजना । आद्यमध्यमपरिमाणे, नित्ये, आत्मपरिमाणत्वादन्त्यपरिमाणवत् । न चाप्रयोजकता । परिमाणनाशे सत्यात्मनोऽपि नाशादन्त्यपरिमाणनित्यत्वायोगादिति भावः । परिमाणत्रयसाम्यापादनफलमाह—एकेति ॥

### भामती ।

'न च पर्यायादप्यविरोधो विकारादिभ्यः' । न च पर्यायात् परिमाणानवस्थानेऽपि संतानाभ्युपगमेनात्मनो नित्यत्वादविरोधो बन्धमोक्षयोः । कुतः । परिणामादिभ्यो दोषेभ्यः । संतानस्य वस्तुत्वे परिणामस्ततश्चर्मवदनित्यत्वादिदोषप्रसङ्गः । अवस्तुत्वे चादिग्रहणसूचितो नैरात्म्यापत्तिदोषप्रसङ्ग इति । विसिचो विवसनाः ॥ ३५ ॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः । एवं हि मोक्षावस्थाभावि जीवपरिमाणं नित्यं भवेत्, यद्यभूत्वा न भवेत् । अभूत्वा भाविनामनित्यत्वाद् घटादीनाम् । कथं चाभूत्वा न भवेद्यदि प्रागप्यासीत् । न च परिमाणान्तरावरोधेऽपूर्वं भवितुमर्हति । तस्मादन्त्यमेव परिमाणं पूर्वमप्यासीदित्यभेदः । तथा चैकशरीरपरिमाणतैव स्यान्नोपचितापचितशरीरप्राप्तिः, शरीरपरिमाणत्वाभ्युपगमव्याघातादिति । अत्र चोभयोः परिमाणयोर्नित्यत्वप्रसङ्गादिति योजना । एकशरीरपरिमाणतैवेति च दीर्घ्यम् । द्वितीये तु व्याख्याने उभयोरवस्थयोरिति योजना । एकशरीरपरिमाणता न दीर्घ्या, किंत्वेकपरिमाणता-

### आनन्दगिरीय—न्यायनिर्णयः ।

त्याह—तद्वदिति । तदेव विवृणोति—संतानस्येति । पर्यायशब्देन क्रमभाविपरिमाणगतः संतानो गृह्यते तन्नित्यत्वादपि नाऽऽत्मनित्यत्वम् । तस्य हि वस्तुत्वमवस्तुत्वं वा । द्वितीये राद्धान्तविरोधमुक्त्वा प्रथमं प्रत्याह—वस्तुत्वेऽपीति । स हि संतानिभ्योऽभिन्नो भिन्नो वाऽभेदे प्रतिदेहं परिमाणभेदानां संतानिनामन्यथात्वात्कार्यत्वेनानित्यत्वात्तदभिन्नसंतानस्यापि तथात्वम् । भेदे तत्संतानत्वायोगाद्भिन्नत्वेन घटादिवद्विकारादिप्रसङ्गादात्मनित्यत्वं संताननित्यतया यदुच्यते तस्यानुपपत्तिरित्यर्थः । इतिशब्दः सूत्रव्याख्यासमाप्त्यर्थः ॥ ३५ ॥ इतोऽपि न जीवस्य क्रमेणोपचितापचितपरिमाणत्वमित्याह—अन्त्येति । सूत्रं व्याकरोति—अपि चेति । यज्जीवपरिमाणं तन्नित्यमिति व्याप्तिभूमिमाह—अन्त्यस्येति । सफलमनुमानमाह—तद्वदिति । विमतं नित्यं जीवपरिमाणत्वात्संमतवदित्यनुमानादविशेषप्रसंगः, सदा जीवस्येत्युक्तं प्रकटयति—एकेति । उपचयापचययोरनेकरूपता व्याप्तेरुक्तानुमानविरोधादित्यर्थः । पूर्वमव-

स्थातिः ॥ अथ वान्त्यस्य जीवपरिमाणस्यावस्थितत्वात्पूर्वयोरप्यवस्थयोरवस्थितपरिमाण एव जीवः स्यात् ॥ ततश्चाविशेषेण सर्वदैवाणुर्महान्वा जीवोऽभ्युपगन्तव्यो न शरीरपरिमाणः ॥ अतश्च सौगतवदार्हतमपि मतमसंगतमित्युपेक्षितव्यम् ॥ ३६ ॥ इत्येकस्मिन्नसम्भवाधिकरणम् ॥ ६ ॥

## पत्युरसामञ्जस्यात् ॥ ३७ ॥ (७) ॥

इदानीं केवलाधिष्ठात्रीश्वरकारणवादः प्रतिषिध्यते । तत्कथमवगम्यते ॥ "प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात्" [ व्या० सू० १ । ४ । २४ ] "अभिध्योपदेशाच्च" [ व्या० सू० १ । ४ । २५ ] इत्यत्र प्रकृतिभावेनाधिष्ठातृभावेन चोभयस्वभावस्येश्वरस्य स्वयमेवाचार्येण प्रतिष्ठापित-

रत्नप्रभा ।

अन्त्यशरीरसमान्येव पूर्वशरीराणि स्युः । विषमशरीरप्राप्तावात्मनस्तत्परिमाणत्वे परिमाणत्रयसाम्यानुमानविरोधादित्यर्थः । पूर्वं कालत्रये परिमाणत्रयमङ्गीकृत्यान्त्यदृष्टान्तेन नित्यत्वमनुमाय साम्यमापादितम् । सम्प्रत्यन्त्यस्य मुक्तपरिमाणस्याणुत्वस्थूलत्वयोरन्यतरत्वेनाऽवस्थितेस्तदेवान्त्यमाद्यमध्यमकालयोरपि नित्यत्वात् स्यात् । प्रागसतो नित्यत्वायोगात् । तथा चाविशेषः कालत्रयेऽपि जीवपरिमाणभेद इत्याह—**अथ वेति**॥ तस्माद् भ्रान्त्येकशरणक्षपणकसिद्धान्तेनाऽविरोधः समन्वयस्येति सिद्धम्॥३६॥(६) **पत्युरसामञ्जस्यात्** । लुञ्चितकेशमतनिरासानन्तरं जटाधारिशैवमतं बुद्धिस्थं निराक्रियते इति प्रसङ्गसङ्गतिमाह—**इदानीमिति** ॥ सामान्यत ईश्वरनिरास एवात्र किं न स्यादिति शङ्कते—**तदिति** ॥ स्वोक्तिविरोधान्मैवमित्याह—**प्रकृतिश्चेत्यादिना** ॥ प्रतिष्ठापितत्वात् केवलनिमित्तेश्वरप्रतिषेधोऽवगम्यत इत्यन्वयः । व्याहतो विरुद्धोऽभिव्याहार उक्तिर्यस्य सः—**तथा** । अद्वितीयब्रह्मप्रकृतिकं जगदिति वदतो वेदान्तसमन्वयस्य कर्तैवेश्वरो न प्रकृतिरिति शैवादिमतेन विरोधोऽस्ति न वेति सन्देहे तन्मतस्य मानमूलत्वाद्विरोधे सति वेदान्तोक्ताद्वयब्रह्मासिद्धिरिति फलमभिप्रेत्य सत्त्वासत्त्वयोरेकत्रासम्भववत् कर्तृत्वोपादानत्वयोरप्येकत्रासम्भवात् कर्तैवे-

भामती ।

मात्रमणुर्महान् वेति विवेकः ॥ ३६ ॥ **पत्युरसामञ्जस्यात्** । अविशेषेणेश्वरकारणवादोऽनेन निषिध्यत इति भ्रमनिवृत्त्यर्थमाह—**केवलेति** । सांख्ययोगव्यपाश्रया हिरण्यगर्भपतञ्जलिप्रभृतयः । **प्रधानमुक्तम्** ।

आनन्दगिरीय—न्यायनिर्णयः ।

स्थितशब्दो नित्यपरत्वेनोक्तोऽविशेषश्चैकशरीरपरिमाणतोभयोः परिमाणयोर्नित्यत्वप्रसंगादिति च हेतुः । इदानीं शरीरमन्तरेणैव मोक्षकालीनस्य परिमाणस्यावस्थितत्वादुभयोरपि पूर्वयोरवस्थयोर्देहापेक्षां विना जीवस्यावस्थितपरिमाणत्वसंभवान्न शरीरपरिमाणत्वं किंत्वविशेषेण तस्याप्यणुत्वं महत्त्वं वा स्यादिति व्याख्यान्तरमाह—**अथ वेति** । विमतो न देहपरिमाण आत्मत्वान्मुक्तवदित्यर्थः । आत्मनो देहपरिमाणत्वायोगे फलितमाह—**अतश्चेति** ॥ ३६ ॥ (६) ॥ लुञ्चितकेशमतं निराकृत्य जटाधारिमाहेश्वरमतं निराचष्टे—**पत्युरिति** । सत्त्वासत्त्वयोरेकत्रायोगवदधिष्ठातृत्वोपादानत्वयोरपि नैकत्र योगोऽस्तीत्याशंक्य तात्पर्यमाह—**इदानीमिति** । अविशेषेणेश्वरकारणवादिनिषेधभ्रमनिवृत्त्यर्थमाह—**केवलेति** । अविशेषोक्तेरीश्वरकारणत्वमेवात्र निषिध्यते न तस्य निमित्तत्वमात्रमिति शंकते—**तदिति** । स्वोक्तिविरोधान्मैवमित्याह—**प्रकृतिश्चेति** । न केवलमीश्वरस्य कारणत्वमात्रनिषेधे प्रकृतिसूत्रं विरुध्यते किं त्वभिध्यासूत्रमपीति मत्वाऽऽह—**अभिध्येति** । प्रतिष्ठापितत्वादुक्ततात्पर्यधीरिति शेषः । उक्तमर्थं व्यतिरेकद्वारा स्फोरयति—

त्वात् । यदि पुनरविशेषेणेश्वरकारणवादमात्रमिह प्रतिषिध्येत, पूर्वोक्तरविरोधाद्व्याहताभिव्याहारः सूत्रकार इत्येतदापद्येत । तस्मादप्रकृतिरधिष्ठाता केवलं निमित्तकारणमीश्वर इत्येष पक्षो वेदान्तविहितब्रह्मैकत्वप्रतिपक्षत्वाद्यत्नेनात्र प्रतिषिध्यते । सा चेयं वेदबाह्येश्वरकल्पनाऽनेकप्रकारा । केचित्तावत्सांख्ययोगव्यपाश्रयाः कल्पयन्ति प्रधानपुरुषयोरधिष्ठाता केवलं निमित्तकारणमीश्वरः। इतरेतरविलक्षणाः प्रधानपुरुषेश्वरा इति ॥ माहेश्वरास्तु मन्यन्ते-कार्यकारणयोगविधिदुःखान्ताः-पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षणायोपदिष्टाः । पशुपतिरीश्वरो निमित्तकारणमिति वर्णयन्ति ॥ तथा वैशेषिकादयोऽपि-

रत्नप्रभा ।

श्वर इति पूर्वपक्षं कुर्वन्नवान्तरमतभेदमाह-सा चेति ॥ सेश्वराः-सांख्याः । सांख्यशब्दार्थः-चत्वारो माहेश्वराः-शैवाः पाशुपताः कारुणिकसिद्धान्तिनः कापालिकाश्चेति । सर्वेऽप्यमी महेश्वरप्रोक्तागमानुगामित्वान्माहेश्वरा उच्यन्ते । कार्यं महदादिकम् । कारणं प्रधानमीश्वरश्च-१ योगः-२ समाधिः-३ विधिः-४ त्रिषवणस्नानादिः-५ दुःखान्तो मोक्ष इति पञ्च पदार्थाः । पशवः-जीवाः तेषां पाशः बन्धस्तन्नाशायेत्यर्थः । पाशुपतागमप्रामाण्यात् पशुपतिर्निमित्तमेवेति मतमुक्त्वाऽऽनुमानिकेश्वरमतमाह-तथेति ॥ विमतं, सकर्तृकं, कार्यत्वाद्, घटवदिति वैशेषिकाः कर्त्तारमीश्वरं साधयन्ति। कर्मफलं सपरिकराभिज्ञदातृकं, कालान्तरभाविफलत्वात् सेवाफलवदिति गौतमा दिगम्बराश्च ।

भामती ।

दृक्शक्तिः पुरुषः प्रत्ययानुपश्यः । स च नानाक्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः प्रधानपुरुषाभ्यामन्यः । माहेश्वराश्चत्वारः-शैवाः, पाशुपताः, कारुणिकसिद्धान्तिनः, कापालिकाश्चेति । चत्वा-

आनन्दगिरीय-न्यायनिर्णयः ।

यदीति । सूत्रकृतो विरुद्धार्थवादित्वं परिहर्तुं फलितमाह-तस्मादिति । तन्निराकरणं किमर्थमित्याशंक्य ब्रह्मात्मैकत्वं दृढीकर्तुमित्याह-वेदान्तेति । एतेनाधिकरणस्य फलमुक्तम् । अद्वितीयाद्ब्रह्मणो जगत्सर्गं ब्रुवतः समन्वयस्य केवलमधिष्ठातेश्वरो जगतो नोपादानमिति माहेश्वरराद्धान्तेन विरोधोऽस्ति न वेति तत्प्रामाणिकत्वभ्रान्तत्वाभ्यां संदेहे पूर्वपक्षयति-सा चेति । माहेश्वरमतनिराकरणेन समन्वयविषयब्रह्मात्मैक्यस्यात्र दृढीकरणात्पादादिसंगतयः । पूर्वपक्षे तन्मतस्य प्रामाणिकत्वात्तद्विरोधे समन्वयासिद्धेर्ब्रह्मात्मैक्यासिद्धिः । सिद्धान्ते तस्य भ्रान्तत्वात्तद्विरोधस्याऽऽभासत्वे समन्वयसिद्धेरैक्यसिद्धिः । ईश्वरकल्पनाया बहुप्रकारत्वे हेतुं सूचयति-वेदेति । ज्ञानशक्त्यैश्वर्योत्कर्षतारतम्यं क्वचिद्विश्रान्तं तरतमभावत्वात्परिमाणतारतम्यवदित्याह-केचिदिति । प्रधीयत इति प्रधानस्याविद्यात्वात्प्रधानपुरुषाधिष्ठातेश्वरोऽस्माभिरपि गृह्यते तत्राऽऽह-इतरेति । चत्वारो माहेश्वराः, शैवाः, पाशुपताः, कारुणिकसिद्धान्तिनः, कापालिकाश्च । ते सर्वे महेश्वरप्रणीतागमप्रामाण्यात्केवलं निमित्तमीश्वरमिच्छन्तीत्याह-माहेश्वरास्त्विति । कार्यं प्राधानिकं महदादि । कारणं महेश्वरः । योगः समाधिः । विधिस्त्रिषवणस्नानादिः । दुःखान्तो मोक्ष इति पञ्च पदार्थाः । ते किमर्थमीश्वरेणोक्तास्तत्राऽऽह-पश्विति । पशवो जीवास्तेषां पाशो बन्धनं तद्विमोक्षो दुःखान्तस्तदर्थमिति यावत् । कुम्भकारादेरधिष्ठातुश्चेतनस्य कुम्भादिकार्ये निमित्तत्वमात्रदृष्टेरीश्वरोऽपि जगदधिष्ठाता निमित्तमेव नोपादानमेकस्योभयविरोधादिति मत्वाऽऽह-पशुपतिरिति । वैशेषिकनैयायिकविवसनसुगतमतानि सूचयति-तथेति । विमतमुपादानाद्यपरोक्षज्ञानवज्जन्यं कार्य-

१ अत्र पत्वं चिन्त्यम् ।

**केचित् कथञ्चित्स्वप्रक्रियानुसारेण निमित्तकारणमीश्वरमिति ॥ अत उत्तरमुच्यते–"पत्युरसामञ्जस्यात्" इति । पत्युः ईश्वरस्य प्रधानपुरुषयोरधिष्ठातृत्वेन जगत्कारणत्वं नोपपद्यते ॥ कस्माद् ॥ असामञ्जस्यात् ॥ किं पुनरसामञ्जस्यम् ।**

---

रत्नप्रभा ।

ज्ञानैश्वर्योत्कर्षः, क्वचिद्विश्रान्तः, सातिशयत्वात्, परिमाणवदिति सांख्यसौगतपातञ्जला इति मत्वोक्तम्–**केचित् कथञ्चिदिति** ॥ सिद्धान्तयति–**अत इति** ॥ आगमादिना निर्दोषेश्वरसिद्धेः कथं दोषवत्त्वमित्याह–**किमिति** ॥ न तावत् स्वस्वागमादीश्वरनिर्णयः । आगमानां निर्मूलत्वेनाप्रामाण्यात् । न च सर्वज्ञज्ञानं मूलम् । तत्र मानाभावात् । न चागम एव मानम् । आगममानत्वनिश्चये मूलनिश्चयस्तन्निश्चये तन्निश्चय इत्यन्योऽन्याश्रयात् । न च पुरुषवचसां स्वतो मानत्वं युक्तम् । मिथो विरोधेन तत्त्वाव्यवस्थानाच्च । नाप्यनुमानादीश्वरः सर्वज्ञः कर्त्तैवेति निर्णयः सम्भवति । अनुमानस्य दृष्टानुसारित्वेन दृष्टविपरीतार्थासाधकत्वात् । तथा च लोके यादृशाः कर्त्तारो दृष्टास्तादृशा एव जगत्कर्त्तारो रागद्वेषादिमन्तः सिध्येयुः । यदि लोके विचित्रप्रासादादिकर्तुरेकत्वाद्यदर्शनेऽपि जगत्कर्त्तरि लाघवादेकत्वं नित्यज्ञानं निर्दोषत्वं च कल्प्येत, तर्हि द्रव्योपादानत्वमपि कल्प्यताम् । कर्तुरेवोपादानत्वेन लाघवात् । अन्यथा स्वतन्त्रप्रधानपरमाण्वाद्युपादानकल्पनागौरवात् । अदृष्टत्वाच्चेत् कर्तुर्द्रव्योपादानत्वसिद्धिरेकत्वादिकमपि न सिध्येत् । अस्माकन्त्वपौरुषेयतया स्वतःसिद्धप्रमाणभावया श्रुत्या स्वप्रमेयबोधने दृष्टान्तानपेक्षया भवत्येव लौकिककर्तृविपरीताऽद्वितीयकर्त्रुपादानात्मकसर्वज्ञनिर्दोषेश्वरनिर्णयः । निर्णीते च तस्मिन् धर्मिग्राहकमानाबाधान्न रागादिदोषापादानस्यावकाश इत्यानुमानिकेश्वरादिभ्यो वैषम्यम् । तद·

भामती ।

रोऽप्यमी महेश्वरप्रणीतसिद्धान्तानुयायितया माहेश्वराः । कारणमीश्वरः । कार्यं प्राधानिकं महदादि । योगोऽप्योंकारादिध्यानधारणादिः । विधिस्त्रिषवणस्नानादिर्गूढचर्यावसानः, दुःखान्तो मोक्षः । पशव आत्मानस्तेषां पाशो बन्धनं तद्विमोक्षो दुःखान्तः । एष तेषामभिसंधिः–चेतनस्य खल्वधिष्ठातुः कुम्भकारादेः कुम्भादिकार्ये निमित्तकारणत्वमात्रं न तूपादानत्वमपि । तस्मादिहापीश्वरोऽधिष्ठाता जगत्कारणानां निमित्तमेव, न तूपादानमप्येकस्याधिष्ठातृत्वाधिष्ठेयत्वविरोधादिति प्राप्तम् । एवं प्राप्तेऽभिधीयते–**पत्युरसामञ्जस्यादिति** । इदमत्राकूतम्–ईश्वरस्य निमित्तकारणत्वमात्रमागमाद्वोच्येत प्रमाणान्तराद्वा । प्रमाणान्तरमप्यनुमानमर्थापत्तिर्वा । न तावदागमात्, तस्य निमित्तोपादानकारणत्वप्रतिपादनपरत्वादित्यसकृदावेदितम् । तस्मादनेनास्मिन्नर्थे प्रमाणान्तरमास्थेयम् । तत्रानुमानं तावन्न संभवति । तद्धि दृष्ट·

आनन्दगिरीय–न्यायनिर्णयः ।

त्वाद् घटवदिति वैशेषिकाः । कर्मफलं संप्रदानाद्यभिज्ञप्रदातृकं कर्मफलत्वात्सेवाफलवदिति नैयायिकदिगम्बरौ । सौगतास्तु सांख्यानुमानेनैव तटस्थमीश्वरमास्थिताः । एवं माहेश्वरमतस्य प्रामाणिकत्वात्तद्विरोधः समन्वयस्येति प्राप्ते सिद्धान्तमाह–**अत इति** । पूर्वाधिकरणान्नञ्पदमध्याहृत्य सांख्ययोगाश्रयेश्वरकल्पनादूषणत्वेन सूत्रं योजयति–**पत्युरिति** । ईश्वरस्य निमित्तत्वमात्रे मानसिद्धे हेत्वसिद्धिरित्याह–**किमिति** । तस्य तन्मात्रत्वमागमान्मानान्तराद्वा । नाऽऽद्यस्तस्योभयकारणत्ववादिताया दर्शितत्वात् । मानान्तरमप्यनुमानमर्थापत्तिर्वा । आद्ये चेतनस्य द्रव्यं प्रति निमित्तत्वमात्रं लोके दृष्टमिति तद्बलात्तन्मात्रमीश्वरं वदतो वैषम्यकारिणो रागादिमत्त्वदृष्टेस्तदपि तस्मिन्कल्प्यमित्यसामञ्जस्यं स्यादि·

**हीनमध्यमोत्तमभावेन हि प्राणिभेदान् विदधत ईश्वरस्य रागद्वेषादिदोषप्रसक्तेरस्मदादिवदनीश्वरत्वं प्रसज्येत ॥ प्राणिकर्मापेक्षितत्वाददोष इति चेत् ॥ न ॥ कर्मेश्वरयोः प्रवर्त्यप्रवर्तयितृत्वे इतरेतराश्रयदोषप्रसंगात् ॥ नानादित्वादिति चेत् ॥**

रत्नप्रभा ।

भिप्रेत्याऽश्रौतस्येश्वरस्याऽसामञ्जस्यमाह–**हीनेति** ॥ यदि कर्तुरुपादानत्वमदृष्टत्वान्न कल्प्यते, तर्हि निर्दोषत्वस्याप्यदृष्टत्वात् यो विषमकारी स दोषवानिति व्याप्तिदृष्टेश्च जगत्कर्ता दोषवान् स्यात् । न चात्र धर्मिग्राहकानुमानबाधः । कार्यत्वलिङ्गस्य कर्तृमात्रसाधकत्वेन निर्दोषत्वादावुदासीनत्वात् । न चोत्कर्षसमा जातिः । व्यापकधर्मापादनात् । दोषाभावे तद्व्याप्यविषमकर्तृकत्वायोगाच्च । दृष्टान्तस्याव्यापकधर्माणां पक्षे आपादनं ह्युत्कर्षसमा जातिः । यथाशब्दो यदि कृतकत्वेन हेतुना घटवदनित्यः स्यात्, तर्हि तेनैव हेतुना सावयवोऽपि स्यादिति । न ह्यत्रानित्यत्वस्य व्यापकं सावयवत्वम् । गन्धादौ व्यभिचारादिति भावः । ननु प्राणिकर्मप्रेरित ईश्वरो विषमफलान् प्राणिनः करोति, न स्वेच्छयेति शङ्कते–**प्राणीति** ॥ जडस्य कर्मणः प्रेरकत्वायोगान्नैवमित्याह–**नेति** ॥ न चेश्वरप्रेरितं कर्मेश्वरस्य प्रेरकमिति वाच्यमित्याह–**कर्मेति** ॥ अतीतकर्मणा प्रेरित ईश्वरो वर्तमानं कर्म तत्फलाय प्रेरयतीत्यनादित्वात् प्रेर्यप्रेरकभावस्य नानुपपत्तिरिति शङ्कते–**नानादित्वादिति** ॥ अतीतकर्मणोऽपि जडत्वा-

भामती ।

नुसारेण प्रवर्तते तदनुसारेण चासामञ्जस्यम् । तदाह–**हीनमध्यमेति** । एतदुक्तं भवति–आगमादीश्वरसिद्धौ न दृष्टमनुसर्तव्यम् । न हि स्वर्गापूर्वदेवतादिष्वागमादवगम्यमानेषु किंचिदस्ति दृष्टम् । न ह्यागमो दृष्टसाधर्म्यात्प्रवर्तते । तेन श्रुतसिद्धवर्थमदृष्टानि दृष्टविपरीतस्वभावानि सुबहून्यपि कल्प्यमानानि न लोहगन्धितामावहन्ति प्रमाणवत्त्वात् । यस्तु तत्र कथंचिद्दृष्टानुसारः क्रियते स सुहृद्भावमात्रेण । आगमानपेक्षितमनुमानं तु दृष्टसाधर्म्येण प्रवर्तमानं दृष्टविपर्यये तुषादपि बिभेतितरामिति । **प्राणिकर्मापेक्षितत्वाददोष इति चेत्** । न । कुतः । **कर्मेश्वरयो**र्मिथः **प्रवर्त्यप्रवर्तयितृत्व इतरेतराश्रयत्वदोषप्रसङ्गात्** । अयमर्थः–यदीश्वरः करुणापराधीनो वीतरागस्ततः प्राणिनः कपूये कर्मणि न प्रवर्तयेत्, तच्चोत्पन्नमपि नाधितिष्ठेत्, तावन्मात्रेण प्राणिनां दुःखानुत्पादात् । न हीश्वराधीना जनाः स्वातन्त्र्येण कपूयं कर्म कर्तुमर्हन्ति । तदनधिष्ठितं वा कपूयं कर्म फलं प्रसोतुमुत्सहते । तस्मात्स्वतन्त्रोऽपीश्वरः कर्मभिः प्रवर्त्यत इति दृष्टविपरीतं कल्पनीयम् । तथा चायमपरो गण्डस्योपरि स्फोट इतरेतराश्रयः प्रसज्येत, कर्मणेश्वरः प्रवर्तनीय ईश्वरेण च कर्मेति । शङ्कते–**नानादित्वादिति चेत्** । पूर्वकर्मणेश्वरः संप्रतितने

आनन्दगिरीय–न्यायनिर्णयः ।

त्याह–**हीनेति** । आगमादीश्वरसिद्धौ न दृष्टमनुसर्तव्यं तस्य दृष्टसाधर्म्यादप्रवृत्तेः । अनुमानं तु दृष्टसाधर्म्येण प्रवर्तमानं दृष्टविपर्ययतुषादपि बिभेतीति भावः । ईश्वरो हि न स्वेच्छया विषमान्प्राणिनो विदधाति किंतु तत्कर्मापेक्षया तेन न तस्य रागादिमत्त्वमिति शंकते–**प्राणीति** । कर्मापेक्षया फलदातृत्वेऽपि कारुणिकत्वादीश्वरः शुभस्यैव फलं ददाति नाशुभस्येति किं न स्यादित्याह–**नेति** । येनयेनेश्वरः शुभेनाशुभेन वा प्रेर्यते तस्य फलं ददातीत्याशंक्य कर्मणा स प्रवर्त्यते तेन च कर्मेत्यन्योन्याश्रयान्नैवमित्याह–**कर्मेति** । अतीतेन कर्मणा प्रवर्तितस्येश्वरस्य वर्तमाने कर्मणि फलदानाय प्रवृत्तिरित्यनादित्वात्प्रवर्त्यप्रवर्तकत्वस्य कर्मेश्वरयोर्नान्योन्याश्रयतेत्याह–**नानादित्वादिति** । स्यादेष परिहारो यद्यतीतं कर्म स्वातन्त्र्येणेश्वरं प्रवर्तयेत्तत्तु नास्त्यचेतनत्वादतस्तदपि पूर्वकर्मप्रवर्तितेश्वरप्रेरितमेव वर्तमाने

न॥ वर्तमानकालवदतीतेष्वपि कालेष्वितरेतराश्रयदोषाविशेषादन्धपरम्परान्यायापत्तेः॥ अपि च प्रवर्तनालक्षणा दोषा इति न्यायवित्समयः। न हि कश्चिददोषप्रयुक्तः स्वार्थे, परार्थे वा,—प्रवर्तमानो दृश्यते । स्वार्थप्रयुक्त एव च सर्वो जनः परार्थेऽपि प्रवर्तत इत्येवमप्यसामञ्जस्यम् । स्वार्थवत्त्वादीश्वरस्यानीश्वरत्वप्रसङ्गात् । पुरुषविशेषत्वाभ्युपगमाच्चेश्वरस्य पुरुषस्य चौदासीन्याभ्युपगमादसामञ्जस्यम् ॥ ३७ ॥

## सम्बन्धानुपपत्तेश्च ॥ ३८ ॥

रत्नप्रभा ।

न्नेश्वरप्रेरकता । न च तदपीश्वरेण प्रेरितं सदीश्वरं प्रेरयति । उक्तान्योऽन्याश्रयात् । ततोऽप्यतीतकर्मप्रेरितेश्वरप्रेरितं तदेवेश्वरं वर्तमाने कर्मणि फलदानाय प्रेरयतीति चेन्न । मानहीनाया मूलक्षयावहाया अनवस्थायाः प्रसङ्गात् । अतः कर्मनिरपेक्ष एवेश्वरो विषमस्रष्टेत्यसामञ्जस्यं दुर्वारमित्यर्थः । यत्तु फलदानमीश्वरस्य कर्मनिमित्तमात्रं, न प्रेरकमिति नोक्तदोष इति । तन्न । विषमकर्म कारयितुरीश्वरस्य दोषवत्त्वानपायात् । पूर्वकर्मापेक्षया कर्मकारयितृत्वे चोक्ताप्रामाणिकानवस्थानात् । अस्माकं त्वेष ह्येव साध्वसाधु कारयतीति निरवद्यमिति च श्रुतिमूलं पूर्वकर्मापेक्षया कल्पनमिति वैषम्यम् । किञ्च परमतानुसारेणापीश्वरस्य रागादिमत्त्वं प्राप्नोतीत्याह—अपि चेति ॥ प्रवर्तकत्वलिङ्गाः—दोषाः इति तार्किकाणां स्थितिः । तथा चेश्वरः, स्वार्थरागादिमान्, प्रवर्तकत्वात्, सम्मतवत् । न च कारुणिके व्यभिचारः । परदुःखप्रयुक्तस्वदुःखनिवृत्त्यर्थित्वात्तस्येत्यर्थः । उदासीनः प्रवर्तक इति च व्याहतमिति योगान् प्रत्याह—पुरुषेति ॥ ३७ ॥ प्रधानवादे दोषान्तरमाह सूत्रकारः—सम्बन्धेति ॥ ईश्वरेणासम्बद्धस्य प्रधानादेः

भामती ।

कर्मणि प्रवर्त्यते तेनेश्वरेण संप्रतितनं कर्म स्वकार्ये प्रवर्त्येत इति । निराकरोति—न । वर्तमानकालवदिति । अथ पूर्वं कर्म कथमीश्वराप्रवर्तितमीश्वरप्रवर्तनलक्षणं कार्यं करोति । तत्रापि प्रवर्तितमीश्वरेण पूर्वतनकर्मप्रवर्तितेनेत्येवमन्धपरम्परादोषः । चक्षुष्मता ह्यन्धो नीयते नान्धान्तरेण । तथेहापि द्वावपि प्रवर्त्याविति कः कं प्रवर्तयेदित्यर्थः । अपि च नैयायिकानामीश्वरस्य निर्दोषत्वं स्वसमयविरुद्धमित्याह—अपि चेति । अस्माकं तु नायं समय इति भावः । ननु कारुण्यादपि प्रवर्तमानो जनो दृश्यते । न च कारुण्यं दोष इत्यत आह—स्वार्थप्रयुक्त एव चेति । कारुण्ये हि सत्यस्य दुःखं भवति तेन तत्प्रहाणाय प्रवर्तत इति कारुणिका अपि स्वार्थप्रयुक्ता एव प्रवर्तन्त इति । ननु स्वार्थप्रयुक्त एव प्रवर्ततामेवमपि को दोष इत्यत आह—स्वार्थवत्त्वादीश्वरस्येति । अर्थित्वादित्यर्थः । पुरुषस्य चौदासीन्याभ्युपगमान्न वास्तवी प्रवृत्तिरिति ॥ ३७ ॥ अपरमपि दृष्टानुसारेण दूषणमाह—संबन्धानुपपत्तेश्च ।

आनन्दगिरीय—न्यायनिर्णयः ।

कर्मणि तत्प्रेरकमिति कर्मेश्वरयोर्मिथोऽपेक्षायाः सार्वत्रिकत्वादनादित्वस्याप्रामाणिकत्वान्नैवमित्याह—नेति । कर्मापेक्षया वैषम्यहेतुत्वस्य निर्वक्तुमशक्यत्वाल्लोकदृष्ट्या स्यादेव रागादिमत्त्वमीश्वरस्येत्युक्तम् । इदानीं परमतेनापि तस्य रागादिमत्त्वं स्यादित्याह—अपि चेति । प्रवर्तकत्वलिङ्गका रागादिदोषा इति नैयायिकसमयः । ततश्च प्रवर्तकत्वादेवेश्वरस्य तद्वत्त्वमित्यर्थः । प्रवर्तकत्वदोषवत्त्वयोर्व्याप्तिं व्यनक्ति—न हीति । कारुण्यादपि प्रवृत्तेर्नैवं व्याप्तिरित्याशंक्याऽऽह—स्वार्थेति । कारुण्ये सति स्वस्य दुःखं भवति तेन कारुणिकोऽपि स्वदुःखनिवृत्तये परार्थेऽपि प्रवर्तत इत्यर्थः । तथाऽपि किं जात मीश्वरस्येत्याशंक्याऽऽह—इत्येवमिति । न केवलं दृष्टानुसारादसामञ्जस्यं किंतूक्तेन प्रकारेणोपगमादपीत्यर्थः । स्वीकारमात्रस्यादोषत्वात्तस्य दोषपर्यवसायित्वमाह—स्वार्थेति । अर्थित्वादित्यर्थः । ईश्वरस्य प्रवर्तकत्वमुपेत्योक्तं तदपि पातञ्जलमते नास्तीत्याह—पुरुषेति ॥ ॥ ३७ ॥ प्रधानवादे दोषान्तरमाह—सम्बन्धेति । प्रकृतासामञ्जस्ये हेत्वन्तरपरं सूत्रमिति सूचयति—

१ 'प्रवर्तनालक्षणा दोषाः' (गौतं० न्या० १ । १ । १८) इति सूत्रं

**पुनरप्यसामञ्जस्यमेव । न हि प्रधानपुरुषव्यतिरिक्त ईश्वरोऽन्तरेण सम्बन्धं प्रधानपुरुषावीशीत न तावत्संयोगलक्षणः सम्बन्धः, सम्भवति । प्रधानपुरुषेश्वराणां सर्वगतत्वान्निरवयवत्वाच्च । नापि समवायलक्षणः सम्बन्धः । आश्रयाश्रयिभावानिरूपणात् । नाप्यन्यः कश्चित्कार्यगम्यः सम्बन्धः शक्यते कल्पयितुम् । कार्यकारणभावस्यैवाऽद्याप्यसिद्धत्वात् ॥ ब्रह्मवादिनः कथमिति चेत् ॥ न ॥ तस्य तादात्म्यलक्षणसम्बन्धोपपत्तेः ॥ अपि चाऽऽगमबलेन ब्रह्मवादी कारणादिस्वरूपं निरूपयतीति नावश्यं तस्य यथादृष्टमेव सर्वमभ्युपगन्तव्यमिति नियमोऽस्ति । परस्य तु दृष्टा-**

रत्नप्रभा ।

प्रेर्यत्वायोगात् सम्बन्धो वाच्यः । स च संयोगः समवायो वा नाऽस्तीत्यर्थः । कार्यबलात् प्रेरणयोग्यत्वाख्यः सम्बन्धः कल्प्यतामित्यत आह—**नाप्यन्य इति** ॥ ईश्वरप्रेरितप्रधानकार्यं जगदिति सिद्धं चेत् सम्बन्धकल्पना स्यात् । तच्चाद्याप्यसिद्धमित्यर्थः । मायाब्रह्मणोस्त्वनिर्वाच्यतादात्म्यसम्बन्धः । "देवात्मशक्तिम्" [ श्वेता० १ । ३ ] इति श्रुतेः । किंच वेदस्यापूर्वार्थत्वान्न लोकदृष्टमृत्कुलालसम्बन्धो वैदिकेनानुसर्तव्यः । आनुमानिकेन त्वनुसर्तव्य इति विशेषमाह—**अपि चेति** ॥ सर्वज्ञस्यागमप्रामाण्यस्य च ज्ञतावन्योन्याश्रयः—अनुमानात् सर्वज्ञसिद्धेर्निरस्तत्वात् । न ह्यमनस्कस्य ज्ञानं संभवति । ज्ञानं

भामती ।

दृष्टो हि सावयवानामसर्वगतानां च संयोगः । अप्राप्तिपूर्विका हि प्राप्तिः संयोगो न सर्वगतानां संभवत्यप्राप्तेरभावान्निरवयवत्वाच्च । अव्याप्यवृत्तिता हि संयोगस्य स्वभावः । न च निरवयवेष्वव्याप्यवृत्तिता संयोगस्य संभवतीत्युक्तम् । तस्मादव्याप्यवृत्तितायाः संयोगस्य व्यापिकाया निवृत्तेस्तद्व्याप्यस्य संयोगस्य विनिवृत्तिरिति भावः । **नापि समवायलक्षणः** । स ह्ययुतसिद्धानामाधाराधेयभूतानामिह प्रत्ययहेतुः संबन्ध इत्यभ्युपेयते । न च प्रधानपुरुषेश्वराणां मिथोऽस्त्याधाराधेयभाव इत्यर्थः । नापि योग्यतालक्षणः कार्यगम्यसंबन्ध इत्याह—**नाप्यन्य इति** । न हि प्रधानस्य महदहंकारादिकारणत्वमद्यापि सिद्धमिति । शङ्कते—**ब्रह्मवादिन इति** । निराकरोति—**न** । कुतः । **तस्य** मतेऽनिर्वचनीय**तादात्म्यलक्षणसंबन्धोपपत्तेः** । **अपि चेति** । आगमो हि प्रवृत्तिं प्रति न दृष्टान्तमपेक्षत इत्यदृष्टपूर्वे तद्विरुद्धे च प्रवर्तितुं

आनन्दगिरीय–न्यायनिर्णयः ।

**पुनरिति** । कथमीश्वरस्य प्रधानपुरुषाभ्यां संबन्धोऽस्त्युत न, नास्ति चेदधिष्ठात्रधिष्ठेयतासिद्धिरित्याह—**न हीति** । अस्ति चेत्तर्हि स संयोगो वा समवायो वा योग्यता वेति विकल्प्याऽऽद्यं दूषयति—**न तावदिति** । अप्राप्तप्राप्तिरव्याप्यवृत्तिश्च संयोगस्य स्वरूपम् । तत्र प्रधानादिष्वप्राप्तप्राप्तेरभावे हेतुमाह—**प्रधानेति** । अव्याप्यवृत्तित्वाभावेऽपि हेतुमाह—**निरवयवत्वादिति** । द्वितीयं निरस्यति—**नापीति** । तृतीयं प्रत्याह—**नाप्यन्य इति** । प्रधानकार्यत्वस्य जगतोऽसिद्धत्वात्प्रधानेश्वरयोः संबन्धस्य कार्यकल्प्यस्यायोगादित्यर्थः । तत्रापि मायाब्रह्मणोर्विभुत्वान्निरवयवत्वाच्च संयोगासिद्धिः समवायस्यानिष्टत्वात्कार्यकारणत्वस्य चासिद्धत्वात्कार्यगम्ययोग्यतासंबन्धायोगान्नाधिष्ठात्रधिष्ठेयतेति शंकते—**ब्रह्मेति** । मायाब्रह्मणोरनिर्वाच्यतादात्म्यसंबन्धान्न साम्यमित्याह—**नेति** । इतोऽपि ब्रह्मवादिनो न दोषसाम्यमित्याह—**अपि चेति** । तथाऽपि दृष्टमनुसर्तव्यं नेत्याह—**नावश्यमिति** । दृष्टविरुद्धेऽत्यन्तादृष्टे चाऽऽगमस्य प्रवृत्तेरित्यर्थः । अनुमानवादिनि विशेषमाह—**परस्येति** । ईश्वरवादिनोऽपि तुल्यत्वादागमबल-

न्तबलेन कारणादिस्वरूपं निरूपयतो यथादृष्टमेव सर्वमभ्युपगन्तव्यमित्ययमस्त्यतिशयः ॥ परस्यापि सर्वज्ञप्रणीताऽऽगमसद्भावात् समानमागमबलमिति चेत् ॥ न ॥ इतरेतराश्रयप्रसङ्गात्–आगमप्रत्ययात्सर्वज्ञत्वसिद्धिः, सर्वज्ञप्रत्ययाच्चागमसिद्धिरिति ॥ तस्मादनुपपन्ना सांख्ययोगवादिनामीश्वरकल्पना । एवमन्यास्वपि वेदबाह्यास्वीश्वरकल्पनासु यथासम्भवमसामञ्जस्यं योजयितव्यम् ॥ ३८ ॥

## अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य । स हि परिकल्प्यमानः कुम्भकार इव मृदादीनि प्रधानान्यधिष्ठाय प्रवर्तयेत् । न चैवमुपपद्यते । न ह्यप्रत्यक्षं, रूपादिहीनं च,–प्रधानमीश्वरस्याधिष्ठेयं सम्भवति । मृदादिवैलक्षण्यात् ॥ ३९ ॥

## करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

स्यादेतत्–यथा करणग्रामं चक्षुरादिकमप्रत्यक्षं रूपादिहीनं च पुरुषो-

---

रत्नप्रभा ।

मनोजन्यमिति व्याप्तिविरोधान्नित्यज्ञानकल्पनाऽनवकाशादिति भावः । प्रधानवत् परमाणूनामपि निरवयवेश्वरेण संयोगाद्यसत्त्वात् प्रेर्यत्वायोगः । प्रेरकत्वे चेश्वरस्य दोषवत्त्वमित्याह–एवमन्यास्वपीति ॥ ३८ ॥ ईश्वरस्य प्रधानादिप्रेरणानुपपत्तेश्च, सामञ्जस्यमित्याह सूत्रकारः–अधिष्ठानेति ॥ प्रधानादिकं चेतनस्यानधिष्ठेयं, प्रत्यक्षत्वादीश्वरवद्व्यतिरेकेण मृदादिवच्चेत्यर्थः ॥ ३९ ॥ चक्षुरादौ व्यभिचारमाशंक्य निषेधति–करणवदिति ॥ रूपमुद्भूतं नास्तीत्यप्रत्यक्षत्वं स्फुटयति–रूपेति ॥ स्वभो-

भामती ।

समर्थः । अनुमानं तु दृष्टानुसारि नैवंविधे प्रवर्तितुमर्हतीति । शङ्कते–परस्यापीति । परिहरति–नेति । अस्माकं त्वीश्वरागमयोरनादित्वादीश्वरयोर्नित्वेऽप्यागमस्य न विरोध इति भावः ॥ ३८ ॥ अधिष्ठानानुपपत्तेश्च । यथादर्शनमनुमानं प्रवर्तते नालौकिकार्थविषयमितीहापि न प्रस्मर्तव्यम् । सुगममन्यत् ॥३९॥ करणवच्चेन्न भोगादिभ्यः । रूपादिहीनमिति । अनुद्भूतरूपमित्यर्थः । रूपादिहीनकरणाधिष्ठानं हि

आनन्दगिरीय–न्यायनिर्णयः ।

स्यानुमानबलमधिकमिति शंकते–परस्यापीति । किमीश्वरस्य सर्वज्ञत्वं तत्कृतागमाद्गम्यते किं वाऽनुमानादिति विकल्प्याऽऽद्ये दोषमाह–नेत्यादिना । सर्वज्ञकृतत्वेनाऽऽगमप्रमाण्ये ततः सर्वज्ञकृतत्वं ज्ञेयं ततश्च तस्य प्रामाण्यमिति नैकमपि सिध्यति । अस्माकं त्वनादिसिद्धाद्वेदादनपेक्षादलौकिकमपि यूपादिवद्दृष्टं स्यादिति भावः । न चानुमानादीश्वरः सर्वज्ञो ज्ञायते दृष्टबलप्रवृत्तेरनुमानादीश्वरं साधयतः स्वाभ्युपगमवैपरीत्यध्रौव्यस्योक्तत्वादित्युपसंहरति–तस्मादिति । सांख्ययोगोक्तन्यायं चतुर्विधमाहेश्वरेषु वैशेषिकादिषु चातिदिशति–एवमिति ॥ ३८ ॥ द्विविधादागमादनुमानाच्च तटस्थेश्वरसिद्धिर्निरस्ता। संप्रत्युद्भूतरूपादिहीनप्रधानादेरस्मदादिभिरधिष्ठेयत्वानुपपत्तिरर्थापत्तिरीश्वरे मानमित्याशंक्यास्मदादिवदीश्वरेणापि प्रधानादेरधिष्ठेयत्वानुपपत्तेर्मैवमित्याह–अधिष्ठानेति । सूत्रं व्याकरोति–इतश्चेति । अनुपपत्तिं वक्तुं परस्येश्वरकल्पनामनुवदति–स हीति । अस्मदादिवदीश्वरेणापि प्रधानादीनामधिष्ठेयत्वं न युक्तं तेनार्थापत्तेरनुत्थानादित्याह–न चेति । विमतं न चेतनाधिष्ठेयमप्रत्यक्षत्वान्मृदादिवदिति व्यतिरेकिणाऽनुपपत्तिमेव स्फुटयति–न हीति । अप्रत्यक्षत्वमुद्भूतरूपादिराहित्येन स्फोरयति–रूपादीति ॥ ॥ ३९ ॥ चक्षुरादावनैकान्त्यमाशंक्य परिहरति–करणवदिति । शंकां विभजते–स्यादेतदिति ।

ऽधितिष्ठति, एवं प्रधानमीश्वरोऽधिष्ठास्यतीति । तथापि नोपपद्यते-भोगादिदर्शनाद्धि करणग्रामस्याधिष्ठितत्वं गम्यते । न चात्र भोगादयो दृश्यन्ते । करणग्रामसाम्ये चाभ्युपगम्यमाने संसारिणामिवेश्वरस्यापि भोगादयः प्रसज्येरन् । अन्यथा वा सूत्रद्वयं व्याख्यायते-"अधिष्ठानानुपपत्तेश्च" [ व्या० सू० २ । २ । ३९ ] इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य । साधिष्ठानो हि लोके सशरीरो राजा राष्ट्रस्येश्वरो दृश्यते, न निरधिष्ठानः ॥ अतश्च तद्दृष्टान्तवशेनादृष्टमीश्वरं कल्पयितुमिच्छतः ईश्वरस्यापि किञ्चिच्छरीरं करणायतनं वर्णयितव्यं स्यात् । न च तद्वर्णयितुं शक्यते । सृष्ट्युत्तरकालभावित्वाच्छरीरस्य प्राक्सृष्टेस्त-

रत्नप्रभा ।

गाहेतुत्वे सतीति विशेषणान्न व्यभिचार इत्याह-तथापीति ॥ भोगः-सुखदुःखानुभवः । आदिपदाद्-विषयानुभवग्रहः । न च यद् येनाधिष्ठेयं तत्तदीयभोगहेतुत्वे सति प्रत्यक्षमिति व्यतिरेकव्याप्तौ करणेषु व्यभिचारतादवस्थ्यमिति वाच्यम् । भोगहेतुत्वविशिष्टाप्रत्यक्षत्वस्य हेतुत्वात् । करणेषु च विशेषणभावेन विशिष्टस्य हेतोरभावात् । न च विशेष्यवैयर्थ्यम् । परार्थपाचकाधिष्ठेयकाष्ठादौ व्यभिचारात् । न च प्रधानादेरीश्वरप्रत्यक्षत्वाद्विशेष्यासिद्धिः । अतीन्द्रियत्वरूपाप्रत्यक्षत्वस्य सत्त्वादित्यभिप्रायः । जीवे करणकृताः भोगादयो दृश्यन्ते ईश्वरे तु प्रधानकृतास्ते न दृश्यन्त इत्यक्षरार्थः । विपक्षे दोषं वदन् अप्रयोजकत्वं हेतोर्निरस्यति-करणेति ॥ प्रधानादेः प्रेर्यत्वाङ्गीकारे प्रेरकभोगहेतुत्वं स्यादतीन्द्रियस्य प्रेर्यस्य भोगहेतुत्वनियमादित्यर्थः । सूत्रद्वयस्यार्थान्तरमाह-अन्यथा वेति ॥ यः प्रवर्तकश्चेतनः स शरीरीति लोके व्याप्तिर्दृष्टा । ईश्वरस्य च शरीरानुपपत्तेर्न प्रवर्तकत्वमिति सूत्रार्थमाह-इतश्चेति ॥ विमतं, सेश्वरं, कार्यत्वाद्राष्ट्रवदिति कल्पयतो राजवत् सशरीर एवेश्वरः स्यादित्युक्तम् । तत्रेष्टापत्तिं निरस्यति-न च तद्वर्णयितुमिति ॥ न च नित्यं शरीरं सर्गात् प्रागपि सम्भवतीति वाच्यम् ।

भामती ।

पुरुषस्य स्वभोगादावेव दृष्टं नान्यत्र । न हि बाह्यं कुठाराद्यपरिदृष्टं व्यापारयन् कश्चिदुपलभ्यते । तस्माद्रूपादिहीनं करणं व्यापारयत ईश्वरस्य भोगादिप्रसक्तिः । तथा चानीश्वरत्वमिति भावः । कल्पान्तरमाह-अन्यथेति । पूर्वमधिष्ठितिरधिष्ठानमिदानीं तु अधिष्ठानं भोगायतनं शरीरमुक्तम् । तथा भोगादिप्रसङ्गे-

आनन्दगिरीय-न्यायनिर्णयः ।

अनैकान्तिके शंकितेऽपि नार्थापत्तेरुत्थानमित्युत्तरं व्याचष्टे-तथाऽपीति । अस्मत्पक्षे चक्षुरादिस्वानुभवसिद्धमेवाधिष्ठीयतेऽतो न व्यभिचारशंकेत्यर्थः । किंच, करणग्रामवच्चेतनाधिष्ठितत्वं प्रधानादेरशक्यं वक्तुं वैषम्यादित्याह-भोगादीति । आदिशब्दात्तत्कारणरूपदर्शनादि गृहीतम् । करणग्रामप्रयुक्तं हि रूपदर्शनादि तत्फलं च भोगश्चेतने दृश्यते तेन तस्य तेनाधिष्ठितत्वं प्रधानादिकृताश्च भोगादयो नेश्वरस्य केनापीष्यन्ते । तथा च करणग्रामवैलक्षण्यात्प्रधानादेर्न चेतनाधिष्ठितत्वमित्यनुत्थानमर्थापत्तेरित्यर्थः । विपक्षे दोषमाह-करणेति । यदि प्रधानादेरिष्टं करणग्रामसाम्यं तर्हि संसारिणां तत्कृतभोगादिवदीशस्यापि प्रधानादिकृता भोगादयः स्युस्ततश्चानीश्वरत्वापत्तेर्नार्थापत्त्या तद्धीरित्यर्थः । सूत्रद्वयस्य व्याख्यान्तरमाह-अन्यथा वेति । ईश्वरस्याधिष्ठानं शरीरं तदयोगात्प्रवर्तकत्वासिद्धेर्न कार्यानुपपत्त्या तद्धीरित्याह-अधिष्ठानेति । तद्व्याकरोति-इतश्चेति । चेतनस्य प्रवर्तकत्वं सशरीरत्वव्याप्तमन्वयव्यतिरेकाभ्यां वदन्नितःशब्दार्थं स्फुटयति-साधिष्ठानो हीति । विमतं शरीरादिमत्पूर्वकं कार्यत्वाद्घटवदिति व्याप्तिफलमाह-अतश्चेति । लीलामयं शरीरमीश्वरस्यापि सिद्धमिति सिद्धसाध्यतेत्याशंक्याऽऽह-न चेति । तर्हि

दनुपपत्तेः ॥ निरधिष्ठानत्वे चेश्वरस्य प्रवर्तकत्वानुपपत्तिः । एवं लोके दृष्टत्वात् ॥ "करणवच्चेन्न भोगादिभ्यः" अथ लोकदर्शनानुसारेणेश्वरस्यापि किञ्चित्करणानामायतनं शरीरं कामेन कल्प्येत, एवमपि नोपपद्यते । सशरीरत्वे हि सति संसारिवद्भोगादिप्रसङ्गादीश्वरस्याप्यनीश्वरत्वं प्रसज्येत ॥ ४० ॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य । स हि सर्वज्ञस्तैरभ्युपगम्यते अनन्तश्च । अनन्तं च प्रधानम्, अनन्ताश्च पुरुषाः, मिथो भिन्ना अभ्युपगम्यन्ते । तत्र सर्वज्ञेनेश्वरेण प्रधानस्य पुरुषाणामात्मनश्चेयत्ता परिच्छिद्येत वा, न वा परिच्छिद्येत । उभयथापि दोषोऽनुषक्त एव ॥ कथम् ॥ पूर्वस्मिंस्तावद्विकल्प इयत्तापरिच्छिन्नत्वात्प्रधानपुरुषेश्वराणामन्तवत्त्वमवश्यम्भावि । एवं लोके दृष्टत्वात् । यद्धि लोके इयत्तापरिच्छिन्नं वस्तु घटादि, तदन्तवद्दृष्टम् । तथा प्रधानपुरुषेश्वरत्रयमपीयत्ता-

---

रत्नप्रभा ।

शरीरस्य भौतिकत्वनियमादित्यर्थः । अतस्त्वशरीर एवेश्वर इत्यत आह—निरधिष्ठानत्वे चेति ॥ जीवस्यैव शरीरं भौतिकम् । ईश्वरस्य तु स्वेच्छानिर्मितं प्रागपि स्यादित्याशङ्कां निरस्यति—करणवदिति ॥ करणान्यत्र सन्तीति करणवच्छरीरम् । इच्छामयशरीरकल्पनैवानुपपन्ना । मानाभावाद्, दृष्टभौतिकत्वनियमविरोधाच्चेति मन्तव्यम् ॥ ४० ॥ एवमीश्वरस्य शुष्कतर्केण कर्तृत्वनिर्णयो नेत्युपपाद्य नित्यत्वसर्वज्ञत्वनिर्णयोऽपि न सम्भवतीत्याह सूत्रकारः—अन्तवत्त्वमिति ॥ प्रधानपुरुषेश्वरत्रयमनित्यम्, इयत्तापरिच्छिन्नत्वाद् घटवदित्याह—पूर्वस्मिन्निति ॥ संख्या वा, परिमाणं वा—इयत्ता । तथा च निश्चितसंख्य-

भामती ।

मानीश्वरत्वं पूर्वमापादितम् । संप्रति तु शरीरित्वेन भोगादिप्रसङ्गादनीश्वरत्वमुक्तमिति विशेषः ॥ ४० ॥

अन्तवत्त्वमसर्वज्ञता वा । अपि च सर्वत्रानुमानं प्रमाणयतः प्रधानपुरुषेश्वराणामपि संख्याभेदवत्त्वमन्तवत्त्वं च द्रव्यत्वात् संख्यान्यत्वे सति प्रमेयत्वाद्वानुमातव्यं, ततश्चान्तवत्त्वमसर्वज्ञता वा । अस्माकं त्वाग-

आनन्दगिरीय—न्यायनिर्णयः ।

कार्यमपि शरीरादिमत्पूर्वकं मा भूदित्याशंक्याऽऽह—निरधिष्ठानत्वे चेति । अनीश्वरस्यैव सृष्ट्युत्तरभावि शरीरमीश्वरस्य प्रागपीच्छानिर्मितं भविष्यतीत्याशंक्याऽऽह—करणवदिति । चोद्यं व्याकरोति—अथेति । न तावदीश्वरस्येच्छानिर्मितत्वे प्राचीने देहे किंचिन्मानं, तथाऽपि तदङ्गीकारे देहित्वादीश्वरत्वासिद्धिरित्युत्तरमाह—एवमपीति । देहित्वेऽपि किमित्यनीश्वरत्वं तत्राऽऽह—सशरीरत्वे हीति ॥ ४० ॥ श्रुत्यनुमानार्थापत्तिभिरीश्वरो न परेष्टः सिध्यतीत्युक्तम् । इदानीं तस्यानन्तत्वाभ्युपगमोऽपि न संभवतीत्याह—अन्तवत्त्वमिति । सूत्रं व्याकरोति—इतश्चेति । तदेव वक्तुं परमतमनुवदति—स हीति । न तावदीश्वरस्य सर्वज्ञत्वं नित्ये ज्ञाने स्वातन्त्र्यायोगात् । ज्ञानस्य साक्षाद्विषयसंबन्धासिद्धेश्च । तथाऽप्युपेत्य विकल्प्य दोषप्रसक्तिं प्रतिजानीते—तत्रेति । कल्पद्वयेऽपि दोषानुषक्तिं प्रकटयितुं पृच्छति—कथमिति । विमतमन्तवदियत्तापरिच्छिन्नत्वाद्घटवदित्याह—पूर्वस्मिन्निति । लौकिकीं दृष्टिमेव स्पष्टयति—यद्धीति । व्याप्तिफलमनुमानं निगमयति—तथेति । हेतोरसिद्धिमाशंक्य संख्यातः स्वरूपतो वा परिमितिराहित्य-

परिच्छिन्नत्वादन्तवत्स्यात । संख्यापरिमाणं तावत्प्रधानपुरुषेश्वरत्रयरूपेण परिच्छिन्नम्, स्वरूपपरिमाणमपि तन्नूनमीश्वरेण परिच्छिद्यतेति। पुरुषगता च महासंख्या । ततश्च इयत्तापरिच्छिन्नानां मध्ये ये संसारिणः संसारान्मुच्यन्ते, तेषां संसारोऽन्तवान् । संसारित्वं च तेषामन्तवत् । एवमितरेष्वपि क्रमेण मुच्यमानेषु संसारस्य संसारिणां चान्तवत्त्वं स्यात । प्रधानं च सविकारं पुरुषार्थमीश्वरस्याधिष्ठेयं संसारवत्त्वेनाभिमतम् । तच्छून्यतायामीश्वरः किमधितिष्ठेत । किंविषये वा सर्वज्ञतेश्वरते स्याताम् । प्रधानपुरुषेश्वराणां चैवमन्तवत्त्वे सति आदिमत्त्वप्रसङ्गः । आद्यन्तवत्त्वे च शून्यवादप्रसंगः । अथ मा भूदेष दोष इत्युत्तरो विकल्पोऽभ्युपगम्येत-न प्रधानस्य पुरुषाणामात्मनश्चेयत्तेश्वरेण परिच्छिद्यत इति ।

---

रत्नप्रभा ।

त्वान्निश्चितपरिमाणत्वाच्चेति हेतुद्वयम् । यद्यपि संख्यावत्त्वमात्रं हेतुः सम्भवति तथापि सर्वज्ञत्वनिश्चयेन हेत्वसिद्धिनिरासं द्योतयितुं निश्चितपदम् । तत्राद्यहेतोरसिद्धिर्नास्तीत्याह-संख्यापरिमाणमिति ॥ संख्यास्वरूपमित्यर्थः । द्वितीयहेतुं साधयति-स्वरूपेति ॥ प्रधानादयः, निश्चितपरिमाणाः, वस्तुतोऽभिन्नत्वाद्, घटवदित्यर्थः । ननु प्रधानपुरुषेश्वरास्त्रय इति ज्ञातेऽपि जीवानामानन्त्यात् कथं संख्यानिश्चयः, तत्राह-पुरुषेति ॥ जीवसंख्यापीश्वरेण निश्चीयेत अनिश्चये, सर्वज्ञत्वायोगादित्यर्थः । हेतुसिद्धेः फलमाह-ततश्चेति ॥ माषराशिवत् केषांचिज्जीवानां सङ्गः, तद्बन्धश्च, नश्येदित्येवं सर्वमुक्तेरिदानीं शून्यं जगत् स्यादित्यर्थः । नित्यस्यानवशेषापादिति भावः । ननु ईश्वरः शिष्यतामिति चेन्न । तस्यापि भिन्नत्वेनान्तवत्त्वात् । किञ्चेशितव्याभावादीश्वराभावः स्यादित्याह-प्रधानमिति ॥ दोषान्तरमाह-प्रधानेति ॥ इयत्तानिश्चयाभावान्न शून्यतेति द्वितीयं शङ्कते-अथेति ॥ इयत्ता नास्ति, न निश्चीयते चेत्यर्थः । प्रधानादयः, संख्यापरिमाणवन्तः, द्रव्यत्वान्माषादिवदित्यनुमानादस्तीयत्ता । तदज्ञाने स्याद-

भामती ।

मगम्येऽर्थे तद्बाधितविषयतया नानुमानं प्रभवतीति भावः । स्वरूपपरिमाणमपि यस्य यादृशमणु महत् परममहद्दीर्घं ह्रस्वं चेति । अथ मा भूदेष दोष इत्युत्तरो विकल्पः । यस्यान्तोऽस्ति तस्यान्तवत्त्वाग्रहणमसर्वज्ञतामापादयेत् । यस्य त्वन्त एव नास्ति तस्य तदग्रहणं नासर्वज्ञतामावहति । न हि शश-

आनन्दगिरीय-न्यायनिर्णयः ।

मिति विकल्प्याऽऽद्यं प्रत्याह-संख्येति । न द्वितीयः, प्रधानादयः स्वरूपपरिमिता वस्तुतः परिच्छिन्नत्वाद् घटवदित्याह-स्वरूपेति । यस्य यादृशं परिमाणमणु महद्दीर्घं ह्रस्वं वा तदीश्वरेण सर्वज्ञत्वात्परिच्छिद्येत तथा च ज्ञातपरिमाणत्वात्प्रधानाद्यन्तवदित्यर्थः । प्रधानपुरुषेश्वरस्वरूपेण त्रित्वे ज्ञातेऽपि जीवानामानन्त्यात्तद्गतसंख्याज्ञानाभावात्तेषु संख्यापरिमितिरसिद्धेत्याशंक्याऽऽह-पुरुषेति । पुरुषैस्तावत्प्रत्येकमेकत्वसंख्या ज्ञाता या च तेषामन्योन्यापेक्षया बहुत्वसंख्या साऽपीश्वरेण ज्ञायते । न च सहस्रं लक्षं वेति विशेषाज्ञानादानन्त्यं माषराशौ व्यभिचारात् । अस्मदादिभिः संख्यातुमशक्यस्यापि गणितज्ञेन संख्यातत्वदर्शनात् । संदिग्धं विशेषाज्ञानं सर्वपुरुषपरिचयादृते तदज्ञाननिश्चयस्याशक्यत्वात्तस्मान्न जीवास्तत्त्वतोऽनन्ता वस्तुतः परिच्छिन्नत्वादेकदेशस्थमाषादिवदिति हेत्वसिद्धिमुद्धृत्य फलितमाह-ततश्चेति । कतिपयसंसारिमुक्तन्यायमवशिष्टेष्वतिदिशति-एवमिति । यथा बहूनामपि माषाणामेकैकापचये निखिलापचयो दृश्यते तथा क्रमेण सर्वमुक्तेरिदानीं सर्वसंसारशून्यं जगद्भवेदित्यर्थः । किंचेश्वरस्यास्मिन्पक्षे सर्वदा सर्वज्ञत्वं सर्वेश्वरत्वं च न सिध्यतीत्याह-प्रधानं चेति । दोषान्तरमाह-प्रधानेति । सिद्धे सर्वेषामाद्यन्तवत्त्वे फलितमाह-आद्यन्तेति । कल्पान्तरमनुवदति-अथेति । वाशब्दसूचितं विकल्पद्वयमुक्त्वाऽऽद्यन्त-

तत ईश्वरस्य सर्वज्ञत्वाभ्युपगमहानिरपरो दोषः प्रसज्येत ॥ तस्मादप्यसंगतस्तार्किकपरिगृहीत ईश्वरकारणवादः ॥ ४१ ॥ इति पत्युरसामञ्जस्याधिकरणम् ॥ ७ ॥

## उत्पत्त्यसम्भवात् ॥ ४२ ॥ (८) ॥

येषामप्रकृतिरधिष्ठाता केवलनिमित्तकारणमीश्वरोऽभिमतः, तेषां पक्षः प्रत्याख्यातः ॥ येषां पुनः प्रकृतिश्चाऽधिष्ठाता चोभयात्मकं कारणमीश्वरोऽभिमतः, तेषां पक्षः प्रत्याख्यायते ॥ ननु श्रुतिसमाश्रयणेनाप्येवंरूप एवेश्वरः प्राङ् निर्धारितः—प्रकृतिश्चाऽधिष्ठाता चेति । श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति स्थितिः ॥ तत् कस्य हेतोरेष पक्षः प्रत्याचिख्यासित इति ॥ उच्यते ॥ यद्यप्येवंजातीयकोंशः समानत्वान्नविसंवादगोचरो भवति—अस्ति त्वंशान्तरं विसंवादस्थानमिति । अतस्तत्प्रत्याख्यानायाऽऽरम्भः । तत्र भागवता मन्यन्ते—भगवानेवैको वासुदेवः

---

रत्नप्रभा ।

सर्वज्ञता । इयत्तायां चान्तवत्त्वमप्यक्षतमिति परिहरति—तत इति ॥ तस्मात् केवलकर्त्रीश्वरवादस्य निर्मूलत्वान्न कर्त्रुपादानाद्वयेश्वरसमन्वयविरोध इति सिद्धम् ॥ ४१ ॥ ( ७ ) ॥ पञ्चपदार्थवादिमाहेश्वरमतनिरासानन्तरं चतुर्व्यूहवादं बुद्धिस्थं निरस्यति—उत्पत्त्यसम्भवादिति ॥ अधिकरणतात्पर्यमाह—येषामिति ॥ अधिकरणारम्भमाक्षिपति—नन्विति ॥ वेदाविरुद्धांशमङ्गीकृत्य वेदविरुद्धं जीवोत्पत्त्याद्यंशं निराकर्तुमधिकरणारम्भ इत्याह—उच्यत इति ॥ अत्र भागवतपाञ्चरात्रागमो विषयः । स किं जीवोत्पत्त्याद्यंशे मानं न वेति संदेहे बाधानुपलम्भान्मानमिति पूर्वपक्षयति—तत्रेति ॥ पूर्वपक्षे तदागमविभामती ।

विषाणाद्यज्ञानादज्ञो भवतीति भावः । परिहरति—तत इति । आगमानपेक्षस्यानुमानमेषामन्तवत्त्वमवगमयतीत्युक्तम् ॥ ४१ ॥ ( ७ ) ॥ उत्पत्त्यसंभवात् । अन्यत्र वेदाविसंवादाद्यत्रांशे विसंवादः स

आनन्दगिरीय—न्यायनिर्णयः ।

वत्त्वं प्रतिपाद्य द्वितीयमवलम्ब्यासर्वज्ञतेति दूषयति—तत इति । आगमानपेक्षस्यानुमानसिद्धमन्तवत्त्वं दुर्वारमस्माकं त्वागमगम्यत्वादानन्त्यस्य नान्तवत्त्वानुमानम् । एतेन पूर्वपक्षानुमानान्यपि प्रत्युक्तानीति मत्वोपसंहरति—तस्मादिति । शरीरादिराहित्यानुपपत्तिवदानन्त्याद्यभ्युपगमायोगादपीत्यपेरर्थः । अपौरुषेयश्रुतिसिद्धेश्वरस्य न निरासोऽस्तीति तार्किकविशेषणम् ॥ ४१ ॥ ( ७ ) ॥ माहेश्वरमतनिरासानन्तरं वैष्णवमतं निरस्यति—उत्पत्तीति । यद्वा—पञ्चपदार्थवादिनि निरस्ते चतुर्व्यूहवादिनं निरस्यति—उत्पत्तीति । वृत्तमनूद्याधिकरणतात्पर्यमाह—येषामिति । अधिकरणारम्भमाक्षिपति—नन्विति । तथाऽपि भागवती स्मृतिरप्रमाणत्वादनादर्तव्येति वक्तुमधिकरणमित्याशंक्याऽऽह—श्रुतीति । तत्प्रामाण्ये फलितमाह—तदिति । वेदाविरुद्धांशमुपेत्य विरुद्धांशनिरासायाधिकरणमित्याह—उच्यत इति । समानत्वादित्यत्र श्रुतिस्मृत्योरिति शेषः । जीवाभिन्नाद्ब्रह्मणो जगत्सर्गवादी समन्वयो जीवोत्पत्त्यादिविषयपञ्चरात्रराद्धान्तेन विरुध्यते न वेति तत्प्रामाण्याप्रामाण्याभ्यां संदेहे पूर्वपक्षमाह—तत्रेति । भागवतमतनिरासद्वारा समन्वयदृढीकरणात्पादादिसंगतयः । पूर्वपक्षे भागवतमतस्य मानत्वात्तद्विरोधे समन्वयासिद्धेरभेदवादासिद्धिः । सिद्धान्ते तस्य भ्रमत्वात्तद्विरोधस्याऽऽभासतया समन्वयसिद्ध्या तत्सिद्धिः । तत्र मूर्त्य-

निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वम् । स चतुर्धाऽऽत्मानं प्रविभज्य प्रतिष्ठितः-१ वासुदेवव्यूहरूपेण, २ संकर्षणव्यूहरूपेण, ३ प्रद्युम्नव्यूहरूपेण, ४ अनिरुद्धव्यूहरूपेण च । वासुदेवो नाम-परमात्मोच्यते । संकर्षणो नाम-जीवः । प्रद्युम्नो नाम-मनः । अनिरुद्धो नाम-अहंकारः । तेषां वासुदेवः परा प्रकृतिः । इतरे संकर्षणादयः कार्यम् । तमित्थम्भूतं परमेश्वरं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यत इति ॥ तत्र यत्तावदुच्यते योऽसौ नारायणः परोऽव्यक्तात् प्रसिद्धः परमात्मा सर्वात्मा, स आत्मनाऽऽत्मानमनेकधा व्यूह्याऽवस्थित इति, तन्न निराक्रियते । "स एकधा भवति त्रिधा भवति" [ छां० ७ । २६ । २ ] इत्यादिश्रुतिभ्यः परमात्मनोऽनेकधा भवस्याऽधिगतत्वात् । यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनमजस्रमनन्यचित्ततयाऽभिप्रेयते, तदपि न प्रतिषिध्यते । श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात् । यत्पुनरिदमुच्यते-वासुदेवात्संकर्षण उत्पद्यते, संकर्षणाच्च प्रद्युम्नः, प्रद्युम्नाच्चानिरुद्ध इति ॥ अत्र ब्रूमः ॥ न वासुदेवसंज्ञकात्परमात्मनः संकर्षणसंज्ञस्य जीवस्योत्पत्तिः सम्भवति । अनि-

रत्नप्रभा ।

रोधाज्जीवभिन्नब्रह्मसमन्वयासिद्धिः, सिद्धान्ते तदंशे तस्याऽमानत्वादविरोधात्तत्सिद्धिरिति फलभेदः । सावयवत्वं निरस्यति- निरञ्जनेति ॥ कथं तर्ह्यद्वितीये वासुदेवे मूर्तिभेदः, तत्राह-स इति॥ व्यूहः-मूर्तिः । सविशेषं शास्त्रार्थमुक्त्वा सहेतुं पुरुषार्थमाह-तमित्थम्भूतमिति ॥ यथोक्तव्यूहवन्तं सर्वप्रकृतिं निरञ्जनं विज्ञानरूपं परमात्मानमिति यावत् । वाक्कायचेतसामवधानपूर्वकं देवतागृहगमनम्-अभिगमनम् । पूजाद्रव्याणामर्जनम्-उपादानम् । इज्या पूजा । स्वाध्यायः-अष्टाक्षरादिजपः । योगः-ध्यानम् । तत्राविरुद्धांशमुपादत्ते-तत्रेति ॥ "समाहितः श्रद्धावित्तो भूत्वा" इति "तं यथायथोपासते" इत्याद्या च श्रुतिः । "मत्कर्मकृन्मत्परमः" [ भ० गी० ११ । ५५ ] इत्याद्या स्मृतिः । विरुद्धांशमनूद्य दूषयति-यत्पुनरिति ॥ कृतहान्यादिदोषः आदिशब्दार्थः । न्यायोपेतया "अज आत्मा" [ बृ० ४ । ४ ]

भामती ।

निरस्यते । तमंशमाह-यत्पुनरिदमुच्यते वासुदेवात्संकर्षणो जीव इति जीवस्य कारणवत्त्वे सत्य-

आनन्दगिरीय-न्यायनिर्णयः ।

न्तरं निराकर्तुं वासुदेव इत्युक्तम् । तस्य सावयवत्वं निरस्यति-निरञ्जनेति।कथं तर्हि शास्त्रे मूर्तिभेदस्तत्राऽऽह-स इति । व्यूहेषु भगवतोऽवस्थाविशेषेष्ववान्तरभेदमाह-वासुदेव इति । तेष्वेव प्रकृतिविकृतित्वमाह-तेषामिति। सविशेषं शास्त्रार्थमुक्त्वा सहेतुं पुरुषार्थमाह-तमिति । यथोक्तव्यूहवन्तं सर्वप्रकृतिभूतं निरञ्जनज्ञानरूपं परमात्मानमिति यावत् । वाक्कायचेतसामवधानपूर्वकं देवतागृहगमनमभिगमनम् । पूजाद्रव्याणामर्जनमुपादानम् । इज्या पूजा । स्वाध्यायो जपः। योगो ध्यानम् । परपक्षमनुभाष्य तस्मिन्नविरुद्धमंशमाह-तत्रेति । तदनिरासे हेतुमाह-स इति । अविरुद्धमंशान्तरमाह-यदपीति । तदनिषेधे हेतुमाह-श्रुतीति । "समाहितः श्रद्धावित्तो भूत्वा" इत्याद्या श्रुतिः । "मत्कर्मकृन्मत्परमो मद्भक्तः" इत्याद्या स्मृतिः। निरस्यांशमाह-यदिति । तत्र सूत्रमवतार्य व्याकरोति-अत्रेति । हेतुं विवृणोति-उत्पत्तीति । आदिशब्देनाकृताभ्यागमकृतप्रणाशस्वर्गनरकापवर्गाभावा गृह्यन्ते । जीवस्योत्पत्तिमत्त्वे दोषान्तरमाह-

त्यत्वादिदोषप्रसंगात्–उत्पत्तिमत्त्वे हि जीवस्याऽनित्यत्वादयो दोषाः प्रसज्येरन् । ततश्च नैवास्य भगवत्प्राप्तिर्मोक्षः स्यात् । कारणप्राप्तौ कार्यस्य प्रविलयप्रसंगात् । प्रतिषेधिष्यति चाचार्यो जीवस्योत्पत्तिं–"नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः" [ २ । ३ । १७ ] इति ॥ तस्मादसंगतैषा कल्पना ॥ ४२ ॥

## न च कर्तुः करणम् ॥ ४३ ॥

इतश्चासङ्गतैषा कल्पना । यस्मान्न हि लोके कर्तुर्देवदत्तादेः करणं परश्वादि उत्पद्यमानं दृश्यते । वर्णयन्ति च भागवताः–कर्तुर्जीवात्संकर्षणसंज्ञकात्करणं मनः प्रद्युम्नसंज्ञकमुत्पद्यते, कर्तृजाच्च तस्मादनिरुद्धसंज्ञकोऽहंकार उत्पद्यत इति । न चैतद् दृष्टान्तमन्तरेणाध्यवसातुं शक्नुमः । न चैवम्भूतां श्रुतिमुपलभामहे ॥ ४३ ॥

रत्नप्रभा ।

( २ । २४ । २९ ) इत्यादिश्रुत्या पाञ्चरात्रागमस्योत्पत्त्यंशे मानत्वाभावनिश्चयाज्जीवाभिन्नब्रह्मसमन्वयस्थैर्यमिति भावः ॥ ४२ ॥ जीवस्योत्पत्तिं निरस्य जीवान्मनस उत्पत्तिं निरस्यति–न च कर्तुरिति॥ यस्मात् कर्तुः करणोत्पत्तिर्न दृश्यते, तस्मादसङ्गता कल्पनेत्यन्वयः । सिद्धानां करणानां प्रयोक्ता कर्तेति प्रसिद्ध्यर्थो हिशब्दः । वर्णनं निर्मूलमित्याह–न चेति ॥ ननु लोके कश्चिच्छिल्पिवरः कुठारं निर्माय तेन वृक्षं छिनत्तीति दृष्टमिति चेत् । सत्यम् । शिल्पिनो हस्तादिकरणान्तरसत्त्वात् कुठारकर्तृत्वं युक्तम् । जीवस्य तु करणान्तरासत्त्वान्न मनसः कर्तृत्वम् । विनैव करणं कर्तृत्वे वा मनोवैयर्थ्यमिति भावः ॥ ४३ ॥

भामती ।

नित्यत्वम्, अनित्यत्वे परलोकिनोऽभावात्परलोकाभावः, ततश्च स्वर्गनरकापवर्गाभावापत्तेर्नास्तिक्यमित्यर्थः । अनुपपन्ना च जीवस्योत्पत्तिरित्याह–प्रतिषेधिष्यति चेति ॥ ४२ ॥ न च कर्तुः करणम् । यद्यप्यनेकशिल्पपर्यवदातः परशुं कृत्वा तेन पलाशं छिनत्ति, यद्यपि च प्रयत्नेनेन्द्रियार्थात्ममनःसंनिकर्षलक्षणं ज्ञानकरणमुपादायात्मार्थं विजानाति, तथापि संकर्षणोऽकरणः कथं प्रद्युम्नाख्यं मनः करणं कुर्यात् । अकरणस्य वा करणनिर्माणसामर्थ्ये कृतं करणनिर्माणेन । अकरणादेव निखिलकार्यसिद्धेरिति

आनन्दगिरीय–न्यायनिर्णयः ।

ततश्चेति।कार्यस्यापि जीवस्य कारणभगवदाप्तिमोक्षे काऽनुपपत्तिस्तत्राऽऽह–कारणेति।इतश्च न जीवोत्पत्तिरित्याह–प्रतिषेधिष्यतीति । जीवोत्पत्त्ययोगे तदर्थपञ्चरात्रराद्धान्तस्य भ्रान्तत्वान्न तद्विरोधः समन्वयस्येत्युपसंहरति–तस्मादिति ॥ ४२ ॥ जीवजन्म निरस्य मनसस्ततो जन्म निरस्यति–न चेति । चकारार्थमाह–इतश्चेति । संकर्षणाज्जीवान्मनसो जन्मकल्पना नेत्यत्रेतःशब्दगृहीतं हेतुं स्फुटयति–यस्मादिति । सिद्धकरणप्रयोक्ता कर्तेति प्रसिद्धिद्योतको हिशब्दः । कारणस्य कर्तुरुत्पत्त्यभावेऽपि भागवतकल्पना कथमसंगतेति तद्वक्तुं तत्कल्पनामनुवदति–वर्णयन्तीति । लोके करणस्य कर्तुरुत्पत्त्यभावेऽपि कथं परेषां कल्पना न कल्पते स्मृतिमूलत्वादित्याशंक्य तन्मूलं प्रत्यक्षमनुमानं श्रुतिर्वेति विकल्प्याऽऽद्यौ प्रत्याह–न चेति । न तावदस्याः स्मृतेरध्यक्षं मूलं जीवान्मनोजनौ परस्येन्द्रियसंनिकर्षे नियामकाभावात् । न द्वितीयः । दृष्टान्तं विनाऽनुमानायोगात् । यद्यपि बहुविधविद्यापर्यवदातोऽपि विधाय करे कठोरधारं कुठारं तेन निष्ठुरमपि काष्ठं छिनत्ति तथाऽपि न तस्यासावुपादानम् । तथा संकर्षणोऽपि प्रद्युम्नस्य नोपादानं स्यान्न च संकर्षणस्याकरणस्य प्रद्युम्ननिर्माणमितरथा करणमन्तरेणैव सर्वनिर्माणात्तत्कल्पनावैयर्थ्यादिति भावः । तृतीयं दूषयति–न चेति ॥ ४३ ॥ वासुदेवात् संक-

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

**अथापि स्यात्-न चैते संकर्षणादयो जीवादिभावेनाभिप्रेयन्ते ॥ किं तर्हि ईश्वरा एवैते सर्वे ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिरैश्वर्यधर्मैरन्विता अभ्युपगम्यन्ते-वासुदेवा एवैते सर्वे निर्दोषाः निरधिष्ठानाः निरवद्याश्चेति ॥ तस्मान्नायं यथावर्णित उत्पत्त्यसम्भवो दोषः प्राप्नोतीति ॥ अत्रोच्यते ॥ एवमपि तदप्रतिषेधः-उत्पत्त्यसम्भवस्याऽप्रतिषेधः प्राप्नोत्येव । अयमुत्पत्त्यसम्भवो दोषः-प्रकारान्तरेणेत्यभिप्रायः ॥ कथम् ॥ यदि तावदयमभिप्रायः-परस्परभिन्ना एवैते वासुदेवादयश्चत्वार ईश्वरास्तुल्यधर्माणः, नैषामेकात्मकत्वमस्तीति, ततोऽनेकेश्वरकल्पनानर्थक्यम् ।**

---

रत्नप्रभा ।

**विज्ञानादिभावे वा तदप्रतिषेधः ॥** संकर्षणादीनामुत्पत्त्यसम्भवेऽपि व्यूहचतुष्टयं स्यादिति सूत्रव्यावर्त्यमाशङ्कते--**अथापि स्यादिति ॥** ज्ञानैश्वर्ययोः शक्तिरान्तरं सामर्थ्यम् । बलं--शरीरसामर्थ्यम् । वीर्यं--शौर्यम् । तेजः--प्रागल्भ्यम् । एतैरन्विताः यस्मात् सङ्कर्षणादयः तस्मादीश्वरा एवेत्यर्थः । सर्वेषामीश्वरत्वे पाञ्चरात्रोक्तिमाह--**वासुदेवा एवेति ॥ निर्दोषाः** रागादिशून्याः, **निरधिष्ठानाः** प्रकृत्यजन्याः, **निरवद्याः** नाशादिरहिता इत्यर्थः । ईश्वरत्वाज्जन्मासम्भवो गुण एवेत्याह-**तस्मादिति ॥** सूत्रेण सिद्धान्तयति-**अत्रेति ॥ एवमपि** चतुर्णामीश्वरत्वेन विज्ञानशक्त्यादिभावेऽपीत्यर्थः । प्रकारान्तरं पृच्छति-**कथमिति ॥** किं चत्वारः स्वतन्त्रा भिन्ना एव, उत एकस्य विकारत्वेनाभिन्नाः? आद्यम् अनूद्य दूषयति-**यदीत्यादिना ॥** द्वितीये विकाराः प्रकृतितुल्या वा

भामती ।

भाव: ॥ ४३ ॥ **विज्ञानादिभावे वा तदप्रतिषेधः । वासुदेवा एवैते** संकर्षणादयो **निर्दोषा** अविद्यादिदोषरहिताः । **निरधिष्ठाना** निरुपादाना अत एव **निरवद्या** अनित्यत्वादिदोषरहिताः । तस्मादुत्पत्त्यसंभवोऽनुगुणत्वान्न दोष इत्यर्थः । **अत्रोच्यते-एवमपीति ।** मा भूदभ्युपगमेन दोषः । प्रकारान्तरेण स्वयमेव दोषः । प्रश्नपूर्वं प्रकारान्तरमाह--**कथम् । यदि तावदिति ।** न तावदेते परस्परं

आनन्दगिरीय-न्यायनिर्णयः ।

र्षणस्य जन्म, नापि संकर्षणात्प्रद्युम्नस्येत्यत्रेष्टापत्तिमाशंक्याऽऽह-**विज्ञानादीति ।** सूत्रव्यावर्त्यमुत्थापयति-**अथापीति ।** जीवादित्वेनेष्टानां संकर्षणादीनां पूर्वस्मात्पूर्वस्माज्जन्माभावेऽपीति यावत् । तदेव दर्शयति-**न चेति ।** तर्हि केन प्रकारेणाभिप्रेयमाणत्वं तदाह-**किमिति ।** सर्वेषामीश्वरत्वे हेतुमाह-**ज्ञानेति ।** ज्ञानं चैश्वर्यं च तयोः शक्तिरान्तरं सामर्थ्यम् । बलं शारीरं सामर्थ्यम् । वीर्यं शौर्यम् । तेजः प्रागल्भ्यम् । ते खल्वैश्वरा धर्मास्तैरन्विता यतः संकर्षणादयस्तस्माद्युक्तं तेषां सर्वेषामीश्वरत्वमित्यर्थः । तत्र भागवतोक्तिमाह--**वासुदेवा इति ।** निर्दोषत्वमविद्यादिराहित्यम् । निरधिष्ठानत्वं निरुपादानत्वम् । निरवद्यत्वमनित्यत्वादिदोषशून्यत्वम् । सर्वेषामीश्वरत्वे तदुत्पत्त्ययोगे गुणत्वाद्दोषो नेति फलितमाह-**तस्मादिति ।** सिद्धान्तत्वेन सूत्रमवतारयति--**अत्रेति ।** तद्व्याकरोति--**एवमिति ।** विज्ञानैश्वर्यशक्त्यादीनां सर्वत्र तुल्यत्वेऽपीत्यर्थः । जीवादिभावोपगमकृता पूर्वत्रोत्पत्त्यनुपपत्तिरुक्ता सा कथं सर्वेषामीश्वरत्वेन स्यादित्याशंक्याऽऽह-**प्राप्नोतीति ।** प्रकारान्तरं बुभुत्सते-**कथमिति ।** वासुदेवादयस्तुल्यधर्माण ईश्वराः किं मिथो भिन्ना एव न त्वैक्यमेषामस्ति किंवैकस्यैव भगवतोऽवस्थाभेदा एत इति विकल्प्याऽऽद्यमनुवदति-**यदीति ।** ते व्याहतकामाः स्युर्न वा । आद्ये कार्यासिद्धिश्चरमे त्वेकेनैवेशतायाः कृतत्वादितरानर्थक्यम् । संभूयकारित्वे परिषद्वन्न कश्चिदीश्वरः स्यादित्याह-**तत**

एकेनैवेश्वरेणेश्वरकार्यसिद्धेः । सिद्धान्तहानिश्च—भगवानेको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात्॥अथायमभिप्रायः-एकस्यैव भगवत एते चत्वारो व्यूहास्तुल्यधर्माण इति । तथापि तदवस्थ एवोत्पत्त्यसम्भवः । न हि वासुदेवात संकर्षणस्योत्पत्तिः सम्भवति,संकर्षणाच्च प्रद्युम्नस्य, प्रद्युम्नाच्चानिरुद्धस्य अतिशयाऽभावात् । भवितव्यं हि कार्यकारणयोरतिशयेन यथा-मृद्घटयोः । न ह्यसत्यतिशये कार्यं कारणमित्यवकल्पते । न च पञ्चरात्रसिद्धान्तिभिर्वासुदेवादिषु एकैकस्मिन् सर्वेषु वा ज्ञानैश्वर्यादितारतम्यकृतः कश्चिद्भेदोऽभ्युपगम्यते । वासुदेवा एव हि सर्वे व्यूहा निर्विशेषा इष्यन्ते। न चैते भगवद्व्यूहाश्चतुःसंख्यायामेवावतिष्ठेरन् । ब्रह्मादिस्तम्बपर्यन्तस्य समस्तस्यैव जगतो भगवद्व्यूहत्वावगमात् ॥ ४४ ॥

## विप्रतिषेधाच्च ॥ ४५ ॥

इति श्रीवैयासिक्यां शारीरकमीमांसायां द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ॥

विप्रतिषेधश्चास्मिञ्छास्त्रे बहुविध उपलभ्यते—गुणगुणित्वकल्पनादिलक्षणः । ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि गुणाः । आत्मान एवैते भगवन्तो वासुदेवा इत्यादिदर्शनात् । वेदविप्रतिषेधश्च भवति । चतुर्षु वेदेषु परं

---

रत्नप्रभा ।

न्यूना वा । आद्यम्—उत्थाप्य निषेधति—अथेत्यादिना ॥ न्यूनत्वपक्षेऽपसिद्धान्तमाह—न च पञ्चेति ॥ यदि न्यूना अपि भगवतो व्यूहाः, तदा चतुष्ट्वव्याघात इत्याह—न चैत इति ॥ ४४ ॥ इतश्च जीवोत्पत्तिवाद उपेक्ष्य इत्याह सूत्रकारः—विप्रतिषेधाच्चेति ॥ स्वस्यैव गुणत्वं गुणित्वं च विरुद्धम् । आदिपदात् प्रद्युम्नानिरुद्धौ भिन्नौ । आत्मन इत्युक्त्वा आत्मन एवैते इति विरुद्धोक्तिग्रहः । पूर्वापरविरोधादसाङ्गत्यमिति सूत्रार्थमुक्त्वार्थान्तरमाह—वेदेति ॥ एकस्यापि तन्त्राक्षरस्य । अध्येता चतुर्वेदि-

भामती ।

भिन्ना ईश्वराः परस्परव्याहतेच्छा भवितुमर्हन्ति । व्याहतकामत्वे च कार्यानुत्पादात् । अव्याहतकामत्वे वा प्रत्येकमीश्वरत्वे एकेनैवेशनायाः कृतत्वादानर्थक्यमितरेषाम् । संभूय चेशनायां परिशुद्धो न कश्चिदीश्वरः स्यात्, सिद्धान्तहानिश्च । भगवानेवैको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात् । तस्मात्कल्पान्तरमास्थेयम् । तत्र चोत्पत्त्यसंभवो दोष इत्याशयवान् कल्पान्तरमुपन्यस्योत्पत्त्यसंभवेनापाकरोति । अथायमभिप्राय इति । सुगममन्यत् ॥ ४४ ॥ विप्रतिषेधाच्च । गुणिभ्यः खल्वात्मभ्यो ज्ञानादीन् गुणान् भेदेनोक्त्वा पुनरभेदं ब्रूते—आत्मान एवैते भगवन्तो वासुदेवा इति । आदिग्रहणेन प्रद्युम्नानिरुद्धयो-

आनन्दगिरीय—न्यायनिर्णयः ।

इति । अनेकेश्वरपक्षे दोषान्तरमाह—सिद्धान्तेति । कल्पान्तरमुत्थापयति—अथेति । तुल्यधर्माणो वासुदेवादयश्चत्वारोऽपीश्वरा भगवतो व्यूहाः स्वीकृतास्तथा चैकात्मान इति नोक्तदोष इत्यर्थः । वासुदेवादीनामेकव्यूहत्वेनैक्यमुपेत्य प्रागुक्तं प्रसञ्जयति—तथाऽपीति । उत्पत्त्यसंभवतादवस्थ्यं समर्थयते—न हीति । अतिशयमृतेऽपि कार्यकारणता स्यादित्याशंक्य दृष्टवैषम्यान्मैवमित्याह—भवितव्यं हीति । अन्वयमुक्त्वा व्यतिरेकमाह—न हीति । ननु ज्ञानादीनामुत्कर्षो यत्र पर्यवस्यति तस्य कारणत्वं सातिशयज्ञानादिमतां कार्यतेत्यतिशयोऽस्ति नेत्याह—न चेति । कथं तर्हि पञ्चरात्रिणामुपगमस्तत्राऽऽह—वासुदेवा इति । व्यूहादीनां चतुष्ट्वमङ्गीकृत्योक्त्वा तन्नियमं निराचष्टे—न चेति ॥ ४४ ॥ इतश्चानादरणीयमिदं मतमित्याह—विप्रतिषेधाच्चेति । सूत्रं व्याचष्टे—विप्रतिषेधश्चेति । विरोधमेव स्फुटयति—गुणेति । आदिग्रहणात्प्रद्युम्नानिरुद्धयोर्मनोऽहंकारयोरात्मनोर्भेदमुक्त्वाऽऽत्मान एवैत इति तद्विरुद्धोक्तिर्गृहीता । गुणगुणित्वकल्पनारूपं विप्रतिषेधमाह—ज्ञानेति । आत्मभ्यो

श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधिगतवानित्यादिवेदनिन्दादर्शनात् ॥ तस्मादसंगतैषा कल्पनेति सिद्धम् ॥ २ ॥ २ ॥ ४५ ॥ इत्युत्पत्त्यसम्भवाधिकरणम् ॥ ८ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणपरमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये सांख्यादिमतदूषणं नाम द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ॥ २ ॥ २ ॥

---

रत्नप्रभा ।

भ्योऽधिक इति निन्दा आदिपदार्थः । तस्मान्मिथोविरुद्धाभिः पौरुषेयकल्पनाभिर्नापौरुषेयवेदान्तसमन्वयविरोध इति सिद्धम् ॥ ४५ ॥ ( ८ )॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शनभाष्यव्याख्यायां ( भाष्य ) रत्नप्रभायां द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ॥ २॥ २ ॥

भामती ।

मैनोऽहंकारलक्षणतयात्मनो भेदमभिधायात्मान एवैत इति तद्विरुद्धाभेदाभिधानमपरं संगृहीतम् । वेदविप्रतिषेधो व्याख्यातः ॥ ४५ ॥ ( ८ )॥

इति श्रीवाचस्पतिमिश्रविरचिते भगवत्पादशारीरकभाष्यविभागे भामत्यां द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥ २ ॥

आनन्दगिरीय—न्यायनिर्णयः ।

गुणिभ्यो ज्ञानादीन्गुणान्भेदेनोक्त्वा पुनरात्मान एवैत इत्यब्रुवंस्ततो विप्रतिषेधः । अत्राऽऽदिशब्देन संकर्षणो नाम जीवः प्रद्युम्नो मनोऽनिरुद्धोऽहंकार इति भेदमुक्त्वा पुनरात्मान एवेत्यभेदवादाद्विप्रतिषेधो गृह्यते । प्रकारान्तरेण सूत्रं व्याचष्टे—वेदेति । अत्राऽऽदिशब्देन भागवते शास्त्रे पादमात्राध्ययनादशेषवेदाध्ययनफलं सिध्यति । स्वाध्यायमात्राध्येतुर्विशिष्यते भागवतशास्त्राक्षरमात्राध्येतेत्यादिनिन्दा गृहीता । भागवतशास्त्रप्रणेतुः सर्वज्ञतया भ्रान्त्यभावेऽपि वेदाविरुद्धतान्त्रिकानुष्ठानवासुदेवार्चनाद्येकदेशप्रामाण्येऽपि जीवजन्मादिवाक्यप्रणयनान्यथानुपपत्त्यैव प्राणिनां विरुद्धधीद्वारा दुरितफलदानाय व्यामोहकत्वम् । जीवजन्मश्रुतीनामिव तज्जन्मस्मृतीनामपि चान्यपरत्वमनुत्पत्तिश्रुतिविरोधादित्यधिकरणार्थमुपसंहरति—तस्मादिति । तदेवं परपक्षाणां भ्रान्तिमूलत्वान्न तैर्विरोधः समन्वयस्येति पादार्थं निगमयति—सिद्धमिति ॥४५॥ (८)॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि (ज्ञान) विरचिते श्रीमच्छारीरकभाष्यन्यायनिर्णये द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ॥ २ ॥ २ ॥

**इति द्वितीयाऽध्यायस्य सांख्यमतदूषणाख्यो द्वितीयः पादः ॥**

# तृतीयः पादः ३.

## न वियदश्रुतेः ॥ २ ॥ ३ ॥ १ ॥ ( १ ) ॥

ॐ वेदान्तेषु तत्रतत्र भिन्नप्रस्थाना उत्पत्तिश्रुतयः उपलभ्यन्ते—केचिदाकाशस्योत्पत्तिमामनन्ति, केचिन्न ॥ तथा केचिद्वायोरुत्पत्तिमामनन्ति, केचिन्न ॥ एवं जीवस्य, प्राणानां च ॥ एवमेव क्रमादिद्वारकोऽपि विप्रतिषेधः श्रुत्यन्तरेषु लक्ष्यते ॥ विप्रतिषेधाच्च परपक्षाणामनपेक्षितत्वं स्थापितम् ॥ तद्वत्स्वपक्षस्यापि विप्रतिषेधादेवानपेक्षितत्वमाशंक्येतेत्यतः सर्वं·

रत्नप्रभा ।

ॐ ब्रह्मणे नमः ॥ वियदादिविधातारं सीतास्याब्जमधुव्रतम् ॥ नित्यचिद्विश्वकर्त्रात्माऽभिन्नं सर्वेश्वरं भजे ॥ १ ॥ जीवस्यानुत्पत्तिप्रसङ्गेनाऽऽकाशस्याप्युत्पत्त्यसम्भवमाशंक्य परिहरन्नादावेकदेशिमतमाह—**न वियदश्रुतेरिति** ॥ वियत्प्राणपादयोरर्थं संक्षिपन् पूर्वपादेन सङ्गतिमाह—**वेदान्तेष्विति** ॥ भिन्नोपक्रमत्वमेवाह—**केचिदित्यादिना** ॥ भूतमोक्तृश्रुतीनां मिथोविरोधशङ्कानिरासो वियत्पादार्थः (१) । लिङ्गशरीरश्रुतीनां तन्निरासः प्राणपादार्थः । यथा मिथोविरोधात्, पूर्वापरविरोधाच्च परपक्षाः उपेक्ष्याः । तथा श्रुतिपक्षोऽपि उपेक्ष्य इति शंकोत्थाने पादद्वयस्यारम्भात् पूर्वपादेन दृष्टान्तसङ्गतिरिति समुदायार्थः । आकाशवाय्वोरुत्पत्तिमामनन्ति **तैत्तिरीयकाः** । नामनन्ति **छन्दोगाः** । जीवस्य प्राणानाञ्चोत्पत्तिं सर्वे एत आत्मनो व्युचरन्तीति **वाजिनः** । एतस्माज्जायते प्राण इत्याथर्वणिकाश्च—आमनन्ति । नन्वे-

भामती ।

**न वियदश्रुतेः** । पूर्वं प्रमाणान्तरविरोधः श्रुतेर्निराकृतः संप्रति तु श्रुतीनामेव परस्परविरोधो निराक्रियते । तत्र सृष्टिश्रुतीनां परस्परविरोधमाह—**वेदान्तेषु तत्रतत्रेति** । श्रुतिविप्रतिषेधाच्च परपक्षाणा-

आनन्दगिरीय—न्यायनिर्णयः ।

अतिक्रान्ते पादे समन्वयस्थापनाय परपक्षाणां भ्रान्तिमूलत्वमुक्तम् । इदानीमपि समन्वयस्थित्यै भूतमोक्तृविषयसृष्ट्यादिश्रुतिविगानं निराक्रियते । तत्रानुत्पत्तिप्रसंगेन वियतोऽपि तदसंभवमाशंक्य परिहरन्नादावेकदेशिमतमाह—**न वियदिति** । आकाशोत्पत्त्यनुत्पत्तिश्रुत्योर्मिथो विरोधादप्रामाण्ये शंकिते तन्निरासेन समन्वयदृढीकरणादस्य पादादिसंगतिरित्यभिप्रेत्य पूर्वोत्तरपादसंगतिं व्यक्तीकुर्वन्नापाततः सृष्टिश्रुतिविमतिं दर्शयति—**वेदान्तेष्विति** । तत्रतत्रेति सृष्टिप्रकरणोक्तिः । तासां भिन्नप्रस्थानत्वमेव प्रकटयन्प्रथममाकाशोत्पत्त्यनुत्पत्तिभ्यां तैत्तिरीयच्छान्दोग्यश्रुत्योर्विमतिमाह—**केचिदिति** । नभोवद्वायोरप्युत्पत्त्यनुत्पत्तिभ्यामपि तयोरेवास्ति विमतिरित्याह—**तथेति** । न केवलं भूतविषयसृष्टिश्रुतिविमतिरपि तु भोक्तृभोगोपकरणविषयाऽपि साऽस्तीत्याह—**एवमिति** । यथा नभसो वायोश्चोत्पत्तिमधीयते तैत्तिरीयास्तथा जीवस्य सर्वे एत आत्मानो व्युचरन्तीति जन्माऽऽमनन्ति माध्यंदिना नैवमितरे । तथा प्राणानाम् "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इत्युत्पत्तिं पठन्त्याथर्वणा नैवमन्ये । अतोऽस्ति धर्मिणो विमतिरित्यर्थः । धर्मद्वाराऽपि विगानमाह—**एवमेवेति** । क्रमादीत्यादिशब्देनाक्रमसंख्ये गृह्येते । श्रुत्यन्तरेषु श्रुतिविशेषेष्विति यावत् । सृष्टिश्रुतीनामस्वार्थपरत्वान्मिथो विरोधेऽपि तात्पर्यवद्वाक्यप्रामाण्यादस्मत्पक्षसिद्धिरित्याशंक्याऽऽह—**विप्रतिषेधाच्चेति** । सर्वत्र परपक्षेषु स्वोक्तिविरोधाभावादत्र श्रुतिविरोधो विवक्षितः । स्वपक्षो ब्रह्मकारणवादः । विप्रतिषेधश्रुतीनामेवान्योन्यमिति द्रष्टव्यम् । सृष्टिश्रुतिष्वापातिकविरोधोक्त्या तत्फलमुक्त्वाऽनन्तरपादावतारयति—**इत्यत इति** ।

(१) अर्थशब्दोऽत्र प्रयोजनवाची ।

वेदान्तगतसृष्टिश्रुत्यर्थनिर्मलत्वाय परः प्रपञ्च आरभ्यते ॥ तदर्थनिर्मलत्वे च फलं यथोक्ताऽऽशंकानिवृत्तिरेव ॥ तत्र प्रथमं तावदाकाशमाश्रित्य चिन्त्यते—किमस्याऽऽकाशस्योत्पत्तिरस्ति उत नास्तीति ॥ तत्र तावत्प्रतिपाद्यते—"न वियदश्रुतेः" इति ॥ न खल्वाकाशमुत्पद्यते ॥ कस्मात् ॥ "अश्रुतेः" न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति ॥ छान्दोग्ये हि—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" [ छां० ६ । २ । १ ] इति सच्छब्दवाच्यं ब्रह्म प्रकृत्य "तदैक्षत" [ छां० ६ । २ । ३ ] "तत्तेजोऽसृजत" [ छां० ६ । २ । ३ ] इति च पञ्चानां महाभूतानां मध्यमं तेज आदिं कृत्वा

---

रत्नप्रभा।

वमाकाशपूर्विका क्वचित् सृष्टिः, क्वचित्तेजःपूर्विकेति क्रमविरोधः। आदिपदात् "स इमाँल्लोकानसृजत" [ऐत० १ । २ ] इत्यक्रमः। क्वचित् सप्तप्राणाः क्वचिदष्टावित्यादिसंख्याद्वारकश्च विरोधो ग्राह्यः। प्रपञ्चः पादद्वयम्। तथा च पादद्वयस्य श्रुतीनां मिथोविरोधनिरासार्थत्वाच्छ्रुतिशास्त्राध्यायसंगतयः सिद्धाः। अत्राकाशस्योत्पत्त्यनुत्पत्तिश्रुत्योर्मिथोविरोधोऽस्ति न वेति वाक्यभेदैकवाक्यत्वाभ्यां सन्देहे यद्युत्पत्तिः, तदा वाक्यभेदेन विरोधादप्रामाण्यमनयोः श्रुत्योरिति पूर्वपक्षयिष्यन् आदावनुत्पत्तिपक्षमेकदेशी गृह्णातीत्याह—तत्र तावदिति ॥ १ ॥ उत्पत्तिश्रुतिर्मुख्या नास्तीति गूढाभिसन्धिः सम्प्रति पूर्वपक्षयति

भामती।

मनपेक्षितत्वं स्थापितं तद्वत्स्वपक्षस्य श्रुतिविप्रतिषेधादिति। तदर्थनिर्मलत्वमर्थाभासविनिवृत्त्यार्थतत्त्वप्रतिपादनम्। तस्य फलं स्वपक्षस्य जगतो ब्रह्मकारणत्वस्यानपेक्षत्वाशङ्कानिवृत्तिः। इह हि पूर्वपक्षे श्रुतीनां मिथो विरोधः प्रतिपाद्यते, सिद्धान्ते त्वविरोधः। तत्र सिद्धान्त्येकदेशिनो वचनं 'न वियदश्रुतेः' इति। तस्याभिसंधिः—यद्यपि तैत्तिरीयके वियदुत्पत्तिश्रुतिरस्ति तथापि तस्याः प्रमाणान्तरविरोधाद्बहुश्रुतिविरोधाच्च गौणत्वम्। तथा च वियतो नित्यत्वात्तेजःप्रमुख एव सर्गः, तथा च न विरोधः श्रुतीनामिति। तदिदमुक्तम्—प्रथमं तावदाकाशमाश्रित्य चिन्त्यते किमस्याकाशस्योत्पत्तिरस्त्युत नास्तीति। यदि नास्ति न श्रुतिविरोधाशङ्का। अथास्ति ततः श्रुतिविरोध इति तत्परिहाराय प्रय-

आनन्दगिरीय-न्यायनिर्णयः।

तदर्थनिर्मलत्वमर्थाभासनिवृत्त्या सम्यगर्थधीः। प्रपञ्चोऽनन्तरपादद्वयम्। ननु मुमुक्षूणामुक्तसमन्वयादेव तत्त्वधीलाभात्कृतमेतन्निर्मलत्वेनेति तत्राऽऽह—तदर्थेति। वेदैकदेशस्य विरोधादप्रामाण्ये तदेकदेशान्तरस्यापि तथैवाप्रामाण्यशंकया तत्समन्वयात्तत्त्वज्ञानासिद्धेर्ब्रह्मकारणपक्षस्यानपेक्षणीयत्वशंकानिवृत्तिस्तदर्थनिर्मलत्वे फलतीत्यर्थः। इत्थं पादद्वयसंबन्धे स्थिते भूतभोक्तृसृष्ट्यादिश्रुतिविवादापवादार्थे च तृतीये पादे सत्याद्याधिकरणतात्पर्यमाह—तत्रेति। आकाशोत्पत्त्यनुत्पत्तिवादिवाक्ययोरनेकवाक्यत्वैकवाक्यत्वाभ्यां मिथोविरोधसंदेहे विरोधनिरासेनाविरोधं संसाध्य समन्वयदार्ढ्यमत्र विवक्षितम्। सर्वेषु चाधिकरणेषु पादद्वयगतेषु पूर्वपक्षेषु श्रुतीनां विरोधादप्रामाण्यं सिद्धान्ते तासामविरोधात्प्रामाण्यं फलम्। अत्र चाऽऽद्येऽधिकरणे श्रुत्योर्मिथो विरोधादप्रामाण्ये वियदादिकारणे ब्रह्मणि समन्वयासिद्धिरेकत्रान्यत्र तयोरेकवाक्यतया विरोधाभावात्प्रामाण्यसिद्धेस्तत्सिद्धिरिति भावः। पादद्वये पूर्वपक्षे श्रुतीनां मिथो विरोधः, सिद्धान्ते त्वविरोधः साध्यते। तेन विरोधाविरोधाभ्यां संदेहे वाच्ये गौणवाद्यभिप्रायेणाऽऽह—किमस्येति। तैत्तिरीयच्छान्दोग्यश्रुतिभ्यां संदिह्य गौणवाद्यभिप्रायं प्रकटयितुं सूत्रमादत्ते—तत्रेति। तदक्षराणि व्याचष्टे—न खल्विति। तैत्तिरीये वियदुत्पत्तिश्रुतेरन्यत्र तदश्रुतेर्मिथो विरोधे पर्यवसानमाशंक्य वक्ष्यमाणप्रमाणविरोधाज्जन्मश्रुतेर्गौणत्वात्तेजोमुखैव सृष्टिरिति कुतो विरोधाशंकेत्याशयेनाऽऽह—छान्दोग्ये हीति। आकाशस्य जन्माश्रवणेऽपि कथमनुमानसिद्धा तदुत्पत्तिरपह्नूयेतेत्याशंकयाऽऽह—

त्रयाणां तेजोऽबन्नानामुत्पत्तिः श्राव्यते ॥ श्रुतिश्च नः प्रमाणमतीन्द्रियार्थविज्ञानोत्पत्तौ ॥ न चात्र श्रुतिरस्त्याकाशस्योत्पत्तिप्रतिपादिनी ॥ तस्मान्नाकाशस्योत्पत्तिरिति ॥ १ ॥

## अस्ति तु ॥ २ ॥

तुशब्दः पक्षान्तरपरिग्रहे ॥ मा नामाऽऽकाशस्य च्छान्दोग्ये भूदुत्पत्तिः । श्रुत्यन्तरे त्वस्ति ॥ तैत्तिरीयका हि समामनन्ति—"सत्यं ज्ञानमनन्तं ब्रह्म" [ तै० उ० २ । १ । १ ] इति प्रकृत्य "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" [ तै० उ० २ । १ । १ ] इति ॥ ततश्च श्रुत्योर्विप्रतिषेधः—क्वचित्तेजःप्रमुखा सृष्टिः, क्वचिदाकाशप्रमुखेति ॥ नन्वेकवाक्यताऽनयोः श्रुत्योर्युक्ता । सत्यं सा युक्ता, न तु सावगन्तुं शक्यते ॥ कुतः ॥ "तत्तेजोऽसृजत" [ छां० ६ । २ । ३ ] इति सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयेन सम्बन्धानुपपत्तेः—"तत्तेजोऽसृजत, तदाकाशमसृजत"—इति ॥ ननु सकृच्छ्रुतस्यापि कर्तुः कर्तव्यद्वयेन सम्बन्धो दृश्यते ॥ यथा—सूपं पक्त्वौदनं पचतीति, एवं तदाकाशं सृष्ट्वा "तत्तेजोऽसृजत" इति योजयिष्यामः ॥ नैवं युज्यते ॥ प्रथमजत्वं हि छान्दोग्ये तेजसोऽवग-

---

### रत्नप्रभा ।

सूत्रकारः—अस्ति त्विति ॥ एकवाक्यत्वेन प्रामाण्यसम्भवे किमिति श्रुत्योरप्रामाण्यमिति शङ्कते—नन्वेकवाक्यतेति ॥ एकवाक्यत्वासम्भवादप्रामाण्यं युक्तमित्याह—सत्यमित्यादिना ॥ एकस्य युगपत् कार्यद्वयासम्बन्धेऽपि क्रमेण सम्बन्धसम्भवादेकवाक्यतेति मुख्यसिद्धान्ती शङ्कते—ननु सकृदिति ॥ अप्रामाण्यवादी दूषयति—नैवमिति ॥ क्रमो न युज्यते । द्वयोः श्रुतप्राथम्यभङ्गापत्तेरित्यर्थः ॥ एकस्मा-

### भामती ।

त्नान्तरमास्थेयमित्यर्थः ॥१॥ तत्र पूर्वपक्षसूत्रम्—अस्ति तु । तैत्तिरीये हि सर्गप्रकरणे केवलस्याकाशस्यैव प्रथमः सर्गः श्रूयते । छान्दोग्ये च केवलस्य तेजसः प्रथमः सर्गः । न च श्रुत्यन्तरानुरोधेनासहायस्याधिगतस्यापि ससहायताकल्पनं युक्तमसहायत्वावगमविरोधात्।श्रुतसिद्ध्यर्थं खल्वश्रुतं कल्प्यते न तु तद्विघाताय, विहन्यते चासहायत्वं श्रुतं कल्पितेन ससहायत्वेन । न च परस्परानपेक्षाणां व्रीहियववद्विकल्पः । अनुष्ठानं हि

### आनन्दगिरीय—न्यायनिर्णयः ।

श्रुतिश्चेति । तर्हि श्रुतिरेवास्तीत्याशंक्य सा गौणीति सूचितमित्याह—न चेति । तैत्तिरीयश्रुतेर्गौणत्वादन्यस्यामुख्यत्वान्न मिथो विरोधोऽस्तीत्युपसंहरति—तस्मादिति ॥ १ ॥ पूर्वपक्षयति—अस्ति त्विति । सूत्रं व्याकुर्वन्पूर्वपक्षं विवृणोति—तुशब्द इति । श्रुत्यन्तरे त्वाकाशस्योत्पत्तिरस्तीत्युक्तं तदेव व्यनक्ति—तैत्तिरीयका हीति । सर्वनामार्थज्ञापनार्थं पूर्ववाक्यानुक्रमणम् । श्रुत्योराकाशोत्पत्त्यनुत्पत्तिवादित्वे फलितमाह—ततश्चेति । प्रामाण्यस्योत्सर्गिकत्वाद्विरोधेन प्रामाण्यायोगादेकवाक्यतया कथंचित्प्रामाण्यमेष्टव्यमिति शङ्कते—नन्विति । संभवत्येकवाक्यत्वे तद्भेदो नेष्यते मिथो विरुद्धयोः श्रुत्योर्नैकवाक्यतेति परिहरति—सत्यमिति । तदाकाशं सृष्ट्वा तेजोऽसृजतेत्येकवाक्यत्वं ज्ञातुं शक्यमिति शङ्कते—कुत इति । छान्दोग्यानुसारेणैकवाक्यत्वायोगं दर्शयति—तत्तेज इति । एकवाक्यतावादी दृष्टान्तेन शङ्कते—नन्विति । विप्रतिषेधवादी दूषयति—नैवमिति । किमिह व्यापारः सूपादिपाकवत्किं वा युगपदेकस्माद्बीजान्मूलांकुरोत्पत्तिवत्तदक्रमः ? नाऽऽद्यो द्वयोः प्रथमजश्रुति-

**म्यते, तैत्तिरीयके चाकाशस्य॥ न चोभयोः प्रथमजत्वं सम्भवति॥ एतेनैतरश्रुत्यन्तरविरोधोऽपि व्याख्यातः॥ "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यत्रापि "तस्मादाकाशः सम्भूतस्तस्मात्तेजः सम्भूतम्" इति सकृच्छ्रुतस्यापादानस्य सम्भवनस्य च वियत्तेजोभ्यां युगपत् सम्बन्धानुपपत्तेः॥ "वायोरग्निः" [ तै० उ० २। १ ] इति च पृथगाम्नानात्॥ २॥ अस्मिन् विप्रतिषेधे कश्चिदाह-**

## गौण्यसम्भवात्॥ ३॥

**नास्ति वियदुत्पत्तिः॥ अश्रुतेरेव॥ या त्वितरा वियदुत्पत्तिवादिनी श्रुतिरुदाहृता, सा "गौणी" भवितुमर्हति॥ कस्मात्॥ "असम्भवात्"**

---

रत्नप्रभा।

द्विदलबीजाद्दलद्वयवदत्रूभयं प्रथममित्यत आह-**न चेति**॥ वायोरग्निरिति क्रमश्रुतिभङ्गादिति शेषः॥ छान्दोग्यश्रुतेस्तित्तिरिश्रुतिविरुद्धार्थत्वमुक्त्वा तित्तिरिश्रुतेस्तद्विरुद्धार्थत्वमाह-**एतेनेति**॥ एतत्पदार्थमाह-**तस्मादिति**॥ छान्दोग्ये श्रुतं तेजसः प्राथम्यम्। अत्र दुर्योज्यमित्यर्थः। किञ्च सत्पदार्थः आत्मा छान्दोग्ये तेजस उपादानं श्रूयते, अत्र तु वायुरिति नैकवाक्यतेत्याह-**वायोरिति**॥ एवं श्रुत्योर्विरोधादप्रामाण्यमिति पूर्वपक्षे प्राप्ते स एव वियदनुत्पत्तिवादी स्वमतेन प्रामाण्यं ब्रूत इत्याह-**अस्मिन्निति**॥ २॥ **गौण्यसम्भवादिति**॥ एवमध्यायसमाप्तेरधिकरणेषु प्रथमं विरोधात् श्रुत्यप्रामाण्यमिति पूर्वपक्षफलम्। तत एकदेशिसिद्धान्तः। पश्चान्मुख्यसिद्धान्ते श्रुतीनामविरोधेनैकवाक्यतया ब्रह्मणि समन्वयसिद्धिरिति फलं, क्रमश्चेत्यवगन्तव्यम्। तत्र श्रुत्योर्विरोधे सत्यध्ययनविध्युपात्तयोरप्रामाण्यायोगाद्वियदुत्पत्त्यसम्भवरूपतर्कानुगृहीतच्छान्दोग्यश्रुतिर्मुख्यार्था। इतरा गौणीत्यविरोध इत्येकदेशिमतं विवृणोति-**नास्तीत्यादिना**॥ आकाशः, नोत्पद्यते, सामग्रीशून्यत्वादात्मवत्। न चाविद्याब्रह्मणोः सत्त्वाद्धेत्वसिद्धिः। विजातीयत्वे-

भामती।

विकल्प्यते न वस्तु। न हि स्थाणुपुरुषविकल्पो वस्तुनि प्रतिष्ठां लभते। न च सर्वभेदेन व्यवस्थोपपद्यते, सांप्रतिकसर्गवद्भूतपूर्वस्यापि तथात्वात्। न खल्विह सर्गे क्षीराद्दधि जायते सर्गान्तरे तु दध्नः क्षीरमिति भवति। तस्मात्सर्गश्रुतयः परस्परविरोधिन्यो नास्मिन्नर्थे प्रमाणं भवितुमर्हन्तीति पूर्वः पक्षः॥ २॥ सिद्धान्त्येकदेशी सूत्रेण स्वाभिप्रायमाविष्करोति-**गौण्यसंभवात्**। प्रमाणान्तरविरोधेन बहुश्रुत्यन्तरविरोधेन चाकाशो-

आनन्दगिरीय-न्यायनिर्णयः।

विरोधादित्याह-**प्रथमेति**। न द्वितीयः, पाठक्रमात्क्रमसृष्टेरिष्टत्वादित्याह-**न चेति**। छान्दोग्यानुसारेणैकवाक्यतायोगमुक्त्वा तैत्तिरीयानुसारेणापि तदयोगमाह-**एतेनेति**। एतच्छब्दार्थमेव स्फुटयति-**तस्मादित्यादिना**। इतश्च नैकवाक्यतेत्याह-**वायोरिति**। छान्दोग्ये हि सदुपादानं तेजसो निर्दिश्यते। तैत्तिरीये त्वात्मनः सच्छब्दवाच्यादन्यो वायुस्तदुपादानमाम्नायते तन्नैकवाक्यतेत्यर्थः॥ २॥ प्रथमजत्वेनाऽऽकाशतेजसोरसहायत्वे सिद्धे तद्विरोधेन ससहायत्वकल्पनायोगाद्वस्तुनि विकल्पानुपपत्तेरिदानींतनसर्गवद्भूतसर्गस्यापि तथात्वानुमाने सर्गभेदेनापि व्यवस्थासिद्धेर्मिथो विरुद्धतया प्रकृतश्रुत्यप्रामाण्यान्न ब्रह्मकारणमिति पूर्वपक्षमनुभाष्य गौणवादिनोऽभिप्रायमाविष्कर्तुं सूत्रान्तरमवतारयति-**अस्मिन्निति**। ये त्वतिक्रान्तसूत्रद्वयं मतद्वयमुपन्यस्य विप्रतिषेधमभिदधत्पूर्वपक्षसंगतमिति व्याचक्षते तान्व्यावर्त्य गौणवाद्येव पूर्वत्रापि वियदनुत्पत्तिवादीति प्रत्यभिज्ञापयन्व्याचष्टे-**नास्तीति**। तदुत्पत्तिश्रुतेरपि दर्शितत्वाद्विप्रतिषेधे कः समाधिरित्याशंक्याऽऽह-**या त्विति**। तेजःप्राथम्यानुरोधेनाऽऽकाशस्योत्पत्तिः प्राथम्यं चेति द्वयबाधनमयुक्तम्। आकाशप्राथम्यानुरोधेन तेजसि प्राथम्यस्यैव बाधनमिति मन्वानश्चोदयति-**कस्मादिति**। न वयं तेजःप्राथम्यनुरुन्धाना द्वयबाधं शिष्मः, किंतु मानान्तरविरोधादित्याह-**असंभवादिति**। वैशेषिकाधिकरणेन तन्मतस्य निरस्तत्वात्तदवष्टम्भेन कथमसंभवकथेत्याशंक्याऽऽह-

न ह्याकाशस्योत्पत्तिः सम्भावयितुं शक्या श्रीमत्कणभुगभिप्रायानुसारिषु जीवत्सु । ते हि कारणसामग्र्यसम्भवादाकाशस्योत्पत्तिं वारयन्ति ॥ समवाय्यसमवायिनिमित्तकारणेभ्यो हि किल सर्वमुत्पद्यमानं समुत्पद्यते । द्रव्यस्य चैकजातीयकमनेकं च द्रव्यं समवायिकारणं भवति ॥ न चाकाशस्यैकजातीयकमनेकं च द्रव्यमारम्भकमस्ति ॥ यस्मिन्समवायिकारणे सति असमवायिकारणे च तत्संयोगे आकाश उत्पद्येत । तदभावात्तु तदनुग्रहप्रवृत्तं निमित्तकारणं दूरापेतमेवाकाशस्य भवति ॥ उत्पत्तिमतां च तेजःप्रभृतीनां पूर्वोत्तरकालयोर्विशेषः सम्भाव्यते, प्रागुत्पत्तेः प्रकाशादिकार्यं न बभूव पश्चाच्च भवतीति । आकाशस्य पुनर्न पूर्वोत्तरकालयोर्विशेषः सम्भावयितुं शक्यते ॥ किं हि प्रागुत्पत्तेरनवकाशमसुषिरमच्छिद्रं बभूवेति शक्यतेऽध्यवसातुम् । पृथिव्यादिवैधर्म्याच्च

---

रत्नप्रभा ।

नानयोरारम्भकत्वायोगादसंयुक्तत्वाच्च । संयोग एव हि द्रव्यस्यासमवायिकारणम् । अतः समवाय्यसमवायिनोरभावान्न हेत्वसिद्धिरित्यर्थः । प्रागभावशून्यत्वाच्चात्मवदाकाशो नोत्पद्यते इत्याह—**उत्पत्तिमतां चेति** ॥ प्रकाशः—चाक्षुषानुभवः । **आदिपदात्**—तमोध्वंसपाकयोर्ग्रहणम् । मूर्तद्रव्याश्रयत्वं ह्याकाशस्य कार्यम् । तच्च प्रलयेऽप्यस्ति । परमाण्वाश्रयत्वात् । अतो न प्रागभाव इत्यर्थः । प्रागभावासत्त्वं स्फुटयति—**किं हीति** ॥ स्थूलाश्रयः—**अवकाशः**, सूक्ष्माश्रयः—**छिद्रम्** । अण्वाश्रयः—**सुषिरमिति** भेदः । किञ्चात्मवदाकाशः, न जायते, विभुत्वादस्पर्शद्रव्यत्वाच्चेत्याह—**पृथिव्यादीति** ॥ तस्मादुक्ततर्कबलाद्गौणी द्रष्टव्येत्य-

भामती ।

त्यन्तसंभवाद्गौण्येषाऽऽकाशोत्पत्तिश्रुतिरित्यविरोध इत्यर्थः । प्रमाणान्तरविरोधमाह—**न ह्याकाशस्येति** । समवाय्यसमवायिनिमित्तकारणेभ्यो हि कार्यस्योत्पत्तिर्नियता, तदभावे न भवितुमर्हति धूम इव धूमध्वजाभावे । तस्मात्सदकारणमाकाशं नित्यमिति । अपि च य उत्पद्यन्ते तेषां प्रागुत्पत्तेरनुभवार्थक्रिये नोपलभ्येते उत्पन्नस्य च दृश्येते, यथा तेजःप्रभृतीनाम् । न चाकाशस्य तादृशो विशेष उत्पादानुत्पादयोरस्ति, तस्मान्नोत्पद्यत इत्याह—**उत्पत्तिमतां चेति** । प्रकाशनं प्रकाशो घटपटादिगोचरः । **पृथिव्यादिवैधर्म्या-**

आनन्दगिरीय—न्यायनिर्णयः ।

**न हीति** । कणभुगभिप्रायमेव प्रकटयति—**ते हीति** । आकाशं नोत्पद्यते कारणत्रयशून्यत्वादात्मवदित्यर्थः । हेतुसमर्थनार्थं सामान्यन्यायमाह—**समवायीति** । परप्रसिद्धिद्योतनार्थो हिशब्दः । तत्र स्वानभ्युपगमं दर्शयितुं **किलेति** । आकाशस्यापि तर्हि त्रीणि कारणानि भविष्यन्तीत्याशंक्य समवायिकारणविशेषस्वरूपमाह—**द्रव्यस्येति** । तदभावमाकाशे दर्शयति—**न चेति** । समवायिकारणे निरस्ते सत्यसमवायिकारणमपि निरस्तमेवेत्याह—**यस्मिन्निति** । कारणद्वयनिरासेन निमित्तकारणनिरसनं सुकरमित्याह—**तदभावात्त्विति** । कारणशून्यत्वादाकाशस्यानुत्पत्तिमनुमाय तत्रैवानुमानान्तरमाह—**उत्पत्तिमतां चेति** । ये जायन्ते तेषामनुभवार्थक्रिये प्रागुत्पत्तेर्नोपलभ्येते यथा तेजःप्रभृतीनाम् । न चाऽऽकाशस्य तादृशो विशेषोऽस्ति तस्मात्तन्नोत्पद्यते कार्यलक्षणविकलत्वादात्मवदित्यर्थः । प्रकाशनं प्रकाशोऽनुभवः । आदिशब्देनार्थक्रिया गृह्यते, अभूत्वाभावित्वं हि कार्यलक्षणं, तदाकाशस्यापि संभवतीति कथं हेतुसिद्धिरित्याशंक्याऽऽह—**आकाशस्येति** । तदेव स्फुटयते—**किं हीति** । महाद्रव्याश्रयत्वयोग्यो देशोऽवकाशः । तद्विरुद्धद्रव्याश्रयत्वयोग्यं सुषिरम् । अणुद्वयतत्संयोगाश्रयत्वयोग्यं छिद्रम् । एतत्त्रयरहितं न किंचित्प्रागासीदिति विशेषणानामर्थः । किंचाऽऽकाशो न जायते विभुत्वान्निरवयवद्रव्यत्वादस्पर्शद्रव्यत्वाच्चाऽऽत्मवदित्यनुमानत्रयमाह—**पृथिव्यादीति** । उक्तानुमानानामुत्पत्ति-

विभुत्वादिलक्षणादाकाशस्याऽजत्वसिद्धिः ॥ तस्माद्यथा लोके आकाशं कुरु, आकाशो जातः,–इत्येवञ्जातीयको गौणः प्रयोगो भवति, यथा च घटाकाशः, करकाकाशः, गृहाकाश इत्येकस्याप्याकाशस्यैवञ्जातीयको भेदव्यपदेशो गौणो भवति, वेदेऽपि–"आरण्यानाकाशेष्वालभेरन्" इत्येवमुत्पत्तिश्रुतिरपि गौणी द्रष्टव्या ॥ ३ ॥

## शब्दाच्च ॥ ४ ॥

शब्दः खल्वाकाशस्याऽजत्वं ख्यापयति ॥ यत आह "वायुश्चान्तरिक्षं चैतदमृतम्" [ बृ० २ । ३ । ३ ] इति ॥ न ह्यमृतस्योत्पत्तिरुपपद्यते ॥ "आकाशवत्सर्वगतश्च नित्यः" इति चाकाशेन ब्रह्मसर्वगतत्वनित्यत्वाभ्यां धर्माभ्यामुपमिमान आकाशस्यापि तौ धर्मौ सूचयति ॥ न च तादृशस्योत्पत्तिरुपपद्यते ॥ स यथाऽनन्तोऽयमाकाशः, एवमनन्त आत्मा वेदितव्य इति चोदाहरणम् ॥ "आकाशशरीरं ब्रह्म" [ तै० उ० १ ।६। २ ] "आकाश आत्मा" [ तै० उ० १ । ७।१] इति च ॥ न ह्याकाशस्योत्पत्तिमत्त्वे ब्रह्मणस्तेन विशेषणं सम्भवति, नीलेनेवोत्पलस्य ॥ तस्मान्नित्यमेवाऽऽकाशेन साधारणं ब्रह्मेति गम्यते ॥ ४ ॥

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

---

रत्नप्रभा ।

न्वयः । भेदोक्तेर्गौणत्वे वैदिकोदाहरणमाह–वेदेऽप्यारण्यानिति ॥ आकाशेष्विति भेदव्यपदेशो गौण इति सम्बन्धः ॥ ३ ॥ न केवलं तर्कादाकाशस्यानुत्पत्तिः, किंतु श्रुतितोऽपीत्याह सूत्रकारः–शब्दाच्चेति ॥ नित्यभावस्याऽनादित्वादिति भावः । आत्मेति च शब्द इहोदाहरणमित्यन्वयः । आकाशः शरीरमस्येति बहुव्रीहिणाऽत्यन्तसाम्यभानाद् ब्रह्मवदाकाशस्याऽनादित्वमित्यर्थः ॥ ४ ॥

भामती ।

च्चेति । आदिग्रहणेन द्रव्यत्वे सत्यस्पर्शवत्त्वादात्मवन्नित्यमाकाशमिति गृहीतम् । आरण्यानाकाशेष्विति । वेदेऽप्येकस्याकाशस्यौपाधिकं बहुत्वम् ॥ ३ ॥ तदेवं प्रमाणान्तरविरोधेन गौणत्वमुक्त्वा श्रुत्यन्तरविरोधेनापि गौणत्वमाह–शब्दाच्च । सुगमम् ॥ ४ ॥ स्याच्चैकस्य ब्रह्मशब्दवत् । पदस्यानुषङ्गो

आनन्दगिरीय–न्यायनिर्णयः ।

श्रुतिविरोधमाशंक्य तस्या गौणत्वं सदृष्टान्तमुपसंहरति–तस्मादिति । आलोकादिवदाकाशस्य प्रदेशभेदवत्त्वान्मुख्यं जन्मेत्याशंक्य जन्मप्रयोजकप्रदेशभेदस्यापि गौणत्वमेवेत्याह–यथा चेति । लौकिकव्यपदेशस्य गौणत्वेऽपि वैदिकव्यपदेशस्य मुख्यत्वमेवेत्याशंक्याऽऽह–वेदेऽपीति । इतिशब्दादुपरिष्टाद्गौणो भेदव्यपदेशो भवतीति संबन्धः ॥ ३ ॥ न केवलमनुमानादाकाशस्याजत्वं किंतु श्रुतितोऽपीत्याह–शब्दाच्चेति । तद्व्याचष्टे–शब्दः खल्विति । अमृतत्वमेवात्र श्रूयते न त्वनुत्पत्तिरित्याशंक्याऽऽह–न हीति । श्रुतार्थापत्त्यन्तरमाह–आकाशवदिति । तथाऽपि कथमनुत्पत्तिस्तत्राऽऽह–न चेति । तदनुत्पत्तौ वाक्यमपि मानमित्याह–स यथेति । आदिमध्यावसानवैधुर्यमानन्त्यं तदाकाशस्याऽऽदिमत्त्वे नोपपद्येताऽऽत्मनोऽपि तत्प्रसंगादित्यर्थः । किंच, नीलमुत्पलमितिवदाकाशेन ब्रह्मणो विशेषणं दृष्टं, तदाकाशस्यानुत्पत्तिमत्त्वं साधयतीत्याह–आकाशेति । चकारादुदाहरणमित्यनुकृष्यते । आकाशस्योत्पत्तिमत्त्वेऽपि तेन ब्रह्मणो विशेषणत्वं किं न स्यादित्याशंक्य बहुव्रीहिणा तादात्म्यावगमान्नैवमित्याह–न हीति । शब्दसामर्थ्यसिद्धमुपसंहरति–तस्मादिति ॥ ४ ॥ संभूतशब्दमधिकृत्य संभाविताशङ्कामुच्छिनत्ति–स्याच्चेति । पदविषयचोद्योत्तरमिदं सूत्रमिति तात्पर्यमाह–

इदं पदोत्तरं सूत्रम् ॥ स्यादेतत्, कथं पुनरेकस्य सम्भूतशब्दस्य "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" [ तै० उ० २ । १ । १ ] इत्यस्मिन्नधिकारे परेषु तेजःप्रभृतिष्वनुवर्तमानस्य मुख्यत्वं सम्भवति, आकाशे च गौणत्वमिति ॥ अत उत्तरमुच्यते ॥ स्याच्चैकस्यापि सम्भूतशब्दस्य विषयविशेषवशाद्गौणः, मुख्यश्च,—प्रयोगो ब्रह्मशब्दवत् ॥ यथैकस्यापि ब्रह्मशब्दस्य "तपसा ब्रह्म विजिज्ञासस्व ॥ तपो ब्रह्म" [ तै० उ० ३ । २ ] इत्यस्मिन्नधिकारेऽन्नादिषु गौणः प्रयोगः, आनन्दे च मुख्यः ॥ यथा च तपसि ब्रह्मविज्ञानसाधने ब्रह्मशब्दो भक्त्या प्रयुज्यते, अञ्जसा तु विज्ञेये ब्रह्मणि, तद्वत् ॥ कथं पुनरनुत्पत्तौ नभसः "एकमेवाद्वितीयम्" [ छां० ६ । २ । १ ] इतीयं प्रतिज्ञा समर्थ्यते ॥ ननु नभसा द्वितीयेन सद्वितीयं ब्रह्म प्राप्नोति ॥ कथं च ब्रह्मणि विदिते सर्वं विदितं स्यादिति ॥ तदुच्यते ॥ "एकमेव" इति तावत्स्वकार्यापेक्षयोपपद्यते ॥ यथा लोके कश्चित्कुम्भकारकुले पूर्वेद्युर्मृद्दंडचक्रादीनि चोपलभ्याऽपरेद्युश्च नानाविधान्यमत्राणि प्रसारितान्युपलभ्य ब्रूयात्—मृदेवैकाकिनी पूर्वेद्युरासीदिति ॥ स च तयाऽवधारणया मृत्कार्यजातमेव पूर्वद्युना-

---

रत्नप्रभा ।

**पदोत्तरमिति** । शङ्कोत्तरमिति यावत् । तान्येव शङ्कापदानि पठति—**स्यादेतदिति** ॥ अधिकारे प्रकरणे यथैकस्मिन् ब्रह्मप्रकरणे "अन्नं ब्रह्म" [ तै० उ० ३ । २ । १ ] "आनन्दो ब्रह्म" [ तै० उ० ३ । ६ । २ ] इति वाक्ययोर्ब्रह्मशब्दस्याऽन्ते गौणत्वमानन्दे मुख्यता, तथैकवाक्यस्थस्यैकस्याऽपि संभूतशब्दस्य गुणमुख्यार्थभेदो योग्यताबलादित्याह—**स्याच्चेति** ॥ उदाहरणान्तरमाह—**यथा चेति** ॥ अभेदोपचारः—**भक्तिः** ॥ मुख्यसिद्धान्त्याक्षिपति—**कथं पुनरिति** ॥ स एवाक्षेपद्वयं स्पष्टयति—**नन्विति** ॥ अद्वितीयत्वश्रुतिबाधः, सर्वविज्ञानप्रतिज्ञाबाधश्चेत्यर्थः । प्रथमाक्षेपं दृष्टान्तेन परिहरति—**एकमेवेति** ॥ कार्य-

भामती ।

न पदार्थस्य । तद्धि क्वचिन्मुख्यं क्वचिदौपचारिकं संभवासंभवाभ्यामित्यविरोधः । चोद्यद्वयं करोति—**कथमिति** । प्रथमं चोद्यं परिहरति—**एकमेवेति** । **तावदिति** । **कुलं** गृहम् । **अमत्राणि** पात्राणि

आनन्दगिरीय—न्यायनिर्णयः ।

**इदमिति** । तदेव चोद्यं दर्शयति—**स्यादेतदिति** । एकवाक्यस्थस्यैकस्य पदस्यैकस्मिन्नेव प्रकरणे यत्रानुवृत्तिस्तत्र मुख्यत्वं, यत्र प्रयोगस्तत्र गौणतेत्ययुक्तमित्यर्थः । चोद्योत्तरत्वेन सूत्रमवतार्य व्याकरोति—**अत इति** । दृष्टान्तं व्याचष्टे—**यथेति** । दार्ष्टान्तिके संभूतशब्दस्यैकस्यैव मुख्यत्वगौणत्वे, दृष्टान्ते तु शब्दभेदोऽस्तीति वैषम्यमित्याशंक्य प्रकरणाभेदे शब्दप्रवृत्तेरेकरूपत्वस्यौत्सर्गिकत्वेऽपि तदसंभवेन गौणत्वमुख्यत्वे दृष्टान्तदृष्टे, तथाऽत्रापीत्येतावन्मात्रस्य विवक्षितत्वान्मैवमित्याह—**यथा चेति** । अद्वितीयश्रुतिविरोधादवधारणश्रुतिविरोधाच्चाऽऽकाशानुत्पत्तिरयुक्तेति शङ्कते—**कथमिति** । का पुनः श्रुत्योरनुपपत्तिरित्याशंक्याऽऽक्षेप्तैव ब्रूते—**नन्विति** । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधाच्चाऽऽकाशानुत्पत्तिरयुक्तेत्याह—**कथं चेति** । चोद्यद्वयं परिहरति—**तदुच्यत इति** । तत्रावधारणश्रुतेरुपपत्तिमाकाशानुत्पत्तिपक्षेऽपि दर्शयति—**एकमिति** । आपेक्षिकमवधारणमित्यत्र दृष्टान्तमाह—**यथेति** । **कुलं** गृहम् । **अमत्राणि** घटशरावादीनि पात्राणि । तत्रापि कथमवधारणेत्याशंक्याऽऽह—**स चेति** । अन्यथा मृदादिप्रत्यक्षविरोधः

सीदित्यभिप्रेयात्, न दण्डचक्रादि, तद्वत् । अद्वितीयश्रुतिरधिष्ठात्रन्तरं वारयति—यथा मृदोऽमत्रप्रकृतेः कुम्भकारोऽधिष्ठाता दृश्यते, नैवं ब्रह्मणो जगत्प्रकृतेरन्योऽधिष्ठातास्तीति ॥ न च नभसाऽपि द्वितीयेन सद्वितीयं ब्रह्म प्रसज्यते । लक्षणान्यत्वनिमित्तं हि नानात्वम् ॥ न च प्रागुत्पत्ते-र्ब्रह्मनभसोर्लक्षणान्यत्वमस्ति । क्षीरोदकयोरिव संसृष्टयोर्व्यापित्वाऽमूर्तत्वादिधर्मसामान्यात् । सर्गकाले तु ब्रह्म जगदुत्पादयितुं यतते, स्तिमितमितरत्तिष्ठति । तेनान्यत्वमवसीयते । तथा च "आकाशशरीरं ब्रह्म" [ तै० उ० १ । ६ । २ ] इत्यादिश्रुतिभ्योऽपि ब्रह्माकाशयोरभेदोपचारसिद्धिः । अत एव च ब्रह्मविज्ञानेन सर्वविज्ञानसिद्धिः ॥ अपि च सर्वं कार्यमुत्पद्यमानमाकाशेनाऽव्यतिरिक्तदेशकालमेवोत्पद्यते । ब्रह्मणा चाऽव्यतिरिक्तदेशकालमेवाऽऽकाशं भवतीत्यतो ब्रह्मणा तत्कार्येण च विज्ञातेन सह विज्ञातमेवाकाशं भवति । यथा क्षीरपूर्णे घटे

---

रत्नप्रभा ।

रूपद्वितीयशून्यत्वं प्रागवस्थायामवधारणश्रुत्यर्थः । कुले गृहे । अमत्राणि घटादीनि पात्राणि ॥ एकमेवेत्यवधारणव्यावर्त्यं कार्यमिति व्याख्याया द्वितीयपदव्यावर्त्यमाह—अद्वितीयश्रुतिरिति ॥ आकाशस्य द्वितीयत्वमङ्गीकृत्याद्वितीयादिपदसंकोचः कृतः, तदपि नास्तीत्याह—न च नभसापीति॥ धर्मसाम्ये ब्रह्मनभसोः कथं भेदः, तत्राह—सर्गकाले त्विति ॥ धर्मसाम्याददद्वितीयत्वोपचार इत्यर्थे श्रुतिमाह—तथा चाकाशेति ॥ द्वितीयम् आक्षेपं परिहरति—अत एवेति ॥ अभेदोपचारादेवेत्यर्थः ॥ नभसो ब्रह्मतत्कार्याभ्यामभिन्नदेशकालत्वाच्च तज्ज्ञाने ज्ञानमित्याह—अपि चेति ॥ ९ ॥ एवमाकाशस्यानुत्पत्तौ सर्व-

भामती ।

घटशरावादीनि । आपेक्षिकमवधारणं न सर्वविषयमित्यर्थः। उपपत्त्यन्तरमाह—न च नभसापीति । अपिरभ्युपगमे, यदि सर्वापेक्षं तथाप्यदोष इत्यर्थः । न च प्रागुत्पत्तेः । जगत इति शेषः । द्वितीयं चोद्यमपाकरोति—अत एव च ब्रह्मविज्ञानेनेति । लक्षणान्यत्वाभावेनाकाशस्य ब्रह्मणोऽनन्यत्वादिति । अपि चाव्यतिरिक्तदेशकालमाकाशं ब्रह्मणा च ब्रह्मकार्यैश्च तदभिन्नस्वभावैरतः क्षीरकुम्भप्रक्षिप्तकतिपयपयोबिन्दुवद्ब्रह्मणि तत्कार्ये च विज्ञाते नभो विदितं भवतीत्याह—अपि च सर्वं कार्यमुत्पद्यमानमिति ॥ ९ ॥

आनन्दगिरीय—न्यायनिर्णयः ।

स्यादिति भावः । प्रकृतेऽपि स्वकार्यापेक्षमवधारणमविरुद्धम् । तदकार्यं तु तदतिरिक्तमपि प्रागवस्थायामस्तु का हानिरित्याह—तद्वदिति । अवधारणश्रुतिवदद्वितीयश्रुतेरविरोधमाह—अद्वितीयेति । प्राप्त्यभावे किमर्थं तन्निवारणमित्याशंक्य प्राप्तिदर्शनपूर्वकं तन्निवारणमेव विवृणोति—यथेति । यदुक्तं नभसा द्वितीयेन सद्वितीयं ब्रह्म स्यादिति तत्राऽऽह—न चेति । नभश्चेद् द्वितीयं कथं तेन ब्रह्म सद्वितीयं नेत्याशंक्याऽऽह—लक्षणेति । शब्दवदाकाशमशब्दादिमद्ब्रह्मेत्यस्ति प्रस्तुतेऽपि लक्षणान्यत्वमित्याशंक्याऽऽह—न चेति । निरवयवत्वारूपत्वादिसंग्रहार्थमादिपदम् । लक्षणभेदाभावे कथं पृथक्त्वमनयोरित्याशंक्याऽऽह—सर्गेति । लक्षणानन्यत्वनिमित्ताभेदोपचाराददद्वितीयत्वमित्युक्तेऽर्थे श्रुतिमनुग्राहिकामाह—तथेति । आकाश आत्मा खं ब्रह्मेत्याद्या श्रुतिरादिशब्दार्थः । लक्षणान्यत्वाभावेनाऽऽकाशस्य ब्रह्मानन्यत्वं हेतूकृत्य चोद्यान्तरमपाकरोति—अत एवेति । इतश्च ब्रह्मविज्ञानेन सर्वविज्ञानमविरुद्धमित्याह—अपि चेति । ब्रह्मणि तत्कार्ये च ज्ञाते तदेकदेशकालमाकाशमपि सहज्ञातमित्यत्र दृष्टान्तमाह—यथेति । दृष्टान्तेऽपि कथमन्यस्य ग्रहाद-

कतिचिदब्बिन्दवः प्रक्षिप्ताः सन्तः क्षीरग्रहणेनैव गृहीता भवन्ति । न हि क्षीरग्रहणादब्बिन्दुग्रहणं परिशिष्यते । एवं ब्रह्मणा तत्कार्यैश्चाव्यतिरिक्तदेशकालत्वाद् गृहीतमेव ब्रह्मग्रहणेन नभो भवति ॥ तस्माद्भाक्तं नभसः सम्भवश्रवणमिति ॥ ५ ॥ एवं प्राप्त इदमाह—

**प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥**

"येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" [ छां० ६ । १ । ३ ] इति, "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" [ बृ० ८ । ४ । ६ ] इति । "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" [ मुण्ड० १ । १ । ३ ] इति "न काचन मद्बहिर्धा विद्यास्ति" [ मुण्ड० १ । १ । ३ ] इति चैवंरूपा प्रतिवेदान्तं प्रतिज्ञा विज्ञायते ॥ तस्याः प्रतिज्ञाया एवमहानिरनुपरोधः स्यात्, यद्यव्यतिरेकः कृत्स्नस्य वस्तुजातस्य विज्ञेयाद्ब्रह्मणः स्यात् । व्यतिरेके हि सति एकविज्ञानेन सर्वं विज्ञायत इतीयं प्रतिज्ञा हीयेत । स चाव्यतिरेक एवमुपपद्यते, यदि कृत्स्नं वस्तुजातमेकस्माद्ब्रह्मण उत्पद्येत । शब्देभ्यश्च प्रकृतिविकारा-

---

रत्नप्रभा ।

श्रुतीनामविरोध इति एकदेशिसिद्धान्तः प्राप्तः । तं मुख्यसिद्धान्ती दूषयति—प्रतिज्ञेति॥ **अहानिः**—अबाधः । सामयजुराथर्वणशाखाभेदज्ञानशब्दार्था **इतिशब्दाः**—न काचनेति ॥ आत्मभिन्नं ज्ञेयं नास्तीत्यर्थः ॥ **ननु** सर्वस्य ब्रह्माव्यतिरेकात् प्रतिज्ञाया अहानिरित्यस्तु । **तथापि** जीवादिवदनुत्पन्नस्याऽपि नभसो ब्रह्मणि कल्पितत्वेनाव्यतिरेकात् प्रतिज्ञासिद्धिः किं न स्यात् । किमुत्पत्त्येत्यत आह—**शब्देभ्यश्चेति** ॥ अव्य-

भामती ।

एवं सिद्धान्तैकदेशिमते प्राप्त इदमाह—**प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः** । ब्रह्मविवर्तात्मतया जगतस्तद्विकारस्य वस्तुतो ब्रह्मणाऽभेदे ब्रह्मणि ज्ञाते ज्ञानमुपपद्यते । न हि जगत्तत्त्वं ब्रह्मणोऽन्यत् । तस्मादाकाशमपि तद्विवर्ततया तद्विकारः सत्तज्ज्ञानेन ज्ञातं भवति नान्यथा।अविकारत्वे तु ततस्तत्त्वान्तरं न ब्रह्मणि विदिते विदितं भवति । भिन्नयोस्तु लक्षणान्यत्वाभावेऽपि देशकालाभेदेऽपि नान्यतरज्ञानेनान्यतरज्ञानं भवति । न हि क्षीरस्य पूर्णकुम्भे क्षीरे गृह्यमाणे सत्स्वपि पाथोबिन्दुषु पाथस्तत्त्वं प्रति ज्ञातत्वमस्ति विज्ञाने । तस्मान्न ते क्षीरे विदिते विदिता इति प्रतिज्ञादृष्टान्तप्रचयानुपरोधाय वियत उत्पत्तिरकामेनाभ्युपेयेति ।

आनन्दगिरीय—न्यायनिर्णयः ।

न्यस्य ग्रहणमित्याशंक्याऽऽह—**न हीति** । दृष्टान्ते निविष्टमर्थं दार्ष्टान्तिके योजयति—**एवमिति** । गौणवादी स्वमतमुपसंहरति—**तस्मादिति** ॥ ५ ॥ वियदुत्पत्तिश्रुतेर्गौणत्वात्तदनुत्पत्तिश्रुत्या विरोधाभावान्नाप्रामाण्यमिति गौणवादिमतमनूद्य सिद्धान्तयति—**एवमिति** । सूत्रं व्याकुर्वन्प्रतिज्ञास्वरूपमाह—**येनेति** । प्रतिवाक्यमिति शब्दोपादानं शाखाभेदख्यापनार्थम् । तस्या विवक्षितत्वसिद्ध्यर्थं विशिनष्टि—**प्रतिवेदान्तमिति** । सर्वस्य ब्रह्ममात्रत्वप्रयुक्त्या प्रतिज्ञानुपरोधं साधयति—**तस्या इति** । अत एव ब्रह्मविज्ञानेनेत्यादिना पूर्वोक्तन्यायेन व्यतिरेकेऽपि प्रतिज्ञा सिध्यति चेत्किमव्यतिरेकेणेत्याशंक्याऽऽह—**व्यतिरेके हीति** । यदुत्पत्तिस्थितिलयत्वेन तदभेदादेकविज्ञानेन सर्वविज्ञानं वक्तव्यं नान्यथा तन्मुख्यत्वम् । संभवति मुख्यत्वे कुतस्तदौपचारिकतेत्यर्थः । ननु प्रतिज्ञा सर्वस्य ब्रह्मणि कल्पितत्वेनोपपद्यते न तदुत्पत्त्याद्यपेक्षते तत्र कल्पितत्वमन्तरेणावियातत्कार्ययोस्तदुत्पत्त्याद्यभावादित्याशंक्यावियातत्संबन्धातिरिक्तत्वे सति तदुत्पत्त्याद्यतिरेकेण तत्र कल्पितत्वासिद्धेर्मैवमित्याह—**स चेति** । अवशिष्टं सूत्रावयवं व्याचष्टे—**शब्देभ्य-**

व्यतिरेकन्यायेनैव प्रतिज्ञासिद्धिरवगम्यते ॥ तथाहि-"येनाश्रुतं श्रुतं भवति" इति प्रतिज्ञाय मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते। तत्साधनायैव चोत्तरे शब्दाः "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" [ छां० ६ । २ । १ ] "तदैक्षत" [ छां० ६ । २ । ३ ] "तत्तेजोऽसृजत" [ छां० ६ । २ । ३ ] इत्येवं कार्यजातं ब्रह्मणः प्रदर्श्याऽव्यतिरेकं प्रदर्शयन्ति "ऐतदात्म्यमिदं सर्वम्" [ छां० ६ । ८ । ७ ] इत्यारभ्याऽऽ प्रपाठकपरिसमाप्तेः तद्यद्याकाशं न ब्रह्मकार्यं स्यात्, न ब्रह्मणि विज्ञाते आकाशं विज्ञायेत । ततश्च प्रतिज्ञाहानिः स्यात् ॥ न च प्रतिज्ञाहान्या वेदस्याप्रामाण्यं युक्तं कर्तुम् । तथाहि-प्रतिवेदान्तं तेते शब्दास्तेनतेन दृष्टान्तेन तामेव प्रतिज्ञां स्थापयन्ति । "इदꣳ सर्वं यदयमात्मा" [ बृ० ( २ । ४ । ६ )-४ । ५ । ७ ] "ब्रह्मैवेदममृतं पुरस्ताद्" [ मुण्ड० २ । २ । ११ ] इत्येवमादयः । तस्माज्ज्वलनादिवदेवगगनमप्युत्पद्यते । यदुक्तम्-"अश्रुतेर्न वियदुत्पद्यते" इति ॥ तदयुक्तम् ॥ वियदुत्पत्तिविषयश्रुत्यन्तरस्य दर्शितत्वात् "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" [ तै० उ० २ । १ । २ ] इति ॥ सत्यं दर्शितम् ॥ विरुद्धं तु "तत्तेजोऽसृजत" इत्यनेन श्रुत्यन्तरेण ॥ न ॥ एकवाक्य-

रत्नप्रभा ।

तिरेक एव न्यायः, तेनेत्यर्थः ॥ अयं भावः । जीवस्य तावदात्मत्वात् ब्रह्माव्यतिरेकः । अज्ञानतत्सम्बन्धयोः कल्पितत्वेनाऽव्यतिरेकः । स्वतन्त्राज्ञानायोगात् । अज्ञानान्यजडद्रव्यस्य तु कार्यत्वेनैवाव्यतिरेकसिद्धिः । तस्याऽकार्यत्वे प्रधानवत् स्वातन्त्र्यादव्यतिरेकायोगात् । तथाहुर्न्यायविदः-"नित्यद्रव्याणि स्वतन्त्राणि भिन्नान्यनाश्रितानि" इति । तस्मात् प्रतिज्ञासिद्धये आकाशस्य कार्यत्वेनैवाव्यतिरेको वाच्य इति दृष्टान्तसृष्टिसार्वात्म्यशब्दानाह-तथाहीति-तेन दृष्टान्तेनेति ॥ यजुषि दुन्दुभ्यादिदृष्टान्तेनाऽऽथर्वणे ऊर्णनाभ्यादिदृष्टान्तेनेत्यर्थः । यजुषि प्रतिज्ञासाधकाः "इदं सर्वम्" इतिशब्दाः, आथर्वणे "ब्रह्मैवेदम्" इति शब्दाः-इति विभागः ॥ एवमाकाशोत्पत्तिकथनादेकदेशिमते दूषिते श्रुत्यप्रामाण्यवादिनोक्तं स्मारयति-सत्यं दर्शितमिति ॥ मुख्यसिद्धान्त्याह-नैकेति ॥ "तत्तेजोऽसृजत" इति सकृच्छ्रुतस्य स्रष्टु-

भामती ।

तदेवं सिद्धान्तैकदेशिनि दूषिते पूर्वपक्षी स्वपक्षे विशेषमाह-सत्यं दर्शितम् अत एव विरुद्धं तु तदिति ।

आनन्दगिरीय-न्यायनिर्णयः ।

श्रेति । प्रकृतेर्विकाराणामव्यतिरेक एव न्यायस्तेनैवेति यावत् । शब्दानेवोदाहरति-तथाहीति । सदेवेत्यादिशब्दानां प्रतिज्ञाविषयत्वाभावान्न सा तत्र विवक्षितेत्याशंक्याऽऽह-तत्साधनायेति । शब्दानां प्रतिज्ञापरत्वेऽपि कथमाकाशस्य ब्रह्मकार्यतेत्याशंक्याऽऽह-तद्यदीति । प्रतिज्ञाहानिमनुमोदमानं प्रत्याह-न चेति । किंच, प्रतिज्ञा चेदियमेका स्यात्तदा कथंचिदविवक्षिता शंकेत, तास्तु भूयस्यो युक्तिसहिताश्च गम्यन्ते तन्नाविवक्षितत्वशंकेत्याह-तथा चेति । तेनतेन दृष्टान्तेन दुन्दुभिशंखवीणामृदादिनेति यावत् । तेते शब्दा इत्युक्तं व्यनक्ति-इदमिति । श्रौतप्रतिज्ञासामर्थ्यसिद्धमुपसंहरति-तस्मादिति । स्वपक्षसाधकं प्रमाणमुक्त्वा छान्दोग्यानुसारेण परोक्तमनुवदति-यदुक्तमिति । तैत्तिरीयकश्रुत्यनुरोधेन परिहरति-तदयुक्तमिति । एकदेशिनि दूषिते पूर्वपक्षी स्वपक्षे श्रुतीनां मिथो विरोधमुक्तं स्मारयति-सत्यमिति । विरुद्धत्वेनाप्रामाण्याङ्गीकारादेकवाक्यतया प्रामाण्यमेवांगीकर्तुं युक्तमित्याह-नेत्यादिना । श्रुती-

त्वात्सर्वश्रुतीनाम् । भवत्वेकवाक्यत्वमविरुद्धानाम् । इह तु विरोध उक्तः—सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसम्बन्धासम्भवाद्, द्वयोश्च प्रथमजत्वाऽसम्भवाद्विकल्पाऽसम्भवाच्चेति ॥ नैष दोषः ॥ तेजः सर्गस्य तैत्तिरीयके तृतीयत्वश्रवणात्—"तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुः वायोरग्निः" [ तै० उ० २ । १ । २ ] इति । अशक्या हीयं श्रुतिरन्यथा परिणेतुम् । शक्या परिणेतुं छान्दोग्यश्रुतिः तदाकाशं वायुं च सृष्ट्वा "तत्तेजोऽसृजत" [ छां० ६ । २ । ३ ] इति । न हीयं श्रुतिः तेजोजनिप्रधाना सती श्रुत्यन्तरप्रसिद्धामाकाशस्योत्पत्तिं

रत्नप्रभा ।

राकाशतेजोभ्यां युगपत् सम्बन्धे तित्तिरिक्रमबाधात् क्रमेणाकाशं सृष्ट्वा तेजोऽसृजतेति संबन्धे तेजःप्राथम्यभङ्गप्रसङ्गाद्वस्तुनि विकल्पासम्भवेन तयोः शाखाभेदेन प्राथम्यव्यवस्थाया अयोगान्नैकवाक्यतेति प्राप्ते मुख्य एव दूषयति—नैष दोष इति ॥ अप्रामाण्यकल्पनाद्वरम् । अपौरुषेयश्रुतीनामेकवाक्यत्वेन प्रामाण्यकल्पनम् । तच्चैकवाक्यत्वं बलवच्छ्रुत्या दुर्बलश्रुतेः कल्प्यम् । बलवती च तित्तिरिश्रुतिः । प्रकृतिपञ्चम्या पौर्वापर्याख्यक्रमस्य श्रुतत्वात् । छान्दोग्यश्रुतिस्तु दुर्बला । तेजःप्राथम्यश्रुत्यभावात् । तेजःसर्गमात्रं तु श्रुतं तृतीयत्वेन परिणेयमित्येकवाक्यतेत्यर्थः ॥ यदुक्तम्—एकदेशिना छान्दोग्यश्रुत्याकाशोत्पत्तिर्वार्यत इति । तन्निरस्तम्, किञ्च सा श्रुतिः किं तेजोजन्मपरा, तत्तेजोजन्म, वियदनुत्पत्तिश्चेत्युभयपरा । आद्ये न तद्वारणमित्याह—न हीति ॥ अविरोधादित्यर्थः । न द्वितीयः, श्रुत्यन्तरविरोधेनो-

भामती ।

सिद्धान्तसारमाह—नैष दोषः । तेजःसर्गस्य तैत्तिरीयक इति । श्रुत्योरन्यथोपपद्यमानान्यथानुपपद्यमानयोरन्यथानुपपद्यमाना बलवती तैत्तिरीयकश्रुतिः । छान्दोग्यश्रुतिश्चान्यथोपपद्यमाना दुर्बला । नन्वसहायं तेजः, प्रथममवगम्यमानं ससहायत्वेन विरुध्यत इत्युक्तमत आह—न हीयं श्रुतिस्तेजोजनिप्रधानेति । सर्गसंसर्गः श्रौतो भेदस्त्वार्थः । स च श्रुत्यन्तरेण विरोधिना बाध्यते, जघन्यत्वात् । न च तेजःप्रमुखसर्गसंसर्गवदसहायत्वमप्यस्य श्रौतं, किंतु व्यतिरेकलभ्यम् । न च श्रुतेन तदपवादबाधने श्रुतस्य तेजःसर्गस्यानुपपत्तिः, तदिदमुक्तम्—'तेजोजनिप्रधाना' इति । स्यादेतत् । यद्येकं वाक्यमनेकार्थं न भव-

आनन्दगिरीय—न्यायनिर्णयः ।

नामेकवाक्यत्वस्याविरोधापेक्षत्वात्प्रकृते च श्रुतिद्वयविरोधस्योक्तत्वान्नैकवाक्यतेति शङ्कते—भवत्विति । उक्तं विरोधमेव स्फोरयति—सकृदिति । 'तत्तेजोऽसृजत' इति स्रष्टा तच्छब्दार्थः सकृदेव श्रुतस्तस्य स्रष्टव्यद्वयेनाऽऽकाशेन तेजसा च संबन्धः 'तदाकाशमसृजत', 'तत्तेजोऽसृजत' इति नोपपद्यते तत्कथमेकवाक्यतेत्यर्थः । स सूपं पक्त्वौदनं पचतीतिवदेकस्यापि स्रष्टुः स्रष्टव्यद्वयसंबन्धसिद्धिरित्याशंक्य दृष्टान्ते क्रमसंबन्धेऽपि दार्ष्टान्तिके प्राथम्यदृष्टेरुभयोः सृष्टिक्रमस्य चेष्टत्वाद्युगपदनुत्पत्तेर्न विरोधसमाधिरित्याह—द्वयोश्चेति । शाखाभेदेन प्रथमजत्वं विकल्प्यतामित्याशंक्य वस्तुनि तदयोगान्नैवमित्याह—विकल्पेति । तेजःसृष्टिप्राथम्ये वियत्सृष्टिस्तत्प्राथम्यं चेत्युभयं बाध्यमाकाशसृष्टिप्राथम्ये तु प्राथम्यमेव तेजःसृष्टेर्बाध्यं न तत्सृष्टिर्वायोरग्निरिति तस्याः स्थानान्तरत्वप्रतिलम्भात्तत्र श्रुतधर्मिबाधकल्पनादुभयबाधप्रसङ्गाद्धर्मबाधकल्पनमेव युक्तमित्याह—नैष इति । किंच, श्रुत्योरन्यथोपपद्यमानानुपपद्यमानयोरन्यथानुपपद्यमाना श्रुतिर्बलीयसीति तैत्तिरीयश्रुतिरेवानुसर्तव्येत्याह—अशक्येति । छान्दोग्यश्रुतेरन्यथोपपद्यमानत्वेन दुर्बलत्वमाह—शक्येति । अन्यथापरिणयनमेवाभिनयति—तदाकाशमिति । किंच, 'तत्तेजोऽसृजत' इति श्रुतिः साक्षादेवाऽऽकाशस्योत्पत्तिं वारयेदर्थाद्वेति विकल्प्याऽऽद्यं दूषयति—न हीति । न द्वितीय आर्थिकश्रुतेर्दुर्बलत्वादित्याह—श्रुत्यन्तरेति । तेजःश्रुतिस्तेजोजन्म वियदनुत्पत्तिश्चेत्युभयं साक्षादेव बोधयति

वारयितुं शक्नोति। एकस्य वाक्यस्य व्यापारद्वयासम्भवात्। स्रष्टा त्वेकोऽपि क्रमेणाऽनेकं स्रष्टव्यं सृजेदित्येकवाक्यत्वकल्पनायां सम्भवन्त्यां न विरुद्धार्थत्वेन श्रुतिर्हातव्या॥ न चाऽस्माभिः सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसम्बन्धोऽभिप्रेयते। श्रुत्यन्तरवशेन स्रष्टव्यान्तरोपसंग्रहात्। यथा च-"सर्वं खल्विदं ब्रह्म तज्जलान्" [छां० ३।१४।१] इत्यत्र साक्षादेव सर्वस्य वस्तुजातस्य ब्रह्मजत्वं श्रूयमाणं न प्रदेशान्तरविहितं तेजःप्रमुखमुत्पत्तिक्रमं वारयति, एवं तेजसोऽपि ब्रह्मजत्वं श्रूयमाणं न श्रुत्यन्तरविहितं नभःप्रमुखमुत्पत्तिक्रमं वारयितुमर्हति॥ ननु शमविधानार्थमेतद्वाक्यं "तज्जलानिति शान्त उपासीत" [छां० ३।१४।१] इति श्रुतेर्नैतत् सृष्टिवाक्यम्। न तस्मादेतत्प्रदेशान्तरप्रसिद्धं क्रममनुरोद्धुमर्हति "तत्तेजोऽसृजत" इत्येतत्सृष्टिवाक्यम्। तस्मा-

रत्नप्रभा।

भयपरत्वकल्पनायोगाद्वाक्यभेदापत्तेश्चेत्याह-**एकस्येति**॥ नन्वेकस्य स्रष्टुरनेकार्थसम्बन्धवद्वाक्यस्याप्यनेकार्थता किं न स्यादित्यत आह-**स्रष्टा त्विति**॥ एकस्य कर्तुरनेकार्थसम्बन्धो दृष्टः। न त्वेकस्य वाक्यस्य नानार्थत्वं दृष्टम्। नानार्थकप्रयोगे तु पयः आनयेत्यादावावृत्त्या वाक्यभेद एव। आनयनस्य जलक्षीराभ्यां पृथक्सम्बन्धादित्यर्थः। फलितमाह-**इत्येकेति**॥ एकस्य शब्दस्याऽऽवृत्तिं विनाऽनेकार्थत्वं नास्ति चेदसृजतेति शब्दस्य छान्दोग्ये उपसंहृताकाशादिसम्बन्धार्थमावृत्तिदोषः स्यादित्यत आह-**न चेति**॥ छान्दोग्यस्थतेजोजन्म, आकाशादिजन्मपूर्वकं, तेजोजन्यत्वात्, तित्तिरिस्थतेजोजन्मवदित्याकाशादिजन्मोपसंहारे 'तदाकाशमसृजत' इति वाक्यान्तरस्यैव कल्पनान्नावृत्तिदोष इत्यर्थः। श्रुत्यन्तरस्थः क्रमः श्रुत्यन्तरे ग्राह्य इत्यत्र दृष्टान्तमाह-**यथा चेति**॥ सृष्टौ तात्पर्यातात्पर्याभ्यां दृष्टान्तश्रुतिवैषम्यं शङ्कते-**नन्वित्यादिना**॥ तेजःप्राथम्यस्वीकारे आकाशसर्गो धर्मी, तद्धर्मः प्राथम्यं चेति द्वयं श्रुतं बाधनीय-

भामती।

त्येकस्य व्यापारद्वयासंभवात्, हन्त भोः कथमेकस्य स्रष्टुरनेकव्यापारत्वमविरुद्धमित्यत आह-**स्रष्टा त्वेकोऽपीति**। वृद्धप्रयोगाधीनावधारणं शब्दसामर्थ्यम्। न चानावृत्तस्य शब्दस्य क्रमाक्रमाभ्यामनेकत्रार्थे व्यापारो दृष्टः। दृष्टं तु क्रमाक्रमाभ्यामेकस्यापि कर्तुरनेकव्यापारत्वमित्यर्थः। न चास्मिन्नर्थ एकस्य वाक्यस्य व्यापारोऽपि तु भिन्नानां वाक्यानामित्याह-**न चास्माभिरिति**। सुगमम्। चोदयति-**ननु शमविधानार्थ-**

आनन्दगिरीय-न्यायनिर्णयः।

चेत्का हानिरित्याशंक्याऽऽह-**एकस्येति**। एकस्य स्रष्टुरनेकव्यापारवदेकस्यापि वाक्यस्य किं न स्यादित्याशंक्याऽऽह-**स्रष्टा त्विति**। वृद्धप्रयोगाधीनं शब्दसामर्थ्यावधारणं न चाऽऽवृत्तिरहितस्य शब्दस्यानेकत्रार्थे व्यापारो दृष्टो दृष्टं तु क्रमाक्रमाभ्यामेकस्यापि कर्तुरनेकव्यापारवत्त्वमित्यर्थः। उक्तन्यायेन श्रुत्योरेकवाक्यत्वेनाविरुद्धार्थतया प्रामाण्यं युक्तमित्युपसंहरति-**इत्येकेति**। एकं वाक्यमावृत्तिरहितमनेकव्यापारवन्न चेत्कथं तर्हि 'तत्तेजोऽसृजत' इत्यत्राऽऽकाशस्योत्पत्तिरुपसंहर्तव्येत्याशंक्य नास्मिन्नर्थे वाक्यस्यैकस्य व्यापारोऽपि तु भिन्नानां वाक्यानामित्याह-**न चेति**। श्रुत्यन्तरसिद्धोऽपि क्रमः श्रुत्यन्तरे संग्राह्यो भवतीत्येतद्दृष्टान्तेन स्पष्टयति-**यथा चेति**। दृष्टान्तवैषम्यं शङ्कते-**नन्विति**। तत्र विशेषणश्रुतिं प्रमाणयति-**तज्जलानितीति**। व्यावर्त्यं कीर्तयति-**नैतदिति**। यत्परः शब्दः स शब्दार्थो न चायं शब्दः सृष्टिपरोऽतो न प्रसिद्धं क्रमं बाधितुमलमिति फलितमाह-**तस्मादिति**। दार्ष्टान्तिके विशेषमाह-**तत्तेज इति**। तस्य सृष्टिपरत्वेऽपि श्रुत्यन्तरप्रसिद्धक्रमानुरोधित्वमाशंक्याऽऽह-**तस्मादिति**। तत्परत्वातत्परत्व-

दत्र यथाश्रुति क्रमो ग्रहीतव्य इति ॥ नेत्युच्यते ॥ न हि तेजःप्राथम्यानुरोधेन श्रुत्यन्तरप्रसिद्धो वियत्पदार्थः परित्यक्तव्यो भवति । पदार्थधर्मत्वात्क्रमस्य ॥ अपि च "तत्तेजोऽसृजत" इति नात्र क्रमस्य वाचकः कश्चिच्छब्दोऽस्ति । अर्थात्तु क्रमो गम्यते । स च वायोरग्निरित्यनेन श्रुत्यन्तरप्रसिद्धेन क्रमेण निवार्यते । विकल्पसमुच्चयौ तु वियत्तेजसोः प्रथमजत्वविषयावसम्भवाऽनभ्युपगमाभ्यां निवारितौ । तस्मान्नास्ति श्रुत्योर्विप्रतिषेधः ॥ अपि च छान्दोग्ये—"येनाश्रुतं श्रुतं भवति" इत्येतां प्रतिज्ञां वाक्योपक्रमे श्रुतां समर्थयितुमसमाम्नातमपि वियदुत्पत्तावुपसंख्यातव्यं किमङ्ग पुनस्तैत्तिरीयके समाम्नातं नभो न संगृह्यते ॥ यच्चोक्तमाकाशस्य सर्वेणानन्यदेशकालत्वाद्ब्रह्मणा तत्कार्यैश्च

रत्नप्रभा ।

मिति गौरवम् । आकाशप्राथम्ये त्वार्थिकतेजःसर्गप्राथम्यमात्रबाध इति लाघवमिति मत्वाह—**नेत्युच्यत इति** ॥ किञ्च प्रधानधर्मित्यागाद्वरं गुणभूतस्य तेजःप्राथम्यस्य धर्मस्य त्याग इत्याह—**न हीति** ॥ किञ्च किं सृष्टिपरश्रुतिसिद्धत्वात् तेजःप्राथम्यं गृह्यते—उत—प्रथमस्थाने तेजसः सर्गश्रुत्याऽर्थात् प्राथम्यमानात् । नाद्यः इत्याह—**अपि चेति** ॥ द्वितीयम् अनूद्य दूषयति—**अर्थात्त्विति** ॥ यदुक्तं वस्तुनि विकल्पासम्भवादुभयोः प्राथम्यं शाखाभेदेन व्यवस्थितं न भवति । नाप्युभयोर्द्विदलांकुरवत् समुच्चयोत्पत्त्या प्राथम्यम् । "वायोरग्निः" [ तैत्ति० २ । १ ] इति क्रमबाधापातादिति । तदिष्टमेवेत्याह—**विकल्पेति** ॥ न केवलं श्रुतिद्वयोरविरोधः सौहार्दश्चास्तीत्याह—**अपि चेति** ॥ वियदुपसंग्राह्यमित्यन्वयः॥ वियदनुत्पत्तिवादिनोक्तमनूद्य प्रतिज्ञाया अद्वितीयश्रुतेश्च मुख्यार्थतात्पर्यावगमान्न गौणार्थतेति दूषयति-**यच्चोक्त**

भामती ।

**मिति** । यत्परः शब्दः स शब्दार्थः । न चैष सृष्टिपरोऽपि तु शमपर इत्यर्थः । परिहरति—**न हि तेजःप्राथम्यानुरोधेनेति** । गुणत्वादार्थत्वाच्च क्रमस्य श्रुतप्रधानपदार्थविरोधात्तत्त्यागोऽयुक्त इत्यर्थः । सिंहावलोकितन्यायेन वियदनुत्पत्तिवादिनं प्रत्याह—**अपि च छान्दोग्य इति** । यत्पुनरन्यथा प्रतिज्ञोपपादनं कृतं, तद्दूषयति—**यच्चोक्तमिति** । दृष्टान्तानुरूपत्वाद्दार्ष्टान्तिकस्य, तस्य च प्रकृतिविकाररूप-

आनन्दगिरीय—न्यायनिर्णयः ।

वैषम्येऽपि 'तत्तेजोऽसृजत' इत्यस्य न श्रुत्यन्तरसिद्धक्रमनिवारकतेत्याह—**नेत्युच्यत इति** । किंच, गुणभूतक्रमविरोधान्न प्रधानभूतपदार्थत्यागो युक्तो गुणप्रधानविरोधे प्रधानानुरोधस्यैव युक्तत्वादित्याह—**न हीति** । इतोऽपि तेजःप्राथम्यानुरोधेन वियत्पदार्थत्यागानुपपत्तिरित्याह—**अपि चेति** । छान्दोग्ये तत्प्राथम्यं शाब्दमार्थं वा ? नाऽऽद्य इत्याह—**तत्तेज इति** । न द्वितीयः, अर्थसिद्धक्रमस्य श्रौतक्रमविरोधे बाधकत्वायोगादित्याह—**अर्थात्त्विति** । वियत्पवनयोः श्रुतिं विना प्रथमतस्तेजःश्रुतिवशात्तस्य सृष्टौ प्राथम्यं भाति तच्च श्रुत्यन्तरे तृतीयत्वश्रुत्या व्याहतमित्यर्थः । शाखाभेदेन विकल्पो वा स्यादुभयप्राथम्यस्योभयत्रोपसंहृते समुच्चयो वेत्याशंक्याऽऽह—**विकल्पेति** । प्रथमजत्वे सिद्धवस्तुत्वाद्विकल्पासंभवान्निरस्तः । 'वायोरग्निः' इति श्रुतिविरोधान्नोभयोरुभयत्र प्रथमजत्वं, न च क्रमसृष्टाविद्यायामुभयोरुभयत्र प्राथम्यमुपसंहर्तुं शक्यं, तेन द्वाभ्यां द्वावपि निरस्तावित्यर्थः । तैत्तिरीयश्रुत्यनुरोधेन च्छान्दोग्ये श्रुतिनयनान्न तयोर्विरोधोऽस्तीत्युपसंहरति—**तस्मादिति** । न केवलमविरोधोऽपि तु च्छन्दोगश्रुतेरनुकूलैव तैत्तिरीयश्रुतिरित्याह—**अपि चेति** । उत्पत्तौ वियदुपसंहारं विनाऽपि प्रतिपादितत्वात्प्रतिज्ञाया न च्छान्दोग्यश्रुत्यनुकूला तैत्तिरीयश्रुतिरित्याशंक्य पूर्वोक्तमनुवदति—**यच्चेति** । अतो न प्रतिज्ञेत्यत्राऽऽकाशस्योत्पत्त्यभावेऽपीति शेषः । एकमेवाद्वितीयमिति-

सह विदितमेव तद्भवति । अतो न प्रतिज्ञा हीयते ॥ न च "एकमेवाद्वितीयम्" [ छां० ६ । १ । २ ] इति श्रुतिकोपो भवति । क्षीरोदकवद्ब्रह्मनभसोरव्यतिरेकोपपत्तेरिति ॥ अत्रोच्यते ॥ न ॥ क्षीरोदकन्यायेनेदमेकविज्ञानेन सर्वविज्ञानं नेतव्यम् । मृदादिदृष्टान्तप्रणयनाद्धि प्रकृतिविकारन्यायेनैवेदं सर्वविज्ञानं नेतव्यमिति गम्यते । क्षीरोदकन्यायेन च सर्वविज्ञानं कल्प्यमानं न सम्यग्विज्ञानं स्यात् । न हि क्षीरज्ञानगृहीतस्योदकस्य सम्यग्विज्ञानगृहीतत्वमस्ति । न च वेदस्य पुरुषाणामिव मायाऽलीकवञ्चनादिभिरर्थावधारणमुपपद्यते । सावधारणा चेयम् "एकमेवाद्वितीयम्" [ छां० ६ । २ । ३ ] इति श्रुतिः क्षीरोदकन्यायेन नीयमाना पीडयेत ॥ न च स्वकार्यापेक्षयेदं वस्त्वेकदेशविषयं सर्वविज्ञानमे-

---

रत्नप्रभा ।

मित्यादिना । प्रकृतिविकारन्यायः तदनन्यत्वन्यायः, उदकं क्षीरस्थमपि क्षीरज्ञानान्न गृह्यते भेदादिति भावः । मास्तु सम्यग्ज्ञानं, श्रुतेर्भ्रान्तिमूलत्वसम्भवादित्याशंक्याऽपौरुषेयत्वान्मैवमित्याह—न च वेदस्येति ॥ माया—भ्रान्तिः तया अलीकं मिथ्याभाषणं तेन वञ्चनम् । अयथार्थबोधनम् । आदिपदाद्—विप्रलिप्साप्रमादकरणापाटवानि गृह्यन्ते । प्रतिज्ञामुख्यत्वमभिधायाऽद्वितीयश्रुतिमुख्यज्ञानमाह—सावधारणेति ॥ सर्वद्वैतनिषेधपरेत्यर्थः। उभयगौणत्वेऽद्भुतवद्रुपन्यासो मृदादिदृष्टान्तैस्तत्साधनं च स्यादिति दोषान्तरमाह-न चे-

भामती ।

त्वादार्ष्टान्तिकस्यापि तथा भावः । अपि च भ्रान्तिमूलं चैतद्वचनम् 'एकमेवाद्वितीयम्' इति तोये क्षीरबुद्धिवत् । औपचारिकं वा सिंहो माणवक इतिवत् । तत्र न तावद्भ्रान्तमित्याह—क्षीरोदकन्यायेनेति । भ्रान्तेर्विप्रलम्भाभिप्रायस्य च पुरुषधर्मत्वादपौरुषेये तदसंभव इत्यर्थः । नाप्यौपचारिकमित्याह—सावधारणा चेयमिति । काममुपचारादस्त्वेकत्वम्, अवधारणाऽद्वितीयपदे नोपपद्येते । न हि माणवके सिंहत्वमुपचर्य न सिंहादन्योऽस्ति मनागपि माणवक इति वदन्ति लौकिकाः । तस्माद्ब्रह्मत्वमैकान्तिकं जगतो विवक्षितं श्रुत्या न त्वौपचारिकम् । अभ्यासे हि भूयस्त्वमर्थस्य भवति न त्वल्पत्वमपि प्रागेवौपचारिकमित्यर्थः । न च स्वकार्यापेक्षयेति । निःशेषवचनः स्वरसतः सर्वशब्दो नासति श्रुत्यन्तरविरोधे एकदेश-

आनन्दगिरीय-न्यायनिर्णयः ।

श्रुतिसमाधानमनुद्रवति—न चेति । अन्यथाप्रतिज्ञोपपादनं तावद्दूषयति—अत्रेति । क्षीरपूर्णघटे प्रक्षिप्ता नीरबिन्दवस्तद्ग्रहणेनैव गृह्यन्ते न पृथक्पाथोबिन्दूनां ग्रहणमवशिष्यते । तथा ब्रह्मणि सकार्ये ज्ञाते तदभिन्नदेशकालं नभो विज्ञातमेव तदनेन दृष्टान्तेन नेदं प्रतिज्ञानं नेतुं युक्तं दृष्टान्तानुरोधित्वाद्दार्ष्टान्तिकस्य, दृष्टान्तस्य च प्रकृतिविकाररूपत्वाद्दार्ष्टान्तिकेऽपि तथात्वस्य युक्तत्वात्तस्मादाकाशादेर्ब्रह्मविकारत्वे तत्प्रकृतिभूतब्रह्मणोऽनन्यत्वमित्यनेनैव न्यायेनेदं नेयमित्यर्थः । इतश्च न क्षीरोदकदृष्टान्तेनैतन्नेतव्यमित्याह—न क्षीरेति । तत्र हेतुमाह—न हीति । मा भूदेकविज्ञानेन सर्वविज्ञानं सम्यग्ज्ञानं तत्राऽऽह—न चेति । मायया भ्रान्तिरूपया यदलीकं मिथ्याभाषणं तेन वचनमन्यथाबोधनं तेन वा विप्रतिलिप्सादिभिर्वा नार्थावधारणमपौरुषेयस्य वेदस्योपपद्यते तेषां पुरुषधर्मत्वाद्वेदेऽसंभवादित्यर्थः । यत्तु क्षीरनीरवद्ब्रह्मनभसोरव्यतिरेकादद्वितीयश्रुतिरिति तत्राऽऽह—साऽवधारणेति । यद्यद्वितीयपदमौपचारिकं तर्हि कथमवधारणं न हि माणवके सिंहत्वोपचारेण सिंहादन्यो माणवको नेति प्रयोगोऽस्तीत्यर्थः । यत्तु स्वकार्यापेक्षया सर्वमिदमुपपन्नमिति तत्राऽऽह—न चेति । तत्संभवाद्ब्रह्मणि विशेषणवैयर्थ्यमिति पूरयितुं हिशब्दः । मृदादिष्वपि

काऽद्वितीयतावधारणं चेति न्याय्यम् । मृदादिष्वपि हि तत्सम्भवात्, न तदपूर्ववदुपन्यसितव्यं भवति । "श्वेतकेतोयन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति" [ छां० ६ । १ । २ ] इत्यादिना ॥ तस्मादशेषवस्तुविषयमेवेदं सर्वविज्ञानं सर्वस्य ब्रह्मकार्यतापेक्षयोपन्यस्यत इति द्रष्टव्यम् ॥ ६ ॥ यत्पुनरेतदुक्तम्—असम्भवाद्गौणी गगनस्योत्पत्तिश्रुतिरिति ॥ तत्र ब्रूमः—

**यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥**

तुशब्दोऽसम्भवाशंकाव्यावृत्त्यर्थः । न खल्वाकाशोत्पत्तावसम्भवाशंका कर्तव्या । यतो यावत्किञ्चिद्विकारजातं दृश्यते घटघटिकोदञ्चनादि वा, कटककेयूरकुण्डलादि वा, सूचीनाराचनिस्त्रिंशादि वा,—तावानेव विभागो लोके लक्ष्यते, न त्वविकृतं किञ्चित्कुतश्चिद्विभक्तमुपलभ्यते। विभागश्चाऽऽकाशस्य पृथिव्यादिभ्योऽवगम्यते । तस्मात्सोऽपि विकारो भवितुमर्हति । एतेन दिक्कालमनःपरमाण्वादीनां कार्यत्वं व्याख्यातम् ॥ नन्वात्माप्याकाशादिभ्यो विभक्त इति तस्यापि

---

रत्नप्रभा ।

त्यादिना ॥ ६ ॥ **यावद्विकारमिति** ॥ कार्यमेव वस्त्वेकदेश आकाशो नोत्पद्यते । सामग्रीशून्यत्वादित्यत्राकाशः, विकारः, विभक्तत्वाद्, घटादिवदिति सत्प्रतिपक्षमाह—**यत्पुनरित्यादिना** ॥ यो विभक्तः स विकार इत्यन्वयमुक्त्वा यस्त्वविकारः स न विभक्तः यथात्मेति व्यतिरेकव्याप्तिमाह—**न त्वविकृतमिति** ॥ दिगादिषु व्यभिचारमाशंक्य पक्षसमत्वान्मैवमित्याह—**एतेनेति** ॥ विभक्तत्वेनेत्यर्थः । आत्मनि व्यभिचारं शङ्कते—**नन्विति** ॥ धर्मिसमानसत्ताकविभागस्य हेतुत्वात् पर-

भामती ।

विषयो युज्यत इत्यर्थः ॥ ६ ॥ आकाशस्योत्पत्तौ प्रमाणान्तरविरोधमुक्तमनुभाष्य तस्य प्रमाणान्तरस्य प्रमाणान्तरविरोधेनाप्रमाणभूतस्य न गौणत्वापादनसामर्थ्यमत आह—**यावद्विकारं तु विभागो लोकवत्** । सोऽयं प्रयोगः—आकाशदिक्कालमनःपरमाणवो विकाराः, आत्मान्यत्वे सति विभक्तत्वात्, घट-

आनन्दगिरीय–न्यायनिर्णयः ।

स्वकार्यापेक्षया वस्त्वेकदेशविषयं सर्वविज्ञानमिच्छन्तं प्रति दोषान्तरमाह—**न तदिति** । कथमपूर्ववदुपन्यासस्तत्राऽऽह—**श्वेतकेतो इति** । त्वत्पक्षे वा कथमिदं प्रतिज्ञानं तत्राऽऽह—**तस्मादिति** । स्वकार्यापेक्षया वस्त्वेकदेशविषयत्वासंभवादिति यावत् ॥ ६ ॥ सावधारणाद्वितीयश्रुतेरेकविज्ञानेन सर्वविज्ञानप्रतिपादनाच्च नभसोऽपि ब्रह्मकार्यत्वं पृथिव्यादिवदित्युक्तम् । इदानीमनुमानविरोधादाकाशोत्पत्तेरसंभवात्तदुत्पत्तिश्रवणं गौणमित्युक्तमनुवदति—**यत्पुनरिति** । अनुमानस्य मानान्तरविरोधेनामानत्वान्नाऽऽकाशोत्पत्तिश्रुतेर्गौणत्वापादनसामर्थ्यमिति सूत्रमवतारयति—**अत्रेति** । अक्षरोक्तमर्थं कथयति—**तुशब्द इति** । व्यावृत्तिप्रकारमभिनयति—**न खल्विति** । तत्र विभक्तत्वहेतुकमनुमानं हेतुं कुर्वन्व्याप्तिमाह—**यत इति** । यद्विभक्तं तत्कार्यं यथा च घटादीत्यन्वयमुक्त्वा व्यतिरेकमाह—**न त्विति** । यन्न कार्यं तन्न विभक्तं यथाऽऽत्मेत्यर्थः । व्याप्तस्य हेतोः पक्षधर्मतामाह—**विभागश्चेति** । विमतं कार्यमविद्याव्यतिरिक्तत्वे सति विभक्तत्वात्सामान्यवत्त्वाद्गुणित्वाच्च घटवदित्यभिप्रेत्याऽऽह—**तस्मादिति** । दिगादिषु व्यभिचारमाशंक्य पक्षतुल्यत्वान्मैवमित्याह—**एतेनेति** । आत्मा गगनादिभ्यो विभक्तो न वा ? आद्ये विभक्तोऽपि विकारो नेति व्यभिचारः । द्वितीये तदभिन्नत्वात्तद्वदेव तस्यापि कार्यतेति मत्वा चोदयति—**नन्विति** । न

**कार्यत्वं घटादिवत् प्राप्नोति॥न॥"आत्मन आकाशः सम्भूतः"[तै०उ० २।१।२] इति श्रुतेर्यदि ह्यात्मापि विकारः स्यात्,तस्मात्परमन्यन्न श्रुतमित्याकाशादि सर्वं कार्यं निरात्मकमात्मनः कार्यत्वे स्यात । तथा च शून्यवादः प्रसज्येत । आत्मत्वादेवात्मनो निराकरणशंकानुपपत्तिः । न ह्यात्माऽऽगन्तुकः कस्यचित् । स्वयं सिद्धत्वात् । न ह्यात्माऽऽत्मनः प्रमाणमपेक्ष्य सिध्यति । तस्य हि प्रत्यक्षादीनि प्रमाणान्यसिद्धप्रमेय-**

रत्नप्रभा ।

मार्थात्मनि विभागस्य कल्पितत्वेन भिन्नसत्ताकत्वान्न व्यभिचार इत्याह—**नेति** ॥ अत्र चाऽज्ञानान्यद्रव्यत्वं विशेषणम् । अतो नाऽज्ञानतत्सम्बन्धादौ व्यभिचारः । नन्वात्मा, कार्यः, विभक्तत्वाद्, वस्तुत्वाद्वा, घटवदित्याभासतुल्यमिदमनुमानमित्याशंक्यात्मनः परमकारणत्वेन श्रुतस्य कार्यत्वे शून्यताप्रसङ्ग इति बाधकसत्त्वात्तस्याभासत्वम् । नात्र किञ्चिद्बाधकमस्ति । प्रत्युत आकाशस्याकार्यत्वे नित्यानेकद्रव्यकल्पना श्रौतप्रतिज्ञाहान्यादयो बाधकाः सन्तीति नाभासतुल्यतेत्याह—**आत्मन इति** ॥ इष्टप्रसङ्ग इति वदन्तं प्रत्याह—**आत्मत्वादिति** ॥ आत्माऽभावः केनचित् ज्ञायते न वा ? आद्ये यो ज्ञाता स परिशिष्यत इति न शून्यता । द्वितीयेऽपि न शून्यता । मानाभावादित्यर्थः । किञ्च यद्धि कार्यं सत्तास्फूर्त्योरन्यापेक्षं, तन्निराकार्यम् । आत्मा त्वकार्यो निरपेक्षत्वान्न बाधयोग्य इत्याह—**न ह्यात्मेत्यादिना** ॥ **कस्यचित्**—कारणस्य **आगन्तुकः** कार्यः । न हि सत्तास्फूर्त्योः—अनन्यायत्तत्त्वादित्यक्षरार्थः । तत्र स्फूर्तेरनन्यायत्तत्वं विवृणोति—**न हीति**॥तदुक्तं **सुरेश्वराचार्यैः**"प्रमाता च प्रमाणं च प्रमेयं प्रमितिस्तथा।यस्य प्रसादात्सिध्यन्ति तत्सिद्धौ किमपेक्ष्यते॥१॥"इति । तथा श्रुतिराह "पुरुषः स्वयं ज्योतिः"[बृ० ३।९] "तस्य भासा सर्वमिदं विभाति"[कठ०५।१५]इति च।नन्वात्मनः स्वतः सिद्धौ प्रमाणवैयर्थ्यम्।तत्राह—**तस्ये-**

भामती ।

शरावोदञ्चनादिवदिति । **सर्वं कार्यं निरात्मकमिति** । निरुपादानं स्यादित्यर्थः । शून्यवादश्च निराकृतः स्वयमेव श्रुत्योपन्यस्य 'कथमसतः सज्जायेत' इति । उपपादितं च तन्निराकरणमधस्तादिति । आत्मत्वादेवात्मनः प्रत्यगात्मनो **निराकरणाशंकानुपपत्तिः** । एतदुक्तं भवति—सोपादानं चेत्कार्यं तत आत्मैवोपादानमुक्तं, तस्यैवोपादानत्वेन श्रुतेरुपादानान्तरकल्पनानुपपत्तेरिति । स्यादेतत् । अस्त्वात्मोपादानमस्य जगतः, तस्य तूपादानान्तरमश्रूयमाणमप्यन्यद्भविष्यतीत्यत आह—**न ह्यात्मागन्तुकः कस्य-**

आनन्दगिरीय—न्यायनिर्णयः ।

तावदात्मनि व्यभिचारः सति मातरि बाधविधुरे विभागाभावात् । न च तस्य प्रातीतिकविभागेन कार्यत्वं सर्वकारणत्वश्रुतिविरोधात् । न च तद्वदेवाऽऽकाशस्यापि न कार्यता तत्कार्यतायाः श्रुतत्वादित्यभिप्रेत्याऽऽह—**नाऽऽत्मन इति** । आत्मनोऽपि वस्तुत्वाद् घटवत्कार्यत्वानुमानान्न सर्वकारणतेत्याशंक्यार्थापत्तिविरोधान्नैवमित्याह—**यदि हीति** । निरात्मकत्वं निरुपादानत्वम् । तत्प्राप्तिफलमाह—**तथा चेति** । इष्टापत्तिं निराचष्टे । **आत्मत्वाच्चेति** । निराकर्ताऽस्ति न वा । आद्ये निराकर्तैवाऽऽत्मेत्यात्मनो नित्यसत्त्वम्। द्वितीये तदभावे निराकरणासिद्धेर्नित्यत्वमित्यर्थः । आत्मकारणस्यैवाऽऽकाशादिकारणत्वान्न सर्वस्य निरात्मकत्वमित्याशंक्याऽऽह—**न हीति** । सत्तास्फूर्त्योरन्यानपेक्षत्वादात्मनोऽनागन्तुकत्वं तत्कथं तत्कारणमाकाशादिकारणमित्यर्थः । प्रमाणापेक्षया सिध्यन्नात्मा कथं निरपेक्षस्फूर्तिरित्याशंक्याऽऽह—**न हीति**। तस्यापि स्वयमेव साधकत्वादित्यर्थः । प्रत्यक्षाद्व्यतिरेकेणाऽऽत्मनः सिद्धत्वे तेषामानर्थक्यमित्याशंक्याऽऽह—**तस्य हीति** । आत्मनः स्वयंसिद्धत्वे वस्तुत्वाविशेषादाकाशादीनामपि तथा संभवात्प्रमाणवैयर्थ्यतादव-

सिद्धये उपादीयन्ते। न ह्याकाशादयः पदार्थाः प्रमाणनिरपेक्षाः स्वयं सिद्धाः केनचिदभ्युपगम्यन्ते। आत्मा तु प्रमाणादिव्यवहाराश्रयत्वात्प्रागेव प्रमाणादिव्यवहारात्सिध्यति । न चेदृशस्य निराकरणं सम्भवति। आगन्तुकं हि वस्तु निराक्रियते, न स्वरूपम् । य एव हि निराकर्त्ता, तदेव तस्य स्वरूपम् । न ह्यग्नेरौष्ण्यमग्निना निराक्रियते ॥ तथाऽहमेवेदानीं जानामि वर्तमानं वस्त्वहमेवाऽतीतमतीततरं चाऽज्ञासिषमहमेवाऽनागतमनागततरं च ज्ञास्यामीत्यतीताऽनागतवर्तमानभावेनाऽन्यथा भवत्यपि ज्ञातव्ये न

रत्नप्रभा ।

ति ॥ ननु प्रमेयस्यापि स्वप्रकाशत्वं किं न स्यादित्यत आह—न हीति ॥ अतो न प्रमाणवैयर्थ्यमिति भावः । आत्माऽपि मानाधीनसिद्धिकः किं न स्यादित्यत आह—आत्मा त्विति। अयमर्थः—निश्चितसत्ताकं हि ज्ञानं प्रमेयसत्तानिश्चायकम् । गेहे घटो दृष्टो न वेति ज्ञानसंशयेन दृष्ट इति व्यतिरेकनिश्चये चार्थस्वरूपानिश्चयात् । ज्ञानसत्तानिश्चयश्च न स्वतः । कार्यस्य स्वप्रकाशत्वायोगात् । नापि ज्ञानान्तरात् । अनवस्थानात् । अतः साक्षिणैव ज्ञानसत्तानिश्चयो वाच्यः । तत्र साक्षिणश्चेत् ज्ञानाधीनसत्तानिश्चयः अन्योन्याश्रयः स्यात् । अतः सर्वसाधकत्वादात्मा स्वतःसिद्ध इति । स्वप्रकाशस्यापि बाधः किं न स्यादित्यत आह—न चेति ॥ जडं हि परायत्तप्रकाशत्वादागन्तुकं बाधयोग्यम् । न प्रकाशात्मस्वरूपम् । तस्य सर्वबाधसाक्षिस्वरूपस्य निराकर्त्रन्तराभावात् । स्वस्य च स्वनिराकर्तृत्वायोगात् । न हि सुनिपुणेनापि स्वाभावो द्रष्टुं शक्यत इत्यर्थः । एवं स्वतः स्फूर्तित्वादात्माऽबाध्य इत्युक्त्वा स्वतःसत्ताकत्वाच्च न बाध्य इत्याह—तथाहमेवेति ॥ ज्ञानज्ञेययोः सत्ताव्यभिचारेऽपि ज्ञातुः सदेकरूप-

भामती ।

चित् उपादानान्तरस्योपादेयः । कुतः । स्वयंसिद्धत्वात् । सत्ता वा प्रकाशो वाऽस्य स्वयंसिद्धौ । तत्र प्रकाशात्मिकायाः सिद्धेस्तावदनागन्तुकत्वमाह—न ह्यात्माऽऽत्मन इति । उपपादितमेतद्यथा संशयविपर्यासपारोक्ष्यानास्पदत्वात्कदापि नात्मा पराधीनप्रकाशः, तदधीनप्रकाशास्तु प्रमाणादयः । अत एव श्रुतिः—'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति । न चेदृशस्य निराकरणं संभवतीति । निराकरणमपि हि तदधीनात्मलाभं तद्विरुद्धं नोदेतुमर्हतीत्यर्थः । सत्ताया अनागन्तुकत्वमस्याह—तथाहमेवेदानीं जानामीति । प्रमाप्रमाणप्रमेयाणां वर्तमानातीतानागतत्वेऽपि प्रमातुः सदा वर्तमानत्वेनानुभवादप्रच्युतस्वभावस्य नागन्तुकं सत्त्वम् । त्रैकाल्यावच्छेदेन ह्यागन्तुकत्वं व्याप्तं, तत्प्रमातुः सदावर्तमानाद्व्यावर्तमानमागन्तुकत्वं स्वव्याप्यमादाय निवर्तत इति । अन्यथा भवत्यपि ज्ञातव्य इति।

आनन्दगिरीय—न्यायनिर्णयः ।

स्थ्यमित्याशंक्याऽऽह—न हीति । जडत्वादनभ्युपगमाच्च न स्वतःसिद्धता तेषामित्यर्थः । आत्मनोऽपि स्वप्रकाशत्वं वादिनो नोपगच्छन्तीत्याशंक्याऽऽह—आत्मा त्विति । प्रमाणादिसाक्षित्वान्न तदधीनाऽऽत्मसिद्धिरित्यर्थः । आत्मनः स्वप्रकाशत्वेऽपि कथमनिराकरणमित्याशंक्याऽऽह—न चेति । निराकरणत्वमपि तदधीनात्मलाभं तद्विरुद्धं नोदेतीत्यर्थः । अहमस्मि ब्रह्मेति तत्त्वज्ञानान्नाहं कर्ता भोक्ता चेत्यात्मनोऽपि निराकरणं दृष्टमित्याशंक्याऽऽह-आगन्तुकं हीति । जीवत्वमनागन्तुकमपि निराक्रियमाणमिष्टमित्याशंक्याऽऽह-नेति । किं तर्हि स्वरूपं तदाह—य एवेति । तदपि निराक्रियतामित्याशंक्य निराकर्त्रन्तराभावान्नैवमित्याह—न हीति । आत्मनः सत्तास्फूर्त्योरन्यानपेक्षत्वमनागन्तुकत्वे कारणमुक्त्वा स्फूर्तावन्यानपेक्षत्वमुपपाद्य सत्तायामपि तदुपपादयति—तथेति । सदाऽहमित्यपरोक्षैकरूपानुभवान्नाऽऽत्मनः

**ज्ञातुरन्यथाभावोऽस्ति । सर्वदा वर्तमानस्वभावत्वात् ॥ तथा भस्मीभवत्यपि देहे नात्मन उच्छेदः, वर्तमानस्वभावादन्यथास्वभावत्वं वा,—न सम्भावयितुं शक्यम् ॥ एवमप्रत्याख्येयस्वभावत्वादेवाकार्यत्वमात्मनः, कार्यत्वं चाकाशस्य ॥ यत्तूक्तं समानजातीयमनेकं कारणद्रव्यं व्योम्नो नास्तीति ॥ तत्प्रत्युच्यते ॥ न तावत्समानजातीयमेवारभते न भिन्नजातीयमिति नियमोऽस्ति । न हि तन्तूनां तत्संयोगानां च समानजातीयत्वमस्ति । द्रव्यगुणत्वाभ्युपगमात् । न च निमित्तकारणानामपि तुरीवेमादीनां समानजातीयत्वनियमोऽस्ति ॥ स्यादेतत्—समवायिकारणविषय एव समानजातीयत्वाभ्युपगमो न कारणान्तर-**

---

रत्नप्रभा ।

त्वान्न सत्ताव्यभिचार इत्यर्थः । मास्तु जीवतो ज्ञातुरन्यथाभावः । मृतस्य तु स्यादित्यत आह—**तथेति** ॥ उच्छेदो विनाशोऽन्यथास्वभावत्वं मिथ्यात्वं वा सम्भावयितुमपि न शक्यम् । अहमस्मीत्यनुभवसिद्धसत्स्वभावस्य बाधकाभावादित्यर्थः ॥ एवमात्मनः शून्यत्वनिरासेन शून्यताप्रसङ्गस्यानिष्टत्वमुक्तम् । ततश्चात्मनः कार्यत्वानुमानमाभास इत्याह—**एवमिति** ॥ आकार्यात्मनः सिद्धौ तस्याविद्यासहितस्योपादानस्यादृष्टादिनिमित्तस्य च सत्त्वादाकाशानुत्पत्तिहेतोः सामग्रीशून्यत्वस्य स्वरूपासिद्धेरुक्तसत्प्रतिपक्षबाधाच्चाकाशस्य कार्यत्वं निरवद्यमित्याह—**कार्यत्वं चेति** ॥ आत्माविद्ययोर्विजातीयत्वान्नाकाशारम्भकत्वमित्युक्तमनूद्य निरस्यति—**यत्त्वित्यादिना** ॥ किं कारणमात्रस्य साजात्यनियमः—उत समवायिनः । तत्र आद्यं निरस्य द्वितीयं शङ्कते—**स्यादेतदिति** ॥ किं समवायितावच्छेदकधर्मेण साजात्यम्—उत सत्ता-

भामती ।

प्रकृतिप्रत्ययाभ्यां ज्ञानज्ञेययोरन्यथाभावो दर्शितः । ननु जीवतः प्रमातुर्मा भूदन्यथाभावो मृतस्य तु भविष्यतीत्यत आह—**तथा भस्मीभवत्यपीति** । यत्खलु सत्स्वभावमनुभवसिद्धं तस्यानिर्वचनीयत्वमन्यतो बाधकादवसातव्यम् । बाधकं च घटादीनां स्वभावाद्विचलनं प्रमाणोपनीतम् । यस्य तु न तदस्त्यात्मनो न तस्य तत्कल्पनं युक्तम्, अबाधितानुभवसिद्धस्य सत्स्वभावस्यानिर्वचनीयत्वकल्पनाप्रमाणाभावात् । तदिदमुक्तम्—**न संभावयितुं शक्यमिति** । तदनेन प्रबन्धेन प्रत्यनुमानेनाकाशानुत्पत्त्यनुमानं दूषयित्वानैकान्तिकत्वेनापि दूषयति—**यत्तूक्तं समानजातीयमिति** ।

आनन्दगिरीय-न्यायनिर्णयः ।

सत्ताव्यभिचारो येनान्यतः सत्तामाकांक्षेदित्यर्थः । जीवतो मातुरन्यथाभावाभावेऽपि मृतस्य स्यादित्याशंक्याऽऽह—**तथेत्यादिना** । यत्स्वभावत्वमनुभवसिद्धं तस्यान्यथात्वं बाधकादवसातव्यं बाधकं च घटादीनां स्वभावाद्विचलनं मानोपनीतं यस्य तु न तदस्ति तस्याऽऽत्मनोऽनुभवसिद्धस्य नान्यथात्वमिति भावः। आत्मनः स्वतःसिद्धत्वेनानागन्तुकत्वे फलितमाह—**एवमिति** । विभक्तत्वहेतोरव्यभिचारेऽपि बाधकतर्काभावादप्रयोजकतेत्याशंक्याऽऽह—**कार्यत्वं चेति** । अकार्यस्याऽऽत्मनः स्वरूपोपाधावबाधितभेदशून्यत्वान्न मुख्यं विभक्तत्वम् । आकाशस्य तथाविधभेदवत्त्वान्मुख्यविभागित्वेन कार्यत्वमन्यथा मुख्यविभागानुपपत्तिरिति कुतोऽप्रयोजकतेत्यर्थः । आकाशानुत्पत्त्यनुमानानां प्रत्यनुमानविरोधमुक्त्वा समवायिकारणशून्यत्वं विशेषतो दूषयितुमनुभाषते—**यत्त्विति** । तत्र समानजातीयस्याऽऽरम्भकत्वमयोगव्यवच्छेदेनान्ययोगव्यवच्छेदेन वेति विकल्प्याऽऽद्यमंगीकृत्य द्वितीयं दूषयति—**तत्प्रतीति** । नियमो हि कारणमात्रनिष्ठो वा निमित्तकारणनिष्ठो वा समवायिकारणनिष्ठो वेति विकल्प्याऽऽद्यं प्रत्याह—**न हीति** । न द्वितीय इत्याह—**न चेति** । तृतीयमादत्ते—**स्यादेतदिति** । समवायिकारणस्यापरजात्या वा परजात्या वा समानजाती-

विषय इति ॥ तदप्यनैकान्तिकम् ॥ सूत्रगोवालैर्ह्यनेकजातीयैरेका रज्जुः सृज्यमाना दृश्यते ॥ तथा सूत्रैरूर्णादिभिश्च विचित्रान्कम्बलान्वितन्वते । सत्त्वद्रव्यत्वाद्यपेक्षया वा समानजातीयत्वे कल्प्यमाने नियमानर्थक्यम् । सर्वस्य सर्वेण समानजातीयकत्वात् । नाप्यनेकमेवारभते नैकमिति नियमोऽस्ति । अणुमनसोराद्यकर्मारम्भाभ्युपगमात् । एकैको हि परमाणुः मनश्चाऽऽद्यं स्वकर्मारभते, न द्रव्यान्तरैः संहत्येत्यभ्युपगम्यते । द्रव्यारम्भ एवानेकारम्भकत्वनियम इति ॥ चेत् ॥ न ॥ परिणामाभ्युपगमात् । भवेदेष नियमो यदि संयोगसचिवं द्रव्यं द्रव्यान्तरस्यारम्भकमभ्युपगम्येत । तदेव तु द्रव्यं विशेषवदवस्थान्तरमापद्यमानं कार्यं नामाभ्युपगम्यते ॥ तच्च क्वचिदनेकं परिणमते मृद्बीजाद्यंकुरादिभावेन, क्वचिदेकं परिणमते क्षीरादिदध्यादिभावेन । नेश्वरशासनमस्त्यनेकमेव कारणं कार्यं जनयतीति ॥ अतः श्रुतिप्रामाण्यादेकस्माद्ब्रह्मण आकाशादिमहाभूतोत्पत्तिक्रमेण जगज्जातमिति

---

रत्नप्रभा ।

दिना ? नाद्यः—इत्याह—तदपीति ॥ न च रज्ज्वादि न द्रव्यान्तरमिति वाच्यम् । पटादेरपि तथात्वापाताद्—द्वितीयः—असमदिष्टः । आत्माऽविद्ययोर्वस्तुत्वेन साजात्यादित्याह—सत्त्वेति ॥ उपादानस्य साजात्यनियमं निरस्य संयुक्तानेकत्वनियममद्वितीयस्याऽसङ्गस्याप्यात्मन उपादानत्वसिद्धये निरस्यति—नापीत्यादिना ॥ किमारम्भकमात्रस्यायं नियमः—उत—द्रव्यारम्भकस्य ? नाद्य इत्याह—अण्विति ॥ द्व्यणुकस्य ज्ञानस्य चासमवायिकारणसंयोगजनकमाद्यं कर्म । यद्यप्यदृष्टवदात्मसंयुक्ते अणुमनसी आद्यकर्मारम्भके, तथापि कर्मसमवायिन एकत्वादनेकत्वनियमभङ्ग इत्याह—एकैको हीति ॥ द्रव्यान्तरैः—समवायिभिरित्यर्थः । द्वितीयम्—उत्याप्यारम्भवादानङ्गीकारेण दूषयति—द्रव्येत्यादिना ॥ न त्वभ्युपग-

भामती ।

नाप्यनेकमेवोपादानमुपादेयमारभते । यत्र हि क्षीरं दधिभावेन परिणमते तत्र

आनन्दगिरीय—न्यायनिर्णयः ।

यत्वमिति विकल्प्याऽऽद्यं निरस्यति—तदपीति। अनैकान्तिकान्तरमाह—तथेति। न च रज्ज्वादेः सूत्रवालादिसमुदायमात्रत्वं पटादेरपि तथात्वापत्तावक्यविसमुदायमात्रापाकरणप्रसंगादिति भावः । द्वितीये समानजातीयविशेषवैयर्थ्यमद्रव्यस्यासतश्चानारम्भकत्वेन सर्वस्यापि समानजातीयत्वसंभवादित्याह—सत्त्वेति । समानजातीयमेवाऽऽरम्भकमिति नियमं निराकृत्यानेकेषामारम्भकत्वनियमं निराकरोति—नापीति । तन्नियमो हि कार्यमात्रारम्भे वा द्रव्यारम्भे वा ? नाऽऽद्य इत्याह—अणुमनसोरिति । ययोः संयोगस्तौ संहत्य कर्माऽऽरभेते चेत्तस्योभयसमवेतत्वादेकद्रव्यत्वव्याहतिरित्याशंक्य सति कर्मणि संयोगः सति च तस्मिन्कर्मेति परस्पराश्रयत्वान्नैवमित्याह—एकैको हीति । द्व्यणुकारम्भकसंयोगासमवायिकारणमात्ममनःसंयोगजनकं च कर्माऽऽद्यं कर्म द्वितीयमवलम्बते—द्रव्येति । आरम्भवादानभ्युपगमेन दूषयति—न परिणामेति । तदेव प्रपञ्चयति—भवेदिति । न त्वेवमभ्युपगम्यते तस्मान्नैष नियम इति शेषः । तदनभ्युपगमे कथं कार्योत्पत्तिरित्याशंक्याऽऽह—तदेवेति । परिणामपक्षेऽपि तुल्यमनेकेषां कारणत्वमित्याशंक्याऽऽह—तच्चेति । यत्र क्षीरं दधिभावेन परिणमते तत्र नावयवानामनेकेषामुपादानत्वमविभक्तस्यैव क्षीरस्य दध्यात्मना परिणामोपलम्भाद्यथा परमाणुवादिनां क्षीरवद् द्व्यणुकं त्र्यणुकं वा द्रव्यान्तरासंयोगेऽपि दधि जनयति तथा परिणामपक्षेऽपीति विवक्षन्नाह—क्वचिदिति। पक्षद्वयेऽपि कारणत्वमनेकेषामित्यस्मिन्नियमे न कारणमस्तीत्याह—नेश्वरेति । एकस्मादनेकस्माच्च कार्योत्पत्तिदर्शनान्निर्णयासिद्धिरित्याशंक्याऽऽह—अत इति ।

निश्चीयते। तथा चोक्तं "उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" [व्या० सू० २।१।२४] इति यच्चोक्तमाकाशस्योत्पत्तौ न पूर्वोत्तरकालयोर्विशेषः सम्भावयितुं शक्यत इति॥ तदयुक्तम्॥ येनैव हि विशेषेण पृथिव्यादिभ्यो व्यतिरिच्यमानं नभःस्वरूपवदिदानीमध्यवसीयते स एव विशेषः प्रागुत्पत्तेर्नासीदिति गम्यते। यथा च-ब्रह्म न स्थूलादिभिः पृथिव्यादिस्वभावैः स्वभाववद् "अस्थूलमनणु" [बृ० ३।८।८] इत्यादिश्रुतिभ्यः॥ एवमाकाशस्वभावेनापि न स्वभाववदनाकाशमिति श्रुतेरवगम्यते॥ तस्मात्प्रागुत्पत्तेरनाकाशमिति स्थितम्॥ यदप्युक्तं पृथिव्यादिवैधर्म्यादाकाशस्याऽजत्वमिति॥ तदप्यसत्॥ श्रुतिविरोधे सत्युत्पत्त्यसम्भवानुमानस्याऽऽभासत्वोपपत्तेः। उत्पत्त्यनुमानस्य च दर्शितत्वात्। अनित्यम्, आकाशम्, अनित्यगुणाश्रयत्वाद्, घटादिवदित्यादिप्रयोगसम्भवाच्च। आत्मन्यनैकान्तिकमिति

---

रत्नप्रभा।

म्यते, तस्मान्नैष नियम इति शेषः। यत्तु क्षीरपरमाणुषु रसान्तरोत्पत्तौ तैरेव दध्यारम्भ इति। तन्न, क्षीरनाशे मानाभावात्। रसवद्दध्नोऽप्येकद्रव्यारम्भत्वसम्भवाच्च। द्रव्यगुणसङ्केतस्य पौरुषेयस्य श्रुत्यर्थनिर्णयाहेतुत्वादिति भावः। लोके कर्तुः सहायदर्शनाद् असहायाद्ब्रह्मणः कथं सर्ग इति तत्राह-तथा चोक्तमिति॥ प्रागभावशून्यत्वहेतुरप्यसिद्ध इत्याह-यच्चोक्तमित्यादिना॥ शब्दाश्रयत्वं विशेषः शब्दादिमानाकाशः प्रलये नास्ति। "नासीद्रजो नो व्योम" इति श्रुतेः। नन्वाकाशाभावे काठिन्यं स्यादिति चेत्। सुशिक्षितोऽयं नैयायिकतनयः। न ह्याकाशाभावस्तद्धर्मो वा काठिन्यम्। किन्तु मूर्तद्रव्यविशेषः, तत्संयोगविशेषो वा काठिन्यम्। तच्च प्रलये नास्तीति भावः। "आकाशशरीरं ब्रह्म" [तै० उ० १।६।२] इति श्रुतेरग्न्यौष्ण्यवद्ब्रह्मस्वभावस्याऽऽकाशस्य सति ब्रह्मणि कथमभावः, तत्राह-यथा चेति॥ विभुत्वादाकाशसमं ब्रह्मेति श्रुत्यर्थः। विभुत्वास्पर्शद्रव्यत्वनिरवयवद्रव्यत्वलिङ्गानां विमक्तत्वादिलिङ्गसहितागमबाधमाह-यदपीत्यादिना॥ धर्मिविकाराभावे गुणनाशो न स्यादिति तर्कार्थम-

भामती।

नावयवानामनेकेषामुपादानत्वमभ्युपगन्तव्यं किंतूपात्तमेव क्षीरमेकमुपादेयदधिभावेन परिणमते।

आनन्दगिरीय-न्यायनिर्णयः।

एकस्यापि परिणामिनः सहकार्यपेक्षादर्शनात्तद्विरहिणो ब्रह्मणो जगत्कारणत्वमयुक्तमित्याशंक्याऽऽह-तथा चेति। कारणशून्यत्वादाकाशमात्मवदनुत्पत्तिमदित्येतन्निरस्तम्। इदानीमभूत्वाभावित्वाभावान्न तदुत्पत्तिमदित्युक्तमनुवदति-यच्चोक्तमिति। हेत्वसिद्ध्या परिहरति-तदयुक्तमिति। शब्दाधारत्वं विशेषः। आकाशस्य मूर्ताभावान्मूर्तविरोधिनश्चार्थान्तरत्वात्तदभावेऽपि न प्रागवस्थायां काठिन्यप्रसक्तिरिति भावः। 'आकाशशरीरं ब्रह्म' इति श्रुतेराकाशाभावे कथं ब्रह्मणोऽनवस्थानमित्याशंक्याऽऽकाशवच्छरीरमस्येति व्युत्पत्त्या श्रुत्युपपत्तिं मत्वाऽऽह-यथा चेति। अवकाशान्तरमन्तरेणाऽऽकाशस्थितिवद्ब्रह्मणोऽपि तत्कारणस्य तदतिरेकेण सुषुप्त्यवस्थायामिवावस्थितिरविरुद्धेति हेत्वसिद्धिमुपसंहरति-तस्मादिति। उक्तानुमानान्तराण्यनूद्य कालात्ययापदिष्टतामाह-यदपीति। न्यायशून्या श्रुतिरनुमानमपबाधितुमसमर्थेत्याशंक्याऽऽह-उत्पत्तीति। इतश्चाऽऽकाशस्य न नित्यत्वमित्याह-अनित्यमिति। वस्तुतस्तु गुणाश्रयत्वमेव हेतुः। आकाशो जायते महाभूतत्वादस्मदादिबाह्येन्द्रियग्राह्यगुणाधारत्वाद्वा पृथिव्यादिवदित्यनुमानमादिशब्दार्थः। आद्यस्य हेतोरन्यतरानैकान्तिकत्वं चोदयति-आत्मनीति। निर्गुणत्वश्रुतिमाश्रित्य परिहरति-

चेत् ॥ न ॥ तस्यौपनिषदं प्रत्यनित्यगुणाश्रयत्वासिद्धेः । विभुत्वादीनां चाकाशस्योत्पत्तिवादिनं प्रत्यसिद्धत्वात् ॥ यच्चोक्तमेतच्छब्दाच्चेति, तत्रामृतत्वश्रुतिस्तावद् "वियत्यमृता दिवौकसः" इतिवद्द्रष्टव्या । उत्पत्तिप्रलययोरुपपादितत्वात् । "आकाशवत्सर्वगतश्च नित्यः" इत्यपि प्रसिद्धमहत्त्वेनाकाशेनोपमानं क्रियते निरतिशयमहत्त्वाय, नाकाशसमत्वाय । यथेषुरिव सविता धावतीतीति क्षिप्रगतित्वायोच्यते नेषुतुल्यगतित्वाय, तद्वत् ॥ एतेनाऽनन्तत्वोपमानश्रुतिर्व्याख्याता । "ज्यायानाकाशाद्" इत्यादिश्रुतिभ्यश्च ब्रह्मणः आकाशस्योनपरिमाणत्वसिद्धिः । "न तस्य प्रतिमाऽस्ति" [ श्वेता० ४ । १९ ] इति च ब्रह्मणोऽनुपमानत्वं दर्शयति । "अतोऽन्यदार्त्तम्" [ बृ० ३ । ४ । २ ] इति

---

रत्नप्रभा ।

नित्यपदम् । गुणाश्रयत्वमेव हेतुः । तच्च स्वसमानसत्ताकगुणवत्त्वम् । अतो निर्गुणात्मनि न व्यभिचारः । भूतत्वम्—आदिशब्दार्थः ॥ स्वरूपासिद्धिमप्याह—विभुत्वादीनां चेति ॥ सर्वमूर्तद्रव्यसंयोगः परिमाणविशेषो वा विभुत्वं निर्गुणात्मनि दृष्टान्ते नास्ति । संयोगस्य सावयवत्वनियतस्याजत्वसाध्यविरुद्धता च । स्वरूपोपचयरूपं तु विभुत्वमात्माकाशयोर्न सम्भवति । "ज्यायानाकाशाद्" इति श्रुतेः । क्वचिदाकाशसाम्यं तु ब्रह्मणो यत्किञ्चित्सर्वसम्बन्धेन व्यपदिश्यते । असक्तत्वेन वा पञ्चीकरणादस्पर्शत्वमसिद्धम् । कार्यद्रव्यत्वान्निरवयवत्वमप्यसिद्धम् । द्रव्यत्वजातिश्चात्मन्यसिद्धेत्यर्थः । नित्य इत्यंशेन साम्यं न विवक्षितम् । ननु स यथाऽनन्तोऽयमाकाशः, एवमनन्त आत्मेति श्रुतिर्नित्यत्वेनैव साम्यं ब्रूते, नेत्याह—एतेनेति ॥ आकाशस्य कार्यत्वेनानित्यत्वादित्यर्थः । श्रुतिस्त्वापेक्षिकाऽऽनन्त्यद्वारा मुख्याऽऽनन्त्यं बोधयतीति भावः । न्यूनत्वाच्चाकाशस्य न मुख्योपमानत्वमित्याह—ज्यायानिति ॥ मुख्योपमानाऽसत्त्वे श्रुतिः "न तस्य" इति । तस्मादाकाशस्योपमानत्वमात्रेण नित्यत्वं नास्तीति भावः । अनित्यत्वेनासत्त्वे श्रुतिमाह—अतोऽन्यदिति ॥ यत्तु एकस्यैव सम्भूतश-

भामती ।

यथा निरवयवपरमाणुवादिनां क्षीरपरमाणुर्दधिपरमाणुभावेनेति । शेषमतिरोहितार्थम् ॥ ७ ॥ ( १ )॥

आनन्दगिरीय–न्यायनिर्णयः ।

**न तस्येति।** न चाऽऽकाशमनित्यविशेषगुणाधिकरणविभुभिन्नं मेयत्वादिति तत्सिद्धिः। आकाशं श्रोत्रग्राह्यविशेषगुणाधिकरणविभ्वन्यन्मेयत्वादित्यपि प्रसङ्गादात्मनि सर्वविशेषनिराकरणविविधश्रुतिविरोधाच्चेति भावः। इतश्च त्वदुक्ता हेतवः साधका न भवन्तीत्याह—विभुत्वादीनां चेति । आकाशस्य नित्यत्वे नानुमानमस्तीत्युपपाद्य यच्चैतदुक्तं शब्दान्नित्यत्वमिति तदनूद्य दूषयति—यच्चैतदिति । किमित्यमृतत्वश्रुतिरापेक्षिकी व्याख्यायते मुख्यार्थैव किं न स्यादित्याशंक्याऽऽह—उत्पत्तीति । आकाशस्यानित्यत्वं चेदात्मनि तत्तुल्यत्वश्रुतिर्व्याहन्येतेत्याशंक्याऽऽह—आकाशवदिति । समत्वाभावे न क्वचिदुपमानत्वमुपलब्धमित्याशंक्याऽऽह—यथेति । 'स यथाऽनन्तोऽयमाकाश एवमनन्त आत्मा' इति श्रुतिस्तर्हि कथमित्याशंक्याऽऽह—एतेनेति । उत्पत्तिविनाशयोरुपपादितत्वेन न्यूनेनोपमानायोगाच्चेत्यर्थः । कथमाकाशस्य ब्रह्मणः सकाशान्न्यूनपरिमाणत्वमित्याशंक्य पूर्वोक्तयुक्त्या श्रुतिं समुच्चिनोति—ज्यायानिति । इतश्च ब्रह्मणि नोपमानोपपत्तिरित्याह—न तस्येति । इतोऽपि नित्यत्वमाकाशस्य नाऽऽशंकितव्यमित्याह—अतोऽन्यदिति ।

च ब्रह्मणोऽन्येषामाकाशादीनामार्तत्वं दर्शयति । तपसि ब्रह्मशब्दवदाकाशस्य जन्मश्रुतेर्गौणत्वमित्येतदाकाशसम्भवश्रुत्यनुमानाभ्यां परिहृतम् ॥ तस्माद्ब्रह्मकार्यं वियदिति सिद्धम् ॥ ७ ॥ इति वियदधिकरणम् ॥ १ ॥

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥ ( २ ) ॥

अतिदेशोऽयम् । एतेन वियद्व्याख्यानेन मातरिश्वापि वियदाश्रयो वायुर्व्याख्यातः । तत्राप्येते यथायोगं पक्षा रचयितव्याः । न वायुरुत्पद्यते । छन्दोगानामुत्पत्तिप्रकरणेऽनाम्नानादित्येकः पक्षः । अस्ति तु तैत्तिरीयाणामुत्पत्तिप्रकरणे आम्नानम्-"आकाशाद्वायुः" [ उ० २ । २ ] इति पक्षान्तरम् । ततश्च श्रुत्योर्विप्रतिषेधे सति गौणी

रत्नप्रभा ।

ब्दस्य गौणत्वं मुख्यत्वं चेति । तन्न । आकाशेऽपि तस्य मुख्यत्वसम्भवादित्याह-**तपसीति** ॥ बलवत्तित्तिरिश्रुत्या छान्दोग्यश्रुतेर्नयनादेकवाक्यतया स्रष्टरि ब्रह्मात्मनि समन्वय इत्युपसंहरति-**तस्मादिति** ॥ ७ ॥ ( १ ) ॥ **एतेन मातरिश्वेति** ॥ अतिदेशत्वान्न पृथक् सङ्गत्याद्यपेक्षा । "तत्तेजोऽसृजत" [ छां० ६ । २ । ३ ] इति श्रुतेः "आकाशाद्वायुः" [ तै० उ० २ । १ । २ ] इति श्रुत्या विरोधोऽस्ति न वेति एकवाक्यभावाभावाभ्यां संशये गौणपक्षपूर्वपक्षसिद्धान्तपक्षानतिदिशति-**तत्रापीत्यादिना** ॥ पूर्वत्र ह्याकाशानन्तर्यं तेजसः स्थापितम् । तत्र वायुतेजसोस्तुल्यवदानन्तर्ये "वायोरग्निः" [ तै० उ० २ । १ । २ ] इति क्रमश्रुतिबाधात् पौर्वापर्ये तेजःप्राथम्यभङ्गान्नैकवाक्यतेति **पूर्वपक्षे** गौणविद्याभिप्रायमाह-**ततश्चेति** ॥ अस्तमयप्रतिषेधो मुख्योत्पत्त्यसम्भवे लिङ्गम् "वायुश्चान्तरिक्षं चैतद-

भामती ।

**एतेन मातरिश्वा व्याख्यातः** । यद्यभ्यासे भूयस्त्वमर्थस्य भवति नाल्पत्वं दूरत एवोपचरितत्वं, हन्त भोः पवनस्य नित्यत्वप्रसङ्गः । 'वायुश्चान्तरिक्षमेतदमृतम्' इति द्वयोरमृतत्वमुक्त्वा पुनः पवनस्य विशेषे-

आनन्दगिरीय-न्यायनिर्णयः ।

यदुक्तं स्याच्चैकस्य ब्रह्मशब्दवदिति तद् दूषयति-**तपसीति** । युक्तं तपसि ब्रह्मशब्दस्य गौणत्वं तस्य ब्रह्मज्ञानसाधनत्वादाकाशे तु संभूतशब्दस्य ज्वलनादिवद्बाधकाभावादनुग्राहकसद्भावाच्च मुख्यत्वमेवेत्यर्थः । श्रुतियुक्तिसिद्धमुपसंहरति-**तस्मादिति** । आकाशसृष्टिश्रुत्यनुसारेण तेजःसृष्टिश्रुतिनयनात्तयोरेकवाक्यतया प्रामाण्योपपत्तेराकाशकारणे ब्रह्मणि समन्वयः सिध्यतीत्यधिकरणार्थं निगमयति-**इति सिद्धमिति**॥ ॥ ७ ॥ ( १ ) ॥ वियदुत्पत्तिमुक्त्वा पवनोत्पत्तिमतिदेशेन साधयति-**एतेनेति** । अत्र पूर्ववत्पादादिसंगतयो न पृथग्वक्तव्या भवन्तीत्यभिप्रेत्य तात्पर्यमाह-**अतिदेशोऽयमिति** । फलभेदमपि पूर्ववदुपेत्य सूत्राक्षरार्थं कथयति-**एतेनेति** । वियदुत्पत्तिकथनानन्तरं तेजआद्यतिक्रम्य वायोरुत्पत्तिमत्त्वेन व्याख्याने कारणमाह-**वियदाश्रय इति** । 'तत्तेजोऽसृजत'इति श्रुतिः 'आकाशाद्वायुः'इति श्रुत्या विरुध्यते न वेत्येकवाक्यत्वासंभवसंभवाभ्यां संशये सत्यतिदेशं विशदीकर्तुं तुल्यन्यायत्वमाह-**तत्रापीति** । बहूक्त्या वियदधिकरणेऽपि पक्षत्रयमस्तीति सूचितं तदेव पक्षत्रयं संक्षिपन्प्रथमं गौणवादिपक्षमाह-**न वायुरिति** । पूर्वपक्षं संक्षिपति-**अस्ति त्विति** । छान्दोग्ये तेजसः 'तत्तेजोऽसृजत' इति प्रथमजत्वश्रवणात्तैत्तिरीयके च 'आकाशाद्वायुः' इति वायोस्तेजःसकाशात्पूर्वजत्वश्रुतेरुभयोस्तदनुपपत्त्या मिथोविरोधे श्रुत्योरप्रामाण्यादाकाशद्वारा वायुकारणे ब्रह्मणि समन्वयासिद्धिरित्यर्थः । गौणवादिनोऽभिप्रायं संगृह्णाति-**ततश्चेति** । आका-

**वायोरुत्पत्तिश्रुतिः । असम्भवादित्यपरोऽभिप्रायः । असम्भवश्च दर्शितः । "सैषाऽनस्तमिता देवता यद्वायुः" [ बृ० १ । ५ । २२ ] इत्यस्तमयप्रतिषेधादमृतत्वादिश्रवणाच्च । प्रतिज्ञानुपरोधाद्यावद्विकारं च विभागाभ्युपगमादुत्पद्यते वायुरिति सिद्धान्तः । अस्तमयप्रतिषेधोऽपरविद्याविषय आपेक्षिकः । अग्न्यादीनामिव वायोरस्तमयाभावात् । कृतप्रतिविधानश्चाऽमृतत्वादिश्रवणम् ॥ ननु वायोराकाशस्य च तुल्ययोरुत्पत्तिप्रकरणे श्रवणाऽश्रवणयोरेकमेवाधिकरणमुभयविषयमस्तु । किमतिदेशेनाऽसति विशेषे इति ॥ उच्यते । सत्यमेवमेतत् । तथापि**

रत्नप्रभा ।

मृतम्" [ बृ० २ । ३ । ३ ] इति तस्यैव लिङ्गस्याभ्यासः "वायुरेव व्यष्टिः" [ बृ० ३ । ३ । २] "समष्टिश्च" [ बृ० ३ । ३ । २ ] इति सर्वात्मत्वलिङ्गान्तर**मादिपदार्थः** । **तथा** संवर्गविद्यायां "वायुर्ह्येवैतान् सर्वानग्न्यादीन् संहरति" इति शब्दमात्रेणैश्वर्यश्रवणं लिङ्गान्तरं ग्राह्यम् । एतैर्लिङ्गैर्वायुरनाद्यनन्त इति प्रतीतेरुत्पत्तिर्गौणीत्यविरोधः श्रुत्योरिति प्राप्ते प्रतिपिपादयिषितप्रतिज्ञाश्रुतेर्बलीयस्त्वात्, तत्साधकानां तत्रतत्र वायूत्पत्तिवाक्यानां भूयस्त्वादुक्तविभक्तत्वादिलिङ्गानुग्रहाच, मुख्यैव वायोरुत्पत्तिः । तथा चाकाशं वायुं च सृष्ट्वा तेजोऽसृजतेति श्रुत्योरेकवाक्यतया ब्रह्मणि **समन्वयः** । लिङ्गानि तूपास्यवायुस्तावकत्वादापेक्षिकतया व्याख्येयानीति मुख्यसिद्धान्तमाह–**प्रतिज्ञेत्यादिना** ॥ कृतं प्रतिविधानम् । आपेक्षिकत्वेन समाधानं यस्य तत्तथा । अधिकरणारम्भमाक्षिप्योक्तामधिकाशङ्कामाह–**नन्वित्यादिना** ॥ वायुर्ह्येवैतान् संवृङ्क्ते इत्यादिशब्दमात्रं शङ्कामूलं, नार्थ इति द्योतनार्थं मात्रपदम् । तामेव शङ्कामाह–

भामती ।

णाह–**सैषाऽनस्तमिता देवता यद्वायुरिति** । तस्मादभ्यासान्नापेक्षिकं वायोरमृतत्वमपि त्वौत्पत्तिकमेवेति प्राप्तम् । तदिदमुक्तं भाष्यकृता–**अस्तमयप्रतिषेधादमृतत्वादिश्रवणाच्चेति** । चेन समुच्चयार्थेनाभ्यासो दर्शितः । एवं प्राप्त उच्यते–एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्, प्रतिज्ञावाक्यार्थस्य प्राधान्यात्, तदुपपादनार्थत्वाच्च वाक्यान्तराणां, तेषामपि चाद्वैतप्रतिपादकानां मातरिश्वोत्पत्तिक्रमप्रतिपादकानां बहुलमुपलब्धेः, मुख्यभूयस्त्वाभ्याममूषां श्रुतीनां बलीयस्त्वात्, एतदनुरोधेनामृतत्वास्तमयप्रतिषेधावापेक्षिक-

आनन्दगिरीय–न्यायनिर्णयः ।

शब्दद्वायोरकारणत्वाभावात्कथमसंभवाशंकेत्याशंक्याऽऽह–**असंभवश्चेति** । दर्शितश्रुत्या वायुनित्यत्वमापेक्षिकमित्याशंक्याभ्यस्यमानत्वान्नैवमित्याह–**अमृतत्वादीति** । 'वायुश्चान्तरिक्षं चैतदमृतम्' इति श्रूयते । आदिशब्देन 'वायुरेव व्यष्टिर्वायुः समष्टिः' इत्यभ्यासो गृह्यते । प्रतिज्ञाश्रुतेरनुमानाच्च पवनोत्पत्तेरावश्यकत्वे श्रुत्योरेकवाक्यतया विरोधाभावादाकाशद्वारा वायुकारणे ब्रह्मणि समन्वयः सिध्यतीति सिद्धान्तमाह–**प्रतिज्ञेति** । यत्तु वायोरस्तमयप्रतिषेधादुत्पत्तेरसंभव इति तत्राऽऽह–**अस्तमयेति** । अमृतत्वादिश्रवणं तर्हि कथं तत्राऽऽह–**कृतेति** । प्रतिज्ञावाक्यार्थप्राधान्यात्तदुपपादकवायूत्पत्तिप्रतिपादकवाक्यानां च बहुत्वान्मुख्यभूयस्त्वाभ्यां बलीयस्त्वादमृतत्वास्तमयनिषेधावापेक्षिकत्वेन नेयावभ्यासस्तूपास्यादरार्थत्वान्न वायोरमृतत्वमात्यन्तिकं गमयति 'अप पुनर्मृत्युं जयति' इत्यपमृत्युजयस्यैव वाक्यशेषे श्रवणादिति भावः । अधिकाशङ्काभावेनातिदेशमाक्षिपति–**नन्विति** । अधिकां शङ्कां दर्शयन्नुत्तरमाह–**उच्यत इति** । यदुक्तमसति विशेषेणातिदेशोऽनर्थकानिति तदङ्गीकरोति–**सत्यमिति** । तर्हि पूर्वेणैवाधिकरणेन गतत्वादिदमधिकरणमनारभ्यमिति तत्राऽऽह–**तथाऽपीति** । शब्दानुरोधिन्यपि शंका न वस्त्वनुरोधिनीति मात्र-

मन्दधियां शब्दमात्रकृताऽऽशंकानिवृत्त्यर्थोऽयमतिदेशः क्रियते। संवर्गविद्यादिषु ह्युपास्यतया वायोर्महाभागत्वश्रवणाद्, अस्तमयप्रतिषेधादिभ्यश्च,-भवति नित्यत्वाऽऽशंका कस्यचिदिति ॥ ८ ॥ इति मातरिश्वव्याख्यानाधिकरणम् ॥ २ ॥

## असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥ ( ३ ) ॥

वियत्पवनयोरसम्भाव्यमानजन्मनोरप्युत्पत्तिमुपश्रुत्य ब्रह्मणोऽपि भवेत्कुतश्चिदुत्पत्तिरिति स्यात्कस्यचिन्मतिः ॥ तथा विकारेभ्य एवाऽऽकाशा-

रत्नप्रभा ।

संवर्गेति ॥ व्यष्टिसमष्ट्युपास्तिः "वायुं दिशां वत्सं वेद" [ छां० ३ । १५।२] इत्युपास्तिश्च आदिशब्दार्थः ॥ ८ ॥ ( २ ) ॥ असम्भवस्त्विति ॥ "अनाद्यनन्तं महतः परं ध्रुवम्" [ कठ० ३ । १५ ] "न चास्य कश्चिज्जनिता" [ श्वेता० ६ । ९ ] इत्यादिब्रह्मानादित्वश्रुतीनां "त्वं जातो भवसि विश्वतोमुखः" इत्युत्पत्तिश्रुत्या विरोधोऽस्ति न वेत्येकवाक्यभावाभावाभ्यां सन्देहे अस्ति विरोध इति पूर्वपक्षे यथा वाय्वादेरमृतत्वादिकमुत्पत्तिश्रुतिबलादापेक्षिकं, तथा ब्रह्मानादित्वमापेक्षिकमिति दृष्टान्तसङ्गत्या एकदेशिपक्षं प्रापयति-वियदिति ॥ ब्रह्म, कुतश्चिज्जायते, कारणत्वादाकाशवदिति अनुमानानुग्राह्यजन्मश्रुतिर्बलीयसीत्याह-तथेति ॥ न चानादिकारणाभावेनानवस्था । बीजांकुरवदनादित्वोपपत्तेः । तथा च दीपाद्दीपवद्ब्रह्मान्तराद्ब्रह्मान्तरोत्पत्तिः । उत्पत्तिश्रुत्या चानादित्वश्रुतिर्नेयेत्यनाद्यनन्तब्रह्मसमन्वयासिद्धि-

भामती ।

त्वेन नेतव्याविति । भूयसीः श्रुतीरपेक्ष्य द्वे अपि श्रुती शब्दमात्रमुक्ते॥८॥ (२)॥ असंभवस्तु सतोऽनुपपत्तेः । ननु 'न चास्य कश्चिज्जनिता' इत्यात्मनः सतोऽकारणत्वश्रुतेः कथमुत्पत्त्याशङ्का । न च वचनमदृष्ट्वा पूर्वः पक्ष इति युक्तम्, अधीतवेदस्य ब्रह्मजिज्ञासाधिकाराददर्शनानुपपत्तेरत आह-वियत्पवनयोरिति । यथा हि वियत्पवनयोरमृतत्वानस्तमयत्वश्रुती श्रुत्यन्तरविरोधादापेक्षिकत्वेन नीते । एवमकारणत्वश्रुतिरात्मनोऽग्निविस्फुलिङ्गदृष्टान्तश्रुतिविरोधात्प्रमाणान्तरविरोधाच्चापेक्षिकत्वेन व्याख्यातव्या । न चात्मनः कारणवत्त्वेऽनवस्था लोहगन्धितामावहत्यनादित्वात् कार्यकारणपरम्पराया इति भावः । तथा विकारेभ्य

आनन्दगिरीय-न्यायनिर्णयः ।

शब्दार्थः । शब्दमात्रकृतामाशंकामेव दर्शयति-संवर्गेति । 'स यो वायुं दिशां वत्सं वेद' इत्यादिविद्यासंग्रहार्थमादिपदम् । द्वितीयमादिपदममृतत्वश्रवणमभ्यासं च संगृह्णाति । अमृतत्वादिश्रवणस्य कृतप्रतिविधित्वात्कथं तद्वशादाशंकेति तत्राऽऽह-कस्यचिदिति । प्रतिज्ञानुरोधादिना वायोर्नित्यत्वानुपपत्तेरुक्तत्वात्तत्कारणे ब्रह्मणि समन्वयः सिध्यतीत्युपसंहर्तुमिति शब्दः ॥ ८ ॥ ( २ ) ॥ ब्रह्मणो वियत्पवनकारणत्वं पूर्वाधिकरणयोरुक्तम् । इदानीमग्निरेव विस्फुलिङ्गोऽग्नेर्यथोत्पद्यते तथा ब्रह्मान्तराद्ब्रह्मोत्पद्यतामित्याशंक्याऽऽह-असंभवस्त्विति । 'न चास्य कश्चिज्जनिता' इत्यादेर्ब्रह्मणोऽजत्वं प्रतिपादयतः समन्वयस्य 'त्वं जातो भवसि' इत्यादिश्रुत्या विरोधोऽस्त्युत नेत्येकवाक्यत्वासंभवसंभवाभ्यां संदेहे पूर्वपक्षमाह—वियदिति । दर्शितश्रुतिविरोधपरिहारद्वारा समन्वयदृढीकरणात्पादादिसंगतयः। पूर्वपक्षे विरोधादप्रामाण्ये नित्यसिद्धे ब्रह्मणि समन्वयासिद्धिः। सिद्धान्ते वाक्यैक्यादविरोधात्प्रामाण्ये तत्र तत्सिद्धिः । संभावनामात्रादर्थसिद्धावतिप्रसङ्गात्प्रमाणमेव साधकं वक्तव्यमित्याशंक्याऽऽह-तथेति । ब्रह्म कस्यचित्कार्यं कारणत्वादाकाशवत् । न चाजत्वश्रुतिविरोधोऽनुमानानुगृहीतजन्मश्रुत्या तस्या विरोधात् । न चानवस्थानुगृहीताजत्वश्रुतिर्बलवती कार्ये-

दिभ्य उत्तरेषां विकाराणामुत्पत्तिमुपश्रुत्याऽऽकाशस्यापि विकारादेव ब्रह्मण उत्पत्तिरिति कश्चिन्मन्येत। तामाशंकामपनेतुमिदं सूत्रम्-असम्भवस्त्विति ॥ न खलु ब्रह्मणः सदात्मकस्य कुतश्चिदन्यतः सम्भव उत्पत्तिराशङ्कितव्या ॥ कस्मात् ॥ अनुपपत्तेः ॥ सन्मात्रं हि ब्रह्म, न तस्य सन्मात्रादेवोत्पत्तिः सम्भवति। असत्यतिशये प्रकृतिविकारभावानुपपत्तेः । नापि सद्विशेषात् दृष्टविपर्ययात्सामान्याद्विशेषा उत्पद्यमाना दृश्यन्ते। मृदादेर्घटादयः, न तु विशेषेभ्यः सामान्यम्। नाप्यसतः। निरात्मकत्वात्। कथमसतः सज्जायेतेति चाक्षेपश्रवणात्। "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" [श्वेता० ६।९] इति च,-ब्रह्मणो जनयितारं वारयति । वियत्पवनयोः पुनरुत्पत्तिः प्रदर्शिता, न तु ब्रह्मणः साऽस्तीति वैषम्यम् ।

रत्नप्रभा ।

रिति प्राप्ते मुख्यसिद्धान्तमाह—तामिति ॥ ब्रह्म, न जायते, कारणशून्यत्वान्नरविषाणवद्व्यतिरेकेण घटवच्चेत्यनुमानानुग्रहाद्विपक्षे चाकारणककार्यवादप्रसङ्गाद्ब्रह्मानादित्वश्रुतयो बलीयस्य इति कारणत्वलिङ्गबाधाजन्मश्रुतिः कार्यभेदेन व्याख्येयेत्यनाद्यनन्तब्रह्मसमन्वयसिद्धिरिति सिद्धान्तफलम्। न च हेत्वसिद्धिः। कारणस्यानिरूपणात्। तथाहि किं सन्मात्रस्य ब्रह्मणः सन्मात्रमेव सामान्यं कारणं सद्विशेषो वा असद्वा। न त्रेधापि इत्याह—सन्मात्रं हीत्यादिना॥दीपस्तु दीपान्तरे निमित्तमित्यनुदाहरणम्। वियत्पवनयोर्ब्रह्मणश्च विभक्तत्वाविभक्तत्वाभ्यां कारणभावाभावाभ्यां च वैषम्यम्। कारणत्वलिङ्गास्याप्रामाणिकानवस्था। तर्केणापि

भामती ।

इति। प्रमाणान्तरविरोधो दर्शितः। एवं प्राप्त उच्यते—सदेकस्वभावस्योत्पत्त्यसंभवः। कुतः, अनुपपत्तेः। सदेकस्वभावं हि ब्रह्म श्रूयते तदसति बाधके नान्यथयितव्यम्। उक्तमेतद्विकाराः सत्त्वेनानुभूता अपि कतिपयकालकलातिक्रमे विनश्यन्तो दृश्यन्त इत्यनिर्वचनीयास्त्रैकाल्यावच्छेदादिति। न चात्मा तादृशस्तस्य श्रुतेरनुभवाद्वा वर्तमानैकस्वभावत्वेन प्रसिद्धेस्तदिदमाह—सन्मात्रं हि ब्रह्मेति। एतदुक्तं भवति—यत्स्वभावाद्विचलति तदनिर्वचनीयं निर्वचनीयोपादानं युक्तं, न तु विपर्ययः। यथा रज्जूपादानः सर्पो न तु सर्पोपादाना रज्जुरिति। ययोस्तु स्वभावादप्रच्युतिस्तयोर्निर्वचनीययोर्नोपादेयोपादानभावः, यथा रज्जुशुक्तिकयोरिति। न च निरधिष्ठानो विभ्रम इत्याह—नाप्यसत इति। न च निरधिष्ठानभ्रम-

आनन्दगिरीय—न्यायनिर्णयः ।

कारणपरंपराया बीजादिवदनादित्वादन्धपरंपरया तदनुगृहीतत्वेऽपि तत्रानुमानानुगृहीतत्वेनाविशेषादस्ति विरोधः श्रुत्योरिति भावः। ब्रह्म न कार्यं कारणशून्यत्वान्नरविषाणवदित्यनुमानानुगृहीताजत्वश्रुत्या ब्रह्मणो नित्यत्वाजन्मश्रुतेरौपाधिकजन्मविषयत्वेनाविरोधान्नित्यसिद्धे ब्रह्मणि समन्वयसिद्धिरिति सिद्धान्तमाह—तामिति। तत्र प्रतिज्ञाभागं विभजते—न खल्विति। कारणशून्यत्वं विशदीकुर्वन्प्रश्नपूर्वकं सौत्रं हेतुमादत्ते—कस्मादिति। ब्रह्मणो हि कार्यत्वं ब्रुवता सन्मात्रं वा सद्विशेषो वा तस्यासद्वा कारणमिति वक्तव्यं नाऽऽद्य इत्याह—सन्मात्रं हीति। न द्वितीय इत्याह—नापीति। दृष्टविपर्ययमेव साधयति—सामान्यादिति। न तृतीय इत्याह—नापीति। श्रुतिविरोधाच्चायं पक्षो न संभवतीत्याह—कथमिति। युक्त्या हेतुमुपपाद्य श्रुत्योपपादयति—स कारणमिति। यदुक्तं वियत्पवनयोरसंभाव्यमानजन्मनोरपीत्यादि तत्राऽऽह—वियदिति। विभक्तत्वमुत्पत्तावुपपत्तिः। ब्रह्मण्यपि तुल्यं विभक्तत्वमित्याशंक्य ब्रह्म त्वविरोधान्नैवमित्याह—न त्विति। यत्तु तथेत्यादावनुमानमुक्तं तद्दूषयति—

**न च विकारेभ्यो विकारान्तरोत्पत्तिदर्शनाद्ब्रह्मणोऽपि विकारत्वं भवितुमर्हतीति मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गात् । या मूलप्रकृतिरभ्युपगम्यते तदेव च नो ब्रह्मेत्यविरोधः ॥ ९ ॥ इत्यसम्भवाधिकरणम् ॥ ३ ॥**

## तेजोऽतस्तथाह्याह ॥ १० ॥ ( ४ ) ॥

**छान्दोग्ये सन्मूलत्वं तेजसः श्रावितम् । तैत्तिरीयके तु वायुमूलत्वम् । तत्र तेजोयोनिं प्रति श्रुतिविप्रतिपत्तौ सत्यां प्राप्तं तावद् ब्रह्मयोनिकं तेज इति ॥**

रत्नप्रभा ।

बाधमाह—**न च विकारेभ्य इत्यादिना**॥ कारणस्यानभ्युपगमे यदृच्छावादप्रसङ्गः । अनादिकारणानभ्युपगमेऽनवस्थाप्रसङ्गः । तदभ्युपगमे ब्रह्मवादप्रसङ्गः । कारणान्तरस्य प्रधानादेर्निरासादिति भावः ॥९॥(३)॥ **तेजोऽतस्तथेति** ॥ "तत्तेजोऽसृजत" [ छां० ६ । २ । ३ ] इति "वायोरग्निः" [ तैत्ति० २ । १ । २ ] इति च श्रुत्योर्विरोधोऽस्ति न वेति सन्देहे सामान्यात् सामान्योत्पत्त्यसम्भवेऽपि ब्रह्मवाय्वोः सामान्ययोस्तेजोरूपविशेषोपादानत्वसम्भवात्तुल्यबलतयास्ति विरोध इति प्रत्युदाहरणेन **पूर्वपक्षः** । सर्वत्राध्यायसमाप्तेरेकवाक्यत्वासम्भवासम्भवौ संशयबीजं **पूर्वपक्षे** श्रुतीनां विरोधादप्रामाण्यं फलं **सिद्धान्ते** प्रामाण्यमित्युक्तं न विस्मर्तव्यम् । **एवं** पूर्वपक्षे कार्यमात्रस्य विवर्तत्वात् कल्पितस्य वायोस्तेजःकल्पनाधिष्ठानत्वायोगाद्, ब्रह्मेव तेजस उपादानं सर्वकार्याणां ब्रह्मैवोपादानमित्यर्थे श्रुतीनां भूयस्त्वाच, तदनुरोधाद्वायोरिति क्रमार्था पञ्चमीत्यविरोध इत्येकदेशिसिद्धान्तं प्रापयति—**प्राप्तं तावद्ब्रह्मयोनिकं तेज इत्यादिना** ॥ श्रुतीनां विरोधमात्रोपन्यासेन पूर्वपक्षः सिद्धान्तेनाविरोधोक्तावेकदेशिपक्ष इति ज्ञेयम् ।

भामती ।

परंपरानादितेत्याह—**मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गादिति** । पारमार्थिको हि कार्यकारणभावोऽनादिर्नानवस्थया दुष्यति । समारोपस्तु विकारस्य न समारोपितोपादान इत्युपपादितं माध्यमिकमतनिषेधाधिकारे, तदत्र न प्रस्मर्तव्यम् । तस्मान्नासदधिष्ठानविभ्रमसमर्थनाऽनादित्वेनोचितेत्यर्थः । अग्निविस्फुलिङ्गश्रुतिश्चौपाधिकरूपापेक्षया नेतव्या शेषमतिरोहितार्थम् । ये तु गुणदिक्कालोत्पत्तिविषयमिदमधिकरणं वर्णयांचक्रुस्तैः 'सतोऽनुपपत्तेः' इति क्लेशेन व्याख्येयम् । अविरोधसमर्थनप्रस्तावे चास्य संगतिर्वक्तव्या । अवादिवद्दिक्कालादीनामुत्पत्तिप्रतिपादकवाक्यस्यानवगमात्।तदास्तां तावत्॥९॥(३)॥ **तेजोऽतस्तथाह्याह** । यद्यपि 'वायोरग्निः' इत्यपादानपञ्चमी 'कारकविभक्तिरुपपदविभक्तेर्बलीयसी' इति नेयमानन्तर्यपरा युक्ता,

आनन्दगिरीय—न्यायनिर्णयः ।

**न चेति**।तस्य कार्यत्वं वदता मूलप्रकृतिरुपगम्यते न वेति विकल्प्य द्वितीयं प्रत्याह—**मूलेति**।न चानादित्वान्नानवस्था ब्रह्मणोऽपि कार्यत्वे तदुपादानपरंपरायौगपद्ये प्रलयाभावप्रसङ्गादिति भावः। प्रथमे तुल्यबाधापत्तिरित्याशयेनाऽऽह—**या मूलेति**।एवं कार्यत्वानुमानस्याऽऽभासत्वाजन्मश्रुतेश्चौपाधिकविषयत्वादकार्यत्वानुमानानुगृहीताजत्वश्रुतेर्बलीयस्त्वादितरस्यास्तदनुरोधित्वादितरेतराविरोधान्नित्याद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयः संभवतीत्युपसंहरति—**इत्यविरोध इति** ॥ ९ ॥ ( ३ ) ॥ अध्यस्तस्याधिष्ठानत्वायोगान्न कुतश्चिदपि ब्रह्मणो जन्मेत्युक्तम् । इदानीं वायोरपि तर्हि कार्यत्वेनाध्यस्तत्वात्तेजसस्ततो जन्मानुपपत्तेर्ब्रह्मण एव तज्जन्मेति प्रत्यवस्थाने प्रत्याह—**तेजोऽत इति** । तैत्तिरीये छान्दोग्ये च जायमानत्वेन श्रुतं तेजो विषयस्तत्किं ब्रह्मकार्यं किंवा वायुकार्यमिति संशयस्य वीजं दर्शयन्पूर्वपक्षमाह—**छान्दोग्य इति** । तत्रेति शाखाद्वयोक्तिः । न च 'तत्तेजोऽसृजत' इति श्रुतेर्निमित्तविषयत्वात् 'वायोरग्निः' इति श्रुतेरुपादानविषयत्वादविप्रतिपत्तिः 'बहु स्याम्' इति बहुभवनाशंसनलिंगेनोपादानत्वावगमादिति भावः । अत्रापि श्रुत्योर्विरोधनिराकरणद्वारा

कुतः ॥ "सदेव" [ छां० ६ । २ । ३ ] इत्युपक्रम्य "तत्तेजोऽसृजत" [ छां० ६ । २ । ३ ] इत्युपदेशात्, सर्वविज्ञानप्रतिज्ञायाश्च ब्रह्मप्रभवत्वे सर्वस्य सम्भवात्, "तज्जलान्" [ छां० ३ । १४ । १ ] इति चाविशेषश्रुतेः, "एतस्माज्जायते प्राणः" [ मुण्डक० २ । १ । ३ ] इति चोपक्रम्य श्रुत्यन्तरे सर्वस्याविशेषेण ब्रह्मजत्वोपदेशात्, तैत्तिरीयके च "स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्च" [ तै० उ० ३ । ६ । १ ] इत्यविशेषश्रवणात् । तस्माद् "वायोरग्निः" [ तै० उ० २ । १ । २ ] इति क्रमोपदेशो द्रष्टव्यः—वायोरनन्तरमग्निः सम्भूत इत्येवं प्राप्ते ॥ उच्यते ॥ तेजोऽतो मातरिश्वनो जायत इति ॥ कस्मात् ॥ तथा-ह्याह "वायोरग्निः" इति । अव्यवहिते हि तेजसो ब्रह्मजत्वे सत्यसति वायुजत्वे "वायोरग्निः" [ तै० उ० २ । १ । १ ] इतीयं श्रुतिः कदर्थिता स्यात् ॥ ननु क्रमार्थैषा भविष्यतीत्युक्तम् ॥ नेति ब्रूमः । "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" [ तै० उ० २ । १ । १ ] इति पुर-

रत्नप्रभा ।

तदुभयमपि मुख्यसिद्धान्तापेक्षया पूर्वपक्षत्वेन व्यवह्रियते । सिद्धान्तयति—एव प्राप्त इति ॥ कदर्थिता बाधितार्थेति यावत् । वायोस्तेजःप्रकृतित्वं पञ्चमीश्रुत्या निर्धारितम् । न च कल्पितस्योपादानत्वा-

भामती ।

तथापि बहुश्रुतिविरोधेन दुर्बलाप्युपपदविभक्तिरेवात्रोचिता । ततश्चानन्तर्यदर्शनपरेयं वायोरग्निरिति श्रुतिः ।

आनन्दगिरीय—न्यायनिर्णयः ।

वायुभावमापन्ने ब्रह्मणि तेजोयोनौ समन्वयदृढीकरणात्पादादिसंगतयः । पूर्वपक्षे श्रुत्योरनेकवाक्यत्वेन विरोधादप्रामाण्ये तेजोहेतौ ब्रह्मणि समन्वयासिद्धिः । सिद्धान्ते तदेकवाक्यत्वेनाविरोधात्प्रामाण्ये तत्र तत्सिद्धिः । सत्यां विप्रतिपत्तौ विशेषकारणमन्तरेणान्यतरनिश्चयासिद्धिरिति शङ्कते—कुत इति । उपक्रान्तस्य सन्मात्रस्यैकमेवाद्वितीयमित्यवधारिताद्वितीयत्वनिर्धारणाय 'तत्तेजोऽसृजत' इति वचनादुपादानादेवोपादेयस्याव्यतिरेकादुपादानत्वमेव तेजः प्रति ब्रह्मणो विवक्षितमित्याह—सदेवेति । किंचाऽऽद्येऽधिकरणे सर्वविज्ञानप्रतिज्ञानुगृहीतोत्पत्तिश्रुतेर्ब्रह्मजत्वं वियतो वर्णितं तेनैव न्यायेन तेजसोऽपि ब्रह्मजत्वमेष्टव्यमित्याह—सर्वविज्ञानेति । इतश्च ब्रह्मजत्वं तेजसो युक्तमित्याह—तज्जलानिति चेति । आथर्वणश्रुत्या च तेजसो ब्रह्मजत्वसिद्धिरित्याह—एतस्मादिति । तथाऽपि तैत्तिरीयश्रुत्यालोचनायां न ब्रह्मजत्वं तेजसः स्यादित्याह—तैत्तिरीयके चेति । ननु 'वायोरग्निः' इति श्रुतेर्वायुद्वारा तेजसो ब्रह्मजत्वेऽपि दर्शितश्रुतयो न विरुध्यन्तेऽन्यथा वायोरग्निरिति श्रुतिर्बाध्येत तत्राऽऽह—तस्मादिति । यद्यपि वायोरग्निरित्यपादानपञ्चमी कारकविभक्तिर्वायोरनन्तरमित्युपपदविभक्तेर्बलीयसी तथाऽपि बहुश्रुतिविरोधाद्दुर्बलाऽपि सैवोचितेति मत्वा क्रमोपदेशमेव विशदयति—वायोरिति । यदि पुनरित्थमस्याः श्रुतेरर्थो नाऽऽश्रीयते तर्हि विरुद्धार्थैव श्रुतिरियं पूर्वोक्तश्रुतिभिरिति पूर्वपक्षमनुभाष्य सिद्धान्तमाह—एवं प्राप्त इति । तत्र प्रश्नपूर्वकं हेतुमाह—कस्मादिति । हेतुमेव व्यतिरेकद्वारा विवृणोति—अव्यवहिते हीति । कदर्थिता पीडिता बाधितेति यावत् । तेजसो वायुयोनित्वं पञ्चमीश्रुत्या निर्धारितं ब्रह्मयोनित्वं तु तस्य बहुभवनाशंसनलिङ्गादवगतमतः श्रुत्या लिंगं बाधित्वा वायुयोनित्वं मुख्यमादाय लिंगपरंपरया ब्रह्मयोनित्वविषयं विवक्षमाणेन न्यायेन ब्रह्मवायुसमुच्चयमेवाभ्युपगमयतीति भावः । पञ्चमीश्रुतेरुक्तां गतिं पूर्ववादी स्मारयति—नन्विति । न क्रमार्थत्वं पञ्चम्या युक्तं पूर्वोत्तरवाक्योपादानेनापादानार्थत्वप्रतीतेरिति परिहरति—नेतीति । उत्तरवाक्य-

स्तात्सम्भवति। अपादानस्याऽऽत्मनः पञ्चमीनिर्देशात्-तस्यैव च सम्भवतेरिहाऽधिकारात्परस्तादपि तदधिकारे "पृथिव्या ओषधयः" [तै० उ० २। १। २] इत्यपादानपञ्चमीदर्शनाद् "वायोरग्निः" इत्यपादानपञ्चम्येवैषेति गम्यते॥ अपि च वायोरूर्ध्वमग्निः सम्भूत इति कल्प्य उपपदार्थयोगः। क्लृप्तस्तु कारकार्थयोगः, वायोरग्निः सम्भूत इति। तस्मादेषा श्रुतिर्वायुयोनित्वं तेजसोऽवगमयति॥ नन्वितरापि श्रुतिर्ब्रह्मयोनित्वं तेजसोऽवगमयति तत्तेजोऽसृजत" [छां० ६। २। ३] इति॥ न॥ तस्याः पारम्पर्यजत्वेऽप्यविरोधात्॥ यदापि ह्याकाशं वायुं च सृष्ट्वा वायुभावापन्नं ब्रह्म तेजोऽसृजतेति कल्प्यते॥ यदापि ब्रह्मजत्वं तेजसो न विरुध्यते। यथा तस्याः शृतं, तस्या दधि, तस्या आमिक्षे-

रत्नप्रभा।

सम्भवः। अधिष्ठानत्वासम्भवेऽपि मृदादिवत्परिणामित्वसम्भवात्। सतस्तु ब्रह्मणः छान्दोग्ये स्रष्टृत्वमात्रं श्रुतं, नोपादानत्वम्। न च "बहु स्याम्" [तै० उ० २। ६। २-छां० ६। २। ३] इति कार्याभेदेक्षणलिङ्गादुपादानत्वसिद्धिः। लिङ्गात् श्रुतेर्बलीयस्त्वेन श्रुत्यविरोधेन लिङ्गस्य नेयत्वात्। नयनं चेत्थम्-वायोर्ब्रह्मानन्यत्वाद्वायुजस्यापि तेजसो ब्रह्मप्रकृतिकत्वमविरुद्धमिति सिद्धान्तग्रन्थाशयः-इहाधिकारादिति॥ वायोरग्निः सम्भूत इति वाक्ये सम्बन्धादित्यर्थः। तदधिकारे सम्भूत्यधिकारे॥ निरपेक्षकारकविभक्तेरुपपदसापेक्षविभक्त्यपेक्षया प्रबलत्वाच्च न क्रमार्था पञ्चमीत्याह-अपि चेति॥ ऊर्ध्वमनन्तरमिति वोपपदं विना पञ्चमीमात्रात् क्रमो न भातीति कल्प्य उपपदार्थप्रयोगः। प्रकृत्याख्याऽपादानकारकं तु निरपेक्षपञ्चम्या भाति। विशेषतोऽत्र प्रकरणादपादानार्थत्वं पञ्चम्याः क्लृप्तम्। क्लृप्तेन च कल्प्यं-सति विरोधे बाध्यमिति स्थितिरित्यर्थः। पारम्पर्यजत्वमेवाह-यदापीति॥ तस्या धेनोः शृत तप्तं क्षीरं साक्षात् कार्यं, दध्यादिकं तु पारम्पर्यजमित्यर्थः। दधि संसृष्टम्। कठिनक्षीरम्-आमिक्षा॥ ब्रह्मणो वायुभावे

भामती।

न च साक्षाद्ब्रह्मजत्वसंभवे तद्वंश्यत्वेन तज्जत्वं परंपरयाश्रयितुं युक्तम्। वाजपेयस्य पशुयूपवदिति प्राप्तम्। एवं प्राप्ते उच्यते-युक्तं पशुयागवाजपेययोरङ्गाङ्गिनोर्नानात्वात्तत्र साक्षाद्वाजपेयासंबन्धे क्लेशेन परंपराश्रयणम्। इह तु वायोर्ब्रह्मविकारस्यापि ब्रह्मणो वस्तुतोऽनन्यत्वाद्वायूपादानत्वे साक्षादेव ब्रह्मोपादानत्वोपपत्तेः कारकविभक्तेर्बलीयस्त्वानुरोधेनोभयथोपपद्यमानाः श्रुतयः कांस्यभोजिन्यायेन नियम्यन्त इति युक्तमिति राद्धान्तः। 'पारम्पर्यजत्वेऽपि' इति भेदकल्पनाभिप्रायं यतः परमार्थिकाभेदमाह-वायुभावापन्नं ब्रह्मेति। यथा तस्याः शृतम्

आनन्दगिरीय-न्यायनिर्णयः।

मिहेत्युच्यते। इतश्चापादानार्थत्वमेव पञ्चम्या न क्रमार्थत्वमित्याऽऽह-अपि चेति। प्रकरणादुपादानाख्यापादानकारकाभिधायित्वं पञ्चम्याः सिद्धं परित्यज्य पदार्थान्तरयोगोऽसिद्धो न कल्पयितुं शक्यते क्लृप्तकल्प्ययोर्मध्ये क्लृप्तस्यैव बलीयस्त्वादित्यर्थः। पञ्चमीश्रुतेरक्रमार्थत्वे फलितमाह-तस्मादिति। श्रुतिबलात्तेजसो वायुजत्वे तद्बलादेव ब्रह्मजत्वमपि तस्याऽऽस्थेयमतः श्रुत्योर्मिथो विरोधः स्यादिति शंकते-नन्विति। 'वायोरग्निः' इति साक्षात्तेजसो वायुजत्वमुच्यते 'तत्तेजोऽसृजत' इति त्वाकाशवायुद्वारा तस्य ब्रह्मजत्वमिति विरोधसमाधिरिति समाधत्ते-न तस्या इति। अविरोधमेव साधयति-यदाऽपीति। साक्षात्पारंपर्याभ्यां कारणत्वे दृष्टान्तमाह-यथेति। तस्या धेनोः शृतं तप्तं क्षीरं विवक्षितम्। तदेव दधिसंसृष्टमामिक्षेति भेदः। तत्र क्षीरस्य दध्नि साक्षात्कारणत्वेऽपि गव्यं दधीति प्रयोगो दृष्टस्तथाऽत्रा-

त्यादि । दर्शयति च ब्रह्मणो विकारात्मनावस्थानं "तदात्मानं स्वयमकुरुत" [ तै० उ० २ । ७ । १ ] इति । तथा चेश्वरस्मरणं भवति—"बुद्धिर्ज्ञानमसंमोहः" [ भ० गी० १० । ४ । ] इत्याद्यनुक्रम्य "भवन्ति भावा भूतानां मत्त एव पृथग्विधाः" [ भ० गी० १० । ५ ] इति । यद्यपि बुद्ध्यादयः स्वकारणेभ्यः प्रत्यक्षं भवन्तो दृश्यन्ते । तथापि सर्वस्य भावजातस्य साक्षात्, प्रणाड्या ( ल्याः ) वा ईश्वरवंश्यत्वात् ॥ एतेनाऽक्रमसृष्टिवादिन्यः श्रुतयो व्याख्याताः । तासां सर्वथोपपत्तेः, क्रमवत्सृष्टिवादिनीनां त्वन्यथानुपपत्तेः,—प्रतिज्ञापि सद्वंश्यत्वमात्रमपेक्षते नाऽव्यवहितजन्यत्वमित्यविरोधः ॥ १० ॥ इति तेजोऽधिकरणम् ॥ ४ ॥

## आपः ॥ ११ ॥ (५) ॥

---

रत्नप्रभा ।

मानमाह—**दर्शयति चेति** ॥ पारम्पर्यजस्यापि तज्जत्वव्यपदेशे स्मृतिमाह—**तथा चेति** ॥ अन्तःकरणादिभ्यो जायमानबुद्ध्यादीनां "मत्त एव" इत्यवधारणं कथमित्याशंक्याह—**यद्यपीत्यादिना** ॥ प्रणाड्या परम्परया ईश्वरवंश्यत्वात् तज्जत्वात् परमकारणान्तरनिरासार्थमवधारणम् । युक्तमिति शेषः ॥ एतत्पदार्थमाह—**तासामिति** ॥ "तज्जलान्" [ छां० ३ । १४ । १ ] इत्याद्युक्तश्रुतीनां साक्षात्, प्रणाड्या वा, ब्रह्मजत्वमात्रेणोपपत्तेरित्यर्थः । अक्रमश्रुतीनां बलवत्क्रमश्रुत्यनुसारेणैकवाक्यत्वाद्वियद्वायुद्वारा तेजःकारणे ब्रह्मणि समन्वय इति सिद्धम् ॥ १० ॥ ( ४ ) ॥ **आपः** ॥ अतिदेशोऽयम् । तथाहि आथर्वणे मुण्डकग्रन्थे [ २ । १ । ३ ] "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इति मन्त्रे अपां ब्रह्मजत्वं श्रुतम् । "अग्नेरापः" [ तैत्ति० २ । १ । २ ] इति श्रुत्या तस्य विरोधोऽस्ति न वेति सन्देहे तुल्यत्वादस्ति विरोध इति **पूर्वपक्षे** अपामग्निदाह्यत्वेन विरोधा-

भामती ।

इति तु दृष्टान्तः परम्परामात्रसाम्येन न तु सर्वथा साम्येनेति सर्वमवदातम् ॥ १० ॥ (४) ॥ **आपः** ।

आनन्दगिरीय—न्यायनिर्णयः ।

पीत्यर्थः । तर्हि ब्रह्मणो वायुभावापत्तौ किं प्रमाणमित्याशंक्याऽऽह—**दर्शयतिं चेति** । पारंपर्यजस्यापि तज्जत्वव्यपदेशयोग्यत्वे प्रमाणमाह—**तथा चेति** । अन्तःकरणादिभ्यः स्वकारणेभ्यो बुद्ध्यादीनामयशोन्तानामुत्पत्तिदर्शनान्मत्त एवेत्यवधारणमयुक्तमित्याशंक्याऽऽह—**यद्यपीति** । प्रणाड्या परंपरयेति यावत् । ईश्वरवंश्यत्वात्तद्वंशोद्भवत्वादिदमवधारणस्मरणमिति शेषः । सर्वस्येत्यस्मादर्वाक्तथाऽपीति वक्तव्यम् । पारंपर्यविषयत्वं 'तत्तेजोऽसृजत' इति श्रुतेरुक्तम् । इदानीमिदं सर्वमसृजतेत्यादिश्रुतेरपि पारंपर्यविषयत्वमेषितव्यमित्याह—**एतेनेति** । सर्वस्य साक्षाद्ब्रह्मजत्वाभावे कथं तासामुपपत्तिस्तत्राऽऽह—**तासामिति** । सर्वथा साक्षात्परंपरया वा, सर्वस्य ब्रह्मजत्वमात्रेणाक्रमवादिनीनां श्रुतीनामुपपत्तेरितरश्रुतिवशात्पारंपर्यमेवाऽऽश्रयणीयमित्यर्थः । क्रमश्रुतीनामेवाक्रमश्रुतिवशान्नयनं किं न स्यादित्याशंक्याऽऽह—**क्रमवदिति** । अन्यथा पारंपर्यमन्तरेणेति यावत् । न साक्षात्कारणविषयत्वमिति शेषः । अव्यवधानेन ब्रह्मजत्वाभावे कथं प्रतिज्ञेत्याशंक्याऽऽह—**प्रतिज्ञाऽपीति** । अक्रमश्रुतीनां क्रमश्रुत्यनुसारित्वेन मिथो विरोधाभावात्तेजसो वियत्पवनद्वारा कारणे ब्रह्मणि समन्वयः सिध्यतीत्युपसंहरति—**इत्यविरोध इति** ॥ १० ॥ ( ४ ) ॥ तेजसो वायुकार्यत्वमुक्त्वाऽनन्तरनिर्दिष्टानामपां तेजसो जन्मातिदेशेन निरूपयति—**आप इति** । वाक्यं हि सूत्रं

अतस्तथाह्याहेत्यनुवर्तते । आपोऽतस्तेजसो जायन्ते ॥ कस्मात् ॥ तथाह्याह "तदपोऽसृजत" इति "अग्नेरापः" [तै० उ० २।१।२] इति च सति वचने नास्ति संशयः । तेजसस्तु सृष्टिं व्याख्याय पृथिव्या व्याख्यास्यन्नपोऽन्तरयामीति "आपः" इति सूत्रयाम्बभूव ॥ ११ ॥ इत्यबधिकरणम् ॥ ५ ॥

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥ ( ६ ) ॥

"ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीतिं ता अन्नमसृजन्त" [छां० ६।२।४] इति श्रूयते। तत्र संशयः। किमनेनान्नशब्देन व्रीहियवादि-अभ्यव्यवहार्यं वौदनाद्युच्यते, किंवा पृथिवीति । तत्र प्राप्तं

---

रत्नप्रभा ।

दग्निजत्वासम्भवात् क्रमार्थां पञ्चमीत्यविरोध इत्यधिकाशङ्कायामुक्ततेजोन्यायमतिदिश्य व्याचष्टे-अत इति ॥ प्रत्यक्षविरोधे कथमपामग्निजत्वनिर्णयः, तत्राह-सति वचन इति ॥ त्रिवृत्कृतयोरप्तेजसोर्विरोधेऽपि "अग्नेरापः" इति वचनादतीन्द्रिययोस्तयोर्नास्ति विरोध इति निर्णीयत इत्यर्थः॥ न केवलं श्रुत्यविरोधज्ञानायायमतिदेशः। किंतु पञ्चभूतोत्पत्तिक्रमनिर्णयार्थं चेत्याह-तेजसस्त्विति ॥ तस्मात्तेजोभावापन्ने ब्रह्मणि श्रुतिसमन्वय इति सिद्धम्॥११॥ ( ९ ) ॥ पृथिवीति ॥ विषयमुक्त्वान्नशब्दमहाभूतप्रकरणाभ्यां संशयमाह-ता इति॥ अभ्यवहार्यं भक्ष्यम्। अत्र श्रुतौ यदि-अन्नमोदनादिकं,तदा-"अद्भ्यः पृथिवी"

भामती ।

निगदव्याख्यातेन भाष्येण व्याख्यातम् ॥ ११॥ ( ९ ) ॥ पृथिव्यधिकाररूपशब्दान्तरेभ्यः । अन्नशब्दोऽयं व्युत्पत्त्या च प्रसिद्ध्या च व्रीहियवादौ तद्विकारे चौदने प्रवर्तते। श्रुतिश्च प्रकरणाद्बलीयसी,

आनन्दगिरीय-न्यायनिर्णयः ।

न पदमात्रं तत्कुतोऽस्य सूत्रतेत्याशंक्य सूत्रं पूरयति-अत इति । 'एतस्माज्जायते' इत्युपक्रम्य 'खं वायुर्ज्योतिरापः' इति 'अग्नेरापः' इति 'तदपोऽसृजत' इति च श्रूयते। तत्र किमापः स्वतो जायन्ते किंवा तेजस इति श्रुतिविप्रतिपत्तेः संदेहे सत्यपामग्निदाह्यत्वादग्नेरुत्पत्त्ययोगात् 'अग्नेरापः' 'तदपोऽसृजत' इति च श्रुती गौण्यावन्यथाऽऽथर्वणश्रुतिविरोधान्न ब्रह्मणि समन्वयसिद्धिरिति पूर्वपक्षे सिद्धान्तमाह-आपोऽत इति। अपां कारणत्वे तेजसः श्रुतेऽपि प्रत्यक्षविरोधान्निश्चयासिद्धिरित्याशंक्याऽऽह-सतीति । त्रिवृत्कृतयोरप्तेजसोर्विरोधेऽपि तयोरत्रिवृत्कृतयोरतीन्द्रियत्वाद्विरोधाप्रतीतेर्वचने सति निश्चयोपपत्तिरित्यर्थः । संदेहाभावे विचारस्य निरवकाशत्वात्कथमिदं सूत्रमित्याशंक्याऽऽह-तेजसस्त्विति । महाभूतसर्गव्याख्याने प्रक्रान्ते क्रमप्राप्तानामपामतिक्रमणं मा भूदित्यभिप्रेत्य प्रत्यक्षविरोधात् 'आप एवाग्र आसुः' इति च पूर्वसद्भावश्रवणादाथर्वणश्रुतेश्च 'अग्नेरापः' इत्याद्या श्रुतिर्गौणीति मन्दां शंकां निरसितुमिदं सूत्रम्। पूर्ववत्क्रमश्रुत्यनुरोधेनाक्रमश्रुतेर्नेतव्यत्वात्पूर्वसद्भावश्रुतेश्च भूतसूक्ष्ममात्रविषयत्वेनाविरोधात्तेजोभावमापन्ने ब्रह्मण्यतां कारणे 'तदपोऽसृजत' इत्यादिश्रुतेः समन्वयसिद्धौ न गौणार्थतेति भावः । तत्र च तैत्तिरीयादिश्रुतेराथर्वणादिश्रुतेश्च मिथोविरोधनिराकरणद्वारा ब्रह्मण्येवाबादिकारणे समन्वयप्रतिपादनात्पादादिसंगतिस्तथैव फलभेदश्चेति द्रष्टव्यम्॥ ११ ॥ (९) ॥ तेजःकार्यत्वेनोक्तानामपां कार्यत्वेन 'ता अन्नमसृजन्त' इति श्रुतस्यान्नस्य पृथिवीत्वं साधयति-पृथिवीति । अधिकरणस्य विषयमाह-ता इति । अन्नशब्दान्महाभूतप्रकरणाच्च दर्शितश्रुतिं विषयीकृत्य विचारप्रयोजकं संदेहमाह-तत्रेति । अभ्यवहार्यं भक्षणयोग्यमिति यावत् । अप्कार्यविगानद्वारा कारणसमन्वये विगानं दर्शयन्पूर्वपक्षयति-तत्र प्राप्तमिति । 'ता अन्नमसृजन्त'

तावत्-व्रीहियवादि, ओदनादि वा,-परिग्रहीतव्यमिति । तत्र ह्यन्न-शब्दः प्रसिद्धो लोके वाक्यशेषोपेतमर्थमुपोद्बलयति । तस्माद्यत्र क्वचन वर्षति तदेव भूयिष्ठमन्नं भवतीति व्रीहियवाद्येव हि सति वर्षणे बहु भवति न पृथिवीत्येवं प्राप्ते ब्रूमः ॥ पृथिव्येवेयमन्नशब्देनाद्भ्यो जायमाना विवक्ष्यन्त इति ॥ कस्मात् ॥ अधिकाराद्, रूपात्, शब्दान्तराच्च । अधिकारस्तावत्-"तत्तेजोऽसृजत" [ छां० ६ । २ । ३ ] "तदपोऽसृजत" [ छां० ६ । २ । ३ ] इति च महाभूतविषयो वर्तते । तत्र क्रमप्राप्तां पृथिवीं महाभूतसृष्टिं विलंध्य नाकस्माद् व्रीह्यादिपरिग्रहो न्याय्यः ॥ तथा रूपमपि वाक्यशेषे पृथिव्यनुगुणं दृश्यते "यत्कृष्णं तदन्नस्य" [ छां० ६ । ४ ( १-४ ) ] इति । न ह्योदनादेरभ्यवहार्यस्य कृष्णत्वनि-यमोऽस्ति । नापि व्रीह्यादीनाम् ॥ ननु पृथिव्या अपि नैव कृष्णत्व-नियमोऽस्ति । पयःपाण्डुरस्याऽङ्गाररोहितस्य च क्षेत्रस्य दर्शनात् ॥ नायं दोषः । बाहुल्यापेक्षत्वाद्-भूयिष्ठं हि पृथिव्याः कृष्णं

---

रत्नप्रभा ।

[ तैत्ति० २।१।२] इति श्रुत्या विरोधः । यदि पृथिवी, तदा न विरोध इति फलं बोध्यम् । अप्पृथिव्योः कार्यकारणभावादधिकरणसंगतिः । अन्नश्रुतिवृष्टिभवत्वलिङ्गाभ्यां पूर्वपक्षः । तदेव तत्रैवेति श्रुत्यर्थः । तथा च क्वचिदन्नं,क्वचिदद्भ्यः पृथिवी,ततोऽन्नमिति विरोधान्नैकवाक्यतेति प्राप्ते सिद्धान्तयति-एवं प्राप्त इति ॥ अधिकारः-प्रकरणम् । रूपं लिङ्गम् । पयः क्षीरम् । तद्वत् पाण्डुरं श्वेतम् । अङ्गारवद् रोहित-

भामती ।

सा च वाक्यशेषेणोपोद्बलिता 'यत्र क्वचन वर्षति' इत्येतेन तस्मादभ्यवहार्यं व्रीहियवाद्येवात्राद्भ्यो

आनन्दगिरीय-न्यायनिर्णयः ।

इति श्रुतेः 'अद्भ्यः पृथिवी' इति श्रुतेश्च विरोधनिराकरणद्वारेण परंपरया पृथिवीकारणे ब्रह्मणि समन्वय-प्रतिपादनादत्र पादादिसंगतिसौलभ्यमिति मन्तव्यम् । उक्तश्रुत्योरनेकवाक्यतया विरोधादप्रामाण्ये पूर्वपक्षे समन्वयासिद्धिः, सिद्धान्ते त्वेकवाक्यत्वेनाविरोधात्प्रामाण्ये तत्सिद्धिः । प्रकरणादिना पृथिवीप्रतीतौ कथ-मन्नशब्देन व्रीह्यादि ग्राह्यमित्याशंक्य श्रुतेस्ततो बलीयस्त्वादित्याह-तत्र हीति । अन्नशब्देन व्रीह्यादि ग्राह्यमित्यत्र लिङ्गमपि दर्शयति-वाक्यशेषोऽपीति । तस्मादित्यद्भ्योऽन्नस्य सृष्टत्वादिति यावत् । तदेव तत्रेवेत्यर्थः । वर्षणे सत्यन्नस्य बहुभवनं श्रुतमित्येतावता कथमन्नशब्दस्य पृथिवीव्यावृत्तिरित्याशंक्याऽऽह-व्रीहीति । श्रुतिलिङ्गाभ्यामन्नशब्दस्य प्रसिद्धार्थत्वे सिद्धे 'ता अन्नामसृजन्त' इत्यादिश्रुतेः श्रुत्यन्तरेण 'अद्भ्यः पृथिवी' इत्यादिना विरोध इति पूर्वपक्षोपसंहार इतिशब्दार्थः । पूर्वपक्षमनूद्य सिद्धान्तसूत्रमव-तार्य प्रतिज्ञाभागं व्याचष्टे-एवं प्राप्त इति । श्रुतिलिङ्गाभ्यामन्नशब्दस्य व्रीह्यादिविषयत्वे दर्शिते पृथि-वीविषयत्वं हेत्वभावादयुक्तमिति शंकते-कस्मादिति । अन्नशब्दस्य पृथिवीविषयत्वे सूत्रोक्तं हेतुत्रयं विभज्यावतारयति-अधिकारादिति । अधिकारशब्दितं प्रकरणमादौ विवृणोति-अधिकार इति । प्रकरणस्य महाभूतविषयत्वेऽपि परंपरया व्रीह्यादिविषयत्वमन्नशब्दस्य किं न स्यादित्याशंक्य प्रबलप्रमाणं विना परंपराकल्पनमनुचितमित्याह-तत्रेति । प्रकरणवल्लिङ्गमपि सिद्धान्ते साधकमस्तीत्याह-तथेति । लिङ्गस्यान्यथासिद्धिं शंकित्वा दूषयति-न हीति । कृष्णत्वनियमराहित्यं पृथिव्यामपि तुल्यमित्यसिद्धिं लिङ्गस्य चोदयति-नन्विति । पृथिवीप्रदेशानामकृष्णानामपि प्रथनात्तत्र कृष्णत्वनियमाभावादसंभवि लिङ्ग-मिति तन्निराकरोति-नायमिति । बाहुल्यमेव प्रकटयति । भूयिष्ठं हीति । वाक्यशेषे यदन्नस्य कृष्णत्वं

रूपं, न तथा श्वेतरोहिते । पौराणिका अपि–पृथिवीच्छायां शर्वरीमुपदिशन्ति । सा च कृष्णाभासेत्यतः कृष्णं रूपं पृथिव्या इति श्लिष्यते। श्रुत्यन्तरमपि समानाधिकारम्–"अद्भ्यः पृथिवी" [ तै० उ० २ । १ । २ ] इति भवति । "तद्यदपां शर आसीत्तत्समहन्यत। सा पृथिव्यभवत्" [ बृ० १ । २ । २ ] इति च। पृथिव्यास्तु व्रीह्यादेरुत्पत्तिं दर्शयति "पृथिव्या ओषधयः । ओषधीभ्योऽन्नम्" [ तै० उ० । २ । १ । २ ] इति च। एवमधिकारादिषु पृथिव्याः प्रतिपादकेषु सत्सु कुतो व्रीह्यादिप्रतिपत्तिः । प्रसिद्धिरप्यधिकारादिभिरेव बाध्यते । वाक्यशेषोऽपि पार्थिवत्वादन्नाद्यस्य तद्द्वारेण पृथिव्या एवाद्भ्यः प्रभवत्वं सूचयतीति द्रष्टव्यम् । तस्मात्पृथिवीयमन्नशब्देति ॥ १२ ॥ इति पृथिव्यधिकरणम् ॥ ६ ॥

---

रत्नप्रभा ।

रक्तम् । शब्दान्तरशब्दितं स्थानं व्याचष्टे–श्रुत्यन्तरमपीति ॥ अबानन्तर्यं पृथिव्याः स्थानम् । श्रुत्यन्तरसिद्धान्तेनाप्यन्नस्य पृथिवीत्वमित्यर्थः । तत् तत्र–सृष्टिकाले यदपां शरः यो मण्डवद् घनीभाव आसीत् । स एव समहन्यत कठिनः संघातोऽभूत् । सा अपां कठिना परिणतिः पृथिव्यभवदितिश्रुत्यर्थः ॥ व्रीह्याद्यन्नसर्गः कस्मिन् स्थान इति विवक्षायामाह–पृथिव्यास्त्विति ॥ पञ्चमीयम् । वृष्टिभवत्वलिङ्गसहितान्नश्रुतेः । कथं प्रकरणलिङ्गस्थानैर्बाध इत्याशंक्याह–वाक्यशेषोऽपीति ॥ प्रबलदुर्बल-

भामती ।

जायत इति विवक्षितम् । कार्ष्ण्यमपि हि संभवति कस्यचिददनीयस्य । न हि पृथिव्यपि कृष्णा, लोहितादिरूपाया अपि दर्शनात् । ततश्च श्रुत्यन्तरेण 'अद्भ्यः पृथिवी पृथिव्या ओषधयः' इत्यादिना विरोध

आनन्दगिरीय–न्यायनिर्णयः ।

श्रुतं तत्तस्य पृथिवीत्वं गमयतीत्यत्र पौराणिकसंमतिमाह–पौराणिका अपीति । प्रकरणलिंगे दर्शयित्वा स्थानमपि सिद्धान्ते दर्शयति–श्रुत्यन्तरमपीति । समानाधिकारं महाभूतसृष्टिविषयत्वेन समानप्रकरणमिति यावत् । तत्रैव बृहदारण्यकश्रुतिमुदाहरति–तद्यदिति । तत्तत्र सृष्टिकाले यदपां यस्तासां शरो मण्डो घनीभावोऽभूदिति प्रकृतः शरो निरुच्यते स हि समहन्यत संघातात्मना परिणतः सोऽपां कठिनाकारपरिणामः पृथिव्यभवत् । विशेष्यपृथिव्यपेक्षया सेत्युक्तम् । चकारस्तु श्रुत्यन्तरमितिपदानुकर्षणार्थम् । तैत्तिरीयके तेज आरभ्य चतुर्थपर्यायपठितस्यैव व्रीह्यादिरूपत्वात्तृतीयपर्यायस्य पृथिवीविषयत्वाच्छान्दोग्येऽपि तस्य तद्विषयत्वं युक्तमिति स्थानमेव प्रकटयति–पृथिव्यास्त्विति । प्रमाणत्रयफलं निगमयति–एवमिति । अन्नशब्दश्रुत्या व्रीह्यादिप्रतिपत्तिरुक्तेत्याशंक्याऽऽह–प्रसिद्धिरपीति । लिङ्गानुगृहीता श्रुतिर्बलवती कुतो बाध्यत इत्याशंक्य त्वदुक्तं लिङ्गं सिद्धान्तानुकूलमित्याह–वाक्यशेषोऽपीति । प्रकरणादिभिर्यदा पृथिवी परिगृह्यते तदा श्रुतिलिङ्गयोर्नात्यन्तबाधः, स्वार्थापरित्यागेन तदाकारपरिणतायां पृथिव्यां प्रवृत्त्युपपत्तेः श्रुतिलिङ्गाभ्यामन्नमात्रपरिग्रहे हेतुलिङ्गप्रकरणादीनामत्यन्तबाधः स्याच्चेषां पृथिवीविषयत्वात्तदनुपादाने निरवकाशत्वात्तत्र प्रमाणसमुदाययोरितरेतरविरोधेऽन्यतरस्यात्यन्तबाधेनान्यतरोपादानाद्वरमन्यतरस्याल्पबाधेनान्यतरोपादानमिति श्रुतिलिङ्गयोरन्नमात्रनिष्ठत्वं बाधित्वा प्रकरणादिभिरन्नाकारपरिणता पृथिव्येव ग्रहीतव्येति मन्वानः सिद्धान्तमुपसंहरति–तस्मादिति । तैत्तिरीयश्रुत्यनुसारेण च्छन्दोग-

---

१ कृष्णेत्यत इति पाठान्तरम् ।

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥ ( ७ ) ॥

किमिमानि वियदादीनि भूतानि स्वयमेव स्वविकारान् सृजन्ति आहोस्वित् परमेश्वर एव तेनतेनात्मनाऽवतिष्ठमानोऽभिध्यायंस्तन्तं विकारं सृजतीति सन्देहे सति प्राप्तं तावत्–स्वयमेव सृजन्तीति ॥ कुतः ॥ "आकाशाद्वायुर्वायोरग्निः" इत्यादिस्वातन्त्र्यश्रवणात् ॥ नन्व-

रत्नप्रभा ।

प्रमाणसन्निपाते बहूनां दुर्बलानामत्यन्तबाधाद्वरं प्रबलप्रमाणस्याऽल्पबाधेन कथंचिन्नयनमिति न्यायेन श्रुतिलिङ्गयोरन्नमात्रनिष्ठत्वं बाधित्वाऽऽत्मकपृथिवीनिष्ठत्वं नीयते। ताभ्यामन्नमात्रग्रहे प्रकरणादीनां पृथिवीमात्रविषयाणामत्यन्तबाधापत्तेरिति भावः । अन्नस्य वृष्टिजत्वोक्तिद्वारा पृथिव्या अब्जन्यत्वं सूच्यते । पृथिवी, अब्जा, पृथिवीत्वादन्नवदित्यनुमानादित्यक्षरार्थः । एवं तित्तिरिश्रुत्यनुसारेण छन्दोगश्रुतेर्नयनादविरुद्धो भूतसृष्टिश्रुतीनां ब्रह्मणि समन्वय इति सिद्धम् ॥ १२ ॥ ( ६ ) ॥ सम्प्रति तानि भूतान्याश्रयाश्रयिभावसङ्गत्या तेषां स्वातन्त्र्यमाशंक्य निषेधति–तदभिध्यानादेव तु तल्लिंगात्सः ॥ उक्तभूतान्याश्रित्य संशयपूर्वपक्षौ दर्शयति–किमिमानीत्यादिना ॥ संशयबीजानुक्तौ पूर्वोत्तरपक्षयुक्तयो बीजमिति ज्ञेयम् । नन्वत्र भूतानां किं स्वातन्त्र्येणोपादानत्वमाशङ्कते,कर्तृत्वं वा? नाद्यः, "रचनानुपपत्तेः" इत्यादिन्यायविरोधादिति शङ्कते–नन्विति ॥ न द्वितीयः, अचेतनत्वादिति भावः । यथा मनुष्या-

भामती ।

इति पूर्वः पक्षः । श्रुत्योर्विरोधे वस्तुनि विकल्पानुपपत्तेरन्यतरानुगुणतयान्यतरा नेतव्या । तत्र किम् 'अद्भ्यः पृथिवी' इति पृथिवीशब्दोऽन्नपरतया नीयतामुत 'अन्नमसृजत' इत्यन्नशब्दः पृथिवीपरतयेति विशये महाभूताधिकारानुरोधात्प्रायिककृष्णरूपानुरोधाच्च 'तद्यदपां शर आसीत्' इति च पुनः श्रुत्यनुरोधाच्च वाक्यशेषस्य चान्यथाप्युपपत्तेरन्नशब्दोऽन्नकारणे पृथिव्यामिति राद्धान्तः ॥ १२ ॥ (६)॥ तदभिध्यानादेव तु तल्लिंगात्सः । सृष्टिक्रमे भूतानामविरोध उक्तः । इदानीमाकाशादिभूताधिष्ठात्र्यो देवताः किं स्वतन्त्रा एवोत्तरोत्तरभूतसर्गे प्रवर्तन्त उत परमेश्वराधिष्ठिताः परतन्त्रा इति । तत्र 'आकाशाद्वायुर्वायोरग्निः' इति स्ववाक्ये निरपेक्षाणां श्रुतेः स्वयंचेतनानां च चेतनान्तरापेक्षायां प्रमाणाभावात्,प्रस्तावस्य च लिङ्गस्य च पारम्पर्येणापि मूलकारणस्य ब्रह्मण उपपत्तेः, स्वतन्त्राणामेवाकाशादीनां वाय्वादिकारणत्वमिति जगतो ब्रह्मयोनित्वव्याघात इति प्राप्तम् । एवं प्राप्तेऽभिधीयते–'आकाशाद्वायुः' इत्यादय आकाशादीनां केवलमुपादानभावमाचक्षते, न पुनः स्वातन्त्र्येणाधिष्ठातृत्वम् । न च चेतनानां स्वकार्यस्वातन्त्र्य-

आनन्दगिरीय–न्यायनिर्णयः ।

श्रुतिनयनाच्चयोरविरोधादन्नभावमापन्ने पृथिवीकारणे ब्रह्मणि समन्वयोपपत्तिरिति निगमयितुमितीत्युक्तम् ॥ ॥१२॥ ( ६ ) ॥ पूर्वेष्वधिकरणेषु महाभूतानां पूर्वस्मात्पूर्वस्मादुत्तरस्योत्तरस्य सृष्टिरुपदिष्टा, संप्रति भूतानां स्वकार्यस्वातन्त्र्याद्ब्रह्मणः सर्वकारणत्वश्रुतिविरोधः स्यादित्याशंक्याऽऽह–तदभिध्यानादिति । विषयप्रदर्शनपूर्वकमाकाशादिशब्दानां चेतनाचेतनविषयत्वाभ्यां संदेहमुक्त्वा पूर्वपक्षं गृह्णाति–किमिमानीति । अत्र च भूतसृष्टत्वश्रुतेर्ब्रह्मस्रष्टृत्वश्रुतेश्च विरोधनिराकरणद्वारेण सर्वस्रष्टरि ब्रह्मणि समन्वयदृढीकरणात्पादादिसंगतयः । पूर्वपक्षे श्रुत्योर्विरोधादनेकवाक्यत्वान्न तत्र ब्रह्मणि समन्वयः । सिद्धान्ते तु तयोरेकवाक्यतयाऽविरोधात्प्रामाण्याच्चसिद्धिः । 'आकाशादेव समुत्पद्यन्ते' इत्येवकारश्रुत्या ब्रह्मणः स्वातन्त्र्ये समधिगते भूतस्वातन्त्र्यमयुक्तमिति शंकते–कुत इति । मूलकारणत्वापेक्षया ब्रह्मणः स्वातन्त्र्यश्रवणमित्याशयवानाह–आकाशादिति । पूर्वपक्षमाक्षिपति–नन्विति । आकाशादिशब्दैराकाशाद्यभिमानिनीनां देव-

**चेतनानां स्वतन्त्राणां प्रवृत्तिः प्रतिषिद्धा ॥ नैष दोषः ॥ "तत्तेज ऐक्षत । ता आप ऐक्षन्त" [ छां० ६ । २ । ४ ] इति च भूतानामपि चेतनत्वश्रवणादित्येवं प्राप्ते अभिधीयते ॥ स्वयमेव परमेश्वरः । तेनतेनाऽऽत्मनाऽवतिष्ठमानोऽभिध्यायंस्तंतं विकारं सृजतीति ॥ कुतः ॥ "तल्लिङ्गात्" तथाहि-शास्त्रं "यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो, यं पृथिवी न वेद, यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयति" [ बृ० ५ । ७ । ३ ] इत्येवञ्जातीयकं साध्यक्षाणामेव भूतानां प्रवृत्तिं दर्शयति ॥ तथा "सोऽकामयत बहु स्यां प्रजायेय" [ तै० उ० २ ।**

---

रत्नप्रभा ।

दिशब्दैस्तत्तद्देहाभिमानिनो जीवा उच्यन्ते, तथा "आकाशाद्वायुः" [ तै० उ० २ । १ । २ ] इत्यादिश्रुतौ आकाशादिशब्दैः । तत्तद्भूताभिमानिदेवता उच्यन्ते । तासां स्वकार्ये वाय्वादौ कर्तृत्वसम्भवान्निरपेक्षनिमित्तत्वं पञ्चम्यर्थः । एवं "तदात्मानं स्वयमकुरुत" [ तै० उ० २ । ७ । १ ] इति श्रुतौ स्वयमिति विशेषणाद्ब्रह्मणोऽन्यानपेक्षं सर्वकर्तृत्वं श्रुतम् । तथा च मिथो निरपेक्षेश्वरभूतकर्तृश्रुत्योर्विरोधान्न ब्रह्मणि समन्वय इति सफलं पूर्वपक्षमाह-**नैष दोष इति** ॥ भूतानां तदभिमानिदेवतानामित्यर्थः । यथा आकाशादिभावापन्नब्रह्मणः सर्वोपादानत्वं, तथा तदभिमानिदेवताजीवभावमापन्नब्रह्मणः कर्तृत्वमिति परम्परया ईश्वरकर्तृत्वश्रुत्यविरोधः । स्वयमिति विशेषणम्-ईश्वरान्तरनिरासार्थं न जीवभावापेक्षानिरासार्थमित्येकदेशिसिद्धान्त ऊहनीयः । मुख्यसिद्धान्तमाह-**एवं प्राप्त इति** ॥ आकाशादिशब्दैर्न देवतालक्षणा । मुख्यार्थे बाधकाभावात् । पञ्चम्यश्च प्रकृतित्वार्थाः । तत्र रूढतरत्वात् । तथा चाचेतनानां भूतानां कर्तृत्वमेव नास्ति । **कुतः**-ईश्वरानपेक्षकर्तृत्वम् । यद्यपि देवतानां कर्तृत्वं सम्भवति । तथापीश्वरनियम्यत्वश्रवणाच्चेतनानामपि न स्वातन्त्र्यम् । किमु वाच्यमचेतनानां भूतानां न स्वातन्त्र्यमिति मत्वोक्तम्-**तल्लिङ्गादिति** ॥ तत्तदचेतनात्मनावस्थितस्य ब्रह्मणः उपादानत्वेऽपि जीवव्या वृत्तेश्वरत्वाकारेणैव साक्षात् सर्वकर्तृत्वं, न जीवत्वद्वारा तस्य सर्वनियन्तृत्वलिङ्गादित्यर्थः।प्रकरणाच्च साक्षात् सर्वकर्तृत्वमित्याह-**तथेति**॥

भामती ।

मित्येतदप्यैकान्तिकं परतन्त्राणामपि तेषां बहुलमुपलब्धेर्भृत्यान्तेवास्यादिवत् । तस्माल्लिङ्गप्रस्तावसामञ्जस्याय स ईश्वर एव तेनतेनाकाशादिभावेनोपादानभावेनावतिष्ठमानः स्वयमधिष्ठाय निमित्तकारणभूतस्तंतं विकारं

आनन्दगिरीय-न्यायनिर्णयः ।

तानां मनुष्यादिशब्दैरिव तदभिमानिनां जीवानां विवक्षितत्वात्पञ्चमीनां च निमित्तार्थत्वादाकाशाद्यात्मनेश्वरस्य वाय्वाद्युपादानत्ववत्तदभिमानिदेवतात्मनाऽधिष्ठातृत्वं चाविरुद्धमिति परिहरति-**नैष दोष इति** । भूतानामपीति भूताभिमानिदेवताभिप्रायम् । 'सोऽकामयत' इति परमेश्वरं प्रस्तुत्य 'तदात्मानं स्वयमकुरुत' इति कर्तृत्वं श्रुतं 'यः पृथिव्यां तिष्ठन्' इत्यादिना चेश्वरस्य नियन्तृत्वमुक्तं तत्कुतो देवतानां स्वातन्त्र्येण कार्ये नियन्तृत्वमित्याशंक्य प्रस्तावलिङ्गाभ्यामवद्योतितं ब्रह्मणः सर्वनियन्तृत्वमभिमानिदेवताद्वारा पारंपर्येणापि सिध्यत्यन्यथा ब्रह्मकारणत्वश्रुतेर्भूतकारणत्वश्रुतेश्च मिथो विरोधः स्यादित्युपसंहर्तुमिति शब्दः। आकाशादिशब्दैर्न देवतालक्षणा मुख्यार्थबाधाभावात्पञ्चम्यश्चापादानार्थास्तत्र रूढतरत्वादिति सिद्धान्तयति-**एवं प्राप्त इति** । भूतानां स्वातन्त्र्यश्रवणान्नास्ति स्वविकारसृष्टावीश्वरापेक्षेत्युक्तत्वाद्युक्तप्रतिज्ञानुपपत्तिरिति शङ्कते-**कुत इति** । सौत्रं हेतुमादाय विभजते-**तल्लिंगादिति** । इतश्च भूतानामयुक्ता स्वातन्त्र्येण प्रवृत्तिरित्याह-**तथेति** । ब्रह्माकाशयोरन्यतरपदार्थोपादानेऽन्यतरपदार्थबाधप्रसंगात्पञ्चम्येवकारश्रुति-

६।१] इति प्रस्तुत्य "सच्च त्यच्चाऽभवत्। तदात्मानꣳ स्वयमकुरुत" [तै० उ० २।६।१] इति तस्यैव सर्वात्मभावं दर्शयति॥ यत्त्वीक्षणश्रवणमतेजसोः, तत्परमेश्वराऽऽवेशवशादेव द्रष्टव्यम्। "नाऽन्योऽतोऽस्ति द्रष्टा" [बृ० ३।७।२३] इतीक्षित्रन्तरप्रतिषेधात्। प्रकृतत्वाच्च सत ईक्षितुः "तदैक्षत बहु स्यां प्रजायेय" [छां० ६।२।३] इत्यत्र ॥ १३ ॥ इति तदभिध्यानाधिकरणम् ॥ ७ ॥

## विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥ (८) ॥

रत्नप्रभा।

पूर्वोक्तमनूद्य निरस्यति—यत्त्विति ॥ परमेश्वरस्याऽन्तर्यामिभावेनाऽऽवेशः सम्बन्धः। तद्वशाद्भूतेष्वीक्षणश्रवणम्। नैतावता तेषां चेतनत्वं स्वातन्त्र्यं चेत्यर्थः। अनेन तदभिध्यानादिति पदं व्याख्यातम्। इत्थं सूत्रयोजना। सः ईश्वरस्तत्तदात्मना स्थितोऽपि साक्षादेव सर्वकर्ता। तस्यान्तर्यामित्वलिङ्गाज्जीवत्वद्वारा कर्तृत्वं नाम जीवस्यैव कर्तृत्वमित्यन्तर्यामिणः कर्तृत्वासिद्धेरन्तर्यामित्वायोगात् तदभिध्यानादीश्वरेक्षणादेव भूतेषु श्रुतेक्षणोपपत्तेश्चेति। "तत्तेज ऐक्षत" [छां० ६।२।३] इति श्रुत ईक्षितापरमात्मैवेत्यत्र श्रुत्यन्तरं प्रकरणं चाह—नान्य इति ॥ तस्मादीश्वरपदार्थलोपप्रसङ्गेनेश्वरादन्यस्य स्वातन्त्र्याभावान्नेश्वरकर्तृत्वश्रुतेर्भूतश्रुत्या विरोध इति सिद्धम् ॥१३॥(७)॥ यद्यप्यत्र श्रुतिविरोधो न परिहृियत इत्यसंगतिः। तथाप्युत्पत्तिक्रमे निरूपिते लयक्रमो बुद्धिस्थो विचा-

भामती।

वाय्वादिकं सृजतीति युक्तम्। इतरथा लिङ्गप्रस्तावौ क्लेशितौ स्यातामिति। **परमेश्वरावेशवशादिति।** परमेश्वर एवान्तर्यामिभावेनाविष्ट ईक्षिता, तस्मात्सर्वस्य कार्यजातस्य साक्षात्परमेश्वर एवाधिष्ठाता निमित्तकारणं न त्वाकाशादिभावमापन्नः। आकाशादिभावमापन्नस्तूपादानमिति सिद्धम्॥१३॥ (७)॥ **विपर्ययेण तु क्रमोऽत उपपद्यते च।** उत्पत्तौ महाभूतानां क्रमः श्रुतो नाप्ययेऽप्ययमात्रस्य श्रुतत्वात्। तत्र नियमे संभवति नानियमः। व्यवस्थारहितो हि सः। न च व्यवस्थायां सत्यामव्यवस्था युज्यते। तत्र क्रमभेदापेक्षायां किं दृष्टोऽप्ययक्रमो घटादीनां महाभूताऽप्ययक्रमनियामकोऽस्त्वाहो श्रौत उत्पत्तिक्रम इति विशये श्रौतस्य श्रौतान्तरमभ्यर्हितं समानजातीयतया तस्यैव बुद्धिसांनिध्यात्। न दृष्टं,विरुद्धजातीयत्वात्। तस्माच्छ्रौतेनैवोत्पत्तिक्रमेणाप्ययक्रमो नियम्यत इति प्राप्त उच्यते—अप्ययस्य क्रमापेक्षायां खलूत्पत्तिक्रमो नियामको भवेत्,न त्वस्त्यप्ययस्य क्रमापेक्षा,दृष्टानुमानोपनीतेन क्रमभेदेन श्रुत्यनुसारिणोऽप्ययक्रमस्य बाध्यमानत्वात्। तस्मिन् हि सत्युपादानोपरमेऽप्युपादेयमस्तीति स्यात्। न चैतदस्ति। तस्मात् तद्विरुद्धदृष्टक्रमावरोधा-

आनन्दगिरीय—न्यायनिर्णयः।

भ्यामवगतस्वातन्त्र्ययोस्तयोरेकतरस्याप्यबाधेन समुच्चयोपादानेन नैरपेक्ष्यमात्रं बाधित्वा पूर्वपूर्वभूताकारपरिणतं ब्रह्मोत्तरोत्तरभूतोपादानमुपेयमिति भावः। पूर्वपक्षबीजमनूद्य तदभिध्यानादेवेति सूत्रावयवयोजनया निराकरोति—यत्त्विति। परमेश्वरस्य भूतेषु प्रवेशात्तदीयमेवाभिध्यानमतेजसोरुपचर्यते, तत्र भूतानां चेतनत्वाशंकेत्यर्थः। भूतानां तदभिमानिचेतनदेवताद्वारेणेक्षणसिद्धौ किमीश्वरेणेत्याशंक्याऽऽह—नान्य इति। भवतु वा चेतनानां देवतात्मनां भिन्नत्वं, तथाऽपि किं कारणमिति विशये परमेश्वरस्य कारणत्वेन क्लृप्तत्वात्स एव द्विधा कारणमित्याह—प्रकृतत्वादिति। ब्रह्मणः स्वरूपेण पररूपेण सर्वकारणत्वे सर्वस्य ब्रह्मसमन्वयस्य भूतस्वातन्त्र्यस्रष्टृत्वश्रुतिविरोधो नेति सिद्धमिति भावः॥ १३॥ (७)॥ सृष्टिक्रममभिधाय लयक्रममभिधत्ते—विपर्ययेणेति। यद्यप्यत्र श्रुतिविप्रतिषेधो न साक्षात्परिहृियते तथाऽप्युत्पत्ति-

भूतानामुत्पत्तिक्रमश्चिन्तितः॥ अथेदानीमप्ययक्रमश्चिन्त्यते-किमनियतेन क्रमेणाऽप्ययः,उत-उत्पत्तिक्रमेण, अथ वा तद्विपरीतेनेति। त्रयोऽपि चोत्पत्तिस्थितिप्रलयाः भूतानां ब्रह्मायत्ताः श्रूयन्ते "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति" [तै० उ० ३।१।१] इति। तत्राऽनियमोऽविशेषादिति प्राप्तम्॥ अथ वोत्पत्तेः क्रमस्य श्रुतत्वात्प्रलयस्याऽपि क्रमाकांक्षिणः स एव क्रमः स्यादिति॥ एवं प्राप्तम्॥ ततो ब्रूमः॥ विपर्ययेण तु प्रलयक्रमः-अतः उत्पत्तिक्रमाद्भवितुमर्हति। तथाहि लोके दृश्यते-येन क्रमेण सोपानमारूढः, ततो विपरीतेन क्रमेणाऽवरोहतीति॥ अपि च दृश्यते-

रत्नप्रभा।

येत इति प्रासंगिक्यायेव पादावान्तरसंगती इति मत्वाह-भूतानामिति॥ अत्रोत्पत्तिक्रमाद्विपरीतक्रमनिर्णयात् सिद्धान्ते भूतानां प्रातिलोम्येन लयध्यानपूर्वकं प्रत्यग्ब्रह्मणि मनःसमाधानं फलं, पूर्वपक्षे तु कारणनाशे सति कार्यनाश इति सर्वलयाधारब्रह्मासिद्धेरुक्तसमाध्यसिद्धिरिति भेदः। सति भूतानां लये क्रमचिन्ता। स एव नास्तीति केचित्। तान् प्रत्याह-त्रयोऽपीति॥ अनियम इत्यनास्थयोक्तम्। श्रौतस्य प्रलयस्य क्रमाकांक्षायां श्रौत उत्पत्तिक्रम एव ग्राह्यः। श्रौतत्वेनान्तरंगत्वादित्येवं पूर्वपक्षः। सति कारणे कार्यं नश्यतीति लोके दृश्यते। तथा च श्रौतोऽप्युत्पत्तिक्रमो लये न गृह्यते। किन्तु लौकिकक्रम एव गृह्यते। श्रुतेर्लौकिकदृष्टपदार्थबोधाधीनत्वेन श्रौतादपि लौकिकस्यान्तरंगत्वाद्योग्यत्वाच्च। कारणमेव हि कार्यस्य रूपमिति तदनन्यत्वन्यायेन स्थापितम्। न हि स्वरूपनाशे कार्यस्य क्षणमपि स्थितिर्युक्ता। तस्मादयोग्य उत्पत्तिक्रमो लयस्य न ग्राह्यः। लौकिकक्रमावरोधेन निराकांक्षत्वादिति सिद्धान्तयति-ततो ब्रूम इत्यादिना॥ क्रमेण परम्परया सर्वकार्यलयाधारत्वं ब्रह्मणः किमित्याश्रीयते, साक्षा-

भामती।

दाकांक्षैव नास्ति क्रमान्तरं प्रत्ययोग्यत्वात् तस्य। तदिदमुक्तं सूत्रकृता-'उपपद्यते च' इति। भाष्य-

आनन्दगिरीय-न्यायनिर्णयः।

क्रमे निरूपिते लयक्रमो बुद्धिस्थत्वाद्विचार्यत इति प्रासंगिकी संगतिरित्यभिप्रेत्याऽऽह-भूतानामिति। वस्तुतस्तु सर्वप्रलयाधारब्रह्मसमन्वयस्य कारणनाशात्कार्यनाश इति न्यायानुगृहीतसृष्टिक्रमश्रुतिविरोधो निरस्यत इति संगतयः। पूर्वपक्षे भूतलयस्य श्रौतसंनिहितक्रमलाभादशेषलयाधारब्रह्मसमन्वयस्य न्यायोपेतसृष्टिक्रमविरोधादसिद्धिः। सिद्धान्ते लोकानुरोधिन्याः श्रुतेः श्रुतिसंनिहितादपि लौकिकक्रमस्य संनिहिततरत्वात्तेन तद्बाधकतेत्युक्ते ब्रह्मणि तत्सिद्धिः। 'अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छ' इत्यादौ कार्यलिंगकानुमानप्रदर्शनाद् "यत्प्रयन्ति" इत्यादौ च लयमात्रश्रवणेऽपि क्रमस्याश्रुतत्वादाकांक्षायाश्च द्विधाऽपि शान्तेश्चिन्ताप्रकारमेवाभिनयति-किमनियतेनेति। सति प्रलये क्रमश्चिन्तनीयः स एव नास्तीति केचित्तान्प्रत्याह-त्रयोऽपीति। उपक्रममात्रेण पूर्वपक्षमाह-तत्रेति। श्रुतोत्पत्तिक्रमादेव नियमे सत्यनियमो न युक्तिमानित्याशंक्य पक्षान्तरमाह-अथवेति। महाभूतप्रलयोऽपि क्रममपेक्षते तदुत्पत्तिप्रलययोरन्यतरत्वात्तदुत्पत्तिवदित्यभिप्रेत्याऽऽह-क्रमाकांक्षिण इति। तथा चासौ श्रौतसंनिहितक्रमवान् स्मार्तं व्यवहितं क्रममवलम्बते तस्य बहिरङ्गत्वादिति भावः। महाभूतानामुत्पत्तिक्रमेण प्रलये क्रमवति सति सर्वप्रलयाधारे ब्रह्मणि समन्वयो न्यायानुगृहीतसृष्टिक्रमश्रुतिविरोधो न सिध्यतीत्युपसंहरति-एवमिति। सिद्धान्तसूत्रमवतार्य व्याकरोति-तत इति। लोकदृष्टपदार्थबोधाधीना हि श्रुतिरतः श्रुतिसंनिहितादपि लौकिकक्रमस्य संनिहिततरत्वात्तेन तद्बाधनं युक्तमित्युपपद्यत इति सूत्रावयवं व्याचष्टे-तथाहीति। चकारसूचितमुपपत्त्यन्तरमाह-अपि चेति। सत्यपीत्यं लौकिके दर्शने प्रकृते किमायातमित्याशंक्य फलपरत्वे-

मृदो जातं घटशरावादि-अप्ययकाले मृद्भावमप्येति । अद्भ्यश्च जातं हिमकरकाद्यब्भावमप्येतीति । अतश्चोपपद्यते एतत् । यत्-पृथिव्यद्भ्यो जाता सती स्थितिकालव्यतिक्रान्तावपोऽपीयाद्, आपश्च तेजसो जाताः सत्यस्तेज अपीयुः । एवं क्रमेण सूक्ष्मं, सूक्ष्मतरं चाऽनन्तरमनन्तरतरं कारणमपीत्य सर्वं कार्यजातं परमकारणं परमसूक्ष्मं च ब्रह्माप्येतीति वेदितव्यम् । न हि स्वकारणव्यतिक्रमेण कारणकारणे कार्याप्ययो न्याय्यः । स्मृतावप्युत्पत्तिक्रमविपर्ययेणैवाऽप्ययक्रमस्तत्रतत्र दर्शितः-"जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते । ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते" ॥ १ ॥ [ विष्णुपुराणे ] इत्येवमादौ । उत्पत्तिक्रमस्तूत्पत्तावेव श्रुतत्वान्नाप्यये भवितुमर्हति । न चाऽसावयोग्यत्वादप्ययेनाकांक्ष्यते । न हि कार्ये ध्रियमाणे कारणस्याऽप्ययो युक्तः । कारणाऽप्यये कार्यस्याऽवस्थानानुपपत्तेः । कार्याऽप्यये तु कारणस्याऽवस्थानं युक्तम् । मृदादिष्वेवं दृष्टत्वात् ॥ १४ ॥

इति विपर्ययाधिकरणम् ॥ ८ ॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाऽविशेषात्॥ १५॥ (९)॥

रत्नप्रभा ।

देव तत् किं न स्यादित्यत आह-न हि स्वकारणव्यतिक्रमेणेति॥ घटनाशे मृदनुपलब्धिप्रसंगादित्यर्थः। "वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते" [विष्णु०पु०] इति स्मृतिशेषः-आदिपदार्थः।योग्यताधीनः सम्बन्ध इति न्यायादयोग्यक्रमबाध इति सिद्धम् ॥१४॥ (८) ॥ अन्तरा-ऽविशेषात् ॥ उक्तभूतोत्पत्ति-

भामती ।

कारोऽप्याह--न चासावयोग्यत्वादप्ययेनाकांक्ष्यत इति । तस्मादुत्पत्तिक्रमाद्विपरीतः क्रम इत्येतन्न्यायमूला च स्मृतिरुक्ता ॥१४॥(८)॥ अन्तराविज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात् ।

आनन्दगिरीय-न्यायनिर्णयः ।

नापि सूत्रावयवं योजयति-अतश्चेति । पृथिव्यादीनामबादौ लयश्चेद्ब्रह्मणः सर्वकार्यलयाधारत्वं कथमित्याशंक्य तत्तत्कारणात्मके ब्रह्मणि तत्तत्कार्यलयाभ्युपगमात्तत्रैव पर्यवसानमिति मत्वाऽऽह-एवं क्रमेणेति । पारंपर्यं परित्यज्य साक्षाद्ब्रह्मणि सर्वकार्यलयाभ्युपगमो बलीयानित्याशंक्याऽऽह-न हीति । घटादेर्मृत्कार्यस्य परमाणुषु लयानभ्युपगमादन्यथा घटादिनाशे परमाणूनामतीन्द्रियत्वान्न किंचिदुपलभ्येतेति भावः । लौकिकन्यायवशादुत्पत्तिक्रमविपरीतं प्रलयक्रमं प्रदर्श्य तत्रैव स्मृतिं संवादयति-स्मृतावपीति । "वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते । अव्यक्तं पुरुषे ब्रह्मन्निष्कले संप्रलीयते" इति वाक्यमादिशब्दार्थः । स्मार्तक्रमाल्लौकिकन्यायाच्च श्रौतक्रमस्य संनिकृष्टत्वादाकांक्षासंनिधिभ्यां तस्यैवोपादेयत्वमित्याशंक्य योग्यत्वाभावान्नैवमित्याह-उत्पत्तीति । आकांक्षाऽपि तत्र नास्तीत्याह-न चेति । अयोग्यविषयाभ्यामाकांक्षासंनिधिभ्यां विप्रकृष्टविषयेऽप्याकांक्षायोग्यत्वे बलवत्तरे संबन्धस्य योग्यतानिमित्तत्वादिति भावः । अयोग्यत्वादित्युक्तं साधयति-न हीति । कार्यकारणयोरभेदे कार्याभावे कारणवत्तदभावेऽपि कार्यं स्यादित्याशंक्याऽऽह-कार्येति । तदेवं ब्रह्मणः सर्वप्रलयाधारत्वात्तत्र समन्वयस्य कारणनाशात्कार्यनाश इति न्यायानुगृहीतसृष्टिक्रमश्रुत्या न विरोधोऽस्तीति सिद्धमिति भावः ॥ १४ ॥ ( ८ ) ॥ पूर्वोक्तभूतोत्पत्तिप्रलयक्रमस्य करणसृष्ट्या बाधमाशंक्य परिहरति-अन्तरेति । भूतोत्पत्तिप्रलयक्रमो विषयः स किं कर-

भूतानामुत्पत्तिप्रलयावनुलोमप्रतिलोमक्रमाभ्यां भवत इत्युक्तम् । आत्मादिरुत्पत्तिः, प्रलयश्चात्मान्तः,-इत्यप्युक्तम् । सेन्द्रियस्य तु मनसो बुद्धेश्च सद्भावः प्रसिद्धः श्रुतिस्मृत्योः-"बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुः" [ कठ० ३ । ३ ] इत्यादिलिङ्गेभ्यः । तयोरपि कस्मिंश्चिदन्तराले क्रमेणोत्पत्तिप्रलयावुपसंग्राह्यौ । सर्वस्य वस्तुजातस्य ब्रह्मजत्वाभ्युपगमात् ॥ अपि चाऽऽथर्वण उत्पत्तिप्रकरणे भूतानामात्मनश्चाऽन्तराले करणान्यनुक्रम्यन्ते-"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी

रत्नप्रभा ।

लयक्रममुपजीव्य स किं करणोत्पत्तिक्रमेण विरुध्यते न वेति करणानाममौतिकत्वभौतिकत्वाभ्यां सन्देहे वृत्तानुवादपूर्वकपूर्वपक्षमाह-**भूतानामित्यादिना** ॥ करणान्येव न सन्तीति वदन्तं प्रत्याह-**सेन्द्रियस्येति** ॥ "मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः । श्रोत्रादीनीन्द्रियाण्यन्ये" [ भग० गी० ३ । ४२ ] इति स्मृतिर्द्रष्टव्या । अन्यपराः शब्दाः लिंगानीत्युच्यन्ते । करणानां क्रमाकांक्षामाह-**तयोरपीति** ॥ आकांक्षायां श्रुतिसिद्धः क्रमो ग्राह्य इत्याह-**अपि चेति** ॥ विज्ञायतेऽनेनेति विज्ञानं सेन्द्रिया बुद्धिः । आत्मनो भूतानां चान्तरा मध्ये तल्लिंगात् सृष्टिवाक्याद् "एतस्माज्जायते प्राणो मनः" इत्यादिरूपाद्विज्ञानमनसी अनुक्रम्येते । तथा च करणक्रमेण पूर्वोक्तक्रमभंग इति **शंकासूत्रांशार्थः** । न च करणानां भौतिकत्वाद्भूतानन्तर्यमिति वाच्यम् । तेषां भौतिकत्वे मानाभावात् । तथा चात्मनः प्रथममाकाशस्य जन्म, पश्चाद्वायोरित्युपक्रमस्य, आत्मनः करणानि ततो भूतानीति क्रमेण विरोध इति

भामती ।

तदेवं भावनोपयोगिनौ भूतानामुत्पत्तिप्रलयौ विचार्य बुद्धीन्द्रियमनसां क्रमं विचारयति । अत्र च विज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञानशब्देनेन्द्रियाणि च बुद्धिं च ब्रूते । तत्रैतेषां क्रमापेक्षायामात्मानं च भूतानि चान्तरा समाम्नानात्तेनैव पाठेन क्रमो नियम्यते । तस्मात्पूर्वोत्पत्तिक्रमभङ्गप्रसङ्गः । यत आत्मनः करणानि करणेभ्यश्च भूतानीति प्रतीयते, तस्मादात्मन आकाश इति भज्यते । अन्नमयमिति च मयडानन्दमय इतिवत् न विकारार्थ इति प्राप्तेऽभिधीयते---विभक्तत्वाच्चावन्मनःप्रभृतीनां कारणापेक्षायायामन्नमयं मन इत्यादि-

आनन्दगिरीय-न्यायनिर्णयः ।

णसृष्टिक्रमेण बाध्यते न वेति करणानां भौतिकत्वाभौतिकत्वाभ्यां संदेहे पूर्वपक्षयितुं वृत्तं कीर्तयति-**भूतानामिति** । उक्तोत्पत्तिप्रलयक्रमस्य विरोधद्योतनार्थमुक्तमर्थान्तरमनुद्रवति-**आत्मादिरिति** । अत्र च क्रमवद्भूतोत्पत्तिप्रलयाधारे ब्रह्मणि समन्वयस्य करणसृष्टिश्रुत्या विरोधपरिहारद्वारा दृढीकरणात्पादादिसंगतयः । पूर्वपक्षे करणसर्गश्रुतिविरोधादुक्तसमन्वयासिद्धिः । सिद्धान्ते तदविरोधात्तत्सिद्धिः । देहप्रदेशातिरिक्तेन्द्रियाभावात्कथं यथोक्तः संदेहः स्यादित्याशंक्याऽऽह-**सेन्द्रियस्येति** । श्रुतिस्मृत्योरुक्ता प्रसिद्धिस्तत्र श्रुतिमुदाहरति-**बुद्धिं त्विति** । "इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिः" इत्याद्या स्मृतिरुदाहर्तव्या । करणानां सत्त्वेऽपि तेषामाहंकारिकत्वात्तदुत्पत्तिक्रमेण कुतो भूतोत्पत्त्यादिक्रमस्य विरोधाशंकेत्याशंक्याऽऽह-**तयोरिति** । तेषामाहंकारिकत्वे मानाभावाद्ब्रह्मजत्वस्याऽऽवश्यकत्वे तत्कार्येष्वेव कस्मिँश्चिदन्तरालें बुद्धिसेन्द्रियमनसोरुत्पत्तिलयौ ग्राह्याविर्त्यर्थः । तथाऽपि भूतोत्पत्त्यनन्तरं तदुत्पत्त्यङ्गीकारतया भूतोत्पत्त्यादिक्रमस्याविरुद्धतेत्याशंक्य क्रमाकांक्षायां करणोत्पत्तेः श्रुत्यन्तरसिद्धक्रमसिद्धेर्विरोधोऽस्तीत्याह-**अपि चेति** । अन्नमयश्रुतौ करणानां भौतिकत्वे सिद्धे भूतानन्तर्यं तेषामित्याशंक्य 'अपोमयः प्राणः' इत्यत्र तद्विकारत्वाभाववदिहापि तद्विकारत्वाभावात्करणोत्पत्तिश्रुत्या क्रमव-

विश्वस्य धारिणी'' [मुण्ड० २।१।३] इति ॥ तस्मात्पूर्वोक्तोत्पत्तिप्रलयक्रमभङ्गप्रसङ्गो भूतानामिति चेत् ॥ न ॥ अविशेषात्—यदि तावद्भौतिकानि करणानि, ततो भूतोत्पत्तिप्रलयाभ्यामेवैषामुत्पत्तिप्रलयौ भवत इति नैतयोः क्रमान्तरं मृग्यम् । भवति च भौतिकत्वे लिङ्गं करणानाम् । ''अन्नमयं हि सोम्य मनः, आपोमयः प्राणः, तेजोमयी वाग्'' [छां० ५।६।४] इत्येवंजातीयकम् । व्यपदेशोऽपि क्वचिद्भूतानां, करणानां च,—ब्राह्मणपरिव्राजकन्यायेन नेतव्यः ॥ अथ त्वभौतिकानि करणानि । तथापि भूतोत्पत्तिक्रमो न करणैर्विशेष्यते । प्रथमं करणान्युत्पद्यन्ते, चरमं भूतानि, प्रथमं वा भूतानि उत्पद्यन्ते,

रत्नप्रभा ।

तित्तिर्यथर्वश्रुत्योर्विरोधान्न ब्रह्मणि समन्वय इति पूर्वपक्षफलम् । सिद्धान्तयति—नेति ॥ ''आत्मन आकाशः'' [तैत्ति० उ० २।१।२] इत्यादितित्तिरिश्रुतौ पञ्चम्याः कार्यकारणभावेनार्थतः क्रमो भाति, न तस्याथर्वणपाठेन बाधः । अर्थक्रमविरोधिक्रमविशेषस्याश्रुतेः । पाठमात्रस्यार्थक्रमधीशेषस्य शेषिबाधकत्वायोगात् । अतः श्रुतार्थक्रमाविरोधेन पाठस्य नेयत्वाद्भूतानन्तर्यं करणानामित्यर्थः । किञ्च भौतिकत्वात् तेषां तदानन्तर्यमित्याह—यदीति ॥ न च प्राणस्याधिकारत्वायोगादन्नमयमित्यादिमयटो न विकारार्थतेति वाच्यम् । करणानां विभक्तत्वेन कार्यतया कारणाकांक्षायाम् ''अन्नमयम्'' [छां० ६।५।४। (तै० उ० २।८।१)] इत्यादिश्रुतेराकांक्षितोक्त्यर्थमसति बाधके मयटो विकारार्थताया युक्तत्वात् । प्राचुर्यार्थत्वे त्वनाकांक्षितोक्तिप्रसंगाच्छ्रुत्यैव तेजोऽन्नप्राशने वाक्प्राणमनसां वृद्धिः, तदभावे तन्नाशः, इति विकारत्वस्य दर्शितत्वान्न विवादावसरः । यद्वा स्थूलभूताधीना तेषां वृद्धिः । विकारो मयडर्थः श्रूयमाणो भौतिकत्वे लिंगम् । प्राणेन्द्रियमनांसि, भौतिकानि, भूताधानवृद्धिमत्त्वाद्देहवदिति भावः । ननु तेषां भौतिकत्वे कथमाथर्वणे पृथग्जन्मकथनं, भूतजन्मोक्त्यैव तज्जन्मसिद्धेरित्यत आह—व्यपदेशोऽपीति ॥ प्रौढवादेन तेषामभौतिकत्वमुपेत्यापि श्रुत्यविरोधमाह—अथ त्विति ॥ करणानां, भूतानां च,—पूर्वापरत्वे मानाभावात् नोक्तभूतक्रमभंगः । न चाऽऽथर्वणवाक्यं मानम् । पाठमात्रत्वादित्यर्थः । तर्हि

भामती ।

लिङ्गश्रवणादपेक्षितार्थकथनाय विकारार्थत्वमेव मयटो युक्तम्, इतरथा त्वनपेक्षितमुक्तं भवेत् । न च तदपि घटते । न ह्यन्नमयो यज्ञ इतिवदन्नप्राचुर्यं मनसः संभवति । एवं चेद्भूतविकारा मनआदयो भूतानां परस्तादुत्पद्यन्त इति युक्तम् । प्रौढवादितयाभ्युपेत्याह—अथ त्वभौतिकानीति ॥ भवत्वात्मन एव करणानामुत्पत्तिः, न खल्वेतावता भूतैरात्मनो नोत्पत्तव्यम् । तथा च नोक्तक्रमभंगप्रसंगः । विशिष्यते भिद्यते

आनन्दगिरीय—न्यायनिर्णयः ।

भूतोत्पत्त्यादिश्रुतेर्विरोधोऽस्तीत्युपसंहरति—तस्मादिति । सिद्धान्तमादत्ते—नेति । इन्द्रियाणामुत्पत्तिक्रमस्य भूतोत्पत्त्यादिक्रमविरुद्धविशेषासिद्धेर्न विरोधोऽस्तीत्यर्थः। किं भौतिकत्वं करणानामुताभौतिकत्वम्? आद्यं प्रत्याह—यदीति । द्वितीयं दूषयति—भवतीति । न चाऽऽपोमय इतिवन्मयटो न विकारार्थता करणानां विभक्तत्वात्कार्यत्वे कारणापेक्षायामन्नमयमित्यादिश्रुतेरपेक्षितोक्त्यर्थमसति बाधके मयटो विकारार्थताया युक्तत्वादिति भावः । भौतिकत्वे करणानां भूतानन्तरं तदुत्पत्तेर्न पृथक्तद्व्यपदेशः स्यादित्याशंक्याऽऽह—व्यपदेशोऽपीति । क्वचिदित्याथर्वणं वाक्यमुक्तम् । प्रौढवादेन तेषाममौतिकत्वमुपेत्यापि ब्रवीति—अथ त्विति । अभौतिकत्वेऽपि पूर्वोत्तरत्वेन विशेषणविशेष्यत्वे मानाभावाद्भूतोत्पत्तिक्रमो न करणक्रमेण विरुध्यत इत्यर्थः । ननु यथा 'समिधो यजति' इत्यादौ पाठक्रम एवानुष्ठानक्रमे मानं तथैत-

चरमं करणानीति । आथर्वणे तु समाम्नायक्रममात्रं करणानां, भूतानां च–न तत्रोत्पत्तिक्रम उच्यते । तथाऽन्यत्रापि पृथगेव भूतक्रमात्करणक्रम आम्नायते–"प्रजापतिर्वा इदमग्र आसीत् । स आत्मानमैक्षत । स मनोऽसृजत । तन्मन एवासीत् । तदात्मानमैक्षत । तद्वाचमसृजत" इत्यादिना । तस्मान्नास्ति भूतोत्पत्तिक्रमस्य भङ्गः ॥ १५ ॥ इत्यन्तराविज्ञानाधिकरणम् ॥ ९ ॥

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥ ( १० ) ॥

स्तो जीवस्याप्युत्पत्तिप्रलयौ–जातो देवदत्तो, मृतो देवदत्तः, इत्येवं-

रत्नप्रभा ।

कथं क्रमनिर्णयः, तत्राह–तथेति ॥ इदं स्थूलम्–उत्पत्तेः प्राक् प्रजापतिः सूत्रात्मा–आसीत् । अत्र सूक्ष्मभूतात्मकप्रजापतिसर्गः प्रथमः, ततो मनआदिसर्ग इति क्रमो भातीति भावः । एवं च भूतकरणोत्पत्तिश्रुत्योरविरोधाद् ब्रह्मणि समन्वयसिद्धिरिति सिद्धान्तफलं निगमयति– तस्मादिति ॥ १५ ॥ चराचरव्यपाश्रयस्तु ॥ एवं तावत् तत्पदवाच्यकारणनिर्णयाय भूतश्रुतीनां विरोधो निरस्तः । इदानीमापादसमाप्तेस्त्वंपदार्थशुद्धयै जीवश्रुतीनां विरोधो निरस्यते । इह जीवो "न जायते म्रियते" [ कठ० २ । १।७ ] इत्यादिश्रुतेः जातेष्टिश्राद्धशास्त्रेण विरोधोऽस्ति न वेति सन्देहे विरोधोऽस्तीति प्राप्ते लौकिकजन्मादिव्यपदेशसहायाज्जातेष्ट्यादिशास्त्रेण जीवाऽजत्वादिश्रुतिर्बाध्यत इति पूर्वपक्षयति–स्त इति ॥ तथा च करणोत्पत्तिक्रमेण भूतक्रमस्य बाधाभावेऽपि जीवोत्पत्तिक्रमेण बाधः स्यादिति प्रत्युदाहरणसंगतिः ।

भामती ।

भज्यत इति यावत् ॥१५॥ (९) ॥ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ।

आनन्दगिरीय–न्यायनिर्णयः ।

स्मादित्यादिपाठक्रम एवाऽऽदौ करणान्युत्पद्यन्ते पश्चाद्भूतानीत्यत्र मानं नेत्याह–आथर्वणेति । तत्र तेषां क्रममात्रमाम्नायोत्पत्तिरुक्तेति योजना । श्रुत्यर्थाविरुद्धो हि पाठोऽनुष्ठाने मानमिह तु 'आत्मन आकाशः' इत्यादिश्रुत्यर्थविरोधादग्निहोत्रहोमयवागूपाकवत्पाठक्रमभंगेन भूतानन्तरं करणोत्पत्तिरित्यर्थः । करणानां भूतानां चैककार्यत्वे क्रमाकांक्षायां पूर्वविशिष्टस्यैवोत्तरजनकत्वात्करणप्राथम्यमित्याशंक्य भिन्नपरिकरत्वान्मैवमित्याह–तथेति । प्रजापतिः सर्वभूतसूक्ष्मात्मकः सूत्रात्मा । स्थूलं कार्यमिदमुच्यते । तदुत्पत्तिप्राकालोऽग्रशब्दार्थः । अत्र प्रजापतिसृष्टिवचनाद्भूतसृष्टिप्राथम्यं ततश्च मनआदिसृष्टिरुक्तेति करणसर्गस्य पाश्चात्त्यमिति विवेकः । भूतकरणोत्पत्त्योरेवं सिद्धे क्रमे क्रमवद्भूतोत्पत्तिलयाधारे ब्रह्मणि समन्वयस्य करणोत्पत्तिश्रुत्या विरोधो नेत्युपसंहरति—तस्मादिति ॥ १५ ॥ ( ९ ) ॥ पूर्वाधिकरणेषु तत्पदार्थकारणत्वसिद्धयै भूतोत्पत्तिश्रुतिविरोधो निरस्तः, संप्रत्यापादसमाप्तेस्त्वंपदार्थशुद्धयै जीवविषयश्रुतिविरोधो निरस्यते । तत्र करणोत्पत्तिश्चेन्न भूतोत्पत्तिक्रममन्यथयति तर्हि जीवोत्पत्तिस्तदन्यथयेदित्याशंक्य सैव नास्तीत्याह–चराचरेति । इह जीवजनिमृतिनिमित्तवैश्वानरीयेष्ट्यादिशास्त्राणां तन्नित्यत्वशास्त्राणां चाविरोधद्वारा नित्यसिद्धप्रत्यग्ब्रह्मणि समन्वयदृढीकरणात्पादादिसंगतयः । पूर्वपक्षे शास्त्रद्वयविरोधात्तादृग्ब्रह्मसमन्वयासिद्धिः । सिद्धान्ते तदविरोधात्तत्सिद्धिः । जीवो विषयस्तस्य किं देहोत्पादनाशयोरनौपाधिकमुत्पत्त्यादि न वेति श्रुतिविप्रतिपत्तेः संदेहे पूर्वपक्षमाह–स्त इति । देहगामित्वादयं व्यपदेशो न जीवजन्मादि साधयेदित्याशंक्य चेतनोद्देशेन जातकर्मादिविधानादयमपि व्यपदेशो न देहमात्रगामीत्याह—जातेति । न

१ भगवद्गीतासु २ ध्याये २० श्लो० ।

जातीयकाल्लौकिकव्यपदेशाज्जातकर्मादिसंस्कारविधानाच्चेति स्यात् कस्यचिद्भ्रान्तिः ॥ तामपनुदामः ॥ न जीवस्योत्पत्तिप्रलयौ स्तः । शास्त्रफलसम्बन्धोपपत्तेः । शरीरानुविनाशिनि हि जीवे शरीरान्तरगतेष्टानिष्टप्राप्तिपरिहारार्थौ विधिप्रतिषेधावनर्थकौ स्याताम् । श्रूयते च "जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते" [ छां० ६ । ११ । ३ ] इति ॥ ननु लौकिको जन्ममरणव्यपदेशो जीवस्य दर्शितः ॥ सत्यं दर्शितः ॥ भाक्तस्त्वेष जीवस्य जन्ममरणव्यपदेशः । किमाश्रयः पुनरयं मुख्यः, यदपेक्षया भाक्त इति ॥ उच्यते ॥ चराचरव्यपाश्रयः । स्थावरजङ्गमशरीरविषयौ जन्ममरणशब्दौ । स्थावरजङ्गमानि हि भूतानि जायन्ते च, म्रियन्ते च । अतस्तद्विषयौ जन्ममरणशब्दौ मुख्यौ सन्तौ तत्स्थे जीवात्मन्युपचर्येते । तद्भावभावित्वात् । शरीरप्रादुर्भावतिरोभावयोर्हि सतोर्जन्ममरणशब्दौ भवतः, नासतोः ।

---

रत्नप्रभा ।

पूर्वपक्षे जीवब्रह्मैक्यासिद्धिः सिद्धान्ते तत्सिद्धिरिति भेदः । चेतनजन्माद्युद्देशेन चेतनस्य तस्य जन्मान्तरीयफलसाधनं जातकर्मादि संस्कारो विधीयते । तथा चोद्देश्यविधेययोर्मिथोविरोधे सति विधेयाविरोधेनोद्देश्यं नेयमिति न्यायात् जन्मादिकं देहोपाधिकं, न स्वत इति सिद्धान्तयति–तामित्यादिना ॥ जीवापेतं जीवेन त्यक्तम्।इदं शरीरम्।जन्मादिव्यपदेशश्चराचरदेहविषयो मुख्यः । जीवे तु भाक्तः–गौणः औपाधिकजन्मादिविषयः स्यात् । उपाधिजन्माभावे भावादसत्यभावादिति सूत्रार्थः । जीवस्यौपाधि

भामती ।

देवदत्तादिनामधेयं तावज्जीवात्मनो न शरीरस्य तन्नाम्ने शरीराय श्राद्धादिकरणानुपपत्तेः । तन्मृतो देवदत्तो जातो देवदत्त इति व्यपदेशस्य मुख्यत्वं मन्वानस्य पूर्वः पक्षः, मुख्यत्वे शास्त्रोक्तामुष्मिकस्वर्गादिफलसंबन्धानुपपत्तेः । शास्त्रविरोधाल्लौकिकव्यपदेशो भाक्तो व्याख्येयः । भक्तिश्च शरीरस्योत्पादविनाशौ ततस्तत्संयोग इति । जातकर्मादि च गर्भबीजसमुद्भवजीवपापप्रक्षयार्थं, न तु जीवजन्मजपापक्षयार्थम् । अत एव स्मरन्ति 'एवमेनः शमं याति बीजगर्भसमुद्भवम्' इति । तस्मान्न शरीरोत्पत्तिविनाशाभ्यां जीवजन्मविना

आनन्दगिरीय–न्यायनिर्णयः ।

चोपाध्यपरामर्शादौपाधिकौ तस्य जन्मनाशौ, नापि देहस्य संस्कारविधिः पुरुषविषयत्वेन प्रसिद्धत्वात्,अतो जीवस्यानौपाधिकोत्पत्तिनाशसिद्धेरजामृतप्रत्यग्ब्रह्मसमन्वयासिद्धिरित्याह–इति स्यादिति । उत्सूत्रं सिद्धान्तमाह–तामिति । उपपत्तिमेव दर्शयति–शरीरेति । उद्देश्योपादेययोर्मिथो विरोधे सत्युपादेयजन्मान्तरफलसाधनविधिविरोधिनोद्देश्यचेतनजन्ममरणयोर्देहोपाधित्वेनोपचरितत्वाज्जन्मान्तरसाधनकर्मसंबन्धयोग्यो जन्ममृतिरहितः सन्नात्मा सिध्यतीत्यर्थः । आत्मनो जन्माद्यभाव एव शास्त्रीयस्वर्गादिसंबन्धसिद्धिस्तदन्यथानुपपत्त्या नित्यत्वं तस्येत्युक्तम् । इदानीं श्रुतिसिद्धं चैतदित्याह–श्रूयते चेति । जीवेनापेतं त्यक्तम् । वाव किलेत्यवधारणार्थौ निपातौ । जीवो न म्रियत एवेत्यर्थः । पूर्वपक्षबीजमनुभाषते–नन्विति । तदुत्तरत्वेन सूत्रं पातयितुं योजनिकामाह–सत्यमिति । भाक्तो व्यपदेशो मुख्यापेक्षीति मत्वा पृच्छति–किमिति । तत्र सूत्रमवतार्य व्याकरोति–उच्यत इति । तयोस्तद्विषयत्वेन मुख्यत्वे हेतुमाह–स्थावरेति । उपचारे कारणमाह–तदिति । देहगामित्वेन जन्मादिशब्दस्य मुख्यत्वे सौत्रं हेतुमादाय व्याचष्टे–तदिति । देहयोगमनपेक्ष्य साक्षादेव जीवगतौ जन्मनाशशब्दौ किं न स्यातां

न हि शरीरसम्बन्धादन्यत्र जीवो जातो, मृतो वा, केनचिल्लक्ष्यते । "स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः स उत्क्रामन्म्रियमाणः" [ बृ० ४ ।३।८ ] इति च शरीरसंयोगवियोगनिमित्तावेव जन्ममरणशब्दौ दर्शयति । जातकर्मादिविधानमपि देहप्रादुर्भावापेक्षमेव द्रष्टव्यम् । अभावाज्जीवप्रादुर्भावस्य । जीवस्य परस्मादात्मन उत्पत्तिर्वियदादीनामिवाऽस्ति, नास्ति वेत्येतद्-उत्तरेण सूत्रेण वक्ष्यति । देहाश्रयौ तावज्जीवस्य स्थूलावुत्पत्तिप्रलयौ न स्त इत्येतदनेन सूत्रेणाऽवोचत् ॥ १६ ॥ इति चराचरव्यपाश्रयाधिकरणम् ॥ १० ॥

## नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥ ( ११ ) ॥

अस्त्यात्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसम्बन्धी । स किं व्योमादिवदुत्पद्यते ब्रह्मणः, आहोस्विद् ब्रह्मवदेव नोत्पद्यत इति श्रुतिविप्रतिपत्तेर्विशयः—

---

रत्नप्रभा ।

कजन्ममृत्योः श्रुतिमप्याह—स वा इति ॥ जायमानपदार्थमाह—शरीरमिति ॥ म्रियमाणत्वं व्याचष्टे—उत्क्रामन्निति ॥ ननूत्तरत्र जीवस्य जन्मादि निरस्यते, अत्रापि तन्निरासे पुनरुक्तिरित्याशंक्याह—जीवस्येति ॥ तदेवं जातेष्ट्यादिशास्त्रस्यौपाधिकजन्मादिविषयत्वान्न जीवाद्यनन्तत्वश्रुतिविरोध इति सिद्धम् ॥ १६ ॥ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ "अग्नेर्विस्फुलिङ्गवदेतस्मात्परमात्मनः सर्वे जीवात्मानो व्युच्चरन्ति" इत्यादिजीवोत्पत्तिश्रुतीनां "स एष इह प्रविष्ट आ नखाग्रेभ्यः अज आत्मा" [ बृ० १ । ४ । ७ ] इत्याद्यनुत्पत्तिश्रुतीनां च मिथोविरोधात् संशये मा भूतां देहजन्मनाशयोर्जीवजन्मनाशौ । देहान्तरभोग्यस्वर्गादिहेतुविध्याद्यसम्भवात् । कल्पाद्यन्तयोर्नभस इव जीवस्य तौ किं न स्यातां,

भामती ।

शाविति सिद्धम् । एतच्च लौकिकव्यपदेशस्याभ्रान्तिमूलत्वमभ्युपेत्याधिकरणम् । उक्ता त्वध्यासभाष्येऽस्य भ्रान्तिमूलतेति ॥ १६ ॥ मा भूतामस्य शरीरोदयव्ययाभ्यां स्थूलावुत्पत्तिविनाशौ, आकाशादेरिव तु महासर्गादौ तदन्ते चोत्पत्तिविनाशौ जीवस्य भविष्यत इति शङ्कान्तरमपनेतुमिदमारभ्यते । नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः । विचारमूलसंशयस्य वीजमाह—श्रुतिविप्रतिपत्तेरिति । तामेव दर्शयति—

आनन्दगिरीय—न्यायनिर्णयः ।

तत्राऽऽह—न हीति । न केवलमन्वयव्यतिरेकाभ्यामयमर्थोऽवगम्यते किंतु श्रुत्याऽपीत्याह—स वा इति। कथं नित्यस्य जायमानत्वं तत्राऽऽह—शरीरमिति । कथं म्रियमाणत्वं तत्राऽऽह—उत्क्रामन्निति । श्रुतेस्तात्पर्यमाह—शरीरेति । यत्तु जातकर्मादिविधानाज्जीवस्यानौपाधिकौ जन्मनाशाविति तत्राऽऽह—जातेति। पूर्वोत्तराधिकरणयोरेकार्थतया पौनरुक्त्यमाशंक्यार्थभेदमाह—जीवस्येति । तदेवमात्मनो देहोत्पत्त्यादावनौपाधिकोत्पत्त्याद्यभावाज्जातेष्ट्यादिशास्त्राणामौपाधिकतद्विषयत्वादात्मनित्यत्वशास्त्राणां मुख्यार्थत्वादनाद्यनन्तप्रत्यग्ब्रह्मसमन्वयसिद्धिरिति भावः ॥ १६ ॥ ( १० ) ॥ देहोत्पत्तिनाशयोरात्मोत्पत्तिनाशौ निरस्य कल्पाद्यन्तयोर्जन्मनाशौ तस्य निरस्यति—नाऽऽत्मेति । अधिकरणविषयमाह—अस्तीति । 'असंभवस्तु' इत्यत्र ब्रह्मजन्मनिषेधात्तदभिन्नजीवजन्माशंका निरवकाशेत्याशंक्याऽऽह—जीवेति । शरीरादेरेव सप्राणस्य जीवत्वमिति प्राकृताः, स्तान्प्रत्याह—शरीरेति । 'कर्माध्यक्षः', 'साक्षी' इत्यादिश्रुतेरीश्वरत्वादस्य कुतो जीवत्वं तत्रोक्तम्—कर्मेति । विषयं विविच्य सहेतुं संशयमाह—स इति । श्रुतिविप्रतिपत्तिं विशदयति—

कासुचिच्छ्रुतिष्वग्निविस्फुलिङ्गादिनिदर्शनैर्जीवात्मनः परस्माद्ब्रह्मण उत्पत्तिराम्नायते, कासुचित्त्वविकृतस्यैव परस्य ब्रह्मणः कार्यप्रवेशेन जीवभावो विज्ञायते, न चोत्पत्तिराम्नायत इति । तत्र प्राप्तं तावद् उत्पद्यते जीव इति ॥ कुतः ॥ प्रतिज्ञानुपरोधात्—"एकस्मिन्विदिते सर्वमिदं विदितम्" इतीयं प्रतिज्ञा सर्वस्य वस्तुजातस्य ब्रह्मप्रभवत्वे सति नोपरुध्येत । तत्त्वान्तरत्वे तु जीवस्य प्रतिज्ञेयमुपरुध्येत । न चाऽविकृतः परमात्मैव जीव इति, शक्यते विज्ञातुम् । लक्षणभेदात् । अपहतपाप्मत्वादिधर्मको हि परमात्मा । तद्विपरीतो हि जीवः, विभागाच्चाऽस्य विकारत्वसिद्धिः । यावान् हि आकाशादिः प्रविभक्तः स सर्वो विकारः । तस्य चाकाशादेरुत्पत्तिः समधिगता । जीवात्मापि पुण्यापुण्यकर्मा सुखदुःखभाक् प्रतिशरीरं विभक्त इति तस्यापि

रत्नप्रभा ।

तत्सम्भवादिति प्रत्युदाहरणेन पूर्वपक्षमाह—तत्र प्राप्तं तावदिति ॥ फलं पूर्ववत्, उपरोधो बाधः । नन्वविकृतब्रह्मैवात्र प्रविष्टं जीवः, न तत्त्वान्तरमिति प्रतिज्ञासिद्धिः, तत्राह न चेति ॥ जीवः, परस्माद्भिन्नः, विरुद्धधर्मवत्त्वाद्भिन्नस्याविकारत्वे प्रतिज्ञाबाध इति तर्कोपेतविभक्तत्वलिङ्गानुगृहीतोत्पत्तिश्रुतेर्बलीयस्त्वात् प्रवेशश्रुतिर्जीवरूपविकारात्मना प्रतिष्ठित ईश्वर इति व्याख्येयेति समुदायार्थः । "सरूपाः" इति

भामती ।

कासुचिच्छ्रुतिष्विति । पूर्वपक्षं गृह्णाति—तत्र प्राप्तमिति । परमात्मनस्तावद्विरुद्धधर्मसंसर्गादपहतानपहतपाप्मत्वादिलक्षणाज्जीवानामन्यत्वम् । ते चेन्न विकारास्ततस्तत्त्वान्तरत्वे बहुतराद्वैतश्रुतिविरोधः । ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधश्च । तस्माच्छ्रुतिभिरनुज्ञायते विकारत्वम् । प्रमाणान्तरं चात्रोक्तम्—"विभक्तत्वादाकाशादिवत्" इति । 'यथाग्नेः क्षुद्रा विस्फुलिङ्गाः' इति च श्रुतिः साक्षादेव ब्रह्मविकारत्वं जीवानां दर्शयति । 'यथा सुदीप्तात् पावकात्' इति च ब्रह्मणो जीवानामुत्पत्तिं च तत्राप्ययं च साक्षाद्दर्शयति ।

आनन्दगिरीय—न्यायनिर्णयः ।

कासुचिदिति । 'यथा सुदीप्तात्पावकात्' इत्याद्या जीवोत्पत्तिवादिन्यः श्रुतयः । कासुचिदिति 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्याद्यास्वित्यर्थः । प्रवेशवाक्येऽपि जन्मधीरस्तीत्याशंक्याऽऽह—न चेति । श्रुतिविप्रतिपत्त्या शङ्कामुक्त्वा पूर्वपक्षयति—तत्रेति । अत्र चोक्तश्रुतिविप्रतिपत्तिनिरासेन समन्वयदृढीकरणात्पादादिसंगतयः । पूर्वपक्षे श्रुतीनां विप्रतिपत्तेरनेकवाक्यत्वेन विरोधादप्रामाण्ये समन्वयासिद्धिः । सिद्धान्ते श्रुतीनामविप्रतिपत्तेरेकवाक्यत्वादविरोधे नित्ये प्रत्यग्ब्रह्मणि समन्वयसिद्धिः । जन्मप्रयोजकजाड्यविशेषत्वविरहान्नोत्पत्तिरित्याह—कुत इति । आत्मनस्तद्विरहे विवदमानो वियदुत्पत्तिन्यायेन प्रत्याह—प्रतिज्ञेति । तदनुपरोधं साधयति—एकस्मिन्निति । अकार्यत्वेऽपि प्रतिज्ञासिद्धिश्चेत्किं तत्कार्यत्वेनेत्याशंक्य तस्य परस्माद्भिन्नत्वमभिन्नत्वं वेति विकल्प्याऽऽद्यं दूषयति—तत्त्वान्तरत्वे त्विति । द्वितीयं निरस्यति—न चेति । लक्षणभेदं साधयति—अपहतेति । नित्यत्वश्रुतिविरोधमाशंक्यानुमानानुगृहीतानित्यत्वश्रुतिविरोधात्तासामुपचरितार्थतेति मत्वाऽऽह—विभागाच्चेति । तत्त्वमस्यादिवाक्यापेक्षितार्थवेदकत्वान्नित्यत्वान्नित्यत्वश्रुतीनां नोपचरितार्थतेत्याशंक्य नित्यानित्ययोरपि कार्यकारणयोर्मृद्घटवत्तादात्म्यसंभवादविरुद्धं महावाक्यमित्यभिप्रेत्यानित्यत्वश्रुत्यनुग्राहकानुमानाङ्गव्याप्तिमाह—यावानिति । आकाशादेर्विभक्तत्वेऽपि विकारत्वासिद्धेरसिद्धा व्याप्तिरित्याशंक्याऽऽह—तस्येति । व्याप्तस्य हेतोः पक्षधर्मतामाह—जीवेति । प्रतिदेहमात्मविभागे कर्मतत्फलव्यवस्थानुपपत्तिं प्रमाणयितुं विशेषेण व्याप्तिं पक्षधर्मतां चोक्त्वाऽनुमानमाह—तस्येति ।

प्रपञ्चोत्पत्त्यवसरे उत्पत्तिर्भवितुमर्हति ॥ अपि च "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः" [ बृ० २ । १ । २० ] इति प्राणादेर्भोग्यजातस्य सृष्टिं शिष्ट्वा "सर्व एते आत्मानो व्युच्चरन्ति" इति भोक्तृणामात्मनां पृथक्सृष्टिं शास्ति । "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः, तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति" [ मुण्ड० २ । १ । १ ] इति च जीवात्मनामुत्पत्तिप्रलयावुच्येते । सरूपवचनात्-जीवात्मानो हि परमात्मना सरूपा भवन्ति । चैतन्ययोगात् । न च क्वचिदश्रवणमन्यत्र श्रुतं वारयितुमर्हति । श्रुत्यन्तरगतस्यापि अविरुद्धस्याऽधिकस्यार्थस्य सर्वत्रोपसंहर्तव्यत्वात् । प्रवेशश्रुतिरप्येवं सति विकारभावापत्त्यैव व्याख्यातव्या "तदात्मानँ स्वयमकुरुत" [ तै० उ० २ । ६ । १ ] इत्यादिवत् ॥ तस्मादुत्पद्यते जीव इति ॥ एवं प्राप्ते ॥ ब्रूमः ॥ नात्मा जीव उत्पद्यत इति ॥ कस्मात् ॥ "अश्रुतेः"-न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति भूयस्सु प्रदेशेषु ॥ ननु क्वचिदश्रवणमन्यत्र श्रुतं न

रत्नप्रभा ।

दृष्टान्तश्रुतेः भावा जीवा इति निश्चीयते । ननु "आत्मन आकाशः सम्भूतः" [ तैत्ति० उ० २ । १ । २ ] इत्यादौ जीवस्योत्पत्त्यश्रवणादनुत्पत्तिः, तत्राह-न चेति ॥ एवं विकारत्वे सति विकारप्रपञ्चात्मना स्वात्मानमकुरुतेतिवद्विकारजीवात्मना प्रवेश इत्यर्थः ।"अजत्वात्" इति श्रुतिः कल्पमध्ये जीवस्यानुत्पत्त्यादिविषया।"तत्त्वमसि"इति श्रुतिश्च मृद्घट इत्यभेदवाक्यवद्व्याख्येयेति प्राप्ते सिद्धान्तयति-एवमिति॥

भामती ।

नन्वक्षराद्भावानामुत्पत्तिप्रलयाववगम्येते न जीवानामित्यत आह-जीवात्मनामिति । स्यादेतत् । सृष्टिश्रुतिष्वाकाशाद्युत्पत्तिरिव कस्माज्जीवोत्पत्तिर्नाम्नायते । तस्मादाम्नानयोग्यस्यानाम्नानात्तस्योत्पत्त्यभावं प्रतीम इत्यत आह-न च क्वचिदश्रवणमिति । एवं हि कस्यांचिच्छाखायामाम्नातस्य कतिपयाङ्गसहितस्य

आनन्दगिरीय-न्यायनिर्णयः ।

यदनुग्राहकमनुमानमुक्तं तां श्रुतिमाह-अपि चेति । जीवस्य मुख्योत्पत्तिरत्र नेष्टेत्याशंक्य प्राणादीनां तथोत्पत्तिदृष्टेः समभिव्याहाराज्जीवस्यापि तादृश्येव सेति मत्वाऽऽह-प्राणादेरिति । किंचौपाधिकं जन्म चेदुपाधेरेव तद्वाच्यं नोभयोरित्याशयेनाऽऽह--सर्व एत इति । जन्ममात्रार्थां श्रुतिमुक्त्वा जन्मनाशार्थं श्रुत्यन्तरमाह-यथेति । भावानामेवोत्पत्तिलयावत्रोक्तौ न जीवानामित्याशंक्याऽऽह-सरूपेति । भावशब्दो जीववाचीति शेषः । अन्यत्रापि सत्त्वेन सारूप्यमाशंक्याऽऽह-जीवेति । भूतोत्पत्त्यधिकारे जीवोत्पत्तेरश्रवणान्न तदुत्पत्तिरित्याशंक्याऽऽह-न चेति । तत्र तार्तीयन्यायेन हेतुमाह-श्रुत्यन्तरेति । जीवोत्पत्तौ परस्यैव कथं प्रवेशश्रवणमित्याशंक्याऽऽह-प्रवेशेति । यथा मृदादि स्वविकारे घटादौ चूर्णादिविकारान्तरेण प्रविशति तथा ब्रह्म शरीरं सृष्ट्वा जीवाख्यविकारेण प्रविष्टमित्यर्थः । ब्रह्मणो विकारोत्पत्तौ दृष्टान्तमाह-तदिति । अनुमानानुगृहीतश्रुतिफलमाह-तस्मादिति । जीवनित्यत्वानित्यत्वश्रुतीनां मुख्यत्वे मिथो विरोधादसिद्धिः समन्वयस्येति पूर्वपक्षमनूद्य सिद्धान्तसूत्रमवतार्य प्रतिज्ञां योजयति--एवमिति । अनुमानोपेतश्रुत्या जीवोत्पत्तेरुक्तेरयुक्ता प्रतिज्ञेत्याह-कस्मादिति । सौत्रं हेतुमुक्त्वा व्याकरोति-अश्रुतेरिति । गुणोपसंहारन्यायेनोक्तं स्मारयति-नन्विति । न्यायाधी-

वारयतीत्युक्तम् ॥ सत्यमुक्तम् ॥ उत्पत्तिरेव त्वस्य न सम्भवतीति वदामः ॥ कस्मात् ॥ "नित्यत्वाच्च ताभ्यः" चशब्दादजत्वादिभ्यश्च,-नित्यत्वं ह्यस्य श्रुतिभ्योऽवगम्यते । तथाऽजत्वमविकारित्वमविकृतस्यैव ब्रह्मणो जीवात्मनावस्थानं, ब्रह्मात्मता चेति । न चैवंरूपस्योत्पत्तिरुपपद्यते ॥ ताः काः श्रुतयः ॥ "न जीवो म्रियते" [ छां० ६ । ११ ] "स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म" [ बृ० ४ । ४ । २५ ] "न जायते म्रियते वा विपश्चित्" "अजो नित्यः शाश्वतोऽयं पुराणः" [ कठ० २ । २८ ] "तत्सृष्ट्वा तदेवाऽनुप्राविशत्" [ तै० २ । ६ । १ ] "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" [ छां० ६ । ३ । २ ] "स एष इह प्रविष्ट आ नखाग्रेभ्यः" [ बृ० १ । ४ । ७ ] "तत्त्वमसि" [ छां० ६ । ( ८-१६ ) ] "अहं ब्रह्मास्मि" [ बृ० १ । ४ । १० ] "अयमात्मा ब्रह्म सर्वानुभूः" [ बृ० २ । ५ । १९ ] इत्येवमाद्या नित्यत्ववादिन्यः सत्यो जीवस्योत्पत्तिं प्रतिबध्नन्ति ॥ ननु प्रविभक्तत्वाद्विकारो विकारत्वाच्चोत्पद्यते इत्युक्तम् ॥ अत्रोच्यते ॥ नास्य प्रविभागः स्वतोऽस्ति । "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" [ श्वेताश्व० ६ । ११ ] इति श्रुतेः बुद्ध्याद्युपाधिनिमित्तं त्वस्य प्रविभागप्रतिभानमाकाशस्यैव घटादिसम्बन्धनिमित्तम् । तथा च शास्त्रं-"स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः" [ बृ० ४ । ४ । ५ ] इत्येवमादि ब्रह्मण एवाऽविकृतस्य सतोऽस्यैकस्याऽनेकबुद्ध्यादिमयत्वं दर्शयति । तन्मयत्वं चास्य तद्विविक्त-

---

रत्नप्रभा ।

धर्मिवत् सत्यो विभागो हेतुरौपाधिको वा ? नाद्यः । असिद्धेरित्याह-अत्रोच्यते नास्येति ॥ द्वितीये जीवस्य न स्वतो विकारत्वसिद्धिः । अप्रयोजकत्वादित्याह-बुद्ध्यादाविति ॥ औपाधिकभेदे मानमाह-तथा चेति ॥ मयटो विकारार्थत्वमाशंक्याह-तन्मयत्वं चेति ॥

भामती ।

कर्मणः शाखान्तरीयाङ्गोपसंहारो न भवेत् । तस्माद्बहुतरश्रुतिविरोधादनुप्रवेशश्रुतिर्विकारभावापत्त्या

आनन्दगिरीय-न्यायनिर्णयः ।

नामुक्तिमङ्गीकृत्य जीवोत्पत्तिश्रुतेस्तदनुत्पत्तिश्रुत्या वारणान्नात्र न्यायोऽस्तीत्याह-सत्यमिति । जीवजन्मायोगे प्रश्नपूर्वकं सौत्रं हेतुमाह-कस्मादिति । हेतुद्वयं विवृणोति-नित्यत्वं हीति । नित्यत्वाजत्वादिमानेऽपि जन्माभावो न भातीत्याशंक्याऽऽह-न चेति । या नित्यत्वादिवादिन्यो जीवोत्पत्तिं न मृष्यन्ति ताः श्रुतीराकांक्षाद्वारोदाहरति-ताः का इति । उत्पत्तिश्रुतेरनुमानानुग्रहादनुत्पत्तिश्रुत्यपेक्षया प्राबल्यमुक्तं स्मारयति-नन्विति । स्वाभाविकं वा विभक्तत्वमौपाधिकं वेति विकल्पयति-अत्रेति । नाऽऽद्योऽसिद्धेरित्याह-नेति । औपाधिकं विभक्तत्वमौपाधिकं स्वाभाविकं वा विकारमात्मनो गमयेदाद्ये सिद्धसाधनत्वं मत्वोक्तम्-बुद्ध्यादीति । द्वितीये कालातीतत्वं विवक्षन्नौपाधिकं विभागभानमित्यत्र मानमाह-तथा चेति । ब्रह्मविकारत्वं जीवस्य निरस्यता बुद्धिविकारत्वं तन्मयत्वोक्त्या स्वीकृतमित्याशंक्याऽऽह-तन्मयत्वमिति । जाल्मो जडात्मा प्राकृतः पुरुषः स यथा स्त्रीपरतन्त्रः स्त्रीमयो व्यपदिश्यते तथा

स्वरूपानभिव्यक्त्या तदुपरक्तस्वरूपत्वं, स्त्रीमयो जाल्म इत्यादिवद्द्रष्टव्यम् । यदपि क्वचिदस्योत्पत्तिप्रलयश्रवणं,तदप्यत एवोपाधिसम्बन्धान्नेतव्यम् । उपाध्युत्पत्तौ चास्योत्पत्तिः,तत्प्रलये च प्रलय इति । तथा च दर्शयति–"प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति" [ बृ० ४ । ५ । १३ ] इति ॥ तथोपाधिप्रलय एवायं, नाऽऽत्मप्रलय इत्येतदप्यत्रैव "मा भगवान्मोहान्तमापीपदन्न वा अहमिमं विजानामि" [ बृ० ४ । ५ । १४ ] "न प्रेत्य संज्ञास्ति" इति प्रश्नपूर्वकं प्रतिपादयति "न वा अरे अहं मोऽहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा" [ बृ० ४ । ५ । १४] "मात्रासंसर्गस्त्वस्य भवति" इति । प्रतिज्ञानुपरोधोऽप्यविकृतस्यैव ब्रह्मणो जीवभावाभ्युपगमात् ।

रत्नप्रभा ।

**जाल्मः** कामजडः–स्त्रीपरतन्त्रः—**स्त्रीमयः** इतिवज्जीवस्य स्वरूपाज्ञानाद्बुद्ध्यादिपरतन्त्रत्वेन भेदकर्तृत्वादिभाक्त्वात् प्राचुर्यार्थमयट्प्रयोग इत्यर्थः।लिङ्गं निरस्य तदनुग्राह्यश्रुतेर्गतिमाह–**यदपीति**॥ जीवस्यौपाधिकजन्मनाशयोः श्रुतिमाह–**तथेति**॥ **एतेभ्यः** देहात्मना परिणतेभ्यो भूतेभ्यः **समुत्थाय** जनित्वा **तान्येवं** लीयमानानि **अनु** पश्चाद्विनश्यति । प्रेत्यौपाधिकमरणानन्तरं सञ्ज्ञा नास्तीत्यर्थः। ननु प्रज्ञानघनः, सञ्ज्ञा नास्तीति च विरुद्धमित्यत आह–**तथेति** ॥ उपाधिलयाद्विशेषज्ञानाभावः । एवं सञ्ज्ञाभावो नात्मस्वरूपविज्ञानभाव इत्युत्तरं प्रतिपादयति श्रुतिरित्यन्वयः । अत्रैवात्मविज्ञानघने प्रेत्य सञ्ज्ञा नास्तीत्युक्त्या मां **मोहान्तं** मोहमध्यं भ्रान्तिम् **आपीपदत्** । आपादितवान् **इममर्थं** न जानामि । ब्रूहि त्वदुक्तेरर्थमिति मैत्रेयीप्रश्नार्थः । मुनिराह–**न वा इति** ॥ **मोहं** मोहकरं वाक्यम् । उच्छित्तिः–पूर्वावस्थानाशः–धर्मोऽस्येति उच्छित्तिधर्मा परिणामी । तस्मादविनाशीत्यर्थः । तर्हि न प्रेत्य सञ्ज्ञेति कथमुक्तं तत्राह–**मात्रेति** ॥ **मात्राभिर्विषयैरसंसर्गात्** तथोक्तमित्यर्थः । बिम्बप्रतिबिम्बयोरिव विरुद्धधर्मभेदोऽप्यस्त

भामती ।

व्याख्येया । तस्मादाकाशवज्जीवात्मान उत्पद्यन्त इति प्राप्त उच्यते–भवेदेवं यदि जीवा ब्रह्मणो भिद्येरन् । न त्वेतदस्ति । 'तत् सृष्ट्वा तदेवानुप्राविशत्', 'अनेन जीवेन' इत्याद्यविभागश्रुतेरौपाधिकत्वाच्च भेदस्य घटकरकाद्याकाशवद्विरुद्धधर्मसंसर्गस्योपपत्तेः । उपाधीनां च मनोमय इत्यादीनां श्रुतेर्भूयसीनां च नित्यत्वाजत्वादिगोचराणां श्रुतीनां दर्शनात् 'उपाधिप्रविलयेनोपहितस्य' इति च प्रश्नोत्तराभ्यामनेकधोपपादनादविभागस्य च 'एको देवः सर्वभूतेषु गूढः' इति श्रुत्यैवोक्तत्वान्नित्या जीवात्मानो न विकारा न

आनन्दगिरीय–न्यायनिर्णयः ।

जीवस्याप्रपञ्चपूर्णत्वाप्रतिपत्त्या बुद्ध्याद्युपरक्तपरिच्छिन्नरूपत्वं बुद्ध्याद्यधीनमिति तन्मयत्वोक्तिरित्यर्थः । अनुग्राहकमनुमानमपोद्यानुग्राह्यश्रुतेर्गतिमाह–**यदपीति** । अत एवेत्यस्य व्याख्यानमुपाधीति । नयनमभिनयति–**उपाधीति** । तत्र मैत्रेयिब्राह्मणं संवादयति–**तथा चेति** । 'प्रज्ञानघन एव' इत्युक्त्वा 'न प्रेत्य संज्ञाऽस्ति' इति वदतो विरोधः स्यादित्याशंक्याऽऽह–**तथेति** । पूर्वापरं विरोधसमाधिद्वारेति यावत् । न प्रेत्येत्युक्तस्यायमिति परामर्शः । एतदपि प्रश्नपूर्वकं प्रतिपादयतीति संबन्धः । प्रश्नमनुक्रामति–**अत्रेति** । मोहान्तं मोहमध्यमापीपददापादितवानिममित्यर्थनिर्देशः । प्रतिपादनप्रकारं प्रकटयति–**न वेति** । मोहं मोहकरं वाक्यम् । अविनाशित्वे परिणामित्वभावं हेतुमाह–**अनुच्छित्तीति** । कथं तर्हि न प्रेत्येत्यादि तत्राऽऽह–**मात्रेति** । यत्तु प्रतिज्ञया ब्रह्मकार्यता जीवस्येति तत्राऽऽह–**प्रतिज्ञेति** । यत्तु

लक्षणभेदोऽप्यनयोरुपाधिनिमित्त एव। "अत ऊर्ध्वं विमोक्षायैव ब्रूहि" [बृ० ४ । ३ । १४-१५-१६-३३] इति च प्रकृतस्यैव विज्ञानमयस्यात्मनः सर्वसंसारधर्मप्रत्याख्यानेन परमात्मभावप्रतिपादनात् । तस्मान्नैवात्मोत्पद्यते, प्रविलीयते वेति ॥ १७ ॥ इत्यात्माधिकरणम् ॥ ११ ॥

## ज्ञोऽत एव ॥ १८ ॥ (१२) ॥

स किं काणभुजानामिवागन्तुकचैतन्यः स्वतोऽचेतनः आहोस्वित् सांख्यानामिव नित्यचैतन्यस्वरूप एवेति वादिविप्रतिपत्तेः संशयः । किं

रत्नप्रभा ।

इत्यत्र हेतुमाह—अत ऊर्ध्वमिति ॥ जीवस्य विकारित्वे मुक्त्ययोगात् "तत्त्वमसि" इति वाक्यमखण्डार्थमिति वक्तव्यम् । तथा च फलवत्प्रधानवाक्यापेक्षितजीवनित्यत्वश्रुतीनां बलवत्त्वादुत्पत्त्यादिकमप्यस्तमनुवदन्ति उत्पत्त्यादिश्रुतय इत्यविरोध इति सिद्धम्॥१७॥(११)॥ ज्ञोऽत एव॥ "आत्मैवास्य ज्योतिः" [बृ० ४ । ३ । ६] इत्याद्यात्मस्वप्रकाशत्वश्रुतीनां "पश्यंश्चक्षुः शृण्वञ्श्रोत्रम्" [बृ० १ । ४ । ७] इत्यनित्यज्ञानवत्त्वश्रुतिभिर्विरोधोऽत्र निरस्यते ॥ अस्य लोकस्य चक्षुर्द्रष्टा, श्रोत्रं श्रोतेत्यर्थः । प्रागुक्तजीवानुत्पत्तिहेतुमादाय स्वप्रकाशत्वसाधनाद्धेतुसाध्यभावः संगतिः । अनुत्पत्तौ हि स्वप्रकाशं ब्रह्मैव, उपहितं जीवः, इति जीवस्य स्वप्रकाशता सिध्यति । न चैवं गतार्थता । अनुत्पन्नस्याऽपि जीवस्य स्वप्रकाशत्वे ज्ञानसाधनवैयर्थ्यमिति तर्कसहितानित्यज्ञानश्रुतिबलेन स्वप्रकाशत्वश्रुतेर्बाध्यतया ब्रह्मान्यत्वशङ्का तदैक्ययोग्यतायै । स्वप्रकाशत्वस्यात्र साधनात् । तथा च पूर्वपक्षे जीवस्य ब्रह्मैक्यायोग्यता सिद्धान्ते

भामती ।

चाद्वैतप्रतिज्ञाविरोध इति सिद्धम् । मैत्रेयीब्राह्मणं चाधस्ताद्व्याख्यातमिति नेह व्याख्यातम्॥१७॥(११)॥ ज्ञोऽत एव । कर्मणा हि जानात्यर्थो व्याप्तस्तदभावे न भवति धूम इव धूमध्वजाभावे, सुषुप्त्याद्यवस्थासु च ज्ञेयस्याभावात्तद्व्याप्यस्य ज्ञानस्याभावः । तथा च नात्मस्वभावश्चैतन्यं तदनुवृत्तावपि चैतन्यस्य व्यावृत्तेः । तस्मादिन्द्रियादिभावाभावानुविधानात् ज्ञानभावाभावयोरिन्द्रियादिसंनिकर्षाधेयमागन्तुकमस्य चैतन्यं धर्मो न स्वाभाविकः । अत एवेन्द्रियादीनामर्थवत्त्वम्, इतरथा वैयर्थ्यमिन्द्रियाणां भवेत् । नित्यचैतन्यश्रुतयश्च शक्त्यभिप्रायेण व्याख्येयाः । अस्ति हि ज्ञानोत्पादनशक्तिर्निजा जीवानां, न तु व्योम्न इवेन्द्रियादिसंनिकर्षेऽप्येषां ज्ञानं न भवतीति । तस्माज्जडा एव जीवा इति प्राप्तेऽभिधीयते—यदागन्तुकज्ञानं जडस्वभावं तत्कदाचित् परोक्षं कदाचित् संदिग्धं कदाचिद्विपर्यस्तं, यथा घटादि, न चैवमात्मा । तथाहि—अनुमिमानोऽप्यपरोक्षः, स्मरन्नप्यानुभविकः,संदिहानोऽप्यसंदिग्धः, विपर्यस्यन्नप्यविपरीतः सर्वस्यात्मा । तथा च तत्स्वभावः । न च तत्स्वभावस्य चैतन्यस्याभावः तस्य नित्यत्वात् । तस्माद्वृत्तयः क्रियारूपाः सक-

आनन्दगिरीय—न्यायनिर्णयः ।

लक्षणभेदान्नैक्यमिति तत्राऽऽह—लक्षणेति । बिम्बप्रतिबिम्बादिवदौपाधिको भेदो न स्वाभाविक इत्यत्र हेतुमाह—अत इति।प्रधानवाक्येन फलवताऽऽक्षिप्तनित्यत्वबोधकावान्तरवाक्यानुरोधेन प्रधानवाक्यविरुद्धकार्यत्ववादिवाक्यानां दुर्बलत्वेनोपचरितार्थत्वान्मिथो विरोधाभावान्नित्यप्रत्यग्ब्रह्मसमन्वयसिद्धिरित्युपसंहरति—तस्मादिति ॥ १७ ॥ (११) ॥ आत्मनो नित्यत्वमुक्त्वा तदनुत्पत्तिहेतोः स्वप्रकाशत्वमाह—ज्ञ इति । अनुत्पत्तौ हि स्वप्रकाशं ब्रह्मैवोपहितं जीव इति तत्स्वप्रकाशता । न चैवं गतार्थत्वमनुत्पन्नस्यापि जीवस्यानित्यज्ञानत्वश्रुत्या ब्रह्मान्यत्वशङ्कायां ब्रह्मैक्ययोग्यत्वायात्र जीवस्य स्वप्रकाशतोक्तेरिति भावः । विप्रतिपत्तिसंशयतत्कारणानि दर्शयति—स इति । विमृश्य पूर्वपक्षं गृह्णाति—किमिति । अत्र 'आत्मैवास्य

तावत्प्राप्तम्-आगन्तुकमात्मनश्चैतन्यम्, आत्ममनःसंयोगजमग्निघटसंयोगजरोहितादिगुणवदिति प्राप्तम् ॥ नित्यचैतन्यत्वे हि सुप्तमूर्च्छितग्रहाविष्टानामपि चैतन्यं स्यात्। ते पृष्टाः सन्तो न किञ्चिद्वयमचेतयामहीति जल्पन्ति । स्वस्थाश्च चेतयमाना दृश्यन्ते । अतः कादाचित्कचैतन्यत्वादागन्तुकचैतन्य आत्मेत्येवं प्राप्ते ॥ अभिधीयते ॥ ज्ञः नित्यचैतन्योऽयमात्मा । अत एव यस्मादेव नोत्पद्यते परमेव ब्रह्माऽविकृतमुपाधिसम्पर्काज्जीवभावेनावतिष्ठते ॥ परस्य हि ब्रह्मणः चैतन्यस्वरूपत्वमाम्नातं-"विज्ञानमानन्दं ब्रह्म" [ बृ० ३ । ९ । २८ ] "सत्यं ज्ञानमनन्तं ब्रह्म" [ तै० उ० २ । १ । १ ] "अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" [ बृ० ४ । ५ । १३ ] इत्यादिषु श्रुतिषु । तदेव चेत्परं ब्रह्म जीवः, तस्माज्जीवस्याऽपि नित्यचैतन्यस्वरूपत्वमग्न्यौष्ण्यप्रकाशवदिति

रत्नप्रभा ।

तद्योग्यतेत्यापादसमाप्तेः फलमवगन्तव्यम् । इष्टापत्तिं निराचष्टे-ते पृष्टा इति। साधनाधीनज्ञानत्वान्न स्वप्रकाशो जीवो व्यतिरेकेणेश्वरवदित्याह—अतः कादाचित्केति ॥ यथाश्रुते भाष्ये हेतोः साध्याविशेष इति मन्तव्यम् । अतो जीवस्य स्वप्रकाशत्वश्रुतिर्बाध्येति प्राप्ते सिद्धान्तयति-एवमिति ॥ चेच्छब्दो

भामती ।

मिकाः कर्माभावे सुषुप्त्यादौ निवर्तन्ते । तेन चैतन्यमात्मस्वभाव इति सिद्धम् । तथा च नित्यचैतन्य-

आनन्दगिरीय-न्यायनिर्णयः ।

ज्योतिः' इत्यादिश्रुतीनां 'पश्यँश्चक्षुः' इत्यादिश्रुतिभिर्जीवानित्यधीत्ववादिनीभिर्विरोधसमाधानद्वारा चिद्रूपप्रत्यग्ब्रह्मणि समन्वयसाधनात्पादादिसंगतयः । पूर्वपक्षे यथोक्तश्रुतीनां मिथो विरोधादनैकमत्यादप्रामाण्यादुक्ते ब्रह्मणि समन्वयासिद्धिः, सिद्धान्ते तासामविरोधादेकवाक्यतया प्रामाण्यात्तत्र तत्सिद्धिः । आत्मनश्च चैतन्यमागन्तुकं किं तर्हि तस्य कारणमागन्तुकस्य तदपेक्षत्वात्तत्राऽऽह-आत्मेति । आत्मा कादाचित्कज्ञानस्तदर्थमादीयमानसाधनत्वादीश्वरवदिति व्यतिरेकीत्यर्थः । समवाय्यसमवायिविषयं विशेषणम् । निमित्तं त्वदृष्टादि । आत्ममनःसंयोगादसमवायिनश्चैतन्यमात्मगुणो भवतीत्यत्र पिठरपाकप्रक्रियया दृष्टान्तमाह-अग्नीति । किंचाऽऽत्मा ज्ञानान्तरप्रकाश्यो वस्तुत्वाद्घटवदिति मत्वाऽऽह-इति प्राप्तमिति । आत्मा न नित्यचैतन्यस्तद्व्यभिचारित्वाद्घटवदित्याह-नित्येति । इष्टापत्तिं निराचष्टे-ते पृष्टा इति । तदा तेषामसत्त्वादेव चैतन्यव्यभिचारित्वमित्याशंक्याऽऽह-स्वस्थाश्चेति । तथाऽपि कथं चैतन्यस्याऽऽगन्तुकत्वं तत्राऽऽह-चेतयमाना इति । आत्मा न ज्ञानस्वभावः स्वसंसर्गिसर्वानवभासकत्वादादित्यवदिति व्यतिरेकेणोपसंहरति-अत इति । भाष्ये हेतुसाध्यनिरुक्त्या साध्याविशिष्टत्वं निरसनीयम् । आत्मनः स्वप्रकाशत्वश्रुतीनामनित्यधीत्वश्रुतीनां च विरोधे समन्वयासिद्धिरिति पक्षमनूद्य सिद्धान्तयति-एवमिति । सूत्रं योजयति-ज्ञ इति । अत एवेत्युक्तं व्यनक्ति-यस्मादिति । उत्पत्त्यभावे हेतुमाह-परमिति । तस्य कुतो जीवत्वं तत्राऽऽह-उपाधीति । येन ब्रह्माभिन्नत्वेनोत्पत्तिरात्मनो निरस्ता तेनैव तस्य नित्यचैतन्यताऽपि सुप्रतिपदा । विमतं चैतन्यस्वभावं ब्रह्माभिन्नत्वात्तद्वदित्यर्थः । दृष्टान्तस्य साध्यवैकल्यमुद्धरति-परस्येति । हेत्वसिद्धिं प्रत्याह-तदेवेति । चेच्छब्दो निश्चयार्थः । प्रकृतिविकारत्वहीनद्रव्यार्थपदसामानाधिकरण्यमेकद्रव्यनिष्ठमुक्तसामानाधिकरण्यत्वात्सोऽयमितिवदित्यनुमानात्प्रवेशश्रुतेश्च ब्रह्मैव जीवो निश्चित इति हेतुसिद्धिरित्यर्थः । ब्रह्माभिन्नत्वफलं निगमयति-तस्मादिति । न केवलं नित्यचैतन्यब्रह्मत्वाज्जीवस्य नित्यचैत-

गम्यते । विज्ञानमयप्रक्रियायां च श्रुतयो भवन्ति—"असुप्तः सुप्तानभिचाकशीति" [ बृ० ४ । ३ । १४ ] इत्यत्र "अयं पुरुषः स्वयंज्योतिर्भवति" [ बृ० ४ । ३ । ९ ] "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" [ बृ० ४ । ३ । ३० ] इत्येवंरूपाः । "अथ यो वेदेदं जिघ्राणि" [ छां० ८ । १४ । ४ ] इति "स आत्मा" [ छां० ८ । १४ । ४ ] इति च सर्वैः करणद्वारैरिदं वेदेदं वेदेति विज्ञानेनानुसन्धानात्तद्रूपत्वासिद्धिः । नित्यस्वरूपचैतन्यत्वे घ्राणाद्यानर्थक्यमिति चेत् ॥ न ॥ गन्धादिविषयविशेषपरिच्छेदार्थत्वात् । तथाहि दर्शयति गन्धाय घ्राणमित्यादि । यत्तु सुप्तादयो न चेतयन्त इति तस्य श्रुत्यैव परिहारोऽभिहितः । सुषुप्तं प्रकृत्य "यद् द्वैतं न पश्यति पश्यन्वै तन्न पश्यति । न हि द्रष्टु-

रत्नप्रभा ।

निश्चयार्थः ॥ न केवलं स्वप्रकाशब्रह्माभेदाज्जीवस्य स्वप्रकाशता, किन्तु श्रुतितोऽपीत्याह—विज्ञानमयेति ॥ योऽयं विज्ञानमय इति प्रकरणमित्यर्थः । असुप्तः स्वयं भासमान एवात्मा सुप्तान् लुप्तव्यापारान् वागादीनभिलक्ष्य चाकशीति । सुप्तार्थान् पश्यतीति यावत् । अत्र स्वप्ने विज्ञातुर्बुद्धिसत्त्वस्य साक्षिणो विज्ञातेर्विनाशो नास्तीत्यर्थः । घ्राणादिजन्यगन्धादिज्ञानानुसन्धानसिद्धये आत्मनो ज्ञानरूपत्वं वाच्यमिति श्रुत्यन्तरेणाह—अथेति ॥ आत्मनो नित्यचिद्रूपत्वेऽपि स्वतोऽसंगतया गन्धाद्यसम्बन्धात् तत्सम्बन्धघटनात्मकवृत्त्यर्थानि ज्ञानसाधनानीति न तेषां वैयर्थ्यमित्याह—न गन्धेति ॥ परिच्छेदः वृत्तिः । गन्धाय तद्गोचरान्तःकरणवृत्तये इत्यर्थः । सुप्ताद्यवस्थास्वात्मसत्त्वेऽपि चैतन्याभावान्नात्मा चिद्रूप इत्युक्तं दूषयति—यत्त्विति॥तत् तदा सुप्तौ।न पश्यतीति यत् तत्पश्यन्नेवालुप्तज्ञान एव सन्न पश्यतीत्यत्र हेतुः—न हीति॥

भामती ।

वादिन्यः श्रुतयो न कथंचित् क्लेशेन व्याख्यातव्या भवन्ति । गन्धादिविषयवृत्त्युपजने चेन्द्रियाणामर्थव-

आनन्दगिरीय–न्यायनिर्णयः ।

न्यत्वं किंतु स्वप्रकाशत्वश्रवणादपीत्याह—विज्ञानेति । 'योऽयं विज्ञानमयः प्राणेषु' इत्यारभ्य तत्प्रकरणस्थाः श्रुतीरात्मस्वप्रकाशत्वसाधनायोपन्यस्यन्नुक्तानुमानानां कालात्ययापदिष्टत्वमाह—असुप्त इति । स्वयमसुप्तो भासमान एवाऽत्मा सुप्तान्वागादीनुपरतव्यापारानभिपश्यतीति यावत् । अत्रेति स्वप्नोक्तिः । न च तत्र मनसो भावात्तन्निमित्तमात्मनो ज्योतिष्ट्वं तदा तस्य कर्मत्वादकरणत्वादिति भावः । व्यभिचारिकरणजन्यबुद्धीनामव्यभिचारिचैतन्यं विना नियतानुसंधानासिद्धेरात्मनो नित्यचैतन्यत्वमित्याह—अथेति । आत्मा नित्यचैतन्यस्वभावः स्वसत्तायां तद्व्यतिरेकशून्यत्वादीश्वरसंवेदनवदिति भावः । प्रतिकूलतर्कपराहतिं शङ्कते—नित्येति । आत्मनो नित्यचैतन्यत्वेऽपि स्वतोऽसङ्गतया विषयासंसर्गात्तद्विशेषयोगद्वारा तत्परिच्छेदार्थमन्तःकरणाद्यपेक्षणान्न तद्वैयर्थ्यमित्याह—नेति । न चासंसर्गित्वादेव विषयविशेषासंसर्गे कुतस्तद्धानं मिथो योगेऽपि द्वयोरेकान्तःकरणसंसर्गाद्युक्तत्वेन भानसंभवान्मुखरक्तिमगुणयोर्मिथो योगेऽपि स्फटिकोपरागाधीनसंबन्धवदिति भावः । गन्धादिविषयविशेषस्य परिच्छेदस्तदवच्छिन्नश्चित्प्रकाशस्तद्व्यञ्जकजडप्रकाशान्तःकरणपरिणामोदयार्थत्वाद् घ्राणादीनां नाऽऽनर्थक्यमित्यत्र श्रौतं लिङ्गमाह—तथाहीति । स्वसत्तायां तदव्यभिचारित्वादिति हेतोरसिद्धिं परिहर्तुं परोक्तं तद्व्यभिचारित्वहेतुमनुवदति—यत्त्विति । स्वकीयहेतोरसिद्धिमुद्धरन्परकीयहेतोरागमविरोधमाह—तस्येति । पश्यन्नित्येतदुपपादयति—न हीति ।

दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्, न तु तद् द्वितीयमस्ति ततोऽन्य-द्विभक्तं,यत्पश्येद्'' [ बृ० ४ । ३ । २३ ] इत्यादिना ॥ एतदुक्तं भवति ॥ विषयाभावादियमचेतयमानता, न चैतन्याभावादिति । यथा वियदाश्रयस्य प्रकाशस्य प्रकाश्याभावादनभिव्यक्तिर्न स्वरूपाभावात्,तद्वद् वैशेषिकादितर्कश्च श्रुतिविरोधे आभासी भवति ॥ तस्मान्नित्यचैतन्यस्वरूप एवाऽऽत्मेति निश्चिनुमः ॥ १८ ॥ इति ज्ञाधिकरणम् ॥ १२ ॥

## उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥ ( १३ ) ॥

इदानीं तु किंपरिमाणो जीव इति चिन्त्यते ॥ किमणुपरिमाण उत मध्यमपरिमाण आहोस्वित् महत्परिमाण इति ॥ ननु च नात्मोत्पद्यते नित्यचैतन्यश्चायमित्युक्तम् । अतश्च पर एवात्मा जीव इत्यापतति ।

---

रत्नप्रभा ।

नाशायोग्यत्वादित्यर्थः । किमिति न पश्यतीत्यत आह–न त्विति ॥ वृत्तेः साधनाधीनत्वोक्त्या स्वरूपज्ञानस्य साधनाधीनत्वं हेतुरसिद्ध इत्युक्तम् । साधनवैयर्थ्यतर्कोऽपि निरस्तः । शृण्वन्नित्याद्यनित्यज्ञानश्रुतीनां वृत्तिविषयत्वं व्याख्यातम् । आत्मा, न ज्ञानं, द्रव्यत्वादित्यादितर्काश्चागमबाधिताः फलवत्प्रधानवाक्यापेक्षितस्वप्रकाशत्वागमस्य बलवत्त्वात् । किंच निरवयवात्मनो मनस्संयोगायोगान्नानित्यज्ञानगुणता । समवायाभावाच्च न स्वसमवेतज्ञानवेद्यता । कर्मकर्तृत्वविरोधाच्च । किंच ज्ञानत्वस्यैकवृत्तित्वे लाघवादात्मैव ज्ञानम् । वृत्तेश्च मनःपरिमाणत्वश्रुत्या कामः सङ्कल्प इत्याद्यया जडत्वान्नास्माकं ज्ञानद्वैविध्यगौरवमित्यनवद्यमात्मनः स्वप्रकाशत्वमिति सिद्धम् ॥१८॥(१२)॥ स्वप्रकाशत्वादात्मस्वरूपादीषद्बहिष्टं परिमाणमेवाश्रिताश्रयत्वेनान्तर्बहिर्भावेनैवासङ्गत्या विचारयति—उत्क्रान्तिगत्यागतीनाम् ॥ विषयसंशयौ दर्शयति–इदानीमिति॥ 'नात्माऽश्रुतेः'–[ व्या० सू० २ । ३ । १७ ] इत्यादिना गतार्थत्वमस्याशङ्कयाऽत्माणुत्वश्रुतीनां, महत्त्वश्रुतीनां च, विरोधकथनार्थमस्याधिकरणस्यारम्भ इत्याह–नन्वित्यादिना ॥ न केवलं श्रुतोत्क्रान्त्याद्यनुपपत्त्याऽऽत्मनोऽणुत्वं, किन्त्वेषोऽणुरात्मेति श्रुत्या-

भामती ।

त्तेति सर्वमवदातम् ॥ १८ ॥ ( १२ ) ॥ उत्क्रान्तिगत्यागतीनाम् । यद्यप्यविकृतस्यैव परमात्मनो जीवभावस्तथा चानणुपरिमाणत्वं, तथाप्युत्क्रान्तिगत्यागतीनां श्रुतेश्च साक्षादणुपरिमाणश्रवणस्य चाविरोधार्थमिदमधिकरणमित्याक्षेपसमाधानाभ्यामाह–ननु चेति । पूर्वपक्षं गृह्णाति–

आनन्दगिरीय–न्यायनिर्णयः ।

न पश्यतीत्युक्तं व्यनक्ति–न त्विति । पश्यन्न पश्यतीति विरोधमाशंक्याऽऽह–एतदिति । विषयाभावादचेतयमानत्वं दृष्टान्तेन स्पष्टयति—यथेति । वस्तुत्वादिहेतोरनित्यचैतन्यत्वसिद्धावात्मनश्चिद्रूपता कुतः स्यादित्याशंक्याऽऽह–वैशेषिकादीति । आत्मचैतन्यस्याऽऽगन्तुकत्वे मानाभावात्तस्य नित्यचैतन्यत्वे 'पश्यन्' इत्यादिश्रुतीनां स्वप्रकाशत्वश्रुत्यनुसारेण नयनादन्योन्यमविरोधान्नित्यचैतन्ये प्रत्यग्ब्रह्मणि समन्वयसिद्धिरित्युपसंहरति–तस्मादिति ॥ १८ ॥ ( १२ ) ॥ ब्रह्मैक्ययोग्यत्वायाऽऽत्मनः स्वप्रकाशत्वमुक्तम् । इदानीं तस्य स्वाभाविकाणुत्वनिरासेन वस्तुतो महत्त्वं चैतन्यादीषद्बहिष्टं साधयति–उत्क्रान्तीति । अधिकरणस्य विषयसंशयौ दर्शयति–इदानीमिति । किमणुपरिमाणो जीव आहो महापरिमाण इत्येवं विप्रतिपत्तेः संदिह्यते । मध्यमपरिमाणत्वं निरस्तमेवात्र तथाऽणुत्वं निरस्तप्रायमिति वक्तुमतीताधिकरणारम्भमाक्षिपति–ननु चेति । तथाऽपि जीवस्याऽऽनन्त्यनिरूपणार्थमधिकरणमित्याशंक्याऽऽह–अतश्चेति ।

परस्य चात्मनोऽनन्तत्वमाम्नातम् । तत्र कुतो जीवस्य परिमाणचिन्तावतार इति॥ उच्यते॥ सत्यमेतत्॥ उत्क्रान्तिगत्यागतिश्रवणानि तु जीवस्य परिच्छेदं प्रापयन्ति । स्वशब्देन चास्य क्वचिदणुपरिमाणत्वमाम्नायते । तस्य सर्वस्याऽनाकुलत्वोपपादनायाऽयमारम्भः । तत्र प्राप्तं तावदुत्क्रान्तिगत्यागतीनां श्रवणात् परिच्छिन्नोऽणुपरिमाणो जीव इति ॥ उत्क्रान्तिस्तावत् "स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति" [ कौ० ३ । ३ ] इति । गतिरपि—"ये वै के चाऽस्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" [ कौ० १ । २ ] इति । आगतिरपि "तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" [ बृ० ४ । ४ । ६ ] इति ॥ आसामुत्क्रान्तिगत्यागतीनां श्रवणात्परिच्छिन्नस्तावज्जीव इति प्राप्नोति । न हि विभोश्चलनमवकल्पत इति । सति च परिच्छेदे शारीरपरिमाणत्वस्याऽऽर्हतपरीक्षायां निरस्तत्वादणुरात्मेति गम्यते ॥ १९ ॥

## स्वात्मना चोत्तरयोः ॥ २० ॥

रत्नप्रभा ।

पीत्याह—स्वशब्देनेति ॥ पूर्वपक्षे जीवस्याणुत्वाद् ब्रह्मैक्यासिद्धिः, सिद्धान्ते तत्सिद्धिरिति मत्वा सूत्रं व्याकुर्वन् पूर्वपक्षमाह—तत्र प्राप्तमित्यादिना ॥ "श्रुतेः" "अणुः" इति उत्तरसूत्रादाकृष्य सूत्रं पूरितम् । उत्क्रान्तिः—श्रूयत इति शेषः । सः मुमूर्षुः जीवः । एतैः बुद्ध्यादिभिः । तस्मात् चन्द्रलोकादिमं लोकं प्रति कर्म कर्तुमायातीत्यर्थः ॥ १९ ॥ उत्क्रान्तिरात्मनो देहान्निर्गमो न भवति, येनाणुत्वं स्यात् । किन्तु स्वामित्वनिवृत्तिरिति केचित् । तदङ्गीकृत्याप्यणुत्वमावश्यकमित्याह—स्वात्मनेति ॥

भामती ।

तत्र प्राप्तं तावदिति। विभागसंयोगोत्पादौ हि तूत्क्रान्त्यादीनां फलं न च सर्वगतस्य तौ स्तः। सर्वत्र नित्यप्राप्तस्य वा सर्वात्मकस्य वा तदसंभवादिति ॥१९॥ स्वात्मना चोत्तरयोः। उत्क्रमणं हि मरणे निरूढम्। तच्चा-

आनन्दगिरीय—न्यायनिर्णयः ।

तुल्यलक्षणत्वादित्यर्थः । तथाऽपि विचारारम्भस्य किं जातं तदाह—परस्येति । तथाऽपि जीवस्य तन्नोक्तं तत्राऽऽह—तत्रेति । पराभिन्नतया तद्वदानन्त्ये सतीति यावत् । आरम्भं समाधत्ते—उच्यत इति । यदुक्तं जीवस्य नित्यत्वादि तदंगीकरोति—सत्यमिति । तर्हि परममहत्त्वमपि तस्य सिद्धमेव किमनया चिन्तयेत्याशंक्याऽऽह—उत्क्रान्तीति । न केवलं श्रुतार्थापत्तिसिद्धमात्मनोऽणुत्वं किंतु श्रौतमपीत्याह—स्वशब्देनेति । आत्माणुत्वश्रुतिकलापस्य तदानन्त्यश्रुतिजातस्य वा नाऽऽकुलत्वमन्योन्यमविरुद्धत्वं तत्प्रतिपादनेनापरिच्छिन्ने ब्रह्मणि समन्वयसाधकमधिकरणमर्थवदित्युपसंहरति—तस्येति । एतेन पादादिसंगतिरुक्ता । पूर्वपक्षे चाऽऽत्माणुत्वमहत्त्वश्रुत्योर्विरुद्धत्वेनाप्रामाण्यादुक्ते ब्रह्मणि समन्वयासिद्धिः, सिद्धान्ते तयोरविरुद्धत्वात्प्रामाण्यात्तत्सिद्धिः । अधिकरणारम्भमेवमुक्त्वा सूत्रं व्याकुर्वन्पूर्वपक्षयति—तत्रेति । उक्तं हेतुं विवृणोति—उत्क्रान्तीति । स पुरुषो मुमूर्षुरारब्धकर्मावसाने यदाऽस्मादभिमानतो गृहीतादिति यावत् । सहैवेत्यत्र तदेति वक्तव्यम् । एतच्छब्दो वागादिविषयः । तस्माल्लोकादित्यागमनापादानत्वेन चन्द्रलोको गृह्यते । तत्र भोक्तव्यकर्मक्षयानन्तर्यं पुनरित्युच्यते । अस्मै लोकायेत्येतं लोकं प्रतीत्यर्थः । कर्मशब्देन तदनुष्ठानं लक्ष्यते । हेतुमनूद्य तत्फलमाह—आसामिति । ननु जीवस्योत्क्रान्तिगत्यागतिभिश्चलनमेव गम्यते न परिच्छेदस्तत्राऽऽह—न हीति । सर्वगतस्य स्वाश्रयसंयोगविभागहेतुश्चलनम् । नभोवच्चलनं न चेत्तथाऽपि कुतोऽणुत्वं परिशेषादित्याह—सतीति ॥ १९ ॥ नाऽऽत्मनो देहादपसर्पणमुत्क्रमणं किंतु स्वाम्यनिवृत्तिमात्रम् । मन एव तूत्क्रम्य भोगदेशं गच्छतीत्येके, तत्राऽऽह—स्वात्मनेति । सूत्रं व्याचि-

उत्क्रान्तिः कदाचिदचलतोऽपि ग्रामस्वाम्यनिवृत्तिवद्देहस्वाम्यनिवृत्त्या कर्मक्षयेणाऽवकल्पेत । उत्तरे तु गत्यागती नाऽचलतः सम्भवतः । स्वात्मना हि तयोः सम्बन्धो भवति । गमेः कर्तृस्थक्रियात्वात् । अमध्यमपरिमाणस्य च गत्यगती अणुत्व एव सम्भवतः । सत्योश्च गत्यागत्योरुत्क्रान्तिरप्यपसृतिरेव देहादिति प्रतीयते । न ह्यनपसृतस्य देहाद्गत्यागती स्याताम् । देहप्रदेशानां चोत्क्रान्तावपादानत्ववचनात्- "चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः" [ बृ० ४ । ४ । २ ] इति । "स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति" [ बृ० ४ । ४ । १ ] इति "शुक्रमादाय पुनरेति स्थानम्" [ बृ० ४ । ३ । ११ ] इति चान्तरेऽपि शरीरे शारीरस्य गत्यागती भवतः ॥ तस्मा- दप्यस्याणुत्वसिद्धिः ॥ २० ॥

---

रत्नप्रभा ।

उत्क्रान्तेरुत्तरयोर्गत्यागत्योः स्वात्मना कर्त्रा सम्बन्धादणुत्वमिति सूत्रयोजना । पाकानाश्रयस्य पक्तृत्व- वद्गत्यनाश्रयस्याऽपि गन्तृत्वोक्तिः किं न स्यादित्यत आह-गमेरिति ॥ गमनस्य कर्त्तरि संयोगविभाग- रूपातिशयहेतुत्वात् कर्त्राश्रितत्वं लोकसिद्धमित्यर्थः । जीवः, अणुः, अमध्यमपरिमाणत्वे सति गतिमत्त्वात्, परमाणुवदित्याह-अमध्यमेति ॥ अङ्गीकारं त्यजति-सत्योश्चेति ॥ न स्वाम्यनिवृत्तिमात्रमुत्क्रान्ति- रित्यर्थः । देहान्निर्गम एवोत्क्रान्तिरित्यत्र लिङ्गान्तरमाह-देहप्रदेशानामिति ॥ अपादानत्वम् । अव- धित्वम् । अन्येभ्यो वा मुखादिभ्यः । एष आत्मा निष्क्रामतीति शेषः । किंच देहमध्येऽपि जीवस्य गत्यागतिश्रुतेरणुत्वमित्याह-स इति ॥ इन्द्रियाणि गृह्णन् स्वापादौ हृदयं स जीवो गच्छति । शुक्रं

भामती ।

लतोऽपि तत्र सतो देहस्वाम्यनिवृत्त्योपपद्यते न तु गत्यागती । तयोश्चलने निरूढयोः कर्तृस्थभावयो- र्व्यापिन्यसंभवादिति मध्यमं परिमाणं महत्त्वं शरीरस्यैव । तच्चार्हतपरीक्षायां प्रत्युक्तम् । गत्यागती च परममहति न संभवतोऽतः पारिशेष्यादणुत्वसिद्धिः । गत्यागतिभ्यां च प्रादेशिकत्वसिद्धौ मरणमपि देहा- दपसर्पणमेव जीवस्य न तु तत्र सतः स्वाम्यनिवृत्तिमात्रमिति सिद्धमित्याह-सत्योश्च गत्यागत्योरिति । इतश्च देहादपसर्पणमेव जीवस्य मरणमित्याह-देहप्रदेशानामिति । तस्माद्गत्यागत्यपेक्षोत्क्रान्तिरपि सापा- दानाणुत्वसाधनमित्यर्थः । न केवलमपादानश्रुतेः, तच्छरीरप्रदेशगन्तव्यत्वश्रुतेरप्येवमेवेत्याह-स एतास्ते-

आनन्दगिरीय-न्यायनिर्णयः ।

रुयासुः स्वाम्यनिवृत्तिमात्रमुत्क्रमणमित्यंगीकरोति-उत्क्रान्तिरिति । देहे स्वाम्यनिवृत्तौ हेतुमाह-कर्मेति । तथाऽपि गत्यागतिभ्यामणुत्वमात्मनः स्यादपरिच्छिन्नस्य सतस्तदयोगादित्याह-उत्तरे त्विति । घटग- मनागमनाभ्यां नभसस्तद्भ्रान्तिवदुपाधेरात्मनोऽपि गत्यागतिभ्रान्तिः स्यादित्याशंक्य दृष्टान्ते दृष्टत्वात्तथा- त्वेऽपि कथमागमिकस्य तथात्वमित्याह-स्वात्मनेति । पचतीत्यादौ पाकाद्यनाश्रयस्यापि कर्तृत्वोक्तिवदा- त्मनो गत्याद्यनाश्रयस्यापि तत्कर्तृत्वमुच्यतामित्याशंक्याऽऽह-गमेरिति । श्रुतिप्रामाण्याद्गत्यागत्योर्जीवे- नैव संबन्धे फलितमाह-अमध्यमेति । जीवोऽणुरमध्यमपरिमाणत्वे सति गत्यागतिमत्त्वात्परमाणुवदि- त्यर्थः । स्वाम्यनिवृत्तिमात्रमुत्क्रांतिरित्युपेत्योक्तम् । संप्रति सूत्रोक्तोत्क्रान्तेस्तर्हि पूर्वोत्तरपक्षानुपयोगितेत्या- शंक्याऽऽह-सत्योश्चेति । तत्र हेतुः-न हीति । इतश्च देहादपसर्पणमेवोत्क्रांतिरित्याह-देहेति । अपा- दानत्वं विश्लेषावधित्वम् । अन्येभ्यो वा मुखादिभ्यस्तं जीवमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति शेषः । किंच स्वदेहमध्येऽपि गत्यागतिभावात्परिच्छिन्नो जीव इत्याह-स इति । जीवश्चक्षुरादीन्द्रियाणि गृहीत्वा स्वापादौ हृदयं प्रविशति-शुक्रं ज्योतिष्मत्करणजातमादाय पुनर्जागरितमागच्छतीत्यर्थः । बाह्यादिवा- ऽन्तरादपि गत्यादेरात्मनोऽणुत्वमित्याह-तस्मादिति ॥ २० ॥ सर्वगतत्वश्रुतिविरोधमाशंक्य विषया-

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

अथापि स्यान्नाणुरयमात्मा ॥ कस्माद् ॥ अतच्छ्रुतेः । अणुत्वविपरीतपरिमाणश्रवणादित्यर्थः । "स वा एष महानज आत्मा । योऽयं विज्ञानमयः प्राणेषु" [ बृ० ४ । ४ । २२ ] "आकाशवत्सर्वगतश्च नित्यः" "सत्यं ज्ञानमनन्तं ब्रह्म" [ तै० उ० २ । १ । १ ] इत्येवंजातीयका हि श्रुतिरात्मनोऽणुत्वे विप्रतिषिध्येतेति चेत् ॥ नैष दोषः ॥ कस्मात् ॥ इतराधिकारात्—परस्य हि आत्मनः प्रक्रियायामेषा परिमाणान्तरश्रुतिः । परस्यैवात्मनः प्राधान्येन वेदान्तेषु वेदितव्यत्वेन प्रकृतत्वात् । "विरजः पर आकाशाद्" [ बृ० ४ । ४ । २० ] इत्येवंविधाच्च परस्यैवात्मनः तत्रतत्र विशेषाधिकारात ॥ ननु "योऽयं विज्ञानमयः प्राणेषु" [ बृ० ४ । ४ । २२ ] इति शारीर एव महत्त्वसम्बन्धित्वेन प्रतिनिर्दिश्यते । शास्त्रदृष्ट्या त्वेष निर्देशो वामदेववद्द्रष्टव्यः ॥ तस्मात्प्राज्ञविषयत्वात्परिमाणान्तरश्रवणस्य, न जीवस्याणुत्वं विरुध्यते ॥ २१ ॥

---

रत्नप्रभा ।

प्रकाशकमिन्द्रियग्राममादाय पुनर्जागरितस्थानमागच्छतीत्यर्थः ॥ २० ॥ इतराधिकाराद्ब्रह्मप्रकरणात् । ननु महत्त्वश्रुतेः कथं परप्रकरणस्थत्वमित्यत आह—परस्यैवेति ॥ या वेदान्तश्रुतिः सा परप्रकरणस्थेत्युत्सर्गात् तस्यास्तत्स्थत्वं, ब्रह्मारम्याधीतत्वाचेत्याह—विरज इति ॥ निर्दोष इत्यर्थः । विज्ञानमयश्रुत्या प्रकरणं बाध्यमिति शङ्कते—नन्विति ॥ अणोर्जीवस्य ब्रह्मणा भेदाभेदाङ्गीकाराच्छास्त्रीयामेददृष्ट्या महत्त्वोक्तिः । यथा वामदेवस्याहं मनुरिति सर्वात्मत्वोक्तिरित्यविरोधमाह—शास्त्रेति ॥ २१ ॥ एवमुक्त्वा-

भामती ।

जोमात्रा इति ॥२०॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् । यत उत्क्रान्त्यादिश्रुतिभिर्जीवानामणुत्वं प्रसाधितं ततो व्यापकात्परमात्मनस्तेषां तद्विकारतया भेदः। तथा च महत्त्वानन्त्यादिश्रुतयः परमात्मविषया न जीवविषया इत्यविरोध इत्यर्थः । यदि जीवा अणवस्ततो 'योऽयं विज्ञानमयः प्राणेषु' इति कथं शारीरो महत्त्वसंबन्धित्वेन प्रतिनिर्दिश्यते इति चोदयति—नन्विति । परिहरति—शास्त्रदृष्ट्या पारमार्थिकदृष्ट्या निर्देशो वामदेववत् । यथा हि गर्भस्थ एव वामदेवो जीवः परमार्थदृष्ट्यात्मनो ब्रह्मत्वं प्रतिपेदे, एवं

आनन्दगिरीय—न्यायनिर्णयः ।

न्तरोक्त्या प्रत्याह—नाणुरिति । चोद्यं विवृणोति—अथापीति । उक्तहेतुभिरात्मनोऽणुत्वे दृष्टेऽपीति यावत् । अणुत्वश्रुतेरुक्तत्वादसिद्धो हेतुरित्याशंक्याऽऽह—अणुत्वेति । परिमाणान्तरश्रवणं विवृणोति—स वा इति । परिहारमवतार्य व्याचष्टे—नेति । महापरिमाणश्रवणं परमात्मविषयं तत्प्रकरणस्थत्वादित्युक्तं साधयति—परस्येति । कथमस्य परविषयतेत्याशंक्य प्राधान्येन तस्य प्रतिपाद्यत्वादुत्सर्गतस्तथेत्याह—परस्यैवेति । न केवलमौत्सर्गिकं परप्रकरणत्वमारभ्याधीतिबलादपि तद्धीरित्याह—विरज इति । परिमाणान्तरश्रुतेः श्रुत्या जीवगामित्वे सिद्धे प्रकरणस्य दौर्बल्यान्न परविषयतेति शङ्कते—नन्विति । यथा वामदेवस्य गर्भस्थस्यैव 'अहं मनुरभवं सूर्यश्च' इति शास्त्रदृष्ट्या व्यपदेशो दृष्टस्तथा जीवस्य परमार्थाभेददृष्ट्या महत्त्वनिर्देशस्तया च तस्य स्वतोऽणुत्वमविरुद्धमित्याह—शास्त्रेति । अणोर्जीवस्य ब्रह्मणो भिन्नाभिन्नत्वेनात्यन्तभेदाभावात्तद्भेदस्य चाधपक्षत्वादभेद एव शास्त्रीयस्तदपेक्षया च जीवमहत्त्वोक्तिरिति भावः। परिमाणान्तरश्रुतेरन्यविषयत्वाज्जीवस्याणुत्वं युक्तमित्युपसंहरति—तस्मादिति ॥ २१ ॥ गत्यादिश्रुत्यनुप-

## स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

इतश्चाणुरात्मा । यतः साक्षादेवाऽस्याऽणुत्ववाची शब्दः श्रूयते—"एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश" [ मुण्ड० ३।१।९ ] इति प्राणसम्बन्धाच्च जीव एवायमणुरभिहित इति गम्यते ॥ तथोन्मानमपि जीवस्याणिमानं गमयति—"वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः सः विज्ञेयः" [ श्वेता० ५।९ ] इति "आराग्रमात्रो ह्यवरोऽपि दृष्टः" [ श्वेता० ५।८ ] इति चोन्मानान्तरम् ॥ २२ ॥ नन्वणुत्वे सत्येकदेशस्थस्य सकलदेहगतोपलब्धिर्विरुध्यते। दृश्यते च जाह्नवीह्रदनिमग्नानां सर्वांगशैत्योपलब्धिर्निदाघसमये च सकलशरीरपरितापोपलब्धिरित्यत उत्तरं पठति—

## अविरोधश्चन्दनवत् ॥ २३ ॥

यथा हि हरिचन्दनविन्दुः शरीरैकदेशसम्बद्धोऽपि सन्सकलदेहव्यापिनमाह्लादं करोति, एवमात्मापि देहैकदेशस्थः सकलदेहव्यापिनीमुपलब्धिं करिष्यति । त्वक्सम्बन्धाच्चाऽस्य सकलशरीरगता वेदना न विरुध्यते ।

---

रत्नप्रभा ।

न्यादिश्रुत्याऽणुत्वमनुमितम् । तत्र श्रुतिमप्याह—स्वशब्देति ॥ वालाग्रादुद्धृतः शततमो भागः । तस्मादप्युद्धृतः शततमो भागो जीव इति उद्धृत्य मानमुन्मानम् । अत्यन्ताल्पत्वमित्यर्थः । वालः केशः । तोत्रप्रोतायःशलाकाग्रम्—आराग्रम् । तस्मादुद्धृता मात्रा मानं यस्य स जीवः—तथा ॥ २२ ॥

भामती ।

विकाराणां प्रकृतेर्वास्तवादभेदात्तत्परिमाणत्वव्यपदेश इत्यर्थः ॥ २१ ॥ स्वशब्दोन्मानाभ्यां च । स्वशब्दं विभजते—साक्षादेवेति । उन्मानं विभजते—तथोन्मानमपीति । उद्धृत्य मानमुन्मानं वालाग्रादुद्धृतः शततमो भागस्तस्मादपि शततमादुद्धृतः शततमो भाग इति तदिदमुन्मानम् । आराग्रादुद्धृतं मानमाराग्रमात्रमिति ॥ २२ ॥ सूत्रान्तरमवतारयितुं चोदयति—नन्वणुत्वे सतीति । अणुरात्मा न शरीरव्यापीति न सर्वाङ्गीणशैत्योपलब्धिः स्यादित्यर्थः । अविरोधश्चन्दनवत् । त्वक्संयुक्तो हि जीवः

आनन्दगिरीय—न्यायनिर्णयः ।

पत्तेरनुमानस्य च श्रुत्यन्तरविरोधनिरासेनाणुत्वसाधकत्वमुक्तम् । इदानीं तत्रैव श्रुतिमाह—स्वशब्देति । चशब्दं योजयति—इतश्चेति । स्वशब्दं व्याकुर्वन्नितःशब्दार्थं स्फुटयति—यत इति । दुर्ज्ञातत्वधिया परमात्मैवाणुरिवाणुरुक्त इत्याशंक्याऽऽह—प्राणेति । वृत्तिभेदेन पञ्चधा प्राणो यस्मिन्संनिविष्टः स प्राणाधारो जीव एवाणुर्वेदितव्य उच्यते परस्याप्राणसंबन्धादित्यर्थः । उन्मानं विभजते—तथेति । स्वशब्दवदित्यर्थः । उद्धृतं मानमुन्मानमत्यन्तापकृष्टपरिमाणमित्यर्थः । तदुदाहरति—वालेति । आराग्रादुद्धृतं मानं मात्रा यस्य स जीवस्तथा ॥ २२ ॥ सूत्रान्तरार्थं शंकते—नन्विति । उपलब्धिरपि न सर्वदेहगता किंतु प्रदेशगतेत्याशंक्याऽऽह—दृश्यते चेति । देहव्यापिकार्यान्यथानुपपत्त्या जीवो नाणुरिति चोद्यं सूत्रेण प्रत्याह—अत इति । परिच्छिन्नस्यापि स्वभाववशाद्व्यापि कार्यं स्यादित्यन्यथोपपत्तिं दर्शयन्दृष्टान्तं व्याचष्टे—यथेति । दार्ष्टान्तिकमाह—एवमिति । देहव्यापकत्वमात्मसंबन्धस्य सर्वाङ्गीणशैत्यज्ञाने शक्तत्वायुक्तं प्रादेशिकस्यात्मनो व्यापि कार्यमित्युक्तेऽर्थे युक्तिं ब्रुवन्नवशिष्टं सूत्रभागं व्याचष्टे—त्वगिति । प्रादेशिक-

त्वगात्मनोर्हि सम्बन्धः कृत्स्नायां त्वचि वर्तते । त्वक्च कृत्स्नशरीरव्यापिनीति ॥ २३ ॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

अत्राह—यदुक्तम् "अविरोधश्चन्दनवत्" इति तदयुक्तम् ॥ दृष्टान्तदार्ष्टान्तिकयोरतुल्यत्वात्—सिद्धे ह्यात्मनो देहैकदेशस्थत्वे चन्दनदृष्टान्तो भवति । प्रत्यक्षं तु चन्दनस्याऽवस्थितिवैशेष्यमेकदेशस्थत्वं सकलदेहाह्लादनं च । आत्मनः पुनः सकलदेहोपलब्धिमात्रं प्रत्यक्षं, नैकदेशवर्त्तित्वम् । अनुमेयं तु तदिति ॥ यद्प्युच्येत, न चाऽत्राऽनुमानं सम्भवति । किमात्मनः सकलशरीरगता वेदना त्वगिन्द्रियस्येव सकलदेहव्यापिनः सतः किंवा विभोर्नभस इव आहोस्वित्—चन्दनबिन्दोरिवाणोरेकदेशस्थस्येति संशयानिवृत्तेरिति ॥ अत्रोच्यते ॥ नायं दोषः ॥

---

रत्नप्रभा ।

आत्मसंयुक्तायास्त्वचो देहव्यापिस्पर्शोपलब्धिकरणस्य महिम्नाऽऽत्मनोव्यापिकार्यकारित्वमविरुद्धम् ॥ त्वगात्मनोरिति । सम्बन्धस्य त्वगवयविनिष्ठत्वादवयविनश्चैकत्वादात्मसंयोगस्य कृत्स्नत्वङ्निष्ठतेत्यर्थः ॥ २३ ॥ सिद्धे हीति ॥ न तु सिद्धमित्यतुल्यतेत्यर्थः । विशेष एव वैशेष्यम् । चन्दनविन्दोरल्पत्वस्य प्रत्यक्षत्वात् त्वग्व्याप्त्या व्यापिकार्यकारित्वकल्पना युक्ता । जीवस्य त्वणुत्वे सन्देहाद्व्यापिकार्यदृष्ट्या व्यापित्वकल्पनमेव युक्तम् । व्यापिकार्याश्रयो व्यापीत्युत्सर्गादिति सूत्रशंकाभागार्थः । आत्मा, अल्पः, व्यापिकार्यकारित्वाचन्दनविन्दुवदित्यनुमानमयुक्तम् । त्वगादौ व्यभिचारादित्याह—न चात्रानुमानमिति ॥ पूर्वोक्तश्रुतिभिर्जीवस्याणुत्वनिश्चयाद्धृदिष्ठत्वश्रुतिभिरेकदेशस्थत्वनिश्चयाच न दृष्टान्तवैषम्यमिति परिहारभागार्थमाह—अत्रोच्यत इति ॥ २४ ॥ आत्मवत्तद्धर्मज्ञानस्याप्यणुत्वं स्वतः । कादाचित्कं तु देहपरिमाणत्वमि-

भामती ।

त्वक्च सकलशरीरव्यापिनीति त्वग्व्याप्यात्मसंवन्धः सकलशैत्योपलब्धौ समर्थ इत्यर्थः ॥ २३ ॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि । चन्दनविन्दोः प्रत्यक्षतोऽल्पीयस्त्वं बुद्ध्वा युक्ता कल्पना भवति, यस्य तु संदिग्धमणुत्वं सर्वाङ्गीणं च कार्यमुपलभ्यते तस्य व्यापित्वमौत्सर्गिकमपहाय नेयं कल्पनात्रकाशं लभत इति शङ्कार्थः । न च हरिचन्दनविन्दुदृष्टान्तेनाणुत्वानुमानं जीवस्य, प्रतिदृष्टान्तसंभवेनानैकान्तिकत्वादित्याह—न चात्रानुमानमिति । शङ्कामिमामपाकरोति—अत्रोच्यत इति ।

आनन्दगिरीय—न्यायनिर्णयः ।

स्याऽऽत्मनः संवन्धः समस्तां त्वचं कथं व्याप्नुयात्तत्राऽऽह—त्वगात्मनोरिति । संबन्धस्य त्वगवयविनिष्ठत्वादवयविनश्चैकत्वात्तद्व्याप्तिरित्यर्थः—तथाऽपि कथं त्वचः सर्वाङ्गीणशैत्यसंगतिस्तत्राऽऽह—त्वक्चेति । अर्थापत्तेरन्यथाऽप्युपपत्तिं दृष्टान्तेनोक्तामुपसंहर्तुमिति शब्दः ॥ २३ ॥ वैषम्यं शंकित्वा प्रत्याह—अवस्थितीति । तत्र शङ्कां विवृणोति—अत्रेतिं । जीवस्याणोरपि देहव्यापिकार्यं स्यादिति दृष्टान्तेनोक्ते सतीति यावत् । अतुल्यत्वमेव व्यतिरेकेण साधयति—सिद्धे हीति । न चाऽऽत्मनो देहैकदेशस्थत्वं प्रत्यक्षमित्युक्तदृष्टान्तासिद्धिरिति शेषः । दृष्टान्ते विशेषं दर्शयति—प्रत्यक्षं त्विति । अवस्थितिविशेषमेव विशदयति—एकेति । कार्यमपि तर्हि तथैव स्यादित्याशंक्योक्तम्—सकलेति । आत्मन्यपि तुल्यमेतदित्याशंक्याऽऽह—आत्मन इति । प्रत्यक्षतोऽल्पीयसश्चन्दनविन्दोस्त्वग्व्याप्त्या व्यापि कार्यं युक्तम् । यस्य तु संदिग्धमणुत्वं सर्वांगीणं कार्यं तस्य व्यापित्वमौत्सर्गिकं तु हित्वा नेयं कल्पना युक्तेत्यर्थः । आत्मनो देहैकदेशस्थत्वमप्रत्यक्षमपि चन्दनविन्दुदृष्टान्तेनाणुत्वहेतुनाऽनुमेयमिति शंकते—अनुमेयमिति । संदिग्धासंदिग्धत्वेन संदिग्धं दूषयति—नेत्यादिना । परिहारमवतार्य व्याकरोति—अत्रेति । प्रत्यक्षानु-

कस्मात् ॥ अभ्युपगमात्–अभ्युपगम्यते ह्यात्मनोपि चन्दनस्येव देहैकदेशवृत्तित्वम् ॥ अवस्थितिवैशेष्यं कथमिति ॥ उच्यते ॥ हृदि हि एष आत्मा पठ्यते वेदान्तेषु–"हृदि ह्येष आत्मा" [ प्रश्न० ३ । ७ ] "स वा एष आत्मा हृदि" [ छां० ८ । ३ । ३ ] "कतम आत्मेति । योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" [ बृ० ४ । ३ । ७ ] इत्याद्युपदेशेभ्यः ॥ तस्माद् दृष्टान्तदार्ष्टान्तिकयोर्वैषम्याद्युक्तमेवैतदविरोधश्चन्दनवदिति ॥ २४ ॥

## गुणाद्वा लोकवत् ॥ २५ ॥

चैतन्यगुणव्याप्तेर्वाऽणोरपि सतो जीवस्य सकलदेहव्यापि कार्यं न विरुध्यते । यथा लोके मणिप्रदीपप्रभृतीनामपवरकैकदेशवर्तिनामपि प्रभा–अपवरकव्यापिनी सती कृत्स्नेपवरके कार्यं करोति, तद्वत् । स्यात्कदाचिच्चन्दनस्य सावयवत्वात्सूक्ष्मावयवविसर्पणेनापि सकलदेहे आह्लादयितृत्वम् । न त्वणोर्जीवस्यावयवाः सन्ति । यैरयं सकलं देहं विप्रसर्पेदित्याशंक्य "गुणाद्वा लोकवद्" इत्युक्तम् ॥ २५ ॥ कथं पुनर्गुणो गुणिव्यतिरेकेणाऽन्यत्र वर्तेत, न हि पटस्य शुक्लो गुणः पटव्यतिरेकेणाऽन्यत्र वर्तमानो दृश्यते ॥ प्रदीपप्रभावद्भवेदिति चेत् ॥ न ॥ तस्या

---

रत्नप्रभा ।

मित्युक्त्वा स्वत एव व्यापित्वमिति मतान्तरमाह–गुणाद्वेति॥ वाशब्देन चन्दनदृष्टान्तापरितोषः सूचितः । तमाह–स्यादिति ॥ २५ ॥ उत्तरसूत्रव्यावर्त्यं शङ्कते–कथमिति ॥ ज्ञानं, न गुणिव्यतिरिक्तदेश-

भामती ।

यद्यपि पूर्वोक्ताभिः श्रुतिभिरणुत्वं सिद्धमात्मनस्तथापि वैभवाच्छ्रुत्यन्तरमुपन्यस्तम् ॥ २४ ॥ गुणाद्वा लोकवत् । ये तु सावयवत्वाच्चन्दनबिन्दोरणुसंचारेण देहव्याप्तिरुपपद्यते न त्वात्मनोऽनवयवस्याणुसंचारः संभवी, तस्माद्वैषम्यमिति मन्यन्ते तान् प्रतीदमुच्यते–गुणाद्वा लोकवदिति । तद्विभजते–चैतन्य इति । यद्यप्यणुर्जीवस्तथापि तद्गुणश्चैतन्यं सकलदेहव्यापि । यथा प्रदीपस्याल्पत्वेऽपि तद्गुणः

आनन्दगिरीय–न्यायनिर्णयः ।

मानयोरभावादात्मनो देहैकदेशस्थत्वं निरस्तमिति शंकते–कथमिति । श्रुतिमाश्रित्य सूत्रावयवेन समाधत्ते–हृदीति । 'यो वेद निहितं गुहायाम्' इत्याद्युपदेशसंग्रहार्थमादिपदम् । सिद्धे तुल्यत्वे फलितमाह–तस्मादिति ॥ २४ ॥ अणोरात्मनश्चैतन्यं स्वभावतोऽणुपरिमाणं देहतुल्योपलब्ध्याकारपरिणतमित्युक्त्वा पक्षान्तरमाह–गुणाद्वेति । प्रतिज्ञां व्याचष्टे–चैतन्येति । जीवस्याणुत्वे तद्गुणस्य चैतन्यस्य कुतो देहव्याप्तिस्तत्राऽऽह–यथेति । सूत्रस्यापरितुष्ट्या पक्षान्तरार्थत्वादपरितुष्टिहेतुमाह–स्यादिति । जीवस्यापि स्वावयवद्वारा सर्वदेहविप्रसर्पणमाशंक्य तदवयवानामचेतनत्वे तदयोगाच्चैतन्येऽपि प्रत्येकं चैतन्ये युगपदेकस्यानेकभोक्त्रधिष्ठितस्य देहस्याव्यवस्थापातान्मिलितचैतन्ये मेलनस्यावयवानतिरेकात्तेषां वा चैतन्यान्न जीवस्य स्वावयवैर्देहे विप्रसर्पणमिति मत्वाऽऽह–न त्विति ॥ २५ ॥ सूत्रान्तरमवतारयितुमाक्षिपति–कथमिति । चैतन्यं गुणत्वान्न गुणिनोऽन्यत्रेत्यत्र दृष्टान्तमाह–न हीति । यथा दीपस्य गुणोऽपि प्रभा तदतिरेकेणाशेषमपवरकोदरं व्याप्नोति तथा चैतन्यमात्मगुणोऽपि तमतिक्रम्य सर्वं देहं व्याप्नुयादतो व्यभिचारान्नानुमेति शंकते–प्रदीपेति । प्रभाया गुणत्वाभावान्नैवमित्याह–नेति । द्वयोरपि तेजोद्रव्यत्वे

अपि द्रव्यत्वाभ्युपगमात्—निबिडावयवं हि तेजोद्रव्यं प्रदीपः, प्रविरलावयवं तु तेजोद्रव्यमेव प्रभेत्यत उत्तरं पठति—

## व्यतिरेको गन्धवत् ॥ २६ ॥

यथा गुणस्याऽपि सतो गन्धस्य गन्धवद्द्रव्यव्यतिरेकेण वृत्तिर्भवति। अप्राप्तेष्वपि कुसुमादिषु गन्धवत्सु गन्धोपलब्धेः । एवमणोरपि सतो जीवस्य चैतन्यगुणव्यतिरेको भविष्यति। अतश्चानेकान्तिकम्, एतद्, गुणत्वाद्रूपादिवदाश्रयविश्लेषानुपपत्तिरिति ॥ गुणस्यैव सतो गन्धस्याऽऽश्रयविश्लेषदर्शनात् ॥ गन्धस्याऽपि सहैवाश्रयेण विश्लेष इति चेत् ॥ न ॥ यस्मान्मूलद्रव्याद्विश्लेषः, तस्य क्षयप्रसङ्गात । अक्षीयमाणमपि तत्पूर्वावस्थातो गम्यते। अन्यथा तत्पूर्वावस्थैर्गुरुत्वादिभिर्हीयेत । स्यादेतत गन्धाश्रयाणां विश्लिष्टानामवयवानामल्पत्वात्सन्नपि विश्लेषो नोपलक्ष्यते। सूक्ष्मा हि गन्धपरमाणवः सर्वतो विप्रसृता गन्धबुद्धिमुत्पादयन्ति ॥

---

रत्नप्रभा ।

व्यापि, गुणत्वाद्रूपवत् । न च प्रभायां व्यभिचारः । तस्या अपि द्रव्यत्वादिति प्राप्ते गन्धे व्यभिचारमाह—अत उत्तरमिति ॥ गुणस्य द्रव्यव्यतिरेकः आश्रयविश्लेषः । ननु विश्लिष्टावयवानामल्पत्वाद् द्रव्यक्षयो न भवतीत्यत आह—अक्षीयमाणमपीति ॥ अपिरवधारणे । पूर्वावस्थालिङ्गेन—अक्षीयमाणमेव तद् द्रव्यमनुमीयत इत्यर्थः । विमतम्, अविश्लिष्टावयवं, पूर्वावस्थातो गुरुत्वाद्यपचयहीनत्वात् संमतवदिति भावः । शङ्कते—स्यादेतदिति ॥ विश्लिष्टानामल्पत्वादित्युपलक्षणम् । अवयवान्तराणां प्रवेशादित्यपि द्रष्टव्यम् । अवयवानां विश्लेषः, प्रवेशश्च—सन्नपि न ज्ञायते । तथा च गुरुत्वापचयो न भवतीति हेतोरन्यथासिद्धिरिति शङ्कार्थः । आगच्छन्तोऽवयवाः परमाणवस्त्रसरेणवो वा ? नाद्यः, तद्गतरूपवद्गन्ध-

भामती ।

प्रभा सकलगृहोदरव्यापिनीति ॥ २९ ॥ एतदपि शङ्काद्वारेण दूषयित्वा दृष्टान्तान्तरमाह—व्यतिरेको गन्धवत् । अक्षीयमाणमपि तदिति । क्षयस्यातिसूक्ष्मतयाऽनुपलभ्यमानक्षयमिति शंकते—स्यादेतदिति । विश्लिष्टानामल्पत्वादित्युपलक्षणं, द्रव्यान्तरपरमाणूनामनुप्रवेशादित्यपि द्रष्टव्यम् । विश्लेषा-

आनन्दगिरीय—न्यायनिर्णयः ।

कथमवान्तरभेदस्तत्राऽऽह—निबिडेति । गुणत्वस्य गन्धे व्यभिचारमाह—अत इति । दृष्टान्तं व्याचष्टे—यथेति । तत्र हेतुमाह—अप्राप्तेष्विति । सूत्रावयवं व्याकुर्वन्दार्ष्टान्तिकमाह—एवमिति । परानुमाने फलितं दोषमाह—अतश्चेति । अतःशब्दोक्तं हेतुं स्पष्टयति—गुणस्येति । उक्तहेत्वसिद्धिं ब्रुवन्व्यभिचारं वारयति—गन्धस्येति । किमिदमनुमेयं किं वाऽध्यक्षमिति विकल्प्याऽऽद्यं प्रत्याह—नेति । विश्लिष्टावयवानामल्पत्वादपक्षयो न भातीत्याशंक्याऽऽह—अक्षीयमाणमिति । तयात्वेनानुभूयमानमिति यावत् । विमतमवियुक्तावयवं पूर्वावस्थातो गुरुत्वाद्यपचयहीनत्वात्संमतवदित्यर्थः । हेतोरन्यथासिद्धिरिति शंकते—स्यादिति । विश्लिष्टानामल्पत्वादित्युपलक्षणं द्रव्यान्तराणूनामनुप्रविष्टत्वादित्यपि द्रष्टव्यम् । विश्लेषानुप्रवेशाभ्यां सन्नपि विश्लेषो गुरुत्वाद्यपचयरूपः सौक्ष्म्यान्नोपलक्ष्यत इत्यर्थः । नासिकापुटं प्रति गतानां गन्धवदवयवानामध्यक्षेणाग्रहादागतिरयुक्तेत्याशंक्यायोग्यत्वादग्रहणमित्याह—सूक्ष्मा हीति । परमाणुशब्देन परकीया वा परमाणवस्त्रसरेणवो वा गृह्येरन्नाद्ये तद्गतरूपादिवद्गन्धस्यापि नोपलब्धिः स्यादि-

नासिकापुटमनुप्रविशन्त इति चेत् ॥ न ॥ अतीन्द्रियत्वात् परमाणूनां, स्फुटगन्धोपलब्धेश्च नागकेसरादिषु । न च लोके प्रतीतिर्गन्धवद्द्रव्यमाघ्रातमिति । गन्ध एवाऽऽघ्रात इति तु लौकिकाः प्रतीयन्ति । रूपादिष्वाश्रयव्यतिरेकानुपलब्धेर्गन्धस्याप्ययुक्त आश्रयव्यतिरेक इति चेत् ॥ न ॥ प्रत्यक्षत्वादनुमानाप्रवृत्तेः ॥ तस्माद्यद्यथा लोके दृष्टं तत्तथैवानुमन्तव्यं निरूपकैर्नान्यथा । न हि रसो गुणो जिह्वयोपलभ्यत इत्यतो रूपादयोऽपि गुणा जिह्वयैवोपलभ्येरन्निति नियन्तुं शक्यते ॥ २६ ॥

## तथा च दर्शयति ॥ २७ ॥

हृदयायतनत्वमणुपरिमाणत्वं चात्मनोऽभिधाय तस्यैव "आलोमभ्य आनखाग्रेभ्यः" [ छां० ८।८।१ ] इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं दर्शयति ॥ २७ ॥

## पृथगुपदेशात् ॥ २८ ॥

"प्रज्ञया शरीरं समारुह्य" [ कौषी० ३ । ६ ] इति चात्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशाच्चैतन्यगुणेनैवास्य शरीरव्यापिताऽवगम्यते । "तदेषां प्राणानां विज्ञानेन विज्ञानमादाय" [ बृ० २ । १ । १७ ]

---

रत्नप्रभा ।

स्याप्यनुपलब्धिप्रसङ्गादिति परिहरति—नेति ॥ द्वितीयं प्रत्याह—स्फुटेति ॥ त्रसरेणुगन्धश्चेत् स्फुटो न स्यादित्यर्थः । अतो गन्धस्य पुष्पादिस्थस्यैव गुणिव्यतिरेको वाच्य इति भावः । गन्धः, न गुणिविश्लिष्टः, गुणत्वाद्, रूपवदिति शङ्कते—रूपेति ॥ विश्लेषस्य प्रत्यक्षत्वाद्बाध इत्याह—नेति ॥ २६ ॥ आत्मनश्चैतन्यगुणेनैव देहव्याप्तिरित्यत्र श्रुतिमाह सूत्रकारः—तथा च दर्शयतीति—तद्व्याचष्टे—हृदयेति ॥ २७ ॥ तत्रैव श्रुत्यन्तरार्थं सूत्रम्—पृथगिति ॥ विज्ञानम् इन्द्रियाणां ज्ञानशक्तिम्—विज्ञानेन चैतन्यगुणेनाऽऽदाय शेत इत्यर्थः ॥ २८ ॥ एवं चैतन्यगुणव्याप्तिगोचरमभिप्रायं तत्रात्माणुत्वविभुत्वश्रुतीनां विरोधादप्रामाण्यप्राप्तावणुत्वं जीवस्य विभुत्वमीश्वरस्येत्यविरोध इत्येकदेशिपक्षो दर्शितः । तं दूषयन् सिद्धान्तसूत्रं व्याचष्टे—

भामती ।

नुप्रवेशाभ्यां च सन्नपि विश्लेषः सूक्ष्मत्वान्नोपलक्ष्यते इति । निराकरोति—न । कुतः । अतीन्द्रियत्वादिति । परमाणूनां परमसूक्ष्मत्वात्तद्गतरूपादिवद्गन्धोऽपि नोपलभ्येत । उपलभ्यमानो वा सूक्ष्म उपलभ्येत न स्थूल इत्यर्थः । शेषमतिरोहितार्थम् ॥ २६ ॥ २७ ॥ पृथगुपदेशात् । निगदव्याख्या-

आनन्दगिरीय—न्यायनिर्णयः ।

त्याह—नेति । द्वितीयं प्रत्याह—स्फुटेति । त्रसरेणुग्रहेऽपि नागकेसरादिष्वपि दूरेषु स्फुटगन्धधीर्भवति न भवेन्नासिकापुटं प्रविष्टानां गन्धवतां त्रसरेणुमात्रत्वादित्यर्थः । गन्धस्याऽऽश्रयेण सह गतिरनुमेयेति प्रतिक्षिप्य प्रत्यक्षपक्षं प्रत्याह—न चेति । कथं तर्हि लौकिकी धीस्तत्राऽऽह—गन्ध इति । गन्धो नाऽऽश्रयादन्यत्र वर्तते गुणत्वाद्रूपादिवदित्यनुमानान्नेदं व्यभिचारस्थलमिति शंकते—रूपेति । आश्रयेण सहैव गतिर्वा तद्गत्यभावे गन्धस्यापि तद्राहित्यं वा साध्यमाद्ये पूर्वोक्तदोषं मत्वा द्वितीयं प्रत्याह—नेति । प्रत्यक्षविरोधादनुमानानुत्थाने फलितमाह—तस्मादिति । तद्विरोधेऽपि तदुत्थितावतिप्रसक्तिं वक्ति—न हीति ॥ २६ ॥ गन्धस्य गुणिमं विनाऽपि वृत्तेश्चैतन्यस्यापि तद्योगादणुत्वेऽपि देहव्यापिकार्यसिद्धिरित्युक्तम् । इदानीं चैतन्येनैवाऽऽत्मनो देहव्याप्तिरित्यत्र श्रुतिमाह—तथा चेति । सूत्रं व्याचष्टे—हृदयेति ॥ २७ ॥ चैतन्यगुणेनाऽऽत्मनो देहव्याप्तौ हेत्वन्तरमाह—पृथगिति । सूत्रं व्याचष्टे—प्रज्ञयेति । विधान्तरेण सूत्रार्थमाह—तदिति । एतमेवाभिप्रायं चैतन्येनाऽऽत्मनो देहव्यापित्वविषयं बाधकाभावं साधकभावं च परा-

इति च कर्त्तुः शरीरात्पृथग्विज्ञानस्योपदेशः । एतमेवाभिप्रायमुपोद्बलयति ॥ तस्मादणुरात्मेति । एवं प्राप्ते ब्रूमः ॥ २८ ॥

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

तुशब्दः पक्षं व्यावर्तयति । नैतदस्त्यणुरात्मेति । उत्पत्त्यश्रवणात्—परस्यैव तु ब्रह्मणः प्रवेशश्रवणात्, तादात्म्योपदेशाच्च परमेव ब्रह्म जीव इत्युक्तम् । परमेव चेद्ब्रह्म जीवः तस्माद्यावत्परं ब्रह्म तावानेव जीवो भवितुमर्हति । परस्य च ब्रह्मणो विभुत्वमाम्नातम् । तस्माद्विभुर्जीवः । तथा च "स वा एष महानज आत्मा । योऽयं विज्ञानमयः प्राणेषु" [ बृ० ४ । ४ । २२ ] इत्येवञ्जातीयका जीवविषया विभुत्ववादाः श्रौताः, स्मार्ताश्च समर्थिता भवन्ति । न चाणोर्जीवस्य सकलशरीरगता वेदनोपपद्यते ॥ त्वक्सम्बन्धात्स्यादिति चेत् ॥ न ॥ त्वक्कण्टकतोदनेऽपि सकलशरीरगतैव वेदना प्रसज्येत । त्वक्कण्टकयोर्हि संयोगः कृत्स्नायां त्वचि वर्तते । त्वक्च कृत्स्नशरीरव्यापिनीति । पादतल एव तु कण्टक-

---

रत्नप्रभा ।

तुशब्द इत्यादिना ॥ तस्माद्ब्रह्माभिन्नत्वात् विभुः, जीवः, ब्रह्मवदित्यनुमानानुगृहीते श्रुतिस्मृती आह—तथा च स वा एष इति ॥ "नित्यः सर्वगतः स्थाणुः" [ भग० गी० २।२४ ]इत्याद्याः स्मार्तवादाः ॥ एतेन जीवस्य ब्रह्माभेदज्ञानेऽणुत्वाभावधीः। तस्यां तदित्यन्योन्याश्रय इति निरस्तम् । प्रधानमहद्वाक्यानुगुणश्रुतिस्मृतिभिरणुत्वाभावनिश्चयानन्तरमभेदज्ञानात् प्रधानवाक्यविरोधे गुणभूताणुत्वश्रुतीनामौपाधिकाणुत्वविषयकल्पनाद् "गुणे त्वन्यायकल्पना"[1] इति न्यायादिति भावः । किञ्च सर्वदेहव्यापिशैत्यानुभवान्यथानुपपत्त्याऽणुत्वश्रुतयोऽप्यस्ताणुत्वविषयत्वेन कथञ्चिदर्थवादा नेयाः । लौकिकन्यायादपि तेषां दुर्बलत्वादिति मत्वाह—न चाणोरिति ॥ शङ्कते—त्वगिति ॥ यद्यण्वात्मसम्बन्धस्य त्वग्व्याप्त्या देहव्यापिनी वेदना स्यात्, तर्ह्यतिप्रसङ्ग इति दूषयति—नेति ॥ प्रसङ्गस्येष्टत्वं निरस्यति—पादतल एवेति ॥ तस्मादल्प-

भामती ।

तमस्य भाष्यम् ॥ २८ ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् । कण्टकतोदनेऽपीति । महद-

आनन्दगिरीय—न्यायनिर्णयः ।

मृश्य पूर्वपक्षमुपसंहरति—तस्मादिति ॥ २८ ॥ तदनुवादेन सिद्धान्तं सूत्रयति—एवमिति । तदक्षरार्थमाह—तुशब्द इति । पक्षमनुभाष्य तद्व्यावर्तनं प्रतिजानीते—नैतदिति । तत्र हेत्वर्थमुक्तं स्मारयति—उत्पत्तीति । कार्यकारणत्वानुपपत्तौ सत्यां सामानाधिकरण्यश्रुतेश्चेति तृतीयहेत्वर्थः । जीवब्रह्मणोरभेदेऽपि प्रकृते किं जातमित्याशंक्य जीवो महान्ब्रह्माभिन्नत्वात्तद्वदित्याह—परमिति । दृष्टान्तस्य साध्यवैकल्यं 'सत्यं ज्ञानम्' इत्यादिश्रुत्या निराचष्टे—परस्येति । अनुमानफलमाह—तस्मादिति । जीवस्य विभुत्वे तन्महत्त्ववादिश्रुतिस्मृतिवाक्यान्यपि मुख्यार्थानि भवन्तीत्यनुमानानुग्राह्यमागममाह—तथा चेति । 'नित्यः सर्वगतः स्थाणुः' इत्यादयः स्मार्तवादाः । तत्त्वमस्यादिप्रधानवाक्याज्जीवस्य महत्त्वं तदणुत्वार्थगुणभूतवाक्यानां श्रुतिलिंगानां च तद्विरोधादौपाधिकार्थत्वसिद्धेरिति भावः । किंच, 'अर्थवादवाक्यानां लौकिकादपि न्यायादौर्बल्यम्' इति न्यायेन सर्वदेहव्यापिशैत्योपलम्भान्यथानुपपत्तिनिमित्तमहत्त्वेनाणुत्वश्रुतीनां बाधः स्यादित्याह—न चेति । त्वगात्मसंबन्धस्य त्वग्व्यापित्वात्त्वचश्च सर्वदेहव्याप्तेस्तद्द्वारा जीवस्याणोरपि व्यापिकार्यमित्युक्तं शङ्कते—त्वगिति । अतिप्रसक्त्या प्रत्याह—नेति । पादतलमात्रे कण्टकस्य संयुक्तत्वात्कुतोऽन्यत्र वेदनेत्याशंक्याऽऽह—त्वगिति । तथाऽपि कथं देहमात्रे वेदनाधीस्तत्राऽऽह—त्वक्चेति । अतिप्रसङ्गमुपसंहर्तुमिति शब्दः । अस्तु देहमात्रे वेदनाधीरित्यतिप्रसङ्गस्येष्टत्वमाशंक्याऽऽह—पादेति । यदुक्तं गुणाद्वेति

---

१ गुणे त्वन्यार्थकल्पनेति, गुणे त्वन्याय्यकल्पनेति च—पाठान्तरम् ।

**तुन्ना वेदनां प्रतिलभन्ते । न चाणोर्गुणव्याप्तिरुपपद्यते । गुणस्य गुणिदेशत्वात् । गुणत्वमेव हि गुणिनमनाश्रित्य गुणस्य हीयेत । प्रदीपप्रभायाश्च द्रव्यान्तरत्वं व्याख्यातम् । गन्धोऽपि गुणत्वाभ्युपगमात्साश्रय एव सञ्चरितुमर्हति । अन्यथा गुणत्वहानिप्रसङ्गात् । तथा चोक्तं भगवता द्वैपायनेन—"उपलभ्याऽप्सु चेद्गन्धं केचिद् ब्रूयुरनैपुणाः । पृथिव्यामेव तं विद्यादपो वायुं च संश्रितम्" इति । यदि च चैतन्यं जीवस्य सम-**

---

रत्नप्रभा ।

महतोः संयोगः, न महद्व्यापी, कण्टकसंयोगस्य देहव्याप्त्यदर्शनात् । तथा चाप्यात्मसंयोगस्त्वगेकदेशस्थ एवेति देहव्यापिवेदनानुपपत्तिः । न च सिद्धान्ते त्वगात्मसम्बन्धस्य व्यापित्वात् कण्टकसम्बन्धे देहव्यापिवेदनाप्रसङ्ग इति वाच्यम् । यावती विषयसम्बन्धा त्वक् तावद्व्याप्त्यात्मसम्बन्धस्तावद्व्यापिवेदनाहेतुरिति नियमात् । न चैवं विषयत्वक्सम्बन्ध एव तद्धेतुरस्तु । किमात्मव्याप्त्येति वाच्यम् । वेदना हि—सुखं, दुःखं, तदनुभवश्च । न चैषां व्यापकानां कार्याणामल्पमुपादानं सम्भवति । कार्यस्योपादानाद्विश्लेषानुपपत्तेः । न चैषां व्यापकत्वमसिद्धम् । सूर्यतप्तस्य गङ्गानिमग्नस्य सर्वाङ्गव्यापिदुःखसुखानुभवस्य दुरपह्नवत्वात् । **यदुक्तं** गुणस्यापि गुणिविश्लेषो गन्धवदिति । तन्नेत्याह—**न चाणोरिति** ॥ गन्धः, नाश्रयाद्विश्लिष्टः, गुणत्वाद्रूपवदित्यत्रागममाह—**तथा चोक्तमिति** ॥ न च प्रत्यक्षबाधः । गन्धस्य प्रत्यक्षत्वेऽपि निराश्रयत्वस्याप्रत्यक्षत्वान्महतां त्रसरेणूनामनुद्भूतस्पर्शानामुद्भूतगन्धानामागमनात् स्फुटगन्धोपलम्भसम्भवः । अवयवान्तरप्रवेशान्न सहसा मूलद्रव्यक्षय इति भावः । पूर्वं चैतन्यस्य गुणत्वमुपेत्य तद्व्याप्त्या गुण्यात्माणुत्वं निरस्तम् । सम्प्रति तस्य गुणत्वमसिद्धमित्याह—**यदि च चैतन्यमिति** ॥ उत्सूत्रं विभुत्वं प्रसाध्याणुत्वायुक्तेर्ग-

भामती ।

ल्पयोः संयोगोऽल्पमवरुणद्धि न महान्तं, न जातु घटकरकादिसंयोगा नभसो नभो व्यश्नुवतेऽपि त्वल्पानेव घटकरकादीन्, इतरथा यत्र नभस्तत्र सर्वत्र घटकरकाद्युपलम्भ इति, तेऽपि नभःपरिमाणा प्रसज्येरन्निति । न चाणोर्जीवस्य सकलशरीरगता वेदनोपपद्यते । यद्यप्यन्तःकरणमणु तथापि तस्य त्वचा संबद्धत्वात्त्वचश्च समस्तशरीरव्यापित्वादेकदेशेऽप्यधिष्ठिता त्वगधिष्ठितैवेति शरीरव्यापी जीवः शक्नोति सर्वाङ्गीणं शैत्यमनुभवितुं त्वगिन्द्रियेण गङ्गायाम् । अणुस्तु जीवो यत्रास्ति तस्मिन्नेव शरीरप्रदेशे तदनुभवेन्न सर्वाङ्गीणं, तस्यासर्वांगीणत्वात् । कण्टकतोदनस्य तु प्रादेशिकतया न सर्वांगीणोपलब्धिरिति वैषम्यम् । **गुणत्वमेव हीति** । इदमेव हि गुणानां गुणत्वं यद् द्रव्यदेशत्वम् । अत एव हि हेमन्ते विषक्तावयवाप्यद्रव्यगतेऽतिसान्द्रे शीतस्पर्शेऽनुभूयमानेऽप्यनुद्भूतं रूपं नोपलभ्यते यथा, तथा मृगमदादीनां गन्धवाहविप्रकीर्णसूक्ष्मावयवानामतिसान्द्रे गन्धेऽनुभूयमाने रूपस्पर्शौ नानुभूयेते तत्कस्य हेतोः, अनुद्भूतत्वात्तयोर्गन्धस्य चोद्भूतत्वादिति । न च द्रव्यस्य प्रक्षयप्रसङ्गः, द्रव्यान्तरावयवपूरणात् । अत एव कालपरिवासवशादस्य हतगन्धितोपलभ्यते । अपि च चैतन्यं नाम न गुणो जीवस्य गुणिनः, किंतु स्वभावः । न च स्वभावस्य व्यापित्वे भावस्याव्यापित्वं, तत्त्वप्रच्युतेरित्याह- **यदि च चैतन्यमिति** ।

आनन्दगिरीय-न्यायनिर्णयः ।

तत्राऽऽह—**न चेति** । हेतुं व्यतिरेकेण स्फोरयति—**गुणत्वमिति** । लोकवदित्युक्तं प्रत्याह—**प्रदीपेति** । यत्तु व्यतिरेको गन्धवदिति तत्राऽऽह—**गन्धोपीतिं** । निराश्रयस्यैव संचरणं तस्योक्तमित्याशंक्याऽऽह—**अन्यथेति** । गन्धस्याऽऽश्रयनियमे युक्तिमुक्त्वा वृद्धसंमतिमाह—**तथा चेति** । न चाध्यक्षविरुद्धौ युक्त्यागमौ तेनाऽऽश्रयशून्यत्वाप्रहान्महतां च त्रसरेणूनामनुद्भूतरूपस्पर्शानामागतिरिति स्फुटोपलम्भसंभवान्मूलद्रव्ये चाविशेषोऽवयवान्तरयोगादिति भावः । चैतन्यस्य गुणत्वमुपेत्य गुणस्य गुणिनं विनाऽन्यत्रागतेः सर्वदेहव्यापिकार्यायोगान्नाणुजीव इत्युक्तम् । इदानीं न गुणत्वमपि तस्येत्याह—**यदीति** । चैतन्यस्यासौ जीवाणुत्वासिद्धिं ब्रुवतो वैयधिकरण्यमित्याह—**चैतन्यमिति** । औष्ण्यप्रकाशयोर्गुणत्वाच्चैतन्यस्य स्वरूप-

स्तत्शरीरं व्याप्नुयान्नाणुर्जीवः स्यात् । चैतन्यमेव ह्यस्य स्वरूपमग्नेरिवौष्ण्यप्रकाशौ । नात्र गुणगुणिविभागो विद्यत इति । शरीरपरिमाणत्वं च प्रत्याख्यातम् । पारिशेष्याद्विभुर्जीवः ॥ कथं तर्ह्यणुत्वादिव्यपदेश इत्यत आह—"तद्गुणसारत्वात्तु तद्व्यपदेशः" इति । तस्या बुद्धेर्गुणाः—तद्गुणाः—इच्छा, द्वेषः, सुखं, दुःखमित्येवमादयः—तद्गुणाः—सारः प्रधानं यस्याऽऽत्मनः संसारित्वे सम्भवति, स तद्गुणसारः, तस्य भावः—तद्गुणसारत्वम् । न हि बुद्धेर्गुणैर्विना केवलस्याऽऽत्मनः संसारित्वमस्ति बुद्ध्युपाधिधर्माध्यासनिमित्तं हि कर्तृत्वभोक्तृत्वादिलक्षणं संसारित्वम् । अकर्तुरभोक्तुश्चासंसारिणो नित्यमुक्तस्य सत आत्मनस्तस्मात्तद्गुणसारत्वाद् बुद्धिपरिमाणेनाऽस्य परिमाणव्यपदेशः । तदुत्क्रान्त्यादिभिश्चास्योत्क्रान्त्यादिव्यपदेशो, न स्वतः । तथा च "बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" [ श्वे० ५ । ९ ] इत्यणुत्वं जीवस्योक्त्वा तस्यैव पुनरानन्त्यमाह ।

---

रत्नप्रभा ।

तिप्रदर्शनार्थं सूत्रं व्याचष्टे—कथमित्यादिना॥ "अन्तरा विज्ञानमनसी" [ब्या०सू०२।३।१७] "हृदि हि" [ब्या०सू०२।३।२६] इति च प्रकृता बुद्धिर्योग्यत्वात् तच्छब्देन परामृश्यते बुद्धिगुणानामात्मन्यध्यासादणुत्वाद्युक्तिः, न स्वतः। आनंत्यश्रुतिविरोधादित्याह—तथा चेति॥ अकार्यकारणद्रव्यसमानाधिकरणतया 'तत्त्वमसि' [छां० ६।८।१३] इति वाक्यस्य सोऽयमिति वाक्यवदखण्डाभेदार्थत्वादानन्त्यं सत्यमणुत्वमध्यस्तमित्यर्थः।

भामती ।

तदेवं श्रुतिस्मृतीतिहासपुराणसिद्धे जीवस्याविकारितया परमात्मत्वे, तथा श्रुत्यादितः परममहत्त्वे च या नामाणुत्वश्रुतयस्तास्तदनुरोधेन बुद्धिगुणसारतया व्याख्येया इत्याह—तद्गुणसारत्वादिति । तद्व्याचष्टे—तस्या बुद्धेरिति । आत्मना स्वसंबन्धिन्या बुद्धेरुपस्थापितत्वात्तदा परामर्शः । न हि शुद्धबुद्धमुक्तस्वभावस्यात्मनस्तत्त्वं संसारिभिरनुभूयते । अपि तु योऽयं मिथ्याज्ञानद्वेषाद्यनुषक्तः स एव प्रत्यात्ममनुभवगोचरः । न च ब्रह्मस्वभावस्य जीवात्मनः कूटस्थनित्यस्य स्वत इच्छाद्वेषाद्यनुषङ्गसंभव इति बुद्धिगुणानां तेषां तदभेदाध्यासेन तद्धर्मत्वाध्यासः, उदशरावाद्यस्तस्येव चन्द्रमसो बिम्बस्य तोयकम्पे कम्पवत्त्वाध्यास इत्युपपादितमध्यासभाष्ये । तथा च बुद्ध्याद्युपाधिकृतमस्य जीवत्वमिति बुद्धेरन्तःकरणस्याणुतया सोऽप्य-

आनन्दगिरीय—न्यायनिर्णयः।

त्वेनोदाहरणतेत्याशंक्य रूपादिवद्गुणगुणित्वाभावान्नैवमित्याह—नात्रेति । औष्ण्यप्रकाशावग्निश्च सप्तम्यर्थः । औष्ण्याद्यतिरिक्ताग्निस्वरूपाभावं हेतुं कर्तुमितिशब्दः । जीवस्याणुत्वं न चेदस्तु मध्यमपरिमाणत्वं नेत्याह—शरीरेति । परिमाणद्वयायोगे परिशिष्टमाह—परिशेषादिति । विभुत्वे जीवस्याणुत्वादिव्यपदेशासिद्धिरित्युक्तमनुस्मारयति—कथमिति । तदुत्तरत्वेन सूत्रावयवं पातयति—अत इति । अभ्युपगमाद्धृदि हीति हृदयस्य प्रकृतत्वात्तन्निष्ठा बुद्धिरेवात्र तच्छब्देत्यक्षरार्थमाह—तस्या इति । पदार्थमुक्त्वा समासमाह—तद्गुणा इति । पारमार्थिकमात्मनः संसारित्वं किं बुद्धिगुणैरित्याशंक्याऽऽह—न हीति । असङ्गत्वेनापरिणामित्वं सूचयति—केवलस्येति । बुद्धिधर्माणामात्मगतत्वासिद्धेः सांख्यवदात्मनः संसारित्वायोगमाशंक्याऽऽह—बुद्धीति । आत्मनो बुद्धितद्धर्माध्यासद्वारा संसारित्वेऽपि प्रकृतेऽणुत्वादिवादे किं जातमित्याशंक्याऽऽह—तस्मादिति । किंच, जीवस्याणुत्ववादीनि यानि वाक्यान्युक्तानि तान्यपि पौर्वापर्यालोचनायां महत्त्वमेव तस्य गमयन्तीति मत्वोन्मानश्रुतिं प्रत्याह—तथा चेति। अणुत्वे च महत्त्वे च श्रुते किमि-

तच्चैवमेव समञ्जसं स्यात् । यद्यौपचारिकमणुत्वं जीवस्य भवेत्, पारमार्थिकं चानन्त्यम् । न ह्युभयं मुख्यमवकल्पेत । न चानन्त्यमौपचारिकमिति शक्यं विज्ञातुम् । सर्वोपनिषत्सु ब्रह्मात्मभावस्य प्रतिपिपादयिषितत्वात् । तथेतरस्मिन्नप्युन्माने "बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः" [ श्वे० ५ । ८ ] इति च बुद्धिगुणसम्बन्धेनैवाऽऽराग्रमात्रतां शास्ति, न स्वेनैवाऽऽत्मना । "एषोऽणुरात्मा चेतसा वेदितव्यः" [मुण्ड० ३ । १ । ९ ] इत्यत्राऽपि न जीवस्याणुपरिमाणत्वं शिष्यते । परस्यैवात्मनश्चक्षुराद्यनवग्राह्यत्वेन ज्ञानप्रसादगम्यत्वेन च प्रकृतत्वात् । जीवस्याऽपि च मुख्याणुपरिमाणत्वानुपपत्तेः । तस्माद्दुर्ज्ञानत्वाभिप्रायमिदमणुत्ववचनमुपाध्यभिप्रायं वा, द्रष्टव्यम् । तथा-"प्रज्ञया शरीरं समारुह्य" [ कौ० ३।६ ] इत्येवञ्जातीयकेष्वपि भेदोपदेशेषु बुद्ध्यैवोपाधिभूतया जीवः शरीरं समारुह्येत्येवं योजयितव्यम् । व्यपदेशमात्रं चात्र

---

रत्नप्रभा ।

उक्तञ्चैतदङ्गुष्ठाधिकरणे-"प्रतिपाद्यविरुद्धमुद्देश्यगतविशेषणमविवक्षितम्" इति वालाग्रवाक्यमाराग्रवाक्यं चेत्युन्मानद्वयमुक्तम् । तत्र आद्यं निरस्य द्वितीयं निरस्यति-तथेतरस्मिन्नपीति ॥ बुद्धेर्गुणेन तन्निमित्तेनात्मन्यध्यस्तो गुणो भवति । तेनात्मगुणेनाध्यस्तेनैवाऽऽराग्रपरिमाणोऽपकृष्टश्च जीवो दृष्टः । स्वतस्त्वनन्त एवेत्यर्थः । "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः" इत्युक्त्वा "एषोऽणुरात्मा" [मुण्ड० ३ । १ । ९ ] इत्युक्तः पर एव यदि जीवः, तथाप्यध्यस्ताणुत्वमणुशब्दार्थ इत्याह-जीवस्यापीति ॥ यदुक्तं पृथगुपदेशाच्चैतन्यगुणेनैवात्मनो देहव्याप्तिरिति, तत्राह-तथा प्रज्ञयेति ॥ बुद्धिप्रज्ञयेत्यर्थः । यदि चैतन्यं प्रज्ञा, तदा भेदोपचार इत्याह-व्यपदेशमात्रं चेति ॥ ननु चैतन्यं गुण इति भेदो मुख्योऽस्तु ।

भामती ।

णुव्यपदेशमाग्भवति, नभ इव करकोपहितं करकपरिमाणम् । तथा चोत्क्रान्त्यादीनामुपपत्तिरिति । निग-

आनन्दगिरीय-न्यायनिर्णयः ।

र्युभयं नेष्टमित्याशंक्यान्यतरद्वा द्वयमपि वा तत्त्वमाद्येऽपि महत्त्वस्याणुत्वस्य वा वस्तुतेति विकल्प्य प्रथममङ्गीकुर्वन्नाह-तच्चेति । द्वयमपि तत्त्वमिति पक्षं विरोधेन प्रत्याह-न हीति । कल्पान्तरं निराह-न चेति । तत्त्वमसीत्यत्र त्वमर्थोद्देशेनानन्तब्रह्मभावस्य विधित्सितत्वाद्विधित्सितानन्त्यविरोधादुद्देश्यस्थमणुत्वमविवक्षितमिति भावः । उन्मानान्तरं प्रत्याह-तथेति । बुद्ध्यध्यासेन तद्गुणेनाऽऽत्मन्यध्यस्तेन तस्मिन्मिथ्यागुणान्तरमुत्पद्यते तेनाऽऽत्मगुणेनाऽऽराग्रपरिमाणोऽपकृष्टश्च जीवो दृष्टः । वस्तुतस्तु नायं गुणाधारो न चापकर्षवानित्यर्थः । श्रुतेस्तात्पर्यमाह-बुद्धीति । यत्तु स्वशब्दादणुत्वं तद्दूषयति-एष इति । दुर्ज्ञानत्वज्ञापकप्रकरणापेक्षया श्रुतेरेव प्राबल्यादणुत्वमित्याशंक्य काल्पनिकं तदिष्टं वास्तवमयुक्तमित्याह-जीवस्येति । परमात्मदृष्टान्तार्थोऽपिशब्दः । तदभिन्नत्वादित्युक्तो हेतुः । परस्य प्रकरणिनो विभुत्वात्तदभिन्नत्वाच्च जीवस्य न चेदणुत्वं तर्हि कथमणुत्वश्रुतिस्तत्राऽऽह-तस्मादिति । अणुशब्दस्यात्यन्तसूक्ष्मे प्रयोगात्कथमुक्तार्थतेत्याशंक्याऽऽह-उपाधीति । यत्तु पृथगुपदेशादिति तत्राऽऽह-तथेति। यथा स्वशब्दोन्माने जीवस्य नाणुत्वमावेदयतस्तथा पृथगुपदेशोऽपि तस्याणोरेव चैतन्यस्य देहव्याप्तिमाहेत्यर्थः । समारुह्य वागादिना नामाद्याप्नोतीति शेषः । प्रज्ञाशब्दस्य चैतन्यार्थत्वात्कुतो बुद्धिविषयतेत्याशंक्याह-व्यपदेशेति।

शिलापुत्रकस्य शरीरमित्यादिवत् । न ह्यत्र गुणगुणिविभागो विद्यत इत्युक्तम् । हृदयायतनत्ववचनमपि बुद्धेरेव तदायतनत्वात् । यथोत्क्रान्त्यादीनामप्युपाध्यायत्ततां दर्शयति—"कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति ॥ स प्राणमसृजत" [ प्रश्न० ६।३-४ ] इति । उत्क्रान्त्यभावे हि गत्यागत्योरप्यभावो विज्ञायते। न ह्यनपसृप्तस्य देहाद्गत्यागती स्याताम् । एवमुपाधिगुणसारत्वाज्जीवस्याणुत्वादिव्यपदेशः "प्राज्ञवत्"-यथा प्राज्ञस्य परमात्मनः सगुणेषूपासनेषूपाधिगुणसारत्वादणीयस्त्वादिव्यपदेशः—"अणीयान्व्रीहेर्वा, यवाद्वा" [ छां० ३ । १४ । ३ ] "मनोमयः प्राणशरीरः" छां० ३ । १४ । २ ] "सर्वगन्धः सर्वरसः" [ छां० ३ । १४ । २ ] "सर्वकामः" [ छां० ३ । १४ । २ ] "सत्यसंकल्पः" [ छां० ३ । १४ । २ ] इत्येवंप्रकारः, तद्वत् ॥ ॥ २९ ॥ स्यादेतद्—यदि बुद्धिगुणसारत्वादात्मनः संसारित्वं कल्प्येत, ततो बुद्ध्यात्मनोर्भिन्नयोः संयोगावसानमवश्यं भावीत्यतो बुद्धिवियोगे सति आत्मनो विभक्तस्याऽनालक्ष्यत्वादसत्त्वमसंसारित्वं वा प्रसज्येतेत्यत उत्तरं पठति—

**यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥**

नेयमनन्तरनिर्दिष्टदोषप्राप्तिराशंकनीया ॥ कस्मात् ॥ यावदात्मभावित्वाद्—बुद्धिसंयोगस्य यावदयमात्मा संसारी भवति, यावदस्य सम्यग्दर्शनेन संसारित्वं न निवर्तते, तावदस्य बुद्ध्या संयोगो न शाम्यति।

---

रत्नप्रभा ।

नेत्याह—न ह्यत्रेति ॥ निर्गुणत्वश्रुतेरित्यर्थः । अन्यदपि पूर्वोक्तं बुद्ध्याद्युपाधिकमित्याह—हृदयेत्यादिना ॥ सौत्रं दृष्टान्तं विवृणोति—यथेति ॥ २९ ॥ असत्त्वमिति ॥ आपाततः । असंसारित्वम् ।

भामती ।

दव्याख्यातमितरत् । प्रायणेऽसत्त्वमसंसारित्वं वा ततश्च कृतविप्रणाशाकृताभ्यागमप्रसङ्गः ॥ ॥ २९ ॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् । यावत्संसार्यात्मभावित्वादित्यर्थः ।

आनन्दगिरीय—न्यायनिर्णयः ।

गुणगुणित्वेन तस्य मुख्यत्वे किमित्यौपचारिकत्वं तत्राऽऽह—न हीति । अत्रेति चैतन्यात्मनोरुक्तिः । उक्तं 'यदि तु चैतन्यं जीवस्येत्यादौ' इति शेषः । यत्तु तथा च दर्शयतीति तत्राऽऽह—हृदयेति । यच्चोत्क्रान्त्यादिश्रुतेर्जीवोऽणुरिति तत्राऽऽह—तथेति । इतीक्षित्वेति शेषः । यत्तु स्वात्मना चोत्तरयोरिति तत्राऽऽह—उत्क्रान्तीति । तत्र हेतुमाह—न हीति । दार्ष्टान्तिकमुपसंहरति—एवमिति । दृष्टान्तमादाय व्याचष्टे—प्राज्ञवदिति । उक्तदृष्टान्तानुसारेण जीवस्यापि बुद्धिगुणसारत्वादणुत्वादिव्यपदेश इत्याह—तद्वदिति ॥ २९ ॥ सूत्रान्तरनिरस्यां शङ्कामाह—स्यादेतदिति । कथमसत्त्वं स्वरूपेण सत्त्वादित्याशंक्याऽऽह—संसारित्वं वेति । सूत्रमवतारयति—अत इति । न दोष इति प्रतिज्ञात्वेन योजयति—नेयमिति । प्रश्नपूर्वकं हेतुमाह—कस्मादिति । बुद्धियोगस्यानाशित्वे तत्त्वधीवैयर्थ्यं वा तस्यान्तवत्त्वेनाऽऽगन्तुकतया संसारस्याऽऽदिमत्त्वादकृतागमादिप्रसंगो वा तदुभयमपि नास्तीति हेतुं विवृणोति—यावदिति । तदेव स्पष्टयति—यावदस्येति । संसारनिवृत्त्युत्तरकालमपि जीवस्वरूपनिर्वाहकत्वेन बुद्धि-

यावदेव चायं बुद्ध्युपाधिसम्बन्धः, तावदेवाऽस्य जीवस्य जीवत्वं संसारित्वं च । परमार्थतस्तु न जीवो नाम बुद्ध्युपाधिपरिकल्पितस्वरूपव्यतिरेकेणास्ति । न हि नित्यमुक्तस्वरूपात्सर्वज्ञादीश्वरादन्यश्चेतनो धातुर्द्वितीयो वेदान्तार्थनिरूपणायामुपलभ्यते "नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता" "नान्यदतोऽस्ति द्रष्टृ श्रोतृ मन्तृ विज्ञातृ"[बृ० ३। ७।२३]"तत्त्वमसि" [ छां० ६ । ८-१६ ] "अहं ब्रह्मास्मि" [ बृ० १ । ४। ७ ] इत्यादिश्रुतिशतेभ्यः । कथं पुनरवगम्यते यावदात्मभावी बुद्धिसंयोग इति । "तद्दर्शनाद्" इत्याह । तथाहि शास्त्रं दर्शयति "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव" [ बृ० ४ । ३ । ७ ] इत्यादि । तत्र विज्ञानमय इति बुद्धिमय इत्येतदुक्तं भवति।प्रदेशान्तरे"विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः"[बृ० ४।४।५] इति विज्ञानमयस्य मनआदिभिः सह पाठात् बुद्धिमयत्वं च तद्गुणसारत्वमेवाभिप्रेयते । यथा लोके स्त्रीमयो देवदत्तः—इति स्त्रीरागादिप्रधानोऽभिधीयते, तद्वत् । "स समानः सन्नुभौ लोकावनुसञ्चरति" इति च लोकान्तरगमनेऽप्यवियोगं बुद्ध्यादेर्दर्शयति । केन समानः । तयैव बुद्ध्येति गम्यते । सन्निधानात् । तच्च दर्शयति—"ध्यायतीव लेलायतीव" इति । एतदुक्तं भवति—नायं स्वतो ध्यायति, नापि चलति । ध्यायन्त्यां बुद्धौ

---

रत्नप्रभा ।

आपाद्यम् । शेषं सुबोधम् । ननु स्वतः संसारित्वमस्तु । किं बुद्ध्युपाधिनेत्यत आह—**यावदेव चायमिति** ॥ **समानः**, बुद्धितादात्म्यापन्नः । ननु विज्ञानं ब्रह्म तन्मयः—विकारः।अणुरित्यर्थः। किं न स्यादित्यत आह—**प्रदेशान्तर इति** ॥ **विज्ञानमयः**बुद्धिप्रचुर इत्यर्थः । केन समान इत्याकांक्षा-

भामती ।

॥ **समानः सन्—इति** ॥ बुद्ध्या समानः तद्गुणसारत्वादिति ॥

आनन्दगिरीय-न्यायनिर्णयः ।

योगोऽभ्युपगन्तव्य इत्याशंक्याऽऽह—**यावदेव चेति** । जीवस्य वस्तुत्वान्नोपाधियोगापेक्षेत्याशंक्य वाच्यस्य लक्ष्यस्य वा वस्तुत्वमिति विकल्प्याऽऽद्यं दूषयति—**परमार्थेति** । द्वितीयं निराह—**न हीति** । लक्ष्यस्य ब्रह्मान्यतिरेके वेदान्तार्थनिरूपणायामित्यत्र सूचितं हेतुमाह—**नेत्यादिना** । सूत्रावयवमाकांक्षाद्वारा निक्षिपति—**कथमिति** । तस्यार्थमाह—**तथाहीति** । 'बुद्धिं तु सारथिं विद्धि' इत्यादि ग्रहीतुमादिपदम् । कथमत्र यावदात्मभावित्वधीरित्याशंक्य तदर्थं विज्ञानमयपदार्थमाह—**तत्रेति** । विज्ञानस्य ब्रह्मत्वात्तन्मयत्वं तत्कार्यत्वं तदात्मत्वं वेत्याशंक्याऽऽह—**प्रदेशान्तर इति** । विज्ञानं बुद्धिरस्तु तथाऽपि कथमात्मनस्तद्विकारत्वं मयटो विकारार्थत्वात्तत्राऽऽह—**बुद्धीति** । कथं विकारार्थस्य मयटोऽर्थान्तरं शंक्यते तत्राऽऽह—**यथेति** । इह लोके बुद्ध्यवियोगेऽप्यात्मनो लोकान्तरसंचारे तद्वियोगः स्यादित्याशंक्याऽऽह—**स समान इति** । नात्र बुद्ध्या सहावियोगो भातीत्याशंक्याऽऽकांक्षाद्वारा समानपदं पूरयति—**केनेति** । येन केनापि समानत्वे कुतो विशेषोक्तिस्तत्राऽऽह—**संनिधानादिति** । 'योऽयं विज्ञानमयः प्राणेषु' इत्यत्रेति शेषः । परिच्छिन्नस्यैव गतेरात्मनस्तदभावात्कथमुभयलोकसंचारित्वं तत्राऽऽह—**तच्चेति** । बुद्धिवदात्मनो ध्यानादियोगित्वमत्र भातीवशब्दस्योपमार्थत्वादित्याशंक्याऽऽह—**एतदिति** । इवशब्दस्याऽऽभासार्थत्वान्नोपमार्थ-

ध्यायतीव, चलन्त्यां बुद्धौ चलतीवेति ॥ अपि च मिथ्याज्ञानपुरःसरोऽयमात्मनो बुद्ध्युपाधिसम्बन्धः । न च मिथ्याज्ञानस्य सम्यग्ज्ञानादन्यत्र निवृत्तिरस्तीत्यतो यावद्ब्रह्मात्मतानवबोधः,तावदयं बुद्ध्याद्युपाधिसम्बन्धो न शाम्यति । दर्शयति च–"वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" [ श्वेता० ३ । ८ ] इति ॥३०॥ ननु सुषुप्तप्रलययोर्न शक्यते बुद्धिसम्बन्ध आत्मनोऽभ्युपगन्तुम् । "सता सोम्य तदा सम्पन्नो भवति, स्वमपीतो भवति" [ छां० ६।८।१] इति वचनात् । कृत्स्नविकारप्रलयाभ्युपगमाच्च । तत्कथं यावदात्मभावित्वं बुद्धिसम्बन्धस्येति ॥ अत्रोच्यते–

**पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥**

यथा लोके पुंस्त्वादीनि बीजात्मना विद्यमानान्येव बाल्यादिष्वनुपलभ्यमानानि अविद्यमानवदभिप्रेयमाणानि यौवनादिष्वाविर्भवन्ति, नाऽविद्यमानान्युत्पद्यन्ते । षण्ढादीनामपि तदुत्पत्तिप्रसङ्गात् । एवमयमपि बुद्धिसम्बन्धः शक्त्यात्मना विद्यमान एव सुषुप्तप्रलययोः पुनः प्रबोधप्रसव-

रत्नप्रभा ।

यामिति शेषः । श्रुतिबलाद्बुद्धेर्यावत्संसार्यात्मभावित्वमुक्तम् । सति मूले कार्यस्य वियोगासम्भवाच्चेति युक्त्याप्याह––अपि च मिथ्येति ॥ सम्यग्ज्ञानादेव बुद्ध्यादिबन्धध्वंस इत्यत्र श्रुतिमाह–दर्शयतीति ॥ मृत्युमत्येतीत्यन्वयः । आदित्यवर्णं स्वप्रकाशम् । तमसः परस्तात् अज्ञानास्पृष्टमित्यर्थः ॥ ३० ॥ यावदात्मभावित्वस्यासिद्धिं शङ्कते––नन्विति ॥ सुषुप्तौ बुद्धिसत्त्वे ब्रह्मसम्पत्तिर्न स्यात्, प्रलये तत्सत्त्वे प्रलयव्याहतिरित्यर्थः । स्थूलसूक्ष्मात्मना बुद्धेर्यावदात्मभावित्वमस्तीत्याह–पुंस्त्वेति ॥ पुंस्त्वं रेतः । आदिपदेन श्मश्र्वादिग्रहः । अस्य बुद्धिसम्बन्धस्येत्यर्थः । स्वापे बीजात्मना सतो

भामती ।

अपि च मिथ्याज्ञानेति । न केवलं यावत्संसार्यात्मभावित्वमागमतः, उपपत्तितश्चेत्यर्थः । आदित्यवर्णमिति । प्रकाशरूपमित्यर्थः । तमस इति । अविद्याया इत्यर्थः । तमेव विदित्वा साक्षात्कृत्य मृत्युमविद्यामत्येतीति योजना ॥ ३० ॥ अनुशयबीजं पूर्वपक्षी प्रकटयति––ननु सुषुप्तप्रलययोरिति । सता परमात्मना । अनुशयबीजपरिहारः अत्रोच्यते––पुंस्त्वादिवत्त्वस्य सतो-

आनन्दगिरीय–न्यायनिर्णयः ।

तेति भावः । न केवलमागमाद् बुद्धिसंबन्धस्य यावत्संसार्यात्मभावित्वं किंतु युक्तेरपीत्याह–अपि चेति । मिथ्याज्ञानस्य सत्येव संसारिणि कर्मणा निवृत्तिस्तन्निमित्तबुद्धिसंबन्धस्यापि तत्सिद्धेर्न यावदात्मभावितेत्याशंक्याह–न चेति । सम्यग्ज्ञानादेव मिथ्याज्ञाननिवृत्तिरित्यत्र मानमाह–दर्शयतीति । आदित्यवर्णं प्रकाशरूपं तमसः परस्तादविद्यासंस्पर्शशून्यमित्यर्थः ॥ ३० ॥ यावदात्मभावित्वहेतोरसिद्धिं शङ्कते–नन्विति । तत्र बुद्धिसंबन्धासंभवे हेतुमाह––सतेति । किंच, कार्यत्वाद् बुद्धेरात्मनस्तद्योगस्य च तथात्वात्तत्र नाशध्रौव्यादसिद्धिर्ध्रुवेत्याह–कृत्स्नेति । परिहारत्वेन सूत्रमवतारयति–अत्रेति । तत्र दृष्टान्तं व्याचष्टे–यथेति । पुंस्त्वं पुरुषस्य प्रजोत्पादनसामर्थ्यम् । आदिशब्देन स्त्रियाः स्त्रीत्वं बीजस्याङ्कुरजनकत्वमित्यादि गृहीतम् । बाल्यादिष्वित्यादिपदेनावस्थाविशेषा गृह्यन्ते । यौवनादिष्वित्यत्रापि स एवाऽऽदिशब्दार्थः । कस्मादविद्यमानवदिष्टानामाविर्भावोऽविद्यमानानामेव पुनरुत्पत्तिः किं न स्यात्तत्राऽऽह–नेति । तैलकलुषितबीजादिग्रहार्थमादिपदम् । एतेन तुशब्दो व्याख्यातः । अस्य सत इति दार्ष्टान्तिकं व्याचष्टे–एवमिति ।

योराविर्भवति। एवं ह्येतद्युज्यते । न ह्याकस्मिकी कस्यचिदुत्पत्तिः सम्भवति । अतिप्रसङ्गात् । दर्शयति च सुषुप्तादुत्थानमविद्यात्मकबीजसद्भावकारितं "सति सम्पद्य न विदुः सति सम्पद्यामहे इति ॥ २ ॥ त इह व्याघ्रो वा, सिंहो वा" [ छां० ६ ।९।३] इत्यादिना । तस्मात्सिद्धमेतद्यावदात्मभावी बुद्ध्याद्युपाधिसम्बन्ध इति ॥ ३१ ॥

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ३२ ॥

तच्चात्मन उपाधिभूतमन्तःकरणं मनो, बुद्धिर्विज्ञानं, चित्तमिति चानेकधा तत्रतत्राभिलप्यते । क्वचिच्च वृत्तिविभागेन संशयादिवृत्तिकं मनः इत्युच्यते ॥ निश्चयादिवृत्तिकं बुद्धिरिति । तच्चैवम्भूतमन्तःकरणमवश्यमस्तीत्यभ्युपगन्तव्यम् । अन्यथा ह्यनभ्युपगम्यमाने तस्मिन्नित्यो-

रत्नप्रभा ।

बुद्ध्यादेः प्रबोधेऽभिव्यक्तिरित्यत्र श्रुतिमाह-दर्शयतीति ॥ न विदुरिति अविद्यात्मकबीजसद्भावोक्तिः । ते व्याघ्रादयः पुनराभवन्तीत्यभिव्यक्तिनिर्देशः ॥ ३१ ॥ बुद्धिसद्भावे मानमाह सूत्रकारः—नित्येति ॥ "मनसा ह्येव पश्यति" [ बृ० १ । ५ । ३ ] "बुद्धिश्च न विचेष्टते" [ कठ० ६ । १० ] "विज्ञानं यज्ञं तनुते" [ तै० उ० २ । ५ । १ ] "चेतसा वेदितव्यः" [ मुण्डक० ३ । १ । ९ ] "चित्तं च चेतयितव्यं च" [ प्रश्न० ४ । ८ ] इति तत्रतत्र श्रुतिषु मनआदिपदवाच्यं तावद् बुद्धिद्रव्यं प्रसिद्धमित्यर्थः । कथमेकस्यानेकधोक्तिस्तत्राह-क्वचिच्चेति ॥ गर्ववृत्तिकोऽहङ्कारः विज्ञानम्, चित्प्रधानं स्मृतिप्रधानं वा चित्तम् इत्यपि द्रष्टव्यम् । यद्यपि साक्षिप्रत्यक्षसिद्धमन्तःकरणं, श्रुत्यनूदितं च तथापि प्रत्यक्षश्रुत्योर्विवदमानं प्रति व्यासङ्गानुपपत्त्या तत्साधयति-तच्चेत्यादिना ॥ सूत्रं योजयति-अन्यथेति ॥ पञ्चेन्द्रियाणां पञ्चविषयसम्बन्धे सति नित्यं युगपत् पञ्चोपलब्धयः स्युः । मनोऽतिरिक्तसामग्र्याः सत्त्वात् । यदि सत्यामपि सामग्र्यामुपलब्ध्यभावः, तर्हि सदैव अनुपलब्धिप्रसङ्गादित्यर्थः । अतः कादाचित्को-

भामती ।

ऽभिव्यक्तियोगात् । निगदव्याख्यातमस्य भाष्यम् ॥ ३१ ॥ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमोवान्यथा । स्यादेतत् । अन्तःकरणेऽपि सति तस्य नित्यसंनिधानात् कस्मान्नित्योपलब्ध्यनुपलब्धी

आनन्दगिरीय-न्यायनिर्णयः ।

अभिव्यक्तियोगादिति व्याकरोति-एवं हीति । तदेव व्यतिरेकतः स्फोरयति-न हीति । कारणं विनाऽपि कार्यं स्यादित्यतिप्रसङ्गः । स्वापे बीजात्मना सतो बुद्धियोगस्य प्रबोधे व्यक्तिरित्यत्र मानमाह-दर्शयतीति । न विदुरित्यविद्यात्मकबीजसत्त्वोक्तिः । तत्कृतत्वं स्वापादुत्थानस्य कथयति-त इति । पूर्ववोधः सप्तम्यर्थः । स्वापे लये च बुद्धियोगस्य बीजात्मनाऽवस्थाने फलितमाह-तस्मादिति ॥ ३१ ॥ बुद्धिसद्भावे मानमाह-नित्येति । तद्व्याख्यातुमन्तःकरणगतानवान्तरभेदानाह-तच्चेति । तत्रतत्र 'मनसा ह्येव पश्यति मनसा शृणोति', 'बुद्धेर्गुणेनाऽऽत्मगुणेन चैव', 'बुद्धिश्च न विचेष्टते', 'विज्ञानेन विज्ञानमादाय', 'विज्ञानं यज्ञं तनुते', 'चेतसा वेदितव्यः' इत्यादिप्रदेशेष्वित्यर्थः । एकमेवान्तःकरणं कथमनेकधोच्यते तत्राऽऽह-क्वचिच्चेति । अभिमानप्रधानोऽहंकारो विज्ञानम् । चिदाकारप्रधानं चित्तम् । अथ यथोक्तमन्तःकरणमेव नास्ति, न च श्रुत्या तदस्तित्वं तत्प्रामाण्येऽपि केषांचिद्विसंवादात्तत्राऽऽह-तच्चेति । तत्र हेतुत्वेन सूत्रावयवं व्याकरोति-अन्यथेति । नित्योपलब्धिप्रसङ्गं प्रकटयति-

१ बुद्धिश्च न विचेष्टेतेति पाठान्तरम् ।

पलब्ध्यनुपलब्धिप्रसङ्गः स्यात् । आत्मेन्द्रियविषयाणामुपलब्धिसाधनानां सन्निधाने सति नित्यमेवोपलब्धिः प्रसज्येत । अथ सत्यपि हेतुसमवधाने फलाभावः । ततोऽपि नित्यमेवानुपलब्धिः प्रसज्येत । न चैवं दृश्यते । अथ वान्यतरस्याऽऽत्मनः, इन्द्रियस्य वा शक्तिप्रतिबन्धोऽभ्युपगन्तव्यः । न चाऽऽत्मनः शक्तिप्रतिबन्धः सम्भवति । अविक्रियत्वात् । नापीन्द्रियस्य । न हि तस्य पूर्वोत्तरयोः क्षणयोरप्रतिबद्धशक्तिकस्य ततोऽकस्माच्छक्तिः प्रतिबध्येत ॥ तस्माद्यस्याऽवधानाऽनवधानाभ्यामुपलब्ध्यनुपलब्धी भवतस्तन्मनः । तथा च श्रुतिः—"अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं

रत्नप्रभा ।

पलब्धिनियामकं मन एष्टव्यमिति भावः । ननु सत्यपि कराग्निसंयोगे दाहकादाचित्कत्ववदुपलब्धिकादाचित्कत्वमस्तु, किं मनसेत्याशंक्याऽन्यतरनियमो वेत्येतद्व्याचष्टे—**अथ वेति** ॥ सत्यां सामग्र्यां नित्योपलब्धिर्वाङ्गीकार्या । अन्यतरस्य कारणस्य केनचिच्छक्तिप्रतिबन्धनियमो वांगीकार्यः । यथा—मणिनाऽग्निशक्तिप्रतिबन्ध इति वाकारार्थः । अस्तु प्रतिबन्ध इत्यत आह—**न चेति** ॥ न चेन्द्रियस्यैवास्तु शक्तिप्रतिबन्ध इति वाच्यम् । प्रतिबन्धकाभावात् । न च दृष्टसामग्र्यां सत्यामदृष्टं प्रतिबन्धकमिति युक्तम् । अतिप्रसङ्गात् । न च व्यासङ्गः प्रतिबन्धकमनोऽसत्त्वे । तस्यासम्भवात् । तथाहि रसादीनां सहोपलब्धिप्राप्तौ रसबुभुत्सारूपो व्यासङ्गो रूपाद्युपलब्धिप्रतिबन्धको वाच्यः । स च गुणत्वाद्रूपवद्गुण्याश्रयः । तत्रात्मनोऽसङ्गनिर्गुणकूटस्थस्य गुणित्वायोगान्मन एव गुणित्वेनैष्टव्यमिति व्यासङ्गानुपपत्त्या मनःसिद्धिः । एतदभिप्रेत्योपसंहरति—**तस्मादिति** ॥ **अवधानं** बुभुत्सा । न चानिच्छतोऽपि दुर्गन्धाद्युपलम्भान्न बुभुत्सोपलब्धिनियामिकेति वाच्यम् । अनेकविषयसन्निधौ क्वचिदेव तस्यानियामकत्वांगीकारात् । येषां मते पुनरिच्छादीनामात्मधर्मत्वं, तेषां मन एव दुर्लभमिति मन्तव्यम् । इच्छादिधर्मिणैवाऽऽत्मना व्यासंगोपपत्तेः । सम्प्रति व्यासंगस्य मानसत्वे श्रुतिमाह—**तथा चेति** ॥ न केवलं व्यासंगात्मनः सिद्धिः, किन्तु

भामती ।

न प्रसज्येते । अथादृष्टविपाककादाचित्कत्वात् सामर्थ्यप्रतिबन्धाप्रतिबन्धाभ्यामन्तःकरणस्य नायं प्रसङ्गः । तावसत्येवान्तःकरणे आत्मनो वेन्द्रियाणां वा स्तां, तत्किमन्तर्गडुनान्तःकरणेनेति चोदयति—**अथ वान्यतरस्यात्मन इति** । अथवेति सिद्धान्तं निवर्तयति । सिद्धान्ती ब्रूते—**न चात्मन इति** । अवधानं खल्वनुबुभूषा शुश्रूषा वा । न चैते आत्मनो धर्मौ, तस्याविक्रियत्वात् । न चेन्द्रियाणाम्, एकैकेन्द्रियव्यतिरेकेऽप्यन्धादीनां दर्शनात् । न च ते आन्तरत्वेनानुभूयमाने बाह्ये संभवतः । तस्मादस्ति तदान्तरं किमपि । यस्य चैते तदन्तःकरणम् । तदिदमुक्तम्—**यस्यावधानेति** । अत्रैवार्थे श्रुतिं दर्शयति—**तथा चेति** ॥ ३२ ॥ ( १३ ) ॥

आनन्दगिरीय—न्यायनिर्णयः ।

**आत्मेति** । कारणे सति कार्यं भवत्येवेत्यनियमान्न नित्योपलब्धिप्रसक्तिरिति शङ्कते—**अथेति** । तर्हि नित्यमेवानुपलब्धिः स्यादपेक्षणीयान्तराभावादित्याह—**तत इति** । प्रसङ्गस्येष्टत्वमाशङ्क्याऽऽह—**न चेति** आत्मेन्द्रियार्थसांनिध्येऽपि कदाचिदेव ज्ञानोदयादन्तःकरणमस्तीत्युक्तम् । इदानीं तदनुपगमे दोषान्तरापत्तेरपि तदस्तीति ब्रुवन्नन्यतरनियमो वेत्येतद्योजयति—**अथ वेति** । अन्यतरस्य शक्तिप्रतिबन्धे का हानिस्तत्राऽऽह—**न चेति** । अवधानमनुभवितुं स्मर्तुं वा वाञ्छा, न च साऽऽत्मनो धर्मस्तस्याविक्रियत्वान्नापीन्द्रियाणामन्धादीनामेकैकेन्द्रियाभावेऽपि तद्दर्शनादान्तरत्वाच्च बाह्येन्द्रियधर्मत्वायोगात्तेन परिशेषाद्यस्यावधानानवधाने तदन्तःकरणमस्तीत्याह—**तस्मादिति** । अनुबुभूषा साश्रया गुणत्वाद्रूपवदित्यनुमानात्तदधिकरणमन्तःकरणं परिशेषतो लब्धमिति भावः । न केवलमन्तःकरणमौपपत्तिकं श्रौतमपीत्याह—**तथा चेति** । मनः स्वप्रा-

नाश्रौषमिति। मनसा ह्येव पश्यति मनसा शृणोति" [बृ० १। ५। ३] इति च। कामादयश्चास्य वृत्तय इति दर्शयति-"कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" [बृ० १। ५।३] इति॥ तस्माद्युक्तमेतत-"तद्‌गुणसारत्वात्तद्व्यपदेशः" इति॥ ३२॥

इत्युत्क्रान्तिगत्यागत्यधिकरणम्॥ १३॥

## कर्त्ता शास्त्रार्थवत्त्वात्॥ ३३॥ (१४)॥

तद्‌गुणसारत्वाधिकारेणैवाऽपरोऽपि जीवधर्मः प्रपंच्यते। "कर्ता" चायं जीवः स्यात॥ कस्मात्॥ "शास्त्रार्थवत्त्वात्"। एवं च "यजेत" "जुहु-

रत्नप्रभा।

कामाद्याश्रयत्वेनापीत्याह-कामादयश्चेति॥ बुद्धेः प्रामाणिकत्वोक्तिफलमाह-तस्मादिति॥३२॥(१३॥ एवमात्मन्यणुत्वाध्यासोक्त्या स्वाभाविकं महत्त्वं स्थापितम्। सम्प्रति ततो बहिष्ठं कर्तृत्वं साधयति-कर्त्ता शास्त्रार्थवत्त्वात्॥ स नित्यचिद्रूपो महानात्मा कर्त्ता: न वेत्यसंगत्वश्रुतीनां विध्यादिश्रुतीनां च विप्रतिपत्त्या संशये बुद्धिकर्तृत्वेनैव विध्यादिशास्त्रोपपत्तेरकर्त्ताऽऽत्मेति सांख्यपक्षप्राप्तौ सिद्धान्तयन्नेव तद्गुणसारत्वोक्त्याऽऽत्मनि कर्तृत्वाध्यासस्याऽपि सिद्धत्वात् पुनरुक्तिमाशंक्य सांख्यपक्षनिरासार्थमात्मनि कर्तृत्वाध्यासप्रपञ्चनान्न पुनरुक्तिरित्याह-तद्‌गुणेति॥ अधिकारः प्रसंगः। वस्तुतोऽसंगत्वमविद्यातः। कर्तृत्वमित्यसंगत्वकर्तृत्वश्रुतीनामविरोधोक्तेः कर्तृत्वविचारात्मकाधिकरणत्रयस्य पादसंगतिः। श्रुतीनां मिथो

भामती।

कर्ता शास्त्रार्थवत्त्वात्। ननु 'तद्गुणसारत्वात्' इत्यनेनैव जीवस्य कर्तृत्वं भोक्तृत्वं च लब्धमेवेति तद्व्युत्पादनमनर्थकमित्यत आह—तद्गुणसारत्वाधिकारेणेति। तस्यैवैष प्रपञ्चो ये पश्यन्त्यात्मा भोक्तैव न कर्तेति तन्निराकरणार्थः। 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्' इत्याह स्म भगवान् जैमिनिः। प्रयोक्तर्यनुष्ठातरि। कर्तरीति यावत्। शास्त्रफलं स्वर्गादि। कुतः प्रयोक्तृफलसाधनताल्लक्षणत्वात् शास्त्रस्य

आनन्दगिरीय-न्यायनिर्णयः।

द्व्यजातिमद्विशेषगुणाधिकरणं प्रत्यक्षज्ञानकरणत्वाच्चक्षुर्वदित्यभिप्रेत्याह-कामादयश्चेति। बुद्धिसद्भावस्य मानयुक्तिसिद्धत्वे फलितमाह-तस्मादिति॥ ३२॥ (१३)॥ स्वाभाविकमणुत्वं पराणुद्य वस्तुतो महत्त्वं चैतन्यादीषद्बहिष्ठं प्रतिष्ठापितम्। इदानीं ततोऽपि बहिष्ठं कर्तृत्वं बुद्धिकर्तृत्वव्यावर्तनेनाऽऽत्मनि साधयति-कर्तेति। आत्मा किमकर्ता कर्तावेति विप्रतिपत्तेः संदेहे 'तद्गुणसारत्वात्' इत्यनेनैव तत्कर्तृत्वादिसिद्धेर्न संशीतिरित्याशंक्याऽऽह-तद् गुणेति। अधिकारः प्रसङ्गः। यद्यपि कर्तृत्वस्य न स्वयं पुमर्थता नापि प्रतिपाद्यवाक्यार्थोपयोगिता यद्यपि चौपाधिकं कर्तृत्वमात्मनि प्रागेव सिद्धं तथाऽपि निरस्यपक्षसंभवात्तन्निरासायाऽऽरम्भः संभवतीति भावः। अत्र च विध्यादिश्रुतीनामसंगतादिश्रुतीनां चाऽऽत्मकर्तृत्वाकर्तृत्वार्थानां बन्धमोक्षविषयत्वेन मिथो विरोधं विधूय नित्यमुक्ते ब्रह्मणि समन्वयाधानात्पादादिसंगतयः। पूर्वपक्षे श्रुतीनाममूषां विरुद्धत्वेनाप्रामाण्यात्तत्र समन्वयासिद्धिः। सिद्धान्ते तासामविरोधेन व्यवस्थया प्रामाण्यात्तत्सिद्धिरिति मन्वानः सिद्धान्तं प्रतिजानीते-कर्ता चेति। सत्येव मनसि जागरादौ कर्तृत्वोपलम्भादसति स्वापे तदभावादन्वयव्यतिरेकाभ्यां कर्तृत्वस्य मनोनिष्ठत्वदृष्टेस्तत्सत्ताहेतुविषयत्वसंभवे च तयोस्तद्विशिष्टार्थधीमात्रहेतुत्वकल्पनाया बहिरङ्गत्वादहंकर्तेति धियश्चाऽऽत्मनः साधारण्यान्न कर्तृत्वमात्मनोऽस्तीत्याह-कस्मादिति। स्वर्गाद्यर्थिनो यागादिविध्यन्यथानुपपत्त्या कर्तृत्वमात्मनो दुर्वारमित्याह-शास्त्रेति। तदेव व्याकरोति-एवमिति। ऐक्यश्रुतिविरोधे विधिशास्त्रमन्यपरतया दुर्बलमित्याशंक्य संपत्परत्वेन तस्याः

याद्'' ''दद्यात्'' इत्येवंविधं विधिशास्त्रमर्थवद्भवति । अन्यथा तदनर्थकं स्यात् । तद्धि कर्तुः सतः कर्त्तव्यविशेषमुपदिशति । न चाऽसति कर्तृत्वे तदुपपद्यते ॥ तथेदमपि शास्त्रमर्थवद्भवति—''एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः'' [ प्रश्न० ४ । ९ ] इति ॥ ३३ ॥

## विहारोपदेशात् ॥ ३४ ॥

इतश्च जीवस्य कर्तृत्वं यज्जीवप्रक्रियायां सन्ध्ये स्थाने विहारमुपदिशति ''स ईयतेऽमृतो यत्र कामम्'' [ बृ० ४ । ३।१२] इति ''स्वे शरीरे यथाकामं परिवर्तते'' [ बृ० २ । १ । १८ ] इति च ॥ २ । ३ ३४ ॥

## उपादानात् ॥ ३५ ॥

---

रत्नप्रभा ।

विरोधाविरोधौ पूर्वोत्तरपक्षयोः फलम् । यद्वात्र पूर्वपक्षे बन्धाभावाच्छास्त्रवैयर्थ्यं फलं, सिद्धान्ते कर्तृत्वादिसम्बन्धसत्त्वाच्छास्त्रार्थवत्तेति भेदः । ननु बुद्धिकर्तृत्वेन शास्त्रार्थवत्ताऽस्तु । किं जीवकर्तृत्वेन तत्राह—तद्धि कर्तुः सत इति ॥ मयेदं कर्त्तव्यमिति बोधसमर्थस्य चेतनस्यैव कर्तृत्वं वाच्यं न त्वचेतनाया बुद्धेः । किञ्च भोक्तुरात्मन एव कर्तृता वाच्या । शास्त्रफलं प्रयोक्तरीति न्यायादिति भावः ॥ ३३ ॥ विहारोपदेशात् । सन्ध्यं स्थानं—स्वप्नः । अमृतः स आत्मा यथेष्टम् ईयते गच्छतीति विहारोपदेशादात्मा कर्त्ता प्राणानां मध्ये ज्ञानेन बुद्ध्या विज्ञानसमर्थमिन्द्रियजातम् आदाय शेते इति प्राणान् गृहीत्वा परिवर्तत इति ॥ ३४ ॥ उपादानात् । उपादानकर्तृत्वमात्मनः । अकर्तृत्वे उपादानानुपपत्तेरिति

भामती ।

विधेः । कर्त्रपेक्षितोपायता हि विधिः । बुद्धिश्चेत्कर्त्री भोक्ता चात्मा ततो यस्यापेक्षितोपायो भोक्तुर्न तस्य कर्तृत्वं यस्य कर्तृत्वं न च तस्यापेक्षितोपाय इति किं केन संगतमिति शास्त्रस्यानर्थकत्वमविद्यमानाभिधेयत्वं तथा चाप्रयोजनकत्वं स्यात् । यथा च तद्गुणसारतयास्याऽवस्तु सदपि भोक्तृत्वं सांव्यवहारिकमेवं कर्तृत्वमपि सांव्यवहारिकं न तु मात्त्विकम् । अविद्यावद्विषयत्वं च शास्त्रस्योपपादितमध्यासभाष्य इति सर्वमवदातम् ॥ ३३ ॥ विहारोपदेशात् । विहारः संचारः क्रिया, तत्र स्वातन्त्र्यं नाकर्तुः संभवति । तस्मादपि कर्त्रा जीवः ॥ ३४ ॥ उपादानात् । तदेतेषां प्राणानामिन्द्रियाणां विज्ञानेन बुद्ध्या विज्ञानं

आनन्दगिरीय-न्यायनिर्णयः ।

सावकाशत्वाद्विधिश्रुतेश्च निरवकाशत्वान्नैवमित्याह- अन्यथेति । कर्त्री बुद्धिरित्युपगमात्तद्विषयत्वेन विधिशास्त्रं सावकाशमित्याशंक्य विधेः प्रतिपत्तुरेव कर्तृतेत्याह—तद्धीति । ममेदं कर्तव्यमिति धीसमर्थस्य चेतनस्य विधिसंबन्धमाह विधिशास्त्रमित्यर्थः । तथाऽपि कथं तस्य कर्तृत्वधीरित्याशंक्याऽऽह—न चेति । तस्य विधेयार्थकर्तृतां विनाऽनुपपन्नं विधिशास्त्रं चेतनस्य तदर्थानुपपत्त्या गमयति । बुद्धेरेव कर्तृत्वे यस्य भोक्तुरपेक्षितोपायो विधिर्न तस्य कर्तृत्वं यस्य कर्तृत्वं न तस्यापेक्षितोपाय इत्यसंगतिरिति भावः । 'अनश्नन्' इत्यादिश्रुतिविरोधे श्रुतार्थापत्तिर्दुर्बलेत्याशंक्य श्रुतिमाह—तथेति ॥ ३३ ॥ विहारो विहरणं संचारस्तदुपदेशानुपपत्त्याऽपि जीवस्य कर्तृतेत्याह—विहारेति । सूत्रस्य हेत्वन्तरपरत्वमाह—इतश्चेति । जीवप्रक्रियायामिति बुद्धिप्रस्तावव्यासेधार्थमुक्तम् । संध्ये स्थाने स्वप्नावस्थायामिति यावत् । ईयते गच्छति ॥ ३४ ॥ अकर्तुरुपादानानुपपत्त्याऽपि कर्तृत्वमित्याह—उपादानादिति । तद्व्याकरोति—

इतश्चास्य कर्तृत्वं यज्जीवप्रक्रियायामेव करणानामुपादानं संकीर्तयति—"तदेषां प्राणानां विज्ञानेन विज्ञानमादाय" [ बृ० २ । १ । १७ ] इति "प्राणान् गृहीत्वा" [ बृ० २ । १ । १८ ] इति च ॥ ३५ ॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

इतश्च जीवस्य कर्तृत्वं यदस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्वं व्यपदिशति शास्त्रं "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" [ तै० २ । ५ । १ ] इति ॥ ननु विज्ञानशब्दो बुद्धौ समधिगतः । कथमनेन जीवस्य कर्तृत्वं सूच्यत इति ॥ नेत्युच्यते ॥ जीवस्यैवैष निर्देशः, न बुद्धेः । न चेज्जीवस्य स्यान्निर्देशविपर्ययः स्याद्—विज्ञानेनेत्येवं निरदेक्ष्यत् । तथाहि—अन्यत्र बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते—"तदेषां प्राणानां विज्ञानेन विज्ञानमादाय" [ बृ० २ । १ । १७ ] इति । इह तु "विज्ञानं यज्ञं तनुते" इति कर्तृसामानाधिकरण्यनिर्देशाद् बुद्धिव्यतिरिक्तस्यैवात्मनः कर्तृत्वं सूच्यत इत्यदोषः ॥ ॥ ३६ ॥ अत्राह—यदि बुद्धिव्यतिरिक्तो जीवः कर्ता स्यात, स स्वतन्त्रः सन् प्रियं हितं चैवात्मनो नियमेन सम्पादयेन्न विपरीतम् । विपरीतमपि

---

रत्नप्रभा ।

भावः ॥ ३५ ॥ व्यपदेशाच्च क्रियायां—विज्ञानशब्दो जीवस्य निर्देशो न चेत्, तदा प्रथमानिर्देशाद्विपर्ययः करणद्योतितृतीयया निर्देशः स्यात् । तस्मादिह श्रुतौ तनुत इत्याख्यातेन कर्तृवाचिना विज्ञानपदस्य सामानाधिकरण्यनिर्देशात् क्रियायामात्मनः कर्तृत्वं सूच्यत इति सूत्रभाष्ययोरर्थः ॥ ३६ ॥ सूत्रान्तरमवतारयति—अत्राहेति ॥ जीवः स्वतन्त्रश्चेद् इष्टमेव कुर्यात्, अस्वतन्त्रश्चेत् न कर्त्ता "स्वतन्त्रः कर्त्ता" [ पा० सू० १ । ४ । ५४ ] इति न्यायादित्यर्थः । सत्यपि स्वातन्त्र्ये कारकवैचित्र्यादनियता प्रवृत्ति-

भामती ।

ग्रहणशक्तिमादायोपादायेत्युपादाने स्वातन्त्र्यं नाकर्तुः संभवति ॥ ३५ ॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः । अभ्युच्चयमात्रमेतन्न सम्यगुपपत्तिः । विज्ञानं कर्तृ यज्ञं तनुते । सर्वत्र हि बुद्धिः करणरूपा करणत्वेनैव व्यपदिश्यते न कर्तृत्वेन, इह तु कर्तृत्वेन, तस्या व्यपदेशे विपर्ययः स्यात् । तस्मादात्मैव विज्ञानमिति व्यपदिष्टः । तेन कर्तेति ॥ ३६ ॥ सूत्रान्तरमवतारयितुं चोदयति—अत्राह यदीति । प्रज्ञावान् स्वतन्त्र इष्टमेवात्मनः संपादयेन्नानिष्टम् । अनिष्टसंपत्तिरप्यस्योपलभ्यते । तस्मान्न

आनन्दगिरीय—न्यायनिर्णयः ।

इतश्चेति। प्राणानामिन्द्रियाणां विज्ञानं ग्रहणशक्तिमादाय स्वापे जीवो हृदयमेतीति योजना। उपादानान्तरमाह—प्राणानिति । योजना पूर्ववत् ॥ ३५ ॥ कर्तृवाचकाख्यातश्रुत्याऽपि जीवस्य कर्तृत्वमित्याह—व्यपदेशाच्चेति । विज्ञानशब्दस्य जीवार्थत्वं गृहीत्वा सूत्रावयवं योजयति—इतश्चेति । न चेदित्यादेर्व्यावर्त्यां शङ्कामाह—नन्विति । नात्र बुद्धिर्विज्ञानमिति सूत्रभागेनाऽऽह—नेतीति । तदेव स्फुटयितुं प्रतिजानीते—जीवस्येति । प्रतिज्ञार्थे सूत्रावयवं व्याकुर्वन्व्यतिरेकेण स्फोरयति—नेति । विपर्ययमभिनयति—विज्ञानेति । अस्मन्मते बुद्धेरेव कर्तृत्वात्तत्र तद्व्यपदेशसिद्धिरित्यशंक्य केवलाया बुद्धेः करणत्वेनैव व्यपदेशदर्शनान्नैवमित्याह—तथेति । तैत्तिरीयश्रुतौ विशेषमाह—इहेति । कर्तृसामानाधिकरण्यमाख्यातेन कर्तृवाचिना विज्ञानपदस्याभिव्याहारः प्रकृते वाक्ये विज्ञानस्य कर्तृत्वमन्यत्र करणत्वेऽपीति निगमयति—इत्यदोष इति ॥ ३६ ॥ सूत्रान्तरव्यावर्त्यमाह—अत्रेति । तथैव संपादयति नेत्याह—विपरीतमिति ॥

तु सम्पादयन्नुपलभ्यते । न च स्वतन्त्रस्यात्मन ईदृशी प्रवृत्तिरनियमेनोपपद्यत इत्यत उत्तरं पठति—

## उपलब्धिवदनियमः ॥ ३७ ॥

यथाऽयमात्मोपलब्धिं प्रति स्वतन्त्रोऽप्यनियमेनेष्टमनिष्टं चोपलभते, एवमनियमेनैवेष्टमनिष्टं च सम्पादयिष्यति ॥ उपलब्धावप्यस्वातन्त्र्यम् । उपलब्धिहेतूपादानोपलम्भादिति चेत् ॥ न ॥ विषयप्रकल्पनामात्रप्रयोजनत्वादुपलब्धिहेतूनाम् । उपलब्धौ त्वनन्यापेक्षत्वम् । आत्मनश्चैतन्ययोगात् ॥ अपि चार्थक्रियायामपि नात्यन्तमात्मनः स्वातन्त्र्यमस्ति । देशकालनिमित्तविशेषापेक्षत्वात् । न च सहायापेक्षस्य कर्तुः कर्तृत्वं निवर्तते । भवति ह्येधोदकाद्यपेक्षस्यापि पक्तुः पक्तृत्वम् । सहकारिवैचित्र्याच्चेष्टाऽनिष्टाऽर्थक्रियायामनियमेन प्रवृत्तिरात्मनो न विरुध्यते ॥ ३७ ॥

---

रत्नप्रभा ।

रिति सूत्रेण परिहरति—**यथेति** ॥ दृष्टान्तासम्प्रतिपत्त्या शङ्कते—**उपलब्धावपीति** ॥ चक्षुरादीनां चैतन्येन विषयसम्बन्धार्थत्वात् स्वसम्बन्धोपलब्धौ चात्मनश्चैतन्यस्वभावत्वेन स्वातन्त्र्याद् दृष्टान्तसिद्धिरित्याह—**नेति** ॥ नन्वात्मा विषयसम्बन्धाय करणान्यपेक्षते **चेत्**, कथं स्वतन्त्र इत्याशंक्याह—**अपि चेति** ॥ **स्वातन्त्र्यं** नाम स्वान्यानपेक्षत्वम् । ईश्वरस्यापि प्राणिकर्मापेक्षत्वेनाऽस्वातन्त्र्यप्रसङ्गात् । किन्तु स्वेतरकारकप्रयोक्तृत्वे सति कारकाप्रेर्यत्वं **स्वातन्त्र्यम्**—इति, न स्वतन्त्रोऽपि जीवः इष्टसाधनत्वभ्रान्त्याऽनिष्टसाधनमप्यनुतिष्ठतीत्यनियता प्रवृत्तिः स्वातन्त्र्यं चेत्यविरुद्धमित्यर्थः ॥ ३७ ॥ जीवस्य कर्तृत्वे हेत्वन्त-

भामती ।

स्वतन्त्रस्तथा च न कर्ता । तल्लक्षणत्वात्तस्येत्यर्थः । अस्योत्तरम्—**उपलब्धिवदनियमः** । करणादीनि कारकान्तराणि कर्ता प्रयुंक्ते न त्वयं कारकान्तरैः प्रयुज्यत इत्येतावन्मात्रमस्य स्वातन्त्र्यं न तु कार्यक्रियायां न कारकान्तराण्यपेक्षत इति । ईदृशं हि स्वातन्त्र्यं नेश्वरस्याप्यत्रभवतोऽस्तीत्युत्सन्नसंकथः कर्ता स्यात् । तथा चायमदृष्टपरिपाकवशादिष्टमभिप्रेप्सुस्तत्साधनविभ्रमेणानिष्टोपायं व्यापारयन्ननिष्टं प्राप्नुयादित्यनियमः कर्तृत्वं चेति न विरोधः । **विषयप्रकल्पनमात्रप्रयोजनत्वादिति** । नित्यचैतन्यस्वभावस्य खल्वात्मन इन्द्रियादीनि करणानि स्वविषयमुपनयन्ति, तेन विषयावच्छिन्नमेव चैतन्यं वृत्तिरिति विज्ञान-

आनन्दगिरीय—न्यायनिर्णयः ।

सहकारिवशादिष्टानिष्टोपादानेषु पुरुषप्रवृत्तिरित्याशंक्याऽऽह—**न चेति** । तस्यास्वातन्त्र्ये लक्षणाभावादकर्तृत्वं स्वातन्त्र्ये बुद्धिपूर्वकारिणो नानियता प्रवृत्तिरित्यर्थः । सूत्रमवतारयति—**अत इति** । सत्यपि स्वातन्त्र्ये स्यादनियता प्रवृत्तिरिति सूत्रं व्याकुर्वन्परिहरति—**यथेति** । दृष्टान्ते विवदमानः सन्नाह—**उपलब्धाविति** । चक्षुरादीनां विषयोपनायकत्वात्तदुपलब्धौ चाऽऽत्मनश्चेतनत्वेन स्वातन्त्र्यादुदाहरणसिद्धिरित्याह—**नेत्यादिना** । विषयोपनयनद्वारा तज्ज्ञाने करणापेक्षाध्रौव्यान्नाऽऽत्मनः स्वातन्त्र्यमित्याशंक्याऽऽह—**अपि चेति** । इतश्च दृष्टान्तदार्ष्टान्तिकयोर्न वैषम्यमिति यावत् । उपलब्धाविवेत्यपेरर्थः । देशाद्यपेक्षायां लक्षणाभावादकर्तृत्वं स्यादित्याशंक्याऽऽह—**न चेति** । तत्र हेतुमाह—**भवतीति** । यदुक्तं धीपूर्वकारिणो नानियता प्रवृत्तिरिति तत्राऽऽह—**सहकारीति** । कर्ता हि करणादीनि कारकान्तराणि प्रयुङ्क्ते न तैरयं प्रयुज्यते तेन तस्य स्वातन्त्र्यं न कारकान्तरानपेक्षत्वात्क्वापि तथा स्वातन्त्र्यायोगात् । तथा चायमदृष्टवशादिष्टमेव प्रेप्सुस्तदुपायभ्रमादनिष्टहेतुमनुतिष्ठन्ननिष्टमाप्नुयादित्यनियता प्रवृत्तिः

## शक्तिविपर्ययात् ॥ ३८ ॥

इतश्च विज्ञानव्यतिरिक्तो जीवः कर्ता भवितुमर्हति । यदि पुनर्विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात्, ततः शक्तिविपर्ययः स्यात् । करणशक्तिर्बुद्धेर्हीयेत । कर्तृशक्तिश्चापद्येत । सत्यां च बुद्धेः कर्तृशक्तौ तस्या एवाऽहम्प्रत्ययविषयत्वमभ्युपगन्तव्यम् । अहंकारपूर्विकाया एव प्रवृत्तेः सर्वत्र दर्शनात्-'अहं गच्छामि' 'अहमागच्छामि' 'अहं भुञ्जे' 'अहं पिबामि' इति च । तस्याश्च कर्तृशक्तियुक्तायाः सर्वार्थकारिण्याः सर्वार्थकारि करणमन्यत्कल्पयितव्यम् । शक्तोऽपि हि सन् कर्ता करणमुपादाय क्रियासु प्रवर्तमानो दृश्यते । ततश्च सञ्ज्ञामात्रे विवादः स्यात्, न वस्तुभेदः कश्चित् । करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात् ॥ ३८ ॥

## समाध्यभावाच्च ॥ ३९ ॥

योऽप्ययमौपनिषदात्मप्रतिपत्तिप्रयोजनः समाधिरुपदिष्टो वेदान्तेषु- "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [ बृ० २ । ४ । ५ ] "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" [ छां० ८ । ७ । १ ] "ओमित्येवं ध्यायथ आत्मानम्" [ मुण्ड० २ । २ । ६ ] इत्येवंलक्षणः । सोऽप्यसत्यात्मनः कर्तृत्वे नोपपद्येत । तस्मादप्यस्य कर्तृत्वसिद्धिः ॥ ३९॥
इति कर्त्रधिकरणम् ॥ १४ ॥

---

रत्नप्रभा ।

रार्थं सूत्रम्—शक्तीति ॥ बुद्धेः करणशक्तिविपरीता कर्तृशक्तिः स्यादित्यर्थः । ततः किं तत्राह—सत्यां च बुद्धेरिति॥ योहंधीगम्यः, स कर्ता, स एव जीवः। यत् तदपेक्षितं करणं,तन्मन इति जीवकर्तृत्वसिद्धिरिति भावः ॥३८॥ ज्ञानसाधनविध्यन्यथानुपपत्त्याप्यात्मनः कर्तृत्वं वाच्यमित्याह—समाधीति॥

भामती ।

मिति चाख्यायते, तत्र चास्यास्ति स्वातन्त्र्यमित्यर्थः ॥ ३७ ॥ शक्तिविपर्ययात् । पूर्वं कारकविभक्तिविपर्यय उक्तः । संप्रति कारकशक्तिविपर्यय इत्यपुनरुक्तम् । अविपर्ययाय तु करणान्तरकल्पनायां नाम्नि विसंवाद इति ॥ ३८ ॥ समाध्यभावाच्च । समाधिरिति संयममुपलक्षयति । धारणाध्यानसमाधयो हि

आनन्दगिरीय—न्यायनिर्णयः ।

कर्तृत्वानियमश्चेत्यर्थः ॥ ३७ ॥ बुद्धेरेव कर्तृत्वे कारकविभक्तिविपर्ययो 'न चेत्' इत्यत्रोक्तः । संप्रति तच्छक्तिविपर्ययमाह—शक्तीति । सूत्रं व्याख्यातुं प्रतिज्ञां व्याकरोति—इतश्चेति । हेतुमेव व्यतिरेकद्वारा विवृणोति—यदीति । शक्तिविपर्ययमुदाहरति—करणेति । बुद्ध्यतिरिक्तकर्त्रभावादित्यर्थः । बुद्धेरस्तु कर्तृशक्तिस्तत्राऽऽह—सत्यां चेति । कर्तृत्वे बुद्धेरहंधीविषयत्वेनाऽऽत्मत्वं किमित्युपेयं तत्राऽऽह—अहंकारेति । अन्तःकरणाधिष्ठातुरेवाऽऽत्मत्वात्कुतो बुद्धेरेवाऽऽत्मत्वं तत्राऽऽह—तस्याश्चेति । कर्तुः स्वयमेव शक्तेर्न करणापेक्षेत्याशंक्याऽऽह—शक्तोऽपि हीति । लोकवदिहापि कर्तुरपेक्षितमेव करणमिति वक्तुमितिशब्दः । अस्तु तर्हि कर्त्र्या बुद्धेरन्यदेव करणं तत्राऽऽह—ततश्चेति ॥ ३८ ॥ ज्ञानसाधनविध्यन्यथानुपपत्त्याऽपि कर्तृत्वमात्मनः स्वीकार्यमित्याह—समाधीति । सूत्रं विवृणोति—योऽपीति । ज्ञानोपायं समाधिमधितिष्ठन्नकर्ताऽऽत्मेति दुर्वचनमित्यर्थः । शास्त्रार्थवत्त्वादिहेतूनां फलमुपसंहरति—तस्मादिति । उक्तहेतुषु प्रत्येकं साधकत्वं संभावयितुमपिशब्दः ॥ ३९ ॥ ( १४ ) ॥ सांख्यमतनि-

## यथा च तक्षोभयथा ॥ ४० ॥ ( १९ )॥

**एवं तावच्छास्त्रार्थवत्त्वादिभिर्हेतुभिः कर्तृत्वं शारीरस्य प्रदर्शितम् । तत्पुनः स्वाभाविकं वा स्यादुपाधिनिमित्तं वेति चिन्त्यते। तत्रैतैरेव शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकं कर्तृत्वम् । अपवादहेत्वभावादित्येवं प्राप्ते ॥ ब्रूमः ॥ न स्वाभाविकं कर्तृत्वम् आत्मनः सम्भवति ।**

---

रत्नप्रभा ।

मुक्तिफलभोक्तुरेव तदुपायसमाधिकर्तृत्वं युक्तम् । अन्यथात्मनोऽकर्तृत्वे बुद्धेरपि अभोक्त्र्याः कर्तृत्वायोगात् समाध्यभावप्रसङ्ग इत्यर्थः ॥३९॥ (१४)॥ **यथा च तक्षोभयथा** ॥ उक्तमात्मनः कर्तृत्वमुपजीव्य संशयपूर्वपक्षावाह—**एवं तावदित्यादिना** ॥ सांख्यनिरासेनाऽऽत्मनः कर्तृत्वे साधिते बाधकाभावात् तत्सत्यमिति **मीमांसकादिपक्षः** प्राप्तः । न चासङ्गत्वागमेन बाधः । अहं कर्तेत्यनुभवसहितकर्तृत्वश्रुतिबलेन तस्याऽऽगमस्य स्तावकत्वादिति प्राप्ते उत्सूत्रमेव सिद्धान्तयति—**न स्वाभाविकमिति** ॥

भामती ।

संयमपदवेदनीयाः । यथाहुः—'त्रयमेकत्र संयमः' इति । अत्र श्रोतव्यो मन्तव्य इति धारणोपदेशः । निदिध्यासितव्य इति ध्यानोपदेशः । द्रष्टव्य इति समाधेरुपदेशः । यथाहुः—'तदेव ध्यानमर्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' इति । सोऽयमिह कर्तात्मा समाधावुपदिश्यमान आत्मनः कर्तृत्वमवैतीति सूत्रार्थः ॥ ३९ ॥ ( १४ ) ॥ **यथा च तक्षोभयथा** । अवान्तरसंगतिमाह—**एवं तावदिति** । विमृशति—**तत्पुनरिति** । पूर्वपक्षं गृह्णाति—**तत्रेति** । शास्त्रार्थवत्त्वादयो हि हेतव आत्मनः कर्तृत्वमापादयन्ति । न च स्वाभाविके कर्तृत्वे संभवत्यसत्यपवादे तदौपाधिकं युक्तम्, अतिप्रसंगात् । न च मुक्त्यभावप्रसंगोऽस्यापवादकः, यथा ज्ञानस्वभावो ज्ञेयाभावेऽपि नाज्ञो भवत्येवं कर्तृस्वभावोऽपि क्रियावेशाभावेऽपि नाकर्ता । तस्मात् स्वाभाविकमेवास्य कर्तृत्वमिति प्राप्तेऽभिधीयते । नित्यशुद्धबुद्धमुक्तस्वभावं हि ब्रह्म भूयोभूयः श्रूयते । तदस्य बुद्धत्वमसत्यपि बोद्धव्ये युक्तं, वह्नेरिवासत्यपि दाह्ये दग्धृत्वं, तच्छीलस्य तस्यावगमात् । कर्तृत्वं त्वस्य क्रियावेशादवगन्तव्यम् । न च नित्योदासीनस्य कूटस्थस्य नित्यस्यासक्तच्छक्तस्य संभवति, तस्य च कदाचिदप्यसंसर्गे कथं तच्छक्तियोगो निर्विषयायाः शक्तेरसंभवात् । तथा च यदि तत्सिध्यर्थं तद्विषयः क्रियावेशोऽभ्युपेयते तथा सति तत्स्वभावस्य स्वभावोच्छेदाभावाद्भावनाशप्रसङ्गः, न च मुक्तस्यास्ति क्रियायोग इति । क्रियाया दुःखत्वान्न विगलितसकलदुःखपरमानन्दावस्था मोक्षः स्यादित्याशयवानाह—**न स्वाभाविकं कर्तृत्वमात्मन इति** । अभिप्रायमबुद्ध्वा चोदयति—

आनन्दगिरीय—न्यायनिर्णयः ।

रासेनोक्तात्मकर्तृत्वस्य स्वाभाविकत्वं निरस्यति । **यथा चेति** । संगतिं दर्शयन्वृत्तं कीर्तयति—**एवमिति** । उक्ते कर्तृत्वे विप्रतिपत्त्या संशयमाह—**तदिति** । संगतिफले पूर्ववत् । अत्रापि समासौ सर्वे व्यक्तीभविष्यतीति मत्वा पूर्वपक्षयति—**तत्रेति** । न च तर्हि पूर्वाधिकरणमनर्थकमारोप्य प्रापकत्वान्न च स्वातन्त्र्येण संबन्धाद्यभावे तस्यैतदवान्तरसूत्रत्वम् । तत्रापि कर्तृत्वे समर्थिते सत्यसङ्गागमस्य स्तुत्याऽपि नेतुं शक्यत्वे विरोधपरिहारेण समन्वयदार्ढ्यसिद्धौ साक्षादपि संगत्यादेः सुवचत्वात् । ननु कर्तृत्वसत्त्वमात्रमुक्ता हेतवः साधयन्ति न तस्य स्वाभाविकत्वं न हि तस्योपाध्यनपेक्षत्वमुक्तं तत्राऽऽह—**अपवादेति** । न चान्वयव्यतिरेकाभ्यां विशिष्टस्य कर्तृत्वं शङ्कनीयं तदुत्पत्तौ मनसो निमित्तत्वादपि तदुपपत्तेरिति मत्वा पूर्वपक्षमुपसंहर्तुमितिशब्दः । पूर्वपक्षमनूद्य सूत्राद्बहिरेव सिद्धान्तयति—**एवमिति** । स्वाभाविकं कर्तृत्वमपवादकाभावादित्ययुक्तं मुक्त्यनुपपत्तेरपवादकत्वादित्याह—**नेति** । उक्तं विवृण्वन्कर्तृत्वमात्मनः स्वभावो

**अनिर्मोक्षप्रसङ्गात्। कर्तृत्वस्वभावत्वे ह्यात्मनो न कर्तृत्वान्निर्मोक्षः सम्भवति। अग्नेरिवौष्ण्यात्। न च कर्तृत्वादनिर्मुक्तस्याऽस्ति पुरुषार्थसिद्धिः। कर्तृत्वस्य दुःखरूपत्वात्॥ ननु स्थितायामपि कर्तृत्वशक्तौ कर्तृत्वकार्यपरिहारात्पुरुषार्थः सेत्स्यति। तत्परिहारश्च निमित्तपरिहारात्। यथाऽग्नेर्दहनशक्तियुक्तस्यापि काष्ठवियोगाद्दहनकार्याभावः, तद्वत्॥ न॥ निमित्तानामपि शक्तिलक्षणेन सम्बन्धेन सम्बद्धानामत्यन्तपरिहारासम्भवात्॥ ननु मोक्षसाधनविधानान्मोक्षः सेत्स्यति॥ न॥ साधनायत्तस्यानित्यत्वात्॥ अपि च नित्यशुद्धबुद्धमुक्तात्मप्रतिपादनान्मोक्ष-**

रत्नप्रभा।

यदुक्तं बाधकाभावादिति, तदसिद्धमित्याह—**अनिर्मोक्षेति**॥ ननु कर्तृत्वं नाम क्रियाशक्तिर्मुक्तावप्यस्ति। तत्रापि शक्तिकार्यस्य क्रियारूपशक्यस्याभावान्मुक्तेः पुरुषार्थत्वसिद्धिरिति शङ्कते—**ननु स्थितायामिति**॥ सत्यां शक्तौ कथं कार्यपरिहारः, तत्राह—**तत्परिहारश्चेति**॥ मुक्तौ शक्तिसत्त्वे कार्यमपि स्यात्। शक्याभावे शक्त्ययोगात्। अस्ति हि प्रलयेऽपि कार्यं पुनरुद्भवयोग्यं सूक्ष्मं शक्यम्। तथा च शक्त्या धर्मादिनिमित्तैः सहितकार्याक्षेपान्मुक्तिलोप इति परिहरति—**न। निमित्तानामपीति**॥ सनिमित्तस्य कार्यस्य शक्त्या शक्यत्वेन सम्बन्धान्निमित्तानामपि परम्परया शक्तिसम्बन्धत्वमुक्तं मन्तव्यम्। **सम्बन्धेन** सम्बन्धिनेत्यर्थः। यद्वा शक्तिः, लक्षणमाक्षेपकं यस्य कार्यस्य तेन कार्येण यः सम्बन्धः, तेनेति व्यधिकरणे तृतीया। ननु नरस्य कर्मणा देवत्ववच्छास्त्रबलात् कर्तुरेवाकर्तृतासिद्धिरिति शङ्कते—**नन्विति**॥ ज्ञानादकर्तृत्वाख्यमोक्षश्चेत्, कर्तृत्वमाविद्यकं स्यात्। यतो ज्ञानस्यैव निवर्तकम्। यदि कर्मणा मोक्षः, तत्राह—**नेति**॥ आत्मनः स्वाभाविकं कर्तृत्वमभ्युपगम्यानिर्मोक्ष उक्तः। सम्प्रत्यसङ्गनिर्विकारत्वानेकश्रुतिव्याकोपात् तत्तत्स्वाभाविकमित्याह—**अपि चेति**॥ न चाभ्यस्तानेकश्रुतीनां

भामती।

**ननु स्थितायामपीति**। परिहरति—**न निमित्तानामपीति**। शक्तशक्याश्रया शक्तिः स्वसत्तयावश्यं शक्यमाक्षिपति। तथा च तयाक्षिप्तं शक्यं सदैव स्यादिति भावः। चोदयति—**ननु मोक्षसाधनविधानादिति**। परिहरति—**न। साधनायत्तस्येति**। अस्माकं तु न मोक्षः साध्यः, अपि तु ब्रह्मस्वरूपं तच्च नित्यमिति। उक्तमभिप्रायमाविष्करोति—**अपि च नित्यशुद्ध इति**। चोदयति—

आनन्दगिरीय—न्यायनिर्णयः।

धर्मो वेति विकल्प्याऽऽद्यं प्रत्याह—**कर्तृत्वेति**। कर्तृत्वे सत्येव पुरुषार्थसंभवात्किं तन्निवृत्त्येत्याशङ्क्याऽऽह—**न चेति**। द्वितीयमाश्रित्य शङ्कते—**नन्विति**। सत्यां शक्तौ कार्यपरिहारोऽपि कथं तत्राऽऽह—**तदिति**। शक्तस्यैव निमित्तपरिहारात्कार्यपरिहारं दृष्टान्तेन दर्शयति—**यथेति**। कर्तृत्वस्य धर्मादीनि निमित्तानि तेषां ज्ञानानिवर्त्यत्वे मुक्तावपि संभवात्कर्तृत्वं स्याज्ज्ञानेन तन्निवृत्तौ तेषामज्ञानकार्यत्वात्तत्कृतं कर्तृत्वमपि तथा स्यात्। शक्तेश्च शक्तशक्यतापेक्षतया सन्निमित्तक्रियालक्षणशक्याक्षेपकत्वादनिर्मोक्षस्तस्मान्निमित्तपरिहारस्य दुरनुष्ठानत्वान्न शक्तिवादे मुक्तिरित्याह—**नेत्यादिना**। शक्तिलक्षणेन शक्त्याक्षिप्तेन शक्येन सह यः संबन्धस्तेनेति व्यधिकरणे तृतीये। मनुष्यदेहस्य शास्त्रसामर्थ्याद्देवत्वाप्तिवत्कर्तृभूतस्याकर्तृरूपमोक्षाप्तिः शास्त्रवशादेवेति शङ्कते—**नन्विति**। किं सन्नेव मोक्षोऽज्ञानवृतो ज्ञानात्तन्निवृत्त्याऽऽप्यत उतासन्नपूर्वो हेतुशक्त्या लभ्यते। आद्ये कर्तृत्वस्य भ्रान्तित्वम्। द्वितीयं दूषयति—**नेति**। मुक्तेः साधनाय तत्त्वमुपेत्योक्तं तदेव नेत्याह—**अपि चेति**। तथाऽपि कथं स्वाभाविकं कर्तृत्वमपहूयते तत्राऽऽह—

सिद्धिरभिहिता । तादृगात्मप्रतिपादनं च न स्वाभाविके कर्तृत्वेऽवकल्पेत ॥ तस्मादुपाधिधर्माध्यासेनैवाऽऽत्मनः कर्तृत्वं, न स्वाभाविकम् ॥ तथा च श्रुतिः–"ध्यायतीव लेलायतीव" [ बृ० ६ । ३ । ७ ] इति । "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" [ कठ० । ३ । ४ ] इति चौपाधिसंयुक्तस्यैवात्मनो भोक्तृत्वादिविशेषलाभं दर्शयति । न हि विवेकिनां परस्मादन्यो जीवो नाम कर्ता, भोक्ता वा, विद्यते । "नान्योऽतोऽस्ति द्रष्टा" [ बृ० ३ । ७ । २३ ] इत्यादिश्रवणात् ॥ पर एव तर्हि–संसारी, कर्ता, भोक्ता च प्रसज्येत । परस्मादन्यश्चेच्चितिमान् जीवः कर्ता, बुद्ध्यादिसंघातव्यतिरिक्तो न स्यात् ॥ न ॥ अविद्याप्रत्युपस्थापितत्वात् कर्तृत्वभोक्तृत्वयोः । तथा च शास्त्रं–"यत्र हि द्वैतमिव

रत्नप्रभा ।

स्तावकत्वकल्पनं युक्तम् । न चाहं कर्तेत्यनुभवो विरुध्यते । तस्य सत्यमिथ्योदासीनकर्तृत्वावगाहिनोऽध्यासत्वेनाप्युपपत्तेरित्यर्थः । कर्तृत्वस्याध्यस्तत्वे श्रुतिमाह–**तथा चेति** ॥ विद्वदनुभवबाधितं च कर्तृत्वमित्याह–**न हीति** ॥ बुद्ध्यादिसंघाताद्व्यतिरिक्तो यदि परस्मादन्यश्चेतनो न स्यात्, तदा पर एव संसारी प्रसज्येत । तच्चानिष्टम्, परस्य नित्यमुक्तत्वव्याघातादिति शङ्कते–**पर एवेति** ॥ न वयं शुद्धस्य चिद्धातोः परस्य बन्धं वदामः, किन्तु तस्यैवाविद्याबुद्ध्यादिप्रतिबिम्बितस्याऽविद्यया भिन्नस्य जीवत्वं प्राप्तस्य बन्धमोक्षाविति ब्रूमः । कल्पितभेदोऽपि लोके बिम्बप्रतिबिम्बयोर्धर्मव्यवस्थापको दृष्ट इति परिहरति–**नाविद्येति** ॥ अविद्योपहिते बन्धः, न शुद्धात्मनीत्यत्र श्रुतिमाह–**तथा चेति** ॥ कर्तृत्वस्य

भामती ।

**पर एव तर्हि संसारीति।** अयमर्थः–परश्चेत्संसारी तस्याविद्याप्रविलये मुक्तौ सर्वे मुच्येरन्नविशेषात्। ततश्च सर्वसंसारोच्छेदप्रसङ्गः । परस्मादन्यश्चेत्स बुद्ध्यादिसंघात एवेति, तस्यैव तर्हि मुक्तिसंसारौ नात्मन इति । परिहरति—**न । अविद्याप्रत्युपस्थापितत्वादिति** । न परमात्मनो मुक्तिसंसारौ, तस्य नित्यमुक्तत्वात् । नापि बुद्ध्यादिसंघातस्य, तस्याचेतनत्वात् । अपि त्वविद्योपस्थापितानां बुद्ध्यादिसंघातानां भेदात्तत्तद्बुद्ध्यादिसंघातभेदोपधान आत्मैकोऽपि भिन्न इव विशुद्धोऽप्यविशुद्ध इव ततश्चैकबुद्ध्यादिसंघातापगमे तत्र मुक्त इवेतरत्र बद्ध इव यथा मणिकृपाणाद्युपधानभेदादेकमेव मुखं नानेव दीर्घमिव वृत्तमिव श्याममिवावदातमिव अन्यतमोपधानविगमे तत्र मुक्तमिवान्यत्रोपहितमिवेति नैकमुक्तौ सर्वमुक्तिप्रसङ्गः । तस्मान्न परमात्मनो मोक्षसंसारौ, नापि बुद्ध्यादिसंघातस्य किंतु बुद्ध्याद्युपहितस्यात्मस्वभावस्य जीवभावमापन्नस्येति परमार्थः। अत्रैवान्वयव्यतिरेकौ श्रुतिभिरादर्शयति–**तथा चेति** । इतश्चौपाधिकं यदुपाध्यभिभवोद्भवाभ्यामस्याभिभ-

आनन्दगिरीय–न्यायनिर्णयः ।

**तादृगिति** । का तर्हि कर्तृत्वदृष्टेरात्मनि गतिस्तत्राऽऽह–**तस्मादिति** । आत्मन्यौपाधिकमारोपितं कर्तृत्वमित्यत्र मानमाह–**तथा चेति** । उक्तश्रुत्योस्तात्पर्यमाह–**उपाधीति।** विद्वदनुभवविरुद्धा च स्वाभाविकी कर्तृतेत्याह–**न हीति** । विवेकिनामित्युक्तेरवस्थाभेदापेक्षमैक्यमित्याशङ्क्याऽऽह–**नान्य इति** । बुद्ध्यादिसंघातादतिरिक्तो यदि परस्मादन्यश्चेतनो न स्यात्तदा पर एव संसारी कर्ता च प्रसज्येत । न च तद्युक्तं नित्यशुद्धत्वादिविरोधात । यदि परस्मादन्यश्चेतनस्तर्हि नासौ बुद्ध्यादिव्यतिरिक्तः स्यादिति शङ्कते–**पर एवेति।** न तावत्केवलस्य चेतनस्य मुक्तिबन्धौ तस्य नित्यमुक्तत्वात । नापि केवलस्य बुद्ध्यादेस्तौ तस्य जडत्वात् । किं त्वनाद्यनिर्वाच्याविद्योत्थबुद्ध्याद्युपाधिद्वारा चेतनस्यैव तौ कल्प्येते । न च व्यवस्थानुपपत्तिरेकस्मिन्नपि चिद्धातौ काल्पनिकभेदाधीनव्यवस्थास्थापनाद्वस्तुतस्तदभावस्येष्टत्वात्तस्मात्परस्मादन्यस्य चितिमतोऽभावेऽपि वस्तुतः संसारित्वस्य तस्मिन्नप्रसङ्गात्कल्पनया चोपगमान्नैवमित्याह–**नाविद्येति** । उक्तेऽर्थे श्रौतावन्वयव्यतिरेकौ दर्शयति–**तथा चेति** । उपाध्युद्भवाभिभवाभ्यां कर्तृत्वस्योद्भवाभिभवश्रवणादपि

भवति तदितर इतरं पश्यति" [ बृ० २ । ४ । १४ ] इत्यविद्यावस्थायां कर्तृत्वभोक्तृत्वे दर्शयित्वा विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति–"यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येद्" [ बृ० २ । ४ ।१४] इति ॥ तथा स्वप्नजागरितयोरात्मन उपाधिसम्पर्ककृतं श्रमं श्येनस्येवाऽऽकाशे विपरिपततः श्रावयित्वा तदभावं सुषुप्ते प्राज्ञेनाऽऽत्मना सम्परिष्वक्तस्य श्रावयति–"तद्वा अस्यैतदाप्तकाममात्मकाममकामꣳ रूपꣳ शोकान्तरम्" [ बृ० ४ । ३ । २१ ] इत्यारभ्य "एषास्य परमा गतिरेषास्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परम आनन्दः" [ बृ० ४ । ३ । ३२] इत्युपसंहारात् । तदेतदाहाऽऽचार्यः–"यथा च तक्षोभयथा" इति । त्वर्थे चायं चः पठितः । नैवं मन्तव्यं–स्वाभाविकमेवात्मनः कर्तृत्वमग्नेरिवौष्ण्यमिति । यथा तु तक्षा लोके वास्यादिकरणहस्तः कर्त्ता दुःखी भवति । स एव स्वगृहं प्राप्तः विमुक्तवास्यादिकरणः स्वस्थो निर्वृत्तो निर्व्यापारः सुखी भवति । एवमविद्याप्रत्युपस्थापितद्वैतसंयुक्त आत्मा स्वप्नजागरितावस्थयोः कर्त्ता दुःखी भवति । सतच्छ्रमापनुत्तये स्वमात्मानं परं ब्रह्म प्रविश्य विमुक्तकार्य-

रत्नप्रभा ।

बुद्ध्युपाध्यन्वयव्यतिरेकानुविधायित्वाच्छ्रुतेश्च न स्वाभाविकत्वमित्याह–तथा स्वप्नेति ॥ आत्मैव काम्यते आनन्दत्वादिति । आत्मकामं स्वरूपं स्वातिरिक्तकाम्यासत्त्वादकामम् । आत्मकामत्वादकामत्वाच्चाप्तकामं विशोकत्वाच्चेत्याह–शोकेति ॥ शोकान्तरम् । दुःखास्पृष्टमित्यर्थः । तस्यैव सुषुप्तात्मरूपस्य परमपुरुषार्थतामाह–एष इति ॥ गतिः प्राप्यम्, सम्पद् ऐश्वर्यं लोकः भोग्यसुखं चैतस्मादन्यन्नास्तीत्यर्थः । आत्मा स्वतोऽकर्त्ता, बुद्ध्याद्युपाधिना तु कर्तेत्युभयथाभावः उक्तः, तत्रार्थे सूत्रं योजयति–तदेतदाहेत्यादिना ॥ संप्रसादः सुषुप्तिः । यथा स्फटिकस्य लौहित्यं कुसुमाद्युपाधिकं, तथाऽऽत्मनः कर्तृत्वं बुद्ध्याद्युपाधिकमन्वयव्यतिरेकाभ्यां सिद्धम् । न च तौ बुद्धेरात्मकर्तृत्वे करणत्वविषयौ, नोपादानत्वविष-

भामती ।

योद्धयौ दर्शयति श्रुतिरित्याह–तथा स्वप्नजागरितयोरिति । अत्रैवार्थे सूत्रं व्याचष्टे–तदेतदाहेति । संप्रसादः सुषुप्तिः । स्यादेतत् । तक्ष्णः पाण्यादयः सन्ति तैरयं वास्यादीन् व्यापारयन् भवतु दुःखी,

आनन्दगिरीय–न्यायनिर्णयः ।

तदौपाधिकमित्याह–तथेति । परमानन्दत्वेनाऽऽप्तकामत्वं साधयति–आत्मेति । कामयितव्याभावादपि तथेत्याह–अकाममिति । अशेषशोकसंस्पर्शशून्यत्वादपि तथेत्याह–शोकान्तरमिति । उक्तस्य सौषुप्तात्मरूपस्य परमपुरुषार्थतामाह–एषेति । प्रेप्सितमैश्वर्यमतिरिक्तमस्तीत्याशंक्याऽऽह–एषाऽस्येति । लोकविशेषस्यापेक्षणीयत्वमाशंक्योक्तम्–एष इति । परमानन्दस्यातिरिक्तस्यापेक्षकत्वमाशंक्याह–एषोऽस्येति । उक्तेऽर्थे सूत्रमवतारयति–तदेतदिति । तदक्षराणि व्याकरोति–त्वर्थे चेति । चकारोऽवधारणे । तुशब्दार्थमेव स्फोरयति–नैवमिति । तत्र दृष्टान्तं व्याचक्षाणो हेतुमाह–यथेति । अन्यैरप्रेर्यत्वं स्वस्थत्वम् । मानसप्रयत्नराहित्यं निर्वृतत्वम् । कायचेष्टाशून्यत्वं निर्व्यापारत्वम् । बुद्ध्यादिसंपिण्डितैकद्रव्ये सत्येव जागरादौ क्रियादर्शनादसति तस्मिन्केवलात्मनि स्वापादौ तददर्शनाद्विशिष्टस्य क्रियाकारणत्वम् । तत्रापि निमित्तादुपादानस्य कार्यान्वयित्वेनान्तरङ्गत्वादुपादानत्वमन्वयव्यतिरेकाभ्यामुक्तन्यायवद्भ्यां ब्रह्मात्मत्वशास्त्रोपबृंहिताभ्यां लभ्यमिति भावः । संप्रसादे कर्तृत्वरहितस्यापि जागरादौ

करणसंघातोऽकर्ता सुखी भवति सम्प्रसादावस्थायाम् ॥ तथा मुक्त्यवस्थायामप्यविद्याध्वान्तं विद्याप्रदीपेन विधूयाऽऽत्मैव केवलो निर्वृतः सुखी भवति । तक्षदृष्टान्तश्चैतावतांशेन द्रष्टव्यः । तक्षा हि विशिष्टेषु तक्षणादिषु व्यापारेष्वपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्ता भवति, स्वशरीरेण त्वकर्तैव । एवमयमात्मा सर्वव्यापारेष्वपेक्ष्यैव मनआदीनि करणानि कर्ता भवति, स्वात्मना त्वकर्तैवेति, न त्वात्मनस्तक्ष्ण इवावयवाः सन्ति, यैर्हस्तादिभिरिव वास्यादीनि तक्षा-मनआदीनि करणान्यात्मोपाददीत, न्यस्येद्वा ॥ यत्तूक्तं शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकमात्मनः कर्तृत्वमिति ॥ तन्न ॥ विधिशास्त्रं तावद्यथाप्राप्तं कर्तृत्वमुपादाय कर्तव्यविशेषमुपदिशति, न कर्तृत्वमात्मनः प्रतिपादयति । न च स्वाभाविकमस्य कर्तृत्वमस्ति । ब्रह्मात्मत्वोपदेशादित्यवोचाम ॥ तस्मादविद्याकृतं कर्तृत्वमुपादाय विधिशास्त्रं प्रवर्तिष्यते । "कर्ता विज्ञानात्मा पुरुषः" [ प्रश्न० ४। ९ ] इत्येवंजातीयकमपि शास्त्रमनुवादरूपत्वाद्यथाप्राप्तमेवाविद्याकृतं

रत्नप्रभा ।

याविति युक्तम्। करणत्वात् कार्यान्वय्युपादानत्वस्यान्तरङ्गतया चित्संवलितबुद्धेस्ताभ्यामुपादानत्वस्यैव सिद्धेः। एवं चिदभेदाध्यस्तबुद्ध्याख्याहङ्कारस्य कर्तृत्वोपादानत्वेन महावाक्यसम्मतिश्चेति भावः। ननु तक्षा स्वहस्तादिना वास्यादिप्रेरणशक्तत्वात् स्वतः कर्ता । आत्मा तु निरवयवत्वादशक्त इति दृष्टान्तवैषम्यमाशंक्यौपाधिककर्तृत्वांशेन विवक्षितेन साम्यमाह—तक्षदृष्टान्तश्चेति ॥ शास्त्रेणानूद्यमानं कर्तृत्वं स्वाभाविकमेव किं न स्यादित्यत आह—न च स्वाभाविकमिति ॥ उपाध्यभावकाले श्रुतं कर्तृत्वं स्वाभाविकमे-

भामती ।

परमात्मा त्वनवयवः केन मनःप्रभृतीनि व्यापारयेदिति वैषम्यं तक्ष्णो दृष्टान्तेनेत्यत आह—तक्षदृष्टान्तश्चेति । यथा स्वशरीरेणोदासीनस्तक्षा सुखी, वास्यादीनि तु करणानि व्यापारयन् दुःखी, तथा स्वात्मनात्मोदासीनः सुखी, मनःप्रभृतीनि तु करणादीनि व्यापारयन् दुःखीत्येतावतास्य साम्यं न तु सर्वथा । यथात्मा च जीवोऽवयवान्तरानपेक्षः स्वशरीरं व्यापारयत्येवं मनःप्रभृतीनि तु करणान्तराणि व्यापारयतीति प्रमाणसिद्धे नियोगश्रुत्यनुयोगानुपपत्तिः । पूर्वपक्षहेतूननुभाष्य दूषयति—यत्तूक्तमिति । यत्परं हि शास्त्रं स एव शास्त्रार्थः । कर्त्रपेक्षितोपायभावनापरं तन्न कर्तृस्वरूपपरम् । तेन यथालोकसिद्धं कर्तारमपेक्ष्य स्वविषये प्रवर्तमानं न पुंसः स्वाभाविकं कर्तृत्वमवगमयितुमुत्सहते, तस्मात्तत्त्वमसीत्याद्युपदेश-

आनन्दगिरीय—न्यायनिर्णयः ।

कर्तृत्वं चेन्मुक्तावपि तथैव स्यादित्याशंक्याऽऽह—तथेति । तत्र कारणसद्भावायुक्तं कर्तृत्वमिह तदभावान्नेति भावः। यथा कर्तृत्वादिशक्तियुक्तस्य तक्ष्णो वास्यादिप्रेरकत्वेन कर्तृत्वमेवमिहापि स्याद्दृष्टान्तदार्ष्टान्तिकयोस्तुल्यत्वादित्याशंक्याऽऽह—तक्षेति । इतोऽपि विवक्षितांशेन साम्यं न त्वत्यन्तमित्याह—न त्विति । एवं सिद्धान्तमुपपाद्य पूर्वपक्षबीजमनुभाषते—यत्त्विति । शास्त्रार्थवत्त्वमादौ दूषयति—तत्रेति । 'यत्परं शास्त्रं स एव तदर्थः' इत्युपगमात्तस्य च कर्त्रपेक्षितोपायतापरत्वात्कर्तुः स्वरूपपरत्वाभावात्कर्ता लोकसिद्धो न शास्त्रसिद्ध इत्यर्थः । प्रसिद्धस्योद्देश्यत्वात्प्रसिद्धेश्च मानत्वात्प्रामाणिकं कर्तृत्वमित्याशंक्याऽऽह—न चेति । विधिशास्त्रस्य स्वाभाविककर्तृत्वे तात्पर्याभावे फलितमाह- तस्मादिति । श्रुतार्थापत्तिं निरस्यति—कर्तेति ।

कर्तृत्वमनुवदिष्यति । एतेन विहारोपादाने परिहृते ॥ तयोरप्यनुवादरूपत्वात् ॥ ननु सन्ध्ये स्थाने प्रसुप्तेषु करणेषु स्वे शरीरे यथाकामं परिवर्तत इति विहार उपदिश्यमानः केवलस्यात्मनः कर्तृत्वमावहति ॥ तथोपादानेऽपि-"तदेषां प्राणानां विज्ञानेन विज्ञानमादाय" [ बृ० २ । १ । १७ ] इति करणेषु कर्मकरणविभक्ती श्रूयमाणे केवलस्यैवात्मनः कर्तृत्वं गमयत इति ॥ अत्रोच्यते ॥ न तावत्सन्ध्ये स्थानेऽत्यन्तमात्मनः करणविरमणमस्ति । "सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति" इति तत्रापि धीसम्बन्धश्रवणात् । तथा च स्मरन्ति-"इन्द्रियाणामुपरमे मनोऽनुपरतं यदि । सेवते विषयानेव तद्विद्यात्स्वप्नदर्शनम् ॥ १ ॥" इति । "कामादयश्च मनसो वृत्तयः" इति श्रुतिः । ताश्च स्वप्ने दृश्यन्ते । तस्मात्समना एव स्वप्ने विहरति । विहारोऽपि च तत्रत्यो वासनामय एव, न तु पारमार्थिकोऽस्ति । तथा च श्रुतिरिवाकारानुबद्धमेव स्वप्नव्यापारं वर्णयति-"उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवाऽपि भयानि पश्यन्" इति । लौकिका अपि तथैव स्वप्नं कथयन्ति-'आरुरुक्षमिव गिरिशृङ्गम्' 'अद्राक्षमिव वनराजिम्' इति ॥ तथोपादानेपि यद्यपि

रत्नप्रभा ।

वेति शङ्कते-ननु सन्ध्य इति ॥ किञ्च करणैर्विशिष्टस्य कर्तृत्वे तेषां कर्त्रन्तर्भावात्तेष्वपि कर्तृविभक्तिः स्यात् । न चैवमस्ति । ततः केवलात्मनः कर्तृत्वमित्याह-तथेति ॥ स्वप्नविहारे तावदुपाध्यभावोऽसिद्ध इत्याह-न तावत्सन्ध्य इति ॥ विहारस्य मिथ्यात्वात् तत्कर्तृत्वमपि मिथ्येत्याह-विहारोऽपीति ॥ जक्षत् भुञ्जान इव । करणविशिष्टस्य कर्तृत्वे करणेषु कर्तृविभक्तिः स्यात्, न करणविभ-

भामती ।

विरोधादविद्याकृतं तदवतिष्ठते । चोदयति-ननु संध्ये स्थान इति । औपाधिकं हि कर्तृत्वं नोपाध्यपगमे संभवतीति स्वाभाविकमेव युज्यत इत्यर्थः । अपि च यत्रापि करणमस्ति तत्रापि केवलस्यात्मनः कर्तृत्वश्रवणात्स्वाभाविकमेव युक्तमित्याह-तथोपादानेऽपीति । तदेतत् परिहरति-न तावत्संध्य इति । उपाध्यपगमोऽसिद्धोऽन्तःकरणस्योपाधेः संध्येऽप्यवस्थानादित्यर्थः । अपि च स्वप्ने यादृशं ज्ञानं तादृशो विहारोऽपीत्याह-विहारोऽपि च तत्रेति ॥ तथोपादानेऽपीति । यद्यपि कर्तृविभक्तिः केवले

आनन्दगिरीय-न्यायनिर्णयः ।

तदुभयनिरासन्यायेन लिंगद्वयमपि निरस्तमित्याह-एतेनेति । अनुवादरूपत्वात्पारमार्थिककर्तृत्वासाधकत्वादिति शेषः । विहारोपदेशः स्वाभाविकमेव कर्तृत्वं साधयति । करणविरहे श्रुतकर्तृत्वस्य स्वाभाविकत्वध्रौव्यादित्याह-नन्विति । उपादानमपि स्वाभाविकं कर्तृत्वं गमयतीत्याह-तथेति । विशिष्टस्य कर्तृत्वे करणानामपि कर्त्रन्तर्भावात्तेष्वपि कर्तृविभक्तिः स्यान्न चैवमस्ति तेषु कर्मकरणविभक्त्योरेव श्रवणात्तस्मात्केवलस्यैवाऽऽत्मनः कर्तृतेत्यर्थः । परिहरति-अत्रेति । तत्राऽऽदौ विहारोपदेशस्य स्वाभाविककर्तृत्वसाधकत्वं प्रत्याह-न तावदिति । तत्रेति स्वप्नोक्तिः । जाग्रदवस्थायामिवेत्यपेरर्थः । स्वप्नावस्थायामात्मनो मनसः संबन्धे स्मृतिमाह-तथा चेति। सेवते तेनैव मनसा वासनामयान्विषयान्यदीति योजना। स्वप्ने मनःसत्त्वे युक्तिमाह-कामादयश्चेति । तथा च धर्मित्वेन मनोऽपि तत्रास्तीति शेषः । श्रुतिस्मृतियुक्तिसिद्धं निगमयति-तस्मादिति । विहारस्य वास्तवत्वमुपेत्योक्तमिदानीं तदपि नास्ति कुतस्तद्दृशादात्मनो वास्तवकर्तृतेत्याह-विहारोऽपीति । यत्तूपादानादात्मनो वास्तवकर्तृत्वमिति तत्राऽऽह-तथेति।

करणेषु कर्मकरणविभक्तिनिर्देशः । तथापि तत्संयुक्तस्यैवात्मनः कर्तृत्वं द्रष्टव्यम्, केवले कर्तृत्वासम्भवस्य दर्शितत्वात् । भवति च लोकेऽनेकप्रकारा विवक्षा योधा युध्यन्ते योधै राजा युध्यत इति ॥ अपि चास्मिन्नुपादाने करणव्यापारोपरममात्रं विवक्ष्यते, न स्वातन्त्र्यम् । कस्यचिदबुद्धिपूर्वकस्याऽपि स्वापे करणव्यापारोपरमस्य दृष्टत्वात् । यस्त्वयं व्यपदेशो दर्शितः "विज्ञानं यज्ञं तनुते" [ तै० उ० २ । ५ । १ ] इति स बुद्धेरेव कर्तृत्वं प्रापयति । विज्ञानशब्दस्य तत्र प्रसिद्धत्वान्मनोऽनन्तरपाठाच्च । "तस्य श्रद्धैव शिरः" [ तै० उ० २ । ४ ] इति च विज्ञानमयस्याऽऽत्मनः श्रद्धाद्यवयवत्वसंकीर्तनात् । श्रद्धादीनां च बुद्धिधर्मत्वप्रसिद्धेः । "विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते" [ तै० उ० २ । ५ । १ ] इति च वाक्यशेषात् । ज्येष्ठत्वस्य च प्रथमजत्वस्य बुद्धौ

---

रत्नप्रभा ।

क्तिरित्युक्तं प्रत्याह—भवति च लोक इति ॥ कर्तृष्वपि करणविभक्तिर्न विरुध्यते । दृष्टत्वात् । अस्ति च कर्तृप्रयोगः "विज्ञानं यज्ञं तनुते" इत्यादाविति भावः । उपादानस्य सकर्तृकत्वमङ्गीकृत्य केवलात्मनः कर्तृत्वं निरस्तम् । इदानीं तस्याक्रियत्वात् तत्कर्त्रपेक्षेत्याह—अपि चेति । पूर्वं विज्ञानं जीव इत्यङ्गीकृत्य जीवस्य कर्तृत्वे "तनुते" इति श्रुतिरुक्ता । सम्प्रति तया श्रुत्याऽनुपहितात्मनः कर्तृत्वमिति प्राप्तौ, विज्ञानं बुद्धिरेव, तस्या एवात्र कर्तृत्वमुच्यते । तदुपहितात्मनः कर्तृत्वसिद्धये इत्यभिप्रेत्याह—यस्त्वित ॥ "योऽयं विज्ञानमयः" [ बृ० ४ । ३ । ७—४ । ४ । २२ ] इत्यादिश्रुतिषु विज्ञानशब्दस्य बुद्धौ प्रसिद्धत्वादत्र च मनोमयकोशानन्तरं पठितत्वात्, श्रद्धादिलिङ्गाच्च, बुद्धिरेव विज्ञानमित्यर्थः । तत्रैव लिङ्गान्तरमाह—विज्ञानं देवा इति ॥ "महद्यक्षं प्रथमजम्" [ बृ० ५ । ४ । १ ] इत्यादिश्रुतौ हिरण्यगर्भब्रह्मात्मकबुद्धेर्ज्येष्ठत्वोक्तेः—अत्र देवैरिन्द्रियैरुपास्यमानं ज्येष्ठं ब्रह्म विज्ञानं बुद्धिरेवेत्यर्थः । यक्षं

भामती ।

कर्तरि श्रूयते तथापि कर्मकरणोपधानकृतमस्य कर्तृत्वं न शुद्धस्य, न हि परशुसहायश्छेत्ता केवलं छेत्ता भवति । ननु यदि न केवलस्य कर्तृत्वमपि तु करणादिसहितस्यैव, तथा सति करणादिष्वपि कर्तृविभक्तिः स्यात् । न चैतदस्तीत्याह—भवति च लोक इति । करणादिष्वपि कर्तृविभक्तिः कदाचिदस्त्येव विवक्षावशादित्यर्थः । अपि चेयमुपादानश्रुतिः करणव्यापारोपरममात्रपरा न स्वातन्त्र्यपरा कर्तृविभक्तिस्तु भाक्ती । कूलं पिपतिषतीतिवदबुद्धिपूर्वकस्य करणव्यापारोपरमस्य दृष्टत्वादित्याह—अपि चास्मिन्नुपादान इति । यस्त्वयं व्यपदेश इति यत्तदुक्तमस्माभिरभ्युच्चयमात्रमेतदिति तदितः समुत्थितम् ।

आनन्दगिरीय–न्यायनिर्णयः ।

करणसहितस्य कर्तृत्वे करणेऽपि कर्तृविभक्तिः स्यादित्युक्तं प्रत्याह—भवतीति । करणविशिष्टस्योपादानकर्तृत्वमुपेत्योक्तं तदपि नास्तीत्याह—अपि चेति । करणव्यापारोपरमस्य बुद्धिपूर्वकत्वात्तस्मिन्निष्टे तत्राऽऽत्मनः स्वातन्त्र्यमपीष्टमेवेत्याशंक्याऽऽह—अबुद्धीति । व्यपदेशाच्च क्रियायामित्युक्तमनूद्य प्रत्याह—यस्त्विति । बुद्धौ विज्ञानशब्दस्य प्रसिद्धत्वं 'विज्ञानेन विज्ञानमादाय' इत्यादौ द्रष्टव्यम् । मनोमयानन्तरं विज्ञानमयोक्तेश्च विज्ञानशब्दस्य बुद्ध्यर्थत्वं संनिधेरित्याह—मनोन्तरेति । तस्य तदर्थत्वे हेत्वन्तरमाह—तस्येति । श्रद्धावयवत्वेऽपि कुतो विज्ञानमयस्य बुद्ध्यव्यतिरेकस्तत्राऽऽह—श्रद्धादीनां चेति । मन्त्रशेषालोचनायामपि विज्ञानशब्दस्य बुद्ध्यर्थतेत्याह—विज्ञानमिति । इन्द्रियाणि देवाः । तथाऽपि कथं बुद्धिसिद्धिस्तत्राऽऽह—ज्येष्ठत्वस्येति । 'महद्यक्षं प्रथमजं वेद यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' इति बुद्धेरेव हिरण्यगर्भाभेदेन

**प्रसिद्धत्वात् । "स एष वाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञः" इति च श्रुत्यन्तरे यज्ञस्य वाग्बुद्धिसाध्यत्वाऽवधारणात् । न च बुद्धेः शक्तिविपर्ययः करणानां कर्तृत्वाभ्युपगमे भवति । सर्वकारकाणामेव स्वव्यापारेषु कर्तृत्वस्यावश्यंभावित्वात् । उपलब्ध्यपेक्षं त्वेषां करणानां करणत्वम् । सा चात्मनः । न च तस्यामप्यस्य कर्तृत्वमस्ति । नित्योपलब्धिस्वरूपत्वात् । अहंकारपूर्वकमपि कर्तृत्वं नोपलब्धुर्भवितुमर्हति ।**

---

रत्नप्रभा ।

पूज्यम् । किंच श्रुत्यन्तरे यज्ञस्य बुद्धिकार्यत्वोक्तेः, अत्रापि यज्ञकर्तृ विज्ञानं बुद्धिरित्याह—**स एष इति** ॥ चित्तेन ध्यात्वा वाचा मन्त्रोक्त्या यज्ञो जायते । ततश्चित्तस्य वाचः पूर्वोत्तरभावः **यज्ञ** इत्यर्थः । यच्चोक्तं बुद्धेः कर्तृत्वे शक्तिवैपरीत्यप्रसङ्ग इति । तन्न, विक्लिद्यन्ते तण्डुलाः, ज्वलन्ति काष्ठानि, बिभर्ति स्थालीति स्वस्वव्यापारेषु सर्वकारकाणां कर्तृत्वस्वीकारादित्याह—**न चेति** ॥ तर्हि बुद्ध्यादीनां कर्तृत्वे करणत्ववार्ता तेषु न स्यादित्यत आह—**उपलब्धीति** ॥ यथा काष्ठानां स्वव्यापारे कर्तृत्वेऽपि पाकापेक्षया करणत्वं, तथा बुद्ध्यादीनामध्यवसायसङ्कल्पादिक्रियाकर्तृत्वेऽप्युपलब्ध्यपेक्षया करणत्वमित्यर्थः । ननु तर्ह्युपलब्धिः कस्य व्यापार इत्यत आह—**सा चेति** ॥ तर्हि तस्यामात्मा केवलः कर्ता स्यात् । यस्य यो व्यापारः स तस्य कर्तेति स्थितिरित्यत आह—**न चेति** ॥ उपलब्धेः नित्यत्वे बुद्ध्यादीनां कथं करणत्वमुक्तमिति चेद् । उच्यते । अखण्डसाक्षिचैतन्यं बुद्धिवृत्तिभिर्मिलं सद्विषयावच्छिन्नत्वेन जायते । तथा च विषयावच्छिन्नचैतन्यस्योपलब्धौ बुद्ध्यादीनां करणत्वम् । बुद्ध्याद्युपहितात्मनः कर्तृत्वं, न केवलस्य । न च बुद्धेरेव तत्कर्तृत्वम् । चैतन्यस्य व्यापारत्वायोगादिति भावः । यच्चोक्तं बुद्धेः कर्तृत्वे स एवाहंधीगम्यो जीव इति, तस्य करणान्तरं कल्पनीयम् । तथा च नाममात्रे विवाद इति तत्र केवलात्मनः कर्तृत्वमुक्तमिति भ्रान्तिं निरस्यति—**अहंकारेति** ॥ सांख्यनिरासार्थं बुद्ध्य-

भामती ।

**सर्वकारकाणामेवेति** । विक्लिद्यन्ति तण्डुला ज्वलन्ति काष्ठानि बिभर्ति स्थालीति हि स्वव्यापारे सर्वेषां कर्तृत्वं, तत्किं बुद्ध्यादीनां कर्तृत्वमेव न करणत्वमित्यत आह—**उपलब्ध्यपेक्षं त्वेषां करणत्वम्** । नन्वेवं सति तस्यामेवात्मनः स्वाभाविकं कर्तृत्वमस्त्वित्यत आह—**न च तस्याम्** उपलब्धावप्यस्य स्वाभाविककर्तृत्वमस्ति कस्मात् **नित्योपलब्धिस्वरूपत्वात्** आत्मनः । न हि नित्ये स्वभावे चास्ति भावस्य व्यापार इत्यर्थः । तदेवं नास्योपलब्धौ स्वाभाविकं कर्तृत्वमस्तीत्युक्तम् । नापि बुद्ध्यादेरुपलब्धिकर्तृत्वमात्मन्यध्यस्तं यथा तद्गतमध्यवसायादिकर्तृत्वमित्याह—**अहंकारपूर्वकमपि कर्तृत्वं नोपलब्धुर्भ-**

आनन्दगिरीय—न्यायनिर्णयः ।

ज्येष्ठत्वोक्तेर्वाक्यशेषे बुद्धिसिद्धिरित्यर्थः । किंच, श्रुत्यन्तरे यज्ञस्य बुद्धिसाध्यत्वसिद्धेर्यज्ञकर्तुर्विज्ञानं बुद्धिरेवेत्याह—**स एष इति** । चित्तेन ध्यात्वा वाचा मन्त्रोक्त्या यज्ञो जायते तेन चित्तस्य वाचः पूर्वोत्तरभावो यज्ञ इति यज्ञकर्तुर्बुद्धित्वसिद्धेस्तत्सामान्यादत्रापि बुद्धिरेव विज्ञानमित्यर्थः । 'न चेन्निर्देशविपर्ययः' इत्युक्तं 'शक्तिविपर्ययात्' इत्युक्तेन सह दूषयति—**न चेति** । विक्लिद्यन्ति तण्डुलाः । ज्वलन्ति काष्ठानि । बिभर्ति स्थालीति कारकान्तराणामपि स्वव्यापारेषु कर्तृत्वस्वीकारादित्याह—**सर्वेति** । तर्हि बुद्ध्यादीनां कर्तृत्वमेव न करणत्वं नेत्याह—**उपलब्धेति** । तत्रापि बुद्धेरेव कर्तृत्वमित्याशङ्क्योक्तम्—**सा चेति** । तर्हि केवलस्याऽऽत्मनस्तां प्रति कर्तृत्वं नेत्याह—**न चेति** । न चोपलब्धेर्नित्यत्वे कुतो बुद्धेस्तत्र करणतेति वाच्यं विषयोपरक्ततया तस्या जन्यत्वात्तत्र करणत्वसिद्धिरिति भावः । यत्तु बुद्धेः कर्तृत्वे कर्तुरहमित्युपलम्य प्रवृत्तिदृष्टेरुपलब्धौ करणान्तरस्यान्वेष्यत्वाच्च केवलस्यैवाऽऽत्मनः कर्तृत्वमिति तत्राऽऽह—**अहंकारेति** ।

१०५

**अहंकारस्याप्युपलभ्यमानत्वात् । न चैवं सति करणान्तरकल्पनाप्रसङ्गः । बुद्धेः करणत्वाभ्युपगमात् । समाध्यभावस्तु शास्त्रार्थवत्त्वेनैव परिहृतः । यथाप्राप्तमेव कर्तृत्वमुपादाय समाधिविधानात् ॥ तस्मात्कर्तृत्वमप्यात्मन उपाधिनिमित्तमेवेति स्थितम् ॥४०॥ इति तक्षाधिकरणम् ॥ १५ ॥**

## परात्तु तच्छ्रुतेः ॥ ४१ ॥ ( १६ ) ॥

रत्नप्रभा ।

भेदेनाध्यस्तचिदात्मकाहङ्कारगतं कर्तृत्वं यदुक्तं, तदहंधीगम्यस्य बुद्धिविशिष्टात्मन एव, न केवलस्य साक्षिणो भवितुमर्हति । दृश्यधर्मस्य साक्षिस्वभावत्वायोगात् । एवं विशिष्टाऽत्मनः कर्तृत्वे विशेषणीभूताया जडबुद्धेरेव करणत्वोपपत्तेर्न करणान्तरकल्पनाप्रसङ्गः । अध्यासं विना केवलबुद्धिकर्तृत्ववादिनस्तु करणान्तरप्रसङ्गो दुर्वार इत्यर्थः । एवं शास्त्रार्थवत्त्वादिहेतूनामात्मनः कर्तृत्वमात्रसाधकत्वेऽपि स्वाभाविककर्तृत्वसाधनसामर्थ्याभावादध्यस्तमेव कर्तृत्वं विध्यादिकर्तृत्वश्रुतीनामुपजीव्यम् । तस्मादसङ्गत्वकर्तृत्वश्रुतीनामविरोध इति सिद्धम्॥४०॥**परात्तु तच्छ्रुतेः** ॥ यथा स्फटिके लौहित्याध्यासे लोहितद्रव्यं कारणम् । तेनायं स्फटिको लोहित इत्यनुभवात् । तथा कामादिपरिणामिबुद्धिरात्मनि कर्तृत्वाद्यध्यासे कारणमित्यु-

भामती ।

**वितुमर्हति** । कुतः । **अहंकारस्याप्युपलभ्यमानत्वात्** । न हि शरीरादि यस्यां क्रियायां गम्यं तस्यामेव गन्तृ भवति । एतदुक्तं भवति—यदि बुद्धिरुपलब्ध्री भवेत् ततस्तस्या उपलब्धृत्वमात्मन्यध्यवस्येत । न चैतदस्ति । तस्या जडत्वेनोपलभ्यमानतयोपलब्धिकर्तृत्वानुपपत्तेः । यदा चोपलब्धौ बुद्धेरकर्तृत्वं तदा यदुक्तं बुद्धेरुपलब्धृत्वे करणान्तरं कल्पनीयं, तथा च नाममात्रे विसंवाद इति तन्न भवतीत्याह—**न चैवं सति करणान्तरकल्पना** बुद्धेरुपलब्धृत्वाभावात् तत्किमिदानीमकरणं बुद्धिरुपलब्धावात्मा चानुपलब्धेत्यत आह—**बुद्धेः करणत्वाभ्युपगमात्** । अयमभिसंधिः—चैतन्यमुपलब्धिरात्मस्वभावो नित्य इति न तत्रात्मनः कर्तृत्वं, नापि बुद्धेः करणत्वं, किंतु चैतन्यमेव विषयावच्छिन्नं वृत्तिरिति चोपलब्धिरिति चाख्यायते । तस्य तु तत्तद्विषयावच्छेदे वृत्तौ बुद्ध्यादीनां करणत्वमात्मनश्च तदुपधानेनाहंकारपूर्वकं कर्तृत्वं युज्यत इति ॥ ४० ॥ ( १९ ) ॥ **परात्तु तच्छ्रुतेः** । यदेतज्जीवानामौपाधिकं कर्तृत्वं तत्प्रवर्तनालक्षणेषु रागादिषु सत्सु नेश्वरमपरं प्रवर्तकं कल्पयितुमर्हति, अतिप्रसङ्गात् । न चेश्वरो द्वेष-

आनन्दगिरीय—न्यायनिर्णयः ।

सत्यमहंकारपूर्वकं कर्तृत्वं तथाऽपि न तदुपलब्धुः साक्षिणोऽस्तीत्यत्र हेतुमाह—**अहंकारस्येति** । अहंकारवत्तद्विशिष्टस्यैव चेतनस्य कर्तृत्वं साक्षिणोपलभ्यते तस्मान्न केवलस्याऽऽत्मनः कर्तृत्वम् । विशिष्टस्य च कर्तृत्वे ज्ञातुरेव कर्तृत्वं कर्तुरेव भोक्तृत्वमित्येतदपि सिध्यतीत्यर्थः । उपलब्धौ बुद्धेरकर्तृत्वे बुद्धेरुपलब्धृत्वे करणान्तरं कल्प्यमित्यपि प्रत्युक्तमित्याह—**न चेति**। बुद्धेरुपलब्धृत्वाभावे सतीति यावत् । किंच, बुद्धेरुपलब्धौ करणत्वमात्मनश्च कर्तृत्वं नेष्टं तदाऽऽत्मा बुद्ध्या जानातीत्ययुक्तं नेत्याह—**बुद्धेरिति** । आत्मस्वरूपोपलब्धौ नित्यत्वात्कर्त्राद्यभावेऽपि तस्यास्तत्तदर्थावच्छेदे बुद्ध्यादीनां करणत्वादात्मनश्च तदुपाधिनाऽहंकारपूर्वकं कर्तृत्वादविरुद्धा प्रसिद्धिरित्यर्थः । यत्तु समाध्यभावाच्चेति तत्राऽऽह—**समाधीति** । उक्तहेतूनामात्मनि स्वाभाविककर्तृत्वासाधकत्वे सिद्धे विध्यादिश्रुतीनां कल्पितकर्तृत्वोपजीवित्वादसङ्गश्रुतीनां च वास्तवासङ्गत्ववादित्वान्मिथोविरोधाभावान्नित्यशुद्धे ब्रह्मणि समन्वयसिद्धिरित्युपसंहरति—**तस्मादिति** ॥ ॥ ४० ॥ ( १९ ) ॥ औपाधिकमपि पूर्वोक्तं कर्तृत्वमीश्वरायत्तमित्याह—**परात्त्विति** । विषयमनूद्य जीवस्य

यदिदमविद्यावस्थायामुपाधिनिबन्धनं कर्तृत्वं जीवस्याभिहितम्। तत् किमनपेक्ष्येश्वरं भवति आहोस्विद् ईश्वरापेक्षमिति भवति विचारणा। तत्र प्राप्तं तावत्–नेश्वरमपेक्षते जीवः कर्तृत्वे इति॥ कस्माद्॥ अपेक्षाप्रयोजनाभावात्। अयं हि जीवः स्वयमेव रागद्वेषादिदोषप्रयुक्तः कारकान्तरसामग्रीसम्पन्नः कर्तृत्वमनुभवितुं शक्नोति। तस्य किमीश्वरः करिष्यति। न च लोके प्रसिद्धिरस्ति कृष्यादिकासु क्रियासु–अनडुहादिवदीश्वरोऽपरोऽपेक्षितव्य इति। क्लेशात्मकेन च कर्तृत्वेन जन्तून् संसृजत ईश्वरस्य नैर्घृण्यं प्रसज्येत। विषमफलं चैषां कर्तृत्वं विदधतो वैषम्यम्॥ "नतु वैषम्यनैर्घृण्ये न सापेक्षत्वाद्" [ब्र० सू०

रत्नप्रभा।

क्तम्। तदप्यस्तं कर्तृत्वमुपजीव्य जीवस्य कारकसम्पन्नत्वादीश्वरस्य कारयितृत्वश्रुतेश्च संशयमाह–यदिदमिति॥ अत्र "एष ह्येव" [कौषी० ३।८] इत्यादिश्रुतीनां कर्तृत्वस्वातन्त्र्यद्योतकविध्यादिश्रुतिभिर्विरोधसमाधानात् पादसंगतिः। कर्ममीमांसकमतेन पूर्वपक्षयति–तत्रेत्यादिना॥ बुद्ध्यादिकारकसम्पत्तावीश्वरव्यतिरेके कर्तृत्वव्यतिरेकानुपलब्धेर्नेश्वरः प्रयोजकः। किञ्च प्रयोजकत्वे नैर्घृण्यादिप्रसङ्ग इत्याह–क्लेशात्मकेन चेति॥ दत्तोत्तरमिदं चोद्यमिति शङ्कते–नन्विति॥ पूर्वं जीवस्य धर्माधर्मवत्त्वं सिद्धवत्कृत्य तत्सापेक्षत्वाद् विषमजगत्कर्तृत्वमविरुद्धमित्युक्तम्। सम्प्रति ईश्वराधीनत्वे जीवस्य कर्तृत्वे सिद्धे धर्माधर्मवत्त्वसिद्धिः, तद्वत्त्वसिद्धौ तत्सापेक्षकारयितृत्वसिद्धिः ईश्वरस्य, कारयितृत्वे सिद्धे जीवस्य

भामती।

पक्षपातरहितो जीवान् साध्वसाधुनि कर्मणि प्रवर्तयितुमर्हति, येन धर्माधर्मापेक्षया जगद्वैचित्र्यमापद्येत। स हि स्वतन्त्रः कारुणिको धर्म एव जन्तून् प्रवर्तयेन्नाधर्मे ततश्च तत्प्रेरिता जन्तवः सर्वे धार्मिका एवेति सुखिन एव स्युर्न दुःखिनः। स्वतन्त्रास्तु रागादिप्रयुक्ताः प्रवर्तमाना धर्माधर्मप्रचयवन्तो वैचित्र्यमनुभवन्तीति युक्तम्। एवं च विधिनिषेधयोरर्थवत्त्वमितरथा तु सर्वथा जीवा अस्वतन्त्रा इतीश्वरेणैव प्रवर्त्यन्त इति कृतं विधिनिषेधाभ्याम्। न हि बलवदनिलसलिलौघनुद्यमानं प्रत्युपदेशोऽर्थवान्। तस्मात् 'एष ह्येव साधु कर्म कारयति' इत्यादयः श्रुतयः समस्तविधिनिषेधश्रुतिविरोधाल्लोकविरोधाच्चैश्वर्यप्रशंसापरतया

आनन्दगिरीय–न्यायनिर्णयः।

करणादिपौष्कल्यादीश्वरस्य कारयितृत्वश्रुतेश्च संशयमाह–यदिति। कर्ममीमांसकपक्षं गृह्णाति–तत्रेति। 'अत्र चैष ह्येव' इत्यादिश्रुतीनां विधिश्रुत्यादिभिर्विरोधसमाधानेन सर्वनियामके ब्रह्मणि समन्वयसमाधानात्पादादिसंगतयः। पूर्वपक्षे दर्शितश्रुतीनां मिथोविरोधादप्रामाण्यादुक्ते ब्रह्मणि समन्वयासिद्धिः। सिद्धान्ते तासामविरोधेन प्रामाण्यात्तत्र तत्सिद्धिः। शास्त्रादीश्वरस्यापेक्षणीयतेति शंकते–कस्मादिति। कर्तृत्वसामग्र्यामीश्वरोऽन्तर्भूतो न वेति विकल्प्य द्वितीयं निरस्यति—अपेक्षेति। आद्यं प्रत्याह–अयं हीति। कारकान्तराणि तत्तत्कार्यनिर्माणकारणानि करणादीनि तेषां सामग्री संपूर्णता तया संपन्नः सहितः सन्निति यावत्। एवं कर्तृत्वे संभवति नेश्वरापेक्षा केवलव्यतिरेकाभावादित्याह–तस्येति। मा भूदीश्वरस्य शास्त्रवशादपेक्ष्यत्वं मानान्तरात्तु भविष्यति तत्राऽऽह–न चेति। किंचेश्वरो द्वेषपक्षपातरहितः साध्वसाधुनोर्न कर्मणोर्जीवान्प्रवर्तयेत्तस्य स्वतन्त्रस्य कारुणिकत्वात्कर्मणि साधुन्येव प्रवर्तकत्वादतो विचित्रसर्गासिद्धिरित्याह—क्लेशेति। उक्तोत्तरत्वादनवकाशं चोद्यमिति शङ्कते–नन्विति। तत्रेश्वरस्य जगत्कारणत्वक्षतदोषाभावश्चिन्तितोऽत्र तु जीवस्य कर्तृत्वेऽपीश्वरस्य प्रयोजकत्वक्षतदोषाभावं सापेक्षत्वमाक्षिप्य

२।१।३४ ] इत्युक्तम् । सत्यमुक्तं सति त्वीश्वरस्य सापेक्षत्वसम्भवे । सापेक्षत्वं च नेश्वरस्य सम्भवति सतोर्जन्तूनां धर्माधर्मयोः । तयोश्च सद्भावः सति जीवस्य कर्तृत्वे । तदेव चेत्कर्तृत्वमीश्वरापेक्षं स्यात्, किंविषयमीश्वरस्य सापेक्षत्वमुच्येत । अकृताभ्यागमश्चैवं जीवस्य प्रसज्येत । तस्मात्स्वत एव जीवस्य कर्तृत्वमिति । एतां प्राप्तिं तुशब्देन व्यावर्त्य प्रतिजानीते—परादिति ॥ अविद्याऽवस्थायां कार्यकारणसंघाताऽविवेकदर्शिनो जीवस्याऽविद्यातिमिरान्धस्य सतः परस्मादात्मनः कर्माध्यक्षात्सर्वभूताधिवासात्साक्षिणश्चेतयितुरीश्वरात्तदनुज्ञया कर्तृत्वभोक्तृत्वलक्षणस्य संसारस्य सिद्धिः । तदनुग्रहहेतुकेनैव च विज्ञानेन मोक्षस्य सिद्धिर्भवितुमर्हति ॥ कुतः ॥ "तच्छ्रुतेः" । यद्यपि रागादिदोष-

रत्नप्रभा ।

कर्तृत्वसिद्धिरिति चक्रकापत्तेः कर्मसापेक्षत्वं न सम्भवतीत्युच्यत इत्याह—**सत्यमिति** ॥ अस्तु कर्मानपेक्षस्य प्रवर्तकत्वं तत्राह—**अकृतेति** ॥ अनपेक्षस्य प्रवर्तकत्वे धर्मवतो नरान् दुःखेन, अधर्मवतः सुखेन, योजयेत् । कारुणिकत्वे वा सर्वे सुखेन एकरूपाः स्युरिति जगद्वैचित्र्यं विध्यादिशास्त्रं च न स्यात् । तस्माद्विध्यादिशास्त्रार्थवत्त्वाय रागद्वेषायत्तं स्वत एव जीवस्य कर्तृत्वं वाच्यम् । तथा च कारयितृत्वश्रुतिविरोधः । ईश्वरस्ताविका वा सा श्रुतिरिति प्राप्ते सिद्धान्तयति—**एतामिति** ॥ यथा चन्दनादिसा-

भामती ।

नेया इति प्राप्तेऽभिधीयते । 'एष ह्येव साधु कर्म कारयति' इत्यादयस्तावच्छ्रुतयः सर्वव्यापारेषु जन्तूनामीश्वरतन्त्रतामाहुः । तदसति प्रतिबन्धके न प्रशंसापरतया व्याख्यातुमुचितम् । न च श्रुतिसिद्धस्य कल्पनीयता, येन प्रवर्तकेषु रागादिषु सत्सु तत्कल्पना विरुध्येत । न चेश्वरतन्त्रत्वे धर्म एव जन्तूनां

आनन्दगिरीय—न्यायनिर्णयः ।

चिन्तयतीत्यर्थः । भेदमुपेत्याऽऽह—**सत्यमिति** । ईश्वरस्य कारयितृत्वे जीवस्य कर्तृत्वं ततस्तदधीनकर्मापेक्षमीश्वरस्य कारयितृत्वमिति चक्रकादिदोषप्रसङ्गान्नेश्वरस्य सापेक्षत्वादित्यर्थः । ईश्वरायत्ते जीवस्य कर्तृत्वे पूर्वपूर्वकर्मवासनासापेक्षमुत्तरोत्तरकर्तृत्वमित्यपि न सिध्यतीत्याह—**अकृतेति** । जीवस्येश्वरापेक्षाभावे फलितमाह—**तस्मादिति** । स्वतश्चेदस्य कर्तृत्वं विध्यादिश्रुतिसिद्धं तदा 'एष ह्येव' इत्यादिश्रुतिविरोधे समन्वयासिद्धिरित्युपसंहर्तुमितिशब्दः । सिद्धान्तयति—**एतामिति** । प्रतिज्ञां विवृणोति—**अविद्येति** । जीवस्येश्वरादेव संसारस्य मोक्षस्य च सिद्धिर्भवितुमर्हतीति संबन्धः । तस्य परस्मादत्यन्तान्यत्वं निरस्यति—**अविद्येति** । सैव तिमिरं विद्याप्रकाशमन्तरेणानिराकरणात्तेनान्धः स्वरूपज्ञानहीनश्चिदात्मा तस्यावच्छिन्नस्वभावस्य देहादिसमुदायविषयाविवेकदर्शनं विभ्रमस्तच्छीलस्य विक्षिप्तस्य जीवस्य सतोऽविद्यादशायां संसारस्य पृथक्त्वेन कल्पितादीश्वरात्सिद्धिरिति यावत् । तस्य वास्तवपररूपमाह—**परस्मादिति** । सर्वविषयज्ञानाभावे कथं कारयितृत्वं तत्राऽऽह—**कर्मेति** । तथाऽपि सर्वत्र संनिध्यभावे कारयितृत्वासिद्धिस्तत्राऽऽह—**सर्वेति** । तथाऽपि तज्ज्ञानाभावे तदसिद्धिस्तत्राऽऽह—**साक्षिण इति** । तदुपपादयति—**चेतयितुरिति** । ईश्वरस्य कारयितृत्वे स्वगतव्यापारवत्त्वमाशंक्योक्तम्—**तदिति** । संसारस्यानर्थत्वेन हेयत्वार्थं विशिनष्टि—**कर्तृत्वेति** । कथं बन्धहेतुरीश्वरस्तद्विरुद्धमोक्षहेतुः स्यात्तत्राऽऽह—**तदनुग्रहेति** । जीवस्य दोषप्रयुक्तत्वात्कारकान्तरसामग्रीमत्त्वादीश्वरस्य कृष्यादिषु कारणत्वाप्रसिद्धेश्च न तदपेक्षं कर्तृत्वमित्याह—**कुत इति** । सौत्रं हेतुमवतार्य व्याचष्टे—**तदिति** । केवलव्यतिरेकाभावेऽपि श्रुतेरीश्वरस्य सुखादौ धर्मा-

प्रयुक्तः सामग्रीसम्पन्नश्च जीवः । यद्यपि च लोके कृष्यादिषु कर्मसु नेश्वरकारणत्वं प्रसिद्धम् । तथापि सर्वास्वेव प्रवृत्तिषु ईश्वरो हेतुकर्तेति श्रुतेरवसीयते । तथाहि श्रुतिर्भवति "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते" [ कौषी० ३ । ८] इति "य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति" इति चैवंजातीयका ॥ ४१ ॥ नन्वेवमीश्वरस्य कारयितृत्वे सति वैषम्यनैर्घृण्ये स्याताम्, अकृताभ्यागमश्च जीवस्येति ॥ नेत्युच्यते—

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥

तुशब्दश्चोदितदोषव्यावर्तनार्थः कृतो यः प्रयत्नो जीवस्य धर्माधर्मलक्षणः तदपेक्ष एवैनमीश्वरः कारयति । ततश्चैते चोदिता दोषा न प्रसज्यन्ते । जीवकृतधर्माधर्मवैषम्यापेक्ष एव तत्तत्फलानि विषमं विभजते पर्जन्यवदीश्वरो निमित्तत्वमात्रेण । यथा—लोके नानाविधानां गुच्छगुल्मादीनां व्रीहियवादीनां चाऽसाधारणेभ्यः स्वस्वबीजेभ्यो जायमानानां साधारणं निमित्तं भवति पर्जन्यः । न ह्यसति पर्जन्ये रसपुष्पफलपलाशादिवैषम्यं तेषां जायते । नाप्यसत्सु स्वस्वबीजेषु । एवं

---

रत्नप्रभा ।

मग्र्यां सत्यां धर्मव्यतिरेके सुखव्यतिरेकग्रहाभावेऽपि "पुण्यो वै पुण्येन कर्मणा भवति" [ बृ० ३ । २ । १३ ] इत्यादिशास्त्रप्रामाण्यादेव धर्मस्य हेतुत्वसिद्धिः । एवमीश्वरस्याऽपि शास्त्रबलात् कारयितृत्वसिद्धिरिति भावः ॥ ४१ ॥ धर्माधर्माभ्यामेव फलवैषम्यसिद्धेरलमीश्वरेणेत्याशंक्य बीजैरेवांकुरवैषम्यसिद्धेः पर्जन्यवैयर्थ्यं स्यात् । यदि विशेषहेतूनां साधारणहेत्वपेक्षत्वान्न वैयर्थ्यं, तर्हि ईश्वरस्याऽपि साधारणहेतुत्वान्न वैयर्थ्यमित्याह—पर्जन्यवदिति ॥ दृष्टान्तं विवृणोति—यथेति ॥ अतिदीर्घवल्लीग्रन्थयो गुच्छाः, पुष्पस्तवका वा, गुल्मास्तु—ह्रस्ववल्लय इति भेदः । किमीश्वरस्य कारयितृत्वे जीवस्य कर्तृत्वं न स्यादित्या-

भामती ।

प्रवृत्तेः सुखित्वमेव न वैचित्र्यमिति युक्तम् । यद्यप्ययमीश्वरो वीतरागस्तथापि पूर्वपूर्वजन्तुकर्मापेक्षया जन्तून् धर्माधर्मयोः प्रवर्तयन् न द्वेषपक्षपाताभ्यां विषमः, नापि निर्घृणः । न च कर्मप्रचयस्यादिरस्त्यनादित्वात्संसारस्य न चेश्वरतन्त्रस्य कृतं विधिनिषेधाभ्यामिति सांप्रतम् । न हीश्वरः प्रबलतरपवन इव जन्तून् प्रवर्तयत्यपि तु तच्चैतन्यमनुरुध्यमानो रागाद्युपहारमुखेन । एवं चेष्टानिष्टप्राप्तिपरिहारार्थिनो विधिनिषेधावर्थ-

आनन्दगिरीय-न्यायनिर्णयः ।

देरिव कारणत्वं केवलव्यतिरेकस्य दृष्टकारणक्लृप्तिविषयत्वादागमस्यादृष्टकारणकल्पकत्वेन व्यवस्थानादिति भावः । तामेव श्रुतिमाह—तथाहीति ॥ ४१ ॥ चोद्यान्तरमनुद्रवति—नन्विति । उत्तरत्वेन सूत्रमवतारयति—नेतीति । तदक्षराणि व्याकरोति—तुशब्द इति । ईश्वरस्य प्रवर्त्यादृष्टापेक्षया प्रवर्तकत्वे फलितमाह—अतश्चेति । दोषाणामप्रसङ्गमेव प्रकटयति—जीवेति । धर्माधर्माभ्यामेव फलवैषम्यसिद्धेरलमीश्वरेणेत्याशंक्य पर्जन्यवदित्युक्तं तद्विवृणोति—यथेति । अतिदीर्घा वल्ल्यो गुच्छाः ह्रस्वा गुल्मा इति भेदः । बीजेभ्यो जायमानव्रीह्यादीनां कृतं पर्जन्येनेत्याशंक्याऽऽह—न हीति । कृतं तर्हि बीजैरित्याशंक्याऽऽह—नापीति । दार्ष्टान्तिकं विवृणोति—एवमिति । यदि जीवेन कृतः स्वेच्छया कश्चित्प्रयत्न-

जीवकृतप्रयत्नापेक्ष ईश्वरस्तेषां शुभाशुभं विदध्यादिति श्लिष्यते ॥ ननु कृतप्रयत्नापेक्षत्वमेव जीवस्य परायत्ते कर्तृत्वे नोपपद्यते ॥ नैष दोषः ॥ परायत्तेऽपि हि कर्तृत्वे करोत्येव जीवः । कुर्वन्तं हि तमीश्वरः कारयति ॥ अपि च पूर्वप्रयत्नमपेक्ष्येदानीं कारयति, पूर्वतरं च प्रयत्नमपेक्ष्य पूर्वमकारयदित्यनादित्वात्संसारस्येत्यनवद्यम् । कथं पुनरवगम्यते—कृतप्रयत्नापेक्ष ईश्वर इति ॥ "विहितप्रतिषिद्धावैयर्थ्यादिभ्यः" इत्याह ॥ एवं हि "स्वर्गकामो यजेत" "ब्राह्मणो न हन्तव्यः" इत्येवंजातीयकस्य विहितस्य प्रतिषिद्धस्य चाऽवैयर्थ्यं भवति । अन्यथा तदनर्थकं स्यात् । ईश्वर एव विधिप्रतिषेधयोर्नियुज्येत । अत्यन्तपरतन्त्रत्वाज्जीवस्य ॥ तथा विहितकारिणमप्यनर्थेन संसृजेत् । प्रतिषिद्धकारिणम-

रत्नप्रभा ।

पाद्यते उत चक्रकापत्तिर्वा नाद्य इत्याह—नैष दोष इति ॥ अध्यापकाधीनस्य वटोर्मुख्याध्ययनकर्तृत्वदर्शनादिति भावः । चक्रकं निरस्यति—अपि चेति ॥ अनवद्यं जीवस्य कर्तृत्वम् । ईश्वरस्य कारयितृत्वं चेति शेषः । ईश्वरस्य सापेक्षत्वे विध्यादिशास्त्रप्रामाण्यान्यथानुपपत्तिं प्रमाणयति—कथमित्यादिना ॥ एवं सापेक्षत्वे सत्यवैयर्थ्यं भवति । अन्यथा अनपेक्षत्वे । वैयर्थ्यं प्रपञ्चयति—ईश्वर इति ॥ तयोः स्थाने स एव नियुज्येत अभिषिच्येत । तयोः कार्यं स एव कुर्यादिति यावत् । तथा च जीवस्य निरपेक्षेश्वरपरतन्त्रत्वाद्विध्यादिशास्त्रमकिञ्चित्करमनर्थकं स्यादिति सम्बन्धः ॥ आदिशब्दार्थमाह—तथेति ॥

भामती ।

वन्तौ भवतः तदनेनाभिसंधिनोक्तम्—परायत्तेऽपि हि कर्तृत्वे करोत्येव जीव इति । तस्माद्विधिनिषेधशास्त्राविरोधाल्लोकस्य स्थूलदर्शित्वात् 'एष ह्येव साधु कर्म कारयति' इत्यादिश्रुतेः । 'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥' इति स्मृतेश्चेश्वरतन्त्राणामेव जन्तूनां कर्तृत्वं, न तु स्वतन्त्राणामिति सिद्धम् । ईश्वर एव विधिनिषेधयोः स्थाने नियुज्येत यद्विधिनिषेधयोः फलं तदीश्वरेण तत्प्रतिपादितधर्माधर्मनिरपेक्षेण कृतमिति विधिनिषेधयोरानर्थक्यम् । न केवलमानर्थक्यं विपरीतं चापद्येत इत्याह—तथा विहितकारिणमिति । पूर्वोक्तश्च दोषः कृतनाशाकृताभ्यागमः

आनन्दगिरीय—न्यायनिर्णयः ।

स्तदा तदपेक्षः सन्नीश्वरो विषमं कर्तृत्वं कुर्यान्न तु तदस्ति चक्रकापत्तेरिति शङ्कते—नन्विति । किमीश्वरस्य कारयितृत्वे जीवस्य कर्तृत्वमेव नेत्यापाद्यते किंवा तस्य कर्तृत्वे कारयितृत्वमीश्वरस्य नेति तत्राऽऽद्यं प्रत्याह—नेति । न हि गुर्वधीनो माणवको नाध्ययनस्य कर्तेति भावः । द्वितीयं दूषयति—कुर्वन्तं हीति । अध्ययनशक्तं प्रत्येवाध्यापकत्वोपलम्भात्क्रियाशक्तिमन्तं जीवं प्रत्यपि कारयितृत्वमीश्वरस्य युक्तमिति भावः । चक्रकापत्तिं निरस्यति—अपि चेति । अनवद्यं जीवस्य कर्तृत्वं तत्कृतधर्माधर्मापेक्षया च कारयितृत्वमीश्वरस्येति शेषः । तस्य सापेक्षत्वे मानं पृच्छति—कथमिति । तत्र मानोक्तिपरं सूत्रावयवमादत्ते—विहितेति । ईश्वरस्य सापेक्षत्वे विहितस्य निषिद्धस्य चावैयर्थ्यं तस्य चेन्नैरपेक्ष्यं तदा तयोरानर्थक्यमतस्तयोरर्थवत्त्वानुपपत्तिरीश्वरस्य सापेक्षत्वसाधिकेत्याह—एवमिति । किमितीश्वरस्य नैरपेक्ष्ये विहितादिवैयर्थ्यं तत्राऽऽह—ईश्वर इति । तयोः स्थाने स एव नियुज्येत यत्ताभ्यां कार्यं तदसावेव कुर्यादिति तयोरानर्थक्यमित्यर्थः । जीवं प्रति प्रवर्तकत्वेन निवर्तकत्वेन च तदर्थवत्त्वमाशङ्क्याऽऽह—अत्यन्तेति । सर्वात्मना जीवस्येश्वराधीनत्वात्तत्प्रेरितस्य प्रवृत्तिनिवृत्तिभाक्त्वात्कृतं विधिनिषेधाभ्यामित्यर्थः । आदिशब्दार्थमाह—तथेति ।

प्यर्थेन । ततश्च प्रामाण्यं वेदस्याऽस्तमियात् । ईश्वरस्य चात्यन्तानपेक्षत्वे लौकिकस्याऽपि पुरुषकारस्य वैयर्थ्यम् ॥ तथा देशकालनिमित्तानां पूर्वोक्तदोषप्रसङ्गश्चेत्येवंजातीयकं दोषजातमादिग्रहणेन दर्शयति ॥ ४२ ॥ इति परायत्ताधिकरणम् ॥ १६ ॥

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवाऽऽदित्वमधीयत एके ॥ ४३ ॥ ( १७ ) ॥

जीवेश्वरयोरुपकार्योपकारकभाव उक्तः । स च सम्बद्धयोरेव लोके दृष्टः । यथा स्वामिभृत्ययोः । यथा वाऽग्निस्फुलिङ्गयोः । ततश्च जीवेश्वरयोरप्युपकार्योपकारकभावाभ्युपगमात् किं स्वामिभृत्यवत् सम्बन्धः आहोस्विद् विस्फुलिङ्गवदित्यस्यां विचिकित्सायामनियमो वा प्राप्नोति अथ वा

---

रत्नप्रभा ।

पुरुषकारः प्रयत्नः पूर्वोक्तदोषोऽकृताभ्यागमादिः । तस्मात्कर्मसापेक्षेश्वरस्य कारयितृत्वाद् "एष ह्येव" [ कौषी० ३।८] इत्यादिश्रुतेर्विध्यादिश्रुत्यविरोध इति सिद्धम् ॥४२॥ (१६)॥ अंशो नानाव्यपदेशादन्यथा०॥ एको नित्यः स्वप्रकाशो नाणुरकर्ता जीव इति शोधिततत्त्वम्पदार्थस्यात्र ब्रह्मैक्यसाधनेन भेदाभेदश्रुतीनां विरोधसमाधानात् पादसंगतिः । पूर्वपक्षे प्रत्यगभिन्नब्रह्मसिद्धिः, सिद्धान्ते तत्सिद्धिरिति भेदः । पूर्वोक्तोपकार्योपकारकभावाक्षिप्तं जीवेशयोः सम्बन्धं विषयीकृत्य द्विविधदृष्टान्तदर्शनात् संशयमाह–ततश्चेति ॥ प्रसिद्धस्वस्वामित्वसम्बन्धसम्भवाद्यः कश्चित् सम्बन्ध इत्यनियमो न युक्त इत्यरुचेराह–अथ वेति ॥ अनेन "य आत्मनि तिष्ठन्" इत्यादिश्रुतिप्रसिद्धभेदकोटिर्दर्शिता । एवं "तत्त्वमसि"

भामती ।

प्रसज्येत । अतिरोहितार्थमन्यत् ॥ ४१ ॥ ४२ ॥ ( १६ ) ॥ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके । अवान्तरसंगतिमाह–जीवेश्वरयोरिति । उपकार्योपकारकभावः प्रयोज्यप्रयोजकभावः । अत्रापाततो विनिगमनाहेतोरभावादनियमो निश्चय इत्युक्तः । निश्चयहेत्वाभासदर्शनेन भेदपक्षमालम्ब्याह–अथ वेति। ईशितव्येशितृभावश्चान्वेष्यान्वेष्टृभावश्च ज्ञेयज्ञातृभावश्च नियम्यनि-

आनन्दगिरीय–न्यायनिर्णयः ।

अत्यन्तं स्वातन्त्र्यादेवं कुर्वन्नपीश्वरो न पर्यनुयोगमर्हतीत्याशंक्याऽऽह–ततश्चेति । ईश्वरस्य स्वातन्त्र्येण फलहेतुत्वे समीहितासमीहितहेतुभेदविधायि शास्त्रममानं स्यादित्यर्थः । आदिशब्दगृहीतं दोषान्तरमाह–ईश्वरस्येति । पुरुषकारस्येष्टानिष्टप्राप्तिहानानुकूलस्य यत्नस्येति यावत् । पुरुषकारवैयर्थ्यं दृष्टान्तयितुं तथेत्युक्तम् । तेषां वैयर्थ्यमिति संबन्धः । पूर्वोक्तदोषोऽकृताभ्यागमादिः । तदेवम् 'एष हि' इत्यादिश्रुतीनां विध्यादिश्रुतिभिरविरोधात्परस्मिन्नशेषनियन्तरि समन्वयसिद्धिरिति ॥ ४२ ॥ ( १६ ) ॥ जीवात्मन्यारोपितं कर्तृत्वमीश्वरायत्तमित्युक्तम् । इदानीं निर्धारितयोग्यत्वस्य तस्य ब्रह्मैक्यं साधयति–अंश इति । विषयं वक्तुं वृत्तं कीर्तयति–जीवेति । तस्य संबन्धापेक्षकत्वमाह–स चेति । सिद्धान्तानुसारिणमपि दृष्टान्तमाह–यथा वेति । उपकार्योपकारकत्वाक्षिप्तं जीवेश्वरसंबन्धं विषयीकृत्योभयथा दृष्टिं हेतुं कृत्वा विचारप्रयोजकं संदेहमाह–ततश्चेति । नियामकाभावेन पूर्वपक्षाभासं संगृह्णाति–अनियम इति । जीवेश्वरयोरनंशत्वेन प्रवेशवृत्तेः संयोगस्यानुपपत्तेः समवायस्य च निरस्तत्वात्कार्यकारणत्वादिहीनतया तादात्म्यस्यापि दुःसंपादत्वान्निरंशे चांशासंभवात् 'पादोऽस्य' इत्यादिश्रुतेरौपचारिकत्वाद्भृत्यस्वामिसंबन्धस्य च प्रसिद्धत्वादनियमस्य च जघन्यत्वान्नियमेन भृत्यस्वामिलक्षणः संबन्धस्तयोरित्याह–अथ वेति।

स्वामिभृत्यप्रकारेष्वेवेशित्रीशितव्यभावस्य प्रसिद्धत्वात्तद्विध एव सम्बन्ध इति प्राप्नोति। अतो ब्रवीति–"अंशः" इति । जीव ईश्वरस्यांशो भवितुमर्हति । यथाऽग्नेर्विस्फुलिङ्गः । अंश इवांशः । न हि निरवयवस्य मुख्योंशः सम्भवति ॥ कस्मात् ॥ पुनर्निरवयवत्वात्स एव न भवति । "नानाव्यपदेशात्" । "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" [ छां ८ । ७ । १ ] "एतमेव विदित्वा मुनिर्भवति" [ बृ० ४ । ४ । २२ ] "य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति" इति चैवंजातीयको भेदनिर्देशः, नासति भेदे युज्यते ॥ ननु चायं नानाव्यपदेशः सुतरां स्वामिभृत्यसारूप्ये युज्यत इत्यत आह–अन्यथा चापीति । न च नानाव्यपदेशादेव केवलादंशत्वप्रतिपत्तिः ॥ किं तर्हि । अन्यथा चापि व्यपदेशो भवत्यनानात्वस्य प्रतिपादकः ॥ तथाहि एके शाखिनो दाशकितवादिभावं ब्रह्मण आमनन्ति आथर्वणिका ब्रह्मसूक्ते "ब्रह्मदाशा ब्रह्मदासा ब्रह्मैवेमे कितवाः" इत्यादिना । दाशाः–य एते कैवर्ताः प्रसिद्धाः, ये चामी दासाः स्वामिन्यात्मानमुपक्षिपन्ति, ये चान्ये कितवा द्यूतकृतः, ते सर्वे ब्रह्मैवेति हीनजन्तूदाहरणेन सर्वेषामेव नामरूपकृतकार्यकरणसंघातप्रविष्टानां जीवानां ब्रह्मत्वमाह ॥ तथाऽन्यत्रापि ब्रह्मप्रक्रियायामेव अयमर्थः प्रपंच्यते–

---

रत्नप्रभा ।

[ छां० ६ । ८ । १९ ] इत्यादिश्रुतिसिद्धाऽभेदकोटिर्द्रष्टव्या । तथा च भेदाऽभेदश्रुतीनां समबलत्वाद्विरोधे सति सम्बन्धाऽनिश्चयात् सम्बन्धापेक्षस्य पूर्वोक्तोपकार्योपकारकभावस्यासिद्धिरित्याक्षेपात् संगतिः। लोकसिद्धानर्थात्मकभेदानुवादित्वेन भेदश्रुतीनां दुर्बलत्वादज्ञातफलवदभेदश्रुत्यनुसारेण प्रकल्पितभेदनिबन्धनोंऽशांशिभावः सम्बन्ध इति सिद्धान्तयति–अत इत्यादिना ॥ अग्नेः सांशत्वेऽपि निष्कलेश्वरस्य कथं सांशत्वमत आह–अंश इवेति ॥ जीव इत्यनुषंगः । भेद एव चेत्, स्वस्वामिभावो युक्तः, नांशांशिभाव इति शङ्कते–ननु चेति ॥ अभेदस्याऽपि सत्त्वादंशांशिभाव इत्याह–अत इति ॥

भामती ।

यन्तृभावश्चाधाराधेयभावश्च न जीवपरमात्मनोरभेदेऽवकल्प्यते । न च 'ब्रह्मदाशा ब्रह्मकितवाः' इत्याद्याश्च श्रुतयो दाशा ब्रह्म कितवा ब्रह्मेत्यादिप्रतिपादनपरा जीवानां ब्रह्मणो भेदेऽवकल्प्यन्ते । न चैताभिर्भेदाभेद-

आनन्दगिरीय–न्यायनिर्णयः ।

अत्र च जीवब्रह्मभेदाभेदश्रुतिविरोधनिरासेनैकरसे ब्रह्मणि समन्वयसाधनात्पादादिसंगतयः । पूर्वपक्षे भेदाभेदश्रुतीनां विरोधादप्रामाण्यादुक्तसमन्वयासिद्धिः । सिद्धान्ते तासामविरोधात्प्रामाण्याच्चत्सिद्धिः। पूर्वपक्षमनूद्य प्रतिज्ञामवतार्य व्याकरोति–अत इति। अग्नेः सांशत्वादंशांशित्वेऽपि प्रकृते न सांशतेति प्रतिज्ञासिद्धिमाशंक्याऽऽह–अंश इति । सूत्रसामर्थ्यान्मुख्यमेवांशत्वं जीवस्य किं न स्यात्तत्राऽऽह–न हीति । चोद्यद्वारा सूत्रावयवमादत्ते–कस्मादिति । व्यतिरेकेण व्याकरोति–स इति । आत्यन्तिकाभेदे भेदोक्त्यसिद्धिश्चेत्तदर्थमात्यन्तिको भेदः स्यादिति शङ्कते–ननु चेति । कथंचिद्भेदेऽपि यस्य सिद्धिस्तस्यातिशयेन सिद्धिरात्यन्तिके भेदे स्यादित्युक्तम्–सुतरामिति। सूत्रावयवेनोत्तरमाह–अत इति। तस्यार्थमाह–न चेति। अभेदव्यपदेशं विशदयन्दाशकितवादित्वमित्यादि व्याचष्टे–तथाहीति । दाशादिपदार्थोक्तिपूर्वकमुद्देश्यविधेयत्वं प्रकटयन्हीनजन्तूदाहरणतात्पर्यमाह–दाशा इति । उक्तार्थस्फुटीकरणार्थमुदाहरणान्तरमाह–तथेति।

"त्वं स्त्री, त्वं पुमानसि, त्वं कुमार उत वा कुमारी, त्वं जीर्णो दण्डेन वञ्चसि, त्वं जातो भवसि विश्वतोमुखः" [श्वेता० ४।३] इति, "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते" [तै० आरण्यके ३।१२।१६] इति च। "नान्योऽतोऽस्ति द्रष्टा" [बृ० ३।७।२३] इत्यादिश्रुतिभ्यश्चाऽस्याऽर्थस्य सिद्धिः। चैतन्यं चाऽविशिष्टं जीवेश्वरयोः। यथाऽग्निविस्फुलिङ्गयोरौष्ण्यम्। अतो भेदाऽभेदाऽवगमाभ्यामंशत्वाऽवगमः॥ ४३॥ कुतश्चांशत्वावगमः-

## मन्त्रवर्णाच्च॥ ४४॥

मन्त्रवर्णश्चैतमर्थमवगमयति-"तावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्याऽमृतं दिवि" [छां० ३।१२।६] इति। अत्र भूतशब्देन जीवप्रधानानि स्थावरजङ्गमानि निर्दिशति-"अहिंसन्त्सर्वभूतान्यन्यत्र तीर्थेभ्यः" [छां० ८।१५।१] इति प्रयोगात्।

रत्नप्रभा।

वञ्चसि गच्छसि। यदास्ते यो नामरूपे निर्माय प्रविश्य व्यवहरन् वर्तते तं, विद्वानमृतो भवतीति श्रुत्यर्थः। श्रुतिसिद्धाभेदे युक्तिमाह-चैतन्यं चेति॥ जीवः, ब्रह्मैव, चेतनत्वाद्ब्रह्मवदित्यर्थः॥४३॥मन्त्रवर्णाच्च॥ अस्य सहस्रशीर्षपुरुषस्य तावान् प्रपञ्चो महिमा विभूतिः। पुरुषः तस्मात्प्रपञ्चात् ज्यायान् महत्तरः। भूतानि देहिनो जीवा इत्यत्र नियामकमाह-अहिंसन्निति॥ तीर्थानि शास्त्रोक्तकर्माणि। तेभ्योऽन्यत्र सर्वप्राणि-

भामती।

प्रतिपादनपराभिः श्रुतिभिः साक्षादंशत्वप्रतिपादकाच्च मन्त्रवर्णात् 'पादोऽस्य विश्वा भूतानि' इत्यादेः, स्मृतेश्च 'ममैवांशः' इत्यादेर्जीवानामीश्वरांशत्वसिद्धिः। निरतिशयोपाधिसंपदा च विभूतियोगेनेश्वरः स्वांशानामपि निकृष्टोपाधीनामीष्ट इति युज्यते। न हि तावदनवयवेश्वरस्य जीवा भवितुमर्हन्त्यंशाः। अपि च जीवानां ब्रह्मांशत्वे तद्गता वेदना ब्रह्मणो भवेत्। पादादिगता इव वेदना देवदत्तस्य। ततश्च ब्रह्मभूयं गतस्य समस्तजीवगतवेदनानुभवप्रसङ्ग इति वरं संसार एव मुक्तेः। तत्र हि स्वगतवेदनामात्रानुभवान्न भूरि दुःखमनुभवति। मुक्तस्तु सर्वजीववेदनाभागिति प्रयत्नेन मुक्तिरनर्थबहुलतया परिहर्तव्या स्यादिति।

आनन्दगिरीय-न्यायनिर्णयः।

वञ्चसि गच्छसि। सूत्रात्मैवात्र सर्वात्मत्वेन स्तूयते न परमात्मेत्याशंक्य श्रुत्यन्तरमाह-सर्वाणीति। यदास्ते यो नामरूपे निर्मायाभिवदनादि कुर्वन्वर्तते तं विद्वानिहैवामृतो भवतीति संबन्धः। न केवलं विधिद्वारैवाभेदो बोध्यते किंतु निषेधद्वाराऽपीत्याह-नेति। न केवलं श्रुतितोऽभेदो न्यायतश्चेत्याह-चैतन्यं चेति। जीवो नात्यन्तं ब्रह्मणो भिद्यते चिद्रूपत्वाद्ब्रह्मवदेवेत्यर्थः। व्यपदेशाभ्यामुपपत्तेश्च फलितमाह-अत इति॥ ४३॥ अंशत्वसिद्धौ हेत्वन्तरत्वेनानन्तरसूत्रमवतारयति-कुतश्चेति। तद्व्याचष्टे-मन्त्रेति। अस्य सहस्रशीर्ष्णः पुरुषस्य तावान्महिमा विभूतिर्न स्वरूपं यावानेष प्रपञ्चस्ततस्तस्मात्प्रपञ्चाज्ज्यायान्महत्तर एवायं प्रकृतः पुरुषः। आद्यपादार्थं विवृणोति-पादोऽस्येति। द्वितीयपादार्थं प्रपञ्चयति-त्रिपादिति। भूतशब्देन रूढियोगाभ्यां महाभूतानां जनिमन्मात्रस्य ज्ञाने कुतो जीवोक्तिरित्याशंक्याऽऽह-अत्रेति। वृद्धव्यवहाराभावे कथं भूतशब्दस्योक्तार्थतेत्याशंक्य वैदिकव्यवहारं दर्शयति-अहिंसन्निति। तीर्थानि शास्त्रोक्तानि कर्माणि तेभ्योऽन्यत्र सर्वाणि भूतान्यहिंसन्वर्तेतेत्यत्र भूतशब्दो जीवप्रधानेषु स्थावरजङ्गमेषु प्रयुज्यते तत्र प्राप्तहिंसानिषेधस्य फलवत्त्वादतो युक्तं प्रकृतेऽपि भूतश-

अंशः पादो भाग इत्यनर्थान्तरम् ॥ तस्मादप्यंशत्वावगमः ॥ ४४ ॥ कुतश्चांशत्वावगमः—

## अपि च स्मर्यते ॥ ४५ ॥

ईश्वरगीतास्वपि चेश्वरांशत्वं जीवस्य स्मर्यते—"ममैवांशो जीवलोके जीवभूतः सनातनः" इति । तस्मादप्यंशत्वावगमः ॥ यत्तूक्तं स्वामिभृत्यादिष्वेवेशित्रीशितव्यभावो लोके प्रसिद्ध इति॥ यद्यप्येषा लोके प्रसिद्धिः। तथापि शास्त्रात्त्वत्रांशांशित्वमीशित्रीशितव्यभावश्च निश्चीयते । निरतिशयोपाधिसम्पन्नश्चेश्वरो निहीनोपाधिसम्पन्नाञ्जीवान्प्रशास्तीति न किञ्चिद्विप्रतिषिध्यते ॥ ४५ ॥ अत्राह—ननु जीवेश्वरांशत्वाभ्युपगमे तदीयेन

---

रत्नप्रभा ।

हिंसामकुर्वन् ब्रह्मलोकमाप्नोतीत्यर्थः । अत्र भूतशब्दस्य प्राणिषु प्रयोगात् सूक्तोक्तमन्त्रेऽपि तथेति भावः । भूतानां पादत्वेऽपि अंशत्वं कुतः, तत्राह—**अंशः पाद इति**॥ ४४ ॥ जीवस्य पुरुषसूक्तमन्त्रोक्तभगवदंशत्वे भगवद्गीतामुदाहरति सूत्रकारः—**अपि चेति** ॥ अत्यन्तभिन्ने ईशित्रीशितव्यभावप्रसिद्धेः ईशितव्यजीवस्य कथमीश्वरांशत्वमित्याशंक्य कल्पितभेदेनापीशितव्यत्वोपपत्तेः अनन्यथासिद्धाभेदशास्त्रबलादंशत्वमित्याह—**यत्त्वित्यादिना** ॥ औपाधिके ईश्वरस्य नियन्तृत्वे जीव एव तन्नियन्ता किं न स्यादित्यत आह—**निरतिशयेति** ॥ नितरां हीनः शरीराद्युपाधिः, अज्ञानिकोपाधितारतम्यादीशेशितव्यव्यवस्था, न वस्तुतः । तदुक्तं सुरेश्वराचार्यैः—"ईशेशितव्यसम्बन्धः प्रत्यगज्ञानहेतुजः । सम्यग्ज्ञाने तमोध्वस्तावीश्वराणामपीश्वरः॥" इति ॥ ४५ ॥ उत्तरसूत्रमवतारयति—**अत्राहेति** ॥ ईश्वरः, स्वांशदुःखैर्दुःखी, अंशित्वात्, देव-

भामती ।

तथा भेदाभेदयोः परस्परविरोधिनोरेकत्रासंभवान्नांशत्वं जीवानाम् । न च ब्रह्मैव सत्,—असन्तस्तु जीवा इति युक्तं, सुखदुःखमुक्तिसंसारव्यवस्थाभावप्रसंगादनुज्ञापरिहाराभावप्रसङ्गाच्च । तस्माज्जीवा एव परमार्थसन्तो न ब्रह्मैकमद्वयम् । अद्वैतश्रुतयस्तु जातिदेशकालाभेदनिमित्तोपचारादिति प्राप्तेऽभिधीयते—अनधिगतार्थावबोधनानि प्रमाणानि विशेषतः शब्दः । तत्र भेदो लोकसिद्धत्वान्न शब्देन प्रतिपाद्यः । अभेदस्त्वनधिगतत्वादधिगतभेदानुवादेन प्रतिपादनमर्हति । येन च वाक्यमुपक्रम्यते मध्ये च परामृश्यते अन्ते चोपसंह्रियते तत्रैव तस्य तात्पर्यम् । उपनिषदश्चाद्वैतोपक्रमतत्परामर्शतदुपसंहारा अद्वैतपरा एव युज्यन्ते । न च यत्परास्तदौपचारिकं युक्तम्, अभ्यासे हि भूयस्त्वमर्थस्य भवति नाल्पत्वमपि प्रागेवोपचरितत्वमित्यु-

आनन्दगिरीय—न्यायनिर्णयः ।

ब्दस्य जीवविषयत्वमित्यर्थः । तथाऽपि भूतानां पादत्वमेवोच्यते न त्वंशत्वमित्याशंक्याऽऽह—**अंश इति** । मान्त्रवर्णिकमर्थमुपसंहरति—**तस्मादिति** ॥ ४४ ॥ न केवलं श्रुतेरेव जीवस्येश्वरांशत्वं किंतु स्मृतेरपीति सूत्रान्तरमुत्थापयति—**कुतश्चेति** । तद्व्याकरोति—**ईश्वरेति** । स्मृतिसिद्धमर्थं निगमयति—**तस्मादिति** । जीवेश्वरयोरीशित्रीशितव्यभावात्तस्य स्वामिभृत्यादिष्वेव प्रसिद्धत्वात्तयोः स्वामिभृत्यभावः संबन्धो नांशांशित्वं लोकप्रसिद्धिविरोधादित्याशंक्योक्तमनुवदति—**यत्त्विति**। यववराहाधिकरणन्यायेन लोकप्रसिद्धिः शास्त्रीयप्रसिद्ध्या बाध्येत्याह—**यद्यपीति**। जीवेश्वरयोरौपाधिकत्वाविशेषे कस्मादीशित्रीशितव्यभावो विपरीतो न स्यादित्याशंक्याऽऽह—**निरतिशयेति** । एकस्मिन्नेव पूर्णे चिदात्मन्यनाद्यनिर्वाच्याविद्याकल्पितो जीवेश्वरजगद्भेदस्तत्र कल्पितोपाध्युत्कर्षनिकर्षवशादीशित्रीशितव्यव्यवस्था । वस्तुतस्तु सर्वकल्पनातीतं चिदेकतानमद्वितीयं तत्त्वमिति भावः ॥ ४५ ॥ उत्तरसूत्रव्यावर्त्यां शङ्कामाह—**अत्रेति** । जीवेश्वरयोरंशांशित्वं सप्तम्यर्थः ।

संसारदुःखोपभोगेनांशिन ईश्वरस्याऽपि दुःखित्वं स्यात् ॥ यथा लोके हस्तपादाद्यन्यतमाङ्गगतेन दुःखेनाङ्गिनो देवदत्तस्य दुःखित्वं, तद्वत् । ततश्च तत्प्राप्तानां महत्तरं दुःखं प्राप्नुयात् ॥ अतोऽवरं पूर्वावस्थः संसार एवास्त्विति सम्यग्दर्शनाऽनर्थक्यप्रसंगः स्यादिति ॥ अत्रोच्यते—

## प्रकाशादिवन्नैवं परः ॥ ४६ ॥

यथा जीवः संसारदुःखमनुभवति, नैवं पर ईश्वरोऽनुभवतीति प्रतिजानीमहे । जीवो ह्यविद्यावेशवशाद्देहाद्यात्मभावमिव गत्वा तत्कृतेन दुःखेन दुःख्यहमित्यविद्याकृतं दुःखोपभोगमभिमन्यते, नैवं परमेश्वरस्य देहाद्यात्मभावो, दुःखाभिमानो वास्ति । जीवस्याऽप्यविद्याकृतनामरूपनिर्वृत्तदेहेन्द्रियाद्युपाध्यविवेकभ्रमनिमित्त एव दुःखाभिमानः, न तु पारमार्थिकोऽस्ति । यथा च स्वदेहगतदाहच्छेदादिनिमित्तं दुःखं तदभिमानभ्रान्त्यानुभवति, तथा पुत्रमित्रादिगोचरमपि दुःखं तदभिमानभ्रान्त्यैवाऽनुभवति, 'अहमेव पुत्रः' 'अहमेव मित्रम्' इत्येवं स्नेहवशेन पुत्रमित्रादिष्वभिनिविशमानः । ततश्च निश्चितमेतदवगम्यते मिथ्याभिमानभ्रमनिमित्त एव दुःखानुभव इति। व्यतिरेकदर्शनाच्चैवमवगम्यते । तथाहि—

---

रत्नप्रभा ।

दत्तवदित्यर्थः । ततः किं, तत्राह—**ततश्चेति** ॥ ज्ञानात् सर्वांशदुःखसमष्टिप्राप्त्यपेक्षया संसारोऽवरम् । तत्र स्वदुःखमात्रानुभवादित्यर्थः । नैवं पर इति प्रतिज्ञां विभजते—**यथा जीव इति**॥देवदत्तदृष्टान्ते भ्रान्तिकामकर्मरूपदुःखसामग्रीमत्त्वमुपाधिः।तदभावान्नेश्वरस्य दुःखित्वप्राप्तिः । उक्तश्चैतदभेदेऽपि बिम्बप्रतिबिम्बयोर्धर्मव्यवस्थेति भावः।दुःखस्य भ्रान्तिकृतत्वं प्रपञ्चयति—**जीवस्यापीत्यादिना**॥भ्रान्तौ सत्यां दुःखमित्यन्वयमुक्त्वा भ्रान्त्यभावे दुःखाभावदर्शनाच्च भ्रान्तिकृतं दुःखमिति निश्चीयत इत्याह—**व्यतिरेकेति**॥इतरे अभिमानशून्येष्वि-

भामती ।

क्रम् । तस्मादद्वैते भाविके स्थिते जीवभावस्तस्य ब्रह्मणोऽनाद्यनिर्वचनीयाविद्योपधानभेदादेकस्येव बिम्बस्य दर्पणाद्युपाधिभेदात्प्रतिबिम्बभेदाः । एवं चानुज्ञापरिहारौ लौकिकवैदिकौ सुखदुःखमुक्तिसंसारव्यवस्था चोपपद्येत । न च मोक्षस्यानर्थबहुलता, यतः प्रतिबिम्बानामिव श्यामतावदाततादिर्जीवानामेव नाना-

आनन्दगिरीय—न्यायनिर्णयः ।

दुःखित्वं स्यात्ततश्चानीश्वरत्वमिति शेषः । अंशगतेन दुःखेनांशिनो दुःखित्वं दृष्टान्तेन स्पष्टयति—**यथेति** । ईश्वरस्य दुःखित्वे दोषान्तरमाह—**ततश्चेति** । ब्रह्मप्राप्तानां महत्तरे दुःखे प्राप्ते मोक्षस्यापुरुषार्थतेत्याह—**अत इति** । तस्यापुमर्थत्वे सम्यग्धीसाधनविधायिशास्त्रवैयर्थ्यमित्याह—**इति सम्यगिति** । सूत्रमवतारयति **अत्रेति**। नैवं पर इति भागं विभजते—**यथेति** । प्रतिज्ञाते विभागे हेतुमाह—**जीवो हीति** । जीवस्य दुःखित्वे तदंशित्वादीश्वरस्यापि दुःखित्वमित्याशंक्य तस्यापि वस्तुतोऽदुःखित्वान्नैवमित्याह—**जीवस्येति** । न चानिर्वाच्यमेव दुःखं ब्रह्मण्यपीति वाच्यं, तदुपनायकदृष्टभावात्कल्पितस्य च दृष्टिमात्रदेहत्वाज्जीवद्वारा च ब्रह्मणि तदुपगमान्न चैवं ब्रह्मप्राप्तानां महत्तरदुःखप्राप्तिरज्ञानतज्जध्वस्तेरेव तत्प्राप्तित्वादिति भावः । मिथ्याभिमानकृतं दुःखमित्युक्तं पुत्रादौ विवेकबुद्ध्याऽऽत्माभिमानाभावेऽपि तद्गतदुःखस्याऽऽत्मन्यारोपादित्याशंक्याऽऽह—**यथा चेति** । अनुभवितारं विशिंषन्भ्रान्तिमभिनयति—**अहमिति** । अन्वयेनोक्तं निगमयति—**ततश्चेति** । तमेवार्थं व्यतिरेकेण स्फोरयति—**व्यतिरेकेति** । तदेव विवृणोति—**तथाहीति** । उक्तं

पुत्रमित्रादिमत्सु बहुषूपविष्टेषु तत्सम्बन्धाभिमानिष्वितरेषु च 'पुत्रो मृतः' 'मित्रं मृतम्' इत्येवमाद्युद्घोषिते येषामेव पुत्रमित्रादिमत्त्वाभिमानः, तेषामेव तन्निमित्तं दुःखमुत्पद्यते, नाभिमानहीनानां परिव्राजकादीनाम् । अतश्च लौकिकस्याऽपि पुंसः सम्यग्दर्शनार्थवत्त्वं दृष्टं, किमुत विषयशून्यादात्मनोऽन्यद्वस्त्वन्तरमपश्यतो नित्यचैतन्यमात्रस्वरूपस्येति ॥ तस्मान्नास्ति सम्यग्दर्शनानर्थक्यप्रसंगः । "प्रकाशादिवद्" इति निदर्शनोपन्यासः । यथा प्रकाशः सौर्यश्चान्द्रमसो वा, वियद्व्याप्याऽवतिष्ठमानोऽङ्गुल्याद्युपाधिसम्बन्धात्तेषु ऋजुवक्रादिभावं प्रतिपद्यमानेषु तत्तद्भावमिव प्रतिपद्यमानोऽपि न परमार्थतस्तद्भावं प्रतिपद्यते । यथा चाऽऽकाशो घटादिषु गच्छत्सु गच्छन्निव विभाव्यमानोऽपि न परमार्थतो गच्छति । यथा चोदशरावादिकम्पनात्तद्गते सूर्यप्रतिबिम्बे कम्पमानेऽपि न तद्वान् सूर्यः कम्पते । एवमविद्याप्रत्युपस्थापिते बुद्ध्याद्युपाध्युपहिते जीवाख्येंऽशे दुःखायमानेऽपि न तद्वानीश्वरो दुःखायते । जीवस्याऽपि दुःखप्राप्तिरविद्यानिमित्तैवेत्युक्तम् । तथा चाऽऽविद्यानिमित्तजीवभावव्युदासेन ब्रह्मभावमेव जीवस्य प्रतिपादयन्ति वेदान्ताः—

रत्नप्रभा ।

त्यर्थः । जीवस्याऽपि सम्यग्ज्ञाने दुःखाभावो दृष्टः, किमु वाच्यं नित्यसर्वज्ञेश्वरस्येत्याह—**अतश्चेति** ॥ एवमंशित्वहेतोः सोपाधिकत्वमुक्त्वा योंऽशी स वस्तुतः स्वांशधर्मवानिति व्याप्तिस्थलत्रये व्यभिचारयति—**प्रकाशादिवदिति** ॥ वस्तुतः स्वांशदुःखित्वसाध्यस्य देवदत्तदृष्टान्ते वैकल्यमप्याह—**जीवस्येति** ॥ कल्पितदुःखित्वसाध्यं तु भ्रांत्याद्यभावादीश्वरे नास्तीत्युक्तम् । किञ्च जीवस्येश्वरस्य वा वस्तुतो दुःखित्वानुमानं न युक्तम् । आगमबाधादित्याह—**तथा चेति** ॥ दुःखित्वे तद्भावोपदेशो न स्यादित्यर्थः ॥४६॥

भामती ।

वेदनाभिसंबन्धो, ब्रह्मणस्तु बिम्बस्येव न तदभिसंबन्धः । यथा च दर्पणापनये तत्प्रतिबिम्बं बिम्बभावेऽवतिष्ठते न कृपाणे प्रतिबिम्बितमपि । एवमविद्योपधानविगमे जीवे ब्रह्मभाव इति सिद्धं जीवो ब्रह्मांश इव

आनन्दगिरीय—न्यायनिर्णयः ।

व्यतिरेकमुपजीव्य सम्यग्दर्शनानर्थक्यप्रसंगं प्रत्यादिशति—**अतश्चेति** । लौकिकस्य शास्त्रोत्थतत्त्वधीशून्यस्येत्यर्थः । सम्यग्दर्शनं विवेकज्ञानमात्रम् । विषयशून्यादविषयादिति यावत् । तस्य सम्यग्दर्शनं शास्त्रीयं तत्त्वसाक्षात्करणं तस्यार्थवत्त्वमिति किमु वक्तव्यमिति योजना । कैमुतिकन्यायफलमाह—**तस्मादिति** । ईश्वरः स्वांशगतैर्दुःखैर्दुःखी स्यादंशित्वाद्देवदत्तवदित्यत्र तन्निमित्तभ्रमवत्त्वोपाधेरप्रयोजको हेतुरित्युक्तम् । इदानीं तात्त्विकं प्रातीतिकं वा दुःखित्वमीश्वरे साध्यमिति विकल्प्याऽऽद्ये यदंशाश्रितं तदंशिनि वस्तुतः स्यादित्यत्र व्यभिचारमाह—**प्रकाशेति** । प्रकाशदृष्टान्तं व्याचष्टे—**यथेति** । आत्मन्युपाधितो दुःखादिप्रतीतिरेव वस्तुतस्तु न प्राप्तिरित्यत्र दृष्टान्तमुक्त्वा लोकद्वयसंचारस्यापि तस्मिन्प्रतीतिमात्रं न वस्तुतेत्यत्र दृष्टान्तमाह—**यथा चेति** । क्रियामात्रस्याऽऽत्मनि वस्तुतो नास्ति प्राप्तिरित्यत्रोदाहरणम्—**यथा चेति** । दृष्टान्तत्रयगतमर्थं दार्ष्टान्तिके योजयति—**एवमिति** । वास्तवे दुःखित्वे साध्ये व्यभिचारमुक्त्वा दृष्टान्तस्य साध्यवैकल्यमाह—**जीवस्येति** । प्रातीतिके दुःखित्वे साध्ये जीवद्वारा परस्मिन्नपि तत्प्रतीतेरिष्टत्वेन सिद्धसाध्यतां मत्वोभयत्रापि नास्ति वस्तुतो दुःखित्वमागमविरोधादित्याह—**तथा चेति** ।

"तत्त्वमसि" [ छां० ६ । ८–१६ ] इत्येवमादयः । तस्मान्नास्ति जैवेन दुःखेन परमात्मनो दुःखित्वप्रसंगः ॥ ४६ ॥

## स्मरन्ति च ॥ ४७ ॥

"स्मरन्ति च" व्यासादयः । यथा–जैवेन दुःखेन न परमात्मा दुःखायते इति । "तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः । न लिप्यते फलैश्चाऽपि पद्मपत्रमिवाम्भसा ॥ १ ॥ कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते । स सप्तदशकेनापि राशिना युज्यते पुनः ॥ २ ॥" इति ॥ चशब्दात्–समामनन्ति चेति वाक्यशेषः । "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" [ मुण्ड० ३ । १ । १ ] इति "एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः" इति च ॥ * ॥ अत्राह–यदि तर्हि एक एव सर्वेषां भूतानामन्तरात्मा स्यात, कथमनुज्ञापरिहारौ स्यातां–लौकिकौ वैदिकौ चेति ॥ ननु चांशो जीव ईश्वरस्येत्युक्तम् । तद्भेदाच्चानुज्ञापरिहारौ तदाश्रयावव्यतिकीर्णावुपपद्येते । किमत्र चोद्यते इति ॥ उच्यते ॥ नैतदेवम् ॥ अनंशत्वमपि हि जीवस्याऽभेदवा-

रत्नप्रभा ।

स्मृत्याप्यनुमानं बाध्यमित्याह–स्मरन्ति चेति ॥ सूत्रं व्याचष्टे–स्मरन्तीति ॥ तत्र जीवपरयोर्मध्ये कर्मात्मा कर्माश्रयो जीवः । दशेन्द्रियाणि पञ्च प्राणाः मनो बुद्धिश्चेति सप्तदशसंख्याको राशिः लिङ्गम् । सूत्रे चशब्दः श्रुतिसमुच्चयार्थ इत्याह–चशब्दादिति ॥ यथाऽऽदित्यः प्रकाश्यदोषैर्न लिप्यते, तथेत्यर्थः । यतो बाह्यः असङ्गः, तस्मात् न लिप्यते । एवमंशित्वकृतमीश्वरे दोषं निरस्यांश इत्युक्तं जीवस्यांशत्वं देहाद्युपाधिकमिति स्फुटयितुमत्यन्तस्वरूपैक्यमादायाक्षिपति—अत्राहेत्यादिना ॥ कथं तर्हि इत्यन्वयः । तद्भेदाद् अंशभेदात् । निरवयवब्रह्मणो मुख्यांशो न सम्भवतीति वदता सिद्धा-

भामती ।

न्ततन्त्रतया न त्वंश इति तात्पर्यार्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ सप्तदशसंख्यापरिमितो राशि-

आनन्दगिरीय–न्यायनिर्णयः ।

परकीयानुमाननिरासफलमुपसंहरति—तस्मादिति॥४६॥ परानुमाने श्रुतिस्मृतिविरुद्धतया कालात्ययापदेशं दर्शयति–स्मरन्तीति। तत्र स्मृतिविरोधं विभजते–स्मरन्ति चेत्यादिना। काऽसौ स्मृतिस्तामाह–तत्रेति। निर्धारणार्था सप्तमी। फलैश्चापीति चकारात्कर्मभिरपीत्यर्थः।कर्मात्मा कर्माश्रयो जीवः। पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च वायवो मनो बुद्धिश्चेति सप्तदशसंख्यावच्छिन्नः समूहः सप्तदशको राशिस्तेनेति यावत्। सूत्रे स्मृतिविरोध उद्भाव्यते श्रुतिविरोधस्तु न भातीत्याशंक्याऽऽह–चशब्दादिति । यथाऽऽदित्यः सर्वप्रकाशको, न प्रकाश्यदोषैः स्पृश्यते तथेति यावत् ॥ ( ४७ ) ॥ अंशांशित्वमुपेत्यांशित्वहेतोरप्रयोजकत्वायुक्तमिदानीमंश इत्युक्तमाक्षिप्य समाधातुं स्वरूपैक्यमादायाऽऽक्षिपति–अत्रेति । कथमित्यस्मादुपरिष्टात्तर्हीति संबध्यते । अनुज्ञादिव्यवस्थानुपपत्त्या स्वरूपभेदः स्यादित्यर्थः । आक्षेप्तुर्विवक्षितमज्ञात्वा शङ्कते–नन्विति । अंशांशित्वे फलितमाह–तदिति । तेषामंशानां जीवानामंशिनः परस्मान्मिथश्च भेदादिति यावत् । अनुज्ञादेरेवं सिद्धौ चोद्यासिद्धिरनुज्ञादिविषये फलतीत्याह–किमिति । आक्षेप्ता प्रत्याह–उच्यत इति । जीवस्येश्वरांशत्वमाश्रित्यानुज्ञादेः सिद्धिरुक्ता, तां निरस्यति–नैतदिति । अभेदवादिनीः श्रुतीरनुक्रामति–

* केवलाऽऽनन्दगिरीयटीकासहितपुस्तके ४७ शसूत्रव्याख्यासमाप्तिरत्रैव दृश्यते ।

दिन्यः श्रुतयः प्रतिपादयन्ति—"तत्सृष्ट्वा तदेवाऽनुप्राविशत्" [ तै० उ० २।६।१ ] "नान्योऽतोऽस्ति द्रष्टा" [ बृ० ३।७।२३ ] "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" [ बृ० ४।४।१९ ] "तत्त्वमसि" [ छां० ६।८–१६ ] "अहं ब्रह्मास्मि" [ बृ० ३।४।१० ] इत्येवञ्जातीयिकाः ॥ ननु भेदाऽभेदाऽवगमाभ्यामंशत्वं सिध्यतीत्युक्तम् । स्यादेतद्-एवं यद्युभावपि भेदाभेदौ प्रतिपिपादयिषितौ स्याताम् । अभेद एव त्वत्र-प्रतिपिपादयिषितः । ब्रह्मात्मत्वप्रतिपत्तौ पुरुषार्थसिद्धेः । स्वभावप्राप्तस्तु भेदोऽनूद्यते । न च निरवयवस्य ब्रह्मणो मुख्योंऽशो जीवः सम्भवतीत्युक्तम् । तस्मात्पर एव एकः सर्वेषां भूतानामन्तरात्मा जीवभावेनाऽवस्थित इत्यतो वक्तव्यानुज्ञापरिहारोपपत्तिः ॥ ४७ ॥ तां ब्रूमः—

## अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

"ऋतौ भार्यामुपेयाद्" इत्यनुज्ञा "गुर्वङ्गनां नोपगच्छेद्" इति परिहारः । तथा "अग्नीषोमीयं पशुं संज्ञपयेत्" इत्यनुज्ञा । "मा हिंस्यात् सर्वा भूतानि" इति परिहारः । एवं लोकेऽपि 'मित्रमुपसेवितव्यम्' इत्यनुज्ञा । 'शत्रुः परिहर्तव्यः' इति परिहारः । एवम्प्रकारौ "अनुज्ञापरिहारौ" एकत्वेऽप्यात्मनो देहसम्बन्धात्स्याताम् । देहैः सम्बन्धः—देहसम्बन्धः ॥ कः पुनर्देहे सम्बन्धः ॥ देहादिरयं संघातोऽहमेवेत्यात्मनि विपरीतप्रत्ययोत्पत्तिः ।

रत्नप्रभा ।

न्तिना भेदो नास्तीत्युक्तं भवति । भेदाभावे चांशांशित्वाभावादनुज्ञादिभेदव्यवहारानुपपत्तिरित्याक्षेपाभिप्रायः ॥ ४७ ॥ न वयं भेदस्यासत्त्वं नरशृङ्गवत् ब्रूमः, किन्तु मिथ्यात्वं वदामः । तथा च देहाद्युपाधिभेदेनांशजीवानामाब्रह्मबोधात् कल्पितभेदाद्भेदव्यवहारोपपत्तिरिति सूत्रेण समाधत्ते—तामित्यादिना ॥

भामती ।

गणः सप्तदशकः । तद्यथा—बुद्धिकर्मेन्द्रियाणि बाह्यानि दश बुद्धिमनसी वृत्तिभेदमात्रेण भिन्ने अप्येकीकृत्यैकमन्तःकरणं शरीरं पञ्च विषया इति सप्तदशको राशिः ॥ ४७ ॥ अनुज्ञा विधिरभिमतो न तु प्रवृत्तप्रवर्तना । अपौरुषेये प्रवर्तयितुरभिप्रायानुरोधासंभवात् । क्रत्वर्थायामग्नीषोमीयहिंसायां प्रवृत्तप्रवर्तनानुपपत्तेश्च । पुरुषार्थेऽपि नियमांशे प्रवृत्तेः—कः पुनर्देहसंबन्ध इति । न हि कूटस्थनित्यस्यात्मनोपरिणामिनोऽस्तिं देहेन संयोगः समवायो वाऽन्यो वा कश्चित् संबन्धः सकलधर्मातिगत्वादित्यभिसंधिः । उत्तरम्—देहादिरयं संघातोऽहमेवेत्यात्मनि विपरीतप्रत्ययोत्पत्तिः । अयमर्थः—सत्यं नास्ति कश्चिदा-

आनन्दगिरीय–न्यायनिर्णयः ।

तदित्यादिना । व्यपदेशद्वयमादायोक्तं सिद्धान्ती स्मारयति—नन्विति । उभयदृष्ट्यांऽशत्वमुभयोः प्रतिपाद्यत्वे स्यान्न च तदस्तीत्याह—स्यादिति । भेदाभेदयोरभेदं निर्धारयितुमत्रेत्युक्तम् । तस्यैव प्रतिपाद्यत्वे हेतुमाह—ब्रह्मेति । भेदोऽपि प्रतिपाद्यतामभेदवदित्याशंक्याऽऽह—स्वभावेति । अविद्या स्वभावः । इतश्चाभेदस्यैव प्रतिपाद्यतेत्याह—न चेति । तस्यैव प्रतिपाद्यत्वे फलितमाह—तस्मादिति । स्वरूपैक्ये स्थिते पूर्वोक्तानुपपत्तितादवस्थ्यमित्याह—इत्यत इति ॥ ४७॥ अनुज्ञासिद्धये स्वरूपभेदे वाच्ये सिद्धान्ती सूत्रेणोत्तरमाह—तामिति । वैदिकानुज्ञापरिहारौ ज्ञानसौकर्यार्थमुदाहरति—ऋताविति । लौकिकावपि तौ दर्शयति—एवमिति । लौकिकवैदिकानुज्ञादेरुक्तरूपत्वेऽपि कथमैकात्म्ये तयोः सिद्धिरित्याशंक्याऽऽह—एवमिति । आत्मनो देहेन संबन्धेऽपि कथमुभयोः सिद्धिस्तत्राऽऽह—देहैरिति । आत्मनोऽसङ्गस्य न तैः

१ न हिंस्यादिति पाठान्तरम् ।

दृष्टा च सा सर्वप्राणिनाम् 'अहं गच्छामि' 'अहमागच्छामि' 'अहमन्धः' 'अहमनन्धः' 'अहं मूढः' 'अहममूढः' इत्येवमात्मिका। न ह्यस्याः सम्यग्दर्शनादन्यन्निवारकमस्ति, प्राक्तु सम्यग्दर्शनात् प्रततैषा भ्रान्तिः सर्वजन्तुषु। तदेवमविद्यानिमित्तदेहाद्युपाधिसम्बन्धकृताद्विशेषादैकात्म्याभ्युपगमेऽप्यनुज्ञापरिहाराववकल्प्येते॥ सम्यग्दर्शिनस्तर्ह्यनुज्ञापरिहारानर्थक्यं प्राप्तम्॥ न॥ तस्य कृतार्थत्वान्नियोज्यत्वानुपपत्तेः। हेयोपादेययोर्हि नियोज्यो नियोक्तव्यः स्यात्। आत्मनस्त्वतिरिक्तं हेयमुपादेयं वा वस्त्वपश्यन् कथं नियुज्येत। न चात्माऽऽत्मन्येव नियोज्यः स्यात्। शरीरव्यतिरेकदर्शिन एव नियोज्यत्वमिति चेत्॥ न॥ तत्संहतत्वाभिमानात्। सत्यं व्यतिरेकदर्शिनो नियोज्यत्वम्। तथापि व्योमा-

---

रत्नप्रभा।

ननु भ्रान्तेः कुतश्चिन्निवृत्तौ व्यवहारविच्छेदः स्यादित्यत आह—न ह्यस्या इत्यादिना॥ प्रतता सन्तता। विशेषः भेदः। अनियोज्यत्वाद्ब्रह्मविदः शास्त्रानर्थक्यमिष्टमित्याह—न तस्येति॥ नियोगविषयद्वैताभावादात्मन्यसाध्ये नियोगानुपपत्तेर्न ब्रह्मविन्नियोज्य इत्यर्थः। नन्वामुष्मिकफलहेतुके कर्मणि देहभिन्नात्मविवेकिन एवाधिकारो वाच्यः। तथा च ब्रह्मवित्, नियोज्यः, विवेकित्वात्, कर्माधिकारिवदिति शङ्कते—शरीरव्यतिरेकेति॥ परोक्षविवेकस्यापरोक्षभ्रमाविरोधित्वात् कर्मिणो देहभेदभ्रमोऽस्ति। तथा च भ्रम उपाधिरिति परिहरति—नेत्यादिना॥ यथा—व्योम देहाद्भिन्नं, तद्वद्दहमित्यपश्यतः भ्रान्त-

भामती।

त्मनो देहादिभिः पारमार्थिकः संवन्धः, किंतु बुद्ध्यादिजनितात्मविषया विपरीता वृत्तिः 'अहमेव देहादिसंघातः' इत्येवंरूपा। अस्यां देहादिसंघात आत्मतादात्म्येन भासते। सोऽयं सांवृतस्तादात्म्यलक्षणः संवन्धो न पारमार्थिक इत्यर्थः। गूढाभिसंधिश्चोदयति—सम्यग्दर्शिनस्तर्हीति। उत्तरं—न तस्येति। यदि सूक्ष्मस्थूलदेहादिसंघातोऽविद्योपदर्शित एकमेवाद्वितीयं ब्रह्मास्मीति सम्यग्दर्शनमभिमतम्, अद्धा तद्वन्तं प्रति विधिनिषेधयोरानर्थक्यमेव। एतदेवविशदयति—हेयोपादेययोरिति। चोदको निगूढाभिसंधिमाविष्करोति—शरीरव्यतिरेकदर्शिन एव। आमुष्मिकफलेषु कर्मसु दर्शपूर्णमासादिषु नियोज्यत्वमिति चेत्परिहरति—न। तत्संहतत्वाभिमानात् एतद्विभजते—सत्यमिति। यो ह्यात्मनः पाट्कौ-

आनन्दगिरीय—न्यायनिर्णयः।

संगतिरित्याह—क इति। असङ्गत्वेऽपि तस्य देहादिसंवन्धं दर्शयति—देहादिरिति। उक्ते संबन्धे मानमाह—दृष्टा चेति। तस्या अविद्यात्मकत्वेन निवृत्तत्वान्नानुज्ञादिप्रयोजकतेत्याशंक्य सम्यग्ज्ञानात्प्रागूर्ध्वं वा तस्या निवृत्तिरिति विकल्प्याऽऽद्यं दूषयति—न हीति। अविद्यात्मकत्वात्तस्याः सम्यग्ज्ञानातिरिक्तविरोध्यभावादित्यर्थः। निवारकान्तराभावं तुशब्देन परामृश्य सर्वत्रासंकुचद्वृत्तित्वमुक्तसंबन्धस्याऽऽह—प्राक्त्विति। अज्ञानावस्थायां देहादियोगस्यानिवृत्तत्वे फलितमाह—तदेवमिति। विशेषो भेदः। द्वितीयमालम्बते—सम्यगिति। सम्यग्दर्शनं किमात्मैक्यधीः किंवा देहातिरिक्तधीः? नाऽऽद्यः, तद्वतो देहादिसंवन्धनिवृत्तेरनुज्ञाद्यानर्थक्यस्येष्टत्वादित्याह—नेति। अनुपपत्तिमेव वक्तुं सामान्यन्यायमाह—हेयेति। तथाऽपि कथमात्मैक्यदर्शिनो नियोज्यत्वासिद्धिस्तत्राऽऽह—आत्मनस्त्विति। आत्मानतिरिक्ते विषये नियोज्यत्वमाशंक्याहेयोपादेयत्वादात्मनो नैवमित्याह—न चेति। द्वितीयं शङ्कते—शरीरेति। व्यतिरेकादर्शने नियोज्यत्वासिद्धेः सति तस्मिन्देहासंवन्धान्नियोगायोगादनुज्ञाद्यानर्थक्यमित्यर्थः। देहाद्यतिरेकदर्शिनोऽपि तत्संहतत्वाभिमानिनो नियोज्यत्वयोगादनुज्ञादेरर्थवत्तेत्याह—नेत्यादिना। तदेव विभजते—सत्यमिति। अङ्गीकृतं भागं दर्शयति—व्यतिरेकेति। तर्हि देहादियोगस्य निवृत्तेरनुज्ञाद्यसिद्धिस्तत्राऽऽह—तथाऽपीति।

दिवद्देहाद्यसंहतत्वमपश्यत एवाऽऽत्मनो नियोज्यत्वाभिमानः। न हि देहाद्यसंहतत्वदर्शिनः कस्यचिदपि नियोगो दृष्टः, किमुतैकात्म्यदर्शिनः । न च नियोगाभावात्सम्यग्दर्शिनो यथेष्टचेष्टाप्रसङ्गः । सर्वत्राभिमानस्यैव प्रवर्तकत्वाद् अभिमानाभावाच्च सम्यग्दर्शिनः ॥ तस्माद्देहसम्बन्धादेवानुज्ञापरिहारौ "ज्योतिरादिवत्" । यथा–ज्योतिषः एकत्वेऽपि अग्निः क्रव्यात्परिह्रियते, नेतरः, यथा च प्रकाशः एकस्यापि सवितुरमेध्यप्रदेशसम्बन्धः परिह्रियते, नेतरः शुचिभूमिप्रविष्टः । तथा भौमाः प्रदेशाः वज्रवैडूर्यादय उपादीयन्ते, भौमा अपि सन्तो नरकलेवरादयः परिह्रियन्ते । तथा मूत्रपुरीषं गवां पवित्रतया परिगृह्यते । तदेव जात्यन्तरे परिवर्ज्यते, तद्वत् ॥ ४८ ॥

**असन्ततेश्चाऽव्यतिकरः ॥ ४९ ॥**

स्यातां नामाऽनुज्ञापरिहारौ । एकस्याप्यात्मनो देहविशेषयोगात् ।

---

रत्नप्रभा ।

स्येत्यर्थः । ब्रह्मवित्, नियोज्यः, अभ्रान्तत्वात्, सुषुप्तवदित्याह–न हीति ॥ देहादिष्वसंहतत्वदर्शिनः–संहतत्वदर्शनशून्यस्य–भेदभ्रान्तिरहितस्य । सुषुप्तस्येति यावत् । अज्ञस्याऽपि भ्रान्त्यभावकाले नियोज्यत्वं न दृष्टम् । किमु वाच्यमात्मविद इत्यर्थः । अनियोज्यत्वे बाधकमाशंक्य परिहरति–न चेति ॥ विषयवैराग्यस्य ज्ञानार्थमभ्यस्तस्य ज्ञानान्तरमनुवृत्त्या विषयेषु प्रवर्तकरागनिवृत्तेर्नातिप्रसङ्ग इत्यर्थः । तदुक्तं भगवता "रसोऽप्यस्य परं दृष्ट्वा निवर्तते" [ भग० गी० २ । ५९ ] इति । एवमनुज्ञादिप्रसङ्गेनानियोज्यत्वं विदुष उक्त्वा प्रकृतमुपसंहरति–तस्मादिति ॥ एकस्याप्युपाधिभेदाद् अनुज्ञापरिहारयोर्दृष्टान्तमाह–ज्योतिरिति ॥ क्रव्यं मांसमत्तीति–क्रव्याद् अशुचिः, श्मशानाग्निरित्यर्थः ॥ ४८ ॥ शंकोत्तरत्वेन सूत्रं व्याचष्टे–स्यातामित्यादिना ॥ यद्यपि स्थूलदेहसम्बन्धादुपादानपरित्यागौ स्याताम् । तथाप्यन्यकृतकर्मफलमितरेणापि भुज्येतेति कर्मफलव्यतिकरः साङ्कर्यं स्यात् । इह विशिष्टस्य स्वर्गादिभोगायोगेनाविशिष्टात्मन एकस्यैव भोक्तृत्वात् । तस्मात्स्वर्गी नरकी चेति व्यवस्थासिद्धये आत्मस्वरूपभेदो वाच्य इति शङ्कार्थः । भवेत् तदा साङ्कर्यं,यद्यनुपहितात्मन एव भोक्तृत्वं स्यात् ,न त्वेतदस्ति । "तद्गुण-

भामती ।

शिकाद्देहादुपपत्त्या व्यतिरेकं वेद, न तु समस्तबुद्ध्यादिसंघातव्यतिरेकं, तस्यामुष्मिकफलेष्वधिकारः । समस्तबुद्ध्यादिव्यतिरेकवेदिनस्तु कर्मभोक्तृत्वाभिमानरहितस्य नाधिकारः कर्मणि । तथा च न यथेष्ट-

आनन्दगिरीय–न्यायनिर्णयः ।

असंहतत्वेऽपि तद्दर्शनाभावे दृष्टान्तमाह–व्योमादिवदिति । व्यतिरेकदर्शिनो नियोज्यत्वं चेदविशेषादैक्यदर्शिनोऽपि स्यादित्याशंक्याऽऽह—न हीति । देहादिष्वसंहतत्वदर्शिनः संहतत्वधीशून्यस्य सुषुप्तस्येति यावत् । तर्हि सम्यग्दर्शिनो विधिनिषेधाभावाद्यथेष्टचेष्टापत्तिर्नेत्याह–न चेति । विषयाभिनिविष्टचेतसो ज्ञानानुदयादवश्यं साधकावस्थायामेवाभिनिवेशत्यागेन भवितव्यं तस्य पुनः सम्यग्ज्ञानोदयेऽपि पूर्ववासनातो विषयाभिनिवेशाभावान्नियतप्रवृत्तेर्न यथेष्टचेष्टेत्यर्थः । प्रसङ्गागतं त्यक्त्वा प्रकृतमुपसंहरति–तस्मादिति । उपाधिवशादनुज्ञापरिहारावित्यत्र दृष्टान्तमाह–ज्योतिरिति । क्रव्यं मांसमत्तीति श्मशानादिसंबन्धी वह्निरत्र क्रव्यादित्युच्यते ॥ ४८ ॥ अनुज्ञादेरुक्तनीत्या सिद्धिमुपेत्य कर्मफलसंबन्धव्यतिकरमाशंक्य परिहरति—असंततेश्चेति । सूत्रव्यावर्त्यां शङ्कामाह–स्यातामिति । यद्यपि स्थूलदेहा-

यस्त्वयं कर्मफलसम्बन्धः, स चैकात्म्याभ्युपगमे व्यतिकीर्येत ॥ स्वाम्यैकत्वादिति चेत् ॥ नैतदेवम् ॥ असन्ततेः । न हि कर्तुर्भोक्तुश्चात्मनः सन्ततिः सर्वैः शरीरैः सम्बन्धोऽस्ति । उपाधितन्त्रो हि जीव इत्युक्तम् । उपाध्यसन्तानाच्च नास्ति जीवसन्तानः ॥ ततश्च कर्मव्यतिकरः, फलव्यतिकरो वा, न भविष्यति ॥ ४९ ॥

## आभास एव च ॥ ५० ॥

"आभास एव च" एष जीवः परस्यात्मनो जलसूर्यकादिवत् प्रतिपत्तव्यः । न स एव साक्षात् । नापि वस्त्वन्तरम् । अतश्च यथा–नैकस्मिञ्जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते । एवं नैकस्मिञ्जीवे कर्मफलसम्बन्धिनि जीवान्तरस्य तत्सम्बन्धः । एवमव्यतिकर एव कर्मफलयोः । आभासस्य चाविद्याकृतत्वात्तदाश्रयस्य संसारस्याऽविद्याकृतत्वोपपत्तिरिति

रत्नप्रभा ।

सारत्वात्तु–" [ व्या० सू० २।३।३० ] इत्यत्र मोक्षस्यापि, बुद्ध्युपहितस्यैव कर्तृत्वादिस्थापनात् । तथा च बुद्धेः परदेहासम्बन्धात् तदुपहितजीवस्य नास्ति परदेहसम्बन्ध इति बुद्धिभेदेन भोक्तृभेदान्न कर्मादिसाङ्कर्यमिति समाधानार्थः ॥ ४९ ॥ अंशेत्याद्यसूत्रे जीवस्यांशत्वं घटाकाशस्येवोपाध्यवच्छेदबुद्ध्योक्तम् । सम्प्रति एवकारेणावच्छेदपक्षारुचिं सूचयन् "रूपंरूपं प्रतिरूपो बभूव" [ बृ० २ । ५ । १९ ] इत्यादिश्रुतिसिद्धं प्रतिबिम्बपक्षमुपन्यस्यति भगवान् सूत्रकारः–**आभास एव चेति** ॥ स परमात्मैवानुपहितो जीवो न भवति । उपाध्यनुभवात् । नापि ततो भिन्नः । "स एष इह प्रविष्टः" [ बृ० १ । ४ । ७ ] इत्याद्यभेदश्रुतिस्मृतिविरोधात् । तस्मादविद्यातत्कार्यबुद्ध्यादिप्रतिबिम्ब एव जीव इत्यर्थः । अस्मिन् पक्षे बुद्धिप्रतिबिम्बभेदात् स्वर्गी नरकीत्यादिव्यवस्था, जीवस्याविद्यकत्वाद्विद्यया मोक्षश्चेत्युपपद्यत इत्याह–**अतश्चेत्यादिना** ॥ **यस्त्वयं भास्करस्य प्रलापः** "प्रतिबिम्बस्य नोपाधिसंसृष्टतया कल्पितत्वं, किन्तु स्वरूपेणैव । अतः कल्पितप्रतिबिम्बस्य मुक्तौ स्थित्ययोगात् न जीवत्वम्" इति, स सिद्धान्तरहस्याज्ञान-

भामती ।

चेष्टा, अभिमानविकलस्य तस्या अप्यभावादिति ॥ ४८ ॥ ४९ ॥ येषां तु सांख्यानां वैशेषिकाणां वा सुखदुःखव्यवस्थां पारमार्थिकीमिच्छतां बहव आत्मानः सर्वगतास्तेषामेवैष व्यतिकरः प्राप्नोति । तत्र प्रश्न-

आनन्दगिरीय–न्यायनिर्णयः ।

वच्छेदादनुज्ञापरिहारौ युज्येते तथाऽपि कर्मफलसंकरो दुर्वार एतद्देहविशिष्टस्य स्वर्गादिभोगायोगे स्वरूपस्यैव तद्योगध्रौव्यादतः स्वर्गीतरादिव्यवस्थानुपपत्त्या स्वरूपभेद इत्यर्थः । किं परमात्मापेक्षयैकत्वं किंवा जीवापेक्षया । आद्ये परस्याभोक्तुरपि सर्वाश्रयत्वान्न व्यतिकराशंकेत्याह–**नैतदिति** । द्वितीयं सूत्रावयवेन निरस्यति–**असंततेरिति** । तदेव विवृणोति–**न हीति** । स्थूलदेहयोगव्यभिचारेऽप्यविद्यातदुत्थान्तःकरणयोगस्यासंसारमोक्षादव्यभिचारात्तदवच्छिन्नस्यैव स्वर्गादिभोगित्वान्न व्यवस्थायाः स्वरूपभेदधीरित्यर्थः । औपाधिकभेदेन व्यवस्थोपपत्तिं सूत्रावयवार्थं दर्शयति–**ततश्चेति** ॥ ४९ ॥ आद्ये सूत्रे जीवस्यांशत्वमवच्छेदबुद्ध्योक्तमधुना 'रूपंरूपम्' इत्यादिश्रुतिसिद्धं प्रतिबिम्बपक्षमुपन्यस्यति–**आभास इति** । तद्व्याख्याति–**आभास एवेति** । एवकारार्थमाह–**नेत्यादिना** । न हि जीवः साक्षात्परमात्मैवोपाधिव्यवधानान्नापि वस्त्वन्तरं 'तत्सृष्ट्वा' इत्यादिश्रुतिस्मृतिविरोधादित्यर्थः । आभासपक्षे स्वर्गीतरादिव्यवस्थाऽपि सुस्थेत्याह–**अतश्चेति** । अस्मिन्पक्षे बन्धोऽज्ञानाज्ज्ञानान्मुक्तिरित्येतदपि सिध्यतीत्याह–**आभासस्येति** ।

**तद्व्युदासेन च पारमार्थिकस्य ब्रह्मात्मभावस्योपदेशोपपत्तिः । येषां तु बहव आत्मानः, ते च सर्वे सर्वगताः । तेषामेवैष व्यतिकरः प्राप्नोति ॥ कथम् ॥ बहवो विभवश्चाऽऽत्मानश्चैतन्यमात्रस्वरूपा निर्गुणा निरतिशयाश्च । तदर्थं साधारणं प्रधानम् । तन्निमित्तैषां भोगापवर्गसिद्धिरिति सांख्याः ॥ सति बहुत्वे, विभुत्वे च, घटकुड्यादिसमाना द्रव्यमात्रस्वरूपाः स्वतोऽचेतना आत्मानः । तदुपकरणानि चाणूनि मनांसि अचेतनानि । तत्राऽऽत्मद्रव्याणां मनोद्रव्याणां च,–संयोगान्नवेच्छादयो वैशेषिका आत्मगुणा उत्पद्यन्ते । ते चाऽव्यतिकरेण प्रत्येकमात्मसु समवयन्ति । स संसारः । तेषां नवानामात्मगुणानामत्यन्तानुत्पादो मोक्ष इति काणादाः । तत्र सांख्यानां तावच्चैतन्यस्वरूपत्वात्सर्वात्मनां सन्निधानाद्यविशेषाच्च एकस्य सुखदुःखसम्बन्धे सर्वेषां सुखदुःखसम्बन्धः प्राप्नोति ॥ स्यादेतत् ॥ प्रधानप्रवृत्तेः पुरुषकैवल्यार्थत्वाद्व्यवस्था भविष्यति ॥**

---

रत्नप्रभा ।

कृत इत्युपेक्षणीयः । **यदि** दर्पणे मुखं शुक्तौ रजतवत् कल्पितं स्यात्, तदा नेदं रजतमिति स्वरूपबाधवन्नेदं मुखमिति बाध्यं स्यात् । अतो नास्ति दर्पणे मुखमिति संसर्गमात्रबाधान्मदीयं मुखमेवेदमित्यबाधितमुखाऽभेदानुभवात् संसृष्टत्वेनैव कल्पितत्वम् । प्रवेशवाक्यैश्चाविकृतब्रह्मण एव प्रतिबिम्बभावाख्यप्रवेशोक्तेर्न स्वरूपकल्पना । पराक्रान्तं चात्र **दर्पणटीकायामाचार्यै**रित्युपरम्यते । एवं स्वमते स्वरूपैक्येऽप्युपहितजीवभेदादसांकर्यमुक्तम् । सम्प्रति सूत्रे चकारसूचितं परेषां सांकर्यं वक्तुमुपक्रमते–**येषामित्यादिना** ॥ बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाः नव आत्मविशेषगुणाः । सन्निधानादिति **आदि**पदादौदासीन्यमुक्तम् । सांख्यः स्वाभिप्रायं शङ्कते–**स्यादेतदिति** ॥ सर्वेषां पुंसां प्रकृतिसान्निध्याद्यविशेषेऽपि प्रकृतिरेव प्रतिपुरुषं नियमेन भोगापवर्गार्थं प्रवर्तते । तथा चोद्देश्यपुरुषार्थनियता प्रधानप्रवृत्तिरिति भोगा-

भामती ।

पूर्वकं सांख्यान् प्रति व्यतिक्रमं तावदाह–**कथमिति** ॥ यादृशस्तादृशो गुणसंबन्धः सर्वान् पुरुषान् प्रत्यविशिष्ट इति तत्कृते सुखदुःखे सर्वान् प्रत्यविशिष्टे । न च कर्मनिबन्धना व्यवस्था, कर्मणः प्राकृतत्वेन प्रकृतेश्च साधारणत्वेनाव्यवस्थातादवस्थ्यात् । चोदयति–**स्यादेतदिति** । अयमर्थः–न प्रधानं स्वविभूतिख्यापनाय प्रवर्तते, किंतु पुरुषार्थम् । यं च पुरुषं प्रत्यनेन भोगापवर्गौ पुरुषार्थौ साधितौ तं

आनन्दगिरीय–न्यायनिर्णयः ।

स्वरूपैक्येऽपि नास्ति दुःखादिसंकर इत्युक्त्वा चकारसूचितं वक्तुमुपक्रमते–**येषां त्विति** । आत्मभेदात्परमते व्यतिकरो नेति शङ्कते–**कथमिति** । परपक्षे व्यतिकरं प्रसञ्जयितुं सांख्याभिप्रायं तावदाह–**बहव इति** । कथं तर्हि तेषां भोगापवर्गौ तत्राऽऽह–**तदर्थमिति** । वैशेषिकप्रक्रियामाह–**सतीति** । घटादिसाम्यमेव स्फोरयति–**द्रव्येति** । मात्रचो विवक्षितं दर्शयति–**स्वत इति** । कथं तर्हि तेषु भोगापवर्गौ तत्राऽऽह–**तदिति** । तथाऽपि कथं बन्धमोक्षावित्याशंक्य बन्धस्वरूपमाह–**तत्रेति** । मुक्तिस्वरूपमाह–**तेषामिति** । स्वापादिव्यावृत्त्यर्थमत्यन्तपदम् । पक्षद्वयमनूद्य सांख्यपक्षे व्यवस्थानुपपत्तिमाह–**तत्रेति** । संनिधानाद्यविशेषादित्यादिशब्दादौदासीन्यमुक्तम् । सांख्याभिप्रायमाशङ्कते–**स्यादिति** । सर्वेषां पुंसां संनिधिनिर्विशेषत्वयोरविशेषेऽपि प्रधानमेव तेषां मोक्षार्थं प्रवर्तते, तथा च कंचित्कालं नर्तकीवत्स्वात्मानं दर्शयित्वा स्वयमेवोपरमते सविकारप्रधानदर्शनमेव पुंसां बन्धस्तदुपरमे तद्दृष्ट्यभावान्मुक्तिरूपच-

अन्यथा हि स्वविभूतिख्यापनार्था प्रधानप्रवृत्तिः स्यात् । तथा चानिर्मोक्षः प्रसज्येतेति ॥ नैतत्सारम् ॥ न ह्यभिलषितसिद्धिनिबन्धना व्यवस्था शक्या विज्ञातुम् । उपपत्त्या तु कयाचिद्व्यवस्थोच्येत । असत्यां पुनरुपपत्तौ कामं मा भूदभिलषितं पुरुषकैवल्यम् । प्राप्नोति तु व्यवस्थाहेत्वभावाद्व्यतिकरः ॥ काणादानामपि यदैकेनात्मना मनः संयुज्यते, तदात्मान्तरैरपि नान्तरीयकः संयोगः स्यात् । सन्निधानाद्यविशेषात् । ततश्च हेत्वविशेषात्फलाविशेष इत्येकस्यात्मनः सुखदुःखसंयोगे सर्वात्मनामेव समानं सुखदुःखित्वं प्रसज्येत ॥५०॥ स्यादेतत् । अदृष्टनिमित्तो नियमो भविष्यतीति, नेत्याह-

## अदृष्टाऽनियमात् ॥ ५१ ॥

बहुष्वात्मसु आकाशवत्सर्वगतेषु प्रतिशरीरं बाह्याभ्यन्तराविशेषेण सन्निहितेषु मनोवाक्कायैर्धर्माधर्मलक्षणमदृष्टमुपार्ज्यते ॥ सांख्यानां तावत्तदनात्मसमवायिप्रधानवर्तिप्रधानसाधारण्यान्न प्रत्यात्मं सुखदुःखो-

---

रत्नप्रभा ।

दिव्यवस्था । अन्यथा नियमप्रवृत्त्यनङ्गीकारे । स्वमाहात्म्यख्यापनार्था प्रधानस्य प्रवृत्तिरित्युद्देश्यविघातः स्यादित्यर्थः । जडप्रधानस्योद्देश्यविवेकाभावात् पुरुषार्थस्याप्यनागतस्याऽचेतनस्याऽनियामकत्वान्न व्यवस्था । मानयुक्तिशून्यत्वादित्याह-नैतदिति ॥ यो हि नियामकाभावेनोद्देश्यविघातमापादयति तं प्रति तस्यैवापादनमिष्टमिति भावः । तार्किकमतेऽपि भोगादिसाङ्कर्यमित्याह-काणादानामिति ॥ हेतुः मनःसंयोगः । फलं सुखादि ॥ ५० ॥ यदात्मादृष्टकृतो यो मनःसंयोगः स तदात्मन एव सुखादिहेतुरिति व्यवस्थां शङ्कते-स्यादेतदिति ॥ सूत्रेण परिहरति-नेत्याहेति ॥

भामती ।

प्रति समाप्ताधिकारतया निवर्तते, पुरुषान्तरं तु प्रत्यसमाप्ताधिकारं प्रवर्तते । एवं च मुक्तसंसारिव्यवस्थोपपत्तेः सुखदुःखव्यवस्थापि भविष्यति इति निराकरोति-न हीति । सर्वेषां पुरुषाणां विभुत्वात् प्रधानस्य च साधारण्यादमुं पुरुषं प्रत्यनेनार्थः साधित इत्येतदेव नास्ति । तस्मात् प्रयोजनवशेन विना हेतुं व्यवस्थास्थेया । सा चायुक्ता, हेत्वभावादित्यर्थः । भवतु सांख्यानामव्यवस्था, प्रधानसमवायाददृष्टस्य, प्रधानस्य च साधारण्यात् । काणादादीनां त्वात्मसमवाय्यदृष्टं प्रत्यात्ममसाधारणं तत्कृतश्च मनसा सहात्मनः स्वस्वामिभावलक्षणः संबन्धोऽनादिरदृष्टभेदानामनादित्वात्, तथा चात्ममनःसंयोगस्य साधारण्येऽपि

आनन्दगिरीय-न्यायनिर्णयः ।

र्येतेऽतो नियतप्रधानप्रवृत्त्या व्यवस्थासिद्धिरित्यर्थः । प्रतिनियतप्रधानप्रवृत्त्यनङ्गीकारे स्वविभूतिख्यापनाय तत्प्रवृत्तिरिति पुंसां मोक्षो न स्यादित्याह-अन्यथेति । प्रधानप्रवृत्तेर्मोक्षार्थत्वेऽपि सर्वेषामपर्यायमेव कस्मान्मोक्षो न भवेत्कस्यचिन्मोक्षो बन्धश्च कस्यचिदिति व्यवस्थायां मानाभावादित्याह-नैतदिति । प्रधानस्य स्वविभूतिख्यापनपरिहाराय प्रतिनियतप्रवृत्तिरित्युक्तं, तत्राऽऽह-न हीति । नियमस्यानादित्वान्नात्र युक्तिरन्वेष्येत्याशंक्यानियमस्यैवानादित्वान्मैवमित्याह-असत्यामिति । वैशेषिकसमयेऽपि व्यवस्यासिद्धिमाह-काणादानामिति । संनिधानादीत्यादिशब्देन द्रव्यत्वादि गृहीतम् । हेतुर्मनःसंयोगः । फलं सुखादि ॥ ५० ॥ यददृष्टकृतो मनःसंयोगस्तस्यैव तत्कृतं सुखादीति व्यवस्थां शङ्कते-स्यादेतदिति । सूत्रेणोत्तरमाह-नेत्याहेति । अनियमं व्याख्यातुं पक्षद्वयसाधारणं तज्जन्मप्रकारमाह-बहुष्विति । एवमदृष्टोत्पत्तावपि तन्निमित्ता व्यवस्था किं न स्यादित्याशंक्य सांख्यान्प्रत्याह-सांख्यानामिति । पक्षा-

पभोगस्य नियामकमुपपद्यते । काणादानामपि पूर्ववत्साधारणेन आत्ममनःसंयोगेन निर्वर्त्तितस्याऽदृष्टस्यापि । अस्यैवात्मनः इदमदृष्टमिति नियमे हेत्वभावादेष एव दोषः ॥ ५१ ॥ स्यादेतत् । अहमिदं फलं प्राप्नवानीदं परिहराणीत्थं प्रयता इत्थं करवाणीत्येवंविधा अभिसंध्यादयः प्रत्यात्मं प्रवर्तमाना अदृष्टस्यात्मनां च स्वस्वामिभावं नियंस्यन्तीति । नेत्याह—

## अभिसंध्यादिष्वपि चैवम् ॥ ५२ ॥

अभिसंध्यादीनामपि साधारणेनैवात्ममनःसंयोगेन सर्वात्मसंनिधौ क्रियमाणानां नियमहेतुत्वानुपपत्तेरुक्तदोषानुषङ्ग एव ॥ ५२ ॥

## प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

इति वैयासिक्यां शारीरकमीमांसायां द्वितीयाध्यायस्य तृतीयः पादः समाप्तः ॥

अथोच्येत विभुत्वेऽप्यात्मनः शरीरप्रतिष्ठेन मनसा संयोगः शरीरावच्छिन्न एवात्मप्रदेशे भविष्यत्यतः प्रदेशकृता व्यवस्थाऽभिसंध्यादीनामदृष्टस्य सुखदुःखयोश्च भविष्यतीति । तदपि नोपपद्यते ॥ कस्मात् ॥ अन्तर्भावात् । विभुत्वाविशेषाद्धि सर्व एवात्मानः सर्वशरीरेष्वन्तर्भवन्ति॥ तत्र न वैशेषिकैः शरीरावच्छिन्नोऽप्यात्मनः प्रदेशः कल्पयितुं शक्यः । कल्प्यमानोऽप्ययं निष्प्रदेशस्यात्मनः प्रदेशः काल्पनिकत्वादेव न पार-

---

रत्नप्रभा ।

पूर्ववत् मनःसंयोगवत् । अदृष्टस्याऽपि सर्वात्मसाधारणत्वात् न व्यवस्थेत्यर्थः॥५१॥रागादिनियमात्तज्जादृष्टनियम इत्याशंकोत्तरत्वेन सूत्रं गृह्णाति—स्यादेतदित्यादिना ॥ अनियम उक्तदोषः। आत्मान्तरप्रदेशस्य परदेहे अन्तर्भावाद्व्यवस्थेति शङ्कार्थः ॥ ५२ ॥ किं मनसा संयुक्तात्मैवात्मनः प्रदेशः, उत कल्पितः ? आद्ये सर्वात्मनां सर्वदेहेषु अन्तर्भावादव्यवस्था । द्वितीयं दूषयति—तत्र न वैशेषिकैरिति ॥ सर्वात्मसांनिध्ये सति कस्यचिदेव प्रदेशः कल्पयितुमशक्यः । नियामकाभावादित्यर्थः ॥ प्रदेशकल्पनामङ्गीकृत्याप्याह—कल्प्येति ॥ कार्यमभिसंध्यादिकं यस्यात्मनो यच्छरीरं तत्र तस्यैव भोग इति व्यवस्थामाशंक्याह—

भामती ।

स्वस्वामिभावस्यासाधारण्यादभिसंध्यादिव्यवस्थोपपद्यत एव । न च संयोगोऽपि साधारणः । न हि तस्य मनस आत्मान्तरैः संयोगः स एव स्वामिनापि, आत्मसंयोगस्य प्रतिसंयोगिभेदेन भेदात् । तस्मादात्मैकत्वस्यागमसिद्धत्वात्, व्यवस्थायाश्चैकत्वेऽप्युपपत्तेः, नानेकात्मकल्पना, गौरवादागमविरोधाच्च । अन्त्यविशेषवत्त्वेन च भेदकल्पनायामन्योन्याश्रयापत्तेः । भेदे हि तत्कल्पना, ततश्च भेद इति । एतदेव काणा-

आनन्दगिरीय–न्यायनिर्णयः ।

न्तरेऽप्यदृष्टानियमं व्याचष्टे—काणादानामिति । पूर्ववदिति सुखाद्युत्पादकमनःसंयोगवदित्यर्थः । यद्वा—नियम्यत्वेन प्रकृतसुखादिवदित्यर्थः । एष एव दोष इत्यदृष्टस्य नियामकत्वायोगो गृह्यते ॥ ५१ ॥ अदृष्टहेत्वसाधारण्येन तस्यापि तथात्वं शङ्कते—स्यादेतदिति । सूत्रेण परिहरति—नेत्याहेति । तद्विभजते—अभिसंधीति । अदृष्टं दृष्टान्तयितुमपिशब्दः । उक्तो दोषोऽदृष्टस्य सुखादेश्चानियमः ॥ ५२ ॥ प्रकारान्तरेणासाधारण्यमाशंक्य दूषयति—प्रदेशादिति चेदिति । चोद्यं विवृणोति—अथेति । परिहारं विभजते—तदपीत्यादिना । सर्वेषामात्मनां सर्वदेहेष्वन्तर्भावे फलितमाह—तत्रेति । प्रदेशकल्पनामुपेत्यापि दूषयति—कल्प्येति । कार्यमभिसंध्यादि । यस्याऽऽत्मनः शरीरं तस्यैव तत्र वृत्तिलाभो नान्ये-

मार्थिकं कार्यं नियन्तुं शक्नोति ॥ शरीरमपि सर्वात्मसंनिधावुत्पद्यमानस्यैवात्मनो नेतरेषामिति न नियन्तुं शक्यम् । प्रदेशविशेषाभ्युपगमेऽपि च द्वयोरात्मनोः समानसुखदुःखभाजोः कदाचिदेकेनैव तावच्छरीरेणोपभोगसिद्धिः स्यात्। समानप्रदेशस्यापि द्वयोरात्मनोरदृष्टस्य संभवात्। तथाहि–देवदत्तो यस्मिन्प्रदेशे सुखदुःखमन्वभूत्तस्मात्प्रदेशादपक्रान्ते तच्छरीरे यज्ञदत्तशरीरे च तं प्रदेशमनुप्राप्ते तस्यापीतरेण समानः सुखदुःखानुभवो दृश्यते, स न स्याद्यदि देवदत्तयज्ञदत्तयोः समानप्रदेशमदृष्टं न स्यात् । स्वर्गाद्यनुपभोगप्रसङ्गश्च प्रदेशवादिनः स्यात् । ब्राह्मणादिशरीरप्रदेशेष्वदृष्टनिष्पत्तेः प्रदेशान्तरवर्तित्वाच्च स्वर्गाद्युपभोगस्य। सर्वगतत्वानुपपत्तिश्च बहूनामात्मनां, दृष्टान्ताभावात् ॥ वद तावत्त्वं के बहवः समानप्रदेशाश्चेति ॥ रूपादय इति चेत् ॥ न ॥ तेषामपि धर्म्य-

---

रत्नप्रभा ।

शरीरमपीति ॥ प्रदेशपक्षे दोषान्तरमाह—प्रदेशेति ॥ यस्मिन्नात्मप्रदेशेऽदृष्टोत्पत्तिः स किं चलः स्थिरो वा । नाद्यः, अचलेंऽशिन्यंशस्य चलनविभागयोरसंभवादण्वात्मवादापाताच्च । द्वितीये तस्मिन्नेव प्रदेशे परस्यापि भोगदर्शनाददृष्टमस्तीत्येकेनापि शरीरेण द्वयोरात्मनोर्भोगप्रसङ्गः । यद्यात्मभेदात्प्रदेशयोर्भेदस्तदापि तयोरेकदेहान्तर्भावाद्भोगसांकर्यं तदवस्थं सावयवात्मवादप्रसङ्गश्च । किंच, यत्तु यत्रात्मनः प्रदेशे शरीरादिसंयोगाददृष्टमुत्पन्नं तत्तत्रैवाचलप्रदेशे स्थितमिति स्वर्गादिशरीरावच्छिन्नात्मन्यदृष्टाभावाद्भोगो न स्यादतः प्रदेशभेदो न व्यवस्थापकः । यत्त्वत्रोत्पन्नमदृष्टं स्वाश्रये यत्र क्वचिद्भोगहेतुरिति स्वार्गादिभोगसिद्धिरिति । तन्न, भोगशरीराद्दूरस्थादृष्टे मानाभावादिति भावः ॥ यदपि केचिदाहुः—मनस एकत्वेऽप्यात्मनां भेदेन संयोगव्यक्तीनां भेदात्कयाचित्संयोगव्यक्त्या कस्मिंश्चिदेवात्मन्यदृष्टादिकमित्यसांकर्यमिति । तन्न, संयोगव्यक्तीनां वैजात्याभावेन सर्वासामेवैकदेहान्तःस्थसर्वात्मस्वदृष्टहेतुत्वापत्तेः । तथा च सर्वात्मनामेकस्मिन् देहे भोक्तृत्वं दुर्वारम् । किंच बहूनां विभुत्वमङ्गीकृत्य सांकर्यमुक्तं, संप्रति कर्तॄणां विभुत्वमसिद्धमहमिहैवास्मि इत्यल्पत्वानुभवान्मानाभावाच्चेत्याह—सर्वगतत्वानुपपत्तिश्चेति ॥ किंच बहूनां विभुत्वे समानदेशत्वं वाच्यं, तच्चायुक्तमदृष्टत्वादित्याह—वदेति ॥ ननु रूपरसादीनामेकघटस्थत्वं दृष्टमिति चेत्, नायमस्मत्संमतो दृष्टान्तः । रूपस्य तेजोमात्रत्वाद्रसस्य जलमात्रत्वाद्गन्धस्य पृथिवीमात्रत्वादित्येवं तत्तद्गुणस्य स्वस्वधर्म्यंशेनाभेदात्तेजआदिधर्म्यतिरिक्तघटाभावात् । किंचात्मनां बहुत्वमप्यसिद्धम्, आत्मस्वरूपलक्षणस्याभेदात्, तथा च देवदत्तात्मा यज्ञदत्तात्मनो न भिन्नः आत्मत्वात्, यज्ञदत्तात्मवत् ॥ अत्र

भामती ।

दमतद्दूषणम् । भाष्यकृता तु प्रौढवादितया काणादान् प्रत्यप्यदृष्टानियमादित्यादीनि सूत्राणि योजि-

आनन्दगिरीय–न्यायनिर्णयः ।

तानीत्याशङ्क्याऽऽह—शरीरमिति । न च पूर्वादृष्टवशाद्देहनियमस्तस्यापि नियमश्च देहसंबन्धादित्यनादित्वाददोषोऽन्धपरंपरापातादागमानुरोधे चाऽऽत्मैक्यप्रसंगादिति भावः । किंच, प्रदेशभेदं विनाऽपि सुखादिव्यवस्थाया दृष्टत्वान्न तस्य व्यवस्थापकतेत्याह—प्रदेशेति । द्वयोरात्मनोस्तुल्यदेशमदृष्टं कथमित्याशंक्याऽऽह—तथाहीति । किंच, प्रदेशभेदेऽपि कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यान्न तस्य व्यवस्थापकतेत्याह—स्वर्गादीति । बहूनां सर्वगतत्वमुपेत्याव्यवस्थोक्ता संप्रति तदपि नास्तीत्याह—सर्वेति । बहूनां विभुत्वे दृष्टान्ताभावेऽपि तुल्यदेशत्वे तद्भावादात्मनां पारिशेष्याद्विभुत्वमित्याशंक्याऽऽह—वदेति । रूपादीनां बहूनामेक एव घटो देशो दृष्टो न च मिथोविरोधो निरवयवत्वात्तयाऽऽत्मनामपि निरवयवानामेकदेशतेति शङ्कते—रूपेति । तेषामपि तेजोजलादिभिः स्वधर्मिभिरभेदात्तदतिरिक्तघटाभावात्कुतो दृष्टान्ततेत्याह—नेति । किंचाऽऽत्मनां बहुत्वमपि लक्षणभेदादन्यविशेषवशाद्वा । नाऽऽद्यः, अन्यत्र लक्षणभे-

शेनाभेदाल्लक्षणभेदाच्च । न तु बहूनामात्मनां लक्षणभेदोऽस्ति ॥ अन्त्यविशेषवशाद्भेदोपपत्तिरिति चेत् ॥ न ॥ भेदकल्पनाय अन्त्यविशेषकल्पनायाश्चेतरेतराश्रयत्वात् । आकाशादीनामपि विभुत्वं ब्रह्मवादिनोऽसिद्धं कार्यत्वाभ्युपगमात् ॥ तस्मादात्मैकत्वपक्ष एव सर्वदोषाभाव इति सिद्धम् । ॥ २ ॥ ३ ॥ ५३ ॥ इत्यंशाधिकरणम् ॥ १७ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारीणपरमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये पञ्चमहाभूतजीवश्रुतीनां विरोधपरिहारो नाम द्वितीयाऽध्यायस्य तृतीयः पादः समाप्तः ॥ २ ॥ ३ ॥

---

रत्नप्रभा ।

वैशेषिकः शङ्कते—अन्त्यविशेषेति ॥ नित्यद्रव्यमात्रवृत्तयो विशेषाः, ते च स्वयं स्वाश्रयव्यावर्तका एव न स्वेषां व्यावर्तकमपेक्षन्त इत्यन्त्या उच्यन्ते । तथा च विशेषरूपलक्षणभेदाद्भवत्यात्मभेद इत्यर्थः । न तावदात्मन्यनात्मनः सकाशाद्भेदज्ञानार्था विशेषकल्पना, आत्मत्वादेवानात्मभेदसिद्धेः । नाप्यात्मनां मिथो भेदज्ञानार्थं तत्कल्पना, आत्मभेदस्याद्याप्यसिद्धेः । न च विशेषभेदकल्पनादेवात्मभेदकल्पना युक्ता, आत्मभेदज्ञप्तावात्मसु विशेषभेदसिद्धिस्तत्सिद्धौ तज्ज्ञप्तिरित्यन्योन्याश्रयादिति परिहारार्थः । यत्तु बहूनां विभुत्वे आकाशादिकाला दृष्टान्त इति सोऽप्यसंमत इत्याह—आकाशादीनामिति ॥ विभुत्वस्यैकवृत्तित्वे लाघवान्न विभुभेदः । यथैकस्मिन्नाकाशे भेरीवीणादिभेदेन तारमन्द्रादिशब्दव्यवस्था एवमेकस्मिन्नप्यात्मनि बुद्ध्युपाधिभेदेन सुखादिव्यवस्थोपपत्तेरात्मभेदेऽपि व्यवस्थानुपपत्तेरुक्तत्वान्मुधा भेदकल्पनेत्युपसंहरति—तस्मादिति ॥ एवं भूतभोक्तृश्रुतीनां विरोधाभावाद्ब्रह्मण्यद्वये समन्वय इति सिद्धम् ॥ ५३ ॥ ( १७ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शनभाष्यव्याख्यायां ( भाष्य ) रत्नप्रभायां द्वितीयाध्यायस्य तृतीयः पादः ॥ २ ॥ ३ ॥

भामती ।

तानि । सांख्यमतदूषणपराण्येवेति तु रोचयन्ते केचित्तदास्तां तावत् ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ( १७ )॥

इति श्रीवाचस्पतिमिश्रविरचिते भगवत्पादशारीरकभाष्यविभागे भामत्यां द्वितीयाध्यायस्य तृतीयः पादः ॥ २ ॥ ३ ॥

आनन्दगिरीय–न्यायनिर्णयः ।

दात् । भेदेऽपि प्रकृते तदभावादित्याह—लक्षणेति । नाऽऽत्मनां तद्भेदोऽस्ति तेषां भिन्नलक्षणानुपलम्भात्ततश्चायुक्तं बहुत्वमित्यर्थः । द्वितीयं शंकित्वा दूषयति—अन्त्येत्यादिना । नित्यद्रव्याः स्वरूपसन्तो विशेषास्तद्वशादात्मसु व्यावृत्तिरित्ययुक्तं, न हि तेषां निर्भिन्ने व्यावृत्तिधीहेतुत्वं स्वरूपादपि तत्प्रसक्तावेकाभावप्रसङ्गादतो भेदे सिद्धेऽन्त्यविशेषसिद्धिस्तत्सिद्धौ च भेदसिद्धिरित्यन्योन्याश्रयान्नैकस्यापि सिद्धिरित्यर्थः । यत्तु बहूनामात्मनां विभुत्वासिद्धिर्दृष्टान्ताभावादिति । तन्न, आकाशादीनामेव तथात्वादित्याशंक्याऽऽह—आकाशादीनामिति । परपक्षं निराकृत्य स्वपक्षमुपसंहरति—तस्मादिति । 'यो बहून्कल्पयति कल्पयत्यसावेकम्' इति न्यायादेकस्तावदात्मा सर्वसंमतस्तस्मिंश्चाऽऽकाशकल्पे परोपाधिना व्यवहारसिद्धौ न तात्त्विकभेदकल्पनायां किंचिन्मानं फलं वाऽस्तीति भावः । तदेवं भूतभोक्तृविषयश्रुतिविरोधव्यासेधेन समन्वयः सिद्धो ब्रह्मणीति पादार्थमुपसंहरति—इति सिद्धमिति ॥ ५३ ॥ ( १७ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि ( ज्ञान ) विरचितायां शारीरकव्याख्यायां न्यायनिर्णये द्वितीयाध्यायस्य तृतीयः पादः समाप्तः ॥ २ ॥ ३ ॥

इति द्वितीयाऽध्यायस्य पञ्चमहाभूतजीवश्रुतीनां विरोधपरिहारो नाम तृतीयः पादः ॥

# द्वितीयाऽध्याये चतुर्थः पादः ४.



## तथा प्राणाः ॥ २ ॥ ४ ॥ १ ॥ ( १ ) ॥

वियदादिविषयः श्रुतिविप्रतिषेधस्तृतीयेन पादेन परिहृतः । चतुर्थेनेदानीं प्राणविषयः परिह्रियते । तत्र तावत् "तत्तेजोऽसृजत" [ छान्दो० ६ । २ । ३ ] इति, "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" [ तैत्ति० २ । १ । १ ] इति चैवमादिषूत्पत्तिप्रकरणेषु प्राणानामुत्पत्तिर्नाम्नायते । क्वचिच्चानुत्पत्तिरेवैषामाम्नायते "असद्वा इदमग्र आसीत" [ तै० २ । ७ ] "तदाहुः किं तदसदासीदित्यृषयो वाव तेऽग्रेऽसदासीत् । तदाहुः के ते ऋषय इति । प्राणा वाव ऋषयः" इत्यत्र प्रागुत्पत्तेः प्राणानां सद्भावश्रवणात् । अन्यत्र तु प्राणानामप्युत्पत्तिः पठ्यते—"यथाऽग्नेर्ज्वलतः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः" इति, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" [ मुण्ड० २ । १ । ३ ] इति, "सप्त प्राणाः प्रभवन्ति तस्मात्" [ मु० २ । १ । ८ ] इति, "स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नम्" [ प्र० ६ । ४ ] इति चैवमादिप्रदेशेषु । तत्रतत्र श्रुतिविप्रतिषे-

---

रत्नप्रभा ।

ॐ ब्रह्मणे नमः ॥ पूर्वाधिकरणे कर्तुः स्वरूपं विचार्य तदुपकरणानामिन्द्रियाणामुत्पत्तिं साधयति—**तथा प्राणाः** ॥ भूतभोक्तृविचारानन्तरं भौतिकप्राणविचार इति हेतुहेतुमद्भावं पादयोः संगतिमाह—**वियदादीति** ॥ तमेव विप्रतिषेधमाह—**तत्रेत्यादिना** ॥ यद्यपि प्राणानामनुत्पत्तौ एकविज्ञानप्रतिज्ञानुपपत्तेर्वियदधिकरणन्यायात्तेषामुत्पत्तिः सिध्यति, तथापि प्रलये प्राणसद्भावश्रुतेर्गतिकथनार्थमेतदधिकरणमित्यपौनरुक्त्यम् । अत्र प्राणा विषयाः । ते किमुत्पद्यन्ते न वेति श्रुतीनां विप्रतिपत्त्या संशये तासां समबलत्वादनिर्णय इत्यप्रा-

भामती ।

**तथा प्राणाः** । यद्यपि ब्रह्मवेदने, सर्ववेदनप्रतिज्ञातादुपपादनश्रुतिविरोधाद्बहुतराद्वैतश्रुतिविरोधाच्च प्राणानां सर्गादौ सद्भावश्रुतिर्वियदमृतत्वादिश्रुतय इवान्यथा कथंचिन्नेतुमुचिता, तथाप्यन्यथानयनप्रकारमविद्वानन्यथानुपपद्यमानैकापि श्रुतिर्बह्वीरन्यथयेदिति मन्वानः पूर्वपक्षयति । अत्र चात्युच्चतया वियदधिकरणपूर्वपक्षहेतून् स्मारयति—**तत्र तावदिति** । शब्दैकप्रमाणसमधिगम्या हि महाभूतोत्पत्तिस्तस्या यत्र

आनन्दगिरीय—न्यायनिर्णयः ।

भूतभोक्तृविषयश्रुतिविरोधं पूर्वपादे परिहृत्य भौतिकेन्द्रियादिश्रुतिविरोधं परिहर्तुं पादान्तरमवतारयन्पूर्वाधिकरणे कर्तृस्वरूपं विचार्य तदुपकरणानामिन्द्रियाणामुत्पत्तिं साधयति—**तथेति** । पूर्वोत्तरपादसंगतिमाह—**वियदादीति** । प्राणविषयः प्राणोत्पत्तिसंख्यातत्वादिविषय इत्यर्थः । सति विरोधे तत्परिहाराय प्रयतितव्यमिति मत्वा प्रथमं प्राणोत्पत्तिविषयं विरोधमुदाहरति—**तत्रेति** । क्वचिदुत्पत्त्यश्रवणमाकाशस्येवोत्पत्त्यभावासाधकत्वात्किमित्युद्भावितमित्याशंक्यानुत्पत्तिवाक्यसहायत्वेनेत्याह—**क्वचिच्चेति** । शून्यवादमाशंक्याऽऽह—**तदिति** । प्रसिद्धानामृषीणां प्रसङ्गं प्रत्याह—**तदित्यादिना** । कथमत्र प्राणानामनुत्पत्त्याम्नानं तद्वाचकपदाभावात्तत्राऽऽह—**प्रागिति** । विप्रतिपत्त्यर्थमुत्पत्तिवाक्यं दर्शयति—**अन्यत्रेति** । विप्रतिपत्तेरेकादशेन्द्रियाणामुत्पत्तिरस्ति न वेति संशीतावनध्यवसायेन पूर्वपक्षयति—**तत्रेति** । न च वियदधिकरणन्यायेन निर्णयः प्राणानां प्रलये सत्त्वश्रुतेर्वियदमृतत्वादिश्रुतिवदवान्तरप्रलयाभिप्रायेण नयनप्रकाराज्ञा-

धादन्यतरनिर्धारणकारणानिरूपणाच्चाप्रतिपत्तिः प्राप्नोति । अथ वा प्रागुत्पत्तेः सद्भावश्रवणाद्गौणी प्राणानामुत्पत्तिश्रुतिरिति प्राप्नोति ॥ अत उत्तरमिदं पठति–तथा प्राणा इति । कथं पुनरत्र तथेत्यक्षरानुलोम्यं प्रकृतोपमानाभावात् । सर्वगतात्मबहुत्ववादिदूषणमतीतानन्तरपादान्ते प्रकृतं तत्तावन्नोपमानं संभवति सादृश्याभावात् । सादृश्ये हि सत्युपमानं स्यात् । यथा सिंहस्तथा बलवर्मेति ॥ अदृष्टसाम्यप्रतिपादनार्थमिति यद्युच्येत, यथाऽदृष्टस्य सर्वात्मसंनिधावुत्पद्यमानस्यानियतत्वमेवं प्राणानामपि सर्वात्मनः प्रत्यनियतत्वमिति । तदपि देहानियमेनैवोक्तत्वात्पुनरुक्तं भवेत् ॥ न च जीवेन प्राणा उपमीयेरन्सिद्धान्तविरोधात् । जीवस्य ह्यनुत्पत्तिराख्याता । प्राणानां तूत्पत्तिर्व्याचिख्यासिता । तस्मात्तथेत्यसंबद्धमिव प्रतिभाति ॥ न ॥ उदाहरणोपात्तेनाप्युपमानेन संबन्धोपपत्तेः । अत्र प्राणोत्पत्तिवादिवाक्यजातमुदाहरणम्–"एतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति" [ बृ० २ । १ । २० ] इत्येवंजातीयकम् । तत्र यथा लोकादयः परस्माद्ब्रह्मण

रत्नप्रभा ।

माण्यमिति पूर्वपक्षफलं, तत्र गौणवादी समाधानमाह–अथ वेति ॥ प्राणानां प्रलये सद्भावश्रुतेर्निरवकाशत्वेन बलीयस्त्वादुत्पत्तिश्रुतिर्जीवोत्पत्तिश्रुतिवद्गौणीत्यविरोध इत्यर्थः । अप्रमाणपक्षवद्गौणपक्षोऽपि मुख्यसिद्धान्तिनः पूर्वपक्ष एवेति ज्ञापनार्थमथवेत्युक्तम् ॥ मुख्यसिद्धान्त्याह–अत इति ॥ तथाशब्दमाक्षिपति–कथमिति ॥ आनुलोम्यमाञ्जस्यमित्यर्थः ॥ साम्यं स्फुटयति–यथाऽदृष्टस्येति ॥ दूषणवत्प्राणा इत्यनन्वितम् । यद्यप्यदृष्टवत्प्राणा अप्यनियता इति सूत्रमन्वेति तथापि पुनरुक्तम् । जीववत्प्राणा नोत्पद्यन्त इति सूत्रार्थश्चेदपसिद्धान्त इत्याक्षेपार्थः ॥ समाधत्ते–न । उदाहरणेति ॥ दृष्टान्तो दार्ष्टान्तिकसंनिहितो वाच्य इत्यङ्गीकृत्यैकवाक्यस्थत्वेन सांनिध्यमुक्तम् । संप्रति नायं नियमः, जैमिनिना भगवता व्यवहितदृष्टा-

भामती ।

शब्दो निवर्तते तत्र तत्प्रमाणाभावेन तदभावः प्रतीयते । यथा चैत्यवन्दनतत्कर्मधर्मताया इत्यर्थः । अत्रापातत: श्रुतिविप्रतिपत्त्यानध्यवसायेन पूर्वपक्षयित्वाऽथवेत्यभिहितं पूर्वपक्षमवतारयति । अभिप्रायोऽस्य

आनन्दगिरीय–न्यायनिर्णयः ।

नादिति भावः । श्रुतीनाममानत्वे शंकिते गौणवाद्याह–अथ वेति । प्रलये प्राणव्यवहाराभावादुत्पत्तिकाले तद्भावात्तद्विषयतया जन्मश्रुतिरन्यथासिद्धा प्राणानां प्रागवस्थानश्रवणं तु तेषां जन्माभावे लिङ्गमनन्यथासिद्धतया बलीयस्त्वात्तज्जन्माभावसाधकमिति भावः । अत्र च प्राणोत्पत्त्यनुत्पत्तिश्रुतीनां मिथोविरोधनिषेधेन मूलकारणे ब्रह्मणि समन्वयसाधनात्पादादिसंगतयः । पूर्वपक्षे तासां विरोधादप्रामाण्यात्तत्र समन्वयासिद्धिः । सिद्धान्ते त्वविरोधेन तत्सिद्धिः पूर्वपक्षमनुभाष्य सिद्धान्तयति–अत इति । सौत्रं तथाशब्दमाक्षिपति–कथमिति । आनुलोम्यमाञ्जस्यम् । कथं प्रकृतोपमानाभावस्तत्र किं परदूषणं प्राणानामुपमानमाहोस्विददृष्टमथ वा जीवः ? नाऽऽद्य इत्याह–सर्वेति । परपक्षदूषणस्य प्राणानां च सादृश्याभावेऽपि किमित्युपमानोपमेयभावो न स्यात्तत्राऽऽह–सादृश्ये हीति । कल्पान्तरमाह–अदृष्टेति । तेन साम्यप्रतिपादनमेव प्रकटयति–यथेति । पुनरुक्त्या दूषयति–तदपीति । तृतीयं प्रत्याह–न चेति । सिद्धान्तविरोधं स्फोरयति–जीवस्येति । आक्षेपमुपसंहरति–तस्मादिति । सूत्राक्षराक्षेपं परिहरति–नेति । किं तदुदाहरणं तदाह–अत्रेति । कथं तदुपात्तेनोपमानं तदाह–तत्रेति । उक्त-

**उत्पद्यन्ते तथा प्राणा अपीत्यर्थः । तथा–"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" [ मुण्ड० २ । १ । ३ ] इत्येवमादिष्वपि खादिवत्प्राणानामुत्पत्तिरिति द्रष्टव्यम् । अथ वा 'पानव्यापच्च तद्वत्' [ जै० अ० ३ । ४ । १५ ] इत्ये-**

रत्नप्रभा ।

न्तस्याश्रितत्वादित्याह–अथ वेति ॥ अस्ति तृतीयाध्यायेऽश्वप्रतिग्रहेष्ट्यधिकरणं, तस्येदं विषयवाक्यं, "यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्" इत्येतदुत्तराधिकरणे किमियं वारुणीष्टिर्दातुरुत प्रतिग्रहीतुरिति विशये 'प्रतिगृह्णीयात्' इति श्रुतेः प्रतिग्रहीतुरित्याशंक्य "प्रजापतिर्वरुणायाश्वमनयत्" इत्युपक्रमे दातृकीर्तनाल्लिङ्गाद्श्वदातुरेवेति स्थास्यति, अतः प्रतिगृह्णीयादित्यस्य पदस्याऽश्वान् यः प्रतिग्राहयेदित्यर्थः । दद्यादिति यावत् । "योऽश्वदाता स वारुणीमिष्टिं कुर्यात्" इति वाक्यार्थे स्थिते चिन्ता–अश्वदाननिमित्तेयमिष्टिः किं लौकिकेऽश्वदाने वैदिके वेति । तत्र "न केसरिणो ददाति" इति निषिद्धलौकिकाश्वदाने दोषसंभवात्तन्निरासार्थेयमिष्टिरिति "दोषात्त्विष्टिर्लौकिके स्यात्" इति सूत्रेण प्राप्ते सिद्धान्तः–"अत्र हि वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति" इति दातुर्दोषं संकीर्त्येष्टिर्विहिता । वरुणशब्दो जलोदराख्यरोगे रूढः । न च लौकिकेऽश्वदानेऽयं रोगो भवति इति प्रसिद्धम् । न चानेनैव वाक्येन प्रसिद्धिः । दाने दोषस्तन्निरासार्था चेष्टिरितिवदतोऽर्थभेदे वाक्यभेदात् । न च वृणोतीति व्युत्पत्त्या वरुणशब्दो निषेधातिक्रमकृतदोषानुवादक इति युक्तं, रूढित्यागापातात् । तत्त्यागे च वैदिकेऽपि दानेऽश्वत्यागजन्यदुःखं प्राप्तमुक्तव्युत्पत्त्या शक्नोत्यनुवदितुं, तस्मात्प्राप्तानुवाद्यर्थवादोऽयमिति यज्ञसंबन्धिन्यश्वदाने इयमिष्टिरित्येवं विचार्योक्तम्–पानव्यापच्च तद्वदिति ॥ सोमपाने क्रियमाणे व्यापद्वमनं यदि स्यात्तदा

भामती ।

दर्शितः 'पानव्यापच्च तद्वत्' इत्यत्राश्वप्रतिग्रहेष्ट्याद्यधिकरणपूर्वपक्षसूत्रार्थसादृश्यं तदा परामृष्टम् । राद्धान्तस्तु स्यादेतदेवं यदि सर्गादौ प्राणसद्भावश्रुतिरनन्यथासिद्धा भवेत् । अन्यथैव त्वेषा सिध्यति । अवान्तरप्रलये ह्यग्निसाधनानां सृष्टिर्वक्तव्येति तदर्थोऽसावुपक्रमः । तत्राधिकारिपुरुषः प्रजापतिरप्रनष्ट एव त्रैलोक्यमात्र

आनन्दगिरीय–न्यायनिर्णयः ।

न्यायमाथर्वणादिवाक्येष्वपि योजयति–तथेति । संनिहितमेवोपमानमित्यङ्गीकृत्यैकवाक्योपात्तत्वेन सांनिध्यमुक्तमिदानीं नायं नियमो व्यवहितोपमानस्यापि मीमांसकैरिष्टत्वादित्याह–अथ वेति । अस्ति तावदश्वदाननिमित्तेष्टिः 'वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इत्याम्नाता । सा किं लौकिकेऽश्वदाने वैदिकेऽश्वदाने वेति संदेहे "दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात्" [ पू० मी० सू० ३ । ४ । २८ ] इति पूर्वपक्षसूत्रम् । अस्यार्थः–अश्वदाने लौकिके दोषनिर्घातार्था प्रकृतेष्टिरेष्टव्या । तत्रैव 'न केसरिणो ददाति' इति निषेधातिक्रमकृतस्य दोषस्य संभवात् । वैदिकेऽश्वदाने सामान्यनिषेधानवकाशान्न तत्कृतो दोषः स्यात् । पौण्डरीकेऽश्वसहस्रं दक्षिणेत्यादिविशेषशास्त्राद्वैदिकाश्वदानस्य निर्दोषत्वसिद्धेरिति राद्धान्तसूत्रम् "अर्थवादोऽनुपपातात्तस्माद्यज्ञे प्रतीयते" [ पू० मी० सू० ३ । ४ । २९ ] इति । तस्यार्थः–लौकिकेऽश्वदाने सति जलोदररूपवरुणग्रहदोषो नोपपतति मानाभावात् । न चेदमेव वाक्यमत्र मानमश्वदाने जलोदराख्यो दोषस्तन्निर्घातार्था चेष्टिरित्यर्थभेदे वाक्यभेदात् । न च वरुणशब्दो वृणोतीति निषेधातिक्रमकृतदोषानुवादीति कुतो वाक्यभेदस्तथा सति प्रसिद्धित्यागप्रसङ्गात्तत्त्यागे च वैदिकेऽपि दाने तुरगत्यागजं क्लेशमात्रमुक्तव्युत्पत्त्या वरुणशब्दवाच्यं स्यात्तस्माद्यावद्वरुणगृहीतस्य वरुणोन्मोचने श्रेयस्तावदस्यामिष्टावित्यर्थवादोऽयम् । तथा च यज्ञसंबन्धिन्यश्वदाने प्रतीयते वारुणीष्टिरिति स्थिते चैवं प्रतिग्रहीतुर्दातुर्वा सेष्टिरिति

 

वमादिषु व्यवहितोपमानसंबन्धस्याप्याश्रितत्वात् । यथाऽतीतानन्तरपादात्युक्ता वियदादयः परस्य ब्रह्मणो विकाराः समधिगताः, तथा प्राणा अपि परस्य ब्रह्मणो विकारा इति योजयितव्यम् । कः पुनः प्राणानां विकारत्वे हेतुः ॥ श्रुतत्वमेव ॥ ननु केषुचित्प्रदेशेषु न प्राणानामुत्पत्तिः श्रूयत इत्युक्तम् । तदयुक्तम्, प्रदेशान्तरेषु श्रवणात् । न हि क्वचिदश्रवणमन्यत्र श्रुतं निवारयितुमुत्सहते । तस्माच्छ्रुतत्वाविशेषादाकाशादिवत्प्राणा अप्युत्पद्यन्त इति सूक्तम् ॥ १ ॥

---

रत्नप्रभा ।

"एतं सौमेन्द्रं श्यामाकं चरुं निर्वपेत्" इति श्रूयते । तत्राऽश्वप्रतिग्रहेष्ट्यधिकरणपूर्वपक्षन्यायो बहुसूत्रव्यवहितस्तद्वदिति परामृश्यते, तद्वल्लौकिके धातुसाम्यार्थं पीतसोमस्य वमनेऽयं चरुः स्याद्वमननिमित्तेन्द्रियशोषाख्यदोषस्य दृष्टस्य "इन्द्रियेण वीर्येण व्यृध्यते यः सोमं वमति" इत्यनुवादादिति पूर्वपक्षसूत्रार्थः ।

भामती ।

प्रलीनमतस्तदीयान् प्राणानपेक्ष्य सा श्रुतिरुपपन्नार्था।तस्माद्भूयसीनां श्रुतीनामनुग्रहाय सर्वविज्ञानप्रतिज्ञोपपत्त्यर्थस्य चोत्तरस्य संदर्भस्य गौणत्वे तु प्रतिज्ञातार्थानुगुण्याभावेनानपेक्षितार्थत्वप्रसङ्गात्प्राणा अपि नभोवद्ब्रह्मणो

आनन्दगिरीय–न्यायनिर्णयः ।

संदेहे पूर्वपक्षितम् "अचोदितं च कर्म भेदात्" [ पू० मी० सू० ३ । ४ । ३० ] इति । तस्यार्थः–दातुरचोदितमिष्टिकर्म यः प्रतिगृह्णाति स निर्वपेदिति प्रतिग्रहीत्रा तस्य भेदाद्विशेषणादिति । "सा लिङ्गादार्त्विजे स्यात्" [ पू० मी० सू० ३ । ४ । ३१ ] इति सिद्धान्तसूत्रम् । ऋत्विजामयमित्यार्त्विजो यजमानस्तस्मिन्कर्तरि सा वारुणीष्टिः स्यात्प्रजापतिर्वरुणायाश्वमनयदित्युपक्रमे दातुः संकीर्तनाल्लिङ्गात् । न च दातरि प्रतिगृह्णातीति विरुद्धं संप्रदानप्रेरणादिना तस्यापि प्रतिग्रहकर्तृत्वादित्यर्थः । एवं दातुरिष्टिरिति व्यवस्थाप्योक्तम् "पानव्यापच्च तद्वत्" [ पू० मी० सू० ३ । ४ । ३२ ] इति । 'सौमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामीत' इत्यत्र लौकिकसोमपानवमने वा वैदिकसोमपानवमने वा सौमेन्द्रश्चरुरिति संदेहे सति प्रतिग्रहेष्ट्याद्यधिकरणपूर्वपक्षवल्लौकिके धातुसाम्यार्थं सोमस्य पाने यदि व्यापद्वमनं भवति तदा तस्मिँल्लौकिके वमने यागो विधीयते । इन्द्रियेण वीर्येण व्यृध्यते यः सोमं वमतीति दोषाद्वमननिमित्तेन्द्रियशोषस्य च दर्शनान्न वरुणग्रहणवदप्राप्तिः । वैदिके तु सोमपाने शेषप्रतिपत्तेर्जातत्वाद्वमनेऽपि न दोष इति पूर्वपक्षयित्वा राद्धान्तितम् "दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषः स्यात्" [ पू० मी० सू० ३ । ४ । ३३ ] इति । वैदिके हि सोमपानवमने सौमेन्द्रश्चरुः स्यात् । 'मा मे वाङ् नाभिमतिगाः' इति मन्त्रलिङ्गाद्वमने कर्मवैगुण्याद्दोषावगमात् । लौकिके तु सोमपानवमने न कश्चिद्दोषः स्यात्तस्य धातुसाम्यार्थत्वात्तज्जन्मेन्द्रियशोषस्य धातुसाम्यकरत्वेन गुणत्वात् । श्रूयते चेन्द्रियेणेत्यादिना वैदिकस्य पानस्य व्यापदि दोषः, स च वमनेन सोमसंस्कारे विनष्टे सत्युपपद्यते तस्माद्वैदिके वमने याग इत्यर्थः । "तत्सर्वत्राविशेषात्" [ पू० मी० सू० ३ । ४ । ३४ ] "स्वामिनो वा तदर्थत्वात्" [ पू० मी० सू० ३ । ४ । ३५ ] इत्येवंविधानि पूर्वोत्तरपक्षसूत्राण्यादिशब्देन गृह्यन्ते । तेषु व्यवहितोपमानसंबन्धद्वस्याभियुक्तैरिष्टत्वादत्रापि व्यवहितोपमानसंबन्धः संभवतीति भाष्यार्थः । व्यवहितोपमानसंबन्धितया तथाशब्दार्थमुक्त्वा सूत्रं योजयति–**यथेति** । प्रतिज्ञामात्रस्य सूत्रे दृष्टेरिष्टं हेतुं प्रश्नपूर्वकमाह–**कः पुनरिति** । पूर्ववादी पूर्वोक्तं स्मारयति–**नन्विति** । 'अश्रवणं श्रवणानुसारेण नेयम्' इति गुणोपसंहारन्यायेन दूषयति–**तदिति** । कुतस्तेनैव न्यायेन श्रवणमश्रवणानुरोधेन न नीयते वियदधिकरणविरोधादित्याह–**न हीति** । श्रुत्यनुरोधेनाश्रुतेर्नेतव्यत्वे फलितमाह–**तस्मादिति** ॥ १ ॥ विरोधवादिनं प्रति-

## गौण्यसंभवात् ॥ २ ॥

**यत्पुनरुक्तं प्रागुत्पत्तेः सद्भावश्रवणाद्गौणी प्राणानामुत्पत्तिश्रुतिरिति। तत्प्रत्याह-"गौण्यसंभवात्" इति। गौण्या असंभवो गौण्यसंभवः। न हि प्राणानामुत्पत्तिश्रुतिर्गौणी संभवति। प्रतिज्ञाहानिप्रसंगात्॥ "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" [मुण्ड० १।१।३] इति ह्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तत्साधनायेदमाम्नायते-"एतस्माज्जायते प्राणः" [मुण्ड० २।१।३] इत्यादि। सा च प्रतिज्ञा प्राणादेः समस्तस्य जगतो ब्रह्मविकारत्वे सति प्रकृतिव्यतिरेकेण विकाराभावात्सिध्यति। गौण्यां तु प्राणानामुत्पत्तिश्रुतौ प्रतिज्ञेयं हीयेत। तथा च प्रतिज्ञातार्थमुपसंहरति-"पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्" [मुण्ड० २।१।१०] इति, "ब्रह्मैवेदं विश्वमिदं वरिष्ठम्" [मुण्ड० २।२।११] इति च। तथा "आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्" इत्येवंजातीयकासु श्रुतिष्वेषैव प्रतिज्ञा योजयितव्या। कथं पुनः प्रागुत्पत्तेः प्राणानां सद्भावश्रवणम्।**

---

रत्नप्रभा।

वैदिके तु सोमपाने शेषप्रतिपत्तेर्जातत्वाद्वमनेऽपि न दोष इति प्राप्ते सिद्धान्तः। लोके वमनकृतेन्द्रियशोषस्य धातुसाम्यकरत्वेन गुणत्वान्न दोषता। वेदे तु 'मा मे वाङ्नाभिमतिगाः' इति सम्यग्जरणार्थमन्त्रलिङ्गाद्वमने कर्मवैगुण्यात्तस्य दोषता। तस्माद्वैदिकसोमवमने सौमेन्द्रश्चरुरिति स्थितमित्येवमादिषु सूत्रेष्विति त्यर्थः॥ १॥ ननु प्रतिज्ञापि गौणी किं न स्यादित्यत आह-**तथा च प्रतिज्ञातार्थमिति**॥ उपक्रमोपसंहाराभ्यां प्रतिपिपादयिषिताद्वितीयत्वप्रतिज्ञानुरोधेन प्राणोत्पत्तिर्मुख्यैवेति भावः। मुण्डकवच्छ्रुत्यन्तरेऽपि प्रतिज्ञादर्शनात्सा मुख्येत्याह-**तथेति**। एषा प्रतिज्ञा प्राणोत्पत्तिमुख्यत्वे हेतुत्वेन द्रष्टव्येत्यर्थः। इदानीं प्रलये प्राणसत्त्वश्रुतेर्गतिं प्रश्नपूर्वकमाह-**कथमित्यादिना**॥ नेदं वाक्यं महाप्रलये परमकारणस्य ब्रह्मणः प्राणवत्त्वपरं किन्त्ववान्तरप्रलये हिरण्यगर्भाख्यावान्तरप्रकृतिरूपप्राणसद्भावपरमित्यर्थः। ननु हिरण्यगर्भरूप-

भामती।

विकारा इति। न च चैत्यवन्दनादिवत्सर्वथा प्राणानामुत्पत्त्यश्रुतिः, क्वचित् खल्वेषामुत्पत्त्यश्रवणमुत्पत्तिश्रुतिस्तु तत्रतत्र दर्शिता। तस्माद्वैषम्यं चैत्यवन्दनपोषधादिभिरिति। केचिद्द्वियदधिकरणव्याख्यानेन गौण्यसंभवादिति सूत्रं व्याचक्षते। गौणी प्राणानामुत्पत्तिश्रुतिरसंभवादुत्पत्तेरिति। तदयुक्तम्। विकल्पासहत्वात्। तथाहि-प्राणानां जीववद्ब्रह्माऽविकृतब्रह्मात्मतयानुपपत्तिः स्यात्, ब्रह्मणस्तत्त्वान्तरतया वा। न तावज्जीववदेषामविकृतब्रह्मात्मता, जडत्वात्। तस्मात्तत्त्वान्तरतयैषामनुत्पत्तिरास्थेया। तथा च ब्रह्मवेदनेन सर्ववेदनप्र-

आनन्दगिरीय-न्यायनिर्णयः।

बोध्य गौणवादिनं प्रत्याह-**गौणीति**। सूत्रव्यावर्त्यमनूद्य तदुत्तरत्वेनावतार्य विभजते-**यदित्यादिना**। काऽसौ प्रतिज्ञा कथं वा प्राणानामुत्पत्तेर्गौणत्वे तद्धानिस्तत्राऽऽह-**कस्मिन्निति**। कथमेतस्मादित्यादिना प्रतिज्ञा समर्थ्यते तत्राऽऽह-**सा चेति**। विपक्षे दोषमाह-**गौण्यां त्विति**। प्रतिज्ञाऽपि गौणीति न तदर्थं प्राणोत्पत्तिर्मुख्या वाच्येत्याशंक्योपक्रमोपसंहारालोचनया विवक्षिताद्वितीयत्वानुरोधेन प्रतिज्ञाया गौणत्वायोगान्मुख्यैव प्राणोत्पत्तिरित्याह-**तथा चेति**। प्रतिज्ञाया मुख्यत्वसिद्धये भूयःसु प्रदेशेषु दृष्टत्वं हेत्वन्तरमाह-**तथेति**। प्राणानामुत्पत्तिश्चेत्प्रागवस्थायां सत्त्वश्रुतिर्विरुध्येतेति शङ्कते-**कथमिति**। नैतद्वाक्यं

नैतन्मूलप्रकृतिविषयम् । "अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः" [ मुण्ड० २ । १ । २ ] इति मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वावधारणात् । अवान्तरप्रकृतिविषयं त्वेतत्स्वविकारापेक्षं प्रागुत्पत्तेः प्राणानां सद्भावावधारणमिति द्रष्टव्यम् । व्याकृतविषयाणामपि भूयसीनामवस्थानां श्रुतिस्मृत्योः प्रकृतिविकारभावप्रसिद्धेः । वियदधिकरणे हि "गौण्यसंभवात्" इति पूर्वपक्षसूत्रत्वाद्गौणी जन्मश्रुतिरसंभवादिति व्याख्यातम् । प्रतिज्ञाहान्या च तत्र सिद्धान्तोऽभिहितः । इह तु सिद्धान्तसूत्रत्वाद्गौण्या जन्मश्रुतेरसंभवादिति व्याख्यातम् । तदनुरोधेन त्विहापि गौणी जन्मश्रुतिरसंभवादिति व्याचक्षाणैः प्रतिज्ञाहानिरुपेक्षिता स्यात् ॥ २ ॥

## तत्प्राक्श्रुतेश्च ॥ ३ ॥

---

रत्नप्रभा ।

विकारस्य सत्त्वे कथं तदा विकारासत्त्वकथनं, तत्राह—स्वविकारेति ॥ स्वस्य कार्यब्रह्मणो यत्कार्यं स्थूलं तस्योत्पत्तिरित्यर्थः । ननु यथाश्रुति महाप्रलये प्राणसद्भावरूपं लिङ्गं प्राणानुत्पत्तिसाधकं किमित्यवान्तरप्रलयपरतया नीयत इति चेत् "एतस्माज्जायते प्राणः" इत्यादिप्रबलजन्मश्रुतिबलादिति वदामः ॥ ननु विकारस्य ब्रह्मणः कथं प्रकृतित्वमित्यत आह—व्याकृतेति ॥ "हिरण्यगर्भः समवर्तताग्रे" इत्यादिश्रुतौ "आदिकर्ता स भूतानाम्" इत्यादिस्मृतौ च विकारात्मनामपि मूलकारणावस्थारूपाणां ब्रह्मविराडादीनां प्रकृतिविकारभावेन प्रसिद्धिरस्ति । पूर्वापेक्षया विकारस्याप्युत्तरापेक्षया प्रकृतित्वमित्यर्थः । केचिद्वियदधिकरणानुरोधेनेदं सूत्रं व्याचक्षते तान्दूषयति—वियदिति ॥२॥ तस्य जायत इति पदस्याकाशादिषु मुख्यस्य

भामती ।

तिज्ञाव्याहतिः, समस्तवेदान्तव्याकोपश्चेत्येतदाह—वियदधिकरणे हीति ॥ १ ॥ २ ॥ तत्प्राक्श्रुतेश्च ।

आनन्दगिरीय–न्यायनिर्णयः ।

ब्रह्मणो मूलकारणस्य प्राणसद्भावार्थं तस्य श्रुत्या सर्वविशेषराहित्यसिद्धेरित्याह—नैतदिति । किंविषयं तर्हि वाक्यं तत्राऽऽह—अवान्तरेति । हिरण्यगर्भोऽवान्तरप्रकृतिस्तत्प्राणास्तित्वविषयमेतद्वाक्यमिति योजना । हिरण्यगर्भस्यापि विकारत्वात्कथं विकारासत्त्वोक्तिपूर्वकं प्राणसत्त्वावधारणं तत्राऽऽह—स्वविकारेति । अवान्तरलये हिरण्यगर्भकार्यसमुदायासत्त्वापेक्षया तदीयप्राणसत्त्वावधारणमित्यर्थः । 'एतस्माज्जायते प्राणः' इत्यादाविन्द्रियाणां श्रुत्यैव जन्मोक्तम् । 'तदाहुः' इत्यादौ तु प्रागुत्पत्तेस्तेषामवस्थानं जन्माभावे लिङ्गं तत्र लिङ्गस्य श्रुत्या बाधायामन्यतरस्यात्यन्तबाधकल्पनात् 'वरं प्रबलानुरोधेन दुर्बलस्य विषयव्यवस्थाकल्पनम्' इति न्यायेन वियदादिभिः सहेन्द्रियाणामुत्पत्त्याम्नानान्महाप्रलये तदुत्पत्तिरवान्तरप्रलये त्वनुत्पत्तिरिति श्रुतिलिङ्गयोर्विषयव्यवस्थेति भावः । ब्रह्मण एव सर्वप्रकृतित्वान्नावान्तरप्रकृतौ मानमित्याशंक्याऽऽह—व्याकृतेति । "हिरण्यगर्भः समवर्तताग्रे" "आदिकर्ता स भूतानाम्" इत्यादिश्रुतिस्मृत्योः कार्यावच्छिन्नानामपि मूलकारणावस्थाविशेषाणां हिरण्यगर्भादीनां प्रकृतिविकारभावेन प्रसिद्धेरवान्तरप्रकृतिरस्तीत्यर्थः । तदेवं प्राणसत्त्वश्रुतेरवान्तरप्रलयविषयत्वान्महाप्रलयानन्तरं प्राणोत्पत्तिश्रुतेर्न गौणतेति स्वाभिप्रायेण सूत्रं व्याख्याय वियदधिकरणवदिहापि किं न व्याख्यातमित्याशंक्य विशेषमाह—वियदिति । एकस्य सूत्रस्यैकार्थत्वयोगे किमर्थद्वयोक्त्येत्याशंक्याऽऽह—तदिति ॥ २ ॥ प्राणानां मुख्यं जन्मेत्यत्र हेत्वन्तरमाह—तत्प्रागिति । तस्य जायत इति जन्मवाचिपदस्याऽऽकाशादिषु मुख्यस्य पाठापेक्षया प्राची-

इतश्चाकाशादीनामिव प्राणानामपि मुख्यैव जन्मश्रुतिः। यज्जायत इत्येकं जन्मवाचिपदं प्राणेषु प्राक्श्रुतं सदुत्तरेष्वप्याकाशादिष्वनुवर्तते। "एतस्माज्जायते प्राणः" [ मु० २ । १ । ३ ] इत्यत्राकाशादिषु मुख्यं जन्मेति प्रतिष्ठापितं तत्सामान्यात्प्राणेष्वपि मुख्यमेव जन्म भवितुमर्हति । न ह्येकस्मिन्प्रकरण एकस्मिंश्च वाक्य एकः शब्दः सकृदुच्चरितो बहुभिः संबध्यमानः क्वचिन्मुख्यः क्वचिद्गौण इत्यध्यवसातुं शक्यम् । वैरूप्यप्रसङ्गात्। तथा "स प्राणमसृजत प्राणाच्छ्रद्धाम्' [ प्रश्न० ६ । ४ ] इत्यत्रापि प्राणेषु श्रुतः सृजतिः परेष्वप्युत्पत्तिमत्सु श्रद्धादिष्वनुषज्यते ॥ यत्रापि पश्चाच्छ्रुत उत्पत्तिवचनः शब्दः पूर्वैः संबध्यते तत्राप्येष एव न्यायः । यथा— "सर्वाणि भूतानि व्युच्चरन्ति" इत्ययमन्ते पठितो व्युच्चरन्तिशब्दः पूर्वैरपि प्राणादिभिः संबध्यते ॥ ३ ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

रत्नप्रभा ।

पाठापेक्षया प्राचीनेषु प्राणेषु श्रुतेर्मुख्यं जन्मेति सूत्रयोजना—तत्सामान्यादिति ॥ तेनाकाशादिजन्मना सामान्यमेकशब्दोक्तत्वं तस्मादित्यर्थः । एकस्मिन्वाक्ये एकस्य शब्दस्य क्वचिन्मुख्यत्वं क्वचिद्गौणत्वमिति वैरूप्यं न युक्तमिति न्यायमन्यत्राप्यतिदिशति—यत्रापि पश्चाच्छ्रुत इति ॥ ३ ॥ यच्चोक्तं छान्दोग्येऽपि प्राणानामुत्पत्तिर्न श्रूयत इति, तत्राह—तत्पूर्वकत्वाद्वाच इति ॥ अत्र सूत्रे वाक्पदं प्राणमनसोरुपलक्षणम् । वाक्प्राणमनसां तेजोबन्नपूर्वकत्वोक्तेरश्रवणमसिद्धमिति योजना । तैर्वागादिभिश्चक्षुरादीनां सामान्यं

भामती ।

निगदव्याख्यातमस्य भाष्यम् ॥ ३ ॥ तत्पूर्वकत्वाद्वाचः । वाच इति वाक्प्राणमनसामुपलक्षणम् । अयमर्थः—यत्रापि तेजःप्रभृतीनां सृष्टौ प्राणसृष्टिर्नोक्तेति ब्रूषे, तत्राप्युक्तेति ब्रूमहे । तथाहि—यस्मिन् प्रकरणेन तेजोबन्नपूर्वकत्वं वाक्प्राणमनसामाम्नायते 'अन्नमयं हि' इत्यादिना, तद्यदि मुख्यार्थं ततस्तत्सा-

आनन्दगिरीय—न्यायनिर्णयः ।

नेषु प्राणेषु श्रुतत्वाच्च प्राणानां मुख्यं जन्मेति योजना । चकारार्थमाह—इतश्चेति । तदेव स्पष्टयन्नवशिष्टं व्याचष्टे—यदिति । तथाऽपि कथं प्राणेषु मुख्या जन्मश्रुतिस्तत्राऽऽह—आकाशादिष्विति । तत्सामान्याच्चैराकाशादिभिः सह जायमानत्वेन तुल्यत्वादित्यर्थः । एकस्यापि शब्दस्य विषयभेदादग्न्यादिशब्दवद्गौणत्वमुख्यत्वे स्यातामित्याशंक्याऽऽह—न हीति । एकस्मिन्नपि प्रकरणे 'अन्नं ब्रह्म' 'आनन्दो ब्रह्म' इत्यादौ ब्रह्मशब्दस्यानेकार्थत्ववदिहापि स्यादित्याशंक्याऽऽह—एकस्मिन्निति । तथाऽपि तपसा ब्रह्मेत्यादिवदनेकार्थत्वमाशंक्योक्तम्—एक इति । ब्रह्मशब्दस्यापि तुल्यमेकत्वमित्याशंक्याऽऽह—सकृदिति । एतस्मादित्यादावुक्तन्यायं वाक्यान्तरेऽप्यतिदिशति—तथेति । तस्य जन्मवाचिनः शब्दस्य पूर्वश्रवणात्तस्य चोत्तरेषु मुख्यत्वात्तत्सामान्यात्प्राणेष्वपि मुख्यतेत्युक्तम् । इदानीं मुख्यजन्मवाचिनः शब्दात्प्राक्प्राणादीनां श्रुतेस्तद्योगिनामितरेषामिव तेषामपि तत्साहचर्यान्मुख्यं जन्मेति व्याख्यान्तरमाह—यत्रेति । न्यायः सह पठितेषु जन्मनो मुख्यत्वाविशेषस्तत्रोदाहरणं—यथेति ॥ ३ ॥ छान्दोग्ये प्राणानामुत्पत्त्यश्रवणमङ्गीकृत्यान्यत्रोत्पत्तिश्रवणादुत्पत्तिः साधिता । संप्रति तत्रापि तदुत्पत्त्यश्रवणमसिद्धमित्याह—तत्पूर्वकत्वादिति । तच्छब्देन तेजोबन्नान्युच्यन्ते । प्राणेन मनसा च सहिताया वाचस्तेजोबन्नकार्यत्वादस्ति तदुत्पत्तिश्रुतिरित्यर्थः । तेजःप्रभृतीनां सृष्टिप्रकरणे प्राणानामुत्पत्तिर्न श्रुता तेषामेव सृष्टेः शिष्टत्वादित्याशं-

यद्यपि "तत्तेजोऽसृजत" [ छां० ६ । २ ।३ ] इत्येतस्मिन्प्रकरणे प्राणानामुत्पत्तिर्न पठ्यते, तेजोबन्नानामेव च त्रयाणां भूतानामुत्पत्तिश्रवणात्, तथापि ब्रह्मप्रकृतिकतेजोबन्नपूर्वकत्वाभिधानाद्वाक्प्राणमनसां तत्सामान्याच्च सर्वेषामेव प्राणानां ब्रह्मप्रभवत्वं सिद्धं भवति । तथाहि—अस्मिन्नेव प्रकरणे तेजोबन्नपूर्वकत्वं वाक्प्राणमनसामाम्नायते—"अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्" [ छां० ६ । ५ । ४ ] इति । तत्र यदि तावन्मुख्यमेवैषामन्नादिमयत्वं ततो वर्तत एव ब्रह्मप्रभवत्वम् । अथ भाक्तं तथापि ब्रह्मकर्तृकायां नामरूपव्याक्रियायां श्रवणात् "येनाश्रुतं श्रुतं भवति" [ छां० ६ । १ । ३ ] इति चोपक्रमात् "ऐतदात्म्यमिदं सर्वम्" [ छां० ६ । ८ ।७] इति चोपसंहाराच्छ्रुत्यन्तरप्रसिद्धेश्च ब्रह्मकार्यत्वप्रपञ्चनार्थमेव मनआदीनामन्नादिमयत्ववचनमिति गम्यते । तस्मादपि प्राणानां ब्रह्मविकारत्वसिद्धिः ॥ ४ ॥ इति प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

## सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥ ( २ ) ॥

रत्नप्रभा ।

करणत्वं तत्सामान्यादित्यर्थः । अत्र मयड्विकारे मुख्य इति पक्षे वर्तत एव प्राणानां ब्रह्मकार्यत्वं तेजोबन्नानां ब्रह्मविकारत्वात् । यदि प्राणस्य वायोर्जलविकारत्वायोगात्तदधीनस्थितिकत्वमात्रेण भाक्तस्तथापि प्राणानां विकारत्वे भूताधीनस्थितिकत्वं लिङ्गं मयटोक्तमिति सिद्धं ब्रह्मकार्यत्वं 'स प्राणमसृजत' इत्यादिश्रुत्यन्तरे स्पष्टं ब्रह्मकार्यत्वोक्तेश्च । तस्मात्प्राणानामुत्पत्तिश्रुतीनां सद्भावश्रुत्यविरोधात्कारणे ब्रह्मणि समन्वय इति सिद्धम् । लिङ्गशरीरविचारात्मकाधिकरणानां लिङ्गात्त्वंपदार्थभेदधीः फलमिति द्रष्टव्यम् ॥४॥ (१)॥ एवं जन्मलब्धसत्ताकानां प्राणानामुपजीव्योपजीवकत्वसंगत्या संख्यां निर्णेतुं श्रुतीनां विरोधात्संशये पूर्वपक्षयति—सप्तगतेर्विशेषितत्वाच्च । विशयः संशयः । इन्द्रियाण्यत्र विषयः । पञ्च धीन्द्रियाणि वाङ्मनश्चेति सप्त प्राणा एत एव हस्तेन सहाष्टौ । ग्रहत्वं बन्धकत्वम् । गृह्णन्ति बध्नन्तीति ग्रहा इन्द्रियाणि तेषां बन्धकत्वं विषयाधीनमित्यतिग्रहाः । ग्रहानतिक्रान्ता विषया इत्यर्थः । द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे

भामती ।

मान्यात्सर्वेषामेव प्राणानां सृष्टिरुक्ता । अथ गौणं, तथापि ब्रह्मकर्तृकायां नामरूपव्याक्रियायामुपक्रमोपसंहारपर्यालोचनया श्रुत्यन्तरप्रसिद्धेश्च ब्रह्मकार्यत्वप्रपञ्चार्थमेव प्राणादीनामापोमयत्वाद्यभिधानमित्युक्तैव तत्रापि प्राणसृष्टिरिति सिद्धम् ॥ ४ ॥ ( १ ) ॥ सप्त गतेर्विशेषितत्वाच्च । अवान्तरसंगतिमाह—

आनन्दगिरीय–न्यायनिर्णयः ।

कामनुवदति—यद्यपीति । सूत्रव्याख्यानेनोत्तरमाह—तथाऽपीति । वागादीनां त्रयाणां प्राणाद्या ब्रह्मजन्मत्वेऽपि कुतो हस्तादीनां तथेत्याशंक्याऽऽह—तदिति । तैर्वागादिभिः सामान्यं हस्तादीनां प्राणत्वम् । उक्तमेव प्रपञ्चयति—तथाहीति । कथमेषां ब्रह्मजत्वं किमेषामन्नादिमयत्वं मुख्यं गौणं वा ? प्रथमं प्रत्याह—तत्रेति । तेजआदीनां तज्जत्वादिति शेषः । द्वितीयमनूद्य तत्रापि ब्रह्मजत्वमत्याज्यमित्याह—अथेत्यादिना । 'स प्राणमसृजत' इत्यादि श्रुत्यन्तरम् । प्राणोत्पत्तिश्रुतेर्मुख्यार्थत्वेऽपि विरोधाभावादश्रुतेश्चासिद्धत्वान्मूलकारणे ब्रह्मणि समन्वयसिद्धिरित्युपसंहरति—तस्मादिति ॥ ४ ॥ ( १ ) ॥ करणानामुत्पत्तिनिरूपणेन तद्विलक्षणं त्वंपदार्थं निरूप्य तेषामेव संख्यां निर्णेतुं पूर्वपक्षयति—सप्तेति ।

**उत्पत्तिविषयः श्रुतिविप्रतिषेधः प्राणानां परिहृतः। संख्याविषय इदानीं परिह्रियते। तत्र मुख्यं प्राणमुपरिष्टाद्वक्ष्यति। संप्रति तु कतीतरे प्राणा इति संप्रधारयति। श्रुतिविप्रतिपत्तेश्चात्र विशयः। क्वचित्सप्त प्राणाः संकीर्त्यन्ते-"सप्त प्राणाः प्रभवन्ति तस्मात्" [मुण्ड० २।१।८] इति। क्वचिच्चाष्टौ प्राणा ग्रहत्वेन गुणेन संकीर्त्यन्ते-"अष्टौ ग्रहा अष्टावतिग्रहाः" [बृ० ३।२।१] इति। क्वचिन्नव-"सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ" [तै० सं० ५।१।७।१] इति। क्वचिद्दश-"नव वै पुरुषे प्राणा नाभिर्दशमी" इति। क्वचिदेकादश-"दशेमे पुरुषे प्राणा आत्मैकादशः" [बृ० ३।९।४] इति। क्वचिद् द्वादश-"सर्वेषां स्पर्शानां त्वगेकायनम्" [बृ० २।४।११] इत्यत्र। क्वचित्त्रयोदश-"चक्षुश्च**

---

रत्नप्रभा।

वाक्चेति सप्त शीर्ष्णि भवाः प्राणा द्वाववाञ्चौ पायूपस्थौ चेति नव, ज्ञानकर्मेन्द्रियाणि दशेमे पुरुषे देहे प्राणाः आत्मा मन एकादश प्राणा इति सिद्धान्तकोटिरुक्ता। एत एव हृदयाख्यया बुद्ध्या सह द्वादश। अहंकारेण सह त्रयोदश। श्रुतितः सप्तत्वावगतेर्ये शीर्षण्याः सप्त ते प्राणा इति शीर्षण्योद्देशेन प्राणत्वविशेषणाद्वा शीर्षण्यानां प्राणत्वशब्दिता, इन्द्रियत्वपरिसंख्यया सप्तैव प्राणा इति सूत्रयोजना॥

भामती।

**उत्पत्तिविषय इति।** संशयकारणमाह-**श्रुतिविप्रतिषेधादिति।** **विषयः** संशयः। **क्वचित् सप्त प्राणाः।** तद्यथा-चक्षुर्घ्राणरसनवाक्श्रोत्रमनस्त्वगिति। क्वचिदष्टौ प्राणा **ग्रहत्वेन** बन्धनेन **गुणेन संकीर्त्यन्ते।** तद्यथा-घ्राणरसनवाक्चक्षुःश्रोत्रमनोहस्तत्वगिति, त एते ग्रहाः। एषां तु विषया अतिग्रहास्त्वष्टावेव 'प्राणो वै ग्रहः सोऽपानेनातिग्रहेण गृहीतोऽपानेन हि गन्धान् जिघ्रति' इत्यादिना संदर्भेणोक्ताः। **क्वचिन्नव।** तद्यथा-**सप्त वै शीर्षण्याः प्राणाः द्वाववाञ्चाविति।** द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे एका वागिति सप्त। पायूपस्थौ बुद्धिमनसी वा द्वाववाञ्चाविति नव। **क्वचिद्दश। नव वै पुरुषे प्राणास्त** उक्ता **नाभिर्दशमीति। क्वचिदेकादश। 'दशेमे पुरुषे प्राणाः'।** तद्यथा-बुद्धीन्द्रियाणि घ्राणादीनि पञ्च कर्मेन्द्रियाण्यपि हस्तादीनि पञ्चात्मैकादश, आप्नोति व्याप्नोत्यधिष्ठानेनेत्यात्मा मनः स एकादश इति। **क्वचिद् द्वादश। 'सर्वेषां स्पर्शानां त्वगेकायनम्'** इत्यत्र। तद्यथा-त्वङ्नासिकारसनचक्षुःश्रोत्रमनोहृदयहस्तपादोपस्थपायुवागिति। क्वचिदेत एव प्राणा अहंकाराधिकास्त्रयोदश। एवं विप्रतिपन्नाः प्राणेयत्तां प्रति श्रुतयः।

आनन्दगिरीय-न्यायनिर्णयः।

पूर्वोत्तरसंगतिमाह-**उत्पत्तीति।** सर्वप्राणसंख्याविषयत्वं व्यावर्त्य वागादिसंख्याविषयत्वमस्याधिकरणस्य दर्शयति-**तत्रेति।** मुख्यादितरान्प्राणान्विषयत्वेनोक्त्वा सहेतुं संशयमाह-**श्रुतीति।** श्रुतिविप्रतिपत्तिमेवोपन्यस्यति-**क्वचिदित्यादिना।** चक्षुर्घ्राणं रसनं श्रोत्रं वाङ्मनस्त्वगिति सप्त प्राणा ग्रहत्वेन बन्धत्वेनेति यावत्। त एव सहस्ताधिकाः सन्तोऽष्टौ। तेषां च ग्रहत्वं बन्धनहेतुत्वादेतेषां विषया रूपादयोऽतिग्रहास्ते हि रागमुत्पाद्येन्द्रियाकर्षकत्वाद् ग्रहानतिशेरते। द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे वागिति सप्त शीर्ष्णि भवाः शीर्षण्याः प्राणाः। द्वाववाञ्चौ पायूपस्थौ बुद्धिमनसी चेति नव। पुरुषे तदाकारे देहे शिरःपाण्यादिमत्युक्ता नव प्राणा नाभिश्च दशमी दशानां पूरणीति श्रुत्यर्थः। पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चाऽऽप्नोतीत्यात्मेत्येकादश प्राणाः। त एव सहृदया द्वादश। त एव साहंकारास्त्रयो-

द्रष्टव्यं च" [ बृ० ४ । ८ ] इत्यत्र । एवं हि विप्रतिपन्नाः प्राणेयत्तां प्रति श्रुतयः ॥ किं तावत्प्राप्तम् ॥ सप्तैव प्राणा इति ॥ कुतः॥ गतेः ॥ यतस्तावन्तोऽवगम्यन्ते—"सप्त प्राणाः प्रभवन्ति तस्मात्" [ मुण्ड० २ । १ । ८ ] इत्येवंविधासु श्रुतिषु । विशेषिताश्चैते "सप्त वै शीर्षण्याः प्राणाः" इत्यत्र ॥ ननु "प्राणा गुहाशया निहिताः सप्तसप्त" [ मुण्ड० २ । १ । ८ ] इति वीप्सा श्रूयते, सा सप्तभ्योऽतिरिक्तान्प्राणान्गमयतीति ॥ नैष दोषः ॥ पुरुषभेदाभिप्रायेयं वीप्सा प्रतिपुरुषं सप्तसप्त प्राणा इति, न तत्त्वभेदाभिप्राया सप्तसप्तान्येऽन्ये प्राणा इति ॥ नन्वष्टत्वादिकापि संख्या प्राणेषूदाहृता कथं सप्तैव स्युः ॥ सत्यमुदाहृता ॥ विरोधात्त्वन्यतमा संख्याध्यवसातव्या । तत्र स्तोककल्पनानुरोधात्सप्तसंख्याध्यवसानम् । वृत्तिभेदापेक्षं च संख्यान्तरश्रवणमिति मन्यते ॥ ५ ॥ अत्रोच्यते—

रत्नप्रभा ।

सप्तत्वं वीप्साविरुद्धमिति शङ्कते—नन्विति ॥ गुहायां हृदये शेरत इति गुहाशयाः स्वस्थानेषु निहिता निक्षिप्ता इत्यर्थः । चित्तेन चतुर्दशत्वं मन्तव्यम् ॥ पूर्वपक्षी परिहरति—नैष दोष इति ॥ ५ ॥ सिद्धान्तिनाप्येकादशसु मनोवृत्तिभेदान्निश्चयात्मिका बुद्धिः, गर्वात्मकोऽहंकारः, स्मरणात्मकं चित्तमिति द्वादशादिसंख्यान्तर्भावनीया । ततो वरं प्राथमिकसप्तत्वेऽन्तर्भावः लाघवादिति प्राप्ते सिद्धान्तयति—अत्रेति ॥

भामती ।

अत्र प्रश्नपूर्वं पूर्वपक्षं गृह्णाति—किं तावत्प्राप्तम् । सप्तैवेति । सप्तैव प्राणाः । कुतः—गतेः अवगतेः। श्रुतिभ्यः 'सप्त प्राणाः प्रभवन्ति' इत्यादिभ्यः । न केवलं श्रुतितोऽवगतिः, विशेषणादप्येवमेवेत्याह—विशेषितत्वाच्च । सप्त वै शीर्षण्याः प्राणा इति । ये सप्त शीर्षण्याः श्रोत्रादयस्ते प्राणा इत्युक्ते इतरेषामशीर्षण्यानां हस्तादीनामप्राणत्वं गम्यते । यथा दक्षिणेनाक्ष्णा पश्यतीत्युक्ते वामेन न पश्यतीति

आनन्दगिरीय—न्यायनिर्णयः ।

दश । श्रुतिविप्रतिपत्तिमुपसंहरति—एवमिति । प्रश्नपूर्वकं पूर्वपक्षसूत्रं योजयति—किमिति । अत्र च प्राणसंख्याश्रुतिविवादव्युदासेन तत्कारणे ब्रह्मणि समन्वयव्यवस्थापनात्पादादिसंगतयः । पूर्वपक्षे सप्तप्राणकारणे ब्रह्मणि समन्वयेऽप्येकादशप्राणकारणे तत्र तदसिद्धिः । सिद्धान्ते तदनुसारित्वादितरश्रुतीनामेकादशप्राणकारणे ब्रह्मणि तत्सिद्धिः । गतेरिति हेतुं प्रश्नद्वारा व्याचष्टे—कुत इति । न केवलं श्रुतितोऽधिगतेः सप्तैव प्राणाः किंतु विशेषणादपीत्यवशिष्टं व्याचष्टे—विशेषिताश्चेति । दक्षिणेनाक्ष्णा पश्यतीत्युक्ते वामेन न पश्यतीतिवत्प्राणाः शीर्षण्याः सप्तेत्युक्ते हस्तादीनामशीर्षण्यानामप्राणत्वं भातीत्यर्थः । प्राणानां सप्तत्वं वीप्साविरुद्धमिति शङ्कते—नन्विति । गुहायां हृदये शेरत इति गुहाशयाः स्वस्थानेषु निहिता निक्षिप्ता इति यावत् । वीप्सा पुनर्वचनमन्यथाऽपि स्यादिति पूर्ववाद्याह—नेति । पुरुषभेदकृतवीप्साप्रवृत्तिं प्रकटयति—प्रतीति । व्यावर्त्यमंशमाह—नेत्यादिना । संख्यान्तरश्रुतिविरोधं शङ्कते—नन्विति । संख्यान्तरश्रुतिमङ्गीकरोति—सत्यमिति । तर्हि संख्यान्तरमपि ग्राह्यं नेत्याह—विरोधात्त्विति । सप्तत्वावच्छिन्नानामेवाष्टत्वाद्यवच्छेदायोगादन्यतमत्यागावश्यंभावे कतमा संख्याऽऽदेयेति विवक्षायां लाघवान्निश्चितं सप्तत्वमित्यर्थः । न्यूनाधिकसंख्ययोरधिका ग्राह्या तस्यां न्यूनान्तर्भावादित्याशंक्यैकादशसंख्यां गृहीत्वा वृत्तिभेदेन नवद्वादशत्रयोदशसंख्यावदिहापि प्राथम्याल्लाघवाच्च सप्तत्वस्यैव युक्तत्वाद्वृत्त्यपेक्षया संख्यान्तरमित्याह—वृत्तीति । वक्ष्यमाणयुक्त्या मन्यतेरुक्तिः ॥५॥ सिद्धान्तयति—अत्रेति ।

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः श्रूयन्ते-"हस्तौ वै ग्रहः स कर्मणाऽतिग्रहेण गृहीतो हस्ताभ्यां हि कर्म करोति" [बृ० ३।२।८] इत्येवमाद्यासु श्रुतिषु। स्थिते च सप्तत्वातिरेके सप्तत्वमन्तर्भावाच्छक्यते संभावयितुम् ॥ हीनाधिकसंख्याविप्रतिपत्तौ ह्यधिका संख्या संग्राह्या भवति तस्यां हीनान्तर्भवति न तु हीनायामधिका। अतश्च नैवं मन्तव्यं-स्तोककल्पनानुरोधात्सप्तैव प्राणाः स्युरिति। उत्तरसंख्यानुरोधात्त्वेकादशैव ते प्राणाः स्युः। तथा चोदाहृता श्रुतिः-"दशेमे पुरुषे प्राणा आत्मैकादशः" [बृ० ३।९।४] इति। आत्मशब्देन चात्रान्तःकरणं परिगृह्यते, करणाधिकारात् ॥ नन्वेकादशत्वादप्यधिके द्वादशत्रयो-

---

रत्नप्रभा।

आदानेन कर्मणा गृहीतः संबद्धः ॥ संबन्धमेवाह-हस्ताभ्यामिति ॥ अतोऽधिकसंख्याया न्यूनायामन्तर्भावायोगात्सप्तैव प्राणाः स्युर्लाघवानुरोधादित्येवं न मन्तव्यमित्यन्वयः ॥ तर्हि कतीन्द्रियाणीत्याकांक्षायामाह-उत्तरेति ॥ "श्रुतीनां मिथो विरोधे सति मानान्तरानुगृहीता श्रुतिर्बलीयसी" इति न्यायेन

भामती।

गम्यते। एतदुक्तं भवति-यद्यपि श्रुतिविप्रतिषेधो यद्यपि च पूर्वसंख्यासु न परासां संख्यानां निवेशस्तथाप्यवच्छेदकत्वेन बह्वीनां संख्यानामसंभवादेकस्यां कल्प्यमानायां सप्तत्वमेव युक्तं प्राथम्याल्लाघवाच्च वृत्तिभेदमात्रविवक्षया त्वष्टत्वादयो गमयितव्या इति प्राप्तम् ॥ ५ ॥ एवं प्राप्त उच्यते-**हस्तादयस्तु स्थितेऽतो नैवम्**। तु-शब्दः पक्षं व्यावर्तयति। न सप्तैव किंतु हस्तादयोऽपि प्राणाः। प्रमाणान्तरादेकादशत्वे प्राणानां स्थितेऽतोऽस्मिन् सति सार्वविभक्तिकस्तसिः। नैवम्। लाघवात् प्राथम्याच्च सप्तत्वमित्यक्षरार्थः। एतदुक्तं भवति-यद्यपि श्रुतयः स्वतःप्रमाणतयाऽनपेक्षास्तथापि परस्परविरोधान्नार्थतत्त्वपरिच्छेदायालम्। न च सिद्धे वस्तुनि अनुष्ठान इव विकल्पः संभवति। तस्मात् प्रमाणान्तरोपनीतार्थवशेन व्यवस्थाप्यन्ते। यथा **हीनेति**। 'स्रुवेणावद्यति' इति मांसपुरोडाशावदानासंभवात्, संभवाच्च द्रवावदानस्य स्रुवावदाने द्रवाणीति व्यवस्थाप्यते। एवमिहापि रूपादिबुद्धिपञ्चककार्यव्यवस्थातश्चक्षुरादिबुद्धीन्द्रियकरणपञ्चकव्यवस्था। न ह्यन्धादयः सत्स्वपीतरेषु घ्राणादिषु गन्धाद्युपलब्ध्यानुमितसद्भावेषु रूपादीनुपलभन्ते। तथा वचनादिलक्षणकार्यपञ्चकव्यवस्थातो वाक्पाण्यादिलक्षणकर्मेन्द्रियपञ्चकव्यवस्था। न हि जातु मूकादयः सत्स्वपि विहरणाद्यवगतसद्भावेषु पादादिषु बुद्धीन्द्रियेषु वा वचनादिमन्तो भवन्ति।

आनन्दगिरीय-न्यायनिर्णयः।

तत्प्रतिज्ञां विभजते-**हस्तादयस्त्विति**। गृह्णाति पुरुषं बध्नातीति ग्रहस्तत्रेन्द्रियाणामर्थद्वारा पुरुषबन्धने हेतुत्वमित्यतिग्रहत्वमर्थानां ततोऽतिग्रहेण कर्मणा हस्तनिर्वर्त्यादानेन हस्तो गृहीतः संबद्धः। तदेव स्पष्टयति-**हस्ताभ्यामिति**। सप्तत्वादतिरेकश्रुतेर्न सप्तत्वनियतिरित्यर्थः। सप्तत्वमपि श्रुतमेवेत्याशंक्य सूत्रावयवं व्याचष्टे-**स्थिते चेति**। अन्तर्भावेन सप्तत्वं साधयति-**हीनेति**। अतो नेत्यादि योजयति-**अतश्चेति**। प्राणास्तर्हि कतीत्यपेक्षायामाह-**उत्तरेति**। तर्हि गौरवमित्याशंक्य प्राणानामेकादशत्वं न कल्प्यते येन लाघवमन्वेष्यमित्याह-**तथेति**। आत्मशब्दस्य प्रतीचि रूढेर्न प्राणभेदविषयतेत्याशंक्याऽऽह-**आत्मेति**। एकादशत्वस्य श्रुतत्वाद्ग्रहणे द्वादशत्वत्रयोदशत्वयोरपि तथा ग्रहः स्यादिति शङ्कते-**नन्विति**। श्रुतीनां मिथोविरोधादर्थव्यवस्थासिद्धौ मानान्तरवशेन व्यवस्था वाच्या, तथा च कार्यलिंगकानुमानानुगृही-

दशत्वे उदाहृते ॥ सत्यमुदाहृते ॥ न त्वेकादशभ्यः कार्यजातेभ्योऽधिकं कार्यजातमस्ति, यदर्थमधिकं करणं कल्प्येत । शब्दस्पर्शरूपरसगन्धविषयाः पञ्च बुद्धिभेदाः, तदर्थानि पञ्च बुद्धीन्द्रियाणि । वचनादानविहरणोत्सर्गानन्दाः पञ्च कर्मभेदाः, तदर्थानि च पञ्च कर्मेन्द्रियाणि । सर्वार्थविषयं त्रैकाल्यवृत्ति मनस्त्वेकमनेकवृत्तिकम् । तदेव वृत्तिभेदात् क्वचिद्भिन्नवद्व्यपदिश्यते—"मनो बुद्धिरहंकारश्चित्तं च" इति । तथा च श्रुतिः कामाद्या नानाविधा वृत्तीरनुक्रम्याह—"एतत्सर्वं मन एव" [ बृ० १ । ५ । ३ ] इति ॥ अपि च सप्तैव शीर्षण्यान्प्राणानभिमन्यमानस्य चत्वार एव प्राणा अभिमताः स्युः । स्थानभेदाद्ध्येते चत्वारः सन्तः सप्त गण्यन्ते "द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके एका वाक्" इति ॥ न च तावतामेव वृत्तिभेदा इतरे प्राणा इति शक्यते वक्तुं, हस्तादिवृत्तीनामत्यन्तविजातीयत्वात् । तथा "नव वै पुरुषे प्राणा नाभिर्दशमी" इत्यत्रापि देहच्छिद्रभेदाभिप्रायेणैव दश प्राणा उच्यन्ते, न प्राणतत्त्वभेदाभिप्रायेण ।

रत्नप्रभा ।

कार्यलिङ्गानुमानानुगृहीतैकादशप्राणश्रुत्यनुसारेणान्याः श्रुतयो नेया इत्यभिसंधायाह—सत्यमिति ॥ एकादशकार्यलिङ्गान्याह—शब्देति ॥ त्रयः कालास्त्रैकाल्यं तद्विषया वृत्तिर्यस्य तत्त्रैकाल्यवृत्ति । इन्द्रियान्तराणां वर्तमानमात्रग्राहित्वादतीतादिज्ञानाय मनोऽङ्गीकार्यमित्यर्थः ॥ विशेषितत्वादित्युक्तं निरस्यति—अपि च सप्तेति ॥ न च तावतामिति । आदानादीनां श्रोत्रादिभ्योऽत्यन्तवैजात्यादित्यर्थः । तेषां तद्वृत्तित्वे बधिरादीनामादानादि न स्यादिति भावः । कथं तर्हि छिद्रे प्राणशब्द इत्याशंक्य लक्षणये-

भामती ।

एवं कर्मबुद्धीन्द्रियासंभविन्या संकल्पादिक्रियाव्यवस्थयान्तःकरणव्यवस्थानुमानम् । एकमपि चान्तःकरणमनेकक्रियाकारि भविष्यति, यथा प्रदीप एको रूपप्रकाशवर्तिविकारस्नेहशोषणहेतुः । तस्मान्नान्तःकरणभेदः । एकमेव त्वन्तःकरणं मननान्मन इति चाभिमानादहंकार इति चाध्यवसायाद्बुद्धिरिति चाख्यायते वृत्तिभेदाच्चाभिन्नमपि भिन्नमिवोपचर्यते त्रयमिति । तत्त्वेन त्वेकमेव भेदे प्रमाणाभावात् । तदेवमेकादशानां कार्याणां व्यवस्थानादेकादश प्राणा इति श्रुतिराञ्जसी । तदनुगुणतया त्वितराः श्रुतयो नेतव्याः । तत्रावयुत्यनुवादेन सप्ताष्टनवदशसंख्याश्रुतयो यथैकं वृणीते द्वौ वृणीते इति त्रीन् वृणीत इत्येतदानुगुण्यात् । द्वादशत्रयोदशसंख्याश्रुती तु कथंचिद्वृत्तिभेदेन भेदं विव-

आनन्दगिरीय-न्यायनिर्णयः ।

तैकादशप्राणश्रुतिरेवाऽऽदरणीयेत्याह—सत्यमिति । कार्यलिङ्गकमनुमानं विशदयति—शब्देति । बाह्येन्द्रियाणामित्थमनुमानेऽपि कथं मनसोऽनुमानं तत्राऽऽह—सर्वेति । इन्द्रियाणां वर्तमानतत्तदेकार्थनियतत्वादतीतादिसर्वार्थज्ञानाच्च तदर्थमिन्द्रियान्तरं कल्प्यमित्यर्थः । संकल्पादिदृष्टेस्तदर्थं करणान्तरमपि कल्प्यमित्याशंक्याऽऽह—अनेकेति । मनसश्चेदेकत्वं तर्हि कथं भेदोक्तिस्तत्राऽऽह—तदेवेति । एकस्यैव वृत्तिभेदाद्भिन्नमित्यनेकधात्वं धर्मिभेद एव कुतो न स्यादित्याशंक्य धर्म्यभेदश्रुतिविरोधादित्याह—तथा चेति । विशेषितत्वादित्युक्तं प्रत्याह—अपि चेति । कथं तर्हि सप्तत्वं तत्राऽऽह—स्थानेति । रूपादिधीरूपकार्यभेदादेकमेवेन्द्रियं स्थानभेदाद्भिन्नमिवोपचरितमित्यर्थः । यत्तु वृत्तिभेदापेक्षं संख्यान्तरश्रवणं तत्राऽऽह—न चेति । अन्धादेरप्यादानादिकार्यदर्शनादितरेषां चक्षुरादिवृत्तित्वे तदसंभवादिति भावः । तथाऽपि श्रुत्यन्तरेषु सत्सु कथमेकादशत्वं तत्र दशत्वश्रुतेर्गतिमाह—तथेति । स्थानभेदात्सप्त वै शीर्षण्या इति

"नाभिर्दशमी" इति वचनात् । न हि नाभिर्नाम कश्चित्प्राणः प्रसिद्धोऽस्ति । मुख्यस्य तु प्राणस्य भवति नाभिरप्येकं विशेषायतनमित्यतो नाभिर्दशमीत्युच्यते ॥ क्वचिदुपासनार्थं कतिचित्प्राणा गण्यन्ते, क्वचित्प्रदर्शनार्थम् । तदेवं विचित्रे प्राणेयत्ताम्नाने सति क्व किं परमाम्नानमिति विवेक्तव्यम् । कार्यजातवशात्त्वेकादशत्वाम्नानं प्राणविषयं प्रमाणमिति स्थितम् ॥ इयमपरा सूत्रद्वययोजना । सप्तैव प्राणाः स्युर्यतः सप्तानामेव गतिः श्रूयते-"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" [ बृ० ४ । ४ । २ ] इत्यत्र ॥ ननु सर्वशब्दोऽप्यत्र पठ्यते, तत्कथं सप्तानामेव गतिः प्रतिज्ञायत इति ॥ विशेषितत्वादित्याह ॥ सप्तैव हि प्राणाश्चक्षुरादयस्त्वक्पर्यन्ता विशेषिता इह

---

रत्नप्रभा ।

त्याह-मुख्यस्य त्विति ॥ "सप्त प्राणाः प्रभवन्ति" इत्युपासनार्थम् । "अष्टौ ग्रहाः" इति श्रुतिस्तूपलक्षणार्था । पायूपस्थपादानामपि बन्धकत्वाविशेषादिति विवेक्तव्यम् ॥ नन्विदं सूत्रव्याख्यानमसंगतं, पञ्चधीन्द्रियवाङ्मनसां सप्तत्वावगतिः शीर्षण्यानां चतुर्णां विशेषितत्वमिति हेतोर्वैयधिकरण्यात्, उक्तपरिसंख्यादोषाच्चेत्यरुचेराह—इयमपरेति ॥ इन्द्रियाणि कतीति संदेहे पूर्वपक्षसूत्रं योजयति-सप्तेति ॥ तं जीवात्मानं ये प्राणाः सह गच्छन्ति तेषामेव भोगहेतुत्वादिन्द्रियत्वमित्यर्थः । विपन्नावस्थायामेष चाक्षु-

भामती ।

क्षित्वोपासनादिपरतया नेतव्ये तस्मादेकादशैव प्राणा नेतर इति सिद्धम् । अपि च शीर्षण्यानां प्राणानां यत्सप्तत्वाभिधानं तदपि चतुर्ष्वेव व्यवस्थापनीयम्, प्रमाणान्तरविरोधात् । न खलु द्वे चक्षुषी; रूपोपलब्धिलक्षणस्य कार्यस्याभेदात् । पिहितैकचक्षुषस्तु न तादृशी रूपोपलब्धिर्भवति यादृशी समग्रचक्षुषः, तस्मादेकमेव चक्षुरधिष्ठानभेदेन तु भिन्नमिवोपचर्यते । काणस्याप्येकगोलकगतेन चक्षुरवयवेनोपलम्भः । एतेन घ्राणश्रोत्रे अपि व्याख्याते । इयमपरा सूत्रद्वययोजना-सप्तैव प्राणाः चक्षुर्घ्राणरसनवाक्श्रोत्रमनस्त्वच उत्क्रान्तिमन्त स्युः । सप्तानामेव गतिश्रुतेर्विशेषितत्वादिति व्याख्यातुं शङ्कते-ननु सर्वशब्दोऽप्यत्रेति । अस्योत्तरं विशेषितत्वादिति । चक्षुरादयस्त्वक्पर्यन्ता उत्क्रान्तौ विशेषिताः । तस्मात्सर्वशब्दस्य प्रकृ-

आनन्दगिरीय-न्यायनिर्णयः ।

सप्तत्वोक्तिवदिति यावत् । नाभिर्दशमीत्युक्तत्वात्प्राणत्वं तस्या अपीत्याशंक्याऽऽह-न हीति । कथं तर्हि तत्र प्राणशब्द इत्याशंक्य लक्षणयेत्याह-मुख्यस्येति । सप्त प्राणाः प्रभवन्तीत्यादेर्गतिमाह-क्वचिदिति । अष्टौ ग्रहा इत्यादेर्गतिं सूचयति-क्वचिदिति । किं तर्हि वाक्यमुपासनादिविषयं किंवा तत्त्वविषयमित्युक्ते विचारस्य सावकाशत्वमाह-तदेवमिति । कथं तर्हि निर्णयस्तत्राऽऽह-कार्येति । एवं प्राणसंख्याविषयश्रुतिविवादाभावादेकादशप्राणकारणे ब्रह्मणि समन्वयसिद्धिरित्युपसंहरति-इति स्थितमिति । वर्णकान्तरमाह-इयमिति । इन्द्रियाण्येव विषयस्तानि किं सप्त किं वैकादशेति श्रुतिविमत्या संदेहे पूर्वपक्षमाह-सप्तेति । येषां सहगमनं तेषामेव जन्मान्तरीयभोगोपायत्वादिन्द्रियत्वमिह तु सप्तानामेव गतिः श्रूयते तस्मात्तेषामेवेन्द्रियत्वमित्यर्थः । सप्तगतेरिति व्याख्याय शङ्कोत्तरत्वेन पदान्तरमादत्ते-नन्वित्यादिना । तद्व्याकरोति-सप्तैवेति । चक्षुरादय इत्यादिशब्देन घ्राणरसनावाक्श्रोत्रत्वङ्मनांसि गृह्यन्ते । इहेत्युत्क्रान्तिप्रकरणोक्तिः । यत्र यस्यामवस्थायां चक्षुरधिष्ठातृदेवतांशः स एष पुरुषशब्दितः पराङ् पर्यावर्तते बहिर्देशात्स्वस्थानं प्रति व्यावर्तते तदानीमरूपज्ञो जीवो भवति हृदये चक्षुरेकी-

प्रकृताः "स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्ततेऽथारूपज्ञो भवति" [ बृ० ४ । ४ । १ ] "एकीभवति न पश्यतीत्याहुः" [ बृ० ४ । ४ । २ ] इत्येवमादिनानुक्रमणेन ॥ प्रकृतगामी च सर्वशब्दो भवति । यथा सर्वे ब्राह्मणा भोजयितव्या इति ये निमन्त्रिताः प्रकृता ब्राह्मणास्त एवं सर्वशब्देनोच्यन्ते नान्ये, एवमिहापि ये प्रकृताः सप्त प्राणास्त एव सर्वशब्देनोच्यन्ते नान्य इति ॥ नन्वत्र विज्ञानमष्टममनुक्रान्तं, कथं सप्तानामेवानुक्रमणम्॥नैष दोषः॥मनोविज्ञानयोस्तत्त्वाभेदाद् वृत्तिभेदेऽपि सप्तत्वोपपत्तेः। तस्मात्सप्तैव प्राणा इति॥एवं प्राप्ते ब्रूमः–हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः प्रतीयन्ते–"हस्तौ वै ग्रहः" [ बृ० ३ । २ । ८ ] इत्यादिश्रुतिषु। ग्रहत्वं च बन्धनभावो गृह्यते, बध्यते क्षेत्रज्ञोऽनेन ग्रहसंज्ञकेन बन्धनेनेति स च क्षेत्रज्ञो नैकस्मिन्नेव शरीरे बध्यते, शरीरान्तरेष्वपि तुल्यत्वाद्बन्धनस्य।तस्माच्छरीरान्तरसंचारीदं ग्रहसंज्ञकं बन्धनमित्यर्थादुक्तं भवति । तथा च स्मृतिः–"पुर्यष्टकेन लिङ्गेन प्राणाद्येन

---

रत्नप्रभा ।

षश्चक्षुषि स्थितोऽनुग्राहकसूर्यांशरूपः पुरुषः पराङ् पर्यावर्तते बहिर्देशात्स्वांशिनं सूर्यं प्रतिगच्छति । अथ तदानीमयं मुमूर्षुररूपज्ञो भवति । देवांशे देवं प्रविष्टे लिङ्गांशश्चक्षुर्हृदये मनस्येकीभवति तदायं न पश्यतीति पार्श्वस्था आहुरित्यर्थः । आदिपदात् "न जिघ्रति, न वदति, न रसयते, न शृणोति, न मनुते, न स्पृशति, न विजानाति' इति गृह्यते ॥ सप्तानामेव जीवेन सह गतिरित्यसिद्धं, ग्रहत्वश्रुत्या हस्तादीनामपि गतिप्रतीतेरिति सिद्धान्तयति–**एवमित्यादिना** ॥ हस्तादिबन्धस्य प्राङ् मोक्षात्सहगतौ स्मृतिमाह–**पुर्यष्टकेनेति** ॥ प्राणादिपञ्चकं भूतसूक्ष्मपञ्चकं ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकमन्तःकरणचतुष्टयमविद्या-

भामती ।

तापेक्षत्वात्सप्तैव प्राणा उत्क्रामन्ति न पाण्यादय इति प्राप्तम् । चोदयति–**नन्वत्र विज्ञानमष्टममिति** । 'न विजानातीत्याहुः' इत्यनेनानुक्रान्तम् । परिहरति–**नैष दोष इति** । सिद्धान्तमाह–**हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः** । उत्क्रान्तिभाजोऽवगम्यन्ते ग्रहत्वश्रुतेर्हस्तादीनाम् । एवं खल्वेषां ग्रहत्वाम्नानमुपपद्येत । यद्या मुक्तेरात्मानं बध्नीयुरितरथा षाट्कौशिकशरीरवदेषां ग्रहत्वं नाम्नायेत । अत एव च स्मृतिरेषां मुक्त्यवधितामाह–**पुर्यष्टकेनेति** । तथाथर्वणश्रुतिरप्येषामेकादशानामुत्क्रान्तिमभिवदति ।

आनन्दगिरीय–न्यायनिर्णयः ।

भवति पार्श्वस्थाश्च नायं पश्यतीत्याहुः । न जिघ्रति न रसयते न वदति न शृणोति न मनुते न स्पृशतीत्येवं सप्तैव विशेषिता इत्यर्थः । तथाऽपि सर्वश्रुत्या सर्वप्राणगमनमाशंक्य प्रकरणात्तस्याः संकोचमाह–**प्रकृतेति** । प्रकरणेन श्रुतिसंकोचं दृष्टान्तेन स्पष्टयति–**यथेत्यादिना** । 'एकीभवति न विजानातीत्याहुः' इति बुद्धेरपि पाठादसिद्धं सप्तानामेवानुक्रमणमित्याह–**नन्विति** । बुद्धेरनुक्रमणं न सप्तत्वविघातकमित्याह–**नेति** । पूर्वपक्षमुपसंहरति–**तस्मादिति** । तदनुवादेन सिद्धान्तयति–**एवमिति** । अक्षरार्थाविशेषेऽपि तात्पर्यार्थे विशेषं दर्शयितुमक्षरार्थं संक्षिपति–**हस्तादयस्त्विति** । यदुक्तमनुयायिनामेवेन्द्रियत्वं तदङ्गीकृत्यानुयायित्वमेकादशानामस्तीत्याह–**ग्रहत्वं चेति** । कथमेतावता सर्वदेहानुयायित्वमित्याशंक्य जीवस्य सर्वदेहेषु बद्धत्वसिद्धेस्तद्धीरित्याह–**स चेति** । सर्वेषु देहेषु जीवस्य बद्धत्वेऽपि कुतो ग्रहसंज्ञकस्य हस्तादेरनुयायित्वं तत्राऽऽह–**तस्मादिति** । हृदयग्रहसंज्ञकहस्तादिबन्धस्याऽऽ मोक्षादात्मानुयायित्वे स्मृतिमाह–**तथा चेति** । पुर्यष्टकं विशिनष्टि–**प्राणाद्येनेति** । प्राणादिपञ्चकं भूतसूक्ष्मपञ्चकं

स युज्यते। तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च ॥" इति प्राङ् मोक्षाद् ग्रहसंज्ञकेनानेन बन्धनेनावियोगं दर्शयति ॥ आथर्वणे च विषयेन्द्रियानुक्रमणे "चक्षुश्च द्रष्टव्यं च" इत्यत्र तुल्यवद्धस्तादीनीन्द्रियाणि सविषयाण्यनुक्रामति–"हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च" [ प्र० ४। ८ ] इति। तथा "दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति" [ बृ० ३। ९। ४ ] इत्येकादशानां प्राणानामुत्क्रान्तिं दर्शयति। सर्वशब्दोऽपि च प्राणशब्देन संबध्यमानोऽशेषान्प्राणानभिदधानो न प्रकरणवशेन सप्तस्वेवावस्थापयितुं शक्यते, प्रकरणाच्छब्दस्य बलीयस्त्वात्, सर्वे ब्राह्मणा भोजयितव्या इत्यत्रापि सर्वेषामेवावनिवर्तिनां ब्राह्मणानां ग्रहणं न्याय्यं, सर्वशब्दसामर्थ्यात् ॥ सर्वभोजनासंभवात्तु तत्र निमन्त्रितमात्रविषया सर्वशब्दस्य वृत्तिराश्रिता। इह तु न किंचित्सर्वशब्दार्थसंकोचने कारणमस्ति। तस्मात्सर्वशब्देनात्राशेषाणां प्राणानां परिग्रहः। प्रदर्शनार्थं च सप्तानामनुक्रमणमित्यनवद्यम्। तस्मादेकादशैव प्राणाः शब्दतः कार्यतश्चेति सिद्धम् ॥ ६ ॥ इति सप्तगत्यधिकरणम् ॥ २ ॥

## अणवश्च ॥ ७ ॥ ( ३ ) ॥

---

रत्नप्रभा।

कामः कर्म चेति पुर्यष्टकमात्मनो ज्ञापकत्वाल्लिङ्गं, सति संभवे सर्वश्रुतिसंकोचो न युक्त इत्याह–सर्वशब्दोऽपीति ॥ तस्मात्संख्याश्रुतीनामविरोधादेकादशेन्द्रियकारणे ब्रह्मणि समन्वय इति सिद्धम् ॥ ६ ॥ ( २ ) ॥ अणवश्च। "प्राणाः सर्वेऽनन्ताः" इति श्रुतेरिन्द्रियाणां विभुत्वात्तेषामुत्क्रान्तिरसिद्धा, किंतु तत्तद्देहे तेषा-

भामती।

तस्माच्छ्रुत्यन्तरेभ्यः स्मृतेश्च सर्वशब्दार्थासंकोचाच्च सर्वेषामुत्क्रमणे स्थितेऽस्मिन्नैवं यदुक्तं सप्तैवेति, किंतु प्रदर्शनार्थं सप्तत्वसंख्येति सिद्धम् ॥ ६ ॥ ( २ ) ॥ अणवश्च। अत्र सांख्यानामाहंकारिकत्वादिन्द्रियाणा-

आनन्दगिरीय–न्यायनिर्णयः।

कर्मेन्द्रियपञ्चकं ज्ञानेन्द्रियपञ्चकं मनआद्यन्तःकरणचतुष्कमविद्या कामः कर्म चेति पुर्यष्टकम्। तच्चानेनाऽऽत्मा लिङ्ग्यते ज्ञायत इति लिङ्गम्। प्रकृतोपयोगितात्पर्यं स्मृतेर्दर्शयति–प्रागिति। सार्थेन्द्रियप्रस्तावे हस्तादीनां सार्थानामुक्तेरपि तेषामिन्द्रियत्वं देहान्तरसंचारित्वं च प्रसिद्धमित्याह–आथर्वणे चेति। इतश्च हस्तादीनामस्तीन्द्रियत्वं देहान्तरसंचारित्वं चेत्याह–तथेति। यत्तु सर्वशब्दः प्रकृतगामीति तत्राऽऽह–सर्वेति। अनुयायिनामेवेन्द्रियत्वे वाच्ये प्राणमनूत्क्रामन्तमित्यत्र सर्वशब्देन प्राकरणिकसप्तप्राणोक्तिर्वा 'दशेमे पुरुषे प्राणा आत्मैकादश' इति श्रुत्यन्तरसिद्धैकादशप्राणानां सर्वे प्राणा इति प्राणश्रुत्युक्तानामुक्तिर्वेति विमर्शे प्राकरणिकसप्तग्रहाद्वरं श्रौतैकादशग्रहः संनिकर्षादिति भावः। परोक्तं दृष्टान्तं विघटयति-सर्व इति। कथं तर्हि संकोचस्तत्राऽऽह–सर्वेति। उत्क्रान्तिवाक्येऽपि तथा संकोचः स्यान्नेत्याह–इह त्विति। अनुपपत्तिके संकोचे प्राकरणिकः संख्यानियमो युक्तो दार्ष्टान्तिके तु नानुपपत्तिरिति कुतः संकोच इत्यर्थः। संकोचाभावे फलितमाह–तस्मादिति। एकादशानां ग्रहे कुतः सप्तानामनुक्रमणं तत्राऽऽह–प्रदर्शनार्थं चेति। संख्यायां न्यूनाधिकत्वायोगमुपपाद्य प्रकृतमुपसंहरति–तस्मादिति। ॥ ६॥ (२) ॥ एकादशप्राणानामुत्क्रान्तिरुक्ता सा न मुख्या तेषां व्यापित्वादित्याशंक्याऽऽह–अणवश्चेति।

अधुना प्राणानामेव स्वभावान्तरमभ्युच्चिनोति । अणवश्चैते प्रकृताः प्राणाः प्रतिपत्तव्याः । अणुत्वं चैषां सौक्ष्म्यपरिच्छेदौ न परमाणुतुल्यत्वं, कृत्स्नदेहव्यापिकार्यानुपपत्तिप्रसङ्गात् ॥ सूक्ष्मा एते प्राणाः स्थूलाश्चेत्स्युर्मरणकाले शरीरान्निर्गच्छन्तो बिलादहिरिवोपलभ्येरन्म्रियमाणस्य पार्श्वस्थैः । परिच्छिन्नाश्चैते प्राणाः सर्वगताश्चेत्स्युरुत्क्रान्तिगत्यागतिश्रुतिव्याकोपः स्यात् ॥ तद्गुणसारत्वं च जीवस्य न सिध्येत् ॥ सर्वगतानामपि वृत्तिलाभः शरीरदेशे स्यादिति चेत् ॥ न ॥ वृत्तिमात्रस्य करणत्वोपपत्तेः ॥ यदेव ह्युपलब्धिसाधनं वृत्तिः, अन्यद्वा, तस्यैव नः करणत्वं संज्ञामात्रे विवाद इति करणानां व्यापित्वकल्पना निरर्थिका । तस्मात्सूक्ष्माः परिच्छिन्नाश्च प्राणा इत्यध्यवस्यामः ॥ ७ ॥ इति प्राणाणुत्वाधिकरणम् ॥ ३ ॥

---

रत्नप्रभा ।

मभिव्यक्तिरूपाः प्रादेशिक्यो वृत्तयः सन्ति न तासामुत्क्रान्त्यादिरिति सांख्यानामाक्षेपः, तत्संगत्या प्राणाः किंपरिमाणा इति संदेहे सिद्धान्तयति—अधुनेत्यादिना ॥ उत्पत्तिसंख्यानिर्णयानन्तरं परिमाणं निरूप्यत इत्यर्थः ॥ अनुद्भूतरूपस्पर्शत्वं सूक्ष्मत्वम् । परिच्छेदोऽल्पत्वम् ॥ बुद्ध्यादीनां विभुत्वे तदुपाधिकमात्मनोऽणुत्वादिकं न सिद्ध्येदित्युक्तन्यायविरोधमाह—तद्गुणसारत्वमिति ॥ उक्ताक्षेपमनूद्य निरस्यति—सर्वगतानामिति ॥ आनन्त्यश्रुतेरुपासनार्थत्वान्नोत्क्रान्त्यादिश्रुतीनां तया विरोध इति

भामती ।

महंकारस्य च जगन्मण्डलव्यापित्वात्सर्वगताः प्राणाः वृत्तिस्तेषां शरीरदेशतया प्रादेशिकी तन्निबन्धना च गत्यागतिश्रुतिरिति मन्यन्ते, तान्प्रत्याह—अणवश्च प्राणा अनुद्भूतरूपस्पर्शता चाणुत्वं दुरधिगमत्वान्न तु परमाणुत्वं देहव्यापिकार्यानुत्पत्तिप्रसङ्गात्तापदूनस्य शिशिरह्रदनिमग्नस्य सर्वाङ्गीणशीतस्पर्शोपलब्धिरस्तीत्युक्तम् । एतदुक्तं भवति—यदि सर्वगतानीन्द्रियाणि भवेयुस्ततो व्यवहितविप्रकृष्टवस्तूपलम्भप्रसङ्गः । सर्वगताऽपि

आनन्दगिरीय—न्यायनिर्णयः ।

संक्षेपतोऽधिकरणतात्पर्यमाह—अधुनेति । उत्पत्तिसंख्याश्रुत्यविरोधोक्त्यनन्तरं परिमाणश्रुतिविरोधो निरस्यत इत्यर्थः । उक्तप्राणानामुत्क्रान्त्यानन्त्यश्रुतिभ्यां परिच्छिन्नत्वविभुत्वसंदेहे सिद्धान्तं तावदाह—अणवश्चैत इति । अत्रोत्क्रान्त्यानन्त्यश्रुत्योरविरोधेन परिच्छिन्नप्राणकारणे ब्रह्मणि समन्वयस्थापनात्पादादिसंगतिः । पूर्वपक्षे दर्शितश्रुत्योर्मिथोविरोधादुक्ते ब्रह्मणि समन्वयासिद्धिः । सिद्धान्ते तदविरोधात्तत्सिद्धिः । अणुशब्दात्परमाणुपरिमाणत्वं प्राप्तं प्रत्याह—अणुत्वं चेति । सौक्ष्म्यं द्रव्याणामुद्भूतरूपस्पर्शानाधारत्वम् । परिच्छेदो मध्यमपरिमाणत्वम् । परमाणुतुल्यत्वमेवाणुत्वं किं न स्यात्तत्राऽऽह—कृत्स्नेति । सौक्ष्म्यं प्रपञ्चयति—सूक्ष्मा इति । परिच्छेदं साधयति—परिच्छिन्नाश्चेति । विभुत्वे चेन्द्रियाणामन्तःकरणावच्छेदादणुत्वमात्मनो यदुत्क्रान्त्यधिकरणे सिद्धं तदपि न सिध्येदित्याह—तद्गुणेति । प्राणाः सर्वगताः सर्वत्र दृष्टकार्यत्वादाकाशवदित्यनुमानात्सर्वेऽनन्ता इत्यादिश्रुतेश्च तेषां विभुत्वादेह एवाभिव्यक्तेश्च सर्वत्र दृष्टयप्रसङ्गात्कुतोऽणुत्वमिति पूर्वपक्षमाह—सर्वगतानामिति । हेतोरसिद्धेरुपासनापरत्वाच्च श्रुतेरिन्द्रियाणां विभुत्वे मानाभावाद्वृत्तित्वेनेष्टं तदेवास्माकं साधकतमत्वात्करणमित्याह—नेत्यादिना । तदेव स्पष्टयति—यदेवेति । वृत्तिमदेव करणं न वृत्तिमात्रमित्याशंक्याऽऽह—अन्यद्वेति । वृत्तेर्वा वृत्तिमतो वा देहावच्छिन्नस्यैव वृत्तिसाधनस्य करणत्वे फलितमाह—इतीति । अनर्थिकेत्युपलक्षणमप्रामाणिकी चेति वाच्यम् । सांख्यपक्षायोगे फलितमाह—तस्मादिति ॥ ७ ॥ ( ३ ) ॥ मुख्य-

## श्रेष्ठश्च ॥ ८ ॥ ( ४ ) ॥

मुख्यश्च प्राण इतरप्राणवद्ब्रह्मविकार इत्यतिदिशति । तच्चाविशेषेणैव सर्वप्राणानां ब्रह्मविकारत्वमाख्यातम् । "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" [ मुण्ड० २ । १ । ३ ] इति सेन्द्रियमनोव्यतिरेकेण प्राणस्योत्पत्तिश्रवणात्, "स प्राणमसृजत" [ प्र० ६ । ४ ] इत्यादिश्रवणेभ्यश्च ॥ किमर्थः पुनरतिदेशः ॥ अधिकाशङ्कापाकरणार्थः ॥ नासदासीये हि ब्रह्मप्रधाने सूक्ते मन्त्रवर्णो भवति "न मृत्युरासीदमृतं न तर्हि न राज्या अह्न आसीत्प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास" [ ऋ० सं० ८ । ७ । १७ ] इति ॥ आनीदिति प्राणकर्मोपादानात्प्रागुत्पत्तेः सन्तमिव प्राणं सूचयति । तस्मादजः प्राण इति

---

रत्नप्रभा ।

सिद्धम् ॥ ७ ॥ (३) ॥ श्रेष्ठश्च । अतिदेशत्वान्न संगत्याद्यपेक्षा । "तथा प्राणाः" इत्युक्तन्यायोऽत्रातिदिश्यते ॥ ननु प्राणो जायते न वेति संशयाभावादतिदेशो न युक्त इत्याक्षिपति—किमर्थ इति ॥ निश्चितमहाप्रलये प्राणसद्भावश्रुत्याऽधिकां शङ्कामाह—नासदासीये हीति ॥ "नासदासीत्" इत्यारभ्याधीत इत्यर्थः । तर्हि तदा प्रलयकाले मृत्युर्मारको मृत्युमत्कार्यं वा नासीत्, अमृतं च देवभोग्यं नासीत्, राज्याः प्रकेतश्चिह्नरूपश्चन्द्रः, अह्नः प्रकेतः सूर्यश्च नास्तां, स्वधया सहेत्यन्वयः । पितृभ्यो देयमन्नं स्वधा । यद्वा स्वेन धृता माया स्वधा, तया सह तदेकं ब्रह्मानीदासीदिति परमार्थः ॥ अत्रानीदिति

भामती ।

देहावच्छिन्नानामेव करणत्वं तेन न व्यवहितविप्रकृष्टवस्तूपलम्भप्रसङ्ग इति चेत्, हन्त प्राप्ताप्राप्तविवेकेन शरीरावच्छिन्नानामेव तेषां करणत्वमिन्द्रियत्वमिति न व्यापिनामिन्द्रियभावः । तथा च नाममात्रे विसंवादो नार्थेऽस्माभिस्तदिन्द्रियमुच्यते भवद्भिस्तु वृत्तिरिति सिद्धमणवः प्राणा इति ॥ ७ ॥ ( ३ ) ॥ श्रेष्ठश्च । न केवलमितरे प्राणा ब्रह्मविकाराः श्रेष्ठश्च प्राणो ब्रह्मविकारः । 'नासदासीत्' इत्यधिकृत्य प्रवृत्ते ब्रह्मसूक्ते

आनन्दगिरीय-न्यायनिर्णयः ।

प्राणातिरिक्तप्राणानां सृष्ट्यादि शिष्ट्वा मुख्येऽपि प्राणे प्रथमाधिकरणन्याय इत्यतिदिशति—श्रेष्ठश्चेति । ज्ञाते चक्षुरादौ तद्व्यापारात्प्राणस्य भेदचिन्ता सुकरेति चक्षुरादिनिरूपणानन्तरमतिदेशो न विरुध्यते । मुख्यप्राणो विषयस्तस्य किं जन्म नास्ति किंवाऽस्तीति श्रुतिविप्रतिपत्त्या संशयेऽतिदेशं विशदयति—मुख्यश्चेति । अत्र चाऽऽद्याधिकरणवत्पादादिसंगतिफलभेदौ । कुतस्तर्हि ब्रह्मविकारत्वं तत्राऽऽह—तच्चेति । पूर्वोक्तन्यायेनैव ब्रह्मविकारत्वसिद्धौ किमतिदेशेनेत्याह—किमर्थ इति । अतिदेशफलमाह—अधिकाशंकेति । तामेवाधिकां शंकां दर्शयति—नासदासीये हीति । नासदासीदित्यारभ्य प्रवृत्ते सूक्ते ब्रह्मपरे मन्त्र एव वर्णयतीति वर्णो दृष्टोऽस्तीति यावत् । तर्हि तस्मिन्महाप्रलये मृत्युमारको मृत्युमद्वा कार्यं नाऽऽसीदमृतमपि देवोपभोगयोग्यममृतत्वाधिकरणं वा नाऽऽसीत्तथा रात्र्या रात्रेरह्नो दिवसस्य च प्रकेतश्चिह्नभूतश्चन्द्रः सविता च नाऽऽस्तां स्वधया सहेति संबन्धः । स्वधेति पितृभ्यो दीयमानमन्नं पित्राद्यर्चनमपि नाऽऽसीदित्यर्थः । यद्वा स्वधया स्वया धारणया स्वकीयस्थित्या तदेकमवातं वातवर्जितमानीचेष्टां कृतवदिति यावत् । तस्माच्चेष्टावतः सकाशाद्धि किलान्यत्किंचन किंचिदपि परः परं प्रकृष्टं नाऽऽस न बभूवेत्यर्थः । अस्मिन्मन्त्रे विवक्षितमंशमाह—प्रागिति । अत्र प्राणवाचकाभावात्कथं तदस्तित्वधीरित्याशंक्याऽऽह—आनीदिति । प्राणोत्पत्तिन्यायेनैव मुख्यस्यापि जन्मसिद्धौ किं पुनरुक्त्येत्याशंक्यावान्तरप्रकृतिविषयत्वेन व्यवस्था तत्रोक्ता । प्रकृते महाप्रलयविषयत्वान्न पूर्वन्यायसिद्धिरिति मत्वाऽऽह—तस्मा-

जायते कस्यचिन्मतिः । तामतिदेशेनापनुदति । आनीच्छब्दोऽपि न प्रागुत्पत्तेः प्राणसद्भावं सूचयति । अवातमिति विशेषणात् । "अप्राणो ह्यमनाः शुभ्रः" इति च मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वस्य दर्शितत्वात् । तस्मात्कारणसद्भावप्रदर्शनार्थ एवायमानीच्छब्द इति ॥ श्रेष्ठ इति च मुख्यं प्राणमभिदधाति—"प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च" [ छां० ५ । १ । १ ] इति श्रुतिनिर्देशात् । ज्येष्ठश्च प्राणः शुक्रनिषेककालादरभ्य तस्य वृत्तिलाभात् ॥ न चेत्तस्य तदानीं वृत्तिलाभः स्याद्योनौ निषिक्तं शुक्रं पूयेत न संभवेद्वा । श्रोत्रादीनां तु कर्णशष्कुल्यादिस्थानविभागनिष्पत्तौ वृत्तिलाभान्न ज्येष्ठत्वम् ॥ श्रेष्ठश्च प्राणो गुणाधिक्यात, "न वै शक्ष्यामस्त्वदृते जीवितुम्" [ बृ० ६ । १ । १३ ] इति श्रुतेः ॥ ८ ॥ इति प्राणश्रैष्ठ्याधिकरणम् ॥ ४ ॥

## न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥ ( ५ ) ॥

---

रत्नप्रभा ।

तच्चेष्टां कृतवदिति पूर्वपक्षार्थः । तस्माद्ब्रह्मणः परः परमुत्कृष्टमन्यच्च किमपि न बभूवेत्यर्थः । परिहारः सुबोधः ॥ ननु श्रेष्ठशब्दस्य प्राणे प्रसिद्ध्यभावात्कथं सूत्रमिति, तत्राह—श्रेष्ठ इति चेति ॥ श्रुतिं व्याचष्टे—ज्येष्ठश्च प्राण इत्यादिना । पूयेत पूयं भवेत् । न संभवेत्तद्गर्भो न भवेदित्यर्थः । वागादिजीवनहेतुत्वं प्राणस्य गुणः । एवमानीच्छ्रुत्यविरोधात्प्राणोत्पत्तिश्रुतीनां ब्रह्मणि समन्वय इति सिद्धम्॥८॥ इन्द्रियाणि विचार्य तद्व्यापारात्प्राणं पृथक्कर्तुमुत्पत्तिरतिदिष्टा । संप्रत्युत्पन्नप्राणस्वरूपं पृथक्करोति—न वायुक्रिये पृथगुपदेशात् ॥ मुख्यः प्राणः किं वायुमात्रम्, उत करणानां साधारणव्यापारः, आहोस्वित्

भामती ।

नासदासीये सर्गात्प्रागानीदिति प्राणव्यापारश्रवणादसति च व्यापारवति व्यापारानुपपत्तेः प्राणसद्भावाज्ज्येष्ठत्वश्रुतेश्च न ब्रह्मविकारः प्राण इति मन्वानस्य बहुश्रुतिविरोधेऽपि च श्रुत्योरेतयोर्गतिमपश्यतः पूर्वपक्षः राद्धान्तस्तु बहुश्रुतिविरोधादेवानीदिति न प्राणव्यापारप्रतिपादिनी, किंतु सृष्टिकारणमानीत् जीवति स्म आसीदिति यावत् । तेन तत्सद्भावप्रतिपादनपरा । ज्येष्ठत्वं च श्रोत्राद्यपेक्षमिति गमयितव्यम् । तस्माद्बहुश्रुत्यनुरोधान्मुख्यस्यापि प्राणस्य ब्रह्मविकारत्वमिति सिद्धम् ॥ ८ ॥ ( ४ ) ॥ न वायुक्रिये पृथगुपदेशात् । संप्रति मुख्यप्राणस्वरूपं निरूप्यते । अत्र हि 'यः प्राणः स वायुः' इति श्रुतेर्वायुरेव प्राण

आनन्दगिरीय—न्यायनिर्णयः ।

दिति । अधिकां शङ्कामुक्त्वा सिद्धान्तयति- तामिति । 'एतस्माज्जायते प्राणः' इति प्राणजन्म श्रुतम्। 'आनीत्' इत्यननं प्राणव्यापारः प्रागवस्थायां प्राणसत्त्वे लिङ्गम् । तत्र द्वयोर्महाप्रलयावान्तरप्रलयभेदेन व्यवस्थानुपपत्तावन्यतरस्य गौणत्वे श्रुतिविरोधे लिंगस्यैव गौणत्वादानीच्छब्दस्य मूलकारणसत्तावाचित्वकल्पनया प्राणस्य जन्मोपेयमिति शङ्कानिरासमेव सूचयति—आनीदिति । प्रमाणान्तरवदित्यपेर्थः । इतश्च प्रागवस्थायां न प्राणस्य सत्त्वमित्याह—अवातमिति । इतोऽपि महाप्रलये प्राणसत्ता नास्तीत्याह—अप्राणो हीति । आनीच्छब्दस्तर्हि कथमित्याशंक्य धातूनामनेकार्थत्वमाश्रित्याऽऽह—तस्मादिति । एवं शङ्कानिरासेऽपि प्राणे श्रेष्ठशब्दाप्रसिद्धौ कथं सूत्रमित्याशंक्याऽऽह—श्रेष्ठ इति। श्रौतं ज्येष्ठत्वं साधयति—ज्येष्ठश्चेति । तदेव व्यतिरेकद्वारा स्फोरयति—न चेदिति । न संभवेदिति श्रुतेरेवानुकरणमिन्द्रियाणामपि तुल्यं ज्यैष्ठ्यं तत्राऽऽह—श्रोत्रादीनां त्विति । श्रेष्ठत्वं साधयति—श्रेष्ठश्चेति । कथं गुणाधिक्यं तत्रोक्तम्—नवा इति । तदेवं मुख्यप्राणोत्पत्तिश्रुतीनामन्योन्यमविरोधान्मुख्यप्राणकारणे ब्रह्मणि समन्वय इति ॥ ८ ॥ ( ४ ) ॥ मुख्यप्राणोत्पत्तिचिन्तानन्तरं तत्स्वरूपं चिन्तयति—नेत्यादिना । अधिकरणतात्पर्य-

**स पुनर्मुख्यः प्राणः किंस्वरूप इतीदानीं जिज्ञास्यते ॥ तत्र प्राप्तं तावच्छ्रुतेर्वायुः प्राण इति ॥ एवं हि श्रूयते-"यः प्राणः स वायुः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः" इति ॥ अथ वा-तन्त्रान्तरीयाभिप्रायात्समस्तकरणवृत्तिः प्राण इति प्राप्तम् ॥ एवं हि तन्त्रान्तरीया आचक्षते-सामान्या करणवृत्तिः प्राणाद्या वायवः पञ्चेति॥ अत्रोच्यते-न वायुः प्राणः नापि करणव्यापारः ॥ कुतः ॥ पृथगुपदेशात् ॥ वायोस्तावत्प्राणस्य पृथगुपदेशो भवति-"प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च" [ छान्दो० ३ । १८ । ४ ] इति ॥ न हि वायुरेव सन् वायोः पृथगुपदिश्येत ॥ तथा करणवृत्तेरपि पृथ-**

रत्नप्रभा ।

स्त्वान्तरम्, इति वायुप्राणयोर्भेदाभेदश्रुतीनां मिथोविरोधात्संशये पूर्वपक्षमाह-**तत्रेति** ॥ द्वितीयं सांख्यपूर्वपक्षमाह-**अथ वेति** ॥ सिद्धान्तत्वेन सूत्रमादत्ते-**अत्रोच्यत इति** ॥ मनोरूपब्रह्मणो वाक्प्राणचक्षुःश्रोत्रैश्चतुष्पात्त्वं श्रुतावुक्तं, तत्र प्राणो वायुनाधिदैविकेन भात्यभिव्यज्यते अभिव्यक्तः संस्तपति । कार्यक्षमो भवतीत्यर्थः । श्रुतिषु तत्रतत्र प्राणस्य वागादीनां च मिथःसंवादलिङ्गेन पृथगुत्पत्तिलिङ्गेन चेन्द्रि-

भामती ।

इति प्रतिभाति । अथ वा 'प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा' इति वायोर्भेदेन प्राणस्य श्रवणादेतद्विरोधाद्वरं तन्त्रान्तरीयमेव प्राणस्य स्वरूपमस्तु, श्रुती च विरुद्धार्थे कथंचिन्नेष्येते इति सामान्यकरणवृत्तिरेव प्राणोऽस्तु । न चात्रापि करणेभ्यः पृथक्प्राणस्यानुक्रमणश्रुतिविरोधो वृत्तिवृत्तिमतोर्भेदादिति पूर्वः पक्षः । सिद्धान्तस्तु-न सामान्येन्द्रियवृत्तिः प्राणः । स हि मिलितानां वेन्द्रियाणां वृत्तिर्भवेत् प्रत्येकं वा । न तावन्मिलितानाम्, एकद्वित्रिचतुरिन्द्रियाभावे तदभावप्रसङ्गात् । नो खलु चूर्ण-

आनन्दगिरीय-न्यायनिर्णयः ।

माह-**स इति** । मुख्यप्राणो वायुमात्रं वा करणवृत्तिर्वा तत्त्वान्तरं वेति विप्रतिपत्त्या संदिह्य तत्त्वान्तरत्वं निर्धार्यत इत्यर्थः । अत्र च भेदाभेदश्रुतिविरोधनिषेधेन वाय्वाद्यतिरिक्तप्राणकारणे ब्रह्मणि समन्वयसाधनात्पादादिसंगतिः। पूर्वपक्षे भेदाभेदश्रुत्योर्मिथो विरोधादुक्तसमन्वयासिद्धिः। सिद्धान्ते तदविरोधात्तत्सिद्धिः। यद्वा-पूर्वपक्षे वायुमात्रादिन्द्रियमात्राद्वा त्वमर्थस्य विवेकः । सिद्धान्ते तत्त्वान्तरात्प्राणात्तद्विवेक इत्यंगीकृत्य पूर्वपक्षमाह-**तत्रेति** । अभेदश्रुतिरिव भेदश्रुतिरपि स वायुनेत्याद्या प्राणस्य वायोरस्तीत्याशंक्योभयोर्मुख्यत्वासिद्धेस्तोककल्पनानुरोधाद्गौणी भेदश्रुतिरिति मत्वाऽऽह-**एवं हीति** । भेदश्रुत्यवष्टम्भेऽपि "धर्मिभेदाद्धर्मभेदो लघीयान्" इति न्यायेन वागादीनां संभूय देहचालनादिहेतुसामान्यव्यापारसंभवान्न प्राणाख्यं पदार्थान्तरं कल्प्यं गौरवादिन्द्रियवृत्तितया तद्भेदस्यापि वक्तुं शक्यत्वादिति पक्षान्तरमाह-**अथ वेति** । तन्त्रान्तरीयाभिप्रायं विवृणोति-**एवं हीति** । वायुमात्रादिन्द्रियमात्राद्वा त्वमर्थस्य विवेक इति प्राप्तमनूद्य सिद्धान्तयति-**अत्रेति** । न वायुः प्राण इत्यत्र पृथगुपदेशहेतुं विशदयति-**वायोरिति** । 'मनो ब्रह्मेत्युपासीत' इत्युपक्रम्य मनोब्रह्मणो वाक्प्राणचक्षुःश्रोत्रैः पादैश्चतुष्पात्त्वमुक्तम् । मनो हि वागादिभिः स्वविषयेषु गौरिव पादैः प्रवर्तते तत्र प्राण एव मनोब्रह्मणो वागाद्यपेक्षया चतुर्थपादः । स च वायुनाधिदैविकेन भात्यभिव्यज्यते स्वव्यापारे च तपत्युद्गच्छतीत्यर्थः । यद्यपि च्छान्दोग्यभाष्ये घ्राणेन्द्रियमिन्द्रियप्रकरणात्प्राण इत्युक्तं तथाऽपि प्राणश्रुतिवशादत्र मुख्यप्राणो गृह्यते । अंशांशित्वेन भेदश्रुतिरित्याशंक्योपचारप्रसङ्गान्नैवमित्याह-**न हीति** । नापि करणव्यापार इत्यत्र पृथगुपदेशं हेतुं विभज्य व्याचष्टे-**तथेति** ।

**गुपदेशो भवति, वागादीनि करणान्यनुक्रम्य तत्रतत्र पृथक्प्राणस्यानुक्रमणात् ॥ वृत्तिवृत्तिमतोश्चाभेदान्न हि करणव्यापार एव सन् करणेभ्यः पृथगुपदिश्येत ॥ तथा "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुः" [ मु० २ । १ । ३ ] इत्येवमादयोऽपि वायोः करणेभ्यश्च प्राणस्य पृथगुपदेशा अनुसर्तव्याः ॥ न च समस्तानां करणानामेका वृत्तिः संभवति, प्रत्येकमेकैकवृत्तित्वात्समुदायस्य चाकारकत्वात् ॥ ननु पञ्जरचालनन्यायेनैतद्भविष्यति ॥ यथैकपञ्जरवर्तिन एकादशपक्षिणः प्रत्येकं प्रतिनियतव्यापाराः सन्तः संभूयैकं पञ्जरं चालयन्ति, एवमेकशरीरवर्तिन एकादश प्राणाः प्रत्येकं प्रतिनियतवृत्तयः सन्तः संभूयैकां प्राणाख्यां वृत्तिं प्रतिलप्स्यन्त इति ॥ नेत्युच्यते ॥ युक्तं तत्र प्रत्येकवृत्तिभिरवान्तरव्यापारैः पञ्जरचालनानुरूपैरेवोपेताः पक्षिणः संभूयैकं पञ्जरं चालयेयुरिति । तथा दृष्टत्वात् ॥ इह तु श्रवणाद्यवान्तरव्यापारोपेताः प्राणा न संभूय प्राण्युरिति युक्तम्, प्रमाणाभावात् । अत्यन्तविजाती-**

रत्नप्रभा ।

यतदभिन्नव्यापारेभ्योऽपि भिन्नत्वमित्याह—**तथेति** ॥ प्राणस्येन्द्रियवृत्तित्वं श्रुत्या निरस्य युक्त्यापि निरस्यति—**न च समस्तानामिति** ॥ या चक्षुःसाध्या वृत्तिः सैव न श्रोत्रादिसाध्या, करणानां प्रत्येकमेकैकरूपग्रहादिवृत्तावेव हेतुत्वात् । न च समुदायस्य वृत्तिः संभवति तस्यासत्त्वादित्यर्थः ॥ **प्रमाणाभावादिति** ॥

भामती ।

हरिद्रासंयोगजन्माऽरुणगुणस्तयोरन्यतराभावे भवितुमर्हति । न च बहुविष्टिसाध्यं शिबिकोद्वहनं द्वित्रिविष्टिसाध्यं भवति । न च त्वगेकसाध्यं, तथा सति सामान्यवृत्तित्वानुपपत्तेः । अपि च यत्संभूय कारकाणि निष्पादयन्ति तत्प्रधानव्यापारानुगुणावान्तरव्यापारेणैव,यथा—वयसां प्रातिस्विको व्यापारः पञ्जरचालनानुगुणः । न चेन्द्रियाणां प्राणे प्रधानव्यापारे जनयितव्येऽस्ति तादृशः कश्चिदवान्तरव्यापारस्तदनुगुणः। ये च रूपादिप्रत्यया न ते तदनुगुणाः,तस्मान्नेन्द्रियाणां सामान्यवृत्तिःप्राणस्तथा च वृत्तिवृत्तिमतोः कथंचिद्भेद-

आनन्दगिरीय–न्यायनिर्णयः ।

प्राणस्य वागादीनां च मिथःसंवादलिङ्गेनोत्पत्तिभेदलिंगेन चेन्द्रियतद्व्यापारेभ्यो भिन्नत्वसिद्धेर्न लाघवात्तद्वृत्तित्वमित्यर्थः । पृथगनुक्रमणं वृत्तिवृत्तिमतोर्भेदादित्याशंक्याऽऽह—**वृत्तीति** । तादात्म्याद्भेदोऽप्यस्तीत्याशंक्य भेदवादस्याफलत्वान्मैवमित्याह—**न हीति** । प्रतिज्ञाद्वयेऽपि हेतुं विभज्य व्याख्यायाविभागेनापि व्याख्याति—**तथेति** । श्रुत्यवष्टम्भेन पक्षद्वयं निराकृत्य करणवृत्तित्वे दोषान्तरमाह—**न चेति** । या चक्षुःसाध्या वृत्तिः सैव न श्रोत्रसाध्या चक्षुरादीनां प्रत्येकमेवैकरूपग्रहणादिवृत्तौ स्वातन्त्र्यादतो न प्राणः सामान्यकरणवृत्तिरित्यर्थः । समुदायस्य करणत्वमुपेत्योक्तं तदेव नास्त्यवस्तुत्वात् । द्वित्रिकरणविकलानां च प्राणनाभावप्रसङ्गादतोऽपि न करणवृत्तिः प्राण इत्याह—**समुदायस्येति** । दृष्टान्तेन समुदितानां करणानां करणत्वं शङ्कते—**नन्विति** । एकादशत्वं पक्षिषु दार्ष्टान्तिकानुरोधादुक्तं वैषम्यं दर्शयन्परिहरति—**इति नेति** । तत्रेति दृष्टान्तोक्तिः । दार्ष्टान्तिकेऽपि किमित्यवान्तरव्यापारवतां प्राणानां प्राणाख्यसामान्यवृत्तिर्न स्यादित्याशंक्यावान्तरव्यापारस्तेषां श्रवणादिर्वा वृत्त्यन्तरं वेति विकल्प्याऽऽद्ये श्रोत्रादीनां श्रवणादिव्यापारयौगपद्ये मानायोगान्मैवमित्याह—**इह त्विति** । कल्पान्तरं प्रत्याह—**प्रमाणेति** । किंच, श्रवणादीनामपरिस्पन्दत्वात्तत्प्रधानव्यापारानुरूपत्वान्न तदवान्तरव्यापारतेत्याह—**अत्यन्तेति** ।

यत्वाच्च श्रवणादिभ्यः प्राणनस्य ॥ तथा प्राणस्य श्रेष्ठत्वाद्युद्घोषणं गुणभावोपगमश्च तं प्रति वागादीनां, न करणवृत्तिमात्रे प्राणेऽवकल्पते । तस्मादन्यो वायुक्रियाभ्यां प्राणः ॥ कथं तर्हीयं श्रुतिः-"यः प्राणः स वायुः" इति ॥ उच्यते ॥ वायुरेवायमध्यात्ममापन्नः पञ्चव्यूहो विशेषात्मनाऽवतिष्ठमानः प्राणो नाम भण्यते न तत्त्वान्तरं नापि वायुमात्रम् । अतश्चोभे अपि भेदाभेदश्रुती न विरुध्येते ॥ ९ ॥ स्यादेतत् । प्राणोऽपि तर्हि जीववदस्मिञ्छरीरे स्वातन्त्र्यं प्राप्नोति, श्रेष्ठत्वाद् गुणभावोपगमाच्च तं प्रति वागादीनामिन्द्रियाणाम् ॥ तथाह्यनेकविधा विभूतिः प्राणस्य श्राव्यते-"सुप्तेषु वागादिषु प्राण एको हि जागर्ति, प्राण एको मृत्युनाऽनाप्तः, प्राणः संवर्गो वागादीन्संवृङ्क्ते प्राण इतरान्प्राणान्रक्षति मातेव पुत्रान्" इति । तस्मात्प्राणस्यापि जीववत्स्वातन्त्र्यप्रसङ्गः ॥ तं परिहरति-

---

रत्नप्रभा ।

श्रोत्रादीनामेकप्राणनाख्यवृत्त्यनुकूलपरिस्पन्देषु मानाभावात्, श्रवणादीनामपरिस्पन्दत्वेन विजातीयानां, परिस्पन्दरूपप्राणनाननुकूलत्वादवान्तरव्यापाराभावान्न समस्तकरणवृत्तिः प्राण इत्यर्थः ॥ किंच प्राणस्य वृत्तित्वे वागादीनामेव प्राधान्यं वाच्यं, नैतदस्तीत्याह-तथा प्राणस्येति ॥ यथा मृदो घटो न वस्त्वन्तरं नापि मृन्मात्रं तद्विकारत्वात्, तथा वायोर्विकारः प्राण इत्यभेदश्रुतेर्गतिमाह-उच्यत इति ॥ देहं प्राप्तः पञ्चावस्थो विकारात्मना स्थितो वायुरेव प्राण इत्यर्थः ॥ ९ ॥ प्राणस्य करणवृत्तित्वाभावे जीववद्भोक्तृत्वं स्यादिति शङ्कते-स्यादेतदिति ॥ प्राणो न भोक्ता, भोगोपकरणत्वात्, चक्षुरादिवदिति

भामती ।

विवक्षया न पृथगुपदेशो गमयितव्यः । तस्मान्न क्रिया, नापि वायुमात्रं प्राणः, किंतु वायुभेद एवाध्यात्ममापन्नः पञ्चव्यूहः प्राण इति ॥ ९ ॥ स्यादेतत् । यथा चक्षुरादीनां जीवं प्रति गुणभूतत्वा-

आनन्दगिरीय-न्यायनिर्णयः ।

किंच, वागादिवृत्तित्वे प्राणस्य वागादिपारतन्त्र्यं वाच्यं तद्वैपरीत्यं चात्र दृष्टं तन्न प्राणस्य वागादिवृत्तितेत्याह-तथेति । पृथगुपदेशयुक्तिफलमुपसंहरति-तस्मादिति । अपृथगुपदेशस्य गतिं पृच्छति-कथमिति । यथा मृदोऽवस्थाविशेषो घटो मृदात्मा तथा वायोरवस्थाविशेषः प्राणो वाय्वात्मेत्याह-उच्यत इति । अध्यात्मापन्नः शरीरे प्रतिष्ठितः पञ्चव्यूहः प्राणापानव्यानोदानसमानाख्यावस्थाविशेषवान्विशेषात्मना व्यावृत्तरूपेणेति यावत् । कथं तर्हि पृथगुपदेशस्तत्राऽऽह-नापीति । तत्त्वान्तरत्वस्य तन्मात्रत्वस्य चास्वीकारे फलितमाह-अतश्चेति । 'यः प्राणः स वायुः' इति सामानाधिकरण्यवाक्येन प्राणस्य वायुत्वं सिद्धम् 'एतस्माज्जायते प्राणः' इत्युत्पत्तिभेदलिंगेन स्वरूपभेदो दृष्टो द्वयोश्च वाक्यलिंगयोर्विरोधे वाक्यं समीरणस्वभावताविषयं लिंगं व्यक्तिभेदविषयमिति व्यवस्थाया वायोः प्राणस्य च विषयभेदो युक्तो लिङ्गस्य च बलीयस्त्वादिति भावः ॥ ९ ॥ प्राणो वागादिवृत्तिर्न चेत्तर्हि तस्येन्द्रियवत्करणत्वानंगीकाराज्जीववद्भोक्तृतेति शङ्कते-स्यादिति । प्राणस्य श्रेष्ठत्वमितरेषां तं प्रति गुणत्वं च साधयति-तथाहीति । श्रेष्ठत्वफलमाह-तस्मादिति । प्राणस्यापि जीववदत्र भोक्तृत्वे विरुद्धाभिप्रायानेकभोक्त्रधिष्ठिततया देहस्य गमनादि न भवेदिति भावः । प्राणस्य चक्षुरादिवदत्यन्तोपसर्जनत्वाभावेऽपि परिचारकवतः सामन्तादे राजानं प्रति गुणत्ववद्गुणत्वं जीवं प्रति स्यादित्याह-तमिति । सूत्राक्षराणि व्याचष्टे-

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

तुशब्दः प्राणस्य जीववत्स्वातन्त्र्यं व्यावर्तयति । यथा चक्षुरादीनि राजप्रकृतिवज्जीवस्य कर्तृत्वं भोक्तृत्वं च प्रत्युपकरणानि न स्वतन्त्राणि, तथा मुख्योऽपि प्राणो राजमन्त्रिवज्जीवस्य सर्वार्थकरत्वेनोपकरणभूतो न स्वतन्त्रः ॥ कुतः ॥ तत्सहशिष्ट्यादिभ्यः ॥ तैश्चक्षुरादिभिः सहैव प्राणः शिष्यते प्राणसंवादादिषु । समानधर्मणां च सह शासनं युक्तं बृहद्रथंतरादिवत् ॥ आदिशब्देन संहतत्वाचेतनत्वादीन्प्राणस्य स्वातन्त्र्यनिराकरणहेतून्दर्शयति ॥ १० ॥ स्यादेतत् । यदि चक्षुरादिवत्प्राणस्य जीवं प्रति करणभावोऽभ्युपगम्येत, विषयान्तरं रूपादिवत्प्रसज्येत ॥ रूपाद्यालोचनादिभिर्वृत्तिभिर्यथास्वं चक्षुरादीनां जीवं प्रति करणभावो भवति ॥ अपि चैकादशैव कार्यजातानि रूपालोचनादीनि परिगणितानि यदर्थमेकादश प्राणाः संगृहीताः, न तु द्वादशमपरं कार्यजातमधिगम्यते, यदर्थमयं द्वादशः प्राणः प्रतिज्ञायेतेति । अत उत्तरं पठति—

रत्नप्रभा ।

सूत्रार्थमाह—तुशब्द इत्यादिना ॥ यथा बृहद्रथंतरयोः सर्वत्र सहप्रयुज्यमानत्वेन सामत्वेन वा साम्यात्सहपाठस्तथा करणैः सहोपकरणत्वेन साम्यात्प्राणस्य पाठ इति न हेत्वसिद्धिरित्यर्थः । किंच प्राणो न भोक्ता, सावयवत्वात्, जडत्वाद्भौतिकत्वाच्च, देहवत् ॥ १० ॥ ननु यद्भोगोपकरणं तत्सविषयं दृष्टं यथा चक्षुरादिकं, प्राणस्य तु निर्विषयत्वादसाधारणकार्याभावाच्च नोपकरणत्वमिति शङ्कते—स्यादेतदिति ॥

भामती ।

जीवस्य च श्रेष्ठत्वाज्जीवः स्वतन्त्र एवं प्राणोऽपि प्राधान्यात् श्रेष्ठत्वाच्च स्वतन्त्रः प्राप्नोति । न च द्वयोः स्वतन्त्रयोरेकस्मिन् शरीरे एकवाक्यत्वमुपपद्यत इत्यपर्यायं विरुद्धानेकदिक्क्रियतया देह उन्मथ्येत । इति प्राप्ते, उच्यते—चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः । यद्यपि चक्षुराद्यपेक्षया श्रेष्ठत्वं प्राधान्यं च प्राणस्य तथापि संहतत्वादचेतनत्वाद्भौतिकत्वाच्चक्षुरादिभिः सहशिष्टत्वाच्च पुरुषार्थत्वात् पुरुषं प्रति पारतन्त्र्यं शयनासनादिवद्भवेत् । तथा च यथा मन्त्रीतरेषु नैयौगिकेषु प्रधानमपि राजानमपेक्ष्यास्वतन्त्र एवं प्राणोऽपि चक्षुरादिषु प्रधानमपि जीवेऽस्वतन्त्र इति ॥ १० ॥ स्यादेतच्चक्षुरादिभिः सह शासनेन करणं चेत् प्राणः। एवं सति चक्षुरादिविषयरूपादिवदस्यापि विषयान्तरं वक्तव्यम् । न च तच्छक्यं वक्तुम्।

आनन्दगिरीय—न्यायनिर्णयः ।

तुशब्द इत्यादिना । प्राणो न स्वतन्त्रो भोगसाधनत्वाच्चक्षुरादिवदित्यर्थः । प्राणसंवादादिष्वित्यादिशब्देनान्येऽपि ज्ञानध्यानप्रदेशा गृह्यन्ते । सहशासनेऽपि कथं प्राणस्य चक्षुरादिसाम्यं तत्राऽऽह—समानेति । तत्र दृष्टान्तमाह—बृहदिति । ते हि सामनी सहैव सर्वत्र पठ्येते तयोश्च कर्मणि सहैव प्रयुज्यमानत्वं दृष्टं सामत्वं वा साम्यम् । तथा प्राणस्यापि चक्षुरादिभिः सह पठितस्य जीवोपकरणता तुल्येत्यर्थः । संहतत्वाचेतनत्वादीत्यादिशब्देन परिच्छिन्नत्वाद्यन्तवत्त्वादिग्रहणम् ॥ १० ॥ सूत्रान्तरव्यावर्त्यमाह—स्यादिति । प्राणस्य करणत्वेऽपि कुतः सविषयत्वप्रसक्तिरित्याशंक्य चक्षुरादिषु तथा दृष्टत्वादित्याह—रूपेति। यज्जीवस्य भोगकरणं तत्सविषयं दृष्टं यथा चक्षुरादि तथा प्राणस्यापि विषयो वाच्यस्तदभावात्तस्य स्वतन्त्रतेत्यर्थः । तर्हि प्राणेऽपि कश्चिद्विषयोऽस्तु तत्राऽऽह—अपि चेति। प्राणसाध्यफलाभावादपि चक्षुरादिवत्प्राणस्यं तत्त्वं जीवभोगोपकरणं द्वादशेन्द्रियवन्नोपेयमित्यर्थः । चोद्योत्तरं सूत्रं पातयति—अत इति।

## अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ ११ ॥

न तावद्विषयान्तरप्रसङ्गो दोषः। अकरणत्वात्प्राणस्य। न हि चक्षुरादिवत्प्राणस्य विषयपरिच्छेदेन करणत्वमभ्युपगम्यते ॥ न चास्यैतावता कार्याभाव एव ॥ कस्मात् ॥ तथाहि श्रुतिः प्राणान्तरेष्वसंभाव्यमानं मुख्यप्राणस्य वैशेषिकं कार्यं दर्शयति प्राणसंवादादिषु-"अथ ह प्राणा अहं॰ श्रेयसि व्यूदिरे" इत्युपक्रम्य "यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः" [छां० ५। १। ६। ७] इति चोपन्यस्य प्रत्येकं वागाद्युत्क्रमणेन तद्वृत्तिमात्रहीनं यथापूर्वं जीवनं दर्शयित्वा प्राणोच्चिक्रमिषायां वागादिशैथिल्यापत्तिं शरीरपातप्रसङ्गं च दर्शयन्ती श्रुतिः प्राणनिमित्तां शरीरेन्द्रियस्थितिं दर्शयति-"तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि" इति च। एतमेवार्थं श्रुतिराह-"प्राणेन रक्षन्नवरं कुलायम्" [बृ० ४। ३। १२] इति च श्रुतेषु चक्षुरादिषु प्राणनिमित्तां शरीररक्षां दर्शयति॥ "यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यति" [बृ० १। ३। १९] "तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति"

---

रत्नप्रभा।

उक्तव्याप्तेः शरीरे व्यभिचाराद्देहेन्द्रियधारणोत्क्रान्त्याद्यसाधारणकार्यसत्त्वाच्च निर्विषयस्यापि प्राणस्य शरीरवद्भोगोपकरणत्वमक्षतं, न तु चक्षुरादिवज्ज्ञानकर्मकरणत्वमस्ति येन सविषयत्वं स्यादिति परिहरति-न तावदित्यादिना ॥ अहंश्रेयसि स्वस्य श्रेष्ठतानिमित्तम्। व्यूदिरे विवादं चक्रिरे॥ तद् वृत्तिमात्रहीनमिति। मूकादिभावेन स्थितमित्यर्थः। अवरं नीचं, कुलायं देहाख्यं गृहं, प्राणेन रक्षञ्जीवः स्वपितीत्यर्थः॥ तदैव तदानीमेव। तेन प्राणेन यदश्नाति जीवस्तेन प्राणकृताशनेनेति यावत्। एवं श्रुतेः

भामती।

एकादशकरणगणनव्याकोपश्चेति दोषं परिहरति-अकरणत्वाच्च न दोषस्तथाहि दर्शयति। न प्राणः परिच्छेदधारणादिकरणमस्माभिरभ्युपेयते येनास्य विषयान्तरमन्विष्येत। एकादशत्वं च करणानां व्याकुप्येतापि तु प्राणान्तरासंभवि देहेन्द्रियविधारणकारणं प्राणः। तच्च श्रुतिप्रबन्धेन दर्शितं न केवलं

आनन्दगिरीय-न्यायनिर्णयः।

प्राणस्य जीवभोगोपकरणत्वे सविषयत्वप्रसक्तिमुक्तां प्रत्याह-न तावदिति। प्राणस्याकरणत्वे कथं जीवस्य सर्वार्थत्वेनोपकरणभूतोऽसावित्युक्तमाशंक्याऽऽह-न हीति। विषयपरिच्छेदाभावे प्राणस्याप्रमाणत्वान्न सत्त्वधीरित्याशंक्याऽऽह-न चेति। कार्यलिङ्गकमनुमानं प्राणे संभवतीत्युक्तं प्रश्नपूर्वकं सूत्रावयवेन स्फुटयति-कस्मादिति। अन्वयव्यतिरेकसिद्धं प्राणानामसंभाव्यं कार्यं मुख्यप्राणस्य दर्शयति-प्राणान्तरेष्विति। प्राणोपास्तिप्रक्रमार्थोऽथशब्दः। अहंश्रेयसीति स्वस्य श्रेष्ठतानिमित्तं व्यूदिरे विवादं चक्रिरे। तद्वृत्तिमात्रहीनं मूकादित्वेन स्थितमिति यावत्। न केवलं प्राणस्योत्क्रमणेच्छायां वागादिशैथिल्यापत्तिलिंगेन प्राणनिमित्ता देहस्थितिः किंतु यथोक्तमर्थं श्रुतिः स्वयमेव निर्वक्तीत्याह-तानिति। तत्रैव श्रुत्यन्तरमाह-प्राणेनेति। अवरं निकृष्टमनेकाशुचिनीडं कुलायं देहाख्यं गृहं प्राणानुपसंहारेण रक्षञ्जीवः सुप्तिं याति प्राणस्याप्युपसंहारे मृतभ्रान्तिः स्यादित्यर्थः। प्राणस्य कार्यान्तरं श्रुत्यन्तरेण दर्शयति-यस्मादिति। तेन प्राणेन यदश्नाति जीवस्तेनाशनादिनेति यावत्। प्राणस्य

इति च प्राणनिमित्तां शरीरेन्द्रियपुष्टिं दर्शयति । "कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि, कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि" इति, "स प्राणमसृजत" इति च प्राणनिमित्ते जीवस्योत्क्रान्तिप्रतिष्ठे दर्शयति ॥ ११ ॥

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥

इतश्चास्ति मुख्यस्य प्राणस्य वैशेषिकं कार्यं, यत्कारणं पञ्चवृत्तिरयं व्यपदिश्यते श्रुतिषु "प्राणोऽपानो व्यान उदानः समानः" [ बृ० १।५। ३ ] इति ॥ वृत्तिभेदश्चायं कार्यभेदापेक्षः । प्राणः प्राग्वृत्तिरुच्छ्वासादिकर्मा । अपानोऽर्वाग्वृत्तिर्निश्वासादिकर्मा । व्यानस्तयोः संधौ वर्तमानो वीर्यवत्कर्महेतुः । उदान ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः । समानः समं सर्वेष्वङ्गेषु योऽन्नरसान्नयतीति ॥ एवं पञ्चवृत्तिः प्राणो मनोवत् । यथा मनसः पञ्च वृत्तय एवं प्राणस्यापीत्यर्थः ॥ श्रोत्रादिनिमित्ताः शब्दादिविषया मनसः पञ्च वृत्तयः प्रसिद्धाः । न तु कामः संकल्प इत्याद्याः परिपठिताः परिगृह्येरन् । पञ्चसंख्यातिरेकात् ॥ नन्वत्रापि श्रोत्रादिनिरपेक्षा भूतभविष्यदादिविषयाऽपरा मनसो वृत्तिरस्तीति समानः पञ्च-

---

रत्नप्रभा ।

प्राणस्यासाधारणं कार्यमस्तीत्युक्तम् ॥ ११ ॥ तत्रैव हेत्वन्तरार्थं सूत्रं व्याचष्टे—इतश्चेत्यादिना ॥ वृत्तिरवस्या । अग्निमन्थनादिकं वीर्यवत्कर्म । कामादिवृत्तिवज्ज्ञानेऽपि पञ्चत्वनियमो नास्तीत्यरुचिं स्वयमेवोद्भाव्य पक्षान्तरं गृह्णाति—नन्वत्रापीत्यादिना ॥ प्रमाणं प्रमितिः, विपर्ययो भ्रमः । शशविषाणादिज्ञानं विकल्पः, तामसी वृत्तिर्निद्रा, स्मृतिः प्रसिद्धा । भ्रमनिद्रयोरविद्यावृत्तित्वान्न मनोवृत्तित्वमित्य-

भामती ।

शरीरेन्द्रियधारणमस्य कार्यम् ॥ ११ ॥ अपि च—पञ्चवृत्तिर्मनोवद्व्यपदिश्यते । 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्' यथा मरुमरीचिकादिषु सलिलादिबुद्धयः, अतद्रूपप्रतिष्ठता च संशयेऽप्यस्ति तस्यैकाप्रतिष्ठानात् । अतः सोऽपि संगृहीतः । 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' यद्यपि मिथ्याज्ञानेऽप्यस्ति वस्तुशून्यता, तथापि न तस्य व्यवहारहेतुतास्ति । अस्य तु पण्डितरूपविचारासहस्यापि शब्दज्ञानमाहात्म्याद् व्यवहारहेतुभावोऽस्त्येव । यथा पुरुषस्य चैतन्यमिति । न ह्यत्र षष्ठ्यर्थः संबन्धोऽस्ति, तस्य भेदाधिष्ठानत्वात् । चैतन्यस्य पुरुषादत्यन्ताभेदात् । यद्यपि चात्राभावप्रत्ययालम्बना

आनन्दगिरीय—न्यायनिर्णयः ।

कार्यान्तरं वाक्यान्तरेणोपन्यस्यति—कस्मिन्निति ॥ ११ ॥ प्राणस्य प्राणान्तरेष्वसंभाव्यमानकार्यसत्त्वे हेत्वन्तरमाह—पञ्चेति । सूत्रं व्याकरोति—इतश्चेति । कथमेतावताऽन्यत्रासंभविकार्यविशेषसिद्धिस्तत्राऽऽह—वृत्तीति । तदेव विवृणोति—प्राण इति । उच्छ्वासादीत्यादिशब्देन देहधारणादि गृह्यते । एतेन निश्वासादीत्यादिशब्दो व्याख्यातः । उत्क्रान्त्यादीत्यादिपदेन गत्यागती गृह्येते । प्राणस्य पञ्चवृत्तित्वमुपसंहरति—एवमिति । दृष्टान्तं व्याचष्टे—यथेति । कास्ता मनसः पञ्चवृत्तयस्तत्राऽऽह—श्रोत्रादीति । लोकप्रसिद्ध्यपेक्षया श्रुतिप्रसिद्धेर्बलवत्त्वात्कामाद्या मनोवृत्तयः स्युरित्याशङ्क्याऽऽह—न त्विति । पञ्चसंख्याधिक्याचेत्कामाद्या वृत्तयो नेष्यन्ते तर्हि ज्ञानेऽपि पञ्चत्वनियमासिद्धेः श्रोत्रादिनिमित्ता इत्याद्ययुक्तमिति शङ्कते—नन्विति । उक्ते पञ्चवृत्तित्वे मनसोऽरुचिकारणमुक्त्वा प्रकारान्तरेण तस्य पञ्चवृत्तित्वमाह—

संख्यातिरेकः। एवं तर्हि "परमतमप्रतिषिद्धमनुमतं भवति" इति न्यायादिहापि योगशास्त्रप्रसिद्धा मनसः पञ्चवृत्तयः परिगृह्यन्ते "प्रमाण-विपर्ययविकल्पनिद्रास्मृतयः" [पात० योग० सू० १।१।६] नाम॥ बहुवृत्तित्वमात्रेण वा मनः प्राणस्य निदर्शनमिति द्रष्टव्यम्। जीवोपकरणत्वमपि प्राणस्य पञ्चवृत्तित्वान्मनोवदिति योजयितव्यम्॥ १२॥ इति वायुक्रियाधिकरणम्॥ ५॥

## अणुश्च॥ १३॥ (६)॥

अणुश्चायं मुख्यः प्राणः प्रत्येतव्य इतरप्राणवत्॥ अणुत्वं चेहापि सौक्ष्म्य-परिच्छेदौ न परमाणुतुल्यत्वम्। पञ्चभिर्वृत्तिभिः कृत्स्नशरीरव्यापित्वात्॥ सूक्ष्मः प्राण उत्क्रान्तौ पार्श्वस्थेनानुपलभ्यमानत्वात्। परिच्छिन्नश्चोत्क्रान्तिगत्यागतिश्रुतिभ्यः॥ ननु विभुत्वमपि प्राणस्य समाम्नायते—"समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन

---

रत्नप्रभा।

रुच्या स्वमतमाह—वह्निति॥ सूत्रस्यार्थान्तरमाह—जीवेति॥ तदेवं प्राणवायोर्भेदाभेदश्रुत्योरविरोध इति सिद्धम्॥ १२॥ एवं मुख्यप्राणस्योत्पत्तिं स्वरूपं चोक्त्वा परिमाणसंदेहेऽणुत्वमुपदिशति—अणुश्चेति॥ अधिकाशङ्कामाह—ननु विभुत्वमपीति॥ प्लुषिर्मशकादपि सूक्ष्मो जन्तुः पुत्तिकेत्युच्यते। नागो

भामती।

वृत्तिर्नेष्यते तथापि विक्षेपसंस्कारलक्षणा मनोवृत्तिरिहास्त्येवेति सर्वमवदातम्॥ १२॥ (५)॥ अणुश्च। 'समस्त्रिभिर्लोकैः' इति विभुत्वश्रवणाद्विभुः, प्राणः, 'समः प्लुषिणा' इत्याद्यास्तु श्रुतयो विभोरप्यवच्छेदाद्भविष्यन्ति। यथा विभुन आकाशस्य कुटकरकाद्यवच्छेदात्कुटादिसाम्यमिति प्राप्त आह—अणुश्च। उत्क्रान्तिगत्यागतिश्रुतिभ्य आध्यात्मिकस्य प्राणस्यावच्छिन्नता न

आनन्दगिरीय-न्यायनिर्णयः।

एवमिति। इहेति प्रकृतसूत्रोक्तिः। योगशास्त्रप्रसिद्धा मनोवृत्तीरेवानुक्रामति—प्रमाणेति। प्रमासाधनं प्रमाणम्। मिथ्याध्यवसायो विपर्ययः। "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" [पात० योग० सू० १।१।९] अग्रहणं निद्रा। अनुभूतमात्रज्ञानं स्मृतिः। परसिद्धेन परो बोधनीय इत्यस्मिन्नंशे विरोधाभावादप्रतिषिद्धत्वमुक्तं न त्विदमेवाभिप्रेतम्। विपर्ययादीनामविद्यावृत्तित्वोपगमादिन्द्रियव्यापारोपरममात्रत्वान्निद्राया मनोवृत्तित्वासिद्धिरित्यपरितोषात्पक्षान्तरमाह—वह्निति। मनोवत्पञ्चवृत्तित्वादुपकरणत्वं प्राणस्येत्येतदपि सूत्रार्थत्वेन द्रष्टव्यमित्याह—जीवेति। तदेवं वायोरिन्द्रियवृत्तेश्च प्राणस्य भेदाभेदश्रुत्योरविरोधाद्यथोक्तप्राणकारणे ब्रह्मणि समन्वयः सिध्यतीति सिद्धम्॥ १२॥ (५)॥ मुख्यस्य प्राणस्य सृष्टिं स्वभावविशेषं च निरूप्य परिमाणमतिदेशेन निरूपयति—अणुश्चेति। मुख्यप्राणो महान्परिच्छिन्नो वेति श्रुतिविप्रतिपत्तेः संशये सिद्धान्तमाह—अणुरिति। इहापीति सूत्रस्य मुख्यस्य प्राणस्य चोक्तिः। परमाणुतुल्यत्वमणुत्वं नेत्यत्र हेतुमाह—पञ्चेति। सौक्ष्म्यपरिच्छेदौ क्रमेण साधयति—सूक्ष्म इत्यादिना। अत्रापि व्यापित्वपरिच्छिन्नत्वश्रुत्योर्विरोधनिरासेन परिच्छिन्नप्राणकारणे ब्रह्मणि समन्वयसाधनात्पादादिसंगतिः। पूर्वपक्षे श्रुत्योर्विरोधादुक्तसमन्वयासिद्धिः। सिद्धान्ते तदविरोधात्तत्सिद्धिः। सर्वत्र दृष्टकार्यत्वादाकाशवत्प्राणो महानित्यत्र हेत्वसिद्धेर्यत्र शरीरं तत्रेति विशेषणे शरीरतद्रूपादिष्वनैकान्त्यादनुमानेन प्राणस्य महत्त्वासिद्धावपि समोऽनेन सर्वेणेति श्रौतलिंगेन तत्सिद्धिरित्यधिकाशङ्कां दर्शयन्पूर्वपक्षमाह—नन्विति। प्लुषिर्मशकादपि सूक्ष्मो जन्तुः पुत्तिकेत्युच्यते। नागो हस्ती।

सर्वेण" [ बृ० १ । ३ । २२ ] इत्येवमादिप्रदेशेषु ॥ तदुच्यते—आधिदैविकेन समष्टिव्यष्टिरूपेण हैरण्यगर्भेण प्राणात्मनैवैतद्विभुत्वमाम्नायते, नाध्यात्मिकेन । अपि च 'समः प्लुषिणा' इत्यादिना साम्यवचनेन प्रतिप्राणिवर्तिनः प्राणस्य परिच्छेद एव प्रदर्श्यते तस्माददोषः ॥ १३ ॥ इति श्रेष्ठाणुत्वाधिकरणम् ॥ ६ ॥

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥ ( ७ ) ॥

रत्नप्रभा ।

हस्ती । प्राण उत्क्रामतीति श्रुत्याल्पत्वं प्राणस्य भाति, समोऽनेन सर्वेणेति श्रुत्या विभुत्वमिति विरोधे आध्यात्मिकप्राणस्याल्पत्वम्, आधिदैविकस्य विभुत्वमिति विषयभेदाच्छ्रुत्योरविरोध इति समाधत्ते—तदुच्यत इति ॥ किंचोपक्रमे प्राणस्य प्लुष्यादिसमत्वेनाल्पत्वोक्तेः सम एभिस्त्रिभिर्लोकैरिति विराड्देहसाम्यम्। समोऽनेनेति सूत्रात्मत्वमिति विषयव्यवस्था सुस्थेत्याह—अपि चेति ॥ अणवश्चेत्यत्र सर्वेऽनन्ता इति इन्द्रियानन्त्यमुपासनार्थमिति समाहितम्, अत्र तु प्राणविभुत्वमाधिदैविकमिति समाधानान्तरोक्तेरपौनरुक्त्यम्। अन्ये तु प्रसङ्गात्तत्र सांख्याक्षेपो निरस्तः, अत्र तु श्रुतिविरोधो निरस्त इत्यपौनरुक्त्यमाहुः ॥१३॥(६)॥ पूर्वं प्राणस्याध्यात्मिकाधिदैविकविभागेनाप्यणुत्वविभुत्वव्यवस्थोक्ता, तत्प्रसङ्गेनाध्यात्मिकानां प्राणानामाधिदैविकाधीनत्वमाह—ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ "वाचा हि नामान्यभिवदति चक्षुषा रूपाणि पश्यति" इति तृतीयाश्रुत्याऽन्वयव्यतिरेकवत्या वागादीनां निरपेक्षसाधनत्वोक्तिविरोधात् 'अग्नि-

भामती ।

विभुत्वम् । दुरधिगमतामात्रेण च शरीरव्यापिनोऽप्यणुत्वमुपचर्यते न त्वणुत्वमित्युक्तमधस्तात् । यत्त्वस्य विभुत्वाम्नानं तदाधिदैविकेन सूत्रात्मना समष्टिव्यष्टिरूपेण न त्वाध्यात्मिकेन रूपेण । तदाश्रयाश्च 'समः प्लुषिणा' इत्येवमाद्याः श्रुतयो देहसाम्यमेव प्राणस्याहुः स्वरूपतो न तु करकाकाशवत्परोपाधिकृतया कथंचिन्नेतव्या इति ॥ १३ ॥ ( ६ ) ॥ ज्योतिराद्यधिष्ठानं तु तदामननात् । यद्धि यत्कार्यं कुर्वद्दृष्टं तत्स्वमहिम्नैव करोतीत्येष तावदुत्सर्गः । पराधिष्ठानं तु तस्य बलवत्प्रमाणान्तरवशात् । स्यादेतत् । वास्यादीनां तक्षाद्यधिष्ठितानामचेतनानां कार्यकारित्वदर्शनादचेतनत्वेनेन्द्रियाणामप्यधिष्ठातृदेवताकल्पनेति चेत् । न । जीवस्यैवाधिष्ठातुश्चेतनस्य विद्यमानत्वात् । न च 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यादिश्रुतिभ्यो देवतानामप्यधिष्ठातृत्वमभ्युपगन्तुं युक्तम् । अनेकाधिष्ठानाभ्युपगमे हि तेषामेकाभिप्रायनियमनिमित्ताभावान्न किंचित्कार्यमुत्पद्येत विरोधात् । अपि च य इन्द्रियाणामधिष्ठाता स एव भोक्तेति देव-

आनन्दगिरीय—न्यायनिर्णयः ।

परिच्छिन्नत्वमुत्क्रान्त्यादिभिर्भाति समोऽनेनेत्यादिना विभुत्वं, ततश्च परिच्छिन्नत्वस्य मुख्यत्वे विभुत्वस्यात्यन्तबाधः स्यादपरिच्छिन्नत्वस्य मुख्यत्वे परिच्छिन्नत्वमौपाधिकं युक्तम् । यद्यपि सर्वेऽनन्ता इतिवत्प्राणानन्त्यश्रुतिरपि नेतुमुचिता तथाऽपि विधान्तरेण तन्नयनार्थमाशंकेत्यर्थः । तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति परिच्छेदेऽपि प्राणस्य लिङ्गदर्शनाद् द्वयोर्लिङ्गयोर्विरोधे सत्याध्यात्मिकाधिदैविकरूपाभ्यां व्यवस्थेति परिहरति—तदिति । समष्टिव्यष्टिरूपेणानुवृत्तव्यावृत्तरूपेणेत्यर्थः । उभयथा लिङ्गयोर्व्यवस्थासिद्धावपीयमेव कुतो व्यवस्थेत्याशंक्य त्वदुक्तलिङ्गस्य प्राणमात्रपरिच्छेदासाधकत्वादाधिदैविकविषयत्वेन समोऽनेनेत्याद्यास्थेयमित्याह—अपि चेति । मुख्यप्राणस्य व्यापित्वपरिच्छिन्नत्वश्रुत्योरित्थमविरोधात्परिच्छिन्नप्राणकारणे ब्रह्मणि समन्वयधीरित्युपसंहरति—तस्मादिति ॥ १३ ॥ ( ६ ) ॥ प्राणस्याध्यात्माधिदैवतविभागेनाणुत्वविभुत्वनिरूपणप्रसंगेनाऽऽध्यात्मिकानां प्राणानामाधिदैविकादित्याद्यपेक्षां चेष्टामाचष्टे—ज्योतिरादीति ।

ते पुनः प्रकृताः प्राणाः किं स्वमहिम्नैव स्वस्मैस्वस्मै कार्याय प्रभवन्ति, आहोस्विद्देवताधिष्ठिताः प्रभवन्तीति विचार्यते ॥ तत्र प्राप्तं तावद्यथा स्वकार्यशक्तियोगात्स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति ॥ अपि च देवताधिष्ठितानां प्राणानां प्रवृत्तावभ्युपगम्यमानायां तासामेवाधिष्ठात्रीणां देवतानां भोक्तृत्वप्रसङ्गाच्छारीरस्य भोक्तृत्वं प्रलीयेत । अतः स्वमहिम्नैवैषां प्रवृत्तिरिति ॥ एवं प्राप्त इदमुच्यते-"ज्योतिराद्यधिष्ठानं तु" इति । तुशब्देन पूर्वपक्षो व्यावर्त्यते ॥ ज्योतिरादिभिरग्न्याद्यभिमानिनीभिर्देवताभिरधिष्ठितं वागादि करणजातं स्वकार्येषु प्रवर्तत इति प्रतिजानीते ॥ हेतुं व्याचष्टे-"तदामननात्" इति ॥ तथाह्यामनन्ति-"अग्निर्वा-

रत्नप्रभा ।

र्वाग्भूत्वा' इत्यादिश्रुतिस्तेषामचेतनाग्न्याद्युपादानकत्वपरा, न तु तेषामधिष्ठातृदेवतापरा ॥ न च स्वकार्ये शक्तानामपि वागादीनामचेतनत्वादधिष्ठात्रपेक्षा न विरुध्यत इति वाच्यं, जीवस्याधिष्ठातृत्वात् । किंच देवतानामधिष्ठातृत्वे जीवद्भोक्तृत्वमस्मिन् देहे स्यात्, तथा चैकत्रानेकभोक्तॄणां विरोधाद्दुर्बलस्य जीवस्य भोक्तृत्वं न स्यादिति पूर्वपक्षार्थः । सिद्धान्तयति-एवं प्राप्त इत्यादिना ॥ अग्निर्वाग्भूत्वादित्यश्चक्षुर्भूत्वेति च तद्भावोऽत्राग्न्यादिदेवताधिष्ठेयत्वरूप एव संबन्धो न तदुपादानकत्वरूपो दूरस्यादित्यमण्डलादेर्मुखस्य-

भामती ।

तानां भोक्तृत्वेन स्वामित्वं शरीर इति न जीवः स्वामी स्याद्भोक्ता च । तस्मादग्न्याद्युपचारो वागादिषु प्रकाशकत्वादिना केनचिन्निमित्तेन गमयितव्यो न तु स्वरूपेणाग्न्यादिदेवतानां मुखाद्यनुप्रवेश इति प्राप्तम् । एवं प्राप्ते उच्यते-नानाविधासु तावच्छ्रुतिषु स्मृतिषु च तत्रतत्र वागादिष्वग्न्यादिदेवताधिष्ठानमवगम्यते । न च तदसत्यामनुपपत्तौ क्लेशेन व्याख्यातुमुचितम् । न च स्वरूपोपयोगभेदज्ञानविरहिणो जीवस्येन्द्रियाधिष्ठातृत्वसंभवः, संभवति तु देवतानामिन्द्रियाद्याार्षेण ज्ञानेन साक्षात्कृतवतीनां तत्स्वरूपभेदतदुपयो-

आनन्दगिरीय-न्यायनिर्णयः ।

अधिकरणस्य विषयसंशयौ दर्शयति-ते पुनरिति । अन्वयव्यतिरेकाभ्यामाद्यो विकल्पो द्वितीयो देवताधिष्ठितत्वोक्तेरिति विवेक्तव्यम् । 'चक्षुषा हि रूपाणि पश्यति' इति । 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इत्यादिश्रुतेर्विरोधद्वारा देवताधिष्ठितचक्षुरादिकारणे ब्रह्मणि समन्वयसाधनात्पादादिसंगतिः । पूर्वपक्षे श्रुत्योर्विरोधादुक्तसमन्वयासिद्धिः । सिद्धान्ते तदविरोधात्तत्सिद्धिः । केवलव्यतिरेकाभावाद्देवताया नाधिष्ठातृत्वमिति पूर्वपक्षयति-तत्रेति । न च दृष्टकारणक्लृप्तावन्वयव्यतिरेकापेक्षायामपि देवतायाः श्रुतेरधिष्ठातृत्वोक्तेर्न तदपेक्षेति वाच्यं देवतायास्तत्राधिष्ठातृत्वादृष्टेर्वागादिभावस्यैव भानान्न च चेतनस्याचेतनभावसिद्धेरधिष्ठातृत्वमेवेति युक्तमचेतनस्याग्न्यादेरचेतनवागादिभावसिद्धेरिति भावः । इतश्च स्वमहिम्नैव प्राणानां प्रवृत्तिरित्याह-अपि चेति । देवताश्चक्षुरादिजन्यकर्मतत्फलयोगिन्यश्चक्षुराद्यभिमानेनं प्रवर्तकत्वाज्जीववदित्यनुमित्या तदेव स्फुटयति-देवतेति । सिद्धसाध्यत्वमाशंक्य विरोधाभिप्रायानेकाधिष्ठिततया शरीरस्य गमनाद्यसंभवापत्तेः शारीरस्य भोक्तृत्वं न स्यादित्याह-शारीरस्येति । 'न ह वै देवान्पापं गच्छति' इत्यादिना देवताया भोक्तृत्वं निरस्तमित्याशंक्य पुण्यफलमेव देवता भुञ्जते न पापफलमित्येतावन्मात्रस्य तत्रेष्टत्वान्नैवमिति मत्वोपसंहरति-अत इति । पूर्वपक्षमनूद्य सिद्धान्तयति-एवमिति । तत्र पूर्वपक्षनिषेधं विभजते-तुशब्देनेति । उत्तरपक्षप्रतिज्ञां प्रकटयति-ज्योतिरादिभिरिति । हेतुमवतार्य विवृणोति-हेतुं चेति । तद्भाव एवात्र भाति न च तदधिष्ठातृत्वमित्याशंक्य चेतनानामचेतनत्वासिद्धेरधि-

 

ग्भूत्वा मुखं प्राविशत्" [ ऐत० २ । ४ ] इत्यादि ॥ अग्नेश्चायं वाग्भावो मुखप्रवेशश्च देवतात्मनाऽधिष्ठातृत्वमङ्गीकृत्योच्यते ॥ न हि देवतासंबन्धं प्रत्याख्यायाग्नेर्वाचि मुखे वा कश्चिद्विशेषसंबन्धो दृश्यते । तथा "वायुः प्राणो भूत्वा नासिके प्राविशत्" [ ऐत० २ । ४ ] इत्येवमाद्यपि योजयितव्यम् । तथान्यत्रापि "वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च" [ छां० ३ । १८ । ३ ]इत्येवमादिना वागादीनामग्न्यादिज्योतिष्ट्वादिवचनेनैतमेवार्थं द्रढयति ॥ "स वै वाचमेव प्रथमामत्यवहत्सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्" [ बृ० १ । ३ । १२ ] इति चैवमादिना वागादीनामग्न्यादिभावापत्तिवचनेनैतमेवार्थं द्योतयति ॥ सर्वत्र चाध्यात्माधिदैवतविभागेन वागाद्यग्न्याद्यनुक्रमणमनयैव प्रत्यासत्त्या भवति ॥ स्मृतावपि–"वागध्यात्ममिति प्राहुर्ब्राह्मणास्तत्त्वदर्शिनः । वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ॥" इत्यादिना वागादीनामग्न्यादिदेवताधिष्ठितत्वं सप्रपञ्चं दर्शितम् ॥ यदुक्तं स्वकार्यशक्तियोगात्स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति । तदयुक्तम्, शक्ता-

---

रत्नप्रभा।

चक्षुराद्युपादानत्वासंभवादित्याह–अग्नेश्चायमिति ॥ वायुः प्राणाधिष्ठाता भूत्वा नासापुटे प्राविशदिति व्याख्येयमित्याह–तथेति ॥ भाति दीप्यते, तपति स्वकार्यं करोतीत्यर्थः ॥ एतस्मिन्नधिष्ठात्रधिष्ठेयस्वरूपार्थे लिङ्गान्तरमाह–स वै वाचमिति ॥ स प्राणो वाचं प्रथमामुद्गीथकर्मणि प्रधानामनृतादिपाप्मरूपं मृत्युमतीत्यावहन्मृत्युना मुक्तां कृत्वा अग्निदेवतात्मत्वं प्रापितवानित्यर्थः । किंच "मृतस्याग्निं वागप्येति, वातं प्राणः, चक्षुरादित्यम्" इत्यादिश्रुतिरप्यधिष्ठात्रधिष्ठेयत्वसंबन्धं द्योतयतीत्याह–सर्वत्रेति॥

भामती।

गभेदविज्ञानम् । तस्मात्तास्ता एव देवतास्तत्तत्करणाधिष्ठात्र्य इति युक्तं न तु जीवः । भवतु वा जीवोऽप्यधिष्ठाता तथाप्यदोषः । अनेकेषामधिष्ठातॄणामेकः परमेश्वरोऽस्ति नियन्तान्तर्यामी तद्वशाद्विप्रतिपित्सवोऽपि न विप्रतिपत्तुमर्हन्ति । तथा चैकवाक्यतया न तत्कार्योत्पत्तिप्रत्यूहः । न चैतावता देवतानामत्र

आनन्दगिरीय–न्यायनिर्णयः ।

ष्ठातृत्वमेवात्रेष्टमित्याह–अग्नेश्चेति । अधिष्ठानाधिष्ठेयत्वं हित्वोपादानोपादेयत्वमुपेत्याग्न्यादीनामचेतनानामेव वागादिभावेन मुखादिषु प्रवेशः स्यादित्याशंक्याऽऽह–न हीति । वाक्चक्षुषोस्तैजसत्वेन तेजोमात्रत्वे सत्यग्न्यादित्यशब्दयोरैकार्थ्येन पौनरुक्त्याद्व्यक्तिभेदेन कारणभेदे चक्षुरादेरादित्यमण्डलादिव्यतिरिक्तस्थले कार्यानुपलब्धिप्रसङ्गाद्देवतानां चेतनानामेवाग्न्यादीनामधिष्ठातृत्वेन संबन्धो वागादिषु विवक्षितो न संबन्धान्तरं सदप्यत्राभिप्रेतमित्यर्थः । अग्निर्वाग्भूत्वेत्याद्युक्तमन्यत्राप्यतिदिशति–तथेति । अग्न्यादीनामधिष्ठातृत्वं वागादीनामधिष्ठेयतेत्यत्रैव हेत्वन्तरमाह–तथेति । तत्रैव लिङ्गान्तरमाह–स वा इति । स प्राणो वाचं प्रथमामुद्गीथकर्मणि प्रधानां मृत्युमतीत्यावहत्प्रापयत् । किं प्रापितवानित्युच्यते यदा हि मुक्ता तदा सा पूर्वमप्यग्निरेव सती मृत्युवियोगे प्रतिबन्धाभावादग्निरेवाभवदित्यर्थः । इतश्चाग्न्यादीनां वागादीनां चाधिष्ठानाधिष्ठेयत्वमित्याह–सर्वत्रेति । उक्तेऽर्थे स्मृतिमपि संवादयति–स्मृताविति । पूर्वपक्षबीजमनुभाषते–यदिति । प्राणानां स्वकार्यशक्तियोगेऽपि चेतनाधिष्ठितानामेव प्रवृत्तिरित्याह–तदिति । शकटादीनां बलीवर्दाद्यधिष्ठितानां प्रवृत्तिर्दृष्टा क्षीरादीनामनधिष्ठितानामपि दध्यादिप्रवृत्तिसिद्धिस्तथा चोभयथा-

नामपि शकटादीनामनडुहाद्यधिष्ठितानां प्रवृत्तिदर्शनात। उभयथोपपत्तौ चागमाद्देवताधिष्ठितत्वमेव निश्चीयते॥ १४॥ यदप्युक्तं देवतानामेवाधिष्ठात्रीणां भोक्तृत्वप्रसङ्गो न शारीरस्येति तत्परिह्रियते-

## प्राणवता शब्दात्॥ १५॥

सतीष्वपि प्राणानामधिष्ठात्रीषु देवतासु प्राणवता कार्यकरणसंघातस्वामिना शारीरेणैवैषां प्राणानां संबन्धः श्रुतेरवगम्यते। तथाहि श्रुतिः- "अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्" [छां० ८।१२।४] इत्येवंजातीयका शारीरेणैव प्राणानां संबन्धं श्रावयति॥ अपि च-अनेकत्वात्प्रतिकरणमधिष्ठात्रीणां देवतानां न भोक्तृत्वमस्मिञ्शरीरेऽवकल्पते। एको ह्येवमस्मिञ्शरीरे शारीरो भोक्ता प्रतिसंधानादिसंभवादवगम्यते॥ १५॥

रत्नप्रभा।

**ननु** शकटादीनां बलीवर्दादिप्रेरितानां प्रवृत्तिर्दृष्टा, क्षीरादीनां त्वनधिष्ठितानामपि दध्यादिप्रवृत्तिर्दृश्यते, तथा चोभयथासंभवे कथं निश्चयः, तत्राह-**उभयथोपपत्तौ चेति**॥ उक्तदोषान्तरनिरासाय सूत्रमवतारयति-**यदपीति**॥ १४॥ **शारीरेणैवेति**। भोक्रेति शेषः। संबन्धो भोक्तृभोग्यभावः। अथ देहे प्राणप्रवेशानन्तरं यत्र गोलके एतच्छिद्रमनुप्रविष्टं चक्षुरिन्द्रियं तत्र चक्षुष्यभिमानी स आत्मा चाक्षुषः तस्य रूपदर्शनाय चक्षुः। यद्यप्यात्मा करणान्यपेक्षते, **तथापि** ज्ञेयज्ञानतदाश्रयाहंकारान्यो वेद स आत्मा चिद्रूप एव, करणानि तु गन्धादिप्रवृत्तयेऽपेक्ष्यन्ते, न चैतन्यायेति श्रुत्यर्थः। **किंच** योऽहं रूपमद्राक्षं स एवाहं शृणोमीति प्रतिसंधानादेकः शारीर एव भोक्ता न बहवो देवा इत्याह—**अपि चेति**॥ १५॥ कदाचिद्देवानामत्र भोक्तृत्वं, कदाचिज्जीवस्येत्यनियमोऽस्त्वित्याशङ्क्य स्वकर्मार्जिते

भामती।

शरीरे भोक्तृत्वम्। न हि यन्ता रथमधितिष्ठन्नपि तत्साध्यविजयादेर्भोक्तापि तु स्वाम्येव। एवं देवता अधिष्ठात्र्योऽपि न भोक्त्र्यस्तासां तावन्मात्रस्य श्रुतत्वात्। भोक्ता तु जीव एव। न च नरादिशरीरोचितं

आनन्दगिरीय-न्यायनिर्णयः।

संभवे कथं निर्णयस्तत्राऽऽह-**उभयथेति**॥ १४॥ उक्तं युक्त्यन्तरं निराकर्तुं सूत्रमवतारयति-**यदपीत्यादिना**। सूत्रं व्याचष्टे-**सतीष्विति**। शारीरेणैव भोक्त्रेति शेषः। प्राणानां भोगसाधनत्वेनेति वक्तव्यम्। संबन्धः स्वस्वामिभावः। तामेव श्रुतिमाह—**तथाहीति**। देहे प्राणप्रवेशानन्तर्यमथशब्दार्थः। यत्र गोलकगतकृष्णसारे छिद्रमाकाशमनुविषण्णमनुगतं चक्षुस्तत्र स आत्मा चक्षुषि भवश्चाक्षुषस्तस्य दर्शनाय चक्षुर्न चैतन्यायेति यावत्। अथशब्दोऽप्यर्थः। दर्शनाद्यर्थं चक्षुराद्यपेक्षायामपि जिघ्राणीति संकल्पं स्वत एव यो वेद स आत्मा तस्य गन्धज्ञानाय घ्राणमिति द्वितीयवाक्यार्थः। विमता देवता नैतच्चक्षुरादिजन्यधर्मतत्फलयोगिन्य एतच्चक्षुरादिसाधनोत्थरूपादिज्ञानानाश्रयत्वात्पुरुषान्तरवदिति मत्वा श्रुतेस्तात्पर्यमाह-**शारीरेणेति**। इतश्चास्मिन्देहे देवतानां न भोक्तृतेत्याह-**अपि चेति**। अनेकत्वेऽपि तासामत्र भोक्तृत्वे का क्षतिस्तत्राऽऽह-**एको हीति**। योऽहं रूपमद्राक्षं सोऽहं शृणोमीत्येकस्यैव प्रत्यभिज्ञानं प्रतिसंधानम्। बहूनां भोक्तृत्वे विरुद्धक्रियस्य शरीरस्योन्मथनमादिशब्दार्थः॥ १५॥ कदाचिद्देवता-

## तस्य च नित्यत्वात् ॥ १६ ॥

तस्य च शारीरस्यास्मिञ्शरीरे भोक्तृत्वेन नित्यत्वं पुण्यपापोपलेपसंभवात्सुखदुःखोपभोगसंभवाच्च न देवतानाम् । ता हि परस्मिन्नैश्वर्ये पदेऽवतिष्ठमाना न हीनेऽस्मिञ्शरीरे भोक्तृत्वं प्रतिलब्धुमर्हन्ति ॥ श्रुतिश्च भवति—"पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छति" [ बृ० १।५।३ ] इति शारीरेणैव च नित्यः प्राणानां संबन्ध उत्क्रान्त्यादिषु तदनुवृत्तिदर्शनात्। "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" [ बृ० ४ । ४ । २ ] इत्यादिश्रुतिभ्यः । तस्मात्सतीष्वपि करणानां नियन्त्रीषु देवतासु न शारीरस्य भोक्तृत्वमपगच्छति । करणपक्षस्यैव हि देवता न भोक्तृपक्षस्येति ॥ १६ ॥ इति ज्योतिराद्यधिकरणम् ॥ ७ ॥

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥ ( ८ ) ॥

---

रत्नप्रभा ।

देहे जीवस्य भोक्तृत्वनियमान्नैवमित्याह सूत्रकारः—**तस्य चेति** ॥ उत्क्रमणादिषु जीवस्य प्राणाव्यभिचारात्तस्यैव प्राणस्वामित्वं, देवतानां तु परस्वामिकरथसारथिवदधिष्ठातृत्वमात्रमिति व्याख्यान्तरमाह—**शारीरेणैव च नित्य इति** ॥ यथा प्रदीपादिः करणोपकारकतया करणपक्षस्यान्तर्गतस्तथा देवाः करणोपकारिण एव न भोक्तार इत्यर्थः । जीवस्यादृष्टद्वारा करणाधिष्ठातृत्वाद्रथस्वामिवद्भोक्तृत्वं, देवानां तु करणोपकाराभिज्ञतया सारथिवदधिष्ठातृत्वमिति न जीवेनान्यथासिद्धिः । देवानामधिष्ठातृत्वेनास्मिन्देहे भोक्तृत्वानुमानं तु "न ह वै देवान् पापं गच्छति" इत्युक्तश्रुतिबाधितम् । तस्मात् "चक्षुषा हि रूपाणि पश्यति" इति श्रुतेः साधनत्वमात्रबोधित्वादग्निर्वाग्भूत्वेत्याद्यधिष्ठातृदेवतापेक्षाबोधकश्रुतिभिरविरोध इति सिद्धम्॥१६॥(७)॥सत्स्विन्द्रियेषु तदधिष्ठातृदेवताचिन्ता,तान्येव प्राणवृत्तिव्यतिरेकेण न सन्तीत्याक्षेपं प्रत्याह—**त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्** ॥ प्राणादिन्द्रियाणां भेदाभेदश्रुतिभ्यां संशयं वदन्

भामती ।

दुःखबहुलमुपभोगं सुखमय्यो देवता अर्हन्ति । तस्मात्प्राणानामधिष्ठात्र्यो देवता इति सिद्धम्, शेषमतिरोहितार्थम् ॥ १४ ॥ १५ ॥ १६ ॥ ( ७ ) ॥ **त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्** । मा भूत प्राणो वृत्तिरिन्द्रियाणाम् । इन्द्रियाण्येवास्य ज्येष्ठस्य श्रेष्ठस्य च प्राणस्य वृत्तयो भविष्यन्ति । तद्भावाभावानु-

आनन्दगिरीय—न्यायनिर्णयः ।

नामत्र भोक्तृत्वं कदाचिज्जीवस्येत्यवस्थामाशंक्याऽऽह—**तस्येति** । स्वकर्मार्जिते देहे जीवस्य भोक्तृतानियमान्नैवमित्यर्थः । सूत्रार्थं विवृणोति—**तस्येत्यादिना** । न देवतानामत्र भोक्तृतेत्यत्र हेतुमाह—**ता हीति** । देवतानामिह देहे भोगाभावे श्रुतिमप्यनुकूलयति—**श्रुतिश्चेति** । सूत्रव्याख्यान्तरमाह—**शारीरेणेति** । उत्क्रमणादिषु जीवस्य प्राणाव्यभिचारात्तस्यैव प्राणस्वामित्वं देवतानां तु परस्वामिकरथसारथिवदधिष्ठातृत्वमात्रमित्यर्थः । देवतानामत्राभोक्तृत्वे फलितमाह—**तस्मादिति** । हेतुमेव स्फोरयति—**करणेति** । आलोकवत्करणोपकारकत्वमेव देवतानां न तज्जन्यभोगवत्त्वमित्यर्थः । तदेवं 'चक्षुषा हि रूपाणि' इत्यादिश्रुतेः । 'आदित्यश्चक्षुर्भूत्वा' इत्यादिश्रुतेश्चाऽऽदित्यादिदेवताधिष्ठितचक्षुरादिकारणे ब्रह्मणि समन्वयसिद्धिरित्युपसंहर्तुमितिशब्दः ॥ १६ ॥ ( ७ ) ॥ सत्स्विन्द्रियेषु तदधिष्ठातृचिन्ता तान्येव प्राणवृत्तिव्यतिरेकेण नेति चोदिते प्रत्याह—**त इति** । उक्तमनूद्य भेदाभेदश्रुतिभ्यां संदेहमाह—

मुख्यश्चैक इतरे चैकादश प्राणा अनुक्रान्ताः । तत्रेदमपरं संदिह्यते-किं मुख्यस्यैव प्राणस्य वृत्तिभेदा इतरे प्राणा आहोस्वित्तत्त्वान्तराणीति ॥ किं तावत्प्राप्तं, मुख्यस्यैवेतरे वृत्तिभेदा इति ॥ कुतः ॥ श्रुतेः ॥ तथाहि श्रुतिर्मुख्यमितरांश्च प्राणान्संनिधाप्य मुख्यात्मतामितरेषां ख्यापयति-"हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवन्" [ बृ० १ । ५ । २१ ] इति ॥ प्राणैकशब्दत्वाच्चैकत्वाध्यवसायः । इतरथा ह्यन्याय्यमनेकार्थत्वं प्राणशब्दस्य प्रसज्येत । एकत्र वा मुख्यत्वमितरत्र वा लाक्षणिकत्वमापद्येत । तस्माद्यथैकस्यैव प्राणस्य प्राणाद्याः पञ्चवृत्तय एवं वागाद्या अप्येकादशेति ॥ एवं प्राप्ते ब्रूमः-तत्त्वान्तराण्येव प्राणाद्वागादीनीति ॥ कुतः ॥ व्यपदेशभेदात् ॥ कोऽयं व्यपदेशभेदः ॥ ते प्रकृताः प्राणाः श्रेष्ठं वर्जयित्वावशिष्टा एकादशेन्द्रियाणीत्युच्यन्ते । श्रुतावेवं

रत्नप्रभा ।

पूर्वपक्षयति-मुख्यश्चेत्यादिना ॥ हन्त इदानीम्-अस्यैव मुख्यप्राणस्य सर्वे वयं स्वरूपं भवामेति संकल्प्य ते वागादयस्तथाऽभवन्नित्यभेदश्रुत्यर्थः । ते प्राणादभिन्नाः, प्राणपदवाच्यत्वात, प्राणवदित्याह-प्राणेति ॥ ते प्राणाः श्रेष्ठादन्यत्र अन्ये इति प्रतिज्ञार्थत्वेन पदत्रयं व्याचष्टे- तत्त्वान्तराण्येवेति ॥ तद्व्यपदेशादित्यत्र तच्छब्दः प्रतिज्ञातान्यत्वं परामृशति । प्राणा इन्द्रियाणीत्यपर्यायशब्दाभ्यामन्यत्वोक्तेरिति हेतूपपादनार्थत्वेन पुनस्तानि सूत्रपदानि योजयति-क इत्यादिना ॥ सूत्रस्य विश्वतोमुखत्वादुभयार्थत्वमलंकार एव न

भामती ।

विधायिभावाभावत्वमिन्द्रियाणां श्रुत्यनुभवसिद्धं, तथा च प्राणशब्दस्यैकस्यान्याय्यमनेकार्थत्वं न भविष्यति । वृत्तीनां वृत्तिमतस्तत्त्वान्तरत्वाभावात् । तत्त्वान्तरत्वे त्विन्द्रियाणां, प्राणशब्दस्यानेकार्थत्वं प्रसज्येत । इन्द्रियेषु लाक्षणिकत्वं वा । न च मुख्यसंभवे लक्षणा युक्ता जघन्यत्वात् । न च भेदेन व्यपदेशो भेदसाधनम् 'एतस्माज्जायते प्राणः' इत्यादिर्मनसोऽपीन्द्रियेभ्योऽस्ति भेदेन व्यपदेश इत्यनिन्द्रियत्वप्रसङ्गः । स्मृतिवशात्तु तस्येन्द्रियत्वे इन्द्रियाणामपि प्राणाद्भेदेन व्यपदिष्टानामप्यस्ति प्राणस्वभावत्वे 'हन्त अस्यैव रूपमसाम' इति श्रुतिः । तस्मादुपपत्तेः श्रुतेश्च प्राणस्यैव वृत्तय एकादशेन्द्रियाणि न तत्त्वान्तराणीति प्राप्तम् । एवं प्राप्त उच्यते-मुख्यात् प्राणात्तत्त्वान्तराणीन्द्रियाणि, तत्रतत्र भेदेन व्यपदेशात् । मृत्यु-

आनन्दगिरीय-न्यायनिर्णयः ।

मुख्यश्चेति । तत्रेत्येकादशप्राणेष्विति यावत् । पूर्ववदाम्नानबलेन पूर्वपक्षयति-किमित्यादिना । अत्र भेदाभेदश्रुत्योरविरोधेन तत्त्वान्तरे मूलकारणे ब्रह्मणि समन्वयोक्त्या पादादिसंगतिः । पूर्वपक्षे श्रुत्योर्विरोधात्तदसिद्धिः । सिद्धान्ते तदविरोधात्तत्सिद्धिः । श्रुतिमेवाऽऽह-तथाहीति । हन्तेदानीमस्यैव मुख्यप्राणस्य सर्वे वयं रूपमसाम भवामेत्याशिषं दत्त्वा ते वागादय एतस्यैव मुख्यस्य रूपं बभूवुरिति श्रुत्यर्थः । वाचकशब्दैक्याच्चैकत्वमित्याह-प्राणेति । अक्षादिशब्दवदनेकार्थत्वं प्राणशब्दस्य किं न स्यादित्याशंक्यागतिका हीयं गतिरित्याह-इतरथेति । गङ्गादिशब्दवदनेकार्थत्वमाशंक्य भेदे मानाभावान्मुख्यसंभवे कुतो लक्षणेत्याह-एकत्रेति । ननु 'एतस्माज्जायते प्राणः' इत्यादौ भेदवादाद्वागादीनां प्राणात्तत्त्वान्तरत्वम् । न च मनःसर्वेन्द्रियाणीतिवद्भेदोक्तेर्भेदासाधकत्वम् । तदिन्द्रियत्वस्य स्मृतिसिद्धत्वाद्ब्राह्मणपरिव्राजकवद्भेदवादेऽपि प्रकृते पृथगुक्तेरेव तत्त्वान्तरत्वध्रौव्यादित्याशंक्यात्राप्यभेदश्रुतेरभेदस्यैव सिद्धेर्भेदोक्तिर्ब्राह्मणपरिव्राजकवदिति मत्वाऽऽह-तस्मादिति । पूर्वपक्षमनूद्य सूत्राद्बहिरेव प्रतिजानीते-एवमिति । तत्र प्रश्नपूर्वकं हेतुमाह-कुत इति । आकांक्षापूर्वकं हेतुं विवृण्वन्नेव सूत्राक्षराणि योजयति-क इत्यादिना । व्यपदेशभेदं

व्यपदेशदर्शनात । "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" [ मु० २ । १ । ३ ] इति ह्येवंजातीयकेषु प्रदेशेषु पृथक्प्राणो व्यपदिश्यते, पृथक्चेन्द्रियाणि ॥ ननु मनसोऽप्येवं सति वर्जनमिन्द्रियत्वेन प्राणवत्स्यात, "मनः सर्वेन्द्रियाणि च" इति पृथग्व्यपदेशदर्शनात ॥ सत्यमेतत ॥ स्मृतौ त्वेकादशेन्द्रियाणीति मनोऽपीन्द्रियत्वेन श्रोत्रादिवत्संगृह्यते । प्राणस्य त्विन्द्रियत्वं न श्रुतौ स्मृतौ वा प्रसिद्धमस्ति । व्यपदेशभेदश्चायं तत्त्वभेदपक्ष उपपद्यते । तत्त्वैकत्वे तु स एवैकः सन्प्राण इन्द्रियव्यपदेशं लभते, न लभते चेति विप्रतिषिद्धम् । तस्मात्तत्त्वान्तरभूता मुख्यादितरे ॥ १७ ॥ कुतश्च तत्त्वान्तरभूताः—

रत्नप्रभा ।

दूषणम् । एतेन प्रतिज्ञाध्याहारः तच्छब्दस्याप्रकृतभेदपरामर्शित्वं चेति दोषद्वयमपास्तम् । शब्दभेदाद्वस्तुभेदसाधनेऽतिप्रसङ्गं शङ्कते—नन्विति ॥ प्राणवन्मनसोऽपि इन्द्रियेभ्यो भेदः स्यादित्यर्थः ॥ अपर्यायसंज्ञाभेदात्स्वतन्त्रसंज्ञिवस्तुभेद इत्युत्सर्गः । स च "मनःषष्ठानीन्द्रियाणि" इत्यादिस्मृतिबाधान्मनस्यपोद्यते, प्राणे तु बाधकाभावादुत्सर्गसिद्धिरिति समाधत्ते—सत्यमित्यादिना ॥ मन इन्द्रियाणि चेति भेदोक्तिर्गोबलीवर्दन्यायेन नेया। सिद्धान्ते मनसः प्रमोपादानत्वादात्मवदनिन्द्रियत्वमिष्टं ततो नोत्सर्गबाध इति केचित् ॥ किंच "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति पृथग्जन्मव्यपदेशात्स्वतन्त्रवस्तुभेद इत्याह—व्यपदेशभेदश्चायमिति ॥ एकस्मिन् वाक्ये प्राण इन्द्रियशब्दमैक्याल्लभते पुनरुक्तिभयान्न लभते चेति व्याघात इत्यर्थः ॥ १७ ॥ एवं भेदेनापर्यायसंज्ञाभ्यामुक्तेः पृथग्जनोक्तेश्चेति तद्वय-

भामती ।

प्राप्ताप्राप्तत्वलक्षणविरुद्धधर्मसंसर्गश्रुतेः । अर्थक्रियाभेदाच्च । देहधारणं हि प्राणस्य क्रियाऽर्थालोचनमनने चेन्द्रियाणाम् । न च तद्भावाभावानुविधानं तद्वृत्तितामावहति। देहेन व्यभिचारात् । प्राणादयो हि देहान्वयव्यतिरेकानुविधायिनो न च देहात्मानः । यापि च प्राणरूपतामिन्द्रियाणामभिदधाति श्रुतिः, तत्रापि पौर्वापर्यालोचनायां भेद एव प्रतीयत इत्युक्तं भाष्यकृता । तस्माद्बहुश्रुतिविरोधात् पूर्वापरविरोधाच्च प्राणरूपताभिधानमिन्द्रियाणां प्राणायत्ततया भाक्तं गमयितव्यम् । मनसस्त्विन्द्रियत्वे स्मृतेरवगते क्वचिदिन्द्रियेभ्यो भेदेनोपादानं गोबलीवर्दन्यायेन । अथ वा इन्द्रियाणां वर्तमानमात्रविषयत्वान्मनसस्तु त्रैकाल्यगोचरत्वाद्भेदेनाभिधानम् । न च प्राणे भेदव्यपदेशबाहुल्यं तथा नेतुं युक्तम् । प्राणरूपताश्रुतेश्च गतिर्दर्शिता । तथा ज्येष्ठे प्राणशब्दस्य मुख्यत्वादिन्द्रियेषु ततस्तत्त्वान्तरेषु लाक्षणिकः प्राणशब्द इति युक्तम् । न च मुख्यत्वानुरोधेनावगतभेदयोरैक्यं युक्तं, मा भूद्गङ्गादीनां तीरादिभिरैक्यमिति । अन्ये तु भेदशब्दाध्याहारभिया भेदश्रुतेश्चेति पौनरुक्त्यभिया च तच्छब्दस्य चानन्तरोक्तपरामर्शकत्वादन्यथा

आनन्दगिरीय-न्यायनिर्णयः ।

विशदयति—एतस्मादिति । उक्तव्यपदेशभेदस्यातिप्रसंगित्वं शङ्कते—नन्विति । एवं सत्युक्तहेतुना वागादीनां मुख्यात्तत्त्वान्तरत्वे सतीति यावत् । उत्सर्गतो भेदव्यपदेशस्य तत्त्वान्तरस्य साधकत्वमंगीकरोति—सत्यमिति । कथं तर्हीन्द्रियत्वं मनसः सिद्धं तत्राऽऽह—स्मृतौ त्विति । श्रुतिस्मृतिभ्यामपवादाद्भेदव्यपदेशस्यौपचारिकत्वमित्यर्थः । प्राणस्यापि मनोवदिन्द्रियत्वं किं न स्यात्तत्राऽऽह—प्राणस्येति । तत्रापि भेदवादस्यौपचारिकत्वमाशंक्यापवादाभावान्नेत्याह—व्यपदेशेति । उपपत्तिमेव व्यतिरेकेण स्फोरयति—तत्त्वेति । व्यपदेशभेदानुपपत्त्योक्तं भेदमुपसंहरति—तस्मादिति॥१७॥ तत्रैव हेत्वन्तरं पृच्छति—कुत इति ।

## भेदश्रुतेः ॥ १८ ॥

भेदेन वागादिभ्यः प्राणः सर्वत्र श्रूयते–"ते ह वाचमूचुः" [बृ० १। ३। २] इत्युपक्रम्य वागादीनसुरपाप्मविध्वस्तानुपन्यस्योपसंहृत्य वागादिप्रकरणम् "अथ हेममासन्यं प्राणमूचुः" इत्यसुरविध्वंसिनो मुख्यस्य प्राणस्य पृथगुपक्रमणात्। तथा "मनो वाचं प्राणं तान्यात्मनेऽकुरुत" इत्येवमाद्या अपि भेदश्रुतय उदाहर्तव्याः। तस्मादपि तत्त्वान्तरभूता मुख्यादितरे ॥ १८ ॥ कुतश्च तत्त्वान्तरभूताः–

## वैलक्षण्याच्च ॥ १९ ॥

वैलक्षण्यं च भवति मुख्यस्येतरेषां च। सुप्तेषु वागादिषु मुख्य एको जागर्ति स एव चैको मृत्युनाऽनाप्त आप्तास्त्वितरे ॥ तस्यैव च स्थित्युत्क्रान्तिभ्यां देहधारणपतनहेतुत्वं नेन्द्रियाणाम्। विषयालोचनहेतुत्वं

रत्नप्रभा।

पदेशादिति हेतुर्व्याख्यातः। भेदश्रुतेरिति सूत्रेण प्रकरणभेदो हेतुरुक्त इति न पौनरुक्त्यम्। ते ह देवाः शास्त्रीयेन्द्रियमनोवृत्तिरूपा असुराणां पापवृत्तिरूपाणां जयार्थमुद्गीथकर्मणि प्रथमं व्यापृतां वाचमूचुस्त्वं न उद्गायासुरनाशार्थमिति तथास्त्वित्यङ्गीकृत्योद्गायन्तीं वाचमनृतादिदोषेण विध्वंसितवन्तोऽसुराः, इत्येवं क्रमेण सर्वेष्विन्द्रियेषु पापग्रस्तेषु पश्चादथेति प्रकरणं विच्छिद्य 'प्रसिद्धमास्ये भवमासन्यं मुख्यं प्राणमूचुस्त्वं न उद्गायेति तेन प्राणनोद्गात्रा निर्विषयतया सङ्गदोषशून्येनासुरा नष्टाः' इत्यसुराणां विध्वंसिनो मुख्यप्राणस्योक्तेर्भेदसिद्धिरित्याह–ते हेति ॥ तानि त्रीण्यन्यान्यात्मने स्वार्थं प्रजापतिः कृतवानित्यर्थः ॥ १८ ॥ विरुद्धधर्मवत्त्वाच्च भेद इत्याह–वैलक्षण्याच्चेति ॥ मृत्युरासङ्गदोषः। वाग्दध्रे व्रतं

भामती।

वर्णयांचक्रुः। किमेकादशैव वागादय इन्द्रियाण्याहो प्राणोऽपीति विशये इन्द्रस्यात्मनो लिङ्गमिन्द्रियं, तथा च वागादिवत्प्राणस्यापीन्द्रलिङ्गतास्ति। न च रूपादिविषयालोचनकरणतेन्द्रियता, आलोकस्यापीन्द्रियत्वप्रसङ्गात्। तस्माद्भौतिकमिन्द्रलिङ्गमिन्द्रियमिति वागादिवत्प्राणोऽपीन्द्रियमिति प्राप्तम्। एवं प्राप्तेऽभिधीयते–इन्द्रियाणि वागादीनि श्रेष्ठात् प्राणादन्यत्र। कुतः–तेनेन्द्रियशब्देन तेषामेव वागादीनां व्यपदेशात्। न हि मुख्ये प्राण इन्द्रियशब्दो दृष्टचरः। इन्द्रलिङ्गता तु व्युत्पत्तिमात्रनिमित्तं

आनन्दगिरीय–न्यायनिर्णयः।

प्राणस्य वागादिभ्यः साक्षाद्भेदोक्तेरपि भेदधीरित्याह–भेदेति। सूत्रं विभजते–भेदेनेति। इन्द्रियवृत्तयः शास्त्रोद्भासिता देवाः स्वाभाविक्यस्ता एवासुरास्तयोः सदाऽन्योन्यमभिभवरूपः संग्रामस्तत्रासुरपराजयायौद्गात्रं कर्म देवाः प्रारेभिरे ते च देवा वाचमूचुस्त्वं न उद्गायेत्युपक्रम्य तां वाचमसुराः पाप्मनाऽविध्यन्नित्यादिना वागादीनसुरैः पाप्मना कल्याणासंगनिमित्तेन विद्धानुक्त्वा वागादिप्रकरणमुपसंहृत्याथेति प्रकरणविच्छेदेन प्रसिद्धमास्ये भवं मुख्यप्राणमूचुर्वागादयस्त्वं न उद्गायेत्युक्त्वा तेन चोद्गाने प्रारब्धे पूर्ववद्वेधायोपक्रममात्रेणाभेद्यपाषाणक्षिप्तलोष्टवदसुरा नष्टा इत्यसुरविध्वंसिनो मुख्यप्राणस्य पृथगुक्तेर्भेदसिद्धिरित्याह–ते हेत्यादिना। भेदे श्रुत्यन्तरमाह–तथेति। तानि त्रीण्यन्नान्यात्मने स्वार्थं प्रजापतिरकुरुत कृतवानिति यावत्। भेदश्रुतिसिद्धमुपसंहरति–तस्मादिति ॥ १८ ॥ तत्रैव हेत्वन्तरं प्रश्नपूर्वकमाह–कुतश्चेति। विरुद्धधर्मवत्त्वादपि भेदधीरिति सूत्रार्थः। तमेवार्थं विवृणोति–वैलक्षण्यं चेति। किमिदं वैलक्षण्यं तदाह–सुषुप्तेष्विति। अर्थक्रियाकृतं वैलक्षण्यान्तरमाह–तस्यैवेति। लक्षणभेदकृतं

चेन्द्रियाणां न प्राणस्येत्येवंजातीयको भूयाँल्लक्षणभेदः प्राणेन्द्रियाणाम् । तस्मादप्येषां तत्त्वान्तरभावसिद्धिः ॥ यदुक्तम्–"त एतस्यैव सर्वे रूपमभवन्" [ बृ० १ । ५ । २१ ] इति श्रुतेः प्राण एवेन्द्रियाणीति । तदयुक्तम्, तत्रापि पौर्वापर्यालोचनाद्भेदप्रतीतेः । तथाहि–"वदिष्याम्येवाहमिति वाग्दध्रे" [ बृ० १ । ५ । २१ ] इति वागादीनीन्द्रियाण्यनुक्रम्य "तानि मृत्युः श्रमो भूत्वोपयेमे तस्माच्छ्राम्यत्येव वाक्" इति च श्रमरूपेण मृत्युना ग्रस्तत्वं वागादीनामभिधाय "अथेममेव नाप्नोद्योऽयं मध्यमः प्राणः" [ बृ० १ । ५ । २१ ] इति पृथक्प्राणं मृत्युनानभिभूतं तमनुक्रामति । "अयं वै नः श्रेष्ठः" [ बृ० १ । ५ । २१ ] इति च श्रेष्ठतामस्यावधारयति ॥ तस्मात्तदविरोधेन वागादिषु परिस्पन्दलाभस्य प्राणायत्तत्वं तद्रूपभवनं वागादीनामिति मन्तव्यं न तादात्म्यम् ॥ अत एव च प्राणशब्दस्येन्द्रियेषु लाक्षणिकत्वसिद्धिः । तथा च श्रुतिः–"त एतस्यैव सर्वे रूपमभवन् । तस्मादेत एतेनाख्यायन्ते प्राणाः" [ बृ० १ । ५ । २१ ] इति मुख्यप्राणविषयस्यैव प्राणशब्दस्येन्द्रियेषु लाक्षणिकीं वृत्तिं दर्शयति तस्मात्तत्त्वान्तराणि प्राणादिन्द्रियाणीति ॥ १९ ॥ इतीन्द्रियाधिकरणम् ॥ ८ ॥

---

रत्नप्रभा ।

धृतवतीत्यर्थः । बहुभिर्भेदलिङ्गैर्विरोधाद्वागादीनां प्राणरूपभवनं प्राणाधीनस्थितिकत्वरूपं व्याख्येयम् । एतदेव प्राणशब्दस्येन्द्रियेषु लक्षणाबीजं श्रुतौ "तस्मादेत एतेनाख्यायन्त" इति परामृष्टम्, इति न भेदाभेदश्रुत्योर्विरोध इति सिद्धम् ॥१९॥ (८)॥ उत्पत्तिरुत्पादनेति च कार्यकर्त्रोर्व्यापारौ प्रसिद्धौ । तत्र जगदुत्पत्तिश्रुतिविरोधः अतीतेन पादद्वयेन निरस्तः, संप्रत्युत्पादनश्रुतिविरोधो निरस्यते । तत्रापि सूक्ष्मभूतोत्पादनं पारमेश्वरमेवेति श्रुतिष्वविप्रतिपन्नं, स्थूलभूतोत्पादने त्वस्ति श्रुतिविप्रतिपत्तिरिति तन्निरा-

भामती ।

यथा गच्छतीति गौरिति । प्रवृत्तिनिमित्तं तु देहाधिष्ठानत्वे सति रूपाद्यालोचनकरणत्वम् । इदं चास्य देहाधिष्ठानत्वं यद्देहानुग्रहोपघाताभ्यां तदनुग्रहोपघातौ । तथा च नालोकस्येन्द्रियत्वप्रसङ्गः । तस्माद्भेदैर्वागादय एवेन्द्रियाणि न प्राण इति सिद्धम् । भाष्यकारीयं त्वधिकरणं

आनन्दगिरीय–न्यायनिर्णयः ।

फलमुपसंहरति–**तस्मादिति** । अभेदश्रुतेरुक्तमभेदमनुवदति–**यदिति** । अभेदे तस्यास्तात्पर्याभावान्मैवमित्याह–**तदिति** । अभेदश्रुतिः सप्तम्यर्थः । भेदप्रतीतिं प्रकटयति–**तथाहीति** । दध्रे धारणाभिप्रायं चक्रे । तस्मान्मृत्युना श्रमेणाऽऽक्रान्तत्वादिति यावत् । प्रकारान्तरेण भेदप्रतीतिमाह–**अयमिति** । अभेदश्रुतेस्तर्हि का गतिस्तामाह–**तस्मादिति** । एतस्यैव सर्वे रूपमभवन्निति वाक्यात्तस्मादेत एतेनाऽऽख्यायन्ते प्राणा इति च प्राणश्रुतेरिन्द्रियाणां प्राणवृत्तित्वे प्राप्ते प्राणसंवादादिगतैर्बहुभिर्भेदलिंगैरर्थान्तरत्वे च लिंगैर्बलीयोभिरबलं वाक्यं बाध्यते । श्रुतिरपीन्द्रियाणां प्राणसंज्ञार्थेत्यन्यपरा लिंगैर्बहुभिर्बाध्येति भावः । यत्तु प्राणशब्दस्य मुख्यत्वसंभवे न लक्षणेति तत्राऽऽह–**अत इति** । प्राणस्येन्द्रियेभ्यो भेदो यस्मात्प्रामाणिकस्तस्मादेव तच्छब्दस्य तेषु मुख्यतायोगाद्युक्ता लक्षणेत्यर्थः । श्रुत्यालोचनातोऽपि प्राणशब्दस्य लक्षणासिद्धिरित्याह–**तथा चेति** । अभेदश्रुतेर्गतिमुक्त्वोपसंहरति–**तस्मादिति** । तदेवं भेदाभेदश्रुत्योरविरोधात्तत्त्वान्तरभूतवागादिमूलकारणे ब्रह्मणि समन्वयधीरित्युपसंहर्तुमितीत्युक्तम् ॥ १९ ॥ ( ८ ) ॥

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥ (९) ॥

सत्प्रक्रियायां तेजोबन्नानां सृष्टिमभिधायोपदिश्यते-"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति । तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति" [ छां० ६ । ३ । २ ] तत्र संशयः-किं जीवकर्तृकमिदं नामरूपव्याकरणम्, आहोस्वित्

---

रत्नप्रभा ।

सार्थमाह-संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ नामरूपभेदात्करणभिन्नः प्राण इत्युक्तं तत्प्रसङ्गेन स्थूलानामरूपक्लृप्तिः किंकर्तृकेति चिन्त्यत इत्यवान्तरसंगतिः ॥ प्रक्रिया प्रकरणम् । ईक्षणमेवाह-हन्तेत्यादिना ॥ हन्त इदानीं देवताः सूक्ष्मा अनुप्रविश्येति संबन्धः । तासां तिसृणां देवतानामेकैकां देवतां तेजोबन्नात्मना त्र्यात्मिकां करिष्यामीति श्रुतिः पञ्चीकरणोपलक्षणार्था । छान्दोग्येऽप्याकाशवाय्वोरुपसंहारस्योक्तत्वात् । एवं स्थूलीकृतेषु भूतेषु प्राणिनां व्यवहारः सेत्स्यतीति परदेवतायास्तात्पर्यम् ॥ जीवेनेतिपदस्य व्याकरवाणीत्यनेन संबन्धसंभवासंभवाभ्यां संशयमाह-तत्रेति ॥ पूर्वपक्षे जीवस्यैव भौतिकस्रष्टृत्वाद्ब्रह्मणः सर्वस्रष्टृत्वासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलम् । जीवेनेत्यस्य व्याकर-

भामती ।

भेदश्रुतेरित्यादिषु सूत्रेषु नेयम् ॥ १७ ॥ १८ ॥ १९ ॥ ( ८ ) ॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् । सत्प्रक्रियायां 'तत्तेज ऐक्षत' इत्यादिना संदर्भेण तेजोऽबन्नानां सृष्टिं विधायोपदिश्यते-'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतंत्रिवृतमेकैकां करवाणि' इति । अस्यार्थः-पूर्वोक्तं बहुभवनमीक्षणप्रयोजनमद्यापि सर्वथा न निष्पन्नमिति पुनरीक्षां कृतवती बहुभवनमेव प्रयोजनमुद्दिश्य कथं हन्तेदानीमहमिमा यथोक्तास्तेजआद्यास्तिस्रो देवताः पूर्वसृष्टावनुभूतेन संप्रति स्मरणसंनिधापितेन जीवेन प्राणधारणकर्त्रात्मनानुप्रविश्य बुद्ध्यादिभूतमात्रायामादर्श इव मुखबिम्बं तोय इव चन्द्रमसो बिम्बं छायामात्रतयानुप्रविश्य नाम च रूपं च ते व्याकरवाणि विस्पष्टं करवाणीदमस्य नामेदं च रूपमिति। तासां तिसृणां देवतानां त्रिवृतंत्रिवृतं तेजोऽबन्नात्मना त्र्यात्मिकांत्र्यात्मिकामेकैकां देवतां करवाणीति । तत्र संशयः-किं जीवकर्तृकमिदं नामरूपव्याकरणमाहो परमेश्वरकर्तृकमिति । यदि जीवकर्तृकं ततः 'आकाशो वै नामरूपयोर्निर्वहिता' इत्यादिश्रुतिविरोधादनध्यवसायः । अथ परमेश्वरकर्तृकं, ततो न विरोधः। तत्र डित्थडवित्थादिनामकरणे च घटपटादिरूपकरणे च जीवकर्तृत्वदर्शनादिहापि त्रिवृत्करणे नामरूपकरणे चास्ति संभावना जीवस्य। तथा च योग्यत्वाद-

आनन्दगिरीय-न्यायनिर्णयः ।

उत्पत्तिरुत्पादनेति व्यापारावुत्पद्यमानोत्पादकगतौ सिद्धौ । तत्र जगदुत्पत्तिश्रुतिविरोधोऽतीतेन संदर्भेण निरस्तः । संप्रत्युत्पादनाविषयश्रुतिविरोधो निरस्यते । तत्रापि भूतसूक्ष्मोत्पादनं पारमेश्वरमेवेति श्रुतिष्वविप्रतिपन्नम् । भौतिकनिर्माणश्रुतिषु विप्रतिपत्तिरिति तन्निरासार्थमाह-संज्ञेति । नामरूपाभेदात्करणानां प्राणाभेदशङ्कानिरासप्रसंगेन नामरूपव्याकरणं किंकर्तृकमिति निरूपयतीति विशेषसंगतिं गृहीत्वाऽधिकरणस्य विषयमाह-सदिति । उपदेशमेव दर्शयति-सेयमिति । ईक्षणप्रयोजनं यद्बहुभवनमुक्तं तदद्यापि न सिद्धमिति पुनरीक्षां कृतवती सदाख्या देवतेत्यर्थः । ईक्षणप्रकारमभिनयति-हन्तेति । इदानीमहमिमा यथोक्तास्तेजोबन्नाख्यास्तिस्रो देवता व्यवहारापेक्षायामनेन पूर्वसृष्टावनुभूतेनाधुना स्मृतेन जीवेनाऽऽत्मना बुद्ध्यादिभूतमात्रायामादर्शे मुखवदनुप्रविश्य नाम च रूपं च ते व्याकरवाणीदमस्य नामेदं च रूपमिति स्पष्टं करवाण्येवमीक्षित्वा पुनरपि देवताव्यवहारार्थमीक्षां चकारेत्याह-तासामिति । तिसृणां देवतानामेकैकां देवतां त्रिवृतंत्रिवृतं तेजोबन्नात्मना त्र्यात्मिकांत्र्यात्मिकां करवाणि तथा च स्थूलभूतेषु व्यवहारसिद्धिरित्यर्थः । नामरूपव्याकरणं विषयीकृत्यानेन जीवेनेत्यस्य व्याकरवाणीत्यनेन वाऽनु-

परमेश्वरकर्तृकमिति ॥ तत्र प्राप्तं तावज्जीवकर्तृकमेवेदं नामरूपव्याकरणमिति ॥ कुतः॥ "अनेन जीवेनात्मना" इति विशेषणात् । यथा लोके चारेणाहं परसैन्यमनुप्रविश्य संकलयानीत्येवंजातीयके प्रयोगे चारकर्तृकमेव सत्सैन्यसंकलनं हेतुकर्तृकत्वाद्राजात्मन्यध्यारोपयति–संकलयानीत्युत्तमपुरुषप्रयोगेण, एवं जीवकर्तृकमेव सन्नामरूपव्याकरणं हेतुकर्तृत्वादेवतात्मन्यध्यारोपयति व्याकरवाणीत्युत्तमपुरुषप्रयोगेण ॥ अपि च डित्थडवित्थादिषु नामसु, घटशरावादिषु च रूपेषु जीवस्यैव व्याकर्तृत्वं दृष्टम् । तस्माज्जीवकर्तृकमेवेदं नामरूपव्याकरणमित्येवं प्राप्तेऽभिधत्ते–"संज्ञामूर्तिक्लृप्तिस्तु" इति ॥ तुशब्देन पक्षं व्यावर्तयति । संज्ञा-

रत्नप्रभा ।

धाणीतिप्रधानक्रियापदेन संबन्ध इति पूर्वपक्षमाह–**तत्र प्राप्तमिति** ॥ परदेवताया अकर्तृत्वे कथमुत्तमपुरुषप्रयोग इत्याशङ्क्य प्रयोजकत्वात्कर्तृत्वोपचार इत्याह–**यथा लोक इति**॥सिद्धान्तयति—**तुशब्देने-**

भामती ।

नेन जीवेनेति व्याकरवाणीति प्रधानक्रियया संबध्यते, न त्वानन्तर्यादनुप्रविश्येत्यनेन संबध्यते, प्रधानपदार्थसंबन्धो हि साक्षात्सर्वेषां गुणभूतानां पदार्थानामौत्सर्गिकस्तादर्थ्यात्तेषाम् । तस्य तु क्वचित्साक्षादसंभवात्परम्पराश्रयणं, साक्षात्संभवश्च योग्यतया दर्शितः । ननु सेयं देवतेति परमेश्वरकर्तृत्वं श्रूयते । सत्यम् । प्रयोजकतया तु तद्भविष्यति । यथा लोके चारेणाहं परसैन्यमनुप्रविश्य संकलयानीति । यदि पुनरस्य साक्षात्कर्तृभावो भवेदनेन जीवेनेत्यनर्थकं स्यात् । न हि जीवस्यान्यथा करणभावो भवितुमर्हति । प्रयोजककर्तुस्तत्साक्षात्कर्ता करणं भवति प्रधानक्रियोद्देशेन प्रयोजकेन प्रयोज्यकर्तुर्व्यापनात् । तस्मादत्र जीवस्य कर्तृत्वं नामरूपव्याकरणेऽन्यत्र तु परमेश्वरस्येति विरोधादनध्यवसाय इति प्राप्तम् । एवं प्राप्त उच्यते–परमेश्वरस्यैवेहापि नामरूपव्याकर्तृत्वमुपदिश्यते न तु जीवस्य, तस्य प्रधानक्रियासंबन्धं प्रत्ययोग्यत्वात् । नन्वन्यत्र डित्थडवित्थादिनामकर्मणि घटशरावादिरूपकर्मणि च कर्तृत्वदर्शनादिहापि योग्यता संभाव्यत इति चेत् । न । गिरिनदीसमुद्रादिनिर्माणासामर्थ्येनार्थापत्त्यभावपरिच्छिन्नेन संभावनापवाधनात् । तस्मात् परमेश्वरस्यैवात्र साक्षात्कर्तृत्वमुपदिश्यते न जीवस्य । अनुप्रविश्येत्यनेन तु संनिहितेनास्य संबन्धो योग्यत्वात्। न चानर्थक्यं त्रिवृत्करणस्य भोक्तृजीवार्थतया तदनुप्रवेशाभिधानस्यार्थवत्त्वात्। स्यादेतत्। अनुप्रविश्य व्याकरवाणीति समानकर्तृत्वे क्त्वः स्मरणात् प्रवेशनकर्तुर्जीवस्यैव व्याकर्तृत्वमुपदिश्यतेऽन्यथा तु

आनन्दगिरीय–न्यायनिर्णयः ।

प्रविश्येत्यनेन वा संबन्धसंभावनया संदेहमाह–**तत्रेति** । भौतिकसृष्टिश्रुतिविरोधनिरासेन परस्मिन्नेव तत्कारणे ब्रह्मणि समन्वयसाधनात्पादादिसंगतिः । पूर्वपक्षे जीवस्यैव भौतिकसृष्टिकारणत्वात्तस्मिन्नेव समन्वयाद्ब्रह्मणि तदसिद्धिः सिद्धान्ते परस्यैव तद्धेतुत्वात्तत्रैव तत्सिद्धिरित्यभिसंधाय पूर्वपक्षमाह–**तत्रेत्यादिना** । जीवेनेत्यस्य प्रविश्येत्यनेन संबन्धान्न जीवस्य व्याकर्तृत्वमिति शङ्कते–**कुत इति** । क्रियापदस्य प्राधान्यात्तेनान्येषामन्वयाज्जीवेनेत्यस्य व्याकरवाणीत्यनेन संगतिरित्याह–**अनेनेति** । सेयं देवतेत्युपक्रम्य व्याकरवाणीत्युत्तमपुरुषप्रयोगादेवताया व्याकर्तृत्वं न जीवस्येत्याशंक्योपचारादुत्तमपुरुषप्रयोगं दृष्टान्तेन दर्शयति–**यथेत्यादिना** । उपचारान्मुख्यग्रहणं युक्तमित्याशंक्य जीवेनेति विशेषणवैयर्थ्यान्मैवमिति मत्वा दार्ष्टान्तिकमाह–**एवमिति** । जीवस्य प्रवेष्टृत्वं ब्रह्मणो व्याकर्तृत्वमित्यङ्गीकारे समानकर्तृकत्वाभावात्क्त्वाप्रत्ययविरोधः स्यादिति भावः । नदीसमुद्रादिव्याकरणे जीवस्यायोग्यत्वाद्ब्रह्मणस्तत्र कर्तृतेत्याशंक्यानुमानमाह—**अपि चेति** । विप्रतिपन्नमिदमा परामृश्यते भौतिकसृष्टिश्रुतिषु विरोधान्न सर्वकारणे ब्रह्मणि समन्वयसिद्धिरिति पूर्वपक्षमनूद्य सिद्धान्तयति—**एवमिति** । सूत्रं पदशो विभजते–**तुशब्देनेति** । पदार्थ-

मूर्तिक्लृप्तिरिति नामरूपव्याक्रियेत्येतत् । त्रिवृत्कुर्वत इति परमेश्वरं लक्षयति, त्रिवृत्करणे तस्य निरपवादकर्तृत्वनिर्देशात् ॥ येयं संज्ञाक्लृप्तिर्मूर्तिक्लृप्तिश्चाग्निरादित्यश्चन्द्रमा विद्युदिति, तथा कुशकाशपलाशादिषु पशुमृगमनुष्यादिषु च प्रत्याकृति प्रतिव्यक्ति चानेकप्रकारा, सा खलु परमेश्वरस्यैव तेजोबन्नानां निर्मातुः कृतिर्भवितुमर्हति ॥ कुतः ॥ उपदेशात् ॥ तथाहि-"सेयं देवतैक्षत" इत्युपक्रम्य "व्याकरवाणि" इत्युत्तमपुरुषप्रयोगेण परस्यैव ब्रह्मणो व्याकर्तृत्वमिहोपदिश्यते ॥ ननु जीवेनेति विशेषणाज्जीवकर्तृकत्वं व्याकरणस्याध्यवसितम् ॥ नैतदेवम् ॥ जीवेनेत्येतदनुप्रविश्येत्यनेन संबध्यते, आनन्तर्यात्, न व्याकरवाणीत्यनेन । तेन हि संबन्धे व्याकरवाणीत्ययं देवताविषय उत्तमपुरुष औपचारिकः कल्प्येत ॥ न च गिरिनदीसमुद्रादिषु नानाविधेषु नामरूपेष्वनीश्वरस्य जीवस्य व्याकरणसामर्थ्यमस्ति । येष्वपि चास्ति सामर्थ्यं तेष्वपि परमेश्वरायत्तमेव तत् ॥ न च जीवो नाम परमेश्वरादत्यन्तभिन्नश्चार इव राज्ञः, आत्मनेति विशेषणात् । उपाधिमात्रनिबन्धनत्वाच्च जीवभावस्य । तेन तत्कृतमपि नामरूपव्याकरणं परमेश्वरकृतमेव भवति । परमेश्वर एव

रत्नप्रभा ।

त्यादिना ॥ प्रत्याकृति । प्रतिजातीत्यर्थः । अनेन स्थूलसर्वसर्गे जीवस्यासामर्थ्यं द्योतितम् । तथा च पदान्वयस्य पदार्थयोग्यताधीनत्वाज्जीवरूपेण प्रविश्याहमेव व्याकरवाणीत्यन्वयः, न तु जीवेन व्याकरवाणीति ॥ ननु तर्हि प्रवेशक्रिया जीवकर्तृका व्याकरणमीश्वरकर्तृकमिति कर्तृभेदात् क्त्वाप्रत्ययो न स्यादित्यत आह-न च जीवो नामेति ॥ वस्तुतस्तु सूर्यो जले प्रविष्ट इति प्रतिविम्बमात्रप्रवेशे सूर्यस्यैव कर्तृत्वप्रयोगाज्जीवात्मना प्रवेशेऽपीश्वर एव कर्तेति क्त्वाश्रुतिर्युक्तेति बोध्यम् ॥ नन्वभेदश्चेज्जीव एव व्याकर्ता किं न स्यादित्याशङ्क्य कल्पनया भिन्नस्य तस्याशक्तत्वाच्छ्रुतिविरोधाच्च नैवमित्याह-परमेश्वर इति ॥ प्रत्येकं महाभूतसर्गस्य प्रागुक्तत्वादिह व्याकरणवाक्ये यत्नपूर्वकं स्थूल-

भामती ।

परमेश्वरस्य व्याकर्तृत्वे जीवस्य प्रवेष्टृत्वे भिन्नकर्तृकत्वेन क्त्वः प्रयोगो व्याहन्येतेत्यत्राह-न च जीवो नामेति।

आनन्दगिरीय-न्यायनिर्णयः ।

मुक्त्वा प्रतिज्ञावाक्यार्थं स्फुटयति-येयमिति । अधिदैवविषयमग्न्याद्युदाहरणम् । अधिभूतविषयं कुशादि । पश्वाद्यध्यात्मविषयमिति भेदः । न केवलं जात्युपाधावनेकप्रकारं किंतु व्यक्त्युपाधावपीत्याह-प्रतीति । कारणविषयविप्रतिषेधनिषेधायावधारणम् । तत्र सौत्रं हेतुं प्रश्नपूर्वकमादाय व्याचष्टे-कुत इति । परोक्तमनुवदति-नन्विति । आकांक्षासंनिधियोग्यतावशेनान्वयाजीवेनेत्यस्य प्रविश्येत्यनेन संनिधानाजीवस्य च सर्वनामरूपव्याकरणे योग्यत्वाभावात्तस्य प्रवेशेनैव संबन्धो नान्येनेत्याह-नैतदिति । उपसर्जनस्योपसर्जनेनासंबन्धात्प्रधानेन क्रियापदेनैव जीवपदस्य संगतिरुक्तेत्याशंक्य व्याकरवाणीत्युत्तमपुरुषस्यौपचारिकत्वापत्तेर्मैवमित्याह-तेनेति । परोक्तमनुमानं योग्यानुपलब्धिविरोधेन निरस्यति-न चेति । आगमविरोधाच्चायुक्तमनुमानमित्याह-येष्विति । यत्तु कर्तृभेदे क्त्वाप्रत्ययविरोध इति तत्राऽऽह-न चेति । कथं तर्हि व्यपदेशभेदस्तत्राऽऽह-उपाधीति । औपाधिके भेदे वास्तवे चाभेदे फलितमाह-तेनेति । जीवब्रह्मणोरैक्याजीवकर्तृकमपि व्याकरणं ब्रह्मकर्तृकं चेत्तर्हि जीवकर्तृकमेव सद्ब्रह्मकर्तृकं किं न स्यादित्याशंक्य ब्रह्मकर्तृकत्वस्यैव वेदान्तेषु प्रसिद्धेर्मैवमित्याह-परमेश्वर इति । सूत्रार्थमुपसंहरति-

च नामरूपयोर्व्याकर्तेति सर्वोपनिषत्सिद्धान्तः । "आकाशो ह वै नाम नामरूपयोर्निर्वहिता" [ छां० ८।१४।१] इत्यादिश्रुतिभ्यः॥ तस्मात्परमेश्वरस्यैव त्रिवृत्कुर्वतः कर्म नामरूपयोर्व्याकरणम् । त्रिवृत्करणपूर्वकमेवेदमिह नामरूपव्याकरणं विवक्ष्यते, प्रत्येकं नामरूपव्याकरणस्य तेजोबन्नोत्पत्तिवचनेनैवोक्तत्वात ॥ तच्च त्रिवृत्करणमग्न्यादित्यचन्द्रविद्युत्सु श्रुतिर्दर्शयति—"यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य" [ छां० ६ । ४ । १ ] इत्यादिना । तत्राग्निरितीदं रूपं व्याक्रियते सति च रूपव्याकरणे विषयप्रतिलम्भादग्निरितीदं नाम व्याक्रियते । एवमेवादित्यचन्द्रविद्युत्स्वपि द्रष्टव्यम् ॥ अनेन चाग्न्याद्युदाहरणेन भौमाम्भसतैजसेषु त्रिष्वपि द्रव्येष्वविशेषेण त्रिवृत्करणमुक्तं भवति । उपक्रमोपसंहारयोः साधारणत्वात ॥ तथाह्यविशेषेणैवोपक्रमः—"इमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति" [ छां० ६ । ३ । ४ ] इति । अविशेषेणैव चोपसंहारः—"यदु रोहितमिवाभूदिति तेजसस्तद्रूपम्" इत्येवमादिः, "यदविज्ञातमिवाभूदित्येतासामेव देवतानां समास इति" ॥ [ छां० ६ । ४ । ६-७ ] एवमन्तः ॥ २० ॥ तासां तिसृणां देवतानां बहिस्त्रिवृत्कृतानां सतीनामध्यात्ममपरं त्रिवृत्करणमुक्तम्—"इमास्तिस्रो देवताः

---

रत्नप्रभा ।

भौतिकसर्ग उच्यत इति पाठव्यत्ययेन सूत्रसूचितं श्रुत्यर्थमाह—त्रिवृत्करणपूर्वकमिति ॥ ईश्वरकृतं त्र्यात्मत्वमिति क्व दृष्टमित्यत आह—तच्चेति ॥ इदानीं नामरूपव्याकरणे क्रममाह—तत्राग्निरिति ॥ यद्यपि "अतः प्रभवात्" इत्यत्र वेदशब्दपूर्विकार्थसृष्टिरुक्ता, तथाप्यव्यक्तात्स्मृताच्छब्दादर्थसृष्टौ सत्यां स्फुटनामसंबन्धाभिव्यक्तिरत्रोक्तेत्यविरोधः ॥ नन्वग्न्यादीनां तैजसानामेव श्रुतावुदाहरणाद्भूजलयोस्त्र्यात्मकत्वं न विवक्षितमित्यत आह—अनेन चेति ॥ उपक्रमे तासां मध्य इति शेषः । यत्कपोतरूपादिकं कृष्णत्वादिविशेषाकारेण विज्ञातमिव भवति तद्देवतानां समुदायरूपमित्यर्थः ॥ २० ॥ बाह्यं त्रिवृत्करणमुक्त्वाध्यात्मिकमपरं पूर्वोक्तविलक्षणं वदन्नुत्तरसूत्रमवतारयति—तासामित्यादिना ॥ पुरुषशरीरं प्राप्यै-

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

तस्मादिति। भूतविषयनामरूपव्याकरणस्य त्रिवृत्करणात्पूर्वमपि संभवात्त्रिवृत्कुर्वतो नामरूपव्याकरणं कर्मेति कथमुक्तमित्याशंक्य भौतिकविषयमेतदिति विशेषणसिद्धिमाह—त्रिवृदिति। इहेति व्याकरणवाक्योक्तिः । किं तत्त्रिवृत्करणं यद्व्याकरणात्पूर्वभावीत्याशंक्याऽऽह—तच्चेति । यथा छान्दोग्ये भूतत्रयसृष्टिस्तैत्तिरीयश्रुत्यनुरोधाद्भूतपञ्चकविषयोक्ता तथाऽत्रापि त्रिवृत्करणं पञ्चीकरणाभिप्रायं द्रष्टव्यं श्रुत्यन्तरे पञ्चानां भूतानां सृष्टेरुक्तत्वात् । किं पुनर्नामरूपव्याकरणं तदाह—तत्रेति । अग्नावुक्तन्यायमतिदिशति—एवमिति । आदित्यादीनां तैजसानामेव श्रुत्योक्तेर्न सर्वत्र त्रिवृत्करणमित्याशंक्याऽऽह—अनेनेति । यस्य त्रिवृत्करणं गम्यते तस्यैवास्तु किमतिदेशेनेत्याशंक्याऽऽह—उपक्रमेति । तिस्रस्तावदिमास्तेजोबन्नाख्या देवतास्तासामेकैका देवता त्रिवृत्त्रिवृत्त्र्यात्मिका त्र्यात्मिका भवतीत्युपक्रमार्थः । उपसंहारस्थावितिशब्दौ क्रमेण यच्छब्दाभ्यां संबध्येते । अविज्ञातं विशेषरूपेणादृष्टम् । इवकारावुभयत्र दृष्टरूपस्याऽऽभासत्वार्थौ । एतासां तिसृणामेव देवतानां समासः समुदाय इति यावत् ॥ २० ॥ बाह्यं त्रिवृत्करणमुक्त्वाऽऽध्यात्मिकेऽस्मिन्मानं वदन्नुत्तरसूत्रसंगतिमाह—तासामिति । अध्यात्मं देहे त्रिवृत्करणमपरं कार्यत्रयरूपेण वर्तनमिति यावत् । याः खल्विमा देवतास्तिस्रो बहिस्त्रिवृत्कृता दर्शितास्तासामेकैका देवता पुरुषं शरीरं प्राप्य त्रिवृत्कार्यत्रयरू-

पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति" [ छां० ६ । ४ । ७ ] इति । तदिदानीमाचार्यो यथाश्रुत्येवोपदर्शयत्याशङ्कितं कंचिद्दोषं परिहरिष्यन्-

**मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥**

भूमेस्त्रिवृत्कृतायाः पुरुषेणोपभुज्यमानाया मांसादिकार्यं यथाशब्दं निष्पद्यते । तथाहि श्रुतिः-"अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः" [ छां० ६ । ५ । १ ] इति । त्रिवृत्कृता भूमिरेवैषा व्रीहियवाद्यन्नरूपेणाद्यत इत्यभिप्रायः । तस्याश्च स्थविष्ठं रूपं पुरीषभावेन बहिर्निर्गच्छति । मध्यममध्यात्मं मांसं वर्धयति अणिष्ठं तु मनः । एवमितरयोस्तेजसोर्यथाशब्दं कार्यमवगन्तव्यम् । एवं मूत्रं लोहितं प्राणश्चापां कार्यम् । अस्थि मज्जा वाक्तेजस इति ॥ २१ ॥

---

रत्नप्रभा ।

कैका त्रिवृद्भवति कार्यत्रयात्मना भवतीत्यर्थः । उत्तरसूत्रेणाशंकितं दोषं निरसितुमादौ शङ्काविषयमाध्यात्मिकत्रिवृत्करणं दर्शयतीति भाष्यार्थः । नन्वन्नमयं मांसादि कथं भौममित्यत आह-त्रिवृत्कृता भूमिरेवेति ॥ प्राणस्य वायोरप्कार्यत्वमौपचारिकं द्रष्टव्यम् ॥ २१ ॥ एवं विषयमुक्त्वा दोषं शङ्कते-

भामती ।

अतिरोहितार्थमन्यत् ॥ २० ॥ मांसादि भौमं यथाशब्दमितरयोश्च । अत्र भाष्यकृतोत्तरसूत्रशेषतया सूत्रमेतद्विषयोपदर्शनपरतया व्याख्यातम् । शङ्कानिराकरणार्थत्वमप्यस्य शक्यं वक्तुम् । तथाहि-योऽन्नस्याणिष्ठो भागस्तन्मनस्तेजसस्तु योऽणिष्ठो भागः स वागित्यत्र हि काणादानां सांख्यानां चास्ति विप्रतिपत्तिः । तत्र काणादा मनो नित्यमाचक्षते । सांख्यास्त्वाहंकारिके वाङ्मनसे । अन्नभागतावचनं त्वस्यान्नसंवन्धलक्षणार्थम् । अन्नोपभोगे हि मनः स्वस्थं भवति । एवं वाचोऽपि पाटवेन तेजःसाम्यमभ्यूहनीयम् । तत्रेदमुपतिष्ठते-मांसादीति । वाङ्मनसे इति वक्तव्ये मांसाद्यभिधानं सिद्धेन सह साध्यस्योपन्यासो दृष्टान्तलाभाय । यथा मांसादि भौमाद्येवं वाङ्मनसे अपि तैजसभौमे इत्यर्थः । एतदुक्तं भवति-न तावद्ब्रह्मव्यतिरिक्तमस्ति किंचिन्नित्यम् । ब्रह्मज्ञानेन सर्वज्ञानप्रतिज्ञाव्याघातात्, बहुश्रुतिविरोधाच्च नाप्याहंकारिकम्, अहंकारस्य सांख्याभिमतस्य तत्त्वस्याप्रामाणिकत्वात् । तस्मादसति बाधके श्रुतिराञ्जसी नान्यथा कथंचिन्नेतुमुचितेति ॥२१॥ कंचिद्दोषमित्युक्तम् तं दोषं

आनन्दगिरीय-न्यायनिर्णयः ।

पेण त्र्यात्मिका त्र्यात्मिका भवतीत्यर्थः । तदित्याध्यात्मिकं त्रिवृत्करणमुच्यते सर्वस्य त्रिवृत्कृतत्वाविशेषे कथं व्यवहारविशेषः स्यादित्याशंक्याऽऽह-आशंकितमिति । उत्तरसूत्रेण शंकितं दोषमुद्भाव्य परिहरिष्यन्नादौ त्रिवृत्करणं विषयं दर्शयतीति योजना । ननु वैशेषिका मनसो नित्यत्वं सांख्या वाङ्मनसयोराहंकारिकत्वमाहुरन्नमयता च मनसोऽन्नसंबन्धाल्लक्षणार्था तदुपयोगे तत्स्वास्थ्यात् । वाचोऽपि तेजोमयत्वं पाटवेन तेजःसाम्यमेव तत्राऽऽह-मांसादीति । मनआदि भौमादीति वक्तव्ये मांसादिवचनं सिद्धेन सह साध्यस्य मनआदेर्दृष्टान्तार्थम् । यथा मांसादि भौममेवं वाङ्मनसे अपि तैजसभौमे शब्दवशाज्ज्ञेये इत्यर्थः । सूत्राक्षराणि व्याचष्टे-भूमेरिति । यथाशब्दमित्युक्तं विशदयति-तथाहीति । भूमेर्मांसादिभावः सूत्रितस्तदयुक्तमोदनस्यैव तथात्वदृष्टेरित्याशंक्याऽऽह-त्रिवृदिति । सूत्रतात्पर्यमुक्त्वा श्रुतितात्पर्यमाह-तस्याश्चेति। इतरयोश्चेति भागं व्याकरोति-एवमिति । तदेव कार्यमुदाहरति-मूत्रमिति । जलाधीनस्थितित्वात्तत्कार्यत्वं प्राणस्योपचर्यते श्रुत्यन्तरे तस्य वायुकार्यत्वसिद्धेरन्यत्रापवादाभावान्मुख्यमेतत्कार्यत्वमिति विवेकः ॥ २१ ॥ अविशेषेण सर्वेषां त्र्यात्मकत्वे कथमन्नादिशब्दवाच्यतेति

अत्राह–यदि सर्वमेव त्रिवृत्कृतं भूतभौतिकमविशेषश्रुतेः "तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इति । किंकृतस्तर्ह्ययं विशेषव्यपदेशः "इदं तेज इमा आप इदमन्नम्" इति । तथा "अध्यात्ममिदमन्नस्याशितस्य कार्यं मांसादि । इदमपां पीतानां कार्यं लोहितादि । इदं तेजसोऽशितस्य कार्यमस्थ्यादि" इति । अत्रोच्यते–

**वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥**

इति श्रीवैयासिक्यां शारीरकमीमांसायां द्वितीयाध्यायस्य तुरीयः पादः समाप्तः ॥

तुशब्देन चोदितं दोषमपनुदति । विशेषस्य भावो वैशेष्यम् । भूयस्त्वमिति यावत् । सत्यपि त्रिवृत्करणे क्वचित्कस्यचिद्भूतधातोर्भूयस्त्वमुपलभ्यते "अग्नेस्तेजोभूयस्त्वमुदकस्याब्भूयस्त्वं पृथिव्या अन्नभूयस्त्वम्" इति ॥ व्यवहारप्रसिद्ध्यर्थं चेदं त्रिवृत्करणम् । व्यवहारश्च त्रिवृत्कृतरज्जुवदेकत्वापत्तौ सत्यां न भेदेन भूतत्रयगोचरो लोकस्य प्रसिध्येत् । तस्मात्सत्यपि त्रिवृत्करणे वैशेष्यादेष तेजोबन्नविशेषवादो भूतभौतिकविषय उपपद्यते । तद्वादस्तद्वाद इति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति ॥ २ ॥ ४ ॥ २२ ॥ इति संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ९ ॥

इति श्रीमद्गोविन्दभगवत्पादपूज्यशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये लिङ्गशरीरश्रुतीनां विरोधपरिहाराख्यो द्वितीयाऽध्यायस्य चतुर्थः पादः समाप्तः ॥ २ ॥ ४ ॥

---

रत्नप्रभा ।

अत्राहेति॥तदुत्तरत्वेन सूत्रं व्याचष्टे-तुशब्देनेति॥स्वभावाधिक्यं वैशेष्यं किमर्थं कृतमित्यत आह-व्यवहारप्रसिद्ध्यर्थमिति॥एवं स्मृतिन्यायमतान्तरश्रुतिभिरविरोधो ब्रह्मणि वेदान्ततात्पर्यस्येति सिद्धम्॥२।४।२२(९)॥

इति श्रीमद्गोविन्दानन्दकृतौ शारीरकमीमांसाव्याख्यायां रत्नप्रभायां द्वितीयाध्यायस्य चतुर्थः पादः॥२॥४॥

भामती ।

दर्शयन्नाह पूर्वपक्षी–यदि सर्वमेव इति ॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥ त्रिवृत्करणाविशेषेऽपि यस्य च यत्र भूयस्त्वं तेन तस्य व्यपदेश इत्यर्थः ॥ २ ॥ ४ ॥ २२ ॥ ( ९ ) ॥

इति श्रीवाचस्पतिमिश्रकृते श्रीमच्छारीरकभाष्यविभागे भामत्यां द्वितीयस्याध्यायस्य चतुर्थः पादः ॥२॥४॥

आनन्दगिरीय–न्यायनिर्णयः ।

चोदयति–अत्रेति । बाह्ये व्यवहारविशेषासंभवमुक्त्वा देहेऽपि तदसंभवमाह–तथेति । उत्तरसूत्रमवतारयति–अत्रेति । तदक्षराणि व्याचष्टे–तुशब्देनेति । भूयस्त्वं विवृणोति–सत्यपीति । दृष्टं भूयस्त्वमुदाहरति–अग्नेरिति । अफलत्वादप्रतिपाद्यं त्रिवृत्करणमित्याशंक्याऽऽह–व्यवहारेति । एकैकभूतगोचरत्वेनापि व्यवहारस्य सुकरत्वान्न तादर्थ्येन त्रिवृत्करणमित्याशंक्याह–व्यवहारश्चेति । केवलभूततन्मात्राणामिन्द्रियागोचरत्वात्तदर्थं तदुक्तिरित्यर्थः । उक्तमनूद्यावशिष्टं भागं व्याचष्टे–तस्मादिति । विरोधसमाधिमुपसंहरन्पदाभ्यासस्य तात्पर्यमाह–तद्वाद इति ॥ २ ॥ ४ ॥ २२ ॥ ( ९ ) ॥

इति श्रीभगवदानन्दगिरि (ज्ञान) कृते शारीरकभाष्यन्यायनिर्णये द्वितीयाध्यायस्य चतुर्थः पादः ॥२॥४॥

**॥ इति द्वितीयाध्यायस्य लिङ्गशरीरश्रुतीनां विरोधपरिहाराख्यश्चतुर्थः पादः ॥**

**इति श्रीमद्ब्रह्मसूत्रशांकरभाष्येऽविरोधाख्यो द्वितीयोऽध्यायः ॥ २ ॥**



तत्सद्ब्रह्मणे नमः ।

# अथ ब्रह्मसूत्रशांकरभाष्यम्

## रत्नप्रभा–भामती–न्यायनिर्णय–टीकात्रयसमेतम् ।



## तृतीयोऽध्यायः ३.



### तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्न-निरूपणाभ्याम् ॥ ३ ॥ १ ॥ १॥ (१) ॥

द्वितीयेऽध्याये स्मृतिन्यायविरोधो वेदान्तविहिते ब्रह्मदर्शने परिहृतः । परपक्षाणां चानपेक्षत्वं प्रपञ्चितम् । श्रुतिविप्रतिषेधश्च परिहृतः । तत्र च जीवव्यतिरिक्तानि तत्त्वानि जीवोपकरणानि ब्रह्मणो जायन्त इत्युक्तम् ॥ अथेदानीमुपकरणोपहितस्य जीवस्य संसारगतिप्रकारः, तदवस्थान्तराणि, ब्रह्मसतत्त्वं, विद्याभेदाभेदौ, गुणोपसंहारानुपसंहारौ,

रत्नप्रभा ।

ॐ ब्रह्मणे नमः ॥ यं हि वैराग्यसम्पन्नास्तत्त्वमर्थविवेकिनः ॥ लभन्ते साधनैर्दान्तास्तं सीतानायकं भजे ॥ १ ॥ वृत्तमनूद्य तृतीयाध्यायार्थमाह–द्वितीय इत्यादिना ॥ अविरुद्धे वेदान्तार्थे तज्ज्ञानसाधनचिन्तावसर

भामती ।

तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् । द्वितीयतृतीयाध्याययोर्हेतुहेतुमद्भावलक्षणं संबन्धं दर्शयन् सुखाववोधार्थमर्थसंक्षेपमाह––द्वितीयेऽध्याय इति । स्मृतिन्यायश्रुतिविरोधपरिहारेण हि अनध्यवसायलक्षणमप्रामाण्यं परिहृतं तथा च प्रामाण्ये निश्चलीकृते तार्तीयो विचारो भवत्यन्यथा तु निर्बीजतया न सिध्येदिति। अवान्तरसंगतिं दर्शयितुं तत्र च जीवव्यतिरिक्तानि तत्त्वानि

आनन्दगिरीय–न्यायनिर्णयः ।

जीवोपकरणभूतभौतिकजन्मादिनिरूपणानन्तरं तदुपहितजीवस्य संसारप्रकारं निरूपयितुं देहान्तरारम्भे भूतसूक्ष्मपरिष्वक्तस्यैव गमनमिति तावदाह–तदन्तरेति । हेतुहेतुमद्भावसंबन्धमध्याययोर्वक्तुं पूर्वाध्यायार्थं संक्षिपति–द्वितीय इति । ब्रह्मणि निरपवादे समन्वये स्मृतिन्यायश्रुतिविरोधनिरासेनानध्यवसायरूपाप्रामाण्याभावात्तार्तीयविचारावसरः स्यादिति हेतुहेतुमत्त्वलक्षणसंगतिरिति भावः । अनन्तरपादस्यावान्तरसंगत्यर्थं तदुपयुक्तमनुद्रवति–तत्र चेति । तथा च तैरुपहितस्य जीवस्य संसारप्रकारविचारोऽवतरतीति शेषः । इदानीं तार्तीयमर्थं सौकर्यार्थं पादशो विभज्य दर्शयति–अथेति । वैराग्यपादार्थं संगृह्य पदार्थं संगृह्णाति–तदिति । संसाराद्विरक्तस्य मुमुक्षोर्मोक्षहेत्वपरोक्षवाक्यार्थज्ञानसाधनलक्ष्यपदार्थज्ञानाय जीवस्यावस्थान्तराणि ब्रह्मस्वरूपं च निरूप्यत इत्यर्थः । तृतीयपादार्थमाह–विद्येति । निर्गु-

सम्यग्दर्शनात्पुरुषार्थसिद्धिः, सम्यग्दर्शनोपायविधिप्रभेदः, मुक्तिफलानियमश्चेत्येतदर्थजातं तृतीयेऽध्याये चिन्तयिष्यते । प्रसङ्गागतं च किमप्यन्यत ॥ तत्र प्रथमे तावत्पादे पञ्चाग्निविद्यामाश्रित्य संसारगतिप्रभेदः प्रदर्श्यते । वैराग्यहेतोः । "तस्माज्जुगुप्सेत" [ छां० ५ । १० । ८ ] इति चान्ते श्रवणात् । जीवो मुख्यप्राणसचिवः सेन्द्रियः समनस्कोऽविद्या-

रत्नप्रभा ।

इत्यनयोर्हेतुहेतुमद्भावः । लिङ्गोपाधिसिद्धौ तदुपहितजीवसंसारचिन्तेति पादयोरपि तद्भावसंगतिः । अत्र प्रथमपादे वैराग्यं, द्वितीये स्वप्नाद्यवस्थोक्त्या त्वम्पदार्थो, ब्रह्मतत्त्वं चोच्यते । तृतीये वाक्यार्थः, तदर्थमुपासनाश्च विचार्यन्ते । चतुर्थपादार्थमाह—सम्यग्दर्शनादिति ॥ दर्शनोपायाः—संन्यासादयः । मुक्तिरूपफलस्य स्वर्गवत् तारतम्यनियमाभावः । एकरूपत्वमिति यावत् । प्रसंगागतं देहात्मदूषणम् । पञ्चसु द्युपर्जन्यपृथिवीपुरुषयोषित्सु अग्नित्वध्यानं—पञ्चाग्निविद्या । यस्मात् कर्मणा गत्यागतिरूपोऽनर्थः, तस्मात् कर्मफले जुगुप्सां—घृणां विरक्तिं कुर्वीतेति पञ्चाग्निविद्योपसंहारे श्रवणाद्वैराग्यार्थं प्रदर्श्यते इत्यन्वयः । शास्त्रादिसूत्रे नित्यानित्यविवेककृतं वैराग्यमुक्तम्, इह तद्दार्ढ्यं गत्यागतिक्लेशभावनाकृतं तदुच्यत इत्यपौनरुक्त्यम् ॥ अधिकरणविषयमाह—जीव इति ॥ अविद्या प्रसिद्धा । विद्येति

भामती ।

जीवोपकरणानि चेत्युक्तम् । अध्यायार्थसंक्षेपमुक्त्वा पादार्थसंक्षेपमाह—तत्र प्रथमे तावत्पाद इति । तस्य प्रयोजनमाह—वैराग्य इति । पूर्वापरपरिशोधनाय भूमिकामारचयति—जीवो मुख्यप्राण

आनन्दगिरीय—न्यायनिर्णयः ।

णब्रह्मवाक्यस्यापुनरुक्तपदोपसंहाराय मन्दाधिकारिणां सगुणोपासनैकरूप्याय च सर्वशाखासु विद्या भिन्नाऽभिन्ना वा गुणानामुपसंहारो न वेति विचार्यत इत्यर्थः । चतुर्थपादार्थमाह—सम्यगिति । विरक्तस्य लक्ष्यपदार्थज्ञस्य सर्वशाखास्वपुनरुक्तशब्दोपसंहारेणैकरूपवाक्यज्ञानवतो यज्ज्ञानं तावन्मात्रादेव पुरुषार्थस्तद्धेतूनां च यज्ञादिविधीनां शमादिविधीनां च बहिरङ्गत्वान्तरङ्गत्वभेदः शुद्धसत्त्वानां बहिरङ्गापोहेनान्तरङ्गग्रहायोच्यते । यस्मिञ्जन्मनि ज्ञानसाधनानुष्ठानं तस्मिन्नेव जन्मनि ज्ञानोदयेन मुक्तिरित्यनियमो जन्मान्तरीयसंस्कारस्यापि हेतुत्वादित्यर्थः । अध्यायार्थं संक्षिप्य निगमयति—इत्येतदिति । लोकायतिकमतनिरसनमपि समधिकमत्रास्तीत्याशंक्याऽऽह—प्रसंगेति । अध्यायार्थं संक्षिप्य पादार्थं संक्षिपति—तत्रेति । पञ्चसु द्युपर्जन्यपृथिवीपुरुषयोषित्स्वग्निदृष्ट्योपासनं पञ्चाग्निविद्या तामाश्रित्य संसारे पुण्यपापफलगतिप्रकारोऽत्र निरूप्यत इति यावत् । तस्यापि प्रदर्शनमेव न प्रतिपादनमिति मत्वोक्तं प्रदर्श्यत इति । पुमर्थसाधनमेवात्र निरूप्यं किमर्थं संसारगतिप्रदर्शनं तत्राऽऽह—वैराग्येति । अनेकायासं कर्म कृत्वाऽपि न स्वातन्त्र्यं क्वापि लभ्यते तेन कृतं कर्मतत्फलाभ्यामित्यर्थः । पञ्चाग्निविद्योपास्तिरस्मिन्प्रकरणे विधीयते न वैराग्याय संसारगतिरित्याशंक्योपसंहारालोचनया संसारगतिरत्र विवक्षितेत्याह—तस्मादिति । यस्मात्कर्मफलभूतः संसारो गत्यागतिरूपोऽनर्थस्तस्माज्जुगुप्सां घृणां कुर्वीत कर्मफले विद्वानिति पञ्चाग्निविद्योपसंहारे श्रवणादत्र वैराग्याय संसारगतिरभिहिता । यद्यपि विरक्तस्याधिकाराद्वैराग्यं शास्त्रादावधिकारिविशेषणं सिद्धं तथाऽपि तदेव युक्त्या दृढी क्रियत इति भावः । आद्यपादतात्पर्यमुक्त्वा तदवयवाद्याधिकरणविषयमाह—जीव इति । देहान्तरप्राप्तौ सहायसत्त्वं दर्शयति—मुख्येति । तत्र प्रधानकारणमाह—अविद्येति ।

१ समनस्कः विद्येति पाठान्तरम् ।

**कर्मपूर्वप्रज्ञापरिग्रहः पूर्वदेहं विहाय देहान्तरं प्रतिपद्यत इत्येतदवगतम्। "अथैनमेते प्राणा अभिसमायन्ति" [ बृ० ४।४।१ ] इत्येवमादेः "अन्यन्नवतरं कल्याणतरꣳ रूपं कुरुते" [ बृ० ४।४।४ ] इत्येवमन्तात्संसारप्रकरणस्थाच्छब्दाद्। धर्माधर्मफलोपभोगसम्भवाच्च। स किं देहबीजैर्भूतसूक्ष्मैरसम्परिष्वक्तो गच्छति आहोस्वित्-सम्परिष्वक्त इति चिन्त्यते॥ किन्तावत् प्राप्तम्-असम्परिष्वक्त इति॥ कुतः॥ करणोपादानवद्भूतोपादानस्याश्रुतत्वात्। "स एतास्तेजोमात्राः समभ्याददानः" [ बृ० ४।४।१ ] इत्यत्र तेजोमात्राशब्देन करणानामुपादानं संकीर्तयति। वाक्यशेषे चक्षुरादिसंकीर्तनात्। नैवं भूतमात्रोपादानसंकीर्तनमस्ति। सुलभाश्च सर्वत्र भूतमात्राः-यत्रैव देह आरब्ध-**

रत्नप्रभा।

पाठे उपासना ग्राह्या। **कर्म** धर्माधर्माख्यम्। **पूर्वप्रज्ञा** जन्मान्तरसंस्कारः। **अथ** मरणकाले प्राणा हृदये जीवेनैकीभवन्तीत्यर्थः। **रूपं** शरीरम्। पञ्चीकृतभूतभागाः उत्तरदेहपरिणामिनः-**भूतसूक्ष्माः**। वेदान्तार्थज्ञानसाधनविचारत्वात् सर्वाधिकरणानां **श्रुतिशास्त्राध्यायसङ्गतयः**। वैराग्यफलकत्वादेतत्पादसंगतिः॥ पूर्वाधिकरणे व्यवहारार्थं पञ्चीकरणमुक्तम्। स व्यवहारोऽत्र निरूप्यत इति फलफलिभावो-

भामती।

**सचिव इति।** **करणोपादानवद् भूतोपादानस्याश्रुतत्वादिति।** अत्र च करणोपादनश्रुत्यैव भौतिकत्वात् करणानां भूतोपादानसिद्धेरिन्द्रियोपादानातिरिक्तभूतविवक्षयाधिकरणारम्भः। यदि भूतान्यादायागमिष्यत्तदा तदपि करणोपादानवदेवाश्रोष्यत्। न च श्रूयते तस्मान्न भूतपरिष्वक्तो रंहत्यपि तु करणमात्रपरिष्वक्तः न ह्यागमैकगम्येऽर्थे तदभावः प्रमेयाभावं न परिच्छेत्तुमर्हति। न च देहान्तरारम्भान्यथानुपपत्त्या भूतपरिष्वक्तस्य रंहणकल्पनेति युक्तमित्याह—**सुलभाश्च सर्वत्र भूतमात्रा इति।**

आनन्दगिरीय-न्यायनिर्णयः।

अनाद्यनिर्वाच्या चित्प्रतिबिम्बनिमित्ततया जीवत्वहेतुरविद्या। **कर्म** शुभाशुभव्यामिश्ररूपम्। **पूर्वप्रज्ञा** जन्मान्तरीयसंस्कारः। ते परिग्रहाः प्रधानभूताः संसरणे यस्य स तथा। प्रमितस्य विषयत्वात्किंमत्र प्रमाणं तदाह-**अथेति**। देहान्तरप्रेप्सानन्तर्यमथशब्दार्थः। न केवलं शब्दादेव तदवगतं युक्तितश्चेत्याह-**धर्मेति**। नियतदेशकालफलभोगान्यथानुपपत्त्याऽपि देहान्तरसंचरणं सिद्धमित्यर्थः। देहान्तरसंचारिणं जीवं विषयीकृत्य वादिविप्रतिपत्तेः संदेहमाह-**स किमिति**। देहशब्दो भाविविषयः। आद्ये निराश्रयप्राणगत्यभावान्न वैराग्यम्। चरमे भूतपरिष्वङ्गे प्राणानां नरकादिगतेर्वैराग्यम्। इत्युभयत्र फलम्। अत्र च परिष्वक्तरंहणनिरूपणेन वैराग्यदृढीकरणादधिकारिसिद्धौ तस्य शास्त्रे प्रवृत्तिरिति पादादिसंगतिरित्यंगीकृत्य पूर्वपक्षमाह-**किमित्यादिना**। करणैरिव भूतैरपि परिष्वक्तस्यैव रंहणमिति शङ्कते-**कुत इति**। वैधर्म्यं दर्शयन्नुत्तरमाह-**करणेति**। करणोपादाने मानमाह-**स इति**। तेजोमात्राशब्दस्य करणविषयत्वे हेतुमाह-**वाक्येति**। स यत्रैष चाक्षुषः पुरुष[१] इत्यादाविति यावत्। प्रश्नप्रतिवचनाभ्यामत्र गमने गम्यमाने कथं भूतमात्राणामुपादानासंकीर्तनं तत्राऽऽह-**नैवमिति**। आपः पुरुषवचसो भवन्तीत्यपां पुरुषवचनक्रियायोगमात्रं भाति न पुरुषोपादानत्वम्। न च पञ्चसु स्थानेष्वपां गमनमस्ति श्रद्धादीनामेव होम्यत्वावगमात्। यद्यपि करणानां भौतिकत्वात्तदुपादानश्रुत्यैव भूतोपादानमर्थाक्षिप्तं तथाऽपीन्द्रियोपादानापञ्चीकृतभूतांशान्यभूतविवक्षयेदमश्रुतत्वमिति भावः। देहान्तरारम्भान्यथानुपपत्त्या भूतपरिष्वक्तस्य गमनमित्याशंक्याऽऽह-**सुलभाश्चेति**। परिष्वंगे मानफल-

१ "स यत्रैष चाक्षुषः पुरुषः" [ बृ० ४।४।१ ]

व्यस्तत्रैव सन्ति । ततश्च तासां नयनं निष्प्रयोजनम् ॥ तस्मादसंपरिष्वक्तो यातीति ॥ एवं प्राप्ते पठत्याचार्यः–"तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः" इति । तदन्तरप्रतिपत्तौ देहाद्देहान्तरप्रतिपत्तौ देहबीजैर्भूतसूक्ष्मैः सम्परिष्वक्तो रंहति गच्छतीत्यवगन्तव्यम् ॥ कुतः ॥ प्रश्ननिरूपणाभ्याम् । तथाहि प्रश्नः–"वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" [ छां० ३ । ३ ] इति । निरूपणं च प्रतिवचनम् । द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्टचन्नरेतोरूपाः पञ्चा-

रत्नप्रभा ।

ऽवान्तरसंगतिः । अत्र पूर्वपक्षे निराश्रयप्राणगत्यभावात् न वैराग्यं सिध्यति । सिद्धान्ते भूताश्रयप्राणगतेर्वैराग्यमिति फलभेदः । तेजोमात्राः चक्षुरादयः । पश्यति जिघ्रतीति वाक्यशेषात् । आपः पञ्चस्वग्निषु हुताः पञ्चम्यामाहुतौ हुतायां यथा पुरुषशब्दवाच्याः पुरुषात्मना परिणमन्ते, तथा किं त्वं वेत्थेति श्वेतकेतुं प्रति राज्ञः प्रवाहणस्य प्रश्नः। तस्य चोत्तराज्ञाने तत्पितरं प्रति राजोवाच [छां० ५।४।१ ( बृ० ६।२।९) ]–"असौ वाव लोको गौतमाग्निः, तत्र श्रद्धाख्याः आपः आहुतिः पर्जन्याग्नौ सोमरूपा,–इह

भामती ।

द्युपर्जन्य इति । इह हि कायारम्भणमग्निहोत्रापूर्वपरिणामलक्षणं श्रद्धादित्वेन पञ्चधा प्रविभज्य द्युप्रभृतिष्वग्निषु होतव्यत्वेनोपासनमुत्तरमार्गप्रतिपत्तिसाधनं विवक्षन्त्याह श्रुतिः–'असौ वाव लोको गौतमाग्निः' इत्यादि । अत्र सायंप्रातरग्निहोत्राहुती, हुते पयआदिसाधने श्रद्धापूर्वमाहवनीयाग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गभाविते कर्त्रादिकारकभाविते चान्तरिक्षं क्रमेणोत्क्राम्य द्युलोकं प्रविशन्त्यौ सूक्ष्मभूते द्रवद्रव्यपयःप्रभृत्यप्संबन्धादप्शब्दवाच्ये, श्रद्धाहेतुकत्वाच्च श्रद्धाशब्दवाच्ये । तयोराहुत्योरधिकरणमग्निरन्ये च समिद्धूमार्चिरङ्गारविस्फुलिङ्गा रूपकत्वेन निर्दिश्यन्ते । असौ वाव द्युलोको गौतमाग्निः । यथाग्निहोत्राधिकरणमाहवनीय एवं श्रद्धाशब्दवाच्याग्निहोत्राहुतिपरिणामावस्थारूपाः सूक्ष्मा या आपः श्रद्धाभावितास्तदधिकरणं द्युलोकः । अस्यादित्य एव समित् । तेन हीद्धोऽसौ द्युलोको दीप्यतेऽतः समिन्धनात्समित् तस्यादित्यस्य रश्मयो धूमा इन्धनादिवादित्याद्रश्मीनां समुत्थानात् । अहरर्चिः । प्रकाशसामान्यादादित्यकार्यत्वाच्च । चन्द्रमा अङ्गारः । अर्चिषः प्रशमेऽभिव्यक्तेः । नक्षत्राण्यस्य विस्फुलिङ्गाः । चन्द्रमसोऽङ्गारस्यावयवा इव विप्रकीर्णतासामान्याद्विस्फुलिङ्गाः । तदेतस्मिन्नग्नौ देवा यजमानप्राणा अग्न्यादिरूपा अधिदेवम् । श्रद्धां जुह्वति श्रद्धा चोक्ता । पर्जन्यो वाव गौतमाग्निः । पर्जन्यो नाम वृष्ट्युपकरणाभिमानी देवताविशेषः । तस्य वायुरेव समित् । वायुना हि पर्जन्योऽग्निः समिध्यते, पुरोवातादिप्राबल्ये वृष्टिदर्शनात् । अभ्रं धूमः। धूमकार्यत्वात् धूमसादृश्याच्च । विद्युदर्चिः । प्रकाशसामान्यात् । अशनिरङ्गाराः काठिन्याद्विद्युत्संबन्धाच्च । गर्जितं मेघानां विस्फुलिङ्गाः, विप्रकीर्णतासामान्यात् । तस्मिन्देवा यजमानप्राणा अग्निरूपाः सोमं राजानं जुह्वति तस्य सोमस्याहुतेर्वर्षं भवति । एतदुक्तं भवति–श्रद्धाख्या आपो द्युलोकमाहुतित्वेन प्रविश्य चन्द्रा-

आनन्दगिरीय–न्यायनिर्णयः ।

योरभावे फलितमुपसंहरति–तस्मादिति । पूर्वपक्षमनुभाष्य प्रतिज्ञामवतार्य व्याकरोति–एवमिति । परिष्वङ्गे मानाभावान्नैवमित्युक्तमाशंक्य सौत्रं हेतुमादाय व्याचष्टे–कुत इति । पञ्चसु स्थानेष्वापो हुताः पञ्चम्यामाहुतौ हुतायां यथा पुरुषशब्दवाच्याः पुरुषाकारेण परिणमन्ते तथा किं त्वं वेत्थेति श्वेतकेतुं प्रति प्रवाहणस्य प्रश्नः । तस्य चोत्तराज्ञाने तत्पितरं प्रति निरूपणं राज्ञा कृतम् । "असौ वाव लोको गौतम" इत्यादिना । तदिदं संक्षिप्याऽऽह–द्युपर्जन्येति । द्युप्रभृतीनामग्नीनामग्नित्वं होमाधारत्वसाम्या-

१. पश्यति जिघ्रतीत्यादिपदघटितवाक्यशेषादित्यर्थः । "एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुः" [ बृ० ४।४।२ ] इत्याद्युक्तेः ।

**ह्रुतीर्दर्शयित्वा "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" [छां० ५।९।१] इति ॥ तस्मादद्भिः परिवेष्टितो जीवो रंहति व्रज-**

रत्नप्रभा ।

खल्वग्निहोत्रे श्रद्धया हुता, दध्यादिरूपा आपो यजमानसंलग्नाः स्वर्गे लोके प्राप्य सोमाख्यदिव्यदेहात्मना स्थिताः, कर्मान्ते द्रुताः पर्जन्ये हूयन्ते । ततो वृष्टिरूपाः, पृथिव्यामन्नरूपाः, पुरुषे रेतोरूपाः, योषिति हुताः आपः पुरुषशब्दवाच्याः पुमात्मका भवन्ति" इति निरूपणं कृतम् । नन्वेतद्देहं त्यक्त्वाऽद्भिः सह गतस्य पश्चाद्देहान्तरप्राप्तिरित्युक्तम् । यथा-तृणजलायुका तृणान्तरं गृहीत्वा पूर्वतृणं त्यजति, तथा

भामती ।

कारेण परिणताः सत्यो द्वितीये पर्याये पर्जन्याग्नौ हुता वृष्टित्वेन परिणमन्त इति । 'पृथिवी वाव गौतमाग्निः' तस्य पृथिव्याख्यस्याग्नेः संवत्सर एव समित् संवत्सरेण कालेन हि समिद्धा भूमिर्व्रीह्यादिनिष्पत्तये कल्पते । आकाशो धूमः पृथिव्यग्नेरुत्थित इवाकाशो दृश्यते । रात्रिरर्चिः पृथिव्याः श्यामाया अनुरूपा श्यामतया रात्रिरग्नेरिवानुरूपमर्चिः । दिशोऽङ्गाराः प्रगे रात्रिरूपार्चिःशमने उपशान्तानां प्रसन्नानां दिशां दर्शनात् । अवान्तरदिशो विस्फुलिङ्गाः क्षुद्रत्वसाम्यात् । तस्मिन्नग्नौ श्रद्धासोमपरिणामक्रमेणागता अपो वृष्टिरूपेण परिणता देवा जुह्वति तस्या आहुतेरन्नं व्रीहियवादि भवति । पुरुषो वाव गौतमाग्निस्तस्य वागेव समित् वाचा खल्वयं ताल्वाद्यष्टस्थानस्थितया वर्णपदवाक्याभिव्यक्तिक्रमेणार्थजातं प्रकाशयन् समिध्यते । प्राणो धूमः धूमवन्मुखान्निर्गमात् । जिह्वार्चिः लोहितत्वसाम्यात् । चक्षुरङ्गाराः प्रभाश्रयत्वात् । श्रोत्रं विस्फुलिङ्गाः विप्रकीर्णत्वात् । ता एवापः श्रद्धादिपरिणामक्रमेणागताः व्रीह्यादिरूपैः परिणताः सत्यः पुरुषेऽग्नौ हुतास्तासां परिणामो रेतः संभवति । योषा वाव गौतमाग्निः तस्या उपस्थ एव समित् । तेन हि सा पुत्राद्युत्पादनाय समिध्यते यदुपमन्त्रयते स धूमः स्त्रीसंभवादुपमन्त्रणस्य । लोमानि वा धूमः योनिरर्चिः लोहितत्वात् । यदन्तः करोति मैथुनं तेऽङ्गाराः । अभिनन्दाः सुखलवा विस्फुलिंगाः, क्षुद्रत्वात् । तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः संभवति । एवं श्रद्धासोमवर्षान्नरेतोहवनक्रमेण योषाग्निं प्राप्यापो गर्भाख्या भवन्ति । तत्राप्समवायित्वादापः पुरुषवचसो भवन्ति पञ्चम्यामाहुताविति । यतः पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति तस्मादद्भिः परिवेष्टितो जीवो रंहतीति गम्यते । एतदुक्तं भवति-श्रद्धाशब्दवाच्या आप इत्यग्रे वक्ष्यति, तासां त्रिवृत्कृततया तेजोऽन्नाविनाभावेनाब्ग्रहणेन तेजोऽन्नयोरपि संग्रह इत्येतदपि वक्ष्यते । यद्यप्येतावतापि भूतवेष्टितस्य जीवस्य रंहणं नावगम्यते तेजोबन्नानां पञ्चम्यामाहुतौ पुरुषवचस्त्वमात्रश्रवणात्, तथापीष्टादिकारिणां धूमादिना पितृयानेन पथा चन्द्रलोकप्राप्तिकथनपरया 'आकाशाच्चन्द्रमसमेष सोमो राट्' इति श्रुत्या सह 'श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति' इत्यस्याः श्रुतेः मानत्वाद्गम्यते भूतपरिष्वक्तो रंहतीति । तथाहि-या एवापो हुता द्वितीयस्यामाहुतौ सोमभावं गतास्ताभिरेव परिष्वक्तो जीव इष्टादिकारी चन्द्रभूयं गतश्चन्द्रलोकं प्राप्त इति । ननु स्वतन्त्रा आपः श्रद्धादिक्रमेण सोमभावमाप्नुवन्तु ताभिरपरिष्वक्त एव तु जीवः सेन्द्रियमात्रो गत्वा सोमभावमनुभवतु । को दोषः । अयं दोषः । यतः श्रुतिसामान्यातिक्रम इति । एवं हि श्रुतिसामान्यं कल्पेत यदि येन रूपेण येन च क्रमेणापां सोमभावस्तेनैव जीवस्यापि सोमभावो भवेत् । अन्यथा तु न श्रुतिसामान्यं

आनन्दगिरीय-न्यायनिर्णयः ।

ह्वयानार्थे संपादितम् । श्रद्धादीनामाहुतित्वं च तत्रतत्र संनिपातमात्रेणोक्तम् । किंच, पञ्चमे स्थाने गर्भाकारेणाऽऽपः परिणमन्तीत्युपक्रमोपसंहारयोरेकवाक्यत्वावगतेः । सिद्धान्तेन तत्परिवेष्टितो गच्छतीत्याह-इति त्विति । प्रश्नादीनां फलितं निगमयति-तस्मादिति । अशरीरस्य गतिश्चेदद्भिः संपरि-

तीति गम्यते ॥ नन्वन्या श्रुतिः जलूकावत्पूर्वदेहं न मुञ्चति यावन्न देहान्तरमाक्रमतीति दर्शयति—"तद्यथा तृणजलायुका" [ बृ० ४ । ४ । ३ ] इति ॥ तत्राप्यपरिवेष्टितस्यैव जीवस्य कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं जलूकयोपमीयत इत्यविरोधः ॥ एवं श्रुत्युक्ते देहान्तरप्रतिपत्तिप्रकारे सति याः पुरुषमतिप्रभवाः प्रकल्पनाः व्यापिनां करणानामात्मनश्च देहान्तरप्रतिपत्तौ कर्मवशाद् वृत्तिलाभस्तत्र भवति, केवलस्यैव चात्मनो वृत्तिलाभस्तत्र भवति,

---

रत्नप्रभा ।

जीवो देहान्तरं गृहीत्वा पूर्वदेहं त्यजतीति श्रुतिविरोधादिति शङ्कते—नन्वन्येति ॥ इहैव कर्मायत्तभाविदेहं देवोऽहमित्यादिभावनया गृहीत्वा पूर्वदेहं त्यजतीति श्रुत्यर्थः । अतो न विरोधः इति समाधत्ते—तत्रापीति ॥ भावनाया दीर्घीभावः भाविदेहविषयत्वम् । घटाकाशवदुपहितो जीवः सूक्ष्मोपाधिगत्या लोकान्तरं गच्छतीति पञ्चाग्निश्रुत्युक्तः प्रकारस्तद्विरोधादन्याः कल्पनाः सर्वा अनादर्तव्या इत्यन्वयः ॥ साङ्ख्यकल्पनामाह—व्यापिनामिति ॥ सुगतकल्पनामाह—केवलस्येति ॥ निर्विकल्पकज्ञानसन्तानरूप-

भामती ।

स्यात् । तस्मात्परिष्वक्तापरिष्वक्तरंहणविशये श्रुतिसामान्यानुरोधेन परिष्वक्तरंहणं निश्चीयते । अतो दधिपयःप्रभृतयो द्रवभूयस्त्वादापो हुताः सूक्ष्मीभूता इष्टादिकारिणमाश्रिता नेन्धनेन विधिना देहे हूयमाने हुताः सत्य आहुतिमय्य इष्टादिकारिणं परिवेष्ट्य स्वर्गं लोकं नयन्तीति । चोदयति—नन्वन्या श्रुतिरिति । अयमर्थः—एवं हि सूक्ष्मदेहपरिष्वक्तो रंहेत् यद्यस्य स्थूलं शरीरं रंहतो न भवेत् । अस्ति त्वस्य वर्तमानस्थूलशरीरयोग आदेहान्तरप्राप्तेस्तृणजलायुकानिदर्शनेन, तस्मान्निदर्शनश्रुतिविरोधान्न सूक्ष्मदेहपरिष्वक्तो रंहतीति । परिहरति—तत्रापीति । न तावत्परमात्मनः संसरणसंभवः, तस्य नित्यशुद्धबुद्धमुक्तस्वभावत्वात् । किंतु जीवानाम् । परमात्मैव चोपाधिकल्पितावच्छेदो जीव इत्याख्यायते, तस्य च देहेन्द्रियादेरुपाधेः प्रादेशिकत्वान्न तत्र सन् देहान्तरं गन्तुमर्हति । तस्मात्सूक्ष्मदेहपरिष्वक्तो रंहतिकर्मोपस्थापितः प्रतिपत्तव्यः प्राप्तव्यो यो देहस्तद्विषयाया भावनाया उत्पादनाया दीर्घीभावमात्रं जलूकयोपमीयते । सांख्यानां कल्पनामाह—व्यापिनां करणानामिति । आहंकारिकत्वात्करणानामहंकारस्य च जगन्मण्डलव्यापित्वात्करणानामपि व्यापितेत्यर्थः । बौद्धानां कल्पनामाह—केवलस्यैवात्मन इति । आल-

आनन्दगिरीय—न्यायनिर्णयः ।

य्वक्तस्य सा कल्प्येत न तु तस्य गतिः । किंतु यथा तृणजलायुका तृणान्तरं गृहीत्वा पूर्वतृणं त्यजति तथा जीवोऽपि देहान्तरं गृहीत्वैव पूर्वं देहं मुञ्चति तेन श्रुत्यन्तरविरोधान्न परिष्वक्तरंहणमिति शङ्कते—नन्विति । प्रश्नप्रत्युक्तिश्रुत्यपेक्षया बृहदारण्यकश्रुतिरन्योक्ता । अपरिवेष्टितस्य गत्युक्तिश्रुतेर्गत्यन्तराभावाद्दृष्टान्तश्रुतेश्च तद्भावान्न विरोधोऽस्तीत्याह—तत्रापीति । कर्मोपस्थापितः प्रतिपत्तव्यः प्राप्तव्यो यो देहस्तद्विषये भावनाया देवोऽहमित्यादिकाया दीर्घीभावो व्यवहितार्थालम्बनत्वं तावन्मात्रं जलूकयोपमीयत इति योजना । जीवो हि संसरन्देहेन्द्रियाद्युपाधिः स्वयं प्रादेशिकत्वान्न तत्रस्थो देहान्तरं गन्तुमर्हत्यतः सूक्ष्मदेहेनैव परिष्वक्तो रंहतीति भावः । सांख्यादयोऽन्यथा देहान्तरप्राप्तिमाहुस्तथैव किं न गृह्यतेत्याशंक्य श्रुतिविरोधादित्याह—एवमिति । याः पुरुषमतिप्रभवास्ताः सर्वा एवानादर्तव्या इति संबन्धः । तत्र सांख्यीयकल्पनामाह—व्यापिनामिति । करणानामाहंकारिकत्वात्तस्य व्यापित्वात्तेषामात्मनां च विभुत्वे किमिति शरीरे वृत्तिलाभो नियम्यते तत्राऽऽह—कर्मेति । सौगतानां कल्पनामाह—केवलस्येति । आत्म

**इन्द्रियाणि तु देहवदभिनवान्येव तत्रतत्र भोगस्थाने उत्पद्यन्ते, मन एव वा केवलं भोगस्थानमभिप्रतिष्ठते, जीव एव वोत्प्लुत्य देहाद्देहान्तरं प्रतिपद्यते शुक इव वृक्षाद् वृक्षान्तरमित्येवमाद्याः-ताः सर्वा एवानादर्तव्याः । श्रुतिविरोधात ॥ १ ॥ ननूदाहृताभ्यां प्रश्नप्रतिवचनाभ्यां केवलाभिरद्भिः सम्परिष्वक्तो रंहतीति प्राप्नोति । अप्शब्दश्रवणसामर्थ्यात् । तत्र कथं सामान्येन प्रतिज्ञायते सर्वैरेव भूतसूक्ष्मैः सम्परिष्वक्तो रंहतीति ॥ अत उत्तरं पठति-**

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

**तुशब्देन चोदितामाशंकामुच्छिनत्ति । त्र्यात्मिका ह्यापः त्रिवृत्करण-श्रुतेः [ छां० ६ । ३ ] तास्वारम्भिकास्वभ्युपगतास्वितरदपि भूतद्वयम-वश्यमभ्युपगन्तव्यं भवति । त्र्यात्मकश्च देहः । त्रयाणामपि तेजोऽबन्नानां**

---

रत्नप्रभा ।

स्यात्मनो देहान्तरे शब्दादिसविकल्पकज्ञानाख्यवृत्तिलाभो भवतीत्यर्थः ॥ काणादकल्पनामाह-**मन इति** ॥ देहान्तरं प्रति मनोमात्रं गच्छति । इन्द्रियाणि तु नूतनान्येवारभ्यन्ते । दिगम्बरकल्पनामाह-**जीव इति** ॥ ननु पाकस्वेदगन्धरूपकार्यत्रयोपलब्धेस्त्र्यात्मको देह इत्ययुक्तम् । प्राणावकाशयोरप्युपलब्ध्या देहस्य

भामती ।

यविज्ञानसंतान आत्मा तस्य वृत्तिः षट् प्रवृत्तिविज्ञानानि । पञ्चेन्द्रियाणि तु चक्षुरादीनि अभिनवानि जायन्ते । कणभुक्कल्पनामाह-**मन एव चेति** । भोगस्थानं भोगायतनं शरीरमभिनवमिति यावत् । दिगम्बरकल्पनामाह-**जीव एवोत्प्लुत्येति** । आदिग्रहणेन लोकायतिकानां कल्पनां संगृह्णाति । ते हि शरीरात्मवादिनो भस्मीभावमात्मन आहुर्न कस्यचिद्गमनमिति ॥ १ ॥ चोदयति-**ननूदाहृताभ्या-मिति** । अत्र सूत्रेणोत्तरमाह-**त्र्यात्मकत्वात्तु भूयस्त्वात्** । तैजसः कार्यमशितपीताहारपरिपाकः । अपां कार्यं स्नेहस्वेदादि । पृथिव्याः कार्यं गन्धादि । यस्तु गन्धस्वेदपाकप्राणावकाशदानदर्शनाद्देहस्य

आनन्दगिरीय-न्यायनिर्णयः ।

खल्वालयज्ञानसंतानस्तस्य वृत्तयः शब्दादिज्ञानानि तल्लाभः शरीरान्तरे भवति । केवलशब्दस्तु करण-साहित्यमात्मनो वारयति । कथं तर्हि देहान्तरे करणानीत्याशंक्य पञ्चेन्द्रियाणि चक्षुरादीनि गोलकमात्र-त्वान्मनसश्च समनन्तरप्रत्ययमात्रत्वादभिनवानामेव तेषां शरीरान्तरे जन्मेत्याह-**इन्द्रियाणीति** । वैशेषि-ककल्पनामाह-**मन इति** । केवलं करणैरात्मना च रहितमिति यावत् । करणानि नूतनान्येव तत्राऽऽर-भ्यन्त आत्मा तु विभुत्वादक्रियोऽपि तत्र वृत्तिमात्रमाप्नोति । भोगस्थानं भोगायतनं नूतनशरीरमित्यर्थः । दिगम्बरकल्पनामाह-**जीव इति** । वेदबाह्यकल्पनामुपसंहरति-**इत्येवमाद्या इति** । लोकायतकल्प-नामाद्यग्रहणेन संगृह्णाति । ते हि देहमात्रात्मवादिनो भस्मीभावमेवाऽऽत्मनो मन्यन्ते न कस्यचिद्गमनम् । तासामनादर्तव्यत्वे हेतुं स्फुटयति-**श्रुतीति** ॥ १ ॥ भूतसूक्ष्मपरिवेष्टितस्य गमने प्रश्नप्रतिवचनाभ्या-मिति हेतुरुक्तः स विवक्षितार्थसाधको नेत्युत्तरसूत्रव्यावर्त्यां शङ्कामाह-**नन्विति** । हेतोरसाधकत्वशङ्कां प्रत्याह-**अत इति** । सूत्राक्षराणि व्याचष्टे-**तुशब्देनेति** । अपां त्र्यात्मकत्वेऽपि प्रकृते किं जातं तदाह-**तास्विति** । एवं तर्हि भूतत्रयारब्धत्वमेव न त्रिवृत्कृततदारभ्यत्वमित्यपरितोषात्पक्षान्तरमाह-**त्र्यात्मकश्चेति** । पञ्चानां भूतानां कार्यस्य गन्धस्वेदपाकप्राणावकाशदानस्य दर्शनात्कार्यत्रयस्यैवोपल-

तस्मिन्कार्योपलब्धेः । पुनश्च त्र्यात्मकः । त्रिधातुकत्वात्त्रिभिर्वातपित्तश्लेष्मभिः । न स भूतान्तराणि प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते । तस्माद्भूयस्त्वापेक्षोऽयम् । "आपः पुरुषवचसः" [ छां० ५।९।१ ] इति प्रश्नप्रतिवचनयोरपशब्दः, न कैवल्यापेक्षः । सर्वदेहेषु हि रसलोहितादिद्रवभूयस्त्वं दृश्यते ॥ ननु पार्थिवो धातुर्भूयिष्ठो देहेषूपलक्ष्यते ॥ नैष दोषः ॥ इतरापेक्षयाऽपां बाहुल्यं भविष्यति । दृश्यते च शुक्रशोणितलक्षणेऽपि देहबीजे द्रवबाहुल्यम् । कर्म च निमित्तकारणं देहान्तरारम्भे । कर्माणि चाग्निहोत्रादीनि सोमाज्यपयःप्रभृतिद्रवद्रव्यव्यपाश्रयाणि । कर्मसमवायिन्यश्चाऽऽपः श्रद्धाशब्दोदिताः सहकर्मभिर्द्युलोकाख्येऽग्नौ हूयन्त इति वक्ष्यति ॥ तस्मादप्यपां बाहुल्यप्रसिद्धिः । बाहुल्याच्चाप्शब्देन सर्वेषामेव देहबीजानां भूतसूक्ष्माणामुपादानमिति निरवद्यम् ॥ २ ॥

---

रत्नप्रभा ।

पञ्चभूतात्मत्वादित्यरुच्या व्याख्यान्तरमाह—**पुनश्चेति** ॥ देहधारकत्वाद्धातवः—वातादयः तैस्त्रिधातुत्वात्त्र्यात्मक इत्यन्वयः॥ देहस्य केवलाब्जत्वे—वातं पित्तं च—वायव्यं तैजसं च न स्यातामिति भावः॥पृथिवीतरभूतापेक्षयापां बाहुल्यम् । किञ्च देहनिमित्तानां कर्मणामब्बाहुल्यात्ताभिर्भूतान्तराण्युपलक्ष्यन्त इत्याह—**कर्म चेत्यादिना** ॥ २ ॥ उत्क्रान्तौ प्राणाः, देहबीजपञ्चभूताश्रयाः, प्राणत्वाज्जीवद्देहस्थप्राणवदित्याह—

भामती ।

पाञ्चभौतिकत्वं पश्यंस्तेजोवन्नात्मकत्वेन त्र्यात्मकत्वे न परितुष्यति, तं प्रत्याह—**पुनश्च त्र्यात्मक इति** । वातपित्तश्लेष्मभिस्त्रिभिर्धातुभिः शरीरधारणात्मकैस्त्रिधातुत्वात । अतो न स देहो भूतान्तराणि प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते । अब्ग्रहणनियमस्तर्हि कस्मादित्यत आह—**तस्माद् भूयस्त्वापेक्ष इति** । पृथिवीधातुवर्जमितरतेजआद्यपेक्षया कार्यस्य शरीरस्य लोहितादिद्रवभूयस्त्वात्तत्कारणयोश्चोपादा-

आनन्दगिरीय—न्यायनिर्णयः ।

ब्धिरसिद्धेत्यपरितोषात्पक्षान्तरमाह—**पुनश्चेति** । वातपित्तश्लेष्मभिः शरीरधारणात्मकैर्धातुभिस्त्रिधातुत्वात्त्र्यात्मक इति योजना । एवं त्र्यात्मकत्वेऽपि कथं भूतान्तराणामारम्भकत्वं तत्राऽऽह—**नेति** । वातपित्तयोर्वायुतेजोजन्ययोर्देहे दर्शनादित्यर्थः । कथं तर्हि प्रश्नप्रतिवचनयोर्नियमेनापां ग्रहणं तत्राऽऽह—**तस्मादिति** । भूयस्त्वादितिसूत्रावयवमुपसंहारव्याजेन व्याख्यातं प्रत्यक्षावष्टम्भेनोपपादयति—**सर्वेति** । द्रवांशस्य भूयस्त्वादपां ग्रहणम् । कठिनांशस्य ततोऽपि बाहुल्यदृष्टेरयुक्तमपां ग्रहणमिति शङ्कते—**नन्विति** । पञ्चात्मके देहे पार्थिवांशबाहुल्येऽपि भूयस्त्वमपामविरुद्धं भूतान्तरापेक्षया संभवादित्याह—**नैष इति** । किंच, देहोपादानयो रेतोलोहितयोरपां बाहुल्यात्तेनैव भूतान्तरोपलक्षणं युक्तमित्याह—**दृश्यते चेति** । देहनिमित्तानां कर्मणामब्बाहुल्याच्च ताभिर्भूतान्तरलक्षणेत्याह—**कर्म चेति** । सोमादीनामिहैव भस्मीभावान्न तद्गतमब्बाहुल्यं देहान्तरारम्भोपयोगीत्याशंक्याऽऽह—**कर्मेति** । आपो हि स्थूलकर्मसाधनतया तत्संबन्धिन्यः सूक्ष्मरूपेण पुरुषमाश्रिताः श्रद्धाशब्दाः सह कर्मसंस्कारैर्द्युलोकाग्नौ हुताश्चन्द्रलोके देहमारभन्त इति वक्ष्यमाणत्वादस्ति तासां देहारम्भोपयोग इत्यर्थः । निमित्तगतमपि द्रवबाहुल्यं देहारम्भोपयोगीति स्थिते युक्तमद्भिर्भूतान्तरोपलक्षणमित्युपसंहरति—**तस्मादिति** । अप्शब्देन भूतान्तरोपलक्षणे भूतसूक्ष्मपञ्चकपरिवेष्टितस्य युक्तैव गतिरित्याह—**इतीति** ॥ २ ॥ किंच, भौतिकप्राणगत्यनुपपत्त्या तत्कारणभूतग-

## प्राणगतेश्च ॥ ३ ॥

प्राणानां च देहान्तरप्रतिपत्तौ गतिः श्राव्यते-"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" [ बृ० ४। ४। २ ] इत्यादिश्रुतिभिः। सा च प्राणानां गतिराश्रयमन्तरेण न सम्भवतीत्यतः प्राणगतिप्रयुक्तानां तदाश्रयभूतानामपामपि भूतान्तरोपसृष्टानां गतिरवगम्यते। न हि निराश्रयाः प्राणाः क्वचिद्गच्छन्ति तिष्ठन्ति वा। जीवतोऽदर्शनात् ॥ ३ ॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

स्यादेतत्, नैव प्राणा देहान्तरप्रतिपत्तौ सह जीवेन गच्छन्ति । अग्न्यादिगतिश्रुतेः। तथाहि श्रुतिः मरणकाले वागादयः प्राणाः अग्न्यादीन्देवान् गच्छन्तीति दर्शयति "यत्रास्य पुरुषस्य मृतस्याऽग्निं वागप्येति वातं प्राणः" [ बृ० ३। २। १३ ] इत्यादिनेति चेत् ॥ न ॥ भाक्तत्वात्-वागादीनामग्न्यादिगतिश्रुतिर्गौणी लोमसु केशेषु चादर्शनात्-"ओषधीर्लोमानि वनस्पतीन्केशाः" [ बृ० ३ । २ । १३ ] इति हि तत्राम्नायते । न हि लोमानि केशाश्चोत्प्लुत्यौषधीर्वनस्पतींश्च गच्छन्तीति सम्भवति ॥ न च जीवस्य प्राणोपाधिप्रत्याख्याने गमनमवक-

---

रत्नप्रभा ।

प्राणगतेश्चेति ॥ ३ ॥ प्राणानां गतिरसिद्धेत्याशङ्क्य निषेधति-अग्न्यादीति ॥ अदर्शनादोषधिवनस्पतिगमनस्येति शेषः । लोमान्यपियन्तीत्यर्थः । प्राणानामग्न्यादिषु लयस्य मुख्यत्वे जीवस्य गतिभो-

भामती ।

ननिमित्तयोर्द्रवभूयस्त्वादपां पुरुषवचस्त्वोक्तिर्न पुनर्भूतान्तरनिरासार्था ॥ २ ॥ प्राणगतेश्च । प्राणानां जीवद्देहे साश्रयत्वमवगतं गच्छति जीवद्देहे तदनुविधायिनः प्राणा अपि गच्छन्तीति दृष्टम्, अतः षाट्कौशिका देहादुत्क्रामन्तः कस्मिंश्चिदुत्क्रामत्युत्क्रामन्ति । स चैषामनुविधेयः सूक्ष्मो देहो भूतेन्द्रियमय इति गम्यते । न हीन्द्रियमात्राश्रयत्वमेषां दृष्टं यतस्तन्मात्राश्रयाणां गतिरुपपद्येतेति ॥ ३ ॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् । श्राविते ऽपि स्पष्टे जीवस्य प्राणैः सह गमनेऽग्न्यादिगतिशङ्का श्रुति-

आनन्दगिरीय-न्यायनिर्णयः ।

तिरवश्यंभाविनी भूतगतिश्चेदिष्टा देहान्तरारम्भकत्वमपि तेषां स्यादित्याह-प्राणेति । सूत्रं विभजते-प्राणानां चेति । तेषां गमनेऽपि कुतो देहबीजानां भूतानां गतिस्तत्राऽऽह-सा चेति । स्वतन्त्राणामेव प्राणानां गमनं किं न स्यादित्याशंक्याऽऽह-न हीति । प्राणा हि जीवतः साश्रया दृष्टास्तेनोत्क्रमणेऽपि तेषां साश्रयत्वमित्यर्थः ॥ ३ ॥ प्राणानां साश्रयत्वेऽपि जीवेन सह गतिरसिद्धेत्याशंक्य प्रत्याह-अग्न्यादीति । चोद्यं विवृणोति-स्यादिति । उक्तं हेतुं व्यनक्ति-तथाहीति । परिहारं व्याकरोति-नेत्यादिना । अदर्शनादोषधिवनस्पतिगमनस्येति शेषः । तदेव विशदयितुमादौ गतिं प्रसञ्जयति-ओषधीरिति । तत्रापि मुख्यैव गतिः स्यादित्याशंक्याऽऽह-न हीति । अग्न्यादिगतिश्रुतीनां 'तमुत्क्रामन्तम्' इत्यादिश्रुतीनां च मिथो विरोधेऽग्न्यादिगतिश्रुतिरौपचारिकी तत्प्रायपाठादित्युक्तम् । इदानीं जीवगतिश्रुत्यनुपपत्त्याऽपि प्राणगतिदृष्टेरग्न्यादिगतिश्रुतिरौपचारिकीत्याह-न चेति । इतश्च प्राणानां

ल्पते ॥ नापि प्राणैर्विना देहान्तरे उपभोग उपपद्यते । विस्पष्टश्च प्राणानां सह जीवेन गमनमन्यत्र श्रावितम् । अतो वागाद्यधिष्ठात्रीणामग्न्यादिदेवतानां वागाद्युपकारिणीनां मरणकाल उपकारनिवृत्तिमात्रमपेक्ष्य वागादयोऽग्न्यादीन् गच्छन्तीत्युपचर्यते ॥ ४ ॥

## प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

स्यादेतत्, कथं पुनः "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" [ छां० ५। ९। १ ] इत्येतन्निर्धारयितुं पार्यते यावता नैव प्रथमेऽग्नावपां श्रवणमस्ति इह हि द्युलोकप्रभृतयः पञ्चाग्नयः पञ्चानामाहुतीनामाधारत्वेनाऽधीताः । तेषां च प्रमुखे "असौ वाव लोको गौतमाग्निः" [ छां० ५। ४ । १ ] इत्युपन्यस्य "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति" [ छां० ५। ४। २ ] इति श्रद्धा होम्यद्रव्यत्वेनावेदिता । न तत्राऽऽपो होम्यद्रव्यतया श्रुताः । यदि नाम पर्जन्यादिषु उत्तरेषु चतुर्ष्वग्निष्वपां होम्यद्रव्यता परिकल्प्येत, परिल्प्यतां नाम । तेषु होतव्यतयोपात्तानां सोमादीनामब्बहुलत्वोपपत्तेः । प्रथमे त्वग्नौ श्रुतां श्रद्धां परित्यज्याऽश्रुता आपः परिकल्प्यन्त इति साहसमेतत् । श्रद्धा च नाम

---

रत्नप्रभा ।

गयोरयोगात् "सर्वे प्राणा अनूत्क्रामन्ति" इति विस्पष्टश्रुतेर्लोमादिगौणलयपाठाच्च गौणत्वमित्यर्थः ॥४॥ भूतान्तर्युक्तानामपां गतिमुक्त्वा पुरुषवचस्त्वं तासामाक्षिप्य समाधत्ते–प्रथम इति॥ ननु प्रथमपदं व्यर्थम्। उत्तराग्निष्वप्यपामश्रवणादित्याशङ्क्य सोमवृष्ट्यन्नरेतसामब्रूपत्वादुत्तरत्र तासां श्रवणमस्ति । न प्रथम इत्याह–यदि नामेति ॥ पञ्चाग्निष्वप्यपामाहुतित्वे सिद्धे तासां पञ्चम्यामाहुतौ पुरुषवचस्त्वं भवेत् । न तत्सिद्धम् । प्रथमाग्नौ तासामनाहुतित्वादिति शङ्कार्थः । एवं हि श्रद्धाशब्देनाऽपां ग्रहे सति प्रश्नोत्त-

भामती ।

विरोधोत्थापनार्था । अत्र हि लोमकेशयोरोषधिवनस्पतिगमनं दृष्टविरोधाद्भाक्तं तावदभ्युपेयम् । एवं च तन्मध्यपतितत्वेन तेषामपि श्रुतिविरोधाद्भाक्तत्वमेवोचितमिति । भक्तिश्चोपकारनिवृत्तिरुक्ता ॥ ४ ॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः । पञ्चम्यामाहुतावपां पुरुषवचस्त्वप्रकारे पृष्टे प्रथमायामाहुतौ अनपां श्रद्धाया होतव्यताभिधानमसंबद्धमनुपपन्नं च । न हि यथा पश्वादिभ्यो हृदयादयोऽवयवा

आनन्दगिरीय–न्यायनिर्णयः ।

जीवेन सह गतेरावश्यकत्वादग्न्यादिगतिश्रुतिरौपचारिकीत्याह–नापीति । सह गतिश्रुतिरेव कस्मादौपचारिकी न स्यादित्याशङ्क्य निमित्ताभावादित्याह–विस्पष्टं चेति । अन्यत्र तमुत्क्रामन्तमित्यादावित्यर्थः । अग्न्यादिगतिश्रुतेरौपचारिकत्वं निमित्तोक्तिपूर्वकमुपसंहरति–अत इति ॥ ४ ॥ भूतान्तरोपसृष्टानामपां गमनमुपपाद्य पञ्चम्यामाहुतौ तासां पुरुषाकारत्वमुक्तमाक्षिप्य समाधत्ते–प्रथम इति । चोद्यं विभजते–स्यादिति । श्रवणाभावं दर्शयितुमग्नीन्प्रस्तौति–इहेति । पञ्चाग्निविद्याप्रकरणं सप्तम्यर्थः । द्युलोकप्रभृतयो द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चाऽऽहुतयः श्रद्धासोमवृष्ट्यन्नरेतोरूपास्तथाऽपि कथं प्रथमेऽग्नावपामश्रवणं तत्राऽऽह–तेषां चेति । प्रथमविशेषणमनर्थकमन्यत्राप्यश्रवणादित्याशङ्क्य कथंचिदन्यत्र श्रवणेऽपि प्रकृते तन्नास्तीत्याह–यदीति । तर्हि कल्प्यतामपामेव प्रथमेऽपि होम्यत्वमविशेषादित्याशङ्क्याऽऽह–प्रथमे त्विति । तत्रापि श्रद्धाशब्देनापामेवोक्तेर्नाश्रवणमित्याशङ्क्याऽऽह–श्रद्धा चेति । श्रुतिलक्ष-

प्रत्ययविशेषः । प्रसिद्धिसामर्थ्यात् । तस्मादयुक्तः पञ्चम्यामाहुतावपां पुरुषभाव इति चेत् ॥ नैष दोषः॥ हि यतस्तत्रापि प्रथमेऽग्नौ ता एवाऽऽपः श्रद्धाशब्देनाऽभिप्रेयन्ते ॥कुतः॥ उपपत्तेः एवं ह्यादिमध्यावसानसंगानादनाकुलमेतदेकवाक्यमुपपद्यते । इतरथा पुनः पञ्चम्यामाहुतावपां पुरुषवचस्त्वप्रकारे पृष्टे प्रतिवचनावसरे प्रथमाहुतिस्थाने यद्यनपो होम्यद्रव्यं श्रद्धां नामाऽवतारयेत्ततोऽन्यथा प्रश्नोऽन्यथा प्रतिवचनमित्येकवाक्यता न स्यादिति तु "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति चोपसंहरन्नेतदेव दर्शयति । श्रद्धाकार्यं च सोमवृष्ट्यादि स्थूलीभवद्ब्बहुलं लक्ष्यते । सा च श्रद्धाया अप्त्वे युक्तिः । कारणानुरूपं हि कार्यं भवति । न च श्रद्धाख्यः प्रत्ययो-मनसो, जीवस्य वा,-धर्मः सन्धर्मिणो निष्कृष्य होमायोपादातुं शक्यते पश्वादिभ्य इव हृदयादीनीत्याप एव श्रद्धाशब्दा भवेयुः । श्रद्धाशब्दश्चाऽप्सूपपद्यते । वैदिकप्रयोगदर्शनात्-

रत्नप्रभा ।

रोपसंहाराणां संगानाद् एकार्थत्वादेकवाक्यतोपपद्यते । अग्रहे चतुर्ष्वग्निष्वेवाऽपामाहुतित्वाच्चतुर्थ्यामाहुताविति वाच्यम् । अतः प्रश्नोपसंहारयोः पञ्चम्यामिति श्रवणात् प्रथमाऽऽमावपि आप एव ग्राह्या इति समाधानार्थः । अनपः अद्रवोऽन्यतः ॥ एतदेवेति। श्रद्धाशब्दस्याप्यप्त्वं दर्शयतीत्यर्थः ॥ उपपत्तेरित्यास्यार्थान्तरमाह-श्रद्धाकार्यमिति ॥ तस्याः श्रद्धाहुतेः सोमः सम्भवतीत्यादिना श्रद्धासोमादीनां पूर्वपूर्वपरिणामत्वं श्रुतम् । ततो द्रवपरिणामत्वात् श्रद्धाया अप्त्वम् । प्रत्ययात्मकमुख्यश्रद्धाया आहुतित्वाऽयो-

भामती ।

अवदाय निष्कृष्य हूयन्ते, एवं श्रद्धा बुद्धिप्रसादलक्षणा निष्क्रष्टुं वा होतुं वा शक्यते । न चाप्येवमौत्सर्गिकी कारणानुरूपता कार्यस्य युज्यते । तस्माद्भक्त्यायमप्सु श्रद्धाशब्दः प्रयुक्त इति । अत एव श्रुतिः

आनन्दगिरीय-न्यायनिर्णयः ।

णयोः श्रुतिर्न्याय्येति भावः । प्रथमेऽग्नावपामश्रुतिफलमाह—तस्मादिति । सिद्धान्तभागं विभजते-नेत्यादिना । श्रद्धाशब्दस्यार्थान्तरे रूढत्वेन तेनापामुक्तिरिति शङ्कित्वा सूत्रावयवं व्याचष्टे-कुत इत्यादिना ॥ एवं हीति । श्रद्धाशब्देनापां ग्रहे सतीति यावत् । संगानं संप्रतिपत्तिः, तामेव व्यतिरेकेण स्फोरयति-इतरथेति । यदुक्तमितरथा पुनरिति तदेव स्फुटयति-पञ्चम्यामिति । श्रद्धाशब्दस्याद्वयोऽर्थान्तरत्वं दूषयति-तत इति । यदि चतुर्ष्वेव स्थानेष्वपां होम्यता तदा चतुर्थ्यामाहुताविति वाच्यं पञ्चम्यामिति विशेषणात्प्रथमस्थानेऽपि तासामेव होम्यता सिद्धेत्यर्थः । उपसंहारालोचनायामपि श्रद्धाशब्दत्वमपामेवेत्याह-इति त्विति । उपपत्तेरित्यस्यार्थान्तरमाह-श्रद्धेति । श्रद्धापरिणामस्य सोमादेर्ब्बहुलत्वेऽपि श्रद्धाशब्दत्वमपामित्यत्र किमायातं तदाह-सा चेति । गोमयवृश्चिकादौ प्रत्यक्षेण विलक्षणत्वदर्शनाद्वृष्ट्यादेः श्रद्धाकार्यस्याब्बहुलत्वेऽपि कारणस्य श्रद्धाया मा भूदप्त्वमित्याशंक्याऽऽह-कारणेति । क्वचिद्वैलक्षण्यस्य प्रवृत्तत्वादिष्टत्वेऽपि श्रद्धापरिणामस्य सोमादेर्ब्बहुलत्वोपलब्धेः श्रद्धायास्तथात्वं कल्प्यते । वैलक्षण्यग्राहिण्यसति माने कल्पनाया दृष्टानुसारित्वादित्यर्थः । यत्तु प्रसिद्ध्या प्रत्ययविशेषः श्रद्धेति तत्राऽऽह-न चेति । जुहोतिश्रुतिसामर्थ्यान्मुख्यार्थत्यागे संनिहितवाक्यानुसारेण लक्षणेत्याह-इत्याप इति । न च धर्मिणा सहैव होमस्तत्रापि लक्षणाध्रौव्ये संनिहितवाक्यानुसारिण्यास्तस्या न्याय्यत्वादिति भावः । उपपत्तेरिति भागं विधान्तरेण व्याचष्टे-श्रद्धेति । वृद्धप्रयोगाभावे कथं वैदिकोऽपि प्रयोगः स्यादि-

"श्रद्धा वा आपः" इति। तनुत्वं च श्रद्धासारूप्यं गच्छन्त्य आपो देहबीजभूता इत्यतः श्रद्धाशब्दाः स्युः। यथा—सिंहपराक्रमो नरः सिंहशब्दो भवति। श्रद्धापूर्वककर्मसमवायाच्चाऽप्सु श्रद्धाशब्द उपपद्यते मञ्चशब्द इव पुरुषेषु। श्रद्धाहेतुत्वाच्च श्रद्धाशब्दोपपत्तिः "आपो ह्यस्मै श्रद्धां सन्नमन्ते पुण्याय कर्मणे" इति श्रुतेः॥ ५॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः॥ ६॥

अथापि स्यात्—प्रश्नप्रतिवचनाभ्यामापः श्रद्धादिक्रमेण पञ्चम्यामाहुतौ पुरुषाकारं प्रतिपद्येरन्, न तु तत्सम्परिष्वक्ता जीवा रंहेयुः। अश्रुतत्वात्—न ह्यत्रापामिव जीवानां श्रावयिता कश्चिच्छब्दोऽस्ति॥ तस्माद् "रंहति सम्परिष्वक्तः" इत्ययुक्तमिति चेत॥ नैष दोषः॥ कुतः॥ इष्टादिकारिणां प्रतीतेः—"अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति" [छां० ५। १०। ३] इत्युपक्रम्येष्टादिकारिणां धूमादिना पितृयानेन पथा चन्द्रप्राप्तिं कथयति "आकाशाच्चन्द्रमसमेष सोमो राजा" [छां० ५। १०। ४] इति त एवेहापि प्रतीयन्ते। "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति"

---

रत्नप्रभा।

गावित्यर्थः॥ श्रद्धाशब्दस्याऽप्सु सूक्ष्मत्वगुणेन वृत्तिमुक्त्वा लक्षणां वक्तुं श्रद्धाया अद्भिरेव—कर्मयोगित्वं, हेतुत्वं वा,—सम्बन्धमाह—श्रद्धापूर्वकेति॥ अस्मै—यजमानाय। स्नानाद्यर्थमापः श्रद्धां सन्नमन्ते जनयन्तीति श्रुत्यर्थः॥ ५॥ अपां गतिमुपेत्याऽद्भिः सह जीवानां गतिमाक्षिप्य समाधत्ते॥ अथापीत्यादिना॥ द्युलोकाग्नौ श्रद्धाहुतेः सोमो राजा सम्भवतीत्युक्त्वा वाक्यशेषे धूमादिमार्गेण आकाशाच्च-

भामती।

'आपो ह्यस्मै' इति॥ ५॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः। अस्यार्थः पूर्वमेवोक्तः। अग्निहोत्रे षट्सूत्क्रान्तिगतिप्रतिष्ठातृप्तिपुनरावृत्तिलोकप्रत्युत्थायिष्वग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गेषु प्रश्नाः

आनन्दगिरीय—न्यायनिर्णयः।

त्याशंक्य तस्यौपचारिकत्वमाह—तनुत्वमिति। सूक्ष्मत्वगुणादप्सु श्रद्धाशब्दस्य गौणत्वे दृष्टान्तमाह—यथेति। श्रद्धाशब्दस्याप्सु गौणत्वमुक्त्वा लाक्षणिकत्वमाह—श्रद्धेति। यत्कर्म श्रद्धापूर्वकं तदुपायत्वेनापां तद्योगात्परंपरया श्रद्धायोगिनीष्वप्सु तच्छब्द इत्यर्थः। लक्षणानिमित्तं संबन्धान्तरमाह—श्रद्धेति। अपां श्रद्धाहेतुत्वे मानमाह—आपो हेति। अस्मै पुंसेऽधिकारिणे संनमन्ते जनयन्ति दर्शनमात्रेण स्नानादिपुण्यकर्मसिद्ध्यर्थं श्रद्धामित्यर्थः॥ ५॥ अपामेव प्रथमस्थानेऽपि होम्यत्वज्ञानात्पञ्चम्यामाहुतौ तासां पुरुषाकारपरिणामः स्यादित्युक्तम्। इदानीमाद्ये सूत्रे यदद्भिः परिवेष्टितो जीवो गच्छतीति प्रतिज्ञातं तदसत्त्वमाशंक्य परिहरति—अश्रुतत्वादिति। तत्र चोद्यं विशदयति—अथापीति। भूतान्तरोपसृष्टानामपां पुरुषाकारपरिणामेऽपीति यावत्। उक्तेऽर्थेऽङ्गीकृते नास्ति विमतिरित्याशंक्याऽऽह—न त्विति। हेत्वर्थं विवृणोति—न हीति। अत्रेति प्रकरणोक्तिः। अश्रुतत्वफलमाह—तस्मादिति। समाधिं विभजते—नेत्यादिना। कर्मफलोक्तिप्रारम्भार्थोऽथशब्दः। इष्टादिकारिणां प्रदेशान्तरगमनप्रतीतावपि प्रकृते किमायातं तदाह—त इति। पञ्चाग्निविद्यावाक्यमिहेत्युक्तम्। तत्र हेतुमाह—तस्मिन्निति। धूमादिवाक्ये पञ्चाग्निवाक्ये च सोमराजत्वप्राप्तिश्रवणाविशेषादिष्टादिकारिणः श्रद्धाशब्दिताद्भिर्वेष्टिता द्युलोकं

[ छां० ५ । ४ । २] इति श्रुतिसामान्यात् । तेषां चाग्निहोत्रदर्शपूर्णमासादिकर्मसाधनभूता दधिपयःप्रभृतयो द्रवद्रव्यभूयस्त्वात्प्रत्यक्षमेवापः सन्ति । ता आहवनीये हुताः सूक्ष्मा आहुत्यपूर्वरूपाः सत्यस्तानिष्टादिकारिण आश्रयन्ति । तेषां च शरीरं नैधनेन विधानेनान्त्येऽग्नावृत्विजो जुह्वति "असौ स्वर्गाय लोकाय स्वाहेति" । ततस्ताः श्रद्धापूर्वककर्मसमवायिन्यः आहुतिमय्य आपोऽपूर्वरूपाः सत्यस्तानिष्टादिकारिणो जीवान्परिवेष्ट्याऽमुं लोकं फलदानाय नयन्तीति यत्तदत्र जुहोतिनाभिधीयते-"श्रद्धां जुह्वति" इति ॥ तथा चाऽग्निहोत्रे षट्प्रश्नीये(श्न)निर्वचनरूपेण वाक्यशेषेण "ते वा एते आहुती हुते उत्क्रामतः" इत्येवमादिनाऽग्निहोत्राहुत्योः फलारम्भाय लोकान्तरप्राप्तिर्द-

रत्नप्रभा ।

न्द्रमसं प्राप्ता इष्टादिकारिणः "एष सोमो राजा" इत्युक्ताः। अतः सोमराजशब्दसामान्यादिष्ट्यादिकारिणां जीवानां श्रद्धाशब्दिताऽद्भिः सह गतिरिह श्रद्धाहुतिवाक्ये प्रतीयत इत्यर्थः ॥ तेषां सूक्ष्माभिर्द्रव्याऽपूर्वरूपाभिः पञ्चीकृताभिरद्भिः सम्बन्धं वदन्सहगतिं विवृणोति—तेषाञ्चाग्निहोत्रेति ॥ निधनं मरणम् । तन्निमित्तकमन्त्येष्टिविधानम् । असौ यजमानः स्वर्गाय गच्छत्विति मन्त्रार्थः ॥ हुतद्रव्यरूपाणामपां गमने श्रुत्यन्तरमाह-तथा चेति ॥ अग्निहोत्रप्रकरणे जनकेन याज्ञवल्क्यं प्रति "नत्वेवैनयोः सायंप्रातराहुत्योस्त्वनूत्क्रान्तिं न प्रतिष्ठां न तृप्तिं न पुनरावृत्तिं न लोकं प्रत्युत्थायिनं वेत्थ" इति षट् प्रश्नाः कृताः । तेषां निर्वचनमपि "राज्ञैव ते वा एते आहुती हुते उत्क्रामतः । तेऽन्तरिक्षद्वारा दिवं गच्छतः। ते दिवमेवाहवनीयप्रतिष्ठां कुर्वाते । ते दिवं तर्पयतः । ते ततः पुनरावर्तेते । ततः पृथिव्यां पुरुषे योषिति

भामती ।

षट्, तेषां यः समाहारः षण्णां सा षट्प्रश्नी, तस्या निरूपणं प्रतिवचनम् ॥ ६ ॥ सूत्रान्तरमवता-

आनन्दगिरीय-न्यायनिर्णयः ।

यान्तीति भातीत्यर्थः। ननु महदिह श्रुत्योर्वैलक्षण्यं श्रद्धाशब्दितानामपां क्वचिद्युलोके होमः श्रुतः क्वचिदिष्टादिकारिणां धूमादिक्रमेणाऽऽकाशप्राप्तिर्न च तेषामापः सन्ति येन तद्वेष्टितानां गतिस्तत्राऽऽह-तेषां चेति । आपो यथोक्ताः सन्तु हुतानां तासां कथमिष्टादिकारिभिर्योगस्तत्राऽऽह—ता इति । दध्यादीनामपामाहवनीये हुतानामिहैव भस्मीभूतानां न जीवसंगतिरित्याशंक्य विशिनष्टि-सूक्ष्मा इति । तदेव साधयति-आहुतीति । तथाऽपि कथं सहगमनं तदाह-तेषां चेति । नैधनं विधानमन्त्येष्टिविधानम् । होममन्त्रमुदाहरति-असाविति । अमुकनामा यजमानः स्वर्गार्थं गच्छतु स्वाहाकारो मन्त्रान्तज्ञापनार्थः । तथाऽपि कथं परिवेष्टितानामिष्टादिकारिणां गतिस्तत्राऽऽह—तत इति । प्रत्यक्षसिद्धदध्यादिवैशेष्यार्थमाहुतिमय्य इत्युक्तम् । क्रियातो विशिनष्टि-अपूर्वेति । तत्र श्रुतिमवतारयति-यदिति । तदेवं श्रुतिसामान्यं प्रतिपाद्याऽऽहुतिरूपाणामपां गमने सिद्धे श्रुत्यन्तरमपि मानमित्याह—तथा चेति । अग्निहोत्रप्रकरणे 'न त्वेवैनयोस्त्वमुत्क्रान्तिं न गतिं न प्रतिष्ठां न तृप्तिं न पुनरावृत्तिं न लोकं प्रत्युत्थायिनं वेत्थ' इति जनकेन ये षट्पदार्था याज्ञवल्क्यं प्रत्युक्तास्ते षट्प्रश्ना निर्दिश्यन्ते । तेषां निर्वचनरूपो वाक्यशेषः । 'ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशतस्ते अन्तरिक्षं तर्पयित्वा दिवं पृथिवीं पुरुषं योषितं वाऽऽविश्य पुरुषरूपेणोत्तिष्ठते' इत्येवंरूपः । तेनाग्निहोत्रे सायं प्रातश्च क्रियमाणाहुत्योरपूर्वरूपयोरनुष्ठातृगामिफलसिद्धये तेन सह द्युलोकप्राप्तिरुक्ता । तथा च वाजसनेयकश्रुतिपर्यालोच-

शिता ॥ तस्मादाहुतिमयीभिरद्भिः सम्परिष्वक्ता जीवा रंहन्तीति । स्वकर्मफलोपभोगायेति श्लिष्यते ॥ ६ ॥ कथं पुनरिदमिष्टादिकारिणां स्वकर्मफलोपभोगाय रंहणं प्रतिज्ञायते—यावता तेषां धूमप्रतीकेन वर्त्मना चन्द्रमसमधिरूढानामन्नभावं दर्शयति—"एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति" [ छां० ५ । १० ।४] इति । "ते चन्द्रं प्राप्यान्नं भवन्ति ताँस्तत्र देवा यथा सोमᳫ राजानमाप्यायस्वाऽपक्षीयस्वेत्येवमेनाᳫस्तत्र भक्षयन्ति" [ बृ० ६ । २ । १६ ] इति च समानविषयं श्रुत्यन्तरम् । न च व्याघ्रादिभिरिव देवैर्भक्ष्यमाणानामुपभोगः सम्भवतीति ॥ अत उत्तरं पठति—

## भाक्तं वाऽनात्मवित्त्वात्तथाहि दर्शयति ॥ ७ ॥

वाशब्दश्चोदितदोषव्यावर्त्तनार्थः । भाक्तमेषामन्नत्वं, न मुख्यम् । मुख्ये ह्यन्नत्वे "स्वर्गकामो यजेत" इत्येवञ्जातीयकाधिकारश्रुतिरुपरुध्येत ।

---

रत्नप्रभा ।

च हुते पुरुषरूपेणोत्तिष्ठतः'' इति वाक्यशेषेण कृतम् ॥ ६ ॥ सम्प्रत्युत्तरसूत्रव्यावर्त्यं शङ्कते—कथमित्यादिना ॥ अत्र सोमाख्यचन्द्रस्यान्नत्वमुक्तं नेष्टादिकारिणामिति भ्रान्तिनिरासार्थं श्रुत्यन्तरमाह—ते चन्द्रमिति ॥ यथा यज्ञे चमसस्थं सोममृत्विजः आप्यायस्वेति क्रियावृत्तौ लोट् । पुनःपुनराप्याय्य पुनःपुनरपक्षय्य भक्षयन्ति । एवमेनानिष्टादिकारिणोऽन्नरूपान् भक्षयन्ति देवा इत्यर्थः । अधिक्रियते पुरुषो विधिना सम्बध्यतेऽनेनेति अधिकारः फलकामना । शास्त्रानर्थक्यवारणाय अन्नत्वं गौणमिति

भामती ।

रयितुं शङ्कते—कथं पुनरिति ॥ सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्तीति । क्रियासमभिहारेणाप्यायनापक्षयौ यथा सोमस्य तथा भक्षयन्ति सोममयाँल्लोकानित्यर्थः ॥ अत उत्तरं पठति—भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति । कर्मजनितफलोपभोगकर्ता ह्यधिकारी न पुनरुपभोग्यस्तस्माच्चन्द्रसालोक्यमुपगतानां देवादिभक्ष्यत्वे 'स्वर्गकामो यजेत' इति यागभावनायाः कर्त्रपेक्षितोपायतारूपविधिश्रुतिविरोधादन्नशब्दो भोक्तॄणामेव सतां देवोपजीवितामात्रेण भाक्तो गमयितव्यो न तु चर्वण-

आनन्दगिरीय-न्यायनिर्णयः ।

नायामपि जीवानामप्परिवेष्टितानां गतिसिद्धिरित्यर्थः । श्रुत्यन्तरालोचनातः सिद्धमुपसंहरति—तस्मादिति ॥ ॥ ६ ॥ उत्तरसूत्रव्यावर्त्यमाह—कथमिति । का पुनरस्यां प्रतिज्ञायामनुपपत्तिस्तत्राऽऽह—यावतेति । नन्वेषशब्देन चन्द्रमा गृह्यते नेष्टादिकारिणस्ततस्तेऽपि सोमं राजानं देवत्वादितरदेववद्भक्षयन्तीत्याशंक्य श्रुत्यन्तरे तेषामेव भक्ष्यत्वसिद्धेर्नैवमित्याह—ते चन्द्रमिति । यथा यज्ञे सोमं राजानं चमसस्थमृत्विजः पुनःपुनराप्याययन्त्यपक्षयन्ति चेति दृष्टम् । तथा तानिष्टादिकारिणश्चन्द्रमसि प्राप्तान्देवा भक्षयन्तीत्यर्थः । दार्ष्टान्तिकं विवृणोति—एवमिति । देवैरिष्टादिकारिणां भक्ष्यत्वेऽपि तेषामुपभोगाय गमनं किं न स्यादित्याशंक्याऽऽह—न चेति । उत्तरत्वेन सूत्रमवतारयति—अत इति इष्टादिकारिणामन्नत्वे मुख्ये भोगाभावो न तु तदस्तीति प्रतिजानीते—वाशब्द इति । तेषां तर्हि श्रूयमाणमन्नत्वं कथमित्याशंक्य सिद्धान्तप्रतिज्ञामाह—भाक्तमिति । अन्नशब्दश्रुत्या मुख्येऽन्नत्वे किमिति भाक्तं तदुक्तमित्याशंक्यानन्यथासिद्धश्रुत्यर्थापत्तिविरोधादौपचारिकी श्रुतिरित्याह—मुख्ये हीति । अधिक्रियतेऽनेनेत्यधिकारो विधिपुरुषसंबन्धनिमित्तं कामादि तदुक्ताः श्रुतिरधिकारश्रुतिस्तस्यां वैयर्थ्यपरिहारार्थमिष्टादिकारिणमन्नत्वं

चन्द्रमण्डले चेदिष्टादिकारिणामुपभोगो न स्यात । किमर्थमधिकारिण इष्टाद्यायासबहुलं कर्म कुर्युः । अन्नशब्दश्चोपभोगहेतुत्वसामान्यादनन्नेऽप्युपचर्यमाणो दृश्यते-"यथा विशोऽन्नं राज्ञां पशवोऽन्नं विशाम्" इति॥ तस्मादिष्टस्त्रीपुत्रमित्रादिभिरिव गुणभावोपगतैरिष्टादिकारिभिर्यत्सुखविहरणं देवानां, तदेवैषां भक्षणमभिप्रेतं, न मोदकादिवच्चर्वणं, निगरणं वा । "न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति" [ छां० ३ । ६-१० ] इति देवानां चर्वणादिव्यापारं वारयति । तेषां चेष्टादिकारिणां देवान्प्रतिगुणभावोपगतानामप्युपभोग उपपद्यते राजोपजीविनामिव परिजनानाम् । अनात्मवित्त्वाच्चेष्टादिकारिणां देवोपभोग्यभाव उपपद्यते । तथाहि श्रुतिरनात्मविदां देवोपभोग्यतां दर्शयति-"अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्" [ बृ० १ । ४ । १० ] इति । स चास्मिन्नपि लोके इष्टादिभिः कर्मभिः प्रीणयन्पशुवद्देवानामुपकरोति । अमुष्मिन्नपि लोके तदुपजीवी, तदादिष्टं फलमुपभुञ्जानः,-पशुवदेव देवानामुपकरोतीति गम्यते ॥ "अनात्मवित्त्वात्तथाहि दर्शयति" इत्यस्यापरा

---

रत्नप्रभा ।

भावः ॥ केन दोषेण तेषां देवभोग्यतेत्यत आह-अनात्मवित्त्वाच्चेति ॥ यथा पशुर्भोग्यः, एवमज्ञः सन् भेदधीमान् देवानां भोग्य इत्यर्थः ॥ आत्मशब्दस्य मुख्यत्वबलेन सूत्रांशं व्याख्याय प्रकृतपञ्चाग्नयः सूत्रकृता आत्मत्वेन उपचरिता इति व्याख्यान्तरमाह-अनात्मेत्यादिना ॥ विद्यास्तुत्यर्थमन्नत्वं न मुख्यमित्यत्र श्रुत्यन्तरार्थं सूत्रशेषं व्याचष्टे-तथाहीति ॥ एवं गतिपर्यालोचनया वैराग्यमिति

भामती ।

निगरणाभ्यां मुख्य इति। अत्रैवार्थे श्रुत्यन्तरं संगच्छत इत्याह-तथाहि दर्शयति। श्रुतिरनात्मविदामनात्मवित्त्वादेव पशुवद्देवोपभोग्यतां न तु चर्वणीयतया । यथा हि बलीवर्दादयो भुञ्जाना अपि स्वफलं स्वामिनो हलादिवहनेनोपकुर्वाणा भोग्याः, एवं परमतत्त्वमविद्वांस इष्टादिकारिण इह दधिपयःपुरोडाशादिनाऽमुष्मिंश्च लोके परिचारकतया देवानामुपभोग्या इति श्रुत्यर्थः । अथ वा अनात्मवित्त्वात्तथाहि दर्शयति इत्यस्यान्या व्याख्या । आत्मवित् पञ्चाग्निविद्यावित् न आत्मवित् अनात्मवित् । यो हि पञ्चाग्निविद्यां

आनन्दगिरीय-न्यायनिर्णयः ।

भाक्तमेवेत्यर्थः । उक्तमेव व्यनक्ति-चन्द्रेति । न केवलं मुख्यार्थबाधादन्नशब्दस्यामुख्यार्थत्वमन्यत्र प्रयोगादपीत्याह-अन्नेति । अन्नत्वस्यामुख्यत्वे कथं भक्षयन्तीत्युक्तं तत्राऽऽह-तस्मादिति । न केवलमिष्टादिकारिणामन्नत्वस्यामुख्यत्वादमुख्यमेषां भक्षणं किंतु श्रुत्यन्तरादपीत्याह-न ह वा इति । तथाऽपि पारतन्त्र्यान्नेष्टादिकारिणां भोगसिद्धिरिति कुतो भोगाय गमनं तत्राऽऽह-तेषां चेति । केन दोषेण तेषां देवभोग्यतेत्याशंक्य सूत्रावयवं व्याचष्टे-अनात्मेति । अत्र मानं दर्शयन्नवशिष्टं सूत्रांशं योजयति-तथाहीति । अविद्याधिकारारम्भार्थोऽथशब्दः । उपास्तिमेव भेददृष्टिं स्पष्टयति-अन्योऽसाविति । भेददृष्टिनिदानमाह-न स इति । तस्य दृष्टान्तं देवोपभोग्यत्वमाह-यथेति । उक्तश्रुतेस्तात्पर्यमाह-स चेति । अनात्मश्रुतेर्मुख्यार्थत्वानुरोधेन सूत्रांशस्यार्थमुक्त्वा प्रकरणानुरोधेनार्थान्तरमाह-अनात्मेति । पञ्चाग्निविद्याविहीनत्वं तेषामनात्मवित्त्वम् । तद्वत्त्वेनाऽऽत्मवित्त्वं चेत्तद्राहित्येनानात्मवित्त्वं तदेव

व्याख्या—अनात्मविदो ह्येते केवलकर्मिण इष्टादिकारिणो, न ज्ञानकर्मसमुच्चयानुष्ठायिनः पञ्चाग्निविद्यामिहाऽऽत्मविद्येत्युपचरन्ति । प्रकरणात्, पञ्चाग्निविद्याविहीनत्वाच्चेदमिष्टादिकारिणां गुणवादेनान्नत्वमुद्भाव्यते पञ्चाग्निविद्याप्रशंसायै । पञ्चाग्निविद्या हीह विधित्सिता । वाक्यतात्पर्यावगमात् । तथाहि श्रुत्यन्तरं चन्द्रमण्डले भोगसद्भावं दर्शयति—"स सोमलोके भूतिमनुभूय पुनरावर्तते" [ प्रश्न० ५ । ४ ] इति । तथान्यदपि श्रुत्यन्तरं—"अथ ये शतं पितॄणां जितलोकानामानन्दाः" [ बृ० ४ । ३ । ३३ ] "स एकः कर्मदेवानामानन्दः, ये कर्मणा देवत्वमभिसम्पद्यन्ते" [ बृ० ४ । ३ । ३३ ] इतीष्टादिकारिणां देवैः सह संवसतां भोगप्राप्तिं दर्शयति । एवं भाक्तत्वादन्नभाववचनस्येष्टादिकारिणो जीवा रंहन्तीति प्रतियन्ते । तस्माद् "रंहति सम्परिष्वक्तः" इति युक्तमेवोक्तम् ॥ ७ ॥

इति तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

## कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवञ्च ॥ ८ ॥ ( २ ) ॥

इष्टादिकारिणां धूमादिना वर्त्मना चन्द्रमण्डलमधिरूढानां भुक्तभोगानां

रत्नप्रभा ।

सिद्धम् ॥७॥ (१) ॥ इदानीं गत्यन्तरभाविनीमागतिं निरूपयति—कृतात्यय इति॥ भोक्तव्यकर्मसमाप्त्या-

भामती ।

न वेद तं देवा भक्षयन्तीति निन्द्यते पञ्चाग्निविद्यां स्तोतुं तस्या एव प्रकृतत्वात् । तदनेनोपचारस्य प्रयोजनमुक्तम् । उपचारनिमित्तमनुपपत्तिमाह—तथाहि दर्शयति । श्रुतिर्भोक्तृत्वम् । स सोमलोके विभूतिमनुभूयेति । शेषमतिरोहितार्थम् ॥ ७ ॥ ( १ ) ॥ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथे-

आनन्दगिरीय–न्यायनिर्णयः ।

कथमित्याशंक्याऽऽह—पञ्चाग्नीति । इष्टादिकारिणां पञ्चाग्निविद्याशून्यत्वेऽपि कथं देवान्प्रत्यन्नत्वं तत्राऽऽह—पञ्चेति । गुणवादेन देवोपभोग्यत्वेनेति यावत् । किमर्था प्रशंसेत्याशंक्याऽऽह—पञ्चाग्नीति । तस्यापि विधित्सितत्वे हेतुमाह—वाक्येति । गौतमप्रवाहणसंवादरूपवाक्यस्य पूर्वापरालोचनया पञ्चाग्निविद्याविधौ तात्पर्यगतेरिति यावत् । अनात्मवित्त्वादिति व्याख्याय तथाहीत्यादि व्याख्याति—तथाहीति । इष्टादिकारी सर्वनामार्थः । पूर्वोक्तवाक्येन तुल्यार्थत्वबुद्ध्या तथेत्युक्तम् । पञ्चाग्निविद्याधिकारादन्यत्र प्रवृत्तत्वमाह—अन्यदिति । अत एव श्रुत्यन्तरमित्युक्तम् । पर्यायान्तरोपक्रमार्थोऽथशब्दः । जितो लोकः पूर्वसिद्धो लोको भोग्यो येषां तेषामाजानसिद्धानामिति यावत् । कर्मदेवत्वं व्युत्पादयति—य इति । श्रुत्यन्तरस्य तात्पर्यमाह—इष्टादीति । तेषामन्नत्वस्य भाक्तत्वे फलितमाह—एवमिति । अत्रेति प्रश्नप्रतिवचनोक्तिः । इष्टादिकारिणां भोगाय चन्द्रं प्रति गमने संभाविते तेषामेव प्रश्नप्रतिवचनयोरपि प्रतीतेर्युक्तं प्रथमसूत्रोक्तमित्युपसंहरति—तस्मादिति ॥ ७ ॥ ( १ ) ॥ कर्मसमवायिनीनामपां पञ्चमाहुतौ पुंपरिणामहेतुमाश्रित्याद्भिः परिवेष्टितजीवगतिरुक्ता, संप्रति स्वर्गादवरोहतां कर्मैव नास्ति कुतस्तत्समवायिन्य आपः कुतस्तरां पुंपरिणाम इत्याशंक्याऽऽह—कृतेति । येषां पूर्वत्र चन्द्रमण्डलारोहणमुक्तं त एव प्रत्यवरोहन्तो विषय इति वक्तुं प्रत्यवरोहवाक्यमुदाहरति—इष्टादीति । ततश्चन्द्रमण्डलादिति यावत् । तस्मिन्नित्यपि तदेवोक्तम् । भोक्तव्यकर्मसमाप्त्यानन्तर्यमथशब्दार्थः । यथेतमित्यारभ्य श्वादियोनिमित्यन्तं वाक्यं यावदाम्नायत इति योजना । यावत्संपातमिति विशेषणाद्रमणीयचरणा रमणीयां योनिमित्यादिवाक्याच्च

ततः प्रत्यवरोह आम्नायते-"तस्मिन्यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्" [ छां० ५।१०।५ ] इत्यारभ्य यावद्रमणीयचरणा ब्राह्मणादियोनिमापद्यन्ते कपूयचरणाः श्वादियोनिमिति ॥ तत्रेदं विचार्यते ॥ किं निरनुशया भुक्तकृत्स्नकर्माणोऽवरोहन्ति आहोस्वित् सानुशया इति ॥ किन्तावत्प्राप्तम् ॥ निरनुशया इति ॥ कुतः ॥ यावत्सम्पातमिति विशेषणात्। सम्पातशब्देनात्र कर्माशय उच्यते-सम्पतन्त्यनेनास्माल्लोकादमुं लोकं फलोपभोगायेति। यावत्सम्पातमुषित्वेति च कृत्स्नस्य तस्य कृतस्य तत्रैव भुक्ततां दर्शयति-"तेषां यदा तत्पर्यवैति" [ बृ० ६।२।१६ ] इति च श्रुत्यन्तरेणैष एवार्थः प्रदर्श्यते। स्यादेतद् यावदमुष्मिँल्लोके उपभोक्तव्यं कर्म तावदुपभुंक्ते इति कल्पयिष्यामीति ॥ नैवं कल्पयितुं शक्यते ॥ यत्किञ्चेत्यन्यत्र परामर्शात्-"प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्। तस्माल्लोकात्पुनरेत्यस्मै लोकाय

रत्नप्रभा।

नन्तर्थमथशब्दार्थः। यथेतमित्यारभ्य श्वादियोनिमित्यन्तं वाक्यं यावत्तावदाम्नायत इति योजना ॥ अत्र यावत्सम्पातमितिविशेषणाद्रमणीयचरणा इति वाक्याच्च संशयमाह-तत्रेति ॥ अनुशयः-कर्म। अत्र पूर्वपक्षे कर्माभावेनागतेरनियमात् वैराग्यादार्ढ्यं, सिद्धान्ते कर्मसत्त्वेनागतिनियमाद्वैराग्यदार्ढ्यमिति भेदः। तेषाम् इष्टादिकारिणां यदा तत् कर्म पर्यवैति विपरिक्षीणं भवति, तदा पुनरावर्तन्त इति श्रुत्यन्तरेणापि कृत्स्नकर्मणश्चन्द्रलोके भुक्तत्वमुच्यते इत्यर्थः॥ यावत्पदसङ्कोचो न युक्तः। श्रुत्यन्तरविरोधादित्याह-नैवमिति ॥ अयं नरः यत्किञ्चिदिह लोके कर्म करोति तस्यान्तं फलं परलोके प्राप्य

भामती।

तमनेवं च। यावत्संपातमुषित्वेति यावदुपनन्धात्। यत्किंचेह करोत्ययमिति च यत्किंचेह कर्म कृतं तस्यान्तं प्राप्येति श्रवणात्, प्रायणस्य चैकप्रघट्टकेन सकलकर्माभिव्यञ्जकत्वात्। न खल्वभिव्यक्तिनिमित्तस्य साधारण्येऽभिव्यक्तिनियमो युक्तः। फलदानाभिमुखीकरणं चाभिव्यक्तिस्तस्मात्समस्तमेव कर्म फलमुपभोजितवत् स्वफलविरोधि च कर्म। तस्माच्छ्रुतेरुपपत्तेश्च निरनुशयानामेव चरणादाचारादवरोहो न कर्मणः। आचारकर्मणी च श्रुतेः प्रसिद्धभेदे। यथाकारी यथाचारी तथा भवतीति। तथा च रमणीयचरणाः कपूयचरणा इत्याचारमेव योनिनिमित्तमुपदिशति न तु कर्म। स्तां वा कर्मशीले द्वे

आनन्दगिरीय-न्यायनिर्णयः।

संशयमाह-तत्रेति। प्रकृतेषु प्रत्यवरोहत्सु जीवेष्विति यावत्। निरनुशयशब्दार्थमेव स्पष्टयति-भुक्तेति। अत्रापि प्रत्यवरोहतां सानुशयत्वसमर्थनद्वारा वैराग्याय संसारगतिरेव निरूप्यत इति पूर्ववत्पादादिसंगतिमभिप्रेत्य पूर्वपक्षमाकांक्षापूर्वकं गृह्णाति-किं तावदिति। पूर्वपक्षे गतिरेव कर्मकृता तदभावकृता त्वागतिः सिद्धान्ते कर्मकृतत्वाविशेषो द्वयोरिति फलभेदः। तत्र प्रश्नपूर्वकं लिङ्गं हेतूकरोति-कुत इति। यावत्पतनमुषित्वेत्येतावदत्र भाति न तु कर्मणः सर्वस्य भुक्तत्वमित्याशंक्याऽऽह-संपातेति। यावत्पतनं तावदपतनमिति वचनमनर्थकमिति मत्वा वाक्यार्थमाह-यावदिति। चन्द्रमण्डले सर्वकर्मोपभोगे श्रुत्यन्तरसंमतिमाह-तेषामिति। इष्टादिकारिणां यदा तद्भोक्तव्यं कर्म पर्यवैति परिगच्छति परिक्षीणं भवति तदा तत आवर्तन्त इत्युत्तरेणान्वयः। यावच्छब्दोपबन्धस्य गत्यन्तरं शङ्कते-स्यादिति। श्रुत्यन्तरविरोधेन प्रत्याह-नैवमिति। तदेव प्रपञ्चयति-प्राप्येति। अयं संसारी यत्किंचिदिह लोके कर्म करोति

कर्मणे" [ बृ० ४ । ४ । ६ ] इत्यप्यपरा श्रुतिः यत्किञ्चेत्यविशेषपरामर्शेन कृत्स्नस्येह कृतस्य कर्मणस्तत्र क्षयिततां दर्शयति ॥ अपि च प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जकम् । प्राक्प्रायणादारब्धफलेन कर्मणा प्रतिबद्धस्याभिव्यक्त्यनुपपत्तेः । तच्चाविशेषाद्यावत्किञ्चिदनारब्धफलं तस्य सर्वस्याभिव्यञ्जकम् । न हि साधारणे निमित्ते नैमित्तिकमसाधारणं भवितुमर्हति। न ह्यविशिष्टे प्रदीपसन्निधौ घटोऽभिव्यज्यते, न पट इत्युपपद्यते ॥ तस्मान्निरनुशया अवरोहन्तीति ॥ एवं प्राप्ते ब्रूमः ॥ कृतात्ययेऽनुशयवानिति । येन कर्मवृन्देन चन्द्रमसमारूढाः फलोपभोगाय तस्मिन्नुपभोगेन क्षयिते तेषां यदम्मयं शरीरं चन्द्रमस्युपभोगायारब्धं तदुपभोगक्षयदर्शनशोकाग्निसम्पर्कात्प्रविलीयते सवितृ-

रत्नप्रभा ।

कर्मार्थं पुनरायातीति श्रुत्यर्थः ॥ कर्माभावे श्रुतिमुक्त्वा युक्तिमाह—अपि चेति ॥ अभिव्यक्तिः—फलोन्मुखता । मरणेनाभिव्यक्तस्य सर्वस्य कर्मणः परलोकभोगस्य अवश्यम्भावात् कर्माभाव इत्यर्थः ॥ चरणाख्यशीलमात्रादवरोह इति प्राप्ते सिद्धान्तप्रतिज्ञां व्याचष्टे—येनेत्यादिना ॥ तत्राऽवरोहतां जीवानां

भामती ।

अप्यविशेषेणानुशयस्तथापि यद्यप्ययमिष्टापूर्तकारी स्वयं निरनुशयो भुक्तभोगत्वात्तथापि पित्रादिगतानुशयवशात्तद्विपाकान् जात्यायुर्भोगांश्चन्द्रलोकादवरुह्यानुभविष्यति । स्मर्यते ह्यन्यस्य सुकृतदुष्कृताभ्यामन्यस्य तत्संबन्धिनस्तत्फलभागिता—'पतत्यर्धं शरीरेण यस्य भार्या सुरां पिबेत्' इत्यादि । तथा श्राद्धवैश्वानरीयेष्ट्यादेः पितापुत्रादिगामिफलश्रुतिः । तस्माद्यावत्संपातमित्युपक्रमानुरोधात् 'यत किंचेह करोति' इति च श्रुत्यन्तरानुसाराद्रमणीयचरणत्वं संबन्ध्यन्तरगतमिष्टापूर्तकारिणि भाक्तं गमयितव्यम् । तथा च निरनुशयानामेव भुक्तभोगानामवरोह इति प्राप्त उच्यते—येन कर्मकलापेन फलमुपभोजितं तस्मिन्नतीतेऽपि सानुशया एव चन्द्रमण्डलादवरोहन्ति । कुतः—दृष्टस्मृतिभ्याम् । प्रत्यक्षदृष्टा श्रुतिर्दृष्टशब्दवाच्या । स्मृतिश्चोपन्यस्ता । अथ वा दृष्टशब्देनोच्चावचरूपो भोग उच्यते । अयमभिसंधिः—कपूयचरणा रमणीयचरणा इत्यवरोहतामेतद्विशेषणम् । न च सति मुख्यार्थसंभवे संबन्धिमात्रेणोपचरितार्थत्वं न्याय्यम् । न चोप-

आनन्दगिरीय—न्यायनिर्णयः ।

तस्यान्तं फलं परलोके प्राप्य तस्माल्लोकात्पुनरस्मै लोकाय कर्मानुष्ठानार्थमागच्छति । पुनःशब्दात्पूर्वमप्यागत इति गम्यते संसारस्यानादित्वादित्यर्थः । परामर्शश्रुतेस्तात्पर्यमाह—इति हीति । न चोपसंहारे ब्राह्मण्यादिहेतुकर्मावगमादुपक्रमस्यापि संकोचस्तदनुसारेणोपसंहारस्य नेतव्यत्वात् । उपक्रमे च यावत्संपातमिति श्रवणात्तस्य च प्रथमश्रुतस्य बलीयस्त्वाद्ब्राह्मण्यादिप्रापकचरणस्य चाऽऽचारतया कर्मणोऽर्थान्तरत्वात् 'यथाकारी यथाचारी' इत्यादिषु भेदेन तयोरुक्तत्वान्न कर्मणा ब्राह्मणादियोन्यापत्तिरिति भावः । न केवलं श्रुत्यैवैतद्गम्यते किंतु युक्त्याऽपीत्याह—अपि चेति । विमतं स्वसंनिहिताविशेषाभिव्यञ्जकमभिव्यञ्जकत्वात्प्रदीपवत् । अभिव्यक्तिश्च कर्मणां फलदानायोन्मुखत्वम् । तत्र किंचिद्व्यज्यते किंचिन्नेत्यशक्यं वक्तुमित्याशयवानाह—प्रायणमिति । मरणस्यानारब्धसर्वकर्माभिव्यञ्जकत्वे हेतुमाह—प्रागिति । अस्तु तर्हि प्रायणं प्रबलस्य कर्मणो व्यञ्जकं तत्राऽऽह—तच्चेति । तदुपपादयति—न हीति । उक्तमर्थं दृष्टान्तेन साधयति—न हीति । श्रुतियुक्तिभ्यां सर्वस्य कर्मणश्चन्द्रलोके भुक्तफलत्वेन क्षयितत्वे फलितमाह—तस्मादिति । पूर्वपक्षमनूद्य सिद्धान्तयति—एवमिति । प्रतिज्ञां विभजते—येनेति । हेतु-

किरणसम्पर्कादिव हिमकरके, हुतभुगर्चिःसम्पर्कादिव घृतकाठिन्यम् । ततः कृतात्यये–कृतस्येष्टादेः कर्मणः फलोपभोगेनोपक्षये सति सानुशया एवेममवरोहन्ति ॥ केन हेतुना ॥ दृष्टस्मृतिभ्यामित्याह ॥ तथाहि–प्रत्यक्षा श्रुतिः सानुशयानामवरोहं दर्शयति–"तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा,अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा"[छां० ५।१०।७] इति। चरणशब्देनाऽत्रानुशयः सूच्यते इति वर्णयिष्यते। दृष्टश्चायं जन्मनैव प्रतिप्राण्युच्चावचरूप उपभोगः । प्रविभज्यमानः आकस्मि-

रत्नप्रभा ।

मध्ये ये केचिद् इह कर्मभूमौ रमणीयचरणाः पुण्यकर्माणः पुण्ययोनिभाज इति यद् अभ्याशो ह अवश्यं हीत्यर्थः । कपूयं–पापम् । दृष्टशब्दस्य श्रुतमर्थमुक्त्वार्थान्तरमाह–दृष्टश्चेति ॥ "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" [ बृ० ४ । ४ । ५ ] इत्यादिशास्त्रेण सुखदुःखयोर्धर्माधर्महेतुकत्वमवगतम् । ततश्च जन्मारभ्य दृष्टो भोगः, कर्महेतुकः, भोगत्वात्, स्वर्गभोगवदित्यनुशयसिद्धिः । विपक्षे

भामती ।

क्रमविरोधाच्छ्रुत्यन्तरविरोधाच्च मुख्यार्थासंभव इति सांप्रतम् । दत्तफलेष्टापूर्तकर्मापेक्षयापि यावत्पदस्य यत्किंचेतिपदस्य चोपपत्तेः । न हि 'यावज्जीवमग्निहोत्रं जुहुयात्'इति यावज्जीवमाहारविहारादिसमयेऽपि होमं विधत्ते नापि मध्याह्नादावपि तु सायंप्रातःकालापेक्षया । सायंप्रातःकालविधानसामर्थ्यात्, कालस्य चानुपादेयतयानङ्गस्यापि निमित्तानुप्रवेशात्तत्रैवमिति चेत् । न । इहापि रमणीयचरणा इत्यादेर्मुख्यार्थत्वानुरोधात्तदुपपत्तेः। तत्किमिदानीमुपसंहारानुरोधेनोपक्रमः संकोचयितव्यः । नेत्युच्यते। न ह्यसावुपसंहारानुरोधेऽप्यसंकुचद्वृत्तिरुपपत्तुमर्हति । न हि यावन्तः संपाता यावतां वा पुंसां संपातास्ते सर्वे तत्रेष्टादिकारिणा भोगेन क्षयं नीयन्ते।पुरुषान्तराश्रयाणां कर्माशयानां तद्भोगेन क्षयेऽतिप्रसङ्गात्। चिरोपभुक्तानां च कर्माशयानामसतां चन्द्रमण्डलोपभोगेनापनयनात् । तथा च स्वयं संकुचन्ती यावच्छ्रुतिरुपसंहारानुरोधप्राप्तमपि संकोचनमनुमन्यते । एतेन 'यत्किंचेह करोति' इत्यपि व्याख्यातम् । अपि चेष्टापूर्तकारीह जन्मनि केवलं न तन्मात्रमकार्षीदपि तु गोदोहनेनापः प्रणयन् पशुफलमप्यपूर्वं समचैषीत् । एवमहर्निशं च वाङ्मनःशरीरचेष्टाभिः पुण्यापुण्यमिहामुत्रोपभोग्यं संचितवतो न मर्त्यलोकादिभोग्यं चन्द्रलोके भोग्यं भवितुमर्हति । न च स्वफलविरोधिनोऽनुशयस्य ऋते प्रायश्चित्तादात्मज्ञानाद्वाऽदत्तफलस्य ध्वंसः संभवति । तस्मात्तेनानुशयेनायमनुशयवान् परावर्तत इति श्लिष्टम् । न चैकभविकः कर्माशय इत्यग्रे भाष्यकृद्वक्ष्यति ।

आनन्दगिरीय–न्यायनिर्णयः ।

साकांक्षाद्वाराऽवतार्य व्याकरोति–केनेति । तत्तत्र तेषां मध्ये ये केचिदिह कर्मभूमौ रमणीयचरणास्ते रमणीयां योनिमापद्येरन्निति यत्तदभ्याशो ह क्षिप्रमेवाप्रतिबन्धेनेत्यर्थः । रमणीयां योनिं विशिनष्टि–ब्राह्मणेति । प्रत्यवरोहतां शुभकर्मवतां शुभयोनिप्राप्तिमुक्त्वा तेषामेवाशुभकर्मवतामशुभयोनिप्राप्तिमाह–अथेति । कपूयचरणा निन्दितकर्माणः, शेषं पूर्ववत् । ननु चरणादाचारायोन्यापचरित्रोच्यते नानुशयादन्यच्चरणमन्योऽनुशयस्तत्राऽऽह–चरणेति । अनुशेते भोक्तारमनुगच्छतीत्यनुशयः कर्मसमूहः स चरणशब्दार्थो भविष्यतीत्यर्थः । दृष्टशब्देन प्रत्यक्षश्रुतिरुक्ता । व्याख्यानान्तरमाह–दृष्टश्चेति । सर्वप्राणिषु जन्माऽऽरभ्य दृष्टोऽयमुत्कृष्टापकृष्टात्मा भोगोऽदृष्टनिमित्तो भोगत्वात्स्वर्गादिभोगवदित्यर्थः । कथमा-

 

कत्वाऽसम्भवादनुशयसद्भावं सूचयति । अभ्युदयप्रत्यवाययोः सुकृतदुष्कृतहेतुत्वस्य सामान्यतः शास्त्रेणाऽवगमितत्वात् ॥ स्मृतिरपि "वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते" इति सानुशयानामेवावरोहं दर्शयति ॥ कः पुनरनुशयो नामेति ॥ केचित्तावदाहुः—स्वर्गार्थस्य कर्मणो भुक्तफलस्याऽवशेषः कश्चिदनुशयो नाम—भाण्डानुसारिस्नेहवत्—यथा हि स्नेहभाण्डं रिच्यमानं न सर्वात्मना रिच्यते भाण्डानुसार्येव कश्चित्स्नेहशेषोऽवतिष्ठते तथाऽनुशयोऽपीति॥ननु कार्यविरोधित्वाददृष्टस्य न भुक्तफलस्यावशेषाऽवस्थानं न्याय्यम् ॥ नायं दोषः॥ न हि सर्वात्मना भुक्तफलत्वं कर्मणः प्रतिजानीमहे॥

---

रत्नप्रभा ।

स्य हेत्वभावाद् भोगस्याऽऽकस्मिकत्वप्रसङ्ग इत्यर्थः । स्मृतौ—आश्रमाः आश्रमिणः प्रेत्य मृत्वा लोकान्तरे कर्मफलं भुक्त्वा ततः शेषेण भुक्तादन्येन कर्मणा अनुशयाख्येन पुनः जन्म प्रतिपद्यन्ते इति सम्बन्धः । विशिष्टाः देशादयो मेधान्ताः दश गुणाः येषु ते तथोक्ताः । श्रुतं ज्ञानम्। वृत्तम् आचारः॥ स्वाभिमतानुशयं वक्तुं पृच्छति— कः पुनरिति ॥ कृतस्य कर्मणः स्वर्गे भोगे सति भुक्तस्य कर्मणो लेशोऽनुशयः, तद्वानवरोहति । भाण्डे स्नेहलेशस्य दृष्टत्वात्, ततः शेषेणेति स्मृतेश्चेत्येकदेशिव्याख्यामाह—केचिदित्यादिना ॥ रिच्यमानं स्नेहेन वियुज्यमानम् ॥ ननु भोगनाश्यत्वात् कर्मणो लेशो न युक्त इति शङ्कते—नन्विति ॥ कृत्स्नकर्मणो भोगे जाते नाशः स्यात् न तु भोगो जात इति परिहारार्थः ॥

भामती ।

अन्ये तु सकलकर्मक्षये परावृत्तिशङ्का निर्बीजेति मन्यमाना अन्यथाधिकरणं वर्णयांचक्रुरित्याह—केचित्तावदाहुरिति । अनुशयोऽत्र दत्तफलस्य कर्मणः शेष उच्यते । तत्रेदमिह विचार्यते—किं दत्तफलानामिष्टापूर्तकर्मणामवशेषादिहावर्तन्ते उत तान्युपभोगेन निरवशेषं क्षपयित्वाऽनुपभुक्तकर्मवशादिहावर्तन्त इति । तत्रेष्टादीनां भोगेन समूलकाषं कषितत्वान्निरनुशया एवानुपभुक्तकर्मवशादावर्तन्त इति प्राप्त उच्यते—

आनन्दगिरीय—न्यायनिर्णयः ।

कस्मिकत्वासंभवस्तत्राऽऽह—अभ्युदयेति । 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इति सुखदुःखयोः सुकृतदुष्कृतकार्यत्वस्य सिद्धत्वाद्यो भोगः स कर्मनिमित्त इति व्याप्तेरनुशयसिद्धिरित्यर्थः । दृष्टं व्याख्याय स्मृतिं व्याचष्टे—स्मृतिरपीति । प्रेत्य प्रायणं कृत्वा चन्द्रलोकमधिरुह्येत्यर्थः । ततः शेषेण भुक्तादन्येन कर्मणा जन्म प्रतिपद्यन्त इति संबन्धः । श्रुतं ज्ञानम् । वृत्तमाचारः । देशश्च जातिश्च कुलं च रूपं चाऽऽयुश्च श्रुतं च वृत्तं च वित्तं च सुखं च मेधा च ते विशिष्टा येषु ते तथोक्ताः । अनुशयशब्दस्यार्थान्तरे रूढेर्निर्धारणार्थं पृच्छति—कः पुनरिति । एकदेशिमतमाह—केचिदिति । तत्पक्षे किमिष्टादिकर्मस्वशेषतो भुक्तफलेष्वननुभुक्तकर्मान्तरवशादावृत्तिः । अथ वा तेषामेवावशेषादिति संशये भुक्तत्वादिष्टादीनामभुक्तकर्मान्तरादावृत्तिरिति प्राप्ते कृतात्ययेऽनुशयवानिति व्याचष्टे—स्वर्गेति । यदिष्टादि स्वर्गार्थं कृतं तस्य भुक्तस्यात्यये कश्चिदवशेषोऽनुशयस्तद्वानवरोहतीत्यर्थः । दृष्टेतिपदस्यार्थमाह—भाण्डेति । तदेव प्रपञ्चयति—यथेति । भाण्डानुसारिणः स्नेहस्याविरोधाद्युक्तः शेषः । कर्म तु फलोदयविरोधित्वात्फलं चेज्जातं नष्टमेवेति न तस्य शेषसिद्धिरिति शङ्कते—नन्विति । कृत्स्नस्य कर्मणो यदि फलं जातं तदा नावशेषसिद्धिर्न तु तदस्तीत्याह—नायमिति । येन कर्मणा चन्द्रमसमारूढास्तत्कर्म सर्वं तत्र

ननु निरवशेषकर्मफलोपभोगाय चन्द्रमण्डलमारूढाः ॥ बाढम् ॥ तथापि स्वल्पकर्माऽवशेषमात्रेण तत्राऽवस्थातुं न शक्यते । यथा किल कश्चित्सेवकः सकलैः सेवोपकरणैः राजकुलमुपसृतश्चिरप्रवासात्परिक्षीणबहूपकरणश्छत्रपादुकादिमात्राऽवशेषो न राजकुलेऽवस्थातुं शक्नोति, एवमनुशयलेशमात्रपरिग्रहो न चन्द्रमण्डलेऽवस्थातुं शक्नोतीति । न चैतद्युक्तमिव । न हि स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषानुवृत्तिरुपपद्यते, कार्यविरोधित्वादित्युक्तम् ॥ नन्वेतदप्युक्तं न स्वर्गफलस्य कर्मणो निखिलस्य भुक्तफलत्वं भवतीति ॥ तदेतदपेशलम् ॥ स्वर्गार्थं किल कर्म स्वर्गस्थस्यैव स्वर्गफलं निखिलं जनयति, स्वर्गच्युतस्याऽपि कञ्चित्फललेशं जनयतीति-न शब्दप्रमाणकानामीदृशी कल्पनाऽवकल्पते । स्नेहभाण्डे तु स्नेहलेशानुवृत्तिर्दृष्टत्वादुपपद्यते । तथा सेवकस्योपकरणलेशानुवृत्तिर्दृश्यते, न त्विह तथा स्वर्गफलस्य कर्मणो लेशाऽनुवृत्तिर्दृश्यते । नापि कल्पयितुं शक्यते । स्वर्गफलत्वशास्त्रविरोधात् ॥ अवश्यञ्चैतदेवं विज्ञेयं न स्वर्गफलस्येष्टादेः कर्मणो भाण्डानुसारिस्नेहवदेकदेशोऽनुवर्तमानोऽनुशय इति । यदि हि येन सुकृतेन कर्मणेष्टादिना स्वर्गमन्वभू-

रत्नप्रभा ।

भोगो न जायत इत्ययुक्तमिति शङ्कते-नन्विति ॥ भोगः सावशेषो जात इति समाधत्ते-बाढमित्यादिना ॥ इदमेकदेशिव्याख्यानं दूषयति-न चेति ॥ "स्वर्गकामो यजेत" इत्यादिशास्त्रेण स्वर्गभोगार्थं कर्म चोदितम्, तच्छेषस्य मर्त्यभोगहेतुत्वे शास्त्रविरोध इत्यर्थः ॥ किञ्च स्वर्गहेतुकर्मशेषादवरोहे कपूययोन्यापत्तिश्रुतिविरोध इत्याह-अवश्यञ्चेति ॥ स्वाभिमतमनुशयमाह-

भामती ।

सानुशया एवावर्तन्त इति । कुतः-दृष्टानुसारात् । यथा भाण्डस्थे मधुनि सर्पिषि वा क्षालितेऽपि भाण्डलेपकं तच्छेषं मधु वा सर्पिर्वा न क्षालयितुं शक्यमिति दृष्टमेवं तदनुसारादेतदपि प्रतिपत्तव्यम् । न चावशेषमात्राच्चन्द्रमण्डले तिष्ठासन्नपि स्थातुं पारयति । यथा सेवको हास्तिकाश्वीयपदातिव्रातपरिवृतो महाराजं सेवमानः कालवशाच्छत्रपादुकावशेषो न सेवितुमर्हतीति दृष्टं तन्मूला च लौकिकी स्मृतिरिति दृष्टस्मृतिभ्यां सानुशया एवावर्तन्त इति । तदेतद्दूषयति-न चैतदिति । एवकारे प्रयोक्तव्ये इवकारो

आनन्दगिरीय-न्यायनिर्णयः ।

न भुक्तमित्ययुक्तमिति शङ्कते-नन्विति । भोगार्थं चन्द्रारोहणमङ्गीकृत्य विरोधं समाधत्ते-बाढमिति । अत्रापि दृष्टेति व्याचष्टे-यथेति । अत्र च स्मृतिशब्देन लौकिकी स्मृतिर्यथोक्तदृष्टमूला वा 'ततः शेषेण' इत्याद्या गृहीता । तदेतदेकदेशिमतं दूषयति-न चेति । इवकारो मधुरोक्त्या प्रयुक्तो वस्तुतस्त्वेवकारो विवक्षितः । अयुक्तत्वे हेतुमाह-न हीति । स्वर्गार्थेन कर्मणा स्वर्गश्चेदारब्धो न तस्य शेषस्तेन स्वर्गो नाऽऽरभ्यते चेन्न तस्यार्थवत्तेति भावः।स्वर्गस्याऽऽरब्धत्वेऽपि कृत्स्नस्यानारम्भान्नोक्तदूषणमिति शङ्कते-नन्विति । स्वार्गार्थं चोदितस्य कर्मणः स्वर्गार्थत्वयोगान्नैवमित्याह-तदेतदिति । परोक्तं दृष्टान्तं विघटयति-स्नेहेति। तथा दृष्टत्वादुपपन्नेति यावत्। दार्ष्टान्तिकेऽपि तथैव लेशानुवृत्तिरित्याशंक्य दृष्टा कल्पिता वा सेति विकल्प्याऽऽद्यं प्रत्याह-न त्विति । इहेति शास्त्रीयव्यवहारभूमिरुक्ता । द्वितीयं निराह-नापीति । शब्दैकगम्यत्वान्नायमर्थः सामान्यतो दृष्टगम्य इत्यर्थः । किंच, स्वर्गहेतुकर्मशेषादनुशयादवरोहे कपूययोन्यापत्तिशास्त्रविरोधः स्यादित्याह-अवश्यं चेति । तदेव स्फुटयति-यदीत्यादिना ।

वन् तस्यैव कश्चिदेकदेशोऽनुशयः कल्प्येत, ततो रमणीय एवैकोऽनुशयः स्यान्न विपरीतः । तत्रेयमनुशयविभागश्रुतिरुपरुध्येत—"तद्य इह रमणीयचरणाः" [ छां० ५ । १० । ७ ] "अथ य इह कपूयचरणाः" [ छां० ५ । १० । ७ ] इति ॥ तस्मादामुष्मिकफले कर्मजाते उपभुक्तेऽवशिष्टमैहिकफलं कर्मान्तरजातम् अनुशयः, तद्वन्तोऽवरोहन्तीति ॥ यदुक्तं यत्किञ्चेत्यविशेषपरामर्शात्सर्वस्येह कृतस्य कर्मणः फलोपभोगेनाऽन्तं प्राप्य निरनुशया अवरोहन्तीति ॥ नैतदेवम् ॥ अनुशयसद्भावस्याऽवगमितत्वात् । यत्किञ्चिदिह कृतमामुष्मिकफलं कर्माऽऽरब्धभोगं, तत्सर्वं फलोपभोगेन क्षपयित्वेति गम्यते ॥ यदप्युक्तं प्रायणमविशेषादनारब्धफलं कृत्स्नमेव कर्माभिव्यनक्ति । तत्र केनचित्कर्मणाऽमुष्मिँल्लोके फलमारभ्यते, केनचिदस्मिन्नित्ययं विभागो न सम्भवतीति । तदप्यनुशयसद्भावप्रतिपादनेनैव प्रत्युक्तम् ॥ अपि च केन हेतुना प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जकं प्रतिज्ञायत इति वक्तव्यम् । आरब्ध-

---

रत्नप्रभा ।

**तस्मादिति**॥पूर्वपक्षबीजमनूद्य दूषयति—**यदित्यादिना**॥क्षपयित्वा पुनरागच्छतीति प्राप्यान्तमिति वाक्येन गम्यत इति **योजना**। जन्मारम्य दृष्टभोगलिङ्गानुगृहीतया रमणीयकपूयचरणश्रुत्या ऐहिकानुशयाख्यकर्मविशेषपरया विरोधाद् यत्किञ्चेति, यावत्सम्पातमिति च सामान्यशब्दयोरामुष्मिकविषयत्वेन सङ्कोचो न्याय्य इति भावः॥ मरणं कृत्स्नकर्माभिव्यञ्जकमित्ययुक्तम् । उक्तानुशयश्रुतिविरोधादित्याह—**तदपीति**॥ बलवदनारब्धकर्मप्रतिबन्धाच्च न कृत्स्नकर्माभिव्यक्तिरित्याह—**अपि चेत्यादिना** ॥ तस्य कृत्स्नकर्मव्यञ्जकत्वे हेतुर्नास्तीति भावः ॥ प्रश्नं मत्वोत्तरं शङ्कते—**आरब्धेति** ॥ आरब्धवदनारब्धस्यापि बलवतः प्रतिबन्धकत्वात् न

भामती ।

गुडजिह्विकया प्रयुक्तः । शब्दैकगम्येऽर्थे न सामान्यतोदृष्टानुमानावसर इत्यर्थः । शेषमतिरोहितार्थम् । पूर्वपक्षहेतुमनुभाष्यते—**यदप्युक्तं प्रायणमिति** । दूषयति—**तदप्यनुशयसद्भाव इति** । रमणीयचरणाः कपूयचरणा इत्यादिकयानुशयप्रतिपादनपरया श्रुत्या विरुद्धमित्यर्थः । **अपि चेत्यादि** । इह जन्मनि

आनन्दगिरीय—न्यायनिर्णयः ।

परमतायोगे स्वमतमुपसंहरति—**तस्मादिति** । प्रथमं पूर्वपक्षबीजमनुभाषते—**यदिति** । यद्यपि यत्किंचयावत्संपातशब्दौ चन्द्रमस्येव सर्वस्य कर्मणो भुक्तत्वप्रापकत्वेनानुशयाभावे लिङ्गभूतौ तथाऽपि रमणीयचरणाः कपूयचरणा इति शब्दयोर्विशिष्टजात्यारम्भकैहिककर्मसद्भावावेदकत्वादशेषभोगविषयसामान्यलिङ्गस्यैहिककर्मसत्त्वविषयविशेषलिंगेनाऽऽमुष्मिकविषयतया संकोचः स्यादिति मत्वाऽऽह—**नैतदिति** । फलभोगेन चन्द्रलोके स्थित्वेति शेषः । क्षपयित्वा तस्माल्लोकात्पुनरस्मै लोकायाऽऽगच्छतीति प्राप्यान्तमित्यादिवाक्येन गम्यत इति योजना । द्वितीयं पूर्वपक्षबीजमनुवदति—**यदपीति** । मरणस्याविशेषेणाशेषानारब्धकर्मव्यञ्जकत्वे विभागायोगं फलितमाह—**तत्रेति** । रमणीयचरणा इत्याद्यनुशयवादिश्रुतिविरोधादभिव्यञ्जकमपि प्रायणं न सर्वकर्मव्यञ्जकमनुमातुं शक्यमित्याह—**तदपीति** । व्यञ्जकत्वं प्रायणस्यापीत्युक्तं तदपि नास्तीत्याह—**अपि चेति** । न हि तस्य सर्वकर्मव्यञ्जकत्वे कारणं किंचिदिति भावः । पूर्ववादी पृष्टं मत्वा हेतुमाह—**आरब्धेति** । नानाविधसुखदुःखफलकर्मणामपर्यायेण प्रायणेऽभिव्यक्तिश्चेत्फलाभिमुख्यलक्षणत्वाद्व्यक्तेर्युगपत्तत्तत्फलभोगप्रसङ्गात्तस्य चादृष्टेस्तत्तत्प्रबलकर्मप्रतिबन्धध्वंसमपेक्ष्य क्रमेणैव

फलेन कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तेस्तदुपशमात्प्रायणकाले वृत्त्युद्भवो भवतीति यद्युच्येत तत्र वक्तव्यम् ॥ यथा-तर्हि प्राक् प्रायणादारब्धफलेन कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तिः । एवं प्रायणकालेऽपि विरुद्धफलस्याऽनेकस्य कर्मणो युगपत्फलारम्भाऽसम्भवाद्बलवता प्रतिबद्धस्य दुर्बलस्य वृत्त्युद्भवानुपपत्तिरिति न ह्यनारब्धफलत्वसामान्येन जात्यन्तरोपभोग्यफलमप्यनेकं कर्मैकस्मिन् प्रायणे युगपदभिव्यक्तं सदेकां जातिमारभत इति शक्यं वक्तुम् । प्रतिनियतफलत्वविरोधात् । नापि कस्यचित्कर्मणः प्रायणेऽभिव्यक्तिः कस्यचिदुच्छेद इति शक्यते वक्तुम् । ऐकान्तिकफलत्वविरोधात् । न हि प्रायश्चित्तादिभिर्हेतुभिर्विना कर्मणामुच्छेदः सम्भाव्यते । स्मृतिरपि विरुद्धफलेन कर्मणा प्रतिबद्धस्य कर्मान्तरस्य चिरमप्यवस्थानं दर्शयति-"कदाचित्सुकृतं कर्म कूटस्थमिह तिष्ठति । मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते ॥ १ ॥" इत्येवञ्जातीयका । यदि च कृत्स्नमनारब्धफ-

रत्नप्रभा ।

सर्वकर्मणः फलदानायाऽभिव्यक्तिरिति समाधत्ते-**यथेति** ॥ अनारब्धफलत्वाविशेषात् सर्वकर्मणामभिव्यक्तिमाशङ्क्य मिथोविरुद्धस्वर्गनरकादिदेहफलानामेकदेहारम्भकत्वासम्भव उक्तः । तं विवृणोति-**न हीति**॥ अस्तु तर्हि दुर्बलस्य कर्मणो नाश इत्यत आह-**नापीति** ॥ "नाभुक्तं क्षीयते कर्म" इति **एकान्तः** उत्सर्गः । स च प्रायश्चित्तब्रह्मज्ञानध्यानैर्बाध्यते, न मरणमात्रेणेत्यर्थः ॥ मरणेन दुर्बलकर्माविनाशे मानमाह-**स्मृतिरिति** ॥ कर्मनाशपक्षं निरस्य प्रकृतकृत्स्नकर्माभिव्यक्तिपक्षे दोषान्तरमाह-**यदि चेति** ॥ कृत्स्नकर्मणामेकस्मिन् देवादिजन्मनि भोगेन क्षयात् न जन्मान्तरं स्यात्, ज्ञानाभावात् न मुक्तिरित्यादि

भामती ।

हि पर्यायेण सुखदुःखे भुज्यमाने दृश्येते । युगपच्चेदेकप्रघट्टकेन प्रायणेन सुखदुःखफलानि कर्माणि व्यज्येरन् । युगपदेव तत्फलानि भुज्येरन्।तस्मादुपभोगपर्यायदर्शनाद्बलीयसा दुर्बलस्याभिभवः कल्पनीयः। एवं विरुद्धजातिनिमित्तोपभोगफलेष्वपि कर्मसु द्रष्टव्यम्।न चाभिव्यक्तं च कर्म फलं न दत्त इति च संभवति । फलोपजनाभिमुख्यं हि कर्मणामभिव्यक्तिः।अपि च प्राणस्याभिव्यञ्जकत्वे स्वर्गनरकतिर्यग्योनिगतानां जन्तूनां तस्मिञ्जन्मनि कर्मस्वनधिकारान्नापूर्वकर्मोपजनः पूर्वकृतस्य कर्माशयस्य प्रायणाभिव्यक्ततया फलोपभोगेन प्रक्षयान्नास्ति

आनन्दगिरीय-न्यायनिर्णयः ।

तत्तत्कर्मव्यक्तिरिति परिहरति-**यथेति** । युगपत्फलारम्भासंभवादित्यसिद्धम् । सर्वस्यापि कर्मणोऽनारब्धफलत्वाविशेषादेकजात्यारम्भकत्वसंभवादित्याशंक्य विरुद्धजातिनिमित्तभोगफलस्य कर्मणः शास्त्रयुक्तिविरुद्धमेकजात्यारम्भकत्वमित्याह-**न हीति** । प्रायणावस्थायामुपस्थिते विरुद्धे कर्मणि प्रबलेन दुर्बलस्योच्छेदः स्यादित्याशंक्याऽऽह-**नापीति** । कृतं कर्माऽऽवश्यकफलकमिति नास्त्येकान्तः । प्रायश्चित्तेन ब्रह्मज्ञानेन च तत्क्षयश्रुतेरित्याशंक्य प्रकृते तदभावान्नोच्छेदोऽस्तीत्याह-**न हीति** । प्रायश्चित्तेन वा ब्रह्मज्ञानेन वा भोगेन वा विना कर्मणां विच्छेदो नेत्यत्र मानमाह-**स्मृतिरिति** । इतोऽपि प्रायणाभिव्यक्तं सर्वमेव कर्मैकजात्यारम्भकमित्ययुक्तमित्याह-**यदि चेति** । पूर्वस्य कर्मणः सर्वस्याप्येकजात्यारम्भकस्य भोगेन क्षयान्मनुष्याधिकारित्वाच्च शास्त्रस्य स्वर्गादियोनिषु कर्मासिद्धेर्न तन्निमित्तः संसारः स्यात् । न च ज्ञानाभावान्मुक्तिरिति दुर्घटतेत्यर्थः । "श्वसूकरखरोष्ट्राणां गोजविमृगपक्षिणाम् । चण्डालपुल्कसानां च ब्रह्महा

लं कर्मैकस्मिन्प्रायणेऽभिव्यक्तं सदेकां जातिमारभेत, ततः स्वर्गनरकतिर्यग्योनिष्वधिकारानवगमाद्धर्माऽधर्मानुत्पत्तौ निमित्ताभावान्नोत्तरा जातिरुपपद्येत। ब्रह्महत्यादीनां चैकैकस्य कर्मणोऽनेकजन्मनिमित्तत्वं स्मर्यमाणमुपरुध्येत। न च धर्माऽधर्मयोः स्वरूपफलसाधनादिसमधिगमे शास्त्रादतिरिक्तं कारणं शक्यं सम्भावयितुम्॥ न च दृष्टफलस्य कर्मणः कारीर्यादेः प्रायणमभिव्यञ्जकं सम्भवतीत्येषापि काचीयं प्रायणस्याभिव्यञ्जकत्वकल्पना। प्रदीपोपन्यासोऽपि कर्मबलाबलप्रदर्शनेनैव प्रतिनीतः। स्थूलसूक्ष्मरूपाभिव्यक्तिवच्चेदं द्रष्टव्यम्। यथा हि प्रदीपः समानेऽपि सन्निधाने स्थूलरूपमभिव्यनक्ति न सूक्ष्मम्। एवं प्रायणं समानेऽप्यनारब्धफलस्य कर्मजातस्य प्राप्ताऽवसरत्वे बलवतः कर्मणो वृत्तिमुद्भावयति, न दुर्बलस्येति। तस्माच्छ्रुतिस्मृतिन्यायविरोधादश्लिष्टोऽय-

रत्नप्रभा।

देवस्य कष्टा दशा स्यादित्यर्थः॥ "श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम्। चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति॥ १॥" इत्यादिस्मृतिविरोधाच्च न सर्वकर्मणामेकजन्मारम्भकत्वमित्याह-ब्रह्मेति॥ नन्वेकस्य कर्मणः कथमनेकजन्मफलकत्वम्। अदृष्टत्वादित्यत आह-न चेति॥ किञ्च व्यञ्जकत्वेऽपि मरणस्य किं सर्वकर्मव्यञ्जकत्वं कल्प्यते उत यत्किञ्चित्कर्मव्यञ्जकत्वम्। नाद्यः, इह कृतकारीर्यादेरत्रैव फलहेतोर्मरणव्यङ्ग्यत्वाऽसम्भवादित्याह-न चेति॥ द्वितीयं निरस्यन् परोक्तं दृष्टान्तं विघटयति-प्रदीपेति॥ रूपाणां प्रदीपवत्, मरणं न कस्यचिदपि कर्मणो व्यञ्जकम्। किन्तु प्रबलकर्मप्रतिबन्धाभावे दुर्बलं व्यज्यत इत्यर्थः॥ एवं मरणस्य व्यञ्जकत्वानङ्गीकारेण प्रदीपदृष्टान्तो निरस्तः॥ अङ्गीकारेऽप्यनुकूलो दृष्टान्त इत्याह-स्थूलेति॥ सूक्ष्ममनुद्भूतरूपमिति मरणे सर्वकर्माभिव्यक्त्यसिद्धिरिति शेषः॥ एवं सर्वकर्मसंघः एकजन्मारम्भः इत्यैकभविकः कर्माशय इति मतनिरासमुपसंहरति॥ तस्मादिति॥ चरणश्रुत्या ततः शेषेणेत्यादिस्मृत्या प्रबलप्रतिबन्धादितिन्यायेन च अनभिव्यक्तकर्मसद्भावादित्यर्थः॥

भामती।

तेषां कर्माशय इति न ते संसरेयुः। न च मुच्येरन्नात्मज्ञानाभावादिति कष्टां बताविष्टा दशाम्। किंच, स्वसम-

आनन्दगिरीय-न्यायनिर्णयः।

योनिमृच्छति'' । इत्यादिस्मृतिविरोधोऽपि कर्माशयस्यैकभविकत्वे स्यादित्याह-ब्रह्मेति । एकस्यापि कर्मणोऽनेकजात्यारम्भकत्वस्मरणादनेकेषामेकजात्यारम्भकत्वं दूरनिरस्तमित्युक्तं तदयुक्तम्। एकं हि कर्मैकफलं दृष्टं न च सामान्यतो दृष्टविरुद्धं वचनं मानमित्याशंक्याऽऽह-न चेति । किंच प्रायणं सर्वस्य वा कर्मणो व्यञ्जकं कस्यचिदेव वा नाऽऽद्य इत्याह-न चेति । कारीर्यादेरिहैवानुष्ठितस्यात्रैव भुज्यमानत्वान्न प्रायणेन व्यङ्ग्यतेत्यर्थः। द्वितीयं निरस्यन्परोक्तं दृष्टान्तं प्रत्याह-प्रदीपेति । यश्च प्रदीपदृष्टान्तः सोऽपि प्रायणस्य सति व्यञ्जकत्वेऽनुकूलः स्यात् । यदा तु न तद्व्यञ्जकं किंतु बलवता प्रतिबद्धं दुर्बलं दृष्टमिति दर्शितं तदा तेनैव सोऽपि निरस्त इत्यर्थः । भवतु वा प्रायणस्य क्वचित्कर्मणि व्यञ्जकत्वं तदाऽपि प्रदीपोऽनुकूलो भवतीत्याह-स्थूलेति । उक्तमेव व्यनक्ति-यथेत्यादिना। इति सर्वकर्मव्यञ्जकत्वासिद्धिः। कतिपयव्यञ्जकत्वमिष्टमेवेति शेषः । ऐकभविकः कर्माशय इति मतनिरासं निगमयति-तस्मादिति। श्रुतिश्चरणश्रुतिः। स्मृतिश्च श्वसूकरेत्याद्या । न्यायस्तु केन हेतुनेत्यादावुक्तः। यदि सर्वं कर्मैकस्मिन्मुमुक्षुदेहे न भुज्यते तदाऽवशिष्टकर्मानन्त्यान्न कदाचिन्मुक्तिरतो मुक्त्यनुपपत्त्या प्रायणव्यक्तं

मशेषकर्माभिव्यक्त्यभ्युपगमः । शेषकर्मसद्भावेऽनिर्मोक्षप्रसङ्ग इत्ययमप्यस्थाने सम्भ्रमः । सम्यग्दर्शनादशेषकर्मक्षयश्रुतेः ॥ तस्मात्स्थितमेतद्-अनुशयवन्तोऽवरोहन्तीति । ते चाऽवरोहन्तो "यथेतमनेवं च" अवरोहन्ति ॥ यथेतमिति । यथागतमित्यर्थः । अनेवमिति तद्विपर्ययेणेत्यर्थः । धूमाकाशयोः पितृयाणेऽध्वन्युपात्तयोरवरोहे सङ्कीर्तनाद्, यथेतंशब्दाच्च,-यथागतमिति प्रतीयते । रात्र्याद्यसंकीर्तनादभ्राद्युपसंख्यानाच्च विपर्ययोऽपि प्रतीयते ॥ ८ ॥

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

अथापि स्यात् या श्रुतिरनुशयसद्भावप्रतिपादनायोदाहृता-"तद्य इह रमणीयचरणाः" [ छां० ५ । १० । ७ ] इति, सा खलु चरणाद्योन्यापत्तिं दर्शयति, नानुशयाद् । अन्यच्चरणम् । अन्योऽनुशयः । चरणं, चारित्रम्-आचारः-शीलमित्यनर्थान्तरम् । अनुशयस्तु भुक्तफलात्कर्मणोऽतिरिक्तं कर्माभिप्रेतम् । श्रुतिश्च कर्मचरणे भेदेन व्यपदिशति-"यथाकारी यथाचारी तथा भवति" [ बृ० ४ । ४ । ५ ] इति "यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि" [ तै० उ० १ । ११ । २ ] इति च ।

---

रत्नप्रभा ।

ननु मुक्त्यनुपपत्त्याऽङ्गीकार्य एकभविक इत्यत आह-शेषेति ॥ सूत्रशेषं व्याचष्टे-ते चेत्यादिना ॥ अवरोहमार्ग इत्थं श्रूयते-"तस्मिन्यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते, यथेतमाकाशमाकाशाद्वायुं, वायुर्भूत्वा धूमो भवति, धूमो भूत्वाऽभ्रं भवति ॥ ५ ॥ अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति, त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते । अतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति तद् य इह रमणीयचरणा रमणीयां योनिमापद्येरन्" [ छां० ५ । १० । ७ ] इति । धूमाद्यध्वना यथेतं यथा गतं तथैतमध्वानं पुनरायान्तीत्युक्त्वा धूमादिरूपपितृमार्गस्य रात्र्यादिकं नोक्तम्, अधिकं चाऽभ्रादिकमुक्तमिति मत्वा सूत्रकृतोक्तं-यथेतमनेवञ्चेति । अवशिष्टश्रुत्यर्थोऽग्रे स्फुटीभविष्यति ॥ ८ ॥ सम्प्रति श्रुतिस्थचरणशब्दमाक्षेपपूर्वकं सूत्रकृद्व्याचष्टे-चरणादिति चेदिति ॥ "अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा । अनुग्रहश्च ज्ञानं च शीलमेतद्विदुर्बुधाः ॥ १ ॥"

भामती ।

वेतमेव प्रायणेनाभिव्यज्यतेऽपूर्वं न परसमवेतं, येन पित्रादिगतेन कर्मणा वर्तेरन्निति । शेषं सुगमम् ॥ ८ ॥ चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः । अनेन निरनुशया एवावरोहन्तीति पूर्व-

आनन्दगिरीय-न्यायनिर्णयः ।

सर्वं कर्मैकदेहारम्भकमित्याशंक्याऽऽह-शेषेति । सूत्रावयवव्याख्यानमुपसंहरति-तस्मादिति । अवशिष्टं व्याचष्टे-ते चेति । विरुद्धमेतदित्याशंक्याऽऽह-धूमेति ॥ यथेतंशब्दाच्चेति । "यथेतमेवाध्वानं पुनर्निवर्तन्ते" "यथेतम्" इति श्रुतेश्चेत्यर्थः । विपर्ययप्रतीतिप्रापकमाह-रात्र्यादीति ॥ ८ ॥ पूर्वोदाहृतां श्रुतिमाक्षेपसमाधिभ्यां विवृणोति-चरणादीति । चोद्यं व्याकरोति-अथापीति । श्रुत्याऽनुशयसत्त्वे दर्शितेऽपीति यावत् । चरणाद्या योन्यापत्तिः साऽनुशयादेव तयोरैक्यादित्याशंक्याऽऽह-अन्यादिति । तदेवान्यत्वं स्फुटयितुं चरणानुशयशब्दार्थमनुवदति-चरणमिति । तत्र श्रुतिमनुकूलयति-श्रुतिश्चेति ।

तस्माच्चरणाद्योन्यापत्तिश्रुतेर्नानुशयसिद्धिरिति चेत् ॥ नैष दोषः ॥ यतोऽनुशयोपलक्षणार्थैवैषा चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते ॥९॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

स्यादेतत्—कस्मात्—पुनश्चरणशब्देन श्रौतं शीलं विहाय लाक्षणिकोऽनुशयः प्रत्याय्यते ॥ ननु शीलस्यैव तु श्रौतस्य विहितप्रतिषिद्धस्य साध्वसाधुरूपस्य शुभाशुभयोन्यापत्तिः फलं भविष्यति । अवश्यं च शीलस्यापि किञ्चित्फलमभ्युपगन्तव्यम् । अन्यथा ह्यानर्थक्यमेव शीलस्य प्रसज्येतेति चेत् ॥ नैष दोषः ॥कुतः ॥ तदपेक्षत्वात्—इष्टादि हि कर्मजातं चरणापेक्षम् । न हि सदाचारहीनः कश्चिदधिकृतः स्यात् । "आचार-

रत्नप्रभा ।

इति स्मृतावुक्ताः अद्रोहादयः शास्त्रार्थज्ञानरूपं शील सर्वकर्माङ्गमुक्तम् । तद्बोधकं चरणपदमङ्गिनः श्रौतादिकर्मणो लक्षकम् । "कर्मण एवोत्तरावस्था धर्माधर्माख्याऽपूर्वम्" इति कर्मलक्षणयैव तदभिन्नाऽपूर्वाख्यानुशयसिद्धिरिति कार्ष्णाजिनिमतम् ॥ ९ ॥ तदेव शङ्कासमाधानाभ्यामाह—**आनर्थक्यमिति चेदित्यादिना सूत्रेण** ॥ चरणशब्दवाच्यस्यैव ग्रहणसम्भवान्न लक्षणा युक्तेति शङ्कितैव ब्रूते—**नन्विति** ॥ प्रतिषिद्धं शीलं क्रोधानृतादिरूपम् ॥ **किञ्च** शीलस्य विफलत्वायोगाच्छ्रुतयोन्यापत्तिः तस्यैव फलं, नानुशयस्येत्याह—**अवश्य चेति** ॥ "वेदास्तदर्थकर्मण्याचारं विना न फलन्ति" इति स्मृत्या शीलस्य कर्माङ्गत्वान्न पृथक्फलापेक्षा । अङ्गिफलेनाऽर्थवत्त्वात् । न चाङ्गमात्राद्योन्यापत्तिः फलमिति वाच्यम् ।

भामती ।

पक्षवीजं निगूढमुद्घाट्य निरस्यति । यद्यपि 'अक्रोधः सर्वभूतेषु कर्मणा मनसा गिरा । अनुग्रहश्च ज्ञानं च शीलमेतद्विदुर्बुधाः ॥' इति स्मृतेः । शीलमाचारोऽनुशयाद्भिन्नस्तथाप्यस्यानुशयांगतयाऽनुशयोपलक्षणत्वं कार्ष्णाजिनिराचार्यो मेने । तथा च रमणीयचरणाः कपूयचरणा इत्यनेनानुशयोपलक्षणात्सिद्धं सानुशयानामेवावरोहणमिति ॥९॥ **आनर्थक्यमिति चेन्न तदपेक्षत्वात्** । 'आचारहीनं न पुनन्ति वेदाः' इति हि स्मृत्या वेदपदेन वेदार्थमुपलक्षयन्त्या वेदार्थानुष्ठानशेषत्वमाचारस्योक्तं न तु स्वतन्त्र आचारः फलस्य साधनं, तेन वेदार्थानुष्ठानोपकारकतयाचारस्य नानर्थक्यं क्रत्वर्थस्य । तदनेनं समिदादिवदाचारस्य

आनन्दगिरीय–न्यायनिर्णयः ।

तयोर्भेदे फलितमाह—**तस्मादिति**। परिहारं व्याचष्टे—**नेत्यादिना**। "अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा। अनुग्रहश्च ज्ञानं च शीलमेतद्विदुर्बुधाः" इति स्मृतस्य शीलस्यापि कर्माङ्गत्वाच्चरणशब्देन शीलवाचिना कर्मानुशयो लक्ष्यत इति भावः ॥९॥ कार्ष्णाजिनिवाक्यस्य पौरुषेयत्वान्मूले वक्तव्ये मुख्यत्यागे न लक्षणा हेत्वभावाच्चरणशब्दितस्य शीलस्यैवाऽऽनर्थक्यपरिहारार्थं योन्यापत्तिहेतुतेत्याशंक्य परिहरति—**आनर्थक्यमिति**। शङ्कां विभजते—**स्यादिति**। संभवति मुख्येऽर्थे लक्षणा न ग्राह्येत्यर्थः। कर्मणैव योन्यापत्तिसंभवाच्चरणशब्देन तल्लक्षणेत्याशंक्य शास्त्रप्रामाण्यात्कर्मवच्चरणस्यापि योन्यापत्तिहेतुता स्यादीति पूर्ववाद्येवाऽऽह—**नन्विति** । किंच कर्मलक्षणायां तस्यैव फलं श्रुतमिति शीलस्य तत्कल्प्येत तस्यापि विहितस्याफलत्वायोगात्तेन चरणस्यैव यथाश्रुतं फलमुपेतव्यमित्याह—**अवश्यं चेति** । तदनुपगमे दोषमाह—**अन्यथेति** । आचारस्य कर्माङ्गत्वादङ्गाङ्गिनोश्चैकाधिकारत्वान्न पृथक्फलकल्पनेत्याह—**नेत्यादिना** । उक्तमर्थं प्रश्नपूर्वकं सौत्रं हेतुमादाय विशदयति—**कुत इति** । कथमिष्टादिकर्मसमुदायस्य चरणापेक्षत्वं तत्राऽऽह—**न हीति** । सदाचारयुक्तस्य कर्माधिकारे मानमाह—**आचारेति** । वेदशब्देन वेदार्थोपलक्षणादाचारस्तच्छेषो न स्वतन्त्र-

हीनं न पुनन्ति वेदाः'' इत्यादिस्मृतिभ्यः । पुरुषार्थत्वेऽप्याचारस्य नानर्थक्यम्। इष्टादौ हि कर्मजाते फलमारभमाणे तदपेक्ष एवाचारस्तत्रैव कश्चिदतिशयमारप्स्यते । कर्म च सर्वार्थकारीति श्रुतिस्मृतिप्रसिद्धिः ॥ तस्मात्कर्मैव शीलोपलक्षितमनुशयभूतं योन्यापत्तौ कारणमिति कार्ष्णाजिनेर्मतम् । न हि कर्मणि सम्भवति शीलाद्योन्यापत्तिर्युक्ता । न हि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हतीति ॥ १० ॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देन प्रत्याय्येते इति मन्यते। चरणमनुष्ठानं कर्मेत्यनर्थान्तरम् ॥ तथाहि विशेषेण कर्ममात्रे चरतिः प्रयुज्यमानो दृश्यते । यो हीष्टादिलक्षणं पुण्यं कर्म करोति, तं लौकिका आचक्षते-धर्मं चरत्येष महात्मेति । आचारोऽपि धर्मविशेष एव । भेदव्यपदेशस्तु कर्मचरणयोर्ब्राह्मणपरिव्राजकन्यायेनाप्युपपद्यते ॥

---

रत्नप्रभा ।

अङ्गस्य फलासम्भवेन मुख्यार्थस्याऽऽचारस्य ग्रहणायोगाल्लक्षणा युक्तेति समाधानार्थः । यद्याचारस्य स्नानादिवत् पुरुषसंस्कारतया पुरुषार्थत्वं, तदाप्यविरोध इत्याह-पुरुषार्थत्वेऽपीति ॥ अङ्गावबद्धोपास्तिवदाचारोऽर्थवानित्यर्थः । अस्तु तर्हि शीलाख्याचारादेव योन्यापत्तिरित्याशङ्क्य "पुण्यो वै पुण्येन कर्मणा" [ बृ० ३ । २ । ३ ] इत्यादिश्रुत्यादिविरोधान्नैवमित्याह-कर्म चेति॥ पारयमाणः शक्तः॥ ॥ १० ॥ यद्यप्यक्रोधादिरूपं शीलं साधारणधर्मात्मकं विशेषरूपात् कर्मणोऽभिन्नम्, तथापि चरणाचारशब्दौ कर्मवाचिनावेव, न शीलवाचकाविति न लक्षणावसर इति बादरिमतम् ॥ मुख्यसिद्धान्तमाह-सुकृतेति॥ चरणशब्दार्थमुपसंहरति-आचारोऽपीति॥ कर्मण एवाचारत्वे "यथाकारी" [बृ०४।४।५] इत्यादिभेदोक्तिः कथमित्यत आह-भेदव्यपदेश इति ॥ निरुपपदाचारशब्दात् सदाचाररूपो विशेषो भवति । अतस्तत्समभिव्याहृतः कर्मसामान्यवाचको यथाकारीति शब्दस्तदितरविशेषपरः । एवम् "अन-

भामती ।

क्रत्वर्थत्वमुक्तम्। संप्रति स्नानादिवत्पुरुषार्थत्वे पुरुषसंस्कारत्वेऽप्यदोष इत्याह-पुरुषार्थत्वेऽप्याचारस्येति। तदेवं चरणशब्देनाचारवाचिना सर्वोऽनुशयो लक्षित इत्युक्तम् ॥ १० ॥ बादरिस्तु मुख्य एव चरणशब्दः कर्मणीत्याह-सुकृतदुष्कृते एवेति तु बादरिः । ब्राह्मणपरिव्राजकन्यायो गोबलीवर्दन्यायः । शेषमतिरोहितार्थम् ॥ ११ ॥

आनन्दगिरीय-न्यायनिर्णयः ।

फल इत्युक्तम् । इदानीं स्नानादिवत्पुरुषसंस्कारतया भिन्नफलत्वेऽपि न विरोधोऽस्तीत्याह-पुरुषेति । कथं तर्हि पृथक्फलत्वं तत्राऽऽह-इष्टादौ हीति । अङ्गावबद्धोपास्तिवदित्यर्थः । आचारस्यैव योन्यापत्तिहेतुत्वेऽपि किमित्यनुशयस्य तत्कल्पनेत्याशंक्य कर्मणस्तद्धेतुत्वप्रसिद्धेरित्याह-कर्म चेति । एकदेशिमतमुपसंहरति-तस्मादिति । तदेव प्रपञ्चयति-न हीति । अयुक्तत्वं दृष्टान्तेन स्पष्टयति-न हीति । इतिशब्दो दार्ष्टान्तिकप्रदर्शनार्थः ॥ १० ॥ साक्षात्सिद्धान्तमाह-सुकृतेति । तदेव विवृणोति-बादरिस्त्विति । कथं चरणशब्देन मुख्यवृत्त्या कर्मोच्यते तत्राऽऽह-चरणमिति । वृद्धप्रयोगाभावे कथं तस्य कर्मविषयत्वं तत्राऽऽह-तथाहीति । कर्मणः सर्वार्थकारित्वप्रसिद्धेराचारस्यातथात्वाद्भिन्नतेत्याशंक्य पूर्वोक्तस्मृतेरक्रोधादेः साधारणधर्मस्य शीलत्वसिद्धेर्मैवमित्याह-आचारोऽपीति । कथं तर्हि श्रौतो भेदवादस्तत्राऽऽह-भेदव्यपदेशस्त्विति । लक्षणायां निमित्ताभावाच्चरणशब्दोऽनुशये मुख्य इति बादरिमतमु-

---

१ "वैवस्वतं सङ्गमनं जनानाम्" इत्यर्थः ।

तस्माद् रमणीयचरणाः प्रशस्तकर्माणः कपूयचरणाः निन्दितकर्माण इति निर्णयः ॥ ११ ॥ इति कृतात्ययाधिकरणम् ॥ २ ॥

## अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥ ( ३ ) ॥

इष्टादिकारिणश्चन्द्रमसं गच्छन्तीत्युक्तम् । ये त्वितरेऽनिष्टादिकारिणः, तेऽपि किं चन्द्रमसं गच्छन्ति—उत—न गच्छन्तीति चिन्त्यते ॥ तत्र तावदाह—इष्टादिकारिण एव चन्द्रमसं गच्छन्तीत्येतन्न ॥ कस्मात् ॥ यतोऽनिष्टादिकारिणामपि चन्द्रमण्डलं गन्तव्यत्वेन श्रुतम् ॥ तथाह्यविशेषेण कौषीतकिनः समामनन्ति—"ये वै के चास्माल्लोकात्प्रयन्ति, चन्द्रमसमेव ते सर्वे गच्छन्ति" [ कौषी० १ । २ ] इति । देहारम्भोऽपि च पुनर्जायमानानां नान्तरेण चन्द्रप्राप्तिमवकल्प्येत । "पञ्चम्यामाहुतौ" [ छां० ५ । ९ । १ ] इत्याहुतिसंख्यानियमात् ॥ तस्मात्सर्व एव चन्द्रम-

रत्नप्रभा ।

वद्यानि कर्माणि" [ तै० १ । ११ । २ ] इति सामान्यतः, "अस्माकं सुचरितानि" [ तै० उ० १ । ११ । २ ] इति विशेष इति विवेकः ॥ तस्मादनुशयबलादागत्यावश्यम्भावानुसन्धानाद्वैराग्यमिति सिद्धम् ॥ ११ ॥ ( २ ) ॥ एवं पुण्यात्मनां गत्यागतिचिन्तया वैराग्यं निरूप्य पापिनां तच्चिन्तया तन्निरूपयति—**अनिष्टादिकारिणामपि चेति**॥ "ये वै के च" इत्यविशेषश्रुतेः "वैवस्वतं सङ्गमनं जनानाम्" इति श्रुतेश्च संशये प्रथमाधिकरणेन सिद्धनियमाक्षेपसङ्गत्या पूर्वपक्षसूत्रं व्याचष्टे—**तत्रेत्यादिना** ॥ यमराजं पापिजनानां सम्यग्गम्यं, हविषा प्रीणयतेति श्रुत्यर्थः ॥ **पूर्वपक्षे** पुण्यवतामेव चन्द्रगतेरिति नियमाभावात् पुण्यवैयर्थ्यं पापाद्वैराग्यदार्ढ्यश्चेति फलम् । **सिद्धान्ते** पापिनां चन्द्रलोकदर्शनमपि नास्तीति पुण्यार्थवत्त्वं वैराग्यदार्ढ्यश्चेति फलम् । पञ्चमाग्नौ देहारम्भ इति नियमात् पापिनामपि प्रथमद्युलोकाग्निप्राप्तिर्वाच्येत्याह—**देहारम्भ इति** ॥ पापिनां स्वर्गभोगाभावेऽपि मार्गान्तराभावाच्चन्द्रगतिरिति

भामती ।

रोहितार्थम् ॥ ११ ॥ ( २ ) ॥ **अनिष्टादिकारिणामपि च श्रुतम्** । 'ये वै के चास्माल्लोकात्प्रयन्ति

आनन्दगिरीय—न्यायनिर्णयः ।

पसंहरति—**तस्मादिति** ॥ ११ ॥ ( २ ) ॥ इष्टादिकारिणामनुशयवतामागतिरुक्ता । संप्रत्यनिष्टादिकारिणामपि चन्द्रस्थलस्खलितानामनुशयवतामागतिमभिप्रेत्य चोदयति—**अनिष्टादीति** । प्रथमाधिकरणेनास्य संगतिमाह—**इष्टादीति** । व्यवहितमनूद्यानिष्टादिकारिणो विषयीकृत्य 'ये वै के च' इत्यविशेषश्रुतेः'वैवस्वतं संगमनं जनानाम्'इति श्रुतेश्च संशयं दर्शयति—**ये त्विति**। अत्र चानिष्टादिकारिणां शुभमार्गेण गमनमात्रमपि नेत्युक्त्या वैराग्ये दृढीकृते पूर्ववदेव पादादिसंगतयः । पूर्वपक्षे शुभाशुभकारिणामविशेषेण चन्द्रगतेस्तत्र शुभकरणमकिंचित्करमिति फलति । सिद्धान्ते त्वशुभकारिणां गत्यन्तरध्रौव्याच्चन्द्रगतौ प्रयोजकमिष्टाद्येवेति मत्वा पूर्वपक्षसूत्रं योजयति—**तत्रेति** । तेषामिष्टादिकं कर्म चन्द्रलोकप्रापकमस्तीत्यतो नियमनिषेधो न युक्तिमानिति शङ्कते—**कस्मादिति** । श्रुत्या परिहरति—**यत इति** । तामेवोदाहरति—**तथाहीति** । श्रुतेश्चन्द्रलोकगमनमुपपाद्य चकारसूचितयुक्तितोऽपि तदुपपादयति—**देहेति** । देवयानपितृयाणातिरेकेण गमनागमनमार्गाश्रवणादथैतयोः पथोर्न कतरेण च नेत्यारभ्य जायस्व म्रियस्वेत्येतत्तृतीयं स्थानमिति स्थानमात्रत्वश्रुत्या पथित्वेनाप्रतीतेश्चन्द्रमण्डलं प्राप्यावतीर्णानामपि तद्योगान्न केषांचिदेव गतिरिति मत्वोपसंहरति—**तस्मादिति** । सर्वेषां तुल्यगतित्वे तत्प्राप्तिहेत्वनुष्ठानवैयर्थ्यमिति शङ्कते—

१ "वैवस्वतं सङ्गमनं जनानाम्" इत्यर्थः ।

समासीदेयुः। इष्टादिकारिणामितरेषां च समानगतित्वं न युक्तमिति चेत्॥ न॥ इतरेषां चन्द्रमण्डले भोगाभावात्॥ १२॥

**संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्॥ १३॥**

तुशब्दः पक्षं व्यावर्तयति॥ नैतदस्ति॥ सर्वे चन्द्रमसं गच्छन्तीति॥ कस्मात्॥ भोगायैव हि चन्द्रारोहणं न निष्प्रयोजनम्। नापि प्रत्यवरोहायैव। यथा-कश्चिद्वृक्षमारोहति पुष्पफलोपादानाय, न निष्प्रयोजनं, नापि पतनायैव। भोगश्चानिष्टादिकारिणां चन्द्रमसि नास्तीत्युक्तम्॥ तस्मादिष्टादिकारिण एव चन्द्रमसमारोहन्ति, नेतरे। ते तु संयमनं यमालयमवगाह्य स्वदुष्कृतानुरूपाः यामीर्यातनाः अनुभूय पुनरेवेमं लोकं प्रत्यवरोहन्ति। एवम्भूतौ तेषामारोहावरोहौ भवतः॥ कुतः॥ तद्गतिदर्शनात्। तथाहि-यमवचनस्वरूपा श्रुतिः प्रयतामनिष्टादिकारिणां यमवश्यतां दर्शयति-"न साम्परायः प्रति भाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्॥ अयं लोको नास्ति पर इति मानी पुनःपुनर्वश-

रत्नप्रभा।

भावः॥ १२॥ सिद्धान्तसूत्रं व्याचष्टे-तुशब्द इत्यादिना॥ संयमने यमलोके यमकृताः यातनाः अनुभूयावरोहन्तीत्येवमारोहावरोहाविति योजना सूत्रस्य ज्ञेया। प्रयतां मृत्वा गच्छताम्। सम्यक् परस्तात् प्राप्यत इति संपरायः-परलोकः। तदुपायः साम्परायः, बालम् अज्ञम्। विशेषतो वित्तरागेण मूढं मोहात् प्रमादं कुर्वन्तं प्रति न भाति। स च बालोऽयं स्त्रीवित्तादिलोकोऽस्ति न परलोकोऽस्तीति मानी। स मे मम यमस्य वशमाप्नोतीत्यर्थः॥ पापिनां यमवश्यता वादिविशेषश्रुतिस्मृतिबलाद्

भामती।

चन्द्रमसमेव ते सर्वे गच्छन्ति' इति कौषीतकिनां समाम्नानात्, देहारम्भस्य च चन्द्रलोकगमनमन्तरेणानुपपत्तेः पञ्चम्यामाहुतावित्याहुतिसंख्यानियमात्। तथाहि-द्युसोमवृष्ट्यन्नरेतःपरिणामक्रमेण ता एवापो योषिदग्नौ हुताः पुरुषवचसो भवन्तीत्यविशेषेण श्रुतम्। न चैतन्मनुष्याभिप्रायं, कपूयचरणाः श्वयोनिमित्यमनुष्यस्यापि श्रवणात्। गमनागमनाय च देवयानपितृयाणयोरेव मार्गयोराम्नानात्, पथ्यन्तरस्या-

आनन्दगिरीय-न्यायनिर्णयः।

इष्टादीति। तत्र भोगाभावेऽपि मार्गान्तरशून्यतया ग्रामं गच्छन्वृक्षमूलान्युपसर्पतीतिवदुपपन्ना गतिरित्याह-नेतरेषामिति॥ १२॥ सिद्धान्तमुपक्रमते-संयमने त्विति। सूत्रं व्याचष्टे-तुशब्द इति। पक्षव्यावृत्तिमेव व्यनक्ति-नैतदिति। का पुनरत्रानुपपत्तिः तत्र तेषां तद्गमनमफलं सफलं वेति विकल्प्याऽऽद्यं प्रत्याह-भोगायेति। द्वितीयेऽपि गमनस्य प्रत्यवरोहो वा भोगो वा फलं? नाऽऽद्य इत्याह-नापीति। पक्षद्वयनिरासं दृष्टान्तेन स्पष्टयति-यथेति। कल्पान्तरं निरस्यति-भोगश्चेति। तुशब्दार्थमुपसंहरति-तस्मादिति। कथं तर्हि तेषामारोहावरोहावित्याशङ्क्य संयमने त्वनुभूयेत्यादि विभजते-ते त्विति। तत्र प्रश्नपूर्वकं हेतुमाह-कुत इति। हेतुं व्याचष्टे-तथाहीति। प्रयतां प्रेत्य गच्छतां संपरायः परलोकः सम्यगवश्यंभावेन परा परस्ताद्देहपातादीयते गम्यत इति व्युत्पत्तेः। तत्प्राप्त्यर्थः साधनविशेषः सांपरायः। स बालमविवेकिनं विशेषतो वित्तनिमित्तेन मोहेन मूढं छन्नदृष्टिमत एव प्रमाद्यन्तं प्रमादं कुर्वन्तं विषयप्रवणं प्रति न भाति। स न केवलमज्ञ एव किंतु विपरीतदर्शी च यस्मादयमेव लोकः स्त्र्यन्नपानादिरस्ति न पर इति मानी मननशीलस्तस्मात्तदनुरूपमाचरन्पुनःपुनर्जननमरणप्राप्त्या मे वश-

मापद्यते मे" [ कठ० १ । २ । ६ ] इति ॥ "वैवस्वतं सङ्गमनं जनानाम्" इत्येवञ्जातीयकं च बह्वेव यमवश्यताप्राप्तिलिङ्गं भवति ॥ १३ ॥

## स्मरन्ति च ॥ १४ ॥

अपि च–मनुव्यासप्रभृतयः शिष्टाः संयमने पुरे यमायत्तं कपूयकर्मविपाकं स्मरन्ति नाचिकेतोपाख्यानादिषु ॥ १४ ॥

## अपि च सप्त ॥ १५ ॥

अपि च–सप्त नरका रौरवप्रमुखा दुष्कृतफलोपभोगभूमित्वेन स्मर्यन्ते पौराणिकैः ।ताननिष्टादिकारिणः प्राप्नुवन्ति ॥ कुतः ॥ ते चन्द्रं प्राप्नुयुरित्यभिप्रायः॥१५॥ननु विरुद्धमिदं यमायत्ता यातनाः पापकर्माणोऽनुभवन्तीति, यावता तेषु रौरवादिषु अन्ये चित्रगुप्तादयो नानाधिष्ठातारः स्मर्यन्त इति ॥ नेत्याह–

## तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

तेष्वपि सप्तसु नरकेषु तस्यैव यमस्याऽधिष्ठातृत्वव्यापाराभ्युपगमादविरोधः । यमप्रयुक्ता एव हि ते चित्रगुप्तादयोऽधिष्ठातारः स्मर्यन्ते ॥ १६ ॥

---

रत्नप्रभा ।

"ये वै के च" [ कौषी० १ । २ ] इत्यविशेषश्रुतिरिष्टादिकारिविषयत्वेन व्याख्येयेति भावः ॥ १३ ॥ सूत्रत्रयस्य भाष्यं सुबोधम् ॥ १४ ॥ १५ ॥ १६ ॥ यदुक्तं मार्गान्तराभावात् पापिनामपि चन्द्रगति-

भामती ।

श्रुतेः, 'जायस्व म्रियस्वेति तृतीयं स्थानम्' इति च स्थानत्वमात्रेणावगमात्पथित्वेनाप्रतीतेश्चन्द्रलोकादवतीर्णानामपि च तत्स्थानत्वसंभवादसंपूरणेन प्रतिवचनोपपत्तेः, अनन्यमार्गतया च तद्भोगविरहिणामपि ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीतिवत्संयमनादिषु यमवश्यतायै चन्द्रलोकगमनोपपत्तेः, 'न कतरेणचन' इत्यस्यासंपूरणप्रतिपादनपरतया मार्गद्वयनिषेधपरत्वाभावात्, अनिष्टादिकारिणामपि चन्द्रलोकगमने प्राप्तेऽभिधीयते—सत्यं स्थानतयावगतस्य न मार्गत्वं तथापि वेत्थ यथाऽसौ मार्गो न संपूर्यते इत्यस्य प्रतिवचनावसरे मार्गद्वयनिषेधपूर्वं तृतीयं स्थानमभिवदन्नसंपूरणाय तत्प्रतिपक्षमाचक्षीत । यदि पुनस्तेनैव मार्गे-

आनन्दगिरीय–न्यायनिर्णयः ।

मापद्यत इति मृत्योर्नचिकेतसं प्रति वचनम् । श्रुत्यन्तरमाह–वैवस्वतमिति । जनानां परलोकगतानां संगमनं संगम्यं वैवस्वतं यमं राजानं हविषा दुवस्यत प्रीणयतेत्यर्थः । 'ये वै के च' अस्मादित्यादिश्रुत्या सर्वेषां चन्द्रगतिः सिद्धेत्युक्तमित्याशंक्य विरोध्यनेकलिङ्गदृष्ट्या तदन्यथा नेयमित्याह–बह्वेवेति । 'ये वै के च' 'वैवस्वतं संगमनम्' इत्यनयोर्वाक्ययोः सामान्येन चन्द्रलोकयमलोकगतिवादिनोर्विद्याकर्मविशेषितमार्गद्वयभ्रष्टानामनिष्टादिकारिणां तृतीयस्थानगतिवादिवाक्येनेष्टादिकारिणां चन्द्रगतिवाक्येन च विशेषार्थेन विषयविशेषनियतिरिति भावः ॥ १३ ॥ इतश्चेष्टादिकारिविषये ये वै के चेत्यादिवाक्यस्य संकोच इत्याह–स्मरन्ति चेति । तद्व्याकरोति–अपि चेत्यादिना ॥ १४ ॥ इतश्चानिष्टादिकारिणां न चन्द्रगतिरित्याह–अपीति । तद्व्याख्याति–अपि चेत्यादिना ॥ १५ ॥ अनिष्टादिकारिणां चन्द्रमण्डले भोगाभावाद्यमवश्यतायाश्च श्रुतिस्मृतिसिद्धत्वान्न चन्द्रगतिरित्युक्तमिदानीं तेषां यमवश्यतामाक्षिपति–नन्विति । विरुद्धत्वे हेतुमाह–यावतेति । सूत्रेण परिहरति–नेत्याहेति । तद्विभजते–तेष्वपीति । एकत्रोभयोरधिष्ठातृत्वायोगमाशंक्याऽऽह–यमेति ॥ १६ ॥ मार्गद्वयभ्रष्टानां तृतीयस्थानोक्तेरपि नानि-

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

पञ्चाग्निविद्यायां "वेत्थ यथाऽसौ लोको न सम्पूर्यते" [ छां० ५। ३। ३ ] इत्यस्य प्रश्नस्य प्रतिवचनावसरे श्रूयते-"अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयꣳ स्थानं तेनाऽसौ लोको न सम्पूर्यते" [ छां० ५। १०। ८ ] इति। तत्रैतयोः पथोरिति विद्याकर्मणोरित्येतत् ॥ कस्मात् ॥ प्रकृतत्वात्-विद्याकर्मणी हि देवयानपितृयाणयोः पथोः प्रतिपत्तौ प्रकृते। "तद्य इत्थं विदुः" [ छां० ५। १०। १] इति विद्या। तया प्रतिपत्तव्यो देवयानः पन्थाः प्रकीर्तितः। "इष्टापूर्ते दत्तम्" [ छां० ५। १०। ३ ] इति कर्म। तेन प्रतिपत्तव्यः पितृयाणः पन्थाः प्रकीर्तितः। तत्प्रक्रियायाम् "अथैतयोः पथोर्न कतरेणचन" इति श्रुतम् ॥ एतदुक्तं भवति ॥ ये च न विद्यासाधनेन देवयाने पथ्यधिकृताः, नापि कर्मणा पितृयाणे, तेषामेष क्षुद्रजन्तुलक्षणोऽसकृदावर्ती तृतीयः पन्था भवतीति ॥ तस्मादपि नानिष्टादिकारिभिश्चन्द्रमाः प्राप्यते-स्यादेतत्तेऽपि चन्द्रबिम्बमारुह्य ततोऽवरुह्य क्षुद्रजन्तुत्वं प्रतिपत्स्यन्ते इति ॥ तदपि नास्ति ॥ आरो-

---

रत्नप्रभा।

रिति ॥ तन्न ॥ तृतीयमार्गश्रुतेरित्याह-विद्याकर्मणोरितीति ॥ मार्गद्वितयोक्त्यनन्तरं तृतीयमार्गोक्तिसमारम्भार्थं श्रुतौ अथशब्दः। एतयोर्विद्याकर्मणोः पथिद्वयसाधनयोः अन्यतरेणापि साधनेन ये नरा न युक्ताः, ते जन्ममरणाऽऽवृत्तिरूपतृतीयमार्गस्थानि भूतानि भवन्ति। क्रियाऽऽवृत्तौ लोट्। तेन पापिनां चन्द्रगत्यभावाच्चन्द्रलोको न संपूर्यत इति श्रुत्यर्थः ॥ प्रतिपत्ताविति। प्राप्तिसाधने इत्यर्थः ॥ अपि च पापिनां चन्द्रगतौ असौ लोकः सम्पूर्येत। अतश्च "न। सम्पूर्यते" इत्येतत्प्रतिवचनं विरुद्धं

भामती।

णागत्य जन्ममरणप्रबन्धवत् स्थानमध्यासीत नैतत्तृतीयं स्थानं भवेत्। न हीष्टादिकारिणश्चन्द्रमण्डलादवरुह्य रमणीयां निन्दितां वा योनिं प्रतिपद्यमानास्तृतीयं स्थानं प्रतिपद्यन्ते। तत्कस्य हेतोः। पितृ-

आनन्दगिरीय-न्यायनिर्णयः।

ष्टादिकारिणां चन्द्रगतिरित्याह-विद्येति। हेत्वन्तरमेव प्रकटयन्भूमिकोक्तिपूर्वकं श्रुतिमुदाहरति-पञ्चेति। तद्विद्येति प्रकरणमुक्तम्। श्रौती प्लुतिर्विचारणार्था। तृतीयस्थानोक्त्यारम्भार्थोऽथशब्दः। तत्प्रतिपत्तिफलमाह-तेनेति। श्रुत्यर्थं सूत्रयोजनया विशदयति-तत्रेति। उक्ता श्रुतिः सप्तम्यर्थः। पथिशब्दस्यार्थान्तरे रूढेर्विद्याकर्मार्थत्वे न मानमिति शङ्कते-कस्मादिति। तत्र प्रकरणं प्रमाणयति-प्रकृतत्वादिति। तदेव विवृणोति-विद्येति। प्रतिपत्तौ प्रतिपत्तिसाधने। तत्र देवयानस्य पथो विद्याद्वारा प्रकृतत्वं प्रकटयति-तद्य इति। कर्मद्वारा पितृयाणस्यापि प्रकृतत्वमाह-इष्टेति। विद्याकर्मणोरेवं प्रकृतत्वेऽपि प्रकृते किं जातं तदाह-तदिति। विद्याकर्महीनानां क्षुद्रजन्तुभावोऽत्र निर्दिश्यते न पुनस्तृतीयोऽध्वेत्याशङ्क्याऽऽह-एतदिति। मार्गद्वयभ्रष्टानामनिष्टादिकारिणां तृतीयस्थानोक्तिफलमाह-तस्मादिति। यदिदं तृतीयस्थानकीर्तनं तन्न चन्द्रगतिं वारयत्यागत्याऽपि तत्प्राप्तिसंभवादिति शङ्कते-स्यादिति। मानफलाभ्यां हि कल्पना, न चेह तदुभयं, तथा च नैवं कल्पनेत्याह-तदपीति। प्रतिवचनस्य प्रश्नान-

हानर्थक्यात् ॥ अपि च सर्वेषु प्रयत्सु चन्द्रलोकं प्राप्नुवत्स्वसौ लोकः प्रयद्भिः सम्पूर्येतेत्यतः प्रश्नविरुद्धं प्रतिवचनं प्रसज्येत । तथाहि प्रतिवचनं दातव्यं "यथासौ लोको न सम्पूर्यते" ॥ अवरोहाभ्युपगमादसम्पूरणोपपत्तिरिति चेत् ॥ न ॥ अश्रुतत्वात् । सत्यमवरोहादप्यसम्पूरणमुपपद्यते । श्रुतिस्तु तृतीयस्थानसंकीर्तनेनासम्पूरणं दर्शयति "एतत्तृतीयꣳ स्थानं तेनासौ लोको न सम्पूर्यते" इति । तेनाऽनारोहादेवासम्पूरणमिति युक्तम् । अवरोहस्येष्टादिकारिष्वप्यविशिष्टत्वे सति तृतीयस्थानोक्त्यानर्थक्यप्रसङ्गात् । तुशब्दस्तु शाखान्तरीयवाक्यप्रभवामशेषगमनाशंकामुच्छिनत्ति । एवं सत्यधिकृतापेक्षः शाखान्तरीये वाक्ये सर्वशब्दोऽवतिष्ठते—"ये वै केचिदधिकृता अस्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" [ कौषी० १ । २ ] इति ॥ १७ ॥ यत्पुनरुक्तं देहलाभोपपत्तये सर्वे चन्द्रमसं गन्तुमर्हन्ति "पञ्चम्यामाहुतौ" [ छां० ५ । ९ । १ ] इत्याहुतिसंख्यानियमादिति, तत्प्रत्युच्यते—

## न तृतीये तथोपलब्धेः ॥ १८ ॥

---

रत्नप्रभा ।

प्रसज्येतेत्यन्वयः । अवरोहादसंपूरणमश्रुतं न कल्प्यम् । श्रुतहान्यापत्तेरित्याह—नाश्रुतत्वादिति ॥ अवरोह एव तृतीयं स्थानं श्रुत्युक्तमित्यत आह—अवरोहस्येति ॥ इममध्वानं पुनर्निवर्तन्त इति इष्टादिकारिणामवरोहोक्तेः अनिष्टादिकारिणामपि अवरोहस्याऽऽर्थसिद्धत्वात् पुनरुक्तिर्व्यर्थेत्यर्थः । "अथैतयोः" इति मार्गान्तरोपक्रमबाधस्तृतीयशब्दबाधश्चेत्यतः स्थानशब्दो मार्गलक्षक इति द्रष्टव्यम् ॥ १७ ॥ एवमविशेषश्रुतेर्मार्गाभावाच्चेति पूर्वपक्षबीजद्वयं निरस्य तृतीयबीजनिरासार्थं सूत्रमादत्ते—यत्पुनरित्यादिना ॥ विद्याकर्मशून्यानां कृमिकीटादिभावेन "जायस्व" [ छां० ५ । १० । ८ ] इत्यादिश्रुत्या

भामती ।

याणेन पथावरोहात् । तद्यदि क्षुद्रजन्तवोऽप्यनेनैव पथावरोहेयुः, नैतदेषां जन्ममरणप्रबन्धवत्तृतीयं स्थानं भवेत् । ततोऽवगच्छामः संयमनं सप्त च यातनाभूमीर्यमवशतया प्रतिपद्यमाना अनिष्टादिकारिणो न चन्द्रमण्डलादवरोहन्तीति । तस्मात् 'ये वै के च' इतीष्टादिकारिविषयं न सर्वविषयम् । पञ्चम्यामाहुताविति च स्वार्थविधानपरं न पुनरपञ्चम्याहुतिप्रतिषेधपरमपि, वाक्यभेदप्रसङ्गात् । संयमने त्वनुभूयेति

आनन्दगिरीय—न्यायनिर्णयः ।

नुरूपत्वप्रसङ्गादपि नेयं कल्पनेत्याह—अपि चेति । कथं तर्हि प्रश्नानुगुणं प्रतिवचनं तत्राऽऽह—तथाहीति । गमनेऽपि तस्य प्रश्नानुगुणत्वसिद्धिरित्याह—अवरोहेति । अवरोहकृतासंपूरणस्याश्रुतेर्नैवमपि श्रुतहान्यादि कल्पयितव्यमित्याह—नेति । तदेव प्रपञ्चयति—सत्यमिति । तर्हि तथैवासंपूरणं स्यादित्याशंक्य श्रुतिविरोधान्मैवमित्याह—श्रुतिस्त्विति । श्रुतिसिद्धमसंपूरणं निगमयति—तेनेति । किमिति तदवरोहणकृतमेव श्रुतावपि नेष्टमित्याशंक्याऽऽह—अवरोहस्येति । युक्त्या स्वपक्षमुपपाद्य परपक्षं चापनुद्य पूर्ववाद्युद्भावितवाक्यस्य सूत्राक्षरेणैव गतिं दर्शयितुमारभते—तुशब्दस्त्विति । उच्छित्तिप्रकारं प्रकटयति—एवमिति । उक्तन्यायेनानिष्टादिकारिणां चन्द्रगत्ययोगे सतीति यावत् । अधिकृतशब्देनेष्टादिकारिणो गृह्यन्ते । सर्वशब्दस्याधिकृतार्थत्वे स्थिते स्थितं वाक्यार्थमाह—ये वा इति ॥ १७ ॥ परोक्तश्रुतेर्गतिमुक्त्वा तदीयां युक्तिमनुवदति—यदिति । तदुत्तरत्वेन सूत्रमादत्ते—तदिति । प्रतिज्ञां पूरयन्योजयति—नेत्यादिना ।

न तृतीये स्थाने देहलाभाय पञ्चसंख्यानियम आहुतीनामादर्तव्यः ॥ कुतः ॥ तथोपलब्धेः॥तथा ह्यन्तरेणैवाहुतिसंख्यानियमं वर्णितेन प्रकारेण तृतीयस्थानप्राप्तिरुपलभ्यते–"जायस्व म्रियस्व इत्येतत्तृतीयं स्थानम्" [ छां० ५ । १० । ८ ] इति ॥ अपि च "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" [ छां० ५ । ९।१] इति मनुष्यशरीरहेतुत्वेनाऽऽहुतिसंख्या संकीर्त्यते,न कीटपतङ्गादिशरीरहेतुत्वेन।पुरुषशब्दस्य मनुष्यजातिवचनत्वात्॥ अपि च पञ्चम्यामाहुतावपां पुरुषवचस्त्वमुपदिश्यते । नाऽपञ्चम्यामाहुतौ पुरुषवचस्त्वं प्रतिषिध्यते । वाक्यस्य ह्यर्थतादोषात् । तत्र येषामारोहावरोहौ सम्भवतस्तेषां पञ्चम्यामाहुतौ देह उद्भविष्यति । अन्येषां तु विनैवाऽऽहुतिसंख्यया भूतान्तरोपसृष्टाभिरद्भिर्देह आरभ्यते ॥ १८ ॥

## स्मर्यतेऽपि च लोके ॥ १९ ॥

अपि च स्मर्यते लोके द्रोणधृष्टद्युम्नप्रभृतीनां सीताद्रौपदीप्रभृतीनाञ्चाऽयोनिजत्वम् । तत्र द्रोणादीनां योषिद्विषयैकाऽऽहुतिर्नास्ति । धृष्टद्युम्नादीनां तु योषित्पुरुषविषये द्वे अप्याहुती न स्तः । यथा च तत्राऽऽहुतिसङ्ख्याऽनादरो भवति, एवमन्यत्रापि भविष्यति । बलाकाप्यन्तरेणैव रेतःसेकं गर्भं धत्त इति लोके रूढिः ॥ १९ ॥

---

रत्नप्रभा ।

निरन्तरजन्ममरणोपलब्धेर्नाहुतिसङ्ख्यादर इत्यर्थः ॥ पुरुषशब्दाच्चैवमित्याह–अपि चेति ॥ मनुष्यदेहस्याऽपि नाहुतिसङ्ख्यानियम इत्याह–अपि चेत्यादिना ॥ विधिनिषेधरूपार्थद्वये वाक्यभेदः स्यादित्यर्थः ॥ १८ ॥ अनियमे स्मृतिसंवादार्थं सूत्रम्—स्मर्यतेऽपीति ॥ लोक्यतेऽनेनेति लोकः भारतादिरुक्तः ॥ मुख्यार्थमप्याह–बलाकेति ॥ १९ ॥ "अण्डजानि च जारुजानि च स्वेदजानि च उद्भिज्जानि च"

भामती ।

सूत्रेणावरोहापादानतया संयमनस्योपादानाच्चन्द्रमण्डलापादाननिषेध आञ्जसः । तथा च सिद्धान्तसूत्रमेव ।

आनन्दगिरीय–न्यायनिर्णयः ।

पृष्ट्वा हेतुमुक्त्वा व्याचष्टे–कुत इति । भोगाय हि चन्द्रारोहणमित्यादिवर्णितः प्रकारः उपलम्भमेवाभिनयति–जायस्वेति । ज्ञानकर्मशून्या हि कृमिकीटादिभावेन पुनःपुनर्जायन्ते म्रियन्ते चेति प्रसिद्धम् । न च तत्राऽऽहुतिसंख्योपलभ्यते न च तेषां निरन्तरं जायमानानां म्रियमाणानां चाऽऽहुतिसंख्या कल्प्यते, दृष्टविरोधे कल्पनानवकाशादित्यर्थः । किंच, देहमात्रहेतुत्वेनाऽऽहुतिसंख्या नियम्यते मनुष्यदेहहेतुत्वेन वा ? तत्राऽऽद्यं पुरुषशब्दविरोधेन प्रत्याह–अपि चेति । द्वितीयं निराह–अपि चेत्यादिना । तत्र हेतुमाह–वाक्यस्येति । तस्य विधिनिषेधार्थद्वयार्थतायां वाक्यभेदादैक्ये च संभवति तदयोगादित्यर्थः । पञ्चम्यामाहुतावपां पुरुषाकारपरिणामेऽपि नापञ्चम्यामाहुतौ तासां तन्निषेधश्चेत्तर्हि तासामुभयथा देहारंभसंभवे कथं व्यवस्थेत्याशङ्क्याऽऽह–तत्रेति॥ अन्येषां त्विति। चन्द्रमण्डलं प्रत्यारोहस्ततोऽवरोहश्च येषां न युक्तस्तेषामिति यावत् ॥ १८ ॥ मनुष्यदेहारम्भं प्रत्याहुतिसंख्यानियमाभावे स्मृतिं संवादयति–स्मर्यतेऽपीति । सूत्रं व्याकरोति–अपि चेति । लोकशब्देन सूत्रभाष्ययोरितिहासादिरपि व्युत्पत्त्योच्यते अयोनिजत्वाविशेषेऽपि द्रोणादिष्ववान्तरविशेषमाह–तत्रेति । तद्दृष्टान्तेनानिष्टादिकारिष्वप्याहुतिसंख्यानियमाभावधीरिति फलितमाह–यथेति । देहमात्रहेतुत्वेनाऽऽहुतिसंख्यानियमो नेत्यत्रापि सूत्रस्य तात्पर्यमस्तीत्याह–बलाकेति ॥ १९॥ इतश्च देहमात्रारम्भे नाऽऽहुति-

## दर्शनाच्च ॥ २० ॥

अपि च चतुर्विधे भूतग्रामे जरायुजाऽण्डजस्वेदजोद्भिज्जलक्षणे स्वेदजोद्भिज्जयोरन्तरेणैव ग्राम्यधर्ममुत्पत्तिदर्शनादाहुतिसंख्याऽनादरो भवति । एवमन्यत्रापि भविष्यति ॥२०॥ ननु तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति—"आण्डजं जीवजमुद्भिज्जम्" [ छां० ६ । ३ । १ ] इति । अत्र त्रिविध एव भूतग्रामः श्रूयते । कथं चतुर्विधत्वं भूतग्रामस्य प्रतिज्ञातमिति । अत्रोच्यते—

## तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

"आण्डजं जीवजमुद्भिज्जम्" इत्यत्र तृतीयेनोद्भिज्जशब्देनैव स्वेदजोपसंग्रहः कृतः प्रत्येतव्यः । उभयोरपि स्वेदजोद्भिज्जयोर्भूम्युदकोद्भेदप्रभवत्वस्य तुल्यत्वात् । स्थावरोद्भेदात्तु विलक्षणो जङ्गमोद्भेद इत्यन्यत्र स्वेदजोद्भिज्जयोर्भेदवाद इत्यविरोधः ॥ २१ ॥ इत्यनिष्टादिकार्यधिकरणम् ॥३॥

## साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥ ( ४ ) ॥

---

रत्नप्रभा ।

[ ऐत० ३ । १ । ३ ] इतिश्रुत्यवष्टम्भेन सूत्रं व्याचष्टे—**अपि चेति** ॥ अन्यत्रापि अनिष्टादिकारिष्वित्यर्थः ॥ २० ॥ अनया श्रुत्या चातुर्विध्यं कथमुक्तम् । श्रुत्यन्तरे त्रीण्येवेत्यवधारणविरोधादिति शङ्कोत्तरत्वेन सूत्रमादत्ते—**नन्वित्यादिना** ॥ जीवजं जरायुजं मनुष्यादि, भूमिमुद्भिद्य जायते वृक्षादिकम्, उदकं भित्त्वा जायते यूकादिजङ्गममिति भेदः ॥ **सशोकः** स्वेदः ॥ २१ ॥ (३) ॥ एवं पापिनां गत्यागती विचार्य सम्प्रतीष्टादिकारिणामवरोहे विशेषमाह—**साभाव्यापत्तिरुपपत्तेः** ॥ "यथेतमनेवं च" इत्युक्तरीत्या यथागतं धूमाद्यध्वानं पुनर्निवर्तन्ते। निवृत्ताश्चानुशयिनः कर्मान्ते द्रुतदेहाः आकाशं गताः आका-

भामती ।

पूर्वपक्षसूत्रग्रन्थे तु शङ्कान्तराध्याहारेण कथंचिद्गमयितव्यम् । जीवजं जरायुजम् । संशोकजं संस्वेदजम् ॥ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ ( ३ ) ॥ **साभाव्यापत्तिरुपपत्तेः** । यद्यपि यथेतमाकाशमाकाशाद्वायुमित्यतो न तादात्म्यं स्फुटमवगम्यते तथापि वायुर्भूत्वेत्यादेः स्फुटतरं तादात्म्यावगमाद्यथेतमाकाशमित्येतदपि तादात्म्य एवावतिष्ठते । न चान्यस्यान्यभावानुपपत्तिः । मनुष्यशरीरस्य नन्दिकेश्वरस्य देवदेहरूपपरिणामस्मरणाद्देवदेहस्य च नहुषस्य तिर्यक्त्वस्मरणात् । तस्मान्मुख्यार्थपरित्यागेन न गौणी वृत्तिराश्रयणीया । गौण्यां च वृत्तौ लक्षणाशब्दः

आनन्दगिरीय–न्यायनिर्णयः ।

संख्यानियमोऽस्तीत्याह—**दर्शनाच्चेति** । ऐतरेयश्रुत्यवष्टम्भेन सूत्रं व्याकरोति—**अपि चेत्यादिना** । अन्यत्रापीत्यनिष्टादिकारिणो निर्दिश्यन्ते ॥ २० ॥ श्रुत्यन्तरविरोधं शङ्कते—**नन्विति** । अण्डजमेवाऽऽण्डजं पक्ष्यादि । जीवजं जरायुजम् । उद्भिद्य जायत इत्युद्भिज्जं वृक्षादि । छान्दोग्यश्रुतिविरोधं सूत्रेण परिहरति—**अत्रेति** । तद्व्याख्याति—**आण्डजमिति** । उद्भिज्जशब्देन स्वेदजोपसंग्रहे हेतुमाह—**उभयोरिति** । ऐतरेयके तर्हि भेदव्यपदेशस्य का गतिस्तत्राऽऽह—**स्थावरेति** । श्रुत्योर्विरोधं निराकृतमुपसंहरति—**इत्यविरोध इति** ॥ २१ ॥ ( ३ ) ॥ अनिष्टादिकारिणामारोहावरोहरूपा गतिरुक्ता, संप्रतीष्टादिकारिणामवशिष्टमवरोहप्रकारं निरूपयति—**साभाव्येति** । व्यवहितेन संबन्धं दर्शयति—

इष्टादिकारिणश्चन्द्रमसमासाद्य तस्मिन्यावत्सम्पातमुषित्वा ततः सानुशया अवरोहन्ति" इत्युक्तम् ॥ अथावरोहप्रकारः परीक्ष्यते । तत्रेयमवरोहश्रुतिर्भवति "अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति इति ॥ अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति" [ छां० ५।१०।६] इति । तत्र संशयः-किमाकाशादिस्वरूपमेवाऽवरोहन्तः प्रतिपद्यन्ते, किं वाऽऽकाशादिसाम्यमिति । तत्र प्राप्तं तावद् आकाशादिस्वरूपमेव प्रतिपद्यन्त इति ॥ कुतः ॥

---

रत्नप्रभा ।

शसदृशा भवन्ति। आकाशसादृश्यानन्तरं पिण्डीकृतातिसूक्ष्मलिङ्गोपहिताः वायुनेतस्ततश्च नीयमाना वायुसमा भवन्ति । सानुशयः-सद्यो वायुसमो भूत्वा धूमं गतः तत्समो भवति । धूमसमो भूत्वा अभ्रसमो भवति । अपो बिभर्तीत्यभ्रम् । मेहति सिञ्चतीति वृष्टिकर्ता मेघः तत्समो भूत्वा वर्षधाराद्वारा पृथिवीं प्रविश्य व्रीहियवादिरूपो भवतीति सिद्धान्तगत्या श्रुत्यर्थः । पूर्वोत्तरयुक्तिद्वयं संशयबीजं मन्तव्यम् । पूर्वत्र मार्गद्वयं मुक्त्वा तृतीयत्वोक्तेर्युक्तं स्थानशब्दस्य मार्गलक्षकत्वम् । इह तु धूमो भवतीत्यादिश्रुतेर्विकारस्वरूपापत्तौ मुख्यत्वात् सादृश्यापत्तिलक्षणाबीजं नास्तीति प्रत्युदाहरणसङ्गतिः । श्रुतिमुख्यत्वं फलमिति पूर्वपक्षः ॥ अनुशयिनां पूर्वसिद्धाकाशादिस्वरूपापत्त्ययोगाल्लक्षणेति सिद्धान्तयति-

भामती ।

प्रयुक्तो गुणे लक्षणायाः संभवात् । यथाहुः-'लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता' इति । एवं प्राप्ते ब्रूमः-साभाव्यापत्तिः । समानो भावो रूपं येषां ते सभावास्तेषां भावः साभाव्यं सारूप्यं

आनन्दगिरीय-न्यायनिर्णयः ।

इष्टादीति। विषयवाक्यमुदाहरति-तत्रेति । चन्द्रमसि भोगं समाप्य प्राप्तावरोहेष्विष्टादिकारिष्विति यावत् । चन्द्रे भोक्तव्यकर्मणः समाप्त्यानन्तर्यमथेत्युक्तम् । एतमेव वक्ष्यमाणं पन्थानं पुनर्निवर्तन्ते पुनःशब्दादनादौ संसारे पूर्वमपि चन्द्रं गता निवृत्ताश्चेति गम्यते । कोऽसावध्वा यं प्रति निवर्तन्ते, तमाह-यथेति । यथागतं मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमिति गमनक्रम आगमनेऽप्याकाशोक्तेर्यथेतमिति भाति, पितृलोकाद्यकीर्तनादभ्रादिसंकीर्तनाच्चानेवमपीति गम्यते । तथा च यथेतमित्युपलक्षणं याः खल्वापश्चन्द्रमण्डले देहमारब्धवत्यस्ताः कर्मक्षये द्रुता आकाशं गतास्तत्सदृशा यदा जायन्ते तदा तदुपहिता अनुशयिनोऽप्याकाशसमा भवन्तीत्याह-आकाशमिति । तत्तुल्यतामापन्नाश्च वायुनेतश्चामुतश्च नीयमाना वायुसमा अनुशयिनोऽप्परिवेष्टिता वायुतुल्या भवन्तीत्याह-आकाशादिति । तदनन्तरं यो धूमो गमनदशायामासीत्तत्तुल्यो भवत्यनुशयीत्याह-वायुरिति । ततोऽपां धारणात्संभृतोदकं यदभ्रं तत्तुल्योऽनुशयीत्याह-धूम इति । ततो जलसेचनान्मेघो वर्षणकर्ता तत्तुल्यः स सिध्यतीत्याह-अभ्रमिति । तत्सादृश्यमापद्य वर्षधाराभिरनुशयी पृथिवीमापद्यत इत्याह-मेघ इति । अवरोहत्सु देहभृत्सु विषयेष्वाकाशं वायुमिति कर्मत्वोक्तेर्धूमो भवतीत्यादिभवतिश्रुतेश्च संदेहमाह-तत्रेति । देवयानपितृयाणौ पन्थानौ प्रक्रम्य तृतीयत्वोक्तेर्युक्तं स्थानशब्दस्य मार्गलक्षणत्वम् । भवतिश्रुतेश्च सादृश्यलक्षणत्वे हेत्वभावाच्चादात्म्यार्थत्वमेवेति पूर्वपक्षयति-तत्रेत्यादिना । अत्र चावरोहरूपसंसारगतिनिरूपणद्वारा वैराग्यदृढीकरणात्पूर्ववत्पादादिसंगतयः । पूर्वपक्षे भवतिश्रुतेर्मुख्यार्थत्वसिद्धिः । सिद्धान्ते तूपपत्त्या लाक्षणिकार्थत्वधीः । यथेतमाकाशमाकाशाद्वायुमित्यत्र तादात्म्यादृष्टेरन्यस्य चान्यात्मत्वासिद्धेर्नाऽऽकाशादितादात्म्यमनुशयिनामिति शङ्कते-कुत इति । वायुर्भूत्वेत्यादौ तादात्म्यसिद्धेर्नहुषादिषु चाजगरादिभावानुभवाद्यथेतमाकाशमि-

एवं हि श्रुतिर्भवति । इतरथा लक्षणा स्यात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा ॥ तथा च "वायुर्भूत्वा धूमो भवति" इत्येवमादीन्यक्षराणि तत्स्वरूपोपपत्तावेव कल्प्यन्ते ॥ तस्मादाकाशादिस्वरूपोपपत्तिरिति ॥ एवं प्राप्ते ब्रूमः—आकाशादिसाम्यं प्रतिपद्यन्त इति । चन्द्रमण्डले यदम्मयं शरीरमुपभोगार्थमारब्धं तदुपभोगक्षये सति प्रविलीयमानं सूक्ष्ममाकाशसमं भवति । ततो वायोर्वशमेति । ततो धूमादिभिः संपृच्यते इति । तदेतदुच्यते "यथेतमाकाशमाकाशाद्वायुम्" इत्येवमादिना ॥ कुत एतद् ॥ उपपत्तेः ॥ एवं ह्येतदुपपद्यते ॥ न ह्यन्यस्याऽन्यभावो मुख्य उपपद्यते । आकाशस्वरूपप्रतिपत्तौ च वाय्वादिक्रमेणाऽऽवरोहो नोपपद्यते । विभुत्वाच्चाऽऽका-

---

रत्नप्रभा ।

एवमित्यादिना॥समानो भावो धर्मो यस्य तद्भावः—साभाव्यम्। साम्यमिति सूत्रपदार्थः॥एवं ह्येतदिति । एतद् भवनम्। एवं सादृश्यरूपमेवोपपद्यत इत्यर्थः ॥ अनुशयिनामाकाशादिभ्यो निर्गमनान्यथानुपपत्त्यापि सादृश्यलक्षणेत्याह—आकाशस्वरूपेति॥ संयोगलक्षणामाशङ्क्याह—विभुत्वादिति॥ भवतिश्रुत्या संयो-

भामती ।

सादृश्यमिति यावत् । कुतः—उपपत्तेः । एतदेव व्यतिरेकमुखेन व्याचष्टे—न ह्यन्यस्यान्यभावो मुख्य उपपद्यते । युक्तमेतद्यदेवशरीरमजगरभावेन परिणमते, देवदेहसमयेऽजगरशरीरस्याभावात् । यदि तु देवाजगरशरीरे समसमये स्यातां न देवशरीरमजगरशरीरं शिल्पिशतेनापि क्रियते । न हि दधिपयसी समसमये परस्परात्मनी शक्ये संपादयितुं, तथेहापि सूक्ष्मशरीराकाशयोर्युगपद्भावान्न परस्परात्मत्वं भवितुमर्हति । एवं वाय्वादिष्वपि योज्यम् । तथा च तद्भावस्तत्सादृश्येनौपचारिको व्याख्येयः । नन्वाकाशभावेन संयोगमात्रं लक्ष्यतां किं सादृश्येनेत्यत आह—विभुत्वाच्चाकाशेनेति ॥ २२ ॥ ( ४ ) ॥

आनन्दगिरीय–न्यायनिर्णयः ।

त्यादावपि तादात्म्यमेवेति परिहरति—एवं हीति । भवतिश्रुतेः सादृश्यलक्षकत्वेऽपि नानुपपत्तिरित्याशंक्याऽऽह—इतरथेति । साऽपि शब्दवृत्तित्वादाश्रितेत्याशंक्याऽऽह—श्रुतीति । श्रुतेर्मुख्यार्थत्वे तदक्षरानुकूल्यं फलमाह—तथा चेति । पूर्वोक्तप्रकारेण श्रुतेर्मुख्यार्थत्वमाश्रित्यानुशयिनामाकाशादिस्वरूपापत्तावक्षराणि सम्यञ्चि भवन्तीत्यर्थः । श्रुत्या पूर्वपक्षमुपसंहरति—तस्मादिति । आकाशादितादात्म्यं प्रत्याख्यातुं प्रयतितव्यमिति पक्षमनुभाष्य सिद्धान्तयति—एवमिति । समानो भावः साभाव्यं सादृश्यं तदापत्तिरिति योजनया प्रतिज्ञां विवृणोति—आकाशादीति । कथं पुनश्चेतनानामनुशयिनामचेतनैराकाशादिभिः सादृश्यमित्याशंक्य प्रतिज्ञातमेवार्थं प्रकटयति—चन्द्रेति । प्रतिज्ञासमाप्तावितिशब्दः । उक्तेऽर्थे श्रुतिमुदाहरति—तदेतदिति । भवतिश्रुत्या तादात्म्यमेवोपेयं न तत्सादृश्यमिति शंकते—कुत इति । तत्र हेतुमवतार्य व्याकरोति—उपपत्तेरिति । एवं हीत्याकाशादिसादृश्यांगीकारे सतीति यावत् । एतदित्याकाशादिभवनमुक्तम् । युक्तं हि नहुषादिदेहारम्भकभूतानामजगरादिभावेन परिणामित्वं तद्देहानामयौगपद्यादिह तु सूक्ष्मदेहस्याऽऽकाशादेश्चापर्यायत्वान्न परस्परात्मतेत्युक्तमेव साधयति—न हीति । वायुर्भूत्वेत्यादिश्रुतेस्तर्हि का गतिस्तत्राऽऽह—आकाशेति । अनुशयिनामाकाशादिभ्यस्तिलमाषान्तेभ्यः स्वेनैव रूपेण निष्क्रमणान्यथानुपपत्तिरूपश्रुतार्थापत्त्याऽन्यस्य पूर्वसिद्धान्यभावानुपपत्त्यनुगृहीतया विरोधादुपचरिततद्भावापत्तिविषया श्रुतिरिति भावः । आकाशादिना संयोगमात्रं भवतिश्रुत्या लक्ष्यतां किं सादृश्येनेत्याशंक्याऽऽकाशे तदनुपपत्तेर्वैरूप्यार्थं वाय्वादावपि सादृश्यमेवेत्याह—विभुत्वाच्चेति । यदुक्तमेवं

शेन नित्यसम्बन्धत्वान्न तत्सादृश्यापत्तेरन्यस्तत्सम्बन्धो घटते । श्रुत्यसम्भवे च लक्षणाश्रयणं न्याय्यमेव ॥ अत आकाशादितुल्यतापत्तिरेवात्राकाशादिभाव इत्युपचर्यते ॥२२॥ इति साभाव्यापत्त्यधिकरणम् ॥४॥

## नातिचिरेण विशेषात् ॥ २३ ॥ ( ९ )॥

तत्राकाशादिप्रतिपत्तौ प्राग्व्रीह्यादिप्रतिपत्तेर्भवति विशयः-किं दीर्घंदीर्घं कालं पूर्वपूर्वसादृश्येनावस्थायोत्तरोत्तरसादृश्यं गच्छन्ति-उत-अल्पमल्पमिति । तत्रानियमः । नियमकारिणः शास्त्रस्याभावादिति । एवं प्राप्ते इदमाह-नातिचिरेणेति ॥ अल्पमल्पं कालमाकाशादिभावेनावस्थाय वर्षधाराभिः सहेमां भुवमापतन्ति ॥ कुत एतद् ॥ विशेषदर्शनात्॥ तथाहि-व्रीह्यादिभावापत्तेरनन्तरं विशिनष्टि "अतो वै खलु दुर्निष्प्रपतरम्" [ छां० ५ । १० । ६ ] इति । तकार एकश्छान्दस्यां प्रक्रियायां लुप्तो मन्तव्यः । दुर्निष्प्रपततरं दुर्निष्क्रमतरम् । दुःखतरमस्माद् व्रीह्यादिभावान्निःसरणं भवतीत्यर्थः । तदत्र दुःखं निष्प्रपतनं प्रदर्शयन्पूर्वेषु सुखं

---

रत्नप्रभा ।

गलक्षणायामनुवादः स्यादित्यर्थः ॥ विविधभूतसाम्यमवरोहे भवतीत्यनुसन्धानाद्वैराग्यमुपसंहरति—अत इति ॥ २२ ॥ (४) ॥ उक्तं सादृश्यमुपजीव्य लोके गन्तॄणां चिराचिरगतिदर्शनात् संशयं वदन् पूर्वपक्षयति-तत्रेत्यादिना ॥ अनियमात् कदाचिद्विलम्बेन योन्यापत्तिरिति पूर्वपक्षफलम् । सिद्धान्ते तु व्रीहियवादिभावादनुशयिनां विलम्बेन निर्गमनमिति विशेषाद्-आकाशादिभावाच्छीघ्रं

भामती ।

नातिचिरेण विशेषात्। 'दुर्निष्प्रपतरम्' इति दुःखेन निःसरणं ब्रूते न तु विलम्बेनेति मन्यते पूर्वपक्षी।

आनन्दगिरीय-न्यायनिर्णयः ।

सति श्रुतिर्भवतीतरथा लक्षणेति तत्राह-श्रुतीति । अनुशयिनामाकाशादितादात्म्यायोगात्तत्तुल्यतापत्तेः श्रुत्यर्थत्वात्तत्परिहाराय प्रेक्षाकारिणा प्रयत्नवता भाव्यमित्युपसंहरति-अत इति ॥ २२ ॥(४)॥ पूर्वपूर्वसादृश्यं गतानामुत्तरोत्तरसादृश्यापत्तिरविलम्बेनेत्याह-नातिचिरेणेति । विषयसंशयौ दर्शयति-तत्रेति । अवरोहत्सु तत्तत्सादृश्यं गतेष्विति यावत् । गन्तृभेदेन चिराचिराभ्यां गतिदर्शनात्तमेव संशयं विशदयति-किमिति । शास्त्रमतीन्द्रियार्थे मानं, न चेह शास्त्रमस्ति, तथा चानिर्धारणेति पूर्वपक्षयति-तत्रेति । न च 'अतो वै खलु दुर्निष्प्रपतरम्' इति व्रीह्यादिभावादूर्ध्वमेव विलम्बगमनावगमात्पूर्वमविलम्बसिद्धिरिति वाच्यम् । तत्र दुःखनिःसरणस्यैव विवक्षितत्वेन विलम्बस्यानिष्टत्वात् । न च देहाद्यभावाद्दुःखासिद्धेर्विलम्बाभिप्रायमेतदिति युक्तम् । तथाऽपि प्रकृतसर्वपरामर्शकातःशब्दात्पूर्वस्माद्विलम्बगमनप्रतीतेः सर्वत्र प्रयत्नगौरवं तुल्यमिति भावः।अत्र चाऽऽकाशादिभावमारभ्य व्रीह्यादिभावपर्यन्तावरोहरूपसंसारगतेस्तत्तत्सादृश्यरूपायाश्चिराचिरत्वनिरूपणेन वैराग्यस्यैव दृढीकरणात्पादादिसंगतिः । पूर्वपक्षे सर्वत्र तत्तद्भावपरिहारार्थं प्रयत्नगौरवं कर्तव्यम् । सिद्धान्ते तु तदर्थं कर्तव्यप्रयत्नस्य क्वचिल्लाघवं क्वचिद्गौरवमिति फलभेदः । पूर्वपक्षमनूद्य सिद्धान्तमवतार्य प्रतिज्ञां पूरयन्विवृणोति-एवमिति । नियामकशास्त्राभावान्नैतदित्याह-कुत इति । नियामकविषयं हेतुमवतार्य व्याचष्टे-विशेषेति । वाक्यस्य विवक्षितमर्थं वदन्पदं पूरयति-तकार इति । पदं पूरयित्वा पदार्थं वदन्वाक्यार्थमाह-दुर्निष्क्रमेति । कथमेतावताऽऽकाशादिभ्यो विलम्बमन्तरेण निःसरणं भाति तत्राऽऽह-तदिति । सुखनिःसरणमेवाऽऽकाशादिषु विशेषणादालक्ष्यते नाविलम्बनिःसरणमित्याशंक्याऽऽह-सुखेति । किमर्थमित्थं कल्प्यते-

**निष्प्रपतनं दर्शयति । सुखदुःखताविशेषश्चायं निष्प्रपतनस्य कालाल्पत्वदीर्घत्वनिमित्तः । तस्मिन्नवधौ शरीरानिष्पत्तेरुपभोगासम्भवात् । तस्माद् व्रीह्यादिभावापत्तेः प्रागल्पेनैव कालेनावरोहः स्यादिति ॥ २३॥ इति नातिचिराधिकरणम् ॥ ५ ॥**

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥ ( ६ ) ॥

**तस्मिन्नेवाऽवरोहे प्रवर्षणानन्तरं पठ्यते—"त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते" [ छां० ५ । १० । ६ ] इति । तत्र**

रत्नप्रभा ।

निर्गम इत्यविलम्बेन योन्यापत्तिरित्यनुसन्धानाद्वैराग्यदार्ढ्यमिति विवेकः ॥ नन्वाकाशादिष्वनुशयिनां सुखं, व्रीहियवादिषु दुःखमिति दुःशब्दाद्भाति, न चिराचिरनिर्गमनमित्यत आह—**सुखदुःखताविशेषश्चायमिति** ॥ **अवधिः**—कालः ॥ ( २३ ) ॥ ५ ॥ **अन्याधिष्ठिते इति** ॥ श्रुतिक्रमाद्, अर्थक्रमाच्चाधिकरणानां क्रमो बोध्यः । इह भूमौ वर्षधाराद्वारा पतिताः **ते**—अनुशयिनो व्रीह्यादिसाम्येन जायन्त इति **श्रुत्यर्थः**। अत्र जायन्त इति श्रुतेः पूर्वत्राकाशादिवर्षान्तसादृश्योक्तेश्च संशयमाह—**तत्रेति** ॥ **अस्मिन्नवधौ** वर्षसादृश्यानन्तरमित्यर्थः ॥ दुर्निष्प्रपतरशब्देन चिरनिर्गमनलक्षणोक्ता न

भामती ।

विना स्थूलशरीरं न सूक्ष्मशरीरे दुःखभागीति दुर्निष्प्रपतरं विलम्बं लक्षयतीति राद्धान्तः ॥ २३ ॥( ५ )॥

**अन्याधिष्ठिते पूर्ववदभिलापात्** । आकाशसारूप्यं वायुधूमादिसंपर्कोऽनुशयिनामुक्त इहेदानीं व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्त इति श्रूयते । तत्र संशयः—किमनुशयिनां भोगाधिष्ठानं व्रीहियवादयः स्थावरा भवन्ति, आहोस्वित् क्षेत्रज्ञान्तराधिष्ठितेष्वेषु संसर्गमात्रमनुभवन्तीति । तत्र मनुष्यो जायते देवो जायत इत्यादौ प्रयोगे जनेः शरीरपरिग्रहे प्रसिद्धत्वादत्रापि व्रीह्यादिशरीरपरिग्रह एव जनिमुख्यार्थ इति व्रीह्यादिशरीरा एवानुशयिन इति युक्तम् । न च रमणीयचरणाः कपूयचरणा इतिवत् कर्मविशेषासंकीर्तनात्तदभावे व्रीह्यादीनां शरीरभावाभावात्क्षेत्रज्ञान्तराधिष्ठितानामेव यत्संपर्कमात्रमिति सांप्रतम् । इष्टादिकारिणामिष्टादिकर्मसंकीर्तनादिष्टादेश्च हिंसादोषदूषितत्वेन सावद्यफलतया चन्द्रलोकभोगानन्तरं स्थावरशरीरभोग्यदुःखफलत्वस्याप्युपपत्तेः । न च 'न हिंस्यात्सर्वा भूतानि' इति सामान्यशास्त्रस्याग्नीषोमीयपशुहिंसाविशेषशास्त्रेण बाधनं, सामान्यशास्त्रस्य हिंसासामान्यद्वारेण विशेषोपसर्पणं विलम्बेनेति साक्षाद्वि-

आनन्दगिरीय—न्यायनिर्णयः।

आकाशादेः सुखेन निःसरणं, व्रीह्यादेस्तु दुःखेनेति । यथाश्रुतमेव किं न स्यात्तत्राऽऽह—**तस्मिन्निति** । अतःशब्दस्य प्रकृतपरामर्शित्वेऽप्येकवाक्योपात्तव्रीह्यादिपरामर्शित्वेन निराकांक्षत्वाद्वाक्यान्तरोपात्ताकाशाद्यपरामर्शित्वादाकाशादिवर्षणान्तादविलम्बेन निःसरणमित्युपसंहरति—**तस्मादिति** । आकाशादौ व्रीह्यादौ च तद्भावं परिहर्तुं कर्तव्यप्रयत्नस्य लाघवगौरवविशेषं निगमयितुमितीत्युक्तम् ॥ २३ ॥ ( ५ ) ॥

अनुशयिनामाकाशादिप्रवर्षणान्तसादृश्यं चिरभावि तत्सादृश्यत्वाद् व्रीह्यादिसादृश्यवदित्यस्य विशेषणश्रुत्या बाधमुक्त्वा प्रकृतावरोहवाक्यैकदेशमवशिष्टं विचारयति—**अन्येति** । संगतिं सूचयन्विषयमाह—**तस्मिन्निति** । त इहेति तच्छब्देनानुशयिनो गृह्यन्ते । व्यवहारभूमिः सप्तम्यर्थः । व्रीह्यादिभावमापन्नेष्वनुशयिषु जायत इति श्रुतेः कर्मपूर्वकत्वाश्रुतेश्च विचारहेतुं संशयमाह—**तत्रेति** । अस्मिन्नवधावित्याकाशादिवर्षणान्ततत्सादृश्यापत्त्यनन्तरदशायामित्यर्थः । अत्र च स्थावरभावस्य संसारगतेरालोचनद्वारा वैराग्यस्यैव दृढीकरणात्पादादिसंगतिः । पूर्वपक्षे व्रीह्यादिजन्मनो मुख्यत्वेऽनुशयिनां तत्परिहारायाधिकृते-

**संशयः—किमस्मिन्नेवावधौ स्थावरजात्यापन्नाः स्थावरसुखदुःखभाजोऽनुशयिनो भवन्ति, आहोस्वित्—क्षेत्रज्ञान्तराधिष्ठितेषु स्थावरशरीरेषु संश्लेषमात्रं गच्छन्तीति ॥ किं तावत्प्राप्तम् ॥ स्थावरजात्यापन्नास्तत्सुखदुःखभाजोऽनुशयिनो भवन्तीति ॥ कुत एतत् ॥ जनेर्मुख्यार्थत्वोपपत्तेः । स्थावरभावस्य च श्रुतिस्मृत्योरुपभोगस्थानत्वप्रसिद्धेः । पशुहिंसादियोगाच्चेष्टादेः कर्मजातस्यानिष्टफलत्वोपपत्तेः ॥ तस्मान्मुख्यमेवानुशयिनां व्रीह्यादिजन्म श्वादिजन्मवत् । यथा—"श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा" [ छां० ५ । १० । ८ ] । इति मुख्यमेवानुशयिनां**

रत्नप्रभा ।

युक्ता । दुःखेन निर्गमनमिति मुख्यसम्भवादित्याक्षेपसङ्गत्या पूर्वपक्षयति—**किन्तावदित्यादिना** ॥ अत्र पूर्वपक्षे स्थावरत्वनिवृत्तयेऽधिकारिणां यत्नगौरवम्। सिद्धान्ते व्रीह्यादिसंश्लेषमात्रं परिहर्तुं यत्नलाघवमवैधर्म्यञ्चेति विवेकः ॥ ननु देहोत्पत्त्या जीवानां जन्म स्यान्न स्वतः । व्रीह्यादेस्तु न देहत्वमित्यत आह—**स्थावरभावस्येति** ॥ "स्थाणुमन्येऽनुसंयन्ति" [ कठ० ५ । ७ ] इत्याद्या श्रुतिः । "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इत्याद्या स्मृतिः ॥ ननु स्वर्गिणां पापाभावात् कथं स्थावरत्वं तत्राह—**पश्विति** ॥ सोमाद्युच्छिष्टभक्षणसुराग्रहौ—**आदिशब्दार्थः** ॥ क्रत्वर्थहिंसादेरपि हिंसात्वादिसामान्येन प्रवृत्तेः 'न हिंस्यात्' इत्यादिशास्त्रनिषिद्धत्वाकारेण दुरितापूर्वकारित्वमविरुद्धमिति **सांख्या आहुः** ॥ श्रुतो

भामती ।

शेषस्पृशः शास्त्राच्छीघ्रतरप्रवृत्ताद् दुर्बलत्वादिति सांप्रतम् । न हि बलवदित्येव दुर्बलं बाधते किंतु सति विरोधे । न चेहास्ति विरोधः,भिन्नगोचरचारित्वात्। 'अग्नीषोमीयं पशुमालभेत' इति हि क्रतुप्रकरणे समाम्नातं क्रत्वर्थतामस्य गमयति, न त्वपनयति निषेधापादितामस्य पुरुषं प्रत्यनर्थहेतुताम्। तेनास्तु निषेधादस्य पुरुषं प्रत्यनर्थहेतुता, विधेश्च क्रत्वर्थता को विरोधः । यथाहुः—'यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत् । न क्रतोस्तत्र वैगुण्यं यथा चोदितसिद्धितः' इति । तस्माज्जनेर्मुख्यार्थत्वाद्व्रीह्यादिशरीरा अनुशयिनो जायन्त इति प्राप्तेऽभिधीयते—भवेदेतदेवं यदि रमणीयचरणाः कपूयचरणा इतिवद्व्रीह्यादिष्वनुशयवतां कर्म-

आनन्दगिरीय—न्यायनिर्णयः ।

नाधिकं प्रयतितव्यम् । सिद्धान्ते तदीयसंश्लेषमात्रं निराकर्तुं प्रयत्नलाघवमिति विवक्षित्वा विमर्शपूर्वकं पूर्वपक्षयति—**किं तावदिति** । आकाशादिष्विव व्रीह्यादिष्वपि संश्लेषमात्रं न तद्देहतेति शंकते—**कुत इति** । विशेषं दर्शयन्परिहरति—**जनेरिति** । जीवस्य जन्माभावेऽपि देवो जातो मनुष्यो जात इत्यादौ तत्तद्देहाभिमानद्वारा जनेर्मुख्यत्वदर्शनात्तत्रापि मुख्यत्वार्थं देहाभिमानपूर्वकं सुखदुःखभाक्त्वमास्थेयमित्यर्थः । कथं स्थावरभावे जनेर्मुख्यत्वं न हि तत्र देहाभिमानपूर्वकं मनुष्यादिदेहवद्भोगोऽस्ति तत्राऽऽह—**स्थावरेति** । "स्थाणुमन्येऽनुसंयन्ति" इत्याद्या श्रुतिः । "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इत्याद्या च स्मृतिः । ननूदाहृताभ्यां श्रुतिस्मृतिभ्यां पापफलत्वं स्थावरभावस्य भाति, तत्कथमिष्टादिकारिणां चन्द्रस्थलस्खलितानां तत्प्राप्तिः शंक्यते तत्राऽऽह—**पश्विति** । सोमपानावसरे परस्परमुच्छिष्टभक्षणमादिशब्देन विवक्षितम् "अग्नीषोमीयं पशुमालभेत" इति विशेषशास्त्रान्न हिंस्यादित्यादिसामान्यशास्त्रस्य विशेषविषये बाधात्पशुहिंसनस्य नानिष्टफलतेत्याशंक्य क्रत्वर्थतया पुरुषार्थतया च विधिनिषेधयोर्भिन्नार्थत्वेनाविरोधाद्बाध्यबाधकत्वासिद्धेरशक्यं पशुहिंसनस्य निषेधाधिगतमनर्थहेतुत्वमपाकर्तुमित्याशयवानुपसंहरति—**तस्मादिति**। पशुहिंसादेरङ्गत्वान्न स्वातन्त्र्येण व्रीह्यादिजन्महेतुतेत्याशंक्य पापान्तरस्य तद्धेतुत्वे दृष्टान्तमाह—**श्वादीति** । अवरोहाधिकारे श्वादिभावः श्रुतो नेत्याशंक्य श्रुत्यन्तरमाह—**यथेति** । अनुशयिनां व्रीह्यादिजन्मनो

श्वादिजन्म तत्सुखदुःखान्वितं भवति, एवं व्रीह्यादिजन्मापीति॥ एवं प्राप्ते ब्रूमः ॥ अन्यैर्जीवैरधिष्ठितेषु व्रीह्यादिषु संसर्गमात्रमनुशयिनः प्रतिपद्यन्ते, न तत्सुखदुःखभाजो भवन्ति, पूर्ववत् । यथा वायुधूमादिभावोऽनुशयिनां तत्संश्लेषमात्रम्, एवं व्रीह्यादिभावोऽपि जातिस्थावरैः संश्लेषमात्रम् ॥ कुत एतत् ॥ तद्वदेवेहाप्यभिलापात् । कोऽभिलापस्य तद्वद्भावः- कर्मव्यापारमन्तरेण संकीर्तनम् । यथाऽऽकाशादिषु प्रवर्षणान्तेषु न कंचित्कर्मव्यापारं परामृशति, एवं व्रीह्यादिजन्मन्यपि ॥ तस्मान्नास्त्यत्र सुखदुःखभाक्त्वमनुशयिनाम् । यत्र तु सुखदुःखभाक्त्वमभिप्रैति, परामृशति

रत्नप्रभा ।

व्रीह्यादिभावोऽनुशयिनां न जन्मरूपः कर्मविशेषपरामर्शं विनात्रोक्तत्वात् पूर्वोक्ताकाशादिभाववदिति सिद्धान्तयति–**एवं प्राप्त इत्यादिना** । **पूर्ववदिति** पदं दृष्टान्तत्वेन हेत्वंशत्वेन च व्याख्यातम् ॥ यदत्र प्रकरणे कर्मविशेषपरामर्शपूर्वकमुच्यते, तज्जन्मेति व्यतिरेकदृष्टान्तमप्याह–**यत्र त्विति** ॥ अपि च "योयो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूयो भवति" [ छां० ५ । १० । ६ ] इति वाक्यशेषे व्रीह्यादिषु प्रविष्टस्या-

भामती ।

विशेषः कीर्त्येत, न चैतदस्ति । न चेष्टादेः कर्मणः स्थावरशरीरोपभोग्यदुःखफलप्रसवहेतुभावः संभवति, तस्य धर्मत्वेन सुखैकहेतुत्वात् । न च तद्गतायाः पशुहिंसाया 'न हिंस्यात्' इति निषेधात्क्रत्वर्थाया अपि दुःखफलत्वसंभवः। पुरुषार्थाया एव न हिंस्यादिति प्रतिषेधात्। तथाहि–न हिंस्यादितिनिषेधस्य निषेध्याधीननिरूपणतया यदर्थं निषेध्यं तदर्थ एव निषेधो विज्ञायते । न चैतत् 'नानृतं वदेत्' 'न तौ पशौ करोति' इतिवत्कस्यचित्प्रकरणे सामाम्नातं येनानृतवदनवदस्य निषेध्यस्य क्रत्वर्थत्वे निषेधोऽपि क्रत्वर्थः स्यात् । पशौ निषिद्धयोराज्यभागयोः क्रत्वर्थत्वेन निषेधस्यापि क्रत्वर्थत्वं भवेत् । एवं हि सत्याज्यभागरहितैरप्यङ्गान्तैराज्यभागसाध्यः क्रतूपकारो विज्ञायते । तस्मादनारभ्याधीतेन न हिंस्यादित्यनेनाभिहितस्य विध्युपहितस्य पुरुषव्यापारस्य विधिविभक्तिविरोधात्प्रकृत्यर्थहिंसाकर्ममाव्यत्वपरित्यागेन पुरुषार्थ एव माव्योऽवतिष्ठते । आख्यातानभिहितस्यापि पुरुषस्य कर्तृव्यापाराभिधानद्वारेणोपस्थापितत्वात् । केवलं तस्य रागतः प्राप्तत्वात्तदनुवादेन नञर्थं विधिरुपसंक्रामति, तेन पुरुषार्थो निषेध्य इति तदधीननिरूपणो निषेधोऽपि

आनन्दगिरीय–न्यायनिर्णयः ।

मुख्यत्वे तत्परिहारायाधिकृतेन प्रयत्नगौरवं कर्तव्यमित्युपसंहर्तुमितिशब्दः । पूर्वपक्षमनूद्य सिद्धान्तमवतार्य प्रतिज्ञां पूरयित्वा योजयति–**एवमिति** । तत्र सौत्रं दृष्टान्तमादाय व्याचष्टे–**पूर्ववदिति** । जनेर्मुख्यत्वाय व्रीह्यादिष्वनुशयिनस्तत्सुखदुःखभाजो भवन्तीत्युक्तम् । तथा च तेषां तेषु न संश्लेषमात्रमिति शंकते–**कुत इति** । पूर्ववदिति सूत्रभागस्यार्थद्वयविवक्षया प्रयुक्तत्वादर्थान्तरं दर्शयन्परिहरति–**तद्वदिति** । वायुर्भूत्वेत्यादौ व्रीह्यादिवाक्ये चोक्तिसाम्येऽपि स्थावरादिभावस्यानुशयिनां विरोधिनि पूर्ववाक्ये व्रीह्यादि वाक्ये वा न काचिदुक्तिरस्तीति शंकते–**कोऽभिलापस्येति**। कर्मपरिणामनिमित्तत्वकथनं विना तद्भावोक्तिस्तद्देहत्वप्राप्त्यभावे लिङ्गमिति ब्रुवन्नभिलापस्य तद्वद्भावमाह–**कर्मेति** । अन्तरेण कर्मव्यापारं व्रीह्यादिनेति नास्ति संकीर्तनमित्याशंक्य कर्मविशेषव्यापारस्य निमित्तत्वेनानुक्तिरिष्टेत्याह–**यथेति** । अनुशयिनां व्रीह्यादिभावेन जन्मास्मिन्प्रकरणे कर्मव्यापारोक्तिं विनोक्तत्वादाकाशादिभाववदिति फलितमाह–**तस्मादिति** । किंच, ब्राह्मणादिजन्मन्येव रमणीयचरणा इत्यादिकर्मकीर्तनं प्रागपि तज्जन्मनो व्रीह्यादिभावेन जन्मसत्त्वे व्यर्थं स्यात्। अतो नास्ति पुरस्ताज्जन्मेति श्रुतार्थापत्तिमाह–**यत्रेति** । किंच, 'यो यो ह्यन्नमत्ति'इत्यादिनो-

तत्र कर्मव्यापारं,-रमणीयचरणाः कपूयचरणा इति ॥ अपि च मुख्येऽनुशयिनां व्रीह्यादिजन्मनि व्रीह्यादिषु लूयमानेषु भज्यमानेषु पच्यमानेषु भक्ष्यमाणेषु च तदभिमानिनोऽनुशयिनः प्रवसेयुः । यो हि जीवो यच्छरीरमभिमन्यते स तस्मिन्पीड्यमाने प्रवसतीति प्रसिद्धम् । तत्र व्रीह्यादिभावाद्रेतःसिग्भावोऽनुशयिनां नाभिलप्येत ॥ अतः संसर्गमात्रमनुशयिनामन्याधिष्ठितेषु व्रीह्यादिषु भवति । एतेन जनेर्मुख्यार्थत्वं प्रतिब्रूयात्, उपभोगस्थानत्वं च स्थावरभावस्य । न च वयमुपभोगस्थानत्वं स्थावरभावस्यावजानीमहे । भवत्वन्येषां जन्तूनामपुण्यसामर्थ्येन स्थावरभावमुपगतानामेतदुपभोगस्थानम् । चन्द्रमसस्त्ववरोहन्तोऽनुशयिनो न स्थावरभावमुपभुञ्जते इत्याचक्ष्महे ॥ २४ ॥

रत्नप्रभा ।

नुशयसंघस्यान्नद्वारा रेतःसिक्पुरुषयोगः श्रुतः, तदन्यथानुपपत्त्यापि जन्मश्रुतिर्न मुख्येत्याह-अपि चेत्यादिना ॥ व्रीह्यादिरूपदेहनाशे देहिनामुत्क्रान्तेरवश्यम्भावाद्रेतःसिग्योगो न स्यादित्यर्थः ॥ एतेनेति । उक्तानुमानार्थापत्तिभ्यां जायत इति श्रुतेर्मुख्यार्थत्वमनुशये भोगायतनत्वं च व्रीह्यादेः प्रतिब्रूयादित्यर्थः ॥ ननु व्रीह्यादेर्भोगायतनत्वानङ्गीकारे पूर्वोक्तश्रुतिस्मृतिप्रवृत्तिबाध इत्यत आह—न चेति ॥ २४ ॥ वैदिकं

भामती ।

पुरुषार्थो भवति । तथा चायमर्थः संपद्यते-यत्पुरुषार्थं हननं तन्न कुर्यादिति । क्रत्वर्थस्यापि च निषेधे हिंसायाः क्रतूपकारकत्वमपि कल्प्येत । न च दृष्टे पुरुषोपकारकत्वे प्रत्यर्थिनि सति तत्कल्पनास्पदम् । न च स्वातन्त्र्यपारतन्त्र्ये सति संयोगपृथक्त्वे खादिरतादिवदेकत्र संभवतः । तस्मात्पुरुषार्थप्रतिषेधो न क्रत्वर्थत्वमप्यास्कन्दतीति शुद्धसुखफलत्वमेवेष्टादीनां न स्थावरशरीरोपभोग्यदुःखफलत्वमपीति । आकाशादिष्विव कर्मव्यापारमन्तरेणाभिलापात् । अनुशयिनां व्रीह्यादिसंयोगमात्रं न तु देहत्वमिति । अयमेवार्थ उत्सर्गापवादकथनेनोपलक्षितः । अपि च मुख्येऽनुशयिनां व्रीह्यादिजन्मनीति । व्रीह्यादिभावमापन्नाः खल्वनुशयिनः पुरुषैरुपभुक्ता रेतःसिग्भावमनुभवन्तीति श्रूयते । तदेतद्व्रीह्यादिदेहत्वेऽनुशयिनां नोपपद्यते । व्रीह्यादिदेहत्वे हि व्रीह्यादिषु लूनेष्ववहन्तिना फलीकृतेषु च व्रीह्यादिदेहविनाशादनुशयिनः

आनन्दगिरीय-न्यायनिर्णयः ।

स्तत्र पुरुषाहुतिसंबन्धोऽनुशयिनां श्रूयते स च तेषां व्रीह्यादिभावेन जन्मोपगमेन तल्लवनादौ प्रवासप्रसङ्गादयुक्तः स्यादतो न पूर्वं मुख्यं जन्मेति श्रुतार्थापत्त्यन्तरमाह-अपि चेति । जीवानां व्रीह्यादिभ्योऽन्यत्वात्तत्पीडनेऽपि न प्रवासोऽस्तीत्याशंक्याऽऽह-यो हीति । अनुशयिनां प्रवासेऽपि का क्षतिस्तत्राऽऽह-तत्रेति । पूर्वोक्तहेतुफलमुपसंहरति-अत इति । यत्तु जनेर्मुख्यत्वसिद्धेर्भोगस्थानत्वाच्च स्थावरत्वस्य मुख्यमेवानुशयिनां व्रीह्यादिजन्मेति तत्राऽऽह-एतेनेति । उक्तयुक्त्या जन्मश्रुतेरुपचरितार्थत्वेनेति यावत् । अनुशयिनां वा स्थावरजीवानां वा स्थावरभावस्य भोगस्थानतेति विकल्प्याऽऽद्यमुक्तन्यायेन दूषयति-उपभोगेति । यदनुशयिनां स्थावरत्वस्य भोगस्थानत्वं तच्च प्रतिब्रूयादिति संबन्धः । द्वितीयमंगीकरोति न चेति । केषां तर्हि तदुपभोगायतनं तत्राऽऽह-भवत्विति । अन्येऽपि न तत्र भोक्तारो व्रीह्यादिसंश्लिष्टत्वादनुशयिवदित्याशंक्य तद्देहपरिणामिपापराहित्यमुपाधिरित्याह-अपुण्येति । अनुशयिनामपि व्रीह्यादिभावानुकूलपापविशेषवत्त्वं कल्प्यमित्युपाधेरसंभवमाशंक्य निरतिशयपुण्यकारिणां प्रबलपापपरिग्रहायोगादल्पपापैश्च स्थावरत्वादिसिद्धेर्मैवमित्याह—चन्द्रमसस्त्विति ॥ २४ ॥ परोक्तम-

१ कण्डयमानेष्विति पाठान्तरम् ।

## अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

यत्पुनरुक्तं पशुहिंसादियोगादशुद्धमाध्वरिकं कर्म तस्यानिष्टमपि फलमवकल्पत इत्यतो मुख्यमेवेदमनुशयिनां व्रीह्यादिजन्मास्तु । तत्र गौणी कल्पनाऽनर्थिकेति, तत्परिह्रियते ॥ न ॥ शास्त्रहेतुत्वाद्धर्माधर्मविज्ञानस्य । अयं धर्मोऽयमधर्म इति शास्त्रमेव विज्ञाने कारणम् । अतीन्द्रियत्वात्तयोः, नियतदेशकालनिमित्तत्वाच्च । यस्मिन्देशे काले निमित्ते च यो धर्मोऽनुष्ठीयते, स एव देशकालनिमित्तान्तरेष्वधर्मो भवति । तेन न शास्त्रादृते धर्माधर्मविषयं विज्ञानं कस्यचिदस्ति । शास्त्राच्च हिंसानुग्रहाद्यात्मको ज्योतिष्टोमो धर्म इत्यवधारितम् । स कथमशुद्ध इति शक्यते वक्तुम् ॥ ननु "न हिंस्यात्सर्वा भूतानि" इति शास्त्रमेव भूतविषयां हिंसामधर्म इत्यवगमयति॥ बाढम् ॥ उत्सर्गस्तु सः । अयं चापवादः—"अग्नीषोमीयं पशुमालभेत"इति । उत्सर्गापवादयोश्च व्यवस्थित-

---

रत्नप्रभा ।

कर्म, अशुद्धं न भवति, शास्त्रविहितत्वादिति सूत्रार्थं प्रपञ्चयति—अयं धर्म इत्यादिना ॥ शुचौ देशे प्रातःसायङ्काले जीवनादिनिमित्तकृतमग्निहोत्रं धर्मो भवति । स एवाशुचिदेशे मध्यरात्रे मरणादिनिमित्ते कृतः सन्नधर्मो भवतीति निर्णयः शास्त्रैकसाध्य इत्यर्थः ॥ ततः किं, तत्राह—शास्त्राच्चेति ॥ ननु या हिंसा सोऽधर्म इत्युत्सर्गस्य विशेषविधिना बाधोऽत्र न युक्तः। "नाभिचरेत्" इति निषिद्धश्येनस्य पुरुषार्थत्ववत् निषिद्धहिंसादेरपि क्रतूपकारकत्वाविरोधादिति, तत्राह—उत्सर्गापवादयोरिति ॥ अयमर्थः—काम्ये कर्मणि सर्वत्र करणांशे रागतः प्रवृत्तिः, अङ्गेषु विधित इति स्थितिः । तथा च श्येनाख्ये कर्मणि

भामती ।

प्रवसेयुरिति कथमनुशयिनां रेतःसिग्भावः । संसर्गमात्रे तु संसर्गिषु व्रीह्यादिषु नष्टेष्वपि न संसर्गिणोऽनु-

आनन्दगिरीय-न्यायनिर्णयः ।

न्यं निरस्यति—अशुद्धमिति । अनुवादं विभजते—यदिति । इष्टादिकारिणोऽनिष्टफलवत्त्वसंभवे फलितमाह—इत्यत इति । एतेन गौणी जन्मश्रुतिरिति प्रत्युक्तमित्याह—तत्रेति । व्रीह्यादिजन्मनो मुख्यत्वे सतीति यावत् । परिहारमवतारयति—तदिति । न वैदिकं कर्माशुद्धमिति प्रतिज्ञायां शास्त्रहेतुत्वादित्युक्तं विवृणोति—अयमिति । अनुमानमपि कस्मादस्मिन्नर्थे न प्रमाणमित्याशंक्य दृष्टं सामान्यतोऽदृष्टं वा तदिति विकल्प्याऽऽद्यं प्रत्याह—अतीन्द्रियत्वादिति । द्वितीयं दूषयति—अनियतेति । तदेव प्रपञ्चयति—यस्मिन्निति । शुद्धे हि देशे सायं प्रातरित्यादौ काले जीवनादौ च निमित्ते योऽग्निहोत्रादिधर्मो निर्वर्त्यते स एवाशुद्धे देशे मध्यरात्रादौ काले मरणादौ च निमित्ते कृतः सन्नधर्म इति प्रसिद्धं, तथा च न तत्र सामान्यतो दृष्टं सावकाशमित्यर्थः । धर्मादिज्ञानं नाऽऽनुमानिकं किंतु शास्त्रमात्रकृतमित्युक्तं तन्निगमयति—तेनेति । शास्त्रादेव धर्मादिज्ञानेऽपि प्रकृते किं जातं तदाह—शास्त्राच्चेति । दुष्टत्वमपि ज्योतिष्टोमस्य निषेधाधिगतमिति सांख्यः शङ्कते—नन्विति । पशुहिंसायां निषेधसामर्थ्यादनर्थहेतुत्वमौत्सर्गिकमित्यंगीकरोति—बाढमिति । तथाऽपि विधिसामर्थ्यात्तस्य क्रतूपकारित्वेन श्रेयोहेतुत्वमापवादिकमुपेयमित्याह—अपवाद इति । तयोः सामान्यविशेषविषयत्वेन व्यवस्थितविषयत्वादविरुद्धतया न बाध्यबाधकतेत्युक्तं तत्राऽऽह—उत्सर्गेति । पशुहिंसाया निषेधादनर्थहेतुत्वं क्रतूपकारो विधेरित्युभयार्थत्वाविरोधेऽपि परिहृत्यैवानर्थं क्रतूपकारेणार्थबाहुल्यहेतुत्वाभावे न विधिरनर्थकः स्यात् । न च श्येनेऽपि

विषयत्वम् ॥ तस्माद्विशुद्धं वैदिकं कर्म । शिष्टैरनुष्ठीयमानत्वादनिन्द्यमानत्वाच्च । तेन न तस्य प्रतिरूपं फलं जातिस्थावरत्वम् । न च श्वादिजन्मवदपि व्रीह्यादिजन्म भवितुमर्हति । तद्धि कपूयचरणानधिकृत्योच्यते । नैवमिह वैशेषिकः कश्चिदधिकारोऽस्ति ॥ अतश्चन्द्रस्थलात्स्खलितानामनुशयिनां व्रीह्यादिसंश्लेषमात्रं तद्भाव इत्युपचर्यते ॥ २५ ॥

## रेतःसिग्योगोऽथ ॥ २६ ॥

इतश्च व्रीह्यादिसंश्लेषमात्रं तद्भावः । यत्कारणम् । व्रीह्यादिभावस्यानन्तरमनुशयिनां रेतःसिग्भाव आम्नायते-"योयो ह्यन्नमत्ति, यो रेतः सिञ्चति, तद्भूय एव भवति" [ छां ५ । १० । ६ ] इति । न चात्र मुख्यो रेतःसिग्भावः सम्भवति । चिरजातो हि प्राप्तयौवनो रेतःसिग्भवति कथमिवानुपचरिततद्भावमद्यमानान्नानुगतोऽनुशयी प्रतिपद्यते ।

रत्नप्रभा ।

निषेधेपि रागप्राबल्यात् प्रवृत्तिः स्यात् । क्रत्वङ्गहिंसादौ तु विधित एव प्रवृत्तिर्वाच्या । स च विधिर्यद्युत्सर्गप्राप्तमनर्थहेतुत्वं न बाधेत, तर्हि प्रवर्तको न स्यात् । प्रवर्तकत्वे वा विधिरनर्थाय स्यात् ॥ अतो निरवकाशो विधिः सावकाशमुत्सर्गमविहितहिंसादिषु स्थापयतीति । इदञ्च निषेधशास्त्रस्य हिंसात्वादिसामान्येन प्रवृत्तिमङ्गीकृत्योक्तम् ॥ वस्तुतस्तस्य रागप्राप्तहिंसाविषयत्वाद्वैधहिंसायामप्रवृत्तेर्नाशुद्धत्वशङ्कावसर इति द्रष्टव्यम् । प्रतिरूपं दुःखरूपं तस्य फलं नेति योजना ॥ २५ ॥ इह व्रीह्यादिभावे कश्चिदधिकः कर्मपरामर्शो नास्तीत्युक्तम् ॥ अथ व्रीह्यादिभावानन्तरं रेतःसिग्भावः श्रुतः । तत्रान्नस्थानुशयिनः प्रवसेयुरिति रेतःसिग्भाव उपपद्यते । शेषमुक्तम् ॥२४॥२५ ॥

भामती ।

रेतःसिग्योगोऽथ । सद्योजातो हि बालो न रेतःसिग्भवत्यपि तु चिरजातः प्रौढयौवनः, तस्मादपि संसर्गमात्रमिति गम्यते ॥ २६ ॥

आनन्दगिरीय-न्यायनिर्णयः ।

वैधी प्रवृत्तिरिति तस्य विशिष्टार्थहेतुता । सर्वत्र कामेषु करणांशे रागात्प्रवृत्तिरिति कर्तव्यतांशे वैधीत्युपगमात् । ज्योतिष्टोमस्य श्येनस्येव काम्यत्वेऽपि नाभिचरेदितिवदनिषिद्धत्वादग्नीषोमीयहिंसायामितिकर्तव्यरूपायां प्रवृत्तेर्विध्यधीनत्वाद्विशिष्टार्थसाधनत्वमेव । तथा च विधिनिषेधयोर्विरोधे सावकाशानवकाशन्यायेन व्यवस्थेति भावः । विधिनिषेधयोरविरोधे फलितमाह-तस्मादिति । नानृतं वदेदितिवत्कस्यचित्प्रकरणे श्रुतत्वाभावात्पुरुषार्थत्वेन प्राप्तहननस्यैव'न हिंस्यात्'इति निषेधाद्विहितक्रत्वर्थहिंसाया निषेधाविषयत्वान्नानर्थहेतुता । किंतु सुखफलत्वमेवेत्यर्थः । शिष्टैरनुष्ठीयमानमपि देशविशेषे मांसाशनादि विवादास्पदं देशान्तरे दृश्यते तत्राऽऽह-अनिन्द्यमानत्वादिति । वैदिकस्य कर्मणः शुद्धत्वे सिद्धमर्थमाह-नेति । प्रतिरूपं प्रतिकूलमनिष्टमिति यावत् । कर्मान्तरनिबन्धनस्तर्हि व्रीह्यादिभावोऽनुशयिनां भविष्यतीत्युक्तं तत्राऽऽह-न चेति । इहेति व्रीह्यादिजन्मनीत्यर्थः । वैशेषिकोऽधिकारोऽसाधारणो हेतुरनुशयिनां तद्भावोक्तिस्तर्हि कथमित्याशंक्याऽऽह-अत इति ॥ २५ ॥ किंच, वाक्यशेषे संयोगस्यैव तद्भावस्य श्रुतेरुपक्रमेऽपि तद्भावः संयोगान्नार्थान्तरमित्याह-रेतःसिगिति । सूत्रं व्याकरोति-इतश्चेति । प्रकृतोपयोगित्वेनान्नभक्षकं तरुणत्वेन विशिनष्टि-यो रेत इति । तद्भूय एव भवतीति श्रुत्या तद्भावमेवान्नानुगतोऽनुशयी प्रतिपद्यत इत्युच्यते, न संयोगमात्रमित्याशंक्याऽऽह-न चेति । अत्रेत्यद्यमानान्नानुगतोऽनुशयी वाक्यं वा प्रकृतमुच्यते । रेतःसिचः स्वभावलोचनया मुख्यस्य तद्भावस्यायोगं स्फोरयति-चिरेति । अनुशयिस्वभावालोचनयाऽपि तमेवार्थं समर्थयते-कथमिति । मुख्यस्य तद्भावस्यायोगे फलित-

तत्र तावदवश्यं रेतःसिग्योग एव रेतःसिग्भावोऽभ्युपगन्तव्यः तद्वत् व्रीह्यादिभावोऽपि व्रीह्यादियोग एवेत्यविरोधः ॥ २६ ॥

## योनेः शरीरम् ॥ २७ ॥

इति श्रीवैयासिक्यां शारीरकमीमांसायां तृतीयाध्यायस्य प्रथमः पादस्समाप्तः ॥

अथ रेतःसिग्भावानन्तरं योनौ निषिक्ते रेतसि योनेरधिशरीरमनुशयिनामनुशयफलोपभोगाय जायत इत्याह शास्त्रं—"तद्य इह रमणीयचरणाः" [ छां० ५ । १० । ७ ] इत्यादि ॥ तस्मादप्यवगम्यते नावरोहे व्रीह्यादिभावावसरे तच्छरीरमेव सुखदुःखान्वितं भवतीति ॥ तस्माद् व्रीह्यादिसंश्लेषमात्रमनुशयिनां तज्जन्मेति सिद्धम् ॥ ३ ॥ १ ॥ २७ ॥

इत्यन्याधिष्ठिताधिकरणम् ॥ ६ ॥

**इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणपरमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये जीवस्य परलोकगमनागमनवैराग्यनिरूपणंनाम तृतीयाध्यायस्य प्रथमः पादः समाप्तः ॥**

---

रत्नप्रभा ।

शयिनो रेतःसेक्तृत्वायोगाद्योगमात्रं वाच्यम् । तद्वदुपक्रमेऽपि योग एवास्थेयः । अन्यथोपक्रमोपसंहारयोः विरोधः स्यादिति मत्वोक्तमित्यविरोध इति ॥ २६ ॥ योनेः शरीरश्रुतेर्न व्रीह्यादिशरीरत्वमनुशयिनामिति **सूत्रार्थः** ॥ एवं कर्मिणां गत्यागतिसंसारो दुर्वार इत्यनुसन्धानात् कर्मफलाद्वैराग्यतत्त्वज्ञानसाधनं सिद्धमिति पादार्थमुपसंहरति—**इति सिद्धमिति** ॥ २७ ॥ ( ६ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीमद्गोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शनभाष्यव्याख्यायां (भाष्य) रत्नप्रभायां तृतीयाध्यायस्य प्रथमः पादः समाप्तः ॥३॥१॥

भामती ।

तत्किमिदानीं सर्वत्रैवानुशयिनां संसर्गमात्रं तथा च रमणीयचरणा इत्यादिषु तथाभाव आपद्येतेति नेत्याह—**योनेः शरीरम्** । सुगमम् ॥ २७ ॥ ( ६ ) ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकमीमांसाभाष्यविभागे भामत्यां तृतीयस्याध्यायस्य प्रथमः पादः॥३॥१॥

आनन्दगिरीय—न्यायनिर्णयः ।

माह—**तत्रेति** । तथाऽपि व्रीह्यादिभावे किं जातं तदाह—**तद्वदिति** । अन्यथोपक्रमोपसंहारयोर्विरोधः स्यात्तत्परिहारार्थमुपसंहारवदुपक्रमोऽपि नेतव्य इत्याह—**इत्यविरोध इति** ॥ २६ ॥ तर्हि सर्वत्रानुशयिनां संसर्गमात्रमिति ब्राह्मणयोनिमित्यादिकाऽपि श्रुतिरुपचरितार्थेत्याशंक्योक्तम्—**योनेरिति** । सूत्रं व्याकरोति—**अथेत्यादिना**।शरीरवत्त्वस्य विशिष्टावसरत्वदर्शनाद्व्रीह्यादिषु नानुशयिनां तद्वत्त्वं नापि सुखाद्यन्वितत्वमिति फलितमाह—**तस्मादिति** । अनुशयिनां व्रीह्यादिजन्मामुख्यमुपपाद्याधिकरणार्थमुपसंहरति—**तस्मादिति**। तदेवमिष्टादिकारिणामनिष्टादिकारिणां चारोहावरोहरूपसंसारगतौ सिद्धायां ततो वैराग्यमधिकारिविशेषणतया वाक्यार्थधीसाधनं दृढीकृतं भवतीति पादार्थमुपसंहरति—**इति सिद्धमिति**॥२७॥(६)॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि (ज्ञान) कृतायां शारीरकभाष्यटीकायां तृतीयाध्यायस्य प्रथमः पादः ॥ ३ ॥ १ ॥

**इति तृतीयाध्यायस्य जीवस्य परलोकगमनागमननिरूपणाख्यः प्रथमः पादः ।**

---

# तृतीयाध्याये द्वितीयः पादः २.

## सन्ध्ये सृष्टिराह हि ॥ १ ॥

**अतिक्रान्ते पादे पञ्चाग्निविद्यामुदाहृत्य जीवस्य संसारगतिप्रभेदः प्रपञ्चितः। इदानीं तु तस्यैवावस्थाभेदः प्रपंच्यते। इदमामनन्ति-"स यत्र प्रस्वपिति" [ बृ० ४ । ३ । ९ ] इत्युपक्रम्य "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते" [ बृ० ४ । ३ । १० ] इत्यादि। तत्र संशयः-किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिः-आहोस्वित मायामयीति। तत्र तावत प्रतिपद्यते-सन्ध्ये तथ्य-**

---

रत्नप्रभा।

उक्तवैराग्यसाध्यः तत्त्वम्पदार्थविवेको वाक्यार्थज्ञानसाधनमस्मिन् पादे निरूप्यत इति पादयोर्हेतुसाध्यभावसङ्गतिमाह-**अतिक्रान्त इति** ॥ साधनविचारत्वादेवास्य पादस्यास्मिन्नध्याये संगतिः। अस्मिन् पादे "न स्थानतोऽपि" [ ३ । २ । ११ ] इत्यतः प्रागुद्देश्यत्वेन प्रथमं जिज्ञासितत्वम्पदार्थोऽवस्थाद्वारा विविच्यते। तदारभ्या पादसमाप्तेर्विधेयः तत्पदार्थविवेकः। तत्र पूर्वं गत्यागतिचिन्तया जाग्रदवस्था निरूपिता। तदनन्तरभाविनीं स्वप्नावस्थां श्रुत्युक्तां विषयीकृत्य तत्र स्वप्ने रथादिसृष्ट्युक्तेः, तदभावोक्तेश्च,-संशयं वदन् पूर्वपक्षसूत्रं योजयति-**तत्र संशय इत्यादिना** ॥ स्वप्नरथादयो जाग्रद्रथादिवद् व्यावहारिक-

भामती।

**संध्ये सृष्टिराह हि** ॥ इदानीं तु तस्यैव जीवस्यावस्थाभेदः स्वयंज्योतिष्ट्वसिद्ध्यर्थं प्रपञ्च्यते-**किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिराहोस्विन्मायामयीति**। यद्यपि ब्रह्मणोऽन्यस्यानिर्वाच्यतया जाग्रत्स्वप्नावस्थागतयोरुभयोरपि सर्गयोर्मायामयत्वं तथापि यथा जाग्रत्सृष्टिर्ब्रह्मात्मभावसाक्षात्कारात्प्रागनुवर्तते। ब्रह्मात्मभावसाक्षात्कारात्तु निवर्तते। एवं किं स्वप्नसृष्टिराहोस्वित् प्रतिदिनमेव निव-

आनन्दगिरीय-न्यायनिर्णयः।

संसारगतिनिरूपणेन ततो दृढीकृतवैराग्यस्य वाक्यार्थावगतये तत्त्वमर्थौ संशोधयितुं पादमारभमाणस्त्वमर्थस्य जाग्रदवस्था संसारनिरूपणेनैव निरूपितेत्युपेत्य स्वयंज्योतिष्ट्वसिद्धये स्वप्नावस्थां वक्तुं पूर्वपक्षयति-**संध्ये सृष्टिरिति**। वृत्तमनूद्य पादसंगतिमाह-**अतिक्रान्त इति**। संसारस्य पुनःपुनरारोहावरोहरूपवत्तस्मिन्नस्वास्थ्ये विरक्तस्य वाक्यार्थज्ञानार्थं पदार्थशोधनाय द्वितीयपादारम्भः। तत्रापि त्वमर्थस्योद्देश्यत्वात् 'न स्थानतोऽपि' इत्यतः प्राक्तनस्यावस्थानिर्मुक्तत्वप्रतिपादनाय प्रयत्यते। ततश्चाऽऽपादसमाप्तेस्तत्पदार्थो विविच्यते तत्रापि स्वयंज्योतिष्ट्वसाधनार्थं स्वप्नावस्था प्रथमं व्यवस्थाप्यत इत्यर्थः। आरम्भणाधिकरणे स्वप्नस्य मायामयत्वं सिद्धवत्कृत्य जाग्रदवस्थाया मायामयत्वं निरूपितम्। इदानीं तदेव स्वप्नस्य मायामयत्वं प्रकटयितुं तद्विषयवाक्यमुदाहरति-**इदमिति**। तस्मिन्वाक्ये स्वाप्नीं सृष्टिमधिकृत्य रथादिसर्गाम्नानाद्रथाद्यभावाम्नानाच्च संशयमाह-**तत्रेति**। पारमार्थिकत्वमर्थक्रियासमर्थत्वमित्यभिप्रेत्य प्रबोध इवेत्युदाहरणम्। अन्यथा तत्रापि वास्तव्याः सृष्टेरनिष्टत्वेन माध्यवैकल्यान्मायामयत्वं प्रातीतिकसत्तामात्रोपेतत्वम्। अत्र च त्वमर्थस्य स्वप्नावस्थानिरूपणेन ततो निष्कृष्टस्य स्वयंज्योतिष्ट्व शुद्धतया वाक्यार्थान्वयित्वेन तद्धेतुत्वमस्तीति तत्प्रतिपादनात्पादादिसंगतयः। पूर्वपक्षे स्वप्नस्य सत्यत्वात्ततो निष्कर्ष योगादशुद्धस्यास्वयंज्योतिषो वाक्यार्थान्वयासिद्धिः। सिद्धान्ते तस्य मिथ्यात्वात्ततो निष्कृष्टस्य स्वयंज्योतिष्ट्वात्तदन्वयेन तद्धीहेतुत्वमिति मत्वा पूर्वपक्षमुपादत्ते-**तत्रेति**। प्रतिज्ञां विवृण्वन्नादौ संध्यशब्दार्थ-

रूपा सृष्टिरिति । सन्ध्यमिति स्वप्नस्थानमाचष्टे । वेदे प्रयोगदर्शनात्- "सन्ध्यं तृतीयं स्वप्नस्थानम्" [ बृ० ४ । ३ । १ ] इति । द्वयोर्लोकस्थानयोः, प्रबोधसम्प्रसादस्थानयोर्वा, सन्धौ भवतीति सन्ध्यं, तस्मिन् सन्ध्ये स्थाने तथ्यरूपैव सृष्टिर्भवितुमर्हति ॥ कुतः ॥ यतः प्रमाणभूता श्रुतिरेवमाह- "अथ रथान्रथयोगान्पथः सृजते" [ बृ० ४ । ३ । ९ ] इत्यादि । स हि कर्तेति चोपसंहारादेवमेवावगम्यते ॥ १ ॥

## निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

रत्नप्रभा ।

सत्ताकाः-उत-शुक्तिरजतवत् प्रातीतिका इति संशयार्थः । आरम्भाधिकरणे प्रपञ्चस्य पारमार्थिकत्वनिषेधादिति मन्तव्यम् । अत्र **पूर्वपक्षे** जाग्रद्वत् स्वप्नाज्जीवस्य विवेकासिद्धिः, **सिद्धान्ते** प्रातीतिकदृश्यसाक्षितया विवेकात् स्वयंज्योतिष्ट्वसिद्धिरिति फलम् । मुमूर्षोः सर्वेन्द्रियोपसंहारादेतल्लोकाननुभवे सति वासनामात्रेण इमं लोकं स्मरतः कर्मवशाद्धृदये मानसपरलोकस्फूर्तिरूपः स्वप्नो भवति । सोऽयं लोकद्वयसन्धौ भवतीति सन्ध्यः स्वप्नः । तथा च श्रुतिः—"तस्मिन्सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च" [ बृ० ४ । ३ । ९ ] इति । अयं स्वप्नः कादाचित्क इत्यरुच्या नित्यस्वप्नस्य प्रबोधसम्प्रसादसन्धिभवत्वमुक्तम् ॥ **अन्ये तु** मर्त्यचक्षुराद्यजन्यरूपादिसाक्षात्कारवत्त्वं परलोकलक्षणं, दैवचक्षुराद्यजन्यतद्वत्त्वं मर्त्यलोकलक्षणं च,-स्वप्नेऽस्तीति लक्षणतो लोकद्वयस्पर्शित्वात् नित्यस्वप्नस्यैव लोकद्वयसन्ध्यत्वं ग्रामद्वयस्पर्शिमार्गस्य तत्सन्ध्यत्ववदिति **व्याचक्षते** ॥ न केवलं श्रुत्या स्वप्नार्थानां व्यावहारिकसत्यत्वं, किन्तु सकर्तृकत्वादपीत्याह-**स हि कर्तेति** ॥ १ ॥ **किञ्च स्वप्नार्थाः, सत्याः,**

भामती ।

तेत इति विमर्शार्थः । **द्वयोः** इहलोकपरलोकस्थानयोः । संधौ भवं संध्यम् । ऐहलौकिकचक्षुराद्यव्यापाराद्रूपादिसाक्षात्कारोपजननादनैहलौकिकं पारलौकिकेन्द्रियादिव्यापारस्य च भविष्यतोऽप्रत्युत्पन्नत्वेन न पारलौकिकम् । न च न रूपादिसाक्षात्कारोऽस्ति स्वप्नदशः । तस्मादुभयोर्लोकयोरस्यान्तरालत्वमिति ब्रह्मात्मभावसाक्षात्कारात्प्राक् तथ्यरूपैव सृष्टिर्भवितुमर्हति । अयमभिसंधिः-इह हि सर्वाण्येव मिथ्याज्ञानान्युदाहरणं तेषां सत्यत्वं प्रतिज्ञायते । प्रकृतोपयोगितया तु स्वप्नज्ञानमुदाहृतम् । ज्ञानं यमर्थमवबोधयति स तथैवेति युक्तम् । तथाभावस्य ज्ञानारोहात् । अतथात्वस्य त्वप्रतीयमानस्य तथाभावप्रमेयविरोधेन कल्पनास्पदत्वाद् बाधकप्रत्ययादतथात्वमिति चेत् । न । तस्य बाधकत्वासिद्धेः । समानगोचरे हि विरुद्धार्थोपसंहारिणी ज्ञाने विरुध्येते । बलवदबलवत्त्वानिश्चयाच्च बाध्यबाधकभावं प्रतिपद्येते । न चेह समानविषयत्वं,

आनन्दगिरीय-न्यायनिर्णयः ।

माह-**संध्यमितीति** । तत्र मानमाह-**वेद इति** । प्रथमप्रयोगाभावे कथं वैदिकप्रयोगसिद्धिरित्याशंक्य यौगिकत्वान्न तदपेक्षेत्याह-**द्वयोरिति** । ऐहिकामुष्मिकं च यदैन्द्रियकं रूपादिज्ञानं तस्याभावादनुदयाच्च स्वप्नस्थानं तयोः संध्यमुक्तम् । स्थूलदर्शनस्य चाभावाद्वासनामयज्ञानस्य तत्र भावात्प्रबोधसंप्रसादयोर्वा संध्यं स्वप्नस्थानमिति विवेक्तव्यम् । पदार्थमुक्त्वा प्रतिज्ञां पूरयति-**तस्मिन्निति** । स्वप्नसृष्टेर्न सत्यत्वं मानाभावादित्याह-**कुत इति** । श्रुतिं प्रमाणयन्नुत्तरमाह-**यत इति** । बाह्यरथाद्यभावेऽपीत्यथशब्दः । न केवलं सृष्टिश्रुत्या स्वप्नसृष्टेः सत्यत्वं सकर्तृकत्वादपि तस्माजागरितसृष्टिवदर्थक्रियासामर्थ्य सत्यत्वमेष्टव्यमित्याह-**स हीति** ॥ १ ॥ किंच, विमताः सत्या निर्मितत्वाजाग्रन्निर्मितरथादिवदित्याह-**निर्मातारं चेति** । निर्मितान्कामान्विशिनष्टि-**पुत्रादयश्चेति** । निर्मातारं चेत्यादि व्याकरोति-

अपि चैके शाखिनोऽस्मिन्नेव सन्ध्ये स्थाने कामानां निर्मातारमात्मानमामनन्ति-"य एष सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः" [ कठ० ५ । ८ ] इति। पुत्रादयश्च तत्र कामा अभिप्रेयन्ते काम्यन्त इति ॥ ननु कामशब्देनेच्छाविशेषा एवोच्येरन् ॥ न ॥ "शतायुषः पुत्रपौत्रान्वृणीष्व" [ कठ० १ । २ । १ ] इति प्रकृत्य अन्ते "कामानां त्वा कामभाजं करोमि" [ कठ० १ । २ । ५ ] इति प्रकृतेषु तत्र पुत्रादिषु कामशब्दस्य प्रयुक्तत्वात् । प्राज्ञं चैनं निर्मातारं प्रकरणवाक्यशेषाभ्यां प्रतीमः । प्राज्ञस्य हीदं प्रकरणम्-"अन्यत्र धर्मादन्यत्राधर्माद्" [ कठ० ७ । २ । १४ ] इत्यादि । तद्विषय एव च वाक्यशेषोऽपि-"तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" [ कठ० ५ । ८ ] इति । प्राज्ञकर्तृका च सृष्टिस्तथ्यरूपा समधिगता जागरिता-

---

रत्नप्रभा ।

प्राज्ञनिर्मितत्वाद् आकाशादिवदिति सूत्रार्थमाह-अपि चेत्यादिना ॥ रूढिमाशंक्य प्रकरणान्निरस्यति-नन्वित्यादिना॥ यः सुप्तेषु निर्व्यापारेषु करणेषु जागर्ति,तदेव शुक्रं स्वप्रकाशं ब्रह्मेत्यर्थः॥स्वप्नस्य जाग्रदर्थैः

भामती ।

कालभेदेन व्यवस्थोपपत्तेः । यथा हि क्षीरं दृष्टं कालान्तरे दधि भवति, एवं रजतं दृष्टं कालान्तरे शुक्तिर्भवेत् । नानारूपं वा तद्वस्तु । तद्यस्य तीव्रातपक्रान्तिसहितं चक्षुः स तस्य रजतरूपतां गृह्णाति । यस्य तु केवलमालोकमात्रोपकृतं, स तस्यैव शुक्तिरूपतां गृह्णाति । एवमुत्पलमपि नीललोहितं दिवा सौरीभिर्भाभिरभिव्यक्तं नीलतया गृह्यते । प्रदीपाभिव्यक्तं तु नक्तं लोहिततया । एवमसत्यां निद्रायां सतोऽपि रथादीन्न गृह्णाति निद्राणस्तु गृह्णातीति सामग्रीभेदाद्वा कालभेदाद्वा विरोधाभावः । नापि पूर्वोत्तरयोर्बलवदबलत्वनिर्णयः । द्वयोरपि स्वगोचरचारितया समानत्वेन विनिगमनाहेतोरभावत् । तस्मादप्यवश्यमविरोधो व्यवस्थापनीयः। तत्सिद्धमेतत्।विवादास्पदं प्रत्ययाः,सम्यञ्चः,प्रत्ययत्वात् ,जाग्रत्स्तम्भादिप्रत्ययवदिति। इममर्थं श्रुतिरपि दर्शयति-'अथ रथान् रथयोगान् पथः सृजते' इति । न च 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' इति विरोधादुपचरितार्थो सृजत इति श्रुतिर्वा व्याख्येया।सृजत इति हि श्रुतेर्बहुश्रुतिसंवादात्प्रमाणान्तरसंवादाच्च बलीयस्त्वेन तदनुगुणतया न तत्र रथा इत्यस्याभाक्तत्वेन व्याख्यानात् । जाग्रदवस्थादर्शनयोग्या न सन्ति न तु रथा न सन्तीति। अत एव कर्तृश्रुतिः शाखान्तरश्रुतिरुदाहृता। प्राज्ञकर्तृकत्वाच्चास्य पारमार्थिकत्वं वियदादिसर्गवत् । न च जीवकर्तृकत्वान्न प्राज्ञकर्तृकत्वमिति सांप्रतम्। 'अन्यत्र धर्मादन्यत्राधर्मात्' इति प्राज्ञस्यैव प्रकृतत्वात्। जीवकर्तृकत्वेऽपि च प्राज्ञादभेदेन जीवस्य प्राज्ञत्वात्। अपि च जाग्रत्प्रत्ययसंवादवन्तोऽपि स्वप्नप्रत्ययाः केचिद्दृश्यन्ते। तद्यथा स्वप्ने शुक्लाम्बरधरः शुक्लमाल्यानुलेपनो ब्राह्मणा-

आनन्दगिरीय-न्यायनिर्णयः ।

अपि चेति । सुप्तेषु करणेषु निर्व्यापारेष्विति यावत्। स त्वया पृष्ट आत्मेति शेषः । कामशब्दस्य यौगिकार्थमाह-पुत्रादयश्चेति । रूढिर्योगमपहरतीतिन्यायेन शङ्कते-नन्विति । प्रकरणविरोधान्नात्र रूढिरित्याह-नेत्यादिना । तत्रेति य एष इत्यादि यत्र श्रुतं तत्रैव प्रकरण इति यावत् । परकर्तृकत्वादपि सत्यैव स्वप्नसृष्टिः संप्रतिपन्नवदित्याह-प्राज्ञं चेति । तद्विषयं प्रकरणं प्रकटयति-प्राज्ञस्येति । तद्विषयं वाक्यशेषमपि विशदयति-तदिति । दृष्टान्तस्य साध्यविकलतां प्रत्याह-प्राज्ञेति । हेत्वसिद्धिमाशंक्य क्वचिज्जीवकर्तृकत्वश्रवणेऽपि जीवस्य प्राज्ञाभेदाय ब्रह्मणस्तद्भावात्प्राज्ञकर्तृकतेति मत्वा दार्ष्टान्तिक-

**श्रया, तथा स्वप्नाश्रयापि सृष्टिर्भवितुमर्हति ॥ तथा च श्रुतिः—"अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्तः" [ बृ० ४ । ३ । १४ ] इति स्वप्नजागरितयोः समानन्यायतां श्रावयति ॥ तस्मात्तथ्यरूपैव सन्ध्ये सृष्टिरिति ॥ २ ॥ एवं प्राप्ते प्रत्याह—**

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

**तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति ॥ यदुक्तं–सन्ध्ये सृष्टिः पारमार्थिकीति । मायामय्येव सन्ध्ये सृष्टिर्न परमार्थगन्धोऽप्यस्ति ॥ कुतः ॥**

---

रत्नप्रभा ।

समानदेशत्वश्रुतेरभेदश्रुतेश्च सत्यत्वे तात्पर्यमित्याह–**अथो खल्वाहुरिति** ॥ २ ॥ स्वप्नरथादयः, प्रातीतिकाः, जाग्रद्रथादौ क्लृप्तसामग्रीं विना दृष्टत्वात्, शुक्तिरूप्यादिवदिति सिद्धान्तयति–**तुशब्द इत्यादिना** ॥ चिन्मात्रनिष्ठाऽविद्या चित्त्वावच्छेदेन जीवेऽपि स्थिता रथाद्याकारा मायेति सूत्रभाष्ययोरुक्तमायाऽविद्ययोरभेदज्ञापनाय मात्रपदेन सति प्रमातर्यबाध्यत्वरूपस्य व्यावहारिकसत्यत्वस्य निरास उक्तः । कार्त्स्न्यमत्र जाग्रति या क्लृप्तसामग्री तज्जन्यत्वं परमार्थवस्तुनो जाग्रदर्थस्य कार्यस्य धर्मः सत्यत्वव्या-

भामती ।

यनः प्रियव्रतं प्रत्याह–प्रियव्रत पञ्चमेऽहनि प्रातरेवोर्वराप्रायभूमिदानेन नरपतिस्त्वां मानयिष्यतीति । स च जाग्रत्तथात्मनो मानमनुभूय स्वप्नप्रत्ययं सत्यमभिमन्यते । तस्मात्संध्ये पारमार्थिकी सृष्टिः ॥ १ ॥२॥ इति प्राप्ते उच्यते–**मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्।** इदमत्राकूतम्। न तावत् क्षीरस्येव दधि रजतस्य परिणामः शुक्तिः संभवति।न हि जात्वीश्वरगृहे चिरस्थितान्यपि रजतभाजनानि शुक्तिभावमनुभवन्ति दृश्यन्ते । न चेतरस्य रजतानुभवसमयेऽन्योऽनाकुलेन्द्रियो न तस्य शुक्तिभावमनुभवति प्रत्येति च । न चोभयरूपं वस्तु । सामग्रीभेदात्तु कदाचिदस्य तोयभावोऽनुभूयते कदाचिन्मरीचितेति सांप्रतम् । पारमार्थिके ह्यस्य तोयभावे तत्साध्यामुदन्योपशमलक्षणार्थक्रियां कुर्यान्मरीचिसाध्यामपि रूपप्रकाशलक्षणाम् । न मरीचिभिः कस्यचित्तृष्णज उदन्योपशाम्यति । न च तोयमेव द्विविधमुदन्योपशमनमतदुपशमनमिति युक्तम् । तदर्थक्रियाकारित्वव्याप्तं तोयत्वं मात्रयापि तामकुर्वत्तोयमेव न स्यात्। अपि च तोयप्रत्ययसमीचीनत्वायास्य द्वैविध्यमभ्युपेयते तच्चाभ्युपगमेऽपि न सेद्धुमर्हति । तथाहि–असमर्थविधापातितोयमेतदिति मन्वानो न तृष्णयापि मरीचितोयमभिधावेत् । यथा मरीचीननुभवन् । अथाशक्तं शक्तमभिमन्यमानोऽभिधावति। किमपराद्धं मरीचिषु तोयविपर्यासेन सर्वजनीनेन यत्तमतिलङ्घ्य विपर्यासान्तरं कल्प्यते।

आनन्दगिरीय–न्यायनिर्णयः ।

माह–**तथेति** । स्वप्नजागरितयोस्तुल्यदेशत्वश्रवणादपि स्वप्नस्य सत्यतेत्याह–**तथा चेति** । स्वप्नजाग्रद्धियोरेकार्थत्वश्रुत्याऽपि स्वप्नसृष्टेः सत्यतेत्याह–**यानीति** । उक्तश्रुतेस्तात्पर्यमाह–**स्वप्नेति** । बाध्यत्वेन मिथ्यात्वमाशंक्य जागरितसृष्टेः श्रुत्या बाध्यत्वेऽपि तत्त्वसाक्षात्कारात्प्रागनुवृत्तेः सत्यत्ववदस्यापि स्वप्नस्य सत्यतेत्याह–**तस्मादिति** । स्वप्नसृष्टेः सत्यत्वे तद्विशिष्टात्मनोऽशुद्धेर्न वाक्यार्थान्वयितेत्युपसंहर्तुमितीत्युक्तम् ॥ १ ॥ पूर्वपक्षानुवादेन सिद्धान्तं सूत्रयति—**एवमिति** । अक्षरव्याख्यामारभते–**तुशब्द इति** । पक्षव्यावृत्तिमेव व्यावर्त्यानुवादेन व्यनक्ति–**नैतदिति** । पूर्वपक्षनिषेधं प्रतिज्ञायोत्तरपक्षं प्रतिजानीते–**मायेति** । मायाविद्ययोर्भेदो नेति वक्तुं सूत्रभाष्ययोर्मायाशब्दः । सूत्रे मात्रशब्देन सति मातरि बाध्यत्वं नाम भ्रान्तिसिद्धत्वं स्वप्नस्य जाग्रद्वैलक्षण्यं विवक्षितम् । श्रुतियुक्तिभ्यां स्वप्नसृष्टेः सत्यत्वोक्तेर्नेयं प्रतिज्ञेति शङ्कते–**कुत इति** । तयोरन्यथासिद्धेर्वक्ष्यमाणत्वं मत्वा हेतुमवतार्य व्याकरोति–

कात्स्न्येंन परमार्थवस्तुधर्मेणाभिव्यक्तस्वरूपः स्वप्नः । किं पुनरत्र कात्स्न्र्यमभिप्रेतम् । देशकालनिमित्तसम्पत्तिरबाधश्च । न हि परमार्थवस्तुविषयाणि देशकालनिमित्तकात्स्न्येंनानभिव्यक्तस्वरूपत्वात । न हि तानि, अबाधश्च,-स्वप्ने सम्भाव्यते । न तावत्स्वप्ने रथादीनामुचितो देशः सम्भवति । न तावत्संवृते देहदेशे रथादयोऽवकाशं लभेरन् । स्यादेतत्-बहिर्देहात्स्वप्नं द्रक्ष्यति । देशान्तरितद्रव्यग्रहणात् । दर्शयति च श्रुतिः बहिर्देहात्स्वप्नं "बहिः कुलायादमृतश्चरित्वा स ईयते अमृतो यत्र कामम्" [ बृ० ४ । ३ ।१२ ] इति । स्थितिगतिप्रत्ययभेदश्च नानिष्क्रान्ते जन्तौ सामञ्जस्यमश्नुवीतेति ॥ नेत्युच्यते ॥ न हि सुप्तस्य जन्तोः क्षणमात्रेण योजनशतान्तरितं देशं पर्येतुं विपर्येतुं च ततः सामर्थ्यं सम्भा-

रत्नप्रभा ।

पकः तदभावं स्वप्ने विवृणोति-न तावदित्यादिना ॥ संवृते सङ्कीर्णे पर्येतुं गन्तुम् । विपर्येतुम् आगन्तुम् । श्रावयति-प्रबुद्धो जनः पार्श्वस्थान् प्रतीति शेषः । एतत् स्वप्नं यथा स्यात्, तथा यत्र काले

भामती ।

न च क्षीरदधिप्रत्ययवदाचार्यमातुलत्रांह्मणप्रत्ययवद्वा तोयमरीचिविज्ञाने समुच्चितावगाहिनी,स्वानुभवात्परस्परविरुद्धयोर्बाध्यबाधकभावावभासनात् । तत्रापि रजतज्ञानं पूर्वमुत्पन्नं बाध्यमुत्तरं तु बाधकं शुक्तिज्ञानं प्राप्तिपूर्वकत्वात्प्रतिषेधस्य । रजतज्ञानात्प्राक्प्रापकाभावेन शुक्तेरप्राप्तायाः प्रतिषेधासंभवात्पूर्वज्ञानप्राप्तं तु रजतं शुक्तिज्ञानमपत्राधितुमर्हति । तदपबाधात्मकं च स्वानुभवादवसीयते । यथाहुः-'आगामित्वादबाधित्वा परं पूर्वं हि जायते । पूर्वं पुनरबाधित्वा परं नोत्पद्यते क्वचित्' । न च वर्तमानरजतावभासि ज्ञानं भविष्यत्तामस्यागोचरयन्न भविष्यता स्वसमयवर्तिनीं शुक्तिं गोचरयता प्रत्ययेन बाध्यते, कालभेदेन विरोधाभावादिति युक्तम् । मा नामास्य ज्ञासीत्प्रत्यक्षं भविष्यत्तां तत्पृष्ठभावि त्वनुमानमुपकारभावहेतुमिवासति विनाशप्रत्ययोपनिपाते स्थेमानमाकलयति । असति विनाशप्रत्ययोपनिपाते रजतमिदं स्थिरं रजतत्वादनुभूतप्रत्यभिज्ञातरजतवत् । तया च रजतगोचरं प्रत्यक्षं वस्तुतः स्थिरमेव रजतं गोचरयेत् । तथा च भविष्यच्छुक्तिकाज्ञानकालं, रजतं व्याप्नुयादिति विरोधाच्छुक्तिज्ञानेन बाध्यते । यथाहुः-'रजतं गृह्यमाणं हि चिरस्थायीति गृह्यते । भविष्यच्छुक्तिकाज्ञानकालं व्याप्नोति तेन तत् ॥' इति । प्रत्यक्षेण चिरस्थायीति गृह्यत इति केचिद्व्याचक्षते । तदयुक्तम् । यदि चिरस्थायित्वं योग्यता न सा प्रत्यक्षगोचरः शक्तेरतीन्द्रियत्वात् । अथ कालान्तरव्यापित्वं, तदप्ययुक्तं, कालान्तरेण भविष्यतेन्द्रियस्य संयोगायोगाच्च-

आनन्दगिरीय-न्यायनिर्णयः ।

कात्स्न्र्येनेति । परमार्थवस्तुधर्मो योग्यदेशकालनिमित्तसाहित्यम् । वस्तुत्वस्य कात्स्न्र्येन व्याप्तत्वात्तथा व्यक्त्यभावे तद्व्याप्यं वस्तुत्वमपि व्यावर्तेतेत्यर्थः । एकस्यापि सर्वात्मनाऽनभिव्यक्तेः सर्वत्र वस्तुत्वव्यावृत्तिरित्याक्षिपति-किमिति । अतिप्रसङ्गं प्रत्याख्यातुमिष्टं कात्स्न्र्यं व्याचष्टे-देशेति । स्वप्नेऽपि तत्सिद्धिमाशंक्याऽऽह-नेत्यादिना । तत्र स्वप्ने योग्यदेशायोगं विवृणोति-न तावदिति । यत्र स्वप्नो दृश्यते स एव रथादीनां योग्यो देशः स्यादित्याशंक्य स किं देहादन्तर्बहिर्वेति विकल्प्याऽऽद्यं प्रत्याह-न तावदिति । द्वितीयं शङ्कते-स्यादिति । तत्रोपपत्तिमाह-देशेति । तत्रैव श्रुतिमाह-दर्शयतीति । देहाद्बहिरेव स्वप्नधीरित्यत्र युक्त्यन्तरमाह-स्थितीति । अन्तरेव वा स्वप्नो न बहिरित्याह-नेतीति ।

१ न हि संवृत इति पाठान्तरम् ।

ध्यते । क्वचिच्च प्रत्यागमनवर्जितं स्वप्नं श्रावयति—कुरुष्वहमद्य शयानो निद्रयाभिप्लुतः स्वप्ने पञ्चालानभिगतश्चास्मिन्प्रतिबुद्धश्चेति । देहाच्चेदपेयात्पञ्चालेष्वेव प्रतिबुध्येत तानसावभिगत इति कुरुष्वेव तु प्रतिबुध्यते । येन चायं देहेन देशान्तरमश्नुवानो मन्यते, तमन्ये पार्श्वस्थाः शयनदेश एव पश्यन्ति । यथाभूतानि चायं देशान्तराणि स्वप्ने पश्यति न तानि तथाभूतान्येव भवन्ति । परिधावंश्चेत्पश्येज्जाग्रद्वद्वस्तुभूतमर्थमाकलयेत् । दर्शयति च श्रुतिरन्तरेव देहे स्वप्नं—"स यत्रैतत्स्वप्नया चरति" [ बृ० २ । १ । १८ ] इत्युपक्रम्य "स्वे शरीरे यथाकामं परिवर्तते" [ बृ० २ । १ । १८ ] इति । अतश्च श्रुत्युपपत्तिविरोधाद्बहिःकुलायश्रुतिर्गौणी व्याख्यातव्या—बहिरिव कुलायादमृतश्चरित्वेति । यो हि वसन्नपि शरीरे न तेन प्रयोजनं करोति स बहिरिव शरीराद्भवतीति । स्थितिगतिप्रत्ययभेदोऽप्येवं सति विप्रलम्भ एवाभ्युपगन्तव्यः । कालविसंवादोऽपि च स्वप्ने भवति । रजन्यां सुप्तो वासरं भारते वर्षे मन्यते ।

---

रत्नप्रभा ।

स्वप्नया वृत्त्या चरति तदा स्वशरीरे यथेष्टं चरतीत्यर्थः ॥ बहिरिवेति । कुलायाद् देहात् बहिरिव अमृतः आत्मा चरित्वा यथाकामं यथेष्टम् ईयते विहरतीत्यर्थः ॥ गुणमाह—यो हीति ॥ देहाभिमानहीनत्वगुणेन बहिष्ठवद्देहस्थोऽपि विहरतीत्युक्त इत्यर्थः । एवं सति श्रुतियुक्तिभ्यां अंतरेव स्वप्ने सतीत्यर्थः । विप्रलम्भः विभ्रमः । योग्यदेशाभावमुक्त्वा कालाभावमाह—कालेति ॥ अत्र रात्रिसमयेऽपि

भामती ।

द्रुपहितसीम्नो व्यापित्वस्यातीन्द्रियत्वात् । न च प्रत्यभिज्ञाप्रत्ययवदत्रास्ति संस्कारः सहकारी येनावर्तमानमप्याकलयेत् । तस्मादत्यन्ताभ्यासवशेन प्रत्यक्षानन्तरं शीघ्रतरोत्पन्नविनश्यदवस्थानुमानसहितप्रत्यक्षाभिप्रायमेव चिरस्थायीति गृह्यत इति मन्तव्यम् । अत एवैतत्सूक्ष्मतरं कालव्यवधानमविवेचयन्तः सौगताः प्राहुः, द्विविधो हि विषयः प्रत्यक्षस्य ग्राह्यश्चाध्यवसेयश्च । ग्राह्यक्षण एकः स्वलक्षणोऽध्यवसेयश्च संतान इति । एतेन स्वप्नप्रत्ययो मिथ्यात्वेन व्याख्यातः । यत्तु सत्यं स्वप्नदर्शनमुक्तं तत्राप्याख्यात्रा ब्राह्मणायनेनाख्याते संवादाभावात् । प्रियव्रतस्याख्यातसंवादस्तु काकतालीयो न स्वप्नज्ञानं प्रमाणयितुमर्हति । तादृशस्यैव बहुलं विसंवाददर्शनात् । दर्शितश्च विसंवादो भाष्यकृता कार्त्स्न्येनानभिव्यक्तिं विवृण्वता रजन्यां सुप्त इति ।

आनन्दगिरीय—न्यायनिर्णयः ।

बहिर्गतस्याऽऽगत्यनियमात्तत्रैव प्रबोधप्रसङ्गादपि न स्वप्नो बहिरित्याह—क्वचिच्चेति । श्रावयति स्वप्नद्रष्टा प्रबुद्धः सन्पार्श्वस्थानिति शेषः । उक्तमर्थं व्यतिरेकद्वारा स्फोरयति—देहाच्चेदिति । इतश्च देहाद्बहिर्देशान्तरं गत्वा न स्वप्नधीरित्याह—येनेति । न स्वप्नो देशान्तरं गतस्येत्यत्रैव हेत्वन्तरमाह—यथेति । तदेव व्यतिरेकेणोपपादयति—परिधावन्निति । देहाद्देहान्तरं गच्छन्निति यावत् । न केवलं स्वप्नोऽन्तरेवेत्युपपन्नं किंतु श्रौतश्चेत्याह—दर्शयतीति । एतदिति स्वप्नवाचि क्रियाविशेषणम् । स्वप्न्ययेति वृत्तिर्विशेष्यते अन्तरेव स्वप्नश्चेत्कथं तर्हि बहिष्कुलायश्रुतिरिति तत्राऽऽह—अतश्चेति । कथं शरीरे वसतो बहिरिवेत्युक्तिरित्याशंक्योपचारे निमित्तमाह—यो हीति । यत्तु स्थितिगतिप्रत्ययभेदसामञ्जस्याय स्वप्नो बहिरिति तत्राऽऽह—स्थितीति ॥ एवं सतीति । श्रुतियुक्तिभ्यामन्तरेव स्वप्ने सिद्धे सतीत्यर्थः । विप्रलम्भो विभ्रमः । योग्यदेशायोगं स्वप्नस्योक्त्वा तादृक्कालायोगं स्पष्टयति—कालेति । अत्र रात्रिसम-

तथा मुहूर्तमात्रप्रवर्तिनि स्वप्ने कदाचिद्बहून्वर्षपूगानतिवाहयति। निमित्तान्यपि च स्वप्ने न बुद्धये कर्मणे वोचितानि विद्यन्ते। करणोपसंहाराद्धि नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति। रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारूणि वा। बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे। स्वप्न एव चैते सुलभबाधा भवन्ति। आद्यन्तयोर्व्यभिचारदर्शनात्—रथोऽयमिति हि कदाचित्स्वप्ने निर्धारितः क्षणेन मनुष्यः सम्पद्यते। मनुष्योऽयमिति वा निर्धारितः क्षणेन वृक्षः। स्पष्टश्चाभावं रथादीनां स्वप्ने श्रावयति शास्त्रं—"न तत्र रथा न रथयोगा न पन्थानो भवन्ति" इत्यादि॥ तस्मान्मायामात्रं स्वप्नदर्शनम्॥ ३॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः॥ ४॥

मायामात्रत्वात्तर्हि न कश्चित्स्वप्ने परमार्थगन्ध इति॥ नेत्युच्यते॥ सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः। तथाहि श्रूयते—"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने" [छां० ५।२।८] इति। तथा "पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति" इत्येवमादिभिः स्वप्नैरचिरजीवित्वमावेद्यते इति श्रावयति॥ आचक्षते च स्वप्नाध्यायविदः—"कुञ्जरारोहणादीनि स्वप्ने धन्यानि। खरयानादीन्यधन्यानि" इति। मन्त्रदेवताद्रव्यविशेषनिमित्ताश्च केचित्स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्य-

रत्नप्रभा।

केतुमालादिवर्षान्तरे वासरो भवतीति भारते इत्युक्तम्। पूर्वपक्षानुमानानां जाग्रदर्थदृष्टान्ते क्लृप्तसामग्रीजन्यत्वसबाधयोग्यत्वं वोपाधिरिति सूत्रतात्पर्यम्॥ ३॥ स्वप्नस्य भ्रान्तिमात्रत्वे तत्सूचितोऽप्यर्थः सत्यो न स्यादिति शंकोत्तरत्वेन सूत्रान्तरं व्याचष्टे—मायेत्यादिना॥ मन्त्रेण देवतानुग्रहेणौषधिसेवया

भामती।

रजनीसमयेऽपि हि भारताद्वर्षान्तरे केतुमालादौ वासरो भवतीति भारते वर्षे इत्युक्तम्॥ ३॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः। दर्शनं सूचकं तच्च स्वरूपेण सत्। असत्तु दृश्यम्। अत एव

आनन्दगिरीय-न्यायनिर्णयः।

येऽपि केतुमालादौ वर्षान्तरे वासरो भवतीति भारत इत्युक्तम्। विधान्तरेण कालविसंवादमाह—तथेति। योग्यकालायोगमुक्त्वा तादृङ्निमित्तायोगमाह—निमित्तान्यपीति। बुद्ध्यर्थं योग्यनिमित्तायोगं साधयति—करणेति। अस्येति स्वप्नद्रष्टुरुक्तिः। कर्मार्थं योग्यनिमित्ताभावमाह—रथादीति। अबाधासंभवं विभजते—बाध्यन्त चेति। न केवलं प्रबोधे बाध्यत्वं स्वप्नेऽपीत्याह—स्वप्न इति। आद्यन्ते च व्यभिचारधीर्जागरेऽपि तुल्येत्याशंक्य विशेषमाह—रथोऽयमिति। न केवलमध्यक्षं स्वप्ने रथादीनां बाध्यत्वं किंतु श्रुतमपीत्याह—स्पष्टं चेति। योग्यदेशाद्यभावेन सिद्धमर्थमुपसंहरति—तस्मादिति॥ ३॥ स्वप्नस्य मायामात्रत्वे शुभाशुभफलत्वान्वयव्यतिरेकाभ्यां शास्त्रेण च विरोधः स्यादित्याशंक्याऽऽह—सूचकश्चेति। सूत्रव्यावर्त्यामाशङ्कामाह—मायेति। विरोधद्वयं प्रत्याह—नेतीति। तत्र प्रथमं श्रुतिविरोधं निरस्यति—सूचकश्च हीति। स्वप्नो भविष्यतः साधुनः सूचक इत्यत्र श्रुतिमुक्त्वा तादृशोऽसाधुनोऽपि सूचकोऽसावित्यत्र श्रुतिमाह—तथेति। अन्वयव्यतिरेकविरोधसमाधिं स्फुटयति—आचक्षते चेति। इतश्चोभयविरोधवैधुर्यमित्याह—मन्त्रेति। तर्हि शुभाशुभसूचकत्वानुपपत्त्या स्वप्नस्य सत्यत्वान्न मायामा-

न्ते । तत्रापि भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वम् । सूचकस्य तु स्त्रीदर्शनादेर्भवत्येव वैतथ्यम् । बाध्यमानत्वादित्यभिप्रायः ॥ तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम् ॥ यदुक्तमाह हीति तदेवं सति भाक्तं व्याख्यातव्यम् । यथा लाङ्गलं गवादीनुद्वहतीति । निमित्तमात्रत्वादेवमुच्यते, न तु प्रत्यक्षमेव लाङ्गलं गवादीनुद्वहति एवं निमित्तमात्रत्वात्सुप्तो रथादीन्सृजते, स हि कर्तेति चोच्यते, न तु प्रत्यक्षमेव सुप्तो रथादीन्सृजति । निमित्तत्वं त्वस्य रथादिप्रतिभाननिमित्तमोदत्रासदर्शनात्तन्निमित्तभूतयोः सुकृतदुष्कृतयोः कर्तृत्वेनेति वक्तव्यम् ॥ अपि च जागरिते विषयेन्द्रियसंयोगादादित्यादिज्योतिर्व्यतिकराच्चात्मनः स्वयञ्ज्योतिष्ट्वं दुर्विवेचनमिति तद्विवेचनाय स्वप्न उपन्यस्तः । तत्र यदि रथादिसृष्टिवचनं श्रुत्या नीयेत स्वयञ्ज्योतिष्ट्वं न निर्णीतं स्यात् ॥ तस्माद्रथाद्यभाववचनश्रुत्या रथादिसृष्टिवचनं भाक्तमिति व्याख्येयम् ॥ एतेन निर्माणश्रवणं व्याख्यातम् ॥

---

रत्नप्रभा ।

या स्वप्नाः सत्यसूचकाश्चेत् सत्याः स्युरित्यत आह—तत्रापि भवतु नामेति ॥ सत्यहर्षहेतोरपि शुक्तिरूप्यस्य सत्यत्वादर्शनादिति भावः । यथा—कृषिद्वारा लाङ्गलस्य गवादिजीवननिमित्तत्वं, तथा स्वप्नभोक्तुरदृष्टद्वारा स्वप्नसृष्टिनिमित्तत्वं, न तु कुम्भं प्रति कुम्भकारस्येव साक्षात् स्वप्नकर्तृत्वं सामग्र्यभावबाधयोरुक्तत्वादित्याह—यदुक्तमित्यादिना ॥ तथा च स्वप्नस्य सकर्तृकत्वं मुख्यं नास्तीति हेत्वसिद्धिरिति भावः ॥ श्रुतितात्पर्यविरोधाच्च न स्वप्नसत्यतेत्याह—अपि चेति ॥ व्यतिकरः—सङ्करः । श्रुत्या तत्परतयेत्यर्थः । जागरितादविशेषादिति भावः ॥ फलितमाह—तस्मादिति ॥ एतेनेति । भाक्तत्वेनेत्यर्थः ॥ द्वितीयसूत्रोक्तप्राज्ञकर्तृकत्वहेतुरपि स्वप्नस्य किं श्रुतिसिद्धः—उत—प्राज्ञस्य सर्वेश्वरत्वात्सिद्धः ?

भामती ।

स्त्रीदर्शनस्वरूपसाध्याश्रमधातुविसर्गादयो जाग्रदवस्थायामनुवर्तन्ते । स्त्रीसाध्यास्तु माल्यविलेपनदन्तक्षता-

आनन्दगिरीय—न्यायनिर्णयः ।

त्रत्वमित्याशङ्क्यार्थक्रियाकारित्वेऽपि परमार्थत्वाभावान्मिथ्यात्वमित्याह—तत्रापीति । स्वप्नस्य सत्यार्थसूचकत्वेऽपीति यावत् । द्विविधविरोधसमाधिफलमुपसंहरति—तस्मादिति । परोक्तमनूद्य दूषयति—यदित्यादिना । तदिति सुप्तस्य स्रष्टृत्वादिवचनम् । एवं सतीति पूर्वोक्तन्यायेन स्वप्नस्य मायामात्रत्वे सतीत्यर्थः । स्वप्नदृष्टरथादिस्रष्टृत्वादिवचसो गौणत्वं दृष्टान्तेन स्पष्टयति—यथेति । लाङ्गलस्यापि गवाद्युद्वोढृत्वं मुख्यमेव किं न स्यादित्यत्राऽऽह—न त्विति । तथाऽपि दार्ष्टान्तिके मुख्यमेव स्रष्टृत्वं सुप्तस्य चेतनत्वेन स्रष्टृत्वयोगादित्याशङ्क्याऽऽह—न तु प्रत्यक्षमिति । जाग्रतः स्रष्टृत्ववद्यदि सुप्तस्यापि तदिष्टं तर्हि सृष्टस्य रथादेर्न प्रबोधमात्रेण बाध्यता स्यादित्यर्थः । धर्माधर्मयोरेव निमित्तत्वात्कुतः सुप्तस्य निमित्ततेत्याशंक्य तत्फलित्वेन तत्कर्तृतयेत्याह—निमित्तत्वं चेति । इतश्च श्रुत्या स्वप्नसृष्टिर्वास्तवी नाभीष्टेत्याह—अपि चेति । हेत्वन्तरं स्फोरयति—जागरित इति । अस्यात्मनः स्वयंज्योतिष्ट्वविवेचनाय स्वप्नोक्तिस्तथाऽपि स्वप्ने सृष्टिवचनं मुख्यमेवेत्याशंक्याऽऽह—तत्रेति । जागरितादविशेषादित्यर्थः । पूर्वापरालोचनायां श्रुतेरन्यपरत्वादसत्त्वे रथादीनां सिद्धे फलितमाह—तस्मादिति । यत्तु निर्मातारं चेत्यादि तत्राऽऽह—एतेनेति । रथादिसृष्टिवचनस्य भाक्तत्वोपपादनेनेति यावत् । परोक्तमनुमानमनूद्य हेत्व-

यदप्युक्तं "प्राज्ञमेनं निर्मातारमामनन्ति"[ बृ०४।३।९] इति॥तदप्यसत्॥ श्रुत्यन्तरे-"स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति"[बृ० ४।३।९] इति जीवव्यापारश्रवणात्। इहापि च "य एष सुप्तेषु जागर्ति" [ कठ०८।५] इति प्रसिद्धानुवादाज्जीव एवायं कामानां निर्माता संकीर्त्यते। तस्य तु वाक्यशेषेण-"तदेव शुक्रं तद्ब्रह्म" [ श्वेता० ४ । २ ] इति जीवभावं व्यावर्त्य ब्रह्मभाव उपदिश्यते-"तत्त्वमसि" [ छां० ६ । ८-१६ ] इत्यादिवदिति न ब्रह्मप्रकरणत्वं विरुध्यते । न चास्माभिः स्वप्नेऽपि प्राज्ञव्यापारः प्रतिषिध्यते। तस्य सर्वेश्वरत्वात्सर्वास्वप्यवस्थास्वधिष्ठातृत्वोपपत्तेः। पारमार्थिकस्तु नायं सन्ध्याश्रयः सर्गो वियदादिसर्गवदित्येतावत्प्रतिपाद्यते। न च वियदादिसर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति। प्रतिपादितं हि "तदनन्यत्वमारम्भणशब्दादिभ्यः" [ व्या० सू० २ । १ । १९ ] इत्यत्र समस्तस्य प्रपञ्चस्य मायामात्रत्वम् । प्राक् तु ब्रह्मात्मदर्शनाद्वियदादिप्रपञ्चो व्यवस्थितरूपो भवति॥ सन्ध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यत इत्यतो वैशेषिकमिदं सन्ध्यस्य मायामात्रत्वमुदितम् ॥ ४ ॥

रत्नप्रभा ।

नाद्यः-इत्याह-यदप्युक्तमित्यादिना॥स्वयं विहत्य जाग्रद्देहं निश्चेष्टं कृत्वा, स्वयं वासनया देहं निर्माय स्वेन भासा स्वीयबुद्धिवृत्त्या स्वेन ज्योतिषा स्वरूपचैतन्येन च स्वप्नमनुभवतीत्यर्थः ॥ न केवलं बृहदारण्यके जीवस्य स्वप्नकर्तृत्वं श्रुतं, किन्तु काठकेऽपीत्याह-इहापीति ॥ जीवोक्तौ ब्रह्मप्रकरणविरोध इत्यत आह-तस्य त्विति ॥ एवं हेतोः श्रुतिसिद्धत्वं निरस्य द्वितीयमङ्गीकरोति-न चास्माभिरिति ॥ तर्हि हेतुसिद्धेः स्वप्नस्य सत्यत्वमित्याशंक्य सत्यत्वं व्यावहारिकं, पारमार्थिकं वेति विकल्प्य व्यवहारकाले बाधदर्शनात्, नाद्यः-इत्याह-पारमार्थिकस्त्विति ॥ द्वितीये दृष्टान्तस्य साध्यवैकल्यमित्याह-न चेति ॥ कस्तर्हि स्वप्नस्य जाग्रतो विशेषोऽत्र कथ्यत इत्याशंक्य प्रातिभासिकत्वमित्याह-प्रागिति ॥ ४॥

भामती ।

दयो नानुवर्तन्ते। न चास्माभिः स्वप्नेऽपि प्राज्ञव्यापार इति। प्राज्ञव्यापारत्वेन पारमार्थिकत्वानुमानं

आनन्दगिरीय-न्यायनिर्णयः ।

सिद्धया दूषयति-यदपीति । स्वयं विहत्य पूर्वं देहं निश्चेष्टं कृत्वा स्वयं निर्मायापूर्वं वासनामयं देहं संपाद्य स्वेन भासा स्वकीयबुद्धिवृत्त्या स्वेन ज्योतिषा स्वरूपचैतन्येन चेत्यर्थः । न केवलं बृहदारण्यके जीवस्य स्वापकर्तृत्वं श्रुतं किंतु काठकेऽपीत्याह-इहापीति । प्रकरणवाक्यशेषाभ्यां परमात्मा निर्मातेत्युक्तमाशंक्य जीवभावमापन्नस्य परस्य स्वाविद्यया स्वप्नोपादानत्वं वा विना तद्भावं स्वाविद्यया तदधिष्ठातृत्वं वेति विकल्प्याऽऽद्यमङ्गीकरोति-न चेति । द्वितीयमपि स्वीकरोति-तस्येति । तर्हि प्राज्ञकर्तृत्वहेतोः सिद्धेरनुमानमदुष्टमित्याशंक्य व्यावहारिकं पारमार्थिकं वा सत्यत्वं साध्यमिति विकल्प्याऽऽद्ये बाधकं प्रत्यक्षविरोधमाह-पारमार्थिकस्त्विति । व्यवहारे बाधवैधुर्यमिह पारमार्थिकत्वम् । द्वितीये दृष्टान्तस्य साध्यविकलतेत्याह-न चेति । वियदादिसर्गस्यासिद्धं मिथ्यात्वमिति कुतो दृष्टान्तस्य साध्यविकलता तत्राऽऽह-प्रतीति । कस्तर्हि स्वप्नस्य जाग्रतो विशेषो येनैतन्मिथ्यात्वं पृथगुच्यते तत्राऽऽह-प्राक्त्विति । व्यवहारेऽपि स्वप्नस्य मिथ्यात्वं वक्तुं पृथगुक्तिरिति भावः ॥ ४ ॥ यदुक्तं स्वप्नो योग्य-

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥

अथापि स्यात् परस्यैव तावदात्मनोंशो जीवोऽग्नेरिव विस्फुलिङ्गः । तत्रैवं सति यथा–अग्निविस्फुलिङ्गयोः समाने दहनप्रकाशनशक्ती भवतः, एवं जीवेश्वरयोरपि ज्ञानैश्वर्यशक्ती । ततश्च जीवस्यैश्वर्यवशात्सांकल्पिकी स्वप्ने रथादिसृष्टिर्भविष्यतीति ॥ अत्रोच्यते ॥ सत्यपि जीवेश्वरयोरंशांशिभावे प्रत्यक्षमेव जीवस्येश्वरविपरीतधर्मत्वम् ॥ किं पुनर्जीवस्येश्वरसमानधर्मत्वं नास्त्येव ॥ न ॥ नास्ति विद्यमानमपि तु तत्तिरोहितम् । अविद्याऽव्यवधानात्–तत्पुनस्तिरोहितं सत्परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतेव दृक्शक्तिरौषधवीर्यादीश्वरप्रसादात्संसिद्धस्य कस्यचिदेवाऽऽविर्भवति, न स्वभावत एव सर्वेषां जन्तूनाम् ॥ कुतः ॥ ततो हि"॥ ईश्वराद्धेतोः । अस्य जीवस्य बन्धमोक्षौ भवतः। ईश्वरस्य स्वरूपापरिज्ञानाद्बन्धः। तत्स्वरूपपरिज्ञानात्तु मोक्षः । तथा च श्रुतिः–"ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः

---

रत्नप्रभा ।

पूर्वं क्लृप्तसामग्र्यभावात् स्वप्नो मायेत्युक्तमयुक्तम् । सत्यसङ्कल्पमात्रेणापि सत्यसृष्टिसम्भवादिति शङ्कां कृत्वा परिहरन् सूत्रं व्याचष्टे–अथापि स्यादित्यादिना ॥ सत्यसङ्कल्पस्य हि सङ्कल्पात् सृष्टिः सत्या भवति । जीवस्य त्वसत्यसङ्कल्पत्वं प्रत्यक्षमिति परिहारार्थः । तर्हि विरुद्धधर्मवत्त्वाज्जीवस्येश्वरत्वं नास्त्येवेति शङ्कते–किमिति ॥ नास्तीति न, किन्त्वावृतमस्ति । तत्पुनरीश्वरप्रसादात् कस्यचिद् व्यज्यत इत्याह–न । नास्तीति ॥ विधूतध्वान्तस्य निष्पापस्य संसिद्धस्य अणिमादिविशिष्टस्येत्यर्थः । ब्रह्मैवाहमिति देवं ज्ञात्वा साक्षात्कृत्य सर्वपाशानामविद्यादिक्लेशानामपहानिरपक्षयस्तद्रूपो भवति । क्षीणैश्च

भामती ।

प्रत्यक्षेण बाधकप्रत्ययेन विरुध्यमानं नात्मानं लभत इति भावः । बन्धमोक्षयोरान्तरालिकं तृतीयमैश्वर्यमिति ॥ ४ ॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ।

आनन्दगिरीय–न्यायनिर्णयः ।

निमित्ताभावान्मिथ्येति तत्र जीवसंकल्पस्यैव निमित्तत्वसिद्धेरित्याशंक्याऽऽह–परेति । सूत्रव्यावर्त्यमाह–अथापीति । पूर्वोक्तरीत्या मिथ्यात्वे स्वप्नस्योक्तेऽपीत्यर्थः । जीवेश्वरयोरंशांशित्वेऽपि किं स्यात्तत्राऽऽह–तत्रेति । तस्मिञ्जीवे परस्यांशे श्रुतिस्मृतिसिद्धे सतीति यावत् । ज्ञानैश्वर्यशक्तिसाम्ये फलितमाह–ततश्चेति । नाविद्यामयी स्वप्नसृष्टिः किन्तु सांकल्पिकी सत्येति चोद्यमनूद्योत्सूत्रं परिहरति–अत्रेति । असर्वज्ञत्वानीश्वरत्वयोरध्यक्षत्वान्न जीवस्य संकल्पादेव रथादिसृष्टिरित्यर्थः । तर्हि विरुद्धत्वादेव न तयोरैक्यमिति शङ्कते–किमिति । प्रातीतिके विरोधेऽपि वस्तुतस्तदभावादैक्यमित्याह–न नेति । किमिति तर्हि जीवे सर्वज्ञत्वादि न भातीत्याशंक्य सूत्रं योजयति–विद्यमानमिति । अविद्यादीत्यादि पदं तत्कार्यार्थम् । यन्न कदाचिदुपलभ्यते तस्य सत्वत्वमेव कथं तत्राऽऽह–तदिति । आदरदीर्घकालनैरन्तर्यत्रयवत्त्वं ध्यानस्य सूचयति–यतमानस्येति । ध्यानकार्यमीश्वरप्रसादप्रतिबन्धकपापध्वंसं दर्शयति–विधूतेति । किमिति तर्हि सर्वेषामीश्वरध्यायिनां तन्नाऽऽविर्भवति तत्राऽऽह–संसिद्धस्येति । अणिमादिविशिष्टस्येति यावत् । ततः स्वतोऽव्यक्तौ हेतुं पृच्छति–कुत इति । सूत्रपदेनोत्तरम्–ततो हीति । कथमीश्वरस्य विरुद्धफलहेतुतेत्याशंक्य विभजते–ईश्वरेति । तत्र मानमाह–तथा चेति । परमात्मैवाहमिति साक्षादनुभूय सर्वपाशानामविद्यारागादिबन्धनानामपहानिरपक्षयो भवति । क्षीणैश्च

क्लेशैर्जन्ममृत्युप्रहाणिः । तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः" [ श्वेता० १ । ११ ] इत्येवमाद्या ॥ ५ ॥

## देहयोगाद्वा सोऽपि ॥ ६ ॥

कस्मात्पुनर्जीवः परमात्मांश एव संस्तिरस्कृतज्ञानैश्वर्यो भवति । युक्तं तु ज्ञानैश्वर्ययोरतिरस्कृतत्वं विस्फुलिङ्गस्येव दहनप्रकाशयोरिति ॥ उच्यते ॥ सत्यमेवैतत् ॥ "सोऽपि" तु जीवस्य ज्ञानैश्वर्यतिरोभावः "देहयोगाद्" देहेन्द्रियमनोबुद्धिविषयवेदनादियोगाद्भवति । अस्ति चात्रोपमा यथा–अग्नेर्दहनप्रकाशनसम्पन्नस्याप्यरणिगतस्य दहनप्रकाशने तिरोभवतः, यथा वा भस्मना छन्नस्य, एवमविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधियोगात्तदविवेकभ्रमकृतो जीवस्य ज्ञानैश्वर्यतिरोभावः । वाशब्दो जीवेश्वरयोरन्यत्वाशंकाव्यावृत्त्यर्थः ॥ नन्वन्य एव जीव ईश्वरादस्तु तिरस्कृतज्ञानैश्वर्यत्वात्, किं देहयोगकल्पनया ॥ नेत्युच्यते ॥ न ह्यन्यत्वं जीवस्येश्वरादुपपद्यते–"सेयं देवतैक्षत" [ छां०

रत्नप्रभा ।

क्लेशैस्तत्कार्यजन्ममरणात्मकबन्धध्वंस इति निर्गुणविद्याफलमुक्तम् ॥ सगुणविद्याफलमाह–तस्येति ॥ परस्याभिमुख्येनाहंग्रहेण ध्यानाद्बन्धमोक्षापेक्षया, मन्त्रोक्तहानिद्वयापेक्षया वा,–तृतीयं विश्वैश्वर्यमणिमादिरूपं मर्त्यदेहपाते सति सिद्धदेहे भवति तद्भोगानन्तरमात्मज्ञानात् केवलः द्वैतशून्यः आप्तकामः प्राप्तस्वयञ्ज्योतिरानन्दो भवतीति क्रममुक्तिरित्यर्थः ॥ ५ ॥ उक्तैश्वर्यतिरोभावे देहाभिमानो हेतुरिति कथनार्थं सूत्रम् । तन्निरस्याशङ्कामाह–कस्मादिति॥ सत्यावरणं नास्तीत्यङ्गीकृत्य कल्पितावरणं साधयति—उच्यत इत्यादिना ॥ जीवस्येश्वरत्वमङ्गीकृत्याऽऽवरणकल्पनातो वरमन्यत्वकल्पनेत्याशङ्कामुद्भाव्य श्रुत्या निरस्यति–नन्वित्यादिना ॥ स्वप्नेऽप्यालोकादेः सत्यत्वे जाग्रतीव–आत्मनः स्वप्रकाशत्वमस्फुटं स्यात् ।

भामती ।

देहयोगाद्वा सोऽपि इति सूत्रद्वयं कृतोपपादनमस्माभिः प्रथमसूत्रे । निगदव्याख्यातं चैतयोर्भाष्य-

आनन्दगिरीय–न्यायनिर्णयः ।

क्लेशैस्तत्कार्यजन्ममृत्युध्वंस इति निर्गुणविद्याफलमुक्तम् । सगुणविद्याफलमाह–तस्येति । परस्याऽऽभिमुख्येन ध्यानाद्बन्धमोक्षापेक्षया वा मन्त्रोक्तपाशहानिजन्मादिप्रहाणसिद्धिद्वयापेक्षया वा तृतीयम् । अणिमाद्यैश्वर्यं देहभेदे देहविशेषसिद्धदेहे साधकदेहपाते वा सति जगत्कारणसायुज्यापत्त्या भवति । ततश्च विश्वैश्वर्यं निरतिशयैश्वर्यं भुक्त्वा निर्गुणविद्योदये केवलोऽद्वितीयः सन्नाप्तकामो निरतिशयानन्दात्मनैव तिष्ठतीति क्रममुक्तिरित्यर्थः ॥ ५ ॥ जीवस्य स्वत एवानाविर्भूतज्ञानैश्वर्यतया संकल्पमात्रं न स्रष्टृतेत्युक्तं तत्र हेत्वसिद्धिमाशंक्याऽऽह–देहयोगाद्वा सोऽपीति । सूत्रव्यावर्त्यमाह–कस्मादिति । आक्षेपं विवृणोति–युक्तं त्विति । पारमार्थिकस्य प्रतिबन्धस्याभावः साध्यते प्रातिभासिकस्य वेति विकल्पयति–उच्यत इति । आद्यमङ्गीकरोति–सत्यमिति । द्वितीयं दूषयति–सोऽपीति । सूत्रे देहशब्देन स्थूलं सूक्ष्मं च देहं गृहीत्वा व्याचष्टे–देहेति । वेदनाशब्देन सुखादयो गृह्यन्ते । आदिशब्देन तद्धेतुरविद्या । तद्धर्मकस्यैवान्यसंपर्कतिरस्कारे दृष्टान्तमाह–अस्तीति । अरणिस्थोऽग्निरस्तीत्येतदेव संदिग्धमित्याशंक्याऽऽह–यथा वेति । दार्ष्टान्तिकमाह–एवमिति । सूत्रे वाशब्दस्य पक्षान्तरद्योतित्वमाशंक्याऽऽह–वाशब्द इति । तत्रान्यत्वाशङ्कां दर्शयति–नन्विति । तद्व्यावृत्तिं विशदयति–नेतीति । इतश्च न वास्तवमन्यत्व-

६ । ३ । २ ] इत्युपक्रम्य "अनेन जीवेनात्मनानुप्रविश्य" [ छां० ६ । ३ । २ ] इत्यात्मशब्देन जीवस्य परामर्शात् । "तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" [ छां० ६ । ८–१५ ] इति च जीवायोपदिशतीश्वरात्मत्वम् ॥ अतोऽनन्य एवेश्वराज्जीवः सन्देहयोगात्तिरोहितज्ञानैश्वर्यो भवति ॥ अतश्च न सांकल्पिकी जीवस्य स्वप्ने रथादिसृष्टिर्घटते । यदि च सांकल्पिकी स्वप्ने सृष्टिः स्यात्, नैवानिष्टं कश्चित्स्वप्नं पश्येत । न हि कश्चिदनिष्टं संकल्पयते ॥ यत्पुनरुक्तं–जागरितदेशश्रुतिः स्वप्नस्य सत्यत्वं ख्यापयतीति, न तत्साम्यवचनं सत्यत्वाभिप्रायम् । स्वयञ्ज्योतिष्ट्वविरोधात् । श्रुत्यैव च स्वप्ने रथाद्यभावस्य दर्शितत्वात् । जागरितप्रभववासनानिर्मितत्वात्तु स्वप्नस्य तत्तुल्यनिर्भासत्वाभिप्रायं तत् ॥ तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम् ॥ ६ ॥ इति सन्ध्याधिकरणम् ॥ १ ॥

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ ( २ ) ॥

स्वप्नावस्था परीक्षिता । सुषुप्तावस्थेदानीं परीक्ष्यते । तत्रैताः सुषुप्त-

रत्नप्रभा ।

प्रातिभासिकत्वे त्वालोकेन्द्रियाद्यसत्त्वेऽपि अर्थापरोक्ष्यमात्मज्योतिष एवेति स्फुटं सिध्यति ॥ तस्माद्देशादिसाम्यवचनं स्वप्नस्य जाग्रत्तुल्यमानाभिप्रायमित्यर्थः ॥ ६ ॥ (१) ॥ एवं बाह्यकरणोपरमे सति मनोवासनोद्दीपिताविद्याविलासात्मकं स्वप्नमात्मनः साक्षिणः स्वयञ्ज्योतिष्ट्वार्थं विचार्य प्रतियोग्यनुयोगिभावसङ्गत्या स्वप्नावस्थमनोलयात्मिकां सुषुप्तिं विचारयति–तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥

भामती ।

मिति ॥ ९ ॥ ६ ॥ ( १ ) ॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि च । इह हि नाडीपुरीतत्परमात्मानो जीवस्य सुषुप्तावस्थायां स्थानत्वेन श्रूयन्ते । तत्र किमेषां स्थानानां विकल्प आहोस्वित्समुच्चयः । किमतो यद्येवम् । एतदतो भवति । यदा नाड्यो वा पुरीतद्वा सुषुप्तस्थानं तदा विपरीतग्रहणनिवृत्तावपि न जीवस्य परमात्मभाव इति । अविद्यानिवृत्तावपि जीवस्य परमात्मभावाय कारणान्तरमपेक्षितव्यं तच्च कर्मैव न तु तत्त्वज्ञानं विपरीतज्ञाननिवृत्तिमात्रेण तस्योपयोगात्, विपरीतज्ञाननिवृत्तेश्च विनापि तत्त्वज्ञानं सुषुप्तावपि संभवात् । ततश्च कर्मणैवापवर्गो न ज्ञानेन । यथाहुः–'कर्मणैव तु संसिद्धिमास्थिता जनकादयः' इति । अथ तु परमात्मैव नाडीपुरीतत्सृसिद्वारा सुषु-

आनन्दगिरीय–न्यायनिर्णयः ।

मित्याह–तदिति । अनन्यत्वे फलितमाह–अत इति । जीवस्य ज्ञानादितिरोभावेऽपि किं स्यात्तत्राऽऽह—अतश्चेति । सांकल्पिकत्वे दोषान्तरमाह–यदि चेति । तत्र हेतुः–न हीति । परोक्तमनूद्य निरस्यति—यदिति । स्वप्नेऽपि जागरवदर्थेन्द्रियसत्त्वे दुर्विवेचनतया साध्यं स्वयंज्योतिष्ट्वं न सिध्येदित्याह–स्वयमिति । इतश्च न स्वप्नस्य सत्यत्वार्थमेव तद्वाक्यमित्याह–श्रुत्येति । तर्हि केनाभिप्रायेणेदं साम्यमुक्तं तत्राऽऽह–जागरितेति । स्वप्नस्य जागरितेन तुल्यनिर्भासत्वाभिप्रायं साम्यवचनमिति शेषः । स्वप्नस्य सत्यत्वसाधकाभावे मिथ्यात्वसाधकं च फलितमुपसंहरति–तस्मादिति ॥ ६ ॥ ( १ ) ॥ बाह्यकरणोपरमं स्वप्नमात्मनः स्वयंज्योतिष्ट्वार्थं निरूप्यान्तःकरणोपरमं सुषुप्तं तस्य ब्रह्मत्वाय निरूपयति–तदभाव इति । अधिकरणसंगतिमाह–स्वप्नेति । स्वप्नाभावस्य प्रतियोगिस्वप्नाधीननिरूपणत्वाद्धेतुहेतुमद्भावेऽर्थः । विषयवाक्यान्युदाहरति–तत्रेति । सुषुप्तिचिन्ताप्रस्तावः सप्तम्यर्थः । तत्तत्र तास्ववस्थासु

विषयाः श्रुतयो भवन्ति । क्वचिच्छ्रूयते "तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति" [ छां० ८ । ६ । ३ ] इति । अन्यत्र तु नाडीरेवानुक्रम्य श्रूयते "ताभिः प्रत्यवसृप्य पुरीतति शेते" [ बृ० २ । १ । १९ ] इति ॥ तथान्यत्रापि नाडीरेवानुक्रम्य- "तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन् प्राण एवैकधा भवति" [ कौषी० ४ । १९ ] इति ॥ तथान्यत्रापि-"य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते" [ बृ० २ । १ । १७ ] इति ॥ तथान्यत्र- "सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति" [ छां० ६ । ८ । १ ] इति ॥ तथा "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" [ बृ० ४ । ३ ।२१] इति च । तत्र संशयः-किमेतानि नाड्यादीनि परस्परनिरपेक्षाणि भिन्नानि सुप्तिस्थानानि-आहोस्वित् परस्परापेक्षयैकं सुप्तिस्थानमिति ॥ किन्तावत्प्राप्तम् ॥ भिन्नानीति ॥ कुतः ॥ एकार्थत्वात्-न ह्येकार्थानां क्वचित्परस्परापेक्षत्वं दृश्यते व्रीहियवादीनाम् । नाड्यादीनाञ्चैकार्थता सुषुप्तौ दृश्यते-"नाडीषु सृप्तो भवति" "पुरीतति शेते" इति च तत्रतत्र सप्तमीनिर्देशस्य तुल्यत्वात् ॥ ननु नैवं सति सप्तमीनिर्देशो दृश्यते-"सता सोम्य तदा सम्पन्नो भवति"

रत्नप्रभा ।

तदेतत्॥स्वप्नं यथा स्यात् तथा यत्र काले सुप्तः सुषुप्तः समस्तः निरस्तबाह्यकरणो मनोलयात् सम्यक् प्रसन्न इत्यर्थः॥ स्वापे नाडीस्थानमुक्त्वा नाडीपुरीततोर्नाडीपरमात्मनोश्च समुच्चयश्रुती आह-अन्यत्रेति॥ परमात्ममात्रश्रुतीराह-तथान्यत्रेत्यादिना॥ नाडीपुरीतद्ब्रह्मसु सप्तमीश्रुतेः समुच्चयश्रुतेश्च संशयमाह-तत्रेति॥ पूर्वपक्षे स्थानविकल्पाज्जीवस्य ब्रह्मैक्यानिर्णयः, सिद्धान्ते नाडीभिः पुरीततं गत्वान्तर्हृदि ब्रह्मण्येव शेत इति समुच्चयात् तन्निर्णय इति विवेकः ॥ एकपुरोडाशार्थत्वं व्रीहियवयोर्दृष्टं नाड्यादीनामेकस्मिन् स्वापरूपार्थे निरपेक्षस्थानत्वं तु कुत इत्यत आह-नाड्यादीनां चेति ॥ सति ब्रह्मणि तृतीयाश्रुतेर्न सप्तमीति

भामती ।

प्तिस्थानं ततो विपरीतज्ञाननिवृत्तेरस्ति मात्रया परमात्मभाव उपयोगः । तया हि तावदेष जीवस्तदवस्थानो भवति केवलम् । तत्त्वज्ञानाभावेन समूलकाषमविद्याया अकाषाज्जाग्रत्स्वप्नलक्षणं जीवस्य व्युत्थानं

आनन्दगिरीय-न्यायनिर्णयः ।

मध्ये सुषुप्तिरुच्यते । यस्यामवस्थायामेतत्स्वपनं यथा स्यात्तथा सुप्तः । समस्तः संवृतसर्वबाह्येन्द्रियः । संप्रसन्नः संवृतान्तःकरणश्चेत्यर्थः । नाडीपुरीततोः समुच्चयवाक्यं पठति-अन्यत्रेति । नाडीपरमात्मनोः समुच्चयवाक्यं दर्शयति-तथेति । परमात्ममात्रविषयाणि वाक्यान्तराण्याह-तथेति । नाडीपुरीतद्ब्रह्मसु सप्तमीश्रुतेः समुच्चयोक्तेश्च संशयमाह-तत्रेति । अत्र स्वापनिरूपणद्वारा ब्रह्माभिन्नत्वमर्थसिद्धेर्वाक्यार्थधीसंभवात्पादादिसंगतिः । पूर्वपक्षे स्थानविकल्पाज्जीवस्य ब्रह्मैक्यानियमः । सिद्धान्ते नाडीपुरीतद्द्वारा ब्रह्मस्थानत्वनियमाज्जीवस्य ब्रह्मात्मत्वनियतिरित्यभिसंधाय विमृश्य पूर्वपक्षयति-किमिति । नाडीपुरीतद्ब्रह्मणां विकल्पे प्रश्नपूर्वकं हेतुमाह-कुत इति । एकार्थत्वेऽपि समुच्चये का क्षतिस्तत्राऽऽह- न हीति । एकार्थत्वमेव नाड्यादिषु कथं तत्राऽऽह-नाड्यादीनां चेति । एकार्थता निरपेक्षस्वापाधारतेति यावत् । अस्मिन्प्राण एवैकधा भवतीत्यपि वाक्ये सप्तम्या चेदाधारत्वं तर्हि सतस्तृतीयोक्तेर्नाऽऽधारतेति शङ्कते-नन्विति । सप्तम्यभावेऽपि तदर्थसिद्धेराधारत्वं सतोऽपि स्यादित्याह-नैष इति ।

इति ॥ नैष दोषः ॥ तत्रापि सप्तम्यर्थस्य गम्यमानत्वात् । वाक्यशेषे हि तत्रायतनैषी जीवः सदुपसर्पतीत्याह—"अन्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते" [ छां० ६ । ८ । २ ] इति । प्राणशब्देन च तत्र प्रकृतस्य सत उपादानात् । आयतनं च सप्तम्यर्थः । सप्तमीनिर्देशोऽपि तत्र वाक्यशेषे दृश्यते—"सति सम्पद्य न विदुः सति सम्पद्यामहे" [ छां० ६ ।९।२ ] इति । सर्वत्र च विशेषविज्ञानोपरमलक्षणं सुषुप्तं न विशिष्यते । तस्मादेकार्थत्वान्नाड्यादीनां विकल्पेन कदाचित्किञ्चित्स्थानं स्वापायोपसर्पतीति । एवं प्राप्ते प्रतिपाद्यते । तदभावो नाडीष्वात्मनि चेति । तद-

---

रत्नप्रभा ।

शङ्कार्थः ॥ आयतनशब्दात् सप्तम्यर्थः आधारत्वं गम्यत इत्याह—नैष दोष इति ॥ अन्यत्र अवस्थाद्वये श्रान्तो जीवो विश्रान्तिस्थानं प्राणाख्यं सद्ब्रह्मोपसर्पति सुषुप्तावित्यर्थः । सप्तमीश्रुत्या निरपेक्षाधारत्वभानाद्विकल्प आस्थेयः । कदाचित् समुच्चित्यापि नाड्यादीनां स्थानत्वमिति न समुच्चयश्रुतिविरोध इति पूर्वपक्षार्थः ॥ सिद्धान्तयति—एवं प्राप्त इति ॥ सूत्रे चकारः पुरीतत्समुच्चयार्थः ॥ यदा नाड्यः सुषुप्तिस्थानं, तदा

भामती ।

भवति । तस्मात्प्रयोजनवत्येषा विचारणेति । किं तावत्प्राप्तं, नाडीपुरीतत्परमात्मसु स्थानेषु सुषुप्तस्य जीवस्य निलयं प्रति विकल्पः । यथा बहुषु प्रासादेष्वेको नरेन्द्रः कदाचित्कचिन्निलीयते कदाचित्क्वचिदेवमेको जीवः कदाचिन्नाडीषु कदाचित्पुरीतति कदाचिद्ब्रह्मणीति । यथा निरपेक्षा व्रीहियवाः क्रतुसाधनीभूतपुरोडाशप्रकृतितया श्रुता एकार्थो विकल्प्यन्ते, एवं सप्तमीश्रुत्या वायतनश्रुत्या वैकनिलयनार्थाः परस्परानपेक्षा नाड्यादयोऽपि विकल्पमर्हन्ति । यत्रापि नाडीभिः प्रत्यवसृप्य पुरीतति शेत इति नाडीपुरीततोः समुच्चयश्रवणं 'तथा तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यति । अथास्मिन् प्राण एवैकधा भवति' इति नाडीब्रह्मणोराधारयोः समुच्चयश्रवणम् । प्राणशब्दं च ब्रह्म 'अथास्मिन् प्राणे ब्रह्मणि स जीव एकधा भवति' इति वचनात् । तथाप्यासु तदा नाडीषु सृप्तो भवतीति च पुरीतति शेत इति च निरपेक्षयोर्नाडीपुरीततोराधारत्वेन निर्देशान्निरपेक्षयोरेवाधारत्वम् । इयांस्तु विशेषः । कदाचिन्नाड्य एवाधारः कदाचिन्नाडीभिः संचरमाणस्य पुरीतदेव । एवं ताभिरेव संचरमाणस्य कदाचिद्ब्रह्मैवाधार इति सिद्धमाधारत्वे नाडीपुरीतत्परमात्मनामनपेक्षत्वम् । तथा च विकल्पो व्रीहियववद्बृहद्रथन्तरवद्वेति प्राप्तम् । एवं प्राप्तेऽभिधीयते—जीवः समुच्चयेनैवैतानि नाड्यादीनि स्वापायोपैति न विकल्पेन । अयमभिसंधिः—नित्यवदाम्नातानां यत्पाक्षिकत्वं नाम तद्गत्यन्तराभावे कल्प्यते । यथाहुः—'एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः । विकल्प आश्रितस्तत्र गतिरन्या

आनन्दगिरीय–न्यायनिर्णयः ।

तत्रापि सत्यपि नाड्यादाविवेत्यर्थः । तस्य गम्यमानत्वमेव दर्शयति—वाक्येति । तत्र 'सता सोम्य' इत्यादाविति यावत् । प्राणस्याऽऽयतनत्वेऽपि किं सतः स्यात्तत्राऽऽह—प्राणेति । तथाऽपि कथं सप्तम्यर्थस्य गम्यमानत्वं तत्राऽऽह—आयतनं चेति । सति सप्तमीनिर्देशस्यासत्त्वमुपेत्योक्तं तदपि नास्तीत्याह—सप्तमीति । विशेषज्ञानोपरमस्वापस्य नाडीपुरीततोरयोगात्तयोर्न सुप्तिस्थानतेत्याशंक्य शास्त्रप्रामाण्यमाश्रित्याऽऽह—सर्वत्रेति । न च जीवाधारत्वं नाड्यादेरयुक्तं बुद्ध्युपाधिकजीवाधारत्वाविरोधात् । न च विकल्पेऽन्यतरबाधायुक्तः समुच्चयस्तत्रापि प्रत्येकं सप्तमीश्रुतिसिद्धनिरपेक्षाधारत्वस्यात्यन्तबाधात् । ताभिः प्रत्यवसृप्येत्यादौ तु कदाचिन्नाड्य एव कदाचित्ताभिः संचरमाणस्य पुरीतदेव कदाचित्ताभिरेव संचरतो ब्रह्मैवाऽऽधार इति युक्तमन्यथा निरपेक्षाधारत्वश्रुतिविरोधादिति मत्वोपसंहरति—तस्मादिति । विकल्पे जीवस्य ब्रह्मैक्यमनियतमिति फलितं वक्तुमितिशब्दः । पूर्वपक्षमनूद्य सिद्धान्तमाह—एवमिति ।

भाव इति । तस्य प्रकृतस्य स्वप्नदर्शनस्याऽभावः । सुषुप्तमित्यर्थः ॥ नाडीष्वात्मनि चेति ॥ समुच्चयेनैतानि नाड्यादीनि स्वापायोपैति, न विकल्पेनेत्यर्थः ॥ कुतः ॥ "तच्छ्रुतेः"-तथाहि-सर्वेषामेषां नाड्यादीनां तत्रतत्र सुप्तिस्थानत्वं श्रूयते । तच्च समुच्चये संगृहीतं भवति । विकल्पे ह्येषां पक्षे बाधः स्यात ॥ नन्वेकार्थत्वाद्विकल्पो नाड्यादीनां व्रीहियवादिवदित्युक्तम् ॥ नेत्युच्यते ॥ न ह्येकविभक्तिनिर्देशमात्रेणैकार्थत्वं विकल्पश्चापतति । नानार्थत्वसमुच्चययोरप्येकविभक्तिनिर्देशदर्श-

रत्नप्रभा ।

पुरीतत्स्थानं न भवतीति श्रुतस्थानत्वस्य पक्षे बाधः स्यात्, स न युक्त इत्याह-विकल्पे ह्येषामिति ॥ व्रीहियवयोस्त्वगत्या विकल्प इति भावः ॥ यत्तु सप्तमीश्रुत्या नाड्यादीनामेकफलकत्वमिति । तन्नेत्याह-न ह्येकेति ॥ प्रासादस्य पर्यङ्कधारणमर्थः । पर्यङ्कस्य तु शयनमिति फलभेदेऽप्येकविभक्तिर्दृश्यते । व्यव-

भामती ।

न विद्यते' इति । प्रकृतक्रतुसाधनीभूतपुरोडाशद्रव्यप्रकृतितया हि परस्परानपेक्षौ व्रीहियवौ विहितौ शक्नुतश्चैतौ प्रत्येकं पुरोडाशमभिनिर्वर्तयितुम् । तत्र यदि मिश्राभ्यां पुरोडाशोऽभिनिर्वर्त्येत परस्परानपेक्षव्रीहियवविधातृणी उभे अपि शास्त्रे बाध्येयाताम् । न चैतौ प्रयोगवचनः समुच्चेतुमर्हति । स हि यथाविहितान्यङ्गान्यभिसमीक्ष्य प्रवर्तमानो नैतान्यन्यथयितुं शक्नोति । मिश्रणे चान्यथात्वमेतेषाम् । न चाङ्गानुरोधेन प्रधानाभ्यासो 'गोसवे उभे कुर्यात्' इतिवद्युक्तः । अश्रुतो ह्यत्र प्रधानाभ्यासोऽङ्गानुरोधेन च सोऽन्याय्यः । न चाङ्गभूतेन्द्रवायवादिग्रहानुरोधेन यथा प्रधानस्य सोमयागस्यावृत्तिरेवमत्रापीति युक्तम् । 'सोमेन यजेत' इति हि तत्रापूर्वयागविधिः । तत्र च दशमुष्टिपरिमितस्य सोमद्रव्यस्य 'सोममभिषुणोति', 'सोममभिप्लावयति' इति च वाक्यान्तरानुलोचनया रसद्वारेण यागसाधनीभूतस्येन्द्रवाय्वाद्युद्देशेन प्रादेशमात्रेषूर्ध्वपात्रेषु ग्रहणानि पृथक्प्रकल्पनानि संस्कारा विधीयन्ते, न तु सोमयागोद्देशेनेन्द्रवाय्वादयो देवताश्चोद्यन्ते, येन तासां यागनिष्पत्तिलक्षणैकार्थत्वेन विकल्पः स्यात् । न च प्रादेशमात्रमेकैकमूर्ध्वपात्रं दशमुष्टिपरिमितसोमरसग्रहणाय कल्पते, येन तुल्यार्थतया ग्रहणानि विकल्पेरन् । न च यावन्मात्रमेकमूर्ध्वपात्रं व्याप्नोति तावन्मात्रं गृहीत्वा परिशिष्टं त्यज्येतेति युज्यते । दशमुष्टिपरिमितोपादानस्यादृष्टार्थत्वप्रसङ्गात् । एवं तदृष्टार्थं भवेद्यदि तत्सर्वं याग उपयुज्येत । न च दृष्टे संभवत्यदृष्टकल्पना न्याय्या । तस्मात्सकलस्य सोमरसस्य यागशेषत्वेन संस्कारार्हत्वादेकैकेन च ग्रहणेन सकलस्य संस्कर्तुमशक्यत्वात्तदवयवस्यैकेन संस्कारेऽवयवान्तरस्य ग्रहणान्तरेण संस्कार

आनन्दगिरीय-न्यायनिर्णयः ।

प्रतिज्ञां विभजते-तदित्यादिना । चकारेण पुरीतदुक्तिं गृहीत्वाऽऽह-समुच्चयेनेति । समुच्चये सिद्धान्ते प्रश्नपूर्वकं हेतुमुक्त्वा व्याचष्टे-कुत इत्यादिना । नाड्यादीनां सुप्तिस्थानत्वश्रुतिर्विकल्पेऽपि स्यादित्याशंक्याऽऽह-विकल्पे हीति । तेषामन्यतमस्य सुप्तिस्थानत्वे नान्यतमस्य तदिति पक्षे बाधः स चायुक्तो बाधस्यागतिकगतित्वादित्यर्थः । परोक्तं विकल्पहेतुमनुवदति-नन्विति । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमाह-नेतीति । प्रकृतदर्शादिसाधनीभूतपुरोडाशप्रकृतितया व्रीहियवौ श्रुतौ समर्थौ च निरपेक्षतया पुरोडाशं कर्तुं तयोर्मिथोपेक्षायामनपेक्षसाधनत्वार्थकश्रुतिबाधादनन्यगतित्वेन विकल्पाश्रयणं नाड्यादीनां तु न प्रत्येकं स्वापसाधने शक्तिरिति वक्ष्यते । नापि मानमिति भावः । यत्त्वेकार्थत्वं तत्किं मानान्तरसिद्धं किंवा सप्तमीसिद्धम् । नाऽऽद्यः । तदनुपलम्भात् । न द्वितीय इत्याह-न हीति । प्रासादस्य पर्यङ्कधारणार्थत्वं पर्यङ्कस्य शयनार्थतेति नानार्थत्वेऽप्येकविभक्तिनिर्देशः । व्यवधानाव्यवधानाभ्यां च

नात्–प्रासादे शेते, पर्यंके शेते,–इत्येवमादिषु। तथेहापि नाडीषु पुरीतति, ब्रह्मणि च,–स्वपितीत्येतदुपपद्यते समुच्चयः। तथा च श्रुतिः–"तासु तदा भवति, यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति" [कौषी० ४।१९] इति समुच्चयं नाडीनां प्राणस्य च सुषुप्तौ श्रावयति। एकवाक्योपादानात्। प्राणस्य च ब्रह्मत्वं समधिगतं–"प्राणस्तथानुगमात्" [व्या० सू० १।१।२८] इत्यत्र। यत्रापि निरपेक्षा इव नाडीः सुप्तिस्थानत्वेन श्रावयति–"आसु तदा नाडीषु सृप्तो भवति" [छां० ८।६।३] इति, तत्रापि प्रदेशान्तरप्रसिद्धस्य ब्रह्मणोऽप्रतिषेधान्नाडीद्वारेण ब्रह्मण्येवावतिष्ठत इति प्रतीयते। न चैवमपि नाडीषु सप्तमी विरुध्यते। नाडीद्वारापि ब्रह्मोपसर्पन्सृप्त एव नाडीषु भवति। यो हि गङ्गया सागरं गच्छति, गत एव स ग-

रत्नप्रभा।

धानाव्यवधानाभ्यां शयनसाधनत्वात् समुच्चयश्च, तथेहापि नाडीपुरीततो जीवस्य सञ्चारद्वारा ब्रह्मण्येव सुप्तिरिति समुच्चय इत्यर्थः॥ नाडीनां प्राणस्य च–एकेन वाक्येनोपादानान्मिथः समुच्चय इत्याह–**एकवाक्येति**॥ आधारत्वमात्रं सप्तम्यर्थः, न निरपेक्षत्वम्॥ अतो न समुच्चयस्य सप्तम्या बाध इत्याह–**न चैवमपीति**॥ समुच्चयेऽपीत्यर्थः॥ अत्र नाडीश्रुतौ नाडीषु भोक्तुः सुप्तिर्न विवक्षिता। रश्मिसम्बन्धनाडीरूपमार्गस्तुत्य-

भामती।

इति कार्यभेदाद्ग्रहणानि समुच्चीयेरन्। अत एव समुच्चयदर्शनं 'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' इति। समुच्चये च सति क्रमोऽप्युपपद्यते। 'अश्विनो दशमो गृह्यते तृतीयो हूयते'। तथैव 'ऐन्द्रवायवाग्रान्ग्रहान्गृह्णाति' इति। तेषां च समुच्चये सति यावद्यदुद्देशेन गृहीतं तावत्तस्यै देवतायै त्यक्तव्यमित्यर्थाद्यागस्यावृत्त्या भवितव्यम्। यदि पुनः पृथक्कृतान्यप्येकीकृत्य कांचनदेवतामुद्दिश्य त्यजेरन्, पृथक्करणानि च देवतोद्देशाश्चादृष्टार्था भवेयुः। न च दृष्टे संभवत्यदृष्टकल्पना न्याय्येत्युक्तम्। तस्मात्तत्र समुच्चयस्यावश्यंभावित्वाद्गुणानुरोधेनापि प्रधानाभ्यास आस्थीयते। इह त्वभ्यासकल्पनाप्रमाणाभावात्पुरोडाशद्रव्यस्य चानियमेन प्रकृतिद्रव्ये यस्मिन्कस्मिंश्चित्प्राप्ते एकैका परस्परानपेक्षा व्रीहिश्रुतिर्यवश्रुतिश्च नियामिकैकार्थतया विकल्पमर्हतः। न तु नाडीपुरीतत्परमात्मनामन्योन्यानपेक्षाणामेकनिलयनार्थसंभवो येन विकल्पो भवेत्। न ह्येकविभक्तिनिर्देशमात्रेणैकार्थता भवति समुच्चितानामप्येकविभक्तिनिर्देशदर्शनात् पर्यंके शेते प्रासादे शेत इति। तस्मादेकविभक्तिनिर्देशस्यानैकान्तिकत्वादन्यतो विनिगमना वक्तव्या। सा चोक्ता भाष्यकृता–**यत्रापि निरपेक्षा इव नाडीः सुप्तिस्थानत्वेन श्रावयतीत्यादिना**। सापेक्षश्रुत्यनुरोधेन

आनन्दगिरीय–न्यायनिर्णयः।

शयनसाधनत्वसमुच्चयः। तद्वदमूषु श्रुतिष्वपि नाड्यादिषु सप्तमीसमुच्चयश्चेत्याह–**तथेति**। अनेकश्रुतिसामर्थ्यालोचनया समुच्चयमुक्त्वा तत्रैव श्रुतिमाह–**तथा चेति**। उक्तश्रुतेस्तात्पर्यमाह–**समुच्चयमिति**। तत्र हेतुः–**एकेति**। नाडीनां प्राणस्य चैकेन वाक्येनोपादानान्मिथः समुच्चय इत्यर्थः। प्राणस्य नाडीसमुच्चयेऽपि ब्रह्मणस्ताभिः समुच्चये किं जातं तत्राह–**प्राणस्येति**। समुच्चये श्रुत्यन्तरं नैरपेक्ष्यद्योति विरुध्येतेत्याशंक्याऽऽह–**यत्रेति**। नाडीनां द्वारत्वे कथमधिकरणश्रुतिस्तत्राऽऽह–**न चेति**। नाड्यादौ सप्तम्याः सामीप्यमर्थमादाय ब्रह्मण्यधिकरणार्थत्वेऽपि न तद्विरोधोऽस्तीत्यर्थः। विरोधाभावं साधयति–**नाडीभिरिति**। तदेव दृष्टान्तेन स्पष्टयति–**यो हीति**। इतश्च ब्रह्मैवैकं स्वापाधिकरणमित्याह–

ज्ञायां भवति ॥ अपि चात्र रश्मिनाडीद्वारात्मकस्य ब्रह्मलोकमार्गस्य विवक्षितत्वान्नाडीस्तुत्यर्थं सुप्तिसंकीर्तनं–"नाडीषु सृप्तो भवति" इत्युक्त्वाऽतः "तं न कश्चन पाप्मा स्पृशति" [ छां० ८ । ६ । ३ ] इति ब्रुवन्नाडीः प्रशंसति । ब्रवीति च पाप्मस्पर्शाभावे हेतुं–"तेजसा हि तदा सम्पन्नो भवति" [ छां० ८ । ६ । ३ ] इति तेजसा नाडीगतेन पित्ताख्येनाभिव्याप्तकरणो न बाह्यान्विषयानीक्षते इत्यर्थः ॥ अथ वा तेजसेति ब्रह्मण एवायं निर्देशः । श्रुत्यन्तरे–"–ब्रह्मैव तेज एव" [बृ० ४।४। ७] इति तेजःशब्दस्य ब्रह्मणि प्रयुक्तत्वात् । ब्रह्मणा हि तदा सम्पन्नो भवति नाडीद्वारेण । अतस्तं न कश्चन पाप्मा स्पृशतीत्यर्थः । ब्रह्मसम्पत्तिश्च पाप्मस्पर्शाभावे हेतुः समधिगतः–"सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः" [ छां० ८ । ४ । १ ] इत्यादिश्रुतिभ्यः । एवञ्च सति प्रदेशान्तरप्रसिद्धेन ब्रह्मणा सुप्तिस्थानेनानुगतो नाडीनां चयः समाश्रितो भवति ॥ तथा पुरीततोऽपि ब्रह्मप्रक्रियायां संकीर्तनात्तदनुगुणमेव सुप्तिस्थानत्वं विज्ञायते "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते" इति हृदयाकाशे सुप्तिस्थाने प्रकृते इदमुच्यते "पुरीतति शेते" इति । पुरीतदिति हृदयपरिवेष्टनमुच्यते । तदन्तर्वर्तिन्यपि

रत्नप्रभा ।

र्थत्वादित्याह—**अपि चेति** ॥ पित्तेन विषयेक्षणाभावे सुखदुःखयोरभावात् तद्धेतुधर्माधर्मात्मकपाप्मास्पर्श इत्यर्थः ॥ अपहतपाप्मब्रह्मसम्पत्त्या वा पाप्मास्पर्श इत्याह–**अथ वेति** ॥ अस्मिन् व्याख्याने लाभमाह–**एवञ्च सतीति** ॥ "तासु तदा भवत्यथास्मिन् प्राण एवैकधा भवति" [ कौषी० ३ । ३ ] इति श्रुतः समुच्चय आश्रितो भवतीत्यर्थः ॥ नाडीब्रह्मणोर्गुणप्रधानभावेन सुप्तौ समुच्चयवत् पुरीतद्ब्रह्मणोरपीत्याह–**तथेत्यादिना** ॥ आकाशे ब्रह्मणि शेत इत्युपक्रम्य "ताभिः प्रत्यवसृप्य पुरीतति शेते" [बृ० २।१।१९] इत्युक्तम् ।

भामती ।

निरपेक्षश्रुतिर्नेतव्येत्यर्थः । शेषमतिरोहितार्थम् । ननु यदि ब्रह्मैव निलयनस्थानं तावन्मात्रमुच्यतां कृतं नाड्युपन्यासेनेत्यत आह–**अपि चात्रेति** । अपि चेति समुच्चये न विकल्पे । एतदुपपत्तिसहिता पूर्वोपपत्तिरर्थसाधिनीति मार्गोपदेशोपयुक्तानां नाडीनां स्तुत्यर्थमत्र नाडीसंकीर्तनमित्यर्थः । पित्तेनाभिव्याप्तकरणो न बाह्यान्विषयान्वेदेति तद्द्वारा सुखदुःखाभावेन तत्कारणपाप्मास्पर्शेन नाडीस्तुतिः । यदा तु तेजो

आनन्दगिरीय–न्यायनिर्णयः ।

**अपि चेति** । तर्हि नाडीषु सुप्तिसंकीर्तनमनर्थकमित्याशंक्य हेत्वन्तरमेव स्फोरयति–**अत्रेति** । नाडीप्रकरणं सप्तम्यर्थः । मार्गोपदेशायोक्तानां नाडीनां स्तुत्यर्थं सुप्तिकीर्तनमित्यत्र गमकमाह–**नाडीष्विति** । तासु सुप्तस्य पाप्मास्पर्शे को हेतुस्तत्राऽऽह–**ब्रवीतीति** । हेतुं विभजते–**तेजसेति** । विषयदर्शनाभावे तदुत्थसुखाद्यभावात्तद्धेतुधर्माद्यनुमानायोगात्पाप्मभिरस्पर्श इति शेषः । हेतुवाक्यं विधान्तरेण व्याकरोति–**अथ वेति** । ब्रह्मसंपत्तावपि कथं पापास्पर्शस्तत्राऽऽह–**ब्रह्मेति** । कतरद्व्याख्यानमादेयं द्वितीयमित्याह–**एवं चेति** । नाडीनां ब्रह्मप्राप्तिद्वारत्वे सतीति यावत् । नाडीद्वारा ब्रह्मणः स्वापस्थानत्वे क्वचित्ताभिः प्रत्यवसृप्य पुरीतति शेत इति पुरीतदुक्तिर्वृथेत्याशंक्य पुरीतद्ब्रह्मणोरपि गुणप्रधानत्वेन समुच्चयमाह–**तथेति** । उक्तमेव विवृणोति–**य इति** । आकाशे शेते चेत्पुरीतति कथं शेते तत्राऽऽह–**तदिति** ।

हृदयाकाशे शयानः शक्यते पुरीतति शेत इति वक्तुम्। प्राकारपरिक्षिप्तेऽपि हि पुरे वर्त्तमानः प्राकारे वर्तत इत्युच्यते। हृदयाकाशस्य च ब्रह्मत्वं समधिगतं—"दहर उत्तरेभ्यः" [ब्या० सू० १।३।१४] इत्यत्र॥ तथा नाडीपुरीततसमुच्चयोऽपि—"ताभिः प्रत्यवसृप्य पुरीतति शेते" इत्येकवाक्योपादानादवगम्यते। सत्प्राज्ञयोश्च प्रसिद्धमेव ब्रह्मत्वम्। एतासु श्रुतिषु त्रीण्येव सुप्तिस्थानानि संकीर्तितानि—नाड्यः, पुरीतद्ब्रह्म चेति। तत्रापि च द्वारमात्रं नाड्यः, पुरीतच्च। ब्रह्मैव त्वेकमनपायि सुप्तिस्थानम्॥ अपि च नाड्यः, पुरीतद्वा,—जीवस्योपाध्याधार एव भवति। तत्रास्य करणानि वर्तन्त इति। न ह्युपाधिसम्बन्धमन्तरेण स्वत एव जीवस्याधारः कश्चित्सम्भवति। ब्रह्माऽव्यतिरेकेण स्वमहिमप्रतिष्ठितत्वात्। ब्रह्माधारत्वमप्यस्य सुषुप्ते—नैवाधाराधेयभेदाभिप्रायेणोच्यते॥ कथं तर्हि॥ तादात्म्याभिप्रायेण॥ यत आह—"सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति" इति।

---

रत्नप्रभा।

तथा च नाडीद्वारा पुरीततं गत्वा ब्रह्मणि शेत इति समुच्चयः सिद्ध इत्याह—तथा नाडीति॥ सता सम्पन्नो भवति, प्राज्ञेन सम्परिष्वक्तः—इति सत्प्राज्ञयोः श्रुतेः पञ्च सुप्तिस्थानानीत्यत आह—सत्प्राज्ञयोरिति॥ किञ्च प्रकृतदर्शादिसाधनैकपुरोडाशनिष्पत्तौ मिथोऽनपेक्षतया समर्थत्वाद्युक्तो व्रीहियवयोर्विकल्पः। नाड्यादीनां तु ब्रह्मनिरपेक्षतया सुषुप्तजीवाधारत्वासामर्थ्यात् न विकल्प इत्याह—अपि च नाड्य इति॥ उपाधिलिङ्गाश्रयनाडीपुरीततोरुपहितजीवाश्रयत्वं परम्परया वाच्यम्। तदपि सुषुप्तौ न सम्भवति। उपाधिलयादित्यर्थः। ननु ब्रह्मापि जीवस्य न मुख्यं स्थानम्। अभेदादित्यत आह—ब्रह्माधारत्वमिति॥ जीवस्य ब्रह्मण्यभेदेनास्थानम्। नाडीपुरीततोस्तु लीनोपाधेर्जीवस्य स्थितिरेव न संम्भव-

भामती।

ब्रह्म तदा सुगमम्। अपि च नाड्यः पुरीतद्वा जीवस्योपाध्याधार एव भवतीति। अयमर्थः—अभ्युपेत्य जीवस्याधेयत्वमिदमुक्तम्। परमार्थतस्तु न जीवस्याधेयत्वमस्ति। तथाहि—नाड्यः पुरीतद्वा जीवस्योपाधीनां करणानामाश्रयो जीवस्तु ब्रह्माव्यतिरेकात्स्वमहिमप्रतिष्ठः। न चापि ब्रह्म जीवस्याधारः, तादात्म्यात्। विकल्प्य तु व्यतिरेकं ब्रह्मण आधारत्वमुच्यते जीवं प्रति। तथा च सुषुप्तावस्थायामुपाधीनामसमुदाचाराज्जीवस्य ब्रह्मात्मत्वमेव ब्रह्माधारत्वं न तु नाडीपुरीतदाधारत्वम्। तदुपाधिकरणमात्राधार-

आनन्दगिरीय-न्यायनिर्णयः।

तदेव दृष्टान्तेन स्पष्टयति—प्राकारेति। पुरीतदाकाशसमुच्चयेऽपि कथं पुरीतद्ब्रह्मणोः समुच्चयस्तत्राऽऽह—हृदयेति। नाडीब्रह्मणोरिव पुरीतद्ब्रह्मणोरपि समुच्चयमुक्त्वा नाडीपुरीततोः समुच्चयमाह—तथेति। सत्प्राज्ञयोरपि सुप्तिस्थानत्वोक्तिस्त्रयाणामेव कथं समुच्चयोक्तिरित्याशंक्याऽऽह—सदिति। समुच्चयपक्षमुपसंहरति—एवमिति। तेष्ववान्तरविभागमाह—तत्रेति। नाडीपुरीततोर्द्वारत्वे हेत्वन्तरमाह—अपि चेति। तयोरुपाध्याधारत्वमपि कथं तत्राऽऽह—तत्रेति। नाडीषु पुरीतति च जीवस्योपाध्यन्तर्भूतानि करणानि कर्माणि तिष्ठन्तीत्युपाध्याधारत्वं तयोरुक्तम्। जीवस्य त्वाधारो ब्रह्मैवेत्यर्थः। किमिति तयोः साक्षादेव जीवाधारत्वं नेष्टं तत्राऽऽह—न हीति। तर्हि ब्रह्मणोऽपि कुतो जीवाधारत्वमैक्यादित्याशंक्याऽऽह—ब्रह्मेति। तादात्म्याभिप्रायेण स्वापे जीवस्य ब्रह्माधारत्वोक्तिरित्यत्र लिङ्गमाह—यत इति।

स्वशब्देनात्माभिलप्यते। स्वरूपमापन्नः सुषुप्तो भवतीत्यर्थः॥ अपि च न कदाचिज्जीवस्य ब्रह्मणा सम्पत्तिर्नास्ति। स्वरूपस्यानपायित्वात्। स्वप्नजागरितयोस्तु उपाधिसम्पर्कवशात्पररूपापत्तिमिवापेक्ष्य तदुपशमात्सुषुप्ते स्वरूपापत्तिर्विवक्ष्यते-स्वमपीतो भवतीति। अतश्च सुषुप्तावस्थायां कदाचित्सता सम्पद्यते कदाचिन्न सम्पद्यत इत्ययुक्तम्॥ अपि च स्थानविकल्पाभ्युपगमेऽपि विशेषविज्ञानोपशमलक्षणं तावत्सुषुप्तं न क्वचिद्विशिष्यते। तत्र सति सम्पन्नस्तावदेकत्वान्न विजानातीति युक्तम्। "तत्केन कं विजानीयाद्" [बृ० २।४।१४] इति श्रुतेः। नाडीषु, पुरीतति च,-शयानस्य न किञ्चिद्विज्ञाने कारणं शक्यं विज्ञातुम्। भेदविषयत्वात्। "यत्र वान्यदिव स्यात्तत्रान्योऽन्यत्पश्येद्" [बृ० ४।३।३१] इतिश्रुतेः॥ नतु भेदविषयस्याप्यतिदूरादिकार-

---

रत्नप्रभा।

तीत्येकार्थसामर्थ्याभावात् न विकल्प इत्यर्थः॥ सुषुप्तौ जीवस्य भेदकोपाधिलयाच्चौत्सर्गिकब्रह्माभेदस्य विकल्पो न युक्त इत्याह-अपि चेति। किञ्च नाड्यादीनामन्यतमस्थाने क्वचित्सुप्तिवादिनापि सुषुप्तं न विशिष्यत इति वक्तव्यम्। तच्च वक्तुं न शक्यत इत्याह-अपि च स्थानेति। भेदाभावो हि भेदज्ञानाभावे हेतुः। नाडीपुरीतद्गतस्य तु जीवस्य भेदवत्त्वात् भेदाविज्ञाने कारणं नास्तीत्यर्थः॥ द्वैतावस्थस्यापि द्वैताज्ञाने हेतुं शङ्कते-नतु भेदेति॥ द्रष्टुर्देशाद् दूरस्थत्वं स्वाभाविकमौपाधिकं वा। तत्र

भामती।

तया तु सुषुप्तदशारम्भाय जीवस्य नाडीपुरीतदाधारत्वमित्यतुल्यार्थतया न विकल्प इति। अपि च न कदाचिज्जीवस्येति। औत्सर्गिकं ब्रह्मस्वरूपत्वं जीवस्यासति जाग्रत्स्वप्नदशारूपेऽपवादे सुषुप्तावस्थायां नान्यथयितुं शक्यमित्यर्थः। अपि च येऽपि स्थानविकल्पमास्थिषत तैरपि विशेषविज्ञानोपशमलक्षणा सुषुप्त्यवस्थाङ्गीकर्तव्या। न चेयमात्मतादात्म्यं विना नाड्यादिषु परमात्मव्यतिरिक्तेषु स्थानेषूपपद्यते। तत्र हि स्थितोऽयं जीव आत्मव्यतिरेकाभिमानी सन्नवश्यं विशेषज्ञानवान् भवेत्। तथाहि श्रुतिः-'यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्' इति। आत्मस्थानत्वे त्वदोषः। 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येद्विजानीयात्' इतिश्रुतेः। तस्मादध्यात्मस्थानत्वस्य द्वारं नाड्यादीत्याह-अपि च स्थानविकल्पाभ्युपगमेऽपीति। अत्र चोदयति-ननु भेदविषयस्यापीति। भिद्यत इति भेदः। भिद्य-

आनन्दगिरीय-न्यायनिर्णयः।

स्वशब्दस्य स्वकीयार्थत्वान्न तादात्म्यमत्र भातीत्याशंक्य पदार्थोक्त्या वाक्यार्थमाह-स्वेति। जीवस्य ब्रह्मैक्यमेव नाडीपुरीततोस्तु तदुपाध्याधारतया तदाधारतेत्यतुल्यार्थत्वान्न विकल्पोऽस्तीत्युक्तम्। इदानीं विकल्पायोगे हेत्वन्तरमाह-अपि चेति। जीवस्य चेदौत्सर्गिकं ब्रह्मत्वं तर्हि किमिति स्वापे तस्य तद्रूपत्वमुच्यते तत्राऽऽह-स्वप्नेति। सुषुप्तेरपवादाभावाज्जीवस्य ब्रह्मतादात्म्ये फलितमाह-अतश्चेति। इतश्च विकल्पासिद्धिरित्याह-अपि चेति। हेत्वन्तरमेव स्फोरयन्विकल्पवादिनोऽपि संमतमर्थमाह-स्थानेति। क्वचिदिति नाडीपुरीतद्ब्रह्मणामन्यतमोक्तिः। अन्यथा सुप्तिभङ्गो जागरादिवदिति भावः। स्वापस्यैवंरूपत्वेऽपि विकल्पे काऽनुपपत्तिस्तत्राऽऽह-तत्रेति। एकत्वमद्वैतावस्थत्वम्। सति संपन्नस्य विशेषज्ञानाभावे मानमाह-तदिति। अवशिष्टेऽपि स्थानद्वये यथोक्तं सुषुप्तं युक्तमेवेत्याशंक्याऽऽह-नाडीष्विति। नाड्यादिगोचरस्य पुंसो द्वैतावस्थत्वाद्विशेषाज्ञाने नास्ति हेतुरित्यर्थः। द्वैतावस्थस्य विशेषज्ञाननियमे मानमाह-यत्रेति। तस्यापि विशेषाज्ञाने हेतुं शङ्कते-नन्विति। भिद्यत इति भेदो विद्यमानस्य विषयस्या-

णमविज्ञाने स्यात्॥बाढमेवं स्यात्॥ यदि जीवः स्वतः परिच्छिन्नोऽभ्युपगम्येत,यथा विष्णुमित्रः प्रवासी स्वगृहं न पश्यतीति,न तु जीवस्योपाधिव्यतिरेकेण परिच्छेदो विद्यते उपाधिगतमेवातिदूरादिकारणमविज्ञान इति यद्युच्येत, तथाप्युपाधेरुपशान्तत्वात्स्वस्यैव सम्पन्नो न विजानातीति युक्तम् । न च वयमिह तुल्यवन्नाड्यादिसमुच्चयं प्रतिपादयामः । न हि नाड्यः सुप्तिस्थानं पुरीतच्चेत्यनेन विज्ञानेन किञ्चित्प्रयोजनमस्ति । न ह्येतद्विज्ञानप्रतिबद्धं फलं किञ्चिच्छ्रूयते । नाप्येतद्विज्ञानं फलवतः कस्यचिदङ्गमुपदिश्यते। ब्रह्म त्वनपायि सुप्तिस्थानमित्येतत्प्रतिपादयामः। तेन तु विज्ञानेन प्रयोजनमस्ति । जीवस्य ब्रह्मात्मत्वावधारणं, स्वप्नजागरितव्यवहारविमुक्तत्वावधारणं च ॥ तस्मादात्मैव सुप्तिस्थानम् ॥ ७॥

रत्नप्रभा ।

आद्यं—सदृष्टान्तमनूद्य प्रत्याह—बाढमित्यादिना ॥ द्वितीयम् अनूद्य दूषयति—उपाधिगतमेवेति ॥ उपाधिभिः तस्यैव नाड्यादौ स्वापे कतिपयसन्निकृष्टार्थज्ञानप्रसङ्गात् सुषुप्तिव्याघातः स्यात् । उपाधिलये त्वन्यत्र जीवस्य स्थित्ययोगाद् ब्रह्मण्येव स्वापः आस्थेय इत्यर्थः॥एवं विकल्पं निरस्य नाडीपुरीततोर्ब्रह्मणा सह तुल्यवत्समुच्चयं फलत्वेन दूषयन् गुणप्रधानत्वेन समुच्चयमुपसंहरति—न च वयमित्यादिना ॥ ७॥

भामती ।

मानस्यापि विषयस्येत्यर्थः । परिहरति—बाढमेवं स्यादिति । न तावज्जीवस्यास्ति स्वतःपरिच्छेदस्तस्य ब्रह्मात्मत्वेन विभुत्वात् । औपाधिके तु परिच्छेदे यत्रोपाधिरसंनिहितस्तन्मात्रं न जानीयान्न तु सर्वम् । न ह्यसंनिधानात्सुमेरुमविद्वान् देवदत्तः संनिहितमपि न वेद । तस्मात्सर्वविशेषविज्ञानप्रत्यस्तमयीं सुषुप्तिं प्रसाधयता तदास्य सर्वोपाध्युपसंहारो वक्तव्यः । तथा च सिद्धमस्य तदा ब्रह्मात्मत्वमित्यर्थः । गुणप्रधानभावेन समुच्चयो न समप्रधानतयाग्नेयादिवदिति वदन्विकल्पमप्यपाकरोति—न च वयमिहेति । स्वाध्यायाध्ययनविध्यापादितपुरुषार्थत्वस्य वेदराशेरेकेनापि वर्णेन नापुरुषार्थेन भवितुं युक्तम् । न च सुषुप्तावस्थायां जीवस्य स्वरूपेण नाड्यादिस्थानत्वप्रतिपादने किंचित्प्रयोजनं ब्रह्मभूयप्रतिपादने त्वस्ति । तस्मान्न समप्रधानभावेन समुच्चयो नापि विकल्प इति भावः । नीतार्थमन्यत् ॥ ७ ॥ ८ ॥ ( २ ) ॥

आनन्दगिरीय—न्यायनिर्णयः ।

पीत्यर्थः । जीवस्यातिदूरत्वं स्वाभाविकमौपाधिकं वा ? तत्राऽऽद्यं दूषयति—बाढमिति । स्वाभाविकमपि दूरत्वमज्ञाने हेतुरित्यत्र दृष्टान्तमाह—यथेति । अस्तु प्रस्तुतेऽपि तादृगतिदूरत्वमज्ञानहेतुर्नेत्याह—न त्विति। द्वितीयमनुवदति—उपाधीति । तर्हि विकल्पासिद्धिरित्याह—तथाऽपीति । सुप्तिदशायामुपाधिपरिच्छेदाङ्गीकारे च कतिपयसंनिहितार्थज्ञानप्रसङ्गादशेषविशेषज्ञानशून्यतायै निरुपाधितया जीवस्य ब्रह्मरूपेणावस्थानमास्थेयमित्यर्थः । उपाधीनामुपशमे कथं नाड्यादिसमुच्चयोक्तिस्तत्राह—न चेति । इहेति स्वापस्थानमुक्तम् । गुणप्रधानत्वेन समुच्चयोक्तिरित्यर्थः । किंच, नाड्यादीनां स्वापस्थानत्वोक्तेरफलत्वान्न समुच्चयो विकल्पो वेत्याह—न हीति । कथमस्याफलत्वमित्याशंक्य स्वातन्त्र्येण वा फलवदङ्गत्वेन वा फलवत्त्वमिति विकल्प्याऽऽद्यं प्रत्याह—न हीति । द्वितीयं दूषयति—नापीति । विकल्पसमुच्चययोरप्रतिपाद्यत्वे किमत्र प्रतिपाद्यं तदाह—ब्रह्म त्विति । तद्विज्ञानेऽपि तुल्यमफलत्वमित्याशंक्याधिकरणत्वज्ञानस्य प्रयोजनमाह—तेनेति । ब्रह्म स्वापस्थानमिति ज्ञानस्य फलवत्त्वे फलितमाह—तस्मादिति ॥ ७ ॥ ब्रह्मण एव

## अतः प्रबोधोऽस्मात् ॥ ८॥

यस्माच्चात्मैव सुप्तिस्थानम्, अत एव कारणान्नित्यवदेवास्मादात्मनः प्रबोधः स्वापाधिकारे शिष्यते । "कुत एतदागाद्" [ बृ० २ । १ । १६ ] इत्यस्य प्रश्नस्य प्रतिवचनावसरे "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः" [ बृ० २ । १ । २० ] इत्यादिना, "सत आगम्य न विदुः सत आगच्छामहे" [ छां० ६ । १० । २ ] इति च । विकल्प्यमानेषु तु सुषुप्तिस्थानेषु कदाचिन्नाडीभ्यः प्रतिबुध्यते, कदाचित्पुरीततः कदाचिदात्मन इत्यशासिष्यत् ॥ तस्मादप्यात्मैव तु सुप्तिस्थानमिति ॥ ८ ॥ इति तदभावाधिकरणम् ॥ २ ॥

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥ ( ३ ) ॥

तस्याः पुनः सत्सम्पत्तेः प्रतिबुध्यमानः किं य एव सत्सम्पन्नः, स एव प्रतिबुध्यते उत स वान्यो वेति चिन्त्यते ॥ तत्र प्राप्तं तावद् । अनियम

---

रत्नप्रभा ।

किञ्च ब्रह्मणः सकाशाज्जीवस्योत्थानश्रुतेर्ब्रह्मैव सुषुप्तिस्थानमित्याह सूत्रकारः—**अतः प्रबोध इति** ॥ नाडीपुरीततोः क्वाप्युत्थानाऽपादानत्वाश्रवणात् न सुप्तिस्थानमित्यर्थः ॥ तस्मादुपाधिलये जीवस्य ब्रह्माभेदादौपाधिक एव भेद इति विवेकाद्वाक्यार्थभेदसिद्धिरिति स्थितम् ॥ ८ ॥ ( २ ) ॥ **स एव तु कर्मानुस्मृतिशब्दविधिभ्यः** ॥ सुषुप्तौ उपाधिनाशात् कर्मानुस्मृत्यादेर्दर्शनाच्च,—संशये सति अस्माद् ब्रह्मणो जीवस्योत्थानश्रुतेर्ब्रह्मैव सुषुप्तिस्थानमित्युक्तमयुक्तम् । सुप्तादन्यस्याप्युत्थानसम्भवेन सुषुप्तस्य नाड्यादिस्थानत्वसम्भवादित्याक्षेपसङ्गत्या नियामकाभावादनियम इति पूर्वपक्षमाह—**तस्याः पुनरि**त्यादिना ॥ पूर्वपक्षे ज्ञानवैयर्थ्यम् । सुषुप्त्यैवापुनरावृत्तिरूपमुक्तिसिद्धेः सिद्धान्ते तु अज्ञातब्रह्मात्मना

भामती ।

**स एव तु कर्मानुस्मृतिशब्दविधिभ्यः** । यद्यपीश्वरादभिन्नो जीवस्तथाप्युपाध्यवच्छेदेन भेदं विवक्षित्वाधिकरणान्तरारम्भः स एवेति दुःसंपादमिति । स वान्यो वेति ईश्वरो वेति संभवमात्रेणोपन्यासः । न हि तस्य शुद्धमुक्तस्वभावस्याविद्याकृतव्युत्थानसंभवः । अत एव विमर्शावसरेऽस्यानुपन्यासः । यद्धि

आनन्दगिरीय—न्यायनिर्णयः ।

प्रबोधापादानत्वोक्तेरपि तदेव सुप्तिस्थानमित्याह—**अत इति** । सूत्रं व्याचष्टे—**यस्मादिति** । विकल्पेऽपि तदपादानत्वोक्तिर्ब्रह्मणो घटिष्यते नेत्याह—**विकल्प्यमानेष्विति** । न च नाडीपुरीततोरुत्थानापादानत्वं कदाचिदपि शिष्यते ब्रह्मण एव तु तद्वचने फलितमुपसंहरति—**तस्मादपीति** । एवमात्मनो ब्रह्मात्मत्वं सिद्धमित्यधिकरणार्थमुपसंहर्तुमितीत्युक्तम् ॥ ८ ॥ ( २ ) ॥ अतः प्रबोधोऽस्मादिति स्वापानन्तरं ब्रह्मणः सकाशात्प्रबोधोक्तेस्तदात्मनैव सुप्तस्तिष्ठतीत्युक्तम् । इदानीं तस्मात्प्रबोधस्तदापत्तिं गमयति सुप्तादन्यस्य प्रबोधसंभवेन तस्य नाड्यादिस्थानत्वसंभवादित्याशंक्याऽऽह—**स एवेति** । स्वापस्थानाद्ब्रह्मणः प्रतिबुध्यमानं जीवमधिकृत्योपाधिनाशात्कर्मानुस्मृत्यादिदर्शनाच्च संशयमाह—**तस्या इति** । तस्यैवोत्थानोक्त्या स्वापातिरेकसाधनेन त्वमर्थशोधनात्तस्य ब्रह्मैक्ययोग्यतया वाक्यीयज्ञानोपयोगितेति पादादिसंगतिः । पूर्वपक्षे ज्ञानवैयर्थ्यं सिद्धान्ते तस्यैवोत्थानादज्ञातब्रह्मात्मना सुप्तस्यावस्थानात्तदैक्यज्ञानादेव मुक्तेस्तदर्थवत्त्वनियतिरित्यभिप्रेत्य नियामकानुपलब्ध्या पूर्वपक्षयति—**तत्रेति** । नियमसंभवे नानि-

इति ॥ कुतः ॥ यदा हि जलराशौ कश्चिज्जलबिन्दुः प्रक्षिप्यते, जलराशिरेव स तदा भवति । पुनस्तदुद्धरणे स एव जलबिन्दुर्भवतीति दुःसम्पादम् । तद्वत्सुप्तः परेणैकत्वमापन्नः सम्प्रसीदति, न स एव पुनरुत्थातुमर्हति ॥ तस्मात्स एवेश्वरो वान्यो वा जीवः प्रतिबुध्यत इति ॥ एवं प्राप्ते इदमाह—"स एव तु" जीवः सुप्तः स्वास्थ्यं गतः पुनरुत्तिष्ठति, नान्यः ॥ कस्मात् "कर्मानुस्मृतिशब्दविधिभ्यः" । विभज्य हेतून्दर्शयिष्यामि—कर्मशेषानुष्ठानदर्शनात्तावत्स एवोत्थातुमर्हति, नान्यः । तथा हि—पूर्वेद्युरनुष्ठितस्य कर्मणोऽपरेद्युः शेषमनुतिष्ठन्दृश्यते । न चान्येन सामिकृतस्य कर्मणोऽन्यः शेषक्रियायां प्रवर्तितुमर्हति । अतिप्रसङ्गात् ॥ तस्मादेक एव पूर्वेद्युरपरेद्युश्चैकस्य कर्मणः कर्तेति गम्यते ॥ इतश्च स एवोत्तिष्ठति यत्कारणमतीतेऽह्न्यहमदोऽद्राक्षमिति पूर्वानुभूतस्य पश्चात्स्मरणमन्यस्योत्थाने नोपपद्यते । न ह्यन्यदृष्टमन्योऽस्मर्तुमर्हति । 'सोऽहमस्मि' इति चात्मानुस्मरणमात्मान्तरोत्थाने नाऽवकल्पते॥शब्देभ्यश्च तस्यैवोत्थानमवगम्यते ॥ तथाहि—"पुनः प्रतिन्यायं प्रतियोन्या द्रवति

---

रत्नप्रभा ।

स्थितस्य अज्ञानबलेन पुनस्तस्यैवोत्थानावश्यम्भावादज्ञाननाशाय ज्ञानापेक्षेति फलम् ईश्वरो वेत्यनियमदार्ढ्यायोक्तम् । 'स वान्यो वा' इत्येव पूर्वपक्षः । ज्ञानं विना बुद्ध्याद्युपाधेरत्यन्तनाशाभावाद्यया बुद्ध्योपहितो जीवः सुषुप्तौ कारणात्मना स्थितस्तयैव नानाकर्मानुभवसंस्कारवत्योपहित उत्तिष्ठतीति सिद्धान्तयति—स एव त्वित्यादिना ॥ सामिकृतस्य अर्धकृतस्य एकस्यैव ज्योतिष्टोमादेरनेकयजमानकत्वापातः अतिप्रसङ्गः ॥ स्मृतिमुक्त्वानुशब्दसूचितां प्रत्यभिज्ञामाह—सोऽहमिति ॥ अयनं गमनम्—

भामती ।

द्व्यहादिनिर्वर्तनीयमेकस्य पुंसश्चोदितं कर्म तस्य पूर्वेद्युरनुष्ठितस्यास्ति स्मृतिरिति वक्तव्येऽनुः प्रत्यभिज्ञानसूचनार्थः । अत एव सोऽहमस्मीत्युक्तम् ॥ पुनः प्रतिन्यायं प्रतियोन्या द्रवतीति । अयनं आयः नियमेन

आनन्दगिरीय—न्यायनिर्णयः ।

यमो युक्तिमानिति शङ्कते—कुत इति । नियमायोगं दृष्टान्तेन साधयति—यदेति । जलबिन्दोः सावयवत्वादवयवप्रसर्पणप्रणाडिकयैकत्वमापन्नस्य तस्यैव नोद्धरणम् । जीवस्य तु सोपाधित्वादुपाधेर्यावद्बन्धभावित्वादुद्धारसिद्धिरित्याशंक्योपाधिलयाभावे सत्संपत्त्यसिद्धेर्मैवमिति मत्वा दार्ष्टान्तिकमाह—तद्वदिति । नियामकायोगे फलितमाह—तस्मादिति । संभावनामात्रेणेश्वरो वेत्युक्तम् । अनियमपक्षे मोक्षः सुप्तस्येति ज्ञानवैयर्थ्यमिति वक्तुमितिशब्दः । पूर्वपक्षमनूद्य सिद्धान्तप्रतिज्ञामाह—एवमिति । ऐक्यावस्थायामवच्छेदाभावे तस्यैवोत्थानं नियन्तुमशक्यमिति शङ्कते—कस्मादिति । अवच्छेदकाविद्याशक्तिं सिद्धवत्कृत्य तस्यैवोत्थाने मानमाह—कर्मेति । षड्यागानामिव समुच्चितानामिह न हेतुत्वं किंतु प्रत्येकमित्याह—विभज्येति । तत्र कर्मशब्दोक्तं हेतुं विशदयति—कर्मेति । शेषानुष्ठानदर्शनमेव प्रकटयति—तथाहीति । कथमेतावता तस्यैवोत्थानमित्याशंक्योक्तम्—न चेति । सामिकृतस्यार्धमनुष्ठितस्येति यावत् । एकस्यैव ज्योतिष्टोमादेरनेकयजमानकत्वापातादित्याह—अतिप्रसंगादिति । उक्तहेतुफलमुपसंहरति—तस्मादिति । अतः स एवोत्तिष्ठतीति शेषः । अनुस्मृतिं व्याकरोति—इतश्चेति । का पुनरुक्तानुस्मृतेरन्योत्थानेऽनुपपत्तिस्तत्राऽऽह—न हीति । अनुस्मृतिरित्यत्रानुशब्देन प्रत्यभिज्ञाऽपि सूचितेत्याह—सोऽहमिति । शब्दशब्दार्थमाह—शब्देभ्यश्चेति । अयनं गमनमायः प्रतिनियतं गमनं प्रतिन्यायः स

बुद्धान्तायैव" [बृ० ४ । ३ । १६ ] "इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" [ छां० ८ । ३ । २ ] "त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो मशको वा यद्यद्भवन्ति तत्तदा भवन्ति" ॥ ३ ॥ [ छां० ६ । ९ । ३ ] इत्येवमादयः शब्दाः स्वापप्रबोधाधिकारे पठिता नात्मान्तरोत्थाने सामञ्जस्यमीयुः ॥ कर्मविद्याविधिभ्यश्चैवमेव गम्यते । अन्यथा हि कर्मविद्याविधयोऽनर्थकाः स्युः । अन्योत्थानपक्षे हि सुषुप्तमात्रो मुच्येतेत्यापद्येत । एवं चेत्स्याद् वद किं कालान्तरफलेन कर्मणा, विद्यया वा,—कृतं स्यात् ॥ अपि चान्योत्थानपक्षे यदि तावच्छरीरान्तरे व्यवहरमाणो जीव उत्तिष्ठेत्, तत्तद्व्यवहारलोपप्रसङ्गः स्यात्। अथ तत्र सुप्त उत्तिष्ठेत्, कल्पनानर्थक्यं स्यात्। 'यो हि यस्मिञ्छरीरे सुप्तः स तस्मिन्नोत्तिष्ठति । अन्यस्मिञ्छरीरे सुप्तोऽन्यस्मिन्नुत्तिष्ठति' इति कोऽस्यां कल्पनायां लाभः स्यात्। अथ मुक्त उत्तिष्ठेद्–अन्तवान्मोक्ष आपद्येत । निवृत्ताऽविद्यस्य च पुनरुत्थानमनुपपन्नम् । एतेनेश्वरोत्थानं प्रत्युक्तम्। नित्यनिवृत्ताऽविद्यत्वात् । अकृताभ्यागमकृतविप्रणाशौ च दुर्निवारावन्योत्थानपक्षे

---

रत्नप्रभा।

आयः। योनिं तत्तदिन्द्रियस्थानं प्रति नियतं गमनं यथा भवति, तथा प्रतियोनि–आगच्छति जागरणायेति श्रुत्यर्थः ॥ न विन्दन्तीति । अज्ञानसत्त्वात् सुप्तस्योत्थाननियम उक्तः । इह पूर्वप्रबोधे ये भवन्ति ते एव तदा उत्तरप्रबोधे भवन्तीत्यर्थः ॥ विधिं व्याचष्टे–कर्मेति ॥ स एवोत्तिष्ठतीति निश्चीयते इत्यर्थः ॥ अत्रैवोत्सूत्रं युक्त्यन्तरमाह–अपि चेत्यादिना ॥ अन्योत्थाने सुखादेर्न पूर्वकर्मकार्यते-

भामती।

गमनं न्यायः । जीवः प्रतिन्यायं संप्रसादे सुषुप्तावस्थायां बुद्धान्तायाद्रवति आगच्छति प्रतियोनि । यो हि व्याघ्रयोनिः सुषुप्तो बुद्धान्तमागच्छन् स व्याघ्र एव भवति न जात्यन्तरम् । तदिदमुक्तम्–त इह व्याघ्रो वा सिंहो वेति । अथ तत्र सुप्त उत्तिष्ठेदिति । यो हि जीवः सुप्तः स शरीरान्तर उत्तिष्ठति शरीरान्तरगतस्तु सुप्तजीवसंबन्धिनि शरीर उत्तिष्ठति, ततश्च न शरीरान्तरे व्यवहारलोप इत्यर्थः ।

आनन्दगिरीय–न्यायनिर्णयः।

यथा भवति तथा योनिंयोनिं प्रत्यागच्छति स्वापान्तरं जागरायेत्यर्थः। सुप्तानामुत्थानयोग्यत्वमापन्नमेतं न विन्दन्तीति सूचितम्। इहेति पूर्वप्रबोधोक्तिः । तदाभवन्तीति स्वापव्यवहितं जागरितमुच्यते । विधिपदं व्याचष्टे–कर्मेति । स एवोत्तिष्ठतीत्येतदेवमेवेत्युक्तम् । तदेव व्यतिरेकमुखेन विशदयति–अन्यथेति । विद्यानर्थक्यं व्यनक्ति–अन्येति । कर्मवैयर्थ्यमाह–एवं चेदिति । सुप्तमात्रस्य मुक्त्युपगमश्चेदित्यर्थः । अनुष्ठानकाले फलाभावात्कर्मणो ध्यानस्य च कालान्तरफलस्यान्योत्थानपक्षे वैयर्थ्यमित्यर्थः । विद्याऽत्र ध्यानम् । इतश्च नान्योत्थानमित्याह–अपि चेति । अन्योत्थाने सोऽन्यो जीवो वा स्यादीश्वरो वा। जीवश्चेद्बद्धो मुक्तो वा । बद्धोऽपि देहान्तरे व्यवहरमाणस्तत्र सुप्तो वेति विकल्प्याऽऽद्यमनूद्य प्रत्याह–अन्येति । द्वितीयमनुभाष्य दूषयति–अथेत्यादिना । विफलं गौरवमेव स्फोरयति–यो हीति । कल्पान्तरमनूद्य निरस्यति–अथेति । अन्तवत्त्वे का क्षतिस्तत्राऽऽह–निवृत्तेति । हेत्वभावादिति भावः । मुक्तस्य नोत्थानमित्युक्तन्यायेन कल्पान्तरं निराह–एतेनेति । तदीयस्वरूपापेक्षया हेतुमाह–नित्येति । प्रत्येकं सर्वपक्षेषु दोषमुक्त्वा साधारणं दोषमाह–अकृतेति । अन्योत्थाने पश्चा-

स्याताम् ॥ तस्मात्स एवोत्तिष्ठति, नान्य इति ॥ यत्पुनरुक्तं—यथा जलराशौ प्रक्षिप्तो जलबिन्दुर्नोद्धर्तुं शक्यते, एवं सति सम्पन्नो जीवो नोत्पतितुमर्हतीति ॥ तत्परिह्रियते ॥ युक्तं तत्र विवेककारणाभावाज्जलबिन्दोरनुद्धरणम् । इह तु विद्यते विवेककारणं कर्म, चाविद्या चेति वैषम्यम् । दृश्यते च दुर्विवेचनयोरप्यस्मज्जातीयैः क्षीरोदकयोः संसृष्टयोर्हंसेन विवेचनम् ॥ अपि च न जीवो नाम कश्चित्परस्मादात्मनोऽन्यो विद्यते । यो जलबिन्दुरिव जलराशेः सतो विविच्येत । सदेव तूपाधिसम्पर्काज्जीव इत्युपचर्यते—इत्यसकृत्प्रपञ्चितम् । एवं सति यावदेकोपाधिगता बन्धानुवृत्तिः—तावदेकजीवव्यवहारः । उपाध्यन्तरगतायां तु बन्धानुवृत्तौ जीवान्तरव्यवहारः । स एवायमुपाधिः स्वापप्रबोधयोर्बीजांकुरन्यायेनेत्यतः स एव जीवः प्रतिबुध्यत इति युक्तम् ॥ ९ ॥ इति कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥

## मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥ ( ४ ) ॥

रत्नप्रभा ।

त्यक्तसुखाद्यागमः, पूर्वसुप्तजीवकृतकर्मनाशश्चेत्यर्थः ॥ पूर्वपक्षयुक्तं दृष्टान्तं वैषम्येण दूषयति—**यत्पुनरित्यादिना** ॥ अस्मदाद्यशक्यमपि विवेचनं प्राण्यदृष्टापेक्षः ईश्वरः करोतीति मत्वा दृष्टान्तमाह—**दृश्यते चेति** ॥ ब्रह्माभेदाच्च जीवस्य जलबिन्दुवैषम्यमित्याह—**अपि चेति** ॥ अभेदे स वान्यो वोत्तिष्ठतीति चिन्तानवकाश इत्याशंक्य बुद्धिभेदेन जीवभेदाच्चिन्तेत्याह—**एवं सतीति** ॥ सुषुप्तौ बुद्धिनाशेन प्रत्यहं बुद्ध्युपाधिभेदादेकजीवव्यवहारो न स्यादित्यत आह—**स एवायमिति** ॥ स्थूलसूक्ष्मात्मना तिष्ठत्येकोपाधिरित्यर्थः ॥ ९ ॥ ( ३ ) ॥ अवस्थात्रयादात्मानं विविच्य मूर्च्छातो विवेचयति—**मुग्धेऽर्द्धसम्पत्तिः परिशेषात्** ॥ मूर्च्छा प्रसिद्धाऽवस्थान्तर्गता वा पञ्चमावस्था वेति ।

भामती ।

**अपि च न जीवो नाम कश्चित्परस्मादन्य इति** । यथा घटाकाशो नाम न परमाकाशादन्यः । अथ चान्य इव यावद्घटमनुवर्तते । न चासौ दुर्विवेचस्तदुपाधेर्घटस्य विविक्तत्वात् । एवमनाद्यनिर्वचनीयाविद्योपधानभेदोपाधिकल्पितो जीवो न वस्तुतः परमात्मनो भिद्यते तदुपाध्युद्भवाभिभवाभ्यां चोद्भूत इवाभिभूत इव प्रतीयते । ततश्च सुषुप्तादावपि अभिभूत इव जाग्रदवस्थादिषूद्भूत इव । तस्य चाविद्यातद्वासनोपाधेरनादितया कार्यकारणभावेन प्रवहतः सुविवेचतया तदुपहितो जीवः सुविवेच इति ॥ ९ ॥ ( ३ ) ॥ **मुग्धेऽर्धसंपत्तिः परिशेषात्** । विशेषविज्ञानाभावान्मूर्च्छा जागरस्वप्नावस्थाभ्यां भिद्यते, पुन-

आनन्दगिरीय—न्यायनिर्णयः ।

त्यप्रबोधकालीनसुखादेर्न पूर्वकर्मकार्यतेत्यकृतमागच्छेत्कृतं च सुप्तस्य मुक्तौ फलमदत्त्वैव नश्येदिति दोषद्वयमित्यर्थः । अन्योत्थानायोगे फलितमाह—**तस्मादिति** । पूर्वपक्षबीजमनुवदति—**यदिति** । दृष्टान्तवैषम्योक्त्या प्रत्याह—**तदित्यादिना** । नास्माभिरेवान्यैरपि दुर्विवेचनत्वं तुल्यमित्याशंक्याऽऽह—**दृश्यते चेति** । प्रकारान्तरेण दृष्टान्तवैषम्यमाह—**अपि चेति** । कस्तर्हि जीवस्तत्राऽऽह—**सदेवेति** । सत एवोपाधिना जीवत्वे नानाजीववादोऽपि प्रत्युक्त इत्याह—**एवमिति** । उक्तमेव व्यतिरेकद्वारोपपादयति—**उपाध्यन्तरेति** । उपाधिभेदमुपेत्य तत्रतत्र जीवभेदो गम्यतामित्याशंक्य बीजांकुरवद्व्यक्ताव्यक्तात्मनैकस्यैवोपाधेः स्थितेर्मैवमित्याह—**स एवेति** । सुप्तस्यैवोत्थानादज्ञातब्रह्मणा तदवस्थानं सिद्धमित्युपसंहरति—**इत्यत इति** ॥ ९ ॥ ( ३ ) ॥ अवस्थात्रयमुक्त्वा मूर्च्छाख्यमवस्थान्तरं दर्शयति—**मुग्ध इति** । विष-

अस्ति मुग्धो नाम-यं मूर्च्छित इति लौकिकाः कथयन्ति । स तु किमवस्थ इति परीक्षायामुच्यते । तिस्रस्तावदवस्थाः शरीरस्थस्य जीवस्य प्रसिद्धाः-जागरितं, स्वप्नः, सुषुप्तमिति । चतुर्थी शरीरादपसृप्तिः । न तु पञ्चमी काचिदवस्था जीवस्य श्रुतौ स्मृतौ वा प्रसिद्धास्ति ॥ तस्माच्चतसृणामेवावस्थानामन्यतमावस्था-मूर्च्छा-इति ॥ एवं प्राप्ते ब्रूमः ॥ न तावन्मुग्धो जागरितावस्थो भवितुमर्हति।न ह्ययमिन्द्रियैर्विषयानीक्षते । स्यादेतद्-इषुकारन्यायेन मुग्धो भविष्यति-यथेषुकारो जाग्रदपीष्वासक्तमनस्तया नान्यान्विषयानीक्षते, एवं मुग्धो मुसलसम्पातादिजनितदुःखानुभवव्यग्रमनस्तया जाग्रदपि नान्यान्विषयानीक्षत इति ॥ न ॥ अचेतयमानत्वाद् ॥ इषुकारो हि व्यापृतमना ब्रवीति-'इषुमेवाहमेतावन्तं कालमुपलभमानोऽभूवम्' इति । मुग्धस्तु लब्धसञ्ज्ञो ब्रवीति-'अन्धे तमस्यहमेतावन्तं कालं प्रक्षिप्तोऽभूवं न किञ्चिन्मया चेतितम्'

---

रत्नप्रभा ।

अवस्थाचतुष्टयप्रसिद्धेर्मुग्धस्य तद्वैलक्षण्याच्च संशये सोऽहमिति प्रत्यभिज्ञयोत्थितस्य सुप्तामेदवद्विशेषज्ञानाभावाविशेषेण लिङ्गेन सुषुप्तिरेव मूर्च्छेति प्रत्यभिज्ञानात् सुषुप्त्यन्तर्गता मूर्च्छेति दृष्टान्तसङ्गत्या पूर्वपक्षमाह-**तिस्रस्तावदिति** ॥ पूर्वपक्षे प्रसिद्धावस्थातः पृथगात्मनो मूर्च्छातो विवेकार्थं यत्नासिद्धिः फलं, **सिद्धान्ते** पृथग्यत्नध्रौव्यमिति भेदः ॥ परिशेषं दर्शयन् सिद्धान्तयति-**न तावदित्यादिना** ॥ **जाग्रदपि** जागरावस्थोऽपीत्यर्थः । ऐन्द्रियकमर्थज्ञानं देहधारणं च तस्यास्ति, न मुग्धस्येति वैषम्योक्त्या दूषयति-

भामती ।

त्थानाच्च मरणावस्थायाः । अतः सुषुप्तिरेव मूर्च्छा, विशेषज्ञानाभावाविशेषात् । चिरानुच्छ्वासवेपथुप्रभृतयस्तु सुप्तेरवान्तरप्रभेदाः । तद्यथा कश्चित्सुप्तोत्थितः प्राह-सुखमहमस्वाप्सं लघूनि मे गात्राणि प्रसन्नं मे मन इति, कश्चित्पुनर्दुःखमस्वाप्सं गुरूणि मे गात्राणि भ्रमत्यनवस्थितं मे मन इति । न चैतावता सुषुप्तिर्भिद्यते । तथा विकारान्तरेऽपि मूर्च्छा न सुषुप्तेर्भिद्यते । तस्माल्लोकप्रसिद्ध्यभावान्नेयं पञ्चम्यवस्थेति

आनन्दगिरीय-न्यायनिर्णयः ।

यमाह-**अस्तीति** । प्रामाणिकस्य विषयत्वात्तस्य लोकसिद्धतामाह-**यमिति** । स किं जागराद्यवस्थानामन्यतमावस्थान्तर्गतः किं वाऽवस्थान्तरगत इत्यवस्थाचतुष्टयप्रसिद्धिनियमवैलक्षण्याभ्यां संदेहे प्रत्यभिज्ञया स एवोत्तिष्ठतीत्युक्तेर्विशेषज्ञानाभावाद्विशेषेणैक्यप्रत्यभिज्ञानान्मुग्धिः सुप्तिरेवेति पूर्वपक्षयति-**स त्विति**। अत्र मुग्धेरवस्थान्तरत्वोक्त्या ततो विभक्ते त्वमर्थे शोधिते तस्य वाक्यार्थान्वयिनस्तद्धीहेतुत्वात्पादादिसंगतिः । पूर्वपक्षे मूर्च्छातिरेकार्थं पृथङ् न प्रयतितव्यम् । सिद्धान्ते पृथक्प्रयत्नध्रौव्यमिति मत्वा पूर्वपक्षं विवृणोति-**तिस्रस्तावदिति** । शरीरस्थस्येतिविशेषणसिद्धमवस्थान्तरमाह-**चतुर्थीति** । मूर्च्छाऽपि चिरोच्छ्वासवेपथुप्रमृतिधर्मभेदादवस्थान्तरमित्याशंक्य सुप्तेरेवावान्तरभेदादेवंविधत्वसिद्धेर्न धर्मिभेदकल्पनेत्याह-**न त्विति** । अवस्थान्तरस्याप्रसिद्धत्वे सुषुप्त्यन्तर्भावं मूर्च्छाया मत्वा निगमयति-**तस्मादिति** । तथा च तद्व्यतिरेकार्थं पृथङ् न प्रयतितव्यमिति फलितमितिशब्दार्थः । पूर्वपक्षमनूद्य सिद्धान्तयति-**एवमिति** । परिशेषादित्यस्यार्थं परिशेषं दर्शयितुमारमते-**न तावदिति** । जाग्रदवस्थो हीन्द्रियैरर्थानुपलमते, मुग्धो नैवमिति वैषम्यं हेतुमाह-**न हीति** । जाग्रदवस्थस्यैव मुग्धस्यार्थानुपलम्भो दुःखानुभवव्यग्रतया स्यादिति दृष्टान्तेन शङ्कते-**स्यादिति** । इषुकारन्यायं प्रपञ्चयति-**यथेत्यादिना** । वैषम्योक्त्या प्रत्याह-**नेत्या-**

इति । जाग्रतश्चैकविषयासक्तचेतसोऽपि देहो विध्रियते । मुग्धस्य तु देहो धरण्यां पतति ॥ तस्मान्न जागर्ति, नापि स्वप्नान्पश्यति । निःसञ्ज्ञत्वात् । नापि मृतः । प्राणोष्मणोर्भावात् । मुग्धे हि जन्तौ मृतोऽयं स्यात्, न वा मृतः—इति संशयाना ऊष्मास्ति नास्तीति हृदयदेशमालभन्ते निश्चयार्थम् । प्राणोऽस्ति नास्तीति च नासिकादेशम् । यदि प्राणोष्मणोरस्तित्वं नावगच्छन्ति, ततो मृतोऽयमित्यध्यवसाय दहनायाऽरण्यं नयन्ति । अथ तु प्राणमूष्माणं वा प्रतिपद्यन्ते, ततो नायं मृत इत्यध्यवसाय सञ्ज्ञालाभाय भिषज्यन्ति । पुनरुत्थानाच्च न दिष्टं गतः । न हि यमं गतो यमराज्यात्प्रत्यागच्छति ॥ अस्तु तर्हि सुषुप्तः । निःसञ्ज्ञत्वाद्, अमृतत्वाच्च ॥ न ॥ वैलक्षण्यात् ॥ मुग्धः कदाचिच्चिरमपि नोच्छ्वसिति । सवेपथुरस्य देहो भवति । भयानकश्च वदनम् । विस्फारिते नेत्रे । सुषुप्तस्तु प्रसन्नवदनः तुल्यकालं पुनःपुनरुच्छ्वसिति । निमीलिते अस्य नेत्रे भवतः । न चास्य देहो वेपते । पाणिपेषणमात्रेण च सुषुप्तमुत्थापयन्ति, न तु मुग्धं मुद्गरघातेनापि । निमित्तभेदश्च भवति मोहस्वापयोः । मुसलसम्पातादिनिमित्तत्वान्मोहस्य, श्रमनिमित्तत्वाच्च स्वापस्य । न च लोकेऽस्ति प्रसिद्धिः-मुग्धः

---

रत्नप्रभा ।

नेत्यादिना ॥ मूर्च्छाया जागराद्भेदमुक्त्वा स्वप्नमृतिभ्यां भेदमाह—नापीत्यादिना ॥ आलभन्ते स्पृशन्ति । दिष्टं मरणम् ॥ सुषुप्तिमूर्च्छयोः किञ्चित्सारूप्येऽपि बहुवैलक्षण्याद्भेद इत्याह—नेति ॥ लक्षणभेदमुक्त्वा निमित्तभेदमाह—निमित्तेति ॥ प्रत्यभिज्ञाप्यसिद्धेत्याह—न चेति ॥ उक्तसारूप्यवैरूप्याभ्या-

भामती ।

प्राप्तम् । एवं प्राप्त उच्यते—यद्यपि विशेषविज्ञानोपशमेन मोहसुषुप्तयोः साम्यं तथापि नैक्यम् । न हि विशेषविज्ञानसद्भावसाम्यमात्रेण स्वप्नजागरयोरभेदः । बाह्येन्द्रियव्यापारभावाभावाभ्यां तु भेदे तयोः सुषु-

आनन्दगिरीय—न्यायनिर्णयः ।

दिना । मुग्धस्य जागरितावस्थत्वाभावे हेत्वन्तरमाह—जाग्रतश्चेति । देहधारणाभावाद्विषयमात्रानुपलब्धेश्च मुग्धो जाग्रदवस्थो नेति निगमयति—तस्मादिति । अस्तु तर्हि तस्य स्वप्नावस्थत्वं, नेत्याह—नापीति । तर्हि तस्य मृतावस्थत्वं, नेत्याह—नापीति । पूर्ववत्प्राणोष्माणौ मुग्धे न सिद्धौ तत्कुतोऽस्य मृतादन्यत्वं तत्राऽऽह—मुग्धे हीति । ऊष्माऽस्ति नेति संशयग्यान्यतरनिश्चयार्थं हृदयदेशमालभन्ते स्पृशन्तीति यावत् । प्राणोऽस्ति नेति च संदिह्यान्यतरार्थं नासिकादेशमालभन्त इति संबन्धः । नास्तित्वनिश्चयफलमाह—यदीति । परस्य पराध्यवसायगोचरो नेत्याशंक्य कार्यलिङ्गकमनुमाह—दहनायेति । अस्तित्वनिश्चयफलमाह—अथ त्विति । तत्रापि कार्यलिङ्गकमनुमानमाह—संज्ञेति । मुग्धस्य मृतत्वाभावे हेत्वन्तरमाह—पुनरिति । यमराज्यं प्रविष्टस्यापि पुनरुत्थानं किं न स्यात्तत्राऽऽह—न हीति । परिशेषसिद्धं मुग्धस्य स्वापावस्थत्वमित्याह—अस्त्विति । तत्र सालक्षण्यं हेतुमाह—निःसंज्ञत्वादिति । उक्तसालक्षण्येऽपि लक्षणनिमित्तफलानां भेदान्नैक्यमित्याह—नेत्यादिना । लक्षणं लक्षणभेदं विवृणोति—मुग्ध इति । निमित्तभेदमुदाहरति—निमित्तेति । आदिपदेनोभयत्रापि ज्वरादि गृह्यते । श्रमापनयार्था ब्रह्मसंपत्तिः सुषुप्तिः । देहत्यागार्था तत्संपत्तिर्मोहः । सति मोहे मरणाभावेऽपि तस्मिन्नसति तदभावादिति फलभेदं मत्वा मोहस्वापयोरैक्ये मानाभावमाह—न चेति । परिशेषायातमर्थमाह—

सुप्त इति । परिशेषादर्धसम्पत्तिर्मुग्धतेत्यवगच्छामः । निःसञ्ज्ञकत्वात्सम्पन्नः, इतरस्माच्च वैलक्षण्यादसम्पन्न इति ॥ कथं पुनरर्धसम्पत्तिर्मुग्धतेति शक्यते वक्तुम् । यावता सुप्तं प्रति तावदुक्तं श्रुत्या-"सता सोम्य तदा सम्पन्नो भवति" [ छां० ६ । ८ । १ ] "अत्र स्तेनोऽस्तेनो भवति" [ बृ० ४ । ३ । २२ ] "नैनं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्" [ छां० ८ । ४ । १ ] इत्यादि । जीवे हि सुकृतदुष्कृतयोः प्राप्तिः सुखित्वदुःखित्वप्रत्ययोत्पादनेन भवति । न च सुखित्वप्रत्ययो, दुःखित्वप्रत्ययो वा,-सुषुप्ते विद्यते । मुग्धेऽपि तौ प्रत्ययौ नैव विद्येते ॥ तस्मादुपाध्युपशमात्सुषुप्तवन्मुग्धेऽपि कृत्स्नसम्पत्तिरेव भवितुमर्हति, नार्धसम्पत्तिरिति ॥ अत्रोच्यते ॥ न ब्रूमः ॥ मुग्धेऽर्धसम्पत्तिर्जीवस्य ब्रह्मणा भवतीति ॥ किं तर्हि । अर्धेन सुषुप्त-

रत्नप्रभा ।

मर्धसम्पत्तिः सर्वैः सुषुप्तिधर्मैरसम्पन्नः मुग्धः सुषुप्तो न भवति । सर्वैर्मरणावस्थाधर्मैरसम्पत्तेर्मृतोऽपि न, किन्तु अवस्थान्तरं गत इति **सूत्रार्थः** ॥ अत्र सूत्रे जीवस्य ब्रह्मणाऽर्धसम्पत्तिरुक्तेति भ्रान्तः शङ्कते-**कथमिति** ॥ यत्सुषुप्तं प्रति सत्सम्पन्नत्वं श्रुतं तदुपाध्यभावाभिप्रायम् । उपाध्यभावश्च मुग्धस्यापि सम इति यतः, तस्मात् कृत्स्नसम्पत्तिरेवेत्यर्थः । सुषुप्तकाले कर्मासम्बन्धे पुनरुत्थानं कथमित्याशङ्क्य तत्कार्याभावात्तदसम्बन्धोक्तिरित्याह-**जीवे हीति** ॥ ब्रह्मणा कृत्स्नसम्पत्तिमङ्गीकृत्य परिहरति-**न ब्रूम इति** ॥ मुग्धत्वं हि सुषुप्तस्य अर्धेन निःसंज्ञत्वादिधर्मेण साम्येन सम्पन्ने भवति । मरणस्यार्धेन कम्पा-

भामती ।

स्तमोहयोरपि प्रयोजनभेदात्कारणभेदाल्लक्षणभेदाच्च भेदः । श्रमापनुत्त्यर्था हि ब्रह्मणा संपत्तिः सुषुप्तम् । शरीरत्यागार्था तु ब्रह्मणा संपत्तिर्मोहः । यद्यपि सत्यपि मोहे न मरणं तथाप्यसति मोहे न मरणमिति मरणार्थो मोहः । मुसलसंपातादिनिमित्तत्वान्मोहस्य श्रमादिनिमित्तत्वाच्च सुषुप्तस्य मुखनेत्रादिविकारलक्षणत्वान्मोहस्य प्रसन्नवदनत्वादिलक्षणभेदाच्च सुषुप्तस्यासुषुप्तस्य त्ववान्तरभेदेऽपि निमित्तप्रयोजनलक्षणभेदादेकत्वम् । तस्मात् सुषुप्तमोहावस्थयोर्ब्रह्मणा संपत्तावपि सुषुप्ते यादृशी संपत्तिर्न तादृशी मोह इत्यर्धसंपत्ति-

आनन्दगिरीय-न्यायनिर्णयः ।

**परीति**। साम्यवैलक्षण्याभ्यामर्धसंपत्तिं साधयति-**निःसंज्ञत्वादिति** । अर्धसंपत्तिमाक्षिपति-**कथमिति** । काऽनुपपत्तिरित्याशंक्य मुग्धस्यार्धसंपत्त्यभावं साधयितुं सुप्तेन साम्यं कर्मतत्फललेशाभावेन कथयति-**यावतेति**। यत्सुप्तं प्रति सत्संपन्नत्वं श्रुतं तदुपाध्युपरमाभिप्रायं,स चोपाध्युपरमो मुग्धस्यापीति कृत्स्नसंपत्तिरेवेति भावः । कर्मसंबन्धस्य यावद्बन्धभावित्वात्सुप्तस्य कर्मराहित्यमसिद्धमित्याशंक्य तत्कार्यसुखदुःखधीराहित्यात्तद्धेतुकर्मराहित्यं कल्प्यमित्याह-**जीवे हीति** । सुप्तस्य सुखानुभवात्तदविनाभूतो दुःखानुभवोऽपि कल्प्यतामित्याशंक्य स्वप्रकाशस्वरूपसुखानुभवव्यतिरेकेण कर्मोत्थानुकूलप्रतिकूलार्थधीजन्यौ प्रत्ययावसंभाविनावित्याह-**न चेति** । सुप्तस्य कर्मफलवैकल्येऽपि मुग्धस्य किं सिद्धं तत्राऽऽह-**मुग्धेऽपीति** । सुखादिधीराहित्यकल्पितकर्मराहित्येन संपूर्णा सत्संपत्तिर्मुग्धेऽपीति निगमयति-**तस्मादिति** । ब्रह्मसंपत्त्यविशेषेऽपि सुप्तिमूर्छयोर्भेदोऽस्तीत्याह-**अत्रेति** । यत्तु मूर्छायां जीवस्य ब्रह्मणा नार्धसंपत्तिरिति दर्शितं तदङ्गीकरोति-**नेत्यादिना** । तर्हि किमपेक्ष्याऽर्धसंपत्तिस्तत्राऽऽह-**किमिति** । अर्धेनाऽऽदीयमानेन निःसंज्ञत्वेनेति यावत् । परित्यज्यमानेन चार्धेन प्रसन्नवदनत्वादिनेत्यर्थः । अवस्थान्तरं मरणम् । उपनेयापने-

क्षस्य भवति मुग्धत्वम्, अर्धेनावस्थान्तरपक्षस्येति ब्रूमः । दर्शिते च मोहस्य स्वापेन साम्यवैषम्ये । द्वारं चैतन्मरणस्य । यदाऽस्य सावशेषं कर्म भवति, तदा वाङ्मनसे प्रत्यागच्छतः । यदा तु निरवशेषं कर्म भवति, तदा प्राणोष्माणावपगच्छतः ॥ तस्मादर्धसम्पत्तिं ब्रह्मविद इच्छन्ति ॥ यत्तूक्तं न पञ्चमी काचिदवस्था प्रसिद्धाऽस्तीति ॥ नैष दोषः ॥ कादाचित्कीयमवस्थेति न प्रसिद्धा स्यात् । प्रसिद्धा चैषा लोकाऽऽयुर्वेदयोः । अर्धसम्पत्त्यभ्युपगमाच्च न पञ्चमी गण्यत इत्यनवद्यम् ॥ १० ॥ इति मुग्धाधिकरणम् ॥ ४ ॥

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥ (५) ॥

येन ब्रह्मणा सुषुप्तादिषु जीव उपाध्युपशमात्सम्पद्यते, तस्येदानीं स्वरूपं

---

रत्नप्रभा ।

दिना सम्पन्नमित्यर्धसम्पत्तिरित्यर्थः । इतोऽपि सुषुप्तिवैषम्यमित्याह—द्वारश्चेति ॥ अप्रसिद्धिमंगीकृत्योक्तम् । प्रसिद्धिरप्यस्तीत्याह—प्रसिद्धा चेति ॥ आयुर्वेदः वैद्यशास्त्रम् । प्रसिद्धौ कथं विवाद इत्याशङ्क्य पञ्चमत्वेनाऽप्रसिद्धेरित्याह—अर्धेति ॥ सुषुप्तिमृतिधर्मार्धसम्पत्त्या तदन्तर्भावबुद्धिर्लोकानामित्यर्थः ॥ १० ॥ ( ४ ) ॥ सर्वाभिरवस्थाभिरलिप्तस्त्वमर्थ इति विचार्य आपादसमाप्तेस्तत्पदार्थं निरूपयितुकामः प्रथमं तस्य निर्विशेषत्वमाह—न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि ॥ उद्देश्य—त्वंपदार्थजिज्ञासोपरमानन्तरं तत्स्वरूपब्रह्मविचारस्यावसरसंगतिमाह—येनेति॥ निर्विशेषत्वं सविशेषत्वं चेत्युभयं लिङ्ग्यते ज्ञाप्यते

भामती ।

रुक्ता । साम्यवैषम्याभ्यामर्धत्वम् । यदा नैतदवस्थान्तरं तदा भेदात्तत्प्रविलयाय यत्नान्तरमास्थेयम् । अभेदे तु न यत्नान्तरमिति चिन्ताप्रयोजनम् ॥ १० ॥ ( ४ ) ॥ न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि । अवान्तरसंगतिमाह—येन ब्रह्मणा सुषुप्तादिष्विति । यद्यपि 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यत्र निष्प्रपञ्चमेव ब्रह्मोपपादितं तथापि प्रपञ्चलिङ्गानां बह्वीनां श्रुतीनां दर्शनाद्भवति

आनन्दगिरीय—न्यायनिर्णयः ।

यार्धाभ्यामुभयपक्षत्वं कथं मुग्धे सिद्धं तत्राऽऽह—दर्शिते चेति । तथाऽपि कथमस्यामरणपक्षत्वं तत्राऽऽह—द्वारं चेति । मुग्धत्वं मरणस्य द्वारं चेत्तस्मिन्सति स्यादेवेत्याशंक्याऽऽह—यदेति । कर्मणः सावशेषत्वे गमकमाह—तदेति । तर्हि कुतो द्वारत्वं मरणं प्रति मोहस्योक्तं, तत्राऽऽह—यदात्विति कर्मणो निःशेषत्वे प्रयोजकमाह—तदेति । साम्यवैषम्याभ्यां सिद्धमुपसंहरति—तस्मादिति । अवस्थान्तरमप्रसिद्धत्वान्नेत्युक्तमनुवदति—यत्त्विति । जीवद्दशायां सर्वजीवसाधारण्याभावादप्रसिद्धिर्न त्वभेदादित्याह—नेत्यादिना । इदानीमप्रसिद्धिरपि नास्तीत्याह—प्रसिद्धा चेति । आयुर्वेदो वैद्यशास्त्रम् कथमन्यथा मुसलपातादिना मुग्धं बन्धुमुपलभ्य तदीयसंज्ञालाभार्थं तदीयपितृप्रभृतयश्चिकित्साशास्त्रकुशलमन्विष्यानुगच्छेयुरिति भावः । कस्मात्तर्हि पञ्चमतया मुग्धिर्न गण्यते, तत्राऽऽह—अर्धेति । निःसंज्ञत्वमप्रसन्नवदनेत्यादिना सुप्तिमरणान्तर्भावधिया पञ्चमतया मूर्छा नोक्तेत्यर्थः । उक्तवैषम्यादनन्तर्भावधिया पृथगुक्तिरपि स्यादित्याशंक्यानन्तर्भावेऽपि सर्वसाधारणत्वाभावान्नैवमिति मत्वा त्वमर्थशोधनमुपसंहरति—इत्यनवद्यमिति ॥ १० ॥ ( ४ ) ॥ स्वप्नाद्यवस्थोक्त्या तद्व्यतिरिक्तं स्वप्रकाशं ब्रह्मात्मकं सदैकरूपं त्वमर्थमुद्देश्यं परिशोध्येदानीं विधेयतदर्थशोधनमारभमाणस्तस्य तावन्निर्विशेषत्वमाह—नेत्यादिना । संगतिमाह—येनेति । ब्रह्मस्वरूपस्यासकृदुक्तत्वात्किमनेनाऽऽरम्भेणेत्याशंक्य श्रुतिषु दृष्टविवादनिरासेन तन्निर्णयार्थमि-

श्रुतिवशेन निर्धार्यते। सन्त्युभयलिंगाः श्रुतयः ब्रह्मविषयाः-"सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः" [छां० ३।१४।२] इत्येवमाद्याः सविशेषलिंगाः। "अस्थूलमनण्वह्रस्वमदीर्घम्" [बृ०३।८।८] इत्येवमाद्याश्च निर्विशेषलिंगाः। किमासु श्रुतिषूभयलिंगं ब्रह्म प्रतिपत्तव्यम्-उत-अन्यतरलिंगम्। यदाप्यन्यतरलिङ्गं, तदापि सविशेषम्-उत-निर्विशेषमिति मीमांस्यते। तत्रोभयलिंगश्रुत्यनुग्रहादुभयलिंगमेव ब्रह्मेति॥ एवं प्राप्ते ब्रूमः॥ न तावत्स्वत एव परस्य ब्रह्मण उभयलिंगत्वमुपपद्यते। न ह्येकं वस्तु स्वत एव रूपादिविशेषोपेतं, तद्विपरीतञ्चेत्यभ्युपगन्तुं शक्यम्। विरो-

---

रत्नप्रभा।

याभिः ता उभयलिङ्गा श्रुतयः संशयबीजत्वेन सन्तीत्यर्थः। यथा विरुद्धसुषुप्तिमरणोभयरूपत्वं मुग्धत्वं, तथा श्रुतिप्रामाण्यादुभयरूपं ब्रह्म ध्येयमिति दृष्टान्तेन पूर्वपक्षः। निर्विशेषमेकरूपमेव ज्ञेयमिति सिद्धान्तयति-एवमिति॥ किमुभयरूपत्वं स्वतः-उत-स्वतो निर्गुणस्य सर्वगन्धत्वादिविशेषः उपाधितः सत्यः-आहोस्वित्-स्वतः सविशेषमेव ब्रह्मेति। तत्र-आद्यं निरस्य द्वितीयम्-अनूद्य दूषयति-

भामती।

पुनर्विचिकित्सा अतस्तन्निवारणायारम्भः। तस्य च तत्त्वज्ञानमपवर्गोपयोगीति प्रयोजनवान् विचारः। तत्रोभयलिङ्गश्रवणादुभयरूपत्वं ब्रह्मणः प्राप्तम्। तत्रापि सविशेषत्वनिर्विशेषत्वयोर्विरोधात्स्वाभाविकत्वानुपपत्तेरेकं स्वतोऽपरं तु परतः। न च यत्परतस्तदपारमार्थिकम्। न हि चक्षुरादीनां स्वतः-प्रमाणभूतानां दोषतोऽप्रामाण्यमपारमार्थिकम्। विपर्ययज्ञानलक्षणकार्यानुत्पादप्रसङ्गात्। तस्मादुभयलिङ्गकशास्त्रप्रामाण्यादुभयरूपता ब्रह्मणः पारमार्थिकीति प्राप्त उच्यते—न स्थानत उपाधितोऽपि परस्य

आनन्दगिरीय-न्यायनिर्णयः।

त्याह—श्रुतीति। विषयोक्तिपूर्वकं संशयबीजमाह-सन्तीति। सविशेषत्वं निर्विशेषत्वं चोभयं लिङ्ग्यते प्रकाश्यते याभिः श्रुतिभिस्तास्तथा। तत्र सविशेषब्रह्मश्रुतीरुदाहरति-सर्वेति। चकारेणोक्तार्थाः श्रुतयोऽन्याः 'यः सर्वज्ञः स सर्ववित्' इत्याद्याः समुच्चिताः। सविशेषं ब्रह्म लिङ्ग्यते याभिस्ताः श्रुतयस्तथा। निर्विशेषब्रह्मश्रुतीरुदाहरति-अस्थूलमिति। यत्तदद्रेश्यमदृश्येऽनात्म्ये नेतिनेत्याद्याः श्रुतयश्चकारेण गृह्यन्ते। निर्विशेषं ब्रह्म लिंग्यते याभिस्ताः श्रुतयस्तथेति। पूर्ववत्सविषयं संशयबीजमुक्त्वा संशयमाह—किमिति। उभयं सविशेषत्वं निर्विशेषत्वं च लिङ्ग्यते यस्मिन्ब्रह्मणि तत्तथेति यावत्। उभयत्र श्रुत्यनुग्रहादेकत्रोभयोर्विरोधान्नाऽऽद्यो विकल्पः। सविशेषत्वं निर्विशेषत्वं वाऽन्यतरद्यत्र लिङ्ग्यते तद्ब्रह्म तथेत्येतत्। परस्य परिणामित्वकूटस्थत्वाभ्यां द्वितीयं विकल्पयति-यदेति। अत्र निर्विशेषस्य तदर्थस्य ब्रह्मणो निरूपणे तस्य वाक्यार्थान्वयितया तद्धीहेतुत्वलाभात्पादादिसंगतिः। पूर्वपक्षे द्विरूपं ब्रह्म ध्येयं सिद्धान्ते तु निर्विशेषमेव तज्ज्ञेयमित्यभिप्रेत्य पूर्वपक्षयति-तत्रेति। उभयविधत्वं विकृताविकृतब्रह्मापेक्षया वा स्थितिप्रलयकालभेदेन वा कार्यकारणब्रह्मभेदेन वा कारणाकारणब्रह्मभेदेन वा न व्यवस्थापयितुं शक्यं ब्रह्मद्वयाभावात्। तत्कथमेकस्य विरुद्धोभयरूपतेत्याशंक्याऽऽह-उभयेति। न च निर्विशेषब्रह्मप्रकरणस्थशब्दानां निषेध्यार्पणेन निषेधवाक्यैकवाक्यतया सप्रपञ्चातात्पर्यान्न सविशेषधीरिति वाच्यम्। उपास्तिप्रकरणस्थसप्रपञ्चवाक्यान्तरैः स्वशेषिविधिविरोधशून्यतया स्वार्थे प्रमाणैः सप्रपञ्चतासिद्धेर्निषेधवाक्यविरोधेऽपि तेषां स्वशेषिवाक्याविरुद्धत्वात्प्रामाण्योपपत्तेरिति भावः। उभयरूपं ब्रह्म ध्येयमिति पूर्वपक्षमनूद्य सिद्धान्तसूत्रमादत्ते-एवमिति। उभयलिङ्गत्वं ब्रह्मणः स्वाभाविकमाहो परोपाधिकम्? आद्यं प्रत्याह-न तावदिति। अनुपपत्तिं स्फुटयति-न हीति। द्वितीयं शङ्कते-

धात् ॥ अस्तु तर्हि स्थानतः पृथिव्याद्युपाधियोगादिति ॥ तदपि नोपपद्यते ॥ न ह्युपाधियोगादप्यन्यादृशस्य वस्तुनोऽन्यादृशस्वभावः सम्भवति । न हि स्वच्छः सन्स्फटिकोऽलक्तकाद्युपाधियोगादस्वच्छो भवति । भ्रममात्रत्वादस्वच्छताभिनिवेशस्य । उपाधीनां चाऽविद्याप्रत्युपस्थापितत्वात् । अतश्चाऽन्यतरलिंगपरिग्रहेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यं, न तद्विपरीतम् । सर्वत्र हि ब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु—"अशब्दमस्पर्शमरूपमव्ययम्" [ कठ० ३ । १५ ] [ नृसिं० उ० ता० ९ ] [ मुक्ति० २ । ७२ ] इत्येवमादिष्वपास्तसमस्तविशेषमेव ब्रह्मोपदिश्यते ॥ ३ ॥

## न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

रत्नप्रभा ।

**अस्तु तर्हीति** ॥ **स्थानम्** उपाधिः । ब्रह्मणि विशेषः, कल्पितः, औपाधिकत्वात्, स्फटिकलौहित्यवदित्यर्थः ॥ उपाधेः सत्यत्वेऽपि तत्कृतं मिथ्येति दृष्टम्, ब्रह्मणि तूपाधीनां मिथ्यात्वात् तत्कृतो विशेषो मिथ्येति किमु वाच्यमित्याह—**उपाधीनामिति** ॥ तृतीयं निरस्यति—**अतश्चेति** ॥ सर्वस्य विशेषस्य कल्पितत्वादेवेत्यर्थः ॥ निषेधश्रुतेश्चैवमित्याह—**सर्वत्र हीति** ॥ ११ ॥ **न भेदादिति** ॥ भिद्यत

भामती ।

ब्रह्मण उभयचिह्नत्वसंभवः । एकं हि पारमार्थिकमन्यदध्यारोपितम् । पारमार्थिकत्वे ह्युपाधिजनितस्य रूपस्य ब्रह्मणः परिणामो भवेत् । स च प्राक्प्रतिषिद्धः। तत्पारिशेष्यात्स्फटिकमणेरिव स्वभावस्वच्छधवलस्य लाक्षारसावसेकोपाधिररुणिमा सर्वगन्धत्वादिरौपाधिको ब्रह्मण्यध्यस्त इति पश्यामो निर्विशेषताप्रतिपादनार्थत्वाच्छ्रुतीनाम् । सविशेषतायामपि 'यश्चायमस्यां पृथिव्यां तेजोमयः' इत्यादीनां श्रुतीनां ब्रह्मैकत्वप्रतिपानपरत्वादेकत्वनानात्वयोश्चैकस्मिन्नसंभवादेकत्वाङ्गत्वेनैव नानात्वप्रतिपादनपर्यवसानात्,नानात्वस्य प्रमाणान्तरसिद्धतयानुवाद्यत्वादेकत्वस्य चानधिगतेर्विधेयत्वोपपत्तेर्भेददर्शननिन्दया च साक्षाद्भूयसीभिः श्रुतिभिरभेदप्रतिपादनादाकारवद्ब्रह्मविषयाणां च कासांचिच्छ्रुतीनामुपासनापरत्वमसति बाधकेऽन्यपराद्वचनात्प्रतीयमानमपि गृह्यते यथा देवतानां विग्रहवत्त्वम् । सन्ति चात्र साक्षाद् द्वैतापवादेनाद्वैतप्रतिपादनपराः शतशः श्रुतयः । कासांचिच द्वैताभिधायिनीनां तत्प्रविलयपरत्वम् । तस्मान्निर्विशेषमेकरूपं चैतन्यैकरसं सद्ब्रह्म परमार्थतः,

आनन्दगिरिय—न्यायनिर्णयः।

**अस्त्विति**। स्थानत इति व्याचष्टे—**पृथिव्यादीति** । स्थानमुपाधिस्तद्योगादिति यावत्। औपाधिकत्वेऽपि सत्यत्वमग्निसंपर्कजन्यलौहित्यवदिति भावः । उपाधिवशादाविद्योभयलिंगत्वयोगेऽपि न तात्त्विकमुभयलिङ्गत्वं कूटस्थस्य ब्रह्मणो वास्तवरूपान्तरायोगादित्याह—**तदपीति** । उक्तमेव दृष्टान्तेन स्पष्टयति—**न हीति** । आलक्तकाद्युपाधिघटिते स्फटिकादावस्वच्छताधीस्तर्हि कथं,तत्राऽऽह—**भ्रमेति**।स्वरसधवलस्य स्फटिकादेरुपाधितो दृष्टोऽरुणिमा न वास्तवः, संयुक्तोपाधेरेवारुणतया भानादित्यर्थः । उपाधेरमिथ्यात्वेऽपि तत्कृतं मिथ्येत्युक्तम् । इदानीं तस्यापि मिथ्यात्वात्तन्मिथ्येति किं वक्तव्यमित्याह—**उपाधीनामिति** । उभयरूपत्वं तत्त्वतो ब्रह्मणो न चेत्तर्हि सविशेषत्वमेव नानाश्रुतिवशादिष्यतामित्याशंक्याऽऽह—**अतश्चेति** । सर्वस्य विशेषस्याविद्याकृतत्वादेवेति यावत् । तत्र हेतुत्वेन सूत्रावयवं व्याचष्टे—**सर्वत्रेति** ॥ ११ ॥ न स्थानतोऽपीत्यादिनोक्तमाक्षिप्य समाधत्ते—**नेत्यादिना** । निषेध्यमनूद्य निषेद्धुं नञर्थमाह—

अथापि स्याद्-यदुक्तं निर्विकल्पकमेकलिंगमेव ब्रह्म, नास्य-स्वतः,-स्थानतो वोभयलिंगत्वमस्तीति ॥ तन्नोपपद्यते ॥ कस्मात् ॥ भेदात् ॥ भिन्ना हि प्रतिविद्यं ब्रह्मण आकारा उपदिश्यन्ते 'चतुष्पाद्ब्रह्म षोडशकलं ब्रह्म वामनीत्वादिलक्षणं ब्रह्म त्रैलोक्यशरीरवैश्वानरशब्दोदितं ब्रह्म' इत्येवंजातीयकाः ॥ तस्मात्सविशेषत्वमपि ब्रह्मणोऽभ्युपगन्तव्यम् ॥ ननूक्तं 'नोभयलिंगत्वं ब्रह्मणः सम्भवति' इति ॥ अयमप्यविरोधः ॥ उपाधिकृतत्वादाकारभेदस्य । अन्यथा हि निर्विषयमेव भेदशास्त्रं प्रसज्येतेति "चेत्" ॥ "न" इति ब्रूमः ॥ कुतः ॥ "प्रत्येकमतद्वचनात्" । प्रत्युपाधिभेदं ह्यभेदमेव ब्रह्मणः श्रावयति शास्त्रं-"यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा" [बृ० २।५।१] इत्यादि । अतश्च न भिन्नाकारयोगो ब्रह्मणः शास्त्रीय इति शक्यते वक्तुम् । भेदस्योपासनार्थत्वादभेदे तात्पर्यात् ॥ १२ ॥

## अपि चैवमेके ॥ १३ ॥

अपि चैवं भेददर्शननिन्दापूर्वकमभेददर्शनमेव एके शाखिनः समामनन्ति-"मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" [कठ० ४।११] इति । तथान्येऽपि "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म मे तत्"

---

रत्नप्रभा।

इति भेदः-विशेषः । निर्विशेषश्रुतावपि विशेषस्यापि श्रुतेरुभयरूपत्वं स्यादिति शङ्कां व्याचष्टे-अथापि स्यादिति॥ पूर्वोक्तं विरोधं स्मारयति-ननूक्तमिति ॥ भेदश्रुतिप्रामाण्यार्थमौपाधिकरूपभेदस्वीकारादविरोध इति समाध्यर्थः॥किमुपाधिगत एव रूपभेदो ब्रह्मण्युपचर्यते ध्यानार्थम्-उत-उपाधियोगात् सत्यविरुद्धरूपवत्तया ब्रह्मणो भेदो भवतीति॥आद्येऽस्मदिष्टसिद्धिः॥ द्वितीयं-भेदश्रुत्या दूषयति-नेति ब्रूम इति॥१२॥ द्वैतनिन्दापूर्वकमद्वैतोक्तेश्च निर्विशेषं तत्त्वमिति सूत्रार्थमाह-अपि चेति॥भोक्ता जीवः । भोग्यं शब्दादि । तयोः प्रेरितारम्-ईश्वरं च मत्वा विचार्य मे मम प्रोक्तं तत्सर्वं त्रिविधं ब्रह्मैवेति जानीयादित्यर्थः॥१३॥

भामती।-०

आनन्दगिरीय-न्यायनिर्णयः।

अथापीति । श्रुतिभिर्ब्रह्मणो निर्विशेषत्वे मितेऽपीति यावत्। श्रौतस्य नासिद्धिरिति शंकते-कस्मादिति। श्रुत्यन्तरविरोधात्तदसिद्धिरिति सूत्रावयवेनाऽऽह-भेदादिति । तदेव विभजते-भिन्ना हीति । तादृगाकारोपदेशस्य फलमाह-तस्मादिति । निर्विशेषत्ववदित्यपेर्थः । उक्तविरोधं स्मारयति-नन्विति । औपाधिकमाकारभेदमादाय प्रत्याह-अयमपीति । उभयरूपत्वस्वीकारेण विरोधसमाधिवदित्यपेर्थः । आकारभेदो नोपाधितोऽपीत्युक्तमित्याशंक्याऽऽह-अन्यथेति । रूपभेदवादिशास्त्रप्रामाण्यार्थमौपाधिकस्तद्भेदो वक्तव्य इत्यर्थः । किमुपाधिगत एव रूपभेदो ब्रह्मण्युपचर्यते किं वोपाधिसंनिधेस्तत्त्वत एव ब्रह्मणोऽपि भेदो जायते । प्रथमे ब्रह्मणो नोभयरूपतेत्यभिप्रेत्याऽऽह-नेतीति । आकांक्षापूर्वकं हेतुमवतार्य व्याकुर्वन्द्वितीये श्रुत्यन्तरविरोधमाह-कस्मादित्यादिना । कल्पद्वयफलमाह-अतश्चेति ॥१२॥ भेददर्शननिन्दया भेदोक्तेरपि न तात्त्विको भेदः शास्त्रीयोऽस्तीत्याह-अपि चेति । सूत्रं व्याकरोति-अपि चेत्यादिना । भोक्ता जीवो भोग्यं शब्दादि तदुभयं प्रेर्यं प्रेरितारं च नियन्तारमीश्वरं मत्वा

[ श्वे० १ । १२ ] इति समस्तस्य भोग्यभोक्तृनियन्तृलक्षणस्य प्रपञ्चस्य ब्रह्मैकस्वभावतामधीयते ॥ १३ ॥ कथं पुनराकारवदुपदेशिनीष्वनाकारोपदेशिनीषु च ब्रह्मविषयासु श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते, न पुनर्विपरीतमित्यत उत्तरं पठति–

**अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥**

रूपाद्याकाररहितमेव हि ब्रह्माऽवधारयितव्यं, न रूपादिमत् । कस्मात् । तत्प्रधानत्वात्–"अस्थूलमनण्वह्रस्वमदीर्घम्" [ बृ० ३ । ८ । ८ ] "अशब्दमस्पर्शमरूपमव्ययम्" [ कठ० ३ । १५ ] [ नृ० उ० ९ । मुक्ति० २ । ७२ ] "आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" [ छां० ८ । १४ । १ ] "दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः" [ मुण्ड० २ । १ । २ ] "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः" [ बृ० २ । ५ । १९ ] इत्येवमादीनि हि वाक्यानि निष्प्रपञ्चब्रह्मात्मतत्त्वप्रधानानि, नार्थान्तरप्रधानानीत्येतत्प्रतिष्ठापितं "तत्तु समन्वयात्" [ व्या० सू० १ । १ । १४ ] इत्यत्र ॥ तस्मादेवञ्जातीयकेषु वाक्येषु यथाश्रुतं निराकारमेव ब्रह्मावधारयितव्यम् । इतराणि त्वाकारवद्ब्रह्मविषयाणि वाक्यानि, न तत्प्रधानानि । उपासनाविधिप्रधानानि हि तानि । तेष्वसति विरोधे यथाश्रुतमाश्रयितव्यम् । सति तु विरोधे 'तत्प्रधानान्यतत्प्रधानेभ्यो बलीयांसि भवन्ति' इति । एष विनिगमनायां हेतुः । येनोभयीष्वपि श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते, न पुनर्विपरीतमिति ॥ १४ ॥ का तर्हि आकारवद्विषयाणां श्रुतीनां गतिरित्यत आह–

---

रत्नप्रभा ।

द्विविधश्रुतिषु सतीषु निर्विशेषत्वे किं नियामकमिति शङ्कते–कथं पुनरिति ॥ "तत्पराऽतत्परविरोधे तत्परं बलवद्" इति न्यायो नियामक इत्याह–अरूपवदेवेति ॥ उपासनापरवाक्येषु आकारे तात्पर्याभावेऽपि देवताविग्रहादिवदाकारसिद्धिमाशङ्क्य निष्प्रपञ्चपरश्रुतिविरोधात्, नैवमित्याह–तेष्वसतीति॥ १४॥

भामती ।–०

आनन्दगिरीय–न्यायनिर्णयः ।

विचार्य तत्सर्वं त्रिविधं मे मम प्रोक्तं ब्रह्मैवेति जानीयादित्यर्थः । उक्तवाक्यार्थमाह–समस्तस्येति ॥ १३॥ उत्तरसूत्रव्यावर्त्यां शङ्कामाह–कथमिति । श्रुतीनां तुल्यत्वाद्ब्रह्मणो निर्विशेषत्वे नियामकं नास्तीत्यर्थः । 'तत्परातत्परविरोधे तत्परं बलवत्' इति न्यायं नियामकं वदन्ननन्तरसूत्रमवतारयति–अत इति । तत्र प्रतिज्ञां विभजते–रूपादीति । प्रश्नद्वारा नियामकमुक्त्वा विवृणोति–कस्मादित्यादिना । एतेषामपि तत्प्रधानत्वमुपास्तिविधिशेषत्वादसिद्धमित्याशंक्याऽऽह–इत्येतदिति । समन्वयाधिकरणमुपजीव्य फलितमाह–तस्मादिति । सप्रपञ्चवाक्यानामपि तुल्यं तत्प्रधानत्वमित्याशंक्याऽऽह–इतराणीति । तेषां वस्तुपरत्वाभावे हेतुमाह–उपासनेति । तेषामपि स्वशेष्यविरोधादुक्ता स्वार्थे मानतेत्याशंक्य पर्णमयीवाक्यवन्मानान्तरविरोधान्नैवमित्याह–तेष्विति । विरोधस्य तुल्यत्वात्कुतो निर्धारणेत्याशंक्याऽऽह–सतीति।उक्तहेतुक्तां विनिगमनामेवाभिनयति–येनेति॥ १४॥सूत्रान्तरं प्रश्नपूर्वकमवतारयति–का तर्हीति।

## प्रकाशवच्चावैयर्थ्यम् ॥ १५ ॥

यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसम्बन्धात्तेषु ऋजुवक्रादिभावं प्रतिपद्यमानेषु तद्भावमिव प्रतिपद्यते, एवं ब्रह्मापि पृथिव्याद्युपाधिसम्बन्धात्तदाकारतामिव प्रतिपद्यते । तदालम्बनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते । एवमवैयर्थ्यमाकारवद्ब्रह्मविषयाणामपि वाक्यानां भविष्यति, न हि वेदवाक्यानां कस्यचिदर्थवत्त्वं, कस्यचिदनर्थवत्त्वमिति युक्तं प्रतिपत्तुम् । प्रमाणत्वाविशेषात् ॥ नन्वेवमपि यत्पुरस्तात्प्रतिज्ञातं नोपाधियोगादप्युभयलिङ्गत्वं ब्रह्मणोऽस्तीति तद्विरुध्यते ॥ नेति ब्रूमः ॥ उपाधिनिमित्तस्य वस्तुधर्मतानुपपत्तेः । उपाधीनां चाविद्याप्रत्युपस्थापितत्वात् । सत्यामेव च नैसर्गिक्यामविद्यायां लोकवेदव्यवहारावतार इति तत्र तत्रावोचाम ॥ १५ ॥

## आह च तन्मात्रम् ॥ १६ ॥

आह च श्रुतिश्चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मा-

---

रत्नप्रभा ।

कल्पितद्वैतं सावकाशत्वाच्च सप्रपञ्चत्वश्रुतयो दुर्बला इत्याह—प्रकाशवच्चेति ॥ नन्वाकारवाक्यानामुपाधिकल्पितसर्वगन्धत्वादिनाऽर्थवत्त्वं किमिति वर्ण्यते, वैयर्थ्यमेवोच्यतां, तत्राह—न हि वेदवाक्यानामिति ॥ नन्वेवमपीति । उक्तरीत्योभयरूपत्वाङ्गीकारेण श्रुतीनां व्यवस्थितत्वेऽपीत्यर्थः ॥ उपाधीनां कल्पितत्वादौपाधिकस्य सत्यत्वानुपपत्तेर्न सत्यमुभयरूपत्वमिति पूर्वमुक्तम् । सम्प्रति सत्यं निर्विशेषत्वं, मिथ्या सविशेषत्वमित्युच्यत इत्युभयरूपत्वाङ्गीकारेऽपि न पूर्वापरविरोध इत्याह—नेति ब्रूम इति ॥ द्वैतस्य मिथ्यात्वे ज्ञानेन बाधादुपासनादिव्यवहारो न स्यादित्याशंक्य बाधात्प्रागेव स इत्याह—सत्यमिति ॥ १५ ॥ यतः श्रुतिश्चिन्मात्रमाह, अतश्च विशेषो मिथ्येति सूत्रार्थमाह—आह चेति ॥ सैन्धवघनः लवणपिण्डः ॥ १६ ॥ किञ्च श्रुतिस्मृत्योः परप्रतिषेधेन ब्रह्मोपदेशात् निष्प्रपञ्चं ब्रह्मेत्याह—

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

दृष्टान्तं व्याचष्टे—यथेति । चकारार्थं दार्ष्टान्तिकमाह—एवमिति । किमर्थो ब्रह्मणो निराकारस्याऽऽकारोपदेशस्तत्राऽऽह—तदिति । अवैयर्थ्यादित्यत्र प्रातिपदिकार्थमाह—एवमिति । निष्प्रपञ्चवाक्यविरोधाद्वैयर्थ्यमेव तेषां किं न स्यादित्याशंक्य प्रत्ययार्थमाह—न हीति । पूर्वापरविरोधं शंकते—नन्विति । एवमपीत्युक्तरीत्या श्रुतीनां व्यवस्थितत्वेऽपीत्यर्थः । औपाधिकमुभयलिङ्गत्वं वास्तवमुपेत्य विरोधः साध्यते किंवाऽविद्याकृतमिति विकल्प्याऽऽद्यं निराह—नेतीति । वस्तुधर्मत्वानुपपत्तेर्वस्तुनो धर्मः सत्यत्वं तद्वत्तासिद्धेरिति यावत् । इतश्च नोपाधिकृतनानात्वस्य सत्यतेत्याह—उपाधीनां चेति । न तेषामाविद्यत्वं शास्त्रतस्तद्धियं विना तद्विशिष्टोपास्त्ययोगादित्याशंक्य तत्त्वावेदकमानाद्ब्रह्मज्ञाने तदज्ञानध्वस्तेरुपास्त्यादिव्यवहारस्यापि निरवकाशत्वादुपाधीनां व्यावहारिकसत्त्वेऽपि न तात्त्विकतेत्याह—सत्यामिति । आविद्यकं तु नानात्वं न विरोधहेतुस्तस्य पूर्वमपि सर्वव्यवहारहेतोरुपगतेरिति मत्वाऽऽह—तत्रतत्रेति ॥ १५ ॥ कीदृशं तर्हि निर्विशेषं ब्रह्म तत्रोक्तम्—आहेति । तद्विभजते—आह चेति । मात्रचोऽर्थमाह—विलक्षणेति । काऽसौ श्रुतिस्तामाह—स यथेति । एकरसे चिन्मात्रे स दृष्टान्तो यथा येन प्रकारेण । लोके सैन्ध-

ऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" [ बृ० ४ । ५ । १३ ] इति ॥ एतदुक्तं भवति । न तस्यात्मनोऽन्तर्बहिर्वा चैतन्यादन्यद्रूपमस्ति । चैतन्यमेव तु निरन्तरमस्य स्वरूपम् । यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति, न रसान्तरं, तथैवायमपीति ॥ १६ ॥

## दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

दर्शयति च श्रुतिः पररूपप्रतिषेधेनैव ब्रह्म निर्विशेषम् "अथात आदेशो नेतिनेति" [बृ०२ । ३ । ६] "अन्यदेव तद्विदितादथो अविदितादधि" [ केन० ३ ] "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" [ तैत्ति० २ । ४ । १ ] इत्येवमाद्या ॥ बाष्कलिना च बाध्वः पृष्टः सन्नवचनेनैव ब्रह्म प्रोवाचेति श्रूयते—"स होवाचाधीहि भगवो ब्रह्मेति स तूष्णीं बभूव, तं ह द्वितीये वा तृतीये वा वचन उवाच—ब्रूमः खलु। त्वं तु न विजानासि। उपशान्तोऽयमात्मा" इति ॥ तथा स्मृतिष्वपि परप्रतिषेधेनैवोपदिश्यते—"ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते । अनादिमत्परं ब्रह्म न सत्तन्नाऽसदुच्यते" [ भ० गी० १३ । १२ ] इत्येवमाद्यासु ॥ तथा विश्व-

---

रत्नप्रभा ।

दर्शयति चेति ॥ अथ द्वैतोक्त्यनन्तरं ज्ञानहेतुत्वात "नेतिनेति" उपदेशः क्रियत इत्यर्थः । अधि अन्यत् । पुनःपुनरधीहि भो इति निर्बन्धकारिणं तं द्वितीये च प्रश्ने तूर्ष्णीभावं त्यक्त्वा उवाच । उपशान्तः निरस्तद्वैतः। अतस्तस्य तूष्णींभाव एवोत्तरमिति। सौत्रश्चाऽथोशब्दः—तथार्थकः। आदिमत्कार्यं तन्न भवतीति अनादिमत्। सद् इन्द्रियवेद्यम् । असत् परोक्षं च न । स्वप्रकाशत्वादित्यर्थः । सर्वभूतगुणैर्दिव्यगन्धादिभिर्युक्तं मां मूर्तिमन्तं पश्यसीति यत्, सा माया । अत एवं सद्वैतो भगवानिति मां

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

वस्य घनो मूर्तिविशेषः खिल्यभावोऽन्तर्बहिर्भेदशून्यः सर्वो लवणैकरसस्तथैवायमात्माऽन्तर्बहिर्विभागरहितः समस्तोऽपि प्रकृष्टज्ञप्त्यैकतानस्तिष्ठतीत्यर्थः । सविशेषस्यैव सैन्धवघनस्य दृष्टान्तितत्वाद्दार्ष्टान्तिकस्यापि ब्रह्मणः सविशेषत्वं दृष्टान्तदार्ष्टान्तिकयोरैकरूप्यादित्याशंक्याऽऽह—एतदिति ॥ १६ ॥ अन्यापोहमुखेन बोध्यमानत्वादपि स्वगतविशेषशून्यं ब्रह्म विशेषवत्त्वे तदुक्त्याऽपि प्रतिपादनसिद्धावितरव्यावृत्तिवैयर्थ्यादित्याह—दर्शयतीति । सूत्रं व्याचष्टे—दर्शयतीत्यादिना । अन्यनिषेधेनैव ब्रह्मोक्तौ स्वगतविशेषाभावे हेतुमाह—निर्विशेषत्वादिति । रूपद्वयव्याख्यानन्तर्यमथशब्दार्थः । तस्य ब्रह्मधीहेतुत्वमतः शब्दार्थः । विदितं कार्यमविदितं कारणम् । अथो इति निपातोऽप्यर्थः । अधीत्युपरिष्टादन्यदित्यर्थः । तमानन्दं ब्रह्मस्वभावं विद्वान्न कुतश्चन बिभेतीति शेषः । तत्रैव श्रुत्यन्तरमाह—बाष्कलिनेति । स तु प्रश्ने कृते बाध्वस्य तूष्णींभावे भावमविद्वान्भूयोभूयः पप्रच्छ तं पुनरतिनिर्बन्धकारिणं बाध्वो द्वितीये तृतीये वा प्रश्ने प्रत्युक्तवानित्याह—तं हेति । उक्तं चेदुत्तरं किमिति न मया ज्ञातं तत्राऽऽह—त्वं त्विति । कथं तूष्णींभाव एवोत्तरं तत्राऽऽह—उपशान्त इति । अथो इत्यादि व्याचष्टे—तथेति । सूत्रगताथोशब्दस्तथेत्यर्थे ज्ञेयः । उक्तिफलमाह—यदिति । ज्ञेयमेव विशिनष्टि—अनादिमदिति । आदिरस्यास्तीत्यादिमत्कार्यं तदस्य नास्तीत्यनादिमत्कार्यरहितमित्यर्थः । स्वयं च न कार्यमित्याह—न सदिति । न च तत्कारणमित्युक्तम्—नासदिति । तथा वास्तवनिर्विशेषत्ववशेनेति यावत् । सर्वेषां भूतानां पृथि-

रूपधरो नारायणो नारदमुवाचेति स्मर्यते-"माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद। सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि" इति॥ १७॥

## अत एव चोपमा सूर्यकादिवत् ॥ १८॥

यत एव चायमात्मा चैतन्यस्वरूपो निर्विशेषो वाङ्मनसातीतः परप्रतिषेधेनोपदेश्योऽत एव चास्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्यकादिवदित्युपमोपादीयते मोक्षशास्त्रेषु-"यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवक्षेत्रेष्वेवमजोऽयमात्मा" इति। "एक एव तु भूतात्मा भूते-भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवद्" [ ब्रह्मबि० १२ ] इति चैवमादिषु॥ १८॥ अत्र प्रत्यवस्थीयते-

## अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९॥

न जलसूर्यादितुल्यत्वमिहोपपद्यते। तद्वदग्रहणात्। सूर्यादिभ्यो हि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं जलं गृह्यते। तत्र युक्तः सूर्यादिप्रतिबिम्बोदयः, न त्वात्मा मूर्तः। न चास्मात्पृथग्भूता विप्रकृष्टदेशाश्चोपाधयः। सर्वगतत्वात् सर्वानन्यत्वाच्च॥ तस्मादयुक्तोऽयं दृष्टान्त इति॥ ॥ १९॥ अत्र प्रतिविधीयते—

---

रत्नप्रभा।

द्रष्टुं नार्हसि। वस्तुतो द्वैतातीतत्वादित्यर्थः॥ १७॥ **किञ्च, यथा**-जलाद्युपाधिकल्पितः सूर्यचन्द्रादेर्भेदचलनादिः धर्मः, एवमात्मन इति दृष्टान्तश्रुतेश्च निर्विशेषं तत्त्वमित्याह—**अत एव चोपमेति**॥ जलस्थप्रतिबिम्बस्याकारेण सूर्यस्याऽऽभासत्वद्योतनाय सूर्यकेति कप्रत्ययः। यथा अयं ज्योतिर्मयो विवस्वान् स्वत एकोऽपि घटभेदेन भिन्नाः अपोऽनुगच्छन् बहुधा क्रियते, एवमजोऽयमात्मा देवः स्वप्रकाशः एकोऽप्युपाधिना मायया क्षेत्रेष्वनुगच्छन् भेदरूपः क्रियत इति **योजना**॥ १८॥ इष्टांत्मन्युक्तदृष्टान्तवैषम्यशङ्कासूत्रम्—**अम्बुवदिति**॥ आत्मनो नीरूपत्वाद्, दूरस्थोपाध्यभावाच्च,-मायया

भामती।-०

आनन्दगिरीय-न्यायनिर्णयः।

व्यादीनां गुणा गन्धादयः सर्वप्राणभृतां वा गुणा जनकत्वपालकत्वादयस्तैर्युक्तं मां पश्यसीति यदेतदेषा माया मया सृष्टेति योजना। कस्मादेषा मायेत्युक्ते निर्विशेषश्रुतिमाश्रित्याऽऽह—**नैवमिति**॥ १७॥ विशिष्टदृष्टान्तोक्तिरपि निर्विशेषत्वमस्य गमयतीत्याह—**अत इति**। सूत्राक्षराणि व्याचष्टे—**यत इति**। पूर्वोक्तसर्वरूपाण्युपादाय विशेषणानि। उपाधिनिमित्तत्वे विशेषवत्तायाः सत्यत्वं शंकित्वोक्तमपारमार्थिकीमिति जलसूर्यकादिवदिति कप्रत्ययो बिम्बाद्भेदेन प्रतिबिम्बस्याऽऽभासत्वधिया प्रयुक्तः। तान्येव मोक्षशास्त्राणि संक्षिप्याऽऽह—**यथेति**। अयं हि विवस्वाञ्ज्योतिःस्वभावः स्वयमेकोऽपि तत्तत्पात्रगता भिन्ना अपोऽनुगच्छन्बहुधा क्रियते। एवमयमात्मा तत्तत्क्षेत्रेष्वनुगच्छन्कूटस्थस्वप्रकाशचिद्धातुरेकोऽपि सन्नुपाधिना भेदरूपः क्रियत इति योजना। आदिशब्दोपात्तं जलचन्द्रकोपमानं दर्शयति—**एक एवेति**॥ १८॥ उत्तरसूत्रमवतारयति—**अत्रेति**। श्रौतः स्मार्तश्च दृष्टान्तः सप्तम्यर्थः। न तथात्वमिति व्याचष्टे—**नेत्यादिना**। इहेत्यात्मोक्तिः। हेतुमवतार्य तद्वदग्रहणं दर्शयितुं दृष्टान्तस्वरूपमाह—**सूर्यादिभ्यो हीति**। दार्ष्टान्तिके तद्वैषम्यमाह—**न त्विति**। उपाधीनामात्मनो विप्रकृष्टदेशत्वाभावे हेतुमाह—**सर्वगतत्वादिति**। तेषां तस्मात्पृथग्भूतत्वाभावे हेतुमाह—**सर्वेति**। वैषम्यफलमाह—**तस्मादिति**॥ १९॥ चोद्यमनूद्य सिद्धान्तयति—**अत्रेति**। दृष्टान्तदार्ष्टान्तिकयोर्विवक्षितांशेन वा सर्वात्मना वा साम्यं तत्राऽऽद्यमङ्गीक-

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्॥ २० ॥

युक्त एव त्वयं दृष्टान्तः। विवक्षितांशसम्भवात्। न हि दृष्टान्तदार्ष्टान्तिकयोः क्वचित्किञ्चिद्विवक्षितमंशं मुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं शक्यते। सर्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात्। न चेदं स्वमनीषया जलसूर्यकादिदृष्टान्तप्रणयनम्। शास्त्रप्रणीतस्य त्वस्य प्रयोजनमात्रमुपन्यस्यते—किं पुनरत्र विवक्षितं सारूप्यमिति॥ यदुच्यते—वृद्धिह्रासभाक्त्वमिति। जलगतं हि सूर्यप्रतिबिम्बं—जलवृद्धौ वर्द्धते, जलह्रासे ह्रसति, जलचलने चलति, जलभेदे भिद्यते,—इत्येवं जलधर्मानुविधायि भवति, न तु परमार्थतः सूर्यस्य तथात्वमस्ति। एवं परमार्थतोऽविकृतमेकरूपमपि सद्ब्रह्म देहाद्युपाध्यन्तर्भावाद्भजत इवोपाधिधर्मान्वृद्धिह्रासादीन्। एवमुभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोधः॥२०॥

## दर्शनाच्च ॥ २१ ॥

दर्शयति च श्रुतिः—परस्यैव ब्रह्मणो देहादिषूपाधिषु अन्तरनुप्रवेशम्

---

रत्नप्रभा।

बुद्ध्यादिषु प्रतिबिम्बभेदो न युक्त इत्यर्थः॥ १९॥ उपाध्यन्तर्भावेण तत्कल्पितधर्मवत्त्वमत्र विवक्षितांशः। तेन साम्येन समाधानसूत्रम्—**वृद्धिह्रासेति**॥ दृष्टान्तसाम्येऽपि नीरूपात्मनः प्रतिबिम्बम्। स्वबुद्ध्या कथं कल्प्यत इत्याह—**न चेदमिति**॥ श्रूयते, न कल्प्यत इत्यर्थः॥ श्रुतदृष्टान्तस्य "सूर्यकादिवद्" [ब्या० सू० ३।२।१८] इत्युपन्यासेन किं फलमित्यत आह—**शास्त्रेति**॥ आत्मनो निर्विशेषत्वं फलमित्यर्थः॥ **अविरोध इति**। न वैषम्यमित्यर्थः। आत्मा, प्रतिबिम्बशून्यः, नीरूपद्रव्यत्वाद्, वायुवदित्यनुमाने आकाशे व्यभिचारः। अल्पजले विदूराकाशप्रतिबिम्बदर्शनादुपाधिदूरस्थत्वमपि क्वचिदनपेक्षितमिति भावः॥ २०॥ प्रवेशश्रुतेश्चोक्तानुमानबाध इत्याह सूत्रकारः—**दर्शनाच्चेति**॥ **द्विपदः पुरः** मनुष्यादिदेहांश्चक्रे। **चतुष्पदः पुरः** पशून् कृत्वा **पुरः** चक्षुराद्यभिव्यक्तेः पुरस्तात् **सः** ईश्वरः पक्षी लिङ्गशरीरी भूत्वा पुर उक्तानि शरीराणि आविशत्। स च प्रविष्टोऽपि पुरुषः पूर्ण एवेत्यर्थः। तैत्तिरीयके लिङ्गस्य पक्षाद्युक्तेः पक्षित्वं मन्तव्यम्॥ एवं प्रतिबिम्बभावेन भेदादेः कल्पितत्वात् निर्वि-

भामती।–०

आनन्दगिरीय–न्यायनिर्णयः।

रोति–**युक्त इति**। द्वितीयं निराह–**न हीति**। उपाधेर्भिन्नत्वं भिन्नदेशत्वं च दृष्टान्ते दृष्टमिह तदभावाद्रूपशून्यत्वाच्च ब्रह्मणो न प्रतिबिम्बं कल्प्यमित्याशंक्याऽऽह–**न चेति**। शास्त्रीये दृष्टान्ते किं सूत्रेणेत्याशङ्क्याऽऽह–**शास्त्रेति**। प्रयोजनमात्मनो निर्विशेषत्वज्ञानम्। विवक्षितांशेन साम्येऽपि सर्वात्मना साम्यमतिप्रसङ्गीत्युक्तमिदानीमाकांक्षापूर्वकं सूत्रमादाय विभजते—**किमित्यादिना**। वृद्धिह्रासेत्यादि व्याख्यायावशिष्टं व्याचष्टे–**एवमिति**। अविरोधस्तद्भावस्येति शेषः॥ २०॥ ब्रह्म न प्रतिबिम्बभावं गन्तुमलमूर्तत्वाद्गन्धवदित्यत्राप्रयोजकत्वमुक्त्वा दोषान्तरमागमविरोधमाह–**दर्शनाच्चेति**। सूत्रं विवृणोति–**दर्शयतीति**। द्विपदोपलक्षितानि मनुष्यादिशरीराणि। चतुष्पदोपलक्षितानि च पश्वादिशरीराणि। पुरश्चक्रे पुरश्चक्षुराद्यभिव्यक्तेः पुरस्तादेव स स्रष्टेश्वरः पक्षी लिंगशरीरी भूत्वा पुरस्तान्येव सृष्टानि शरीराण्याविशत्प्रविष्टवान्। स च वस्तुवृत्त्या पुरुषः पूर्णस्तदतिरिक्तवस्त्वभावादित्यर्थः। प्रतिबिम्बपक्षस्य श्रुति-

"पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशद्" ॥ [बृ० २ । ५ । १४] इति, "अनेन जीवेन नात्मनानुप्रविश्य" [ छां० ६ । ३ । ५ ] इति च । तस्माद्युक्तमेतत "अत एव चोपमासूर्यकादिवद्" इति । तस्मान्निर्विकल्पकैकलिङ्गमेव ब्रह्म, नोभयलिङ्गं विपरीतलिङ्गं चेति सिद्धम् ॥ अत्र केचिद् द्वे अधिकरणे कल्पयन्ति-प्रथमं तावत्-किं प्रत्यस्तमिताशेषप्रपञ्चमेकाकारं ब्रह्म-उत-प्रपञ्चवदनेकाकारोपेतमिति । द्वितीयं तु स्थिते प्रत्यस्तमितप्रपञ्चत्वे किं सल्लक्षणं ब्रह्म-उत-बोधलक्षणम्-उत-उभयलक्षणमिति ॥ अत्र वयं वदामः ॥ सर्वथाप्यानर्थक्यमधिकरणान्तरारम्भस्येति । यदि तावदनेकलिंगत्वं परस्य ब्रह्मणो निराकर्तव्यमित्ययं प्रयासः, तत्पूर्वेणैव "न स्थानतोऽपि-" [ व्या० सू० ३ । २ । ११ ] इत्यनेनाधिकरणेन निराकृतमित्युत्तरमधिकरणं "प्रकाशवच्च" [ व्या० सू० ३ । २ । १५ ] एतद्व्यर्थमेव भवेत् । न च

रत्नप्रभा ।

शेषं ब्रह्मेति स्वमतमुपसंहरति-तस्मादिति ॥ एकदेशिव्याख्यामुत्थापयति-अत्रेति॥ "न स्थानतोऽपि" [ व्या० सू० ३ । २ । ११ ] इत्यादि एकमधिकरणम् । तत्र ब्रह्मणो निष्प्रपञ्चत्वे स्थिते किंलक्षणं ब्रह्मेति सन्देहे "प्रकाशवच्च" [व्या० सू० ३।२।१५ ] इत्यादिद्वितीयमधिकरणं प्रवृत्तम् । न सद्रूपमेव ब्रह्म,किन्तु प्रकाशवच्च चिद्रूपं च। कुतः। अवैयर्थ्यात्। "सत्यं ज्ञानम्"[ तै० उ०२।१।१]"सदेव सोम्य" इत्युभयश्रुतेर्हि रूपे ब्रह्मणि अर्थवत्त्वादिति पूर्वपक्षे सिद्धान्तः । "आह च तन्मात्रम्"[ व्या० सू०३।२।१६ ] सन्मात्रं ब्रह्म श्रुतिराह । ज्ञानस्य सत्तानतिरेकादिति । इदं द्वितीयाधिकरणं दूषयति-अत्र वयमिति ॥ द्वितीयाधिकरणस्य किं ब्रह्मणोऽनेकरूपत्वनिरासः फलम्-उत-बोधरूपत्वनिरासः-आहोस्वित्-सत्तानिरास इति विकल्प्य सर्वथाप्यानर्थक्यं प्रपञ्चयन्-आद्ये-गतार्थतामाह-यदि तावदिति ॥ न द्वितीयः इत्याह-न चेति ॥ ब्रह्मणो बोधरूपत्वनिरासे जडत्वाज्जीवाभेदश्रुतिबाधश्च स्यादित्याह-

भामती ।

विशेषाश्च सर्वगन्धत्वबामनीत्वादय उपाधिवशादध्यस्ता इति सिद्धम् । शेषमतिरोहितार्थम् ॥ ११ ॥ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ अत्र केचिद् द्वे अधिकरणे कल्पयन्तीति । किं सल्लक्षणं च प्रकाशलक्षणं च ब्रह्म, किं सल्लक्षणमेव ब्रह्म,उत प्रकाशलक्षणमेवेति तत्र पूर्वपक्षं गृह्णाति-प्रकाशवच्चावैयर्थ्यात् । चकारात्सच्च । अवैयर्थ्यात् । ब्रह्मणि सच्छ्रुतेः सिद्धान्तयति-आह

आनन्दगिरीय-न्यायनिर्णयः ।

मूलत्वे फलितमाह-तस्मादिति । स्वसिद्धान्तमुपसंहरति-तस्मान्निर्विकल्पेति । स्वमतेनाधिकरणमुक्त्वा स्वयूथ्यमतमुत्थापयति-अत्रेति । व्याख्यातेषु सूत्रेष्विति यावत् । न स्थानतोऽपीत्यादि प्रकाशवच्चेत्यतः प्रागेकमधिकरणं तद्गतं विचारं दर्शयति-प्रथममिति । प्रकाशवच्चेत्यादि द्वितीयमधिकरणं तत्रत्यं विचारमाह-द्वितीयं त्विति । तत्र पूर्वपक्षसूत्रं प्रकाशवच्चेति । न केवलं सद्रूपमेव ब्रह्म किंतु 'चैतन्यप्रकाशवच्च' 'सत्यं ज्ञानं सदेव' इत्युभयश्रुतेः । एवं सत्यवैयर्थ्यात्सिद्धान्तसूत्रमाह चेति । 'सत्त्वं चैतन्यप्रकाशमात्रं सदेव विज्ञानमानन्दम्' इत्याद्या श्रुतिराह, तत्र ब्रह्मणो नानारसत्वाशंकेत्यर्थः । द्वितीयमधिकरणं दूषयति-अत्रेति । सर्वथाऽपि फलस्य संदेहस्य च भावेऽपीत्यर्थः । कथं फलस्य भावे वैयर्थ्यमित्याशंक्य तत्किमनेकरूपत्वनिराकरणं किंवा सन्मात्रत्वसाधनमथ वा बोधमात्रत्वबोधनमिति विकल्प्याऽऽद्यं दूषयति-यदीति । द्वितीयं निरस्यति-न चेति । न केवलं श्रुतिविरोधोऽपि तु श्रुतार्थापत्तिविरोधश्चे-

सल्लक्षणमेव ब्रह्म, न बोधलक्षणमिति शक्यं वक्तुम् । विज्ञानघन एवेत्यादिश्रुतिवैयर्थ्यप्रसंगात् । कथं वा निरस्तचैतन्यं ब्रह्म चेतनस्य जीवस्यात्मत्वेनोपदिश्येत । नापि बोधलक्षणमेव ब्रह्म, न सल्लक्षणमिति शक्यं वक्तुम् । "अस्तीत्येवोपलब्धव्यः" [ कठ० ६ । १३] इत्यादिश्रुतिवैयर्थ्यप्रसंगात । कथं वा निरस्तसत्ताको बोधोऽभ्युपगम्येत । नाप्युभयलक्षणमेव ब्रह्मेति शक्यं वक्तुम् पूर्वाभ्युपगमविरोधप्रसंगात् । सत्ताव्यावृत्तेन च बोधेन, बोधव्यावृत्तया च सत्तयोपेतं ब्रह्म प्रतिजानानस्य तदेव पूर्वाधिकरणप्रतिषिद्धं सप्रपञ्चत्वं ब्रह्मणः प्रसज्येत ॥ श्रुतत्वाददोष इति चेत ॥ न ॥ एकस्यानेकस्वभावत्वानुपपत्तेः ॥ अथ सत्तैव बोधः । बोध एव च सत्ता । नानयोः परस्परव्यावृत्तिरस्तीति यद्युच्येत, तथापि किं सल्लक्षणं ब्रह्म-उत-बोधलक्षणम्-उत-उभयलक्षणमित्ययं विकल्पो निरालम्बन एव स्यात । सूत्राणि त्वेकाधिकरणत्वेनैवास्माभिर्नीतानि ॥ अपि च ब्रह्मविषयासु श्रुतिष्वाकारवदनाकारप्रतिपादनेन विप्रतिपन्ना-

---

रत्नप्रभा ।

कथं वेति ॥ न तृतीयः-इत्याह-नापीति ॥ सत्तानिरासे बोधस्य तुच्छत्वं च स्यादित्याह-कथमिति॥ न च बोधस्य सत्तानतिरेकान्न तुच्छतेति वाच्यम् । सद्बोधपदयोर्वाच्यानतिरेके पर्यायत्वप्रसङ्गात् ॥ एवं सिद्धान्तं फलाभावेन दूषयित्वा पूर्वपक्षं दूषयति-नापीति ॥ प्रसङ्गमेवाह-सत्तेति ॥ व्यावृत्तत्वं भिन्नत्वम् । निष्प्रपञ्चैकरूपत्वसिद्धान्तविरोधात भिन्नोभयरूपत्वपूर्वपक्षानुत्थानमित्यर्थः ॥ उभयश्रुतिबलादुत्थानमिति शङ्कते-श्रुतत्वादिति ॥ मेरुविन्ध्यवत परस्परं भिन्नसत्ताबोधयोरेकब्रह्माभेदशङ्का श्रुतिशतेनापि न युक्तेत्याह-नेति ॥ सद्बोधयोर्भेदोऽस्ति न वा? आद्ये-श्रुतेरपि विरुद्धार्थत्वानुपपत्तेर्न पूर्वपक्षोत्थानमित्युक्तम् । सम्प्रति द्वितीयम्-शङ्कते-अथ सत्तैवेति ॥ सद्बोधपदयोर्वाच्यभेदेऽपि लक्ष्यैक्योपपत्तिः । अखण्डार्थस्वीकारादित्यर्थः । अखण्डार्थस्य पूर्वपक्षत्वं न स्यात् सिद्धान्तत्वात ॥ किञ्चात्र संशयोऽप्ययुक्त इत्याह-तथापीति ॥ एकाधिकरणपक्षे सूत्राणि कथं नेयानीत्यत आह-सूत्राणीति ॥ स्वपक्षे सूत्रसामञ्जस्यं चेत्याह-अपि चेति ॥ अवश्यापेक्षितगत्यर्थत्वेनोत्तरसूत्राणां पूर्वैकवाक्यत्वान्नाधिकरणभेद इति भावः । आकारश्रुतीनां कल्पिताकारो गतिरिति स्वमतमुक्तम् । प्रपञ्चविलयवादिनस्तु

भामती ।

च तन्मात्रम् । प्रकाशमात्रम् । न हि सत्त्वं नाम प्रकाशरूपादन्यत्, यथा सर्वगन्धत्वादयोऽपि तु

आनन्दगिरीय-न्यायनिर्णयः ।

त्याह-कथं वेति । एतेन पूर्वपक्षासिद्धिरुक्ता । तृतीयं प्रत्याह-नापीति । श्रुतिविरोधवद्युक्तिविरोधश्चास्तीत्याह-कथमिति । सतो व्यावृत्तस्य तुच्छत्वादित्यर्थः । एतेन सिद्धान्तासिद्धिरुक्ता । पूर्वपक्षान्तरमपि परस्यायुक्तं पूर्वाधिकरणविरोधादित्याह-नापीति । प्रसंगमेव प्रपञ्चयति-सत्तेति । तद्व्यावृत्तत्वं तद्विशेषितत्वम् । श्रुत्यवष्टम्भेन पूर्वपक्षसिद्धिं शंकते-श्रुतत्वादिति । विरुद्धमर्थं श्रुतिरपि न वदेदतो न तदवष्टम्भादुभयात्मता शंकनीयेत्याह-नैकस्येति । विरोधं परिहर्तुं वाक्यार्थस्याखण्डतां चोदयति-अथेति। वाक्यार्थाखण्डत्वमुपेत्य परस्य संशयानुपपत्तिमाह-तथाऽपीति । एकाधिकरणत्वे सूत्राणामसांगत्याद्भिन्नाधिकरणत्वमाशंक्याऽऽह-सूत्राणीति । इतश्च नाधिकरणभेदोऽस्तीत्याह-अपि चेति । पूर्वाधिकरणापेक्षितहेत्वन्तरवादित्वेनोत्तरसूत्राणां तच्छेषत्वसिद्धेर्न भेदकल्पनेति हेत्वन्तरमेव स्फुटयति-ब्रह्मेति ।

स्वनाकारे ब्रह्मणि परिगृहीते–अवश्यंवक्तव्येतरासां श्रुतीनां गतिः । तादर्थ्येन "प्रकाशवच्च" [ व्या० सू० ३ । २ । १५ ] इत्यादीनि सूत्राण्यर्थवत्तराणि सम्पद्यन्ते ॥ यदप्याहुः–आकारवादिन्योऽपि श्रुतयः प्रपञ्चप्रविलयमुखेनाऽनाकारप्रतिपत्त्यर्था एव, न पृथगर्था इति; तदपि न समीचीनमिव लक्ष्यते॥ कथम्॥ ये हि परविद्याधिकारे केचित्प्रपञ्चा उच्यन्ते–"यथा युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयोऽयं वै दश च शतानि सहस्राणि बहूनि चानन्तानि च" [ बृ० २ । ५ । १९ ] इत्येवमादयः, ते भवन्तु प्रविलयार्थाः । "तदेतद्ब्रह्माऽपूर्वमनपरमनन्तरमबाह्यम्" [ बृ० २ । ५ । १९ ] इत्युपसंहारात् । ये पुनरुपासनाधिकारे प्रपञ्चा उच्यन्ते–"यथा मनोमयः प्राणशरीरो भारूपः" [ छां० ३ । १४ । २ ] इत्येवमादयः, न तेषां प्रविलयार्थत्वं न्याय्यम् । "स क्रतुं कुर्वीत" [ छां० ३ । १४ । १ ] इत्येवंजातीयकेन प्रकृतेनैवोपासनविधिना तेषां सम्बन्धात् । श्रुत्या चैवंजातीयकानां गुणानामुपासनार्थत्वेऽवकल्प्यमाने न लक्षणया

रत्नप्रभा ।

"मनोमयः प्राणशरीरः सत्यकामः" [ छां० ३ । १४ । २ ] इत्याद्याकारश्रुतीनां तदितराकारप्रविलयो गतिरित्याहुः ॥ मनोमय इति–कोऽर्थः । मनोऽतिरिक्तोपाधिशून्य इत्यर्थः । एवं प्राणशरीरपदेन प्राणातिरिक्तोपाधिनिषेधान्मनसोऽप्यभावसिद्धिः । एवं सर्वे शब्दा अनाकारब्रह्मपरा एवेति तन्मतमनूद्य दूषयति–यदपीत्यादिना ॥ किं ज्ञेयब्रह्मप्रकरणस्थानामाकारशब्दानां निषेधपरत्वम् उत उपासनाप्रकरणस्थानामपि । तत्र आद्यम् अङ्गीकरोति–ये हीति ॥ अस्य जीवभावं प्राप्तस्येश्वरस्य । दश हरयः विषयाः हरणाद्दशेन्द्रियाणि । प्राणिभेदापेक्षया शतानि सहस्राणि च । तेषामीश्वराद्भेदमाशंक्याह–अयमिति ॥ ईश्वर एव हरय इत्यर्थः ॥ द्वितीयं–दूषयति–ये पुनरिति ॥ मनोमयादिशब्दानां मुख्यवृत्त्या गुणपरत्वसम्भवे निषेधलक्षणापि न युक्तेत्याह–श्रुत्या चेति ॥ किञ्चाकारानाकारश्रुतिद्वैविध्ये सति ब्रह्मानाकारमेवेत्यत्र किं विनिगमकमिति शङ्कोत्थानादस्थूलादिश्रुतीनां निराकारतात्पर्यं नियामकमिति कथनार्थमिदं सूत्रमर्थवद् भवति । सर्वश्रुतीनां निषेधार्थत्वे तु शङ्कानुत्थानात् नियामकसूत्रं

भामती ।

प्रकाशरूपमेव सदिति नोभयरूपत्वं ब्रह्मण इत्यर्थः । तदेतदनेनोपन्यस्य दूषितम् । सत्ताप्रकाशयोरेकत्वे नोभयलक्षणत्वम् । भेदे न स्थानतोऽपीति निराकृतमिति नाधिकरणान्तरं प्रयोजयति । परमार्थतस्त्वभेद

आनन्दगिरीय–न्यायनिर्णयः ।

आकारवद्ब्रह्मवादिश्रुतीनां प्रकारान्तरेण गतिरिति मतमनुवदति–यदपीति । प्रपञ्चप्रविलयपक्षं दूषयति–तदपीति । सर्वश्रुतीनामेकवाक्यत्वसंभवे किमिति तदसमीचीनतेति पृच्छति–कथमिति । परविद्याप्रकरणस्थानामाकारवद्ब्रह्मवादिश्रुतीनामेकवाक्यत्वं किं वोपास्तिप्रकरणस्थानामथ वा सर्वासां तत्राऽऽद्यमंगीकरोति–ये हीति। यथा रथे वाजिनो युज्यन्ते तथाऽस्याऽऽत्मनः संयुक्ताः स्वविषयप्रकाशनाय हरयो हरणादिन्द्रियाणि दश प्राणिभेदापेक्षया च शताः शतानीत्युपक्रम्याऽऽत्मनश्चेन्द्रियाणां च भेदं शंकित्वोक्तमयमित्यादि । तेषां प्रविलयद्वारा ब्रह्मवाक्येनैकवाक्यत्वे हेतुमाह–तदेतदिति । द्वितीयं दूषयति–ये पुनरिति । तेषां लयार्थत्वेन ब्रह्मवाक्यैकवाक्यत्वाभावे हेतुमाह–स क्रतुमिति । किञ्च मनोमयादिवाक्यान्न साक्षाल्लयो भाति किन्तु लक्षयितव्यः । न च श्रुतित्यागेन लक्षणा श्रुतेर्बलीयस्त्वादित्याह–श्रुत्या चेति ।

प्रविलयार्थत्वमवकल्प्यते । सर्वेषां च साधारणे प्रविलयार्थत्वे सति "अरूपवदेव हि तत्प्रधानत्वाद्" [ व्या० सू० ३ । २ । १४ ] इति विनिगमनकारणवचनमनवकाशं स्यात् । फलमप्येषां यथोपदेशं क्वचिद् दुरितक्षयः, क्वचिदैश्वर्यप्राप्तिः, क्वचित्क्रममुक्तिरित्यवगम्यत एवेति । अतः पार्थगर्थ्यमेवोपासनावाक्यानां, ब्रह्मवाक्यानां च,–न्याय्यं, नैकवाक्यत्वम् ॥ कथश्चैषामेकवाक्यतोत्प्रेक्ष्यत इति वक्तव्यम् । एकनियोगप्रतीतेः प्रयाजदर्शपूर्णमासवाक्यवदिति चेत् ॥ न ॥ ब्रह्मवाक्येषु नियोगाभावात् । वस्तुमात्रपर्यवसायीनि हि ब्रह्मवाक्यानि, न नियोगोपदेशीनीत्येतद्विस्तरेण प्रतिष्ठापितं "तत्तु समन्वयाद्" [ व्या० सू० १।१।४] इत्यत्र । किंविषयकश्चात्र नियोगोऽभिप्रेत इति वक्तव्यं, पुरुषो हि नियुज्यमानः कुर्विति स्वव्यापारे कस्मिंश्चिन्नियुज्यते ॥ ननु द्वैतप्रपञ्चप्रविलयो नियोगविषयो

---

रत्नप्रभा ।

व्यर्थं स्यादित्याह–सर्वेषाञ्चेति ॥ ननूपासनार्थवाक्यानां स्वार्थे फलाभावात् सफलनिषेधवाक्यशेषत्वमित्याशङ्क्य तस्य श्रुतत्वान्नान्यशेषतेत्याह–फलमपीति ॥ अर्थैक्याभावाच्च नैकवाक्यतेत्याह–कथञ्चेति ॥ अर्थैक्यं शंकते–एकेति ॥ यथा फलवत्परमापूर्वाख्यनियोगैक्यादङ्गप्रधानवाक्यानामेकवाक्यता, तथा तत्त्वाववोधकामस्य प्रपञ्चप्रविलयविषयकः एको नियोगरूपोऽर्थोऽस्तीत्याकारानाकारवाक्यानां सर्वेषामेकवाक्यतेत्यर्थः ॥ नियोगासिद्ध्या दूषयति–नेति ॥ विषयं शङ्कते–ननु द्वैतेति ॥ प्रत्यनीकं

भामती ।

एवं प्रकर्षप्रकाशवदिति।सर्वेषां च साधारणे प्रविलयार्थत्वे सति'अरूपवदेव हि तत्प्रधानत्वात्'इति विनिगमनकारणवचनमनवकाशं स्यात्।एवं हि तस्यावकाशः स्याद्यदि काश्चिदुपासनापरतया रूपमाचक्षीरन् काश्चिन्नीरूपब्रह्मप्रतिपादनपरा भवेयुः।सर्वासां तु प्रविलयार्थत्वेन नीरूपब्रह्मप्रतिपादनार्थत्वे उक्तो विनिगमनहेतुर्न स्यादित्यर्थः । एकनियोगप्रतीतेः प्रयाजदर्शपूर्णमासवाक्यवदित्यधिकाराभिप्रायम्, अनुब-

आनन्दगिरीय–न्यायनिर्णयः ।

तृतीयं प्रत्याह–सर्वेषां चेति । यदि हि काश्चिदपि श्रुतयोऽनाकारवादितयोपासनापराः स्युस्तदा सर्वासां लयार्थत्वेन निरूपणाद्ब्रह्मप्रधानत्वाविशेषादेता ध्यानविधिप्रधाना निष्प्रपञ्चप्रधानास्त्वेता इति विनिगमनं न स्यात्तथाच सूत्रं विरुध्येतेत्यर्थः । निष्प्रपञ्चवाक्येष्वेव फलश्रवणात्फलवत्संनिधावफलं तदङ्गमिति न्यायात्सप्रपञ्चवाक्यानां तदेकवाक्यतेत्याशंक्याऽऽह–फलमिति । उपास्तिफलेन फलवत्त्वादुक्तन्यायाविषयत्वमाकारवद्वाक्यानामिति स्थिते फलितमाह—इत्यत इति । एकवाक्यताहेत्वदृष्टेरपि नैकवाक्यतेत्याह–कथं चेति । हेतुत्वानुपलब्धिरसिद्धेति शंकते–एकेति । यद्यपि प्रयाजदर्शपूर्णमासवाक्ययोर्विषयानुबन्धभेदान्नियोगभेदस्तथाऽप्येकाधिकारनियोग इत्येकनियोगत्वम् । तथा तत्त्वाववोधकामस्यैको नियोगः सर्वत्रेत्येकवाक्यतेत्यर्थः । तत्त्वमादिवाक्येषु नियोगाभावादेकनियोगधीरसिद्धेति दूषयति–नेति । तेष्वपि कल्प्यतां नियोगोऽन्यथा प्रामाण्यायोगादित्याशंक्याऽऽह–वस्त्विति । विषयाभावाच्च न नियोगोऽत्रेत्याह–किमिति । नियोज्यावच्छिन्नो नियोगस्तस्य किंविषयेणेत्याशंक्याऽऽह—पुरुषो हीति । विषयोऽपि तर्हि नियोगावच्छेदकत्वेन कश्चित्कल्प्यतामित्याशंक्य द्वैतलयो वा स्याद्ब्रह्मज्ञानं वा तदविद्यानिवृत्तिर्वा तत्कार्यनिवृत्तिर्वेति विकल्प्याऽऽद्यमादत्ते–नन्विति । तत्त्वाववोधकामिनस्तत्त्वाववोधफलके विषये तदुपकारके वा नियोगो युक्तस्तस्मात्कथं प्रपञ्चलये स्यादित्याशंक्य

**भविष्यति। अप्रविलापिते हि द्वैतप्रपञ्चे ब्रह्मतत्त्वावबोधो न भवतीत्यतो ब्रह्मतत्त्वावबोधप्रत्यनीकभूतो द्वैतप्रपञ्चः प्रविलाप्यः। यथा स्वर्गकामस्य यागोऽनुष्ठातव्य उपदिश्यते, एवमपवर्गकामस्य प्रपञ्चप्रविलयः, यथा च तमसि व्यवस्थितं घटादितत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतं तमः प्रविलाप्यते, एवं ब्रह्मतत्त्वमवबुभुत्समानेन, तत्प्रत्यनीकभूतः प्रपञ्चः प्रविलापयितव्यः। ब्रह्मस्वभावो हि प्रपञ्चः, न प्रपञ्चस्वभावं ब्रह्म। तेन नामरूपप्रपञ्चप्रविलापनेन ब्रह्मतत्त्वावबोधो भवतीति॥ अत्र वयं पृच्छामः-कोऽयं प्रपञ्चप्रविलयो नाम। किमग्निप्रतापसम्पर्काद् घृतकाठिन्यप्रविलय इव प्रपञ्चप्रविलयः कर्तव्यः-आहोस्विद्-एकस्मिंश्चन्द्रे तिमिरकृतानेकचन्द्रप्रपञ्चवदविद्याकृते ब्रह्मणि नामरूपप्रपञ्चो विद्यया प्रविलापयितव्य इति। तत्र यदि तावद्विद्यमानोऽयं प्रपञ्चो देहादिलक्षण**

---

रत्नप्रभा।

प्रतिबन्धकम्॥ ननु प्रपञ्चविलये ब्रह्मलयः स्यादभेदादित्यत आह-**ब्रह्मस्वभावो हि प्रपञ्च इति**॥ कारणं हि कार्यस्य स्वरूपम्। अतः कार्यनाशेऽपि कारणस्य न लयः। घटनाशेऽपि मृद्दर्शनादित्यर्थः॥ प्रपञ्चस्य सत्यस्य, कल्पितस्य वा, लये विधिरिति विकल्प्य-आद्यं-दूषयति-**तत्र यदि तावदिति**॥

भामती।

न्धभेदात्तु भिन्नोऽनयोरपि नियोग इति। **कोऽयं प्रपञ्चप्रविलय इति**। वास्तवस्य वा प्रपञ्चस्य प्रविलयः सर्पिष इवाग्निसंयोगात्। समारोपितस्य वा रज्ज्वां सर्पभावस्येव रज्जुतत्त्वपरिज्ञानात्। न तावद्वास्तवः सर्वसाधारणः पृथिव्यादिप्रपञ्चः पुरुषमात्रेण शक्यः समुच्छेत्तुम्। अपि च प्रह्लादशुकादिभिः पुरुषधौरेयैः समूलमुन्मूलितः प्रपञ्च इति शून्यं जगद्भवेत्। न च वास्तवं तत्त्वज्ञानेन शक्यं समुच्छेत्तुम्। आरोपितरूपविरोधित्वात्तत्त्वज्ञानस्येत्युक्तम्। समारोपितरूपस्तु प्रपञ्चो ब्रह्मतत्त्वज्ञापनपरैरेव वाक्यैर्ब्रह्मतत्त्वमवबोधयद्भिः शक्यः समुच्छेत्तुमिति कृतमत्र विधिना। न हि विधिशतेनापि विना तत्त्वावबोधनं प्रवर्तस्वात्मज्ञान इति वा कुरु प्रपञ्चप्रविलयं वेति प्रवर्तितः शक्नोति प्रपञ्चप्रविलयं कर्तुम्। न चास्यात्मज्ञानविधिं विना वेदान्तार्थब्रह्मतत्त्वावबोधो न भवति। मौलिकस्य स्वाध्यायाध्ययनविधेरेव विवक्षितार्थतया सकलस्य वेदराशेः फलवदर्थावबोधनपरतामापादयतो विद्यमानत्वात्। अन्यथा कर्मविधि-

आनन्दगिरीय-न्यायनिर्णयः।

तदुपकारकत्वादित्याह-**अप्रविलापिते हीति**। काम्यमानतत्त्वावबोधोपकारकत्वे फलितमाह-**अत इति**। उक्तमर्थं वैदिकोदाहरणेन स्फुटयति-**यथेति**। स्वर्गं प्रति यागस्य साधनत्वात्तत्र नियोगेऽपि प्रकृते काम्यमानोपायत्वाभावात्कुतो नियोगः स्यादित्याशंक्य प्रतिबन्धनिवृत्तितया प्रपञ्चलयस्यानुष्ठेयत्वं लौकिकदृष्टान्तेन दर्शयति-**यथा चेत्यादिना**। तत्त्वज्ञानकामो द्वैतं प्रविलापयेदिति न नियोगो ब्रह्मणोऽपि तल्लये लयापातादित्याशंक्याऽऽह-**ब्रह्मेति**। न हि लोके कार्यनाशेऽपि कारणं नश्यत्यारोपितस्याधिष्ठानान्तर्भावेऽपि तस्य तदनन्तर्भावादिति भावः। नैयोगिके द्वैतलये फलितमाह-**तेनेति**। वेदान्तानां द्वैतलयनियोगनिष्ठत्वेनैकवाक्यत्वं शंकितं प्रत्याह-**अत्रेति**। प्रश्नमेव विशदयति-**कोऽयमिति**। किंशब्दोपात्तं पक्षद्वयं दर्शयति-**किमित्यादिना**। वास्तवस्यावास्तवस्य वा द्वैतस्य लयो नियोगविषयत्वेनेष्ट इति विकल्पार्थः। आद्यमनूद्य प्रत्याह-**यदीत्यादिना**। वस्तुनो ज्ञानादध्वस्तेर्मुसलादिना च कृत्स्नद्वैतनिवृत्त्ययोगान्नमोप्रमाननियोगवदयं नियोगः स्यादित्यर्थः। किंचानादौ संसारे

आध्यात्मिको, बाह्यश्च पृथिव्यादिलक्षणः,–प्रविलापयितव्य इत्युच्येत, स पुरुषमात्रेणाशक्यः प्रविलापयितुमिति तत्प्रलयोपदेशोऽशक्यविषय एव स्यात् । एकेन चादिमुक्तेन पृथिव्यादिप्रविलयः कृतः । इदानीं पृथिव्यादिशून्यं जगदभविष्यत ॥ अथाऽविद्याध्यस्तो ब्रह्मण्येकस्मिन्नयं प्रपञ्चो विद्यया प्रविलाप्यत इति ब्रूयात्, ततो ब्रह्मैवाविद्याध्यस्तप्रपञ्चप्रत्याख्यानेनावेदयितव्यम् "एकमेवाद्वितीयं ब्रह्म" [ छां० ६ । २ । १ ] "तत्सत्यं स आत्मा तत्त्वमसि" [ छां० ६ । ८ । ७–१६ ] इति । एवमावेदिते तस्मिन्विद्या स्वयमेवोत्पद्यते । तया चाविद्या बाध्यते । ततश्चाविद्याध्यस्तः सकलोऽयं नामरूपप्रपञ्चः स्वप्नप्रपञ्चवत्प्रविलीयते । अनावेदिते तु ब्रह्मणि ब्रह्मविज्ञानं कुरु, प्रपञ्चप्रविलयं चेति शतकृत्वोऽप्युक्ते, न ब्रह्मविज्ञानं, प्रपञ्चप्रविलयो वा,–जायेत ॥ नन्वावेदिते ब्रह्मणि तद्विज्ञानविषयः, प्रपञ्चविलयविषयो वा,–नियोगः स्यात् ॥ न ॥ निष्प्रपञ्चब्रह्मात्मतत्त्वावेदनेनैवोभयसिद्धेः । रज्जुस्वरूपप्रकाशनेनैव हि तत्स्वरूपविज्ञानमविद्याध्यस्तसर्पादिप्रपञ्चप्रविलयश्च भवति ॥ न च कृतमेव पुनः क्रियते । नियोज्योऽपि च प्रपञ्चावस्थायां योऽवगम्यते

---

रत्नप्रभा ।

सत्यस्य ज्ञानादध्वस्तेर्मुसलादिना च कृत्स्नद्वैतध्वंसायोगात् नभोग्रसनविधिवदशक्यविषयोऽयं विधिः ॥ किञ्च शुकादिमुक्त्या सर्वमुक्तिः स्यादित्यर्थः ॥ द्वितीयम् अनूद्य दूषयति–अथेत्यादिना ॥ उपदेशजन्यज्ञानादेवाविद्यातज्जन्यप्रपञ्चलयसिद्धेर्नियोगो वृथेत्यर्थः ॥ किञ्च ब्रह्मज्ञानादौ विधिः किं ब्रह्मण्यज्ञाते ज्ञाते वा । नाद्यः अशक्यत्वादित्याह–अनावेदिते त्विति ॥ द्वितीयं शङ्कते–नन्विति ॥ उपदेशादेव ज्ञाते ब्रह्मणि साक्षात्कारद्वैतबाधयोः सिद्धेर्विधिवैयर्थ्यम् । सिद्धस्य विधिना कर्तुमयोगादित्याह–नेति ॥ एवं विषयाभावात् नियोगाभावमुक्त्वा नियोज्याभावात् तदभावमाह–नियोज्योऽपि चेति ॥

भामती ।

वाक्यान्यपि विध्यन्तरमपेक्षेरन्निति । न च चिन्तासाक्षात्कारयोर्विधिरिति तत्त्वसमीक्षायामस्माभिरुपपा-

आनन्दगिरीय–न्यायनिर्णयः ।

कश्चित्प्रागितो मुक्तो न वा । तत्राऽऽद्येऽद्यतनपृथिव्याद्युपलब्धिर्विरुध्येत । द्वितीये शुकादिमुक्तिश्रुतिविरोधः । तस्याश्चार्थवादत्वेऽपि द्वारार्थे तात्पर्याविरोधादित्यनेकजीववादमुपेत्याऽऽह–एकेनेति । द्वितीयमुत्थापयति–अथेति । तर्हि द्वैतलये नियोगवैयर्थ्यमित्याह–तत इति । ब्रह्मतत्त्वज्ञापनेनैव तदविद्याकृतद्वैतलयात्तदेव वेदान्तैर्ज्ञापनीयं कृतमत्र नियोगेनेत्यर्थः । कथं तदावेदनं तदाह–एकमिति । मा तर्हि द्वैतलये नियोगोऽभूद्ब्रह्मज्ञाने तु स्यादिति द्वितीयमाशंक्याऽऽह–तस्मिन्निति । शब्दोक्ते ब्रह्मणि नियोगापेक्षां विना शब्दशक्तेरेव ज्ञानोत्पत्तेर्न तद्विषयोऽपि नियोगोऽस्तीत्यर्थः । उत्पन्ने ज्ञाने नान्तरीयकत्वेनाज्ञाननिवृत्तेर्न नियोगस्तत्रापीति तृतीयं प्रत्याह–तयेति । चतुर्थं निरस्यति–ततश्चेति । कारणाविद्यानिवृत्तेरिति यावत् । किंच, ब्रह्मज्ञानादौ नियोगो ब्रह्मण्यज्ञाते ज्ञाते वा तत्राऽऽद्यं दूषयति–अनावेदिते त्विति । द्वितीयमालम्बते–नन्विति । ब्रह्मणि शाब्दे तद्वशादेव नियोगादृते ब्रह्मज्ञानादिसिद्धेर्नियोगवैयर्थ्यमित्याह–नेत्यादिना । तदेव दृष्टान्तेन स्फुटयति–रज्ज्विति । ब्रह्मतत्त्वावेदनसिद्धमपि ब्रह्मज्ञानादि नियोगेन पुनः साध्यमित्याशंक्याऽऽह–न चेति । करणापर्यवसानादित्यर्थः । विषयाभावान्नियोगाभावमुक्त्वा नियोज्याभावादपि वेदान्तेषु तदभावमाह–नियोज्योऽपीति । प्रपञ्चान्तर्भावपक्षे

जीवो नाम, स प्रपञ्चपक्षस्यैव वा स्याद् ब्रह्मपक्षस्यैव वा । प्रथमे विकल्पे निष्प्रपञ्चब्रह्मतत्त्वप्रतिपादनेन पृथिव्यादिवज्जीवस्यापि प्रविलापितत्वात् कस्य प्रपञ्चप्रविलये नियोग उच्येत, कस्य वा नियोगनिष्ठतया मोक्षोऽवाप्तव्य उच्येत । द्वितीयेऽपि ब्रह्मैवानियोज्यस्वभावं जीवस्य स्वरूपम् । जीवत्वं त्वविद्याकृतमेवेति प्रतिपादिते ब्रह्मणि नियोज्याभावान्नियोगाभाव एव । द्रष्टव्यादिशब्दा अपि परविद्याधिकारपठितास्तत्त्वाभिमुखीकरणप्रधाना न तत्त्वावबोधविधिप्रधाना भवन्ति । लोकेऽपीदं पश्येदमाकर्णयेति चैवंजातीयकेषु निर्देशेषु प्रणिधानमात्रं कुर्वित्युच्यते, न साक्षाज्ज्ञानमेव कुर्विति । ज्ञेयाभिमुखस्यापि ज्ञानं कदाचिज्जायते, कदाचिन्न जायते ॥ तस्मात्तं प्रति ज्ञानविषय एव दर्शयितव्यो ज्ञापयितुकामेन ।

रत्नप्रभा ।

प्रपञ्चान्तर्भूतो, ब्रह्म वेत्यर्थः ॥ आद्ये—जीवनाशाद्विध्ययोगः । द्वितीये—नियोज्यादिसिद्धिः तर्हि ज्ञाने विधिप्रत्ययानां का गतिरित्यत आह—द्रष्टव्यादिशब्दा इति ॥ ननु श्रुतं ज्ञानं त्यक्त्वा तत्साधनव्यापारविधिः किमिति कल्प्यत इत्याशंक्य ज्ञानस्य पुरुषकृत्यसाध्यत्वादित्याह—ज्ञेयाभिमुखस्यापीति ॥ किञ्च ज्ञानविधिवादिना ज्ञेयं ब्रह्मावश्यं वेदान्तैर्ज्ञापनीयम् । विषयानवबोधे विधिबोधायोगात् । तथा च वेदान्तैरेव ज्ञानोत्पत्तेर्विध्यानर्थक्यमित्याह—तस्मादिति ॥ तं ज्ञानार्थिनं प्रतीत्यर्थः ॥ ननूत्पन्नं

भामती ।

दितम् । विस्तरेण चायमर्थस्तत्रैव प्रपञ्चितः । तस्मात् 'जर्तिलयवाग्वा जुहुयात्' इतिवद्विधिसरूपा एते 'आत्मा वा अरे द्रष्टव्यः' इत्यादयो न तु विधय इति । तदिदमुक्तम्—द्रष्टव्यादिशब्दा अपि तत्त्वाभिमुखीकरणप्रधाना न तत्त्वावबोधविधिप्रधाना इति । अपि च ब्रह्मतत्त्वं निष्प्रपञ्चमुक्तं न तत्र नियोज्यः कश्चित्संभवति । जीवो हि नियोज्यो भवेत्, स चेत्प्रपञ्चपक्षे वर्तते को नियोज्यस्तस्योच्छिन्नत्वात् । अथ ब्रह्मपक्षे तथाप्यनियोज्यः, ब्रह्मणोऽनियोज्यत्वात् । अथ ब्रह्मणोऽनन्योऽप्यविद्ययाऽन्य इवेति नियोज्यः । तदयुक्तम् । ब्रह्मभावं पारमार्थिकमवगमयतागमेनाविद्याया निरस्तत्वात् । तस्मान्नियोज्याभावादपि न नियोगः । तदिदमुक्तम्—जीवो नाम प्रपञ्चपक्षस्यैवेति । अपि च ज्ञानविधिपरत्वे तन्मात्रात्तु ज्ञानस्यानुत्पत्तेस्तत्त्वप्रतिपादनपरत्वमभ्युपगमनीयम् । तत्र वरं तत्त्वप्रतिपादनपरत्वमेवास्तु तस्यावश्याभ्युपगन्तव्यत्वेनोभयवादिसिद्धत्वात् । एवं च कृतं तत्त्वज्ञानविधिनेत्याह—ज्ञेयाभिमुखस्यापीति । न च ज्ञानाधाने प्रमाणानपेक्षस्यास्ति कश्चिदुपयोगो विधेः । एवं हि तदुपयोगो भवेद्यद्यन्यथाकारं ज्ञानमन्यथा-

आनन्दगिरीय—न्यायनिर्णयः ।

प्रत्याह—प्रथम इति । प्रपञ्चप्रविलयो ब्रह्मज्ञानादेरुपलक्षणम् । मुमुक्षोर्नियोज्यत्वमाशंक्योक्तम्—कस्येति । ब्रह्मान्तर्भावे नियोज्यत्वं दुर्वचनमित्याह—द्वितीयेऽपीति । ब्रह्मणोऽनन्योऽपि जीवोऽविद्ययाऽन्यत्वान्नियोज्यः स्यादित्याशंक्य ब्रह्मण्यावेदिते भेदकाविद्यायोगान्नैवमित्याह—जीवत्वमिति । ब्रह्मज्ञाने श्रूयमाणा विधयस्तर्केण कथं निरस्यन्ते तत्राऽऽह—द्रष्टव्यादीति । तेषामभिमुखीकरणार्थत्वं न क्वापि दृष्टमित्याशंक्याऽऽह—लोकेऽपीति । ज्ञानमेव प्रकृत्यर्थतया श्रुतं किमिति लोके वेदे वा न विधेयमित्याशंक्यापुरुषतन्त्रत्वादित्याह—ज्ञेयेति । किंच, नियोगवादिनाऽपि वेदान्तानां वस्तुवादित्वमवश्यं वाच्यं नियोगमात्रात्तत्त्वज्ञानायोगात् । ततो वाक्यादेव तदुत्पत्तेर्नियोगानर्थक्यमित्याह—तस्मादिति । ज्ञानस्यापुरुषतन्त्रतया विधेयत्वायोगस्तच्छब्दार्थः । तं ज्ञेयाभिमुखं पुरुषं प्रतीति यावत् । तथाऽपि नियोगाभावे कथं

तस्मिन्दर्शिते स्वयमेव यथाविषयं यथाप्रमाणं च ज्ञानमुत्पद्यते । न च प्रमाणान्तरेणान्यथाप्रसिद्धेऽर्थेऽन्यथाज्ञानं नियुक्तस्याप्युपपद्यते । यदि पुनर्नियुक्तोऽहमित्यन्यथाज्ञानं कुर्यात्, न तु तज्ज्ञानम् । किं तर्हि । मानसी सा क्रिया स्वयमेव चेदन्यथोत्पद्येत, भ्रान्तिरेव स्यात् । ज्ञानं तु प्रमाणजन्यं,यथाभूतविषयं च न तन्नियोगशतेनापि कारयितुं शक्यते, न च प्रतिषेधशतेनापि वारयितुं शक्यते । न हि तत्पुरुषतन्त्रम् । वस्तुतन्त्रमेव हि तत् । अतोऽपि नियोगाभावः । किंचान्यन्न नियोगनिष्ठतयैव पर्यवस्यति—आम्नाये यदभ्युपगतमनियोज्यब्रह्मात्मत्वं जीवस्य, तदप्रमाणकमेव स्यात् ॥ अथ शास्त्रमेवानियोज्यब्रह्मात्मत्वमप्याचक्षीत, तदवबोधे च पुरुषं नियुंजीत, ततो ब्रह्मशास्त्रस्यैकस्य द्व्यर्थपरता विरुद्धार्थ-

---

रत्नप्रभा ।

ज्ञानमन्यथाकर्तुं विधिरर्थवानिति, नेत्याह—**न चेति** ॥ ननु "अनग्निर्योषिद्" इति प्रत्यक्षप्रमाणादुत्पन्नमपि ज्ञानं "तामग्निं ध्यायेद्" इति विधिनान्यथा कृतं दृश्यत इत्यत आह—**यदीति** ॥ अन्यथाधीः कृतिसाध्याचेत् क्रियैव । अकृतिं विनैव चेद् भ्रान्तिरेव । अतो मानं विना विधितो ज्ञानासिद्धेर्मानवस्तुतन्त्रे ज्ञाने विधिर्मृषेत्यर्थः॥ वेदान्तेषु विधिवादिनोऽन्यच्च दूषणमस्तीत्याह—**किञ्चान्यदिति** ॥ ब्रह्मात्मैक्ये, नियोगे च, वेदान्तवाक्यस्य प्रामाण्यमाशङ्क्यार्थभेदाद्वाक्यभेदो, विरुद्धार्थत्वादप्रामाण्यं चेति दूषयति—**अथेत्यादिना** ॥ किञ्च श्रुतं ब्रह्म, न श्रुतो विधिर्वेदान्तेषु । तत्कल्पने च कर्मजन्यत्वान्मोक्षस्यानित्यत्वसाति-

भामती ।

दधीत । न च तच्छक्यं चापि युक्तमित्याह—**न च प्रमाणान्तरेणेति । किंचान्यन्नियोगनिष्ठतयैव च पर्यवस्यत्याम्नाये यदभ्युपगतं** भवद्भिः शास्त्रपर्यालोचनयाऽनियोज्यब्रह्मात्मत्वं जीवस्येति तदेतच्छास्त्रविरोधादप्रमाणकम् । अथैतच्छास्त्रमनियोज्यब्रह्मात्मत्वं च जीवस्य प्रतिपादयति जीवं च नियुक्तं ततो द्व्यर्थं च विरुद्धार्थं च स्यादित्याह—**अथेति** । दर्शपौर्णमासादिवाक्येषु जीवस्यानियोज्यस्यापि वस्तुतोऽध्यस्तनियोज्यभावस्य नियोज्यता युक्ता । न हि तद्वाक्यं तस्य नियोज्यतामाहापि तु लौकिकप्रमाण-

आनन्दगिरीय—न्यायनिर्णयः ।

तत्र धीरित्याशंक्याऽऽह—**तस्मिन्निति** । किंच मानानपेक्षो विधिर्न सम्यग्ज्ञानं जनयति—न च मुमुक्षोर्मिथ्याज्ञानमुपयुक्तम् । न च प्रमाणबाधिते सम्यग्ज्ञानं जनयितुं शक्यम् । तथाच मानेनैव तत्सिद्धेर्व्यर्थो विधिरित्याह—**न चेति** । योषिदादिष्वग्न्यादिधीवन्मानविरुद्धेऽपि विधेर्युक्तं ज्ञानमित्याशंक्याऽऽह—**यदीति** । अन्यथा ज्ञानमपि न मानसी क्रिया रज्जुभुजंगादिधीवदित्याशंक्याऽऽह—**स्वयमिति** । शास्त्रीययत्नाद्यनपेक्षतया जातज्ञानस्याक्रियात्वेऽपि शास्त्रीयमन्यस्यान्यज्ञानं प्रयत्नादिकृतं मानसी क्रियैवेत्यर्थः । कथंभूतं तर्हि सम्यग्ज्ञानं तत्राऽऽह—**ज्ञानं त्विति** । तदपि नियोगाधीनं किं न स्यात्तत्राऽऽह—**नेति** । नेक्षेतेत्यादिनिषेधविषयत्ववद्विधिविषयत्वमपि स्यादित्याशंक्याऽऽह—**न चेति** । तत्रापि संकल्पप्रयत्न एव विधीयत इति भावः । सम्यग्ज्ञानस्य विधिनिषेधाविषयत्वे हेतुमाह—**न हीति** । प्रयत्नानधीनत्वे फलितमाह—**अत इति** । मानवस्तुतन्त्रत्वमपेर्थः । नियोगवादिनं प्रत्यन्यच्च किंचिदुच्यते दूषणमित्याह—**किंचेति** । तदेव स्फोरयति—**नियोगेति** । शास्त्रस्य नियोगनिष्ठत्वे पदार्थयोरैक्योपगमो भ्रान्तिमूलः स्यादित्यर्थः । शास्त्रसिद्धत्वादुभयमपि प्रामाणिकमित्याह—**अथेति** । अनेकार्थतया वाक्यभेदो विरुद्धार्थत्वादप्रामाण्यं चेति दूषयति—**तत इति** । उपक्रमोपसंहारैकरूप्यादिसिद्धा ब्रह्मपरताऽपि

परता च प्रसज्येयाताम् ॥ नियोगपरतायां च श्रुतहानिरश्रुतकल्पना कर्मफलवन्मोक्षफलस्य दृष्टफलत्वमनित्यत्वं चेत्येवमादयो दोषा न केनचित् परिहर्तुं शक्याः ॥ तस्मादवगतिनिष्ठान्येव ब्रह्मवाक्यानि, न नियोगनिष्ठानि । अतश्चैकनियोगप्रतीतेरेकवाक्यतेत्ययुक्तम् । अभ्युपगम्यमानेऽपि च ब्रह्मवाक्येषु नियोगसद्भावे तदेकत्वं निष्प्रपञ्चोपदेशेषु सप्रपञ्चोपदेशेषु वाऽसिद्धम्। न हि शब्दान्तरादिभिः प्रमाणैः नियोगभेदेऽवगम्यमाने सर्वत्रैको नियोग इति शक्यमाश्रयितुम् । प्रयाजदर्शपूर्णमासवाक्येषु त्वधिकारांशेनाभेदाद्युक्तमेकत्वं, न त्विह सगुणनिर्गुणचोदनासु कश्चिदेकत्वाधिकारांशोऽस्ति । न हि भारूपत्वादयो गुणाः प्रपञ्चप्रविलयोपकारिणः । नापि प्रपञ्चविलयो भारूपत्वादिगुणोपकारिणः । परस्परविरोधित्वात्। न हि कृत्स्नप्रपञ्चप्रविलापनं,प्रपञ्चैकदेशापेक्षणं च,—

रत्नप्रभा ।

शयत्वादिप्रसङ्ग इत्याह—नियोगपरतायां चेति ॥ फलितमाह—अतश्चेति ॥ इदानीं प्रौढवादेन नियोगमंगीकृत्य तदेकत्वं खण्डयति—अभ्युपगम्यमानेऽपीति ॥ भिन्नक्रियावाचिशब्दः शब्दान्तरं यथा यजति ददातीति,तथेहापि वेदोपासीतेति शब्दभेदः निर्गुणसगुणरूपभेदः,प्रकरणभेदः,मुक्त्यभ्युदयफलभेदः, इत्येतैः प्रमाणैर्निर्गुणज्ञानसगुणोपासनाविषयकनियोगभेद इत्यर्थः ॥ कथं तर्ह्यङ्गाङ्गिवाक्येषु नियोगैक्यं तत्राह—प्रयाजेति ॥ एकस्यैव स्वर्गकामस्य साङ्गप्रधानाधिकारात् तत्साध्यफलापूर्वैक्यादेकवाक्यतेत्यर्थः ॥ इहापि निर्गुणसगुणविद्ययोरेकाधिकारात् नियोगैक्यमस्तु । नेत्याह—न त्विहेति ॥ मुक्त्यभ्युदयार्थिभेदान्मिथो विरुद्धार्थविद्ययोरङ्गांगित्वायोगाच्च न नियोगैक्यम् ॥ न च निर्गुणाविद्यानियोग एक एव सगुण-

भामती ।

सिद्धां नियोज्यतामाश्रित्य दर्शपूर्णमासौ विधत्ते । इदं तु नियोज्यतामपनयति च नियुंक्ते चेति दुर्घटमिति भावः । नियोगपरतायां चेति । पौर्वापर्यालोचनया वेदान्तानां तत्त्वनिष्ठता श्रुता, न श्रुता नियोगनिष्ठतेत्यर्थः । अपि च नियोगनिष्ठत्वे वाक्यस्य दर्शपौर्णमासकर्मण इवापूर्वावान्तरव्यापारादात्मज्ञानकर्मणोऽप्यपूर्वावान्तरव्यापारादेव स्वर्गादिफलवन्मोक्षस्यानन्दरूपफलस्य सिद्धिः । तथा चानित्यत्वं सातिशयत्वं स्वर्गवद्भवेदित्याह—कर्मफलवदिति । अपि च ब्रह्मवाक्येष्विति । सप्रपञ्चनिष्प्रपञ्चोपदेशेषु हि साध्या-

आनन्दगिरीय—न्यायनिर्णयः ।

वेदान्तानां नियोगपरत्वे पीड्येतेत्याह—नियोगेति । किंच, धियो विधेयत्वे कर्मवदपूर्वावान्तरव्यापारात्फलसिद्धिरेष्टव्या ततश्चादृष्टफलत्वमनित्यत्वं सातिशयत्वं च स्वर्गादिवत्तत्फलस्य स्यादित्याह—कर्मेति । वेदान्तानां नियोगपरत्वाभावे कथं प्रामाण्यं तत्राऽऽह—तस्मादिति । तेषामनियोगनिष्ठत्वे फलितमाह—अतश्चेति । वेदान्तेषु नियोगाभावादेकनियोगविधिरसिद्ध इत्युक्तम् । संप्रति प्रौढवादितया नियोगमंगीकृत्य तदेकत्वं प्रत्याह—अभ्युपगम्यमानेऽपीति । तत्र हेतुमाह—न हीति । भिन्नवाक्यार्थविषयः शब्दः शब्दान्तरम् । यथा यजतिददातिजुहोतयस्तथेहापि वेदोपासीतेति शब्दभेदः । आदिशब्देन रूपभेदः प्रकरणभेदः फलभेदश्च गृह्यते । एतैर्भेदे सिद्धे तदेकत्वासिद्धिरित्यर्थः। अनुबन्धभेदेऽपि प्रयाजदर्शपूर्णमासवाक्येष्विव नियोगैक्यमाशंक्याधिकारांशस्य तत्राभेदादिह तदभावान्नैवमित्याह—प्रयाजेति । एकस्यैव स्वर्गकामस्य साङ्गप्रयोगाधिकारवदत्रापि मुमुक्षोरेकस्यैव द्वैतलयादावधिकारादुभयविधिवाक्येषु नियोगैक्यं स्यादित्याशंक्याऽऽह—न त्विति । भिन्नाधिकारत्वादन्योन्योपकारायोगाच्चेति हेतुमाह—न हीति । तर्हि भारूपत्वादीनां विशिष्टगुणवादित्वमन्येषां तस्मिन्नेव धर्मिणि द्वैतविलापनार्थतेत्येकवाक्यतेत्याशंक्याऽऽह—न हि

एकस्मिन्धर्मिणि युक्तं समावेशयितुम् ॥ तस्मादस्मदुक्त एव विभाग आकारवदनाकारोपदेशानां युक्ततर इति ॥ २१ ॥ इत्युभयलिङ्गाधिकरणम् ॥ ५ ॥

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥२२॥(६)॥**

"द्वे वाव ब्रह्मणो रूपे–मूर्तं चैवामूर्तं च, मर्त्यं चामृतं च, स्थितं च यच्च सच्च त्यच्च" [ बृ० २ । ३ । १ ] इत्युपक्रम्य प्रपञ्चमहाभूतानि द्वैराश्येन

---

रत्नप्रभा ।

विधानंगीकारादिति वाच्यम् ॥ अहो विपरीतं पाण्डित्यमायुष्मतः, विध्ययोग्याविधायां विधिर्योग्यायामविधिरिति ॥ तस्मात्साकारवाक्यानामाकारलयद्वारा निर्गुणवाक्यैकवाक्यतागतिरसद्गतिरेव । किंतु तेषां फलिताकारो गतिः । तदुपासनयाभ्युदयसिद्धेः॥निर्गुणवाक्यानां तु परमार्थालम्बनत्वमित्यस्मदुक्त एव विभागः साधीयानित्युपसंहरति–**तस्मादिति** ॥ २१ ॥ (५) ॥ ब्रह्मणो निर्विशेषचिन्मात्रत्वमुक्त्वा सर्वनिषेधावधित्वेन सद्रूपत्वमाह–**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय इति** ॥ पृथिव्यप्तेजोभूतत्रयं

भामती ।

नुबन्धभेदादेकनियोगत्वमसिद्धम् । दर्शपौर्णमासप्रयाजवाक्येषु तु यद्यप्यनुबन्धभेदस्तथाप्यधिकारांशस्य साध्यस्य भेदाभावादभेद इति ॥ २१ ॥ ( ५ ) ॥ **प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः** । अधिकरणविषयमाह–**द्वे वाव ब्रह्मणो रूपे इति** । द्वे एव ब्रह्मणो रूपे ब्रह्मणः परमार्थतोऽरूपस्याध्यारोपिते द्वे एव रूपे ताभ्यां हि तद्रूप्यते । ते दर्शयति–**मूर्तं चैवामूर्तं च** । समुच्चीयमानावधारणम् । अत्र पृथिव्यप्तेजांसि त्रीणि भूतानि ब्रह्मणो रूपं मूर्तं मूर्च्छितावयवमितरेतरानुप्रविष्टावयवं कठिनमिति यावत् । तस्यैव विशेषणान्तराणि–मर्त्यं मरणधर्मकम् । स्थितमव्यापि । अवच्छिन्नमिति यावत् । सत् अन्येभ्यो विशिष्यमाणमसाधारणधर्मवदिति यावत् । गन्धस्नेहोष्णताश्चान्योन्यव्यवच्छेदहेतवोऽसाधारणा धर्माः । तस्यैतस्य ब्रह्मरूपस्य तेजोऽबन्नस्य चतुर्विशेषणस्यैष रसः सारो य एष सविता तपति । अथामूर्तं वायुश्चान्तरिक्षं च तद्धि न कठिनमित्यमूर्तमेतदमृतममरणधर्मकम् । मूर्तं हि मूर्तान्तरेणाभिहन्यमानमवयवविश्लेषाद्ध्वंसते नतु तथाभावः संभवत्यमूर्तस्य । एतद्यदेति गच्छति व्याप्नोतीति । एतत्त्यं नित्यपरोक्षमित्यर्थः । तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन् सवितृमण्डले पुरुषः । करणात्मको हिरण्यगर्भप्राणाह्वयस्त्यस्य ह्येष रसः सारो नित्यपरोक्षता च साम्यमित्यधिदैवतम् । अथाध्यात्ममिदमेव मूर्तं यदन्यत्प्राणान्तराकाशाभ्यां भूतत्रयं शरीरारम्भकमेतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रस इति ।

आनन्दगिरीय–न्यायनिर्णयः ।

**कृत्स्नेति** । एकवाक्यत्वायोगे फलितमाह–**तस्मादिति** । अनिर्वाच्यद्वैतालम्बनाः सविशेषश्रुतयः स्वाभाविकाद्वैतालम्बनाश्च निर्विशेषश्रुतय इत्यस्मदुक्तो विभागः । निष्प्रपञ्चमद्वयं चैतन्यैकरसं ब्रह्मेति तत्पदलक्ष्यमुपसंहर्तुमितीत्युक्तम् ॥ २१ ॥ ( ५ ) ॥ निषेधश्रुतिभिर्ब्रह्मणि निर्विशेषे निरूपिते तासां ब्रह्मनिषेधत्वमाशंक्योक्तम्–**प्रकृतेति** । ब्रह्म सन्मात्रं तच्च सामान्यत्वाद्विशेषापेक्षं तेन तेषु निषिद्धेषु नास्ति ब्रह्मेति शङ्कायामधिकरणम् । तस्य विषयवाक्यं सोपक्रममाह–**द्वे वावेति** । वावशब्दोऽवधारणे । रूपद्वयमेवावधृतं विशिनष्टि–**मूर्तं चेति** । किं तन्मूर्तं किं च तदमूर्तमित्याकांक्षायामुक्तम्–**पञ्चेति** । पृथिव्यप्तेजोरूपं भूतत्रयं मूर्तं रूपं वाय्वाकाशं चामूर्तं रूपमिति द्विराशित्वेन पञ्चभूतानि विभागेनोक्तानीत्यर्थः । अमूर्तस्य भूतद्वयस्य रसः सारो हिरण्यगर्भः करणात्मा य एष एतस्मिन्मण्डले पुरुषो यश्चायमध्यात्मं दक्षिणेऽक्षन्पुरुष इत्युक्त-

प्रविभज्याऽमूर्तरसस्य च पुरुषशब्दोदितस्य माहारजनादीनि रूपाणि दर्शयित्वा पुनः पठ्यते-"अथात आदेशो नेतिनेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति" [बृ० २।३।६] इति। तत्र कोऽस्य प्रतिषेधस्य विषय इति जिज्ञासामहे। न ह्यत्रेदं तदिति विशेषितं किञ्चित्प्रतिषेध्यमुपलभ्यते। इतिशब्देन त्वत्र प्रतिषेध्यं किमपि समर्प्यते नेति नेतीतीतिशब्दपरत्वान्नञ्प्रयोगस्य। इतिशब्दश्चायं सन्निहितालम्बनः एवंशब्दसमानवृत्तिः प्रयुज्यमानो दृश्यते-इति ह स्मोपाध्यायः कथयती-

रत्नप्रभा।

मूर्तं, वाय्वाकाशद्वयममूर्तमिति राशिद्वयमुक्त्वा भूतद्वयस्यामूर्तस्य सारः "करणात्मा हिरण्यगर्भो य एष एतस्मिन् सूर्यमण्डले पुरुषो यश्चायं दक्षिणेऽक्षिणि पुरुषः" इत्युक्तः, तस्य वासनामयानि स्वप्नरूपाणि "तद्यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपः [बृ. २।३।६] इत्युपमाभिरुक्तानि विचित्राणि। तत्र महारजनं हरिद्रा तयाक्तं वस्त्रं माहारजनम्। पाण्ड्वाविकमिति धवलं कम्बलादि॥ केचित्तु श्रुतिमुपलक्षणं कृत्वा सूक्ष्मपञ्चभूतान्यमूर्तानि, पञ्चीकृतानि मूर्तानि, ततश्चामूर्तरसत्वोक्त्या करणानां पाञ्चभौतिकत्वसिद्धिरिति व्याचक्षते॥ अथ सत्पदात्मकप्रपञ्चोक्त्यनन्तरम्। अतः उक्तारोपस्य निषेधार्थत्वात्। नेति नेतीति निषेधेनोपदेशः क्रियत इत्यर्थः॥ नेतिशब्दार्थमाह-न हीति॥ एतस्मादात्मनोऽन्यत्रास्तीति नेतीत्युच्यत इत्यर्थः॥ शून्यतानिरासार्थं परं ब्रह्मास्तीति सिद्धान्तरीत्या श्रुत्यर्थः॥ अत्र निषेध्यविशेषानुपलम्भात् संशयमाह-तत्र कोऽस्येत्यादिना॥ नञ्प्रयोगस्य

भामती।

अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमेतद्यदेतत्त्यं तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन् पुरुषस्त्यस्य ह्येष रसः। लिङ्गस्य हि करणात्मकस्य हिरण्यगर्भस्य दक्षिणमक्ष्यधिष्ठानं श्रुतेरधिगतम्। तदेवं ब्रह्मण औपाधिकयोर्मूर्तामूर्तयोराध्यात्मिकाधिदैविकयोः कार्यकारणभावेन विभागो व्याख्यातः सत्त्यच्छब्दवाच्ययोः। अथेदानीं तस्य करणात्मनः पुरुषस्य लिङ्गस्य रूपं वक्तव्यम्। मूर्तामूर्तवासनाविज्ञानमयं विचित्रं मायामहेन्द्रजालोपमं तद्विचित्रैर्दृष्टान्तैरादर्शयति-'तद्यथा माहारजनम्' इत्यादिना। एतदुक्तं भवति-मूर्तामूर्तवासनाविज्ञानमयस्य विचित्रं रूपं लिंगस्येति। तदेवं निरवशेषं सवासनं सत्यरूपमुक्त्वा यत्तत्सत्यस्य सत्यमुक्तं ब्रह्म तत्स्वरूपावधारणार्थमिदमारभ्यते। यतः सत्यस्य रूपं निःशेषमुक्तमतोऽवशिष्टं सत्यस्य यत्सत्यं तस्यानन्तरं तदुक्तिहेतुकं स्वरूपं वक्तव्यमित्याह-अथात आदेशः कथनं सत्यसत्यस्य परमात्मनस्तमाह-नेतिनेति। एतदर्थकथनार्थमिदमधिकरणम्। ननु किमेतावदेवादेश्यमुतेतः परमन्यदप्यस्तीत्यत आह-न ह्येतस्माद्ब्रह्मण इति। नेत्यादिष्टादन्यत्परमस्ति

आनन्दगिरीय-न्यायनिर्णयः।

स्तस्य वासनामयानि रूपाणि, तद्यथा माहारजनमित्यादिना विचित्राणि दर्शयित्वा रूपिणो ब्रह्मणः स्वरूपोक्त्यर्थमथेत्यादि वाक्यमित्याह-अमूर्तेति। सत्यस्य सत्यमित्यत्र षष्ठ्यन्तसत्यशब्दार्थोक्त्यनन्तरमित्यथशब्दार्थः। प्रथमान्तसत्यशब्दार्थस्य वक्तव्यत्वेनावशेषादित्यतश्शब्दार्थः। अत्रशिष्टार्थस्तु व्यक्ती भविष्यति। वाक्योक्तिद्वारा तदर्थनिषेधमधिकरणविषयमुक्त्वा विशेषानुपलम्भकृतं संशयमाह-तत्रेति। जिज्ञासाहेतुमुक्तं व्यनक्ति-न हीति। सामान्येन दृष्टस्यैव विशेषतो दृष्टौ स्थाण्वादौ संशयदृष्टेरत्र तदभावे कथमसौ स्यादित्याशंक्याऽऽह-इतिशब्देनेति। अस्तु तर्हि तदर्थवत्त्वाय यत्किंचिदत्र निषेध्यमित्याशंक्योक्तम्-इतिशब्दश्चेति। प्रत्यक्षादिसंनिहितघटाद्यालम्बनस्तर्हि निषेधः स्यादित्याशंक्य सजातीयमानार्पितस्य

त्येवमादिषु । सन्निहितं चात्र प्रकरणसामर्थ्याद्रूपद्वयं सप्रपञ्चं ब्रह्मणः । तच्च ब्रह्म यस्य ते द्वे रूपे । तत्र नः संशय उपजायते—किमयं प्रतिषेधो रूपे रूपवच्चोभयमपि प्रतिषेधति—आहोस्विद्—एकतरम् । यदाप्येकतरं, तदापि किं ब्रह्म प्रतिषेधति रूपे परिशिनष्टि—आहोस्विद्—रूपे प्रतिषेधति ब्रह्म परिशिनष्टीति । तत्र प्रकृतत्वाविशेषादुभयमपि प्रतिषेधतीत्याशङ्कामहे । द्वौ चैतौ प्रतिषेधौ । द्विर्नेतिशब्दप्रयोगात् । तयोरेकेन सप्रपञ्चं ब्रह्मणो रूपं प्रतिषिध्यते। अपरेण रूपवद्ब्रह्मेति भवति मतिः॥अथ वा—ब्रह्मैव रूपवत्प्रतिषिध्यते । तद्धि वाङ्मनसातीतत्वादसम्भाव्यमानसद्भावं प्रति-

रत्नप्रभा ।

नकारस्येतिशब्दोपस्थापितवस्तुनिषेधकत्वादित्यर्थः । इतिशब्दात् निषेध्यसामान्यसमर्पणे विशेषाकांक्षायां प्रकरणाद्रूपद्वयस्य रूपिब्रह्मणश्च निषेध्यत्वभानात् संशयमुक्त्वा पूर्वोक्तं निर्विशेषं ब्रह्म नास्तीत्याक्षेपसंगत्या पूर्वपक्षयति—तत्र प्रकृतत्वेति ॥ पूर्वपक्षे तत्पदार्थाभावाद्वाक्यार्थभेदासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलम् ॥ निरधिष्ठाननिषेधादर्शनात् सर्वनिषेधो न युक्त इत्यरुच्या प्रपञ्चे ब्रह्मनिषेध इत्याह—अथ वेति ॥

भामती ।

यदादेश्यं भवेत् । तस्मादेतावदेवादेश्यं नापरमस्तीत्यर्थः । अत्रैवमर्थेनेतिना यत्संनिहितं परामृष्टं तन्निषिध्यते नञा संनिहितं च मूर्तामूर्ते सवासनं रूपद्वयम् । तदवच्छेदकत्वेन च ब्रह्म । तत्रेदं विचार्यते—किं रूपद्वयं सवासनं ब्रह्म च सर्वमेव च प्रतिषिध्यते, उत ब्रह्मैवाथ सवासनं रूपद्वयं ब्रह्म तु परिशिष्यत इति । यद्यपि तेषुतेषु वेदान्तप्रदेशेषु ब्रह्मस्वरूपं प्रतिपादितं तदसद्भावज्ञानं च निन्दितम् । 'अस्तीत्येवोपलब्धव्यः' इति चास्य सत्त्वमवधारितं तथापि सद्बोधरूपं तद्ब्रह्म सवासनमूर्तामूर्तरूपसाधारणतया च सामान्यं तस्य चैते विशेषा मूर्तामूर्तादयः । न च तत्तद्विशेषनिषेधे सामान्यमवस्थातुमर्हति निर्विशेषस्य सामान्यस्यायोगात् । यथाहुः—'निर्विशेषं न सामान्यं भवेच्छशविषाणवत्' । इति । तस्मात्तद्विशेषनिषेधेऽपि तत्सामान्यस्य ब्रह्मणोऽनवस्थानात्सर्वस्यैवायं निषेधः । अत एव न ह्येतस्मादिति नेत्यन्यत्परमस्तीति निषेधात् परं नास्तीति सर्वनिषेधमेव तत्त्वमाह श्रुतिः । 'अस्तीत्येवोपलब्धव्यः' इति चोपासनाविधानवन्नेयं, न त्वस्तित्वमेवास्य तत्त्वम् । तत्प्रशंसार्थं चासद्भावज्ञाननिन्दा । यच्चान्यत्र ब्रह्मस्वरूपप्रतिपादनं तदपि मूर्तामूर्तरूपप्रतिपादनवन्निषेधार्थम् । असंनिहितोऽपि च तत्र निषेधो योग्यत्वात्संभन्त्स्यते ।

आनन्दगिरीय—न्यायनिर्णयः ।

विजातीयमानसिद्धादन्तरङ्गत्वात्सदालम्बनतैव निषेधस्येत्याह—संनिहितं चेति । प्रकृतत्वं विशेषासिद्धिश्चेति हेतुमुक्त्वा संशयं निगमयति—तत्रेति । अन्यतरनिषेधेनापि निषेधसिद्ध्या पक्षान्तरमाह—आहोस्विदिति । द्वितीयेऽपि ब्रह्मणो वाङ्मनसातीतत्वात्प्रपञ्चस्य चाध्यक्षादिसिद्धत्वात्तस्य व्यावहारिकमानसिद्धत्वेऽपि कल्पितत्वात्तत्कल्पनाधिष्ठानत्वात्तन्निषेधावधित्वाच्च ब्रह्मणः परिशेषार्हत्वादिति पक्षद्वयं दर्शयति—यदाऽपीति । अत्र निषेधार्थोक्त्या तत्पदार्थस्यैव शोधनात्तस्यैव शुद्धस्य वाक्यार्थान्वयित्वेन तद्धीहेतुत्वान्नादादिसंगतिरिति मत्वा पूर्वपक्षयति—तत्रेति । पूर्वपक्षे निषेधस्य शून्यतान्तत्वाद्ब्रह्मणः शून्यस्य प्रत्यक्त्वेन ज्ञानानर्हता । सिद्धान्ते व्यतिरिक्तस्यैव निषेधादप्रपञ्चस्य ब्रह्मणस्तत्त्वेन ज्ञानयोग्यता सति संभवे प्राप्तसर्वनिषेधकल्पनादेकदेशस्यैव तत्कल्पनं युक्तं लाघवात् । नेदं रजतमित्यादौ तथा दर्शनादित्याशंक्य निषेधद्वयशक्त्या प्राप्तसर्वबाधकल्पनं युक्तमन्यत्र निषेधद्वयाभावादेकदेशस्यैव बाधेत्याह—द्वौ चेति । निषेधयोर्द्वयोरपुनरुक्तमर्थमभिनयति—तयोरिति । वस्त्वन्तराभावविशिष्टवस्त्वन्तरज्ञानस्यैव नेदं रजतमित्यादौ निषेधार्थत्वान्न सर्वनिषेधः संभवतीत्याशंक्याऽऽह—अथ वेति । तत्र हेतुः—तद्धीति । प्रकृतत्वाविशेषा-

**षेधार्हं, न तु रूपप्रपञ्चः प्रत्यक्षादिगोचरत्वात् प्रतिषेधार्हः। अभ्यासस्त्वादरार्थ इति॥ एवं प्राप्ते ब्रूमः॥ न तावदुभयप्रतिषेध उपपद्यते। शून्यवादप्रसङ्गात्। कंचिद्धि परमार्थमालम्ब्याऽपरमार्थः प्रतिषिध्यते। यथा-रज्ज्वादिषु सर्पादयः। तच्च परिशिष्यमाणे कस्मिंश्चिद्भावेऽवकल्पते। कृत्स्नप्रतिषेधे हि कोऽन्यो भावः परिशिष्येत। अपरिशिष्यमाणे चान्यस्मिन्य इतरः प्रतिषेद्धुमारभ्यते तस्य प्रतिषेद्धुमशक्यत्वात्तस्यैव परमार्थत्वापत्तेः प्रतिषेधानुपपत्तिः। नापि ब्रह्मप्रतिषेध उपपद्यते-**

रत्नप्रभा।

एकग्रहण एव निषेधे नकारद्वयस्य पौनरुक्त्यमित्यत आह-**अभ्यासस्त्विति**॥ उत्सूत्रमेव तावत् सिद्धान्तमुपक्रमते-**एवमिति**॥ शून्यप्रसङ्ग इष्ट इति वदन्तं प्रत्याह-**कंचिद्धीति**॥ **तच्चेति**। प्रतिषेधनमित्यर्थः। अधिष्ठानानवशेषे तत्प्रमारूपहेत्वभावात् निषेधवाक्यार्थप्रमा न स्यात्। इदमत्र नास्तीति लोके निषेधस्य साधिष्ठानस्यैव प्रमितिदर्शनादित्यर्थः। **किंच** यद्भाति तत्सदित्युत्सर्गस्य मानादर्थाभावाधिष्ठानप्रमितिस्तदपवादः। तया पूर्वमानस्य भ्रमत्वनिश्चयेनार्थसत्त्वापलापात्। अपवादानंगीकारे तूत्सर्गतः प्रपञ्चस्य सत्यत्वापत्तेः निषेधानुपपत्तिरित्याह-**अपरिशिष्यमाणे चेति**॥ अधिष्ठानसत्त्वं विना भ्रान्तिनिषेधयोरयोगात् शून्यवादो न युक्त इत्युक्त्वा पूर्ववादिनः पक्षान्तरं दूषयति-**नापीति**॥देहात्माभिमानवल्लौ-

भामती।

यथाहुः-'येन यस्याभिसंबन्धो दूरस्थस्यापि तेन सः' इति। तस्मात्सर्वस्यैवाविशेषेण निषेध इति प्रथमः पक्षः। अथ वा-पृथिव्यादिप्रपञ्चस्य समस्तस्य प्रत्यक्षादिप्रमाणसिद्धत्वात्, ब्रह्मणस्तु वाङ्मनसागोचरतया सकलप्रमाणविरहात्, कतरस्यास्तु निषेध इति विशये प्रपञ्चप्रतिषेधे समस्तप्रत्यक्षादिव्याकोपप्रसंगात्, ब्रह्मप्रतिषेधे त्वव्याकोपाद्ब्रह्मैव प्रतिषेधेन संबध्यते योग्यत्वान्न प्रपञ्चस्तद्वैपरीत्यात्, वीप्सा तु तदत्यन्ताभावसूचनायेति मध्यमः पक्षः। तत्र प्रथमं पक्षं निराकरोति-**न तावदुभयप्रतिषेध उपपद्यते शून्यवादप्रसङ्गादिति**। अयमभिसंधिः-उपाधयो ह्यमी पृथिव्यादयोऽविद्याकल्पिता न तु शोणकर्कादय इव विशेषा अश्वत्वस्य। न चोपाधिविगमे उपहितस्याभावोऽप्रतीतिर्वा। न ह्युपाधीनां दर्पणमणिकृपाणादीनामपगमे मुखस्याभावोऽप्रतीतिर्वा। तस्मादुपाधिनिषेधेऽपि नोपहितस्य शशविषाणायमानताऽप्रत्ययो वा। न चेतीति संनिधानाविशेषात्सर्वस्य प्रतिषेध्यत्वमिति युक्तम्। न हि भावमनुपाश्रित्य प्रतिषेध उपपद्यते। किंचिद्धि क्वचिन्निषिध्यते। न ह्यनाश्रयः प्रतिषेधः शक्यः प्रतिपत्तुम्। तदिदमुक्तम्-**अपरिशिष्यमाणे चान्यस्मिन्य इतरः प्रतिषेद्धुमारभ्यते तस्य प्रतिषेद्धुमशक्यत्वात्तस्यैव परमार्थत्वापत्तेः प्रतिषेधानुपपत्तिः**। मध्यमं पक्षं प्रतिक्षिपति-**नापि ब्रह्मप्रतिषेध उपपद्यते**। युक्तं यन्नैसर्गिकाविद्याप्राप्तः

आनन्दगिरीय-न्यायनिर्णयः।

त्प्रपञ्चस्यापि निषेधो ब्रह्मवदित्याशंक्याध्यक्षादिविरोधान्मैवमित्याह-**न त्विति**। ब्रह्ममात्रनिषेधे निषेधद्वयवैयर्थ्यमेकेनैव कृतत्वादित्याशंक्याऽऽह-**अभ्यासस्त्विति**। पक्षद्वयमनूद्य सिद्धान्तयति-**एवमिति**। तत्र प्रथममुत्सूत्रमेव प्रथमं पक्षं प्रत्याह-**नेति**। प्रसङ्गस्येष्टत्वं निराचष्टे-**किंचिद्धीति**। वास्तवमधिष्ठानं ज्ञात्वाऽऽरोप्यं निरस्यमित्यत्र दृष्टान्तमाह-**यथेति**। अस्तु तर्हि शून्यमेव वस्तु तदधिगम्येतरन्निषेध्यं नेत्याह-**तच्चेति**। निषेधनं तदर्थः। लोकसिद्धपदार्थान्वययोग्यतावशेन वाक्यार्थस्वीकारान्नेत्येव च निषेधादर्शनान्नायमयं नेदमिहेति धर्मिप्रतियोगिघटितस्यैव निषेधस्य दृष्टेर्विशेषणावशेषस्याऽऽवश्यकत्वादयुक्ता शून्यतेत्यर्थः। किंच, लोके भ्रमस्य साधिष्ठानत्वोपलम्भात्तात्त्विकाधिष्ठानाभावे प्रत्यक्षादिसिद्धद्वैतस्यैव तात्त्विकत्वापातात्तन्निषेधो निरवकाशः स्यादित्याह-**अपरीति**। दृष्टसर्वनिषेधे तदेकदेशवस्तुधीरूपापवादाभावादुत्सर्गस्थितिरिति न्यायात्पूर्वदृष्टस्य वस्तुत्वप्रसङ्गादनवधिकनिषेधायोगादवस्तुतया च शून्यमानास्तदृष्ट्या पूर्वदृष्टनिषेधासंभवान्न तत्पर्यन्तो निषेध इति भावः। पूर्वपक्षान्तरं प्रत्याह-**नापीति**। प्राप्ति-

"ब्रह्म ते ब्रवाणि" [ ( बृ० २।१।१ ) ( कौ० ४ । १ ) ] इत्युपक्रमविरोधात्। "असन्नेव स भवति । असद्ब्रह्मेति वेद चेद्" [ तै० उ० २ । ६ । १ ] इत्यादिनिन्दाविरोधात् । "अस्तीत्येवोपलब्धव्यः" [ कठ० ६ । १३ ] इत्यवधारणविरोधात् । सर्ववेदान्तव्याकोपप्रसङ्गाच्च । वाङ्मनसातीतत्वमपि ब्रह्मणो नाभावाभिप्रायेणाभिधीयते । न हि महता परिकरबन्धेन "ब्रह्मविदाप्नोति परम्" [ तै० उ० २ । १ । १ ] "सत्यं ज्ञानमनन्तं ब्रह्म" [ तै० २ । १ । १ ] इत्येवमादिना वेदान्तेषु ब्रह्म प्रतिपाद्य तस्यैव पुनरभावोऽभिलप्येत-प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरमिति हि न्यायः । प्रतिपादनप्रक्रिया त्वेषा "यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह" [ तै० उ० २ । ४ । १ ] इति । एतदुक्तं भवति । वाङ्मनसातीतमविषयान्तःपातिप्रत्यगात्मभूतं नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्मेति॥ तस्माद्ब्रह्मणो रूपं प्रपञ्चं प्रतिषेधति परिशिनष्टि ब्रह्मेत्यवगन्तव्यम् । तदेतदुच्यते-"प्रकृतैतावत्त्वं हि प्रतिषेधति-" इति । प्रकृतं यदेतावदियत्ता-

---

रत्नप्रभा ।

किक्रमानप्राप्तद्वैतस्य निषेधो युक्तः, न वेदान्तप्रमितब्रह्मण इति भावः ॥ यदुक्तं वाङ्मनसातीतत्वात् निषेधार्हं ब्रह्मेति, तत्राह–वाङ्मनसेति ॥ ब्रह्मणो वागाद्यतीतत्वं निषेधार्थं, न चेत् किमर्थं तदुक्तिरित्यत आह–प्रतिपादनेति ॥ उक्तार्थे सूत्रं योजयति–तदेतदित्यादिना ॥ "द्वे वाव ब्रह्मणो रूपे" इति

भामती ।

प्रपञ्चः प्रतिषिध्यते प्राप्तिपूर्वकत्वात्प्रतिषेधस्य । ब्रह्म तु नाविद्यासिद्धं, नापि प्रमाणान्तरात् । तस्माच्छब्देन प्राप्तं प्रतिषेधनीयम् । तथा च यस्तस्य शब्दः प्रापकः स तत्पर इति स ब्रह्मणि प्रमाणमिति कथमस्य निषेधोऽपि प्रमाणवान् । न च पर्युदासाधिकरणपूर्वपक्षन्यायेन विकल्पः, वस्तुनि सिद्धस्वभावे तदनुपपत्तेः । न चावाङ्मनसगोचरो बुद्धावालेखितुं शक्यः । अशक्यश्च कथं निषिध्यते । प्रपञ्चस्त्वनाद्यविद्यासिद्धोऽनूद्य ब्रह्मणि प्रतिषिध्यत इति युक्तम् । तदिमामनुपपत्तिमभिप्रेत्योक्तम्–'नापि ब्रह्मप्रतिषेध उपपद्यते' इति । हेत्वन्तरमाह–ब्रह्म ते ब्रवाणीति ॥ उपक्रमविरोधादिति । उपक्रमपरामर्शोपसंहारपर्यालोचनया हि वेदान्तानां सर्वेषामेव ब्रह्मपरत्वमुपपादितं प्रथमेऽध्याये । न चासत्यामाकांक्षायां दूरतरस्थेन प्रतिषेधेनैषां संबन्धः संभवति । यच्च वाङ्मनसातीततया ब्रह्मणस्तत्प्रतिषेधस्य न प्रमाणान्तरविरोध इति तत्राह–वाङ्मनसातीतत्वमपीति । प्रतिपादयन्ति वेदान्ता महता प्रयत्नेन ब्रह्म । न च निषेधाय तत्प्रतिपादनम्,

आनन्दगिरीय–न्यायनिर्णयः ।

पूर्वकत्वान्निषेधस्य ब्रह्मणश्चाविद्यया प्रत्यक्षादिभिर्वा द्वैतवदप्राप्तेः शब्देन प्राप्तस्य तेनैव निषेधे पङ्कप्रक्षालनन्यायान्न तन्निषेध इति भावः । ब्रह्मणो निषेध्यत्वाभावे हेत्वन्तरमाह–ब्रह्मेति । आदिपदेन ब्रह्मविदाप्नोतीत्यादिरुपक्रमो गृह्यते । ब्रह्मणः सत्त्वासत्त्वधियोर्गुणदोषोक्तेरपि न तन्निषेध्यमित्याह–असन्निति । ब्रह्मणः सन्मात्रत्वसिद्धेरपि न तन्निषेध्यमित्याह–अस्तीति । किंच, सर्वेषु वेदान्तेषु साक्षाद्वा परंपरया वा ब्रह्मैव प्रतिपाद्यते तेन तद्विरोधादपि न तन्निषेध्यमित्याह–सर्वेति । यत्तु वाङ्मनसातीतत्वादसंभावितसद्भावं निषेधार्हं ब्रह्मेति तत्राऽऽह–वागिति । तत्र हेतुः–न हीति । केनाभिप्रायेण तर्हि वाङ्मनसातीतत्वमुक्तं तत्राऽऽह–प्रतिपादनेति । वागाद्यतीतत्वेनासत्त्वे ब्रह्मणोऽवगम्यमाने किमियं प्रतिपादनप्रक्रियेत्याशंक्याऽऽह–एतदिति । पक्षद्वयायोगे फलितं निषेधार्थं निगमयति–तस्मादिति । उक्तेऽर्थे सूत्रमवतार्य योजयति–तदेतदित्यादिना । ब्रह्मणो रूपद्वयं निषेध्यमित्यत्र हेतुमाह–

परिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तदेष शब्दः प्रतिषेधति । तद्धि प्रकृतं, प्रपञ्चितं च पूर्वस्मिन् ग्रन्थेऽधिदैवतमध्यात्मं च । तज्जनितमेव च वासनालक्षणमपरं रूपममूर्तरसभूतं पुरुषशब्दोदितं लिङ्गात्मव्यपाश्रयं महारजनाद्युपमाभिर्दर्शितम् । अमूर्तरसस्य पुरुषस्य चक्षुर्ग्राह्यरूपयोगित्वानुपपत्तेः । तदेतत्सप्रपञ्चं ब्रह्मणो रूपं सन्निहितालम्बनेनेति करणेन प्रतिषेधकनञ्ञं प्रत्युपनीयत इति गम्यते । ब्रह्म तु रूपविशेषणत्वेन षष्ठ्या निर्दिष्टं पूर्वस्मिन् ग्रन्थे, न स्वप्रधानत्वेन । प्रपञ्चिते च तदीये रूपद्वये रूपवतः स्वरूपजिज्ञासायामिदमुपक्रान्तम् "अथात आदेशो नेतिनेति" [ बृ० २ । ३ । ६ ] इति । तत्र कल्पितं च रूपप्रत्याख्यानेन ब्रह्मणः स्वरू-

---

रत्नप्रभा ।

रूपद्वयस्यैव प्राधान्येन प्रकृतत्वान्नेतीति निषेध इत्यर्थः ॥ नन्वादित्यमण्डले पुरुष इति ब्रह्माप्यत्र प्राधान्येनोक्तमित्याशङ्क्य पुरुषो लिङ्गात्मा । अमूर्तरसत्वश्रुत्या भूतजनितत्वभानात्, स्वप्नरूपवत्त्वश्रुतेश्चेत्याह–**तज्जनितमेवेति** ॥ रूपरूपिणोरभेद उक्तः ॥ ननु वासनामयं रूपमेव किमित्युपमीयते, प्रसिद्धरूपमेव किं न स्यादित्यत आह–**अमूर्तरसस्येति** ॥ रूपद्वयस्यैव प्राधान्येन प्रकृतत्वे फलितमाह–**तदिति** ॥ प्रतियोगित्वेन समर्प्यत इत्यर्थः ॥ न चार्थतः प्राधान्याद् ब्रह्मणो निषेधः राज्ञो भृत्यो नास्तीत्यत्र राजनिषेधप्रसङ्गादिति भावः ॥ किञ्चात्र ब्रह्मणः प्रतिपाद्यत्वात् न निषेध इत्याह–**प्रपञ्चिते चेति** ॥ ननु

भामती ।

अनुपपत्तेरित्युक्तमधस्तात् । इदानीं तु निष्प्रयोजनमित्युक्तं 'प्रक्षालनाद्धि पङ्कस्य' इति न्यायात् । तस्माद्वेदान्तवाचा मनसि संनिधानाद्ब्रह्मणो वाङ्मनसातीतत्वं नाञ्जसमपि तु प्रतिपादनप्रक्रियोपक्रम एषः । यथा गवादयो विषयाः साक्षाच्छृङ्गग्राहिकया प्रतिपाद्यन्ते प्रतीयन्ते च नैवं ब्रह्म । यथाहुः–'भेदप्रपञ्चविलयद्वारेण च निरूपणमिति ।' ननु प्रकृतप्रतिषेधे ब्रह्मणोऽपि कस्मान्न प्रतिषेध इत्यत आह–**तद्धि प्रकृतं प्रपञ्चितं चेति** । प्रधानं प्रकृतं प्रपञ्चश्च प्रधानं न ब्रह्म तस्य षष्ठ्यन्ततया प्रपंञ्चावच्छेदकत्वेनाप्रधानत्वादित्यर्थः । ततोऽन्यद्ब्रवीतीति नेतिनेतीति प्रतिषेधादन्यद्भूयो ब्रवीतीति तन्निर्वचनम् । न ह्येतस्मादित्यस्य यदा न ह्येतस्मादिति नेतिनेत्यादिष्टाद्ब्रह्मणोऽन्यत्परमस्तीति व्याख्यानं तदा प्रपञ्चप्रतिषेधादन्यद्ब्रह्मैव ब्रवीतीति व्याख्येयम् । यदा तु न ह्येतस्मादिति सर्वनाम्ना प्रतिषेधो ब्रह्मण आदेशः परामृश्यते तदापि प्रपञ्चप्र-

आनन्दगिरीय–न्यायनिर्णयः ।

**तद्धीति** । प्रकृतत्वमात्रेण निषेधे ब्रह्मणोऽपि निषेधः स्यादविशेषादित्याशंक्याऽऽह–**प्रपञ्चितं चेति** । ब्रह्मणः षष्ठ्यन्तपदवाच्यतया प्रपञ्चावच्छेदेनाप्रधानत्वात्प्रपञ्च एव प्रधानतया निषेधेन संबध्यत इत्यर्थः । पुरुषशब्दश्रवणात्तस्य च ब्रह्मविषयत्वाद्ब्रह्मापि प्रपञ्चितमित्याशंक्य पुरुषशब्दस्यात्र लिङ्गात्मविषयत्वान्मैवमित्याह–**तदिति** । वासनालक्षणमेव रूपं किमित्युपमाभिरुच्यते प्रसिद्धरूपत्वमेव पुरुषस्य कुतो नेष्टमित्याशंक्याऽऽह–**अमूर्तेति** । रूपद्वयस्य प्राधान्येन प्रकृतत्वे फलमाह–**तदिति** । अर्थतो ब्रह्मणोऽपि प्राधान्येन प्रकृतत्वाविशेषान्निषेध्यत्वमित्याशंक्याऽऽह–**ब्रह्म त्विति** । अर्थतस्तस्य प्राधान्येऽपि राजपुरुषादाविव शब्दतः प्रधानतया प्रकृतं रूपद्वयमेव प्रकृतपरामर्शिनेतिशब्देनानूद्य निषेध्यमित्यर्थः । ब्रह्मणस्तर्हि प्राधान्येनाप्रकृतत्वादुत्तरत्रापि न प्रतिपाद्यतेत्याशंक्याऽऽह–**प्रपञ्चिते चेति** । एवमुपक्रमेऽपि कथं वाक्यार्थो निर्णीयतामित्याशंक्याध्यारोपापवादन्यायं सूचयति–**तत्रेति** । निर्घटं भूतलमित्युक्ते घटस्यान्यत्र सत्त्ववद्ब्रह्मणि

पावेदनमिदमिति निर्णीयते । तदास्पदं हीदं समस्तं कार्यं नेतिनेतीति प्रतिषिद्धम् । युक्तं च कार्यस्य वाचारम्भणशब्दादिभ्योऽसत्त्वमिति नेति नेतीति प्रतिषेधनं, न तु ब्रह्मणः । सर्वकल्पनामूलत्वात् । न चात्रेयमाशंका कर्तव्या—कथं हि शास्त्रं स्वयमेव ब्रह्मणो रूपद्वयं दर्शयित्वा स्वयमेव पुनः प्रतिषेधति । "प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरम्" इति । यतो नेदं शास्त्रं प्रतिपाद्यत्वेन ब्रह्मणो रूपद्वयं निर्दिशति । लोकप्रसिद्धं त्विदं रूपद्वयं ब्रह्मणि कल्पितं परामृशति प्रतिषेध्यत्वाय शुद्धब्रह्मस्वरूपप्रतिपादनाय चेति निरवद्यम् । द्वौ चैतौ प्रतिषेधौ यथासंख्यन्यायेन द्वे अपि मूर्तामूर्ते प्रतिषेधतः ॥ यद्वा—पूर्वः प्रतिषेधो भूतराशिं प्रतिषेधति, उत्तरो वासनाराशिं प्रतिषेधति ॥ अथवा "नेति नेति" इति वीप्सेयमितीति यावत्किंचिदुत्प्रेक्ष्यते तत्सर्वं न भवतीत्यर्थः । परिगणितप्रतिषेधे हि क्रियमाणे, यदि नैतद् ब्रह्म, किमन्यद्ब्रह्म

---

रत्नप्रभा ।

ब्रह्मणि निषिद्धस्याप्यन्यत्र स्थितिसम्भवात् कथं कल्पितत्वमित्यत आह—**तदास्पदमिति** ॥ उपादाने निषिद्धस्यान्यत्र न स्थितिरित्यर्थः। यत्तु द्वैतनिषेधे प्रत्यक्षादिविरोध इति, तत्राह—**युक्तं चेति** ॥ स्थापितं हि आरम्भणाधिकरणे प्रत्यक्षादेर्व्यावहारिकं प्रामाण्यं, न तत्त्वावेदकमिति । अतस्तत्त्वतो निषेधान्न विरोध इति भावः ॥ ननु वस्तुत्वाद् द्वैतवद् ब्रह्मणोऽपि निषेधोऽस्तु, नेत्याह—**न त्विति** ॥ द्वैतभावाभावसाक्षित्वादशक्यो निषेध इत्यर्थः । **न चेत्यादि**स्पष्टार्थम् ॥ **यच्चोक्तं** निषेधाभ्यां रूपं, रूपि ब्रह्म च, निषिध्यते इति, तत्राह—**द्वौ चैताविति** ॥ उद्देश्यविधेयार्थानां सङ्ख्यासाम्ये यथाक्रमं सम्बन्ध इति न्यायः—"यथासङ्ख्यमनुदेशः समानाम्" [ १ । ३ । १० ] इति पाणिनिसूत्रसिद्धः । तेनात्र रूपद्वयोद्देशे न निषेधद्वयविधिरित्यर्थः ॥ वीप्सापक्षे सर्वदृश्यनिषेधाज्जिज्ञासाशान्तिरिति विशेषमाह—**परिगणितेति** ॥

भामती ।

तिषेधमात्रं न प्रतिपत्तव्यमपि तु तेन प्रतिषेधेन भावरूपं ब्रह्मोपलक्ष्यते । कस्मादित्यत आह—

आनन्दगिरीय—न्यायनिर्णयः ।

रूपद्वयनिषेधेऽपि ततोऽन्यत्र तद्भवेदित्याशंक्याऽऽह—**तदास्पदमिति** । उपादानादन्यत्र कार्यायोगात्तत्र निषिद्धस्य न क्वापि सत्तेति भावः । यत्तु प्रत्यक्षादिसिद्धस्य द्वैतस्य न निषेधस्तद्विरोधादिति तत्राऽऽह—**युक्तं चेति** । तत्त्वावेदनमानासिद्धत्वाद्वाचारम्भणादिशब्दाच्च द्वैतस्य वस्तुसत्त्ववैधुर्याद्युक्तो निषेध्यतेति भावः । सत्त्वेन सिद्धं द्वैतं निषिध्यते चेद्ब्रह्मणोऽपि तथा सिद्धत्वविशेषान्निषेधतादवस्थ्यमित्याशंक्याऽऽह—**न त्विति** । आरोपाधिष्ठानत्वेन निषेधावधित्वेन चावशेषान्न ब्रह्मणो निषेध्यतेत्यर्थः । द्वे वावेत्यादिनोक्तं रूपद्वयं निषिध्यते चेत्पङ्कप्रक्षालनन्यायात्प्रसज्यप्रतिषेधे गौरवं स्यादित्याशंक्याऽऽह—**न चेति** । अत्रेति रूपद्वयनिषेधपक्षोक्तिः शङ्का न कार्येत्यत्र हेतुमाह—**यत इति** । अप्रतिपाद्यं चेदनुवाद्यत्वं न च प्रातिफले विनाऽनुवादस्तत्राऽऽह—**लोकेति** । तथाऽपि कथं पङ्कप्रक्षालनन्यायो न स्यादित्याशंक्य निषेधस्य फलवत्त्वादित्याह—**शुद्धेति** । उक्तरीत्या निषेधस्य निर्दोषत्वमुक्तं निगमयति—**इति निरवद्यमिति** । द्वौ निषेधौ तयोर्वैयर्थ्यार्थं सर्वं निषेध्यमित्युक्तं प्रत्याह—**द्वौ चेति** । संभावितं पक्षान्तरमाह—**यद्वेति** । भावाभावविषयत्वेन वा निषेधद्वयं विवक्षितम् । पक्षान्तरमाह—**अथ वेति** । वीप्सापक्षे वाक्यार्थमाह—**इतीति**। यावदिति पक्षान्तरेभ्यो विशेषार्थम् । तेषु निराकांक्षो वाक्यार्थो न सिध्यतीत्याह—**परीति**

भवेदिति जिज्ञासा स्यात् । वीप्सायां तु सत्यां समस्तस्य विषयजातस्य प्रतिषेधादविषयः प्रत्यगात्मा ब्रह्मेति जिज्ञासा निवर्तते। तस्मात्प्रपञ्चमेव ब्रह्मणि कल्पितं प्रतिषेधति, परिशिनष्टि ब्रह्मेति निर्णयः। इतश्चैष एव निर्णयः यतस्ततः प्रतिषेधाद्भूयो ब्रवीति "अन्यत्परमस्ति" इति । अभावावसाने हि प्रतिषेधे क्रियमाणे, किमन्यत्परमस्ति, इति ब्रूयात्। तत्रैषाऽक्षरयोजना— नेतिनेतीति ब्रह्माऽऽदिश्य तमेवादेशं पुनर्निर्वक्ति । नेतिनेतीत्यस्य कोऽर्थः । न हि एतस्माद् ब्रह्मणो व्यतिरिक्तमस्तीत्यतो नेतिनेतीत्युच्यते । न पुनः स्वयमेव नास्तीत्यर्थः । तच्च दर्शयति—"अन्यतः परमप्रतिषिद्धं ब्रह्मास्ति" इति । यदा पुनरेवमक्षराणि योज्यन्ते न ह्येतस्मादिति नेतिनेति । न हि प्रपञ्चप्रतिषेधरूपादादेशनादन्यत्परमादेशनं न ब्रह्मणोऽस्तीति, तदा "ततो ब्रवीति च भूयः" इत्येतन्नामधेयविषयं योजयितव्यम् ॥ अथ नामधेयं—"सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्" [ बृ० २ । १ । २० ] इति हि ब्रवीति इति । तच्च ब्रह्मावसाने प्रतिषेधे समञ्जसं भवति । अभावावसाने तु प्रतिषेधे किं "सत्यस्य सत्यम्" इत्युच्येत ॥ तस्माद्ब्रह्मावसानोऽयं प्रतिषेधो, नाभावावसान इत्यध्यवस्यामः ॥ २२ ॥

---

रत्नप्रभा ।

मूर्तं न, अमूर्तं नेत्येवं विशिष्यनिषेधे जिज्ञासा न शाम्यतीत्यर्थः ॥ सूत्रशेषं व्याचष्टे—**इतश्चेति** ॥ प्रतिषेधानुपपत्त्या ब्रह्मास्तीत्यवगतम् । भूयः पुनः । " परमस्ति" इति श्रुतिः साक्षादपि ब्रवीतीत्यर्थः ॥ **तच्चेति** ॥ अत्रशिष्टं ब्रह्मेत्यर्थः । स्पष्टमन्यत् ॥ २२ ॥ नन्वग्राह्यत्वाद् ब्रह्म नास्तीति शङ्कानिरासार्थं

भामती ।

**ततो ब्रवीति च भूय इति**।यस्मात्प्रतिषेधस्य परस्तादपि ब्रवीति। अथ ब्रह्मणो नामधेयं नाम सत्यस्य सत्यमिति तद्व्याचष्टे श्रुतिः—'प्राणा वै सत्यम्'इति । माहारजनाद्युपमितं लिंगमुपलक्षयति । तत् खलु सत्यमितरापेक्षया-स्यापि परं सत्यं ब्रह्म। तदेवं यतः प्रतिषेधस्य परस्ताद्ब्रवीति तस्मान्न प्रपञ्चप्रतिषेधमात्रं ब्रह्मापि तु भावरूपमिति। तदेवं पूर्वस्मिन् व्याख्याने निर्वचनं ब्रवीतीति व्याख्यातम् । अस्मिंस्तु सत्यस्य सत्यमिति ब्रवीतीति

आनन्दगिरीय-न्यायनिर्णयः ।

वीप्सापक्षे निराकांक्षा वाक्यार्थधीरिति विशेषमाह—**वीप्सायां त्विति** । सूत्रावयवव्याख्यामुपसंहरति—**तस्मादिति** । अवयवान्तरमादाय व्याकरोति—**इतश्चेति** । कथं तावता निषेधस्य नाभावावसानत्वं तत्राऽऽह—**अभावेति** । नेतिनेतीति निषेधात्परमस्तीति प्रतिपादकं किमित्यपेक्षायामादेशनिर्वचनवाक्यमेवेत्यक्षरयोजनया दर्शयति—**तत्रेति** । निर्वचनप्रकारमेवाऽऽकांक्षापूर्वकमाह—**नेत्यादिना** । हि यस्मान्नेतिनेत्यादिष्टादेतस्माद्ब्रह्मणोऽन्यद्व्यतिरिक्तं नास्ति ब्रह्मैव परमस्ति तस्मान्नेति नेत्युच्यते, न तु सर्वाभावधियेति निर्वचनस्यार्थः । एवंप्रकारमेतन्निर्वचनमनिषिद्धं ब्रह्म वदतीत्याह—**तच्चेति** । निर्वचनमेवानिषिद्धं ब्रह्माऽऽहेति श्रुतियोजनयोक्तम् । इदानीं नामधेयमेव निषेधावशिष्टं ब्रह्माऽऽहेति विधान्तरेण श्रुतियोजनया दर्शयति—**यदेति** । किं तन्नामधेयं तदाह—**अथेति** । प्रकृतनिषेधस्याभावान्तत्वनिषेधार्थोऽथशब्दः । ननु नामधेयं निषेधस्याभावान्तत्वेऽपि तद्विषयं घटिष्यते नेत्याह—**तच्चेति** । द्वेधा सूत्रावयवव्याख्यामुपसंहरति—**तस्मादिति** ॥ २२ ॥ अनिषेध्यत्वेन वस्तु सत्यं ब्रह्मोक्त्वा तस्याग्राह्यत्वेनासत्त्वमा-

## तदव्यक्तमाह हि ॥ २३ ॥

यत्प्रतिषिद्धात्प्रपञ्चजातादन्यत्परं ब्रह्म तदस्ति चेत्कस्मान्न गृह्यत इति ॥ उच्यते ॥ तदव्यक्तम्, अनिन्द्रियग्राह्यं, सर्वदृश्यसाक्षित्वात् । आह ह्येवं श्रुतिः–"न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा" [ मुण्ड० ३ । १ । ८ ] "स एष नेतिनेत्यात्मा अगृह्यो न हि गृह्यते" [ बृ० ३ । ९ । २६ ] "यत्तदद्रेश्यमग्राह्यम्" [ मुण्ड० १ । १ । ६ ] "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने" [ तै० उ० २ । ७ । १ ] इत्याद्या । स्मृतिरपि–"अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते" [ भग० गी० २ । २५ ] इत्येवमाद्या ॥ २३ ॥

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

अपि चैनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले पश्यन्ति योगिनः । संराधनं च–भक्तिध्यानप्रणिधानाद्यनुष्ठानम् । कथं पुनरवगम्यते संराधनकाले पश्यन्तीति ॥ प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः। तथा हि श्रुतिः—"पराञ्चि खानि व्यतृणत्स्वयम्भूः तस्मात्पराङ् पश्यति नान्तरात्मन्" "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्व-

---

रत्नप्रभा ।

सूत्रं व्याचष्टे–यत्प्रतिषिद्धादिति ॥ रूपाद्यभावादव्यक्तमिन्द्रियाग्राह्यं, न त्वसत्त्वादित्यर्थः । अन्यैर्देवैः इन्द्रियान्तरैर्न गृह्यत इत्यन्वयः ॥ २३ ॥ अपि संराधने ॥ तर्हि कदा ग्राह्यमिति शंकोत्तरं सूत्रं व्याख्याति–अपि चैनमिति ॥ चः त्वर्थः । इन्द्रियैर्न गृह्यते । अपि तु संराधनेन । शास्त्रसंस्कृतमनसेत्यर्थः । भक्तिध्यानाभ्यां प्रत्यगात्मनश्चित्ते प्रकर्षेण निधानं स्थापनं प्रणिधानम् । जपनमस्कारादिरादिशब्दार्थः । स्वयम्भुः ईश्वरः । खानि इन्द्रियाणि । पराञ्चि नात्मग्राहकाणि कृत्वा व्यतृणत्

भामती ।–०

आनन्दगिरीय–न्यायनिर्णयः ।

शंक्य प्रत्याह–तदव्यक्तमिति । सूत्रव्यावर्त्यमाह–यत्तदिति । आत्मनि गृह्यमाणे तदभिन्नब्रह्मापि ग्राह्यमिति वाऽऽपद्यते भावत्वे घटवत्प्रत्यक्षग्राह्यता तस्य स्यादिति वा ? नाऽऽद्यः, प्रत्यगभिन्नत्वेऽप्यविद्यावृतत्वात्तदग्रहेऽपि तदग्रहसिद्धेरित्याह–उच्यत इति ॥ न द्वितीय इत्याह–तदिति । कथमिन्द्रियाग्राह्यत्वं ब्रह्मणः सिद्धं तत्राऽऽह–आह हीति । अन्यैर्देवैरिन्द्रियान्तरैरिति यावत् । श्रुत्युक्तिपरत्वेन सूत्रावयवं व्याख्याय विधान्तरेण व्याचष्टे–स्मृतिरिति ॥ २३ ॥ आत्मैव ब्रह्माविद्यावृतं चेन्न कदाचिदपि गृह्येतेत्याशंक्याऽऽह–अपीति । सूत्रं व्याकरोति–अपि चेति । नास्य सदा ग्राह्यत्वमग्राह्यत्वं वा समाध्यवस्थायां प्रत्यक्त्वेन मानादित्यर्थः । भक्तिध्यानाभ्यां प्रकर्षेण स्वीये मनसि प्रतीचो निधानं भक्तिध्यानप्रणिधानम् । आदिपदेन तत्पूर्वकजपनमस्कारादिग्रहणम् । तत्र प्रश्नपूर्वकं प्रमाणमाह–कथमिति । स्वयंभूः स्रष्टा परमात्मा खानि च्छिद्रोपलक्षितानीन्द्रियाणि पराञ्च्यनात्मविषयाणि व्यतृणद्धिंसितवान्सा हि तेषां हिंसा यदसदर्थविषयतया समर्पणमित्याह–पराञ्चीति । तेषां तथासृष्टत्वे गमकमाह–तस्मादिति । यदि पराञ्चमेवार्थमिन्द्रियैः पश्यति नान्तरात्मानं कथं तर्हि लोकस्य तत्र ज्ञानमित्याशंक्य साधनचतुष्टयवतः समाधिकाले शुद्धे मनसि प्रत्यक्त्वेन तद्दृष्टिरित्याह–कश्चिदिति । ततो नित्याद्यनुष्ठानात्परिशुद्धबुद्धिर्ज्ञानस्य करणव्युत्पत्त्याऽन्तःकरणस्य प्रसादो नैर्मल्यं तेन निरवयवं निष्प्रपञ्चं

मिच्छन्" [ कठ० ४ । १ ] इति । "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः" [ बृ० ३ । १ । ८ ] इति चैवमाद्या । स्मृतिरपि "यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्" इति चैवमाद्या ॥ २४ ॥ ननु संराध्यसंराधकभावाद्युपगमात्परापरात्मनोरन्यत्वं स्यादिति ॥ नेत्युच्यते–

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥**

यथा–प्रकाशाकाशसवितृप्रभृतयोऽङ्गुलिकरकोदकप्रभृतिषु कर्मसूपाधिभूतेषु सविशेषा इवावभासन्ते, न च स्वाभाविकीमविशेषात्मतां जहति, एवमुपाधिनिमित्त एवायमात्मभेदः । स्वतस्त्वैकात्म्यमेव । तथाहि–वेदान्तेष्वभ्यासेनासकृज्जीवप्राज्ञयोरभेदः प्रतिपाद्यते ॥ २५ ॥

**अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥**

अतश्च–स्वाभाविकत्वादभेदस्याविद्याकृतत्वाच्च भेदस्य विद्ययाऽविद्यां विधूय जीवः परेण अनन्तेन प्राज्ञेनात्मनैकतां गच्छति । तथा हि लिंगं "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" [ मुण्ड० ३।२९ ] "ब्रह्मैव सन्ब्रह्माप्येति" [ बृ० ४ । ४ । ६ ] इत्यादि ॥ २६ ॥

---

रत्नप्रभा ।

नाशितवान् । स हि तेषां नाशः । यदसमर्थग्राहितया सर्जनम् । तस्मात् तेषां तथा सृष्टत्वात् सर्वो लोकः परागर्थमेव पश्यति, नान्तरात्मानम् । कश्चित्तु धीरः धीमान् आवृत्तचक्षुः निरुद्धेन्द्रियः शुद्धे चेतसि प्रत्यगात्मानं शास्त्रेण पश्यति मोक्षार्थीत्यर्थः । ततः कर्मणा विशुद्धचित्तो ज्ञानाख्यसत्त्वोत्कर्षेण ध्यायंस्तं निष्कलं पश्यतीत्यर्थः । विनिद्राः वितमस्काः । तत्र हेतुर्जितश्वासत्वं–प्राणायामनिष्ठत्वम्, युञ्जानाः ध्यायिनः । योगलभ्यः आत्मा योगात्मा ॥ २४ ॥ प्रकाशादिवच्चेति॥यथा प्रकाशादयः उपाधिषु भिद्यन्ते, न स्वतः, एवं प्रकाशः चिदात्मापि ध्यानादिकर्मण्युपाधौ भिद्यते । स्वतस्त्वस्य अवैशेष्यम् एकरसत्वमेव । "तत्त्वमसि" [ छां० ६ । ८ । १६ ] इत्यभ्यासादिति सूत्रयोजना ॥ २५ ॥ जीवस्य ब्रह्मात्मत्वफलश्रुतिरूपलिंगादपि भेद औपाधिक एवेत्याह सूत्रकारः–अतोऽनन्तेनेति ॥ २६ ॥

भामती ।–०

आनन्दगिरीय–न्यायनिर्णयः ।

प्रत्यञ्चं ध्यायन्नविषयत्वेन तत्साक्षात्करोतीत्याह–ज्ञानेति । विगता निद्रा येभ्यस्ते तथेति स्वापाद्विवेकः । जितः श्वासो यैरिति प्राणायामनिष्ठतोक्तिः । संतुष्टा इति मनोव्याकुलताभ्यावृत्त्या स्वप्नाद्विवेकः । संयतानीन्द्रियाणि येषामिति जागरिताद्भेदः । एतानि विशेषणानि यमनियमादिसर्वांगोपसंग्रहार्थानि । योगात्मत्वं तज्जधीगम्यत्वम् ॥ २४ ॥ सूत्रान्तरव्यावर्त्यमाह–नन्विति । व्यावर्तकं सूत्रमवतारयति–नेतीति । प्रकाशादिवच्चेति भागं विभजते–यथेति । यद्यपि दृष्टान्तादात्मा प्रकाशशब्दितोऽज्ञानतत्कार्ये कर्मण्युपाधौ सविशेषस्तथाऽपि वस्तुतस्तस्यावैशेष्यमैकरस्यमेवेति दार्ष्टान्तिकमाह–एवमिति । अभ्यासादिति व्याचष्टे–तथा हीति ॥ २५ ॥ जीवस्य ब्रह्मात्मत्वाप्तिः श्रुतिवशादपि वास्तवमैक्यमौपाधिकं नानात्वमित्याह–अत इति । अतोऽनन्तेनेति व्याचष्टे–अतश्चेति । अभेदस्य स्वाभाविकत्वे सूत्रावयवं व्याकुर्वाणो हेतुमाह–तथा हीति । आदिपदेन ब्रह्मविदाप्नोति परमित्यादि ग्राह्यम् ॥ २६ ॥

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

तस्मिन्नेव संराध्यसंराधकभावे मतान्तरमुपन्यस्यति स्वमतविशुद्धये । क्वचिज्जीवप्राज्ञयोर्भेदो व्यपदिश्यते–"ततस्तु तं पश्यते निष्कलं ध्यायमानः" [ मुण्ड० ३ । १ । ८ ] इति ध्यातृध्यातव्यत्वेन द्रष्टृद्रष्टव्यत्वेन च "परात्परं पुरुषमुपैति दिव्यम्" [ मुण्ड० ३ । २ । ८ ] इति गन्तृगन्तव्यत्वेन "यः सर्वाणि भूतान्यन्तरो यमयति" [ बृ० ३ । ७ । १५ ] इति नियन्तृनियन्तव्यत्वेन च ॥ क्वचित्तु तयोरेवाभेदो व्यपदिश्यते–"तत्त्वमसि" [ छां० ६ । ८–१६ ] "अहं ब्रह्मास्मि" [ बृ० १ । ४ । १० ] "एष त आत्मा सर्वान्तरः" [ बृ० ३ । ४ । १ ] "एष त आत्माऽन्तर्याम्यमृतः" [ बृ० ३ । ७ । ३–२२ ] इति । तत्रैवमुभयव्यपदेशे सति यद्यभेद एवैकान्ततो गृह्येत, भेदव्यपदेशो निरालम्बन एव स्यात ॥ अत उभयव्यपदेशदर्शनादहिकुण्डलवदत्र तत्त्वं भवितुमर्हति । यथाहिरित्यभेदः कुण्डलाभोगप्रांशुत्वादीनि च भेदः, एवमिहापीति ॥ २७ ॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

अथ वा प्रकाशाश्रयवदेतत्प्रतिपत्तव्यम् । यथा–प्रकाशः सावित्रः, तदाश्रयश्च सविता, नात्यन्तभिन्नौ । उभयोरपि तेजस्त्वाविशेषात । अथ च भेदव्यपदेशभाजौ भवतः, एवमिहापीति ॥ २८ ॥

---

रत्नप्रभा ।

उभयव्यपदेशा० ॥ भेदाभेदपूर्वपक्षसूत्रद्वयस्य सङ्गतिमाह–तस्मिन्नेवेति ॥ यथा अहित्वेनाभेदः कुण्डलाख्यस्य सर्पावस्थाविशेषस्य, कुण्डलत्वेन भेदः । तथा जीवस्य ब्रह्मत्वेनाभेदो, जीवत्वेन भेदः ॥ यद्वा सूर्यप्रकाशयोरेकतेजस्त्वधर्मावच्छेदेन भेदाभेदवज्जीवपरयोरपि एकेनैवात्मत्वधर्मेण भेदाभेदौ श्रुतिबलात् स्वीकार्याविति सूत्रद्वयार्थः । कुण्डलत्वं–वलयाकारत्वम् । आभोगत्वं–वक्राकारत्वम् । प्रांशुत्वं–दीर्घदण्डाकारत्वम्, उद्धतमुखत्वम् आदिशब्दार्थः ॥ २७ ॥ २८ ॥ सिद्धान्तसूत्रम्–

भामती ।

व्याख्येयम् । शेषमतिरोहितार्थम् ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् । अनेनाहिरूपेणाभेदः कुण्डलादिरूपेण तु भेद इत्युक्तं, तेन विषयभेदाद्भेदाभेदयोरविरोध इत्येकविषयत्वेन वा सर्वदोपलब्धेरविरोधः । विरुद्धमिति हि नः क्व संप्रत्ययो न यत्प्रमाणेनोपलभ्यते । आगमतश्च प्रमाणादेकगोचरावपि भेदाभेदौ प्रतीयमानौ न विरोधमावहतः, सवितृप्रकाशयोरिव प्रत्यक्षात्प्रमाणाद्भेदाभेदाविति ॥ २७ ॥ प्रकारान्तरेण भेदाभेदयोरविरोधमाह–प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥ तदेवं परमतमुपन्यस्य स्वम-

आनन्दगिरीय–न्यायनिर्णयः ।

जीवब्रह्मणोरात्यन्तिकमैक्यमुक्त्वा भेदाभेदवादमुत्थापयति–उभयेति । सूत्रद्वयस्य संगतिमाह–तस्मिन्निति । तदुपन्यासफलमाह–स्वमतेति । अस्तु तर्हि भेदव्यपदेशात्तयोर्भिन्नत्वमेव तत्राऽऽह–क्वचिदिति । अन्यतरव्यपदेशात्तदन्यस्य त्याज्यतामाशंक्याऽऽह–तत्रेति । भेदो नियतो गृह्यते चेदभेदोक्तिरनालम्बना स्यादिति द्रष्टव्यम् । अन्यतरोक्तेरपि निरालम्बनत्वायोगे फलितमाह–अत इति । अत्रेति ब्रह्मात्मोक्तिः । अहिकुण्डलवदित्युक्तं विवृणोति–यथेति ॥ २७ ॥ अहिकुण्डलन्यायेन परस्य जीवः संस्थानभूतो दर्शितः । संप्रति तदेकदेशभूत इति विधान्तरमाह–प्रकाशेति । तद्व्याकरोति–अथ वेति । ब्रह्मात्मतत्त्वमेतदित्युक्तम् । दृष्टान्तं व्याचष्टे–यथेति । अभेद एव तर्हि तयोर्नेत्याह–अथ चेति । इहापीति

## पूर्ववद्वा ॥ २९ ॥

यथा वा-पूर्वमुपन्यस्तं प्रकाशादिवच्चावैशेष्यमिति, तथैव तद्भवितुमर्हति। तथाहि-अविद्याकृतत्वाद्बन्धस्य विद्यया मोक्ष उपपद्यते । यदि पुनः परमार्थत एव बद्धः कश्चिदात्माऽहिकुण्डलन्यायेन वा परस्यात्मनः संस्थानभूतः प्रकाशाश्रयन्यायेन चैकदेशभूतोऽभ्युपगम्येत, ततः पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वान्मोक्षशास्त्रवैयर्थ्यं प्रसज्येत । न चात्रोभावपि भेदाभेदौ श्रुतिस्तुल्यवद्व्यपदिशति,अभेदमेव हि श्रुतिः प्रतिपाद्यत्वेन निर्दिशति। भेदं तु पूर्वप्रसिद्धमेवानुवदति-अर्थान्तरविवक्षया। तस्मात्प्रकाशवच्चावैशेष्यमित्येष एव सिद्धान्तः ॥ २९ ॥

## प्रतिषेधाच्च ॥ ३० ॥

इतश्चैष एव सिद्धान्तः-यत्कारणं परस्मादात्मनोऽन्यच्चेतनं प्रतिषेधति शास्त्रं "नान्योऽतोऽस्ति द्रष्टा" [ बृ० ३ । ७ । २३ ] इत्येवमादि "अथात आदेशो नेति नेति" [ बृ० २ । ३।६] तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् [ बृ० २ । ५ । १९ ] इति च । ब्रह्मव्यतिरिक्तप्रपञ्चनिराकरणाद्ब्रह्ममात्रपरिशेषाच्चैष एव सिद्धान्त इति गम्यते ॥ ३० ॥ इति प्रकृतैतावत्त्वाधिकरणम् ॥ ( ६ ) ॥—

---

रत्नप्रभा ।

पूर्ववद्वेति॥धर्मभेदेनैकधर्मेण वा भेदाभेदस्वीकारे भेदस्य सत्यत्वादभेदवदनिवृत्तिः स्यात्।एकत्रैव भेदाभेदस्वीकारे लोके विरोधकयोच्छेद इत्यपि द्रष्टव्यम्॥तस्मात् निष्प्रपंचं चिदेकरसं ब्रह्म तत्पदलक्ष्यमस्तीतिसिद्धम् २९।३०(६)

भामती ।

तमाह-पूर्ववद्वा । अयमभिसंधिः-यस्य मतं वस्तुनोऽहित्वेनाभेदः कुण्डलत्वेन भेद इति, स एवं ब्रुवाणः प्रष्टव्यो जायते, किमहित्वकुण्डलत्वे वस्तुनो भिन्ने, उताभिन्ने इति । यदि भिन्ने, अहित्वकुण्डलत्वे भिन्ने इति वक्तव्यं न तु वस्तुनस्ताभ्यां भेदाभेदौ । न ह्यन्यभेदाभेदाभ्यामन्यद्भिन्नमभिन्नं वा भवितुमर्हति । अतिप्रसङ्गात् । अथ वस्तुनो न भिद्येते अहित्वकुण्डलत्वे, तथा सति को भेदाभेदयोर्विषयभेदस्तयोर्वस्तुनोऽनन्यत्वेनाभेदात् । न चैकविषयत्वेऽपि सदानुभूयमानत्वाद्भेदाभेदयोरविरोधः स्वरूपविरुद्धयोरप्यविरोधे क्व नाम विरोधो व्यवतिष्ठेत। न च सदानुभूयमानं विचारासहं भाविकं भवितुमर्हति । देहात्मभावस्यापि सर्वदानुभूयमानस्य भाविकत्वप्रसंगात् । प्रपञ्चितं चैतदस्माभिः प्रथमसूत्र इति नेह प्रपंचितं, तस्मादनाद्यविद्याविक्रीडितमेवैकस्यात्मनो जीवभावभेदो न भाविकः । तथा च तत्त्वज्ञानादविद्यानिवृत्तावपवर्गसिद्धिः । तात्त्विकत्वे त्वस्य न ज्ञानान्निवृत्तिसंभवः । न च तत्त्वज्ञानादन्यदपवर्गसाधनमस्ति । यथाह श्रुतिः- 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति । शेषमतिरोहितार्थम् ॥२९॥३०॥(६)॥

आनन्दगिरीय-न्यायनिर्णयः ।

पूर्ववद्ब्रह्मात्मोक्तिः परमतमुपसंहर्तुमितिशब्दः ॥ २८ ॥ स्वसिद्धान्तमाह-**पूर्ववद्वेति** । तत्प्रपञ्चयति-**यथेति** । तर्हि भेदस्यैव प्रतिपाद्यता । मैवं, प्रसिद्धानुवादेनाप्रसिद्धस्य तद्भावादित्याह-**अभेदमिति** । परमतायोगे स्वमतमुपसंहरति-**तस्मादिति** ॥ २९ ॥ स्वमतसंभवे हेत्वन्तरमाह-**प्रतिषेधाच्चेति** । चकारार्थमाह-**इतश्चेति** । इतःशब्दार्थं विवृण्वन्नादौ चेतनभेदनिषेधमुदाहरति-**यदिति** । अचेतनभेदनिषेधं दर्शयति-**अथेति** । उक्तनिषेधद्वयात्मकशास्त्रतात्पर्यं संगृह्णाति-**ब्रह्मेति** । तदेवं निषेधवा-

## परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥ (७) ॥

यदेतन्निरस्तसमस्तप्रपञ्चं ब्रह्म निर्धारितम् । अस्मात्परमन्यत्तत्त्वमस्ति, नास्ति,-इति श्रुतिविप्रतिपत्तेः संशयः । कानिचिद्वाक्यान्यापातेनैव प्रतिभासमानानि ब्रह्मणोऽपि परमन्यत्तत्त्वं प्रतिपादयन्तीव ॥ तेषां हि परिहारमभिधातुमयमुपक्रमः क्रियते ॥ परमतः ब्रह्मणोऽन्यत्तत्त्वं भवितुमर्हति ॥ कुतः ॥ सेतुव्यपदेशाद्, उन्मानव्यपदेशात, सम्बन्धव्यपदेशाद्, भेदव्यपदेशाच्च ॥ सेतुव्यपदेशस्तावत्-"अथ य आत्मा स सेतुर्विधृतिः" [ छां० ८ । ४ । १ ] इत्यात्मशब्दाभिहितस्य ब्रह्मणः सेतुत्वं सङ्कीर्तयति । सेतुशब्दश्च हि लोके जलसन्तानविच्छेदकारके मृदार्वादिप्रचये प्रसिद्धः । इह च सेतुशब्द आत्मनि प्रयुक्त इति लौकिकसेतोरिवात्मसेतोरन्यस्य वस्तुनोऽस्तित्वं गमयति । "सेतुं तीर्त्वा" [ छां० ८ । ४ । २ ] इति च तरतिशब्दप्रयोगात । यथा-लौकिकं सेतुं तीर्त्वा जाङ्गलमसेतुं प्राप्नोति,

---

रत्नप्रभा ।

यदुक्तं "नेतिनेति" इत्यादिश्रुतिभिः ब्रह्मातिरिक्तं वस्तु निषिध्यत इति ॥ तदयुक्तम् । सेत्वादिश्रुतिभिर्वस्त्वन्तरास्तित्वभानादित्याक्षिपति—परमत इति ॥ यद्यपि द्युभ्वाद्यधिकरणे सेतुशब्दो विधारकत्वेन गौणो व्याख्यातः । तथाप्युन्मानादिश्रुतीनां गतिमजानतोऽयं पूर्वपक्षः । तत्रोन्मानादिश्रुतीनां मुख्यत्वात् सद्वयं ब्रह्मेति फलं, सिद्धान्ते तूक्ताऽद्वितीयतत्पदलक्ष्यसिद्धिरिति विवेकः ॥ ब्रह्म, सद्वयं, सेतुत्वात्, लौकिकसेतुवत्, तीर्णत्वश्रुतेश्चेत्याह-सेतुं तीर्त्वेति ॥ "जांगलं वातभूयिष्ठम् " इति वैद्योक्तेः

भामती ।

परमतः सेतून्मानसंवन्धभेदव्यपदेशेभ्यः । यद्यपि श्रुतिप्राचुर्याद्ब्रह्मव्यतिरिक्तं तत्त्वं नास्तीत्यवधारितं तथापि सेत्वादिश्रुतीनामापाततस्तद्विरोधदर्शनात्तत्प्रतिसमाधानार्थमयमारम्भः । जाङ्गलं स्थलम् । प्रकाशवदनन्तवज्ज्योतिष्मदायतनवदिति पादा ब्रह्मणश्चत्वारस्तेषां पादानामर्धान्यष्टौ शफाः । तेऽष्टावस्य ब्रह्मण इत्यष्टशफं ब्रह्म । षोडश कला अस्येति षोडशकलम् । तद्यथा प्राची प्रतीची दक्षिणोदीचीति चतस्रः

आनन्दगिरीय–न्यायनिर्णयः ।

क्यार्थालोचनया निष्प्रपञ्चं ब्रह्म वाक्यार्थान्वययोग्यं तत्पदलक्ष्यमिति ॥ ३० ॥ ( ६ ) ॥ नेतिनेतीति ब्रह्मातिरिक्तं सर्वं निषेध्यमित्युक्तं, तदयुक्तं;सेत्वादिव्यपदेशेभ्यो वस्त्वन्तरसत्त्वावगमात्।द्युभ्वाद्यधिकरणे सेतुव्यपदेशस्य प्रतिनीतत्वेऽपि भेदादिव्यपदेशानां गतिमजानन्नाशंकते--परमिति । विषयोक्तिपूर्वकं सवीजं संशयमाह—यदिति । सर्वश्रुतिविप्रतिपत्तिनिरासेनाद्वयं ब्रह्मैव वस्तु नान्यदिति स्थिते कथमयमारम्भः स्यादित्याशंक्याऽऽह-कानिचिदिति । मन्दाशंकानिरासाय तत्पदलक्ष्यस्याद्वयत्वप्रपञ्चार्थोऽयमारम्भस्ततोस्य पादादिसंगतिसौलभ्यम् । पूर्वपक्षे सद्वितीयत्वाद्ब्रह्मणो द्वितीयनिषेधासिद्धिः । सिद्धान्ते तस्याद्वयत्वाद्द्वैतनिषेधोपपत्तिः । अन्यस्य निषेधाद्ब्रह्मणश्च श्रुतत्वात्तदस्ति चेद्ब्रह्मातिरिक्तस्यापि श्रुत्योक्तत्वादस्तितेति मत्वा पूर्वपक्षसूत्रं योजयति-परमित्यादिना । इतिशब्दोऽक्षरयोजनासमाप्त्यर्थः । तत्राऽऽद्यं विवृणोति-सेत्विति । ब्रह्मणः सेतुत्वेऽपि कथं सद्वितीयत्वमित्याशंक्य व्याप्तिमाह-सेतुशब्दश्चेति । ब्रह्म सद्वितीयं सेतुत्वाल्लौकिकसेतुवदिति मत्वाऽऽह-इह चेति । इतश्च ब्रह्मसेतोः सद्वितीयत्वमित्याह-सेतुमिति । कथमेतावता वस्त्वन्तरास्तित्वं तत्राऽऽह-यथेति । जाङ्गलं वातभूयिष्ठमित्युक्तत्वाद्वातबहुलो देशो जाङ्गलम् । इह तु न्यायसाम्येन स्थलमात्रमुक्तम् । द्वितीयं हेतुं व्याकरोति-

**एवमात्मानं सेतुं तीर्त्वाऽनात्मानमसेतुं प्राप्नोतीति गम्यते॥ उन्मानव्यपदेशश्च भवति-"तदेतद्ब्रह्म चतुष्पादष्टाशफम्" "षोडशकलम्" इति ॥ यच्च लोके उन्मितमेतावदिदमिति परिच्छिन्नं कार्षापणादि, ततोऽन्यद्वस्त्वस्तीति प्रसिद्धं,तथा-ब्रह्मणोऽप्युन्मानात्ततोऽन्येन वस्तुना भवितव्यमिति गम्यते ॥ तथा-सम्बन्धव्यपदेशो भवति-"सता सोम्य तदा सम्पन्नो भवति" इति "शारीर आत्मा प्राज्ञेनात्मना सम्परिष्वक्तः" इति च । अमितानां च मितेन सम्बन्धो दृष्टो यथा-नराणां नगरेण । जीवानां च ब्रह्मणा सम्बन्धं व्यपदिशति सुषुप्तौ । अतस्ततः परमन्यदमितमस्तीति गम्यते ॥ भेदव्यपदेशश्चैनमर्थं गमयति । तथाहि-"अथ य एषोऽन्तरा-**

रत्नप्रभा ।

वातप्रचुरो देशः जांगलम् । इह तु देशमात्रं ग्राह्यम् । दिशश्चतस्रः-कला: प्रकाशवान्नाम-पादः, पृथिव्यन्तरिक्षं द्यौः समुद्र इत्यनन्तवान्नाम-पादः, अग्निः सूर्यश्चन्द्रो विद्युदिति ज्योतिष्मान्नाम-पादः, चक्षुः श्रोत्रं वाङ् मन इत्यायतनवान्नाम-पाद इति-**चतुष्पाद्ब्रह्मेति**, पादानामर्धानि अष्टौ शफाः अस्येति-**अष्टाशफम्** । पादेषु चतुर्षु प्रत्येकं चतस्रः कला इति षोडशकलमित्यर्थः । षोडशपणपरिमितं ताम्रं-**कार्षापणसंज्ञं** भवति, तद्वत् सद्वयं ब्रह्म । परिमितत्वादित्यर्थः । सम्बन्धित्वाच्च नगरवदित्याह-**तथा सम्बन्धेति ॥ अन्यदमितमिति** । असङ्ख्यातमित्यर्थः । अन्यस्पर्शे अल्पत्वेन मितत्वनियमादिति मन्तव्यम्॥ भेदेनोक्तत्वाच्च घटवदित्याह-**भेदव्यपदेशश्चेति ॥ अस्य** अक्षिस्थस्य **अमुना** आदित्यस्थेन **सहेति**

भामती ।

कला अवयवा इव कलाः स प्रकाशवान्नाम प्रथमः पादः । एतदुपासनायां प्रकाशवान् मुख्यो भवतीति प्रकाशवान् पादः । अथापराः पृथिव्यन्तरिक्षं द्यौः समुद्र इति चतस्रः कला एष द्वितीयः पादोऽनन्तवान्नाम । सोऽयमनन्तवत्त्वेन गुणेनोपास्यमानोऽनन्तत्वमुपासकस्यावहतीति अनन्तवान् पादः । अथाग्निः सूर्यश्चन्द्रमा विद्युदिति चतस्रः कलाः स ज्योतिष्मान्नाम पादस्तृतीयस्तदुपासनाज्ज्योतिष्मान् भवतीति ज्योतिष्मान् पादः । अथ घ्राणश्चक्षुः श्रोत्रं वागिति चतस्रः कलाश्चतुर्थः पाद आयतनवान्नाम । एते घ्राणादयो हि गन्धादिविषया मन आयतनमाश्रित्य भोगसाधनं भवन्तीत्यायतनवान्नाम पादः । तदेवं चतुष्पाद्ब्रह्माष्टशफं षोडशकलमुन्मिषितं श्रुत्या । अतस्ततो ब्रह्मणः परमन्यदस्ति । स्यादेतत् । अस्ति चेत् परिसंख्यायोच्यतामेतावदिति । अत आह-**अमितमस्तीति** प्रमाणसिद्धम् । न त्वेतावदित्यर्थः ।

आनन्दगिरीय-न्यायनिर्णयः ।

**उन्मानेति** । प्राची प्रतीची दक्षिणोदीचीति चतस्रः कलाः प्रकाशवान्पादः । पृथिव्यन्तरिक्षं द्यौः समुद्र इत्यनन्तवान्पादः । अग्निः सूर्यश्चन्द्रमा विद्युदिति ज्योतिष्मान्पादः । चक्षुः श्रोत्रं वाङ् मन इत्यायतनवान्पादः । एते पादाश्चत्वारोऽस्येति चतुष्पाद्ब्रह्म पादानामर्धान्यष्टौ शफान्यस्येत्यष्टाशफं चतस्रश्चतस्रः कला एकैकस्य पादस्येति षोडशकलं षोडशावयवमित्यर्थः । एवमुन्मानेऽपि कथं वस्त्वन्तरास्तित्वं तत्राऽऽह-**यच्चेति** । कार्षापणशब्देन षोडशपणानां संज्ञोक्ता । ब्रह्म सद्वितीयमुन्मितत्वात्संमतवदित्याह-**तथेति** । तृतीयं हेतुं व्याचष्टे-**तथेति** । तथाऽपि कथं सद्वितीयत्वमित्याशंक्य व्याप्तिमाह-**मितानां चेति** । व्याप्तस्य हेतोः पक्षधर्मतामाह-**जीवानां चेति** । विमतं सद्वितीयं संबन्धवत्त्वान्नगरवदित्याह-**अत इति** । चतुर्थं हेतुं विवृणोति-**भेदेति** । तत्राऽऽधारतो भेदव्यपदेशमुदाहरति-**तथा हीति** ।

दित्ये हिरण्मयः पुरुषो दृश्यते" [ छां० १ । ६ । ६ ] इत्यादित्याधारमीश्वरं व्यपदिश्य ततो भेदेनाक्ष्याधारमीश्वरं व्यपदिशति–"अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते" [ छां० १ । ७ । ५ ] इति । अतिदेशं चास्यामुना रूपादिषु करोति–"तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम" [ छां० १।७।५] इति । सावधिकं चेश्वरत्वमुभयोर्व्यपदिशति "ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामनाञ्च" [ छां० १ । ७ । ६ ] इत्येकस्य, "ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च [ छां० १ । ७ । ६] इत्येकस्य । यथेदं मागधस्य राज्यमिदं वैदेहस्येति ॥ ३१ ॥ एवमेतेभ्यः सेत्वादिव्यपदेशेभ्यो ब्रह्मणः परमस्तीत्येवं प्राप्ते प्रतिपद्यते–

## सामान्यात्तु ॥ ३२ ॥

तुशब्देन प्रदर्शितां प्राप्तिं निरुणद्धि । न ब्रह्मणोऽन्यत्किञ्चिद्भवितुमर्हति । प्रमाणाभावात् । न ह्यन्यस्यास्तित्वे किञ्चित्प्रमाणमुपलभामहे । सर्वस्य हि जनिमतो वस्तुजातस्य जन्मादि ब्रह्मणो भवतीति निर्धारितम्। अनन्यत्वं च कारणात्कार्यस्य । न च ब्रह्मव्यतिरिक्तं किञ्चिदजं सम्भवति । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"[बृ०]इत्यवधारणात्।एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानात । न च ब्रह्मव्यतिरिक्तं वस्त्वस्तित्वम-

---

रत्नप्रभा ।

यावत् ॥ आधारतोऽतिदेशतश्च भेदमुक्त्वाऽवधितोऽपि तमाह–सावधिकं चेति ॥ ३१ ॥ सिद्धान्तसूत्रं व्याचष्टे–तुशब्देनेत्यादिना ॥ यदन्यत, तत्-किं-सादि,–आनादि वा । नाद्यः मानाभावात्, कार्यस्य ब्रह्मानन्यत्वनिर्णयाच्चेत्युक्त्वा न द्वितीयः प्रागुत्पत्तेरद्वयत्वावधारणादित्याह–न च ब्रह्मव्यतिरिक्तमिति ॥ उक्तानुमानानामागमबाध इति भावः ॥ उक्तं स्मारयित्वा हेतूनामसिद्धिमाह–

भामती ।

भेदव्यपदेशश्च त्रिप्रकरः–आधारतश्चातिदेशतश्चावधितश्च ॥ ३१ ॥ सामान्यात्तु । जगतस्तन्मर्यादानां च विधारकत्वं च सेतुसामान्यम् । यथा हि तन्तवः पटं विधारयन्ति तदुपादानत्वादेवं ब्रह्मापि जगद्विधारयति तदुपपादकत्वात् । तन्मर्यादानां च विधारकं ब्रह्म । इतरथातिचपलस्थूलवलवत्कल्लोलमालाकलिलो

आनन्दगिरीय–न्यायनिर्णयः ।

अतिदेशतस्तं दर्शयति–अतिदेशं चेति । अस्येत्यक्षिस्थस्य पुरुषस्येत्यर्थः । अमुनेत्यादित्यमण्डलस्थेन पुरुषेण सहेति यावत् । अवधितोऽपि भेदोक्तिं साधयति–सावधिकं चेति । एकस्येत्याधिदैविकस्य पुरुषस्येति यावत् । पुनरेकस्येत्याध्यात्मिकस्य पुरुषस्येत्यर्थः । ऐश्वर्यस्य सावधिकत्वे दृष्टान्तमाह–यथेति । विमतं सद्वितीयं भेदव्यपदेशभाक्त्वाद्धटवदित्यर्थः ॥ ३१ ॥ पूर्वपक्षमुपसंहरति–एवमिति । ब्रह्मणः सद्वितीयत्वे ततोऽन्यस्य निषेध्यत्वोक्तिरयुक्तेति वक्तुमितीत्युक्तम् । पूर्वपक्षमनूद्य सिद्धान्तयति–एवमिति । सूत्रं व्याचष्टे–तुशब्देनेति । निरोधप्रकारमभिनयति–नेति । तत्किं सादि किंवाऽनादि । प्रथमं प्रत्याह–प्रमाणेति । तदेव स्फुटयति–न हीति । अभेदेऽपि मानादृष्टिस्तुल्येत्याशंक्य जन्मादिसूत्रमारभ्य तत्रतत्र सिद्धमर्थं स्मारयति—सर्वस्येति । आरम्भणाधिकरणसिद्धमर्थं कथयति–अनन्यत्वं चेति । द्वितीयं निराह–न चेति । ब्रह्मातिरिक्तवस्त्वभावे श्रुतिवत्तदर्थापत्तिमाह–एकेति । ब्रह्मणः सद्विती-

वकल्पते ॥ ननु सेत्वादिव्यपदेशाः ब्रह्मव्यतिरिक्तं सत्त्वं सूचयन्तीत्युक्तम् ॥ नेत्युच्यते ॥ सेतुव्यपदेशस्तावन्न ब्रह्मणो बाह्यस्य सद्भावं प्रतिपादयितुं क्षमते। "सेतुरात्मेति ह्याह न पुनस्ततः परमस्ति" इति। तत्र परस्मिन्नसति सेतुत्वं नावकल्पत इति परं किमपि कल्प्येत। न चैतन्न्याय्यम्। हठो ह्यप्रसिद्धकल्पना ॥ अपि च सेतुव्यपदेशात्मनो लौकिकसेतुनिदर्शनेन सेतुबाह्यवस्तुतां प्रसञ्जयता मृद्दारुमयतापि प्रासञ्ज्येत। न चैतन्न्याय्यम्। अजत्वादिश्रुतिविरोधात्। सेतुसामान्यात्तु सेतुशब्द आत्मनि प्रयुक्त इति श्लिष्यते। जगतस्तन्मर्यादानां च विधारकत्वं सेतुसामान्यमात्मनः। अतः सेतुरिव सेतुरिति प्रकृत आत्मा स्तूयते। सेतुं तीर्त्वेत्यपि तरतेरतिक्रमासम्भवात्प्राप्त्यर्थ एव वर्तते। यथा व्याकरणं तीर्ण इति-प्राप्त इत्युच्यते, नातिक्रान्तः, तद्वत् ॥ ३२ ॥

## बुद्ध्यर्थः पादवत् ॥ ३३ ॥

रत्नप्रभा।

**ननु सेत्वित्यादिना** ॥ किं सेतुश्रुत्या परसिद्धिरर्थाद्वा? नाद्यः इत्युक्त्वा, द्वितीयं शङ्कते—**तत्र परस्मिन्निति** ॥ सेतुत्वलिंगेनाद्वितीयत्वश्रुतिबाधनमन्याय्यमित्याह—**न चेति** ॥ लिंगं चासिद्धमित्याह—**अपि चेति** ॥ विधारकत्वं तु कल्पितद्वितीयापेक्षयापि युज्यत इति भावः ॥ तीर्णत्वहेतुरप्यसिद्ध इत्याह—**सेतुं तीर्त्वेति** ॥ ३२ ॥ परिमितत्वमप्यसिद्धमित्याह—**बुद्ध्यर्थ इति** ॥ वाक्प्राणचक्षुःश्रोत्राणि-मनसः

भामती।

जलनिधिरिलापरिमण्डलमवगिलेत्। वडवानलो वा विस्फूर्जितज्वालाजटिलो जगद्भस्मसाद्भावयेत्। पवनः प्रचण्डो वाकाण्डमेव ब्रह्माण्डं विघटयेदिति। तथा च श्रुतिः—'भीषास्माद्वातः पवते' इत्यादिका ॥ ३२ ॥

**बुद्ध्यर्थः पादवत्।** मनसो ब्रह्मप्रतीकस्य समारोपितब्रह्मभावस्य वाग्घ्राणश्चक्षुः श्रोत्रमिति चत्वारः पादाः। मनो हि वक्तव्यघ्रातव्यद्रष्टव्यश्रोतव्यान् गोचरान् वागादिभिः संचरतीति संचरणसाधारणतया मनसः पादास्तदिदमध्यात्मम्। आकाशस्य ब्रह्मप्रतीकस्याग्निर्वायुरादित्यो दिश इति चत्वारः पादाः। ते

आनन्दगिरीय—न्यायनिर्णयः।

यत्वे मानान्युक्तानीति शंकते—**नन्विति**। तत्र हेतुव्यपदेशस्य द्वितीयवस्तुसाधकत्वं नास्तीत्याह—**नेतीति**। स हि श्रुतितोऽर्थतो वा वस्त्वन्तरं साधयति तत्राऽऽद्यं दूषयति—**सेत्विति**। द्वितीयं शंकते—**तत्रेति**। श्रौतार्थविरोधादार्थिकार्थो न युक्तो लिंगस्य श्रुतितो दुर्बलत्वादित्याह—**न चेति**। इतश्च तस्य न वस्त्वन्तरसाधकत्वमित्याह—**अपि चेति**। विवक्षितं सेतुसाम्यमुपेक्ष्य तद्बाह्यमर्थान्तरं कल्पयतोऽतिप्रसक्तिः स्यादिति हेत्वन्तरमेव स्फुटयति—**सेत्विति**। यावति स्वीकृते श्रुतिर्न विरुध्यते तावदेव स्वीकर्तव्यं तस्या निर्दोषत्वेन बलवत्तरत्वादित्याह—**न चेति**। सेतुशब्दस्य तर्हि का गतिरित्याशंक्य सूत्रयोजनया दर्शयति—**सेतुसामान्यादिति**। किं तत्प्रसिद्धेन सेतुना सामान्यमात्मनि सेतुशब्दप्रयोगे निमित्तं तदाह—**जगत इति**। तस्य जगतो मर्यादास्तत्तन्नियतार्थक्रियासु व्यवस्थितत्वलक्षणास्तासां तदाश्रयस्य जगतश्चान्तर्यामितया सदात्मनो विधारकत्वं तस्य सेतुसामान्यमित्यर्थः। तेनाऽऽत्मनि सेतुशब्दप्रयोगे सति किं सिध्यति तदाह—**अत इति**। यत्तु तरतिशब्दादात्मसेतोः सद्वितीयत्वं तत्राऽऽह—**सेतुमिति**। स्वस्यैव स्वातिक्रमायोगात्प्राप्त्यर्थस्तरतिरित्युक्तं प्राप्नोतेरपि स्वात्मन्ययोगात् ब्रह्मविदाप्नोतीतिवदुपपत्तावपि नात्र तरतिस्तदर्थो वृद्धप्रयोगानुपलब्धेरित्याशंक्याऽऽह—**यथेति**॥ ३२॥ सेतुव्यपदेशवद्वितीयं हेतुं निरस्यति—**बुद्ध्यर्थ इति**।

यदप्युक्तमुन्मानव्यपदेशादस्ति परमिति ॥ तत्राभिधीयते ॥ उन्मानव्यपदेशोऽपि न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वप्रतिपत्त्यर्थः॥ किमर्थस्तर्हि॥ बुद्ध्यर्थः। उपासनार्थ इति यावत् । चतुष्पादष्टाशफं षोडशकलमित्येवंरूपा बुद्धिः कथं नु नाम ब्रह्मणि स्थिरा स्यादिति विकारद्वारेण ब्रह्मण उन्मानकल्पनैव क्रियते । न ह्यविकारेऽनन्ते ब्रह्मणि सर्वैः पुंभिः शक्या बुद्धिः स्थापयितुम् । मन्दमध्योत्तमबुद्धित्वात्पुंसामिति । पादवत् । यथा मनआकाशयोरध्यात्ममधिदैवतं च ब्रह्मप्रतीकयोराम्नातयोश्चत्वारो वागादयो मनःसम्बन्धिनः पादाः कल्प्यन्ते, चत्वारश्चाग्न्यादय आकाशसम्बन्धिनः, आध्यानाय, तद्वत् ॥ अथ वा—पादवदिति—यथा कार्षापणे पादविभागो व्यवहारप्राचुर्याय कल्प्यते, न हि सकलेनैव कार्षापणेन सर्वदा सर्वे जना व्यवहर्तुमीशते । क्रयविक्रयपरिमाणानियमात् । तद्वदित्यर्थः ॥ ३३ ॥

## स्थानविशेषात्प्रकाशादिवत् ॥ ३४ ॥

---

रत्नप्रभा ।

पादाः, अग्निवाय्वादित्यदिशः—आकाशस्य—पादाः,—ध्यानार्थं कल्पिताः—तद्वत्—ब्रह्मण उन्मानमित्यर्थः ॥ लौकिकं दृष्टान्तमाह—अथ वेति ॥ पादकल्पनां विनापि व्यवहारः किं न स्यादित्यत आह—न हीति ॥ कार्षापणस्य व्यवहाराय पादकल्पनावत्, मन्दधियां ध्यानव्यवहाराय ब्रह्मण उन्मानकल्पनेत्यर्थः ॥ ३३ ॥ सम्बन्धभेदौ कल्पितौ न सत्यद्वितीयसाधकौ इत्याह—स्थानेति ॥ स्थानम् उपाधिर्बुद्ध्यादिः एकस्यैवोपाधिना भिन्नस्योपाधिशान्तौ सत्यां सम्बन्ध उपचर्यते । यथा सौरालोकादेरङ्गुल्याद्युपाधिना भिन्नस्योपाधिवियोगे महाऽऽलोकाद्यात्मना सम्बन्धोपचारः, तद्वत्, तथाऽऽदित्यचक्षुषोः स्थानयोर्भेदाद्धि-

भामती ।

हि व्यापिनो नभस उदर इव गोः पादा विलग्ना उपलक्ष्यन्त इति पादास्तदिदमधिदैवतम् । तदनेन पादवदिति वैदिकं निदर्शनं व्याख्याय लौकिकं चेदं निदर्शनमित्याह—अथ वा पादवदिति॥ तद्वदिति । इहापि मन्दबुद्धीनामाध्यानव्यवहारायेत्यर्थः ॥ ३३ ॥ स्थानविशेषात्प्रकाशादिवत् । बुद्ध्याद्युपाधिस्थानविशेषयोगादुद्भूतस्य जाग्रत्स्वप्नयोर्विशेषविज्ञानस्योपाध्युपशमेऽभिभवे सुषुप्तावस्थानमिति । तथा भेदव्यपदेशोऽपि त्रिविधो ब्रह्मण उपाधिभेदापेक्षयेति । यथा सौचजालमार्गनिवेशिन्यः सवितृभासो जालमा-

आनन्दगिरीय—न्यायनिर्णयः ।

व्यावर्त्यमनूद्य व्यावर्तकं सूत्रमादाय विभजते—यदपीति । उन्मानव्यपदेशोऽपीत्यपिना सेतुव्यपदेशो दृष्टान्त्यते । उपासनार्थत्वमुन्मानव्यपदेशस्य विशदयति—चतुष्पादिति । शुद्धं ब्रह्म हित्वा सोपाधिके किमिति तत्र बुद्धिः स्थिरीक्रियते तत्राऽऽह—न हीति । उत्तमबुद्धीनां झटित्यनौपाधिके ब्रह्मणि बुद्धिप्रवेशोऽपीतरेषां तदभावात्तेषामपि संग्रहार्थं सोपाधिके ब्रह्मणि स्थिरीक्रियते बुद्धिरिति फलितं वक्तुमितीत्युक्तम् । सूत्रभागमादाय वैदिकोदाहरणत्वेन व्याकरोति—पादवदित्यादिना । वागादय इत्यादिशब्देन प्राणश्चक्षुः श्रोत्रमिति गृहीतम् । अग्न्यादय इत्यादिशब्देन वायुरादित्यो दिश इति त्रयमुक्तम् । इदानीं तमेव सूत्रावयवं लौकिकत्वेन योजयति—अथ वेति । पादविभागं विनाऽपि व्यवहारबाहुल्यं स्यादित्याशंक्याऽऽह—न हीति । उक्तदृष्टान्तेन मन्दमध्यमधियां ध्यानव्यवहाराय ब्रह्मण्युन्मानकल्पनेति दार्ष्टान्तिकमाह—तद्वदिति ॥ ३३ ॥ अवशिष्टं हेतुद्वयं निराचष्टे—स्थानेति ।

इह सूत्रे द्वयोरपि संबन्धभेदव्यपदेशयोः परिहारोऽभिधीयते-यदप्युक्तं सम्बन्धव्यपदेशाद्भेदव्यपदेशाच्च परमतः स्यादिति ॥ तदप्यसत् । यत एकस्याऽपि स्थानविशेषापेक्षयैतौ व्यपदेशावुपपद्येते । सम्बन्धव्यपदेशे तावदयमर्थः-बुद्ध्याद्युपाधिस्थानविशेषयोगादुद्भूतस्य विशेषविज्ञानस्योपाध्युपशमे य उपशमः स परमात्मना सम्बन्ध इत्युपाध्यपेक्षयोपचर्यते, न परिमितत्वापेक्षया ॥ तथा भेदव्यपदेशोऽपि ब्रह्मण उपाधिभेदापेक्षयैवोपचर्यते, न स्वरूपभेदापेक्षया प्रकाशादिवदित्युपमोपादानम् । यथैकस्य प्रकाशस्य सौर्यस्य, चान्द्रमसस्य वोपाधियोगादुपजातविशेषस्योपाध्युपशमात्सम्बन्धव्यपदेशो भवति, उपाधिभेदाच्च भेदव्यपदेशः । यथा वा-सूचीपाशाकाशादिषूपाध्यपेक्षयैवैतौ भेदव्यपदेशौ भवतः,-तद्वत् ॥ ३४ ॥

## उपपत्तेश्च ॥ ३५ ॥

उपपद्यते चात्रेदृश एव सम्बन्धो, नान्यादृशः । यथा "स्वमपीतो भवति" इति हि स्वरूपसम्बन्धमेनमामनन्ति । स्वरूपस्य चानपायित्वात्, न नरनगरन्यायेन सम्बन्धो घटते, उपाधिकृतस्वरूपतिरोभावात्तु-"स्वमपीतो भवति" इत्युपपद्यते ॥ तथा भेदोऽपि नान्यादृशः सम्भवति । बहुतरश्रुतिप्रसिद्धैकेश्वरत्वविरोधात् । तथा च श्रुतिरेकस्याप्याकाशस्य स्थानकृतं भेदव्यपदेशमुपपादयति-"योऽयं बहिर्धा पुरुषादाकाशो योऽयमन्तः पुरुष आकाशो योऽमन्तर्हृदय आकाशः" इति च ॥ ३५ ॥

---

रत्नप्रभा ।

रणमयपुरुषभेदकल्पनेत्यर्थः ॥ ३४ ॥ मुख्यावेव सम्बन्धभेदौ किं न स्यातामित्यत्र सूत्रम्-उपपत्तेश्चेति ॥ स्वरूपेण ब्रह्मणा जीवस्य सम्बन्धो भेदनिवृत्तिरूपो युज्यते, न मुख्यः संयोगादिः ।

भामती ।

गौपाधिभेदाद्भिन्ना भासन्ते तद्विगमे तु गभस्तिमण्डलेनैकीभवन्त्यतस्तेन संबध्यन्त एवमिहापीति ॥ ३४ ॥ स्यादेतत् । एकीभावः कस्मादिह संबन्धः कथंचिद्व्याख्यायते न मुख्य एवेत्येतत्सूत्रेण परिहरति-उपपत्तेश्च । स्वमपीत इति हि स्वरूपसंबन्धं ब्रूते । स्वभावश्चेदनेन संबन्धत्वेन स्पृष्टस्ततः स्वाभाविकस्तादात्म्यान्नातिरिच्यत इति तर्कपाद उपपादितमित्यर्थः । तथा भेदोऽपि त्रिविधो वान्यादृशः स्वाभाविक

आनन्दगिरीय-न्यायनिर्णयः ।

सूत्रतात्पर्यमाह—इहेति । तमेव परिहारमुमुक्त्वाऽनुवादद्वारा स्फोरयति-यदपीति । तत्र सूत्रावयवं हेतुत्वेन योजयति-यत इति । स्थानविशेषो बुद्धिः आदित्यश्चक्षुरित्यादिः । द्वयोरपि परिहारं संक्षिप्य विभज्य दर्शयन्नादौ संबन्धव्यपदेशं प्रत्याह-संबन्धेति । भेदव्यपदेशोऽपि स्थानविशेषादिति पदं योजयति-तथेति । व्यपदेशयोरौपाधिकत्वे प्रकाशदृष्टान्तं व्याचष्टे-प्रकाशेत्यादिना । आदिशब्देनोक्तमुदाहरणान्तरमाह-यथा वेति । एवमेकस्मिन्नपि ब्रह्मण्युपाध्यपेक्षावेतौ व्यपदेशावित्याह-तद्वदिति ॥ ॥ ३४ ॥ मुख्ये व्यपदेशद्वये संभवति कुतस्तदौपचारिकमुच्यते तत्राऽऽह-उपपत्तेश्चेति । तत्र संबन्धव्यपदेशे सूत्रं योजयति-उपपद्यते चेति । अत्रेति ब्रह्मात्मनोरुक्तिः । औपचारिकस्यैव संबन्धस्योपपत्तिमुपपादयति-स्वमिति । मुख्यसंबन्धासंभवं साधयति-स्वरूपस्येति । संबन्धस्य द्विनिष्ठत्वादेकस्मिन्नयोगमाशंक्याऽऽह-उपाधीति । इदानीमौपचारिकं भेदमादाय सूत्रं योजयति-तथेति । श्रौतव्यपदेशस्य मुख्यत्वमेव न त्वौपचारिकत्वमन्यत्राद्दष्टेरित्याशंक्याऽऽह-तथा चेति ॥ ३५ ॥ स्वपक्षे

## तथान्यप्रतिषेधात् ॥ ३६ ॥

एवं सेत्वादिव्यपदेशान्परपक्षहेतूनुन्मथ्य सम्प्रति स्वपक्षं हेत्वन्तरेणोपसंहरति ॥ तथा–अन्यप्रतिषेधादपि न ब्रह्मणः परं वस्त्वन्तरमस्तीति गम्यते । तथाहि–"स एवाधस्तादहमेवाधस्तादात्मैवाधस्तात्सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद ब्रह्मैवेदं सर्वमात्मैवेदं सर्वं नेह नानास्ति किञ्चन" "यस्मात्परं नापरमस्ति किञ्चित्" "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्" इत्येवमादिवाक्यानि स्वप्रकरणस्थान्यन्यार्थत्वेन परिणेतुमशक्यमानानि ब्रह्मव्यतिरिक्तं वस्त्वन्तरं वारयन्ति । सर्वान्तरश्रुतेश्च न परमात्मनोऽन्तरोऽन्य आत्मास्तीत्यवगम्यते ॥ ३६ ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

अनेन–सेत्वादिव्यपदेशनिराकरणेन, अन्यप्रतिषेधसमाश्रयणेन च,–सर्वगतत्वमप्यात्मनः सिद्धं भवति । अन्यथा हि तन्न सिध्येत् । सेत्वादिव्यपदेशेषु हि मुख्येष्वङ्गीक्रियमाणेषु परिच्छेद आत्मनः प्रसज्येत । सेत्वादी-

---

रत्नप्रभा ।

वस्तुद्वयासत्त्वात् । तथा भेदोऽपि न स्वतः । एकत्वश्रुतेरित्यर्थः ॥ ३५ ॥ ३६ ॥ ननु द्वितीयाभावे सर्वगतत्वश्रुतिविरोध इत्यत आह–अनेन सर्वगतत्वमिति ॥ द्वितीयं सत्यं चेत्, सेत्वादिवद् ब्रह्मणोऽल्पता स्यात् । "यत्रान्यत्पश्यति–तदल्पम्" [ छां० ७ । २४ । १ ] इतिश्रुतेः । किञ्च निरवयवासङ्गब्रह्मणः सत्यप्रपञ्चसम्बन्धायोगात् तत्रैव सर्वगतत्वश्रुतिविरोध इति भावः । अधि-

भामती ।

त्यर्थः ॥ ३५ ॥ तथान्यप्रतिषेधात् । सुगमेन भाष्येण व्याख्यातम् ॥ ३६ ॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः । ब्रह्माद्वैतसिद्धावपि न सर्वगतत्वं सर्वव्यापिता सर्वस्य ब्रह्मणा स्वरूपेण रूपवत्त्वं सिध्यतीत्यत आह–अनेन सेत्वादिनिराकरणेन परहेतुनिराकरणेनान्यप्रतिषेधसमाश्रयणेन च स्वसाधनोपन्यासेन च सर्वगतत्वमप्यात्मनः सिद्धं भवति । अद्वैते सिद्धे सर्वोऽयमनिर्वचनीयः प्रपञ्चावभासो ब्रह्मा-

आनन्दगिरीय–न्यायनिर्णयः ।

हेत्वन्तरमाह–तथेति । सूत्रतात्पर्यमाह–एवमिति । ब्रह्मणोऽद्वितीयत्वं स्वपक्षः । हेत्वन्तरमेव सूत्रयोजनया विशदयति—तथेति । यथा सेत्वादिव्यपदेशनिरासेभ्यो न वस्त्वन्तरधीस्तथेति यावत् । अन्यप्रतिषेधमुदाहरति–तथा हीति । तस्य ताटस्थ्यं व्यासेधति—अहमेवेति । अहंकारस्य सर्वात्मत्वप्राप्तिं प्रत्याह–आत्मैवेति । निन्दानुपपत्त्या भेदनिषेधं दर्शयति–सर्वमिति बाधायां सामानाधिकरण्यादपि तत्सिद्धिरित्याह—ब्रह्मैवेति । आर्थिकीं निषेधधियमुक्त्वा साक्षादेव तत्प्रतीतिमाह–नेहेति । यस्मात्परमित्यत्र तेनेदं पूर्णं पुरुषेणेत्युत्तरेण संबन्धः । सेत्वादिव्यपदेशेभ्यो दर्शितवाक्यानां विशेषमाह–स्वप्रकरणेति । ब्रह्मणोद्वयत्वे हेत्वन्तरमाह–सर्वान्तरेति ॥ ३६ ॥ ब्रह्मणोऽद्वयत्वेऽपि सर्वगतत्वं सर्वात्मत्वं च कथं तत्राऽऽह–अनेनेति । सूत्रं व्याकरोति–अनेनेत्यादिना । सेत्वादिव्यपदेशानामनिरासे परप्रतिषेधानाश्रयणे च सर्वगतत्वमाकाशस्येव ब्रह्मणः स्यादित्याशङ्क्याऽऽह । अन्यथेति । तत्र सेत्वादिव्यपदेशानिरासे सर्वगतत्वासिद्धिं स्फुटयति–सेत्वादीति । परनिषेधानाश्रयणेऽपि तदसिद्धिं

**नामेवमात्मकत्वात ॥ तथाऽन्यप्रतिषेधेऽप्यसति वस्तु वस्त्वन्तराद्व्यावर्तत इति परिच्छेद एवात्मनः प्रसज्येत । सर्वगतत्वं चास्यायामशब्दादिभ्योऽवगम्यते । आयामशब्दो-व्याप्तिवचनः शब्दः-"यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" "आकाशवत्सर्वगतश्च नित्यः" ज्यायान्दिवो ज्यायानाकाशात्" "नित्यः सर्वगतः स्थाणुरचलोऽयम्" इत्येवमादयो हि श्रुतिस्मृतिन्यायाः सर्वगतत्वमात्मनोऽवबोधयन्ति ॥ ३७ ॥ इति पराधिकरणम् ॥ ७ ॥**

## फलमत उपपत्तेः ॥ ३८ ॥ (८) ॥

**तस्यैव हि ब्रह्मणो व्यावहारिक्यामीशित्रीशितव्यविभागावस्थायामयमन्यः स्वभावो वर्ण्यते, यदेतदिष्टानिष्टव्यामिश्रलक्षणं कर्मफलं संसारगोचरं त्रिविधं प्रसिद्धं जन्तूनाम् । किमेतत्-कर्मणो भवति-आहोस्विद्-**

रत्नप्रभा ।

ष्ठानेनाध्यस्तं जगद्व्याप्तमध्यस्तत्वात्, रज्ज्वा व्याप्तसर्पवदिति न्यायः ॥ ३७ ॥ ( ७ ) ॥ एवं तत्पदलक्ष्यं संशोध्य वाच्यार्थमाह-**फलमत उपपत्तेः** ॥ निर्विशेषत्वाद् **अन्यः स्वभावः** फलहेतुत्वाख्यः । **इष्टं**-सुखं देवादीनाम् । **अनिष्टं**-दुःखं नारकिणाम् । व्यामिश्रं मनुष्याणाम् । **संसारो**-जन्ममृतिप्रवाहः **गोचरः** आश्रयो यस्य तत्संसारगोचरम् ॥ अत्र कर्मेश्वरयोः फलहेतुत्वश्रुतेः संशयमाह-**किमिति** ॥ अत्र **पूर्वपक्षे** फलदातुरीश्वरस्य तत्पदवाच्यस्यासिद्धेर्लक्ष्यासिद्धिः, **सिद्धान्ते** तत्सिद्धिरिति फलभेदः । पूर्वोक्तनिर्विशेषत्वमुपजीव्य फलदातृत्वमपीश्वरस्य नास्तीति पूर्वपक्षोत्थानात **संगतिः** ॥ यद्यपि सर्वगत-

भामती ।

धिष्ठान इति सर्वस्य ब्रह्मसंबन्धाद्ब्रह्म सर्वगतमिति सिद्धम् ॥ ३७ ॥ ( ७ ) **फलमत उपपत्तेः** । सिद्धान्तोपक्रममिदमधिकरणम् । स्यादेतत् । नित्यशुद्धबुद्धमुक्तस्वभावस्य ब्रह्मणः कुत ईश्वरत्वं कुतश्च फलहेतुत्वमपीत्यत आह—**तस्यैव हि ब्रह्मणो व्यावहारिक्यामिति** । नास्य पारमार्थिकं रूपमाश्रित्यैतच्चिन्त्यते किंतु सांव्यवहारिकम् । एतच्च 'तपसा चीयते ब्रह्म' इति व्याचक्षाणैरस्माभिरुपपादितम्। **इष्टं** फलं स्वर्गः। यथाहुः-'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्' इति ।

आनन्दगिरीय-न्यायनिर्णयः ।

साधयति-**तथेति** । परिच्छेदप्रसक्तिरिष्टैवेत्याशंक्यावशिष्टं व्याचष्टे-**सर्वेति** । आदिशब्दः सूत्रे स्मृतिन्यायापेक्षया प्रयुक्तः । तत्र श्रुत्या सह स्मृतिरुक्ता । न्यायस्तु परिच्छिन्नत्वे सत्यनित्यत्वादिलक्षणो यावद्विकारः सूत्रोक्तः । न च सर्वमूर्तसंयोगित्वं सर्वगतत्वं सत्त्वे द्वैतस्य स्यादिति युक्तम् ।तत्कल्पनाधिष्ठानतया ब्रह्मणः सर्वगतत्वोपगमादतोऽद्वितीयमनवच्छिन्नं ब्रह्मेति ॥ ३७ ॥ ( ७ ) ॥ ब्रह्मातिरिक्तेऽर्थे निषिद्धे ब्रह्मणो निर्विशेषत्वान्न फलदातृत्वमित्याशंक्य व्यवहारतस्तदुपपादयितुमुपक्रमते-**फलमिति** । पूर्वाधिकरणयोस्तत्पदलक्ष्यं ब्रह्मोक्तमिदानीं तत्पदवाच्यमीश्वरं दर्शयतीत्यधिकरणस्य तात्पर्यमाह-**तस्यैवेति**। कुतो निर्विशेषत्वेनोक्तस्य फलहेतुतेत्याशंक्याऽऽह-**व्यावहारिक्यामिति** । निर्विशेषत्वाद्वितीयपूर्णस्वभावादन्यत्वं फलहेतुत्वाख्यं स्वभावः । तात्पर्यमुक्त्वा विचारविषयमाह-**यदिति** । इष्टं देवत्वादि अनिष्टं तिर्यक्त्वादि । व्यामिश्रं मनुष्यत्वम् । कर्मफलत्वं साधयितुं संसारावस्थागतत्वमाह-**संसारेति** । त्रिविधकर्मफले लोकानुभवं प्रमाणयति-**प्रसिद्धमिति** । उभयोरपि फलहेतुत्वश्रुतेरुक्ते विषये संशयमाह-**किमिति** । सर्वगतत्वेन फलदातृत्वस्य सत्यपि समानन्यायत्वे कर्मपक्षं निराकरिष्यन्नादौ सिद्धान्तमुप-

ईश्वरादिति भवति विचारणा। तत्र तावत्प्रतिपद्यते-फलमत ईश्वराद्भवितुमर्हति॥ कुतः॥ उपपत्तेः॥ स हि सर्वाध्यक्षः सृष्टिस्थितिसंहारान्विचित्रान्विदधद्देशकालविशेषाभिज्ञत्वात्कर्मिणां कर्मानुरूपं फलंसम्पादयतीत्युपपद्यते। कर्मणस्त्वनुक्षणविनाशिनः कालान्तरभावि फलं भवतीत्यनुपपन्नम्। अभावाद्भावानुत्पत्तेः॥ स्यादेतत्॥कर्म विनश्यत्स्वकालमेव स्वानुरूपं फलं जनयित्वा विनश्यति। तत्फलं कालान्तरितं कर्ता भोक्ष्यत इति॥ तदपि न परिशुध्यति। प्राग्भोक्तृसम्बन्धात्फलत्वानुपपत्तेः। यत्कालं हि यत्सुखं दुःखं वात्मना भुज्यते, तस्यैव लोके फलत्वं प्रसिद्धम्। न ह्यसम्बद्धस्यात्मना सुखस्य, दुःखस्य वा,-फलत्वं प्रतियन्ति लौकिकाः॥ अथोच्येत-मा भूत्कर्मानन्तरं फलोत्पादः।

---

रत्नप्रभा।

त्ववत् फलदातृत्वं व्यवहारदशायां सिध्यति। तथापि कर्मण एव फलदातृत्वमिति शङ्कानिरासेनोक्तलक्ष्यार्थनिर्वाहकवाच्यार्थनिर्णयार्थमस्याधिकरणस्यारम्भ इति मत्वा सिद्धान्तं तावदाह-तत्र तावदिति॥ स्वर्गादिकं, विशिष्टदेशकालकर्माभिज्ञदातृकं, कर्मफलत्वात्, सेवाफलवदित्युपपत्तिः॥ यादादिक्रियाख्यं कर्म तावत्, क्षणिकम्। तत् किं स्वनाशात् फलं जनयति, उत फलं उत्पाद्य नश्यति, आहोस्विद् अपूर्वात् फलसिद्धिः। नाद्यः इत्याह-अभावादिति॥ द्वितीयं शङ्कते-स्यादिति॥ कर्मनाशक्षणमारभ्य अनभिव्यक्तस्वर्गसुखादिसत्त्वे मानं नास्तीति दूषयति—तदपीत्यादिना॥ तृतीयं शङ्कते-अथेति॥

भामती।

अनिष्टमवीच्यादिस्थानभोग्यं, व्यामिश्रं मनुष्यभोग्यम्। तत्र तावत्प्रतिपाद्यते-फलमत ईश्वरात्कर्मभिराराधिताद्भवितुमर्हति। अथ कर्मण एव फलं कस्मान्न भवतीत्यत आह-कर्मणस्त्वनुक्षणविनाशिनः प्रत्यक्षविनाशिन इति। चोदयति-स्यादेतत्कर्म विनश्यदिति। उपात्तमपि फलं भोक्तुमयोग्यत्वाद्वा कर्मान्तरप्रतिबन्धाद्वा न भुज्यत इत्यर्थः। परिहरति-तदपि न परिशुध्यतीति। न हि स्वर्ग आत्मानं लभतामित्यधिकारिणः कामयन्ते किंतु भोग्योऽस्माकं भवत्विति। तेन यादृशमेभिः काम्यते तादृशस्य फलत्वमिति भोग्यमेव सत्फलमिति। न च तादृशं कर्मानन्तरमिति कथं फलं,सदपि स्वरूपेण। अपि च स्वर्गनरकौ तीव्रतमे सुखदुःखे इति तद्विषयेणानुभवेन भोगापरनाम्नावश्यं भवितव्यम्। तस्मादनुभवयोग्ये अननुभूयमाने शशशृङ्गवन्न स्त इति निश्चीयते। चोदयति-अथोच्येत मा भूत्कर्मानन्तरं फलोत्पादः।

आनन्दगिरीय-न्यायनिर्णयः।

क्रमते-तत्रेति। वाच्यार्थोक्तेर्लक्ष्यार्थोक्तिविशेषत्वात्तस्य च वाक्यार्थधीहेतुत्वादस्य पादादिसंगतयः। पूर्वपक्षे कर्मण एव फलदानसामर्थ्यादीश्वरस्याकिंचित्करत्वम्। सिद्धान्ते स्वतन्त्रस्य कर्मणोऽसामर्थ्यात्तद्द्वारा परस्यैव तद्भावात्तस्यार्थवत्त्वम्। कटवेष्टनसंस्कारादिवत्पुण्यादिसंस्कारात्फलोत्पत्तौ न प्रदात्रपेक्षेति शङ्कते-कुत इति। तत्र सौत्रं हेतुमवतार्य व्याकरोति-उपपत्तेरिति। देशकालविशेषाभिज्ञत्वे योग्यत्वमाह-सर्वेति। कर्मानुरूपफलदातृत्वे हेतुमाह-सृष्टीति। विमतं विशिष्टज्ञानवद्दातृकं कर्मफलत्वात्सेवादिकर्मफलवदित्यर्थः। कर्मपक्षे क्रियातो वा तज्जन्यापूर्वाद्वा फलमाद्यं दूषयति-कर्मणस्त्विति। क्रियारूपं कर्म क्षणिकं तच्च नष्टं वा फलमुत्पादयेदुत्पाद्य वा फलं नश्येन्नाद्य इत्याह-अभावादिति। द्वितीयं शङ्कते—स्यादिति। तदैव तर्हि भोगः स्यादित्याशंक्य कर्मान्तरप्रतिबन्धात्तदा भोक्तुमयोग्यत्वाद्वा नैवमित्याह-तदिति। स्वर्गादिभोगस्यैवार्थ्यमानत्वेन फलत्वादभुज्यमानमपि फलं स्वरूपेणास्तीत्ययुक्तमित्याह—तदपीति। किंच, स्वर्गनरकयोरतितीव्रसुखदुःखत्वादननुभूयमानयोरसिद्धेः स्वरूपेण फलसत्त्वोक्तिरयुक्तेत्याह-यदिति। प्रसिद्धत्वमेव व्यतिरेकद्वारा स्फोरयति-न हीति। कल्पान्तरमुत्थापयति-अथेति। तस्य स्वतन्त्रस्य वा चेत-

कर्मकार्यादपूर्वात् फलमुत्पत्स्यत इति ॥ तदपि नोपपद्यते ॥ अपूर्वस्याचेतनस्य काष्ठलोष्टसमस्य चेतनेनाप्रवर्तितस्य प्रवृत्त्यनुपपत्तेः । तदस्तित्वे च प्रमाणाभावात् ॥ अर्थापत्तिः प्रमाणमिति चेत् ॥ न ॥ ईश्वरसिद्धेरर्थापत्तिक्षयात् ॥ ३८ ॥

## श्रुतत्वाच्च ॥ ३९ ॥

न केवलमुपपत्तेरेवेश्वरं फलहेतुं कल्पयामः ॥ किं तर्हि ॥ श्रुतत्वादपीश्वरमेव फलहेतुं मन्यामहे । तथाहि श्रुतिर्भवति–"स वा एष महानज आत्मान्नादो वसुदानः" इत्येवंजातीयका ॥ ३९ ॥

## धर्मं जैमिनिरत एव ॥ ४० ॥

जैमिनिस्त्वाचार्यो धर्मं फलस्य दातारं मन्यते । अत एव हेतोः श्रुतेरुपपत्तेश्च । श्रूयते तावदयमर्थः–"स्वर्गकामो यजेत" इत्येवमादिषु वाक्येषु ।

---

रत्नप्रभा ।

अपूर्वं किं स्वतन्त्रमेव फलदानाय प्रवर्तते, चेतनाधिष्ठितं वा ? नाद्यः इत्याह–**तदपीति** ॥ द्वितीये त्वदृष्टानभिज्ञजीवस्याधिष्ठातृत्वायोगाद् ईश्वरस्याधिष्ठातृत्वसिद्धिरिति भावः ॥ प्रौढवादेनापूर्वं नास्तीत्याह–**तदस्तित्व इति** ॥ क्षणिकयागादेः श्रुतस्वर्गादिहेतुत्वानुपपत्त्या स्थाय्यपूर्वसिद्धिरिति **चेत्** ॥ **न** ॥ कर्मभिराराधितादीश्वरादेव स्थायिनः फलसिद्धेरित्यर्थः । न केवलतर्केण अपूर्वं सिध्यतीति भावः ॥ ३८ ॥ "कृतात्ययेऽनुशयवान्" [ व्या० सू० ३ । १ । ८ ] इत्यत्रोदाहृताभिः "य इह रमणीयचरणाः" [ छां० ५ । १० । ७ ] इत्यादिश्रुतिस्मृतिभिरपूर्वसिद्धिश्चेत्, ताभिरीश्वरस्यापि फलदातृत्वं स्वीकार्यमित्याह–**श्रुतत्वाच्चेति** सूत्रकारः ॥ अन्नमा समन्तात् प्राणिभ्यो ददातीति **अन्नादः** । **वसुदानः** धनदाता । कर्मणोऽपूर्वस्य वा जडत्वेनोपकरणमात्रत्वात् स्वतन्त्र ईश्वर एव फलदातेति सिद्धान्तो दर्शितः ॥ ३९ ॥ इदानीं पूर्वपक्षयति–**धर्ममिति** ॥

भामती ।

**कर्मकार्यादपूर्वाद्भवेदिति** । परिहरति–**तदपि नेति** । यद्यदचेतनं तत्तत्सर्वं चेतनाधिष्ठितं प्रवर्तत इति प्रत्यक्षागमाभ्यामवधारितम् । तस्मादपूर्वेणाप्यचेतनेन चेतनाधिष्ठितेनैव प्रवर्तितव्यं नान्यथेत्यर्थः । न चापूर्वं प्रमाणिकमपीत्याह–**तदस्तित्वे इति** ॥ ३८ ॥ **श्रुतत्वाच्च** । **अन्नादः** अन्नप्रदः ॥ ३९ ॥ सिद्धान्तेनोपक्रम्य पूर्वपक्षं गृह्णाति–**धर्मं जैमिनिरत एव** । श्रुतिमाह–**श्रूयते तावदिति** । ननु 'स्वर्गकामो यजेत' इत्यादयः श्रुतयः फलं प्रति न साधनतया यागं विदधति । तथाहि–यदि यागादय एव क्रिया न तदतिरिक्ता भावना तथापि त एव स्वपदेभ्यः पूर्वापरीभूताः साध्यस्वभावा अवगम्यन्त इति न साध्यान्तरमपेक्षन्त इति न स्वर्गेण साध्यान्तरेण संबन्धुमर्हन्ति । अथापि तदतिरेकिणी भावनास्ति

आनन्दगिरीय–न्यायनिर्णयः ।

नाधिष्ठितस्य वा फलदातृत्वम् ? नाऽऽद्य इत्याह–**तदपीति** । न द्वितीयस्तस्यैवाप्रामाणिकत्वादित्याह–**तदस्तित्वे चेति** । आशुतरविनाशिनो यागस्य कालान्तरभाविफलहेतुत्वं श्रुतं स्थायिवस्त्वतिरेकेणानुपपन्नमपूर्वं कल्पयतीत्यर्थापत्तिरत्र मानमिति शङ्कते–**अर्थापत्तिरिति** । कर्मभिराराधितादीश्वरादेव स्थायिनो यथोक्तफलसिद्धेर्मैवमित्याह–**नेश्वरेति** ॥ ३८ ॥ श्रुतिविरुद्धत्वाच्च न फलहेतुत्वेन नियोगकल्पनेत्याह–**श्रुतत्वाच्चेति** । सूत्रं व्याचष्टे–**न केवलमिति** । कर्मफलत्वादिलक्षणा पूर्वोक्तोपपत्तिः । तामेव श्रुतिमुदाहरति–**तथा चेति** । निरुपाधिकं रूपमुक्त्वा सोपाधिकमाह–**अन्नाद इति** । अन्नमा समन्तात्प्राणिभ्यो ददातीत्यन्नादः । वसु धनमर्थिभ्यो ददातीति वसुदानः । तदुभयमन्नं वसु च कर्मफलम् ॥ ३९ ॥ संप्रति पूर्वपक्षयति–**धर्ममिति** । सूत्रं विभजते–**जैमिनिस्त्विति** । श्रुतेरित्युक्तं व्यनक्ति–**श्रूयत इति** ।

**तत्र च विधिश्रुतेर्विषयभावोपगमाद्यागः स्वर्गस्योत्पादक इति गम्यते ।**

रत्नप्रभा ।

विधिश्रुतिः विध्यर्थः । तस्य लिङर्थस्य प्रेरणात्मनो यागो विषयः । तद्भावावगमाद् यागः स्वर्गसाधनमिति गम्यते । यागस्येष्टसाधनत्वाभावे प्रेरणाऽनुपपत्तेरित्यर्थः ॥ अपूर्वद्वारा

भामती ।

तथाप्यसौ भाव्यापेक्षापि स्वपदोपात्तं पूर्वावगतं च भाव्यं धात्वर्थमपहाय न भिन्नपदोपात्तं पुरुषविशेषणं च स्वर्गादि भाव्यतया स्वीकर्तुमर्हति । न चैकस्मिन् वाक्ये साध्यद्वयसंबन्धसंभवः, वाक्यभेदप्रसङ्गात् । न केवलं शब्दतो वस्तुतश्च पुरुषप्रयत्नस्य भावनायाः साक्षाद्धात्वर्थ एव साध्यो न तु स्वर्गादिस्तस्य तदव्याप्यत्वात् । स्वर्गादेस्तु नामपदाभिधेयतया सिद्धरूपस्याख्यातवाच्यं साध्यं धात्वर्थं प्रति 'भूतं भव्यायोपदिश्यते' इति न्यायात्साधनतया गुणत्वेनाभिसंबन्धः । तथा च पारमर्षं सूत्रम्—'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः' इति । तथा च कर्मणो यागादेर्दुःखत्वेन पुरुषेणासमीहितत्वात्, समीहितस्य च स्वर्गादेरसाध्यत्वान्न यागादयः पुरुषस्योपकुर्वन्त्यनुपकारिणां चैषां न पुरुष ईष्टे अनीशानश्च न तेषु संभवत्यधिकारीत्यधिकाराभावप्रतिपादितानर्थक्यपरिहाराय कृत्स्नस्यैवाम्नायस्य निर्मृष्टनिखिलदुःखानुषङ्गनित्यसुखमयब्रह्मज्ञानपरत्वं भेदप्रपञ्चविलयनद्वारेण । तथा हि—सर्वत्रैवाम्नाये कचित्कस्यचिद्भेदस्य प्रविलयो गम्यते—यथा 'स्वर्गकामो यजेत' इति शरीरात्मभावप्रविलयः । इह खल्वापाततो देहातिरिक्त आमुष्मिकफलोपभोगसमर्थोऽधिकारी गम्यते । तत्राधिकारस्योक्तेन क्रमेण निराकरणादसतोऽपि प्रतीयमानस्य विचारासहस्योपायतामात्रेणावस्थानादनेन वाक्येन देहात्मभावप्रविलयस्तत्परेण क्रियते । 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यत्राप्यापाततोऽधिकृताधिकारावगमादधिकारिभेदप्रविलयः । निषेधवाक्यानि च साक्षादेव प्रवृत्तिनिषेधेन विधिवाक्यानि चान्यानि 'सांग्रहण्या यजेत ग्रामकामः' इत्यादीनि न सांग्रहण्यादिप्रवृत्तिपराण्यपि तूपायान्तरोपदेशेन सेवादिदृष्टोपायप्रतिषेधार्थानि। यथा विषं भुङ्क्ष्व मास्य गृहे भुङ्क्ष्वेति । तथा च रागाद्याक्षिप्तप्रवृत्तिप्रतिषेधेन शास्त्रस्य शास्त्रत्वमप्युपपद्यते। रागनिबन्धनां तूपायोपदेशद्वारेण प्रवृत्तिमनुजानतो रागसंवर्धनादशास्त्रत्वप्रसङ्गः । तन्निषेधेन तु ब्रह्मणि प्रणिधानमादधच्छास्त्रं शास्त्रं भवेत् । तस्मात्कर्मफलसंबन्धस्याप्रामाणिकत्वादनादिविचित्राविद्यासहकारिण ईश्वरादेव कर्मानपेक्षाद्विचित्रफलोत्पत्तिरिति । कथं तर्हि विधिः किमत्र कथं प्रवर्तनामात्रत्वाद्विधेस्तस्य चाधिकारमन्तरेणाप्युपपत्तेः । न हि यो यः प्रवर्तयति स सर्वोऽधिकृतमपेक्षते । पवनादेः प्रवर्तकस्य तदनपेक्षत्वादिति शङ्कामपाचिकीर्षुराह—**तत्र च विधिश्रुतेर्विषयभावोपगमाद्यागः स्वर्गस्योत्पादक इति गम्यते । अन्यथा ह्यननुष्ठातृको याग आपद्येत ।** अयमभिसंधिः—उपदेशो हि विधिः । यथोक्तम्—'तस्य ज्ञानमुपदेशः' इति। उपदेशश्च नियोज्यप्रयोजने कर्मणि लोकशास्त्रयोः प्रसिद्धः । तद्यथारोग्यकामो जीर्णे भुञ्जीत । एष सुपन्था गच्छतु भवाननेनेति । न त्वाज्ञादिरिव नियोक्तृप्रयोजनस्तत्राभिप्रायस्य प्रवर्तकत्वात्, तस्य चापौरुषेयेऽसंभवात् । अस्य चोपदेशस्य नियोज्यप्रयोजनव्यापारविषयत्वमनुष्ठात्रपेक्षितानुकूलव्यापारगोचरत्वमस्माभिरुपपादितं न्यायकणिकायाम् । तथा च 'स्वर्गकामो यजेत' इत्यादिषु स्वर्गकामादेः समीहितोपाया गम्यन्ते यागादयः । इतरथा तु न साधयितारमनुगच्छेयुः । तदुक्तमृषिणा—'असाधकं तु तादर्थ्यात्' इति । अनुष्ठात्रपेक्षितोपायतारहितप्रवर्तनामात्रार्थत्वे यजेतेत्यादीनामसाधकं कर्म यागादि स्यात् । साधयितारं नाधि-

आनन्दगिरीय—न्यायनिर्णयः ।

कथमेतावता फलहेतुत्वं कर्मणः सिद्धं तत्राऽऽह—तत्र चेति । विधिश्रुतिर्विध्यर्थस्तस्य लिङ्गाद्यर्थस्य प्रेरणात्मनो यागो विषयस्तद्भावावगमाद्यागः स्वर्गस्य साधनमिति गम्यते । पुरुषाभिलषितस्वर्गसाधनत्वाभावे यागस्य तत्र प्रेरणायोगादित्यर्थः । पुरुषप्रवृत्तेरर्थभावनाया भाव्याकाङ्क्षत्वादेकपदोपात्ततया यागस्य

अन्यथा ह्यननुष्ठातृको याग आपद्येत । तत्रास्योपदेशवैयर्थ्यं स्यात् ॥ नन्वनुक्षणविनाशिनः कर्मणः फलं नोपपद्यत इति परित्यक्तोऽयं पक्षः ॥ नैष दोषः ॥ श्रुतिप्रामाण्यात् ॥ श्रुतिश्चेत्प्रमाणं-यथाऽयं कर्मफलसम्बन्धः श्रुत उपपद्यते, तथा कल्पयितव्यः । न चानुत्पाद्य किमप्यपूर्वं कर्म विनश्यत्-कालान्तरितं फलं दातुं शक्नोति । अतः कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था, फलस्य वा पूर्वावस्थाऽपूर्वं नामास्ति इति तर्क्यते ॥ उपपद्यते चायमर्थ उक्तेन प्रकारेण ॥ ईश्वरस्तु फलं ददाति-इत्यनुपपन्नम् ।

रत्नप्रभा ।

कर्मणः फलमुपपद्यत इत्युक्त्वा सिद्धान्तं दूषयति-ईश्वरस्त्विति ॥ ईश्वरः किं कर्मानपेक्षः

भामती ।

गच्छेदित्यर्थः । न चैते साक्षाद्भावनाभाव्या अपि कर्त्रपेक्षितसाधनताविध्युपहितमर्यादा भावनोद्देश्या भवितुमर्हन्ति, येन पुंसामनुपकारकाः सन्तो नाधिकारभाजो भवेयुः । दुःखत्वेन कर्मणां चेतनसमीहानास्पदत्वात् । स्वर्गादीनां तु भावनापूर्वरूपकामनोपधानाच्च, प्रीत्यात्मकत्वाच्च । नामपदाभिधेयानामपि पुरुषविशेषणानामपि भावनोद्देश्यतालक्षणभाव्यत्वप्रतीतेः । फलार्थप्रवृत्तभावनाभाव्यत्वलक्षणेन च यागादिसाध्यत्वेन फलार्थप्रवृत्तभावनाभाव्यत्वरूपस्य फलसाध्यत्वस्य समप्रधानत्वाभावेनैकवाक्यसमवायसंभवात्, भावनाभाव्यत्वमात्रस्य च यागादिसाध्यत्वस्य करणेऽप्यविरोधात् । अन्यथा सर्वत्र तदुच्छेदात् । परश्वादेरपि छिदादिषु तथाभावात् । फलस्य साक्षाद्भावनाव्याप्यत्वविरहिणोऽपि तदुद्देश्यतया सर्वत्र व्यापितया व्यवस्थानात्स्वर्गसाधने यागादौ स्वर्गकामादेरधिकार इति सिद्धम् । न चाप्राप्तार्थविषयाः सांग्रहण्यादियागविधयः परिसंख्यायका नियामका वा भवितुमर्हन्ति । न चाधिकाराभावे देहात्मप्रविलयो वाधिकारिभेदप्रविलयो वा शक्य उपपादयितुम् । आपाततः प्रतिभाने चास्य तत्परत्वमेव नार्थायातपरत्वम् । स्वरसतः प्रतीयमानेऽर्थे वाक्यस्य तादर्थ्ये संभवति न संपातायातपरत्वमुचितम् । न चैतावता शास्त्रत्वव्याघातः । तस्य स्वर्गाद्युपायशासनेऽपि शास्त्रत्वोपपत्तेः । पुरुषश्रेयोऽभिधायकत्वं हि शास्त्रत्वम् । सरागवीतरागपुरुषश्रेयोऽभिधायकत्वेन सर्वपारिषदत्तया न तत्त्वव्याघातः । तस्माद्विधिविषयभावोपगमाद्यागः स्वर्गस्योत्पादक इति सिद्धम् । **कर्मणो वा काचिदवस्थेति** । कर्मणोऽवान्तरव्यापारः । एतदुक्तं भवति-कर्मणो हि फलं प्रति यत्साधनत्वं श्रुतं, तन्निर्वाहयितुं तस्यैवान्तरव्यापारो भवति । न च व्यापारवति सत्येव व्यापारो नासतीति युक्तम् । असत्स्वप्याग्नेयादिषु तदुत्पत्त्यपूर्वाणां परमापूर्वे जनयितव्ये तदवान्तरव्यापारत्वात् । असत्यपि च तैलपानकर्मणि तेन पुष्टौ कर्तव्यायामन्तरा तैलपरिणामभेदानां तदवान्तरव्यापारत्वात् । तस्मात्कर्मकार्यमपूर्वं कर्मणा फले कर्तव्ये तदवान्तरव्यापार इति युक्तम् । यदा पुनः फलोपजननान्यथानुपपत्त्या किंचित्कल्प्यते तदा **फलस्य वा पूर्वावस्था** ।

आनन्दगिरीय-न्यायनिर्णयः ।

संनिहितत्वाद्भाव्यत्वेन संबन्धो न विपयत्वेनेत्याशंक्याऽऽह-**अन्यथेति** । योग्यतायाः संनिधेः सकाशादन्तरङ्गत्वाद्यागस्य च क्लेशात्मकत्वेन फलार्थं प्रवृत्तभावनाभाव्यत्वायोगात्पुरुषविशेषणत्वेन श्रुतस्वर्गादेरेव भावनोद्देश्यरूपभाव्यत्वसिद्धेरपुरुषार्थे पुरुषस्याप्रवृत्तेः स्वर्गादेरेव भाव्यत्वं, यागस्य तु करणतया साध्यतेत्यर्थः । कर्म न कालान्तरीयफलदं क्षणिकत्वादित्युक्तं स्मारयति-**नन्विति** । श्रुत्यवष्टम्भेन निराचष्टे-**नेति** । तदेव व्यनक्ति-**श्रुतिश्चेदिति** । उपपत्तिमेव व्यतिरेकद्वारा दर्शयति-**न चेति** । कर्मावान्तरव्यापारत्वमुपेत्य **कर्मणो** वेत्युक्तम् । फलोत्पत्त्यन्यथानुपपत्त्या कल्प्यमानत्वं गृहीत्वा फलस्य वेत्युक्तम् । उपपत्तेश्चेति द्वितीयहेतुं विवृणोति-**उपपद्यते चेति** । तत्र विधिश्रुतेरित्यादिरुक्तः प्रकारः । श्रुत्युपपत्तिभ्यां स्वपक्षमुक्त्वा सिद्धान्तं प्रत्याह-**ईश्वरस्त्विति** । एकरूपात्कारणान्नानेकरूपं कार्यं कार्या-

अविचित्रस्य कारणस्य विचित्रकार्यानुपपत्तेर्वैषम्यनैर्घृण्यप्रसङ्गात्, तदनुष्ठानवैयर्थ्यापत्तेश्च ॥ तस्माद्धर्मादेव फलमिति ॥ ४० ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

रत्नप्रभा ।

फलं ददाति तत्सापेक्षो वा ? आद्य आह—अविचित्रस्येत्यादिना ॥ द्वितीये संवेष्टनसंस्कारमात्रात् कटादौ वेष्टनवत् कर्मापूर्वादेव फलसिद्धेः किमीश्वरेणेति भावः ॥ ४० ॥ अत्र वयं वदामः—चन्दनकण्टकादिदृष्टसम्पत्त्यैव सुखादिसम्भवे कृतं धर्माधर्माभ्यामिति श्रुतिस्मृतिबलात् तदपेक्षायामीश्वरेण किमपराद्धम्।अतः ईश्वरानपेक्षात् केवलात् कर्मणः फलमित्ययुक्तमिति सिद्धान्तयति—पूर्वं त्विति॥

भामती ।

अविचित्रस्य कारणस्येति।यदीश्वरादेव केवलादिति शेषः।कर्मभिर्वा शुभाशुभैः कार्यद्वैधोत्पादे रागादिमत्त्वप्रसङ्ग इत्याशयः॥४०॥ पूर्वं तु बादरायणो हेतुव्यपदेशात्। दृष्टानुसारिणी हि कल्पना युक्ता नान्यथा। न हि जातु मृत्पिण्डदण्डादयः कुम्भकाराद्यनधिष्ठिताः कुम्भाद्यारम्भाय विभवन्तो दृष्टाः। न च विद्युत्पवनादिभिरप्रयत्नपूर्वैर्व्यभिचारः, तेषामपि कल्पनास्पदतया व्यभिचारनिदर्शनत्वानुपपत्तेः। तस्मादचेतनं कर्म वापूर्वं वा न चेतनानधिष्ठितं स्वतन्त्रं स्वकार्ये प्रवर्तितुमुत्सहते न च चैतन्यमात्रं कर्मस्वरूपसामान्यविनियोगादिविशेषविज्ञानशून्यमुपयुज्यते, येन तद्रहितक्षेत्रज्ञमात्राधिष्ठानेन सिद्धसाध्यत्वमुद्भाव्येत। तस्माच्चत्तत्प्रासादाट्टालगोपुरतोरणाद्युपजननिदर्शनसहस्रैः सुपरिनिश्चितं यथा चेतनाधिष्ठानादचेतनानां कार्यारम्भकत्वमिति तथा चैतन्यं देवताया असति बाधके श्रुतिस्मृतीतिहासपुराणप्रसिद्धं न शक्यं प्रतिषेद्धुमित्यपि स्पष्टं निरटंकि देवताधिकरणे। लौकिकश्चेश्वरो दानपरिचरणप्रणामाञ्जलिकरणस्तुतिमयीभिरतिश्रद्धागर्भाभिर्भक्तिभिराराधितः प्रसन्नः स्वानुरूपमाराधकाय फलं प्रयच्छति विरोधतश्चापक्रियाभिर्विरोधकायाहितमित्यपि सुप्रसिद्धम्। तदिह केवलं कर्म वाऽपूर्वं वा चेतनानधिष्ठितमचेतनं फलं प्रसूत इति दृष्टविरुद्धम्। यथा विनष्टं कर्म न फलं प्रसूत इति कल्प्यते दृष्टविरोधादेवमिहापीति। तथा देवपूजात्मको यागो देवतां न प्रसादयन् फलं प्रसूत इत्यपि दृष्टविरुद्धम्।न हि राजपूजात्मकमाराधनं राजानमप्रसाद्य फलाय कल्पते।तस्माद् दृष्टानुगुण्याय यागादिभिरपि देवताप्रसक्तिरुत्पाद्यते। तथा च देवताप्रसादादेव स्थायिनः फलोत्पत्तेरुपपत्तेः कृतमपूर्वेण। एवमशुभेनापि कर्मणा देवताविरोधनं श्रुतिस्मृतिप्रसिद्धम्। ततः स्थायिनोऽनिष्टफलप्रसवः। न च शुभाशुभकारिणां तदनुरूपं फलं प्रसुवाना देवता द्वेषपक्षपातवर्तीति युज्यते। न हि राजा साधुकारिणमनुगृह्णन्निगृह्णन् वा पापकारिणं भवति द्विष्टो रक्तो वा तद्वल्लौकिकोऽपीश्वरः। यथा च परमापूर्वे कर्तव्ये उत्पत्त्यपूर्वाणामङ्गापूर्वाणां चोपयोगः। एवं प्रधानाराधनेऽङ्गाराधनानामुत्पत्त्याराधनानां चोपयोगः। स्वाम्याराधन इव तदमात्यतत्प्रणयिजनाराधनानामिति सर्वं समानमन्यत्राभिनिवेशात्। तस्माद् दृष्टाविरोधेन देवताराधनात् फलं न त्वपूर्वात्कर्मणो वा केवलाद्विरोधतो हेतुव्यपदेशश्च श्रौतः स्मार्तश्च व्याख्यातः। ये पुनरन्तर्यामिव्यापारायाफलोत्पादनाया नित्यत्वं सर्वसाधारणत्वमिति मन्यमाना भाष्यकारीयमधिकरणं

आनन्दगिरीय—न्यायनिर्णयः ।

न्तराणामाकस्मिकत्वापातादित्यर्थः। शुभाशुभफलदातृत्वे रागद्वेषादिमत्त्वापत्तेश्च नेश्वरात्फलमित्याह—वैषम्येति। ईश्वरस्य फलदातृत्वे कर्मानुष्ठानवैयर्थ्यं दोषान्तरमाह—तदिति। उक्तदोषनिवृत्त्यर्थमपूर्वादेव फलं नेश्वरादित्युक्तमुपसंहरति—तस्मादिति ॥ ४० ॥ ईश्वरात्फलमिति सिद्धान्तयति—पूर्वं त्विति।

१ अयं बादरायणः कः। व्यासादन्योनन्यो वेति विचार्यम्॥

बादरायणस्त्वाचार्यः पूर्वोक्तमेवेश्वरं फलहेतुं मन्यते । केवलात्कर्मणोऽपूर्वाद्वा केवलात्फलमित्ययं पक्षः–तुशब्देन व्यावर्त्यते । कर्मापेक्षादपूर्वापेक्षाद्वा यथा, तथा–अस्त्वीश्वरात्फलमिति सिद्धान्तः ॥ कुतः ॥ हेतुव्यपदेशाद् ॥ धर्माधर्मयोरपि हि कारयितृत्वेनेश्वरो हेतुर्व्यपदिश्यते । फलस्य च दातृत्वेन "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति तं यमधो निनीषते" इति । स्मर्यते चायमर्थो भगवद्गीतासु–"योयो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति । तस्यतस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान्मयैव विहितान्हितान्" ॥ २२ ॥ [ अध्या० ७ ] इति ॥ सर्ववेदान्तेषु चेश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते । तदेव चेश्वरस्य फलहेतुत्वं–यत्–स्वकर्मानुरूपाः प्रजाः सृजति । विचित्रकार्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते ॥ ३ ॥ २ ॥ ४१ ॥ इति फलाधिकरणम् ॥ ८ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणपरमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये तत्त्वंपदार्थनिरूपणं नाम तृतीयाध्यायस्य द्वितीयः पादः समाप्तः ॥ ३ ॥ २ ॥

---

रत्नप्रभा ।

अचेतनस्य कर्मणः स्वतः प्रवृत्त्ययोगात् सेवादिदृष्टान्तानुसारिश्रुतेर्बलीयस्त्वात् सर्ववेदान्तेष्वीश्वरस्य जगद्धेतुत्वश्रुतेश्चेश्वराधिष्ठितात् कर्मणो जगदन्तःपातिफलसिद्धिरिति समुदायार्थः ॥ ३ ॥ २ ॥ ४१ ॥ ( ८ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शनभाष्यव्याख्यायां ( भाष्य ) रत्नप्रभायां तृतीयस्याध्यायस्य द्वितीयः पादः समाप्तः ॥ ३ ॥ २ ॥

भामती ।

दूषयांबभूवुस्तेभ्यो व्यावहारिक्यामीशित्रीशितव्यविभागावस्थायामिति भाष्यं व्याचक्षीत ॥३॥२॥४१॥(८)॥

इति श्रीवाचस्पतिमिश्रविरचिते भाष्यविभागे भामत्यां तृतीयस्याध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

आनन्दगिरीय–न्यायनिर्णयः ।

उत्तरपक्षप्रतिज्ञां विभजते—**बादरायणस्त्विति** । परपक्षनिषेधप्रतिज्ञां प्रकटयति–**केवलादिति** । ईश्वरानपेक्षादिति यावत् । कथमीश्वरस्यापि केवलस्य फलहेतुत्वं तत्राऽऽह–**कर्मेति** । यथा परपक्षे कर्मापेक्षादपूर्वापेक्षाद्वा कर्मणो युक्तं फलमित्युपगतं तथा तदन्यतरापेक्षादीश्वरादेव फलमस्तु । तथा च न वैषम्यादीत्यर्थः । तत्र प्रश्नपूर्वकं प्रमाणमाह–**कुत इति** । अपूर्वस्याचेतनस्य केवलस्याप्रवृत्तेस्तस्यैव फलदातृत्वकल्पनायां दृष्टविरोधाद्देवतापूजात्मकत्वाच्च यागस्य पूज्यमानदेवताप्रसादद्वारा फलवत्त्वादुक्तश्रुतार्थापत्तेरीश्वरेणोपक्षयादपूर्वमप्रमाणमिति मत्वा हेतुं व्याचष्टे–**धर्मेति** । श्रौतं हेतुव्यपदेशमुक्त्वा स्मार्तं कथयति–**स्मर्यते चेति** । तस्य तत्तद्देवतास्वभावस्य ममेति यावत् । ततस्तस्मादाराधितादनुष्ठितादित्यर्थः । हेतुव्यपदेशादित्यस्यार्थान्तरमाह–**सर्वेति** । ईश्वरस्य सृष्ट्यादिहेतुत्वेऽपि कथं फलहेतुत्वं तत्राऽऽह—**तदेवेति** । यच्च विचित्रस्य कारणस्येत्यादि तत्राऽऽह–**विचित्रेति** ॥ ३ ॥ २ ॥ ४१ ॥(८)॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृते शारीरकमीमांसाभाष्यविभागे न्यायनिर्णये तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

**॥ इति तृतीयाध्यायस्य तत्त्वम्पदार्थपरिशोधनाख्यो द्वितीयः पादः ॥**

# अथ तृतीयाध्याये तृतीयः पादः ३.



**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ ३ ॥ ३ ॥ १ ॥ (१) ॥**

**व्याख्यातं विज्ञेयस्य ब्रह्मणस्तत्त्वम् ॥ इदानीं तु प्रतिवेदान्तं विज्ञानानि भिद्यन्ते न वेति विचार्यते ॥ ननु विज्ञेयं ब्रह्म पूर्वापरादिभेदरहितमेकमेकरसं सैन्धवघनवदवधारितम्। तत्र कुतो विज्ञानभेदाभेदचिन्तावतारः॥न हि कर्मबहुत्ववद्ब्रह्मबहुत्वमपि वेदान्तेषु प्रतिपिपादयिषितमिति शक्यं वक्तुम् । ब्रह्मण एकत्वाद्, एकरूपत्वाच्च । न चैकरूपे ब्रह्मण्यनेकरूपाणि**

रत्नप्रभा ।

ॐ विघ्नविनाशनाय नमः ॥ मार्तण्डं ध्वान्तनाशाय तिलकस्वामिनं मुदे ॥ विघ्नेशं विघ्नविध्वस्त्यै प्रणमामि मुहुर्मुहुः ॥ १ ॥ ब्रह्मस्वरूपं निर्धार्य तज्ज्ञानसाधनोपासनास्वरूपमाह—**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादिति** ॥ पादसङ्गतिमाह—**व्याख्यातमिति** ॥ **पूर्वपादे** तत्त्वम्पदार्थविवेकः कृतः । इह तत्फलं वाक्यार्थज्ञानम् "आनन्दादयः प्रधानस्य" [ व्या० सू० ३ । ३ । ११ ] इति सूत्रेणापुनरुक्तापेक्षिततत्पदतद्वाच्यार्थोपसंहारेण निर्धार्यते इति **फलफलिभावः संगतिः** । सगुणवाक्यार्थविद्याचिन्ता तु तद्विद्यानां चित्तैकाग्र्यद्वारा निर्गुणज्ञानसाधनत्वात् क्रियत इति मन्तव्यम् ॥ सम्प्रति निर्गुणज्ञानं भेदाभेदविचारविषयत्वेनोक्तमितिमन्वान आक्षिपति—**नन्विति** ॥ वेद्यभेदे विद्याभेदचिन्ता स्यात् । ब्रह्मणस्तु वेद्यस्यैक्यात् न चिन्तावसर इत्यर्थः ॥ ब्रह्मैक्येऽपि धर्मभेदाचिन्तेत्यत आह—**एकरूपत्वाच्चेति** ॥ निर्धर्मत्वादित्यर्थः ॥ एकरूपेऽपि ब्रह्मणि अनेकप्रकारसम्भवाद्भेदशंकेत्यत आह—**न चेत्यादिना** ॥ **पूर्वपक्षे** ज्ञानभेदशंकानुपपत्तिमुक्त्वा चोदनाद्यभेदाज्ज्ञानाभेद इति, **सिद्धान्तोऽप्य-**

भामती ।

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** । पूर्वेण संगतिमाह—**व्याख्यातं विज्ञेयस्य ब्रह्मण इति** । निरुपाधिब्रह्मतत्त्वगोचरं विज्ञानं मन्वान आक्षिपति—**ननु विज्ञेयं ब्रह्मेति** । सावयवस्य ह्यवयवानां भेदात्तदवयवविशिष्टब्रह्मगोचराणि विज्ञानानि गोचरभेदाद्भिद्येरन्निरवयवा ब्रह्मणो निराकृताः पूर्वापरादीत्यनेन । न च नानास्वभावं ब्रह्म यतः स्वभावभेदाद्भिन्नानि ज्ञानानीत्युक्तम्—**एकरसमिति** । **घनं** कठिनम्। नन्वेकमप्यनेकरूपं लोके दृष्टं,यथा सोमशर्मैकोऽप्याचार्यो मातुलपिता पुत्रो भ्राता भर्ता जामाता द्विजोत्तम इत्यनेकरूप इत्यत उक्तम्—**एकरूपत्वाच्च**। एकस्मिन् गोचरे संभवन्ति बहूनि विज्ञानानि न त्वने-

आनन्दगिरीय—न्यायनिर्णयः ।

तात्त्विकमतात्त्विकं च ब्रह्मणो रूपमुक्त्वा तद्धियां प्रतिवेदान्तं प्रतीतानां नामाद्यभेदादभेदमाह—**सर्ववेदान्तेति** । पूर्वोत्तरपादयोः संगतिं वक्तुं वृत्तं कीर्तयति—**व्याख्यातमिति** । ज्ञेये ब्रह्मण्युक्ते तज्ज्ञानं किंरूपमित्यपेक्षायां तद्विचारायोत्तरपादप्रवृत्तिरित्याह—**इदानीमिति** । पदार्थयोः शोधनानन्तरमपुनरुक्तापेक्षितपदपदार्थोपसंहारेण सगुणनिर्गुणवाक्यानामर्थो निर्धार्यते । तत्र सगुणविद्यानां सत्त्वशुद्धिद्वारा निर्गुणविद्योपयोगात्पदार्थोपसंहारेण वाक्यार्थज्ञानार्थत्वाच्च सगुणवाक्यार्थचिन्ताऽर्थवती । निर्गुणचिन्ता तु तद्धीद्वारा मुक्तिहेतुरित्यर्थः । निरुपाधिकं ब्रह्मज्ञानं विचार्यत्वेनोक्तमिति मत्वा पादारम्भमाक्षिपति—**नन्विति** । अवयवभेदाभावात्तन्निमित्तो ज्ञानभेदो न संभवतीत्याह—**पूर्वेति** । स्वभावभेदाभावात्तत्कृतोऽपि ज्ञानभेदो नास्तीत्याह—**एकरसमिति** । ज्ञेयस्य ब्रह्मणः सर्वप्रकारभेदाभावे फलितमाह—**तत्रेति** । वेदान्तानां शक्तितात्पर्यालोचनायामपि नेयं चिन्तेत्याह—**न हीति** । एकस्यापि पिता पुत्रो भ्रातेत्यादावनेकविज्ञानविषयत्ववदिहापि स्यादित्याशंक्याऽऽह—**एकेति** । एकस्मिन्नेकरूपे स्मृत्याद्यनेकज्ञानवदनेकज्ञानसिद्धिरित्याशंक्याऽऽह—**न चेति** । दृष्टान्ते तु पूर्वकालविशिष्टादेतत्कालविशिष्टमन्य-

**विज्ञानानि सम्भवन्ति । न ह्यन्यथार्थोऽन्यथा ज्ञानमित्यभ्रान्तं भवति । यदि पुनरेकस्मिन्ब्रह्मणि बहूनि विज्ञानानि वेदान्तेषु प्रतिपिपादयिषितानि । तेषामेकमभ्रान्तं, भ्रान्तानीतराणीत्यनाश्वासप्रसङ्गो वेदान्तेषु ॥ तस्मान्न तावत्प्रतिवेदान्तं ब्रह्मविज्ञानभेद आशंकितुं शक्यते । नाप्यस्य चोदनाद्यविशेषादभेद उच्यते । ब्रह्मविज्ञानस्याचोदनालक्षणत्वात् । अविधिप्रधानैर्हि वस्तुपर्यवसायिभिर्ब्रह्मवाक्यैर्ब्रह्मविज्ञानं जन्यत इत्यवोचदाचार्यः-"तत्तु समन्वयाद्" [ व्या० सू० १ । १ । ४ ] इत्यत्र । तत्कथमिमां भेदाभेदचिन्तामारभत इति ॥ तदुच्यते ॥ सगुणब्रह्मविषया, प्राणादिविषया चेयं विज्ञानभेदाभेदचिन्तेत्यदोषः । अत्र हि कर्मवदुपासनानां भेदाभेदौ सम्भवतः । कर्मवदेव चोपासनानि दृष्टफलान्यदृष्टफलानि चोच्यन्ते । क्रममुक्तिफलानि च कानिचित्सम्यग्ज्ञानोत्पत्तिद्वारेण । तेष्वेषा चिन्ता सम्भवति-किं प्रतिवेदान्तं विज्ञानभेदः-आहोस्वित्-नेति ॥**

---

रत्नप्रभा ।

युक्त इत्याह-**नाप्यस्येति** ॥ एवं पादारम्भमाक्षिप्य समाधत्ते-**तदुच्यत इति** ॥ सगुणविद्यास्वेव भेदाभेदचिन्ता क्रियते । निर्गुणविद्यायां त्वैक्यं सिद्धमिति वाच्यार्थरूपगुणोपसंहारमात्रं क्रियते वाक्यार्थनिर्णयायेति भावः ॥ पञ्चाग्निप्राणदहरशाण्डिल्यवैश्वानरादिविद्या मिथो भिन्ना इति "नानाशब्दादिभ-

भामती ।

काकाराणीत्युक्तम्-**अनेकरूपाणि**।रूपमाकारः। समाधत्ते-**उच्यते**। **सगुणेति**।तत्तद्गुणोपाधानब्रह्मविषया-उपासनाःप्राणादिविषयाश्च दृष्टादृष्टक्रममुक्तिफला विषयभेदाद्भिद्यन्त इत्यर्थः।तत उपपन्नो विमर्श इत्याह-**तेष्वेषा**

आनन्दगिरीय-न्यायनिर्णयः ।

दिति ज्ञानभेदो युक्तो ब्रह्मणि तु निरुपाधिके नैवमित्यर्थः । अर्थस्यैकरूपत्वेऽपि ज्ञानमनेकरूपं तयोर्भेदादित्याशंक्याऽऽह-**न हीति** । तदेव प्रपञ्चयति-**यदीति** । पूर्वपक्षे ज्ञानभेदशंकायोगं निगमयति-**तस्मादिति** । सिद्धान्तेऽपि चोदनाद्यभेदाज्ज्ञानाभेदो न सिध्यतीत्याह-**नापीति** । तर्हि सूत्रविरोधः स्यादित्याशंक्य पूर्वापरविरोधात्त्याज्यमेतदित्यभिप्रेत्याऽऽह-**अविधीति** । आक्षेपमुपसंहरति-**तदिति** । तत्तदनेकोपाध्यवच्छिन्नब्रह्मविषयाणि प्राणादिविषयाणि चोपासनानि विचारयोग्यानीत्याह-**तदुच्यत इति**। निरुपाधिब्रह्मज्ञाने ज्ञेयैक्यादैक्यं सिद्धमिति न भेदाभेदचिन्ता । तत्र पुनर्गुणोपसंहारो लक्ष्याखण्डवाक्यार्थसिद्ध्यर्थं वाच्यार्थतद्वाचकपदोपसंहाररूपो वर्तिष्यते तेनोक्तविचारारम्भसिद्धिरित्याह-**इत्यदोष इति** । सगुणमपि विचार्यमाणमद्वयं ब्रह्मैवेति कथं तस्मिन्नुपास्तिभेदाभेदचिन्तेत्याशंक्याऽऽह-**अत्रेति** । सोपाधिकं ब्रह्म सप्तम्यर्थः । न केवलं विषयभेदाद्भेदः किंतु फलभेदादपीत्याह-**कर्मवदिति**। विरक्तस्य मुमुक्षोरलमनेन विचारेणेत्याशंक्याऽऽह-**क्रमेति** । तस्यापि यथोक्तो विचारो हेयोपादेयविवेकोपकारीत्यर्थः। निर्गुणविद्यायां क्वचिद्भेदभ्रमापोहेनाभेदो निरूप्यतेऽपुनरुक्तशब्दानां सत्यादिधर्माणां वा साधारणस्वरूपलक्षणार्थमुपसंहारो वर्ण्यते। सगुणविद्यासु पुनरभेदः क्वचित्क्वचिद्भेदः क्वचिद्गुणानामुपसंहारः क्वचिदनुपसंहार इत्युपसंहरति-**तेष्विति** । एवं पादारम्भमुक्त्वा प्रतिशाखं प्रतीतज्ञानानि विषयीकृत्य नामादिभेदाच्चोदनाद्यविशेषाच्चाऽऽद्याधिकरणावयवं संशयमाह-**किमिति** । अत्र चोत्सर्गतः सर्वशाखासु विद्यैक्ये सिद्धे

तत्र पूर्वपक्षहेतवस्तावदुपन्यस्यन्ते—नाम्नस्तावद्भेदप्रतिपत्तिहेतुत्वं—

रत्नप्रभा ।

दाद्' [ न्या० सू० । ३ । ३ । ५८ । ] इत्यत्र वक्ष्यते । अत्र तु मिथोभिन्नास्ताः किं प्रतिशाखं भिद्यन्ते—न वा—इति नामादिभेदाच्चोदनाद्यविशेषाच्च संशयः । पूर्वपक्षे—विद्याभेदाद्गुणानुपसंहारः, सिद्धान्ते त्वभेदाद्गुपसंहार इति भेदः । पूर्वतन्त्रे—शाखान्तराधिकरणपूर्वपक्षसूत्रं "नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरे कर्मभेदः स्याद्" [ जै० सू० । २ । ४ । ८ ] इति । तत्रोक्ता हेतवः ( १ )—नामादयो विद्याभेदार्थमिहोच्यन्ते—"अथैष ज्योतिरथैष सर्वज्योतिरेतेन सह-

भामती ।

चिन्ता । पूर्वपक्षं गृह्णाति—तत्रेति । नाम्नस्तावदिति । अस्ति 'अथैष ज्योतिः—एतेन सहस्रदक्षिणेन यजेत' इति । तत्र संशयः—किं यजेतेति संनिहितज्योतिष्टोमानुवादेन सहस्रदक्षिणालक्षणगुणविधानम्, उतैतद्गुणविशिष्टकर्मान्तरविधानमिति । किं तावत् प्राप्तं, ज्योतिष्टोमस्य प्रक्रान्तत्वाद्यजेतेति तदनुवादाज्ज्योतिरिति प्रातिपदिकमात्रं पठित्वा एतेनेत्यनुकृष्य कर्मसामानाधिकरण्येन कर्मनामव्यवस्थापनात्, कर्मणश्चानुवाद्यत्वेन तत्तन्त्रस्य नाम्नोऽपि तथैव व्यवस्थापनात्, ज्योतिःशब्दस्य 'वसन्तेवसन्ते ज्योतिषा' इति च ज्योतिष्टोमे योगदर्शनात् नामैकदेशेन च नामोपलक्षणस्य लोकसिद्धत्वाद्भीमसेनोपलक्षणभीमपदवत्, अथशब्दस्य चानन्तर्यार्थस्यासंबन्धित्वेऽनुपपत्तेः, गुणविशिष्टकर्मान्तरविधेश्च गुणमात्रविधानस्य लाघवात्, द्वादशशतदक्षिणायाश्चोत्पत्त्यशिष्टतया समशिष्टतया सहस्रदक्षिणया सह विकल्पोपपत्तेः, प्रकृतस्यैव ज्योतिष्टोमस्य सहस्रदक्षिणालक्षणगुणविधानार्थमयमनुवादो न तु कर्मान्तरमिति प्राप्तम् । एवं प्राप्त उच्यते—भवेत्पूर्वस्मिन् गुणविधिर्यदि तदेव प्रकरणं स्यात् । विच्छिन्नं तु तत् । तथाहि संनिधावपि पूर्वासंबद्धार्थं संज्ञान्तरं प्रतीयमानम् ' अन्यायश्चानेकार्थत्वम्' इति न्यायादुत्सर्गतोऽर्थान्तरार्थत्वात्पूर्वबुद्धिं व्यवच्छिनत्त्यपूर्वबुद्धिं च प्रसूत इति लोकसिद्धम् । न जातु देहि देवदत्ताय गामथ देवाय वाजिनमिति देवशब्दाद्देवदत्तं वाजिमाजमवस्यन्ति लौकिकाः । तथा चोपरिष्टात् 'यजेत' इति श्रूयमाणमसंबद्धार्थपदव्यवायात्तत्कर्मबुद्धिमनादधत् तत्र गुणविधानमात्रासमर्थं कर्मान्तरमेव विधत्ते । न चैकत्रानुपपत्त्या लक्षणया ज्योतिःशब्दो ज्योतिष्टोमे

आनन्दगिरीय—न्यायनिर्णयः ।

पूर्वोक्तन्यायेन विद्यातो मुक्तिसंभवात्पादादिसंगतिरिति मत्वा पूर्वपक्षयति—तत्रेति । पूर्वपक्षे प्रतिवेदान्तं विद्याभेदाद्गुणानुपसंहारः । सिद्धान्ते सर्वत्र विद्यैक्यात्तदुपसंहार इति फलमुत्तराधिकरणे वक्ष्यति । शाखान्तराधिकरणे "नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनशब्दान्तरसंख्याप्रक्रियातोऽपि कर्मभेदः स्यात्" [ पू० मी० सू० २ । ४ । ८] इति पूर्वपक्षसूत्रेण पूर्वपक्षे कर्मभेदे ये हेतवो नामादयो दर्शितास्ते विद्याभेदलक्षणपूर्वपक्षोपयोगित्वेनात्रानूद्यन्त इत्यर्थः । तत्र नाम्नो भेदकत्वमुदाहरति—नाम्न इति । आदिपदादेकप्रकरणस्थाग्निहोत्रदर्शपूर्णमासादिग्रहणम् । 'अथैष ज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत' इत्यत्र ज्योतिष्टोमानुवादेन सहस्रदक्षिणागुणविधिर्वा तद्गुणककर्मान्तरविधिर्वेति संदेहे प्रकृतज्योतिष्टोमस्य तदेकदेशवाचिना ज्योतिःशब्देन भीमादिशब्दवदभिधानात्कर्मान्तरविधेश्च गुणमात्रविधानस्य लघुत्वाद् द्वादशशतदक्षिणायाश्च सहस्रदक्षिणया विकल्पात्प्रकृतानुवादेन गुणान्तरविधिरिति प्राप्ते सत्यां गतावेकस्य संज्ञिनोऽनेकसंज्ञायोगादेकत्रानुपपत्त्या लाक्षणिकः शब्द इत्येतावता ज्योतिःशब्दस्यासत्यामनुपपत्तौ ज्योतिष्टोमलक्षकत्वासिद्धेरथशब्दाच्च प्रकरणविच्छेदात्प्रकृते गुणविध्ययोगाद् गुणवि-

प्रसिद्धं ज्योतिरादिषु । अस्ति चात्र वेदान्तान्तरविहितेषु–

रत्नप्रभा ।

स्रदक्षिणेन यजेत'' इत्यत्र प्रकृतज्योतिष्टोमानुवादेन सहस्रदक्षिणाख्यगुणविधिमाशंक्य ज्योतिरितिपदस्य कर्मान्तरनामत्वसम्भवे ज्योतिष्टोमलक्षकत्वायोगादथेति प्रकरणविच्छेदाच्च ज्योतिष्टोमात् कर्मान्तरं विशिष्टदक्षि-

भामती ।

प्रवृत्त इत्यसत्यामनुपपत्तौ लाक्षणिको युक्तः । न हि गङ्गायां घोष इत्यत्र गङ्गापदं लाक्षणिकमिति मीनो गङ्गायामित्यत्रापि लाक्षणिकं भवति । भेदेऽपि च प्रथमं संज्ञान्तरेणोल्लिखिते यजिशब्दसामानाधिकरण्यं कर्मनामधेयतामात्रतामावहति । ननु संज्ञान्तरोपजनितां भेदधियमपनेतुमुत्सहते । तथा चाथशब्दोधिकारार्थः प्रकरणान्तरतामवद्योतयति । एषशब्दश्चाधिक्रियमाणपरामर्शक इति सोऽयं संज्ञान्तराद्भेदः इति । भवतु संज्ञान्तरात्कर्मभेदः, प्रस्तुते तु किमायातमित्यत आह–अस्ति चात्र वेदान्तान्तरविहितेष्विति । यथैव काठकादिसमाख्या ग्रन्थे प्रयुज्यन्त एवं ज्ञानेऽपि लौकिकाः । न चास्ति विशेषो यतो ग्रन्थे मुख्या विज्ञाने गौणी भवेत् । प्रणयनं च ग्रन्थज्ञानयोरभिन्नं प्रवृत्तिनिमित्तम् । तस्माज्ज्ञानस्यापि वाचिका समाख्या । तथा च यदा ज्योतिष्टोमसंनिधौ श्रूयमाणं समाख्यान्तरं तत्प्रतीकमपि कर्मणो भेदकं तदा कैव कथा शाखान्तरीये विप्रकृष्टतमेऽतत्प्रतीकभूतसमाख्यान्तराभिधेये ज्ञात इति।तथा रूपभेदोऽपि कर्मदस्य प्रतिपादकः प्रसिद्धो यथा 'वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्येवमादिषु । इदमाम्नायते–'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' इति । अत्र हि द्रव्यदेवतासंबन्धानुमितो यागो विधीयते । तदनन्तरं चेदमाम्नायते–'वाजिभ्यो वाजिनम्' इति । अत्रेदं संदिह्यते–किं पूर्वस्मिन्नेव कर्मणि वाजिनं गुणो विधीयते उत कर्मान्तरं द्रव्यदेवतान्तरविशिष्टमपूर्वं विधीयत इति । किं तावत् प्राप्तं, द्रव्यदेवतान्तरविशिष्टकर्मान्तरविधौ विधिगौरवप्रसङ्गात् कर्मान्तरापूर्वान्तरकल्पनागौरवप्रसङ्गाच्च न कर्मान्तरविधानमपि तु पूर्वस्मिन्नेव कर्मणि वाजिनद्रव्यविधिः । न चोत्पत्तिशिष्टामिक्षागुणावरोधात्तत्र वाजिनमलब्धावकाशं कर्मान्तरं गोचरयतीति युक्तम् । उभयोरपि वाक्ययोः समसमयप्रवृत्तेरामिक्षावाजिनयोरुत्पत्तौ समं शिष्यमाणत्वेन नामिक्षायाः शिष्टत्वम् । तत्कथमनयावरुद्धं कर्म न वाजिनं निविशेत् । न च वैश्वदेवीत्यत्र श्रौत आमिक्षासंबन्धो विश्वेषां देवानां येन वाजिनसंबन्धाद्वाक्यगम्याद्बलवान्भवेदुभयोरपि पदान्तरापेक्षप्रतीतितया वाक्यगम्यत्वाविशेषात् । नो खलु वैश्वदेवीत्युक्ते आमिक्षापदानपेक्षामामिक्षामध्यवस्यामः । अस्तु वा श्रौतत्वं तथापि वाजिभ्य इति पदं वाजमन्नमामिक्षा तदेषामस्तीति व्युत्पत्त्या तत्संबन्धिनो विश्वान्देवानुपलक्षयति । यद्यपि विश्वदेवशब्दाद्वाजिपदं भिन्नं, येन च शब्देन चोदना तेनैवोद्देशो देवतात्वं न शब्दान्तरेणान्यथाऽर्थैकत्वेन सूर्यादित्यपदयोः सूर्यादित्यचर्वोरेकदेवत्यप्रसङ्गात्, तथापि वाजिभिरितीनेः सर्वनामार्थे स्मरणात् संनिहितस्य च सर्वनामार्थत्वात्, विश्वेषां देवानां च विश्वदेवपदेन संनिधापनात्तत्पदपुरःसरा एवैते वाजिपदेनोपस्थाप्या न तु सूर्यादित्यपदवत्स्वतन्त्राः । तथा च तदुपलक्षणार्थं वाजिपदं विश्वदेवोपहितामेव देवतामुपलक्षयतीति न शब्दान्तराद्देवताभेदः । ततश्चामिक्षासंबन्धोपजीवनेन विश्वेभ्यो वाजिनं विधीय-

आनन्दगिरीय–न्यायनिर्णयः ।

शिष्टकर्मान्तरविधिरिति द्वितीये स्थितम् । अग्निहोत्रदर्शपूर्णमासादिषु संज्ञाभेदेन संज्ञिभेदेन विप्रतिपत्तिरिति भावः । संज्ञान्तरात्कर्मभेदेऽपि प्रकृते किं जातमित्याशंक्याऽऽह–अस्ति चेति । तैत्तिरीयकादिशब्दानां शाखानामत्वे विज्ञाननामत्वं प्रयोगाविशेषात्प्रवृत्तिनिमित्तस्य च प्रवचनस्य ग्रन्थज्ञानयोरविशिष्टत्वान्न क्वचिन्मुख्यमन्यत्र गौणं नामाप्रसिद्धविभागायोगादिति भावः । विद्याभेदं नामभेदादुक्त्वा रूपभेदा-

विज्ञानेषु—अन्यदन्यन्नाम—तैत्तिरीयकं,वाजसनेयकं, कौथुमकं, कौषीतकं, शाट्यायनकमित्येवमादि ॥ तथा—रूपभेदोऽपि कर्मभेदस्य प्रतिपादकः प्रसिद्धः—"वैश्वदेव्याऽऽमिक्षा वाजिभ्यो वाजिनम्" इत्येवमादिषु । अस्ति चात्ररूपभेदः । तद्यथा—केचिच्छाखिनः पञ्चाग्निविद्यायां षष्ठमपरमग्निमामनन्ति ॥ अपरे पुनः पञ्चैव पठन्ति ॥ तथा—प्राणसंवादादिषु केचिदूनान्वागादीनामनन्ति ॥ केचिदधिकान् ॥ तथा—धर्मविशेषोऽपि कर्मभेदस्य

रत्नप्रभा ।

णाकं विधीयत इति नाम्नः कर्मभेदकत्वमुक्तम् । ज्योतिरादिष्विति—आदिपदेनाऽऽध्वर्यवं हौत्रमिति संज्ञाभेदात् कर्मभेदो ग्राह्यः—आतप्तं क्षीरं दध्ना कठिनम् ( २ )—आमिक्षा, तत्र द्रवं जलरूपं—वाजिनमिति भेदः ॥ "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इत्यत्र वैश्वदेवे आमिक्षायागे वाजिनाख्यगुणविधिः । वाजिभ्य इति विश्वेदेवानुवादादित्याशंक्यामिक्षां प्रत्युपसर्जनत्वेनोक्तविश्वेदेवानां वाजिभ्य इत्यनुवादायोगादुत्पत्तिशिष्टामिक्षावरुद्धे कर्मणि वाजिनद्रव्यस्यानाकांक्षितस्य विध्ययोगाद्वाजिदेवताको वाजिनयागः कर्मान्तरमिति द्रव्यदेवताख्यरूपभेदात् कर्मभेदः सिद्धान्तितः ॥ आदिपदाद् "ऐन्द्रं दधि" "ऐन्द्रं पयः" इति द्रव्यभेदाद् यागभेदो ग्राह्यः, एवमिहापि पञ्चाग्निषडग्निरूपभेदाद् विद्याभेदो वाजिच्छन्दोगयोः । ( ३ )—तथा—रेतोन्यूना वागादयः छान्दोग्ये । तत्सहिता

भामती ।

मानं नामिक्षया वाध्यते किंतु तया सह समुचीयत इति न कर्मान्तरमपि तु वाक्याभ्यां द्रव्ययुक्तमेकं कर्म विधीयत इति प्राप्त उच्यते—स्यादेतदेवं यदि वैश्वदेवीति तद्धितश्रुत्यामिक्षा नोच्येत । तद्धितस्य त्वस्येति सर्वनामार्थे स्मरणात् संनिहितस्य च विशेष्यस्य सर्वनामार्थत्वात्तत्रैव तद्धितस्यापि वृत्तिर्न तु विश्वेषु देवेषु। न तत्संबन्धे, नापि तत्संबन्धिमात्रे । नन्वेवं सति कस्माद्वैश्वदेवीशब्दमात्रादेव नामिक्षां प्रतीमः, किमिति चामिक्षापदमपेक्षामहे । तद्धितान्तस्य पदस्याभिधानापर्यवसानान्न प्रतीमस्तत्पर्यवसानाय चापेक्षामहे । अवसिताभिधानं हि पदं समर्थमर्थधियमाधातुम् । इदं तु संनिहितविशेषाभिधायि तत्संनिधिमपेक्षमाणं संनिधापकमामिक्षापदमपेक्षत इति कुत आमिक्षापदानपेक्ष आमिक्षाप्रत्ययप्रसङ्गः । कुतो वा तत्रानपेक्षा । अतश्च सत्यामपि पदान्तरापेक्षायां यत्पदं पदान्तरापेक्षमभिधत्ते तत्प्रमाणभूतप्रथममाविपदावगम्यत्वाच्छ्रौतं

आनन्दगिरीय—न्यायनिर्णयः ।

दपि तमुदाहरति—तथेति । आदिपदेनाऽऽग्नेयाग्नीषोमीयादिसंग्रहः । 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यत्र पूर्वस्मिन्नेव वैश्वदेवे कर्मणि वाजिनवाक्येन वाजिनगुणविधिर्वा द्रव्यदेवतान्तरयुक्तकर्मान्तरविधिर्वेति संदेहे विश्वेषामेव देवानां वाजेनान्नेनाऽऽमिक्षया युक्तानां वाजिपदेनोक्तेर्वाजिभ्य इतिताननूद्य वाजिनगुणविधेरामिक्षावद्वाजिनमपि वैश्वदेवमेवेति न कर्मान्तरविधिरिति प्राप्ते विश्वेषां देवानामामिक्षां प्रत्युपसर्जनतया प्राधान्येनाप्रकृतत्वाद्वाजिपदेन परामर्शायोगाद्वाजिनगुणस्याप्रकृतदेवताभिधानेन संबन्धात्कर्मान्तरदृष्टेस्तद्धितश्रुत्या चाऽऽमिक्षावरुद्धतया वाजिनस्य तत्रानवकाशात्पूर्वस्मात्कर्मणः स्वसंबंधिकर्मणो भेदकत्वात्तद्धितश्रुतिविरोधे वाक्यस्य दौर्बल्याद्वाजिनवाक्येन द्रव्यदेवतान्तरयुक्तकर्मान्तरविधिरिति तत्रैव स्थितम् । आग्नेयादिषु पुना रूपभेदाद्भेदे न विगानमिति भावः । अस्तु रूपभेदात्कर्मभेदः प्रस्तुते किं जातं तदाह—अस्ति चेति । अत्रेति विद्योक्तिः । तदेव भिन्नं रूपमुदाहरति—तद्यथेति । यथा यागस्य द्रव्यदेवते रूपमेवं वेद्यमेव विद्याया रूपम् । तथा च वेद्यभेदे विद्याभेदः स्यादित्यर्थः । धर्मभेदाद्विद्याभेदं वक्तुं तस्य कर्मभेदकत्वमाह—तथेति । कारीरीवाक्यान्यधीयानास्तैत्ति-

**प्रतिपादक आशङ्कितः कारीर्यादिषु ॥ अस्ति चात्र धर्मविशेषः-यथा-**

रत्नप्रभा।

घाजिनामिति प्राणविद्याभेदः कारीरिवाक्याध्ययने तैत्तिरीयकाणां भूमौ भोजनं धर्मविशेषः, नान्येषाम् ॥ अग्न्यध्ययने केषाञ्चिदुपाध्यायार्थमुदकाहरणं धर्मः, नान्येषाम् ॥ अश्वमेधाध्ययनेऽश्वघासानयनं केषाञ्चिदेव, नान्येषाम् ॥ न च तान्येव कारीर्यादीनि कर्माणि धर्मविशेषमपेक्षन्ते, नापेक्षन्ते चेति युक्तम् ॥ अतो धर्मविशेषाच्छाखान्तरे कर्मभेदः शंकितः। तथात्रापि मुण्डकाध्ययने केषाञ्चिदेव शिरस्यङ्गारपात्रधारणरूपं व्रतं, नान्येषामिति विद्याभेदः स्यात ॥ (४)-पुनरुक्तिः-अभ्यासः। यथा-"समिधो यजति तनूनपातं यजति" इति यजत्यभ्यासात् प्रयाजानां भेद उक्तः, तथा शाखान्तरेऽभ्यासाद्विद्याभेदः ॥ आदिपदान्निन्दादिग्रहः। "प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्" इत्यनुदितहोमस्य, "यदुदिते सूर्ये प्रातर्जुहुयाद् यथातिथये प्रद्रुताय शून्यायावसथायाहार्यं हरन्ति तादृगेव तद्"इत्युदितहोमस्य च,-निन्दाश्रुतेर्भेदः। एकस्यैवोदितेऽनुदिते चानुष्ठानायोगात् ॥ तथोदितानुदितहोमातिक्रमकृतप्रायश्चित्तादप्यग्निहोत्रभेदः शंकितः। एते निन्दाप्रायश्चित्ते वेदान्तविद्यासु न विद्येते इति नोदाह्रियेते। यथा-सर्वशाखाविहितस्य कर्मणो ज्ञातुं कर्तुं चाऽऽशक्तेर्भेदः, तथा-सर्ववेदान्ताध्ययनज्ञानाद्यशक्तेस्तत्तद्वेदान्तविद्याभेदः स्यात। तथा-शाखानां सर्वासामेकरूपा समाप्तिर्नोच्यते। किन्तु कस्याश्चित् कचित् कर्मणि समाप्तिः। अतः समाप्तिवचनभेदात् प्रतिशाखं कर्मभेदः शंकितः। तथा-कस्यचिद्वेदान्तस्योङ्कारसार्वात्म्ये समाप्तिः, कस्यचिदन्यत्रेति विद्याभेदः। अन्यार्थदर्शनमर्थवादः। तद्भेदात् कर्मभेदवद्विद्याभेद इति पूर्वपक्षसूत्रोक्ता हेतवो दर्शिताः, ते केचित् सिद्धान्ते पूर्वपक्षे चात्रोपयुज्यन्त इति। तथा-शब्दान्तराभ्याससंख्यागुणप्रक्रियानामधेयानि कर्मभेदकानि। तत्र नामधेयं गुणो, रूपमभ्यास-

भामती।

बलीयश्च। यत्तु पर्यवसिताभिधानपदाभिहितपदार्थावगमगम्यं तत्तचरमप्रतीतिवाक्यगम्यं दुर्बलं चेति तद्धितश्रुत्यवगतामिक्षालक्षणगुणावरोधात्पूर्वकर्मासंयोगि वाजिनद्रव्यं ससंबन्धि पूर्वस्माद्भिनत्ति। एवं च सति नित्यवदवगतानपेक्षसाधनभावामिक्षा न वाजिनद्रव्येण सह विकल्पसमुच्चयौ प्राप्स्यति। न चाश्वत्वे निरूढत्वादनपेक्षवृत्ति वाजिपदं कथंचिद्यौगिकं सापेक्षवृत्ति विश्वदेवशब्दां देवतां वैश्वदेवीपदादामिक्षाद्रव्यं प्रत्युपसर्जनीभूतामवगतामुपलक्षयिष्यति। प्रकृतं हि सर्वनामपदगोचरः। प्रधानं च प्रकृतमुच्यते नोपसर्जनम्। प्रामाणिके च विधिकल्पनागौरवे अभ्युपेतव्ये एव प्रमाणस्य तत्त्वविषयत्वात्। तस्माद्यथेह पूर्वकर्मासंभविनो गुणात्कर्मभेद एवमिहापि पञ्चाग्निविद्यायाः षडग्निविद्या भिन्ना, एवं प्राणसंवादेपूनाधिकभावेन विद्याभेद इति। तथा धर्मविशेषोऽपि कर्मभेदस्य प्रतिपादक इति। तथाहि-कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भोजनमाचरन्ति नाचरन्त्यन्ये। तथाग्निमधीयानाः केचिदुपाध्यायस्योदकुम्भमाहरन्ति नाहरन्त्यन्ये। तथाश्वमेधमधीयानाः केचिदश्वस्य घासमानयन्ति नानयन्त्यन्ये। केचित्त्वाचरन्त्यन्यमेव धर्मम्। न च तान्येव कर्माणि भूमिभोजनादिजनितमुपकारमाकांक्षन्ति नाकांक्षन्ति चेति युज्यते। अतोऽवगम्यते भिन्नानि तासुतासु शाखासु कर्माणीति। अस्तु, प्रस्तुते किमायातमित्यत आह-अस्ति चात्रेति। अन्येषां शाखिनां नास्तीति शेषः।

आनन्दगिरीय-न्यायनिर्णयः।

रीया भूमौ भुञ्जते न तथाऽन्ये। अग्निमधीयानाश्च केचिदुपाध्यायस्योदकुम्भमाहरन्ति न त्वन्ये। न च तान्येव कर्माणि भूमिभोजनादिधर्मजन्योपकारवन्ति तद्रहितानि चेति युक्तमतस्तत्र धर्मभेदाद्भेदधीरित्यर्थः। एवमपि प्रकृते किं स्यात्तदाह-अस्ति चेति। अत्रेति पूर्ववद्विद्योक्तिः। अन्येषां तु शाखिनां

**आथर्वणिकानां "शिरोव्रतम्" [ मुण्ड० ३ । २ । १० ] इति ॥ एवं पुनरुक्तादयो भेदहेतवो यथासम्भवं वेदान्तान्तरेषु योजयितव्याः ॥**

रत्नप्रभा ।

श्चेति त्रयं व्याख्यातम् ॥ यजेत्, दध्यात्, जुहुयादिति प्रकृतिशब्दभेदेन धात्वर्थभेदात् तदवच्छिन्नभावनाख्यकर्मभेदः उक्तः । तथाऽत्र वेदोपास्तइत्यादिशब्दभेदाद् विद्याभेदः । "तिस्र आहुतीर्जुहोति" इति संख्यया कर्मभेदवद्वायुप्राणौ "द्वौ संवर्गौ" [ छां० ४ । ३ । ४ ] इति द्वित्वसंख्यया संवर्गविद्याभेदः स्यात् । नित्याग्निहोत्रप्रकरणात् प्रकरणान्तरे कुण्डपायिनामयने "मासमग्निहोत्रं जुह्वति" इति श्रुतमग्निहोत्रं प्रकरणान्तरस्थत्वात् कर्मान्तरमिति सिद्धान्तितम् । तथात्र वेदान्तभेदे प्रकरणभेदादुपास्तिभेद इति पूर्वपक्षः ॥ सिद्धान्तयति—**एवमिति** ॥ सर्वैर्वेदान्तैः प्रतीयन्त इति सर्ववेदान्तप्रत्ययानि तैर्विहितानीत्यर्थः ॥ उक्तनामादिभिरग्निहोत्रादिकर्मणां प्रतिशाखं भेदे प्राप्ते शाखान्तराधिकरणसिद्धान्तसूत्रम्—"एकं

भामती ।

**एवं पुनरुक्त्यादयोऽपीति** । 'समिधो यजति' इत्यादिषु पञ्चकृत्वोऽभ्यस्तो यजतिशब्दः । तत्र किमेका कर्मभावना किंवा पञ्चैवेति । किं तावत्प्राप्तं, धात्वर्थानुबन्धभेदेन शब्दान्तराधिकरणे भावनाभेदाभिधानाद्धात्वर्थस्य च धातुभेदमन्तरेण भेदानुपपत्तेः 'समिधो यजति' इति प्रथमभाविनां वाक्येन विहिता कर्मभावना विपरिवर्तमानोपरितनैर्वाक्यैरनूद्यते । न च प्रयोजनाभावादननुवादः प्रमाणसिद्धस्याप्रयोजनस्याननुयोज्यत्वात् । कर्मभावनाभेदे चानेकापूर्वकल्पनाप्रसङ्गादेकापूर्वावान्तरव्यापारमेकं कर्मेति प्राप्तम् । एवं प्राप्त उच्यते—परस्परानपेक्षाणि हि समिदादिवाक्यानीति । सर्वाण्येव प्राथम्यार्हाण्यपि युगपदध्ययनानुपपत्तेः क्रमेणाधीतानीति । न त्वयमेषां प्रयोजकः क्रमः । परस्परापेक्षाणामेकवाक्यत्वे हि प्रयोजकः स्यात् । तेन प्राथम्याभावात् प्राप्तमित्येव नास्तीति कस्य कोऽनुवादः । कथंचिद्विपरिवृत्तिमात्रस्यौत्सर्गिकाप्रवृत्तप्रवर्तनालक्षणविधित्वापवादसामर्थ्याभावात् । गुणश्रवणे हि गुणविशिष्टकर्मविधाने विधिगौरवभिया गुणमात्रविधानलाघवाय कर्मानुवादापेक्षायां विपरिवृत्तेरुपकारः । यथा 'दध्ना जुहोति' इति दधिविधिपरे वाक्ये विपरिवृत्त्यपेक्षायाम् 'अग्निहोत्रं जुहोति' इति विहितस्य होमस्य विपरिवर्तमानस्यानुवादः । न चात्र

आनन्दगिरीय—न्यायनिर्णयः ।

नैवं शिरस्यग्निधारणं व्रतमस्तीति धर्मभेदाद्विद्याभेद इत्यर्थः । भेदकान्तराण्यतिदिशति—**एवमिति** । आदिग्रहणान्निन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनानि शब्दान्तरं संख्या प्रक्रियेत्येतानि च संगृह्यन्ते । तत्र 'समिधो यजति' इत्यादौ पञ्चकृत्वोऽभ्यस्ते यजतिशब्दे किमेकं कर्मापूर्वं किंवा पञ्चैवेति संशये धात्वर्थानुबन्धभेदमन्तरेणापूर्वभेदायोगात्प्रकृते तदयोगादेकं कर्मापूर्वमिति प्राप्ते समिदादिवाक्यानां स्वरससिद्धाप्राप्तकर्मविधिपरत्वादसति विशेषे पुनः श्रुतेरानर्थक्यात्प्रत्यभ्यासमपूर्वभेद इति पुनरुक्तेर्भेदकत्वं स्थितम् । एवं शाखान्तरोक्ता विद्याः शाखान्तरोक्तविद्याभ्यो भिन्नाः पुनरुक्तेरिति पुनरुक्तितो विद्याभेदः । निन्देत्युदितानुदितहोमनिन्दोक्ता "प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम् । दिवा कीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम्" इत्यनुदितहोमनिन्दा "यथाऽतिथये प्रद्रुतायान्नं हरेयुस्तादृक्तद्यदुदिते जुह्वति" इत्युदितहोमनिन्दा । ततश्चैकस्यैवोदितेऽनुदिते च क्रमेणानुष्ठानायोगाद्भेदः । उदितानुदितहोमातिक्रमकृतप्रायश्चित्तादपि तद्भेदधीः । न च निन्दाप्रायश्चित्ते वेदान्तविद्यासु विद्येते इति नोदाह्रियेते । यत्त्वथ योऽन्यामित्यादि तद्भेदधीविषयत्वान्न विद्यां भिनत्ति । ततो भूय इवेत्यादि तु केवलदेवताज्ञाननिन्दया तस्य कर्मणा समुच्चयपरम् । अशक्तिश्च कर्मवद्विद्याभेदिका । न हि सर्वशाखाविहितं कर्म शक्यमेकेनानुष्ठातुं तथोपासनान्यपि नानाशाखोक्तानि नैकेनानुष्ठीयेरन्निति भेदः ।

तस्मात्प्रतिवेदान्तं विज्ञानभेद इति ॥ एवं प्राप्ते ब्रूमः ॥

रत्नप्रभा ।

एकं वा संयोगरूपचोदनाख्याविशेषात्'' [ जै० सू २।४।९ ] इति ॥ तत्र चोदनाविधायकः शब्दश्चोदित

भामती ।

गुणाद्भेदः, समिदादिपदानां कर्मनामधेयानां गुणवचनत्वाभावात् । अगृह्यमाणविशेषतया च किंवचन-विहितकिंकर्मानुवादेन कस्य गुणविधित्वमिति न विनिगम्यते । न चापूर्वं नाम ज्योतिरादिवद्विधानासंबन्धं प्रथममवगतं, यतः पूर्वबुद्धिविच्छेदेन विधीयमानं कर्म पूर्वस्मात्संज्ञातो व्यवच्छिन्द्यात् । किंतु प्रथमत एव कर्मसामानाधिकरण्येनावगताः समिदादयस्तद्वशात्कर्मनामधेयतां प्रतिपद्यमाना आख्यातस्यानुवादत्वेऽनु-वादा विधित्वे विधयो न तु स्वातन्त्र्येण कस्यचिदीशते । तस्मात् स्वरससिद्धाप्राप्तकर्मविधिपरत्वात्कर्म-ण्ययमभ्यासो भावनानुबन्धभूतानि भिन्दानो भावनां भिनत्ति यथा तथा शाखान्तरविहिता अपि विद्याः शाखान्तरविहिताभ्यो विद्याभ्योऽभ्यासो भेत्स्यतीति—अशक्तेश्च । न ह्येकः पुरुषः सर्ववेदान्तप्रत्ययात्मिका-मुपासनामुपसंहर्तुं शक्नोति । सर्ववेदान्ताध्ययनासामर्थ्यादनधीतार्थोपसंहारेऽध्ययनविधानवैयर्थ्यप्रसङ्गात् । प्रतिशाखं भेदे तूपासनानां नायं दोषः। समाप्तिभेदाच्च। केषांचित् शाखिनामोङ्काररसावात्म्यकथने समाप्तिः। केषांचिदन्यत्र । तस्मादप्युपासनाभेदः । अन्यार्थदर्शनादपि भेदः । तथाहि—'नैतदचीर्णव्रतोऽधीते' इति अचीर्णव्रतस्याध्ययनाभावदर्शनादुपासनाभावः । क्वचिदचीर्णव्रतस्याध्ययनदर्शनादुपासनावगम्यते । तस्मा-

आनन्दगिरीय-न्यायनिर्णयः ।

समाप्तिरपि शाखिनां केषांचित्क्वचिदिति कर्मणो भेदिका । तथा वेदान्तेष्वपि क्वचिदों-कारसर्वात्मत्ववचनेन समाप्तिरन्यत्र क्वचिदित्युपास्तिभेदः । अन्यार्थदर्शनं 'वायुर्वै क्षेपिष्ठा देवता' । 'सो-ऽरोदीद्यदरोदीत्' इत्याद्यर्थवादरूपं कर्मभेदकं स्तुतिनिन्दयोरेकत्रासमवायात् । एवं वेदान्तेष्वपि नाना-विधार्थवादस्य तत्रतत्र दृष्टेर्विद्याभेदः । शब्दान्तरादपि कर्मभेदः । ज्योतिष्टोमे 'सोमेन यजेत' 'दाक्षिणानि जुहोति' 'हिरण्यमात्रेयाय ददाति' इत्यत्र यजतिददातिजुहोतयः संहत्य वा कार्यं कुर्वन्त्यसंहत्य वेति संदेहे संहतानामेकापूर्वसाधकत्वं लाघवादिति पूर्वपक्षे ''शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्'' [ पू० मी० सू० २ । २ । १ ] इति । अत्र शब्दभेदे भावार्थानुबन्धभेदाद्भावनाभेद इति स्थितम् । तथेहापि ''ब्रह्मविदाप्नोति परम्'' ''तरति शोकमात्मवित्'' इति शब्दान्तराज्ज्ञानभेदः । संख्याऽपि कर्मणो भेदिका ''सप्तदश प्राजापत्यान्पशूनालभते'' इत्यत्र सप्तदशभिः पशुभिरेको वा यागो निर्वर्त्यः सप्तदश वेति संशये यो हि बहून्कल्पयति कल्पयत्यसावेकमिति लाघवादेको यागः सप्तदशपशुभिर्निर्वर्त्येत इति पूर्वपक्षे पशूनां पृथक्त्वे सप्तदशसंख्यायाः संभवात्तत्पृथक्त्वस्य च यागभेदाधीनत्वाद्यागाः सप्तदशेति राद्धान्तितम् । तथाऽत्रापि तौ वा एतौ द्वौ संवर्गाविति संख्यातो विद्याभेदः । प्रक्रियाऽपि कर्मभेदिका कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' । 'मासं दर्शपूर्णमासाभ्यां यजेत' इत्यत्र नित्येऽग्निहोत्रादौ मासगुणविधिर्वा कर्मान्तरविधिर्वेति संदेहे सत्यग्निहोत्रादिशब्दस्य प्रसिद्धाग्निहोत्राद्यनुवादित्वान्मासमित्यप्रसि-द्धत्वात्प्रसिद्धानुवादेनाप्रसिद्धगुणविधिसंभवात्प्रकरणस्य वाक्याद्दौर्बल्याद्गुणविधिरिति प्राप्ते यस्य प्रकरणे यद्वाक्यं श्रुतं न तत्तस्य बाधकमित्युत्सर्गादुपसद्भिश्चरित्वेत्युक्त्वा मासमग्निहोत्रमित्यादिश्रुतेर्नैयमिकाग्निहो-त्रादौ चोपसदामभावात्तदनुवादेन गुणविध्यसिद्धेरुपसदामपि तत्रैव विधाने वाक्यभेदादग्निहोत्रादिशब्दस्य चाऽऽख्यातपारतन्त्र्यात्तदर्थस्य चाधिकारालोचनायां वैलक्षण्यात्प्रसिद्धाग्निहोत्राद्यप्रत्यभिज्ञापकत्वात्कर्मान्तर-मित्युक्तम् । तथाऽऽत्रापि वैश्वानराश्वमेधोपासनादिषु प्रकरणभेदाद्विद्याभेद इत्यर्थः । वेदान्तान्तरेष्विति प्रतिशाखं व्यवस्थिततत्तद्वेदान्तप्रभेदेष्विति यावत् । प्राच्यां मीमांसायामुक्तहेतुभिः सिद्धं पूर्वपक्षमुपसंह-रति—तस्मादिति । पूर्वपक्षमनूद्य विद्यैक्यं सिद्धान्तमाह—एवमिति । सर्ववेदान्तेषु प्रतीयन्त इति

सर्ववेदान्तप्रत्ययानि विज्ञानानि तस्मिंस्तस्मिन्वेदान्ते तानितान्येव भवितुमर्हन्ति ॥ कुतः ॥ "चोदनाद्यविशेषात्" इत्यादिग्रहणेन—शाखान्तराधिकरणसिद्धान्तसूत्रोदिता अभेदहेतव इहाकृष्यन्ते॥ संयोगरूपचोदनाख्याविशेषादित्यर्थः॥ यथैकस्मिन्नग्निहोत्रे शाखाभेदेऽपि पुरुषप्रयत्नः तादृश एव चोद्यते "जुहुयाद्" इति, एवं "यो ह वै ज्येष्ठं च श्रेष्ठं च वेद" [(छां० ५।१।१)(बृ० ६।१।१)] इति वाजसनेयिनां, छन्दोगानां च,—तादृश्येव चोदना ॥ प्रयोजनसंयोगोऽप्यविशिष्ट एव—"ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति" [बृ० ६।१।१] इति । रूपमप्युभयत्र तदेव विज्ञानस्य—यद्गुत ज्येष्ठश्रेष्ठादिगुणविशेषणान्वितं प्राणतत्त्वम् । यथा च—द्रव्यदेवते यागस्य रूपम्—एवं—विज्ञेयं रूपं विज्ञानस्य । तेन हि तद्रूप्यते । समाख्यापि सैव—"प्राणविद्या" इति ॥ तस्मात्सर्ववेदान्तप्रत्ययत्वं विज्ञानानाम् ।

---

रत्नप्रभा ।

प्रयत्नो वा । तस्याः अविशेषमाह—**यथैकस्मिन्निति** ॥ एकधात्वर्थहोमावच्छिन्नप्रयत्नैक्यवदुपास्तिप्रयत्नैक्यमित्यर्थः ॥ **यथा**—ज्येष्ठत्वादिगुणकप्राणविद्या सर्वशाखास्वेका, **तथा**—पञ्चाग्निविद्याप्येका ।

भामती ।

दुपासनाभेद इति । अत्र सिद्धान्तमाह—**सर्ववेदान्तप्रत्ययं चोदनाद्यविशषात्** । तद्व्याचष्टे—**सर्ववेदान्तप्रत्ययानि** सर्ववेदान्तप्रमाणानि **विज्ञानानि तस्मिंस्तस्मिन् वेदान्ते तानितान्येव भवितुमर्हन्ति** । यान्येकस्मिन् वेदान्ते तान्येव वेदान्तान्तरेष्वपीत्यर्थः । चोदनाद्यविशेषात् आदिशब्देन संयोगरूपाख्याः संगृह्यन्ते । अत्र च चोद्यत इति चोदना पुरुषप्रयत्नः । स हि पुरुषस्य व्यापारः । तत्र खल्वयं होमादिधात्वर्थावच्छिन्ने प्रवर्तते । तस्य देवतोद्देशेन त्यागस्यासेचनादिकस्यावच्छेद्यः पुरुषप्रयत्नः स एव शाखान्तरे यथैवमिहापि प्राणज्येष्ठत्वश्रेष्ठत्ववेदनविषयः पुरुषप्रयत्नः स एव शाखान्तरेष्वपीति । एवं फलसंयोगोऽपि ज्येष्ठश्रेष्ठभवनलक्षणः स एव । रूपमपि तदेव । यथा यागस्य यदेकस्यां शाखायां

आनन्दगिरीय—न्यायनिर्णयः ।

सर्ववेदान्तप्रत्ययानि सर्ववेदान्तप्रमाणकानि तत्रतत्र विहितानीत्यर्थः । यान्येकस्मिन्वेदान्ते तान्येव वेदान्तान्तरेष्वपि विहितानीत्याह—**तस्मिन्निति** । सर्ववेदान्तप्रत्ययमित्येकवचनेन कर्तव्यतया प्रतीयमानज्ञानस्यैकत्वं ग्रहैकत्ववदविवक्षितम् । साधारणनिर्देशेन विधीयमानसर्वोपासनज्ञानानि विवक्षितानीति प्रतिज्ञां व्याख्यायाऽऽकांक्षाद्वारा हेतुमवतारयति—**कुत इति** । चोदनासाहचर्यादादिशब्देनार्थवादग्रहणमाशंक्य व्यावर्तयति—**आदीति** । "एकं वा संयोगरूपचोदनाख्याविशेषात्" [पू० मी० सू० २।४।९] इति शाखान्तराधिकरणे सिद्धान्तसूत्रं, तत्रोक्तान्कर्माभेदहेतूनत्रापि ज्ञानाभेदहेतुत्वेनाऽऽकृष्टानाचष्टे—**संयोगेति** । तत्र चोदनाया विधायकपदस्य चोद्यत इति वा पुरुषप्रयत्नस्य धात्वर्थावच्छिन्नस्याविशेषं सदृष्टान्तमाह—**यथेति** । प्रतिशाखं होमाद्यवच्छिन्नप्रयत्नवदिहापि प्राणज्येष्ठत्वादिधीविषयप्रयत्नस्याविशेषः शाखाद्वयेऽपीत्यर्थः । संयोगाविशेषमाह—**प्रयोजनेति** । रूपाविशेषमाह—**रूपमिति** । कथं ज्ञानस्य प्राणतत्त्वं रूपं तत्राऽऽह—**यथा चेति** । द्रव्यदेवताभ्यां यागस्य रूप्यमाणत्वात्तयोस्तद्रूपत्वं प्रकृते तु कथमित्याशंक्याऽऽह—**तेनेति** । आख्याविशेषमाह—**समाख्येति** । सर्वशाखास्थप्राणज्ञानाख्यसमाख्याद्यविशेषादैक्यं निगमयति—**तस्मादिति** । उक्तं न्यायं पञ्चाग्निविद्यादिषु सर्वशाखास्थेष्वतिदिशति—

एवं-पञ्चाग्निविद्यावैश्वानरविद्याशाण्डिल्यविद्येत्येवमादिष्वपि योजयितव्यम् ॥ ये तु नामरूपादयो, भेदहेत्वाभासाः ते प्रथम एव काण्डे "न नाम्ना स्यादचोदनाभिधानत्वाद्" इत्यारभ्य परिहृताः ॥ १ ॥ इहापि कश्चिद्विशेषमाशंक्य परिहरति—

## भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

रत्नप्रभा।

फलसंयोगाद्यविशेषात्। तथा-ऽन्यापि विद्याऽभिन्नेत्याह-एवं पञ्चाग्नीति ॥ पूर्वपक्षहेतून्निराचष्टे-ये त्विति ॥ काठकमित्यादिनाम्ना कर्मभेदो न युक्तः ॥ कुतः ॥ अचोदनाभिधानत्वात्। काठकादिशब्दानां ग्रन्थनामतया कर्मवाचित्वाभावात्। अतो भिन्ननामकशाखाग्रन्थभेदेऽपि तद्विहितं कर्मैकमेव। अल्परूपभेदोऽपि न कर्मैक्यविरोधी। धर्मविशेषस्त्वध्ययनाङ्गं, न कर्माङ्गम्। अतो न कर्म भेदकम्। शाखाभेदे पुनरुक्तिरसिद्धा। निन्दान्यार्थदर्शनयोरपि न भेदकत्वम्। तत्तद्विधिस्तुतिमात्रत्वात्। बहुशाखाध्ययनाशक्तावपि स्वशाखानुक्तविशेषस्यापेक्षितस्यान्यतो ग्रहसम्भवादशक्तिरभेदिका। एकस्मिन्नपि कर्मण्यङ्गलोपादिना प्रायश्चित्तं सम्भवति। एवं समाप्तिवचनभेदोऽप्यप्रयोजक इत्येवं कर्माभेदप्रमाणप्राबल्ये भेदहेतवः परिहृता इत्यर्थः ॥ १ ॥ तर्हि शाखान्तरन्यायेनैव कर्मैक्यवद्विद्यैक्यसिद्धेः पुनरुक्तिरित्यत आह-इहा-

भामती।

द्रव्यदेवतारूपं तदेव शाखान्तरेष्वपीति। एवं वेदनस्यापि यदेकत्र प्राणज्येष्ठत्वश्रेष्ठत्वरूपं विषयस्तच्छाखान्तरेष्वपीति ॥ १ ॥ कंचिद्विशेषमिति। युक्तं यदग्नीषोमीयस्योत्पन्नस्य पश्चादेकादशकपालत्वादिसंबन्धेऽप्यभेद इति। यथोत्पन्नस्य तस्य सर्वत्र प्रत्यभिज्ञायमानत्वादिह त्वग्निपूत्पत्तिगत एवं गुणभेद इति कथं वैश्वदेवीवन्न भेदक इति विशेषः। तमिमं विशेषमभिप्रेत्याशङ्कते सूत्रकारः-भेदान्नेति चेदिति। परिहारः सूत्रा-

आनन्दगिरीय-न्यायनिर्णयः।

एवमिति। परोक्तमनूद्य प्रत्याह-ये त्विति। अस्यार्थः-काठकं कालापकमित्यादिनामभेदान्न कर्मभेदः। कस्मात्। अचोदनाभिधानत्वात्। काठकादीनां ग्रन्थनामतया कर्मनामत्वाभावात्। ग्रन्थयोगादेव कर्मणां तद्द्वारा तन्नामत्वसिद्धौ तत्रापि शक्तिकल्पनायां गौरवात्कर्मैकत्वेऽपि तत्तद्ग्रन्थसंदर्भसंयोगात्काठकप्रायश्चित्तमित्यादिदर्शनान्न नाम्ना कर्मभेदः। तथाऽपि नामभेदान्न विद्याभेदः। विद्यैक्येऽपि तत्तद्ग्रन्थसंयोगात्तत्तन्नामत्वसिद्धेः। नापि रूपभेदो भेदकोऽग्नीषोमीयस्यैककर्मत्वेऽप्येकादशकपालत्ववद्द्वादशकपालत्वरूपभेदो वाचनिकः। तथाऽन्यादिषु रूपभेदेऽपि विद्यैक्याविरोधात्। न च धर्मविशेषो भेदकः। तस्य विद्याग्रहणार्थतया कर्मानुपकारिणस्तद्भेदकत्वाभावात्। उक्तं हि 'विद्यायां कर्मशास्त्रम्' इति। तथाऽत्रापि धर्मविशेषो न विद्यार्थ इति वक्ष्यते। न च पुनरुक्तिर्भेदिका। न ह्येतद्द्विर्वचनं यदेकोऽर्थो बहुभिः शाखिभिरुच्यते। एकस्मिन्नपि वेदे बहुभिरुच्यमाने पुनरुक्तिप्रसङ्गात्। तस्मादध्येतृभेदेन पुनरुक्त्यभावात्कर्मैक्यम्। तदुक्तम् "अद्विर्वचनं श्रुतिसंयोगाविशेषात्" [पू० मी० सू० २। ४। १६] इति। एवमत्रापि विद्यैक्यं प्रतिशाखं प्रत्येतव्यम्। अशक्तिरपि न भेदहेतुः। असमर्थानामेकस्मिन्नपि वेदे सर्वांगोपसंहारानर्हत्वात्। समर्थानां तु शाखाभेदे तदध्ययनाभावेऽपि तदध्येतृभ्यो विश्वस्य तत्तद्रूपमुपसंहर्तुं शक्यत्वात्। न च समाप्तिवचनं भेदकमेकत्वेऽपि कस्यचिदन्याङ्गस्य समाप्तौ समाप्तिवचनसंभवात्। न चान्यार्थदर्शनमन्यपरत्वात्कर्मैक्यं विद्यैक्यं वा प्रमितं निषेद्धुमर्हति। शब्दान्तरसंख्याप्रक्रियाणामपि प्रबलेनाभेदकेन भेदकत्वमपास्यमतो न विद्याभेदाशंकेति ॥ १ ॥ तर्हि पूर्वतन्त्रोक्तन्यायेनैव प्रतिशाखं विद्यैक्यसिद्धौ किमनेनाधिकरणेनेत्याशंक्याऽऽह-इहापीति। शाखान्तराधिकरणे खल्वेकस्यां शाखायामग्नी-

**स्यादेतत्–सर्ववेदान्तप्रत्ययत्वं विज्ञानानां गुणभेदान्नोपपद्यते । तथाहि–वाजसनेयिनः पञ्चाग्निविद्यां प्रस्तुत्य षष्ठमपरमग्निमामनन्ति "तस्याग्निरेवाग्निर्भवति" [ बृ० ६ । २ । १४ ] इत्यादिना । छन्दोगास्तु तं नामनन्ति, पञ्चसङ्ख्ययैव च त उपसंहरन्ति "अथ ह य एतानेवं पञ्चाग्नीन्वेद" [ छां० ५ । १० । १० ] इति । येषां च सगुणोऽस्ति, येषां च नास्ति कथमुभयेषामेका विद्योपपद्येत ॥ न चात्र गुणोपसंहारः शक्यते प्रत्येतुम् । पञ्चसङ्ख्याविरोधात्। तथा प्राणसंवादे श्रेष्ठादन्यांश्चतुरः प्राणान्वाक्चक्षुःश्रोत्रमनांसि छन्दोगा आमनन्ति । वाजसनेयिनस्तु पञ्चममप्यामनन्ति–"रेतो वै प्रजापतिः प्रजायते ह प्रजया पशुभिर्य एवं वेद"[ बृ० ६।१।६] इति ॥ आवापोद्वापभेदाच्च वेद्यभेदो भवति।वेद्यभेदाच्च विद्याभेदो द्रव्यदेवताभेदादिव यागस्येति चेत्॥ नैष दोषः ॥ यत एकस्यामपि विद्यायामे-**

---

रत्नप्रभा ।

**पीति।** रूपस्योत्पत्तिशिष्टत्वं–विशेषः। "पञ्चाग्नीन् वेद" इत्याद्युपासनोत्पत्तिविधिस्थपञ्चाग्न्यादिरूपभेदादुपासनाभेदः स्यात् । आमिक्षावाजिनरूपभेदात् कर्मभेदवदित्यधिकाशङ्कानिरासार्थत्वात् न पौनरुक्त्यमस्याधिकरणस्येति मत्वा शङ्कां व्याचष्टे–**स्यादित्यादिना ॥** अस्य पृथक्शास्त्रत्वात्, कर्मन्यायानां मानसविद्यासु विना सूत्रं दुर्योगत्वाच्च,–पुनरुक्तिगन्धोऽपि नास्तीति मन्तव्यम् ॥ ननु तस्य मृतस्य दाहार्थमग्निरन्त्येष्टिगतः षष्ठो यः प्रसिद्धवद्वाजिभिरुक्तः, स छान्दोग्ये उपसंहार्य इति न रूपभेदः, तत्राह–**न चात्रेति ॥** अस्तु प्रजननगुणवतो रेतसो वाजिनामावापः, छन्दोगानां च तस्योद्वापः । ततः किमित्यत आह–**आवापेति ॥** छान्दोग्ये षष्ठाग्न्यभावमङ्गीकृत्य अल्परूपभेदो न विद्यैक्यविरोधीति परि-

भामती ।

वयवः—**न एकस्यामपीति** । पञ्चैव सांपादिका अग्नयो वाजसनेयिनामपि छान्दोग्यानामिव विधीयन्ते । षष्ठस्त्वग्निः संपद्व्यतिरेकायानूद्यते न तु विधीयते । वैश्वदेव्यां तूत्पत्तौ गुणो विधीयत इति भवतु भेदः । अथ वा–छान्दोग्यानामपि षष्ठोऽग्निः पठ्यत एव । अथ वा–भवतु वाजसनेयिनां षष्ठाग्निविधानं, मा च भूच्छान्दोग्यानां, तथापि पञ्चत्वसंख्याया अविधानान्नोत्पत्तिशिष्टत्वं संख्यायाः किंतूत्पन्नेष्वग्निषु प्रचयशिष्टा संख्यानूद्यते सांपादिकानग्नीनवच्छेत्तुं, तेन येषामुत्पत्तिस्तेषां प्रत्यभिज्ञानात् । अप्रत्यभिज्ञायमानायाश्च संख्याया अनुवाद्यत्वेनानुत्पत्तेर्विधीयमानस्य चाधिकस्य षोडशिग्रहणवद्विकल्पसंभवान्न शाखान्तरे ज्ञानभेदः।

आनन्दगिरीय–न्यायनिर्णयः।

षोमीयस्यैकादशकपालत्वमपरस्यां द्वादशकपालत्वमिति रूपभेदात्कर्मभेदं शंकित्वा संख्ययोर्विकल्प इत्युक्तम् । तद्युक्तं कपालसंख्ययोरुत्पन्नशिष्टयोरुत्पत्तावैकरूप्येण ज्ञातकर्मप्रत्यभिज्ञानाबाधकत्वेन कर्माभेदकत्वादग्न्यादिगतपञ्चसंख्यादेरुत्पत्तिविशिष्टत्वाद्वाजिनवद्भेदकत्वमिति शंकामुत्थाप्य परिहारादस्यार्थवत्तेत्यर्थः । शंकां विभजते–**स्यादिति** । गुणभेदं साधयति–**तथाहीति** । छन्दोगाः षष्ठमग्निं नाऽऽमनन्तीति कथं सिद्धमित्याशंक्योपसंहारवशादित्याशंक्याऽऽह–**पञ्चेति** । गुणभेदमुक्त्वा तत्फलं विद्याभेदमाह–**येषां चेति** । वाजसनेयकगतो योऽग्निः षष्ठोऽन्त्येष्टिनिविष्टः प्रसिद्धवदुक्तस्तस्य च्छान्दोग्येऽप्युपसंहारान्न गुणभेदोऽस्तीत्याशंक्याऽऽह–**न चेति** । पञ्चाग्निविद्यायां गुणभेदाद्भेदमुक्त्वा प्राणविद्यायामपि तद्भेदाद्भेदमाह–**तथेति।** अस्तु प्रजननगुणवतो रेतसो वाजसनेयिनामावापश्छन्दोगानां चोद्वारस्तथाऽपि कथं विद्याभेदस्तत्राऽऽह–**आवापेति** । सूत्रावयवं परिहारत्वेन व्याचष्टे–**नेत्यादिना** । ननु गुणभेदे वेद्यभेदाद्विद्याभेदो न च

वज्जातीयको गुणभेद उपपद्यते। यद्यपि षष्ठस्याग्नेरुपसंहारो न सम्भवति। तथापि द्युप्रभृतीनां पञ्चानामग्नीनामुभयत्र प्रत्यभिज्ञायमानत्वान्न विद्याभेदो भवितुमर्हति । न हि षोडशिग्रहणाग्रहणयोरतिरात्रो भिद्यते। पठ्यतेऽपि च षष्ठोऽग्निश्छन्दोगैः-"तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति" [ छां० ५।९।२ ] इति । वाजसनेयिनस्तु-साम्पादिकेषु पञ्चस्वग्निष्वनुवृत्तायाः समिद्धूमादिकल्पनाया निवृत्तये "तस्याग्निरेवाग्निर्भवति समित्समिद्" [ बृं० ६।२।१४ ] इत्यादि समामनन्ति । स नित्यानुवादः ॥ अथाप्युपासनार्थ एष वादः । तथापि स गुणः शक्यते छन्दोगैरप्युपसंहर्तुम् ॥ न चात्र पञ्चसंख्याविरोध आशंक्यः । साम्पादिकाग्न्यभिप्राया ह्येषा पञ्चसंख्या नित्यानुवादभूता, न विधिसमवायिनीत्यदोषः । एवं प्राणसंवादादिष्वप्यधिकस्य गुणस्येतरत्रोपसंहारो न विरुध्यते । न चावापोद्वापभेदाद्वेद्यभेदो विद्याभेदश्चाशंक्यः । कस्यचिद्वेद्यांशस्यावापोद्वापयोरपि भूयसोर्वेद्यवेदित्रोरभेदावगमात ॥ तस्मादैकविद्यमेव ॥ २ ॥

---

रत्नप्रभा ।

हरति-**नैष इत्यादिना** ॥ अंगीकारं त्यजति---**पठ्यतेऽपीति** ॥ इतः अस्माल्लोकाद् दिष्टं लोकान्तरं प्रेतं गतं ज्ञातयः-**अग्नये** हरन्तीत्यर्थः ॥ ननु छान्दोग्येऽग्निमात्रं श्रुतं, वाजिभिस्तु समिदादिविशेषः पठ्यते इति रूपभेदस्तदवस्थः---तत्राह-**वाजसनेयिनस्त्विति**॥ षष्ठाग्नेस्तद्विशेषस्य चानुवादमात्रत्वेनानुपास्यत्वात् पञ्चाग्नय एवोपास्याः-उभयत्रेति न रूपभेद इत्यर्थः॥सविशेषस्य षष्ठाग्नेरुपास्यत्वेन रूपभेद इत्याह-**अथापीति** ॥ द्युलोकादीनां पञ्चानामग्नीनामग्नित्वसम्पत्तिविधिनैव अर्थात् पञ्चत्वं सम्पत्तिकल्पिताग्नीनां सिद्धमनूद्यते, न ध्येयत्वेन विधीयत इत्यर्थः ॥ छन्दोगैर्वाजिशाखास्थं रेतः-उपसंहर्तव्यमित्युक्त्वाऽनुपसंहारेऽपि न विद्याभेद इत्याह-**न चावापेति** ॥ २ ॥ एवं रूपभेदो न विद्याभेदक इत्युक्त्वा धर्मविशेषोऽपि

भामती ।

उत्पत्तिशिष्टत्वेऽसिद्धे प्राणसंवादादयोऽपि भवन्ति प्रत्यभिज्ञानादभिन्नास्तासु तासुशाखास्विति ॥ २ ॥

आनन्दगिरीय-न्यायनिर्णयः ।

षष्ठस्याग्नेरुपसंहारः पञ्चसंख्याविरोधात्तत्राऽऽह-**यद्यपीति** । एकैव विद्या षष्ठाग्नियुक्ता तद्रहिता चेति विरुद्धमित्याशंक्याऽऽह-**न हीति** । किंच, वाजसनेयके षष्ठस्यापि ध्येयत्वमग्नेरुपेत्योक्तं न तु तस्य ध्येयत्वं पंचैवाग्नयस्तथोच्यन्ते अनुपास्यत्वेन षष्ठोक्तिश्छान्दोग्येऽपि तुल्येत्याह-**पठ्यतेऽपीति** । इतोऽस्माल्लोकात्तं दिष्टं परलोकं प्रेतं गतं पुत्रा ज्ञातयो वाऽग्नये नैधनविधिं विधातुं हरन्तीत्यर्थः । अनुपास्यत्वे किमिति पूर्वाग्निवत्पठ्यते षष्ठोऽग्निस्तत्राऽऽह-**वाजसनेयिनस्त्विति** । तस्योपासकस्य मृतस्य दाहायाग्निरेवाग्निरिति प्रसिद्धानुवादो न तूपास्तिविधिरुपास्यास्तूभयत्रापि पंचैवाग्नयः । प्रसिद्धानुवादश्च कल्पनानिवृत्त्यर्थत्वादर्थवानित्यर्थः । उत्पत्तौ गुणान्तरविध्यभावान्न विद्याभेदो वैश्वदेव्यास्तूत्पत्तौ विशिष्टगुणोक्तेर्भेद इत्युक्तम् । इदानीं वाजिनां षष्ठाग्निविधानेऽपि न विद्याभेद इत्याह-**अथापीति** । पञ्चाग्नीन्वेदेति श्रुतसंख्याविरोधान्न षष्ठस्याग्नेरुपसंहारसिद्धिरित्याशंक्य पञ्चसंख्याया विधेयत्वाभावात्सांपादिकाग्न्यवच्छेदकत्वेनैवानुवादादुत्पत्त्यशिष्टत्वादुत्पन्नानां च प्रत्यभिज्ञानान्न विद्याभेद इत्याह-**न चेति** । पञ्चाग्निविद्यायामुक्तन्यायं प्राणविद्यादिष्वतिदिशति-**एवमिति** । यत्त्वावापोद्वापाभ्यां वेद्यभेदाद्विद्याभेद इति तत्राऽऽह-**न चेति** । बहुतरांशाभेदप्रत्यभिज्ञानादल्पतरांशभेदेऽपि प्रत्यभिज्ञाविरोधान्न विद्याभेद इत्यर्थः । रूपभेदाद्विद्याभेदं शंकितं निरास्योपसंहरति-**तस्मादिति** ॥ २ ॥ रूपभेदस्य

## स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

यदप्युक्तमाथर्वणिकानां विद्यां प्रति शिरोव्रताद्यपेक्षणादन्येषां च तदनपेक्षणाद्विद्याभेद इति ॥ तत्प्रत्युच्यते ॥ स्वाध्यायस्यैष धर्मो न विद्यायाः। कथमिदमवगम्यते । यतः--तथात्वेन स्वाध्यायधर्मत्वेन समाचारे वेदव्रतोपदेशपरे ग्रन्थे आथर्वणिका इदमपि वेदव्रतत्वेन समाख्यातमिति समामनन्ति । "नैतदचीर्णव्रतोऽधीयते" [ मुण्ड० ३ । २ । ११ ] इति चाधिकृतविषयादेतच्छब्दाध्ययनशब्दाच्च स्वोपनिषदध्ययनधर्म एवैष इति निर्धार्यते । ननु च "तेषामेवैतां ब्रह्मविद्यां वदेच्छिरोव्रतं विधिवद्यैस्तु चीर्णम्" [ मुण्ड० ३ । २ । १० ] इति ब्रह्मविद्यासं[illegible]कैव सर्वत्र ब्रह्मविद्येति संकीर्येतैष धर्मः ॥ न ॥ तत्राप्येतामि[illegible]तपरामर्शात् । [illegible] प्रकृतत्वं च ब्रह्मविद्याया ग्रन्थविशेषापेक्षमिति ग्रन्थविशेषसंयोग्येवैष

रत्नप्रभा ।

न भेदक इत्याह--**स्वाध्यायस्येति** ॥ गोदानवदध्ययनांगत्वेन शिरोव्रतमाथर्वणिकानां सूत्रे विहितं, न विद्यांगमित्यर्थः ॥ "अधिकाराच्च" इति व्याचष्टे--**नैतदिति** ॥ **एतत्** प्रकृतं मुण्डकमननुष्ठितशिरोव्रतो नरो नाधीत इति श्रुतेर्मुण्डकाध्ययनांगमेव शिरोव्रतमित्यर्थः ॥ **ननु** विद्याङ्गत्वेनापि इदं व्रतं श्रुतमिति शङ्कते--**नन्विति** ॥ सर्वशाखासु ब्रह्मविद्यैकैव चेद्विद्यासंयुक्तं व्रतमपि सर्वत्र सम्बध्येत । **न च** सम्बध्यत इति विद्याभेद इत्यर्थः ॥ प्रकृतग्रन्थवाच्ये तच्छब्दबलाद्ब्रह्मप्रकाशकग्रन्थपरो ब्रह्मविद्याशब्द इति परिहरति--**नेति** ॥ **तस्य** शिरोव्रतस्य मुण्डकाध्ययने **नियम** इत्यत्र "सववद्" इति निदर्शननिर्देशः । **सवाः**--होमाः--आथर्वणैः स्वसूत्रे उदित एकोऽग्निरेकर्षिसंज्ञया प्रसिद्धः, तस्मिन्नग्नौ कार्या इति **यथा** नियम्यन्ते,

भामती ।

**स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः** । यैराथर्वणिकग्रन्थोपाया विद्या वेदितव्या तेषामेव शिरोव्रतपूर्वाध्ययनप्राप्तग्रन्थबोधिता फलं प्रयच्छति नान्यथा । अन्येषां तु छान्दोग्यादीनां सैव विद्याचीर्णशिरोव्रतानां फलदेत्याथर्वणग्रन्थाध्ययनसंबन्धादवगम्यते । तत्संबन्धश्च

आनन्दगिरीय--न्यायनिर्णयः ।

भेदकत्वं निराकृत्य धर्मभेदस्य भेदकत्वं प्रत्याह--**स्वाध्यायस्येति** । व्यावर्त्यं चोद्यमनुद्रवति--**यदपीति** । शिरोव्रतं शिरस्यग्निधारणम् । आदिग्रहणादातपावस्थानादि गृह्यते । चोद्योत्तरत्वेन सूत्रमवतार्य व्याचष्टे--**तदिति** । स्वाध्यायाङ्गत्वेन श्रुत्यादिभिरविनियोगे न तदङ्गतेति शङ्कते--**कथमिति** । तथात्वेनेत्यादिनोत्तरमाह--**यत इति** । गोदानादीनि वेदाध्ययनाङ्गत्वेनानुष्ठेयानि व्रतानि । शिरोव्रतमपि वेदव्रतेष्वन्तर्गतत्वेनोक्तं तेन यथा गोदानाद्यध्ययनाङ्गं तथेदमपीत्यर्थः । अधिकाराच्चेति व्याचष्टे--**नैतदिति** । एतद्ग्रन्थजातमचीर्णव्रतोऽननुष्ठितशिरोव्रतः पुरुषो नाधीत इति प्रकृतमुण्डकपरामर्शकादेतच्छब्दान्मुण्डकाध्ययनधर्म एवायं न विद्याधर्म इति प्रतिभातीत्यर्थः । अधिकारादधिकृतविषयादेतच्छब्दाच्चकारादधीत इत्यध्ययनशब्दाच्चेति व्याख्यातम् । इदानीं शंकोत्तरत्वेन व्याख्यातुं शङ्कयति--**नन्विति** । सर्वत्र ब्रह्मविद्यैकैव चेत्तया शिरोव्रतस्य संयोगाद्धर्मसंकरः स्यान्न च सोऽस्तीति विद्याभेद इत्यर्थः। एतां ब्रह्मविद्यामिति तत्प्रकाशकमिमं ग्रन्थमिति योज्यम् । अन्यथा प्रकृतविषयतच्छब्दविरोधादित्याह--**नेति** । ब्रह्मविद्यैव प्रकृतेति सैव परामृश्यतामित्याशंक्य तस्याः सर्वत्रैक्यादथर्वविहितैवात्र परामष्टव्येत्याह--**प्रकृतत्वं**

धर्मः । "सववच्च तन्नियमः" इति निदर्शननिर्देशः । यथा च-सवाः सप्त सौर्यादयः शतौदनपर्यन्ता वेदान्तरोदितत्रेताग्न्यनभिसम्बन्धादाथर्वणोदितैकाग्न्यभिसम्बन्धाच्चाथर्वणिकानामेव नियम्यन्ते, तथायमपि धर्मः स्वाध्यायविशेषसम्बन्धात्तत्रैव नियम्येत ॥ तस्मादप्यनवद्यं विद्यैकत्वम् ॥ ३ ॥

## दर्शयति च ॥ ४ ॥

दर्शयति च वेदोऽपि विद्यैकत्वम् । सर्ववेदान्तेषु वेद्यैकत्वोपदेशात्-"सर्वे वेदा यत्पदमामनन्ति" [ कठ० १ । २ । १५ ] इति । तथैतमेव बह्वृचा महत्युक्थे मीमांसन्त, एतमग्नावध्वर्यव, एतं महाव्रते छन्दोगाः' इति च तथा-"महद्भयं वज्रमुद्यतम्" [ कठ० ६ । २ ] इति काठके । उक्तस्येश्वरगुणस्य भयहेतुत्वस्य तैत्तिरीयके भेददर्शननिन्दायै परामर्शो दृश्यते-

रत्नप्रभा ।

तथेत्यर्थः ॥ ३ ॥ किञ्च वेद्यैक्येन निर्गुणब्रह्मविद्यैक्यं तावच्छ्रुतिर्दर्शयति । तत्सन्निधिपाठात् सगुणविद्यानामपि सर्वशाखास्वैक्यसिद्धिरित्याह सूत्रकारः-दर्शयति चेति ॥ सगुणमप्येकं वेदत्रयवेद्यं दर्शयतीत्याह-तथेति ॥ किञ्च शाखान्तरोक्तपदार्थस्य शाखान्तरे सिद्धवत्परामर्शो विद्यैक्यं दर्शयतीत्याह—

तथेति । किञ्च शाखान्तरोक्तपदार्थस्य शाखान्तरे सिद्धवत्परामर्शो विद्यैक्यं दर्शयतीत्याह—तथा

भामती ।

वेदव्रतेनेति 'नैतदचीर्णव्रतोऽधीते' इति समाम्नानादवगम्यते । 'तेषामेवैतां ब्रह्मविद्यां वदेत' इति विद्यासंयोगेऽप्येतामिति प्रकृतपरामर्शिना सर्वनाम्नाऽध्ययनसंबन्धाविरोधादाथर्वविहितैव विद्योच्यत इति । सवा होमाः सप्त सौर्यादयः शतौदनान्ता आथर्वणिकानां त एकस्मिन्नेवाथर्वणिकेऽग्नौ क्रियन्ते न त्रेतायाम् ॥ ॥ ३ ॥ विद्यैकत्वं दर्शयति च । भूयोभूयो विद्यैकत्वस्य वेददर्शनाद्यत्रापि सगुणब्रह्मविद्यानां न साक्षाद्वेद एकत्वमाह तासामपि तत्प्रायपठितानां तद्विधानां प्रायदर्शनादेकत्वमेव । तथाह्यग्न्यप्राये लिखितं दृष्ट्वा भवेदयमग्न्य इति बुद्धिरिति । यच्च काठकादिसमाख्ययोपासनाभेद इति । तदयुक्तम्, एता हि पौरुषेय्यः समाख्याः काठकादिप्रवचनयोगात्तासां शाखानां न तूपासनानाम् । न ह्येताः कठादिभिः प्रोक्ता न च काठाद्यनुष्ठानमासामितरानुष्ठानेभ्यो विशेष्यते । न च कठप्रोक्ततानिमित्तमात्रेण ग्रन्थे प्रवृत्तौ तद्योगाच्च कथंचिल्लक्षणयोपासनासु प्रवृत्तौ संभवन्त्यामुपासनाभिधानमप्यासां शक्यं कल्पयितुम् । न च तद्भेदाभेदौ ज्ञानभेदाभेदप्रयोजकौ, मा भूद्यथास्वमासामभेदाज्ज्ञानानामेकशाखागतानामैक्यम् । कठादिपुरुषप्रवचननिमित्ताश्चैताः समाख्याः कठादिभ्यः प्राक् नासन्निति तन्निबन्धनो ज्ञानभेदो

आनन्दगिरीय-न्यायनिर्णयः ।

चेति । सूत्रावयवान्तरमवतारयति-सववच्चेति । तस्य शिरोव्रतस्य मुण्डकाध्ययने नियम इत्यत्र सववदिति निदर्शनमिति योजना । ततश्च शिरोव्रतस्य संकरो नेति चकारार्थः । तदेव विवृणोति-यथेति । सवा होमाः । आथर्वणैरुदित एकोऽग्निरेकऋषिसंज्ञया प्रसिद्धस्तेषामेव नियम्यन्ते तदीये तत्रैवाग्नौ क्रियन्ते । स्वाध्यायविशेषसंबन्धादेतच्छब्दादधीतिशब्दाच्च मुण्डकाध्ययनसंबन्धाधिगतेरिति यावत् । धर्मभेदस्य धर्म्यभेदकत्वे फलितमाह-तस्मादिति । नामादिवद्धर्मभेदस्यापि भेदकत्वायोगादित्यर्थः ॥ ३ ॥ किंच, वेद्यैकत्वोक्त्या ब्रह्मविद्यायास्तावदैक्यं सर्वत्र वेदो दर्शयति । तथाऽन्यत्रापि वेद्याभेदेऽपि विद्यैक्यमित्याह-दर्शयति चेति । सूत्रं व्याचष्टे-दर्शयतीत्यादिना । वेदत्रयेऽपि विद्यैक्यविषयमुपदेशान्तरमाह-तथेति । किंच, शाखान्तरोक्तपदार्थस्य शाखान्तरे सिद्धवत्परामर्शादपि विद्यैक्यधीरित्याह-तथेत्यादिना ।

"यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति । तत्त्वेव भयं विदुषोऽमन्वानस्य" [ तै० उ० २ । ७ । १ ] इति । तथा—वाजसनेयके प्रादेशमात्रसम्पादितस्य वैश्वानरस्य छान्दोग्ये सिद्धवदुपादानं—"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" [ छां० ५ । १८ । १ ] इति ॥ तथा—सर्ववेदान्तप्रत्ययत्वेनान्यत्र विहितानामुक्थादीनामन्यत्रोपासनविधानार्योपानादात्प्रायदर्शनन्यायेनोपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिः ॥४॥ इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

## उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥ (२) ॥

---

रत्नप्रभा ।

महद्भयमित्यादिना ॥ एष नरः एतस्मिन् अद्वये अल्पमपि अन्तरं भेदं यदा पश्यति, अथ तदा तस्य संसारभयं भवति । एवं तस्माद् विदुषः नरस्य भेददर्शिनः तदेव ब्रह्म भयङ्करं भवति । ब्रह्मैवाहमित्यमन्वानस्येत्यर्थः । "प्रादेशमात्रम्" "उपास्ते" इति सिद्धवदुपादानं वैश्वानरविद्यैक्यं दर्शयतीत्याह—तथेति ॥ किञ्च सर्वेषु वेदान्तेषूक्थादीनां प्रतीयमानत्वेन हेतुनैतदवगम्यते—अन्यत्रोक्तानां तेषामन्यत्रोपास्त्यर्थमुपादानमिति ॥ ततस्तदुपास्तीनामपि सर्ववेदान्तप्रमाणकत्वेनैक्यं बाहुल्येन सिध्यतीत्याह—तथेति ॥ ब्रह्मविद्यैक्यवदुक्थादिविद्यैक्यमित्यर्थः ॥ ४ ॥ ( १ ) ॥ सर्वशाखासु विद्यैक्यचिन्तायाः फलमाह—उपसंहार इति ॥ शाखाभेदे समानविद्यायां श्रुता गुणाः यथाश्रुतिव्यवस्थिताः—उत—एक-

भामती ।

नासीदिदानीं चास्तीति दुर्घटमापद्येत । तस्मान्न समाख्यातो भेदः । अभ्यासोऽपि नात्र भेदकः । युक्तं यदेकशाखागतो यजत्यभ्यासः समिदादीनां भेदक इति । तत्र हि विधित्वमौत्सर्गिकमज्ञातज्ञापनमप्रवृत्तप्रवर्तनं च कुप्येयाताम् । शाखान्तरे त्वध्येतृपुरुषभेदादेकत्वेऽपि नौत्सर्गिक विधित्वव्याकोप इति । अशक्तिरपि न भेदहेतुः स्वाध्यायोऽध्येतव्य इति स्वशाखायामध्ययननियमः । ततश्च शाखान्तरीयानर्थानन्येभ्यस्तद्विद्येभ्योऽधिगम्योपसंहरिष्यति । समाप्तिश्चैकस्मिन्नपि तत्संबन्धिनि समाप्ते तस्य व्यपदिश्यते । यथाध्वर्यवे कर्मणि ज्योतिष्टोमस्य समाप्तिं व्यपदिशन्ति—'ज्योतिष्टोमः समाप्तः' इति । तस्मात्समाप्तिभेदोऽपि न साधनमुपासनाभेदस्य । तदेवमसति बाधके चोदनाद्यविशेषात्सर्ववेदान्तप्रत्ययानि कर्माणि तानितान्येवेति सिद्धम् ॥ ४ ॥ ( १ ) ॥ कंचिद्विशेषमाशंक्य पूर्वतन्त्रप्रसाधितम् । वक्ष्यमाणार्थसिद्ध्यर्थमर्थमाह स्म सूत्रकृत् ॥ चिन्ताप्रयोजनप्रदर्शनार्थं सूत्रम्—उपसंहारोऽर्थाभेदाद्विधि-

आनन्दगिरीय-न्यायनिर्णयः ।

एष पुरुषो यदा यस्यामविद्यावस्थायामेतस्मिन्नात्मन्यद्वयत्वेन सर्ववेदान्तप्रसिद्धे स्वाविद्यावशादेवान्तरं भेददर्शनमुदरमल्पमपि करोत्यथ तदा तस्यामवस्थायां तस्य भेददर्शनवतो भयमावश्यकम् "द्वितीयाद्वै भयं भवति" इति श्रुत्यन्तरादित्यर्थः । भेददर्शनवतो भयकारणमाह—तत्त्वेवेति । भेददर्शनवतो विदुषस्तत्त्वममन्वानस्य तदेव ब्रह्मभयंकरमित्यर्थः । निर्गुणविद्यायां वेद्यैकत्वादेकत्वेऽपि कथं सगुणविद्यायामेकत्वं तत्राऽऽह—तथेति । एवं ब्रह्मविद्यैक्येऽपि कथमुक्थाद्युपास्तीनामैक्यं तत्राऽऽह—तथेति । यथा निर्गुणं सगुणं च ब्रह्म सर्वत्रैकमिति तद्विद्या न भिद्यते तथोक्थादीनां सर्ववेदान्तप्रत्ययत्वादेतद्गम्यते । यदन्यत्रोक्तानामन्यत्रोपास्त्यर्थं तेषामादानमिति । ततस्तदुपास्तीनामपि सर्ववेदान्तप्रमाणकत्वेनैक्यं प्रायदर्शनन्यायेन बाहुल्येन सिध्यतीत्यर्थः ॥ ४ ॥ ( १ ) सर्वशाखासु विद्यैक्ये गुण्याकृष्टगुणानां तत्र तत्रोपसंहारमनन्तरधिचारफलमाह—उपसंहार इति । संक्षेपतोऽधिकरणतात्पर्यमाह—

**इदं प्रयोजनसूत्रम् ॥ स्थिते चैवं सर्ववेदान्तप्रत्ययत्वे सर्वविज्ञानानामन्यत्रोदितानां विज्ञानगुणानामन्यत्रापि समाने विज्ञाने उपसंहारो भवति । अर्थाभेदात्॥ य एव हि तेषां गुणानामेकत्रार्थो विशिष्टविज्ञानोपकारः, स एवान्यत्रापि । उभयत्रापि हि तदेवैकं विज्ञानम् ॥ तस्मादुपसंहारो विधिशेषवत् । यथा–विधिशेषाणामग्निहोत्रादिधर्माणां तदेवैकमग्निहोत्रादि कर्म सर्वत्रेत्यर्थाभेदादुपसंहारः, एवमिहापि । यदि हि विज्ञानभेदो भवेत्,ततो विज्ञानान्तरनिबद्धत्वाद् गुणानां प्रकृतिविकृति-**

रत्नप्रभा ।

त्राश्रुताः इतरशाखाताः उपसंहर्तव्या इति सन्देहे विद्यैक्येऽपि तत्रतत्रोक्तैरेव गुणैर्विद्योपकारसिद्धेः शाखाभेदेन गुणाः व्यवस्थिता इति **पूर्वपक्षः** । तत्र प्रकृतविद्यैक्यचिन्तानैष्फल्यमिति फलम् । सिद्धान्तत्वेन सूत्रं व्याचष्टे–**स्थिते चेत्यादिना** ॥ गुणानां गुण्यविनाभावादेतच्छाखास्था विद्या, शाखान्तरोक्तद्विद्यागुणवती, तदभिन्नत्वात्, तद्विद्यावदित्यनुमानाद्विद्यैक्ये गुणोपसंहारसिद्धिरित्यर्थः ॥ प्रधानैक्ये तदुपकारकाणामंगानामुपसंहारे दृष्टान्तमाह–**विधिशेषवदिति** ॥ उक्तमेव व्यतिरेकमुखेनाह–**यदि हीति** ॥ नन्वाग्नेययागावरुद्धानां गुणानां ततोऽभिन्ने सौर्ये प्राप्तिवद्विद्यान्तरस्थगुणानां विद्यान्तरप्राप्तिः किं न स्यादित्यत आह–**प्रकृतीति** ॥ प्रकृतिगुणानां विकारे प्राप्तिर्युक्ता । विद्यानां तु प्रकृतिविकृतिभावासिद्धेर्न

भामती ।

**शेषवत्समाने च** । अत्रेदमाशङ्कते–भवतु सर्वशाखाप्रत्ययमेकं विज्ञानं तथापि शाखान्तरोक्तानां तदङ्गान्तराणां न शाखान्तरोक्ते तस्मिन्नुपसंहारो भवितुमर्हति । तस्यैकस्य कर्मणो यावन्मात्रमङ्गजातमेकस्यां शाखायां विहितं तावन्मात्रेणैवोपकारसिद्धेरधिकानपेक्षणात् । अपेक्षणे चाधिकमपि तत्र विधीयेत । न च विहितम् । तस्माद्यथा नैमित्तिकं कर्म सकलाङ्गवद्विहितमपि अशक्तौ यावच्छक्यमङ्गमनुष्ठातुं तावन्मात्रजन्येनोपकारेणोपकृतं भवत्येवमिहाप्यङ्गान्तराविधानादेव भविष्यतीति । एवं प्राप्त उच्यते–सर्वत्रैकत्वे कर्मणः स्थिते गृहमेधीयन्यायेन नोपकारावच्छेदो युज्यते । न हि तदेव कर्म सत्तदङ्गमपेक्षते नापेक्षते चेति युज्यते । नैमित्तिके तु निमित्तानुरोधादवश्यकर्तव्ये

आनन्दगिरीय–न्यायनिर्णयः ।

**इदमिति**। पूर्वविचारफलमनेन सूत्रेणोच्यते तेन तद्वदेवास्य पादादिसंगतिः।पूर्वपक्षे पूर्वाधिकरणस्य विवक्षितफलासिद्धिः।सिद्धान्ते तस्य तत्सिद्धिः। तुल्यधीबद्धागुणा विपर्यास्ते किं यथाश्रुति व्यवतिष्ठेरन्नुत प्रत्यभिज्ञयाज्ञानोपाधावुपसंह्रियेरन्निति मीमांसायामिच्छाभेदादतिरात्रे षोडशिग्रहवदुपसंहारस्यानावश्यकत्वाद्यथाश्रुति व्यवस्थेति प्राप्ते सिद्धान्तयन्नुपसंहारः । समाने चेति विभागं विभजते–**स्थिते चेति** । तत्र हेतुमुक्त्वा व्याकरोति–**अर्थेति** । कथं व्यवस्थया श्रुतानां गुणानामुपकारैक्यं तत्राऽऽह–**उभयत्रेति** । गुणिद्वारा गुणानामपि प्रत्यभिज्ञाने फलितमाह–**तस्मादिति** । अर्थाभेदादुपसंहारे दृष्टान्तमाह–**विधीति**। प्रधानप्रत्यभिज्ञायां सर्वतद्धर्मप्रत्यभिज्ञानात्फलाविशेषाच्च व्यवस्थया श्रुतानामपि गुणानामेकज्ञानोपाधावुपसंहार इति दार्ष्टान्तिकमाह–**एवमिति** । उक्तमेव व्यतिरेकतः स्फोरयति–**यदीति** । आग्नेयसौर्ययोर्भेदेऽप्याग्नेयगतस्येतिकर्तव्यताजातस्य सौर्ये प्राप्तिवज्ज्ञानान्तरस्थानामपि गुणानां ज्ञानान्तरे प्राप्तिः स्यादित्याशंक्याऽऽह–**प्रकृतीति** । ज्ञानैक्येऽपि शाखान्तरोक्तगुणानां शाखान्तरोक्तज्ञानेनोपसंहारः । तत्रोक्तगुणमात्रेण तज्ज्ञानोपकारसिद्धेरधिकानपेक्षणात् । अन्यथा तत्रैव तद्विधिप्रसङ्गात् । तस्मादक्ष्यादित्यस्थानभेदेनोक्तयोरहरहमिति गुणयोर्व्यवस्थानवदुपास्याभेदेऽपि शाखाभेदेनोक्तानां व्यवस्थैवेत्याशंक्य शाखाभेदस्योक्तस्थानवदुपास्यविशे-

भावाभावाच्च न स्यादुपसंहारः । विज्ञानैकत्वे तु नैवमिति । अस्यैव तु प्रयोजनसूत्रस्य प्रपञ्चः सर्वाभेदादित्यारभ्य भविष्यति ॥ ५ ॥ इत्युपसंहाराधिकरणम् ॥ २ ॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥ (३) ॥

वाजसनेयके—"ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति ॥ १ ॥ ते ह वाचमूचुस्त्वं न उद्गाय" [ बृ० १ । ३ । २ ] इति प्रक्रम्य वागादीन्प्राणानसुरपाप्मविद्धत्वेन निन्दित्वा मुख्यप्राणपरिग्रहः पठ्यते—"अथ

रत्नप्रभा ।

तत्प्राप्तिरित्यर्थः ॥ नैवमिति । गुणानुपसंहारो नेत्यर्थः ॥ उत्तरसूत्राणामनेन सूत्रेण पौनरुक्त्यं वारयति—अस्यैवेति ॥ ५ ॥ ( २ ) ॥ पूर्वं चोदनाद्यविशेषादुत्सर्गतो विद्यैक्यमुक्तम्, तस्यापवादं वक्तुमाह—अन्यथात्वमिति ॥ अत्र वाजिनामुद्गीथब्राह्मणं, छन्दोगानामुद्गीथाध्यायं च विषयमाह—वाजेत्यादिना ॥ ते ह देवाः सात्त्विकवृत्तयः प्राणा अन्योन्यमूचुः—हन्त इदानीमस्मिन्यज्ञे उद्गीथेन औद्गा-

भामती ।

सर्वाङ्गोपसंहारस्य सदातनत्वासंभवादुपकारावच्छेदः कल्प्यते । प्राकृतोपकारपिण्डे चोदकप्राप्ते आज्यभागविधानाद् गृहमेधीयेऽप्युपकारावच्छेदः स्यात् । इह तु शाखान्तरे कतिपयाङ्गविधानं तानि विधत्ते नेतराणि परिसंचष्टे । न च तदुपकारपिण्डे चोदकप्राप्ते आज्यभागवत्तन्मात्रविधानम् । तस्मात्तत्त्वेन कर्मणां सर्वाङ्गसङ्गम औत्सर्गिकोऽसति बलवति बाधके नापवदितुं युक्त इति ॥ ५ ॥ (२) ॥ अन्यथात्वं शब्दादिति चेन्नाविशेषात् । द्वया द्विप्रकाराः प्राजापत्या देवाश्चासुराश्च । ततः कानीयसा एव देवा ज्यायसा असुराः । शास्त्रजन्यया सात्त्विक्या बुद्ध्या संपन्नाः देवाः । ते हि दीव्यन्त इति देवाः । शास्त्रयुक्त्यपरिकल्पितमतयस्तामसवृत्तिप्रधाना असुरा असुभिः प्राणैरनिन्द्रियैरगृहीतैस्तैस्तेषु विषयेषु रमन्त इत्यसुरा अत एव ते ज्यायांसः । यतोऽमी तत्त्वज्ञानवन्तः, कानीयसास्तु देवाः । अज्ञानपूर्वकत्वात्तत्त्वज्ञानस्य । प्राणस्य प्रजापतेः सात्त्विकवृत्त्युद्भवस्तामसवृत्त्यभिभवः कदाचित् । कदाचित्तामसवृत्त्युद्भवोऽभिभवश्च सात्त्विक्या वृत्तेः । सेयं स्पर्धा । ते ह देवा ऊचुः—हन्त असुरान् यज्ञ उद्गीथेनात्ययाम असुरान् जयामास्मिन्नाभिचारिके यज्ञ उद्गीथलक्षणसामभक्त्युपलक्षितेनौद्गात्रेण कर्मणेति । ते ह वाचमूचुरित्यादिना संदर्भेण वाक्प्राणचक्षुःश्रोत्रमनसामासुरपाप्मविद्धतया निन्दित्वा अथ हेममासन्यमास्ये भवमासन्यं मुखान्तर्बिलस्थं मुख्यं प्राणं प्राणाभिमानवतीं देवतामूचुस्त्वन्न उद्गायेति । तथेत्यभ्युपगम्य तेभ्य एव प्राण उदगायत् तेऽसुरा विदुरनेन प्राणेनोद्गात्रा नोऽस्मान् देवा अत्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविध्यन्नसुरा यथाश्मानमृत्वा प्राप्य मृद्वा लोष्टो वा विध्वंसत एवं विध्वंसमाना विष्वञ्चोऽसुरा विनेशुः । तदेतत् संक्षिप्याह—वाजसनेयक इति । तथा छान्दोग्येऽप्येतदुक्तमित्याह—

आनन्दगिरीय—न्यायनिर्णयः ।

षणतया गुणव्यवस्थापकत्वाभावाद्धर्म्युपाधावुक्तगुणानां सर्वत्रापि श्रुतेन धर्मिणा नियमादनुमानतः सार्वत्रिकत्वसिद्धेर्विद्यैक्ये गुणोपसंहारो बलवद्बाधकाभावे वारयितुं न शक्यते । शाखान्तरे कतिपयगुणवादस्य तद्विध्यर्थतया गुणान्तरावारकत्वादित्याह—विज्ञानेति । एवमित्युपसंहाराभावोक्तिः । इतिशब्दः सिद्धान्तसमाप्त्यर्थः । उत्तरसंदर्भस्य पौनरुक्त्यं प्रत्याह—अस्यैवेति ॥ ५ ॥ ( २ ) ॥ संज्ञाभेदाज्ज्ञानैक्यं तद्गुणानां चान्यत्रोपसंहार इत्युक्त उद्गीथविद्ययोरपि च्छान्दोग्यबृहदारण्यकोक्तयोः संज्ञाभेदमाशंक्य प्रत्याह—अन्यथात्वमिति । चोदनाद्यविशेषादित्यस्यापवादार्थमिदमधिकरणम् । तस्य बृहदारण्यकस्थमुद्गीथब्राह्मणं छान्दोग्यस्थमुद्गीथाध्यायं च विषयमाह—वाजसनेयक इति । ते प्रकृता वागादयः प्राणा देवाः

हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उद्गायद्" [ बृ० १ । ३ । ७] इति । तथा-छान्दोग्येऽपि-"तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः" [ छां० १ । २ । १ ] इति प्रक्रम्येतरान्प्राणानसुरपाप्मविद्धत्वेन निन्दित्वा तथैव मुख्यप्राणपरिग्रहः पठ्यते-"अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे [ छां० १ । २ । ७ ] इति । उभयत्रापि च प्राणप्रशंसया प्राणविद्याविधिरध्यवसीयते । तत्र संशयः- किमत्र विद्याभेदः स्याद्-आहोस्विद् विद्यैकत्वमिति ॥ किं तावत्प्राप्तं- पूर्वेण न्यायेन विद्यैकत्वमिति ॥ ननु न युक्तं विद्यैकत्वम् । प्रक्रमभेदात् । अन्यथा हि प्रक्रमन्ते वाजसनेयिनः, अन्यथा छन्दोगाः ।

रत्नप्रभा ।

त्रेण कर्मण( रजस्तमोवृत्तिरूपान् असुरान् अतीत्य देवत्वं गच्छामः-इति । ते चैवं निर्दोषमुद्गीथकर्तारमुपास्यं निर्धारयितुं कृतसंवादाः प्रथमं वाचः परीक्षितवन्तः-त्वमौद्गात्रं नः अस्माकं कुर्विति । तया अनृतं कृतम् । तथा प्राणचक्षुःश्रोत्रमनांस्यपि कामेनासुरपाप्मना ग्रस्तानीति निन्दित्वा आसन्यम् आस्ये भवं मुखमध्यस्थं प्राणम् उपास्यं निर्धारितवन्तः । तत् तत्रान्योन्याभिभवात्मके युद्धे प्रवृत्ते देवाः पूर्ववदुद्गीथमाहृतवन्तः । अनेनोद्गीथेनैनानसुरान् जयेमेत्यर्थः ॥ भेदाभेदमानाभ्यां संशयमाह-तत्रेति ॥ अत्र पूर्वाधिकरणसिद्धान्तन्यायेनोद्गीथविद्येति संज्ञैक्येन विद्यैक्यमिति पूर्वपक्षे मिथोगुणोपसंहारः फलं, सिद्धान्ते संज्ञैक्येऽपि विद्यैक्यापवादादनुपसंहार इति । एवं यत्र पूर्वन्यायेन पूर्वपक्षः, तत्रापवादिको सङ्गतिरिति मन्तव्यम् ॥ सूत्रस्थसिद्धान्तिशङ्काभागं व्याचष्टे-ननु न युक्तमिति ॥ संपूर्णोद्गीथकर्मकर्ता प्राणो वाजिनामुपास्यः । उद्गायेति कर्तृशब्दात् । छन्दोगानां तूद्गीथावयव ॐकारः प्राणदृष्ट्योपास्यः । "ॐमि-

भामती ।

तथा छान्दोग्येऽपीति। विषयं दर्शयित्वा विमृशति-तत्र संशय इति।पूर्वपक्षं गृह्णाति-विद्यैकत्वमिति। पूर्वपक्षमाक्षिपति-ननु न युक्तमिति । एकत्रोद्गातृत्वेनोच्यते प्राण एकत्र चोद्गानत्वेन क्रियाकर्त्रोश्च

आनन्दगिरीय-न्यायनिर्णयः ।

सात्त्विकवृत्तिप्रधानाः संभूयान्योन्यमुक्तवन्तो हन्त यदि संमतमस्माकं तदाऽस्मिन्नाभिचारिके यज्ञे वयमुद्गीथाख्यभक्तिलक्षितेनौद्गात्रेण कर्मणा तमोवृत्तिप्रधानानसुरानतीत्य स्वमग्न्यादिभावमयामेति ते चैवं कृतसंवादा वाचमौद्गात्रे कर्मणि प्रधानां त्वमस्मदर्थमौद्गात्रं निर्वर्तयेति नियुक्तवन्तस्तथोपक्रम्य वागादीन्वाक्प्राणचक्षुःश्रोत्रमनांसि पाप्मना ह्येषा विद्धेत्यादिना पाप्मविद्धत्वेन निन्दित्वा तेषामध्येयत्वं निर्धार्य मुख्यप्राणस्योपास्यत्वं च निश्चित्य तत्परिग्रहः श्रूयत इत्यर्थः । वागादीनामनुपास्यत्वनिश्चयानन्तरमित्यथशब्दार्थः । आसन्यमास्ये भवं मुखान्तर्बिलस्थं प्राणं मुख्यप्राणाभिमानिनीं देवतामिति यावत् । उद्गीथब्राह्मणमुक्त्वोद्गीथाध्यायं कथयति-तथेति । तत्तत्रान्योन्याभिभवात्मके संग्रामे देवाः पूर्ववदुद्गीथलक्षितं कर्माऽऽजह्रुराहृतवन्तः । अनेन कर्मणैनानसुरान्स्वाभाविकेन्द्रियवृत्तिलक्षणानभिभविष्याम इत्यभिप्रेत्य कर्माऽऽरब्धवन्त इत्यर्थः । तथैवेत्युद्गीथब्राह्मणवदेवेत्यर्थः । आख्यायिकैव श्रुता न विद्याविधिरित्याशंक्य ब्राह्मणाध्याययोर्विवक्षितमर्थमाह-उभयत्रेति । शाखाद्वयस्थोद्गीथविद्यां विषयमुक्त्वा विचारबीजं संशयमाह-तत्रेति । भेदाभेदमानाभ्यां तमेव विशदयति-किमिति । विमृश्य पूर्वपक्षयति-किं तावदिति । पूर्वत्राख्याविशेषाद्विद्यैक्यमुक्तं तदत्राप्युद्गीथविद्येत्याख्याविशेषादैक्यमित्यर्थः । अत्र चोपास्तिभेदोक्त्या वाक्यार्थधीहेतोरेव निरूपणात्पादादिसंगतयः । पूर्वपक्षे गुणोपसंहारः सिद्धांते तदसत्त्वेति फलभेदः । अन्यथात्वमित्यादिसैद्धान्तिकीं शङ्कां व्याकुर्वन्पूर्वपक्षमाक्षिपति-नन्विति । प्रक्रमभेदादित्युक्तं व्यनक्ति-अन्यथा

"त्वं न उद्गाय" [बृ० १।३।१] इति वाजसनेयिन उद्गीथस्य कर्तृत्वेन प्राणमामनन्ति । छन्दोगास्तूद्गीथत्वेन—"तमुद्गीथमुपासाञ्चक्रिरे" [छां० १।२।७] इति॥ तत्कथं विद्यैकत्वं स्यादिति चेत् ॥ नैष दोषः॥ न ह्येतावता विशेषेण विद्यैकत्वमपगच्छति। अविशेषस्याऽपि बहुतरस्य प्रतीयमानत्वात्। तथाहि—देवासुरसङ्ग्रामोपक्रमत्वमसुरात्ययाभिप्राय उद्गीथोपन्यासो वागादिसंकीर्तनं तन्निन्दया मुख्यप्राणव्यपाश्रयः । तद्वीर्याच्चासुरविध्वंसनमश्ममृल्लोष्टनिदर्शनेनेत्येवं बहवोऽर्था उभयत्राप्यविशिष्टाः प्रतीयन्ते । वाजसनेयकेऽपि चोद्गीथसामानाधिकरण्यं प्राणस्य श्रुतम्—"एष उ वा उद्गीथः" [ बृ० १।३।२३ ] इति ॥ तस्माच्छान्दोग्येऽपि कर्तृत्वं लक्षयितव्यम् ॥ तस्माच्च विद्यैकत्वमिति ॥ ६ ॥

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥

रत्नप्रभा ।

त्येतदक्षरमुद्गीथम्" [ छां० १ । १ । १ ] इत्युपक्रम्य प्राणमुद्गीथमिति कर्मरूपत्वशब्दात् । तथा च कर्तृकर्मणोरुपास्ययोर्भेदाद्विद्ययोरन्यथात्वं भेद इति शङ्कार्थः ॥ उद्गीथत्वेनेति । ओंकारत्वेनेत्यर्थः ॥ अल्परूपभेदो न विद्यैक्यविरोधीत्युक्तन्यायेन पूर्वपक्षी परिहरति—नैष इति ॥ असुरात्ययाभिप्रायः असुरजयार्थसंवादः । यथा—अश्मानं प्राप्य लोष्टो विध्वंसते, तथा प्राणं हन्तुमागताः असुराः तस्य वीर्येण स्वयमेव ध्वस्ता इति श्रुतमुभयत्रेत्यर्थः ॥ अल्परूपभेदमंगीकृत्यापि विद्यैक्यमुक्तम् । सोऽपि नास्तीत्याह—वाजेति ॥ उद्गीथरूपत्वेन प्राणस्योभयत्र श्रुतत्वादेकत्र श्रुतं कर्तृत्वमप्युभयत्र द्रष्टव्यमित्यर्थः ॥ ६ ॥ बहुविरुद्धरूपभेदात् न विद्यैक्यमिति सिद्धान्तयति—न वेति ॥ अक्षरं विशिनष्टि—

भामती ।

स्फुटो भेद इत्यर्थः । समाधत्ते—नैष दोष इति । बहुतररूपप्रत्यभिज्ञानादप्रत्यभिज्ञायमानं किंचिल्लक्षणया नेतव्यम् । न केवलं शाखान्तरे, एकस्यामपि शाखायां दृष्टमेतन्न च तत्र विद्याभेद इत्याह—वाजसनेयकेऽपि चेति । बहुतररूपप्रत्यभिज्ञानानुग्रहाय चोमित्यनेनापि उद्गीथावयवेन उद्गीथ एव लक्षणीय इति पूर्वपक्षः ॥ ६ ॥ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् । बहुतरप्रत्यभिज्ञानेऽपि उपक्र-

आनन्दगिरीय–न्यायनिर्णयः ।

हीति । कथमुभयत्र प्रक्रमस्यान्यथात्वं तत्राऽऽह—त्वमिति ॥ उद्गीथस्येति । सर्वस्या भक्तेरिति यावत्॥ उद्गीथत्वेनेति । तदवयवो योऽयमोंकारस्तथात्वेनेत्यर्थः । उद्गानकर्ता प्राणो वाजसनेयके ध्येयत्वेनोच्यते छान्दोग्ये त्वोंकारः प्राणदृष्ट्योपास्य इष्टः । तथा च कर्तृकर्मणोर्भेदान्न विद्यैक्यमिति फलितमाह—तदिति । बहुतररूपप्रत्यभिज्ञानादप्रत्यभिज्ञानं किंचिल्लक्षणया नेयमिति मत्वा समाधत्ते—नेत्यादिना । अविशेषादित्येतद्व्याचष्टे—न हीति । एतावता क्वचित्कर्मरूपत्वेनोपास्यत्वं कर्तृत्वेनान्यत्रेत्येतावन्मात्रेणेत्यर्थः । बहुतराविशेषप्रतीतिमेव प्रकटयति—तथा हीति । यथाऽश्मानं पाषाणं प्राप्य मृत्स्नालोष्टो विध्वंसत एवं विध्वंसमाना विष्वञ्चो विनेशुरिति श्रूयत इत्याह—तदिति । अविशेषधियं निगमयति—इत्येवमिति । न केवलं शाखांतरे रूपभेदो दृष्टः, किंत्वेकस्यामपि । तथाऽपि न तत्र विद्याभेदस्तयोभयोरपि स्यादित्याह—वाजेति । प्राणस्योद्गीथत्वमत्रापि श्रुतं चेत्कथमुपास्तिस्तत्राऽऽह—तस्मादिति । उद्गीथत्वेन श्रुतेरुभयत्राविशेषाद्यदेकत्र कर्तृत्वं तदितरत्रापि लक्ष्यं, तथा च प्राणस्य कर्तृत्वेन कर्मत्वेन च ध्यानं शास्त्रादित्यर्थः । उभयत्रापि वेद्यरूपाविशेषे फलितमाह—तस्माच्चेति ॥ ६ ॥ विद्यैक्ये पूर्वपक्षे तद्भेदं सिद्धान्तमाह—न वेति । वाशब्दस्यावधारणार्थत्वमुपेत्य प्रतिज्ञां विभजते—

न वा विद्यैकत्वमत्र न्याय्यम् । विद्याभेद एवात्र न्याय्यः ॥ कस्मात् ॥ प्रकरणभेदात्।प्रक्रमभेदादित्यर्थः। तथाहि—इह प्रक्रमभेदो दृश्यते।छान्दोग्ये तावद्—"ओमित्येतदक्षरमुद्गीथमुपासीत" [छां० १।१।१] इति।एवमुद्गीथावयवस्योङ्कारस्योपास्यत्वं प्रस्तुत्य रसतमादिगुणोपव्याख्यानं च तत्र कृत्वाथ "खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति" [छां० १ । १ । १०] इति । पुनरपि तमेवोद्गीथावयवमोङ्कारमनुवर्त्य देवासुराख्यायिकाद्वारेण तं "प्राणमुद्गीथमुपासाञ्चक्रिरे" [छां० १ । २ । २ ] इत्याह । तत्र यद्युद्गीथशब्देन सकलासामभक्तिरभिप्रेयेत, तस्याश्च कर्तोद्गातर्त्विक्, तत उपक्रमश्चोपरुध्येत । लक्षणा च प्रसज्येत । उपक्रमतन्त्रेण चैकस्मिन्वाक्ये उपसंहारेण भवितव्यम् । तस्मादत्र तावदुद्गीथावयवे ॐकारे प्रा-

रत्नप्रभा ।

उद्गीथमिति ॥ तदवयवमित्यर्थः॥"पृथिव्यादिरसानां रसतम ॐकारः,आप्तिः समृद्धिः" इति गुणानुक्त्वा गुणवत्योङ्कारे प्राणदृष्टिविधानायाख्यायिका प्रस्तुतेत्याह—रसतमेति।ननु वाजिवाक्यैकवाक्यत्वार्थं छान्दोग्योपक्रमस्थमुद्गीथपदं संपूर्णसामभक्तिपरमस्तु।"प्राणमुद्गीथम्"इत्यत्राप्युद्गीथकर्ता प्राण उपास्य इति व्याख्यायतामित्यत आह—तत्र यद्युद्गीथेति ॥ ॐकारोपास्त्युपक्रमभङ्गः,उद्गीथपदे कर्तृलक्षणा चेति दोषद्वयं स्यादित्यर्थः ॥ ननु सिद्धान्तेऽपि तत्पदेऽवयवलक्षणा स्वीकार्या । ततो वरं कर्तृत्वलक्षणा, श्रुत्यन्तरानुग्रहात् ॥ तथा चोपसंहारे कर्तृप्राणोपास्तिनिश्चयादुपक्रमेऽपि तन्निश्चय इत्यत आह—उपक्रमेति ॥ सन्दिग्धोप-

भामती ।

क्रमभेदात्तदनुरोधेन चोपसंहारवर्णनादेकस्मिन्वाक्ये तस्यैव चोद्गीथस्य पुनःपुनः संकीर्तनाल्लक्षणायां च छान्दोग्ये वाजसनेयके प्रमाणाभावाद्विद्याभेद इति राद्धान्तः । ॐकारस्योपास्यत्वं प्रस्तुत्य रसतमादिगुणोपव्याख्यानमोङ्कारस्य। तथाहि—भूतपृथिव्योषधिपुरुषवाग्ऋक्साम्नां पूर्वस्योत्तरमुत्तरं रसतया सार-

आनन्दगिरीय-न्यायनिर्णयः ।

नेति। अत्रेति प्रकृतशाखाद्वयोक्तिः। उभयत्रापि प्राणस्योद्गीथत्वतत्कर्तृत्वाविशेषस्योक्तत्वाद्वैद्याभेदेन विद्याभेदे संभवति कुतस्तद्भेदोक्तिरिति शङ्कते—कस्मादिति । तत्र हेतुः—प्रकरणेति । शाखाभेदादेव प्रकरणभेदसिद्धेर्न तस्य धीभेदे प्रयोजकतेत्याशंक्याभीष्टमर्थमाह—प्रक्रमेति । शाखाद्वये तद्भेदं विवृणोति—तथाहीति । छांदोग्यगतमुपक्रमप्रकारं दर्शयति—छान्दोग्य इति । उपक्रमवाक्यस्यार्थमाह—उद्गीथेति। प्रकरणविच्छेदाभावं वक्तुं तदनुसंधत्ते—रसेति । भूतपृथिव्योषधिपुरुषवागृक्सामानां पूर्वस्य पूर्वस्योत्तरमुत्तरं सारतयोक्त्वा तेषामोंकारं रसतमत्वेन निर्दिश्य तमेव पुनराप्तिसमृद्ध्यादिगुणकत्वेनोपदिश्य ध्येयमाख्यायिकया निर्धार्योद्गीथोपास्तिरवतारितेत्यर्थः । ननु वाजसनेयके यथोद्गीथेनात्ययामेत्यत्रोद्गीथशब्देन सकला भक्तिरुक्ता त्वं न उद्गायेत्यनेनापि प्राणत्वेनोद्गातोच्यत एवमोमित्येतदक्षरमुद्गीथमुपासीतेत्युपक्रमवाक्यस्योद्गीथशब्देन सकला भक्तिस्तस्याश्च कर्तोद्गाता प्राणत्वेनोच्यतां, तथा च प्रक्रमाभेदाद्विद्यैक्यं तत्राऽऽह—तत्रेति । ऋत्विक्प्राणत्वेन निरुध्येतेति शेषः । तस्मिन्पक्षे यदुद्गीथावयवभूतमोंकाराख्यमक्षरं तत्र प्राणदृष्टिरनुष्ठेयेत्युपक्रमो बाध्येतेत्यर्थः । चकारो वक्ष्यमाणदोषसमुच्चये । यदुद्गीथावयवभूतमोंकाराख्यमक्षरं तद्विषयोद्गीथशब्दस्योद्गातृवाचित्वाभावात्तेनोद्गातुर्लक्ष्यत्वमपि ते स्यादित्याह—लक्षणेति । अक्ताः शर्करा उपदधातीत्यस्य तेजो वै घृतमिति शेषान्निर्णयवत्प्राणमुद्गीथमुपासांचक्रिरे इति संकलभक्तिविषयोपसंहारादुपक्रमो नीयतामित्याशंक्याऽऽह—उपक्रमेति । तस्य संदिग्धार्थत्वात्स्यादुपसंहारापेक्षा । प्रकृते तूपक्रमस्यातिस्पष्टत्वान्नैवमित्यर्थः । ओमित्येतदक्षरमित्यादौ तर्हि कोऽर्थः स्यादित्याशंक्याऽऽह—तस्मादिति । उद्गीथेनात्ययामेत्यत्रापि तदवयवस्योद्गीथशब्दत्वादुद्गातुश्चाश्रुतेर्न प्रक्रमभे-

णदृष्टिरुपदिश्यते । वाजसनेयके तु–उद्गीथशब्देनावयवग्रहणे कारणाभावात्सकलैव भक्तिराविद्यते । "त्वं न उद्गाय" [बृ० १ । ३ । १] इत्यपि तस्याः कर्तोद्गातर्त्विक् प्राणत्वेन निरूप्यत इति प्रस्थानान्तरम् ॥ यदपि तत्रोद्गीथसामानाधिकरण्यं प्राणस्य, तदप्युद्गातृत्वेनैव दिदर्शयिषितस्य प्राणस्य सर्वात्मत्वप्रतिपादनार्थमिति न विद्यैकत्वमावहति । सकलभक्तिविषय एव च तत्राप्युद्गीथशब्द इति वैषम्यम् । न च प्राणस्योद्गातृत्वमसम्भवेन हेतुना परित्यज्येत।उद्गीथभाववदुद्गातृभावस्योपासनार्थत्वेनोपदिश्यमानत्वात् । प्राणवीर्येणैव चोद्गातौद्गात्रं कर्म करोतीति नास्त्यसम्भवः ॥ तथा च तत्रैव श्रावितं–"वाचा च ह्येव स प्राणेन चोदगायद्" [बृ० १ । ३ । २४] इति । न च विवक्षितार्थभेदेऽवगम्यमाने वाक्यच्छा-

रत्नप्रभा ।

क्रमो हि वाक्यशेषात् निश्चीयते ॥ यथा "अक्ताः शर्कराः" इत्यत्राञ्जनद्रव्यसन्देहे "तेजो घृतम्" इति शेषान्निश्चयः । इह तूपक्रमेऽक्षरस्योपास्यत्वं निश्चितम् । तत्समानाधिकरणोद्गीथपदस्यावयवलक्षणा विनिश्चितेति "प्राणमुद्गीथम्" इत्युपसंहारस्तदेकार्थतया नेय इत्यर्थः ॥ एवं छान्दोग्ये ॐकार उपास्य उक्तः। इतरत्र तु प्राण इत्युपास्यभेदाद्विद्याभेद इत्याह–वाजेति ॥ यदुक्तं वाजिश्रुतावपि प्राणस्योद्गीथरूपत्वश्रुतेरुपास्यैक्यमिति, तद्दूषयति–यदपीत्यादिना ॥ तत्रोद्गीथ उपास्यतया नोक्तः । किंतु प्राणस्योपास्यगुणतयेत्यर्थः ॥ किंचोद्गीथः ओंकारश्छान्दोग्ये, अत्र तु भक्तिरित्युपास्यभेद इत्याह–सकलेति ॥ प्राणस्य जडत्वान्नोद्गातृत्वम् । किन्तूद्गीथत्वमेव वाजिभिरपि ग्राह्यमित्यैक्यमाशङ्क्याह–न चेति ॥ संः उद्गाता प्राणस्योपास्य इति यदुक्तं बहुतरार्थविशेषाद्धि विद्यैक्यमिति, तत्राह—न चेति ॥ एकत्रोद्गाता

भामती ।

तयोक्तम् । तेषां सर्वेषां रसतम ओंकार उक्तश्छान्दोग्ये । न च विवाक्षितार्थभेद इति । एकत्रोद्गीथोद्गातारावुपास्यत्वेन विवक्षितावेकत्र तदवयव ॐकार इति । तथाह्यभ्युदयवाक्ये इति । एवं हि श्रूयते–'वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति स त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्' इति। तत्र संदेहः–किं कालापराधे यागान्तरमिदं चोद्यत उत तेष्वेव कर्मसु प्रकृतेषु कालापराधे निमित्ते देवतापनय इति । तत्र एष तावदत्र विषयः–अमावास्या-

आनन्दगिरीय–न्यायनिर्णयः ।

दोऽस्तीत्याशंक्याऽऽह–वाजेति । ओमित्येतदक्षरमित्युपक्रमस्यावयवार्थत्वात्तदुद्गीथमित्युद्गीथशब्देनावयवो गृहीतः । उद्गीथेनात्ययामेत्यत्र तु तथा हेत्वदृष्टेः सकलभक्तिविषयत्वमेव तस्येत्यर्थः । यदुक्तमिहापि नोद्गातुरस्ति धीरिति तत्राह—त्वमिति । कथं प्राणस्योद्गीथकर्तृत्वमुद्गीथेन सामानाधिकरण्यश्रवणात्ततो वेद्यैकाद्विद्यैक्यं तत्राऽऽह–यदपीति। तत्रेति वाजसनेयकोक्तिः।इतश्च नेदं सामानाधिकरण्यं विद्यैक्यक्षममित्याह–सकलेति । तत्रेति सामानाधिकरण्यवाक्योक्तिः । अपिरुद्गीथेनात्ययामेतिवाक्यदृष्टान्तार्थः । वैषम्यमुभयत्र विधानानात्वम् । प्राणस्याचेतनत्वान्नोद्गातृत्वमित्याशंक्याऽऽह–न चेति । असंभवमभ्युपेत्य वाचनिकमुद्गातृत्वमित्युक्तं संप्रत्यसंभवोऽपि नास्तीत्याह–प्राणेति । औद्गात्रमुद्गाता प्राणवीर्येण करोतीत्येतदेव कथं तत्राऽऽह–तथा चेति । तत्रैवेत्युद्गीथप्रकरणोक्तिः । उद्गाता प्राणप्रधानया वाचा कृतवानौद्गात्रमिति श्रुत्यर्थः । यत्तु बहुतरार्थविशेषाद्विद्यैक्यमिति तत्राऽऽह–न चेति ।

यानुकारमात्रेण समानार्थत्वमध्यवसातुं युक्तम् । तथाहि–अभ्युदयवाक्ये पशुकामवाक्ये च "त्रेधा तण्डुलान्विभजेत् । ये मध्यमाः स्युस्तानग्नये दात्रे

रत्नप्रभा ।

प्राणः उपास्यः, अन्यत्रोङ्कार इत्यन्तरंगोपास्यरूपभेदे स्पष्टे सति बहिरङ्गार्थवादसाम्यमात्रेण नोपासनैक्यं युक्तमित्यर्थः ॥ वाक्यसाम्यमात्रेणार्थैक्यं नास्तीत्यत्र दृष्टान्तमाह–**तथा हीति** ॥ "वि वा एतं प्रजया पशुभिर्व्यर्द्धयति वर्द्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं प्राणिष्ठास्तान् विष्णवे क्षिपिविष्टाय शृते चरुम्" इत्यभ्युदयवाक्यम् । **अस्यार्थः** ॥ **यस्य** यजमानस्य चतुर्दश्यामेवामावास्याभ्रान्त्या दर्शकर्मार्थं प्रवृत्तस्य **पुरस्तात्** पूर्वं **हविः** तण्डुलदधिपयोरूपं **निरुप्तं** दर्शदेवताभ्योऽग्न्यादिभ्यः सङ्कल्पितं **चन्द्रमाश्च पश्चादभ्युदेति** तम् **एतं** यजमानं कालव्यत्ययापराधात् तदेव निरुप्तं

भामती ।

यामेव दर्शकर्मार्थं वेदिक्रियाग्निप्रणयनक्रिया व्रतादिश्च यजमानसंस्कारः। दध्यर्थश्च दोहः । प्रतिपदि च दर्शकर्मप्रवृत्तिरित्युनुष्ठानक्रमस्तात्त्विकः । यस्य तु यजमानस्य कुतश्चिद्भ्रमनिबन्धनाच्चतुर्दश्यामेवामावास्याबुद्धौ प्रवृत्तप्रयोगस्य चन्द्रमा अभ्युदीयते, तत्रेदं श्रूयते—'यस्य हविर्निरुप्तम्' इति । तेन यजमानेनाभ्युदितेनामावास्यायामेव निमित्ताधिकारं परिसमाप्य पुनस्तदहरेव वेद्युद्धरणादिकर्म कृत्वा प्रतिपदि दर्शः प्रवर्तयितव्यः । तत्राभ्युदये किं नैमित्तिकमिदं कर्मान्तरं दर्शाच्चोद्यत उत तस्मिन्नेव दर्शकर्मणि पूर्वदेवतापनयनेन देवतान्तरं विधीयत इति । तत्र हविर्भागमात्रश्रवणाच्चरुविधानसामर्थ्याच्च कर्मान्तरम् । यदि हि पूर्वदेवताभ्यो हवींषि विभजेदिति श्रूयेत ततस्तान्येव हवींषि देवतान्तरेण युज्यमानानि न कर्मान्तरं गमयितुमर्हन्ति किंतु प्रकृतमेव कर्म तद्वदिष्कमपनीतपूर्वदेवताकं देवतान्तरयुक्तं स्यात् । अत्र पुनस्त्रेधा तण्डुलान् विभजेदिति हविष एव मध्यमादिक्रमेण विभागश्रवणादनपनीता हविषि पूर्वदेवता इति पूर्वदेवतावरुद्धे हविषि देवतान्तरमलब्धावकाशं श्रूयमाणं कर्मान्तरमेव गोचरयेत् । अपि च प्राप्ते पूर्वस्मिन् कर्मणि दध्नस्तण्डुलानां पयसस्तण्डुलानां चेन्द्रादिदेवतासंबन्धश्च विधातव्यः । चरुत्वं चात्र विहितं नास्तीति तदपि विधातव्यम्। तथा प्राप्ते कर्मण्यनेकगुणविधानाद्वाक्यं भिद्येत। कर्मान्तरं त्वपूर्वं शक्यमेकेनैव प्रयत्नेनानेकगुणविशिष्टं विधातुमिति निमित्ते कर्मान्तरमेव विधीयते । दर्शस्तु लुप्यते कालापराधादिति प्राप्त उच्यते—न

आनन्दगिरीय–न्यायनिर्णयः ।

वाजसनेयके तावदुद्गीथोद्गातारौ ध्येयत्वेनोच्येते छान्दोग्ये त्वोंकारस्तदवयवः प्राणदृष्ट्योपास्य उक्तः । एवं विवक्षितार्थस्यान्तरङ्गोपास्यस्वरूपस्य भेदे गम्यमाने बहिरङ्गादर्थवादाविशेषान्नैकार्थत्वेन विद्यैक्यमित्यर्थः । वाक्यसादृश्यमात्रेणार्थैक्यं नास्तीत्यत्र दृष्टान्तमाह—**तथा हीति** । चतुर्दश्यामेवामावास्याभ्रान्त्या दर्शार्थं प्रवृत्तस्य यजमानस्य चन्द्रमाः पश्चादभ्युदेति तद्विषयं वाक्यमभ्युदयवाक्यम् । तस्मिन्वाक्ये पशुकामस्येष्टिविधायके च वाक्ये यद्यपि त्रेधा तण्डुलान्विभजेदित्यादिनिर्देशस्तुल्यस्तथाऽपि वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेतीति कालातिक्रमापराधेनोपक्रमादभ्युदयवाक्ये नित्ये दर्शकर्मण्येव पूर्वदेवताभ्यो हविषामपनयनेन दातृत्वादिगुणविशिष्टदेवतान्तरांगीकारः । पशुकामवाक्ये च 'यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्' इति नित्यं दर्शकर्म परिसमाप्य पुनर्दोहार्थं वत्सापाकरणविध्युपक्रमात्पशुकामस्येष्ट्यन्तरविधानमुपगतम् । न तु वाक्यद्वये निर्देशस्य सादृश्यमात्रेणार्थैक्यं प्रक्रमभेदादर्थभेदनिश्चयात् । तथा प्रकृते शाखाद्वये बहुतरार्थवादिकसादृश्येऽपि पूर्वोक्तप्रक्रमभेदाद्विद्याभेद इत्यक्षरार्थः । एतदुक्तं भवति । "विवा एतं प्रजया पशुभिरर्धयति

पुरोडाशमष्टाकपालं कुर्याद्" इत्यादिनिर्देशसाम्येऽप्युपक्रमभेदादभ्युदयवाक्ये देवतापनयोऽध्यवसितः । पशुकामवाक्ये तु यागविधिः । तथेहाप्युपक्रमभेदाद्विद्याभेदः—परोवरीयस्त्वादिवत् । यथा—परमात्मदृष्ट्यध्यासासाम्येऽपि "आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" [ छां०

रत्नप्रभा ।

हविः प्रयाजादिना **व्यर्द्धयति** वियोजयति । शत्रुं चास्य वर्द्धयति । यस्मात् कालभ्रान्तिमान् यजमानः, ये मध्यमादिभावेन त्रेधा भूतास्तण्डुलाः दध्यादिसहिताः निरुप्ताः, **तान् विभजेद्** अग्न्यादिभ्यो वियोजयेद्वियोज्य च दातृत्वादिगुणकाग्न्यादिभ्यो दर्शदेवभिन्नेभ्यो निर्वपेदिति **दधन्** दधनि स्थविष्ठतण्डुलचरुं **शृते** दुग्धेऽणिष्ठचरुमित्यर्थः ॥ अत्र कालापराधे देवान्तरयुक्तं प्रायश्चित्तरूपं दर्शाद्भिन्नं कर्म विधीयत इति प्राप्ते—तण्डुलत्रेधात्वाद्यनुवादेन विभजेदिति हविषः प्रकृतदेववियोगेन तस्मिन्नेव दर्शकर्मणि देवतान्तरसम्बन्धमात्रविधानं, न कर्मान्तरमिति सिद्धान्तितम् । एवमभ्युदयवाक्ये कालापराधेनोपक्रमाद्दर्शकर्मण्येव हविषः पूर्वदेवताभ्योऽपनयो वियोगोऽध्यवसितः । पशुकामवाक्ये तु **यद्यपि** " ये स्थविष्ठास्तानग्नये प्रणेयतेऽष्टाकपालं निर्वपेद्ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं ये क्षोदिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्" इति निर्देशोऽभ्युदयवाक्यसमोऽस्ति, **तथापि** यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यादिति नित्यं दर्शकर्म समाप्य पुनर्दोहार्थं वत्सापाकरणविध्युपक्रमात् पशुकामस्य यागान्तरविधिरेव, नाभ्युदयवाक्येनार्थैक्यमिति, **तथा** प्रकृतेऽपि निर्देशसाम्यं न विद्यैक्यप्रयोजकमित्यर्थः । वत्सानपाकुर्यान्मातृदेशाद् देशान्तरं नयेदित्यर्थः ॥ सूत्रोक्तं दृष्टान्तं व्याचष्टे—**परोवरीयस्त्वादिवदिति** ॥ पर इति

भामती ।

कर्मान्तरम् । पूर्वदेवतातो हविषो विभागपूर्वं निमित्ते देवतान्तरविधानात् । चर्वर्थस्य चार्थप्राप्तेः । भवेदेतदेवं यदा त्रेधा तण्डुलान् विभजेदिति तण्डुलानां त्रेधा विभागविधानपरमेतद्वाक्यं स्यादपि तु वाक्यान्तरप्राप्तं तण्डुलानां त्रेधात्वमनूद्य विभजेदित्येतावद्विधत्ते तत्र वाक्यान्तरालोचनया पूर्वदेवताभ्य इति गम्यते । तण्डुलानिति त्वविवक्षितं हविरुभयत्ववत् । तथा च ये मध्यमा इत्यादीनि वाक्यान्यपनीते पूर्ववत् देवतासंबन्धे हविषस्तस्मिन्नेव कर्मण्यप्रत्यूहं देवतान्तरसंबन्धं विधातुं शक्नुवन्ति । तथा च द्रव्यमुखेन प्रकृतमुखप्रत्यभिज्ञानात् । देवतान्तरसंबन्धेऽपि न कर्मान्तरकल्पना भवितुमर्हति । ततश्च समाप्तेऽपि नैमित्तिकाधिकारे नित्याधिकारसिद्ध्यर्थं तान्येव पुनः कर्माण्यनुष्ठेयानि । न च दधनि चरुमिति चरुसम्बन्धर्थयोर्विधानं तयोरप्यर्थप्राप्तत्वात् । प्रकृते हि कर्मणि तण्डुलपेषणप्रथनं पुरोडाशपाकादि दधिपयसी च प्राप्तानि तत्राभ्युदयनिमित्ते दधियुक्तानां पयोयुक्तानां च तण्डुलानां विभजेदिति वाक्येन पूर्वदेवतापनयं कृत्वा ये मध्यमा इत्यादिभिर्वाक्यैर्देवतान्तरसंबन्धः कृतः । न च प्रभूतदधिपयःसंसक्तैरल्पैस्तण्डुलैः पुरोडाशक्रिया संभवति । इति पुरोडाशनिवृत्तौ तदर्थस्य प्रथनस्यापि निवृत्तिरनिवृत्तस्तु पाकोऽपवादाभावात्तथा चार्थप्राप्तश्चोद्यते । भवतु वा अनेकवाक्यकल्पनम् । प्रकृताधिकारावगमबलादस्यापि न्याय्यत्वादिति । तस्मात्तदेवेदं कर्म न तु कर्मान्तरमिति सिद्धम् । पशुकामवाक्ये त्वपूर्वकर्मविधिरभ्युदयवाक्यसारूप्येऽपि । 'यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्याद्ये स्थविष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेद्ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं ये क्षोदिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्' इति । अत्र हि अमावास्यामिष्ट्वेति समाप्ते यागे पशुकामेष्टिविधानं नात्र पूर्वस्य कर्मणोऽनुवृत्तेर्यागान्तरविधिरिति युक्तम् । **परोवरीयस्त्वादिवत्** । यथोद्गीथोपासनासाम्येऽपि आदित्यगतहिरण्यश्म-

आनन्दगिरीय—न्यायनिर्णयः ।

वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेद्ये मध्यमास्तानग्नये दात्रे

१ सनिमते पा०

१।९।१ ] "स एष परोवरीयानुद्गीथः स एषोऽनन्तः" [ छां० १।९।२] इति परोवरीयस्त्वादिगुणविशिष्टमुद्गीथोपासनमक्ष्यादित्यगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनाद्भिन्नम्। न चेतरेतरगुणोपसंहार एकस्यामपि शाखायां, तद्वच्छाखान्तरस्थेष्वप्येवञ्जातीयकेषूपासनेष्विति ॥ ७ ॥

रत्नप्रभा ।

सकारान्तं परस्तात् । परश्चासौ वरेभ्योतिशयेन वरः परोवरीयानित्येकं पदम् । अनन्तश्च—आकाशाख्यः परमात्मा । तद्दृष्ट्यालम्बनत्वादुद्गीथस्तथोक्त इत्यर्थः ॥ आकाशात्मना हिरण्यश्मश्रुपुरुषात्मना चोद्गीथोपास्तिसाम्येऽपि विद्याभेदवदिहापि भेद इत्यर्थः ॥ ७ ॥ संज्ञैक्यं पूर्वपक्षबीज-

भामती ।

श्रुत्वादिगुणविशिष्टोद्गीथोपासनातः परोवरीयस्त्वगुणविशिष्टोद्गीथोपासना भिन्ना तद्वदिदमपीति । परस्मात् परोवराच्च वरीयानिति परोवरीयानुद्गीथः परमात्मरूपः संपन्नः । अत एव अनन्तः । परमात्मदृष्टिमुद्गीथे भावयितुम् 'आकाशो ह्येवैभ्यो भूतेभ्यो ज्यायान्' इत्याकाशशब्देन परमात्मानं निर्दिशति ॥ ७ ॥

आनन्दगिरीय-न्यायनिर्णयः ।

पुरोडाशमष्टाकपालं कुर्याद्येये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्" इत्यत्र यस्य यजमानस्य पुरस्तात्पूर्वं हविर्निरुप्तं देवतार्थं संकल्पितं चन्द्रमाश्च पश्चादाभिमुख्येनोदेति तमेतं यजमानं निरुप्तं हविः प्रजादिना विनाशयति शत्रुं चास्य वर्धयति । तथा चासौ चतुर्दश्याममावास्याभ्रान्तिभागी मध्यमादिभावेन त्रेधाभूता ये तण्डुलास्तानग्न्यादिभ्यो दर्शदेवताभ्यो विभजेद्विभज्य च दातृत्वादिगुणकाग्न्यादिभ्यो देवताभ्यो निर्वपेदित्येवमर्थायां श्रुतौ किमभ्युदये नैमित्तिकं कर्मान्तरं दर्शाच्चोद्यते किंवा दर्शकर्मण्येव पूर्वदेवतात्यागेन देवतान्तरं विधीयत इति संदेहे त्रेधा तण्डुलान्विभजेदिति हविषामेव मध्यमादिक्रमेण विभागश्रवणात्पूर्वदेवताभ्यो हवींषि विभजेदिति चाश्रुतेरपनीता हविःषु पूर्वदेवता इति तदवरुद्धेषु तेषु देवतान्तरमलब्धावकाशं श्रुतं कर्मान्तरमेव गोचरयेदिति देवतान्तरयुक्तकर्मान्तरे विधिरिति प्राप्ते त्रेधा तण्डुलान्विभजेदित्यत्र ये मध्यमाः स्युरित्यादिवाक्यान्तरप्राप्तं त्रेधात्वमनूद्य विभजेदित्यस्यैव विधानात्कस्मादित्यपेक्षायां मध्यमादिवाक्यैर्देवतान्तरेपूक्तेषु तत्प्रतियोगिनीनां देवतानामेव बुद्धिस्थानां विभागप्रतियोगित्वसिद्धेः । तण्डुलशब्दस्य च हविर्मात्रविषयत्वाद्दधिपयसोरपि पूर्वदेवतातो विभागलाभादपनीते पूर्वदेवताके हविषि देवतान्तरस्य सावकाशत्वात्पूर्वद्रव्यमुखेन प्रकृतकर्मप्रत्यभिज्ञानादेवतान्तरसंबन्धेऽपि कर्मान्तरकल्पनानवकाशान्नैमित्तिकाधिकारे समाप्ते नित्याधिकारार्थं तान्येव कर्माण्यनुष्ठेयानीति नास्ति कर्मभेद इति स्थितम् । 'यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात् । ये स्थविष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेद्ये मध्यमास्तान्विष्णवे शिपिविष्टाय शृते चरुं ये क्षोदिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्' इत्यत्र तुल्यश्रुत्यादर्शसमाप्त्यनन्तरं वत्सापाकरणेन गोदोहनं कृत्वा पूर्ववद्देवताभ्यो हविर्विभज्य देवतान्तरविशिष्टपशुकामेष्टिविधानात्पूर्वस्य कर्मणोऽननुवृत्तेरभ्युदयवाक्यसारूप्येऽपि यागान्तरविधिस्तथेहापि स्यादिति पूर्वतन्त्रसिद्धं दृष्टान्तं बहिरेवोक्त्वा सौत्रं दृष्टान्तमादाय व्याचष्टे—परोवरीयस्त्वेति । परस्माद्वरप्राणादेः परोवराच्च तस्मादेव वरीयान्वरतरोऽयमुद्गीथः स च परमात्मदृष्टिसंपत्तेरनन्तर इति द्रष्टव्यम् । आकाशे चाऽऽदित्यादौ च परमात्मदृष्टेरारोपादुद्गीथोपास्तिसाम्येऽपि परोवरीयस्त्वादिगुणकोद्गीथोपास्तिरन्याऽन्या च हिरण्यश्मश्रुत्वादिगुणकोद्गीथोपास्तिस्तथेहापीत्यर्थः। दृष्टान्तेऽप्यधिकगुणानामन्योन्यत्रोपसंहाराद्विद्यैक्यमित्याशंक्याऽऽह—न चेति। पुनरुक्त्या विद्याभेदस्यातिस्पष्टत्वं हेतुं मत्वोक्तम्—एकस्यामिति । शाखाभेदाद्वोद्गृभेदेनापौनरुक्त्येऽपि तात्पर्यप्रमेयगुणभेदविशिष्टोपासनेषु नानात्वमित्याह—तद्वदिति ॥ ७ ॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

अथोच्येत-संज्ञैकत्वाद्विद्यैकत्वमत्र न्याय्यं, उद्गीथविद्येत्युभयत्राप्येका संज्ञेति । तदपि नोपपद्यते ॥ उक्तं ह्येतत्-"न वा प्रकरणभेदात्परोवरीयस्त्वादिवद्" इति । तदेव चात्र न्याय्यतरम् । श्रुत्यक्षरानुगतं हि तत् । संज्ञैकत्वं तु श्रुत्यक्षरबाह्यम् । उद्गीथशब्दमात्रप्रयोगात् । लौकिकैर्व्यवहर्तृभिरुपचर्यते । अस्ति चैतत्संज्ञैकत्वं-प्रसिद्धभेदेष्वपि परोवरीयस्त्वाद्युपासनेषूद्गीथविद्येति । तथा प्रसिद्धभेदानामप्यग्निहोत्रदर्शपूर्णमासादीनां काठकैकग्रन्थपरिपठितानां काठकसंज्ञैकत्वं दृश्यते, तथेहापि भविष्यति । यत्र तु नास्ति कश्चिदेवञ्जातीयको भेदहेतुः,तत्र भवतु संज्ञैकत्वाद्विद्यैकत्वम् । यथा-संवर्गविद्यादिषु ॥ ८ ॥ इत्यन्यथात्वाधिकरणम् ॥३॥

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥ ( ४ ) ॥

---

रत्नप्रभा ।

मुद्भाव्य दूषयति-संज्ञात इति ॥ उपास्यरूपभेदाद्विद्यानानात्वं यदुक्तं, तच्छ्रुत्यक्षरानुगतं बलवत् । संज्ञा तु पौरुषेयी दुर्बलेत्यर्थः ॥ संज्ञैक्यं, कर्मैक्यव्यभिचारि चेत्याह-अस्ति चेति ॥ किं संज्ञैक्यं सर्वत्राप्रमाणमेव, नेत्याह—यत्र त्विति ॥ असति बाधके संज्ञैक्यमपि मानम्। यथा-संवर्गविद्येति संज्ञैक्यात् सर्वशाखासु तद्विद्यैक्यं,तथा पञ्चाग्न्यादिविद्यैक्यमिति आद्यसूत्रे दर्शितमित्यर्थः॥८॥(३)॥ व्याप्तेश्च समञ्जसम्।

भामती ।

संज्ञातश्चेत्तदुक्तमस्ति तु तदपि । स्फुटतरे भेदावगमे संज्ञैकत्वं नाभेदसाधनमतिप्रसङ्गापातात् । अपि च श्रुत्यक्षरालोचनया भेदप्रत्ययोऽन्तरङ्गश्चानपेक्षश्च । संज्ञैकत्वं तु श्रुतिबाह्यतया बहिरंगं च पौरुषेयतया सापेक्षं च । तस्माद् दुर्बलं नाभेदसाधनायालमिति ॥ ८ ॥ ( ३ ) ॥ व्याप्तेश्च समञ्जसम् ।

आनन्दगिरीय-न्यायनिर्णयः ।

पूर्वपक्षबीजमुद्भाव्य दूषयति—संज्ञातश्चेदिति । अनुवादं व्याकरोति-अथेति । अत्रेति शाखाद्वयमुक्तम् । संज्ञैकत्वं विवृणोति-उद्गीथेति । पूर्वसूत्रगतं नञ्शब्दं तच्छब्देन संयोज्य परिहरति—तदपीति । पूर्वसूत्रोक्तपरिहारस्य बाधकत्वाचोद्याभासोऽयमित्याह-उक्तं हीति । समाख्याविशेषादभेदो गम्यते रूपभेदाच्च भेदस्तथा सति किमत्र युक्तं तत्राऽऽह—तदेवेति । रूपभेदस्यान्तरङ्गतया बलवत्तरत्वात्संज्ञायाश्च श्रुतिबाह्यतया बहिरङ्गत्वात्पौरुषेयतया च सापेक्षत्वेन दुर्बलत्वाद्रूपभेदादुक्तं विद्यानानात्वमेव युक्तमित्यर्थः । कथं संज्ञैक्यं श्रुत्यक्षरश्रुतबाह्यं तत्राऽऽह-उद्गीथेति । संज्ञैक्याद्विद्यैक्ये स्यादतिप्रसक्तिरित्यस्तीत्यादि व्याकरोति-अस्ति चेति । अपिशब्दोपात्तमुदाहरणान्तरमाह-तथेति । संज्ञैक्येऽपि न चेत्तत्रैक्यं तर्हि संज्ञैक्यमुद्गीथज्ञानेऽप्यप्रयोजकमित्याह-तथेहेति । कथं तर्हि संज्ञैक्यस्य व्यभिचारित्वे प्रथमसूत्रे तस्यैक्ये हेतुत्वमुक्तमित्याशंक्य तुशब्दसूचितमर्थमाह-यत्रेति । एवंजातीयकः प्रक्रमभेदो वा तत्तुल्यो वेत्यर्थः । असति बलवति बाधके संज्ञैक्यमपि साधकमित्यत्र दृष्टान्तमाह-यथेति । आदिपदेन पञ्चाग्निविद्या वैश्वानरविद्येत्यादि गृह्यते ॥ ८ ॥ ( ३ ) ॥ ओमित्येतदक्षरमुद्गीथमुपासीतेत्यत्रोद्गीथविशेषितत्वमोंकारस्यापि सिद्धवत्कृत्य प्रक्रमभेदाद्विद्याभेदमुक्त्वा तमेव विशेषणविशेष्यभावं निरूपयति-व्याप्तेश्चेति । ओमुद्गीथशब्दयोः सामानाधिकरण्यमधिकरणस्य विषयं

"ओमित्येतदक्षरमुद्गीथमुपासीत" [ छां० १ । १ । १ ] इत्यत्राक्षरोद्गीथशब्दयोः सामानाधिकरण्ये श्रूयमाणेऽध्यासापवादैकत्वविशेषणपक्षाणां प्रतिभानात्कतमोऽत्र पक्षो न्याय्यः स्यादिति विचारः । तत्राध्यासो नाम द्वयोर्वस्तुनोरनिवर्तितायामेवान्यतरबुद्धावन्यतरबुद्धिरध्यस्यते, यस्मिन्नितरबुद्धिरध्यस्यते, अनुवर्तत एव तस्मिंस्तद्बुद्धिरध्यस्ता-इतरबुद्धावपि । यथा—नाम्नि ब्रह्मबुद्धावध्यस्यमानायामप्यनुवर्तत एव नामबुद्धिर्न ब्रह्मबुद्ध्या निवर्त्यते, यथा वा प्रतिमादिषु विष्ण्वादिबुद्ध्यध्यासः, एवमिहाप्यक्षरे उद्गीथबुद्धिरध्यस्या-उत-उद्गीथे वाऽक्षरबुद्धिरिति॥अपवादो नाम यत्र कस्मिंश्चिद्वस्तुनि पूर्वनिविष्टायां मिथ्याबुद्धौ निश्चितायां पश्चादुपजायमाना यथार्था बुद्धिः पूर्वनिविष्टाया मिथ्याबुद्धेर्निवर्तिका भवति । यथा-देहेन्द्रियसङ्घाते आत्मबुद्धिरात्मन्येवात्मबुद्ध्या पश्चाद्भाविन्या "तत्त्वमसि" [ छान्दो० ६ । ८-१६ ] इत्यनया यथार्थबुद्ध्या निवर्त्यते, यथा वा-दिग्भ्रान्तिबुद्धिर्दिग्याथार्थ्यबुद्ध्या निवर्त्यते, एवमिहाप्यक्षरबुद्ध्योद्गीथबुद्धिर्निवर्त्येतोद्गीथबुद्ध्या वाऽक्षरबुद्धिरिति । एकत्वं तु-अक्षरोद्गीथशब्दयोरनतिरिक्तार्थवृत्तित्वम् । यथा द्विजोत्तमो, ब्राह्मणो, भूमिदेव इति । विशेषणं पुनः सर्ववेदव्यापिनः ॐमित्येतस्याक्षरस्य ग्रहणप्रसङ्गे औद्गात्रविषयस्य समर्पणम् । यथा-नीलं यदुत्पलं तदानयेति, एवमिहाप्युद्गीथो य ॐकारः, तमुपासीतेति । एवमेतस्मिन्सामानाधिकर-

---

रत्नप्रभा ।

सामानाधिकरण्यं विषयीकृत्य संशयमाह-ॐमित्येतदिति ॥ अध्यासादिपदार्थान् व्याचष्टे-तत्राध्यास इत्यादिना ॥ बुद्धिपूर्वकाभेदारोपः-अध्यासः, बाधः-अपवादः, एकत्वं-वास्तवाभेदः,

भामती ।

अध्यासो नामेति। गौणी बुद्धिरध्यासः।यथा माणवकेऽनिवृत्तायामेव माणवकबुद्धिव्यपदेशवृत्तौ सिंहबुद्धिव्यपदेशवृत्तिः सिंहो माणवक इति,एवं प्रतिमायां वासुदेवबुद्धिर्नाम्नि च ब्रह्मबुद्धिस्तथोङ्कार उद्गीथबुद्धिव्यपदेशाविति । अपवादैकत्वविशेषणानि चोक्तानि । एकार्थेऽपि च शब्दद्वयप्रयोगो दृश्यते । यथा वैश्वदेव्या-

आनन्दगिरीय-न्यायनिर्णयः ।

दर्शयति-ओमित्येतदिति । विशेषानवधारणकृतं संदेहमाह-अध्यासेति । अत्र च विशेषणविशेष्यभावनिरूपणेन विचारस्य वाक्यार्थधीसाधनसंक्रान्ततया पादादिसंगतयः । पूर्वपक्षे समानाधिकरणवाक्यस्यानध्यवसितार्थत्वादप्रामाण्यं सिद्धान्ते तस्यार्थनिश्चयात्प्रामाण्यम् । कथमेतेषां पक्षाणां प्रतिभानं भेदो वेति तत्राध्यासं व्युत्पादयति-तत्रेति । तेषां मध्ये योऽध्यासो नाम प्रसिद्धः स व्युत्पाद्यते । गौणी बुद्धिरसावित्युपेत्य व्युत्पादनमभिनयति-द्वयोरिति । कथमन्यतरबुद्धावनिवर्तितायामन्यतरबुद्धेरध्यासः स्यात्तत्राऽऽह-यस्मिन्निति । अध्यस्तबुद्ध्येतरबुद्धेर्निवर्त्यत्वमाशंक्य दृष्टान्तमाह-यथेति । वैदिकदृष्टान्तमुक्त्वा लौकिकमाह—यथा वेति । विशेषमनवधारयन्दार्ष्टान्तिकमाह-एवमिति । अध्यासपक्षसमाप्ताविविशब्दाः । अपवादव्युत्पादनं प्रतिज्ञाय व्युत्पादयति-अपवाद इति ॥ यत्रेति । यस्मिन्कस्मिंश्चिद्वस्तुनीत्यर्थः । तत्रापि लौकिकं वैदिकं चोदाहरणमाह-यथेत्यादिना । पूर्ववद्दार्ष्टान्तिकमाह-एवमिति । इतिशब्दोऽपि पूर्ववत् । एकत्वपक्षं सदृष्टान्तं स्पष्टयति-एकत्वं त्विति । विशेषणपक्षं प्रकटयति-विशेषणमिति । ग्रहणप्रसंगे ध्येयत्वेन स्वीकारप्रसक्ताविति यावत् । उक्तमेव दृष्टान्तेन पष्टयति—यथेति । पक्षचतुष्टयं व्युत्पादितमुपसंहरति-एवमिति । अध्यासादिषु दृष्टेष्वनध्यवसाय-

ण्यवाक्ये विमृश्यमाने एते पक्षाः प्रतिभान्ति । तत्रान्यतमनिर्धारणे कारणाभावादनिर्धारणप्राप्तौ—इदमुच्यते- व्याप्तेश्च समञ्जसमिति ॥ चशब्दोऽयं तुशब्दस्थाननिवेशी पक्षत्रयव्यावर्तनप्रयोजनः । तदिह त्रयः पक्षाः सावद्या इति पर्युदस्यन्ते । विशेषणपक्ष एवैको निरवद्य इत्युपादीयते । तत्राध्यासे तावद्या बुद्धिरितरत्राध्यस्यते तच्छब्दस्य लक्षणवृत्तित्वं प्रसज्येत । तत्फलं च कल्प्येत । श्रूयत एव फलम् "आपयिता ह वै कामानां भवति" [ छां० १ । १ । ७ ] इत्यादीति चेत् ॥ न ॥ तस्यान्यफलत्वात् । आप्त्यादिदृष्टिफलं हि तत, नोद्गीथाध्यासफलम् । अपवादेऽपि समानः फलाभावः ॥ मिथ्याज्ञाननिवृत्तिः फलमिति चेत् ॥ न ॥ पुरुषार्थोपयोगानवगमात । न च कदाचिदप्योङ्कारादोङ्कारबुद्धिर्निवर्तते, उद्गी-

रत्नप्रभा ।

विशेषणं व्यावर्तकमिति विवेकः॥ पूर्वमुद्गातृकर्मात्मकोद्गीथावयवत्वमोङ्कारस्य ध्येयस्य विशेषणं सिद्धवत्कृत्य ध्येयभेदाद्विद्याभेदः सिद्धान्तितः। स न युक्त इत्याक्षेपसङ्गत्या पूर्वपक्षयति—तत्रेति ॥ अत्र पूर्वपक्षे पूर्वोक्तसिद्धान्तासिद्धिः फलं, सिद्धान्ते तत्सिद्धिरिति मत्वा सिद्धान्तसूत्रं व्याचष्टे—चशब्द इत्यादिना ॥ पक्षत्रयस्य दुष्टत्वं प्रतिज्ञायाऽध्यासपक्षे दोषमाह—तत्राध्यास इति ॥ यस्योद्गीथस्य बुद्धिरोङ्कारेऽध्यस्यते, तद्वाचकोद्गीथशब्दस्योङ्कारे लक्षणा स्यात । तद्बुद्धिविषयत्वगुणपरत्वात् । तथा सम्बन्धोऽप्यसिद्धः कल्पनीयः, प्रतीकोपास्तेः फलञ्च कल्प्यमिति गौरवं स्यादित्यर्थः ॥ फलं न कल्प्यमिति शङ्कते—श्रूयत इति ॥ आप्त्यादीति ॥ ॐकारः आप्तिः समृद्धिरिति य उपास्ते स कामानाप्नोतीति श्रुतं फलं, नाध्यासस्येत्यर्थः ॥ उद्गीथोङ्कारयोरन्यतरबुद्ध्या अन्यतरबुद्ध्यपवादमंगीकृत्य अन्यतरमिथ्याबुद्धिनिवृत्तिवैफल्यमुक्तम् । सम्प्रत्यन्यतरबुद्धेरभ्रान्तित्वान्नापवाद इत्याह—न च कदाचिदपीति ॥ भ्रान्तिश्चेत्, निवर्तेत, न तु

भामती ।

मिक्षा विज्ञानमानन्दम् । व्याख्यायां च पर्यायाणामपि सहप्रयोगो यथा सिन्धुरः करी, पिकः कोकिल इति। विमृश्यान यवसायलक्षणं पक्षं गृह्णाति—तत्रान्यतम इति । सिद्धान्तमाह—इदमुच्यते—व्याप्तेश्च । प्रत्यनु-

आनन्दगिरीय—न्यायनिर्णयः ।

पक्षं पूर्वपक्षयित्वा सिद्धान्तमाह—तत्रेत्यादिना । सूत्रस्थचशब्दस्य समुच्चयाद्यर्थाभावादानर्थक्यमाशंक्य व्याचष्टे—चशब्द इति । पक्षव्यावृत्तिमेव प्रकटयति—तदिति । तत्तत्र सामानाधिकरण्यवाक्ये चतुष्टयपक्षेषु दृष्टेष्विति यावत् । व्यावर्त्ये पक्षत्रये विशेषणपक्षस्य प्रवेशं निषेधन्नादेयं पक्षमाह—विशेषणेति । कथं त्रयाणां पक्षाणां सावद्यत्वं, तत्राध्यासस्य सावद्यत्वं साधयति—तत्रेति । उद्गीथबुद्धेरक्षरेऽध्यासेऽक्षरशब्दस्योद्गीथे तस्मिन्वाऽक्षरबुद्धेरध्यासे सत्युद्गीथशब्दस्याक्षरे लक्षणा स्यात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या तेन नाध्यास इत्यर्थः । तत्रैव दोषान्तरमाह—फलं चेति । तत्कल्पनामपृष्यन्नाह—श्रूयत इति । तस्याध्यासफलत्वाभावान्नैवमित्याह—तन्नेति । श्रुतस्य फलस्यान्यफलत्वमेव व्यनक्ति—आप्त्यादीति । न च तस्योभयफलत्वमाप्त्यादिदृष्टिं विधातुमोमित्येतदक्षरमितिवाक्येन विशिष्टप्रणवार्थेन पृथगुपास्तिविध्यनुपगमादिति भावः । अपवादपक्षं प्रत्याह—अपवादेऽपीति । अध्यासं दृष्टान्तयितुमपिशब्दः । वाक्यशेषस्थं तु फलं नाध्यासस्य नापवादस्यापि स्याद्विशिष्टोपास्तिसंबन्धादित्यर्थः । फलाभावासिद्धिं शङ्कते—मिथ्येति । तन्निवृत्तावात्मनि कर्तृत्वाद्यनर्थनिवृत्तिरानन्दाभिव्यक्तिश्च दृष्टा नैवमोंकारबुद्ध्योद्गीथबुद्धेस्तस्या वेतरस्या ध्वंसे कश्चित्पुरुषार्थो दृष्टः । तस्मान्नेदं फलमित्याह—नेति । अपवादमुपेत्य वैफल्यं दोषमुक्त्वाऽङ्गीकारं त्यजति—न चेति । उद्गीथबुद्धिरोंकारबुद्धेरपवादिका चेदोंकारबुद्धिः

थाद्गीथबुद्धिः। न चेदं वाक्यं वस्तुतत्त्वप्रतिपादनपरम्। उपासनविधिपरत्वात्। नाप्येकत्वपक्षः सङ्गच्छते। निष्प्रयोजनं हि तदा शब्दद्वयोच्चारणं स्यात्। एकेनैव विवक्षितार्थसमर्पणात्। न च हौत्रविषये वाऽऽध्वर्यवविषये वाऽक्षरे ॐकारशब्दवाच्ये उद्गीथप्रसिद्धिरस्ति। नापि सकलायां साम्नो द्वितीयायां भक्तावुद्गीथशब्दवाच्यायामोंकारशब्दप्रसिद्धिः। येनानतिरिक्तार्थता स्यात्। परिशेषाद्विशेषणपक्षः परिगृह्यते। व्याप्तेः सर्ववेदसाधारण्यात्। सर्वव्याप्यक्षरमिह मा प्रसञ्जीत्यत उद्गीथशब्देनाक्षरं विशिष्यते। कथं नामोद्गीथावयवभूत ॐकारो गृह्येत इति॥ नन्वस्मिन्नपि पक्षे समाना लक्षणा। उद्गीथशब्दस्यावयव लक्ष-

---

रत्नप्रभा।

निवर्तेत इत्यभ्रान्तिरित्यर्थः॥ किञ्च तत्त्वबोधकाद्वाक्याद्भ्रान्त्यपवादो भवति, नेह वाक्यं तत्त्वपरमित्याह—**न चेति**॥ घटकुम्भशब्दयोरिव ओंकारोद्गीथशब्दयोः पर्यायत्वपक्षं दूषयति—**नापीति**॥ पर्यायत्वमपि नास्तीत्याह—**न चेति**॥ परिशिष्टविशेषणपक्षे सूत्रं योजयति—**व्याप्तेरिति**॥ ओमित्यक्षरमुपासीत

भामती।

वाक्यं प्रत्यृचमुपक्रमे च समासो चोंकारः सर्ववेदव्यापीति किंगतोऽयमोंकारस्तत्तदाप्त्यादिगुणविशिष्टस्तस्मै तस्मै कामावाप्त्यादिफलायोपास्यत्वेनाधिक्रियत इत्यपेक्षायामुद्गीथपदेनेति विशिष्यते। उद्गीथपदेनोंकारावयवघटितसामभक्तिभेदाभिधायिना समुदायस्यावयवभावानुपपत्तेस्तत्संबन्ध्यवयव ओंकारो लक्ष्यते, न पुनरोंकारेणावयविन उद्गीथस्य लक्षणा ओंकारस्यैवोपरिष्टात्तु तत्तद्गुणविशिष्टस्य तत्तत्फलविशिष्टस्य चोपव्याख्यास्यमानत्वात्। दृष्टश्च समुदायशब्दोऽवयवे लक्षणया यथा ग्रामो दग्धः पटो दग्ध इति तदे-

आनन्दगिरीय-न्यायनिर्णयः।

स्वविषयादोंकारान्निवर्तेत। ओंकारबुद्धेर्वाध्याया मिथ्याधीत्वेन स्वार्थव्यभिचारात्। यदोंकारधीरुद्गीथबुद्धेरपवादिका तदाऽपि मिथ्याधीत्वादुद्गीथधीः स्वार्थान्निवर्तेत। न चैवं दृष्टमतो नापवाद इत्यर्थः। किंचापवादेनास्य वाक्यस्य तात्पर्यमुपास्तिपरत्वादित्याह—**न चेति**। एकत्वपक्षं निराह—**नापीति**। पिकशब्दस्य कोकिलशब्देन व्युत्पादनवदन्यतरशब्दस्यान्यतरशब्देन व्युत्पादनं फलवदेवेत्याशंक्य संदिग्धार्थतादेरसत्त्वान्मैवमित्याह—**एकेनेति**। ओंकारोद्गीथशब्दयोरुद्गीथार्थत्वादन्यतरेण तत्सिद्धेर्न शब्दान्तरमर्थवदित्यर्थः। किंचैकत्वपक्षे किमुद्गीथस्याक्षरेऽन्तर्भावोऽक्षरस्य वेतरस्मिन्निति विकल्प्याऽऽद्यं निराह—**न चेति**। द्वितीयं प्रत्याह—**नापीति**। उद्गीथशब्दस्याक्षरे तच्छब्दस्य चोद्गीथे प्रसिद्ध्यभावे तयोरेकार्थत्वराहित्यं फलतीत्याह—**येनेति**। पक्षत्रयं सावद्यत्वेनापोह्य निरवद्यं पक्षं गृह्णाति—**परिशेषादिति**। तत्र सौत्रं पदमादाय विभजते—**व्याप्तेरिति**। तथाऽपि कथं विशेषणपक्षसिद्धिस्तत्राऽऽह—**सर्वेति**। इहेत्युपासनोक्तिः। तत्प्रसङ्गे वाक्यशेषविरोधः स्यादिति मत्वा ब्रूते—**अत इति**। संभवे व्यभिचारे च विशेषणमर्थवदित्युपगमादोंकारस्य विशेष्यस्य सर्ववेदव्यापित्वादुद्गीथेन विशेषणेन व्यभिचारवारणेऽपि सर्वस्या द्वितीयस्या भक्तेरुद्गीथशब्दितायास्तदवयवे संभवाभावादयुक्तमोंकारविशेषणत्वमुद्गीथस्येत्याशंक्यावयवलक्षणार्थत्वमुद्गीथशब्दस्योपेत्याऽऽह—**कथमिति**। इतिशब्दो वृत्तक्रियापदेन संबध्यते। न चोद्गीथस्यैवावयविनो लक्षणा स्यादोंकारेणावयवेनेति युक्तमोंकारस्योपरिष्टाद्विस्तरेण व्याख्यास्यमानतया प्रधानत्वात्तेन भक्तिलक्षणायामुद्गीथपदेन भक्तिविशेषस्यैवार्पणे व्यभिचाराभावाद्विशेषणवैयर्थ्यमिति भावः। लक्षणाप्रसंगेनाध्यासस्य निरस्तत्वादयमपि पक्षो दोषसाम्यान्नोपादेयः स्यादिति शङ्कते—**नन्विति**। उद्गीथ-

णार्थत्वात् ॥ सत्यमेवमेतत ॥ लक्षणायामपि तु सन्निकर्षविप्रकर्षौ भवत एव । अध्यासपक्षे ह्यर्थान्तरबुद्धिरर्थान्तरे निक्षिप्यत इति विप्रकृष्टा लक्षणा । विशेषणपक्षे त्ववयवविवचनेन शब्देनावयवः समर्प्यत इति सन्निकृष्टा लक्षणा । समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्तमाना दृष्टाः-पटग्रामादिषु ॥ अतश्च व्याप्तेर्हेतोः "ओमित्येतदक्षरम्" इत्येतस्य "उद्गीथम्" इत्येतद्विशेषणमिति समञ्जसमेतन्निरवद्यमित्यर्थः ॥ ९ ॥ इति व्याप्त्यधिकरणम् ॥ ( ४ ) ॥

रत्नप्रभा ।

इत्युक्ते सर्ववेदव्याप्य ओंकारः इहोपास्तौ प्रसज्येत । तन्निरासार्थमुद्गीथावयवत्वं विशेषणं समञ्जसमित्यर्थः ॥ अध्यासपक्षे तद्बुद्धिविषयत्वगुणयोगरूपः सम्बन्धः कल्प्य इति विप्रकृष्टा लक्षणा । अवयवलक्षणा तु सन्निकृष्टा । अवयवावयविसम्बन्धस्य क्लृप्तत्वात् । पटावयवे दग्धे पटो दग्ध इति लोके प्रयोगाच्च । नामादौ ब्रह्मशब्दस्य तु अगत्या ब्रह्मबुद्धिग्राह्यत्वगुणलक्षणाऽऽश्रिता । तत्र प्रतीकोपास्तेर्विवक्षितत्वात् । इह तु प्रतीकोपास्तिविधिकल्पने आप्त्यादिगुणकोङ्कारे प्राणदृष्टिविधाने च वाक्यभेदः स्यात् ॥ अतः सर्ववेदव्याप्योङ्कारनिरासेन ॐकारे प्राणदृष्टिविधानार्थं विशेषणमेव समञ्जसम् । कल्पनालाघवादिति

भामती ।

कदेशदाहे । अध्यासे तु लक्षणा फलकल्पना च । तथाहि आप्त्यादिगुणकप्रणवोपासनादिदमुद्गीथतोपासनं प्रणवस्यान्यत् । न चात्राप्त्यादि उपासनेष्विव फलं श्रूयते । तस्मात् कल्पनीयम् । उद्गीथसंबन्धिप्रणवोपासनाधिकारपरे वाक्ये नायं दोषः । अपि च गौण्या वृत्तेर्लक्षणा वृत्तिर्बलीयसी लाघवात् । लक्षणाया हि लक्षणीयपरत्वं पदस्य तस्यैव वाक्यार्थान्तरभावात् । यथा गंगायां घोष इति लक्ष्यमाणस्य तीरस्य वाक्यार्थेऽन्तर्भावोऽधिकरणतया गौर्वाहीक इत्यत्र तु गोसंबन्धितिष्ठन्मूत्रपुरीषादिलक्षणया न तत्परत्वं गोशब्दस्य । अपि तु तत्कक्षाध्यवसिततद्गुणयुक्तवाहीकपरत्वमिति गौण्या वृत्तेर्दुर्बलत्वं तदिदमुक्तं—लक्षणायामपि त्विति । गौण्यपि वृत्तिर्लक्षणावयवत्वाल्लक्षणोक्ता । यद्यपि वैश्वदेवीपदमामिक्षायां प्रवर्तते तथाप्यर्थभेदः स्फुटतरः । आमिक्षापदं हि रूपेणामिक्षायां प्रवर्तते । वैश्वदेवीपदं तु तस्यामेव विश्वदेवविशिष्टायाम् । एवं हि विज्ञानानन्दयोरपि स्फुटतरः प्रवृत्तिनिमित्तभेदः सत्यपि ब्रह्मण्यैकार्थ्ये ।

आनन्दगिरीय—न्यायनिर्णयः ।

शब्दस्यावयवे लक्षणामंगीकरोति—सत्यमिति । अध्यासपक्षवदयमपि तर्हि पक्षो नोपादेयः स्यादित्याशंक्याऽऽह—लक्षणायामिति । पक्षद्वये तुल्यायामपि लक्षणायामध्यासपक्षमुपेक्ष्य विशेषणपक्षमाद्रियामहे तत्र लक्षणार्थस्य वाक्यार्थान्वयित्वेन लक्षणायाः संनिकृष्टविषयतया बलीयस्त्वात् । अध्यासे तु गौणी धीरसाविर्युक्तत्वात् । लक्ष्यमाणगुणवत्येकस्मिन्नितरशब्दस्यावसानाल्लक्षणाया विप्रकृष्टविषयत्वेन दौर्बल्यादित्यर्थः । अध्यासपक्षे लक्षणाया विप्रकृष्टविषयत्वं स्पष्टयति—अध्यासेति । सिद्धान्ते लक्षणायाः संनिकृष्टविषयत्वेन प्रबलत्वं प्रकटयति—विशेषणेति । अवयवविवचनेन शब्देनावयवलक्षणाया लौकिकत्वाभावं प्रत्याह—समुदायेष्विति । पटो दग्धो ग्रामो दग्ध इति तदेकदेशदाहेऽपि समुदायशब्दो लक्षणयाऽवयवे प्रयुज्यते तथोद्गीथशब्दोऽपि द्वितीयभक्त्यवयवेऽक्षरे लक्षणया वर्तिष्यते न चाक्षरस्योद्गीथावयवत्वं तदुपासनं च विधेयमिति वाक्यभेदः । विशिष्टाक्षरानुवादेनोपास्तेरेव तत्तद्गुणवत्यास्तत्तत्फलविशिष्टायाः समस्तेन वाक्येन विधानादिति भावः । उक्तहेत्वनुवादेनावशिष्टं सूत्रपदं व्याकुर्वन्विशेषणपक्षस्य निरवद्यत्वमुपसंहरति—अतश्चेति ॥ ९ ॥ ( ४ ) ॥ ओंकारस्योद्गीथगुणकस्यैवोपास्यते-

## सर्वाभेदादन्यत्रेमे ॥ १० ॥ ( ५ ) ॥

वाजसनेयिनां छन्दोगानां च प्राणसंवादे श्रैष्ठ्यगुणान्वितस्य प्राणस्योपास्यत्वमुक्तम् । वागादयोऽपि तत्र वसिष्ठत्वादिगुणान्विता उक्ताः । ते च गुणाः प्राणे पुनः प्रत्यर्पिताः । "यद्वा अहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसि" [ बृ० ६ । १ । १४ ] इत्यादिना । अन्येषामपि तु शाखिनां कौषीतकिप्रभृतीनां प्राणसंवादेषु "अथातो निःश्रेयसादानमेता ह वै देवता अहंश्रेयसे विवदमानाः" [ कौषी० २ । १४ ] इत्येवञ्जातीयकेषु प्राणस्य श्रैष्ठ्यमुक्तं, न त्विमे वसिष्ठत्वादयो गुणा उक्ताः । तत्र संशयः—किमेते वसिष्ठत्वादयो गुणाः क्वचिदुक्ता अन्यत्राप्यस्येरन्—उत—नास्येरन्निति । तत्र प्राप्तम् तावत्—नास्येरन्निति ॥ कुतः ॥ एवंशब्दसंयोगात् ।

रत्नप्रभा ।

सिद्धम्॥९॥(४)॥ सर्वाभेदादन्यत्रेमे॥विषयं वक्तुं सम्मतमर्थमाह—वाजसनेयिनामिति ॥ वाचो वसिष्ठत्वं गुणः । वाग्मिनः सुखवासदर्शनात् । चक्षुषः प्रतिष्ठा गुणः । चक्षुष्मतः पादप्रतिष्ठादर्शनात् । श्रोत्रं सम्पत्त्वगुणकम् । श्रवणात् सर्वार्थसम्पत्तेः । मन आयतनत्वगणम् । तस्य वृत्तिद्वारा सर्वभोग्याश्रयत्वात् । ते च गुणाः प्राणस्य श्रैष्ठ्यं निश्चित्य वागादिभिस्तस्मिन्नर्पिता इति शाखाद्वयसम्मतोऽर्थः ॥ विषयमाह—अन्येषामित्यादिना ॥ निःश्रेयसस्य श्रैष्ठ्यस्य आदानं निर्धारणं प्रस्तूयत इत्यर्थः ॥ देवताः वागादयः अहंश्रेयसे स्वस्वश्रैष्ठ्यायेत्यर्थः ॥ एवंशब्दाच्छ्रैष्ठ्यगुणकप्राणप्रत्यभिज्ञानाच्च संशयमाह—तत्रेति ॥ गुणानामनुपसंहारोपसंहारावेव पूर्वोत्तरपक्षयोः फलम् । उद्गीथत्वविशेषणादोङ्कारस्य सर्ववेदव्याप्तिव्यावृत्तिवत् प्रकृतगुणमात्रग्राहकैवंशब्दाच्छाखान्तरगुणव्यावृत्तिरिति दृष्टान्तेन पूर्वपक्षयति—तत्र प्राप्तमिति ॥ यथा—

भामती ।

न च व्याख्यानमुभयोरपि प्रसिद्धार्थत्वाद्भिन्नार्थत्वाच्च । शेषमतिरोहितार्थम्॥९॥(४)॥ सर्वाभेदादन्यत्रेमे । एवंशब्दस्य सन्निहितप्रकारभेदपरामर्शार्थत्वात्साक्षाच्छन्दोपस्थापितस्य च संनिधानाच्छाखान्तरगतस्य

आनन्दगिरीय—न्यायनिर्णयः ।

त्युक्तं प्राणस्यापि तत्तदुक्तगुणमात्रस्यैव तत्रतत्रोपास्यतेत्याशंक्याऽऽह—सर्वेति । विषयं वक्तुमविगीतमर्थमाह—वाजसनेयिनामिति । शाखाद्वयेऽपि संमतमर्थान्तरमाह—वागिति । सा हि वसिष्ठत्वगुणा वाक् । वाग्मिनो हि लोके सुखिनो वसन्ति । चक्षुश्च प्रतिष्ठागुणं चक्षुष्मतः पादप्रतिष्ठादर्शनात् । संपद्गुणं श्रोत्रम् । तद्वत एव श्रवणार्थावधारणकर्मसंपत्तिदर्शनात् । आयतनगुणं मनः । भोग्यानां तत्र वृत्तिद्वारा निधानादित्युभयत्रापि श्रुतमित्यर्थः । तत्र तर्हि बहूनामुपास्यतेष्टेत्याशंक्याऽऽह—ते चेति । अन्वयव्यतिरेकाभ्यां प्राणाधीनत्वसिद्धेर्वागादिस्थितेः प्राणे स्वगुणा वागादिभिरर्पिता इत्यर्थः । शाखान्तरेऽपि संमतमर्थमाह—अन्येषामिति । निःश्रेयसं श्रैष्ठ्यं तस्याऽऽदानं निर्धारणं तदन्तरेणोपास्तेरयोगात्तत्प्रस्तुतमधिकृतमित्याह—अथेति । एता ह वै देवता वागाद्यभिमानिन्योऽहंश्रेयसे स्वकीयश्रैष्ठ्यायेति यावत् । अविगीतमर्थमुक्त्वा विगीतमर्थमाह—न त्विति । एवंशब्दाज्ज्यैष्ठ्यत्वादिगुणकप्राणप्रत्यभिज्ञानाच्च वसिष्ठत्वादिगुणेषु संशयमाह—तत्रेति । क्वचिदिति वाजसनेयकच्छान्दोग्योक्तिः । अन्यत्रेति कौषीतकिप्रभृतिशाखोच्यते । अत्र च वसिष्ठत्वादिगुणोपसंहारद्वारा वाक्यार्थधीहेतोरेव निरूपणात्पादादिसंगतिः । पूर्वपक्षे यथाश्रुति गुणव्यवस्था । सिद्धान्ते गुण्यनुरोधात्तदव्यवस्थेति मत्वा पूर्वपक्षयति—तत्रेति । विद्यैक्यादनुमानादुपसंहारे कथमनुपसंहारः स्यादिति शङ्कते—कुत इति । ओंकारस्य सर्वत्र प्राप्तावुद्गीथविशेषणादन्यव्यावृत्तिवदेवं विद्वानिति संनिहितालम्बनादेवंशब्दादसंनिहितस्य विद्यैक्यद्वाराऽनुमितस्य वसिष्ठत्वादेर्व्यावृत्तिर्युक्तेत्याह—एवंशब्देति । यथा प्राणो वागादिभ्यः श्रेष्ठः सिद्धस्तथा प्राणं श्रैष्ठ्य-

"अथो य एवैवं विद्वान्प्राणे निःश्रेयसं विदित्वा" [कौषी० २ । १४]इति हि तत्रतत्रैवंशब्देन वेद्यं वस्तु निवेद्यते । एवंशब्दश्च संनिहितावलम्बनो न शाखान्तरपरिपठितमेवञ्जातीयकं गुणजातं शक्नोति निवेदयितुम् ॥ तस्मात्स्वप्रकरणस्थैरेव गुणैर्निराकाङ्क्षत्वमिति ॥ एवं प्राप्ते प्रत्याह ॥ अस्येरन्निमे गुणाः क्वचिदुक्ता वसिष्ठत्वादयोऽन्यत्रापि ॥ कुतः ॥ सर्वाभेदात् । सर्वत्रैव हि तदेवैकं प्राणविज्ञानमभिन्नं प्रत्यभिज्ञायते । प्राणसंवादादिसारूप्यात् । अभेदे च विज्ञानस्य कथमिमे गुणाः क्वचिदुक्ता अन्यत्र नास्येरन् ॥ नन्वेवंशब्दस्तत्रतत्र भेदेनैवञ्जातीयकं गुणजातं वेद्यत्वाय समर्पयतीत्युक्तम् ॥ अत्रोच्यते ॥ यद्यपि कौषीतकिब्राह्मणगतेनैवंश-

---

रत्नप्रभा ।

वागादिभ्यः प्राणश्रैष्ठ्यं सिद्धम् अथो तथा यः एवं श्रेष्ठ्यगुणं विद्वानुपास्ते स प्राणे श्रैष्ठ्यं विदित्वा ध्यात्वा श्रेष्ठो भवतीति श्रुत्यर्थः ॥ एवञ्जातीयकविद्यैक्यात् प्राप्तमार्थिकं वसिष्ठत्वादिगुणजातमेवंशब्दो न गृह्णाति । श्रुतावलम्बित्वादिति प्राप्ते सिद्धान्तयति—**अस्येरन्निति** ॥ वाजसनेयिब्राह्मणे तावदेवंशब्देन वसिष्ठत्वादिगुणजातस्य प्राणविद्यासम्बन्धः सिद्धः । सैव विद्या कौषीतकिश्रुतौ प्रत्यभिज्ञायते । तथा च गुणानां गुण्यविनाभावेन—अर्थतः प्राप्तानामपि श्रुतगुणैरविरोधात् सहैव श्रुतमार्थं च गुणजातं श्रुत्य-

भामती ।

चानुक्रमतया संनिधानाभावान्न कौषीतकिप्राणसंवादवाक्ये प्राणस्य वसिष्ठत्वादिभिर्गुणैरुपास्यत्वमपि तु ज्येष्ठश्रेष्ठत्वमात्रेणेति पूर्वः पक्षः । सिद्धान्तस्तु—सत्यं संनिहितं परामृशति एवंकारो न तु शब्दोपात्तमात्रं संनिहितम् । किंतु यच्छब्दाभिहितार्थनान्तरीयकतया प्राप्तं तदपि हि बुद्धौ संनिहितं संनिहितमेव । यथा 'यस्य पर्णमयी जुहूर्भवति' इत्यव्यभिचरितक्रतुसमन्वयया जुह्वोपस्थापितः क्रतुः । तस्मादुपास्यफलप्रत्यभिज्ञानात्तदव्यभिचारिणः प्रकारभेदस्येहानुक्तस्यापि बुद्धौ संनिधानात्प्रकृतपरामर्शिनैवंकारेण परामर्शो युक्त इति सिद्धं कौषीतकिब्राह्मणगतेन तावदेवंकारेण शक्यते परामष्टुम् । तथाप्यभ्युपेत्यापि ब्रूम

आनन्दगिरीय–न्यायनिर्णयः ।

गुणं विद्वान्यः कश्चिदधिकृतः सन्नुपास्ते सोऽपि प्राणे श्रैष्ठ्यं विदित्वोपास्यप्राणात्मकत्वप्राप्त्या श्रैष्ठ्यान्वितो भवतीति श्रुत्यर्थः । एवंशब्दसंयोगेऽपि विद्याया वसिष्ठत्वादिगुणवत्त्वं किं न स्यात्तत्राऽऽह—**तत्र–तत्रेति** । वीप्सया तत्तद्विद्याप्रकरणमुच्यते । एकत्वाद्विद्याया वेद्यार्पकेणैवंशब्देन शाखान्तरोक्तानामपि वसिष्ठत्वादीनां परामर्शः स्यादित्याशंक्याऽऽह—**एवमिति** । शब्दस्य शाब्दमेवाऽऽनुमानिकादपि संनिहितमिति कुतः शाखान्तरीयगुणधीरित्यर्थः । विद्याया निराकांक्षत्वार्थं शाखान्तरीयमपि गुणजातमिह परामृष्टमित्याशंक्याऽऽह—**तस्मादिति** । पूर्वपक्षमनुभाष्यसिद्धान्तसूत्रमवतार्य प्रतिज्ञां व्याकरोति—**एवमिति** । क्वचिदुक्तानां गुणानां गुणानभिधायिशाखासूपसंहारे सर्वत्र तत्प्रसंगात्क्वचिदेवोपसंहारे निमित्तं पृच्छति—**कुत इति** । तत्र सौत्रं हेतुमुक्त्वा व्याचष्टे—**सर्वेति** । सर्वासु शाखासु प्राणज्ञानस्यैक्ये मानमाह—**अभिन्नमिति** । प्रत्यभिज्ञापकं दर्शयति—**प्राणेति** । आदिशब्दः श्रेष्ठत्वादिग्राही । ज्ञानैक्येऽपि यथाश्रुति गुणव्यवस्थामाशंक्योक्तम्—**अभेदे चेति** । गुण्याकृष्टगुणानां व्यवस्थोक्तिरनुमानविरुद्धेत्यर्थः । पूर्वपक्षबीजमनुभाषते—**नन्विति** । अनुमानस्य शब्दविरोधं परिहरन्नाह—**अत्रेति** । असंनिहितत्वादेवंशब्देन वसिष्ठत्वादिग्रहायोगान्नानुमानश्रुत्यविरुद्धेत्याशंक्याऽऽह—**यद्यपीति** । वाजसनेयिब्राह्मणस्थेन तावदेवंशब्देन वसिष्ठत्वादिगुणजातस्य प्राणधीसंबन्धः सिद्धः सैव कौषीतकिब्राह्मणेऽपि प्रत्यभिज्ञाता तया च तद्गते-

ब्देन वाजसनेयिब्राह्मणगतं गुणजातमसंशब्दितम् । असन्निहितत्वात् । तथापि तस्मिन्नेव विज्ञाने वाजसनेयिब्राह्मणगतेनैवंशब्देन तत्संशब्दितमिति न परशाखागतमप्यभिन्नविज्ञानावबद्धं गुणजातं स्वशाखागताद्विशिष्यते ॥ न चैवं सति श्रुतहानिरश्रुतकल्पना वा भवति । एकस्यामपि हि शाखायां श्रुता गुणाः श्रुता एव सर्वत्र भवन्ति। गुणवतो भेदाभावात्। न हि देवदत्तः शौर्यादिगुणत्वेन स्वदेशे प्रसिद्धो देशान्तरगतस्तद्देशस्थैरविभावितशौर्यादिगुणोऽप्यतद्गुणो भवति । यथा च तत्र परिचयविशेषाद्देशान्तरेऽपि देवदत्तगुणा विभाव्यन्ते,एवमभियोगविशेषाच्छाखान्तरेऽप्युपास्या गुणाः शाखान्तरेऽप्युपस्येरन् ॥ तस्मादेकप्रधानसम्बद्धा धर्मा एकत्राप्युच्यमानाः सर्वत्रैवोपसंहर्तव्या इति ॥ १० ॥ इति सर्वाभेदाधिकरणम् ॥ ( ५ ) ॥

## आनन्दादयः प्रधानस्य ॥ ११ ॥ (६) ॥

---

रत्नप्रभा ।

र्थाभ्यां सन्निहितत्वाविशेषात् कौषीतकिगतेनैवंशब्देन परामृश्यत इत्याह—तथापीति ॥ कौषीतकिश्रुतिस्थप्राणः, वसिष्ठत्वादिगुणकः, श्रेष्ठप्राणत्वात्, वाजिश्रुतिस्थप्राणवदित्यश्रुतगुणानुमाने सति श्रुतहानिर्नास्ति । अविरोधादित्युक्तं स्पष्टयति—न चैवं सतीति ॥ अपरिगणिता अपि गुणाः श्रुता एवेत्यत्र दृष्टान्तमाह—न हीति ॥ फलितमाह—तस्मादिति ॥ १० ॥ ( ५ ) ॥ आनन्दादयः प्रधानस्य ॥ ब्रह्मणो ज्ञेयस्यैक्यात् निर्विशेषत्वाच संशयमाह—

भामती ।

इत्याशयवता भाष्यकृतोक्तं—तथापि तस्मिन्नेव विज्ञाने वाजसनेयिब्राह्मणगतेनेति ॥ श्रुतहानिरिति । केवलस्य श्रुतस्य हानिरितरसहितस्य चाश्रुतस्य कल्पना न चेत्यर्थः। अतिरोहितमन्यत ॥ १० ॥ ( ५ ) ॥ आनन्दादयः प्रधानस्य।गुणवदुपासनाविधानस्य वास्तवगुणव्याख्यानाद्विवेकार्थमिदमधिकरणम्।यथैकस्य ब्रह्मणः संयद्वामत्वादयः सत्यकामादयश्च गुणा न संकीर्येरन् । एवमानन्दविज्ञानत्वादयो विभुत्वनित्यत्वादिभिर्गुणैः प्रदेशान्तरोक्तैर्न संकीर्येरन्। तत्संकरे वा संयद्वामत्वादयोऽपि सत्यकामादिभिः संकीर्येरन् । न हि ब्रह्मणो धर्मिणः सत्त्वे कश्चिद्विशेष इति पूर्वः पक्षः।राद्धान्तस्तु वास्तवविधेययोर्वस्तुधर्मतया चानुष्ठेयतया चाव्यवस्था-

आनन्दगिरीय–न्यायनिर्णयः ।

नापि वसिष्ठत्वाद्येवंशब्देन शक्यंपरामष्टुमित्यर्थः । शब्दस्य शब्दोक्तमेव संनिहितं न विजातीयानुमासिद्धमित्याशंक्याऽऽह—इति नेति । न हि शब्दस्य शाब्दमेव संनिहितं किंतु शब्दोक्तार्थनान्तरीयकतया प्राप्तमपि बुद्धिस्थं शब्दस्य संनिहितमेव पर्णमयीत्वस्य जुहूपस्थापितक्रतुवदतः संनिध्यविशेषादेवंशब्देन तस्यापि संग्रहसिद्धिरिति भावः । अनुमानतः शाखान्तरीयगुणोपसंहारे परिगणितत्वं श्रुतं हीयेताश्रुतानामपि गुणान्तराणामत्रोपसंहारादित्याशंक्यानुमायाः श्रुत्यविरुद्धार्थत्वान्मैवमित्याह—न चेति । तदेव व्यनक्ति—एकस्यामिति । उक्तमर्थं दृष्टान्तेन समर्थयति—न हीति । शब्दोक्तनान्तरीयकमपि संनिहितमेवेत्युक्तं दृष्टान्तेन स्पष्टयति—यथा चेति । देवदत्तैक्यात्तस्मिन्बुद्धिस्थे तद्गुणानां बुद्धिस्थतावज्ज्ञानैक्यात्तस्मिन्बुद्धिसंनिहिते तद्गुणा अपि तथा भवन्तीत्याह—एवमिति । अनुमानस्याविरोधे फलितमाह—तस्मादिति ॥ १० ॥ ( ५ ) ॥ प्राणस्य सविशेषत्वाद्युक्तः शाखान्तरीयवसिष्ठत्वाद्युपसंहारो ब्रह्मणो निर्विशेषत्वात्तद्धर्मैः स्वशाखागतैरेव प्रमितिसिद्धेर्नाऽऽनन्दाद्युपसंहारः स्यादित्याशंक्याऽऽह—आनन्दादय इति ।

ब्रह्मस्वरूपप्रतिपादनपरासु श्रुतिष्वानन्दरूपत्वं विज्ञानघनत्वं सर्वगतत्वं सर्वात्मकत्वमित्येवञ्जातीयका ब्रह्मणो धर्माः क्वचित्केचिच्छ्रूयन्ते । तेषु संशयः—किमानन्दादयो ब्रह्मधर्मा यावन्तो यत्र श्रूयन्ते तावन्त एव तत्र प्रतिपत्तव्याः, किं वा सर्वे सर्वत्रेति । तत्र यथाश्रुतिविभागं धर्मप्रतिपत्तौ प्राप्तायाम्—इदमुच्यते—"आनन्दादयः प्रधानस्य" ॥ ब्रह्मणो धर्माः सर्वे सर्वत्र प्रतिपत्तव्याः ॥ कस्मात् ॥ सर्वाभेदादेव । सर्वत्र हि तदेवैकं प्रधानं विशेष्यं ब्रह्म, न भिद्यते ॥ तस्मात्सार्वत्रिकत्वं ब्रह्मधर्माणां तेनैव पूर्वाधिकरणोदितेन देवदत्तशौर्यादिनिदर्शनेन ॥ ११ ॥ नन्वेवं सति प्रियशिरस्त्वादयोऽपि धर्माः सर्वे सर्वत्र संकीर्येरन् । तथाहि—तैत्तिरीयके-आनन्दमयमात्मानं प्रक्रम्याम्नायते "तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा" [ तै० उ० २ । ५ । १ ] इति ॥ अत उत्तरं पठति—

---

रत्नप्रभा ।

**तेषु संशय इति** ॥ पूर्वपक्षे सत्यादिपदानुपसंहारादर्थानवधारणं, सिद्धान्ते त्ववधारणमिति फलम् । प्राणस्य सविशेषत्वाद्युक्तः शाखान्तरीयवसिष्ठत्वाद्युपसंहारः । ब्रह्मणस्तु निर्विशेषत्वात् स्वशाखागतपदैरेव प्रमितिसिद्धेर्व्यर्थः पदान्तरोपसंहार इति प्रत्युदाहरणेन पूर्वपक्षः ॥ सिद्धान्तमाह—**इदमिति** ॥ आनन्दत्वसत्यत्वज्ञानत्वादिसामान्यानि ब्रह्मणि कल्पिता धर्माः । तेषां सर्वशाखासु **उपसंहारो नाम**—तद्वाचकानन्दादिपदानामेकवाक्यतयोच्चारणम्—आनन्दः, सत्यं, ज्ञानमनन्तं, ब्रह्म, शुद्धमद्वयमात्मेति । तानि च समाना-

भामती ।

व्यवस्थे व्यवतिष्ठेते । वस्तुधर्मो हि यावद्वस्तु व्यवतिष्ठते । नासावेकत्रोक्तोऽन्यत्रानुक्तो न ास्तीति शक्यं वक्तुम् । विधेयस्तु पुरुषप्रयत्नतंत्रः पुरुषप्रयत्नश्च यत्र यावद्गुणविशिष्टे ब्रह्मणि चोदितः स तावत्येवावतिष्ठते नाविहितमपि

आनन्दगिरीय-न्यायनिर्णयः ।

विषयं दर्शयति—**ब्रह्मेति** । ब्रह्मैक्यनिर्विशेषत्वाभ्यां संशयमाह—**तेष्विति** । वेद्यब्रह्मैक्यादेवंशब्दवदपवादकादृष्टेश्चौत्सर्गिको गुणोपसंहारः स्यादित्याशंक्य ब्रह्मैक्यादानन्दादीनां सर्वत्रोपसंहारे संयद्वामत्वादयोऽपि किमिति नोपसंह्रियेरन्नित्यभिप्रेत्य पूर्वपक्षयति—**तत्रेति** । संयद्वामत्वादीनामुपासनार्थमुक्तानां यथाविधि व्यवस्था । सत्यादयस्तु वस्तुतत्त्वप्रमित्यर्था यत्रयत्र वस्तुतत्त्वधीस्तत्रतत्रोपसंह्रियेरन्नित्युक्त्वा वाक्यार्थधीहेतोरेवात्र निरूपणात्पादादिसंगतिः । पूर्वपक्षे सत्याद्यनुपसंहारे तत्त्वाप्रमितिः । सिद्धान्ते तदुपसंहारे तत्प्रमितिसिद्धिरिति मत्वा सिद्धान्तमाह—**इदमिति** । शाखाभेदेनोदितानुदितहोमकार्यताव्यवस्थावदिहापि शब्दभेदेन व्यवस्था स्यादिति शंकते—**कस्मादिति** । पूर्वहेतुमिहाऽऽकृष्योदाहरति-**सर्वेति** । हेतुमेव विवृणोति—**सर्वत्रेति** । ब्रह्मणः सर्वत्रैक्ये फलितमाह—**तस्मादिति** । धर्मिणः सार्वत्रिकत्वेऽपि धर्माणां यथाश्रुति व्यवस्था स्यादित्याशंक्याऽऽह—**तेनेति** । सत्यज्ञानादयो मिथो विशेषणविशेष्यभूता विरुद्धानृतजडादिभ्रान्तिं निवर्तयन्तः सत्त्वादिपरापरसामान्याधारभूतामेकामानन्दव्यक्तिं लक्षयन्ति । न चैकस्मादेव पदादीदृशं ब्रह्म सिध्यति पदमात्रप्रयोगे विरोधाभावाल्लक्षणानुत्थानात्प्रयोक्तव्ये पदान्तरे संभावितसमस्तभ्रान्तिनिरसनसमर्थं पदजातं प्रयोक्तव्यमित्यारोपितभ्रान्तिनिवृत्त्यर्थं परशाखीयमपि पदवृन्दमत्रोपसंहर्तव्यमिति भावः ॥ ११ ॥ आनन्दमयस्य ब्रह्मणः सर्वत्राभेदात्तद्धर्मत्वेनाऽऽनन्दादिवत्प्रियशिरस्त्वादयोऽपि तत्रतत्र प्रसज्येरन्नो चेदानन्दादयोऽपि सार्वत्रिका न स्युरिति शङ्कते—**नन्विति** । ब्रह्मधर्माणां सर्वत्र संकरे सतीति यावत् । ब्रह्मधर्मतैव तेषामसिद्धेत्याशंक्याऽऽह—**तथाहीति** । सूत्रेणोत्तरमाह—**अत इति** ।

**प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥**

प्रियशिरस्त्वादीनां धर्माणां तैत्तिरीयके आम्नातानां नास्त्यन्यत्र प्राप्तिः । यत्कारणं प्रियं मोदः प्रमोद आनन्द इत्येते परस्परापेक्षया भोक्तन्तरापेक्षया चोपचितापचितरूपा उपलभ्यन्ते । उपचयापचयौ च सति भेदे सम्भवतः । निर्भेदं तु ब्रह्म । "एकमेवाद्वितीयम्" इत्यादिश्रुतिभ्यः । न चैते प्रियशिरस्त्वादयो ब्रह्मधर्माः कोशधर्मास्त्वेते इत्युपदिष्टमस्माभिः "आनन्दमयोऽभ्यासाद्" [ व्या० सू० १ । १ । १२ ] इत्यत्र ॥ अपि च परस्मिन्ब्रह्मणि चित्तावतारोपायमात्रत्वेनैते परिकल्प्यन्ते, न द्रष्टव्यत्वेन । एवमपि सुतरामन्यत्राप्राप्तिः प्रियशिरस्त्वादीनाम् । ब्रह्मधर्मास्त्वेतान्कृत्वा न्यायमात्रमिदमाचार्येण दर्शितं-प्रियशिरस्त्वाद्यप्राप्तिरिति । स च न्यायोऽन्येषु निश्चितेषु ब्रह्मधर्मेषूपासनायोपदिश्यमा-

रत्नप्रभा ।

धिकरणानि पदानि विरुद्धधर्मत्यागेन सर्वाधिष्ठानभूतामेकामखण्डव्यक्तिं लक्षयन्ति ॥ न चैकेनैव पदेन लक्ष्यसिद्धेः पदान्तरं व्यर्थमिति वाच्यम् । एकस्मिन् पदे विरोधाभावेन लक्षणानवतारात् ॥ यद्यपि पदद्वयेऽपि लक्षणाऽवतरति । तथापि "आनन्दो ब्रह्म" इत्युक्ते दुःखत्वाल्पत्वभ्रान्तिनिरासेप्यसत्त्वजडत्वादिभ्रमो भवेत् ॥ अतस्तन्निरासार्थं सत्यज्ञानादिपदानि प्रयोक्तव्यानि ॥ न च भ्रमस्यानवधित्वाद्वाक्यमपर्यवसितं स्यादिति वाच्यम् ॥ सच्चिदानन्दात्मकं सर्वधर्मशून्यमद्वयमविकल्पं ब्रह्माहमिति विशेषदर्शने सर्वभ्रमनिरासात् । तच्च विशेषदर्शनं यावद्भिः पदैर्भवति, तावन्ति पदान्युपसंहर्तव्यानीति भावः ॥ ११ ॥ ब्रह्मैक्याच्चेदानन्दत्वादिधर्माणां सर्वत्र प्राप्तिः, तर्हि सगुणब्रह्मविद्यागतधर्मप्राप्तिरपि स्यादिति शङ्कानिरासार्थं सूत्रं व्याचष्टे-प्रियेति ॥ पुत्रदर्शनसुखं प्रियं, तद्वार्तादिना मोदः, तस्य विद्याद्यतिशये प्रमोद इत्येवं तारतम्यवन्तो धर्मास्त्वद्वये ज्ञेये न प्राप्नुवन्ति । तेषामब्रह्मस्वरूपाणां ब्रह्मज्ञानानुपयोगादिति भावः ॥ तेषां ब्रह्मधर्मत्वं चासिद्धमित्याह-न चैत इति ॥ ब्रह्मणि चित्तावतारोपायत्वेऽपि तेषां प्राप्तिः स्यादित्याशङ्क्याह-एवमपीति ॥ अज्ञेयत्वादेषां न ज्ञेये ब्रह्मणि प्राप्तिरित्यर्थः ॥ किमर्थं तर्हि सूत्रमित्यत आह-ब्रह्मधर्मास्त्विति ॥ ब्रह्मधर्मानिति कृत्वा चिन्ताफलमाह-स चेति ॥ ज्ञेये बाह्यधर्माणामनु-

भामती ।

गुणं गोचरीकर्तुमर्हति । तस्य विधितन्त्रत्वाद्विधेश्च व्यवस्थानात् । तस्मादानन्दविज्ञानादयो ब्रह्मतत्त्वात्मतयोक्ता

आनन्दगिरीय-न्यायनिर्णयः ।

तत्र प्रतिज्ञां विभजते-प्रियेति । हेतुं व्याकरोति-यदिति । इष्टवस्तुसामान्यासिक्तं प्रीतिमात्रं प्रियम् । पुत्रादिविशेषलाभकृतो हर्षविशेषो मोदः । स एव प्रकृष्टः सन्प्रमोदः । सुखसामान्यमानन्द इत्येवमेते परस्परापेक्षयोपचयापचयरूपा भोक्तृभेदाच्च तथात्वभाजो जीवेषु सुखादिवैचित्र्यदृष्टेरित्यर्थः । तेषामेवंरूपत्वोपलम्भेऽपि किमायातमित्याशंक्याऽऽह-उपचयेति । तर्हि ब्रह्मण्यपि भेदोऽस्तु नेत्याह-निर्भेदं त्विति । अतो यत्रयत्र ब्रह्म प्रतिपाद्यं तत्रतत्र प्रियशिरस्त्वादीनां न प्राप्तिरिति शेषः । ब्रह्मधर्मत्वमेषामुपेत्योक्तं तदेव नास्तीत्याह-न चेति । आनन्दमयस्य ब्रह्मत्वे कथं तद्धर्माणामेषामब्रह्मधर्मतेत्याशंक्याऽऽनन्दमयाधिकरणे वृत्तं स्मारयति-कोशेति । इतश्च प्रियशिरस्त्वादीनां ब्रह्मवाक्ये न प्राप्तिरित्याह—अपि चेति । अस्तु तर्हि चित्तावतारोपायत्वेनैव सर्वत्र ब्रह्मवाक्ये तत्प्राप्तिस्तत्राऽऽह-एवमपीति । तेषां ब्रह्मणि चित्तावतारोपायत्वेऽपि न ब्रह्मवाक्ये सर्वत्र प्राप्तिर्द्रष्टव्यत्वेनानुपदेशात्, अब्रह्मधर्मत्वाच्च । चित्तावतारस्तु तत्रतत्रोक्तैरेवधर्मैः संभवान्नैषामुपसंहारं कांक्षतीत्यर्थः । अब्रह्मधर्मत्वेनैषामुपसंहारशङ्काभावादनर्थकमिदं सूत्रमित्याशंक्याऽऽह-ब्रह्मेति । कृत्वाचिन्ताफलमाह-स चेति । तत्रापि ब्रह्मैक्यात्किमित्यन्योन्यत्रोपसंहारो

नेषु नेतव्यः संयद्वामत्वादिषु, सत्यकामत्वादिषु च । तेषु हि सत्यप्युपास्यब्रह्मण एकत्वे प्रक्रमभेदादुपासनाभेदे सति नान्योन्यधर्माणामन्योन्यत्र प्राप्तिः। यथा च–द्वे भार्ये एकं नृपतिमुपासाते चामरेणान्या, छत्रेणान्या । तत्र चोपास्यैकत्वेऽप्युपासनभेदे धर्मव्यवस्था च भवति, एवमिहापीति । उपचितापचितगुणत्वं हि सति भेदव्यवहारे सगुणे ब्रह्मण्युपपद्यते, न निर्गुणे परस्मिन्ब्रह्मणि ॥ अतो न सत्यकामत्वादीनां धर्माणां क्वचिच्छ्रुतानां सर्वत्र प्राप्तिरित्यर्थः ॥ १२ ॥

## इतरे त्वर्थसामान्यात् ॥ १३ ॥

इतरे तु आनन्दादयो धर्माः ब्रह्मस्वरूपप्रतिपादनायैवोच्यमाना अर्थसामान्यात्प्रतिपाद्यस्य ब्रह्मणो धर्मिण एकत्वात्सर्वे सर्वत्र प्रतीयेरन्निति वैषम्यम् । प्रतिपत्तिमात्रप्रयोजना हि त इति ॥ १३ ॥ इत्यानन्दाद्यधिकरणम् ॥ ( ६ )॥

## आध्यानाय प्रयोजनाभावात् ॥ १४ ॥ ( ७ ) ॥

काठके पठ्यते "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः" [ कठ० १।

---

रत्नप्रभा ।

पयोगादप्राप्तिरिति न्यायात् संयद्वामत्वादीनामप्राप्तिरिति सूत्रं व्याख्येयमित्यर्थः॥ज्ञानानुपयोगेऽपि ध्याने तेषां धर्माणामुपयोगादित्याशङ्क्याह–तेषु हीति ॥ ध्यानविधिपरतन्त्राणां धर्माणां यथाविधि व्यवस्थेत्यर्थः॥१२॥ संयद्वामत्वादिधर्मेभ्यः आनन्दादीनां वैषम्यं, ज्ञानोपयोगित्वादित्याह–इतरे त्विति॥ सत्यज्ञानानन्दात्मब्रह्मशब्दाः पञ्च सर्वत्रोपसंहर्तव्या इति सिद्धम्॥१३॥(६)॥आध्यानाय०॥वाक्यभेदाभेदानवधारणात् संशयमाह–

भामती ।

यत्रयत्र ब्रह्म श्रूयते तत्रतत्रानुक्ता अपि लभ्यन्ते । संयद्वामादयश्चोपासनाप्रयत्नविधिविषया यथाविध्यवतिष्ठन्ते न तु यथावस्त्विति सिद्धम् । प्रियशिरस्त्वादीनां तूपास्यत्वमारोप्य न्यायो दर्शितः । तस्य तु संयद्वामादिरुक्तः । मोदनमात्रं मोदः प्रमोदः प्रकृष्टो मोदस्ताविमौ परस्परापेक्षावुपचयापचयौ ॥११॥१२॥ ॥ १३ ॥ ( ६ ) ॥ अध्यानाय प्रयोजनाभावात् ॥ इन्द्रियेभ्यः परा ह्यर्था इति । किमत्र सर्वे-

आनन्दगिरीय–न्यायनिर्णयः ।

न स्यादित्याशंक्याऽऽह–तेष्विति । तेषां ध्यानार्थमुक्तानां विधिपारतन्त्र्याद्यत्र यावद् गुणविशिष्टतयोपास्तिर्विधीयते तत्र तावतामेव ध्येयता नान्येषामित्यन्योन्यत्रानुपसंहार इत्यर्थः । उपास्यैक्ये कथमुपास्तिभेदो धर्मभेदो वेत्याशंक्याऽऽह—यथा चेति । विध्यधीनेषु धर्मेषु विधिमतिक्रम्य संकरो नास्तीत्युपसंहर्तुमितिशब्दः । सगुणवन्निर्गुणेऽपि ब्रह्मत्वाविशेषादुपसंहारानुपसंहारव्यवस्था किं न स्यात्तत्राऽऽह–उपचितेति । सगुणनिर्गुणयोर्वैषम्यमुक्त्वा सूत्रे विवक्षितं वदन्नुपसंहरति–अतो नेति ॥ १२ ॥ विधिपरतन्त्रेभ्यः सत्यकामत्वादिभ्यो वस्तुधर्मोणामानन्दादीनां ब्रह्मतत्त्वमित्युपयोगितया यत्रयत्र ज्ञेयं ब्रह्मोच्यते तत्रतत्र प्राप्तिरिति विशेषमाह–इतरे त्विति । सूत्रितं विशेषं विशदयति–इतरे त्वित्यादिना । ब्रह्मस्वरूपसिद्ध्यर्थमुच्यमानत्वमेवाऽऽनन्दादीनां वैषम्यार्थं कथयति–प्रतिपत्तीति । सत्यत्वज्ञानत्वानन्दत्वात्मत्वपूर्णत्वलक्षणाः पञ्च पदार्था ज्ञानाधिकारे सर्वत्रोपसंहर्तव्या इति वक्तुमितिशब्दः ॥ १३ ॥ ( ६ )॥ ब्रह्मस्वभावभूतोपसंहार्यधर्मोक्त्यनन्तरमस्वभावस्यानुपसंहार्यस्याप्यर्थादिपरत्वरूपधर्मस्य ब्रह्मप्रमित्युपायत्वं वदति–आध्यानायेति । विषयवाक्यं पठति–काठक इति । वाक्यभेदाभेदानिर्धारणेनार्थादीनधिकृत्य

३।१०] इत्यारभ्य "पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" [कठ० १।३।११] इति। तत्र संशयः-किमिमे सर्वे एवार्थादयस्ततस्ततः परत्वेन प्रतिपाद्यन्ते-उत-पुरुष एवैभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति। तत्र तावत-सर्वेषामेवैषां परत्वेन प्रतिपादनमिति भवति मतिः। तथाहि श्रूयते-इदमस्मात्परमिदमस्मात्परमिति॥ ननु बहुष्वर्थेषु परत्वेन प्रतिपिपादयिषितेषु वाक्यभेदः स्यात्॥ नैष दोषः॥ वाक्यबहुत्वोपपत्तेः। बहून्येव ह्येतानि वाक्यानि प्रभवन्ति बहूनर्थान्परत्वोपेतान्प्रतिपादयितुम्॥ तस्मात्प्रत्येकमेषां परत्वप्रतिपादनमिति॥ एवं प्राप्ते ब्रूमः॥ पुरुष एवैभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति युक्तं, न प्रत्येकमेषां परत्वप्रतिपा-

रत्नप्रभा।

**तत्रेति**॥ **पूर्वपक्षे** वाक्यभेदाद्विद्याभेदः,**सिद्धान्ते** वाक्यैक्याद्विद्यैक्यमिति फलम्। पूर्वत्र ब्रह्मस्वभावानामानन्दादीनामुपसंहार्याणां ब्रह्मज्ञानफलोपायत्वमुक्तम्। अत्र त्वब्रह्मभावस्य अर्थादिपरत्वस्य अनुपसंहार्यस्य अतदुपायत्वमुच्यत **इत्येकफलकत्वं सङ्गतिः**॥ तत्तत्परत्वविशिष्टत्वेनार्थादीनामपूर्वतया प्रतिपाद्यानां भेदाद् वाक्यभेदो न दोष इति **पूर्वपक्षः**। उत्सूत्रसिद्धान्तं प्रतिज्ञाय सौत्रं हेतुं व्याचष्टे-**पुरुष एवेति**॥ फलवत्त्वे सति अपूर्वत्वात् पुरुषस्यैव प्राधान्येन प्रतिपाद्यत्वम्। अफलार्थादीनां परत्वं तु तच्छेषत्वेनोच्यत इत्यर्थः॥ **किञ्च** "पुरुषान्न परं किञ्चित् सा काष्ठा" इति वेदः परनिषेधलिङ्गेन, सर्वबाधावधित्वलिंगेन

भामती।

षामेवार्थादीनां परत्वं प्रतिपिपादयिषितम्, आहो पुरुषस्यैव तत्प्रतिपादनार्थं चेतरेषां परत्वप्रतिपादनम्। तत्र प्रत्येकमर्थादिपरत्वप्रतिपादनश्रुतेः श्रूयमाणतत्तत्परत्वे च सम्भवति न तत्तदतिक्रमे सर्वेषामेकपरत्वाध्यवसानं न्याय्यम्। न च प्रयोजनाभावादसंभवः। सर्वेषामेव प्रत्येकं परत्वाभिधानस्याध्यानप्रयोजनत्वात्। तत्तदाध्यानानां च प्रयोजनवत्त्वस्मृतेः। तथाहि स्मृतिः—'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः। भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः॥ बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः। पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः॥ पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते।' इति। प्रामाणिकस्य वाक्यभेदस्याभ्युपेयत्वात् प्रत्येकं तेषामर्थादीनां परत्वपराण्येतानि वाक्यानीति प्राप्त उच्यते-इन्द्रियेभ्यः परा ह्यर्था इत्येष तावत्संदर्भो वस्तुतत्त्वप्रतिपादनपरः प्रतीयते, नाध्यानविधिपरः। तदश्रुतेः। तदत्र यत्प्रत्ययस्य साक्षात्प्रयोजनवत्त्वं दृश्यते तत्प्रत्ययपरत्वं सर्वेषाम्। दृष्टं च विष्णोः परमपदज्ञानस्य निखिलानर्थसंसारकारणाविद्योपशमः। तत्त्वज्ञानोदयस्य विपर्यासोपशमलक्षणत्वेन तत्रतत्र दर्शनात्। अर्थादिपरत्वप्रत्ययस्य तु न दृष्टमस्ति प्रयोजनम्। न च दृष्टे संभवति अदृष्टकल्पना न्याय्या। न च परमपुरुषार्थहेतु-

आनन्दगिरीय-न्यायनिर्णयः।

संशयमाह-**तत्रेति**। विद्याभेदाभेदप्रसंगेन वाक्यभेदाभेदयोस्तन्निबन्धनविद्याभेदाभेदयोर्वा चिन्तया वाक्यार्थधीहेतोरेव चिन्तनात्पादादिसंगतिः। पूर्वपक्षे वाक्यभेदाद्विद्याभेदः। सिद्धान्ते तदभेदात्तदभेद इत्यभिप्रेत्य पूर्वपक्षमाह—**तत्रेति**। तत्र हेतुमाह-**तथाहीति**। पूर्वपक्षमाक्षिपति-**नन्विति**। संभवत्येकवाक्यत्वे वाक्यभेदो दोषोऽत्र तु वाक्यभेद एवेति समाधत्ते—**नेति**। उपपत्तिमेवाऽऽह-**बहूनीति**। सर्वेषां प्रत्येकं परत्वोक्तिरफलेत्याशंक्य—"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः" इत्यादिस्मृतेर्ध्यानद्वारा प्रत्येकं परत्वोक्तेः सफलत्वसिद्धेरपूर्वार्थतया च प्रामाणिकस्य वाक्यभेदस्येष्टत्वात्प्रत्येकमर्थादीनां परत्वं प्रतिपाद्यमित्युपसंहरति-**तस्मादिति**। पूर्वपक्षमनूद्य सूत्राद्बहिरेव सिद्धान्तं प्रतिजानीते-**एवमिति**। पुरुषपरत्वस्य शक्तिविषयस्य तात्पर्यगम्यत्ववदर्थादिपरत्वानामपि शक्तिविषयत्वादपूर्वत्वाच्च तात्पर्यमेयत्वं किं

दनम् ॥ कस्मात् ॥ प्रयोजनाभावात ॥ न हीतरेषु परत्वेन प्रतिपन्नेषु किञ्चित्प्रयोजनं दृश्यते श्रूयते वा । पुरुषे त्विन्द्रियादिभ्यः परस्मिन्सर्वानर्थव्राताततीते प्रतिपन्ने दृश्यते प्रयोजनं मोक्षसिद्धिः ॥ तथा च श्रुतिः—"निचाय्य तं मृत्युमुखात्प्रमुच्यते" [ कठ० १ । ३ । १५ ] इति ॥ अपि च परप्रतिषेधेन, काष्ठादिशब्देन च,—पुरुषविषयमादरं दर्शयन्पुरुषप्रतिपत्त्यर्थैव पूर्वापरप्रवाहोक्तिरिति दर्शयति—आध्यानायेति ॥ आध्यानपूर्वकाय सम्यग्दर्शनायेत्यर्थः ॥ सम्यग्दर्शनार्थमेव हीहाऽऽध्यानमुपदिश्यते, न त्वाध्यानमेव स्वप्रधानम् ॥ १४ ॥

## आत्मशब्दाच्च ॥ १५ ॥

---

रत्नप्रभा ।

च,—पुरुषे तात्पर्यं दर्शयन् पूर्वस्मात्पूर्वस्मादपरस्यापरस्य परत्वोक्तिस्तदर्थेति दर्शयतीत्याह—**अपि चेति** ॥ अर्थादीनामत्रोक्तिः **आध्यानाय** तत्तत्परत्वध्यानपूर्वकं पुरुषदर्शनायैव । स्वतः प्रयोजनाभावादिति सूत्रं योजयति—**आध्यानायेति** ॥ १४ ॥ आत्मत्वादिलिंगैश्च पुरुष एव प्रतिपाद्य इत्याह—**आत्मशब्दाच्चेति** ॥ किञ्च "तद्विष्णोः परमं पदम्" "पुरुषान्न परं किंचिद्" इत्युपक्रमोपसंहारयोरैकरूप्यात् कल्पस-

भामती ।

परत्वे संभवति अवान्तरपुरुषार्थतोचिता । तस्माद् दृष्टप्रयोजनवत्त्वात् पुरुषपरत्वप्रतिपादनार्थोऽयं संदर्भ इति गम्यते । किंचादरादप्ययमेवास्यार्थ इत्याह—**अपि च परप्रतिषेधेनेति** । नन्वात्राध्यानविधिर्नास्ति तत्कथमुच्यते आध्यानायेत्यत आह—**आध्यानायेति** ॥ १४ ॥ **आत्मशब्दाच्च** । अनधिगतार्थप्रतिपादनस्वभावत्वात्प्रमाणानां विशेषतश्चागमस्य, पुरुषशब्दवाच्यस्य चात्मनः स्वयं श्रुत्यैव दुरधिगमत्वावधारणाद्वस्तुतश्च दुरधिगमत्वादर्थादीनां च सुगमत्वात्तत्परत्वमेवार्थादिपरत्वाभिधानस्येत्यर्थः । श्रुतेराशयातिशय इवाशयातिशयः । तत्तात्पर्यतेति यावत् । किंच, श्रुत्यन्तरापेक्षिताभिधानादप्येवमेव । अर्थादि-

आनन्दगिरीय—न्यायनिर्णयः ।

न स्यादिति शङ्कते—**कस्मादिति** । तात्पर्यमेयत्वनिमित्तफलाभावान्नार्थादिपरत्वानां तन्मेयतेति मत्वाऽऽह—**प्रयोजनेति** । कथं प्रयोजनाभावोक्तिरित्याशंक्यान्वयव्यतिरेकसिद्धं शास्त्रसिद्धं वा फलमिति विकल्प्याद्यं निराह—**न हीति** । द्वितीयं प्रत्याह—**श्रूयते चेति** । प्रकरणस्यास्य वस्तुपरत्वदृष्टेरुपास्तिविधिपरत्वायोगात्परमपुरुषार्थहेतुतत्त्वधीपरत्वे च संभवतीन्द्रियाद्युपास्त्यधीनस्मृतिसिद्धावान्तरपुमर्थपरत्वायोगान्न प्रत्येकमर्थादिपरत्वसिद्धिरित्यर्थः । पुरुषस्य परत्वधीरपि न फलवती परत्वधीत्वादर्थादिपरत्वधीवदित्यनुमानात्कथं त्वन्मतेऽपि पुरुषार्थहेतुफलत्वमित्याशंक्यानर्थशून्यतोपलक्षितानवच्छिन्नचिद्धातुविषयत्वात्पुरुषपरत्वदृष्टेरनर्थध्वंसफलत्वमनुभवसिद्धमित्याह—**पुरुषे त्विति** । अज्ञानमिथ्याधीशान्तेर्दृष्टफलत्वाददृष्टे सत्यदृष्टकल्पना न युक्तेति मत्वाऽऽह—**दृश्यत इति** । सत्यदृष्टकल्पना न युक्तेति विद्वदनुभवे विप्रतिपन्नं प्रति पुरुषपरत्वदृष्टेर्दृष्टफलत्वे श्रुतिमाह—**तथा चेति** । इतश्चास्य संदर्भस्य सर्वस्मात्परत्वेन पुरुषप्रमितिपरतेत्याह—**अपि चेति** । पुरुषान्न परमितिनिषेधलिंगेन सा काष्ठेति काष्ठाशब्देन बाधावधित्वेन परत्वोक्तिलिंगेन च पुरुषविषयमादरं तात्पर्यं दर्शयन्वेद इति यावत् । पूर्वापरप्रवाहोक्तिः पूर्वस्मात्पूर्वस्मादपरस्यापरस्य परत्वोक्तिः । ध्यानविधेरिहाभावात्परपुरुषमितेर्ध्यानार्थता कथं सूत्रितेत्याशंक्य सूत्रावयवं व्याचष्टे—**आध्यानेति** । निर्गुणब्रह्मप्रमितिरपि ध्यानार्था ब्रह्ममितित्वात्सगुणब्रह्ममितिवदित्याशंक्य ततस्तु तमित्यादिश्रुतिविरोधमाह—**सम्यगिति** ॥ १४ ॥ सर्वस्मात्परत्वेन पुरुषस्यैवात्र प्रतिपाद्यत्वे हेत्वन्तरमाह—**आत्मेति** ।

इतश्च पुरुषप्रतिपत्त्यर्थैवेयमिन्द्रियादिन्द्रियादिप्रवाहोक्तिः । यत्कारणं-"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते॥ दृश्यते त्वग्र्यया बुद्धया सूक्ष्मया सूक्ष्मदर्शिभिः" [ कठ० १ । ३ । १२ ] इति प्रकृतं पुरुषमात्मेत्याह ॥ अतश्चानात्मत्वमितरेषां विवक्षितमिति गम्यते॥ तस्यैव च दुर्विज्ञानतां, सुसंस्कृतमतिगम्यतां च,-दर्शयति। तद्विज्ञानायैव च "यच्छेद्वाङ्मनसी प्राज्ञः" [ कठ० १ । ३ । १३ ] इत्याध्यानं विदधाति । तद्व्याख्यातम् "आनुमानिकमप्येकेषाम्" [ व्या० सू० १ । ४ । १ ] इत्यत्र ॥ एवमनेकप्रकार आशयातिशयः श्रुतेः पुरुषे लक्ष्यते, नेतरेषु ॥ अपि च "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" [ कठ० १ । ३ । ९ ] इत्युक्ते-किं तदध्वनः पारं विष्णोः परमं पदमित्यस्यामाकाङ्क्षायामिन्द्रियाद्यनुक्रमणात्परमपदप्रतिपत्त्यर्थ एवायमायास इत्यवसीयते ॥ १९ ॥ इत्याध्यानाधिकरणम् ॥ ७ ॥

## आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥ ( ८ ) ॥

ऐतरेयके श्रूयते-"आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्स ईक्षत लोकान्नु सृजा इति ॥ १ ॥ स इमाँल्लोकानसृजताम्भो मरीची-

रत्नप्रभा ।

त्ववदेकपुरुषपरत्वेनैकवाक्यत्वनिश्चये सति वाक्यभेदफलभेदकल्पना न युक्ता । गौरवादित्याह-अपि चेति ॥ १९ ॥ ( ७ ) आत्मगृहीतिरिति ॥ मिषत् चलत् । लोकानाह-अम्भ इति ॥ अम्भः-स्वर्गः, मरीचयः-अन्तरिक्षलोकः, मरः-मर्त्यलोकः,आपः-पाताललोक इत्यर्थः॥ आत्मशब्दस्य ब्रह्मणि,

भामती ।

परत्वे तु स्वरूपेण विवक्षिते नापेक्षितं श्रुतिराचष्टे इत्याह-अपि च सोऽध्वनः पारमाप्नोतीति ॥१९॥ ( ७ )॥ आत्मगृहीतिरितरवदुत्तरात् । श्रुतिस्मृत्योर्हि लोकसृष्टिः परमेश्वराधिष्ठिता परमेश्वरहिरण्यगर्भ-

आनन्दगिरीय-न्यायनिर्णयः ।

सूत्रस्थं चशब्दं व्याकरोति-इतश्चेति । तदेव स्फुटयन्नात्मशब्दं विभजते-यदिति । आत्मनोऽप्रकाशमानत्वं स्वाभाविकमिति शङ्कां वारयति-दृश्यते त्विति । तस्यां श्रुतावेव आत्मेत्यस्यार्थमाह-प्रकृतमिति । सूत्रगतपञ्चम्या विवक्षितमर्थमाह-अतश्चेति । अवशिष्टपूर्वार्धस्यार्थमाह-तस्येति । उत्तरार्धतात्पर्यमाह-संस्कृतेति । चशब्दसूचितं हेत्वन्तरमाह-तदिति । वागादिनियमनमात्रं मन्त्रे प्रतीतं न तु ध्यानविधिरित्याशंक्याऽऽह-तद्व्याख्यातमिति । अज्ञातार्थज्ञापनस्वाभाव्यादागमस्याऽऽत्मनश्च श्रुत्यैव दुर्ज्ञानत्वोक्तेर्वस्तुतश्च तथात्वादर्थादीनां च सुगमत्वात्तेषां परत्वोक्तिरपि तत्परैवेत्यभिप्रेत्योपसंहरति-एवमिति । उपक्रमोपसंहारयोरैकरूप्यादपि पुरुषपरत्वे तात्पर्यं संदर्भस्य सिद्धमित्याह-अपि चेति । 'तद्विष्णोः परमं पदम्' । 'पुरुषान्न परं किंचित्' इत्युपक्रमोपसंहारयोरैकरूप्यात्फलवति सर्वस्मात्परत्वे पुरुषस्य प्रतिपाद्ये सत्यवान्तरवाक्यानां तदेकवाक्यतायोगे वाक्यभेदादिकल्पने गौरवात्परपुरुषपरत्वमेव संदर्भस्येति हेत्वन्तरमेव स्फोरयति-स इति । प्रमितिसिंतत्वाच्च पुरुषस्यैव प्रमेयतेत्याह-किमिति । अर्थानामिन्द्रियाकर्षकत्वेन परत्ववत्परस्मिन्नात्मनि सर्वनियम्याकर्षकत्वेन परत्वं निश्चितमिति मत्वाऽऽह-इन्द्रियादीति॥१९॥(७) वाक्यभेदभयादर्थादीनां पृथक्प्रतिपाद्यत्वे प्रत्युक्ते देवादिकर्तृत्वेन प्रकृतात्परब्रह्मणोऽन्यो लोकस्रष्टा परो नोपेयो वाक्यभेदप्रसङ्गादित्याशंक्याऽऽह-आत्मेति । विषयवाक्यमुदाहरति-ऐतरेयक इति । आत्मशब्दस्य

मेरमापः'' [ ऐ० १ । १ । २ ] इत्यादि । तत्र संशयः–किं पर एवात्मा इहात्मशब्देनाभिलप्यते–उत–अन्यः कश्चिदिति ॥ किं तावत्प्राप्तम् ॥ न परमात्मेहात्मशब्दाभिलप्यो भवितुमर्हतीति ॥ कस्मात् ॥ वाक्यान्वयदर्शनात् ॥ ननु वाक्यान्वयः सुतरां परमात्मविषयो दृश्यते । प्रागुत्पत्तेरात्मैकत्वावधारणाद्, ईक्षणपूर्वकस्रष्टृत्ववचनाच्च ॥ नेत्युच्यते ॥ लोकसृष्टिवचनात् । परमात्मनि हि स्रष्टरि परिगृह्यमाणे महाभूतसृष्टिरादौ वक्तव्या लोकसृष्टिस्त्विहादावुच्यते। लोकाश्च महाभूतसन्निवेशविशेषाः॥

---

रत्नप्रभा ।

सूत्रात्मनि च, प्रयोगात् संशयमाह–तत्रेति ॥ अत्र पूर्वपक्षे वाक्यस्य सूत्रोपास्तिपरत्वात् परब्रह्मधर्माणामानन्दादीनामैतरेयकेऽनुपसंहारः, सिद्धान्ते ब्रह्मपरत्वादुपसंहार इति फलम् । पुरुषवाक्याद्भेदप्रसङ्गाद्दर्शादिवाक्यानां नार्थादिप्रतिपादकत्वमित्युक्तं, तद्वदिहापि प्रजापते रेतो देवा इति पूर्वस्मात् प्रजापतिवाक्याद्भेदप्रसङ्गाद् ''आत्मा वा'' इत्यादिवाक्यस्य न ब्रह्मपरत्वमिति दृष्टान्तेन पूर्वपक्षयति–**न परमात्मेत्यादिना** ॥ वाक्यस्य प्रजापतौ तात्पर्यदर्शनादित्यर्थः ॥ पूर्वपक्षमाक्षिप्य लोकस्रष्टृत्वलिङ्गात्प्रजापतौ वाक्यान्वय इत्याह–**नन्वित्यादिना** ॥ लोका एव महाभूतानीत्यत आह—**लोकाश्चेति** ॥ लोकशब्दस्य

भामती ।

कर्तृकोपलब्धा सेयमिह महाभूतसर्गमनभिधाय प्राथमिकी लोकसृष्टिरुपलभ्यमानावान्तरेश्वरकार्या प्रागुत्पत्तेरात्मैकत्वावधारणं चावान्तरेश्वरसंबन्धितया गमयति।पारमेश्वरसर्गस्य महाभूताकाशादित्वादस्य च तद्वैपरीत्यात्। अस्ति हि तस्यैवैकस्य विकारान्तरापेक्षयाग्रत्वमस्ति चेक्षणम्।अपि चैतस्मिन्नैतरेयके पूर्वस्मिन्प्रकरणे प्रजापतिकर्तृकैव लोकसृष्टिरुक्ता । तदनुसारादप्येतदेव विज्ञायते । अपि च ताभ्यो गामानयदित्यादयश्च व्यवहाराः श्रुत्योक्ता विशेषवत्त्वपरमात्मसुप्रसिद्धाः । ततोऽप्यवान्तरेश्वर एव विज्ञायते । आत्मशब्दप्रयोगश्चात्रापि दृष्टस्तस्मादपरात्माभिलापोऽयमिति प्राप्त उच्यते–परमात्मनो गृहीतिरिह यथा इतरेषु 'सृष्टिश्रवणेषु 'एतस्मादात्मन आकाशः संभूतः' इत्यादिषु । तस्मादुत्तरात्स ऐक्षतेतीक्षणपूर्वकस्रष्टृत्वश्रवणादात्मेत्यवधारणाच्च । एतदभिसंहितम्–मुख्यं तावत् सर्गात्प्राक्केवलत्वमात्मपदत्वं स्रष्टृत्वं च परमेश्वरस्यात्र भवतः । तदसत्यामनुपपत्तौ नान्यत्र व्याख्यातुमुचितम् । न च महाभूतसृष्ट्यनभिधानेन लोकसृष्ट्यभिधानमनुपपत्तिबीजम् । आकाशपूर्विकायां वस्तुतो ब्रह्मणः सृष्टौ यथा क्वचित्तेजःपूर्वकसृष्ट्यभिधानं न विरुध्यते 'एतस्मादात्मन

आनन्दगिरीय–न्यायनिर्णयः ।

परत्र सूत्रे च प्रयोगात्तं विषयीकृत्य संशयमाह—**तत्रेति** । आत्मशब्दस्य वाक्यार्थज्ञानोपयुक्तस्य परमात्मविषयत्वोक्त्या सत्यत्वादीनां तत्प्रमित्युपयोगिनामुपसंहारसिद्धेरस्ति पादादिसंगतिः । आत्मशब्दस्यापरविषयत्वे तदर्थप्रमित्यर्थं पूर्वपक्षे सत्याद्यनुपसंहारः । सिद्धान्ते तस्य परविषयत्वे तत्प्रमित्यर्थं तदुपसंहार इत्यभिप्रेत्य विमृश्य पूर्वपक्षयति–**किमिति** । परशब्दवाच्यत्ववदात्मशब्दवाच्यत्वमपि तस्यैव किं न स्यादित्याह–**कस्मादिति** । आत्मविषयवाक्यस्य सूत्रे तात्पर्यात्तद्विद्याऽत्राभीष्टा तन्न गुणोपसंहारोऽस्तीत्याह—**वाक्येति** । पूर्वपक्षमाक्षिपति–**नन्विति** । सुतरामित्युक्तमेव हेतुद्वयोक्त्या प्रकटयति—**प्रागिति** । लोकस्रष्टृत्वलिंगाद्वाक्यान्वयः सूत्रविषयो न परात्मगामीत्याह–**नेतीति** । परस्यापि लोकस्रष्टृत्वं सर्वकारणत्वादिति लिंगस्यान्यथासिद्धिमाशंक्याऽऽह–**परमात्मनीति** । तत्कर्तृकसर्गस्याऽऽकाशादिमहाभूतादित्वादस्य चातथात्वदृष्टेः सूत्रस्य च लोककर्तृकतायाः श्रुतिस्मृतिसिद्धत्वान्नात्र परगृहीतिरित्यर्थः । लोकशब्देनात्र महाभूतानामेवोक्तेः सृष्टेरिहापि महाभूतादित्वमिष्टमित्याशंक्याऽऽह–**लोकाश्चेति** । महाभूतसंनिवेश-

तथा चाम्भःप्रभृतींल्लोकत्वेनैव निर्वक्ति–"अदोऽम्भः परेण दिवम्" [ ऐ० १।१।२ ] इत्यादिना । लोकसृष्टिश्च परमेश्वराधिष्ठितेनापरेण केनचिदीश्वरेण क्रियत इति श्रुतिस्मृत्योरुपलभ्यते । तथाहि श्रुतिर्भवति–"आत्मैवेदमग्र आसीत्पुरुषविधः" [ बृ० १।४।१ ] इत्याद्या । स्मृतिरपि–"स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत" इति । ऐतरेयिणोऽपि–"अथातो रेतसः सृष्टिः प्रजापते रेतो देवाः" इत्यत्र पूर्वस्मिन्प्रकरणे प्रजापतिकर्तृकां विचित्रां सृष्टिमामनन्ति । आत्मशब्दोऽपि तस्मिन्प्रयुज्यमानो दृश्यते–"आत्मैवेदमग्र आसीत्पुरुषविधः" [ बृ० १ । ४ । १ ] इत्यत्र । एकत्वावधारणमपि प्रागुत्पत्तेः स्वविकारापेक्षमुपपद्यते । ईक्षणमपि तस्य चेतनत्वाभ्युपगमा-

रत्नप्रभा ।

महाभूतेष्वरूढत्वात् भौतिका एव लोकाः ॥ निर्वचनाच्चेत्याह–तथा चेति ॥ "अम्भो मरीचीर्मरमापः" इति सूत्रयित्वा स्वयमेव श्रुतिर्व्याचष्टे–परेण दिवं–दिवः परस्तादिति । प्रतिष्ठितचन्द्रोऽम्भसा व्याप्तो यो लोकः, तद्–अम्भः, अन्तरिक्षं–मरीचयः, पृथिवी–मरः, याः अधस्तात्ताः–आप इति ॥ ननु लोकसृष्टिरपीश्वरादेवास्तु, नेत्याह–लोकेति ॥ पुरुषविधः नराकारः आत्मा हिरण्यगर्भः आ पिपीलिकाभ्यः सर्वमसृजतेत्यर्थः । भूतानां, लोकानामित्यर्थः ॥ प्रकरणादपि लोकस्रष्टा प्रजापतिरित्याह–ऐतरेयिणोपीति ॥ रेतः, कार्यमिति यावत् । ब्रह्मलिङ्गानि प्रजापतौ योजयति–आत्मशब्दोऽपीत्यादिना ॥

भामती ।

आकाशः संभूतः' इति दर्शनात् । आकाशं वायुं सृष्ट्वेति हि तत्र पूरयितव्यमेवमिहापि महाभूतानि सृष्ट्वेति कल्पनीयम् । सर्वशाखाप्रत्ययत्वेन ज्ञानस्य श्रुतिसिद्ध्यर्थमश्रुतोपलब्धौ यत्नवता भवितव्यं न पुनः श्रुते महा-

आनन्दगिरीय–न्यायनिर्णयः ।

विशेषे लोकशब्दस्य रूढत्वेऽपि प्रकरणादिह महाभूतान्येव ते गृह्येरन्नित्याशंक्याऽऽह–तथा चेति । अम्भो मरीचीर्मरमाप इति सूत्रयित्वा स्वयमेव श्रुतिर्विवृणोति । अदस्तदम्भः परेण दिवं दिवः परस्ताद्यौर्द्युप्रतिष्ठो लोको दिवमारभ्योपरितनलोकाश्चान्द्रमसैरम्भोभिरभिव्याप्तेरम्भःशब्दिता इत्यर्थः । अन्तरिक्षलोकः सवितृमरीचिव्याप्तेर्मरीचयः । स्थानभेदाद्बहूक्तिः । म्रियन्तेऽस्मिन्भूतानीति पृथिवीलोको मरम् । याः पृथिव्या अधस्तात्ता आपः पातालानि तेषामब्बाहुल्याद्विधेयापेक्षया स्त्रीलिंगत्वम् । एवमादिपदेन द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आप इति गृहीतम् । तथाऽपि परमात्मैव स्रष्टा किं न स्यात्तत्राऽऽह–लोकेति । आत्मा हिरण्यगर्भः पुरुषविधस्तत्प्रकारः शिरःपाण्यादिमान्भूतानां स्थूलभूतकार्याणां चराचराणामिति यावत् । प्रजापतिकर्तृकैव लोकसृष्टिरित्येतत्प्रकरणादपि भातीत्याह–ऐतरेयिणोऽपीति । नियम्यसृष्ट्यानन्तर्यमथेत्युक्तम् । नियन्तृसृष्टव्यतिरेकेण तत्सृष्टेरकिंचित्करत्वमतःशब्दार्थः । किं तद्रेतो यस्य सृष्टिरित्याशंक्याऽऽह–प्रजेति । रेतो वीर्यं तत्कार्यत्वादेवास्तच्छब्दाः । वाक्यस्य तात्पर्यमाह–इत्यत्रेति । उपक्रमोपसंहारस्थाभ्यामात्मब्रह्मश्रुतिभ्यां परस्मिन्गम्यमाने कुतो लोकस्रष्टृत्वलिंगेनापरब्रह्मसिद्धिः श्रुतिभ्यां लिङ्गस्य दुर्बलत्वादित्याशङ्क्य लिङ्गस्यैव प्राधान्यमिति वक्तुं तयोरन्यथासिद्धिमाह–आत्मेति । ब्रह्मलोक इत्यादौ ब्रह्मशब्दस्यापि तस्मिन्प्रयोगोऽस्तीति वक्तुमपीत्युक्तम् । एक एवेत्येकत्वावधारणस्य प्रजापतावयोगात्परमात्मैवात्राऽऽत्मशब्दः स्यादित्याशङ्क्याऽऽह–एकत्वेति । अवधारणस्यैवं संभवेऽपि तस्मिन्नीक्षितृत्वायोगात्परस्यैवात्रोक्तिरित्याशङ्क्याऽऽह–ईक्षणमिति । परस्मिन्नसंभा-

दुपपन्नम्।अपि च ताभ्यो गामानयत्ताभ्योऽश्वमानयत्ताभ्यः पुरुषमानयत्ता अब्रुवन्नित्येवंजातीयको भूयान्व्यापारविशेषो लौकिकेषु विशेषवत्स्वात्मसु प्रसिद्ध इहानुगम्यते। तस्माद्विशेषवानेव कश्चिदिहात्मा स्यादिति। एवं प्राप्ते ब्रूमः—पर एवात्मेहात्मशब्देन गृह्यत इतरवत्। यथेतरेषु सृष्टिश्रवणेषु "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" [ तै० २। १। १ ] इत्येवमादिषु परस्यात्मनो ग्रहणम्। यथा चेतरस्मिँल्लौकिकात्मशब्दप्रयोगे प्रत्यगात्मैव मुख्य आत्मशब्देन गृह्यते तथेहापि भवितुमर्हति। यत्र तु "आत्मैवेदमग्र आसीत्" [ बृ० १। ४। १ ] इत्येवमादौ "पुरुषविधः" [ बृ० १। ४। १ ] इत्येवमादि विशेषणान्तरं श्रूयते भवेत्तत्र विशेषवत आत्मनो ग्रहणम्। अत्र पुनः परमात्मग्रहणानुगुणमेव विशेषणमप्युत्तरमुपलभ्यते "स ईक्षत लोकान्नु सृजा इति" [ ऐ० १। १ ] "स इमाँल्लोकानसृजत" [ऐ०१।२] इत्येवमादि। तस्मात्तस्यैव ग्रहणमिति न्याय्यम्॥१६॥

## अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

वाक्यान्वयदर्शनान्न परमात्मग्रहणमिति। पुनर्यदुक्तं,तत्परिहर्तव्यमिति॥ अत्रोच्यते॥ स्यादवधारणादिति।

---

रत्नप्रभा।

किञ्च प्रजाः सृष्ट्वा ताः प्रति भोगार्थं गामानयल्लोकस्रष्टा, तथाऽश्वमानयत्। तास्तु गवाश्वप्राप्त्या न तृप्ताः। ततः पुरुषशरीरे आनीते ता अब्रुवन्—तृप्ताः स्म इति। अयं च व्यवहारो लोकस्रष्टुः प्रजापतित्वे लिङ्गमित्याह—अपि चेति॥ आत्मशब्दस्य चिदात्मनि मुख्यत्वात् मुख्यग्रहे बाधकाभावादुत्तरस्येक्षणादेरनुकूलत्वात् परमात्मग्रहणमिति सिद्धान्तयति—एवं प्राप्त इति॥ महाभूतसृष्टिपूर्वकं लोकानसृजतेति श्रुतिर्व्याख्येयेति भावः॥ १६॥ पूर्वपक्षबीजमनूद्य दूषयति—अन्वयादिति॥ "आत्मा वा इदमेक एवाग्र आसीत्" इति "प्रज्ञानं ब्रह्म"

भामती।

भूतादित्वे सर्गस्य शैथिल्यमादरणीयम्। अपि च स्वाध्यायविध्यधीनग्रहणो वेदराशिरध्ययनविध्यापादितप्रयोजनवदर्थमभिदधानो यथायथा प्रयोजनाधिक्यमाप्नोति तथातथानुमन्यतेतराम्। यथा चास्य ब्रह्म-

आनन्दगिरीय—न्यायनिर्णयः।

वितविशेषदृष्टेरपि सूत्रस्यैवाऽऽत्मशब्दतेत्याह—अपि चेति। ईश्वरो हि करणाधिष्ठात्रीरग्न्यादिदेवता वागादिभिः सह सृष्टवांस्ताश्च तं प्रति भोगार्थं शरीरमयाचन्त स च ताभ्यो गां गोशरीरमश्वशरीरं पुरुषशरीरं च यथाकर्म यथाश्रुतमानीतवांस्ततस्ता देवताः सोऽब्रवीद्यथायतनं यथाचक्षुरादिस्थानमस्मिन्देहे प्रविशतेति तदाह—ताभ्य इति। उक्तश्रुत्यर्थं संगृह्णाति—एवमिति। इहेति स्रष्टुरात्मनो निर्देशः लिङ्गप्रकरणसिद्धमुपसंहरति—तस्मादिति। सिद्धान्तसूत्रमवतार्य प्रतिज्ञां व्याकरोति—एवमिति। इहेत्युदाहरणोक्तिः। दृष्टान्तमादाय व्याचष्टे—इतरवदिति। तस्य व्याख्यान्तरमाह—यथा चेति। परस्यैव विश्वस्रष्टृत्वं प्रागेकत्वमात्मत्वं च मुख्यं तदसत्यामनुपपत्तौ नान्यत्रानुमेयम्। लोकसृष्टिवचनेऽपि महाभूतसर्गस्य पूर्वसिद्धतया वक्तुं शक्यत्वादिति मत्वा दार्ष्टान्तिकमाह—तथेति। आत्मब्रह्मशब्दयोरन्यथासिद्धिं प्रत्याह—यत्रेति। सति बाधकेऽन्यार्थत्वेऽपि प्रकृते तदभावात्प्रत्युत साधकस्यैव सत्त्वात्परविषयत्वमेवेत्याह—अत्रेति। ईक्षणपूर्वकसर्गस्य परस्मिन्प्रसिद्धत्वे फलितमाह—तस्मादिति॥ १६॥ पूर्वपक्षबीजमनूद्य दूषयति—अन्वयादिति। अनुवादं विभजते—वाक्येति। परिहारमवतारयति—अत्रेति। स्यादिति पदं पूर्वपक्ष

भवेदुपपन्नं परमात्मन इह ग्रहणम् ॥ कस्मात् ॥ अवधारणात्॥ परमात्मग्रहणे हि प्रागुत्पत्तेरात्मैकत्वावधारणमाञ्जसमवकल्पते। अन्यथा ह्यनाञ्जसं तत्परिकल्प्येत। लोकसृष्टिवचनं तु श्रुत्यन्तरप्रसिद्धमहाभूतसृष्ट्यनन्तरमिति योजयिष्यामि। यथा-"तत्तेजोऽसृजत" [ छां० ६ । २ । ३ ] इत्येतच्छ्रुत्यन्तरप्रसिद्धवियद्वायुसृष्ट्यनन्तरमित्ययूयुजमेवमिहापि। श्रुत्यन्तरप्रसिद्धो हि समानविषयो विशेषः श्रुत्यन्तरेषूपसंहर्तव्यो भवति। योऽप्ययं व्यापारविशेषानुगमः-ताभ्यो गामानयदित्यादिः,सोऽपि विवक्षितार्थावधारणानुगुण्येनैव ग्रहीतव्यः, न ह्ययं सकलः कथाप्रबन्धो विवक्षित इति शक्यते वक्तुम्।तत्प्रतिपत्तौ पुरुषार्थाभावात्।ब्रह्मात्मत्वं त्विह विवक्षितम्-तथाहि अम्भःप्रभृतीनां लोकानां लोकपालानां चाग्न्यादीनां सृष्टिं शिष्ट्वा करणानि, करणायतनं च शरीरमुपदिश्य स एव स्रष्टा "कथं न्विदं मदृते स्यात्" [ ऐत० ३ । ११ ] इति वीक्ष्येदं शरीरं प्रविवेशेति-

रत्नप्रभा।

इति चोपक्रमोपसंहारस्थात्मब्रह्मश्रुतिभ्यामेकत्वावधारणात्प्रवेशादिलिंगैश्च लोकस्रष्टृत्वादिलिङ्गबाधेन प्रत्यग्ब्रह्म ग्राह्यमिति भावः। स परमेश्वरः। एतमेव सीमानं मूर्ध्नः केशविभागावसानं विदार्य छिद्रं कृत्वा एतया ब्रह्मरन्ध्राख्यया द्वारा लिङ्गविशिष्टः प्रविष्टवानित्यर्थः॥ मां विना यदि वागादिभिः स्वस्वव्यापारः कृतः,

भामती।

गोचरत्वे परमपुरुषार्थौपयिकत्वं नैवमन्यगोचरत्वे तदिदमुक्तम्-योऽप्ययं व्यापारविशेषानुगम इति। न च लोकसर्गेऽपि हिरण्यगर्भव्यापारोऽपि तु तदनुप्रविष्टस्य परमात्मन इत्यत्रैवोक्तम्। तस्मादात्मैवाग्र इत्युपक्रमात्तद्व्यापारेण चेक्षणेन मध्ये परामर्शादुपरिष्टाच्च भेदजातं महाभूतैः सहानुक्रम्य ब्रह्मप्रतिष्ठत्वेन ब्रह्मण उपसंहाराद्ब्रह्माभिलापत्वमेवास्येति निश्चीयते। यत्र तु पुरुषविधादिश्रवणं तस्य भवेत्त्वन्यपरत्वं गत्यन्तराभावादिति सर्वमवदातम्। अपरः कल्पः। सदुपक्रमस्य संदर्भस्यात्मोपक्रमस्य च किमैकार्थ्यमाहोस्विदर्थभेदः। तत्र सच्छब्दस्याविशेषेणात्मनि चानात्मनि च प्रवृत्तेर्नात्मार्थत्वं किंतु समस्तवस्त्वनुगतसत्तासामान्यार्थत्वं तथा चोपक्रमभेदाद्भिन्नार्थत्वम्। स आत्मा तत्त्वमसीति चोपसंहार उपक्रमानुरोधेन संपत्त्यर्थतया व्याख्येयः। तद्धि सत्सामान्यं परमात्मतया संपादनीयम्। तद्विज्ञानेन च सर्वविज्ञानं महासामान्यस्य सत्तायाः समस्तवस्तुविस्तारव्यापित्वादित्येवं प्राप्त उच्यते-आत्मगृहीतिर्वाजसनेयिनामिव छान्दोग्यानामप्युत्तरात्स आत्मा तत्त्वमसीति तादात्म्योपदेशात्। अस्तु तावदात्मव्यतिरिक्तस्य प्रपञ्चस्य सदसत्त्वा-

आनन्दगिरीय-न्यायनिर्णयः।

व्याकरोति-भवेदिति। तत्र प्रश्नपूर्वकं हेतुमाह-कस्मादिति। अवधारणं विवृणोति-परमात्मेति। सूत्रग्रहेऽपि स्वविकारापेक्षया तदुक्तमित्याशंक्याऽऽह-आञ्जसमिति। तदेव व्यतिरेकतः स्फोरयति-अन्यथेति। यच्च लोकस्रष्टृत्वलिङ्गादपरग्रहणं तत्राऽऽह-लोकेति। श्रुत्यन्तरं तैत्तिरीयादिश्रुतिः। तत्र दृष्टान्तमाह-यथेति। इहापीत्यैतरेयकोक्तिः। श्रुत्यन्तरप्रसिद्धा महाभूतसृष्टिरत्रोपसंहर्तुमशक्या वाक्यभेदादित्याशंक्याऽऽह-श्रुत्यन्तरेति। न हि तैत्तिरीयादिवाक्यमैतरेयवाक्यं च भिन्नं सृष्ट्यनुवादेनाविकृतब्रह्मविषयत्वाविशेषादित्यर्थः। यत्तु व्यापारवत्त्वात्मसु प्रसिद्धव्यापारविशेषस्यात्रानुगमाद्विशेषवानेवायमात्मेति तत्राऽऽह-योऽपीति। किंचाफले भेदे वेदस्याप्रामाण्याद्ब्रह्मपरत्वे च फलसंभवात्तदेव विवक्षितमित्याह-न हीति। पौर्वापर्यालोचनयाऽपि ब्रह्मपरत्वमेवास्य संदर्भस्येत्याह-तथा हीति। स परमेश्वर एतमेव सीमानं मूर्ध्नः

दर्शयति "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" [ऐत० ३ । १२] इति । पुनश्च "यदि वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितम्" [ऐत० ३ । ११] इत्येवमादिना करणव्यापारविवेचनपूर्वकम् "अथ कोऽहम्" [ऐत० ३ । ११] इति वीक्ष्य "स एतमेव पुरुषं ब्रह्म ततममपश्यद्" [ऐत० ३ । १३] इति ब्रह्मात्मत्वदर्शनमवधारयति । तथोपरिष्टादपि—"एष ब्रह्मैष इन्द्रः" [ऐत० ५ । ३] इत्यादिना समस्तं भेदजातं सह महाभूतैरनुक्रम्य "सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म" [ऐत० ५ । ३] इति ब्रह्मात्मत्वदर्शनमेवावधारयति ॥ तस्मादिहात्मगृहीतिरित्यनपवादम् ॥ अपरा योजना—"आत्मगृहीतिरितरवदुत्तरात्" [व्या० सू० ३ । ३ । १६] वाजसनेयके "कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" [बृ० ४ । ३ । ७] इत्यात्मशब्देनोपक्रम्य तस्यैव सर्वसङ्गविमुक्तत्वप्रतिपादनेन ब्रह्मात्मतामवधारयति । तथाहि उपसंहरति—"स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म" [बृ० ४ । ४ । २५] इति । छान्दोग्ये तु "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" [छां० ६ ।२।१] इत्यन्तरेणैवात्मशब्दमुपक्रम्योदर्के "स आत्मा तत्त्वमसि" [छां० ६ ।८।१६]

रत्नप्रभा ।

अथ तदाऽहं क इति त्वम्पदार्थं विचार्य स्वयम् **एतमेव** शोधितमात्मानं ब्रह्म **ततमं** व्याप्ततममपश्यत् । तकारलोपः छान्दसः । **प्रज्ञा**—चिदात्मा **नेत्रं**—नीयतेऽनेनेति—नियामकं यस्य तत्—**प्रज्ञानेत्रं** चिदात्मनियम्यमित्यर्थः ॥ उक्तव्याख्याने गुणोपसंहारस्यास्फुटत्वात् न पादसङ्गतिरिति मत्वैव व्याख्यान्तरमाह—**अपरेति** ॥ **उदर्कः**—उपसंहारः सच्छब्दस्य आत्मानात्मसाधारण्यात् संशयमाह—

भामती ।

श्यामनिर्वाच्यतया न सत्त्वं सत्त्वं त्वात्मधातोरेव तत्त्वेन निर्वाच्यत्वात्तस्मादात्मैव सन्निति । अभ्युपेत्याह । सच्छब्दस्य सत्तासामान्याभिधायित्वात्प्रतिव्यक्ति च तस्य प्रवृत्तेरात्मनि चान्यत्र च सच्छब्दप्रवृत्तेः संशये सत्युपसंहारानुरोधेन सदेवेत्यात्मन्येवावस्थाप्यते । नीतार्थोपक्रमानुरोधेन ह्युपसंहारवर्णना न पुनः संदि-

आनन्दगिरीय—न्यायनिर्णयः ।

केशविभागावसानं विदार्य च्छिद्रं कृत्वैतया द्वारा ब्रह्मरन्ध्रसंज्ञया शरीरं प्रापद्यत प्राप्तवानिति यावत् । इतश्च ब्रह्मपरत्वमेवास्येत्याह—**पुनश्चेति** । स शरीरे प्रविष्टः परमात्मा तमेव शरीरान्तर्गतं परमात्मानं ब्रह्म ततममेकस्तकारो लुप्तो मन्तव्यस्तततमं व्याप्ततमं यद्ब्रह्म तद्रूपेणैतमात्मानमपश्यदित्यर्थः । इतोऽपि वाक्यस्यास्ति ब्रह्मपरतेत्याह—**तथेति** । यः शरीरे प्रविष्टः परमेश्वर एष एव परब्रह्म परमात्मा प्रजापतिः सूत्रात्माऽप्येष एव प्रज्ञा ब्रह्मचैतन्यं नीयतेऽनेनेति नेत्रं नियन्तृ यस्य तत्प्रज्ञानेत्रम् । प्रज्ञाने तस्मिन्नेवाधिष्ठाने प्रतिष्ठितं लोकोऽपि भूरादिः प्रज्ञानेत्रः प्रज्ञानियन्तृकः । सैव प्रज्ञा सर्वस्य लोकस्य प्रतिष्ठाऽधिष्ठानम् । तच्च प्रज्ञानं ब्रह्मैवमवधारणमनेकधा व्याख्याय प्रकृतमुपसंहरति—**तस्मादिति** । पूर्ववर्णके विद्यैक्यगुणोपसंहारनिरूपणास्पाष्टयात्र साक्षात्पादसंगतिरिति तदर्थं वर्णकान्तरमाह—**अपरेति** । पूर्वत्र वाक्यैक्यबलादर्थादिपरत्वं परित्यज्य विद्यैक्यमुक्तम् । इदानीं भिन्नार्थोपक्रमेण वाक्यभेदशंकायामाह—**आत्मेति** । श्रुतिद्वयगतं वाक्यमुदाहरति—**वाजसनेयक इति** । उदाहृतवाक्यं त्वमर्थं तदर्थपर्यन्तं लक्षयतीत्यत्र गमकमाह—**तथाहीति** । तदर्थं त्वमर्थान्तं लक्षयद्वाक्यान्तरमाह—**छान्दोग्ये त्विति** ।

इति तादात्म्यमुपदिशति । तत्र संशयः—तुल्यार्थत्वं किमनयोराम्नानयोः स्याद्, अतुल्यार्थत्वं वेति । अतुल्यार्थत्वमिति तावत् प्राप्तम् । अतुल्यत्वादाम्नानयोः । न ह्याम्नानवैषम्ये सत्यर्थसाम्यं युक्तं प्रतिपत्तुम् । आम्नानतन्त्रत्वादर्थपरिग्रहस्य । वाजसनेयके चात्मशब्दोपक्रमादात्मतत्त्वोपदेश इति गम्यते । छान्दोग्ये तूपक्रमविपर्ययादुपदेशविपर्ययः ॥ ननु च छान्दोगानामप्यस्ति उदर्के तादात्म्योपदेश इत्युक्तम् ॥ सत्यमुक्तम् ॥ उपक्रमतन्त्रत्वादुपसंहारस्य तादात्म्यसम्पत्तिः सेति मन्यते ॥ तथा प्राप्तेऽभिधीयते ॥ आत्मगृहीतिः "सदेव सोम्येदमग्र आसीद्" [ छां० ६ । २ । १ ] इत्यत्र छन्दोगानामपि भवितुमर्हति । "इतरवद्" । यथा—"कतम आत्मा" [ बृ० ४ । ३ । ७ ] इत्यत्र वाजसनेयिनामात्मगृहीतिः, तथैव ॥ कस्मात् ॥ "उत्तरात्"— तादात्म्योपदेशात् । "अन्वयादिति चेत्स्यादवधारणात्" ॥ यदुक्तमुपक्रमान्वयाद्–उपक्रमे

रत्नप्रभा ।

तत्रेति॥ पूर्वपक्षे सत्तासामान्ये ब्रह्मात्मत्वसम्पदुपास्तिः छान्दोग्ये—वाजिश्रुतौ निर्गुणविद्येति भेदान्मिथोगुणानुपसंहारः,सिद्धान्ते तूभयत्र निर्गुणविद्यैक्यादुपसंहार इति फलभेदः ॥ पदानां जातौ शक्तिग्रहात् सच्छब्दोऽपि सत्त्वजातिवाचीत्युपक्रमस्य निश्चितार्थत्वादसंजातविरोध्युपक्रमबलेन तादात्म्योपदेशः सम्पत्तिपरतया नेय इति पूर्वपक्षनिष्कर्षः ॥ पूर्वत्र वाक्यैक्यादर्थादिपरत्वं त्यक्त्वा विद्यैक्यमुक्तम् । इह तु सदात्मशब्दाभ्यां जात्यात्मवाचिभ्याम् उपक्रमभेदाद्वाक्यभेदे सति विद्याभेद इति प्रत्युदाहरणसंगतिः ॥ न चात्मशब्दः—जातिवाचकः—आत्मव्यक्त्यैक्याज्जात्यभावात् । किन्तु सर्वान्तरवस्तुवाचकः । कल्पितजातिवाचित्वेऽप्युपक्रमभेदः स्फुट एव । सत्तात्मत्वयोर्भेदाति मन्तव्यम् ॥ सिद्धान्तयति—तथेत्यादिना ॥ उपक्रमान्वयादिति ॥ उपक्रमाधीनत्वादुपसंहारस्येत्यर्थः, तच्चावधारणं सत्पदेनाऽऽत्मगृहीतौ सत्यां युज्यत इत्याह—

भामती।

ग्धार्थेनोपक्रमेणोपसंहारो वर्णनीयः । अपि च संपत्तौ फलं कल्पनीयम् । न च सामान्यमात्रे ज्ञाते विशे-

आनन्दगिरीय-न्यायनिर्णयः ।

सच्छब्दस्याऽऽत्मानात्मार्थत्वानिर्णयेन वाक्यद्वये संशयमाह—तत्रेति । अर्थाभेदाद्विद्याभेदोक्त्या वाक्यार्थधीहेतोरेवात्रोक्तिरिति पादादिसंगतिः । पूर्वपक्षे विद्याभेदाद्गुणानुपसंहारः । सिद्धान्ते तदभेदात्तदुपसंहार इति मत्वाऽर्थभेदाद्विद्याभेदं पूर्वपक्षमाह—अतुल्येति।आम्नानवैषम्येऽपि किमित्यर्थैक्याद्विद्यैक्यं न स्यात्तत्राऽऽह—न हीति । तदेव विशदयति—वाजसनेयके चेति । छान्दोग्येऽपि वाक्यशेषादात्मार्थत्वसिद्धौ कथमाम्नानवैषम्यं कथंतरामर्थभेदः कथंतमां विद्यानानात्वमिति शङ्कते—नन्विति । 'स आत्मा तत्त्वमसि' इति तादात्म्योपदेशमङ्गीकरोति—सत्यमिति । तर्हि तदनुसारेणोपक्रमोऽपि नीयतामित्याशंक्याऽऽह—उपक्रमेति । स हि संदिग्धार्थो निश्चितार्थोपसंहारेण नीयते, प्रकृते तु तस्यासंदिग्धार्थत्वात्तदनुसारिण्युपसंहारे प्रतिमायां विष्णुदृष्टिवदात्मनि ब्रह्मदृष्टिरेष्टव्येत्यर्थः । वाजसनेयिवाक्यं ब्रह्मात्मविद्यार्थं छान्दोग्यवाक्यं त्वात्मनि ब्रह्मदृष्ट्यर्थमिति विद्याभेदमुपसंहरति—इति मन्यत इति । अतुल्यार्थतया विद्याभेदमनूद्य सिद्धान्तमाह—तथेति । तादात्म्योपदेशस्य गत्यन्तरमनूद्य दूषयति—अन्वयादिति । तत्रानुवादं विभजते—यदिति । उपक्रमान्वयात्तत्तन्त्रत्वादुपसंहारस्येति यावत् । उपक्रमोऽपि तर्हि सदेवेत्यवधारणादात्मानमेव गोचरयतीत्याशंक्याऽऽह—उपक्रमेति । तस्मादुपसंहारेऽपि न परमात्मतादात्म्यमात्मनो गृह्यते । न हि सच्छब्देनोपक्रमस्थेनाऽऽत्मोच्यते तस्य तस्मिन्नप्रसिद्धत्वात् । तथा च सतो नाऽऽत्मनस्तादात्म्यसंप-

चात्मशब्दश्रवणाभावान्नात्मगृहीतिरिति । तस्य कः परिहार इति चेत् ॥ सोऽभिधीयते ॥ स्यादवधारणादिति । भवेदुपपन्नेहात्मगृहीतिः । अवधारणात् । तथाहि–"येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" [ छां० ६ । १ । ३ ] इत्येकविज्ञानेन सर्वविज्ञानमवधार्य तत्सम्पिपादयिषया सदेवेत्याह । तच्चात्मगृहीतौ सत्यां सम्पद्यते । अन्यथा हि योऽयं मुख्य आत्मा, स न विज्ञात इति नैव सर्वविज्ञानं सम्पद्यते । तथा प्रागुत्पत्तेरेकत्वावधारणं, जीवस्य चात्मशब्देन परामर्शः, स्वापावस्थायां च तत्स्वभावसम्पत्तिकथनं, परिचोदनापूर्वकं च पुनःपुनः "तत्त्वमसि" [ छां० ६ ।८–१६ ] इत्यवधारणमिति च,–सर्वमेतत्तादात्म्यप्रतिपादनायामेवावकल्पते, न तादात्म्यसम्पादनायाम् ॥ न चात्रोपक्रमतन्त्रतोपन्यासो न्याय्यः । न ह्युपक्रमे आत्मत्वसङ्कीर्तनमनात्मत्वसंकीर्तनं वास्ति । सामान्योपक्रमश्च न वाक्यशेषगतेन विशेषेण विरुध्यते । विशेषाकांक्षित्वात्सामान्यस्य । सच्छब्दार्थोऽपि च पर्यालोच्यमानो न मुख्यादात्मनोऽन्यः सम्भवति । अतोऽन्यस्य वस्तुजातस्यारम्भणशब्दादिभ्योऽनृतत्वोपपत्तेः ।

---

रत्नप्रभा ।

तच्चेति ॥ सदेकमेवेत्यवधारणम् । "अनेन जीवेनात्मना" इति सद्देवताकर्तृको जीवस्यात्मशब्देन परामर्शः । सुप्तौ जीवः सता सम्पन्नो भवतीति कथनं भूय एव मा भगवान् विज्ञापयत्विति परिचोदना । सदितिपदेन सत्ताश्रय उच्यते, न जातिमात्रम् । कर्तृवाचिशतृप्रत्ययान्तत्वात् । तथा चोपक्रमे सत्ताश्रयसामान्योक्तौ क आश्रय इत्याकांक्षायां वाक्यशेषादात्मेति निश्चीयत इत्याह–न चेति ॥ सच्छब्दस्यात्मसाधारण्यमुपेत्योक्तम् । तदपि नास्ति । आकाशपदवत् सत्पदस्य व्यक्तिवाचित्वात् । व्यक्तिश्च बाधायोग्या चिदात्मैवेति न वाजिच्छन्दोगयोरुपक्रमवैषम्यमित्याह–सच्छब्देति ॥ वैषम्यमुपेत्याप्याह–

भामती ।

षज्ञानसंभवः । न खल्वाकाराद्वृक्षे ज्ञाते शिंशपादयस्तद्विशेषा ज्ञाता भवन्ति । तदेवमवधारणादि सर्वमनात्मार्थत्वे स्यादनुपपन्नमिति छान्दोग्यस्यात्मार्थत्वमेवेति सिद्धम् । अत्र च पूर्वस्मिन् पूर्वपक्षे हिरण्य-

आनन्दगिरीय–न्यायनिर्णयः ।

त्तिरात्मनि तत्त्वमसीति विवक्षितेत्याह–नाऽऽत्मेति । परिहारमादत्ते–स इति । तत्र प्रतिज्ञां व्याचष्टे–भवेदिति । अवधारणादिति हेतुं विवृणोति–तथा हीति । एकविज्ञानेन सर्वविज्ञानं सच्छब्देनानात्मग्रहेऽपि सतः सर्वात्मत्वादविरुद्धमित्याशंक्याऽऽह–तच्चेति । उक्तमेव व्यतिरेकेण साधयति–अन्यथेति । प्रकारान्तरेण हेतुं व्याचष्टे–तथेति । एकमेवाद्वितीयमित्येकत्वावधारणमनेन जीवेनाऽऽत्मनेति जीवस्याऽऽत्मशब्देन परामर्शः सति संपद्येत्यादि तत्स्वभावापत्तिवचनं भूय एव मा भगवान्विज्ञापयत्विति परिचोदना । हेतुजातस्योक्तस्य फलमाह–इति च सर्वमिति । यत्तूपक्रमतन्त्रेणोपसंहारेण भाव्यमिति तत्राऽऽह–न चेति । अत्र च्छान्दोग्ये स आत्मेत्यादेरुपसंहारस्येति यावत् । तत्र हेतुः–न हीति । उपसंहारानुसारेणापि तर्हि नोपक्रमो नेयस्तयोर्भिन्नविषयत्वात्तत्राऽऽह–सामान्येति । सच्छब्दस्य सत्तासामान्यवाचित्वेनाऽऽत्मानात्मसाधारण्याद्विशेषाकांक्षायामुपसंहारानुसारेणाऽऽत्मैव तदर्थो निर्णीयते । संदिग्धार्थेनोपक्रमेणोपसंहारस्यानिर्णयादुपक्रमानुरोधन्यायस्यासंदिग्धोपक्रमविषयत्वादित्यर्थः । उपक्रमभेदमुपेत्य श्रुतिद्वयेऽपि वेद्यैक्येन विद्यैक्यमुक्तम् । संप्रत्युपक्रमभेदोऽपि नास्तीत्याह–सच्छब्देति । आत्मातिरिक्तस्य

आम्नानवैषम्यमपि नावश्यमर्थवैषम्यमावहति । आहर पात्रं, पात्रमाहरेत्यादिष्वर्थसाम्येऽपि तद्दर्शनात् ॥ तस्मादेवञ्जातीयकेषु वाक्येषु प्रतिपादनप्रकारभेदेऽपि प्रतिपाद्यार्थाभेद इति सिद्धम् ॥ १७ ॥ इत्यात्मगृहीत्यधिकरणम् ॥ ८ ॥

## कार्याख्यानादपूर्वम् ॥ १८ ॥ ( ९ ) ॥

छन्दोगाः, वाजसनेयिनश्च,-प्राणसंवादे श्वादिमर्यादं प्राणस्यान्नमाम्नाय तस्यैवापो वास आमनन्ति । अनन्तरं च छन्दोगा आमनन्ति-"तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाददद्भिः परिदधति" [ छां० ५ । २ । २ ] इति।वाजसनेयिनश्चामनन्ति-"तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते" [ बृ०६। १ ।

रत्नप्रभा ।

**आम्नानेति** ॥ वाजिवाक्ये त्वमर्थस्य तदर्थपर्यन्तस्य लक्ष्यस्य प्रतिपादनम् । छान्दोग्यवाक्ये तु तदर्थस्य त्वमर्थपर्यन्तस्य प्रतिपादनमिति प्रकारभेदेऽपि वाक्यार्थैक्याद्विद्यैक्यमिति फलितमाह-**तस्मादिति** १७॥(८)॥ **कार्याख्यानादपूर्वम्** ।मे किमन्नं किं वासः इति प्राणेन पृष्टा वागादय ऊचुः-यदिदं किं च आश्वभ्यः आ कृमिभ्यस्तत्तेऽन्नमापो वास इति।सर्वप्राणिभिर्भुज्यमानं यदिदं प्रसिद्धं श्वादिपर्यन्तमन्नं तत् प्राणस्य तवान्नम्, आप आच्छादनमित्युपासकेन चिन्तनीयमित्यर्थः ॥ शाखाद्वयेऽप्यविशेषश्रुतिमुक्त्वा विशेषश्रुतिमेदमाह-**अनन्तरं चेति** ॥ **तस्माद्** अपां प्राणवस्त्रत्वाद् **अशिष्यन्तः** अशनं कुर्वन्तः श्रोत्रिया एतत् कुर्वन्ति ॥ किं तत् । भोजनात् पूर्वम्, ऊर्ध्वं चाचामन्ति इति यत् तदद्भिः प्राणं **परिदधति** आच्छादयन्तीत्यर्थः ॥ पूर्वोत्तरासु अशनसम्बन्धिनीषु अप्सु प्राणवासस्त्वचिन्तनरूपमनग्नताध्यानं कार्यमिति भावः ॥ **तत्** तस्मात्, इति उक्तार्थे यतः पूर्वे विद्वांसोऽशनात् प्राक् ऊर्ध्वं चाचामन्तः एतमेव **अनं**. प्राणं **तत्** तेनाचमनेन नग्नम् अच्छादितं कुर्वन्तो **मन्यन्ते** चिन्तयन्ति॥ तस्माद् एवंविद् इदानीन्तनोऽप्युपासकः एवं कुर्यादिति

भामती ।

गर्भोपासना सिद्धान्ते तु ब्रह्मभावनेति ॥ १६ ॥ १७ ॥ ( ८ ) ॥ **कार्याख्यानादपूर्वम्** । विषयमाह-**छन्दोगा वाजसनेयिनश्चेति** । अननं प्राणनं अनः प्राणः तं प्राणमनग्नं कुर्वन्तः ।

आनन्दगिरीय-न्यायनिर्णयः ।

सर्वस्यानिर्वाच्यत्वादनात्मनः सच्छब्दार्थासिद्धेरात्मन एव तदर्थत्वान्नोपक्रमभेदोऽस्तीत्यर्थः । यत्त्वाम्नानवैषम्ये सत्यर्थसाम्यमयुक्तमिति तत्राऽऽह-**आम्नानेति** । तद्वैषम्यस्यार्थभेदेनानवश्यंभावे फलितमाह-**तस्मादिति** । एवंजातीयकेषु योऽयं विज्ञानमयः सदेव सोम्येदमित्यादिषु प्रतिपादनप्रकारभेदः समाम्नानविशेषो वाजसनेयके वाक्यार्थान्वयित्वमर्थस्य तदर्थपर्यन्तस्य च्छान्दोग्ये तदर्थस्य त्वमर्थपर्यन्तस्य लक्ष्यतया वाक्यार्थभेदाभावादेकैवोभयत्रापि विद्येत्याह-**प्रतिपाद्येति** ॥ १७ ॥ ( ८ ) ॥ संदिग्धस्य तदुपक्रमस्य शेषान्निर्णयवदाचामन्तीति वर्तमानापदेशस्य विधित्वसंदेहे शेषादशिष्यन्नाचामेदित्यतो विधिपरत्वं निर्णेयमित्याशंक्याऽऽह-**कार्येति** । विषयं वक्तुमविगीतमाम्नानं दर्शयति-**छन्दोगा इति** । यदिदं किंचाऽऽश्वभ्य आ कृमिभ्य आ कीटपतंगेभ्यस्तत्तेऽन्नमित्युक्त्वा तस्यैव प्राणस्यापो वासो वदन्तीति यावत् । छन्दोगानामविशेषाम्नानमुक्त्वा विशेषमाम्नानमाह-**अनन्तरं चेति** । तस्मादपां प्राणं प्रति वासोरूपत्वादिति यावत् । अशिष्यन्तः श्रोत्रियाः सन्तोऽशनं कुर्वन्तस्तावदेतत्कुर्वन्ति किं तद्भोजनात्पूर्वमूर्ध्वं वाऽद्भिः प्राणं परिदधति परिधापयन्त्याच्छादयन्तीत्यर्थः । शाखान्तरेऽपि विशेषाम्नानं कथयति-**वाजसनेयिनश्चेति** । यस्मा-

१४ ] तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते इति ॥ तत्राचमनमनग्नता चिन्तनं च प्राणस्य प्रतीयते । तत्-किमुभयमपि विधीयते–उत–आचमनमेव–उत–अनग्नताचिन्तनमेवेति विचार्यते । किं तावत्प्राप्तम् ॥ उभयमपि विधीयते इति ॥ कुतः ॥ उभ-यस्याप्यवगम्यमानत्वात् । उभयमपि चैतदपूर्वत्वाद्विध्यर्हम् । अथ वा-आचमनमेव विधीयते । विस्पष्टा हि तस्मिन्विधिविभक्तिः ॥ तस्मादेवं विदशिष्यन्नाचामेदशित्वा चाचामेदिति । तस्यैव स्तुत्यर्थमनग्नतासंकीर्त-

रत्नप्रभा ।

वाजिश्रुत्यर्थः ॥ अत्रोभयोरप्यपूर्वत्वात् संशयमाह–**तत्किमिति** ॥ सन्दिग्धतदुपक्रमस्य वाक्यशेषात् । निर्ण-यवदाचामंतीति पदस्य विधित्वसन्देहे आचामेदिति वाक्यशेषाद्विधित्वनिर्णय इति दृष्टान्तसंगत्या पूर्वपक्ष-माह–**किं तावदिति** ॥ ज्ञानसाधनोपासनांगविधिविचारात् पादसंगतिर्बोध्या ॥ **पूर्वपक्षे** प्राणविद्याङ्ग-त्वेनापूर्वाचमनं विहितमन्यत्रोपसंहर्तव्यमिति फलं, **सिद्धान्ते** तस्याविधेयत्वात् नाङ्गत्वेनोपसंहार इति विवेकः ॥ उभयविधाने वाक्यभेदः स्यादित्यरुच्या पक्षान्तरमाह–**अथ वेति** ॥ प्रशस्तं हीदमाचमनं यस्मा-

भामती ।

**अनग्नताचिन्तनमिति**।मन्यन्त इति मननं ज्ञानं तद्ध्यानपर्यन्तमिति चिन्तनमुक्तम्।संशयमाह–**तत्किमिति**। खुरव्रमात्रेणापातत उभयविधानपक्षं गृहीत्वा मध्यमं पक्षमालम्बते पूर्वपक्षी–**अथ वाचमनमेवेति** । यद्येवमनग्नतासंकीर्तनस्य किं प्रयोजनमित्यत आह–**तस्यैव स्तुत्यर्थमिति** । अयमभिसन्धिः–यद्यपि स्मार्तं प्रायत्यार्थमाचमनमस्ति तथापि प्राणोपासनप्रकरणेऽविधानात्तदङ्गत्वेनाप्राप्तमिति विधानमर्थवद्भवति,

आनन्दगिरीय–न्यायनिर्णयः ।

त्प्राणस्याऽऽपो वासस्तस्मादित्यस्मिन्नर्थे तच्छब्दः । विद्वांसः प्राणविद्यावन्तस्तेषां यथेष्टचेष्टानिषेधार्थं श्रोत्रियपदम् । एतमेवानं प्राणं तत्तेनाऽऽचमनेनानग्नं वाससा परिहितं कुर्वन्तो मन्यन्ते चिन्तयन्तीत्यर्थः । काण्वानामाम्नानविशेषमुक्त्वा माध्यंदिनानामाह–**तस्मादिति** । यस्मात्पूर्वे प्राणविदः स्वयमाचामन्तः प्राणमनग्नं वाससा परिहितं कुर्वन्तो मन्यन्ते तस्मादिदानींतनोऽपि प्राणविदेवं कुर्यादित्यर्थः । पाठत्रयेऽप्या-पातिकमर्थमाह–**तत्र चेति** । उभयोरपूर्वत्वमपेत्याऽऽह–**तदिति** । किंच, वाक्यभेदप्रसंगभयादन्यतरदेव विधेयमिति कल्पान्तरं द्रष्टव्यम् । द्वितीयमपि विशेषानवधारणाद् द्वेधा विकल्पयति–**उतेति** । तत्रापि प्रथमश्रुतत्वमालोच्य प्रथमो विकल्पो दृष्टिविषयसंपादनेनाऽऽचमनस्यानग्नताचिन्तनशेषत्वं मत्वा द्वितीय इति भेदः । अत्र पाठत्रयेऽपि प्राणविद्याङ्गमनग्नताचिन्तनमेकमेव विधेयमिति चिन्ताया वाक्यार्थज्ञानसाधन-गामित्वात्पादादिसंगतिः । पूर्वपक्षे द्वयोर्विधेयत्वाद्वाक्यभेदोऽन्यतरविधावप्याचमनस्यैव विधेयत्वाद्विशेषविष-यस्य तस्यान्यत्रोपसंहारः। सिद्धान्ते त्वनग्नताचिन्तनस्यैव विधेयत्वाद्वाक्यैक्यादाचमनविशेषस्याविधेयस्य नोप-संहृतिरित्यङ्गीकृत्य विमृश्य पूर्वपक्षमाह–**किमिति** । गौरवादुभयविधानमयुक्तमिति शङ्कते–**कुत इति** । कर्तव्यत्वेन द्वयोरपि तात्पर्यगम्यत्वान्न गौरवमित्याह–**उभयस्येति** । गम्यमानत्वमात्रेण तात्पर्यगम्यतया विधेयत्वमतिप्रसक्तमित्याशंक्याऽऽह–**उभयमिति** । न च स्मृत्याचारसिद्धत्वान्नापूर्वत्वं तयोरेतद्वाक्यमूल-त्वात् । न च सामान्यविशेषतया श्रुतिस्मृत्याचाराणां न मूलमूलिता सामान्यसिद्धानृतवदननिषेधस्य क्रतुगामितया विधिवदाचमनस्यापि प्रसिद्धस्यैव प्राणविद्यायोगित्वेन विधानाद्वाक्यभेदप्रसंगस्य चोपरिधारण-विधिवददोषत्वादिति भावः । न युक्तो वाक्यभेदः सत्यां गतावित्याशंक्य पक्षान्तरमाह–**अथ वेति** । तत्र हेतुः–**विस्पष्टेति** । तर्हि किमर्थमनग्नताकीर्तनं तत्राऽऽह–**तस्येति** । महार्हं हीदमाचमनं यद-

नमिति ॥ एवं प्राप्ते ब्रूमः ॥ नाचमनस्य विधेयत्वमुपपद्यते । "कार्याख्यानात्" । प्राप्तमेव हीदं कार्यत्वेनाचमनं प्रायत्यार्थं स्मृतिप्रसिद्धमन्वाख्यायते ॥ नन्वियं श्रुतिस्तस्याः स्मृतेर्मूलं स्यात ॥ नेत्युच्यते ॥ विषयनानात्वात । सामान्यविषया हि स्मृतिः पुरुषमात्रसम्बद्धं प्रायत्यार्थमाचमनं प्रापयति । श्रुतिस्तु प्राणविद्याप्रकरणपठिता तद्विषयमेवाचमनं विदधती विदध्यात्। न च भिन्नविषययोः श्रुतिस्मृत्योर्मूलमूलिभावोऽवकल्पते । न चेयं श्रुतिः प्राणविद्यासंयोग्यपूर्वमाचमनं विधास्यतीति शक्यमाश्रयितुम् । पूर्वस्यैव पूरुषमात्रसंयोगिन आचमनस्येह प्रत्यभिज्ञायमानत्वात ॥ अत एव च नोभयविधानम् ॥ उभयविधाने च वाक्यं भिद्ये-

---

रत्नप्रभा।

दनेन प्राणमनग्नं मन्यन्त इति स्तुतिः ॥ प्रसिद्धानुवादेनाप्रसिद्धं विधेयमिति न्यायेन सिद्धान्तयति—**एवमिति** ॥ प्रयतस्य प्रयत्नवतो भावः—**प्रायत्यं** शुद्धिः, तदर्थमित्यर्थः ॥ स्मृत्या शुद्ध्यर्थं कार्यत्वेन विहिते सकलकर्मांगतया प्राप्ताचमनानुवादेन अपूर्वमनग्नताध्यानमेव विधीयत इति **सूत्रार्थः** ॥ स्मार्तमाचमनं श्रुत्या नानूद्यते । किं त्वनया श्रुत्या विहितं स्मृत्यानूद्यत इति शङ्कते—**नन्विति** ॥ श्रुतिस्मृत्योरनयोर्न मूलमूलिभावः । भिन्नविषयत्वादिति परिहरति—**नेति** ॥ "द्विजो नित्यमुपस्पृशेद्" इत्याद्या स्मृतिः॥ आचमनान्तरविधिमुपेत्य मूलमूलित्वं निरस्तम्। सम्प्रति विधिरसिद्ध इत्याह—**न चेयं श्रुतिरिति** ॥ **अत एवेति** ॥ आचमनविध्यभावादेवेत्यर्थः । अप्सु प्राणवासस्त्वध्यानाख्यः सङ्कल्पः प्राणविद्याङ्गत्वेन

भामती।

अनृतवदनप्रतिषेध इव स्मार्ते ज्योतिष्टोमप्रकरणे समाम्नातो नानृतं वदेदिति प्रतिषेधो ज्योतिष्टोमाङ्गतयार्थवानिति । राद्धान्तमाह—**एवं प्राप्त इति** । चोदयति—**नन्वियं श्रुतिरिति** । परिहरति—**नेति** । तुल्यार्थयोर्मूलमूलिभावो नातुल्यार्थयोरित्यर्थः । अभिप्रायस्थं पूर्वपक्षवीजं निराकरोति—**न चेयं श्रुतिरिति** । क्रत्वर्थपुरुषार्थयोरनृतवदनप्रतिषेधयोर्युक्तमपौनरुक्त्यम् । इह तु स्मार्तमाचमनं सकलकर्माङ्गतया विहितं प्राणोपासनाङ्गमपीति व्यापकेन स्मार्तेनाचमनविधिना पुनरुक्तत्वादनर्थकम् । न च स्मार्तस्यानेन पौनरुक्त्यं तस्य च व्यापकत्वादेतस्य च प्रतिनियतविषयत्वादिति । मध्यमं पक्षमपाकृत्य प्रथमपक्षमपाकरोति—**अत एव च नोभयविधानम्** । युक्त्यन्तरमाह—**उभयविधाने चेति** । उपसंहरति—

आनन्दगिरीय—न्यायनिर्णयः।

नेन प्राणोऽनग्नः स्यादिति स्तुतिस्तस्माद्विधेयं विशेषविषयमाचमनमन्यत्र चोपसंहर्तव्यमित्यर्थः । सिद्धान्तयति—**एवमिति** । तत्र हेतुमादाय व्याचष्टे—**कार्येति** । प्रयतस्य प्रयत्नवतो भावः प्रायत्यं शुद्धत्वं तदर्थस्मार्तमाचमनमनूद्यत इत्युक्तमाक्षिपति—**नन्विति** । स्मृतेः श्रुतिमूलत्वेन प्रामाण्यादुक्तश्रुतिमूलैव सा । न च स्मृतिसिद्धोऽर्थः श्रुत्याऽनूद्यते वैपरीत्यापत्तेरित्यर्थः । भिन्नविषयत्वान्मूलमूलिभावो नानयोरित्याह—**नेति** । विषयभेदं विशदयति—**सामान्येति** । भिन्नविषयत्वे फलितमाह—**न चेति** । अर्थैकत्वाभावेऽपि तद्भावेऽतिप्रसंगादित्यर्थः । आचमनान्तरविधानमुपेत्य मूलमूलिभावो निरस्तः, संप्रति तदपि नास्तीत्याह—**न चेति** । न च स्मार्ताचमनस्य श्रुत्याऽनुवादे वैपरीत्यं त्रिराचामेदित्यादिश्रुतिसिद्धस्यैव सामान्याचमनस्यात्रानुवादादिति मत्वा हेतुमाह—**पूर्वस्येति** । अनृतवादनिषेधस्य पुरुषार्थतया विहितस्यापि क्रत्वर्थेनाप्राप्तस्य विधानमविरुद्धमाचमनस्य तु सर्वकर्मांगतया विहितस्य प्राणोपास्त्यङ्गत्वमपि सिद्धमिति पुनर्विधानानर्थक्यमिति भावः । आचमनस्य प्रकृते विधानायोगं हेतूकृत्याऽऽद्यं पूर्वपक्षं प्रत्याह—**अत एवेति** । युक्त्यन्तरमाह—**उभयेति** । न चोपरिधारणवद्वाक्यनानात्वमदोषः संभवत्येकवाक्यत्वे तद्भेद-

त ॥ तस्मात्प्राप्तमेवाशिशिषतामाशितवतां चोभयत आचमनमनूद्य "एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते" [ बृ० ६।१।१४ ] इति प्राणस्यानग्नताकरणसंकल्पोऽनेन वाक्येनाचमनीयास्वप्सु प्राणविद्यासम्बन्धित्वेनापूर्व उपदिश्यते ॥ न चायमनग्नतावाद आचमनस्तुत्यर्थ इति न्याय्यम् । आचमनस्याविधेयत्वात् । स्वयं चानग्नतासंकल्पस्य विधेयत्वप्रतीतेः॥न चैवं सत्येकस्याचमनस्योभयार्थताभ्युपगता भवति—प्रायत्यार्थता परिधानार्थता चेति।क्रियान्तरत्वाभ्युपगमात्। क्रियान्तरमेव ह्याचमनं नाम, प्रायत्यार्थं पुरुषस्याभ्युपगम्यते । तदीयास्वप्सु वाससंकल्पनं नाम क्रियान्तरमेव परिधानार्थं प्राणस्याभ्युपगम्यत इत्यनवद्यम्॥अपि च "यदिदं किंचाश्वभ्य (आशकुनिभ्य, आ कृमिभ्य आ कीटपतङ्गेभ्यस्तत्ते-

---

रत्नप्रभा ।

विधीयत इत्याह—तस्मादिति ॥ स्वयञ्चेति । अपूर्वत्वादित्यर्थः ॥ शुद्ध्यर्थं विनियुक्तस्याचमनस्य प्राणाच्छादनार्थत्वं विरुद्धमित्याशङ्क्याह— न चैवं सतीति ॥ आचमनस्याच्छादनार्थत्वमसिद्धमित्यर्थः ॥ किञ्च यथा—पूर्ववाक्ये प्राणस्यान्नध्यानमंगं विहितं, तथात्र वासोध्यानं विधीयते । अन्यथाचमनविधौ पूर्वत्र ध्यानविधिः, उत्तरत्र क्रियाविधिरित्यर्धवैशसं स्यादित्याह—अपि चेति ॥ भक्षयेदिति शब्दाभावात्,

भामती ।

तस्मात् प्राप्तमेवेति॥न चायमनग्नतावाद इति।स्तोतव्याभावे स्तुतिर्नोपपद्यत इत्यर्थः।अपि च मानान्तरप्राप्तेनाप्राप्तं विधेयं स्तूयेत। न चानग्नतासंकल्पोऽन्यतः प्राप्तो यतः तावको भवेत्। न चाचमनमन्यतोऽप्राप्तं येन विधेयं सत्स्तूयेतेत्याह—स्वयं चानग्नतासंकल्पस्येति । अपि चैकस्य कर्मण एकार्थतैवेत्युचितं तस्य बलवत्प्रमाणवशादनन्यगतित्वे सत्यनेकार्थता कल्प्यते । संकल्पे तु कर्मान्तरे विधीयमाने नायं दोष इत्याह—न चैवं सत्येकस्याचमनस्येति । अपि च दृष्टिचोदनासाहचर्याद् दृष्टिचोदनैव न्याय्या न चाचमनचोदनेत्याह—अपि च यदिदं किंचेति । यथा हि श्वादिमर्यादस्यान्नस्यात्तुमशक्यत्वादन्नदृष्टिश्चोद्यते एवमिहाप्यपां परिधानासंभवाद् दृष्टिरेव चोद्यत इत्यन्नदृष्टिविधिसाहचर्याद्गम्यते। अशब्दत्वं च यद्यपि दृष्ट्यभ्यवहारयोस्तुल्यं तथापि दृष्टिः शाब्दस्यनान्तरीयकतया साक्षाच्छब्देन क्रियमाणोपलभ्यते । अभ्यवहारस्त्वभ्या-

आनन्दगिरीय—न्यायनिर्णयः ।

स्यानिष्टत्वादिति भावः । तर्हि किमिह विधेयं तदाह—तस्मादिति । अनुवादे हेतुमाह—प्राप्तमिति । अनग्नताकृतिसंकल्पे विधित्सिते कृतमनुवादेनेत्याशंक्याऽऽह—आचमनीयास्विति। प्राणविद्याधिकारे चेदनग्नतासंकल्पो विधीयते कथं वाक्यभेदो न स्यादित्याशंक्याऽऽह—प्राणेति । तस्य विधियोग्यत्वं सूचयति—अपूर्व इति । एतेनापूर्वमितिपदं व्याख्यातम् । यत्त्वनग्नतासंकीर्तनमाचमनस्तुत्यर्थमिति तत्राऽऽह—न चेति । स्तोतव्यविधेयाभावे स्तुतिरयुक्तेत्यर्थः । किंच, विधेयमप्राप्तं प्राप्तेन स्तूयते न चानग्नतासंकल्पोऽन्येन प्राप्तो येन स्तावकः स्यान्न चान्यतोऽप्राप्तमाचमनं येन विधेयतया स्तोतव्यमित्याह—स्वयं चेति। शुद्ध्यर्थं विनियुक्तस्यैवाऽऽचमनस्य प्राणपरिधानार्थत्वे विनियुक्तविनियोगविरोधः स्यादित्याशङ्क्याऽऽह—न चेति । एकस्य कर्मणः स्यादेकार्थतेत्युत्सर्गादसति बाधके तदनेकार्थत्वासिद्धे संकल्पविधिपरत्वमेव वाक्यस्येत्याह—क्रियेति । हेतुमेव साधयति—क्रियान्तरमिति । वासःसंकल्पक्रियातो भेदादाचमनस्य क्रियान्तरत्वं संकल्पस्यापि परिधानार्थस्याऽऽचमनादन्यत्वात्तथात्वमेवं क्रियाभेदे सत्युत्सर्गस्य भङ्गो नास्तीत्याह—इत्यनवद्यमिति । किंच, दृष्टिचोदनासाहचर्यादिहापि सैव युक्ता नाऽऽचमनचोदनेत्याह—अपि चेति ।

ऽन्नम्'' [ बृ० ६ । १ । १४ ] इति ॥ अत्र तावन्न सर्वान्नाभ्यवहारश्चोद्यत इति शक्यते वक्तुम् । अशब्दत्वादशक्यत्वाच्च । सर्वं तु प्राणस्यान्नमितीयमन्नदृष्टिश्चोद्यते । तत्साहचर्याच्चापो वास इत्यत्रापि नापामाचमनं चोद्यते । प्रसिद्धास्वेवाचमनीयास्वप्सु परिधानदृष्टिश्चोद्यत इति युक्तम् । न ह्यर्धवैशसं सम्भवति ॥ अपि चाचामन्तीति वर्तमानापदेशित्वान्नायं शब्दो विधिक्षमः ॥ ननु ''मन्यन्ते'' इत्यत्रापि समानं वर्तमानापदेशत्वम् ॥ सत्यमेव तत् ॥ अवश्यविधेये त्वन्यतरस्मिन्वासःकार्याख्यानादपां वासस्संकल्पनमेवापूर्वं विधीयते, नाचमनम् । पूर्ववद्धि तदित्युपपादितम् ॥ यदप्युक्तं विस्पष्टा चाचमने विधिविभक्तिरिति ॥ तदपि पूर्ववत्त्वेनैवाचमनस्य प्रत्युक्तम् ॥ अत एवाचमनस्याविधित्सितत्वा

रत्नप्रभा ।

श्वाद्यन्नस्य सर्वस्य मनुष्येण उपासकेन भोक्तुमशक्यत्वाच्च, न पूर्ववाक्ये क्रियाविधिरित्यर्थः ॥ इतश्चाचमनमत्र न विधेयमित्याह—अपि चेति ॥ ''अनग्नं मन्यन्ते'' इत्यत्र वासस्त्वध्यानमपि न विधेयं, दोषसाम्यादिति शंकते—नन्विति ॥ उभयोरप्यनुवादत्वे वैफल्यादवश्यमेकानुवादेनैकं विधेयम् । तच्च विधेयं वासोध्यानमेव । वासःकार्यस्यानग्नत्वस्याख्यानादपूर्वत्वाच्चेति समाधानार्थः ॥ पूर्ववदिति ॥ स्मृत्या प्राप्तमित्यर्थः ॥ आचामेदिति न विधिः । किन्तु विष्णुरुपांशु यष्टव्य इतिवदनुवाद इत्यत्र लिंगमाह—अत एवेति ॥ तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदिति वाक्यस्याविधित्वे काण्वैरपठनं लिंगमित्यर्थः ॥ तर्हि पाठबलान्माध्यन्दिने

भामती ।

हरणीयः कथंचिद्योग्यतामात्रेणेति विशेषः । किंच,छान्दोग्यानां वाजसनेयिनां चाचमने प्रायेणाचामन्तीति वर्तमानापदेश एवं यत्रापि विधिविभक्तिस्तत्रापि जर्तिलयवाग्वा वा जुहुयादितिवद्विधित्वमविवक्षितम् । मन्यन्त इति त्वप्राप्तार्थत्वात्समिधो यजतीत्यादिवद्विधिरेवेत्याह—अपि चाचामन्तीति । शेषमतिरो-

आनन्दगिरीय—न्यायनिर्णयः ।

सर्वान्नभक्षणमेवात्रापि चोद्यते न दृष्टिरित्याशङ्क्याऽऽह—अत्रेति । दृष्टिवाचकाभावं हेतुमाह—अशब्दत्वादिति । अन्नशब्दवशादभ्यवहरणं भातीत्याशंक्याऽऽह—अशक्यत्वाच्चेति । न हि श्वादिमर्यादं सर्वमन्नमेकेनात्तुं शक्यं भक्ष्याभक्ष्यविधिविरोधात् । प्राणविद्यासामर्थ्यादसामर्थ्यविरोधसमाधानं तु सर्वान्नानुमत्यधिकरणे निरस्यमिति भावः । अशब्दत्वस्य दृष्टेरपि तुल्यत्वादभ्यवहरणवदविधेयत्वमाशङ्क्य नान्तरीयकतया दृष्टेः शब्देन क्रियमाणत्वादभ्यवहरणस्य तज्जन्यत्वज्ञाप्यत्वयोरभावादनुपपत्तिकज्ञानस्य दृष्टिविधेरेवं तच्छान्तावनुत्थानात्तद्विधानमेवैतदित्याह—सर्वं त्विति । तथाऽपि प्रकृते संकल्पविधौ क्रिमायातं तदाह—तदिति । प्रकरणविरोधाद्वाक्यस्य क्रियाविधिपरत्वाभावे किं परत्वे तदाह—प्रसिद्धास्विति । अस्तु सर्वान्नवाक्ये दृष्टिविधिराचमनवाक्ये तु क्रियैव चोद्यते तत्राऽऽह—न हीति । इतश्चाऽऽचमने विधिरत्र नास्तीत्याह—अपि चेति । तर्हि चिन्तनमपि न विधेयं दोषसाम्यादित्याह—नन्विति । आचमनचिन्तनयोर्वर्तमानापदेशमंगीकरोति—सत्यमिति । तर्हि द्वयोरविधेयत्वमित्याशङ्क्यानुवादमात्रस्याकिंचित्करत्वादन्यतरविधेरावश्यकत्वे संकल्पनमेव विधेयमिति विधान्तरेण सूत्रं योजयति—अवश्येति । तत्र हेतुत्वेनाऽऽचमनस्यान्यतः प्राप्तिमुक्तां स्मारयति—पूर्ववदिति । पूर्वपक्षबीजमनुभाष्य दूषयति—यदपीति । पूर्ववत्त्वेनापूर्ववत्त्वाभावेनेति यावत् । तत्र श्रुतिविधिविभक्तिरनग्नतासंकल्पेन नेया जर्तिलयवाग्वा जुहुयादितिवदविवक्षितं वा विधित्वमिति भावः । आचमनस्याविधेयत्वे लिङ्गान्तरमाह—अत इति । तर्हि

"एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते" इत्यत्रैव काण्वाः पर्यवस्यन्ति, नामनन्ति—"तस्मादेवंविद्" इत्यादि ॥ तस्मान्माध्यन्दिनानामपि पाठे आचमनानुवादेनैवंवित्त्वमेव प्रकृतप्राणवासोविधित्वं विधीयत इति प्रतिपत्तव्यम् । योऽप्ययमभ्युपगमः क्वचिदाचमनं विधीयतां, क्वचिद्वासोविज्ञानमिति,—सोऽपि न साधुः । "आपो वासः" [बृ० ६ । १ । १४] इत्यादिकाया वाक्यप्रवृत्तेः सर्वत्रैवैकरूप्यात् ॥ तस्माद्वासोविज्ञानमेवेह विधीयते, नाचमनमिति न्याय्यम् ॥ १८ ॥ इति कार्याख्यानाधिकरणम्९॥

## समान एवं चाभेदात् ॥ १९ ॥ १० ॥

वाजसनेयिशाखायामग्निरहस्ये शाण्डिल्यनामांकिता विद्या विज्ञाता । तत्र गुणाः श्रूयन्ते—"स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपम्" इत्येवमादयः । तस्यामेव शाखायां बृहदारण्यके पुनः पठ्यते—"मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च" [बृ० ५ । ६ । १] इति । तत्र संशयः—किमियमेका विद्या, अग्निरहस्यबृहदा-

---

रत्नप्रभा ।

आचमनविधिः, काण्वे ध्यानविधिरिति कस्यचिन्मतं निराकरोति—**योऽपीति** ॥ १८ ॥ (९) ॥ **समान एवं चाभेदादिति** ॥ शाण्डिल्येन दृष्टा तन्नाम्नांकिता । अन्तर्हृदये व्रीह्यादिवत् सूक्ष्मं तिष्ठतीत्यर्थः ॥ अभ्यासप्रत्यभिज्ञानाभ्यां संशयमाह—**तत्रेति** ॥ गुणानुपसंहारोपसंहारौ पूर्वोत्तरपक्षयोः फलम् । पूर्वत्र प्राप्ताचमनानुवादेनानग्नताध्यानविधिरुक्तः ॥ इह त्वेकशाखायां विप्रकृष्टदेशस्थवाक्ययोरेकस्य विधि-

भामती ।

हितार्थम् ॥ १८ ॥ (९) ॥ **समान एवं चाभेदात्** । इहाभ्यासाधिकरणन्यायेन पूर्वः पक्षः । द्वयोर्विद्याविध्योरेकशाखागतयोरगृह्यमाणविशेषतया कस्य कोऽनुवाद इति विनिश्चयाभावादज्ञातज्ञापनाप्रवृत्तप्रवर्तनारूपस्य च विधित्वस्य स्वरससिद्धेरुभयत्रोपासनाभेदः । न च गुणान्तरविधानायैकत्रानुवाद उभयत्रापि गुणान्तरविधानोपलब्धेर्विनिगमनाहेत्वभावात्समानगुणानभिधानप्रसङ्गाच्च । तस्मात्समिधो यजतीत्यादिवदभ्यासादुपासनाभेद इति प्राप्त उच्यते—ऐककर्म्यमेकत्वेन प्रत्यभिज्ञानात् । न चागृह्यमाणविशेषता

आनन्दगिरीय—न्यायनिर्णयः ।

पाठवैयर्थ्यार्थे माध्यंदिनानामाचमने विधिरिष्यतामित्याशंक्य श्रुत्यन्तरानुसारेण तत्रापि चिन्तनमेव विधेयमित्याह—**तस्मादिति** । एवंवित्त्वमेवेत्युक्तं व्यनक्ति—**प्रकृतेति** । यदाचामेदित्यनूद्य तदेवंविदिति वेदनमेव विधीयत इत्यर्थः । शाखाभेदेनोदितानुदितहोमवदुभयमपि विधेयमित्येकदेशिमतमाशंक्याऽऽह—**योऽप्ययमिति** । एकीयव्यवस्थायोगे फलितमाह—**तस्मादिति** ॥ १८ ॥ (९) ॥ पूर्वत्र प्राप्ताचमनानुवादेनानग्नताचिन्तनं विधेयमित्युक्तम् । इह तु वाक्ययोः कस्य विधित्वं कस्य वाऽनुवादित्वमित्यनिश्चयाद् द्वयोरपि विद्याविधित्वमाशंक्याऽऽह—**समान इति** । शांडिल्यविद्यामुदाहरति—**वाजसनेयीति** । शांडिल्येन दृष्टेति तन्नाम्नाऽङ्किता चिह्निता विशेषिता विद्येति यावत् । एतस्यां शाखायां देशभेदेन कृतां विद्यां विषयीकृत्याभ्यासात्प्रत्यभिज्ञानाच्च संशयमाह—**तत्रेति** । अत्र च विद्याभेदादिनिरूपणद्वारा वाक्यार्थधीसाधनस्यैव निरूपणात्पादादिसंगतिः । पूर्वपक्षे पौनरुक्त्यपरिहाराय विद्याभेदाद्गुणानुपसंहारः ।

रण्यकयोर्गुणोपसंहारश्च-उत-द्वे इमे विद्ये, गुणानुपसंहारश्चेति ॥ किं तावत् प्राप्तम् ॥ विद्याऽभेदो गुणव्यवस्था चेति ॥ कुतः ॥ पौनरुक्त्यप्रसङ्गात् ॥ भिन्नासु हि शाखास्वध्येतृवेदितृभेदात्पौनरुक्त्यपरिहारमालोच्य विद्यैकत्वमध्यवसायैकत्रातिरिक्ता गुणा इतरत्रोपसंह्रियन्ते प्राणसंवादादिष्वित्युक्तम् । एकस्यां पुनः शाखायामध्येतृवेदितृभेदाभावादशक्यपरिहारे पौनरुक्त्ये न विप्रकृष्टदेशस्थैका विद्या भवितुमर्हति ॥ न चात्रैकमाम्नानं विद्याविधानार्थम्, अपरं गुणविधानार्थमिति विभागः सम्भवति । तदा ह्यतिरिक्ता एव गुणा इतरत्रेतरत्र चाम्नायेरन् । असमानाः समाना अपि तूभयत्राम्नायन्ते मनोमयत्वादयः ॥ तस्मान्नान्योन्यगुणोपसंहार इति ॥ एवं प्राप्ते ब्रूमहे ॥ यथा-भिन्नासु शाखासु विद्यैकत्वं गुणोपसंहारश्च भवति, एवमेकस्यामपि शाखायां भवितुमर्हति । उपास्याभेदात् । तदेव हि ब्रह्म मनोमयत्वादिगुणकमुभयत्राप्युपास्यमभिन्नं प्रत्यभिजानीमहे, उपास्यं च

रत्नप्रभा ।

त्वमन्यस्यानुवादत्वमित्यनिश्चयाद् द्वयोरपि विद्याविधित्वमिति प्रत्युदाहरणेन पूर्वपक्षयति-किं तावदिति ॥ यत्पुनरुक्तं, तद्विद्यान्तरमिति न व्याप्तिः । प्राणपञ्चाग्न्यादिविद्यासु व्यभिचारादित्याशङ्क्य शाखाभेदे पुनरुक्तिरसिद्धेत्युक्तमित्याह-भिन्नास्विति ॥ यथाऽग्निहोत्रवाक्ये कर्मणि विधिः, "दध्ना जुहोति" इति वाक्ये गुणविधिः, तथात्राप्यस्तु, न विद्याभेद इत्याशंक्याह-न चात्रैकमिति ॥ उक्तगुणानां पुनरुक्तिर्वृथा स्यात् ॥ अतोऽभ्यासाद्विद्याभेदः प्रयाजभेदवदिति भावः ॥ उक्तगुणोक्तिर्न वृथा कतिपयगुणविशिष्टोपास्याभेदप्रत्यभिज्ञानार्थत्वात् ॥ अत उपास्यरूपाभेदात् भिन्नशाखास्विव समानशाखायामपि विद्यैक्यमिति सिद्धान्तसूत्रं योजयति-यथेति ॥ सौत्रश्चकारोऽप्यर्थो व्याख्यातः ॥ यत्र बहवो गुणाः श्रुताः

भामती ।

यत्र भूयांसो गुणा यस्य कर्मणो विधीयन्ते तत्र तस्य प्रधानस्य विधिरितरत्र तु तदनुवादेन कतिपयगुणविधिः । यथा यत्र छत्रचामरपताकाहास्तिकाश्वीयशाक्तीकयाष्टीकधानुष्ककार्पाणिकप्रासिकपदातिप्रचयस्तत्रास्ति राजेति गम्यते न तु कतिपयगजवाजिपदातिभाजि तदमात्ये, तथेहापि । न चैकत्र विहितानां गुणानामितरत्रोक्तिरनर्थिका प्रत्यभिज्ञानदार्ढ्यार्थत्वात् । अस्तु वास्मिन्नित्यानुवादो न ह्यनुवादा-

आनन्दगिरीय-न्यायनिर्णयः ।

सिद्धान्ते विद्यैक्येऽप्यपौनरुक्त्याद्गुणोपसंहार इति मत्वा विमृश्य पूर्वपक्षयति-किं तावदिति । गौरवदुष्टं विद्यानानात्वमयुक्तमित्याह-कुत इति । प्रामाणिकं गौरवमदूषणमिति मत्वाऽऽह-पौनरुक्त्येति । विद्याभेदे पौनरुक्त्यमन्यासं भिन्नशाखासु विद्यैक्येऽपि पौनरुक्त्यदृष्टेरित्याशंक्याऽऽह-भिन्नास्विति । अध्येतृभेदेन शब्दपौनरुक्त्यं वेदितृभेदेन चार्थपौनरुक्त्यं परिह्रियते शाखाभेदेऽपि देशभेदोक्तविद्याफलार्थिनां प्रतिपत्तृत्वात्तत्तद्वाक्याध्येतृत्वाचापौनरुक्त्यमित्याशंक्यैकशाखाध्ययनस्य नित्यविधित्वेनैव प्राप्तत्वान्मैवमित्याह-एकस्यामिति । अग्निहोत्रं जुहोतीत्यत्र सिद्धं जुहोत्यर्थमनूद्य दध्ना जुहोतीतिगुणविधिवदिहापि स्यादित्यपौनरुक्त्यमाशंक्याऽऽह-न चेति । द्वयोरदृष्टविशेषतया विधित्वानुवादत्वानिश्चयात्तुल्यगुणोक्तिवैयर्थ्याच्च नेयं व्यवस्थेत्याह-तदेति । अपौनरुक्त्याय विद्याभेदाद्गुणानुपसंहार इत्युपसंहरति-तस्मान्नेति । उक्तमनूद्य सिद्धान्तयति-एवमिति । क्रियापदेनेतिशब्दस्य संबन्धः । हेतुमादाय व्याकरोति-उपास्येति । तदैक्ये गम्यमानेऽपि न विद्यैक्यं तदैक्ये हेत्वभावादित्याशंक्य रूपाभेदो हेतुरित्याशंक्याऽऽह-उपास्यं चेति । तस्य हेतुत्वमेव स्फुटयति-

रूपं विद्यायाः । न च विद्यमाने रूपाभेदे विद्याभेदमध्यवसातुं शक्नुमः । नापि विद्याभेदे गुणव्यवस्थानम् ॥ ननु पौनरुक्त्यप्रसङ्गाद्विद्याभेदोऽध्यवसितः ॥ नेत्युच्यते ॥ अर्थविभागोपपत्तेः—एकं ह्याम्नानं विद्याविधानार्थम्, अपरं गुणविधानार्थमिति न किञ्चिन्नोपपद्यते ॥ नन्वेवं सति यदपठितमग्निरहस्ये, तदेव बृहदारण्यके पठितव्यं—"स एष सर्वस्येशानः" इत्यादि ॥ यत्तु पठितमेव मनोमयत्वादि, तन्न पठितव्यम् ॥ नैष दोषः ॥ तद्बलेनैव प्रदेशान्तरपठितविद्याप्रत्यभिज्ञानात् । समानगुणाम्नानेन हि विप्रकृष्टदेशां शाण्डिल्यविद्यां प्रत्यभिज्ञाप्य तस्यामीशानत्वाद्युपदिश्यते । अन्यथा हि कथं तस्यामयं गुणविधिरभिधीयते । अपि चाप्राप्तांशोपदेशेनार्थवति वाक्ये सञ्जाते प्राप्तांशपरामर्शस्य नित्यानुवादतयाप्युपपद्यमानत्वान्न तद्बलेन प्रत्यभिज्ञोपेक्षितुं शक्यते ॥ तस्मादत्र समानायामपि शाखायां विद्यैकत्वं गुणोपसंहारश्चेत्युपपन्नम् ॥ १९ ॥ इति समानाधिकरणम् ॥ १० ॥

## सम्बन्धादेवमन्यत्रापि ॥ २० ॥ (११) ॥

---

रत्नप्रभा ।

तत्र प्रधानविधिः, अन्यत्र तदनुवादेन गुणविधिरिति निश्चयादग्निरहस्ये प्रधानविधिवदुत्तरत्र गुणविधिरिति भावः ॥ १९ ॥ ( १० ) ॥ **सम्बन्धादेवमन्यत्रापीति** ॥ सद्—भूतत्रयं, त्यद्—वाय्वाका-

भामती ।

नामवश्यं सर्वत्र प्रयोजनवत्त्वम् । अनुवादमात्रस्यापि तत्रतत्रोपलब्धेः । तस्मात्तदेव बृहदारण्यकेऽप्युपासनं तद्गुणेनोपसंहारादिति सिद्धम् ॥ १९ ॥ ( १० ) ॥ **संवन्धादेवमन्यत्रापि** ॥ यद्येकस्यामपि

आनन्दगिरीय—न्यायनिर्णयः ।

**न चेति** । प्रत्यभिज्ञाविरोधादित्यर्थः । विद्यैक्ये फलितमाह—**नापीति** । गुणव्यवस्थानमध्यवसातुं शक्नुम इति संबन्धः । अध्येतृवेदितृभेदाभावात्पौनरुक्त्यमुक्तं स्मारयति—**नन्विति** । अर्थभेदसंभवान्न पौनरुक्त्यमित्याह—**नेतीति** । अदृश्यमानविशेषतया कस्य कोऽनुवाद इत्यनिश्चयान्नार्थविभागसिद्धिरित्याशंक्य यत्र भूयांसो गुणा विधीयन्ते तत्र प्रधानविधिरन्यत्र तदनुवादेन गुणविधिरिति विभागमभिप्रेत्याऽऽह—**एकं हीति**।तुल्यगुणोक्तिवैयर्थ्यमुक्तं स्मारयति—**नन्विति**।बृहदारण्यके प्रधानविधिरग्निरहस्ये गुणविधिरित्येवं विभागे सतीति यावत् । प्रत्यभिज्ञादार्ढ्यार्थं तुल्यगुणोक्तिरर्थवतीत्याह—**नेति** । तदेव स्फुटयति—**समानेति** । प्रत्यभिज्ञानस्याकिंचित्करत्वमाशंक्याऽऽह—**अन्यथेति** । तस्यां बृहदारण्यके गुणविधानार्थमग्निरहस्योक्तायामिति यावत् । अयं गुणविधिरीशानत्वादिगुणकथनमित्यर्थः । अग्निरहस्योत्पन्नां विद्यामनूद्य विशिष्टगुणत्वेन बृहदारण्यके तस्यां गुणविधानमित्युक्तम् । इतश्च तुल्यगुणोक्तिप्राप्ता प्रत्यभिज्ञा नोपेक्षितव्येत्याह—**अपि चेति** । तदेव कैमुतिकन्यायेन स्फोरयति—**अप्राप्तेति** । नान्तरिक्षे न दिवीत्यादिषु निष्फलानुवादस्यापि निर्दोषत्वात्प्रकृते तुल्यगुणानुवादस्य प्रत्यभिज्ञानार्थत्वेनार्थवत्त्वात्तुल्यगुणोक्तिकृता प्रत्यभिज्ञा नोपेक्षितुं शक्या, तेनेशानत्वादिगुणवद्विद्योक्त्या बृहदारण्यकवाक्ये समानार्थे मनोमयत्वादितुल्यगुणानुवादस्य यथाकथंचिद्योगेऽपि प्रधानप्रत्यभिज्ञापकत्वेन सफलत्वात्तदधीनप्रत्यभिज्ञायाश्च विशिष्टविधिशेषत्वाद् बृहदारण्यके गुणविधिरन्यत्र प्रधानविधिरित्यर्थः । सिद्धे पुनरुक्तिपरिहारे फलितमाह—**तस्मादिति** ॥ १९ ॥ (१०)॥ विद्यैक्ये गुणोपसंहारमुक्त्वा तदैक्येऽपि तदनुपसंहारस्थलं वदन्पूर्वपक्षयति—**संबन्धादिति** । विषयमाह—

बृहदारण्यके "सत्यं ब्रह्म" [ बृ० ५ । ४ । १ ] इत्युपक्रम्य "तद्यत्तत्सत्यमसौ स आदित्यो य एष तस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः" [ बृ० ५ । ५ । २ ] इति ॥ तस्यैव सत्यस्य ब्रह्मणोऽधिदैवतमध्यात्मं चायतनविशेषमुपदिश्य व्याहृतिशरीरत्वं च सम्पाद्य द्वे उपनिषदावुपदिश्येते-"तस्योपनिषदहरिति" [ बृ० ५ । ५ । २ ] अधिदैवतं, "तस्योपनिषदहमिति" [ बृ० ५ । ५ । २ ] अध्यात्मम् । तत्र संशयः-किमविभागेनैवोभे अप्युपनिषदावुभयत्रानुसन्धातव्ये-उत-विभागेनैकाधिदैवतमेकाध्यात्ममिति । तत्र सूत्रेणैवोपक्रमते-यथा शाण्डिल्यविद्यायां विभा-

रत्नप्रभा ।

शात्मकं,-सत्यं परोक्षभूतात्मकं हिरण्यगर्भाख्यं ब्रह्मोपक्रम्य तद् उक्तं यत्सत्यं, तत्सः, योऽसावादित्यः ॥ किं मण्डलम् ॥ न ॥ तत्र स्थाने पुरुषः करणात्मकः स एवाध्यात्ममक्षिस्थानस्थ इत्युपदिश्य "तस्य भूरिति शिरः" [ बृ० ५ । ५ । ३ ] "भुव इति बाहू" [ बृ० ५ । ५ । ३ ] "सुवरिति" [ बृ० ५ । ५ । ३ ] पादाविति व्याहृतिरूपं शारीरकमुक्त्वा द्वे उपनिषदौ रहस्यदेवतानामनी उपदिश्येते । तस्य आदित्यमण्डलस्थस्य अहरिति नाम । प्रकाशकत्वात् । तस्य अक्षिस्थस्य अहमिति नाम । प्रत्यक्त्वादिति-इदं नामद्वयं विषयः । तत्र नामिनः सत्याख्यस्य ब्रह्मण एकत्वात्,स्थानभेदोक्तेश्च,-संशयमाह-तत्रेति ॥ पूर्वपक्षे प्रतिस्थानं नामद्वयानुष्ठानं, सिद्धान्ते यथाश्रुत्येकैकनामानुष्ठानमिति फलम् ॥ दृष्टान्तसङ्गत्या पूर्वपक्षसूत्रं व्याचष्टे-यथेति ॥ यथा-विद्यैक्यादुपसंहार उक्तः, एवमन्यत्राप्येकविद्याया-

भामती ।

शाखायां तत्त्वेन प्रत्यभिज्ञानादुपासनस्य तत्र विहितानां धर्माणां संकरः । तथा सति सत्यस्यैकस्याभेदान्मण्डलद्वयवर्तिन उपनिषदोरपि संकरप्रसङ्गात् । तस्येति च प्रकृतपरामर्शित्वाद्भेदः। सत्यस्य च प्रधान-

आनन्दगिरीय-न्यायनिर्णयः ।

बृहदिति।'आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त इत्यत्र सत्यशब्दो हिरण्यगर्भवाची तच्च सत्यं हिरण्यगर्भाख्यं ब्रह्म महदित्युपक्रम्येति यावत् । तत्तत्रैवं सति यत्तत्सत्यं ब्रह्म सोऽसावादित्यो विधेयादित्यपेक्षया पुंलिङ्गप्रयोगः । किं मण्डलमेवाऽऽदित्यो नेत्याह-य इति । तस्य स्थानभेदेनाऽऽदित्यचाक्षुषपुरुषात्मनाऽवस्थानमुक्त्वा तावेतावन्योन्यस्मिन्प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन्प्रतिष्ठित इत्यन्योन्यव्यतिषङ्गमुक्त्वाऽऽदित्यपुरुषस्य य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिरो भुव इति बाहू स्वरिति प्रतिष्ठेति व्याहृतिदेहत्वं संपाद्य तस्योपनिषदहरित्यादित्यपुरुषस्याहर्नामत्वमुक्तम् । अनन्तरं च योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर इत्यादिना व्याहृतिदेहत्वं संपाद्य तस्योपनिषदहमित्यहंनामत्वमुक्तम् । उपनिषदिति देवतामुपगमयतीति तत्प्रकाशकं रहस्यं नामोच्यते । अहःशब्दः प्रकाशवचनोऽहंशब्दः प्रत्यगात्मवाची तदाह-तस्येत्यादिना । उपनिषद्द्वयं विषयीकृत्य सत्यब्रह्मैक्यस्थानभेदाभ्यां संशयमाह-तत्रेति । अत्र च सत्यविद्यायामुपनिषद्द्वयवस्थोक्त्या वाक्यार्थधीहेतुचिन्तनात्पादादिसंगतिः । पूर्वपक्षे विद्यैक्याद्गुणोपसंहारनियमे सत्युपनिषदोः सांकर्यादतिदेशासिद्धिः । सिद्धान्ते विद्यैक्येऽपि स्थानभेदोपलब्धानां धर्माणामनुपसंहाराद्गुपनिषदोरसंकरादतिदेशः स्यादिति मत्वा पूर्वपक्षसूत्रमादत्ते-तत्रेति । सूत्राक्षराणि योजयति-यथेति । उपनिषदोर्विद्यैक्ये संकरः शंक्येत तदैक्यं कथमित्याशंक्याऽऽह-

१ उपनिषदि एकमक्षरं द्वे अक्षरे इत्युल्लेखानुसारेण सुवरिति पाठः प्रामाणिकः,भुव इतिवत् । न तु स्वरिति । अक्षरशब्दस्य प्रायो लोके अज्विशिष्टे एव रूढत्वात् । यथा भूरिति । आरोप्यमाणानां संख्यावत्तदधिष्ठानेपि संख्याश्रयणस्य स्वारसिकत्वादिति भाति ॥

गेनाप्यधीतायां गुणोपसंहार उक्तः, एवमन्यत्राप्येवञ्जातीयके विषये भवितुमर्हति । एकविद्याभिसम्बन्धात । एका हीयं सत्यविद्याऽधिदैवमाध्यात्मं चाधीता । उपक्रमाभेदाद्, व्यतिषक्तपाठाच्च । कथं तस्यामुदितो धर्मस्तस्यामेव न स्यात । यो ह्याचार्ये कश्चिदनुगमनादिराचारश्चोदितः, स संग्रामगतेऽरण्यगते च तुल्यवदेव भवति ॥ तस्मादुभयोरप्युपनिषदोरुभयत्र प्राप्तिरिति ॥२०॥ एवं प्राप्ते प्रतिविधत्ते—

## न वा विशेषात् ॥ २१ ॥

नैवोभयोरुभयत्र प्राप्तिः ॥ कस्मात् ॥ विशेषात् ॥ उपासनस्थानविशेषोपनिबन्धादित्यर्थः ॥ कथं स्थानविशेषोपनिबन्ध इति ॥ उच्यते ॥ "य एष एतस्मिन्मण्डले पुरुषः" [ बृ० ५ । ५ । २ ] इति ह्याधिदैविकं पुरुषं प्रकृत्य "तस्योपनिषदहः" [ बृ० ५ । ५ । २ ] इति श्रावयति । "यः" "अयं" "दक्षिणेऽक्षन्पुरुषः" [ बृ० ५ । ५ । २ ] इति चाध्यात्मिकं पुरुषं प्रकृत्य "तस्योपनिषदहम्" [ बृ० ५ । ५ । २ ] इति । तस्येति चैतत्स-

---

रत्नप्रभा ।

मुपसंहारो भवितुमर्हतीत्यर्थः ॥ "सत्यं ब्रह्म" इत्युपक्रमाभेदः—"तावेतौ" [ बृ० ५ । ५ । १ ] अक्ष्यादित्यपुरुषौ "अन्योन्यस्मिन् प्रतिष्ठितौ" [ बृ० ५ । ५ । १] आदित्यरश्मीनां चक्षुषि, चक्षुषश्चादित्ये,—प्रतिष्ठानादिति । **व्यतिषक्तपाठः**—मिथःसंश्लेषपाठः । ताभ्यां विद्यैक्यसिद्धिः ॥ विद्यैक्येऽपि किं स्यात्, तत्राह—**कथमिति** ॥ विद्यैक्येऽपि स्थानभेदादुपनिषदोरसङ्करः स्यादित्याशङ्कां दृष्टान्तेन परिहरति—**यो हीति** ॥ २० ॥ नामैक्यात् नामसङ्करो युक्तः ॥ तथा चाक्षिस्थः, अहरिति नामवान्, सत्यब्रह्मत्वाद्, आदित्यस्थाहरिति नामवदिति प्राप्ते सिद्धान्तसूत्रं योजयति—**न वेति** ॥ नाम्नोरुपासनस्थानविशिष्टसम्बन्धित्वादित्यर्थः ॥ "तस्योपनिषदहः" [ बृ० ५ । ५ ।२] "अहः" [ बृ० ५ । ५।२] इति च वाक्यद्वयेन तच्छब्दपरामृष्टयोः सन्निहितस्थानविशिष्टयोः पुरुषयोर्नामसम्बन्धपरेणोपसंहारानुमानं बाध्यमिति

भामती ।

य।प्रकृतत्वादधिदैवमित्यस्य विशेषणतयोपसर्जनत्वेनाप्रस्तुतत्वात्प्रस्तुतस्य च सत्यस्याभेदात्पूर्ववद्गुणसंकरः॥२०॥ इति प्राप्त उच्यते—**न वा विशेषात्** । सत्यं यत्र स्वरूपमात्रसंबन्धो धर्माणां श्रूयते तत्रैवं स्वरूपस्य सर्वत्र प्रत्यभिज्ञायमानत्वात्तन्मात्रसंबन्धित्वाच्च धर्माणाम् । यत्र तु सविशेषणं प्रधानमवगम्यते तत्र सविशेषणस्यैव

आनन्दगिरीय—न्यायनिर्णयः ।

**एकेति** । विद्यैक्ये हेतुमाह—**उपक्रमेति** । सत्यं ब्रह्मेत्युपक्रमाभेदस्तावेतावन्योन्यस्मिन्नित्यादिव्यतिषिक्तपाठस्ताभ्यां विद्यैक्यं सिद्धमित्यर्थः । तदैक्येऽपि किं स्यात्तदाह—**कथमिति** । विद्यैक्येऽपि स्थानभेदादुपनिषदोरसंकरः स्यादित्याशंक्य दृष्टान्तेन परिहरति—**यो हीति** । तस्योपनिषदिति प्रकृतसत्यपरामर्शात्तस्य प्रधानस्याभेदाद्विशेषणतया स्थानस्योपसर्जनत्वाद्गुणप्रधानयोश्च प्रधाने संप्रत्ययात्तदविनाभावात्तदुपसंहारो गुणानामित्यर्थः । विद्यैक्ये गुणोपसंहारध्रौव्ये फलितमाह—**तस्मादिति** ॥ २० ॥ सिद्धान्तयति—**एवमिति** । वाशब्दस्यावधारणार्थत्वमुपेत्य प्रतिज्ञां विभजते—**न वेति** । ध्येयाभेदे ध्यानभेदात्किमिति न प्राप्तिरित्याह—**कस्मादिति** । हेतुं गृहीत्वा व्याचष्टे—**विशेषादिति** । ध्यानध्येयोपसर्जनभूतौ स्थानविशेषौ ताभ्यामुपनिषदोर्योगाद्व्यवस्था तयोर्युक्तेत्यर्थः । तस्येतिपरामृष्टब्रह्मणो नामद्वयविधाने तस्य स्थानविशेषसंगतिरसिद्धेति शंकते—**कथमिति** । उपनिषदोः स्थानविशेषयोगं साधयति—**उच्यत इति** । निकृष्टं ब्रह्मैव प्रधानं तच्छब्दमुपनिषद्भ्यां संबद्धमित्याशंक्याऽऽह—**तस्येति** । तस्योपनिषदित्युभयत्र तच्छब्देनाधिदैवादिविशिष्टस्यैव परामर्शात्तद्योगित्वादुपनिषदोः स्वरूपमात्रासंबन्धात्तद्द्वयं व्यवस्थयाऽनुसंधेयम् ।

न्निहितालम्बनं सर्वनाम॥ तस्मादायतनविशेषव्यपाश्रयेणैवैते उपनिषदावुपदिश्येते। कुत उभयोरुभयत्र प्राप्तिः॥ नन्वेक एवायमधिदैवतमध्यात्मं च पुरुषः। एकस्यैव सत्यस्य ब्रह्मण आयतनद्वयप्रतिपादनात्॥ सत्यमेवमेतत्॥ एकस्याऽपि त्ववस्थाविशेषोपादानेनैवोपनिषद्विशेषोपदेशात्तदवस्थस्यैव सा भवितुमर्हति। अस्ति चायं दृष्टान्तः—सत्यप्याचार्यस्वरूपानपाये यदाचार्यस्यासीनस्यानुवर्तनमुक्तं, न तत्तिष्ठतो भवति। यच्च तिष्ठत उक्तं, न तदासीनस्येति। ग्रामारण्ययोस्त्वाचार्यस्वरूपानपायात्तत्स्वरूपानुबद्धस्य च धर्मस्य ग्रामारण्यकृतविशेषाभावादुभयत्र तुल्यवद्भाव इत्यदृष्टान्तः सः॥ तस्माद्व्यवस्थाऽनयोरुपनिषदोः॥ २१॥

## दर्शयति च॥ २२॥

अपि चैवञ्जातीयकानां धर्माणां व्यवस्थितिलिङ्गदर्शनं भवति—"तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम" [छां० १।७।५] इति॥ कथमस्य लिंगत्वमिति॥ तदुच्यते॥ अक्ष्यादित्यस्थानभेदभिन्नान्धर्मानन्योन्यस्मिन्ननुपसंहार्यानपश्यन्निहातिदेशेनाऽऽदित्यपुरुषगतान्रूपादीनक्षिपुरुष उपसंहरति "तस्यैतस्य तदेव रूपम्" [ छां० १।७।५ ] इत्यादिना॥ तस्माद्व्यवस्थिते एवैते उपनिषदाविति निर्णयः॥ २२॥ इति सम्बन्धाधिकरणम्॥ ११॥

---

रत्नप्रभा।

भावः॥ विशेष्यैक्यान्नामसंकर इत्याशङ्क्य स्थानभेदेन विशिष्टपुरुषभेदात् नामव्यवस्थामाह—नन्वित्यादिना॥ विशिष्टसम्बन्धे दृष्टान्तमाह—अस्तीति॥ प्रतिदृष्टान्तस्य स्वरूपसम्बन्धित्वाद् विशिष्टे ध्येये प्रकृते दृष्टान्तत्वं नास्तीत्याह—ग्रामेति॥ २१॥ उक्तनामव्यवस्थायामतिदेशो लिंगमित्याह—दर्शयति चेति॥ विद्यैक्यादेवोपसंहारसिद्धौ अतिदेशो वृथा स्यात्॥ तस्मादेकविद्यायामपि स्थानभेदेन उक्तगु-

भामती।

तस्य धर्माभिसंबन्धो न निर्विशेषणस्य नाप्यन्यविशेषणसहितस्य। न हि दण्डिनं पुरुषमानयेत्युक्ते दण्डरहितः कमण्डलुमानानीयते। तस्मादधिदैवं सत्यस्योपनिषदुक्ता न तस्यैवाध्यात्मं भवितुमर्हति। यथा चाचार्यस्य गच्छतोऽनुगमनं विहितं न तिष्ठतो भवति तस्मान्नोपनिषदोः संकरः किंतु व्यवस्थितिः। तदिदमुक्तं—स्वरूपानपायादिति॥ २१॥ दर्शयति च। अतिदेशादप्येवमेव तत्त्वे हि नातिदेशः

आनन्दगिरीय—न्यायनिर्णयः।

न हि सर्वनाम संनिहितं हित्वा व्यवहितं स्पृशतीत्यर्थः। तच्छब्दस्य विशिष्टार्थत्वे फलितमाह—तस्मादिति। विशेषणभेदेऽपि विशेष्याभेदादुपसंहारः स्यादिति शंकते—नन्विति। विशेष्याभेदमङ्गीकरोति—सत्यमिति। तर्हि कथमुपनिषद्व्यवस्थेत्याशंक्य विशिष्टभेदात्तन्निष्ठत्वाच्च तयोरित्याह—एकस्येति। उक्तेऽर्थे दृष्टान्तमाह—अस्तीति। प्रतिदृष्टान्तोऽपि दर्शित इत्याशंक्याऽऽह—ग्रामेति। तत्र स्वरूपोपाधावुक्तत्वादुक्तं तुल्यत्वमिह तु विशिष्टोपाधावुक्तेर्व्यवस्थेत्यर्थः। विशिष्टोपाध्युक्तिफलमाह—तस्मादिति॥ २१॥ उपनिषदोर्व्यवस्थितत्वे हेत्वन्तरमाह—दर्शयति चेति। तदेव व्याकरोति—अपि चेति। यथोक्तं वाक्यं धर्माणां संकरमेव दर्शयतीति शंकते—कथमिति। अत्यन्तसंकरे सत्यभेद एवेति नातिदेशस्तेन तद्वशाद्विद्यैक्येऽपि स्वतो नात्यन्तसंकरो धर्माणामित्याह—तदिति। उपनिषदोस्त्वतिदेशाभावाद्व्यवस्थैवेत्युपसंहरति—तस्मादिति॥ २२॥ ( ११ )॥ आयतनभेदाद्गुणानुपसंहारमुक्त्वा तेनैव हेतुना

---

१ भेदान्तर्गतराणायनीया।

## सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥ (१२) ॥

**"ब्रह्मज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान" इत्येवं राणायनीयानां खिलेषु वीर्यसम्भृतिद्युनिवेशप्रभृतयो ब्रह्मणो विभूतयः पठ्यन्ते। तेषामेव चोपनिषदि शाण्डिल्यविद्याप्रभृतयो ब्रह्मविद्याः पठ्यन्ते। तासु ब्रह्मविद्यासु ता ब्रह्मविभूतय उपसंह्रियेरन्न वेति विचारणायां ब्रह्मस-**

---

रत्नप्रभा ।

णानां विनातिदेशमनुपसंहार इति सिद्धम् ॥ २२ ॥ ( ११ ) ॥ **सम्भृतिद्युव्याप्त्यपि चातः** ॥ ब्रह्मैव ज्येष्ठं कारणं येषां तानि **ब्रह्मज्येष्ठा**। निलोपश्छान्दसः॥**वीर्या** वीर्याणि पराक्रमविशेषाः आकाशोत्पादनादयः। तानि च वीर्याणि **सम्भृतानि** निर्विघ्नं सम्बद्धानि। सर्वनियन्तुः कार्ये विघ्नकर्तुरसत्त्वात्। तच्च ज्येष्ठं ब्रह्म **अग्रे** देवाद्युत्पत्तेः प्रागेव **दिवं** स्वर्गम् **आततान** व्याप्तवत्। सदा सर्वव्यापकमित्यर्थः॥ सर्वप्राथम्यं स्पर्धानर्हत्वमिति वाक्यशेषस्था गुणाः प्रभृतिपदग्राह्याः॥ **खिलेष्विति** । विधिनिषेधशून्यवाक्येष्वित्यर्थः ॥ ब्रह्मसम्बन्धाद्विद्याभेदभानाच्च संशयमाह—**तास्विति** ॥ अनारभ्याधीतब्रह्मविभूतीनां

भामती ।

स्यादिति ॥२२॥(११)॥ **संभृतिद्युव्याप्त्यपि चातः** । 'ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान । ब्रह्म भूतानां प्रथमं तु जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः' । ब्रह्म ज्येष्ठं येषां तानि ब्रह्मज्येष्ठा जज्ञे आस । यद्यपि तासुतासु शाण्डिल्यादिविद्यास्वायतनभेदपरिग्रहेणाध्यात्मिकायतनत्वं संभृत्यादीनां गुणानामाधिदैविकत्वमित्यायतनभेदः प्रतिभाति । तथापि ज्यायान् दिव इत्यादिना संदर्भेणाधिदैविकविभूतिप्रत्यभिज्ञानात्षोडशकलाद्यासु च विद्या स्वायतनाश्रवणादन्ततो ब्रह्माश्रयतया साम्येन प्रत्यभिज्ञासंभवात्, संभृत्यादीनां गुणानां शाण्डिल्यादिविद्यासु षोडशकलादिविद्यासु चोपसंहार इति पूर्वः पक्षः । राद्धान्तस्तु—मिथः समानगुणश्रवणं प्रत्यभिज्ञाय यद्विद्या अपूर्वानपि तत्राश्रुतान्गुणानुपसंहारयति न त्विह संभृत्यादिगुणकब्रह्मविद्यायां शाण्डिल्यादिविद्यागतगुणश्रवणमस्ति । या तु काचिदाधिदैविकी विभूतिः शाण्डिल्यादिविद्यायां श्रूयते तस्यास्तत्प्रकरणाधीनत्वात्तावन्मात्रं ग्रहीष्यते नैतावन्मात्रेण संभृत्यादीननुक्रष्टुमर्हति । तत्रैतत्प्रत्यभिज्ञानाभावादित्युक्तम् । ब्रह्माश्रयत्वेन तु प्रत्यभिज्ञानसमर्थनमतिप्रसक्तम् । भूयसीनामैक्यप्रस-

आनन्दगिरीय—न्यायनिर्णयः ।

संभृतिप्रभृतीनां गुणानां विद्यान्तरेष्वनुपसंहारमाह—**संभृतीति** । पूर्वन्यायेनैव वाक्यान्तरं व्याख्यातुमुदाहरति—**ब्रह्मेति** । वीर्या वीर्याणि पराक्रमभेदाः । अन्ये हि पुरुषाः सहायानपेक्ष्य विक्रमान्बिभ्रति तेन तत्पराक्रमाणां तत एव नियतपूर्वत्वरूपकारणत्वेन ज्येष्ठा भवन्ति किंतु तत्सहकारिणोऽपि । ब्रह्मवीर्याणां तु ब्रह्मैव ज्येष्ठं ब्रह्म ज्येष्ठं येषां तानि तथा। ब्रह्म खल्वनन्यापेक्षं जगजन्मादि करोति। किंचान्येषां पराक्रममाणानां बलवद्भिर्मध्ये भङ्गः संभवति तेन ते स्ववीर्याणि न बिभ्रति । ब्रह्मवीर्याणि तु ब्रह्मणा संभृतान्यविघ्नेन संभृतानीत्यर्थः । तज्ज्येष्ठं ब्रह्माग्रे देवादिजन्मतः प्रागेव दिवं स्वर्गमाततान व्याप्तवन्नित्यमेव विश्वव्यापकमित्यर्थः । 'ब्रह्म भूतानां प्रथमं तु जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं क' इत्युत्तरो भागः । खिलेषु विधिनिषेधहीनेषु परिशिष्टोपदेशेषु ग्रन्थेष्विति यावत् । विषयमुक्त्वा संशयं वक्तुं भूमिकां करोति—**तेषामिति** । ब्रह्मसंबन्धाद्विद्याभेददृष्ट्या च संशयमाह—**तास्विति** । अत्र च विद्याभेदेन गुणानुपसंहारोक्त्या वाक्यार्थधीहेतोरेव चिन्तनात्पादादिसंगतिः । पूर्वपक्षे विद्याभेदस्य गुणव्यवस्थापकत्वासिद्धिः । सिद्धान्ते तत्सिद्धिरिति मत्वा पूर्वपक्षयति—**ब्रह्मेति** । न चाऽऽधिदैविकगुणानामाध्यात्मिकविद्यास्वनुपसंहारः । एष हि सर्वेषु लोकेषु भातीत्यादिषु व्यभिचारात् । अनुपसंहारे च पृथगुपासनं तत्फलं च कल्प्यमिति गौर-

---

१ सामशाखाभेदान्तर्गत—राणायनीय—खिलग्रन्थे इत्यर्थः ।

म्बन्धादुपसंहारप्राप्तौ पठति।सम्भृतिद्युव्याप्तिप्रभृतयो विभूतयः शाण्डिल्यविद्याप्रभृतिषु नोपसंहर्तव्याः ॥ अत एव च-आयतनविशेषयोगात्तथाहि शाण्डिल्यविद्यानां हृदयायतनत्वं ब्रह्मण उक्तम् "एष म आत्मान्तर्हृदये" [ छां० ३ । १४।३ ] इति । तद्वदेव दहरविद्यायामपि "दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः" [ छां० ८ । १ । १ ] इति । उपकोसलविद्यायां त्वक्ष्यायतनत्वं "य एषोऽक्षिणि पुरुषो दृश्यते" [ छां० ४ । १५ । १ ] इति । एवं तत्रतत्र तत्तदाध्यात्मिकमायतनमेतासु विद्यासु प्रतीयते । आधिदैविक्यस्त्वेता विभूतयः सम्भृतिद्युव्याप्तिप्रभृतयः । तासां कुत एतासु प्राप्तिः ॥ नन्वेतास्वप्याधिदैविक्यो विभूतयः श्रूयन्ते—"ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः" [ छां० ३ । १४ । ३ ] "एष उ एव भामनीरेष हि सर्वेषु भूतेषु भाति" [ छां० ४ । १५ । ४ ] "यावान्वायमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते" [ छां० ८ । १ । ३ ] इत्येवमाद्याः । सन्ति चान्या आयतनविशेषहीना अपीह ब्रह्मविद्याः षोडशकलाद्याः ॥ सत्यमेवैतत् ॥ तथाप्यत्र विद्यते विशेषः सम्भृत्याद्यनुपसंहारहेतुः । समानगुणाम्नानेन हि प्रत्युपस्थापितासु विप्रकृष्टदेशास्वपि

रत्नप्रभा ।

ब्रह्मसम्बन्धेन सर्वब्रह्मविद्यासु प्रत्यभिज्ञानादुपसंहार इति पूर्वपक्षः ॥ सिद्धान्तमाह—सम्भृतीति ॥ सम्भृतिश्च द्युव्याप्तिश्च सम्भृतिद्युव्याप्ति । तदपि सर्वत्र नोपसंहर्तव्यम् । उपनिषदोरिव व्यवस्थापकविशेषयोगादिति सूत्रयोजना ॥ आध्यात्मिकायतनविशेषयुक्तविद्यास्वाधिदैविकविभूतीनां प्रत्यभिज्ञाने हेत्वभावात् न प्राप्तिरित्युक्ते हेतुं शङ्कते—नन्वेतास्विति ॥ आधिदैविकत्वसाम्यादाध्यात्मिकायतनहीनत्वसाम्याद्वा तत्तद्विद्यासु सम्भृत्यादीनां प्राप्तिरिति शङ्कार्थः ॥ उक्तहेतुद्वयं न गुणप्रापकम् । आधिदैविकविद्यानां, शाण्डिल्यदहरादीनामायतनहीनविद्यानां च,—मिथो गुणसाङ्कर्यप्रसङ्गात् ॥ तस्मात्कतिपयसमानगुणविशिष्टोपास्यरूपैक्यं विद्यैक्यमावहद्गुणप्राप्तिहेतुः। तदभावात् न प्राप्तिरिति परिहरति—सत्यमित्या-

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

दम् । अतो द्युनिवेशादीनां ब्रह्मसंबन्धेन सर्वत्र प्रत्यभिज्ञानादुपसंहार इत्यर्थः । सिद्धान्तमवतार्य योजयति—एवमिति । संभृतिश्च द्युव्याप्तिश्च संभृतिद्युव्याप्ति तदपि सर्वत्र नोपसंहर्तव्यमुपनिषदोरिव विशेषयोगव्यवस्थानादित्यर्थपरतया सूत्रं व्याख्यातमित्यर्थः । इदानीं चकारस्यावधारणार्थत्वं गृहीत्वा हेतुं विवृणोति—तथाहीति । आयतनभेदयोगमुक्तमुपसंहरति—एवमिति । कथं तावता संभृत्यादीनामेतासु विद्यास्वनुपसंहारस्तत्राऽऽह—आधिदैविक्यस्त्विति । आध्यात्मिकविद्यास्वपि संभृत्याद्याधिदैविकगुणानामुपसंहारः स्यादिति लिंगेन शंकते—नन्विति । ज्यायान्दिव इति शांडिल्यविद्यायामेष उ एवेत्याद्युपकोसलविद्यायां यावान्वा अयमाकाश इति दहरविद्यायामिति भेदः । अध्यात्माधिदैवभेदादनुपसंहारश्चेत्तर्हि तद्भेदशून्योपासनासूपसंहारः स्यादित्याह—सन्ति चेति । आध्यात्मिकविद्यास्वाधिदैविकविभूतीनामायतनभेदशून्यब्रह्मधियां चास्मिन्प्रकरणे सत्त्वमंगीकरोति—सत्यमिति । तर्हि षोडशकलाद्यासु ब्रह्मविद्यासु संभृत्यादिगुणानां किमित्युपसंहारो न स्यादित्याशंक्याऽऽह—तथाऽपीति। विशेषहेतुमेव विवृणोति—समानेति । प्रकृतेऽपि विद्याप्रत्यभिज्ञया गुणोपसंहारः स्यादित्याशंक्याह—

विद्यासु विप्रकृष्टदेशगुणा उपसंह्रियेरन्निति युक्तम् ॥ सम्भृत्यादयस्तु शाण्डिल्यादिवाक्यगोचराश्चगुणाः परस्परव्यावृत्तस्वरूपत्वान्न प्रदेशान्तरवर्तिविद्याप्रत्युपस्थापनक्षमाः ॥ न च ब्रह्मसम्बन्धमात्रेण प्रदेशान्तरवर्तिविद्याप्रत्युपस्थापनमुच्यते।विद्याभेदेऽपि तदुपपत्तेः। एकमपि ब्रह्म विभूतिभेदैरनेकैरनेकधोपास्यत इति स्थितिः। परोवरीयस्त्वादिवद्धेददर्शनात् ॥ तस्माद्वीर्यसम्भृत्यादीनां शाण्डिल्यविद्यादिष्वनुपसंहार इति ॥ २३ ॥ इति सम्भृत्यधिकरणम् ॥ १२ ॥

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥ (१३) ॥

रत्नप्रभा ।

दिना ॥ स्थानविशिष्टभेदात् नाम्नोर्व्यवस्थावत् सम्भृत्यादिगुणविशिष्टस्य ब्रह्मणः, शाण्डिल्यादिविद्योक्तगुणविशिष्टब्रह्मणश्च,—मिथो भेदेन रूपभेदात् सम्भृत्यादीनां नोपसंहार इत्युक्तन्यायातिदेशत्वादस्य न संगत्याद्यपेक्षा यथैकस्मिन्नुद्गीथे परोवरीयस्त्वादिगुणोपास्तेर्हिरण्यश्मश्रुत्वाद्युपास्तिर्भिद्यते, तथैकस्मिन्नपि ब्रह्मणि विद्याभेदोपपत्तेः ब्रह्मप्रत्यभिज्ञा न गुणप्रापिकेत्याह—परोवरीयस्त्वादिवदिति ॥ तस्मात् सम्भृत्यादिगुणविशिष्टविद्यान्तरविधिरिति सिद्धम् ॥ २३ ॥ ( १२ ) ॥ पुरुषविद्यायां छान्दोग्यस्थां विद्यामाह—

भामती ।

ज्ञात् । तदिदमुक्तं—संभृत्यादयस्तु शाण्डिल्यादिवाक्यगोचराश्चेति । तस्मात्संभृतिश्च द्युव्याप्तिश्च तदिदं संभृतिद्युव्याप्त्यपि चातः प्रत्यभिज्ञानाभावान्न शाण्डिल्यादिविद्यासूपसंह्रियत इति सिद्धम् ॥ २३॥(१२)॥

पुरुषविद्यायामिव चेतरेषामनाम्नानात् । पुरुषयज्ञत्वमुभयत्राप्यविशिष्टम् । न च विदुषो यज्ञस्येति न सामानाधिकरण्यसंभवः । यज्ञस्यात्मेत्यात्मशब्दस्य स्वरूपवचनत्वात् । यज्ञस्य स्वरूपं यजमानस्तस्य च चेतनत्वाद्विदुष इति सामानाधिकरण्यसंभवः । तस्मात्पुरुषयज्ञत्वाविशेषान्मरणावभृथत्वादिसामान्याच्चैकविद्याध्यवसाने उभयत्र उभयधर्मोपसंहार इति प्राप्तम् । एवं प्राप्त उच्यते—यादृशं ताण्डिनां पैङ्गिनां च पुरुषयज्ञसंपादनं तदायुषश्च त्रेधा व्यवस्थितस्य सवनत्रयसंपादनम् । अशिशिषादीनां च दीक्षादिभावसंपादनं नैवं तैत्तिरीयाणाम् । तेषां न तावत् पुरुषे यज्ञसंपत्तिः । न ह्यात्मा यजमान इत्यत्रायमात्मशब्दः स्वरूपवचनो न हि यज्ञस्वरूपं यजमानो भवति । कर्तृकर्मणोरभेदाभावात् । चेतनाचेतनयोश्चैक्यानुपपत्तेः यज्ञकर्मणोश्चाचेतनत्वात् । यजमानस्य चेतनत्वात् । आत्मनस्तु चेतनस्य यजमानत्वं च विद्वत्त्वं चोपपद्यते । तथा चायमर्थः—एवं विदुषः पुरुषस्य यः संबन्धी यज्ञः तस्य संबन्धितया यजमान आत्मा तथा

आनन्दगिरीय—न्यायनिर्णयः।

संभृत्यादयस्त्विति । तद्धर्मविशिष्टब्रह्मणः शांडिल्यादिविद्यासु श्रुतमनोमयत्वादिधर्मकब्रह्मणश्च भेदान्न प्रत्यभिज्ञेति नोपसंहार इत्यर्थः । विशिष्टभेदेऽपि स्वरूपाभेदात्प्रत्यभिज्ञयोपसंहारसिद्धिमाशंक्याऽऽह—नचेति । कतिपयगुणविशिष्टतयोभयत्राऽऽम्नानं विना स्वरूपमात्रस्यैव प्रत्यभिज्ञानस्य ज्ञानाभेदकत्वे स्यादतिप्रसक्तिरित्यर्थः। तामेव व्यनक्ति—एकमपीति। एकस्यानेकगुणवत्त्वेनानेकधोपास्यत्वे दृष्टान्तमाह—परेति। यथोद्गीथस्यैकस्यैव परोवरीयस्त्वादिगुणवत्त्वेन हिरण्यश्मश्रुत्वादिगुणवत्त्वेन च बहुधोपासनं दृष्टं तथा ब्रह्मणोऽपि तत्तद्गुणकत्वेनानेकधोपासनाद्ब्रह्मसंबन्धमात्रेण प्रत्यभिज्ञाने स्यादतिप्रसक्तिरित्यर्थः। संभृत्यादीनां मनोमयत्वादीनां च विद्याप्रत्यभिज्ञापकत्वायोगे फलितमाह—तस्मादिति ॥ २३ ॥ ( १२ ) ॥ तत्तद्देशभेदसंभिन्नविद्यासु गुणानुपसंहारोक्तिप्रसंगात्कालभेदवद्विद्यायां गुणानुपसंहारमाह—पुरुषेति । विष—

अस्ति ताण्डिनां पैङ्गिनां च रहस्यब्राह्मणे पुरुषविद्या। तत्र पुरुषो यज्ञः कल्पितः। तदीयमायुस्त्रेधा विभज्य सवनत्रयं कल्पितम्। अशिशिषादीनि च दीक्षादिभावे कल्पितानि। अन्ये च धर्मास्तत्रसमधिगताश्चाशीर्मन्त्रप्रयोगादयः। तैत्तिरीयका अपि कश्चित्पुरुषयज्ञं कल्पयन्ति "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी" [ तै० उ० ६।५२।१ ] इत्येतेनानुवाकेन। तत्र संशयः-किमितरत्रोक्ताः पुरुषयज्ञस्य धर्मास्ते, तैत्तिरीयकेषूपसंहर्तव्याः किं वा नोपसंहर्तव्या इति। पुरुषयज्ञत्वाविशे-

रत्नप्रभा।

अस्तीति॥ "पुरुषो वा यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनम्" [ छां० ३। १६। १ ] "अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनꣳ सवनम्" [ छां० ३। १६। ३ ] "अथ यान्यष्टाचत्वारिंशद्वर्षाणि तत्तृतीयं सवनम्" [छां० ३। १६। ५] इतिप्रसिद्धयज्ञसाम्यार्थं सवनत्रयं कल्पितम्। "स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षा ॥ १ ॥ अथ यदश्नाति यत्पिबति यद्रमते" [ छां० ३। १६। २ ] ता उपसदः, "अथ यद्धसति यज्जक्षति यन्मैथुनं चरति" [ छां० ३। १६। ३ ] तानि स्तुतशस्त्राणि, अथ यत्तपोदानादि "ता अस्य दक्षिणाः" [ छां० ३। १६। ४ ] "मरणमेवावभृथः" [ छां० ३। १६। ५] "वस्वादिरूपाः मे प्राणाः इदं सवनत्रयं यावदायुरनुसन्तनुत" इत्याशीः, "अक्षितमस्यच्युतमसि प्राणसꣳशितमसि" [ छां० ३। १६। ६ ] इति मन्त्रत्रयप्रयोगः। षोडशाधिकशतवर्षजीवित्वं फलमिति दर्शितम्। संशयार्थं शाखान्तरीयपुरुषविद्यामाह—तैत्तिरीयका इति॥ अत्र विदुषो यज्ञस्येति षष्ठ्योः सामानाधिकरण्यवैयधिकरण्यानिश्चयात् संशयमाह—तत्रेति॥ उपसंहारानुपसंहारावेव फलम्। पूर्वत्रासाधारणगुणप्रत्यभिज्ञानाभावात् सम्भृत्यादौ विद्याभेद

भामती।

चात्मनो यजमानत्वं च विद्वत्संबन्धिता च यज्ञस्य मुख्ये स्यातामितरथात्मशब्दस्य स्वरूपवाचित्वे विदुषो यज्ञस्येति च यजमानो यज्ञस्वरूपमिति च गौणे स्याताम्। न च सत्यां गतौ तद्युक्तम्। तस्मात्पुरुषयज्ञता तैत्तिरीये नास्तीति तया तावन्न साम्यम्। न च पत्नीयजमानवेदविद्यादिसंपादनं तैत्तिरीयाणामिव

आनन्दगिरीय-न्यायनिर्णयः।

यमाह-अस्तीति। पुरुषो वाव यज्ञ इति सामानाधिकरण्यश्रुतेरर्थमाह-तत्रेति। छान्दोग्यशाखाभेदः सप्तम्यर्थः। तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनमथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यंदिनं सवनमथ यान्यष्टाचत्वारिंशद्वर्षाणि तत्तृतीयं सवनमिति प्रसिद्धयज्ञसाम्यार्थं सवनत्रयं कल्पितमित्याह-तदीयमिति। स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षा अथ यद्धसति यज्जक्षति तत्स्तुतशस्त्रैः शब्दवत्त्वसाम्यादित्याह-अशिशिषेति। तं चेदेतस्मिन्वयसि किंचिद्व्याध्यायुपतपेत्स ब्रूयात्प्राणा वसव इदं मे प्रातःसवनं माध्यंदिनं सवनमनुसंतनुतेत्यादिराशीः सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसंशितमसीति मन्त्रप्रयोगस्तदाह-अन्ये चेति। संशयार्थं शाखान्तरीयपुरुषविद्यामुदाहरति—तैत्तिरीयका इति। तद्गतयोर्विदुषो यज्ञस्येति षष्ठ्योः सामानाधिकरण्यवैयधिकरण्यानिश्चयात्पुरुषविद्यामधिकृत्य संशयमाह-तत्रेति। इतरत्रेति च्छान्दोग्यभेदोक्तिः। अत्र च भेदानुपसंहारोक्त्या वाक्यार्थधीहेतुचिन्तनात्पादादिसंगतिः। पूर्वपक्षे विद्याभेदादुपसंहारः। सिद्धान्ते तद्भेदादनुपसंहार इत्यभिप्रेत्योभयत्रापि मरणावभृथविशिष्टसांपादिकपुरुषयज्ञत्वलक्षणरूपैक्याद्विद्यैक्यं गुणोपसंहारश्चेति पूर्वपक्षयति-पुरुषेति। निषादस्थपतिन्यायेन विदुषो यज्ञस्येति सामानाधिकरण्यात्पुरुषयज्ञस्योभयत्राविशेषादभेदोपसंहा-

षादुपसंहारप्राप्तौ–आचक्ष्महे–नोपसंहर्तव्या इति ॥ कस्मात् ॥ तद्रूपप्रत्यभिज्ञानाभावात् । तदाहाचार्यः–पुरुषविद्यायामिवेति ॥ यथैकेषां शाखिनां ताण्डिनां, पैङ्गिनां च, पुरुषविद्यायामाम्नानं, नैवमितरेषां तैत्तिरीयाणामाम्नानमस्ति । तेषां हीतरविलक्षणमेव यज्ञसम्पादनं दृश्यते । पत्नीयजमानवेदवेदिबर्हिर्यूपाज्यपश्वृत्विगाद्यनुक्रमणात् ॥ यदपि सवनसम्पादनं, तदपीतरविलक्षणमेव–"यत्सायं प्रातर्मध्यन्दिनं च तानि सवनानि" [ तै० उ० ६ । ५२ । १ ] इति ॥ यदपि किञ्चिन्मरणावभृथत्वादिसामान्यं, तदप्यल्पीयस्त्वाद्भूयसा वैलक्षण्येनाभिभूयमानं न प्रत्यभिज्ञापनक्षमम् ॥ न च तैत्तिरीयके पुरुषस्य यज्ञत्वं श्रूयते–विदुषो यज्ञस्येति

---

रत्नप्रभा ।

उक्तः ॥ इह त्वसाधारणावभृथगुणविशिष्टपुरुषयज्ञरूपैक्यप्रत्यभिज्ञानाद् विद्यैक्यमिति प्रत्युदाहरणेन प्राप्ते सिद्धान्तयति—नोपसंहर्तव्या इति ॥ "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा" [ तै० उ० ६ । ९२ । १ ] इति बहुतरधर्मवैलक्ष्ण्यात् न रूपैक्यप्रत्यभिज्ञेत्यर्थः ॥ वेदः कुशमुष्टिः । शमयिता–दमो–दक्षिणेत्यन्वयः ॥ किञ्च छान्दोग्ये त्रिधाविभक्तायुषि सवनत्वकल्पना । अत्र तु सायंकालादाविति वैरूप्यमाह–यदपीति ॥ "यन्मरणं तदवभृथः" [ तै० उ० ६ । ९२ । १ ] "यद्रमते तदुपसदः" [ तै० उ० ६ । ९२ । १ ] इति तित्तिरिश्रुतौ सारूप्यमपि भातीत्यत आह–यदपि किञ्चिदिति ॥ गजोष्ट्रयोश्चतुष्पात्त्वसारूप्यवदिदं सारूप्यं नैक्यप्रयोजकमित्यर्थः ॥ किंच छान्दोग्ये पुरुषयज्ञयोरैक्यं श्रुतम् । अत्र तु भेद इति वैरूप्यान्तरमाह–न चेति ॥ यद्यपि निषादस्थपतिन्यायेन सामानाधिकरण्यं षष्ठ्योर्युक्तम् तथाप्यप्रसिद्धेक्य-

भामती ।

ताण्डिनां पैङ्गिनां वा विद्यते सवनसंपत्तिरप्येषां विलक्षणैव । तस्माद्भूयो वैलक्षण्ये सति न किंचिन्मात्रसालक्षण्याद्विद्यैकत्वमुचितमतिप्रसङ्गात् । अपि च तस्यैवं विदुष इत्यनुवादश्रुतौ सत्यामनेकार्थविधाने वाक्य-

आनन्दगिरीय–न्यायनिर्णयः ।

रावित्यर्थः । सिद्धान्तयति–आचक्ष्मह इति । पूर्वोक्तायतनविशेषयोगाभावादुपसंहारसिद्धिरिति शङ्कते–कस्मादिति । विद्यैक्यसाधकवेद्यैक्याभावात्तद्भेदे नोपसंहार इत्याह–तदिति । उक्तेऽर्थे सूत्रं पातयति–तदाहेति । तदक्षराणि व्याचष्टे–यथेति । अतो विद्याभेदादनुपसंहार इति शेषः । यत्तु रूपैक्याद् विद्यैक्यं गुणोपसंहारश्चेति तत्राऽऽह–तेषां हीति । तत्र हेतुमाह—पत्नीति । "आत्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीत्" इत्यादिबहुतरवैलक्षण्यान्न तद्रूपैक्यमित्यर्थः । वैलक्षण्यान्तरमाह–यदपीति । छान्दोग्ये हि पुरुषस्याऽऽयुस्त्रेधा विभज्य सवनत्रयमुक्तम् । तैत्तिरीये तु सायं प्रातर्मध्यंदिनमिति सवनसंपादनमितरविलक्षणं लक्ष्यते तेन विद्याभेद इत्यर्थः । "मरणमेवावभृथः" इति च्छान्दोग्ये । "यन्मरणं तदवभृथः" इति तैत्तिरीये । "यद्रमते तदुपसदः" इति चोभयत्रापि तुल्यम् । अतो रूपैक्याद्विद्यैक्यमिति चोद्यमनुवदति—यदपीति । बहुतरवैलक्षण्ये सति किंचिन्मात्रसालक्षण्यान्न विद्यैक्यमतिप्रसंगादित्याह–तदपीति । यत्तु पुरुषयज्ञत्वाविशेषादिति तत्राऽऽह–न चेति।निषादस्थपतिन्यायेन षष्ठ्योः सामानाधिकरण्यात्पुरुषस्य यज्ञत्वमुक्तमित्याशं क्याऽऽह–विदुष इति ।

हि न चैते समानाधिकरणे षष्ठ्यौ-विद्वानेव यो यज्ञस्तस्येति । न हि पुरुषस्य मुख्यं यज्ञत्वमस्ति । व्यधिकरणे त्वेते षष्ठ्यौ-विदुषो यो यज्ञस्तस्येति । भवति हि पुरुषस्य मुख्यो यज्ञसम्बन्धः । सत्यां च गतौ मुख्य एवार्थ आश्रयितव्यो न भाक्तः।आत्मा यजमान इति च यजमानत्वं पुरुषस्य निर्ब्रुवन्वैयधिकरण्येनैवास्य यज्ञसम्बन्धं दर्शयति॥अपि च तस्यैवं विदुष इति सिद्धवदनुवादश्रुतौ सत्यां पुरुषस्य यज्ञभावमात्मादीनां च यजमानादिभावं प्रतिपित्समानस्य वाक्यभेदः स्यात ॥ अपि च ससंन्यासामात्मविद्यां पुरस्तादुपदिश्यानन्तरं "तस्यैवं विदुषः" [तै०उ० ६।५२।१] इत्याद्यनुक्रमणं पश्यन्तः पूर्वशेष एवैष आम्नायः, न स्वतन्त्र इति प्रतीमः ॥ तथा चैकमेव फलमुभयोरप्यनुवाकयोरुपलभामहे-"ब्रह्मणो महिमानमाप्नोति" [तै० उ० ६ । ५२ । १] इति । इतरेषां त्वनन्यशेषः

रत्नप्रभा ।

कल्पनागौरवाद्यज्ञस्य आत्मेति भेदोक्तेरेकस्यैव यज्ञत्वयजमानत्वविरोधादात्मविदो यो यज्ञः प्रसिद्धः, तस्येति वैयधिकरण्यमेव युक्तम् ॥ किञ्च विद्वत्सम्बन्धियज्ञरूपविशेष्यानुवादेन विद्वदङ्गैरंगसम्पद्विधावेकवाक्यता प्रतीयते । तस्यां सत्यां विशेष्यस्यांगानां च पृथग्विधिवादिनस्तव वाक्यभेददोषः स्यादित्यर्थः ॥ किञ्च सत्यादिभ्यो न्यास एवापरे च यदिति संन्यासमुक्त्वा सर्वैः सर्वमिदं जगदित्येवं तमात्मानं ज्ञात्वा भूयो न मृत्युमुपयाति विद्वानिति संन्याससाध्यामात्मविद्यां पुरस्तात् प्राजापत्यानुवाके उपदिश्य अनन्तरानुवाके तस्यैवं विदुष इत्युक्त्वा आत्मविद्यानुवादेन प्रशंसार्थत्वेन तच्छेषतया यज्ञसम्पत्तिः क्रियते । फलैक्यश्रुतेः । छन्दोगानां तु स्वतन्त्रविद्याविधिरित्याह-अपि च ससंन्यासामिति ॥ चिन्ताफलमाह-

भामती ।

भेददोषप्रसक्तिरित्यर्थः । अपि चेयं पैङ्गिनां ताण्डिनां च पुरुषयज्ञविद्या फलान्तरयुक्ता स्वतन्त्रा प्रतीयते । तैत्तिरीयाणां तु एवंविदुष इति श्रवणात्पूर्वोक्तपरामर्शात्तत्फलत्वश्रुतेश्च पारतन्त्र्यम् । न च स्वतन्त्रपरतन्त्रयोरैक्यमुचितमित्याह-अपि च ससंन्यासामात्मविद्यामिति । उपसंहरति-

आनन्दगिरीय-न्यायनिर्णयः ।

सामानाधिकरण्याभावे हेतुमाह-न हीति । अर्थानुपपत्त्यभावे न्यायोऽवतरति । प्रकृते च पुरुषस्य कर्तृत्वाद्यज्ञस्य क्रियात्वादचैतन्याच्च पुरुषैक्यायोगान्न्यायाप्रवृत्तिरित्यर्थः । कथं तर्हि षष्ठ्योरन्वयस्तत्राऽऽह-व्यधिकरणे त्विति । अर्थानुपपत्तिस्तत्रापि तुल्येत्याशंक्याऽऽह-भवतीति । अन्यत्र तथाभावेऽपि प्रकृते पुरुषस्य यज्ञत्वमेवेत्याशंक्योक्तम्-सत्यां चेति । यज्ञस्य ज्ञानवद्योगित्वं मानान्तरसिद्धमपूर्वसंबन्धकल्पनया न त्याज्यं तदनुवादेन विद्याप्रशंसनार्थं पत्न्यादिसंपादनसंभवादित्यर्थः । यजमानतया पुरुषस्य यज्ञसंबन्धितावचनादपि न यज्ञात्मतेत्याह-आत्मेति । इतोऽपि तैत्तिरीयकेषु पुरुषयज्ञत्वं नेष्टमित्याह-अपि चेति । यथा प्रमितेऽर्थे प्रवृत्तं प्रमाणमनुवादकं तथा यज्ञस्य प्रमाणान्तरसिद्धविद्वद्योगितानुवादेन विशेषणविधिश्रुतौ प्रमितविशेषणानामनूदितविशेष्यगामित्वेनैकवाक्यत्वसंभवे विशेष्यस्य विशेषणानां च पृथक्प्रतिपादनेन वाक्यभेदः स्यादित्यर्थः । इतश्चोभयत्र भिन्ना पुरुषविद्येत्याह-अपि चेति । संन्यासेनांगेन सहितामंगितया स्थितामात्मविद्यां पुरस्तात्प्राजापत्यो हाऽऽरुणिरित्यादावनुवाके न्यास इति ब्रह्मेत्यादिनोक्त्वा तस्यैवंविदुष इति पूर्वोक्तपरामर्शात्तच्छेषत्वमस्य भातीत्याह-ससंन्यासामिति । इतश्च पूर्वशेषोऽयमाम्नायो न स्वतन्त्र इत्याह-तथा चेति । तैत्तिरीयाणां पुरुषविद्याम्नायस्य पारतन्त्र्यमुक्त्वा पैङ्गिनां ताण्डिनां च तदाम्नायस्य स्वातन्त्र्यमाह-इतरेषां त्विति । तत्र हेतुमाह-

पुरुषविद्याम्नायः । आयुरभिवृद्धिफलौ ह्यसौ "एष ह षोडशवर्षशतं जीवतीति य एवं वेद" इति समभिव्याहारात् ॥ तस्माच्छाखान्तराधीतानां पुरुषविद्याधर्माणामाशीर्मन्त्रादीनामप्राप्तिस्तैत्तिरीयके ॥ २४ ॥ इति पुरुषविद्याधिकरणम् ॥ १३ ॥

## वेधाद्यर्थभेदात् ॥ २५ ॥ (१४) ॥

अस्त्याथर्वणिकानामुपनिषदारम्भे मन्त्रसमाम्नायः—"सर्वं प्रविध्य हृदयं प्रविध्य धमनीः प्रवृज्य शिरोऽभिप्रवृज्य त्रिधा विपृक्तः" इत्यादिः । स ताण्डिनां "देव सवितः प्रसुव यज्ञम्" इत्यादिः । शाट्यायनिनां "श्वेताश्वो हरितनीलोऽसि" इत्यादिः । कठानां, तैत्तिरीयकाणां च,—"शं नो मित्रः शं वरुणः" [तै० उ० १।१।१] इत्यादिः । वाजसनेयिनां तूपनिषदारम्भे प्रवर्ग्यब्राह्मणं पठ्यते—"देवा ह वै सत्रं निषेदुः" इत्यादिः । कौषीतकिनाम-

रत्नप्रभा ।

**तस्मादिति** ॥ २४ ॥ (१३) ॥ **वेधाद्यर्थभेदात्** ॥ देवतामभिचारकर्ता प्रार्थयते—**सर्वमिति** ॥ हे देवते मद्रिपोः **सर्वम्** अंगं **प्रविध्य** विदारय विशेषतश्च हृदयं भिन्धि **धमनीः** शिराः **प्रवृज्य** त्रोटय शिरश्चाभितो नाशय । एवं त्रिधा **विपृक्तः** विश्लिष्टो भवतु मे शत्रुरित्यर्थः । हे देव सवितः **यज्ञं** तत्पतिं च **प्रसुव** निर्वर्तयेत्यर्थः ॥ उच्चैःश्रवाः श्वेतोऽश्वो यस्येन्द्रस्य स त्वं हरिततृणवन्नीलोऽसीत्यर्थः ॥ **नः** अस्माकं **शं** सुखकरो भवत्वित्यर्थः ॥ अग्निष्टोमो ब्रह्मैव । स यस्मिन्नहनि क्रियते, तदपि ब्रह्म ॥ तस्माद्य एतदहःसाध्यं

भामती ।

**तस्मादिति** ॥ २४ ॥ (१३) ॥ **वेधाद्यर्थभेदात्** ॥ विचारविषयं दर्शयति—**आथर्वणिकानामिति** ॥ आथर्वणिकाद्यु-

आनन्दगिरीय—न्यायनिर्णयः ।

**आयुरिति** । षोडशाधिकं वर्षशतं प्रकर्षेण व्याध्याद्यनुपद्रुतो जीवत्युक्तप्रकारेणाऽऽत्मानं यज्ञाद्यात्मकं विद्वानिति विद्यया सहाऽऽयुरभिवृद्धिफलस्य संकीर्तनात्तत्फलत्वेन स्वातन्त्र्यं पुरुषविद्यायाः सिद्धमित्यर्थः । स्वतन्त्रपरतन्त्रयोरैक्यायोगे फलितमाह—**तस्मादिति** ॥ २४ ॥ ( १३ ) ॥ पूर्वत्राऽऽत्मविद्यासंनिधौ श्रवणात्तैत्तिरीयगतपुरुषयज्ञो ज्ञानांगमित्यंगीकृत्याऽऽयुरभिवृद्धिफलविद्यातो भेदोऽस्य दर्शितः । संप्रति प्रवर्ग्यादीनामपि विद्यासंनिध्यविशेषात्तदंगत्वमित्याशंक्यान्यत्रानुपसंहारार्थं तेषामङ्गत्वं निरस्यति—**वेधादीति** । तत्तदुपनिषदारम्भे तेते मन्त्रास्तानितानि च कर्माणि श्रुतानि विषय इति वक्तुमारभते—**अस्तीति** । अभिचारदेवतामभिचारकर्ता प्रार्थयते—**सर्वमिति** । हे देवते मद्रिपोः सर्वमंगं प्रविध्य विदारय । विशेषतश्च हृदयं प्रविध्य भिन्धि । धमनीः शिराः प्रवृज्य विभज त्रोटय । तदीयं शिरश्चाभितो विदारय । एवं मद्रिपुर्बहुधा विपृक्तो विश्लिष्टो भवत्वित्यर्थः । विश्वप्रकाशकत्वात्तत्प्रसवहेतुत्वाच्च देव सवितरित्यादित्यः संबोध्यते । स च यज्ञस्य यज्ञपतेश्च यजमानस्य निर्वर्तने नियुज्यते प्रसुवेति । उच्चैःश्रवाः श्वेतोऽश्वो यस्य तव स त्वं श्वेताश्वोऽसि हरित इन्द्रनीलस्तद्वन्नीलोऽसीतीन्द्रः संबोध्यते । मित्रो नामाऽऽदित्यो नोऽस्माकं सुखकरो भूयादिति विद्यार्थी प्रार्थयते । एवं शं वरुण इत्यादि योज्यम् । इन्द्रादयो देवाः किल कस्मिंश्चित्पूर्वस्मिन्काले सत्रं निर्वर्तयितुं निविष्टवन्त इत्युपक्रम्य प्रवर्ग्याख्यं कर्म श्रुतमित्याह—**देवा इति** । अग्निष्टोमब्राह्मणमुपनिषदारम्भे पठ्यत इति संबन्धः । अग्निष्टोमो ब्रह्मैव स यस्मिन्नहनि क्रियते तदपि ब्रह्मातश्चैतदहरहर्निर्वर्त्यं कर्म ये केचिदुपयन्त्यनुतिष्ठन्ति ते ब्रह्मणैव साधनेन ब्रह्मापरमुपगच्छन्ति ते चामृतत्वं परं ब्रह्म क्रमेण प्राप्नुवन्तीत्यर्थः । विषयमुक्त्वोपकारभावाभावमानाभ्यां संशय-

प्यग्निष्टोमब्राह्मणं-"ब्रह्म वा अग्निष्टोमो ब्रह्मैव तदहर्ब्रह्मणैव ते ब्रह्मोपयन्ति तेऽमृतत्वमाप्नुवन्ति य एतदहरुपसंयन्तीति किमिमे सर्वे प्रविध्य" इत्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्यासूपसंह्रियेरन्, किं वा नोपसंह्रियेरन्निति मीमांसामहे ॥ किं तावन्नः प्रतिभाति-उपसंहार एवैषां विद्यास्विति ॥ कुतः ॥ विद्याप्रधानानामुपनिषद्ग्रन्थानां समीपे पाठात्॥ नन्वेषां विद्यार्थतया विधानं नोपलभामहे ॥ बाढम् ॥ अनुपलभमाना अपि त्वनुमास्यामहे। सन्निधिसामर्थ्यात्। न हि सन्निधेरर्थवत्त्वे सम्भ-

रत्नप्रभा।

कर्म उपयन्ति अनुतिष्ठन्ति, ते ब्रह्मणैव साधनेन ब्रह्मोपयन्ति, ते च क्रमेणामृतत्वमाप्नुवन्तीति योजना॥ मन्त्रादिषु तत्तदुपनिषद्विद्याशेषत्वे प्रमाणभावाभावाभ्यां संशयमाह-किमिति ॥ फलं पूर्ववत् ॥ ननु तेष शेषत्वे मानाभावान्नोपसंहार इति शंकते-नन्वेषामिति ॥ मन्त्रादयः, तत्तद्विद्याशेषाः, फलवद्विद्यासन्निहितत्वात्, तैत्तिरीयकगतपुरुषयज्ञवदिति समाधत्ते-बाढमिति ॥ तथा च दृष्टान्तसंगतिः सिद्धान्तिपक्षे ॥ सन्निधिवैयर्थ्यं बाधकमाह-न हीति॥ अफलमन्त्रादीनां फलवच्छेषत्वबोधनं सन्निधेरर्थवत्त्वम्।

भामती।

पनिषदारम्भे तेते मन्त्रास्तानितानि च प्रवर्ग्यादीनि कर्माणि समाम्नातानि। संशयमाह-किमिम इति। पूर्वपक्षं गृह्णाति-उपसंहार एवैषां विद्यास्विति।सफला हि सर्वा विद्या आम्नातास्तत्सन्निधौ मन्त्राः कर्माणि च समाम्नातानि 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायाद्विद्याङ्गभावेन विज्ञायन्ते। चोदयति-नन्वेषामिति। न ह्यत्र श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानानि सन्ति विनियोजकानि प्रमाणानि, न हि यथा दर्शपूर्णमासावारभ्य समिदादयः समाम्नातास्तथा कांचिद्विद्यामारभ्य मन्त्रा वा कर्माणि वा समाम्नातानि। न चासति सामान्यसंबन्धे संबन्धिसंनिधानमात्रात्तादर्थ्यसंभवः। न च श्रुतस्वाङ्गपरिपूर्णा विद्या एतानाकांक्षितुमर्हति येन प्रकरणापादितसामान्यसंबन्धानां संनिधिर्विशेषसंबन्धाय भवेदित्यर्थः। समाधत्ते-बाढमनुपलभमाना अपीति। मा नाम भूत्फलवतीनां विद्यानां परिपूर्णाङ्गानामाकांक्षा। मन्त्राणां तु स्वाध्यायविध्यापादितपुरुषार्थभावानां कर्मणां च प्रवर्ग्यादीनां स्वविध्यापादितपुरुषार्थभावानां पुरुषाभिलषितमाकांक्षतां संनिधानादन्यतराकांक्षानिबन्धनो रक्तपटन्यायेन संबन्धः। तत्रापि च विद्यानां फलवत्त्वात्तादर्थ्यमफलानां मन्त्राणां कर्मणां च।न च प्रवर्ग्यादीनां पिण्डपितृयज्ञवत्स्वर्गः कल्पनास्पदं,फलवत्संनिधानेन तदवरोहात्। अनुमास्यामहे संनिधिसामर्थ्यादिति। इदं खलु निवृत्ताकांक्षाया विद्यायाः

आनन्दगिरीय-न्यायनिर्णयः।

माह-किमित्यादिना। अत्र च विद्यासांनिध्याम्नातानामपि मन्त्रादीनां तदुपकारकत्वाभावेनातच्छेषतया नान्यत्रोपसंहार्यतेत्युक्तिद्वारा विचारस्य ज्ञानहेतुयोगात्पादादिसंगतिः। पूर्वपक्षे मन्त्रादीनां विद्योपाधावुपसंहारः। सिद्धान्ते त्वनुपसंहार इत्यभिप्रेत्य विमृश्य पूर्वपक्षयति-किमिति। विनियोजकमानाभावे कथं विद्याशेषतेति शङ्कते-कुत इति। 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायात्फलवद्विद्यासंनिध्याम्नातानां तदङ्गतेत्याह-विद्येति। श्रुत्यादीनां विनियोजकानामन्यतमस्याप्यनुपलम्भादारभ्य कांचनविद्यामनाम्नानादाम्नातांगैरेव पूर्णाया नैराकांक्ष्यान्नैषां विद्याशेषतेति शङ्कते-नन्विति। विद्याया नैराकांक्ष्येऽपि मन्त्रादीनां फलवत्त्वाय फलवन्नियोगसाकांक्षत्वात्फलवद्विद्यासंनिहितानां तच्छेषतया फलवत्त्वे फलान्तरकल्पनायोगादेकतराकांक्षायां विद्याकांक्षामापाद्य प्रकरणाद्याक्षेपेण तच्छेषतेत्याह-बाढमिति। संनिधेर्धर्मसाम्येऽपि संभवान्न विद्याशेषतेत्याशंक्याऽऽह-न हीति। अकस्मात्फलं विनेति यावत्। अनु-

वत्यकस्मादसावनाश्रयितुं युक्तः ॥ ननु नैषां मन्त्राणां विद्याविषयं किञ्चित्सामर्थ्यं पश्यामः—कथं च प्रवर्ग्यादीनि कर्माणि अन्यार्थत्वेनैव विनियुक्तानि सन्ति विद्यार्थत्वेनापि प्रतिपद्येमहीति ॥ नैष दोषः ॥ सामर्थ्यं तावन्मन्त्राणां विद्याविषयमपि किञ्चिच्छक्यं कल्पयितुम् ॥ हृदयादिसंकीर्तनात् । हृदयादीनि हि प्रायेणोपासनेष्वायतनादिभावेनोपदिष्टानि । तद्द्वारेण च हृदयं प्रविध्येत्येवञ्जातीयकानां मन्त्राणामुपपन्नमुपासनाङ्ग-

रत्नप्रभा ।

तत्सम्भवे सति अकस्मादर्थशून्यत्वेनासौ सन्निधिराश्रयितुं न हि युक्त इत्यर्थः ॥ नञ्पाठे तु अकस्माद् हेतुं विना असौ अर्थोऽनाश्रयितुं न हि युक्त इत्यर्थः ॥ ननु मन्त्राणां विद्यासमवेतार्थप्रकाशनसामर्थ्याभावान्न विद्याशेषत्वमिति शङ्कते—नन्विति ॥ पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्तीति वाक्येन प्रवर्ग्यस्य क्रतुशेषत्वं श्रुतम् । अग्निष्टोमादेश्च तत्तद्वाक्येन स्वर्गाद्यर्थत्वम् । अतो न विद्यार्थत्वमित्याह—कथं चेति ॥ मन्त्राणां विद्यासमवेतहृदयनाड्यादिप्रकाशत्वमस्तीत्याह—नैष इति ॥ उपास्तिषु मन्त्रप्रयोगः क्वापि न

भामती ।

संनिधाने श्रुतमनाकांक्षया साकांक्षस्यापि संबद्धुमसामर्थ्यात्तस्या अप्याकांक्षामुत्थापयति । उत्थाप्य चैकवाक्यतामुपैति । असमर्थस्य चोपकारकत्वानुपपत्तेः प्रकरणिनं प्रति उपकारसामर्थ्यमात्मनः कल्पयति । न च सत्यपि सामर्थ्ये तत्र श्रुत्या अविनियुक्तं सदङ्गतामुपगन्तुमर्हतीत्यनया परम्परया संनिधिः श्रुतिमर्थापत्त्या कल्पयति । आक्षिपति—ननु नैषां मन्त्राणामिति । प्रयोगसमवेतार्थप्रकाशनेन हि मन्त्राणामुपयोगो वर्णितः 'अविशिष्टस्तु वाक्यार्थः' इत्यत्र । न च विद्यासंबद्धं कंचनार्थं मन्त्रेषु प्रतीमः । यद्यपि च प्रवर्ग्यो न किंचिदारभ्य श्रूयते तथापि वाक्यसंयोगेन क्रतुसंबन्धं प्रतिपद्यते । 'पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्ति' इति । उपसदां जुहूवदव्यभिचरितक्रतुसंबन्धत्वात् । यद्यपि ज्योतिष्टोमविकृतावपि सन्त्युपसदस्तथापि तत्रानुमानिक्यो ज्योतिष्टोमे तु प्रत्यक्षविहितास्तेन शीघ्रप्रवृत्तितया ज्योतिष्टोमाङ्गतैव वाक्येनावगम्यते । अपि च प्रकृतौ विहितस्य प्रवर्ग्यस्य चोदकेनोपसद्वत्तद्विकृतावपि प्राप्तिः । प्रकृतौ वा अद्विरुक्तत्वादिति न्यायाज्ज्योतिष्टोमे एव विधानमुपसदा सह युक्तं, तदेतदाह—कथं च प्रवर्ग्यादीनीति । संनिधानादर्थविप्रकर्षेण वाक्यं बलीय इति भावः। समाधत्ते—नैष दोषः सामर्थ्यं तावदिति।यथा'अग्नये त्वा जुष्टं निर्वपामि' इति मन्त्रे अग्नये निर्वपामीति पदे कर्मसमवेतार्थप्रकाशके । शिष्टानां तु पदानां तदेकवाक्यतया यथाकथंचिद्व्याख्यानमेवमिहापि हृदयपदस्योपासनायां समवेतार्थत्वात्तदनुसारेण तदेकवाक्यतापन्नानि पदान्तराणि गौण्या लक्षणया च वृत्त्या कथंचिन्नेयानीति नासमवेतार्थता मन्त्राणाम् । न च

आनन्दगिरीय–न्यायनिर्णयः ।

छेयप्रकाशित्वान्मन्त्राणां विद्याशेषमर्थप्रकाशयतां न तच्छेषतेति शङ्कते—नन्विति । कर्मणां विद्याशेषत्वं संनिधेरुक्तं प्रत्याह—कथं चेति । पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्तीतिवाक्येन प्रवर्ग्यस्य क्रतुशेषत्वसिद्धेर्न संनिधेर्विद्याशेषत्वं तस्य वाक्यादौर्बल्यादग्निष्टोमादेश्च ज्योतिष्टोमादिवाक्येन स्वर्गादिफलवज्ज्ञानान्न विद्याशेषतेत्यर्थः । मन्त्राणां कर्मणां च विद्याशेषत्वाभावं दूषयति—नेति । तत्र मन्त्राणां विद्यासमवेतार्थप्रकाशनेन तच्छेषत्वं साधयति—सामर्थ्यमिति । हृदयादीत्यादिपदेन नाडीनामादित्यादेश्च संग्रहः । तथाऽपि कथं मन्त्राणां विद्यादिविषयं सामर्थ्यं तत्राऽऽह—हृदयेति । तदसंबद्धान्यपि सन्ति कानिचिदुपासनानीति प्रायेणेत्युक्तम् । हृदयादिपदस्य विद्यासमवेतार्थत्वेऽपि कथमितरेषां मन्त्रपदानां विद्याशेषतेत्याशंक्य हृदयादिपदानुसारेण तदेकवाक्यतया पदान्तराणामपि यथाकथंचिदुपास्त्यर्थतेत्याह—तदिति ।

त्वम् । दृष्टश्चोपासनेष्वपि मन्त्रविनियोगः "भूः प्रपद्येऽमुनामुनामुना" [ छां० ३ । १५ । ३ ] इत्येवमादिः ॥ तथा प्रवर्ग्यादीनां कर्मणामन्यत्रापि विनियुक्तानां सतामविरुद्धो विद्यासु विनियोगो वाजपेय इव बृहस्पति-

रत्नप्रभा ।

दृष्ट इत्यत आह-**दृष्टश्चेति** ॥ पुत्रस्य दीर्घायुष्यार्थं छान्दोग्ये त्रैलोक्यस्य कोशत्वेनोपास्तिरुक्ता । तत्र पितुरयं प्रार्थनामन्त्रः । तत्र "अमुना" इति पुत्रस्य त्रिर्नाम गृह्णाति । अमुना पुत्रेण सह भूरितीमं लोकममुं च प्रपद्ये । न मे पुत्रवियोगः स्यादित्यर्थः ॥ तत्तद्वाक्येनान्यत्र विनियुक्तानामपि कर्मणां सन्निधिना विद्यासु विनियोगो न विरुध्यत इत्यत्र दृष्टान्तमाह-**वाजपेय इति** ॥ "ब्रह्मवर्चसकामो बृहस्पतिसवेन यजेत" इति वाक्येन ब्रह्मवर्चसफले विनियुक्तस्यापि बृहस्पतिसवस्य "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति वाजपेयप्रकरणस्थवाक्येन वाजपेयोत्तरांगतया विनियोगवदविरोध इत्यर्थः ॥ **यद्यप्येकेन** वाक्येन प्रकरणान्तरस्थबृहस्पतिसवस्य प्रत्यभिज्ञानमंगत्वविधानं च कर्तुमयुक्तम् । वाक्यभेदप्रसंगात् । अतो मासाग्निहोत्रवत् कर्मान्तरमेव बृहस्पतिसवाख्यमंगतया विधीयत इति विनियुक्तस्य विनियोग इति भट्टगुरुतन्त्रद्वयसिद्धम्, **तथापि** यथा नित्याग्निहोत्रस्याश्वमेधप्रकरणे "वाग्यतस्यैतां रात्रिमग्निहोत्रं जुहोति" इति नाम्ना प्रत्यभिज्ञावाक्येन विधानम् । **यथा वा** दर्शपूर्णमासविकृतीष्टौ "आज्यभागौ यजति" इत्येकस्मिन् वाक्ये प्रकृतिस्थाज्यभागयोः पदेन प्रत्यभिज्ञावाक्येन विधानं, **तथात्रापि** बृहस्पतिसवपदेन प्रत्य-

भामती ।

मन्त्रविनियोगो नोपासनेषु दृष्टो येनात्यन्तादृष्टं कल्प्यत इत्याह-**दृष्टश्चोपासनेष्विति** । यद्यपि वाक्येन बलीयसा संनिधिर्दुर्बलो बाध्यते तथापि विरोधे सति । न चेहास्ति विरोधः । वाक्येन विनियुक्तस्यापि ज्योतिष्टोमे प्रवर्ग्यस्य संनिधिना विद्यायामपि विनियोगसंभवात् । यथा 'ब्रह्मवर्चसकामो बृहस्पतिसवेन यजेत' इति ब्रह्मवर्चसफलोऽपि बृहस्पतिसवो वाजपेयांगत्वेन चोद्यते । वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति। अत्र हि क्त्वः समानकर्तृकत्वमवगम्यते, धातुसंवन्धे प्रत्ययविधानात् । धात्वर्थान्तरसंबन्धश्च कथं च समानः कर्ता स्यात् । यद्येकः प्रयोगो भवेन् । प्रयोगाविष्टं हि कर्तृत्वम् । तच्च प्रयोगभेदे कथमेकम् । तस्मात्समानकर्तृकत्वादेकप्रयोगत्वं वाजपेयबृहस्पतिसवयोर्धात्वर्थान्तरसंबन्धाच्च । न च गुणप्रधानभावमन्तरेणैकप्रयोगता संवन्धश्च तत्रापि वाजपेयस्य प्रकरणे समाम्नानाद्वाजपेयः प्रधानम् । अंगं बृहस्पतिसवः । न च 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यत्राङ्गप्रधानभावप्रसंगः । न ह्येतद्वचनं कस्यचिद्दर्शपूर्णमासस्य सोमस्य वा प्रकरणे समाम्नातम् । तथा च द्वयोः साधिकारतया अगृह्यमाणविशेषतया गुणप्रधानभावं प्रति विनिगमनाभावेनाधिष्ठानमात्रविवक्षया लाक्षणिकं समानकर्तृकत्वमित्यदोषः । यदि तु कस्यांचिच्छाखायामारभ्याधीतं दर्शपूर्णमासाभ्यामिष्ट्वेति । तथाप्यनारभ्याधीतस्यैवारभ्याधीते प्रत्यभिज्ञानमिति युक्तम् । तथा सति द्वयोरपि पृथगधिकारतया प्रतीतं समप्रधानत्वमत्यक्तं भवेदितरथा तु गुणप्र-

आनन्दगिरीय-न्यायनिर्णयः ।

उपास्तिषु मन्त्रविनियोगस्यादृष्टेरक्लिष्टा कल्पनेत्याशंक्याऽऽह-**दृष्टश्चेति** । पुत्रस्य दीर्घायुष्ट्वार्थं छान्दोग्ये त्रैलोक्यं कोशत्वेन परिकल्प्योपास्तिरुक्ता । तत्र पितुरयं प्रार्थनामन्त्रो भूरित्यादि । अमुनेति पुत्रस्य त्रिर्नाम गृह्णात्यमुना देवदत्तनाम्ना सह भूरितीमं लोकं प्रपद्य इत्यर्थः । यत्तु प्रवर्ग्यादीनामन्यत्र विनियोगान्न विद्याशेषतेति तत्राऽऽह-**तथेति** । यद्यपि पुरस्तादुपसदामित्यादिवाक्यं प्रवर्ग्यादीनामन्यशेषत्ववादिविद्याशेषत्वसाधकसंनिधेर्बलीयस्तथाऽप्यविरोधान्न वाक्येन बाध्यः। संनिधिर्वाक्येनान्यत्र विनियुक्तस्यापि प्रवर्ग्यादेः संनिधिना विद्यास्वपि विनियोगादित्यर्थः । तत्र दृष्टान्तमाह-**वाजपेय इति** । 'ब्रह्मवर्चसकामो बृहस्पतिसवेन यजेत' इति ब्रह्मवर्चसफलोऽपि बृहस्पतिसवो 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति वाजपेयाङ्ग-

**सवस्येति ॥ एवं प्राप्ते ब्रूमः ॥ नैषामुपसंहारो विद्यास्विति ॥ कस्मात् ॥**

रत्नप्रभा ।

भिन्नायां वाक्येनांगताविधानं किं न स्यात् ॥ न च साध्यभावार्थविधायकाख्यातपरतन्त्रं नाम पदं, न सिद्ध-कर्मप्रत्यभिज्ञाक्षममिति वाच्यम्, सिद्धस्याप्यंगतया पुनः साध्यत्वसम्भवेऽन्यथासिद्धाख्यातस्यैव प्रसिद्धार्थका-नामपारतन्त्र्योपपत्तेः ॥ न चैवं सति कुण्डपायिसत्रेऽप्यंगत्वेन नित्याग्निहोत्रस्यैव विधिः स्यादिति वाच्यम्, इष्टत्वात् ॥ न च पूर्वतन्त्रविरोधः, उत्तरतन्त्रस्य बलीयस्त्वात् पूर्वतन्त्रस्य स्वतन्त्रपरतन्त्रभावनाभेदे तात्प-र्याच्च ॥ तस्मादेकस्यैव बृहस्पतिनामकस्य धात्वर्थस्य ब्रह्मवर्चसे विनियुक्तस्यापि वाजपेयांगतया विनि-योग इति भगवत्पादतात्पर्यम् ॥ अस्ति च विनियुक्तस्य विनियोग सर्वसम्मतमुदाहरणं खादिरत्वादिकं तस्य क्रतौ विनियुक्तस्य वीर्यादिफलेऽपि विनियोगात् । तथा मन्त्रकर्मणामन्यत्र विनियुक्तानां विद्याशेषत्व-मिति प्राप्ते सिद्धान्तयति—**नैषामित्यादिना** ॥ विद्यासु हृदयादिसम्बन्धेऽपि वेधाद्यर्थानामसम्बन्धात्कृत्स्न-मन्त्रार्थानामभिचारादिसम्बन्धलिंगेन सन्निधेर्बलीयसा अभिचारादावेव मन्त्राणां विनियोग इत्यर्थः ॥ "देव सवितः प्रसुव" "इति प्रदक्षिणतोऽग्निं पर्युक्षेद्" इति वाक्यादग्निपर्युक्षणे "सावित्रं जुहोति

भामती ।

धानभावेन तत्त्यागो भवेत् । तस्मात्कालार्थोऽयं संयोग इति सिद्धम् । सिद्धान्तमुपक्रमते—**एवं प्राप्त इति** । हृदयं प्रविध्येत्ययं मन्त्रः स्वरसतस्तावदाभिचारिककर्मसमवेतं सकलैरेव पदैरर्थमभिदधदुपलभ्यते । तदस्याभिधानसामर्थ्यलक्षणं लिंगं वाक्यप्रकरणाभ्यां क्रमाद्बलीयोभ्यामपि बलवत्किमंगं पुनः क्रमात्, तस्मा-ल्लिंगेन संनिधिमपोद्याभिचारिककर्मशेषत्वमेवापाद्यते । यद्यपि चोपासनासु हृदयपदमात्रस्य समवेतार्थ-त्वम् । तथापि तदितरेषां सर्वेषामेव पदानामसमवेतार्थत्वम् । आभिचारिके तु कर्मणि सर्वेषामर्थसमवाय इति किमेकपदसमवेतार्थता करिष्यति । न च संनिध्युपगृहीतासूपासनासु मन्त्रमवस्थापयतीति युक्तम् । हृदयपदस्याभिचारेऽपि समवेतार्थस्येतरपदैकवाक्यतापन्नस्य वाक्यप्रमाणसहितस्याभिचारिकात्कर्मणः संनि-धिना चालयितुमशक्यत्वादेवं 'देव सवितः प्रसुव यज्ञम्' इत्यादेरपि यज्ञप्रसवलिंगस्य यज्ञांगत्वे सिद्धे जघन्यो

आनन्दगिरीय—न्यायनिर्णयः ।

त्वेन विधीयते, क्त्वाप्रत्ययादेककर्तृकतासिद्धेरेकप्रयोगतामन्तरेण तदयोगादेकप्रयोगताया गुणप्रधानभावा-पेक्षत्वाद्वाजपेयप्रकरणाम्नानात्तस्यांगित्वं बृहस्पतिसवस्यांगत्वम् । नन्वेवं मीमांसकानां मुद्राभेदः कृतो यदि बृहस्पतिसववाक्यं प्रकरणान्तरस्थबृहस्पतिसवविपरिवृत्त्यर्थं कस्तर्हि वाजपेयाङ्गविधिः । अथैष विधिः कथं तर्हि प्रकरणान्तरस्थबृहस्पतिसवस्येह संनिधिः । न चैकमेव वाक्यं दूरस्थं कर्म संनिधापयत्यङ्गत्वेन च विदधाति । तस्मात्प्रकरणान्तरे कौण्डपायिनवत्कर्मान्तरं बृहस्पतिसवस्तन्नाम तु प्रसिद्धबृहस्पतिसवध-र्मातिदेशार्थम् । तथा च कर्मान्तरमेव वाजपेयाङ्गत्वेन विधीयत इति मतद्वयेऽपि स्थिते कथं विनियुक्तवि-नियोगाशंकेति सत्यमभ्युपेत्य वादोऽयं खादिरत्वादि चात्र व्यवस्थितमुदाहरणम् । न च साधिकारयो-रपि कर्मणोरङ्गांगित्वे दर्शपूर्णमासाविष्ट्वा सोमेन यजेतेत्यत्रापि स्याद्दर्शपूर्णमासयोः सोमस्य वा प्रकरणे तद्व-चनाम्नानात्तयोरगृह्यमाणविशेषतया गुणप्रधानत्वासिद्धेर्भिन्नप्रयोगत्वेऽपि क्रिययोः कर्तृत्वाधिष्ठानपुरुष-स्यैक्यात्प्रत्ययसिद्धेरङ्गांगित्वप्रमापकाभावे चाधिष्ठानलक्षणाविरोधाद्दर्शपूर्णमासोत्तरकालता सोमानुष्ठानस्येति कालार्थोऽयं संयोगः । प्रकृते तु प्रकरणाध्ययनसिद्धये प्रत्ययप्रमितमंगांगित्वमतो बृहस्पतिसवस्यान्यत्र विनियुक्तस्यैव वाजपेये क्त्वाप्रत्ययेन विनियोगवत्प्रवर्ग्यादीनामपि विनियुक्तानामेवान्यत्र संनिधिना विद्या-स्वपि विनियोग इति भावः । पूर्वपक्षमनूद्य सूत्राद्बहिरेवानुपसंहारं प्रतिजानीते—**एवमिति** । मन्त्राणां कर्मणां च संनिधेरुपसंहारो विद्यासूक्तः स कस्मान्निषिध्यत इत्याह—**कस्मादिति** । तत्र हेतुत्वेन सूत्रमव-

**वेधाद्यर्थभेदात्**-हृदयं प्रविध्येत्येवञ्जातीयकानां हि मन्त्राणां येऽर्थाः हृदयवेधादयो भिन्नाः, अनभिसम्बद्धास्त उपनिषदुदिताभिर्विद्याभिः, न तेषां ताभिः संगन्तुं सामर्थ्यमस्ति ॥ ननु हृदयस्योपासनेष्वप्युपयोगात्तद्द्वारक उपासनसम्बन्ध उपन्यस्तः ॥ नेत्युच्यते ॥ हृदयमात्रसङ्कीर्तनस्यैवमुपयोगः कथञ्चिदुत्प्रेक्ष्येत ॥ न च हृदयमात्रमत्र मन्त्रार्थः । हृदयं प्रविध्य धमनीः प्रवृज्यैत्येवञ्जातीयको हि न सकलो मन्त्रार्थो विद्याभिरभिसम्बध्यते । आभिचारिकविषयो ह्येषोऽर्थः ॥ तस्मादाभिचारिकेण कर्मणा "सर्वं प्रविध्य" इत्यस्य मन्त्रस्याभिसम्बन्धः ॥ तथा "देव सवितः प्रसुव यज्ञम्" इत्यस्य यज्ञप्रसवलिङ्गत्वाद्यज्ञेन कर्मणाभिसम्बन्धः । तद्विशेषसम्बन्धस्तु प्रमाणान्तरादनुसर्तव्यः ॥ एवमन्येषामपि मन्त्राणां केषाञ्चिल्लिङ्गेन, केषाञ्चिद्वचनेन, केषाञ्चित्प्रमाणान्तरेणेत्येवमर्थान्तरेषु विनियुक्तानां रहस्यपठितानामपि सतां न सन्निधिमात्रेण विद्याशेषत्वोपपत्तिः॥

रत्नप्रभा ।

कर्मणः पुरस्तात् सवनेसवने जुहोति" इति वाक्याद्वाजपेये कर्मविशेषे सम्बन्धोऽस्य मन्त्रस्येत्याह-**तद्विशेषेति** ॥ उक्तं न्यायं "श्वेताश्व" इत्यादिष्वतिदिशति-**एवमन्येषामिति** ॥ प्रमाणान्तरं प्रकरणादिकम् ॥ ननु लिंगादिभिरन्यत्र विनियुक्तानामपि सन्निधिना विद्यास्वपि विनियोगोस्त्वविरोधादित्युक्तं,

भामती ।

विद्यासंनिधिः किं करिष्यति । एवमन्येषामपि श्वेताश्व इत्येवमादीनां केषांचिल्लिंगेन केषांचिच्छ्रुत्या केषांचित्प्रमाणान्तरेण प्रकरणेनेति । कस्मात्पुनः संनिधिर्लिङ्गादिभिर्बाध्यते इत्यत आह-

आनन्दगिरीय-न्यायनिर्णयः ।

तारयति-**वेधादीति** । आथर्वणिकानां मन्त्राम्नायस्य विद्याशेषत्वाभावपरत्वेनाक्षराणि योजयति-**हृदयमिति** । भिन्नशब्दस्याभीष्टमर्थमाह-**अनभिसंबद्धा इति** । अनभिसंबन्धमेवाभिव्यनक्ति-**नेति** । हृदयपदस्योपास्तिसंबन्धार्थत्वात्तद्द्वारा मन्त्रस्य तच्छेषतेत्युक्तं स्मारयति-**नन्विति** । मन्त्रस्योपास्तिशेषत्वं प्रत्याह-**नेतीति** । पदान्तरसमभिव्याहृतस्य तस्यापि नोपास्त्युपयोगो वस्तुतोऽस्तीति मत्वा कथंचिदित्युक्तम् । हृदयस्य विद्योपयोगे मन्त्रार्थस्य तद्भावान्मन्त्रस्य विद्याशेषतेत्याशंक्याऽऽह-**न चेति** । अत्रेत्याथर्वणश्रुत्युक्तिः । हृदयातिरिक्तस्यापि मन्त्रार्थस्य विद्यायोगः स्यादित्याशंक्य साक्षात्परंपरया वेति विकल्प्याऽऽद्यं दूषयति-**हृदयमिति** । तद्द्वाराऽन्येषामपि विद्यायोगः स्यादिति द्वितीयमाशङ्क्याऽऽह-**अभिचारेति** । सर्वैरेव पदैरयं मन्त्रः स्वतोऽभिचारगतार्थप्रकाशको दृश्यते । तथा च सामर्थ्यलक्षणं लिंगं संनिधिं बाधित्वा कर्मशेषत्वमस्याऽऽपादयति । न च सर्वपदानामभिचारे समवेतार्थत्वे सत्येकपदसमवेतार्थत्वमात्रेण विद्याशेषत्वं हृदयपदस्याभिचारेऽपि समवेतार्थत्वादित्यर्थः । आथर्वणिकानामुपनिषदुपक्रमस्य लिङ्गवशात्कर्मसम्बन्धवत्ताण्डिनामपि तदुपक्रमस्य लिङ्गादेव कर्मसंगतिरित्याह-**तथेति** । कर्ममात्रप्रयोगेऽपि केन कर्मणाऽस्य संगतिरिति लिंगान्न गम्यते, तेन प्रमाणान्तरमन्वेष्यमित्याशङ्क्याऽऽह-**तदिति** । 'सावित्रं जुहोति कर्मणःकर्मणः पुरस्तात्सवनेसवनेजुहोति' इति वाक्याद्वाजपेयसम्बन्धोऽस्य सिध्यतीत्यर्थः । उक्तन्यायं मन्त्रान्तरेष्वतिदिशति-**एवमिति** । अन्येषां तु श्वेताश्वो हरितनीलोऽसीत्यादीनां वचनं श्रुतिर्वाक्यं वा प्रमाणान्तरं प्रकरणं तेन कर्मसम्बन्धोऽत्र सर्वत्रानुसर्तव्य इति सम्बन्धः । लिङ्गादिभिरन्यत्र विनियोगे मन्त्राणां सिद्धे फलितमाह-**इत्येवमिति** । किमिति लिङ्गादिभिः संनिधिर्बाध्यते

**दुर्बलो हि सन्निधिः श्रुत्यादिभ्य इत्युक्तं प्रथमे तन्त्रे—"श्रुतिलिङ्गवाक्यप्र-**

रत्नप्रभा ।

तत्राह—**दुर्बलो हीति** ॥ **समवाये** समानविषयत्वे द्वयोर्विरोधे, परस्य दौर्बल्यम् ॥ **कुतः** ॥ अर्थविप्रकर्षात् । स्वार्थबोधने परस्य पूर्वव्यवधानेन प्रवृत्तेरित्यर्थः ॥ **अयमाशयः** । एकत्र विनियुक्तस्य निराकांक्षत्वादन्यत्र विनियोगो विरुद्ध एव । परन्तु विनियोजकप्रमाणयोः समबलत्वेऽन्यतरविनियोगत्यागायोगादगत्या आकांक्षोत्पादनेन विनियुक्तविनियोगः स्वीक्रियते । "यथा खादिरो यूपो भवति, खादिरं वीर्यकामस्य यूपं कुर्याद्" इति वाक्याभ्यां क्रतौ विनियुक्तस्य खादिरत्वस्य वीर्यफले विनियोगः । **यत्र** तु प्रमाणयोरतुल्यत्वं, **तत्र** न स्वीक्रियते । प्रबलप्रमाणेन दुर्बलविनियोगबाधात् । **यथा**—"कदाचन स्तरीरसि (नेन्द्रसश्चासि) " इत्यस्याः ऋचः "ऐन्द्रया गार्हपत्यमुपतिष्ठते" इति तृतीयाविभक्तिः श्रुत्यान्यनिरपेक्षया गार्हपत्योपस्थानशेषत्वबोधिकया ऐन्द्रप्रकाशनसामर्थ्यरूपलिंगप्राप्तमिन्द्रशेषत्वं बाध्यते । लिंगं हि न साक्षाच्छेषत्वं बोधयति । किन्त्विन्द्रप्रकाशनमात्रं करोति । तेन च लिंगेनानेन मन्त्रेण इन्द्र उपस्थापयितव्य इति श्रुतिः कल्पनीया । तया शेषत्वबोध इति श्रुतिव्यवधानेन शेषत्वबोधकं लिंगं झगिति स्वार्थबोधकश्रुत्या बाध्यम् ॥ **तथा** लिंगेन वाक्यं बाध्यम् ॥ **यथा**—"स्योऽनन्ते सदनं करोमि घृतस्य धारया सुवेशं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः" इति मन्त्रभागयोः प्रत्येकं सदनकरणे पुरोडाशासादने तत्प्रकाशनसामर्थ्यलिंगेन श्रुतिद्वारा विनियोगे सति प्रतीतमेकवाक्यत्वं बाध्यते । तस्य कृत्स्नेऽपि मन्त्रे सदनकरणप्रकाशनसामर्थ्यं, पुरोडाशासादनप्रकाशनसामर्थ्यं च, लिंगं कल्पयित्वा

भामती ।

**दुर्बलो हि संनिधिरिति**। प्रथमतन्त्रगतोऽर्थः स्मार्यते। तत्र तु श्रुतिलिंगयोः समवाये समानविषयत्वलक्षणे विरोधे किं बलीय इति चिन्ता। अत्रोदाहरणम्—अस्त्यैन्द्री ऋक्'कदाचन स्तरीरसि नेन्द्र'इत्यादिका श्रुतिविनियोक्त्री 'ऐन्द्रया गार्हपत्यमुपतिष्ठते' इति । अत्र हि सामर्थ्यलक्षणाल्लिंगादिन्द्रे विनियोगः प्रतिभाति । श्रुतेश्च गार्हपत्यमिति द्वितीयातो गार्हपत्यस्य शेषित्वं ऐन्द्रयेति च तृतीयाश्रुतेरैन्द्र्या ऋचः शेषत्वमवगम्यते । यद्यपि गार्हपत्यमिति द्वितीयाश्रुतेराग्नेयीमृचं प्रति गार्हपत्यस्य शेषित्वेनोपपत्तेः । यद्यपि चैन्द्रेति च तृतीयाश्रुतेरैन्द्रया इन्द्रं प्रति शेषत्वेनोपपत्तेरविरोधः । पदान्तरसंबन्धे तु वाक्यस्यैव लिंगेन विरोधो न तु श्रुतेः । तत्र च विपरीतं बलाबलम् । तथापि श्रुतिवाक्ययो रूपतो व्यापारभेदाददोषः । द्वितीयातृतीयाश्रुती हि कारकविभक्तितया क्रियां प्रति प्रकृत्यर्थस्य कर्मकरणभावमवगमयत इति विनियोजिके । क्रियां प्रति हि कर्मणः शेषित्वं करणस्य च शेषत्वमिति हि विनियोगः । पदान्तरानपेक्षे च क्रियां प्रति शेषशेषित्वे श्रुतिमात्रात्प्रतीयेते इति श्रौते । सोऽयं श्रुतितः सामान्यावगतो विनियोगः पदान्तरवशाद्विशेषेऽवस्थाप्यते । सोऽयं विशेषणविशेष्यभावलक्षणः संबन्धो वाक्यगोचरः, शेषशेषिभावस्तु श्रौतः, तस्माद्वाक्यलभ्यं विशेषमपेक्ष्य श्रौतः शेषशेषिभावो लिंगेन विरुध्यत इति श्रुतिलिंगविरोधे किं लिङ्गानुगुणेन गार्हपत्यमिति द्वितीयाश्रुतिः सप्तम्यर्थे व्याख्यायतां गार्हपत्यसमीपे ऐन्द्रयेन्द्र उपस्थेय इति । आहो श्रुत्यनुगुणतया लिंगं व्याख्यायताम् । प्रभवति हि स्वोचितायां क्रियायां गार्हपत्य इतीन्द्र इन्द्रतेरैश्वर्यवचनत्वादिति । किं तावत्प्राप्तं श्रुतेर्लिंगं बलीय इति । नो खलु यत्रासमर्थं तच्छ्रुतिसहस्रेणापि तत्र विनियोक्तुं शक्यते । यथा अग्निना सिंचेत् पाथसा दहेदिति । तस्मात्सामर्थ्यं पुरोधाय श्रुत्या विनियो-

आनन्दगिरीय—न्यायनिर्णयः ।

तत्राऽऽह—**दुर्बलो हीति** । कथं दौर्बल्यं प्रमाणत्वाविशेषे तत्राऽऽह-**इत्युक्तमिति** । स्वार्थं वक्तुं पदान्तरानपेक्षं पदं श्रुतिः । श्रुतभावगता शक्तिर्लिंगम् । संहत्यार्थं वदत्पदवृन्दं वाक्यम् । प्रधानवाक्य-

करणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षाद्'' ॥

रत्नप्रभा ।

श्रुतिकल्पनयोभयत्र कृत्स्नमन्त्रविनियोगबोधने द्वाभ्यां लिंगश्रुतिभ्यां व्यवधानेन श्रुत्येकव्यवहितक्लृप्तलिंगात् दुर्बलत्वात् । न च सामर्थ्यं न कल्प्यमिति वाच्यम् ॥ असमर्थस्य विनियोगायोगात् । अत एव गंगापदस्य तीरबोधविनियोगे लक्षणारूपं सामर्थ्यं कल्प्यते । तथा वाक्येन प्रकरणं बाध्यम् । यथा साद्यप्रकरणाम्नातद्वादशोपसदां द्वादशाहीनस्येति वाक्येन अहीनांगत्वबोधकेन प्रकरणप्राप्तसाह्याङ्गत्वबाधादुत्कर्षः, प्रधानस्य अंगाकांक्षारूपं प्रकरणं तस्यांगप्रधानवाक्यैकवाक्यतासामर्थ्यश्रुतिभिः कल्प्यमानाभिः स्वार्थविनियोगप्रमितौ व्यवधानेन अंगसामर्थ्यश्रुत्योर्द्वयोः कल्पकवाक्याद्दुर्बलत्वात् । तथा प्रकरणेन सन्निधिर्बाध्यः । यथा राजसूयप्रकरणेन तदन्तर्गताभिषेचनीयाख्यसोमयागविशेषसन्निधिपाठे प्राप्तं शुनःशेपोपाख्यानादेरभिषेचनीयशेषत्वं बाधित्वा कृत्स्नराजसूयशेषत्वमापादितं, सन्निधेः प्रकरणादिकल्पकत्वेन क्लृप्तप्रकरणाद् दुर्बलत्वात्॥तथा सन्निधिना समाख्या बाध्यते । तथाहि—पौरोडाशिकसमाख्याके काण्डे आग्नेयपुरोडाशादि कर्मणांक्रमेण मन्त्रा आम्नाताः। तत्र दधिपयोरूपसान्नाय्यसन्निधौ ''शुन्धध्वं दैव्याय कर्मणे'' इति मन्त्रः आम्नातः । तत्र समाख्याबलेन अस्य मन्त्रस्य पुरोडाशपात्रशुन्धनशेषत्वं प्राप्तं सन्निधिना बाधित्वा सान्नाय्यपात्रशुन्धनशेषत्वमापाद्यते ॥ पुरोडाशसम्बन्धिकाण्डं पौरोडाशिकमिति पौरुषसमाख्यायाः काण्डान्तर्गतमन्त्रस्य पुरोडाशसम्बन्धसामान्यबोधकत्वेऽपि शेषशेषिभावरूपविनियोगबोधकत्वे

भामती ।

कल्प्यम् । तचास्या ऋचः प्रमाणान्तरतः शब्दतश्च इन्द्रे प्रतीयते । तथाहि—विदितपदतदर्थः कदाचनेत्यृचः स्पष्टमिन्द्रमवगच्छति, शब्दाचैन्द्रयेत्यतः । तस्माद्दारुदहनस्येव दहनस्य सलिलदहने विनियोगो गार्हपत्ये विनियोग ऐन्द्र्याः । न च श्रुत्यनुरोधाजघन्यामास्थाय वृत्तिं सामर्थ्यकल्पनेति साम्प्रतम् । सामर्थ्यस्य पूर्वभावितया तदनुरोधेनैव श्रुतिव्यवस्थापनात् । तस्मादैन्द्र्येन्द्र एव गार्हपत्यसमीप उपस्थातव्य इति प्राप्तेऽभिधीयते—'लिङ्गज्ञानं पुरोधाय न श्रुतेर्विनियोक्तृता । श्रुतिज्ञानं पुरोधाय लिंगं तु विनियोजकम्' । यदि हि सामर्थ्यमवगम्य श्रुतेर्विनियोगमवधारयेत्प्रमाता ततः श्रुतेर्विनियोगं प्रति लिंगज्ञानापेक्षत्वाद्दुर्बलत्वं भवेत्। न त्वेतदस्ति। श्रुतिर्विनियोगाय सामर्थ्यमपेक्षते नापेक्षते सामर्थ्यविज्ञानम्। अवगते तु ततो विनियोगे नासमर्थस्य स इति तन्निर्वाहाय सामर्थ्यं कल्प्यते । तच्छ्रुतिविनियोगात्पूर्वमस्ति सामर्थ्यम् । न तु पूर्वमवगम्यते । विनियोगे तु सिद्धे तदन्यथानुपपत्त्या पश्चात्प्रतीयत इति श्रुतिविनियोगात्पराचीना सामर्थ्यप्रतीतिस्तदनुरोधेनावस्थापनीया, लिंगं तु न स्वतो विनियोजकमपि तु विनियोक्त्रीं कल्पयित्वा श्रुतिम्। तथाहि—न स्वरसतो लिंगादनेनेन्द्र उपस्थातव्य इति प्रतीयते,किंत्वीदृगिन्द्र इति तस्य तु प्रकरणाम्नानसामर्थ्यात् सामान्यतः प्रकरणापादितैदमर्थ्यस्य तदन्यथानुपपत्त्या विनियोगकल्पनायामपि श्रौताद्विनियोगात्कल्पनीयस्य विनियोगस्यार्थविप्रकर्षाच्छ्रुतिरेव कल्पयितुमुचिता न तु तदर्थो विनियोगः, न हि श्रुतमनुपपन्नं शक्यमर्थेनोपपादयितुम्। न हि त्रयोऽत्र ब्राह्मणाः कठकौण्डिन्याविति वाक्यं प्रमाणान्तरोपस्था-

आनन्दगिरीय—न्यायनिर्णयः ।

मंगोक्त्याकांक्षं प्रकरणम् । समानदेशत्वं स्थानम् । यौगिकः शब्दः समाख्येत्युक्तलक्षणानामेषां समवाये समानविषयत्वविरोधे परस्योत्तरस्य दौर्बल्यम् । श्रुतिविरोधे लिङ्गस्य तद्विरोधे वाक्यस्य तद्विरोधे प्रकरणस्य तद्विरोधे स्थानस्य तद्विरोधे समाख्याया इत्यत्र हेतुमाह—अर्थविप्रकर्षादिति । स्वार्थोक्तेः पूर्वपूर्वापेक्षतया लिङ्गादीनां विलम्बेनार्थधीहेतुत्वमित्यर्थः । तत्र श्रुतिलिङ्गयोर्विरोधोदाहरणमैन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र गार्हपत्यमिति द्वितीयाऽतो गार्हपत्यस्य कर्मतया क्रियां प्रति शेषित्वं सिद्धमैन्द्र्येतितृती-

रत्नप्रभा ।

सन्निध्याद्यपेक्षत्वेन दुर्बलत्वादित्येवं विरोधे सति श्रुतिर्बाधिकैव । समाख्या बाध्यैव । मध्यस्थानां तु चतुर्णां पूर्वबाध्यत्वं परबाधत्वं चेति **श्रुतिलिंगसूत्रार्थः** ॥ तस्माल्लिंगादिना अन्यत्र विनियुक्तानां मन्त्राणां दुर्बल-

भामती ।

पितेन माठरेणोपपादयन्ति, उपपादयतो वा नोपहसन्ति शाब्दाः । माठरश्चेति तु श्रावयन्तमनुमन्यन्ते । तस्माच्छ्रुतार्थसमुत्थानानुपपत्तिः श्रुतेनैवार्थान्तरेणोपपादनीया, नार्थान्तरमात्रेण प्रमाणान्तरोपनीतेनेति लोकसिद्धम् । न च लोकसिद्धम्, न च लोकसिद्धस्य नियोगानुयोगौ युज्येते, शब्दार्थज्ञानोपायभूतलोकविरोधात्। तस्माद्विनियोजिका श्रुतिः कल्पनीया। तथा च यावल्लिंगाद्विनियोजिकां श्रुतिं कल्पयितुं प्रक्रान्तव्यापारस्तावत्प्रत्यक्षया श्रुत्या गार्हपत्ये विनियोगः सिद्ध इति निवृत्ताकांक्षं प्रकरणमिति कस्यानुपपत्त्या लिंगं विनियोक्त्रीं श्रुतिमुपकल्पयेत् । मन्त्रसमाम्नानस्य प्रत्यक्षयैव विनियोगश्रुत्योपपादितत्वात् । यथाहुः— 'यावदज्ञातसंदिग्धं ज्ञेयं तावत्प्रमित्स्यते । प्रमिते तु प्रमातॄणां प्रमौत्सुक्यं विहन्यते' इति । तस्मात्प्रतीतश्रौतविनियोगोपपत्त्यै मन्त्रस्य सामर्थ्यं तदनुगुणत्वेन नीयमानं प्रथमां वृत्तिमजहज्जघन्ययापि नेयमिति सिद्धम् । लिंगवाक्ययोरिह विरोधो यथा—'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मेधसुमनस्यमातः' इति । किमयं कृत्स्न एव मन्त्रः सदनकरणे पुरोडाशासादने च प्रयोक्तव्य उत कल्पयाम्यन्त उपस्तरेण तस्मिन्त्सीदेत्येवमादिस्तु पुरोडाशासादन इति । यदि वाक्यं बलीयः कृत्स्नो मन्त्र उभयत्र, सुशेवं कल्पयामीत्येतदपेक्षो हि तस्मिन्त्सीदेत्यादिः पूर्वेणैकवाक्यतामुपैति यत्कल्पयामि तस्मिन्त्सीदेति । अथ लिंगं बलीयस्ततः कल्पयाम्यन्तः सदनकरणे तत्प्रकाशने हि तत्समर्थम् । तस्मिन्त्सीदेति पुरोडाशासादने तत्र हि तत्समर्थमिति । किं तावत्प्राप्तम् । लिंगाद्वाक्यं बलीय इत्युभयत्र कृत्स्नस्य विनियोग इति । इह हि

आनन्दगिरीय—न्यायनिर्णयः ।

याश्रुतेरैन्द्र्याख्यर्चः "कदाचन स्तरीरसि" इत्याद्यायाः करणत्वेन शेषता तदयं श्रौतः शेषशेषिभावः कदाचनेत्यस्या ऋचश्चेन्द्रदेवतोक्तिसामर्थ्यलिङ्गेन विरुध्यते, तत्र लिङ्गानुगुण्येन गार्हपत्यमितिश्रुतिः सप्तम्यर्थे तत्समीप इन्द्र उपस्थेय इति व्याख्येया श्रुत्यनुगुणतया वा लिङ्गमिन्द्र ईश्वरः स्वोचितक्रियाया गार्हपत्य इति व्याख्येयमिति संदेहे श्रुतेर्विनियोगाय सामर्थ्यापेक्षत्वेऽपि तज्ज्ञानानपेक्षत्वादवगतश्रौतविनियोगनिर्वाहाय सामर्थ्यस्य तदन्यथानुपपत्त्या गम्यमानत्वात्पूर्वावगतश्रौतविनियोगानुरोधेनैव लिङ्गस्थितेस्तदेव श्रुत्यनुसारेण नेयमिति स्थितम् । लिङ्गवाक्ययोर्विरोधोदाहरणं स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति किमुपस्तरणे पुरोडाशासादने च कृत्स्नो मन्त्रः प्रयोक्तव्यः किंवा कल्पयाम्यन्त उपस्तरणे शेषस्तु पुरोडाशासादन इति संदेहे सामर्थ्यस्यैकवाक्यताधीपूर्वत्वाभावात्सदनकरणपुरोडाशासादनयोरनुष्ठेययोर्विभागेनैव प्रकाशने मन्त्रयोः सामर्थ्यादेकवाक्यतावशेन सामर्थ्यानुमानात्प्रागेव प्रतीतं सामर्थ्यमेकैकस्य भागस्यैकैकस्मिन्नर्थे विनियोजिकां श्रुतिं कल्पयतीति वाक्याल्लिङ्गमेव बलवदिति सिद्धम् । वाक्यप्रकरणयोर्विरोधोदाहरणं सूक्तवाकस्तत्र हि पौर्णमासीदेवता अमावास्यादेवताश्चाऽऽम्नातास्ताश्च मिथो नैकवाक्यतां गच्छन्तीति लिङ्गसामर्थ्यात्पौर्णमासीप्रयोगादिन्द्राग्निशब्दोत्कर्षे समवेतार्थत्वादमावास्यायां च तत्प्रयोगे तदेकवाक्यताप्रतीतमवीवृधेतां महो ज्यायोऽक्रातामित्येतदुत्कृष्य न प्रयोक्तव्यमुत यत्रेन्द्राग्निशब्द उत्कृष्य नीतस्तत्रैवैतदपि पौर्णमासीत उत्कृष्य प्रयोक्तव्यमिति संशये प्रकरणस्य विनियोज्यस्वरूपसामर्थ्यमनपेक्ष्याविनियोजकत्वात्तद्रूपालोचनायां च प्रथमभाविनो विनियोजकत्वात्प्रकरणाद्वाक्यस्य शीघ्रप्रवृत्तस्याऽऽदौ विनियोजकत्वसंभवात्प्रकृतस्य साकांक्षत्वं ज्ञात्वा

रत्नप्रभा ।-०

भामती ।

यत्तत्पदसमभिव्याहारेण विभज्यमानसाकांक्षत्वादेकवाक्यतायां सिद्धायां तदनुरोधेन पश्चात्तदभिधानसामर्थ्यं कल्पनीयम् । यथा 'देवस्यत्वा' इतिमन्त्रेऽग्नये निर्वपामीति पादयोः समवेतार्थत्वेन तदेकवाक्यतया पदान्तराणां तत्परत्वेन तत्र सामर्थ्यकल्पना । तदेवं प्रतीतैकवाक्यतानिर्वाहाय तदनुगुणतया सामर्थ्यं क्लृप्तं सन्न तद्व्यापादयितुमर्हति, अपि तु विनियोजिकां श्रुतिं कल्पयत्तदनुगुणमेव कल्पयेत् । तथा च वाक्यस्य लिंगतो बलीयस्त्वात्सदनकरणे च पुरोडाशासादने च कृत्स्न एव मन्त्रः प्रयोक्तव्य इति प्राप्तम् । एवं प्राप्त उच्यते—भवेदेतदेवं यद्येकवाक्यतावगमपूर्वं सामर्थ्यावधारणमपि तु अवधृतसामर्थ्यानां पदानां प्रश्लिष्टपठितानां सामर्थ्यवशेन प्रयोजनैकत्वेनैकवाक्यत्वावधारणम् । यावन्ति पदानि प्रधानमेकमर्थमवगमयितुं समर्थानि विभागे साकांक्षाणि तान्येकं वाक्यम् । अनुष्ठेयश्चार्थो मन्त्रेषु प्रकाश्यमानः प्रधानम् । सदनकरणपुरोडाशासादने चानुष्ठेयतया प्रधाने । तयोश्च सदनकरणं कल्पयाम्यन्तो मन्त्रः समर्थः प्रकाशयितुं पुरोडाशासादनं च तस्मिन्सीदेत्यादिः । ततश्च यावदेकवाक्यतावशेन सामर्थ्यमनुमीयते तावत्प्रतीतं सामर्थ्यमेकैकस्य भागस्यैकैकस्मिन्नर्थे विनियोजिकां श्रुतिं कल्पयति । तथा च श्रुत्यैवैकैकस्य भागस्यैकत्र विनियोगे सति प्रकरणपाठोपपत्तौ न वाक्यकल्पितं लिंगं विनियोजिकां श्रुतिमपरां कल्पयितुमर्हतीत्येकवाक्यताबुद्धिरुत्पन्नाप्याभासीभवति लिंगेन बाधनात् । यत्र तु विरोधकं लिंगं नास्ति तत्र समवेतार्थैकद्वित्रिपदैकवाक्यता पदान्तराणामपि सामर्थ्यं कल्पयतीति भवति वाक्यस्य विनियोजकत्वम् । यथात्रैव स्योनं त इत्यादीनाम् । तस्माद्वाक्याल्लिंगं बलीय इति सिद्धम् ॥ वाक्यप्रकरणयोर्विरोधोदाहरणम् । अत्र च पदानां परस्परापेक्षावशात्कस्मिंश्चिद्विशिष्ट एकस्मिन्नर्थे पर्यवसितानां वाक्यत्वं, लब्धवाक्यभावानां च पुनः कार्यान्तरापेक्षावशेन वाक्यान्तरेण संबन्धः प्रकरणम् । कर्तव्यायाः खलु फलभावनाया लब्धधात्वर्थकरणाया इतिकर्तव्यताकांक्षाया वचनं प्रकरणमाचक्षते वृद्धाः । यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । एतद्धि वचनं प्रकरणम् । तदेतस्मिन् स्वपदगणेन कियत्यप्यर्थे पर्यवसिते करणोपकारलक्षणकार्यान्तरापेक्षायां 'समिधो यजति' इत्यादिवाक्यान्तरसंबन्धः । समिदादिभावना हि स्वविध्युपहिताः पुरुषे हितं भाव्यमपेक्षमाणा विश्वजिन्न्यायेन वानुषङ्गतो वार्थवादतो वा फलान्तराप्रतिलम्भेन दर्शपूर्णमासभावनां निर्वारयितुमीशते । तस्मात्तदाकांक्षायामुपनिपतितान्येतानि वाक्यानि स्वकार्यापेक्षाणि तदपेक्षितकरणोपकारलक्षणं कार्यमासाद्य निर्वृण्वन्ति च निर्वारयन्ति च प्रधानम् । सोऽयमनयोर्नष्टाश्वदग्धरथवत्संयोगः । तदेवंलक्षणयोर्वाक्यप्रकरणयोर्विरोधोदाहरणं सूक्तवाकनिगदः । तत्र हि पौर्णमासीदेवताः अमावास्यादेवताः समाम्नाताः । ताश्च न मिथ एकवाक्यतां गन्तुमर्हन्तीति लिङ्गेन पौर्णमासीयागादिन्द्राग्नीशब्द उत्कृष्टव्यः, अमावास्यायां च समवेतार्थत्वात्प्रयोक्तव्यः । अथेदानीं संदिह्यते—किं यदिन्द्राग्निपदैकवाक्यतया प्रतीयते 'अवीवृधेथां महो ज्यायोऽक्राताम्' इति तन्नोत्कृष्टव्यमुतेन्द्राग्निशब्दाभ्यां सहोत्कृष्टव्यमिति । तत्र यदि प्रकरणं बलीयस्ततोऽपनीतदेवताकोऽपि शेषः प्रयोक्तव्योऽथ वाक्यं ततो यत्र देवताशब्दस्तत्रैव प्रयोक्तव्यः । किं ताव-

आनन्दगिरीय-न्यायनिर्णयः ।

तेनेदमेकं वाक्यमित्यनुमानात्प्रागेवोक्तिसामर्थ्यात्पदानामेकवाक्यत्वस्य प्रात्यक्ष्यात्तद्विरोधेऽनुमानानुत्थानादेवतापनये तच्छेषाणां वाक्यादपकर्ष एवेति । क्रमप्रकरणयोर्विरोधोदाहरणं राजसूयसंनिधावभिषेचनीयसमीपे शौनःशेपोपाख्यानाद्याम्नातम् । नानेष्टिपशुसोमसमुदायो हि राजसूयस्तत्राभिषेचनीयः सोमयागस्तस्य संनिधौ शुनःशेपो नाम कश्चिदृषिपुत्रो हरिश्चन्द्रपुत्रेण पुरुषमेधार्थं पशुत्वेन क्रीतो वरुणाय स्वालम्भे कर्तुमारब्धे वरुणं तुष्टाव स च तुष्टः सन्नेनं ररक्षेत्याख्यानमक्षद्यूतादि च श्रुतं तत्किं समस्तराजसूयांग-

रत्नप्रभा ।—०

भामती ।

त्प्राप्तमपनीतदेवताकोऽपि शेषः प्रयोक्तव्यः प्रकरणस्यैवाङ्गसंबन्धप्रतिपादकत्वात् । फलवती हि भावना प्रधानेतिकर्तव्यतात्वमापादयति । तदुपजीवनेन श्रुत्यादीनां विशेषसंबन्धापादकत्वात् । अतः प्रधानभावना-वचनलक्षणप्रकरणविरोधे तदुपजीविवाक्यं बाध्यत इति प्राप्तम् । एवं प्राप्त उच्यते—भवेदेतदेवं यदि विनियोज्यस्वरूपसामर्थ्यमनपेक्ष्य प्रकरणं विनियोजयेत् । अपि तु विनियोगाय तदपेक्षतेऽन्यथा पूषा-द्यनुमन्त्रणमन्त्रस्य द्वादशोपसत्तायाश्च नोत्कर्षः स्यात् । तद्रूपालोचनायां च यद्यदेव शीघ्रं प्रतीयते तत्त-द्बलवद्विप्रकृष्टं तु दुर्बलम् । तत्र यदि तद्रूपं श्रुत्या लिङ्गेन वाक्येन वान्यत्र विनियुक्तं ततः प्रकरणं भङ्क्त्वो-त्कृष्यते, परिशिष्टैस्तु प्रकरणस्येतिकर्तव्यतापेक्षा पूर्यते अथ स्वस्य शीघ्रप्रवृत्तं श्रुत्यादि नास्ति ततः प्रकरणं विनियोजकम् । यथा समिदादेः । तदिह प्रकरणाद्वाक्यस्य शीघ्रप्रवृत्तत्वमुच्यते । प्रकरणे हि स्वार्थपू-र्णानां वाक्यानामुपकार्योपकारकाकांक्षामात्रं दृश्यते । वाक्ये तु पदानां प्रत्यक्षसंबन्धः ततश्च सह प्रस्थितयो-र्वाक्यप्रकरणयोर्यावत्प्रकरणेनैकवाक्यता कल्प्यते तावद्वाक्येनाभिधानसामर्थ्यं,यावदितरत्र वाक्येन सामर्थ्यं ता-वदितरत्र सामर्थ्येन श्रुतिर्यावदितरत्र सामर्थ्येन श्रुतिस्तावदिह श्रुत्या विनियोगस्तावता च विच्छिन्नायामाकांक्षा-यां श्रुत्यनुमाने विहते प्रकरणेनान्तरा कल्पिते विलीयन्त इति वाक्यबलीयस्त्वात्तद्देवताशेषाणामपकर्ष एवेति सिद्धम् ॥ क्रमप्रकरणविरोधोदाहरणम् । राजसूयप्रकरणे प्रधानस्यैवाभिषेचनीयस्य संनिधौ शौनःशेपो-पाख्यानाद्याम्नातं, तत्किं समस्तस्य राजसूयस्याङ्गमुताभिषेचनीयस्य । यदि प्रकरणं बलीयस्ततः समस्तस्य राजसूयस्य, अथ क्रमस्ततोऽभिषेचनीयस्यैवेति, किं तावत्प्राप्तम् । नाकांक्षामात्रं हि संबन्धहेतुः । गामा-नय प्रासादं पश्येति गामित्यस्य क्रियामात्रापेक्षिणः पश्येत्यनेनापि संबन्धसंभवाद्विनिगमनाभावप्रसङ्गात् । तस्मात्संनिधानं संबन्धकारणम् । तथा चानयेत्यनेनैव गामित्यस्य संबन्धो विनिगम्यते । न च संनिधा-नमपि संबन्धकारणम् । अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राज्ञ इत्यस्य पुत्रपुरुषपदसंनिधाना-विशेषान्मा भूदविनिगमना । तस्मादाकांक्षा निश्चयहेतुर्वक्तव्या अत्र पुत्रशब्दस्य संबन्धिवचनतया समु-त्थिताकांक्षस्यान्तिके यदुपनिपतितं संबन्ध्यन्तराकांक्षं पदं तस्य तेनैवाकांक्षापरिपूर्तेः पुरुषपदेन पुरुषमा-त्राभिधायिना स्वतन्त्रेणैव न संबन्धः किंतु परेणापसार्यतामित्यनेनापसरणीयापेक्षेणेति । सत्यपि संनिधाने आकांक्षाभावादसंबन्धः । तथा चाभाणकः—'तप्तं तप्तेन संबध्यते' इति । तथा चाकांक्षितमपि न याव-त्संनिधाप्यते तावन्न संबध्यते । तथा संनिहितमपि यावन्नाकांक्ष्यते न तावत्संबध्यत इति द्वयोः संबन्धं प्रति समानबलत्वात्क्रमप्रकरणयोः समुच्चयासंभवाच्च विकल्पेन राजसूयाभिषेचनीययोर्विनियोगः शौनःशे-पोपाख्यानादीनामिति प्राप्तम् । एवं प्राप्त उच्यते—राजसूयके कथंभावापेक्षा हि पवित्रादारभ्य क्षत्रस्य धृतिं यावदनुवर्तते । तथा च—'अविच्छिन्ने कथंभावे यत्प्रधानस्य पठ्यते । अनिर्ज्ञातफलं कर्म तस्य प्रकरणाङ्गता' इति न्यायाद्राजसूयाङ्गता शौनःशेपोपाख्यानादीनाम् । अभिषेचनीयस्य तु स्ववाक्योपात्त-पदार्थनिराकांक्षस्य संनिधिपाठेनाकांक्षोत्थापनीया यावत्तावत्सिद्धाकांक्षेण राजसूयेनैकवाक्यता कल्प्यते ।

आनन्दगिरीय—न्यायनिर्णयः ।

मुताभिषेचनीयस्यैवेति संशये प्रकरणस्य साकांक्षतायाः प्रात्यक्ष्यात्संनिधिपाठेनाभिषेचनीयस्य स्ववाक्यो-पात्तपदार्थनिराकांक्षस्याप्याकांक्षोत्थापनादुत्थिताकांक्षं प्रकरणमेकवाक्यतादिकल्पनापरंपरया प्रागेव विनि-योगं कल्पयतीति प्रकरणविरोधे संनिधिर्बाध्यते । क्रमसमाख्ययोर्विरोधोदाहरणं पुरोडाशिकाख्याने कांडे कर्मणामाग्नेयादीनां क्रमेण मन्त्राः श्रुतास्तत्रामावास्यकसांनाय्यक्रमे शुन्धध्वं दैव्याय कर्मण इति शुन्धनार्थो मन्त्रः समाम्नातस्तत्र पुरोडाशपात्राणां वा शुन्धने मन्त्रोऽयं प्रयोक्तव्यः सांनाय्यपात्राणां वेति संदेहे

[ जै० सू० ३।३।१४] इत्यत्र ॥ तथा कर्मणामपि प्रवर्ग्यादीनामन्यत्र विनियु-

रत्नप्रभा ।

सन्निधिना न विद्यासु विनियोग इति सिद्धम् ॥ **तथा कर्मणामिति** ॥ कर्मणां विद्योपकारकत्वे,

भामती ।

यावच्चाभिषेचनीयाकांक्षया तदेकवाक्यता कल्प्यते तावत्क्लृप्तया राजसूयैकवाक्यतया तदुपकारकतया सामर्थ्यलक्षणं लिङ्गं यावच्चाभिषेचनीयैकवाक्यतया लिङ्गं कल्प्यते तावत्क्लृप्तलिङ्गं विनियोक्त्रीं श्रुतिं कल्पयति यावद्वाक्यकल्पितेन लिंगेन श्रुतिरितरत्र कल्प्यते तावत्क्लृप्तया श्रुत्या विनियोगे सति प्रकरणपाठोपपत्तौ संनिधानपरिकल्पितमन्तरा विलीयते । प्रमाणाभावेऽप्रतिभत्वात्। प्रकरणिनश्च राजसूयस्य सर्वदा बुद्धिसांनिध्येन तत्संनिधेरकल्पनीयत्वात्। तस्मात्प्रकरणविरोधे क्रमस्य बाध एव न च विकल्पो दुर्बलत्वादिति सिद्धम्॥ क्रमसमाख्ययोर्विरोधोदाहरणम्—पौरोडाशिक इति समाख्याते कांडे सान्नाय्यक्रमे च शुन्धध्वं दैव्याय कर्मण इति शुन्धनार्थो मन्त्रः समाम्नातः, तत्र संदिह्यते—किं समाख्यानस्य बलीयस्त्वात्पुरोडाशपात्राणां शुन्धने विनियोक्तव्यः, आहो सान्नाय्यपात्राणां शुन्धने क्रमो बलीयानिति । किंतावत्प्राप्तम् । समाख्यानं बलीय इति । पौरोडाशिकशब्देन हि पुरोडाशसंबन्धीनीत्युच्यन्ते तान्यधिकृत्य प्रवृत्तं कांडं पौरोडाशिकम् । ततश्च यावत्क्रमेण प्रकरणाद्यनुमानपरम्परया संबन्धः प्रतिपादनीयः तावत्समाख्यया श्रुत्यैव साक्षादेव स प्रतिपादित इति अर्थविप्रकर्षेण क्रमात्समाख्यैव बलीयसीति पुरोडाशपात्रशुन्धने मन्त्रः प्रयोक्तव्यः न सान्नाय्यपात्रशुन्धन इति प्राप्तम् । एवं प्राप्तेऽभिधीयते—समाख्यानात्क्रमो बलवानर्थविप्रकर्षादिति । तथाहि—समाख्या न तावत्संबन्धस्य वाचिका किंतु पौरोडाशविशिष्टं काण्डमाह । तद्विशिष्टत्वान्यथानुपपत्त्या तु संबन्धः कांडस्यानुमीयते न तु साक्षान्मन्त्रभेदस्य । तद्द्वारेण च तन्मध्यपातिनो मन्त्रभेदस्यापि तदनुमानम् । न चासौ संबन्धोऽपि श्रुत्यैव शेषशेषिभावः प्रतीयते । अपि तु संबन्धमात्रम् । तस्माच्छ्रुतिसादृश्यमस्य दूरापेतमिति क्रमेण नास्य स्पर्धोचिता । तत्रापि च सामान्यतो दर्शपूर्णमासप्रकरणापादितैदमर्थ्यस्य शौनःशेपोपाख्यानादिवच्चारादुपकारकतया प्रकृतमात्रसंबन्धानुपपत्तेः । मन्त्रस्य प्रयोगसमवेतार्थस्मारणेन सामवायिकांगत्वात् । तथा च यं कंचित्प्रकृतप्रयोगगतमर्थं प्रकाशयंतोऽस्य प्रकरणाङ्गत्वमविरुद्धमिति विशेषापेक्षायां सान्नाय्यक्रमः सान्नाय्यं प्रति प्रकरणाद्यनुमानद्वारेण विनियोगं कल्पयितुमुत्सहते न तु समाख्यानम् । तस्य दुर्बलत्वात् । तथाहि—समाख्या संबन्धनिबन्धना सती तत्सिद्ध्यर्थं संनिधिमुपकल्पयति यावत्तावद्वैदिकेन प्रत्यक्षदृष्टेन संनिधानेनकांक्षा कल्प्यते। यावच्च क्लृप्तेन संनिधानेनाकांक्षा कल्प्यते तावदितरत्र क्लृप्तयाकांक्षयैकवाक्यता यावच्च क्लृप्तयाकांक्ष्यैकवाक्यता तावदितरत्रैकवाक्यतया क्लृप्तयोपकारसामर्थ्यम्। यावच्चात्रैकवाक्यतयोपकारसामर्थ्यं तावदितरत्र लिंगेन विनियोजिका श्रुतिः। यावदत्र लिंगेन विनियोजिका श्रुतिस्तावदितरत्र क्लृप्तया श्रुत्या विनियोग इति तावतैव प्रकरणपाठोपपत्तेः सर्वं

आनन्दगिरीय—न्यायनिर्णयः ।

समाख्या संबन्धनिबन्धना सती तदर्थं यावत्संनिधिं कल्पयति तावद्वैदिकेन प्रत्यक्षेण संनिधिनाऽऽकांक्षाद्वारा परंपरया श्रुतिं परिकल्प्य विनियोगस्य कृतत्वात्पुरोडाशवादिमन्त्रबाहुल्याच्च तत्समाख्यासिद्धेः स्थानविरोधे न सा विनियोक्त्रीति स्थितम् । तदेवं लिंगस्यैकया श्रुत्या श्रुत्यर्थविनियोगं प्रति व्यवधानं वाक्यस्य द्वाभ्यां लिंगश्रुतिभ्यां प्रकरणस्य तिसृभिर्वाक्यलिङ्गश्रुतिभिः स्थानस्य चतसृभिः प्रकरणवाक्यलिङ्गश्रुतिभिः समाख्यायाः स्थानप्रकरणवाक्यलिङ्गश्रुतिभिः पञ्चभिरित्यवान्तरभेदान्मिथो विरोधे श्रुतेर्बाधकत्वमेव । लिंगवाक्यप्रकरणस्थानानां पूर्वपूर्वापेक्षया बाध्यत्वमुत्तरोत्तरापेक्षया बाधकतेत्युभयथात्वम् । समाख्याया बाध्यतैवेति विवेकः । मन्त्राणां विद्याशेषत्वं निरस्य प्रवर्ग्यादिकर्मणां तच्छेषत्वं निरस्यति—**तथेति** । तत्र हेतुः—

**क्तानां न विद्याशेषत्वोपपत्तिः । न ह्येषां विद्यादिभिः सहैकार्थ्यं किञ्चिदस्ति । वाजपेये तु बृहस्पतिसवस्य स्पष्टं विनियोगान्तरं "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति ॥ अपि चैकोऽयं प्रवर्ग्यः सकृदुत्पन्नो बलीयसा प्रमाणेनान्यत्र विनियुक्तो न दुर्बलप्रमाणेनान्यत्रापि विनियोगमर्हति।**

रत्नप्रभा ।

ताभिः सहैकफलत्वे च,—मानं किञ्चित् नास्ति इत्यर्थः ॥ **अपि चेति** । उक्तार्थम् ॥ **ननु** तर्हि वेधा-

भामती ।

समाख्यानकल्पितं विच्छिन्नमूलत्वाल्लूयमानशस्यमिव निर्बीजं भवति पुरोडाशाभिधायकमन्त्रबाहुल्यात्काण्डस्य पौरोडाशिकसमाख्येति मन्तव्यम् । 'एकद्वित्रिचतुष्पञ्चवस्त्वन्तरयकारितम् । श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते' ॥ इत्यर्थविप्रकर्ष उक्तः । तत्रापि च 'बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा । मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया' ॥ इति विशेष उक्तो वृद्धैः । तदयं विस्तराद्बिभ्यतोऽपि प्रथमतन्त्रानभिज्ञानुकम्पया निम्ना बिस्तरे पतिताः स्म इत्युपरम्यते । तस्माद्यथानुज्ञापनानुज्ञयोः प्रज्ञातक्रमयोरुपहूत उपहूयस्वेत्येवं मन्त्रावाम्नातौ देशसामान्यात्तथैवाङ्गतया प्राप्नुतः । उपहूत इति लिङ्गतोऽनुज्ञामन्त्रो नानुज्ञापने उपहूयस्वेति च लिङ्गतोऽनुज्ञापने च मन्त्रो नानुज्ञायाम् । तदिह लिंगेन क्रमं बाधित्वा विपरीतं शेषत्वमापाद्यते । यावद्धि स्थानेन प्रकरणमुत्पाद्यैकवाक्यत्वं कल्प्यते तावल्लिंगेन श्रुतिं कल्पयित्वा साधितो विनियोग इति अकल्पितलिङ्गश्रुतेः क्रमस्य बाधः । तद्वदिहापि विनियोगे प्रत्येकान्तरितेन लिंगेन चतुरन्तरितस्य विद्याक्रमस्य बाध इति । यद्यपि प्रथमतन्त्र एवायमर्थ उपपादितस्तथापि विरोधे तदुपपादनमिह त्वविरोधः । न हि लिंगेनाभिचारिककर्मसंबन्धः विद्यासंबन्धेन क्रमकृतेन विरुध्यते । न च विनियुक्तविनियोगलक्षणोऽत्र विरोधो बृहस्पतिसवेऽपि तत्प्रसंगात् । अथैष प्रतीतिविरोधो न च वस्तुविरोधः स विद्यायां विनियोगेऽपि तुल्यः । तस्मादविरोधाद्वेधादिमन्त्रस्योपासनांगत्वमित्यस्त्यभ्यधिका शङ्का । तत्रोच्यते—'न हि लिंगविरोधेन क्रमबाधोऽभिधीयते । किंतु लिङ्गपरिच्छिन्ने न क्रमः कल्पनाक्षमः' ॥ प्रकरणपाठोपपत्त्या हि श्रुतिलिङ्गवाक्यप्रकरणैरविनियुक्तः क्रमेण प्रकरणवाक्यलिङ्गश्रुतिकल्पनाप्रणालिकया विनियुज्यते । तदविनियुक्तस्य प्रकरणपाठानर्थक्यप्रसंगात् । उपपादिते तु श्रुत्यादिभिः प्रकरणपाठे क्षीणत्वादर्थापत्तेः क्रमो न स्वोचितां प्रमामुत्पादयितुमर्हति प्रमित्साभावादिति । बृहस्पतिसवस्य तु क्त्वाश्रुतिरेव धातुसंबन्धाधिकारात्समानकर्तृकतायां विहिता संयोगपृथक्त्वेन विनियुक्तमपि विनियोजयन्ती न शक्या श्रुत्यन्तरेण निरोद्धुं स्वप्रमामिति वैषम्यम् । तदिदमुक्तम्—**वाजपेये तु बृहस्पतिसवस्य स्पष्टं विनियोगान्तरमिति** । **अपि चैकोऽयं प्रवर्ग्य इति** । तुल्यबलतया बृहस्पतिसवस्य तुल्यताशङ्कापाकरणद्वारेण समुच्चयो न तु पृथगुक्तितया परस्परापेक्षत्वादिति । संनिधि

आनन्दगिरीय–न्यायनिर्णयः ।

**न हीति** । अनुपकारकस्य शेषत्वाभावादुपकारकस्य च प्रवर्ग्यादिकृतस्य विद्यायामनिरूपणान्न तेषां तच्छेषतेत्यर्थः।यत्तु विनियुक्तविनियोगो न विरोधायेत्यत्रोपेत्यवादेनोदाहरणं तत्राऽऽह—**वाजपेये त्विति**।इष्ट्वेति क्त्वाश्रुतिः समानकर्तृकत्वे विहिता संयोगपृथक्त्वेन विनियुक्तमपि विनियोजयत्यतो न तत्र श्रुत्योस्तुल्यबलयोर्मिथो बाध इत्युभयथात्वं बृहस्पतिसवस्येष्टमित्यर्थः । प्रकृते तुल्यबलत्वं विनियोजकयोर्नास्तीत्याह—**अपि चेति** । तुल्यबलत्वशङ्कानिरासद्वारा विनियुक्तविनियोगायोगे हेत्वन्तरसमुच्चयार्थमपिचेत्युक्तम् । पुरस्तादुपसदामित्यादिवाक्यं बलीयः प्रमाणम् । अन्यत्रेति ज्योतिष्टोमाद्युक्तम् । दुर्बलं प्रमाणं संनिधिः । अन्यत्रापीति विद्योक्ता । विरोधाभावादसति विरोधे बाधाभावादुभयत्रापि प्रमाणाभ्यां विनियोगः स्यादि-

अगृह्यमाणविशेषत्वे हि प्रमाणयोरेतदेवं स्यात्, न तु बलवदबलवतोः प्रमाणयोरगृह्यमाणविशेषता सम्भवति । बलवदबलवत्ताविशेषादेव ॥ तस्मादेवञ्जातीयकानां मन्त्राणां, कर्मणां वा,-न सन्निधिपाठमात्रेण विद्याशेषत्वमाशंकितव्यम् । अरण्यानुवचनत्वादिधर्मसामान्यात्तु सन्निधिपाठ इति सन्तोष्टव्यम् ॥ २९ ॥ इति वेधाद्यधिकरणम् ॥ १४ ॥

## हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्स्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥ (१५) ॥

अस्ति ताण्डिनां श्रुतिः-"अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" [छां० ८ । १३ । १ ] इति ॥ तथाथर्वणिकानां "तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति दिव्यम्" [ मुण्ड० ३ । २ । ८ ] इति ॥

---

रत्नप्रभा ।

दिवाक्यानामुपनिषद्भिः सह पाठस्य का गतिस्तामाह-अरण्येति ॥ तस्माद्वेधादिमन्त्रकर्मणां विद्यास्वनुपसंहार इति सिद्धम् ॥ २९ ॥ ( १४ ) ॥ हानौ त्विति ॥ यथाऽश्वो रजोयुक्तानि जीर्णरोमाणि त्यक्त्वा निर्मलो भवति, तथाहमपि पापं विधूय कृतात्मा निर्मलीकृतचित्तः सन्, यथा वा राहुग्रस्तश्चन्द्रो राहुमुखात् प्रमुच्य स्पष्टो भवति, तथा शरीरं धूत्वा त्यक्त्वा देहाभिमानान्मुक्तः सन्नकृतं कूटस्थं ब्रह्मात्मकं लोकमभिप्रत्यक्त्वेन सम्भवामीत्यर्थः ॥ यथा नद्यः समुद्रं प्राप्य नामरूपे त्यजन्ति, तथा विद्वानित्यर्थः ॥ निरञ्जनः शुद्धः साम्यं ब्रह्म । तस्य मृतस्य विदुषः, दायं धनम्। तत् तेन विद्याबलेन सुकृतदुष्कृते त्यजतीत्यर्थः ॥ उपायनं ग्रहणम् । तस्य त्यागपूर्वकत्वाद् अत्यक्तयोर्ग्रहणायोगात्त्यागोऽर्थादायाति । यत्र तु त्याग एव श्रुतः, तत्र हानोपायनयोः सहभावस्यावश्यकत्वानावश्यकत्वाभ्यां संशयमाह-

भामती ।

पाठमुपपादयति—अरण्यानुवचनत्वादीति ॥ २९ ॥ ( १४ ) ॥ हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् । यत्र हानोपायने श्रूयेते तत्राविवादः संनिपाते यत्राप्यु-

आनन्दगिरीय-न्यायनिर्णयः ।

त्याशंक्याऽऽह-अगृह्यमाणेति । एतदुभयत्र विनियुक्तत्वमेवं द्वाभ्यां मानाभ्यामिति यावत् । वाक्यादेः संनिधेश्च विशेषो निश्चितो नास्तीत्याशंक्याऽऽह-न त्विति । मानयोर्विशेषग्रहे फलितमाह-तस्मादिति । प्रकरणपाठसिद्धये विनियोगो मन्त्रादीनां कल्प्यते तथा च बलवत्प्रमाणेनान्यत्र विनियोगे प्रकरणपाठसिद्धो न क्रमो विनियोजको दौर्बल्यादित्यर्थः । तर्हि संनिधिपाठस्य का गतिस्तामाह-अरण्येति ॥ २९ ॥ ( १४ ) ॥ विद्यासंनिधौ श्रुतस्यापि मन्त्रादेर्विद्यायामसामर्थ्यादनुपसंहारवत्क्वचिदेव हानसंनिधौ श्रुतस्योपायनस्य तदन्तरेणापि हानसंभवेन तदुपपादनासामर्थ्यादनुपसंहार इत्याशङ्क्याऽऽह-हानौ त्विति । विषयं वक्तुं तत्तच्छाखास्थवाक्यान्युदाहरति-अस्तीत्यादिना । यथाऽश्वो जीर्णानि रोमाणि रजोभिः सह शातयित्वा स्वच्छो भवति तथाऽहमपि पापं सर्वं विधूय निर्मलः सन्ब्रह्मलोकमभिसंभवामीति संबन्धः । यथा च चन्द्रो राहुग्रस्तो राहोर्मुखात्प्रमुच्य भास्वरो भवत्येवं शरीरमकृतमशुद्धं प्रवाहरूपेणानादिसिद्धं वा धूत्वा त्यक्त्वा स्वच्छो भूत्वा कृतः सिद्धो न पुनरपूर्वपुण्योपचयेन साध्यो यस्याऽऽत्मा सोऽहं कृतकृत्यः सन्ब्रह्मलक्षणं रूपमभिसंभवामि प्रत्यक्त्वेन प्राप्नोमीत्यर्थः । तथा ताण्डिना-

तथा शाट्यायनिनः पठन्ति—"तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति ॥ तथैव कौषीतकिनः—"तत्सुकृतदुष्कृते विधूनुते तस्य प्रियाः ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्" [ कौषी० १ । ४ ] इति ॥ तदिह क्वचित्सुकृतदुष्कृतयोर्हानं श्रूयते । क्वचित्तयोरेव विभागेन प्रियैरप्रियैश्चोपायनं, क्वचित्तूभयमपि हानमुपायनं च ॥ तद्यत्रोभयं श्रूयते, तत्र तावन्न किञ्चिद्वक्तव्यमस्ति । यत्राप्युपायनमेव श्रूयते न हानं, तत्राप्यर्थादेव हानं सन्निपतति ॥ अन्यैरात्मीययोः सुकृतदुष्कृतयोरुपेयमानयोरावश्यकत्वात्तद्धानस्य । यत्र तु हानमेव श्रूयते नोपायनं, तत्राप्युपायनं सन्निपतेद्वा न वेति विचिकित्सायामश्रवणादसन्निपातः विद्यान्तरगोचरत्वाच्च शाखान्तरीयस्य श्रवणस्य ॥

---

रत्नप्रभा ।

यत्र त्विति ॥ अत्र पूर्वपक्षे श्रुतिप्रकर्षासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलम् । यद्यपि ताण्ड्यार्थर्वणश्रुत्योर्निर्गुणविद्यार्थयोः कर्महानमेव श्रुतं, नोपायनम्, तथापि कौषीतकिश्रुतौ पर्यङ्कस्थसगुणब्रह्मविद्यायामुपायनं श्रुतमत्रापसर्तव्यमित्याशङ्क्य विद्याभेदान्नोपसंहार इत्याह—विद्यान्तरेति ॥ किञ्च, यथा मन्त्रकर्मणामनावश्यकत्वाद्विद्यास्वनुपसंहार उक्तः, तथा परैरुपादानं विनापि हानसम्भवेन उपादानस्य

भामती ।

पायनमात्रश्रवणं तत्रापि नान्तरीयकतया हानमाक्षिप्तमित्यस्ति संनिपातः । यत्र तु हानमात्रं सुकृतदुष्कृतयोः श्रुतं न श्रूयते उपायनं, तत्र किमुपायनमुपादानं संनिपतेन्न वेति संशयः । अत्र पूर्वपक्षं गृह्णाति—असंनिपात इति । स्यादेतत् । यथा श्रूयमाणमेकत्र शाखायामुपासनाङ्गं तस्मिन्नेवोपासने शाखान्तरेऽश्रूयमाणमुपसंह्रियते । एवं शाखान्तरश्रुतमुपायनमुपसंहरिष्यत इत्यत आह—विद्यान्तरगोचरत्वाच्चेति । एकत्वे ह्युपासनकर्मणामन्यत्र श्रुतानामप्यन्यत्र समवायो घटते । न त्विहोपासनानामेकत्वं, सगुणनिर्गुणत्वेन

आनन्दगिरीय—न्यायनिर्णयः ।

मिवाऽऽथर्वणिकानामस्ति श्रुतिरिति संबन्धः । "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय" इति दृष्टान्तं परामृशति—तथेति । तांडिनश्चाऽऽथर्वणिकाश्च तथेत्युच्यन्ते—तस्येति । विदुषो मृतस्येत्यर्थः । तथैवेति शाट्यायनिनो दृष्टान्तिताः । तत्तेन विद्याबलेन सुकृतं च दुष्कृतं च ते विधूनुते निरस्यति विद्वानित्यर्थः । त्यक्तयोस्तयोर्विनियोगं दर्शयति—तस्येति । विषयपरिशेषार्थमापाततो वाक्यार्थमाह—तदिति । तत्तत्र श्रुताविहोदाहृतेषु वाक्येष्विति यावत् । क्वचित्तांडिनामाथर्वणिकानां च श्रुतावित्यर्थः । क्वचित्तयोरेवेत्यत्र क्वचिदिति शाट्यायनिश्रुतिरुक्ता क्वचित्तूभयमित्यत्र क्वचिदिति कौषीतकिश्रुतिर्गृह्यते । तत्र कौषीतकिश्रुतिर्न विचारापेक्षेत्याह—तदिति । शाट्यायनिश्रुतिरपि नापेक्षते विचारमित्याह—यत्रेति । आर्थिकं हानसंनिपातं साधयति—अन्यैरिति । परिशिष्टं विषयमाह—यत्र त्विति । हानोपायनयोः सहभावस्याऽऽवश्यकत्वानावश्यकत्वाभ्यां संशयमाह—तत्रेति । अत्र च विद्यास्तुतिप्रकर्षप्रयोजनस्योपायनोपसंहारस्योक्त्या वाक्यार्थधीहेतुवर्णनात्पादादिसंगतिः । पूर्वपक्षे स्तुतिप्रकर्षासिद्धिः सिद्धान्ते तत्सिद्धिरिति मत्वा पूर्वपक्षं गृह्णाति—अश्रवणादिति । क्वचिदश्रवणेऽप्यन्यत्र श्रवणादिहोपसंहारमाशंक्याऽऽह—विद्येति । विद्यैक्ये सत्युपसंहारः स्यान्न चेह तदस्ति कौषीतकिगतपर्यंकविद्यायाः सगुणत्वात्तांड्याथर्वणिकश्रुत्योश्च पुण्यपापविधूननहेतुत्वेन श्रुतविद्याया निर्गुणत्वादिति यत्र हानमेव श्रुतं तत्र नोपायनं

अपि चात्मकर्तृकं सुकृतदुष्कृतयोर्हानं परकर्तृकं तूपायनं तयोरसत्यावश्यकभावे कथं हानेनोपायनमाक्षिप्येत ॥ तस्मादसन्निपातो हानावुपायनस्येत्यस्यां प्राप्तौ पठति–हानौ त्विति ॥ हानौ त्वेतस्यां केवलायामपि श्रूयमाणायामुपायनं सन्निपतितुमर्हति । तच्छेषत्वात् । हानशब्दशेषो ह्युपायनशब्दः समधिगतः कौषीतकिरहस्ये । तस्मादन्यत्र केवलहानशब्दश्रवणेऽप्युपायनानुवृत्तिः ॥ यदुक्तमश्रवणाद्विद्यान्तरगोचरत्वादनावश्यकत्वाच्चासन्निपात इति, तदुच्यते—भवेदेषा व्यवस्थोक्तिः, यद्यनुष्ठेयं किञ्चिदन्यत्र श्रुतमन्यत्र निनीष्येत । न त्विह हानमुपायनं वा-

---

रत्नप्रभा ।

अनावश्यकत्वान्न प्राप्तिरिति दृष्टान्तसंगत्या प्राप्ते सिद्धान्तयति–**हानौ त्वित्यादिना** ॥ उपायनशब्दस्य शेषत्वात् हानशब्देनापेक्षितत्वादिति सूत्रार्थः । अश्वरोमदृष्टान्तेन विधूतयोः पुण्यपापयोः परत्रावस्थानसापेक्षत्वात् परैरुपादानं वाच्यमिति भावः ॥ विद्याभेदे गुणानुपसंहार इति व्यवस्थाऽनुष्ठानविषया न स्तुतिविषयेत्याह–**तदुच्यत इति** ॥ **मन्यते** । सूत्रकार इत्यर्थः ॥ ननु श्रुतहानार्थवादेनापि स्तुतिसिद्धौ

भामती ।

भेदादित्यर्थः ननु यथोपायनं श्रुतं हानमुपस्थापयत्येवं हानमपि उपायनमित्यत आह–**अपि चात्मकर्तृकमिति** । ग्रहणं हि न स्वामिनोऽपगममन्तरेण भवतीति ग्रहणादपगमसिद्धिरवश्यंभाविनी । अपगमस्त्वसत्यप्यन्येन ग्रहणे दृष्टो यथा प्रायश्चित्तेनापगतिरेनस इति । कर्तृभेदकथनं त्वेतदुपोद्बलमार्थं न पुनरवश्यंभावस्य प्रयोजकमुपायनेनानैकान्त्यादिति । सिद्धान्तमुपक्रमते–**अस्यां प्राप्ताविति** । अयमस्यार्थः—कर्मान्तरे विहितं हि न कर्मान्तर उपसंह्रियते प्रमाणाभावात् । यत्पुनर्न विधीयते किंतु स्तुत्यर्थं सिद्धतया संकीर्त्यते तदसति बाधके देवताधिकरणन्यायेन शब्दतः प्रतीयमानं परित्यक्तुमशक्यम् । तथा च विधूतयोः सुकृतदुष्कृतयोर्निर्गुणायां विद्यायामश्वरोमादिवत्किं भवत्वित्याकांक्षायां न तावत्प्रायश्चित्तेनेव तद्विलयसंभवस्तथा सत्यश्वरोमराहुदृष्टान्तानुपपत्तेः, न जात्वश्वरोमराहुमुखयोर्विलयनमस्ति । अपि त्वश्वचन्द्राभ्यां विभागः। न च नष्टे विधूननप्रमोचनार्थसंभवः।तस्मादर्थवादस्यापेक्षायां शब्दसंनिधिकृतोऽपि विशेष उपायनं बुद्धौ संनिधापयितुं शक्नोत्यपेक्षां पूरयितुमिति। निर्गुणापि विद्या हानोपायनाभ्यां स्तोतव्या । स्तुतिप्रकर्षस्तु प्रयोजनं न प्रमाणम् । अप्रकर्षेऽपि स्तुत्युपपत्तेः । न चार्थवादान्तरापेक्षार्थवादान्तराणां न दृष्टा । न च

आनन्दगिरीय–न्यायनिर्णयः ।

संनिपतेदित्यर्थः । न केवलमश्रवणादननुवृत्तिर्युक्तिविरोधादपीत्याह–**अपि चेति** । यथा शाट्यायनिश्रुतावुपायने श्रुते हानानुवृत्तिस्तथा तांड्यादिश्रुतावपि हाने श्रुते स्यादुपायनानुवृत्तिरित्याशंक्य तत्रानुपपत्त्या संबन्धेऽपि प्रकृते नैवमित्याह–**तयोरिति** । अश्रवणादिफलमुपसंहरति–**तस्मादिति** । अनुपसंहारे स्तुतिप्रकर्षासिद्धिरिति वक्तुमितीत्युक्तम् । सिद्धान्तयति–**अस्यामिति** । अश्वरोमादिदृष्टान्ताद्विधूतयोः सुकृतदुष्कृतयोः परत्रावस्थानापेक्षत्वादत्र हानसंनिधौ श्रुतमुपायनं केवलहानश्रवणेऽप्यपेक्षितत्वादायातीति व्याचष्टे–**हानौ त्विति** । तुशब्दार्थमाह–**केवलायामिति** । तच्छेषत्वादित्युक्तं विवृणोति–**हानेति** । हेतुफलमाह–**तस्मादिति** । अन्यत्र ताण्ड्यादिश्रुतावित्यर्थः । पूर्वपक्षबीजमनुभाषते–**यदिति** । यत्रानुष्ठेयत्वेन श्रवणं तत्रोपसंहारे विधैक्यमपेक्षितम् । इह त्वनुष्ठेयतयोक्तस्य नोपसंहारः किंतु सिद्धस्यैव स्तुत्यर्थतयोक्तस्य तेनासति बाधके तस्योपसंहारः स्तुतिप्रकर्षायेत्याह—**तदिति**।व्यवस्थोक्तिर्विद्याभेदे गुणं प्रति नियम-

ऽनुष्ठेयत्वेन संकीर्त्यते । विद्यास्तुत्यर्थं त्वनयोः संकीर्तनम् । इत्थं महाभागा विद्या—यत्सामर्थ्यादस्य विदुषः सुकृतदुष्कृते संसारकारणभूते विधूयेते । ते चास्य सुहृद्द्विषत्सु निविशेते इति ॥ स्तुत्यर्थे चास्मिन्संकीर्तने हानानन्तरभावित्वेनोपायनस्य क्वचिच्छ्रुतत्वादन्यत्रापि हानश्रुतावुपायनानुवृत्तिं मन्यते स्तुतिप्रकर्षलाभाय । प्रसिद्धा चार्थवादान्तरापेक्षाऽर्थवादान्तरप्रवृत्तिः—"एकविंशो वा इतोऽसावादित्यः" [ छां० २ । १० । ५ ] इत्येवमादिषु । कथं हीहैकविंशताऽऽदित्यस्याभिधीयेत । अनपेक्ष्यमाणेऽर्थवादान्तरे "द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः" इत्येतस्मिन् ॥ तथा "त्रिष्टुभौ भवतः सेन्द्रियत्वाय" इत्येवमादिषु वादेष्वपि "इन्द्रियं वै त्रिष्टुभम्" इत्येवमाद्यर्थवादान्तरापेक्षा दृश्यते । विद्यास्तुत्यर्थत्वाच्चास्योपायनवादस्य कथमन्यदीये सुकृत-

---

रत्नप्रभा ।

किमर्थमुपायनवाद आनीयते, तत्राह—स्तुतिप्रकर्षलाभायेति ॥ नन्वर्थवादस्य विधिना सम्बन्धः प्रसिद्धः, नार्थवादान्तरेणेत्यत आह—प्रसिद्धा चेति ॥ इतः भूलोकादित्यर्थः ॥ हेमन्तशिशिरयोरैक्यात्—पञ्चर्तवः । यज्ञस्य पुरुषरूपकल्पनया "सेन्द्रियत्वाय त्रिष्टुभौ भवतः" इत्युक्तं बह्वृचब्राह्मणे । तत्र त्रिष्टुभश्छन्दोमात्रत्वात् कथमिन्द्रियत्वकल्पनेत्याकांक्षायां यजुर्वाक्यं संबध्यत इत्यर्थः ॥ नन्वमूर्तयोः पुण्यपापयोः उपादानस्यासम्भवादनुपसंहार इत्यत आह—विद्यास्तुत्यर्थत्वाच्चेति ॥ विद्वन्निष्ठयोरेव तयोः फलं परे प्राप्नुवन्ति—विद्यासामर्थ्यादित्युपयन्तिपदेनोच्यत इत्यर्थः ॥ नन्वन्यनिष्ठकर्मणोरन्यत्र फलसञ्चारः कथम् । ननु वचनबलादिति चेत् ॥ न ॥ "फलमुपयन्ति" इति श्रुतेः ॥ न च यथा पुत्रकृतश्राद्धस्य पितृषु फलं, तथात्रेति वाच्यम् । यस्य फलमुद्दिश्य यत् कर्म विहितं, तस्य तत्फलमितिन्यायेन

भामती ।

तेन पूरणमित्याह—प्रसिद्धा चेति ॥ विद्यास्तुत्यर्थत्वाच्चास्योपायनवादस्येति । यद्यप्यन्यदीये अपि सुकृतदुष्कृते अन्यस्य फलं प्रयच्छतः, यथा पुत्रस्य श्राद्धकर्म पितुस्तृप्तिं यथा च पितुर्वैश्वानरीयेष्टिः पुत्रस्य । नार्याश्च सुरापानं भर्तुर्नरकम् । तथाप्यन्यदीये अपि सुकृतदुष्कृते साक्षादन्यस्मिन्न संभवत

आनन्दगिरीय—न्यायनिर्णयः ।

स्तदभेदे तदुपसंहार इति निर्देश इत्यर्थः । तर्हि किमर्थमनयोः संकीर्तनं तदाह—विद्येति । संकीर्तनस्य स्तुत्यर्थत्वमभिनयति—इत्थमिति । अस्तु स्तुत्यर्थं संकीर्तनं तथाऽपि किमर्था हानावुपायनानुवृत्तिस्तत्राऽऽह—स्तुत्यर्थे चेति । हानावुपायनानुवृत्तिं सूत्रकारो मन्यते चेत्तर्हि कथं स्तुतिप्रकर्षस्योपायनोपसंहारकल्पकत्वं तत्राऽऽह—स्तुतीति । स्तुतिर्हि विद्यायाः कार्या सा च केवलश्रुतहानेनापि लभ्या तदैव प्रकर्षोऽपेक्ष्येत यद्यप्रकर्षेण स्तुतिर्न चैवं तस्मात्प्रमाणसिद्धोपायनोपसंहारस्य फलं स्तुतिप्रकर्षसिद्धिरित्यर्थः । ननूपायनवादस्यार्थवादत्वे विधिशेषत्वं तस्य तच्छेषत्वान्न तु हानवादार्थवादशेषत्वं तत्राऽऽह—प्रसिद्धा चेति । इतोऽस्मात्पृथिवीरूपाल्लोकादिति यावत् । तत्रापि कथमर्थवादान्तरापेक्षा तत्राऽऽह—कथं हीति । इहेति पूर्वोक्तार्थवादोक्तिः । हेमन्तशिशिरयोरैक्यं मत्वा पञ्चर्तव इत्युक्तम् । अश्रुतमपि श्रुत्यन्तरानुसाराद् ग्राह्यमित्यत्र दृष्टान्तमाह—तथेति । यज्ञस्य पुरुषाकारकल्पनायां सेन्द्रियत्वाय त्रिष्टुभौ भवत इत्युक्तं बह्वृचब्राह्मणे । तत्र त्रिष्टुप्शब्देन च्छन्दोमात्राभिधानात्कथं सेन्द्रियत्वमित्युक्ते वाजसनेयके तथात्वेन त्रिष्टुभस्तत्त्वं गृहीतमित्यर्थः । ननु श्रुत्यन्तरश्रुतमप्युपायनं न हानावुपसंहर्तव्यं परकीयसुकृतदुष्कृतोपादानस्य परेण कर्तुमशक्यत्वात्तत्राऽऽह—विद्येति । विद्यासामर्थ्यादन्यत्र सुकृतदुष्कृतफल-

दुष्कृते अन्यैरभ्युपेयेते इति नातीवाभिनिवेष्टव्यम्। उपायनशब्दशेषत्वादिति हेतोस्तुशब्दं समुच्चारयन्स्तुत्यर्थमेव हानावुपायनानुवृत्तिं सूचयति॥ गुणोपसंहारविवक्षायां ह्युपायनार्थस्यैव हानावनुवृत्तिं ब्रूयात्। तस्माद् गुणोपसंहारविचारप्रसङ्गेन स्तुत्युपसंहारप्रकारदर्शनार्थमिदं सूत्रम्। "कुशाच्छन्दःस्तुत्युपगानवद्" इत्युपगानवदित्युपमोपादानम्। तद्यथा भाल्लविनां "कुशा वानस्पत्याः स्थ ता मा पात" इत्यस्मिन्निगमे कुशानामविशेषेण वनस्पतियोनित्वश्रवणे शाट्यायनिनाम् "औदुम्बराः कुशाः" इति विशेषवचनादौदुम्बर्यः कुशा आश्रीयन्ते। यथा च-क्वचिदेवासुरच्छन्दसामविशेषेण पौर्वापर्यप्रसङ्गे "देवच्छन्दांसि पूर्वा-

रत्नप्रभा।

पितॄणां तृप्त्युद्देशेन कृतकर्मणो व्यधिकरणफलत्वेऽपि विदुषः कर्मकालेऽनुद्दिष्टव्यधिकरणफलायोगात्॥ किञ्च, विदुषो देहपाते कर्मणोऽसत्त्वाद् यावज्जीवं विद्वत्सेवकस्य, तद्द्वेषिणो वा,-फलं स्यादित्यत आह-नातीवाभिनिवेष्टव्यमिति॥ विद्वत्सेवाद्वेषाभ्यां विद्वन्निष्ठपुण्यपापतुल्ये पुण्यपापे सेवकद्वेषिणोर्जायेते। जातयोः फलतः स्वीकारः—उपायनमिति परिहारस्य सुलभत्वादनाग्रह इत्यर्थः। उपायनादेः स्तुतित्वे लिंगमाह—उपायनेति॥ उपायनविवक्षाया उपायनस्यैवोपसंहारं सूत्रकारो ब्रूयाद्। अतः शब्दस्य तं वदन् स्तुतिं सूचयतीत्यर्थः॥ विद्याविचारात्मकपादे स्तुतिविचारस्य का संगतिरित्यत आह-तस्मादिति॥ शाखान्तरस्थो विशेषः शाखान्तरेऽपि ग्राह्य इत्यत्र दृष्टान्तमाह—कुशेति॥ कुशाः उद्गातॄणां स्तोत्रगणनार्थाः शलाकाः दारुमय्यः। भोः कुशाः यूयं वानस्पत्याः वनस्थमहावृक्षः वनस्पतिः, तत्प्रभवाः स्थ। ताः इत्थंभूताः यूयं मा पात मां रक्षतेति यजमानप्रार्थना। अत्र "ताः" इति स्त्रीलिङ्गनिर्देशादौदुम्बर्य इति भाष्याच्च शलाकासु कुशाशब्दस्य स्त्रीत्वं मन्तव्यम्। दर्भविषयस्य न स्त्रीत्वम्। 'अस्त्री कुशमित्यनुशासनात्॥ छन्दोदृष्टान्तं व्याचष्टे-यथा चेति॥ "नवाक्षराणि छन्दांसि आसुराण्यन्यानि

भामती।

इत्याशयेन शङ्का। फलतः प्राप्त्या स्तुतिरिति परिहारः। गुणोपसंहारविवक्षायामित्यपि न स्वरूपतः सुकृतदुष्कृतसंचाराभिप्रायम्। ननु विद्यागुणोपसंहाराधिकारे कोऽयमकाण्डे स्तुत्यर्थविचार इति शङ्कामुपसंहरन्नपाकरोति-तस्माद् गुणोपसंहारविचारप्रसंगेनेति। विद्यागुणोपसंहारप्रसंगतः स्तुतिगुणोप-

आनन्दगिरीय-न्यायनिर्णयः।

संचारोक्त्या विद्यास्तुतेरिष्टत्वान्नाभिनिवेशावकाश इत्यर्थः। उपायनवादस्य स्तुत्यर्थत्वं कथमित्याशंक्य सूत्रकारोक्तिसामर्थ्यादित्याह-उपायनेति। तदेवोपपादयति-गुणेति। उपायनार्थशब्देन सुकृतादिस्वरूपोपायनमिष्टं फलत उपायनस्येष्टत्वात्। फलोपसंहारं विनाऽर्थोपसंहारोऽभीष्टश्चेदुपायनशेषत्वादिति स्यात्तच्छब्दशेषत्वादिति चाऽऽह, तथा च वदन्नर्थस्योपसंहारं नेच्छतीत्यर्थः। विद्यागुणोपसंहारप्रस्तावे स्तुत्यर्थविचारो न युक्त इत्याशंक्य प्रासंगिकत्वादयमदोष इत्याह-तस्मादिति। स्तुत्युपसंहारः स्तुत्युपयोगिनो गुणस्य सुकृतदुष्कृतयोरन्यत्र फलसंचारस्योपसंहारस्तत्प्रकारस्यानुपास्यस्यापि प्रदर्शनार्थं सूत्रमित्यर्थः। शाखान्तरस्थो विशेषः शाखान्तरेऽप्याश्रयणीय इत्यत्र दृष्टान्तमाह-कुशेति। तदिदमुपमानं यथा तथा व्याख्येयमिति प्रतिज्ञाय कुशादृष्टान्तं व्याचष्टे-भाल्लविनामिति। भोः कुशाः शङ्कवो यूयं वानस्पत्या वनस्पतिप्रभवाः स्थ भवथ ता मा मां पात रक्षतेति यजमानस्य वचनम्। औदुम्बरा इति श्रुतेर्दर्भविषयकुशशब्दस्यास्त्रीत्वम्। अत एव 'अस्त्री कुशम्' इत्यमरसिंहेनानुशिष्टम्। औदुम्बर्य इति भाष्यात्कुशशब्दस्य शङ्कुविषयस्य स्त्रीत्वमपीति विवेक्तव्यम्। छन्दोदृष्टान्तं व्याचष्टे-यथा चेति। दशाक्षरादीनि देवच्छ-

णि'' इति पैङ्ग्याम्नायात्प्रतीयते। यथा च-षोडशिस्तोत्रे केषाञ्चित्कालाविशेषप्राप्तौ ''समयाध्युषिते सूर्ये'' इत्यार्चश्रुतेः कालविशेषप्रतीतिः। यथैव चाविशेषेणोपगानं केचित्समामनन्ति विशेषेण भाल्लविनः। यथैतेषु कुशादिषु श्रुत्यन्तरगतविशेषान्वयः, एवं हानावप्युपायनान्वय इत्यर्थः॥ श्रुत्यन्तरकृतं हि विशेष श्रुत्यन्तरेऽनभ्युपगच्छतः सर्वत्रैव विकल्पः स्यात् । स चान्याय्यः सत्यां गतौ ॥

रत्नप्रभा ।

देवानि तेषां कचिच्छन्दोभिः स्तुवते'' इत्यत्राविशेषप्राप्तौ पैङ्गिवाक्याद्विशेषग्रह इत्यर्थः॥ स्तुतिं विवृणोति-यथेति॥ अतिरात्रे षोडशिनो ग्रहस्य अङ्गभूतं स्तोत्रं कदेति च्छन्दोगादीनामाकांक्षायामुदयसमयाविष्टे सूर्ये ''षोडशिनः स्तोत्रम्'' इत्यार्चश्रुतेः कालविशेषग्रह इत्यर्थः॥ ऋचोऽधीयत इति—आर्चाः॥ उपगानं विभजते-यथेति॥ ''ऋत्विज उपगायन्ति'' इत्यविशेषश्रुतेः ''नाध्वर्युरुपगायति'' इति श्रुत्यन्तरादध्वर्युभिन्नाः ऋत्विजः उपगायन्तीति विशेषग्रह इत्यर्थः॥ ननु कुशादिवाक्यानामपि किमिति विशेषश्रुत्यन्तरैकवाक्यताऽभ्युपगम्यते, तत्राह-श्रुत्यन्तरकृतं हीति॥ सामान्यविशेषयोरेकवाक्यरूपायां गतौ सत्यां वाक्यभेदं कृत्वा ''नाध्वर्युः'' इति निषेधादविशेषश्रुतेश्चाध्वर्युरुपगायति, नोपगायति चेत्येवं सर्वत्र विकल्पो न युक्तः॥ व्रीहियवयोस्त्वगत्या विकल्प आश्रित इत्यर्थः॥ विकल्पस्यान्याय्यत्वमष्टदोषदुष्टत्वात्। तथाहि यदि व्रीहिवाक्यमाश्रीयते, तदा (१) यववाक्यस्येष्टप्रामाण्यत्यागः, (२) अनिष्टाप्रामाण्यस्वीकारः, (३) कदाचिद् यववाक्याश्रयणे त्यक्तप्रामाण्यस्वीकारः, (४) स्वीकृतप्रामाण्यत्यागश्चेत्येकस्मिन् यववाक्ये चत्वारो दोषाः भवन्ति । एवं व्रीहिवाक्येऽपि (१-२-३-४) चत्वारो दोषाः इति॥ एवं दुष्टविकल्पपरिहाराय भिन्नशाखाश्रुत्योरपि एकवाक्यता। जैमिनिसम्मतेत्याह-

भामती ।

संहारो विचारितः । प्रयोजनं चोपासके सौहार्दमाचरितव्यं न त्वसौहार्दमिति । छन्द एवाच्छन्द आच्छादनादाच्छन्दो भवति । यथैव चाविशेषेणोपगानमिति । ऋत्विज उपगायन्तीत्यविशेषेणोपगानमृत्विजाम्। भाल्लविनस्तु विशेषेण नाध्वर्युरुपगायतीति । तदेतस्माद्भाल्लविनां वाक्यमृत्विज उपगायन्तीत्येतच्छेषं विज्ञायते । एतदुक्तं भवति-अध्वर्युवर्जिता ऋत्विज उपगायन्तीति । कस्मात्पुनरेवं व्याख्यायते । ननु स्वतन्त्राण्येव सन्तु वाक्यानीत्यत आह—श्रुत्यन्तरकृतमिति । अष्टदोषदुष्टविकल्पप्रसङ्गभयेन

आनन्दगिरीय-न्यायनिर्णयः ।

न्दांसि नवाक्षराण्यासुराणि तेषां कचिच्छन्दोभिः स्तुवत इत्यादावविशेषेण पूर्वापरत्वप्रसंगे पैंगिश्रुतिवशाद्विशेषसिद्धिरित्यर्थः । स्तुतिदृष्टान्तं विवृणोति-यथा चेति । अतिरात्रे षोडशिनः पात्रविशेषस्य ग्रहणे यदंगभूतं स्तोत्रं तत्कस्मिन्काले गेयमिति केषांचिच्छान्दोगादीनां कालविशेषाश्रवणात्कालाविशेषप्राप्तौ सूर्ये समयाध्युषिते समीपाध्युषिते सूर्यस्योदयसंनिधौ षोडशिस्तोत्रमुपाकर्तव्यमिति विशेषधीरार्चादिश्रुतेर्भवत्यृचोधीयत इत्यार्चास्तदीयश्रुतेर्विशेषधीः। यद्वा ''समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति'' इति तैत्तिरीयश्रुतेः षोडशिस्तोत्रेऽर्धास्तमितकालविशेषसिद्धिरित्यर्थः।उपगानं विभजते-यथैवेति।ऋत्विज उपगायन्तीत्यविशेषेणापगानाम्नानान्नाध्वर्युरुपगायतीत्यध्वर्युवर्जिता ऋत्विज उपगायन्तीति विशेषेणोपगानमिति शेषः। दृष्टान्तेष्वभीष्टमंशमनूद्य दार्ष्टान्तिकमाह-यथेति। दृष्टान्तेऽपि श्रुत्यन्तरस्य श्रुत्यन्तरान्वयो मा भूद्भवन्त्वेतानि स्वतन्त्राण्येव वाक्यानीत्याशंक्याऽऽह-श्रुत्यन्तरेति । विकल्पोऽपि व्रीहियववदस्तु नेत्याह-स चेति। अगतिका हीयं गतिर्यद्विकल्पाश्रयणं तस्याष्टदोषदुष्टत्वात् । तथाहि व्रीहिभिर्यवैर्वा यजेतेति वाक्यद्वयमपि मानं तत्र

**तदुक्तं द्वादशलक्षण्यां "अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्प्रतिषेधे विकल्पः स्याद्" ॥**

रत्नप्रभा ।

**तदुक्तमिति** ॥ ज्योतिष्टोमप्रकरणे "दीक्षितो न जुहोति" इति श्रुतम् । "यावज्जीवमग्निहोत्रं जुहुयाद्" इति चान्यत्र श्रुतम् । तत्र यदि न दीक्षितवाक्यं होमप्रतिषेधकं स्यात्, तदा क्रत्वर्थत्वात् निषेधोऽनुष्ठेयः, यावज्जीवविधिना होमो वानुष्ठेयः,—इति विकल्पः स्यात् । स चान्याय्यः । अपि तु यावज्जीववाक्यं प्रति न दीक्षितवाक्यस्य शेषत्वान्नकार इतरपर्युदासार्थकः स्याद्दीक्षितान्यलक्षकः स्यात्, न होमप्रतिषेधकः ॥ तस्माददीक्षितो यावज्जीवं जुहुयादित्येकवाक्यतेति न दीक्षिताधिकरणसिद्धान्तसूत्रार्थः ॥ अत्र **भगवत्पादैः** सूत्रमेव पठितम् ॥ **मिश्रैस्तु** पर्युदासाधिकरणसिद्धान्तसूत्रम् "अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य

भामती ।

वाक्यान्तरस्य वाक्यान्तरशेषत्वमत्रभवतो जैमिनेरपि संमतमित्याह—**तदुक्तं द्वादशलक्षण्याम्** । 'अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात्' इत्येतदेव सूत्रमर्थद्वारेण पठति—**अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्प्रतिषेधे विकल्पः स्यात्स** चान्याय्य इति शेषः । एवं किल श्रूयते—'एष वै सप्तदशः प्रजापतिर्यज्ञेयज्ञेऽन्वायत्त' इति । ततो नानुयाजेषु येयजामहं करोतीति । तदत्रानारभ्य कंचिद्यज्ञं यज्ञेषु येयजामहकरणमुपदिष्टम् । तदुपदिश्य चाम्नातं नानुयाजेष्विति । तत्र संशयः-

आनन्दगिरीय—न्यायनिर्णयः ।

व्रीहिवाक्याश्रयणे यववाक्यमनाश्रयणीयं श्रुतनैरपेक्ष्यविरोधाद्युगपदुभयानुष्ठानायोगात् । अतो यववाक्यस्थं मानत्वं हेतुमृते त्याज्यं तस्य त्यक्तमानत्वस्यामात्वमेष्टव्यम् । केनापि हेतुना प्रयोगांगत्वेन यवांगीकारे त्यक्तमानत्वस्य पुनराश्रयणं तन्निरासेन स्वीकृतामानत्वस्य पुनस्त्यागश्चेत्येकस्मिन्वाक्ये चत्वारो दोषाः । द्वितीयेऽपि वाक्ये प्राप्तत्यागाप्राप्ताश्रयणत्यक्तस्वीकारोपात्तत्यागा इति त एव दोषाः । तथाऽपि तुल्यबलत्वाद्गत्यन्तराभावाच्च व्रीहियववाक्ययोर्विकल्पोऽङ्गीकृतः । यथाऽऽहुः—"एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः । विकल्प आश्रितस्तत्र गतिरन्या न विद्यते" इति । इह तु सत्यां गतौ न तदाश्रयणमित्यर्थः । अष्टदोषविकल्पपरिहाराय वाक्यान्तरशेषत्वं वाक्यान्तरस्य जैमिनेरपि संमतमित्याह—**तदुक्तमिति** । द्वादशाध्याय्यां मीमांसायां दाशमिकमुदाहरति—**अपि त्विति** । दीक्षितो न ददाति न जुहोति न पचतीति ज्योतिष्टोमाधिकारे श्रुतं तत्र किं सर्वदानहोमपाकानां निषेधः, किंवा तेषामक्रतुप्रयुक्तानामथ वा तत्प्रयुक्तानामपि चोदकप्राप्तानामाहो पर्युदास इति संशये सर्वहोमादिनिषेधे प्रत्यक्षविधिविरोधादक्रतुप्रयुक्तानां वा तत्प्रयुक्तानामपि चोदकप्राप्तानामानुमानिकतया निषेधस्य प्रत्यक्षाविरुद्धत्वेन निषेद्धुं शक्यत्वान्निषेध इति प्राप्ते सिद्धान्तसूत्रमपि त्वित्यादि । तुशब्दोऽवधारणार्थो नायं निषेधः किंतु न दीक्षितोऽदीक्षित इत्युक्तानामितरेषामविशेषेण होमादीनां ज्योतिष्टोमे कस्य पर्युदासः स्यादित्यत्र हेतुमाह—**वाक्येति** । अहरहर्दद्यादितिविशेषस्य सत्त्वादिति यावत् । पर्युदासमनाश्रित्य निषेधेऽभीष्टे ज्योतिष्टोमे दानादीनां विकल्पः स्यात्स चान्याय्य इत्याह—**प्रतिषेध इति** । "अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेक-

१ "दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात्सर्वदानहोमपाकप्रतिषेधः स्यात् । [ जै० सू० १० । ८ । १२] अक्रतुयुक्तानां वा धर्मः स्यात्क्रतोः प्रत्यक्षशिष्टत्वात् ॥ १३ ॥ तस्य वाप्यानुमानिकमविशेषात् ॥ १४ ॥ अग्रिमं भाष्येस्पष्टम् । एवं चात्राधिकरणे ७ सूत्राणि ॥४॥ २ "दीक्षितो न ददाति,न जुहोति,न पचति"इति तत्स्थितिः। ३ प्रतिषेधः प्रदेशेऽनारभ्य विधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् [ जै० सू० १० । ८ । १ ] अर्थप्राप्तवदिति चेत् ॥ २ ॥ न तुल्यहेतुत्वादुभयं शब्दलक्षणम् ॥ ३ ॥ एतदुत्तरमेतदधिकरणान्नियमसूत्रं टीकायां स्पष्टम् । एवं चैतधिकरणे ४ सूत्रम् ।

रत्नप्रभा ।

विधीनामेकदेशः स्याद् '' [ जै० सू० १० । ८ । ४ ] इति स्थितम् ॥ अत्रार्थः पठितमित्युक्तम् । तच्चिन्त्यम् ॥ सूत्रार्थस्तु—''यज्ञमात्रे ये यजामहे इति प्रयोक्तव्यम्'' इति श्रुतम् । ''नानुयाजेषु येयजामहङ्करोति इत्यपि श्रुतम् । तत्र नकारस्य निषेधकत्वेऽप्यतिरात्रे षोडशिग्रहणाग्रहणयोरिवानुयाजेषु यज्ञत्वाविशेषात् प्रयोक्तव्यं, निषेधात् न प्रयोक्तव्यमिति विकल्पः स्यात् । तस्याऽन्यायत्वात् येयजामह-

भामती ।

किं विधिप्रतिषेधयोर्विकल्प उत पर्युदासोऽनुयाजवर्जितेषु येयजामहः कर्तव्य इति । मा भूदर्थप्राप्तस्य शास्त्रीयेण निषेधेन विकल्पः । दृष्टं हि तादात्विकीमस्य सुन्दरतां गमयति नायतौ दोषवत्तां निषेधति । तस्य तत्रौदासीन्यात् । निषेधशास्त्रं तु तादात्विकं सौन्दर्यमबाधमानमेव प्रवृत्त्युन्मुखं नरं निवारयदायत्यामस्य दुःखफलत्वमवगमयति । यथाह—'अकर्तव्यो दुःखफलः' इति । ततो रागतः प्रवृत्तमप्यायत्यां दुःखतो विभ्यतं पुरुषं शक्नोति निवारयितुमिति बलीयान् शास्त्रीयः प्रतिषेधो रागतः प्रवृत्तेरिति न तया विकल्पमर्हति । शास्त्रीयौ तु विधिनिषेधौ तुल्यबलतया षोडशिग्रहणवद्विकल्प्येते । तत्र हि विधिदर्शनात्प्रधानस्योपकारभूयस्त्वं कल्प्यते । निषेधदर्शनाच्च वैगुण्येपि फलसिद्धिरवगम्यते । यथाह—'अर्थप्राप्तवदिति चेन्न तुल्यत्वादुभयं शब्दलक्षणम्' इति । न च वाच्यं यावद्यजतिषु येयजामहकरणं यावद्यजतिसामान्यद्वारेणानुयाजं यजतिविशेषमुपसर्पति तावदनुयाजगतेन निषेधेन तन्निषिद्धमिति शीघ्रप्रवृत्तेः सामान्यशास्त्राद्विशेषनिषेधो बलवानिति । यतो भवत्वेवंविधिषु ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति । तत्र तक्रविधिर्न दधिविधिमपेक्षते प्रवर्तितुमिह तु प्राप्तिपूर्वकत्वात्प्रतिषेधस्य येयजामहस्य चान्यतोऽप्राप्तेस्तन्निषेधेन निषेधप्राप्त्यै तद्विधिरपेक्षणीयः । न च सापेक्षतया निषेधाद्विधिरेव बलीयानित्यतुल्यशिष्टतया न विकल्पः किंतु निषेधस्यैव बाधनमिति सांप्रतं, तथा सति निषेधशास्त्रं प्रमत्तगीतं स्यात् । न च तद्युक्तं तुल्यं हि सांप्रदायिकम् । न च न तौ पशौ करोतीतिवदर्थवादता । असमवेतार्थत्वात् । पशौ हि नाज्यभागौ स्त इत्युपपद्यते । न चात्र तथा येयजामहाभावः, यजतिषु येयजामहविधानात् । अनुयाजानां च तद्भावात् । न च पर्युदासस्तदाननुयाजेष्विति, कात्यायनमतेन नियमप्रसक्तेः । तस्माद्विहितप्रतिषिद्धतया विकल्प इति प्राप्तम् । एवं प्राप्त उच्यते—उक्तं षोडशिग्रहणाग्रहणयोर्विकल्प इति । न हि तत्रान्या गतिरस्ति । तेनाष्टदोषदुष्टोऽपि विकल्प आस्थीयते पक्षेऽपि प्रामाण्यान्मा भूत्प्रमत्तगीततेति । इह तु पर्युदासेनाप्युपपत्तौ संभवन्त्यामन्याय्यं विकल्पाश्रयणमयुक्तम् । एवं हि तदा नञः संबन्धोऽननुयाजेषु यजतिष्वनुयाजवर्जितेषु येयजामहः कर्तव्य इति । किमतो यद्येवम् । एतदतो भवति—नानुयाजेष्वित्येतद्वाक्यमपरिपूर्णं साकांक्षं पूर्ववाक्यैकदेशेन संबन्त्स्यते यदेतद्येयजामहं करोतीत्येतन्नानुयाजेषु यदुक्तं स्यादनुयाजवर्जितेष्विति तावदुक्तं भवति नानु-

आनन्दगिरीय—न्यायनिर्णयः ।

देशः स्यात्'' [ पू० मी० सू० १० । ८ । ३] इत्येतद्दाशमिकं वा सूत्रमर्थद्वारा पठति—अपि त्विति । एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त इत्युपक्रम्याऽऽश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजमाह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार इति सप्तदशाक्षरं मन्त्रगणं सप्तदशकलिंगदेहसमष्टिरूपप्रजापतित्वेन स्तुत्वा यज्ञे यज्ञेऽन्वायत्तोऽनुगत इत्यनारभ्यवादेन सर्वयज्ञेषु मन्त्रगणो विनियुक्तः । तत्र च यज्ञेषु येयजामहकरणमुक्त्वा नानुयाजेष्विति श्रुतम् । तत्र नानुयाजेष्विति निषेधाद्विधिनिषेधसंनिपाताद्विकल्पो वा स्यात्पर्युदासेनानुयाजं वर्जयित्वेतरेषु यजतिषु येयजामहः कर्तव्य इति वाक्यशेषः सन्विधिरेव वेति संदेहे विधिनिषेधयोः शास्त्रीयतया तुल्यबलवत्त्वेन षोडशिग्रहणाग्रहणवद्विकल्पे प्राप्ते सिद्धान्तितमपि त्विति । नानुयाजेष्वित्ययं न निषेधोऽपि तु येयजामहकरणविधेर्वाक्यशेषः सन्पर्यु-

[ जै० सू० १०।८।१५ ] इति ॥ ( इति प्रथमं वर्णकम् )॥ अथ वैतास्वेव विधूननश्रुतिष्वेतेनैव सूत्रेणैतच्चिन्तयितव्यं-किमनेन विधूननवचनेन सुकृतदुष्कृतयोर्हानमभिधीयते, किं वाऽर्थान्तरमिति । तत्रैवं प्रापयितव्यम् ॥ न हानं विधूननमभिधीयते । "धूञ् कम्पने" [ पाणि० धा० चुरादौ ] इति स्मरणात् । "दोधूयन्ते ध्वजाग्राणि" इति च-"वायुना चाल्यमानेषु ध्वजाग्रेषु" प्रयोगदर्शनात् ॥ तस्माच्चालनं विधूननमभिधीयते । चालनं तु सुकृतदुष्कृतयोः कञ्चित्कालं फलप्रतिबन्धनादित्येवं प्राप्तस्य प्रतिवक्तव्यम् ॥ हानावेवैषः विधूननशब्दोऽनुवर्तितुमर्हति । उपायनशब्दशेषत्वात् । न हि परपरिग्रहभूतयोरप्रहीणयोः सुकृतदुष्कृतयोः

---

रत्नप्रभा ।

विधेरेव नानुयाजवाक्यमेकदेशः स्यात् । पर्युदासवृत्त्याविधिवाक्यशेषः स्यादिति यावत् ॥ यथा चानुयाजभिन्नेषु यागेषु ये यजामह इति प्रयोक्तव्यमित्येकवाक्यतेति वर्णकान्तरमाह—अथ वा इति ॥ पूर्वत्र विधूननकर्महानिरिति सिद्धवत्कृत्य उपायनोपसंहारः उक्तः। अत्र सैव साध्यत इति भेदः ॥ उभयत्र लक्षणासाम्यात् संशयमाह-किमिति ॥ विधूननस्य हि फलद्वयमश्वरोमादिषु दृष्टं-पूर्वस्वभावात् च्युतिः, अन्यत्र संक्रान्तिश्चेति ॥ तत्र संक्रान्तिरूपहानिर्लक्षणीया किं वा च्युतिरिति संशयार्थः ॥ तत्र विधूननशब्दस्य कम्पनं मुख्यार्थ इति तावत् सर्वसम्मतम् । तच्चामूर्तयोः पुण्यपापयोर्न सम्भवति । अतस्तयोर्यः स्वभावः फलदातृत्वशक्तिस्ततश्चालनं-विद्यया प्रतिबन्धात् च्युतिः, सा लक्षणीया, न हानिः । अमूर्तयोरन्यत्र संक्रान्त्ययोगादन्यसापेक्षत्वाच्चेति पूर्वपक्षार्थः ॥ सिद्धान्तयति-हानावेवेति ॥ यदि च्युति-

भामती ।

याजेष्विति । तथा च यजतिविशेषणार्थत्वादननुयाजविधिरेवायमिति प्रतिषेधाभावान्न विकल्पः न चाभियुक्ततरपाणिनिविरोधे कात्यायनस्यासद्वादित्वं नित्यसमासवादिनः संभवति । स हि विभाषाधिकारे समासं शास्ति । तस्मादनुयाजवर्जितेषु येयजामहविधानमिति सिद्धम् । वर्णकान्तरमाह—अथ वैतास्विति । यथा हि सुकृतदुष्कृतयोरमूर्तयोः कल्पनं नाञ्जसं मूर्त्यनुविधायित्वात्कम्पस्य । तयान्यदीययोरन्यत्र संचा-

आनन्दगिरीय-न्यायनिर्णयः ।

दासः स्यान्निषेधे तु विकल्पो भवेत्तस्यान्याय्यत्वाद्येयजामहकरणविधीनां नानुयाजेष्विति पर्युदासः सन्नेकदेशः स्यादतः षोडशिग्रहणाग्रहणयोरगत्या विकल्पेऽपि प्रकृते पर्युदासेनोपपत्तौ तदभावादनुयाजवर्जितेषु यजतिषु येयजामहः कर्तव्य इति विधिरेवायमित्यर्थः ॥ वर्णकान्तरमाह—अथ वेति । सुकृतदुष्कृते विधूनुत इत्यादौ विधूननशब्दं विषयीकृत्य धात्वर्थमुख्यतोपायनशब्दसंनिधिभ्यां संशयमाह—किमिति । अर्थान्तरं चालनम् । मन्त्रादीनां विद्यासंनिधेरकिंचित्करत्ववदत्रापि विधूननशब्दस्योपायनशब्दसंनिधिरप्रयोजक इत्यभिप्रेत्य पूर्वपक्षमाह—तत्रेति । पूर्वपक्षे विद्यावशान्न सुकृतादिनिवृत्तिः सिद्धान्ते ततस्तत्सिद्धिः । पाणिनिस्मरणं पूर्वपक्षे हेतूकरोति-धूञिति । लोकप्रयोगसामर्थ्याच्च विधूननस्य चालनतेत्याह-दोधूयन्त इति । स्मृत्या लोकतश्च सिद्धं निगमयति-तस्मादिति । कम्पनस्य मूर्त्यनुविधानादमूर्तयोः सुकृतदुष्कृतयोर्न तद्युक्तमित्याशंक्य विशिष्टार्थक्रियाकारित्वाभावस्तद्धर्मोऽत्र लक्षणीय इत्याह-चालनं त्विति। चालनस्य विधूननत्वे विद्यया न सुकृतादिध्वस्तिरिति फलं वक्तुमितीत्युक्तम्। पूर्वपक्षमनुभाष्य सूत्राक्षरैः सिद्धान्तयति—एवमिति । उपायनशब्दसन्निधौ विधूननशब्दशेषत्वादित्युपायनशब्दस्य श्रुतत्वादित्यर्थः।तदेव प्रपञ्चयति-न हीति।पूर्वपक्षेऽपि लक्षणाध्रौव्याद्विधूननशब्दसंनिहितोपायनशब्दानुसा-

परैरुपायनं सम्भवति ॥ यद्यपीदं परकीययोः सुकृतदुष्कृतयोरपरिहीणयोः परैरुपायनं नाञ्जसं सम्भाव्यते । तथापि तत्सङ्कीर्तनात्तावत्तदानुगुण्येन हानमेव विधूननं नामेति निर्णेतुं शक्यते । क्वचिदपि चेदं विधूननसन्निधावुपायनं श्रूयमाणं कुशाच्छन्दःस्तुत्युपगानवद्विधूननश्रुत्या सर्वत्राप्यपेक्ष्यमाणं सार्वत्रिकं निर्णयकारणं सम्पाद्यते ॥ न च चालनं ध्वजाग्रवत्सुकृतदुष्कृतयोर्मुख्यं सम्भवति । अद्रव्यत्वात् । अश्वश्च रोमाणि विधुन्वानः त्यजन्नजः सहैव तेन रोमाण्यपि जीर्णानि शातयति ॥ "अश्व इव रोमाणि विधूय पापम्" [ छां० ८ । १३ । १ ] इति च ब्राह्मणम् । अनेकार्थत्वाभ्युपगमाच्च धातूनां न स्मरणविरोधः ॥ तदुक्तमितिव्याख्यातम् ॥ ( इति द्वितीयं वर्णकम् ) ॥२६॥ इति हान्यधिकरणम् ॥१५॥

---

रत्नप्रभा ।

मात्रं लक्ष्यं, तदोपयन्तीत्यनन्वितं स्यात् ॥ न च यत्र धुनोतेरुपायनशब्दसान्निध्यं, तत्र हानिर्लक्ष्यते, न केवलधुनोतेः । हानिश्चान्यत्र विदुषः सेवकादौ तुल्यकर्मसंक्रान्तिरिति नासम्भव इति वाच्यम्॥ केवलधुनोतेरपि मुख्यार्थासम्भवेन अन्यत्र लक्ष्यतया बुद्धिस्थहानिलक्षणाया एव युक्तत्वादिति भावः ॥ उपायनस्यामुख्यत्वान्न क्वापि हानिलक्षणाबीजत्वमिति शंकित्वा पुण्यपापयोः फलतः स्वीकारात्मकमुपायनं हानिं विनानुपपन्नं सल्लक्षणानिर्णायकमिति परिहरति—यद्यपीत्यादिना ॥ यथान्यत्र श्रुतम् औदुम्बरत्वादिकं कुशादिनिर्णायकं, तथेदमुपायनं विधूननस्य हानत्वनिश्चायकमित्याह—क्वचिदपीति ॥ विधूननं मुख्यं किमिति नोच्यते, तत्राह—न चेति ॥ तथापि हानं कथं लक्ष्यत इत्याशङ्क्य मुख्यसम्बन्धादित्याह—अश्वश्चेति ॥ अनुपपत्तिसम्बन्धौ लक्षणाबीजरूपावुक्त्वा लक्षकं पदं निर्दिशति—अश्व इवेति ॥ विधूयेति पदं दृष्टान्ते हानपर्यन्तं सद्दार्ष्टान्तिकेऽपि हानलक्षकमित्यर्थः ॥ यद्वा हानवाचकमेवास्तु ॥ न च "धूञ् कम्पने" इति धातुपाठविरोधः ॥ तस्योपलक्षणत्वार्थत्वादित्याह—अनेकेति ॥ शाखान्तरस्थमुपायनं विधूननस्य हानत्वनिश्चायकमित्यत्र जैमिनिसूत्रं तदुक्तमिति गृहीतम्, पूर्वं व्याख्यातमित्यर्थः ॥

भामती ।

रोऽप्यनुपपन्नोऽमूर्तत्वादेव । तस्माद्यत्र विधूननमात्रं श्रुतं तत्र कम्पनेन वरं स्वकार्यारम्भाच्चालनमात्रमेव लक्ष्यतां न तु ततोऽपगत्यान्यत्र संचारः कल्पनागौरवप्रसङ्गात् । तस्मात्स्वकार्यारम्भाच्चालनं विधूननमिति प्राप्तेऽभिधीयते—यत्र तावदुपायनश्रुतिस्तत्रावश्यं त्यागो विधूननं वक्तव्यम् । क्वचिदपि चेद्विधूननं त्यागे वर्तते तथा सत्यन्यत्रापि तत्रैव वर्तितुमर्हति । एवं हि न वर्तेत यदि विधूननमिह मुख्यं लभ्येत । न

आनन्दगिरीय—न्यायनिर्णयः ।

रेण हानमेव लक्ष्यमित्यर्थः । उपायनस्यापि मुख्यस्यायोगात्तच्छेषतया कथं हानमित्याशंक्याऽऽह—यद्यपीति । उपायनशब्दस्य विधूननशब्दसंनिधौ क्वचिदेव भावात्कथं तद्वशान्निर्णयस्तत्राऽऽह—क्वचिदपीति । यथा कुशादिषु क्वचिदुक्तेषु संदिग्धेषु श्रुत्यन्तरान्निर्णयोऽङ्गीकृतस्तथेदमुपायनं विधूननसंनिधौ क्वचिदेव श्रुतमपि यत्रयत्र विधूननं श्रूयते तत्रतत्र सर्वत्र तत्संदिग्धार्थे निर्णायकत्वेनापेक्षितं निर्णायकमित्यर्थः । यत्तु लौकिकप्रयोगाद्विधूननं कम्पनमेवेति तत्राऽऽह—न चेति । दृष्टान्ते कम्पनस्यैव दृष्टेर्दार्ष्टान्तिकेऽपि तदेव ग्राह्यमित्याशंक्याऽऽह—अश्वश्चेति । हानमपि तत्र भातीत्यर्थः । तथाऽपि दार्ष्टान्तिके विधूननं चालनमेवेत्याशंक्य तयोस्तुल्यत्वान्नैवमित्याह—अश्व इवेति । यत्तु पाणिनिस्मरणाद्विधूननं कम्पनमेवेति तत्राऽऽह—अनेकेति । श्रुत्यन्तरस्थो विशेषः श्रुत्यन्तरेऽनाश्रितश्चेद्विकल्पः सर्वत्र स्यात् । स चायुक्तः सत्यां गताविति पर्युदासाधिकरणे व्युत्पादितमित्याह—तदुक्तमिति ॥ २६ ॥ ( १९ ) ॥ कर्म-

## साम्पराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥ ( १६ ) ॥

देवयानेन पथा पर्यङ्कस्थं ब्रह्माभिप्रस्थितस्य व्यध्वनि सुकृतदुष्कृतवियोगं कौषीतकिनः पर्यंकविद्यायामामनन्ति—"स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति" [ कौषी० १ । ३ ] इत्युपक्रम्य "स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनुते" [ कौषी० १ । ४ ] इति । तत्—किं यथाश्रुतं व्यध्वन्येव वियोगवचनं प्रतिपत्तव्यम्—आहोस्विद्—आदावेव देहादपसर्पणे इति विचारणायां श्रुतिप्रामाण्याद्यथाश्रुतप्रतिपत्त्यप्रसक्तौ पठति—"साम्पराये" इति । साम्पराये गमन एव

रत्नप्रभा ।

एवं विधूननस्य हानित्वसिद्धेः केवलहानौ उपायनोपसंहार इति सिद्धम् ॥ २६ ॥ ( १९ )॥ साम्पराये० ॥ अन्ये व्यध्वनि अर्धमार्गे पूर्वोक्तं विधूननस्य हानत्वमुपजीव्य हानस्य नदीतरणानन्तर्यश्रुतेः, "अश्व इव रोमाणि" [ छां० ८ । १३ । १ ] इत्यादौ देहत्यागात् प्राक्कालत्वश्रुतेश्च,—संशयमाह—तत्किमिति ॥ ब्रह्मलोकमार्गमध्ये विरजाख्यनदीमत्येति "तत् सुकृतदुष्कृते विधूनुते" इत्यत्र तदिति सर्वनामश्रुत्या तेनेत्यर्थतया सन्निहितनदीतरणस्य कर्महानिहेतुत्वोक्तेरर्धपथे कर्मक्षय इति पूर्वपक्षः ॥ तत्र विद्यायाः कर्मक्षयहेतुत्वासिद्धिः पूर्वपक्षे, सिद्धान्ते तत्सिद्धिरिति मत्वा सिद्धान्तयति—साम्पराय इति ॥ मरणात् प्रागित्यर्थः ॥ सम्परेतस्य मृतस्य कञ्चित्कालं कर्मसत्त्वे फलाभावाद्देवयानमार्गप्रवेशायोगाच्च आदावेव क्षय

भामती ।

चैतदस्ति । तत्रापि स्वकार्याचालनस्य लक्ष्यमाणत्वात् । न च प्रामाणिकं कल्पनागौरवं लोहगन्धितामाचरति । अपि चानेकार्थत्वाद्धातूनां त्यागेपि विधूयेति मुख्यमेव भविष्यति । प्राचुर्येण त्यागेपि लोके प्रयोगदर्शनात् । विनिगमनाहेतोरभावात् । गणकारस्य चोपलक्षणत्वेनाप्यर्थनिर्देशस्य तत्र दर्शनात् । तस्माद्धानार्थ एवात्रेति युक्तम् ॥ २६ ॥ ( १९ ) ॥ सांपराये तर्तव्याभावात्तथा ह्यन्ये । ननु पाठक्रमादर्धपथे सुकृतदुष्कृततरणे प्रतीयेते । विद्यासामर्थ्याच्च प्रागेवावगम्येते तथा शाट्यायनिनां ताण्डिनां

आनन्दगिरीय-न्यायनिर्णयः ।

क्षयहेतुत्वं विद्यायाः सिद्धं कृत्वा हानसंनिधावुपायनोपसंहारो दर्शितः, संप्रति तदेवासिद्धं मार्गमध्ये श्रुतकर्मक्षयस्य विद्याहेतुकत्वाभावादित्याशंक्याऽऽह—सांपराय इति । यद्वा द्वितीयवर्णकोक्तविधूननशब्दस्य हानस्य कालोऽनेन निरूप्यते । विधूननं हानमित्युक्त्वा तदेव कंचिद्वयध्वन्यर्धपथे श्रुतं विचारयितुं विचारविषयमाह—देवयानेनेति । उक्तं विभागवचनमधिकृत्य श्रुतिविप्रतिपत्त्या संशयमाह—तदिति । अश्व इव रोमाणि विधूय पापमित्यारभ्य धूत्वा शरीरमित्युक्त्वा ब्रह्मलोकमभिसंभवामीति श्रुत्या देहत्यागात्प्रागेव सुकृतादिहानोक्तेर्विद्यासामर्थ्याच्च जीवत एव तद्धानसिद्धेः सति पुष्कले हेतौ कार्यक्षेपायोगाद्विद्यायाश्च कर्मक्षये पुष्कलहेतुत्वात्सुकृतदुष्कृते विधूनुत इत्यत्र च पाठक्रमादर्धपथे सुकृतादित्यागाज्जुगमात्पाठक्रमाच्चार्थक्रमस्य बलवत्त्वात्पूर्वपक्षाभावमाशंक्य तत्प्राप्तिमाह—श्रुतीति । तत्सुकृतदुष्कृते विधूनुत इत्येतन्न पाठमात्रं किंतु तच्छब्देन सर्वनाम्ना तस्मादिति हेत्वर्थेन विरजानद्यतिक्रमस्य विधूननं प्रति हेतुतां वदन्ती श्रुतिरियम् । न च श्रुत्यन्तरविरोधोऽर्धपथेऽपि कर्मक्षयस्य ब्रह्मलोकसंभवनात्प्राक्कालत्वसिद्धेरिति भावः । विधूननशब्दवत्सुकृतादिहानस्य कालोक्तिद्वारा वाक्यार्थधीहेतुकथनात्पादादिसंगतिः । पूर्वपक्षे विद्यासामर्थ्यानादरः । सिद्धान्ते तदादरणमित्यभिप्रेत्य पूर्वपक्षप्राप्तिमुक्त्वा सिद्धान्तसूत्रमवतार्य योजयति—पठतीत्यादिना । किं फलवशादर्धपथे दुष्कृतादिहानं कल्प्यं किंवा तत्रैव हानहेतोः सत्त्वात् । तत्राऽऽद्यं

१ धूनुते इति व्युपसर्गः पाठः क्वचित् ।

देहादपसर्पण इदं विद्यासामर्थ्यात्सुकृतदुष्कृतहानं भवतीति प्रतिजानीते। हेतुं व्याचष्टे–तर्तव्याभावादिति ॥ न हि विदुषः सम्परेतस्य विद्यया ब्रह्म प्रेप्सतोऽन्तराले सुकृतदुष्कृताभ्यां किञ्चित्प्राप्तव्यमस्ति, यदर्थं कतिचित्क्षणानक्षीणे ते कल्प्येयाताम् ॥ विद्याविरुद्धफलत्वात्तु विद्यासामर्थ्येन तयोः क्षयः । स च यदैव विद्याफलाभिमुखी, तदैव भवितुमर्हति ॥ तस्मात्प्रागेव सन्नयं सुकृतदुष्कृतक्षयः पश्चात्पठ्यते । तथा ह्यन्येपि शाखिनः ताण्डिनः, शाट्यायनिनश्च, प्रागवस्थायामेव सुकृतदुष्कृतहानिमामनन्ति–"अश्व इव रोमाणि विधूय पापम्" [ छां० ८ । १३ । १ ] इति "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति च ॥ २७ ॥

---

रत्नप्रभा ।

इत्यर्थः ॥ क्षयहेतोः, विद्याया मध्ये मार्गमसत्त्वाचेत्याह—विद्याविरुद्धेति ॥ नदीतरणानन्तरपाठस्तु बाध्यः । अर्थविरोधादित्याह–तस्मादिति ॥ तदिति सर्वनाम्नापि प्रकृतविद्यैवोच्यत इति भावः ॥२७॥

भामती ।

च श्रुतेः । श्रुत्यर्थौ च पाठक्रमाद्बलीयांसौ, 'अग्निहोत्रं जुहोति यवागूं पचति' इत्यत्र यथा । तस्मात्पूर्वपक्षाभावादनारभ्यमेतत् । अत्रोच्यते । नैतत्पाठक्रममात्रमपि तु श्रुतिस्तत्सुकृतदुष्कृते विधूनुत इति। तदिति हि सर्वनाम तस्मादर्थे सन्निहितपरामर्शकं तस्य हेतुभावमाह । सन्निहितं च यदनन्तरं श्रुतम् । तच्चार्धपथवर्त्ति विरजानदीमनोऽभिगमनमित्यर्धपथ एव सुकृतदुष्कृतत्यागः । न च श्रुत्यन्तरविरोधः।अर्धपथेऽपि पापविधूनने ब्रह्मलोक सम्भवात् प्राक्कालतोपपत्तेः । एवं शाट्यायनिनामप्यविरोधः। न हि तत्र जीवन्निति वा जीवत इति वा श्रुतम् । तथा चार्धपथ एव सुकृतदुष्कृतविमोकः । एवं च न पर्यङ्कविद्यातस्तत्प्रक्षय इति पूर्वः पक्षः । राद्धान्तस्तु विद्यासामर्थ्यविधूतकल्मषस्य ज्ञानवत उत्तरेण पथा गच्छतो ब्रह्मप्राप्तिर्न चाप्रक्षीणकल्मषस्योत्तरमार्गगमनं संभवति । यथा यवागूपाकात्प्राग्अग्निहोत्रम् । यमनियमाद्यनुष्ठानसहिताया विद्याया उत्तरेण मार्गेण पर्यङ्कस्थब्रह्मप्राप्त्युपायत्वश्रवणात् । अप्रक्षीणपाप्मनश्च तदनुपपत्तेः । विद्यैव तादृशी कल्मषं क्षपयति क्षपितकल्मषं चोत्तरमार्गं प्रापयतीति कथमर्धपथे कल्मषक्षयः । तस्मात्पाठक्रमबाधेनार्थक्रमोऽनुसर्तव्यः । ननु न पाठक्रममात्रमत्र, तदिति सर्वनामश्रुत्या संनिहितपरामर्शादित्युक्तम्। तदयुक्तं बुद्धिसंनिधानमात्रमत्रोपयुज्यते नान्यत्, तच्चानन्तरस्येव विद्याप्रकरणाद्विद्याया अपीति समाना श्रुतिरुभयत्रापीति । अर्थपाठौ परिशिष्येते तत्र चार्थो बलीयानिति । न च ताण्ड्यादिश्रुत्यविरोधः पूर्वपक्षे । अश्व इव रोमाणि विधूयेति हि स्वतन्त्रस्य पुरुषस्य व्यापारं ब्रूते न च परेतस्यास्ति स्वातन्त्र्यम्, तस्मात्तद्वि-

आनन्दगिरीय–न्यायनिर्णयः ।

प्रत्याह–न हीति । संपरेतस्य परलोकं प्रति प्रस्थितस्येत्यर्थः । द्वितीयं निराह–विद्येति । अनपाकृतपापस्य देवयानेन पथा गमनायोगाज्जीवत एव विदुषो विद्यासामर्थ्यात्पापहानमित्यर्थः । का तर्हि कौषीतकिश्रुतेर्गतिस्तत्राऽऽह–तस्मादिति । 'तदितिसर्वनामश्रुत्या प्रकरणपठितविद्यायाः प्राधान्यात्परामर्शाद्विरजानद्यतिक्रमस्यानन्तरप्रकृतस्याप्यप्राधान्यादपरामर्शात्पाठक्रमबाधेनार्थक्रमः स्वीकर्तव्य इत्यर्थः । किंच सति पुष्कलहेतौ कार्यं भवत्येवेतिन्यायानुगृहीतं श्रुत्यन्तरमेव बलवदिति मत्वा श्रुत्यन्तरमुदाहरति–तथा हीति । न हि तस्याविरोधेन नयनं पूर्वपक्षे युक्तं विधूय पापमिति विधूनने पुंसः स्वातन्त्र्यदृष्टेरित्याशयेनाऽऽह—अश्व इवेति । किंच, प्रागवस्थायामेव सुकृताद्यादानस्य श्रुतत्वादते च तत्त्यागात्तदादानायोगान्नार्धपथे कर्मनिवृत्तिरित्याह—तस्येति ॥ २७ ॥ विद्याफलत्वाद्ब्रह्मलोकाप्तिवत्कर्मक्ष-

## छन्दत उभयाविरोधात् ॥ २८ ॥

**यदि च देहादपसृप्तस्य देवयानेन पथा प्रस्थितस्यार्धपथे सुकृतदुष्कृतक्षयोऽभ्युपगम्येत, ततः पतिते देहे यमनियमविद्याभ्यासात्मकस्य सुकृतदुष्कृतक्षयहेतोः पुरुषप्रयत्नस्येच्छातोऽनुष्ठानानुपपत्तेरनुपपत्तिरेव तद्धेतुकस्य सुकृतदुष्कृतक्षयस्य स्यात् ॥ तस्मात्पूर्वमेव साधकावस्थायां छन्दतोऽनुष्ठानं तस्य स्यात् । तत्पूर्वकं च सुकृतदुष्कृतहानमिति द्रष्टव्यम् ॥ एवं निमित्तनैमित्तिकयोरुपपत्तिस्ताण्डिशाट्यायनिश्रुत्योश्च संगतिरिति ॥ २८ ॥ इति साम्परायाधिकरणम् ॥ ( १६ ) ॥**

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥(१७)॥

---

रत्नप्रभा ।

किञ्च मृतस्य छन्दतो यथाकामं विद्यानुष्ठानानुपपत्तेरुभयोर्विद्या कर्मक्षययोः श्रुतौ हेतुफलभावो विरुध्यते । किञ्च सति पुष्कलहेतौ न कार्यविलम्ब इतिन्यायोपेतताण्ड्यादिश्रुतिविरोधस्तव स्याद् अस्मत्पक्षे त्वविरोध इत्याह—**छन्दत इति** ॥ तस्मात् कर्महानस्य विद्याफलत्वात् केवलहानावुपायनोपसंहारो विद्यास्तुतय इति सिद्धम् ॥ २८ ॥ ( १६ ) ॥ **गतेरर्थवत्त्वम् ०** ॥ क्वचित् सगुणविद्यायां मार्गः श्रूयते । निर्गुणविद्यायां न श्रूयते । तत्र हानसन्निधौ मार्गस्य श्रुतत्वादनपेक्षितत्वाच्च संशयदृष्टान्तसं-

भामती ।

रोधः ॥ २७ ॥ **छन्दत उभयाविरोधात्** । केभ्यश्चित्पदेभ्य इदं सूत्रम् । ननु यथा परेतस्योत्तरेण पथा ब्रह्मप्राप्तिर्भवतीति विद्याफलमेवं तस्यैवार्धपथे सुकृतदुष्कृतहानिरपि भविष्यतीति शङ्कापदानि तेभ्य उत्तरमिदं सूत्रम् । तद्व्याचष्टे—**यदि च देहादपसृप्तस्येति** । विद्याफलमपि ब्रह्मप्राप्तिर्नापरेतस्य भवितुमर्हति शङ्कापदेभ्यः । यथाहुः—नाजनित्वा तत्र गच्छन्तीति । सुकृतदुष्कृतप्रक्षयस्तु सत्यपि नरशरीरे संभवतीति समर्थस्य हेतोर्यमनियमादिसंहिताया विद्यायाः कार्यक्षयायोगाद्युक्तो जीवत एव सुकृतदुष्कृतक्षय इति सिद्धम् । छन्दतः स्वच्छन्दतः स्वेच्छयेति यावत् । स्वेच्छयानुष्ठानं यमनियमादिसहितायां विद्यायाः । **तस्य** जीवतः पुरुषस्य स्यान्न मृतस्य । तत्पूर्वकं च सुकृतदुष्कृतहानं स्याजीवत एव । समर्थस्य क्षेपायोगात् । एवं कारणानन्तरं कार्योत्पादे सति निमित्तनैमित्तकयोस्तद्भावस्योपपत्तिस्ताण्डिशाट्यायनिश्रुत्योश्च संगतिरितरथा स्वातन्त्र्याभावेनासंगतिरुक्ता स्यात् । तदनेनोभयाविरोधो व्याख्यातः । ये तु परस्य विदुषः सुकृतदुष्कृते कथं परत्र संक्रामत इति शङ्कोत्तरतया सूत्रं व्याचख्युः । छन्दतः संकल्पत इति श्रुतिस्मृत्योरविरोधादेव । न त्वत्रागमगम्येऽर्थे स्वातन्त्र्येण युक्तिर्निवेशनीयेति । तेषामधिकरणशरीरानुप्रवेशो संभवत्यर्थान्तरोपवर्णनमसङ्गतमेवेति ॥ २८ ॥ **गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः** ।

आनन्दगिरीय—न्यायनिर्णयः ।

योऽपि देहत्यागादूर्ध्वं स्यादित्याशंक्याऽऽह—**छन्दत इति** । सूत्रं व्याचष्टे—**यदि चेति** । जीवतो ब्रह्मलोकाप्तेरयोगाद्देहपातापेक्षा कर्महानेस्तु देहवत एव सिद्धेर्नैवमित्यर्थः । छन्दतः स्वच्छन्दतः स्वेच्छयेति व्याकरोति—**इच्छात इति** । अर्धपथे हेत्वनुष्ठानासिद्धया साध्यासिद्धौ फलितमाह—**तस्मादिति** । उभयाविरोधादिति भागं व्याकरोति—**एवमिति** । समर्थस्य क्षेपायोगात्पूर्णे हेतावनन्तरमेव कार्योत्पत्तिरन्यथा निमित्तनैमित्तिकत्वमेव तयोर्न स्यादित्यर्थः । सूत्रपदस्यार्थान्तरमाह—**तांडीति** । इत्थं विद्यासामर्थ्यात्प्रागेव सुकृतादिनिवृत्तिरित्युपसंहर्तुमितीत्युक्तम् ॥ २८ ॥ ( १६ ) ॥ सुकृतादिहानसंनिधानोक्तदेवयानगतेरुपायनवदेव सार्वत्रिकत्वप्राप्तावुक्तम्—**गतेरिति** । विचारविषयमाह—

क्वचित्पुण्यपापहानसन्निधौ देवयानः पन्थाः श्रूयते, क्वचिन्न । तत्र संशयः—किं हानाववविशेषेणैव देवयानः पन्थाः सन्निपतेद्—उत—विभागेन क्वचित्सन्निपतेत्क्वचिन्नेति । यथा तावद्धानाववविशेषेणैवोपायनानुवृत्तिरुक्ता, एवं देवयानानुवृत्तिरपि भवितुमर्हतीत्यस्यां प्राप्तौ आचक्ष्महे । "गतेः" देवयानस्य पथोऽर्थवत्त्वमुभयथा विभागेन भवितुमर्हति । क्वचिदर्थवती गतिः, क्वचिन्नेति, नाविशेषेण । "अन्यथा हि" अविशेषेणैवैतस्यां गतावंगीक्रियमाणायां विरोधः स्यात् । "पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" [ मुंड० ३ । १ । ३ ] इत्यस्यां श्रुतौ देशान्तरप्रापणगतिर्विरुध्येत । कथं हि निरञ्जनोऽगन्ता देशान्तरं गच्छेत् । गन्तव्यं च परमं साम्यं न देशान्तरप्राप्त्यायत्तमित्यानर्थक्यमेवात्र गतेर्मन्यामहे २९॥

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

---

रत्नप्रभा ।

गत्या पूर्वपक्षमाह—**यथा तावदिति** ॥ उपायनवत् मार्गस्यापि क्वचित् श्रुतत्वात् सर्वत्रोपसंहार इत्यर्थः ॥ अत्र निर्गुणविदोऽपि मुक्त्यर्थं मार्गापेक्षा पूर्वपक्षे, सिद्धान्ते त्वनपेक्षेति फलम् । देशादिव्यवहितवस्तुप्राप्तौ मार्गस्यापेक्षेतिन्यायानुगृहीतश्रुतिविरोधात् नोपसंहार इति सिद्धान्तः ॥ **निरञ्जनः** असङ्गः । **साम्यं** ब्रह्म ॥ २९ ॥ ननु तर्हि सगुणविद्यायामपि मार्गो व्यर्थ इत्यत आह—**उपपन्न इति** ॥ सा

भामती ।

यथा हानिसंनिधावुपायनमन्यत्र श्रुतमिति यत्रापि केवला हानिः श्रूयते तत्रापि उपायनमुपस्थापयत्येवं तत्संनिधावेव देवयानः पन्थाः श्रुत इति यत्रापि सुकृतदुष्कृतहानिः केवला श्रुता तत्रापि देवयानं पन्थानमुपस्थापयितुमर्हति । न च "निरञ्जनः परमं साम्यमुपैति" इत्यनेन विरोधः । देवयानेन पथा ब्रह्मलोकप्राप्तौ निरञ्जनस्य परमसाम्योपपत्तेः । तस्माद्धानिमात्रे देवयानः पन्थाः संबध्यत इति प्राप्तम् । एवं प्राप्त उच्यते—विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति हि विदुषो विधूतपुण्यपापस्य विद्यया क्षेमप्राप्तिमाह । भ्रमनिबन्धनोऽक्षेमो याथात्म्यज्ञानलक्षणया विद्यया विनिवर्तनीयः । नासौ देशविशेषमपेक्षते । न हि जातु रज्जौ सर्पभ्रमनिवृत्तये समुत्पन्नं रज्जुतत्त्वज्ञानं देशविशेषमपेक्षते । विद्योत्पादस्यैव स्ववि-

आनन्दगिरीय—न्यायनिर्णयः ।

**क्वचिदिति**।संशयार्थं कोटयन्तरमाह—**क्वचिन्नेति**।हानसंनिधौ मार्गश्रुतेर्विशेषाज्ज्ञानाच्च मार्गविषये संशयमाह—**तत्रेति** । हानसंनिधौ क्वचिदेव श्रुतोपायनस्य सार्वत्रिकत्ववत्क्वचिदेव कर्मक्षयसंनिध्युक्तस्य पथो देवयानस्य केवलक्षयश्रवणेऽपि युक्ताऽनुवृत्तिरिति संगतिगर्भं पूर्वपक्षमाह—**यथेति** । निर्गुणब्रह्मविद्या गतिमती ब्रह्मविद्यात्वात्सगुणब्रह्मविद्यावदिति भावः । प्रासंगिकविधूननसमयोक्त्या प्रस्तुतगुणोपसंहारोक्तेरपवादोक्तिद्वारा विचारस्य वाक्यार्थज्ञानोपायगामित्वात्पादादिसंगतिः । पूर्वपक्षे निर्गुणविदोऽपि गत्यपेक्षाया नियतिः । सिद्धान्ते सगुणविद्यावत एव तदपेक्षेति विवक्षित्वा सिद्धान्तयति—**अस्यामिति** । प्रतिज्ञां व्याख्याय हेतुं व्याख्याति—**अन्यथेति** । विरोधमेव साधयति—**कथं हीति** । सर्वगतस्यासङ्गस्याऽऽत्मनो नोपाध्यतिरेकेण गत्युपपत्तिरित्यर्थः । गन्तृरूपालोचनया गतेरयोगमुक्त्वा गन्तव्यरूपालोचनयाऽपि तदयोगमाह—**गन्तव्यं चेति** । स्वतो भिन्नयोरैक्यायोगादाविद्ये भेदे विद्ययैव तन्निवृत्तेर्विद्यायाश्च स्वोत्पत्तौ स्वफले वा देशभेदापेक्षाभावादनर्थिका गतिरित्युपसंहरति—**इतीति** । निर्गुणब्रह्मधीः संस्तम्यर्थः ॥ २९ ॥ निर्गुणविद्यायां गतिर्व्यर्थेति प्राधान्येनोक्त्वा पर्यंकविद्यादौ प्राधान्येन तदर्थवत्त्वमाह—**उपपन्न इति** । तत्र

उपपन्नश्चायमुभयथाभावः क्वचिदर्थवती गतिः, क्वचिन्नेति "तल्लक्षणार्थोपलब्धेः"। गतेः कारणभूतो ह्यर्थः पर्यङ्कविद्यादिषु सगुणेषूपासनेषपलभ्यते। तत्र हि पर्यङ्कारोहणं पर्यङ्कस्थेन ब्रह्मणा सह संवदनं विशिष्टगन्धादिप्राप्तिश्चेत्येवमादि बहुदेशान्तरप्राप्त्यायत्तं फलं श्रूयते । तत्रार्थवती गतिः, न तु सम्यग्दर्शने तल्लक्षणार्थोपलब्धिरस्ति । न ह्यात्मैकत्वदर्शिनामाप्तकामानामिहैव दग्धाशेषक्लेशबीजानामारब्धभोगकर्माशयक्षपणव्यतिरेकेणापेक्षितव्यं किञ्चिदस्ति । तत्रानर्थिका गतिः । लोकवच्चैष विभागो द्रष्टव्यः । यथा लोके ग्रामप्राप्तौ देशान्तरप्रापणः पन्था अपेक्ष्यते नारोग्यप्राप्तौ, एवमिहापीति ॥ भूयश्चैनं विभागं चतुर्थेऽध्याये निपुणतरमुपपादयिष्यामः ॥ ३० ॥ इति गतेरर्थवत्त्वाधिकरणम् ॥ १७ ॥

## अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥ (१८) ॥

रत्नप्रभा ।

गतिर्लक्षणं कारणं यस्यार्थस्य स-तल्लक्षणार्थः ॥३०॥ ( १७ ) ॥ अनियमः सर्वासाम्० ॥ अत्राप्यं-

भामती ।

रोध्यविद्यानिवृत्तिरूपत्वात् । न च विद्योत्पादाय ब्रह्मलोकप्राप्तिरपेक्षणीया । यमनियमादिविशुद्धसत्त्वस्येहैव श्रवणादिभिर्विद्योत्पादात् । यदि परमारब्धकार्यकर्मक्षपणाय शरीरपातावध्यपेक्षेति न देवयानेनास्तीहार्थ इति श्रुतिदृष्टविरोधान्नापेक्षितव्य इति । अस्ति तु पर्यङ्कविद्यायां तस्यार्थ इत्युक्तं द्वितीयेन सूत्रेणेति । ये तु यदि पुण्यमपि निवर्तते किमर्था तर्हि गतिरित्याशंक्य सूत्रमवतारयन्ति । गतेरर्थवत्त्वमुभयथा दुष्कृतनिवृत्त्या सुकृतनिवृत्त्या च । यदि पुनः पुण्यमनुवर्तेत ब्रह्मलोकगतस्यापीह पुण्यफलोपभोगायावृत्तिः स्यात् । तथा चैतेन प्रतिपाद्यमानागत्यनावृत्तिश्रुतिविरोधः । तस्माद्दुष्कृतस्येव सुकृतस्यापि प्रक्षय इति तैः पुनरनाशङ्कनीयमेवाशंकितम् । विद्याक्षिप्तायां हि गतौ केयमाशङ्का यदि क्षीणसुकृतः किमर्थमयं यातीति । न ह्येषा सुकृतनिबन्धना गतिरपि तु विद्यानिबन्धना । तस्माद् वृद्धोक्तमेवोपवर्णनं साध्विति ॥ २९ ॥ ३० ॥ ( १७ ) ॥ अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् । प्रकरणं हि धर्माणां नियामकम्। यदि तु तन्नाद्रियते ततो दर्शपूर्णमासज्योतिष्टोमादिधर्माः संकीर्येरन्। न च तेषां विकृतिषु सौर्यादिषु द्वादशाहादिषु चोदकतः प्राप्तिः। सर्वत्रौपदेशिकत्वात् । न च दर्विहोमस्याप्रकृति-

आनन्दगिरीय-न्यायनिर्णयः ।

प्रतिज्ञां व्याकरोति-उपपन्नश्चेति । क्वचिदर्थवती गतिरित्यत्र हेतुमवतार्य लक्षणशब्दस्य लक्षणया कारणार्थत्वं गृहीत्वा व्याचष्टे-तदिति । उपलब्धिमेवाभिनयति-तत्रेति । देशाद्देशान्तरप्राप्त्यायत्ते फले श्रुते फलितमाह-तत्रेति । पर्यङ्कविद्यासगुणोपास्तिः सप्तम्यर्थः । निर्गुणविद्यायामपि हेतुरस्तीत्याशंक्याऽऽह-न त्विति । तदेवोपपादयति-न हीति । तेषां प्राप्तपरानन्दत्वमाह-आप्तेति । इहेति जीवदवस्थोक्तिः । निरस्तसमस्तानर्थत्वमाह-दग्धेति । तर्हि सद्यो देहपातः स्यान्नेत्याह-आरब्धेति । हेतोर्व्यभिचारं निरस्य क्वचिन्नेत्युक्तं निगमयति-तत्रेति । सम्यग्धीः सप्तम्यर्थः। निर्गुणब्रह्मविन्नार्चिरादिगतिमान्मुक्तिफलभाक्त्वान्मुच्यमानहिरण्यगर्भवदिति भावः । क्वचिदर्थवती गतिः क्वचिन्नेत्युक्तं सौत्रेण दृष्टान्तेन स्पष्टयति-लोकवच्चेति । इहेति सगुणनिर्गुणविद्योक्तिः । इतिशब्दः सूत्रव्याख्यासमाप्तौ । "तयोर्ध्वमायन्नमृतत्वमेति" इतिश्रुतेर्देवयानेनाध्वना गतस्यैव मुक्तिरित्याशंक्याऽऽह-भूयश्चेति ॥३०॥ (१७) ॥ सगुणनिर्गुणविद्यासु गतिभावाभावव्यवस्थावत्सगुणविद्यास्वपि व्यवस्थामाशंक्याऽऽह-अनियम इति ।

सगुणासु विद्यासु गतिरर्थवती, न निर्गुणायां परमात्मविद्यायामित्युक्तम्। सगुणास्वपि विद्यासु कासुचिद्गतिः श्रूयते–"यथा पर्यङ्कविद्यायां पञ्चाग्निविद्यायामुपकोसलविद्यायां दहरविद्यायाम्" इति नान्यासु "यथा मधुविद्यायां शांडिल्यविद्यायां षोडशकलविद्यायां वैश्वानरविद्यायाम्" इति । तत्र संशयः–किं यास्वेवैषा गतिः श्रूयते, तास्वेव नियम्येत–उत अनियमेन सर्वाभिरेवैवञ्जातीयकाभिर्विद्याभिः सम्बध्येतेति । किं तावत्प्राप्तम् ॥ नियम इति ॥ यत्रैव श्रूयते, तत्रैव भवितुमर्हति । प्रकरणस्य नियामकत्वात । यद्यन्यत्र श्रूयमाणापि गतिर्विद्यान्तरं गच्छेत्, श्रुत्यादीनां प्रामाण्यं हीयेत । सर्वस्य सर्वार्थत्वप्रसंगात् ॥ अपि चार्चिरा-

रत्नप्रभा ।

र्चिरादिमार्गे एव विषयः।तत्र विद्याविशेषप्रकरणादविशेषश्रुतेश्च संशये पूर्वपक्षमाह–**किं तावदिति**।। सगुणनिर्गुणविद्यासु मार्गस्य भावाभावव्यवस्थावत् सगुणास्वपि व्यवस्थेति दृष्टान्ते न प्राप्तौ सिद्धान्ते व्यवस्थापवादात् सङ्गतिनियमोऽनियमः उभयत्र फलम्।।नियमे प्रकरणमुक्त्वा पुनरुक्ति लिङ्गमाह–**अपि चेति**।।एकत्रोक्तगतेरन्यत्र

भामती ।

विकारभूतस्याधर्मकत्वम् । न च सर्वधर्मयुक्तं कर्म किंचिदपि शक्यमनुष्ठातुम् । न चैवं सति श्रुत्यादयोऽपि विनियोजकास्तेषामपि हि प्रकरणेन सामान्यसंबन्धे सति विनियोजकत्वात् । यत्रापि विना प्रकरणं श्रुत्यादिभ्यो विनियोगोऽवगम्यते तत्रापि तन्निर्वाहाय प्रकरणस्यावश्यंकल्पनीयत्वात् । तस्मात्प्रकरणं विनियोगाय तन्नियमाय चावश्याभ्युपेतव्यमन्यथा श्रुत्यादीनामप्रामाण्यप्रसक्तेः । तस्माद्यास्वेवोपासनासु देवयानः पितृयाणो वा पन्था आम्नातस्तास्वेव न तूपासनान्तरेषु तदनाम्नानात् । न च 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते' इति सामान्यवचनात्सर्वविद्यासु तत्पथप्राप्तिः । श्रद्धातपःपरायणानामेव तत्र तत्पथप्राप्तिः श्रूयते, न तु विद्यापरायणानाम् । अपि चैवं सत्येकस्यां विद्यायां मार्गोपदेशः सर्वासु विद्यास्वित्येकत्रैव मार्गोपदेशः कर्तव्यो न विद्यान्तरे । विद्यान्तरे च श्रूयते । तस्मान्न सर्वोपासनासु पथिप्राप्तिरिति प्राप्तम् । एवं प्राप्ते—उच्यते–'ये चेमेऽरण्ये श्रद्धातप इत्युपासते' इति न श्रद्धातपोमात्रस्य पथिप्राप्तिमाहापि तु विद्यया तदारोहन्तीत्यत्र नाविद्वांसस्तपस्विन इति केवलस्य तपसः श्रद्धायाश्च तत्प्राप्तिप्रतिषेधाद्विद्यासहिते श्रद्धातपसी तत्प्राप्त्युपायतया वदन् विद्यान्तरशीलानामपि पञ्चाग्निविद्याविद्भिः समानमार्गतां

आनन्दगिरीय–न्यायनिर्णयः ।

वृत्तं कीर्तयति–**सगुणास्विति** । गतेर्द्विधार्थवत्त्वे स्थिते किमनेनाधिकरणेनेत्याशंक्य विषयमाह—**सगुणास्वपीति** । विचारबीजं संशयं वक्तुं कोटयन्तरमाह–**नेति** । अर्चिरादिपर्वाणं पन्थानमधिकृत्य विद्याविशेषाधिकाराद्वाक्यादविशेषदृष्टेश्च संशयमाह—**तत्रेति** । सगुणासु विद्यासु गतेः सार्वत्रिकत्वोक्त्या वाक्यार्थधीहेतोरेव चिन्तनात्पादादिसंगतिः । पूर्वपक्षे नियतताया गतेरुपसंहारासिद्धिः । सिद्धान्ते त्वनियतायाः सार्वत्रिकत्वमित्यंगीकृत्य विमृश्य पूर्वपक्षमाह–**किमिति** । नियमं व्याकरोति–**यत्रेति** । तत्र हेतुः–**प्रकरणस्येति** । हेतुं व्यतिरेकतो विवृणोति–**यदीति** । प्राकरणिके सामान्यसंबन्धे श्रुत्यादिभ्यो विशेषविनियोगधीः । यत्र श्रुत्यादय एव विनियोजका न प्रकरणं, तत्रापि तन्निर्वाहाय प्रकरणं कल्प्यम् । तदभावे दर्शपूर्णमासज्योतिष्टोमादिधर्माणां संकरात् । तस्माद्विनियोगाय तन्निर्वाहाय च प्रकरणध्रौव्यम् । अन्यथा श्रुत्याद्यप्रामाण्यात्तेन प्राकरणिकी विशेषसंगतिरित्यर्थः । न केवलं नियमे प्रकरणमेव प्रमाणं किंतु लिङ्गमपीत्याह–**अपि चेति** । एकत्रोक्तस्य सर्वत्र संबन्धसिद्धौ पुनरुक्तिरनर्थिकेत्यर्थः । लिङ्गप्रक-

दिकैकैव गतिरुपकोसलविद्यायां पञ्चाग्निविद्यायां च तुल्यवत्पठ्यते। तत्सर्वार्थत्वेऽनर्थकं पुनर्वचनं स्यात्॥ तस्मान्नियम इति॥ एवं प्राप्ते पठति—अनियम इति॥सर्वासामेवाभ्युदयप्राप्तिफलानां सगुणानां विद्यानामविशेषेणैषा देवयानाख्या गतिर्भवितुमर्हति॥नन्वनियमाभ्युपगमे प्रकरणविरोध उक्तः॥ नैषोऽस्ति विरोधः॥शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः॥ तथाहि श्रुतिः—"तद्य इत्थं विदुः" [ छां० ५।१०।१ ] इति पञ्चाग्निविद्यावतां देवयानं पन्थानमवतारयन्ती "ये चेमेऽरण्ये श्रद्धां तप इत्युपासते" [ छां० ५।१०।१। ] इति विद्यान्तरशीलानामपि पञ्चाग्निविद्याविद्भिः समानमार्गतां गमयति। कथं पुनरवगम्यते विद्यान्तरशीलानामियं गतिश्रुतिरिति॥ ननु श्रद्धातपःपरायणानामेव स्यात्तन्मात्रश्रवणात्॥ नैष दोषः॥ न हि केवलाभ्यां श्रद्धातपोभ्यामन्तरेण विद्याबलमेषा गतिर्लभ्यते—"विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः" इति श्रुत्यन्तरात्॥ तस्मादिह

रत्नप्रभा।

प्राप्तौ पुनरुक्तिर्वृथा स्यादित्यर्थः॥ सिद्धान्तयति—सर्वासामिति॥ अभ्युदयः ब्रह्मलोकः॥अविशेषश्रुत्यादिना प्रकरणबाधो न दोष इत्याह—नैष इति॥ तत् तत्र अधिकृतानां मध्ये "ये इत्थं पञ्चाग्नीन्विदुः" "ये चामी अरण्ये श्रद्धा तप इत्युपासते" श्रद्धातपउपलक्षितं ब्रह्म ध्यायन्ति, तेऽर्चिषमभिसम्भवन्तीत्यन्वयः॥ ननु श्रद्धातपोमात्रश्रुतेस्ताभ्यामेव अर्चिरादिगमनं स्यात्, न वैश्वानरादिविद्याशीलानामिति शङ्कते—कथं पुनरिति॥ अविदुषां गतिनिषेधाच्छ्रद्धातपःशब्दाभ्यां तत्साध्यब्रह्मविद्यालक्षणेति परिहरति—नैष दोष इति॥ तत् ब्रह्मलोकस्थानं परागताः परावृत्ताः। कामक्रोधदोषा न सन्तीति यावत्।

भामती।

दर्शयति। तथान्यत्रापि पञ्चाग्निविद्याधिकारेऽभिधीयते—'य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते' इति। सत्यशब्दस्य ब्रह्मण्येवानपेक्षप्रवृत्तित्वात्। तदेव हि सत्यमन्यस्य मिथ्यात्वेन कथंचिदापेक्षिकसत्यत्वात्। पञ्चाग्निविदां चेत्थंवित्तयैवोपात्तत्वात्। विद्यासाहचर्याच्च विद्यान्तरपरायणानामेवेदमुपादानं

आनन्दगिरीय-न्यायनिर्णयः।

रणाभ्यां वाक्यबाधं मत्वोपसंहरति—तस्मादिति। नियता गतिर्नोपसंहारार्हेति प्राप्तं पूर्वपक्षमनूद्य सिद्धान्तयति—एवमिति। अनियमं व्याचष्टे—सर्वासामिति। कर्मसमृद्ध्यादिफलोपासनानि व्यवच्छिनत्ति—अभ्युदयेति। अनियमे प्रकरणविरोधं स्मारयति—नन्विति। सूत्रावयवेनोत्तरमाह—नेति। गतेर्वाक्यीयान्वयस्य सार्वत्रिकत्वाद्बलं प्रकरणं बाध्यमित्यभिप्रेत्य श्रुतिमाह—तथाहीति। तत्त्राधिकृतानां मध्ये ये केचिद्द्युलोकादीनग्नित्वेन विदुस्तेऽर्चिषमभिसंभवन्तीति संबन्धः। ये चेत्यत्रापि तथैवान्वयः। अविशेषेण विद्यान्तरशालिनां देवयानप्रापकवाक्येन प्रकरणं बाध्यमित्युक्तम्। इदानीं वाक्यं न विद्यान्तरशीलिनामपि देवयानप्रापकमिति शङ्कते—कथमिति। वाक्यस्य तर्हि कोऽर्थः स्यादित्याशंक्याऽऽक्षेप्तैवाऽऽह—नन्विति। श्रद्धातपोनुष्ठानमात्रस्य श्रुतत्वात्तन्निष्ठानामेव गतिर्वाक्येनोक्ता स्यादित्यर्थः। वाक्यान्यर्थः। वाक्यान्यथासिद्धिं दूषयति—नेति। अविदुषामेषा गतिर्नेत्यत्र श्रुतिं हेतुमाह—विद्येति। तदित्युक्तं ब्रह्मलोकाख्यस्थानं विशिनष्टि—यत्रेति। यस्मिन्प्राप्ते कामाः क्षुद्रविषयाः परागता व्यावृत्ताः कामक्रोधादिस्पर्शवर्जितं प्राप्यं ब्रह्मलोकस्थानमित्यर्थः।दक्षिणा दक्षिणमार्गगामिनः केवलकर्मिणस्तपस्विनोऽप्यविद्वांसो न तत्र गच्छन्तीत्यपिशब्दो ज्ञेयः। ये चेत्यादिवाक्यस्य तर्हि का गतिस्तत्राऽऽह—तस्मादिति।

श्रद्धातपोभ्यां विद्यान्तरोपलक्षणम्। वाजसनेयिनस्तु पञ्चाग्निविद्याधिकारेऽधीयते "य एवमेतद्विदुर्ये चामी अरण्येऽश्रद्धां सत्यमुपासते" [बृ० ६। २। १५ ] इति। तत्र श्रद्धालवो ये सत्यं ब्रह्मोपासत इति व्याख्येयम्। सत्यशब्दस्य ब्रह्मण्यसकृत्प्रयुक्तत्वात्। पञ्चाग्निविद्याविदां चेत्थंवित्तयैवोपात्तत्वाद्विद्यान्तरपरायणानामेवेदमुपादानं न्याय्यम् ॥ "अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम्" [ बृ० ६।२। १६ ] इति च मार्गद्वयभ्रष्टानां कष्टामधोगतिं गमयन्ती देवयानपितृयाणयोरेवैनामन्तर्भावयति। तत्रापि विद्याविशेषादेषां देवयानप्रतिपत्तिः ॥ स्मृतिरपि-"शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्यया वर्तते पुनः" [ भ० गी० ८। २६ ] इति। यत्पुनर्देवयानस्य पथोऽर्चिरादेर्द्विराम्नानमुपकोसलविद्यायां पञ्चाग्निविद्यायां च तदुभयत्राप्यनुचिन्तनार्थम् ॥ तस्मादनियमः ॥ ३१ ॥ इत्यनियमाधिकरणम् ॥ १८ ॥

---

रत्नप्रभा।

**दक्षिणाः** केवलकर्मिणस्तपस्विनोऽप्यविद्वांसो न गच्छन्तीत्यर्थः ॥ लक्षणादोषहीनं वाक्यमाह-**वाजसनेयिनस्त्विति** ॥ किञ्च विद्याकर्मलक्षणमार्गद्वयभ्रष्टानामधोगतिश्रुतेः वैश्वानराद्युपासकानामर्चिरादिमार्गप्राप्तिरित्याह-**अथ य एताविति**॥ **दन्दशूकः**-सर्पः। किञ्च "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" इत्यविशेषेणोपासकानामर्चिरादिगतिमुक्त्वोपसंहारस्मृतेश्च तेषां तत्प्राप्तिरित्याह-**स्मृतिरिति**॥ शुक्ला गतिः-अर्चिरादिका, कृष्णा-धूमादिका। **जगतः** विद्याकर्माधिकृतस्य **शाश्वते**-ध्रुवे **मते**-सम्मते, तत्र **एकया** शुक्लया पुनरावृत्तिवर्जं कार्यं ब्रह्म गच्छति। अन्यया स्वर्गं गत्वा पुनरायातीत्यर्थः ॥ पुनरुक्तिदोषं दूषयति-**यत्पुनरिति** ॥ तत्रतत्र मार्गश्रुतिरन्वहं मार्गचिन्तनार्थम्। प्रकरणेन मार्गध्यानस्य विद्याङ्गत्वावगमात् ॥ तथा च वक्ष्यति सूत्रकारः-"तच्छेषगत्यनुस्मृतियोगाच्च" [ व्या० सू० ४। २।१७] इति ॥ **येषां** न श्रुतो मार्गः, **ते** मार्गध्यानं विनापि विद्या-

भामती।

न्याय्यम्। मार्गद्वयभ्रष्टानां चाधोगतिश्रवणात्। तत्रापि च योग्यतया देवयानस्यैवेहाध्वनोऽभिसंबन्धः। एतदुक्तं भवति-भवेत्प्रकरणं नियामकं यद्यनियमप्रतिपादकं वाक्यं श्रौतं स्मार्तं वा न स्यादस्ति तु तत्तस्य च

आनन्दगिरीय-न्यायनिर्णयः।

उक्तच्छन्दोगवाक्यमिहेत्युक्तम्। उपलक्षणमन्तरेणापि विद्यान्तरशीलिनामियं गतिरवगतेत्याह-**वाजेति**। तत्रापि सत्यशब्देन सत्यार्थोक्तेरेव संग्रहात्कुतो विद्यान्तरयुक्तानां गतिधीरित्याशंक्याऽऽह-**तत्रेति**। तेऽर्चिषमभिसंभवन्तीति संबन्धः। सत्यशब्देन ब्रह्मोक्तौ हेतुमाह-**सत्येति**। "सत्यं ज्ञानमनन्तं ब्रह्म" "तत्सत्यं स आत्मा" "सत्यस्य सत्यम्" इत्येवमादावित्यर्थः। सत्यार्थवचनग्रहात्सत्यार्थग्रहो लघीयानित्युक्तम्। इदानीं पञ्चाग्निविद एव सत्यमुपासत इति कस्मान्न गृह्यन्त इत्याशंक्य तेषां पृथग्गृहीतत्वादित्याह-**पञ्चेति**। इतश्च विद्यान्तरशीलानां गतिरिति लिंगदर्शनं समुच्चिनोति-**अथेति**। एनानिति विद्यान्तरपरा गृह्यन्ते तथाऽपि कथं देवयानयोगस्तेषामित्याशंक्य योग्यतयेत्याह-**तत्रापीति**। श्रुतिस्मृतिभ्यां प्रकरणविरोधसमाधिं प्रतिज्ञाय श्रुतिरुक्ता संप्रति स्मृतिमाह-**स्मृतिरिति**। जगतो ज्ञानकर्माधिकृतस्येत्यर्थः। परोक्तं लिंगमनूद्यान्यथासिद्धिमाह-**यदिति**। लिङ्गवाक्याभ्यां प्रकरणं भङ्क्त्वा सगुणविद्यासु गतेः सार्वत्रिकत्वमुपसंहरति-**तस्मादिति** ॥ ३१ ॥ ( १८ ) ॥ सगुणविद्यासु व्यवहि-

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥ (१९) ॥

विदुषो वर्तमानदेहपातानन्तरं देहान्तरमुत्पद्यते न वेति चिन्त्यते ॥ ननु विद्यायाः साधनभूतायाः सम्पत्तौ कैवल्यनिर्वृत्तिः स्यान्न वेति नेयं चिन्तोपपद्यते । न हि पाकसाधनसम्पत्तावोदनो भवेत्, न वेति चिन्ता सम्भवति । नापि भुञ्जानस्तृप्येत्, न वेति चिन्त्यते ॥ उपपन्ना त्वियं चिन्ता-ब्रह्मविदामपि केषाञ्चिदितिहासपुराणयोर्देहान्तरोत्पत्तिदर्शनात् । तथाहि-अपान्तरतमा नाम वेदाचार्यः पुराणर्षिर्विष्णुनियोगात्कलिद्वापरयोः सन्धौ कृष्णद्वैपायनः सम्बभूवेति स्मरणम् । वसिष्ठश्च ब्रह्मणो मानसः पुत्रः सन्निमिशापादपगतपूर्वदेहः पुनर्ब्रह्मादेशान्मित्रावरुणाभ्यां सम्बभूवेति । भृग्वादीनामपि ब्रह्मण एव मानसानां पुत्राणां वारुणे यज्ञे पुन-

रत्नप्रभा ।

सामर्थ्यात् मार्गं लभन्त इति ज्ञापनार्था पुनरुक्तिरित्यर्थः ॥ तस्मात् सर्वोपासनासु प्रतीकभिन्नास्वर्चिरादिप्राप्तिरिति सिद्धम् ॥ ३१ ॥ ( १८ ) यावदधिकारमिति ॥ निर्गुणविद्यायां गतिर्व्यर्था । मुक्तिफलत्वात् । सगुणविद्यासु सर्वत्रार्थवती ब्रह्मलोकफलत्वादितिव्यवस्था कृता । सा न युक्ता । तत्त्वज्ञानिनामपि इतिहासादौ पुनर्जन्मदर्शनेन ज्ञानस्य मुक्तिफलत्वाभावादित्याक्षेपात् संगतिः । ज्ञानिनां पुनर्जन्मदर्शनं संशयबीजं भाष्ये दर्शितम् । पूर्वपक्षे ज्ञानान्मुक्तिश्रुतीनां ज्ञानस्तुतिमात्रत्वेन ज्ञानस्य मुक्तिफलत्वाभावे सति ब्रह्मलोकफलत्वाविशेषादर्चिरादिमार्गोपसंहारः फलं, सिद्धान्ते तूक्तव्यवस्थासिद्धिरिति विवेकः ॥

भामती ।

प्रकरणाद्बलीयस्त्वम् । तस्मादनियमो विद्यान्तरेष्वपि सगुणेषु देवयानः पन्था असकृन्मार्गोपदेशस्य च प्रयोजनं वर्णितं भाष्यकृतेति॥३१॥(१८)॥यावदधिकारमवस्थितिराधिकारिकाणाम् । सगुणायां विद्यायां चिन्तां कृत्वा निर्गुणायां चिन्तयति। निर्गुणायां विद्यायां नापवर्गः फलं भवितुमर्हति। श्रुतिस्मृतीतिहासपुराणेषु विदुषामप्यपान्तरतमःप्रभृतीनां तत्तद्देहपरिग्रहपरित्यागौ श्रूयेते । तदपवर्गफलत्वे नोपपद्यतेः । अपवृक्तस्य तदनुपपत्तेः । उपपत्तौ वा तल्लक्षणायोगात् । अपुनरावृत्तिर्हि तल्लक्षणम् । तेन सत्यामपि विद्यायां तदनुपपत्तेर्न मोक्षः फलं विद्यायां विभूतयस्तु तास्तास्तस्याः फलम् । अपुनरावृत्तिश्रुतिः पुनस्तत्प्रशंसार्थेति मन्यते । न च 'तावदेवास्य चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति श्रुतेर्विदुषो देहपातावधिप्रतीक्षावद्वसिष्ठादीनामपि प्रारब्धकर्मफलोपभोगप्रतीक्षेति सांप्रतम् । येन हि कर्मणा वसिष्ठादीनामारब्धं शरीरं तत्प्रतीक्षा स्यात् । तथा च न शरीरान्तरं ते गृह्णीयुः । न च तावदेव चिरमित्येतदप्यार्जवेन घटते । समर्थहेतुसंनिधौ क्षेपायोगात् । तस्मादेतदपि विद्यास्तुत्यैव गमयितव्यम् । तस्मान्नापवर्गो विद्याफलम् । तथा चापवर्गाक्षेपेण पूर्वः पक्षः । अत्र च पाक्षिकं मोक्षहेतुत्वमित्यापाततः, अहेतुत्वं वेति तु पूर्वपक्ष-

आनन्दगिरीय-न्यायनिर्णयः ।

तफलासु सर्वास्वपि गतिरर्थवतीत्युक्तम् । इदानीं निर्गुणायामपि विद्यायां सद्योमुक्तिफलत्वानवगमात्कालान्तरभाविफलत्वाविशेषादविशिष्टा गतेरर्थवत्तेत्याशंक्याऽऽह-यावदिति । विषयसंशयौ दर्शयति-विदुष इति । अकारणकसंशयायोगं मन्वानो विचारमाक्षिपति-नन्विति । तदेव दृष्टान्तेन स्पष्टयति-न हीति । सत्यां सामग्र्यामसति प्रतिबन्धे कार्यनिश्चयेऽपि कुतो विद्यया सद्योमुक्तिरित्याशंक्याऽऽह-नापीति । संशयाभावादधिकरणानारम्भं परिहरति-उपपन्नेति । विदुषामपि केषांचिदमुक्तेः संशयसिद्धिरित्युपपत्तिमेव दर्शयति-ब्रह्मेति । दर्शनमेव विशदयति-तथा हीति । सर्वेषामेव तेषां कर्मनिष्ठत्वमाशंक्योक्तम् ।

रुत्पत्तिः स्मर्यते । सनत्कुमारोऽपि ब्रह्मण एव मानसः पुत्रः स्वयं रुद्राय वरप्रदानात्स्कन्दत्वेन प्रादुर्बभूव । एवमेव दक्षनारदप्रभृतीनामपि भूयसी देहान्तरोत्पत्तिकथा तेनतेन निमित्तेन भवति स्मृतौ । श्रुतावपि मन्त्रार्थवादयोः प्रायेणोपलभ्यते । ते च केचित्पतिते पूर्वदेहे देहान्तरमाददते । केचित्तु स्थित एव तस्मिन्योगैश्वर्यवशादनेकदेहादानन्यायेन । सर्वे चैते समधिगतसकलवेदार्थाः स्मर्यन्ते ॥ तदेतेषां देहान्तरोत्पत्तिदर्शनात्प्राप्तं ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वेति ॥ अत उत्तरमुच्यते ॥ न

---

रत्नप्रभा ।

श्रुतावपीति ॥ "मेधातिथेर्मेष" इतिमन्त्रे इन्द्रस्य मेषजन्मोपलभ्यते । वसिष्ठ उर्वशीपुत्रो जात इत्येवमर्थो बह्वृचार्थवाद इत्यर्थः ॥ ज्ञानस्य मुक्त्यहेतुत्वं नेति सिद्धान्तयति—नेति ॥ "पाक्षिकम्" इत्यापाततः । अहेतुत्वमेवेति पूर्वपक्षः ॥ लोकव्यवस्थासु स्वामित्वम् अधिकारः । तत्प्रापकं प्रारब्धं यावदस्ति, तावत् कालं जीवन्मुक्तत्वेनाधिकारिणामवस्थितिः । प्रारब्धक्षये प्रतिबन्धकाभावात् विदेहकैवल्यमित्यत्र मानमाह—

भामती ।

तत्त्वम् । राद्धान्तस्तु—विद्याकर्मस्वनुष्ठानतोषितेश्वरचोदितम् । अधिकारं समाप्यैते प्रविशन्ति परं पदम् ॥ निर्गुणायां विद्यायामपवर्गलक्षणं श्रूयमाणं न स्तुतिमात्रतया व्याख्यातुमुचितम् । पौर्वापर्यपर्यालोचने भूयसीनां श्रुतीनामत्रैव तात्पर्यावधारणात् । न च यत्र तात्पर्यं तदन्यथयितुं युक्तम् । उक्तं हि 'न विधौ परः शब्दार्थः' इति । न च विदुषामपान्तरतमःप्रभृतीनां तत्तद्देहसंचारात्सत्यामपि ब्रह्मविद्यायामनिर्मोक्षान्न ब्रह्मविद्या मोक्षस्य हेतुरिति साम्प्रतम् । हेतोरपि सति प्रतिबन्धे कार्यानुपजनो न हेतुभावमपाकरोति । न हि वृन्तफलसंयोगप्रतिबद्धं गुरुत्वं न पतनमजीजनदिति प्रतिबन्धापगमं तत्कुर्वन्न तद्धेतुः । न च न सेतुप्रतिबन्धानामपां निम्नदेशानभिसर्पणमिति सेतुभेदे न निम्नमभिसर्पन्ति । तद्वदिहापि विद्याकर्माराधनावर्जितेश्वरविहिताधिकारपदप्रतिबद्धा ब्रह्मविद्या यद्यपि न मुक्तिं दत्तवती तथापि तत्परिसमाप्तौ प्रतिबन्धविगमे दास्यति।यथा हि प्रारब्धविपाकस्य कर्मणः प्रक्षयं प्रतीक्षमाणश्चरमदेहसहमुत्पन्नब्रह्मसाक्षात्कारोऽपि ध्रियतेऽथ तत्प्रक्षयान्मोक्षं प्राप्नोति।एवं प्रारब्धाधिकारलक्षणफलविद्याकर्मा पुरुषो वसिष्ठादिर्विद्वानपि तत्क्षयं प्रतीक्षमाणो युगपत्क्रमेण वा तत्तद्देहपरिग्रहपरित्यागौ कुर्वन्मुक्तोऽप्यनाभोगात्मिकया प्रख्यया सांसारिक इव विहरति ।

आनन्दगिरीय—न्यायनिर्णयः ।

सनत्कुमारोऽपीति । उक्तन्यायमतिदिशति—एवमिति । स्मृतेर्मूलाभावादप्रामाण्यमाशंक्याऽऽह—श्रुताविति । उपलभ्यते पूर्वोक्ता कथेति शेषः । सनत्कुमारादीनां पूर्वदेहात्यागान्न देहान्तरोत्पत्तिरित्याशंक्याऽऽह—ते चेति । एकस्यैव मायाविनो युगपदनेकदेहादानदृष्टान्तोऽनेकदेहादानन्यायः । तर्हि ते न ब्रह्मविदस्तत्राऽऽह—सर्वे चेति । अनुपलब्धिहेतुकं संशयमुपसंहरन्विचारोपपत्तिं निगमयति—तदेतेषामिति । निर्गुणविद्यायां गतिं प्रतिषिध्य सगुणविद्यायां तत्प्रयोजकैश्वर्यविशेषदर्शनादर्थवती सर्वत्र गतिरित्युक्ते निर्गुणविद्यायामपि मोक्षासिद्धेरैश्वर्यफलत्वे वाच्ये गतिरुपसंहर्तव्येति पूर्वपक्षमाह—अहेतुत्वमिति । वाशब्दोऽवधारणे । ब्रह्मविद्या न संसारविरोधिनी ब्रह्मविद्यात्वाद्वसिष्ठादिनिष्ठब्रह्मविद्यावत् । न च तस्य तावदेव चिरमित्यादिश्रुतिविरोधः प्रशंसार्थतया तदुपपत्तेरिति भावः । निचाय्य तमित्यादिश्रुतेर्ब्रह्मविद्याया मोक्षहेतुत्वोक्तौ तात्पर्यसिद्धेः स्तुतिमात्रत्वानुपपत्तेर्वसिष्ठादीनां ब्रह्मविदामधिकारप्रतिबन्धान्मुक्त्यभावस्यान्यथा सिद्धेरप्रतिबद्धाया विद्यया न मोक्षं प्रत्यहेतुतेति कुतो गत्युपसंहार इत्युक्त्या वाक्यार्थधीहेतुनिरूपणात्पादादिसंगतिः । पूर्वपक्षे धियो मोक्षाहेतुत्वाद्गत्युपसंहारः । सिद्धान्ते तस्यास्तद्धेतुत्वध्रौव्याचदनुपसंहार इत्यभिप्रेत्य सिद्धान्तयति—अत इति । ब्रह्मविद्याया मोक्षं प्रत्यहेतुत्वं निषेधति—नेति ।

तेषामपान्तरतमःप्रभृतीनां वेदप्रवर्तनादिषु लोकस्थितिहेतुष्वधिकारेषु नियुक्तानामधिकारतन्त्रत्वात्स्थितेः । यथासौ भगवान्सविता सहस्रयुगपर्यन्तं जगतोऽधिकारं चरित्वा तदवसाने उदयास्तमयवर्जितं कैवल्यमनुभवति । "अथ तत ऊर्ध्वं उदेत्य नैवोदेतानास्तमेतैकल एव मध्ये स्थाता" [ छां० ३ । ११ । १ ] इति श्रुतेः । यथा च वर्तमाना ब्रह्मविदः प्रारब्धभोगक्षये कैवल्यमनुभवन्ति । "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" [ छां० ६ । १४ । २ ] इति श्रुतेः । एवमपान्तरतमःप्रभृतयोऽपीश्वराः परमेश्वरेण तेषुतेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतावक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते । तदवसाने चापवृज्यन्त इत्यविरुद्धम् । सकृत्प्रवृत्तमेव हि तेऽधिकारफलदानाय कर्माशयमतिवाहयन्तः स्वातन्त्र्येणैव गृहादिव गृहान्तरमन्यमन्यं देहं सञ्चरन्तः स्वाधिकारनिर्वर्तनायापरिमुषितस्मृतय एव देहेन्द्रियप्रकृतिवशित्वान्निर्माय देहान्युगपत्क्रमेण वाधितिष्ठन्ति॥ न चैते जातिस्मरा-

---

रत्नप्रभा ।

अथेति ॥ अथ प्रारब्धक्षयानन्तरम् । तत ऊर्ध्वः विलक्षणः केवलः ब्रह्मस्वरूपः सन् उदेत्य उद्गम्य। देहं त्यक्त्वेति यावत् । एकल एव अद्वितीयः । मध्ये उदासीनात्मस्वरूपे तिष्ठतीत्यर्थः ॥ ननु ज्ञानिनामपि जन्मान्तरं चेत्, कथं मुक्तिरित्यत आह-सकृत्प्रवृत्तमेवेति ॥ यदि ज्ञानिनां प्रारब्धातिरिक्तकर्माधीनं जन्मान्तरं स्यात्, तदा ज्ञानान्मुक्त्यभावः स्यात् ॥ नैतदस्ति ॥ किन्तु बहुजन्मफलाय सकृदुद्भूतं प्रारब्धं ते क्षपयन्ति । जन्मग्रहणेऽपि ज्ञानयोगबलान्न शोचन्ति । प्रारब्धसमाप्तौ मुच्यन्त इत्यर्थः ॥ ज्ञानिनां जन्मान्तरस्य पूर्वजन्महेतुप्रारब्धाधीनतायामलुप्तस्मृतित्वं हेतुः । यो ह्यजातिस्मरत्वे सति कर्मान्तराधीनजन्मान्तरवान्, स अलुप्तस्मृतिरिति व्याप्तेः ज्ञानिषु व्यापकाभावाद् विशिष्टव्याप्याभावसिद्धिः ॥ ननु तेषां जातिस्मरत्वादलुप्तस्मृतित्वमन्यथासिद्धमित्यत आह-न चैत इति ॥ तथा च तेषामजाति-

भामती ।

तदिदमुक्तम्-सकृत्प्रवृत्तमेव हि ते कर्माशयमधिकारफलदानायेति । प्रारब्धविपाकानि तु कर्माणि वर्जयित्वा व्यपगतानि ज्ञानेनैवातिवाहितानि । न चैते जातिस्मरा इति । यो हि परवशो देहं परि-

आनन्दगिरीय-न्यायनिर्णयः ।

ब्रह्मवित्स्वेव केषुचिन्मोक्षादृष्टेरहेतुत्वं कथं निषिध्यत इत्याशंक्य प्रतिबन्धाभावमपेक्ष्य विद्या मोक्षहेतुरिति मत्वाऽऽह-तेषामिति । यावदधिकारं तावदवस्थितिरित्यत्र दृष्टान्तमाह-यथेति । तत्र मानमाह-अथेति । आधिकारिकैश्वर्यहेतुकर्मक्षयानन्तरं ततः पश्चादूर्ध्वो विलक्षणः सन्नुदेत्योद्गम्य पुनरादित्यो नैवोदेता नास्तमेता किन्त्वेकल एवाद्वितीयो मध्ये स्वात्मनि स्थाता स्यादित्यर्थः । तत्रोदाहरणान्तरमाह-यथा चेति । तत्रापि मानमाह-तस्येति । दृष्टान्तयोरर्थं दार्ष्टान्तिके योजयति-एवमिति । ब्रह्मविदोऽपि देहान्तरप्राप्तिः प्रारब्धकर्मातिरिक्तकर्मकृता देहान्तरप्राप्तित्वादविद्वद्देहान्तरप्राप्तिवदित्याह-सकृदिति । देहान्तरं कर्मान्तरायत्तमिति न व्याप्तिरेकस्मादपि ब्रह्मवधादेः श्वसूकराद्यनेकदेहस्मरणादित्यर्थः । किं तर्हि तेषामस्मदादिभ्यो वैषम्यं तत्राऽऽह-स्वातन्त्र्येणेति । स्वतन्त्राश्चेत्किमिति देहान्तरं गृह्णन्तीत्याशंक्याऽऽरब्धाधिकारफलकर्मक्षयायेत्याह-स्वाधिकारेति । देहान्तरग्रहे स्मृतिभ्रंशः स्यादित्याशंक्याऽऽह-अपरिमुषितेति । तथाऽपि देहादिपारतन्त्र्यमाशंक्याऽऽह-देहेति । तथाऽपि कथमनेकेषु देहेष्वधिष्ठातृत्वं तत्राऽऽह-निर्मायेति । उत्पद्यमानानामपरिमुषितस्मृतित्वेऽपि जातिस्मरत्वमेव न वसिष्ठादिनामत्वमित्याशंक्याऽऽह-न चेति । ब्रह्मविदां स्वातन्त्र्येण देहान्तरसंचारे दृष्टान्तमाह-

इत्युच्यन्ते । "त एवैते" इति स्मृतिप्रसिद्धेः । यथा "सुलभा नाम ब्रह्मवादिनी जनकेन विवदितुकामा व्युद्स्य स्वं देहं जानकं देहमाविश्य व्युद्य तेन पश्चात्स्वमेव देहमाविवेश" इति स्मर्यते । यदि ह्युपयुक्ते सकृत्प्रवृत्ते कर्मणि कर्मान्तरं देहान्तरारम्भकारणमाविर्भवेत्, ततोऽन्यदप्यदग्धबीजं कर्मान्तरं तद्वदेव प्रसज्येतेति ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वाशङ्क्येत, न त्वियमाशंका युक्ता । ज्ञानात्कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात् । तथाहि श्रुतिः—"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" [ मुण्ड० २ । २ । ८] इति । "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" [ छां० ७ । २६ । २ ] इति चैवमाद्या ॥ स्मृतिरपि—"यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" [ भग० ४ । ३७ ] इति, "बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः । ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनः" इति चैवमाद्या । न चाविद्यादिक्लेशदाहे सति क्लेशबीजस्य कर्माशयस्यैकदेशदाह एकदेशप्ररोहश्चेत्युपपद्यते, न ह्यग्निदग्धस्य शालिबीजस्यैकदेशप्ररोहो दृश्यते । प्रवृत्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयान्निवृत्तिः "तस्य तावदेव चि-

---

रत्नप्रभा ।

स्मरत्वरूपविशेषणे सति विशेष्याभावादेव विशिष्टाभावसिद्धिरित्यर्थः ॥ पूर्वदेहनामप्रत्यभिज्ञानहीनाः परतन्त्राः साभिमानाः **जातिस्मराः** । अधिकारिकास्तु पूर्वनामानः स्वतन्त्रा निरभिमाना इति वैषम्यम् ॥ **तेन** जनकेन सह **व्युद्य** विवादं कृत्वेत्यर्थः॥ विदुषः प्रारब्धातिरिक्तकर्माभावान्न बन्धः। निमित्ताभावे नैमित्तिकाभाव इति न्यायानुगृहीतानां ज्ञानान्मुक्तिश्रुतीनां न स्तुतिमात्रत्वमिति समर्थमुपपादयति—**यदि ह्युपयुक्त इत्यादिना**॥श्रुतिस्मृत्युक्तार्थे युक्तिमप्याह—**न चाविद्या इति**॥विद्यया क्लेशदाहात् तत्कार्यकर्मक्षयश्चेत्, तर्हि प्रारब्धस्य कथं स्थितिः, तत्राह—**प्रवृत्तफलस्येति** ॥ विदुषो देहपातावधिश्रुतेरनुभवाच्च

भामती ।

त्याज्यते देहान्तरं च नीतः पूर्वजन्मानुभूतस्य स्मरति स जन्मवाञ्जातिस्मरश्च । गृहादिव गृहान्तरे स्वेच्छया कायान्तरं संचरमाणो न जातिस्मर आख्यायते। **व्युद्य** विवादं कृत्वा । व्यतिरेकमाह—**यदि ह्युपयुक्ते सकृत्प्रवृत्ते** प्रारब्धविपाके **कर्मणि कर्मान्तर**मप्रारब्धविपाकमिति। स्यादेतत्। विद्ययाऽविद्यादिक्लेशनिवृत्तौ नावश्यं निःशेषस्य कर्माशयस्य निवृत्तिरनादिभवपरम्पराहितस्यानियतविपाककालस्यासंख्येयत्वात्कर्माशयस्येत्यत आह—**न चाविद्यादिक्लेशदाहे सतीति** । न हि समाने विनाशहेतौ कस्यचिद्विनाशो नापरस्येति शक्यं वदितुम् । तत्किमिदानीं प्रवृत्तफलमपि कर्म विनश्येत । तथा च न विदुषो वसिष्ठादेर्देहधारणेत्यत आह—**प्रवृत्तफलस्य तु कर्मेति** । तस्य तावदेव चिरमिति श्रुतिप्रामाण्यादनागतफलमेव कर्म

आनन्दगिरीय—न्यायनिर्णयः ।

**यथेति**।व्युद्य विवादं कृत्वा।कथमेतावताज्ञानस्य नियतफलत्वमित्याशंक्य व्यतिरेकेणैतदुपपादयति—**यदीति**। कर्मान्तरमारब्धकर्मातिरिक्तं कर्मेति यावत् । देहान्तरं वर्तमानदेहातिरिक्तो भाविदेहः । ज्ञानस्यैकांतिकफलत्वं व्यतिरेकतः श्रुतिस्मृतिभ्यामुक्त्वा क्रमेण श्रुतिस्मृती दर्शयति—**तथाहीत्यादिना** । अनादिभवपरंपरासंचितस्यानियतकालविपाकस्य कर्मणोऽसंख्यत्वात्कुतो निःशेषकर्मक्षयस्तत्राऽऽह—**न चेति** । नाशपुष्कलहेतुयोगे नाश्यैकदेशस्यार्थक्रियाभावे दृष्टान्तमाह—**न हीति** । तर्हि प्रारब्धमपि कर्म नाशहेतुसांनिध्यान्नश्येदिति कुतो वसिष्ठादेर्देहधारणेत्याशंक्याऽऽह—**प्रवृत्तेति** । यथा मुक्तस्येषोर्बलवत्प्रतिबन्धका-

रम्" [ छां० ६ । १४ । २ ] इति शरीरपातक्षेपकरणात ॥ तस्मादुपपन्ना "यावदधिकारमाधिकारिकाणामवस्थितिः" । न च ज्ञानफलस्यानैकान्तिकता ॥ तथा च श्रुतिरविशेषेणैव सर्वेषां ज्ञानान्मोक्षं दर्शयति । तद्यो "देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्" [ बृ० १ । ४ । १० ] इति । ज्ञानान्तरेषु चैश्वर्यादिफलेष्वासक्ताः स्युर्महर्षयः ते पश्चादैश्वर्यक्षयदर्शनेन निर्विण्णाः परमात्मज्ञाने परिनिष्ठाय कैवल्यं ययुरित्युपपद्यते । "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" इति स्मरणात । प्रत्यक्षफलत्वाच्च ज्ञानस्य फलविरहाशंकानुपपत्तिः । कर्मफले हि स्वर्गादावनुभवानारूढे स्यादपि कदाचिदाशंका भवेद्वा न वेति । अनुभवारूढं तु ज्ञानफलं "यत्साक्षादपरोक्षाद्ब्रह्म" [बृ० ३।४।१] इति श्रुतेः । "तत्त्वमसि"

रत्नप्रभा ।

ज्ञानस्यावरकाज्ञानांशनिवर्तकस्य प्रारब्धविक्षेपस्थित्यनुकूलाज्ञानांशनिवर्तनसामर्थ्याभावसिद्धेर्भोगेनैव प्रारब्धक्षय इति भावः॥ ज्ञानिनामाधिकारिकत्वं कथमित्याशङ्क्य **ज्ञानात्** प्राक्कृतोपासनादिवशादित्याह–**ज्ञानान्तरेषु चेति** ॥ **प्रतिसञ्चरः**–महाप्रलयः। **परस्य** हिरण्यगर्भस्य । अधिकारान्ते

भामती ।

क्षीयते न प्रवृत्तफलमित्यवगम्यते । अपि च नाधिकारवतां सर्वेषामृषीणामात्मतत्त्वज्ञानं तेनाव्यापकोप्ययं पूर्वपक्ष इत्याह–**ज्ञानान्तरेषु चेति** । तत्किं तेषामनिर्मोक्ष एव, नेत्याह–**ते पश्चादैश्वर्यक्षय इति** । **निर्विण्णा** विरक्ताः । **प्रतिसंचरः** प्रलयः । अपि च स्वर्गादावनुभवपथमनारोहति शब्दैकसमधिगम्ये विचिकित्सा स्यादपि मन्दधियामामुष्मिकफलत्वं प्रति । यथा चार्थवादः–'को हि तद्वेद यदमुष्मिँल्लोकेस्ति वा न वेति' । अद्वैतज्ञानफलत्वे मोक्षस्यानुभवसिद्धे विचिकित्सागन्धोऽपि नास्तीत्याह–**प्रत्यक्षफलत्वाच्चेति** । अद्वैततत्त्वसाक्षात्कारो हि अविद्यासमारोपितं प्रपञ्चं समूलघातं निघ्नन्घोरं संसाराङ्गारपरितापमुपश

आनन्दगिरीय–न्यायनिर्णयः ।

भावे मध्ये न क्षयस्तथा प्रवृत्तफलस्यापि कर्मणो मध्ये नास्ति क्षयः । जातेऽपि ज्ञाने मोक्षस्य देहपाताववधिकरणादारब्धकर्मोपादानाज्ञाननिवर्तने तस्यासामर्थ्यात् । अतः श्रुतिस्मृतिप्रामाण्यादनारब्धमेव कर्म नश्यति न त्वारब्धमित्यर्थः । अप्रवृत्तफलकर्मनिवृत्तावपि प्रवृत्तफलस्य कर्मणो न भोगादृते निवृत्तिरिति स्थिते ज्ञानिनोऽपि देहान्तरं ज्ञानस्यैकान्तिकफलत्वं चाविरुद्धमित्युक्तमुपसंहरति–**तस्मादिति** । कर्मज्ञानाधिकृतानां मनुष्याणामेव तर्हि मोक्षो नान्येषां तदभावादित्याशंक्याऽऽह–**तथा चेति** । किंचाऽऽधिकारिकेषु केषुचिदमुक्त्या ज्ञानस्यानैकांतिकफलत्वं किंवा सर्वेषु तेष्विति विकल्प्याऽऽद्ये पूर्वोक्तसमाधिं सिद्धवत्कृत्य द्वितीयं प्रत्याह–**ज्ञानान्तरेष्विति** । तेषां ज्ञानाभावादेवामुक्तिरित्यर्थः । ऐश्वर्यभेदस्त्वादिशब्दार्थः । तर्हि तेषामैश्वर्यासक्तानां न कदाचिन्मुक्तिस्तत्राऽऽह–**ते पश्चादिति** । निर्विण्णा विरक्ताः । तेषां क्रममुक्तौ मानमाह–**ब्रह्मणेति** । प्रतिसंचरो महाप्रलयः कृतात्मनः संस्कृतांतःकरणज्ञानिनः । ज्ञानस्य नियतफलत्वे हेत्वन्तरमाह–**प्रत्यक्षेति** । भुजिवद्धियोऽन्वयव्यतिरेकसिद्धफलत्वान्न फलाभावशंकेत्यर्थः । उक्तमर्थं व्यतिरेकद्वारा स्फोरयति–**कर्मेति** । ज्ञानफले तुल्यमनुभवानारूढत्वमित्याशंक्याऽऽह–**अनुभवेति** । तत्कथमित्यपेक्षायां प्रत्यक्षवस्तुविषयत्वादित्याह–**यदिति** । परिनिष्पन्नवस्तुविषयत्वाच्च ज्ञानस्य प्रत्यक्षफलतेत्याह–**तत्त्वमिति** । उपास्तिसाध्यत्वाद्ब्रह्मभावस्यासिद्धं ज्ञानस्य परिनिष्पन्नविषय-

[ छां०६।८-१६ ] इति च सिद्धवदुपदेशात् । न हि "तत्त्वमसि" इत्यस्य वाक्यस्यार्थः-तत्त्वं मृतो भविष्यसीत्येवं परिणेतुं शक्यः । "तद्धैतत्पश्य-न्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च" [ बृ० १ । ४ । १० ] इति सम्यग्दर्शनकालमेव तत्फलं सर्वात्मत्वं दर्शयति ॥ तस्मादैकान्तिकी विदुषः कैवल्यसिद्धिः ॥ ३२ ॥ इति यावदधिकाराधिकरणम् ॥ १९ ॥

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्त-दुक्तम् ॥ ३३ ॥ ( २० ) ॥

वाजसनेयके श्रूयते-"एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमन-ण्वह्रस्वमदीर्घम्" [ बृ०३।८।८ ] इत्यादि । तथाथर्वणे श्रूयते-"अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम्" [मुण्ड०१।१।६ ] इत्यादि । तथैवान्यत्रापि विशेषनिराकरणद्वारेणाक्षरं परं ब्रह्म श्राव्यते । तत्र कचित्केचिदतिरिक्ता विशेषाः प्रतिषिध्यन्ते, तासां विशेषप्रतिषे-

रत्नप्रभा ।

साक्षात् कृतात्मानो मुच्यन्ते इत्यर्थः ॥ ब्रह्मभावफलस्याऽपि भावित्वमाशङ्क्य "तत्त्वमसि" इति श्रुतिबाधमाह—न हीति ॥ तस्मात् निर्गुणविद्यायां मार्गानुपसंहार इति सिद्धम् ॥ ३२ ॥ ( १९ ) ॥ **अक्षरधियाम्**॥ अत्राक्षरब्रह्मप्रमापकाः निषेधशब्दाः विषयाः, तेषु यत्र यावन्तः श्रुताः, तत्र तावतामशेषद्वैतनिषेधकत्वसम्भवासम्भवाभ्यां संशयमाह-तासामिति ॥ यथा-निर्गुणविद्यायां मार्गस्यानपेक्षितत्वादनुपसंहारः, तथा श्रुतनिषेधानामुपलक्षणतया सर्वद्वैतनिषेधसम्भवाच्छाखान्तरीयनिषेधशब्दानामनपेक्षितत्वादनुपसंहार इति दृष्टान्तेन पूर्वपक्षः । तत्र लाघवं फलं, सिद्धान्ते तु दोषद्वयाभावः फलम् । तथाहि यदि श्रुतशब्दैरश्रुतनिषेधाः लक्ष्यन्ते, तदा लक्षणादोषः, यदि न लक्ष्यन्ते, तदा सर्वद्वैतनि-

भामती ।

मयति । पुरुषस्येत्यनुभवादपि स्फुटमुपपत्तिद्रढिम्नश्च श्रुतिर्दर्शिता । तच्चानुभवाद्वामदेवादीनां सिद्धम् । ननु तत्त्वमसि वर्तस इति वाक्यं कथमनुभवमेव द्योतयतीत्यत आह—न हि तत्त्वमसीत्यस्येति । वर्तमानापदेशस्य भविष्यदर्थता मृतशब्दाध्याहारश्चाशक्य इत्यर्थः ॥ ३२ ॥ ( १९ ) ॥ **अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्** । अक्षरविषयाणां प्रतिषेधधियां सर्ववेदवर्तिनीनामवरोध उपसंहारः प्रतिषेधसामान्यादक्षरस्य तद्भावप्रत्यभिज्ञानात् । आनन्दादयः प्रधानस्येत्यत्रायमर्थो यद्यपि भावरूपेषु विशेषणेषु सिद्धस्तन्न्यायतया च निषेधरूपेष्वपि सिद्ध एव । तथापि तस्यैवैष प्रपञ्चोऽवगन्तव्यः ।

आनन्दगिरीय-न्यायनिर्णयः ।

त्वमित्याशंक्याऽऽह-न हीति । वर्तमानापदेशस्य भविष्यदर्थता मृतशब्दाध्याहारश्चायुक्त इत्यर्थः । इतश्च ज्ञानस्यैकांतिकफलतेत्याह-तद्धेति । अव्यवहिते क्रियाहेतौ शतुर्विधानात्पुष्कलहेतुत्वं सर्वात्मत्वं प्रति सम्यग्धियः सिद्धमित्यर्थः । श्रुतिस्मृतिन्यायसिद्धमर्थमुपसंहरति—तस्मादिति ॥ ३२ ॥ (१९) ॥ आधिकारिकाणामारब्धकर्मवशादेहान्तरारम्भसिद्धेर्न कर्मान्तरनिमित्ततेत्युक्तम् । तथेहापि तत्तत्प्रकरणाधीतनिषेधैरेवोपलक्षणतया सर्वद्वैतनिषेधसिद्धेर्न शाखान्तरीयनिषेधानां तत्र ब्रह्मप्रमितिहेतुतेत्याशंक्याऽऽह-अक्षरेति । विषयं वक्तुं वाक्यमुदाहरति-वाजसनेयक इति । अन्यत्रापीत्यदृश्येऽनात्म्य इत्यादाविति यावत् । निषेधमुखेन ब्रह्मवादितच्छ्वाक्यस्थापुनरुक्तशब्दान्विषयत्वेन परिशिनष्टि-तत्रेति । तानधिकृत्य न्यायसंभवोपकारासंभवाभ्यां संशयमाह-तासामिति। बुद्धिग्रहणं तत्पूर्वकशब्दोपलक्षणार्थम्। विद्यैक्येऽपि शरीरानुपसंहा-

धबुद्धीनां किं सर्वासां सर्वत्र प्राप्तिः-उत-व्यवस्थेति संशये श्रुतिविभागाद्व्यवस्थाप्राप्तौ उच्यते ॥ अक्षरधियस्तु-विशेषप्रतिषेधबुद्धयः सर्वाः सर्वत्रावरोद्धव्याः। सामान्यतद्भावाभ्याम्। समानो हि सर्वत्र विशेषनिराकरणरूपो ब्रह्मप्रतिपादनप्रकारः। तदेव च सर्वत्र प्रतिपाद्यं ब्रह्माभिन्नं प्रत्यभिज्ञायते। तत्र किमित्यन्यत्र श्रुता बुद्धयोऽन्यत्र न स्युः॥ तथा च "आनन्दादयः प्रधानस्य" [ व्या० सू० ३। ३। ११ ] इत्यत्र व्याख्यातम्। तत्र विधिरूपाणि विशेषणानि चिन्तितानि, इह प्रतिषेधरूपाणीतिविशेषप्रपञ्चार्थश्चायं चिन्ताभेदः। "औपसदवद्" इति निदर्शनम्॥ यथा—जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितासु पुरोडाशप्रदान-

रत्नप्रभा।

षेधासिद्धेर्निर्विशेषप्रमित्यभावदोष इति विवेकः। अक्षरे धर्मिणि द्वैतनिषेधधियः-अक्षरधियः। तद्धेतवः शब्दा इति यावत्। तासां अवरोधः उपसंहार इति सूत्रयोजना। शेषिब्रह्मणः सर्वशाखासु भावात् तत्प्रमितेः समानत्वाच्छेषाणामुपसंहार इति चेत्, तर्हि न्यायसाम्यात् पुनरुक्तितादवस्थ्यमित्यत आह—विशेषप्रपञ्चार्थ इति॥ आनन्दादीनां स्वरूपत्वादस्तूपसंहारः। निषेधानामनात्मत्वादानन्त्याच्चानुपसंहार इत्यधिकाशङ्कायां तेषामनात्मत्वेऽपि निर्विशेषब्रह्मप्रमित्यर्थत्वादविद्यातज्जनिषेधत्वेन संग्रहसिद्धेश्च निरपेक्षास्थूलानणुवाक्यस्था क्लृप्ता निषेधशब्दानामन्यत्र श्रुतिनिषेधवाक्यैकवाक्ययोपसंहार इति चिन्ता युक्तेत्यर्थः॥ अन्यत्र श्रुतशेषाणाम् अन्यस्थशेषिसम्बन्धे दृष्टान्तं व्याचष्टे—यथेति॥ "जमदग्निः पुष्टिकामश्चतूरात्रेण यजते"

भामती।

निदर्शनम्॥ यथा-जामदग्न्येऽहीन इति। यद्यपि शाबरे दत्तोत्तरमत्रोदाहरणान्तरं तथापि तुल्यन्यायतयैतदपि शक्यमुदाहर्तुमित्युदाहरणान्तरं दर्शितम्। तत्र शाबरमुदाहरणमस्याधानं यजुर्वेदविहितम्—'य एवं

आनन्दगिरीय-न्यायनिर्णयः।

स्वदनुपसंहारो निषेधशब्दानामिति पूर्वपक्षयति—श्रुतीति। तत्र श्रुतानामेव निषेधशब्दानामुपलक्षणत्वेनाशेषद्वैतनिषेधद्वारा निर्विशेषब्रह्मोक्तिसामर्थ्यादित्यर्थः। अपुनरुक्तिनिषेधशब्दोपसंहारोक्तिद्वारा वाक्यार्थधीहेतुत्वादात्पादादिसंगतिः। पूर्वपक्षे श्रुतैरेव निषेधैरुपलक्षणतया सर्वनिषेधे निर्विशेषब्रह्मप्रमित्या लाघवम्। सिद्धान्ते लक्षणैकदेशपरिशेषो परिहृत्य निर्विशेषब्रह्मप्रमितिनैराकांक्ष्यमिति मत्वा सिद्धांतयति—उच्यत इति। अक्षरे धर्मिणि द्वैतनिषेधधियोऽक्षरस्य धिय इत्यर्थकं सूत्रपदं व्याचष्टे—अक्षरेति। तत्र हेतुमवतार्य विभजते—सामान्येति। आरोपितविशेषनिरासेन ब्रह्मोक्तेस्तत्रतत्र तुल्यत्वाद्ब्रह्मणश्च प्रतिपाद्यस्य सर्वत्रैक्येन प्रत्यभिज्ञानात्तद्योगिनां शब्दप्रत्ययानामुपसंहार इत्यर्थः। श्रुतकतिपयनिषेधैरेव सर्वनिषेधोपलक्षणात्किमुपसंहारेणेत्याशंक्याऽऽह—तत्रेति। अन्यत्रेति शाखाभेदोक्तिः। अनुपसंहारश्चेदश्रुतद्वैतनिषेधाय तत्रतत्र कतिपयनिषेधशब्दानां लक्षणा द्वैतैकदेशशेषो वा स्यात्ततो वरं द्वैतनिषेधात्कृत्स्नशब्दोपसंहारेणैकवाक्यत्वमित्यर्थः। तत्रानुग्राहकन्यायं दर्शयति—तथा चेति। तर्हि पुनरुक्तिरित्याशंक्य भावाभावधर्मविषयतया परिहरति—तत्रेति। तथाऽपि न्यायसाम्यात्तदवस्थं पौनरुक्त्यं तत्राऽऽह—प्रपञ्चेति। ब्रह्मस्वरूपत्वादानन्दाद्युपसंहारेऽपि निषेधानामनात्मत्वान्निषेध्यानन्त्येनाऽऽनन्त्याच्चैकत्रोपसंहारायोगात्किंचिन्निषेधेनान्यलक्षणायां च श्रुतेनैव सिद्धेरुपसंहारानर्थक्यान्न निषेधोपसंहारसिद्धिरित्याशंक्य निषेधानामनात्मत्वेऽप्यात्मलक्षणतया तत्प्रमित्यर्थं सार्वत्रिकत्वान्निषेध्यद्वैतस्य भूतभौतिकत्वादिरूपस्य मितत्वेन तत्रापि मितिसिद्धेरुपसंहारः स्यादित्यभिप्रेत्योक्तम्—प्रपञ्चार्थश्चेति। शाखान्तरोक्तानामपि प्रधानयोगिनामुपसंहार इत्यत्र दृष्टान्तमाह—औपसदवदिति। निदर्शनं विवृणोति—यथेति। जमदग्निः

मन्त्राणाम् "अग्नेर्वेहोत्रं वेरध्वरम्" इत्येवमादीनामुद्गातृवेदोत्पन्नानामप्यध्वर्युभिरभिसम्बन्धो भवति । अध्वर्युकर्तृकत्वात्पुरोडाशप्रदानस्य । प्रधानतन्त्रत्वाच्चाङ्गानाम् । एवमिहाप्यक्षरतन्त्रत्वात्तद्विशेषणानां यत्र क्वचिदप्युत्पन्नानामक्षरेण सर्वत्राभिसम्बन्ध इत्यर्थः ॥ तदुक्तं प्रथमे काण्डे- "गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः" [ जै० सू ३।३।८ ] इत्यत्र ॥ ३३ ॥ इत्यक्षरध्यधिकरणम् ॥ २० ॥

रत्नप्रभा ।-०

भामती ।

विद्वानग्निमाधत्त' इति । तदङ्गत्वेन यजुर्वेद एव 'य एवं विद्वान्वारवन्तीयं गायति य एवं विद्वान्यज्ञायज्ञीयं गायति य एवं विद्वान्वामदेव्यं गायति' इति विहितम् । एतानि च सामानि सामवेदेघूत्पन्नानि । तत्रेदं संदिह्यते-किमेतानि यत्रोत्पद्यंते तत्रत्येनैवोच्चैष्ट्वेन स्वरेणाधाने प्रयोक्तव्यान्यथ यत्र विनियुज्यन्ते तत्रत्येनोपांशुत्वेन स्वरेण 'उच्चैः साम्नोपांशु यजुषा' इति श्रुतेः । किं तावत्प्राप्तम् । उत्पत्तिविधिनैवापेक्षितोपायत्वात्मना विहितत्वादङ्गानां तस्यैव प्राथम्यात्तन्निवन्धन एवोच्चैःस्वरे प्राप्त उच्यते-**गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन । वेदसंयोगः** अयमर्थः-उत्पत्तिविधिर्गुणो विनियोगविधिस्तु प्रधानं, तदनयोर्व्यतिक्रमे विरोधे उत्पत्तिविध्यालोचनेनोच्चैष्ट्वं विनियोगविध्यालोचनेन चोपांशुत्वं सोऽयं विरोधो व्यतिक्रमस्तस्मिन्व्यतिक्रमे मुख्येन प्रधानेन नियुज्यमानत्वरूपेण तस्य वारवन्तीयादेर्वेदसंयोगो ग्राह्यो नोत्पद्यमानत्वेन गुणेन । कुतः, विनियुज्यमानत्वस्य मुख्यत्वेनोत्पद्यमानत्वस्य गुणत्वेन तदर्थत्वाद्विनियुज्यमानार्थत्वादुत्पद्यमानत्वस्य । एतदुक्तं भवति-यद्यप्युत्पत्तिविधावपि चातूरूप्यमस्ति विधित्वस्याविशेषात् । तन्मात्रनान्तरीयकत्वाच्च चातूरूप्यस्य । तथापि वाक्यानामैदंपर्यं भिद्यते । एकस्यैव विधेरुत्पत्तिविनियोगाधिकारप्रयोगरूपेषु चतुर्षु मध्ये किंचिदेव रूपं केनचिद्वाक्येनोल्लिख्यते यदन्यतोऽप्राप्तम् । तत्र यद्यपि सामवेदे सामानि विहितानि तथापि तद्वाक्यानां तदुत्पत्तिमात्रपरता विनियोगस्य याजुर्वैदिकैरेव वाक्यैः प्राप्तत्वात् । तथा चोत्पत्तिवाक्येभ्यः समीहितार्थाप्रतिलम्भाद्विनियोगवाक्येभ्यश्च तदवगतेस्तदर्थान्येवोत्पत्तिवाक्यानि भवन्तीति तत्र येन वाक्येन विनियुज्यन्ते तस्यैव स्वरस्य साधनत्वसंस्पर्शिनो ग्रहणं न तु रूपमात्रस्पर्शिन इति । भाष्यकारीयमप्युदाहरणमेवमेव योजयितव्यम् । उद्गातृवेदोत्पन्नानां मन्त्राणामुद्गात्रा प्रयोगे प्राप्ते अध्वर्युप्रदानकेऽपि पुरोडाशे विनियुक्तत्वात्प्रधानानुरोधेनाध्वर्युणैव तेषां प्रयोगो नोद्गात्रेति दार्ष्टान्तिके योजयति-**एवमिहापीति** ॥ ३३ ॥ ( २० ) ॥

आनन्दगिरीय-न्यायनिर्णयः ।

पुष्टिकामश्चतूरात्रेण यजेतेत्युत्पन्ने जामदग्न्येऽहीने पुरोडाशिन्य उपसदो भवन्तीति तैत्तिरीये पुरोडाशयुक्तासूपसत्स्विष्टिषूपदिष्टासु पुरोडाशप्रदानमन्त्राणामुद्गातृवेदोत्पन्नानामुद्गात्रा प्रयोगे प्राप्तेऽध्वर्युप्रदानके पुरोडाशे विनियोगात्तस्य चोत्पत्त्यपेक्षायाः प्राधान्यात्तदनुरोधेनाध्वर्युणैव तेषां प्रयोगो नोद्गात्रेत्यर्थः । उक्तमर्थं दार्ष्टान्तिके योजयति-**एवमिति** । अत्रैवोदाहरणान्तरविवक्षया तार्तीयं सूत्रमुदाहरति-**तदुक्तमिति** । याजुर्वैदिकेऽन्याधाने 'य एवं विद्वानग्निमाधत्त' इति श्रुतेस्तदङ्गत्वेन'य एवं विद्वान्वारवन्तीयं गायति य एवं विद्वान्यज्ञायज्ञीयं गायति य एवं विद्वान्वामदेव्यं गायति' इति तत्रैव सामगानं श्रुतं, तत्र किमेतानि वारवन्तीयादीनि सामवेदोत्पन्नत्वात्तत्रोत्पन्नोच्चैस्त्वेन स्वरेणाधाने प्रयोक्तव्यानि किंवा यत्र विनियुज्यन्ते तत्रोत्पन्नोपांशुत्वेनेति संदेहे सत्युत्पत्तिविधिनैवापेक्षितोपायत्वात्मना विहितत्वादङ्गानां तस्यैव प्राथम्यात्तन्निमित्तोच्चैःस्वरे प्राप्ते प्रत्याह-**गुणेति** । उत्पत्तिविधिर्गुणो विनियोगविधिर्मुख्यस्तयोर्व्यतिक्रमो विरोध उत्पत्तिविध्यालोचनयोच्चैस्त्वं विनियोगविध्यालोचनयोपांशुत्वमिति तस्मिन्व्यतिक्रमे सति मुख्येन प्रधानेन विनियुज्यमानेन रूपेण वारवन्तीयादेर्वेदस्य संयोगो ग्राह्यो नोत्पद्यमानत्वेन गुणेनेति प्रतिज्ञायां हेतुमाह-**तदर्थत्वादिति** । उत्पद्यमानस्य विनियुज्यमानार्थत्वाद्यद्यपि सामवेदे सामानि विहितानि तथाऽपि तद्वा-

## इयदामननात् ॥ ३४ ॥ (२१) ॥

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्यो अभिचाकशीति" [ ( मुण्ड० ३ । ३ । १ ) (श्वेता०४।६)]इत्यध्यात्माधिकारे मन्त्रमाथर्वणिकाः श्वेताश्वतराश्च पठंति। तथा कठाः-"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" [कठ०१।३। १ ] इति । किमत्र विद्यैकत्वम्-उत-विद्यानानात्वमिति संशयः । किं तावत्प्राप्तम् । विद्यानानात्वमिति॥ कुतः॥ विशेषदर्शनात्-"द्वा सुपर्णा"

रत्नप्रभा ।

इत्युपक्रम्य विहिताः । जमदग्निना कृतः जामदग्नः । अहीनः-चतूरात्रः क्रतुः, तस्मिन् "पुरोडाशिन्य उपसदो भवन्ति" इति पुरोडाशसाध्या इष्टयः तैत्तिरीयके विहिताः । तासामध्वर्युकर्तृकत्वात् सामवेदोत्पन्नमन्त्राणां तासु विनियोगादध्वर्युणैव प्रयोगः, नोद्गात्रेत्यर्थः ॥ वेः-देवगणस्य होत्रम् अध्वरं च कर्माग्नेस्त्वत एवेत्यग्न्यामन्त्रणमन्त्रार्थः ॥ उत्पत्तिविधिर्गुणः । फलापेक्षत्वाद् । उत्पन्नस्य फले विनियोगविधिर्मुख्यः । सफलत्वात् ॥ तथा च मन्त्राणामुद्गातृत्वे वेदोत्पन्नत्वादुद्गात्रा प्रयोगः विनियोगविधिनाध्वर्युणा प्रयोग इति गुणमुख्ययोर्व्यतिक्रमे विरोधे सति मुख्येन बलीयसा मन्त्रात्मकवेदस्य अध्वर्युणा संयोगतः उत्पत्तेः। विनियोगार्थत्वादिति जैमिनिसूत्रार्थः ॥ यद्यपि शावरभाष्ये वारवन्तीयादिसाम्नामुच्चैस्स्वरकसामवेदोत्पन्नत्वादाधानाङ्गत्वेनोच्चैस्स्वरप्रयोगः "य एवं विद्वान्वारवन्तीयं गायति यज्ञायज्ञीयं गायति वामदेव्यं गायति" इत्याधाने तेषां विनियोगविधिना याजुषेण याजुषस्योपांशुस्वरस्य प्रयोग इति गुणमुख्ययोर्विरोधे सति उत्पत्तेर्विनियोगार्थत्वान्मुख्यविनियोगबलेन साम्नां यजुर्वेदस्वरसंयोग इति सूत्रं व्याख्यातम् ॥ तथापि न्यायसाम्यादौपसदमन्त्राः सूत्रविषयत्वेनोदाहृता इत्यविरोधः ॥ ३३ ॥ ( २० ) ॥ इयदामननात् ॥ मन्त्रद्वयेऽपि प्रतिपादनप्रकारभेदात्, जिज्ञास्यैक्यमात्राच्च,-संशयमाह-किमत्रेति ॥ ऋतपानवाक्ये "अक्षरं ब्रह्म यत्परम्" [ कठ० १ । ३ । २ ] इति गुणाः श्रुताः । सुपर्णवाक्येऽनश्नत्वादयः । तेषां

भामती।

इयदामननात् । 'गुहां प्रविष्टावात्मानौ' इत्यत्र सिद्धोऽप्यर्थः प्रपंच्यते । एकत्र भोक्त्रभोक्त्रोर्वेद्यता, अन्यत्र भोक्त्रोरेवेति वेद्यभेदाद्विद्याभेद इति।न च सृष्टीरुपदधातीतिवत्पिबदपिबल्लक्षणापरं पिबन्ताविति नेतुमुचितम्। सति मुख्यार्थसंभवे तदाश्रयणायोगात् । न च वाक्यशेषानुरोधात्तदाश्रयणम् । संदेहे हि वाक्यशेषान्निर्णयो

आनन्दगिरीय-न्यायनिर्णयः ।

क्यानां तदुत्पत्तिमात्रपरत्वं विनियोगस्य याजुर्वेदिकवाक्यैरेव प्राप्तेस्तत एव समीहितार्थप्रतिलम्भात्तदर्थान्येवोत्पत्तिवाक्यानीति तस्यैव स्वरस्यार्थसंस्पर्शिनो ग्रहणमित्यर्थः । उदाहरणान्तरं तु समानन्यायतया दर्शितमिति न शाबरविरोधः ॥ ३३ ॥ ( २० ) ॥ प्रतिपाद्यब्रह्मप्रत्यभिज्ञानाज्ज्ञानैक्येऽक्षरधियामुपसंहारवत्प्रतिपाद्यभेदाद्विद्याभेदः स्यादित्याशंक्याऽऽह—इयदिति । गुहां प्रविष्टावित्यत्र सिद्धार्थमपि वाक्यमुपसंहारानुपसंहारप्रसङ्गात्पुनरुदाहरति-द्वा सुपर्णेति । तथाविधमेव काठकवाक्यमपि पठति-तथेति । मन्त्रद्वयं विषयीकृत्य प्रतिपादनप्रकारभेदाद्विद्याभेदमानात्प्रतिपाद्यासंसार्यात्मदृष्टेस्तदैक्यदृष्टेश्च संशयमाह-किमिति । मन्त्रद्वयेऽपि विद्यैक्योक्त्या वाक्यार्थधीहेतोरेवोक्तत्वात्पादादिसंगतिः । पूर्वपक्षे गुणानुपसंहारः सिद्धान्ते तदुपसंहार इत्यंगीकृत्य विमृश्य पूर्वपक्षमाह—किं तावदिति । अर्थैक्यदृष्टेर्न विद्यानानात्वमिति शङ्कते-कुत इति । रूपभेददृष्टेरथैक्यधीरसिद्धेत्याह-विशेषेति । तदेव विवृणोति-द्वा सुपर्णेति । भोक्त्रभोक्त्रोर्द्वा सुपर्णेत्यत्र वेद्यता भोक्त्रोरेवान्यत्रेति वेद्यभेदाद्विद्याभेदः । न

इत्यत्र ह्येकस्य भोक्तृत्वं दृश्यते, एकस्य चाभोक्तृत्वम् । "ऋतं पिबन्तौ" इत्यत्र तूभयोरपि भोक्तृत्वं दृश्यते । तद्वेद्यं रूपं भिद्यमानं विद्यां भिन्द्यादित्येवं प्राप्ते ब्रवीति—विद्यैकत्वमिति ॥ कुतः ॥ यतः उभयोरप्येतयोर्मन्त्रयोरियत्तापरिच्छिन्नं द्वित्वोपेतं वेद्यरूपमभिन्नमामनन्ति ॥ ननु दर्शितो रूपभेदः ॥ नेत्युच्यते ॥ उभावप्येतौ मन्त्रौ जीवद्वितीयमीश्वरं प्रतिपादयतः, नार्थान्तरम् ॥ "द्वा सुपर्णा" इत्यत्र तावद् "अनश्नन्नन्यो अभिचाकशीति" इत्यशनायातीतः परमात्मा प्रतिपाद्यते । वाक्यशेषेऽपि च स एव प्रतिपाद्यमानो दृश्यते । "जुष्टं यदा पश्यत्यन्यमीशम्" [श्वेता० ४।७] इति। "ऋतं पिबन्तौ" इत्यत्र तु जीवे पिबत्यशनायाद्यतीतः परमात्मापि तत्साहचर्याच्छत्रिन्यायेन पिबतीत्युपचर्यते । परमात्मप्रकरणं ह्येतत् । "अन्यत्र धर्मादन्यत्राधर्माद्" [कठ० २ । १४ ] इत्युपक्रमात् । तद्विषय एव चात्रापि वाक्यशेषो भवति । "यः सेतुरीजानानामक्षरं ब्रह्म

रत्नप्रभा ।

मिथोऽनुपसंहार इति पूर्वपक्षे फलं, सिद्धान्ते त्वसंसारिब्रह्मस्वरूपवाक्यार्थैक्यादुपसंहार इति विवेकः । अस्तु वेद्ये विद्यैक्याद् अक्षरधियामुपसंहारः । इह तु वेद्यभेदान्नोपसंहार इति प्रत्युदाहरणेन पूर्वपक्षः । नन्वयं गुहाधिकरणे निरस्त इति चेत् ॥ सत्यम् ॥ किन्तु पिबत्पदस्य मुख्यार्थत्वाय स्वतः कल्पनया च पानकृत्याश्रयौ बुद्धिजीवौ पिबन्तौ ग्राह्यौ । सुपर्णौ तु जीवेश्वरावित्यधिकाशङ्कायां मन्त्रद्वयेऽपि द्विवचनश-

भामती ।

न च मुख्यलाक्षणिकग्रहणविषयो विशयः संभवति, तुल्यबलत्वाभावात् । प्रकरणस्य च ततो बलीयसा वाक्येन बाधनात् । तस्माद्वेद्यभेदाद्विद्याभेद इति प्राप्त उच्यते—द्वासुपर्णेत्यत्र ऋतं पिबन्तावित्यत्र च द्वित्वसंख्योत्पत्तौ प्रतीयते तेन समानतौत्सर्गिकी।पिबन्ताविति द्वयोः पिबन्ता या सा बाधनीया,सा चोपक्रमोपसंहारानुरोधेन न द्वयोरपि तु छत्रिन्यायेन लाक्षणिकी व्याख्येया।येन ह्युपक्रम्यते येन चोपसंस्थीयते तदनुरोधेन मध्यं ज्ञेयम्। यथा जामित्वदोषसंकीर्तनोपक्रमे तत्प्रतिसमाधानापसंहारे च संदर्भे मध्यपातिनो विष्णुरुपांशु यष्टव्योऽजामित्वायेत्यादयः पृथग्विधित्वमलभमाना विधित्वमविवक्षितस्वार्थवादतया नीतास्तत्रैकस्य हेतोरेकवाक्यता हि साधीयसी वाक्यभेदादिति।तथेहापि तदनुरोधेन पिबदपिबत्समूहपरं लक्षणीयं पिबन्तावित्यनेन।

आनन्दगिरीय—न्यायनिर्णयः ।

च च्छत्रिन्यायेन पिबन्ताविति लक्षणा मुख्यसंभवे तदयोगात् । न च वाक्यशेषाल्लक्षणोपक्रमस्य मुख्यलाक्षणिकग्रहणविषये तुल्यबलत्वाभावादेव संशयानुपपत्तेः । न च प्रकरणं लक्षणाबीजं वाक्येन बाधादिति मत्वोपसंहरति—तदिति । मन्त्रयोर्विद्यानानात्वमनुपसंहारश्चेति पक्षमनूद्य बहिरेव सिद्धान्तमाह—एवमिति । तत्र प्रश्नपूर्वकं हेतुत्वेन सूत्रं योजयति—कुत इति। इयत्तापरिच्छिन्नमित्येतदेव व्याचष्टे—द्वित्वेति । रूपभेदाद्विद्याभेदं स्मारयति—नन्विति । रूपभेदासिद्ध्या प्रत्याह—नेति । अर्थान्तरशब्देन जीवो गृह्यते । जीवानुवादेन तद्याथार्थ्यं परमात्मतत्त्वं प्रतिपाद्यमित्येतदाथर्वणादिमन्त्रे साधयति—द्वा सुपर्णेति । तत्र वाक्यशेषमनुकूलयति—वाक्येति । तमेव दर्शयति तथाऽपि काठके भोक्त्रोरेवोक्तेर्नेश्वरार्थतेत्याशंक्याऽऽह—ऋतमिति । मन्त्रद्वयेऽपि द्वित्वसंख्यादृष्टेरुभयोस्तुल्यतां विना च द्वित्वसंख्यायोगाच्चेतनस्य जीवस्य परमात्मैव चेतनत्वात्तुल्य इति पिबन्तावित्यस्य लक्षणा बलादायातीत्यर्थः । किंच, प्रकरणादपि परमात्मैवात्र भातीत्याह—परमात्मेति । उपक्रमवदुपसंहारोऽपि तद्विषय एवेत्याह—तदिति । अत्रापीत्यपिश-

यत्परम्" [ कठ० ३।२ ] इति "गुहां प्रविष्टावात्मानौ हि" [ व्या० सू० १।२।११ ] इत्यत्र चैतत्प्रपञ्चितम् ॥ तस्मान्नास्ति वेद्यभेदः । तस्माच्च विद्यैकत्वम् ॥ अपि च त्रिष्वप्येतेषु वेदान्तेषु पौर्वापर्यालोचने परमात्मविद्यैवावगम्यते तादात्म्यविवक्षयैव जीवोपादानं नार्थान्तरविवक्षया ॥ न च परमात्मविद्यायां भेदाभेदविचारावतारोऽस्तीत्युक्तम् ॥ तस्मात्प्रपञ्चार्थ एवैष योगः ॥ तस्माच्चाधिकधर्मोपसंहार इति ॥३४॥ इतीयदधिकरणम् ॥ २१ ॥

## अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥ (२२) ॥

रत्नप्रभा ।

न्दसाम्यादौत्पत्तिकद्वित्वविशिष्टतया तुल्यवस्तुद्वयप्रत्यभिज्ञानस्य बाधकाभावात्, प्रकरणानुग्रहाच्च, जीवानुवादेन असंसारिब्रह्मणि मन्त्रद्वयतात्पर्यमिति प्रपञ्चार्थमिदं सूत्रमिति भावः ॥ ३४ ॥ ( २१ ) ॥ **अन्तरा भूतग्रामवत्स्वात्मन इति**॥ घटादिकं चिद्विषयत्वेनापरोक्षम् । ब्रह्म तु साक्षादविषयत्वेनापरोक्षमिति । प्रथमार्थे पञ्चमी । अत्र श्रुतात्मधर्मोऽपरोक्षत्वं ब्रह्मण्युक्तम् । ब्रह्मधर्मः सर्वान्तरत्वमात्मन्युक्तम् । तयोरैक्यं दृढीकृतं मन्तव्यम् "तं मे व्याचक्ष्व" [ बृ० ३।४।१ ] इत्युषस्तिप्रश्ने याज्ञवल्कीयेन प्राणादिप्रेरकोऽदृष्ट्यातिसाक्षी प्रतिपादितः । तथैव "यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे

भामती ।

तथा च वेद्याभेदाद्विद्याऽभेद इति । अपि च त्रिष्वप्येतेषु वेदान्तेषु प्रकरणत्रयेऽपि पौर्वापर्यपर्यालोचनया परमात्मविद्यैवावगम्यते । यद्येवं कथं तर्हि जीवोपादानमस्त्वित्यत आह—**तादात्म्यविवक्षयेति** । नास्यां जीवः प्रतिपाद्यते किंतु परमात्मनोऽभेदं जीवस्य दर्शयितुमसावनूद्यते । परमात्मविद्यायाश्चाभेदविषयत्वान्न भेदाभेदविचारावतारः । तस्मादैकविद्यमत्र सिद्धम् ॥ ३४ ॥ ( २१ ) ॥ **अन्तरा भूतग्रामवत्स्वात्मनः** । कौषीतकेयकहोलचाक्रायणोषस्तप्रश्नोपक्रमयोर्विद्ययोर्नैरन्तर्येणाम्नातयोः किमस्ति भेदो न वेति विशये भेद एवेति ब्रूमः । कुतः—यद्यप्युभयत्र प्रश्नोत्तरयोरभेदः प्रतीयते । तथापि तस्यैवैकस्य पुनः श्रुतेरविशेषादानर्थक्यप्रसङ्गाद्यजत्यभ्यासवद्भेदः प्राप्तः । न चैकस्यैव ताण्डिनां नवकृत्व उपदेशेऽपि यथा भेदो न भवति स 'आत्मा तत्त्वमसि श्वेतकेतो' इत्यत्र तथेहाप्यभेद इति युक्तम् । 'भूय एव मा भगवान् विज्ञापयतु' इति हि तत्र श्रूयते, तेनाभेदो युज्यते । न चेह तथास्ति तेन यद्यपीह वेद्याभेदोऽवगम्यते तथाप्येकत्र तस्यैवाशनायादिमात्रात्ययोपाधेरुपासनादेकत्र च कार्यकरणविरहोपाधेरुपासनाद्विद्याभेद एवेति प्राप्ते प्रत्युच्यते । नैतदुपासनाविधानपरमपि तु वस्तुस्वरूपप्रतिपादनपरं प्रश्नप्रतिवचनालोचनेनो-

आनन्दगिरीय-न्यायनिर्णयः ।

न्दादाथर्वणिकादिवाक्यं दृष्टान्त्यते । उपक्रमोपसंहारैकरूप्यान्मध्यमपि तथा नेयमिति भावः । सिद्धार्थत्वाच्च मन्त्रद्वयस्य परविषयतेत्याह—**गुहामिति** । मन्त्रद्वयस्य परमात्मैकार्थत्वाद्रूपाभेदाद्विद्याभेदो नेति निगमयति—**तस्मादिति** । न केवलं मन्त्रद्वयमेव परविषयं किंतु तत्संनिध्याम्नातं सर्वमपि मन्त्रजातमित्याह—**अपि चेति** । आथर्वणिकश्वेताश्वतरकाठकविवक्षया त्रिष्वित्युक्तम् । किमिति तर्हि जीवोपादानं तदाह— **तादात्म्येति** । ऐक्यं वक्तुं जीवोऽनूद्यत इत्यर्थः । तदनुवादेन परप्रतिपादनेऽपि कुतो विद्यैक्यं तत्राऽऽह— **न चेति** । प्रागेव मन्त्रद्वयस्य सिद्धार्थत्वे किमनेनाधिकरणेनेत्याशंक्याऽऽह—**तस्मादिति** । गुणोपसंहारप्रस्तावे मन्त्रद्वयविवरणं कुत्रोपयुक्तं तत्राऽऽह—**तस्माच्चेति** ॥ ३४ ॥ ( २१ ) ॥ मन्त्रयोरर्थाभेदोक्तिप्रसंगेन ब्राह्मणयोरपि तुल्यार्थतामाह—**अन्तरेति** । बृहदारण्यके पाञ्चमिकं ब्राह्मणद्वयमुदाहरति—

"यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" [ बृ० ३ । ४ । १ ] इत्येवं द्विः उषस्तिकहोलप्रश्नयोर्नैरन्तर्येण वाजसनेयिनः समामनन्ति । तत्र संशयः—विद्यैकत्वं वा स्याद्विद्यानानात्वं वेति ॥ किं तावत्प्राप्तं—विद्यानानात्वमिति ॥ कुतः ॥ अभ्याससामर्थ्यात् । अन्यथा ह्यन्यूनानतिरिक्तार्थे द्विराम्नानमनर्थकमेव स्यात् ॥ तस्माद्यथाभ्यासात्कर्मभेदः, एवमभ्यासाद्विद्याभेद इति ॥ एवं प्राप्ते प्रत्याह ॥ अन्तराम्नानाविशेषात्स्वात्मनो विद्यैकत्वमिति । सर्वान्तरो हि स्वात्मोभयत्राप्यविशिष्टः पृच्छ्यते,प्रत्युच्यते चान हि द्वावात्मानावेकस्मिन्देहे सर्वान्तरौ सम्भवतः। तदा ह्येकस्याञ्जसं सर्वान्तरत्वं कल्प्येत, एकस्य तु भूतग्रामवन्नैव सर्वान्तरत्वं स्यात् । यथा च—पञ्चभूतसमूहे पृथिव्या आपोऽन्तराः, अद्भ्यश्च तेजोऽन्तरमिति,—सत्यप्यापेक्षिकेऽन्तरत्वे नैव मुख्यं सर्वान्तरत्वं भवति, तथेहापीत्यर्थः॥ अथ वा भूतग्रामवदिति श्रुत्यन्तरं दर्शयति । यथा—"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" [ श्वेता० ६ । ११ ]

---

रत्नप्रभा ।

व्याचक्ष्व" [ बृ० ३ । ४ । २ ] इति कहोलप्रश्नेऽशनायाद्यतीतः प्रतिपादितः । तत्र ब्राह्मणद्वयेऽपि प्रश्नाद्यभ्यासात्, सर्वान्तरत्वप्रत्यभिज्ञानाच्च,—संशये मन्त्रयोर्वेद्यैक्यादस्तु विद्यैक्यम् । इह तु ब्राह्मणयोर्वेद्यैक्येऽपि अभ्यासाद्विद्याभेदः " यजत्यभ्यासात्प्रयाजभेदवद्" इति प्रत्युदाहरणेन पूर्वपक्षः । तत्र मिथो धर्मानुपसंहारः फलं, सिद्धान्ते तूपसंहार इति विवेकः । द्वयोः सर्वान्तरत्वानुपपत्त्या तावद्ब्राह्मणयोरेकव-

भामती ।

पलभ्यते । किमतो यद्येवम् । एतदतो भवति—विधेरप्राप्तप्रापणार्थत्वात्प्राप्तावनुपपत्तिः । वस्तुस्वरूपं तु पुनःपुनरुच्यमानमपि न दोषमावहति शतकृत्वोऽपि हि पथ्यं वदन्त्याप्ताः । विशेषतस्तु वेदः पितृभ्यामप्यभ्यर्हितः । न च सर्वथा पौनरुक्त्यम् । एकत्राशनायाद्यत्ययादन्यत्र च कार्यकारणप्रविलयात् । तस्मादेका विद्या प्रत्यभिज्ञानात् । उभाभ्यामपि विद्याभ्यां भिन्न आत्मा प्रतिपाद्यते इति यो मन्यते पूर्वपक्षैक-

आनन्दगिरीय—न्यायनिर्णयः ।

**यदिति** । घटादि संवित्कर्मत्वेनापरोक्षं ब्रह्म तु साक्षादपरोक्षं तदेव प्रत्यगात्मेत्याह—**य इति** । स च सर्वान्तरो ब्रह्मणि सिद्धस्य सर्वान्तरत्वस्याऽऽत्मनि स्थितस्य चापरोक्षत्वस्य ब्रह्मणि संकीर्तनादुभयोरैक्यमित्यर्थः । तन्मे व्याचक्ष्वेति शेषः । ब्राह्मणद्वयं विषयीकृत्याभ्यासात्सर्वान्तरत्वप्रत्यभिज्ञानाच्च संशयमाह—**तत्रेति**। पिबन्तावित्यस्य लाक्षणिकत्वं गृहीत्वा मन्त्रयोर्भोक्त्रभोक्तृपरत्वेनाऽऽत्मैक्याद्विद्यैक्यमुक्तम् । इह त्वर्थैक्येऽपि न विद्यैक्यमभ्यासादिति पूर्वपक्षमाह—**विद्येति** । हेतुं व्यतिरेकतः स्फोरयति—**अन्यथेति** । एकस्यैव पुनः श्रुतिरविशेषादनर्थकं हि स्यादितिन्यायाद्यजत्यभ्यासे पूर्वकर्मभेदवद्विद्याभेद इत्युपसंहरति—**तस्मादिति** । ब्राह्मणयोरेकार्थत्वेन विद्यैक्योक्त्या वाक्यार्थधीहेतोरेवात्र चिन्तनात्पादादि संगतिः । पूर्वपक्षे विद्याभेदाद्गुणानुपसंहारः । सिद्धान्ते तदैक्यात्तदुपसंहारसिद्धिरिति सिद्धवत्कृत्य सिद्धान्तयति—**एवमिति** । पूर्वसूत्रस्थमामननादितिपदमिहानुषक्तमित्यंगीकृत्य स्वात्मनोऽन्तराम्नानाविशेषादित्युक्तं तदेव स्फुटयति—**सर्वेति** । तथाऽपि कथं ब्राह्मणयोरैक्यार्थं तत्राऽऽह—**न हीति** । द्वयोः सर्वान्तरत्वायुक्तेरूपैक्यसिद्धेर्विद्यैक्यमित्यर्थः । कथं पुनर्द्वयोः सर्वान्तरत्वानुपपत्तिर्मनोमयत्वादिवदुपपत्तेस्तत्राऽऽह—**तदा हीति** । भूतग्रामदृष्टान्तं व्याचष्टे—**यथेति** । तमेवानूद्य विधान्तरेण व्याकरोति—**अथ वेति** । द्वयोः

इत्यस्मिन्मन्त्रे समस्तेषु भूतग्रामेष्वेक एव सर्वान्तर आत्मा आम्नायते, एवमनयोरपि ब्राह्मणयोरित्यर्थः ॥ तस्माद्वेद्यैकत्वाद्विद्यैकत्वम् ॥ ३५ ॥

## अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

अथ यदुक्तमनभ्युपगम्यमाने विद्याभेदे आम्नानभेदानुपपत्तिरिति ॥ तत्परिहर्तव्यमत्रोच्यते ॥ नायं दोषः ॥ उपदेशान्तरवदुपपत्तेः। यथा—ताण्डिनामुपनिषदि षष्ठे प्रपाठके—"स आत्मा तत्त्वमसि श्वेतकेतो" [ छां० ६।८-१६ ] इति नवकृत्वोऽप्युपदेशेन विद्याभेदो भवति, एवमिहापि भविष्यति ॥ कथञ्च न नवकृत्व उपदेशे विद्याभेदो भवति ॥ उपक्रमोपसंहाराभ्यामैकार्थ्यावगमात ॥ "भूय एव मा भगवान्विज्ञापयतु" [ छां० ६।५।४ ] इति चैकस्यैवार्थस्य पुनःपुनः प्रतिपिपादयिषितत्वेनोपक्षेपादाशंकान्तरनिराकरणेन चासकृदुपदेशोपपत्तेः। एवमिहापि प्रश्नरूपाभेदाद्, "अतोऽन्यदार्तम्" [ बृ० ३।४।२ ] इति च परिसमाप्त्यविशेषादुपक्रमोपसंहारौ तावदेकार्थविषयौ दृश्येते। "यदेव साक्षादपरोक्षाद्ब्रह्म"[बृ०३।५।१]इति द्वितीयेऽपि प्रश्ने एवकारं प्रयुञ्जानः पूर्वप्रश्नगतमेवार्थमुत्तरत्राकृष्यमाणं दर्शयति। पूर्वस्मिंश्च ब्राह्मणे कार्यकारणव्यतिरिक्तस्यात्मनः सद्भावः कथ्यते, उत्तरस्मिंस्तु तस्यैवाशनायादिसंसारधर्मातीतत्वं कथ्यते इत्येकार्थतोपपत्तिः ॥ तस्मादेका विद्येति ॥ ३६ ॥ इत्यन्तरत्वाधिकरणम् ॥ २२ ॥

---

रत्नप्रभा।

स्तुपरत्वं सिद्धम्। तथा च वेद्यैक्यात् निर्गुणविद्यैक्ये न विवादः ॥ ३५ ॥ अन्यथा०॥ ननु विद्यैक्याङ्गीकारे अभ्यासानुपपत्तिरिति चेत् ॥ उच्यते ॥ स एवाभ्यासः कर्मभेदकः, यो निरर्थकः ॥ इह तूषस्तिब्राह्मणोक्तात्मन एव अशनायाद्यत्ययरूपविशेषकथनार्थत्वादभ्यासोऽन्यथासिद्धः, न विद्याभेदक इति समु-

भामती।

देशी तं प्रति सर्वान्तरत्वविरोधो दर्शितः ॥ ३५ ॥ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरव-

आनन्दगिरीय-न्यायनिर्णयः।

सर्वान्तरत्वायोगलभ्यमर्थमुपसंहरति—तस्मादिति॥३५॥पूर्वपक्षबीजमनूद्य दूषयति—अन्यथेति। तत्रानुवादं व्याकरोति—अथेति। परिहारमवतारयति—अत्रेति। नञोऽर्थमुक्त्वा दृष्टान्तेनाऽऽम्नानभेदोपपत्तिं सूत्रावयवार्थमाह—नेत्यादिना। तदेव विवृणोति—यथेति। दृष्टान्तोऽपि संमतो नेति शङ्कते—कथं चेति। दृष्टान्ते विद्यैक्यं साधयति—उपक्रमेति। ऐकार्थ्यसिद्धौ हेत्वन्तरमाह—भूय इति। एकस्यैव भूयःशब्दात्प्रतिपाद्यत्वे पौनरुक्त्यमित्याशंक्याऽऽह—आशंकान्तरेति—दार्ष्टान्तिकमाह—एवमिति। इहेति ब्राह्मणद्वयोक्तिः। एवकारसामर्थ्यादपि विद्यैक्यमित्याह—यदेवेति। यत्साक्षादपरोक्षादेव न कदाचिदपि परोक्षमित्येवमेवकारो योज्यतामित्याशंक्य व्यवहितान्वयान्नैवमिति मत्वाऽऽह—पूर्वेति। कथं तर्हि पौनरुक्त्यादानर्थक्यापत्तिसमाधिस्तत्रा—ऽऽहपूर्वस्मिन्निति। उषस्तप्रश्ने कार्यकरणविरहः साध्यते यः प्राणेन प्राणितीत्यादिनिर्देशात्कहोलप्रश्ने त्वशनायादिविरहो योऽशनायापिपासे शोकं मोहमित्यादिदर्शनात्तथा चैकस्यैवाऽऽकारभेदेनोक्तौ पौनरुक्त्यं कुतस्त्यमित्याह—इत्येकार्थतेति। ऐकार्थ्ये फलितमाह—तस्मादिति॥३६॥(२२)॥ तत्त्वमसीत्येकत्वोपदेशस्योपदेशान्तरवदित्यनेन सूत्रावयवेनोदाहृतत्वात्तत्प्रसंगेनैकत्ववादिवाक्यान्तराणां तात्पर्यमाह—

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥ (२३) ॥

"तद्योऽहं सोऽसौ योऽसौ सोऽहम्" इत्यैतरेयिण आदित्यपुरुषं प्रकृत्य समामनन्ति। तथा जाबालाः—"त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि" इति। तत्र संशयः—किमिह व्यतिहारेणोभयरूपा मतिः कर्तव्या—उत—एकरूपैवेति। एकरूपैवेति तावदाह। न ह्यत्रात्मन ईश्वरेणैकत्वं मुक्त्वाऽन्यत्किञ्चिच्चिन्तयितव्यमस्ति। यदि चैवं चिन्तयितव्यो विशेषः परिकल्प्येत—संसारिणश्चेश्वरात्मत्वमीश्वरस्य च संसार्यात्मत्वमिति॥ तत्र संसारिणस्तावदीश्वरात्मत्वे उत्कर्षो भवेत्। ईश्वरस्य तु संसार्यात्मत्वे निकर्षः कृतः स्यात॥ ईश्वरस्य तु संसार्यात्मत्वे निकर्षः कृतः स्यात॥ तस्मादैकरूप्यमेव मन्तव्यम्। व्यतिहाराम्नायस्तावदेकत्वदृढीकरणार्थ इति॥ एवं प्राप्ते प्रत्याह॥ व्यतिहारोयमाध्यानायाम्नायते, इतरवत्। यथेतरे गुणाः सर्वात्मत्वप्रभृतय आध्यानायाम्नायन्ते, तद्वत। तथाहि विशिंषन्ति समाम्नातार उभयोच्चारणेन "त्वमहमस्म्यहं च त्वमसि" इति। तच्चोभयरूपायां मतौ कर्तव्यायामर्थवद्भवति।

---

रत्नप्रभा।

दायार्थः॥ ३६ ॥(२२)॥ व्यतिहार इति॥ जीवेशयोर्मिथो विशेषणविशेष्यभावः व्यतिहारः। तस्य श्रुतत्वात्। उत्कृष्टदृष्टिर्निकृष्टे कृता फलवतीतिन्यायाच्च संशये जीवे ईश्वरत्वमतिरेव कार्या। उक्तन्यायात्। व्यतिहारश्रुतिस्तु तस्या एव दृढीकरणार्थत्वेनाभ्यासवदन्यथासिद्धेति दृष्टान्तेन पूर्वपक्षः। तत्र लाघवं फलं, सिद्धान्ते श्रुत्यर्थवत्त्वमिति विवेकः॥ एकेनैव "त्वमहमस्मि" इत्युच्चारणेनैकमतेः कृतत्वाद्-

भामती।

दिति। अस्य तु पूर्वपक्षतत्त्वाभिप्रायो दर्शितः। सुगममन्यत्॥ ३६ ॥ (२२)॥ व्यतिहारो विशिंषन्ति हीतरवत्। उत्कृष्टस्य निकृष्टरूपापत्तेर्नोभयत्रोभयरूपानुचिन्तनम्। अपि तु निकृष्टे जीव उत्कृष्टरूपाभेदचिन्तनमेवं हि निकृष्ट उत्कृष्टो भवतीति प्राप्तम्। एवं प्राप्त उच्यते—इतरेतरानुवादेनेतरेतररूपविधानादुभयत्रोभयचिन्तनं विधीयते। इतरथा तु योऽहं सोऽसावित्येतावदेवोच्येत। जीवात्मानमनूद्येश्वरत्वमस्य विधीयेत। न त्वीश्वरस्य जीवात्मत्वं योऽसौ सोऽहमिति। यथा तत्त्वमसीत्यत्र। तस्मादुभयरू-

आनन्दगिरीय—न्यायनिर्णयः।

व्यतिहार इति। ऐतरेयकवाक्यं जाबालवाक्यं चोदाहरति—तदिति। वाक्यद्वयमधिकृत्य व्यतिहारस्यान्योन्यं विशेषणविशेष्यत्वस्य दृष्टेरुत्कृष्टदृष्टिर्निकृष्टे फलवतीति न्यायाच्च संशयमाह—तत्रेति। उषस्तकहोलयोर्विद्यैक्येऽपि यथाऽऽदरार्थोऽभ्यासस्तथाऽयमपीति मत्वा पूर्वपक्षयति—एकेति। पदान्तराणामर्थान्तरपरत्वस्वारस्यात्कथं मतेरैकरूप्यमित्याशङ्क्याह—न हीति। अन्योन्यात्मत्वमर्थान्तरमित्याशंक्याऽऽह—यदीति। अन्योन्यात्मनाऽनुचिन्तनस्यायुक्तत्वे फलितमाह—तस्मादिति। तर्हि किमर्थं व्यतिहाराम्नानं तदाह—व्यतिहारेति व्यतिहारपाठे द्विरूपाया मतेरनुष्ठेयत्वोक्त्या विद्यैक्योक्तेर्वाक्यार्थधीहेतोरेव चिन्तनात्पादादिसंगतिः। पूर्वपक्षे मतेरेकरूपत्वे लाघवम्। सिद्धान्ते तस्या द्वैरूप्ये दृढत्वमैक्यस्य सिध्यतीति मन्वानः सिद्धान्तयति—एवमिति। व्यतिहारो मिथो विशेषणविशेष्यत्वमाध्यानमुभयरूपमतिकरणम्। प्रतिज्ञातमर्थं दृष्टान्तेन स्पष्टयति—इतरवदिति। दृष्टान्तदार्ष्टान्तिकभागौ व्याख्याय हेतुं व्याख्याति—तथाहीति। उभयरूपोच्चारणेऽपि कथं प्रतिज्ञासिद्धिस्तत्राऽऽह—तच्चेति। तदेव व्यतिरेकमुखेनाऽऽह—

अन्यथा हीदं विशेषणोभयाम्नानमनर्थकं स्यात्। एकेनैव कृतत्वात्॥ ननूभयाम्नानस्यार्थविशेषे परिकल्प्यमाने देवतायाः, संसार्यात्मत्वापत्तेर्निकर्षः प्रसज्येतेत्युक्तम्॥ नैष दोषः॥ ऐकात्म्यस्यैवानेन प्रकारेणानुचिन्त्यमानत्वात्॥ नन्वेवं सति स एवैकत्वदृढीकार आपद्येत, न वयमेकत्वदृढीकारं वारयामः॥ किं तर्हि॥ व्यतिहारेणेव द्विरूपा मतिः कर्तव्या। वचनप्रामाण्यात्॥ नैकरूपेत्येतावदुपपादयामः॥ फलतस्त्वेकत्वमपि दृढीभवति। यथा-ध्यानार्थेऽपि सत्यकामत्वादिगुणोपदेशे तद्गुणक ईश्वरः प्रसिध्यति, तद्वत्। तस्मादयमाध्यातव्यो व्यतिहारः समाने च विषये उपसंहर्तव्यो भवति॥ ३७॥ इतिव्यतिहाराधिकरणम्॥ २३॥

## सैव हि सत्यादयः॥ ३८॥ (२४)॥

---

रत्नप्रभा।

"अहं" "त्वमसि" इति वृथा स्यादित्यर्थः॥ उक्तदोषं स्मारयति-नन्विति॥ सन्दिग्धेऽर्थेन्यायः सावकाशः। इह तु श्रुतत्वादन्योन्यात्मत्वं ध्येयम्। ब्रह्मणि मनोमयत्वादिवत् जीवात्मत्वस्य ध्यानार्थं आरोपेऽपि निकर्षप्रसक्त्यभावादिति परिहरति-नैष दोष इति॥ ब्रह्मणि निकर्षं हित्वा जीवतादात्म्यध्याने मदुक्तमेवागतमिति शङ्कते-नन्वेवमिति॥ मतेर्द्विरूपत्वं त्वदनुक्तमस्माभिरुच्यते। ध्यानपरं वाक्यमिदम्। एकत्वं तु मानान्तराविरोधात् सिध्यतीति समाधत्ते-न वयमिति॥ अहंग्रहोपास्तिष्वयं व्यतिहार उपसंहर्तव्य इत्याह-तस्मादिति॥ ३७॥ (२३)॥ सैव हि सत्यादयः॥ स यः-कश्चिदधिकारी महद्

भामती।

यमुभयत्राध्यानायोपदिश्यते। नन्वेवमुत्कृष्टस्य निकृष्टत्वप्रसङ्ग इत्युक्तं तत्किमिदानीं सगुणे ब्रह्मण्युपास्यमानेऽस्य वस्तुतो निर्गुणस्य निकृष्टता भवति। कस्मैचित्फलाय तथा ध्यानमात्रं विधीयते न त्वस्य निकृष्टतामापादयतीति चेदिहापि व्यतिहारानुचिन्तनमात्रमुपदिश्यते फलाय न तु निकृष्टता भवत्युत्कृष्टस्य। अन्वाचयशिष्टं तु तादात्म्यदार्ढ्यं भवन्नोपेक्षामहे। सत्यकामादिगुणोपदेश इव तद्गुणेश्वरसिद्धिरिति सिद्धमुभयत्रोभयात्मत्वाध्यानमिति॥ ३७॥ सैव हि सत्यादयः। तद्वै तदेतदेव तदास सत्यमेव स यो हैतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकाञ्जित इन्वसावसद्य एवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति सत्यं ह्येव ब्रह्म। पूर्वोक्तस्य हृदयाख्यस्य ब्रह्मणः सत्यमित्युपासनमनेन संदर्भेण विधीयते। तदिति हृदयाख्यं ब्रह्मैकेन तदा परामृशति। एतदेवेति वक्ष्यमाणं प्रकारान्तर-

आनन्दगिरीय--न्यायनिर्णयः।

**अन्यथेति।** जीवे ब्रह्मधीरेकैव चेत्तदा त्वमहमित्येतावतैव सिद्धेरुभयोच्चारणमनर्थकं तस्मात्तदर्थवत्त्वानुपपत्त्या मतिरुभयरूपैव कार्येत्यर्थः। उक्तं स्मारयति--**नन्विति।** निर्गुणस्य सगुणत्वोक्तिवदन्योन्यात्मतया ध्यानमात्रस्य विधानान्न वस्तुतो निकृष्टतेत्याह-**नेत्यादिना।** ईश्वरे जीवतादात्म्यस्याऽऽरोप्योपास्यत्वान्नेश्वरस्योत्कर्षनिवृत्तिरित्यर्थः। वचनादुभयत्रोभयानुचिन्तने मदुक्तमेवाऽऽयातमिति शङ्कते-**नन्विति।** किमिह नान्तरीयकत्वेनैकत्वमपि दृढीभवतीत्युच्यते, किंवा तत्त्वमस्यादिवत्तदेवोपपिश्यत इति तत्राऽऽद्यं प्रत्याह--**न वयमिति।** न द्वितीयो ध्यानविधिपरत्वाद्वाक्यस्येत्याह-**किं तर्हीति।** इहेत्युदाहरणोक्तिः। एकत्वज्ञानस्यापीह मानात्तत्परत्वं किं न स्यात्तत्राऽऽह-**फलतस्त्विति।** अर्थादित्यर्थः। कथमुपास्तिपरत्वेऽर्थादपि तद्दृढीकरणं तत्राऽऽह-**यथेति।** अन्यपरस्यापि मानान्तराविरुद्धेऽर्थे स्यान्मानत्वमित्यर्थः। उभयोच्चारणसामर्थ्यसिद्धमुपसंहरति-**तस्मादिति।** व्यतिहारानुचिन्तनकार्यताकीर्तनस्य पादसंगतिं सूचयति-**समाने चेति।** यत्रयत्राहंग्रहेणोपास्तिस्तत्रतत्रेति यावत्। उभयरूपमतिकरणे सत्येकत्वमर्थतो दृढीभवतीति वक्तुमितीत्युक्तम्॥३७॥(२३)॥ जीवब्रह्मणोरन्योन्यात्मत्वोक्तमेदाद्विरूपा मतिरनुष्ठेयेत्युक्तम्। संप्रति जयतीमाँल्लोकान्हन्ति पाप्मानमिति च फलोक्तिभेदाद्विद्याभेदमाशंक्योक्तम्--**सैवेति।**

"स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म" [ बृ० ५ । ४ । १ ] इत्यादिना वाजसनेयके सत्यविद्यां सनामाक्षरोपासनां विधायानन्तरमाम्नायते—"तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः" [ बृ० ५ । ५ । २ ] इत्यादि । तत्र संशयः—किं द्वे एते सत्यविद्ये—किं वैकैवेति। द्वे इति तावत्प्राप्तम्—भेदेन हि फलसम्बन्धो भवति "जयतीमाँल्लोकान्" [ बृ० ५ । ४ । १ ] इति पुरस्तात्, "हन्ति पाप्मानं जहाति च य एवं वेद" [ बृ० ५ । ५ । ३ ] इत्युपरि-

रत्नप्रभा ।

व्यापकं यक्षं पूज्यं भौतिकेषु प्रथमजमेतत् सच्च त्यच्चेति—सत्यं ब्रह्म हिरण्यगर्भाख्यं वेद उपास्ते, तस्य लोकजयः फलमित्यर्थः । सत्यमिति नाम त्र्यक्षरं—सत् त्यमिति । तत्र प्रथमोत्तमेक्षरे सत्यम् । मध्यस्थमक्षरमनृतमुभयतः सत्येन संपुटितत्वात् सत्यप्रायमेव भवतीति नामाक्षरोपासना सत्यविद्याङ्गत्वेनोक्ता । यत् पूर्वप्रकृतं हृदयाख्यं तत् संप्रयुक्तयक्षत्वादिगुणकं सोऽसौ आदित्यमण्डलेऽक्षिणि च पुरुषस्तस्याहरित्यहमिति च नामद्वयज्ञानात् पापक्षयः फलमित्यर्थः ॥ अत्र पूर्वोत्तरवाक्ययोः फलभेदश्रुतेः प्रकृताकर्षणाच्च संशयमाह—तत्रेति ॥ पूर्वपक्षे—गुणानां व्यवस्थयानुष्ठानं सिद्धान्ते—त्वनुष्ठानैक्यमिति फलम् ॥ यथा जीवेशयोरन्योऽन्यात्मत्वप्रतिश्रुतिभेदात् वैरूप्यमुक्तं, तथात्र फलश्रुतिभेदाद् विद्याभेद इति दृष्टान्तेन पूर्वपक्षयति—द्वे इति ॥ विशेष्यब्रह्ममात्राकर्षमयुक्तम् । तद्यत्तदिति सर्वनामभिः पूर्वोक्तगुण-

भामती ।

मस्य परामृशति । तत्तदाऽग्रे आस बभूव । किं तदित्यत आह—सत्यमेव । सच्च मूर्तं त्यच्चामूर्तं च सत्यम् । तदुपासकस्य फलमाह—स यो हैतमिति । यः प्रथमजं यक्षं पूज्यं वेद । कथं वेदेत्यत आह—सत्यं ब्रह्मेतीति । स जयतीमान् लोकान् । किंच, जितो वशीकृत इनुशब्द इत्थं शब्दस्यार्थे वर्तते । विजेतव्यत्वेन बुद्धिसंनिहितं शत्रुं परामृशति—असाविति । असद्भवेन्नश्येत् । उक्तमर्थं निगमयति—य एवमेतदिति । एवं विद्वान्कस्माज्जयतीत्यत आह—सत्यमेव यस्माद्ब्रह्मेति । अतस्तदुपासनात् फलोत्पादोऽपि सत्य इत्यर्थः । तद्यत्तत्सत्यं किमसौ । अत्रापि तत्पदाभ्यां रूपप्रकारौ परामृष्टौ । कस्मिन्नालम्बने तदुपासनीमित्यत उत्तरम्—स आदित्यो य एष इत्यादिना तस्योपनिषदहरहमिति । हन्ति पाप्मानं जहाति च य एवं वेदेत्यन्तेन। उपनिषद् रहस्यं नाम । तस्य निर्वचनं—हन्ति पाप्मानं—जहाति चेति । हन्तेर्जहातेर्वा रूपमेतत् । तथा च निर्वचनं कुर्वन्फलं पापहानिमाहेति। तमिमं विषयमाह भाष्यकारः—यो वै हैतमिति।सनामाक्षरोपासनामिति । तथा च श्रुतिः—'तदेतदक्षरं सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमो-

आनन्दगिरीय—न्यायनिर्णयः ।

सत्यविद्यामुदाहरति—स यो हीति । अविशेषेणाधिकारी सर्वनामभ्यामुक्तः । उपास्यप्रसिद्ध्यर्थो हशब्दः । एतदिति बुद्धिस्थमुपास्यं परामृश्यते । तस्य व्यापकत्वमाह—महदिति । यक्षं पूज्यं प्रथमजं भौतिकानां मध्ये प्रथमं जातं सच्च त्यच्चेति सत्यं ब्रह्म हिरण्यगर्भाख्यं वेदोपास्ते तस्य लोकजयः फलमित्यर्थः । तदेतदक्षरं सत्यमिति स इत्येकमक्षरमित्यादिना सत्यनामविशिष्टमुपासनमुक्तमित्याह—सनामेति । तत्तत्र ब्रह्मणो हृदयात्मत्वे सिद्धे यत्तद्ब्रह्म सत्यं हृदयाख्यं सोऽसावादित्य इति योजना । विशेष्यादित्यवशेन स इत्युक्तम् । तस्य मण्डलमात्रत्वं व्यावर्तयति—य एष इति। तस्यैवाऽऽध्यात्मिकत्वमाह—यश्चेति । वाक्यद्वये श्रुतां सत्यविद्यां विषयीकृत्य फलभेदात्प्रकृताकर्षणाच्च संशयमाह—तत्रेति । विद्याभेदाभेदनिरूपणद्वारा वाक्यार्थधीहेतूक्तेरत्र पादादिसंगतिः । पूर्वपक्षे गुणव्यवस्था सिद्धान्ते तदव्यवस्थेत्यभिप्रेत्य पूर्वपक्षयति—द्वे इति । सत्यनामाक्षरत्रयविशिष्टादहरहंगुणविशिष्टस्य विलक्षणतया रूपभेदाद्विद्याभेद इत्यर्थः । तत्रैव फलसंयोगभेदं हेत्वन्तरमाह—भेदेनेति । तद्य-

ष्टात् । प्रकृताकर्षणं तूपास्यैकत्वादिति ॥ एवं प्राप्ते ब्रूमः-एकैवेयं सत्यविद्येति ॥ कुतः ॥ "तद्यत्तत्सत्यम्" इति प्रकृताकर्षणात् ॥ ननु विद्याभेदेऽपि प्रकृताकर्षणमुपास्यैकत्वादुपपद्यत इत्युक्तम् ॥ नैतदेवम् ॥ यत्र हि विस्पष्टात्कारणान्तराद्विद्याभेदः प्रतीयते, तत्रैतदेवं स्यात् । अत्र तूभयथा सम्भवे "तद्यत्तत्सत्यम्" इति प्रकृताकर्षणात्पूर्वविद्यासम्बद्धमेव सत्यमुत्तरत्राकृष्यत इत्येकविद्यात्वनिश्चयः ॥ यत्पुनरुक्तं फलान्तरश्रवणाद्विद्यान्तरमिति ॥ अत्रोच्यते ॥ तस्योपनिषदहरहमिति चाङ्गान्तरोपदेशस्य स्तावकत्वमिदं फलान्तरश्रवणमित्यदोषः ॥ अपि चार्थवादादेव फले कल्पयितव्ये, सति विद्यैकत्वे चावयवेषु श्रूयमाणानि बहून्यपि फला-

रत्नप्रभा ।

विशिष्टं ब्रह्म आकृष्यादित्याक्षिस्थानादिगुणविधानात् । तथा च वाक्यादेव विद्यैक्यसिद्धिरिति सिद्धान्तयति-एकैवेति ॥ यथा दहरशाण्डिल्यविद्ययोर्ब्रह्मैक्यप्रत्यभिज्ञानमात्रं, तथात्र नेत्याह-नैतदिति ॥ कारणान्तरं-प्रकरणभेदादिकम् । एवं विद्याभेदेऽपि एतद् उपासकज्ञानं स्यात् । अत्र तूभयथा सम्भवे विद्यैक्यनानात्वसंशये सत्यमित्युपास्यरूपैक्यज्ञानाद् विद्यैक्यनिश्चय इत्यक्षरार्थः । असत्यपवादकारणे रूपैक्यात् विद्यैक्योत्सर्गसिद्धिः । न च फलभेदापवादः । अङ्गे फलश्रुतेः । स्तुतिमात्रतया फलभेदासिद्धिरित्याह—यत्पुनरित्यादिना॥ किञ्च यत्र प्रधानविधावेवङ्काम इति फलं श्रुतं, तत्र प्रधानफलेनैवाङ्गानां फलाकांक्षानिवृत्तेरङ्गे फलश्रुतेः स्तुतिमात्रत्वम्। इह तु प्रथमजं सत्यं ब्रह्मेति वेदेति प्रधानविद्याविधिस्थत्वं लोकजयफलस्याभ्युपेत्यास्माभिर्नामरूपांगस्य फलश्रुतेः स्तुतित्वमुक्तम् ॥ वस्तुतस्तु प्रधानविधावप्येवङ्कामपदाभावाद्रात्रिसत्रन्यायेन फले कल्पनीये सति प्रधाने तदङ्गे वा यत्किञ्चित् फलं श्रुतं, तस्य सर्वस्यापि श्रुतत्वाविशेषाज्जातेष्टिफलन्यायेन समुचित्यैकप्रधानफलत्वकल्पनात् फलभेदोऽसिद्ध इत्याह-अपि चेति ॥ सूत्रं योज-

भामती ।

त्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमुभयतः सत्येन परिगृहीतं सत्यभूयमेव भवति नैवंविद्वांसमनृतं

आनन्दगिरीय-न्यायनिर्णयः ।

दितिप्रकृताकर्षणाद्ब्रह्मणः सत्यनामाक्षरविशिष्टस्योत्तरत्र स्थानगुणसंबन्धकथनाद्रूपैक्ये कुतो विद्यानानात्वं तत्राऽऽह—प्रकृतेति। फलभेदस्योक्तत्वान्नित्यकाम्यदर्शपूर्णमासवदनुबन्धाभेदेऽपि विद्यानानात्वमिति भावः। विद्याभेदाद्गुणव्यवस्थेति पक्षमनूद्य सैवेति सूत्रावयवेन सिद्धान्तमाह-एवमिति । तत्र हेतुं हिशब्दसूचितं प्रश्नपूर्वकमाह-कुत इति । खल्वेतस्यैवाक्षरस्योपव्याख्यानमितिवद्विद्याभेदेऽपि प्रकृताकर्षणं स्यादिति शङ्कते-नन्विति । तत्र कारणान्तरादपवादाद्विद्याभेदेऽपि प्रकृते तदभावात्तच्छब्देन प्रकृतग्रहादभेदेन प्रत्यभिज्ञानाद्विद्यैक्यमित्याह-नैतदिति । खल्वेतस्येत्यादि यत्रेत्युक्तम् । कारणान्तरं फलभेदादि । एतदिति प्रकृताकर्षणमुक्तम् । एवमिति तस्य विद्यैक्यव्यभिचारित्वमिति भेदः । अत्रेति सत्यविद्योच्यते । उभयथा संभवो भेदाभेदाभ्यामुपपत्तिः । प्रकृते फलसंयोगभेदो भेदोपपादकोऽस्तीत्युक्तं तत्राऽऽह-यत्पुनरिति । प्रशंसार्थवादकत्वेनास्य फलविधित्वाभावान्न फलसंयोगभेदसिद्धिरित्याह-अत्रेति। इतश्च फलभेदाद्विद्याभेदो नात्रेत्याह-अपि चेति । विध्युद्देशे फलान्तराश्रुते रात्रिसत्रवत्फले कल्प्ये सत्यगृहीतविशेषतया सर्वस्यापि फलस्य तत्संबन्धिताकल्पनाच्च फलभेदाद्विद्याभेदाशंकेत्याह-अथेति । अपवादरहितं हेतु-

१ रात्रिसत्रन्यायः-[ ( जै० सू० ४ । ३ ) ( क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ॥ १७ ॥ फलमात्रेयो-निर्देशादश्रुतौ ह्यनुमानं स्यात् ॥ १८ ॥ अङ्गेषु स्तुतिः परार्थत्वात् ॥ १९ ॥ ] ।

न्यवयविन्यामेव विद्यायामुपसंहर्तव्यानि भवन्ति ॥ तस्मात्सैवेयमेका सत्यविद्या तेनतेन विशेषेणोपेताऽऽम्नायत इत्यतः सर्व एव सत्यादयो गुणा एकस्मिन्प्रयोगे उपसंहर्तव्याः ॥ केचित्पुनरस्मिन्सूत्रे इदं वाजसनेयकमक्ष्यादित्यपुरुषविषयं वाक्यं, छान्दोग्ये च—"अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" [ छां० १ । ६ । ६ ] "अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते" [ छां० ४ । १५ । १ ] इत्युदाहृत्य सैवेयमक्ष्यादित्यपुरुषविषया विद्योभयत्रैकेति कृत्वा सत्यादिगुणान्वाजसनेयिभ्यः छन्दोगानामुपसंहार्यान्मन्यन्ते ॥ तन्न साधु लक्ष्यते ॥ छान्दोग्ये हि कर्मसम्बन्धिनीयमुद्गीथव्यपाश्रया विद्या विज्ञायते ॥ तत्र ह्यादिमध्यावसानेषु कर्मसम्बन्धिचिह्नानि भवन्ति—"इयमेवर्गग्निः साम" [ छां० १ । ६ । १ ] इत्युपक्रमे "तस्य ऋक् च साम च गेष्णौ तस्मादुद्गीथः" [ छां० १ । ६ । ८ ] इति मध्ये "य एतदेवं विद्वान्साम गायति साम गायति" ॥

रत्नप्रभा ।

यति—तस्मादिति ॥ एकदेशिव्याख्यामुद्भाव्य दूषयति—केचिदित्यादिना ॥ छान्दोग्ये कर्माङ्गोद्गीथे हिरण्यपुरुषदृष्टिरित्यत्र लिङ्गमाह—तत्रेति ॥ पृथिव्यग्न्यात्मना दृष्टे ऋक्सामे गेष्णौ ॥ तस्मात् ऋक्सामगेष्णत्वात्, पुरुष उद्गीथ इति । एवं विद्वान् उद्गाता कर्मफलसमृद्धिसमर्थः ॥ इति श्रुत्यर्थः ॥ सत्यविद्या तु न कर्माङ्गाश्रि-

भामती ।

हिनस्ति' इति । तीतीकारानुबन्ध उच्चारणार्थः । निरनुबन्धस्तकारो द्रष्टव्यः । अत्र हि प्रथमोत्तमे अक्षरे सत्यं मृत्युरूपाभावात् । मध्यतो मध्येऽनृतमनृतं हि मृत्युः । मृत्य्वनृतयोस्तकारसाम्यात् । तदेतदनृतं मृत्युरूपमुभयतः सत्येन परिगृहीतम् । अन्तर्भावितं सत्यरूपाभ्याम् । अतोऽकिंचित्करं तत्सत्यभूयमेव सत्यबाहुल्यमेव भवति । शेषमतिरोहितार्थम् । सेयं सत्यविद्यायाः सनामाक्षरोपासनता । यद्यपि तद्यत्सत्यमिति प्रकृतानुकर्षेणाभेदः प्रतीयते तथापि फलभेदेन भेदः साध्यभेदेनेव नित्यकाम्यविषययोर्दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति शास्त्रयोः सत्यप्यनुबन्धाभेदे भेद इति प्राप्ते प्रत्युच्यते—एकैवेयं विद्या तत्सत्यमिति प्रकृतपरामर्शादभेदेन प्रत्यभिज्ञानात् । न च फलभेदः । तस्योपनिषदहरहमिति तस्यैव यदङ्गान्तरं रहस्यनाम्नोपासनं तत्प्रशंसार्थोऽर्थवादोऽयं न फलविधिः । यदि पुनर्विद्याविधावधिकारश्रवणाभावात्तत्कल्पनायामार्थवादिकं फलं कल्प्येत ततो जातेष्टाविवागृह्यमाणविशेषतया संवलिताधिकारकल्पना ततश्च समस्तार्थवादिकफलयुक्तमेकमेवोपासनमिति सिद्धम् । परकीयं व्याख्यानमुपन्यस्यति—केचित्पुनरिति । वाजसनेयकमप्यक्ष्यादित्यविषयं छान्दोग्यमपीत्युपास्याभेदादभेदः । ततश्च वाजसनेयोक्तानां सत्यादीनामुपसंहार इत्यत्रार्थे सैव हि सत्यादय इति सूत्रं व्याख्यातं तदेतद्दूषयति—तन्न साध्विति । (ज्योतिष्टोम)कर्मसंबन्धिनीयमुद्गीथव्यपाश्रयेति । अनुबन्धाभेदेऽपि साध्यभेदाद्भेद

आनन्दगिरीय—न्यायनिर्णयः ।

मुक्त्वा प्रतिज्ञातं विद्यैक्यमुपसंहरति—तस्मादिति । अवशिष्टं सूत्रावयवं व्याकुर्वन्पूर्वापरवाक्यार्थविशेषणान्येकीकृत्य ध्यानं कार्यमित्याह—इत्यत इति । परकीयव्याख्यामुत्थापयति—केचिदिति । तद्दूषयति—तन्नेति । कर्मसंबन्धिनीत्यत्र कर्म ज्योतिष्टोमस्तदंगभूतोद्गीथव्यपाश्रयत्वमेव विद्याया विशदयति—तत्रेति। उद्गीथशब्दवाच्यर्क्सामगेष्णत्वात्परमात्मोद्गीथशब्दवाच्य इत्याह—तस्मादिति । अथ य एषोऽन्तरादित्य इत्यस्याऽऽदिमध्यावसानम् ऋक्सामयोः कर्मांगयोः पृथिव्यादिदृष्टिविशिष्टयोर्ध्येयत्वदृष्टेरादित्याक्षिपुरुषविशिष्टकर्मांगोद्गीथध्यानं छान्दोग्येऽभीष्टमित्यर्थः । वाजसनेयकेऽपि कर्मांगावबद्धमेव ध्यानमिष्टमिति न विद्या-

[छां० १।७।९] इत्युपसंहारे॥ नैवं वाजसनेयके किञ्चित्कर्मसम्बन्धि चिह्नमस्ति॥ तत्र प्रक्रमभेदाद्विद्याभेदे सति गुणव्यवस्थैव युक्तेति ॥ ३८ ॥ इति सत्याद्यधिकरणम्॥ २४॥

## कामादीतरत्र तत्र चायतनादिभ्यः॥ ३९॥ (२५)॥

"अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः" [छां० ८।१।१] इति प्रस्तुत्य छन्दोगा अधीयते-"एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः" [छां० ८।१।५] इत्यादि॥ तथा वाजसनेयिनः-"स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी" [बृ० ४।४।२२] इत्यादि ॥ तत्र विद्यैकत्वं परस्परगुणोपयोगश्च किं वा नेति संशये विद्यैकत्वमिति॥ तत्रेदमुच्यते-कामादीति। सत्यकामादीत्यर्थः। यथा देवदत्तो, दत्तः, सत्यभामा, भामेति। यदेतच्छान्दोग्ये हृदयाकाशस्य सत्यकामत्वादिगुणजातमुपलभ्यते, तदितरत्र वाजसनेयके-"स वा एष महानज आत्मा" इत्यत्र सम्बध्येत॥ यच्च वाजसनेयके वशित्वाद्युपलभ्यते, तदपीतरत्रच्छान्दोग्ये "एष आत्माऽपहतपाप्मा" इत्यत्र सम्बध्येत॥ कुतः॥ आयतनादिसामान्यात्-समानं ह्युभयत्रापि हृदयमायतनम्। समानश्च वेद्य ईश्वरः। समानश्च तस्य सेतुत्वं लोकासम्भेदप्रयोजनमित्येवमादि बहुतरं

रत्नप्रभा।

तेत्याह-नैवमिति॥ अङ्गविद्यातः स्वतन्त्रहिरण्यगर्भविद्याया भेदान्न गुणोपसंहार इत्यर्थः॥३८॥(२४)॥ कामादीतरत्र॥ सगुणनिर्गुणविद्ययोः श्रुताः सत्यकामादयो वशित्वादयश्च गुणा मिथ उपसंहर्तव्या न वेत्युपसंहारस्य फलभावाभावाभ्यां सन्देहे सत्यविद्याया एकत्वाद्गुणसाङ्कर्येऽप्यत्र विद्ययोः सगुणनिर्गुणरूपभेदेन भेदात् निर्गुणविद्यायां गुणोपसंहारस्य फलाभावाच्चानुपसंहार इति बहिरेव प्राप्ते सिद्धान्तयति-तत्रेदमि-

भामती।

इति विद्याभेदादनुपसंहार इति॥३८॥(२४)॥ कामादीतरत्र तत्र चायतनादिभ्यः। छान्दोग्यवाजसनेय-

आनन्दगिरीय-न्यायनिर्णयः।

नानात्वमित्याशंक्याऽऽह-नैवमिति । नित्यकाम्याग्निहोत्रयोर्धात्वर्थाभेदेऽपि साध्यभेदेन भेदवदुपास्यैक्येऽपि फलभेदेन विद्ययोर्भेदे गुणानुपसंहार इत्युपसंहरति-तत्रेति ॥ ३८ ॥ ( २४ ) ॥ तयत्तत्सत्यमितिप्रकृताकर्षणाद्रूपाभेदाद्गुणोपसंहारश्चेत्क्वचिदाकाशस्योपास्यत्वं क्वचित्तदाश्रयस्य ज्ञेयतेति रूपभेदाद्गुणानुपसंहारः स्यादित्याशंक्याऽऽह-कामादीति । सगुणनिर्गुणविद्याविषयं वाक्यमुदाहरति-अथेति। परावरविद्यागता वशित्वादयः सत्यकामादयश्च गुणा विषयास्ते किमन्योन्यत्र नोपसंहर्तव्याः, किंत्रोपसंहर्तव्या इत्युभयत्रोभयेषामुपयोगभावाभावाभ्यां संशये ध्यानस्तुत्युपयोगित्वेन गुणानामन्योन्यत्रोपसंहारोक्त्या वाक्यार्थधीतद्धेतुचिन्तनात्पादादिसंगतिः । पूर्वपक्षे क्वचिदाकाशस्य ध्येयत्वं क्वचित्तदाश्रयस्य ज्ञेयतेति विशेषसिद्धिः। सिद्धान्तेऽपि ब्रह्मण एवाऽऽकाशशब्दत्वाद्युक्तविशेषोपपत्तिरित्यंगीकृत्य सिद्धान्तमाह-तत्रेति। अवयववाचकेनावयविग्रहे दृष्टान्तमाह-यथेति । पदार्थमुक्त्वा वाक्यार्थमाह-यदेतदिति । हेतुमुक्तं विवृणोति-समानं हीति । आदिपदेनाऽऽत्मत्वादि गृह्यते । बहुतरसाम्यदर्शनादितरेतरगु-

सामान्यं दृश्यते ॥ ननु विशेषोऽपि दृश्यते—छान्दोग्ये हृदयाकाशस्य गुणयोगः । वाजसनेयके त्वाकाशाश्रयस्य ब्रह्मण इति ॥ न ॥ "दहर उत्तरेभ्यः" [ व्या० सू० १ । ३ । १४ ] इत्यत्र छान्दोग्येऽप्याकाशशब्दं ब्रह्मैवेति प्रतिष्ठापितत्वात् । अयं त्वत्र विद्यते विशेषः—सगुणा हि ब्रह्मविद्या छान्दोग्ये उपदिश्यते—"अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्" [ छां० ८ । १ । ६ ] इत्यात्मवत्कामानामपि वेद्यत्वश्रवणात् ॥ वाजसनेयके तु निर्गुणमेव परं ब्रह्मोपदिश्यमानं दृश्यते—"अत ऊर्ध्वं विमोक्षायैव ब्रूहि" [ बृ० ४ । ३ । १४ ] "असङ्गो ह्ययं पुरुषः" [ बृ० ४ । ३।१५ ] इत्यादिप्रश्नप्रतिवचनसमन्वयात् ॥ वशित्वादि तु तत्स्तुत्यर्थमेव गुणजातं वाजसनेयके सङ्कीर्त्यते । तथा चोपरिष्टात्—"स एष नेतिनेत्यात्मा" [ बृं० ३ । ९ । २६ ] इत्यादिना निर्गुणमेव ब्रह्मोपसंहरति । गुणवतस्तु ब्रह्मण एकत्वाद्विभूतिप्रदर्शनायायं गुणोपसंहारः सूत्रितो नोपासनायेति द्रष्टव्यम् ॥ ३९ ॥ इति कामाद्यधिकरणम् ॥ २५ ॥

---

रत्नप्रभा ।

त्यादिना ॥ एवं विद्याभेदे स्फुटे कथं गुणोपसंहारस्तत्राह—गुणवतस्त्विति ॥ भिन्नविद्यास्थानामपि गुणानामायतनादिसाम्येन निर्गुणस्थले बुद्धिस्थानां स्तुत्यर्थमुपसंहारो युक्तः । ज्ञानस्तुतिप्रकर्षस्याकांक्षितत्वात् । यत्र कचिद् दृष्टगुणैः स्तुतेः कर्तुं योग्यत्वात् ॥ यद्यपि सगुणस्थसत्यकामादिषु निर्गुणस्थगुणा अन्तर्भूता एव । तथापि नोपसंहारोक्तेर्वैयर्थ्यं, निर्गुणस्तावकत्वेन श्रुतगुणानामन्यत्राप्यध्येयत्वमिति शङ्का-

भामती ।

विद्ययोर्यद्यपि सगुणनिर्गुणत्वेन भेदः । तथाहि छान्दोग्ये—'अथ य इहात्मानमनुविद्य व्रजन्ति एतांश्च सत्यान्कामान्' इत्यात्मवत्कामानामपि वेद्यत्वं श्रूयते । वाजसनेये तु निर्गुणमेव परं ब्रह्मोपदिश्यते 'विमोक्षाय ब्रूहि' इति तथापि तयोः परस्परगुणोपसंहारः । निर्गुणायां तावद्विद्यायां ब्रह्मस्तुत्यर्थमेव सगुणविद्यासंबन्धिगुणोपसंहारः संभवी । सगुणायां च यद्यप्याध्यानाय न वशित्वादिगुणोपसंहारसंभवः । न हि निर्गुणायां विद्यायामाध्यातव्यत्वेनैते चोदिता येनात्राध्येयत्वेन संबध्येरन्नपि तु सत्यकामादिगुणनान्तरीयकत्वेनैतेषां प्राप्तिरित्युपसंहार उच्यते । एवं व्यवस्थित एष संक्षेपोऽधिकरणार्थस्य—साम्यबाहुल्येऽप्येकत्राकाशाधारत्वस्यापरत्र चाकाशतादात्म्यस्य श्रवणाद्भेदे विद्ययोर्न परस्परगुणोपसंहार इति पूर्वपक्षः । राद्धान्तस्तु सर्वसाम्यमेवोभयत्राप्यात्मोपदेशादाकाशशब्देनैकत्रात्मोक्तोऽन्यत्र च दहराकाशाधारः स एवोक्त इति सर्वसाम्याद्ब्रह्मण्युभयत्रापि सर्वगुणोपसंहारः । सगुणनिर्गुणत्वेन तु विद्याभेदेऽपि गुणोपसंहारव्यवस्था दर्शिता ।

आनन्दगिरीय—न्यायनिर्णयः ।

णोपसंहार इत्यर्थः । अस्याधिकरणस्य पूर्वपक्षमाह—नन्विति । नायं विशेषस्तत्राप्याकाशस्य ब्रह्मत्वादित्याह—नेत्यादिना । सगुणनिर्गुणतया विद्याभेदादपहतपाप्मत्वादीनां वशित्वादीनां चेतरेतरत्रानुपसंहार इत्याशंक्याऽऽह—अयं त्विति । वाजसनेयकेऽपि वशित्वाद्युपदेशदर्शनाद्ब्रह्म सगुणमेवेत्याशंक्याऽऽह—स्तुत्यर्थमिति । तत्र निर्णायकत्वेन वाक्यशेषं दर्शयति—तथा चेति । कथं तर्हि गुणोपसंहारः सूत्रितस्तत्राऽऽह—गुणवतस्त्विति । साम्यबाहुल्याद्ब्रह्मणो ध्येयस्य स्तूयमानस्येतरेतरत्र संनिधानाच्च क्वचिदुपास्यत्वाय क्वचिच्च स्तुतिपौष्कल्यायाऽऽकांक्षितत्वात्तद्गुणसंयोगयोग्यत्वाच्च ब्रह्मणो वशित्वादीनामपहतपाप्मत्वादीनां चेतरेतरत्रोपसंहारः । स्तुतिर्हि दृष्टेन द्वारेण कर्तुं शक्येति सगुणविद्यासु ध्येयत्वेनोक्तानामपि

## आदरादलोपः ॥ ४० ॥ ( २६ ) ॥

**छान्दोग्ये वैश्वानरविद्यां प्रकृत्य श्रूयते "तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयꣳ स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति" [छां० ५ । १९ । १] इति । तत्र पञ्च प्राणाहुतयो विहिताः । तासु च परस्तादग्निहोत्रशब्दः प्रयुक्तः-"य एतदेवं विद्वानग्निहोत्रं जुहोति" [छां० ५ । २४ । २] इति,-"यथेह क्षुधिता बाला मातरं पर्युपासते एवꣳ सर्वाणि भूतान्यग्निहोत्रमुपासते" [छां० ५ । २४ । ५] इति च ॥ तत्रेदं विचार्यते-किं भोजनलोपे लोपः प्राणाग्निहोत्रस्य-उत-अलोप इति ॥ "तद्यद्भक्तम्" इति भक्तागमनसंयोगश्रवणात् । भक्तागमनस्य च भोजनार्थत्वात् । भो-**

---

रत्नप्रभा ।

निरासेनान्तर्भावदार्ढ्यार्थत्वादित्यनवद्यम् ॥ ३९ ॥ ( २९ ) ॥ **आदरादलोपः ॥** अत्र यच्छब्दाग्निहोत्रशब्दाभ्यां संशयमाह-**तत्रेदं विचार्यत इति ॥** वैश्वानरोपासकेनातिथिभोजनात् प्राक् कार्यत्वेन विद्याङ्गप्राणाग्निहोत्रविचारात् पादसङ्गतिः । **पूर्वपक्षे** भोजनलोपेऽपि द्रव्यान्तरेण प्राणाग्निहोत्रानुष्ठानं, **सिद्धान्ते** तल्लोप इति भेदः । **ननु** यद्भक्तमिति यच्छब्देन भोजनाक्षिप्तमक्तमनूद्य तद्धोमीयमिति होमसंयोगविधानादाक्षेपकभोजनलोपे तदाक्षिप्तभक्ताश्रितहोमलोप इति सिद्धान्ती शङ्कते-**तद्यदिति ॥** निर्गुणस्योपास्तिलोपेऽपि स्तुत्यर्थगुणस्थैर्याद् भोजनलोपेऽपि प्राणाग्निहोत्रस्यादरेण स्तुतिनिर्वाहार्थमलोप इति दृष्टा-

भामती ।

तस्मात्सर्वमवदातम् ॥३९॥(२९)॥ **आदरादलोपः** । अस्ति वैश्वानरविद्यायां तदुपासकस्यातिथिभ्यः पूर्वं भोजनम् । तेन यद्यपीयमुपासनागोचरा न चिन्ता साक्षात्तथापि तत्संबद्धप्रथमभोजनसंबन्धादस्ति संगतिः । विचारगोचरं दर्शयति-**छान्दोग्ये वैश्वानरविद्यां प्रकृत्येति** । विचारप्रयोजकं संदेहमाह-**किं भोजनलोप इति** । अत्र पूर्वपक्षाभावेन संशयमाक्षिपति-**तद्यद्भक्तमिति ॥ भक्तागमनसंयोगश्रवणादिति** । उक्तं खल्वेतत्प्रथम एव तन्त्रे 'पदकर्माप्रयोजकं नयनस्य परार्थत्वात्' इत्यनेन । यथा सोमक्रयार्थानीयमा-

आनन्दगिरीय-न्यायनिर्णयः ।

गुणानां निर्गुणविद्यायां युक्तः स्तुत्यर्थत्वेनान्वयः । ध्येयत्वं त्वपूर्वविध्येकगम्यम् । यत्र वशित्वादयः श्रुता न तत्रैषां ध्येयत्वेन विधानमित्यन्यत्र गतानामपि न ध्येयत्वम् । स्तुत्यर्थत्वं तु स्यात्तदपि न शब्दतस्तत्रैषां नयनमपेक्षते सत्यकामत्वादिसामर्थ्यादेव सर्वेश्वरत्वादिसिद्धिः । अतोऽन्तर्भावमात्रमुपसंहार इति भावः ॥ ॥ ३९ ॥ ( २९ ) ॥ उपास्तिलोपेऽपि स्तुत्यर्थत्वेन गुणालोपवत्पूर्वोऽतिथिभ्य इत्यादिश्रुत्युपपत्तये भोजनलोपेऽपि प्राणाग्निहोत्रालोप इति चोदयति-**आदरादिति** । वैश्वानरविद्यागतं प्राणाग्निहोत्रं विषयत्वेनोपन्यस्यति-**छान्दोग्य इति** । स इति वैश्वानरविद्याविदुक्तः । श्रुतितात्पर्यार्थं संगृह्णाति-**तत्रेति** । संदेहार्थं शब्दान्तरप्रयोगं पूर्वपक्षबीजमाह-**तास्विति** । न कश्चिदपि पाप्मा तं स्पृशतीति यच्छब्दस्य संबन्धः । प्राणाग्निहोत्रे यच्छब्दाग्निहोत्रशब्दाभ्यां संशयमाह-**तत्रेति** । उपास्तिविचारप्रस्तावेन तद्गतप्रथमभोजनाश्रितविचारद्वारा वाक्यार्थधीहेतुविचारसंक्रान्तेरस्ति पादादिसंगतिः । पूर्वपक्षे प्रतिनिधिन्यायेन प्राणाग्निहोत्रकार्यताध्रौव्यम् । सिद्धान्ते तदनवतारात्तदनावश्यकत्वमित्याशयेन पूर्वपक्षसूत्रव्यावर्त्यां सिद्धान्ताशङ्कामुत्थापयति-**तद्यदिति** । भक्तागमनसंबन्धात्प्राणाग्निहोत्रस्येति सम्बन्धः । न च होमस्य भक्तागमनप्रयोजकत्वं भोजनप्रयुक्तभक्तोपजीवित्वादतस्तल्लोपे लोपात्पूर्वपक्षाभावादधिकरणमनारभ्यमित्यर्थः ।

जनलोपे लोपः प्राणाग्निहोत्रस्येति ॥ एवं प्राप्ते न लुप्येत इति तावदाह॥ कस्मात् ॥ आदरात् । तथाहि-वैश्वानरविद्यायामेव जाबालानां श्रुतिः-"पूर्वोऽतिथिभ्योऽश्नीयाद्यथा वै स्वयमहुत्वाऽग्निहोत्रंपरस्य जुहुयादेवं तद्" इत्यतिथिभोजनस्य प्राथम्यं निन्दित्वा स्वामिभोजनं प्रथमं प्रापयन्ती प्राणाग्निहोत्रे आदरं करोति । या हि न प्राथम्यलोपं सहते नतरां सा प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेतेति मन्यते ॥ ननु भोजनार्थभक्तागम-

रत्नप्रभा ।

न्तेन पूर्वपक्षसूत्रेण परिहरति-एवं प्राप्ते इति ॥ एवं तदिति । स्वयं प्राणाग्निहोत्रमकृत्वातिथीनां तत्करणमित्यर्थः ॥ उक्तं स्मारयित्वा परिहरति-नन्वित्यादिना ॥ यथा कुण्डपायिनां सत्रगते मासाग्निहोत्रे अग्निहोत्रशब्दाद्गौणान्नित्याग्निहोत्रवाचकान्नित्याग्निहोत्रधर्माणां पयोद्रव्यादीनां प्राप्तिः, तथेहापि प्राणाहुतिष्वग्निहोत्रशब्दात् पयोद्रव्यादीनामुत्सर्गतः प्राप्तौ सत्यां भोजनार्थभक्तद्रव्यविधिनाऽपवादः कृतः ॥ अतो भक्तविधेरपवादार्थत्वाद् भोजनलोपे भक्ताख्यगुणस्याङ्गस्य लोपेऽपि न मुख्यस्याग्निहोत्रस्य लोपः । अपवादाभावे उत्सर्गप्राप्तपयआदिना तस्य निष्पत्तिसम्भवादिति प्राप्तमित्यर्थः । "गुणलोपे न मुख्यस्य"[१]

भामती ।

नैकहायनीसप्तमपदपांशुग्रहणमप्रयोजकं न पुनरेकहायन्या नयनं प्रयोजयति । तत्कस्य हेतोः । सोमक्रयेण तन्नयनस्य प्रयुक्तत्वात्तदुपजीवित्वात्सप्तमपदपांशुग्रहणस्येति । तथेहापि भोजनार्थभक्तागमनसंयोगात्प्राणाहुतेर्भोजनाभावे भक्तं प्रत्यप्रयोजकत्वमिति नास्ति पूर्वपक्ष इत्यपूर्वपक्षमिदमधिकरणमित्यर्थः । पूर्वपक्षमाक्षिप्य समाधत्ते-एवं प्राप्ते, न लुप्येतेति तावदाह । तावच्छब्दः सिद्धान्तशङ्कानिराकरणार्थः । पृच्छति-कस्मात् । उत्तरम्-आदरात् । तदेव स्फोरयति-तथाहीति । जाबाला हि श्रावयन्ति-'पूर्वोऽतिथिभ्योऽश्नीयात्' इति । अश्नीयादिति च प्राणाग्निहोत्रप्रधानं वचः । 'यथा हि क्षुधिता बाला मातरं पर्युपासते । एवं सर्वाणि भूतान्यग्निहोत्रमुपासते' इति वचनादग्निहोत्रस्यातिथीन्भूतानि प्रत्युपजीव्यत्वेन श्रवणात्तदेकवाक्यतयेहापि पूर्वोऽतिथिभ्योऽश्नीयादिति प्राणाहुतिप्रधानं लक्ष्यते । तदेवं सति 'यथाह वै स्वयमहुत्वाग्निहोत्रं परस्य जुहुयादित्येवं तत्' इत्यतिथिभोजनस्य प्राथम्यं निन्दित्वा स्वामिभोजनं स्वामिनः प्राणाग्निहोत्रे प्रथमं प्रापयन्ती प्राणाग्निहोत्रादरं करोति । नन्वाद्रियतामेषा श्रुतिः प्राणाहुतिं किंतु स्वामिभोजनपक्ष एव नाभोजनेऽपीत्यत आह-या हि न प्राथम्यलोपं सहते नतरां सा प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेतेति मन्यते । ईदृशः खल्वयमादरः प्राणाग्निहोत्रस्य यदतिथिभोजनोत्तरकालविहितं स्वामिभोजनं समयादपकृष्यातिथिभोजनस्य पुरस्ताद्विहितम् । तद्यदाग्निहोत्रस्य धर्मिणः प्राथम्यधर्मलोपमपि न सहते श्रुतिस्तदास्याः कैव कथा धर्मिलोपं सहत इत्यर्थः । पूर्वपक्षाक्षेपमनुभाष्य दूषयति-ननु भोजनार्थेति । यथा हि कौण्डपायिनामयनगते अग्निहोत्रे प्रकरणान्तरान्नैयमिकाग्निहोत्राद्भिन्ने

आनन्दगिरीय-न्यायनिर्णयः ।

सूत्रेण पूर्वपक्षं समादधानोऽधिकरणारम्भमुपपादयति-एवमिति । तावच्छब्दः सिद्धान्तशंकानिरासार्थः । पूर्वपक्षी प्रश्नपूर्वकं स्वं हेतुमवतारयति-कस्मादिति । आदरमेव स्फोरयति-तथाहीति। विध्यपेक्षितमर्थवादं दर्शयति-यथेति । ननु स्वामिभोजनस्य प्राथम्याभावोऽत्र निन्द्यते कथमेतावता भोजनलोपेऽपि प्राणाग्निहोत्रं न लुप्यते तत्राऽऽह-या हीति। अतिथिभोजनोत्तरकालविहितमपि स्वामिभोजनमपोह्यातिथिभोजनात्प्रागेव प्राणाग्निहोत्रलक्षणं स्वामिभोजनं प्रतिपादयन्ती श्रुतिस्तस्य प्राथम्यधर्मलोपमपि न सहते तत्र धर्मिलोपसंहननं तु दूरनिरस्तमित्यर्थः। पूर्वपक्षाक्षेपं स्मारयति-नन्विति । तद्यद्भक्तमितिवाक्यस्यान्यार्थत्वाद्भोजनलो-

१ गुणलोपे च मुख्यस्य [ १० । २ । ६३ ] इति पाठो दृश्यते निर्वापानुष्ठानाधिकरणे ।

**नसंयोगाद्भोजनलोपे लोपः प्रापितः ॥ न ॥ तस्य द्रव्यविशेषविधानार्थत्वात्-प्राकृतेऽग्निहोत्रे पयःप्रभृतीनां द्रव्याणां नियतत्वादिहाप्यग्निहोत्रशब्दात्कौण्डपायिनामयनवत्तद्धर्मप्राप्तौ सत्यां भक्तद्रव्यकतागुणविशेषवि-**

रत्नप्रभा ।

इति जैमिनिसूत्रम्। आधाने सन्ति पवमानेष्टयः,—तत्र "अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेद्" इति निर्वापः श्रुतस्तदङ्गत्वेन "अग्निहोत्रहवण्या हवींषि निर्वपेद्" इति दर्शपूर्णमासाख्यप्रकृतौ विहिताग्निहोत्रहवण्यतिदेशेन प्राप्त्या आधानकाले चाग्निहोत्राभावात् तस्या गुणभूताया लोपेऽपि मुख्यस्य निर्वापस्य न लोप इत्यर्थः । आरब्धनित्यादिकर्मणोऽवश्यानुष्ठेयत्वाच्छ्रुतद्रव्यालाभे प्रतिनिधिद्रव्येणापि कर्म कर्तव्यमिति

भामती ।

द्रव्यदेवतारूपधर्मान्तररहिततया तदाकांक्षे साध्यसादृश्येन नैयमिकाग्निहोत्रसमाननामतया तद्धर्मातिदेशेन रूपधर्मान्तरप्राप्तिरेवं प्राणाग्निहोत्रेऽपि नैयमिकाग्निहोत्रगतपयःप्रभृतिप्राप्तौ भोजनागतभक्तद्रव्यता विधीयते । न चैतावता भोजनस्य प्रयोजकत्वम् । उक्तमेतद्यथा भोजनकालातिक्रमात्प्राणाग्निहोत्रस्य न भोजनप्रयुक्तत्वमिति । न चैकदेशद्रव्यतयोत्तरार्धोत्स्विष्टकृते समवद्यतीतिवद्प्रयोजकत्वमेकदेशद्रव्यसाधनस्यापि प्रयोजकत्वात् । यथा जाघन्या पत्नीः संयाजयन्तीति पत्नीसंयाजानां जाघन्येकदेशद्रव्यजुषां जाघनीप्रयोजकत्वम् । स हि नामाप्रयोजको भवति यस्य प्रयोजकग्रहणमन्तरेणार्थो न ज्ञायते । यथा न प्रयोजकपुरोडाशग्रहणमन्तरेणोत्तरार्धं ज्ञातुं शक्यम् । शक्यं तु जाघनीवद्भक्तं ज्ञातुम् । तस्माद्यथा जाघन्यन्तरेणापि पशूपादानं परप्रयुक्तपशूपजीवनं वा खण्डशो मांसविक्रयिणो मुण्डादिवदाकृतिरुपादीयते एवं भक्तमपि शक्यमुपादातुम् । तस्मान्न भोजनस्य लोपे प्राणाग्निहोत्रलोप इति मन्यते पूर्वपक्षी । अद्भिरिति तु

आनन्दगिरीय-न्यायनिर्णयः ।

पेऽपि नास्ति लोपोऽग्निहोत्रस्येति दूषयति-**नेति** । तदेव प्रपञ्चयति—**प्राकृत इति** । इहापीति प्राणाग्निहोत्रं सप्तम्यर्थः । कौण्डपायिनामयनवदिति स्थितं भेदलक्षणे "प्रकरणान्तरे प्रयोजनान्यत्वम्" [ पू० मी० सू० २ । ३ । २४ ] कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीत्यत्र नित्याग्निहोत्रे मासगुणो वा विधीयते कर्मान्तरं वेति संदेहे प्रदेशभेदे सत्यपि नाम्ना नित्याग्निहोत्रस्य बुद्धिसंनिधापनात्तत्समभिव्याहृताख्यातस्य तत्संनिधापितार्थपरत्वान्नित्याग्निहोत्रानुवादेन मासविधिरिति प्राप्ते कालस्य पुरुषानिष्पाद्यत्वेनानुपादेयत्वाज्जुहोतीत्याख्यातेन होमानुवादेन मासविधेरयोगात्तदुद्देशेन नित्याग्निहोत्रविधेरपि तदसंनिधेरसंभवान्नाम्ना च सिद्धार्थबोधिना पूर्वापरीभूततयाऽऽख्यातेनोक्तस्यानुपस्थापनात्प्रकरणभेदे प्रयोजनस्य विधेयभावनाख्यस्यान्यत्वमिति कर्मान्तरविधिरिति तद्धर्मप्राप्ताविति सप्तमे स्थितम् "उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्" [ पू० मी०सू०७।३।१] मासमग्निहोत्रं जुहोतीत्यत्रैवाग्निहोत्रशब्दो नित्याग्निहोत्रधर्मानिहातिदिशेन्नवेति संदेहे गौणत्वाभावादग्निहोत्रशब्दस्य जुहोतिसामानाधिकरण्याविशेषादत्रापि नामधेयत्वान्नातिदिशेदिति प्राप्ते सिद्धे कर्मभेदेऽनेकार्थत्वस्यान्याय्यत्वादेकत्राग्निहोत्रशब्दस्य मुख्यत्वादन्यत्र गौणत्वान्नित्याग्निहोत्रे च नामप्रवृत्तिनिमित्तस्याग्निदेवतासम्बन्धस्य भावात्तत्रैव मुख्यत्वात्परशब्दस्य परत्र सादृश्यात्प्रवृत्तिरिति तत्सिद्ध्यर्थं नित्यधर्मानतिदिशति क्रियाया नित्याग्निहोत्रस्याभिधानं नामधेयमग्निहोत्रपदमुक्तं तत्प्रख्याधिकरणे।तस्यान्यत्र श्रवणे विधिप्रदेशो विधेयधर्मातिदेशः स्यादिति सूत्रार्थः।तथा च यथा कुंडपायिनामयनगते कर्मणि प्रकरणान्तरान्नैयमिकाग्निहोत्राद्भिन्नत्वेन सिद्धे नैयमिकाग्निहोत्रवाचकाग्निहोत्रशब्दप्रयोगात्तद्धर्मातिदेशरूपधर्मान्तरप्राप्तिः।तथा नैयमिकाग्निहोत्रे पयोघृतादीनां प्रसिद्धत्वात्प्राणाग्निहोत्रे च नित्याग्निहोत्रवाचिशब्दात्तद्धर्माणां पयःप्रभृतीनां प्राप्तौ भोजनगतभक्तद्रव्यैकताभिधानार्थं तद्यद्भक्तमिति वाक्य-

धानार्थमिदं वाक्यं "तद्यद्भक्तम्" इति ॥ अतो गुणलोपे न मुख्यस्येवं प्राप्तं–भोजनलोपेऽप्यद्भिरन्येन वा द्रव्येणाविरुद्धेन प्रतिनिधानन्यायेन प्राणाग्निहोत्रस्यानुष्ठानमिति ॥ ४० ॥ अत उत्तरं पठति–

## उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

"उपस्थिते" भोजने । "अतः" तस्मादेव भोजनद्रव्यात्प्रथमोपनिपतितात् प्राणाग्निहोत्रं निर्वर्तयितव्यम् ॥ कस्मात्॥ "तद्वचनात्" । तथाहि– "तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्" [ छां० ५ । १९ । १ ] इति सिद्धवद्भक्तोपनिपातपरामर्शेन परार्थद्रव्यसाध्यतां प्राणाहुतीनां विदधाति॥ ता अप्रयोजकलक्षणापन्नाः सत्यः कथं भोजनलोपे द्रव्यान्तरं प्रतिनि-

रत्नप्रभा ।

प्रतिनिधिन्यायः ॥ ४० ॥ सिद्धान्तयति–**उपस्थित इति** ॥ **तद्वचनादिति** । तद्धोमीयमिति तच्छब्देन भोजनार्थं सिद्धभक्तमाश्रित्य होमविधानादित्यर्थः ॥ **सिद्धवद्भक्तोपनिपातः**—प्रकृतभक्तागमनं, तस्य तच्छब्देन परामर्शो नेत्यर्थः । आश्रित्य विहिताहुतीनामाश्रयलोपे लोप एव, न द्रव्यान्तराक्षेपकत्वम् । यथाक्रतुप्रयुक्ताऽप्प्रणयनाश्रयस्य गोदोहनस्य क्रतुलोपे लोपनत्वाश्रयान्तरप्रयोजकत्वं भोजनार्थागतद्रव्योद्देशेन तद्धोमीयमित्याहुत्यभिधाने फलितमाह—**ता इति** ॥ **यदुक्तमग्निहोत्रशब्दाद् द्रव्यान्तर-**

भामती ।

प्रतिनिध्युपादानमावश्यकत्वसूचनार्थं भाष्यकारस्य ॥ ४० ॥ **उपस्थितेऽतस्तद्वचनात्** । तद्धोमीयमिति

आनन्दगिरीय–न्यायनिर्णयः।

मित्यर्थः । तथाऽऽपि भोजनार्थभक्तोपजीवित्वात्प्राणाग्निहोत्रस्य भोजनलोपे लोपः स्यात्तत्राऽऽह–**अत इति** । अग्न्याधाने पवमानेष्टिष्वग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपतीत्यादासु प्रकृतावग्निहोत्रहवण्या हविर्निर्वपेदिति विहितो हविर्निर्वापोऽतिदेशेन प्राप्तो न चाऽऽधानकालेऽग्निहोत्रमिति कुतोऽग्निहोत्रहवणी येन तन्निर्वापस्य तल्लोपे लोपप्राप्तौ दाशमिकं सिद्धान्तमाह–**गुणेति** । विकृतौ हि कार्यद्वारा पदार्थाः प्राप्नुवन्ति तेन हविःसंस्कारार्थो निर्वापः प्रथमं प्राप्तस्तद्वारा च तदङ्गमग्निहोत्रहवणी पश्चात्प्राप्नोति तेनाङ्गस्याग्निहोत्रहवण्या लोपेऽपि मुख्यस्य लोपो नास्तीति प्रकृते भोजनलोपेऽपि न लुप्यते प्राणाग्निहोत्रमित्यर्थः । प्रतिनिधिन्यायेनेत्यग्निहोत्रादिनित्यकर्मसु घृतव्रीह्याद्यलाभे कर्मोत्सर्गे प्राप्ते नित्यानामनित्यानां वाऽऽरब्धानामवश्यकार्यत्वात्प्रतिनिहितैः श्रुतैश्च क्रियमाणप्रयोगस्यावशिष्टत्वेन प्रत्यभिज्ञानात्प्रतिनिधायापि कर्म कर्तव्यमित्यधिकारलक्षणे स्थितम् । तथा च भोजनलोपेऽपि जलादिना केनापि द्रव्येण प्राणाग्निहोत्रमनुष्ठेयमित्यर्थः ॥ ४० ॥ अङ्गलोपेऽपि प्रधानस्य न लोपोऽस्तीति प्राप्ते सिद्धान्तयति–**अत इति** । तत्र प्रतिज्ञां विभजते–**उपेति** । पूर्वोऽतिथिभ्योऽश्नीयादिति श्रुत्या विशिनष्टि–**प्रथमेति** । भोजनाभावे तत्प्रयुक्तद्रवाभावेऽपि स्वतन्त्रद्रव्येण प्राणाग्निहोत्रं निर्वर्त्यमिति शङ्कते–**कस्मादिति** । सौत्रं हेतुमादत्ते—**तदिति** । तद्धोमीयमिति तच्छब्देन प्रकृताकांक्षेण स्वोक्तिपर्यवसानार्थं यद्भक्तं प्रथममागच्छेदिति संनिहितं भोजनार्थं भक्तं गमयितव्यमिति न स्वतन्त्रद्रव्यं प्रयोक्तव्यं तच्छब्दविरोधादिति व्याचष्टे–**तथाहीति** । सिद्धस्य प्रमितस्यानन्तरप्रकृतस्यार्थस्य यथा तच्छब्देन परामर्शस्तथा भक्तस्य भोजनार्थमुपनिपातो नामाऽऽगमनं तस्य यस्तच्छब्देन परामर्शस्तेन परार्थं भोजनार्थं यद्भक्तं द्रव्यं तेन साध्यतां निर्वर्त्यतामिति यावत् । भोजनार्थागतभक्तद्रव्योद्देशेन तद्धोमीयमित्याहुतिविधाने फलितमाह–**ता इति** । आहवनीयाभावे होमाभाववदामिक्षार्थदध्यानयनाभावे वाजिनाभाववच्चोद्देश्याभावे सत्युपादेय-

१ "गुणलोपे च मुख्यस्य" [ जै० सू० १० । २ । ६३ ] इति सूत्रं पवमानेष्टौ निर्वापाधिष्ठानाधिकरणे ।

धापयेयुः॥ न चात्र प्राकृताग्निहोत्रधर्मप्राप्तिरस्ति॥ कुण्डपायिनामयने हि "मासमग्निहोत्रं जुहोति" इति विध्युद्देशगतोऽग्निहोत्रशब्दस्तद्वद्भावं विधापयेदिति युक्ता तद्धर्मप्राप्तिः॥ इह पुनरर्थवादगतोऽग्निहोत्रशब्दो न तद्वद्भावं विधापयितुमर्हति। तद्धर्मप्राप्तौ चाभ्युपगम्यमानायामग्न्युद्धरणादयोऽपि प्राप्येरन्॥ न चास्ति सम्भवः। अग्न्युद्धरणं तावद्धोमाधिकरणभावाय॥ न चायमग्नौ होमः। भोजनार्थताव्याघातप्रसङ्गात्। भोजनार्थोपनीतद्रव्यसम्बन्धाच्चाऽऽस्य एवैष होमः। तथा च जाबालश्रुतिः "पूर्वोऽतिथिभ्योऽश्नीयाद्" इत्यास्याधारामेवेमां होमनिर्वृत्तिं दर्शयति। अत एव चेहापि साम्पादिकान्येवाग्निहोत्राङ्गानि दर्शयति-"उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन

रत्नप्रभा।

प्राप्तिरिति, तत्राह-न चात्रेति॥ तद्वद्भावो-नित्याग्निहोत्रसादृश्यम्। अर्थवादस्थशब्दस्य स्तुतित्वेनोपपत्तेरित्यर्थः॥ धर्मप्रापकत्वे दोषमाह-तद्धर्मप्राप्तौ चेति॥ अत एवेति। तद्धर्मप्राप्त्यभावादेवेत्यर्थः। प्राप्तौ सम्पादनं वृथा स्यादिति भावः। मुख्याग्निहोत्राङ्गानि सम्पाद्यन्ते चेत्, कथं तदनङ्गं वेदिरत्र

भामती।

हि वचनं किमपि संनिहितद्रव्यं होमे विनियुङ्क्ते तदः सर्वनाम्नः संनिहितावगममन्तरेणाभिधानापर्यवसानात्तदनेन स्वाभिधानपर्यवसानाय तद्यद्भक्तं प्रथममागच्छेदिति संनिहितमपेक्ष्य निर्वर्तितव्यम्। तच्च संनिहितं भक्तं भोजनार्थमित्युत्तरार्द्धास्त्विष्टकृते समवद्यतीतिवन्न भक्तं वापोवा द्रव्यान्तरं वा प्रयोक्तुमर्हति। जाघन्यास्त्ववयवभेदस्य नाग्नीषोमीयपश्वधीनं निरूपणं स्वतन्त्रस्यापि तस्य सूनास्थस्य दर्शनात्तस्मादस्त्येतस्य जाघनीतो विशेषः। यच्चोक्तं चोदकप्राप्तद्रव्यबाधया भक्तद्रव्यविधानमिति। तदयुक्तम्। विध्युद्देशगतस्याग्निहोत्रनाम्नस्तथाभावादार्थवादिकस्य तु सिद्धं किंचित्सादृश्यमुपादाय स्तावकत्वेनोपपत्तेर्न तद्भावं विधातुमर्हतीत्याह-न चात्र प्राकृताग्निहोत्रधर्मप्राप्तिरिति। अपि चाग्निहोत्रस्य चोदकतो धर्मप्राप्तावभ्युपगम्यमानायां बहुतरं बाध्यते। न च संभवे बाधनिचयो न्याय्यः। कृष्णलचरौ खल्वगत्या प्राप्तबाधोऽभ्युपेयत इत्याह-तद्धर्मप्राप्तौ चाभ्युपगम्यमानायामिति। चोदकाभावमुपोद्बलयति-अत एव चेहापीति। यत एवोक्तेन क्रमेणातिदेशाभावोऽत एव सांपादिकत्वमग्निहोत्राङ्गानाम्। तत्प्राप्तौ तु सांपादिकत्वं नोपपद्येत कामिन्यां किल कुचवदनाद्यसता चक्रवाकनलिनादिरूपेण संपाद्यते। न तु नद्यां चक्रवाकादय

आनन्दगिरीय-न्यायनिर्णयः।

स्याप्रवृत्तेर्भोजनार्थद्रव्यलोपे लोप एव प्राणाग्निहोत्रस्येत्यर्थः। यत्त्वग्निहोत्रशब्दात्तद्धर्मप्राप्तौ भक्तद्रव्यकतागुणविधानार्थं तद्यद्भक्तमित्यादि वाक्यमिति तत्राऽऽह-न चेति। अर्थवादस्थाग्निहोत्रशब्दस्य किंचित्सादृश्यमादाय स्तावकत्वेनापि संभवान्न तद्वशात्प्राणाग्निहोत्रे नैयमिकाग्निहोत्रधर्मप्राप्तिरित्यर्थः। कौण्डपायिनवदित्युक्तं विघटयति-कुण्डेति। दार्ष्टान्तिके प्रागुक्तमेव वैषम्यं विशदयति-इहेति। प्राणाग्निहोत्रं सप्तम्यर्थः। विपक्षे दोषमाह-तद्धर्मेति। तेषामपि प्राप्तौ का हानिस्तत्राह-न चेति। असंभवमेव तेषां साधयति-अग्नीति। अग्न्याधारहोमाभावात्प्राणाग्निहोत्रे नाग्न्युद्धरणसिद्धिरित्यर्थः। अस्तु प्रस्तुतेऽपि तदर्थमेवाग्न्युद्धरणं नेत्याह-न चेति। आहुतीनामग्न्याधारत्वाभावे युक्त्यन्तरमाह-भोजनेति। तर्हि किमिहाऽऽहुतीनामधिकरणं तदाह-आस्य इति। प्राणाग्निहोत्रे होमाधिकरणमास्यमेवेत्यत्र श्रुत्यन्तरमाह-तथा चेति। आहुतीनामास्याधारत्वे प्राणाग्निहोत्रेऽग्निहोत्रशब्दान्नैयमिकाग्निहोत्रधर्माप्राप्तौ च गमकमाह-अत इति। तद्धर्मप्राप्तौ मुख्यानामेव संभवात्संपादनवैयर्थ्यमित्यर्थः। उर

आस्यमाहवनीयः" [ छां० ५ । १५ । २ ] इति । वेदिश्रुतिश्चात्र स्थण्डिलमात्रोपलक्षणार्था द्रष्टव्या । मुख्याग्निहोत्रे वेद्यभावात् ॥ तदङ्गानां चेह सम्पिपादयिषितत्वात् । भोजनेनैव च कृतकालेन संयोगान्नाग्निहोत्रकालावरोधसम्भवः ॥ एवमन्येऽप्युपस्थानादयो धर्माः केचित्कथञ्चिद्विरुध्यन्ते ॥ तस्माद्भोजनपक्ष एवैते मन्त्रद्रव्यदेवतासंयोगात्पञ्च होमा निर्वर्तयितव्याः ॥ यत्त्वादरदर्शनवचनं, तत्तु भोजनपक्षे प्राथम्यविधानार्थम् । न ह्यस्ति वचनस्यातिभारः । न त्वनेनास्य नित्यता शक्यते दर्शयितुम् । तस्माद्भोजनलोपे लोप एव प्राणाग्निहोत्रस्येति ॥ ४१ ॥ इत्यादराधिकरणम् ॥ २६ ॥

---

रत्नप्रभा ।

सम्पाद्यते, तत्राह—**वेदिश्रुतिश्चेति** ॥ मुख्याग्निहोत्रस्याप्युद्धरणवत् सायम्प्रातःकालद्वयस्यापि न प्राप्तिरित्याह—**भोजनेनेति** ॥ उपस्थानपरिस्तरणादयोऽप्यग्न्यभावात् न प्राप्नुवन्तीत्याह—**एवमिति** ॥ यस्मात् तद्धर्मप्राप्त्यभावस्तस्माद् भोजनद्रव्येणैव होम इत्युपसंहारः । प्राणाय स्वाहा इत्यादयो मन्त्राः ॥ ननु स्वामिभोजनस्योत्तरकालत्वं श्रुत्यादिविहितं कथं पूर्वोऽतिथिभ्योऽश्नीयादिति वचनेन बाध्यते, तत्राह—**न ह्यस्तीति** ॥ उपासकान्यस्वामिविषयमुत्तरकालत्वविधानमित्यर्थः ॥ **न त्विति** ॥ प्राथम्यमात्रेणेत्यर्थः । प्राणोपासकस्य प्राप्तभोजनप्राथम्यार्थतयाऽऽदरस्यान्यथासिद्धौ फलितमाह—**तस्मादिति** ॥ ४१ ॥(२६)॥

भामती ।

एव चक्रवाकादिना संपाद्यन्ते । अतोऽप्यवगच्छामो न चोदकप्राप्तिरिति । यत्त्वादरदर्शनमिति तद्भोजनपक्षे प्राथम्यविधानार्थम् । यस्मिन्पक्षे धर्मानवलोपस्तस्मिन्धर्मिणोऽपि न त्वेतावता धर्मिनित्यता सिध्यतीति भावः । नन्वतिथिभोजनोत्तरकालता स्वामिभोजनस्य विहितेति कथमसौ बाध्यत इत्यत आह—**नास्ति वचनस्यातिभारः** । सामान्यशास्त्रबाधायां विशेषशास्त्रस्यातिभारो नास्तीत्यर्थः ॥ ४१ ॥ ( २६ )॥

आनन्दगिरीय—न्यायनिर्णयः ।

एव वेदिरित्यत्रावान्तरविशेषमाह—**वेदीति** । अत्रेति प्राणाग्निहोत्रोक्तिः । वेदिकरणस्यापि संपादनार्थमितराङ्गवदिह संकीर्तनं किं न स्यात्तत्राऽऽह—**मुख्येति** । दर्शपूर्णमासवन्मुख्येऽग्निहोत्रे वेदिकरणाभावेऽपि प्रकृते ध्यानार्था वेदिरुच्यतामित्याशंक्याऽऽह—**तदङ्गानां चेति** । अग्निहोत्रवदग्न्युद्धरणायोगमुक्त्वा कालद्वयावरोधोऽपि नास्तीत्याह—**भोजनेनेति** । अग्न्युद्धरणादावुक्तन्यायमतिदिशति—**एवमिति** । आदिशब्देन परिस्तरणादयो गृह्यन्ते । सिद्धान्तसूत्रार्थमुपसंहरति—**तस्मादिति** । धर्मलोपमपि श्रुतिरसहमाना सुतरां न सहते धर्मिलोपमित्युक्तमनूद्य दूषयति—**यत्त्विति** । धर्मिलोपाभावपक्षे धर्मोऽपि न लुप्यते न चैतावता धर्मिणो नित्यतेत्यर्थः । अतिथिभोजनोत्तरकालता स्वामिभोजनस्य श्रुतिस्मृतिसिद्धा तत्कथं प्राथम्यविधानं तत्राऽऽह—**न हीति** । प्राणाग्निहोत्रातिरिक्तविषयं स्वामिभोजनस्योत्तरकालत्वविधानमित्यर्थः । प्राणाग्निहोत्रस्य प्राथम्ये कथमागन्तुकत्वं तत्राऽऽह—**न त्विति** । अनेन प्राथम्यविधानेनेति यावत् । अस्य प्राणाग्निहोत्रस्येत्यर्थः । तस्य नित्यतां विना प्राथम्यसिद्धेरुक्तत्वादिति भावः । आदरोक्तेरन्यथासिद्धौ फलितमाह—**तस्मादिति** । प्रतिनिधिन्यायो नावतरतीति फलितं वक्तुमितीत्युक्तम् ॥ ४१ ॥ ( २६ ) ॥ वैश्वानरविद्याङ्गप्राणाहुतीनामनित्यत्वोक्तिप्रसक्त्या कर्माङ्गसंगिनामपि ज्ञानाना-

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ॥४२॥(२७)॥**

सन्ति कर्माङ्गव्यपाश्रयाणि विज्ञानानि "ओमित्येतदक्षरमुद्गीथमुपासीत" [छां० १।१।१] इत्येवमादीनि ॥ किं तानि नित्यान्येव स्युः कर्मसु पर्णमयीत्वादिवद्-उत-अनित्यानि गोदोहनादिवदिति विचारयामः। किं तावत्प्राप्तम् ॥ नित्यानीति ॥ कुतः ॥ प्रयोगवचनपरिग्रहाद् अनारभ्याधीतान्यपि ह्येतान्युद्गीथादिद्वारेण क्रतुसम्बन्धात्क्रतुप्रयोगवचनेनाङ्गान्तरवत्संस्पृश्यन्ते ॥ यत्त्वेषां स्ववाक्येषु फलश्रवणम् "आपयिता ह वै कामानां भवति" [छां० १।१।७] इत्यादि, तद्वर्तमानापदेशरू-

रत्नप्रभा।

**तन्निर्धारणा०**॥उभयथा दृष्टान्तदर्शनात् संशयमाह-**किन्तानीति**॥**यथा**ऽनारभ्याधीतपर्णमयीत्वं जुहूद्वारा क्रत्वङ्गतया कर्मसु नित्यं प्रयुज्यते, **तथा**ङ्गाश्रितोपासनान्युद्गीथादिद्वारांगतया नित्यानि **उत** क्रत्वङ्गतया प्रणयनाश्रयो गोदोहनसंयोगः पशुफलार्थत्वादनित्यत्वेन **यथा** प्रयुज्यते, **यथा वा** पश्वङ्गयूपाश्रयं बैल्वमन्नाद्यफलत्वादनित्यं, **तथा** कर्मसमृद्ध्यादिफलकत्वोपासनान्यनङ्गत्वेनानित्यानीति संशयार्थः ॥ **पूर्वपक्षे** उपासनानां प्रयोगनित्यत्वं, **सिद्धान्ते** त्वनित्यत्वमिति फलभेदः ॥ अनित्यभोजनाश्रयप्राणाग्निहोत्रस्यानित्यत्वं निरूप्य कर्माङ्गोपास्तीनां नित्यत्वमिति प्रत्युदाहरणदृष्टान्तेन पूर्वपक्षमाह-**किं तावदिति** ॥ उपा-

भामती।

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम्**। यथैव 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति'इत्येतदनारभ्याधीतमव्यभिचरितक्रतुसंबन्धं जुहूद्वारा क्रतुप्रयोगवचनगृहीतं क्रत्वर्थं सत्फलानपेक्षं सिद्धवर्तमानापदेशप्रतीतं न रात्रिसत्रवत्फलतया स्वीकरोतीति। एवमव्यभिचरितकर्मसंबन्धोद्गीथगतमुपासनं कर्मप्रयोगवचनगृहीतं न सिद्धवर्तमानापदेशावगतसमस्तकामावापकत्वलक्षणफलकल्पनायालम्। परार्थत्वात्। तथा च पारमर्षं सूत्रम्-'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्' इति। एवं च

आनन्दगिरीय-न्यायनिर्णयः।

मनित्यत्वमाह-**तन्निर्धारणेति**। अङ्गावबद्धोपासनानि विषयत्वेनोपन्यस्यति-**सन्तीति**। उभयविधदृष्टान्तदृष्ट्या संशयमाह-**किमिति**। यथा द्रव्यसंस्कारकर्मसु क्रत्वर्थेषु फलश्रुतेरर्थवादत्वादगत्या रात्रिसत्राणां विपरिणामेऽपि प्रकृतेषु क्रतूपकारस्य सिद्धत्वाद्विपरिणामायोगात्क्रतूपकारद्वारा पर्णमयीत्वं प्रयाजादिवत्तत्र नित्यमिष्टं तथैतान्यङ्गसंगीन्युपासनानि कर्मसु नित्यान्येवेत्येको विकल्पः। यथा प्राकृताप्प्रणयनाश्रयो गोदोहनोपरागः पशुभ्यो विधीयते यथा च कांस्योपरागस्तदाश्रयो ब्रह्मवर्चसफलोऽभिलप्यते बैल्वश्चान्नाद्यफलो यूपाश्रयो दृश्यते तथैतान्युपासनानि कर्मस्वनित्यानीति विकल्पान्तरम्। अत्र चांगाश्रितोपास्तीनां क्रतुषु नित्यत्वानित्यत्वनिरूपणद्वारा वाक्यार्थधीहेतुनिरूपणात्पादादिसंगतिः। पूर्वपक्षे यथोक्तोपास्तीनां क्रतुषु पर्णतादिवदावश्यकत्वम्। सिद्धान्ते तद्राहित्यमंगीकृत्य विमृशति-**किमिति**। अनित्यभोजनाश्रितप्राणाग्निहोत्रानित्यत्ववन्नित्यकर्मांगाश्रितोपास्तीनां नित्यतेति पूर्वपक्षयति-**नित्यानीति**। क्रतुप्रकरणापाठात्प्रयोगवचनापरिग्रहादुपास्तीनां नास्ति क्रतुषु नित्यतेति शङ्कते-**कुत इति**। अव्यभिचरितक्रतुसंबद्धजुहूद्वारा पर्णतावदुद्गीथादिद्वारेणोपास्तीनामपि क्रतुसंबन्धात्प्रयोगवचनपरिग्रहादमूषां क्रतुषु नित्यतेत्याह-**प्रयोगेति**। क्रत्वंगताप्रयोगवचनपरिग्रहयोरन्योन्याश्रयत्वात्प्रकरणान्तरत्वाच्च नोपास्तीनां तत्परिग्रहः स्यादित्याशंक्याऽऽह-**अनारभ्येति**। अंगान्तरं पर्णमयीत्वादि। उपास्तीनां फलान्तरश्रुतेरस्ति स्वातन्त्र्यमित्याशंक्याऽऽह-**यत्त्विति**। क्रतूपकारद्वारेण व्यवहितफलोपादानादव्यवहितश्रु-

**पत्वादर्थवादमात्रमपापश्लोकश्रवणादिवत् । न फलप्रधानम् ॥ तस्माद्यथा "यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ शृणोति" इत्येवमादीनामप्रकरणपठितानामपि जुह्वादिद्वारेण क्रतुप्रवेशात्स्वप्रकरणपठितवन्नित्यता, एवमुद्गीथाद्युपासनानामपीति ॥ एवं प्राप्ते ब्रूमः ॥ तन्निर्धारणानियम इति । यान्येतान्युद्गीथादिकर्मगुणयाथात्म्यनिर्धारणानि रसतम आप्तिः समृद्धिर्मुख्यः प्राण आदित्य इत्येवमादीनि नैतानि नित्यवत्कर्मसु नियम्येरन् ॥ कुतः ॥ तद्दृष्टेः ॥ तथाहि—अनियतत्वमेवैवञ्जातीयकानां दर्शयति श्रुतिः—"तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद"**

रत्नप्रभा ।

सनानि, कर्माङ्गानि, अफलत्वे सति कर्माङ्गाश्रितत्वात्, पर्णत्वादिवत् ॥ तथा चाङ्गतया प्रयोगविधिना नित्येन प्रयुज्येतेति प्राप्ते सिद्धान्तसूत्रं व्याचष्टे—**यानीत्यादिना** ॥ उद्गीथादयः कर्मणां **गुणाः**—अङ्गानि तेषां **याथात्म्यं** रसतमत्वादिकं तन्निर्धारणान्युपासनानि **यानि, तानि** कर्मसु नित्यपर्णमयीत्वादिवन्न नियम्येरन्नित्यर्थः ॥ एषां कर्माङ्गत्वे तद्धीनस्याविदुषः कर्म न स्यात्। अङ्गलोपात्। तस्माद्विदुषोऽपि कर्मकर्तृत्वश्रुतिलिङ्गैरङ्गत्वानुमानबाध इत्याह—**तद्दृष्टेरिति** ॥ तस्यानियमस्य दर्शनादित्यर्थः । "तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते पतिष्यति" इति चाक्रायणेनर्त्विजामाक्षिप्तत्वादनुपासकानामपि कर्मप्रयोगोऽस्तीत्याह—

भामती ।

सति क्रतौ पर्णतानियमवदुपासनानियम इति प्राप्ते उच्यते—युक्तं पर्णतायां फलश्रुतेरर्थवादमात्रत्वम् । न हि पर्णताऽनाश्रया यागादिवत्फलसंबन्धमनुभवितुमर्हति । अव्यापाररूपत्वात्, व्यापारस्यैव च फलवत्वात् । यथाहुः—'उत्पत्तिमतः फलदर्शनात्' इति नापि खादिरतायामिव प्रकृतक्रतुसंबद्धो यूप आश्रयस्तदाश्रयः प्रकृतोऽस्ति अनारभ्याधीतत्वात्पर्णतायाः । तस्माद्वाक्येनैव जुहूसंबन्धद्वारेण पर्णतायाः क्रत्वाश्रयो ज्ञापनीयः । न चात्परं वाक्यं ज्ञापयितुमर्हतीति तत्र वाक्यतात्पर्यमवश्याश्रयणीयम् । तथा च तत्परं सन्न पर्णतायाः फलसंबन्धमपि गमयितुमर्हति । वाक्यभेदप्रसङ्गात् । उपासनानां तु व्यापारात्मत्वेन स्वत एव फलसंबन्धोपपत्तेः । उद्गीथाद्याश्रयणं फले विधानं न विरुध्यते विशिष्टविधानात् । फलाय खलूद्गीथसाधनकमुपासनं विधीयमानं न वाक्यभेदमावहति । ननु कर्माङ्गोद्गीथसंस्कार उपासनं प्रोक्षणादिवद्द्वितीयाश्रुतेरुद्गीथमिति। तथा चाञ्जनादिष्विव संस्कारेषु फलश्रुतेरर्थवादत्वम् । मैवम् । न ह्यत्रोद्गीथस्यो-

आनन्दगिरीय—न्यायनिर्णयः ।

तफलस्य साध्यत्वविपरिणामः श्रेयानित्यपापश्लोकश्रुतेरपि फलविधित्वमेवेत्याशंक्याऽऽह—**नेति** । क्वचिदगत्या विपरिणामेऽपि प्रकृते कर्मांगत्वं गतिरिति न विपरिणामसिद्धिरित्यर्थः । अंगाश्रितोपासनानि प्रयोगवचनेन क्रत्वंगतयोपादेयानि साध्यफलोक्तिशून्यत्वे सति क्रत्वंगसंगितया विहितत्वात्पर्णमयीत्वादिवदिति मत्वोपसंहरति—**तस्मादिति** । एवमादीनामित्यादिशब्देन यदांक्ते चक्षुरेव भ्रातृव्यस्य वृंक्ते यत्प्रयाजानुयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियत इत्यादि गृह्यते । जुह्वादिद्वारेणेत्यत्राऽऽदिपदेन कर्तृग्रहणम् । उद्गीथाद्युपासनानां कर्मसु नित्यत्वादविदुषो न कर्मेति प्राप्तमनूद्य सिद्धान्तयति—**एवमिति** । प्रतिज्ञां विभजते—**यानीति** । नित्यपर्णमयीत्वादिवदित्येतदनुमानतो नियमे निवेदिते नानियमप्रतिज्ञेति शङ्कते—**कुत इति** । तत्र सूत्रपदमवतारयति—**तद्दृष्टेरिति** । तस्य नियमस्य दृष्टेरिति व्याचक्षाणः श्रौतैर्लिङ्गैर्विद्यानामनंगत्वसाधनैरनुमानं बाध्यमित्याह—**तथाहीति** । तेनेत्योंकाराख्यमक्षरमुक्तम् । एतदक्षरमुद्गीथावयवभूतमेवं रसतमादिगुणकं यो वेद यश्च न तथा तावुभावपि ज्ञाज्ञौ कर्म कुरुत इति योजना ।

[ छां० १ । १ । १० ] इत्यविदुषोऽपि क्रियाभ्यनुज्ञानात्प्रस्तावादिदेवताविज्ञानविहीनानामपि प्रस्तोत्रादीनां याजनाध्यवसानदर्शनात "प्रस्तोतुर्या देवता प्रस्तावमन्वायत्ता ताञ्चेदविद्वान्प्रस्तोष्यसि ताञ्चेदविद्वानुद्गास्यसि ताञ्चेदविद्वान्प्रतिहरिष्यसि" [ छां० १ । १० । ९ ] इति ॥ अपि चैवञ्जातीयकस्य कर्मव्यपाश्रयस्य विज्ञानस्य पृथगेव कर्मणः फलमुपलभ्यते । कर्मफलसिद्ध्यप्रतिबन्धस्तत्समृद्धिरतिशयविशेषः कश्चित्—"तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति [ छां०१। १ । १० ] इति । तत्र नाना त्विति विद्वदविद्वत्प्रयोगयोः पृथक्करणाद्वीर्यवत्तरमिति च तरप्प्रत्ययप्रयोगाद्विद्याविहीनमपि कर्म वीर्यवदिति गम्यते । तच्चानित्यत्वे विद्याया उपपद्यते । नित्यत्वे तु कथं तद्विहीनं कर्म वीर्यवदभ्यनुज्ञायेत । सर्वाङ्गोपसंहारे हि वीर्यवत्कर्मेति स्थितिः ॥ तथा

रत्नप्रभा ।

प्रस्तावादीति ॥ उपास्तीनां कर्मफलात् पृथक् फलश्रुतेर्न कर्माङ्गत्वमित्याह—अपि चेति ॥ तेन ओमित्यक्षरेण यश्च एतद् अक्षरम् एवं रसतमत्वादिरूपेण वेद उपास्ते, यश्च न वेद तावुभौ कर्म कुरुत एव यद्यपि । तथापि तु विद्याविद्ययोर्नानात्वं भिन्नफलत्वम् । दृष्टं हि मणिविक्रये ज्ञानाज्ञानाभ्यां वणिक्शबरयोः फलवैषम्यम् ॥ तस्माद् यदेव कर्म विद्यया उद्गीथाद्युपास्त्या श्रद्धया आस्तिक्यबुद्ध्या उपनिषदा रहस्यदेवताध्यानेन करोति, तदेव कर्म फलातिशयवदित्यर्थः । कर्मणो वीर्यवत्त्वं नाम फलवत्त्वं विद्याहीनस्यापि गम्यमानं विद्याया अनङ्गत्वे लिङ्गमिति भावः ॥ साम्नि लोकादिदृष्ट्युपासनेषु कर्मसमृद्ध्यतिरिक्तलोकादिफलश्रुतेश्च नांगत्वमित्याह—तथेति ॥ अस्मै विदुषे कल्पन्ते भोगाय समर्था भवन्ति भूमे-

भामती ।

पासनं किंतु तदवयवस्योंकारस्येत्युक्तमधस्तात् । न चोंकारः कर्माङ्गमपि तु कर्माङ्गोद्गीथावयवः । न चानुपयोगमीप्सितम् । तस्मात्सक्तून् जुहोतीतिवद्विनियोगभङ्गेनोंकारसाधनादुपासनात्फलमिति संबन्धः । तस्माद्यथा क्रत्वाश्रयाण्यपि गोदोहनादीनि फलसंयोगादनित्यानि एवमुद्गीथाद्युपासनानीति द्रष्टव्यम्। शेषमुक्तं

आनन्दगिरीय-न्यायनिर्णयः ।

विद्यायाः कर्मांगत्वानियमे लिंगान्तरमाह—प्रस्तावादीति । 'तां चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यति' इति चाक्रायणेनाऽऽक्षेपकरणादविद्वत्ता प्रस्तोत्रादेः सिद्धेत्यर्थः । उद्गीथाद्युपास्तीनां पृथक्फलश्रवणादपि न कर्मांगतेत्यवशिष्टसूत्रावयवं व्याचष्टे—अपि चेति । ज्ञानाभावे कर्मफलप्रतिबन्धे ज्ञानस्य कर्मांगता स्यादित्याशंक्याऽऽह—तदिति । कर्मफलस्य वीर्यवत्तरत्वं ज्ञानफलं तदभावेऽपि वीर्यवदेव कर्मेत्यर्थः । फलभेदे मानमाह—तेनेति । पूर्वपक्षमुपन्यस्य श्रुतिः स्वयमेव तुशब्देन निरस्यति—नाना त्विति । भिन्नफलत्वं नानात्वम् । दृष्टं हि मणिविक्रये शबरवणिजोर्ज्ञानभावाभावाभ्यां फलवैलक्षण्यम् । तस्माद्यदेव कर्म विद्यया प्रकृतोद्गीथाद्यर्थया करोति श्रद्धयाऽऽस्तिक्यबुद्ध्या तथोपनिषदा तत्तद्देवताध्यानेनेत्यर्थः । श्रुतेस्तात्पर्यमाह—तत्रेति । किं तावता ते सिद्धं तत्राऽऽह—तच्चेति । विद्याहीनस्य कर्मणो वीर्यवत्त्वं कर्मणि तदनित्यत्वगमकमिति व्यतिरेकतः स्फुटयति—नित्यत्वे त्विति । अंगिमात्रस्य फलं वीर्यवत्त्वमंगसहितस्य तु वीर्यवत्तरत्वमित्यनुज्ञोपपत्तिमाशंक्याऽऽह—सर्वेति । कर्मसमृद्ध्यतिरिक्तमपि फलं विद्यायाः श्रुतं ततोऽपि तस्या न कर्मांगतेत्याह—तथेति । लोकसामादिषु लोकदृष्ट्या सामाद्युपासनेष्विति यावत् ।

लोकसामादिषु प्रतिनियतानि प्रत्युपासनं फलानि शिष्यन्ते—"कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च" [ छां० २ । २ । ६ ] इत्येवमादीनि । न चेदं फलश्रवणमर्थवादमात्रं युक्तं प्रतिपत्तुम् । तथाहि गुणवाद आपद्येत । फलोपदेशे तु मुख्यवादोपपत्तिः । प्रयाजादिषु त्वितिकर्तव्यताकांक्षस्य क्रतोः प्रकृतत्वात्तादर्थ्ये सति युक्तं फलश्रुतेरर्थवादत्वम् ॥ तथाऽनारभ्याधीतेष्वपि पर्णमयीत्वादिषु । न हि पर्णमयीत्वादीनामक्रियात्मकानामाश्रयमन्तरेण फलसम्बन्धोऽवकल्पते । गोदोहनादीनां हि प्रकृताप्प्रणयनाद्याश्रयलाभादुपपन्नः फलविधिः ॥ तथा बैल्वादीनामपि प्रकृतयूपाद्याश्र-

रत्नप्रभा ।

रूर्ध्वा लोकाः आवृताः अधस्तनाश्चेत्यर्थः ॥ तथाहि गुणवाद इति । फलश्रुतेरर्थवादमात्रत्वे स्तुतिलक्षणा स्यात् । सा न युक्ता । मुख्यवृत्त्या फलपरत्वसम्भवात् । प्रयाजानुयाजकर्मणां तु प्रकरणाद्दर्शाद्यंगत्वलाभाद् भ्रातृव्याभिभूतिफलश्रुतेरगत्या स्तुतिलक्षकत्वम् ॥ यद्यपि पर्णमयीत्वादीनामंगत्वबोधकं प्रकरणं नास्ति । तथापि तेषु फलश्रुतेः स्तुतित्वम् । तेषामक्रियात्वेन क्रियासम्बन्धं विना फलहेतुत्वानुपपत्तेः । अतस्तेषां फलार्थक्रियापेक्षत्वात् क्रतोश्च जुहूप्रकृतिद्रव्याकांक्षितत्वात् "पर्णमयी जुहूः" इत्यादिवाक्येनैव प्रकृतिद्रव्यार्पकेण जुहूद्वारा सन्निहितक्रत्वंगत्वसिद्धेर्युक्तं फलश्रुतेरर्थवादत्वमिति भावः ॥ अक्रियात्मकगोदोहनादेरपि फलश्रुतिरर्थवादः स्यादत आह—गोदोहनादीनां हीति ॥ "यदाऽपः प्रणयेत्तत्पशुकामस्य सतो गोदोहनेन ब्रह्मवर्चसकामस्य कांस्येन" इतिफलार्थविधिरेव, नार्थवादः । गोदोहनादेः क्रत्वनाकांक्षितत्वेनांगत्वाभावात् । चमसेन निराकांक्षक्रियासम्बन्धितया स्वफलसाधकत्वसम्भवात् ॥ तथा-

भामती ।

भाष्ये । न चेदं फलश्रवणमर्थवादमात्रमिति । अर्थवादमात्रत्वेऽत्यन्तपरोक्षा वृत्तिर्यथा न तथा फल-

आनन्दगिरीय—न्यायनिर्णयः ।

कल्पन्ते भोगाय समर्था भवन्त्यस्मै विदुषे लोका भोगभूमयो भूमेरुपरिष्टात्ततोऽधस्ताच्च व्यवस्थिता ऊर्ध्वा आवृत्ताश्चेत्युक्ताः । आपयिता ह वै कामानामित्यादेरर्थवादत्वान्न च फलप्रधानतेत्युद्गीथाद्युपास्तीनां कर्मसु नित्यत्वोक्तिरित्याशंक्याऽऽह—न चेति । अर्थवादमात्रत्वे फलश्रुतेर्विधेयप्राशस्त्यलक्षणयाऽत्यन्तपरोक्षा वृत्तिः स्यात् । फलपरत्वे तु वर्तमानापदेशिनोऽपि साक्षात्फलप्रतीतेर्मुख्यवादसिद्धिः । ततो मुख्ये संभवति लक्षणाश्रयणमयुक्तमित्याह—तथाहीति । तर्हि प्रयाजादिष्वपि फलश्रुतेर्नार्थवादमात्रत्वं तत्राऽऽह—प्रयाजादिष्विति । दर्शपूर्णमासादिप्रकरणस्थत्वेन प्रयाजादीनां तदंगत्वान्न पृथक्फलवत्त्वमिति तत्फलश्रुतेरर्थवादतेत्यर्थः। तर्हि पर्णमयीत्वादिषु प्रकरणाभावात्पृथक्फलवत्त्वसिद्धेर्न फलश्रुतेरर्थवादमात्रत्वं तत्राऽऽह—तथेति । किं तेषां साक्षादेव फलवत्त्वं किंवा क्रतुद्वारेति विकल्प्याऽऽद्यं दूषयति—न हीति । द्वितीये क्रतोर्द्रव्यसाकांक्षत्वात्पर्णमयीत्वस्य च पुमर्थत्वाय तद्योगापेक्षत्वाज्जुहूप्रकृतिद्रव्यार्पकवाक्यात्क्रतुयोगे पृथक्फलवत्त्वायोगादुक्तफलश्रुतेरर्थवादतेति भावः । गोदोहनादीनामपि तर्हि द्रव्यत्वात्पर्णमयीत्वादिवत्क्रतुसंबन्धान्न पृथक्फलवत्त्वं तत्राऽऽह—गोदोहनेति । तस्मिन्सीदेतिमन्त्रपदानां साकांक्षत्वेऽपि स्योनं ते सदनमित्यादीनामाकांक्षाभावान्मिथःसम्बन्धाभाववद्गोदोहनकांस्यादीनां साकांक्षत्वेऽपि प्रणयनादेश्चमसयूपाद्याश्रयलाभादाकांक्षाभावाद्वाक्यीयक्रतुसंबन्धासिद्धेस्तादर्थ्येनाविधेयत्वाद्युक्तं पृथगेव फलमुद्दिश्य विधानमित्यर्थः । बैल्वमन्नाद्यकामस्य यूपं कुर्यात्खादिरं वीर्यकामस्येत्यादिषु फले विधानवत्पर्णमयीत्वादिष्वपि स्यादित्याशंक्याऽऽह—तथेति । बैल्वखादिरदध्यादीनामुपपन्नः फले विधिरिति सम्बन्धः । तत्र हेतुमाह—प्रकृतेति ।

यलाभादुपपन्नः फलविधिः। न तु पर्णमयीत्वादिष्वेवंविधः कश्चिदाश्रयः प्रकृतोऽस्ति। वाक्येनैव तु जुह्वाद्याश्रयतां विवक्षित्वा फलेऽपि विधिं विवक्षतो वाक्यभेदः स्यात्। उपासनानां तु क्रियात्मकत्वाद्विशिष्टविधानोपपत्तेरुद्गीथाद्याश्रयाणां फलविधानं न विरुध्यते॥ तस्माद्यथा क्रत्वाश्रयाण्यपि गोदोहनादीनि फलसंयोगादनित्यानि, एवमुद्गीथाद्युपासनान्यपीति द्रष्टव्यम्। अत एव च कल्पसूत्रकारा नैवञ्जातीयकान्युपासनानि क्रतुषु कल्पयाञ्चक्रुः॥ ४२॥ इति तन्निर्द्धारणाधिकरणम्॥ २७॥

## प्रदानवदेव तदुक्तम्॥ ४३॥ (२८)॥

रत्नप्रभा।

खादिरत्वेन निराकांक्षक्रत्वंगयूपमाश्रित्य "बैल्वमन्नाद्यकामस्य खादिरं वीर्यकामस्य" इति फलार्थविधिरेवार्थः॥ पर्णमयीत्वादिषु फलविधिः किं न स्यादत आह–न त्विति॥ एवंविधः यूपादिः। तन्निराकांक्ष इत्यर्थः॥ जुह्वरेवाश्रय इत्यत आह–वाक्येनैवेति॥ जुहाः प्रकृतिद्रव्यापेक्षित्वादनेनैव वाक्येन क्रत्वंगतया जुह्वप्रकृतिद्रव्यसम्बन्धो विधेयः। पश्चान्निराकांक्षजुह्वमाश्रित्य तस्यैव प्रकृतिद्रव्यस्य फलसंयोगो विधेय इति वाक्यभेद इत्यर्थः॥ पर्णतादिवैलक्षण्यमुपासनानामाह–उपासनानां त्विति॥ स्वयं क्रियात्वाद्यागादिवत्फलविशिष्टत्वेन विधानोपपत्तिरित्यर्थः॥ तस्मादिति। अंगत्वावेदकमानाभावादित्यर्थः॥ अत एवेति। अनंगत्वादेवेत्यर्थः॥ तस्मादङ्गोपास्यभावेऽपि कर्माधिकार इति सिद्धम्॥ ४२॥ (२७)॥ प्रदानवदेव तदुक्तम्॥ वायुप्राणयोर्भेदाभेदवाक्याभ्यां संशयमाह–

भामती।

परत्वे। न तु वर्तमानापदेशात्साक्षात्फलप्रतीतिः। अत एव प्रयाजादिषु नार्थवादाद्वर्तमानापदेशात्फलकल्पना। फलपरत्वे त्वस्य न शक्यं प्रयाजादीनां पारार्थ्येनाफलत्वं वक्तुमिति॥४२॥ (२७)॥ प्रदानवदेव तदुक्तम्। तत्तच्छ्रुत्यर्थालोचनया वायुप्राणयोः स्वरूपाभेदे सिद्धे तदधीननिरूपणतया तद्विषयोपासनाप्यभिन्ना न चाध्यात्माधिदैवगुणभेदाद्भेदः, न हि गुणभेदे गुणवतो भेदः। न ह्यग्निहोत्रं जुहोतीत्युत्पन्नस्याग्निहोत्रस्य तण्डुलादिगुणभेदाद्भेदो भवति। उत्पद्यमानकर्मसंयुक्तो हि गुणभेदः कर्मणो भेदकः। यथामिक्षा-

आनन्दगिरीय–न्यायनिर्णयः।

तेषु प्रकृतक्रतुसंबन्धियूपहोमादिराश्रयोऽस्ति प्रत्यक्षविधिश्रुतेः साक्षात्कर्मिवाद्युक्तफलश्रुतेश्च युक्तस्तेषां फले विधिरित्यर्थः। पर्णमयीत्वादिषु वैषम्यमाह–न त्विति। एवंविधो यूपादितुल्यस्तेषामनारभ्याधीतत्वादित्यर्थः। ननु पर्णमयीत्वादीनां विना प्रकरणं वाक्यादेव फले विधिः स्यान्नेत्याह–वाक्येनेति। पर्णतादीनां जुह्वादिद्वारा क्रत्वाश्रयताया वाक्यीयत्वात्तत्र वाक्यतात्पर्यकल्पने फलसम्बन्धप्रतिपादने च तत्कल्पने तात्पर्यभेदाद्वाक्यभेदापातान्न युक्तस्तेषु फले विधिरित्यर्थः। पर्णमयीत्वादिषु फलश्रुतेरर्थवादत्वमुपपाद्योद्गीथाद्युपासनेषु तेभ्यो वैषम्यमाह–उपासनानां त्विति। तासां व्यापाररूपत्वादव्यापारात्मकपर्णतादिभ्यो वैलक्षण्यात्फलवत्त्वेऽपि च विधानसिद्धेः स्वर्गकामो यजेतेत्यादिवद्वाक्यभेदाभावाद्युक्तं फलविधानमित्यर्थः। प्रस्तुतोपास्तीनां प्रकरणादिना क्रत्वर्थाश्रिततायाः सिद्धत्वात्तदाश्रयणेन गोदोहनादिवद्विशिष्टफलोद्देशेन विधानसंभवे फलितमुपसंहरति–तस्मादिति। उद्गीथादिविद्यानां पर्णतादिवत्कर्मांगत्वाभावे लिंगान्तरमाह–अत इति। अङ्गत्वाभावादेवेति यावत्। तथा च विदुष इवाविदुषोऽपि कर्माधिकारोऽस्तीति भावः॥ ४२॥ (२७)॥ पृथगप्रतिबन्धः फलमिति फलपृथक्त्ववदुपगमनपृथक्त्वमाह–प्रदानवदिति। बृहदारण्यके छान्दोग्ये चाधिदैवाध्यात्मभेदेनोक्तौ वायुप्राणा-

वाजसनेयके "वदिष्याम्येवाहमिति वाग्दध्रे" [ बृ० १।५।२१ ] इत्यत्राध्यात्मं वागादीनां प्राणः श्रेष्ठोऽवधारितोऽधिदैवतमग्न्यादीनां वायुः॥ तथा छान्दोग्ये "वायुर्वाव संवर्गः" [ ४।३।१ ] इत्यत्राधिदैवतमग्न्यादीनां वायुः संवर्गोऽवधारितः। "प्राणो वाव संवर्गः" [ छां० ४। ३।३ ] इत्यत्राध्यात्मं वागादीनां प्राणः॥ तत्र संशयः॥ किं पृथगेवेमौ वायुप्राणावुपगन्तव्यौ स्यातामपृथग्वेति । अपृथगिति तावत्प्राप्तम् । तत्त्वाभेदात्—न ह्यभिन्नेतत्त्वे पृथगनुचिन्तनं न्याय्यम् । दर्शयति च श्रुतिरध्यात्ममधिदैवतं च तत्त्वाभेदम्—"अग्निर्वाग्भूत्वा मुखं प्राविशद्" [ ऐत० २।४ ] इत्यारभ्य ॥ तथा "अत एते सर्व एव समाः सर्वेऽनन्ताः" [ बृ० १।५।१३ ] इत्याध्यात्मिकानां प्राणानामाधिदैविकीं विभूतिमात्मभूतां दर्शयति ॥ तथान्यत्रापि तत्रतत्राध्यात्ममधिदैवतं च बहुधा तत्त्वाभेददर्शनं भवति। क्वचिच्च "यः प्राणः स वायुः" इति विस्पष्टमेव वायुं प्राणं चैकीकरोति ॥ तथोदाहृतेऽपि वाजसनेयिब्राह्मणे "यतश्चोदेति सूर्यः" [ ( बृ० १।५।२३ ) ( कठ० ४।९ ) ]

---

रत्नप्रभा ।

तत्रेति॥ अस्तु कर्माङ्गानां,तत्सम्बन्धोपास्तीनां च,—फलभेदान्नित्यत्वानित्यत्वरूपः प्रयोगभेदः। इह तु वायुप्राणयोः स्वरूपभेदात्, तत्स्वरूपप्राप्तिलक्षणफलैक्याच्च ध्यानप्रयोगैक्यमितिपूर्वपक्षयति—अपृथगितीति॥ "अग्निर्वाग् भूत्वा"इत्यारभ्य"वायुः प्राणो भूत्वा नासिके प्राविशद्" इत्यभेदं दर्शयतीत्यर्थः।"यतश्चोदेति सूर्यस्तं वद" इति प्रश्ने सूत्रात्मकवायुर्वाच्यः,वायुस्थाने प्राणं वदन्नेकत्वं तयोर्दर्शयतीत्याह—तथेति॥ किञ्च यदि वायुप्राणयोः पृथग् ध्यानं स्यात्, तर्हि ध्यानाङ्गव्रतभेदोऽपि स्यात् ॥ इह तु प्राणापाननिरोधा-

भामती ।

वाजिनसंयुक्तयोः कर्मणोः । नोत्पन्नकर्मसंयुक्तः । अध्यात्माधिदैवोपदेशेषु चोत्पन्नोपासनासंयोगः । तथोपक्रमोपसंहारालोचनया विद्यैकत्वविनिश्चयादेकैव सकृत्प्रवृत्तिरिति पूर्वपक्षः । राद्धान्तस्तु—सत्यं विद्यैकत्वं

आनन्दगिरीय-न्यायनिर्णयः ।

वुदाहरति—वाजसनेयक इत्यादिना । श्रेष्ठत्वमभग्नव्रतत्वेनोत्कृष्टत्वम् । तयोर्भेदाभेदवादिवाक्याभ्यां संशयमाह—तत्रेति । अत्र वायुप्राणयोरुपगमनविद्योक्त्या वाक्यार्थधीहेतोरेव कथनात्पादादिसंगतिः । पूर्वपक्षे विद्यैक्यात्प्रवृत्तिभेदासिद्धिः । सिद्धान्ते तदैक्येऽपि गुणभेदात्तत्सिद्धिरिति सिद्धवत्कृत्य पूर्वपक्षयति—अपृथगिति । फलभेदात्कर्माङ्गानां तद्युक्तोपास्तीनां च नित्यत्वानित्यत्वरूपप्रयोगभेदवद्वायुप्राणयोस्तत्त्वाभेदात्तत्प्राप्तिफलैक्याच्चोपास्तिप्रयोगैक्यमिति भावः । तत्त्वाभेदेऽपि कथमपृथगनुचिन्तनं तत्राह—नेति । न खल्वेकस्मिन्नग्निहोत्रे प्रयोगभेदोऽस्तीत्यर्थः । तत्त्वाभेदे मानमाह—दर्शयतीति । वायुः प्राणो भूत्वा नासिके प्राविशदिति श्रुतिरत्रोपयुक्ता । आध्यात्मिकप्राणस्याऽऽधिदैविकवाय्वभेदे लिंगमाह—तथेति । आध्यात्ममधिदैवं च तयोस्तत्त्वाभेदे सर्वश्रुतिसंमतिमाह—तथाऽन्यत्रेति । वायुप्राणयोस्तत्त्वाभेदे वाक्यमपि मानमित्याह—क्वचिच्चेति । अथेममेव नाऽऽप्नोन्मृत्युर्योऽयं मध्यमः प्राण इत्युपक्रम्य प्राणाद्वा एष सूर्य उदेतीत्युपसंहाराच्च तयोरैक्यमित्याह—तथेति । यदि पृथगनुचिन्तनं तयोर्विधित्सितं तर्हि तदङ्गव्रतोपदेशोऽपि पृथगेव स्यात् । इह च प्राण्यादिति प्राणने प्राप्तेऽपान्यादित्यपाननमुक्त्वा तस्मिन्प्राप्ते प्राण्यादिति प्राणनवचनेन प्राणापाननिरोधं कुर्यादित्येकमेव व्रतं दर्शयति । ततश्चापृथगनु-

इत्यस्मिन्नुपसंहारश्लोके "प्राणाद्वा एष उदेति प्राणेऽस्तमेति" [ बृ० १ । ५ । २३ ] इति प्राणेनैवोपसंहरन्नेकत्वं दर्शयति ॥ "तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च" [ बृ० १ । ५ । २३] इति च प्राणव्रतेनैवैकेनोपसंहरन्नेतदेव द्रढयति ॥ तथा छान्दोग्येऽपि परस्तात् "महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः" [ छां० ४ । ३ । ६ ] इत्येकमेव संवर्गं गमयति न ब्रवीत्येक एकेषां चतुर्णां संवर्गोऽपरोऽपरेषाम् ॥ तस्मादपृथक्त्वमुपगमनस्येति ॥ एवं प्राप्ते ब्रूमः ॥ पृथगेव वायुप्राणावुपगन्तव्याविति ॥ कस्मात् ॥ पृथगुपदेशाद्-आध्यानार्थो ह्ययमध्यात्माधिदैवविभागोपदेशः सोऽसत्याध्यानपृथक्त्वेऽनर्थक

रत्नप्रभा ।

त्मकव्रतैक्यश्रुतेर्ध्यानैक्यमित्याह-तस्मादिति ॥ व्रतैक्यस्य प्रशस्तत्वादित्यर्थः ॥ किञ्च वायुप्राणौ संवर्गौ भेदेनोपक्रम्य परस्ताद्वाक्यशेषे संवर्गभेदैक्यश्रुतेः प्रयोगैक्यमित्याह-तथेति ॥ महात्मन इति द्वितीयाबहुवचनम् । चतुरः चतुःसंख्याकान्-अग्निसूर्योदकचन्द्रानपरांश्च वाक्चक्षुःश्रोत्रमनोरूपान् एको देवः कः प्रजापतिः जगार जीर्णवान् । उपसंहृतवानित्यर्थः ॥ न ब्रवीति भेदमिति शेषः । यथा-"अग्निहोत्रं जुहोति" इत्युत्पन्नाग्निहोत्रस्यैकस्यैव दधितण्डुलादिगुणभेदेन सायम्प्रातःकालभेदेन प्रयोगभेदः, तथा "अन्नादो भवति य एवं वेद" [ तै० ३ । ९ । १ ] इत्युत्पन्नायाः संवर्गविद्याया एकत्वेऽप्युत्पन्नशिष्टवायुप्राणाख्यगुणभेदात् प्रयोगभेद इत्युत्सूत्रं सिद्धान्तयति-पृथगेवेति ॥ "तौ वा एतौ द्वौ संवर्गौ" [ छां ४ । ३ । ४ ] इत्युपास्यभेदवाक्यस्य

भामती ।

तथापि गुणभेदात्प्रवृत्तिभेदः । सायंप्रातःकालगुणभेदाद्यथैकस्मिन्नप्यग्निहोत्रे प्रवृत्तिभेदः । एवमिहाप्यध्यात्माधिदैवगुणभेदादुपासनस्यैकस्यापि प्रवृत्तिभेद इति सिद्धम् । आध्यानार्थो ह्ययमध्यात्माधिदैवविभागो

आनन्दगिरीय-न्यायनिर्णयः ।

चिन्तनमित्याह-तस्मादिति । छान्दोग्यालोचनायामपि तयोः स्वरूपाभेदधीरित्याह-तथेति । वायुं प्राणं च संवर्गगुणकं भेदेनोपक्रम्य परस्ताद्वाक्यशेषे संवर्गमेकमेव गमयतीति संबन्धः । महात्मन इति द्वितीयाबहुवचनम् । चतुरश्चतुःसंख्याकानग्निसूर्योदकचन्द्रानन्यांश्च वाक्चक्षुःश्रोत्रमनोलक्षणानेको निरपेक्षः सन्को देवः प्रजापतिर्जगार गीर्णवानुपसंहृतवानिति यावत् । भेदे मानाभावादपि तयोरैक्यमित्याह-नेति । बहुश्रुत्यालोचनया वायुप्राणैक्यसिद्धेस्तदुपास्तेरपि तदधीनत्वादभेदः । न चाध्यात्माधिदैवगुणभेदाद्भेदस्तदभेदोक्तेरुत्पन्नोपास्तिसंयोगाद्भेदकत्वायोगान्नो खल्वग्निहोत्रं जुहोतीत्युत्पन्नाग्निहोत्रस्य दधितण्डुलादिभेदाद्भेद उत्पद्यमानकर्मयोगिगुणभेदस्यैव भेदकत्वात् । तस्मादुत्पन्नोपास्तियोगित्वाद्गुणभेदस्योपास्तिभेदाभावादपृथगनुचिन्तनमित्युपसंहरति-तस्मादिति । उक्तनीत्या विद्यैक्येऽप्यध्यात्माधिदैवगुणभेदात्प्रवृत्तिभेदः सायंप्रातःकालगुणभेदादेकस्मिन्नप्यग्निहोत्रे प्रवृत्तिभेदवदिति सिद्धान्तयति-एवमिति । उपास्यैक्यात्प्रयोगैक्योक्तेर्न पृथगनुचिन्तनमिति शङ्कते-कस्मादिति । अग्निहोत्रस्येव दधितण्डुलादेर्ध्यानस्य प्रकृते भेदोपदेशात्पृथगनुचिन्तनसिद्धिरित्याह-पृथगिति । तदेव विवृणोति-आध्यानेति । तौ वा एतौ संवर्गाविति वाक्यस्योपास्यगुणविशिष्टभेदवाचिनो भेदेनानुचिन्तने तात्पर्याद्वाक्यप्रामाण्याद्भेदेनैव चिन्तनमित्यर्थः । पूर्वपक्षबीजमनुवदति-नन्विति । उपास्यतया प्रधानभूतसंवर्गगुणकवायुप्राणधर्मि-

एव स्यात् ॥ ननूक्तमपृथगनुचिन्तनं तत्त्वाभेदादिति ॥ नैष दोषः ॥ तत्त्वाभेदेऽप्यवस्थाभेदादुपदेशभेदवशेनानुचिन्तनभेदोपपत्तेः । श्लोकोपन्यासस्य च तत्त्वाभेदाभिप्रायेणाप्युपपद्यमानस्य पूर्वोदितध्येयभेदनिराकरणसामर्थ्याभावात् । "स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुः" [ बृ० १ । ५ । २२ ] इति चोपमानोपमेयकरणात् ॥ एतेन व्रतोपन्यासो व्याख्यातः ॥ "एकमेव व्रतम्" [बृ० १।५।२३] इति चैवकारो वागादिव्रतनिवर्तनेन प्राणव्रतप्रतिपत्त्यर्थः । भग्नव्रतानि हि वागादीन्युक्तानि—"तानि । मृत्युः श्रमो भूत्वोपयेमे" [ बृ० १ । ५ ।२१] इति श्रुतेः । न वायुव्रतनिवृत्त्यर्थः । "अथातो व्रतमीमांसा" [ बृ० १ । ५ । २१ ] इति प्रस्तुत्य तुल्यवद्वायुप्राणयोरभग्नव्रतत्वस्य निर्धारितत्वात् । "एकमेव व्रतं चरेद्" [बृ० १ । ५।२३] इति चोक्त्वा "तेनो एतस्यै देव-

---

रत्नप्रभा ।

प्रयोगभेदपरत्वाद्वाक्यादेव भेदसिद्धिरित्यर्थः ॥ पूर्वपक्ष्युक्तमनूद्य प्रत्याह—**ननूक्तमित्यादिना** ॥ उपास्यतया प्रधानभूतसंवर्गगुणविशिष्टोपास्यभेदवाक्यविरोधादनुपास्यवायुतत्त्वैक्यवाक्यं न प्रयोगैक्यप्रापकमिति भावः । सूर्योदयास्तमययोर्वाय्वधीनत्वात्तदभेदाभिप्रायेण प्राणावुक्तौ । ततोऽध्यात्माधिदैवावस्थाभेदेनोक्तस्य ध्येयभेदस्य निरासे "यतश्चोदेति" इति श्लोकस्य न शक्तिरित्याह—**श्लोकेति** ॥ असामर्थ्ये लिङ्गमाह—**सामर्थ्येति** ॥ श्लोकोपन्यासवद् व्रतैक्योपन्यासोऽपि तत्त्वाभेदाभिप्रायेणेत्याह—**एतेनेति** ॥ नन्वेवकाराद्वायुव्रतनिवृत्तेः प्राण एवैको ध्येयो भातीत्यत आह—**एकमेवेति** ॥ वदनदर्शनादीनि वाक्चक्षुरादीनां व्रतानि श्रमरूपमृत्युना भग्नानीत्युक्त्वा प्राणस्याभग्नव्रतत्वं निर्धारितम् ॥ तथा ज्वलनतापादीनि अग्न्यादित्यादीनां व्रतानि भग्नानीत्युक्त्वा वायोरभग्नव्रतत्वं निर्धारितम् । "स यथैषां प्राणानां मध्यमः प्राणः" [ बृ० १ । ५ । २२ ] स्थिरव्रतः "एवमेतासां देवतानां वायुर्म्लो ( युर्निम्लो ) चन्ति ह्यन्या देवता न वायुः सैषाऽनस्तमिता देवता यद्वायुः" [ बृ० १ । ५ । २२ ] इति श्रुतेः ॥ अतो भग्नव्रतनिरासार्थ एवकारो न वायुव्रतनिवृत्त्यर्थ इत्यर्थः॥ अत्रैवार्थे लिंगमाह—**एकमिति**॥ उकारः—चार्थः।तेन

भामती ।

**पदेश इति**।अग्निहोत्रस्येवाध्यानस्य कृते दधितण्डुलादिवदयं पृथगुपदेशः। **एतेन व्रतोपन्यास(देश) इति**। एतेन तत्त्वाभेदेन । एवकारश्च वागादिव्रतनिराकरणार्थः । नन्वेतस्यै देवतायै इति देवतामात्रं श्रूयते न

आनन्दगिरीय—न्यायनिर्णयः ।

भेदविषयेण वाक्येन गुणभूतसमीरणस्वभावैक्यविषयं वाक्यं बाध्यमित्यभिप्रेत्याऽऽह—**नेति** । यतश्चोदेतीत्यादिश्लोकोक्तेर्वायुप्राणैक्यसिद्धेरुपास्तेरपि तथात्वादपृथगुपगतिरित्याशंक्याऽऽह—**श्लोकेति** । सूर्योदयास्तमययोर्वाय्वधीनत्वात्तदभेदधिया प्राणात्सूर्योदयास्तमयावुक्तौ ततोऽध्यात्माधिदैवविभागोक्तस्य ध्येयभेदस्य निरासे श्लोकस्य न सामर्थ्यमित्यर्थः । इतोऽपि विशिष्टध्येयभेदोऽस्तीत्याह—**स यथेति** । यत्तु प्राणव्रतेनोपसंहारादैक्ये सत्यपृथगुपगमनमिति तत्राऽऽह—**एतेनेति** । श्लोकस्य स्वरूपैक्याभिप्रायत्ववादेन व्रतवचनमपि तत्त्वाभेदाभिप्रायं युक्तमित्यर्थः । एवकारश्रुतेः पृथक्प्रवृत्तिरत्र भातीत्याशंक्याऽऽह—**एकमिति** । किमिति वागादिव्रतनिवर्तनेन प्राणव्रतं साध्यते तत्राऽऽह—**भग्नेति** । वायुव्रतनिवृत्त्यर्थमेवावधारणं किं न स्यात्तत्राऽऽह—**नेति** । अथेममेव नाऽऽप्नोदित्यध्यात्मं मुख्यप्राणस्य मृत्युनाऽनाप्तत्वमधिदैवतं चाग्न्यादीनां ज्वलनादिव्रतभंगमुक्त्वा वायोरभग्नव्रतत्वमुक्तम् । निम्लोचन्त्यन्या देवता न वायुरिति न वायुव्रतनिवृत्तिरेवकारार्थ इत्यर्थः । फलोक्तिरपि वायुव्रतनिवृत्त्यभावं दर्शयतीत्याह—**एकमिति** । तेन व्रते-

तायै सायुज्यं सलोकतां जयति" [ बृ० १।५।२३ ] इति वायुप्राप्तिं फलं ब्रुवन्वायुव्रतमनिवर्तितं दर्शयति । देवता ह्यत्र वायुः स्यात् । अपरिच्छिन्नात्मत्वस्य प्रेप्सितत्वात् । पुरस्तात्प्रयोगाच्च-"सैषानस्तमिता देवता यद्वायुः" [ बृ० १।५।२२ ] इति ॥ तथा "तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु" [ छां० ४।३।४ ] इति भेदेन व्यपदिशति । "ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्" [ छां० ४।३।८ ] इति च भेदेनैवोपसंहरति ॥ तस्मात्पृथगेवोपगमनं प्रदानवत् । यथा-"इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रियाधिराजायेन्द्राय स्वराज्ञे" इत्यस्यां त्रिपुरोडाशिन्यामिष्टयां "सर्वेषामभिगमयन्नवद्यत्यच्छम्बट्कारम्" इत्यतो वचनादिन्द्राभेदाच्च सहप्रदानाशङ्कायां

रत्नप्रभा ।

व्रतेन वायोः सायुज्यं समानदेहत्वं सलोकतां च जयतीत्यर्थः ॥नन्वत्र वायुप्राप्तिर्न श्रुतेत्यत्राह-**देवतेति** ॥ तस्मात्तत्त्वाभेददृष्ट्या व्रतैक्यमिति स्थितम् ॥ सम्प्रति पूर्वोक्तं पृथगुपदेशं विवृणोति-**तथा तौ वा इति** ॥ सौत्रं दृष्टान्तं व्याचष्टे-**प्रदानवदिति** ॥ त्रयः पुरोडाशाः अस्याः सन्तीति-**त्रिपुरोडाशिनी** इष्टिः, तस्यां किं सहप्रदानम्-उत-भेदेनेति सन्देहे पूर्वपक्षमाह-**सर्वेषामिति** ॥ सर्वेषां देवानामाभिमुख्येन प्रापयन् हविः **अवद्यति** गृह्णाति **अच्छं वट्कारं** वषट्काराख्यदेवभागमित्यर्थः॥यद्वा सर्वदेवार्थे युगपदवदानं कार्यमित्यत्र हेतुः-अच्छं वट्कारमिति। अंन्यर्थत्वायेत्यर्थः । एकार्थमवत्ते हविषि शेषो यागा-

भामती ।

तु वायुस्तत्कथं वायुप्राप्तिमाहेत्यत आह-**देवतेत्य(ता ह्य)त्र वायुरिति**। वायुः खल्वग्न्यादीन्संवृणुत इत्यग्न्यादीनपेक्ष्यानवच्छिन्नोऽग्न्यादयस्तु तेनैवावच्छिन्ना इति संवर्गगुणतया वायुरनवच्छिन्ना देवता।**सर्वेषामभिगमयन्निति** । मिलितानां श्रवणाविशेषादिन्द्रस्य देवताया अभेदाच्च यागानामपि पुरोडाशानां सहप्रदाना-

आनन्दगिरीय-न्यायनिर्णयः ।

नापिशब्देन समानार्थः सन्तुशब्दः सायुज्यं सलोकतामपीत्युपरि संबध्यते । एतस्यै एतस्या देवतायाः सायुज्यं समानदेहतां वा सालोक्यं समानलोकतां चोपास्तेस्तारतम्याज्जयति प्राप्नोतीत्यर्थः । अन्यव्रतानुष्ठानादन्याप्राप्तेरत्र च वायुप्राप्तिनिर्देशान्न तद्व्रतनिवृत्तिरिति श्रुतितात्पर्यमाह-**वायुरिति** । देवताप्राप्तिरेवात्र श्रुता न वायुप्राप्तिरित्याशंक्याऽऽह-**देवतेति** । अग्न्यादीनपेक्ष्यानवच्छिन्नो देवो वायुस्ते तु तेनैवावच्छिन्ना इति संवर्गगुणो वायुरनवच्छिन्ना देवता तदात्मत्वमत्राऽऽप्तुमिष्टमतो देवताप्तिर्वायुप्राप्तिरित्यर्थः । न केवलं प्रकरणालोचनया देवता वायुः किंतु साक्षादेव श्रुतेरित्याह-**पुरस्तादिति** । यत्तु पृथगुपदेशात्पृथगुपनयनमुक्तं तदिदानीं विवृणोति-**तथेति**। संवर्गभेदेनोपक्रमवद्भेदेनोपसंहारादपि पृथगनुचिन्तनमित्याह-**ते वा इति** । उपक्रमोपसंहारैकरूप्यफलमुपसंहरति-**तस्मादिति** । तत्रोदाहरणमवतार्य व्याचष्टे-**प्रदानवदिति** । त्रयः पुरोडाशा यस्यां सा त्रिपुरोडाशिनी तस्यामुत्पत्तिवाक्यमुदाहरति-**इन्द्रायेति** । किं तस्यां सह प्रदानं किंवा भेदेनेति संदेहे पूर्वपक्षमाह-**सर्वेषामिति** । याज्ञिकाः खल्वस्यामिष्टौ युगपदेवावदानं कुर्वंति तेन सर्वेषां देवताविशेषाणामभिगमयन्प्रापयन्नपर्यायेणैव पुरोडाशानवद्यति तत्तद्भागं गृह्णातीत्यत्र हेतुमाह-**अच्छं वट्कारमिति** । अन्यर्थत्वायेति यावत् । एकार्थं सर्वतोऽवदाने शेषो यागानर्हः स्यादयुगपत्सर्वार्थमवदाने त्वधैयर्थ्यमित्यर्थः । उक्ताद्वाक्यात्सर्वार्थे सहावदानश्रुतेर्देवताया भेदाभावाच्च तत्त्रयाणां पुरोडाशानां सहप्रदानं प्राप्तमित्याह-**अत इति** । सिद्धान्तमाह-

राजादिगुणभेदाद्याज्यानुवाक्याव्यत्यासविधानाच्च यथान्यासमेव देवतापृथक्त्वात्प्रदानपृथक्त्वं भवति, एवं तत्त्वाभेदेऽप्याध्येयांशपृथक्त्वादाध्यानपृथक्त्वमित्यर्थः । तदुक्तं संकर्षे—"नाना वा देवता पृथग्ज्ञानाद्" इति । तत्र तु द्रव्यदेवताभेदाद्यागभेदोऽपि विद्यते । नैवमिह विद्याभेदोऽस्ति । उपक्रमोपसंहाराभ्यामध्यात्माधिदैवोपदेशेष्वेकविद्याविधानप्रतीतेः । विद्यैक्येऽपि त्वध्यात्माधिदैवभेदात्प्रवृत्तिभेदो भवति । अग्निहोत्र इव सायम्प्रातःकालभेदादित्यभिप्रेत्य प्रदानवदित्युक्तम् ॥ ४३ ॥ इति प्रदानाधिकरणम् ॥ २८ ॥

---

रत्नप्रभा ।

नर्हतया वृथा स्यादिति भावः॥ एवं सहावदानश्रुतेर्दैवैक्याच्च पुरोडाशानां सहप्रक्षेपे प्राप्ते पृथक्प्रक्षेप इति सिद्धान्तमाह—राजेति॥ राजाधिराजस्वराजगुणभेदेन विशिष्टदेवताभेदादित्यर्थः॥ किञ्चाध्वर्युणा "यज" इति प्रैषे कृते होत्रीयो मन्त्रः पठ्यते—सा याज्या "अनुब्रूहि" इति प्रैषानन्तरमन्त्रः—पुरोऽनुवाक्येति भेदोऽस्ति । तत्रास्यामिष्टौ प्रथमपुरोडाशप्रदाने या क्लृप्ता याज्या सा द्वितीयप्रदाने पुरोऽनुवाक्या, या च पूर्वमनुवाक्या सा पश्चात् याज्येति व्यत्यासमन्वाहेति श्रुत्या विधानात्, यथाश्रुति प्रक्षेपपृथक्त्वमित्याह—याज्येति ॥ संकर्षः—देवताकाण्डम् । वाशब्दः—अवधारणे । नानैव देवता राजादिगुणभेदेन भेदावगमादिति सूत्रार्थः । दृष्टान्ते देवताभेदात् कर्मभेदवद् विद्याभेदः स्यादित्यत आह—तत्र त्विति ॥ कर्मोत्पत्तिवाक्यस्थदेवताभेदः कर्मभेदे हेतुः । इह तु "अन्नादो भवति" "य एवं वेद" इत्युत्पत्तावेकत्वेन ज्ञातविद्यायाः पश्चात् श्रुतवायुप्राणभेदो न भेदकः । अग्निहोत्रस्येव दध्यादिद्रव्यभेद इत्यर्थः ॥ तर्हि केनांशेन प्रदानस्य दृष्टान्तत्वमित्यत आह—विद्यैक्येऽपीति ॥ अवस्थाभेदाद्देवताभेदः प्रयोगभेदश्चेत्यंशेनायं

भामती ।

शङ्कायामुत्पत्तिवाक्य एव राजाधिराजस्वराजगुणभेदाद्याज्यानुवाक्याव्यत्यासविधानाच्च यथान्यासमेव देवतापृथक्त्वात्प्रदानपृथक्त्वं भवति । सहप्रदाने हि व्यत्यासविधानमनुपपन्नम् । क्रमवति प्रदाने व्यत्यास-

आनन्दगिरीय—न्यायनिर्णयः ।

राजादीति । उत्पत्तिवाक्य एव राजाधिराजस्वराजगुणभेदाद्यथान्यासं यथावचनं तत्तद्गुणविशिष्टदेवताभेदात्प्रदानस्य प्रक्षेपस्य पृथक्त्वमित्यर्थः । किंच, त्रिपुरोडाशिन्यामिष्टौ प्रथमपुरोडाशप्रदाने या याज्या सा पुनः प्रयोगेऽनुवाक्या याऽत्र पूर्वमनुवाक्या सा पश्चाद्याज्येति व्यत्यासमन्वाहेत्यनेन विहितं तत्प्रयोगभेदे युज्यत एकस्या ऋच एकस्मिन्प्रयोगे याज्यानुवाक्यात्वविरोधादित्याह—याज्येति । अध्वर्युणा यजेति प्रैषे कृते होत्रा प्रयुज्यमानो मन्त्रो याज्याऽनुब्रूहीति प्रैषानन्तरं प्रयुज्यमानस्तु मन्त्रोऽनुवाक्येति भेदः । पूर्वोत्तरपक्षाभ्यां दृष्टान्तं व्याख्याय दार्ष्टान्तिकमाह—एवमिति । उक्तेऽर्थे देवताकाण्डस्थमधिकरणं प्रदानभेदविषयमुदाहरति—तदुक्तमिति । संकृष्यते कर्मकाण्डस्थमेवावशिष्टं कर्म संक्षिप्योच्यत इति संकर्षो देवताकांडं तस्मिन्निति यावत् । वाशब्दो देवतैकत्वाशङ्काव्यावृत्त्यर्थः । नाना देवतेत्यत्र हेतुमाह—पृथगिति । उत्पत्तिवाक्य एव राजाधिराजादिगुणानां पृथग्ज्ञानात्तत्तद्गुणविशिष्टदेवतानामपि पृथक्त्वस्य युक्तत्वादित्यर्थः । दृष्टान्ते देवताद्रव्यभेदात्कर्मभेदवदिहापि वायुः प्राण इतिशब्दादादित्यं चरुं सौर्यं चरुमित्यादिष्वादित्यसूर्यादिशब्दभेदादिव देवताभेदेन विद्याभेदः स्यादित्याशंक्याऽऽह—तत्रेति । यत्रोत्पत्तिवाक्यादेव नानाद्रव्यदैवतं कर्म दृष्टं तत्र तद्भेदो वैश्वदेव्यामिक्षेत्यादिवत् । यत्र तूत्पत्तित एव कर्मैक्यं तत्र देवतादिभेदेऽपि न कर्मभेदोऽग्निहोत्रादिवदेव विद्यैक्यमित्यर्थः । तर्हि केन साम्येन प्रदानवदित्युक्तं तत्राऽऽह—विद्येति । अग्निहोत्रे हि सायमग्निः प्रजापतिश्च देवता सूर्यः प्रजापतिश्च प्रातरनुष्ठानं चोभ-

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥ ( २९ ) ॥

**वाजसनेयिनोऽग्निरहस्ये—"नैव वा इदमग्रे सदासीद्" इत्यस्मिन्ब्राह्मणे मनोऽधिकृत्याधीयते—"तत्षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितः" इत्यादि। तथैव "वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः" इति पृथगग्नीनामनन्ति साम्पादिकान् ॥ तेषु संशयः—किमेते मनश्चिदादयः क्रियानुप्रवेशिनस्तच्छेषभूताः—उत—स्वतन्त्राः केवलविद्यात्मका इति। तत्र प्रकरणात्क्रियानुप्रवेशे प्राप्ते—**

---

रत्नप्रभा।

दृष्टान्त इत्यर्थः ॥ ४३॥ (२८) ॥ **लिङ्गभूयस्त्वात्** ॥ उत्पत्तेः प्राग् "इदं सर्वं नैव सदासीन्नाप्यसदि"त्युपक्रम्य मनःसृष्टिमुक्त्वा "तन्मन आत्मानमैक्षत" इतीक्षणपूर्वकम् "अग्नीनपश्यद्" इति मनोऽधिकृत्य पठन्ति इत्यर्थः॥पुरुषायुष्टेन क्लृप्तशतवर्षान्तर्गतैः षट्त्रिंशत्सहस्रैरहोरात्रैरवच्छिन्नतया मनोवृत्तीनामसङ्ख्येयानामपिषट्त्रिंशत्सहस्रत्वम्।-ताभिरिष्टकात्वेन कल्पिताभिर्मनसैव सम्पादिता अग्नयः **मनश्चितः** तान् **अर्कान्** पूज्यान् **मनोमयान्** मनोवृत्तिषु सम्पादितान्। **आत्मनः** स्वस्य सम्बन्धित्वेन मनोऽपश्यत् ॥ **तथा** वाक्प्राणादयोऽपि स्वस्ववृत्तिरूपानग्नीनपश्यन्नित्याह—**तथेति** ॥ **प्राणः** घ्राणम्। कर्मेन्द्रियेण हस्तादिना चितः **कर्मचितः**। अग्निः—त्वक्। पूर्वत्राग्निचयनप्रकरणात् ॥ किमेतेऽग्नयः क्रत्वर्थाः—**उत**—प्राधान्यज्ञापकलिंगादिभूयस्त्वात् पुरुषार्था वेति संशयमाह—**तेष्विति** ॥ **केवलविद्यात्मकाः** क्रियांगत्वं विना भावनामया इत्यर्थः ॥ एकप्रयोगासम्भवाद्वायुप्राणयोरपि प्रयोगभेदोऽस्तु। इह तु मनश्चिदाद्यग्नीनां प्रकरणात् कर्मांगत्वेनैकप्रयोगत्वमिति प्रापय्य सिद्धान्तमुपक्रमते—**तत्रेत्यादिना** ॥ **पूर्वपक्षे** भावनाग्नीनां क्रत्वंगत्वमिष्टम्।

भामती।

विधिरर्थवान्। तथाविधस्यैव क्रमस्य विवक्षितत्वात्।सुगममन्यत्॥४३॥(२८)॥ **लिंगभूयस्त्वात्तद्धि बलीयस्तदपि**। इह सिद्धान्तेनोपक्रम्य पूर्वपक्षयित्वा सिद्धान्तयति। तत्र यद्यपि भूयांसि सन्ति लिंगानि मनश्चिदादीनां स्वातन्त्र्यसूचकानि तथापि न तानि स्वातन्त्र्येण स्वातन्त्र्यं प्रति प्रापकाणि। प्रमाणप्रापितं तु स्वातन्त्र्यमुपोद्बलयन्ति। न चात्रास्ति स्वातन्त्र्यप्रापकं प्रमाणम्। न चेदं सामर्थ्यलक्षणं लिंगं येनास्य स्वातन्त्र्येण प्रापकं भवेत्। तद्धि सामर्थ्यमभिधानस्य वार्थस्य वा स्यात्। तथा पूषाद्यनुमन्त्रणमन्त्रस्य पूषानुमन्त्रणे यथा वा 'पशुना यजेत' इत्येकत्वसंख्याया अर्थस्य संख्येयावच्छेदसामर्थ्यम्। न

आनन्दगिरीय—न्यायनिर्णयः।

यत्रान्यादृशं तथेहापि ध्यानभेदसिद्धिरित्यर्थः ॥ ४३ ॥ ( २८ ) ॥ वायुविद्योक्त्यनन्तरं सांपादिकाग्निविद्याचिन्तामारभते—**लिंगेति**। सांपादिकानग्नीन्क्रियाप्रकरणस्थान्मनश्चिदादीन्विषयत्वेनोपन्यस्यति—**वाजसनेयिन इति**। उत्पत्तेः प्रागिदं सर्वं नैव सदासीन्नाप्यसदित्युपक्रम्य मनसः प्रादुर्भावमुक्त्वा तदात्मानमैक्षतेतीक्षणपूर्वकं तन्मन आत्मनोऽग्नीनपश्यदिति मनोऽधिकृत्य पठन्तीत्यर्थः। पुरुषस्याऽऽयुष्टेन क्लृप्तशतवर्षान्तर्गतषट्त्रिंशत्सहस्राहोरात्रावच्छिन्नैर्मनोवाक्प्राणचक्षुःश्रोत्रत्वक्कायवृत्तिनिचयैरिष्टकात्वेन भाव्यमानैश्चीयमानान्सांपादिकानग्नीन्वदन्तीत्याह—**तदिति**। अर्कानर्चनीयान्मनोमयान्मनोवृत्तिभावितत्वाद्वागादिवृत्तिभिरिष्टकात्वेन भाविताभिश्चीयन्त इति वाक्चिदादीनग्नीनात्मनो वागादयोऽप्यपश्यन्नित्याह—**तथैवेति**। क्रत्वर्थत्वपुरुषार्थत्वविनियोजकमानदृष्ट्या संशयमाह—**तेष्विति**। केवलविद्यात्मकत्वं क्रियानुप्रवेशं विना भावनामयत्वम्। वायुप्राणयोरेकप्रयोगायोगात्प्रयोगभेदेन ध्येयत्वेऽपि मनश्चिदादीनां कर्माङ्गत्वेनैकप्रयोगत्वं युक्तमित्याह—**तत्रेति** सांपादिकाग्नीनां केवलविद्यात्मत्वेन पुरुषार्थत्वसमर्थनद्वारा वाक्यार्थधीहेतोरेवोक्तेस्तत्र

स्वातन्त्र्यं तावत्प्रतिजानीते–लिङ्गभूयस्त्वादिति। भूयांसि हि लिङ्गान्यस्मिन्ब्राह्मणे केवलविद्यात्मकत्वमेषामुपोद्बलयन्ति दृश्यन्ते–"तद्यत्किञ्चेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिरिति तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते" इति चैवंजातीयकानि। तद्धि लिंगं प्रकरणाद्बलीयः॥ तदप्युक्तं पूर्वस्मिन्काण्डे–"श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षाद्" [ जै० सू० ३ । ३ । १४ ] इति ॥ ४४ ॥

## पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॥ ४५ ॥

नैतद्युक्तं–स्वतन्त्रा एतेऽग्नयोऽनन्यशेषभूता इति। पूर्वस्य क्रियामयस्याग्नेः

रत्नप्रभा ।

तेषां क्रियाग्निना विकल्पः समुच्चयो वास्तु । सिद्धान्ते पुरुषार्थत्वमिति फलम् । तत्र सर्वप्राणिमनोवृत्तिभिर्मम सदाग्नयश्चीयन्त इति ध्यानदार्ढ्ये सति सर्वभूतानि यत्किञ्चित् मनसा सङ्कल्पयन्ति । तेषामेवाग्नीनां सा कृतिः करणमित्येकं लिंगम् । क्रियांगस्य यत्किञ्चित्करणेन सिद्ध्यदर्शनादित्याह–तद्यदिति ॥ **एवंविदे स्वपते** जाग्रतेऽपि तदीयाग्नीन् भूतानि सर्वदा चिन्वन्तीति लिंगान्तरम् । क्रियाङ्गस्य चोदितकालानुष्ठेयस्य सदा सर्वैरनुष्ठीयमानत्वायोगादित्यर्थः । षट्त्रिंशत्सहस्रत्वसंख्याप्यनङ्गत्वे लिंगमेवंजातीयकपदेनोक्तम् ॥ ४४ ॥ एवं सिद्धान्तमुपक्रम्य पूर्वपक्षयति–**पूर्वेति** ॥ **पूर्वस्य** "इष्टकाभिरग्निं चिनुते"

भामती ।

चेदमन्यस्यार्थदर्शनलक्षणं लिंगं तथा । स्तुत्यर्थत्वेनास्य विध्युद्देशेनैकवाक्यतया विधिपरत्वात् । तस्मादसति सामर्थ्यलक्षणे विरोद्धरि प्रकरणमप्रत्यूहं मनश्चिदादीनां क्रियाशेषतामवगमयति । न च ते हैते विद्याचित एवेत्यवधारणश्रुतिः क्रियानुप्रवेशं वारयति । येन श्रुतिविरोधे सति न प्रकरणं भवेत्, बाह्यसाधनतापाकरणार्थत्वादवधारणस्य । न च विद्ययाहैवैत एवंविदश्चिता भवन्तीति पुरुषसंबन्धमापादयद्वाक्यं प्रकरणमपबाधितुमर्हति । अन्यार्थदर्शनं खल्वेतदपि । न च तत्स्वातन्त्र्येण प्रापकमित्युक्तम् । तस्मात्तदपि न प्रकरणविरोधायालमिति सांपादिका अप्येते अग्नयः प्रकरणात्क्रियानुप्रवेशिन एव मानसवत् । द्वादशाहे

आनन्दगिरीय–न्यायनिर्णयः ।

पादादिसंगतिः । पूर्वपक्षे क्रियार्थानामग्नीनां क्रियात्वं सिद्धान्ते पुमर्थानां तेषां केवलविद्यामयत्वमित्यङ्गीकृत्य सिद्धान्तमुपक्रमते–**स्वातन्त्र्यमिति** । सूत्राक्षराणि योजयति–**भूयांसीति** । सर्वाण्यपीमानि भूतानि यत्किमपि मनसा संकल्पयन्ति तेषामेवाग्नीनां सा कृतिः करणमित्येतत् । प्रकृताग्नीनां स्वातन्त्र्येण भावनामयत्वे लिंगं न हि क्रियांगं यत्किंचित्करणे सिध्यति चोदनैकलभ्यत्वादित्याह–**तद्यदिति** । एवंविदे स्वपते जाग्रतेऽपि तानेतानग्नीन्भूतानि सर्वाणि सर्वदा चिन्वन्तीति लिङ्गान्तरं न हि कर्मांगं सर्वदा सर्वैरनुष्ठीयते प्रतिनियतदेशकालनिमित्तेषु चोदितत्वादित्याह–**तानिति** । कार्यकरणव्यापारैः षट्त्रिंशत्सहस्राहोरात्रावच्छिन्नैरिष्टकात्वेन भावितैरेतैः संपाद्यन्ते । तत्रेष्टकास्वग्निषु च संख्याधिक्यमग्नीनां केवलविद्यात्वे लिङ्गम् । न हि क्रियांगत्वे प्रसिद्धसंख्यातिरेकसिद्धिरिति मत्वाऽऽह–**एवमिति** । प्रकरणादेषां क्रियांगत्वं सिद्धं लिंगाच्च स्वातन्त्र्यं तेन संशयः स्यादित्याशंक्याऽऽह–**तद्धीति** । प्रमाणत्वाविशेषे कुतो बलाबलव्यवस्थेत्याशंक्याऽऽह–**तदपीति** ॥ ४४ ॥ सिद्धान्तेनोपक्रम्याधुना पूर्वपक्षयति–**पूर्वेति** । पूर्वपक्षं विवृण्वन्नुक्तसिद्धान्तप्रतिज्ञां निषेधति–**नैतदिति** । संप्रति सहेतुकं पूर्वपक्षं प्रतिजानीते–**पूर्वस्येति** । इष्टकाभिरग्निंश्चिनुत इत्युक्तक्रियामयाग्न्यधिकारे श्रवणादयमपि सांपादिकाग्न्युपदेशस्तद्विषयो

**प्रकरणात्तद्विषय एवायं विकल्पविशेषोपदेशः स्यान्न स्वतन्त्रः ॥ ननु प्रकरणाल्लिंगं बलीयः ॥ सत्यमेव तत ॥ लिंगमपि त्वेवञ्जातीयकं न प्रकरणाद्बलीयो भवति । अन्यार्थदर्शनं ह्येतत । साम्पादिकाग्निप्रशंसारूपत्वात । अन्यार्थदर्शनं चासत्यामन्यस्यां प्राप्तौ गुणवादेनाप्युपपद्यमानं न प्रकरणं बाधितुमुत्सहते । तस्मात्साम्पादिका अप्येतेऽग्नयः प्रकरणात्क्रियानुप्रवेशिन एव स्युर्मानसवत ।**

रत्नप्रभा ।

इत्युक्तस्य "स एव विष्टकोग्निः" इति सन्निहितस्य **अयं विकल्पविशेषोपदेशः** सङ्कल्पमयत्वाख्यप्रकारभेदोपदेशः । क्रियाग्निवत् साङ्कल्पिकाग्नयोऽप्यंगमिति यावत् ॥ किं विधिवाक्यस्थं लिंगं प्रकरणाद्बलीयः अर्थवादस्थं वा । आद्य मंगीकरोति-**सत्यमिति** ॥ न द्वितीय इत्याह-**लिंगमिति** ॥ मानसाग्निविध्यर्थार्थवादस्थलिंगानां स्वार्थप्रापकमानाभावाद् दौर्बल्यमित्यर्थः ॥ सूत्रस्थक्रियापदं व्याचष्टे-**तस्मादिति** ॥ ननु-अक्रियारूपाग्नीनां ध्यानमयानां कथं क्रियांगत्वं तत्राह-**मानसवदिति** ॥ द्वादशाह-

भामती ।

तु श्रूयते-'अनया त्वा पात्रेण समुद्रं रसया प्राजापत्यं मनोग्रहं गृह्णामि' इति । तत्र संशयः-किं मानसं द्वादशाहादहरन्तरमुत तन्मध्यपातिनो दशमस्याह्नोऽङ्गमिति । तत्र वाग्वै द्वादशाहो मनो मानसमिति मानसस्य द्वादशाहाद्भेदेन व्यपदेशाद्वाङ्मनसभेदवद्भेदः । निर्धूतानि द्वादशाहस्य गतरसानि छन्दांसि तानि

आनन्दगिरीय-न्यायनिर्णयः ।

विकल्पोपदेशस्तथा च यथा क्रियांगं क्रियामयोऽग्निस्तथा सांपादिकाग्निरपि तदंगं स्यादित्यर्थः । विकल्पविशेषः प्रकारभेदः । उक्तं सैद्धान्तिकं मतमनुवदति-**नन्विति** । तेन प्राकरणिकं क्रियाशेषत्वं हित्वा लैङ्गिकं पुमर्थत्वमेष्टव्यमिति शेषः । विध्युद्देशस्थमर्थवादस्थं वा लिंगं प्रकरणाद्बलवदिति विकल्प्याऽऽद्यमंगीकरोति-**सत्यमिति** । द्वितीयं दूषयति-**लिंगमिति** । एवंजातीयकं सर्वदा सर्वाणि भूतानि चिन्वन्तीत्याद्यर्थवादस्थमिति यावत् । तदेव साधयति-**अन्यार्थेति** । न हीदं साधनात्मकं लिंगं विध्युद्देशकवाक्यतया तत्परत्वादतो नेदं स्वातन्त्र्येण प्रमापकं स्तुतिमात्रत्वादित्यर्थः । अन्यार्थदर्शनानामपि प्रमापकत्वमाशंक्य मूलप्रमाणभावे तथाभावेऽपि प्रकृते तदभावान्मैवमित्याह-**अन्येति** । प्रकृतलिंगस्य प्रकरणाबाधकत्वे फलितमाह-**तस्मादिति** । एतेन क्रियेति पदं व्याख्यातम् । कथमक्रियारूपाणामेतेषां क्रियाशेषत्वं तत्राऽऽह-**मानसवदिति** । द्वादशाहे श्रूयतेऽनया त्वा पात्रेण समुद्रं रसया प्राजापत्यं मनोग्रहं गृह्णातीति । तत्र किं मानसं द्वादशाहादहरन्तरं किंवा तन्मध्यपातिनो दशमस्यांगमिति संदेहेवाग्वै द्वादशाहो मनो मानसमिति भेदोक्त्या मानसस्य द्वादशाहाद्भेदसिद्धेर्द्वादशाहस्य गतरसान्यङ्गानि मानसेनैवाऽऽप्यायन्तीति च मानसेन द्वादशाहस्य स्तुतेः स्तुतिस्तुत्यभावस्य भेदाकांक्षत्वात्पत्नीसंयाजान्तान्यहानि संतिष्ठन्त इत्युक्त्वा द्वादशाहान्तर्गतानामह्नां पत्नीसंयाजान्तत्वदृष्टेर्मानसस्य च पत्नी संयाज्यमानसाय प्रसर्पन्तीति पत्नीसंयाजादुपरिष्टादेव श्रुतेर्द्वादशाहसंज्ञायाश्च त्रयोदशाहेऽपि द्वादशाहसत्त्वेन कथंचिदुपपत्तेर्द्वादशाहादहरन्तरं मानसमिति प्राप्ते मानसस्य त्रयोदशाहत्वे मानाभावाद्द्वादशाहसंज्ञायां गणवृत्त्या नेतुमयुक्तत्वादंगांगिभेदेनोक्तिभेदस्य स्तुतिस्तुत्यभावस्य च सिद्धेरह्नां पत्नीसंयाजान्ततायाश्चौत्सागकत्वाद्विशेषोक्त्या दशमस्याह्नो ग्रहणादीनां मानसानां पत्नीसंयाजात्परत्वाविरोधादेष वै दशमस्याह्नो विसर्गो यन्मानसमिति चोक्तेर्विसर्गस्यान्तस्यान्तवतो धर्मत्वाद्दशमाहरङ्गतावगतेर्दशमेऽहनि मानसाय प्रसर्पन्तीति चाऽऽधारत्वोक्तेस्तदंगमेव मानसं नाहरन्तरमिति राद्धान्तितम् । तदेवं द्वादशाहयोगिनो दशमस्याह्नो मानसमंगमिति कर्ममीमांसायामुक्तं तथाऽपि दशरात्रस्य द्वादशाहविकृतित्वात्क्रमेणाहर्धर्मेष्वतिदिष्टेषु दशरात्रगत-

**यथा—द्वादशरात्रस्य दशमेऽहन्यविवाक्ये पृथिव्या पात्रेण समुद्रस्य सोमस्य प्रजापतये देवतायै गृह्यमाणस्य ग्रहणासादनहवनाहरणोपह्वानभक्षणानि मानसान्येवाम्नायन्ते । स च मानसोऽपि ग्रहकल्पः क्रियाप्रकरणात्क्रियाविशेष एव भवति, एवमयमप्यग्निकल्प इत्यर्थः ॥ ४५ ॥**

रत्नप्रभा ।

स्याद्यन्ताहर्द्वयं त्यक्त्वा मध्यस्थदशरात्रस्यैव द्विरात्रादिषु प्रकृतित्वम् । तद्धर्माणामेव तेष्वतिदेशात् । तस्य मध्यदिनानुष्ठेयस्य सदोचैरनुष्ठीयमानत्वात् । दशरात्रस्य दशमेऽहन्यर्थादेकादशेऽहनि मानसग्रहः श्रूयते । "अनया त्वा पात्रेण समुद्रं रसया प्राजापत्यं मनोग्रहं गृह्णाति" इति । **अनया रसया** पृथिव्या **पात्रेण समुद्रं त्वा** प्रजापतिदेवताकं मनोग्रहं, गृह्यते इति—**ग्रहः**—सोमरसः, मनसा रसत्वेन भावितमध्वर्युर्गृह्णातीत्यर्थः ॥ अत एवर्त्विजां ध्यायितया विविधवाक्योच्चारणाभावाद्—**अविवाक्यसंज्ञा**—अह्नः प्राप्ता। **ग्रहणं नाम** सोमपात्रस्योपादानम् । गृहीतस्य स्वस्थाने स्थापनम्—**आसादनम्** । सोमस्य होमः **हवनम्** । हुतशेषादानम्—**आहरणम्** । शेषभक्षणायर्त्विजां मिथोऽनुज्ञाकरणम्—**उपह्वानम्** ॥ ततो भक्षणमित्येतानि मानसान्येवेत्यर्थः ॥ स च मानसो ग्रहो द्वादशाहादहरन्तरं स्वतन्त्रमित्याशङ्क्य द्वादशाहसंज्ञाविरोधात् नाहरन्तरम् किन्तु प्रकरणादविवाक्यस्यांगमिति सिद्धान्तमाह—**स चेति** ॥ **कल्पः**—कल्पनाप्रकारः ॥ केचित्त्वत्र भाष्ये दशरात्रशब्दो विकृतिपरः । तत्रापि दशमेऽहन्यविवाक्यसंज्ञके मानसग्रहस्यातिदेशप्रा-

भामती ।

मानसेनैवाप्यायन्तीति च द्वादशाहस्य मानसेन स्तूयमानत्वाद्भेदे च सति स्तुतिस्तुत्यभावस्योपपत्तेर्द्वादशाहादहरन्तरं न तदङ्गं, पत्नीसंयाजान्तत्वाच्चाह्नां पत्नीः संयाज्यमानसाय प्रसर्पन्तीति च मानसस्य पत्नीसंयाजस्य परस्ताच्छ्रुतेः । त्रयोदशाहेऽप्यवयुज्य द्वादशसंख्यासमवायात्कथंचिज्जघन्ययापि वृत्त्या द्वादशाहसंज्ञाविरोधाभावादिति प्राप्तेऽभिधीयते—प्रमाणान्तरेण हि त्रयोदशत्वेऽह्नां सिद्धे द्वादशाह इति जघन्यया वृत्त्यो नीयेत । न त्वस्ति तादृशं प्रमाणान्तरम् । न च व्यपदेशभेदोऽहरन्तरत्वं कल्पयितुमर्हति । अङ्गाङ्गिभेदेनापि तदुपपत्तेः । अत एव च स्तुत्यस्तावकभावस्याप्युपपत्तिः । देवदत्तस्येव दीर्घैः केशैः । पत्नीसंयाजान्तता तु यद्यप्यौत्सर्गिकी तथापि दशमस्याह्नो विशेषवचनान्मानसानि ग्रहणासादनहवनादीनि पत्नीसंयाजात्पराञ्चि भविष्यन्ति ।·किमिव हि न कुर्याद्वचनमिति । एष वै दशमस्याह्नो विसर्गो यन्मानसमिति वचनाद्दशमाहरङ्गता गम्यते । विसर्गोऽन्तोऽन्तवतो धर्मो न स्वतन्त्र इति । दशमेऽहनि मानसाय प्रसर्पन्तीति दशमस्याह्न आधारत्वनिर्देशाच्च तदङ्गं मानसं नाहरन्तरमिति सिद्धम् । तदिह द्वादशाहसंबन्धिनो दशमस्याह्नोऽङ्गं मानसमिति धर्ममीमांसासूत्रकृतोक्तम् । दशरात्रगस्यापि दशमस्याह्नोऽङ्गमिति भगवान्भाष्यकारः । श्रुत्यन्तरबलेनाह—**यथा द्वादशरात्रस्य दशमेऽहन्यविवाक्य इति** । अविवाक्य इति दशम-

आनन्दगिरीय—न्यायनिर्णयः ।

दशमाहन्यपि द्वादशाहान्तर्गतदशमाहरङ्गस्य मानसस्यास्ति प्राप्तिरित्यभिप्रेत्य व्याचष्टे—**यथेति** । अविवाक्यमिति दशमस्याह्नो नामधेयं विविधानि वाक्यानि यत्र मानसत्वादृत्विजां न संति तत्तथेति व्युत्पत्तेः । तत्रेदं श्रुतमनया त्वा पात्रेणेत्यादि त्वां समुद्रमनया रसया पृथिव्यां पात्रेण प्रजापतिदेवताकं मनोग्रहं ध्यानमयं ग्रहमापाद्याध्वर्युर्गृह्णातीति वाक्यार्थः । तमिमं सोपस्करमुपन्यस्यति—**पृथव्येति** । ग्रहणं सोमाधारपात्रस्योपादानमासादनं गृहीतस्य स्वस्थाने स्थापनं ततः सोमस्य होमो हवनं हुतशेषादानमाहरणं पश्चादृत्विजां तद्भक्षणाय मिथोऽनुज्ञाकरणमुपह्वानं ततोऽवशिष्टस्य सोमस्य भक्षणमित्येतानि मानसान्येवेत्यर्थः । कथमन्यग्रहयोगिनो मानसस्य कल्पनाभेदस्य क्रियानुप्रवेशित्वं तत्राऽऽह—**स चेति** । उक्तदृष्टान्तादग्निसंबन्धिकल्पनाभेदोऽपि क्रियाधिकारात्क्रियानुप्रवेशीति दार्ष्टान्तिकमाह—**एवमिति** ॥ ४९ ॥

## अतिदेशाच्च ॥ ४६ ॥

अतिदेशश्चैषामग्नीनां क्रियानुप्रवेशमुपोद्बलयति "षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः" इति। सति हि सामान्येऽतिदेशः प्रवर्तते ततश्च पूर्वेणेष्टकाचितेन क्रियानुप्रवेशिनाऽग्निना साम्पादिकानग्नीनतिदिशन्क्रियानुप्रवेशमेवैषां द्योतयति ॥ ४६ ॥

## विद्यैव तु निर्धारणात् ॥ ४७ ॥

तुशब्दः पक्षं व्यावर्तयति। विद्यात्मका एवैते स्वतन्त्रा मनश्चिदादयोऽग्नयः स्युः, न क्रियाशेषभूताः। तथाहि निर्धारयति-"ते हैते विद्याचित एव" इति। "विद्यया हैवैत एवंविदश्चिता भवन्ति" इति च॥४७॥

## दर्शनाच्च ॥ ४८ ॥

दृश्यते चैषां स्वातन्त्र्ये लिंगम्। तत्पुरस्ताद्दर्शितं-"लिंगभूयस्त्वाद्" [व्या० सू० ३।३।४४] इत्यत्र ॥ ४८ ॥ ननु लिंगमप्यसत्यामन्यस्यां प्राप्तावसाधकं कस्यचिदर्थस्येत्यपास्य तत्प्रकरणसामर्थ्यात्क्रियाशेषत्वमध्यवसितमिति, अत उत्तरं पठति—

---

रत्नप्रभा।

स्तयांगत्वादित्याहुः ॥ ४५ ॥ मनश्चिदादीनां क्रियांगत्वे प्रकरणमुक्त्वा लिंगमाह—अतिदेशश्चेति। क्रियांगत्वसादृश्यादतिदेश इत्यर्थः ॥ ४६ ॥ सिद्धान्तमाह—विद्येति ॥ ४७ ॥ श्रुतिलिंगवाक्यैः प्रकरणं

भामती।

स्याद्वो नाम ॥ ४४॥४५॥ अतिदेशाच्च। न हि सांपादिकानामग्नीनामिष्टकासु चितेनाग्निना किंचिदस्ति सादृश्यमन्यत्र क्रियानुप्रवेशात्। तस्मादपि न स्वतन्त्र इति प्राप्तेऽभिधीयते ॥ ४६ ॥ विद्यैव तु निर्धारणात्। मा भूदन्येषां श्रुतविध्युद्देशानामन्यार्थदर्शनानामप्राप्तप्रापकत्वमेतेषु त्वश्रुतविध्युद्देशेषु 'वचनानि त्वपूर्वत्वात्' इति न्यायाद्विधिरुन्नेतव्यः। तया चैतेभ्यो यादृशोऽर्थः प्रतीयते तदनुरूप एव स भवति। प्रतीयते चैतेभ्यो मनश्चिदादीनां सान्तत्वं चावधारणं च फलभेदसमन्वयश्च पुरुषसंबन्धश्च। न चास्य गोदोहनादिवत्क्रत्वर्थाश्रितत्वं येन पुरुषार्थस्य कर्मपारतन्त्र्यं भवेत्। न च विद्याचित एवेत्यवधारणं बाह्यसाधनापाकरणार्थम्। स्वभावत एव विद्याया बाह्यानपेक्षत्वसिद्धेः तस्मात्परिशेषान्मानसग्रहवत्क्रियानुप्रवे-

आनन्दगिरीय-न्यायनिर्णयः।

मनश्चिदाद्यग्नीनां क्रियानुप्रवेशे लिङ्गान्तरमाह—अतिदेशाच्चेति। सूत्रं व्याकरोति—अतिदेशश्चेति। तमेव दर्शयति—षडिति। कथं तावता क्रत्वङ्गत्वं तदाह—सतीति। क्रियानुप्रवेशमन्तरेणान्यदेव सादृश्यमतिदेशकृतमित्याशंक्य तस्य योग्यानुपलम्भान्मैवमित्याह—ततश्चेति ॥ ४६ ॥ सिद्धान्तमाह—विद्यैवेति। परपक्षनिषेधं प्रतिजानीते—तुशब्द इति। सिद्धान्तप्रतिज्ञामाह—विद्येति। हेतुं व्याचष्टे—तथा हीति। एवकारश्रुत्या प्रकरणं बाध्यमिति भावः। मनश्चिदाद्यग्नीनां विद्यात्मत्वे श्रुतितात्पर्यं वक्तुं श्रुत्याभासं दर्शयन्वाक्यमपि समुच्चिनोति—विद्ययेति ॥ ४७ ॥ न श्रुत्यैव प्रकरणं बाध्यं लिङ्गादपीत्याह—दर्शनाच्चेति। तद्विभजते—दृश्यते चेति। किं तदित्यपेक्षायामाह—तत्पुरस्तादिति ॥ ४८ ॥ उत्तरसूत्रव्यावर्त्यं पूर्वोक्तं चोद्यमनुस्मारयति—नन्विति। तदुत्तरं सूत्रमवतारयति—अत इति। न

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥

नैवं प्रकरणसामर्थ्यात्क्रियाशेषत्वमध्यवसाय स्वातन्त्र्यपक्षो बाधितव्यः। श्रुत्यादिबलीयस्त्वात्-बलीयांसि हि प्रकरणाच्छ्रुतिलिंगवाक्यानीति स्थितं श्रुतिलिंगसूत्रे [ जै० सू० ३ । ३ १४ ] तानि चेह स्वातन्त्र्यपक्षं साधयन्ति दृश्यन्ते ॥ कथम् ॥ श्रुतिस्तावत् "ते हैते विद्याचित एव" इति ॥ तथा लिंगं "सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते" इति॥ तथा वाक्यमपि-"विद्यया हैवैत एवंविदश्चिता भवन्ति" इति । "विद्याचित एव" इति हि सावधारणेयं श्रुतिः क्रियानुप्रवेशेऽमीषामभ्युपगम्यमाने बाधिता स्यात् ॥ नन्वबाह्यसाधनत्वाभिप्रायमिदमवधारणं भविष्यति ॥ नेत्युच्यते ॥ तदभिप्रायतायां हि विद्याचित इतीयता विद्यास्वरूपसंकीर्तनेनैव कृतत्वादनर्थकमिदमवधारणं भवेत् । स्वरूपमेव ह्येषामबाह्यसाधनत्वमिति।अबाह्यसाधनत्वेऽपि मानसग्रहवत्क्रियानुप्रवेशशंकायां तन्निवृत्तिफलमवधारणमर्थवद्भविष्यति॥तथा-"स्वपते जाग्रते चैवंविदे सर्वदा सर्वाणि भूतान्येतानग्नींश्चिन्वन्ति"इति सातत्यदर्शनमेतेषां स्वातन्त्र्येणैव कल्पते । यथा-साम्पादिके वाक्प्राणमयेऽग्निहोत्रे "प्राणं तदा वाचि जुहोति वाचं तदा प्राणे जुहोति" [ कौ० २ । ५ ] इत्युक्त्वोच्यते-"एते अनन्ते अमृते आहुती जाग्रच्च स्वपंश्च सततं जुहोति" [ कौ० २ । ५ ] इति, तद्वत्क्रियानुप्रवेशे तु क्रियाप्रयोगस्याऽल्पकाल-

---

रत्नप्रभा ।

बाध्यमिति सूत्रत्रयार्थः ॥ ४८ ॥ तत्रावधारणश्रुतेरन्यथासिद्धिं शङ्कते-नन्वबाह्येति ॥ विद्याचित इतिपदेनैवाऽबाह्यसाधनत्वस्य लब्धत्वादवधारणं व्यर्थमित्याह-नेति ॥ तर्हि कथमस्यार्थवत्त्वं तत्राह- अबाह्येति ॥ लिंगं व्यनक्ति-तथेति ॥ अग्नीनां सर्वकालव्यापित्वेनानङ्गत्वे दृष्टान्तमाह-यथेति ॥ तदा ध्यानकाल इत्यर्थः । होमे यथा सातत्यमुच्यते, तद्वदग्नीनां सातत्यदर्शनमित्यन्वयः ॥ यदुक्तमर्थवादस्थत्वाल्लिंगं दुर्बलमिति ॥ तन्न ॥ सर्वदा सर्वभूतानि मदर्थमग्नीन् चिन्वन्तीति ध्यायेदित्यपूर्वार्थतया विधि-

भामती ।

शशङ्कापाकरणार्थमवधारणम् । न चैवमर्थत्वे संभवति द्योतकत्वमात्रेण निपातश्रुतिः पीडनीया । तस्माच्छ्रु-

आनन्दगिरीय-न्यायनिर्णयः ।

बाध इत्येतद्व्याचष्टे-नैवमिति । हेतुमवतार्य व्याचष्टे-श्रुत्यादीति । तेषां प्रकरणाद्बलीयस्त्वेऽपि प्रकृते किं जातं तत्राऽऽह-तानि चेति । स्वातन्त्र्यसाधकश्रुत्यादिदृष्टिमेव प्रश्नद्वारा स्फुटयति- कथमित्यादिना । तत्र श्रुतिं विवृणोति-विद्येति । अवधारणश्रुतेरन्यथासिद्धिं शङ्कते-नन्विति । दूषयति-नेत्युच्यत इति । कृतत्वादभिप्रेतस्याबाह्यसाधनत्वस्य ज्ञातत्वादिति यावत् । स्वरूपसंकीर्तनेन कृतत्वमेव स्फुटयति-स्वरूपमिति । विद्याशब्देनैव बाह्यसाधनत्वं व्यावर्त्यते चेत्त्वन्मतेऽपि किमर्थमवधारणमित्याशंक्याऽऽह-अबाह्येति । संप्रत्यवधारणश्रुतिवदेव लिंगं व्यनक्ति-तथेति । सातत्यं सर्वकालसर्वपुरुषव्यापित्वं तेन हेतुना क्रियानुप्रवेशाभावे दृष्टान्तमाह-यथेति । तदेति संपादनावस्थोक्तिः। आहुत्योरनन्तत्वमक्षयफलत्वादित्याह-अमृते इति । तयोरपि क्रियाङ्गत्वशङ्कां प्रत्याह-जाग्रच्चेति । उक्तदृष्टान्तात्प्रकृताग्नीनां सातत्यदृष्टेर्न क्रियाप्रवेशितेति दार्ष्टान्तिकमाह-तद्वदिति । सातत्यप्रयोगेऽपि किमित्यग्नीनां क्रियाप्रवेशो न स्यात्तत्राऽऽह-क्रियेति । यत्पुनरर्थवादस्थं लिङ्गं न प्रकरणबाधकमिति

त्वान्न सातत्येनैषां प्रयोगः कल्पेत । न चेदमर्थवादमात्रमिति न्याय्यम् । यत्र हि विस्पष्टो विधायको लिंगादिरुपलभ्यते, युक्तं तत्र संकीर्तनमात्रस्यार्थवादत्वम् । इह तु विस्पष्टविध्यन्तरानुपलब्धेः संकीर्तनादेवैषां विज्ञानानां विधानं कल्पनीयम् । तच्च यथासंकीर्तनमेव कल्पयितुं शक्यत इति सातत्यदर्शनात्तथाभूतमेव कल्प्यते ॥ ततश्च सामर्थ्यादेषां स्वातन्त्र्यसिद्धिः॥एतेन "तद्यत्किञ्चेमानिभूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः" इत्यादि व्याख्यातम् ॥ तथा वाक्यमपि "एवंविदे" इति पुरुषविशेषसम्बन्धमेवैषामाचक्षाणं न क्रतुसम्बन्धं मृष्यते ॥ तस्मात्स्वातन्त्र्यपक्ष एव ज्यायानिति ॥ ४९ ॥

**अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ५० ॥**

इतश्च प्रकरणमुपमृद्य स्वातन्त्र्यं मनश्चिदादीनां प्रतिपत्तव्यम् । यत्क्रियावयवान्मनआदिव्यापारेष्वनुबध्नाति "ते मनसैवाधीयन्त मनसैवाचीयन्त मनसैव ग्रहा अगृह्यन्त मनसाऽस्तुवन्मनसाऽशंसन् यत्किञ्चियज्ञे कर्म क्रियते यत्किञ्चियज्ञीयं कर्म मनसैव तेषु तन्मनोमयेषु

---

रत्नप्रभा ।

कल्पनात् ॥ तथा विधिवाक्यस्थत्वाल्लिंगं प्रकरणाद्बलवदित्याह—न चेदमित्यादिना ॥ एतेनेति । विधित्वेनेत्यर्थः ॥ वाक्यं विवृणोति—तथेति ॥ ४९ ॥ सम्पदुपास्त्यं मनोवृत्तिषु क्रियाङ्गानां योजनम्—अनुबन्धः श्रुत्या क्रियते । तदन्यथानुपपत्त्याप्यग्नीनां पुरुषार्थत्वम् । क्रत्वर्थत्वेऽङ्गानां सिद्धत्वेन सम्पादनानुपपत्तेरित्याह—इतश्चेत्यादिना ॥ ते अग्नयः आधीयन्त । तेषामाधानं मनसैव कुर्यादित्यर्थः ॥ कालस्य छन्दस्यनियमात् । अचीयन्त इष्टकाश्चेतव्या इत्यर्थः । ग्रहाः पात्राणि । अस्तुवन् उद्गातारः स्तुवन्ति । आशंसन् होतारः शंसन्ति ॥ किं बहूक्त्या ॥ यत्किञ्चित् यज्ञे कर्म आराद्रुपकारकं यज्ञीयं यज्ञस्वरूपोत्पादकञ्च तत् सर्वं मनोमयं कुर्यादिति श्रुत्यर्थः ॥ वृत्तिष्वग्निध्यानस्य क्रियानङ्गत्वेऽप्यु-

भामती ।

तिलिंगवाक्यानि प्रकरणमपोद्य स्वातन्त्र्यं मनश्चिदादीनामवगमयन्तीति सिद्धम् । अनुबन्धातिदेशश्रुत्यादिभ्य एवमेव विज्ञेयम् । ते च भाष्य एव स्फुटाः । यदुक्तं पूर्वपक्षिणा क्रत्वङ्गत्वे पूर्वेणेष्टकाचितेन मनश्चिदा-

आनन्दगिरीय—न्यायनिर्णयः ।

तत्राऽऽह—न चेति । अन्येषां श्रुतिविध्युद्देशानामन्यार्थदर्शनानामप्रापकत्वेऽपि प्रकृतेषु वचनानि त्वपूर्वत्वादिति न्यायेन सर्वदा सर्वाणि भूतानि मदर्थमग्निं चिन्वन्तीति मन्वीतेति विधिः कल्प्यते । अपूर्वार्थवादितया भासमानानां द्योतकत्वमात्रांगीकारेण गुणवादाश्रयणायोगादिति मत्वाऽऽह—यत्रेति । उक्तन्यायं वाक्यान्तरेऽपि संचारयति—एतेनेति । श्रुतिलिङ्गे विविच्य वाक्यं विविनक्ति—तथेति । श्रुतिलिंगवाक्येभ्यो भग्ने प्रकरणे फलितमाह—तस्मादिति ॥ ४९ ॥ स्वातंत्र्ये हेत्वन्तराण्याह—अनुबन्धादिभ्य इति । सूत्रस्य हेत्वन्तरोक्तौ तात्पर्यमाह—इतश्चेति । तत्रानुबन्धं हेतुं विवृणोति—यदिति । क्रियाङ्गानां मनआदिव्यापारेषु संयोजनान्यथानुपपत्त्याऽपि न क्रियाशेषत्वं मनश्चिदादीनामित्यर्थः । तेऽग्नयो विदुषां मनसैवाऽऽधीयन्ताऽऽधियन्ते छन्दसि कालानियमात् । मनसा चीयन्त इष्टकाश्चीयन्ते । मानसेषु मनश्चित्स्वग्निषु ग्रहाः पात्राणि विदुषाऽगृह्यन्त गृह्यन्ते । मनसैवास्तुवन्नुद्गातृप्रभृतयः स्तुवन्ति

मनश्चित्सु मनोमयमक्रियत'' इत्यादिना । सम्पत्फलो ह्ययमनुबन्धः । न च प्रत्यक्षाः क्रियावयवाः सन्तः सम्पदा लिप्सितव्याः । न चात्रोद्गीथाद्युपासनवत्क्रियांगसम्बन्धात्तदनुप्रवेशित्वमाशंकितव्यम् । श्रुतिवैरूप्यात् । न ह्यत्र क्रियांगं किञ्चिदादाय तस्मिन्नदो नामाध्यसितव्यमिति वदति । षट्त्रिंशतं तु सहस्राणि मनोवृत्तिभेदानादाय तेष्वग्नित्वं ग्रहादींश्च कल्पयति पुरुषयज्ञादिवत् । संख्या चेयं पुरुषायुषस्याहःसु दृष्टा सती तत्सम्बन्धिनीषु मनोवृत्तिष्वारोप्यत इति द्रष्टव्यम्। एवमनुबन्धात्स्वातन्त्र्यं मनश्चिदादीनाम् । आदिशब्दादतिदेशाद्यपि यथासम्भवं योजयितव्यम् । तथाहि–"तेषामेकैक एव तावान्यावानसौ पूर्वः" इति क्रियामयस्याग्नेर्माहात्म्यं ज्ञानमयानामेकैकस्यातिदिशन्क्रियायामनादरं दर्शयति । न च सत्येव क्रियासम्बन्धे विकल्पः पूर्वेणोत्तरेषामिति शक्यते वक्तुम् । न हि येन व्यापारेणाहवनीयधारणादिना पूर्वः क्रियाया उपकरोति तेनोत्तरे उपकर्तुं शक्नुवन्ति ॥ यत्तु पूर्व-

---

रत्नप्रभा ।

द्गीथध्यानवत्क्रियांगाश्रितत्वं स्यात्, नेत्याह–न चात्रोद्गीथेति ॥ अङ्गावबद्धश्रुतितोऽस्याः श्रुतेर्वैरूप्यं स्फुटयति–न हीति ॥ अनङ्गवृत्तिषु सांगक्रतुसम्पादनं पुरुषस्य यज्ञत्वध्यानवत् स्वतन्त्रमित्यर्थः ॥ अनादरार्थोऽतिदेशो न भवति । किन्तु विकल्पार्थ इत्यत आह–न चेति ॥ एकस्मिन् साध्ये निरपेक्षसाधनयोर्विकल्पो भवति । यथा व्रीहियवयोः । अत्र तु क्रियाग्नेर्ध्यानाग्नीनां साध्यभेदात् न विकल्प इत्यर्थः । अत एव समुच्चयोऽपि निरस्तः ॥ यदुक्तं क्रियाङ्गत्वसामान्येनातिदेश इति, तन्नेत्याह–यच्च–इति ॥

भामती ।

दीनां विकल्प इति । तदतुल्यकार्यत्वेन दूषयति–न च सत्येव क्रियासंबन्ध इति । अपि च पूर्वापर-

आनन्दगिरीय–न्यायनिर्णयः ।

मनसैवाऽशंसन्होत्रादयः शंसन्ति । अन्यदपि यत्किंचिद्यज्ञेषु पुरुषार्थं क्रियते यच्च यज्ञार्हं क्रत्वर्थं तत्रानुष्ठीयते तत्सर्वमेव मनोमयं भावनामयं विदुषा मनसैवाक्रियत क्रियत इत्यर्थः । किमर्थमिदमनुबन्धकरणं तदाह–संपदिति । उपास्त्यर्थो ह्यनुबन्धस्तथाऽपि मनश्चिदादीनामक्रियांगत्वे किमायातं तदाह–न चेति । तेषां क्रियांगत्वे साक्षादेवाऽऽधानादिप्रसिद्धेरनर्थिका संपदित्यर्थः । तर्हि कर्मांगयोगादुद्गीथाद्युपासनावदिदमपि क्रियागतमुपासनं स्यान्नेत्याह—न चेति । उपासनं सप्तम्यर्थः । उद्गीथाद्युपास्तिवृत्तिश्रुतिविधिवैपरीत्यमेव प्रस्तुतोपास्तिविधौ दर्शयति–न हीति । कथं तर्हीह विधानं तदाह—षडिति । मनोवृत्तिभेदेष्वग्नित्वादिरहितेषु तत्कल्पनायां दृष्टान्तमाह–पुरुषेति । कथं मनोवृत्तिषु संख्याभेदोपादानं तदाह–संख्या चेति । अनुबन्धसामर्थ्यसिद्धमर्थमुपसंहरति–एवमिति । सौत्रमादिशब्दं योजयति–आदीति । तत्र मनश्चिदादीनां स्वातन्त्र्यप्रापकमतिदेशं विशदयति–तथा हीति । वाक्यतात्पर्यमाह–क्रियेति । ननु पूर्वेणेष्टकाचितेनाग्निना मनश्चिदादीनां विकल्पः स्यादित्युक्तं तेन विकल्पार्थोऽतिदेशो नाऽऽदरार्थ इति तत्राऽऽह–न चेति । व्रीहिभिर्यागक्रियते यवैरपि तावदिति युक्तो विकल्पः । प्रकृते तु मनश्चिदादीनां तदभावान्नेष्टकाचितेन विकल्पः स्यादित्याह–न हीति । अतिदेशस्य पूर्वपक्षानुगुण्याक्रथमादिशब्देन ग्रहणमित्याशंक्यानुवदति—यत्त्विति । अग्नित्वसाम्येनाप्यतिदेशसिद्धेर्न पारिशेष्यमिति

**पक्षेऽप्यतिदेश उपोद्वलक इत्युक्तं-सति हि सामान्येऽतिदेशः प्रवर्तत इति ॥ तदस्मत्पक्षेष्वग्नित्वसामान्येनातिदेशसम्भवात्प्रत्युक्तम् ॥ अस्ति हि साम्पादिकानामप्यग्नीनामग्नित्वमिति । श्रुत्यादीनि च कारणानि दर्शितानि । एवमनुबन्धादिभ्यः कारणेभ्यः स्वातन्त्र्यं मनश्चिदादीनां प्रज्ञान्तरपृथक्त्ववत् । यथा—प्रज्ञान्तराणि शाण्डिल्यविद्याप्रभृतीनि स्वेनस्वेनानुबन्धेनानुबध्यमानानि पृथगेव कर्मभ्यः प्रज्ञान्तरेभ्यश्च स्वतन्त्राणि भवन्ति, एवमिति । दृष्टश्चावेष्टेः राजसूयप्रकरणपठितायाः प्रकरणादुत्कर्षः । वर्णत्रयानुबन्धाद्राजयज्ञत्वाच्च राज-**

रत्नप्रभा ।

सूत्रे बहुवचनार्थमाह—**श्रुत्यादीनि चेति** ॥ अनुबन्धातिदेशश्रुतिलिंगवाक्येभ्य इत्यर्थः । एवमित्यर्थ इति शेषः ॥ मनश्चिदादीनां स्वातन्त्र्ये क्रियाप्रकरणादुत्कर्षः स्यादित्याशङ्क्य स इष्ट इत्याह—**दृष्टश्चेति** ॥ एकादशे चिन्तितम् "राजा स्वराज्यकामो राजसूयेन यजेत" इति प्रकृत्य-अवेष्टिर्नाम काचिदिष्टिराम्नाता—"आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा" "बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा" "ऐन्द्रमेकादशकपालमृषभो दक्षिणा" इति ॥ तस्यां वर्णभेदेन प्रयोगभेदः श्रूयते—"यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाभिघारयेत्" । "यदि वैश्यो वैश्वदेवं चरुं मध्ये निदध्यात्" "यदि राजन्यस्तदैन्द्रम्" इति । आग्नेयैन्द्रपुरोडाशयोर्मध्ये बार्हस्पत्यं चरुं निर्वपेदित्यर्थः । तत्राग्नेयादिचरुषु अङ्गानां तन्त्रेण प्रयोगो भाति । मध्ये निधानलिंगात् । प्रयोगभेदमध्ये निधानायोगात् । "तयान्नाद्यकामं याजयेद्" इत्येकवचनाच्च । स च तन्त्रप्रयोगो राजसूयक्रतुबाह्यायामन्नाद्यकामवर्णत्रयकर्तृकायामेवाऽवेष्टौ ज्ञेयः, न तु क्रत्वन्तर्गतायाम् ॥ ननु किमत्र नियामकं क्रत्वर्थायामप्यवेष्टौ तत्र प्रयोगः किं न स्यादिति चेत् ॥ न ॥ वर्णत्रयसंयुक्तायां काम्यायामेव अंगतन्त्रैक्यसाधकस्य मध्ये निधानादिलिंगस्य सत्त्वात् । अतो लिंगैकवचनाभ्यां तन्त्रैक्ये सति हिरण्यादिका मिलितैकैव दक्षिणा देया । अन्यथा प्रयोगैक्यायोगात् । राजमात्रकर्तृकक्रत्वन्तर्गतेष्टौ तु वर्णत्रयसंयोगाभावात् मध्ये निधानादिलिंगं नास्ति । ततश्च तन्त्रै-

भामती ।

योर्भागयोर्विद्याप्राधान्यदर्शनात्तन्मध्यपातिनोऽपि तत्सामान्याद्विद्याप्रधानत्वमेव लक्ष्यते न कर्मांगत्वमित्याह

आनन्दगिरीय-न्यायनिर्णयः ।

दूषयति—**तदिति** । अग्नित्वसाम्यसंभवमेव स्फुटयति—**अस्तीति** । बहुवचनं घटयति—**श्रुत्यादीनीति** । उक्तहेतुफलं निगमयति—**एवमिति** । दृष्टान्तमवतार्य व्याचष्टे—**प्रज्ञान्तरेति** । उक्तदृष्टान्तानुसारादनुबन्धाद्युक्तहेतुभ्यो मनश्चिदादीनामपि स्वातन्त्र्यमिति दार्ष्टान्तिकमाह—**एवमिति** । सूत्रविभागव्याख्यासमाप्तावितिशब्दः । मनश्चिदादीनां स्वातन्त्र्ये क्रियाप्रकरणपाठासिद्धिरित्याशंक्याऽऽह—**दृष्टश्चेति** । उत्कर्षे हेतुमाह—**वर्णेति** । तथाऽपि राजसूयांगत्वयोगादुत्कर्षासिद्धिस्तत्राऽऽह—**राजेति** । राजा स्वाराज्यकामो राजसूयेन यजेतेत्यारभ्याऽऽग्नेयोऽष्टाकपालो हिरण्यं दक्षिणेत्यादिनाऽवेष्टिर्नामेष्टिराम्नाता तत्र यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वाऽभिघारयेद्यदि वैश्यो वैश्वदेवं यदि राजन्यस्तदैन्द्रमिति श्रूयते । तत्र किं ब्राह्मणादीनां राजसूये प्राप्तानां निमित्तार्थेन श्रवणमुत तेषामेष यागो विधीयत इति संदेहे प्रजापालनकण्टकोद्धरणादि राज्यं तस्य कर्ता राजेत्यार्यप्रसिद्धेस्त्रैवर्णिकानामपि तत्कर्तृत्वप्रसिद्धयाराजशब्दत्वेन राजसूयाधिकारित्वाद्यदि ब्राह्मणो यजेतेत्याद्याः श्रुतयो निमित्तार्था इति नास्ति प्रकरणा-

१ 'अवेष्टौ यज्ञसंयोगात्प्रधानमुच्यते" [ जै० सू० २ । ३ । ३ ] अवेष्टेः क्रत्वन्तराधिकारताधिकरणे ।

सूत्रस्य । तदुक्तं प्रथमे काण्डे—"क्रत्वर्थायामिति चेन्न वर्णत्रयसंयोगात्" [ जै० सू० ११ । ४ । ११ ] इति ॥ ५० ॥

**न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥**

यदुक्तं मानसवदिति, तत्प्रत्युच्यते ॥ न ॥ मानसग्रहसामान्यादपि मनश्चिदादीनां क्रियाशेषत्वं कल्प्यम् । पूर्वोक्तेभ्यः श्रुत्यादिभ्यो हेतुभ्यः केवलपुरुषार्थत्वोपलब्धेः । न हि किञ्चित्कस्यचित्केनचित्सामान्यं न सम्भवति । न च तावता यथा स्वं वैषम्यं निवर्तते मृत्युवत्॥यथा च—"स वा एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषः" इति, "अग्निर्वै मृत्युः" [बृ०

रत्नप्रभा ।

त्रयसाधकाभावाद्दक्षिणाभेदेन तन्त्रभेद इत्यंगानामावृत्तिरेव बह्वष्विति सूत्रार्थः । अत्र चैकप्रयोगलिंगस्य क्रत्वर्थेष्टावसम्भवं, काम्येष्टौ च सम्भवं,—वदताऽनेन सूत्रेण काम्येष्टेः क्रत्वर्थेष्टिविलक्षणत्वात् क्रतुप्रकरणादुत्कर्ष इति सूचितम् । स चोत्कर्षोयुक्त एव । राजमात्रकर्तृकराजसूयक्रतौ वर्णत्रयकर्तृकेष्टेरन्तर्भावायोगादिति स्थितम् ॥ तथा मनश्चिदादीनामुत्कर्ष इति भावः ॥ ५० ॥ परोक्तं दृष्टान्तं विघटयति—**न सामान्यादिति** ॥ क्रत्वर्थत्वपुरुषार्थत्ववैषम्येऽपि मानसत्वसामान्यं न विरुध्यते । विषमयोरपि साम्य-

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

दुत्कर्षोऽवेष्टेरिति प्राप्ते "गुणवचनब्राह्मणादिभ्यः कर्मणि च" [ पा० सू० ५ । १ । १२४ ] इति पाणिनिना गुणवचनेभ्यः शुक्लादिशब्देभ्यो ब्राह्मणादिशब्देभ्यश्च कर्मणि ष्यञ्प्रत्ययस्मरणाद्राज्ञः कर्म राज्यमिति राजकर्तृयोगाद्राज्यमित्यवगमात्कोऽसौ राजेत्यपेक्षायामार्येषु तत्प्रसिद्ध्यभावेऽपि म्लेच्छानां क्षत्रियमात्रे राजशब्दप्रयोगान्म्लेच्छप्रसिद्ध्या राजशब्दार्थनिर्णयादब्राह्मणादौ च पालनादिकर्तरि राजशब्दस्य गौणत्वात्क्षत्रियस्यैव राजसूयेऽधिकाराद्ब्राह्मणवैश्ययोस्तत्राप्राप्ते राजसूयप्रकरणं हित्वा ब्राह्मणादिकर्तृकाणि कर्मान्तराणि विधीयन्त इति राजसूयप्रकरणादुत्कर्षोऽवेष्टेरिति द्वितीये स्थितम् । तत्र यथा क्षत्रियकर्तृके राजसूये ब्राह्मणादेरनधिकारादवेष्टे राजसूयप्रकरणादुत्कर्षस्तथा मनश्चिदादीनामपि क्रियाप्रकरणादुत्कर्षो लिङ्गादिमिरिति भावः । एकादशेऽपि चिन्तितमेतदित्याह—**तदुक्तमिति** । राजसूयप्रक्रियायामवेष्टिर्नामेष्टिराम्नाता—आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा बार्हस्पत्यं चरुः शितिपृष्ठो दक्षिणेति। तत्राऽऽग्नेयादिहविष्वंगानां तन्त्रेण प्रयोगः किं वाऽऽवृत्त्येति संशये पूर्वपक्षसूत्रमवेष्टौ त्वेकतन्त्रं स्याल्लिंगदर्शनादिति बार्हस्पत्यं मध्ये निधायेति लिंगोपलम्भात्प्रयोगभेदे च मध्ये निधानायोगादेतयाऽन्नाद्यकाममित्येकवचनाच्चैकतन्त्र्यमवेष्टावेकस्मिन्प्रयोगे लिंगानां तन्त्रेण भावः सकृदनुष्ठानमिति पूर्वपक्षं कृत्वाऽन्नाद्यकामप्रयोगेऽवेष्टेरिदं लिङ्गदर्शनादि तेन क्रत्वर्थ प्रयोगे तस्य तु दक्षिणाभेदाद्भेद इत्यंगावृत्तिरेवेति राद्धान्तिते क्रत्वर्थायामपीष्टाविदं लिङ्गदर्शनायस्तीत्यंगानावृत्तिरित्याशंकामनूद्य दूषयति—**क्रत्वर्थायामिति चेदिति** । काम्यायामिष्टौ यदि ब्राह्मण इत्यादिना वर्णत्रयसंयोगात्तस्यां च मध्यनिधानादिसिद्धेर्न राजकर्तृकक्रत्वर्थेष्टौ तत्प्राप्तिरतोऽङ्गावृत्तिरित्यर्थः । अत्र चैकप्रयोगत्वलिङ्गस्य क्रत्वर्थेष्टावसंभवं काम्येष्टौ च संभवं वदताऽनेन सूत्रेण काम्येष्टेः क्रत्वर्थेष्टिवैलक्षण्यसूचनाद्वारेणार्थात्प्रकरणादुत्कर्षोऽपि सिध्यतीति क्रियाप्रकरणान्मनश्चिदादीनामुत्कर्षो भवत्येतदनुगुणमुदाहरणमिति द्रष्टव्यम् ॥ ५० ॥ परोदीरितमुदाहरणं विघटयति—**नेति** । परोक्तमनूद्य तदुत्तरत्वेन सूत्राक्षराणि व्याचष्टे—**यदित्यादिना** । मानसेन ग्रहेण सह मनश्चिदादीनां च भावनामयत्वे तुल्ये कथं श्रुत्यादिभिः स्वातंत्र्यं तत्राऽऽह—**न हीति** । सत्यपि सादृश्ये यथास्वं वैषम्यमव्यावृत्तमित्यत्र दृष्टान्तमादाय व्याचष्टे—**मृत्युवदिति** । न हीत्यादि विभजते—**यथा चेति** । उक्तदृष्टान्तानुरोधान्मा-

३।२।१०] इति चाग्न्यादित्यपुरुषयोः समानेऽपि मृत्युशब्दप्रयोगे नात्यन्तसाम्यापत्तिः। यथा च "असौ वाव लोकोऽग्निर्गौतमास्यादित्य एव समिद्" [छां० ५।४।१] इत्यत्र न समिदादिसामान्याल्लोकस्याऽग्निभावापत्तिः, तद्वत् ॥ ५१ ॥

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥

रत्नप्रभा।

दर्शनादित्यर्थः ॥ ५१ ॥ किञ्च पूर्वोत्तरब्राह्मणयोः स्वतन्त्रविद्याविधानात् तन्मध्यस्थस्याऽपि ब्राह्मणस्य स्वतन्त्रविद्याविधिपरत्वमित्याह––परेण चेति ॥ चितेऽग्नौ लोकदृष्टिविधानं स्वतन्त्रमुत्तरत्र गम्यते। पूर्वत्र मण्डलपुरुषोपास्तिः। तत्सान्निध्यात्। मध्येऽपि मानसाग्नयः स्वतन्त्रा इत्यर्थः ॥ तर्हि क्रिया-

भामती।

सूत्रेण–परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः। स्फुटमस्य भाष्यम्। अस्ति राजसूयः 'राजा स्वाराज्यकामो राजसूयेन यजेत्' इति। तं प्रकृत्यामनन्ति अवेष्टिं नामेष्टिम्। आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणेत्येवमादि तां प्रकृत्याधीयते।यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिं हुत्वाभिघारयेद्यदि वैश्यो वैश्वदेवं यदि राजन्य ऐन्द्रमिति। तत्र संदिह्यते–किं ब्राह्मणादीनां प्राप्तानां निमित्तार्थेन श्रवणमुत ब्राह्मणादीनामयं यागो विधीयत इति। अत्र यदि प्रजापालनकण्टकोद्धरणादि कर्म राज्यं तस्य कर्ता राजेति राजशब्दस्यार्थस्ततो राजा राजसूयेन यजेतेति राज्यस्य कर्तृ राजसूयेऽधिकारः। तस्मात्संभवन्त्यविशेषेण ब्राह्मणक्षत्रियवैश्या राज्यस्य कर्तार इति सिद्धं सर्व एवैते राजसूये प्राप्ता इति 'यदि ब्राह्मणो यजेत' इत्येवमादयो निमित्तार्थाः श्रुतयः। अथ तु राज्ञः कर्म राज्यमिति राजकर्तृयोगाच्चत्कर्म राज्यं ततः को राजेत्यपेक्षायामार्येषु तत्प्रसिद्धेरभावात्पिकनेमतामरसादिशब्दार्थावधारणाय म्लेच्छप्रसिद्धिरिवान्ध्राणां क्षत्रियजातौ राजशब्दप्रसिद्धिस्तदवधारणकारणमिति क्षत्रिय एव राजेति न ब्राह्मणवैश्ययोः प्राप्तिरिति राजसूयप्रकरणं भित्त्वा ब्राह्मणादिकर्तृकाणि पृथगेव कर्माणि प्राप्यन्त इति न नैमित्तिकानि। तत्र किं तावत्प्राप्तं, नैमित्तिकानीति। राज्यस्य कर्ता राजेत्यार्याणामान्ध्राणां चाविवादः। तथाहि–ब्राह्मणादिषु प्रजापालनकर्तृषु कनकदण्डातपत्रश्वेतचामरादिलाञ्छनेषु राजपदमान्ध्राश्चार्याश्चाविवादं प्रयुञ्जाना दृश्यन्ते। तेनाविप्रतिपत्तेर्विप्रतिपत्तावप्यार्यान्ध्रप्रयोगयोर्यववराहवदार्यप्रसिद्धेरान्ध्रप्रसिद्धितो बलीयसीत्वात्। बलवदार्यप्रसिद्धिविरोधे त्वतन्मूलायाः पाणिनीयप्रसिद्धेः'विरोधे त्वनपेक्षं स्यात्'इति न्यायेन बाधनात्तदनुगुणतया वा कथंचिन्नखनकुलादिवदन्वाख्यानमात्रपरतया नीयमानत्वाद्राज्यस्य कर्ता राजेति सिद्धे निमित्तार्थाः श्रुतयः। तथा च यदि शब्दोऽप्याञ्जसः स्यादिति प्राप्तम्। एवं प्राप्त उच्यते–'रूपतो न विशेषोऽस्ति ह्यार्यम्लेच्छप्रयोगयोः। वैदिकाद्वाक्यशेषात्तु विशेषस्तत्र दर्शितः' ॥ तदिह राजशब्दस्य कर्मयोगाद्वा कर्तरि प्रयोगः कर्तृप्रयोगाद्वा कर्मणीति विशये वैदिकवाक्यशेषवदभियुक्ततरस्यात्रभवतः पाणिनेः स्मृतेर्निर्णीयते प्रसिद्धिरान्ध्राणामनादिरादिमती चार्याणां प्रसिद्धिर्गोगाव्यादिशब्दवत्। न च संभावितादिमद्भावाप्रसिद्धिः पाणिनिस्मृतिमपोद्यानादिप्रसिद्धिमादिमतीं कर्तुमुत्सहते। गाव्यादिशब्दप्रसिद्धेरनादित्वेन गवादिपदप्रसिद्धेरप्यादिमत्त्वापत्तेः। तस्मात्पाणिनीयस्मृत्यनुमतान्ध्रप्रसिद्धिर्बलीयस्त्वेन क्षत्रियत्वजातौ राजशब्दे मुख्ये तत्कर्तृयतज्जातौ राजशब्दो गौण इति क्षत्रियस्यैवाधिकाराद्राजसूये तत्प्रकरणमपोद्यावेष्टेरुत्कर्षः। अन्वयानुरोधी

आनन्दगिरीय–न्यायनिर्णयः।

नसम्प्रहस्य मनश्चिदादीनां च भावनामयत्वाविशेषेऽपि पारतंत्र्यस्वातंत्र्ययोः सिद्धिरित्याह–तद्वदिति॥५१॥ पूर्वोत्तरब्राह्मणयोर्विद्याप्राधान्यदर्शनात्तन्मध्यपातिनोऽस्यापि तत्प्राधान्यमित्याह–परेण चेति। संदिग्धस्य

परस्तादपि–''अयं वाव–लोक एषोऽग्निश्चितः'' इत्येतस्मिन्ननन्तरे ब्राह्मणे ताद्विध्यं केवलविद्याविधित्वं शब्दस्य प्रयोजनं लभ्यते न शुद्धकर्मांगविधित्वं, तत्र हि–''विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः'' इत्यनेन श्लोकेन केवलं कर्म निन्दन्विद्यां च प्रशंसन्नेतदर्शयति ॥ तथा पुरस्तादपि–''यदेतन्मण्डलं तपति'' इत्यस्मिन्ब्राह्मणे विद्याप्रधानत्वमेव लक्ष्यते । ''सोऽमृतो भवति मृत्युर्यस्यात्मा भवति'' इति विद्याफलेनैवोपसंहारान्न कर्मप्रधानता । तत्सामान्यादिहापि तथात्वम् । भूयांसस्त्वग्न्यवयवाः सम्पादयितव्या विद्यायामित्येतस्माच्च कारणादग्निनानुबध्यते विद्या । न कर्मांगत्वात् । तस्मान्मनश्चिदादीनां केवलविद्यात्मकत्वसिद्धिः ॥ ५२ ॥ इति लिंगभूयस्त्वाधिकरणम् ॥ २९ ॥

**एक आत्मनः शरीरे भावात् ॥ ५३ ॥ ( ३० ) ॥**

इह देहव्यतिरिक्तस्यात्मनः सद्भावः समर्थ्यते बन्धमोक्षाधिकारसिद्धये । न ह्यसति देहव्यतिरिक्ते आत्मनि परलोकफलाश्चोदना उपपद्येरन् ।

---

रत्नप्रभा ।

ग्निना सह पाठः किमर्थमित्यत आह–भूयांसस्त्विति ॥ ५२ ॥ ( २९ ) ॥ मनश्चिदादीनां पुरुषार्थत्वमुक्तम् ॥ तदयुक्तम् । देहातिरिक्तपुरुषाभावादित्याक्षिपति–एक आत्मनः शरीरे भावाद् इति ॥ सिद्धान्तफलमाह–बन्धेति ॥ पूर्वपक्षे तु परलोकार्थकर्मसु मोक्षार्थविद्यायां च अप्रवृत्तिरिति व्यतिरेकमुखेन फलमाह–न ह्यसतीति ॥ व्यतिरिक्तात्मविचारस्य पूर्वतन्त्रे कृतत्वात् पौनरुक्तमित्याशङ्क्य

भामती ।

यदि शब्दो न त्वपूर्वविधौ सति तमन्यथयितुमर्हति । अत एवाहुः–'यदिशब्दपरित्यागो रुच्यध्याहारकल्पना' इति । इयं च राजसूयादधिकारान्तरमेतयान्नाद्यकामं याजयेदिति नास्तीतिकृत्वा चिन्ता । एतस्मिंस्त्वधिकारेऽन्नाद्यकामस्य त्रैवर्णिकस्य संभवात्प्राप्तेर्निमित्तार्थता ब्राह्मणादिश्रवणस्य दुर्वारैवेति ॥ ४७ ॥ ॥ ४८ ॥ ४९ ॥ ५० ॥५१॥५२॥ एक आत्मनः शरीरे भावात् । अधिकरणतात्पर्यमाह–इहेति । समर्थनप्रयोजनमाह–बन्धमोक्षेति । असमर्थने बन्धमोक्षाधिकाराभावमाह–न ह्यसतीति । अधस्तन-

आनन्दगिरीय–न्यायनिर्णयः ।

निर्णयो वाक्यशेषादितिन्यायेन सूत्रावयवं व्याकुर्वन्वाक्यशेषमनुसंधत्ते–परस्तादिति । उत्तरब्राह्मणस्य विद्याप्राधान्ये गमकमाह–तत्रेति । ब्राह्मणस्य विद्याप्राधान्यमेतदित्युक्तम् । उपक्रमतन्त्रेणोपसंहारेणैकस्मिन्वाक्ये भवितव्यमितिन्यायेन चकारं व्याकुर्वन्पूर्वमपि ब्राह्मणमनुसंधत्ते–तथेति । तस्य विद्याप्राधान्ये लिङ्गमाह–सोऽमृत इति । पूर्वोत्तरब्राह्मणयोर्विद्याप्राधान्येऽपि प्रकृतब्राह्मणस्य कर्मप्राधान्ये का हानिस्तत्राऽऽह–तदिति । कथं तर्हि विद्यायाः स्वातन्त्र्ये कर्माधिकारे समाम्नानमित्याशंक्य भूयस्त्वादित्यादि व्याचष्टे–भूयांसस्त्विति । श्रुतिलिङ्गादिभिः सिद्धमर्थमुपसंहरति–तस्मादिति ॥५२॥ (२९)॥ मनश्चिदादीनां न पुरुषार्थत्वं पुरुषस्यैव देहातिरिक्तस्याभावादित्याक्षिपति–एक इति । अधिकरणस्य तात्पर्यमाह–इहेति तत्समर्थनफलमाह–बन्धेति । साधनानुष्ठानसामर्थ्याद्देहस्यैव स्वर्गापवर्गाधिकारित्वसिद्धौ कृतं व्यतिरेकचिन्तयेत्याशंक्याह–न हीति । व्यतिरेकविचारस्य पूर्वतन्त्रेण पौनरुक्त्यं शङ्कते–

कस्य वा ब्रह्मात्मत्वमुपदिश्येत ॥ ननु शास्त्रप्रमुख एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुक्तम् ॥ सत्यमुक्तं भाष्यकृता ॥ न तु तत्रात्माऽस्तित्वे सूत्रमस्ति । इह तु स्वयमेव सूत्रकृता तदस्तित्वमाक्षेपपुरःसरं प्रतिष्ठापितम् ॥ इत एवाकृष्याचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम् । अत एव च भगवतोपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्युद्धारः कृतः । इह चेदं चोदनालक्षणेषूपासनेषु विचार्यमाणेष्वात्मास्तित्वं विचार्यते कृत्स्नशास्त्रशेषत्वप्रदर्शनाय॥ अपि च पूर्वस्मिन्नधिकरणे प्रकरणोत्कर्षाभ्यु-

रत्नप्रभा ।

तत्रत्यविचारस्याऽपि इदमेव सूत्रं मूलम् । जैमिनिसूत्राभावात् । अतः क्व पुनरुक्तिरित्याह—ननु शास्त्रेत्यादिना ॥ "यज्ञायुधो यजमानः स्वर्गं लोकमेति" इत्यादिवाक्यस्य भोक्तुरभावादप्रामाण्यप्राप्तावित एवाकृष्य भोक्तुर्विचारः कृत इत्यत्र वृत्तिकारवचनं लिंगमाह—अत एवेति ॥ तत्र सूत्राभावादेवेत्यर्थः । उद्धारः उपरमः । अस्याधिकरणस्यास्मिन् पादे प्रसंगसंगतिरित्याह—इह चेति ॥ आमुष्मिकफलोपासनानिर्णयप्रसंगेन तदपेक्षितात्मास्तित्वमुच्यते इत्यर्थः । एतत् सिद्धवत्कृत्य प्रथमसूत्रेऽथशब्देनाधिकारी चिन्तितः ॥ तस्मादिदमधिकरणं सर्वशास्त्रांगमिति शास्त्रसंगतिमाह—कृत्स्नेति ॥ आक्षेपलक्षणामवान्तरसंगतिमाह—अपि चेति ॥ देहातिरिक्तः आत्मास्ति न वेति वादिविप्रतिपत्तेः संशये—पूर्वपक्षमाह—

भामती ।

तन्त्रोक्त पौनरुक्त्यं चोदयति—नन्विति । परिहरति—उक्तं भाष्यकृतेति । न सूत्रकारेण तत्रोक्तं येन पुनरुक्तं भवेदपि तु भाष्यकृतेतत्रत्यस्यैवार्थस्यापकर्षः प्रमाणलक्षणोपयोगितया तत्र कृत इति । यत इह सूत्रकृद्वक्ष्यत्यत एव भगवतोपवर्षेणोद्धारोऽपकर्षस्य कृतः । विचारस्यास्य पूर्वोत्तरतन्त्रशेषत्वमाह—इह चेति । पूर्वाधिकरणसंगतिमाह—अपि चेति । नन्वात्मास्तित्वोपपत्तय एवात्रोच्यन्तां किं तदाक्षेपेणेत्यत आह—

आनन्दगिरीय-न्यायनिर्णयः ।

नन्विति । सूत्रकृता तत्रातिरिक्तात्मानुक्तेर्न पौनरुक्त्यमित्याह—सत्यमिति । प्रकृते पूर्वमीमांसातो विशेषमाह—इह त्विति । कथं तर्हि प्रथमे पादे दर्शितमात्मास्तित्वं न हि मूलभूतं सूत्रं विना भाष्यं युक्तं तत्राऽऽह—इत इति । यज्ञायुधी यजमानः स्वर्गं लोकं यातीतिवाक्यस्यातिरिक्तात्माभावादप्रामाण्यप्राप्तौ तत्परिहारेण प्रथमाध्यायोपयोगितया तदस्तित्वमिदमेवाधिकरणमवष्टभ्योक्तमिति सूचयति—प्रमाणेति । एतस्मादेवाऽऽकृष्य तत्राऽऽत्मास्तित्वमुक्तमित्यत्र वृत्तिकारवचनं गमकमित्याह—अत इति । यस्मादत्र सूत्रकारो निरूपयति तस्मादेवेति यावत् । आत्मास्तित्वस्यास्मात्पूर्वकाण्डं प्रति नयनमपकर्षस्तस्योद्धारो निवृत्तिरित्यर्थः । अथात्रापि प्रथमसूत्रेऽथशब्दोपात्तोऽधिकारी विचारितस्तत्कथमिह पुनस्तन्निरूपणं तत्राऽऽह—इह चेति । तत्र लोकसिद्धात्मादानेनाधिकारी दर्शितो न तद्विशेषश्चिन्तितः । प्रकृते तु विधिप्रमाणकेषूपासनेषु विचार्यमाणेषु विचार्यते विशेषतस्तदस्तितेत्यस्ति भेद इत्यर्थः । प्रासंगिकीमध्यायपादसंगतिमधिकरणस्योक्त्वा श्रुतिशास्त्रसंगतिं सूचयति—कृत्स्नेति । सर्वस्यैवाऽऽम्नायस्य तदर्थविचारात्मनश्च शास्त्रस्य शेषभूतमधिकरणमतिरिक्तात्माविचारे सर्वस्यास्य दुर्घटत्वादतोऽतिरिक्तस्याऽऽत्मनः शेषत्वं दर्शयितुमेष विचार इत्यर्थः । संगतिचतुष्टयमित्थमुक्त्वा पूर्वोत्तराधिकरणसंगतिमाह—अपि चेति।

पगमेन मनश्चिदादीनां पुरुषार्थत्वं वर्णितम् ॥ कोऽसौ पुरुषो यदर्था एते मनश्चिदादय इत्यस्यां प्रसक्ताविदं देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुच्यते। तदस्तित्वाक्षेपार्थश्चेदमाद्यं सूत्रम् ॥ आक्षेपपूर्विका हि परिहारोक्तिर्विवक्षितेऽर्थे स्थूणानिखननन्यायेन दृढां बुद्धिमुत्पादयेदिति ॥ अत्रैके देहमात्रात्मदर्शिनो लोकायतिका देहव्यतिरिक्तस्यात्मनोऽभावं मन्यमानाः समस्तव्यस्तेषु बाह्येषु पृथिव्यादिष्वदृष्टमपि चैतन्यं शरीराकारपरिणतेषु भूतेषु स्यादिति सम्भावयन्तस्तेभ्यश्चैतन्यं मदशक्तिवद्विज्ञानं, चैतन्यवि-

---

रत्नप्रभा ।

**अत्रैक इति॥** यद्यपि समस्तेषु मिलितेषु भूतेषु चैतन्यं न दृष्टम् । तप्तोदकुम्भस्य ज्ञानाभावात् । व्यस्तेषु तु नास्त्येव । तथापि देहात्मकभूतेषु स्यादिति तेभ्यो भूतेभ्यश्चैतन्यं सम्भावयन्तो मदशक्तिवद्विज्ञानं संघातजं, तद्विशिष्टसंघात आत्मेत्याहुरित्यन्वयः । यथा—मादकद्रव्येषु ताम्बूलपत्रादिषु प्रत्येकमदृष्टापि

भामती ।

**आक्षेपपूर्विका हीति।** आक्षेपमाह—**अत्रैके देहमात्रात्मदर्शिन इति ।** यद्यपि समस्तव्यस्तेषु पृथिव्यप्तेजोवायुषु न चैतन्यं दृष्टं तथापि कायाकारपरिणतेषु भविष्यति । न हि किण्वादयः समस्तव्यस्ता न मदना दृष्टा इति मदिराकारपरिणता न मदयन्ति । अहमिति चानुभवे देह एव गौराद्याकारः प्रथते । न तु तदतिरिक्तः तदधिष्ठानः कुण्ड इव दधीति । अत एवाहं स्थूलो गच्छामीत्यादिसामानाधिकरण्योपपत्तिरहमः स्थूलादिभिः । न जातु दधिसमानाधिकरणानि मधुरादीनि कुण्डस्यैकाधिकरण्यमनुभवन्ति सितं मधुरं कुण्डमिति । न चाप्रत्यक्षमात्मतत्त्वमनुमानादिभिः शक्यमुन्नेतुम् । न खल्वप्रत्यक्षं प्रमाणमस्ति । उक्तं हि—'देशकालादिरूपाणां भेदाद्भिन्नासु शक्तिषु । भावानामनुमानेन प्रसिद्धिरतिदुर्लभा' इति । यदा च उपलब्धिसाध्यनान्तरीयकभावस्य लिंगस्येयं गतिस्तदा कैव कथा दृष्टव्यभिचारस्य शब्दस्यार्थापत्तेश्चात्यन्तपरोक्षार्थगोचराया उपमानस्य च सर्वैकदेशसादृश्यविकल्पितस्य । सर्वसारूप्ये तत्त्वात् । एकदेशसारूप्ये चातिप्रसंगात्सर्वस्य सर्वेणोपमानात् । सौत्रस्तु हेतुर्भाष्यकृता व्याख्यातः । चेष्टा हिताहितप्राप्तिपरिहारार्थो व्यापारः । स च शरीराधीनतया दृश्यमानः शरीरधर्म एवं प्राणः श्वासप्रश्वासादिरूपः शरीरधर्म एव । इच्छाप्रयत्नादयश्च यद्यप्यान्तराः तथापि शरीरातिरिक्तस्य तदाश्रयानुपलब्धेः सति शरीरे भावात्

आनन्दगिरीय—न्यायनिर्णयः ।

इतश्चेदमिह संगतमित्यर्थः । अनेन सूत्रेण तन्नोच्यत इत्याशंक्याऽऽद्यसूत्रस्यावान्तरसंगतिमाह—**तदस्तित्वेति।** अतिरिक्तात्मास्तित्वे साध्ये किं तदाक्षेपेणेत्याशंक्याऽऽह—**आक्षेपेति ।** इत्याक्षेपस्योपयुक्ततेति शेषः । मनश्चिदादयोऽग्नयो यदर्थाः स पुरुषो विषयः स किं देहस्तदतिरिक्तो वेति विप्रतिपत्तेः संशये पूर्वपक्षयति—**अत्रेति ।** पूर्वपक्षे देहात्मवादसिद्धिः । सिद्धान्ते वैदिकात्मसिद्धिरिति फलभेदः । परीक्षकव्यवहारभूमिः सप्तम्यर्थः । स्वतन्त्रमन्याधारं वा चैतन्यमात्रं वा व्यावर्तते मनुष्योऽहमितिदेहस्याहंप्रत्ययालम्बनत्ववदतिरिक्तात्मसत्त्वे मानाभावं गृहीत्वाऽऽह—**देहेति ।** चैतन्याधारस्याऽऽत्मत्वाद्भौतिकत्वेनाचेतनस्य कथमात्मत्वमित्याशंक्याऽऽह—**समस्तेति ।** एकैकस्मिन्नविद्यमानं कथं संघाते स्यात्तत्राऽऽह—**तेभ्य इति ।** चैतन्यं संभावयन्त इति सम्बन्धः । संघातविशेषे कार्यविशेषसत्त्वे दृष्टान्तमाह—**मदेति ।** यथैकैकस्मात्ताम्बूलादेरदृष्टाऽपि मदशक्तिः संघाते दृश्यते, तथेदं ज्ञानमेकैकस्मिन्नदृष्टमपि देहाकारपरिणतभूतेषु संहतेषु भवतीति चाऽऽहुरिति योजना । देहस्यैव भोक्तृत्वे मृतदेहेऽपि भोगः स्यादित्याशंक्याऽऽह—**चैतन्येति ।** अग्निसंनिधानादयः पिण्डस्यौष्ण्यमिवाऽऽत्मसंनिधेर्देहचैतन्यमित्यतिरिक्तस्याऽऽत्मनः स्वर्गा-

**शिष्टः कायः पुरुष इति चाहुः ॥ न ॥ स्वर्गगमनायापवर्गगमनाय वा समर्थो देहव्यतिरिक्त आत्माऽस्ति । यत्कृतं चैतन्यं देहे स्यात् । देह एव तु चेतनश्चात्मा चेति प्रतिजानते । हेतुं चाचक्षते-शरीरे भावादिति । यद्धि यस्मिन्सति भवत्यसति च न भवति तत्तद्धर्मत्वेनाध्यवसीयते । यथाग्निधर्मावौष्ण्यप्रकाशौ, प्राणचेष्टाचैतन्यस्मृत्यादयश्चात्मधर्मत्वेनाभिमता आत्मवादिनां, तेऽप्यन्तरेव देह उपलभ्यमाना बहिश्चानुपलभ्यमाना असिद्धे देहव्यतिरिक्ते धर्मिणि देहधर्मा एव भवितुमर्हन्ति ॥ तस्मादव्यतिरेको देहादात्मन इति ॥ ५३ ॥ एवं प्राप्ते ब्रूमः-**

## व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥

**न त्वेतदस्ति-यदुक्तमव्यतिरेको देहादात्मन इति ॥ व्यतिरेक एवास्य**

---

रत्नप्रभा ।

मदशक्तिस्तत्संघाताज्जायते, तद्वदित्यर्थः ॥ ननु देहः स्वयं न चेतनः । घटवद्भौतिकत्वात् । किंतु चेतनः कश्चित् स्वर्गादिभोक्ताऽस्ति । तत्सान्निध्यात् देहस्य चैतन्यविभ्रम इत्यत आह-न स्वर्गेति ॥५३॥ मनुष्योऽहं जानामीति देहस्य ज्ञातृतायाः प्रत्यक्षत्वादात्मधर्मत्वेन प्रसिद्धानां धर्माणां देहान्वयव्यतिरेकानुभवात् तदन्यात्मनि प्रत्यक्षाभावादप्रत्यक्षस्य अप्रामाणिकत्वाद्देह एवात्मेति प्राप्ते सूत्रस्थनत्विति पदेन सिद्धान्तं प्रतिजानीते-न त्वेतादिति ॥ अनुमानस्य तावत् प्रामाण्यमनिच्छताप्यास्थेयम् । अन्यथा व्यवहारासिद्धेः । न ह्यनागतपाकादाविष्टसाधनतानुमितिं विना प्रवृत्तिः सम्भवति ॥ तथा च ज्ञानादयः, देहव्यतिरिक्ताश्रयाः, देहसत्त्वेऽप्यसत्त्वात्, व्यतिरेकेण देहरूपादिवदित्याह-व्यतिरेक एवास्येति ॥

भामती ।

अन्तःशरीराश्रया एव, अन्यथा दृष्टहानादृष्टकल्पनाप्रसंगात्। शरीरातिरिक्त आत्मनि प्रमाणाभावाच्छरीरे च सम्भवाच्छरीरमेवेच्छादिमदात्मेति प्राप्त उच्यते॥५३॥**व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्**।नाप्रत्यक्षं प्रमाणमिति ब्रुवाणः प्रष्टव्यो जायते कुतो भवाननुमानादीनामप्रामाण्यमवधारितवानिति । प्रत्यक्षं हि लिंगादिरूपमात्रग्राहि नाप्रामाण्यमेषां विनिश्चेतुमर्हति । न हि धूमज्ञानमिवैषामिन्द्रियार्थसन्निकर्षादप्रामाण्यज्ञानमुदेतुमर्हति । किंतु देशकालावस्थारूपभेदेन व्यभिचारोत्प्रेक्षया । न चैतावान्प्रत्यक्षस्य व्यापारः

आनन्दगिरीय-न्यायनिर्णयः ।

पवर्गान्वयिनोऽभावान्न देहस्य चैतन्यवैशिष्ट्यमित्याशंक्याऽऽह-नेत्यादिना । आत्मा तर्हि कः स्यादित्यपेक्षायामाह-देहेति । सूत्रभागेन प्रतिज्ञातेऽर्थे हेतुमवतार्य व्याचष्टे-यद्धीति । अन्वयव्यतिरेकाभ्यां चैतन्यस्य देहधर्मत्वेति नातिरिक्तात्मसिद्धिरित्यर्थः । प्राणचेष्टादयः साश्रयाः कार्यत्वात्संमतवदित्यनुमानात्प्राणाद्याश्रयस्यातिरिक्तात्मनः सिद्धिरित्याशंक्यानुमानाप्रामाण्यात्प्रामाण्येऽपि सिद्धसाध्यत्वान्मैवमित्याह-प्राणेति । चेष्टा हिताहितप्राप्तिपरिहारार्थो व्यापारः । आदिपदेनेच्छाद्वेषादय उक्ताः । तेषां देहधर्मत्वेनादृष्टानां कथं तद्धर्मतेत्याशंक्याऽऽह-असिद्ध इति । प्रत्यक्षेणातिरिक्तात्मनोऽदृष्टेर्मानान्तरे चासंमतेर्गौरोहं स्थूलोऽहमिति च देहस्यैवाऽऽत्मत्वेनाध्यक्षत्वात्तदाधारत्वमेव प्राणादीनामित्यर्थः। देहात्मवादी प्रत्यक्षफलमुपसंहरति-तस्मादिति ॥ ५३ ॥ सिद्धान्तसूत्रमवतारयति-एवमिति । तत्र न त्विति पूर्वपक्षनिषेधप्रतिज्ञां विभजते-तदिति । उत्तरपक्षप्रतिज्ञां व्याकरोति-व्यतिरेकेति । तत्र हेतुमवतार्य व्याचष्टे-न त्विति । देहभावेऽपि प्राणादीनामभावो मृतावस्थायामास्थेयः । चैतन्यादयो न देहस्य विशेषगुणास्तद्भावाभावित्वात् । ये तद्विशेषगुणास्ते न तद्भावाभाविनो यथा रूपादय इत्याह-

देहाद्दवितुमर्हति । तद्भावाभावित्वात्–यदि हि देहभावे भावाद्देहधर्मत्वमात्मधर्माणां मन्येत, ततो देहभावेऽप्यभावादतद्धर्मत्वमेषां किं न मन्येत । देहधर्मवैलक्षण्यात् । ये हि देहधर्मा रूपादयः, ते यावद्देहं भवन्तु । प्राणचेष्टादयस्तु सत्यपि देहे मृतावस्थायां न भवन्ति । देहधर्माश्च

रत्नप्रभा ।

न चादौ श्यामदेहस्य पश्चात् रूपान्तरे व्यभिचारः । गुणत्वसाक्षाद्व्याप्यजात्यवच्छेदेनाऽसत्त्वस्य विवक्षितत्वात् । देहेऽवस्थिते सदा रूपत्वावच्छिन्नमस्त्येव, ज्ञानत्वावच्छिन्नं तु नास्तीति न ज्ञानं देहधर्मः ॥ किञ्च एते न देहगुणाः, परैरदृश्यत्वादित्याह–देहधर्माश्चेति ॥ किञ्च देहव्यतिरेके तेषामभावस्य

भामती ।

संभवति । यथाहुः—न हीदमियतो व्यापारान्कर्तुं समर्थं संनिहितविषयबलेनोत्पत्तेरविचारकत्वादिति । तस्मादस्मिन्ननिच्छतापि प्रमाणान्तरमभ्युपेयम् । अपि च प्रतिपन्नं पुमांसमपहायाप्रतिपन्नसंदिग्धाः प्रेक्षावद्भिः प्रतिपाद्यन्ते । न चैषामित्थंभावो भवत्प्रत्यक्षगोचरः । न खल्वेते गौरत्वादिवत्प्रत्यक्षगोचराः किंतु वचनचेष्टादिलिंगानुमेयाः । न च लिङ्गं प्रमाणं यत एते सिध्यन्ति । न पुंसामित्थंभावमविज्ञाय यं कंचन पुरुषं प्रतिपिपादयिषतोऽनवधेयवचनस्य प्रेक्षावत्ता नाम । अपि च पशवोऽपि हिताहितप्राप्तिपरिहारार्थिनः कोमलशष्पश्यामलायां भुवि प्रवर्तन्ते । परिहरन्ति चाश्यानतृणकण्टकाकीर्णाम् । नास्तिकस्तु पशोरपि पशुरिष्टानिष्टसाधनमविद्वान् । न खल्वस्मिन्ननुमानगोचर-प्रवृत्तिनिवृत्तिगोचरे प्रत्यक्षं भवति । न च परप्रत्यायनाय शब्दं प्रयुञ्जीत शाब्दस्यार्थस्याप्रत्यक्षत्वात् । तदेव मा नाम भून्नास्तिकस्य जन्मान्तरमस्मिन्नेव जन्मन्युपस्थितोऽस्य मूकत्वप्रवृत्तिनिवृत्तिविरहरूपो महान्नरकः । पराक्रान्तं चात्र सूरिभिः । अत्यन्तपरोक्षगोचराण्यन्यथानुपपद्यमानार्थप्रभवार्थापत्तिः । भूयःसामान्ययोगेन चोपमानमुपपादितं प्रमाणलक्षणे । तदत्रास्तु तावत्प्रमाणान्तरं प्रत्यक्षमेवाहंप्रत्ययः शरीरातिरिक्तमालम्बत इत्यन्वयव्यतिरेकाभ्यामवधार्यते । योगव्याघ्रवत्स्वप्नदशायां च शरीरान्तरपरिग्रहाभिमानेऽप्यहंकारास्पदस्य प्रत्यभिज्ञायमानत्वमित्युक्तम् । सूत्रयोजना तु न त्वव्यतिरिक्तः किंतु व्यतिरिक्त आत्मा देहात् । कुतस्तद्भावाभावित्वात् । चैतन्यादिर्यदि शरीरगुणः ततोऽनेन विशेषगुणेन भवितव्यम् । न तु संख्यापरिमाणसंयोगादिवत्सामान्यगुणेन । तथा च ये भूतविशेषगुणास्ते यावद्भूतभाविनो दृष्टा यथा रूपादयः । न ह्यस्ति संभवः भूतं च रूपादिरहितं चेति । तस्माद्भूतविशेषगुणरूपादिवैधर्म्यान्न चैतन्यं शरीरगुणः । एतेनेच्छादीनां शरीरविशेषगुणत्वं प्रत्युक्तम् । प्राणचेष्टादयो यद्यपि देहधर्मा एव तथापि न देहमात्रप्रभवाः । मृतावस्थायामपि प्रसंगात् । तस्माद्यस्यैते अधिष्ठानाद्देहधर्मा भवन्ति स देहातिरिक्त आत्मा । अदृष्टकारणत्वेऽभ्युपगम्यमाने तस्यापि देहाश्रयत्वानुपपत्तेरात्मैवाभ्युपेतव्य इति । वैधर्म्यान्तरमाह–देहधर्माश्चेति । स्वपरप्रत्यक्षा हि देहधर्मा दृष्टा यथा रूपादयः । इच्छादयस्तु स्वप्रत्यक्षा एवेति देहधर्मवैधर्म्यम् । तस्मादपि देहातिरिक्तधर्मा इति । तत्र यद्यपि चैतन्यमपि भूतविशेषगुणस्तथापि यावद्भूतमनुवर्तेत । न च मदशक्त्या व्यभिचारः । सामर्थ्यस्य सामान्यगुणत्वात् । अपि च मदशक्तिः प्रतिमदिरावयवं मात्रयावतिष्ठते तद्वद्देहेऽपि चैतन्यं तदवयवेष्वपि मात्रया भवेत् । तथा चैकस्मिन्देहे बहवश्चेतयेरन् । न च बहूनां चेतनानामन्योन्याभिप्रायानुविधानसंभव इति एक-

आनन्दगिरीय–न्यायनिर्णयः ।

देहेति । वैलक्षण्यं स्पष्टयन्दृष्टान्तस्य साधनाव्याप्तिं वारयति–ये हीति । हेत्वसिद्धिं प्रत्याह–प्राणेति । तेषां विशेषगुणत्वाभावेऽपि न देहमात्रप्रभवत्वं मृतावस्थायामदर्शनात् । अतो देहातिरिक्तस्तदधिष्ठातेति भावः । चैतन्यादीनां देहधर्मत्वाभावे हेत्वन्तरमाह–देहेति विमता न देहधर्माः परैरनुपलभ्यमानत्वाद्

रूपादयः परैरप्युपलभ्यन्ते । न त्वात्मधर्माश्चैतन्यस्मृत्यादयः ॥ अपि च सति तावद्देहे जीवदवस्थायामेषां भावः शक्यते निश्चेतुं, न त्वसत्यभावः । पतितेऽपि कदाचिदस्मिन्देहे देहान्तरसञ्चारेणात्मधर्मा अनुवर्तेरन् । संशयमात्रेणापि परपक्षः प्रतिषिध्यते-किमात्मकं च पुनरिदं चैतन्यं मन्यते-यस्य भूतेभ्य उत्पत्तिमिच्छन्तीति परः पर्यनुयोक्तव्यः । न हि भूतचतुष्टयव्यतिरेकेण लोकायतिकाः किंचित्तत्त्वं प्रतियन्ति । यदनुभवनं भूतभौतिकानां, तच्चैतन्यमिति चेत् । तर्हि विषयत्वात्तेषां न तद्धर्मत्वमश्नुवीत । स्वात्मनि क्रियाविरोधात् । न ह्यग्निरुष्णः सन्स्वात्मानं दह-

रत्नप्रभा ।

सन्दिग्धत्वात् न देहधर्मत्वनिश्चय इत्याह—अपि चेति ॥ न चानुपलम्भात् तेषामभावनिश्चयः । तदानुपलब्धेरमानत्वात् । तद्धर्मात्मनो देहान्तरप्राप्त्याप्यनुपलम्भोपपत्तेश्चेति भावः ॥ उपलब्धिवदिति सूत्रस्थं पदं व्याख्यातुमुपक्रमते-किमात्मकमिति ॥ तत् किं भूतातिरिक्तं तत्त्वम्-उत-रूपादिवद् भूतधर्मः । नाद्यः, अपसिद्धान्तादित्युक्त्वा द्वितीयमाशंक्य निषेधयति—यदनुभवनमित्यादिना ॥ देहात्मकभूतानां चैतन्यं प्रति विषयत्वात् कर्तृकर्मविरोधेन विषयस्य कर्तृत्वायोगात् न भूतकर्तृकत्वं चैतन्यस्येत्यर्थः ॥ किञ्च ज्ञानस्य भूतधर्मत्वे रूपादिवज्जाड्यापत्तेर्न तद्धर्मत्वमित्याह-न हीति । फलितं सूत्र-

भामती ।

पाशनिबद्धा इव बहवो विहङ्गमाः विरुद्धादिक्रियाभिमुखाः समर्था अपि न हस्तमात्रमपि देशमतिपतितुमुत्सहन्ते । एवं शरीरमपि न किंचित्कर्तुमुत्सहते । अपि च नान्वयमात्रात्तद्धर्मधर्मिभावः शक्यो विनिश्चेतुं, मा भूदाकाशस्य सर्वो धर्मः सर्वेष्वन्वयात् । अपि त्वन्वयव्यतिरेकाभ्याम् । संदिग्धश्चात्र व्यतिरेकः । तथा च न साधकत्वमन्वयमात्रस्येत्याह-अपि च सति हि तवादिति । दूषणान्तरं विवक्षुराक्षिपति-किमात्मकं चेति । स एवैकग्रन्थेनाह-न हीति । नास्तिक आह-यदनुभवनमिति । यथा हि भूतपरिणामभेदो रूपादिर्न तु भूतचतुष्टयादर्थान्तरमेवं भूतपरिणामभेद एव चैतन्यं न तु भूतेभ्योऽर्थान्तरं, येन 'पृथिव्यापस्तेजो वायुरिति तत्त्वानि' इति प्रतिज्ञाव्याघातः स्यादित्यर्थः । एतदुक्तं भवति-चतुर्णामेव भूतानां समस्तं जगत्परिणामो न त्वस्ति तत्त्वान्तरं यस्य परिणामो रूपादयोऽन्यद्वा परिणामान्तरमिति । अत्रोक्ताभिस्तावदुपपत्तिभिर्देहधर्मत्वं निरस्तं तथाप्युपपत्त्यन्तराभिधित्सयाह-चेत्तर्हीति । भूतधर्मा रूपादयो जडत्वाद्विषया एव दृष्टा न तु विषयिणः। न च केषांचिद्विषयाणामपि विषयित्वं भविष्यतीति वाच्यम्।

आनन्दगिरीय-न्यायनिर्णयः ।

तद्धर्मास्ते परैरुपलभ्यन्ते यथा रूपादय इत्यर्थः । इतश्च तेषां न देहधर्मतेत्याह-अपि चेति । न हि धर्मधर्मित्वमन्वयमात्राद्युक्तमतिप्रसंगादतो व्यतिरेकोऽपि वाच्यः सोऽत्र संदिग्ध इति न धर्मधर्मितेत्याह-सतीति । व्यतिरेकसंदेहे हेतुमाह-पतितेऽपीति । तत्रापि न प्रमाणमित्याशंक्याऽऽह-संशयेति । न तावत्तवादर्शनमभावनिश्चायकं प्रत्यक्षस्यैव प्रामाण्यान्मम त्वात्मनो देहान्तरसंचारात्तद्धर्मदृष्टिरिति संदिह्यते तावन्मात्रेण चैतन्यादीनां देहधर्मत्वासिद्धिरावयोरुभयोरपि निश्चितान्वयादेरेव साधकत्वाविवादादिति भावः । उपलब्धिवदिति पदं चोद्यमुखेन व्याख्यातुं पृच्छति-किमात्मकमिति । तत्किं भूतचतुष्टयातिरिक्तं न वेति विमर्शार्थः । अप्रकृतेऽर्थे कथं प्रश्नः स्यात्तत्राऽऽह-यस्येति । आद्ये सिद्धान्तविरोधमाह-न हीति । धर्मधर्मिणोस्तादात्म्याभेदपक्षमालम्बते-यदिति । भूतपरिणामत्वाच्चैतन्यस्य रूपादिवद्भूतेभ्योऽर्थान्तरत्वाभावान्न त्वतिरेकापत्तिरिति भावः । भूतपरिणामत्वं चैतन्यस्य रूपादिवैधर्म्योक्त्या प्रत्युक्तमिति मन्वानो दोषान्तरमाह-तदिति । उक्तरूपं चेच्चैतन्यं तर्हि स्वात्मानं प्रति भूतभौतिकानां विषयत्वान्न तद्धर्मत्वेन तदभेदं प्रतिपद्येतेत्यत्र हेतुमाह-स्वात्मनीति । असिधारा

ति। न हि नटः शिक्षितः सन्स्वस्कन्धमधिरोक्ष्यति । न हि भूतभौतिकधर्मेण सता चैतन्येन भूतभौतिकानि विषयीक्रियेरन्। न हि रूपादिभिः स्वं रूपं, पररूपं वा,–विषयी क्रियते। विषयी क्रियन्ते तु बाह्याध्यात्मिकानि भूतभौतिकानि चैतन्येन। अतश्च यथैवास्या भूतभौतिकविषयाया उपलब्धेर्भावोऽभ्युपगम्यते, एवं व्यतिरेकोऽप्यस्यास्तेभ्योऽभ्युपगन्तव्यः। 'उपलब्धिस्वरूप एव च नः आत्मा' इत्यात्मनो देहव्यतिरिक्तत्वम्। नित्यत्वं च उपलब्धेरैकरूप्यात्॥ 'अहमिदमद्राक्षम्' इति चावस्थान्तरयोगेऽपि उपलब्धृत्वेन प्रत्यभिज्ञानात्। स्मृत्याद्युपपत्तेश्च॥ यत्तूक्तं शरीरे भावाच्छरीरधर्म उपलब्धिरिति, तद्वर्णितेन प्रकारेण

रत्नप्रभा।

पदार्थमाह–**अतश्चेति**॥ या देहातिरिक्ता सद्रूपोपलब्धिः स एवात्मा चेदनित्यः स्यात्। उपलब्धेरनित्यत्वादित्यत आह–**नित्यत्वं चेति**॥ घटः स्फुरति,पटः स्फुरतीति सर्वत्र स्फूर्तेरभेदात् नित्यत्वं विषयोपरागनाशे तु नाशभ्रम इत्यर्थः॥ एवमात्मा, देहाद्भिन्नः, उपलब्धिरूपत्वाद्युपलब्धिवदित्युक्तम्॥ किञ्च जाग्रत्स्वप्नयोर्देहभेदेऽप्यात्मैकत्वप्रत्यभिज्ञानाद्। आत्मभेदे च अन्यानुभूते अन्यस्य स्मृतीच्छानुपपत्तेः स्वप्नस्मृत्यादिमनात्मा देहाद्भिन्न इत्याह–**अहमिति**॥ निरस्तमप्यधिकाभिधित्सयानुवदति–**यत्तूक्तमिति**॥ उप-

भामती।

स्वात्मनि वृत्तिविरोधात्। न चोपलब्धावेष प्रसङ्गस्तस्या अजडायाः स्वयंप्रकाशत्वाभ्युपगमात्। कृतोपपादनं चैतत्पुरस्तात्। उपलब्धिवदिति सूत्रावयवं योजयति–**यथैवास्या इति**। उपलब्धिग्राहिण एव प्रमाणाच्छरीरव्यतिरेकोऽप्यवगम्यते। तस्यास्ततः स्वयंप्रकाशप्रत्ययेन भूतधर्मेभ्यो जडेभ्यो वैलक्षण्येन व्यतिरेकनिश्चयात्। अस्तु तर्हि व्यतिरेकादुपलब्धिर्भूतेभ्यः स्वतन्त्रा तथाप्यात्मनि प्रमाणाभाव इत्यत आह–**उपलब्धिस्वरूप एव च न आत्मेति**। आजानतस्तावदुपलब्धिभेदो नानुभूयत इति विषयभेदादभ्युपेयः। न चोपलब्धिव्यतिरेकिणां विषयाणां प्रथा संभवतीत्युपपादितम्। न च विषयभेदग्राहि प्रमाणमस्तीति चोपपादितं ब्रह्मतत्त्वसमीक्षायामस्माभिः। एवं च सति विषयरूपतद्भेदावेव सुदुर्लभाविति दूरनिरस्ता विषयभेदादुपलब्धिभेदसंकथा। तेनोपलब्धेरुपलब्धृत्वमपि न तात्त्विकम्। किंत्वविद्याकल्पितम्। तत्राविद्यादशायामप्युपलब्धेरभेद इत्याह–**अहमिदमद्राक्षमिति चेति**। न केवलं तात्त्विकाभेदान्नित्यत्वमतात्त्विकादपि नित्यत्वमेवेति तस्यार्थः॥ **स्मृत्याद्युपपत्तेश्च**। नानात्वे हि नान्येनोपलब्धेऽन्यस्य पुरुषस्य स्मृतिरुपपद्यत इत्यर्थः। निराकृतमप्यर्थं निराकरणान्तरायानुभाषते–**यत्तूक्तमिति**। यो

आनन्दगिरीय–न्यायनिर्णयः।

स्वात्मानं छिनत्तीतिवदेकत्र विषयविषयित्वायोगादिति हेत्वर्थः। किंच, यो यस्य धर्मः स न तत्साधको यथा रूपादिः। तथा च चैतन्यस्य भूतभौतिकसाधकत्वादेव तदतिरेकसिद्धिरित्याह–**न हीति**। रूपादिदृष्टान्तं स्पष्टयति–**न हीति**। तर्हि चैतन्यस्यापि साधकत्वं मा भूत्तत्राऽऽह–**विषयीति**। सूत्रावयवं फलितपरत्वेन योजयति–**अतश्चेति**। भवतु तर्हि भूतेभ्योऽतिरिक्ता स्वतन्त्रोपलब्धिस्तथाऽपि कथमात्मसिद्धिस्तत्राऽऽह–**उपलब्धीति**। क्षणिकत्वाच्चस्या नित्यात्मरूपत्वमयुक्तमित्याशंक्याजानतस्तद्भेदाभावाद्विषयोपरागात्तद्भानादसावेवानित्यो नोपलब्धिरित्याह–**नित्यत्वं चेति**। किंच, स्थूलदेहाभिमानहीनस्य स्वप्ने प्रत्यभिज्ञानादतिरिक्तात्मसिद्धिरित्याह–**अहमिति**। स्वप्नेऽपि स्थूलदेहान्तरस्यैवोपलब्धृत्वमित्याशंक्याऽऽह–**स्मृत्यादीति**।उपलब्धृस्मर्त्रोर्भेदे सत्यन्योपलब्धेऽन्यस्य स्मृतिरिच्छादयश्च नेति न तयोरन्यतेत्यर्थः।दूषितमपि दोषान्तरं वक्तुमनुभाषते–**यत्त्विति**।तद्भावाभावित्वव्याख्यानेन प्रत्याख्यातमेतदित्युक्तं स्मारयति–**तदिति**।

प्रत्युक्तम् ॥ अपि च सत्सु प्रदीपादिषूपकरणेषूपलब्धिर्भवति, असत्सु न भवति। न चैतावता प्रदीपादिधर्म एवोपलब्धिर्भवति ॥ एवञ्च सति देहभावे उपलब्धिर्भवति, असति च न भवतीति न देहधर्मो भवितुमर्हति। उपकरणत्वमात्रेणापि प्रदीपादिवद्देहोपयोगोपपत्तेः॥ न चात्यन्तं देहस्योपलब्धावुपयोगो दृश्यते। निश्चेष्टेऽपि ह्यस्मिन्देहे स्वप्ने नानाविधोपलब्धिदर्शनात् ॥ तस्मादनवद्यं देहव्यतिरिक्तस्यात्मनोऽस्तित्वम् ॥५४॥ इत्यैकात्म्याधिकरणम् ॥ ३० ॥

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥५५॥(३१)॥

रत्नप्रभा।

लब्धेर्देहान्वयव्यतिरेकौ, न देहधर्मत्वसाधकौ, तन्निमित्तत्वेन अन्यथासिद्धेरित्यधिकमाह-अपि चेति ॥ उपलब्धिमात्रे देहस्य निमित्तत्वमप्यसिद्धमित्याह-न चात्यन्तमिति ॥ स्वप्नोपलब्धिः, न देहजन्या, देहव्यापारं विनापि भावाद् वृक्षवत्। अत एव तन्वभावेऽपि स्वप्नवद्योगिनां भोगं सूत्रकृद्वक्ष्यति। जाग्रदुपलब्धेर्देहजत्वमस्तीत्यन्तमित्युक्तम् ॥ तस्मादुक्तानुमानानुगृहीतान्मम शरीरमिति भेदानुभवादहं मनुष्य इत्यभेदज्ञानं भ्रम इत्युपसंहरति—तस्मादिति ॥ ५४ ॥ (३०) ॥ अंगावबद्धाः० ॥ उद्गीथावयवोङ्कारे प्राणदृष्टिः "पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथं आदित्यः प्रतिहारो. द्यौर्निधनम्" [ छां०

भामती।

हि देहव्यापारादुपलब्धिरुत्पद्यते तेन देहधर्म इति मन्यते तं प्रतीदं दूषणम्-न चात्यन्तं देहस्येति। प्रकृतमुपसंहरति-तस्मादनवद्यमिति ॥५४॥ (३०)॥ अंगावबद्धास्तु न शाखासु हि प्रतिवेदम्। स्वरादिभेदात्प्रतिवेदमुद्गीथादयो भिद्यन्ते। तदनुबद्धास्तु प्रत्ययाः प्रतिशाखं विहिता भेदेन। तत्र संशयः- किं यस्मिन्वेदे यदुद्गीथादयो विहितास्तेषामेव तद्वेदविहिताः प्रत्यया उतान्यवेदविहितानामप्युद्गीथादीनां ते प्रत्यया इति। किं तावत्प्राप्तम्। 'ओमित्यक्षरमुद्गीथश्रवणेनोद्गीथमुपासीत' इत्युद्गीथसामान्यमवगम्यते। निर्विशेषस्य च तस्यानुपपत्तेर्विशेषाकांक्षायां स्वशाखाविहितस्य विशेषस्य संनिधानात्तेनैवाकांक्षाविनिवृत्तेर्न शाखान्तरीयमुद्गीथान्तरमपेक्षते। न चैवं संनिधानेन श्रुतिपीडा, यदि हि श्रुतिसमर्पितमर्थमपबाधेत ततः श्रुतिं पीडयेन्न चैतदस्ति। न ह्युद्गीथश्रुत्यभिहितलक्षितौ सामान्यविशेषौ बाधितौ स्वशाखागतयोः स्वीकरणाच्छाखान्तरीयास्वीकारेऽपि। यथाहुः-'जातिव्यक्ती गृहीत्वेह वयं तु श्रुतलक्षिते। कृष्णादि'यदि मुञ्चामः का श्रुतिस्तत्र पीडयते'॥एवं प्राप्तम्।एवं प्राप्त उच्यते-उद्गीथाद्यङ्गावबद्धास्तु प्रत्यया नानाशाखासु प्रतिवेदमनुवर्तेरन्न प्रतिशाखं व्यवतिष्ठेरन्। उद्गीथमित्यादिसामान्यश्रुतेरविशेषात्। एतदुक्तं भवति-युक्तं शुक्लं पटमानये-

आनन्दगिरीय-न्यायनिर्णयः।

अधिकं दोषं दर्शयति-अपि चेति। अनन्यथासिद्धावन्वयव्यतिरेकौ वाच्यौ देहस्य च चैतन्यान्वयव्यतिरेकावधिष्ठानविषयतयाऽन्यथासिद्धाविति सदृष्टान्तं साधयति-सत्स्विति। उपकरणत्वमपि देहस्योपलब्धौ न सिध्यतीत्याह। न चेति। उपलब्धिर्न देहजन्या तस्मिन्नव्याप्रियमाणेऽपि सत्त्वादर्थान्तरवत्। जागरे तु व्यञ्जकजनकतया कथं चिदुपयोगमङ्गीकृत्यात्यन्तमित्युक्तम्। स्वप्ने द्रष्टैवाहं पश्यामीत्याद्यबाधिताध्यक्षस्य स्थूलदेहाकारहीनस्य देहातिरिक्तात्मविषयत्वान्न देहात्मवादसिद्धिरिति भावः। अनुमानाद्यप्रामाण्यं तु प्रतिज्ञामात्रमिति मत्वोपसंहरति-तस्मादिति ॥ ५४ ॥ ( ३० ) ॥ देहभावे भवतश्चैतन्यस्य तद्भावेऽप्यभाववदुद्गीथादिभावे भवत उपासनस्य तद्भावेऽप्यभावमाशंक्याऽऽह-अंगेति।

समाप्ता प्रासङ्गिकीयं कथा । सम्प्रति प्रकृतामेवानुवर्तामहे—''ओमित्येतदक्षरमुद्गीथमुपासीत'' [ छां० १ । १ । १ ] ''लोकेषु पञ्चविधं सामोपासीत'' [ छां० २ । २ । १ ] ''उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थम्'' ''इयमेव पृथिवी'' ''अयं वाव लोकः'' [ छां० १ । १३ । १ ] ''एषोऽग्निश्चितः'' इत्येवमाद्या ये उद्गीथादिकर्माङ्गावबद्धाः प्रत्ययाः प्रतिवेदं शाखाभेदेषु विहिताः, ते तच्छाखागतेष्वेवोद्गीथादिषु भवेयुः, अथ वा सर्वशाखागतेष्विति विशयः । प्रतिशाखञ्च स्वरादिभेदादुद्गीथादिभेदमादायाऽयमुपन्यासः । किं तावत्प्राप्तम् ॥ स्वशाखागतेष्वेवोद्गीथादिषु विधीयेरन्निति ॥ कुतः ॥ सन्निधानात्—''उद्गीथमुपासीत'' इति हि सामान्यविहितानां विशेषाकांक्षायां सन्निकृष्टेनैव स्वशाखागतेन

रत्नप्रभा ।

२ । २ । १ ] इति हिङ्कारादिपञ्चविधे साम्नि पृथिव्यादिलोकदृष्टिः उक्थाख्यशास्त्रे पथिवी दृष्टिः, इष्टकाचिताग्नौ लोकदृष्टिरित्येवं कर्माङ्गाश्रितोपास्तयः सन्ति। तासूद्गीथादिसाधारणश्रुत्या विशेषसन्निधिना च संशयः ॥ ननूद्गीथादीनां सर्वशाखास्वेकत्वादुपास्तयः सर्वत्रेति विध्यैक्यान्निश्चये कथं संशयः इत्यत आह—प्रतिशाखं चेति ॥ यथा देहात्मनोर्भेदादात्मधर्मा देहे न सम्भवन्ति, तथा प्रतिवेदमुद्गीथादीनां भिन्नत्वादेकस्मिन् वेदे विहितोद्गीथाद्युपास्तयो वेदान्तरस्थोद्गीथादिषु न सम्भवन्तीति दृष्टान्तेन पूर्वपक्षयति—स्वशाखेति ॥ ''उद्गीथमुपासीत'' इति विधिवाक्यस्थोद्गीथत्वसामान्यस्य व्यक्त्यपेक्षत्वात् स्वशाखा-

भामती ।

त्यादौ पटश्रुतिमविशेषप्रवृत्तामपि संनिधानाच्छुक्लश्रुतिर्बाधत इति । विशिष्टार्थप्रत्यायनप्रयुक्तत्वात्पदानां समभिव्याहारस्य । अन्यथा तदनुपपत्तेः । न च स्वार्थमस्मारयित्वा विशिष्टार्थप्रत्यायनं पदानामिति विशि-

आनन्दगिरीय—न्यायनिर्णयः ।

अवान्तरसंगतिमाह—समाप्तेति । उद्गीथाद्यङ्गाश्रितोपासनानि विषय इति तत्तद्वाक्योक्त्या दर्शयति—ओमित्येतदिति । इदं वाक्यं व्याप्तेश्चेत्येतदधिकरणे व्याख्यातम् । लोकेषु पृथिव्यादिषु लोकशब्दो लोकालोकेषु लाक्षणिकः । पृथिव्यादिदृष्ट्या पञ्चविधं सामोपासीतेत्यर्थः । पृथिवी हिंकारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमिति।उक्थं कर्माङ्गं शस्त्रमिति वीप्सया यत्प्रजा वदन्ति तदिदमेव येयं पृथिवीत्युक्थे पृथिवीदृष्टिविधिः । चितोऽग्निः कर्माङ्गभूतस्तत्रायं लोकदृष्टिरित्यर्थः। उद्गीथादिप्रत्ययानुक्तानधिकृत्य प्रकरणादुद्गीथादिशब्दसाधारण्याच्च संशयमाह—त इति । उद्गीथादीनां सर्वशाखास्वैक्यादुपास्तिव्यवस्थाशङ्काभावादनारभ्यमिदमधिकरणमित्याशङ्क्याऽऽह—प्रतीति । नीचैस्त्वादिस्वरभेदादध्ययनधर्मभेदाच्चोद्गीथादेरपि भेदमंगीकृत्य विद्याविचार इत्यर्थः । अत्र हि श्रौतेन सामान्येन प्राकरणिकस्य विशेषनियमस्य बाधात्सर्वशाखाविहितप्रधानकर्मांगत्वेन प्रयुक्तसर्वोद्गीथादिविशेषेषु तदालम्बनोपास्तीनामुपसंहारोक्त्या सर्वशाखाभिरनुष्ठेयत्वोक्तेर्वाक्यार्थधीहेतोरेव चिन्तनात्पादादिसंगतिः । पूर्वपक्षेऽनुष्ठानव्यवस्थासिद्धिः, सिद्धान्ते तदव्यवस्थेत्यास्थाय पूर्वपक्षयितुं विमृशति—किमिति । यथा देहात्मनोर्भेदादात्मधर्मा देहे न भवन्त्येवमेकशाखागतोद्गीथधर्माणां भिन्नशाखोद्गीथादौ न प्राप्तिरिति पूर्वपक्षमाह—स्वशाखेति । विद्याचित एवेत्येवश्रुत्या मनश्चिदादीनां क्रियाप्रकरणभंगेन पुरुषार्थत्ववदिहाप्युद्गीथादिश्रुतेर्बलीयस्त्वात्तया प्रकरणभंगान्नास्त्युपास्तीनां व्यवस्थेत्याह—कुत इति । उद्गीथादिसामान्यश्रुतेः प्रकरणोपनीतविशेषाकांक्षत्वेनाबाधकत्वादुपास्तिव्यवस्था युक्तेति मत्वाऽऽह—संनिधानादिति । प्रकरणं विवृणोति—उद्गीथमिति । उद्गीथोक्तचित्याग्नीनां प्रत्ययालम्बनानां वेदत्रयोक्तप्रधानकर्मस्वंग-

विशेषेणाकांक्षानिवृत्तेस्तदतिलंघनेन शाखान्तरविहितविशेषोपादाने कारणं नास्ति ॥ तस्मात्प्रतिशाखं व्यवस्थेति ॥ एवं प्राप्ते ब्रवीति—अ-ङ्गावबद्धास्त्विति ॥ तुशब्दः परपक्षं व्यावर्तयति । नैते प्रतिवेदं स्वशा-खास्वेव व्यवतिष्ठेरन् । अपि तु सर्वशाखास्वनुवर्तेरन् ॥ कुतः ॥ उद्गीथा-दिश्रुत्यविशेषात् । स्वशाखाव्यवस्थायां हि "उद्गीथमुपासीत" इति सामान्यश्रुतिरविशेषप्रवृत्ता सती सन्निधानवशेन विशेषे व्यवस्थाप्यमाना पीडिता स्यात् । न चैतन्न्याय्यम् ॥ सन्निधानाद्धि श्रुतिर्बलीयसी । न च सामान्याश्रयः प्रत्ययो नोपपद्यते ॥ तस्मात्स्वरादिभेदे सत्यप्युद्गीथत्वा-द्यविशेषात्सर्वशाखागतेष्वेवोद्गीथादिष्वेवञ्जातीयकाः प्रत्ययाः स्युः॥५५॥

---

रत्नप्रभा ।

सन्निहितव्यक्तिग्रह इत्यर्थः ॥ सामान्यश्रुतेः सन्निहितव्यक्तिग्रहाख्यसंकोचस्तत्र कर्तव्यः, यत्र व्यक्तिमात्रग्रहो नोपपद्यते । यथा—शुक्लां गामानयेत्यत्र गोश्रुतेः सन्निहितशुक्लव्यक्तिपरतया संकोचः । अत्र चानुप-पत्त्यभावाद् व्यक्तिमात्रसम्बन्धसामान्यमुपास्यमिति सिद्धान्तयति—एवमित्यादिना ॥ ५५ ॥ पूर्वं शाखा-न्तरविहितोपास्तीनां शाखान्तरस्थांगसम्बन्धे यः प्रतीतो विरोधः, तमङ्गीकृत्य सम्बन्ध उक्तः । सम्प्रति विरोध एव नास्ति । शाखान्तरविहिताङ्गानां शाखान्तरस्थाङ्गिसम्बन्धवदुक्तसम्बन्धोपपत्तेरित्याह—

भामती ।

ष्टार्थप्रयुक्तं स्वार्थस्मरणं न स्वप्रयोजकमपबाधितुमुत्सहते । मा च बाधि प्रयोजकाभावेन स्वार्थस्मारण-मपीति युक्तमविशेषप्रवृत्ताया अपि श्रुतेरेकस्मिन्नेव विशेषे अवस्थापनम् । इह तूद्गीथश्रुतेरविशेषेण विशि-ष्टार्थप्रत्यायकत्वात् । संकोचे प्रमाणं किंचिन्नास्ति । न च संनिधिमात्रमपबाधितुमर्हति । श्रुतिसामान्यद्वा-रेण च सर्वविशेषगामिन्याः श्रुतेरेकस्मिन्नवस्थानं पीडैव । तस्मात्सर्वोद्गीथविषयाः प्रत्यया इति ॥ ५५ ॥

आनन्दगिरीय—न्यायनिर्णयः ।

त्वेन प्रयुक्तानां प्रतिशाखं स्वरादिभेदेन भेदादुद्गीथादिश्रुतिभिः प्रत्ययालम्बनानामुद्गीथादीनां सामान्येनो-पात्तानां विशेषाकांक्षायां तत्तच्छाखास्थप्रधानकर्माङ्गत्वेन प्रयुक्तोद्गीथादिविशेषेषूद्गीथमुपासीतेत्यादिप्रत्ययाः प्रकरणान्नियम्यन्त इत्यर्थः । प्रकरणाद्व्यवस्थायां यच्छाखास्थं यदुपासनं तत्तच्छाखिभिरेवानुष्ठेयमित्युपसं-हरति—तस्मादिति । पूर्वपक्षमनूद्य सिद्धान्तयति—एवमिति । सूत्राक्षराणि योजयति—तुशब्द इति । हिशब्दोपात्तं हेतुं प्रश्नपूर्वकमाह—कुत इति । सामान्यप्रवृत्तश्रुतेर्विशेषाकांक्षायां प्रकरणाद्विशेषनियमो युक्तः । प्रकृते तूद्गीथादिसामान्येषूपास्तिसंभवेन विशेषाकांक्षाभावे श्रौतसामान्येन प्राकरणिकविशेषनिय-मबाधात्सर्वशाखास्थप्रधानकर्माङ्गत्वेन विनियुक्तोद्गीथादिविशेषेषु तदालम्बनधियामुपसंहारः स्यादिति हेतुं विवृणोति—स्वेति । प्रकरणेन विशेषार्थे सामान्यश्रुत्यबाधेऽपि संकोचे मानाभावात्सामान्यद्वारा सर्ववि्शे-षगामिश्रुतेरेकस्मिन्विशेषे नियमनं पीडैवेति मत्वोक्तम्—पीडितेति । त्वत्पक्षे श्रुत्या प्रकरणबाधवन्मत्प-क्षेऽपि तेन श्रुतिर्बाध्यतामविशेषादित्याशंक्याऽऽह—संनिधानादिति । सामान्यस्योपास्यत्वायोगाद्विशेषा-कांक्षायां तदर्थकं प्रकरणं कथं श्रुत्या बाध्यमित्याशंक्याऽऽह—न चेति । तथाऽपि प्रतिवेदं स्वरादिभेदे-नोद्गीथादिभेदादुपास्तिव्यवस्थोक्तेत्याशंक्याऽऽह—तस्मादिति । श्रुतिप्राबल्यं तच्छब्दार्थः ॥ ५५ ॥ उद्गीथादिश्रुत्यवष्टम्भेन यत्रयत्रोद्गीथादिरुक्तस्तत्रतत्र सर्वत्रैव क्वाचित्कस्यापि प्रत्ययस्यानुवृत्तिरित्युक्तम् ।

## मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥

अथ वा नैवात्र विरोध आशंकितव्यः—कथमन्यशाखागतेषूद्गीथादिष्वन्यशाखाविहिताः प्रत्यया भवेयुरिति । मन्त्रादिवदविरोधोपपत्तेः । तथाहि—मन्त्राणां, कर्मणां, गुणानां च,—शाखान्तरोत्पन्नानामपि शाखान्तर उपसंग्रहो दृश्यते । येषामपि हि शाखिनां "कुटरुरसि" इत्यश्मादानमन्त्रो नाम्नातः, तेषामप्यसौ विनियोगो दृश्यते—"कुक्कुटोऽसि" इत्यश्मानमादत्ते "कुटरुरसि" इति वेति ॥ येषामपि च समिदादयः प्रयाजा नाम्नातारः, तेषामपि तेषु गुणविधिराम्नायते—"ऋतवो वै प्रयाजाः समानत्र होतव्याः" इति ॥ तथा—येषामपि "अजोऽग्नीषोमीयः" इति जातिविशेषोपदेशो नास्ति, तेषामपि तद्विशेषविषयो मन्त्रवर्ण उपलभ्यते—"छागस्य वपाया मेदसोऽनुब्रूहि" इति ॥ तथा वेदान्तरोत्पन्नानामपि "अग्नेर्वेर्होत्रं वेरध्वरम्" इत्यादिमन्त्राणां वेदान्तरे परिग्रहो दृष्टः ॥ तथा बह्वृचपठितस्य सूक्तस्य—"यो जात एव प्रथमो मनस्वान्" इत्यस्य

---

रत्नप्रभा ।

**अथ वेत्यादिना** ॥ यद्यपि यजुर्वेदिनां "कुक्कुटोऽसि" इति मन्त्रोऽस्ति । "कुटरुरसि" इति नास्ति । **तथापि** तण्डुलपेषणार्थाश्मादाने मन्त्रद्वयस्य विकल्पेन विनियोगात् सोऽपि प्राप्नोतीत्यर्थः ॥ सूत्रस्थादिपदोपात्तकर्मणामुदाहरणमाह—**येषामपि चेति** ॥ मैत्रायणीयानामित्यर्थः ॥ हेमन्तशिशिरयोरैक्याद् **ऋतवः** पञ्च । तद्वत् पञ्चसंख्याकाः—प्रयाजाः । **समानत्र** तुल्यकर्मस्थले होतव्या इति पञ्चत्वगुणविधानाद् गुणिनः शाखान्तरविहिताः सम्बध्यन्त इति भावः ॥ गुणमुदाहरति—**तथा येषामपीति** ॥ यजुर्वेदिनामग्नीषोमीयः पशुः श्रुतः, नाज इति जातिविशेषः । **तथापि** प्रैषमन्त्रलिङ्गाज्जातिविशेषसंग्रह इत्यर्थः ॥ मन्त्राणामुदाहरणान्तरमाह—**तथा वेदेति** ॥ सामवेदस्थानां यजुर्वेदे परिग्रह इत्यर्थः ॥ **तथा बह्वृचेति** ॥ "स

भामती ।

**मन्त्रादिवद्वाऽविरोधः** । विरुद्धमिति नः संप्रत्ययो यत्प्रमाणेन नोपलभ्यते । उपलब्धं च मन्त्रादिषु

आनन्दगिरीय—न्यायनिर्णयः ।

इदानीमुदाहरणेनापीममर्थं समर्थयते—**मन्त्रादिवदिति** । वाशब्दार्थं कथयति—**अथ वेत्यादिना** । हेतुमवतार्याक्षरार्थमाह—**मन्त्रेति** । तत्र मन्त्रोदाहरणं दर्शयति—**येषामिति** । तण्डुलपेषणार्थं कुटरुरसीत्यश्मादानमंत्रो येषां शाखिनां नाऽऽम्नातः कुक्कुटोऽसि मधुजिह्व इत्ययमेव मन्त्रः समाम्नायते तथाऽपि तेषां प्रयोगसूत्रेण विनियोगे सोऽपि मन्त्रो दृश्यते तेन शाखान्तरोत्पन्नस्य मन्त्रस्य शाखान्तरे संग्रहोऽस्तीत्यर्थः । कर्मणामुदाहरणमाह—**येषामपीति** । मैत्रायणीयानां समिधो यजति तनूनपातं यजतीडो यजति बर्हिर्यजति स्वाहाकारं यजतीति समिदादयः प्रयाजा नाऽऽम्नातास्तथाऽपि तेषु संख्यादिगुणविधिराम्नायते द्वादश मासाः पञ्चर्तव इत्यत्र हेमन्तशिशिरयोरेकीकरणेन पञ्चर्तवः प्रसिद्धाः । तथा चर्तुवत्पञ्चसंख्याकाः प्रयाजाः समानत्र समानदेशे होतव्या इति यावत् । तत्र शाखान्तरोत्पन्नकर्मणां शाखान्तरे संग्रहो दृष्टोऽन्यथा तत्र गुणविध्ययोगादित्यर्थः । गुणोदाहरणमाह—**तथेति** । अग्नीषोमीयं पशुमालभेतेति यजुर्वेदिनामग्नीषोमीयः पशुराम्नायते नाज इति जातिविशेषस्तेन विशेषाश्रवणाद्यः कश्चित्पशुरालम्भनीय इति प्राप्ते "छागो वा मन्त्रवर्णात्" इतिसूत्रेण च्छागादेर्होमार्थमनुवाक्यं पठ होतरित्यध्वर्युप्रैषार्थलिङ्गस्य नियमकारणस्य भावाच्छागोऽग्नीषोमीयः पशुरिति स्थितम् । अतश्च गुणस्यापि प्रैषमन्त्रलिंगाद्रुपसंग्रहो दृष्ट इत्यर्थः । मन्त्राणामुदाहरणान्तरमाह—**तथेति** । वेदान्तरशब्दाभ्यामुद्गात्रध्वर्युवेदावुच्येते ।

"अध्वर्यवे सजनीयं शस्यम्" इत्यत्र परिग्रहो दृष्टः ॥ तस्माद्यथाश्रयाणां कर्माङ्गानां सर्वत्रानुवृत्तिः, एवमाश्रितानामपि प्रत्ययानामित्यविरोधः ॥ ५६ ॥ इत्यङ्गावबद्धाधिकरणम् ॥ ३१ ॥

**भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ५७ ॥ (३२) ॥**

"प्राचीनशाल औपमन्यवः" [छां० ५।११।१] इत्यस्यामाख्यायिकायां-व्यस्तस्य, समस्तस्य च,-वैश्वानरस्योपासनं श्रूयते। व्यस्तोपासनं तावद् "औपमन्यवकं त्वमात्मानमुपास्से इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से" [ छां० ५ । १२ । १ ] इत्यादि ॥ तथा समस्तोपासनमपि-"तस्य ह वा एतस्यात्मनो वै-

रत्नप्रभा ।

जनास इन्द्र'' इत्यनेनोपलक्षितं सूक्तं-**सजनीयम्** । तस्य याजुषाध्वर्युकर्तृकप्रयोगे शंसनं दृष्टमित्यर्थः। **यो जातः** बाल एव **प्रथमः** गुणैः श्रेष्ठः **मनस्वान्** विवेकवान् **सः इन्द्रः** एवंविधो हे **जनासः** जना इति श्रुत्यर्थः ॥ ५६ ॥ (३१) ॥ **भूम्नः क्रतुवत्**० ॥ द्युलोकादित्यादिषु प्रत्येकं वैश्वानरत्वोपास्तिः-व्यस्तोपास्तिः, तदवयव्युपास्तिः समस्तोपास्तिरिति भेदः । आख्यायिका पूर्वमेव व्याख्याता । अत्रोभ-

भामती ।

शाखान्तरीयेषु शाखान्तरीयकर्मसंबन्धित्वम्। तद्वदिहापीति दर्शनादविरोधः। एतच्च दर्शितं भाष्येण सुगमेनेति ॥५६॥(३१)॥**भूम्नःक्रतुवज्ज्यायस्त्वं तथा च दर्शयति**।वैश्वानरविद्यायां छान्दोग्ये किं व्यस्तोपासनं समस्तोपासनं च-उत-समस्तोपासनमेवेति।तत्र दिवमेव भगवो राजन्निति होवाचेति प्रत्येकमुपासनश्रुतेः प्रत्येकं च फलवत्त्वाम्नानात्समस्तोपासने च फलवत्त्वश्रुतेरुभयथाप्युपासनम् । न च यथा वैश्वानरीयेष्टौ यदष्टाकपालो भवतीत्यादीनामवयुव्यवादानां प्रत्येकं फलश्रवणेऽप्यर्थवादमात्रत्वं वैश्वानरं द्वादशकपालं निर्वपेदित्यस्यैव तु फलवत्त्वमेवमत्रापि भवितुमर्हति । तत्र हि द्वादशकपालं निर्वपेदिति विधिभक्तिश्रुतिर्यदष्टाकपालो भवतीत्यादिषु वर्तमानापदेशः। न च वचनानि त्वपूर्वत्वादिति विधिकल्पना। अवयुव्यवादेन स्तुत्याप्युपपत्तेः।इह तु समस्ते व्यस्ते च वर्तमानापदेशस्याविशेषादगृह्यमाणविशेषतया उभयत्रापि विधिकल्पनायाः फलकल्पनायाश्च भेदात् । निन्दायाश्च समस्तोपासनारम्भे व्यस्तोपासनेऽप्युपपत्तेः । श्यामो वाश्वाह्नुतिमभ्यवहरतीतिवदुभयविधमुपासनमिति प्राप्त उच्यते-समस्तोपासनस्यैव ज्यायस्त्वं न व्यस्तोपासनस्य । यद्यपि वर्तमानापदेशत्वमुभयत्राप्यविशिष्टं तथापि पौर्वापर्यालोचनया समस्तोपासनपरत्वस्यावगमः ।

आनन्दगिरीय-न्यायनिर्णयः ।

तत्रैवोदाहरणान्तरमाह-**तथेति** । यो जातो बाल एव सन्प्रथमो गुणैः श्रेष्ठो मनस्वान्विवेकवान्स जनास इन्द्र इति शेषः । जनासो जनास्ते सम्बोध्यन्ते स इन्द्र एवंविध इति यावत् । अध्वर्यवे तत्कर्तृकप्रयोगार्थं सजनीयं स जनास इत्येतेनोपलक्षितं सूक्तं शस्यं शंसनीयमित्यर्थः । दृष्टान्तानुवादेन दार्ष्टान्तिकं निगमयति-**तस्मादिति** । शाखान्तरोत्पन्नस्य शाखान्तरे संग्रहबाहुल्यं तच्छब्दार्थः ॥५६॥(३१)॥ उद्गीथाद्युपासनं तत्तदंगविशेषालम्बनं नेत्युक्तिप्रसंगेन वैश्वानरोपास्तिरपि तत्तदंगविशेषालम्बना नेति साधयति-**भूम्न इति** । सैव हीत्यत्र तद्यत्तत्सत्यमिति तच्छब्देन प्रकृतपरामर्शाद्विचैक्यमुक्तम् । अत्र तु तद्वदभेदे हेत्वभावादगतार्थतेति मत्वा व्यस्तस्य समस्तस्य च वैश्वानरस्योपासनं श्रौतमुदाहरति-**प्राचीनेति** । तत्र प्रश्नप्रतिवचनरूपवाक्येन व्यस्तोपास्तिमुपन्यस्यति-**व्यस्तेति** । वैश्वानराधिकरणे व्याख्यातं वाक्यमनुसृत्य समस्तोपास्तिं दर्शयति-**तथेति** । द्विविधामुपास्तिमधिकृत्योभयत्र विधिफलश्रुतिभ्यामेकं-

१ स जनासो इन्द्र इति शेषः ।

श्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ"[छां० ५।१८।२]इत्यादि॥तत्र संशयः–किमिहोभयथाप्युपासनं स्याद्, व्यस्तस्य, समस्तस्य च–उत–समस्तस्यैवेति ॥ किं तावत्प्राप्तम् ॥ प्रत्यवयवम् ॥ सुतेजःप्रभृतिषु उपास्स इति क्रियापदश्रवणात् ॥ तस्मात् "तव सुतं प्रसुतमासुतं कुले दृश्यते" [ छां० ५ । १२ । १ ] इत्यादिफलभेदश्रवणाच्च व्यस्तान्यप्युपासनानि स्युरिति प्राप्तम् ॥ ततोऽभिधीयते ॥ भूम्नः पदार्थोपचयात्मकस्य समस्तस्य वैश्वानरोपासनस्य ज्यायस्त्वं प्राधान्येनाऽस्मिन्वाक्ये विवक्षितं भवितुमर्हति, न प्रत्येकमवयवोपासनानामपि । क्रतुवत् । यथा–क्रतुषु दर्शपूर्णमासप्रभृतिषु सामस्त्येन साङ्गप्रधानप्रयोग एवैको विवक्ष्यते, न व्यस्तानामपि प्रयोगः प्रयाजादीनां, नाप्येकदेशाङ्गयुक्तस्य प्रधानस्य, तद्वत् ॥ कुत एतद् भूमैव ज्यायानिति ॥ तथाहि श्रुतिर्भूम्नो ज्यायस्त्वं दर्शयत्येकवाक्यत्वावगमात् । एकं हीदं वाक्यं वैश्वानरविद्याविषयं पौ-

रत्नप्रभा ।

यत्र विधिफलयोः श्रवणादेकवाक्यत्वोपपत्तेश्च संशयमाह–तत्रेति ॥ "सैव हि सत्यादयः" [ व्या० सू० ३।३।३८]इत्यत्र"तद्यत्तत् सत्यम्"इति प्रकृताकर्षाद् विद्यैक्यमुक्तं,तद्वदत्रैक्यहेत्वभावाद्गतार्थत्वं मत्वा पूर्वत्रोद्गीथादिश्रुत्यां सन्निधिबाधेनोद्गीथाद्युपास्तीनां सर्वशाखासूपसंहारवद्व्यस्तोपास्तीनां विधिश्रुतेः, फलश्रवणस्य च,–समस्तोपास्तिसन्निधिप्राप्तं स्तुत्यर्थत्वं बाधित्वा तद्विधेयत्वमिति पूर्वपक्षमाह–प्रत्यवयवमिति॥ फलानुक्तौ पूर्वोत्तरपक्षसिद्धिरेव फलं मन्तव्यम्। सुतं कण्डितं सोमद्रव्यम्।तस्यैव प्रसुतत्वमा समन्तात् सुतत्वमवस्थाभेदः।

भामती ।

यत्परं हि वाक्यं तदस्यार्थः । तथाहि–प्राचीनशालप्रभृतयो वैश्वानरविद्यानिर्णयायाश्वपतिं कैकेयमाजग्मुः । ते च तत्तदेकदेशोपासनमुपन्यस्तवन्तः । तत्र कैकेयस्तत्तदुपासननिन्दापूर्वं तन्निवारणेन सम-

आनन्दगिरीय–न्यायनिर्णयः ।

वाक्यत्वोपपत्तेश्च संशयमाह–तत्रेति । एकवाक्यतालाभेन समस्तस्यैव वैश्वानरस्योपास्तिरित्युक्त्या वाक्यार्थधीहेतोरेत्रात्रापि चिन्तनात्पादादिसंगतिः । पूर्वपक्षे वाक्यभेदः, सिद्धान्ते तदैक्यमित्यङ्गीकृत्य पूर्वपक्षार्थं विमृशति–किमिति । उद्गीथादिश्रुत्या संनिधिं बाधित्वोद्गीथाद्युपास्तीनां सर्वशाखासूपसंहारोक्तिवदत्रापि व्यस्तोपासनस्य विधिफलयोः श्रुतेः समस्तोपास्तिसंनिधिप्राप्तं स्तुत्यर्थत्वं बाधित्वा विधेयतेति पूर्वपक्षमाह–प्रतीति । सुतमित्यभिषवस्य कण्डनस्य कर्मतापन्नं सोमरूपम् । प्रसुतमासुतमित्यवस्थाविशेषापेक्षं तस्यैव विशेषणम् । सोमयागकरणसंपत्तिस्तव कुले दृश्यत इति यावत् । आत्मनो वैश्वानरस्येत्यादिवाक्यप्रकरणाभ्यां समस्तोपासनाङ्गत्वेन तदन्तर्भावेऽपि व्यस्तोपासनानामस्त्यन्नं पश्यति प्रियमित्यादिना प्रत्यवयवं विधिफलश्रुतेः स्वातन्त्र्येणापि विधानं कल्प्यं तेनोभयथोपासनं कार्यमिति भिन्नान्येवैतानि वाक्यानीत्यर्थः । सिद्धान्तसूत्रमवतार्य भूम्नो ज्यायस्त्वमिति प्रतिज्ञां व्याचष्टे–तत इति । समस्तोपासनवद्व्यस्तोपासनमपीष्यतां तत्राऽऽह–नेति । तत्र दृष्टान्तमादाय विभजते–क्रतुवदिति । सामस्त्येनेत्यौत्सर्गिकोक्तिः । प्रयाजादीनां प्रत्येकमप्रयोगेऽपि नित्यादीनां किंचिद्गुणवतामपि प्रयोगोऽस्तीत्याशङ्क्य काम्येषु नैवमित्याह–नापीति । सर्वाङ्गोपेतकाम्यक्रतोरिष्टत्ववद्वैश्वानरोपासनस्यापि समस्तस्यैव प्राधान्येनेष्टतेत्याह–तद्वदिति । हेतुं प्रश्नपूर्वकमेव व्याकरोति–कुत इति । साक्षाज्ज्यायस्त्वोक्तिरदृष्टेत्याशंक्याऽऽह–एकेति । वाक्यप्रकरणाभ्यामेकवाक्यत्वं साधयति–एकं हीति । विहितानामपि व्यस्तोपास्तीनां समस्तोपास्त्यन्तर्भावात्

र्वापर्यालोचनात्प्रतीयते ॥ तथाहि-प्राचीनशालप्रभृतय उद्दालकावसानाः षडृषयो वैश्वानरविद्यायां परिनिष्ठामप्रतिपद्यमाना अश्वपतिं कैकेयं राजानमभ्याजग्मुरित्युपक्रम्यैकैकस्यर्षेरुपास्यं द्युप्रभृतीनामेकैकं श्रावयित्वा "मूर्द्धा त्वेष आत्मन इति होवाच" [ छां० ५ । १२ । २ ] इत्यादिना मूर्द्धादिभावं तेषां विदधाति । "मूर्द्धा ते व्यपतिष्यद्यन्मा नाऽऽगमिष्यः" [ छां० ५ । १२ । २ ] इत्यादिना च व्यस्तोपासनमपवदति ॥ पुनश्च व्यस्तोपासनं व्यावर्त्य समस्तोपासनमेवानुवर्त्य "स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" [ छां० ५ । १८ । १ ] इति भूमाश्रयमेव फलं दर्शयति ॥ यत्तु प्रत्येकं सुतेजःप्रभृतिषु फलभेदश्रवणं, तदेवं सत्यंगफलानि प्रधान एवाभ्युच्चिनोतीति द्रष्टव्यम् ॥ तथा "उपास्से" इत्यपि प्रत्यवयवमाख्यातश्रवणं पराभिप्रायानुवादार्थं, न व्यस्तोपासनविधानार्थम् ॥ तस्मात्समस्तोपासनपक्ष एव श्रेयानिति ॥ केचित्त्वत्र समस्तोपासनपक्षं ज्यायांसं प्रतिष्ठाप्य ज्यायस्त्ववचनादेव किल व्यस्तोपासनपक्षमपि सूत्रकारोऽनुमन्यत इति कथयन्ति ॥ तदयुक्तम् ॥ एकवाक्यतावगतौ सत्यां वाक्यभेदकल्पनस्यान्याय्यत्वात् । "मूर्द्धा ते व्यपतिष्यद्" [ छां० ५ । १२ । २ ] इति चैवमादिनिन्दावचनविरोधात् । स्पष्टे चोपसंहारे समस्तोपासनावगमे तदभावस्य पूर्वपक्षे वक्तुमशक्य-

रत्नप्रभा।

सोमयागसम्पत्तिस्तव कुले दृश्यत इति यावत् । "आत्मनो वैश्वानरस्य मूर्धैव सुतेजाः" इति वाक्यप्रकरणाभ्यां व्यस्तोपास्तीनां समस्तोपास्त्यन्तर्भावेन प्रयाजदर्शवदेकप्रयोगत्वे सिद्धे प्रधानतदङ्गफलानां अर्थवादगतानामेकप्रधानफलतयोपसंहाराद् वाक्यभेदो न युक्त इति सिद्धान्त्याशयः ॥ एकदेशिव्याख्यामनूद्य दूषयति-केचिदिति ॥ यद्युभयथोपासनं सिद्धान्तः, तर्हि व्यस्तोपासनमेवेति पूर्वपक्षो वक्तव्यः । स च न सम्भवतीत्याह-स्पष्टे चेति ॥ कथं तर्हि सूत्रे ज्यायस्त्वोक्तिस्तत्राह-

भामती।

स्तोपासनमुपसंजहार । तथा चैकवाक्यतालाभाय वाक्यभेदपरिहाराय च समस्तोपासनपरतैव संदर्भस्य लक्ष्यते । तस्माद्बहुफलसंकीर्तनं प्रधानस्तवनाय । समस्तोपासनस्यैव तु फलवत्त्वमिति सिद्धम् । एकदेशिव्याख्यानमुपन्यस्य दूषयति-केचित्त्वत्रेति । संभवत्येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वात् । नेदृशं

आनन्दगिरीय-न्यायनिर्णयः।

पृथकार्यतेति मत्वाऽऽह-तथाहीति । व्यस्तोपास्त्यपवादश्रुतेश्च समस्तस्यैवोपासनस्य ज्यायस्त्वमित्याह-मूर्धेति । समस्तोपासने वैफल्यान्न तस्य ज्यायस्त्वमित्याशङ्क्याऽऽह-पुनश्चेति । व्यस्तोपासनेऽपि फलश्रवणमस्तीत्युक्तं तत्राऽऽह-यत्त्विति । व्यस्तोपास्तीनां प्रकरणवाक्याभ्यां समस्तोपास्त्यन्तर्भावेन प्रयाजदर्शपूर्णमासवदेकप्रयोगत्वे सिद्धे प्रधानतदंगफलानामर्थवादगतानामेकीकरणेन समस्तोपास्तिरेव ज्यायसीत्याह-तदिति । प्रत्यवयवमुपास्तिविधिश्रुतेर्व्यस्तोपास्तिर्भातीत्युक्तमित्याशंक्याऽऽह-तथेति । औपमन्यवाद्यवगतरूपानुवादेन समस्तोपास्तिरेवात्र विधित्सितेत्यर्थः । स्वपक्षमुपसंहरति-तस्मादिति । एकदेशिव्याख्यामनूद्य दूषयति-केचित्त्विति । किलकारोऽनिच्छायाम् । एकवाक्यताभंगेन वाक्यभेदं कृत्वा व्यस्तोपासनान्यपि पृथग्विधीयन्तामित्याशङ्क्याऽऽह-मूर्धेति । यदोभयथोपास्तिः सिद्धान्तस्तदा व्यस्तोपास्तिरेवात्र समस्तोपास्तिरेव वा पूर्वपक्षः स्यान्नाऽऽद्य इत्याह-स्पष्टे चेति । द्वितीयश्च तवायुक्तो

त्वात् । सौत्रस्य च ज्यायस्त्ववचनस्य प्रमाणवत्त्वाभिप्रायेणाप्युपपद्यमानत्वात् ॥ ५७ ॥ इति भूमज्यायस्त्वाधिकरणम् ॥ ३२ ॥

## नाना शब्दादिभेदात् ॥ ५८ ॥ ( ३३ ) ॥

पूर्वस्मिन्नधिकरणे सत्यामपि सुतेजःप्रभृतीनां फलभेदश्रुतौ समस्तोपासनं ज्याय इत्युक्तम् ॥ अतः प्राप्ता बुद्धिरन्यान्यपि च भिन्नश्रुतीन्युपासनानि समस्योपाशिष्यन्त इति ॥ अपि च नैव वेद्याभेदे विद्याभेदो विज्ञातुं शक्यते । वेद्यं हि रूपं विद्यायाः, द्रव्यदैवतमिव यागस्य । वेद्य-

रत्नप्रभा ।

**सौत्रस्येति**॥ व्यस्तोपास्तीनामप्रामाणिकत्वद्योतनार्थं तदुक्तिरिति भावः ॥५७॥(३२)॥ **नाना शब्दादिभेदात्** ॥ शांडिल्यादिब्रह्मविद्या एका नाना च, तथा संवर्गादिप्राणविद्या एका नाना चेति रूपैक्यभावाभावाभ्यां संशये दृष्टान्तसङ्गत्या पूर्वपक्षमाह—**पूर्वस्मिन्निति** ॥ रूपैक्याच्च विद्यैक्यमित्याह—**अपि**

भामती ।

सूत्रव्याख्यानं समञ्जसमित्यर्थः॥५७॥(३२)॥**नाना शब्दादिभेदात्** । सिद्धं कृत्वा विद्याभेदमधस्तनं विचारजातमभिनिर्वर्तितम् । संप्रति तु सर्वासामीश्वरगोचराणां विद्यानां किमभेदो भेदो वा, एवं प्राणादिगोचरास्विति विचारयितव्यम् । ननु यथा प्रत्ययाभिधेयाया अपूर्वभावनाया आजानतो भेदाभावेऽपि धात्वर्थेन निरूप्यमाणत्वात्तस्य च यागादेर्भेदात्प्रकृत्यर्थयागादिधात्वर्थानुबन्धभेदाद्भेदः । तदनुरक्ताया एव तस्याः प्रतीयमानत्वात् । एवं विद्यानामपि रूपतो वेद्यस्येश्वरस्याभेदेऽपि तत्तत्सत्यसंकल्पत्वादिगुणोपधानभेदाद्विद्याभेद इति नास्त्यभेदाशङ्का । उच्यते—युक्तमनुबन्धभेदात्कार्यरूपाणामपूर्वभावनानां भेद इति । इह ब्रह्मणः सिद्धरूपत्वाद्गुणानामपि सत्यसंकल्पत्वादीनां तदाश्रयाणां सिद्धतया सर्वत्राभेदो विद्यासु । न हि विशालवक्षाश्चकोरेक्षणः क्षत्रिययुवा दुःषन्तनधर्मेति एकत्रोपदिष्टोऽन्यत्र सिंहास्यो वृषस्कन्धः स एवोपदिश्यमानश्चकोरेक्षणत्वाद्यपजहाति न खलु प्रत्युपदेशं वस्तु भिद्यते । तस्य सर्वत्र तादवस्थ्यात् । अतादवस्थ्ये वा तदेव न भवेत् । न हि वस्तु विकल्प्यत इति । तस्माद्वेद्याभेदाद्विद्यानां भेद इति प्राप्तम् । एवं प्राप्त उच्यते—भवेदेतदेवं यदि वस्तुनिष्ठान्युपासनवाक्यानि किंतु तद्विषयामुपासनाभावनां विदधति । सा च कार्यरूपा । यद्यपि चोपासनाभावना उपासनाधीननिरूपणोपासनं चोपास्याधीननिरूपणमुपास्यं चेश्वरादि व्यवस्थितरूपम् । तथाप्युपासनाविषयीभावोऽस्य कदाचित्कस्यचित्केनचिद्रूपेणेत्यपरिनिष्ठित एव । यथैकः स्त्रीकायः केनचिद्भक्ष्यतया केनचिदुपगन्तव्यतया केनचिदपत्यतया केनचिन्मातृतया

आनन्दगिरीय—न्यायनिर्णयः ।

वाक्योपक्रमस्थव्यस्तोपास्तिधीविरोधात्समस्तोपास्तिविध्यर्थं पराभिप्रायानुवादे सिद्धान्तादविशेषादिति भावः । समस्तोपास्तिरेव कार्या न व्यस्तोपास्तिरित्यत्र किमपेक्ष्य सौत्रं ज्यायस्त्ववचनं तत्राऽऽह—**सौत्रस्येति** । समस्तोपास्तेर्मानवत्त्वोक्त्या व्यस्तोपास्तेर्वाक्यतात्पर्याविषयत्वेनाप्रामाणिकत्वं द्योयितुं सूत्रे भूम्नो ज्यायस्त्वमुक्तम् । अतः समस्तोपास्तिरेव कार्येत्येकवाक्यता सिद्धेत्यर्थः ॥ ५७ ॥ ( ३२ ) ॥ भिन्नश्रुतीनामपि सुतेजस्त्वप्रभृतीनां समस्तोपासनं ज्यायश्चेत्तर्हि सर्वोपास्तीनामपि भिन्नश्रुतीनां समस्तोपासनं ज्यायः स्यादित्याशंक्याऽऽह—**नानेति** । दहरविद्यादिब्रह्मोपासनानि प्राणोपासनानि च वेद्याभेदादभिन्नानि वा शब्दादिभेदाद्भिन्नानि वेति संदेहे पूर्वन्यायेन पूर्वपक्षयति—**पूर्वस्मिन्निति** । शांडिल्यविद्यादीनामभेदे हेत्वन्तरमाह—**अपि चेति** । तत्र सदृष्टान्तं हेतुमाह—**वेद्यं हीति** । तत्रतत्र श्रुतिषु सत्यसंकल्पत्वादिगुणविशिष्टब्रह्मभेदाद्वेद्याभेदोऽपि नास्तीत्याशंक्य ब्रह्मणः सिद्धत्वात्तदुपाधौ तद्गुणानामपि

श्चैक एवेश्वरः श्रुतिनानात्वेऽप्यवगम्यते "मनोमयः प्राणशरीरः" [ छां० ३।१४।२ ] "कं ब्रह्म खं ब्रह्म" [ छां० ४ । १० । ५ ] "सत्यकामः सत्यसंकल्पः" [ छां० ८ । १ । ५ ] इत्येवमादिषु ॥ तथा "एक एव प्राणः" "प्राणो वाव संवर्गः" [ छां० ४ । ३ । ३ ] "प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च" [ छां० ५ । १ । १ ] "प्राणो ह पिता प्राणो माता" [ छां० ७ । १५ । १ ] इत्येवमादिषु वेद्यैकत्वाच्च विद्यैकत्वं श्रुतम् । श्रुतिनानात्वमप्यस्मिन्पक्षे गुणान्तरपरत्वान्नानर्थकम् ॥ तस्मात्स्वपरशाखाविहितमेकवेद्यव्यपाश्रयं गुणजातमुपसंहर्तव्यं विद्याकार्त्स्न्यायेति ॥ एवं प्राप्ते प्रतिपद्यते ॥ नानेति ॥ वेद्याभेदेऽप्येवञ्जातीयका विद्या भिन्ना भवितुमर्हति ॥ कुतः ॥ शब्दादिभेदात्-भवति हि शब्दभेदो "वेद" "उपासीत" "स क्रतुं कुर्वीत" इत्येवमादिः शब्दभेदश्च कर्मभेदहेतुः समधिगतः पुरस्तात्— "शब्दान्तरे कर्मभेदः कृतानुबन्धत्वाद्" [ जै० सू० २ । २ । १ ] इति । आदिग्रहणाद् गुणादयोऽपि यथासम्भवं भेदहेतवो योजयितव्याः ॥

रत्नप्रभा ।

चेति ॥ विद्यैक्यं चेदेकश्रुत्युक्तविद्यायाः श्रुत्यन्तरेऽप्युक्तिर्वृथेत्यत आह—श्रुतिनानात्वमपीति ॥ पूर्वपक्षफलमाह—तस्मादिति ॥ सिद्धान्ते तु गुणानुपसंहार इति मत्वा सूत्रं योजयति—वेद्याभेदेऽपीति ॥ ननु भिन्नभावार्थवाचकशब्दः—शब्दान्तरं यथा "यजति" "ददाति" "जुहोति" इति । तस्मिन् शब्दभेदे कर्मशब्दितविध्यर्थभावनाया भेदो युक्तः । तस्याः कृतानुबन्धत्वाद् भेदेन स्वीकृतविषयत्वात् भावार्थभेदादिति यावत् । प्रकृते तु "वेद" "उपासीत" इत्यादिशब्दार्थोपास्तेर्यागदानहोमवत् स्वतो भेदाभावात्,

भामती ।

केनचिदुपेक्षणीयतया विषयीक्रियमाणः पुरुषेच्छातन्त्रः । एवमिहापि उपासनानि पुरुषेच्छातन्त्रतया विधेयतां नातिक्रामन्ति । न च तत्तद्गुणतयोपासनानि गुणभेदान्न भिद्यन्ते । न चाग्निहोत्रमिवोपासनं विधाय दधितण्डुलादिगुणवदिह सत्यसंकल्पत्वादिगुणविधिर्येनैकशास्त्रत्वं स्यात् । अपि तूत्पत्तावेवो-

आनन्दगिरीय-न्यायनिर्णयः ।

व्यवस्थानायुक्तं वेद्यैक्यमित्याह—वेद्यश्चेति । श्रुतिनानात्वेऽपि तत्तदाध्येयगुणश्रुतिभेदेऽपीति यावत् । ब्रह्मोपासनेषु वेद्याभेदेऽपि कथमब्रह्मोपासनेष्वित्याशंक्याऽऽह—तथेति । तदेकत्वेऽपि विद्यानानात्वं किं न स्यादित्याशंक्य रूपाभेदान्नैवमित्याह—वेद्येति । विद्यैक्यं चेदेकत्र विहितायास्तस्या नान्यत्र विधानमर्थवदित्याशंक्याऽऽह—श्रुतीति । ब्रह्मप्राप्तिफलसंयोगस्योपास्यब्रह्मरूपप्रकृत्यर्थोपासनाभ्यामविच्छिन्नप्रत्ययार्थप्रयत्नचोदनायाश्च ब्रह्मविद्यासमाख्यायाश्चैक्याद्विद्यैक्ये फलितमाह—तस्मादिति । शब्दादिभेदाद्विद्याभेदोक्त्या वाक्यार्थधीहेतोरेवात्रापि चिन्तनात्पादादिसंगतिः । पूर्वपक्षे पूर्ववद्विद्यैक्यम् । सिद्धान्ते तदयोगात्तन्नानात्वमिति सिद्धवत्कृत्य सिद्धान्तयति—एवमिति । सूत्राक्षराणि योजयति—वेद्येति । रूपाभेदादभेदोक्तेर्न विद्यानानात्वमित्याह—कुत इति । सौत्रहेतुमुक्त्वा शब्दभेदं धिभजते—शब्दादीति । तद्भेदेऽपि मा भूदुपास्तिनानात्वमित्याशंक्याऽऽह—शब्देति । पुरस्तादिति पूर्वतन्त्रोक्तिः । भिन्नभावार्थविषयः शब्दः शब्दान्तरम् । यथा यजति ददाति जुहोतीति । तस्मिन्सति कर्मभेदः कृतानुबन्धत्वाद्धात्वर्थावच्छेदे भिन्नधात्वर्थाच्छेदे भिन्नधात्वर्थावच्छिन्नतया विधेर्भेदादित्यर्थः । शब्दान्तराधिकरणं तु सर्ववेदान्तप्रत्ययाधिकरणेऽनुक्रान्तम् । सौत्रमादिशब्दं व्याकरोति—आदीति । गुणादयोऽपीत्यादिग्रहणेन संयोगरूपसमाख्यादयो गृह्यन्ते । तत्तत्प्रकरणोक्तगुणजातविशिष्टोपास्यरूपभेदात्प्रतिविद्यं फलभेदान्नामधेयभेदात्कौण्डपायिवत्कृत्स्नोपसंहारस्याशक्यानुष्ठानत्वाच्च विद्यानानात्वमित्यर्थः । सत्यपि

ननु वेदेत्यादिषु शब्दभेद एवावगम्यते, न जयतीत्यादिवदर्थभेदः। सर्वेषामेवैषां मनोवृत्त्यर्थत्वाभेदादर्थान्तरासम्भवाच्च । तत्कथं शब्दभेदाद्विद्याभेद इति ॥ नैष दोषः ॥ मनोवृत्त्यर्थत्वाभेदेऽप्यनुबन्धभेदाद्विद्याभेदोपपत्तेः । एकस्याऽपि हीश्वरस्योपास्यस्य प्रतिप्रकरणं व्यावृत्ता गुणाः शिष्यन्ते, तथैकस्याऽपि प्राणस्य तत्रतत्रोपास्यस्याभेदेऽप्यन्यादृग्गुणोऽन्यत्रोपासितव्योऽन्यादृग्गुणश्चान्यत्रेत्येवमनुबन्धभेदाद्विधिभेदे सति विद्याभेदो विज्ञायते ॥ न चात्रैको विद्याविधिरितरे गुणविधय इति शक्यं वक्तुम्॥ विनिगमनहेत्वभावात् अनेकत्वाच्च प्रतिप्रकरणं गुणानां प्राप्तविद्यानुवादेन गुणविधानानुपपत्तेः । न चास्मिन्पक्षे समानाः सन्तः सत्यकामत्वादयो गुणा असकृच्छ्रावयितव्याः । प्रतिप्रकरणं चेदंकामेनेदमुपासितव्यमिदंकामेन चेद-

रत्नप्रभा ।

सिद्धगुणकब्रह्मण एकत्वेन विषयतोऽपि भेदाभावात् कथमुपास्तिभेद इति शंकते—नन्विति ॥ अत्र सूत्रे शब्दभेदोऽभ्युच्चयमात्रतयोक्तः, विद्यानानात्वे सम्यक् हेतवस्त्वादिपदोपात्तगुणादय एव ॥ तथाहि—सिद्धस्यापि गुणस्य कार्यान्वयितया कार्यत्वमस्ति । यथा आरुण्यादिगुणानां क्रयणभावनान्वयितया कार्यत्वम् । तथा च तत्तत्प्रकरणेषूत्पत्तिशिष्टैरुपास्तिभावनान्वयितया साध्यैस्तत्र गुणैर्विशिष्टतयोपास्यरूपभेदादुपासनाभेदः । यथा छत्रचामरादिगुणभेदेन राजोपास्तिभेदः, यथा वा आमिक्षावाजिनगुणभेदेन यागभेदः, तद्वत् । तथा प्रतिविद्यं फलं संयोगभेदाद्दहरशाण्डिल्यादिसमाख्याभेदाद्भेद इति समाधत्ते—नैष दोष इत्यादिना ॥ यदुक्तं श्रुतिनानात्वं गुणान्तरविध्यर्थमिति, तन्नेत्याह—न चात्रैक इति ॥ किञ्च प्राप्तविद्यानुवादेनाप्राप्तानेकगुणविधाने वाक्यभेदः स्यादित्याह—अनेकत्वाच्चेति ॥ किञ्च विध्यैक्यपक्षे गुणानां पुनरुक्तिर्वृथा ॥ न च प्रत्यभिज्ञानार्था । ब्रह्मैक्यादेव तत्सिद्धेः ॥ विद्यानानात्वपक्षे तु गुणानामप्राप्तिः सा प्राप्त्यर्थेत्याह—न चास्मिन्पक्ष इति ॥ फलभेदाच्चोदनैक्याभावात्, सर्वगुणध्यानस्याशक्यत्वाच्च विद्या नानेत्याह—प्रतिप्रकरणं चेत्यादिना ॥ दहरध्यातुः सर्वेषु लोकेषु कामचारो

भामती ।

पासनानां तत्तद्गुणविशिष्टानामवगमात् । तत्रागृह्यमाणविशेषतया सर्वासां भेदस्तुल्यः । न च समस्तशाखाविहितसर्वगुणोपसंहारः शक्यानुष्ठानस्तस्माद्भेदः । न चास्मिन्पक्षे समानाः सन्तः सत्यकामादय इति । केचित्खलु गुणाः कासुचिद्विद्यासु समानास्तेनैकविद्यात्वे आवर्तयितव्याः एकत्रोक्त-

आनन्दगिरीय—न्यायनिर्णयः ।

शब्दभेदेऽनुबन्धभेदाभावान्न विद्या भिन्नेति शब्दभेदमाक्षिपति—नन्विति । वेदोपासीतेत्यादिशब्दानां क्वचिज्ज्ञानं क्वचिद्ध्यानमित्यर्थभेदमाशंक्य ज्ञानस्याविधेयत्वाद्विधीयमानमुपासनमेवेत्याह—अर्थान्तरेति । अनुबन्धभेदाभावे फलितमाह—तदिति । क्रियात्वाविशेषेऽपि यागदानहोमानामवान्तरभेदवद्वेदोपासीतेत्यादीनां मनोवृत्तित्वाविशेषेऽपि तत्तत्प्रकरणेषूत्पत्तिशिष्टतत्तद्गुणविशिष्टवेद्यरूपभेदाद्विशिष्टोपास्त्यनुबन्धो भिद्यत इत्याह—नेत्यादिना । गुणानामपि ब्रह्मोपाधौ व्यवस्थानान्नानुबन्धभेद इत्याशंक्य वस्तुनिष्ठत्वाभावादुपास्तिवाक्यानां तत्तत्फलाय क्वचित्केनचिद्गुणेन विशिष्टब्रह्मोपास्तिविधेरनुभेदः स्यादित्यभिप्रेत्याऽऽह—एकस्यापीति । ब्रह्मण्युक्तं न्यायं प्राणेऽपि दर्शयति—तथेति । प्रतिप्रकरणं गुणभेदोक्तौ फलितमाह—एवमिति । यत्तु श्रुतिनानात्वं गुणान्तरपरमिति तद्दूषयति—न चेति । गुणान्तरविधिपरत्वे वाऽप्राप्तानेकगुणपरतया वाक्यभेदान्न युक्तेयं व्यवस्थेति दोषान्तरमाह—अनेकत्वाच्चेति । विध्यैक्ये सत्येकत्रोक्तानां गुणानामन्यत्रोक्तिरयुक्ता पौनरुक्त्यात् । विद्याभेदे तु नैवं विद्यान्तरस्यापि तद्गुणत्वाय पुनरुक्तिसंभवाद्दतोऽपि विद्यानानात्वमित्याह—न चेति । तत्रैव हेत्वन्तरमाह—प्रतीति । सर्वेषु लोकेषु कामचारो

मिति नैराकांक्ष्यावगमान्नैकवाक्यतापत्तिः ॥ न चात्र वैश्वानरविद्यायामिव समस्तचोदनाऽपरास्ति । यद्बलेन प्रतिप्रकरणवर्तीन्यवयवोपासनानि भूत्वैकवाक्यतां ययुः । वेद्यैकत्वनिमित्ते च विद्यैकत्वे सर्वत्र निरङ्कुशे प्रतिज्ञायमाने समस्तगुणोपसंहारोऽशक्यः प्रतिज्ञायेत ॥ तस्मात्सुष्ठूच्यते–नानाशब्दादिभेदादिति ॥ स्थिते चैतस्मिन्नधिकरणे सर्ववेदान्तप्रत्ययमित्यादि द्रष्टव्यम् ॥५८॥ इति शब्दादिभेदाधिकरणम् ॥३३॥

## विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥ (३४) ॥

स्थिते विद्याभेदे विचार्यते–किमासामिच्छया समुच्चयो, विकल्पो वा स्यादथ वा विकल्प एव नियमेनेति ॥ तत्र स्थितत्वात्तावद्विद्याभेदस्य

रत्नप्रभा ।

भवति । वैश्वानरध्याता सर्वत्रान्नमत्तीत्यादिफलभेद इत्यर्थः ॥ ननु विद्यानानात्वे सिद्धे पश्चाद्दहरादिविद्या प्रतिवेदान्तमेका, अनेका वेति चिन्ता उचिता । तत्कथमादौ सा कृतेत्यत आह—स्थिते चेति ॥ विद्यानानात्वाधिकरणं पादादावेव सङ्गतम् । अत्र प्रासङ्गिकमिति भावः ॥ ५८ ॥(३३) ॥ विकल्पः०॥ विद्यानां स्वरूपमुक्त्वाऽनुष्ठानप्रकारोऽत्र निरूप्यते इत्युपजीव्यत्वसङ्गतिमाह—स्थित इति ॥ विद्यास्त्रिविधाः–अहङ्ग्रहाः, तटस्थाः, अङ्गाश्रिताश्चेति । तत्राहङ्ग्रहविद्यासु याथाकाम्यविकल्पयोर्विद्यानानात्वसाम्यात् संशयमाह–किमिति ॥ पूर्वपक्षे यथेच्छमनुष्ठानमित्यनियमः, सिद्धान्ते विकल्पेनानुष्ठानमिति नियम इति फलभेदः ॥ तत्रानियमं साधयति—तत्र स्थितत्वादित्यादिना ॥ एकपुरोडाश-

भामती ।

त्वात् । विद्याभेदे तु न पौनरुक्त्यमेकस्यां विद्यायामुक्ता विद्यान्तरे नोक्ता इति विद्यातन्तरस्यापि तद्गुणत्वाय वक्तव्या अनुक्तानामप्राप्तेरिति ॥५८॥(३३)॥ विकल्पोऽविशिष्टफलत्वात् । अग्निहोत्रदर्शपूर्णमासादिषु पृथगधिकाराणामपि समुच्चयो दृष्टो नियमवांस्तेषां नित्यत्वादुपासनास्तु काम्यतया न नित्यास्तस्मान्नासां समुच्चयनियमः । तेन समानफलानां दर्शपूर्णमासज्योतिष्टोमादीनामिव न नियमवान्विकल्पः फलभूमार्थिनः समुच्चयस्यापि संभवादिति पूर्वः पक्षः । उपासनानाममूषामुपास्यसाक्षात्करणसाध्यत्वात्फल-

आनन्दगिरीय–न्यायनिर्णयः ।

भवति सर्वेष्वात्मस्वन्नमत्ति जयतीमाँल्लोकानित्यादिफलसंयोगभेदादाकांक्षाभावादेकवाक्यत्वायोगाद् विद्यानानात्वमित्यर्थः । यत्तु पूर्वन्यायेन समस्तोपास्तेर्ज्यायस्त्वमुक्तं तत्प्रत्याह–न चेति । अत्रेति शाण्डिल्यादिविद्योक्तिः । यत्तु वेद्यैक्याद्विद्यैक्यमिति तत्राऽऽह–वेद्येति । सर्वगुणानुपसंहृत्य प्रत्ययकर्तुरधिकारिणोऽसंभवान्न विद्यैक्यमित्यर्थः । शब्दादिभेदकृतं विद्याभेदमुपसंहरति–तस्मादिति । शब्दादिभेदाद्विद्याभेदे सति कथं सर्ववेदान्तप्रत्ययाधिकरणे विद्यैक्यमुक्तं तत्राऽऽह–स्थिते चेति । शब्दादिभेदाद्विद्याभेदे सिद्धे सति सर्वशाखागततत्तद्ब्रह्मज्ञानं प्राणज्ञानं च भिन्नमेवेति शंकिते सर्ववेदान्तगतं तद्विज्ञानमेकमित्युक्तमतोऽस्याधिकरणस्य पादादावेवाऽऽर्थिकी संगतिरत्र तु प्रसंगादुक्तमित्यर्थः ॥ ५८ ॥ (३३)॥ विद्याभेदमुक्त्वा तदनुष्ठानभेदं वदन्नादावहंग्रहोपास्तीनामनुष्ठानप्रकारमाह–विकल्प इति । अहंग्रहोपासनान्यधिकृत्य याथाकाम्यविकल्पयोर्विद्यानानात्वसाम्यादधिकरणसंगतिगर्भं संशयमाह—स्थित इति । अहंग्रहोपास्तीनां विकल्पेनानुष्ठानोक्त्या वाक्यार्थधीहेतोरेवोक्तेरत्र पादादिसंगतिः । पूर्वपक्षे स्वेच्छया प्रवृत्तेरनुष्ठानानियमः । सिद्धान्ते व्रीह्यादिष्विव तन्नियतिरिति मत्वा याथाकाम्येनानुष्ठानमिति पूर्वपक्षयिष्यन्नादौ समुच्चयनियमं निरस्यति–तत्रेति । उपासनानां भिन्नत्वेऽपि समुच्चयनियमे नियमो युक्तो

न समुच्चयनियमे किञ्चित्कारणमस्ति ॥ ननु भिन्नानामप्यग्निहोत्रदर्शपूर्णमासादीनां समुच्चयनियमो दृश्यते ॥ नैष दोषः ॥ नित्यताश्रुतिर्हि तत्र कारणम् । नैवं विद्यानां काचिन्नित्यताश्रुतिरस्ति । तस्मान्न समुच्चयनियमः । नापि विकल्पनियमः । विद्यान्तराधिकृतस्य विद्यान्तराप्रतिषेधात् । पारिशेष्याद्याथाकाम्यमापद्यते ॥ नन्वविशिष्टफलत्वादासां विकल्पो न्याय्यः । तथा हि—"मनोमयः प्राणशरीरः" [ छां० ३ ।१४।२ ] "कं ब्रह्म खं ब्रह्म" [ छां० ४ । १० । ५ ] "सत्यकामः सत्यसंकल्पः" [ छां० ८ । १ । ५ ] इत्येवमाद्यास्तुल्यवदीश्वरत्वप्राप्तिफला लक्ष्यन्ते ॥ नैष दोषः ॥ समानफलेष्वपि स्वर्गादिसाधनेषु कर्मसु याथाकाम्यदर्शनात् । तस्माद्याथाकाम्यप्राप्तावुच्यते । विकल्प एवासां भवितुमर्हति, न समुच्चयः ॥ कस्मात् ॥ अविशिष्टफलत्वात्॥ अविशिष्टं ह्यासां फलमुपास्यविषयसाक्षात्करणमेकेन चोपासनेन साक्षात्कृते उपास्यविषये ईश्वरादौ द्वितीयमनर्थकम्। अपि चासम्भव एव साक्षात्करणस्य । समुच्चयपक्षे चित्तविक्षेपहेतुत्वात् । साक्षात्करणसाध्यं च विद्याफलं दर्शयन्ति श्रुतयः—"यस्य स्यादद्धा न विचिकित्साऽस्ति" [ छां० ३ । १४ । ४ ] इति "देवो भूत्वा देवानप्येति"[ बृ० ४ । १ । २ ] इत्येवमाद्याः । स्मृतयश्च—"सदा तद्भावभाविताः" [ भ० गी० ८ । ६ ] इत्येवमाद्याः ।

रत्नप्रभा ।

फलत्वाद्यथा व्रीहियवयोर्विकल्पः, तथा विकल्पनियम एवासां विद्यानां न्याय्यः । तुल्यफलत्वात् ॥ न च फलभूयस्त्वार्थिनः काम्यकर्मसमुच्चयोऽपि दृष्ट इति वाच्यम् ॥ ईश्वरसाक्षात्कारात् परं फलभेदेऽप्यासामहंग्रहोपास्तीनां साक्षात्कारात्मकफलस्य तुल्यत्वात् । तस्य चैकया कृतत्वे अन्यस्याः कृत्यभावाच्चित्तविक्षेपकतया तदविद्याकृतत्वाच्चेति सिद्धान्तभाष्यार्थः ॥ मास्तु साक्षात्कार इत्यत आह—साक्षात्करणसाध्यं चेति॥ यस्य पुंसः अद्धा ईश्वरोऽहमिति साक्षात्कारः स्याद्विचिकित्सा च नास्ति,—

भामती ।

भेदस्यैकेनोपासनेनोपास्यसाक्षात्करणे तत एव फलप्रतिलाभे तु कृतमुपासनान्तरेण । न च साक्षात्करणस्यातिशयसंभवस्योपायसहस्रैरपि तादवस्थ्यात्तन्मात्रसाध्यत्वाच्च फलावाप्तेः । उपासनान्तराभ्यासे च चित्तै-

आनन्दगिरीय—न्यायनिर्णयः ।

नित्याग्निहोत्रदर्शपूर्णमासादिवदिति शङ्कते—नन्विति । उपास्तीनां काम्यत्वान्नैवमित्याह—नेत्यादिना । अग्निहोत्रादिषु समुच्चयस्तत्रेत्युक्तः । तर्हि किमिति विकल्पनियमो नाऽऽश्रीयते तत्राऽऽह—नापीति । समुच्चयविकल्पयोर्नियमायोगादिच्छयाऽन्यतरोऽङ्गीकर्तव्य इत्याह—पारिशेष्यादिति । यथा व्रीहिभिरेव पुरोडाशे सिद्धे यवा न समुच्चीयन्ते कृतकरणत्वप्रसंगात् । तथाऽत्रापि ब्रह्मप्राप्तिफलमविशिष्टं तदेकेनैवोपासनेन कृतं चेन्नावकाशः समुच्चयस्येति शङ्कते—नन्विति । तदेवाविशिष्टफलत्वं स्पष्टयति—तथाहीति । काम्यदर्शपूर्णमासज्योतिष्टोमादिवत्फलभूमार्थिनः समुच्चयः स्यादित्याह—नेत्यादिना । विकल्पसमुच्चयनियमनिवृत्तिफलमुपसंहृत्य सिद्धान्तसूत्रमवतार्य प्रतिज्ञां विभजते—तस्मादित्यादिना । उक्तेऽर्थे प्रश्नपूर्वकं हेतुमादाय व्याचष्टे—कस्मादित्यादिना । ध्येयसाक्षात्कारार्थमेव समुच्चयांगीकारे का क्षतिस्तत्राऽऽह—एकेनेति । अभीष्टफलघातित्वाच्च समुच्चयोऽत्र नास्तीत्याह—अपि चेति । उपास्तेरदृष्टद्वारा यागादिवत्फलोपायत्वोपपत्तेरुपास्यसाक्षात्कारापेक्षैव नास्तीत्याशंक्याहंग्रहोपास्तीनां साक्षात्कारसाध्यफलं तथा श्रुतेरित्याह—साक्षादिति । यस्योपासकस्याद्धा साक्षाद्रुपास्यं स्यान्न विचिकित्सा संशयोऽस्ति

**तस्मादविशिष्टफलानां विद्यानामन्यतमामादाय तत्परः स्याद्, यावदुपास्यविषयसाक्षात्करणेन तत्फलप्राप्तिरिति ॥ ५९ ॥ इति विकल्पाधिकरणम् ॥ ३४ ॥**

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥६०॥(३५)॥

**"अविशिष्टफलत्वाद्" [ व्या० सू० ३ । ३ । ५९ ] इत्यस्य प्रत्युदाहरणं यासु पुनः काम्यासु विद्यासु "स य एतमेव वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति [ छां० ३ । १५ । २ ] "स यो नाम ब्रह्मेत्युपास्ते, यावन्नाम्नो गतं तत्रास्य कामचारो भवति" [ छां० ७ । १ । ५ ] इति चैवमाद्यासु क्रियावददृष्टेनात्मनात्मीयं तत्तत्फलं साधयन्तीषु साक्षात्करणापेक्षा नास्ति । ता यथाकामं समुच्चीयेरन्, न वा समुच्चीयेरन् । पूर्वहेत्वाभावात् पूर्वस्याविशिष्टफलत्वादित्यस्य विकल्पहेतोरभावात ॥ ६० ॥ इति काम्याधिकरणम् ॥ ३५ ॥**

---

रत्नप्रभा ।

अहमीश्वरो न वेति, तस्यैवेश्वरप्राप्तिरित्यर्थः ॥ जीवन्नेव भावनया देवत्वं साक्षात्कृत्य देहपातोत्तरकालं देवत्वम् । आप्नोतीति **श्रुत्यन्तरार्थः** ॥ अहंग्रहाणामनुष्ठानप्रकारमुपसंहरति–**तस्मादिति** ॥ ५९ ॥ ( ३४ ) ॥ **काम्यास्तु०** ॥ तटस्थोपास्तयोऽत्र विषयाः, तासु किं विकल्पः–उत–यथाकामम् । अनुष्ठानमिति पूर्ववत् संशये सत्युपास्तित्वाविशेषादहंग्रहवद्विकल्प इति प्राप्तावपवादं सिद्धान्तयति–**अविशिष्टेति** ॥ स यः कश्चिद् एतं वायुमेवाङ्गत्वेन कल्पितानां **दिशां वत्सं** वेद उपास्ते नासौ पुत्रमरणनिमित्तं रोदनं **रोदिति** लभते । नित्यमेव जीवत्पुत्रो भवतीत्यर्थः । अहंग्रहद-

भामती ।

काग्रताव्याघातेन कस्यचिदुपासनानिष्पत्तेरिह विकल्प एव नियमवानिति राद्धान्तः॥५९॥(३४)॥ **काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्** । यासूपासनासु विनोपास्यसाक्षात्करणमदृष्टेनैव काम्य-

आनन्दगिरीय–न्यायनिर्णयः ।

प्राप्नुयामहं फलं न वेति तस्य ब्रह्माप्तिः स्यादित्यर्थः । देवो भूत्वा जीवन्नेव साक्षात्कारेण देवभावमनुभूय पतिते देहे देवानप्येति प्राप्नोतीत्यर्थः । न चाविशिष्टफलत्वे फलभूमार्थिनः समुच्चयानुष्ठानमुपास्यसाक्षात्कारे तन्निमित्तं तत्प्राप्तौ च विशेषाभावादित्याशयेनोपसंहरति–**तस्मादिति** ॥ ५९ ॥ (३४)॥ अहंग्रहोपास्तीनामनुष्ठानप्रकारमुक्त्वा प्रतीकोपास्तीनां तत्प्रकारमाह–**काम्यास्त्विति**। अनहंग्रहाण्यकर्माङ्गावबद्धानि च मनो ब्रह्मेत्युपासीतेत्येवमादीन्यभ्युदयफलान्युपासनानि विषयस्तेषु किं विकल्पनियमो याथाकाम्यं चेत्युभयोपपत्त्या संशये प्रतीकोपास्तीनामुपास्तित्वादहंग्रहोपास्तिवद्विकल्पनियमे प्राप्ते तद्वैपरीत्यमाह–**अविशिष्टेति** । अत्र प्रतीकोपास्तिषु पूर्ववैपरीत्येनानुष्ठानस्य याथाकाम्योक्त्या वाक्यार्थधीहेतोरेव कथनात्पादादिसंगतिः । पूर्वपक्षे व्रीह्यादिष्विवानुष्ठाननियमसिद्धिः । सिद्धान्ते फलवशादतन्नियतिरित्यंगीकृत्य सूत्राक्षराणि योजयति–**यास्विति**। स यः कश्चिदेतं वायुं दिशां गोत्वेन कल्पितानां वत्सं वेद नासौ पुत्रमरणनिमित्तं रोदं रोदनं रोदिति लभते किंतु नित्यमवियुक्तवत्सादिगुणोपासनाज्जीवत्पुत्रो भवतीत्यर्थः । अहंग्रहोपास्तिषु साक्षात्कारसाधनत्वमुपाधिरिति मत्वा विशिनष्टि–**साक्षादिति** । विमतान्युपासनानि याथाकाम्येनानुष्ठेयान्यविरुद्धभिन्नफलत्वाच्चित्राज्योतिष्टोमादिवदिति भावः ॥ ६० ॥ ( ३५ ) ॥

## अंगेषु यथाश्रयभावः ॥ ६१ ॥ (३६) ॥

**कर्मांगेषूद्गीथादिषु ये आश्रिताः प्रत्यया वेदत्रयविहिताः किं ते समुच्चीयेरन्, किं वा यथाकामं स्युरिति संशये—"यथाश्रयभावः" इत्याह। यथैषामाश्रयाः स्तोत्रादयः सम्भूय भवन्त्येवं प्रत्यया अपि। आश्रयतन्त्रत्वात्प्रत्ययानाम् ॥ ६१ ॥**

रत्नप्रभा ।

ष्टान्ते साक्षात्कारद्वारत्वमुपाधिरिति भावः ॥ ६० ॥ ( ३९ ) ॥ सम्प्रत्यङ्गावबद्धोपास्तीनामनुष्ठानक्रमं वक्तुं पूर्वपक्षयति—**अङ्गेष्विति** ॥ अङ्गाश्रितत्वात्, सफलत्वाच्च,—संशयमाह—**किमिति** ॥ **यथा** क्रत्वनुष्ठाने तदाश्रिताङ्गानां समुच्चित्यानुष्ठाननियमः, **तथा**ऽङ्गानुष्ठाने तदाश्रितोपास्तीनां तन्नियम इति **सूत्रार्थः**॥ ननु तन्निर्धारणानियम इत्यत्राङ्गाश्रितानां गोदोहनवदनङ्गत्वमुक्तम् । तत् कथमनङ्गानामङ्गत्वसमुच्चयशङ्केति॥ **उच्यते** ॥ अङ्गान्यनुष्ठापयन् प्रयोगविधिः—यद्युपासनानि नानुष्ठापयेत्, तर्हि तेषां तदाश्रि-

भामती ।

साधनं तासां काम्यदर्शपौर्णमासादिवत्पुरुषेच्छावशेन विकल्पसमुच्चयाविति साम्प्रतम्॥६०॥(३९)॥ **अंगेषु यथाश्रयभावः** । तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलमित्यत्रोपासनासु फलश्रुतेः पर्णमयीन्यायेनार्थवादतयोपासनानां क्रत्वर्थत्वेन समुच्चयनियममाशङ्क्य पुरुषार्थतयैकप्रयोगवचनग्रहणाभावे समुच्चयनियमो निरस्तः । इह तु सत्यपि पुरुषार्थत्वे कस्मान्नैकप्रयोगवचनग्रहणं भवतीति पूर्वोक्तमर्थमाक्षिपन् प्रत्यवतिष्ठते । यद्यपि हि काम्या एता उपासनास्तथापि न स्वतन्त्रा भवितुमर्हन्ति । तथा सति हि क्रत्वर्थानाश्रिततया क्रतुप्रयोगाद्बहिर्गोदोहनवत् प्रयोगः प्रसज्यते । न च प्रयुज्यन्ते तत्कस्य हेतोः । क्रत्वर्थाश्रितानामेव तासां तत्तत्फलोद्देशेन विधानादिति।एवं चाश्रयतन्त्रत्वादाश्रितानां प्रयोगवचनेनाश्रयाणां समुच्चयनियमेनाश्रितानामपि समुच्चयनियमो युक्त इतरथा तदाश्रितत्वानुपपत्तेः।स च प्रयोगवचन उपासनाः समुच्चिन्वंस्तत्तत्फलकामनानामवश्यंभावमाक्षिपति तदभावे तासां समुच्चयनियमाभावादिति मन्वानस्य पूर्वः पक्षः । राद्धान्तस्तु यथाविहितोद्दिष्टपदार्थानुरोधी प्रयोगवचनो न पदार्थस्वभावानन्यथयितुमर्हति। किंतु तदविरोधेनावतिष्ठते । तत्र क्रत्वर्थानां नित्यवदाम्नानात्तथाभावस्य च संभवान्नियमेनैतान्समुच्चिनोतु । कामावबद्धास्तूपासनाः कामानामनित्यत्वान्न समुच्चयेन नियन्तुमर्हति । न हि कामा विधीयन्ते येन समुच्चीयेरन्नपि तूद्दिश्यन्ते । मानान्तरानुसारी चोद्देशो न तद्विरोधेनोद्देश्यमन्यथयति । तथा सत्युद्देशानुपपत्तेः । तस्मात्कामानामनित्यत्वात्तदवबद्धानामुपासनानामप्यनित्यत्वम् । नित्यानित्यसंयोगविरोधात् । सत्यपि तदाश्रयाणां नित्यत्वे इदमेव चाश्रयतन्त्रत्वमाश्रितानां यदाश्रये सत्येव वृत्तिर्नासतीति । न तु तत्र वृत्तिरेव नावृत्तिरिति तदिदमुक्तम्—**आश्रयतन्त्रत्वादिति** ॥ ६१ ॥ ६२ ॥

आनन्दगिरीय–न्यायनिर्णयः ।

प्रतीकोपास्तीनामनुष्ठानक्रममुक्त्वाऽङ्गावबद्धोपास्तीनां क्रमं निरूपयिष्यन्पूर्वपक्षमाह—**अंगेष्विति** । अधिकरणस्य विषयं वक्तुमंगेष्विति पदं व्याचष्टे—**कर्मेति** । तदाश्रितोपासनानि विषयत्वेन दर्शयति—**य इति** । अंगद्वारा क्रतुसंबन्धात्फलसंनिकर्षाच्च संशय इत्याह—**किं त इति** । तन्निर्धारणानियमाधिकरणे पुरुषार्थत्वमंगोपास्तीनामुक्तमिह सत्यपि पुरुषार्थत्वे समुच्चये मानं नेत्युच्यते । अंगोपास्तीनामंगवत्समुच्चयनियमः किंवा प्रतीकदृष्टिवद्याथाकाम्यमिति संशयमनूद्य पूर्वाधिकरणवद्यथारुच्यनुष्ठानं नेति पूर्वपक्षयति—**इति संशय इति** । अत्र चांगोपास्तिषु यथारुच्यनुष्ठानोक्त्या वाक्यार्थधीसाधनस्यैव चिन्तनात्पादादिसंगतिः । पूर्वपक्षे समुच्चयानुष्ठानात्फलबाहुल्यसिद्धिः । सिद्धान्ते समुच्चयस्याप्रामाणिकत्वात्तथाऽनुष्ठाने फलबाहुल्यायोगाद्यथारुच्यनुष्ठाने प्रवृत्तिसौकर्यमित्युपेत्य पूर्वपक्षसूत्रं योजयति—**यथेति** ।

## शिष्टेश्च ॥ ६२ ॥

**यथा चाश्रयाः स्तोत्रादयस्त्रिषु वेदेषु शिष्यन्ते, एवमाश्रिता अपि प्रत्ययाः, नोपदेशकृतोऽपि कश्चिद्विशेषोऽङ्गानां तदाश्रयाणां च प्रत्ययानामित्यर्थः ॥ ६२ ॥**

## समाहारात् ॥ ६३ ॥

**"होतृषदनाद्धैवाऽपि दुरुद्गीथमनुसमाहरति" [ छां० १ । ५ । ५ ] इति च प्रणवोद्गीथैकत्वविज्ञानमाहात्म्यादुद्गाता स्वकर्मण्युत्पन्नं क्षतं हौत्रात्कर्मणः प्रतिसमादधातीति ब्रुवन्वेदान्तरोदितस्य प्रत्ययस्य वेदान्तरोदितपदार्थसम्बन्धसामान्यात्सर्ववेदोदितप्रत्ययोपसंहारं सूचयतीति लिंगदर्शनम् ॥ ६३ ॥**

---

रत्नप्रभा ।

तत्त्वं व्यर्थमिति मन्वानस्य शंकेति भावः ॥ ६१ ॥ **तर्हि** गोदोहनस्यापि समुच्चयः स्यादित्यत आह—**शिष्टेश्चेति** ॥ **शिष्टिः**—शासनम् । विधानमिति यावत् । विहितत्वाविशेषात् समुच्चयोऽङ्गवदित्यर्थः । गोदोहनस्य तु नानुष्ठाननियमः । चमसस्थाने विहितत्वात् । तन्नियमे चमसविधिवैयर्थ्यात् । उपासनानां तु न कस्यचिदङ्गस्य स्थाने विहितत्वमिति समुच्चयनियमेन विरुध्यत इति भावः ॥ ६२ ॥ समुच्चये लिङ्गमाह—**समाहारादिति** ॥ ऋग्वेदिनां "यः प्रणवः सः" [ छां० १ । ५ । (१–५) ] सामवेदिनाम् "उद्गीथः" [ छां० १ । ५ ( १ । ५ ) ] इति छान्दोग्ये प्रणवोद्गीथयोरैक्यध्यानविधिरस्ति । तस्य फलार्थवादो होतृषदनादित्यादिः । होतुः शंसनस्थलवाचिना होतृषदनशब्देन शंसनं लक्ष्यते । उद्गाता स्वरादिप्रमादात् दुष्टमप्युद्गीथं सम्यक् कृतात् होतृशंसनाद् **अनुसमाहरत्येव** निर्दोषं करोत्येव किल । शस्यमानप्रणवेन स्वीयोद्गीथस्यैक्यध्यानबलादित्यर्थः । ततः किं तत्राह—**इति ब्रुवन्निति** ॥ सामवेद-

भामती ।

**समाहारात्।होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरतीति।** अपिर्भिन्नक्रमो दुरुद्गीथमपीति।वेदान्तरोदितप्रणवोद्गीथैकत्वप्रत्ययसामर्थ्याद्धोतृकर्मणःशंसनादुद्गाता प्रतिसमादधाति किं तदित्यत आह **दुरुद्गीथमपि वेदान्तरो**

आनन्दगिरीय—न्यायनिर्णयः ।

अङ्गाश्रितोपासनानि नियमेन क्रतौ समुच्चित्यानुष्ठेयानि नियमेन समुच्चीयमानांगाश्रितत्वात्तदाश्रितोपांगवदित्यर्थः ॥ ६१ ॥ इतश्चांगोपास्तीनां समुच्चित्यानुष्ठानमित्याह—**शिष्टेश्चेति** । शिष्टिः शासनं विधानं तस्या विशेषाभावादङ्गानां प्रत्ययानां च समुच्चयनियम इत्यर्थः । सूत्रस्याक्षरोत्थमर्थमाह—**यथा चेति** । तस्यैव तात्पर्यार्थमाह—**नेत्यादिना**॥६२॥ इतश्चोपासनानि समुच्चित्यानुष्ठीयेरन्नित्याह—**समाहारादिति** । समाहरणं समताकरणं क्षतस्य संधानं समाहारस्तस्माल्लिङ्गात्समुच्चयो गम्यते प्रत्ययानामिति योजना । यः प्रणवो बह्वृचानां स च्छन्दोगानामुद्गीथः । यश्च तेषामुद्गीथः स प्रणवोऽन्येषामिति प्रणवोद्गीथयोरेकत्वेन यदुपासनमुद्गात्रा कृतं तत्फलवादिवाक्यं सूत्रं व्याकर्तुमनुवदति—**होतृषदनादिति** । होतुः सदनं स्थानं होता यत्रस्थः शंसति तद्धोतृषदनं तेन च हौत्रं कर्म लक्ष्यते । ततः सम्यगनुष्ठिताद् दुरुद्गीतं दुष्टं यदुद्गानं स्वरव्यञ्जनादिप्रमादादुद्गात्रा कृतं तदप्युद्गाता तेनैक्यविज्ञानेनानुसमाहरति प्रतिसंदधात्येव क्षतमिव वैद्य इत्यर्थः । वाक्यस्याभीष्टमर्थं कथयति—**प्रणवेति** । तथाऽपि प्रकृते किमायातं तदाह—**इति ब्रुवन्निति** । वेदद्वययुक्तप्रणवोद्गीथयोरैक्यज्ञानस्येदृशं फलं ब्रुवाणः सर्ववेदस्थानां प्रत्ययानां सर्वत्रोपसंहारं समुच्चयं सूचयति । सर्वोपासनेषु वेदान्तरोक्तप्रत्ययस्य वेदान्तरोक्तपदार्थेन संबन्धस्य समान-

## गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

विद्यागुणं च विद्याश्रयं सन्तमोङ्कारं वेदत्रयसाधरणं श्रावयति । "तेनेयं त्रयी विद्या वर्तते । ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति" [ छां० १ । १ । ९ ] इति । ततश्चाश्रयसाधारण्याश्रितसाधारण्यमिति लिङ्गदर्शनमेव ॥ अथ वा—गुणसाधारण्यश्रुतेश्चेति ॥ यदीमे कर्मगुणा उद्गीथादयः सर्वे सर्वप्रयोगसाधारणा न स्युर्न स्यात्, ततस्तदाश्रयाणां प्रत्ययानां सहभावः । ते तूद्गीथादयः सर्वाङ्गग्राहिणा प्रयोगवचनेन सर्वे सर्वप्रयोगसाधारणाः श्राव्यन्ते ॥ ततश्चाश्रयसहभावात्प्रत्ययसहभाव इति ॥ ६४ ॥

## न वा तत्सहभावाश्रुतेः ॥ ६५ ॥

नवेति—पक्षव्यावर्तनम् । न यथाश्रयभाव आश्रितानामुपासनानां भवितुमर्हति ॥ कुतः ॥ "तत्सहभावाश्रुतेः" । यथा हि—त्रिवेदीविहितानामङ्गानां स्तोत्रादीनां सहभावः श्रूयते—"ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति स्तुतमनुशंसति प्रस्तोतः सामगाय होतरेतद्यज" [ ऋग्वे०परि०प्रै०ध्या० ] इत्यादिना । नैवमुपासनानां सहभावश्रुतिरस्ति ॥ ननु प्रयोगवचन एवासां सहभावं प्रापयति ॥ नेति ब्रूमः ॥ पुरुषार्थत्वा-

---

रत्नप्रभा ।

स्योद्गीथध्यानस्य ऋग्वेदोक्तप्रणवसम्बन्धो यो दृष्टः, स एवाङ्गानां सर्ववेदान्तविहितोपास्तिसमुच्चये लिङ्गम् । प्रणवरूपपदार्थस्योपास्तीनां च वेदान्तरोक्तत्वेन सादृश्याद् वेदान्तरोक्तांगसम्बन्धस्यापि समानत्वादित्यर्थः ॥ ६३ ॥ ओंकारस्य ध्येयस्य साधारण्यादपि तदाश्रितध्यानानां समुच्चित्यानुष्ठानं गम्यत इति लिङ्गान्तरमाह—गुणेति ॥ तेन ओङ्कारेण वेदत्रयोक्तं कर्म प्रवर्तत इत्यर्थः ॥ अन्वयमुखेनोक्तमेवार्थं व्यतिरेकतोऽपि व्याचष्टे—अथ वेति ॥ ६४ ॥ फलेच्छाया अनियमादुपास्त्यनियम एवमुक्तः । अंगवत् समुच्चयनियमे मानाभावादिति सिद्धान्तयति—न वेति ॥ प्रयोगविधिः खलु सांगप्रधानानुष्ठाननियामकः, न त्वनंगानां सङ्ग्राहक इत्याह—नेति ब्रूम इति ॥ विमतोपास्तयः, क्रतौ न समुच्चित्यानुष्ठेयाः, भिन्नफल-

भामती ।

दिते चौद्गात्रे कर्मणि उत्पन्नं क्षतम् । एवं ब्रुवन्वेदान्तरोदितस्य प्रत्ययस्येत्यादि योजनीयम् ॥ ६३ ॥ गुणसाधार-

आनन्दगिरीय—न्यायनिर्णयः ।

त्वादिति योजना ॥ ६३ ॥ ओंकारस्योपास्यस्य साधारण्यादप्युपासनानां साधारण्यं समुच्चित्यानुष्ठानमिति हेत्वन्तरमाह—गुणेति । विद्यागुणमित्यस्य व्याख्या विद्याश्रयमिति । विद्योद्गीथविद्या । तेनेत्योंकारोक्तिः । त्रयी विद्या वेदत्रयविहितं कर्मेत्यर्थः । अन्वयमुखेन व्याख्यामुपसंहरति—ततश्चेति । आश्रयसाधारण्ये सत्याश्रितसाधारण्यमन्वयस्तमेवाऽऽश्रयसाधारण्याभावे सत्याश्रितसाधारण्याभावरूपव्यतिरेकव्याख्यया द्रढयितुं सूत्रमादत्ते—अथ वेति । व्यतिरेकेण सूत्रं योजयति—यदीति । उद्गीथादीनामपि तर्हि साधारण्यं मा भूत्तत्राऽऽह—ते त्विति । गुणेन सहैव गुणिनः प्रत्ययस्याऽऽगमनं सूच्यत इति फलितमाह—ततश्चेति ॥ ६४ ॥ यस्मिन्नुपासने यस्याभिरुचिः स तदनुतिष्ठति सर्वोपासनसमुच्चये तु न मानमिति सिद्धान्तयति—न वेति । तत्र वाकारार्थमाह—नेत्यादिना । नञ्पदं व्याचष्टे—न यथेति । प्रश्नपूर्वकमवशिष्टमादाय व्याकरोति—कुत इति । नियमेन समुच्चीयमानाङ्गाश्रयत्वादित्युक्तवाऽनुमानधिया शङ्कते—नन्विति । विमतोपासनानि न क्रतौ समुच्चित्यानुष्ठेयान्यंगाश्रितत्वे सति भिन्नफलत्वाद्गोदोहनादिवदिति मत्वाऽऽह—नेतीति ।

ह्युपासनानाम् । प्रयोगवचनो हि क्रत्वर्थानामुद्गीथादीनां सहभावं प्रापयति । उद्गीथाद्युपासनानि तु क्रत्वङ्गाश्रयाण्यपि गोदोहनादिवत्पुरुषार्थानीत्यवोचाम-"पृथग्ध्यप्रतिबन्धः फलम्" [ व्या० सू० ३ । ३-४२ ] इत्यत्र । अयमेव चोपदेशाश्रयो विशेषोऽङ्गानां तदालम्बनानां चोपासनानां, यदेकेषां क्रत्वर्थत्वमेकेषां पुरुषार्थत्वमिति ॥ परश्च लिंगद्वयमकारणमुपासनसहभावस्य । श्रुतिन्यायाभावात् ॥ न च प्रतिप्रयोगमाश्रयकात्स्न्योपसंहाराद्‌ाश्रितानामपि तथात्वं विज्ञातुं शक्यते । अतत्प्रयुक्तत्वाद्धुपासनानाम् । आश्रयतन्त्राण्यपि ह्युपासनानि काममाश्रयाभावे मा भूवन् । न त्वाश्रयसहभावे सहभावनियममर्हन्ति । तत्सहभावाश्रुतेरेव ॥ तस्माद्यथाकाममेवोपासनान्यनुष्ठीयेरन् ॥ ६५ ॥

## दर्शनाच्च ॥ ६६ ॥

दर्शयति च श्रुतिरसहभावं प्रत्ययानाम्-"एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति" [ छां० ४ । १७ । १० ] इति । सर्वप्रत्ययो-

---

रत्नप्रभा ।

त्वाद्, गोदोहनवदिति भावः ॥ "शिष्टेश्च" [ व्या० सू० ३ । ३ । ६२ ] इत्युक्तं निरस्यति-अयमेवेति ॥ "समाहाराद्" [ व्या० सू० ३ । ३ । ६३ ] "गुणसाधारण्यश्रुतेश्च" [ व्या० सू० ३ । ३ । ६४ ] इत्युक्तं लिंगद्वयमपि मानान्तराप्राप्तस्य द्योतकं, न स्वयं साधकम् । अर्थवादस्थत्वादित्याह—परश्चेति ॥ गुणसाधारणाय सूत्रस्य द्वितीयां व्याख्यां दूषयति-न चेति ॥ तत्प्रयुक्तत्वाभावे तदाश्रितत्वं कथमित्यत आह-आश्रयेति ॥ इदमेव तेषाम् अंगाश्रितत्वं यदंगाभावे सति असत्त्वं, न त्वंगव्यापकत्वमित्यर्थः ॥ ६५ ॥ किञ्च विदुषां ब्रह्मणा अन्येषामृत्विजां पाल्यत्ववचनान्न सर्वोपास्तीनां सहप्रयोग इत्याह-दर्शनाच्चेति ॥ ऋग्वेदादिविहितांगलोपे व्याहृतिहोमप्रायश्चित्तादिविज्ञानवत्त्वमेवंवित्त्वं

भामती ।-०

आनन्दगिरीय-न्यायनिर्णयः ।

उक्तमेव व्यक्तीकरोति-प्रयोगेति । शिष्टेश्चेत्युक्तं विघटयति-अयमेवेति । समाहाराद्गुणसाधारण्यश्रुतेश्चेत्येतद्दूषयति-परं चेति । यदर्थवादसामर्थ्यं तदन्यतः प्राप्तस्यावद्योतकं न चेहोपासनानां समुच्चये प्रापकमस्तीत्यर्थः । गुणसाधारण्येत्यादौ व्यतिरेकव्याख्यानं प्रत्याह-न चेति । उपासनानामाश्रयभावेऽपि सत्त्वाभावे कथमाश्रयतंत्रत्वं तत्राऽऽह-आश्रयेति । इदमेवाऽऽश्रितानामाश्रयतंत्रत्वं यदाश्रये सत्येव वृत्तिर्नासतीति । न तु तत्र वृत्तिरेव नावृत्तिरिति कामानामनित्यत्वात्तदुपबन्धोपास्तीनामपि तथात्वान्नित्यसंयोगविरोधादित्यर्थः । अंगोपास्तीनामङ्गवदसमुच्चये प्रतीकदृष्टिवद्यथारुच्यनुष्ठानमित्युपसंहरति-तस्मादिति ॥ ६५ ॥ किंच, विदुषा ब्रह्मणाऽन्येषामृत्विजां पाल्यत्वोक्तेरपि न सर्वविज्ञानोपसंहारधीरित्याह-दर्शनाच्चेति । सूत्रं विभजते-दर्शयतीति । ऋग्वेदादिविहितांगलोपे व्याहृतिहोमप्रायश्चित्तादिविज्ञानवत्त्वमेवंवित्त्वं ब्रह्मणोऽभीष्टं कथं तावता विवक्षितानुपसंहारस्तत्राऽऽह-सर्वेति । अस्ति च तेनेतरेषामृत्विजां पाल्यत्वकीर्तनं तेन प्रत्ययानुपसंहारधीरिति शेषः ।

पसंहारे हि सर्वे सर्वविद इति न विज्ञानवता ब्रह्मणा परिपाल्यत्वमितरेषां संकीर्त्येत ॥ तस्माद्यथाकाममुपासनानां—समुच्चयो, विकल्पो वेति ॥ ३ ॥ ३ ॥ ६६ ॥ इति यथाश्रयभावाधिकरणम् ॥ ३६ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणपरमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये सगुणविद्यासु गुणानां निर्गुणे ब्रह्मण्यपुनरुक्तदोषाणां चोपसंहारनिरूपणं नाम तृतीयस्याध्यायस्य तृतीयः पादः समाप्तः ॥ ३ ॥ ३ ॥

---

रत्नप्रभा ।

ब्रह्मण इत्यर्थः ॥ ३ ॥ ३ ॥ ६६ ॥ ( ३६ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शनव्याख्यायां (भाष्य) रत्नप्रभायां तृतीयस्याध्यायस्य तृतीयः पादः समाप्तः ॥३॥३॥

भामती ।

ऽपश्रुतेश्च । अस्य सूत्रस्यान्वयमुखेन व्यतिरेकमुखेन च व्याख्या । शेषमतिरोहितार्थम् ॥ ३ ॥ ३ ॥ ६४ ॥ ६९ ॥ ६६ ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यविभागे भामत्यां तृतीयाध्यायस्य तृतीयः पादः ॥३॥३॥

आनन्दगिरीय—न्यायनिर्णयः ।

अनुमानाल्लिङ्गाच्च सिद्धमर्थमुपसंहरति—तस्मादिति । याथाकाम्यं व्याचष्टे—समुच्चयो विकल्पो वेतीति ॥ ३ ॥ ३ ॥ ६६ ॥ ( ३६ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि (ज्ञान) विरचिते शारीरकभाष्यविभागे न्यायनिर्णये तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ ३ ॥

इति तृतीयाध्यायस्य सगुणविद्यासु गुणानां निर्गुणे ब्रह्मण्यपुनरुक्तदोषाणां चोपसंहारनिरूपणाख्यः तृतीयः पादः ॥ ३ ॥



# तृतीयाध्याये चतुर्थः पादः ४.

## पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ ३ ॥ ४ ॥१॥ (१) ॥

**अथेदानीमौपनिषदमात्मज्ञानं किमधिकारिद्वारेण कर्मण्येवानुप्रविशति-आहोस्विव् स्वतन्त्रमेव पुरुषार्थसाधनं भवतीति मीमांसमानः सिद्धान्तेनैव तावदुपक्रमते-"पुरुषार्थोऽतः" इति । अतः अस्माद्वेदान्तविहितादात्मज्ञानात्स्वतन्त्रात्पुरुषार्थः सिध्यतीति बादरायण आचार्यो मन्यते ॥**

रत्नप्रभा ।

श्रीगणेशाय नमः ॥ ॐ कर्माङ्गविद्याप्रसंगाद् ब्रह्मज्ञानस्य कर्मांगत्वमाशङ्कयाह-**पुरुषार्थोतः शब्दादिति बादरायणः** ॥ **पूर्वपादे** परापरविद्यानां गुणोपसंहारोक्त्या स्वरूपं निश्चितम् । **अस्मिन् पादे** तासां कर्मानंगतया पुरुषार्थहेतुत्वं निरूप्यते ॥ ततोङ्गाकांक्षायां यज्ञादीनि बहिरंगानि, शमादीनि अन्तरंगानि च,-निरूप्यन्त इति एकविद्याविषयत्वं **पादयोः संगतिः** ॥ तत्रादौ तत्त्वज्ञानं विषयीकृत्य वादिविप्रतिपत्त्या संशयमाह-**अथेति** ॥ **पूर्वपक्षे** ज्ञानकर्मणोरंगांगित्वेन समुच्चयः, **सिद्धान्ते** केवल-

भामती ।

**पुरुषार्थोऽतः शब्दादिति बादरायणः** । स्थितं क्रत्वोपनिषदामपवर्गाख्यपुरुषार्थसाधनात्मज्ञानपरत्वमुपासनानां च तत्तत्पुरुषार्थसाधनत्वमधस्तनं विचारजातमभिनिर्वर्तितम् । सम्प्रति तु किमौपनिषदात्मतत्त्वज्ञानमपवर्गसाधनतया पुरुशार्थमाहो क्रतुप्रयोगापेक्षितकर्तृप्रतिपादकतया क्रत्वर्थमिति मीमांसामहे । यदा च क्रत्वर्थं तदा यावन्मात्रं क्रतुप्रयोगविधिनापेक्षितं कर्तृत्वमामुष्मिकफलोपभोक्तृत्वं च न चैतदनित्यत्वे घटते कृतविप्रणाशाकृताभ्यागमप्रसङ्गादतो नित्यत्वमपि तावन्मात्रमुपनिषत्सु विवक्षितम् । इतोऽन्यदनपेक्षितं विपरीतं च नोपनिषदर्थः स्यात् । यथा शुद्धत्वादि । यद्यपि जीवानुवादेन तस्य ब्रह्मत्वप्रतिपादनपरत्वमुपनिषदामिति महता प्रबन्धेन तत्रतत्र प्रतिपादितं तथाप्यत्र केषांचित्पूर्वपक्षशङ्काबीजानां निराकरणे तदेव स्थूणानिखननन्यायेन निश्चलीक्रियत इत्यस्ति विचारप्रयोजनम् । तत्र यद्यपि प्रोक्षणादिवदात्मज्ञानं न कंचित्क्रतुमारभ्याधीतम्, यद्यपि च कर्तृमात्रं नाव्यभिचरितक्रतुसंबन्धं कर्तृमात्रस्य लौकिकेष्वपि कर्मसु दर्शनाद्येन पर्णतादिवदनारभ्याधीतमप्यव्यभिचरितक्रतुसंबन्धजुह्वद्वारेण वाक्येनैव क्रत्वर्थमापद्यते तथापि यादृश आत्मा कर्तामुष्मिकस्वर्गादिफलभोगभागी देहाद्यतिरिक्तो वेदान्तैः प्रतिपाद्यते न तादृशस्यास्ति लौकिकेषु कर्मसूपयोगः । तेषामैहिकफलानां शरीरानतिरिक्तेनापि यादृशतादृशेन कर्त्रो-

आनन्दगिरीय-न्यायनिर्णयः ।

कर्माङ्गसङ्गिविद्योक्तिप्रसङ्गाद्ब्रह्मज्ञानस्य कर्माङ्गत्वमाशङ्कय परिहरति-**पुरुषार्थ इति** । परापरब्रह्मविद्यानां गुणोपसंहारोक्त्या परिमाणमवधार्य तासां कर्मानपेक्षाणामेव पुरुषार्थसाधनत्वमवसरप्राप्तौ निरूप्यते। तत्र कर्मानपेक्षाणाममूषां का नामेतिकर्तव्यता, न हि तां विना कारणतेत्याशङ्कय यज्ञादयः श्रवणादयः शमदमादयश्च विद्योत्पत्त्युपयोगिन्य इतिकर्तव्यता निरूप्यन्ते तदभिप्रेत्याऽऽह-**अथेति** । फलभेदाभेदौ विना न विद्याभेदाभेदौ न च तौ विना गुणोपसंहारानुपसंहारौ तेन प्रागेव विद्यानां पुमर्थहेतुत्वे स्थिते प्रथममौपनिषदमात्मज्ञानमधिकृत्य वादिविप्रतिपत्त्या संशयमाह-**औपनिषदमिति** । अनेन चाऽऽत्मज्ञानविशेषणेन शास्त्रश्रुतिसंगतिरुच्यते । सिद्धे फलवत्त्वे स्वतन्त्रमेवेदं फलवदिति साधनादध्यायपादसंगती । पूर्वपक्षे समुच्चयपक्षसिद्धिः । सिद्धान्ते केवलस्य ज्ञानस्य कैवल्यसाधनतेति मत्वा पूर्वपक्षमग्रे दर्शयिष्यन्नादौ सिद्धान्तमाह-**सिद्धान्तेनेति**। सूत्रस्थां प्रतिज्ञां योजयति-**अस्मादिति**। तत्र प्रमाणं पृच्छ-

कुत एतदवगम्यते ॥ शब्दादित्याह ॥ तथाहि—"तरति शोकमात्मवित्" [ छां० ७ । १ । ३ ] "स यो ह वैतत्परं ब्रह्म वेद ब्रह्मैव भवति" [ मुण्ड ३ । २ । ९ ] "ब्रह्मविदाप्नोति परम्" [ तै० उ० २ । १ । १ ] "आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति" [ छां० ६ । १४ । २ ] "य आत्माऽपहतपाप्मा" [ छां० ८ । ७ । १ ] इत्युपक्रम्य "स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति" [ छां० ८ । ७ । १ ] "आत्मा वा अरे द्रष्टव्यः" [ बृ० २ । ४ । ५ ] इति चोपक्रम्य "एतावदरे खल्वमृतत्वम्" [ बृ० ४ । ५ । १५ ] इत्येवञ्जातीयका श्रुतिर्विद्यायाः केवलायाः पुरुषार्थहेतुत्वं श्रावयति ॥ १ ॥ अथात्र परः प्रत्यवतिष्ठते—

**शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥**

कर्तृत्वेनात्मनः कर्मशेषत्वात्तद्विज्ञानमपि व्रीहिप्रोक्षणादिवद्विषयद्वारेण कर्मसम्बन्ध्येवेत्यतस्तस्मिन्नवगतप्रयोजने आत्मज्ञाने या फलश्रुतिः साऽर्थवाद इति जैमिनिराचार्यो मन्यते । यथा—अन्येषु द्रव्यसंस्कारकर्मसु

---

रत्नप्रभा ।

ज्ञानान्मुक्तिरिति फलभेदः ॥ "य आत्मा" इति प्रजापत्युक्तब्रह्मविद्यायां लोकादिकं सगुणविद्याफलं मोक्षानन्देऽन्तर्भावाभिप्रायेणोक्तमिति मन्तव्यम् ॥ १ ॥ एवं सिद्धान्तमुपक्रम्य पूर्वपक्षयति—शेषत्वादिति ॥ सूत्रेऽर्थवादपदमावर्त्तनीयम् । ज्ञानात्पुरुषार्थवादोऽर्थवाद इत्यर्थः ॥ ज्ञानं, कर्माङ्गम्, अफलत्वे सति कर्मशेषाश्रयत्वात्, प्रोक्षणपर्णमयीत्वादिवदिति भावः ॥ तत्त्वनिर्णयार्थं गुरुशिष्ययोः कथावादोयमिति ज्ञापनार्थं जैमिनिग्रहणम् अंगिफलेनांगभूत आत्मा अवगतप्रयोजनः ॥ तदाश्रये तत्संस्कारके ज्ञाने फलश्रुतिरर्थवाद इत्यत्र दृष्टान्तः—यथेति ॥ पर्णमयी द्रव्यम् । यजमानस्याञ्जनं—संस्कारः । प्रयाजादीनि—

भामती ।

पंपत्तेः । आमुष्मिकफलानां तु वैदिकानां कर्मणां तमन्तरेणासंभवात्तत्संबन्ध एवायमौपनिषदः कर्तेति तदव्यभिचारात्तान्यनुस्मारयज्जुह्वादिवद्वाक्येनैव तज्ज्ञानं पर्णतावत्क्रत्वेदमर्थ्यमापद्यत इति फलश्रुतिरर्थवादः ।

आनन्दगिरीय—न्यायनिर्णयः ।

ति—कुत इति । सूत्रावयवेनोत्तरमाह—शब्दादित्याहेति । प्रमाणं विवृणोति—तथाहीत्यादिना । सगुणब्रह्मज्ञानस्यापि स्वातंत्र्येण पुमर्थहेतुतेति वक्तुं तद्विषयां श्रुतिमाह—य आत्मेति । निर्गुणविद्याविषयं वाक्यान्तरमाह—आत्मेति। उक्तश्रुतिषु विद्याफलयोः साध्यसाधनत्वं न भातीत्याशंक्य तयोरेकपुरुषसंबन्धसामर्थ्यादेव तद्धीरित्याशयेनाऽऽह—केवलाया इति ॥ १ ॥ पूर्वपक्षमवतारयति—अथेति । सिद्धान्तोक्त्यनन्तरमात्मज्ञाने विषये फलश्रुतिमधिकृत्य मीमांसकश्चोदयतीत्यर्थः । पुरुषार्थवाद इत्यत्रार्थग्रहणं तंत्रेणोपात्तं तेन पुरुषार्थार्थवाद इति द्रष्टव्यम् । तत्त्वज्ञानं कर्मांगकर्तृद्वारा प्रयोगविधिनाऽऽदेयमादीयमानकर्मांगकर्त्राश्रयेण शास्त्रसिद्धत्वाद्यजमानसंस्काराञ्जनादिवदिति मत्वा शेषत्वादित्येतद्व्याचष्टे—कर्तृत्वेनेति । तत्त्वज्ञानं प्रयोगविधिनाऽऽदेयं साध्यफलोक्तिशून्यत्वे सति कर्मांगाश्रयत्वात्पर्णमयीत्वादिवदिति प्रयोगः । स्वतंत्रफलस्य कथं प्रोक्षणादिवत्कर्मांगतेत्याशंक्य पुरुषार्थवाद इत्यस्यार्थमाह—इत्यत इति । वेदार्थजिज्ञासायां तत्त्वनिर्णयार्थं संशयादिप्रतिभासो गुरोरग्रे शिष्येण दर्शनीयो गुरुणा च तन्निरासेन तत्त्वमाविष्करणीयमिति शिष्टाचारं दर्शयितुं जैमिनिग्रहणं न प्रतिपक्षतया शिष्यस्य तदयोगात् । फलश्रुतेरर्थवादत्वे सूत्रितं दृष्टान्तं व्याचष्टे—यथेति । पर्णमयीद्रव्ये यजमानस्याञ्जनादिसंस्कारे प्रयाजादिकर्मसु च क्रमेण फल-

"यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ शृणोति यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते यत्प्रयाजानुयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै" इत्येवञ्जातीयका फलश्रुतिरर्थवादः, तद्वत् ॥ कथं पुनरस्यानारभ्याधीतस्यात्मज्ञानस्य प्रकरणादीनामन्यतमेनापि हेतुना विना क्रतुप्रवेश आशंक्यते ॥ कर्तृद्वारेण तद्विज्ञानस्य वाक्यात्क्रतुसम्बन्ध इति चेत् ॥ न ॥ वाक्यविनियोगानुपपत्तेः—अव्यभिचारिणा हि केनचिद्द्वारेणाऽनारभ्याधीतानामपि वाक्यनिमित्तः क्रतुसम्बन्धोऽवकल्पते। कर्ता तु व्यभिचारि द्वारम्। लौकिकवैदिककर्मसाधारण्यात् ॥ तस्मान्न तद्द्वारेणात्मज्ञानस्य क्रतुसम्बन्धसिद्धिरिति ॥न॥ व्यतिरेकविज्ञानस्य वैदिकेभ्यः कर्मभ्योऽन्यत्रानुपयोगात् ॥ न हि देहव्यतिरिक्तात्मविज्ञानं लौकिकेषु कर्मसूपयुज्यते ॥ सर्वथा दृष्टार्थप्रवृत्त्युपपत्तेः—वैदिकेषु तु देहपातोत्तरकालफलेषु देहव्यतिरिक्तात्मविज्ञानमन्त-

रत्नप्रभा।

**कर्माणि**। तेष्वित्यर्थः। **वर्म**—कवचम् ॥ आत्मज्ञानं न कर्माङ्गं मानाभावादिति सिद्धान्ती शङ्कते—**कथमिति** ॥ पूर्वपक्ष्याह—**कर्त्रिति** ॥ युक्तो ह्यनारभ्याधीतायाः पर्णताया जुहूद्वारेण वाक्यात् क्रत्वंगभावः। जुह्वाः क्रतुव्याप्यतया क्रतूपस्थापकत्वात्। न तथात्मविज्ञानस्य "आत्मा" "द्रष्टव्यः" इति वाक्यात् क्रतुसंबन्ध उपपद्यते। आत्मनः क्रतुव्याप्यत्वाभावादिति ॥ सिद्धान्ती दूषयति—**नेति** ॥ देहभिन्नत्वेन ज्ञातात्मनः क्रतुव्याप्यत्वमप्यस्तीति पूर्वपक्षी समाधत्ते—**न व्यतिरेकेति** ॥ **सर्वथेति** ॥ देहात्मत्वेनापीत्यर्थः ॥

भामती।

तदुक्तम्—'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्' इति औपनिषदात्मज्ञानसंस्कृतो हि कर्ता पारलौकिकफलोपभोगयोग्योऽस्मीति विद्यावाञ्छ्रद्धावान्क्रतुप्रयोगाङ्गं नान्यथा प्रोक्षिता इव व्रीहयः क्रत्वङ्गमिति। प्रियादिसूचितस्य च संसारिण एवात्मनो द्रष्टव्यत्वेन प्रतिज्ञापनादपहतपाप्मत्वादि तु तद्विशेषणं तस्यैव स्तुत्यर्थम्। न तु तत्परत्वमुपनिषदाम्। तस्मात्क्रत्वर्थमेवात्मज्ञानं कर्तृसंस्कारद्वारा न पुनः पुरु-

आनन्दगिरीय—न्यायनिर्णयः।

**श्रुतीराह—यस्येत्यादिना**। सा च फलश्रुतिर्न फलपरा फलवत्क्रत्वर्थत्वात्पर्णतादेः फलशेषत्वायोगात्। अतः साऽर्थवाद एवेति पर्णमयीत्वाधिकरणे समर्थितम्। तथाऽऽत्मज्ञानेऽपि फलश्रुतिरर्थवाद एव स्यादित्याह—**तद्वदिति**। विनियोजकमानाभावादात्मधियोऽनंगत्वात्तत्र फलश्रुतिर्नार्थवाद इति शङ्कते—**कथमिति**। प्रकरणादिना क्रत्वसंबंधेऽपि जुहूद्वारा पर्णमयीत्वस्य वाक्यात्क्रतुसंबन्धवदात्मधियोऽपि कर्तृद्वारा वेदांतवाक्यात्क्रतुसंगतिरिति पूर्ववाद्याह—**कर्त्रिति**। सिद्धान्ती दूषयति—**नेति**। तदेव विवृणोति—**अव्यभिचारिणेति**। जुहूवदात्मज्ञाने कर्तैवाव्यभिचारि द्वारमित्याशङ्क्याऽऽह—**कर्तेति**। तस्य व्यभिचारित्वे फलितमाह—**तस्मादिति**। किं देहातिरिक्तात्मज्ञानस्य कर्मांगत्वं विनियोजकाभावान्निरस्यते किं वाऽपहतपाप्मत्वादिविशेषितासंसार्यात्मविषयौपनिषदज्ञानस्येति विकल्प्याऽऽद्यं पूर्ववादी दूषयति—**नेति**। तस्य विषयद्वारा तेष्वनुप्रवेशान्न कर्मांगत्वं निषेद्धुं शक्यमित्यर्थः। लौकिककर्मणोऽपि कर्मत्वाद्वैदिककर्मवत्कर्तृद्वारेणातिरिक्तज्ञानापेक्षेति कर्तुः साधारण्यमित्याशंक्याऽऽह—**न हीति**। सर्वथेति व्यतिरेकज्ञानाज्ञानयोरित्यर्थः। तर्हि वैदिकान्यपि कर्माणि कर्मत्वादितरवन्न व्यतिरेकज्ञानापेक्षाणीत्याशंक्याऽऽह—**वैदिकेष्विति**। कारीर्यादिनिवृत्त्यर्थं देहपातेत्यादिविशेषणम्। द्वितीयमाशङ्क्ते—

रेण प्रवृत्तिर्नोपपद्यत इत्युपयुज्यते व्यतिरेकविज्ञानम् ॥ नन्वपहतपाप्मत्वादिविशेषणादसंसार्यात्मविषयमौपनिषदं दर्शनं न प्रवृत्त्यङ्गं स्यात् ॥ न ॥ प्रियादिसंसूचितस्य संसारिण एवात्मनो द्रष्टव्यत्वोपदेशात् । अपहतपाप्मत्वादिविशेषणं तु स्तुत्यर्थं भविष्यति । ननु तत्रतत्र प्रसाधितमेतदधिकमसंसारि ब्रह्म जगत्कारणं, तदेव च संसारिण आत्मनः पारमार्थिकं स्वरूपमुपनिषत्सूपदिश्यत इति ॥ सत्यं प्रसाधितम् ॥ तस्यैव तु स्थूणानिखननवत्फलद्वारेणाक्षेपप्रतिसमाधाने क्रियेते दार्ढ्याय ॥ २ ॥

## आचारदर्शनात् ॥ ३ ॥

"जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे" [ बृ० ३ । १ । १ ] "यक्ष्यमाणो वै भगवन्तोऽहमस्मि" [ छां० ५ । ११ । ५ ] इत्येवमादीनि ब्रह्मविदामप्यन्यपरेषु वाक्येषु कर्मसम्बन्धदर्शनानि भवन्ति ॥ तथोद्दालका-

---

रत्नप्रभा ।

देहभिन्नकर्तृज्ञानस्यांगत्वेऽप्यकर्तृब्रह्मात्मज्ञानस्य नांगत्वमिति शङ्कते—**नन्वपहतेति** ॥ यस्यार्थे जायादिकं प्रियं भोग्यं स "आत्मा" "द्रष्टव्यः" इति भोग्यलिंगेन सूचितभोक्तृभिन्नमकर्तृस्वरूपं नास्तीति समाध्यर्थः॥ जन्मादिसूत्रमारभ्य साधितं स्वरूपं कथं नास्तीति शङ्कते—**नन्विति** ॥ स्वरूपज्ञानं वेदान्तानां फलम् । तस्य क्रत्वर्थत्वपुरुषार्थत्वविचारेण दार्ढ्यं क्रियत इत्याह—**सत्यमिति** ॥ २ ॥ ब्रह्मविदां कर्माचारदर्शनं ब्रह्मविद्यायाः । कर्माङ्गत्वे लिङ्गमित्याह—**आचारेति** ॥ **ईजे** यागं कृतवानित्यर्थः । हे ३ भगवन्त इति ब्राह्मणान् संबोध्य ब्रह्मवित्कैकेयराजो ब्रूते—**अहं यक्ष्यमाणः** यागं करिष्यमाणोस्मि । वसन्त्वऽत्र भगवन्त इत्यर्थः ॥ **अन्यपरेष्विति** । विद्याविधिपरेष्वित्यर्थः ॥ अल्पायासं मुक्तेरुपायं ज्ञानं लब्ध्वा बहु-

भामती ।

षार्थमिति । एतदुपोद्बलनार्थं च ब्रह्मविदामाचारादिः श्रुत्यवगत उपन्यस्तः । न केवलं वाक्यादात्मज्ञा-

आनन्दगिरीय–न्यायनिर्णयः ।

**नन्विति**। अनुपयोगित्वाद्विरोधित्वाच्च तस्य न क्रत्वङ्गतेति भावः। क्रत्वपेक्षितं रूपं हित्वाऽन्यदविवक्षितमित्याह—**नेत्यादिना** । जायादीनामात्मार्थत्वेन प्रियत्वमुक्त्वाऽऽत्मा द्रष्टव्य इति वदता जायादिना भोग्येन सूचितस्य संसारिणो भोक्तुरेव द्रष्टव्यत्वमिष्टं भोक्तृज्ञानं च कर्मसूपयुक्तमतो भोक्त्रतिरिक्तमात्मरूपं न श्रौतमित्यर्थः । अपहतपाप्मत्वादिविशेषणस्य भोक्तर्ययुक्तत्वादतिरिक्तमात्मरूपमेष्टव्यमित्याशङ्क्याऽऽह—**अपहतेति** । जन्मादिसूत्रमारभ्य तत्रतत्राप्रपञ्चब्रह्मात्मपरता वेदान्तानामुक्ता तत्कथमपहतपाप्मत्वादिकीर्तनस्य स्तुत्यर्थतेति शङ्कते—**नन्विति** । अधिकमितिविशेषणादाशंकितं द्वैतं वारयति—**तदेवेति** । संसारिणोऽसंसारीश्वरो रूपमिति व्याहतिं प्रत्याह—**पारमार्थिकमिति** । ऐक्ये प्रमाणं पूर्वोक्तं सूचयति—**उपनिषत्स्विति** । पूर्वपक्षाक्षेपं समाधत्ते—**सत्यमित्यादिना** । फलद्वारेणेत्यात्मज्ञानं वेदान्तानां फलं तत्क्रत्वर्थं पुरुषार्थं वेति विचारद्वारेणेत्यर्थः । साधितस्यैवाऽऽक्षेपसमाधिभ्यां साधनस्य फलमाह—**दार्ढ्यायेति** ॥ २ ॥ किंच, जनकादीनां विद्यया सह कर्माचरणदर्शनान्न केवलैव विद्या मोक्षहेतुरतः सहानुष्ठानं विद्यायाः स्वातन्त्र्याभावेन कर्मांगत्वे लिङ्गमित्याह—**आचारेति** । सूत्रं व्याचष्टे—**जनको हेति** । विदेहानामधिपतिर्जनको नाम राजा बहुदक्षिणसंज्ञेन यज्ञेनाश्वमेधेन वा बहुदक्षिणायुक्तेन पुरा कदाचिदीजे यागं कृतवान् । कैकेयस्य राज्ञो ब्रह्मविदो वाक्यमाह—**यक्ष्यमाण इति** । विद्यार्थिनः समागतान्प्राचीनशालादीन्भगवन्त इति संबोध्याहं यक्ष्यमाणोऽस्मि ततश्च कतिचिद्दिनान्याध्वमिति राजोक्तवानित्यर्थः । उक्तवाक्यानि विद्यार्थानि न कर्मार्थानीत्याशंक्याऽऽह—**अन्येति** । इतश्च ब्रह्मविदामस्ति कर्मसंगतिरित्याह—**तथेति** । आदिपदेन व्यासयाज्ञवल्क्यादिसंग्रहः । द्वितीयेन भार्यानुशा-

दीनामपि पुत्रानुशासनादिदर्शनाद् गार्हस्थ्यसम्बन्धोऽवगम्यते। केवलाच्चेज्ज्ञानात्पुरुषार्थसिद्धिः स्यात्, किमर्थमनेकायाससमन्वितानि कर्माणि ते कुर्युः। "अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेद्" इति न्यायात् ॥३॥

## तच्छ्रुतेः ॥ ४ ॥

"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" [ छां० १।१।१० ] इति च कर्मशेषत्वश्रवणाद्विद्याया न केवलायाः पुरुषार्थहेतुत्वम् ॥ ४ ॥

## समन्वारम्भणात् ॥ ५ ॥

"तं विद्याकर्मणी समन्वारभेते" [ बृ० ४।४।२ ] इति च विद्याकर्मणोः फलारम्भे सहकारित्वदर्शनान्न स्वातन्त्र्यं विद्यायाः ॥ ५ ॥

## तद्वतो विधानात् ॥ ६ ॥

"आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य

---

रत्नप्रभा।

यासं कर्म न कुर्युरित्यत्र दृष्टान्तमाह—अर्क इति ॥ समीप इत्यर्थः॥ "अर्के" इति पाठेऽप्ययमेवार्थः॥ ॥ ३ ॥ ४ ॥ ब्रह्मविद्यायाः कर्माङ्गत्वे तृतीया श्रुतिरप्यस्तीत्याह—तच्छ्रुतेरिति ॥ लिङ्गान्तरमाह—समिति ॥ तं परलोकं गच्छन्तं विद्याकर्मणी अनुगच्छत इत्यर्थः ॥ गुरोः शुश्रूषारूपं कर्म कुर्वन् अतिशेषेण अवशिष्टेन कालेन यथाविधानं वेदमधीत्य अनन्तरमाचार्यस्य कुलाद् गृहात्। ब्रह्मचर्यादिति यावत् ॥ अभिसमावर्तनं कृत्वा कुटुम्बे गार्हस्थ्ये स्थितः प्रत्यहं शुचौ देशे स्वाध्यायाध्ययनं कुर्वन्नन्यांश्च नित्यादिधर्माननुतिष्ठन् ब्रह्मलोकं प्राप्नोतीति श्रुत्यर्थः ॥ यथा—अवघातस्तुषविमोकपर्यन्तः, एवमध्ययनमर्थावबोधान्तम्। दृष्टे अर्थावबोधाख्ये फले संभवति। अध्ययनस्य अदृष्टार्थत्वायोगादिति पूर्वतन्त्रे स्थितम्। ततश्च ब्रह्मापि वेदार्थ इति तदवबोधवतः कर्मविधानमित्यर्थः ॥६॥१॥ यावज्जीवं कर्मनियमोऽप्यत्र

भामती।

नस्य क्रत्वर्थत्वम्। तृतीयाश्रुतेश्च। न त्वेतत्प्रकृतोद्गीथविद्याविषयं यदेव विद्ययेति सर्वनामावधारणाभ्यां व्याप्तेरधिगमात्। यथा य एव धूमवान्देशः स वह्निमानिति। समन्वारम्भवचनं च फलारम्भे विद्याकर्मणोः साहित्यं दर्शयति। तत्र यद्यप्याग्नेयादियागषट्कवत्समप्रधानत्वेनापि भवति तथाप्युक्तया युक्त्या विद्यायाः कर्म प्रत्यङ्गभावेनैव नेतव्यम्। वेदार्थज्ञानवतः कर्मविधानादुपनिषदोऽपि वेदार्थ इति तज्ज्ञानमपि कर्मा-

आनन्दगिरीय-न्यायनिर्णयः।

सनादि गृह्यते। कर्म कृतं विद्वद्भिरेव कैश्चिदित्येतावता विद्याशक्तेरपह्नवायोगात्केवलैव सा मुक्तिहेतुरित्याशंक्याऽऽह—केवलादिति। अल्पायासमुपायं हित्वा न कोऽपि महायासं तमाद्रियत इत्यत्र लौकिकन्यायमाह—अर्के चेदिति। समीपवचनोऽर्कशब्दः ॥ ३ ॥ न केवलं विद्याया लिङ्गादेव कर्माङ्गत्वं किंतु तृतीयाश्रुतेरपीत्याह—तदिति। सूत्रार्थं विवृणोति—यदेवेति ॥ ४ ॥ इतश्च न स्वतन्त्रा विद्या पुमर्थहेतुरित्याह—समन्वारम्भणादिति। सूत्रं विवृणोति—तमित्यादिना। तं परलोकं व्रजन्तं विद्याकर्मणी समनुगच्छत इति यावत् ॥ ५ ॥ तदस्वातन्त्र्ये लिङ्गान्तरमाह—तद्वत इति। तद्व्याकरोति—आचार्येति। तस्य कुलं गृहमुपनयनं कृत्वा तत्प्राप्त्यनन्तरं गुरोः शुश्रूषारूपं कर्म विधायातिशेषेण शिष्टेन कालेन यथाविधानं पवित्रपाणित्वप्राङ्मुखत्वादिविधानमनतिक्रम्य वेदमधीत्यानन्तरमभिसमा-

कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः" [ छां० ८ । १५ । १ ] इति चैवजातीयका श्रुतिः समस्तवेदार्थविज्ञानवतः कर्माधिकारं दर्शयति ॥ तस्मादपि न विज्ञानस्य स्वातन्त्र्येण फलहेतुत्वम् ॥ नन्वत्राधीत्येत्यध्ययनमात्रं वेदस्य श्रूयते नार्थविज्ञानम् ॥ नैष दोषः ॥ दृष्टार्थत्वात् ॥ वेदाध्ययनमर्थावबोधपर्यन्तमिति स्थितम् ॥ ६ ॥

## नियमाच्च ॥ ७ ॥

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छत समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे" [ ईशा० २ ] इति । तथा "एतद्वै जरामर्यं सत्रं यदग्निहोत्रं जरया वा ह्येवास्मान्मुच्यते मृत्युना वा" [ महानारा० २५ । १ ] इति, एवञ्जातीयकान्नियमादपि ॥ कर्मशेषत्वमेव विद्याया इति ॥७॥ एवं प्राप्ते प्रतिविधत्ते—

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

---

रत्नप्रभा ।

लिंगमित्याह—नियमाच्चेति ॥ इह देहे कर्माणि कुर्वन्नेव शतं संवत्सरान् जीवितुम् इच्छेद् एवं कर्मित्वेन जीवति त्वयि नरे कर्म पापं न लिप्यते ॥ इतः कर्मणः अन्यथा नास्ति, कर्म विना श्रेयो नास्तीत्यर्थः ॥ जरामर्यं जरामरणावधिकमित्यर्थः ॥ ७ ॥ कर्तुरधिकस्यासंसार्यात्मनः कर्मशेषत्वाभावात्तत्त्वज्ञानं कर्मांग नेति सिद्धान्तयति—अधिकेति ॥ "अस्य महतः" इति वाक्यशेषात्प्रियसंसूचित आत्मा पर एव द्रष्टव्यः, यः प्राणादि प्रेरयति सोप्यशनायाद्यत्ययवाक्यशेषात्पर एव, तथाक्षिपुरुषोऽप्यवस्थासाक्षी ।

भामती ।

ङ्गमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥५ ॥ ६ ॥ नियमाच्च । सुगमम् ॥ ७ ॥ सिद्धान्तयति—अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् । यदि शरीराद्यतिरिक्तः कर्ता भोक्तात्मेत्येतन्मात्र उपनिषदः पर्यवसिताः स्युस्ततः स्यादेवं, न त्वेतदस्ति । तास्त्वेवंभूतजीवानुवादेन तस्य शुद्धबुद्धोदासीनब्रह्मरूपताप्रतिपादनपरा इति तत्रतत्रासकृदावेदितम् । अनधिगतार्थबोधनस्वरसता हि शब्दस्य प्रमाणान्तरसिद्धानुवादेन । तथा चौपनिषदात्मज्ञानस्य क्रत्वनुष्ठानविरोधिनः क्रतुसंबन्ध एव नास्ति । किमङ्ग पुनः तदव्यभिचारस्ततश्च क्रतुशेषता । तथा च नापवर्गफलश्रुतेरर्थवादमात्रत्वमपि तु फलपरत्वमेव । अत एव प्रियादिसूचितेन संसारिणात्मनोपक्रम्य तस्यैवात्मनोऽधिकोपदिदिक्षायां परमात्मनात्यन्ताभेद उपदिश्यते । यथा समारोपितस्य भुजगस्य रज्जुरूपादत्यन्ताभेदः प्रतिपाद्यते योऽयं सर्पः सा रज्जुरिति । यथा विद्यायाः

आनन्दगिरीय—न्यायनिर्णयः ।

वृत्य व्रतविसर्गं कृत्वा दारानाहृत्य कुटुंबे गार्हस्थ्ये स्थितः शुचौ देशे स्वाध्यायाध्ययनं कुर्वन्कर्मान्तराणि च विहितानि यथाशक्ति कुर्वाणो ब्रह्मलोकमभिसंपद्यत इत्यर्थः । अध्ययनशब्दस्य यथाश्रुतमर्थं गृहीत्वा शङ्कते—नन्विति । अध्ययनविधेरवघातादिविधिवद्दृष्टार्थत्वादर्थावबोधान्तो व्यापारोऽस्तीति प्रथमे तन्त्रे समर्थितमित्याह—नेत्यादिना ॥ ६ ॥ इतश्च न स्वतन्त्रा विद्या पुमर्थहेतुरित्याह—नियमाच्चेति । नियमं विभजते—कुर्वन्निति । इह देहे शतं समाः शतसंख्याकान्संवत्सरान्यजिजीविषेत्तत्कर्माणि कुर्वन्नेवेति नियमविधिः । एवं त्वयि नरे वर्तमाने सत्यशुभं कर्म न लिप्यते तेन त्वं न लिप्यस इति यावत् । इतः प्रकारादन्यथा प्रकारान्तरं नास्ति यतो न कर्मलेपः स्यादित्यर्थः । नियमान्तरमाह—तथेति । जरामर्यं जरामरणावधिकम् । तदेव विशदयति—जरयेति । श्रुत्यादिभिरात्मधियः सिद्धे कर्मांगत्वे तत्फलेनैव फलवत्त्वमित्युपसंहर्तुमितीत्युक्तम् ॥ ७ ॥ पूर्वपक्षमनूद्य सिद्धान्तयति—एवमिति ।

तुशब्दात्पक्षो विपरिवर्तते ॥ यदुक्तं-"शेषत्वात्पुरुषार्थवादः" [ व्या० सू० ३।४।२ ] इति ॥ तन्नोपपद्यते ॥ कस्मात् ॥ अधिकोपदेशात्- यदि संसार्येवात्मा शारीरः कर्ता,भोक्ता च,-शरीरमात्रव्यतिरेकेण वेदान्तेषूपदिष्टः स्यात्, ततो वर्णितेन प्रकारेण फलश्रुतेरर्थवादत्वं स्यात्। अधिकस्तावच्छारीरादात्मनोऽसंसारीश्वरः कर्तृत्वादिसंसारधर्मरहितोऽपहतपाप्मत्वादिविशेषणः परमात्मा वेद्यत्वेनोपदिश्यते वेदान्तेषु ॥ न च तद्विज्ञानं कर्मणां प्रवर्तकं भवति। प्रत्युत तत्कर्माण्युच्छिनत्तीति वक्ष्यति "उपमर्दश्च" [ व्या० सू० ३।४।१६ ] इत्यत्र ॥ तस्मात् "पुरुषार्थोऽतः शब्दाद्" [ व्या० सू० ३।४।१ ] इति यन्मतं भगवतो बादरायणस्य, तत्तथैव तिष्ठति, न शेषत्वप्रभृतिभिर्हेत्वाभासैश्चालयितुं शक्यते। तथाहि-तमधिकं शारीरादीश्वरमात्मानं दर्शयन्ति श्रुतयः- "यः सर्वज्ञः सर्वविद्" [ मुण्ड० १।१।९ ] "भीषास्माद्वातः पवते भीषोदेति सूर्यः" [ तै०उ० २।८।१ ] "महद्भयं वज्रमुद्यतम्" [ क० ६।२ ] "एतस्य वा अक्षरस्य प्रशासने गार्गि" [ बृ० ३।८।९ ] तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" [ छां० ६।२।३ ] इत्येवमाद्याः। यत्तु प्रियादिसंसूचितस्य संसारिण एवात्मनो वेद्यतयानुकर्षणम् "आत्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा वा अरे द्रष्टव्यः" "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः" [ बृ० ३।४।१ ] "य एषोऽक्षिणि पुरुषो दृश्यते" [ छां० ८।७।४ ] इत्युपक्रम्य "एतन्त्वेव ते भूयोऽनुव्याख्यास्यामि" [ छां० ८।९।३ ] इति चैवमादि, तदपि "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः" [ बृ० २।४।१० ] "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" [ बृ० ३।५।

रत्नप्रभा।

"परं ज्योतिः" इति वाक्यशेषात्पर इति विभागः ॥ जीवानुकर्षणमभेदाभिप्रायमित्यङ्गीकारे न विरोध इति

भामती।

कर्माङ्गत्वे दर्शनमुपन्यस्तमेवमकर्माङ्गत्वे दर्शनमुक्तम्। तत्र कर्माङ्गत्वदर्शनानामन्यथासिद्धिरुक्ता केवलविद्या-

आनन्दगिरीय-न्यायनिर्णयः।

सूत्रं योजयति-तुशब्दादिति। पक्षविपरिवर्तमानमेव पक्षमनूद्य दर्शयति-यदिति। अनुपपत्तिहेतुं प्रश्नपूर्वकमाह-कस्मादिति। अधिकोपदेशं व्यतिरेकतो दर्शयति-यदीति। यः कर्ता कर्मांगं नासौ वेदान्तवेद्यो यच्च ब्रह्म तद्वेद्यं न तत्कर्मांगमतस्तज्ज्ञानस्य कुतः शेषता कुतस्तरां फलश्रुतेरर्थवादतेत्यर्थः। ब्रह्मात्मधीर्न क्रतुप्रयोगविधिनोपादेया तद्विरोधित्वादादीयमानोदितहोमविरोध्यनुदितहोमवदिति मत्वाऽऽह- प्रत्युतेति। बादरायणस्येत्यादिव्याचष्टे-तस्मादिति। उक्तात्मज्ञानस्य क्रतुशेषत्वायोगस्तच्छब्दार्थः। अधिकोपदेशासिद्धिमाशंक्य तद्दर्शनादित्यनेन प्रत्याह-तथाहीति। क्रत्वपेक्षितं रूपं हित्वाऽन्यदात्मरूपमनिष्टमित्युक्तं तत्राऽऽह-यत्त्विति। आत्मनस्तु कामायेत्युपक्रम्याऽऽत्मा वा अरे द्रष्टव्य इति वाक्यं ब्रह्मोपदिदिक्षायां सत्यामेव ब्रह्मात्मैक्याभिप्रायमित्यत्र वाक्यशेषमाह-अस्येति। यः प्राणेनेत्यादि वाक्यमप्यैक्यपरमित्यत्र वाक्यशेषं दर्शयति-योऽशनायेति। य एषोऽक्षिणीत्यादिवाक्यमपि तथेत्यस्मिन्नर्थे

१ ] "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ॥ २ ॥ स उत्तमः पुरुषः" [ छां० ८ । १२ । ३ ] इत्येवमादिभिर्वाक्यशेषैः सत्यामेवाधिकोपदिदिक्षायां नात्यन्तभेदाभिप्रायमित्यविरोधः । पारमेश्वरमेव हि शारीरस्य पारमार्थिकं स्वरूपम् । उपाधिकृतन्तु शारीरत्वम् । "तत्त्वमसि" [ छां० ६ । ८ । ७-१६ ] "नान्योऽतोऽस्ति द्रष्टा" [ बृ० ३ । ८ । ११ ] इत्येवमादिश्रुतिभ्यः । सर्वञ्चैतद्विस्तरेणास्माभिः पुरस्तात्तत्रतत्र वर्णितम् ॥ ८ ॥

## तुल्यं तु दर्शनम् ॥ ९ ॥

यदुक्तमाचारदर्शनात्कर्मशेषो विद्येति॥ अत्र ब्रूमः ॥ तुल्यमाचारदर्शनमकर्मशेषत्वेऽपि विद्यायाः । तथाहि श्रुतिर्भवति—"एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे" [ कौ० २ । ५ ] "एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" [ बृ० ३ । ५ । १ ] इत्येवञ्जातीयका॥ याज्ञवल्क्यादीनामपि ब्रह्मविदामकर्मनिष्ठत्वं दृश्यते । "एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज" [ बृ० ४ । ५ । १५ ] इत्येवमादिश्रुतिभ्यः ॥ अपि च "यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि" [ छां० ५ । ११ । ५ ] इत्येतल्लिङ्गदर्शनं वैश्वानरविद्याविषयम् । सम्भवति च सोपाधिकायां ब्रह्मविद्यायां कर्मसाहित्यदर्शनं, न त्वत्रापि

---

रत्नप्रभा ।

कथम्। अभेदे जीवत्वविरोधादित्यत आह—पारमेश्वरमिति। ज्ञानं,कर्माङ्गम्,अफलत्वे सति कर्मशेषाश्रयत्वादित्युक्तो हेतुरसिद्ध इति भावः ॥ ८ ॥ ब्रह्मविदां कर्मवत्संन्यासस्यापि दर्शनात्तेषां कर्मदर्शनात्मकं लिङ्गं लोकसंग्रहार्थत्वेनान्यथासिद्धमित्याह—तुल्यं त्विति ॥ किंच, यस्य कर्म, स न ब्रह्मविदित्याह—अपि चेति ॥ तर्हि वैश्वानरविद्यायाः कर्माङ्गत्वं स्यादित्यत आह—न त्विति॥ ब्रह्मविदां लोकसंग्रहार्थं क्रियमाण-

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

शेषानुगुण्यमाह—परमिति । उक्तैः शेषैः संसारिणो यदधिकं ब्रह्म तस्योपदिदिक्षायां सत्यामेव ब्रह्मणो जीवस्यात्यन्तभेदाभावधिया द्रष्टव्यादिवाक्यमिति कृत्वनपेक्षितमात्मरूपं वेदान्तेषु विवक्षितमित्युपगमे न कश्चिद्विरोधोऽस्तीति योजना । कुतो जीवब्रह्मैक्यं मिथो विरोधादित्याशंक्य तात्त्विको विरोधो नास्तीत्याह—पारमेश्वरमिति । प्रातिभासिकस्तु विरोधस्तात्त्विकाभेदाविरोधीति मत्वाऽऽह—उपाधीति । जीवस्य तात्त्विकं रूपं ब्रह्मैवेत्यत्र श्रुतिसंवादमाह—तत्त्वमिति । संपदादिविषयं तत्त्वमादिवाक्यं न वस्तुविषयमित्याशंक्याऽऽह—सर्वं चेति ॥ ८ ॥ परोक्तं लिङ्गदर्शनं प्रत्याऽऽह—तुल्यं त्विति । उक्तमनूद्य सूत्रमुत्तरत्वेन योजयति—यदित्यादिना । इतश्च विद्याया न शेषतेत्याह—याज्ञवल्क्येति । आदिशब्देन शुकादयो गृह्यन्ते । कथं तेषामकर्मनिष्ठत्वं तदाह—एतावदिति । उभयथालिंगदर्शने संशयमाशंक्य परकीयलिंगानामन्यथासिद्धिं वक्तुमारभते—अपि चेति । तत्र यक्ष्यमाण इत्यादिलिंगदर्शनस्यान्यथासिद्धिमाह—यक्ष्यमाण इति । तत्रापि विद्यात्वात्र कर्मसाहित्यमन्यथा ब्रह्मविद्यायामपि तत्प्रसंगादित्याशंक्याऽऽह—संभवतीति । तर्हि वैश्वानरविद्याया न स्वातन्त्र्येण फलवत्त्वं कर्माङ्गत्वांगीकारात्तत्राऽऽह—न त्विति । येषां च ब्रह्मविदामपि कर्म दृश्यते न तत्तेषां कर्म तद्धि

कर्मांगत्वमस्ति। प्रकरणाद्यभावात् ॥९॥ यत्पुनरुक्तं-"तच्छ्रुतेः" [ व्या० सू० ३।४।४] इति ॥ अत्र ब्रूमः-

## असार्वत्रिकी ॥ १० ॥

"यदेव विद्यया करोति" [छां० १।१।१०] इत्येषा श्रुतिर्न सर्वविद्याविषया। प्रकृतविद्याभिसम्बन्धात्। प्रकृता चोद्गीथविद्या-"ओमित्येतदक्षरमुद्गीथमुपासीत" [छां० १।१।१] इत्यत्र ॥ १० ॥

## विभागः शतवत् ॥ ११ ॥

यद्प्युक्तं "तं विद्याकर्मणी समन्वारभेते" [बृ० ४।४।२] इत्येतत्समन्वारम्भवचनमस्वातन्त्र्ये विद्याया लिङ्गमिति ॥ तत्प्रत्युच्यते ॥ विभागोऽत्र द्रष्टव्यः-विद्याऽन्यं पुरुषं समन्वारभते, कर्माऽन्यमिति। शतवत् ॥ यथा-शतमाभ्यां दीयतामित्युक्ते विभज्य दीयते पञ्चाशदेकस्मै, पञ्चाशदपरस्मै,-तद्वत् ॥ न चेदं समन्वारम्भवचनं मुमुक्षुविषयम्। "इति नु कामयमानः" [बृ० ४।४।६] इति संसारिविषयत्वोपसंहारात्। "अथाऽकामयमानः" [बृ० ४।४।६] इति च मुमुक्षोः पृथगुपक्रमात् ॥ तत्र संसारिविषया विद्या विहिता, प्रतिषिद्धा च,-परिगृह्यते। विशेषाभावात्। कर्मापि विहितं, प्रतिषिद्धञ्च। यथाप्राप्तानुवादित्वात् ॥

---

रत्नप्रभा।

मपि कर्म न भवति। अभिमानाभावेन अनधिकारित्वादिति भावः ॥ ९ ॥ १० ॥ समन्वारम्भवचनस्य मुमुक्षुविषयत्वमङ्गीकृत्य विद्या अन्यं मुमुक्षुं मुक्तत्वेनान्वारभत इति विभाग उक्तः सूत्रकृता ॥ वस्तुतस्तु तन्नास्तीत्याह—न चेदं समन्वारम्भवचनमिति ॥ तत्र संसारिविषये "तं विद्या" इत्यादिवाक्ये यथाप्राप्तानुवादिनि ॥ विद्यादिपदार्थमाह-तत्रेति ॥ विहिता-उद्गीथादिविद्या। प्रतिषिद्धा-नग्नस्त्री-

भामती।

दर्शनानां तु नान्यथासिद्धिः ॥ ८ ॥ ९ ॥ असार्वत्रिकी। व्याप्तिरप्युद्गीथविद्यापेक्षया तस्या एव प्रकृतत्वान्न त्वशेषापेक्षया। यथा सर्वे ब्राह्मणा भोज्यन्तामिति निमन्त्रितापेक्षया तेषामेव प्रकृतत्वात् ॥ १० ॥ विभागः शतवत्। सुगमम्। अविभागेऽपि न दोष इत्याह-न चेदं समन्वारम्भवचनमिति। संसारिविषया विद्या विहिता यथोद्गीथविद्या। प्रतिषिद्धा च यथाऽसच्छास्त्राधिगमनलक्षणा ॥ ११ ॥

आनन्दगिरीय-न्यायनिर्णयः।

चोदनालक्षणं तेषां चाहंममाभिमानाभावेन चोदनाभावात्कथंचिदनुवर्तमानमपि तदाभासमात्रमिति भावः॥९॥ परोक्तां श्रुतिमनूद्य तदुत्तरत्वेन सूत्रमवतारयति-यदिति। तद्विभजते-यदेवेति। विद्याशब्दस्य सामान्यविषयस्य विशेषाकांक्षस्य प्राकरणिकविशेषेण चरितार्थत्वादिति हेतुमाह-प्रकृतेति। आत्मधियस्तथात्वशङ्कां प्रत्याह-प्रकृता चेति ॥ १० ॥ परकीयं लिंगान्तरं दूषयति-विभाग इति। चोद्यमनूद्योत्तरत्वेन सूत्रं व्याचष्टे-यदपीत्यादिना। सामान्यश्रुतौ कथं विभागः स्यात्तत्र सदृष्टान्तमाह-शतवदिति। समन्वारम्भवचनस्य मुमुक्षुविषयत्वमुपेत्य कर्मसाहित्येन तल्लिंगं विभागादित्युक्तम्। इदानीममुमुक्षुविषयत्वादविभागेऽपि न दूषणमित्याह-न चेति। तस्यामुमुक्षुविषयत्वे हेत्वन्तरमाह-अथेति। संसारिविषये तं विद्येत्यादिवाक्ये विद्याशब्दार्थमाह-तत्रेति। उद्गीथादिविषया विहिता विद्या प्रतिषिद्धा च नग्नस्त्रीदर्शनादिरूपा। तथाभूतकर्मसाहचर्यादपि तथाविधैव विद्येत्याह-कर्मापीति। प्रकृते वाक्येऽपि

एवं सत्यविभागेनापीदं समन्वारम्भवचनमवकल्पते ॥ ११ ॥ यच्चैतत्-"तद्वतो विधानाद्" [ व्या० सू० ३ । ४ । ६ ] इति ॥ अत उत्तरं पठति—

**अध्ययनमात्रवतः ॥ १२ ॥**

"आचार्यकुलाद्वेदमधीत्य" [ छां० ८ । १५ । १ ] इत्यत्राध्ययनमात्रस्य श्रवणादध्ययनमात्रवत एव कर्मविधिरित्यध्यवस्यामः ॥ नन्वेवं सत्यविद्वत्वादनधिकारः कर्मसु प्रसज्येत ॥ नैष दोषः ॥ न वयमध्ययनप्रभवं कर्मावबोधनमधिकारकारणं वारयामः ॥ किं तर्हि ॥ औपनिषदमात्मज्ञानं स्वातन्त्र्येणैव प्रयोजनवत्प्रतीयमानं न कर्माधिकारकारणतां प्रतिपद्यत इत्येतावत्प्रतिपादयामः । यथा च—न क्रत्वन्तरज्ञानं क्रत्वन्तराधिकारिणापेक्ष्यते, एवमेतदपि द्रष्टव्यमिति ॥ १२ ॥ यदप्युक्तं "नियमाच्च" [ व्या० सू० ३ । ४ । ७ ] इति ॥ अत्राभिधीयते—

**नाविशेषात् ॥ १३ ॥**

"कुर्वन्नेवेह कर्माणि जिजीविषेद्" [ ईशा० २ ] इत्येवमादिषु नियमश्रवणेषु न विदुष इति विशेषोऽस्ति । अविशेषेण नियमविधानात् ॥१३॥

**स्तुतयेऽनुमतिर्वा ॥ १४ ॥**

---

रत्नप्रभा ।

ध्यानादिरूपा ॥ ११ ॥ **यच्चैतदिति** ॥ उक्तमिति शेषः ॥ **अविद्यत्वाद्** वेदार्थज्ञानशून्यत्वादित्यर्थः ॥ **मात्रपदम्** –आत्मज्ञानस्य व्यावर्तकं, न कर्मज्ञानस्येत्याह—**नैष दोष इति** ॥ १२ ॥ १३ ॥ नियमवाक्यमज्ञविषयमित्युक्तम् । विदुषो ज्ञानस्तुत्यर्थं वेत्याह—**स्तुतय इति** ॥ एवं कर्म कुर्वत्यपि **त्वयि नरे** न **इतः** विद्यालब्धाद्ब्रह्मभावादन्यथास्ति । कर्मणा संसारो नास्तीति यावत् ॥ यतः कर्म न लिप्यते ।

भामती ।

**अध्ययनमात्रवत एव कर्मविधिर्न** तूपनिषदध्ययनवतः । एतदुक्तं भवति—यदध्ययनमर्थावबोधपर्यन्तं कर्मसूपयुज्यते यथा कर्मविधिवाक्यानां तन्मात्रवत एवाधिकारः कर्मसु नोपनिषदध्ययनवतः । तदध्ययनस्य कर्मस्वनुपयोगादिति । अध्ययनमात्रवत एवेति मात्रग्रहणेनार्थज्ञानं वा व्यवच्छिन्नमिति मन्वानो भ्रान्तश्चोदयति—**नन्वेवं सतीति** । स्वाभिप्रायमुद्घाटयन्समाधत्ते—**न वयमिति** । उपनिषदध्ययनापेक्षं मात्रग्रहणं नार्थबोधापेक्षमित्यर्थः ॥१२॥ **नाविशेषात्** । कुर्वन्नेवेह कर्माणीत्यविद्यावद्विषयमित्यर्थः ॥१३॥ विद्यावद्विषयत्वेऽप्यविरोधो विद्यास्तुत्यर्थत्वादित्याह—**स्तुतयेऽनुमतिर्वा** ॥ १४ ॥ अपि च विद्याफलं

आनन्दगिरीय—न्यायनिर्णयः ।

विद्याकर्मणोरविशेषोपादाने हेतुमाह—**यथेति** । उक्तार्थवाक्यस्य संसारिविषयत्वे फलितमाह—**एवमिति** ॥ ११ ॥ लिङ्गान्तरमनूद्य सूत्रमादत्ते—**यच्चेति** । यच्चैतदुक्तमित्यर्थः । सूत्रं विवृणोति—**आचार्येति** । मात्रग्रहणेनार्थज्ञानमात्रं व्यवच्छिन्नमिति मन्वानः शङ्कते—**नन्विति** । अविद्यत्वाद्विद्याहीनत्वादिति यावत् । मात्रग्रहणमात्मज्ञानापेक्षं न कर्मावबोधापेक्षमित्याह—**नेत्यादिना** । वेदार्थत्वादात्मनस्तज्ज्ञानमपि कर्मबोधवदधिकारेऽपेक्षितव्यमित्याशंक्याऽऽह—**यथेति** । पूर्वसूत्रव्याख्यासमाप्ताविति शब्दः ॥१२॥ लिङ्गान्तरमनूद्य सूत्रान्तरमादत्ते—**यदपीति** । अविद्वद्विषयं नियमविधानमिति व्याचष्टे—**कुर्वन्निति** ॥१३॥ विद्वद्विषयत्वमुपेत्य परिहारान्तरमाह—**स्तुतय इति** । एवं तर्हि प्रकरणमभग्नमिति मत्वा सूत्रं विभजते ।

"कुर्वन्नेवेह कर्माणि" [ ईशा० २ ] इत्यत्रापरो विशेष आख्यायते ॥ यद्यप्यत्र प्रकरणसामर्थ्याद्विद्वानेव कुर्वन्निति सम्बध्यते ॥ तथापि विद्यास्तुतये कर्मानुज्ञानमेतद्द्रष्टव्यम्। "न कर्म लिप्यते नरे" [ ईशा० २ ] इति हि वक्ष्यति। एतदुक्तं भवति॥यावज्जीवं कर्म कुर्वत्यपि पुरुषे विदुषि न कर्म लेपाय भवति-विद्यासामर्थ्यादिति। तदेवं विद्या स्तूयते ॥१४॥

## कामकारेण चैके ॥ १५ ॥

अपि च एके विद्वांसः प्रत्यक्षीकृतविद्याफलाः सन्तस्तदवष्टम्भात्फलान्तरसाधनेषु प्रजादिषु प्रयोजनाभावं परामृशन्ति-कामकारेणेति॥ श्रुतिर्भवति वाजसनेयिनाम् "एतद्ध स्म वै तत्पूर्वे विद्वांसः न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" [बृ० ४। ४। २२] इति। अनुभवारूढमेव च विद्याफलं, न क्रियाफलवत्कालान्तरभावीत्यसकृदावेदितम् ॥ अतोऽपि न विद्यायाः कर्मशेषत्वं, नापि तद्विषयायाः फलश्रुतेरयथार्थत्वं शक्यमाश्रयितुम् ॥ १५ ॥

## उपमर्दं च ॥ १६ ॥

अपि च कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चस्याऽविद्याकृतस्य विद्यासामर्थ्यात्स्वरूपोपमर्दमामनन्ति-"यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेद्" [ बृ० २। ४। १६ ] इत्यादिना। वेदान्तोदितात्मज्ञानपूर्विकां तु कर्माधिकारसिद्धिं प्रत्याशासा-

रत्नप्रभा।

अपूर्वरूपलेपाय न भवतीत्यर्थः ॥ श्रुतेरिति भावः ॥ १४ ॥ स्वेच्छातः कर्मसाधनप्रजादित्यागलिङ्गाच्च विद्या स्वतन्त्रफलेत्याह—कामेति ॥ तद् एतद्ब्रह्म येषां नः अस्माकम् अयम् अपरोक्ष आत्मा अयम् एव लोकः पुरुषार्थः, ते वयं किं प्रजादिना करिष्याम इत्यालोच्य कर्म त्यक्तवन्त इत्यर्थः ॥ ननु "अयं लोकः" इति ज्ञानफलस्य प्रत्यक्षत्वोक्तिरयुक्ता। कर्मफलवददृष्टत्वादित्यत आह—अनुभवेति ॥१५॥ न केवलमनुपयोगाद् ज्ञानस्य कर्मानङ्गत्वम्। किंतु कर्मनाशकत्वाच्चेत्याह-उपमर्दं चेति ॥ १६ ॥

भामती।

प्रत्यक्षं दर्शयन्ती श्रुतिः कालान्तरभाविफलकर्माङ्गत्वं विद्याया निराकरोतीत्याह-कामकारेण चैके। कामकार इच्छा ॥१५॥ उपमर्दं च। अधिकोपदेशादित्यनेनात्मन एव शुद्धबुद्धोदासीनत्वादय उक्ताः।

आनन्दगिरीय-न्यायनिर्णयः।

कुर्वन्नेवेति। विशेषमेव विशदयति-यद्यपीति। स्तुत्यर्थं कर्मानुज्ञानमित्यत्र वाक्यशेषमनुकूलयति-नेति। तथाऽपि कथं स्तुतिस्तत्राऽऽह-एतदिति। एवं कर्म कुर्वत्यपि त्वयि नेतो ब्रह्मभावाद्वियोगस्यादन्यथा संसारापत्तिरस्ति यतो न कर्म लिप्यत इति योजनां गृहीत्वोपसंहरति-तदेवमिति ॥ १४ ॥ पूर्वपक्षहेतूनेवमुन्मथ्य स्वपक्षे हेत्वन्तरमाह-कामेति। इतश्च विद्याया न कर्माङ्गतेति चकारार्थमाह-अपि चेति। स्वेच्छातः कर्मसाधनप्रजादित्यागलिंगादपि विद्यायाः स्वातन्त्र्यमिति हेत्वन्तरमेव स्फोरयति-एक इति। येषां नोऽस्माकमयमपरोक्षः सन्नात्माऽयं लोकः प्रत्यक्षं फलं ते वयं किं प्रजया करिष्याम इति निश्चित्याग्निहोत्रादि न हुतवन्त इत्यर्थः। मोक्षस्यादृष्टफलत्वात्कथं मुक्तत्वनिश्चयात्प्रजादित्यागसिद्धिस्तत्राऽऽह-अनुभवेति। ब्रह्मधीर्न क्रतुप्रयोगविधिनाऽऽदेया क्रत्वंगसंबन्धित्वेऽपि फलान्तरयोगित्वाद्गोदोहनवदिति मत्वाऽऽह-अतोऽपीति ॥ १५ ॥ अधिकोपदेशादित्यत्राऽऽत्मनोऽशनायाद्यत्ययात्तद्धीर्न कर्माङ्गमित्युक्तम्। इदानीमशेषक्रियादिविभागोपमर्दकत्वादपि न कर्मांगमित्याह-उपमर्दं चेति। इतश्चाऽऽत्मधीर्न कर्मांगमिति चकारार्थमाह-अपि चेति। हेत्वन्तरं स्फोरयति-कर्मेति। विद्यासामर्थ्यात्प्रपञ्चोपमर्दे फलितमाह-वेदान्तेति। आत्मज्ञानस्या-

 

नस्य कर्माधिकारोच्छित्तिरेव प्रसज्येत॥तस्मादपि स्वातन्त्र्यं विद्यायाः१६॥

## ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

ऊर्ध्वरेतस्सु च आश्रमेषु विद्या श्रूयते । न च तत्र कर्माङ्गत्वं विद्याया उपपद्यते । कर्माभावात् । न ह्यग्निहोत्रादीनि वैदिकानि कर्माणि तेषां सन्ति । स्यादेतद्-ऊर्ध्वरेतस आश्रमा न श्रूयन्ते वेद इति तदपि नास्ति॥ तेऽपि हि वैदिकेषु शब्देष्ववगम्यन्ते-"त्रयो धर्मस्कन्धाः" [ छां० २ । १३ । १ ] "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" [ छां० ५ । १० । १ ] "तपःश्रद्धे ये ह्युपवसन्त्यरण्ये" [ मुण्ड० १ । २ । ११ ] "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" [ बृ० ४ । ४ । २२ ] "ब्रह्मचर्यादेव प्रव्रजेद्" [ जाबा० ४ ] इत्येवमादिषु । प्रतिपन्नाप्रतिपन्नगार्हस्थ्यानामप्राकृतानपाकृतर्णानाञ्चोर्ध्वरेतस्त्वं श्रुतिस्मृतिप्रसिद्धम् ॥ तस्मादपि स्वातन्त्र्यं विद्याया इति ॥ १७ ॥ इति पुरुषार्थाधिकरणम् ॥ १ ॥

## परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥ (२) ॥

---

रत्नप्रभा ।

किंच कर्मतत्त्वज्ञाने, नाङ्गाङ्गीभूते, भिन्नाधिकारिस्थत्वाद्, राजसूयबृहस्पतिसववदित्याह-ऊर्ध्वेति ॥ त्रयो धर्मस्कन्धाः-कर्मप्रधाना आश्रमाः । चतुर्थो ब्रह्मसंस्थ इत्यर्थः ॥ " ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृण" इति श्रुतेः । ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः" इति स्मृतेश्च । प्राप्तगार्हस्थ्यस्यैव निरस्तर्णत्रयस्य पारिव्राज्यमित्यपि शङ्का न कार्या । "ब्रह्मचर्यादेव प्रव्रजेद्" इति "यमाश्रममिच्छेत्तमावसेद्" इति च विधिस्मृतिश्रुतिविरोधेन अर्थवादश्रुतिस्मृत्योरिविरक्तविषयत्वावगमादित्याह-प्रतिपन्नेति ॥ तस्मादिति । संन्यासनिष्ठत्वादित्यर्थः ॥ १७ ॥ ( १ ) ॥ संन्यासो नास्तीत्याक्षिपति-परामर्शं जैमिनिः ॥ ऊर्ध्वरेतः-

भामती ।

इह तु समस्तक्रियाकारकफलविभागोपमर्दं चेति ॥ १६ ॥ ऊर्ध्वरेतःसु च शब्दे हि । सुबोधम् ॥ ॥१७॥(१)॥ परामर्शं जैमिनिरचोदना चापवदति हि । सिद्ध ऊर्ध्वरेतसामाश्रमित्वे तद्विद्यानामकर्माङ्गतयापवर्गार्थे स्यात् । आश्रमित्वं त्वेषामन्यार्थपरामर्शमात्रान्न सिध्यति । विध्यभावात् । स्मृत्याचारप्रसि-

आनन्दगिरीय-न्यायनिर्णयः ।

ऽऽदीयमानकत्वङ्गविरोधित्वे फलितं निगमयति-तस्मादिति ॥ १६ ॥ विद्यास्वातन्त्र्ये हेत्वन्तरमाह-ऊर्ध्वरेतःस्विति । विद्याकर्मणी नाङ्गाङ्गीभूते मिथोऽव्यतिरेकित्वादनुगमननैष्ठिकव्रतवदिति मत्वा योजयति-ऊर्ध्वेत्यादिना । तथाऽपि कथं कर्माङ्गत्वं विद्याया व्यासेध्यते तत्राऽऽह-न चेति । तेषामपि स्नानादि कर्मास्तीत्याशंक्याऽऽह-न हीति । बाधितानुवृत्त्या तत्सद्भावेऽपि वैदिकाग्निहोत्राद्यभावान्न क्रत्वङ्गता ज्ञानस्येत्यर्थः । शब्दे हीतिसूत्रावयवव्यावर्त्यामाशंकामाह-स्यादिति । सूत्रावयवेनोत्तरमाह-तदपीति । कर्मानधिकृतान्धादिविषयं पारिव्राज्यमित्याशंक्याऽऽह-प्रतिपन्नेति । ऋणापाकरणे श्रुतिस्मृतिभ्यां गृहस्थस्यैवापाकृतर्णत्रयस्यैवोर्ध्वरेतःशब्दितमैथुनासमाचारोपलक्षितं पारिव्राज्यमित्याशंक्याऽऽह-अपाकृतेति । साक्षाद्विधिश्रुतिविरोधेऽर्थवादश्रुतिस्मृत्योर्बाध्यतेत्यभिप्रेत्योक्तम्-श्रुतीति । श्रुतिर्ब्रह्मचर्यादेव प्रव्रजेदित्याद्या दर्शिता । स्मृतिस्तु तस्याऽऽश्रमविकल्पमेके ब्रुवते यमिच्छेत्तमावसेदित्याद्योदाहार्या । ऊर्ध्वरेतःस्वाश्रमेषु विद्यायाः सिद्धौ फलितमाह-तस्मादिति । तस्याः स्वातंत्र्ये केवलायाः सिद्धा मुक्तिफलतेति वक्तुमितीत्युक्तम् ॥ १७ ॥ ( १ ) ॥ पूर्वाधिकरणावान्तरसूत्रेणाऽऽक्षेपलक्षणां संगतिं विवक्षन्नाक्षिपति-परामर्शमिति । ऊर्ध्वरेतःशब्दितं पारिव्राज्यं नानुष्ठेयमनुष्ठेयं वेतिभ्रान्ति-

**"त्रयो धर्मस्कन्धाः" [ छां० २ । २३ । १ ] इत्यादयो ये शब्दा ऊर्ध्वरेतसामाश्रमाणां सद्भावायोदाहृताः, न ते तत्प्रतिपादनाय प्रभवन्ति । यतः परामर्शमेषु शब्देष्वाश्रमान्तराणां जैमिनिराचार्यो मन्यते, न विधिम् ॥ कुतः ॥ न ह्यत्र लिंगादीनामन्यतमश्चोदनाशब्दोऽस्ति । अर्थान्तर-**

रत्नप्रभा ।

शब्दितं पारिव्राज्यमनुष्ठेयं न वेति मानभ्रान्तिमूलत्वाभ्यां संदेहे भ्रान्तिमूलत्वान्नानुष्ठेयमित्याह—**त्रय इति**॥ आश्रमाणामवान्तरभेदापेक्षया बहुवचनम् ॥ तथा च काण्वायनस्मृतिरर्थतोनुक्रम्यते—"(१)—गायत्रः, (२)—ब्राह्मः, ( ३ )—प्राजापत्यः, ( ४ )—बृहन्निति **ब्रह्मचारी—चतुर्विधः** । तत्रोपनयनादूर्ध्वं यस्त्रिरात्रमक्षारलवणाशी गायत्रीमधीते, स—**गायत्रः** । यस्तु वेदस्य ग्रहणान्तं ब्रह्मचर्यं चरति, स—**ब्राह्मः** । ऋतुकाले स्वदारगामी नित्यं परस्त्रीविमुखः—**प्राजापत्यः**,—संवत्सरं वेदव्रतकृद्वर्ती—**प्राजापत्यः** । आमरणं गुरुकुलवासी नैष्ठिकः—**बृहन्नित्युच्यते** । **गृहस्थोपि चतुर्विधः**—( १ )—वार्त्ताकः, ( २ )—शालीनः, ( ३ )—यायावरः, ( ४ )—घोरसंन्यासिकश्चेति ॥ तत्र कृषिगोरक्षादिकया वैश्यादिवृत्त्या जीवन्नित्यादिक्रियापरः—**वार्त्ताकवृत्तिः** ॥ **यायावरस्तु**—अयाचितवृत्तिर्याजनाध्यापनप्रतिग्रहविमुखः ॥ **शालीनस्तु**—षट्कर्मनिरतो याजनादिवृत्तिः संचयी ॥ उद्धृतपरिपूताभिरद्भिः कार्यं कुर्वन् प्रत्यहं कृतोञ्छवृत्तिर्ग्रामवासी **घोरसंन्यासिक** इत्युच्यते ॥ हिंसाविमुखत्वाद् **वानप्रस्थोपि चतुर्विधः**—( १ )—वैखानसः, ( २ )—औदुम्बरः, ( ३ )—वालखिल्यः, ( ४ )—फेनपश्चेति ॥ तत्राकृष्टपच्यौषधीभिर्ग्रामबहिष्कृताभिरग्निहोत्रादिं कुर्वन्—**वैखानस उच्यते** ॥ यस्तु प्रातरुत्थाय यां दिशं पश्यति, तत्रत्यौदुम्बरबदरीनीवारश्यामाकैः कर्मपरः, स—**औदुम्बरः** ॥ यस्तु जटावल्कलधारी अष्टौ मासान् वृत्त्युपार्जनं कृत्वा चातुर्मास्ये संगृहीताशी कार्त्तिक्यां संगृहीतपुष्पफलत्यागी, स—**वालखिल्यः** ॥ **फेनपास्तु**—शीर्णपर्णफलवृत्तयो यत्र क्वचिद्वसन्तः कर्मपरा इति ॥ **तथा परिव्राजकाश्चतुर्विधाः**—( १ )—कुटीचकाः, ( २ )—बहूदकाः, ( ३ )—हंसाः, ( ४ )—परमहंसाश्चेति ॥ तत्र स्वपुत्रगृहे भिक्षां चरन्तस्त्रिदण्डिनः—**कुटीचकाः** । **बहूदकास्तु**—त्रिदण्डिनः शिक्यजलपवित्रपादुकासनशिखायज्ञोपवीतकौपीनकषायवेषधरास्तीर्थान्यटन्तो भैक्ष्यं चरन्त आत्मानं प्रार्थयन्ते ॥ **हंसाः**—एकदण्डिनः शिखावर्जं यज्ञोपवीतधराः शिक्यकमण्डलुपाणयः ग्रामैकरात्रवासिनः कृच्छ्रचान्द्रायणपराः ॥ **परमहंसास्तु**—एकदण्डधराः मुण्डाः अयज्ञोपवीतिनः त्यक्तसर्वकर्माणः आत्मनिष्ठा इति ॥ अत्र **पूर्वपक्षे** संन्यासाभावाज्ज्ञानस्य स्वतन्त्रफलत्वासिद्धिः, **सिद्धान्ते** तद्भावात्तत्सिद्धिरिति फलभेदः । **स्कन्धाः** आश्रमाः । **आत्मानं** शरीरम् आचार्यस्य **कुले** गृहे **कलयन्** नैष्ठिक इत्यर्थः ॥ स्कन्धश्रुतौ आश्रमा न विधीयन्ते । किन्तु ब्रह्मसंस्थतास्तु-

भामती ।

द्धिश्च तेषां प्रत्यक्षश्रुतिविरोधादप्रमाणम् । निन्दति हि प्रत्यक्षा श्रुतिराश्रमान्तरं 'वीरहा वा एष देवानाम्' इत्यादिका । प्रत्यक्षश्रुतिविरोधे च स्मृत्याचारयोरप्रामाण्यमुक्तं 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्'

आनन्दगिरीय—न्यायनिर्णयः ।

प्रमाणमूलत्वाभ्यां संदेहे पूर्वपक्षयति—**त्रय इति** । अत्र शास्त्रीयसम्यग्ज्ञानस्यान्तरङ्गसाधनप्रसंगादनुष्ठेयमुच्यत इति स्फुटा पादादिसंगतिः । पूर्वपक्षे परिव्राजके विद्याप्रसिद्धेर्विभ्रमत्वात्तस्या न स्वातन्त्र्यसिद्धिः । सिद्धान्ते तस्यास्तत्र प्रामाणिकत्वात्तत्सिद्धिरिति स्वीकृत्य परामर्शं जैमिनिरिति व्याख्याय हेत्वाकांक्षायामचोदनेति हेतुत्वेन व्याचष्टे—**कुत इति** । पूषा प्रपिष्टभाग इतिवत्कल्प्यतां विधिरित्याशंक्य ह्मसंस्थतादिविधिपरत्वाद्वाक्यजातस्य नैवमिति चशब्दार्थमाह—**अर्थान्तरेति** । तत्र ब्रह्मसंस्थतादिविधि-

परत्वञ्चैतेषां प्रत्येकमुपलभ्यते । "त्रयो धर्मस्कन्धाः" इत्यत्र तावद् "यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः, ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्व एते पुण्यलोका भवन्ति" [ छां० २ । २३ । १ ] इति परामर्शपूर्वकमाश्रमाणामनात्यन्तिकफलत्वं संकीर्त्याऽऽत्यन्तिकफलतया ब्रह्मसंस्थता स्तूयते—"ब्रह्मसंस्थोऽमृतत्वमेति" [ छां० २ । २३ । २ ] इति ॥ ननु परामर्शेऽप्याश्रमा गम्यन्ते एव ॥ सत्यं गम्यन्ते ॥ स्मृत्याचाराभ्यां तु तेषां प्रसिद्धिः, न प्रत्यक्षायाः श्रुतेः ॥ अतश्च प्रत्यक्षश्रुतिविरोधे सत्यनादरणीयास्ते भविष्यन्त्यनधिकृतविषया वा ॥ ननु गार्हस्थ्यमपि सहैवोर्ध्वरेतोभिः परामृष्टं "यज्ञोऽध्ययनं दानमिति प्रथमः" इति ॥ सत्यमेवम् ॥ तथापि तु गृहस्थं प्रत्येवाग्निहोत्रादीनां कर्मणां विधानाच्छ्रुतिप्रसिद्धमेव तदस्तित्वम् ॥ तस्मात्स्तुत्यर्थ एवायं परामर्शः, न चोदनार्थः ॥ अपि चापवदति हि प्रत्यक्षा श्रुतिराश्रमान्तरं—"वीरहा वा एष देवानां योऽग्निमुद्वासयते" "आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः" [ तै० उ० १ । ११ । १ ] "नापुत्रस्य लोकोऽस्ति" इति

---

रत्नप्रभा ।

त्यर्थमनूद्यन्त इत्युक्ते शङ्कते—ननु **परामर्शेऽपीति** ॥ अनुवादेपेक्षितपुरोवादप्रतीतिमङ्गीकरोति—**सत्यमिति** ॥ प्रत्यक्षा स्कन्धश्रुतिरेव पुरोवादोऽस्तु, नानुवाद इत्यत आह—**स्मृतीति** ॥ तयोरपि इयमेव श्रुतिर्मूलमस्तु । क्लृप्तश्रुतौ विधिमात्रकल्पनालाघवात् ॥ अस्या अनुवादत्वे तु मूलत्वेन साग्निकानग्निकाश्रमश्रुतिस्तत्र विधिश्चेति द्वयकल्पनागौरवादित्यत आह—**अतश्चेति**॥ स्मार्त्तत्वादाश्रमाः प्रत्यक्षयावज्जीवकर्मविधिश्रुत्यविरुद्धा ग्राह्याः । विरुद्धास्तु अनग्निकाश्रमाः उपेक्ष्याः कर्मानधिकृतैरन्धादिभिर्वा अनुष्ठेया इत्यर्थः ॥ यावज्जीवश्रुतिविरोधाल्लाघवं त्याज्यमिति भावः॥स्कन्धश्रुतावनुवाद्यत्वाविशेषाद्गार्हस्थ्यवदितरेषामनुष्ठेयत्वमाशङ्क्य तस्य श्रौतत्वादनुष्ठानं, नेतरेषामश्रौतत्वात् । अतो ब्रह्मसंस्थतास्तुतिपरमिदं स्कन्धवाक्यमित्याह—न-

भामती ।

इति । तदेतत्सर्वमाह—**त्रयो धर्मस्कन्धा इत्यादिना** ॥ **अनधिकृतविषया वेति** । अन्धपङ्ग्वादयो हि ये नैमित्तिककर्मानधिकृतास्तान्प्रत्याश्रमान्तरविधिरिति । **अपि चापवदति हि** । न केवलमन्यपरतया

आनन्दगिरीय—न्यायनिर्णयः ।

परत्वं त्रय इत्यादिवाक्यस्य साधयति—**त्रय इत्यादिना** । अन्यत्र विहितस्यान्यत्र परामर्शादन्यत्र विधिकल्पनादिहैव कल्पना लघ्वीत्याशंकते—**नन्विति** । परामर्शस्यानुवादाख्यस्य पुरोवादापेक्षत्वात्तद्वशादाश्रमप्रतीतिमंगीकरोति—**सत्यमिति** । तर्हि तद्विषयश्रुतेरन्यत्राऽऽश्रितत्वाद्गौरवमित्याशंक्याऽऽह—**स्मृतीति** । तयोरपि श्रुतिमूलत्वाद्विधियुक्तश्रुतिकल्पनादिहैव तत्कल्पने लाघवमित्याशंक्याऽऽह—**अतश्चेति** । प्रत्यक्षश्रुतिर्यावज्जीवादिश्रुतिः । निरालम्बनत्वात्कथमपि सालम्बनत्वं युक्तमिति कल्पान्तरमाह—**अनधिकृतेति**। येऽन्धादयो नित्यादिकर्मस्वनधिकृतास्तद्विषया आश्रमान्तरस्मृतयस्तदाचाराश्चेत्यर्थः । आश्रमान्तराणां परामर्शेऽपि गार्हस्थ्यवत्प्रामाणिकत्वसिद्धेरनुष्ठेयतेति शंकते—**नन्विति** । परामर्शसाम्यमंगीकरोति—**सत्यमिति** । तर्हि प्रामाणिकत्वेनानुष्ठेयत्वमपि तुल्यं स्यादित्याशंक्य न परामर्शमात्राद्गार्हस्थ्यसिद्धिः । अपि तु प्रत्यक्षश्रुतिविधानादिति विशेषमाह—**तथाऽपीति** । गार्हस्थ्यमेकमेव श्रौतमिति स्थिते ब्रह्मसंस्थतास्तुत्यर्थमेव त्रय इत्याद्याश्रमान्तरवचनमित्युपसंहरति—**तस्मादिति** । निन्द्यमानत्वाच्चाऽऽश्रमान्तरमननुष्ठेयमित्याह—**अपि चेति** । तत्र सूत्रावयवं योजयति—**अपवदतीति** । तत्र त्रय इत्यादिवाक्यस्या-

"तत्सर्वं पशवो विदुः" इत्येवमाद्या ॥ तथा "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" [ छां० ५। १० १ ] "तपःश्रद्धे ये ह्युपवसन्त्यरण्ये" [ मुण्ड० १। २। ११ ] इति च देवयानोपदेशः, नाश्रमान्तरोपदेशः। सन्दिग्धश्चाश्रमान्तराभिधानम् "तप एव द्वितीयः" [ छां० २। २३। २ ] इत्येवमादिषु। तथा "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" [ बृ० ४। ४। २२ ] इति लोकसंस्तवोऽयं, न परिव्राज्यविधिः ॥ ननु "ब्रह्मचर्यादेव प्रव्रजेद्" इति विस्पष्टमिदं प्रत्यक्षं पारिव्राज्यविधानं जाबालानाम्॥ सत्यमेवमेतत्॥ अनपेक्ष्य त्वेतां श्रुतिमयं विचार इति द्रष्टव्यम्॥१८॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

अनुष्ठेयमाश्रमान्तरं बादरायण आचार्यो मन्यते। वेदेषु श्रवणादग्निहो-

---

रत्नप्रभा।

न्वित्यादिना ॥ तन्तुं सन्ततिम् ॥ तथा ये चेति ॥ तथा च छन्दोगास्तु—"देवयानं पन्थानं शंसन्ति "ये चेमेरण्ये श्रद्धातप इत्युपासते तेर्चिषमभिसंभवन्ति" [ छां० ५। १०।१ ] इति वाक्यशेषादित्यर्थः॥ स्कन्धशब्दस्य आश्रमेष्वरूढत्वाच्चात्र नाश्रमविधिरित्याह—संदिग्धं चेति ॥ तर्हि "प्रव्रजन्ति" इत्याश्रमविधिरित्यत आह—तथैतमिति ॥ आत्मलोको महीयान्। यदर्थमशक्यां प्रव्रज्यामपि कुर्वन्तीति स्तुतिर्वर्त्तमानापदेशादित्यर्थः॥ संप्रति पूर्वपक्षमाक्षिप्येयं श्रुतिर्नास्तीति कृत्वा चिन्त्यत इत्याह—नन्वित्यादिना ॥ १८ ॥ स्कन्धश्रुतावितराश्रमाः श्रुत्यन्तरविहिता अनूद्यन्ते, एतद्वाक्यानुवाद्यत्वाद्, गार्हस्थ्यवदिति सिद्धान्तयति—अनुष्ठेयमिति ॥ अनुवादस्य क्वचिद्विधिपूर्वकत्वे दृष्टान्तमाह—

भामती।

परामर्शस्याश्रमान्तरं न लभ्यते अपि त्वाश्रमान्तरनिन्दाद्वारेणापवादादपीत्यर्थः। स्यादेतत्। भवत्वेष परामर्शोऽन्यार्थः। ये चेमेऽरण्य इत्यादिभ्यस्त्वाश्रमान्तरं सेत्स्यतीत्यत आह—ये चेमेऽरण्य इति। अस्यापि देवपथोपदेशपरत्वान्नैतत्परत्वमित्यर्थः। न चान्यपरादपि स्फुटतराश्रमान्तरप्रत्यय इत्याह—संदिग्धं चेति। न हि तप एव द्वितीय इत्यत्राश्रमान्तराभिधायी कश्चिदस्ति शब्द इति। नन्वेतमेव प्रव्राजिन इति वचनादाश्रमान्तरं सेत्स्यतीत्यत आह—तथैतमेवेति। एतदपि लोकसंस्तवनपरमिति। अधिकरणारम्भमाक्षिप्य नास्ति प्रत्यक्षवचनमिति कृत्वा चिन्तेयमिति समाधत्ते—ननु ब्रह्मचर्यादेवेति ॥ १८॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः। भवत्वन्यार्थः परामर्शस्तथाप्येतस्मादाश्रमान्तराणि प्रतीयमानानि च नापाकरणमर्हन्ति। एवं तान्यपाक्रियेरन्यद्यस्मान्न प्रतीयेरन्। प्रतीयमानानि वा श्रुत्या बाध्येरन्। न

आनन्दगिरीय–न्यायनिर्णयः।

-न्यार्थत्वमुक्त्वा वाक्यान्तरस्यापि तद्वदेवार्थान्तरपरत्वमाह—तथेति। तेऽर्चिषमभिसंभवन्ति सूर्यद्वारेण ते विरजाः प्रयान्तीतिवाक्यशेषाद्देवयानोक्तिपरं तदित्यर्थः। आश्रमवाचकशब्दाभावाच्चार्थान्तरपरत्वमित्याह—संदिग्धं चेति। प्रव्रजन्तीत्याश्रमवाचिशब्ददृष्टेरनुष्ठेयं पारिव्राज्यमित्याशंक्याऽऽह—तथेति। एवंविशिष्टोऽयमात्मलोको यदेनं साक्षात्कर्तुमिच्छन्तो दुरनुष्ठेयामपि प्रव्रज्यां कुर्वन्तीति स्तुतिर्न तद्विषयो विधिर्वर्तमानापदेशादित्यर्थः। पूर्वपक्षमाक्षिपति—नन्विति। प्रत्यक्षविधानमंगीकरोति—सत्यमिति। तर्हि पूर्वपक्षासिद्धिरित्याशंक्य नास्तीदं विधानमिति कृत्वा चिन्त्यमित्याह—अनपेक्ष्येति ॥ १८ ॥ सिद्धान्तसूत्रमवतार्य व्याकरोति—अनुष्ठेयमिति। पूर्वपक्षमनुभाष्य तन्निरासप्रतिज्ञां विवृणोति—वेदेष्विति।

त्रादीनाञ्चावश्यानुष्ठेयत्वात् । तद्विरोधादनधिकृतानुष्ठेयमाश्रमान्तरमिति हीमां मतिं निराकरोति गार्हस्थ्यवदेवाऽऽश्रमान्तरमप्यनिच्छता प्रतिपत्तव्यमिति मन्यमानः ॥ कुतः ॥ **साम्यश्रुतेः** ॥ समाना हि गार्हस्थ्येनाऽऽश्रमान्तरस्य परामर्शश्रुतिर्दृश्यते—"त्रयो धर्मस्कन्धाः" [ छां० २ । २३ । १ ] इत्याद्या । यथा—इह श्रुत्यन्तरविहितमेव गार्हस्थ्यं परामृष्टम्, एवमाश्रमान्तरमपीति प्रतिपत्तव्यम् । यथा च—शास्त्रान्तरप्राप्तयोरेव निवीतप्राचीनावीतयोः परामर्श उपवीतविधिपरे वाक्ये । तस्मात्तुल्यमनुष्ठेयत्वं गार्हस्थ्येनाश्रमान्तरस्य॥ तथा "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" [ बृ० ४ । ४ । २२ ] इत्यस्य वेदानुवचनादिभिः समभिव्याहारः । "ये चेमेऽरण्ये श्रद्धातप इत्युपासते [ छां० ५ । १०।१ ]

---

रत्नप्रभा ।

**यथा चेति**। "निवीतं मनुष्याणां प्राचीनावीतं पितॄणां उपवीतं देवानाम्" इति वाक्ये दैवे कर्मण्युपवीतं विधीयते। तत्स्तुतये द्वयमनूद्यते । मानुषक्रियासु देहार्धवस्त्रबन्धनाख्यनिवीतस्य सौकर्यार्थतया प्राप्तत्वात्, पित्र्ये कर्मणि प्राचीनावीतस्यापि विध्यन्तरप्राप्तत्वादित्यर्थः ॥ वाक्यान्तरे च साक्षादेव पारिव्राज्यविधिर्विधेयैः साहित्यादित्याह—**तथैतमेवेति** ॥ **अस्येति**—पारिव्राज्योक्तिः । विधेयवेदानुवचनादिसाहित्यात्पारिव्राज्यस्य विधेयतेत्यर्थः ॥ वाक्यान्तरेपि साम्यश्रुतिमाह—**ये चेति** ॥ **अस्येति**—वानप्रस्थोक्तिः ॥ विधेयपञ्चाग्निविद्यया वानप्रस्थस्य सहोक्त्या तदपि विधेयमित्यर्थः ॥ श्रुतत्रित्वान्यथानुपपत्त्या स्कन्धशब्दस्य आश्रमपरत्वनिश्चय

भामती ।

तावन्न प्रतीयन्ते । तथाहि—त्रयो धर्मस्कन्धा इति स्कन्धत्रित्वं प्रतिज्ञातम् । तत्र स्कन्धशब्दो यद्याश्रमपरो न स्यादपि तु समूहवचनस्ततो धर्माणां यज्ञादीनां प्रातिस्विकोत्पत्तीनां किमपेक्ष्य त्रित्वसंख्या सुव्यवस्थाप्येत । एकैकाश्रमोपसंगृहीतास्त्वाश्रमाणां त्रित्वाच्छक्याश्रित्वे व्यवस्थापयितुमित्याश्रमत्रित्वप्रतिज्ञोपपत्तिः । तत्र यज्ञादिर्लिङ्गो गृहाश्रम एको धर्मस्कन्धो ब्रह्मचारीति द्वितीयस्तप इति च तपःप्रधानात्तु वानप्रस्थाश्रमान्नान्यः, ब्रह्मसंस्थ इति च पारिशेष्यात्परिव्राडिति वक्ष्यति । तस्मादन्यपरादपि परामर्शादाश्रमान्तराणि

आनन्दगिरीय—न्यायनिर्णयः ।

तत्र प्रश्नपूर्वकं हेतुमाह—**कुत इति** । तस्याक्षरार्थमाह—**समा हीति** । तस्यैव तात्पर्यार्थमाह—**यथेति** । त्रयो धर्मस्कन्धा इत्यत्रोर्ध्वरेतस आश्रमाः श्रुत्यन्तरप्रसिद्धा एव परामृश्यन्त एतद्वाक्यपरामृष्टत्वाद्गार्हस्थ्यवदित्यर्थः । परामर्शस्य विधिपूर्वकत्वे दृष्टान्तमाह—**यथेति** । निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुत इत्यत्रोपवीतविधिपरे वाक्ये विध्यन्तरसिद्धयोरेव निवीतप्राचीनावीतयोर्यथा परामर्शस्तथाऽत्रापीत्यक्षरार्थः । निवीतं मनुष्याणामित्यादि दर्शपूर्णमासयोः श्रुतं, तत्रोपवीतं विधीयत एवेतरयोस्तु विधिरर्थवादो वेति संशये सत्यपूर्वार्थलाभान्मनुष्यशब्दस्य च मनुष्यप्राधान्यवाचित्वादातिथ्ये कर्मणि निवीतं पित्र्ये च प्राचीनावीतमिति प्राप्ते मनुष्याणां क्रियासु सौकर्याय कण्ठलम्बिवस्त्रधारणस्य वा देहार्धबन्धनस्य वा निवीतस्य प्राप्तत्वात्प्राचीनावीतस्य च पितृयज्ञे वाक्यान्तरेण प्राप्तेस्तदनुवादेन निवीतमित्यादिरुपवीतं स्तोतुमर्थवाद इति प्राच्यां मीमांसायां स्थितम् । तथैव परामर्शश्रुतावपि त्रय इत्याद्यायां गार्हस्थ्यवदाश्रमान्तरमपि विहितमेवान्यत्र परामृश्यते तस्य विध्यपेक्षत्वादित्यर्थः । साम्यश्रुतिफलमाह—**तस्मादिति** । त्रय इत्यत्राऽऽश्रमान्तरस्य गार्हस्थ्येन साम्यश्रुतिरुक्ता, संप्रति पारिव्राज्यवाक्येऽपि साम्यश्रुतिमाह—**तथेति** । अस्येति पारिव्राज्योक्तिः । विधेयसाहित्यादस्यापि विधेयतेत्यर्थः । वाक्यान्तरेऽपि साम्यश्रुतिमाह—**ये चेति** । अस्येति वानप्रस्थोक्तिः । विधेयपञ्चाग्निविद्यया

**इत्यस्य च पञ्चाग्निविद्यया ॥ यत्तूक्तं "तप एव द्वितीयः" [ छां० २ ।२३। २ ] इत्यादिष्वाश्रमान्तराभिधानं सन्दिग्धमिति ॥ नैष दोषः ॥ निश्चयकारणसद्भावात् ॥ "त्रयो धर्मस्कन्धाः" इति हि स्कन्धत्रित्वं प्रतिज्ञातम् । न च यज्ञादयो भूयांसो धर्मा उत्पत्तिभिन्नाः सन्तोऽन्यत्राश्रमसम्बन्धात् त्रित्वेऽन्तर्भावयितुं शक्यन्ते । तत्र यज्ञादिलिङ्गो गृहाश्रम एको धर्मस्कन्धो निर्दिष्टः । ब्रह्मचारीति च स्पष्ट आश्रमनिर्देशः । तप इत्यपि कोऽन्यस्तपःप्रधानादाश्रमाद्धर्मस्कन्धोऽभ्युपगम्येत । "ये चेमेऽरण्ये" इति चाऽरण्यलिङ्गाच्छ्रद्धातपोभ्यामाश्रमगृहीतिः । तस्मात्परामर्शेऽप्यनुष्ठेयमाश्रमान्तरम् ॥ १९ ॥**

## विधिर्वा धारणवत् ॥ २० ॥

रत्नप्रभा ।

इत्याह—**यत्तूक्तमित्यादिना** ॥ **उत्पत्तिभिन्ना इति** । यजेताध्येतव्यं दद्यादिति पृथगुत्पन्ना इत्यर्थः॥ ॥ १९ ॥ स्कन्धश्रुतेरनुवादकत्वमंगीकृत्य विध्यन्तरकल्पनेन आश्रमा अनुष्ठेया इत्युक्तम् ॥ इदानीं विधित्वं तस्या एव कल्प्यम्, लाघवादित्याह—**विधिर्वेति** ॥ यावज्जीवादिश्रुतेरविरक्तविषयत्वान्न लाघवबाधकत्वमिति भावः ॥ अल्पफलत्वेनाश्रमत्रयनिन्दया ब्रह्मसंस्थतास्तुतिपरमेकमिदं वाक्यं भाति ॥ तत्राश्रमविधि-

भामती ।

प्रतीयमानानि देवताधिकरणन्यायेन न शक्यन्तेऽपाकर्तुम् । न च प्रत्यक्षश्रुतिविरोधो वीरहा वेत्यादेः प्रतिपन्नगार्हस्थ्यं प्रमादादज्ञानाद्वाग्निमुद्वासयितुं प्रवृत्तं प्रत्युपपत्तेः । एवं च अविरोधे सिद्धवत्परामर्शादाश्रमान्तराणां शास्त्रान्तरसिद्धिं वा कल्पयिष्यामो यथोपवीतविधिपरे वाक्ये 'उपव्ययते देवलक्ष्ममेव तत्कुरुते'इत्यत्र निवीतं मनुष्याणां प्राचीनावीतं पितॄणामिति शास्त्रान्तरसिद्धयोर्निवीतप्राचीनावीतयोः परामर्श इति॥१९॥ **विधिर्वा धारणवत्** । यद्यपि ब्रह्मसंस्थत्वस्तुतिपरतयाऽस्य संदर्भस्यैकवाक्यता गम्यते । संभवन्त्यां चैकवाक्यतायां वाक्यभेदोऽन्याय्यः । तथाप्याश्रमान्तराणां पूर्वसिद्धेरभावात्परामर्शानुपपत्तेः, अपरामर्शे च स्तुतेरसंभवेन किम्परतया एकवाक्यतास्त्विति तां भंक्त्वा धारणवद्वरमपूर्वत्वाद्विधिरेवास्तु । यथा 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इत्यत्र सत्यामप्यधोधारणेनैकवाक्यताप्रतीतौ विधीयत एवोपरिधारणमपूर्वत्वात् । तथोक्तम्—'विधिस्तु धारणेऽपूर्वत्वात्' इति । तथेहाप्याश्रमान्तरपरामर्शश्रुतिर्विधिरेवेति कल्प्यते । संप्रति परामर्शेऽपीतरेषामाश्रमाणां ब्रह्मसंस्थता संस्तवसामर्थ्यादेव विधातव्या । न

आनन्दगिरीय—न्यायनिर्णयः ।

तस्य सहोक्तिरस्ति तेन तद्वदेव वानप्रस्थमनुष्ठेयमित्यर्थः । परोक्तिमुद्भाव्य प्रत्याह—**यत्त्वित्यादिना** । किं तन्निश्चयकारणं तदाह—**त्रय इति** । स्कन्धशब्दस्य समूहवाचित्वेऽपि त्रित्वप्रतिज्ञा स्यादित्याशंक्याऽऽह—**न चेति** । यजेत दद्यादित्याद्युत्पत्तिविधिभिन्नाः सन्तो बहवो धर्मा नाऽऽश्रमसंबन्धमन्तरेण त्रित्वेऽन्तर्भावयितुं शक्यन्ते।यद्याश्रमपरः स्कन्धशब्दो न स्यान्न स्याच्चतो यज्ञादीनां त्रित्वं तेषामधिकृतत्वादतः स्कन्धशब्दस्य समूहार्थत्वायोगात्त्रित्वमेव स्कन्धानामाश्रमत्वनिश्चायकमित्यर्थः । कथं तर्हि तेषामाश्रमाणां विभागस्तत्राऽऽह—**तत्रेति**। वाक्यान्तरेऽपि निश्चायकं दर्शयति—**ये चेति**। परोक्तं निरस्य स्वमतमुपसंहरति—**तस्मादिति** ॥ १९ ॥ परामर्शमुपेत्यानुष्ठेयत्वमुक्तमिदानीं विधिरेवायमित्याह—**विधिर्वेति** । प्रतिज्ञां विभ-

विधिर्वाऽयमाश्रमान्तरस्य न परामर्शमात्रम् ॥ ननु विधित्वाभ्युपगमे एकवाक्यताप्रतीतिरुपरुध्येत । प्रतीयते चात्रैकवाक्यता । पुण्यलोकफलास्त्रयो धर्मस्कन्धाः । ब्रह्मसंस्थता त्वमृतत्वफलेति ॥ सत्यमेतत् ॥ सतीमपि त्वेकवाक्यताप्रतीतिं परित्यज्य विधिरेवाभ्युपगन्तव्यः । अपूर्वत्वात् । विध्यन्तरस्यादर्शनात् । विस्पष्टाच्चाश्रमान्तरप्रत्ययाद्गुणवादकल्पनयैकवाक्यत्वप्रयोजनानुपपत्तेः, "धारणवत्" ॥ यथा–"अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति" इत्यत्र सत्यामप्यधोधारणेनैकवाक्यताप्रतीतौ विधीयत एवोपरिधारणम् । अपूर्वत्वात् । तथा चोक्तं शेषलक्षणे–"विधिस्तु धारणेऽपूर्वत्वाद्" [ जै० सू० ३ । ४ । १५] इति ॥

रत्नप्रभा ।

चतुष्टयमयुक्तमिति शङ्कते–नन्विति ॥ आश्रमाणां विध्यन्तरप्राप्त्यभावादनुवादायोगात्, स्तुतिलक्षणादोषाच्च,–वरं विस्पष्टाश्रमविधिभेदकल्पनम् । अपूर्वत्वादित्याह–सत्यमित्यादिना ॥ प्रतीतैकवाक्यत्वभंगेन विधिभेदकल्पने दृष्टान्तमाह–धारणवदिति ॥ महापितृयज्ञे प्रेताग्निहोत्रे स्रुचि प्रक्षिप्तं हविराहवनीयं प्रति यदा नीयते, तदा "तस्य हविषः अधस्तात्समिधं धारयन्ननुद्रवेद्" इति विहिताधोधारणस्तावकतया "उपरि हि" इत्यस्यैकवाक्यत्वसंभवेपि दैवे होमे स्रुग्दण्डोपरि समिद्धारणे विधिरेव । अपूर्वत्वादिति वाक्यभेदस्तृतीयाध्याये जैमिन्याचार्येणोक्त इत्यर्थः ॥ एवं चत्वार आश्रमा विधीयन्त इति पक्ष

भामती ।–०

आनन्दगिरीय–न्यायनिर्णयः ।

जते–विधिरिति । स्मृत्याचारयोराश्रमचतुष्टयनिविष्टयोर्भ्रान्तित्वायोगान्मूलकल्पनायां विधियुक्तवाक्यकल्पनाल्लघीयस्त्वम् इत्यादिष्वाश्रमविधिकल्पनमिति भावः । अल्पफलत्वेनाऽऽश्रमत्रयनिन्दया ब्रह्मसंस्थतास्तुतेरेकवाक्यत्वनिश्चयात्तद्भंगेनात्राऽऽश्रमविधिकल्पनमयुक्तमिति शंकते–नन्विति । एकवाक्यताधीरेव कथं तत्राऽऽह–प्रतीयते चेति । एकवाक्यत्वसंभवे तद्भेदो न युक्तिमानित्यंगीकरोति–सत्यमिति । आश्रमाणां पूर्वसिद्धेरभावात्तत्परामर्शेन स्तुतेरयोगादेकवाक्यतैवात्रायुक्तेत्याह–सतीमिति । किंच, विधियुक्तवाक्यान्तरकल्पनायामाश्रमान्तराणां विहितत्वोपगमप्रसक्त्या स्वपक्षहानात्तत्कल्पनादिह वाभीष्टे वाक्ये विधिमात्रकल्पना युक्तेत्याह–विध्यन्तरस्येति । किंच, मुख्यमाश्रमान्तरप्रत्ययं त्यक्त्वा स्तुतिलक्षणयैकवाक्यत्वकल्पनायोगाद्वाक्यभेदेन विधिरेवायमित्याह–विस्पष्टाच्चेति । एकवाक्यताज्ञानेऽपि तत्त्यागेनापूर्वार्थे विधौ दृष्टान्तमाह–धारणवदिति । महापितृयज्ञे दिष्टंगताग्निहोत्रे च श्रुतं वाक्यमुदाहरति–अधस्तादिति । उदाहरणव्याख्योपयोगित्वेन वाक्यस्याभीष्टमर्थमाह–अत्रेति । प्रकृते कर्मविशेषे स्रुचि प्रक्षिप्तं हविराहवनीयं प्रति यदा नीयते तदा पित्र्ये होमे तस्य हविषोधस्तात्समिधं धारयन्ननुद्रवेदित्यधोधारणस्य विहितत्वादुपरिहीतितच्छेषानुवादतयातदेकवाक्यत्वसिद्धावुपरिष्टात्समिद्धारणस्यापूर्वत्वाद्दैवे होमे वाक्यभेदं कृत्वा तद्विधीयत इत्यर्थः । उक्तेऽर्थे तार्तीयं सूत्रमुदाहरति–तथेति । उपरि हि देवेभ्यो धारयतीत्यत्रोपरिधारणं विधीयते न वेति संदेहे धारयतीतिवर्तमानोपदेशादुपरि हीति हिशब्दश्रुतेश्चोपरि समिधः प्राप्तेर्हविषश्चाभ्यर्हितद्रव्यत्वेन येन केनाऽऽच्छादनप्राप्तौ स्रुग्दण्डे समिधमुपसंगृह्यानुद्रवतीतिवाक्यान्तरप्राप्तसमिन्नियमनादयमनुवादो न विधिरिति प्राप्ते स्रुग्दण्डे समिधमुपसंगृह्येति हविषः प्राग्देशे समिद्धारणस्य प्राप्तत्वेऽपि तस्मादुपरि तद्धारणस्याप्राप्तेर्भक्त्वा हिशब्दं पञ्चमलकारेण विधिरेवायमित्याह–विधिस्त्विति । दृष्टान्त-

१ समिद्धारणविधिताधिकरणे ।

तद्वदिहाप्याश्रमपरामर्शश्रुतिविधिरेवेति कल्प्यते । यदापि परामर्श एवायमाश्रमान्तराणां, तदापि ब्रह्मसंस्थत्वं तावत्संस्तवसामर्थ्यादवश्य-विधेयाऽभ्युपगन्तव्या । सा च किं चतुर्ष्वाश्रमेषु यस्य कस्यचिद्-आहोस्विद्-परिव्राजकस्यैवेति विवेक्तव्यम् ॥ यदि च ब्रह्मचार्यान्तेष्वाश्रमेषु परामृश्यमानेषु परिव्राजकोऽपि परामृष्टः, ततश्चतुर्णामप्याश्रमाणां परामृष्टत्वाविशेषादनाश्रमित्वानुपपत्तेश्च यः कश्चिच्चतुर्ष्वाश्रमेषु ब्रह्मसंस्थो भविष्यति ॥ अथ न परामृष्टः, ततः परिशिष्यमाणः परिव्राडेव ब्रह्मसंस्थ इति सेत्स्यति । तत्र तपश्शब्देन वैखानसग्राहिणा

भा ।

उक्तः ॥ संप्रत्याश्रमत्रयानुवादेन पारिव्राज्यमेकमेव विधीयत इति पक्षान्तरमाह—यदापीत्यादिना ॥ ब्रह्मसंस्थताविधौ कथं पारिव्राज्यविधिरित्याशङ्क्य विचारयति—सा चेति ॥ ननु "त्रयः" इति वाक्य आश्रमचतुष्टयस्याप्रातेर्निर्बीजोयं विचार इत्याशङ्क्य तद्वाक्ये परिव्राजकः परामृष्टो न वेति संदिह्य आद्ये पूर्वपक्षप्राप्तिमाह—यदि चेति ॥ नन्वनाश्रम्येव ब्रह्मसंस्थः किं न स्यादत आह—अनाश्रमित्वेति ॥ "अनाश्रमी न तिष्ठेत" इति निषेधादिति भावः ॥ द्वितीये—सिद्धान्तप्राप्तिमाह—अथेति ॥ एवं परामर्शतदभावाभ्यां संशयमुक्त्वा पूर्वपक्षयति—तत्रेति ॥ वनस्थस्य ह्यसाधारणं कृच्छ्रादिकं तप इति प्रसि-

भामती ।

खल्वविधेयं संस्तूयते तदर्थत्वात्संस्तवस्येत्याह—यदापीति । अत्रावान्तरविचारमारभते—सा च किं चतुर्ष्विति । विचारप्रयोजनमाह—यदि चेति । ननु अनाश्रम्येव ब्रह्मसंस्थो भविष्यतीत्यत आह—अनाश्रमित्वेति । तत्र पूर्वपक्षमाह—तत्र तपःशब्देनेति । अयमभिसंधिः—यदि तावद्ब्रह्मसंस्थ इति पदं प्रत्यस्तमितावयवार्थं परिव्राजकेऽश्वकर्णादिपदवद्रूढं तदाश्रमप्राप्तिमात्रेणैवामृतीभाव इति न तद्भावाय ब्रह्मज्ञानमपेक्षेत। तथा च 'नान्यः पन्था विद्यतेऽयनाय'इति विरोधः। न च संभवत्यवयवार्थे समुदायशक्तिकल्पना । तस्माद्ब्रह्मणि संस्थास्येति ब्रह्मसंस्थः । एवं च चतुर्ष्वाश्रमेषु यस्यैव ब्रह्मणि निष्ठत्वमाश्रमिणः स ब्रह्मसंस्थोऽमृतत्वमेतीति युक्तम् । तत्र तावद्ब्रह्मचारिगृहस्थौ स्वशब्दाभिहितौ, तपःपदेन च तपःप्रधानतया भिक्षुवानप्रस्थावुपस्थापितौ । भिक्षुरपि हि समधिकशौचाष्टग्रासीभोजननियमाद्भवति वानप्रस्थवत्तपःप्रधानः । न च गृहस्थादेः कर्मिणो ब्रह्मनिष्ठत्वासंभवः। यदि तावत्कर्मयोगः कर्मिता सा भिक्षोरपि कायवाङ्मनोभिरस्ति । अथ ये न ब्रह्मार्पणेन कर्म कुर्वन्ति किंतु कामार्थितया ते कर्मिणः । तथा सति गृहस्थादयोऽपि ब्रह्मार्पणेन कर्म कुर्वाणा न कर्मिणः । तस्माद्ब्रह्मणि तात्पर्यं ब्रह्मनिष्ठता न तु कर्मत्यागः । प्रमाणविरोधात् । तपसा च द्वयोराश्रमयोरेकीकरणेन त्रय इति त्रित्वमुपपद्यते । एवं च त्रयोऽप्याश्रमा अब्रह्मसंस्थाः

आनन्दगिरीय–न्यायनिर्णयः ।

मुक्त्वा दार्ष्टान्तिकमाह—तद्वदिति । परामर्शपक्षमेवावलम्ब्याऽऽश्रमाणां परामर्शेऽपि पारिव्राज्यस्य विधिरेष्टव्योऽन्यथा स्तुत्ययोगादित्याह—यदेति । ब्रह्मसंस्थताया यत्स्तूयते तद्विधीयत इति न्यायाद्विधेयत्वेऽपि पारिव्राज्यस्य किं स्यादित्याशङ्क्य तदर्थं विचारमवतारयति—सा चेति । पक्षद्वयस्य निर्बीजत्वान्नेदं विचार्यमित्याशंक्य परामर्शश्रुतौ परिव्राजकोऽपि परामृष्टो न वेति विकल्प्याऽऽद्यमनूद्य प्रथमपक्षप्राप्तिमाह—यदीति । परामृष्टत्वाविशेषाच्चतुर्ष्वाश्रमेषु यः कश्चिद्ब्रह्मसंस्थो भविष्यतीति संबन्धः । ब्रह्मसंस्थोऽनाश्रमी कस्मान्न स्यादित्याशंक्यानाश्रमित्वस्य निन्द्यमानत्वादित्याह—अनाश्रमित्वेति । द्वितीयमनूद्य द्वितीयपक्षप्राप्तिमाह—अथेति । पक्षयोः संभावनया विचारारम्भमुक्त्वा पूर्वपक्षमाह—तत्रेति ।

 

**परामृष्टः परिव्राडपीति केचित् ॥ तदयुक्तम् ॥ न हि सत्यां गतौ वानप्रस्थविशेषणेन परिव्राजको ग्रहणमर्हति । यथात्र ब्रह्मचारिगृहमेधिनावसाधारणेनैव स्वेनस्वेन विशेषणेन विशेषितौ, एवं भिक्षुवैखानसावपीति युक्तम् । तपश्चासाधारणो धर्मो वानप्रस्थानाम् । कायक्लेशप्रधानत्वात् । तपश्शब्दस्य तत्र रूढेः। भिक्षोस्तु धर्म इन्द्रियसंय-**

---

रत्नप्रभा ।

द्वम् ॥ तेनैकेन तपःशब्देनोभयग्रहणमन्याय्यम् । भिक्षोस्तपस्वित्वप्रसिद्ध्यभावाच्च ॥ तथा च—यज्ञाद्यसाधारणधर्मद्वारा गृहस्थाद्याश्रमत्रयवद् ब्रह्मसंस्थशब्देनैव ब्रह्मनिष्ठाप्रधानश्चतुर्थाश्रमो गृह्यते । स च स्तुतिसामर्थ्यात् सह ब्रह्मसंस्थया विधीयत इति सिद्धान्तयति—**तदयुक्तमित्यादिना** ॥ पृथग्व्यपदेशाच्च ब्रह्मसंस्थः।

भामती ।

सन्तः पुण्यलोकभाजो भवन्ति। यः पुनरेतेषु ब्रह्मसंस्थः सोऽमृतत्वभागिति। न च येषां पुण्यलोकभाक्त्वं तेषामेवामृतत्वमिति विरोधः । यथा देवदत्तयज्ञदत्तौ मन्दप्रज्ञावभूतां संप्रति तयोर्यज्ञदत्तस्तु शास्त्राभ्यासात्पटुप्रज्ञो वर्तते इति तथेहापि य एवाब्रह्मसंस्थाः पुण्यलोकभाजस्त एव ब्रह्मसंस्था अमृतत्वभाज इत्यवस्थाभेदादविरोधः । तथा च ब्रह्मसंस्थ इति यौगिकं पदं प्रकृतविषयं भविष्यति । यथा—आग्नेय्याग्नीध्रमुपतिष्ठत इत्यत्र विनियुक्तापि प्रकृतैवाग्नेयी गृह्यते । न च विनियुक्तविनियोगविरोधः । यदि ह्यत्राग्नेय्युपदिश्येत ततो यथा प्रतीता तथोद्दिश्येत, विनियुक्ता च प्रतीतिर्भवेदिति विनियुक्तविनियोगविरोधः । इह तु आग्नीध्रोपस्थाने सा विधेयत्वेन विनियुज्यते न तूद्दिश्यते । विधेयत्वेन च विनियोगे आग्नेयीपदार्थापेक्षणात्प्रकृतातिक्रमे प्रमाणाभावात् । तावता च शास्त्रोपपत्तेर्नाप्रकृतानामपि ग्रहणसंभवः । न च यातयामतया न विनियोगः । वाचःस्तोमे सर्वेषामेव मन्त्राणां विनियोगादन्यत्राप्यविनियोगप्रसङ्गात् । तथेहापि प्रकृता एवाश्रमा बुद्धिविपरिवर्तिनः परामृश्यन्ते नानुक्तः परिव्राडेवेति पूर्वः पक्षः राद्धान्तमुपक्रमते—**तदयुक्तम् । न हि सत्यां गतौ वानप्रस्थविशेषणेनेति** । यथोपक्रान्तं तथैव परिसमापनमुचितम् । यत्संख्याकाश्च ये प्रसिद्धास्ते तत्संख्याका एव कीर्त्यन्ते इति चोचितम् । न तु सत्यां गतावुत्सर्गस्यापवादो युज्यते । असाधारणेनैकैकेन लक्षणेनैकैक आश्रमो वक्तुमुपक्रान्त इति तथैव समापनमुचितम् । न तु साधारणासाधारणाभ्यामुपक्रमसमाप्ती श्लिष्येते। न च तपो नाम नासाधारणं वानप्रस्थानामित्यत आह—**तपश्चासाधारण इति** । न खलु पराकादिभिः कायक्लेशप्रधानो यथा वानप्रस्थस्तथा भिक्षुः सत्यप्यष्टग्रासादिनियमे । न च शौचसन्तोषशमदमादयस्तपःपक्षे वर्तन्ते तत्र वृद्धानां तपःप्रसिद्धेरसिद्धेः । अत एव वृद्धाः तपसो भेदेन शौचादीनाचक्षते—'शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' इति । सिद्धसंख्याभेदेषु

आनन्दगिरीय—न्यायनिर्णयः ।

परिव्राजकस्यापि यमनियमादितपःसंभवादित्यर्थः । आश्रमाणामेकैकशोऽसाधारणधर्मरूपदर्शनायोपक्रमात्तदनुसारेण चोपसंहारस्य युक्तत्वात्तपःशब्देन नोभयग्रहणमिति दूषयति—**तदिति** । किं तर्हि युक्तं तदाह—**यथेति** । कस्तर्हि तपःशब्दार्थस्तत्राऽऽह—**तपश्चेति** । तेषां तत्प्रधानत्वेऽपि तपःशब्दस्य साधारण्यं किं न स्यात्तत्राऽऽह—**तपःशब्दस्येति** । तस्य कृच्छ्रादौ रूढेरन्यत्र तदभावात्तेन वानप्रस्थ एव परामृश्यत इत्यर्थः । कथं तर्हि परिव्राजकधर्मेऽपि तपःशब्दप्रयोगस्तत्राऽऽह—**भिक्षोरित्विति** ।

मादिलक्षणः, नैव तपःशब्देनाभिलप्येत। चतुष्ट्वेन च प्रसिद्धा आश्रमास्त्रित्वेन परामृश्यन्त इत्यन्याय्यम्॥ अपि च भेदव्यपदेशोऽत्र भवति—"त्रय एते पुण्यलोकभाजः, एकोऽमृतत्वभाग्" इति। पृथक्त्वे च व्यपदेशोऽवकल्पते। न ह्येवं भवति—देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ, अन्यतरस्तु तयोर्महाप्रज्ञ इति। भवति त्वेवं देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ, विष्णुमित्रस्तु महाप्रज्ञ इति॥तस्मात्पूर्वे त्रय आश्रमिणः पुण्यलोकभाजः,परिशिष्यमाणः परिव्राडेवामृतत्वभाक्॥ कथं पुनर्ब्रह्मसंस्थशब्दो योगात्प्रवर्तमानः सर्वत्र सम्भवन्परिव्राजक एवावतिष्ठेत। रूढ्यभ्युपगमे वाश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इति॥ अत्रोच्यते॥ ब्रह्मसंस्थ इति हि ब्रह्मणि परिसमाप्तिरनन्यव्यापारतारूपं तन्निष्ठत्वमभिधीयते। तच्च त्रयाणामाश्र-

रत्नप्रभा।

पूर्वोक्तेभ्यः आश्रमिभ्यः पृथग्भूत इत्याह—अपि चेति॥ न चावस्थाभेदेन तेषामेव ब्रह्मसंस्था स्यादिति वाच्यम्॥ कालभेदेनापि सति मन्दप्रज्ञत्वे प्रज्ञाधिक्यवत्, सति कर्मित्वे तेषां विक्षिप्तचेतसां ब्रह्मसंस्थानुपपत्तेः, कर्मत्यागे च परिव्राडेव ब्रह्मसंस्थ इत्यस्मदिष्टसिद्धिरिति भावः॥ इममेवार्थं स्पष्टयितुं शङ्कते—कथं पुनरिति॥ यद्यपि ब्रह्मसंस्थशब्दः संन्यासाश्रमे न रूढः, तथापि योगात्तमेवोपस्थापयति। अन्याश्रमेषु यौगिकार्थासमवायादित्याह—अत्रोच्यत इति॥ सर्वकर्मत्यागिनः प्रणवार्थब्रह्मनिष्ठातिरेकेणा-

भामती।

च संख्यान्तराभिधानमश्लिष्टमित्याह—चतुष्ट्वेन चेति॥ अपि च भेदव्यपदेशोऽत्रेति। त्रय एत इति किं भिक्षुरपि परामृश्यते किंवा भिक्षुवर्जं त्रय एव। न तावत्त्रय इति भिक्षुसंग्रहे तद्वर्जनमेते त्रय इत्यत्र कर्तुं शक्यम्। एत इति प्रकृतानां साकल्येन परामर्शाद्भिक्षुसंग्रहे च न तस्य पुण्यलोकत्वमब्रह्मसंस्थत्वाभावाद्भिक्षोः। तेन तस्य ब्रह्मसंस्थस्य सदा पुण्यलोकत्वममृतत्वं चेति विरोधः। त्रिषु च ब्रह्मसंस्थपदे यदेति संबन्धनीयम्। भिक्षौ च सदेति वैषम्यम्। तदिदमुक्तम्—पृथक्त्वे चेति। पूर्वपक्षाभासं स्मारयति—कथं पुनर्ब्रह्मसंस्थशब्दो योगादिति। तन्निराकरोति—अत्रोच्यत इति। अयमभिसंधिः। सत्यं यौगिकः शब्दः सति प्रकृतसंभवे न तदतिपत्त्याऽप्रकृते वर्तितुमर्हति। असति तु संभवे मा भूत्प्रमादपाठ इत्यप्रकृते वर्तयितव्यः। दर्शितश्चात्रासंभवोऽधस्तादिति। एष हि ब्रह्मसंस्थतालक्षणो धर्मो भिक्षोरसाधारण आश्रमान्तराणि तत्संस्थान्यतत्संस्थानि च, भिक्षुस्तत्संस्थ इत्येव। तत्संस्थता हि स्वाभावं व्यवच्छि-

आनन्दगिरीय—न्यायनिर्णयः।

इतश्च पूर्वं परिव्राजको नोक्त इत्याह—चतुष्ट्वेनेति। न हि प्रसिद्धसंख्याभेदेषु संख्यान्तरोक्तिर्युक्तेत्यर्थः। पृथगुक्तिसामर्थ्यादपि प्रकृताश्रमत्रयातिरिक्तो ब्रह्मसंस्थ इत्याह—अपि चेति। भेदव्यपदेशोऽपि कथं पृथक्त्वं तत्राऽऽह—पृथक्त्वे चेति। सर्व एते पुण्यलोका इत्यत्र भिक्षुरपि परामृष्टश्चेत्तस्याब्रह्मसंस्थत्वाभावादमृतत्वमेवेति न पुण्यलोकत्वं विरोधात्। न च तपःशब्देन भिक्षोरपि ग्रहे तद्वर्जनं युक्तमेत इति प्रकृतानां कार्त्स्न्येन परामर्शात्। तस्माद्भेदोक्त्या पृथक्त्वमेवेत्यर्थः। अपृथक्त्वे भेदोक्तिरयुक्तेत्यत्र दृष्टान्तमाह—न हीति। पृथक्त्वे तु तदुक्तिर्युक्तेत्याह—भवतीति। न चावस्थाभेदापेक्षया दृष्टान्तदार्ष्टान्तिकयोः सिद्धिरपृथक्त्वेऽपीति वाच्यम्। सति कर्मित्वे मन्दप्रज्ञत्वे च ब्रह्मसंस्थताया महाप्रज्ञत्वस्य चायोगात्पृथक्त्वध्रौव्यादिति मत्वोपसंहरति—तस्मादिति। किमेष ब्रह्मसंस्थशब्दो यौगिको रूढो वेति विकल्प्याऽऽद्ये न परिव्राजकमात्रविषयतेति शङ्कते—कथमिति। द्वितीयं निराह—रूढीति। यौगिकत्वमुपेत्य परिहरति—अत्रेति। यथोक्तं ब्रह्मसंस्थत्वमन्येषामपि सिध्यतीत्याशंक्याऽऽह—तत्रेति। तुल्यं संन्यासिनोऽपि स्वाश्र-

माणां न सम्भवति । स्वाश्रमविहितकर्माननुष्ठाने प्रत्यवायश्रवणात् । परिव्राजकस्य तु सर्वकर्मसन्न्यासात्प्रत्यवायो न सम्भवत्यननुष्ठाननिमित्तः । शमदमादिस्तु तदीयो धर्मो ब्रह्मसंस्थताया उपोद्बलकः, न विरोधी । ब्रह्मनिष्ठत्वमेव हि तस्य शमदमाद्युपबृंहितं स्वाश्रमविहितं कर्म । यज्ञादि चेतरेषाम् । तद्व्यतिक्रमे च तस्य प्रत्यवायः । तथा च "न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा । तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत" [ महानारा० २१ । २ ] "वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः" [ ( मुण्ड० ३ । २ । ६ ) ( महाना० १० । ६ ) ( कैवल्यः १ । ३ ) ] इत्याद्याः श्रुतयः ॥ स्मृतयश्च—"तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः" [ भग० गी० ५ । १७ ]

रत्नप्रभा ।

ऽनुष्ठेयं नास्तीत्यत्र मानमाह—**तथा चेति** ॥ "न्यासः संन्यासो ब्रह्म" इति स्तुतौ हेतुमाह—**ब्रह्मा हीति** ॥ हिरण्यगर्भो हि पर इति प्रसिद्धः । अतो ब्रह्मत्वेन स्तुतः संन्यासः पर एवेति स्तुत्वा कर्माणि निन्दति—**तानीति** ॥ ततो न्यास एव ज्ञानद्वारा मोचकत्वादधिक इत्यर्थः ॥ **तद्बुद्धयः** ब्रह्मचित्ताः । **तदात्मानः** ब्रह्मस्वरूपाः । **तन्निष्ठाः** श्रवणादिपराः । **तत्परायणाः** ब्रह्मप्रेप्सवः । निष्कामा इति यावत् ॥ एवं ब्रह्मसंस्थशब्दस्य ज्ञानप्रधानाश्रमवाचित्वादमृतत्वकामस्तमाश्रममनुतिष्ठेदिति विधिः परिण-

भामती ।

न्दन्ती विरोधायस्तत्संस्थ एव तत्राञ्जसी नान्यत्र । **शमदमादिस्तु तदीय इति** । स्वाङ्गमव्यवधायकमित्यर्थः । ब्रह्मसंस्थत्वमसाधारणं परिव्राजकधर्मं श्रुतिरादर्शयतीत्याह—**तथा च न्यास इति ब्रह्मेति** । सर्वसङ्गपरित्यागो हि न्यासः स ब्रह्मा कुत इत्यत आह—**ब्रह्मा हि परः** । अतः परो न्यासो ब्रह्मेति । किमपेक्ष्य परः संन्यास इत्यत आह—**तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयदिति** ।

आनन्दगिरीय—न्यायनिर्णयः ।

मकर्माननुष्ठाने प्रत्यवायित्वं तत्कुतोऽस्य ब्रह्मसंस्थत्वं तत्राऽऽह—**परिव्राजकस्येति** । तस्यापि शमदमाद्यनुष्ठेयमिति कुतो ब्रह्मसंस्थतेत्याशंक्याऽऽह—**शमेति** । तत्र हेतुः—**ब्रह्मेति** । शमादेर्ब्रह्मसंस्थताङ्गत्वान्न तद्विरोधितेत्यर्थः । गृहस्थादीनामपि ब्रह्मसंस्थितत्वाविरोध्येव स्वाश्रमविहितं कर्मेत्याशंक्याऽऽह—**यज्ञेति** । तानि हि रागाद्याक्षिप्तानि । न च रागादिमतां ब्रह्मसंस्थतेति भावः । शमदमाद्युपेतं ब्रह्मनिष्ठत्वमेव संन्यासिनः स्वाश्रमकर्मेत्युक्तं, तदकरणे तस्य प्रत्यवायित्वं त्वंपदार्थविवेकायैवेति स्मृतेरित्याह—**तदिति** । चकारादितरेषामपि तत्तदाश्रमकर्मातिक्रमे प्रत्यवायित्वमकुर्वन्विहितं कर्मेत्यादिस्मृतिरपि सूच्यते । संन्यासिनः सर्वकर्मत्यागेन ब्रह्मसंस्थत्वमेव स्वाश्रमकर्मेत्यत्र मानमाह—**तथा चेति** । न्यासः संन्यासो ब्रह्मेति स्तूयते । तत्र हेतुमाह—**ब्रह्मा हीति** । हिरण्यगर्भो हि श्रुतिस्मृतिषु परोऽभीष्टस्तथाऽपि कथं संन्यासस्तदात्मकस्तत्राऽऽह—**परो हीति** । तस्य परत्वे हेतुः—**ब्रह्मेति** । तद्धीहेतुत्वात्परो यस्मादेष संन्यासस्तस्माद्ब्रह्मेत्यर्थः । तस्य परत्वं स्फोरयति—**तानीति** । पूर्वोक्तानि सत्यादीनि प्रसिद्धानि तानि ज्ञानहीनान्यवराण्येतानि तपांसि निकृष्टत्वहेतुत्वान्न्यास एवैभ्योऽतिरिक्तः श्रेष्ठो ब्रह्मसंस्थताद्वाराऽमृतत्वहेतुत्वादित्यर्थः । तस्य कर्मान्तराभावे वाक्यान्तरमाह—**वेदान्तेति** । शुद्धबुद्धयो विरक्ताः संन्यासयोगाद्वेदान्तविज्ञानेन सुनिश्चितार्था मुच्यन्त इति वचनात्कर्मान्तराभावः संन्यासिनां भातीत्यर्थः । न कर्मणा न प्रजयेत्याद्या भूयस्यः श्रुतयोऽत्र सन्तीति वक्तुमादिपदम् । तस्मिन्ब्रह्मणि बुद्धिर्मनो येषां ते तथा तदेव ब्रह्माऽऽत्मा स्वरूपं येषां ते तदात्मानः । तत्रैव निश्चयेन स्थितिमाह—**तन्निष्ठा इति** । विषयान्तरपारवश्यं व्यावर्तयति—**तदिति** । यथोक्तान्यपि कर्माणि परिहायेत्यादिस्मृतिसंग्रहार्थमादिपदम् । उक्तश्रुतिस्मृतितात्पर्य-

इत्याद्या ब्रह्मसंस्थस्य कर्माभावं दर्शयन्ति । तस्मात्परिव्राजकस्याश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसंग इत्येषोऽपि दोषो नावतरति । तदेवं परामर्शेऽपीतरेषामाश्रमाणां पारिव्राज्यं तावद्ब्रह्मसंस्थतालक्षणं लभ्यत एव । अनपेक्ष्यैव जाबालश्रुतिमाश्रमान्तरविधायिनीमयमाचार्येण विचारः प्रवर्तितः । विद्यते एव त्वाश्रमान्तरविधिश्रुतिः प्रत्यक्षा "ब्रह्मचर्यं समाप्य गृही भवेत् । गृही भूत्वा वनी भवेत् । वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा" [ जाबा० ४] इति । न चेयं श्रुतिरनधिकृतविषया शक्या वक्तुम् । अविशेषश्रवणात् । पृथग्विधानाच्चानधिकृतानाम्-"अथ पुनरेव व्रती वाऽव्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा" [ जाबा० ४ ] इत्यादिना ब्रह्मज्ञा-

---

रत्नप्रभा ।

म्यते । अतो न ज्ञानानर्थक्यदोष इत्युपसंहरति-तस्मादिति ॥ संप्रति कृत्वाचिन्तामुद्घाटयति-अनपेक्ष्येति ॥ शिष्यबुद्धिवैशद्यार्थं स्कन्धश्रुतिमादाय चिन्ता कृतेति भावः ॥ यदि वेतरथेति ॥ ब्रह्मचर्ये स्थितस्यैव पूर्वकृतपरिपाकाद्वैराग्यं यदि स्यादित्यर्थः ॥ यदुक्तं कर्मानधिकृतान्धादिविषयः संन्यास इति, तन्नेत्याह-न चेति ॥ सामान्यश्रुतेः संकोचहेत्वभावादिति भावः ॥ पृथगिति । संन्यासस्येति शेषः ॥ व्रती गोदानादिवेदव्रतवान् ॥ गुरुकुलान्निवृत्तिरूपस्नानानन्तरमकृतगार्हस्थ्यो गुरुसेवी स्नातकः, उत्सन्नाग्निः-विधुरः, अगृहीताग्निः अनग्निकः,-प्रव्रजेदित्यन्वयः । सकलांगानामेव कथंचित्कर्मानधिकृतानां संन्यासो युक्तः । विकलांगानां त्वन्धादीनां न ज्ञानप्रधाने संन्यासेऽधिकार इत्याह-ब्रह्मेति ॥

भामती ।

एतदुक्तं भवति-ब्रह्मपरतया सर्वैषणापरित्यागलक्षणो न्यासो ब्रह्मेति । तथा चेदृशं न्यासलक्षणं ब्रह्मसंस्थत्वं

आनन्दगिरीय-न्यायनिर्णयः ।

माह-ब्रह्मेति । ब्रह्मसंस्थशब्दस्य परिव्राजके रूढिमुपेत्योपसंहरति-तस्मादिति । यथा गृहस्थशब्दस्य यौगिकत्वे सत्यतिप्रसंगपरिहारायाऽऽश्रमविशेषे रूढत्वेऽपि न गार्हस्थ्यमात्रात्पुण्यलोकाप्तिः किंतु यथोक्ताग्निहोत्रादिकरणात् । तथा परिव्राजकस्यापि ब्रह्मसंस्थस्य वाक्यार्थसाक्षात्कारद्वारैव मुख्यममृतत्वमिति कुतो ज्ञानानर्थक्यमित्यर्थः । एवमेकदेशिमतं प्रत्याख्याय ब्रह्मसंस्थशब्दस्य परिव्राजकविषयत्वे स्थिते संस्तवसामर्थ्याद्ब्रह्मसंस्थत्वं पारिव्राज्यमितरपरामर्शेऽपि विधेयमिति परमप्रकृतमुपसंहरति-तदेवमिति । शिष्यबुद्धिविकासार्थं परामर्शश्रुतिमाश्रित्य कृत्वाचिन्तया विचारं कृत्वा कृत्वाचिन्तामुद्घाटयति-अनपेक्ष्येति । यदि वेतरथेति ब्रह्मचर्ये स्थितस्यैव पारिव्राज्येच्छा गार्हस्थ्ये च वैराग्यं दैवयोगाद्यदि स्यादित्यर्थः । यत्त्वनधिकृतान्धादिविषयः संन्यासः स्यादिति तत्राऽऽह-न चेति । अविशेषश्रुतिरसति बाधके न विशेषे संकोचमर्हतीत्यर्थः । इतश्चेदं वाक्यं नानधिकृतविषयमित्याह-पृथगिति । अनधिकृतानां संन्यासस्येति शेषः । गोदानादिवेदव्रतवान् । अव्रती तद्विपरीतः । स्नातको गुरुकुलनिवृत्तिरूपस्नानानन्तरमपि गुरुशुश्रूषापरः तद्विपरीतोऽस्नातकः । उत्सन्नाग्निर्मृतभार्यः पूर्वमेवाग्निपरिग्रहरहितो वा । परिव्रजेदिति कर्माधिकारप्रतिपत्तिहीनानामपि संन्यासस्य पृथगुक्तेर्न वाक्यमनधिकृतविषयमित्यर्थः । संन्यासविधेरनधिकृताविषयत्वे हेत्वन्तरमाह-ब्रह्मेति । श्रवणादिद्वारा संन्यासस्य ब्रह्मज्ञानदार्ढ्यार्थत्वं प्रकरणादिसिद्धं तेन समर्थस्यैवाधिकारस्तस्मिन्नित्यर्थः । परिव्राज्यस्य ब्रह्मधीदार्ढ्यार्थत्वे श्रुतिं

नपरिपाकाङ्गत्वाच्च पारिव्राज्यस्य नानधिकृतविषयत्वम् । तच्च दर्शयति "अथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति" [जाबा० ५] इति ॥ तस्मात्सिद्धा ऊर्ध्वरेतस आश्रमाः, सिद्धं चोर्ध्वरेतस्सु विधानाद्विद्यायाः स्वातन्त्र्यमिति ॥ २० ॥ इति परामर्शाधिकरणम् ॥ २ ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥ (३) ॥

"स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः" [ छां० १ । १ । ३ ] "इयमेवर्गग्निः साम" [ छां० १ । ६ । १ ] "अयं वाव लोक एषोऽग्निश्चितः तदिदमेवोक्थमियमेव पृथिवी" इत्येवञ्जातीयकाः श्रुतयः किमुद्गीथादिस्तुत्यर्थाः–आहोस्विद्–उपासनविध्यर्था इति ॥ अस्मिन्संशये स्तुत्यर्था इति युक्तम् । उद्गीथादीनि कर्माङ्गान्युपादाय श्रवणात् ।

रत्नप्रभा ।

दृष्टिपूतसंचारश्रवणादिकं विना ज्ञानानुत्पत्तेः, "शरीरं मे विचर्षणं जिह्वा मे मधुमत्तमा कर्णाभ्यां भूरिविश्रुवम्" इत्यङ्गसाकल्यप्रार्थनालिंगाच्च,–नान्धपंगुमूकबधिरादीनामधिकार इत्यर्थः ॥ **तच्चेति** । पारिव्राज्यस्य ब्रह्मज्ञानांगत्वं चेत्यर्थः ॥ **ब्रह्मभूयाय** । ब्रह्मसाक्षात्कारायेति यावत् ॥ २० ॥ ( २ ) ॥ **स्तुतिमात्रमिति** ॥ पृथिव्यबोषधिपुरुषवागृक्सान्नां सप्तानां **रसानां रसतमोऽष्टमः** उद्गीथावयव ओंकारः **परमः** परमात्मप्रतीकत्वात्, परस्य ब्रह्मणोऽर्धं स्थानं तदर्हतीति **परार्ध्यः** इत्यर्थः ॥ आसु श्रुतिष्वंगोपादानादपूर्वार्थत्वाच्च संशयमाह–**किमिति** ॥ **यथा**–अनुष्ठेयगार्हस्थ्यसाम्यश्रुतेः पारिव्राज्यस्य अनुष्ठेयत्वं, तद्वदासां श्रुतीनां जुह्वादिस्तुतिश्रुतिसाम्यात्स्तुतित्वमिति पूर्वपक्षयति–**स्तुत्यर्था इति** ॥ "जुहूः" "इयमेव

भामती ।–०

भिक्षोरेवासाधारणं नेतरेषामाश्रमिणाम्।ब्रह्मज्ञानस्य शब्दजनितस्य यः परीपाकः साक्षात्कारोऽपवर्गसाधनं तदङ्गतया पारिव्राज्यं विहितम्।न त्वनधिकृतं प्रतीत्यर्थः॥२०॥(२)॥**स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्**।

आनन्दगिरीय–न्यायनिर्णयः ।

प्रमाणयति–**तच्चेति** । ब्रह्मभूयाय ब्रह्मभावाय तत्साक्षात्कारायेत्यर्थः । अन्तर्गर्भिताधिकरणार्थमुपसंहरति–**तस्मादिति** । प्रामाणिकत्वं तच्छब्दार्थः । तेषां प्रमितत्वेनानुष्ठीयमानत्वेऽपि प्रकृते किं जातमित्याशंक्य प्रथमाधिकरणार्थं निगमयति–**सिद्धं चेति** ॥ २० ॥ ( २ ) ॥ अनुष्ठेयसाम्यश्रुतेराश्रमान्तरमनुष्ठेयतया विधेयमित्युक्तम् । संप्रति रसतमत्वादीनामंगाश्रितत्वेनेयमेव जुहूरित्यादिश्रुतितुल्यतया स्तुत्यर्थत्वमित्याशंक्य प्रत्याह–**स्तुतीति** । अधिकरणस्य विषयं वदन्वाक्यानि पठति–**स इति** । एषां भूतानां पृथिवी रसः पृथिव्या आपोऽपामोषधय ओषधीनां पुरुषः पुरुषस्य वाग्वाच ऋगृचः साम साम्न उद्गीथो रस इत्युपक्रम्य श्रूयते स एष रसानां पृथिव्यादीनां सामान्यानां भूतेपूत्तरोत्तरं सारत्वेनोक्तानामतिशयेन सारो रसतमः परमः परमात्मप्रतीकत्वात्परस्य ब्रह्मणोऽर्धं स्थानं तदर्हतीति परार्ध्यः परब्रह्मवदुपास्य इत्यर्थः । पृथिव्याद्यपेक्षयाऽष्टमः कोऽसौ यदुद्गीथो य उद्गीथं ओंकार इत्यर्थः । उद्गीथाद्यङ्गावबद्धश्रुतीरधिकृत्य पर्णमयीत्वादावंगसंबन्धे विध्युपलब्धेस्तथाविधेऽपि स्वर्गो लोक इत्यादौ स्तुत्युपलब्धेश्च संशयमाह–**किमिति** । अङ्गावबद्धानामपि वुद्धीनां स्तुतित्वाभावाद्विधेयतया स्वातन्त्र्येण पुरुषार्थहेतुत्वे सत्यनंगात्मधियः स्वतन्त्रतया फलवत्त्वमुपनिषदुत्पन्नायाः किं वक्तव्यमित्युक्तेरत्र पादादिसंगतिः । पूर्वपक्षे स्तुतित्वादंगधीष्वनुष्ठानासिद्धिः । सिद्धान्ते तासां विधेयत्वात्तत्सिद्धिरित्यंगीकृत्य संशयमनूद्य पूर्वपक्षयति–**इत्यस्मिन्निति** । विमताः प्रत्ययाः स्तुतयः कर्मांगेपूत्कृष्टपदार्थाध्यासप्रत्ययरूपत्वात्स्वर्गो

यथा-"इयमेव पृथिवी जुहूरादित्यः कूर्मः स्वर्लोक आवहनीयः" इत्याद्या जुह्वादिस्तुत्यर्थाः, तद्वदिति चेत् ॥ नेत्याह ॥ न हि स्तुतिमात्रमासां श्रुतीनां प्रयोजनं युक्तम् । अपूर्वत्वात् । विध्यर्थतायां ह्यपूर्वार्थो विहितो भवति । स्तुत्यर्थतायां त्वानर्थक्यमेव स्यात् । विधायकस्य हि शब्दस्य

रत्नप्रभा ।

पृथिवी" इति स्तूयते ॥ चयनस्थः "कूर्म आदित्यः" इति स्तुतिः ॥ आहवनीयः "स्वर्लोकः" इति स्तुतिः ॥ तथोद्गीथादीनां रसतमत्वादिगुणैः स्तुतिरित्यर्थः ॥ स्तुतिलक्षणातो वरं विधिकल्पनम् । अनुष्ठानफललाभादिति सिद्धान्तयति-न स्तुतीति ॥ पूर्वपक्षे त्वननुष्ठानं फलम्, सिद्धान्ते त्वनुष्ठानं फलमिति मन्तव्यम् ॥ स्तावकत्वेनार्थवत्त्वं किं न स्यादित्यत आह-विधायकस्येति ॥ युक्तम् "इयमेव" "जुहूः" इत्यादिश्रुतीनां फलवज्जुह्वादिविधिप्रकरणस्थतया स्तावकत्वेनार्थवत्त्वम् । रसतमादिश्रुतीनां तु क्रत्वंगविधि-

भामती ।

यद्यत्र संनिधान उपासनाविधिर्नास्ति ततः प्रदेशान्तरस्थितोऽपि विधिरव्यभिचरिततद्विधिसंबन्धेनोद्गीथेनोपस्थापितः स एष रसानां रसतम इत्यादिना पदसंदर्भेणैकवाक्यभावमुपगतः स्तूयते । न हि समभिव्याहृतैरेवैकवाक्यता भवतीति कश्चिन्नियमहेतुरस्ति । अनुषङ्गातिदेशलब्धैरपि विध्यसमभिव्याहृतैरर्थवादैरेकवाक्यताभ्युपगमात् । यदि तूद्गीथमुपासीत सामोपासीतेत्यादिविधिसमभिव्याहारः श्रुतस्तथापि तस्यैव विधेः स्तुतिर्न तूपासनाविषयसमर्पणपर ओमित्येतदक्षरमुद्गीथमित्यनेनैवोपासनाविषयसमर्पणादिति प्राप्तेऽभिधीयते-न तावद्दूरस्थेन कर्मविधिवाक्येनैकवाक्यतासंभवः । प्रतीतसमभिव्याहृतानां विधिनैकवाक्यतया स्तुत्यर्थत्वमर्थवादानां रक्तपटन्यायेन भवति । न तु स्तुत्या विना काचिदनुपपत्तिर्विधेः । यथाहुः-'अस्ति तु तदित्यतिरेके परिहारः' इति । अत एव विधेरपेक्षाभावात्प्रवर्तनात्मकस्यानुषङ्गातिदेशादिभिरर्थवादप्राप्त्यभिधानमसमञ्जसम् । न हि कर्त्रपेक्षितोपायतायामवगतायां प्राशस्त्यप्रत्ययस्यास्ति कश्चिदुपयोगः । तस्माद्दूरस्थस्य कर्मविधेः स्तुतावानर्थक्यम् । तेनैकवाक्यतानुपपत्तेः संनिहितस्य तूपासनाविधेः किं विषयसमर्पणेनोपयुज्यतामुत स्तुत्वेति विशये विषयसमर्पणेन यथार्थवत्त्वं नैवं स्तुत्या बहिरङ्गत्वात् । अगत्या हि सा । तस्मादुपासनार्था इति सिद्धम् । 'कुर्यात्क्रियेत कर्तव्यं भवेत्स्यादिति पञ्चमम् । एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षणम् ॥' भावनायाः खलु कर्तृसमीहितानुकूलत्वं विधिर्निषेधश्च कर्तुरहितानुकूलत्वम् । यथाहुः-'कर्तव्यश्च सुखफलोऽकर्तव्यो दुःखफलः' इति। एतच्चास्माभिरुपपादितं न्यायकणिकायाम् । क्रिया च भावना तद्वचनाश्च करोत्यादयः । यथाहुः-कृभ्वस्तयः क्रियासामान्यवचना इति । अत एव कृभ्वस्तीनुदाहृतवान् । सामान्योक्तौ तद्विशेषाः पचेदित्यादयोऽपि गम्यन्त इति तत्र कुर्यादित्याक्षिप्तकर्तृका भावना । क्रियेतेति आक्षिप्तकार्मिका भावना । कर्तव्यमिति तु कर्मभूतद्रव्योपसर्जनभावना । एवं दण्डी भवेद्दण्डिना भवितव्यं दण्डिना भूयेतेत्येकधात्वर्थविषया विध्युपहिता भावना उदाहार्याः । भवतिश्चैष

आनन्दगिरीय-न्यायनिर्णयः ।

लोक आहवनीय इत्यादिप्रत्ययवदित्यर्थः । जुहूरियमेव पृथिवीति स्तूयते कूर्मश्चयनगतः सन्नादित्य इत्याहवनीयोऽग्निः स्वर्गो लोक इतिवत्स्तुतिरेवेत्यर्थः । स्तुतिकल्पनाद्विधिकल्पनमेव युक्तमनुष्ठानफलाभावादिति परिहरति-नेत्यादिना । विमताः प्रत्यया न कर्मांगस्तुतयोऽपूर्वार्थत्वात्क्रत्वन्तरवदित्याह-नेति । विमता धियो न कर्मांगस्तुतयो विशिष्टफलसंबन्धित्वात्संमतवदित्याह-विधीति । वायुर्वै क्षेपिष्ठेत्यादिवदुद्गीथादिश्रुतीनां स्तुत्यर्थत्वेऽपि कस्मादर्थवत्त्वं न स्यादित्याशंक्याऽऽह-विधायकस्येति । अस्तु तर्हि विधायकशब्दशेषत्वेनैवोद्गीथादिश्रुतीनामपि स्तावकतयाऽर्थवादत्वं तत्र वाच्यम् । किमुद्गीथादिप्रत्ययैरुद्गीथा-

वाक्यशेषभावं प्रतिपद्यमाना स्तुतिरुपयुज्यत इत्युक्तं—"विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" [ जै० सू० १ । २ । ७ ] इत्यत्र । प्रदेशान्तरविहितानां तूद्गीथादीनामियं प्रदेशान्तरपठिता स्तुतिर्वाक्यशेषभावमप्रतिपद्यमानाऽनर्थिकैव स्यात । इयमेव जुहूरित्यादि तु विधिसन्निधावेवाम्नातमिति वैषम्यम् ॥ तस्माद्विध्यर्था एवञ्जातीयकाः श्रुतयः ॥ २१ ॥

## भावशब्दाच्च ॥ २२ ॥

"उद्गीथमुपासीत" [ छां० १।१।१] "सामोपासीत" [ छां० २।२। १ । ] "अहमुक्थमस्मीति विद्यात्" इत्यादयश्च विस्पष्टा विधिशब्दाः श्रूयन्ते । ते च स्तुतिमात्रप्रयोजनतायां व्याहन्येरन् । तथा च न्यायविदां स्मरणं—"कुर्यात्क्रियेत कर्तव्यं भवेत्स्यादिति पञ्चमम् ॥ एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षणम् ॥" इति । लिङाद्यर्थो विधिरिति मन्यमा-

---

रत्नप्रभा ।

प्रकरणस्थत्वाभावात्फलवदपूर्वोपास्तिविधायकत्वमेव युक्तम् । क्रत्वन्तरश्रुतिवदिति भावः ॥ २१ ॥ किं चात्र विधिः कल्प्य इति कृत्वाचिन्तयोक्तम् ॥ वस्तुतस्तु न कल्प्यः क्लृप्तत्वादित्याह—भावेति ॥ न चैवमुपासनाविधिस्तावकत्वं रसतमादिश्रुतीनामिति सांप्रतम्॥ विध्यपेक्षितविषयार्थकत्वसंभवे स्तुतिलक्षणाऽयोगादिति भावः ॥ देवो मदिष्टं कुर्यादिति प्रार्थनादावपि लिङ्गादिप्रयोगादुपासीतेत्यादिशब्दानां कथं विधिपरत्वनिश्चय इत्यत आह—तथा चेति॥ एतत् लिङ्गादिकं वेदेषूत्सर्गतः सर्वतो नियमेनेष्टसाधनत्वाख्यविधेर्लक्षणं—ज्ञापकं स्यात् । उपपदादिबाधके त्वन्यार्थपरमित्यर्थः ॥ तदिदमाह—लिङादीति ॥ न च

भामती ।

जन्मनि । यथा कुलालव्यापाराद्घटो भवति बीजादंकुरो भवतीति: प्रयुञ्जते । न च बीजादंकुरोऽस्तीति

आनन्दगिरीय—न्यायनिर्णयः ।

दिविधिः स्तुयते किंवा तदुपास्तिविधिरिति विकल्प्याऽऽद्यं दूषयति—प्रदेशान्तरेति । उद्गीथादिविधेः कर्मप्रकरणस्थत्वेन व्यवधानान्न तेनोद्गीथादिश्रुतीनामेकवाक्यता । विमता धियो न कर्मांगस्तुतयोऽतत्प्रकरणस्थत्वात्क्रत्वन्तरवदिति भावः । परोक्तं दृष्टान्तं विघटयति—इयमेवेति । अनुमानत्रयफलं निगमयति—तस्मादिति ॥ २१ ॥ न द्वितीय उपास्यविषयार्पणेन विध्यन्वययोगे लक्षणया स्तुत्यर्थत्वायोगादित्याह—भावेति । संनिहितविधेर्विषयार्पणेनार्थवत्त्वे रसतमादिवादानां संभवति तदीयस्तुतिपरत्वमपि तत्रायुक्तं स्तुत्यपेक्षया विषयार्पणस्यान्तरङ्गत्वात् । तत्र कर्मांगस्तुतिपरत्वं नेति किमु वक्तव्यमिति मन्वानो व्याचष्टे—उद्गीथमिति । निमन्त्रणादिष्वपि लिङादिस्मरणात्कथमुपासीतेत्यादिशब्दस्य विधिपरतेत्याशङ्क्याऽऽह—तथा चेति । धातूनामनेकत्वेऽपि "डुकृञ् करणे" "भू सत्तायाम्" "अस् भुवि" इति त्रीनेव धातून्भावनासामान्यवाचिनः सर्वव्याप्त्यर्थमुदाहरति—कुर्यादिति । आक्षिप्तकर्तृका भावना कुर्यादित्युक्ता सैवाऽऽक्षिप्तकर्मिका क्रियेतेत्युदाहृता । सैव कर्तव्यमिति धात्वर्थोपसर्जनभूताऽभिहितेति भेदः । भवेदित्यत्रापि भूयेत भवितव्यमित्युदाहार्यम् । भवतेरस्तेश्चैकार्थ्येऽपि प्राप्त्याद्यर्थं भवतिं दृष्ट्वा पृथगस्तिमुदाहरति—स्यादितीति । यथापूर्वमुदाहरणमिहापि द्रष्टव्यम् । पाठक्रममनुसृत्य पञ्चममित्युक्तम् । एतद्धात्वनुगतप्रत्ययैः सर्वभावनानुगतश्रेयःसाधनत्वरूपो विधिरुच्यते न प्रतिधातुप्रत्ययं च भावनाभेदोऽस्तीति मत्वाऽऽह—एतदिति । कथं तर्हि निमन्त्रणादिषु लिंगादिस्मरणं मिथोविरोधादित्याशङ्क्योत्सर्गतो वेदे विधिपरा लिङादयोऽपवादादन्यथात्वमित्यभिप्रेत्याऽऽह—लिङादीति । उद्गीथादिश्रुतीनां

नास्त एवं स्मरन्ति । प्रतिप्रकरणञ्च फलानि श्राव्यन्ते-"आपयिता ह वै कामानां भवति" [छां० १ । १ । ७] "एष ह्येव कामागानस्येष्टे" [छां० १ । ७ । ९ ] "कल्पन्ते ह्यस्मै लोका ऊर्ध्वाश्चावृत्ताश्च" [ छां० २ । २ । ३ ] इत्येवमादीनि ॥ तस्मादप्युपासनविधानार्था उद्गीथादिश्रुतयः ॥ ॥ २२ ॥ इति स्तुतिमात्राधिकरणम् ॥ ३ ॥

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥२३॥ (४) ॥

"अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च" [ बृ०

रत्नप्रभा ।

श्लोके "पञ्चमम्" इत्युक्तेः पञ्चपदानामेव विधिलक्षणत्वं नोपासीतेत्यादीनामिति भ्रमितव्यम् ॥ क्रियासामान्यवाचिनां कृभ्वस्तीनामुदाहरणेन सर्वधातूपरक्तलिङादीनां विधिलक्षणत्वस्य विवक्षितत्वात् । पञ्चमपदं तूक्तापेक्षया श्लोकपूरणार्थं " मृत्युर्धावति पञ्चमः" इतिवत् । यद्यपि "डुकृञ् करणे" इति धातोरेव करणशब्दितभावनाख्यक्रियासामान्यवाचित्वं, नेतरयोर्धात्वोः । "भू सत्तायाम्" "अस् भुवि" इत्यर्थान्तरोक्तेः । तथापि जन्माख्यभवनस्य, तत्फलस्यास्तित्वस्य च,-प्रयोज्यनिष्ठस्य प्रयोजकव्यापारात्मकभावनाव्याप्तत्वात्तयोः क्रियासामान्यवाचित्वव्यवहारः ॥ तत्र कुर्यादिति प्रकृत्यर्थभावनाख्या तेनानूद्यते ॥ यथा द्वाविति प्रयोगे प्रकृत्यर्थो द्वित्वं प्रत्ययेनानूद्यते, तद्वल्लिङा च तस्या इष्टसाधनत्वाख्यविधिर्बोध्यते । कर्त्ता तु तयाक्षिप्यत इति आक्षिप्तकर्तृका भावना उदाहृता । तथा क्रियेतेत्यत्रापि प्रकृतिप्रत्ययार्थौ व्याख्यातौ । कर्मात्र प्राधान्येनाक्षिप्यत इत्याक्षिप्तकर्मिका भावना उदाहृता । आख्यातानां कर्त्रादिकारके शक्त्यभावात्कर्तृकर्मणोराक्षेप एवेति मीमांसकमतम् । कर्तव्यमिति कृत्यप्रत्ययेन कर्मकारकमुच्यते । तस्योपसर्जनत्वेन प्रकृत्या भावनोक्तेति भेदः । तथा दन्डी-भवेत्, भूयेत,-दण्डिना भवितव्यमित्युदाहर्तव्यम् । तथा स्याद्भूयेत भवितव्यमित्यस्तिधातोरप्युदाहरणं द्रष्टव्यम् । अस्तेर्भूरादेशात् । एतद्धातुत्रयोपरक्तलिङादिभिः सर्वधात्वर्थोपरक्तभावनागतेष्टसाधनत्वरूपो विधिरेक एवोच्यते । धातूनां, प्रत्ययानां, कर्त्रादिकारकाणां च,-भेदेपि विधिभेदो नास्तीति ज्ञापनार्थं प्रतिधातूदाहरणत्रयं दर्शितमिति सर्वमवदातम् ॥ एवं सूत्रे भावो विधिरिति व्याख्याय चशब्दात्फलमिति व्याचष्टे-प्रतिकरणं चेति ॥ एषः ऋत्विगुपासकः कामागानस्य गानेन फलसंपादनस्य ईष्टे समर्थ इत्यर्थः ॥ एवमङ्गाश्रितविद्या अपि स्वतन्त्रफलाः । किमु वक्तव्यमनङ्गात्मविद्यास्वातन्त्र्यमित्यात्मविद्यास्वातन्त्र्ये चिन्ताया अस्याः पर्यवसानात्पादसंगतिर्बोध्या ॥ २२ ॥ ( ३ ) ॥ पारिप्लवार्थाः० ॥ अश्वमेधे पुत्रादिपरिवृताय राज्ञे "पारिप्लवमाचक्षीत"

भामती ।

प्रयुञ्जते । तस्मादस्तिः सत्तायां न जन्मनीति ॥ २१॥२२॥ (३)॥ पारिप्लवार्था इति चेन्न विशेषितत्वात् । यद्यपि उपनिषदाख्यानानि विद्यासंनिधौ श्रुतानि तथापि 'सर्वाण्याख्यानानि पारिप्लवे' इति

आनन्दगिरीय-न्यायनिर्णयः ।

स्तुत्यर्थत्वाभावे हेत्वन्तरं चकारसूचितमाह-प्रतीति । फलभेदश्रवणमुपसंहरति-तस्मादिति । पूर्वोक्तापूर्वत्वादिसमुच्चयार्थमपीत्युक्तम् ॥ २२ ॥ ( ३ ) ॥ उद्गीथादिश्रुतेरुपास्तिविषयार्पकत्वं ज्यायो रसतमत्वादेरित्युक्तम् । अधुनाऽऽख्यानानामपि विद्यास्तुतेः सकाशात्पारिप्लवशेषत्वं ज्यायोऽनुष्ठानावसानयोगादित्याशंक्य परिहरति-पारिप्लवेति । विषयोक्तिपूर्वकमाख्यानत्वसाम्याद्विद्यासंनिधेश्च संशयमाह-अथेत्यादिना । पारिप्लवप्रयोगो नामाश्वमेधे पुत्रामात्यपरिवृताय राज्ञो पारिप्लवमाचक्षीतेत्यादिना नानाविधाख्यानकथनं विहितम् । अत्र चोपनिषद्गताख्यानानां तादर्थ्यनिरासेन तत्रतत्र संनिहित-

४।५।१ ] "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम" [ कौ० ३ । १ ] जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस" [ छां० ४ । १ । १ ] इत्येवमादिषु वेदान्तपठितेष्वाख्यानेषु संशयः—किमिमानि पारिप्लवप्रयोगार्थानि—आहोस्वित्—सन्निहितविद्याप्रतिपत्त्यर्थानीति । "पारिप्लवार्थाः" इमा आख्यानश्रुतयः । आख्यानसामान्यात् । आख्यानप्रयोगस्य च पारिप्लवे चोदितत्वात् । ततश्च विद्याप्रधानत्वं वेदान्तानां न स्यात् । मन्त्रवत् प्रयोगशेषत्वादिति चेत् ॥तन्न॥ कस्मात् ॥

रत्नप्रभा ।

इति नानाविधाख्यानकथनात्मकः पारिप्लवप्रयोगो विहितः । तथा वेदान्तस्थकथानामाख्यानत्वसामान्याद्विद्यासन्निधानाच्च संशयमाह—**किमिति** ॥ पूर्वं स्तुत्यपेक्षया विधिर्ज्यायान् । अनुष्ठानलाभादित्युक्तम् ॥ **तथैव** कथानां न विद्यास्तावकत्वम् । पारिप्लवानुष्ठानलाभादिति **पूर्वः पक्षः** । तत्र फलमाह—**ततश्चेति** ॥ **यथा** "देवस्य त्वा सवितुः" इत्यादिमन्त्रे कस्यचित्पदस्य प्रयोगसमवेतार्थतया अशेषस्य प्रयोगान्तरत्वं, **तथा** वेदान्तस्थकथानां प्रयोगशेषत्वे तदेकवाक्यतया सर्ववेदान्तानां कर्मशेषत्वात् न विद्याप्राधान्यमित्यर्थः । कथानां गुरुशिष्यसमाचारप्रदर्शनेन बुद्धिसौकर्यद्वारा सन्निहितविद्याशेषत्वान्न पारिप्लवार्थत्वम् । सामर्थ्यलिङ्गात् ॥ अतो विद्याप्राधान्यमिति फलं मत्वा सिद्धान्तयति—**तन्नेत्यादिना** ॥ अश्व-

भामती ।

सर्वश्रुत्या निःशेषार्थतया दुर्बलस्य संनिधेर्बाधितत्वात्पारिप्लवार्थान्येवाख्यानानि । न च सर्वा दाशतयीरनुब्रूयादिति विनियोगेऽपि दाशतयीनां प्रातिस्विकविनियोगात्तत्रतत्र कर्मणि यथा विनियोगो न विरुध्यते तथेहापि सत्यपि पारिप्लवे विनियोगे संनिधानाद्विद्याङ्गत्वमपि भविष्यतीति वाच्यम् । दाशतयीषु प्रातिस्विकानां विनियोगानां समुदायविनियोगस्य च तुल्यबलत्वादिह तु संनिधानात् श्रुतेर्बलीयस्त्वात् । तस्मात्पारिप्लवार्थान्येवाख्यानानीति प्राप्त उच्यते—नैषामाख्यानानां पारिप्लवे विनियोगः । किंतु पारिप्लवमाचक्षीतेत्युपक्रम्य यान्याम्नातानि मनुर्वैवस्वतो राजेत्यादीनि तेषामेव तत्र विनियोगः, तान्येव हि पारिप्लवेन विशेषितानि । इतरथा पारिप्लवे सर्वाण्याख्यानानीत्येतावतैव गतत्वात्पारिप्लवमाचक्षीतेत्यनर्थकं स्यात् ।

आनन्दगिरीय—न्यायनिर्णयः।

स्वतन्त्रपुरुषार्थहेतुविद्यार्थत्वसमर्थनात्पादादिसंगतिः । पूर्वपक्षे प्रयोगशेषत्वादाख्यानानां वेदान्तगतानामपि तद्भावाद्विद्याप्राधान्यासिद्धिः । सिद्धान्ते विशेषणादुपनिषदाख्यानानां व्यवच्छेदात्तेषामप्रयोगशेषत्वाद्विद्याप्रधानत्वसिद्धिरिति स्वीकृत्य पूर्वपक्षयति—**पारिप्लवेति** । गुरुशिष्यसमाचारप्रदर्शनेन बुद्धिसौकर्यद्वारा च विद्याशेषत्वं सामर्थ्यलिङ्गादासां सिद्धमित्याशंक्य पारिप्लवश्रुतिविरोधे लिङ्गमप्रयोजकमित्याह—**आख्यानेति** । यस्याऽऽश्विने शस्यमाने सूर्योऽभ्युदियादपि सर्वा दाशतयीरनुब्रूयादिति सर्वासामृचामाश्विनप्रशंसने सर्वश्रुत्या विनियुक्तानामपि प्रातिस्विकविनियोगवदाख्यानानां पारिप्लवे पारिप्लवमाचक्षीतेति चोदितानामेतेन लिंगेन संनिधेर्वा विद्यायां विनियोगः स्यादित्याशंक्य प्रातिस्विकविनियोगस्य समुदायविनियोगस्य च श्रौतत्वेन तुल्यत्वात्प्रकृते च तदभावान्नैवमित्याह—**ततश्चेति** । आख्यानानां प्रयोगशेषत्वेऽपि सर्वेषां वेदान्तानामतच्छेषत्वाद्युक्तं विद्याप्रधानत्वमित्याशंक्याऽऽह—**मन्त्रवदिति** । देवस्य त्वेत्यादिमन्त्रे कस्यचिदेव पदस्य समवेतार्थतया प्रयोगशेषत्वे सिद्धे तदेकवाक्यतया पदान्तराणामपि तच्छेषत्वमिष्टम् । तथाऽऽख्यानानां प्रयोगशेषत्वे तदेकवाक्यत्वेन सर्वोपनिषदां तच्छेषत्वान्न विद्याप्रधानतेत्यर्थः । सामान्यश्रुतेर्विशेषोक्त्याऽतत्परत्वान्न तया लिङ्गादिबाधोऽस्तीति सिद्धान्तयति—**तन्नेत्यादिना** ।

विशेषितत्वात् । तथाहि-"पारिप्लवमाचक्षीत" इति हि प्रकृत्य "मनुर्वैवस्वतो राजा" इत्येवमादीनि कानिचिदेवाख्यानानि तत्र विशेष्यन्ते । आख्यानसामान्याच्चेत् सर्वगृहीतिः स्यादनर्थकमेवेदं विशेषणं भवेत् ॥ तस्मान्न पारिप्लवार्था एता आख्यानश्रुतयः ॥ २३ ॥

**तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥**

असति च पारिप्लवार्थत्वे आख्यानानां सन्निहितविद्याप्रतिपादनोपयोगितैव न्याय्या । एकवाक्यतोपबन्धनात् । तथाहि तत्रतत्र सन्निहिताभिर्विद्याभिरेकवाक्यता दृश्यते । प्ररोचनोपयोगात् । प्रतिपत्तिसौकर्योपयोगाच्च । मैत्रेयीब्राह्मणे तावद्-"आत्मा वा अरे द्रष्टव्यः" [ बृ० २ । ४ । ५ ] इत्याद्यया विद्ययैकवाक्यता दृश्यते । प्रातर्दनेऽपि-"प्राणोऽस्मि प्रज्ञात्मा" [ कौ० ] इत्याद्यया । "जानश्रुतिः" [ छां ४ । १ । १ ] इत्यत्रापि "वायुर्वाव संवर्गः" [ छां० ४ । ३ । १ ] इत्याद्यया । यथा च-"स आत्मनो वपामुदखिदद्" इत्येवमादीनां कर्मश्रुतिगतानामाख्या-

रत्नप्रभा ।

मेधे प्रथमेहनि "मनुर्वैवस्वतः" इति कथां ब्रूयात् । द्वितीयेहनि "यमो वैवस्वतः" इति, तृतीयेहनि "वरुण आदित्यः" इति च वाक्यशेषे कथानां विशिष्योक्तत्वादुपक्रमस्य संकोचो युक्त इति भावः ॥२३॥ क तर्हि कथानां विनियोग इत्याशंक्य सन्निधानाद्विद्यास्वित्याह-तथा चेति ॥ प्ररोचनं प्रीतिजननम् ॥ " स प्रजापतिर्वपामुदखिदद्" होमायोद्धृतवानित्यस्य "प्राजापत्यमजन्तूपरमालभेत्" इति विधिशेषत्वम् ।

भामती ।

आख्यानविशेषणत्वे त्वर्थवत् । तस्माद्विशेषणानुरोधात्सर्वशब्दस्तदपेक्षो न त्वशेषवचनः । यथा सर्वे ब्राह्मणा भोजयितव्या इत्यत्र निमन्त्रितापेक्षः सर्वशब्दः । तथा चोपनिषदाख्यानानां विद्यासंनिधिरप्रतिद्वन्द्वी विद्यैकवाक्यतां सोऽरोदीदित्यादीनामिव विध्येकवाक्यत्वं गमयतीति सिद्धम् । प्रतिपत्तिसौकर्याच्चेत्यु-

आनन्दगिरीय-न्यायनिर्णयः ।

अश्वमेधे प्रथमेऽहनि मनुर्वैवस्वतो राजेत्याह । द्वितीयेऽहनि यमो वैवस्वत इति । तृतीयेऽहनि वरुण आदित्य इत्याद्याख्यानविशेषा वाक्यशेषे श्रुतास्तद्बलादुपक्रमस्य संकोचो युक्तः । न चोपक्रमस्थसर्वशब्दादुपसंहारस्था विशेषोक्तिरुपलक्षणार्थेति वाच्यम् । आदौ सर्वाण्याख्यानानि पारिप्लवे शंसतीत्युक्त्वा पारिप्लवमाचक्षीतेति च विधाय मनुर्वैवस्वत इत्यादि पठ्यते । तत्र पुनर्विधानं वाक्यशेषस्याख्याननियमार्थमन्यथा वैयर्थ्यात् । सर्वशब्दोऽपि वाक्यशेषस्थोपाख्यानमध्यस्थकतिपयप्रयोगमात्रेणोपरमं व्यावर्तहितुमित्यर्थवानिति मत्वा सिद्धान्तं विवृणोति-पारिप्लवमिति । यत्त्वाख्यानसामान्यात्पारिप्लवार्था इमाः श्रुतय इति तत्राऽऽह-आख्यानेति । विशेषणफलं निगमयति-तस्मादिति ॥ २३ ॥ तर्हि कुत्राऽऽख्यानान्युपयुक्तानीत्याशंक्य विशेषण श्रुत्या सर्वश्रुतौ भग्नायां निर्बाधः संनिधिर्विद्यास्वेवोपनिषदाख्यानानि नियुञ्जीतेत्याह-तथा चेति । सूत्रार्थं विवृणोति-असतीति । एकवाक्यतोपसंबन्धं विभजते-तथाहीति । प्ररोचनमनुरागजननम् । संनिहितविद्याभिराख्यानानामेकवाक्यताप्रतीतिमुदाहरति-मैत्रेयीति । आख्यानत्वेऽपि पारिप्लवार्थत्वादर्शनाच्च न तादर्थ्यं प्रकृताख्यानानामित्याह-यथेति । उदखिददुद्धृतवान्होमायेति यावत् । श्रुतिलिङ्गसंनिधिभिर्विद्यार्थत्वे सिद्धे फलितमुपसंहरति—

नानां सन्निहितविधिस्तुत्यर्थता, तद्वत् ॥ तस्मान्न पारिप्लवार्थत्वम् ॥२४॥ इति पारिप्लवार्थाधिकरणम् ॥ ४ ॥

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥ (५) ॥

"पुरुषार्थोऽतःशब्दाद्" [ व्या० सू० ३ । ४ । १ ।] इत्येतद्व्यवहितमपि सम्भवादत इति परामृश्यते । अत एव च विद्यायाः पुरुषार्थहेतुत्वाद्-ग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानीत्याद्य-स्यैवाधिकरणस्य फलमुपसंहरत्यधिकविवक्षया ॥ २५ ॥ इत्यग्नीन्धनाधि-करणम् ॥ ५ ॥

---

रत्नप्रभा ।

एवमन्येषां तत्तद्विधिशेषत्वं द्रष्टव्यम् ॥२४॥ (४) ॥ एवमाद्याधिकरणप्रमेयं विद्यास्वातन्त्र्यमधिकरणत्रयेण दृढीकृत्य आद्याधिकरणस्य फलमाह—**अत एवेति** ॥ ब्रह्मविद्या स्वफले मोक्षे जनयितव्ये सहकारित्वेन कर्माण्यपेक्षते न वेति वादिविवादात्संशये "तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च" इत्यादिश्रुत्या ज्ञानकर्मसमुच्चयेन मोक्षप्राप्तिकथनादपेक्षत इति प्राप्ते विद्याया मुक्तिहेतुत्वादविद्यानिवृत्त्याख्यमुक्तौ न कर्मापेक्षेति सिद्धान्त-यति—**पुरुषार्थ इति** ॥**अग्नीन्धनपदेन**—तत्साध्यकर्माणि लक्ष्यन्ते । पुण्यकृत्तैजसः शुद्धसत्त्वो ब्रह्मविद्भूतः **तेन** वेदनेन **एति** ब्रह्म॰ प्राप्नोतीति श्रुतिर्व्याख्येयेति भावः ॥ मुक्तावेव कर्मणामसामर्थ्यादनपेक्षा, अविद्यायां त्वस्ति चित्तशुद्धिद्वारा तेषामपेक्षेत्यधिकं वक्तुमयमुपसंहार इत्युपसंहारसूत्रस्य फलमाह—**अधिकेति** २५।(५)॥

भामती ।

पाख्यानेन हि बाला अप्यवधीयन्ते यथा तन्त्रोपाख्यायिकयेति ॥२३॥२४॥ (५)॥ **अत एव चाग्नीन्ध-नाद्यनपेक्षा** । विद्यायाः क्रत्वर्थत्वे सति तया क्रतूपकरणाय स्वकार्याय क्रतुरपेक्षितः । तदभावे कस्यो-पकारो विद्ययेति । यदा तु पुरुषार्था तदा नानया क्रतुरपेक्षितः स्वकार्ये निरपेक्षाया एव तस्याः साम-र्थ्यात् । अग्नीन्धनादिना चाश्रमकर्माण्युपलक्ष्यन्ते तदाह—**अग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानीति** । स्वार्थसिद्धौ नापेक्षितव्यानि न तु स्वसिद्धाविति । एतच्चाधिकमु-परिष्टाद्वक्ष्यते । तद्विवक्षया चैतत्प्रयोजनं पूर्वतनस्याधिकरणस्योक्तम् ॥२५॥(५)॥ अधिकविवक्षयेति यदुक्तं

आनन्दगिरीय—न्यायनिर्णयः ।

**तस्मादिति** ॥ २४ ॥ ( ४ ) ॥ कथानां विद्याशेषत्वे दर्शिते कर्मणामपि तर्हि तच्छेषत्वं तच्छेषत्वा-भावेऽपि स्यादित्याशंक्य प्रसङ्गागतं विचारं परिसमाप्य पुरुषार्थाधिकरणस्य फलमाह—**अत इति** । ब्रह्मविद्या मोक्षे कर्माणीतिकर्तव्यत्वेनापेक्षते न वेति वादिविप्रतिपत्तेः संदेहे यज्ञेनेति विविदिषायां विनियुक्त-यज्ञादीनां विषयसौन्दर्यलभ्यायां तस्यामनन्वयात्तद्विषयज्ञानसाध्यमोक्षान्वयस्य युक्तत्वादपेक्षत इति पूर्वपक्षे काष्ठैः पचतीत्यत्र पाकसाधनज्वालाजनककाष्ठानां पाकहेतुत्वदर्शनाज्ज्ञानेच्छाजनकान्तःकरणशुद्धिहेतुत्वेन यज्ञादीनां ज्ञानेच्छाहेतुत्वसिद्धेः साक्षादेव मोक्षान्वये च यज्ञेनेत्यादिकरणविभक्तिभङ्गात्पारंपर्यस्यैवोपेयत्वान्नापे-क्षत इति सिद्धान्तः । एतदभिप्रेत्य संनिहितस्यातःशब्दपरामर्शयोग्यस्याभावादतःपदानुपपत्तिमाशंक्य सूत्राक्षराणि योजयति **पुरुषार्थ इति** । आद्याधिकरणे यथा विद्यायाः स्वातन्त्र्येण पुमर्थहेतुत्वमुक्तं तच्च तथैवानूद्यते तथा चाऽऽत्रेयादिष्वदर्शनान्न पुरुषार्थहेतुत्वं कर्मापेक्षाविरोधीति निरस्तम् । न चात्र पादादिसंगतिर्वक्तव्या प्रथमाधिकरणस्यैव तत्फलविषयस्यास्य तस्याः सुगमत्वात्फलमपि पूर्वोत्तरपक्षयोस्तद्व-देवेत्यभिप्रेत्याऽऽह—**आद्यस्येति** । स्वार्थसिद्धावेवानपेक्षा न तु स्वसिद्धौ तत्र तदपेक्षाऽस्तीत्यन्तराधि-करणे निर्देष्टुमुपसंहार इति तत्फलमाह—**अधिकेति** ॥ २५ ॥ ( ५ ) ॥ ब्रह्मविद्या स्वफले न

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥ (६) ॥

**इदमिदानीं चिन्त्यते—किं विद्याया अत्यन्तमेवानपेक्षाऽऽश्रमकर्मणाम्—उत—अस्ति काचिदपेक्षेति । तत्रात एवाग्नीन्धनादीन्याश्रमकर्माणि विद्यायाः स्वार्थसिद्धौ नापेक्ष्यन्ते इत्येवमत्यन्तमेवानपेक्षायां प्राप्तायाम्—**

रत्नप्रभा ।

अधिकमाह—**सर्वापेक्षेति** ॥ यथा प्रमाफलत्वादविद्यानिवृत्तौ कर्मानपेक्षा, तथा प्रमात्वाद्विद्यायामपि प्रमाकरणमात्रसाध्यायां नास्ति कर्मापेक्षेति **पूर्वपक्षः** । तत्र विद्यार्थं कर्मानुष्ठानासिद्धिः फलं, **सिद्धान्ते** तत्सिद्धिरिति भेदः । अत्र विविदिषायाम्, इष्यमाणज्ञाने वा,—यज्ञादीनां कर्मणां हेतुत्वमपूर्वत्वाद्विधीयते । प्रमाया अप्युत्पत्तिप्रतिबन्धकदुरितक्षयाख्यशुद्धिद्वारा कर्मसाध्यत्वसंभवात् । न च पारम्पर्ये तृतीयाश्रुतिविरोधः । ज्वालाद्वारा पारम्पर्येऽपि काष्ठैः पचतीति प्रयोगात । द्वारस्याव्यवधायकत्वात् । न च शुद्धेर्द्वारत्वे मानाभावः । "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इति स्मृतेः, "अविद्यया मृत्युंतीर्त्वा विद्ययामृतमश्नुते" इत्यादिश्रुत्या कर्मणा पापनिवृत्तौ ज्ञानेन मुक्त्यभिधानाच्चेति सिद्धान्तयति—**इदमिति** ॥ नन्वत्र "विविदिषन्ति" इति पञ्चमलकारेण

भामती ।

तदधिकमाह—**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्** । यथा स्वार्थसिद्धौ नापेक्ष्यन्ते आश्रमकर्माणि एवमुत्पत्तावपि नापेक्ष्येरन्निति शङ्का स्यात् । न च विविदिषन्ति यज्ञेनेत्यादिविरोधः । न ह्येष विधिरपि तु वर्तमानापदेशः । स च स्तुत्याप्युपपद्यते । अपि च चतस्रः प्रतिपत्तयो ब्रह्मणि। प्रथमा तावदुपनिषद्वाक्यश्रवणमात्राद्भवति यां किलाचक्षते श्रवणमिति । द्वितीया मीमांसासहिता तस्मादेवोपनिषद्वाक्याद्यामाचक्षते मननमिति । तृतीया चिन्ता सन्ततिमयी यामाचक्षते निदिध्यासनमिति । चतुर्थी साक्षात्कारवती वृत्तिरूपा नान्तरीयकं हि तस्याः कैवल्यमिति । तत्राद्ये तावत्प्रतिपत्ती विदितपदतदर्थस्य विदितवाक्यगतिगोचरन्यायस्य च पुंस उपपद्येते एवेति न तत्र कर्मापेक्षा । ते एव च चिन्तामयीं तृतीयां प्रतिपत्तिं प्रसुवाते इति न तत्रापि कर्मापेक्षा । सा चादरनैरन्तर्यदीर्घकालसेविता साक्षात्कारवतीमाधत्त एवं प्रतिपत्तिं चतुर्थीमिति न तत्राप्यस्ति कर्मापेक्षा तन्नान्तरीयकं च कैवल्यमिति न तस्यापि कर्मापेक्षा । तदेवं प्रमाणतश्च प्रमेयत उत्पत्तौ च कार्ये च न ज्ञानस्य कर्मापेक्षेति बीजं शङ्कायाम् । एवं प्राप्त उच्यते—उत्पत्तौ ज्ञानस्य कर्मापेक्षा विद्यते विविदिषोत्पादद्वारा 'विविदिषन्ति यज्ञेन' इति श्रुतेः । न चेदं वर्तमानापदेशत्वात्स्तुतिमात्रमपूर्वत्वादर्थस्य । यथा यस्य पर्णमयी जुहूर्भवतीति पर्णमयताविधिरपूर्वत्वान्न त्वयं वर्तमानापदेशः, अनुवादानुपपत्तेः । तस्मादुत्पत्तौ विद्यया शमादिवत् कर्माण्यपेक्ष्यन्ते । तत्राप्येवंविदिति विद्यास्वरूपसंयोगा-

आनन्दगिरीय—न्यायनिर्णयः ।

कर्मापेक्षा प्रमात्वात्संमतवदित्युक्तम् । तर्हि न स्वोत्पत्तावपि तदपेक्षा प्रमात्वात्तद्वदेवेत्याशङ्क्याऽऽह—**सर्वेति** । अधिकविवक्षयेत्युक्तं व्यक्तीकुर्वन्नह्मविद्यामधिकृत्य पूर्वाधिकरणन्यायाद्विविदिषाश्रुतेश्च संशयमाह—**इदमिति** । अत्र च स्वतन्त्रपुरुषार्थहेत्वौपनिषदात्मज्ञानोत्पत्तौ यज्ञादीनां शमादीनां च विविदिषावाक्यीयविनियोगोक्तेरस्ति पादादिसंगतिः । पूर्वपक्षे यज्ञादीनां विज्ञानान्वये तत्फलेऽपि तत्प्रसक्त्या समुच्चयसिद्धिः । सिद्धान्ते परंपरया तेषां ज्ञानान्वयेऽपि तत्फलान्वये हेत्वभावात्तदसिद्धया ज्ञानस्यैव तद्धेतुतासिद्धिरित्यङ्गीकृत्य पूर्वपक्षयति—**तत्रेति** । अपरोक्षधियो मानमात्रायत्तत्वात्प्रामाणिकज्ञानस्य मानहेतुषु सत्सु :कर्माद्यभावेनानुदयादर्शनात्केवलव्यतिरेकाभावे च यज्ञादीनां हेतुत्वकल्पनायोगाद्विविदिषाश्रुतेश्च वर्तमानापदेशित्वाद्विनियोजकत्वायोगाज्ज्ञानस्य फलवदुत्पत्तावपि नान्वयस्तेषामिति भावः । विविदिषावाक्ये वर्तमा-

**मिदमुच्यते–सर्वापेक्षा चेति । अपेक्षते च विद्या सर्वाण्याश्रमकर्माणि, नात्यन्तमनपेक्षैव ॥ ननु विरुद्धमिदं वचनम्–अपेक्षते चाश्रमकर्माणि विद्या, नापेक्षते चेति ॥ नेति ब्रूमः ॥ उत्पन्ना हि विद्या फलसिद्धिं प्रति न किञ्चिदन्यदपेक्षते । उत्पत्तिं प्रति त्वपेक्षते ॥ कुतः ॥ यज्ञादिश्रुतेः ॥ तथाहि श्रुतिः–"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" [ बृ० ४ । ४ । २२ ] इति,–यज्ञादीनां विद्यासाधनभावं दर्शयति । विविदिषासंयोगाच्चैषामुत्पत्तिसाधनभावोऽवसीयते। "अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्" [ छां० ८ । ५ । १ ] ॥**

रत्नप्रभा ।

विविदिषां भावयेयुरिति सनर्थेच्छैव भाव्यतया भाति । तां विषयसौन्दर्यलभ्यतयोल्लंघ्य वेदनं चेद्भाव्यमुच्येत, **तर्हि** वेदनमप्युल्लंघ्य तत्फलं मोक्ष एव कर्मभिर्भाव्यः किं न स्यादित्यत आह–**विविदिषासंयोगाच्चेति** ॥ इष्यमाणतया विद्यायाः शब्दतः फलत्वमानादश्रुतमोक्षो न फलम् । अन्यथा काष्ठैः पचतीत्यत्रापि काष्ठानां पाकफलतृप्तिहेतुत्वप्रसङ्गादिति भावः ॥ कर्मणां ज्ञानार्थत्वे लिंगवाक्यान्याह–**अथेत्यादिना** ॥

भामती ।

दन्तरङ्गाणि विद्योत्पादे शमादीनि, बहिरंगाणि कर्माणि विविदिषासंयोगात् । तथाहि–आश्रमविहितनित्यकर्मानुष्ठानाद्धर्मसमुत्पादस्ततः पाप्मा विलीयते । स हि तत्त्वतोऽनित्याशुचिदुःखानात्मनि संसारे सति नित्यशुचिसुखात्मलक्षणेन विभ्रमेण मलिनयति चित्तसत्त्वमधर्मनिबन्धनत्वाद्विभ्रमाणाम् । अतः पाप्मनः प्रक्षये प्रत्यक्षोपपत्तिद्वारापावरणे सति प्रत्यक्षोपपत्तिभ्यां संसारस्य तात्त्विकीमनित्याशुचिदुःखरूपतामप्रत्यूहं विनिश्चिनोति । ततोऽस्मिन्ननभिरतिसंज्ञं वैराग्यमुपजायते । ततस्तज्जिहासाऽस्योपावर्तते । ततो हानोपायं पर्येषते पर्येषमाणश्चात्मतत्त्वज्ञानमस्योपाय इति शास्त्रादाचार्यवचनाच्चोपश्रुत्य तज्जिज्ञासत इति विविदिषोपहारमुखेनात्मज्ञानोत्पत्तावस्ति कर्मणामुपयोगः । विविदिषुः खलु युक्त एकाग्रतया श्रवणमनने कर्तुमुत्सहते । 'ततोऽस्य तत्त्वमसि' इतिवाक्यान्निर्विचिकित्सज्ञानमुत्पद्यते । न च निर्विचिकित्सं तत्त्वमसीति वाक्यार्थमवधारयतः कर्मण्यधिकारोऽस्ति । येन भावनायां वा भावनाकार्ये वा साक्षात्कारे कर्मणामुपयोगः । एतेन वृत्तिरूपसाक्षात्कारकार्येऽपवर्गे कर्मणामुपयोगो दूरनिरस्तो वेदितव्यः, तस्माद्यथैव शमादयो यावज्जीवमनुवर्तन्ते एवमाश्रमकर्मापीत्यसमीक्षिताभिधानम् । विदुषस्तत्रानधिकारादित्युक्तम् । दृष्टार्थेषु

आनन्दगिरीय–न्यायनिर्णयः ।

नापदेशेऽपि यस्य पर्णमयीत्यादाविवापूर्ववत्वात्पञ्चमलकारेण ब्रह्मानुभवकामो यज्ञादीनि कुर्यादिति विध्युपगमादागमस्य केवलव्यतिरेकानपेक्षत्वाद्विषयसौन्दर्यलभ्यायामिच्छायां साक्षादन्वयायोगात्तत्फले ज्ञाने यज्ञाद्यन्वयसिद्धेर्यज्ञेनेत्यादिकरणश्रुत्या च तेषामिष्यमाणापरोक्षधीसाधनत्वदृष्टेर्ज्ञानस्य च मानायत्ततया साक्षाद्यज्ञाद्यसाधनत्वेऽपि तेषां चित्तशुद्ध्या प्रत्यक्प्रवणतामुत्पाद्यापरोक्षज्ञाने पर्यवसानात्पारंपर्येऽपि पचति काष्ठैरितिवत्करणविभक्तिसंभवादुत्पत्तौ ज्ञानस्य कर्मापेक्षाऽस्तीति सिद्धान्तयति–**इदमिति** । आपातेन पूर्वापरविरोधप्रतीतिं शङ्कते–**नन्विति** । विभागोक्त्या प्रत्याह–**नेतीति** । उक्तव्यवस्थायां प्रश्नपूर्वकं हेतुमाह–**कुत इति** । हेतुं विवृणोति–**तथाहीति** । नन्वत्र विविदिषासंयोगो यज्ञादीनां ज्ञायते यदि तस्यां विषयसौन्दर्यलभ्यायां तेषामन्वयायोगादिष्यमाणे ज्ञानेऽन्वयोऽभ्युपगम्यते तर्हि ज्ञानस्य मानाधीनत्वात्कर्मणां तत्रान्वयासिद्धेः श्रुतत्यागेन तत्फले मोक्षे किमित्यन्वयो नेष्यते तत्राऽऽह–**विविदिषेति** । मोक्षहेतुत्वकल्पनायां नास्त्यक्षतः कृतेनेत्यादिविरोधात्परंपरयाऽपि हेतुत्वे बाधाभावाद्बुद्धिशुद्ध्या तदुत्पत्तावेवान्वयो यज्ञादीनामित्यर्थः । यज्ञादिश्रुतेरिति वाक्यान्तरमपि प्रहीतव्यमित्याह–**अथेति** । तत्र यज्ञादीनां

इत्यत्र च विद्यासाधनभूतस्य ब्रह्मचर्यस्य यज्ञादिभिः संस्तवाद्यज्ञादीनामपि साधनभावः सूच्यते। "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि" [कठ० १।२।१५] इत्येवमाद्या च श्रुतिराश्रमकर्मणां विद्यासाधनभावं सूचयति। स्मृतिरपि—"कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः। कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते॥" इत्येवमाद्या। अश्ववदिति योग्यतानिदर्शनम्॥ यथा-योग्यतावशेनाश्वो न लाङ्गलाकर्षणे युज्यते, रथचर्यायां तु युज्यते, एवमाश्रमकर्माणि विद्यया फलसिद्धौ नापेक्ष्यन्ते, उत्पत्तौ त्वपेक्ष्यन्ते-इति॥ २६॥

## शमदमाद्युपेतस्स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्॥ २७॥

यदि कश्चिन्मन्येत-न यज्ञादीनां विद्यासाधनभावो न्याय्यः। विध्यभावात्। "यज्ञेन विविदिषन्ति" इत्येवमादिका हि श्रुतिरनुवादस्वरूपा विद्यास्तुतिपरा, न यज्ञादिविधिपरा। इत्थं महाभागा विद्या यद्यज्ञादिभिरेनामवाप्तुमिच्छन्तीति। तथापि तु "शमदमाद्युपेतः स्यात्" विद्यार्थी "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति" [बृ० ४।४।२३] इति विद्यासाधनत्वेन शमदमादीनां विधानात्। विहितानाञ्चावश्यानुष्ठेयत्वात्॥ नन्वत्रापि शमाद्यु-

---

रत्नप्रभा।

कश्चिद्वेदभागः साक्षाद्ब्रह्माख्यं पदं ब्रूते, कश्चित्तु ज्ञानार्थकर्मद्वारेति मत्वा "सर्वे वेदाः" इत्युक्तम्—स्पष्टमन्यत्॥ २६॥ एवं विद्योत्पत्तौ बहिरङ्गानि कर्माण्युक्त्वाऽन्तरंगाण्याह—शमेति॥ विद्यास्तुत्यर्थत्वेनैकवाक्यत्वसंभवे वर्तमानोक्तिभङ्गेन विधिकल्पनमयुक्तम्। विद्यावाक्याद्भेदप्रसंगाद्। अतः शब्दमात्राल्लभ्या विद्येति पराभिप्रायमनूद्यांगीकरोति—तथापि त्विति॥ शमादेरावश्यकत्वान्न शब्दमात्रलभ्या विद्येत्यर्थः॥ यस्मादेवंविन्न लिप्यते कर्मणा पापकेन तस्मादेवं विद्यार्थी शमाद्युपेतो भूत्वा विचारयेदिति विधिर्गम्य

भामती।

तु कर्मसु प्रतिषिद्धवर्जमनधिकारेऽप्यसक्तस्य स्वारसिकी प्रवृत्तिरुपपद्यत एव। न हि तत्रान्वयव्यतिरेकसमधिगमनीयफलेऽस्ति विध्यपेक्षा। अतश्च 'भ्रान्त्या चेल्लौकिकं कर्म वैदिकं च तथास्तु ते' इति प्रलापः। शमदमादीनां तु विद्योत्पादायोपात्तानामुपरिष्टादवस्थास्वाभाव्यादनपेक्षितानामप्यनुवृत्तिः। उपपादितं

आनन्दगिरीय-न्यायनिर्णयः।

ज्ञानसाधनत्वे विज्ञातं लिङ्गमाह-अत्रेति। तत्रैव लिङ्गान्तरमाह—सर्व इति। परंपरया कर्मणां धीहेतुत्वे स्मृतिमपि दर्शयति-स्मृतिरिति। उत्पत्ताविव फलेऽपि ज्ञानस्य कर्मापेक्षा किं न स्यादित्याशङ्क्य दृष्टान्तमादाय व्याकरोति—अश्ववदित्यादिना॥ २६॥ ज्ञानोत्पत्तौ बहिरङ्गमुक्त्वा तत्रैवान्तरङ्गमुपदिशति-शमदमादीति। अत्र व्यावर्त्यां शङ्कामाह-यदीति। विद्यास्तावकत्वेनापि संभवत्यर्थवत्त्वे वर्तमानताभंगेन विधिकल्पनमयुक्तं वाक्यभेदप्रसंगात्। अतः शब्दमात्रलभ्या विद्येति भावः। एवं तदभिप्रायेऽपि हेत्वन्तरमवश्यमनुष्ठेयं न शब्दमात्रलभ्या विद्येति सूत्रयोजनया परिहरति-तथाऽपीति। विविदिषावाक्यतुल्यतया शमादिवाक्यस्य नास्ति विधिपरतेति शङ्कते-नन्विति। यस्मादेवमात्मानं विदित्वा

पेतो भूत्वा पश्यतीति वर्तमानापदेश उपलभ्यते, न विधिः ॥ नेति ब्रूमः॥ तस्मादिति प्रकृतप्रशंसापरिग्रहाद्विधित्वप्रतीतेः । "पश्येद्" इति च माध्यन्दिना विस्पष्टमेव विधिमधीयते । तस्माद्यज्ञाद्यनपेक्षायामपि शमादीन्यपेक्षितव्यानि । यज्ञादीन्यपि त्वपेक्षितव्यानि । यज्ञादिश्रुतेरेव ॥ ननूक्तं यज्ञादिभिर्विविदिषन्तीत्यत्र न विधिरुपलभ्यत इति॥सत्यमुक्तम्॥ तथापि त्वपूर्वत्वात् संयोगस्य विधिः परिकल्प्यते।न ह्ययं यज्ञादीनां विविदिषासम्बन्धः पूर्वं प्राप्तः।येनानूद्येत।"तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि" इत्येवमादिषु चाश्रुतविधिकेष्वपि वाक्येष्वपूर्वत्वाद्विधिं परिकल्प्य "पौष्णं

रत्नप्रभा ।

इत्याह—नेति ब्रूम इति॥ अत्र उपरतपदेन संन्यासः उक्तः। तस्य श्रवणाङ्गत्वम् । अतः शमादिविशिष्टश्रवणमत्र विधीयते । यदि तु "लोकमिच्छन्तः प्रव्रजन्ति" "ज्ञानं पुरस्कृत्य संन्यसेद्" इत्यादिश्रुतिस्मृतिषु फलवत्त्वेनोत्पन्नसंन्यासस्याङ्गत्वायोगात् । "श्रोतव्यः" इतिविहितश्रवणानुवादेन अनेकशमादिविधाने वाक्यभेदापातात् "पश्येद्" इति च प्रकृत्या श्रवणलक्षणादोषाच्च संन्यासो न श्रवणस्याङ्गम् । किंतु ततः प्रागनुष्ठेयत्वेपि श्रवणवद् ज्ञानार्थं इति मतं, तदा शमादिसमुच्चयेन ज्ञानं भावयेदिति ज्ञानार्थं शमादिसमुच्चयविधिरित्यनवद्यम् । यः पूर्वं यज्ञादिश्रुतेः स्तुत्यर्थत्वाङ्गीकारः आपाततो गुडजिह्विकान्यायेन शमादिस्वीकारार्थं कृतः, तमिदानीं त्यजति—यज्ञादीन्यपीति ॥ यज्ञादीनां विद्यासाधनत्वरूपसंयोगस्यापूर्वत्वादवान्तरवाक्यभेदेन विधिः स्वीक्रियते, ब्रह्मविद्यावाक्येन महावाक्यैकवाक्यता चेत्यर्थः ॥ परप्रकरणेप्यवान्तरविधिरित्यत्र पूर्वतन्त्रसंगतिमाह—तस्मात्पूषेति ॥ दर्शपूर्णमासप्रकरणे श्रुतं "पूषा प्रपिष्टभागः इति । तत्र पूषा देवता पिष्टभागो वा दर्शपूर्णमासयोर्नास्ति । अतः समासात्प्रतीतस्य कालत्रयानवमृष्टस्य द्रव्यदेवतासंबन्धस्य अविनाभावेन यागविध्युपस्थापकत्वात् प्रयोगज्ञानाय विधिपदमध्याहृत्य प्रकरणादुत्कर्षेण पूषोद्देशेन पिष्टभागः कर्तव्य इति विकृतौ संबन्धः "पौष्णं पेषणम्" इति सूत्रे विचारित इत्यर्थः॥

भामती ।

चैतदस्माभिः प्रथमसूत्र इति नेह पुनः प्रत्याय्यते । तस्माद्विविदिषोत्पादद्वाराश्रमकर्मणां विद्योत्पत्तावुप-

आनन्दगिरीय—न्यायनिर्णयः ।

पापेन कर्मणा न लिप्यते तस्मादेवं विद्यार्थी शमाद्युपेतो भूत्वा विचारयेदिति गम्यते विधिरित्याह—नेतीति । विध्यभावे तत्प्रशंसावैयर्थ्याद्युक्तविधिसिद्धिरित्यर्थः । काण्वपाठे विधिमुक्त्वा माध्यंदिनपाठे विध्यभावशङ्काऽपि नास्तीत्याह—पश्येदिति चेति । विधिफलमाह—तस्मादिति । यज्ञादीनामसाधनत्वशंकामापाततोऽभ्युपेत्य साधनान्तरापेक्षोक्ता । इदानीं तदसाधनत्वशंकाऽपि न युक्तेत्याह—यज्ञादीनीति । उक्तं स्मारयित्वा परिहरति—नन्वित्यादिना । संयोगस्यापूर्वत्वमेव स्पष्टयति—न हीति । सत्यपि महावाक्यैक्येऽनुष्ठानयोग्यापूर्वार्थविधिरवान्तरवाक्येन क्रियते न तत्र वाक्यभेदो दोष इत्यत्र पूर्वतन्त्रसंगतिमाह—तस्मादिति । दर्शपूर्णमासयोः श्रुतं तस्मात्पूषेत्यादि । तत्र पूष्णः पिष्टद्रव्यसंबन्धः सामासिकः । न च पूषा देवता पिष्टभागो द्रव्यं दर्शपूर्णमासयोरस्ति तेन तदेकवाक्यतायोगात्कालत्रयास्पृष्टद्रव्यदेवतासंबन्धस्याविनाभावेन यागविध्युपस्थापकत्वाद्व्यवहारसिद्धये विधिपदमध्याहृत्य प्रकरणादुत्कर्षेण पूषोद्देशेन पिष्टभागः कर्तव्य इति विकृतौ संबन्धः "पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ" [ जै० सू० ३ । ३ । ३० ] इत्यत्र विचारित इत्यर्थः । अवान्तरवाक्यभेदेन सूत्रकृताऽपि स्वीकृतो विधिरित्याह—

पेषणं विकृतौ प्रतीयेत" [ जै० सू० ३ । ३ । ३४ ] इत्यादिविचारः प्रथमे तन्त्रे प्रवर्तितः । तथा चोक्तं-"विधिर्वा धारणवद्" [ व्या० सू० ३।४।२०] इति । स्मृतिष्वपि भगवद्गीताद्यास्वनभिसन्धाय फलमनुष्ठितानि यज्ञादीनि मुमुक्षोर्ज्ञानसाधनानि भवन्तीति प्रपञ्चितम् ॥ तस्मायज्ञादीनि,शमादीनि च,-यथाश्रमं सर्वाण्येवाश्रमकर्माणि विद्योत्पत्तावपेक्षितव्यानि । तत्रापि-"एवंविद्" [ बृ० ४।४।२३] इति विद्यासंयोगात्प्रत्यासन्नानि विद्यासाधनानि शमादीनि, विविदिषासंयोगात्तु बाह्यानीतराणि यज्ञादीनीति विवेक्तव्यम् ॥२७॥ इति सर्वापेक्षाधिकरणम् ॥६॥

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥ (७) ॥

रत्नप्रभा ।

"स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इत्याद्याः स्मृतयः । कर्मणां ज्ञानहेतुत्वे शमादिवद्यावज्ज्ञानोदयमनुवृत्तिः स्यात् । तथा च संन्यासाभाव इत्यत आह-तत्रापीति ॥ दृष्टविक्षेपनिवृत्तिद्वारा शमादीनां ज्ञानार्थत्वादनुवृत्तिः, न कर्मणाम् । अदृष्टद्वारा ज्ञानार्थत्वादिति भावः ॥ २७ ॥ ( ६ ) ॥ सर्वा-

भामती ।

योगो न विद्याकार्य इति सिद्धम् । शेषमतिरोहितार्थम् ॥२६॥२७॥(६)॥ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् । प्राणसंवादे सर्वेन्द्रियाणां श्रूयते । एष किल विचारविषयः—सर्वाणि खलु वागादीन्यवजित्य प्राणो मुख्य उवाचैतानि किं मेऽन्नं भविष्यतीति तानि होचुः । यदिदं लोकेऽन्नमा च श्वभ्य आ च शकुनिभ्यः सर्वप्राणिनां यदन्नं तत्तवान्नमिति । तदनेन संदर्भेण प्राणस्य सर्वमन्नमित्यनुचिन्तनं विधायाह श्रुतिः—'न ह वा एवंविदि किंचनानन्नं भवति' इति । सर्वं प्राणस्यान्नमित्येवंविदि न किंचनानन्नं भवतीति । तत्र संशयः—किमेतत्सर्वान्नाभ्यनुज्ञानं शमादिवदेतद्विद्याङ्गतया विधीयत उत स्तुत्यर्थं संकीर्त्यत इति । तत्र यद्यपि भवतीति वर्तमानापदेशान्न विधिः प्रतीयते । तथापि यथा यस्य पर्णमयी जुहूर्भवतीति वर्तमानापदेशादपि पलाशमयीत्वविधिप्रतिपत्तिः पञ्चमलकारापत्त्या तथेहापि प्रवृत्तिविशेषकरत्वालाभे विधिप्रतिपत्तिः । स्तुतौ हि अर्थवादमात्रं न तथार्थवद्यथा विधौ । भक्ष्याभक्ष्यशास्त्रं च सामान्यतः प्रवृत्तमनेन विशेषशास्त्रेण बाध्यते । गम्यागम्यविवेकशास्त्रमिव सामान्यतः प्रवृत्तं वामदेवविद्याङ्गभूतसमस्तस्त्र्यपरिहारशास्त्रेण विशेषविषयेणेति प्राप्त उच्यते-'अशक्तेः कल्पनीयत्वाच्छास्त्रान्तरविरोधतः । प्राणस्यान्नमिदं सर्वमिति चिन्तनसंस्तवः ॥ न तावत्कौलेयकमर्यादमन्नं मनुष्यजातिना युगपत्पर्यायेण वा शक्यमत्तुम् । इभकरभकादीनामन्नस्य शमीकरीरकण्टकवटकाष्ठादेरेकस्यापि अशक्यादनत्वात् । न चात्र लिङ इव स्फुटतरा विधिप्रतिपत्तिरस्ति । न च कल्पनीयो विधिरपूर्वत्वाभावात् । स्तुत्यापि च तदुपपत्तेः। न च सत्यां गतौ सामान्यतः प्रवृत्तस्य शास्त्रस्य विषयसंकोचो युक्तः । तस्मात्सर्वं प्राणस्यान्नमित्यनुचिन्तनविधानस्तुतिरिति साम्प्रतम् । शक्यत्वे च प्रवृत्तिविशेषकरतोपयुज्यते नाशक्यविधानत्वे । प्राणात्यय इति

आनन्दगिरीय-न्यायनिर्णयः ।

तथा चेति । स्मृत्यनुसारेणाप्यवान्तरवाक्यस्य विधायकत्वं वाच्यमित्याह-स्मृतिष्विति । कर्मणां ज्ञानोत्पत्तिहेतुत्वे श्रुतिस्मृतिन्यायसिद्धे फलितमाह—तस्मादिति । यज्ञादीनामपि श्रुतिस्मृतिन्यायेभ्योऽनुष्ठेयत्वे शमादीनां तेभ्यो विशेषाभावाद्यावद्विद्योदयमविशेषेणानुष्ठानं स्यादित्याशंक्याऽऽह—तत्रापीति ॥ ॥ २७ ॥ ( ६ ) ॥ यज्ञादीनां शमादीनां च विद्यासंनिहितानां तच्छेषतोक्ता तत्प्रसङ्गाद्विद्यासंनिध्युक्तसर्वान्नाभ्यनुज्ञानस्यापि विद्याशेषतामाशंक्य प्रत्याह-सर्वान्नेति । प्राणविदः सर्वान्नानुज्ञानं विषयं वक्तुं

 

प्राणसंवादे श्रूयते छन्दोगानां—"न ह वा एवंविदि किञ्चनानन्नं भवति" [ छां० ५ । २ । १ ] इति । तथा वाजसनेयिनां "न ह वा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतम्" [ बृ० ६ । १ । १४ ] इति । सर्वमस्यादनीयमेव भवतीत्यर्थः ॥ किमिदं सर्वान्नानुज्ञानं शमादिवद्विद्याङ्गं विधीयते—उत—स्तुत्यर्थं संकीर्त्यत इति संशये—विधिरिति तावत्प्राप्तम् । तथाहि प्रवृत्तिविशेषकर उपदेशो भवति । अतः प्राणविद्यासन्निधानात्तदङ्गत्वेनेयं नियमनिवृत्तिरुपदिश्यते ॥ नन्वेवं सति भक्ष्याभक्ष्यविभागशास्त्रव्याघातः स्यात् ॥ नैष दोषः ॥ सामान्यविशेषभावाद्बाधोपपत्तेः । यथा—प्राणिहिंसाप्रतिषेधस्य पशुसंज्ञपनविधिना बाधः, यथा च—"न काञ्चन परिहरेत्तद्व्रतम्" [ छां० २ । १३ । २ ] इत्यनेन वामदेव्यविद्याविषयेण सर्वस्त्र्यपरिहारवचनेन सामान्यविषयं गम्यागम्यविभागशास्त्रं बाध्यते, एवमनेनापि प्राणविद्याविषयेण सर्वान्नभक्षणवचनेन भक्ष्याभक्ष्यविभागशास्त्रं बाध्येतेति ॥ एवं प्राप्ते ब्रूमः ॥ नेदं सर्वान्नानुज्ञानं विधीयत इति । न ह्यत्र विधायकः शब्द उपलभ्यते । "न ह वा एवंविदि किञ्च-

रत्नप्रभा ।

न्नानुमतिरिति ॥ एवंविदि प्राणस्यान्नं सर्वमिति ध्यानवतीत्यर्थः ॥ जग्धं भक्षितम् । अपूर्वत्वाद्विध्यश्रुतेश्च संशयः ॥ अपूर्वत्वाद् यज्ञादिवद्विधिः कल्प्य इति पूर्वपक्षयति—विधिरिति ॥ अत्र भक्ष्याभक्ष्यनियमत्यागस्य विद्याङ्गत्वसिद्धिः फलं, सिद्धान्ते तु विद्यास्तुतिरिति विवेकः । "न कलञ्जं भक्षयेद्" इति शास्त्रं प्राणविद्व्यतिरिक्तविषयं, यथा ग्राम्यकर्मणि वामदेव्यसामोपासकव्यतिरिक्तविषयं परस्त्रीनिषेधशास्त्रं, तद्वदिति प्राप्ते सिद्धान्तं सूत्राद्बहिरेव दर्शयति—नेदमिति ॥ प्राणविधिसन्निधेः, अशक्यत्वाच,—स्तुतिरेव न विधिः कल्प्यः, निषेधशास्त्रविरोधात् । क्लृप्तो हि विधिः सामान्यशास्त्रबाधकः, न तु कल्प्य

भामती ।

त्वावधारणपरं प्राणात्यय एव सर्वान्नत्वम् । तत्रोपाख्यानाच्च स्फुटतरविधिस्मृतेश्च सुरावर्जं विद्वांसमविद्वांसं

आनन्दगिरीय—न्यायनिर्णयः ।

शाखाद्वयस्थां श्रुतिमाह—प्राणेति । जग्धं भक्षितम् । विषयवाक्यार्थं संगृह्णाति—सर्वमिति । अपूर्वत्वाद्विध्यश्रुतेश्च संशयमाह—किमिति । अत्र प्राणविद्यायाः स्वतन्त्रपुमर्थहेतोर्वाक्यार्थज्ञानोपयुक्तायाः स्तुत्यर्थं सर्वान्नानुज्ञानकीर्तनमिति कथनात्पादादिसंगतिः । पूर्वपक्षे प्राणविदो भक्ष्याभक्ष्यविभागासिद्धिः । सिद्धान्ते विदुषोऽविदुषश्चानापदि तत्सिद्धिरिति मन्वानः संशयमनूद्य पूर्वपक्षयति—विधिरितीति । विधिपक्षेऽनुष्ठानविशेषलाभं हेतुमाह—तथाहीति । सर्वान्नानुज्ञानं स्वतन्त्रमेव विधीयतामित्याशंक्य संनिधिविरोधान्मैवमित्याह—अत इति । सर्वान्नात्तृत्वं प्राणविद्याङ्गं चेत्तर्हि न कलञ्जं भक्षयेदित्यादि शास्त्रं विरुध्येतेति शंकते—नन्विति । प्राणविदतिरिक्तविषयं तदिति विरोधं परिहरति—नेत्यादिना । उपपत्तिमेव कर्मविषयदृष्टान्तेनोदाहरति—यथेति । तत्रैव विद्याविषयं दृष्टान्तमाह—यथा चेति । यदुपमन्त्रयते स हिंकार इत्यादिना ग्राम्यव्यापारगतचेष्टासु हिंकारादिदृष्टिर्विहिता सा वामदेव्यविद्या तत्रोपमन्त्रणं संकेतकरणम् । दृष्टान्तयोरर्थं दार्ष्टान्तिके योजयति—एवमिति । विविदिषावाक्ये वर्तमानापदेशेऽप्यपूर्वत्वात्पञ्चमलकारांगीकारेण विधिकल्पनवन्न हेत्यादौ वर्तमानापदेशेऽप्यपूर्वत्वाद्विधिरिति मतमनूद्य सूत्राद्बहिरेव सिद्धान्तमाह—एवमिति । तत्र हेतुमाह—न हीति । यस्य पर्णमयीत्यादाविव वर्तमानापदे-

नानन्नं भवति" [ छां० ५ । २ । १ ] इति वर्तमानापदेशात् । न चास्त्यामपि विधिप्रतीतौ प्रवृत्तिविशेषकरत्वलोभेनैव विधिरभ्युपगन्तुं शक्यते। अपि च श्वादिमर्यादं प्राणस्यान्नमित्युक्त्वेदमुच्यते-"न-एवंविदि किञ्चिदनन्नं भवति" [ छां० ५ । २ । १ ] इति । न च श्वादिमर्यादमन्नं मनुष्यदेहेनोपभोक्तुं शक्यते । शक्यते तु प्राणस्यान्नमिदं सर्वमिति विचिन्तयितुम् ॥ तस्मात्प्राणान्नविज्ञानप्रशंसार्थोऽयमर्थवादः, न सर्वान्नानुज्ञानविधिः । तद्दर्शयति-"सर्वान्नानुमतिश्च प्राणात्यये" इति ॥ एतदुक्तं भवति-प्राणात्यय एव हि परस्यामापदि सर्वमन्नमदनीयत्वेनाभ्यनुज्ञायते । "तद्दर्शनात्"। तथाहि श्रुतिश्चाक्रायणस्य ऋषेः कष्टायामवस्थायामभक्ष्यभक्षणे प्रवृत्तिं दर्शयति-"मटचीहतेषु कुरुषु" [ छां० १ । १० । १ ] इत्यस्मिन्ब्राह्मणे "चाक्रायणः किल ऋषिरापद्गत इभ्येन सामिखा-

रत्नप्रभा।

इति भावः ॥ स्वस्थस्य प्राणविदो न सर्वान्नानुमतिरित्यत्र लिंगं वदन् सूत्रं योजयति-**तद्दर्शयतीति** ॥ **मटच्यः** रक्ताः-क्षुद्रपक्षिणः-तैर्हतेषु कुरुदेशस्थसस्येषु दुर्भिक्षे जाते बाल्यया सह जायया मुनिर्देशान्तरं गच्छन्निभ्यग्रामे स्थितवान्। **इभ्यः**-हस्तिपालकः तेन-**सामिखादितान्** अर्धभक्षितान् कुत्सितमाषान् याचयित्वा भक्षितवान् । इभ्येन जलं गृहाणेत्युक्ते सत्युच्छिष्टं मे पीतं स्यादिति प्रतिषिध्य माषाः किं नोच्छिष्टा इतीभ्येनोक्ते सति माषभक्षणे जलत्यागे च कारणमुवाच-अन्नांशे मम आपदस्ति । जलपानं तु स्वेच्छातस्तटाकादौ लभ्यत इति । माषान् खादित्वा शिष्टान् जायायै दत्तवान् । सा च अनापद्गता पत्युरापदं ज्ञात्वा माषान् संरक्ष्य प्रातस्तस्मै ददौ। स च तान्खादित्वा राज्ञो यज्ञं गत्वा प्रस्तोत्रादीनाक्षिप्य प्राणादिकां प्रस्तावादिदेवताम् उपदिश्य धनं प्राप्य स्थित इति । अत्रोच्छिष्टभक्षणजलत्यागात्मकशिष्टा-

भामती।

प्रति विधानात्। न त्वन्यत्रेति। **इभ्येन** हस्तिपकेन **सामिखादितान**र्धभक्षितान्। स हि चाक्रायणो हस्तिपकोच्छिष्टान्कुल्माषान्भुञ्जानो हस्तिपकेनोक्तः । कुल्माषानिव मदुच्छिष्टमुदकं कस्मान्नानुपिबसीति । एवमुक्तस्तदुदकमुच्छिष्टदोषात्प्रत्याचचक्षे । कारणं चात्रोवाच। न वाऽजीविष्यं न जीविष्यामीतीमान्कुल्माषानखादम्। कामो म उदकपानमिति स्वातन्त्र्यं मे उदकपाने नदीकूपतडागप्रपादिषु यथाकामं प्राप्नोमीति नोच्छिष्टोदकाभावे प्राणात्यय इति तत्रोच्छिष्टभक्षणदोष इति मटचीहतेषु कुरुषु ग्लायन्नशनायया मुनिर्नि-

आनन्दगिरीय-न्यायनिर्णयः।

शेऽपि कल्प्यो विधिरित्याशंक्याऽऽह-**न चेति** । सामान्यविधिबाधकत्वं श्रुतविशेषविधेरिष्टं विशेषकल्पना तु सामान्यविधिना बाध्या कल्पनाया विरोधाभावापेक्षत्वादित्यर्थः । इतश्च स्तुत्यर्थमेवेदं वचो न विधिरित्याह-**अपि चेति** । आ श्वभ्य आ शकुनिभ्य आ कीटपतंगेभ्यस्तत्तेऽन्नमिति श्रवणादशक्यविषयो विधिर्न संभवतीत्याह-**न चेति** । तर्हि वचनवैयर्थ्यमित्याशंक्य सर्वं प्राणस्यान्नमिति धीस्तुत्यर्थत्वान्नैवमित्याह-**शक्यते त्विति** । उक्तेऽर्थे सूत्रमादत्ते-**तदिति** । तदक्षराणि व्याकरोति-**एतदिति** । मटच्योऽशनयः पाषाणवृष्टयो रक्तवर्णाः क्षुद्रपक्षिविशेषा वा तैर्हतेषु कुरुषु तद्देशस्थसस्येष्विति यावत् । आख्यायिकार्थमाह-**चाक्रायण इति** । स हि दुर्भिक्षे जाते जाययाऽनुपजातपयोधरादिस्त्रीव्यञ्जनया सह देशान्तरं प्रतिचक्रमे स कदाचिदिभ्यग्रामं निवसन्निभ्येन सह हस्त्यारोहेण सामिभोजितानर्धभक्षितान्कुल्माषान्कुत्सितमाषान्भक्षितवानित्यर्थः । अनुपानं गृहाणेत्युक्ते सत्युच्छिष्टं मे पीतं स्यादिति प्रतिषिध्य

दितान्कुल्माषांश्चखाद । अनुपानन्तु तदीयमुच्छिष्टदोषात्प्रत्याचचक्षे । कारणं चात्रोवाच—"न वा अजीविष्यमिमानखादन्" [ छां० १ । १० । ४ ] इति, "कामो म उदपानम्" [ छां० १ । १० । ४ ] इति च । पुनश्चोत्तरेद्युस्तानेव स्वपरोच्छिष्टान्पर्युषितान्कुल्माषान् भक्षयाम्बभूवेति । तदेतदुच्छिष्टोच्छिष्टपर्युषितभक्षणं दर्शयन्त्याः श्रुतेराशयातिशयो लक्ष्यते—प्राणात्ययप्रसङ्गे प्राणसन्धारणायाऽभक्ष्यमपि भक्षयितव्यमिति । स्वस्थावस्थायां तु तन्न कर्तव्यं विद्यावतापीत्यनुपानप्रत्याख्यानाद्गम्यते ॥ तस्मादर्थवादः "न ह वा एवंविदि" [ छां० ५ । २ । १ ] इत्येवमादिः ॥ २८ ॥

## अबाधाच्च ॥ २९ ॥

एवञ्च सत्याहारशुद्धौ सत्त्वशुद्धिरित्येवमादि भक्ष्याभक्ष्यविभागशास्त्रमबाधितं भविष्यति ॥ २९ ॥

## अपि च स्मर्यते ॥ ३० ॥

अपि च आपदि सर्वान्नभक्षणमपि स्मर्यते विदुषोऽविदुषश्चाविशेषेण—"जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" इति ॥ तथा "मद्यं नित्यं ब्राह्मणः" "सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः" "सुरापाः कृमयो भवन्त्यभक्ष्यभक्षणाद्" इति च स्मर्यते वर्जनमनन्नस्य ॥ ३० ॥

---

रत्नप्रभा ।

चारलिंगात् श्रौतादनापदि विदुषाप्यभक्ष्यं न भक्षणीयमिति सूच्यत इति भावः ॥ २८ ॥ २९ ॥ सुरापानेनापि जीवनमाशङ्क्य कदापि न कार्यमित्याह—**तथा मद्यं नित्यं ब्राह्मण इति** ॥ वर्जयेदिति शेषः ॥ कुत इत्याशङ्क्य मरणान्तप्रायश्चित्तविधानादित्याह—**सुरापस्येति** ॥ **उष्णाम्**—अतितप्ताम् । सुरामिति शेषः ॥ इतश्च सा न पेयेत्याह—**सुरापा इति** ॥ ३० ॥ उदाहृतस्मृतीनां मूलश्रुतिमाह—

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

किमेतेऽप्युच्छिष्टा नेति परेणोक्ते कारणं चानुपाननिषेधे कथितवानित्याह—**अनुपानं त्विति** । कुल्माषाश्चेन्न भक्ष्यन्ते जीवनमेव मे न स्यात्कामः स्वेच्छातो मे तटाकादिषूदकपानं भविष्यतीत्यर्थः । स्वयं खादित्वा शिष्टाञ्जायार्थमाजहार तया च भर्तृस्वभावज्ञया निहितानुत्तरदिने प्रातरेव भक्षितवानित्याह—**पुनश्चेति** । कुल्माषभक्षणश्रुतेरभिप्रायमाह—**तदिति** । अनुपाननिषेधश्रुतेस्तात्पर्यमाह—**स्वस्थेति** । सर्वान्नभक्षणस्य निरङ्कुशत्वाभावे फलितमाह—**तस्मादिति** ॥ २८ ॥ तस्यार्थवादत्वे हेत्वन्तरमाह—**अबाधाच्चेति** । सामान्यशास्त्रविरोधान्न कल्प्यो विशेषविधिरित्युक्तम् । अधुना सामान्यशास्त्रं दर्शयन्सूत्रं योजयति—**एवं चेति** । स्वस्थावस्थायां भक्ष्याभक्ष्यभेदे सतीति यावत् ॥ २९ ॥ आपदवस्थायामभक्ष्यभक्षणानुज्ञाने स्मृतिं संवादयति—**अपीति** । स्मृतिरपि विद्वद्विषयेत्याशंक्याऽऽह—**अपि चेति**। सुरापानमवस्थाद्वयेऽपि न कार्यमित्याह—**तथेति** । ब्राह्मणो वर्जयेदिति शेषः । जीवितात्ययस्मृत्या सुराऽपि तदत्यये पातव्येत्याशंक्याऽऽह—**सुरापस्येति** । उष्णां सुरामिति शेषः । उष्णामग्निना तप्तामिति यावत् । मरणान्तिकप्रायश्चित्तदृष्टेस्तत्प्रसङ्गेऽपि सा न पातव्येत्यर्थः । इतश्च सा सदा न पेयेत्याह—**सुरापा इति** । तत्र हेतुः—**अभक्ष्येति** । मद्यमित्यादिस्मृतेस्तात्पर्यमाह—**वर्जनमिति** ॥ ३०

## शब्दश्चातोऽकामकारे ॥ ३१ ॥

शब्दश्च—अनन्नस्य प्रतिषेधकः कामकारनिवृत्तिप्रयोजनः कठानां संहितायां श्रूयते—"तस्माद्ब्राह्मणः सुरां न पिबेद्" इति । सोऽपि "न ह वा एवंविदि" [ छां० ५ । २ । १ ] इत्यस्यार्थवादत्वादुपपन्नतरो भवति ॥ तस्मादेवञ्जातीयका अर्थवादा न विधय इति॥३१॥ इति सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥

## विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥ (८) ॥

"सर्वापेक्षा च" [व्या० सू० ३।४।२६] इत्यत्राश्रमकर्मणां विद्यासाधनत्वमवधारितम्। इदानीं तु किममुमुक्षोरप्याश्रममात्रनिष्ठस्य विद्यामकामयमानस्य तान्यनुष्ठेयानि—उताहो—नेति चिन्त्यते—तत्र"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" [ बृ० ४।४।२२ ] इत्यादिनाऽऽश्रमकर्मणां विद्यासाधनत्वेन विहितत्वाद्विद्यामनिच्छतः फलान्तरं कामयमानस्य नित्या-

---

रत्नप्रभा ।

शब्दश्चेति ॥ कामकारः—यथेष्टप्रवृत्तिः । सोऽपि निषेधोपि उपपन्नतरो भवति । "न ह वा एवंविद्" इत्यस्यार्थवादत्वात् ॥ यद्ययमपि विधिः स्यात्, तर्हि विहितप्रतिषिद्धत्वात्षोडशिग्रहणाग्रहणवत्सुरापाने विकल्पः स्यात् । स च सर्वस्मृतिभिः शिष्टाचारेण विरुद्धः इति तदर्थः ॥ ३१ ॥ ( ७ ) ॥ विहितत्वाच्चाश्रमकर्मापि ॥ नित्याग्निहोत्रादिकर्मसु विहितत्वाद्विनियुक्तविनियोगविरोधाच्च संशये शास्त्रान्तरविरोधात्सर्वान्नत्वोक्तेः स्तुतित्ववन्नित्यविनियुक्तत्वश्रुतिविरोधाद्विविदिषायां विनियोगश्रुतेः स्तुतित्वमिति पूर्वपक्षमाह—तत्रेति ॥ ज्ञानकामनयानुष्ठाने कर्मणामनित्यत्वम्, अनावश्यकत्वम् । तस्या अनित्यत्वात् ।

भामती ।

रपत्रप इभ्येन सामिजग्धान्खादयामास ॥ २८ ॥२९॥३०॥३१ ॥ (७) ॥ विहितत्वाच्चाश्रमकर्मापि । नित्यानि ह्याश्रमकर्माणि यावज्जीवश्रुतेर्नित्यैर्हितोपायतयाऽवश्यं कर्तव्यानि । विविदिषन्तीति च विद्यासंयोगाद्विद्यायाश्चावश्यंभावनियमाभावादनित्यता प्राप्नोति । नित्यानित्यसंयोगश्चैकस्य न संभवति, अवश्यानवश्यंभावयोरेकत्र विरोधात्। न च वाक्यभेदाद्वास्तवो विरोधः शक्योऽपनेतुम्। तस्मादनध्यवसाय एवात्रेति प्राप्तम् । एतेन 'एकस्य तूभयत्वे संयोगपृथक्त्वम् इत्याक्षिप्तम् । एवं प्राप्तेऽभिधीयते—'सिद्धे हि स्याद्विरोधोऽयं न तु साध्ये कथंचन । विध्यधीनात्मलाभेऽस्मिन् यथाविधि मता स्थितिः॥' सिद्धं हि वस्तु विरुद्धधर्मयोगेन बाध्यते । न तु साध्यरूपं, यथा षोडशिन एकस्य ग्रहणाग्रहणे। ते हि विध्यधीनत्वाद्विकल्पेते एव।

आनन्दगिरीय—न्यायनिर्णयः ।

स्मृतिप्रामाण्यार्थं तन्मूलश्रुतिमाह—शब्दश्चेति । तस्माद्ब्राह्मणस्य सुरापस्य मरणान्तिकप्रायश्चित्तदर्शनादिति यावत् । श्रौतनिषेधस्य प्रकृतोपयोगमाह—सोऽपीति । श्रुतिस्मृतिसिद्धमर्थमुपसंहरन्नतःशब्दं व्याचष्टे—तस्मादिति ॥ ३१ ॥ ( ७ ) ॥ सर्वान्नत्वोक्तिः शास्त्रान्तरविरोधे स्तुतिरित्युक्तम् । एवं विद्यार्थत्वोक्तिर्यज्ञानां स्तुतिर्नित्यत्वश्रुतिविरोधादित्याशङ्क्याऽऽह—विहितत्वाच्चेति । व्यवहितेन संबन्धमाह—सर्वापेक्षेति । अग्निहोत्रादिकर्माण्यधिकृत्य विहितत्वाद्विनियुक्तविनियोगायोगाच्च संशयमाह—इदानीं त्विति । अत्राग्निहोत्रादीनामुभयथात्वोक्त्या स्वतन्त्रपुमर्थहेतुशास्त्रोत्थात्मविद्योपायोपवर्णनात्पादादिसंगतिः । पूर्वपक्षे विद्याहेतुत्वोक्तेः स्तुतित्वाद्विविदिषावाक्यस्य विवक्षितार्थत्वासिद्धिः । सिद्धान्ते संयोगपृथक्त्वन्यायात्कर्मणामुभयत्वसंभवात्तत्सिद्धिरित्यभिप्रेत्य पूर्वपक्षमाह—तत्रेति । यावज्जीवश्रुतेरमुमुक्षोरपि

न्यननुष्ठेयानि । अथ तस्याप्यनुष्ठेयानि, न तार्ह्येषां विद्यासाधनत्वम् । नित्यानित्यसंयोगविरोधादिति॥ अस्यां प्राप्तौ पठति॥ आश्रममात्रनिष्ठस्याप्यमुमुक्षोः कर्त्तव्यान्येव नित्यानि कर्माणि । "यावज्जीवमग्निहोत्रं जुहोति" इत्यादिना विहितत्वात् । न हि वचनस्यातिभारो नाम कश्चिदस्ति ॥ ३२ ॥ अथ यदुक्तं नैवं सति विद्यासाधनत्वमेषां स्यादिति, अत उत्तरं पठति—

## सहकारित्वेन च ॥ ३३ ॥

विद्यासहकारीणि चैतानि स्युः विहितत्वादेव "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" [ बृ० ४ । ४ । २२] इत्यादिना । तदुक्तं—"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" [ ब्या० सू० ३ । ४ । २६ ] इति । न चेदं विद्यासहकारित्ववचनमाश्रमकर्मणां प्रयाजादिवद्विद्याफलविषयं मन्तव्यम् । अविधिलक्षणत्वाद्विद्यायाः । असाध्यत्वाच्च विद्याफलस्य ।

---

रत्नप्रभा ।

यावज्जीवादिविधिना तु नित्यत्वं चेति विरुद्धधर्मद्वयापाताद्विविदिषाश्रुतेः स्तुतित्वमिति फलं पूर्वपक्षे । सिद्धान्ते तूभयथाऽनुष्ठानं फलम् ॥ ३२ ॥ सह मिलित्वा शुद्धिद्वारा विद्यां कुर्वन्तीति सहकारीणि कर्माणि तेषां भावः—तत्त्वं, तेनेत्यर्थः । विद्यया सह फलकारित्वं सहकारिपदात्प्राप्तं निरस्यति—न चेदमिति ॥ विद्याया अविहितत्वान्नाङ्गापेक्षास्ति ॥ अतो विहितानि कर्माणि अविहिताया विद्याया न सहकार्यङ्गानि । मोक्षस्यासाध्यत्वाच्च न कर्मणां सहकारित्वसंभव इत्यर्थः ॥ तुल्यवल्श्रुतिद्वयेन विनियोगपृ..

भामती ।

न पुनः सिद्धे विकल्पसंभवः, तदिहैकमेवाग्निहोत्राख्यं कर्म यावज्जीवश्रुतेर्निमित्तेन युज्यमानं नित्येहितोपात्तदुरितप्रक्षयप्रयोजनमवश्यकर्तव्यं, विद्याङ्गतया च विद्यायाः कादाचित्कतयानवश्यंभावेऽपि 'काम्यो वा नैमित्तिको वा नित्यमर्थं विकृत्य निविशते'इति न्यायादनित्याधिकारेण निविशमानमपि न नित्यमनित्ययति, तेनापि तत्सिद्धेरिति संयोगपृथक्त्वान्न नित्यानित्यसंयोगविरोध एकस्य कार्यस्येति सिद्धम् । सहकारित्वं च कर्मणां न कार्ये विद्यायाः किं तूत्पत्तौ । कोऽर्थो विद्यासहकारीणि कर्माणीति । अयमर्थः—सत्सु कर्मसु विद्यैव स्वकार्ये व्याप्रियते । यथा 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इति सत्स्वेव दशपुत्रेषु सैव भारस्य वाहिकेति । अविधिलक्षणत्वादिति । विहितं हि दर्शपौर्णमासाद्यङ्गैर्युज्यते न त्वविहितम् ।

आनन्दगिरीय—न्यायनिर्णयः ।

तान्यनुष्ठेयानीत्याशंक्याऽऽह—अथेति । विविदिषाश्रुतेर्विद्यासंयोगोऽपि तेषामवश्यंभावीत्याशंक्याऽऽह—नित्येति । आवश्यकत्वाभावाद्विद्याकामनायाः काम्यतया कर्मणामनावश्यकत्वं नित्यतया चाऽऽवश्यकत्वमित्येकत्रैवाऽऽवश्यकत्वानावश्यकत्वे विरुद्धे स्याताम् । अतो विद्योपायत्वोक्तिः स्तुतिरेवेत्यर्थः। सिद्धान्तसूत्रमवतार्य व्याकरोति—अस्यामिति। नित्यतया विहितानां विद्यार्थतया विधानं गौरवाद्युक्तमित्याशंक्याऽऽह—न हीति ॥ ३२ ॥ उक्तमनूद्योत्तरत्वेन सूत्रमवतारयति—अथेत्यादिना । नित्यत्वेऽपि विद्यासंयुक्तत्वमग्निहोत्रादीनां विधिवशादेष्टव्यमिति व्याचष्टे—विद्येति । विविदिषासंयोगमात्रमत्र श्रुतं कुतो विद्यासंयुक्तत्वं तत्राऽऽह—तदुक्तमिति । सहकारित्वोक्त्या फलं प्रत्येवोपकारित्वमाचार्याभीष्टं कर्मणामित्याशंक्याऽऽह—न चेति । शास्त्रीयमन्वयव्यतिरेकासिद्धं चोपकारकत्वं न चात्रोभयमस्तीत्याह—अविधीति। ब्रह्मधीः स्वकार्ये न चोदितापेक्षाऽचोदितत्वान्मर्दनवदित्यर्थः । ब्रह्मधीः स्वफले नेतिकर्तव्यतापेक्षा स्वतोऽसाध्यफलत्वात्कूपखननव्यापारवदित्याह—असाध्यत्वादिति । अविधिलक्षणत्वं व्यतिरेकोदाहरणेन प्रप-

विधिलक्षणं हि साधनं दर्शपूर्णमासादिस्वर्गफलसिषाधयिषया सहकारिसाधनान्तरमाकाङ्क्षते, नैवं विद्या । तथा चोक्तम्-"अत एव चाग्नीन्धनाद्यनपेक्षा" [ व्या० सू० ३।४।२५] इति ॥ तस्मादुत्पत्तिसाधनत्व एवैषां सहकारित्ववाचोयुक्तिः । न चात्र नित्यानित्यसंयोगविरोध आशंक्यः । कर्माभेदेऽपि संयोगभेदात् । नित्यो ह्येकः संयोगो यावज्जीवादिवाक्यकल्पितः, न तस्य विद्याफलत्वम् । अनित्यस्त्वपरः संयोगः "तमेतं वेदानुवचनेन" इत्यादिवाक्यकल्पितः । तस्य विद्याफलत्वम्-यथा एकस्यापि खादिरत्वस्य नित्येन संयोगेन क्रत्वर्थता, अनित्येन संयोगेन पुरुषार्थता च, तद्वत् ॥ ३३ ॥

## सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

सर्वथापि आश्रमधर्मत्वपक्षे, विद्यासहकारित्वपक्षे च । त एव-अग्निहोत्रा-

---

रत्नप्रभा ।

धत्त्वं संयोगभेदः, ततो न विरोधः । कामनाया अनित्यत्वेपि कर्मणां नानित्यत्वम् । नित्यविधिना प्रयोगस्य नित्यत्वात् । सत्यां कामनायां काम्यप्रयोगेणैव नित्यसिद्धेर्न कश्चिद्विरोधः । इदं च "एकस्य तूभयत्वे संयोगपृथक्त्वम्" [ जै० सू० ४ । ३ । ६ ] इति सूत्रे चिन्तितम् । यथा-"खादिरो यूपो भवति" इति श्रुत्या खादिरत्वस्य क्रत्वर्थता, "खादिरं वीर्यकामस्य" इति श्रुत्या पुरुषार्थता चेति । अतः सति वाक्यद्वये विनियुक्तविनियोगो न विरुध्यत इत्यर्थः ॥ ३३ ॥ ननु नित्याग्निहोत्रादिभ्यो भिन्ना एव यज्ञादयो विविदिषायां विनियुज्यन्ते । तत्र कुतो विनियोगः, तत्राह-सर्वथापीति ॥ नित्यत्वे काम्यत्वे चेत्यर्थः ॥

भामती ।

ग्राहकग्रहणपूर्वकत्वादङ्गभावस्य विधेश्च ग्राहकत्वात् । अविहिते च तदनुपपत्तेः । चतसृणामपि च प्रतिपत्तीनां ब्रह्मणि विधानानुपपत्तेरित्युक्तं प्रथमसूत्रे । द्रष्टव्यो निदिध्यासितव्य इति च विधिसरूपं न विधिरित्यप्युक्तम् । उत्पत्तिं प्रति हेतुभावस्तु सत्त्वशुद्ध्या विविदिषोपजननद्वारेत्यधस्तादुपपादितम् । असाध्यत्वाच्च विद्याफलस्यापवर्गस्य स्वरूपावस्थानलक्षणो हि सः । न च स्वं रूपं ब्रह्मणः साध्यं नित्यत्वात् । शेषमतिरोहितार्थम् ॥ ३२ ॥ ३३ ॥ सर्वथापि त एवोभयलिंगात् । यथा 'मासमग्निहोत्रं जुहुति' इति प्रकरणान्तरात्कर्मभेद एवमिहापि 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इतिक्रतुप्रकरणमतिक्रम्य

आनन्दगिरीय-न्यायीनर्णयः ।

क्षयति-विधीति । अङ्गभावस्य ग्राहकग्रहणपूर्वकत्वाद्विधेर्ग्राहकत्वाद्विहितं दर्शपूर्णमासादि प्रयाजादिभिर्ग्राहकगृहीतैरङ्गैर्युज्यते नाविहिता विद्येत्यर्थः । तथाऽपि कथमसाध्यफलत्वेन विद्यायां कर्मणामन्वयराहित्यं तदाह-तथा चेति । कथं तर्हि सहकारित्ववचनं तदाह-तस्मादिति । सह पुत्रैर्भारं वहति गर्दभीतिवत्कर्मसु सत्स्वेव विद्या स्वकार्याय व्याप्रियत इत्यभिप्रेत्य सहकारित्वोक्तिरित्यर्थः । परोक्तमुद्भाव्य प्रत्याह-न चेति । संयोगभेदं विशदयति-नित्यो हीति । तुल्यबलश्रुतिद्वयेन पृथगेव संबन्धविधिः संयोगभेदस्तस्मादुभयथात्वमविरुद्धमित्यर्थः । "एकस्य तूभयत्वे संयोगपृथक्त्वम्" [ पू० मी० सू० ४ । ३ । ६ ] इत्यत्रैतच्चिन्तितमित्युदाहरणेन दर्शयति-यथेति । बैल्वो वा खादिरो वा पालाशो वेत्येको नित्यः संयोगस्तेन क्रत्वर्थस्य खादिरत्वस्य खादिरं वीर्यकामस्येत्यपरः संयोगोऽनित्यस्तेन पुरुषार्थतेत्येकस्य खादिरत्वस्योभयार्थत्वे संयोगपृथक्त्वं हेतुस्तथा कर्मस्वभेदेऽपि संयोगभेदादुभयथात्वमित्यर्थः ॥ ३३ ॥ ननु प्रकरणान्तरस्थेभ्यो नित्यकर्मभ्यो भिन्नान्येव कर्माणि विविदिषावाक्ये विद्यासंयुक्ततया विधीयन्ते प्रकरणभेदस्य भेदकत्वात्तत्कथं तस्योभयत्वं तत्राऽऽह-सर्वथेति । प्रतिज्ञां व्याचष्टे-सर्वथाऽपीति । एव-

दयो धर्मा अनुष्ठेयाः । त एवेत्यवधारयन्नाचार्यः किं निवर्तयति । कर्मभेदाशङ्कामिति ब्रूमः । यथा–कुण्डपायिनामयने "मासमग्निहोत्रं जुहोति" इत्यत्र नित्यादग्निहोत्रात्कर्मान्तरमुपदिश्यते नैवमिह कर्मभेदोऽस्तीत्यर्थः॥ कुतः ॥ उभयलिङ्गात् श्रुतिलिङ्गात्, स्मृतिलिङ्गाच्च । श्रुतिलिङ्गं तावत्–"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" [ बृ० ४ ।४।२२ ] इति सिद्धवदुत्पन्नरूपाण्येव यज्ञादीनि विविदिषायां विनियुंक्त न तु "जुहति" इत्यादिवदपूर्वमेवैषां रूपमुत्पादयतीति । स्मृतिलिङ्गमपि "अनाश्रितः कर्मफलं कार्यं कर्म करोति यः" [ भ० गी० ६ । १ ] इति विज्ञातकर्तव्यताकमेव कर्म विद्योत्पत्त्यर्थं दर्शयति । यस्यैते अष्टाचत्वारिंशत्संस्कारा इत्याद्या च संस्कारप्रसिद्धिर्वैदिकेषु कर्मसु तत्संस्कृतस्य विद्योत्पत्तिमभिप्रेत्य स्मृतौ भवति ॥ तस्मात्साध्विदमभेदावधारणम् ॥ ३४ ॥

---

रत्नप्रभा ।

कुण्डपायिनामयने "मासमग्निहोत्रं जुहति" इत्याख्यातस्य साध्यहोमवाचित्वात्तदेकार्थकाग्निहोत्रपदस्य व्यवहितसिद्धाग्निहोत्रपरामर्शकत्वायोगान्मासगुणविशिष्टं कर्मान्तरं विधीयत इति युक्तम् । इह तु "यज्ञेन" इत्यादिसुबन्तानामाख्यातेनैकार्थत्वाभावात्सिद्धव्यवहितकर्मानुवादकत्वात्तेषामेव कर्मणां ज्ञानार्थत्वविधिरिति भावः ॥ सिद्धकर्मसु संस्कारत्वप्रसिद्धिरपि शुद्ध्याद्यसंस्कारद्वारा ज्ञानार्थकर्माभेदे लिंगमित्याह–**यस्यैते**-

भामती ।

श्रवणात्प्रकरणान्तराच्चबुद्धिव्यवच्छेदे सति कर्मान्तरमिति प्राप्त उच्यते––सत्यपि प्रकरणान्तरे तदेव कर्म, श्रुतेः स्मृतेश्च संयोगभेदः परं यथा 'अग्निहोत्रं जुहुयात्स्वर्गकामः' 'यावज्जीवमग्निहोत्रं जुहुयात्' इति तदेवाग्निहोत्रमुभयसंयुक्तम्, न हि प्रकरणान्तरं साक्षाद्भेदकम् । किंतु अज्ञातज्ञापनस्वरसो विधिः प्रकरणैक्ये स्फुटतरप्रत्यभिज्ञाबलेन स्वरसं जह्यात् । प्रकरणान्तरेण तु विघटितप्रत्यभिज्ञानः स्वरसमजहत्कर्म भिनत्ति । इह सिद्धवदुत्पन्नरूपाण्येव यज्ञादीनि विविदिषायां विनियुञ्जानो न जुहतीत्यादिवदपूर्वमेषां रूपमुत्पादयितुमर्हति । न च तत्रापि नैयमिकाग्निहोत्रे मासविधिर्नापूर्वाग्निहोत्रोत्पत्तिरिति सांप्रतम् । होम एव साक्षाद्विधिश्रुतेः । कालस्य चानुपादेयस्याविधेयत्वात् । काले हि कर्म विधीयते न कर्मणि काल इत्युत्सर्गः । इह तु विविदिषायां विधिश्रुतिः न

आनन्दगिरीय–न्यायनिर्णयः ।

कार्त्स्न्यावर्त्यं शंकया दर्शयति–**त एवेतीति** । भेदशङ्कानिवृत्तिं व्यतिरेकदृष्टान्तेन स्पष्टयति–**यथेति** । कुण्डपायिनामयनगताग्निहोत्रस्य प्रकरणभेदात्प्रसिद्धाग्निहोत्रात्कर्मान्तरत्ववद्विविदिषन्तीति विद्यासंयुक्ततया विहितानामपि कर्मणां प्रकरणभेदादेव कर्मान्तरत्वशङ्कायां दृष्टान्ते जुहुतीतिहोमविधिश्रुतेर्मासाख्यकालस्य चानुपादेयत्वेनाविधेयत्वादग्निहोत्रशब्दस्य चाऽऽख्यातपारतन्त्र्यादाख्यातस्य च जुहोतेः संनिहितरूपवत्कर्म हित्वा व्यवहितनैयमिकाग्निहोत्रपरामर्शित्वायोगादाख्यातार्थवाचिनोऽग्निहोत्रशब्दस्यापि कर्मान्तरविषयत्वमेवेति युक्तम् । विविदिषावाक्ये तु विविदिषायामेव विधिश्रवणात्प्रसिद्धानामेव यज्ञादीनां यज्ञादिशब्दैरनुवादाद्विद्यासंयोगमात्रं विधीयते । तेषामिति न कर्मान्तरतेत्यर्थः । उक्तमेवार्थं प्रश्नद्वारा हेतुमवतार्य स्फोरयति–**कुत इत्यादिना** । प्रसिद्धकर्मसु संस्कारत्वप्रसिद्धिरपि तेषां चित्तमलनिरासेन ज्ञानोत्पत्त्युपकारकत्वमावेदयन्ती कर्माभेदं सूचयतीत्याह–**अष्टेति** । गर्भाधानादयः सहधर्मचारिणीसंयोगान्ताश्चतुर्दश पञ्चमहायज्ञाः सप्त सोमसंस्थाः सप्त हविःसंस्था सप्त पाकसंस्था इति चत्वारिंशत्संस्काराः । अनन्तसंहिताध्ययनं प्रायणं कर्म जप उत्क्रमणं दैहिकं भस्मसमूहनमस्थिसंचयनं श्राद्धानीत्येवमष्टाचत्वारिंशत्संस्काराः । कर्मभेदाशङ्कायोगे फलितमाह–**तस्मादिति** ॥ ३४ ॥ नित्यानि कर्माणि स्वतः पुण्य-

## अनभिभवञ्च दर्शयति ॥ ३९ ॥

सहकारित्वस्यैवैतदुपोद्बलकं लिंगदर्शनम् । अनभिभवञ्च दर्शयति श्रुतिर्ब्रह्मचर्यादिसाधनसम्पन्नस्य रागादिभिः क्लेशैः—"एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते" [ छां० ८ । ५ । ३] इत्यादिना ॥ तस्माद्यज्ञादीन्याश्रमकर्माणि च भवन्ति, विद्यासहकारीणि चेति स्थितम् ॥ ३९ ॥

इत्याश्रमकर्माधिकरणम् ॥ ८ ॥

## अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥ (९) ॥

विधुरादीनां द्रव्यादिसम्पद्रहितानाश्चान्यतमाश्रमप्रतिपत्तिहीनानामन्तरालवर्तिनां किं विद्यायामधिकारोऽस्ति, किं वा नास्तीति संशये—नास्तीति तावत्प्राप्तम् । आश्रमकर्मणां विद्याहेतुत्वावधारणाद्, आश्रमकर्मासम्भवाच्चैतेषामिति ॥ एवं प्राप्ते इदमाह ॥ अन्तरा चापि तु—अनाश्रमित्वेनान्तराले वर्तमानोऽपि विद्यायामधिक्रियते ॥ कुतः ॥ तद्दृष्टेः ॥ रैक्ववाचक्नवीप्रभृतीनामेवम्भूतानामपि ब्रह्मवित्वश्रुत्युपलब्धेः ॥ ३६ ॥

---

रत्नप्रभा ।

ऽष्टेति ॥ ३४ ॥ ब्रह्मचर्यादिकर्मणां प्रतिबन्धध्वंसद्वारा विद्यार्थत्वे लिङ्गमाह—**अनभिभवं चेति** । ॥ ३९ ॥ ( ८ ) ॥ **अन्तरा चापि त्विति** ॥ अनाश्रमिणां जपादिकर्मसत्त्वान्निन्दितत्वाच्च **संशये** सति अनाश्रमकर्मणामेव विद्याहेतुत्वश्रुतेरनाश्रमस्य निन्दितत्वाच्चानधिकार इति **पूर्वपक्षः** । **तत्र** अनाश्रमकर्मणां विद्याहेतुत्वासिद्धिः, **सिद्धान्ते** तत्सिद्धिरिति फलम् ॥ ३१ ॥ रैक्वा-

भामती ।

यज्ञादौ । तानि तु सिद्धान्येवानूद्यन्त इत्यैककर्म्यात्संयोगपृथक्त्वं सिद्धम् । स्मृतिमुक्त्वा लिङ्गदर्शनमुक्तम् । ॥३४॥३९॥ (८) ॥ **अन्तरा चापि तु तद्दृष्टेः** । यदि विद्यासहकारीण्याश्रमकर्माणि हन्त भो विधुरादीनामनाश्रमिणामनधिकारो विद्यायाम्, अभावात्सहकारिणामाश्रमकर्मणामिति प्राप्त उच्यते—नात्यन्तमकर्माणो रैक्वविधुरवाचक्नवीप्रभृतयः । सन्ति हि तेषामनाश्रमित्वेऽपि जपोपवासदेवताराधनादीनि कर्माणि ।

आनन्दगिरीय—न्यायनिर्णयः ।

लोकावाप्तिफलान्यपि ज्ञानकामेनानुष्ठितानि ज्ञानार्थानीत्युक्तम् । इदानीं ब्रह्मचर्यादीनामाश्रमकर्मणां क्लेशतनूकरणेन विद्योदये हेतुतेत्यत्र लिङ्गमाह—**अनभिभवं चेति** । सूत्रस्य तात्पर्योक्तिपूर्वकमक्षरार्थं कथयति—**सहकारित्वस्येति** । उभयविध्यधीनमर्थमुपसंहरति—**तस्मादिति** ॥ ३९ ॥ ( ८ ) ॥ आश्रमकर्मणां विद्योपायत्वे सत्यनाश्रमकर्मणां नैवमिति मन्वानं प्रत्याह—**अन्तरेति** । अनाश्रमिणो विधुरादीन्विषयीकृत्य तेषां कर्मित्वप्रसिद्धेर्निन्दाप्रसिद्धेश्च संशयमाह—**विधुरेति** । अत्रानाश्रमकर्मणामुक्तविद्याहेतुत्वोक्त्या पादादिसंगतिः पूर्वपक्षे यथा विधुरकर्मणां विद्याहेतुत्वासिद्धिस्तथैवाऽऽश्रमकर्मणामपि विद्याहेतुत्वासिद्धिः । सिद्धान्ते त्वाश्रमित्वस्य ज्यायस्त्वात्तत्कर्मणां सुतरां तत्सिद्धिरिति मन्वानः संशयमनूद्य पूर्वपक्षमाह—**नास्तीत्यादिना** । विविदिषावाक्ये यज्ञादिषु प्रत्येकं करणविभक्तिश्रुतेराश्रमकर्माभावेऽपि वर्णमात्रधर्माणां दानादीनां संभवाद्विधुरादीनामपि विद्याधिकारः स्यादित्याशंक्य केवलवर्णधर्माणां विद्यासाधनत्वे सत्याश्रमकर्मणां वैयर्थ्यादनाश्रमिणामनधिकारो विद्यायामित्याह—**आश्रमेति** । अनाश्रमकर्मणां न विद्याहेतुतेति पूर्वपक्षमनूद्य सिद्धान्तयति—**एवमिति** । प्रतिज्ञां व्याकरोति—**अनाश्रमित्वेनेति** । तद्दृष्टेरिति व्याचष्टे—**रैक्केति** ॥ ३६ ॥ श्रौतीं दृष्टिं शिष्ट्वा स्मार्तीमपि

## अपि च स्मर्यते ॥ ३७ ॥

संवर्तप्रभृतीनां च नग्नचर्यादियोगादनपेक्षिताश्रमकर्मणामपि महायोगित्वं स्मर्यते इतिहासे ॥ ३७ ॥ ननु लिंगमिदं श्रुतिस्मृतिदर्शनमुपन्यस्तं का नु खलु प्राप्तिरिति सोऽभिधीयते ॥

## विशेषानुग्रहश्च ॥ ३८ ॥

तेषामपि विधुरादीनामविरुद्धैः पुरुषमात्रसम्बन्धिभिर्जपोपवासदेवताराधनादिभिर्धर्मविशेषैरनुग्रहो विद्यायाः सम्भवति । तथा च स्मृतिः— "जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" इत्यसम्भवदाश्रमकर्मणोऽपि जपेऽधिकारं दर्शयति । जन्मान्तरानुष्ठितैरपि चाश्रमकर्मभिः सम्भवत्येव विद्याया अनुग्रहः । तथा च स्मृतिः—"अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" [भ०गी० ६ । ४५ ] इति जन्मान्तरसञ्चितानपि संस्कारविशेषाननुगृहीतान्विद्याया दर्शयति । दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणाप्यर्थिनमधिकरोति श्रवणादिषु ॥ तस्माद्विधुरादीनामप्यधिकारो न विरुध्यते ॥ ३८ ॥

---

रत्नप्रभा ।

दीनां विद्यावत्त्वलिंगस्य जन्मान्तराश्रमकर्मणाऽन्यथासिद्धेरनाश्रमकर्मणो विद्यार्थत्वे प्रापकं मानान्तरं वाच्यमिति शङ्कते—**ननु लिंगमिति** ॥ अनाश्रमित्वाविरुद्धानां वर्णमात्रप्राप्तधर्माणां विद्यार्थत्वे मानमाह—**तथा चेति** ॥ **मैत्रः** दयावानित्यर्थः ॥ नन्वनाश्रमिणां कर्म भवतु विद्याहेतुः, **तथापि** तेषां न श्रवणादावधिकारः । संन्यासाभावादित्यत आह—**दृष्टार्था चेति** ॥ बन्धकाज्ञानध्वस्तिफलकविद्याकामस्य

भामती ।

कर्मणां च सहकारित्वमुक्तमाश्रमकर्मणामुपलक्षणत्वादिति न तेषामनधिकारो विद्यासु । **जन्मान्तरानुष्ठितैरपि चेति** । न खलु विद्याकार्ये कर्मणामपेक्षा । अपि तु उत्पादे । उत्पादयन्ति च विविदिषोपहारेण कर्माणि विद्याम् । उत्पन्नविविदिषाणां पुरुषधौरेयाणां विधुरसंवर्तप्रभृतीनां कृतं कर्मभिः । यद्यपि चेह जन्मनि कर्माण्यननुष्ठितानि तथापि विविदिषातिशयदर्शनात्प्राचि भवेऽनुष्ठितानि तैरिति गम्यत इति । ननु यथाधीतवेद एव धर्मजिज्ञासायामधिक्रियते नानधीतवेद इह जन्मनि।तथेह जन्मन्याश्रमकर्मोत्पादितविविदिष एव विद्यायामधिकृतो नेतर इत्यनाश्रमिणामनधिकारो विधुरप्रभृतीनामित्यत आह—**दृष्टार्था चेति** । अवि-

आनन्दगिरीय—न्यायनिर्णयः ।

दर्शयति—**अपीति** ॥ ३७ ॥ श्रुतिस्मृतिभ्यां सिद्धे सिद्धान्तेऽनन्तरसूत्रनिरस्यं चोद्यमाह—**नन्विति** । जन्मान्तरकृतादपि कर्मणो रैक्वादीनां विद्यासंभवाद्वर्णोपाधावुक्तात्कर्मणो विद्येत्यत्र श्रुतिस्मृत्योरनियामकत्वान्नियामकान्तरं वक्तव्यमित्यर्थः । आश्रमधर्माभावेऽपि वर्णधर्मविशेषैरनुगृहीता विद्योदेष्यतीति सूत्रेण समाधत्ते—**तेति** । अविरुद्धैरनाश्रमित्वाविरोधिभिरिति यावत् । अत एव पुरुषमात्रसंबन्धिभिरित्युक्तम् । आश्रमधर्मशून्यानां जपादिष्वपि शूद्रादिवन्नाधिकारोऽस्तीत्याशंक्याऽऽह—**तथा चेति** । मैत्रो मित्रे भवः सर्वभूताहिंसको दयावानित्यर्थः । किंच. नैयोगिकफलेषु कर्मस्वान्तर्यस्याचोदितत्वादनियतकालत्वे नैयोगिककर्माभावेऽप्यामुष्मिकैरेव कर्मभिर्विद्या भविष्यतीति सूत्रस्य व्याख्यान्तरमाह—**जन्मान्तरेति** । जन्मान्तरसंचितकर्मणां विद्यानुग्राहकत्वे मानमाह—**तथा चेति** । अनेकेषु जन्मसु संचितसंस्कारैः सिद्धः सम्यग्धीपरिपाकवानित्यर्थः । यथाऽस्मिञ्जन्मन्यधीतवेदो धर्मजिज्ञासाधिकारी तथाऽस्मिन्नेव जन्मन्याश्रमधर्मोत्पादितविविदिषो विद्याधिकारी स्यादित्याशंक्याऽऽह—**दृष्टार्थेति** । अविद्यानिवृत्तेर्दृष्टफलत्वान्नियमापेक्षाभावाद्विघातकनिषेधस्याभावमात्रेण तत्र पुरुषस्य प्रवृत्तिरित्यर्थः । श्रुतिस्मृतिन्यायसिद्धमर्थमुपसंहरति—**तस्मादिति** ॥ ३८ ॥ वर्णोपाधावुक्तधर्ममात्रादपि विद्योत्पद्यते चेदाश्रमित्वमनर्थकमित्याशंक्याऽऽह—

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

**अतस्तु-अन्तरालवर्तित्वाद् इतरद् आश्रमवर्तित्वं ज्यायो विद्यासाधनम्। श्रुतिस्मृतिसंदृब्धत्वात्, श्रुतिलिंगाच्च-"तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च" [बृ० ४।४।९] इति। "अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः॥ संवत्सरमनाश्रमी स्थित्वा कृच्छ्रमेकञ्चरेद्" इति च स्मृतिलिंगात्॥ ॥ ३९ ॥ इति विधुराधिकरणम्॥ ९ ॥**

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥ (१०)॥

**सन्त्यूर्ध्वरेतस आश्रमा इति स्थापितम्। तांस्तु प्राप्तस्य कथञ्चित्ततः प्रत्युतिरस्ति, नास्ति वेति संशयः। पूर्वधर्मः स्वनुष्ठानचिकीर्षया राग-**

---

रत्नप्रभा।

श्रवणेऽधिकारः। संन्यासोऽपि कदाचित्कृतो ज्ञाने उपकरोति। श्रवणं प्रत्यनंगत्वादिति भावः॥ ३७॥ ॥ ३८॥ तर्ह्याश्रमित्वं वृथेत्यत आह-अतस्त्विति॥ पुण्यकृत्तैजसः शुद्धसत्त्वः तेन ज्ञानमार्गेण एति ब्रह्म प्राप्नोतीत्यर्थः। अत्र पुण्यकृत्त्वलिंगादाश्रमित्वं ज्यायः। पुण्योपचये शीघ्रं विद्यालाभादनाश्रमस्य निन्दितत्वाच्चैवमिति भावः॥ ३९॥ (९)॥ तद्भूतस्य त्विति॥ उत्तमाश्रमात्पूर्वाश्रमं प्राप्तस्य प्रत्युतस्य कर्मापि विद्याहेतुः, अनाश्रमिकर्मवदिति संगतिः, पूर्वपक्षे फलं च। सिद्धान्ते तु भ्रष्टस्य

भामती।

घानिवृत्तिर्विद्याया दृष्टोऽर्थः। स चान्वयव्यतिरेकसिद्धो न नियममपेक्षत इत्यर्थः। प्रतिषेधो विघातस्तस्याभाव इत्यर्थः॥ ३६॥ ३७॥ ३८॥ यद्यनाश्रमिणामप्यधिकारो विद्यायां कृतं तर्ह्याश्रमैरतिबहुलायासैरित्याशङ्क्याह-अतस्त्वितरज्ज्यायो लिङ्गाच्च। स्वस्थेनाश्रमित्वमास्थेयम्। दैवात्पुनः पत्न्यादिवियोगतः सत्यनाश्रमित्वे भवेदधिकारो विद्यायामिति श्रुतिस्मृतिसंदर्भेण विविदिषन्ति यज्ञेनेत्यादिना ज्यायस्त्वावगतेः श्रुतिलिङ्गात्स्मृतिलिङ्गाच्चावगम्यते। तेनैति पुण्यकृदिति श्रुतिलिङ्गम्, अनाश्रमी न तिष्ठेतेत्यादि च स्मृतिलिंगम्॥३९॥(९)॥ तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः। आरोह-

आनन्दगिरीय-न्यायनिर्णयः।

**अतस्त्विति।** विद्यायाश्चिराचिरव्यक्तिहेतुतयाऽऽश्रमित्वानाश्रमित्वयोर्विशेषान्न वैयर्थ्यमिति मत्वा व्याचष्टे-**अत इति।** साधनोपचयादचिरेण विद्याहेतुत्वं ज्यायस्त्वम्। आश्रमित्वस्य ज्यायस्त्वे श्रुतिस्मृत्यनुगृहीतत्वं हेतुमाह-**श्रुतीति।** श्रुतौ पुण्यकृत्त्वविशेषणाल्लिङ्गाच्च श्रेष्ठमाश्रमित्वमित्याह-**श्रुतीति।** तेन ज्ञानमार्गेण ब्रह्मविदेति गच्छति ब्रह्म प्राप्नोति स च पुण्यं स्वाश्रमोक्तं कर्म करोतीति पुण्यकृदुच्यते तेजसि परमात्मन्यात्मत्वेन वर्तत इति तैजसः। तत्र पुण्यकृत्त्वविशेषणादाश्रमित्वं ब्रह्मप्राप्तिहेतुतया श्रेष्ठं सिद्धमित्यर्थः। आश्रमित्वस्य श्रेष्ठत्वे स्मार्तमपि लिङ्गमनुकूलयति-**अनाश्रमीति**॥ ३९॥ (९)॥ अनाश्रमिणां कर्मापि विद्याहेतुश्चेदारूढपतितस्य पूर्वाश्रमं प्राप्तस्य धीपूर्वकं प्रच्युतस्य कर्म किमु वाच्यमित्याशंक्याऽऽह-**तद्भूतस्येति।** वृत्तानुवादेन विषयं सूचयति-**सन्तीति।** तानाश्रमान्प्राप्तस्य धीपूर्वं प्रच्युतस्य कर्म विषयस्तत्किं विद्याहेतुर्न वेति संशयं सिद्धवत्कृत्य तद्धेतुमाह-**तांस्त्विति।** कथंचिद्रागाद्युद्रेकादित्यर्थः। सा मानवती न वेति संशयार्थः। ऊर्ध्वरेतसां बुद्धिपूर्वं प्रच्युतानां कर्म यथोक्तविद्याहेतुर्नेत्युक्त्या पादादिसंगतिः। पूर्वपक्षे पूर्वोक्ताश्रमित्वश्रैष्ठ्यासिद्धिः। सिद्धान्ते प्रच्युतेरप्रामाणिकत्वात्तत्सिद्धिरिति स्वीकृत्य पूर्वपक्षयति-**पूर्वेति।** पूर्वाश्रमोक्तो यागादिधर्मः सुखेन शक्योऽनुष्ठातुमिति तच्चिकी-

दिवशेन वा प्रच्युतोऽपि स्याद् विशेषाभावादिति ॥ एवं प्राप्ते उच्यते ॥ तद्भूतस्य तु प्रतिपन्नोर्ध्वरेतोभावस्य न कथञ्चिदपि अतद्भावः, न ततः प्रच्युतिः स्यात् ॥ कुतः ॥ "नियमातद्रूपाभावेभ्यः" तथाहि–"अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्" [ छां० २ । २३ । १ ] इति "अरण्यमियादितिपदं ततो न पुनरेयाद्" इत्युपनिषदिति–"आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम् । आविमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि" इति चैवञ्जातीयको नियमः प्रच्युत्यभावं दर्शयति । यथा च–"ब्रह्मचर्यं समाप्य गृही भवेत्" [ जाबा० ४ । ] "ब्रह्मचर्यादेव प्रव्रजेद्" [ जाबा० ४ । ] इति चैवमादीन्यारोहरूपाणि वचांस्युपलभ्यन्ते, नैवं प्रत्यवरोहरूपाणि । न चैवमाचाराः शिष्टा विद्यन्ते ॥ यत्तु पूर्वधर्मः स्वनुष्ठानचिकीर्षया प्रत्यवरोहणमिति ॥ तदसत् । "श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठिताद्" [ भ० गी० ३ । ३५ ] इति स्मरणात् । न्यायाच्च–यो हि यं प्रति विधीयते, स तस्य धर्मो, न तु यो येन स्वनुष्ठातुं शक्यते । चोदनालक्षणत्वाद्धर्मस्य । न च रागादिवशात्प्रच्युतिः नियमशास्त्रस्य बलीयस्त्वात् ॥ जैमिनेरपीति ॥ अपिशब्देन जैमि-

---

रत्नप्रभा ।

कर्म न हेतुरिति फलम् । रागादिप्राबल्यात्प्रच्युतिनिषेधाच्च । प्रच्युतिः प्रामाणिकी न वेति संशयः । सिद्धान्तसूत्रे नियमं व्याचष्टे–तथाहीति ॥ अत्यन्तमिति–नैष्ठिकत्वनियमः । अरण्यमिति–एकान्तोपलक्षितं पारिव्राज्यं गृह्यते । तद् इयाद् गच्छेद् इतिपदं—शास्त्रमार्गः, ततः तस्मात्पारिव्राज्यात् न पुनरेयात् न प्रच्यवेद्–इत्युपनिषद्रहस्यमित्यर्थः ॥ अतद्रूपप्रच्युतौ प्रमाणाभावं व्याचष्टे–यथा चेति ॥ शिष्टाचाराभावमाह–न चैवमिति ॥ "चण्डालाः प्रत्यवसिताः" इति स्मृतेश्च पतितानां कर्म निष्फल-

भामती ।

वत्प्रत्यवरोहोऽपि कदाचिदूर्ध्वरेतसां स्यादिति मन्दाशङ्कानिवारणार्थमिदमधिकरणम् । पूर्वधर्मेषु यागहोमादिषु । रागतो वा गृहस्थोऽहं पत्न्यादिपरिवृतः स्यामिति । नियमं व्याचष्टे—तथाहि–अत्यन्तमात्मानमिति । अतद्रूपतामारोहतुल्यताभावं व्याचष्टे–यथा च ब्रह्मचर्यं समाप्येति । अभावं शिष्टाचाराभावं विभजते—न चैवमाचाराः शिष्टा इति । अतिरोहितार्थमन्यत् ॥ ४० ॥ ( १ ) ॥

आनन्दगिरीय–न्यायनिर्णयः ।

षेया रागद्वेषवशेन च प्रत्यवरोहोऽपि प्रामाणिकः स्यात्तथा चानाश्रमिकर्म निन्दितमपि यथा विद्यासाधनमुक्तं तथा प्रत्यवरूढस्यापि कर्म विद्याहेतुराश्रमावरोहोऽनुष्ठेयस्तदारोहावरोहयोरन्यतरत्वात्तदारोहवदित्यवरोहस्य प्रामाणिकत्वादित्यर्थः । सिद्धान्तसूत्रमवतार्य व्याकरोति–एवमिति । उत्तराश्रमं प्राप्तस्य पूर्वाश्रमप्राप्तिरप्रामाणिकीत्यत्र प्रश्नपूर्वकं हेतुत्रयमाह–कुत इति । तत्र नियमं व्याचष्टे–तथाहीति । अरण्यमित्येकान्तोपलक्षितमूर्ध्वरेतस्त्वं तदियाद्गच्छेदिति पदं शास्त्रमार्गस्ततस्तस्मादरण्यान्न पुनरेयात्पुनर्नाऽऽगच्छेन्न प्रत्यवरोहेदित्युपनिषद्रहस्यमित्यर्थः । स्मार्तमपि नियमं कथयति–आचार्येणेति । उक्तनियमतात्पर्यमाह–एवमिति । अतद्रूपमप्रत्यवरोहं व्याकरोति–यथा चेति । अभावं शिष्टाचाराभावं व्याचष्टे–न चेति । परोक्तमनुमानमनूद्य स्मृतिविरोधेन दूषयति–यत्त्विति । इतश्चानुमानमयुक्तमित्याह–न्यायाच्चेति । यत्तु रागादिवशात्प्रत्यवरोहणमिति तत्राऽऽह–न चेति । ततो न पुनरित्यादि नियमशास्त्रम् । अवशिष्टं सूत्रावयवं व्याचष्टे–जैमिनेरिति । अत्रेति प्रामाणिकप्रच्युत्यभावोक्तिः । उभयसं-

निबादरायणयोरत्र संप्रतिपत्तिं शास्ति प्रतिपत्तिदार्ढ्याय ॥ ४० ॥ इति तद्भूताधिकरणम् ॥ १० ॥

## न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥(११)॥

यदि नैष्ठिको ब्रह्मचारी प्रमादादवकीर्येत, किं तस्य, "ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत" इत्येतत्प्रायश्चित्तं स्याद्-उत नेति ॥ नेत्युच्यते ॥ यदप्यधिकारलक्षणे निर्णीतं प्रायश्चित्तम् "अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वाद्" [ जै० सू० ६ । ८ । २२ ] इति तदपि न नैष्ठिकस्य भवितुमर्हति । किं कारणम् ॥ "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा" [अत्रि०] इत्यप्रतिसमाधेयपतनस्मरणात् । छिन्नशिरस इव प्रतिक्रियानुपपत्तेः । उपकुर्वाणस्य तु तादृक्पतनस्मरणाभावादुपपद्यते, तत्प्रायश्चित्तम् ॥४१॥

---

रत्नप्रभा ।

मिति भावः ॥ ४० ॥ ( १० ) ॥ न चाधिकारिकमिति ॥ अवकीर्येत व्यभिचरेद्-इत्यर्थः । अवकीर्णं योनौ निषिक्तं रेतोऽस्यास्तीति-अवकीर्णी । अत्र प्रच्युतस्य प्रायश्चित्तं स्यान्न वेत्युपपातकत्वात्पतनस्मृतेश्च संशयः । प्रच्युतस्य यज्ञादिकं निष्फलमित्युक्तम् । तद्वत्प्रायश्चित्तमपि निष्फलमिति पूर्वपक्षयति-नेत्युच्यत इति ॥ अत्र कृतप्रायश्चित्तस्य कर्मज्ञानहेतुर्न भवतीति फलम्, सिद्धान्ते तु भवतीति भेदः । यथोपनय-

भामती ।

**न चाधिकारिकमपि पतनानुमानात्तदयोगात्** । प्रायश्चित्तं न पश्यामीति नैष्ठिकं प्रति प्रायश्चित्ताभावस्मरणान्नैर्ऋतगर्दभालम्भः प्रायश्चित्तमुपकुर्वाणकं प्रति । तस्माच्छिन्नशिरस इव पुंसः प्रतिक्रियाभाव इति पूर्व-

आनन्दगिरीय-न्यायनिर्णयः ।

प्रतिपत्तिफलमाह-प्रतिपत्तीति ॥ ४० ॥ ( १० ) ॥ प्रत्यवरोहणमशास्त्रीयमित्युक्तम् । संप्रति प्रमादात्प्रत्यवरोहे प्रायश्चित्तमस्तीति वक्तुं पूर्वपक्षमाह-न चेति । ऊर्ध्वरेतसोऽधीपूर्वच्युतब्रह्मचर्यं विषयस्तेषां किं नास्ति प्रायश्चित्तमुतास्तीति प्रायश्चित्ताभावस्मृतेर्महापातकेष्वनुक्तेश्च संशयमाह-यदीति । प्रमादादित्यधीपूर्वच्युतब्रह्मचर्याणामेवोर्ध्वरेतसां प्रायश्चित्तचिन्तेयमिति द्योतयति । अवकीर्येत योनौ रेतः सिञ्चेत्, अवकीर्णं योनौ क्षिप्तं रेतोऽस्यास्तीत्यवकीर्णी । प्रमादाच्च्युतब्रह्मचर्याणामूर्ध्वरेतसां कृतप्रायश्चित्तानां कर्मविद्याहेतुरित्युक्त्या पादादिसंगतिः । पूर्वपक्षे प्रमादिनामूर्ध्वरेतसामात्यन्तिकादधःपातात्पुमर्थासिद्धिः । सिद्धान्ते तेषामपि प्रायश्चित्तेन पतनसमाधानात्तत्सिद्धिरित्युपेत्य पूर्वपक्षसूत्रमवतार्य योजयति-उच्यत इति। तदेव षष्ठाध्याये निर्धारितं प्रायश्चित्तमुदाहरति-अवकीर्णीति । ब्रह्मचार्यवकीर्णीत्यत्र पशुहोमार्थमाधानं कर्तव्यं किंवा लौकिकेष्वेवाग्निषु तत्कर्मेति संदेहे पूर्वाधिकरणे यदाहवनीये जुहोति तेन सूर्योऽस्याभीष्टः प्रीतो भवतीत्याहवनीयस्य सर्वहोमार्थत्वादाहवनीये तावदुपनयनहोमाः कार्या इति प्राप्य जातपुत्रोऽग्नीनादधीतेति कृतदारस्याग्न्याधानविधानादुपनयनकाले दाराभावादाधानस्याप्राप्तकालत्वादाहवनीयाभावाल्लौकिकाग्निषूपनयनहोमा इति राद्धान्तिते ब्रह्मचारी ययाऽवकीर्णी सैव तस्य भार्या स्यात्ततोऽन्याधानमित्यधिकां शंकां निराकर्तुमतिदेशाधिकरणमवकीर्णिपशुश्चेति यथोपनयनकाले लौकिकाग्नौ होमस्तथाऽवकीर्णिपशुश्च तत्रैव होतव्यः । आधानस्य पत्नीपरिग्रहोत्तरकालतया पूर्वं प्राप्त्यभावादितरस्याश्च परपरिग्रहभूताया भार्यात्वकल्पनयाऽऽधाने मानाभावादित्यर्थः । यदधिकारलक्षणे निर्णीतमाधिकारिकं प्रायश्चित्तं तदपि नैष्ठिकस्य भवितुं नार्हतीति संबन्धः । प्रश्नपूर्वकं हेतुमाह-किमित्यादिना । किंविषयं तर्हि प्रायश्चित्तवचनं ब्रह्मचारित्वाविशेषादुपकुर्वाणस्यापि तदयोगात्तत्राऽऽह-उपेति । तादृगित्यप्रतिसमाधेयत्वोक्तिः ॥ ४१ ॥

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥

अपि त्वेके आचार्या उपपातकमेवैतदिति मन्यन्ते । यन्नैष्ठिकस्य गुरुदारादिभ्योऽन्यत्र ब्रह्मचर्यं विशीर्यते, न तन्महापातकं भवति । गुरुतल्पादिषु महापातकेष्वपरिगणनात् ॥ तस्मादुपकुर्वाणवन्नैष्ठिकस्यापि प्रायश्चित्तभावमिच्छन्ति । ब्रह्मचारित्वाविशेषादवकीर्णित्वाविशेषाच्च— अशनवत् । यथा—ब्रह्मचारिणो मधुमांसाशने व्रतलोपः, पुनस्संस्कारश्चैवमिति । ये हि प्रायश्चित्ताभावमिच्छन्ति, न तेषां मूलमुपलभ्यते । ये तु भावमिच्छन्ति, तेषां "ब्रह्मचार्यवकीर्णी" इत्येतदविशेषश्रवणं मूलम् ॥ तस्माद्भावो युक्ततरः ॥ तदुक्तं प्रमाणलक्षणे—"समा विप्रतिपत्तिः स्यात्" [ जै० सू० १ । ३ । ८ ] "शास्त्रस्था वा तन्निमित्तत्वाद्"

---

रत्नप्रभा ।

नकाले होमो लौकिकाग्नावेव कार्यः । दारसंबन्धोत्तरकालविहिताधानस्य संप्रत्यप्राप्तकालत्वेन अहवनीयाभावात्, तद्वदवकीर्णिनो ब्रह्मचारिणः प्रायश्चित्तपशुर्गर्दभो लौकिकाग्नौ होतव्य इत्यधिकारलक्षणे षष्ठाध्याये निर्णीतम् "प्रायश्चित्तं न पश्यामि" इति दर्शनाभावस्मृतेः प्रायश्चित्ताभावपरत्वं कल्पयित्वा तन्मूलश्रुतिकल्पनात्प्रागेव क्लृप्तसाधारणश्रुत्या प्रायश्चित्तसद्भावसिद्धेः कल्पनं नोदेति। क्लृप्तश्रुतिविरोधादिति भावः॥४१॥ उप०॥प्रायश्चित्तस्य भावाभावप्रसिद्ध्योः समत्वेपि भावप्रसिद्धिः श्रुतिमूलत्वादादर्त्तव्येत्यत्र संमतिमाह—तदुक्तमिति ॥ "यवमयश्चरुः" इत्यत्र यवशब्दं केचिद्दीर्घशूके प्रयुञ्जते । केचिद्देशविशेषे प्रियंगुषु ॥ अतः

भामती ।

पक्षः।सूत्रयोजना तु- न चाधिकारिकमधिकारलक्षणे प्रथमकाण्डे निर्णीतम् 'अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात्' इत्यनेन यत्प्रायश्चित्तं तन्न नैष्ठिके भवितुमर्हति । कुतः—आरूढो नैष्ठिकमिति स्मृत्या पतनश्रुत्यनुमानात्तत्प्रायश्चित्तायोगात् ॥४१॥ **उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम्** । श्रुतिस्तावत्स्वरसतोसंकुचद्वृत्तिर्ब्रह्मचारिमात्रस्य नैष्ठिकस्योपकुर्वाणस्य चाविशेषेण प्रायश्चित्तमुपदिशति साक्षात् । प्रायश्चित्तं

आनन्दगिरीय—न्यायनिर्णयः ।

सिद्धान्तयति—उपपूर्वमिति । उपपदं पूर्वं यस्य पतनस्य तदुपपूर्वमिति व्याकरोति—अपि त्विति । प्रायश्चित्ताभावं व्यावर्तयितुमपीति प्रयुक्तम् । एवकारार्थमाह—नेति । नैष्ठिकव्रतलोपस्योपपातकत्वेऽपि प्रायश्चित्तसत्त्वे किं जातमित्याशंक्योपपातकसामान्यप्रायश्चित्तं स्यादिति सूत्रावयवं व्याकुर्वन्नाह—तस्मादिति । उक्तमर्थं दृष्टान्तमवतार्य स्पष्टयति—अशनवदिति । प्रायश्चित्तं न पश्यामीति स्मरणात्कथं तद्भावधीरित्याशंक्याऽऽह—ये हीति । प्रायश्चित्तं नास्तीति स्मरणाभावान्न पश्यामीति दर्शनाभावमात्रस्मरणादित्यर्थः । भाववादिनामपि तुल्या मूलानुपलब्धिरित्याशंक्याऽऽह—ये त्विति । ननु न पश्यामीति स्मरणस्य प्रायश्चित्तनिषेधार्थत्वमनुमाय तदर्थश्रुतिकल्पनात्तद्विरोधे सामान्यश्रुत्या प्रायश्चित्तसत्ता नाभ्युपगम्यते तत्राऽऽह—तस्मादिति । यावद्दर्शनाभावस्मरणस्य प्रायश्चित्तनिषेधार्थत्वकल्पनया तदर्था श्रुतिरनुमीयते तावदविशेषप्रवृत्ता प्रायश्चित्तं श्रुतिर्गमयतीति न स्मृत्या प्रायश्चित्ताभावधीरिति भावः । उक्तेऽर्थे यववराहाधिकरणसंमतिमाह—तदुक्तमिति । यवमयश्चरुर्वाराही उपानहावित्यत्र यववराहशब्दाभ्यां प्रियंगुकृष्णशकुनिग्रहो वा दीर्घशूकसूकरग्रहो वेति संदेहे पूर्वपक्षमाह—समेति । केचिद्दीर्घशूके यवशब्दं प्रयुञ्जते; प्रियंगुषु चापरे, वराहशब्दमपि सूकरे केचिदाहुः;कृष्णशकुनौ चान्ये, तेन प्रयोगसाम्यात्समा तुल्या विकल्पेन प्रतिपत्तिः स्यादित्यर्थः । सिद्धान्तमाह—शास्त्रस्था वेति । वाशब्दः पक्षव्यावृत्त्यर्थः । या

---

१ चतुर्थाधिकरणेऽष्टमे पादे ।

[ जै० सू० १ । ३ । ९ ] इति । प्रायश्चित्ताभावस्मरणं त्वेवं सति यत्नगौरवोत्पादनार्थमिति व्याख्यातव्यम् । एवं भिक्षुवैखानसयोरपि "वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रञ्चरित्वा महाकक्षं वर्धयेत् । भिक्षुर्वानप्रस्थवत्सोमवृद्धिवर्जं स्वशास्त्रसंस्कारश्च" इत्येवमादिप्रायश्चित्तस्मरणमनुसर्तव्यम् ॥ ४२ ॥ इत्याधिकारिकाधिकरणम् ॥ ११ ॥

रत्नप्रभा ।

कस्य चरुः कार्य इति संदेहे वृद्धप्रयोगसाम्यात्समा तुल्या विकल्पेन प्रतिपत्तिः स्याद्-॥ इति प्राप्ते सिद्धान्तः । शास्त्रमूला प्रतिपत्तिर्ग्राह्या । शास्त्रनिमित्तत्वाद्धर्मादिज्ञानस्य । तथा च "यदा चान्या ओषधयो म्लायन्त्यथैते यवा मोदमानास्तिष्ठन्ति" इति शास्त्रमूलत्वाद्दीर्घशूकप्रयोगस्यैवादर इत्यर्थः ॥ स्मृतेर्गतिमाह-प्रायश्चित्तेति ॥ ब्रह्मचर्यरक्षार्थं यत्नाधिक्यं कार्यमिति ज्ञापनार्थं प्रायश्चित्तं स्पष्टमपि "न पश्यामि" इत्युक्तं भगवदत्रिणेत्यर्थः । नैष्ठिकवद्यतिवनस्थयोरपि प्रमादाद्ब्रह्मचर्यभंगे प्रायश्चित्तमस्तीत्याह-एवमिति ॥ कृच्छ्रं प्राजापत्यं महाकक्षं बहुतृणकाष्ठं देशं जलदानादिना वर्धयेत् । यतिस्तु सोमलतावर्ज्यं वर्धयेत् । "सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् । भूयस्तपस्वी भवति पंक्तिपावन एव च ॥ उपपातकसंघेषु पातकेषु महत्सु च। प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेद्" इत्यादि । आदिपदात्-"मनो-

भामती ।

न पश्यामीति तु स्मृतिः । तस्यामपि च साक्षात्प्रायश्चित्तं न कर्तव्यमिति प्रायश्चित्तनिषेधो न गम्यते, न पश्यामीति तु दर्शनाभावेन सोऽनुमातव्यः । तथा च स्मृतिर्निषेधार्थेति अनुमाय तदर्था श्रुतिरनुमातव्या । श्रुतिस्तु सामान्यविषया विशेषमुपसर्पन्ती शीघ्रप्रवृत्तिरिति । स्मार्तं प्रायश्चितादर्शनं तु यत्नगौर

आनन्दगिरीय-न्यायनिर्णयः ।

शास्त्रमूला धीः सैव ग्राह्या शास्त्रनिमित्तत्वात्तद्धर्मादिज्ञानस्य । शास्त्रं च यदा चाऽन्या ओषधयो म्लायन्त्यथैते मोदमानास्तिष्ठन्ति वराहं गावोऽनुधावन्तीति च यववराहशब्दयोर्दीर्घशूकसूकरविषयम् । तस्माद्धीसाम्याभावाद्विकल्पासिद्धेर्या शास्त्रमूला प्रसिद्धिः सैव ग्राह्येति प्रथमेऽसिद्धम् । तथाऽत्रापि शास्त्रमूलत्वात्प्रायश्चित्तभावप्रसिद्धेस्तत्सत्त्वमुक्तमित्यर्थः । प्रायश्चित्तं न पश्यामीतिस्मृतेस्तर्हि का गतिस्तत्राऽऽह-प्रायश्चित्तेति । एवं सति सामान्यश्रुत्या प्रायश्चित्तसत्त्वे निश्चिते सतीत्यर्थः । यदि कथंचिन्नैष्ठिकस्य ब्रह्मचर्यं लुप्येत तदा न प्रायश्चित्तं दृश्यते तेन नैष्ठिकेन ब्रह्मचर्ये यत्नवता भाव्यमिति तद्विषययत्नस्याप्रमादेन सदाकार्यतारूपं गौरवमुत्पादयितुं प्रायश्चित्ताभावस्मरणमित्यर्थः । नैष्ठिके हि दर्शितन्यायमितरयोरतिदिशति-एवमिति । विशेषतोऽपि प्रायश्चित्तविधेस्तयोरस्ति प्रामादिके व्रतलोपे प्रायश्चित्तमित्याह-वानप्रस्थ इति । दीक्षाभेदे व्रतलोपे प्रमादतो ब्रह्मचर्यभङ्गे कृच्छ्रं चरित्वा महाकक्षं बहुतृणकाष्ठं देशं वर्धयेदिति संबन्धः । कृच्छ्रं विशिनष्टि-द्वादशेति । दिनत्रयमेकवारभोजनं दिनत्रयं रात्रिभोजनं दिनत्रयमयाचितं दिनत्रयमुपवासकरणमित्येवंरूपमित्यर्थः । परिव्राजकेऽपि प्रमादतो व्रतलोपे तुल्यं कृच्छ्रानुष्ठानमित्याह-भिक्षुरिति । सोमस्य यज्ञाङ्गत्वात्तदभिवृद्धिमनादृत्य महाकक्षं वर्धयेदित्याह-सोमेति । "सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् । पुनः स पूतो भवति पंक्तिपावन एव च ॥ मनोवाक्कायजान्दोषाज्ज्ञानोत्थांश्च प्रमादजान् । सर्वान्दहति योगाग्निस्तूलराशिमिवानलः ॥ उपपातकसंघेषु पातकेषु महत्सु च । प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत् ॥ नित्यमेव तु कुर्वीत प्राणायामांस्तु षोडश । अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः" इत्यादि परिव्राजकविषयं शास्त्रं, तेनाभिहितः संस्कारो ध्यानादिः,स च कर्तव्यो भिक्षुणेत्याह-स्वशास्त्रेति । ऊर्ध्वरेतसां प्रमादच्युतब्रह्मचर्याणां कृतप्रायश्चित्तानामधिकारोऽस्ति

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥ (१२) ॥

**यद्यूर्ध्वरेतसां स्वाश्रमेभ्यः प्रच्यवनं महापातकं, यदि वोपपातकम्, उभयथापि शिष्टैस्ते बहिष्कर्तव्याः । "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा" ॥ इति, "आरूढपतितं विप्रं मण्डलाच्च विनिःसृतम् । उद्बद्धं कृमिदष्टञ्च स्पृष्ट्वा चान्द्रायणं चरेद्" इति चैवमादिनिन्दातिशयस्मृतिभ्यः, शिष्टाचाराच्च । न हि यज्ञाध्ययनविवाहादीनि तैः सहाचरन्ति शिष्टाः ॥ ४३ ॥ इति बहिरधिकरणम् ( १२ ) ॥**

---

रत्नप्रभा ।

वाक्कायजान्दोपानज्ञानोत्थान्प्रमादजान् । सर्वान्दहति योगाग्निस्तूलराशिमिवाऽनलः ॥ नित्यमेव तु कुर्वीत प्राणायामांस्तु षोडश । अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः" इत्याद्यानि वाक्यानि गृह्यन्ते ॥ ४२ ॥ (११) ॥ बहिस्तूभयथापि कृतप्रायश्चित्तैस्तैः सह कृतं श्रवणादिकं ज्ञानसाधनं न वेति संदेहे तेषां शुद्धत्वात्साधनमिति प्राप्ते प्रायश्चित्तात्परलोके तेषां शुद्धत्वेऽप्यत्र शुध्यभावान्न साधनमिति सिद्धान्तयति—यद्यू-

भामती ।

वार्थम् । एतदुक्तं भवति—कृतनिर्णेजनैरपि एतैर्न संव्यानं कर्तव्यमिति । सूत्रार्थस्तु—उपपूर्वमपि पातकं नैष्ठिकस्यावकीर्णित्वं न महापातकम्, अपिरेवकारार्थे, अत एके प्रायश्चित्तभावमिच्छन्तीति । आचार्याणां विप्रतिपत्तौ विशेषाभावात्साम्यं भवेत् । शास्त्रस्था या वा प्रसिद्धिः सा ग्राह्या शास्त्रमूलत्वात् । उपपादितं च प्रायश्चित्तभावप्रसिद्धेः शास्त्रमूलत्वमिति । सुगममितरत्॥४२॥(११)॥ यदि नैष्ठिकादीनामस्ति प्रायश्चित्तं तत्किमेतैः कृतनिर्णेजनैः संव्यवहर्तव्यमुत नेति।तत्र दोषकृतत्वादसंव्यवहारस्य प्रायश्चित्तेन तन्निबर्हणादनिबर्हणे वा तत्करणवैयर्थ्यात्संव्यवहार्या एवेति प्राप्त उच्यते—**बहिस्तूभयथापि स्मृतेराचाराच्च**।निषिद्धकर्मानुष्ठानजन्यमेनो लोकद्वयेऽप्यशुद्धिमापादयति द्वैधम् । कस्यचिदेनसो लोकद्वयेऽप्यशुद्धिरपनीयते प्रायश्चित्तैरेनोनिबर्हणं कुर्वाणैः । कस्यचित्तु परलोकशुद्धिमात्रमपनीयते प्रायश्चित्तैरेनोनिबर्हणं कुर्वाणैरिहलोकाशुद्धिस्त्वेनसापादिता न शक्यापनेतुम् । यथा स्त्रीबालादिघातिनाम् । यथाहुः—'विशुद्धानपि धर्मतो न संपिबेत्' इति । तथा च 'प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत्' कामतः कृतमपि। बालघ्नादिस्तु कृतनिर्णेजनोऽपि वचनादव्यवहार्य इह लोके जायत इति।वचनं च'बालघ्नांश्च'इत्यादि। तस्मात्सर्वमवदातम्॥४३॥(१२)॥

आनन्दगिरीय—न्यायनिर्णयः ।

विद्यायामिति भावः ॥ ४२ ॥ (११) ॥ कृतप्रायश्चित्तानामपि तेषां शिष्टाव्यवहार्यत्वमाह—**बहिस्त्विति**। कृतप्रायश्चित्तैः सह शिष्टाचाररूपं कर्म विषयस्तत्किं विद्याङ्गं किंवा नेति संशये प्रागुक्तप्रायश्चित्तेनैव तेषां व्यवहार्यतासिद्धेरङ्गमिति प्राप्ते सिद्धान्तमाह—**यदीति** । प्रतिज्ञार्थमुक्त्वा हेतुद्वयं व्याकरोति—**आरूढ इत्यादिना** । दुश्चरिताचरणकृतमेनो लोकद्वयेऽपि कर्तुरशुद्धिमादधाति । तत्र प्रायश्चित्तेन लोकद्वयेऽपि कस्यचिदशुद्धिरपनीयते कस्यचित्तु पारलौकिकाशुद्धिरपाक्रियत ऐहिकाशुद्धिरनुवर्तते । उक्तं हि—"बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः । शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवदेत् " इति । तथेहापि " आरूढो नैष्ठिकम् " इत्यादिस्मृतिलिङ्गादाचाराच परलोकाशुद्धेरपनीतत्वेऽप्यव्यवहार्यत्वावगमान्न तैर्व्यवहाररूपाचारस्य विद्याङ्गत्वम् । तदेवमुक्ताचारस्योक्तविद्यानङ्गत्वाभिधानात्प्रासङ्गिकी पादादिसंगतिः । पूर्वपक्षे "बालघ्नान् " इत्यादिस्मृतिविरोधः । सिद्धान्ते तदानुगुण्यमिति भावः ॥ ४३ ॥ (१२)॥ अन्यस्मिन्पापकारिणि

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥ (१३) ॥

अङ्गेषूपासनेषु संशयः-किं तानि यजमानकर्माणि-आहोस्विद्-ऋत्विक्कर्माणि । किं तावत्प्राप्तम् । यजमानकर्माणीति ॥ कुतः ॥ फलश्रुतेः ॥ फलं हि श्रूयते-"वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधं सामोपास्ते" [ छां० २ । ३ । २ ] इत्यादि । तच्च स्वामिगामि न्याय्यम् । तस्य साङ्गे प्रयोगेऽधिकृतत्वादधिकृताधिकारत्वाच्चैवञ्जातीयकस्य । फलञ्च कर्तर्युपासनानां श्रूयते-"वर्षत्यस्मै य उपास्ते" इत्यादि ॥ ननु-ऋत्विजोऽपि फलं दृष्टम्-"आत्मने वा यजमानाय वा यं कामं

रत्नप्रभा ।

च्चैति ॥ सुगमं भाष्यम् ॥४३॥(१२)॥ स्वामिनः फलश्रुतेरिति ॥ अंगाश्रितोपास्तिषूभयकर्तृकत्वसंभवात्संशयः ॥ यः कृतप्रायश्चित्तः, स संव्यवहार्य इत्युत्सर्गस्य निन्दातिशयस्मृत्या नैष्ठिकादिषु बाधवद् यो यदङ्गकर्ता, स तदाश्रितस्य कर्तेत्युत्सर्गस्य कर्तुः फलश्रुत्या बाध इति पूर्वपक्षमाह-किमिति ॥ अत्र कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यं फलं, सिद्धान्ते त्वङ्गाश्रिताः ऋत्विक्कर्तृका अप्युपास्तयो यजमानगामिस्वतन्त्रफलाः, किमु वाच्यं स्वनिष्ठब्रह्मविद्यायाः स्वातन्त्र्यमिति फलं विवेक्तव्यम् ॥ अतः पादसंगतिः हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनाख्यपञ्चप्रकारे साम्नि वृष्टिध्यातुर्वर्षसमृद्धिः फलमिति श्रुत्यर्थः ॥ श्रुतं फलम् । ऋत्विग्गतं किं न स्यादित्यत आह-तच्चेति ॥ यथा-सांगक्रत्वधिकृताधिकारत्वाद्गोदोहनस्य फलं क्रत्वधिकारिगतं, तद्वदंगोपासनस्यापि फलं तद्गतमेवेत्यर्थः ॥ अस्तु तस्य फलं तद्गतम् । कर्ता त्वन्यः किं न स्यादित्यत आह-फलं चेति ॥ यदुक्तं यजमानगामिफलमिति, तस्यापवादं शङ्कते-नन्विति ॥

भामती ।

स्वामिनः फलश्रुतेरित्यात्रेयः । प्रथमे काण्डे शेषलक्षणे तथाकाम इत्यत्रर्त्विक्संबन्धे कर्मणः सिद्धे किं कामो याजमान उतार्त्विज्य इति संशय्यार्त्विज्येऽपि कर्मणि याजमान एव कामो गुणफलेष्विति निर्णीतमिह त्वेवंजातीयकानि चाङ्गसंबद्धानि उपासनानि किं याजमानान्येवोतार्त्विज्यानीति विचार्यत इति न पुनरुक्तम् । तत्रोपासकानां फलश्रवणादनधिकारिणस्तदनुपपत्तेर्यजमानस्य च कर्मजनितफलोपभोगभाजोऽधिकारादृत्विजां च तदनुपपत्तेर्वचनाच्च राजाज्ञास्थानीयात्क्वचिदृत्विजां फलश्रुतेरसति वचने यजमानस्य

आनन्दगिरीय-न्यायनिर्णयः ।

तेन व्यवहारादन्यस्य त्वपकारवदन्यस्मिन्नुपास्तिकर्तरि तेन व्यवहारात्फललक्षणोपकारमन्ययजमानस्य दर्शयन्पूर्वपक्षयति—स्वामिन इति । कर्माङ्गसङ्गीन्युपासनानि विषयस्तेषूभयकर्तृकत्वधिया संशयमाह-अंगेष्विति । शास्त्रीयाङ्गाश्रितोपास्तीनां स्वतन्त्रफलानामृत्विक्कर्तृकत्वेऽपि यजमानगामिफलत्वोक्तेरस्ति पादादिसंगतिः । पूर्वपक्षे कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यासिद्धिः । सिद्धान्ते प्रकृतस्य कर्तुरस्वातन्त्र्यात्तस्य यजमानाधीनत्वात्तत्कर्तृत्वमपि तदधीनमित्यैकाधिकरण्यस्याविरुद्धतेति सिद्धवत्कृत्य प्रश्नपूर्वकं पूर्वपक्षमाह-किमिति । तत्र हेतुं प्रश्नद्वारा दर्शयति—कुत इति । फलश्रुतिमेव विशदयति—फलं हीति । श्रुतमपि फलमृत्विग्गतं किं न स्यात्तत्राऽऽह-तच्चेति । तत्र हेतुः—तस्येति । उद्गीथाद्युपास्तिविधीनां प्राप्तोद्देशनत्वात्क्रत्वधिकारिण एव प्राप्तेस्तस्यैवोद्देशनयोगात्तदाश्रितोपास्तीनां गोदोहनवदधिकृताधिकारत्वात्क्रत्वधिकारिण एव गोदोहनफलवद्विद्याफलेन संगतिरित्याह-अधिकृतेति । तथाऽपि कथमुपास्तीनां याजमानत्वं तत्राऽऽह—फलं चेति । अकर्तृत्वे फलित्वमपि यजमानस्य न स्यात्कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यादित्यर्थः । यजमानगामि फलमित्यत्र व्यभिचारं शङ्कते-नन्विति । उत्सर्गतो याजमानं फलं वच-

कामयते तमागायति'' [ बृ० १ । ३ । २८ ] इति ॥ न ॥ तस्य वाचनिकत्वात् ॥ तस्मात्स्वामिन एव फलवत्सूपासनेषु कर्तृत्वमित्यात्रेय आचार्यो मन्यते ॥ ४४ ॥

**आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥**

नैतदस्ति–स्वामिकर्माण्युपासनानीति । ऋत्विक्कर्माण्येतानि स्युरित्यौडुलोमिराचार्यो मन्यते ॥ किं कारणम् ॥ तस्मै हि साङ्गाय कर्मणे ऋत्विक् परिक्रीयते । तत्प्रयोगान्तःपातीनि चोद्गीथाद्युपासनानि । अधिकृताधिकारत्वात् ॥ तस्माद्गोदोहनादिकर्मनियमवदेव ऋत्विग्भिर्निर्वर्त्येरन् । तथा च ''तं ह बको दाल्भ्यो विदाञ्चकार स ह नैमिषीयाणामुद्गाता बभूव'' [ छां० १ । २ । १३ ] इत्युद्गातृकर्तृकतां विज्ञानस्य दर्शयति ॥ यत्तूक्तं कर्त्राश्रयं फलं श्रूयत इति ॥ नैष दोषः ॥ परार्थत्वादृत्विजोऽन्यत्र वचनात्फलसम्बन्धानुपपत्तेः ॥ ४५ ॥

**श्रुतेश्च ॥ ४६ ॥**

---

रत्नप्रभा ।

उद्गानेन साधयतीत्यर्थः ॥ यजमानफलमित्युत्सर्गस्य असति बाधकवचने सिद्धिरिति समाध्यर्थः ॥ **तस्मादिति** । फलभोक्तृत्वादित्यर्थः ॥ ४४ ॥ उपासनमार्त्विज्यम् ऋत्विक्कर्तृकमित्यत्र श्रौतं लिंगमाह—**तथा चेति** ॥ **तम्**–उद्गीथाख्यं प्रणवं प्राणदृष्ट्या ध्यातवान् ध्यात्वा च **नैमिषीयाणां** सत्रिणामुद्गातासीदित्यर्थः । यजमानेन स्वगामिफलकसांगप्रयोगकरणाय ऋत्विजां क्रीतत्वात्कर्तृत्वेपि न तत्फलभाक्त्वम् । उत्सर्गस्य बाधकाभावादित्युक्तत्वात्, क्रयणद्वारा कर्तृत्वभोक्तृत्वसामानाधिकरण्यं चोपपद्यते, भृत्यकर्तृके

भामती ।

फलवदुपासनं तस्य फलश्रुतेः तं ह बको दाल्भ्यो विदाञ्चकारेत्यादेरुपासनस्य च सिद्धविषयतया न्यायापवादसामर्थ्याभावाद्याजमानमेवोपासनाकर्मेति प्राप्त उच्यते–॥४४॥ **आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते** । उपाख्यानात्तावदुपासनमौद्गात्रमवगम्यते । तद्बलवति सति बाधकेऽन्यथोपपादनीयम् । न चर्त्विक्कर्तृक उपासने यजमानगामिता फलस्यासंभविनी तेन हि स परिक्रीतस्तद्गामिने फलाय घटते ।

आनन्दगिरीय–न्यायनिर्णयः ।

नात्रकचिदपवादः स्यादित्याह–**न तस्येति** । वाचनिकापवादाभावे तूत्सर्गस्थितिरित्युपसंहरति–**तस्मादिति** ॥ ४४ ॥ अङ्गोपास्तीनां याजमानत्वान्न स्वतन्त्रफलतेति प्राप्ते सिद्धान्तयति–**आर्त्विज्यमिति** । तत्र प्रतिज्ञां विभजते–**नैतदिति** । अन्यकर्तृकत्वे कथमन्यस्य फलमिति शङ्कते–**किं कारणमिति** । सूत्रावयवेनोत्तरमाह–**तस्मै हीति** । ऋत्विजो यजमानेन स्वगामिने फलाय क्रीतत्वान्नानुपपत्तिरित्यर्थः । साङ्गकर्मार्थे क्रीतत्वेऽपि ध्यानार्थमक्रीतत्वात्कथमुपास्तीनामृत्विक्कर्मत्वं तत्राऽऽह–**तदिति** । अङ्गोपास्तीनामधिकृताधिकारत्वे फलितमाह–**तस्मादिति** । तासामृत्विक्कर्तृकत्वे श्रौतं लिङ्गमाह–**तथा चेति** । तमुद्गीथाख्यं प्रणवं प्राणादिदृष्टिविशिष्टं बको नामतो दल्भस्यापत्यं दाल्भ्यो विदांचकार विदितवान् । विदित्वा च नैमिशीयानां सत्रिणामुद्गाताऽऽसीदित्यर्थः । पूर्वपक्षबीजमनुवदति–**यत्त्विति** । उत्सर्गतो याजमानत्वेऽपि फलस्य वचनादपवादो यत्र नैवं तत्रोत्सर्गस्थितिरित्युक्तमित्याह–**नेत्यादिना** ॥ ४५ ॥ इतश्चोपास्तीनामृत्विक्कर्तृकत्वं यजमानगामिफलत्वं चेत्याह–**श्रुतेश्चेति** । उत्सर्गतः श्रुतिलिङ्गैश्च सिद्धमर्थमु-

"यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासत इति यजमानायैव तामाशासत इति होवाचेति" "तस्मादु हैवंविदुद्गाता ब्रूयात ॥ ८ ॥ कं ते काममागायानि" [ छां० १ । ७ । ८ ] इति चर्त्विक्कर्तृकस्य विज्ञानस्य यजमानगामि फलं दर्शयति । तस्मादङ्गोपासनानामृत्विक्कर्मत्वसिद्धिः ॥ ४६ ॥ इति स्वाम्यधिकरणम् ॥ १३ ॥

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥ (१४) ॥

"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यञ्च पाण्डित्य-

रत्नप्रभा ।

युद्धे राजा युध्यते जयति चेतिवदिति भावः ॥ ४५ ॥ ४६ ॥ ( १३ ) ॥ सहकार्यन्तरविधिः० ॥ यस्मात्पूर्वे ब्राह्मणाः आत्मानं विदित्वा संन्यस्य भिक्षाचर्यं चरन्ति तस्माद् अधुनातनोपि ब्राह्मणः आपातज्ञानरूपपण्डावान् पण्डितः तस्य कृत्यं पाण्डित्यं श्रवणं तत् निर्विद्य निश्चयेन लब्ध्वा बाल्येन श्रवणजज्ञानस्य बलभावेन मननेन असंभावनानिरासेन बालस्य भावेन वा शुद्धचित्तत्वेन स्थातुमिच्छेद् । एवं मननश्रवणे कृत्वा अथ अनन्तरं मुनिः निदिध्यासनकृत्स्यादेवम् अमौनं मौनादन्यद्बाल्यपाण्डित्यद्वयं मौनं च निदिध्यासनं लब्ध्वा अथ ज्ञानसामग्रीपौष्कल्यानन्तरं ब्रह्माहमिति साक्षात्कारवान् ब्राह्मणः भवतीत्यर्थः॥ मौनशब्दस्य सिद्धरूपे पारिव्राज्ये अनुष्ठेये च ध्याने प्रयोगात्संशयः । यथा–"तं ह बकः" इत्यादिवाक्यशेषादुद्गीथाद्युपासनस्यार्त्विज्यनिर्णयः, तद्वद् "अथ ब्राह्मणः" इति विधिहीनवाक्यशेषान्मौ-

भामती ।

तस्मान्न व्यसनितामात्रेणोपाख्यानमन्यथयितुं युक्तमिति राद्धान्तः॥४५॥४६॥(१३)॥तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य निश्चयेन लब्ध्वा बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मण इति । यत्र हि विधिविभक्तिः श्रूयते स विधेयः।बाल्येन तिष्ठासेदित्यत्र च सा श्रूयते न श्रूयते तु मौने। तस्माद्यथाथ ब्रह्मण इत्येतदश्रूयमाणविधिकमविधेयमेवं मौनमपि । न चापूर्वत्वाद्विधेयं, तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्येति पाण्डित्यविधानादेव मौनसिद्धेः पाण्डित्यमेव मौनमिति । अथ वा भिक्षुवचनोऽयं मुनिशब्दस्तत्र दर्शनात् 'गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थम्' इत्यत्र । तस्यान्यतो विहितस्यायमनुवादः । तस्माद्बाल्यमेवात्र विधीयते मौनं तु प्राप्तं प्रशंसार्थमनूद्यत इति युक्तम् । भवेदेवं यदि पण्डितपर्यायो

आनन्दगिरीय–न्यायनिर्णयः ।

पसंहरति–तस्मादिति । सिद्धे चोपास्तीनामृत्विक्कर्तृकत्वे तन्निर्धारणानियमन्यायेन स्वतन्त्रफलत्वसिद्धिरिति भावः ॥ ४६ ॥ ( १३ ) ॥ विधुरप्रभृतीनां मन्दाधिकारिणां धीसाधनोक्तिप्रसङ्गेनाङ्गोपासनमधमधीसाधनमेव निर्धार्य पुनरुत्तममेव धीसाधनं वक्तुमारभते–सहकार्यन्तरेति । विषयवाक्यमुदाहरति–तस्मादिति । यस्मात्पूर्वे ब्राह्मणा विदित्वाऽऽत्मानमेषणाभ्यो व्युत्थाय भिक्षाचर्यं चरन्ति स्म तस्मादधुनातनोऽपि ब्राह्मणः पाण्डित्यं पण्डाऽध्ययनजा ब्रह्मबुद्धिस्तद्वान्पण्डितस्तस्य कृत्यं पाण्डित्यं श्रवणं तन्निर्विद्य निश्चयेन लब्ध्वा बाल्येन ज्ञानबलभावेन युक्तितोऽसंभावनानिरासरूपमननेन शुद्धधीत्वेन वा तिष्ठासेत्स्थातुमिच्छेत् । उक्तदार्ढ्यार्थं बाल्यं चेत्यादिरनुवादः । श्रवणमननानन्तरं मुनिर्मननशीलो निदिध्यासनपरः स्यात् । मौनादन्यद्बाल्यं पाण्डित्यं चामौनं मौनं च निदिध्यासनं निश्चयेन लब्ध्वोक्तहेतुत्रयस्य ब्रह्मधीहेतुत्वाद्ब्रह्माहमित्यवगच्छतीति ब्राह्मणः साक्षात्कृतब्रह्मा भवतीत्यर्थः । तत्र श्रुतं मौनं विषयीकृत्य मौनशब्दस्य सिद्धे

श्च निर्विद्याथ मुनिरमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मणः" [ ३ । ५ । १] इति बृहदारण्यके श्रूयते । तत्र संशयः—मौनं विधीयते, न वेति । न विधीयत इति तावत्प्राप्तम् । "बाल्येन तिष्ठासेद्" इत्यत्रैव विधेरवसितत्वात् । न ह्यथ मुनिरित्यत्र विधायिका विभक्तिरुपलभ्यते ॥ तस्मादयमनुवादो युक्तः । कुतः प्राप्तिरिति चेत् । मुनिपण्डितशब्दयोर्ज्ञानार्थत्वात् । "पाण्डित्यं निर्विद्य" इत्येव प्राप्तं मौनम् ॥ अपि च "अमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मणः" इत्यत्र तावद्ब्राह्मणत्वं न विधीयते । प्रागेव प्राप्तत्वात् ॥ तस्माद् "अथ ब्राह्मणः" इति प्रशंसावादः । तथैव "अथ मुनिः" इत्यपि भवितुमर्हति । समाननिर्देशत्वादिति ॥ एवं प्राप्ते ब्रूमः—सहकार्यन्तरविधिरिति ॥ विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवद्विधिरेवाश्रयितव्यः । अपूर्वत्वात् ॥ ननु पाण्डित्यशब्देनैव

---

रत्नप्रभा ।

तस्याप्यविधेयत्वनिश्चय इति पूर्वपक्षमाह—न विधीयत इति ॥ अत्र ध्यानस्याननुष्ठानं, सिद्धान्ते त्वनुष्ठानमिति फलम् । यदि मौनं पारिव्राज्यं, तदा वाक्यान्तरप्राप्तमनूद्यते बाल्यविधिप्रशंसार्थम् । यदि ज्ञानं, तदा पाण्डित्यशब्दात्प्राप्तमिति पूर्वपक्षग्रन्थार्थः । मुनिशब्दाद्विज्ञानातिशयः प्रतीयते, तस्य ज्ञानमात्रवाचिपाण्डित्यशब्दान्न प्राप्तिः । नापि मुनिशब्दः परिव्राड्वाचकः । वाल्मीक्यादिषु प्रयुज्यमानत्वात् । तस्मादप्राप्तं मौनमपूर्वत्वाद्विधिं कल्पयतीति सिद्धान्तयति—एवमित्यादिना ॥ आपस्तम्बप्रयोगस्य गति-

भामती ।

मुनिशब्दो भवेत् । अपि तु ज्ञानमात्रं पाण्डित्यं ज्ञानातिशयसंपत्तिस्तु मौनं तत्रैव तत्प्रसिद्धेः । आश्रमभेदे तु तत्प्रवृत्तिर्गार्हस्थ्यादिपदसंनिधानात् । तस्मादपूर्वत्वान्मौनस्य बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं

आनन्दगिरीय—न्यायनिर्णयः ।

पारिव्राज्ये साध्ये च ज्ञानाभ्यासे प्रयोगसिद्धेः संशयमाह—तत्रेति । निरुपाधिविद्यान्तरङ्गसाधनमौनविधिसाधनात्पादादिसंगतिः । पूर्वपक्षे मौनस्यानुष्ठेयत्वासिद्धिः । सिद्धान्ते तस्यानुष्ठेयत्वसिद्धिरिति मत्वा तं हेत्वादिवाक्यशेषादङ्गोपासनमृत्विक्कर्मेतिवदथ ब्राह्मण इति विधिहीनवाक्यशेषादथं मुनिरित्येषोऽपि न विधिरिति पूर्वपक्षयति—नेत्यादिना । ननु बाल्येनेत्युपक्रमे विधिश्रुतेर्मौनेऽपि विधिरस्तु नेत्याह—बाल्येनेति । तदेवोपपादयति—न हीति । यद्यत्रापि विधेयत्वं तर्हि विधिः श्रूयते बाल्यवन्न च श्रूयतेऽतः श्रोतव्यत्वे सत्यश्रवणाद्विध्यभावसिद्धिरित्यर्थः । तर्हि मौनवाक्यस्य का गतिस्तत्राऽऽह—तस्मादिति । अनधिगतस्यानुवादायोगादन्यत्र विध्यनुपलब्धेर्विधिरेवायमिति शङ्कते—कुत इति । पाण्डित्यविधानादेव मौनमपि सिद्धं तस्यैव मौनत्वादित्याह—मुनीति । मुनिशब्दस्य भिक्षुवचनत्वेऽपि तस्यान्यत्र विधानादत्रानुवाद एवेति मत्वा मौनस्याविधेयत्वे हेत्वन्तरमाह—अपि चेति । एकवाक्यतानुरोधान्मौनवाक्येऽपि न विधिरित्यर्थः । यदा पाण्डित्येन मौनस्य प्राप्तिस्तदा विधीयमानबाल्यस्येयं प्रशंसा । न हि पाण्डित्यं स्वरूपेण ज्ञानं किंतु बाल्येऽनुष्ठितेऽनन्तरं मननापरपर्यायं पाण्डित्यं कृतं स्यात्तस्माद्बाल्यं प्रशस्तम् । यदा मौनस्योत्तमाश्रमस्य विध्यन्तरप्राप्तस्यानुवादस्तदा बाल्यमात्रानुष्ठानवानुत्तमाश्रमित्वेन स्तूयत इति व्यक्ता स्तुतिरिति मत्वाऽऽह—तस्मादिति । बाल्यपाण्डित्यातिरिक्तस्य मौनस्याविधेयत्वान्न तन्मुमुक्षोरनुष्ठेयमिति प्राप्तं पक्षमनूद्य सिद्धान्तमाह—एवमिति । अपूर्वत्वमसिद्धमिति शङ्कते—नन्विति । पण्डितशब्दस्य ज्ञानमात्रार्थत्वा-

मौनस्यावगतत्वमुक्तम् ॥ नैष दोषः॥ मुनिशब्दस्य ज्ञानातिशयार्थत्वात् । मननान्मुनिरिति च व्युत्पत्तिसम्भवात् । "मुनीनामप्यहं व्यासः" [ भ० गी० १० । ३७ ] इति च प्रयोगदर्शनात्॥ ननु मुनिशब्द उत्तमाश्रमवचनोऽपि दृश्यते–"गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यम्" इत्यत्र ॥ न । "वाल्मीकिर्मुनिपुङ्गवः" इत्यादिषु व्यभिचारदर्शनात् । इतराश्रमसन्निधानाच्च । पारिशेष्यात्तत्रोत्तमाश्रमोपादानम् । ज्ञानप्रधानत्वादुत्तमाश्रमस्य ॥ तस्माद्बाल्यं पाण्डित्यापेक्षया तृतीयम् । इदं मौनं ज्ञानातिशयरूपं विधीयते ॥ यत्तु बाल्य एव विधेः पर्यवसानमिति, तथाप्यपूर्वत्वान्मुनित्वस्य विधेयत्वमाश्रीयते मुनिः स्यादिति निर्वेदनीयत्वनिर्देशादपि मौनस्य बाल्यपाण्डित्यवद्विधेयत्वाश्रयणम् । तद्वतः–विद्यावतः सन्न्यासिनः । कथं विद्यावतः संन्यासिन इत्यवगम्यते । तदधिकारात् । आत्मानं विदित्वा पुत्राद्येषणाभ्यः "व्युत्थायाथ भिक्षाचर्यं चरन्ति" [ बृ० ३ । ५ । १ ] इति ॥ ननु सति विद्यावत्त्वे प्राप्नो-

---

रत्नप्रभा ।

माह–इतराश्रमेति ॥ किंच, "अमौनं, च मौनं च निर्विद्य" इति श्रवणमननवदनुष्ठेयत्वोक्तेर्मौनस्य विधेयतेत्याह–निर्वेदनीयत्वेति ॥ न च त्रयाणां विधाने वाक्यभेदो दोषः । उपरि धारणवदिष्टत्वात्तद्वाक्यभेदस्येति भावः । कस्येदं ध्यानं विधीयत इत्यत्राह–तद्वत इति ॥ "आत्मानं विदित्वा" इति परोक्षज्ञानवतः संन्यासिनः प्रकृतत्वादित्यर्थः ॥ सूक्ष्मार्थसाक्षात्कारसाधनत्वेन ध्यानादेः षड्जादौ लोकतः प्राप्तिं शंकित्वा नियमविधिमाह–नन्वित्यादिना॥ ननु ब्रह्मपरे वाक्ये कथं ज्ञानाङ्गविधिरिति चेत्स-

भामती ।

ज्ञानातिशयरूपं विधीयते । एवं च निर्वेदनीयत्वमपि विधान आञ्जसं स्यादित्याह—निर्वेदनीयत्वनिर्देशादिति । कस्येदं मौनं विधीयते विद्यासहकारितयेत्यत आह—तद्वतो विद्यावतः संन्यासिनो भिक्षोः। पृच्छति—कथमिति । विद्यावत्ता प्रतीयते न संन्यासितेत्यर्थः । उत्तरं तदधिकारात् भिक्षोस्तदधिकारात् । तद्दर्शयति—आत्मानं विदित्वेति । सूत्रावयवं योजयितुं शङ्कते—नन्विति । परिहरति—

आनन्दगिरीय–न्यायनिर्णयः ।

न्मुनिशब्दस्य तदतिशयगामित्वादर्थभेदान्न पण्डितशब्देन मुनिशब्दस्य प्राप्तार्थतेत्याह–नेत्यादिना । वृद्धप्रयोगाभावे कथं तदर्थत्वं तत्राऽऽह–मुनीनामिति । आश्रमेऽपि प्रयोगदर्शनादनियतं ज्ञानातिशयवाचित्वं तस्य चान्यत्र विधानादनुवाद्यत्वमेवेति शङ्कते–नन्विति । उत्तमाश्रमे मुनिशब्दोऽसाधारणः साधारणो वेति विकल्प्याऽऽद्यं प्रत्याह–नेति । साधारणत्वं त्वेकस्यानेकार्थत्वायोगादयुक्तमित्यभिप्रेत्य प्रयोगस्यान्यथासिद्धिमाह–इतरेति । मौनस्यापूर्वत्वमुपपाद्य तृतीयमिति पदं व्याकुर्वन्फलितमाह–तस्मादिति । वाक्यभेदप्रसङ्गादेकत्रैव विधिरित्युक्तं तत्राऽऽह–यत्त्विति । उपरिधारणवन्मौनं वाक्यभेदेन विधेयमित्यत्रैव हेत्वन्तरमाह–निर्वेदनीयत्वेति । कस्येदं मौनं विद्यासहकारितया विधीयते तत्राऽऽह–तद्वत इति । विशेषणप्रापकं पृच्छति–कथमिति । प्रकरणं तथेत्याह–तदिति । पक्षेणेति पदं शंकोत्तरत्वेनावतारयति—नन्वित्यादिना । ब्रह्मैव प्रत्यगद्वयं वस्तु द्वैतं सर्वमविद्यामयमिति शास्त्रयुक्तिभ्यां सिद्धे तत्साक्षात्कारसाधनाभ्यासे स्वयमेव पुरुषस्यौन्मुख्यादनर्थको विधिरिति चोदिते संन्यासप्रकरणात्तद्धर्मस्य श्रवणादेः साक्षात्कारहेतुभावस्यापूर्वत्वादेष्टव्यस्तद्विधिरिति समाधिः । विद्यावन्तमधिकारिविशेषं प्रति विधेरानर्थक्यमुक्तमि-

स्येव । तत्र विद्यातिशयः किं मौनविधिना इत्यत आह-पक्षेणेति ॥ एतदुक्तं भवति ॥ यस्मिन्पक्षे भेददर्शनप्राबल्यान्न प्राप्नोति, तस्मिन्नेष विधिरिति । विध्यादिवद् यथा-"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्येवञ्जातीयके विध्यादौ सहकारित्वेनाऽग्न्याधानादिकमंगजातं विधीयते, एवमविधिप्रधानेऽप्यस्मिन्विद्यावाक्ये मौनविधिरित्यर्थः ॥ ४७ ॥

एवं बाल्यादिविशिष्टे कैवल्याश्रमे श्रुतिसिद्धे विद्यमाने कस्माच्छान्दोग्ये गृहिणोपसंहारः-"अभिसमावृत्य कुटुम्बे" [ छां० ८ । १५ । १] इत्यत्र । तेन ह्युपसंहरन् तद्विषयमादरं दर्शयतीत्यत उत्तरं पठति—

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥

तुशब्दो विशेषणार्थः । कृत्स्नभावोऽस्य विशिष्यते । बहुलायासानि हि बहून्याश्रमकर्माणि यज्ञादीनि । तं प्रति कर्तव्यतयोपदिष्टान्याश्रमान्तरकर्माणि च यथासम्भवमहिंसेन्द्रियसंयमादीनि तस्यापि विद्यन्ते ॥ तस्माद् गृहमेधिनोपसंहारो न विरुध्यते ॥ ४८ ॥

---

रत्नप्रभा ।

फलक्रतुपरवाक्येऽङ्गविधिवदित्याह-विध्यादिवदिति॥ प्रधानमारभ्याङ्गपर्यन्तो विधिः, तत्र प्रधानः क्रतुः-विध्यादिः, अत एवांगं विध्यन्तरम् इत्युच्यत इत्यर्थः ॥ एतत्सूत्रभाष्यभावानभिज्ञाः-संन्यासाश्रमधर्मश्रवणादौ विधिर्नास्तीति वदन्ति । विधौ ह्यप्राप्तिमात्रमपेक्षितम् । तच्च भेददर्शनप्राबल्याद्दर्शितमिति संप्रदायविदः ॥ ४७ ॥ कृत्स्नभावात्त्विति ॥ समावर्त्तनानन्तरं कुटुंबे स्थितो ब्रह्मलोकं प्राप्नोति "न च

भामती ।

अत आह पक्षेणेति । विद्यावानिति न विद्यातिशयो विवक्षितः । अपि तु विद्योदयायाभ्यासे प्रवृत्तो न पुनरुत्पन्नविद्यातिशयः। तथा चास्य पक्षे कदाचिद्भेददर्शनात्संभव इत्यर्थः । विध्यादिर्विधिमुख्यः प्रधानमिति यावत् । अत एव समिदादिर्विध्यन्तः स हि विधिः प्रधानविधेः पश्चादिति । तत्राश्रूयमाणविधित्वेऽपूर्वत्वाद्विधिरास्थेय इत्यर्थः ॥ ४७ ॥ ननु यद्ययमाश्रमो बाल्यप्रधानः कस्मात्पुनर्गार्हस्थ्येनोपसंहरतीति चोदयति-एवं बाल्यादिविशिष्टेति । उत्तरं पठति—कृत्स्नभावात्तु गृहिणोपसंहारः । छान्दोग्ये

आनन्दगिरीय-न्यायनिर्णयः।

त्याशङ्क्य विद्यावत इति विद्यातिशययुक्तो नोच्यते किंतु विद्योदयाय तदुपायाभ्यासे प्रवृत्तस्तेनास्य पक्षे कदाचिद्भेददर्शनं प्राप्नोत्यतो विधेरर्थवत्तेति सूत्रपदार्थं विवृणोति-एतदिति । अतन्निष्ठवाक्यस्य तद्विधायकत्वे दृष्टान्तमाह-विध्यादिवदिति । तदेव व्याचष्टे-यथेति । आदिर्मुख्यं प्रधानं विधेरादिर्विध्यादिर्दर्शपूर्णमासविधिः, समिदादिस्तु विध्यन्तस्तत्राश्रुतविधिकेऽपि विधिरास्थेय इत्यर्थः । दृष्टान्तस्थमर्थं दार्ष्टान्तिके योजयति-एवमिति ॥ ४७ ॥ बाल्यादिप्रधानः संन्यासो यद्यनुष्ठेयस्तर्हि कस्माद्गार्हस्थ्येनोपसंहरति श्रुतिरित्यनन्तरसूत्रव्यावर्त्यमाह-एवमिति । गृहिणोपसंहारेऽपि कैवल्याश्रमस्य किं जातमित्याशंक्यानास्थाविषयत्वं प्राप्तमित्याह-तेनेति । बहुलायाससाध्यधर्मबाहुल्यात्तेनोपसंहारो न तेनैव समापनादित्याह-अत इति । सूत्रं व्याचष्टे-तुशब्द इति । ननु यथा गृहिणो यज्ञादीनि कर्तव्यत्वेनोक्तानि तथाऽऽश्रमान्तराणामपि करणसंयमादिकर्मान्तराण्युच्यन्ते तथा च कोऽस्य विशेषस्तत्राऽऽह-आश्रमान्तरेति । गृहमेधिनि विशेषे सिद्धे फलितमाह-तस्मादिति ॥ ४८ ॥ मौनं गार्हस्थ्यमित्याश्रमद्वयोक्तेरितराश्रमाभावाशंका कस्य-

## मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥

यथा-मौनं गार्हस्थ्यञ्चैतावाश्रमौ श्रुतिसम्मतौ, एवमितरावपि वानप्रस्थगुरुकुलवासौ । दर्शिता हि पुरस्ताच्छ्रुतिः-"तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः" [ छां० २ । २३ । १ ] इत्याद्या ॥ तस्माच्चतुर्णामप्याश्रमाणामुपदेशाविशेषात्तुल्यवद्विकल्पसमुच्चयाभ्यां प्रतिपत्तिः । इतरेषामिति द्वयोराश्रमयोर्बहुवचनं वृत्तिभेदापेक्षयानुष्ठानभेदापेक्षया वेति द्रष्टव्यम् ॥ ४९ ॥ इति सहकार्यन्तरविध्यधिकरणम् ॥ १४ ॥

## अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥ (१५) ॥

"तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्" [ बृ० ३।५।१ ] इति बाल्यमनुष्ठेयतया श्रूयते । तत्र बालस्य भावः कर्म वा-बाल्य-

---

रत्नप्रभा ।

पुनरावर्तते" [ छां० ८ । १५ । १ ] इत्युपसंहारात्संन्यासो नास्तीति शङ्कार्थः । आयासविशिष्टकर्मबाहुल्याद्गृहिणोपसंहारः कृतो न संन्यासाभावादिति समाध्यर्थः ॥ ४८ ॥ संन्यासगार्हस्थ्यद्वयमत्र सूत्रकृतोक्तम् । ततोऽन्यदाश्रमद्वयं नास्तीति कस्य चिद्भ्रमः स्यात्, तन्निरस्यति-**मौनवदिति** ॥ आश्रमद्वयवदित्यर्थः ॥ इतरयोरपीति वाच्ये बहूक्तिरवान्तरभेदमपेक्ष्य । स चास्माभिः प्राग् दर्शितः ॥ ४९ ॥ (१४) ॥ **अनाविष्कुर्वन्नन्वयात्** ॥ तत्र बाल्ये विषये तद्धितस्य भावार्थत्वासंभवात् कर्मार्थत्वं गृहीत्वा तिष्ठन्मूत्रत्वादिकर्मणोऽप्ररूढेन्द्रियत्वादिरूपभावशुद्धेश्च बालकर्मत्वाविशेषात्संशयमाह-**तत्रेति** ॥ पूर्वपक्षे विद्याङ्ग-

भामती ।

बहुलायाससाध्यकर्मबहुलत्वाद्गार्हस्थ्यस्य चाश्रमान्तरधर्माणां च केषांचिदहिंसादीनां समवायात्तेनोपसंहारो न पुनस्तेन समापनादित्यर्थः ॥ ४८ ॥ एवं तदाश्रमद्वयोपन्यासेन क्वचित्कदाचिदितराभावशंका मन्दबुद्धेः स्यादिति तदपाकरणार्थं सूत्रम्-**मौनवदितरेषामप्युपदेशात्** । वृत्तिर्वानप्रस्थानामनेकविधैरेवं ब्रह्मचारिणोऽपीति वृत्तिभेदोऽनुष्ठातारो वा पुरुषा भिद्यन्ते, तस्मा द्द्वित्वेऽपि बहुवचनमविरुद्धम् ॥ ४९ ॥ (१४) ॥ **अनाविष्कुर्वन्नन्वयात्** । बाल्येनेति यावद्बालचरितश्रुतेः कामचारवादभक्षतायाश्चात्यन्तबाल्येन प्रसिद्धेः शौचादिनियमविधायिनश्च सामान्यशास्त्रस्यानेन विशेषशास्त्रेण बाधनात्सकलबालचरितविधानमिति प्राप्तेऽभिधीय-

आनन्दगिरीय-न्यायनिर्णयः ।

चिद्भ्रमेत्तन्निरासार्थमाह-**मौनवदिति** । कथं तयोः श्रुतिमत्त्वं तत्राऽऽह-**दर्शितेति** । श्रुतिमत्त्वाविशेषे फलितमाह-**तस्मादिति** । इतरेषामिति बहूक्त्या गार्हस्थ्यस्यापि परामर्शो न तु सिद्धवदुपन्यास इत्याशंक्याऽऽह-**इतरेषामितीति** । गायत्रो ब्राह्मः प्राजापत्यो बृहन्निति ब्रह्मचारी चतुर्विधः । गृहस्थोऽपि वार्तावृत्तिः शालीनवृत्तिर्यायावरो घोरसंन्यासीति चतुर्विधः । वानप्रस्थश्च वैखानसौदुम्बरवालखिल्यफेनपप्रभेदैश्चतुर्विधः । तथा परिव्राडपि कुटीचकबहूदकहंसपरमहंसभेदैश्चतुर्विध इति षोडशप्रभेदास्तावदाश्रमास्तत्तद्धर्मविशेषयुक्ताः श्रुतिस्मृतिप्रसिद्धाः । ततो ब्रह्मचारिणि वानप्रस्थे चानुष्ठातृभेदमनुष्ठानभेदं वाऽपेक्ष्य बहूक्तिर्न गार्हस्थ्यमपेक्ष्य तस्य प्रागेवासंदिग्धत्वेनोक्तत्वादित्यर्थः ॥ ४९ ॥ ( १४ ) ॥ बाल्यस्य विधेयत्वमुपेत्यावान्तरवाक्यभेदेन मौनमपि विधेयत्वान्मुमुक्षुणा कार्यमित्युक्तम् । इदानीं किं तद्बाल्यमिति वीक्षायामाह-**अनाविष्कुर्वन्निति** । अनुष्ठेयत्वेन श्रुतं बाल्यं विषयत्वेनोदाहरति-**तस्मादिति** । तत्र बाल्ये विषये संशय इति संबन्धः । संशयकारणमाह-**बालस्येति** । तर्हि बालभावो वयोवि-

मिति तद्धिते सति बालभावस्य वयोविशेषस्येच्छया सम्पादयितुमशक्यत्वाद्यथोपपादमूत्रपुरीषत्वादिबालचरितमन्तर्गता वा भावविशुद्धिर्दम्भदर्पप्ररूढेन्द्रियत्वादिरहितता वा—बाल्यं स्यादिति संशयः । किं तावत्प्राप्तम् ॥ कामचारवादभक्षता, यथोपपादमूत्रपुरीषत्वं च,—प्रसिद्धतरं लोके—बाल्यमिति तद्ग्रहणं युक्तम् ॥ ननु पतितत्वादिदोषप्राप्तेर्न युक्तं कामचारताद्याचरणं न विद्यावतः संन्यासिनः । वचनसामर्थ्याद्दोषनिवृत्तेः—पशुहिंसादिष्विवेति ॥ एवं प्राप्तेऽभिधीयते ॥ न ॥ वचनस्य गत्यन्तरसम्भवात् । अविरुद्धे ह्यन्यस्मिन्बाल्यशब्दाभिलप्ये लभ्यमाने न विध्यन्तरव्याघातकल्पना युक्ता । प्रधानोपकाराय चांगं विधीयते । ज्ञानाभ्यासश्च प्रधानमिह यतीनामनुष्ठेयम् । न च सकलायां बालचर्यायामंगीक्रियमाणायां ज्ञानाभ्यासः सम्भाव्यते ॥ तस्मादान्तरो भावविशेषो बालस्याप्ररूढेन्द्रियत्वादिरिह—बाल्यमाश्रीयते ॥ तदाह—अ-

---

रत्नप्रभा ।

त्वेन तिष्ठन्मूत्रत्वादेरप्यनुष्ठानं, सिद्धान्ते भावशुद्धेरेवेति फलम् । पूर्वत्र मौनशब्दस्य ज्ञानातिशये ध्याने प्रसिद्धत्वाद् ध्यानं विधेयमित्युक्तम् । तद्वद्बाल्यशब्दस्य कामचारादौ प्रसिद्धेस्तद्विधिग्रहणमित्याह—**किं तावदिति** ॥ कामतः चरणवदनभक्षणानि यस्य स—**कामचारवादभक्षः**—तत्त्वेत्यर्थः । **यथोपपादं** यथासंभवं मूत्रादि यस्य तद्भावः तत्त्वम् । बाल्यविधिबलात्पातित्यशास्त्रमन्यविषयमिति भावः ॥ "यस्त्वविज्ञानवान्भवत्यनमस्कः सदाऽशुचिः । न स तत्पदमाप्नोति संसारं चाधिगच्छति" इत्यादिशौचभिक्षादिनियमविधिशास्त्राविरुद्धस्य भावशुद्ध्याख्यबाल्यस्य विधिसंभवान्न यथेष्टचेष्टाविधिरिति सिद्धान्तयति—

भामती ।

ते—विद्याङ्गत्वेन बाल्यविधानात्समस्तबालचर्यायां च प्रधानविरोधप्रसङ्गाद्यत्तदनुगुणमप्रौढेन्द्रियत्वादि भाव-

आनन्दगिरीय—न्यायनिर्णयः ।

शेषोऽपि कल्प्यतामित्याशङ्क्य तदग्रहे हेतुमाह—**बालेति**। तद्धितश्रुत्या परिशिष्टं बाल्यमाश्रित्य संशयमभिनयति **यथेति** । बाल्यशब्दार्थविवेचनेन स्वतन्त्रपुमर्थहेतुविद्यान्तरङ्गस्यैवात्रापि निरूपणात्पादादिसंगतिः । पूर्वपक्षे तिष्ठन्मूत्रत्वाद्यपि विदुषोऽनुष्ठेयं सिध्यति । सिद्धान्ते बाल्यस्याप्ररूढेन्द्रियत्वादिरूपभावशुद्धेरनुष्ठेयत्वान्न विदुषो यथेष्टचेष्टासिद्धिरिति मत्वा प्रश्नपूर्वकं पूर्वपक्षमाह—**किं तावदिति** । चरणं चारो वदनं वादो भक्षणं भक्षस्ते कामतो यस्य स तथा तस्य भावस्तत्ता । यथोपपादं यथासंभवं यत्र क्वापि मूत्रं च पुरीषं चास्येति तथोक्तस्तस्य भावस्तत्त्वम् । तत्र लोकप्रसिद्धं हेतुमाह—**प्रसिद्धेति** । शास्त्रान्तरविरोधादयुक्तमुक्तविधबाल्यस्य विधेयत्वमिति शंकते—**नन्विति** । आदिशब्देन शिष्टगर्हा गृह्यते । सामान्यशास्त्रसंकोचो विशेषविधेः स्यादित्याह—**नेत्यादिना** । सामान्यविधेर्विशेषविधिना संकोचे दृष्टान्तमाह—**पश्विति** । विदुषो यथेष्टचेष्टायामपि न दोषोऽस्तीति प्राप्तमनूद्य सिद्धान्तमाह—**एवमिति** । विदुषो यथेष्टचेष्टा न विधेया शास्त्रान्तरविरोधादिति प्रतिजानीते—**नेति** । सामान्यशास्त्रस्योक्तः संकोचो बाल्येन तिष्ठासेदितिवचनादित्याशंक्याऽऽह—**वचनस्येति** । सामान्यप्रवृत्तविधिशास्त्राविरुद्धेऽर्थे संभवति तद्विरुद्धार्थकल्पनायोगान्न कामचारादि विधेयमित्युक्तमेव व्यनक्ति—**अविरुद्धे हीति** । इतश्च कामचारादि न विधेयमित्याह—**प्रधानेति** । किं तत्प्रधानं यदङ्गत्वेन बाल्यादि विधीयते तदाह—**ज्ञानेति** । उक्तप्रधानोपकारित्वाभावान्न कामचारादि विधेयमित्युक्तम् । तद्विरोधित्वाच्च तदविधेयमित्याह—**न चेति** । किं तर्हि विधेयं बाल्यं तदाह—**तस्मादिति** । इहेति प्रकृतवाक्योक्तिः । उक्तेऽर्थे सूत्रमादाय योजयति—**तदाहेति** ।

नाविष्कुर्वन्निति ॥ ज्ञानाध्ययनधार्मिकत्वादिभिरात्मानमविख्यापयन्दम्भदर्पादिरहितो भवेत् । यथा-बालोऽप्ररूढेन्द्रियतया न परेष्वात्मानमाविष्कर्तुमीहते, तद्वत् । एवं ह्यस्य वाक्यस्य प्रधानोपकार्यर्थानुगम उपपद्यते । तथा चोक्तं स्मृतिकारैः-"यन्न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ॥ न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥ गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् । अन्धवज्जडवच्चाऽपि मूकवच्च महीं चरेत्" "अव्यक्तलिंगोऽव्यक्तचरः" इति चैवमादि ॥ ५० ॥ इत्यनाविष्काराधिकरणम् ॥ १५ ॥

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥ (१६) ॥

"सर्वापेक्षा च यज्ञादिश्रुतेः" [ व्या० सू० ३ । ४ । २६ ] इत्यत आर-

रत्नप्रभा ।

एवमिति ॥ प्रधानविरोधित्वाच्च न तद्विधिरित्याह-प्रधानेति ॥ भावशुद्धेर्विद्योपकारकत्वेन अन्वयादनाविष्कुर्वन् भवेदिति बाल्यविध्यर्थ इति सूत्रयोजना ॥ ५० ॥ ( १५ ) ॥ ऐहिकमपि० ॥ संन्यासादि बाल्यान्तं साधनजातमुक्त्वा तत्साध्यविद्याजन्म विचार्यत इति संगतिं वदन् साधनस्य द्विधा फलसंभवात्संशयमाह-सर्वेत्यादिना ॥ कारीरीष्टिवदैहिकफलत्वनियमः श्रवणादीनामिति पूर्वपक्षमाह-

भामती ।

शुद्धिरूपं तदेव विधीयते । एवं च शास्त्रान्तराबाधेनाप्युपपत्तौ न शास्त्रान्तरबाधनमन्याय्यं भविष्यतीति ॥५०॥(१५)॥ ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्। संगतिमाह-सर्वापेक्षा चेति । किं श्रवणादिभिरिहैव वा जन्मनि विद्या साध्यते उतानियम इह वामुत्र वेति । यद्यपि कर्माणि यज्ञादीन्यनियतफलानि तेषां च विद्योत्पादसाधनत्वेन विद्योत्पादस्यानियमः प्रतिभाति । तथा च गर्भस्थस्य वामदेवस्यात्मप्रतिबोधश्रवणात्, 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इति च स्मरणादामुष्मिकत्वमप्यवगम्यते । तथापि यज्ञादीनां प्रमेयाणामप्रमाणत्वाच्छ्रवणादेश्च प्रमाणत्वात्तेषामेव साक्षाद्विद्यासाधनत्वम् । यज्ञादीनां सत्त्वशुद्ध्याधानेन वा विद्योत्पादकश्रवणादिलक्षणप्रमाणप्रवृत्तिविघ्नोपशमेन वा विद्यासाधनत्वम् । श्रवणा-

आनन्दगिरीय-न्यायनिर्णयः ।

कथं यथोऽक्तेऽर्थे बाल्यशब्दः प्रयुज्यते तत्राऽऽह-यथेति । अन्वयादिति पदं व्याकरोति-एवं हीति। अप्ररूढेन्द्रियत्वादिरूपभावशुद्धिलक्षणबाल्यस्य प्रधानोपकारित्वे मानमाह-तथा चेति । कुलीनत्वप्रकटनं सत्त्वं तद्वैपरीत्यमसत्त्वम् । शास्त्रार्थज्ञानराहित्यमश्रुतत्वं तद्वैपरीत्यं बहुश्रुतत्वम् । सदाचारनिरतत्वं सुवृत्तत्वं दुराचारनिष्ठत्वं दुर्वृत्तत्वमिति भेदः । तत्किमिदानीं ब्रह्मधीयोग्यस्य मुमुक्षोर्नास्त्येव किंचिदनुष्ठेयं तत्राऽऽह-गूढेति । चक्षुरिन्द्रियपारवश्यं निरसितुमन्धवदित्युक्तम् । रसनादिपारवश्यं निरस्यति-जडवदिति । ज्ञानेन्द्रियपारवश्यं परिहृत्य कर्मेन्द्रियपारवश्यं परिहरति-मूकवदिति । धर्मध्वजित्वाप्रकटनमव्यक्तलिङ्गत्वम् । तदेवं मुमुक्षोरुपरतसर्वेन्द्रियस्य श्रवणादिपरस्य मोक्षसाधनं तत्त्वज्ञानमवश्यंभावीति भावः ॥ ५० ॥ ( १५ ) ॥ बाल्यान्तमुच्चावचं विद्याहेतुमुक्त्वा तत्फलं विद्याजन्मकालं निरूपयति-ऐहिकमिति । उक्तहेत्वधीनधीजन्मविषये कारीर्यादिफले चित्रादिफले चोभयोपलब्धेर्वृत्तानुवादपूर्वकं संशयमाह-सर्वेति । श्रवणादिसामग्रीप्रतिबन्धशून्या विशिष्टधीप्रसवभूमिरित्युक्तेरत्र पादादिसंगतिः । पूर्वपक्षे श्रवणादीनां विद्योपायत्वनियमासिद्धिः । सिद्धान्ते प्रतिबन्धाभावापेक्षया तेषां तन्नियमसिद्धिरि-

भ्योच्चावचं विद्यासाधनमवधारितम् । तत्फलं विद्या सिध्यन्ती किमिहैव जन्मनि सिध्यति–उत–कदाचिदमुत्रापीति चिन्त्यते ॥ किं तावत्प्राप्तम्॥इहैवेति॥किं कारणम्॥श्रवणादिपूर्विका हि विद्या । न च कश्चिदमुत्र विद्या मे जायतामित्यभिसन्धाय श्रवणादिषु प्रवर्तते । समान एव तु जन्मनि विद्याजन्माऽभिसन्धाय तेषु प्रवर्तमानो दृश्यते । यज्ञादीन्यपि श्रवणादिद्वारेणैव विद्यां जनयन्ति । प्रमाणजन्यत्वाद्विद्यायाः ॥ तस्मादैहिकमेव विद्याजन्मेति ॥ एवं प्राप्ते वदामः ॥ ऐहिकं विद्याजन्म भवत्यसति प्रस्तुतप्रतिबन्धे इति ॥ एतदुक्तं भवति ॥ यदा प्रक्रान्तस्य विद्यासाधनस्य कश्चित्प्रतिबन्धो न क्रियते उपस्थितविपाकेन कर्मान्तरेण, तदेहैव विद्योपपद्यते । यदा तु खलु प्रतिबन्धः क्रियते, तदाऽमुत्रेति । उपस्थितविपाकत्वञ्च कर्मणो देशकालनिमित्तोपनिपाताद्भवति ।

---

रत्नप्रभा ।

किन्तावदिति ॥ नन्वामुष्मिकफलकयज्ञादिसाध्यविद्यायाः कथमैहिकत्वनियम इत्यत आह–यज्ञादीन्यपीति ॥ शुद्धिद्वारा यज्ञादिभिः श्रवणादिषु साक्षाद्विद्याहेतुषु घटितेषु विद्याविलम्बो न युक्तः । दृश्यते च विलम्बः । अतः श्रवणादेर्विद्याहेतुत्वमसिद्धमिति पूर्वपक्षे फलं, प्रतिबन्धकवशाद्विलम्बेपि हेतुत्वसिद्धिरिति सिद्धान्ते फलं मत्वा चित्रादिवदनियतफलं श्रवणादिकमिति सिद्धान्तयति–एवमिति ॥ ननु प्रारब्धकर्मविशेषेण श्रवणादिफलप्रतिबन्धः किमिति क्रियते । श्रवणादिनैव कर्मविपाकप्रतिबन्धः किं न स्यादित्यत आह–उपस्थितविपाकत्वं चेति ॥ देशादिमहिम्ना कर्माणि विपच्यन्त इत्यर्थः ॥ तेन श्रवणा-

भामती ।

दीनां त्वनपेक्षाणामेव विद्योत्पादकत्वम् । न च प्रमाणेषु प्रवर्तमानाः प्रमातार ऐहिकमपि चिरभाविनं प्रमोत्पादं कामयन्ते किंतु तादात्विकमेव प्रागेव तु पारलौकिकम् । न हि कुम्भदिदृक्षुश्चक्षुषी समुन्मीलयति कालान्तरीयाय कुम्भदर्शनाय किंतु तादात्विकाय । तस्मादैहिक एव विद्योत्पादो नानियतकालः । श्रुति-

आनन्दगिरीय–न्यायनिर्णयः ।

स्युपेत्य प्रश्नपूर्वकमैहिकत्वनियमं पूर्वपक्षमाह–किमिति । फलद्वैविध्योपलब्धौ तन्नियमे नास्ति हेतुरिति शङ्कते–किमिति । तत्र कारणमाह–श्रवणादीति । चित्रादिवदमुत्रापि धीहेतुत्वं श्रवणादेः स्यादित्याशङ्क्याऽऽह–न चेति । कथं तर्हि तेषु प्रवृत्तिरित्याशङ्क्य तेषां कारीर्यादितुल्यत्वमाह–समान इति । श्रवणादीनां चक्षुरादिवद्धीसाधनत्वात्कालान्तरीयकुम्भोपलम्भाय चक्षुरुन्मीलनाभाववज्जन्मान्तरीयविद्यायै श्रवणादिषु प्रवृत्त्ययोगादुपलभ्यमानसंसारदुःखनिवृत्तये च विद्यासाधनादानाज्ज्ञानात्कारीर्यादिवत्तुल्यजन्मन्येव विद्याजन्मेत्यर्थः । यज्ञादीनां जन्मान्तरीयफलानां धीहेतुत्वस्य विविदिषावाक्यीयत्वाज्जन्मान्तरे धीजन्मेत्याशङ्क्याऽऽह–यज्ञेति । तेषां धीशुद्ध्या श्रवणादिघटकत्वाद् घटितेषु तेषु धियाऽवश्यंभाव्यमित्यैहिकत्वनियम इत्यर्थः । श्रवणादीनां कारीर्यादितुल्यत्वे फलितमाह–तस्मादिति । श्रवणादिषु कृतेष्वपि न चेदत्र धीः स्यात्तेषामतदुपायतैवेति प्राप्तमनूद्य चित्रावदनियतफलधीसाधनमिति सिद्धान्तमाह–एवमिति । कृतेष्वपि श्रवणादिषु कदाचिद्विद्या नोत्पद्यते चेत्तर्हि तेषां तदुपायत्वमनियतं स्यादित्याशङ्क्याऽऽह–एतदिति । कृतेष्वपि श्रवणादिष्वत्र विद्यानुदये कारीर्यादाविव प्रतिबन्धो वा पौष्कल्याभावो वा तेषां कल्पनीयः प्रतिबन्धहीना हि सामग्री कार्यहेतुर्न चैतावता तद्धेतुत्वहतिरित्यर्थः । उपस्थितविपाकश्रवणादिविरोधात्कर्मण एव प्रतिबन्धमाशङ्क्याऽऽह–उपस्थितेति । तैरेव

यानि चैकस्य कर्मणो विपाचकानि देशकालनिमित्तानि, न तान्येवान्यस्यापीति नियन्तुं शक्यते । यतो विरुद्धफलान्यपि कर्माणि भवन्ति । शास्त्रमप्यस्य कर्मण इदं फलमित्येतावति पर्यवसितं न देशकालनिमित्तविशेषमपि संकीर्तयति । साधनवीर्यविशेषात्त्वतीन्द्रिया हि कस्यचिच्छक्तिराविर्भवतीति तत्प्रतिबद्धा परस्य तिष्ठति । न चाविशेषेण विद्यायामभिसन्धिर्नोत्पद्येत । इहामुत्र वा मे विद्या जायतामित्यभिसन्धेर्निरङ्कुशत्वात् । श्रवणादिद्वारेणापि विद्योत्पद्यमाना प्रतिबन्धक्षयापेक्षयैवोत्पद्यते । तथा च श्रुतिः दुर्बोधत्वमात्मनो दर्शयति—"श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यन्न विद्युः । आश्चर्यो

रत्नप्रभा ।

दिकमेव किमिति न विपच्यते, तत्राह—यानि चेति ॥ विपाचकत्वं—फलोन्मुख्यहेतुत्वम् ॥ ननु तर्हि श्रवणादिपाचकदेशादिकं कीदृशमित्यत आह—शास्त्रमपीति ॥ फलबलादेशादिज्ञानमिति भावः ॥ तथापि कर्मणैव श्रवणादिप्रतिबन्धः, न वैपरीत्यमित्यत्र को हेतुः, तमाह—साधनेति ॥ प्रतिबन्धकत्वशक्तिरपि फलबलाद् ज्ञातव्येति भावः ॥ प्रतिबन्धसद्भावे श्रौतं, स्मार्तं च,—लिङ्गमाह—तथा चेत्यादिना ॥ "शृण्वन्तोपि" "न विद्युः" इत्युक्तेः प्रतिबन्धसिद्धिः । आत्मनो यथावद्वक्तापि—आश्चर्यः । अद्भुतवत् कश्चिदेव

भामती ।

स्मृती च पारलौकिकं विद्योत्पादं स्तुत्या ब्रूतः । इत्थंभूतानि नाम श्रवणादीन्यावश्यकफलानि यत्कालान्तरेपि विद्यामुत्पादयन्तीति । एवं प्राप्त उच्यते—यत एवात्र विद्योत्पादे श्रवणादिभिः कर्तव्ये यज्ञादीनां सत्त्वशुद्धिद्वारेण वा विघ्नोपशमद्वारा वोपयोगोऽत एव तेषां यज्ञादीनां कर्मान्तरप्रतिबन्धाप्रतिबन्धाभ्यामनियतफलत्वेन तदपेक्षाणां श्रवणादीनामप्यनियतफलत्वं न्याय्यमनपहतविघ्नानां श्रवणादीनामनुत्पादकत्वादविशुद्धसत्त्वाद्वा पुंसः प्रत्यनुत्पादकत्वात् । तथा च तेषां यज्ञाद्यपेक्षाणां तेषां चानियतफलत्वेन श्रवणादीनामप्यनियतफलत्वं युक्तमेवं श्रुतिस्मृतिप्रतिबन्धो न स्तुतिमात्रत्वेन व्याख्येयो भविष्यति । पुरुषाश्च विद्यार्थिनः साधनसामर्थ्यानुसारेण तदनुरूपमेव कामयिष्यन्ते तदिदमुक्तम्—अभिसंधेर्निरङ्कुशत्वादिति॥ ५१॥(१६)॥

आनन्दगिरीय—न्यायनिर्णयः ।

देशादिभिर्विद्यार्थमेव श्रवणादि कर्म किमिति न विपच्यते तत्राऽऽह—यानीति । भोगार्थस्य कर्मणो ज्ञानार्थस्य च श्रवणादेर्देशकालनिमित्तैकरूप्याभावे हेतुमाह—यत इति । कर्मणा श्रवणादीनां प्रतिबन्धे तेभ्यो विद्योत्पत्तिवादि शास्त्रं व्याहन्येतेत्याशङ्क्याऽऽह—शास्त्रमिति । तथाऽपि कर्मण एव प्रतिबन्धकत्वं न श्रवणादीनामिति कुतो नियमस्तत्राऽऽह—साधनेति । यत्त्विह विद्याभावे कारीर्यादिवत्प्रतिबन्धादिसत्त्वकल्पनेन धिय आमुष्मिकत्वकल्पनमयुक्तमिहैव मे विद्या स्यादित्यभिसंधिदृष्टेरिति तत्राऽऽह—न चेति । दृश्यमानसंसारदुःखस्यानेकजन्मगामित्वं जानतो यदा कदाचिदनर्थनिवृत्तिः स्यादित्यभिसंधेः साधनसामर्थ्यानुसारेण संभावितत्वादित्याह—अभिसंधेरिति । यत्तु श्रवणादीनां चक्षुरादिवद्दृष्टफलत्वमिति तत्राऽऽह—श्रवणादीति । तेषां विधानाददृष्टद्वाराऽपि साधनत्वमवघातवदवगतं यज्ञादीनामनियतकालफलानां ज्ञानसाधनत्वविधेश्च विद्योत्पत्तेरनियतत्वमित्यर्थः । यत्तु यज्ञादीनां घटकत्वाद् घटितेषु श्रवणादिषु विद्याऽवश्यंभाविनीति तत्र प्रतिबन्धसत्त्वस्य श्रौतलिङ्गसिद्धत्वान्मैवमित्याह—तथा चेति । आत्मनः श्रवणमपि दुष्करं बहूनामित्याह—श्रवणायेति । कथंचन श्रवणेऽपि तत्फलं ज्ञानं दुर्लभमित्याह—शृण्वन्तोऽपीति । तत्र हेतुः—आश्चर्य इति । यथावदस्याऽऽत्मनो वक्ताऽऽश्चर्योऽद्भुतवत्कश्चिदेव संभवति ।

वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः" [ कठ० १। २। ७ ] इति गर्भस्थ एव च वामदेवः प्रतिपेदे ब्रह्मभावमिति वदन्ती-जन्मान्तरसञ्चितात्साधनादपि जन्मान्तरे विद्योत्पत्तिं दर्शयति । न हि गर्भस्थस्यैवैहिकं किञ्चित्साधनं सम्भाव्यते ॥ स्मृतावपि—"अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति" [ भ० गी० ६ । ३७ ] इत्यर्जुनेन पृष्टो भगवान्वासुदेवः "न हि कल्याणकृत्कश्चिद् दुर्गतिं तात गच्छति" [ भ० गी० ६ । ४० ] इत्युक्त्वा पुनस्तस्य पुण्यलोकप्राप्तिं साधुकुले सम्भूतिश्चाभिधायानन्तरं—"तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम्" [ भ० गी० ६ । ४३ ] इत्यादिना "अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" [ भ० गी० ६ । ४५ ] इत्यन्तेनैतदेव दर्शयति ॥ तस्मादैहि-कमामुष्मिकं वा विद्याजन्म प्रतिबन्धक्षयापेक्षयेति स्थितम् ॥ ५१ ॥

इत्यैहिकाधिकरणम् ॥ १६ ॥

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥५२॥(१७)॥

रत्नप्रभा ।

भवति । तिष्ठतु लब्धाऽसाक्षात्कारवान् । परोक्षतो ज्ञातापि—आश्चर्यः कुशलेन आचार्येण अनुशिष्टोपी-त्यर्थः ॥ ५१ ॥ ( १६ ) ॥ असति प्रारब्धकर्मप्रतिबन्धे श्रवणादिना इहैव विद्योदयः । यज्ञादिभिः संचि-तपापप्रतिबन्धस्य निरस्तत्वात् । सति तु भोगेन तन्निरासादमुत्रेति विद्यायाः ऐहिकामुष्मिकत्वविशेष-नियमः उक्तः । तद्वत्तत्फलेपि मोक्षे कश्चिदुत्कर्षादिविशेषः स्यादित्यत आह—**एवं मुक्तिफलानियमस्त-दवस्थावधृतेस्तदवस्थावधृतेरिति** ॥ मुक्तिरत्र विषयः । तस्यां विद्यावद्विशेषनियमोऽस्ति न वेति फलस्यो-

भामती ।

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ।** यज्ञाद्युपकृतविद्यासाधनश्रवणादिवीर्यविशेषा-त्किल तत्फले विद्यायामैहिकामुष्मिकत्वलक्षण उत्कर्षो दर्शितः । तथा च यथा साधनोत्कर्षनिकर्षाभ्यां तत्फलस्य विद्याया उत्कर्षनिकर्षावेवं विद्याफलस्यापि मुक्तेरुत्कर्षनिकर्षौ संभाव्येते । न च मुक्तावैहिकामु-ष्मिकत्वलक्षणो विशेष उपपद्यते ब्रह्मोपासनापरिपाकलब्धजन्मनि विद्यायां जीवतो मुक्तेरवश्यंभावनियमा-त्सत्यप्यारब्धविपाककर्मप्रक्षये । तस्मान्मुक्तावेव रूपतो निकर्षोत्कर्षौ स्याताम् । अपि च सगुणानां विद्या-नामुत्कर्षनिकर्षाभ्यां तत्फलानामुत्कर्षनिकर्षौ दृष्टाविति मुक्तेरपि विद्याफलत्वाद्रूपतश्चोत्कर्षनिकर्षौ स्याता-

आनन्दगिरीय—न्यायनिर्णयः ।

सम्यगाचार्यसिद्धावपि तच्छ्रुत्वा लब्धा साक्षात्कर्ताऽस्याऽऽश्चर्यः तिष्ठतु साक्षात्कारः कुशलेनाऽऽचार्ये-णानुशिष्टोऽपि शास्त्रात्परोक्षतो ज्ञाताऽप्याश्चर्य एवेत्यर्थः । संप्रत्यामुष्मिकत्वे धियो लिङ्गमाह—**गर्भस्थ इति** । कयाऽनुपपत्त्या श्रुतिरिममर्थं दर्शयति तत्राऽऽह—**न हीति** । जन्मान्तरसंचितं साधनं जन्मान्तरेऽपि धियं साधयतीत्यत्र स्मृतिमाह—**स्मृतावीति** । श्रवणादीनां पौष्कल्येऽपि श्रुतिस्मृति-लिङ्गात्पश्वादिफलचित्रादिवदनियतकालत्वसिद्धेर्नैकान्तिकफलत्वं तेषामित्युपसंहरति—**तस्मादिति** । ॥ ५१ ॥ ( १६ ) ॥ विद्यारूपे फले कालोत्कर्षापकर्षकृतो विशेषनियमो दर्शितः । संप्रति विद्याफले मोक्षे कस्यचिदपि विशेषनियमस्याभावं दर्शयति—**एवमिति** । विद्याफलं मुक्तिर्विषयः सा किं विद्या-वदुत्कर्षापकर्षकृतविशेषवती किंवा नेति फलस्योभयथादृष्टे संशये प्रकृतविद्याफलस्य प्रसंगतो निरतिशय-त्वोक्त्या पादादिसंगतिः । पूर्वपक्षे मोक्षस्य कर्मसाध्यतया पुरुषार्थाधिकरणासिद्धिः । सिद्धान्ते तस्य

यथा-मुमुक्षोर्विद्यासाधनावलम्बिनः साधनवीर्यविशेषाद्विद्यालक्षणे फले ऐहिकामुष्मिकफलत्वकृतो विशेषप्रतिनियमो दृष्टः, एवं मुक्तिलक्षणेऽप्युत्कर्षापकर्षकृतः कश्चिद्विशेषप्रतिनियमः स्यादित्याशंक्याह-एवं मुक्तिफलानियम इति । न खलु मुक्तिफले कश्चिदेवम्भूतो विशेषप्रतिनियम आशंकितव्यः ॥ कुतः ॥ "तदवस्थावधृतेः"-मुक्त्यवस्था हि सर्ववेदान्तेष्वेकरूपैवावधार्यते । ब्रह्मैव हि मुक्त्यवस्था । न च ब्रह्मणोऽनेकाकारयोगोऽस्ति । एकलिंगत्वावधारणात् । "अस्थूलमनणु" [ बृ० ३।८।८ ] "स एष नेतिनेत्यात्मा" [ बृ० ३।९।२६ ] "यत्र नान्यत्पश्यति" [ छां० ७।२४।१ ] "ब्रह्मैवेदममृतं पुरस्ताद्" [ मुण्ड० २।२।११ ] "इदं सर्वं यदयमात्मा" [ बृ० २ । ४ । ६ ] "स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म" [ बृ० ४।४।२५ ] "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येद्" [ बृ० ४।५।१५ ] इत्यादिश्रुतिभ्यः। अपि च-विद्यासाधनं स्ववीर्यविशेषात्स्वफल एव विद्यायां कश्चिदति-

---

रत्नप्रभा।

मयथासम्भवात्संशये पूर्वपक्षमाह-यथेति ॥ मुक्तिः, सविशेषा, फलत्वाद्, विद्यावत् । अतः कर्मसाध्या मुक्तिरिति फलम् । सिद्धान्ते तु निर्विशेषत्वावधारणश्रुतिबाधितमनुमानम् । अतो ज्ञानैकव्यङ्ग्या मुक्तिरिति फलम् ॥ किंच श्रवणादितारतम्याद्विद्यायां कश्चिदतिशयमङ्गीकृत्य विद्यालभ्यमुक्तौ नातिशय इत्याह-अपि च विद्यासाधनमिति ॥ ननु ब्राह्मणो नित्यसिद्धत्वादविद्यानिवृत्तेश्च अन्यत्वे द्वैतापत्तेः।

भामती।

मिति प्राप्त उच्यते-न मुक्तेस्तत्रतत्रैकरूप्यश्रुतेरुपपत्तेश्च । साध्यं हि साधनविशेषाद्विशेषवद्भवति । न च मुक्तिर्ब्रह्मणो नित्यस्वरूपावस्थानलक्षणा नित्या सती साध्या भवितुमर्हति । न च सवासननिःशेषक्लेशकर्माशयप्रक्षयो विद्याजन्म विशेषवान्, येन तद्विशेषान्मोक्षो विशेषवान्भवेत् । न च सावशेषः क्लेशादिप्रक्षयो मोक्षाय कल्पते । न च चिराचिरोत्पादानुत्पादावन्तरेण विद्यायामपि रूपतो भेदः कश्चिदुपलक्ष्यते तस्या अप्येकैकरूपत्वेन श्रुतेः। सगुणायास्तु विद्यायास्तत्तद्गुणावापोद्वापाभ्यां तत्कार्यस्य फलस्योत्कर्षनिकर्षौ

आनन्दगिरीय-न्यायनिर्णयः।

ज्ञानैकसाध्यत्वात्तत्सिद्धिरित्यभिप्रेत्य पूर्वपक्षमाह-यथेति । मुक्तिरुपचयापचयवती फलत्वाद्विद्यावदित्यनुमानात्तस्याः कर्मसाध्यत्वाधिगमात्पुरुषार्थाधिकरणमयुक्तमित्याशङ्क्य सिद्धान्तमवतार्य प्रतिज्ञां विभजते-न खल्विति । उक्तेऽनुमाने जाग्रति कथमाशंका निरवकाशेति शंकते-कुत इति । मुक्तिस्वरूपब्रह्मैकरूप्यावधारणशास्त्रविरोधान्नानुमेति मत्वा सूत्रावयवमादाय व्याचष्टे-तदवस्थेति । मुक्तिर्नाम काचिदवस्था विद्यते चेदद्वितीयत्वविरोधादवस्थात्वाज्जाग्रदवस्थावदसावपि निवृत्तिमती स्यादित्याशङ्क्याऽऽह-ब्रह्मैवेति । कथमेतावता मुक्तेरुत्कर्षनिकर्षकृतविशेषराहित्यमित्याशङ्क्याऽऽह-न चेति । न स्थानतोऽपीत्यधिकरणे निर्विशेषत्वमस्थूलादिश्रुत्या ब्रह्मणो निरूपितमिति स्मारयति-एकेति । इतश्च मुक्तेर्निरतिशयत्वमित्याह-अपि चेति । काष्ठोपचयापचयाभ्यां ज्वालोपचयापचयदृष्टेरन्तरङ्गबहिरङ्गतदभ्यासादिसाधनोपचयापचयाभ्यां विद्यायामुपचयापचयसंभवात्तत्फले मुक्तावपि तौ स्यातामित्याशङ्क्य

**शयमासञ्जयेत्, न विद्याफले मुक्तौ । तद्धयसाध्यं नित्यसिद्धस्वभावभूतमेव विद्ययाधिगम्यत इत्यसकृद्वादिष्म । न च तस्यामप्युत्कर्षनिकर्षात्मकोऽतिशय उपपद्यते । निकृष्टाया विद्यात्वाभावात् । उत्कृष्टैव हि विद्या भवति ॥ तस्मात्तस्यां चिराचिरोत्पत्तिस्वरूपो विशेषो भवेत्, न तु मुक्तौ कश्चिदतिशयसम्भवोऽस्ति । विद्याभेदाभावादपि तत्फलभेदनियमाभावः कर्मफलवत् । न हि मुक्तिसाधनभूताया विद्यायाः कर्मणामिव भेदोऽस्ति । सगुणासु तु विद्यासु "मनोमयः प्राणशरीरः" [ छां० ३ । १४ । २ ] इत्याद्यासु गुणावापोद्वापवशाद्भेदोपपत्तौ सत्यामुपपद्यते यथास्वं फलभेदनियमः कर्मफलवत् । तथा च लिंगदर्शनं "तं यथायथोपासते तदेव भवति" इति । नैवं निर्गुणायां विद्यायाम् ।**

---

रत्नप्रभा ।

अनन्यत्वे च असाध्यत्वात्किं विद्याफलमित्यत आह—**तद्धीति**॥ विद्यया अभिव्यक्तत्वेन ब्रह्मानन्द एव मुख्यं फलम् । अभिव्यक्तिः अविद्यानिवृत्तिः आनन्दस्वरूपस्फूर्तिप्रतिबन्धकाभावतया विद्यया साध्यते । सा च अनिर्वाच्येति न द्वैतापत्तिः ॥ **अन्ये तु सा ब्रह्मानन्येत्याहुः ॥ न च** साध्यत्वानुपपत्तेस्तत्र विद्यावैयर्थ्यमिति **वाच्यम् ॥** यदभावे यदभावः, तत्तत्साध्यमिति ज्ञानात्सर्वो लोकः प्रवर्त्तते ॥ तथा च विद्यायाः अभावे ब्रह्मस्वरूपमुक्तेरभावः । अनर्थरूपा अविद्यैवास्ति, अस्या एव मुक्तिर्नास्तीति व्यवहारविषयत्वेन मुक्त्यभावत्वात् ॥ तथा च विद्यां विना मुक्तिर्नास्तीति निश्चयाद्विद्यामुपादत्ते। विद्योदये च स्वतः सिद्धनित्यनिवृत्तानर्थस्वप्रकाशब्रह्मानन्दात्मना अवतिष्ठत इत्यनवद्यम् । संप्रति विद्यायामतिशयांगीकारं त्यजति—**न चेति** ॥ एकरूपे विषये प्रमायां तारतम्यानुपपत्तेरित्यर्थः॥ **कथं तर्हि** पूर्वाधिकरणे विद्याया विशेष उक्तः, तत्राह—**तस्मादिति** ॥ सत्यामपि सामग्र्यां ज्ञाने विलम्ब उक्तः, न तारतम्य इत्यर्थः ॥ **तर्हि** सत्यपि ज्ञाने मुक्तौ विलम्बः किं न स्यादित्यत आह—**न त्विति** ॥ वाय्वादिप्रतिबन्धाद्दीपोत्पत्तिविलम्बेपि उत्पन्ने तमोनिवृत्तिविलम्बादर्शनात्सति ज्ञानेनाज्ञाननिवृत्तौ विलंब इति भावः ॥ **किंच** कर्मणामुपासनानां च गुणभेदेन तारतम्यात्फलतारतम्यं युक्तम् । निर्गुणविद्यायास्त्वेकरूपत्वात्तत्फलैकरूप्यमित्याह—**विद्याभेदे-**

भामती ।

युज्येते । न चात्र विद्यात्वं सामान्यतोदृष्टं भवति । आगमतत्प्रभवयुक्तिबाधितत्वेन कालात्ययापदिष्टत्वात् ।

आनन्दगिरीय—न्यायनिर्णयः ।

हेत्वन्तरं स्फोरयति—**न विद्येति** । विद्यैव सातिशया स्वसाध्येऽपि कथंचिदतिशयमादध्यादित्याशङ्क्याऽऽह—**तद्धीति** । तर्हि मुमुक्षूणां विद्यार्थिनां प्रवृत्त्यानर्थक्यं तत्राऽऽह—**विद्ययेति** । तस्यामतिशयमाश्रित्य मुक्तौ नातिशयोऽस्तीत्युक्तम् । इदानीं विद्याऽपि मोक्षहेतुतत्त्वसाक्षात्कारलक्षणा नातिशयवतीत्याह—**न चेति** । कथं तर्हि पूर्वाधिकरणे विद्याया विशेषो दर्शितस्तत्राऽऽह—**तस्मादिति** । मुक्तावपि तर्हि तादृशोऽतिशयो भविष्यति तत्राऽऽह—**न त्विति** । विद्योत्पत्तिनान्तरीयकत्वेनाविद्यानिवृत्तिरूपाया मुक्तेरावश्यकत्वादित्यर्थः । मुक्तेर्निर्विशेषत्वे हेत्वन्तरमाह—**विद्येति** । एकरूपत्वादात्मनस्तदाकारविद्याया विशेषाभावादनेकरूपफलोत्पादकत्वायोगात्तत्फले विशेषासिद्धिरित्यर्थः । विद्यायां भेदाभावं प्रपञ्चयति—**न हीति** । सगुणविद्यावद्विद्यावादात्मविद्याया भेदः स्यादित्याशङ्क्य विषयभेदात्तत्र भेदेऽपि नात्र विषयभेदोऽस्तीत्याह—**सगुणास्विति** । तत्र फलभेदे मानमाह—**तथा चेति** । दार्ष्टान्तिके विशेषमाह—**नैवमिति** । तत्त्वविद्या-

गुणाभावात् । तथा च स्मृतिः—"न हि गतिरधिकास्ति कस्यचित्सति हि गुणे प्रवदन्त्यतुल्यताम्" इति । "तदवस्थावधृतेस्तदवस्थावधृतेः" इति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति ॥ ३ ॥ ४ ॥ ५२ ॥ इति मुक्तिफलाधिकरणम् ॥ १७ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणपरमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये ब्रह्मज्ञाने बहिरंगान्तरंगसाधनं नाम तृतीयस्याध्यायस्य चतुर्थः पादः समाप्तः ॥ ३ ॥ ४ ॥

---

रत्नप्रभा ।

त्यादिना ॥ स्मृतौ कस्यचित् निर्गुणविद् इत्यर्थः ॥ तस्माद्विद्यासमकालैव मुक्तिरिति सिद्धम् ॥ "यज्ज्ञानाज्जीवतो मुक्तिरुक्ता गतिविवर्जिता ॥ लभ्यते तत्परं ब्रह्म रामनामास्मि निर्भयम्" ॥ ३ ॥ ४ ॥ ५२ ॥ ( १७ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शनभाष्यव्याख्यायां ( भाष्य ) रत्नप्रभायां तृतीयस्याध्यायस्य चतुर्थः पादः समाप्तः ॥ ३ ॥ ( ४ ) ॥

भामती ।

तस्मात्तस्या मुक्त्यवस्थाया ऐकरूप्यावधृतेर्मुक्तिलक्षणस्य फलस्याविशेषो युक्त इति ॥ ३ ॥४॥५२॥(१७)॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यविभागे भामत्यां तृतीयस्याध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥

आनन्दगिरीय—न्यायनिर्णयः ।

विशेषे गुणाभावे स्मृतिमाह—तथा चेति । कस्यचिन्निर्गुणविद्यावतः पुरुषस्य गतिः फलमिति यावत् । तत्र न्यूनाधिकभावाभावे हेतुमाह—सति हीति । पुनरुक्तेरर्थवत्त्वमाह—तदवस्थेति । तदेवं मुक्तेर्निरतिशयत्वान्न कर्मसाध्यतेति युक्तं पुरुषार्थाधिकरणमिति भावः ॥ ३ ॥ ४ ॥ ५२ ॥ ( १७ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि ( ज्ञान ) कृते शारीरकमीमांसाभाष्यविभागे न्यायनिर्णये तृतीयाध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥

॥ इति तृतीयाध्यायस्य ब्रह्मज्ञानबहिरंगान्तरंगसाधनाख्यश्चतुर्थः पादः ॥

इति श्रीमद्ब्रह्मसूत्रशांकरभाष्ये साधनाख्यस्तृतीयोऽध्यायः ॥३॥

---



तत्सद्ब्रह्मणे नमः ।

# अथ ब्रह्मसूत्रशांकरभाष्यम्

## रत्नप्रभा—भामती—न्यायनिर्णय—टीकात्रयसमेतम् ।



## चतुर्थोऽध्यायः ४.

### आवृत्तिरसकृदुपदेशात् ॥ ४ ॥ १ ॥ १ ॥ (१) ॥

**तृतीयेऽध्याये परापरासु विद्यासु साधनाश्रयो विचारः प्रायेणात्यगात् । अथेह चतुर्थेऽध्याये फलाश्रय आगमिष्यति । प्रसङ्गागतञ्चान्यदपि किञ्चिच्चिन्तयिष्यते ॥ प्रथमं तावत्कतिभिश्चिदधिकरणैः साधनाश्रयविचार-**

---

रत्नप्रभा ।

ॐ रामचन्द्राय नमः । यज्ज्ञानाज्जीवतो मुक्तिरुत्क्रान्तिगतिवर्जिता । लभ्यते तत्परं ब्रह्म रामनामास्मि निर्भयम् ॥ १ ॥ **आवृत्तिरसकृदुपदेशात्** ॥ साधनं निरूप्य फलं निरूप्यत इत्यध्याययोर्हेतुफलभावं संगतिमाह—**तृतीय इति** ॥ फलप्रसंगेनोत्क्रान्तिरर्चिरादिमार्गश्च विचार्यत इत्याह—**प्रसंगेति** ॥ **पूर्वं** साक्षादेव श्रुत्युक्तं सन्न्यासादिसाधनं चिन्तितम् । **सम्प्रति** फलार्थापत्तिगम्यमावृत्त्यादिकमश्लेषाधिकरणात् प्राक् चिन्त्यते । तदारभ्य जीवन्मुक्तिः, ततो द्वितीयपादे उत्क्रान्तिः, **तृतीये** अर्चिरादिमार्गस्य गन्तव्यस्य

भामती ।

नाभ्यर्थ्या इह सन्तः स्वयं प्रवृत्ता न चेतरे शक्याः । मत्सरपित्तनिबन्धनमचिकित्स्यमरोचकं येषाम् ॥ १ ॥ शंके संप्रति निर्विशङ्कमधुना स्वाराज्यसौख्यं वहन्नेन्द्रः सान्द्रतपःस्थितेषु कथमप्युद्वेगमभ्येष्यति । यद्वाचस्पतिमिश्रनिर्मितमितव्याख्यानमात्रस्फुटद्वेदान्तार्थविवेकवञ्चितभवाः स्वर्गेऽप्यमी निःस्पृहाः ॥ २ ॥ **आवृत्तिरसकृदुपदेशात्** । साधनानुष्ठानपूर्वकत्वात्फलसिद्धेर्विषयक्रमेण विषयिणोरपि तद्विचारयोः क्रममाह—**तृतीयेऽध्याय इति** । मुक्तिलक्षणस्य फलस्यात्यन्तपरोक्षत्वात्तदर्थानि दर्शनश्रवणमनननिदिध्यास-

आनन्दगिरीय—न्यायनिर्णयः ।

पूर्वाध्यायान्तिमाधिकरणे मोक्षे प्रतिनियमाभावो दर्शितः । संप्रति मोक्षौपयिकविद्यासाधनेषु श्रवणादिष्वावृत्त्याऽनुष्ठानप्रतिनियमं दर्शयति—**आवृत्तीति** । पूर्वोत्तराध्याययोः संबन्धं हेतुहेतुमद्भावं वक्तुं तार्तीयमर्थमनुद्रवति—**तृतीय इति** । साधनविचारशेषद्योतनाय प्रायेणेत्युक्तम् । साधनाधीनत्वात्फलसिद्धेस्तद्विचारयोरपि युक्तं पौर्वापर्यमित्याशयवानाह—**अथेति** । कथं तर्हीहार्चिरादिवचनमित्याशङ्क्य फलोक्तिप्रसङ्गेन तदुक्तिरपि भविष्यतीत्याह—**प्रसङ्गेति** । अध्यायसंबन्धमुक्त्वा तदधिगमाधिकरणात्प्राक्तनाधिकरणानां तात्पर्यं दर्शयन्नवान्तरसंबन्धमाह—**प्रथममिति** । साक्षादेव श्रुत्युक्तं साधनं चिन्तितम् । अधुना फलार्था-

विशेषमेवानुसरामः । "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [ बृ० ४ । ५ । ६ ] "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत" [ बृ० ४ । ४ ।२१ ] "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" [ छां० ८।७।१ ] इति चैवमादिश्रवणेषु संशयः—किं सकृत्प्रत्ययः कर्तव्यः—आहोस्विद्-आवृत्त्येति । किं तावत्प्राप्तम् । सकृत्प्रत्ययः स्यात्, प्रयाजादिवत् । तावता शास्त्रस्य कृतार्थत्वात् । अश्रूयमाणायां ह्यावृत्तौ क्रियमाणायामशास्त्रार्थः कृतो भवेत ॥ नन्वसकृदुपदेशा उदाहृताः—"श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादयः । एवमपि यावच्छब्दमावर्तयेत्—सकृच्छ्रवणं सकृन्मननं सकृन्निदिध्यासनञ्चेति, नातिरिक्तम् ॥ सकृदुपदेशेषु तु वेद उपासीतेत्यादिष्वनावृत्तिरिति ॥ एवं प्राप्ते ब्रूमः ॥ प्रत्यया-

रत्नप्रभा ।

च निर्णयः, चतुर्थे ज्ञानोपासनयोः फलनिर्णय इति पादार्थविवेकः ॥ आद्याधिकरणस्य श्रवणादिसाधनं विषयमनूद्य द्वेधानुष्ठानदर्शनात् संशयमाह—आत्मा वेति ॥ श्रौतात्मधीसाधनफलविचारात्मकत्वात् सर्वाधिकरणानां श्रुतिशास्त्राध्यायसंगतयः उक्ताः ॥ तत्तत्पदार्थसम्बन्धात् तत्तत्पादसंगतिः । मोक्षे विशेषाभाववत् श्रवणादावावृत्तिविशेषो नास्तीति दृष्टान्तलक्षणावान्तरसङ्गत्या पूर्वपक्षमाह—किं तावदिति ॥ अत्र पूर्वपक्षे श्रवणादेः प्रयाजवददृष्टार्थत्वात् सकृदनुष्ठानं फलं, सिद्धान्ते त्ववघातवत् दृष्टार्थत्वाद् यावत्फलमावृत्तिरिति भेदः ॥ असकृदुपदेशान्यथानुपपत्त्या साधनावृत्तौ शास्त्रस्य तात्पर्यमिति शंकते—नन्वसकृदिति ॥ श्रवणादीनां समुच्चयसिद्ध्यर्थत्वेनासकृदुक्तेरन्यथोपपत्तेर्नावृत्तौ तात्पर्यमित्याह—एवमपीति ॥ सगुणसाक्षात्कारसाधनेष्वप्यनावृत्तिमाह—सकृदिति । यद्यप्यसकृदुपदेश आवृत्तिसमुच्चययोरन्यतरसूचकत्वेनान्यथासिद्धः । तथापि दृष्टे सम्भवति—अदृष्टमात्रकल्पनानुपपत्तेः श्रवणादेरावृत्तिद्वारा साक्षा-

भामती ।

नानि चोद्यमानान्यदृष्टार्थानीति यावद्विधानमनुष्ठेयानि न तु ततोऽधिकमावर्तनीयानि प्रमाणाभावात् । यत्र पुनः सकृदुपदेश उपासीतेत्यादिषु तत्र सकृदेव प्रयोगः प्रयाजादिवदिति प्राप्त उच्यते । यद्यपि

आनन्दगिरीय-न्यायनिर्णयः ।

पत्तिलब्धमावृत्त्यादि चिन्त्यते तदर्थोपत्त्यायत्ता च तच्चिन्ता फलाध्याये संगतैवेति भावः । प्रथमाधिकरणस्य विषयमनूद्य संशयमाह—आत्मेति । साधनेषूभयथात्वदृष्टेः श्रवणादिसाधनेषु संशयमुक्त्वा मुक्तिहेतुश्रौतात्मधीसाधनश्रवणादिष्वावृत्त्याऽनुष्ठानसाधनात्पादादिसंगतिः । पूर्वपक्षे श्रवणादीनामदृष्टार्थत्वम् । सिद्धान्ते दृष्टार्थतैव तेषां फलतीत्यङ्गीकृत्य प्रश्नपूर्वकं पूर्वपक्षयति—किं तावदिति । यथा प्रयाजादयः सकृदनुष्ठिता दर्शपूर्णमासफलोपकारिणस्तथा श्रवणादिप्रत्ययोऽपि सकृदनुष्ठितः सम्यग्धीहेतुरित्यानर्थक्यमिचर्थः । अवघातादिवत्फलपर्यन्तमावृत्त्यनुष्ठानमाशङ्क्याऽऽह—तावतेति । शास्त्रस्य सकृदनुष्ठानेन कृतार्थत्वेऽपि तत्पर्यन्तमनुष्ठानं किं न स्यात्तत्राऽऽह—अश्रूयमाणायामिति । दर्शनक्रियायाः साधनाकाङ्क्षायां सकृदेव साधनोपदेशेन नैराकाङ्क्ष्ये संभवत्यसकृदुपदेशानुपपत्त्या तात्पर्यमावृत्तौ कल्प्यते तथा च नाशास्त्रार्थः कृतः स्यादिति शङ्कते—नन्विति । समुच्चितानां श्रवणादीनां साधनत्वधियाऽप्यसकृदुपदेशोपपत्तेरविरोधान्नावृत्तौ तात्पर्यमित्याह—एवमिति । निर्विशेषब्रह्मसाक्षात्कारफलेषु श्रवणादिष्वावृत्तिमपाकृत्य सविशेषब्रह्मसाक्षात्कारफलेष्वहंग्रहोपासनेष्वावृत्तिमपाकरोति—सकृदिति । श्रवणादीनामहंग्रहोपास्तीनां च प्रयाजादिवदनुष्ठानाददृष्टार्थतेति प्राप्तं पूर्वपक्षमनूद्य सिद्धान्तयति—एवमिति । आवृत्तौ हेत्वभावमाशंक्य

वृत्तिः कर्तव्या ॥ कुतः ॥ असकृदुपदेशात्—"श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्येवञ्जातीयको ह्यसकृदुपदेशः प्रत्ययावृत्तिं सूचयति ॥ ननूक्तं यावच्छब्दमेवावर्तयेन्नाधिकमिति ॥ न ॥ दर्शनपर्यवसानत्वादेषाम्—दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति । यथा अवघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि, तद्वत् ॥ अपि चोपासनं निदिध्यासनं चेत्यन्तर्णीतावृत्तिगुणैव क्रियाऽभिधीयते ॥ तथाहि—लोके गुरुमुपास्ते, राजानमुपास्ते,—इति च यस्तात्पर्येण गुर्वादीननुवर्तते, स एवमुच्यते । तथा—ध्यायति प्रोषितनाथा पतिमिति या निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा, सैवमभिधीयते । विद्युपास्त्योश्च वेदान्तेषु व्यतिकरेण प्रयोगो दृश्यते—क्वचिद्विदिनोपक्रम्योपास्तिनोपसंहरति । यथा—"यस्तद्वेद यत्स वेद स मयैतदुक्तः" [ छां० ४।

---

रत्नप्रभा ।

त्कारफलस्य षड्जादौ दृष्टत्वादसकृदुक्तिरावृत्तिं सूचयति दृष्टार्थत्वादितिन्यायानुग्रहादित्याह—न दर्शनपर्यवसानत्वादिति ॥ ध्यानस्य त्वावृत्तिः "वेद" "उपासीत" इतिशब्दे श्रुतत्वात् न केवलार्थिकत्वमित्याह—अपि चेति ॥ अस्त्युपास्तिशब्दस्यावृत्तिवाचित्वम् । तथापि वेदेतिशब्दोक्तवेदनेष्वहङ्ग्रहेषु कथमावृत्तिसिद्धिरित्यत आह—विद्युपास्त्योश्चेति ॥ शब्दयोरेकार्थत्वमुदाहरति—क्वचिदिति॥ सः रैक्वः यद्वेद—तत् प्राणतत्त्वं, रैक्वादन्योऽपि यः कश्चिद्वेद तत् फले सर्वमन्तर्भवतीत्येतद्—उक्तं

भामती ।

मुक्तिरदृष्टचरी तथापि सवासनाविद्योच्छेदेनात्मनः स्वरूपावस्थानलक्षणायास्तस्याः श्रुतिसिद्धत्वादविद्यायाश्च विद्योत्पादविरोधितया विद्योत्पादेन समुच्छेदस्याहिविभ्रमस्येव रज्जुतत्त्वसाक्षात्कारेण समुच्छेदस्योपपत्तिसिद्धत्वादन्वयव्यतिरेकाभ्यां च श्रवणमनननिदिध्यासनाभ्यासस्यैव स्वगोचरसाक्षात्कारफलत्वेन

आनन्दगिरीय—न्यायनिर्णयः ।

हेतुमवतार्य व्याचष्टे—कुत इत्यादिना । पूर्ववादी पूर्वोक्तं स्मारयति—नन्विति । अविद्योच्छेदेनाऽऽत्मनः स्वरूपावस्थानरूपाया मुक्तेः श्रुत्यनुभवसिद्धत्वादविद्यायाश्च विद्यानान्तरीयकतयोच्छेदस्य रज्जुतत्त्वसाक्षात्कारादौ दृष्टत्वेन श्रवणादीनां दृष्टफलत्वाद्यावत्फलमवघातादिवदावर्तनीयानि तानीत्याह—नेत्यादिना । उक्तमेव स्फोरयति—दर्शनेति । यत्त्वहंग्रहोपासनेषु सकृदुक्तेष्वावृत्तिशंकैव नास्तीति तत्राऽऽह—अपि चेति । यस्य स्यादद्धा न विचिकित्साऽस्ति देवो भूत्वा देवानप्येतीति लिङ्गादहंग्रहोपास्तीनामुपास्यसाक्षात्कारद्वारा दृष्टार्थत्वस्य वक्तव्यत्वाद्यावत्फलमावृत्तिरतास्वपि गम्यते शब्दसामर्थ्याच्च तास्वावृत्तिरित्यर्थः । अन्तर्णीतावृत्तिगुणमुपासनमित्यत्र लोकसंमतिमाह—तथाहीति । ध्यानमपि तथाविधमित्यत्र तामेव दर्शयति—तथेति । उपासनशब्दश्रुतावावृत्तिसिद्धावपि वेदेत्यादिप्रयोगे कथं तत्सिद्धिरित्याशंक्याऽऽह—विदीति । विदिनोपक्रम्योपासिनोपसंहारे संवर्गविद्यामुदाहरति—यथेति । स रैक्वो यद्वेद तत्प्राणतत्त्वं सर्वं धर्मफलमभिसंगच्छते । एवं रैक्ववदन्योऽपि यद्रैक्ववेद्यं वेद तस्यापि सर्वसाधुफलावाप्तिर्भवति स तथाभूतो रैक्वो मयोक्तः । एतदिति क्रियाविशेषणम् । रैक्वमिव जानश्रुतिमल्पकं कमात्थेति हंसान्तरं प्रति हंसवचनम् । हे भगवो रैक्व यां देवतामुपास्से तामेतां मामनुशाधि शिक्षय ज्ञापयेति जानश्रुतेरुक्तिः । अत्रोपक्रमोपसंहारयोरैकरूप्यसिद्धये विद्युपास्त्योरैकार्थ्यं वाच्यम् । उपासिनोपक्रम्य विदिनोपसंहारे दृष्टान्त-

१।४] इत्यत्र "अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" [छां ४।२।२] इति। क्वचिच्चोपास्तिनोपक्रम्य विदिनोपसंहरति। यथा-"मनो ब्रह्मेत्युपासीत" [छां० ३।१८।१] इत्यत्र "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद" [छां० ३।१८।३] इति॥ तस्मात्सकृदुपदेशेष्वप्यावृत्तिसिद्धिः॥ असकृदुपदेशस्त्वावृत्तेः सूचकः॥ १॥

## लिङ्गाच्च॥ २॥

लिंगमपि प्रत्ययावृत्तिं प्रत्याययति। तथाहि-उद्गीथविज्ञानं प्रस्तुत्य "आदित्य उद्गीथः" [छां० १।५।१] इत्येतदेकपुत्रतादोषेणापोद्य "रश्मींस्त्वं पर्यावर्तयाद्" [छां० १।५।२] इति रश्मिबहुत्वविज्ञानं बहुपुत्रतायै विदधत्सिद्धवत्प्रत्ययावृत्तिं दर्शयति॥ तस्मात्तत्सा-

रत्नप्रभा।

इत्थं मयोत्कृष्टत्वेन सः रैक्वः उक्तः इति हंसं प्रति हंसान्तरवचनम्। तच्छ्रुत्वा रैक्वं गत्वोवाच जानश्रुतिः-हे ३ भगवः एतां रैक्वविदितां देवतां मेऽनुशाधि मह्यमुपदिशेत्यर्थः॥ एवं सगुणनिर्गुणसाक्षात्कारसाधनध्यानस्यावृत्तिः श्रौती च, अर्थसिद्धा च। दृष्टार्थत्वात्॥ श्रवणमननयोस्त्वसकृदुपदेशादर्थसिद्धैव आवृत्तिरिति विशेषः॥ १॥ आदित्यस्यैकस्यैवोद्गीथे सम्पाद्य उपासनात् मम त्वमेक एव पुत्रोऽसीति कौषीतकिः पुत्रमुवाच। अतस्त्वं तथा मा कृथाः, किन्तु बहून् रश्मीनादित्यं च पर्यावर्तयतात् पृथगावर्तयस्वेत्यर्थः॥ तलोपश्छान्दसः। अत्र पर्यावृत्तिशब्दात् सिद्धवदुद्गीथध्यानस्यावृत्तिरुक्ता। ततो ध्यानत्वसामान्यात् फलपर्यन्तत्वसामान्याद्वा लिङ्गात् सर्वत्र श्रवणमननध्यानेष्वावृत्तिसिद्धिरित्याह-लिंगाच्चेति॥ एवं तावत्सगुणनिर्गुणसाक्षात्कारसाधनेष्वावृत्तिरुक्ता। तत्र सगुणध्यानादेरावृत्तिमंगीकृत्य निर्गुण-

भामती।

लोकसिद्धत्वात्सकलदुःखविनिर्मुक्तैकचैतन्यात्मकोऽहमित्यपरोक्षरूपानुभवस्यापि श्रवणाद्यभ्याससाधनत्वेनानुमानात्तदर्थानि श्रवणादीनि दृष्टार्थानि भवन्ति। न च दृष्टार्थत्वे सत्यदृष्टार्थत्वं युक्तम्। न चैतान्यनावृत्तानि सत्कारदीर्घकालनैरन्तर्येण साक्षात्कारवते तादृशानुभवाय कल्पन्ते। न चात्रासाक्षात्कारवद्विज्ञानं साक्षात्कारवतीमविद्यामुच्छेत्तुमर्हति। न खलु पित्तोपहतेन्द्रियस्य गुडे तिक्ततासाक्षात्कारोऽन्तरेण माधुर्यसाक्षात्कारं सहस्रेणाप्युपपत्तिभिर्निवर्तितुमर्हति। अतद्वतो नरान्तरवचांसि वोपपत्तिसहस्राणि वा परामृशतोऽपि थूत्कृत्य गुडत्यागात्। तदेवं दृष्टार्थत्वाद्ध्यानोपासनयोश्चान्तर्नीतावृत्तिकत्वेन लोकतः

आनन्दगिरीय-न्यायनिर्णयः।

माह-यथेति। विद्युपास्त्योरैक्यमुपास्तिश्चाऽऽवृत्तिगुणेति स्थिते फलितमाह-तस्मादिति। श्रवणादिष्वावृत्तेः शब्दसामर्थ्यलभ्यत्वाभावात्कथं तेषु तत्सिद्धिस्तत्राऽऽह-असकृदिति॥ १॥ विषयसाक्षात्कारफलेषु प्रत्ययेष्वावृत्तौ हेत्वन्तरमाह-लिङ्गाच्चेति। न केवलमसकृदुक्तेरावृत्तिसिद्धिरपि तु लिङ्गादपीत्यर्थः। तदेव विवृणोति-लिङ्गमपीति। हे पुत्र त्वं रश्मीनादित्यं च भेदेन पर्यावर्तयादिति तकारमन्तर्भाव्य पर्यावर्तयतादिति मध्यमैकवचनं त्वयोगात्। पर्यावर्तयोपास्स्वेत्यर्थः। आदित्यस्यैकस्यैवोद्गीथे संपाद्योपासनात्त्वमेको मे पुत्रोऽसि त्वं तु रश्मीनुद्गीथे संपाद्य पर्यावर्तयतात्ततो बहवस्ते पुत्रा भविष्यन्तीत्यत्र सिद्धवत्प्रत्ययावृत्तिर्दर्शितेत्येतल्लिङ्गमित्यर्थः। उद्गीथप्रत्ययावृत्तावपि कथं प्रत्ययान्तरेषु तत्सिद्धिस्तत्राऽऽह-तदिति। तेन प्रकृतेनोद्गीथप्रत्ययेन साक्षात्कारफलतया ध्यानत्वेन वा सादृश्यादिति यावत्। सर्वप्रत्ययेष्वहंग्रहोपासनादिषु श्रवणादिषु चेत्यर्थः। अधिकरणार्थमुक्त्वा तस्य निर्गुणब्रह्मविषयत्वमाक्षिपति-

मान्यात्सर्वप्रत्ययेष्वावृत्तिसिद्धिः । अत्राह—भवतु नाम साध्यफलेषु प्रत्ययेष्वावृत्तिः । तेष्वावृत्तिसाध्यस्यातिशयस्य सम्भवात् । यस्तु परब्रह्मविषयः प्रत्ययो नित्यशुद्धबुद्धमुक्तस्वभावमेवात्मभूतं परं ब्रह्म समर्थयति, तत्र किमर्थावृत्तिरिति । सकृच्छ्रुतौ ब्रह्मात्मत्वप्रतीत्यनुपपत्तेरावृत्त्यभ्युपगम इति चेत् ॥ न ॥ आवृत्तावपि तदनुपपत्तेः ॥ यदि हि "तत्त्वमसि" [ छां० ६ । ८–१६ ] इत्येवञ्जातीयकं वाक्यं सकृच्छ्रूयमाणं ब्रह्मात्मत्वप्रतीतिं नोत्पादयेत्, ततस्तदेव चाऽऽवर्तमानमुत्पादयिष्यतीति का प्रत्याशा स्यात् । अथोच्येत—न केवलं वाक्यं कञ्चिदर्थं साक्षात्कर्तुं शक्नोति । अतो युक्त्यपेक्षं वाक्यमनुभावयिष्यति ब्रह्मात्मत्वमिति ॥ तथाप्यावृत्त्यानर्थक्यमेव । साऽपि हि युक्तिः सकृत्प्रवृत्तैव स्वमर्थमनु-

रत्नप्रभा ।

श्रवणादिष्वावृत्तिमाक्षिपति—अत्राहेत्यादिना ॥ वाक्यं निर्गुणसाक्षात्कारजनने शक्तं न वा ? आद्ये—सकृच्छ्रुतवाक्यात् साक्षात्कारसिद्धेरावृत्तिर्वृथेत्युक्त्वा—द्वितीयं—शंकते—सकृदिति ॥ अशक्तस्यावृत्तावपि फलानुपपत्तिरित्याह—नेति ॥ तथापीति ॥ स्वतोऽशक्तस्य युक्तिसाहित्यात् शक्तावपीत्यर्थः ॥ वाक्ययु-

भामती ।

प्रतीतेरावृत्तिरेवेति सिद्धम् ॥ १ ॥ अधिकरणार्थमुक्त्वा निरुपाधिब्रह्मविषयत्वमस्याक्षिपति—अत्राह भवतु नामेति । साध्ये ह्यनुभवे प्रत्ययावृत्तिरर्थवती नासाध्ये । न हि ब्रह्मानुभवो ब्रह्मसाक्षात्कारो नित्यशुद्धस्वभावाद्ब्रह्मणोऽतिरिच्यते । तथा च नित्यस्य ब्रह्मणः स्वभावो नित्य एवेति कृतमत्र प्रत्ययावृत्त्या । तदिदमुक्तम्—आत्मभूतमिति । आक्षेप्तारं प्रतिशङ्कते—सकृच्छ्रुताविति । अयमभिसंधिः—न च ब्रह्मात्मभूतस्तत्साक्षात्कारोऽविद्यामुच्छिनत्ति तया सहानुवृत्तेरविरोधात् । विरोधे वा तस्य नित्यत्वान्नाविद्योदीयेत कुत एव तु तेन सहानुवर्तेत । तस्मात्तन्निवृत्तये आगन्तुकस्तत्साक्षात्कार एषितव्यः । तथा च प्रत्ययानुवृत्तिरर्थवती । आक्षेप्ता सर्वपूर्वोक्ताक्षेपेण प्रत्यवतिष्ठते—न । आवृत्तावपीति । न खलु ज्योतिष्टोमवाक्यार्थप्रत्ययः शतशोऽप्यावर्तमानः साक्षात्कारप्रमाणं स्वविषये जनयति । उत्पन्नस्यापि तादृशो दृष्टव्यभिचारत्वेन प्रातिभत्वात् । ब्रह्मात्मत्वप्रतीतिं ब्रह्मात्मसाक्षात्कारम् । पुनः शङ्कते—न केवलं वाक्यमिति । आक्षेप्ता दूषयति—तथाप्यावृत्त्यानर्थक्यमिति । वाक्यं चेद्युक्त्यपेक्षं साक्षात्काराय प्रभवति तथा सति कृतमावृत्त्या । सकृत्प्रवृत्तस्यैव तस्य सोपपत्तिकस्य यावत्कर्तव्यकरणादिति ।

आनन्दगिरीय—न्यायनिर्णयः ।

अत्रेति । अहंग्रहोपास्तयः श्रवणादयश्च सविशेषनिर्विशेषब्रह्मसाक्षात्कारफलास्तावदिहोदाहरणं तत्राहंग्रहोपास्तिष्वावृत्तिमङ्गीकरोति—भवत्विति । श्रवणादिषु तां निराचष्टे—यस्त्विति । निर्गुणब्रह्मण्यापरोक्ष्यातिशयः साध्यो नास्ति तस्य नित्यापरोक्षत्वात्तेन तत्र श्रवणाद्यावृत्तिरनर्थिकेत्यर्थः । ब्रह्मणो नित्यापरोक्षत्वेऽपि तावताऽविद्याध्वस्तेरभावात्तदर्थमागन्तुकः साक्षात्कारः श्रवणाद्यावृत्तिसाध्योऽस्तीति शङ्कते—सकृदिति । पूर्ववाद्याह—नाऽऽवृत्ताविति । अनुपपत्तिमेव प्रकटयति—यदीति । ज्योतिष्टोमादिवाक्यवदावृत्तिमदपि तत्त्वमादिवाक्यं न स्वार्थे साक्षात्कारक्षममित्यर्थः । युक्तिप्रसंख्यानसहितं वाक्यं स्वार्थे साक्षात्कारं जनयेदित्याह—अथेति । युक्तिसाहित्यमुपेत्याऽऽवृत्तिं प्रत्याह—तथापीति । आवृत्तेरर्थवत्त्वं सम-

भावयिष्यति । अथापि स्याद्—युक्त्या वाक्येन च सामान्यविषयमेव विज्ञानं क्रियते, न विशेषविषयम् ॥ यथा-अस्ति मे हृदये शूलमित्यतो वाक्याद् गात्रकम्पादिलिंगाच्च शूलसद्भावसामान्यमेव परः प्रतिपद्यते, न विशेषमनुभवति । यथा-स एव शूली । विशेषानुभवश्चाऽविद्याया निवर्तकः ॥ तदर्थाऽऽवृत्तिरिति चेत ॥ न ॥ असकृदपि तावन्मात्रे क्रियमाणे विशेषविज्ञानोत्पत्त्यसम्भवात् । न हि सकृत्प्रयुक्ताभ्यां शास्त्रयुक्तिभ्यामनवगतो विशेषः शतकृत्वोऽपि प्रयुज्यमानाभ्यामवगन्तुं शक्यते । तस्माद्यदि शास्त्रयुक्तिभ्यां विशेषः प्रतिपाद्येत, यदि वा सामान्यमेव । उभयथापि सकृत्प्रवृत्ते एव ते स्वकार्यं कुरुत इत्यावृत्त्यनुपयोगः ॥ न च सकृत्प्रयुक्ते शास्त्रयुक्ती कस्यचिदप्यनुभवं नोत्पादयत इति शक्यते नियन्तुम् । विचित्रप्रज्ञत्वात्प्रतिपत्तॄणाम् ॥ अपि चानेकांशोपेते लौकिके पदार्थे सामान्यविशेषवत्येकेनांऽवधानेनैक-

रत्नप्रभा ।

क्तिभ्यां परोक्षज्ञाने जातेऽप्यपरोक्षज्ञानार्थमावृत्तिरिति शङ्कते—अथापि स्यादिति ॥ तयोः परोक्षज्ञानहेतुत्वस्वाभाव्यात् आवृत्तावपि न साक्षात्कारः स्यादिति परिहरति—न ॥ असकृदपीति ॥ यदि तयोः साक्षात्कारसामर्थ्यं, यदि वा परोक्षज्ञानसामर्थ्यम्-उभयथा आवृत्त्यनपेक्षेत्याह—तस्मादिति ॥ प्रमातृवैचित्र्यादप्यावृत्त्यनियम इत्याह—न चेति ॥ प्रमेयस्यानंशत्वाच्च तथेत्याह—अपि चेति ॥ द्विविधो ह्यधिकारी स्यात्—कश्चित् जन्मान्तराभ्यासात् निरस्तसमस्तासम्भावनादिप्रतिबन्धः । कश्चित्तु

भामती ।

पुनः शङ्कते—अथापि स्यादिति । न युक्तिवाक्ये साक्षात्कारफले प्रत्यक्षस्यैव प्रमाणस्य तत्फलत्वात् । ते तु परोक्षार्थावगाहिनी सामान्यमात्रमभिनिविशेते न तु विशेषं साक्षात्कुरुत इति तद्विशेषसाक्षात्कारायावृत्तिरुपास्यते । सा हि सत्कारदीर्घकालनैरन्तर्यसेविता सती दृढभूमिर्विशेषसाक्षात्काराय प्रभवति कामिनीभावनेव स्त्रैणस्य पुंस इति । आक्षेप्ताह—न । असकृदपीति । स खल्वयं साक्षात्कारः शास्त्रयुक्तियोनिर्वा स्याद्भावनामात्रयोनिर्वा । न तावत्परोक्षावभासविज्ञानफले शास्त्रयुक्ती साक्षात्कारलक्षणं प्रत्यक्षप्रमाणफलं प्रसोतुमर्हतः । न खलु कुटजबीजाद्वटांकुरो जायते । न च भावनाप्रकर्षपर्यन्तजमपरोक्षावभासमपि ज्ञानं प्रमाणं व्यभिचारादित्युक्तम् । आक्षेप्ता स्वपक्षमुपसंहरति—तस्माद्यदीति । आक्षेप्ताक्षेपान्तरमाह—न च सकृत्प्रयुक्ते इति । कश्चित्खलु शुद्धसत्त्वो गर्भस्थ इव वामदेवः श्रुत्वा च मत्वा च क्षणमवधाय जीवात्मनो ब्रह्मात्मतामनुभवति । ततोऽप्यावृत्तिरनर्थिकेति । अतश्चावृत्तिरनर्थिका यन्निरंशस्य ग्रहणमग्रहणं वा न तु व्यक्ताव्यक्तत्वे सामान्यविशेषवत्पद्मरागादिवदित्यत आह—अपि चानेकांशेति ।

आनन्दगिरीय-न्यायनिर्णयः ।

र्थ्यमानः स्वयूथ्यश्चोदयति—अथापीति । तदेव दृष्टान्तेन स्पष्टयति—यथेति । शूलविशेषस्यानुभवायोग्यत्वादेवमित्याशंक्याऽऽह—यथेति । अस्तु प्रस्तुतेऽपि सामान्यधीरेव किं विशेषधियेत्याशंक्याऽऽह—विशेषेति । स तर्हि भावनाजन्यो वा शास्त्रयुक्तिजन्यो वा नाऽऽद्यस्तस्यामानजन्यत्वेनाविद्याध्वंसित्वायोगादिति मत्वा द्वितीयं प्रत्याह—नेति । प्रत्यक्षातिरिक्तस्य न साक्षात्कारहेतुतेत्यर्थः । किंच युक्तिवाक्ये साक्षात्कारक्षमे तदक्षमे वा समर्थे चेदावृत्त्यानर्थक्यम् । द्वितीयं निराह—न हीति । सामर्थ्यासामर्थ्ययोरावृत्त्यानर्थक्यमुपसंहरति—तस्मादिति । शास्त्रयुक्त्योः साक्षात्कारहेतुत्वोपगमेऽपि व्यर्थाऽऽवृत्तिरित्याह—न चेति । मानस्वभावानुसारेणाऽऽवृत्त्यानर्थक्यमुक्त्वा मेयस्वभावालोचनयाऽपि तदानर्थक्यमाह—अपि चेति । यं कंचिदधिकारिणं प्रति श्रवणाद्यावृत्त्यानर्थक्यं चोद्यते सर्वानेव वा प्रतीति विकल्पयति—

मंशमवधारयत्यपरेणापरमिति स्यादप्यभ्यासोपयोगः ॥ यथा—दीर्घप्रपाठकग्रहणादिषु, न तु निर्विशेषे ब्रह्मणि सामान्यरहिते चैतन्यमात्रात्मके प्रमोत्पत्तावभ्यासापेक्षा युक्तेति ॥ अत्रोच्यते ॥ भवेदावृत्त्यानर्थक्यं तं प्रति । यः "तत्त्वमसि" [ छां० ६ । ८-१६ ] इति सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितुं शक्नुयात् । यस्तु न शक्नोति, तं प्रत्युपयुज्यत एवावृत्तिः ॥ तथाहि—छान्दोग्ये "तत्त्वमसि श्वेतकेतो" [ छां० ६ । ८-१६ ] इत्युपदिश्य "भूय एव मा भगवान्विज्ञापयतु" [ छां० ६ । ८ । ७ ] इति पुनःपुनः परिचोद्यमानस्तत्तदाशंकाकारणं निराकृत्य "तत्त्वमसि" इत्येवासकृदुपदिशति॥ तथा च "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [ बृ० ४ । ५ । ६ ] इत्यादि दर्शितम् ॥ ननूक्तं सकृच्छ्रुतं चेत्-तत्त्वमसि वाक्यं स्वमर्थमनुभावयितुं न शक्नोति, तत आवर्त्यमानमपि नैव शक्ष्यतीति ॥ नैष दोषः ॥ न हि दृष्टेऽनुपपन्नं नाम । दृश्यन्ते हि सकृच्छ्रुताद्वाक्यान्मन्दप्रतीतिं वाक्यार्थमावर्तयन्तस्तत्तदाभासव्युदासेन सम्यक्

रत्नप्रभा ।

प्रतिबन्धवानिति । अत्र—आद्यं—प्रत्यावृत्तेरानर्थक्यमिष्टं, द्वितीयस्य तु प्रतिबन्धनिरासाय तदपेक्षेति समाधत्ते—अत्रोच्यते इति ॥ आवृत्तेः प्रतिबन्धनिरासार्थत्वे लिंगमाह—तथाहीति ॥ यथा षड्जादिस्वरभेदसाक्षात्कारशक्तमपि श्रोत्रमभ्यासमपेक्षते, तथा ब्रह्मात्मसाक्षात्कारशक्तं वाक्यं तदपेक्षमित्यनुभवमाश्रित्याह—न हि दृष्टेऽनुपपन्नं नामेति ॥ तत्त्वम्पदलक्ष्यार्थस्य दुर्बोधत्वादज्ञानप्रयुक्तसंशयादिप्रतिबन्धस-

भामती ।

समाधत्ते—अत्रोच्यते भवेदावृत्त्यानर्थक्यमिति । अयमभिसन्धिः—सत्यं न ब्रह्मसाक्षात्कारः साक्षादागमयुक्तिफलमपि तु युक्त्यागमार्थज्ञानाहितसंस्कारसचिवं चित्तमेव ब्रह्मणि साक्षात्कारवतीं बुद्धिवृत्तिं समाधत्ते । सा च नानुमानितवह्निसाक्षात्कारवत्प्रातिभत्वेनाप्रमाणं तदानीं वह्निस्वलक्षणस्य परोक्षत्वात्सदातनं तु ब्रह्मस्वरूपस्योपाधिरूपितस्य जीवस्यापरोक्षत्वम् । न हि शुद्धबुद्धत्वादयो वस्तुतस्ततोऽतिरिच्यन्ते। जीव एव तु तत्तदुपाधिरहितः शुद्धादिस्वभावो ब्रह्मेति गम्यते । न च तत्तदुपाधिविरहोऽपि ततोऽतिरिच्यते । तस्माद्यथा गान्धर्वशास्त्रार्थज्ञानाभ्यासाहितसंस्कारः सचिवेन श्रोत्रेण षड्जादिस्वरग्राममूर्च्छनाभेदमध्यक्षेणेक्षते एवं वेदान्तार्थज्ञानाहितसंस्कारो जीवस्य ब्रह्मस्वभावमन्तःकरणेनेति । यस्तत्त्वमसीति सकृदुक्तमेवेति । श्रुत्वा मत्वा क्षणमवधाय प्राग्भवीयाभ्यासजातसंस्कारादित्यर्थः । यस्तु न शक्नोतीति । प्राग्भवीयब्रह्माभ्यासरहित इत्यर्थः । न हि दृष्टेऽनुपपन्नं नामेति । यत्र परोक्षप्रतिभासिन्यपि वाक्यार्थेऽपि व्यक्ताव्यक्तत्वतारतम्यं तत्र मननोत्तरकालमाध्यासनाभ्यासनिकर्षप्रकर्षक्रमजन्मनि प्रत्ययप्रवाहे साक्षात्कारावधौ व्यक्तितारतम्यं प्रति कैव कथेति भावः । तदेवं वाक्यमात्रस्यार्थेऽपि न द्रागित्येव प्रत्यय

आनन्दगिरीय—न्यायनिर्णयः ।

अत्रेति । आद्यमङ्गीकरोति—भवेदिति । ब्रह्मणोऽपरोक्षत्वाद्वाक्यस्य परोक्षबोधित्वे प्रामाण्यायोगादसति चित्तविक्षेपादिप्रतिबन्धे तस्यापरोक्षबोधित्वमेवेत्यर्थः । द्वितीयं दूषयति—यस्त्विति । असंभावनादिप्रतिबन्धे तन्निवृत्त्यर्थमावृत्तिरर्थवतीत्यर्थः । तत्र श्रौतं लिङ्गमाह—तथाहीति । सूत्रकृताऽपि लिङ्गमङ्गीकृतमित्याह—तथा चेति । पूर्ववादी स्वोक्तं स्मारयति—नन्विति । अनुभवानुसारेण परिहरति—नेत्यादिना । कथमावृत्तेरर्थवत्त्वं दृष्टं येन नानुपपत्तिस्तत्राऽऽह—दृश्यन्ते हीति । वाक्यार्थज्ञानस्य पदार्थधीपूर्वकत्वात्प-

१ "सामान्यविशेषरहिते". पा० ।

प्रतिपद्यमानाः ॥ अपि च "तत्त्वमसि" इत्येतद्वाक्यं त्वम्पदार्थस्य तत्पदार्थभावमाचष्टे । तत्पदेन च प्रकृतं सद्ब्रह्मेक्षितृ जगतो जन्मादिकारणमभिधीयते । "सत्यं ज्ञानमनन्तं ब्रह्म" [तै० उ० २।१।१] "विज्ञानमानन्दं ब्रह्म" [बृ० ३।९।२८] "अदृष्टं द्रष्टृ" [बृ० ३।८।११] "अविज्ञातं विज्ञातृ" [बृ० ३।८।११] "अजमजरममरम्" "अस्थूलमनण्वह्रस्वमदीर्घम्" [बृ० ३।८।८] इत्यादिशास्त्रप्रसिद्धम्। तत्राऽजादिशब्दैर्जन्यादयो भावविकाराः निवर्तिताः । अस्थूलादिशब्दैश्च स्थौल्यादयो द्रव्यधर्माः । विज्ञानादिशब्दैश्च चैतन्यप्रकाशात्मकत्वमुक्तम् । एष व्यावृत्तसर्वसंसारधर्मकोऽनुभवात्मको ब्रह्मसंज्ञकस्तत्पदार्थो वेदान्ताभियुक्तानां प्रसिद्धः ॥ तथा त्वम्पदार्थोऽपि प्रत्यगात्मा श्रोतुर्देहादारभ्य प्रत्यगात्मतया सम्भाव्यमानश्चैतन्यपर्यन्तत्वेनावधारितः। तत्र येषामेतौ पदार्थावज्ञानसंशयविपर्ययप्रतिबद्धौ, तेषां "तत्त्वमसि" इत्येतद्वाक्यं स्वार्थे प्रमां नोत्पादयितुं शक्नोति । पदार्थज्ञानपूर्वकत्वाद्वाक्यार्थज्ञानस्येत्यतस्तान्प्रत्येष्टव्यः पदार्थविवेकप्रयोजनः शास्त्रयुक्त्यभ्यासः ॥ यद्यपि च प्रतिपत्तव्य आत्मा निरंशः ॥ तथापि अध्यारोपितं तस्मिन्बहुंशत्वं देहेन्द्रियमनोबुद्धिविषयवेदनादिलक्षणम् ॥ तत्रैकेनाव-

रत्नप्रभा।

म्भवात् तद्ध्वंसाय आवृत्तिरेष्टव्येति वाच्यलक्ष्यविवेकपूर्वकमाह–अपि चेत्यादिना ॥ यदुक्तमनंशत्वात् प्रमेयस्यावृत्त्यानर्थक्यमिति, तत्राह–यद्यपीति ॥ आरोपितांशनिरासाय 'न मे देहः' 'नेन्द्रियम्' इत्यभ्यासो युक्त इत्यर्थः ॥ वाक्यार्थज्ञाने सति कथमभ्यासनियमः । प्रमाणज्ञानस्याभ्यासायोगात्, ज्ञानिनः

भामती।

इत्युक्तम् । तत्त्वमसीति तु वाक्यमत्यन्तदुर्ग्रहपदार्थं न पदार्थज्ञानपूर्वके स्वार्थे ज्ञाने झागित्येव प्रवर्तते । किंतु विलम्बिततमपदार्थज्ञानमतिविलम्बेनेत्याह—अपि च तत्त्वमसीत्येतद्वाक्यं त्वंपदार्थस्येति । स्यादेतत् । पदार्थसंसर्गात्मा वाक्यार्थः पदार्थज्ञानक्रमेण तदधीननिरूपणीयतया क्रमवत्प्रतीतिर्युज्यते । ब्रह्म तु निरंशत्वेनासंसृष्टनानात्वपदार्थकमिति कस्यानुक्रमेण क्रमवती प्रतीतिरिति सकृदेव तद्गृह्येत न वा गृह्येतेत्युक्तमित्यत आह—यद्यपि च प्रतिपत्तव्य आत्मा निरंश इति । निरंशोऽप्यहमपरोक्षोऽप्यात्मा तत्तद्देहाद्यारोपव्युदासाभ्यामंशवानिवात्यन्तपरोक्ष इव । ततश्च वाक्यार्थतया क्रमवत्प्रत्यय उपपद्यते । तत्कि-मियमेव वाक्यजनिता प्रतीतिरात्मनि तथा च न साक्षात्प्रतीतिरात्मन्यनागतफलत्वादस्या इत्यत आह–

आनन्दगिरीय–न्यायनिर्णयः।

दार्थयोश्च दुर्ज्ञानत्वादावृत्त्या क्रमेणैव धीरिति हेत्वन्तरमाह–अपि चेति । तत्र तत्पदवाच्यमर्थमाह—तदिति । तस्यैव लक्ष्यमर्थमाह–सत्यमिति । अजमित्यादिवाक्यस्यार्थमाह–तत्रेति । अस्थूलादिवाक्यस्यार्थमाह–अस्थूलादीति । सत्यज्ञानादिवाक्यस्यापुनरुक्तमर्थमाह–विज्ञानादीति । श्रौते तदर्थे विद्वदनुभवमपि प्रमाणयति–एष इति । तत्पदार्थं वाच्यं लक्ष्यं च सप्रमाणमुक्त्वा त्वंपदार्थमपि विभज्य दर्शयति–तथेति । अवधारितो योऽयं विज्ञानमयः प्राणेषु यः प्राणेन प्राणितीत्यादिनेति शेषः । स्यातामेतौ पदार्थौ तथाऽपि कथमावृत्तेरर्थवत्त्वं तत्राऽऽह–तत्रेति । यत्तु मेयस्यानंशत्वात्तदावृत्त्यानर्थक्यमिति तत्राऽऽह–यद्यपीति । आरोपितव्यावर्त्यांशबाहुल्यात्क्रमवत्त्वं प्रतिपत्तेरर्थवदित्यर्थः । तत्त्वमसिवाक्यादहंब्रह्मेति-

धानेनैकमंशमपोहति, अपरेणापरमिति युज्यते तत्र क्रमवती प्रतिपत्तिः। तत्तु पूर्वरूपमेव । आत्मप्रतिपत्तेः ॥ येषां पुनर्निपुणमतीनां नाज्ञानसंशयविपर्ययलक्षणः पदार्थविषयः प्रतिबन्धोऽस्ति, ते शक्नुवन्ति सकृदुक्तमेव तत्त्वमसिवाक्यार्थमनुभवितुमिति तान् प्रत्यावृत्त्यानर्थक्यमिष्टमेव। सकृदुत्पन्नैव ह्यात्मप्रतिपत्तिरविद्यां निवर्तयतीति नात्र कश्चिदपि क्रमोऽभ्युपगम्यते ॥ सत्यमेवं युज्यते ॥ यदि कस्यचिदेवं प्रतिपत्तिर्भवेत्। बलवती ह्यात्मनो दुःखित्वादिप्रतिपत्तिः ॥ अतो न दुःखित्वाद्यभावं कश्चित्प्रतिपद्यत इति चेत् ॥ न ॥ देहाद्यभिमानवद्-दुःखित्वाद्यभिमानस्य मिथ्याभिमानत्वोपपत्तेः। प्रत्यक्षं हि देहे छिद्यमाने दह्यमाने वाऽहं छिद्ये दह्ये इति च मिथ्याभिमानो दृष्टः, तथा बाह्यतरेष्वपि पुत्रमि-

रत्नप्रभा।

श्रवणादिनियमायोगाच्च,—इत्यत आह—**तत्त्विति** ॥ ज्ञानात् प्रागेव श्रवणादिव्यापारनियमनं क्रियत इत्यर्थः ॥ अधिकं शंकितुमुक्तमनुवदति—**येषामिति** ॥ अधिकं शङ्कते—**सत्यमिति** ॥ दुःखित्वप्रत्यक्षविरोधात् वाक्यादैक्यधीः नोदेतीत्यर्थः ॥ प्रत्यक्षस्य भ्रान्तित्वादविरोध इत्याह—**नेत्यादिना** ॥ दुःखादयः, नात्मधर्माः, दृश्यत्वाद्, देहादिवत्। नाप्यात्मस्वरूपाः, आत्मनि सत्यप्यननुवृत्तित्वात् व्यतिरेकेण चैतन्यवदित्यर्थः ॥ निर्दुःखचिदात्मनि दुःखादिधियो भ्रान्तित्वात् वाक्यार्थानुभवो न विरुध्यत

भामती।

**तत्तु पूर्वरूपमेवात्मप्रतिपत्तेः** साक्षात्कारवत्याः। एतदुक्तं भवति—वाक्यार्थश्रवणमननोत्तरकाला विशेषणत्रयवती भावना ब्रह्मसाक्षात्काराय कल्पत इति वाक्यार्थप्रतीतिः साक्षात्कारस्य पूर्वरूपमिति। शङ्कते—**सत्यमेवमिति**। समारोपो हि तत्त्वप्रत्ययेनापोद्यते न तत्त्वप्रत्ययः। दुःखित्वादिप्रत्ययश्चात्मनि सर्वेषां सर्वदोत्पद्यत इत्यबाधितत्वात्समीचीन इति बलवान्न शक्योऽपनेतुमित्यर्थः। निराकरोति—**न**। **देहाद्यभिमानवदिति**। न हि सर्वेषां सर्वदोत्पद्यत इत्येतावता तात्त्विकत्वम्। देहात्माभिमानस्यापि सत्यत्वप्रसंगात्सोऽपि सर्वेषां सर्वदोत्पद्यते। उक्तं चास्य तत्रतत्रोपपत्त्या बाधनमेवं दुःखित्वाद्यभिमानोऽपि तथा। न हि नित्यशुद्धबुद्धस्वभावस्यात्मन उपजनापायधर्माणो दुःखशोकादय आत्मानो भवितुमर्हन्ति। नापि धर्माः, तेषां ततोऽत्यन्तभिन्नानां तद्धर्मत्वानुपपत्तेः, न हि गौरश्वस्य धर्मः संबन्धस्यापि व्यतिरेकाव्यतिरेकाभ्यां संबन्धासंबन्धाभ्यां च विचारासहत्वात्। भेदाभेदयोश्च परस्परविरोधेनैकत्रासंभवात्। इति सर्व-

आनन्दगिरीय—न्यायनिर्णयः।

वाक्यार्थज्ञाने सति कथं क्रमापेक्षेत्याशंक्याऽऽह—**तत्त्विति**। क्रमेण जातं पूर्वज्ञानमात्मसाक्षात्कारात्पूर्वकालमेव ततोऽसंभावनादिनिरासमहितवाक्योत्थतत्त्वसाक्षात्कारे नास्त्येवाऽऽवृत्त्यपेक्षेत्यर्थः। मन्दमध्यमौ प्रति साक्षात्कारात्पूर्वं श्रवणाद्यावृत्तेरर्थवत्त्वमुक्तम्। इदानीमुत्तमं प्रत्यावृत्त्यानर्थक्यमुक्तं विवृणोति—**येषामिति**। उत्पन्नाऽपि धीरावृत्तिमपेक्षते फलायेत्याशंक्याऽऽह—**सकृदिति**। उत्पन्ने ज्ञाने यदावृत्त्यानर्थक्यं तदङ्गीकुर्वन्नाह—**सत्यमिति**। वाक्यादीदृशी धीः स्यादित्याशंक्याध्यक्षादिविरोधान्मैवमित्याह—**बलवतीति**। सा वाक्यीयधियोच्छेद्यत्वाद्भ्रान्तिरित्याशंक्याऽऽह—**अत इति**। दुःखित्वादिप्रत्ययस्य सर्वदा सर्वेषामुत्पद्यमानस्य बलवत्त्वादेव धियोच्छेद्यत्वायोगान्न भ्रान्तितेत्यर्थः। तथाविधस्यापि देहात्माभिमानस्य भ्रान्तित्वाद् दुःखित्वाद्यभिमानस्यापि युक्तिबाधितस्य भ्रान्तित्वसिद्धेर्नैवमित्याह—**नेत्यादिना**। उक्तं दृष्टान्तं प्रत्यक्षदृष्टान्ताभ्यां स्पष्टयति—**प्रत्यक्षं हीति**। दुःखादयस्तत्त्वतो नाऽऽत्मधर्मा देयत्वात्संमतवदिति दार्ष्टान्तिक-

त्रादिषु सन्तप्यमानेष्वहमेव सन्तप्ये इत्यध्यारोपो दृष्टः, तथा दुःखित्वाद्यभिमानोऽपि स्यात् । देहादिवदेव चैतन्याद्बहिरुपलभ्यमानत्वाद्दुःखित्वादीनां, सुषुप्तादिषु चाननुवृत्तेः । चैतन्यस्य तु सुषुप्तेऽप्यनुवृत्तिमामनन्ति–"यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति" [ बृ० ४ । ३ । २३ ] इत्यादिना ॥ तस्मात्सर्वदुःखविमुक्तैकचैतन्यात्मकोऽहमित्येष आत्मानुभवः । न चैवमात्मानमनुभवतः किञ्चिदन्यत्कृत्यमवशिष्यते । तथा च श्रुतिः–"किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" [ बृ० ४ । ४ । २२ ] इत्यात्मविदः कर्तव्याभावं दर्शयति स्मृतिरपि–"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते" [ भ० गी० ३ । १७ ] इति ॥ यस्य तु नैषोऽनुभवो द्रागिव जायते, तं प्रत्यनुभवार्थ एवावृत्त्यभ्युपगमः । तत्रापि न तत्त्वमसिवाक्यार्थात्प्रच्याव्यावृत्तौ प्रवर्तयेत् । न हि वरघाताय कन्यामुद्वाह-

रत्नप्रभा ।

इत्याह–तस्मादिति ॥ अनुभवे जातेऽप्यावृत्त्याद्यनुष्ठानं किं न स्यादित्यत आह–न चैवमिति ॥ रतिः कामः आत्मकामतया तृप्तिर्विषयतृष्णाक्षयः, तेन सन्तोषे आत्मानन्दानुभवः,–इति भेदः ॥ नन्वावृत्तौ नियोगात् प्रवृत्तिर्वाच्या । तथा च नियुक्तत्वबुद्धेरकर्त्रात्मधीने स्यादित्यत आह–तत्रापीति ॥ आवृत्त्यभ्युपगमेऽप्यकर्ताहमित्यनुभवात् प्रच्याव्य गुरुरन्यो वा नियोगात् न प्रवर्तयेद् । उक्तदोषादित्यर्थः ॥

भामती ।

मेतदुपपादितं द्वितीयाध्याये । तदिदमुक्तं–देहादिवदेव चैतन्याद्बहिरुपलभ्यमानत्वादिति । इतश्च दुःखित्वादीनां न तादात्म्यमित्याह–सुषुप्तादिषु चेति। स्यादेतत् । कस्मादनुभवार्थ एवावृत्त्यभ्युपगमो यावता द्रष्टव्यः श्रोतव्य इत्यादिभिस्तत्त्वमसिवाक्यविषयादन्यविषयैवावृत्तिर्विधास्यत इत्यत आह–तत्रापि न तत्त्वमसिवाक्यार्थादिति । आत्मा वा अरे द्रष्टव्य इत्याद्यात्मविषयं दर्शनं विधीयते । न च तत्त्वमसिवाक्यविषयादन्यदात्मदर्शनमाम्नातं येनोपक्रम्यते येन चोपसंह्रियते स वाक्यार्थः । 'सदेव सोम्येदम्'इति चोपक्रम्य 'तत्त्वमसि' इत्युपसंहृत इति स एव वाक्यार्थः।तदितः प्रच्याव्यावृत्तिमन्यत्र विदधानः प्रधानमङ्गेन विहन्ति । वरो हि कर्मणाभिप्रेयमाणत्वात्संप्रदानं प्रधानम् । तमुद्वाहेन कर्मणाङ्गेन न विघ्नन्तीति । ननु विधिप्रधानत्वाद्वाक्यस्य न भूतार्थप्रधानत्वं भूतस्वर्थस्तदङ्गतया प्रत्याय्यते । यथाहुः–'चोदना हि भूतं भवन्तम्' इत्यादि शाबरं वाक्यं व्याचक्षाणाः–'कार्यमर्थमवगमयन्ती चोदना तच्छेषतया भूतादिकमव-

आनन्दगिरीय–न्यायनिर्णयः ।

माह–तथेति । व्यभिचारित्वाच्च दुःखादीनां रूपादिवत्तत्त्वतो नाऽऽत्मधर्मतेत्याह–सुषुप्तेति । तर्हि चैतन्यमपि न स्वरूपमननुवृत्तत्वाद्दुःखादिवदित्याशंक्याऽऽह–चैतन्यस्येति । दुःखित्वादिधीर्मिथ्याभिमानश्चैतन्यमेवाव्यभिचारिस्वरूपमिति स्थिते फलितमाह–तस्मादिति । यथोक्तानुभवे वाक्यादविरुद्धेऽपि किमित्यावृत्तिर्नेष्यते तत्राऽऽह–न चेति । तस्मादेवानुभवात्कृतकृत्यतेत्यत्र मानमाह–तथा चेति । रतिरासक्तिस्तत्फलं तृप्तिस्तृप्तेरपि फलं संतोष इति भेदः । यत्तु साक्षात्कारात्पूर्वमावृत्तेरर्थवत्त्वमुक्तं तदधिकविवक्षया निगमयति–यस्येति । द्रागिति झटिति । नियोगबलादावृत्तौ 'प्रवृत्तेर्नियोगार्थाऽऽवृत्तिर्नानुभवार्थेत्याशंक्याऽऽह–तत्रापीति । अहं ब्रह्मास्मीतिप्रत्ययात्प्रच्याव्य नाऽऽवृत्तौ पुरुषं प्रवर्तयेत्प्रधानविरोधात् । अकर्त्रात्मानुभवाय हि श्रवणादिविधिर्न नियोगायेत्यर्थः । प्रधानविरोधायोगे दृष्टान्तमाह–न हीति । नियो-

यन्ति वियुक्तस्य चास्मिन्नधिकृतोऽहं कर्ता मयेदं कर्तव्यमित्यवश्यं ब्रह्मप्रत्ययविपरीतप्रत्यय उत्पद्यते । यस्तु स्वयमेव मन्दमतिरप्रतिभानाद्वाक्यार्थं जिहासेत्, तस्यैतस्मिन्नेव वाक्यार्थे स्थिरीकार आवृत्त्यादिवाचो युक्त्याऽभ्युपेयते ॥ तस्मात्परब्रह्मविषयेऽपि प्रत्यये तदुपायोपदेशेष्वावृत्तिसिद्धिः ॥ २ ॥ इत्यावृत्त्यधिकरणम् ॥ १ ॥

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥ (२) ॥

यः शास्त्रोक्तविशेषणः परमात्मा स किमहमिति ग्रहीतव्यः किं वा मदन्य इति, तावद्विचारयति । कथं पुनरात्मशब्दे प्रत्यगात्मविषये श्रूयमाणे संशय इति ॥ उच्यते ॥ अयमात्मशब्दो मुख्यः शक्यतेऽभ्युप-

रत्नप्रभा ।

कथं तर्हि प्रवृत्तिरित्यत आह—यस्त्विति ॥ अप्रतिभानाद् असम्भावनादित्यर्थः ॥ शिष्यबुद्ध्यनुसारेण श्रोतव्यादिवचोभिः प्रधानसिद्ध्यर्थमावृत्त्यादौ प्रवर्तयेदित्यर्थः ॥ २ ॥ ( १ ) ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ पूर्वत्र ध्यानादेरावृत्तिरुक्ता तामुपजीव्य तत्त्वज्ञानार्थं ध्यानावृत्तिकाले किमहं ब्रह्मेति ध्यातव्यम्—उत—मत्स्वामी ईश्वरः इत्यैक्यभेदमानाभ्यां संशयमाह—य इति ॥ "शब्दादेव प्रमितः" [ व्या० सू० १ । ३ । २३ ] इत्यादौ "अयमात्मा ब्रह्म" [ बृ० २ । ५ । १९ ] इत्यादिश्रुतिभिरैक्यनिर्णयात् संशयमाक्षिपति—कथमिति ॥ भेदश्रुत्यनुग्रहाद् भेदप्रत्यक्षादिप्राबल्यमालम्ब्य संशय इत्याह—उच्यत इति ॥ अभेदश्रुतीनां गौणत्वमुख्यत्वे उभयत्र फलम् । यद्यप्ययं प्रत्यक्षादिविरो-

भामती ।

गमयति' इत्याशङ्क्याह—वि(नि)युक्तस्य चास्मिन्नधिकृतोऽहमिति । यथा तावद्भूतार्थपर्यवसिता वेदान्ता न कार्यविधिनिष्ठास्तथोपपादितं 'तत्तु समन्वयात्' इत्यत्र । प्रत्युत विधिनिष्ठत्वे मुक्तिविरुद्धप्रत्ययोत्पादान्मुक्तिविहन्तृत्वमेवास्येत्यभ्युच्चयमात्रमत्रोक्तमिति ॥२॥ (१)। आत्मेति तूपगच्छन्ति ग्राहयन्ति च । यद्यपि तत्त्वमसीत्याद्याः श्रुतयः संसारिणः परमात्मभावं प्रतिपादयन्ति तथापि तयोरपहतपाप्मत्वानपहतपाप्मत्वादिलक्षणविरुद्धधर्मसंसर्गेण नानात्वस्य विनिश्चयाच्छुतेश्च तत्त्वमसीत्याद्याया 'मनो ब्रह्म' 'आदित्यो ब्रह्म' इत्यादि-

आनन्दगिरीय—न्यायनिर्णयः ।

गार्थमावृत्त्युपगमेऽपि तस्मादेवाकर्त्रात्मधीसिद्धेर्न तद्व्याहतिरित्याशंक्याऽऽह—वियुक्तस्येति । नियोगानङ्गीकारे कुतः श्रोतव्यादिवाक्यैः श्रवणाद्यावृत्तिसिद्धिस्तत्राऽऽह—यस्त्विति । अप्रतिभानादसंभावनादिप्रतिबन्धादिति यावत् । स्थिरीकारोऽसंभावनाद्यपोहेनावगमदार्ढ्यं वेदोपासीतेत्यावृत्तिर्वाचोयुक्तिः । आदिशब्देन श्रोतव्यादिवाक्यं गृह्यते । अहंग्रहोपासनेषु श्रवणादिषु च सगुणनिर्गुणसाक्षात्कारफलेष्वावृत्त्याऽनुष्ठानमित्यधिकरणार्थमुपसंहरति—तस्मादिति । अपरब्रह्मविषयप्रत्यये स्वरूपावृत्तिवदित्यपेरर्थः ॥ २ ॥ ( १ ) ॥ श्रवणमनननिदिध्यासनादिसाधनान्यावृत्त्याऽनुष्ठेयानीत्युक्तम् । तत्र निदिध्यासनकाले कथं प्रत्ययावृत्तिस्तत्राऽऽह—आत्मेति त्विति । यद्यपि शब्दादेव प्रमित इत्यादिषु जीवब्रह्मैक्यं श्रुतिभिरुक्तं तथाऽपि तासामेव विरुद्धार्थत्वादुपचरितविषयत्वमाशंक्यात्र समाधीयते । विरोधसमाधेरविरोधाध्यायसंगतत्वेऽपि महावाक्यार्थविरोधसमाधेः समाधावन्तरङ्गत्वादिह संगतिरिति मत्वा विषयोक्तिपूर्वकमुभयथाप्रसिद्धेः संशयमाह—य इति । संशयाभावादधिकरणमाक्षिपति—कथमिति । आत्मशब्दस्य मुख्यार्थत्वे सत्यभेदसिद्धिस्तत्सिद्धौ च तस्य मुख्यार्थत्वसिद्धिरित्यन्योन्याश्रयान्मानान्तरविरोधाच्च तन्मुख्यार्थत्वासिद्धेस्तदालम्बनेन संशयानाक्षेपादधिकरणमारभ्यमित्याह—उच्यत इति । अत्र च विरोधपरिहारफले समाध्युपयोगितया

गन्तुं सति जीवेश्वरयोरभेदसम्भवे। इतरथा तु गौणोऽयमभ्युपगन्तव्य इति मन्यते॥ किं तावत् प्राप्तम्॥ नाहमिति ग्राह्यः॥ न ह्यपहतपाप्मत्वादिगुणो विपरीतगुणत्वेन शक्यते ग्रहीतुम्॥ विपरीतगुणो वाऽपहतपाप्मत्वादिगुणत्वेन। अपहतपाप्मत्वादिगुणश्च परमेश्वरः। तद्विपरीतगुणस्तु शारीरः। ईश्वरस्य च संसार्यात्मत्वे ईश्वराभावप्रसङ्गः। ततः शास्त्रानर्थक्यम्। संसारिणोऽपीश्वरात्मत्वेऽधिकार्यभावाच्छास्त्रानर्थक्यमेव। प्रत्यक्षादिविरोधश्च। अन्यत्वेऽपि तादात्म्यदर्शनं शास्त्रात्कर्तव्यं, प्रतिमादिष्विव विष्ण्वादिदर्शनमिति चेत्। काममेवं भवतु॥ न तु संसारिणो मुख्य आत्मेश्वर इत्येतन्नः प्रापयितव्यमिति॥ एवं प्राप्ते ब्रूमः॥ आत्मेत्येव परमेश्वरः प्रतिपत्तव्यः। तथाहि-परमेश्वरप्रक्रियायां जाबाला आत्मत्वेनैवैतमुपगच्छन्ति-"त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि देवते" इति॥ तथाऽन्येऽपि-"अहं ब्रह्मास्मि"

रत्नप्रभा।

धपरिहारो द्वितीयाध्यायसंगतः। तथाप्यैक्यश्रुतेरविरुद्धत्वनिश्चयस्य समाधावन्तरङ्गत्वादिह सङ्गतिः॥ विरुद्धयोरैक्यदृष्टिरसिद्धेत्याह-नाहमिति॥ किञ्च किमीश्वरस्य जीवमात्रत्वमैक्यं जीवस्येश्वरमात्रत्वं वेति विकल्प्य क्रमेण दूषयति-ईश्वरस्य चेत्यादिना॥ एकत्वश्रुतिप्रामाण्यायैक्यध्यानं कार्यमिति शंकते-अन्यत्वेऽपीति॥ एकत्वध्यानमस्मदिष्टमेव। एकत्वं तु नास्तीत्याह-काममिति॥ अभेदश्रुतीनां फलवदपूर्वार्थतात्पर्येण गौणत्वायोगाद् भेदश्रुतीनां कल्पितभेदानुवादित्वात् प्रत्यक्षादेरपि तद्विषयत्वाद् बिम्बप्रतिबिम्बयोरिव विरुद्धधर्माणां मिथ्यात्वात् मुख्यमैक्यमिति सिद्धान्तयति-एवमित्यादिना॥

भामती।

वत्प्रतीकोपदेशपरतयाप्युपपत्तेः प्रतीकोपदेश एवायम्। न च यथा समारोपितं सर्पत्वमनूद्य रज्जुत्वं पुरोवर्तिनो द्रव्यस्य विधीयत एवं प्रकाशात्मनो जीवभावमनूद्य परमात्मत्वं विधीयत इति युक्तम्। युक्तं हि पुरोवर्तिनि द्रव्ये द्राघीयसि सामान्यरूपेणालोचिते विशेषरूपेणागृहीते विशेषान्तरसमारोपणम्। इह तु प्रकाशात्मनो निर्विशेषसामान्यस्यापराधीनप्रकाशस्य नागृहीतमस्ति किंचिद्रूपमिति कस्य विशेषस्याग्रहे किं विशेषान्तरं समारोप्यताम्। तस्माद्ब्रह्मणो जीवभावारोपासंभवाज्जीवो जीवो ब्रह्म च ब्रह्मेति तत्त्वमसीति प्रतीकोपदेश

आनन्दगिरीय-न्यायनिर्णयः।

प्रासङ्गिके ध्यानावस्थायां प्रत्यक्त्वेन ब्रह्मप्रतिपत्त्यनुष्ठानोक्त्या पादादिसंगतिः। पूर्वपक्षे श्रुतीनामैक्यगोचराणामुपचरितार्थत्वम्। सिद्धान्ते तासां मुख्यार्थत्वं फलतीत्याशयवान्विमृश्य पूर्वपक्षं गृह्णाति-किमिति। द्वा सुपर्णेत्यादिभेदश्रुतेरुपास्योपासकादिभावभेदलिङ्गाच्च भेद इत्यर्थः। युक्तितो भेदमाह-न हीति। तयोर्विरुद्धगुणत्वमसिद्धमित्याशंक्याऽऽह-अपहतेति। किंचाभेदेऽपि किमीश्वरस्य जीवात्मता किंवा जीवस्येश्वरात्मतेति विकल्प्याऽऽद्यं दूषयति-ईश्वरस्येति। द्वितीयं प्रत्याह-संसारिणोऽपीति। अहं सुखीत्याद्यनुभवेन विरुद्धस्वभावत्वाद्भेदो दहनतुहिनवदित्यनुमानेन च विरोधान्न तयोरैक्यमित्याह-प्रत्यक्षादीति। एकत्वोपदेशानां तर्हि का गतिरित्याशंक्य व्याजेन तद्गतिमाह-अन्यत्वेऽपीत्यादिना। तादात्म्यदर्शनाङ्गीकारे नास्ति विप्रतिपत्तिरित्याशंक्याऽऽह-न त्विति। एकत्वश्रुतीनां प्राप्तमुपचरितार्थत्वमनूद्य सिद्धान्तयति-एवमिति। सिद्धान्तसूत्रं योजयति-आत्मेत्येवेति। तत्र मानमाह-तथाहीति। आत्मत्वोपगमान्त्राणि दर्शयति-तथेति। आदिशब्देन तद्योऽहं सोऽसौ योऽसौ सोऽहमित्यादयो गृह्यन्ते।

[ बृ० १ । ४ । १० ] इति ॥ एवमाद्य आत्मत्वोपगमा द्रष्टव्याः । ग्राहयन्ति चात्मत्वेनैवेश्वरं वेदान्तवाक्यानि—"एष त आत्मा सर्वान्तरः" [ बृ० ३ । ४ । १ ] "एष त आत्मान्तर्याम्यमृतः" [ बृ० ३ । ३–२३ ] "तत्सत्यं स आत्मा तत्त्वमसि" [ छां० ६ । ८–१६ ] इत्येवमादीनि ॥ यदुक्तं प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यतीति ॥ तदयुक्तम् ॥ गौणत्वप्रसङ्गाद्, वाक्यवैरूप्याच्च ॥ यत्र हि प्रतीकदृष्टिरभिप्रेयते, सकृदेव तत्र वचनं भवति । यथा—"मनो ब्रह्म" [ छां० ३ । १८ । १ ] "आदित्यो ब्रह्म" [ छां० ३ । १९ । १ ] इत्यादि । इह पुनस्त्वमहमस्म्यहं च त्वमसीत्याह । अतः प्रतीकश्रुतिवैरूप्यादभेदप्रतिपत्तिः, भेददृष्टचपवादाच्च । तथाहि "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद" [ बृ० १ । ४ । १० ] "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" [ बृ० ४ । ४ । १९ ] "सर्वन्तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" [ बृ० ४ । ५ । ७ ] इत्येवमाद्या भूयसी श्रुतिर्भेददर्शनमपवदति॥ यत्तूक्तं न विरुद्धगुणयोरन्योन्यात्मत्वसम्भव इति ॥ नायं दोषः ॥ विरुद्धगुणताया मिथ्यात्वोपपत्तेः॥ यत्पुनरुक्तमीश्वराभावप्रसङ्ग इति ॥ तदसत् ॥ शास्त्रप्रामाण्यादनभ्युपगमाच्च । न हीश्वरस्य संसार्यात्मत्वं प्रतिपाद्यते इत्यभ्युपगच्छामः॥ किं तर्हि संसारिणः संसारि-

रत्नप्रभा ।

ईश्वरस्य जीवत्वं प्रतिपाद्यं, येनेश्वराभावः स्यात् । किन्तु जीवस्येश्वरत्वम् । न चैवमधिकार्यभावः । एकत्वप्रबोधात् । प्रागधिकारिभेदाङ्गीकारादित्याह—यत्पुनरुक्तमित्यादिना ॥ वेदसत्यत्वश्रद्धालुः शंकते—

भामती ।

एवेति प्राप्तम् । एवं प्राप्तेऽभिधीयते—श्वेतकेतोरात्मैव परमेश्वरः प्रतिपत्तव्यो न तु श्वेतकेतोर्व्यतिरिक्तः परमेश्वरः । भेदे हि गौणत्वापत्तिर्न च मुख्यसंभवे गौणत्वं युक्तम् । अपि च प्रतीकोपदेशे सकृद्वचनं तु प्रतीयते भेददर्शननिन्दा च । अभ्यासे हि भूयस्त्वमर्थस्य भवति, नाल्पत्वमतिदवीय एवोपचरितत्वम्। तस्मात्पौर्वापर्यालोचनया श्रुतेस्तावज्जीवस्य परमात्मता वास्तवीत्येतत्परता लक्ष्यते । न च मानान्तरविरोधादत्राप्रामाण्यं श्रुतेः । न च मानान्तरविरोध इत्यादि तु सर्वमुपपादितं प्रथमेऽध्याये । निरंशस्यापि चानाद्यनिर्वाच्यविद्यातद्वासनासमारोपितविविधप्रपञ्चात्मनः सांशस्येव कस्यचिदंशस्याग्रहणाद्विभ्रम इव परमार्थस्तु न विभ्रमो नाम कश्चिन्न च संसारो नाम । किंतु सर्वमेतत्सर्वानुपपत्तिभाजनत्वेनानिर्वचनीय-

आनन्दगिरीय—न्यायनिर्णयः ।

सूत्रावयवमवशिष्टं व्याचष्टे—ग्राहयन्तीति । परोक्तमनूद्य दूषयति- यदुक्तमित्यादिना । एकत्वश्रुतीनामपूर्वार्थत्वफलवत्त्वाभ्यां तात्पर्यसिद्धेर्मुख्यवृत्तिसंभवे गौणत्वायोगाद्द्वैतश्रुतीनां तल्लिङ्गानां च तद्वैपरीत्यात्कल्पितभेदालम्बनत्वान्मुख्यमेव जीवब्रह्मणोरैक्यमित्यर्थः । इतश्च नेदं प्रतीकदर्शनमित्याह—वाक्येति । भेदस्य निन्द्यमानत्वाच्चाभेदस्यैव प्रतिपाद्यतेत्याह—भेदेति । विरुद्धस्वभावत्वाद्भेदो जीवब्रह्मणोरित्युक्तमनूद्य प्रत्याह—यत्त्विति । बिम्बप्रतिबिम्बवदुपाधिकृतो विरुद्धधर्माध्यासो न वास्तवस्तथा च तात्त्विकमैक्यमित्यर्थः । अभेदेऽपि संसार्यात्मत्वमीश्वरस्य संसारिणो वा तदात्मत्वमिति विकल्प्याऽऽद्ये यद्दूषणं तदनुभाष्य दूषयति- यत्पुनरिति । अनभ्युपगमं विवृणोति—न हीति । द्वितीयं प्रश्नपूर्वकमङ्गीकरोति—किमिति । विरुद्धा-

त्वापोहेनेश्वरात्मत्वं प्रतिपिपादयिषितमिति । एवं च सत्यद्वैतेश्वरस्याऽपहतपाप्मत्वादिगुणता । विपरीतगुणता त्वीश्वरस्य मिथ्येति व्यवतिष्ठते ॥ यदप्युक्तमधिकार्यभावः प्रत्यक्षादिविरोधश्चेति ॥ तदप्यसत् ॥ प्राक् प्रबोधात्संसारित्वाभ्युपगमात्, तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्य । "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कम्पश्येद्" [बृ० २ । ४ । १४] इत्यादिना हि प्रबोधे प्रत्यक्षाद्यभावं दर्शयति । प्रत्यक्षाद्यभावे श्रुतेरप्यभावप्रसङ्ग इति चेत् ॥ न ॥ इष्टत्वाद् ॥ अत्र "पिताऽपिता भवति" [बृ० ४ । ३ । २२ ] इति ह्युपक्रम्य "वेदा अवेदाः" [ बृ० ४ । ३ । २२ ] इति वचनादिष्यत एवास्माभिः श्रुतेरप्यभावः प्रबोधे । कस्य पुनरयमप्रबोध इति चेद्, यस्त्वं पृच्छसि तस्य ते इति वदामः ॥ नन्वहमीश्वर एवोक्तः श्रुत्या ॥ यद्येवं प्रतिबुद्धोऽसि, नास्ति कस्यचिदप्रबोधः । योऽपि दोषश्चोद्यते कैश्चिदविद्यया किलाऽऽत्मनः सद्वितीयत्वादद्वैतानुपपत्तिरिति, सोऽप्येतेन प्रत्युक्तः ॥ तस्मादात्मन्येवेश्वरे मनो दधीत ॥ ॥ ३ ॥ इत्यात्मत्वोपासनाधिकरणम् ॥ २ ॥

## न प्रतीकेन हि सः ॥ ४ ॥ (३) ॥

---

रत्नप्रभा ।

प्रत्यक्षाद्यभाव इति ॥ वर्णेषु क्रमस्वरयोरभावादुपलब्धध्वनिस्थयोरारोपो वाच्यः । तथा चारोपितक्रमस्वरविशिष्टवर्णात्मकवेदस्य मिथ्यात्वं दुर्वारम् । वादिनां सत्यत्वाग्रहस्त्वविद्याविजृम्भित इति वेदसत्यत्वाभावो न दोष इत्याह-नेति ॥ अविद्यामाक्षिपति-कस्येति । प्रश्नलिंगेन त्वय्येव तस्याः सिद्धत्वादाक्षेपानुपपत्तिरित्याह-यस्त्विति ॥ अज्ञानमूलत्वात् प्रश्नादेरिति भावः ॥ सर्वज्ञाभिन्ने मयि कथमज्ञानमिति शङ्कते-नन्विति ॥ अभेदज्ञानात् प्राक् चिन्मात्रस्य तवैव अज्ञानाश्रयत्वमनुभवसिद्धाज्ञानस्य अपलापायोगात् । ज्ञाने त्वनिर्वाच्यस्य तस्य बाधान्नाश्रयापेक्षेत्याह-यद्येवमिति ॥ अनिर्वाच्यत्वे दोषान्तरमपि निरस्तमित्याह-योऽपीति ॥३॥(२)॥ न प्रतीकेन हि सः ॥ उभयथा ध्यानसम्भवात् संशयः-यथा ब्रह्मण्य-

भामती ।

मिति युक्तमुत्पश्यामः । तदनेनाभिसंधिनोक्तम्-यद्येवं प्रतिबुद्धोऽसि नास्ति कस्यचिदप्रतिबोध इति। अन्येऽप्याहुः-'यद्यद्वैते न तोषोऽस्ति मुक्त एवासि सर्वदा' इति । अतिरोहितार्थमन्यदिति ॥ ३ ॥ (२)॥ न प्रतीकेन हि सः । यथा हि शास्त्रोक्तं शुद्धमुक्तस्वभावं ब्रह्मात्मत्वेनैव जीवेनोपास्यतेऽहं ब्रह्मास्मि

आनन्दगिरीय-न्यायनिर्णयः ।

शङ्कान्या जीवस्य ब्रह्मत्वे प्रतिपाद्ये विरुद्धधर्मत्वमुक्तमसिद्धमेवेति फलितमाह-एवं चेति । संसारिणः संसारित्वापोहेन ब्रह्मत्वे साध्ये परोक्तमनूद्य निरस्यति-यदपीति । अधिकार्यभावादिरेकत्वज्ञानात्पूर्वमूर्ध्वं वेति विकल्प्याऽऽद्यं निराह-प्रागिति । द्वितीयमङ्गीकरोति-यत्रेति । श्रुतिश्रद्धालुतया शङ्कते-प्रत्यक्षादीति। तत्त्वज्ञानादूर्ध्वं श्रुत्यभावस्येष्टत्वान्नानिष्टापत्तिरित्याह-नेष्टत्वादिति । तदेव स्पष्टयति-अत्रेति । गूढाभिप्रायः सन्पृच्छति-कस्येति । यस्य भ्रान्तिस्तस्याज्ञानमित्याह-यस्त्वमिति । स्वाभिप्रायं पूर्ववादी प्रकटयति-नन्विति । अविद्यातज्जभ्रान्त्योरनिर्वाच्यत्वाद्बोधे सति तयोरसत्त्वान्नाऽऽश्रयापेक्षेत्याह-यद्येवमिति । अनिर्वाच्यत्वादविद्यायाश्चोद्यान्तरमपि निरस्तमित्याह-योऽपीति । अभेदश्रुतीनां सिद्धे मुख्यार्थत्वे फलितमुपसंहरति-तस्मादिति ॥ ३ ॥ ( २ )॥ आत्मत्वमतिरीश्वरे कार्येत्युक्तम् । इदानीं प्रतीकविशेषणस्यापीश्वरस्याऽऽत्मत्वात्तद्द्वारा प्रतीकेष्वात्मत्वधीरिति प्राप्ते प्रत्याह-न प्रतीक इति । प्रतीकोपासना-

"मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्म" [छां० ३।१८।१] इति, तथा–"आदित्यो ब्रह्मेत्यादेशः" [ छां० ३ । १९ । १ ] "स यो नाम ब्रह्मेत्युपास्ते" [ छां० ७ । १ । ५ ] इत्येवमादिषु प्रतीकोपासनेषु संशयः–किं तेष्वप्यात्मग्रहः कर्तव्यो न वेति ॥ किं तावत्प्राप्तम् ॥ तेष्वप्यात्मग्रह एव युक्तः ॥ कस्मात् ॥ ब्रह्मणः श्रुतिष्वात्मत्वेन प्रसिद्धत्वात् । प्रतीकानामपि ब्रह्मविकारत्वाद्ब्रह्मत्वे सत्यात्मत्वोपपत्तेरिति ॥ एवं प्राप्ते ब्रूमः ॥ न प्रतीकेष्वात्ममतिं बध्नीयात् । न हि स उपासकः प्रतीकानि व्यस्तान्यात्मत्वेनाकलयेत् ॥ यत्पुनर्ब्रह्मविकारत्वात्प्रतीकानां

रत्नप्रभा ।

भेदसत्त्वादहंग्रह उक्तः एवं प्रतीकेष्वपि ब्रह्मविकारितया जीवाभिन्नब्रह्माभिन्नत्वाद् जीवाभेदसत्त्वेन अहंग्रहः कार्य इति दृष्टान्तेन पूर्वपक्षः । अत्र प्रतीकोपास्तीनामहंग्रहोपास्तिभिरविशेषः, सिद्धान्ते तु विशेषसिद्धिरिति फलम् । एतदारभ्याधिकरणत्रयस्य प्रासंगिकी पादसंगतिः ॥ ब्रह्मैक्यध्यानप्रसङ्गागतत्वादिति विवेकः । किं प्रतीकेष्वात्मत्वानुभवबलादहंग्रह–उत–वस्तुतः । जीवाभेदसत्त्वात् । नाद्यः–इत्याह–न हि स इति ॥ नानुभवति इत्यर्थः ॥ द्वितीयमप्यसिद्ध्या दूषयति–यत्पुनरित्यादिना ॥ विकारस्य ब्रह्मणा

भामती ।

तत्त्वमसि श्वेतकेतो इत्यादिषु तत्कस्य हेतोर्जीवात्मनो ब्रह्मरूपेण तात्त्विकत्वादद्वितीयमिति श्रुतेश्च । जीवात्मानश्चाविद्यादर्पणा यथा ब्रह्मप्रतिबिम्बकास्तथा यत्रयत्र मनो ब्रह्मादित्यो ब्रह्मेत्यादिषु ब्रह्मदृष्टेरुपदेशस्तत्र सर्वत्राहं मन इत्यादि द्रष्टव्यं ब्रह्मणो मुख्यमात्मत्वमिति । उपपन्नं च मनःप्रभृतीनां ब्रह्मविकारत्वेन तादात्म्यम् । घटशरावोदञ्चनादीनामिव मृद्विकाराणां मृदात्मकत्वम् । तथा च तादृशानां प्रतीकोपदेशानां क्वचित् कस्यचिद्विकारस्य प्रविलयावगमाद्भेदप्रपञ्चप्रविलयपरत्वमेवेति. प्राप्त उच्यते–न तावदहं ब्रह्मेत्यादिभिर्यथाहङ्कारास्पदस्य ब्रह्मात्मत्वमुपदिश्यते एवं मनो ब्रह्मेत्यादिभिरहङ्कारास्पदत्वं मनःप्रभृतीनां, किंत्वेषां ब्रह्मत्वेनोपास्यत्वम् । अहङ्कारास्पदस्य ब्रह्मतया ब्रह्मत्वेनोपासनीयेषु मनःप्रभृतिष्वप्यहङ्कारास्पदत्वेनोपासनमिति चेत् । न। एवमादिष्वहमित्यश्रवणात् । ब्रह्मात्मतया त्वहङ्कारास्पदत्वकल्पने तत्प्रतिबिम्बस्येव तद्विकारान्तरस्याप्याकाशादेर्मनःप्रभृतिषु ग्रासनप्रसङ्गः । तस्माद्यस्य यन्मात्रात्मतयोपासनं विहितं तस्य तन्मात्रात्मतयैव प्रतिपत्तव्यं 'यावद्वचनं वाचनिकम्' इतिन्यायात् । नाधिकमध्याहर्तव्यमतिप्रसङ्गात् । न च सर्वस्य वाक्यजातस्य प्रपञ्चस्य विलयः प्रयोजनम् । तदर्थत्वे हि मन इति प्रतीकग्रहणमनर्थकं विश्वमिति वाच्यं यथा 'सर्वं खल्विदं ब्रह्म' इति । न च सर्वोपलक्षणार्थं मनोग्रहणं युक्तम्।मुख्यार्थसंभवे लक्षणाया अयोगात्। आदित्यो ब्रह्मेत्यादीनां चानर्थक्यापत्तेः । न ह्युपासकः प्रतीकानीति । अनुभवाद्वा प्रतीकानां मनःप्रभृ-

आनन्दगिरीय–न्यायनिर्णयः ।

न्युदाहृत्योपास्तिषूभयथादृष्टेः संशयमाह–मन इत्यादिना । जीवब्रह्माभेदं पूर्वोक्तमुपजीव्य ब्रह्मदृष्टिभाक्षु प्रतीकेषु ब्रह्माभिन्नजीवदृष्टिरहमिति कार्येति प्रश्नपूर्वकं पूर्वपक्षमाह–किं तावदिति । अत्र प्रासङ्गिकाहंमतिनिरासेन प्रतीकोपास्तिषु प्रयोगभेदोक्त्या पादादिसंगतिः । पूर्वपक्षे प्रतीकोपास्तीनामहंग्रहोपास्तिभिरविशेषः । सिद्धान्ते विशेषः सिध्यतीत्यङ्गीकृत्य पूर्वपक्षे हेतुं पृच्छति–कस्मादिति । प्रतीकेष्वात्मत्वग्रहे तेषामात्मत्वोपपत्तिहेतुमाह–ब्रह्मण इति । तस्याऽऽत्मत्वेऽपि तेषां कथमात्मत्वं तत्राऽऽह–प्रतीकानामिति । ब्रह्मधीयुक्तानि प्रतीकान्यहमिति ग्राह्याणि ब्रह्माभिन्नत्वात्तद्वदित्यर्थः । द्विविधोपास्तिष्वविशेषे प्राप्ते सिद्धान्तमाह—एवमिति । न प्रतीकेष्वात्ममतिं कुर्यादैक्यचोदनाभावे सति स्वतोभिन्नत्वादुद्गीथादिवदित्याह–नेत्यादिना । यत्तु ब्रह्मरूपत्वादहमिति ग्राह्याणीति तत्र किमात्मत्वानुभवादात्मत्वे ग्राह्याणि किं वा मानान्तरसिद्धत्वाद्वाऽऽद्य इत्याह–न हीति । द्वितीयमनूद्य दूषयति–यदिति । प्रसङ्गमेव प्रकटयति ।

ब्रह्मत्वं तत्रश्चात्मत्वमिति ॥ तदसत् ॥ प्रतीकाभावप्रसङ्गात् ॥ विकारस्वरूपोपमर्देन हि नामादिजातस्य ब्रह्मत्वमेवाश्रितं भवति । स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वमात्मग्रहो वा । न च ब्रह्मण आत्मत्वाद्ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्प्या । कर्तृत्वाद्यनिराकरणात् । कर्तृत्वादिसर्वसंसारधर्मनिराकरणेन हि ब्रह्मण आत्मत्वोपदेशः । तदनिराकरणेन चोपासनाविधानम् ॥ अतश्चोपासकस्य प्रतीकैः समत्वादात्मग्रहो नोपपद्यते । न हि रुचकस्वस्तिकयोरितरेतरात्मत्वमस्ति । सुवर्णात्मनैव तु ब्रह्मात्मत्वेनैकत्वे प्रतीकाभावप्रसंगमवोचाम ॥ अतो न प्रतीकेष्वात्मदृष्टिः क्रियते ॥ ४ ॥ इति प्रतीकाधिकरणम् ॥ ३ ॥

रत्नप्रभा ।

स्वरूपैक्यायोगाद् बाधेनैक्यं वाच्यम् । प्रतीकबाधे चोपास्तिविधिर्न स्यादित्यर्थः ॥ किञ्च कर्तृत्वाद्यबाधेनोपास्तिविधिप्रवृत्तिर्वाच्या । बाधे तदयोगात् ॥ तथा च बाधमूलब्रह्मैक्यज्ञानं द्वारीकृत्य प्रतीकेष्वहंग्रहोपास्तिकल्पना न युक्ता । बाधविरोधादित्याह—न च ब्राह्मण इति । अतो जीवप्रतीकयोः स्वरूपभेदादहंग्रहे विध्यश्रवणाच्च नाहंग्रह इति फलितमाह—अतश्चेति ॥ यथा—रुचकस्वस्तिकयोः सुवर्णात्मनैक्येऽपि मिथोनैक्यं, तथा जीवप्रतीकयोः ब्रह्मात्मनैक्येऽपि भेदः समः । यदि च धर्मिव्यति-

भामती ।

तीनामात्मत्वेनाकलनं श्रुतेर्वा, न त्वेतदुभयमस्तीत्यर्थः । प्रतीकाभावप्रसंगादिति । ननु यथावच्छिन्नस्याहङ्कारास्पदस्यानवच्छिन्नब्रह्मात्मतया भवत्यभाव एवं प्रतीकानामपि भविष्यतीत्यत आह—स्वरूपोपमर्दे च नामादीनामिति । इह हि प्रतीकान्यहंकारास्पदत्वेनोपास्यतया प्रधानत्वेन विधित्सितानि । न तु तत्त्वमसीत्यादावहंकारास्पदमुपास्यमवगम्यते । किंतु सर्पत्वानुवादेन रज्जुतत्त्वज्ञापन इवाहंकारास्पदस्यावच्छिन्नस्य प्रविलयोऽवगम्यते । किमतो यद्येवम् । एतदतो भवति—प्रधानीभूतानां न प्रतीकानामुच्छेदो युक्तो न च तदुच्छेदे विधेयस्याप्युपपत्तिरिति। अपि च न च ब्रह्मण आत्मत्वादिति । न ह्युपासनविधानानि जीवात्मनो ब्रह्मस्वभावप्रतिपादनपरैस्तत्त्वमस्यादिसंदर्भैरेकवाक्यभावमापद्यन्ते येन तदेकवाक्यतया ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्पेत भिन्नप्रकरणत्वात् । तथा च तत्र यथालोकप्रतीतिव्यवस्थितो जीवः कर्ता भोक्ता च संसारी न ब्रह्मेति कथं तस्य ब्रह्मात्मतया ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिरुपदिश्येतेत्यर्थः । अतश्चोपासकस्य प्रतीकैः समत्वादिति । यद्यप्युपासको जीवात्मा न ब्रह्मविकारः, प्रतीकानि तु

आनन्दगिरीय—न्यायनिर्णयः ।

विकारेति । तथाऽपि को दोषस्तत्राऽऽह—स्वरूपेति । वस्तुवृत्तेन विकाररूपेण नामादीनां ब्रह्मत्वायोगाज्जीवत्वलयेन जीवस्य ब्रह्मत्वोक्तिवत्प्रतीकत्वलयेन तेषामपि ब्रह्मत्वोक्तावालम्बनाभावादुपास्तिविधिर्न स्यादित्यर्थः । यत्तु ब्रह्मत्वे सत्यात्मत्वमिति तत्राऽऽह—न चेति । प्रतीकोपदेशेषु कथं कर्तृत्वाद्यनिराकरणं तदाह—कर्तृत्वादिति । तन्निराकरणे तद्विधिरेव न स्यादिति भावः । प्रतीकानां जीवस्य च परिच्छिन्नतया साम्यं गृहीत्वा फलितमाह—अतश्चेति । सत्यपि तुल्यत्वे किमिति जीवस्य तेषु विधिवशादहंग्रहो न स्यात्तत्राऽऽह—न हीति । स्वरूपेणैक्याभावेऽपि रुचकस्वस्तिकयोः सुवर्णात्मनैक्यवदिहापि ब्रह्मात्मनैक्यादहंग्रहः स्यादित्याशंक्याऽऽह—सुवर्णेति । विकाररूपतिरस्कारेणैक्ये न प्रतीकतेत्युक्तमित्यर्थः । रुचकस्वस्तिकयोरपि मिथोऽव्यावृत्तयोर्नानुवृत्तसुवर्णाद्यात्मत्वकल्पनामृते सिध्यतीति सिद्धवत्कृत्योपसंहरति—अत इति ॥ ४ ॥ ( ३ ) ॥ अहंग्रहोपासनेष्विव प्रतीकोपासनेष्वहंग्रहेणानुष्ठानं नेत्युक्तम् । इदानीं प्रतीकोपास-

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥ (४) ॥

तेष्वेवोदाहरणेष्वन्यः संशयः—किमादित्यादिदृष्टयो ब्रह्मण्यध्यसितव्याः किंवा ब्रह्मदृष्टिरादित्यादिष्विति ॥ कुतः संशयः ॥ सामानाधिकरण्ये कारणानवधारणात् ॥ अत्र हि ब्रह्मशब्दस्यादित्यादिशब्दैः सामानाधिकरण्यमुपलभ्यते । "आदित्यो ब्रह्म" [ छां० ३ । १९ । १ ] "प्राणो ब्रह्म" [ ( छां० ४ । १० । ५ ) ( कौषी० २ । २ ) ] "विद्युद्ब्रह्म" [ बृ० ५ । ७ । १ ] इत्यादिसमानविभक्तिनिर्देशात् ॥ न चात्राञ्जसं सामानाधिकरण्यमवकल्पते । अर्थान्तरवचनत्वाद्ब्रह्मादित्यादिशब्दानाम् । न हि भवति गौरश्व इति सामानाधिकरण्यम् ॥ ननु प्रकृतिविकारभावाद्ब्रह्मादित्यादीनां मृच्छरावादिवत्सामानाधिकरण्यं स्यात् ॥ नेत्यु-

---

रत्नप्रभा ।

रेकेण तयोरभावनिश्चयाद् वस्त्वैक्यं, तदोपासनोच्छेद उक्त इत्यर्थः ॥ ४ ॥ ( ३ ) ॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ एकविषयत्वं सङ्गतिः । प्रश्नपूर्वकं संशयबीजमाह—कुत इत्यादिना । सामानाधिकरण्यं श्रुतम् । तन्न तावन्मुख्यम् । ब्रह्मविकारयोर्गवाश्वयोरिवाभेदायोगात् । नापि प्रकृतिविकारभावनिबन्धनम् । वाक्यस्य विकारबाधेन ब्रह्मपरत्वापातात् । न चेष्टापत्तिः । "नाम ब्रह्मेत्युपासीत" इति विधिश्रुतिविरोधात्, परिमितनामग्रहणार्थैक्यापाताच्च । ब्रह्मपरत्वे सर्वं ब्रह्मेति वक्तव्यत्वाद् ॥ अतः परिशेषादध्यास एव सामानाधिकरण्यम् । अध्यासे च नियामकाभावात् संशय इत्यर्थः ॥ उत्कृष्टनिकृष्टयोरुत्कृष्टं-

भामती ।

मनःप्रभृतीनि ब्रह्मविकारास्तथाप्यवच्छिन्नतया जीवात्मनः प्रतीकैः साम्यं द्रष्टव्यम् ॥ ४ ॥ ब्रह्मदृष्टिरुत्कर्षात् । यद्यपि सामानाधिकरण्यमुभयथापि घटते तथापि ब्रह्मणः सर्वाध्यक्षतया फलप्रसवसामर्थ्येन फलवत्त्वात्प्राधान्येन तदेवादित्यादिदृष्टिभिः संस्कर्तव्यमित्यादित्यादिदृष्टयो ब्रह्मण्येव कर्तव्या न तु ब्रह्मदृष्टिरादित्यादिषु । न चैवंविधेऽवधृते शास्त्रार्थे निकृष्टदृष्टिर्नोत्कृष्ट इति लौकिको न्यायोऽपवादाय प्रभवत्यागमविरोधेन तस्यैवापोदितत्वादिति पूर्वपक्षसंक्षेपः । सत्यं सर्वाध्यक्षतया फलदातृत्वेन ब्रह्मण एव सर्वत्र वास्तवं प्राधान्यं तथापि शब्दगत्यनुरोधेन क्वचित्कर्मण एव प्राधान्यमवसीयते । यथा 'दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः' 'चित्रया यजेत पशुकामः' इत्यादौ । अत्र हि सर्वत्र यागाद्याराधिता देवतैव फलं प्रयच्छतीति स्थापितं तथापि शब्दतः कर्मणः करणत्वावगमने फलवत्त्वप्रतीतेः प्राधान्यम् । क्वचिद्द्रव्यस्य यथा व्रीहीन्प्रोक्षतीत्यादौ । तदुक्तं—'यैस्तु द्रव्यं संचिकीर्ष्यते गुणस्तत्र प्रतीयते' इति । तदिह यद्यपि सर्वाध्यक्षतया वस्तुतो ब्रह्मैव फलं प्रयच्छति तथापि शास्त्रं ब्रह्मबुद्ध्याऽऽदित्यादौ प्रतीक उपास्यमाने ब्रह्म फलाय कल्पते इत्यभिवदति किंवादित्यादिबुद्ध्या ब्रह्मैव विषयीकृतं फलायेत्युभयथापि ब्रह्मणः सर्वाध्यक्षस्य

आनन्दगिरीय-न्यायनिर्णयः।

नेष्वेव क किंदृष्टिरध्यस्यतामिति संदिहानं प्रत्याह—ब्रह्मदृष्टिरिति । एकविषयत्वेनाधिकरणयोः संगतिं मन्वानो विषयसंशयौ दर्शयति—तेष्वेवेति । प्रश्नपूर्वकं संशयबीजमाह—कुत इति । उक्तमेव व्यक्तीकर्तुं सामानाधिकरण्यधियं तावद्दर्शयति—अत्रेति । तथाऽपि यथाकथंचिदस्य सामानाधिकरण्यस्य संभवे कुतः संशयसिद्धिरित्याशंक्य सोऽयमितिवदेकत्वनिमित्तं वा प्रकृतिविकारत्वनिमित्तं वा समारोपकृतं वा तदिति विकल्प्याऽऽद्यं दूषयति—न चेति । भिन्नार्थशब्देषु तदभावमुदाहरति—न हीति । द्वितीयमादत्ते—नन्विति । उपास्तिविरोधान्नैवमित्याह—नेतीति । प्रविलयपरमेव वाक्यं नोपास्तिपरमित्याशंक्योपासीते-

च्यते ॥ विकारप्रविलयो ह्येवं प्रकृतिसामानाधिकरण्यात्स्यात् । ततश्च प्रतीकाभावप्रसङ्गमवोचाम । परमात्मवाक्यश्चेदं तदानीं स्यात् । ततश्चोपासनाधिकारो बाध्येत, परिमितविकारोपादानं च व्यर्थम् ॥ तस्माद्ब्रह्मणोऽग्निर्वैश्वानर इत्यादिवदन्यतरत्रान्यदृष्टयध्यासे सति क किं दृष्टिरध्यस्यतामिति संशयः ॥ तत्रानियमः ॥ नियमकारिणः शास्त्रस्याभावादिति ॥ एवं प्राप्तम् ॥ अथ वाऽऽदित्यादिदृष्टय एव ब्रह्मणि कर्तव्या इति ॥ एवं प्राप्तम् ॥ एवं ह्यादित्यादिदृष्टिभिर्ब्रह्मोपासनं भवति । ब्रह्मोपासनञ्च फलवदिति शास्त्रमर्यादा ॥ तस्मान्न ब्रह्मदृष्टिरादित्यादिष्विति ॥ एवं प्राप्ते ब्रूमः ॥ ब्रह्मदृष्टिरेवादित्यादिषु स्यादिति ॥ कस्मात् ॥ उत्कर्षात्-एवमुत्कर्षेणादित्यादयो दृष्टा भवन्ति । उत्कृष्टदृष्टेस्तेष्वध्यासात् ॥ तथा च लौकिको न्यायोऽनुगतो भवति । उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यसितव्येति लौकिको न्यायः । यथा-राजदृष्टिः क्षत्तरि । स चानुसर्तव्यः । विपर्यये प्रत्यवायप्रसङ्गात् । न हि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः श्रेयसे स्यात् ॥ ननु शास्त्रप्रामाण्यादनाशंकनीयोऽत्र प्रत्यवायप्रसङ्गः । न च लौकिकेन न्यायेन शा-

---

रत्नप्रभा।

मुपास्यं फलवत्त्वादिति न्यायो नियामक इत्यरुचेराह-अथ वेति । अत्र विकारदृष्टिभिर्ब्रह्मोपास्तिसिद्धिः फलं, सिद्धान्ते तु विकारदृष्ट्या ब्रह्मण उपास्यत्वे निकर्षप्राप्तौ सत्यां फलवत्त्वासिद्धेर्विकारा एवोत्कृष्टब्रह्मदृष्ट्योपास्या इति फलम् । किञ्च लौकिकन्यायाविरुद्धार्थसम्भवे विरुद्धार्थो न ग्राह्यः । प्रत्यवायप्रसङ्गात् ॥ किञ्च प्रथमश्रुतानामादित्यादिपदानामसञ्जातविरोधितया मुख्यार्थत्वग्रहो न्याय्यः । ब्रह्मशब्दे च दृष्टिलक्षणाग्रहः । तथा चादित्यादयो ब्रह्मदृष्ट्योपास्या इत्येव वाक्यार्थ इत्याह-तथा

भामती।-०

आनन्दगिरीय-न्यायनिर्णयः।

तिश्रुतिविरोधान्नैवमित्याह-परमात्मेति । प्रपञ्चप्रविलयद्वारा परमात्मपरत्वे वाक्यस्य कतिपयादित्यादिग्रहणमनर्थकम् । न च सर्वोपलक्षणार्थं तद्ग्रहणं मुख्यसंभवे लक्षणायोगादित्याह-परिमितेति । पक्षद्वयायोगात्परिशिष्टे तृतीये पूर्वोक्तः संशयः स्यादित्युपसंहरति-तस्मादिति । प्रासङ्गिकप्रकृतप्रतीकोपासनेषु स्वतन्त्रपुमर्थहेतुषु ब्रह्मदृष्ट्याऽनुष्ठानोक्त्या पादादिसंगतिः । पूर्वपक्षे लौकिकन्यायविरोधः । सिद्धान्ते तदविरोधः सिध्यतीत्यभिप्रेत्य पूर्वपक्षयति-तत्रेति । यथाऽऽत्यन्तिकभेदो नामादिष्वहंग्रहाभावे हेतुरुक्तस्तथा तेष्वेव ब्रह्मधीर्नियामकं न किंचिद्दृष्टं तस्मादनियम इत्यर्थः । उत्कृष्टनिकृष्टयोरुत्कृष्टमेवोपास्यं फलविशेषवत्त्वाद्राजादिवदित्याशंक्य साक्षात्पूर्वपक्षमाह-अथ वेति । आदित्यादिशब्दानां प्रथमश्रुतानामनुरोधेन चरमश्रुतं ब्रह्मपदं नेतव्यमिति चेन्न । तथा सति फलाभावापातादित्याह-ब्रह्मेति । पक्षद्वयेऽपि फलितमाह-तस्मादिति । आदित्यादिदृष्ट्या ब्रह्मोपास्यमिति प्राप्ते सिद्धान्तयति-एवमिति । नियमहेतुं प्रश्नपूर्वकमाह-कस्मादिति। हेत्वर्थं विवृणोति-एवमिति। उत्कृष्टनिकृष्टयोरुत्कृष्टस्य द्रष्टव्यत्वादादित्यादिदृष्ट्या ब्रह्मैवोपास्यमित्युक्तमाशंक्याऽऽह-तथा चेति। किं तदनुसरणेनेत्याशंक्याऽऽह-स चेति।प्रसङ्गमेव दृष्टान्तेन स्पष्टयति-न हीति। ब्रह्मण एव फलमत इतिन्यायात्फलदातृत्वात्तस्यैवाऽऽदित्यादिधीभिरुपास्यतेति शंकते-नन्विति।किंच,शास्त्रस्य स्वत एव प्रामाण्यान्न लौकिकन्यायापेक्षेत्याह-न चेति । ब्रह्मण एव फलदातृत्वेऽपि शास्त्रमादित्यादौ प्रतीके ब्रह्मधिया ध्येये तत्फलदमिति वा ब्रवीत्यादित्यादिधिया ब्रह्मण्युपास्ये वेति शास्त्रा-

त्वीया दृष्टिर्नियन्तुं युक्तेति ॥ अत्रोच्यते ॥ निर्धारिते शास्त्रार्थे एतदेवं स्यात् । सन्दिग्धे तु तस्मिंस्तन्निर्णयं प्रति लौकिकोऽपि न्याय आश्रीयमाणो न विरुध्यते । तेन चोत्कृष्टदृष्ट्यध्यासे शास्त्रार्थेऽवधार्यमाणे निकृष्टदृष्टिमध्यस्य प्रत्यवेयादिति श्लिष्यते । प्राथम्याच्चादित्यादिशब्दानां मुख्यार्थत्वमविरोधाद् ग्रहीतव्यम् ॥ तैः स्वार्थवृत्तिभिरवरुद्धायां बुद्धौ पश्चादवतरतो ब्रह्मशब्दस्य मुख्यवृत्त्या सामानाधिकरण्यासम्भवाद्ब्रह्मदृष्टिविधानार्थतैवावतिष्ठते । इतिपरत्वादपि ब्रह्मशब्दस्यैष एवार्थो न्याय्यः । तथाहि "ब्रह्मेत्यादेशः" [ छां० ३ । १९ । १ ] "ब्रह्मेत्युपासीत" [ छां० ३ । १८ । १ ] "ब्रह्मेत्युपास्ते" [ छां० ( ३ । १९ । ४ ) ( ७ । २ । २ ) ( ७ । ४ । ३ ) ] इति च सर्वत्रेतिपरं ब्रह्मशब्दमुच्चारयति शुद्धांस्त्वादित्यादिशब्दान् । ततश्च यथा शुक्तिकां रजतमिति प्रत्येतीत्यत्र शुक्तिवचन एव शुक्तिकाशब्दः । रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः । प्रत्येत्येव हि केवलं रजतमिति, न तु तत्र रजतमस्ति । एवमत्राप्यादित्यादीन्ब्रह्मेति प्रतीयादिति गम्यते । वाक्यशेषोऽपि च द्वितीयानिर्देशेनादित्यादीनेवोपास्तिक्रियया व्याप्यमा-

रत्नप्रभा ।

चेति । इतश्च तथा वाक्यार्थ इत्याह—प्राथम्याच्चेति । ब्रह्मशब्दस्यैव दृष्ट्यर्थत्वे हेत्वन्तरमाह—इतिपरत्वादिति । इति शब्दशिरस्कः शब्दः समभिव्याहृतक्रियालक्षक इति लोके प्रसिद्धमित्यर्थः । द्वितीयाश्रुतेश्चादित्यादीनामेवोपास्तिकर्मत्वमित्याह—वाक्यशेषोऽपीति । उत्कृष्टमेवोपास्यमिति न्यायमुक्त-

भामती ।

फलदानोपपत्तेः।शास्त्रार्थसंदेहे लोकानुसारतो निश्चीयते । तदिदमुक्तम्—निर्धारिते शास्त्रार्थ एतदेवं स्यादिति । न केवलं लौकिको न्यायो निश्चये हेतुरपि तु आदित्यादिशब्दानां प्राथम्येन मुख्यार्थत्वमपीत्याह—प्राथम्याच्चेति । इतिपरत्वमपि ब्रह्मशब्दस्यामुमेव न्यायमवगमयति । तथाहि—स्वरसवृत्त्या आदित्यादिशब्दा यथा स्वार्थे वर्तन्ते तथा ब्रह्मशब्दोऽपि स्वार्थे वर्त्स्यति यदि स्वार्थोऽस्य विवक्षितः स्यात्, तथा चेतिपरत्वमनर्थकं तस्मादितिना स्वार्थात्प्रच्याव्य ब्रह्मपदं ज्ञानपरं स्वरूपपरं वा कर्तव्यम्। न च ब्रह्मपदमादित्यादिपदार्थ इति, प्रतीतिपर एवायमितिपरः शब्दो यथा गौरिति मे गवयोऽभवदिति । तथा च आदित्यादयो ब्रह्मेति प्रतिपत्तव्या इत्यर्थो भवतीत्याह—इतिपरत्वादपि ब्रह्मशब्दस्येति । शेषमतिरोहि-

आनन्दगिरीय—न्यायनिर्णयः ।

र्थसंदेहे लोकानुसारेण निर्धारणमित्याह—अत्रेति। लौकिकन्यायस्य निश्चयहेतुत्वे विपक्षे दोषमाह—तेनेति। न केवलं लौकिकन्यायो निश्चायकः किंत्वादित्यादिशब्दानां प्रथमश्रुतत्वेन मुख्यार्थत्वमपीत्याह—प्राथम्यादिति। ब्रह्मशब्दस्य धीपरत्वे युक्त्यन्तरमाह—इतिपरत्वादिति । तस्येतिपरत्वमेव स्फोरयति—तथाहीति । आदित्यादिशब्देषु वैलक्षण्यमाह—शुद्धानिति । अस्तु ब्रह्मशब्दस्येतिपरत्वमपरत्वमादित्यादिशब्दानां च शुद्धत्वं तथाऽपि कथं दृष्टिपरत्वार्थपरत्वव्यवस्थेत्याशंक्याऽऽह—ततश्चेति । रजतशब्दस्यापि शुक्तिशब्दवदर्थपरत्वं चेदितिशब्दयोगो व्यर्थः स्यादित्यर्थः । प्रतीतिश्चेत्तस्या निरालम्बनत्वायोगादस्त्येव रजतमपीत्याशङ्क्याऽऽह—प्रत्येत्येवेति । प्रतीतिराभासत्वान्न योग्यमालम्बनमस्तीत्यर्थः । लोकसिद्धमर्थं प्रकृते योजयति—एवमिति । किंचाऽऽदित्यादीनां द्वितीयाश्रुत्योपास्तिकर्मत्वेन प्राधान्यसिद्धेर्ब्रह्मशब्दस्य धीपरत्वमेवेत्याह—वाक्येति । उत्कृष्टनिकृष्टयोरुत्कृष्टमेवोपास्यं फलविशेषपरत्वाद्राजादिवदित्यु-

नान्दर्शयति—"स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्ते" [ छा० ३। १९।४ ] "यो वाचं ब्रह्मेत्युपास्ते" [ छां० ७।२।२ ] "यः सङ्कल्पं ब्रह्मेत्युपास्ते" [ छां ७।४।३ ] इतिं च ॥ यत्तूक्तं ब्रह्मोपासनमेवात्रादरणीयं फलवत्त्वायेति ॥ तदयुक्तम् ॥ उक्तेन न्यायेनादित्यादीनामेवोपास्यत्वावगमात् । फलं त्वतिथ्याद्युपासन इवादित्याद्युपासनेऽपि ब्रह्मैव दास्यति । सर्वाध्यक्षत्वात् । वर्णितश्चैतत्, "फलमत उपपत्तेः" [ व्या० सू० ३।२।३८ ] इत्यत्र । ईदृशश्चात्र ब्रह्मण उपास्यत्वं, यत्प्रतीकेषु तद्दृष्ट्यध्यारोपणं प्रतिमादिष्विव विष्ण्वादीनाम् ॥ ५ ॥ इति ब्रह्मदृष्ट्यधिकरणम् ॥ ४ ॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ (५) ॥

"य एवासौ तपति तमुद्गीथमुपासीत" [ छां० १।३।१ ] "लोकेषु पञ्चविधं सामोपासीत" [ छा० २।२।१ ] "वाचि सप्तविधं सामोपासीत" [ छां० २।८।१ ] "इयमेवर्गग्निः साम" [ छां० १।६।१ ] इत्येवमादिष्वङ्गावरुद्धेषूपासनेषु संशयः—किमादित्यादिषूद्गीथादिदृष्टयो

रत्नप्रभा ।

मनुवदति—यत्तूक्तमिति । द्वितीयेतिश्रुतिभ्यां लौकिकन्यायाच्चोक्तन्यायबाध इत्याह—तदिति । ब्रह्मणोऽनुपास्यत्वे कथं फलदातृत्वं तत्राह—फलं त्विति । किञ्च यद्दृष्ट्या विकारस्योत्कर्षः, तस्य ब्रह्मणोऽप्युपासनाविशेषणत्वेऽप्युपास्यत्वं चास्तीत्याह-ईदृशश्चेति ॥ ५ ॥ ( ४ ) ॥ आदित्यादीति । पृथिव्यग्न्यन्तरिक्षादित्यद्युसंज्ञेषु लोकेषु हिंकारप्रस्तावोद्गीथप्रतीहारनिधनैरंशैः पंचांशं साम। तैरेव आदिरिति,उपद्रव इति च,—भक्तिद्वयाधिकैः सप्तांशं सामेति भेदः । अत्र विशेषाज्ञानात् संशयः । पूर्ववदुत्कर्षानवधारणा-

भामती ।

तार्थम् ॥ ५ ॥ ( ४ ) ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ।

आनन्दगिरीय-न्यायनिर्णयः ।

क्तमनुवदति—यत्त्विति । आदित्यादीनामेवोपास्यत्वार्पकद्वितीयाश्रुतिविरुद्धमनुमानमित्याह—तदिति । कथं तर्हि फलसिद्धिरित्याशंक्य हेतोरन्यथासिद्धिमाह—फलं त्विति । धर्मस्यैव फलदत्वात्कुतो ब्रह्मणस्तथात्वं तत्राऽऽह—वर्णितं चेति । द्वितीयेतिशब्दश्रुतिभ्यामुत्कृष्टदृष्ट्या निकृष्टमुपास्यमितिन्यायानुगृहीताभ्यामुक्तानुमानभङ्गादसंजातविरोधित्वेन प्रथमश्रुता आदित्यादय एव चरमश्रुततया संजातविरोधाऽप्रत्ययमात्रपरब्रह्मशब्देनार्पितब्रह्मदृष्टिविशिष्टा विशेषणतयोपास्यब्रह्मसामर्थ्यलब्धफलविशेषा ध्येया भवन्तीति भावः । कथं तर्हीदं ब्रह्मोपासनमिति प्रसिद्धिस्तत्राऽऽह—ईदृशं चेति ॥५॥(४)॥ पूर्ववदुत्कर्षरूपविशेषानवधारणादनियमेन वा गीतित्वेन क्रियारूपोद्गीथादीनां फलसंनिकर्षेणोत्कर्षादादित्यादिषु तद्दृष्टिकरणे प्रथमनिर्दिष्टानामादित्यादिषु ब्रह्मदृष्टिवत्प्राथमिकादित्यादिषूद्गीथादिदृष्टिकरणे वा प्राप्ते प्रत्याह—आदित्यादीति । अङ्गाश्रितोपासनान्युदाहृत्य विशेषानुपलब्ध्या संशयमाह—य एवेत्यादिना। पृथिव्यग्न्यन्तरिक्षादित्यद्युसंज्ञकेषु लोकेषु हिंकारप्रस्तावोद्गीथप्रतिहारनिधनरूपं पञ्चप्रकारं सामोपास्यं लोकालोकदृष्ट्या तदुपास्यमित्यर्थः । वाचि सप्तविधमिति हिंकारप्रस्तावोंकारोद्गीथप्रतिहारोपद्रवनिधनरूपं सप्तप्रकारं साम वाच्युपास्यं वाग्दृष्ट्या सामोपास्यमित्यर्थः । प्रासङ्गिकाङ्गावबद्धोपासनेषु स्वतन्त्रफलेष्वनङ्गदृष्ट्याऽनुष्ठाननिरूपणात्पादादिसंगतिः ।

विधीयन्ते, किंवोद्गीथादिष्वादित्यादिदृष्टय इति ॥ तत्रानियमः ॥ नियमकारणाभावादिति प्राप्तम् । न ह्यत्र ब्रह्मण इव कस्यचिदुत्कर्षविशेषोऽवधार्यते । ब्रह्म हि समस्तजगत्कारणत्वादपहतपाप्मत्वादिगुणयोगाच्चादित्यादिभ्य उत्कृष्टमिति शक्यतेऽवधारयितुम्, न त्वादित्योद्गीथादीनां विकारत्वाविशेषात्किञ्चिदुत्कर्षविशेषावधारणे कारणमस्ति ॥ अथ वा नियमेनैवोद्गीथादिमतय आदित्यादिष्वध्यस्येरन् ॥ कस्मात् ॥ कर्मात्मकत्वादुद्गीथादीनाम् । कर्मणश्च फलप्राप्तिप्रसिद्धेरुद्गीथादिमतिभिरुपास्यमाना आदित्यादयः कर्मात्मकाः सन्तः फलहेतवो भविष्यन्ति ॥ तथा च "इयमेवर्गग्निः साम" इत्यत्र "तदेतदेतस्यामृच्यध्यूढं साम" [ छां० १ । ६ । १ ] इत्यृक्छब्देन पृथिवीं निर्दिशति, सामशब्देनाग्निम् । तच्च पृथिव्यग्न्योर्ऋक्सामदृष्टिचिकीर्षायामवकल्पते, न ऋक्सामयोः पृथिव्यग्निदृष्टिचिकीर्षायाम् ।

रत्नप्रभा ।

दनियम इति प्रत्युदाहरणेन पूर्वपक्षमाह—तत्रेति ॥ सिद्धरूपादित्यादिभ्यः कर्मरूपोद्गीथादीनां फलसन्निकर्षेणोत्कर्षाद् ब्रह्मवद्विशेषणत्वनियम इति दृष्टान्तेन मुख्यं पूर्वपक्षमाह—अथ वेति ॥ तत्तत्पक्षसिद्धिरेव पूर्वोत्तरपक्षफलं मन्तव्यम्। किञ्चानङ्गेष्वेवाङ्गदृष्टिरित्यत्र लिङ्गवाचिपदप्रयोगं लिङ्गमाह—तथा चेयमेवेति ॥ तदेतद् अग्न्याख्यं साम एतस्यां पृथिवीरूपायाम् ऋच्यध्यूढम्—उपरिस्थितमित्यर्थः ॥ ऋचि सामवत् पृथिव्यामग्निर्दृश्यते । अतः साम्यात् पृथिव्येवर्गग्निः सामेति ध्यानं विहितम् । तत्र यदि ऋक्सामात्मकयोः कर्माङ्गयोः पृथिव्यग्निदृष्टिः स्यात्, तदा पृथिव्यग्न्योर्ऋक्सामपदप्रयोगो न स्यादित्यत्र दृष्टान्त-

भामती ।

अथ वा नियमेनोद्गीथादिमतय आदित्यादिष्वध्यस्येरन्निति । सत्स्वपि आदित्यादिषु फलानुत्पादादुत्पत्तिमतः कर्मण एव फलदर्शनात्कर्मैव फलवत् । तथा चादित्यादिमतिभिर्यद्युद्गीथादिकर्माणि विषयीक्रियेरंस्तत आदित्यादिदृष्टिभिः कर्मरूपाण्यभिभूयेरन् । एवं च कर्मरूपेष्वसत्कल्पेषु कुतः फलमुत्पद्येत । आदित्यादिषु पुनरुद्गीथादिदृष्टावुद्गीथादिबुद्ध्योपास्यमाना आदित्यादयः कर्मात्मकाः सन्तः फलाय कल्पिष्यन्त इति । अत एव च पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोग उपपन्नो यतः पृथिव्यामृग्दृष्टिरध्यस्ताग्नौ च सामदृष्टिः । साम्नि पुनरग्निदृष्टौ ऋचि च पृथिवीदृष्टौ विपरीतं भवेत् । तस्मादप्येतदेव युक्तमित्याह—तथा चेयमेवेति । उपपत्त्यन्तरमाह—

आनन्दगिरीय-न्यायनिर्णयः ।

पूर्वपक्षे दृष्टिकरणस्य फलवत्त्वम् । सिद्धान्तेऽपि तदविरुद्धं सिध्यतीति स्वीकृत्य पूर्वपक्षमाह—तत्रेति । नियमकारिणः शास्त्रस्याभावादित्युक्तं व्यनक्ति—न हीति । वैधर्म्यदृष्टान्तं स्पष्टयति—ब्रह्मेति । अङ्गानङ्गयोरपि कस्यचिद्विशेषो गम्यतामित्याशंक्याऽऽह—न त्विति । कर्मरूपाणामुद्गीथादीनामुत्कर्षमानमुपेत्य साक्षात्पूर्वपक्षमाह—अथ वेति । नियमहेतुं पृच्छति—कस्मादिति । उद्गीथादिकर्माङ्गानां क्रियासमवायात्फलसाधनतयोत्कृष्टत्वादिति हेतुमाह—कर्मेति । किंच, सिद्धरूपादित्याद्यात्मना चेदुद्गीथादयो दृष्टास्तदा न फलहेतवः । यदा तूद्गीथादिदृष्ट्याऽऽदित्यादयो दृष्टास्तदा तेषामपि फलहेतुत्वं स्यादित्याह—उद्गीथादीति । अनङ्गेष्वेवाङ्गमतिकर्तव्यत्वं पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगादपि भातीत्याह—तथा चेति । तदेतदग्न्याख्यं सामैतस्यां पृथ्वीलक्षणायामृच्यध्यूढमुपरि श्रितमिति यावत् । उक्तमेव दृष्टान्तेन

क्षत्तरि हि राजदृष्टिकरणाद्राजशब्द उपचर्यते, न राजनि क्षत्तृशब्दः ॥ अपि च "लोकेषु पञ्चविधं सामोपासीत" [ छां० २।२।१ ] इत्यधिकरणनिर्देशाल्लोकेषु सामाध्यसितव्यमिति प्रतीयते । "एतद्गायत्रं प्राणेषु प्रोतम्" [ छां० २।११।१। ] इति चैतद्दर्शयति । प्रथमनिर्दिष्टेषु चादित्यादिषु चरमनिर्दिष्टं ब्रह्माध्यस्तम्-"आदित्यो ब्रह्मेत्यादेशः" [ छां० ३।१९।१ ] इत्यादिषु । प्रथमनिर्दिष्टाश्च पृथिव्यादयश्चरमनिर्दिष्टा हिङ्कारादयः "पृथिवी हिंकारः" [ छां० २।२।१ ] इत्यादिश्रुतिषु ॥ अतोऽनङ्गेष्वादिष्वंगमतिक्षेप इति ॥ एवं प्राप्ते ब्रूमः॥ आदित्यादिमतय एवांगेषूद्गीथादिषु क्षिप्येरन् ॥ कुतः ॥ उपपत्तेः ॥ उपपद्यते ह्येवमपूर्वसन्निकर्षादादित्यादिमतिभिः संस्क्रियमाणेषूद्गीथादिषु कर्मसमृद्धिः । "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" [ छां० १।१।१० ] इति च विद्यायाः कर्मसमृद्धिहेतुतां

रत्नप्रभा।

माह—क्षत्तरीति ॥ अतः प्रयोगान्यथानुपपत्त्या पृथिव्यग्न्योः ऋक्सामदृष्टिरित्यर्थः ॥ विषयसप्तम्या चैवमेवेत्याह—अपि चेति ॥ गायत्रसंज्ञं साम॥ किञ्च,पूर्वाधिकरणसिद्धान्तन्यायेऽप्येवमित्याह—प्रथमेति॥ अनङ्गबुद्ध्या—अङ्गान्युपास्यानीति सिद्धान्तयति—एवमिति ॥ उपास्तीनां हि कर्मसमृद्धिः फलं श्रूयते सा च ताभिरङ्गेषु संस्क्रियमाणेषु उपपद्यते । अङ्गानां समृद्ध्यनुकूलप्रकृतकर्मापूर्वजनकत्वादित्यर्थः ॥ ननु यत्रोपास्तीनां प्रकृतकर्मापूर्वसन्निकृष्टाङ्गद्वारापेक्षं फलं श्रुतं, तत्र फलोपपत्तये अङ्गानामुपास्यत्वं भवतु।

भामती।

अपि च लोकेष्विति । एवं खल्वधिकरणनिर्देशो विषयत्वप्रतिपादनपर उपपद्यते यदि लोकेषु सामदृष्टिरध्यस्येत नान्यथेति । पूर्वाधिकरणराद्धान्तोपपत्तिमत्रैवार्थे ब्रूते—प्रथमनिर्दिष्टेषु चेति । सिद्धान्तमत्र प्रक्रमते—आदित्यादिमतय एवेति । यद्युद्गीथादिमतय आदित्यादिषु क्षिप्येरंस्तत आदित्यादीनां स्वयमकार्यत्वादुद्गीथादिमतेस्तत्र वैयर्थ्यं प्रसज्येत । न ह्यादित्यादिभिः किंचित्क्रियते यद्विद्यया वीर्यवत्तरं भवेदादित्यादिमत्या विद्ययोद्गीथादिकर्मसु कार्येषु यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीत्यादित्यमतीनामुपपद्यते

आनन्दगिरीय—न्यायनिर्णयः।

स्पष्टयति—क्षत्तरीति । ऋचि पृथिवीदृष्टिः साम्नि चाग्निदृष्टिरिष्टा चेत्तदा प्रयोगवैपरीत्यं स्यात्तस्मात्पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगानुपपत्त्या तत्र कर्माङ्गभूतर्क्सामाध्याससिद्धिरित्यर्थः । इतश्चानङ्गेष्वङ्गमतिः कर्तव्येत्याह—अपि चेति । सप्तम्या लोकानां सामधीविषयत्वनिर्देशादित्याह—अधिकरणेति । अन्यत्रापि सप्तमीश्रुतेरनङ्गेष्वङ्गधीर्भातीत्याह—एतदिति । पूर्वाधिकरणसिद्धान्तन्यायेनाप्यनङ्गेष्वङ्गदृष्टिः शिष्टेत्याह—प्रथमेति । आदित्यादावुद्गीथादिधीकरणात्तस्य फलवत्त्वसिद्धिरिति प्राप्तमनूद्य सिद्धान्तयति—एवमिति । अनंगेष्वंगमतिरुक्ता, तथा चान्यथा नियमो निर्बीजत्वादयुक्त इति शङ्कते—कुत इति । नियमहेतुमवतार्य व्याकरोति—उपपत्तेरिति । यथा प्रोक्षणादिना व्रीह्यादिषु संस्कृतेषु कर्मापूर्वमुत्पद्यते तथा प्रकृतकर्मापूर्वसंनिधानादुद्गीथादीनामादित्यादिमतिभिस्तेषु संस्क्रियमाणेषु कर्मसमृद्धिरुपपद्यते तथा च कर्मसमृद्धिफलोपपत्तेरंगेष्वनंगमतिक्षेप इत्यर्थः । कर्मसमृद्धिरुपास्तिफलमित्येतदेवासिद्धमित्याशंक्याऽऽह—यदेवेति । यत्र कर्मसमृद्धिः फलं श्रूयते तत्रांगेष्वनंगमतिक्षेपोऽस्त्वादित्यादिमतिसंस्कृतानामंगानां कर्मातिशयहेतुत्वात्स्वतन्त्रफलेषु पुनरुपासनेषु कथं मतिक्षेपः स्यादिति विवेको नास्तीति शंकते—

दर्शयति । भवतु कर्मसमृद्धिफलेष्वेवम् । स्वतन्त्रफलेषु तु कथं "य एतदेवं विद्वाँल्लोकेषु पञ्चविधं सामोपास्ते" [ छां० २ । ३ । ३ ] इत्यादिषु । तेष्वप्यधिकृताधिकारात्प्रकृतापूर्वसन्निकर्षेणैव फलकल्पनायुक्ता, गोदोहनादिनियमवत् । फलात्मकत्वाच्चादित्यादीनामुद्गीथादिभ्यः कर्मात्मकेभ्य उत्कर्षोपपत्तिः । आदित्यादिप्राप्तिलक्षणं कर्मफलं शिष्यते श्रुतिषु । अपि च "ॐमित्येतदक्षरमुद्गीथमुपासीत" [ छां० १ । १ । १ ] "खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति" [ छां० १ । १ । १० ] इति चोद्गीथमेवोपास्यत्वेनोपक्रम्यादित्यादिमतीर्विदधाति ॥ यत्तूक्तमुद्गीथादिमतिभिरुपास्यमाना आदित्यादयः कर्मभूयं भूत्वा फलं करिष्यन्तीति ॥ तदयुक्तम् ॥ स्वयमेवोपासनस्य कर्मत्वात्फलवत्त्वोपपत्तेः । आदित्यादिभावेनापि च दृश्यमानानामुद्गीथादीनां कर्मात्मकत्वानपा-

रत्नप्रभा ।

तदनपेक्षलोकादिफलेषु तूपासनेषु कथमुपास्यविवेक इति शङ्कते—भवत्विति ॥ यथा स्वतन्त्रपशुफलस्यापि गोदोहनस्य अङ्गद्वारापेक्षयैव फलमिष्टं तद्वद् लौकिकादिफलेषूपासनेष्वपि कर्मापूर्वाङ्गद्वारैव फलकल्पना युक्ता॥ कर्माधिकृतस्यैवाङ्गाश्रितोपासनेष्वधिकाराद् अतोऽङ्गानामेवोपास्यत्वमिति समाधत्ते—तेष्वपीति ॥ उत्कर्षानवधारणादनियम इत्युक्तं निरस्यति—फलात्मेति॥ उपक्रमबलाच्चाङ्गमुपास्यमित्याह—अपि चेति॥ रसतमत्वादिगुणाद्युपसंख्यानमित्यर्थः॥ द्वितीयं पूर्वपक्षं दूषयति—यत्तूक्तमित्यादिना ॥ कर्मभूयं कर्मात्मकत्वं प्राप्येत्यर्थः ॥ सिद्धाऽऽदित्यात्मना कर्मणां दृष्टौ कर्मत्वहानिः स्यादित्यत आह—आदित्यादिभावेनेति ॥ [माणवकेऽग्निदृष्टिवदुद्गीथादिषु आदित्यादिधियो गौणत्वान्न कर्मत्वाभिभावकत्वमित्यङ्गेष्वनङ्गत्वधीरविरुद्धेत्या-

भामती ।

उद्गीथादिषु संस्कारकत्वेनोपयोगः। चोदयति—भवतु कर्मसमृद्धिफलेष्वेवमिति। यत्र हि कर्मणः फलं तत्रैवं भवतु यत्र तु गुणात्फलं तत्र गुणस्य सिद्धत्वेनाकार्यत्वात्करोतीत्येव नास्तीत्यत्र विद्यायाः क उपयोग इत्यर्थः। परिहरति—तेष्वपीति । न तावद्गुणः सिद्धस्वभावः कार्याय फलाय पर्याप्तः, मा भूत्प्रकृतकर्माभिनिवेशिनो यत्किंचित्फलोत्पादः, तस्मात्प्रकृतापूर्वसंनिवेशिनः फलोत्पाद इति तस्य क्रियमाणत्वेन विद्यया वीर्यवत्तरत्वोपपत्तिरिति । फलात्मकत्वाच्चादित्यादीनामिति । यद्यपि ब्रह्मविकारत्वेनादित्योद्गीथयोरविशेषस्तथापि फलात्मकत्वेनादित्यादीनामस्त्युद्गीथादिभ्यो विशेष इत्यर्थः । द्वितीयानिर्देशादप्युद्गीथादीनां प्राधान्यमित्याह—अपि चोमितीति । स्वयमेवोपासनस्य कर्मत्वात्फलवत्त्वोपपत्तेः । ननूक्तं सिद्धरूपैरादित्यादिभिरध्यस्तैः साध्यभूतत्वमभिभूतं कर्मणामित्यत आह—आदित्यादिभावेनापि च दृश्यमानानामिति।

आनन्दगिरीय—न्यायनिर्णयः ।

भवत्विति । स्वतन्त्रफलेष्वपि तेषु प्रकृतकर्माङ्गव्यपाश्रयेणांगेष्वेव मतिकरणात्फलकल्पना युक्ता कर्माधिकृतस्यैव तदंगसंबन्धेषूपासनेष्वधिकारात् । यथाऽधिकृताधिकारेषु गोदोहनादिषु स्वतन्त्रफलेष्वपि प्रकृतकर्मागावष्टम्भेनैव फलमिष्टं तथेहापीति परिहरति—तेष्वपीति । यत्त्वादित्यादीनामुद्गीथादीनां चोत्कर्षविशेषानवधारणमिति तत्राऽऽह—फलेति । तदेव स्फुटयति—आदित्यादीति । उपक्रमानुसारादप्यादित्यादिधीरुद्गीथादिषु कार्येत्याह—अपि चेति । द्वितीयां पूर्वपक्षोपपत्तिमनुभाष्य दूषयति—यदित्यादिना । कर्मभूयं भूत्वा कर्मभावमनुभूयेति यावत् । सिद्धरूपैरादित्यादिभिरध्यस्तैः साध्यरूपत्वं कर्मणोऽभिभूयेतेत्याशंक्याऽऽह—आदित्यादीति । माणवकेऽग्निधीवदुद्गीथादिष्वादित्यादि-

१ अयमधिकः पाठः ।

यात् । "तदेतदेतस्यामृच्यध्यूढँ साम" [ छां १ । ६ । १ ] इति तु लाक्षणिक एव पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगः । लक्षणा च यथासम्भवं सन्निकृष्टेन विप्रकृष्टेन वा स्वार्थसम्बन्धेन प्रवर्तते । तत्र यद्यपि ऋक्सामयोः पृथिव्यग्निदृष्टिचिकीर्षा । तथापि प्रसिद्धयोर्ऋक्सामयोर्भेदेनानुकीर्तनात्पृथिव्यग्न्योश्च सन्निधानात्तयोरेवैष ऋक्सामशब्दप्रयोगः । ऋक्सामसम्बन्धादिति निश्चीयते । क्षत्तृशब्दोऽपि हि कुतश्चित्कारणाद्राजानमुपसर्पन्न निवारयितुं पार्यते । "इयमेवर्क्" [ छां० १ ।

रत्नप्रभा ।

शयः ] । प्रयोगानुपपत्तिमुक्त्वा निरस्यति—**तदेतदिति** ॥ लक्षणाबीजं सम्बन्धमाह—**लक्षणा चेति** ॥ गंगायां घोष इत्यत्र सन्निकृष्टसंयोगसम्बन्धेन तीरे लक्षणा । अग्निर्माणवक इत्यत्र अग्निनिष्ठशुचित्वादिगुणवत्त्वरूपपरम्परासम्बन्धेन लक्षणा दृष्टा ॥ तथा चात्र ऋक्सामयोः पृथिव्यग्निदृष्टिपक्षेऽपि ऋक्सामपदाभ्यां स्ववाच्यार्थे द्रव्यताख्यपरम्परासम्बन्धेन पृथिव्यग्निलक्षणा युक्तेत्यर्थः ॥ ननु प्रतीकवाचिपदस्य ध्येये अर्थे लक्षणा न युक्ता । क्षत्तृपदस्य राजनि अप्रयोगादिति शङ्कते—**तत्र यद्यपीति** ॥ **तथापि ऋक्सामसम्बन्धात् पृथिव्यग्न्योरेव "एतस्यामृच्यध्यूढं साम" इत्येष ऋक्सामपदप्रयोग इत्यन्वयः** ॥ ननु मुख्यार्थ एव न कुतो गृह्यते, तत्राह—**प्रसिद्धयोरिति** ॥ तस्मादृच्यध्यूढं सामेति मुख्ययोः पृथगुक्तेः "तदेतस्याम्" इत्यत्रापि तयोर्ग्रहे पुनरुक्तिः स्यात् । अतः प्रतीकाभेददृष्ट्या पृथिव्यग्न्योः प्रतीकसन्निधानात् तयोरेव प्रतीकपदप्रयोगः कृतस्तदभेददार्ढ्यायेत्यर्थः ॥ **तर्हि** क्षत्तृशब्दोऽपि राजनि स्यादित्यत आह—**क्षत्रिति** ॥ स्थितप्रयोगस्य निमित्तं किमपि वाच्यं, न तु निमित्तमस्तीति प्रयोग आपाद्य इति भावः ॥ क्षत्ता सूतः । तस्य कार्यं रथचर्यादि यदा राजैव करोति, तदा क्षत्तृशब्दो राजन्यप्यस्तीत्यक्ष-

भामती ।

भवेदेतदेवं यद्यध्यासेन कर्मरूपमभिभूयेत । अपि तु माणवक इवाग्निदृष्टिः केनचित्तीव्रत्वादिना गुणेन गौण्यनभिभूतमाणवकत्वात्तथेहापि । न हीयं शुक्तिकायां रजतधीरिव बह्विधीर्येन माणवकत्वमभिभवेत् । किंतु गौणी । तथेयमप्युद्गीथादावादित्यदृष्टिर्गौणीति भावः । **तदेतदेतस्यामृच्यध्यूढं सामेति त्विति**। अन्य-

आनन्दगिरीय-न्यायनिर्णयः ।

धियां गौणत्वादनभिभवादंगेष्वनंगधीरविरुद्धेत्यर्थः । यत्तु पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगानुपपत्त्या पृथिव्यादावृगादिधीरिति तत्राऽऽह—**तदेतदिति** । तद्दृष्टिमन्तरेणापि लक्षणोपपत्तौ पृथिव्यादावृगाद्यध्यासो न कल्पनीय इत्यर्थः । संबन्धाभावे कथं लक्षणेत्याशंक्याऽऽह—**लक्षणा चेति** । शोणो धावतीत्यत्र गुणवाचिशोणशब्देन गुणी लक्ष्यत इति सन्निकृष्टा लक्षणा अग्निरधीतेऽनुवाकमित्यत्राग्निशब्दस्तीव्रत्वादिगुणं लक्षयित्वा माणवकं लक्षयतीति विप्रकृष्टा । न हि साक्षादेवाग्निशब्दार्थस्य माणवकसंबन्धोऽस्तीत्यर्थः । लक्षणाद्वैविध्येऽपि प्रकृते किं जातं तदाह—**तत्रेति** । ऋक्सामयोः पृथिव्यग्न्योश्च संनिकृष्टवास्तवसंबन्धाभावेऽपि विप्रकृष्टेन पृथिव्यग्निबुद्धिसंबन्धेन तयोः संबन्धात्तच्छब्दाभ्यां तल्लक्षणा युक्तेत्यर्थः । तथाऽपि तयोरेव पृथिव्यग्न्योरेष तदेतदस्यामृच्यध्यूढं सामेत्यृक्सामशब्दप्रयोग इति योजना । मुख्यासंभवे हेतुमाह—**प्रसिद्धयोरिति** । ऋच्यध्यूढं हि सामेति प्रसिद्धयोः पृथगुक्तेस्तदेतदेतस्यामित्यत्रापि तयोरेवोक्तौ पौनरुक्त्यात्पृथिव्यग्न्योश्चाध्यस्तऋक्सामसंनिधानादृक्सामशब्दयोर्लक्षणया पृथिव्यग्न्यर्थतेत्यर्थः । ऋचि पृथिवीधीः साम्नि चाग्निधीरित्येतावता संबन्धेन पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगो लाक्षणिको नोपपद्यते क्षत्तरि राजधीकरणेऽपि राजनि क्षत्तृशब्दप्रयोगादर्शनादित्युक्तमित्याशंक्याऽऽह—**क्षत्रिति** । यदा

६ । १ ] इति च यथाक्षरन्यासमृच एव पृथिवीत्वमवधारयति । पृथिव्या हि ऋक्त्वेऽवधार्यमाणे इयमृगेवेत्यक्षरन्यासः स्यात् । "य एवं विद्वान्साम गायति" [ छां० १ । ७ ।७] इति चाङ्गाश्रयमेव विज्ञानमुपसंहरति, न पृथिव्याद्याश्रयम् । तथा-"लोकेषु पञ्चविधं सामोपासीत" [ छां० २ । २ । १ ] इति यद्यपि सप्तमीनिर्दिष्टा लोकाः । तथापि साम्न्येव ते अध्यस्येरन् । द्वितीयानिर्देशेन साम्न उपास्यत्वावगमात् । सामनि हि लोकेष्वध्यस्यमानेषु साम लोकात्मनोपासितं भवति । अन्यथा पुनर्लोकाः सामात्मनोपासिताः स्युः । एतेन "एतद्गायत्रं प्राणेषु प्रोतम्" [ छां० २ । ११ । १ ] इत्यादि व्याख्यातम् । यत्रापि तुल्यो द्वितीया-

---

रत्नप्रभा ।

रार्थः ॥ ऋगादावेव पृथिव्यादिदृष्टिः-इत्यत्र हेत्वन्तरमाह-**इयमिति** ॥ सप्तम्या लोकानामुपास्यत्वमुक्तं निरस्यति-**तथा लोकेष्विति** ॥ सामात्मना लोकानुपासीतेति द्वितीयासप्तम्योर्भङ्गस्त्वया कार्यः । ततो वरं लोकात्मना सामोपासीतेति सप्तमीमात्रभङ्ग इत्यर्थः ॥ **एतेनेति** । एकविभक्तिभङ्गलाघवेन प्राणात्मना गायत्रं सामोपास्यमिति व्याख्यातमित्यर्थः ॥ ननु विभक्तिसाम्ये कथं निर्णयः, तत्राह-**यत्रापीति**।

भामती ।

थापि लक्षणोपपत्तौ न ऋक्सामेत्यध्यासकल्पना पृथिव्यग्न्योरित्यर्थः । अक्षरन्यासालोचनया तु विपरीतमेवेत्याह-**इयमेवर्गिति** । 'लोकेषु पञ्चविधं सामोपासीत' इति द्वितीयानिर्देशात्साम्नामुपास्यत्वमवगम्यते । तत्र यदि सामधीरध्यस्येत ततो न सामान्युपास्येरन् अपि तु लोकाः पृथिव्यादयः । तथा च द्वितीयार्थं परित्यज्य तृतीयार्थः परिकल्प्येत साम्नेति । लोकेष्विति सप्तमी द्वितीयार्थे कथंचिन्नीयते । अगारे गावो वास्यन्तां प्रावारे कुसुमानीतिवत् । तेनोक्तन्यायानुरोधेन सप्तम्याश्चोभयथाप्यवश्यं कल्पनीयार्थत्वाद्वरं यथाश्रुतद्वितीयार्थानुरोधाय तृतीयार्थे सप्तमी व्याख्यातव्या । लोकपृथिव्यादिबुद्ध्या पञ्चविधं हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनप्रकारं सामोपासीतेति निर्णीयते । ननु यत्रोभयत्रापि द्वितीयानिर्देशो यथा खल्वमुमेवादित्यं सप्तविधं हिङ्कारप्रस्तावोंकारोद्गीथप्रतिहारोपद्रवनिधनप्रकारं सामोपासीतेति, तत्र को

आनन्दगिरीय-न्यायनिर्णयः ।

राजाऽपि क्षत्तुः सूतस्य रथनयनादि कर्माऽऽचरति तदा तत्र क्षत्तृशब्दो लक्षणया प्रयुज्यत एव । न च सति निमित्ते प्रयोगस्याऽऽवश्यकत्वं पंकजादिशब्दे व्यभिचारादिति भावः । ऋगादावेव पृथिव्यादिधीरित्यत्र हेत्वन्तरमाह-**इयमेवेति** । एतदेव व्यतिरेकद्वारा स्फोरयति-**पृथिव्येति** । ऋगनुवादेन पृथिवीत्वं विधेयमित्यवधारणसामर्थ्यादधिगतमित्यर्थः । इतश्चांगेष्वनंगधीरित्याह-**य एवमिति** । यत्त्वधिकरणनिर्देशादुपास्तिविषयत्वं लोकानामिति तत्राऽऽह-**तथेति** । यदि सामधीर्लोकेष्वारोप्येत तदा साम्नेतितृतीयार्थे द्वितीयाश्रुतिः परिणेया लोकेष्विति च सप्तमी द्वितीयार्थे कथंचिन्नेया तथा सत्युभयथाऽपि सप्तम्याः कल्प्यार्थत्वात्कल्पनालाघवाद्यथाश्रुतद्वितीयार्थानुरोधाय तृतीयार्थे सप्तमी व्याख्येया । तेन पृथिव्यादिलोकालोकबुद्ध्या हिंकारादिसामोपास्यं ततः सप्तमी पूर्वपक्षे द्वितीयार्था, सिद्धान्ते तृतीयार्थेत्युभयथा भञ्जनीया । पूर्वपक्षे तु सामगतद्वितीयाभङ्गोऽधिक इत्यर्थः । पृथिव्याद्यात्मना हिंकारादेरुपास्यत्वोपदेशेन गायत्रस्यापि प्राणात्मनोपास्यत्वमुक्तमित्यतिदिशति-**एतेनेति** । यत्र द्वितीयासप्तम्यौ तत्रास्तु श्रुतिद्वयभङ्गगौरवपरिहारार्थमंगेष्वनङ्गधीः । यत्र तूभयत्र द्वितीया तत्रान्यतरश्रुतिमात्रभङ्गस्य पूर्वपक्षसिद्धान्तयोस्तुल्यत्वात्कथं नियमसिद्धिरित्याशंक्याऽऽह-**यत्रापीति** । छान्दोग्ये हि समस्तस्य सप्तविधस्य पञ्च-

निर्देशः "अथ खल्वमुमादित्यं सप्तविधं सामोपासीत" [छां० २।९।१] इति, तत्रापि समस्तस्य खलु साम्न उपासनं साधु। "इति तु पञ्चविधस्य" [छां० २।७।२] "अथ सप्तविधस्य" [छां० २।८।१] इति च साम्न एवोपास्यत्वोपक्रमात्तस्मिन्नेवादित्याध्यासः। एतस्मादेव च साम्न उपास्यत्वावगमात् "पृथिवी हिंकारः" [छां० २।२।१] इत्यादिनिर्देशविपर्ययेऽपि हिंकारादिष्वेव पृथिव्यादिदृष्टिः। तस्मादनङ्गाश्रया आदित्यादिमतयोऽङ्गेषूद्गीथादिषु क्षिप्येरन्निति सिद्धम् ॥ ६ ॥ इत्यादित्यादिमत्यधिकरणम् ॥ ५ ॥

## आसीनः सम्भवात् ॥ ७ ॥ (६) ॥

कर्माङ्गसम्बद्धेषु तावदुपासनेषु कर्मतन्त्रत्वान्नासनादिचिन्ता। नापि सम्य-

रत्नप्रभा।

"साम्नः उपासनं साधु" [छां० २।१।१] इत्युपक्रम्य "पृथिवी हिंकारः" इत्यादिना हिंकारादिपञ्चावयवस्य साम्नः उपासनम् उक्त्वा "इति तु पञ्चविधस्य" उपासनमित्युपसंहृत्य, "अथ" इति सप्तविधस्य साम्न उपासनं प्रक्रम्य प्रपञ्चितम्। अतः साम्न एवोपास्यत्वमित्यर्थः॥ यदुक्तं प्राथम्यात् पृथिव्यादेरुपास्यत्वमिति, तत्राह—एतस्मादेवेति॥ यद्यपि हिङ्कारोद्देशेन पृथिवीत्वविधेरुद्देश्यस्य प्रथमनिर्देशो वाच्यः, तथाप्युक्तन्यायबलात् प्रत्ययो ग्राह्य इत्यर्थः॥६॥ (९)॥ आ०॥ कर्मण उत्थितेन

भामती।

विनिगमनायां हेतुरित्यत आह—तत्रापीति। तत्रापि समस्तस्य सप्तविधस्य साम्न उपासनमिति साम्न उपास्यत्वश्रुतेः साध्विति पञ्चविधस्य। साधुत्वं चास्य धर्मत्वम्। तथा च श्रुतिः—'साधुकारी साधुर्भवति' इति। हिङ्कारानुवादेन पृथिवीदृष्टिविधाने हिंकारः पृथिवीति प्राप्ते विपरीतनिर्देशः पृथिवी हिंकारः ॥ ६ ॥ (९) ॥ आसीनः संभवात्। कर्माङ्गसंबन्धिषु यत्र हि तिष्ठतः कर्म चोदितं तत्र तत्संबद्धोपासनापि तिष्ठतैव कर्तव्या। यत्र त्वासीनस्य तत्रोपासनाप्यासीनेनैवेति। नापि सम्यग्दर्शने वस्तुतन्त्रत्वात्प्रमाणतन्त्रत्वाच्च। प्रमाणतन्त्रा च वस्तुव्यवस्था प्रमाणं च नापेक्षत इति तत्राप्यनियमः। यन्महता प्रयत्नेन विनोपासितुमशक्यं यथा प्रतीकादि यथा वा सम्यग्दर्शनमपि तत्त्वमस्यादि, तत्रैषा चिन्ता। तत्र चोदकशा-

आनन्दगिरीय-न्यायनिर्णयः।

विधस्य च साम्नो ध्यानं साधुगुणकमित्युपक्रम्य लोकेषु पञ्चविधं सामोपासीतेति पृथिवी हिंकारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यादिना पञ्चविधस्य साम्नो ध्यानमुक्त्वेति तु पञ्चविधस्येत्युपसंहृत्याथ तु सप्तविधस्येत्युपक्रम्य वाचि सप्तविधं सामोपासीतेत्यादिना सप्तविधस्याप्युपासनमुक्तमेवं च समस्तस्य साम्न उपासनं साध्विति साम्न एवोपास्यत्वश्रुतेरिति तु पञ्चविधस्य साम्न उपासनं साध्विति पञ्चविधस्यापि तस्योपास्यत्वश्रुतेः साम्न्येवाऽऽदित्याद्यध्यासः सिध्यतीत्यर्थः। यत्तु पूर्वाधिकरणन्यायेन प्रथमश्रुते चरमश्रुतमध्यस्यत इति तत्राऽऽह—एतस्मादिति। हिंकारोद्देशेन पृथिवीत्वविधाने हिंकारः पृथिवीति निर्देशो युक्तस्तस्य वैपरीत्येऽपि साम्नोऽधिकाराद्ध्येयत्वावगमादङ्गेषु हिंकारादिष्वेवानङ्गपृथिव्यादिदृष्टिः कार्येत्यर्थः। प्रथमश्रुत्यनुसाराच्चरमश्रुतं नेयमिति न्यायोऽपि द्वितीयाश्रुत्या बाध्यो दुर्बलत्वादिति मत्वोपसंहरति—तस्मादिति ॥ ६ ॥ (९) ॥ अङ्गाश्रितोपासनेष्वासीनकर्मतानियमाभाववदितरोपासनास्वपि तन्नियमाभावमाशंक्याऽऽह—आसीन इति। विषयं परिशिनष्टि—कर्मेति। आदिपदेन स्थितिशयने गृह्येते। सम्यग्दर्शनशब्देन श्रवणाद्यभ्यासवासितमनःसहकृतवाक्यकृतसाक्षात्कारो निरुच्यते। अङ्गोपास-

ग्दर्शने। वस्तुतन्त्रत्वाज्ज्ञानस्य। इतरेषु तूपासनेषु–किमनियमेन तिष्ठन्नासीनः शयानो वा प्रवर्तेत–उत–नियमेनासीन एवेति चिन्तयति। तत्र मानसत्वादुपासनस्यानियमः शरीरस्थितेरिति ॥ एवं प्राप्ते ब्रवीति । आसीन एवोपासीतेति ॥ कुतः ॥ सम्भवात् ॥ उपासनं नाम–समानप्रत्ययप्रवाहकरणम् । न च तद्गच्छतो, धावतो वा,–सम्भवति । गत्यादीनां चित्तविक्षेपकरत्वात् । तिष्ठतोऽपि देहधारणे व्यापृतं मनः, न सूक्ष्मवस्तुनिरीक्षणक्षमं भवति । शयानस्याप्यकस्मादेव निद्रयाऽभिभूयेत। आसीनस्य त्वेवञ्जातीयको भूयान्दोषः सुपरिहर इति सम्भवति तस्योपासनम् ॥ ७ ॥

## ध्यानाच्च ॥ ८ ॥

अपि च–ध्यायत्यर्थ एषः–यत्समानप्रत्ययप्रवाहकरणम् । ध्यायतिश्च प्रशिथिलांगचेष्टेषु प्रतिष्ठितदृष्टिष्वेकविषयाक्षिप्तचित्तेषूपचर्यमाणो दृश्यते–ध्यायति बको, ध्यायति प्रोषितबन्धुरित्यासीनश्चानायासो भवति ॥

---

रत्नप्रभा ।

उपविष्टेन वा अनेकधानुष्ठानदर्शनात् संशयः । कर्माङ्गाश्रितोपासनानाम् आसननियमानपेक्षाणाम् अनुष्ठानप्रकारः उक्तः, तद्वदंगानाश्रितोपासनेष्वप्यनियमः इति पूर्वपक्षयति–तत्रेति ॥ अत्र आसनाभ्यासासिद्धिः, सिद्धान्ते तु मनोदेहयोर्भिन्नत्वेऽपि देहचाञ्चल्ये मनसोऽनवस्थानस्य अनुभवसिद्धत्वात् मनोव्यापारेषूपासनेषु देहस्थैर्यार्थमासननियमापेक्षेति फलभेदः ॥ तिष्ठतः उत्थितस्य ॥ ७ ॥ किञ्च ध्यातारः, आसीना एव स्युः, ध्यायतिशब्दार्हत्वाद्, बकादिवदित्याह–ध्यानाच्चेति ॥ ८ ॥ अत्रैव श्रौतं दृष्टान्त-

भामती ।

त्त्राभावादनियमे प्राप्ते यथा शक्यत इत्युपबन्धादासीनस्यैव सिद्धम् । ननु यस्यामवस्थायां ध्यायतिरुपचर्यते प्रयुज्यते किमसौ तदा तिष्ठतो न भवति न भवतीत्याह । आसीनश्चाविद्यमानायासो भवतीति । अति-

आनन्दगिरीय–न्यायनिर्णयः ।

भ्यः सम्यग्दर्शनाचातिरिक्तान्युपासनानि विषयीकृत्यानेकधानुष्ठानदृष्टे–संशयमाह–इतरेष्विति । शास्त्रीयेषु प्रस्तुतोपासनेष्वनुष्ठानविशेषचिन्तया पादादिसंगतिः । पूर्वपक्षे कर्मांगानाश्रितोपासनेषु दैहिकनियमासिद्धिः । सिद्धान्ते ध्यानस्य मनोव्यापारत्वेऽपि देहानवस्थाने मनोनवस्थानात्तेषु तन्नियमसिद्धिरिति मत्वा पूर्वपक्षयति—तत्रेति । मनोदेहयोर्भिन्नत्वान्मनोव्यापारमुपासनं प्रति देहव्यापारस्यानुपकारित्वादासीनेन तिष्ठता वा यथाकथंचिदनुष्ठेयानि प्रकृतान्युपासनानीत्यर्थः । अनङ्गाश्रितोपासनानां यथाकथंचिदनुष्ठानमिति पक्षमनूद्य सिद्धान्तयति–एवमिति । प्रश्नपूर्वकं नियामकमाह–कुत इति । संभवं वक्तुमुपासनशब्दार्थमाह–उपासनमिति । तथाऽपि कथं तदासीनस्यैवेति नियम्यते तत्राऽऽह–न चेति । तर्हि तिष्ठतो भविष्यति विक्षेपाभावात्तत्राऽऽह–तिष्ठतोऽपीति । तर्हि शयानस्य देहधारणव्यापाराभावादुपासनं स्यान्नेत्याह–शयानस्येति । देहेऽनवस्थिते मनोनवस्थितेरध्यक्षत्वादासीनस्यैवोपासनमनुष्ठेयमिति परिशेषसिद्धमर्थमाह–आसीनस्य त्विति ॥ ७ ॥ इतश्चोपासनमासीनकर्मेत्याह–ध्यानाच्चेति । सूत्रं विवृणोति–अपि चेति । उपास्तिध्यायत्योरेकार्थत्वेऽपि प्रकृते किं जातं तदाह–ध्यायतिश्चेति । अथ ध्यायतिर्यस्यां प्रयुज्यते साऽवस्था तिष्ठतोऽपि संभवति नेत्याह–आसनिश्चेति । लौकिकं

तस्मादर्थादासीनकर्म उपासनम् ॥ ८ ॥

## अचलत्वञ्चापेक्ष्य ॥ ९ ॥

अपि च "ध्यायतीव पृथिवी" [ छां० ७ । ६ । १ ] इत्यत्र पृथिव्यादिष्वचलत्वमेवापेक्ष्य ध्यायतिवादो भवति । तच्च लिंगमुपासनस्यासीनकर्मत्वे ॥ ९ ॥

## स्मरंति च ॥ १० ॥

स्मरन्त्यपि च शिष्टा उपासनांगत्वेनासनं—"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः" [ भ० गी० ६ । ११ ] इत्यादिना । अत एव च पद्मकादीनामासनविशेषाणामुपदेशो योगशास्त्रे ॥ १० ॥ इत्यासीनाधिकरणम् ॥ ६ ॥

## यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ ( ७ ) ॥

दिग्देशकालेषु संशयः—किमस्ति कश्चिन्नियमो नास्ति वेति । प्रायेण वैदिकेष्वारम्भेषु दिगादिनियमदर्शनात्स्यादिहापि कश्चिन्नियम इति यस्य मतिः, तं प्रत्याह—दिग्देशकालेष्वर्थलक्षण एव नियमः, यत्रैवास्य

---

रत्नप्रभा ।

माह—अचलत्वञ्चेति ॥ ९ ॥ बाह्यस्य शारीरस्य वा आसनस्य स्मरणात् नियम इत्याह—स्मरन्ति चेति ॥ १० ॥ ( ६ ) ॥ यत्रैकाग्रता तत्राविशेषात् ॥ तेष्वेवांगानाश्रितोपासनेषु प्राच्यादिदिशि, तीर्थादिदेशे, प्रदोषादिकाले, नियमोऽस्ति न वेत्युभयथा सम्भवात् संशयः। एकविषयत्वं संगतिः । उपास्तीनां विहितत्वात् यागादिवदस्ति दिगादिनियम इति पूर्वपक्षः । अत्र दिगादिष्वादरः फलं, सिद्धान्ते त्वनादरः । ध्येये चित्तैकाग्र्यस्य प्राधान्यात् प्रधानाक्षिप्तदेशादिग्रहणस्योचितत्वादिति विवेकः ॥ अर्थलक्षण एवेति । ऐकाग्र्यफललिङ्गक एवेत्यर्थः ॥ "प्राचीनप्रवणे प्राग्देशे निम्नस्थाने वैश्वदेवं कुर्याद्"

भामती ।

रोहितार्थमितरत् ॥७॥८॥९॥१०॥(६)॥ यत्रैकाग्रता तत्राविशेषात् । समे शुचौ शर्करावह्निवालुकाविवर्जित इत्यादिवचनान्नियमे सिद्धे दिग्देशादिनियमवाचनिकमपि प्राचीनप्रवणे वैश्वदेवेन यजेतेतिवद्वैदि-

आनन्दगिरीय—न्यायनिर्णयः ।

लिंगमुपसंहरति—तस्मादिति ॥ ८ ॥ तत्रैव वैदिकं लिंगमाह—अचलत्वं चेति । सूत्रं विभजते—अपि चेति ॥ ९ ॥ आसनविधानानुपपत्त्याऽप्युपासनस्याऽऽसीनकर्मतेत्याह—स्मरन्तीति । बाह्यासनविषयत्वेन सूत्रं योजयति—स्मरन्त्यपीति । शारीरासनविधानविषयत्वेनापि तदेव योजयति—अत इति । उपासनस्याऽऽसीनकर्मत्वादेवेत्यर्थः ॥ १० ॥ ( ६ ) ॥ अनङ्गाश्रितोपासनेष्वासननियमवद्दिगादिनियमोऽपि स्यादित्याशंक्याऽऽह—यत्रेति । अनङ्गाश्रितोपासनानि विषयस्तेषु दिगादिनियमोऽस्त्युत नेति विहितेषु द्विधादृष्ट्या संशयमाह—दिगिति । अङ्गोपास्त्यतिरिक्तोपास्तिषु शास्त्रीयास्वेव दिगादिनियमं विनाऽनुष्ठानक्रमचिन्तनात्पादादिसंगतिः । पूर्वपक्षे दिगादिनियमादेतेषु चित्तैकाग्र्यमन्तरेणानुष्ठानम् । सिद्धान्ते दिगादिष्वास्थाभावेऽपि प्रधानानुगुण्यादनुष्ठानमित्यङ्गीकृत्यानंगोपासनानि नियतदिग्देशकालानि चोदनालक्षणत्वाद्वैश्वदेववदित्याशयेन पूर्वपक्षयति—प्रायेणेति । प्रदोषादिकाले प्राच्यादिदिशि तीर्थादिदेशे प्रकृतोपासनानुष्ठानमिति प्राप्ते सिद्धान्तयति—तमिति । चोदनादिवशेनोक्तोपासनेषु न देशादिनियमः किंतूपास्ये चित्तैकाग्र्यलक्षणार्थाक्षिप्त एव तन्नियम इत्युक्तं विवृणोति—यत्रेति ।

दिशि देशे काले वा मनसः सौकर्येणैकाग्रता भवति, तत्रैवोपासीत । प्राचीदिक्पूर्वाह्णप्राचीनप्रवणादिवद्विशेषाश्रवणादेकाग्रताया इष्टायाः सर्वत्राविशेषात् ॥ ननु विशेषमपि केचिदामनन्ति—"समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः । मनोऽनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेद्" [ श्वेता० २ । १० ] इति यथेति ॥ उच्यते॥ सत्य मस्त्येवञ्जातीयको नियमः।सति त्वेतस्मिंस्तद्गतेषु विशेषेषु अनियम इति सुहृद्भूत्वा आचार्य आचष्टे। "मनोऽनुकूले"[श्वेता०२।१०] इति चैषा श्रुतिर्यत्रैकाग्रता तत्रैवेत्येतदेव दर्शयति ॥ ११ ॥ इत्येकाग्रताधिकरणम् ॥ ७ ॥

## आ प्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥ (८) ॥

आवृत्तिः सर्वोपासनेष्वादर्तव्येति स्थितमाद्येऽधिकरणे । तत्र यानि ता-

रत्नप्रभा ।

इतिवदत्र दिगादिविशेषो न श्रूयते । अतोऽनुमानमप्रयोजकमिति भावः । विशेषाश्रवणमसिद्धमिति शङ्कते—ननु विशेषमपीति ॥ शर्कराः—सूक्ष्मपाषाणाः । जलाश्रयवर्जनं शीतनिवृत्त्यर्थम् । चक्षुःपीडनः-मशकः । वाचनिकं समदेशादिनियममंगीकृत्य चित्तैकाग्र्यरुद्धेषु देशादिगतेषु प्राचीनप्रवणत्वादिष्वनादर इति सुहृद्भावेन सूत्रकृदुपदिशति॥ देशाद्याग्रहे चित्तविक्षेपात् समाधिभंगः स्यात्। स माभूदिति ॥ ११ ॥ (७)॥ आप्रायणात्॥ व्यवहितेनास्य सम्बन्धमाह—आवृत्तिरिति॥ अनियोज्ये ब्रह्मण्यात्मत्वप्रतिपत्ति-

भामती ।

कारम्भसामान्यात्कचित्कश्चिदाशंकते । तमनुग्रहीतुमाचार्यः सुहृद्भावेनैव तदाह स्म । यत्रैकाग्रता मनसस्तत्रैव भावनां प्रयोजयेत् । अविशेषात् । न ह्यत्रास्ति वैश्वदेवादिवद्वचनं विशेषकं तस्मादिति॥११॥ (७)॥ आ प्रायणात्तत्रापि हि दृष्टम् । अधिकरणविषयं विवेचयति—तत्र यानि तावदिति । अविद्यमान-

आनन्दगिरीय—न्यायनिर्णयः ।

यत्तु चोदनालक्षणत्वादित्यनुमानं तत्र श्रुतदेशादिमत्त्वमुपाधिरिति वदन्नविशेषादिति व्याचष्टे—प्राचीनेति। प्राचीनप्रवणे प्राग्देशनिम्ने देशे वैश्वदेवेन यागविशेषेण यजेतेत्यादिवदत्र विशेषो न श्रूयते । ऐकाग्र्यं हि ध्यानं प्रत्यन्तरंगं तस्मिन्मध्याह्नादावपि संभवति प्रदोषाद्यपेक्षायां शेषिबाधादनियम इत्यर्थः । ध्यानान्तरंगमैकाग्र्यमपि नियतदिगाद्यपेक्षमित्याशंक्य हेतोरर्थान्तरमाह—एकाग्रताया इति । विशेषाश्रवणमसिद्धमिति शङ्कते—नन्विति । शर्कराः सूक्ष्मपाषाणाः । जलाशयवर्जनं शीतनिवृत्त्यर्थम् । चक्षुपीडनो मशकः । यथा श्रुतिसिद्धो विशेषस्तथाऽन्योऽपि कालादिविशेषो ध्याने स्यादित्यर्थः । वाचनिके नियमे सत्येव दिगादिनियमनिरसनमित्याह—उच्यत इति । तद्गतेष्विति । तच्छब्देन श्रौतो विशिष्टो देशो गृह्यते तस्मिन्गता विशेषास्तु प्राचीनप्रवणादयस्तन्नियमे कदाचिदेकाग्रतायोगेनोपासनायोगात्प्रधानविरोधात्तदनियमः श्रेयानित्यर्थः । नियमादनियमो युक्तः शेष्यानुगुण्यादित्यत्र सूत्रकारसंमतिमाह—इति सुहृदिति । उक्ताऽपि हि श्रुतिरस्माकमनुकूलैवेत्याह—मन इति ॥ ११ ॥ ( ७ ) ॥ देशाद्यविधानात्तदपेक्षावदहंग्रहोपास्तिष्वादेहपातादावृत्तेरविधानात्तदनपेक्षेत्याशंक्याऽऽह—आ प्रायणादिति । व्यवहितेन संबन्धार्थं वृत्तं कीर्तयति—आवृत्तिरिति । संप्रति संबन्धं वदन्विषयं विवेचयति—तत्रेति । सम्यग्ज्ञाने जातेऽपि मुक्त्यर्थमावृत्तिरामरणात्कार्येत्याशंक्याऽऽह—

वत्सम्यग्दर्शनार्थान्युपासनानि, तान्यवघातादिवत्कार्यपर्यवसानानीति ज्ञातमेवैषामावृत्तिपरिमाणम् । न हि सम्यग्दर्शने कार्ये निष्पन्ने यत्नान्तरं किञ्चिच्छासितुं शक्यम् ॥ अनियोज्यब्रह्मात्मप्रतीतेः शास्त्रस्याविषयत्वात् । यानि पुनरभ्युदयफलानि तेष्वेषा चिन्ता-किं कियन्तञ्चित्कालं प्रत्ययमावर्त्योपरमेद्—उत-यावज्जीवमावर्तयेदिति ॥ किं तावत्प्राप्तम् ॥ कियन्तञ्चित्कालं प्रत्ययमभ्यस्योत्सृजेत् । आवृत्तिविशिष्टस्योपासनशब्दार्थस्य कृतत्वादिति ॥ एवं प्राप्ते ब्रूमः ॥ आप्रायणादेवावर्तयेत्प्रत्ययम् । अन्त्यप्रत्ययवशाददृष्टफलप्राप्तेः । कर्माण्यपि हि जन्मान्तरोपभोग्यं फलमारभमाणानि तदनुरूपं भावनाविज्ञानं प्रायणकाले आक्षिपन्ति । "सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति" "यच्चित्तस्तेनैष प्राणमायाति" "प्राणस्तेजसा युक्तः सहात्मना यथासंकल्पितं लोकं नयति" इति चैवमादिश्रुतिभ्यः । तृणजलूकानिदर्श-

रत्नप्रभा ।

र्यस्य तस्य विदुष इत्यर्थः ॥ अहंग्रहोपासनेष्वनुष्ठानस्योभयथा दृष्टेः संशयमाह-यानि पुनरिति ॥ यथा दिगादिनियमस्य विधेरनादरः, तद्वदामरणमुपास्त्यावृत्तेः अविधानादनियम इति पूर्वपक्षः ॥ मरणपर्यन्तमावृत्तिरिति सिद्धान्तयति-एवमिति ॥ उपास्तीनां कर्मणाञ्चान्त्यकाले प्राप्तव्यफलस्फूर्तिद्वारा फलहेतुत्वे मानमाह-सविज्ञान इति॥ भावनाभियं विज्ञानं फलस्फुरणं,तेन सहितः-सविज्ञानः,विज्ञानस्फुरितं फलं-सविज्ञानम् इत्यर्थः॥ यस्मिन् लोके चित्तं संकल्पोऽस्येति-यच्चित्तः, तेन संकल्पितेन लोकेन सह। फलस्फूर्त्यनन्तरं मनः प्राणे लीयते इति यावत् ॥ तेजः उदानः । आत्मा जीवः । जलूकादृष्टान्तश्रुतेश्च भाविफलस्फूर्तिरस्तीत्यर्थः ॥ अस्त्विदमन्त्यफलविज्ञानं कर्मणामिवादृष्टद्वारोपास्तीनाम् । ततः कुत

भामती ।

नियोज्या या ब्रह्मात्मप्रतिपत्तिस्तस्याः । शास्त्रं हि नियोज्यस्य कार्यरूपनियोगसंबन्धमवबोधयति तस्यैव कर्मण्यैश्वर्यलक्षणमधिकारं तच्चैतदुभयमतीन्द्रियत्वाद्भवति शास्त्रलक्षणं प्रमाणान्तराप्राप्ये शास्त्रस्यार्थवत्त्वाद्ब्रह्मात्मत्वप्रतीतेस्तु जीवन्मुक्तेन दृष्टत्वान्नास्तीह तिरोहितमिव किंचनेति किमत्र शास्त्रं करिष्यति । नन्वेवमप्यभ्युदयफलान्युपासनानि तत्र नियोज्यनियोगलक्षणस्य च कर्मणि स्वामितालक्षणस्य च संबन्धस्याती-

आनन्दगिरीय-न्यायनिर्णयः ।

न हीति । नियोज्यस्याधिकारिणोऽभावान्मुक्तेश्च सम्यग्धीनान्तरीयकत्वादावृत्तिरनर्थिकेत्यर्थः । उक्तहेत्वभावादनुष्ठानस्योभयथादृष्टेरहंग्रहोपास्तिषु संशयमाह-यानीति । शास्त्रीयाहंग्रहोपासनेषु स्वतन्त्रफलहेतुषु यावज्जीवमनुष्ठानमितिचिन्तनात्पादादिसंगतिः । पूर्वपक्षे सर्वोपासनेष्वावृत्तेरविशेषः । सिद्धान्ते प्रकृतेषु विशेष इत्युपेत्य विमृश्य पूर्वपक्षयति-किं तावदिति । सर्वोपासनेष्वावृत्तौ विशेषो नेति प्राप्ते प्रकृतोपासनेष्वामरणादावृत्तिः कार्येति सिद्धान्तमाह-एवमिति । उपास्यापरोक्ष्ये दृष्टफले सिद्धे तद्द्वारा दृष्टफलस्यापि सिद्धेरवघातादिवदामरणादनुष्ठानमित्याह-अन्त्येति । अन्त्यप्रत्ययातिरेकेणैवोपासनानां फलप्राप्तियोगान्न तादर्थ्येनाऽऽवृत्तिरित्याशंक्याऽऽह-कर्माणीति । किमत्र प्रमाणं तदाह-सविज्ञान इति । विज्ञानेन भोक्तव्यफलविषयभावनामयेन सहितो म्रियमाणो भोक्ता सविज्ञानः । सविज्ञानं विज्ञानेन सहितं फलम् । यस्मिन्विषये चित्तमस्य स यच्चित्तस्तेन विषयेण ह्यभिव्यक्तेन सह तेज उदानस्तेजोदेवताकत्वादात्मा भोक्ता । म्रियमाणस्य भोक्तुर्ज्ञानवत्त्वे दृष्टान्तश्रुतिरपि प्रमाणमित्याह-तृणेति । यत्रा-

१ 'फलान्तरम्' पा० ।

नाच्च । प्रत्ययास्त्वेते स्वरूपावृत्तिं मुक्त्वा किमन्यत्प्रायणकालभावि भावनाविज्ञानमपेक्षेरन् ॥ तस्माद्ये प्रतिपत्तव्यफलभावनात्मकाः प्रत्ययाः, तेष्वाप्रायणादावृत्तिः ॥ तथा च श्रुतिः "स यावत्क्रतुरस्माल्लोकात्प्रैति" इति प्रायणकालेऽपि प्रत्ययानुवृत्तिं दर्शयति ॥ स्मृतिरपि—"यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तंतमेवैति कौन्तेय सदा तद्भावभावितः" [ भग० गी० ८ । ६ ] इति "प्रयाणकाले मनसाऽचलेन", [ भ० गी० ८ । १० ] इति च । "सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येत" इति च मरणवेलायां कर्तव्यशेषं श्रावयति ॥ १२ ॥ इत्याप्रायणाधिकरणम् ॥ ८ ॥

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ (९) ॥

रत्नप्रभा ।

आमरणमावृत्तिरित्यत आह—प्रत्ययास्त्विति ॥ उपास्तिप्रत्ययानां धारावाहिकतया स्वरूपानिवृत्तिरेवान्त्यं विज्ञानं, न त्वदृष्टद्वारकमन्यदपेक्षितम् । सर्वभावानामेव स्वसमानजातीयद्वारानपेक्षतया प्रत्ययानां प्रत्ययान्तरापेक्षायोगात् । कर्मणां तु दृष्टद्वाराऽन्त्यधीफलत्वानुपपत्तेः अदृष्टद्वारकल्पनेति भावः ॥ क्रतुः ध्यानं सः उपासकः एतत्त्रयम् अक्षितमसि, अच्युतमसि, प्राणसंशितमसि,—इति मन्त्रत्रयं मरणकालेऽपि स्मरेदित्यर्थः ॥ १२ ॥ ( ८ ) ॥ यथोपासकानां यावज्जीवं कर्तव्यमस्ति, न तथात्मविदामिति कर्मक्षयलक्षणां जीवन्मुक्तिमाह—तदधिगम इति ॥ ज्ञानसाधनेषु फलाधिक्यार्थं फलाध्यायेऽपि साधनविचारः

भामती ।

न्द्रियत्वात्तत्र सकृत्करणादेव शास्त्रार्थसमाप्तौ प्राप्तायामुपासनपदवेदनीयावृत्तिमात्रमेव कृतवत उपरमः प्राप्तस्तावतैव कृतशास्त्रार्थत्वादिति प्राप्तेऽभिधीयते—सविज्ञानो भवतीत्यादिश्रुतेर्यत्र स्वर्गादिफलानामपि कर्मणां प्रायणकाले स्वर्गादिविज्ञानापेक्षकत्वं तत्र कैव कथातीन्द्रियफलानामुपासनानाम् । तानि खलु आप्रायणं तत्तदुपास्यगोचरबुद्धिप्रवाहवाहितया दृष्टेनैव रूपेण प्रायणसमये तद्बुद्धिं भावयिष्यन्ति । किमत्र फलवत्प्रायणसमये बुद्ध्याक्षेपेण, न हि दृष्टे संभवत्यदृष्टकल्पना युक्ता । तस्मादाप्रायणं प्रवृत्ता वृत्तिरिति । तदिदमुक्तम्—प्रत्ययास्त्वेत इति । तथा च श्रुतिः सर्वातीन्द्रियविषया—'स यथाक्रतुरस्माल्लोकात् प्रैति तावत्क्रतुर्हामुं लोकं प्रेत्याभिसंभवति' इति । क्रतुः संकल्पविशेषः । स्मृतयश्चोदाहृता इति ॥ १२ ॥ (८) ॥

तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् । गतस्तृतीयशेषः साधनगोचरो विचारः ।

आनन्दगिरीय—न्यायनिर्णयः ।

प्रत्ययात्मकानामपि कर्मणामन्त्यप्रत्ययाक्षेपेण फलजनकत्वं तत्र प्रत्ययात्मकानामुपासनानां किं वक्तव्यमित्यर्थः । तर्हि कर्मवददृष्टद्वाराऽन्त्यप्रत्ययापेक्षोपासनानां स्यान्नेत्याह—प्रत्ययास्त्विति । तेषां धारावाहिकतया दृष्टद्वारेणाऽऽक्षेपकत्वसंभवे नादृष्टकल्पनेति भावः । सर्वभावनानां स्वावान्तरजातीयनिरपेक्षतया भावनात्मकोपासनानां न भावान्तरापेक्षकत्वं स्वरूपसंनिधानेनैव चादृष्टफलोपयोगितेति मत्वोपसंहरति—तस्मादिति । तत्रापि दृष्टमित्येतद्व्याचष्टे—तथा चेति । उपासकः सर्वनामार्थः । क्रतुः संकल्पविशेषः । अस्माल्लोकादभिमानतो गृहीताद्देहादिति यावत् । स्मार्तदर्शनमाश्रित्यापि सूत्रावयवं योजयति—स्मृतिरिति । तत्रैव श्रौतदर्शनान्तरमाह—सोऽन्तेति । पूर्ववदुपासकः सर्वनाम्नोक्तः । अक्षितमस्यच्युतमसि प्राणसंशंसितमसीति मन्त्रत्रयं स्मरेदित्यनुष्ठेयं मरणकालेऽपि दर्शयन्ती श्रुतिर्विज्ञानवृत्तिं सूचयतीत्यर्थः ॥ ॥ १२ ॥ ( ८ ) ॥ यथोपास्तावन्तकाले कर्तव्यमस्ति न तथा ब्रह्मविद्यायां कर्तव्यं किंचिदप्यस्ति तदुत्पत्तिमात्रेणाशेषपापक्षयादित्याह—तदधिगम इति । साधनानुष्ठाने यत्नाधिक्यार्थं फलाध्यायेऽपि

**गतस्तृतीयशेषः ॥ अथेदानीं ब्रह्मविद्याफलं प्रति चिन्ता प्रतायते। ब्रह्माधिगमे सति तद्विपरीतफलं दुरितं क्षीयते, न वा क्षीयत इति संशयः ॥ किं तावत्प्राप्तम् ॥ फलार्थत्वात्कर्मणः फलमदत्त्वा न सम्भाव्यते क्षयः । फलदायिनी ह्यस्य शक्तिः श्रुत्या समधिगता । यदि तदन्तरेणैव फलोपभोगमुपमृद्येत, श्रुतिः कदर्थिता स्यात् । स्मरन्ति च-"न हि कर्माणि क्षीयन्ते" इति ॥ नन्वेवं सति प्रायश्चित्तोपदेशोऽनर्थकः प्राप्नोति ॥**

रत्नप्रभा।

कुतः । सम्प्रति फलाध्यायस्था फलचिन्ता क्रियत इत्याह—**गत इति** ॥ कर्मणां फलान्तत्वशास्त्रात् ज्ञाननाश्यत्वशास्त्राच्च संशयः । **पूर्वपक्षे** ज्ञानिनोऽपि सञ्चितपापभोगानन्तरं मुक्तिः, **सिद्धान्ते** तु ज्ञानसमकालं पापनाशाज्जीवन्मुक्तिरिति फलम् । "न हिंस्याद्" इत्यादिनिषेधश्रुत्या दुरितादृष्टस्य दुःखदायिनी शक्तिरधिगता । "नाभुक्तं क्षीयते कर्म" इति च स्मरन्ति ॥ अतः फलान्तमेव पापं, न मध्ये नश्यतीति पूर्वपक्षः ॥ **ननु तर्हि** तन्नाशार्थं प्रायश्चित्तविधिर्न स्यादिति **चेत्** ॥ **न** ॥ **यथा** आहिताग्नेर्गृहदाहे निमित्ते सति "अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेद्" इति इष्टिविधिः, तद्वद्दोषे निमित्तमात्रे सति प्रायश्चित्तविधेर्दोषनाशार्थत्वासिद्धेः ॥ **ननु** विषम उपन्यासः । युक्तं गृहदाहस्य सिद्धत्वादयोग्यत्वाच्च फलतया निमित्तमात्रत्वम् । "दोषवान् प्रायश्चित्तं कुर्याद्" इत्यत्र तु मलिनः स्नायादितिवद्दोषपदस्य निवृत्तिद्वारा फलपरत्वसम्भवात् "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इति प्रायश्चित्तात् पापनिवृत्तिश्रुतेश्चायुक्तं प्राय-

भामती ।

इदानीमेतदध्यायगतफलविषया चिन्ता प्रतन्यते। तत्र तावत्प्रथममिदं विचार्यते किं ब्रह्माधिगमे ब्रह्मज्ञाने सति ब्रह्मज्ञानफलान्मोक्षाद्विपरीतफलं दुरितं बन्धनफलं क्षीयते न क्षीयत इति संशयः। किं तावत्प्राप्तं,शास्त्रेण हि फलाय यद्विहितं प्रतिषिद्धं चानर्थपरिहारायाश्वमेधादि ब्रह्महत्यादि चापूर्वावान्तरव्यापारं किं तदपूर्वमुपरतेऽपि कर्मण्यत्र सुखदुःखोपभोगात्प्राङ् नाविरन्तुमर्हति । स हि तस्य विनाशहेतुस्तदभावे कथं विनश्येदिति । तस्याकस्मिकत्वप्रसङ्गात् शास्त्रव्याकोपाच्चेति । अदत्तफलं चेत्कर्मापूर्वं विनश्यति कर्मण एव फलप्रसवसामर्थ्यबोधकशास्त्रमप्रमाणं भवेत् । न च प्रायश्चित्तमिव ब्रह्मज्ञानमदत्तफलान्यपि कर्मापूर्वाणि क्षिणोतीति साम्प्रतम् । प्रायश्चित्तानामपि तदपक्षयहेतुत्वात् तद्विधानस्य चैनस्विनराधिकारिप्राप्तिमात्रेणोपपत्तावुपात्तदुरितनिर्बर्हणफलाक्षेपकत्वायोगात् । अत एव स्मरन्ति—नाभुक्तं क्षीयते कर्मेति । यदि पुनरपेक्षितोपायतात्मा प्रायश्चित्तविधिर्न नियोज्यविशेषप्रतिलम्भमात्रेण निर्वृणोतीत्यपेक्षिताकांक्षायां दोषसंयोगेन श्रवणात्त-

आनन्दगिरीय-न्यायनिर्णयः।

साधनसंबद्धमनुष्ठानक्रमं विचार्य फलाध्यायस्थां फलचिन्तामेवावतारयति—**गत इति** । दुरितमधिकृत्य तस्य फलावसानत्वप्रतीतेर्ज्ञानात्क्षयप्रतीतेश्च संशयमाह—**ब्रह्मेति**। तद्विपरीतफलं बन्धनसाधनमित्यर्थः। अत्र साक्षादेव श्रौतब्रह्मात्मधियो दुरितक्षयफलोक्त्या पादादिसंगतिः । पूर्वपक्षे दुरितफलभोगमपेक्ष्य ब्रह्मधियो मोक्षहेतुत्वम् । सिद्धान्ते स्वोत्पत्तिनान्तरीयकत्वेन तस्यास्तद्धेतुत्वमित्युपेत्य प्रश्नपूर्वकं पूर्वपक्षयति—**किं तावदिति** । फलनाश्यत्वाददृष्टस्य फलदानं विना नाशो नास्तीत्यर्थः । फलार्थत्वं कमथस्य सिद्धं तत्राऽऽह—**फलेति** । "ब्राह्मणो न हन्तव्यः" "न कलञ्जं भक्षयेत्" इत्यादिनिषेधानुपपत्त्या दुरितस्यानिष्टफलत्वं सिद्धमित्यर्थः । उक्तमेव स्फोरयति—**यदीति** । तदित्यनिष्टकर्मोक्तिः । "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इतिस्मृतेरपि फलभोगं विना न नाशो दुरितस्येत्याह—**स्मरन्तीति** । भोगादृते कर्म न क्षीयते चेत्प्रायश्चित्तविध्यानर्थक्यमिति शङ्कते—**नन्विति** । तद्विधीनां दोषनिर्हरणार्थत्वाभावान्नैवमित्याह—

नैष दोषः ॥ प्रायश्चित्तानां नैमित्तिकत्वोपपत्तेर्गृहदाहेष्ट्यादिवत् ॥ अपि च प्रायश्चित्तानां दोषसंयोगेन विधानाद्भवेदपि दोषक्षपणार्थता, न त्वेवं ब्रह्मविद्याया विधानमस्ति ॥ नन्वनभ्युपगम्यमाने ब्रह्मविदः कर्मक्षये तत्फलस्यावश्यभोक्तव्यत्वादनिर्मोक्षः स्यात् ॥ नेत्युच्यते ॥ देशकाल-निमित्तापेक्षो मोक्षः कर्मफलवद्भविष्यति ॥ तस्मान्न ब्रह्मविद्याधिगमे दुरितनिवृत्तिरिति ॥ एवं प्राप्ते ब्रूमः ॥ तदधिगमे ब्रह्माधिगमे सति उत्तरपूर्वाघयोरश्लेषविनाशौ भवतः । उत्तरस्याश्लेषः, पूर्वस्य विनाशः ॥ कस्मात् ॥ तद्व्यपदेशात् । तथाहि–ब्रह्मविद्याप्रक्रियायां सम्भाव्यमा-नसम्बन्धस्यागामिनो दुरितस्यानभिसम्बन्धं विदुषो व्यपदिशति "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" [ छां० ४ । १४ । ] इति । तथा विनाशमपि पूर्वोपचितस्य दुरितस्य व्यपदिशति–" तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" [ छां० ५ । २४ । ३ ] इति ।

---

रत्नप्रभा ।

श्चित्तस्य नैमित्तिकत्वमित्याह–अपि चेति ॥ ज्ञानस्य दोषनाशार्थतया विधानं नास्ति । "क्षीयन्ते चास्य कर्माणि" [ मुण्ड० २ । २ । ८ ] इत्यादेर्ज्ञानस्तावकमात्रत्वादित्यर्थः ॥ कर्मभोगानन्तरं देशका-लान्तरे मोक्षो भविष्यति । शास्त्रप्रामाण्यादित्याह–नेत्युच्यत इति ॥ ज्ञानात् कर्मक्षयस्यापूर्वत्वान्मा-नान्तराविरुद्धत्वाच्च तत्परानेकवाक्यानां स्तावकत्वायोगात् तस्यास्तित्वमिति सिद्धान्तयति–एवमित्या-दिना ॥ पापक्रियातोऽपूर्वानुत्पत्तिः–अश्लेषः ॥ सगुणब्रह्मविद्यायां व्यपदेशमुक्त्वा निर्गुणायां तमाह–

भामती ।

न्निबर्हणफलः कल्पेत । तथापि ब्रह्मज्ञानस्य तत्संयोगेनाश्रवणान्न दुरितनिबर्हणसामर्थ्ये प्रमाणमस्ति मोक्ष-वत् । तस्यापि स्वर्गादिफलवद्देशकालनिमित्तापेक्षयोपपत्तेः । शास्त्रप्रामाण्यात्संभविष्यत्यसाववस्था यस्यामुप-भोगेन समस्तकर्मक्षये ब्रह्मज्ञानं मोक्षं प्रसोष्यति । योगर्द्ध्यैव वा दिवि भुव्यन्तरिक्षे बहूनि शरीरेन्द्रियाणि निर्माय फलान्युपभुञ्जर्द्धेन योगसामर्थ्येन योगी कर्माणि क्षपयित्वा मोक्षी संपत्स्यते। स्थिते चैतस्मिन्नर्थे न्याय-

आनन्दगिरीय–न्यायनिर्णयः ।

नेति। यथा यस्याऽऽहिताग्नेरग्निर्गृहान्दहेदिति प्राप्ते गृहदाहवत्याहिताग्नावधिकारिणि "अग्नये क्षामवते पुरोडा-शमष्टाकपालं निर्वपेत्" इति क्षामवतीष्टिर्विधीयते तथा पापसंबन्धिनि नरे प्राप्ते "ब्रह्महा द्वादशवार्षिकं चरेत्" इत्यादिप्रायश्चित्तानि विधीयन्ते । तस्माद्ब्रह्महेत्यादिविशेषणमधिकारिव्यावृत्तिपरं न फलपरमित्यर्थः। गृहदाहेष्ट्यादिवदित्यत्राऽऽदिपदेन भिन्ने जुहोति स्कन्ने जुहोतीत्यादिनैमित्तिकग्रहणं युक्तम् । गृहदाहा-देर्निष्पन्नत्वेन निष्पादयितुमशक्यत्वादधिकारिव्यावृत्त्यर्थत्वं दुरितनिवृत्तेस्तु कर्तुं योग्यत्वादिष्टसाधनत्व-बोधी प्रायश्चित्तविधिस्तत्फलः स्यादित्याशंक्य प्रायश्चित्तानां दोषनिवृत्तिफलत्वमुपेत्य प्रकृते वैषम्यमाह–अपि चेति । मोक्षशास्त्रप्रामाण्यानुपपत्त्या विद्यया दुरितनिवृत्तिरेष्टव्येति शङ्कते–नन्विति । दुरित-फलभोगानन्तरं शास्त्रप्रामाण्यादेव मोक्षसिद्धेर्न तच्छास्त्रविरोधोऽस्तीत्याह–नेतीति । ब्रह्मज्ञानस्य प्रायश्चि-त्तेभ्यो वैषम्ये दुरितानिवर्तकत्वेऽपि मोक्षशास्त्राविरोधे च फलितमाह–तस्मान्नेति । न ब्रह्मविद्या दुरि-तनिबर्हणहेतुरिति प्राप्तमनूद्य सिद्धान्तसूत्रमवतार्य प्रतिज्ञां व्याकरोति–एवमिति । विभागहेतुं प्रश्नपूर्वक-मादत्ते–कस्मादिति । उत्तराश्लेषविषयत्वेन हेतुं व्याचष्टे–तथाहीति । निषिद्धानाचरणाद्व्यर्थं दुरि-ताश्लेषवचनमितिशंकानिरासार्थं विशिनष्टि–संभाव्यमानेति । पूर्वस्य कर्मणो नाशेऽपि हेतुं योजयति–त-

अयमपरः कर्मक्षयव्यपदेशो भवति "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" [ मुण्ड० २।२।८. ] इति ॥ यदुक्तमनुपभुक्तफलस्य कर्मणः क्षयकल्पनायां शास्त्रकदर्थनं स्यादिति ॥ नैष दोषः ॥ न हि वयं कर्मणः फलदायिनीं शक्तिमपजानीमहे । विद्यत एव सा । सा तु विद्यादिना कारणान्तरेण प्रतिबध्यत इति वदामः । शक्तिसद्भावमात्रे च शास्त्रं व्याप्रियेत, न प्रतिबन्धाप्रतिबन्धयोरपि । न हि कर्म क्षीयत इत्येतदपि स्मरणमौत्सर्गिकम् । न हि भोगादृते कर्म क्षीयते तदर्थत्वादिति ॥ इष्यत एव प्रायश्चित्तादिना दुरितस्य क्षयः । "सर्वं पाप्मानं तरति" [ बृ० ४ । ४ । २३ ] "तरति ब्रह्महत्यां" "योऽश्वमेधेन यजते" "य उ चैनमेवं वेद" इत्यादिश्रुतिस्मृतिभ्यः ॥ यत्तूक्तं नैमित्तिकानि प्रायश्चित्तानि भविष्यन्ति-इति ॥

रत्नप्रभा ।

अयमपर इति ॥ पूर्वोक्तं दूषयति-यदुक्तमित्यादिना ॥ विधिनिषेधशास्त्रं "नाभुक्तं क्षीयते" इत्यादिस्मृतिश्च कर्मणः फलशक्तौ प्रमाणम् । अतः शक्तस्याऽपि कुतश्चित् नाशांगीकारे न शास्त्रविरोध इत्यर्थः ॥ तत्त्वज्ञानम्, आत्मन्यशेषदुरितनाशकं, तन्मूलाध्यासबाधकत्वात्, स्वप्नदुरितमूलकर्तृत्वाध्यासबाधकजाग्रद्बो-

भामती ।

बलाद्यथा पुष्करपलाश इत्यादिव्यपदेशो ब्रह्मविद्यास्तुतिमात्रपरतया व्याख्येय इति प्राप्त उच्यते-व्याख्यायेतैवं व्यपदेशो यदि कर्मविधिविरोधः स्यान्न त्वयमस्ति । शास्त्रं हि फलोत्पादनसामर्थ्यमात्रं कर्मणामवगमयति न तु कुतश्चिदागन्तुकान्निमित्ततः प्रायश्चित्तादेस्तदप्रतिबन्धमपि । तस्य तत्रौदासीन्यात् । यदि शास्त्रबोधितफलप्रसवसामर्थ्यमप्रतिबद्धमागन्तुकेन केनचित् कर्मणा ततस्तत्फलं प्रसूत एवेति न शास्त्रव्याघातः । नाभुक्तं कर्म क्षीयत इति च स्मरणमप्रतिबद्धसामर्थ्यकर्माभिप्रायम् । दोषक्षयोद्देशेन चापरविद्यानामस्ति प्रायश्चित्तवद्विधानमैश्वर्यफलानामप्युभयसंयोगाविशेषात् । यत्रापि निर्गुणायां परविद्यायां दोषोद्देशो नास्ति तत्रापि तत्स्वभावालोचनादेव तत्प्रक्षयप्रसवसामर्थ्यमवसीयते । न हि तत्त्वमसिवाक्यार्थपरिभावनाभुवा प्रसंख्यानेन निर्मृष्टनिखिलकर्तृभोक्तृत्वादिविभ्रमो जीवः फलोपभोगेन युज्यते । न हि रज्ज्वां भुजङ्गसमारोपनिबन्धना भयकम्पादयः सति रज्जुतत्त्वसाक्षात्कारे प्रभवन्ति, किंतु संस्कार-

आनन्दगिरीय-न्यायनिर्णयः ।

थेति । सगुणविद्यायामश्लेषविनाशवचनमुदाहृत्य निर्गुणविद्यायामुदाहरति—अयमिति । कर्माश्लेषस्यापि तत्क्षयवचनमुपलक्षणम् । एवं सिद्धान्तमुपपाद्य परोक्तमनुवदति-यदुक्तमिति । ज्ञानात्कर्मदाहादिपक्षे शास्त्रविरोधं प्रत्याह-नेत्यादिना । कर्मणो नास्ति फलदाने शक्तिरिति साधने वा शास्त्रविरोधः सत्यामेव तस्यां भोगं विना तन्निवृत्तिसाधने वेति विकल्प्याऽऽद्यं दूषयति-न हीति । द्वितीयं प्रत्याह-सा त्विति । कथं तर्हि शास्त्रविरोधसमाधिस्तत्राऽऽह-शक्तीति । यत्तु "नाभुक्तं क्षीयते कर्म" इत्यादिस्मृतेर्न भोगादृते कर्मक्षयोऽस्तीति तत्राऽऽह—न हीति । अपवादस्तर्हि केनोत्सर्गस्य स्यादिति तत्राऽऽह-इष्यत इति । आदिशब्देन पूर्वत्र प्रायश्चित्तवदत्र विद्योच्यते । "ज्ञानिनः सर्वपापानि शीर्यन्ते नात्र संशयः । क्रीडन्नपि न लिप्येत पापैर्नानाविधैरपि" इत्याद्याः स्मृतयः । प्रायश्चित्तानां न पापक्षयहेतुत्वं गृहदाहेष्ट्यादिवन्नैमित्तिकत्वेन फलान्तरयोगादित्युक्तमनुवदति-यत्त्विति । यथा मलिनः स्नायादित्युक्ते स्नानफलं मलनिवृत्तिर्गम्यते तथा ब्रह्महा द्वादशवार्षिकं व्रतं चरेदित्युक्ते ब्रह्महत्यानिवृत्तिर्व्रत-

तदसत् । दोषसंयोगेन चोद्यमानानामेषां दोषनिर्हृतिफलसम्भवे फलान्तरकल्पनानुपपत्तेः ॥ यत्पुनरेतदुक्तं न प्रायश्चित्तवद्दोषक्षयोद्देशे विद्याविधानमस्तीति ॥ अत्र ब्रूमः ॥ सगुणासु तावद्विद्यासु विद्यत एव विधानम् । तासु च वाक्यशेषे ऐश्वर्यप्राप्तिः, पापनिवृत्तिश्च,-विद्यावत उच्यते । तयोश्चाविवक्षाकारणं नास्तीत्यतः पाप्मप्रहाणपूर्वकैश्वर्यप्राप्तिस्तासां फलमिति निश्चीयते । निर्गुणायां तु विद्यायां यद्यपि विधानं नास्ति । तथाप्यकर्त्रात्मत्वबोधात्कर्मप्रदाहसिद्धिः । अश्लेष इति चागामिषु कर्मसु कर्तृत्वमेव न प्रतिपद्यते ब्रह्मविदिति दर्शयति । अतिक्रान्तेषु तु यद्यपि मिथ्याज्ञानात्कर्तृत्वं प्रतिपेद इव । तथापि विद्यासामर्थ्यान्मिथ्याज्ञाननिवृत्तेस्तान्यपि प्रलीयन्त इत्याह-विनाश इति । पूर्वप्रसिद्धकर्तृत्वभोक्तृत्वस्वरूपविपरीतं हि त्रिष्वपि कालेष्वकर्तृत्वाभोक्तृत्वस्वरूपं ब्रह्माहमस्मि,नेतः पूर्वमपि कर्ता भोक्ता वाऽहमासं नेदानीं नापि भविष्यति काले इति ब्रह्मविदवगच्छति।एवमेव च मोक्ष उपपद्यते। अन्यथा

रत्नप्रभा ।

धवदित्याह—**तथाप्यकर्त्रात्मबोधादिति** ॥ श्रुतार्थमेव युक्त्या द्रढयति—**अश्लेष इति** ॥ मूलाध्यासानुपपत्तेः पापस्याश्लेषः, तन्नाशात् तद्विनाश इत्यर्थः ॥ अध्यासाभावे विद्वदनुभवमाह—**पूर्वेति** ॥ मोक्षशास्त्रबलाच्च ज्ञानात्कर्मक्षयसिद्धिरित्याह—**एवमेवेति** ॥ ज्ञानात् कर्मक्षये सत्येवेत्यर्थः ॥ मोक्षस्य कर्मफ-

भामती ।

शेषात्किंचित्कालमनुवृत्ता अपि निवर्तन्त एव । अमुमेवार्थमनुवदन्तो यथा पुष्करपलाश इत्यादयो व्यपदेशाः समवेतार्थाः सन्तो न स्तुतिमात्रतया कथंचिद्व्याख्यानमर्हन्ति । ननूक्तं संभविष्यति सावस्था जीवात्मनो यस्यां पर्यायेणोपभोगाद्वा योगर्द्धेः प्रभावतो युगपन्नैकविधकायनिर्माणेनापर्यायेणोपभोगाद्वा जन्तुः कर्माणि क्षपयित्वा मोक्षी संपत्स्यत इत्यत आह—**एवमेव च मोक्ष उपपद्यत इति** । अनादिकालप्रवृत्ता

आनन्दगिरीय—न्यायनिर्णयः ।

फलं प्रतीयते तेन दृष्टत्यागेनादृष्टकल्पना न युक्तेत्याह—**तदसदिति** । प्रायश्चित्तानां पापनिवृत्तिफलत्वेऽपि विद्याया न तथात्वं तद्वत्तन्निवृत्त्युद्देशेन तस्या विध्यभावादित्युक्तमनुद्रवति—**यदिति** । दोषक्षयोद्देशेन सगुणविद्यासु वा विध्यभावो निर्गुणविद्यायां वेति विकल्पयति—**अत्रेति** । प्रथमं प्राह—**सगुणास्विति** । तासामैश्वर्यफलत्वान्न पापक्षयोद्देशेन विधिरित्याशंक्याऽऽह—**तास्विति** । विधिरस्तिविद्यास्तुतिरेव पाप्मादिनिवृत्तिश्रुतिरित्याशंक्याऽऽह—**तयोश्चेति** । उभयसंयोगित्वेन विद्याविधिसंभवादित्यर्थः । पाप्मदाहादिश्रुतेः स्तुत्यर्थत्वाभावे फलितमाह—**अत इति** । द्वितीये विध्यभावमुपेत्य विद्यास्वभावादेव पापक्षयफलत्वमाह—**निर्गुणायां त्विति** । विमतमात्मन्यशेषदुरितनिवर्तकदुरितकर्तृत्वादिबाधकत्वात्स्वप्नदुरितकर्तृत्वादिबाधकतया तत्कालीनदुरितबाधकजाग्रद्बोधवदिति भावः । सर्वत्रापि दुरितनिवर्तकस्य तुल्यत्वाद्दाहाश्लेषविभागोक्तिरयुक्तेत्याशंक्याश्लेषोक्तेर्गतिमाह—**अश्लेष इति चेति** । सर्वमपि व्यापारं कार्यकरणसंघाताश्रयं पश्यन्नविक्रियब्रह्मात्मदर्शी कर्तृत्वमेव स्वस्य न मन्यते । न च परकर्तृकेण पापेन लिप्यते स्वयमित्यर्थः । विद्योत्पत्तेरूर्ध्वं कर्तृत्वाभिमानाभावेऽपि प्राग्भावात्कथं कर्मनिवृत्तिरित्याशंक्य दाहोक्तिमुपपादयति—**अतिक्रान्तेष्विति** । विद्याधीनं कर्मनाशं विद्वदनुभवानुसारेण विवृणोति—**पूर्वेति** । मोक्षशास्त्रानुपपत्त्याऽपि विद्याधीना पापहानिरित्याह—**एवमेवेति** । योगप्रभावाद्युगपदनेकदेहनिर्माणेनापर्यायेण सर्वकर्मफलोपभोगे मुक्तिर्युक्तेत्याशंक्याऽऽह—**अन्यथेति** । कर्मणां नियतकालविपा-

ह्यनादिकालप्रवृत्तानां कर्मणां क्षयाभावे मोक्षाभावः स्यात । न च देशकालनिमित्तापेक्षो मोक्षः कर्मफलवद्भवितुमर्हति । अनित्यत्वप्रसंगात, परोक्षत्वानुपपत्तेश्च ज्ञानफलस्य ॥ तस्माद्ब्रह्माधिगमे दुरितक्षय इति स्थितम् ॥ १३ ॥ इति तदधिगमाधिकरणम् ॥ ९ ॥

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ (१०) ॥

पूर्वस्मिन्नधिकरणे बन्धहेतोरघस्य स्वाभाविकस्याश्लेषविनाशौ ज्ञानफ-

रत्नप्रभा ।

लसाम्यमुक्तं निरस्यति–न चेति ॥ ॥ १३ ॥ ( ९ )॥ इतरस्याऽपि० ॥ अतिदेशत्वात् न संगत्याद्यपेक्षा । ज्ञानात् पुण्यं क्षीयते न वेति पूर्ववत् सन्देहे ज्ञानं, न पुण्यनाशकं, शास्त्रीयत्वात्, पुण्यवदित्य-

भामती ।

हि कर्माशया अनियतकालविपाकाः क्रमवता तावद्भोगेन क्षेतुमशक्याः । भुञ्जानः खल्वयमपरानपि संचिनोति कर्माशयानिति । नाप्यपर्यायमुपभोगेनासक्तः कर्मान्तराण्यसंचिन्वानः क्षेष्यतीति साम्प्रतम् । कल्पशतानि क्रमकालभोग्यानां सम्प्रति भोक्तुमसामर्थ्यात् । दीर्घकालफलानि च कर्माणि कथमेकपदे क्षेष्यन्ति। तस्मान्नान्यथा मोक्षसंभवः । ननु सत्स्वपि कर्माशयान्तरेषु सुखदुःखफलेषु मोक्षफलात् कर्मणः समुदाचरतो ब्रह्मभावमनुभूयाथ लब्धविपाकानां कर्मान्तराणां फलानि मोक्ष्यन्त इत्यत आह–**न च देशकालनिमित्तापेक्ष इति।** न हि कार्यः सम्मोक्षो मोक्षो भवितुमर्हति ब्रह्मभावो हि सः।न च ब्रह्म क्रियते नित्यत्वादित्यर्थः । परोक्षत्वानुपपत्तेश्च ज्ञानफलस्य । ज्ञानफलं खलु मोक्षोऽभ्युपेयते । ज्ञानस्य चानन्तरभाविनी ज्ञेयाभिव्यक्तिः फलं,सैवाविद्योच्छेदमादधती ब्रह्मस्वभावस्वरूपावस्थानलक्षणाय मोक्षाय कल्पते।एवं हि दृष्टार्थता ज्ञानस्य स्यात्।अपूर्वाधानपरम्परया ज्ञानस्य मोक्षफले कल्प्यमाने ज्ञानस्य परोक्षफलत्वमदृष्टार्थत्वं भवेत् । न च दृष्टे संभवत्यदृष्टकल्पना युक्तेत्यर्थः। तस्माद्ब्रह्माधिगमे ब्रह्मज्ञाने सत्यद्वैतसिद्धौ दुरितक्षय इति सिद्धम्॥ ॥१३॥(९)॥इतरस्याप्येवमसंश्लेषः पाते तु । अधर्मस्य स्वाभाविकत्वेन रागादिनिबन्धनत्वेन शास्त्रीयेण ब्रह्मज्ञानेन प्रतिबन्धो युक्तः।धर्मज्ञानयोऽस्तु शास्त्रीयत्वेन ज्योतिष्टोमदर्शपौर्णमासवदविरोधान्नोच्छेद्योच्छेत्तृभावो युज्यते । पाप्मनश्च विशेषतो ब्रह्मज्ञानोच्छेद्यत्वश्रुतेर्धर्मस्य न तदुच्छेद्यत्वम् । विशेषविधानस्य शेषप्रतिषेधनान्तरीयकत्वेन लोकतः सिद्धेः । यथा देवदत्तो दक्षिणेनाक्ष्णा पश्यतीत्युक्ते न वामेन पश्यतीति गम्यते । उभे ह्येवैष एते तरतीति च यथासंभवं ब्रह्मज्ञानेन दुष्कृतं भोगेन सुकृतमिति । 'क्षीयन्ते चास्य कर्माणि' इति च सामान्यवचनं 'सर्वे पाप्मानः' इति विशेषश्रवणात्पापकर्माणीति विशेषे उपसंहरणीयम् । तस्माद्ब्रह्मज्ञानाद् दुष्कृतस्यैव क्षयो न सुकृतस्येति प्राप्ते पूर्वाधिकरणराद्धान्तोऽतिदिश्यते। नो खलु ब्रह्मविद्या

आनन्दगिरीय–न्यायनिर्णयः ।

कत्वाद्युगपदुपभोगायोगादुपभोगस्यापि कर्मान्तरसंचयमन्तरेणासंभवात्कल्पशतातिक्रमकालभोग्यानामधुना भोक्तुमयुक्तत्वाद्दीर्घकालानां च परिमितकालभोगानुपपत्तेर्न विद्यातिरेकेण निःशेषकर्मनिवृत्तिरित्यर्थः । सत्स्वपि कर्मान्तरेषु मोक्षहेतुकर्मवशान्मोक्षमनुभूय कर्मान्तरफलानि पश्चाद्भोक्ष्यन्त इत्याशंक्याऽऽह–**न चेति ।** दृष्टफलत्वाच्च विद्याया न तत्फलस्य कालान्तरापेक्षा येनोत्पन्नविद्योऽपि कर्मफलान्यनुभूय पश्चान्मुच्येतेत्याह–**परोक्षेति ।** श्रुतिस्मृतिन्यायसिद्धमुपसंहरति–**तस्मादिति** ॥ १३ ॥ ( ९ ) ॥ ज्ञानात्पापनिवृत्तिमुक्त्वा तस्मादेव पुण्यनिवृत्तिमतिदिशति–**इतरस्यापीति ।** अधिकरणस्यापूर्वविषयतां वक्तुं वृत्तं कीर्तयति–**पूर्वस्मिन्निति ।** पुण्यं कर्म विषयस्तत्किं ब्रह्मधिया न क्षीयते,क्षीयते वेति पूर्ववत्कर्मणां फलान्तत्वप्रतीतेर्ज्ञानादाद्यप्रतीतेश्च संशये पादादिसंगतिरतिदेशे पृथङ् न वाच्येति मन्वानोऽधिकां शङ्कामाह–

मित्तौ शास्त्रव्यपदेशान्निरूपितौ । धर्मस्य पुनः शास्त्रीयत्वाच्छास्त्रीयेण ज्ञानेनाविरोध इत्याशंक्य तन्निराकरणाय पूर्वाधिकरणन्यायातिदेशः क्रियते । इतरस्याऽपि पुण्यस्य कर्मण एवमघवदसंश्लेषो विनाशश्च ज्ञानवतो भवतः ॥ कुतः ॥ तस्याऽपि स्वफलहेतुत्वेन ज्ञानफलप्रतिबन्धित्वप्रसंगात् । "उभे उ हैवैष एते तरति" [ बृ० ४ । ४ । २२ ] इत्यादिश्रुतिषु दुष्कृतवत्सुकृतस्याऽपि प्रणाशव्यपदेशात् । अकर्त्रात्मबोधनिमित्तस्य च कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वात् । "क्षीयन्ते चास्य कर्माणि" [ मुण्ड० २ । २ । ८ ] इति चाविशेषश्रुतेः । यत्रापि केवल एव पाप्मशब्दः पठ्यते तत्रापि तेनैव पुण्यमप्याकलितमिति द्रष्टव्यम् ॥ ज्ञानफलापेक्षया निकृष्टफलत्वात् । अस्ति च श्रुतौ पुण्येऽपि पाप्मशब्दः "नैनं सेतुमहोरात्रे तरतः" [ छां ८ । ४ । १ ] इत्यत्र सह दुष्कृतेन सुकृतमप्यनुक्रम्य "सर्वे पाप्मानोऽतो निवर्तन्ते" [ छां ८ ।

---

रत्नप्रभा ।

भिकाशंकामुक्त्वाऽतिदेशं व्याचष्टे—**धर्मस्येत्यादिना** ॥ ज्ञानं, पुण्यनाशकं, तन्मूलाविद्याघातित्वादिति न्यायोपेतागमबाधितमनुमानमिति भावः ॥ ननु "क्षीयन्ते च" इत्यविशेषश्रुतिः पापविषया । "सर्वे पाप्मानं तरति" इति विशेषश्रुतेरित्यत आह—**यत्रापि केवल इति** ॥ पापपुण्यक्षयपराधिकरणद्वयस्य फल-

भामती ।

केनचिददृष्टेन द्वारेण दुष्कृतमपनयत्यपि तु दृष्टेनैव भोक्तृभोक्तव्यभोगादिप्रविलयद्वारेण, तच्चैतत्तुल्यं सुकृतेऽपीति कथमेतदपि नोच्छिन्द्यात् । एवं च सति न शास्त्रीयत्वसाम्यमात्रमविरोधहेतुर्न हि प्रत्यक्षत्वसामान्यमात्रादविरोधो जलानलादीनाम् । न च सुकृतशास्त्रमनर्थकमब्रह्मविदं प्रति तद्विधेरर्थवत्त्वात् । एवमवस्थिते च पाप्मश्रुत्या पुण्यमपि ग्रहीतव्यम् । ब्रह्मज्ञानमपेक्ष्य पुण्यस्य निकृष्टफलत्वात्तत्फलं हि क्षयातिशयवत् ।

आनन्दगिरीय—न्यायनिर्णयः ।

**धर्मस्येति** । न सुकृतज्ञाने बाध्यबाधकभूते चोदनालक्षणत्वादग्निहोत्रदर्शपूर्णमासवत् । न च क्षीयन्ते चेत्यादिविरोधस्तस्य सामान्योपाधौ प्रवृत्तस्य सर्वे पाप्मान इति विशेषानुसारेण पापकर्मणि संकोचात्पुण्यपापे विधूयेति पुण्यं फलोपभोगेन पापं ज्ञानेन विधूयेति नियमतो विद्यावतः सुकृताधीनः संसारः स्यादिति भावः । अधिकाशंकामनूद्य सिद्धान्तयति—**इत्याशंक्येति** । अतिदेशसूत्रपदानि व्याकरोति—**इतरस्यापीति** । शास्त्रीयत्वेन तयोर्विरोधो नास्तीत्युक्तमिति शङ्कते—**कुत इति** । अग्निहोत्रदर्शपूर्णमासयोरविरुद्धफलत्वान्न निवर्त्यनिवर्तकभावो न शास्त्रीयत्वादित्यभिप्रेत्य हेतोरप्रयोजकत्वमाह—**तस्यापीति**। पापं दृष्टान्तयितुमपिशब्दः । कालात्ययापदिष्टत्वाच्च नानुमानमित्याह—**उभे इति** । विमतं तत्त्वधीनिवर्त्यं तद्विरुद्धत्वाद् दुरितवदितिप्रत्यनुमानविरोधाच्चायुक्तमनुमानमित्याह—**अकर्त्रात्मेति**। सामान्यश्रुतिविरोधाच्चानुमानासिद्धिरित्याह—**क्षीयन्ते चेति** । यत्तु सामान्यशास्त्रस्य सर्वे पाप्मान इतिविशेषश्रुत्या पाप्मकर्मणि संकोचः स्यादिति तत्राऽऽह—**यत्रेति** । पाप्मशब्दस्य निकृष्टफलकर्मविषयत्वादुत्कृष्टफलं कर्म कथं तेन गृह्यते तत्राऽऽह—**ज्ञानेति** । वृद्धप्रयोगाभावे कथमुपचारेणापि पाप्मशब्दः सुकृते स्यात्तत्राऽऽह—**अस्तीति** । तत्रापि पाप्मशब्दस्य सुकृतविषयत्वमसिद्धमित्याशंक्य प्रक्रममनुसृत्याऽऽह—**सहेति** । यत्तु पुण्यपापे विधूयेत्यत्र पुण्यं फलभोगेन पापं विज्ञानेन विधूयेति विभजनं तन्नाश्रुतकल्पनाहेत्वभावादिति

४ । १ ] इत्यविशेषेणैव प्रकृते पुण्ये पाप्मशब्दप्रयोगात् ॥ पाते त्विति॥ तु शब्दः—अवधारणार्थः । एवं धर्माधर्मयोर्बन्धहेत्वोर्विद्यासामर्थ्याद्-श्लेषविनाशसिद्धेरवश्यम्भाविनी विदुषः शरीरपाते मुक्तिरित्यवधारयति ॥ १४ ॥ इतीतरसंश्लेषाधिकरणम् ॥ १० ॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ (११) ॥

पूर्वयोरधिकरणयोर्ज्ञाननिमित्तः—

---

रत्नप्रभा ।

माह—पाते त्विति ॥ १४ ॥ ( १० ) ॥ अनारब्धकार्ये एव तु ॥ उक्तकर्मक्षयं विषयीकृत्य "क्षीयन्ते च" इत्यविशेषश्रुतेः " तस्य तावदेव चिरम्" इतिश्रुतेश्च संशयमाह—पूर्वयोरिति ॥ जीवन्मुक्त्यसिद्धिः, तत्सिद्धिश्चेति उभयत्र फलम् । पूर्वसिद्धान्तन्यायेन पूर्वपक्षप्राप्तौ उक्तोत्सर्गतः कर्मक्षतिः प्रारब्धा-

भामती ।

न ह्येवं मोक्षो निरतिशयत्वान्नित्यत्वाच । दृष्टप्रयोगश्चायं पाप्मशब्दो वेदे पुण्यपापयोः । तद्यथा पुण्यपापे अनुक्रम्य सर्वे पाप्मानोऽतो निवर्तन्त इत्यत्र।तस्मादविशेषेण पुण्यपापयोरश्लेषविनाशाविति सिद्धम् १४॥(१०)॥ **अनारब्धकार्य एव तु पूर्वे तदवधेः** । यद्यद्वैतज्ञानस्वभावालोचनयोत्तरपूर्वसुकृतदुष्कृतयोरश्लेषविनाशौ हन्त आरब्धानारब्धकार्ययोश्चाविशेषेणैव विनाशः स्यात् । कर्तृकर्मादिप्रविभागस्योभयत्राविशेषात् । तन्निबन्धनत्वाच विनाशस्य । न च संस्कारशेषात्कुलालचक्रभ्रमणवदनुवृत्तिः । वस्तुनः खल्वनुवृत्तिः । मायावादिनश्च पुण्यपापयोश्च मायामात्रविनिर्मितत्वेन मायानिवृत्तौ न पुण्यापुण्ये न तत्संस्कारो वस्तुसन्तीति कस्यानुवृत्तिः । न च रज्जौ सर्पादिविभ्रमजनिता भयकम्पादयो निवृत्तेऽपि विभ्रमे यथानुवर्तन्ते तथेहापीति युक्तम् । तत्रापि सर्पासत्त्वेऽपि तज्ज्ञानस्य सत्त्वे तज्जनितभयकम्पादीनां तत्संस्काराणां च वस्तुसत्त्वेन निवृत्तेऽपि विभ्रमेऽनिवृत्तेः । अत्र तु न माया न तज्जः संस्कारो न तद्गोचर इति तुच्छत्वात्किमनुवर्तेत । न संस्कारशेषो न कर्मेत्यविशेषेणारब्धकार्याणामनारब्धकार्याणां च निवृत्तिः । न च तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति श्रुतेर्देहपातप्रतीक्षारब्धकार्याणां युक्ता । न ह्येषा श्रुतिरवधिभेदविधायिन्यपि तु क्षिप्रतापरा।यथा लोक एतावन्मे चिरं यत्स्नातो भुञ्जानश्चेति। न हि तत्र स्नानभोजने अवधित्वेन विधीयेते किंतु क्षेपीयस्ता प्रतिपाद्यते । उभयविधाने हि वाक्यं भिद्येतावधिभेदः चिरता चेति प्राप्तेऽभिधीयते—यद्यप्यद्वैतब्रह्मतत्त्वसाक्षात्कारोऽनाद्यविद्योपदर्शितप्रपञ्चमात्रविरोधितया तन्मध्यपतितसकलकर्मविरोधी । तथाप्यनारब्धविपाकं कर्मजातं द्रागित्येव समुच्छिनत्ति न त्वारब्धविपाकं संपादितजात्यायुर्वितत पूर्वापरीभूतसुखदुःखोपभोगप्रवाहं कर्मजातम् । तद्धि समुदाचरद्वृत्तितयेतरेभ्यः प्रसुप्तवृत्तिभ्यो बलवत् । अन्यथा देवर्षीणां हिरण्यगर्भमनूद्दालकप्रभृतीनां विगलितनिखिलक्लेशजालावरणतया परितः प्रद्योतमानबुद्धिसत्त्वानां न ज्योग्जीविता भवेत् । श्रूयते चैषां श्रुतिस्मृतीतिहासपुराणेषु तत्त्वज्ञता च महाकल्पकल्पमन्वन्तरादिजीविता च । न चैते महाधियो न ब्रह्मविदो ब्रह्मविदश्चाल्पपुण्यमेधसो मनुष्या इति श्रद्धेयम् । तस्मादागमानुसारतोऽस्ति प्रारब्धविपाकानां कर्मणां प्रक्षयाय तदीयसमस्तफलोपभोगप्रतीक्षा सत्यपि तत्त्वसाक्षात्कारे । तावदेव चिरमिति न चिरता विधीयते । अपि तु श्रुत्यन्तरसिद्धां चिरतामनूद्य

आनन्दगिरीय—न्यायनिर्णयः ।

मत्वा ज्ञानसामर्थ्यादशेषकर्मक्षये तदश्लेषे च फलितमर्थं सूत्रावयवमवतार्य व्याकुर्वन्नाह—पाते त्वितीति । एतेन फलमधिकरणयोरुक्तम् ॥ १४ ॥ ( १० ) ॥ तत्त्वज्ञानेन सर्वकर्मणामौत्सर्गिको लयो व्याख्यातः। संप्रत्यारब्धकर्मविषये तदपवादं दर्शयति—अनारब्धेति । वृत्तं कीर्तयन्नधिकरणस्य विषयमाह—पूर्वयोरिति । ज्ञानाधीनं कर्मक्षयं विषयीकृत्य क्षीयन्ते चेत्यविशेषश्रुतेस्तस्य तावदेव चिरमिति

सुकृतदुष्कृतयोर्विनाशोऽवधारितः । स किमविशेषेणारब्धकार्ययोरनारब्धकार्ययोश्च भवति–उत–विशेषेणानारब्धकार्ययोरेवेति विचार्यते। तत्र "उभे उ हैवैष एते तरति" [ बृ० ४।४।२२ ] इत्येवमादिश्रुतिष्वविशेषश्रवणादविशेषेणैव क्षय इति ॥ एवं प्राप्ते प्रत्याह–अनारब्धकार्ये एव त्विति॥ अप्रवृत्ते फले एव पूर्वे जन्मान्तरसञ्चितेऽस्मिन्नपि च जन्मनि प्राक् ज्ञानोत्पत्तेः सञ्चिते सुकृतदुष्कृते ज्ञानाधिगमात्क्षीयेते, न त्वारब्धकार्ये सामिभुक्तफले । याभ्यामेतद्ब्रह्मज्ञानायतनं जन्म निर्मितम् ॥ कुत एतत् ॥ "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" [ छां० ६ । १४ । २ ] इति शरीरपातावधि करणात्क्षेमप्राप्तेः । इतरथा हि ज्ञानादशेषकर्मक्षये सति स्थितिहेत्वभावाज्ज्ञानप्राप्त्यनन्तरमेव क्षेममश्नुवीत । तत्र शरीरपातप्रतीक्षां नाचक्षीत ॥ ननु–वस्तुबलेनैवायमकर्त्रात्मबोधः कर्माणि क्षपयन्, कथं कानिचित्क्षपयेत, कानिचिच्चोपेक्षेत । न हि समानेऽग्निबीजसम्पर्के केषाञ्चिद्बीजशक्तिः क्षीयते, केषाञ्चिन्न क्षीयते,–इति शक्यमङ्गीकर्तुमिति ॥ उच्यते ॥ न तावदनाश्रित्यारब्धकार्यं कर्माशयं

---

रत्नप्रभा ।

न्यकर्मविषयेत्यपवादं सिद्धान्तयति–एवमिति ॥ सामिशब्दः–अर्धवाचकः । प्रारब्धाद्यावन्न विमुच्यते, तावानेव विलम्बः । तन्मोक्षे ब्रह्म सम्पद्यत इति श्रुत्यर्थः ॥ देहपातावधिलिङ्गात्, तत्त्वविदां याज्ञवल्क्यादीनां देहधारणश्रुतिस्मृतिलिंगाच्च, प्रारब्धकर्मणस्तत्त्वज्ञानं प्रति हेतुत्वेनोपजीव्यत्वाच्च,–प्राबल्यसिद्धेस्तत्प्रतिबद्धं तत्त्वज्ञानं तत्सिद्ध्यर्थम् अविद्यांशं विक्षेपशक्त्याख्यं विहायावरकाविद्यांशं नाशयतीत्याह–उच्यते । न

भामती ।

देहपातावधिमात्रविधानं तदेतदभिसंधायौचित्यमात्रतयाह स्म भगवान् भाष्यकारः–न तावदनाश्रित्यारब्धकार्यं कर्माशयमिति । न चेदं न जातु दृष्टं यद्विरोधिसमवाये विरोध्यन्तरमनुवर्तत इत्याह–

आनन्दगिरीय–न्यायनिर्णयः ।

श्रुतेश्च संशयमाह–स किमिति । श्रौती ब्रह्मधीरप्रतिबद्धैव फलदेत्यभिधानात्पादादिसंगतिः । पूर्वपक्षे क्षेमप्राप्तेरवधिकरणासिद्धिः । सिद्धान्ते विदुषोऽपि प्रारब्धकर्मणा कंचित्कालमवस्थानात्तत्सिद्धिरित्यङ्गीकृत्य पूर्वाधिकरणन्यायेन पूर्वपक्षयति–तत्रेति । सिद्धान्तसूत्रमवतार्य व्याकरोति–एवमिति । सौत्रावधारणार्थमाह–न त्विति । अर्धभुक्तफले कर्मणी कार्यद्वारा विशिनष्टि–याभ्यामिति । विद्याशक्त्यनुगृहीताविशेषश्रुतेर्विद्वद्देहारम्भकयोरपि कर्मणोर्नाशः स्यादित्याक्षिपति–कुत इति । श्रुत्योत्तरमाह–तस्येति। कथमेतावता कर्मशेषसिद्धिस्तत्राऽऽह–इतरथेति। ज्ञानसमकालमेव सर्वकर्मक्षयान्मोक्षे ज्ञानमेव क्षेमप्राप्तेरवधिरिति न देहपातं तदवधिमभिदधीत । तथा च श्रुतावधिवद्यन्तरकरणलिङ्गाज्ज्ञानादूर्ध्वमपि शरीरमनुवर्तमानं कर्मशेषं गमयति तदभावे तदनुवृत्तेरनुपपत्तेरित्यर्थः । विद्याया दृष्टसामर्थ्येन कर्मक्षयहेतुत्वान्न शास्त्रेण तन्निराकरणं दृष्टविरोधिनस्तस्य ग्रावप्लवनश्रुतिवदप्रामाण्यादिति शंकते–नन्विति । दाहकसंनिध्यविशेषे दाहव्यवस्थासिद्धिरित्यत्र दृष्टान्तमाह–न हीति । तस्य तावदेव चिरमिति विदुषो देहपातावधिकरणलिङ्गम् । उद्दालकादीनां तत्त्वविदामेवदेहधारणा विषयैः श्रुतिस्मृतिलिङ्गैस्तत्त्वविद्भिरपि गुरुभिः शिष्याणां संबन्धान्यथानुपपत्त्या चानुगृहीतं मन्त्रादिप्रतिबद्धस्याग्नेरदाहकत्ववज्ज्ञानस्य सर्वकर्मक्षये शक्तस्याप्यारब्धकर्मनिवृत्तौ प्रतिबन्धं कल्पयतीत्याह–उच्यत इति । किंच, ज्ञानार्थं कर्म स्वयमेव देहमारभ्य ज्ञानं तस्मिन्करोति कर्मान्तरारब्धे वेति विकल्प्याऽऽद्यं दूषयति–नेति । न हि ज्ञानार्थस्य कर्मणो देहारम्भकत्वं

ज्ञानोत्पत्तिरुपपद्यते । आश्रिते च तस्मिन्कुलालचक्रवत्प्रवृत्तवेगस्याऽन्तराले प्रतिबन्धासम्भवाद्भवति वेगक्षयप्रतिपालनम् । अकर्त्रात्मत्वबोधोऽपि हि मिथ्याज्ञानबाधनेन कर्माण्युच्छिनत्ति । बाधितमपि मिथ्याज्ञानं द्विचन्द्रादिज्ञानवत्संस्कारवशात्कञ्चित्कालमनुवर्तत एव ॥ अपि च नैवात्र विवदितव्यं-ब्रह्मविदः कञ्चित्कालं शरीरं ध्रियते, न वा ध्रियत इति । कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणञ्चापरेण प्रतिक्षेप्तुं शक्येत । श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्देशेनैतदेव निरुच्यते ॥ तस्मादनारब्धकार्ययोरेव सुकृतदुष्कृतयोर्विद्यासामर्थ्यात्क्षय इति निर्णयः ॥ १५ ॥ इत्यनारब्धकार्याधिकरणम् ॥ ११ ॥

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥ (१२) ॥

रत्नप्रभा ।

तावदिति ॥ विक्षेपकाविद्यालेश एव तत्संस्कारः शिष्यान् प्रति जीवन्मुक्तौ स्वानुभवमाह—अपि च नैवेति ॥ १९ ॥ ( ११ ) ॥ अग्निहोत्रादि तु० ॥ नित्यं नैमित्तिकं कर्म ज्ञानात् नश्यति, न वेति सन्देहे "उभे" [ बृ० ४ । ४ । २२ ] पुण्यपापे "तरति" [ बृ० ४ । ४ । २२ ] इत्यविशेष-

भामती ।

अकर्त्रात्मबोधोऽपीति । यदा लोकेऽपि विरोधिनोः किंचित्कालं सहानुवृत्तिरुपलब्धा तदेहागमबलाद्दीर्घकालमपि भवतीति न शक्या निवारयितुम्, प्रमाणसिद्धस्य नियोगपर्यनुयोगानुपपत्तेः । तदेवं मध्यस्थान्प्रतिपाद्य ये भाष्यकारमातं मन्यन्ते तान् प्रत्याह—अपि च नैवात्र विवदितव्यमिति । स्थितप्रज्ञश्च न साधकस्तस्योत्तरोत्तरध्यानोत्कर्षेण पूर्वप्रत्ययानवस्थितत्वात् । निरतिशयस्तु स्थितप्रज्ञः । स च सिद्ध एव । न च ज्ञानकार्या भयकम्पादयः, ज्ञानमात्रादनुत्पादात् । सर्पावच्छेदो हि तस्य भयकम्पादिहेतुः । स चासन्न निर्वचनीय इति कुतो वस्तुसतः कार्योत्पादः । न च कार्यमपि भयकम्पादि वस्तुसत् । तस्यापि विचारासहत्वेनानिर्वाच्यत्वात् । अनिर्वाच्याच्चानिर्वाच्योत्पत्तौ नानुपपत्तिः । यादृशो हि यक्षस्तादृशो बलिरिति सर्वमवदातम्॥१९॥(११)॥अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् । यदि पुण्यस्याप्यश्लेषविनाशौ हन्त नित्यमप्यग्निहोत्रादि न कर्तव्यं योगमारुरुक्षुणा । तस्यापीतरपुण्यवद्विद्यया विनाशात् । 'प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरम्' इति न्यायात् । न च विविदिषन्ति यज्ञेन दानेनेति मोक्षलक्षणैककार्यतया विद्याकर्मणोरविरोधः । सहासंभवेनैककार्यत्वासंभवात् । न ह्येतमात्मानं विदुषो विगलिताखिलकर्तृभोक्तृत्वादिप्रपञ्चविभ्रमस्य पूर्वोत्तरे नित्ये क्रियाजन्ये पुण्ये संभवतः । तस्माद्विविदिषन्ति यज्ञेनेति

आनन्दगिरीय-न्यायनिर्णयः ।

कल्प्यं गौरवात्तेन कर्मान्तरारब्धे देहे ज्ञानोत्पत्तिरित्यर्थः । न द्वितीयः,स्तथा सति ज्ञानस्योपजीव्यकर्मबाधकत्वानुपपत्तेरित्याह—आश्रिते चेति । अकर्त्रात्मज्ञानं कर्मनिदानमज्ञानं निवर्तयत्युपादानाभावे च कथं कर्मानुवृत्तिस्तत्राह—अकर्त्रात्मेति । कर्माण्यपीति संबन्धः । सोपादानानि कर्माण्युच्छिन्नानि चेत्कथमारब्धकर्मानुवृत्तिस्तत्राऽऽह—बाधितमिति । स्मृतिहेतुत्वेऽपि संस्कारस्याविद्यावच्चैतन्यदोषत्वादपरोक्षभ्रमहेतुतेत्यभिप्रेत्य संस्कारवशादित्युक्तम् । विप्रतिपन्नान्प्रति जीवन्मुक्तिमुक्त्वा शिष्यान्प्रत्याह—अपि चेति । जीवन्मुक्तिः सत्यमर्थः । विवादायोगे हेतुमाह—कथं हीति । प्रमाणवत्त्वादपि जीवन्मुक्तिः स्वीकार्येत्याह—श्रुतीति । उक्तमुत्सर्गापवादमुपसंहरति—तस्मादिति ॥ १९ ॥ ( ११ ) ॥ विद्याजन्यकर्मक्षयस्याऽऽरब्धकर्मस्वपवादमुक्त्वाऽनारब्धकर्मस्वपि केषुचित्तदपवादं दर्शयति—अग्निहोत्रादीति ।

पुण्यस्याप्यश्लेषविनाशयोरघन्यायोऽतिदिष्टः । सोऽतिदेशः सर्वपुण्यविषय इत्याशंक्य प्रतिवक्ति–अग्निहोत्रादि त्विति ॥ तुशब्दः–आशङ्कामपनुदति । यन्नित्यं कर्म वैदिकमग्निहोत्रादि तत्तत्कार्यायैव भवति । ज्ञानस्य यत्कार्यं तदेवास्य कार्यमित्यर्थः ॥ कुतः ॥ "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" [बृ० ४ । ४ । २२] इत्यादिदर्शनात् ॥ ननु ज्ञानकर्मणोर्विलक्षणकार्यत्वात्कार्यैकत्वानुपपत्तिः ॥ नैष दोषः॥ज्वरमरणकार्ययोरपि दधिविषयोर्गुडमन्त्रसंयुक्तयोस्तृप्तिपुष्टिकार्यदर्शनात्, तद्वत्कर्मणोऽपि ज्ञानसंयुक्तस्य मोक्षकार्यत्वोपपत्तेः ॥ नन्वनारभ्यो मोक्षः कथमस्य कर्मकार्यत्वमुच्यते ॥ नैष दोषः ॥ आरादुपकारकत्वात्कर्मणः । ज्ञानस्यैव हि प्रापकं सत्कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते । अत एव चातिक्रान्तविषयमेतत्कार्यैकत्वाभिधानम् ॥

---

रत्नप्रभा ।

श्रुतेर्नश्यतीत्याशंक्येतरस्याऽपीत्युक्तातिदेशस्य नित्याद्यतिरिक्तकाम्यपुण्यविषयत्वेन अत्रापवादं सिद्धान्तयति–पुण्यस्येत्यादिना॥अत्र–पूर्वपक्षे ज्ञानार्थं नित्याद्यनुष्ठानासिद्धिः पंकक्षालनन्यायात्, सिद्धान्ते तु ज्ञानोत्पत्त्यर्थत्वात् तत्सिद्धिरिति विवेकः ॥ अत्र भाष्ये ज्ञानकर्मणोः साक्षादेककार्यत्वं परमतेनोक्त्वा, साक्षात्पारम्पर्याभ्यां मोक्षहेतुत्वं स्वमतमुक्तमिति मन्तव्यम् ॥ अत एवेति । ज्ञानादूर्ध्वं कर्माभावात् पूर्वकर्म-

भामती ।

वर्तमानापदेशो ब्रह्मज्ञानस्य यज्ञादीनां वा स्तुतिमात्रं न तु मोक्षमाणस्य मुक्तिसाधनं यज्ञादिविधिरिति प्राप्त उच्यते–सत्यं न विद्यैककार्यत्वं कर्मणां परस्परविरोधेन सहासंभवात् । विद्योत्पादकतया तु कर्मणामारादुपकारकाणामस्तु मोक्षोपयोगः । न च कर्मणां विद्यया विरुध्यमानानां न विद्याकारणत्वं, स्वकारणविरोधिनां कार्याणां बहुलमुपलब्धेः । तथा च विद्यालक्षणकार्योपायतया कार्यविनाश्यानामपि कर्मणामुपादानमर्थवत् । तदभावे तत्कार्यस्यानुत्पादेन मोक्षस्यासंभवात् । एवं च विविदिषन्ति यज्ञेनेति यज्ञसाधनत्वं विद्याया अपूर्वमर्थं प्रापयतः पञ्चमलकारस्य नात्यन्तपरोक्षवृत्तितया ज्ञानस्तुत्यर्थतया कथंचिद्व्याख्यानं भविष्यति । तदनेनाभिसंधिनोक्तं–ज्ञानस्यैव हि प्रापकं सत्कर्म प्रणाड्या मोक्षकारण-

आनन्दगिरीय–न्यायनिर्णयः ।

वृत्तसंकीर्तनपूर्वकमधिकरणस्य तात्पर्यमाह–पुण्यस्येति । अग्निहोत्रादिनित्यनैमित्तिककर्माणि विषयस्तेषामितरवज्ज्ञानेनाश्लेषविनाशौ स्यातां न वेति साधारणश्रुतेर्विविदिषाश्रुतेश्च संशये सुकृतशब्दस्य सर्वपुण्यविषयत्वादग्निहोत्रादीनामपि पुण्यान्तरवद्विनाश्यत्वात्पङ्कक्षालनन्यायापातादारुरुक्षुणाऽपि तानि नानुष्ठेयानीति प्रापय्य सिद्धान्तयति—इत्याशंक्येति । अत्र च ब्रह्मविद्यासामर्थ्यान्न नित्यनैमित्तिकनिवृत्तिस्तेषां तदुत्पत्त्यर्थत्वादित्यापवादिकी पादादिसंगतिः । पूर्वपक्षे लौकिकन्यायादारुरुक्षोरपि नित्याद्यननुष्ठानम् । सिद्धान्ते तदनवतारात्पूर्वं ज्ञानोत्पत्तेस्तदनुष्ठानध्रौव्यमित्यभिप्रेत्य सूत्रं व्याचष्टे–तु शब्द इति । धीनाश्यानामपि कर्मणामनुष्ठानस्य विद्योत्पत्त्यर्थतया पङ्कप्रक्षालनन्यायानवकाशात्पूर्वंज्ञानादनुष्ठेयान्यग्निहोत्रादीनीति सिद्धान्तप्रतिज्ञां विवृणोति–यदिति । अग्निहोत्राद्यनुष्ठानस्य विद्योत्पत्त्यर्थत्वे प्रमाणं पृच्छति–कुत इति । तत्र विविदिषावाक्यं प्रमाणयति–तमेतमिति । कर्मणां विद्योत्पत्त्यर्थत्वेऽपि न तयैककार्यतेति शङ्कते–नन्विति । परमतेन परिहरति–नेत्यादिना । स्वमतं दर्शयितुं शङ्कयति–नन्विति । स्वमतेन समाधत्ते–नेत्यादिना । आरादुपकारकत्वं स्फोरयति–ज्ञानस्येति । किंविषयमिदं कार्यैकत्ववचनं तदाह–अत इति । यतो

न हि ब्रह्मविद आगाम्यग्निहोत्रादि सम्भवति । अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात् । सगुणासु तु विद्यासु कर्तृत्वाऽनतिवृत्तेः सम्भवत्यागाम्यप्यग्निहोत्रादि । तस्याऽपि निरभिसन्धिनः कार्यान्तराभावाद्विद्यासंगत्युपपत्तिः ॥१६॥ किंविषयं पुनरिदमश्लेषविनाशवचनम्, किंविषयं वाऽदो विनियोगवचनमेकेषां शाखिनां "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति। अत उत्तरं पठति—

**अतोऽन्याऽपि ह्येकेषामुभयोः ॥ १७ ॥**

अतः-अग्निहोत्रादेर्नित्यात्कर्मणः अन्यापि हि अस्ति साधुकृत्या । या फलमभिसन्धाय क्रियते, तस्या एष विनियोग उक्तः एकेषां शाखिनां— "सुहृदः साधुकृत्यामुपयन्ति" इति । तस्या एव चेदमघवदश्लेषविनाशनिरूपणम् इतरस्याप्येवमसंश्लेष इति । तथा एवञ्जातीयकस्य काम्यस्य कर्मणो विद्यां प्रत्यनुपकारकत्वे सम्प्रतिपत्तिः उभयोः अपि जैमिनिबादरायणयोराचार्ययोः ॥ १७ ॥ इत्यग्निहोत्राद्यधिकरणम्॥१२॥

**यदेव विद्ययेति हि ॥ १८ ॥ (१३) ॥**

समधिगतमेतदनन्तराधिकरणे-नित्यमग्निहोत्रादिकं कर्म मुमुक्षुणा

रत्नप्रभा।

विषयमित्यर्थः। निर्गुणविद्यायां कर्मसाहित्यं तृप्तिं प्रति भोजनस्य लाङ्गलेनेव दर्शितम्। सम्प्रति सगुणविद्यापरत्वेन सूत्रस्याञ्जस्यमाह—सगुणास्विति॥१६॥ उत्तरसूत्रार्थं गृह्णाति—किमित्यादिना॥यत्प्रारब्धादन्यत् काम्यं पुण्यं पापञ्च तदेव विद्वत्सुहृद्द्विषतोः स्वसमानजातीयं कर्म जनयति, स्वयञ्च ज्ञानान्नश्यतीति भावः ॥ १७ ॥ (१२)॥ यदेव विद्ययेति हि ॥ उक्तनित्यादिकं विषयमुपजीव्य

भामती।

मित्युपचर्यते। यत एव न विद्योदयसमये कर्मास्ति नापि परस्तादपि तु प्रागेव विद्याया अत एव चातिक्रान्तविषयमेतत्कार्यैकत्वाभिधानम्। एतदेव स्फोरयति-न हि ब्रह्मविद इति ॥ १६ ॥ सूत्रान्तरमवतारयितुं पृच्छति-किंविषयं पुनरिदमिति। अस्योत्तरं सूत्रम्-अतोऽन्यापि ह्येकेषामुभयोः। काम्यकर्मविषयमश्लेषविनाशवचनं शाखान्तरीयवचनं च तस्य पुत्रा दायमुपयन्तीति ॥१७॥(१२)॥ यदेव विद्ययेति हि। अस्ति विद्यासंयुक्तं यज्ञादि य एवं विद्वान्यजेतेत्यादिकम्। अस्ति च केवलम्। तत्र यथा

आनन्दगिरीय-न्यायनिर्णयः।

विद्याकाले परस्ताद्वा कर्म नास्ति प्रागेव तदस्तित्वमत एवेति यावत् । धीकाले परस्ताद्वा कर्मासत्त्वं स्फुटयति—न हीति। निर्गुणविद्याविषयत्वं सूत्रस्योपेत्य लाङ्गलभोजनयोर्जीवनहेतुतावद्धीकर्मणोः साक्षात्पारंपर्याभ्यां मोक्षहेतुत्वमुक्तम्। संप्रति सगुणविद्याविषयत्वे सूत्रस्य सामञ्जस्यमभिप्रेत्याऽऽह—सगुणास्विति। तथाऽपि तस्य कुतो विद्यासंगतिस्तत्राऽऽह—तस्यापीति। सगुणविद्याफले नित्यकर्मणां साक्षादुपयोगाभिप्रायमिदं सूत्रमित्यर्थः॥ १६ ॥ सूत्रान्तरमवतारयितुं पृच्छति—किमिति। काम्यकर्मविषयं वचनद्वयमिति सूत्रमवतारयति—अत इति। तदक्षराणि व्याकरोति—अत इत्यादिना। उक्तेऽर्थे दार्ढ्यार्थमाचार्यान्तरसंवादं दर्शयति—तथेति ॥ १७ ॥ (१२)॥ पूर्वोक्ताग्निहोत्रादिष्वेवाङ्गावबद्धोपास्तिसाहित्यानियमं निरूपयति—यदेवेति। वृत्तं कीर्तयति—समधिगतमिति। विचारविषयं दर्शयति—

१ वेदं विनीति पाठांतरम्।

मोक्षप्रयोजनोद्देशेन कृतमुपात्तदुरितक्षयहेतुत्वद्वारेण सत्त्वशुद्धिकारणतां प्रतिपद्यमानं मोक्षप्रयोजनब्रह्माधिगमनिमित्तत्वेन ब्रह्मविद्यया सहैककार्यं भवतीति । तत्राऽग्निहोत्रादि कर्माङ्गव्यपाश्रयविद्यासंयुक्तं, केवलं चास्ति । "य एवं विद्वान्यजति" "य एवं विद्वाञ्जुहोति" "य एवं विद्वाञ्छंसति" "य एवं विद्वानुद्गायति" "तस्मादेवंविदमेव ब्रह्माणं कुर्वीत, नानेवंविदम् । तेनोभौ कुरुतः–यश्चैतदेवं वेद, यश्च न वेद" इत्यादिवचनेभ्यो विद्यासंयुक्तं केवलमप्यस्ति ॥ तत्रेदं विचार्यते–किं विद्यासंयुक्तमेवाग्निहोत्रादिकं कर्म मुमुक्षोर्विद्याहेतुत्वेन तया सहैककार्यत्वं प्रतिपद्यते न केवलम्–उत–विद्यासंयुक्तं केवलञ्चाविशेषेणेति ॥ कुतः संशयः ॥ "तमेतमात्मानं यज्ञेन विविदिषन्ति" इति यज्ञादीनामविशेषेणात्मवेदनांगत्वेन श्रवणात । विद्यासंयुक्तस्य चाग्निहोत्रादेर्विशिष्टत्वावगमात । किं तावत्प्राप्तम् ॥ विद्यासंयुक्तमेव कर्माग्निहोत्राद्यात्मविद्याशेषत्वं प्रतिपद्यते, न विद्याविहीनम् । विद्योपेतस्य विशिष्टत्वावगमाद्विद्याविहीनात, "यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवंविद्वान्" इत्यादिश्रुतिभ्यः, "बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि" [ भ० गी० २ । ३९ ] "दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय" [ भ० गी० २ । ४९ ] इत्यादिस्मृतिभ्यश्चेति ॥ एवं प्राप्ते प्रतिपद्यते । "यदेव विद्यया" इति हि सत्यमेतत । विद्यासंयुक्तं कर्माग्निहोत्रादिकं विद्याविहीनात्कर्मणोऽग्निहोत्रादेर्विशिष्टं–विद्वानिव ब्राह्मणो विद्याविहीनाद्ब्राह्मणात् । तथापि नात्यन्तमनपेक्षं विद्यारहितं कर्माऽग्नि-

रत्नप्रभा ।

सबीजं संशयमुक्त्वा पूर्वपक्षमाह—**विद्यासंयुक्तमेवेति** ॥ अत्र **पूर्वपक्षे** कर्माङ्गोपास्तिहीनकर्मणो ज्ञानार्थत्वासिद्धिः, **सिद्धान्ते** तत्सिद्धिरिति भेदः । भवतु विद्याविशिष्टस्य कर्मणो ज्ञानं प्रति शीघ्रकारित्वाद्यः

भामती ।

ब्राह्मणाय हिरण्यं दद्यादित्युक्ते विदुषे ब्राह्मणाय दद्यान्न ब्राह्मणब्रुवाय मूर्खायेति विशेषप्रतिलम्भः तत्कस्य हेतोस्तस्यातिशयवत्त्वात् । एवं विद्यारहिताद्यज्ञादेर्विद्यासहितमतिशयवदिति तस्यैव परविद्यासाधनत्वमुपा-

आनन्दगिरीय–न्यायनिर्णयः ।

**तत्रेति** । अङ्गसङ्गिविद्यासंयुक्तत्वे प्रमाणमाह–**य एवमिति** । नित्यमग्निहोत्रादिकर्म विषयीकृत्य संशयमाह—**तत्रेदमिति** । प्रश्नपूर्वकं संशयकारणमाह–**कुत इति** । श्रौतब्रह्मधीहेतुतया प्रकृतनित्यकर्मस्वङ्गाश्रितविद्यासंयोगानियमवादादत्र प्रासङ्गिकी पादादिसंगतिः । पूर्वपक्षे केवलकर्मणो मोक्षान्वयासिद्धिः । सिद्धान्ते तस्यापि पारंपर्यात्तत्सिद्धिरिति मत्वा विमृश्य पूर्वपक्षमाह–**किं तावदिति** । अविशेषतो यज्ञेनेत्यादिश्रुतेरुभयस्यापि कर्मणो विद्यांगतेत्याशंक्य ब्राह्मणाय दद्यादित्युक्ते विदुषे न तद्धीनायेतिविशेषलाभवदिहापीत्याह–**नेत्यादिना** । विद्यासहितस्य कर्मणो वैशिष्ट्ये मानमाह–**यदहरिति** । श्रौतेऽर्थे स्मृतिमनुकूलयति–**बुद्ध्येति** । केवलस्याग्निहोत्रादेर्धीहेतुत्वाभावान्मोक्षान्वयो नेति प्राप्तमनूद्य सिद्धान्तयति—**एवमिति** । किं विद्यायुक्तस्य कर्मणो विद्याहीनादन्तरंगत्वमुच्यते किंवा केवलं कर्म विद्याहेतुरेव नेति तत्राऽऽद्यमङ्गीकरोति—**सत्यमिति** । द्वितीयं दूषयति–**तथाऽपीति** । तत्र प्रश्नपूर्वकं श्रुतिविरोधं हेतुमाह–

होत्रादिकम् ॥ कस्मात् ॥ "तमेतमात्मानं यज्ञेन विविदिषन्ति" इत्यत्राविशेषेणाग्निहोत्रादेर्विद्याहेतुत्वेन श्रुतत्वात् ॥ ननु विद्यासंयुक्तस्याऽग्निहोत्रादेर्विद्याविहीनाद्विशिष्टत्वावगमाद्विद्याविहीनमग्निहोत्राद्यात्मविद्याहेतुत्वेनानपेक्षमेवेति युक्तम्॥नैतदेवम्॥ विद्यासहायस्याग्निहोत्रादेर्विद्यानिमित्तेन सामर्थ्यातिशयेन योगादात्मज्ञानं प्रति कश्चित्करणत्वातिशयो भविष्यति, न तथा विद्याविहीनस्येति युक्तं कल्पयितुम्। न तु "यज्ञेन विविदिषन्ति" इत्यविशेषेणात्मज्ञानाङ्गत्वेन श्रुतस्याग्निहोत्रादेरनङ्गत्वं शक्यमभ्युपगन्तुम्। तथाहि श्रुतिः-"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" [छां० १।१।१०] इति विद्यासंयुक्तस्य कर्मणोऽग्निहोत्रादेर्वीर्यवत्तरत्वाभिधानेन स्वकार्यं प्रति कञ्चिदतिशयं ब्रुवाणा विद्याविहीनस्य तस्यैव तत्प्रयोजनं प्रति वीर्यवत्त्वं दर्शयति। कर्मणश्च वीर्यवत्त्वं तत्। यत्स्वप्रयोजनसाधनसहत्वम्। तस्माद्विद्यासंयुक्तं नित्यमग्निहोत्रादि विद्याविहीनञ्चोभयमपि मुमुक्षुणा मोक्षप्रयोजनोद्देशेनेह जन्मनि, जन्मान्तरे च, प्राक् ज्ञानोत्पत्तेः कृतं यत्, तद्यथासामर्थ्यं ब्रह्माधिगमप्रतिबन्धकारणोपात्तदुरितक्षयहेतुद्वारेण ब्रह्माधिगमकारणत्वं प्रतिपद्यमानं श्रवणमननश्रद्धाध्यानतात्पर्याद्यन्तरङ्गकारणापेक्षं ब्रह्मविद्यया सहैककार्यं भवतीति स्थितम् ॥ १८ ॥ इति विद्याज्ञानसाधनत्वाधिकरणम् ॥ १३ ॥

---

रत्नप्रभा।

कश्चिदतिशयः। विद्यासामर्थ्यात्। नैतावता केवलस्य वैयर्थ्यम्। विविदिषाश्रुतिविरोधात्॥ न च तत्र श्रुतौ यज्ञादिशब्दानां विद्योपेतकर्मपरतया संकोचो युक्तः। हि यतः। "यदेव विद्यया" इति

भामती।

तद्दुरितक्षयद्वारा नेतरस्य। तस्माद्विविदिषन्ति यज्ञेनेत्यविशेषश्रुतमपि विद्यासहिते यज्ञाद्युपसंहर्तव्यमिति प्राप्तेऽभिधीयते-यदेव विद्यया करोति तदेवास्य वीर्यवत्तरमिति तरबर्थश्रुतेर्विद्यारहितस्य वीर्यवत्तामात्रमवगम्यते। न च सर्वथाऽकिंचित्करस्य तदुपपद्यते। तस्मादस्त्यस्यापि कयापि मात्रया परविद्योत्पादोपयोग

आनन्दगिरीय-न्यायनिर्णयः।

कस्मादिति। उक्तमर्थमाक्षेपसमाधिभ्यां साधयति-नन्वित्यादिना। केवलस्य कर्मणो विद्यां प्रत्यनंगत्वमेव किं न स्यात्तत्राऽऽह-न त्विति। विविदिषन्ति यज्ञेनेत्यविशेषश्रुतमपि विद्यासहिते यज्ञादावुपसंहर्तव्यमित्याशंक्य श्रुत्या केवलस्यापि कर्मणो वीर्यवत्त्वाभ्यनुज्ञानान्मैवमिति सूत्रव्याख्यापूर्वकमाह-तथाहीति। वीर्यवत्त्वप्रतीतावपि कुतो विद्यासाधनत्वमित्याशंक्याकिंचित्करस्य वीर्यवत्त्वायोगादित्याह-कर्मणश्चेति। कर्मणां पारंपर्येण मोक्षान्वयं दर्शयितुमुपसंहरति-तस्मादिति। विधुरादेराश्रमकर्मस्वनधिकारात्तदीयं जप्यादि विद्यासाधनमित्यन्तरा चापीत्यत्रोक्तम्। इह तु विद्योपेतेषु कर्मसु शक्तस्य तत्त्यागेन केवलकर्मकारिणो न विद्या सेत्स्यतीत्याशंक्य समाहितमिति द्रष्टव्यम् ॥ १८ ॥ (१९) ॥ अनारब्धकार्यमग्निहोत्रादि विद्यायुक्तं केवलं च तद्धेतुत्वान्न क्षीयते ज्ञानेनेत्युक्तम्। इदानीमारब्धकार्ययोः शुभाशुभयोर्ज्ञा-

## भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९ ॥ (१४) ॥

**इति श्रीमद्व्यासमहर्षिप्रणीते शारीरकमीमांसादर्शने तुरीयाध्यायस्य प्रथमः पादः ॥**

**अनारब्धकार्ययोः पुण्यपापयोर्विद्यासामर्थ्यात्क्षय उक्तः । इतरे त्वारब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म सम्पद्यते—"तस्य तावदेव चिरं, यावन्न विमोक्ष्ये अथ सम्पत्स्ये" [ छां० ६ । १४ । २ ] इति "ब्रह्मैव सन्ब्रह्माप्येति" इति चैवमादिश्रुतिभ्यः ॥ ननु सत्यपि सम्यग्दर्शने यथा प्राग्देहपाताद्भेददर्शनं द्विचन्द्रदर्शनन्यायेनानुवृत्तमेवं पश्चादप्यनुवर्तेत ॥न॥ निमित्ताभावात् ॥ उपभोगशेषक्षपणं हि तत्रानुवृत्तिनिमित्तम् । न च तादृशमत्र किञ्चिदस्ति ॥ नन्वपरः कर्माशयोऽभिनवमुपभोगमारप्स्यते ॥ न ॥ तस्य दग्धबीजत्वात् । मिथ्याज्ञानावष्टम्भं हि कर्मान्तरं देहपाते उपभोगान्तरमारभते। तच्च मिथ्याज्ञानं सम्यग्ज्ञानेन दग्ध**

---

रत्नप्रभा ।

श्रुतिः केवलस्याऽपि वीर्यवत्त्वं गमयतीति सिद्धान्तग्रन्थार्थः ॥ १८ ॥ ( १३ ) ॥ **भोगेन त्वितरे क्षपयित्वा सम्पद्यते** ॥ तत्त्वविदत्र विषयः । स किं प्रारब्धक्षयानन्तरं संसरति—उत—नेति निमित्तभावाभावाभ्यां संशये सिद्धान्तमुपक्रमते—**अनारब्धेति** ॥ अनारब्धकर्मणः क्षयोक्तावारब्धस्य कथं क्षय इत्याकांक्षायामस्योत्थानात् **सङ्गतिः** ॥ **पूर्वपक्षे** विदेहकैवल्यासिद्धिः, **सिद्धान्ते** तत्सिद्धिरिति भेदः । देहपातोत्तरमपि—तत्त्ववित् संसरति, संसारयोग्यत्वात्, यथा—देहपातात् पूर्वमित्यनारब्धाधिकरणदृष्टान्तेन पूर्वपक्षमाह—**नन्विति** ॥ भोगनिमित्तकर्माभावाद्वैत्वसिद्धिः ॥ यत्तु सञ्चितं कर्मान्तरं तन्न निमित्तं फलस्य ।

भामती ।

इति विचाररहितमपि यज्ञादि परविद्यार्थिनाऽनुष्ठेयमिति सिद्धम् ॥१८॥(१३)॥ **भोगेन त्वितरे क्षपयित्वा संपद्यते** । अनारब्धकार्ये इत्यस्य नञः फलं भोगेन निवृत्तिं दर्शयत्यनेन सूत्रेण । अस्य तूपपादनं पुर-

आनन्दगिरीय–न्यायनिर्णयः ।

नादनिवृत्तयोर्निवृत्तिप्रकारमाह—**भोगेनेति** । निर्गुणब्रह्मविद्विषयः स किं देहपातादूर्ध्वमपि संसारवान्नेति तन्निमित्तभावाभावाभ्यां संदेहे पूर्वपक्षमग्रे दर्शयिष्यन्नादौ वृत्तानुवादेन सूत्रतात्पर्यमाह—**अनारब्धेति** । अत्र श्रौतब्रह्मविद्यावतो भोगेनाऽऽरब्धकर्मनिवृत्तौ ब्रह्मभावस्यावश्यंभावोक्त्या पादादिसंगतिः । पूर्वपक्षे ब्रह्मविदोऽपि न मुक्तिः । सिद्धान्ते तस्य साऽवश्यंभाविनी, सत्यां सामग्र्यां कार्यध्रौव्यात्। अनारब्धकार्ये एवेत्यत्र नञाऽऽरब्धकर्मनिवृत्तेर्व्यावर्तितं तस्य फलं भोगेन क्षयलक्षणमधुना दर्शयतीत्युक्तम्। इदानीं निर्गुणब्रह्मविद्वानारब्धकर्मक्षयानन्तरमपि संसारी संसारसंबन्धयोग्यत्वात्पूर्वकालीनब्रह्मविद्वानित्यनुमानेन पूर्वपक्षमाह—**नन्विति** । भोगनिमित्तकर्मवत्त्वमुपाधिरिति परिहरति—**नेत्यादिना** । तदेव स्फुटयति—**उपभोगेति** । तत्रेति प्राक्कालीनब्रह्मविदुक्तिः । देहपातोत्तरकालीनेऽपि ब्रह्मविदि भोगनिमित्तं किंचिद्भविष्यतीति साधनव्याप्तिमाशंक्याऽऽह—**न चेति** । अनारब्धं कर्म जन्मान्तरारम्भकमिति कुतः साधनाव्याप्तिरिति शंकते—**नन्विति** । तस्य ज्ञानेन प्रतिबद्धशक्तित्वान्मैवमित्याह—**न तस्येति** । किं तस्य बीजं तदाह—**मिथ्येति** । केन तर्हि तस्य दाहः स्यात्तद्दर्शयति—**तच्चेति** । अथ संपत्स्यत इत्यादिश्रुतिबाधनाद्बीजाभावस्य च विद्वदनुभवसिद्धत्वान्न पूर्वं कर्मानुमेयमिति भावः । प्रारब्धकर्मफलभोगादूर्ध्वं मोक्षेऽपि तत्कर्मजन्यानेकदेहसंभवात्तत्र च विद्याप्रमोषोपपत्तेस्तत्कृतकर्मणामश्लेषाभावेन मुक्त्यभावमाशंक्याधिकारिणां देहान्तरे ज्ञानाप्रमोषस्याऽऽगामिकत्वादस्मदादीनामथ संपत्स्य इति श्रुतिसिद्धत्वादारब्धभोगानन्तरं मुक्तिरवश्यंभाविनीत्यधिक-

मित्यतः साध्वेतदारब्धकार्यक्षये विदुषः कैवल्यमवश्यम्भवति ॥ १९ ॥ इतीतरक्षपणाधिकरणम् ॥ १४ ॥

( १९त्यत्र ग्वृत्ति- । ...)

**इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणपरमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये जीवन्मुक्तिनिरूपणं नाम चतुर्थाध्यायस्य प्रथमः पादः समाप्तः ॥ ४ ॥ १ ॥**

---

रत्नप्रभा ।

दग्धमूलत्वात् । अविद्यादयो हि क्लेशाः कर्मणस्तत्फलस्य च मूलम् । तदुक्तं योगशास्त्रे-"क्लेशमूलः कर्माशयः" [ पातञ्ज० २ । १२ ] "सति मूले तद्विपाकः" [ पातञ्ज० २ । १३ ] इति । मूलं ज्ञानाग्निना दग्धमिति कुतः पुनः संसारः । तस्माद्देहपाते कैवल्यमिति सिद्धम् ॥ ४॥१॥१९॥(१

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शनभाष्यव्याख्यायां (भाष्य) रत्नप्रभायां चतुर्थस्याध्यायस्य प्रथमः पादः समाप्तः ॥ ४ ॥ १ ॥

भामती ।

स्तादपकृष्य कृतमिति नेह क्रियते पुनरुक्तिभयात् ॥ ४ ॥ १ ॥ १९ ॥ ( १४ ) ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यविभागे भामत्यां चतुर्थस्याध्यायस्य प्रथमः पादः समाप्तः ॥ ४ ॥ १ ॥

आनन्दगिरीय-न्यायनिर्णयः ।

रणार्थमुपसंहरति—इत्यत इति । साधनानुष्ठानक्रमो निर्गुणविद्याफलं चोक्तमिति पादार्थमुपसंहर्तुमितीत्युक्तम् ॥ ४ ॥ १ ॥ १९ ॥ ( १४ ) ॥

इति श्रीमत्परहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि (ज्ञान) विरचिते शारीरकमीमांसाभाष्यविभागे न्यायनिर्णये चतुर्थाध्यायस्य प्रथमः पादः ॥ ४ ॥ १ ॥

**॥ इति चतुर्थाध्यायस्य जीवन्मुक्तिनिरूपणाख्यः प्रथमः पादः ॥**



भोगे-
इति श्रीम-
अना-

# चतुर्थाध्याये द्वितीयः पादः २.



## वाङ् मनसि दर्शनाच्छब्दाच्च ॥ ४ ॥ २ ॥ १ ॥ (१) ॥

अथापरासु विद्यासु फलप्राप्तये देवयानं पन्थानमवतारयिष्यन्प्रथमं ताव-द्यथाशास्त्रमुत्क्रान्तिक्रममाचष्टे । समाना हि विद्वदविदुषोरुत्क्रान्ति-रिति वक्ष्यति । अस्ति प्रायणविषया श्रुतिः—"अस्य सोम्य पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देव-तायाम्" [ छां० ६ । ८ । ६ ] इति । किमिह वाच एव वृत्तिमत्या मनसि सम्पत्तिरुच्यते—उत—वाग्वृत्तेरिति विषयः । तत्र वागेव ताव-न्मनसि सम्पद्यत इति प्राप्तम् । तथाहि—श्रुतिरनुगृहीता भवति । इत-रथा लक्षणा स्यात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा ॥

रत्नप्रभा ।

ॐ ब्रह्मणे नमः ॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ ज्ञानफलोक्त्यनन्तरमुपासनफलं ब्रह्मलोकस्थं वक्तव्यम् । तच्चार्चिरादिमार्गप्राप्यम् । मार्गप्राप्तिश्चोत्क्रान्तिसाध्या ॥ तस्मादुपास्तिफलाक्षिप्तोत्क्रान्तिपा-दस्यास्त्यध्यायसंगतिः । युक्तं चास्य पूर्वपादानन्तर्यं ज्ञानफलोक्त्यनन्तरं वक्तव्योपास्तिफलेनाक्षिप्तत्वा-दित्याह—अथेति ॥ ज्ञानिन इवोपासकस्याप्युत्क्रान्तिर्नेत्यत आह—समानेति ॥ विद्वानुपासकः ।

भामती ।

वाङ् मनसि दर्शनाच्छब्दाच्च । अथास्मिन् फलविचारलक्षणे वाङ् मनसि संपद्यत इत्यादिविचारो-ऽसंगत इत्यत आह—अथापरासु विद्यासु फलप्राप्तय इति । अपरविद्याफलप्राप्त्यर्थदेवयानमार्गार्थ-त्वादुत्क्रान्तेस्तद्गतो विचारः पारम्पर्येण भवति फलविचार इति नासंगत इत्यर्थः । नन्वयमुत्क्रान्तिक्रमो विदुषो नोपपद्यते 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते' इति श्रवणात्तत्कथमस्य विद्याधिकार इत्यत आह—समाना हि विद्वदविदुषोरिति ॥ विषयमाह—अस्तीति । विमृशति—किमिहेति । विशयः संशयः । पूर्वपक्षमाह—तत्र वागेवेति । श्रुतिलक्षणाविशये संशये । सिद्धान्तसूत्रं पूरयित्वा पठति-

आनन्दगिरीय-न्यायनिर्णयः ।

पूर्वपादान्तिमाधिकरणे निर्गुणब्रह्मसंपत्तिरुक्ता संप्रति सगुणब्रह्मसंपत्तिं निरूपयिष्यन्नुत्क्रान्तौ वागादीनां मनसि वृत्तिलयं दर्शयति—वागिति । सगुणविद्याफलस्य ब्राह्मलौकिकस्यार्चिरादिगतिप्राप्यस्यानुत्क्रम्य प्राप्त्ययोगात्तदर्थमुत्क्रान्तिनिरूपणं व्यापिब्रह्मात्मभावे निर्गुणविद्याफले तन्निषेधार्थं चेत्यभिप्रेत्य पादस्या-ध्यायसंगतिमाह—अथेति । निर्गुणधीफलोक्त्यानन्तर्यमथशब्दार्थः । विदुषो नोत्क्रान्तिरत्रैव समवनी-यन्त इति श्रुतेस्तत्किमुत्क्रान्तिचिन्तयेत्याशंक्याऽऽह—समानेति । विद्वानपरब्रह्मविदुक्तः । पादार्थं संक्षि-प्याऽऽद्याधिकरणस्य विषयमाह—अस्तीति। प्रयतः प्रयाणं कुर्वत उच्चिक्रमिषोरिति यावत् । वाङ् मनसि संपद्यत इत्यत्र वाचमधिकृत्य करणव्युत्पत्त्या स्वरूपसंपत्तिप्रतीतेर्भावव्युत्पत्त्या च स्ववृत्तिसंपत्तिवित्तेः संशयमाह—किमिहेति । श्रौतसगुणब्रह्मधीफलार्थगत्युपयुक्तोत्क्रान्त्येकदेशनिरूपणात्पादादिसंगतिः । पूर्वपक्षे कारणे कार्यलयनियमासिद्धिः । सिद्धान्ते लौकिकपरीक्षकाभीष्टनियमसिद्धिरिति मत्वा पूर्वपक्षयति—तत्रेति । तत्र वाक्शब्दश्रुतिं हेतूकरोति—तथा हीति । वृत्तिमद्वाचकशब्दस्य वृत्तिमात्रपरत्वे दोषमाह—इतरथेति । लक्षणाऽपि शब्दवृत्तित्वादविरुद्धेत्याशंक्याऽऽह—श्रुतीति । श्रुत्यनुसारिणमर्थमुपसंहरति—

( १९ )न्यत्र तस्माद्वाच एवायं मनसि प्रविलय इति ॥ एवं प्राप्ते ब्रूमः ॥ वाग्वृत्ति-र्मनसि सम्पद्यत इति कथं वाग्वृत्तिरिति व्याख्यायते । यावता "वाङ् मनसि" इत्येवमाचार्यः पठति ॥ सत्यमेतत ॥ पठिष्यति तु परस्ताद् "अविभागो वचनाद्" [ व्या० सू ४ । २ । १६ ] इति ॥ तस्मादत्र वृत्त्युपशममात्रं विवक्षितमिति गम्यते । तत्त्वप्रलयविवक्षायां तु सर्वत्रै-वाविभागसाम्यात्किं परत्रैव विशिंष्यादविभाग इति ॥ तस्मादत्र वृत्त्युपसंहारविवक्षायां वाग्वृत्तिः पूर्वमुपसंह्रियते, मनोवृत्ताववस्थितायामित्यर्थः ॥ कस्मात् ॥ "दर्शनात" ॥ दृश्यते हि वाग्वृत्तेः पूर्वमुपसंहारो मनोवृत्तौ विद्यमानायां, न तु वाच एव वृत्तिमत्या मनस्युपसंहारः केनचिदपि द्रष्टुं शक्यते ॥ ननु श्रुतिसामर्थ्याद्वाच एवायं मनस्यप्ययो युक्त इत्युक्तम् ॥ नेत्याह ॥ अतत्प्रकृतित्वात ॥ यस्य हि यत उत्पत्तिः,

रत्नप्रभा ।

तस्यानुपासकवदुत्क्रान्तिरस्ति । अज्ञत्वादिति वक्ष्यत इत्यर्थः ॥ प्रयतः म्रियमाणस्येत्यर्थः ॥ वाक्पदस्य करणभावव्युत्पत्तिभ्यां करणतद्वृत्त्योर्लयमानात् संशयः । पूर्वपक्षे करणानां स्वरूपलयात् मृतमात्रस्य मुक्तिः, सिद्धान्ते तु संसारसिद्धिः । अनुपादाने मनसि वाचस्तत्त्वलयायोगेन व्यापारमात्रोपशमादिति विवेकः ॥ सूत्रे वृत्तिपदाध्याहारः कथमिति शङ्कते-कथमिति ॥ उत्तरत्र हि सूत्रकृत् तत्त्वविद इन्द्रियाणां स्वरूपलयं वक्ष्यति । तद्बलादिहाध्याहार उचितः । अज्ञस्याऽपि इन्द्रियलयसाम्ये वक्ष्यमाणविशेषोक्त्ययोगादिति समाध्यर्थः ॥ प्रकृतावेव विकारलय इति न्यायविरुद्धार्थे श्रुतिरपि न ब्रूते इति सिद्धान्तयति-अतत्प्रकृतित्वादिति ॥ न्यायस्य निरवकाशत्वाद्बलीयस्त्वम् । शब्दस्य तूक्तिर्वागिति व्युत्पत्त्या,

भामती ।

वाग्वृत्तिर्मनसि संपद्यते इति । वृत्त्यध्याहारप्रयोजनं प्रश्नपूर्वकमाह-कथमिति । उत्तराधिकरणपर्यालोचनेनैवं पूरितमित्यर्थः । तत्त्वस्य धर्मिणो वाचः प्रलयविवक्षायां त्विह सर्वत्रैव परत्रेह चाविभागसाम्यात्किं परत्रैव विशिंष्यादविभाग इति न त्वत्रापि । तस्मादिहाविभागेनाविशिंषतोऽत्र वृत्त्युपसंहारमात्रविवक्षा सूत्रकारस्येति गम्यते । सिद्धान्तहेतुं प्रश्नपूर्वकमाह-कस्मादिति । सत्यामेव मनोवृत्तौ वाग्वृत्तेरुपसंहारदर्शनात् । वाचस्तूपसंहारमदृष्टं नागमोऽपि गमयितुमर्हति । आगमप्रभवयुक्तिविरोधाच्च । आगमो हि दृष्टानुसारतः प्रकृतौ विकाराणां लयमाह । न च वाचः प्रकृतिर्मनो येनास्मिन्नियं लीयेत । तस्माद् वृत्तिवृत्तिमतोरभेदविवक्षया वाक्पदं तद्वृत्तौ व्याख्येयम् । संभवति च वाग्वृत्तेर्वागप्रकृतावपि मनसि लयः।

आनन्दगिरीय-न्यायनिर्णयः ।

तस्मादिति । प्रकृतावेव विकारलय इति नियमाभावं प्राप्तमनूद्य सिद्धान्तसूत्रं पूरयित्वा पठति-एवमिति । अध्याहारमसहमानः शङ्कते-कथमिति । उत्तराधिकरणालोचनया विवक्षितमध्याहारं साधयति-सत्यमिति । वृत्तिमल्लयस्य वक्ष्यमाणत्वेऽपि प्रकृते किं जातं तदाह-तस्मादिति । विपक्षे दोषमाह-तत्त्वेति । तत्त्वस्य धर्मिणो वाचः प्रलयविवक्षायामिह तत्र चाविभागसाम्यात्परत्रैवाविभागविशेषणमयुक्तमित्यर्थः । विशेषणसामर्थ्यसिद्धमर्थमुपसंहरति-तस्मादिति । सूत्रस्याभीष्टमर्थं संक्षिपति-वागिति । सिद्धान्तहेतुं प्रश्नपूर्वकमवतार्य व्याचष्टे-कस्मादिति । वृत्तिमदुपसंहारेऽपि तुल्यं दर्शनमित्याशंक्य लौकिकमागमिकं वा तदिति विकल्प्याऽऽद्यं प्रत्याह-न त्विति । द्वितीयमालम्बते-नन्विति । आगमस्यापि दृष्टानुसारात्प्रकृतौ विकारलयोक्तिपरत्वाद्वाचश्च मनोविकारत्वाभावात्तत्र लयायोगाद् वृत्तिमतोरभेदधिया वाक्शब्दो वृत्तावेवेत्याह-नेत्याहेति । तदेव विवृणोति-यस्येति ।

त्तिस्य तत्र लयो न्याय्यो मृदीव शरावस्य । न च मनसो वागुत्पद्यत इति किञ्चन प्रमाणमस्ति । वृत्त्युद्भवाभिभवौ त्वप्रकृतिसमाश्रयावपि दृश्येते । पार्थिवेभ्यो हीन्धनेभ्यस्तैजसस्याग्नेर्वृत्तिरुद्भवति, अप्सु चोपशाम्यति । कथं तर्ह्यस्मिन् पक्षे शब्दो वाङ् मनसि सम्पद्यत-इत्यत आह-शब्दाच्चेति॥ शब्दोऽप्यस्मिन्पक्षेऽवकल्पते । वृत्तिवृत्तिमतोरभेदोपचारादित्यर्थः ॥ १ ॥

## अत एव च सर्वाण्यनु ॥ २ ॥

"तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः" [प्रश्न० ३।९] इत्यत्राविशेषेण सर्वेषामेवेन्द्रियाणां मनसि सम्पत्तिः श्रूयते । तत्राप्यत एव वाच इव चक्षुरादीनामपि सवृत्तिके मनस्यवस्थिते वृत्तिलोपदर्शनात्तत्त्वप्रलयासम्भवाच्छब्दोपपत्तेश्च वृत्तिद्वारेणैव सर्वाणीन्द्रियाणि मनोऽनुवर्तन्ते । सर्वेषां करणानां मनस्युपसंहाराविशेषे सति वाचः पृथग्ग्रहणं "वाङ् मनसि सम्पद्यते" इत्युदाहरणानुरोधेन ॥ २ ॥ इति वागधिकरणम् ॥ १ ॥

## तन्मनः प्राण उत्तरात् ॥ ३ ॥ (२) ॥

---

रत्नप्रभा ।

लक्षणया वा,-सावकाशत्वमिति द्योतयितुं "शब्दाच्च" इत्युक्तम् ॥ १ ॥ वाच्युक्तं न्यायं चक्षुरादिष्वतिदिशति-अत एवेति ॥ उपशान्तदेहौष्ण्यस्तस्मादुत्क्रमणादूर्ध्वं पुनर्भवं प्रतिपद्यत इति श्रुत्यर्थः ॥ इन्द्रियशब्दस्य श्रुतिस्थस्य वृत्तिपरतयोपपत्तेः सर्वेन्द्रियवृत्तिलयश्चेदिष्टस्तर्हि "वाङ् मनसि" इति पृथक् सूत्रं किमर्थमित्यत आह-सर्वेषां करणानामिति ॥ २ ॥ ( १ ) ॥ तन्मनः प्राण उत्तरात् ॥ वाक्यक्रमा-

भामती ।

तथा तत्रतत्र दर्शनादित्याह-वृत्त्युद्भवाभिभवाविति ॥ १ ॥ अत एव च सर्वाण्यनु । यत एव प्रकृतिविकारभावाभावान्मनसि न स्वरूपलयो वाचोऽपि तु वृत्तिलयः, अत एव च सर्वेषां चक्षुरादीनामिन्द्रियाणां सत्येव सवृत्तिके मनसि वृत्तेरनुगतिर्लयो न स्वरूपलयः । वाचस्तु पृथक् ग्रहणं पूर्वसूत्रे उदाहरणापेक्षं न तु तदेवेह विवक्षितमित्यर्थः॥२॥(१)॥ तन्मनः प्राण उत्तरात्। यदि स्वप्रकृतौ विकारस्य

आनन्दगिरीय—न्यायनिर्णयः ।

वागपि तर्हि मनसो विकारोऽस्तु न मानाभावादित्याह-न चेति । वृत्तेरप्यतत्प्रकृतित्वात्कुतो मनसि लयस्तत्राऽऽह-वृत्तीति । दर्शनं विशदयति-पार्थिवेभ्य इति । श्रुतिलक्षणाविशये श्रुतिर्न्याय्येत्युक्तं स्मारयति-कथमिति । मुख्यार्थायोगादुपचारसिद्धिरिति सूत्रावयवमादाय व्याकरोति---अत इति ॥ १ ॥ वाचि दर्शितं न्यायं चक्षुरादिष्वतिदिशति---अत एवेति । यतः प्रकृतिविकारभावाभावान्न स्वरूपलयो वाचोऽपि तु वृत्तिलयोऽत एव सवृत्तिके मनसि सत्येव सर्वाणीन्द्रियाणि तदनुवर्तन्ते न तु तत्र स्वरूपेण लीयन्त इत्यर्थः । सूत्राक्षराणि व्याचष्टे-तस्मादिति । उत्क्रमणादूर्ध्वमिति यावत् । उपशान्तमौष्ण्यलिङ्गकं तेजोऽस्येति तथोक्तः । पुनर्भवं प्रतिपद्यत इति शेषः । तत्रापि सर्वाणीन्द्रियाणि वृत्तिद्वारेणैव मनोऽनुवर्तन्त इति संबन्धः । अत एवेत्युक्तं हेतुं सदृष्टान्तं स्पष्टयति-वाच इवेति । यद्यत्राविशेषेण सर्वेन्द्रियाणां मनसि वृत्त्युपसंहारो विवक्षितस्तर्हि किमित्याद्ये सूत्रे वाचः पृथग्ग्रहणं तत्राऽऽह-सर्वेषामिति ॥ २ ॥ ( १ ) ॥ इन्द्रियवृत्तिलयाधारस्य मनसो वृत्तिलयाधारं निरूपयति-तन्मन इति ।

**समधिगतमेतत् "वाङ् मनसि सम्पद्यते" [ छां० ६ । ८ । ६ ] इत्यत्र वृत्तिसम्पत्तिविवक्षेति । अथ यदुत्तरं वाक्यं "मनः प्राणः" [ छां० ६। ८ । ६ ] इति किमत्रापि वृत्तिसम्पत्तिरेव विवक्षिता-उत-वृत्तिमत्सम्पत्तिरिति विचिकित्सायां वृत्तिमत्सम्पत्तिरेवात्रेति प्राप्तम् ॥ श्रुत्यनुग्रहात्, तत्प्रकृतित्वोपपत्तेश्च । तथाहि-"अन्नमयं हि सोम्य मनः । आपोमयः प्राणः [ छां० ६ । ५ । ४] इत्यन्नयोनि मन आमनन्ति । अब्योनिं च प्राणम् "आपश्चान्नमसृजन्त" इति श्रुतिः । अतश्च यन्मनः प्राणे प्रलीयते, अन्नमेव तदप्सु प्रलीयते । अन्नं हि मनः । आपश्च प्राणः । प्रकृतिविकाराभेदादिति ॥ एवं प्राप्ते ब्रूमः ॥ तदप्यगृहीतबाह्येन्द्रियवृत्ति मनो वृत्तिद्वारेणैव प्राणे प्रलीयत इत्युत्तराद्वाक्यादवगन्तव्यम्। तथाहि-सुषुप्सोर्मुमूर्षोश्च प्राणवृत्तौ परिस्पन्दात्मिकायामवस्थितायां**

रत्नप्रभा ।

दर्थक्रमाच्चाधिकरणक्रमश्रुतिन्यायाभ्यां संशयपूर्वं प्रबलन्यायविरोधाद्वागितिश्रुतेर्बाधः कृतः । इह त्वबात्मकप्राणस्य अन्नात्मकमनः प्रकृतित्वेन प्रकृतौ विकारलय इतिन्यायानुग्रहात् मननश्रुतिर्बाध्येति पूर्वपक्षफलं पूर्ववत्, सिद्धान्तस्त्वबन्नयोःप्रकृतिविकृतिभावेऽपि न तद्विकारयोः प्राणमनसोस्तद्भावः । हिमघटयोरपि तद्भावप्रसङ्गात् । अतो न्यायविरोधात् पूर्ववत् श्रुतिर्बाध्येति विवेकः । अगृहीताः बाह्येन्द्रियवृत्तयो येन तत्तथा । लीनेन्द्रियवृत्तिकं मनोऽपि वृत्तिलयेनैव प्राणे लीयत इत्यर्थः ॥

भामती ।

लयस्ततो मनः प्राणे संपद्यते इत्यत्र मनःस्वरूपस्यैव प्राणे संपत्त्या भवितव्यम्। तथाहि मन इति नोपचारतो व्याख्यानं भविष्यति सम्भवति हि प्रकृतिविकारभावः प्राणमनसोः । अन्नमयं हि सोम्य मन इत्यन्नात्मतामाह मनसः श्रुतिरापोमयः प्राण इति च प्राणस्याबात्मताम्। प्रकृतिविकारयोस्तादात्म्यात् । तथा च प्राणो मनसः प्रकृतिरिति मनसो वृत्तिमतः प्राणे लय इति प्राप्तेऽभिधीयते-सत्यम्, 'आपोऽन्नमसृजन्त' इति श्रुतेरबन्नयोः प्रकृतिविकारभावोऽवगम्यते । न तु तद्विकारयोः प्राणमनसोः । स्वयोनिप्रणाडिकया तु मिथो विकारयोः प्रकृतिविकारभावाभ्युपगमे संकरादतिप्रसङ्गः स्यात् । तस्माद्यो यस्य साक्षाद्विकारस्तस्य तत्र लय इत्यन्नस्याप्सु लयो न त्वब्विकारे प्राणेऽन्नविकारस्य मनसः । तथा चात्रापि मनोवृत्ते-

आनन्दगिरीय-न्यायनिर्णयः ।

वृत्तमनूद्याधिकरणस्य विषयमाह-**समधिगतमिति** । तस्मिन्नपि वाक्ये सवृत्तिकं मनोऽधिकृत्य व्युत्पत्तिद्वैविध्यसिद्ध्या संशयमाह-**किमिति** । पूर्ववाक्यं दृष्टान्तयितुमपिशब्दः । अत्रापि पूर्ववत्पादादिसंगतिः । पूर्वपक्षे श्रुत्यर्थसिद्धिः । सिद्धान्ते तदयोगाल्लक्षणास्वीकरणमिति मन्वानो मनःशब्दश्रुत्या पूर्वपक्षयति-**वृत्तीति** । वाक्शब्दवन्मनःशब्दस्यौपचारिकत्वमाशंक्य बाधकाभावादत्र मुख्यार्थत्वमेवेत्याह-**तदिति**।प्राणप्रकृतिकत्वे मनसो न मानमित्याशंक्याऽऽह-**तथाहीति** ।अन्नमनसोरप्प्राणयोश्च प्रकृतिविकृतिभावेऽपि कथं प्राणमनसोस्तथात्वं तत्राऽऽह-**आपश्चेति** । अबन्नयोः प्रकृतिविकृतिभावात्तत्कार्ययोरपि प्राणमनसोः प्रकृतितादात्म्यद्वारा प्रकृतिविकृतित्वसिद्ध्या प्राणे वृत्तिमतो मनसो लय इति फलितमाह-**अतश्चेति** । प्राणे लीयते मनः सवृत्तिकमिति प्राप्तमनूद्य सिद्धान्तसूत्रमवतार्य व्याकरोति-**एवमिति** । अगृहीताः सर्वतः स्वात्मन्युपसंहृता बाह्येन्द्रियाणां वृत्तयो येन तन्मनस्तथा । दर्शनादिति पूर्वोक्तयुक्तिमत्र हेतुत्वेन संगृह्णाति-**तथाहीति** । मनःशब्दश्रुत्या स्वरूपसंपत्तिरेवेति किं न स्यादि-

मनोवृत्तीनामुपशमो दृश्यते । न च मनसः स्वरूपाप्ययः प्राणे सम्भवति । अतत्प्रकृतित्वात् ॥ ननु दर्शितं मनसः प्राणप्रकृतित्वम् ॥ नैतत्सारम् ॥ न हीदृशेन प्रणालिकेन तत्प्रकृतित्वेन मनः प्राणे सम्पत्तुमर्हति । एवमपि ह्यन्ने मनः सम्पद्येत, अप्सु चान्नम्, अप्स्वेव च प्राणः । न ह्येतस्मिन्नपि पक्षे प्राणभावपरिणताभ्योऽद्भ्यो मनो जायत इति किञ्चन प्रमाणमस्ति ॥ तस्मान्न मनसः प्राणे स्वरूपाप्ययः । वृत्त्यप्ययेऽपि शब्दोऽवकल्पते । वृत्तिवृत्तिमतोरभेदोपचारादिति दर्शितम् ॥ ३ ॥ इति मनोधिकरणम् ॥ २ ॥

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥ (३) ॥

स्थितमेतद्—अस्य यतो नोत्पत्तिः, तस्य तस्मिन्वृत्तिप्रलयः, न स्वरूपप्रलय इति । इदमिदानीं "प्राणस्तेजसि" इत्यत्र चिन्त्यते—किं यथाश्रुति प्राणस्य तेजस्येव वृत्त्युपसंहारः, किंवा देहेन्द्रियपञ्जराध्यक्षे जीवे इति । तत्र श्रुतेरनतिशंक्यत्वात्प्राणस्य तेजस्येव सम्पत्तिः स्यात् । अश्रुतकल्पनाया अन्याय्यत्वादिति ॥ एवं प्राप्ते प्रतिपद्यते—"सोऽध्यक्षे" इति ।

---

रत्नप्रभा ।

**एवमपीति**॥प्राणस्याविकारत्वपक्षेऽपीत्यर्थः॥**तस्मादिति**॥प्राणस्य साक्षान्मनःप्रकृतिकत्वाभावान्मनःशब्दो वृत्तिं लक्षयतीत्यर्थः ॥ ३ ॥ (२) ॥ **सोऽध्यक्षे तदुपगमादिभ्यः** ॥ उक्तन्यायसिद्धं प्राणस्याऽपि वृत्तिलयमुपजीव्य "प्राणस्तेजसि" इति श्रुतेरुपगमादिश्रुतेश्च संशयमुक्त्वा जीवे लयं विनापि उपगमादिसम्भव इति पूर्वपक्षयति—**स्थितमित्यादिना** ॥ अत्र तेजःशब्दस्य मुख्यत्वं, सिद्धान्ते तु भूतोपहितजीवल-

भामती ।

वृत्तिमति प्राणे लयो न तु वृत्तिमतो मनस इति सिद्धम् ॥३॥(२)॥ **सोऽध्यक्षे तदुपगमादिभ्यः** । प्राणस्तेजसीति तेजःशब्दस्य भूतविशेषवचनत्वाद्विज्ञानात्मनि चाप्रसिद्धेः प्राणस्य जीवात्मन्युपगमानुगमावस्थानश्रुतीनां च तेजोद्वारेणाप्युपपत्तेः । तेजसि समापन्नवृत्तिः खलु प्राणः । तेजस्तु जीवात्मनि समापन्नवृत्ति । तद्द्वारा जीवात्मसमापन्नवृत्तिः प्राण इत्युपपद्यते । तस्मात्तेजस्येव प्राणवृत्तिप्रविलय इति प्राप्तेऽभिधीयते—स प्रकृतः प्राणोऽध्यक्षे विज्ञानात्मन्यवतिष्ठते तत्तन्त्रवृत्तिर्भवति । कुतः—उपगमानुगमावस्था-

आनन्दगिरीय—न्यायनिर्णयः ।

त्याशंक्याऽऽह—**न चेति** । उक्तं स्मारयित्वा निरस्यति—**नन्वित्यादिना**। स्वकारणद्वारा विकारयोरन्योन्यं प्रकृतिविकारत्वे घटादेरपि शरावादिप्रकृतित्वप्रसक्तिरित्यसारत्वमेव साधयति—**न हीति** । प्राणाडिककार्यकारणतोपगमेऽपि यो यस्य साक्षाद्विकारस्तत्रैव तस्य लयो युक्त इत्याह—**एवमपीति** । प्राणाकारपरिणतानामपां मनःसंस्थितान्नाकारेण परिणामात्प्राणमनसोरपि साक्षात्प्रकृतिविकृतित्वमस्तीत्याशंक्याऽऽह—**न हीति** । तयोः साक्षादप्रकृतिविकृतित्वे फलितमाह—**तस्मादिति** । कथं तर्हि मनःशब्दोपपत्तिस्तत्राऽऽह—**वृत्तीति** ॥ ३ ॥ ( २ )॥ यस्मिन्प्राणे मनसो वृत्तिलयस्तस्यापि वृत्तिलयाधारं निरूपयति—**सोऽध्यक्ष इति** । वक्ष्यमाणपूर्वपक्षोपयोगित्वेन वृत्तं कीर्तयति—**स्थितमिति** । संप्रति विषयोक्तिपूर्वकमुभयश्रुत्युपलब्धेः संशयमाह—**इदमिति** । पादादिसंगतयस्तु पूर्ववत् । फलभेदोऽपि तथेति स्वीकृत्य पूर्वपक्षयति—**तत्रेति** । प्राणस्य तेजःप्रकृतिकत्वाभावेऽपि तेजसि वृत्तिलयस्योक्तन्यायेन शक्यशंक्यत्वात्तेजःशब्दस्य च भूतविशेषवाचिनो जीवे प्रसिद्ध्यभावात्प्राणस्य जीवात्मन्युपगमनानुगमनावस्थानश्रुतीनां च तेजोद्वाराऽपि तस्मिन्नुपगमनादियोगादुपपत्तेस्तेजस्येव प्राणवृत्तिलय इत्यर्थः । सिद्धान्तसूत्रमादाय योजयति—**एवमिति**।

**सः प्रकृतः प्राणः अध्यक्षे-अविद्याकर्मपूर्वप्रज्ञोपाधिके विज्ञानात्मन्यवतिष्ठते। तत्प्रधाना प्राणवृत्तिर्भवतीत्यर्थः॥ कुतः॥ "तदुपगमादिभ्यः" "एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति" इति हि श्रुत्यन्तरमध्यक्षोपगामिनः सर्वान्प्राणानविशेषेण दर्शयति। विशेषेण च "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" [बृ० ४।४।२] इति पञ्चवृत्तेः प्राणस्याध्यक्षानुगामितां दर्शयति। तदनुवृत्तितां चेतरेषां-"प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" [बृ० ४।४।२] इति। "सविज्ञानो भवति" इति चाध्यक्षस्यान्तर्विज्ञानवत्त्वप्रदर्शनेन तस्मिन्नपीतकरणग्रामस्य प्राणस्यावस्थानं गमयति॥ ननु "प्राणस्तेजसि" इति श्रूयते। कथं प्राणोऽध्यक्ष इत्यधिकावापः क्रियते॥ नैष दोषः॥ अध्यक्षप्रधानत्वादुत्क्रमणादिव्यवहारस्य श्रुत्यन्तरगतस्यापि च विशेषस्यापेक्षणीयत्वात्॥ ४॥ कथं तर्हि "प्राणस्तेजसि" इति श्रुतिरित्यत आह-**

---

रत्नप्रभा।

क्षकत्वमिति मत्वा सूत्रं योजयति-**स प्रकृत** इत्यादिना॥ ज्ञानकर्मवासनोपाधिक इत्यर्थः॥ तं जीवं प्रति प्राणानामुपगमनानुगमनावस्थानश्रुतिभ्य इति हेत्वर्थः। यथा यात्रेच्छावन्तं राजानं भृत्या उपगच्छन्ति, एवमेव परलोकं जिगमिषुं जीवं सर्वे प्राणा आभिमुख्येनायान्तीत्युपगमः श्रुतः। तमुत्क्रान्तमित्यनुगमनं श्रुतम्। जीवे प्राणावस्थानश्रुतिमाह-**सविज्ञान** इति॥ जीवस्य प्राप्तव्यफलावगमाय हि विज्ञानसाहित्यश्रुत्या मुख्यप्राणसहितकरणानां जीवे स्थितिर्भातीत्यर्थः॥ यद्यपि प्राणस्य तेजस्यव्यवधानेन लयः श्रुतः। तथाप्युभयश्रुत्यनुग्रहाय प्राणो जीवे लीयते। जीवद्वारा च तदुपाधिषु तेजआदिभूतेषु इति श्रुत्यर्थः॥ स्फुटीकरणार्थं सूत्रं गृह्णाति-**कथं तर्हीति**॥ न च लयं विनापि जीवं प्रत्युपगमादिसम्भवात् तेजःश्रुतिर्मुख्याऽस्त्विति वाच्यम्। जीवं प्रत्यागत्य प्राणस्य निर्व्यापारत्वेन स्थितेरे-

भामती।

नेभ्यो हेतुभ्यः। तत्रोपगमश्रुतिमाह-**एवमेवेममात्मानमिति**। अनुगमनश्रुतिमाह-**तमुत्क्रामन्तमिति**। अवस्थानश्रुतिमाह-**सविज्ञानो भवतीति चेति**। विज्ञायतेऽनेनेति विज्ञानं पञ्चवृत्तिप्राणसहित इन्द्रियग्रामस्तेन सहावतिष्ठत इति सविज्ञानः। चोदयति-**ननु प्राणस्तेजसीति श्रूयत इति**। अधिकावापोऽशब्दार्थव्याख्यानम्। परिहरति-**नैष दोष इति**। यद्यपि प्राणस्तेजसीत्यतस्तेजसि प्राणवृत्तिलयः प्रतीयते। तथापि सर्वशाखाप्रत्ययत्वेन विद्यानां श्रुत्यन्तरालोचनया विज्ञानात्मनि लयोऽवगम्यते। न च तेजसस्तत्रापि लय इति साम्प्रतम्। तस्यानिलाकाशक्रमेण परमात्मनि तत्त्वलयावगमात्। तस्मात्तेजोग्रहणेनोपलक्ष्यते तेजःसहचरितदेहबीजभूतपञ्चभूतसूक्ष्मपरिचाराध्यक्षो जीवात्मा तस्मिन् प्राणवृत्तिर-

आनन्दगिरीय-न्यायनिर्णयः।

परिशुद्धं चिद्धातुं व्यावर्तयति-**अविद्येति**। पूर्वोक्तन्यायेन स्वरूपलयं व्यवच्छिनत्ति-**तदिति**। प्रश्नपूर्वकं हेतूनवतारयति-**कुत इति**। तत्रोपगमनं श्रुतितो व्याकरोति-**एवमिति**। यथा राज्ञः प्रयाणाभिप्रायमात्रेण सर्वे भृत्याः समागच्छन्त्येवमिति योजना। एतदिति क्रियाविशेषणम्। आदिशब्दगृहीतमनुगमनं श्रुत्या विशदयति-**विशेषेणेति**। आदिशब्दोपात्तमवस्थानमपि श्रुत्या व्याचष्टे-**सविज्ञान इति**। विज्ञायतेऽनेनेति विज्ञानं करणजातं, तेन पञ्चवृत्तिप्राणसहितेन सह तिष्ठतीति यावत्। अव्यवधानेन तेजःप्राप्तिश्रुत्या विरोधं शङ्कते-**नन्विति**। उभयश्रुत्यनुग्रहाय जीवे प्रलीयते तेन सह प्राणस्य तेजसि लयः स्यादित्याह-**नेत्यादिना**॥ ४॥ सूत्रान्तरमाकांक्षापूर्वकमुत्थापयति-**कथमिति**। प्राणस्य जीवद्वारा तेजःसंपत्तिरिति

## भूतेष्वतः श्रुतेः ॥ ५ ॥

स प्राणसंयुक्तोऽध्यक्षः तेजः सहचरितेषु भूतेषु देहबीजभूतेषु सूक्ष्मेष्ववतिष्ठते इत्यवगन्तव्यं "प्राणस्तेजसि" इत्यतः श्रुतेः ॥ ननु चेयं श्रुतिः प्राणस्य तेजसि स्थितिं दर्शयति, न प्राणसंयुक्तस्याध्यक्षस्य ॥ नैष दोषः ॥ "सोऽध्यक्षे"–[ व्या० सू० ४ । २ । ४ ] इत्यध्यक्षस्याप्यन्तराल उपसंख्यातत्वात् । योऽपि हि स्रुघ्नान्मथुरां गत्वा मथुरायाः पाटलिपुत्रं व्रजति, सोऽपि स्रुघ्नात्पाटलिपुत्रं यातीति शक्यते वदितुम् । तस्मात् "प्राणस्तेजसि" इति प्राणसंयुक्तस्याध्यक्षस्यैवैतत्तेजःसहचरितेषु भूतेष्ववस्थानम् ॥ ५ ॥ कथं तेजःसहचरितेषु भूतेष्वित्युच्यते । यावतैकमेव तेजः श्रूयते "प्राणस्तेजसि" इत्यत आह–

## नैकस्मिन्दर्शयतो हि ॥ ६ ॥

नैकस्मिन्नेव तेजसि शरीरान्तरप्रेप्सावेलायां जीवोऽवतिष्ठते । कार्यस्य शरीरस्यानेकात्मकत्वदर्शनात् । दर्शयतश्चैतमर्थं प्रश्नप्रतिवचने–"आपः

---

रत्नप्रभा ।

वात्र लयत्वादिति भावः ॥ ४ ॥ भूतेषु० ॥ जीवस्थितिः किं बलाद्व्याख्यायत इत्याशङ्क्य "सोऽध्यक्षे" [ व्या० सू० ४ । २ । ४ ] इति सूत्रोदाहृतश्रुतिबलादित्याह—नन्वित्यादिना ॥ प्राणस्य जीवद्वारा भूतप्राप्तौ दृष्टान्तमाह—योऽपि हीति ॥ स्थूलदेहारम्भाय पञ्चीकृतभूतान्यावश्यकानीति रंहत्यधिकरणे व्याख्यातम् ॥ ५ ॥ अण्व्यः सूक्ष्माः । मीयन्त इति मात्राः परिच्छिन्नाः । प्राङ् मोक्षाद्विनाशिन्यः । दशार्धानां पञ्चानां भूतानाम् । सूक्ष्मभागा इति यावत् । जीवस्य भूताश्रयत्वं कर्माश्रयत्व-

भामती ।

प्येतीति । चोदयति–ननु चेयं श्रुतिरिति । तेजःसहचरितानि भूतान्युपलक्ष्यन्तां तेजःशब्देनाध्यक्षे तु किमायातं तस्य तदसाहचर्यादित्यर्थः । परिहरति–सोऽध्यक्ष इत्यध्यक्षस्यापीति । यदा ह्ययं प्राणोऽन्तरालेऽध्यक्षं प्राप्याध्यक्षसंपर्कवशादेव तेजःप्रभृतीनि भूतसूक्ष्माणि प्राप्नोति तदोपपद्यते प्राणस्तेजसीति । अत्रैव दृष्टान्तमाह–योऽपि (हि) स्रुघ्नादिति ॥ ४ ॥५॥ सूत्रान्तरमवतारयितुं पृच्छति–कथं तेजःसहचरितेष्विति ॥ नैकस्मिन्दर्शयतो हि । अत्र भाष्यकारोऽनुमानदर्शनमाह–कार्यस्य शरीरस्येति । स्थूलशरीरानुरूपमनुमेयं सूक्ष्ममपि शरीरं पञ्चात्मकमित्यर्थः । दर्शयत इति सूत्रावयवं व्याचष्टे– दर्शयतश्चैतमर्थमिति । प्रश्नप्रतिवचनाभिप्रायं द्विवचनं श्रुतिस्मृत्यभिप्रायं वा । अण्व्यो मात्राः सूक्ष्मा

आनन्दगिरीय–न्यायनिर्णयः ।

सूत्रयोजनया दर्शयति–स इति । न च प्राणस्य तेजोद्वारा जीवसंपत्तिस्तेजसो भूतद्वयद्वारा परस्मिन्नेव संपत्तेरिष्टत्वात् । तेजोग्रहणे नोपलक्षितेषु भूतेषु जीवस्य प्राणेन सह लयः स्यादित्यभिप्रेत्याऽऽह–तेज इति । तेजःशब्देन भूतान्युपलक्षयितुं शक्यन्ते साहचर्यान्न जीवस्तदभावादतो न प्राणस्य जीवे लय इति शङ्कते–नन्विति । मानान्तरालोचनया जीवस्योपसंग्रहो न तेजःशब्देनेति परिहरति–नेत्यादिना । यदाऽपि प्राणोऽन्तराले जीवं प्राप्य पुनस्तेजः संपद्यते तदाऽपि प्राणस्तेजसीति श्रुतिरुपपन्नेत्येतद्दृष्टान्तेन साधयति–योऽपि हीति । श्रुत्यर्थमुक्तमुपसंहरति–तस्मादिति ॥ ५ ॥ सूत्रान्तरमवतारयितुं पृच्छति–कथमिति । लक्षणया भूतान्तराश्रयणमयुक्तं युक्त्यभावादिति भावः । युक्तिपरं सूत्रमवतारयति–अत इति । तत्र प्रतिज्ञां विभजते–नैकस्मिन्निति । स्थूलदेहस्य पञ्चात्मत्वदृष्टेस्तत्कारणं सूक्ष्मशरीरमपि पञ्चात्मकमनुमेयमित्युक्तेऽर्थे युक्तिमाह–कार्यस्येति । सूक्ष्मस्य पञ्चात्मकत्वे मानं ब्रुवाणः सूत्रावयवं व्याचष्टे–दर्शयतश्चेति । ननु देहान्तरप्रेप्सावेलायामद्भिरेव परिवेष्टितत्वं प्रश्नप्रतिवचनाभ्यामधिगम्यते न

पुरुषवचसः" [ छां० ५ । ३ । ३ ] इति । तद्व्याख्यातम्—"त्र्यात्मकत्वात्तु भूयस्त्वाद्" [ व्या० सू० ३ । १ । २ ] इत्यत्र श्रुतिस्मृती चैतमर्थं दर्शयतः ॥ श्रुतिः—"पृथिवीमय आपोमयो वायुमयं आकाशमयस्तेजोमयः" इत्याद्या । स्मृतिरपि—"अण्व्यो मात्रा विनाशिन्यो दशार्धानां तु याः स्मृताः । ताभिः सार्धमिदं सर्वं सम्भवत्यनुपूर्वशः" [ मनुस्मृ० १ । २१ ] इत्याद्या ॥ ननु चोपसंहृतेषु वागादिषु करणेषु शरीरान्तरप्रेप्सावेलायां "क्वायं तदा पुरुषो भवति" [ बृ० ३ । २ । १३ ] इत्युपक्रम्य श्रुत्यन्तरं कर्माश्रयतां निरूपयति "तौ ह यदूचतुः कर्म हैव तदूचतुः अथ ह यत्प्रशशंसतुः कर्म हैव तत्प्रशशंसतुः" [ बृ० ३ । २ । १३ ] इति ॥ अत्रोच्यते ॥ तत्र कर्मप्रयुक्तस्य ग्रहातिग्रहसंज्ञकस्येन्द्रियविषयात्मकस्य बन्धनस्य प्रवृत्तिरिति कर्माश्रयतोक्ता। इह पुनर्भूतोपादानाद्देहान्तरोत्पत्तिरिति भूताश्रयत्वमुक्तम् । प्रशंसाशब्दादपि तत्र प्राधान्यमात्रं कर्मणः प्रदर्शितं, न त्वाश्रयान्तरं निवारितम् । तस्मादविरोधः ॥ ६ ॥
इत्यध्यक्षाधिकरणम् ॥ ३ ॥

## समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य ॥ ७ ॥ (४)॥

रत्नप्रभा ।

श्रुतिविरुद्धमित्याशङ्क्य कर्मनिमित्तत्वेनाश्रयः । भूतानि तु देहोपादानत्वेनेत्युभयमविरुद्धमित्याह—ननु चेत्यादिना ॥ तौ याज्ञवल्क्योक्तभागौ यत् जीवाधारमूचतुस्तत्कर्मेति श्रुतेर्वचनम् । एवं बाह्येन्द्रियाणां मनसि प्रथमं वृत्तिलयलाभात् ततो मनोवृत्तेः प्राणे लयः प्राणवृत्तेर्भूतोपहितजीवे लयः इत्युत्क्रान्तिव्यवस्थोक्ता ॥ ६ ॥ (३) ॥ सा च सर्वप्राणिषु तुल्येत्याह—समाना चेत्यादिना ॥ "पुरुषस्य प्रयतो

भामती ।

दशार्धानां पञ्चभूतानामिति । श्रुत्यन्तरविरोधं चोदयति—ननु चोपसंहृतेषु वागादिष्विति । कर्माश्रयतेति प्रतीयते न भूताश्रयतेत्यर्थः । परिहरति—अत्रोच्यत इति । ग्रहा इन्द्रियाणि अतिग्रहास्तद्विषयाः । कर्मणां प्रयोजकत्वेनाश्रयत्वं भूतानां तूपादानत्वेनेत्यविरोधः । प्रशंसाशब्दोऽपि कर्मणां प्रयोजकतया प्रकृष्टमाश्रयत्वं ब्रूते सति निकृष्ट आश्रयान्तरे तदुपपत्तेरित्याह—प्रशंसाशब्दादपि तत्रेति ॥ ६ ॥ समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य। अत्रामृतत्वप्राप्तिश्रुतेः परविद्यावन्तं प्रत्येतदिति मन्वानस्य पूर्वः पक्षः।

आनन्दगिरीय—न्यायनिर्णयः ।

भूतसूक्ष्मपञ्चकपरिवेष्टितत्वं तत्राऽऽह—तदिति । सूत्रावयवस्यार्थान्तरमाह—श्रुतीति । अण्व्यः सूक्ष्मा मीयन्त इति मात्राः प्राङ् मोक्षादविनाशिन्यो दशार्धानां पञ्चानां भूतानामित्यर्थः । जीवस्य भूताश्रयत्वं श्रुत्यन्तरविरुद्धमिति शङ्कते—नन्विति । तौ याज्ञवल्क्यार्तभागौ । जीवाधारभूतकर्मणां बन्धप्रयोजकत्वेनाऽऽश्रयत्वं भूतानां देहोपादानत्वेनेत्यविरोधमाह—अत्रेति । कर्म हैवेत्यवधारणश्रुत्या वारितमाश्रयान्तरमित्याशंक्याऽऽह—प्रशंसेति । सोऽपि कर्मणां प्रकृष्टाश्रयत्वं वदन्निकृष्टाश्रयान्तरसत्त्वं सूचयतीत्यर्थः । कर्मणां भूतानां चाऽऽश्रयत्वसंभवे फलितमाह—तस्मादिति ॥ ६ ॥ ( ३ ) ॥ उत्क्रान्तेरपरविद्यान्वयमन्वाचष्टे—समाना चेति । उत्क्रान्तिर्विषयस्तत्र विद्ययाऽमृतमश्नुत इति

सेयमुत्क्रान्तिः किं विद्वदविदुषोः समाना, किं वा विशेषवतीति । विशयानानां विशेषवतीति तावत्प्राप्तम् । भूताश्रयविशिष्टा ह्येषा । पुनर्भवाय च भूतान्याश्रीयन्ते । न च विदुषः पुनर्भवः सम्भवति—"अमृतत्वं हि विद्वानश्नुते" इति श्रुतिः ॥ तस्मादविदुष एवैषोत्क्रान्तिः ॥ ननु विद्याप्रकरणे समाम्नानाद्विदुष एवैषा भवेत् ॥ न ॥ स्वापादिवद्यथाप्राप्तानुकीर्तनात् । तथाहि "यत्रैतत्पुरुषः स्वपिति नाम अशिशिषति नाम पिपासति नाम" [ छां० ६ । ८ । १ ] इति च सर्वप्राणिसाधारणा एव स्वापादयोऽनुकीर्त्यन्ते । विद्याप्रकरणेऽपि प्रतिपिपादयिषितवस्तुप्रतिपादनानुगुण्येन, न तु विदुषो विशेषवन्तो विधीयन्ते । एवमियमप्युत्क्रान्तिर्महाजनगतैवानुकीर्त्यते । यस्यां परस्यां देवतायां पुरुषस्य प्रयतस्तेजः सम्पद्यते, स आत्मा तत्त्वमसि इति प्रतिपादयितुम् । प्रतिषिद्धा चैषा विदुषः "न तस्य प्राणा उत्क्रामन्ति" [ बृ० ४ । ४ । ६ ] इति ॥ तस्मादविदुष एवैषेति ॥ एवं प्राप्ते ब्रूमः ॥

रत्नप्रभा ।

वाङ् मनसि" इत्यविशेषश्रुतेः "विद्ययाऽमृतमश्नुते" इतिश्रुतेश्च संशयमाह—सेयमिति ॥ विशयानानां सन्दिहानानामित्यर्थः ॥ पूर्वपक्षे सगुणब्रह्मविदसम्बन्धित्वमुत्क्रान्तेर्विशेषः साध्यते । ततोऽनुत्क्रान्त उपासको मुक्तिमश्नुत इति फलं, सिद्धान्ते तूत्क्रान्तो ब्रह्मलोकभागीति फलभेदः ॥ पूर्वपक्षमाक्षिप्य समाधत्ते—ननु विद्येत्यादिना ॥ "विद्ययाऽमृतम्" इति श्रुतिर्निर्गुणविद्यापरा । "न तस्य प्राणा उत्क्रामन्ति" इति प्रतिषेधोऽपि तद्विषयः ॥ अतः, सगुणविदोऽप्यज्ञस्यैवोत्क्रान्तिरिति सिद्धान्तयति—एवमिति ॥ सृतिः—मार्गः । तस्योपक्रमोऽर्चिःप्राप्तिः । ततः प्राक्तना उत्क्रान्तिस्तुल्या । तत उपासको मूर्धन्यनाडीद्वाराऽर्चिरादिमार्गं प्राप्नोति, नान्य इति विशेषः ॥ यत्तु दहरोपासकस्यामृतत्वं श्रुतं "तयोर्ध्वमायन्नमृतत्वमेति" इति, तदापेक्षिकमेव न मुख्यं "यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति"

भामती ।

विशयानानां संदिहानानां पुंसाम् । चोदयति—ननु विद्याप्रकरण इति । परिहरति—न स्वापादिवदिति । परविद्ययैवामृतत्वप्राप्त्यवस्थामाख्यातुं तत्सधर्माश्च तद्विधर्माश्चान्या अव्यवस्थास्तदनुगुणतया ख्याप्यन्ते । साधर्म्यवैधर्म्याभ्यां हि स्फुटतरः प्रतिपिपादयिषिते वस्तुनि प्रत्ययो भवतीति । न तु विदुषः सकाशाद्विशेषवन्तोऽविद्वांसो विधीयन्ते येन विद्याप्रकरणव्याघातो भवेदपि तु विद्यां प्रतिपादयितुं लोक-

आनन्दगिरीय—न्यायनिर्णयः ।

श्रुतेरस्य सोम्य पुरुषस्येत्यविशेषश्रुतेश्च संशयमाह—सेयमिति । विशयानानां संदिहानानामित्यर्थः । श्रौतापरविद्यासु फलप्राप्त्युपयोगित्वेनोत्क्रान्त्यन्वयोक्त्या पादादिसंगतिः । पूर्वपक्षे विदुषो देहादनुत्क्रान्तस्य मोक्षसिद्धिः । सिद्धान्ते तस्यापीतरवत्तस्मादुत्क्रान्तेरप्रतिबन्धेन तत्सिद्धिरित्यङ्गीकृत्य विद्ययाऽमृतमश्नुत इति सगुणोपासकानामप्यमृतत्वफलावगमात्सगुणब्रह्मविदो नैवोत्क्रान्तिरिति पूर्वपक्षयति—विशेषेति । अविदुष एवोत्क्रान्तिरिति विशेषवत्त्वमेव दर्शयति—भूतेति । पूर्वपक्षमाक्षिपति—नन्विति । वस्तुतत्त्वप्रतिपादनाय लोकसिद्धधर्माणामनूद्यमानत्वान्न प्रकरणं विद्वद्विषयमिति समाधत्ते—नेत्यादिना । दृष्टान्तं विवृणोति—तथेति । दार्ष्टान्तिकं विभजते—एवमिति । उत्क्रान्तेर्विद्वद्विषयत्वाभावे हेत्वन्तरमाह—प्रतिषिद्धेति । विशेषवत्त्वमुत्क्रान्तेरुक्तमुपसंहरति—तस्मादिति । सृतेर्मार्गस्योपक्रमादर्वाक्कर्मिणां सगुणोपासकानां च तुल्यैवोत्क्रान्तिरिति सिद्धान्तयति—एवमिति । अस्य सोम्येत्याद्यविशेषश्रुतेर्विद्वद-

**समाना चैषोत्क्रान्तिः "वाङ् मनसि" [ब्या०सू०४।२।१] इत्याद्या विद्वदविदुषोरासृत्युपक्रमाद्भवितुमर्हति । अविशेषश्रवणात् । अविद्वान्देहबीजभूतानि भूतसूक्ष्माण्याश्रित्य कर्मप्रयुक्तो देहग्रहणमनुभवितुं संसरति। विद्वांस्तु ज्ञानप्रकाशितं मोक्षं नाडीद्वारमाश्रयते तदेतद् "आसृत्युपक्रमाद्" इत्युक्तम् ॥ नन्वमृतत्वं विदुषा प्राप्तव्यम् । न च तद्देशान्तरायत्तम् । तत्र कुतो भूताश्रयत्वं, सृत्युपक्रमो वेति ॥ अत्रोच्यते । अनुपोष्य चेदमदग्ध्वाऽत्यन्तमविद्यादीन्क्लेशानपरविद्यासामर्थ्यादापेक्षिकममृतत्वं प्रेप्सयते । सम्भवति तत्र सृत्युपक्रमो भूताश्रयत्वञ्च । न हि निराश्रयाणां प्राणानां गतिरुपपद्यते ॥ तस्माददोषः ॥ ७ ॥ इत्यासृत्युपक्रमाधिकरणम् ॥ ४ ॥**

## तदापीतेः संसारव्यपदेशात् ॥ ८ ॥ ( ५ ) ॥

रत्नप्रभा ।

इति भोगश्रवणादित्याह-**अनुपोष्य चेदमिति** ॥ उष दाह इति धातोरिदं रूपम् ॥ ७ ॥ ( ४ ) ॥ **तदापीतेः०**॥ पूर्वोदाहृतोत्क्रान्तिवाक्यशेषं व्याख्याय लिङ्गाश्रयपञ्चभूतानां किमात्यन्तिको ब्रह्मणि लयः-

भामती ।

सिद्धान्तं तदनुगुणतया तेषामनुवाद इति । एवं प्राप्तेऽभिधीयते—**समाना चैषोत्क्रान्तिर्वाङ्मनसीत्याद्या विद्वदविदुषोः** । कुतः-**आसृत्युपक्रमात्** । सृतिः सरणं देवयानेन पथा कार्यब्रह्मलोकप्राप्तिरा सृतेरा कार्यब्रह्मलोकप्राप्तेः । अयं विद्योपक्रम आरम्भः प्रयत्न इति यावत् । तस्मादेतदुक्तं भवति-नेयं परा विद्या यतो नाडीद्वारमाश्रयते । अपि त्वपरविद्येयम् । न चास्यामात्यन्तिकः क्लेशप्रदाहो यतो न तत्रोत्क्रान्तिर्भवेत् । तस्मादपरविद्यासामर्थ्यादापेक्षिकमाभूतसंप्लवस्थानममृतत्वं प्रेप्सते पुरुषार्थाय संभवत्येष उत्क्रान्तिभेदवान् सृत्युपक्रमोपदेशः । उपपूर्वादुष दाह इत्यस्मादुपोष्येति प्रयोगः ॥ ७ ॥(४)॥**तदाऽपीतेः संसारव्यपदेशात्** । सिद्धान्तं कृत्वा बीजभावावशेषा परमात्मसंपत्तिं विद्वदविदुषोरुत्क्रान्तिः समर्थिता । सैव संप्रति चिन्त्यते । किमात्मनि तेजःप्रभृतीनां भूतसूक्ष्माणां तत्त्वविलय एव संपत्तिराहोस्विद्बीजभावावशेषेति । यदि पूर्वः पक्षः, नोत्क्रान्तिः । अथोत्तरः, ततः सेति । तत्राप्रकृतौ न विकारतत्त्वप्रविलयो यथा मनसि न वागादीनाम् । सर्वस्य च जनिमतः प्रकृतिः परा देवतेति तत्त्वप्रलय एवात्यन्तिकः स्यात्तेजःप्रभृतीनामिति प्राप्तेऽभिधीयते—'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनु-

आनन्दगिरीय-न्यायनिर्णयः ।

विदुषोः साधारणी चेदुत्क्रान्तिस्तर्हि तयोर्विशेषाभावाद्विद्यावैयर्थ्यं तत्राऽऽह-**अविद्वानिति** । अवाङ्नाडीभिरविद्वान्पितृलोकं लोकान्तरं वा स्वकर्मानुसारेण प्रतिपद्यते विद्वान्पुनर्मूर्धन्यया नाड्या ब्रह्मलोकमिति विशेषस्तयोरित्यर्थः । सृतिः सरणं देवयानो मार्गस्तदुपक्रमात्तुल्योत्क्रान्तिरित्युक्तेऽर्थे सूत्रावयवं पातयति-**तदेतदिति** । अवशिष्टसूत्रावयवव्यावर्त्यां शङ्कामाह-**नन्विति** । सूत्रावयवमुत्तरत्वेनावतार्य व्याकरो[illegible]-**अत्रेति** । मनसैतान्कामान्पश्यन्रमते स एकधा भवतीत्यादिश्रुतेरर्चिरादिमार्गगमनेन सेन्द्रियस्य फ[illegible]भोगप्रतिपादनादिन्द्रियाणां च निराश्रयाणां गमनायोगाज्जीवस्यापि तदाश्रयभूताश्रयस्य गतिरवगतेत्याह-**न हीति** । अपरविद्यास्वमृतत्वमापेक्षिकमिति स्थिते तत्रोत्क्रान्त्यन्वयो युक्त इत्युपसंहरति-**तस्मादिति** ॥ ७ ॥ (४) ॥ उक्तोत्क्रान्तिकाले या सत्संपत्तिस्तत्स्वरूपं निरूपयति-**तदाऽपीतेरिति** । उदा-

सेयमुत्क्रान्तिः किं विद्वदविदुषोः समाना, किं वा विशेषवतीति । विशयानानां विशेषवतीति तावत्प्राप्तम् । भूताश्रयविशिष्टा ह्येषा । पुनर्भवाय च भूतान्याश्रीयन्ते । न च विदुषः पुनर्भवः सम्भवति—"अमृतत्वं हि विद्वानश्नुते" इति श्रुतिः ॥ तस्मादविदुष एवैषोत्क्रान्तिः ॥ ननु विद्याप्रकरणे समाम्नानाद्विदुष एवैषा भवेत् ॥ न ॥ स्वापादिवद्यथाप्राप्तानुकीर्तनात् । तथाहि "यत्रैतत्पुरुषः स्वपिति नाम अशिशिषति नाम पिपासति नाम" [ छां० ६ । ८ । १ ] इति च सर्वप्राणिसाधारणा एव स्वापादयोऽनुकीर्त्यन्ते । विद्याप्रकरणेऽपि प्रतिपिपादयिषितवस्तुप्रतिपादनानुगुण्येन, न तु विदुषो विशेषवन्तो विधीयन्ते । एवमियमप्युत्क्रान्तिर्महाजनगतैवानुकीर्त्यते । यस्यां परस्यां देवतायां पुरुषस्य प्रयतस्तेजः सम्पद्यते, स आत्मा तत्त्वमसि इति प्रतिपादयितुम् । प्रतिषिद्धा चैषा विदुषः "न तस्य प्राणा उत्क्रामन्ति" [ बृ० ४ । ४ । ६ ] इति ॥ तस्मादविदुष एवैषेति ॥ एवं प्राप्ते ब्रूमः ॥

---

रत्नप्रभा ।

वाङ् मनसि" इत्यविशेषश्रुतेः "विद्ययाऽमृतमश्नुते" इतिश्रुतेश्च संशयमाह—सेयमिति ॥ विशयानानां सन्दिहानानामित्यर्थः ॥ पूर्वपक्षे सगुणब्रह्मविदसम्बन्धित्वमुत्क्रान्तेर्विशेषः साध्यते । ततोऽनुत्क्रान्त उपासको मुक्तिमश्नुत इति फलं, सिद्धान्ते तूत्क्रान्तो ब्रह्मलोकभागीति फलभेदः ॥ पूर्वपक्षमाक्षिप्य समाधत्ते—ननु विद्येत्यादिना ॥ "विद्ययाऽमृतम्" इति श्रुतिर्निर्गुणविद्यापरा । "न तस्य प्राणा उत्क्रामन्ति" इति प्रतिषेधोऽपि तद्विषयः ॥ अतः, सगुणविदोऽप्यज्ञस्यैवोत्क्रान्तिरिति सिद्धान्तयति—एवमिति ॥ सृतिः—मार्गः । तस्योपक्रमोऽर्चिःप्राप्तिः । ततः प्राक्तना उत्क्रान्तिस्तुल्या । तत उपासको मूर्धन्यनाडीद्वाराऽर्चिरादिमार्गं प्राप्नोति, नान्य इति विशेषः ॥ यत्तु दहरोपासकस्यामृतत्वं श्रुतं "तयोर्ध्वमायन्नमृतत्वमेति" इति, तदापेक्षिकमेव न मुख्यं "यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति"

भामती ।

विशयानानां संदिहानानां पुंसाम् । चोदयति—ननु विद्याप्रकरण इति। परिहरति—न स्वापादिवदिति । परविद्यैवामृतत्वप्राप्त्यवस्थामाद्यातुं तत्सधर्माश्च तद्विधर्माश्चान्या अप्यवस्थास्तदनुगुणतया ख्याप्यन्ते । साधर्म्यवैधर्म्याभ्यां हि स्फुटतरः प्रतिपिपादयिषिते वस्तुनि प्रत्ययो भवतीति । न तु विदुषः सकाशाद्विशेषवन्तोऽविद्वांसो विधीयन्ते येन विद्याप्रकरणव्याघातो भवेदपि तु विद्यां प्रतिपादयितुं लोक-

आनन्दगिरीय—न्यायनिर्णयः ।

श्रुतेरस्य सोम्य पुरुषस्येत्यविशेषश्रुतेश्च संशयमाह—सेयमिति । विशयानानां संदिहानानामित्यर्थः । श्रौतापरविद्यासु फलप्राप्त्युपयोगित्वेनोत्क्रान्त्यन्वयोक्त्या पादादिसंगतिः । पूर्वपक्षे विदुषो देहादनुत्क्रान्तस्य मोक्षसिद्धिः । सिद्धान्ते तस्यापीतरवत्तस्मादुत्क्रान्तेरप्रतिबन्धेन तत्सिद्धिरित्यङ्गीकृत्य विद्ययाऽमृतमश्नुत इति सगुणोपासकानामप्यमृतत्वफलावगमात्सगुणब्रह्मविदो नैवोत्क्रान्तिरिति पूर्वपक्षयति—विशेषेति । अविदुष एवोत्क्रान्तिरिति विशेषवत्त्वमेव दर्शयति—भूतेति । पूर्वपक्षमाक्षिपति—नन्विति।वस्तुतत्त्वप्रतिपादनाय लोकसिद्धधर्माणामनूद्यमानत्वान्न प्रकरणं विद्वद्विषयमिति समाधत्ते—नेत्यादिना । दृष्टान्तं विवृणोति—तथेति । दार्ष्टान्तिकं विभजते—एवमिति । उत्क्रान्तेर्विद्वद्विषयत्वाभावे हेत्वन्तरमाह—प्रतिषिद्धेति । विशेषवत्त्वमुत्क्रान्तेरुक्तमुपसंहरति—तस्मादिति । सृतेर्मार्गस्योपक्रमादर्वाकर्मिणां सगुणोपासकानां च तुल्यैवोत्क्रान्तिरिति सिद्धान्तयति—एवमिति । अस्य सोम्येत्याद्यविशेषश्रुतेर्विद्वद-

समाना चैषोत्क्रान्तिः "वाङ् मनसि" [ब्या०सू०४।२।१] इत्याद्या विद्वद-
विदुषोरासृत्युपक्रमाद्भवितुमर्हति । अविशेषश्रवणात् । अविद्वान्देह-
बीजभूतानि भूतसूक्ष्माण्याश्रित्य कर्मप्रयुक्तो देहग्रहणमनुभवितुं संसरति।
विद्वांस्तु ज्ञानप्रकाशितं मोक्षं नाडीद्वारमाश्रयते तदेतद् "आसृत्युपक्र-
माद्" इत्युक्तम् ॥ नन्वमृतत्वं विदुषा प्राप्तव्यम् । न च तद्देशान्तराय-
त्तम् । तत्र कुतो भूताश्रयत्वं, सृत्युपक्रमो वेति ॥ अत्रोच्यते । अनुपोष्य
चेदमदग्ध्वाऽत्यन्तमविद्यादीन्क्लेशानपरविद्यासामर्थ्यादापेक्षिकममृतत्वं
प्रेप्स्यते । सम्भवति तत्र सृत्युपक्रमो भूताश्रयत्वञ्च । न हि निराश्र-
याणां प्राणानां गतिरुपपद्यते ॥ तस्माददोषः ॥ ७ ॥ इत्यासृत्युप-
क्रमाधिकरणम् ॥ ४ ॥

## तदापीतेः संसारव्यपदेशात् ॥ ८ ॥ ( ५ ) ॥

---

रत्नप्रभा ।

इति भोगश्रवणादित्याह–अनुपोष्य चेदमिति ॥ उष दाह इति धातोरिदं रूपम् ॥ ७ ॥ ( ४ ) ॥
तदापीतेः० ॥ पूर्वोदाहृतोत्क्रान्तिवाक्यशेषं व्याख्याय लिङ्गाश्रयपञ्चभूतानां किमात्यन्तिको ब्रह्मणि लयः–

भामती ।

सिद्धानां तदनुगुणतया तेषामनुवाद इति । एवं प्राप्तेऽभिधीयते—समाना चैषोत्क्रान्तिर्वाङ्मन-
सीत्याद्या विद्वदविदुषोः । कुतः–आसृत्युपक्रमात् । सृतिः सरणं देवयानेन पथा कार्यब्रह्मलोक-
प्राप्तिरा सृतेरा कार्यब्रह्मलोकप्राप्तेः । अयं विद्योपक्रम आरम्भः प्रयत्न इति यावत् । तस्मादेतदुक्तं भवति–
नेयं परा विद्या यतो नाडीद्वारमाश्रयते । अपि त्वपरविद्येयम् । न चास्यामात्यन्तिकः क्लेशप्रदाहो यतो
न तत्रोत्क्रान्तिर्भवेत् । तस्मादपरविद्यासामर्थ्यादापेक्षिकमाभूतसंप्लवस्थानममृतत्वं प्रेप्सते पुरुषार्थाय संभ-
वत्येष उत्क्रान्तिभेदवान् सृत्युपक्रमोपदेशः । उपपूर्वादुष दाह इत्यस्मादुपोष्येति प्रयोगः ॥ ७ ॥(४)॥तदा-
ऽपीतेः संसारव्यपदेशात् । सिद्धां कृत्वा बीजभावावशेषां परमात्मसंपत्तिं विद्वदविदुषोरुत्क्रान्तिः सम-
र्थिता । सैव संप्रति चिन्त्यते । किमात्मनि तेजःप्रभृतीनां भूतसूक्ष्माणां तत्त्वविलय एव संपत्तिराहोस्वि-
द्बीजभावावशेषेति । यदि पूर्वः पक्षः, नोत्क्रान्तिः । अथोत्तरः, ततः सेति । तत्राप्रकृतौ न विकारतत्त्व-
प्रविलयो यथा मनसि न वागादीनाम् । सर्वस्य च जनिमतः प्रकृतिः परा देवतेति तत्त्वप्रलय एवात्य-
न्तिकः स्यात्तेजःप्रभृतीनामिति प्राप्तेऽभिधीयते—'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनु-

आनन्दगिरीय–न्यायनिर्णयः ।

विदुषोः साधारणी चेदुत्क्रान्तिस्तर्हि तयोर्विशेषाभावाद्विद्यावैयर्थ्यं तत्राऽऽह–अविद्वानिति । अवाङ्ना-
डीभिरविद्वान्पितृलोकं लोकान्तरं वा स्वकर्मानुसारेण प्रतिपद्यते विद्वान्पुनर्मूर्धन्यया नाड्या ब्रह्मलोकमिति
विशेषस्तयोरित्यर्थः । सृतिः सरणं देवयानो मार्गस्तदुपक्रमात्तुल्योत्क्रान्तिरित्युक्तेऽर्थे सूत्रावयवं पातयति–
तदेतदिति । अवशिष्टसूत्रावयवव्यावर्त्यां शङ्कामाह–नन्विति । सूत्रावयवमुत्तरत्वेनावतार्य व्याकरोति–
अत्रेति । मनसैतान्कामान्पश्यन्रमते स एकधा भवतीत्यादिश्रुतेरर्चिरादिमार्गगमनेन सेन्द्रियस्य फलो-
भोगप्रतिपादनादिन्द्रियाणां च निराश्रयाणां गमनायोगाज्जीवस्यापि तदाश्रयभूताश्रयस्य गतिरवगते-
त्याह–न हीति । अपरविद्यास्वमृतत्वमापेक्षिकमिति स्थिते तत्रोत्क्रान्त्यन्वयो युक्त इत्युपसंहरति–तस्मा-
दिति ॥ ७ ॥ (४) ॥ उक्तोत्क्रान्तिकाले या सत्संपत्तिस्तत्स्वरूपं निरूपयति–तदाऽपीतेरिति । उदा-

"तेजः परस्यां देवतायाम्" [छां० ६।८।६] इत्यत्र प्रकरणसामर्थ्यात्, तद्यथा प्रकृतं तेजः साध्यक्षं सप्राणं सकरणग्रामं भूतान्तरसहितं प्रयतः पुंसः परस्यां देवतायां सम्पद्यते—इति ॥ एतदुक्तं भवति ॥ कीदृशी पुनरियं सम्पत्तिः स्यादिति चिन्त्यते । तत्राऽऽत्यन्तिक एव तावत्स्वरूपप्रविलय इति प्राप्तम् । तत्प्रकृतित्वोपपत्तेः । सर्वस्य हि जनिमतो वस्तुजातस्य प्रकृतिः परा देवतेति प्रतिष्ठापितम्॥ तस्मादात्यन्तिकीयमविभागापत्तिरिति ॥ एवं प्राप्ते ब्रूमः ॥ तत्—तेजआदि भूतसूक्ष्मं श्रोत्रादिकरणाश्रयभूतम् आपीतेः आ संसारमोक्षात्सम्यग्ज्ञाननिमित्तादवतिष्ठते कर्म तथा "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाश्रुतम्" [ कठ० ५ । ७ ] इत्यादिसंसारव्यपदेशात् । अन्यथा हि सर्वः प्रायणसमय एवोपाधिप्रत्यस्तमयादत्यन्तं ब्रह्म सम्पद्येत । तत्र विधिशास्त्रं चानर्थकं स्याद्, विद्याशास्त्रञ्च । मिथ्याज्ञाननिमित्तश्च बन्धो न सम्यग् ज्ञानादृते विस्रंसितुमर्हति ॥ तस्मात्तत्प्रकृतित्वेऽपि सुषुप्तिप्रलयवद्बीजभावावशेषैवैषा सत्सम्पत्तिः ॥ ८ ॥

---

रत्नप्रभा ।

उत—अनात्यन्तिक इति लयस्योभयथा दर्शनात् संशयमाह—कीदृशी पुनरियमिति ॥ पूर्वत्रापेक्षिकममृतत्वमित्युक्तम् । तदयुक्तमित्याक्षेपात् सङ्गतिः । पूर्वपक्षे मृतमात्रस्य मुक्तिसिद्धिः, सिद्धान्ते तु कर्मविद्याशास्त्रबलात् सावशेषलयसिद्धिरिति विवेकः ॥ ८ ॥ ननु लिङ्गात्मकस्य तेजसः कथं सूक्ष्मतम-

भामती ।

संयन्ति यथाकर्म यथाश्रुतम्॥' इत्यविद्यावतः संसारमुपदिशति श्रुतिः, सेयमात्यन्तिके तत्त्वलये नोपपद्यते।न च प्रायणस्यैवैष महिमा विद्वांसमविद्वांसं वा प्रतीति सांप्रतमित्याह—अन्यथा हि सर्वः प्रायणसमय एवेति। विधिशास्त्रं ज्योतिष्टोमादिविषयमनर्थकं प्रायणादेवात्यन्तिकप्रलये पुनर्भवाभावात् । मोक्षशास्त्रं चाप्रयत्नलभ्यात्प्रायणादेव जन्तुमात्रस्य मोक्षप्राप्तेः । न केवलं शास्त्रानर्थक्यमयुक्तश्च प्रायणमात्रान्मोक्ष इत्याह—मिथ्याज्ञानेति । नासति निदानप्रशमे प्रशमस्तद्वतो युज्यत इत्यर्थः ॥ ८ ॥ अथेतरभूतसहितं तेजो जीवस्याश्रयभूतमुत्क्रमदेहाद्देहान्तरं वा संचरत्कस्मादस्माभिर्न निरीक्ष्यते । तद्धि महत्त्वाद्वानेकद्रव्यत्वाद्वा

आनन्दगिरीय—न्यायनिर्णयः ।

हरणवाक्यस्यार्थोक्तिपूर्वकमधिकरणस्य विषयं दर्शयति—तेज इति । बीजभावावशेषां सत्संपत्तिं सिद्धवत्कृत्य विदुषोऽप्युत्क्रान्तिरुक्ता संप्रति संपत्तेरुभयथादृष्टेरात्यन्तिकी सत्संपत्तिरनात्यन्तिकी वेति संशयमाह—कीदृशीति । उत्क्रान्तिकालीनसत्संपत्तेः श्रुतायाः सावशेषत्वसाधनात्पादादिसंगतिः । पूर्वपक्षे देहादुत्क्रान्तस्यापुनरावृत्तिः । सिद्धान्ते तस्यापि ज्ञानहीनस्य पुनरावृत्तिरिति विवक्षित्वा पूर्वपक्षयति—तत्रेति । पूर्वोक्तातत्प्रकृतित्वहेतोरभावादिति हेतुमाह—तत्प्रकृतित्वेति । उपपत्तिमेव दर्शयति—सर्वस्येति । विमता सत्संपत्तिरात्यन्तिक्यन्तकालीनसत्संपत्तित्वाद्ब्रह्मविदः सत्संपत्तिवदित्युपसंहरति—तस्मादिति । सिद्धान्तसूत्रमादाय व्याकुर्वन्नुक्तानुमानस्य श्रुतिविरोधमाह—एवमिति । उत्क्रान्तिकालीनसत्संपत्तेरात्यन्तिकत्वे दोषान्तरमाह—अन्यथेति । इष्टापत्तिमाशंक्य देहान्तरभोगाय कर्मविध्यनुपपत्तिरित्यनुमानस्य बाधकान्तरमाह—तत्रेति । ज्ञानविध्यनुपपत्त्याऽपि बाधितमनुमानमिति मत्वा ब्रूते—विद्येति । युक्तितोऽपि बाधितं तदित्याह—मिथ्येति । निदाननाशातिरेकेण निदानिनाशो नाऽऽत्यन्तिको युक्त इत्यर्थः । यत्तु तत्प्रकृतित्वोपपत्तेरिति तत्राऽऽह—तस्मादिति । श्रुतार्थापत्तियुक्तिविरोधस्तच्छब्दार्थः ॥ ८ ॥ ननु यद्यासंसारवि-

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

तच्चेतरभूतसहितं तेजो जीवस्यास्माच्छरीरात्प्रवसत आश्रयभूतं स्वरूपतः परिमाणतश्च सूक्ष्मं भवितुमर्हति । तथाहि-नाडीनिष्क्रमणश्रवणादिभ्योऽस्य सौक्ष्म्यमुपलभ्यते । तत्र तनुत्वात्सञ्चारोपपत्तिः । स्वच्छत्वाच्चाप्रतीघातोपपत्तिः । अत एव च देहान्निर्गच्छन्पार्श्वस्थैर्नोपलभ्यते ॥ ९ ॥

## नोपमर्देनातः ॥ १० ॥

अत एव च सूक्ष्मत्वान्नास्य स्थूलशरीरस्योपमर्देन दाहादिनिमित्तेनेतरत्सूक्ष्मशरीरमुपमृद्यते ॥ १० ॥

## अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥

अस्यैव च सूक्ष्मशरीरस्य एष ऊष्मा यमेतस्मिञ्जीवच्छरीरे संस्पर्शेनोष्जिमानं विजानन्ति । तथाहि-मृतावस्थायामवस्थितेऽपि देहे, वि-

रत्नप्रभा ।

नाडीद्वारा गतिः, कुतो वा केनचिन्मूर्तेन प्रतीघातो नास्ति, कुतो वा न दृश्यते, इत्यत आह-सूक्ष्ममिति ॥ परिमाणसौक्ष्म्याद्गतिरनुद्भूतस्पर्शरूपत्वात्स्वच्छत्वाच्चादृष्टप्रतीघातानुपलब्धिरित्यर्थः ॥ ॥ ९ ॥ १० ॥ लिङ्गसद्भावे चोष्णलिङ्गकानुमानमाह—अस्यैव चेति ॥ ११ ॥ (१) ॥

भामती ।

रूपवदुपलब्धव्यम् । कस्मान्न मूर्तान्तरैः प्रतिबध्यत इति शङ्कामपाकर्तुमिदं सूत्रम्-सूक्ष्मं प्रमाणतश्च तथोपलब्धेः । चकारो भिन्नक्रमः । न केवलमापीतैस्तदवतिष्ठते । तच्च सूक्ष्मं स्वरूपतः परिमाणतश्च स्वरूपमेव हि तस्य तादृशमदृश्यम् । यथा चाक्षुषस्य तेजसो महतोऽपि अदृष्टवशादनुद्भूतरूपस्पर्शं हि तत् । परिमाणतः सौक्ष्म्यं यतो नोपलभ्यते यथा त्रसरेणवो जालसूर्यमरीचिभ्योऽन्यत्र प्रमाणतस्तथोपलब्धिरिति व्याचष्टे-तथाहि नाडीनिष्क्रमणेति । आदिग्रहणेन चक्षुष्टो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य इति संगृहीतम् । अप्रतिघाते हेतुमाह-स्वच्छत्वाच्चेति । एतदपि हि सूक्ष्मत्वेनैव संगृहीतम् । यथा हि काचाभ्रपटलं स्वच्छस्वभावस्य न तेजसः प्रतिघातकम् । एवं सर्वमेव वस्तुजातमस्येति ॥ ९ ॥ नोपमर्देनातः । अत एव च स्वच्छतालक्षणात्सौक्ष्म्यादसक्तत्वापरनाम्नः ॥ १० ॥ अस्यैव चोपपत्तेरेष ऊष्मा । उपपत्तिः प्राप्तिः । एतदुक्तं भवति-दृष्टश्रुताभ्यामूष्मणोऽन्वयव्यतिरेकाभ्यामस्ति

आनन्दगिरीय-न्यायनिर्णयः ।

मोक्षात्तेजआदिभूतसूक्ष्ममुक्तलक्षणमवतिष्ठते किमिति तर्हि देहान्निर्गच्छदस्माभिर्नोपलभ्यते किमिति वा मूर्तान्तरैर्न प्रतिहन्यते तत्राऽऽह-सूक्ष्ममिति । स्वरूपसौक्ष्म्यसमुच्चयार्थश्चकार इत्यङ्गीकृत्य व्याचष्टे-तच्चेति । उपलब्धेरित्येतद्व्याकरोति-तथाहीति । परिमाणतः सौक्ष्म्याङ्गीकारे लाभं दर्शयति-तत्रेति । स्वरूपतस्तदङ्गीकारे लाभमाह-स्वच्छत्वादिति । उभयविधत्वादेवानुपलब्धिरपि सिद्धेत्याह-अत इति ॥ ॥ ९ ॥ सौक्ष्म्यकृतं लाभान्तरमाह-नोपमर्देनेति । तदेव विवृणोति-अत एवेति ॥ १० ॥ सूक्ष्मदेहसद्भावे मानमौष्ण्यलिङ्गकमनुमानमपीत्याह-अस्यैवेति । सूत्रं विवृण्वन्ननुमानमेव स्फोरयति-अस्येति । औष्ण्यस्य सूक्ष्मदेहे व्यभिचारमाशंक्योपपत्तेरिति योजयति-तथाहीति । अन्वयव्यतिरेकाभ्यां स्थूलशरीरातिरिक्तं स्वाश्रयमूष्मा गमयतीत्युक्तम् । इदानीमागमोऽपि सूक्ष्मदेहधर्मत्वमस्य सूचयतीत्याह-

चमानेष्वपि च रूपादिषु देहगुणेषु, नोष्मोपलभ्यते, जीवदवस्थायामेव तूपलभ्यते,—इत्यत उपपद्यते प्रसिद्धशरीरव्यतिरिक्तव्यपाश्रय एवैष ऊष्मेति ॥ तथा च श्रुतिः "उष्ण एवैषजीविष्यञ्छीतो मरिष्यन्" इति॥११॥

इति संसारव्यपदेशाधिकरणम् ॥ ५ ॥

## प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥ ( ६ ) ॥

"अमृतत्वश्चानुपोष्य" इत्यतो विशेषणादात्यन्तिकेऽमृतत्वे गत्युत्क्रान्त्योरभावोऽभ्युपगतः । तत्राऽपि केनचित्कारणेनोत्क्रान्तिमाशंक्य प्रतिषेधति—"अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति" [ बृ० ४ । ४ । ७ ] इति । अतः परविद्याविषयात्प्रतिषेधान्न परब्रह्मविदो देहात्प्राणानामुत्क्रान्तिरस्तीति चेत् ॥ नेत्युच्यते ॥ यतः शारीरादात्मन एष उत्क्रान्तिप्रतिषेधः प्राणानां, न शरीरात् । कथमवगम्यते "न तस्मात्प्राणा उत्क्रामन्ति"

---

रत्नप्रभा ।

प्रतिषेधादिति चेन्न शारीरात् । पूर्वमनुपोष्येतिपदेन दग्धा—शेषक्लेशस्य निर्गुणज्ञानिनः उत्क्रान्त्याद्यभावः सूचितः । तस्यात्राक्षिप्य समाधानाद्व्यवहितेनास्य सङ्गतिरित्याह—अमृतत्वं चेति ॥ सकामस्य संसारोक्त्यनन्तरं निष्कामस्य मुक्तिप्रकरणार्थोऽथशब्दः । आत्मकामत्वात् पूर्णानन्दात्मवित्त्वाद् आप्तकामः प्राप्तपरमानन्दः । अतो निष्कामः अनभिव्यक्तान्तरवासनात्मककामशून्यः तस्माद् अकामः व्यक्तबहिष्कामरहितः ईदृशो योऽकामयमानस्तस्येत्यन्वयः ॥ ज्ञानिनः उत्क्रान्तिरस्ति न वेति पञ्चमीषष्ठीश्रुतिभ्यां सन्देहे सिद्धान्तशङ्कानिरासपूर्वकं पूर्वपक्षयति—नेत्यादिना ॥ १२ ॥ काण्वश्रुतौ तावत् "तस्य" इति सर्वनाम्ना प्रकृतं ज्ञानिनं परामृश्य सम्ब-

भामती ।

स्थूलाद्देहादतिरिक्तं किंचिच्चिदात्मसूक्ष्मं शरीरमिति ॥ ११ ॥ (५) ॥ प्रतिषेधादिति चेन्न शारीरात् । अधिकरणतात्पर्यमाह—अमृतत्वं चानुपोष्येत्यतो विशेषणादिति । विषयमाह—अथाकामयमान इति । सिद्धान्तिमतमाशङ्क्य तन्निराकरणेन पूर्वपक्षी स्वमतमवस्थापयति—अतः परविद्याविषयात्प्रतिषेधादिति । यदि हि प्राणोपलक्षितस्य सूक्ष्मशरीरस्य जीवात्मनः स्थूलशरीरादुत्क्रान्तिं प्रतिषेधेच्छ्रुतिः तत एतदुपपद्यते । न त्वेतदस्ति । न तस्मात्प्राणा उत्क्रामन्तीति हि तदा सर्वनाम्ना प्रधानावमर्शिनाभ्युदयनिः-

आनन्दगिरीय—न्यायनिर्णयः ।

तथा चेति ॥ ११ ॥ (५) ॥ उत्क्रान्तिकालीनसत्संपत्तेः सावशेषत्वमुक्तम् । संप्रत्युत्क्रान्तेर्निर्गुणब्रह्मविदि अभावमाह—प्रतिषेधादिति । व्यवहितेन संबन्धं दर्शयन्नधिकरणस्य तात्पर्यमाह—अमृतत्वं चेति । परब्रह्मविदं विषयत्वेनोदाहरति—अथेति । मुक्तिप्रकरणोपक्रमार्थोऽथशब्दः । बाह्यविषयवैतृष्ण्यमकामत्वम् । आन्तरकामवासनाराहित्यं निष्कामत्वम् । प्राप्तपरमानन्दत्वमाप्तकामत्वम् । सर्वात्मैकत्वदर्शित्वमात्मकामत्वम् । उत्तरमुत्तरं पूर्वस्यपूर्वस्य निमित्तमेवमकामयमानो ब्रह्मविदत्र श्रुतोऽस्तीर्थः । तस्य किमुत्क्रान्तिरस्ति किंवा नास्तीति पञ्चमीषष्ठीश्रुतिभ्यां संदेहे परब्रह्मविदो मुख्यामृतत्वे गत्युत्क्रान्त्योरभावोक्तेरत्र प्रासङ्गिकी पादादिसंगतिः । पूर्वपक्षे निषेधस्यान्यविषयत्वाद्विदुषोऽविदुश्चाविशेषः । सिद्धान्ते शाखाद्वयेऽपि देहापादानोत्क्रान्तिनिषेधाद्विशेषसिद्धिरित्यभिप्रेत्य सिद्धान्तिनो मतनिराकरणेन पूर्वपक्षी स्वमतमाह—नेत्यादिना । न तस्य प्राणा उत्क्रामन्तीति विदुषो देहादेवोत्क्रान्तिर्निषिध्यते न शारीरादिति शङ्कते—कथमिति । माध्यंदिनश्रुत्या प्रत्याह—न तस्मादिति । शारीरादुत्क्रान्तिनिषेधे का गतिः षष्ठीश्रुते-

इति । शाखान्तरे पञ्चमीप्रयोगात् । सम्बन्धसामान्यविषया हि षष्ठी शाखान्तरगतया पञ्चम्या सम्बन्धविशेषे व्यवस्थाप्यते ॥ तस्मादिति च प्राधान्यादभ्युदयनिःश्रेयसाधिकृतो देही सम्बध्यते, न देहः । "न तस्मादुच्चिक्रमिषोर्जीवात्प्राणा उत्क्रामन्ति" सहैव तेन संभवन्तीत्यर्थः ॥ सप्राणस्य च प्रवसतो भवत्युत्क्रान्तिर्देहादिति ॥ १२ ॥ एवं प्राप्ते प्रत्युच्यते-

## स्पष्टो ह्येकेषाम् ॥ १३ ॥

नैतदस्ति-यदुक्तं परब्रह्मविदोऽपि देहादस्त्युत्क्रान्तिः । प्रतिषेधस्य देह्यपादानत्वादिति । यतो देहापादान एवोत्क्रान्तिप्रतिषेध एकेषां समाम्नातॄणां स्पष्ट उपलभ्यते । तथाहि-आर्तभागप्रश्ने "यत्रायं पुरुषो म्रियते तदस्मात्प्राणा उत्क्रामन्त्याहोस्विन्नेति" [ बृ० ३ । २ । ११ ]

---

रत्नप्रभा ।

न्धसामान्यमुक्तम् । तत्र माध्यन्दिनशाखायां तस्मादित्यपादानत्वरूपविशेष उक्तो ग्राह्यः । तथा च जीवात् प्राणोत्क्रान्तिप्रतिषेधो भाति, न देहात् । तच्छब्देन देहस्यानुक्तेः ॥ तस्मात् ज्ञानिनोऽप्युत्क्रान्तिरस्ति इति ज्ञानवैयर्थ्यमिति पूर्वपक्षफलं, सिद्धान्ते तत्सार्थक्यमाह—स्पष्टो हीति ॥ अत्र पुरुषशब्दवाच्यो देह एवास्मादित्युत्क्रान्त्यवधिरुच्यते । सशब्दपरामृष्टस्य प्रकृतस्य पुरुषस्योच्छ्वयनादिधर्मकस्य जीवत्वायोगादित्यर्थः । उच्छ्वयति वाह्यवायुपूरणाद्वर्धते । आध्मायति आर्द्रभेरीवच्छब्दं करोतीत्यर्थः ॥ येषां पञ्चमीपाठः, तेषां यद्यपि देहिनः प्राधान्यम् । तथापि देहदेहिनोरभेदात् तस्मादिति देहं परामृश्य तदपादान एवोत्क्रान्तिप्रतिषेध इति व्याख्येयम् । तत्सामान्यादुक्तश्रुत्यास्य पाठस्यैकार्थत्वादिति योजना ॥

भामती ।

श्रेयसाधिकृतो देही प्रधानं परामृश्यते । तथा च तस्माद्देहिनो न प्राणाः सूक्ष्मं शरीरमुत्क्रामन्त्यपि तु तत्सहितः क्षेत्रज्ञ एवोत्क्रामतीति गम्यते । स पुनरतिक्रम्य ब्रह्मनाड्या संसारमण्डलं हिरण्यगर्भपर्यन्तं सलिङ्गो जीवः परस्मिन्ब्रह्मणि लीयते तस्मात्परामपि देवतां विदुष उत्क्रान्तिरत एव मार्गश्रुतयः, स्मृतिश्च मुमुक्षोः शुकस्यादित्यमण्डलप्रस्थानं दर्शयतीति प्राप्तम् ॥ १२॥ एवं प्राप्ते प्रत्युच्यते—स्पष्टो ह्येकेषाम् । नायं देह्यपादानस्य प्रतिषेधः । अपि तु देहापादानस्य । तथाहि—आर्तभागप्रश्नोत्तरे ह्येकस्मिन्पक्षे संसारिण एव जीवात्मनोऽनुत्क्रान्ति परिगृह्य न तर्ह्येष मृतः प्राणानामनुत्क्रान्तेरिति स्वयमाशंक्य प्राणानां प्रविलयं प्रतिज्ञाय तत्सिद्ध्यर्थमुत्क्रान्त्यवधेरुच्छ्वयनाध्माने ब्रुवन्यस्योच्छ्वयनाध्माने तस्य तदवधित्वमाह । शरीरस्य च ते इति शरीरमेव तदपादानं गम्यते । नन्वेवमप्यस्त्वविदुषः संसारिणो विदुषस्तु किमायातमित्यत आह—

आनन्दगिरीय-न्यायनिर्णयः ।

रित्याशंक्य पञ्चम्यन्तमाध्यंदिनश्रुत्या षष्ठ्यन्तकाण्वश्रुतिः संबन्धसामान्यविषयापादनरूपसंबन्धविशेषे व्यवस्थापनीयेत्याह—संबन्धेति । माध्यंदिनश्रुतावपि तस्मादिति शरीरमेव परामृश्यतामित्याशंक्याऽऽह—तस्मादिति चेति । कस्तर्हि वाक्यार्थः स्यादित्यपेक्षायामाह—न तस्मादिति । तथाऽपि प्रकृते किमायातमित्याशंक्य सप्राणस्य क्षेत्रज्ञस्य शरीरादुत्क्रान्तिः सिद्धेत्याह—स प्राणस्येति ॥ १२ ॥ परब्रह्मविदोऽपि गत्युत्क्रान्ती स्तामिति प्राप्तमनूद्य सिद्धान्तयति—एवमिति । सूत्रं हेतुत्वेन व्याख्यातुं बहिरेव प्रतिज्ञामाह—नैतदिति । तत्र हेतुतया सूत्रं योजयति—यत इति । उपलम्भमभिनयति—तथाहीति । उदस्मात्प्राणा उत्क्रामन्तीत्यत्रोत्क्रान्त्यवधिमत्त्वमस्मादित्युक्तं सशब्देन परामृष्टस्योच्छ्वयनादिधर्मोक्तेर्यस्योच्छ्वयनाध्माने तस्यैवो-

इत्यत्र "नेति होवाच याज्ञवल्क्यः" [ बृ० ३ । २ । ११ ] इत्युत्क्रान्तिपक्षं परिगृह्य न तर्ह्ययमनुत्क्रान्तेषु प्राणेषु मृत इत्यस्यामाशंकायाम् । "अत्रैव समवनीयन्ते" [ बृ० ३ । २ । ११ ] इति प्रविलयं प्राणानां प्रतिज्ञाय तत्सिद्धये "स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते" [ बृ० ३। २ । ११ ] इति सशब्दपरामृष्टस्य प्रकृतस्योत्क्रान्त्यवधेरुच्छ्वयनादीनि समामनन्ति । देहस्य चैतानि स्युर्न देहिनः । तत्सामान्यात्–"न तस्मात्प्राणा उत्क्रामन्ति" [ बृ० ३ । २ । ११ ] "अत्रैव समवनीयन्ते" इत्यत्राप्यभेदोपचारेण देहापादानस्यैवोत्क्रमणस्य प्रतिषेधः ॥ यद्यपि प्राधान्यं देहिन इति व्याख्येयं येषां पञ्चमीपाठः । येषां तु षष्ठीपाठः, तेषां विद्वत्सम्बन्धिन्युत्क्रान्तिः प्रतिषिध्यत इति प्राप्तोत्क्रान्तिप्रतिषेधार्थत्वादस्य वाक्यस्य देहापादानैव सा प्रतिषिद्धा भवति देहादुत्क्रान्तिः प्राप्ता, न देहिनः ॥ अपि च "चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीर-

---

रत्नप्रभा ।

इदानीं काण्वपाठस्यानुगुण्यमाह–**येषां तु षष्ठीपाठ इति**॥ सम्बन्धविशेषाकांक्षायां भोक्त्रा प्राणानां भोगोपकरणत्वविशेषोऽत्र "प्राणमयो मनोमयः" इति पूर्वश्रुत्युक्तो ग्राह्यः, न शाखान्तरस्थमपादानत्वं ग्राह्यम् । जीवादुत्क्रान्तेरप्राप्तयोः प्रतिषेधायोगाद् अतो विद्वत्सम्बन्धिप्राणानाम् । उत्क्रान्त्यपादानापेक्षायां "चक्षुष्टो वा मूर्ध्नो वा" इत्युक्तदेहप्रदेशा एव ग्राह्याः ॥ तथा चायमर्थः ॥ तस्य विदुषो भोगोपकरणात्मकाः

भामती ।

**तत्सामान्यादिति** । ननु तदा सर्वनाम्ना प्रधानतया देही परामृष्टः तत्कथमत्र देहावगतिरित्यत आह–**अभेदोपचारेण** । देहदेहिनोर्देहिपरामर्शिना सर्वनाम्ना देह एव परामृष्ट इति पञ्चमीपाठे व्याख्येयम्। षष्ठीपाठे तु नोपचार इत्याह–**येषां तु षष्ठीति**।अपि च प्राप्तिपूर्वः प्रतिषेधो भवति नाप्राप्ते। अविदुषो हि देहादुत्क्रमणं दृष्टमिति विदुषोऽपि तत्सामान्याद्देहादुत्क्रमणे प्राप्ते प्रतिषेध उपपद्यते न तु प्राणानां जीवावधिकं क्वचिदुत्क्रमणं दृष्टं येन तन्निषिध्यते । अपि चाद्वैतपरिभावनाभुवा प्रसंख्यायेन निर्मृष्टनिखि-

आनन्दगिरीय–न्यायनिर्णयः ।

त्क्रान्त्यवधित्वं देयस्येत्यर्थः।अथोच्छ्वयनादिधर्मजातं देहिनोऽस्तु तेन तस्यैवोत्क्रान्त्यवधित्वं नेत्याह–**देहस्येति**। काण्वश्रुतौ निषिध्यमानोत्क्रान्तेर्देहापादानत्वेऽपि माध्यंदिनश्रुतौ देहिन एव तदपादानत्वं तस्यैव प्राधान्यादित्याशंक्याऽऽह–**तदिति** । विद्याप्रकरणत्वसामान्याद्ब्रह्मविदो देहापादानोत्क्रान्तिनिषेधः शाखाद्वयेऽपि तुल्य इत्यर्थः । तच्छब्देन सर्वनाम्ना देहिनः प्रधानतया परामृष्टत्वात्कुतोऽत्र देहधीरित्याशंक्याऽऽह–**अभेदेति** । प्राधान्याद्देहिनस्तच्छब्दार्हत्वेपि देहदेहिनोरभेदोपचाराद्देहिपरामर्शिसर्वनाम्ना देहस्यैव परामर्शोत्तस्मादेवोत्क्रान्तिरत्र निषिद्धेति पञ्चमीपाठे व्याख्येयमित्यर्थः । माध्यंदिनपाठस्य सिद्धान्तानुगुण्यमुक्त्वा काण्वपाठस्यापि तदानुगुण्यमाह–**येषां त्विति** । न तस्येत्यादावपादानापेक्षायां चक्षुष्टो वा मूर्ध्नो वेति देहांशानामुत्क्रान्त्यपादानत्वेन प्रकृतानामिह संबन्धात्प्राप्तोत्क्रान्तिनिषेधपरत्वाच्च वाक्यस्य न तस्य प्राणा देहांशेभ्यः सकाशादुत्क्रामन्तीति वाक्यविपरिणामादन्यथा वाऽप्राप्तनिषेधापातात्संबन्धसामान्यार्थषष्ठ्याश्च प्राणेन रक्षन्प्राणमय इत्यादिकर्तृकरणोपाध्युपहितत्वप्रकृतसंबन्धविशेषपर्यवसानादन्यशाखास्थापादानसंबन्धविशेषापेक्षाभावात्तस्य करणोपाधिभूताः प्राणा देहावयवेभ्यो नोत्क्रामन्तीति वाक्यार्थः स्यादित्यर्थः । इतश्च विद्वदुत्क्रान्तिनिषेधपरं वाक्यमित्याह–**अपि चेति** । व्यपदेशसामर्थ्यसिद्धमुपसंहरति–

देशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" [ बृ० ४।४।२ ] इत्येवमविद्वद्विषयेषु सप्रपञ्चमुत्क्रमणं, संसारगमनञ्च,-दर्शयित्वा "इति नु कामयमानः" [ बृ० ४।४।६ ] इत्युपसंहृत्याऽविद्वत्कथाम्। "अथाकामयमानः" [ बृ० ४।४।६ ] इति व्यपदिश्य विद्वांसं यदि तद्विषयेऽप्युत्क्रान्तिमेव प्रापयेदसमञ्जस एव व्यपदेशः स्यात्॥ तस्मादविद्वद्विषये प्राप्तयोर्गत्युत्क्रान्त्योर्विद्वद्विषये प्रतिषेध इत्येवमेव व्याख्येयं व्यपदेशार्थवत्त्वाय॥ न च ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य प्रक्षीणकामकर्मण उत्क्रान्तिर्गतिर्वोपपद्यते। निमित्ताभावात्। "अत्र ब्रह्म समश्नुते" इति चैवञ्जातीयकाः श्रुतयो गत्युत्क्रान्त्योरभावं सूचयन्ति॥ १३॥

## स्मर्यते च॥ १४॥

स्मर्यतेऽपि च महाभारते गत्युत्क्रान्त्योरभावः-"सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः। देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः" इति॥ ननु गतिरपि ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य स्मर्यते "शुकः किल वैयासकिर्मुमुक्षुरादित्यमण्डलमभिप्रतस्थे पित्रा चानुगम्याहूतो भो इति प्रतिशुश्राव" इति॥ न॥ सशरीरस्यैवायं योगबलेन विशिष्टदेशप्राप्तिपूर्वकः शरीरोत्सर्ग इति द्रष्टव्यम्॥ सर्वभूतदृश्यत्वाद्युपन्यासात्। न ह्यशरीरं गच्छन्तं सर्वभूतानि द्रष्टुं शक्नुयुः। तथा च तत्रैवोपसंहृतम्-"शुकस्तु मारुताच्छीघ्रां गतिं कृत्वाऽन्तरिक्षगः॥ दर्शयित्वा

---

रत्नप्रभा।

प्राणाः देहप्रदेशेभ्यो नोत्क्रामन्तीति॥ एवञ्च प्राप्तोत्क्रान्तिनिषेधार्थत्वं वाक्यस्येति सर्वं चतुरस्रम्॥ १३॥

अपि चेति स्पष्टार्थम्॥ सम्यगात्मभावेन भूतानि पश्यतः अपदस्य प्राप्यपदरहितस्य पदैषिणः देवा अपि मार्गे मुह्यन्ति मार्गं न जानन्ति। तदभावादिति स्मृतियोजना॥ स्मृत्यन्तरविरोधं शङ्कते-ननु गतिरपीति॥ सगुणविद्याबलेनैषा गतिरिति परिहरति-सशरीरस्येति॥ ननु तर्हि "तयोर्ध्वमा-

भामती।

ल्प्रपञ्चावभासजातस्य गन्तव्याभावादेव नास्ति गतिरित्याह-न च ब्रह्मविद इति। अपदस्य हि ब्रह्मविदो मार्गे पदैषिणोऽपि देवा इति योजना। चोदयति-ननु गतिरपीति। परिहरति-सशरीरस्यैवायं

आनन्दगिरीय-न्यायनिर्णयः।

तस्मादिति। न केवलं मानाभावादेव गत्युत्क्रान्त्यभावः किंतु युक्त्यभावादपीत्याह-न चेति। उपपत्त्यभावे हेतुमाह-निमित्तेति। गमनस्य कर्मकरणादिकारकासंभवादित्यर्थः। तयोः सत्त्वे मानं नास्तीत्युक्तं तदसत्त्वे मानमस्तीत्याह-अत्रेति॥ १३॥ "नोत्क्रामन्ति मुनेः प्राणा व्यापी सर्वगतो हि सः। तेन व्याप्तमिदं सर्वं कुत उत्क्रम्य यास्यति" इतिस्मृतेरपि ब्रह्मविदो नोत्क्रान्तिर्गतिर्वेत्याह-स्मर्यते चेति। सूत्रं व्याचष्टे-स्मर्यतेऽपीति। अपदस्य प्राप्यपदशून्यस्य ब्रह्मविदः पदैषिणो देवा अपि मार्गे मुह्यन्ति मार्गं न जानन्ति तदभावादिति योजना स्मृत्यन्तरविरोधं शंकते-नन्विति। अपरविद्याबलेनैषा गतिरित्याह-नेति। तत्र नियामकमाह-सर्वेति। आदिशब्देनानुगमनादि गृह्यते। तथाऽपि कथं सशरीरस्य गतिस्तत्राऽऽह-न हीति। उक्तेऽर्थे वाक्यशेषमनुकूलयति-तथा चेति। स्मृत्यनुग्रहलब्धमर्थमुपसंहरति-

प्रभावं स्वं सर्वभूतगतोऽभवद्" [ म० भार० ] इति । तस्मादभावः परब्रह्मविदो गत्युत्क्रान्त्योः । गतिश्रुतीनां तु विषयमुपरिष्टाद्व्याख्यास्यामः ॥ १४ ॥ इति प्रतिषेधाधिकरणम् ॥ ६ ॥

## तानि परे तथाह्याह ॥ १५ ॥ ( ७ ) ॥

तानि पुनः प्राणशब्दोदितानीन्द्रियाणि भूतानि परब्रह्मविदस्तस्मिन्नेव परस्मिन्नात्मनि प्रलीयन्ते॥ कस्मात्॥ "तथाह्याह"–श्रुतिः–"एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति" [ प्रश्न० ६ । ५ ] इति ॥ ननु "गताः कलाः पञ्चदश प्रतिष्ठाः" [ मुण्ड० ३।२।७ ] इति विद्वद्विषयैवापरा श्रुतिः परस्मादात्मनोऽन्यत्रापि कलानां प्रलयमाह स्म ॥ न ॥ सा खलु व्यवहारापेक्षा–पार्थिवाद्याः कलाः पृथिव्यादीरेव स्वप्रकृतीरपियन्तीति । इतरा तु विद्वत्प्रतिपत्त्यपेक्षा–कृत्स्नं कलाजातं परब्रह्मविदो ब्रह्मैव सम्पद्यत इति ॥ तस्मादद्दोषः ॥ १५ ॥ इति वागादिलयाधिकरणम् ॥ ७ ॥

---

रत्नप्रभा ।

यन्नमृतत्वमेति" "स एवैनान् ब्रह्म गमयति" इत्यादिश्रुतीनां का गतिः, तत्राह–गतीति ॥ १४ ॥(६)॥ **तानि परे तथाह्याह** ॥ पूर्वत्र गतिनिषेधेन विद्वत्कलानां प्राणादीनामत्रैव लय उक्तः । तमुपजीव्य स किं तत्तत्कलाप्रकृतिषु पृथिव्यादिषु स्याद्–उत–परमात्मनीति श्रुतिद्वयदर्शनात् संशयः कार्यः ॥ तत्र साक्षात् प्रकृतौ विकारलय इति न्यायानुग्रहीतया 'गताः कालाः' इति श्रुत्या पूर्वपक्षमग्रे वदन्नादौ सिद्धान्तमाह–**तानीति** ॥ यथा नद्यः समुद्रं प्राप्य लीयन्ते, एवमेवास्य परितः सर्वत्र ब्रह्मद्रष्टुरिमाः

भामती ।

**योगबलेन** । अपरविद्याबलेनेति ॥१३॥१४॥(६)॥ **तानि परे तथाह्याह** । प्रतिष्ठाविलयनश्रुत्योर्विप्रतिपत्तेर्विमर्शस्तमपनेतुमयमारम्भः । तानि पुनः प्राणशब्दोदितानीन्द्रियाण्येकादश सूक्ष्माणि च भूतानि पञ्च । **परब्रह्मविदस्तस्मिन्नेव परस्मिन्नात्मनीति** । आरम्भबीजं विमर्शमाह–**ननु गताः कला इति** । प्राणमनसोरेकप्रकृतित्वं विवक्षित्वा पञ्चदशत्वमुक्तम् । अत्र श्रुत्योर्विषयव्यवस्थया विप्रतिपत्त्यभावमाह–**सा खल्विति** । व्यवहारो लौकिकः । सांव्यवहारिकप्रमाणापेक्षेयं श्रुतिः । न तात्त्विकप्रमाणापेक्षा ।

आनन्दगिरीय–न्यायनिर्णयः ।

**तस्मादिति** । तयोर्ध्वमायन्नमृतत्वमेति स एनान्ब्रह्म गमयतीत्यादिगतिश्रुतीनां तर्हि का गतिस्तत्राऽऽह–**गतीति** ॥ १४ ॥ ( ६ ) ॥ परब्रह्मविदो ब्रह्मणि परस्मिन्प्राणानां प्रलयो दर्शितस्तदयुक्तं तेषां पृथिव्यादिषु लयश्रवणादित्याशंक्याऽऽह–**तानीति** । विद्वत्कलाप्रविलयो विषयः स किं पृथिव्यादिषु किंवा परस्मिन्नात्मनीति श्रुतिद्वयोपलब्धेः संदेहे श्रौतविद्याफलभूतकलाविलयो ब्रह्मण्येवेत्युक्त्या पादादिसंगतिः । पूर्वपक्षे प्रकृतावेव विकृतिलयसिद्धिः । सिद्धान्ते व्यवहारस्तथात्वेऽपि तत्त्वतो ब्रह्मणि कलाविलयोपपत्तिरिति मन्वानः सिद्धान्तमाह–**तानीति** । उक्तार्थे प्रश्नपूर्वकं हेतुमाह–**कस्मादिति** । यथा नद्यः समुद्रं प्राप्य प्रलीयन्त एवमेवास्य जीवस्य परितः समन्तात्सर्वतोऽनवच्छिन्नप्रत्यग्ब्रह्मद्रष्टुरिमाः स्वानुभवगम्याः प्राणश्रद्धाद्याः षोडशसंख्याकाः कलाः पुरुषायणास्तदाश्रयास्तमेव पुरुषं प्राप्य बाह्यविषयासङ्गत्यागेन तस्मिन्निष्ठाय विलयमासादयन्तीति श्रुत्यर्थः । अस्याधिकरणस्य पूर्वपक्षमाह–**नन्विति** । मनःप्राणयोरेकीकरणेन कलानां पञ्चदशत्वं प्रतिष्ठाशब्देन पृथिव्यादीनि तत्त्वानि कलाकारणान्युच्यन्ते । तथा च प्रकृतावेव विकारलय इतिन्यायानुगृहीतश्रुत्या भूतेषु विद्वत्कलाविलय इत्यर्थः । वस्तुस्थित्या परस्मिन्नात्मनि कलालयेऽपि व्यवहारदृष्ट्या पृथिव्यादिषु तदुक्तिरविरुद्धा तेषु विलीय तैः सह परस्मिन्नात्मनि कलानां विलयसिद्धेश्च श्रुतिद्वयमविरुद्धमित्याह–**न सा खल्विति**। विद्वदविद्वद्दृष्ट्या श्रुतिद्वये प्रवृत्ते फलितमाह–**तस्मादिति** ॥१५॥(७)॥

## अविभागो वचनात् ॥ १६ ॥ ( ८ ) ॥

स पुनर्विदुषः कलाप्रलयः किमितरेषामिव सावशेषो भवति-आहोस्वित्-निरवशेष इति । तत्र प्रलयसामान्याच्छक्त्यवशेषताप्रसक्तौ ब्रवीति-अविभागापत्तिरेवेति ॥ कुतः ॥ "वचनात्"॥ तथाहि-कलाप्रलयमुक्त्वा वक्ति "भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति" [ प्रश्न० ६ । ५ ] इति । अविद्यानिमित्तानां च कलानां न विद्यानिमित्ते प्रलये सावशेषतोपपत्तिः ॥ तस्मादविभाग एवेति ॥१६॥ इत्यविभागाधिकरणम् ॥ ८ ॥

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥१७॥ (९) ॥

रत्नप्रभा ।

प्राणश्रद्धाद्याः पुरुषायणाः पुरुषे कल्पिताः पुरुषमेव ज्ञेयं प्राप्य लयं गच्छन्तीत्यर्थः ॥ मनःप्राणयोरेकीकरणेन कलानां पञ्चदशत्वम् । "प्रतिष्ठाः" इति द्वितीयाबहुवचनम् । स्वस्य प्रकृतीः पृथिव्याद्याः इत्यर्थः ॥ वस्तुगत्या विद्वद्दृष्ट्या परमात्मनि कलालयेऽपि लोकदृष्ट्या प्रतिष्ठासु लयोक्तिरविरुद्धा । तथा च कलास्वप्रकृतिषु विलाप्य ताभिः सह पुरुषे लीयन्ते इति श्रुतिद्वयतात्पर्यम् ॥ १५ ॥ ( ७ ) ॥ अविभागो वचनात्॥ उक्तलयमुपजीव्य लयस्य द्वेधा दर्शनात् संशयमाह-स पुनरिति॥ मुक्त्यसिद्धिः, तत्सिद्धिश्चेत्युभयत्र फलम् । अवशेषः मूलकारणे शक्त्यात्मना स्थितिः । पुनर्जन्मयोग्यतेति यावत् । विमतः कलालयः, सावशेषः, कलालयत्वात्, सुषुप्तिवदिति पूर्वपक्षः । विमतः, निरवशेषः, विद्याकृतत्वाद्, रज्ज्वां विद्यया सर्पलयवदिति युक्त्युपेतश्रुत्या सिद्धान्तयति-ब्रवीतीति ॥ नामरूपे शक्त्यात्मके अपि भिद्येते इत्यर्थः ॥ १६ ॥ (८) ॥ तदोकोऽग्रज्वलनम्० ॥ सृतेः-मार्गस्य उपक्रमः नाडीप्रवेशनियमः तं

भामती ।

इतरा तु 'एवमेवास्य परिद्रष्टुः' इत्यादिका विद्वत्प्रतिपत्त्यपेक्षा तात्त्विकप्रमाणापेक्षा । तस्माद्विषयभेदादविप्रतिपत्तिः श्रुत्योरिति ॥ १५ ॥ अविभागो वचनात् । निमित्तापाये नैमित्तिकस्यात्यन्तिकापायः। अविद्यानिमित्तश्च विभागो नाविद्यायां विद्यया समूलघातमपहतायां सावशेषो भवितुमर्हति । तथापि प्रविलयसामान्यात् सावशेषताशङ्कामतिमन्दामपनेतुमिदं सूत्रम् ॥१६॥ (८)॥ तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया । अपरविद्याविदो-

आनन्दगिरीय-न्यायनिर्णयः ।

पृथिव्यादिद्वारा ब्रह्मण्युक्तस्य विद्वत्कलाविलयस्य निरवशेषत्वमाह-अविभाग इति । प्रकृतमेव विद्वत्कलाविलयमधिकृत्य लयस्योभयथादृष्ट्या संशयमाह-स पुनरिति । अत्र श्रौतधीफलभूतविद्वत्कलाविलयस्य निरवशेषत्वनिरूपणात्पादादिसंगतिः । पूर्वपक्षे मोक्षासिद्धिः । सिद्धान्ते तत्सिद्धिरित्युपेत्य पूर्वपक्षयति-तत्रेति । विदुषो ब्रह्मणि कलाविलयः सावशेषो ब्रह्मणि कलाविलयत्वादुत्क्रान्तिकालीनकलाविलयवदित्यर्थः । श्रुतियुक्तिविरुद्धमनुमानमिति सिद्धान्तयति-ब्रवीतीति। तत्र श्रुतिविरोधं प्रश्नद्वारा दर्शयति-कुत इति। नदीसमुद्रन्यायेन पुरुषे कला विलीयन्ते तासां च कलानां नामरूपे शक्त्यात्मके अपि भिद्येते विदीर्येते पुरुषमात्रमवशिष्यते स च विद्वानकलः कलाविरहितः सन्नमृतो भवति पूर्णरूपेण तिष्ठतीत्यर्थः।श्रुतिविरोधमनुमानस्योक्त्वा युक्तिविरोधमाह-अविद्येति।अनुमाननिरासफलमुपसंहरति-तस्मादिति। ॥ १६ ॥ ( ८ ) ॥ विद्वत्कलानां वचनादविभागापत्तिवदपरब्रह्मविदामपि चक्षुष्टो वा मूर्ध्नो वेत्यविशेषवचनाद्यया कयाचिन्नाड्या प्राणनिष्क्रमणमिति प्राप्ते प्रत्याह-तदोकोग्रज्वलनमिति । वृत्तानु-

समाप्ता प्रासङ्गिकी परविद्यागता चिन्ता । सम्प्रति त्वपरविद्याविषयमेव चिन्तामनुवर्तयति । समाना चासृत्युपक्रमाद्विद्वदविदुषोरुत्क्रान्तिरित्युक्तम् । तमिदानीं सृत्युपक्रमं दर्शयति । "तस्योपसंहृतवागादिकलापस्योच्चिक्रमिषतो विज्ञानात्मन ओक आयतनं हृदयं स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति" [ कौ० उ० ] इति श्रुतेः । तदग्रज्वलनं, तत्पूर्विका चक्षुरादिस्थानापादाना चोत्क्रान्तिः श्रूयते—"तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः" [ बृ० ४।४।२ ] इति । सा किमनियमेनैव विद्वदविदुषोर्भवति, अथास्ति कश्चिद्विदुषो विशेषनियम इति विचिकित्सायां श्रुत्यविशेषादनियमप्राप्तावाचष्टे । समानेऽपि हि विद्वदविदुषोर्हृदयाग्रप्रद्योतने, तत्प्रकाशितद्वारत्वे च,—

रत्नप्रभा ।

वक्तुं सूत्रभागव्याख्याद्वारा अधिकरणविषयमाह—तस्येति ॥ सः मुमूर्षुः तेजोमात्रा इन्द्रियाणि । तस्य हृदयस्य, अग्रं नाडीमुखं, तस्य ज्वलनं भाविफलस्फुरणं—प्रद्योतनाख्यम् ॥ "चक्षुष्टो वा" इत्यनियमश्रुतेः "तयोर्ध्वमायान्" इतिविशेषश्रुतेश्च संशयः—किमुपासकोऽप्यनुपासकवद् येनकेनचिद्वारेण निर्गच्छति—उत—मूर्धन्यनाड्यैवेति । अत्र पूर्वपक्षे विद्याकृतातिशयासिद्धिः, सिद्धान्ते तत्सिद्धिरिति विवेकः ॥ वचनादविभागवदनियम इति प्राप्ते सिद्धान्तयति—आचष्ट इति ॥ येनकेनचिन्मार्गेण निर्गतस्याऽपि ब्रह्मलोकप्राप्तौ विद्याशेषत्वेन मार्गानुस्मृतिविधेः केवलादृष्टार्थत्वं स्यात् । अतोऽन्वहं स्मृतेनैव मार्गेण गमनं

भामती ।

ऽविदुषश्चोत्क्रान्तिरुक्ता । तत्र किं विद्वानविद्वांश्चाविशेषेण मूर्धादिभ्य उत्क्रामत्याहो विद्वान्मूर्धस्थानादेव, अपरे तु स्थानान्तरेभ्य इति। अत्र विद्यासामर्थ्यमपश्यतः पूर्वपक्षः। तस्योपसंहृतवागादिकलापस्योच्चिक्रमिषतो विज्ञानात्मन ओक आयतनं हृदयं तस्याग्रं तस्य ज्वलनं यत्तत्प्रकाशितद्वारो विनिष्क्रमद्वारो विद्वान्मूर्धस्थानादेव निष्क्रामति नान्येभ्यश्चक्षुरादिस्थानेभ्यः। कुतः। विद्यासामर्थ्यात्—हार्दविद्यासामर्थ्यात् । उत्कृष्टस्थानप्रतिलम्भाय हि हार्दविद्योपदेशः। मूर्धस्थानादनिष्क्रमणे च नोत्कृष्टदेशप्राप्तिः । अथ स्थानान्तरेभ्योऽप्यु-

आनन्दगिरीय—न्यायनिर्णयः ।

वादपूर्वकमुत्तराधिकरणानां तात्पर्यमाह—समाप्तेति । संप्रत्यस्याधिकरणस्य वृत्तमनूद्य तात्पर्यमाह—समाना चेति । सूत्रभागव्याख्याद्वाराऽधिकरणस्य विषयमाह—तस्येति । हृदयमायतनमित्यत्र मानमाह—स इति । अस्तु हृदयं जीवस्याऽऽलम्बनं तथाऽपि किं स्यादित्याशंक्योक्तम्—तदग्रेति । अदृष्टाक्षिप्तं प्रतिपत्तव्यज्ञानं प्रद्योतः । चक्षुष्टो वेतिद्वारानियमश्रुतेस्तयोर्ध्वमायन्नमृतत्वमेतीतिविशेषश्रुतेश्च संशयमाह—सा किमिति । उपासकानुपासकयोरनियमेन येन केनचिद्वारेणोत्क्रान्तिरथ वोपासकानामस्ति द्वारनियम इति विमर्शार्थः । अत्र चापरब्रह्मविदां फलार्थोत्क्रान्तेर्द्वारनियमोक्त्या पादादिसंगतिः । पूर्वपक्षे ध्यानकृतातिशयशून्यत्वं सिद्धान्ते तत्कृतातिशयसिद्धिरिति सिद्धवत्कृत्य पूर्वपक्षमाह—श्रुतीति । चक्षुष्टो वेत्याद्यविशेषश्रुतेर्यतः कुतश्चिदङ्गादुत्क्रामतीति प्राप्तमनूद्य सिद्धान्तमाह—आचष्ट इति । तेन प्रद्योतेन प्रकाशितद्वारवत्त्वे चोत्क्रान्तेरिति शेषः । तस्य विदुषोऽविदुषश्चोच्चिक्रमिषोरोको हृदयमायतनं तस्याग्रज्वलनं प्रद्योतसंज्ञितमादौ भवति तेन प्रकाशितद्वारो विद्वानविद्वांश्चोत्क्रान्तो यद्यपीष्यते

मूर्धस्थानादेव विद्वान्निष्क्रामति । स्थानान्तरेभ्यस्त्वितरे ॥ कुतः ॥ "विद्यासामर्थ्यात्" । यदि विद्वानपीतरवद्यतःकुतश्चिद्देहदेशादुत्क्रामेत, नैवोत्कृष्टं लोकं लभेत । तत्रानर्थिकैव विद्या स्यात् । "तच्छेषगत्यनुस्मृतियोगाच्च"–विद्याशेषभूता च मूर्धन्यनाडीसम्बद्धा गतिरनुशीलयितव्या विद्याविशेषेषु विहिता । तामभ्यस्यंस्तयैव प्रतिष्ठते इति युक्तम् ॥ तस्माद्धृदयालयेन ब्रह्मणा समुपासितेनानुगृहीतस्तद्भावमापन्नो विद्वान्मूर्धन्ययैव शताधिकया शतादतिरिक्तयैकशततमया नाड्या निष्क्रामति । इतराभिरितरे । तथाहि–हार्दविद्यां प्रकृत्य समामनन्ति–"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" [छां०८।६।६] ॥१७॥ इति तदोकोधिकरणम् ॥ ९ ॥

## रश्म्यनुसारी ॥ १८ ॥ ( १० ) ॥

अस्ति "दहरोऽस्मिन्नन्तराकाशः" [ छां० ८ । १ । १ ] इति हार्दविद्या "अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म" [ छां० ८।१।१ ] इत्युपक्रम्य विहिता । तत्प्रक्रियायाम् "अथ या एता हृदयस्य नाड्यः" [ छां० ८ । ६ । १ ] इत्युपक्रम्य सप्रपञ्चं नाडीरश्मिसम्बन्धमुक्त्वोक्तम्–

---

रत्नप्रभा ।

युक्तमिति भावः ॥ हार्दं ब्रह्म विष्वङ् नानाविधाः अन्याः नाड्यः, अन्येषामित्यर्थः ॥ सुषुम्नाख्या नाडी हृदयात् निर्गता दक्षिणतालुकण्ठाधस्तननासिकामध्यभित्तिद्वारा ब्रह्मरन्ध्रं प्राप्ता सूर्यरश्मिभिरेकीकृता ब्रह्मलोकमार्गोपासकस्येति स्थितम् ॥ १७ ॥ ( ९ ) ॥ रश्म्यनुसारी ॥ प्रकरणशोधनपूर्वकमुपासकस्य रश्म्यनुसारित्वं विषयमाह–अस्तीत्यादिना ॥ अथ प्रारब्धान्ते एतद् उत्क्रमणं यथा स्याद् अथ तदा एतैरेव नाडीसम्बन्धैरश्मिभिरुत्क्रामतीत्यर्थः ॥ अत्र सम्बन्धस्य कालविशेषाश्रवणाद्रात्रौ रश्म्यभावाच्च संश-

भामती ।

क्रामन्कस्माल्लोकमुत्कृष्टं न प्राप्नोतीत्यत आह–तच्छेषगत्यनुस्मृतियोगाच्च । हार्दविद्याशेषभूता हि मूर्धन्या नाडी गत्यै उपदिष्टा । तदनुशीलनेन खल्वयं जीवो हार्देन सूपासितेन ब्रह्मणानुगृहीतस्तस्यानुस्मरंस्तद्भावमापन्नो मूर्धन्ययैव शताधिकया नाड्या निष्क्रामति । हृदयादुद्गता हि ब्रह्मनाडी भास्वरा तालुमूलं भित्त्वा मूर्धानमेत्य रश्मिभिरेकीभूता आदित्यमण्डलमनुप्रविष्टा तामनुशीलयतस्तयैवान्तकाले निर्गमनं भवतीति॥१७॥(९)॥ रश्म्यनुसारी । रात्रावहनि च।विशेषेण रश्म्यनुसारी सन्नादित्यमण्डलं प्राप्नोतीति

आनन्दगिरीय–न्यायनिर्णयः ।

तथाऽपि तयोरुत्क्रान्त्यपादानव्यवस्थायां हेतुं पृच्छति–कुत इति । तत्र सौत्रं हेतुमवतार्य व्यतिरेकद्वारा विवृणोति–विद्येति । स्थानान्तरेभ्योऽपि निष्क्रामन्नुत्कृष्टं फलमाप्नुयादित्याशंक्य सूत्रावयवं व्याचष्टे–तच्छेषेति । स्थानान्तरेभ्यो निर्गच्छतामपि विशिष्टलोकाप्तौ विशिष्टगतिचिन्तनविधानवैयर्थ्यं स्यादित्यर्थः । फलितोक्तिपरत्वेनावशिष्टं सूत्रभागं व्याचष्टे–तस्मादिति । उक्तव्यवस्थायां श्रुतिमाह–तथाहीति ॥ ॥ १७ ॥ ( ९ ) ॥ नाडीद्वारा निष्क्रान्तस्य यदिदं रश्म्यनुसारित्वं तन्निशायामपि तुल्यमित्याह–रश्मीति । प्रकरणशोधनपूर्वकं विषयमाह–अस्तीति । प्रथमोऽथशब्दो दहरविद्योपक्रमार्थो द्वितीयो रश्मिनाडीसंबन्धप्रदर्शनप्रारम्भार्थस्तृतीयस्त्वारब्धकर्मवासनानन्तर्यार्थः । एतदिति क्रियाविशेषणम् । चतु-

"अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" [छां० ८।६।५] इति ॥ पुनश्चोक्तं "तयोर्ध्वमायन्नमृतत्वमेति" [छां० ८।६] इति ॥ तस्माच्छताधिकया नाड्या निष्क्रामन्रश्म्यनुसारी निष्क्रामतीति गम्यते । तत्किमविशेषेणैवाहनि रात्रौ वा म्रियमाणस्य रश्म्यनुसारित्वम्—आहोस्विद् अहन्येवेति संशये सत्यविशेषश्रवणाद् विशेषेणैव तावद्रश्म्मनुसारीति प्रतिज्ञायते ॥ १८ ॥

## निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १९ ॥

अस्त्यहनि नाडीरश्मिसम्बन्ध इत्यहनि मृतस्य स्याद्रश्म्यनुसारित्वम् । रात्रौ तु प्रेतस्य न स्यात । नाडीरश्मिसम्बन्धविच्छेदादिति चेत ॥ न ॥ नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वात । यावद्देहभावी हि सिराकिरणसम्पर्कः । दर्शयति चैतमर्थं श्रुतिः—"अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते ते अमुष्मिन्नादित्ये सृप्ताः" [ छां० ८।६।२ ] इति । निदाघसमये च निशास्वपि कि-

रत्नप्रभा ।

यमाह—तत्किमिति ॥ पूर्वोक्तनाडीसम्बद्धरश्मीनामत्रोपजीव्यत्वात् संगतिः । पूर्वपक्षे रात्रौ मृतस्य रश्मिप्राप्त्यर्थं सूर्योदयप्रतीक्षाऽस्ति, सिद्धान्ते नास्तीति मत्वा सिद्धान्तं प्रतिजानीते—अविशेषेणेति ॥ १८ ॥ पूर्वपक्षबीजमुपन्यस्य दूषयति—निशीत्यादिना ॥ शिराः—नाड्यः—प्रतायन्ते विस्तृता भवन्ति सृप्ताः सम्बद्धाः ॥ श्रुतसम्बन्धस्य रात्रौ सत्त्वे युक्तिमाह—निदाघेति ॥ तर्हि हेमन्तादिरात्रिष्वौ-

भामती ।

सिद्धान्तपक्षप्रतिज्ञा ॥ १८ ॥ पूर्वपक्षमाशङ्कते सूत्रावयवेन—निशि नेति चेत् । सूत्रावयवान्तरेण निराकरोति—न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च । यावद्देहभावि हि शिराकिरणसंपर्कः प्रमाणान्तराप्रतीयते । दर्शयति चैतमर्थं श्रुतिरप्यशेषेण । अमुष्मादादित्यात्प्रतायन्ते रश्मयस्त आसु नाडीषु सृप्ता

आनन्दगिरीय—न्यायनिर्णयः ।

र्थोऽथशब्दस्तदेत्यर्थः । यत्रेति कालस्योक्तत्वात्प्रकरणशुद्धिलब्धं निगमयति—तस्मादिति । मूर्धन्यनाड्या निर्गच्छतः सगुणब्रह्मविदो रश्म्यनुसारित्वं किमहन्येव किं वाऽहनि रात्रौ चेति रश्मिनाडीयोगस्य कालविशेषाश्रुते रात्रौ रश्म्यभावावगमाच्च संशयमाह—तदिति । अत्र चापरब्रह्मविदां फलाप्तये ब्रह्मनाड्या गच्छतां रश्म्यनुसारित्वस्याविशेषवादात्पादादिसंगतिः । पूर्वपक्षे रात्रौ प्रेतानामहरागमनमपेक्ष्य फलप्राप्तिः । सिद्धान्ते स यावत्क्षिप्येदित्यादिश्रुतेस्तदैव तत्प्राप्तिरित्युपेत्य सिद्धान्तं प्रतिजानीते—अविशेषेति ॥ १८ ॥ सूत्रावयवेन पूर्वपक्षयित्वा तदवयवेन परिहरति—निशीति । तत्र पूर्वपक्षं विवृणोति—अस्तीति । सिद्धान्तमवतार्य व्याचष्टे—नेत्यादिना । शिरा नाड्यः । नाडीरश्मिसंबन्धस्य यावद्देहभावित्वे प्रमाणोक्तिपरं सूत्रभागमादाय विभजते—दर्शयतीति । प्रतायन्ते विस्तीर्यन्ते सृप्ता गताः । नाडीरश्मिसंबन्धस्य श्रौतत्वेऽपि कुतो यावद्देहभावित्वमित्याशंक्य युक्तिं दर्शयति—निदाघेति । चन्द्रगतप्रकाशान्यथानुपपत्त्या रात्रावस्ति सूर्यरश्मिरिति वक्तुमादिपदम् । न हि चन्द्रमस एव प्रकाशस्तस्याम्मयत्वात्तदयोगात । तर्हि

१ शिरेत्यपि पाठान्तरम् ।

रणानुवृत्तिरुपलभ्यते । प्रतापादिकार्यदर्शनात् । स्तोकानुवृत्तेस्तु दुर्लक्ष्यत्वमृत्वन्तररजनीषु शैशिरेष्विव दुर्दिनेषु। "अहरेवैतद्रात्रौ विदधाति" इति चैतदेव दर्शयति । यदि च रात्रौ प्रेतो विनैव रश्म्यनुसारेणोर्ध्वमाक्रमेत, रश्म्यनुसारानर्थक्यं भवेत् । न ह्येतद्विशिष्याधीयते यो दिवा प्रैति, स रश्मीनपेक्ष्योर्ध्वमाक्रमते, यस्तु रात्रौ, सोऽनपेक्ष्यैवेति ॥ अथ तु विद्वानपि रात्रिप्रायणाऽपराधमात्रेण नोर्ध्वमाक्रमेत, पाक्षिकफला विद्येत्यप्रवृत्तिरेव तस्यां स्यात् । मृत्युकालानियमात् ॥ अथापि रात्रावुपरतोऽहरागममुदीक्षेत । अहरागमेऽप्यस्य कदाचिदरश्मिसम्बन्धार्हं शरीरं स्यात् । पावकादिसम्पर्कात् । "स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति" [ छां० ८ । ६ । ५ ] इति च श्रुतिरनुदीक्षां दर्शयति ॥ तस्मादविशेषेणैवेदं रात्रिन्दिवं रश्म्यनुसारित्वम् ॥ १९ ॥ इति रश्म्यधिकरणम् ॥ १० ॥

रत्नप्रभा ।

ष्ण्योपलब्धिः स्यादित्यत आह—स्तोकेति ॥ सविता रात्रावप्यहर्दधातीति धारणाभिधानं स्तोकरश्म्यनुवृत्त्यभिप्रायमेवेत्यर्थः ॥ किञ्च यदि रात्रौ मृतस्य रश्मियोगं विनैव ऊर्ध्वगतिः स्यात्, तदा रश्मिश्रुतेर्दिवामृतविषयतया संकोचः स्याद्, ऊर्ध्वगत्यभावे च विद्यायामप्रवृत्तिः स्यात् ॥ न च प्रतीक्षयोर्ध्वगतिरिति वाच्यम् । रश्म्युदयात् प्राग्देहदाहे आदित्यप्रतीक्षावैयर्थ्यापातादप्रतीक्षाश्रुतिविरोधाच्च ॥ तस्माद्यदा कदाचित् मृतस्य रश्मिप्राप्त्या झटिति ब्रह्मलोकप्राप्तिरिति सिद्धम् ॥ १९ ॥ ( १० ) ॥ एवं दक्षिणायने मृतो विद्वान् विद्याफलमाप्नोति न वेति विद्यायाः नित्यवत्फलश्रुतेरुत्तरायणप्राशस्त्यशास्त्राच्च सन्देहे

भामती ।

भवन्ति य आभ्यो नाडीभ्यः प्रतायन्ते विस्तार्यन्ते ते रश्मयोऽमुष्मिन्नादित्ये सृप्ताः । प्रतापादिकार्यदर्शनादिति । आदिग्रहणेन चन्द्रापः संगृह्यन्ते । चन्द्रमसा खल्वम्मयेन संबध्यमानानां सूरीणां भासां चन्द्रिकात्वम् । तस्मादस्त्यस्ति निशि सौर्यरश्मिप्रचार इति । ये त्वाहुः—स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छेदिति निरपेक्षश्रवणाद्रात्रौ प्रेते नास्ति रश्म्यपेक्षेति । तान्प्रत्याह—यदि च रात्रौ प्रेत इति ॥ न ह्येतद्विशिष्याधीयतेऽध्येतारः । ये तु मन्यन्ते विद्वानपि रात्रिप्रायणापराधेन नोर्ध्वमाक्रमत इति तान्प्रत्याह—अथ तु विद्वानपीति । नित्यवत्फलसंबन्धेन विहिता विद्या न पाक्षिकफला युक्तेति । ये तु रात्रौ प्रेतस्य विदुषोऽहरपेक्षां सूर्यमण्डलप्राप्तिमाचक्षते तन्मतमाशङ्क्याह—अथापि रात्राविति । यावत्तावदुपबन्धेना-

आनन्दगिरीय—न्यायनिर्णयः ।

शिशिरादिष्वपि रात्रिषु किरणानुवृत्तिरुपलभ्येतेत्याशंक्याऽऽह—स्तोकेति । यद्रात्रौ तापो दृश्यते तदहरेव रात्रौ—सविता दधातीति धारणाभिधानं स्तोकरश्म्यनुवृत्त्यभिप्रायमित्युक्तेऽर्थे श्रुत्यन्तरमाह—अहरेवेति । स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छतीति नैरपेक्ष्यश्रुते रात्रौ प्रेतस्य न रश्म्यपेक्षेत्याशंक्याऽऽह—यदीति । दिवामरणविषयमेतदित्याशंक्याऽऽह—न हीति । तर्हि रश्म्यनुसारित्वश्रुतेरर्थवत्त्वाय विदुषो रात्रौ प्रेतस्य फलसंबन्धो नास्ति तत्राऽऽह—अथ त्विति । नित्यवत्फलसंबन्धितया विद्याया विधानान्न पाक्षिकफलतेत्यर्थः । तर्हि विदुषो मरणमहन्येवेति नियमादुक्तदोषनिवृत्तिस्तत्राऽऽह—मृत्युकालेति । रात्रौ मृतस्यापि । तर्हि सूर्योदयपर्यन्तप्रतीक्षा स्यात्तत्राऽऽह—अथापीति । आदिशब्देन गर्तादि गृह्यते । यावत्तावदुपबन्धेन नैरपेक्ष्यश्रुतिविरोधाच्च न प्रतीक्षाकल्पनेत्याह—स यावदिति । अपरविद्याविदो रश्म्यनुसारित्वस्याविशेषमुपसंहरति—तस्मादिति ॥ १९ ॥ ( १० ) ॥ पूर्वाभिरेव युक्तिभी रात्राविव दक्षिणाय-

## अतश्चायनेऽपि दक्षिणे ॥ २० ॥ (११) ॥

अत एवोदीक्षानुपपत्तेः, अपाक्षिकफलत्वाच्च, विद्याया अनियतकालत्वाच्च,-मृत्योर्दक्षिणायनेऽपि म्रियमाणो विद्वान्प्राप्नोत्येव विद्याफलम् । उत्तरायणमरणप्राशस्त्यप्रसिद्धेः । भीष्मस्य च प्रतीक्षादर्शनाद् "आपूर्यमाणपक्षाद्यान्षडुदङेति मासांस्तान्" [ छां ४ । १५ । ५ ] इति च श्रुतेरपेक्षितव्यमुत्तरायणमितीमामाशङ्कामनेन सूत्रेणापनुदति । प्राशस्त्यप्रसिद्धिरविद्वद्विषया । भीष्मस्य तूत्तरायणप्रतिपालनमाचारपरिपालनार्थं, पितृप्रसादलब्धस्वच्छन्दमृत्युताख्यापनार्थञ्च । श्रुतेस्त्वर्थं वक्ष्यति "आतिवाहिकास्तल्लिङ्गाद्" [ व्या० सू० ४ । ३ । ४ ] इति ॥२०॥
ननु च-"यत्र काले त्वनावृत्तिमावृत्तिञ्चैव योगिनः । प्रयाता यान्ति तं

रत्नप्रभा ।

पूर्वोक्तहेतूनतिदिशति—अतश्चायनेऽपि दक्षिणे इति ॥ पूर्वपक्षमाशङ्क्यापनुदति-उत्तरायणेत्यादिना ॥ अज्ञानामुत्तरायणे दैवान्मरणं चेत् प्रशस्तमित्यभिज्ञाभिवन्दनरूपाचारपरिपालनार्थं भीष्मस्य प्रतीक्षायां षडुदङेति मासानिति श्रुतिस्तूत्तरायणदेवतापरेति वक्ष्यते ॥ तथा च देवतायाः सदा सत्त्वाद् विद्यया दक्षिणायनकालेऽपि तत्प्राप्तिरविरुद्धेति भावः॥२०॥स्मृतिबलात् कालप्राधान्यं शंकते—ननु चेति॥

भामती ।

नपेक्षा गतिः श्रुता । न चापेक्षा शक्यावगमा उपबन्धविरोधादिति॥१९॥(१०)॥अतश्चायनेऽपि दक्षिणे । अत एवेत्युक्तहेतुपरामर्श इत्याह-अत एव चोदीक्षानुपपत्तेरिति । पूर्वपक्षबीजमाह-उत्तरायणमरणप्राशस्त्येति । अपनोदमाह-प्राशस्त्यप्रसिद्धिरिति । अतःपदपरामृष्टहेतुबलादविदुषो मरणं प्रशस्तमुत्तरायणे विदुषस्तूभयत्राप्यविशेषो विद्यासामर्थ्यादिति । विदुषोऽपि च भीष्मस्योत्तरायणप्रतीक्षणमविदुष आचारं ग्राहयति 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इति न्यायात् । आपूर्यमाणपक्षादित्याद्या च श्रुतिर्न कालविशेषप्रतिपत्त्यर्था, अपि त्वातिवाहिकीर्देवताः प्रतिपादयतीति वक्ष्यति । तस्मादविरोधः ॥ २० ॥ सूत्रान्तरावतरणाय चोदयति—ननु च यत्र काले त्विति । काल एवात्र प्राधान्येनोच्यते न

आनन्दगिरीय–न्यायनिर्णयः ।

नेऽपि मृतस्य फलाप्तिरविशिष्टेत्याह-अतश्चेति । दक्षिणायने मृतो विद्वान्विषयः स किं विद्याफलं नाऽऽप्नोत्युताऽऽप्नोतीत्युत्तरायणमरणप्राशस्त्यप्रसिद्धेर्नित्यवत्फलसंबन्धेन विद्याया विधानाच्च संदेहे दक्षिणायनेऽपि मृतस्य ब्रह्मविदो विद्याफलमवश्यं भावीति साधनात्पादादिसंगतिः । पूर्वपक्षे दक्षिणायने मृतस्य फलाभावादुत्तरायणमरणार्थं प्रयतितव्यम् । सिद्धान्ते हेत्वसिद्धेस्तादृक्प्रयत्नो नातीव फलवानित्यभिप्रेत्य सिद्धान्तमाह-अत इति । पूर्वाधिकरणन्यायेन सिद्धान्तमुक्त्वा पूर्वपक्षमाह-उत्तरायणेति । श्रुतिस्मृतिप्रसिद्धिभ्यो दक्षिणायने मृतस्य विदुषो नास्ति फलाप्तिरिति पूर्वपक्षमनूद्य सिद्धान्तमाह—इतीमामिति । अपनोदप्रकारमाह-प्राशस्त्येति । यत्तु भीष्मस्य प्रतीक्षादर्शनादिति तत्राऽऽह-भीष्मस्येति । उत्तरायणमरणं प्रशस्तमित्यविदुषामभिज्ञाभिवचनरूपो व्यवहारस्तत्पालनद्वारा सदाचारे तान्प्रवर्तयितुं तस्य कालप्रतीक्षणमित्यर्थः । तत्प्रतिपालनस्य गत्यन्तरमाह-पित्रिति । उत्तरायणस्य मार्गपर्वत्वेनापेक्षणीयत्वं श्रुतमित्युक्तं तत्कुतो दक्षिणायने मृतो विद्वान्विद्याफलमाप्नुयादित्याशंक्याऽऽह-श्रुतेस्त्विति । न हि कालवादिनी श्रुतिः किं त्वातिवाहिकदेवतार्थेत्यर्थः ॥ २० ॥ काल एवात्र प्राधान्येनोच्यते नाऽऽतिवाहिकी देवतेति स्मृतिमाश्रित्य शंकते-नन्विति । तदुत्तरत्वेन सूत्रमवतारयति—

१ "दिवसश्शुक्लपक्षश्च उत्तरायणमेव च । मुमूर्षतां प्रशस्तानि विपरीतन्तु गर्हितम्" इति ।

कालं वक्ष्यामि भरतर्षभ" [ भ० गी० ८। २३ ] इति प्राधान्येनोपक्रम्याऽहरादिकालविशेषः स्मृतावनावृत्तये नियतः। कथं रात्रौ दक्षिणायने वा प्रयातोऽनावृत्तिं यायादिति। अत्रोच्यते-

**योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥**

इति श्रीमद्व्यासमहर्षिप्रणीते शारीरकमीमांसादर्शने तुरीयाध्यायस्य द्वितीयः पादः॥

योगिनः प्रति चायमहरादिकालविनियोगोऽनावृत्तये स्मर्यते। स्मार्ते चैते योगसांख्ये, न श्रौते। अतो विषयभेदात्, प्रमाणविशेषाच्च,-नास्य स्मार्तस्य कालविनियोगस्य श्रौतेषु विज्ञानेष्ववतारः॥ ननु "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्" [ भ० गी० ८। २४ ] इति च श्रौतावेतौ देवयानपितृयाणौ प्रत्यभिज्ञायेते स्मृतावपीति॥ उच्यते॥ "तं कालं वक्ष्यामि" [ भ० गी० ८। २३ ] इति स्मृतौ कालप्रतिज्ञानाद्विरोधमाशं-

रत्नप्रभा।

श्रौतदहराद्युपासकस्य अस्माभिः कालानपेक्षोक्ता। स्मार्तयोगिनां तु कालापेक्षा स्मृतावुच्यत इत्यविरोधमाह-**योगिन इति**॥ योगी दहराद्युपासक एव स्मृत्युक्तः किं न स्यादित्यत आह-**स्मार्ते चेति**॥ भगवदाराधनबुद्ध्याऽनुष्ठितं कर्म-**योगः** "अनाश्रितः कर्मफलं कार्यं कर्म करोति यः। स सन्न्यासी च योगीच" इति स्मृतेः। धारणापूर्वकोऽकर्तृत्वानुभवः-**सांख्यम्**, "इन्द्रियाणीन्द्रियार्थेषु वर्तन्त" इति स्मृतेः॥ ननु श्रुतिस्मृत्योर्भिन्नार्थत्वमयुक्तम्, प्रत्यभिज्ञाविरोधादिति शङ्कते-**नन्वग्निरिति**॥ कालग्राहिणं प्रति भिन्नार्थत्वमुक्तम्। यदि तु श्रौतार्थप्रत्यभिज्ञया कालशब्दो देवतापरः, तर्ह्यैकार्थ्यमेवेति

भामती।

त्वातिवाहिकी देवतेत्यर्थः। **योगिनः प्रति च स्मर्यते स्मार्ते चैते**। स्मार्तीमुपासनां प्रत्ययं स्मार्तः कालभेदविनियोगः प्रत्यासत्तेः, न तु श्रौतीं प्रतीत्यर्थः। अत्र यदि स्मृतौ कालभेदविधिः श्रुतौ चाग्निज्योतिरादिविधिस्तत्राग्न्यादीनामातिवाहिकतया विषयव्यवस्थया विरोधाभाव उक्तः। अथ तु प्रत्यभिज्ञानं

आनन्दगिरीय-न्यायनिर्णयः।

**अत्रेति**।स्मार्तमुपासनं प्रत्ययं कालभेदविनियोगः स्मार्तोऽभ्युपगम्यते प्रत्यासत्तेरिति व्याचष्टे-**योगिन इति**। योगी दहराद्युपासक एव किं न स्यात्तत्राऽऽह-**स्मार्ते चेति**। नित्यमग्निहोत्रादीश्वराराधनरूपेण यदनुष्ठीयते स योगः "अनाश्रितः कर्मफलम्"इत्यादिस्मृतेः। "इन्द्रियाणीन्द्रियार्थेषु वर्तन्ते"इति धारणापूर्वकोऽकर्तृत्वानुभवः सांख्यमिति भेदः। श्रौतदहराद्युपास्तीनां स्मृत्यविषयत्वे फलितमाह-**अत इति**। श्रुतिस्मृत्योर्भिन्नार्थत्वं प्रत्यभिज्ञाविरुद्धमिति शङ्कते-**नन्विति**। कालभेदविधिपरत्वमङ्गीकृत्य विषयव्यवस्थोक्ता प्रत्यभिज्ञानेन कालाभिधानद्वारा देवतोक्तौ श्रुतिस्मृत्योरेकार्थत्वमेवेति कुतो विरोधशंकेत्याह-**उच्यत इति**। तदेवं दक्षि-

क्यायं परिहार उक्तः । यदा पुनः स्मृतावप्यग्न्याद्या देवता एवातिवाहिक्यो गृह्यन्ते, तदा न कश्चिद्विरोध इति ॥ ४ ॥ २ ॥ २१ ॥ इति दक्षिणायनाधिकरणम् ॥ ११ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणपरमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये प्राणाद्युत्क्रान्तिनिरूपणं नाम चतुर्थाध्यायस्य द्वितीयः पादः समाप्तः ॥ ४ ॥ २ ॥

---

रत्नप्रभा ।

समाध्यर्थः ॥ तस्मात् विद्यासामर्थ्यात् सर्वदैव दिष्टं गतस्य उपासकस्य फलप्राप्तिरिति सिद्धम् ॥ ४ ॥ २ ॥ २१ ॥ ( ११ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शनभाष्यव्याख्यायां (भाष्य) रत्नप्रभायां चतुर्थस्याध्यायस्य द्वितीयः पादः समाप्तः ॥ ४ ॥ २ ॥

भामती ।

तथापि 'यत्र काल इत्यत्रापि कालाभिधानद्वारेणातिवाहिक्य एव देवता उक्ता इत्यविरोध एवेति ॥ ४ ॥ २ ॥ २१ ॥ ( ११ ) ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभाष्यविभागे भामत्यां चतुर्थस्याध्यायस्य द्वितीयः पादः ॥४॥२॥

आनन्दगिरीय—न्यायनिर्णयः ।

णायने मृतस्यापि विदुषो विद्याफलमवश्यं भावीत्यधिकरणार्थमुपसंहर्तुमितीत्युक्तम् ॥ ४॥२॥२१॥ (११)॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि(ज्ञान)विरचिते शारीरकमीमांसाभाष्यविभागे न्यायनिर्णये चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥

**॥ इति चतुर्थाध्यायस्य प्राणाद्युत्क्रान्तिनिरूपणाख्यो द्वितीयः पादः ॥**



# चतुर्थाध्याये तृतीयः पादः ३.



## अर्चिरादिना तत्प्रथितेः ॥ ४ ॥ ३ ॥ १ ॥ ( १ ) ॥

आसृत्युपक्रमात्समानोत्क्रान्तिरित्युक्तम् । सृतिस्तु श्रुत्यन्तरेष्वनेकधा श्रूयते-नाडीरश्मिसम्बन्धेनैका-"अथैतैरेव रश्मिभिरूर्ध्व आक्रमते" [ छां० ८ । ६ । ५ ] इति । अर्चिरादिकैका-"तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः" [ बृ० ६ । २ । १५ ] इति । "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति" [ कौषी० १ । ३ ] इत्यन्या । "यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति" [ बृ० ५ । १० । १ ] इत्यपरा । "सूर्यद्वारेण ते विरजाः प्रयान्ति" [ मुण्ड० १ । २ । ११ ] इति चापरा । तत्र संशयः-किं परस्परं भिन्ना एताः सृतयः, किंवैकैवानेकविशे-

रत्नप्रभा ।

एवम् उत्क्रान्तिं निरूप्य तत्साध्यं मार्गं, गन्तव्यञ्च,—निरूपयितुं पादमारभते—अर्चिरादिना तत्प्रथितेरिति॥ वृत्तानुवादपूर्वकमाद्याधिकरणस्य विषयं मार्गमाह—आसृतीति॥ विरजाः विरजसः । निष्पापा इत्यर्थः ॥ श्रुतिविप्रतिपत्त्या संशयः । पूर्वं यदा—कदाचिन्मृतस्यापि फलप्राप्तिरुक्ता, तद्वद् येन—केनचिन्मार्गेण गतिरिति पूर्वपक्षः । फलं विकल्पः । सिद्धान्ते मार्गैक्यमिति विवेकः । उपासनाभेदात् तच्छेषत्वेन ध्येयानां मार्गाणां भेदः । एवकाराच्च ॥ किञ्च मार्गभेदे सत्यस्मादयं मार्गस्त्वरया प्रापक इति युक्तं, न

भामती ।

अर्चिरादिना तत्प्रथितेः । "भिन्नप्रकरणस्थत्वाद्भिन्नोपासनयोगतः । अनपेक्षा मिथो मार्गास्त्वरातोऽवधृतेरपि॥" गन्तव्यमेकं नगरं प्रति वक्रेणाध्वना गतिमपेक्ष्य ऋजुनाध्वना गतिस्त्वरावती कल्प्यते । एकमार्गत्वे तु क्रमपरमपेक्ष्य त्वरा स्यात् । अथ तैरेव रश्मिभिरित्यवधारणं नोपपद्यते, पथ्यन्तरस्य निवर्तनीयस्याभावात्तस्मात्परानपेक्षा एवैते पन्थान एकब्रह्मलोकप्राप्त्युपाया व्रीहियववद्विकल्पेरन्निति प्राप्ते प्रत्युच्यते—"एकत्वेऽपि पथोऽनेकपर्वसंगमसंभवात् । गौरवान्नैव नानात्वं प्रत्यभिज्ञानलिङ्गतः॥" सपर्वा हि पन्था नगरादिकमेकं गन्तव्यं प्रापयति नाभागः । तत्र किमेते रश्म्यहर्वायुसूर्यादयोऽध्वनः पर्वाणः सन्तोऽध्वनैकेन युज्यन्ते, आहो यथायथमध्वानमपि भिन्दन्तीति संदेहेऽभेदेऽप्यध्वनो भागभेदोपपत्तेर्न मार्गभेदकल्पनोचिता, गौरवप्रसङ्गात् । एकदेशप्रत्यभिज्ञानाच्च विशेषणविशेष्यभावोपपत्तेर्नानेकाध्वकल्पना । अथैतैरेव रश्मिभिरित्यवधारणं न तावदर्थान्तरनिवृत्त्यर्थं तत्प्रापकैरेव वाक्यान्तरैर्विरोधात्, तस्मादन्यानपेक्षामस्या-

आनन्दगिरीय-न्यायनिर्णयः ।

अपरविद्याफलाय देवयानं पन्थानमवतारयितुं तदङ्गभूतोत्क्रान्तिश्चिन्तिता । संप्रत्यङ्गिनं पन्थानमेव वक्तुं पादान्तरमारभ्यते । तत्र पूर्वाधिकरणे प्रायणकालानियमाद्विद्याफलस्य चाऽऽवश्यकत्वात्प्रतीक्षणस्य चायुक्तेर्दक्षिणायनेऽपि मृतस्य विदुषो विद्याफलाप्तिरस्तीत्युक्तम् । प्रायणकालवत्प्रयतो गतिरनियतेत्याशंक्य परिहरति—अर्चिरादिनेति । वृत्तमनूद्य प्रकृतोत्तरमार्गमधिकरणस्य विषयत्वेनोदाहरति—आसृतीति। श्रुत्यन्तरेषु भिन्नासु सृतिष्विति यावत् । संशयहेतुं श्रुतिविप्रतिपत्तिं वक्तुमनेकधेत्युक्तम् । अथेत्युक्तान्यानन्तर्योक्तिः । विरजा विरजसो रजःशब्दितब्रह्मलोकाप्तिविरोधिविधुरा इति यावत् । उक्तं देवयानं पन्थानमधिकृत्य श्रुतिविप्रतिपत्तिं सूचितां हेतूकृत्य संशयमाह—तत्रेति । अत्रापरविद्याफलाप्तिहेतुमार्गे-

षणेति । तत्र प्राप्तं तावद्–भिन्ना एवैताः सृतय इति । भिन्नप्रकरणस्थित-त्वाद्भिन्नोपासनशेषत्वाच्च ॥ अपि च "अथैतैरेव रश्मिभिः" [ छां० ८ । ६ । ५ ] इत्यवधारणमर्चिराद्यपेक्षायामुपरुध्येत । त्वरावचनञ्च पीडयेत "स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति" [ छां० ८ । ६ । ५ ] इति ॥ तस्मादन्योन्यभिन्ना एवैते पन्थान इति ॥ एवं प्राप्तेऽभिदध्महे–अर्चिरादिनेति । सर्वो ब्रह्म प्रेप्सुरर्चिरादिनैवाध्वना रंहतीति प्रतिजानीमहे ॥ कुतः ॥ "तत्प्रथितेः" प्रथितो मार्गः सर्वेषां विदुषाम् । तथा–हि–पञ्चाग्निविद्याप्रकरणे "ये चामी अरण्ये श्रद्धां सत्यमुपासते" [ बृ० ६ । २ १५ ] इति विद्यान्तरशीलिनामप्यर्चिरादिका सृतिः श्राव्यते ॥ स्यादेतद्–यासु विद्यासु न काचिद्गतिरुच्यते–तास्वेवेयमर्चिरादिकोपतिष्ठताम् । यासु त्वन्यान्या श्राव्यते, तासु किमर्चिराद्याश्रयणमिति ॥

---

रत्नप्रभा ।

मार्गैक्य इत्यर्थः ॥ उपासनाभेदेऽप्युपास्यब्रह्मैक्यवत् मार्गैक्यमविरुद्धमिति सिद्धान्तयति–एवमिति ॥ तस्य मार्गस्य प्रसिद्धत्वादिति हेत्वर्थः॥ये चेत्यविशेषश्रुतिरश्रुतगतिविद्याविषयेति मार्गभेदं शङ्कते–स्यादेतदिति॥ एकस्यैव मार्गस्यानेकान्यग्न्यादीनि विशेषणानीत्युक्ते लाघवात् न मार्गभेदः, प्रत्यभिज्ञानाच्चेति समाध्यर्थः ॥ गन्तव्यैक्यं विवृणोति–तथाहीति ॥ परावतः दीर्घायुषो हिरण्यगर्भस्य, पराः दीर्घाः समाः संवत्सरान् वसन्ति । कार्यब्रह्मणो या जितिः सर्वत्र जयः व्यष्टिः व्याप्तिः तां लभत इत्यर्थः ॥ एवं गन्तव्यैक्यवत् प्रत्यभिज्ञाया मार्गैक्यनिश्चयात् प्रकरणभेदोऽप्रयोजक इत्युक्तम् । सम्प्रत्येवकारे त्वरावचनयोर्गति-

भामती ।

वधारयतीति वक्तव्यम् । न चैकं वाक्यमप्राप्तमध्वानं प्रापयति तस्य चानपेक्षतां प्रतिपादयतीत्यर्थद्वयाय पर्याप्तं, तस्माद्विधिसामर्थ्यप्राप्तमयोगव्यवच्छेदमेवकारोऽनुवदतीति युक्तम् । त्वरावचनं चेति । न खल्वेकस्मिन्नेव गन्तव्ये पथिभेदमपेक्ष्य त्वराऽवकल्प्यते किंतु गन्तव्यभेदादपि तदुपपत्तिः । यथा कश्मीरेभ्यो मथुरां क्षिप्रं याति चैत्र इति तथेहाप्यन्यतः कुतश्चिद्गन्तव्यादनेनोपायेन ब्रह्मलोकं क्षिप्रं प्रयातीति ।

आनन्दगिरीय–न्यायनिर्णयः ।

क्योक्त्या पादादिसंगतिः । पूर्वपक्षे मार्गबहुत्वे विकल्पः,सिद्धान्ते तदैक्ये विकल्पशंकैव नेत्यङ्गीकृत्य पूर्वपक्षयति–तत्रेति । सृतीनां मिथो भिन्नत्वे हेतुमाह–भिन्नेति । नानाप्रकरणस्थत्वेऽपि विद्यावदेकत्वं किं न स्यात्तत्राऽऽह–भिन्नेति । प्रतिप्रकरणं विद्याभेदाद्गतिभेदानामपि तद्गुणत्वेन चिन्त्यानां गुणिभेदाद्भेदः स्यादित्यर्थः । गतिभेदे हेत्वन्तरमाह–अपि चेति । किंच, वक्राध्वना गतिमपेक्ष्यावक्रेण गतिस्त्वरावती कल्प्यत एकत्वे तु किमपेक्ष्य त्वरा स्यात्तस्माद्गतिभेदसिद्धिरित्याह–त्वरेति । मार्गभेदे केनाध्वना ब्रह्मलोकाप्तिरित्याशंक्य समुच्चयायोगाद् व्रीह्यादिवद्विकल्पः स्यादिति मत्वाऽऽह–तस्मादिति । उपास्तिभेदेऽप्युपास्यब्रह्मैक्यवद्गुणभूतगत्यैक्यसिद्धेरर्चिरादिरेकैव गतिरित्याह–एवमिति । तत्र प्रतिज्ञां विभजते–सर्व इति । नानाविधाध्वसु श्रुतेषु कारणमवधारणे वक्तव्यमिति पृच्छति–कुत इति । हेतुमवतार्य व्याचष्टे–तदिति । पञ्चाग्निविदामेव तेऽर्चिषमभिसंभवन्तीत्यर्चिरादिगतेः श्रुतत्वात्कुतः सर्वेषामिति विशेषणं तत्राऽऽह–तथाहीति । साधारणश्रुतेरश्रुतगतिकधीविषयत्वाद्विद्यान्तराणां स्वाधिकारस्थगतिनिरपेक्षाणां नार्चिरादिगतिसंगतिरिति शंकते–स्यादिति । एकत्वेऽपि पथोऽनेकपर्वयुक्तत्वयोगाद्गतेरेव न भेदो

अत्रोच्यते॥ भवेदेतदेवं-यद्यत्यन्तभिन्ना एवैताः सृतयः स्युः। एकैव त्वेषा-सृतिरनेकविशेषणा ब्रह्मलोकप्रपदनी क्वचित्केनचिद्विशेषणेनोपलक्षितेति वदामः। सर्वत्रैकदेशप्रत्यभिज्ञानादितरेतरविशेषणविशेष्यभावोपपत्तेः। प्रकरणभेदेऽपि तु विद्यैकत्वे भवतीतरेतरविशेषणोपसंहारवद्गातिविशेषणा-नामप्युपसंहारः। विद्याभेदेऽपि तु गत्येकदेशप्रत्यभिज्ञानाद्गन्तव्याभेदाच्च गत्यभेद एव। तथाहि-"ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति" [बृ० ६।२।१५] "तस्मिन्वसति शाश्वतीः समाः" [बृ० ५।१०।१] "सा या ब्रह्मणो जितिर्या व्युष्टिस्तां जितिं जयति तां व्युष्टिं व्यश्नु-ते" [कौषी० १।४] तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दति" [छां० ८।४।३] इति च तत्रतत्र तदेवैकं फलं ब्रह्मलोकप्राप्तिलक्षणं प्रदर्श्यते॥ यत्त्वेतैरेवेत्यवधारणमर्चिराद्याश्रयणेन स्यादिति॥ नैष दोषः॥ रश्मिप्राप्तिपरत्वादस्य। न ह्येक एव शब्दो रश्मींश्च प्रापयितुमर्हति, अ-र्चिरादींश्च व्यावर्तयितुम्॥ तस्माद्रश्मिसम्बन्ध एवायमवधार्यते इति द्रष्टव्यम्। त्वरावचनं त्वर्चिराद्यपेक्षायामपि गन्तव्यान्तरापेक्षायामपि क्षैप्र्यार्थत्वान्नोपरुध्यते यथा-निमिषमात्रेणात्रागम्यत इति॥ अपि च

रत्नप्रभा।

माह-यत्त्वित्यादिना॥ रात्रौ स्पष्टरश्म्यभावाद् विदुषो रश्म्ययोगप्राप्तौ तन्निरासार्थम् एवकारः, नान्य-व्यावृत्त्यर्थः॥ यथा लौकिकमार्गे विलम्बः, तथा अर्चिरादौ नेति त्वरावचनोपपत्तिरित्यर्थः॥ मार्गैक्ये लिङ्गमाह-अपि चेति॥ शुभमार्गबाहुल्ये तृतीयस्थानोक्तिर्न स्यादिति भावः॥ उत्तरमार्गैक्येऽप्यर्चि-

भामती।-०

आनन्दगिरीय-न्यायनिर्णयः।

गौरवादित्याह-अत्रेति। एकदेशप्रत्यभिज्ञानादपि गतेरैक्यं सर्वत्रेत्याह-सर्वत्रेति। यत्तु भिन्नप्रकर-णत्वाद्भिन्ना गतय इति तत्र प्रकरणभेदमात्रादेव गतिभेदो विद्याभेदाद्वा? नाऽऽद्य इत्याह-प्रकरणेति। न हि द्वितीय इत्याह-विद्येति। तद्भेदेऽपि वेद्यब्रह्मैक्यवद्गुणभूतगत्यैक्यमविरुद्धमित्यर्थः। गन्तव्याभेदं विवृणोति-तथाहीति। ते ब्रह्मविदो नानाभोगदेशभाजि ब्रह्मलोके परावतो ब्रह्मणो हिरण्यगर्भस्य पराः समाः प्रकृष्टान्संवत्सरान्वसन्ति यावदायुर्ब्रह्मणस्तावत्तत्र तिष्ठन्तीत्यर्थः। तस्मिन्निति ब्रह्मलोको गृह्यते। शाश्वतीः समा नित्यान्संवत्सरान्वसतीति पूर्ववत्। ब्रह्मणो हिरण्यगर्भस्य या जितिः सर्वलोकजयो या च व्युष्टिर्व्याप्तिस्तां लभते समानदेहतां प्राप्तः सन्नित्यर्थः। कस्यैतत्फलं तत्राऽऽह-तद्य इति। तत्त-त्राधिकृतानां मध्ये ये केचिद्ब्रह्मचर्यादिसाधनेन ब्रह्मोपासते ते पुनरेतं ब्रह्मलोकं ब्रह्मणाऽधिष्ठितं लभन्त इत्यर्थः। उक्तश्रुतीनां तात्पर्यमाह-तत्रतत्रेति। परोक्तमनूद्य प्रत्याह-यत्त्विति। रात्रौ स्पष्टरश्म्य-दृष्टेस्तदनुसारित्वाभावे तत्र मृतस्य प्राप्ते सोऽप्येतैरेवरश्मिभिरित्ययोगव्यवच्छेदार्थमवधारणं नान्ययोगव्यव-च्छेदायेत्यर्थः। अन्ययोगव्यवच्छेदकत्वमपि वचनस्य किं न स्यादित्याशङ्क्याऽऽह-न हीति। एकस्य वाक्यस्याप्राप्तमार्गप्रापकत्वं तस्य निरपेक्षत्वप्रतिपादकत्वं चायुक्तं वाक्यभेदप्रसङ्गादित्यर्थः। उभयथार्थत्वा-योगे फलितमाह-तस्मादिति। विधिसामर्थ्यप्राप्तमयोगव्यवच्छेदमेवकारोऽनुवदतीत्यर्थः। यत्तु त्वरावचनं पीडितं स्यादिति तत्राऽऽह-त्वरेति। अर्चिरादिमार्गस्यैक्येऽपि कुतश्चिदन्यतो गन्तव्यादनेनोपायेन सत्य-लोकं झटिति गच्छतीति गन्तव्यभेदापेक्षया वचनं युक्तमित्यर्थः। देवयानमार्गैक्ये हेत्वन्तरमाह-अपि चेति।

"अथैतयोः पथोर्न कतरेण च न" [ छां० ५ । १० । ८ ] इति मार्गद्वयभ्रष्टानां कष्टं तृतीयं स्थानमाचक्षाणा पितृयाणव्यतिरिक्तमेकमेव देवयानमर्चिरादिपर्वाणं पन्थानं प्रथयति । भूयांसि चार्चिरादिश्रुतौ मार्गपर्वाणि अल्पीयांसि त्वन्यत्र । भूयसाञ्चानुगुण्येनाल्पीयसाञ्च नयनं न्याय्यमित्यतोऽपि "अर्चिरादिना तत्प्रथितेः" इत्युक्तम् ॥ १ ॥ इत्यर्चिराद्यधिकरणम् ॥ १ ॥

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥ (२) ॥

रत्नप्रभा ।

रादिनेति विशेषणे को हेतुरित्यत आह–भूयांसीति ॥ १ ॥ ( १ ) ॥ उक्तं मार्गस्यैक्यमुपजीव्य पूर्वक्रममाह–वायुमब्दादिति ॥ अर्चिरादिष्वस्मादयमनन्तर इति क्रमेण विशेष्यभाव उच्यते इत्यधिकरणस्य

भामती ।

भूयांस्यर्चिरादिश्रुतौ मार्गपर्वाणीति । अयमर्थः–एकत्वात्प्राप्तव्यस्य ब्रह्मलोकस्याल्पपर्वणा मार्गेण तत्प्राप्तौ संभवन्त्यां बहुमार्गोपदेशो व्यर्थः प्रसज्यते । तत्र चेतनस्याप्रवृत्तेः । तस्माद्भूयसां पर्वणामविरोधेनाल्पानां तदनुप्रवेश एव युक्त इति ॥१॥(१)॥ वायुमब्दादविशेषविशेषाभ्याम् । 'श्रुत्याद्यभावे पाठस्य क्रमं प्रति नियन्तृता । ऊर्ध्वाक्रमणमात्रे च श्रुता वायोर्निमित्तता ॥' 'स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते' इति हि वायुनिमित्तमूर्ध्वाक्रमणं श्रुतं । न तु वायुनिमित्तमादित्यगमनं 'स आदित्यं गच्छति' इत्यादित्यगमनमात्रप्रतीतेः । न च तेनेत्यनन्तरश्रुतोर्ध्वाक्रमणक्रियासंबन्धि निराकांक्षमादित्यगमनक्रिययापि संबन्द्धुमर्हति । न चादित्यागमनस्य तेनेति विना काचिदनुपपत्तिर्येनान्यसंबद्धमप्यनुषज्यते । तत्राग्निलोकमागच्छति स वायुलोकमित्यादिसंदर्भगतस्य पाठस्य क्वचिन्नियामकत्वेन क्लृप्तसामर्थ्यादग्निवायुवरुणक्रमनियामकश्रुत्याद्यभावादिति प्राप्ते प्रत्युच्यते–ऊर्ध्वशब्दो न लोकस्य कस्यचित्प्रतिपादकः । तद्भेदापेक्षया युक्तमादित्येन विशेषणम् ॥ भवेदेतदेवं यद्यूर्ध्वशब्दात्कश्चिल्लोकभेदः प्रतीयेत स तूपरिदेशमात्रवाची लोकभेदाद्विनाऽपर्यवस्यँल्लोकभेदवाचिनादित्यपदेनादित्ये व्यवस्थाप्यते । तथा चादित्यलोकगमनमेव वायुनिमित्तमिति श्रौतक्रमनियमे, पाठः पदार्थमात्रप्रदर्शनार्थो न तु क्रमाय प्रभवति श्रुतिविरोधादिति सिद्धम् । वाजसनेयिनां संवत्सरलोको न पठ्यते, छान्दोग्यानां देवलोको न पठ्यते तत्रोभयानुरोधादुभयपाठे माससंबन्धात्संवत्सरः पूर्वः पश्चिमो देवलोकः । न हि मासो देवलोकेन संबध्यते किंतु संवत्सरेण । तस्मात्तयोः परस्परसंबन्धान्मासारभ्यत्वाच्च संवत्सरस्य मासानन्तर्ये स्थिते देवलोकः संवत्सरस्य परस्ताद्भवति । तत्रादित्यानन्तर्याय वायोः संवत्सरादित्यस्य स्थाने देवलोकाद्वायुमिति

आनन्दगिरीय–न्यायनिर्णयः ।

मार्गभेदे स्थानान्तरस्यापि योगात्तृतीयस्थानोक्तिर्न स्यादित्यर्थः । पितृयाणातिरिक्तमार्गैक्येऽपि किमित्यर्चिरादिनेति विशेषणमित्याशंक्याऽऽह–भूयांसीति । अल्पपर्वणा मार्गेण गन्तव्यप्राप्तिसंभवे बहुपर्वमार्गोपदेशो व्यर्थः स्यात्प्रेक्षावतस्तत्राप्रवृत्तेः । अतो भूयसां पर्वणामनुरोधेनाल्पीयसां तदनुप्रवेश एव युक्तो बहूनामनुग्रहस्य न्याय्यत्वादित्यर्थः । मार्गैक्ये जघन्यविकल्पशंकाऽपि नेति वक्तुमपीत्युक्तम् ॥ ॥१॥(१)॥ सर्वत्रार्चिरादिमार्गपर्वप्रत्यभिज्ञानाद्गत्यैक्यमुक्तम् । संप्रत्येतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकमित्यत्रार्चिरात्मकाग्न्यानन्तर्यप्रत्यभिज्ञानादर्चिषोऽनन्तरं निवेशनीयो वायुरित्याशंक्याऽऽह–वायुमिति । इतरेतरविशेषणविशेष्यत्वेनोपसंहारोऽर्चिरादीनामुक्तः, स कीदृश इति विचारयति–

केन पुनः सन्निवेशविशेषेण गतिविशेषाणामितरेतरविशेषणविशेष्यभाव इति, तदेतत्सुहृद् भूत्वाऽऽचार्यो ग्रथयति । "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" [ कौषी० १ । ३ ] इति कौषीतकिनां देवयानः पन्थाः पठ्यते । तत्रार्चिरग्निलोकशब्दौ तावदेकार्थौ ज्वलनवचनत्वादिति नात्र सन्निवेशक्रमः कश्चिदन्वेष्टव्यः । वायुस्त्वर्चिरादौ वर्त्मन्यश्रुतः कतमस्मिन्स्थाने सन्निवेशयितव्य इति ॥ उच्यते ॥ "तेऽर्चिषमभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासाँस्तान् ॥ मासेभ्यः संवत्सरं संवत्सरादादित्यम्" [ छां० ५ । १० । १ ] इत्यत्र संवत्सरात्पराञ्चमादित्यादर्वाञ्चं वायुमभिसम्भवन्ति ॥ कस्मात् ॥ अविशेषविशेषाभ्याम् । तथाहि-"स वायुलोकम्" [ कौषी० १ । ३ ] इत्यत्राविशेषोपदिष्टस्य वायोः श्रुत्यन्तरे विशेषोपदेशो दृश्यते-"यदा वै पुरुषोऽस्माँल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खण्डेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति" [ बृ० ५ । १० । १ ] इति ॥ एतस्मादा-

रत्नप्रभा ।

तात्पर्यमुक्त्वा विशेषणमाह-स एतमिति ॥ अत्राग्न्यनन्तरं पठितो वायुर्विषयः । स किम् अर्चिरात्मकाग्नेरनन्तरः-उत-संवत्सरात् पर इतिपाठाद्वक्ष्यमाणविशेषश्रुतेश्च संशये सिद्धान्तमेवोपक्रमते-उच्यत इति ॥ पुरुषः उपासकः अस्माल्लोकाद् देहात् प्रैति निर्गच्छति तस्मै प्राप्ताय पुरुषाय सः वायुः तत्र स्वात्मनि विजिहीते छिद्रं करोति । तेन वायुदत्तेन रथचक्रच्छिद्रतुल्येन द्वारेणोर्ध्वमादित्यं गच्छ-

भामती ।

पठितव्यम् । वायुमब्दादिति तु सूत्रमत्रापि वाचकमेव । तथापि संवत्सरात्पराञ्चमादित्यादर्वाञ्चं वायुम-

आनन्दगिरीय-न्यायनिर्णयः ।

केनेति । मार्गपर्वणां विशेषणविशेष्यत्वे सिद्धे योग्यतया स्वयमेव संनिवेशविशेषसिद्धेरनर्थकं तन्निरूपणमित्याशंक्याऽऽह-सुहृदिति । संनिवेशविशेषणविशिष्टं विशेषणविशेष्यत्वं तदेतदित्युक्तम् । संक्षेपतोऽधिकरणस्य तात्पर्यमुक्त्वा विषयमाह-स इति । तत्र प्रथमश्रुतमग्निलोकमतिक्रम्य किमिति वायोः संनिवेशो विचार्यते तत्राऽऽह-तत्रेति । असंदिग्धमंशमुक्त्वा संदिग्धमंशमाह-वायुस्त्विति । अर्चिषोऽनन्तरमग्निलोकं वायुलोकमिति पाठक्रमबलाद्वायुर्निवेशयितव्यः किंवा वक्ष्यमाणन्यायेन संवत्सरदेवलोकयोः परस्तादादित्यस्य चार्वागिति संशयात्स एव विचारविषय इत्यर्थः । अत्र चापरविद्याफलार्थं मार्गपर्वणां संनिवेशविशेषचिन्तनात्पादादिसंगतिः।पूर्वपक्षे पाठानुक्रमस्यानुसरणं सिद्धान्ते त्वर्थक्रमप्राप्तस्य बाध्यतेति मन्वानो वायोरादित्यादव्यवहितपूर्वत्वेन संनिवेशं सिद्धान्तमाह-उच्यत इति । पाठक्रमादग्नेरनन्तरं निवेशनीयो वायुरिति शङ्कते-कस्मादिति । सूत्रपदेनोत्तरमाह-अविशेषेति । विशेषदर्शनस्यैव स्थानविशेषसंनिवेशहेतुत्वेऽपि वायोरर्चिरादिके पथि सामान्यप्राप्तावविशेषोक्तिरपि हेतुरिति मत्वा व्याचष्टे-तथाहीति । कौषीतकिश्रुतेर्वाजसनेयिश्रुतिः श्रुत्यन्तरम् । पुरुषो ध्याता लोको देहः । प्रैतीत्यत्र तदेति द्रष्टव्यं यदेत्युपक्रमात् । तस्मै प्राप्तायोपासकाय वायुस्तत्र स्वात्मनि विजिहीते द्वारं प्रयच्छतीति यावत् । वायुप्रत्तद्वारपरिमाणं दृष्टान्तेन स्पष्टयति-यथेति । विशेषोक्तिफलं निगमयति-एतस्मादिति । सिद्धान्तेनोपक्रम्य पूर्वपक्ष-

दित्याद्वायोः पूर्वत्वदर्शनाद्विशेषादब्दादित्ययोरन्तराले वायुर्निवेशयितव्यः ॥कस्मात्पुनः अग्नेः॥ परत्वदर्शनाद्विशेषादर्चिषोऽनन्तरं वायुर्न निवेश्यते । नैषोऽस्ति विशेष इति वदामः ॥ ननूदाहृता श्रुतिः—"स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकम् । स वरुणलोकम्" [ कौषी० १ । ३ ] इति ॥ उच्यते ॥ केवलोऽत्र पाठः पौर्वापर्येणावस्थितः, नात्र क्रमवचनः कश्चिच्छब्दोऽस्ति । पदार्थोपदर्शनमात्रं ह्यत्र क्रियते—"एतं चैतं च स गच्छति" इति ॥ इतरत्र पुनर्वायुप्रत्तेन रथचक्रमात्रेणच्छिद्रेणोर्ध्वमाक्रम्यादित्यमागच्छतीत्यवगम्यते क्रमः ॥ तस्मात्सूक्तमविशेषविशेषाभ्यामिति ॥ वाजसनेयिनस्तु "मासेभ्यो देवलोकं देवलोकादादित्यम्" [ बृ०६।२।१५] इति समामनन्ति। तत्रादित्यानन्तर्याय देवलोकाद्वायुमभिसम्भवेयुः। वायुमब्दादिति तु छान्दोग्यश्रुत्यपेक्षयोक्तम् । छान्दोग्यवाजसनेयकयोस्त्वेकत्र देवलोको न विद्यते । परत्र संवत्सरः । तत्र श्रुतिद्वयप्रत्ययादुभावप्युभयत्र ग्रथितव्यौ । तत्रापि माससम्बन्धात्संवत्सरः पूर्वः, पश्चिमो देवलोक इति विवेक्तव्यम् ॥ २ ॥ इति वाय्वधिकरणम् ॥ २ ॥

---

रत्नप्रभा ।

तीति श्रुत्यर्थः ॥ इदानीं पूर्वपक्षमाह—कस्मात्पुनरिति ॥ पाठबलादर्चिषोऽनन्तरो वायुरित्यर्थः ॥ कौषीतकिनां पाठमात्रं, न क्रमविशेषवाची कश्चिच्छब्दोऽस्ति । काण्वानां तु "तेन" इति "ऊर्ध्वम्" इति च शब्दाभ्यां क्रमनिश्चयात् पाठबाध इति सिद्धान्तार्थः ॥ अस्त्वर्चिरादिमार्गे छान्दोग्यस्थे संवत्सरपाठयोरब्दात् परत्वम् । वाजिश्रुतिस्थे तु संवत्सरस्याश्रुतेः कथमब्दात् परो वायुरित्यत आह—वाजेति ॥ तर्हि 'देवलोकाद्वायुम्' इति सूत्रं स्यादित्यत आह—वायुमब्दादिति त्विति ॥ संवत्सरस्य मासावयवित्वात् मासानन्तर्यम् । संवत्सरात् परो देवलोकः, ततः परो वायुः, वायोः पर आदित्यः,

भामती ।

भिसंभवन्तीति छान्दोग्यपाठमात्रापेक्षयोक्तं, तदिदमाह—वायुमब्दादिति त्विति ॥ २ ॥ ॥ (२) ॥

आनन्दगिरीय-न्यायनिर्णयः ।

माह—कस्मादिति । पाठक्रमादर्चिषोऽनन्तरं निवेशनीयो वायुरित्यर्थः । वायुप्रत्तमार्गेणैवोर्ध्वमादित्यमाक्रमत इत्यूर्ध्वत्वश्रुतेर्दिग्वचनत्वेऽप्यर्थक्रमद्योतित्वात्तेनेति च वायुप्रत्तरथचक्रपरिमितावकाशस्योर्ध्वक्रमणं प्रति हेतुत्वसिद्धेर्वायोरपि तन्निमित्तत्वदृष्टेरूर्ध्वशब्दश्रुतिसिद्धार्थक्रमेण पाठक्रमो बाध्यत इत्याह—नेत्यादिना । उक्तमेवार्थं विवृण्वन्नाशङ्कते—नन्विति । तत्र सिद्धान्ती स्वाभिप्रायमाह—उच्यत इति । तर्हि वाक्यस्य वैयर्थ्यं नेत्याह—पदार्थेति । स्वरूपविधिपरमेतद्वचनं न क्रमपरमित्यर्थः । वाजसनेयिश्रुतावपि क्रमवाचिशब्दो नास्तीत्याशंक्याऽऽह—इतरत्रेति । कौषीतकिवाक्योक्तस्य वायोश्छान्दोग्योपदिष्टार्चिरादिमार्गे निवेशमुक्तमुपसंहरति—तस्मादिति । वाजसनेयिनां संवत्सराश्रवणात्कथं वायुमब्दादिति सूत्रं तत्राऽऽह—वाजसनेयिनस्त्विति । तर्हि देवलोकाद्वायुलोकमिति वक्तव्यमित्याशंक्य च्छान्दोग्याभिप्रायेणैतदुक्तमित्याह—वायुमिति । क्रमस्तर्हि कः स्यादित्याशंक्योभयश्रुत्यालोचनया क्रमं दर्शयति—छान्दोग्येति । तर्हि कथमेकवाक्यत्वं तत्राऽऽह—तत्रेति । तर्हि देवलोकस्य प्राथम्यं संवत्सरस्य पाश्चात्यं किं न स्यात्तत्राऽऽह—तत्रापीति । संवत्सरस्य मासारम्यत्वान्मासानन्तर्ये स्थिते देवलोकः संवत्सरस्य

# तडितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥ (३) ॥

"आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्" [ छां० ४ । १५ । ५ ] इत्यस्या विद्युत उपरिष्टात् "सवरुणलोकम्" [ कौषी० । १ । ३ ] इत्ययं वरुणः सम्बध्यते । अस्ति हि सम्बन्धो विद्युद्वरुणयोः । यदा हि विशाला विद्युतस्तीव्रस्तनितनिर्घोषाः जीमूतोदरेषु प्रनृत्यन्ति अथापः प्रपतन्ति । "विद्योतते स्तनयति वर्षिष्यति वा" [ छां० ७ । ११ । १ ] इति च ब्राह्मणम् । अपां चाधिपतिर्वरुण इति श्रुतिस्मृतिप्रसिद्धिः । वरुणाच्चाधीन्द्रप्रजापती । स्थानान्तराभावात्पाठसामर्थ्याच्चागन्तुकत्वादपि वरुणादीनामन्त एव निवेशः । वैशेषिकस्थानाभावात् । विद्युच्चान्त्याऽर्चिरादौ वर्त्मनि ॥ ३ ॥ इति तडिदधिकरणम् ॥ ३ ॥

---

रत्नप्रभा ।

इति श्रुतिद्वये क्रमो निष्पन्नः । तेनेतितृतीयाश्रुत्या वायोरादित्यपूर्वत्वावगमादिति । सूत्रे तु वायुपदं देवलोकपूर्वकवायुपरमिति स्थितम् ॥ २ ॥ ( २ ) ॥ एवं कौषीतकिभिरग्न्यनन्तरं पठितस्य वायोः स्थानमुक्त्वा वाय्वनन्तरं पठितस्य वरुणस्यार्चिरादिमार्गे स्थानमाह—**तडितोऽधिवरुणः सम्बन्धादिति** ॥ पठितो वरुणादिमार्गपर्वत्वेन सम्बध्यते न वेति सन्देहेऽर्चिषोऽहरित्यादिपञ्चम्याऽर्चिरादीनां क्रमेण मार्गपर्वतया विरुद्धत्वाद्वायोरिव स्थानविशेषश्रुत्यभावादलब्धस्थानो वरुणादिर्न सम्बध्यत इति प्राप्ते, सिद्धान्तमाह—**आदित्यादिति** ॥ अपां विद्युत्कार्यत्वेन सम्बन्धे मानमाह—**विद्योतत इति** ॥ वरुणस्याब्द्वारा

भामती ।

**तडितोऽधि वरुणः संबन्धात्।** "तडिदन्तेऽर्चिरादेऽध्वन्यप्पतिस्तडितः परः। तत्संबन्धात्तथेन्द्रादिरप्पतेः पर इष्यते॥आगन्तूनां निवेशोऽन्ते स्थानाभावात्प्रसाधितः।तथा चेन्द्रादिरागन्तुः पठ्यते चाप्पतेःपरः"॥३॥(३)॥

आनन्दगिरीय-न्यायनिर्णयः ।

परस्ताद्भवत्यादित्यानन्तर्याय देवलोकादपि वायुरुपरिष्टाद् द्रष्टव्यः । सूत्रे तु संवत्सराद्देवलोकं प्राप्य वायुमभिसंभवतीति विवक्षितं वायुशब्दस्य देवलोकोपलक्षणार्थत्वात् । अतः श्रुतित्रयवशाद्देवलोकसहितवायोः संवत्सरादित्यान्तरालवर्तित्वमित्यर्थः ॥ २ ॥ (२) ॥ वायोः संनिवेशे दर्शिते तदनन्तरपठितवरुणादिसंनिवेशं दर्शयति—**तडितोऽधिवरुण इति।** स वरुणलोकमित्यादिना श्रुतो वरुणादिर्विषयः स किमर्चिरादिमार्गपर्वत्वेन न सम्बध्यते किंवा संबध्यत इति तस्य तत्र संनिवेशस्थानासंभवसंभवाभ्यां संदेहे स वायुलोकं स वरुणलोकमिति वरुणादीनां पाठक्रमेण वायोरूर्ध्वमादित्यात्प्रागूर्ध्वश्रुतिसिद्धार्थक्रमविरोधेन निवेशासिद्धेर्विद्युतश्चोपरिष्टादमानवपुरुषस्यैव नेतृत्वश्रवणाद्वरुणादीनामनुपयोगान्निवेशस्थानान्तरादृष्टेश्च तेषां मार्गपर्वत्वेन संबन्धो नास्तीति प्राप्ते सिद्धान्तमाह—**आदित्यादिति** । विद्युतोऽनन्तरं वरुणसंनिवेशे सूत्रोक्तं हेतुमाह—**अस्तीति** । तत्र लोकप्रसिद्धिमनुकूलयति—**यदेति** । विद्युदुद्भवानन्तरं वृष्टेर्दृष्टत्वात्कार्यकारणभावस्तयोरस्तीत्यर्थः । तत्रैव श्रुतिं संवादयति—**विद्योतत इति** । अपां विद्युद्योगेऽपि वरुणस्य किमायातं तदाह—**अपां चेति।**वायोरनन्तरमधीतस्यापि वरुणस्य विद्युदानन्तर्यवदिन्द्रप्रजापत्योर्वरुणानन्तरमधीतयोरपि स्थानान्तरं वाच्यमित्याशंक्याऽऽह—**वरुणाच्चेति।** तर्हि तयोर्मार्गपर्वत्वेन संगतिरेव मा भूदित्याशङ्क्याऽऽह **पाठेति।**'आगन्तूनामन्ते निवेशः'इतिन्यायाच्चासाधारणस्थानहीनानां वरुणादीनां तडिदानन्तर्यमुक्तमित्याह—**आगन्तुकत्वादिति** । यथा दर्शपूर्णमासिकविकृतौ नक्षत्रेष्टौ सोऽत्र जुहोत्यग्नये स्वाहा कृत्तिकाभ्यः स्वाहेत्यादीनामुपहोमानां प्रधानशब्दगृहीतप्रकृतनारिष्टहोमान्ते प्रयोगो निरूपितस्तथाऽर्चिरादिमार्गेऽपि स्थानाभावेनाऽऽगन्तूनामन्ते निवेशः स्यादिति भावः । कथं विद्युतोऽन्त्यत्वं, न हि तदन्त्यत्ववाची शब्दोऽस्तीत्याशंक्य विद्युदनन्तरं पर्वान्तरस्यानुक्तेस्तदन्त्यत्वमित्याह—**विद्युच्चेति** । वरुणादी-

# आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥ (४) ॥

**तेष्वेवार्चिरादिषु संशयः–किमेतानि मार्गचिह्नानि–उत–भोगभूमयः–अथ वा–ऽतिनेतारो गन्तॄणामिति । तत्र मार्गलक्षणभूता अर्चिरादय इति तावत्प्राप्तम् । तत्स्वरूपत्वादुपदेशस्य । यथा हि—कश्चिल्लोके ग्रामं, नगरं वा,–प्रतिष्ठासमानोऽनुशिष्यते गच्छेतस्त्वममुं गिरिं, ततो न्यग्रोधं, ततो नदीं, ततो ग्रामं, नगरं वा,–प्राप्स्यसीति–एवमिहाप्यर्चिषोऽहरह्न आपूर्यमाणपक्षमित्याद्याह । अथ वा भोगभूमय एता इति प्राप्तम् । तथाहि–लोकशब्देनाग्न्यादीनुपबध्नाति "अग्निलोकमागच्छति" [कौषी०**

रत्नप्रभा ।

विद्युत्सम्बन्धादागन्तुकानामन्ते निवेश इति न्यायाच्च विद्युदानन्तर्ये सति यथापाठमिन्द्रप्रजापत्योः क्रम इत्यर्थः ॥ ३ ॥ ( ३ ) ॥ एवमर्चिरादीनां क्रमं निरूप्य स्वरूपं निरूपयति–**आतिवाहिकास्तल्लिंगादिति** ॥ चिह्ननिर्देशसाम्यात् लोकशब्दान्नेतृत्वलिङ्गाच्च संशयः । आद्यपक्षद्वयं पूर्वपक्षः । अर्चिरादयो

भामती ।

**आतिवाहिकास्तल्लिंगात्** । "मार्गचिह्नरूपत्वाच्चिह्नान्येवार्चिरादयः। मर्त्यभोगभुवो वा स्युर्लोकत्वान्नातिवाहिकाः॥" अर्चिरादिशब्दा हि ज्वलनादावचेतनेषु निरूढवृत्तयो लोके। न च्चैषां त्वावधिकानामिव नियमवती संवहनस्वरूपा स्वतन्त्रक्रिया बुद्धिपूर्वा संभवत्यचेतनानाम्। तस्माल्लोकशब्दवाच्यत्वाद्धर्तुर्जीवात्मनो भोगभूमय एवेति मन्यामहे । अपि चार्चिष इत्यस्मादपादानं प्रतीयते । न हेतुर्नागुणे हेतौ पञ्चमी दृश्यते क्वचित् ॥ जाड्याद्बद्ध इत्यादिषु गुणवचनेषु जाड्यादिषु हेतुपञ्चमी दृष्टा । न चार्चिरादिशब्दा गुणवाचिनो येन पञ्चम्या तेषां वहनं प्रति हेतुत्वमुच्यते । अपादानत्वं चाचेतनेष्वप्यस्तीति नातिवाहिकाः । न चामानवस्य पुरुषस्य विद्युदादिषु वोढृत्वदर्शनादर्चिरादीनामपि वोढृत्वमुन्नेयम् । यावद्वचनं हि वाचनिकं न तदवाच्ये संचारयितुमुचितम् । अपि चार्चिरादीनां वोढृत्वे विद्युदादीनामपि वोढृत्वान्नामानवः पुरुषो वोढा श्रूयेत । यतः श्रूयते ततोऽवगच्छामो विद्युदादिवन्नार्चिरादीनां वोढृत्वमिति । तस्माद्भोगभूमय एवार्चिरादयो नातिवाहिका इति प्राप्ते प्रत्युच्यते–संपिण्डकरणानां हि सूक्ष्मदेहवतां गतौ । न स्वातन्त्र्यं न चाग्न्याद्या नेतारोऽचेतनास्तु ते । ईदृशी हि नियमवती गतिः स्वयं वा प्रेक्षावतोऽप्रेक्षावतो वा प्रेक्षावत्प्रयुक्तस्य । न तावद्विगलितस्थूलकलेवराः सूक्ष्मदेहवन्तः संपिण्डितकरणग्रामा उत्क्रान्तिमन्तो जीवात्मानो मत्तमूर्च्छितवत्स्वयं प्रेक्षावन्तो यदेवं स्वातन्त्र्येण गच्छेयुस्तद्यदर्चिरादयोऽपि मार्गचिह्नानि वा शमीकारस्करादिवद्भोगभूमयो वा सुमेरुशैलेलावृतादिवदुभयथाप्यचेतनतया न नयनं प्रत्येषामस्ति स्वातन्त्र्यम् । न चैतेभ्योऽन्यस्य चेतनस्य नेतुः कल्पना सति श्रुतानां चैतन्यसंभवे । न च परमेश्वर एवास्तु

आनन्दगिरीय–न्यायनिर्णयः ।

नामुपयोगस्त्वमानवेन सह नेतृत्वसंभवादिति वक्ष्यते । अत्र च विद्याफलार्थे पथि वरुणादीनां संनिवेशोक्त्या पादादिसंगतिः । पूर्वपक्षे वरुणादिपाठस्यादृष्टार्थत्वं, सिद्धान्ते वरुणादीनां स्थानान्तराभावेऽप्यागन्तूनामन्ते निवेशात्पाठस्य दृष्टार्थतैवेति द्रष्टव्यम् ॥ ३ ॥ ( ३ ) ॥ अर्चिरादीनां क्रमं निरूप्य स्वरूपं निरूपयति–**आतिवाहिका इति** । विषयोक्तिपूर्वकमुक्तिसाम्याल्लोकशब्दादतिनेतृत्वलिङ्गाच्च संशयमाह–**तेष्वेवेति** । अत्र च विद्याफलप्राप्त्यर्थमर्चिरादावध्वनि प्रवृत्तस्य विदुषो गमयितृत्वचिन्तनात्पादादिसंगतिः। पूर्वपक्षे निर्देशस्य लोकश्रुतेर्वा मुख्यत्वं सिद्धान्ते न्यायवल्लिङ्गस्येत्यङ्गीकृत्य पूर्वपक्षमाह–**तत्रेति** । उक्तेऽर्थे निर्देशसाम्यं हेतुमाह—**तदिति**। उक्तमेव हेतुं दृष्टान्तेन स्पष्टयति–**यथेति** । पूर्वपक्षान्तरमाह–**अथ वेति**।

१ । ३ ] इत्यादि । लोकशब्दश्च प्राणिनां भोगायतनेषु भाष्यते-"मनुष्यलोकः पितृलोको देवलोकः" [ बृ० १ । ५ । १६ ] इति च । तथा च ब्राह्मणम् । "अहोरात्रेषु तेषु लोकेषु सज्जन्ते" इत्यादि ॥ तस्मान्नातिवाहिका अर्चिरादयः । अचेतनत्वादपि एतेषामातिवाहिकत्वानुपपत्तिः । चेतना हि लोके राजनियुक्ताः पुरुषाः दुर्गेषु मार्गेष्वतिवाह्यानतिवाहयन्तीति ॥ एवं प्राप्ते ब्रूमः ॥ आतिवाहिका एवैते भवितुमर्हन्ति ॥ कुतः ॥ "तल्लिङ्गात्" ॥ तथाहि-"चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" [ छां० ४ । १५ । ५ ] इति सिद्धवद्गमयितृत्वं दर्शयति । ( यावद्वचनं वाचनिकमिति न्यायात् ) ॥ तद्वचनं तद्विषयमेवोपक्षीणमिति चेत् ॥ न ॥ प्राप्तमानवत्वनिवृत्तिमात्रपरत्वाद्विशेषणस्य । यद्यर्चिरादिषु पुरुषा गमयितारः प्राप्तास्ते च मानवाः, ततो युक्तं तन्निवृत्त्यर्थं पुरुषविशेषणममानव इति ॥ ४ ॥ ननु लिङ्गमात्रमगमकम् । न्यायाभावात् ॥ नैष दोषः ॥

रत्नप्रभा ।

विद्युदन्ताश्चेतना नेतारश्च । अमानवपुरुषेण नेत्रा सह पठितत्वादिति सिद्धान्तयति-एवमित्यादिना ॥ यथाश्रुति अमानवस्यास्तु नेतृत्वं, नार्चिरादीनामिति शङ्कते-तद्वचनमिति ॥ पुरुषस्यामानवत्वं, नेतृत्वञ्चेत्युभयपरत्वे वाक्यभेदः स्याद् अतोऽर्चिरादिपदैर्नेतार एव मानवाः प्रकृताः । प्रकरणबलात् विद्युदनन्तरं मानवस्य नेतुः प्राप्तौ प्रकरणप्राप्तनेतृत्वानुवादेनामानवत्वमनेकमेव प्रतिपाद्यत इति वक्तव्यमित्याह-नेति ॥ नेतृप्रकरणानङ्गीकारे मानवः पुरुषो गमयतीति वाक्यं भिद्येत । अमानवत्ववत् नेतृत्वस्याप्यप्राप्तेरिति भावः ॥ ४ ॥ नेतृत्वानुवादलिङ्गस्यानुग्राहकन्यायपरं सूत्रं गृह्णाति-नन्विति ॥ यद्यनेतारोऽचेतना एवार्चिरादयः, तर्हि मार्गतद्गन्त्रोरुभयोरपि व्यामोहादज्ञत्वादूर्ध्वगतिर्न स्यात् ॥ अतः स्वयं

भामती ।

नेतेति युक्तम् । तस्यात्यन्तसाधारणतया लोकपालग्रहादीनामकिंचित्करत्वात् । तस्माद्व्यवस्थित एव परमेश्वरस्य सर्वाध्यक्षत्वे यथा यथास्त्रं लोकपालादीनां स्वातन्त्र्यमेवमिहाप्यर्चिरादीनामातिवाहिकत्वमेव

आनन्दगिरीय-न्यायनिर्णयः ।

कथं लोकशब्दप्रयोगेऽप्यर्चिरादीनां भोगभूमित्वं तत्राऽऽह-लोकेति । मार्गपर्वणां भोगभूमित्वे श्रुतिमपि दर्शयति-तथा चेति । अहोरात्रप्रभृतिषु लोकशब्दितेषु भोगायतनेषु ते कर्मिणो ज्ञानिनश्च सक्ति भोगमनुभवन्तीति यावत् । पक्षद्वयेऽपि फलितमाह-तस्मादिति । अर्चिरादिशब्दानामचेतनेष्वग्न्यादिषु रूढत्वादपि न तेषामातिवाहिकतेत्याह-अचेतनत्वादिति । तदेव व्यतिरेकदृष्टान्तेन स्फोरयति-चेतना हीति । सिद्धान्तसूत्रमादाय प्रतिज्ञां विभजते-एवमिति । तत्र हेतुं प्रश्नपूर्वकमादाय व्याचष्टे-कुत इति । अमानवपुरुषस्य विद्युदादावातिवाहिकत्वदृष्टेरर्चिरादीनामपि तदुन्नेयमित्यर्थः । यावद्वचनं वाचनिकमिति न्यायान्न तेषामातिवाहिकत्वसाधकमेतदिति शंकते-तदिति । उभयपरत्वे वाक्यभेदः स्यादिति भावः । प्राप्तगमयितृमानवपुरुषानुवादेनाप्राप्तामानवत्ववादित्वाद्वाक्यस्योभयपरत्वेन वाक्यभेदप्रसङ्गात्पूर्वेषामपि मानवपुरुषतया गमयितृत्वं प्राह्यमित्याह-नेति । उक्तमेव प्रपञ्चयति-यदीति ॥४॥ लिङ्गस्यानुग्राहकन्यायाभावे गमकत्वासिद्धिरिति शंकते-नन्विति । न्यायोक्तिपरं सूत्रमवतारयति-नेति । चेतनस्य यत्नहीनस्योर्ध्वगतिश्चेतनान्तराधीनेति लौकिकन्यायेन यत्नहीनानां गन्तॄणां गमयितारोऽर्चिरादयश्चे-

१ अधिकः पाठोऽयम् ।

## उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥

ये तावदर्चिरादिमार्गगाः, ते देहवियोगात्संपिण्डितकरणग्रामा इत्यस्वतन्त्राः । अर्चिरादीनामप्यचेतनत्वादस्वातन्त्र्यमित्यतोऽर्चिराद्यभिमानिनश्चेतना देवताविशेषा अतियात्रायां नियुक्ता इति गम्यते । लोकेऽपि हि मत्तमूर्च्छितादयः संपिण्डितकरणग्रामाः परप्रयुक्तवर्त्मानो भवन्ति । अनवस्थितत्वादप्यर्चिरादीनां न मार्गलक्षणत्वोपपत्तिः । न हि रात्रौ प्रेतस्याहस्स्वरूपाभिसम्भव उपपद्यते । न च प्रतिपालनमस्तीत्युक्तमधस्तात् । ध्रुवत्वाद्देवतात्मनां नायं दोषो भवति । अर्चिरादिशब्दता चैषामर्चिराद्यभिमानादुपपद्यते । "अर्चिषोऽहः" [ छां० ( ४ । १५ । ५ ) ( ५ । १० । १ ) , इत्यादिनिर्देशस्त्वातिवाहिकत्वेऽपि न विरुध्यते । अर्चिषा हेतुनाऽहरभिसम्भवन्ति । अह्ना हेतुनाऽऽपूर्यमाणपक्षमिति । तथा च लोकप्रसिद्धेष्वप्यातियात्रिकेष्वेवञ्जातीयक उपदेशो दृश्यते—गच्छ त्व-

---

रत्नप्रभा ।

प्रयत्नशून्यश्चेतनान्तरेण नेय इति लौकिकन्यायानुग्रहात् **तत्सिद्धेः** नेतृत्वसिद्धेरुक्तलिङ्गं न्यायोपेतमिति सूत्रार्थः ॥ पूर्वपक्षद्वयं दूषयति—**अनवस्थितत्वादि**त्यादिना ॥ अर्चिरहरादीनामस्थिरत्वाद्रात्र्यादौ मृतस्य प्रतीक्षा नास्तीत्युक्तत्वाच्च न मार्गचिह्नत्वं, भोग्यत्वं वा ।। देवतात्वे त्वस्थिरत्वदोषो नास्तीत्यर्थः ॥ यत्तूपदेशस्वारस्याच्चिह्नत्वं भातीति, तत्राह—**अर्चिषोऽहरिति** ॥ चिह्नत्वनेतृत्वसंशयाच्च वाक्यशेषान्नि-

भामती ।

दर्शनानुसाराच्छब्दार्थ इति युक्तम् । इममेवार्थममानवपुरुषातिवाहनलक्षणं लिङ्गमुपोद्बलयतीत्युक्तम् । **अनवस्थितत्वादर्चिरादीनामिति** । अवस्थितं हि मार्गचिह्नं भवत्यव्यभिचारान्नानवस्थितं व्यभिचारादिति । अर्चिष इति च हेतौ पञ्चमी नापादाने । गुणत्वं चाश्रिततया । न च वैशेषिकपरिभाषया नियम आस्थेयो लोकविरोधात् । अपि च तेऽर्चिरभिसंभवन्तीति संबन्धमात्रमुक्तमिति । सामान्यवचने शब्दे विशेषाकांक्षिणि स्फुटम् । यद्विशेषपदं तेन तत्सामान्यं नियम्यते ॥ यथा ब्राह्मणमानय भोजयितव्य इति

आनन्दगिरीय—न्यायनिर्णयः ।

तनाः स्युरिति सूत्रयोजनया ब्रूते—**ये तावदिति** । उभयोर्मार्गतद्गन्त्रोर्व्यामोहादज्ञत्वात्तत्सिद्धेर्गमयितृसिद्धेर्न न्यायहीनं लिङ्गमित्युक्त्वा न्यायमेव स्फुटयति—**लोकेऽपीति**।पूर्वपक्षद्वयायोगे हेत्वन्तरमाह—**अनवस्थितत्वादिति** । अहःशुक्लपक्षोत्तरायणानां कालान्तरेषु मार्गचिह्नत्वभोगभूमित्वे न संभाव्येते तदा तेषामभावादित्रि हेतुं साधयति—**न हीति** । तर्हि तदा गमनं प्रतीक्ष्य रात्र्यादौ प्रेतो गमिष्यति नेत्याह—**न चेति**। अनवस्थितत्वाविशेषादातिवाहिकत्वमपि कुतस्तेषामित्याशंक्याऽऽह—**ध्रुवत्वादिति** । अर्चिरादिशब्दानामचेतनेषु रूढेर्न तेषां देवतावाचितेत्याशंक्याह—**अर्चिरादीति** । न चाभिमतव्याहारादिदेहाभावे तद्देवतानामनवस्थानमिति वाच्यम् । ऐश्वर्ययोगात्तासामनेकविग्रहग्रहणयोगात् । अतो देवदत्तादिशब्दवदर्थतश्चेतनेषु मुख्यतेत्यर्थः । जाड्याद्बद्ध इत्यादौ गुणवचनेषु जाड्यादिषु पञ्चमीदर्शनादर्चिरादीनां च गुणवचनत्वाभावाद्वहनं प्रत्यर्चिरादीनां हेतुत्वानवगमादर्चिष इत्यस्मादपादानत्वप्रतीतेर्नाऽऽतिवाहिकत्वसिद्धिरित्याशंक्याऽऽह—**अर्चिष इति** । तार्किकप्रक्रियासिद्धगुणत्वाभावेऽप्याश्रितत्वेन तत्सिद्धेर्हेतावेषा पञ्चमीत्यर्थः । उक्तेऽर्थे लौकिकव्यपदेशं दर्शयति—**तथा चेति** । इतश्चार्चिरादिशब्दानां गमयितृविषयतेत्याह—

मितो बलवर्माणं, ततो जयसिंहं, ततः कृष्णगुप्तमिति ॥ अपि चोपक्रमे "तेऽर्चिषमभिसम्भवन्ति" [बृ० ६।२।१५] इति सम्बन्धमात्रमुक्तं न सम्बन्धविशेषः कश्चित्। उपसंहारे तु "स एनान् ब्रह्म गमयति" [छां० ४।१५।५] इति सम्बन्धविशेषोऽतिवाह्यातिवाहिकलक्षण उक्तः। तेन स एवोपक्रमेऽपीति निर्धार्यते। संपिण्डितकरणग्रामत्वादेव च गन्तॄणां न तत्र भोगसम्भवः। लोकशब्दस्त्वनुपभुञ्जानेष्वपि गन्तृषु गमयितुं शक्यते। अन्येषां तल्लोकवासिनां भोगभूमित्वात् ॥ अतोऽग्निस्वामिकं लोकं प्राप्तोऽग्निनाऽतिवाह्यते, वायुस्वामिकं लोकं प्राप्तो वायुनेति योजयितव्यम् ॥५॥ कथं पुनरातिवाहिकत्वपक्षे वरुणादिषु तत्सम्भवः। विद्युतो ह्यधि वरुणादय उपक्षिप्ताः। विद्युतश्चानन्तरमाब्रह्मप्राप्तेरमानवस्यैव पुरुषस्य गमयितृत्वं श्रुतमिति॥अत उत्तरं पठति—

**वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥**

ततः—विद्युदभिसम्भवनादूर्ध्वं, विद्युदनन्तरवर्तिनैवामानवेन पुरुषेण वरुणलोकादिष्वतिवाह्यमाना ब्रह्मलोकं गच्छन्ति इत्यवगन्तव्यम्। "तान्वैद्युतात्पुरुषोऽमानवः" "स एनान्ब्रह्मलोकं गमयति" इति तस्यैव गमयितृत्वश्रुतेः। वरुणादयस्तु तस्यैवाप्रतिबन्धकरणेन, साहाय्यानु-

---

रत्नप्रभा।

र्णय इत्याह—**अपि चेति** ॥ यदुक्तं लोकशब्दाद्भोग्यत्वमिति, तन्नेत्याह—**संपिण्डितेति** ॥ सूत्रान्तरं गृह्णाति—**कथं पुनरिति** ॥ अमानवो विद्युल्लोकमागतो **वैद्युतः**—तेनेत्यर्थः। श्रुतौ तु वैद्युताल्लोकादित्यर्थः॥ श्रुत्या वरुणादीनां नेतृत्वाभावेऽप्यनुग्राहकत्वेन मार्गान्तर्भाव इति भावः॥ ६ ॥ (४) ॥ एवं

भामती।

तद्विशेषापेक्षायां यदा तत्संनिधावुपनिपतति पदं कण्ठादि (?) तदा तेनैतन्नियम्यते एवमिहापीति ॥ ४ ॥ ॥ ५ ॥ **वैद्युतेनैव ततस्तच्छ्रुतेः**। विद्युल्लोकमागतोऽमानवः पुरुषो वैद्युतस्तेनैव न तु वरुणादिना स्वयमुह्यते। तच्छ्रुतेस्तस्यैव स्वयं वोढृत्वश्रुतेः। वरुणादयस्तु तत्साहाय्यके वर्तमाना वोढारो भवन्तीति च वैषम्यं न वोढृत्वे इति सर्वमवदातम् ॥६॥(४)॥पाठक्रमादर्थक्रमो बलवानिति यथार्थक्रमं पठ्यन्ते सूत्राणि—**परं जैमिनिर्मुख्यत्वात्**। स एतान् ब्रह्म गमयतीति विचिकित्स्यते। किं परं ब्रह्म गमयत्याहोस्विदपरं कार्यं ब्रह्मेति। मुख्यत्वादमृतप्राप्तेः परप्रकरणादपि। गन्तव्यं जैमिनिर्मेने परमेवार्चिरादिना ॥ ब्रह्म गमयतीत्यत्र हि नपुंसकं ब्रह्मपदं परस्मिन्नेव ब्रह्मणि निरूढत्वादनपेक्षतया मुख्यमिति सति संभवे न कार्ये

आनन्दगिरीय-न्यायनिर्णयः।

**अपि चेति**। सामान्यवचने शब्दे विशेषापेक्षिणि दृष्टे विशेषशब्देन तत्सामान्यं नियन्तव्यमितिन्यायादतिवाह्यातिवाहकसंबन्धसिद्धिरिति हेत्वन्तरमेव स्फुटयति—**उपक्रमेऽपीति**। यत्तु भोगभूमित्वमर्चिरादीनामुक्तं तद् दूषयति—**संपिण्डितेति**। लोकशब्दाद्भोगभूमित्वमुक्तं प्रत्याह—**लोकेति**। गन्तॄणां भोक्तृत्वाभावेऽपि वाक्यं शक्यं नेतुमिति फलितमाह—**अत इति** ॥५॥ सूत्रान्तरमवतारयितुं शंकते—**कथमिति**। का पुनरनुपपत्तिस्तत्राऽऽह—**विद्युतो हीति**। आतिवाहकत्वमपि मियतं नेत्युक्ते प्रत्याह—**अत इति**। वरुणादिषु वचनादपवादमङ्गीकृत्य विभजते- **तत इति**। किं तर्हि तैरित्याशङ्क्याऽऽह—**वरुणादयस्त्विति**।तेषां स्वयम-

ष्ठानेन वा,—केनचिदनुग्राहका इत्यवगन्तव्यम् ॥ तस्मात्साधूक्तमातिवाहिका देवतात्मानोऽर्चिरादय इति ॥ ६ ॥ ० इत्यातिवाहिकाधिकरणम् ॥ ४ ॥

**कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥ (५) ॥**

"स एनान्ब्रह्म गमयति" [ छां० ४ । १५ । ५ ] इत्यत्र विचिकित्स्यते—किं कार्यमपरं ब्रह्म गमयति—आहोस्वित्—परमेवाविकृतं मुख्यं ब्रह्मेति ॥ कुतः संशयः ॥ ब्रह्मशब्दप्रयोगाद्, गतिश्रुतेश्च । तत्र कार्यमेव सगुणम-

---

रत्नप्रभा ।

मार्गं निरूप्य गन्तव्यं चिन्तयति—कार्यं बादरिरस्य गत्युपपत्तेरिति ॥ परब्रह्म गन्तव्यमिति पूर्वपक्षे मार्गस्य मुक्त्यर्थता, कार्यं ब्रह्मेति सिद्धान्ते भोगार्थतेति मत्वा प्रथमं सिद्धान्तमाह—तत्र कार्यमेवेति ॥ सर्वगतस्यापि प्रदेशान्तरविशिष्टत्वेनाकाशस्य गन्तव्यत्वं दृष्टम् । ब्रह्मणस्तु प्रत्यक्त्वान्न

भामती ।

ब्रह्मणि गुणकल्पनया व्याख्यातुमुचितम् । अपि चामृतत्वफलावाप्तिर्न कार्यब्रह्मप्राप्तौ युज्यते । तस्य कार्यत्वेन मरणधर्मवत्त्वात् । किंच, तत्रतत्र परमेव ब्रह्म प्रकृत्य प्रजापतिसद्मप्रतिपत्त्यादय उच्यमाना नापरब्रह्मविषया भवितुमर्हन्ति प्रकरणविरोधात् । न च परस्मिन्सर्वगते गतिर्नोपपद्यते प्राप्तत्वादिति युक्तम् । प्राप्तेऽपि हि प्राप्तिफला गतिर्दृश्यते । यथैकस्मिन्न्यग्रोधपादपे मूलादग्रमग्राच्च मूलं गच्छतः शाखामृगस्यैकेनैव न्यग्रोधपादपेन निरन्तरं संयोगविभागा भवन्ति । न चैते तदवयवविषया न तु न्यग्रोधविषया इति साम्प्रतं, तथा सति न शाखामृगो न्यग्रोधेन युज्यते । न्यग्रोधावयवस्य तदवयवयोगात् । एवं दृश्यमानानामपि तदवयवानां न योगस्तदवयवयोगात्तदन्तेन क्रमेण तदवयवेषु परमाणुषु व्यवतिष्ठते । ते चातीन्द्रिया इति कस्मिन्नु नामायमनुभवपद्धतिमध्यास्तां संयोगतपस्वी । तस्मादकामेनाप्यनुभवानुरोधेन प्राप्त एव प्राप्तिफलत्वावगतिरेषितव्या । तद्ब्रह्म प्राप्तमपि प्राप्तिफलायावगतेर्गोचरो भविष्यति । ब्रह्मलोकेष्विति च बहुवचनमेकस्मिन्नपि प्रयोगसाधुतामात्रेण गमयितव्यम् । लोकशब्दश्चालोकने प्रकाशे वर्तयितव्यो न तु सन्निवेशवति देशविशेषे । तस्मात् परब्रह्मप्राप्त्यर्थं गत्युपदेशसामर्थ्यादयमर्थो भवति । यथा विद्याकर्मवशादर्चिरादिना गतस्य सत्यलोकमतिक्रम्य परं जगत्कारणं ब्रह्म लोकमालोकं स्वयं प्रकाशकमिति यावत् । प्राप्तस्य तत्रैव लिङ्गं प्रलीयते न तु गतिमेवंभूतां विना लिङ्गप्रविलय इति । अत एव श्रुतिः—पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति । तदनेनाभिसन्धिना परं ब्रह्म गमयत्यमानव इति मेने जैमिनिराचार्यः । **कार्यं बादरिरस्य गत्युपपत्तेः** । तत्त्वदर्शी बादरिर्ददर्श—कार्यमप्राप्तपूर्वत्वादप्राप्तप्रापणी गतिः प्रापयेद्ब्रह्म न परं प्राप्तत्वाज्जगदात्मकम् ॥ तत्त्वमसिवाक्यार्थसाक्षात्कारात्प्राक्किल जीवात्माऽविद्याकर्मवासनाद्युपाध्यवच्छेदाद्वस्तुतोऽनवच्छिन्नोऽवच्छिन्नमिवाभिन्नोऽपि लोकेभ्यो भिन्नमिवात्मानमभिमन्यमानः स्वरूपादन्यानप्राप्तानर्चिरादींल्लोकान्गत्याप्नोतीति युज्यते । अद्वैतब्रह्मतत्त्वसाक्षात्कारवतस्तु विगलितनिखिलप्रपञ्चावभासविभ्र-

आनन्दगिरीय—न्यायनिर्णयः ।

वाहकत्वेऽपि तत्साहाय्यकरणेन तथात्वाद्युक्तमर्चिरादिशब्दानां गमयितृविषयत्वमित्युपसंहरति—**तस्मादिति** । ॥६॥ (४) ॥ गतिनिरूपणानन्तरं गन्तव्यं निरूपयति—**कार्यमिति** । ब्रह्म विषयीकृत्य संशयमाह—**स इति** । प्रश्नपूर्वकं तद्धेतुमाह—**कुत इति** । पूर्वपक्षस्याऽऽद्यो द्वितीयस्तूत्तरपक्षस्यानुगुणो हेतुः प्रकृतया गत्या गन्तव्यस्य विद्याफलभूतस्य ब्रह्मणो निरूपणात्पादादिसंगतिः पूर्वपक्षे परविदोऽपि गत्युत्क्रान्ती सिध्यतः । सिद्धान्ते ततोऽन्यस्यैव ते नियते स्यातामिति मन्वानः सूत्रं योजयन्नादौ सिद्धान्तमाह—**तत्रेति** । साधारणे ब्रह्म-

**परं ब्रह्म नयत्येनानमानवः पुरुषः इति बादरिराचार्यो मन्यते॥ कुतः॥ "अस्य गत्युपपत्तेः"-अस्य हि कार्यब्रह्मणो गन्तव्यत्वमुपपद्यते। प्रदेशवत्त्वात्, न तु परस्मिन्ब्रह्मणि गन्तृत्वं गन्तव्यत्वं गतिर्वाऽवकल्पते। सर्वगतत्वात्प्रत्यगात्मत्वाच्च गन्तॄणाम्॥ ७॥**

रत्नप्रभा।

कथमपि गन्तव्यतेत्यर्थः॥ ७॥ ब्रह्मलोकेष्विति बहुवचनलोकशब्दाधारसप्तमीश्रुतिभिर्गन्तव्यस्य परस्मा-

भामती।

मस्य न गन्तव्यं न गतिर्न गमयितार इति किं केन संगतम्। तस्मादनिदर्शनं न्यग्रोधसंयोगविभागा न्यग्रोधवानरतद्गतितत्संयोगविभागानां मिथो भेदात्। न च तत्रापि प्राप्तप्राप्तिः, कर्मजेन हि विभागेन निरुद्धायां पूर्वप्राप्तावप्राप्तस्यैवोत्तरप्राप्तेरुत्पत्तेः। एतदपि वस्तुतो विचारासहतया सर्वमनिर्वचनीयं विजृम्भितमविद्यायाः समुत्पन्नाद्वैततत्त्वसाक्षात्कारो न विद्वानभिमन्यते। विदुषोऽपि देहपातात्पूर्वं स्थितप्रज्ञस्य यथाभासमात्रेण सांसारिकधर्मानुवृत्तिरभ्युपेयते एवमालिङ्गशरीरपाताद्विदुषस्तद्धर्मानुवृत्तिः। तथा चाप्राप्तप्राप्तेर्गत्युपपत्तिस्तद्देशप्राप्तौ च लिङ्गदेहनिवृत्तेर्मुक्तिः श्रुतिप्रामाण्यादिति चेत्। न। परविद्यावत उत्क्रांतिप्रतिषेधात् 'ब्रह्मैव सन्ब्रह्माप्येति न तस्मात्प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते' इति। यथा विद्याब्रह्मप्राप्त्योः समानकालता श्रूयते-'ब्रह्म वेद ब्रह्मैव भवति' 'आनन्दं ब्रह्मणो विद्वान्न बिभेति' 'तदात्मानमेव वेदाहं ब्रह्मास्मीति तत्सर्वमभवत्' 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इति पौर्वापर्याश्रवणात् परविद्यावतो मुक्तिं प्रति नोपायान्तरापेक्षेति लक्ष्यतेऽभिसंधिः श्रुतेः। उपपन्नं चैतत्। न खलु ब्रह्मैवेदं विश्वमहं ब्रह्मास्मीति परिभावनाभुवा जीवात्मनो ब्रह्मभावसाक्षात्कारेणोन्मूलितायामनवयवेनाविद्यायामस्ति गन्तव्यगन्तृविभागो विदुषस्तदभावे कथमयमर्चिरादिमार्गे प्रवर्तेत। न च छायामात्रेणापि सांसारिकधर्मानुवृत्तिस्तत्र प्रवृत्त्यङ्गं यादृच्छिकप्रवृत्तेः। श्रद्धाविहीनस्य दृष्टार्थानि कर्माणि फलन्ति न फलंति च। अदृष्टार्थानां तु फले का कथेत्युक्तं प्रथमसूत्रे। न चार्चिरादिमार्गभावनायाः परब्रह्मप्राप्त्यर्थमविदुषः प्रत्युपदेशस्तथा च कर्मान्तरेष्विव नित्यादिषु तत्रापि स्यात्तस्य प्रवृत्तिरिति साम्प्रतम्। विकल्पासहत्वात्। किमियं परविद्यानपेक्षा परब्रह्मप्राप्तिसाधनं तदपेक्षा वा। न तावदनपेक्षा 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति परब्रह्मविज्ञानादन्यस्याध्वनः साक्षात्प्रतिषेधात्। परविद्यापेक्षत्वे तु मार्गभावनायाः किमियं विद्याकार्ये मार्गभावना साहाय्यकमाचरत्यथ विद्योत्पादे। न तावद्विद्याकार्ये तया सह तस्या द्वैताद्वैतगोचरतया मिथो विरोधेन सहासंभवात्। नापि यज्ञादिवद्विद्योत्पादे साक्षाद्ब्रह्मप्राप्त्युपायत्वश्रवणादेतान्ब्रह्म गमयतीति। यज्ञादेस्तु विविदिषासंयोगेन श्रवणाद्विद्योत्पादाङ्गत्वम्। तस्मादुपन्यस्तबहुश्रुत्यनुरोधादुपपत्तेश्च ब्रह्मशब्दोऽसंभवन्मुख्यवृत्तिर्ब्रह्मसामीप्यादपरब्रह्मणि लक्षणया नेतव्यः। तथा च लोकेष्विति बहुवचनोपपत्तेः कार्यब्रह्मलोकस्य। परस्य त्वनवयवतया तद्द्वारेणाप्यनुपपत्तेः। लोकत्वं चेलावृत्तादिवत्सन्निवेशविशेषवति भोगभूमौ निरूढं न कथंचिद्योगेन प्रकाशे व्याख्यातं भवति। तस्मात्साधुदर्शी स भगवान्बादरिरसाधुदर्शी जैमिनिरिति सिद्धम्। अप्रामाणिकानां बहुप्रलापाः सर्वगतस्य द्रव्यस्य गुणाः सर्वगता एव चैतन्यानन्दादयश्च गुणिनः परमात्मनो भेदाभेदवन्तो गुणा इत्यादयो दूषणायानुभाष्यमाणा अप्यप्रामाणिकत्वमावहन्त्यस्माकमित्युपेक्षिताः। ग्रन्थयोजना तु प्रत्यगात्मत्वाच्च गन्तॄणां प्रतिप्रति अञ्चति गच्छतीति प्रत्यक् प्रतिभावत्ति ब्रह्म तदात्मत्वाद्गन्तॄणां जीवात्मनामिति।

आनन्दगिरीय-न्यायनिर्णयः।

शब्दे कार्यविषयत्वं गतेरहेतुकमिति शङ्कते-कुत इति। हेतुमवतार्य व्याचष्टे-गतेरिति। सर्वगतत्वेऽपि प्रदेशान्तरवर्तिनस्तस्याऽऽकाशस्येव गन्तव्यत्वमाशङ्क्याऽऽह-प्रत्यगिति॥ ७॥ कार्यब्रह्म गन्तव्य-

## विशेषिततत्वाच्च ॥ ८ ॥

"ब्रह्मलोकान्गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति" [ बृ० ६ । २ । १५ ] इति श्रुत्यन्तरे विशेषितत्वात्कार्यब्रह्मविषयैव गतिरित्यवगम्यते । न हि बहुवचनेन विशेषणं परस्मिन्ब्रह्मण्यवकल्पते । कार्ये त्ववस्थाभेदोपपत्तेः सम्भवति बहुवचनम् । लोकश्रुतिरपि-विकारगोचरायामेव सन्निवेशविशिष्टायां भोगभूमावाञ्जसी । गौणी त्वन्यत्र-"ब्रह्मैव लोक एष सम्राट्" इत्यादिषु अधिकरणाधिकर्तव्यनिर्देशोऽपि परस्मिन्ब्रह्मणि नाञ्जसः स्यात । तस्मात्कार्यविषयमेवेदं नयनम् ॥ ८ ॥ ननु कार्यविषयेऽपि ब्रह्मशब्दो नोपपद्यते समन्वये समस्तस्य हि जगतो जन्मादिकारणं ब्रह्मेति प्रतिष्ठापितमिति ॥ अत्रोच्यते-

## सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

तुशब्दः-आशंकाव्यावृत्त्यर्थः । परब्रह्मसामीप्यादपरस्य ब्रह्मणस्तस्मिन्नपि ब्रह्मशब्दप्रयोगो न विरुध्यते । परमेव हि ब्रह्म विशुद्धोपाधिसम्बन्धात्क्वचित्कैश्चिद्विकारधर्मैर्मनोमयत्वादिभिरुपासनायोपदिश्यमानमपरमिति स्थितिः ॥ ९ ॥ ननु कार्यप्राप्तावनावृत्तिश्रवणं न घटते । न हि परस्माद्ब्रह्मणोऽन्यत्र क्वचिन्नित्यता सम्भवति । दर्शयति च देवयानेन पथा प्रस्थितानामनावृत्तिम्-"एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते" [ छां० ४ । १५ । ६ ] इति । "तेषामिह न पुनरावृत्तिर-

---

रत्नप्रभा ।

द्व्यावृत्तत्वाच्च न परं गन्तव्यमित्याह-**विशेषिततत्वाच्चेति** ॥ परब्रह्मणि भोग्यत्वोपचाराद्गौणी लोकश्रुतिरित्यर्थः ॥ ८ ॥ नपुंसकब्रह्मशब्देन कारणवाचिना कार्यं लक्ष्यते गन्तव्यत्वन्यायोपेतबहुवचनाद्यनेक-

भामती ।

**गौणी त्वन्यत्रेति।** यौगिक्यपि हि योगगुणापेक्षया गौण्येव। **विशुद्धोपाधिसंबन्धादि(न्धमि)ति।** मनोमयत्वादयः कल्पनाः कार्याः । कार्यत्वादविशुद्धा अपि श्रेयोहेतुत्वाद्विशुद्धाः । प्रतिसंचरो महाप्रलयः प्रतिपत्त्य-

आनन्दगिरीय-न्यायनिर्णयः ।

मित्यत्र हेत्वन्तरमाह-**विशेषितेति** । सूत्रं व्याचष्टे-**ब्रह्मेति** । बहूक्त्या गन्तव्यस्य विशेषितत्वेऽपि कथं परस्य गन्तव्यत्वनिरसनं तत्राऽऽह-**न हीति** । ऐक्यात्कार्यस्यापि ब्रह्मणो बहूक्तिरयुक्तेत्याशंक्याऽऽह-**कार्ये त्विति** । चशब्दसूचितं युक्त्यन्तरमाह-**लोकेति** । परस्मिन्नपि क्वचिद्दृष्टा लोकश्रुतिरित्याशंक्याऽऽह-**गौणीति** । ब्रह्मलोकेष्वित्यधिकरणसप्तम्या ब्रह्मण्ययोगादपि कार्यविषयैव गतिरिति हेत्वन्तरमाह-**अधिकरणेति** । सूत्रोक्तहेतूनां फलितं निगमयति-**तस्मादिति** ॥ ८ ॥ ब्रह्मशब्दश्रुतिविरोधं शङ्कते-**नन्विति** । वृद्धव्यवहारे प्रयोगप्रत्ययाभ्यां ब्रह्मशब्दस्य परापरब्रह्मणोः शाब्दं मुख्यत्वं तुल्यमित्याशंक्यानवच्छिन्नतयाऽर्थतो मुख्यत्वं परस्यैवेत्याह-**समस्तस्येति** । सूत्रेण परिहरति-**अत्रेति** । मुख्यार्थायोगे यौगिकतयाऽपि ब्रह्मपदं नेयमिति मत्वा व्याचष्टे-**तुशब्द इति** । अविरोधं साधयति-**परमेवेति** । विशुद्धोपाधिसंबन्धं सात्त्विकोपाधिविशिष्टमिति यावत् ॥ ९ ॥ ब्रह्मशब्दस्य मुख्यार्थग्रहे बहुतरकार्यलिङ्गभङ्गवत्कार्यग्रहेऽपि तुल्याऽनावृत्तिश्रुत्यनुपपत्तिरिति शङ्कते-**नन्विति** । तत्र हेतुः-**न हीति** । मा भूदर्चिरादिना गच्छतामनावृत्तिर्ब्रह्मलोकप्राप्तिमात्रस्य श्रुतत्वादित्याशंक्याऽऽह-**दर्शयतीति** । क्रममुक्त्यभि-

स्ति "तयोर्ध्वमायन्नमृतत्वमेति" [ ( छां० ८।६।६ ) ( कठ० २।६।१६ ) ] इति चेति ॥ अत्र ब्रूमः-

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥

कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति तत्रैवोत्पन्नसम्यग्दर्शनाः सन्तस्तदध्यक्षेण हिरण्यगर्भेण सहातः परं परिशुद्धं विष्णोः परं पदं प्रतिपद्यन्त इति । इत्थं क्रममुक्तिरनावृत्त्यादिश्रुत्यभिधानेभ्योऽभ्युपगन्तव्या । न ह्यञ्जसैव गतिपूर्विका परप्राप्तिः सम्भवतीत्युपपादितम् ॥ १० ॥

## स्मृतेश्च ॥ ११ ॥

स्मृतिरप्येतमर्थमनुजानाति-"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" इति ॥ तस्मात्कार्यब्रह्मविषया गतिः श्रूयत इति सिद्धान्तः॥११॥कं पुनः पूर्वपक्षमाशंक्यायं सिद्धान्तः प्रतिष्ठापितः-"कार्यं बादरिः" [व्या० सू० ४ । ३ । ७] इत्यादिनेति ॥ स इदानीं सूत्रैरेवोपप्रदर्श्यते॥

## परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

जैमिनिस्त्वाचार्यः "स एनान् ब्रह्म गमयति" [ छां० ४ । १५ । ५ ] इत्यत्र परमेव ब्रह्म प्रापयतीति मन्यते ॥ कुतः ॥ मुख्यत्वात् ॥ परं हि ब्रह्म ब्रह्मशब्दस्य मुख्यमालम्बनं, गौणमपरम् । मुख्यगौणयोश्च मुख्ये संप्रत्ययो भवति ॥ १२ ॥

## दर्शनाच्च ॥ १३ ॥

---

रत्नप्रभा ।

श्रुत्यनुग्रहाय । न चानावृत्तिलिङ्गात् परस्य गन्तव्यता । क्रममुक्त्या लिङ्गस्यान्यथासिद्धेरिति भावः ॥ ॥ ९ ॥ १० ॥ प्रतिसञ्चरः महाप्रलयः, तस्मिन् प्राप्ते परस्य हिरण्यगर्भस्य अन्ते समष्टिलिङ्गशरीररूपविकारावसाने ब्रह्मलोकनिवासिनः कृतात्मानः शुद्धधियः तत्रोत्पन्नसम्यग्धियः सर्वे ब्रह्मणा मुच्यमानेन सह परं पदं प्रविशन्तीति योजना ॥ एवं सिद्धान्तमुक्त्वा तेन निरस्तं पूर्वपक्षमाह-कं पुनरित्यादिना ॥ ११ ॥ १२ ॥ दहरविद्यायां कठवल्लीषु परब्रह्मप्रकरणे च "तयोर्ध्वमायन्" इति

भामती ।

भिसंधिः प्रतिपत्तिर्गतिः पदेर्गत्यर्थत्वात् । अभिसंधिस्तात्पर्यम् । यस्य ब्रह्मणो नामाभिधानं यश इति ।

आनन्दगिरीय-न्यायनिर्णयः ।

प्रायमनावृत्तिश्रवणमिति सूत्रेण प्रत्याह-अत्रेति । सूत्राक्षराणि योजयति-कार्येति । साक्षादेव ब्रह्मप्राप्त्याऽनावृत्तिसिद्धौ किमिति परंपराश्रयणं तत्राऽऽह-न हीति ॥ १० ॥ क्रममुक्तौ स्मृतिं प्रमाणयति-स्मृतेश्चेति । तामेवोदाहरति-स्मृतिरिति । प्रतिसंचरो महाप्रलयस्तस्मिन्प्राप्ते परस्य हिरण्यगर्भस्यान्तोऽधिकारावसानं तदा कृतात्मानः शुद्धधियो ब्रह्मलोकनिवासिनस्तत्रोत्पन्नसम्यग्धियः सर्वे ब्रह्मणा मुच्यमानेन सह परं पदं प्रविशन्तीति योजना । सिद्धान्तमुपसंहरति-तस्मादिति ॥ ११ ॥ उत्तरसूत्राण्याकांक्षापूर्वकमवतारयति-कमिति । ब्रह्मशब्दस्य मुख्यार्थत्वमाश्रित्य परस्यैव ब्रह्मणो गन्तव्यत्वमाह-परमिति । तत्र प्रतिज्ञां विभजते-जैमिनिस्त्विति । युक्तियुक्तस्यैव ग्राह्यत्वाद्वक्तृगौरवमकिंचित्करमिति शङ्कते-कुत इति । सौत्रं हेतुमाह-मुख्यत्वादिति । गौणस्यापि मुख्यवद्ब्रह्मशब्दालम्बनत्वमिष्टमविशेषादित्याशंक्याऽऽह-मुख्येति ॥ १२ ॥ इतश्च मुख्यमेव ब्रह्म गन्तव्यमित्याह-दर्शनाच्चेति । दर्शनं

"तयोर्ध्वमायन्नमृतत्वमेति" [छां० ८।८।६] इति च गतिपूर्वकममृतत्वं दर्शयति । अमृतत्वञ्च परस्मिन्ब्रह्मण्युपपद्यते, न कार्ये । विनाशित्वात्कार्यस्य । "अथ यत्रान्यत्पश्यति तदल्पं तन्मर्त्यम्" [छां० ७।२४।१] इति वचनात् । परविषयैव चैषा गतिः कठवल्लीषु पठ्यते- न हि तत्र विद्यान्तरप्रक्रमोऽस्ति । "अन्यत्र धर्मादन्यत्राधर्माद्" [कठ० २।१४] इति परस्यैव ब्रह्मणः प्रक्रान्तत्वात् ॥ १३ ॥

## न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥

अपि च "प्रजापतेः सभां वेश्म प्रपद्ये" [छां० ८।१४।१] इति, नायं कार्यविषयः प्रतिपत्त्यभिसन्धिः । "नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" [छां० ८।१४।१] इति कार्यविलक्षणस्य परस्यैव ब्रह्मणः प्रकृतत्वात् । "यशोऽहं भवामि ब्राह्मणानाम्" [छां० ८।१४।१] इति च सर्वात्मत्वेनोपक्रमात् । "न तस्य प्रतिमास्ति यस्य नाम महद्यशः" [श्वेता० ४।१९] इति च परस्यैव ब्रह्मणो यशोनामत्वप्रसिद्धेः । सा चेयं वेश्मप्रतिपत्तिर्गतिपूर्विका, या हार्दविद्यायामुदिता—"तदपरा-

---

रत्नप्रभा ।

गतिर्दर्शिता ॥ १३ ॥ एवं ब्रह्मश्रुत्यमृतत्वलिङ्गाभ्यां प्रकरणाच्च परविषया गतिरित्युक्तम् । संप्रति प्रजापतेः सभां वेश्म प्राप्नुयामिति उपासकस्य मरणकाले कार्यप्राप्तिसङ्कल्पश्रुतेर्न परं गन्तव्यमिति शङ्कां निरस्यति—**न च कार्य इति** ॥ परस्य प्रकृतत्वात् यशःपदस्य परमात्मनामत्वप्रसिद्ध्या यशःपदेनात्मोक्तिः । **यशः** आत्मा ब्राह्मणानामहं भवामि । तथा राज्ञां यशो विशां यश इति सार्वात्म्यलिङ्गाच्च परप्राप्तिसङ्कल्प एवायमित्यर्थः ॥ अस्तु वेश्मप्रतिपत्तीच्छा परब्रह्मविषया । तथापि सा कथं गतिपूर्विका स्यादित्यत आह—**सा चेति** ॥ तत्र ब्रह्मलोके विद्याविहीनैरपराजिता पूरस्ति । **ब्रह्मणः** हिरण्यगर्भस्य तेनैव **प्रभुणा विमितं** निर्मितं हिरण्मयं वेश्मास्ति । तत् प्रतिपद्यते । विद्वानिति दहरविद्यायां गतिपूर्विका वेश्मप्राप्तिरुक्ता । तेन परब्रह्मण्यपि वेश्मप्रतिपत्तिशब्दसामान्याद्गतिपूर्वकत्वं तस्याः सिध्यतीत्यर्थः ॥ **किञ्च** "पद

भामती ।—०

आनन्दगिरीय—न्यायनिर्णयः ।

विभजते—**तयेति** । आपेक्षिकं तत्पक्षान्तरेऽपि स्यादित्याशंक्य मुख्यसंभवे नैवमित्याह—**अमृतत्वं चेति** । कार्यस्य नाशित्वे मानमाह—**अथेति** । परस्मिन्न युक्ता गतिरित्युक्तमित्याशंक्याऽऽह—**परेति** । कथमेतज्ज्ञातमित्याशंक्य प्रकरणसामर्थ्यादित्याह—**न हीति** ॥ १३ ॥ ब्रह्मश्रुतेरमृतत्वश्रुतिलिङ्गात्तयोर्ध्वमायन्नितिप्रकरणाच्च परविषया गतिरित्युक्तम् । संप्रति प्रजापतेः सभां वेश्म प्रपद्ये प्राप्नुयामिति मरणकाले यः प्रतिपत्त्यभिसंधिः प्राप्तिसंकल्पः स कार्यगोचर इति तस्यैव गन्तव्यतेत्याशंक्याऽऽह—**न चेति** । तद्विवृणोति—**अपि चेति** । परस्यैव गन्तव्यत्वे हेत्वन्तरमाह—**यशोऽहमिति** । आत्मा यशःशब्दार्थः । ब्राह्मणानामहमात्मा भवामि यशो राज्ञां यशो विशामिति सर्वात्मत्वोक्तेरपि न परिच्छिन्नकार्योपप्तिरित्यर्थः । यशःशब्देन विश्रुतत्वमुक्तं नाऽऽत्मेत्याशंक्याऽऽह—**नेति** । अस्त्वविकाराद्ब्रह्मविषयैव वेश्मप्रतिपत्त्यादिसंकल्पना तथाऽपि कथं सा गतिपूर्विका वेश्मप्रतिपत्तेः स्तुतिमात्रत्वादित्याशंक्याऽऽह—**सा चेति** । सत्तत्र ब्रह्मलोके केनापि ब्रह्मचर्यादिहीनेन न पराजितेत्यपराजिता पूरस्य ब्रह्मणो हिरण्यगर्भस्य तेनैव प्रभुणा निर्मितं हिरण्मयं वेश्म चास्ति तत्प्रपद्यते विद्वानिति दहरविद्यायां गतिपूर्विका वेश्मप्रतिपत्तिरुक्ता । तेन परब्रह्मण्यपि वेश्मप्रतिपत्तिसाम्याद्गतिपूर्वकत्वं तस्याः सिध्यतीत्यर्थः । किंच, 'पद गतौ' इति स्मृतेरपि वेश्मप्रतिपत्तेर्मार्गापेक्षा

जिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयम्" [ छां० ८ । ५ । ३ ] इत्यत्र । पदेरपि च गत्यर्थत्वान्मार्गापेक्षताऽवसीयते ॥ तस्मात्परब्रह्मविषया गतिश्रुतय इति पक्षान्तरम् । तावेतौ द्वौ पक्षावाचार्येण सूत्रितौ । गत्युपपत्त्यादिभिरेकः । मुख्यत्वादिभिरपरः । तत्र गत्युपपत्त्यादयः प्रभवन्ति मुख्यत्वादीनाभासयितुं, न तु मुख्यत्वादयो गत्युपपत्त्यादीनित्याद्य एव सिद्धान्तो व्याख्यातः । द्वितीयस्तु पूर्वः पक्षः । न ह्यसत्यपि सम्भवे मुख्यस्यैवार्थस्य ग्रहणमिति कश्चिद्राज्ञापयिता विद्यते । परविद्याप्रकरणेऽपि च तत्स्तुत्यर्थं विद्यान्तराश्रयगत्यनुकीर्तनमुपपद्यते "विष्वङ्ङन्या उत्क्रमणे भवन्ति" [ छां० ८ । ६ । ६ ] इतिवत् । "प्रजापतेः सभां वेश्म प्रतिपद्ये" [ छां० ८ । १४ । १ ] इति तु पूर्ववाक्यविच्छेदेन कार्येऽपि प्रतिपत्त्यभिसन्धिर्न विरुध्यते । सगुणेऽपि च ब्रह्मणि सर्वात्मत्वसंकीर्तनं "सर्वकर्मा सर्वकामः" [ छां० ३ । १४ । २ ]

रत्नप्रभा ।

गतौ" इति धातुपाठाद् "वेश्म प्रपद्ये" इत्यत्र मार्गापेक्षा भातीत्याह-पदेरपीति ॥ पूर्वपक्षमुपसंहरति-तस्मादिति ॥ आद्य एव सिद्धान्तपक्ष इति दृढीकर्तुमुपक्रमते-ताविति ॥ ब्रह्मशब्दमुख्यत्वादिहेतूनामाभासत्वं स्फुटयति-न हीति ॥ गन्तव्यत्वस्य "ब्रह्मलोकेषु" इति बहुवचनादेः सङ्कल्पादेव गन्धादिदिव्यभोगश्रुतेश्च परब्रह्मणि असम्भवान्मुख्यार्थत्याग इत्यर्थः ॥ यद्यपि "एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म" इत्यादिश्रुतिषु प्रयोगसाम्याद्ब्रह्मशब्द उभयत्र रूढतया मुख्य एव । तथापि पूर्णे परस्मिन्नवयवार्थनिरतिशयमहत्त्वस्य लाभादपरब्रह्मणि अमुख्य इत्यङ्गीकृतमिति मन्तव्यम् ॥ यदुक्तं कठवल्लीषु प्रकरणबलाद्गतिः परविषयेति, तत्राह-परेति ॥ यथा विद्यासंबद्धसुषुम्नास्तुत्यर्थं तदसम्बद्धनाड्यन्तरकीर्तनं, तथा परविद्यास्तुत्यर्थं तत्प्रकरणेऽप्यपरविद्याश्रय इति कीर्तनं युज्यते । गतिं विनापि हि परविद्या निरतिशयफला । तस्यां त्वपरविद्याफले गतिसाध्यमन्तर्भवतीति स्तुतिलाभादित्यर्थः ॥ यदप्युक्तं प्राप्तिसङ्कल्पोऽपि प्रवृत्तपरविषय इति, तन्नेत्याह-प्रजापतेरिति ॥ प्रजापतिसभावेश्मश्रुतिभिः, तत्सङ्घातात्मकवाक्येन च,-प्रकरणं बाध्यम् । यशोऽहमिति सार्वात्म्यं तूपासनार्थमपरब्रह्मण्यपि युज्यत

भामती ।

पूर्ववाक्यविच्छेदेनेति । श्रुतिवाक्ये वलीयसी प्रकरणात् । सगुणेऽपि च ब्रह्मणीति । प्रशंसार्थमि-

आनन्दगिरीय-न्यायनिर्णयः ।

भातीत्याह-पदेरिति।पूर्वपक्षमुपसंहरति-तस्मादिति। 'परं जैमिनिः'इत्यादिसिद्धान्तसूत्राण्युत्तरसूत्रत्वात्पूर्वाणि पूर्वपक्षसूत्राणीत्याशंक्य व्यवस्थार्थं पातनिकां करोति-ताविति । तथाऽपि कथं व्यवस्थेत्याशंक्याऽऽह-तत्रेति। द्वितीये पक्षे ब्रह्मशब्दस्य मुख्यार्थलाभात्तस्यैवोत्तरपक्षत्वमित्याशंक्याऽऽह-न हीति। यत्तु प्रकरणसामर्थ्यात्परविषयत्वं गतेरिति तत्राऽऽह-परेति । यथा ब्रह्मनाडीगतिप्रशंसार्थं नाड्यन्तराणि विद्यासंसर्गशून्यान्येव तत्प्रकरणेऽनुकीर्त्यन्ते तथा दहरादिविद्याश्रयगतिनिमित्तफलानुकीर्तनं परविद्याधिकारेऽपि युज्यते तस्या गतिराहित्येऽपि तत्पूर्वकफलस्य तथैव सिद्धेर्महतीयं विद्या निरतिशयैश्वर्यहेतुत्वादिति स्तुतिप्रकर्षसंभवादित्यर्थः । यत्तु कार्ये प्रतिपत्त्यभिसंधिर्नास्तीति तत्राऽऽह-प्रजेति । श्रुतिवाक्याभ्यां प्रकरणं हेयमिति भावः । यत्तु सर्वात्मत्वानुक्रमणात्परविषयत्वं प्रतिपत्त्यभिसंधेरिति तत्राऽऽह-सगुणेऽपीति ।

इत्यादिवदवकल्पते ॥ तस्मादपरविषया एव गतिश्रुतयः ॥ केचित्तु पुनः पूर्वाणि पूर्वपक्षसूत्राणि भवन्ति, उत्तराणि सिद्धान्तसूत्राणीत्येतां व्यवस्थामनुरुध्यमानाः परविषया एव गतिश्रुतीः प्रतिष्ठापयन्ति ॥ तदनुपपन्नम् ॥ गन्तव्यत्वानुपपत्तेर्ब्रह्मणः ॥ यत्सर्वगतं सर्वान्तरं सर्वात्मकश्च परं ब्रह्म "आकाशवत्सर्वगतश्च नित्यः" "यत्साक्षादपरोक्षाद्ब्रह्म" [ बृ० ३ । ४ । १ ] "य आत्मा सर्वान्तरः" [ बृ० ३ । ४ । १ ] "आत्मैवेदं सर्वम्" [ छां० ७ । २५ । २ ] "ब्रह्मैवेदं विश्वं वरिष्ठम्" [ मुण्ड० २ । २ । ११ ] इत्यादिश्रुतिनिर्धारितविशेषम् । तस्य गन्तव्यता न कदाचिदप्युपपद्यते । न हि गतमेव गम्यते । अन्यो ह्यन्यद्गच्छतीति प्रसिद्धं लोके ॥ ननु लोके गतस्यापि गन्तव्यता देशान्तरविशिष्टस्य दृष्टा । यथा पृथिवीस्थ एव पृथिवीं देशान्तरद्वारेण गच्छति, तथाऽनन्यत्वेऽपि बालस्य कालान्तरविशिष्टं वार्धक्यं स्वात्मभूतमेव गन्तव्यं दृष्टं, तद्वद्ब्रह्मणोऽपि सर्वशक्त्युपेतत्वात्कथञ्चिद्गन्तव्यता स्यादिति ॥ न ॥ प्रतिषिद्धसर्वविशेषत्वाद्ब्रह्मणः ॥ "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" [ श्वेता० ६ । १९ ] "अस्थूलमनण्वह्रस्वमजमदीर्घम्"

---

रत्नप्रभा ।

इत्यर्थः । स्वपक्षमुक्त्वा परमतं दूषयति—केचिदित्यादिना ॥ सर्वगतस्य स्वात्मभूतस्यापि ब्रह्मणः संसारदेशात् देशान्तरेण, तत्कालात् कालान्तरेण, विशिष्टतया गन्तव्यत्वं स्यादिति पृथिवीवयोदृष्टान्ताभ्यां शंकते—नन्विति ॥ यत्नं विनैव प्राप्तत्वम्—अनन्यत्वम् । अवस्थातद्वतोरभेदात्—स्वात्मभूतत्वम् ॥ ननु युक्तं भूवयसोः प्राप्तयोरपि देशान्तरकालान्तरविशिष्टत्वेन गन्तव्यत्वम् । तयोर्गन्तृभिन्नत्वात् । ब्रह्मणस्तु गन्त्रभिन्नस्य कथं गन्तव्यत्वं, तत्राह—सर्वशक्त्युपेतेति । या प्राप्ता भूः सा गन्तव्या । यच्च गन्तव्यं देशान्तरं, तत्त्व-

भामती ।

त्यर्थः । चोदयति—ननु लोके गतस्यापि पारमार्थिकी गन्तव्यता देशान्तरविशिष्टस्येति । न्यग्रोधवामरदृष्टान्त उपपादितः । परिहरति—न । प्रतिषिद्धसर्वविशेषत्वाद्ब्रह्मण इति । अयमभिसन्धिः—यथातथा न्यग्रोधावयवी परिणामवानुपजनापायधर्मभिः कर्मजैः संयोगविभागैः संयुज्यतामयं पुनः पर-

आनन्दगिरीय–न्यायनिर्णयः ।

प्रशंसार्थमुपास्त्यर्थं वा तदनुक्रमणमित्यर्थः । परविषयगत्ययोगे फलितमाह—तस्मादिति । पक्षान्तरमनुभाष्य दूषयति—केचिदित्यादिना । ब्रह्मणो गन्तव्यत्वानुपपत्तिमुपपादयति—यदिति । यदुक्तविशेषणं परब्रह्म तस्य कदाचिदपि न गन्तव्यतेति संबन्धः । तस्य सर्वगतत्वे मानमाह—आकाशवदिति । सर्वान्तरत्वेऽपि श्रुतिमाह—यदिति । सर्वात्मकत्वेऽपि श्रुतिमाह—आत्मैवेति । अनुपपत्तिमेव स्फोरयति—न हीति । गतेरकिंचित्करत्वादित्यर्थः । प्राप्ते प्राप्तिफला गतिरयुक्तेत्येतद्व्यतिरेकेण स्फुटयति—अन्यो हीति । स्वरूपेण प्राप्तस्यापि ब्रह्मणो विकारापत्तितया गन्तव्यतासिद्धिरिति दृष्टान्तेन शङ्कते—नन्विति । सर्वगतस्यायुक्ता गन्तव्यतेत्युक्तं प्रत्याह—तथेति अनन्यत्वं साधनसाध्यत्वं विना प्राप्तत्वम् । यत्तु प्रत्यगात्मत्वाद्ब्रह्मणो न गन्तव्यतेति तत्राऽऽह—स्वात्मेति । एकस्यैव ब्रह्मणो गन्तृगन्तव्यता सिध्यतीत्यत्र हेतुमाह—सर्वेति । तथाऽपि ग्रामादिवन्न गन्तव्यतेत्याशंक्याऽऽह—कथंचिदिति । वैषम्यं दर्शयन्नाह—नेत्यादिना । ब्रह्मणो निर्विशेषत्वे मानमाह—निष्कलमित्यादिना । "अनादिमत्परं ब्रह्म"

[बृ० ३।८।८] "स बाह्याभ्यन्तरो ह्यजः" [मुण्ड० २।१।२] "स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म" [बृ० ४।४।२५] "स एष नेतिनेति" [बृ० ३।९।२६] इत्यादिश्रुतिस्मृतिन्यायेभ्यो न देशकालादिविशेषयोगः परमात्मनि कल्पयितुं शक्यते। येन भूप्रदेशवयोऽवस्थान्यायेनास्य गन्तव्यता स्यात्। भूवयसोस्तु प्रदेशावस्थादिविशेषयोगादुपपद्यते देशकालविशिष्टा गन्तव्यता। जगदुत्पत्तिस्थितिप्रलयहेतुत्वश्रुतेरनेकशक्तित्वं ब्रह्मण इति चेत्॥ न॥ विशेषनिराकरणश्रुतीनामनन्यार्थत्वात्॥ उत्पत्त्यादिश्रुतीनामपि समानमनन्यार्थत्वमिति चेत्॥ न॥ तासामेकत्वप्रतिपादनपरत्वात्। मृदादिदृष्टान्तैर्हि सतो ब्रह्मण एकस्य सत्यत्वं, विकारस्य चानृतत्वं,-प्रतिपादयच्छास्त्रं नोत्पत्त्यादिपरं भवितुमर्हति॥कस्मात्पुनरुत्पत्त्यादिश्रुतीनां विशे

रत्नप्रभा।

प्राप्तमिति कुतः प्राप्तस्य गन्तव्यता। वयसोऽपि कालान्तरेऽभिव्यक्तिमात्रं, न गन्तव्यत्वमिति वस्तुगतिः। अङ्गीकृत्य विशिष्टभूवयसोर्गन्तव्यतां, परब्रह्मणो देशकालवैशिष्ट्याभावात् न कथञ्चिदपि गन्तव्यतेत्याह-नेत्यादिना॥ "अनादिमत्परं ब्रह्म" इत्याद्या स्मृतिः। दृश्यविशेषस्य दृशि कल्पितत्वाद् दृगात्मनो निर्विशेषतेति न्यायः॥ सगुणमेव ब्रह्म सूत्रात्मापेक्षया परं गन्तव्यम्। निर्विशेषं तु नास्त्येवेति शंकते-जगदुत्पत्तीति॥ किं निर्विशेषस्य असत्त्वं मानाभावात्, सविशेषश्रुतिविरोधाद्वा। नाद्यः-इत्याह-नेति॥ द्वितीयं-शंकते-उत्पत्त्यादीति॥ सविशेषश्रुतीनां निर्विशेषश्रुतिशेषत्वात्। न विरोध इत्याह-नेति॥ निर्विशेषश्रुतीनामेव सविशेषश्रुतिशेषत्वं किं न स्यादित्याह-कस्मादिति॥ तासां स्वार्थे फलवत्त्वेन निरा-

भामती।

त्मा निरस्तनिखिलभेदप्रपञ्चः कूटस्थनित्यो न न्यग्रोधवत्संयोगविभागभाग् भवितुमर्हति। काल्पनिकसंयोगविभागस्तु काल्पनिकस्यैव कार्यब्रह्मलोकस्योपपद्यते न परस्य। शंकते-जगदुत्पत्तिस्थितिप्रलयहेतुत्वश्रुतेरिति। न ह्युत्पत्त्यादिहेतुभावोऽपरिणामिनः संभवति तस्मात्परिणामीति। तथा च भाविक्रम-

आनन्दगिरीय-न्यायनिर्णयः।

इत्याद्या स्मृतिः। न्यायस्तु विशेषाणां तद्द्रष्टृनिविष्टत्वेन दृश्यत्वासिद्धिरंशतः स्वदृश्यत्वापाताच्च च तद्दृश्यत्वं विना तत्सिद्धिर्जडत्वात्स्वतः सिद्धत्वे चाऽऽत्मानतिरेकात्तस्मात्तस्य निर्विशेषतेति। देशकाला-दीत्यादिशब्देनावस्थावयवादि गृह्यते। निर्विशेषत्वे फलितमाह-येनेति। येन सविशेषत्वेन भूप्रदेशादिदृष्टान्तेन ब्रह्मणो गन्तव्यता न तथा तस्य सविशेषतेति योजना। दृष्टान्तेऽपि कथं गतस्यैव गन्तव्यतेत्याशंक्याऽऽह-भूवयसोस्त्विति। अवस्थादीत्यादिशब्देनावयवपरिणामादिग्रहः। सर्वशक्तित्वाद्युक्तं ब्रह्मणो विशेषवत्त्वेन गन्तव्यत्वमित्युक्तं स्मारयति-जगदिति। अपरिणामिनोऽकारकत्वात्तत्कारणत्वाय परिणामित्वं कार्यप्रतियोगिशक्तिमत्त्वं चास्तीति कुतो गन्तव्यत्वासिद्धिरित्यर्थः। विशेषनिराकरणस्य निःशेषशोकादिनिरासफलत्वादुत्पत्त्यादिविधानस्य चाफलत्वात्फलवत्संनिधावफलं तदङ्गमितिन्यायान्न ब्रह्मणः सविशेषतेति दूषयति-नेत्यादिना। उक्तमेवार्थं चोद्यसमाधिभ्यां विवृण्वन्नादौ चोद्यं दर्शयति-उत्पत्त्यादीति। तासामनन्यार्थत्वमसिद्धमित्याह-नेति। एकत्वपरत्वमुपपादयति-मृदादीति। शेषशेषित्वे नियामकाभावमादाय शङ्कते-कस्मादिति। नियामकं दर्शयति-

षनिराकरणश्रुतिशेषत्वं न पुनरितरशेषत्वमितरासामिति ॥उच्यते॥ विशेषनिराकरणश्रुतीनां निराकांक्षार्थत्वात् । न ह्यात्मन एकत्वनित्यत्वशुद्धत्वाद्यवगतौ सत्यां भूयः कदाचिदाकांक्षोपजायते । पुरुषार्थसमाप्तिबुद्ध्युत्पत्तेः । "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" [ ईशा० ७ ] "अभयं वै जनक प्राप्तोऽसि" [ बृ० ४ । २ । ४ ] "विद्वान्न बिभेति कुतश्चन" "एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवम्" [ तै० उ० २ । ९ । १ ] इत्यादिश्रुतिभ्यः । तथैव च विदुषां तुष्ट्यनुभवादिदर्शनाद्, विकारानृताभिसन्ध्यपवादाच्च "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" [ (बृ० ४ । ४ । १९) ( कठ० ४ । १० ) ] इति ॥ अतो न विशेषनिराकरणश्रुतीनामन्यशेषत्वमवगन्तुं शक्यम् । नैवमुत्पत्त्यादिश्रुतीनां निराकाङ्क्षार्थत्वप्रतिपादनसामर्थ्यमस्ति । प्रत्यक्षं तु तासामन्यार्थत्वं समनुगम्यते । तथाहि—"तत्रैतच्छुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यति" [ छां० ६ । ८ । ३ ] इत्युपन्यस्योदर्के सत एवैकस्य जगन्मूलस्य विज्ञेयत्वं दर्शयति । "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म"[तै०उ०३।१।१]इति च।एवमुत्पत्त्यादिश्रुतीनामैका-

---

रत्नप्रभा ।

कांक्षत्वात् शेषिता विशेषश्रुतीनां स्वफलत्वात् निषेध्यविशेषसमर्पणादिद्वारेण शेषत्वम्। "फलवत्सन्निधावफलं तदङ्गम्" इति न्यायादित्याह—उच्यत इत्यादिना ॥ न केवलं न्यायात् शेषता । किन्तु श्रुत्याऽपीत्याह—प्रत्यक्षं त्विति ॥ तत्र मूलकारणे ब्रह्मणि एतच्छुङ्गम् जगदात्मकं कार्यमुत्पन्नमित्युपक्रम्य तेन "शुङ्गेन सन्मूलमन्विच्छ" [ छां० ६ । ८ । ६ ] इत्युपसंहारे सत एव ज्ञेयत्वमुक्तं छान्दोग्ये । तथा तैत्तिरीयकेऽपि जगज्जन्माद्यनुवादेन ब्रह्मण एव ज्ञेयत्वं दर्शितम् ॥ अतः सृष्टिश्रुतीनां श्रुत्यैव निर्विशेषधीशेषता भातीत्यर्थः ॥ एवं ब्रह्मणो निर्विशेषत्वात् न गन्तव्यमिति फलितमाह—एवमिति ॥

भामती ।

स्योपपद्यते गन्तव्यत्वमित्यर्थः । निराकरोति—न ॥ विशेषनिराकरणश्रुतीनामिति । विशेषनिराकरणं समस्तशोकादिदुःखशमनतया पुरुषार्थफलवत् । अफलं तूत्पत्त्यादिविधानम् । तस्मात्फलवतः संनिधा-

आनन्दगिरीय—न्यायनिर्णयः ।

उच्यत इति।फलवत्तया नैराकांक्ष्यं स्फोरयति—न हीति।एकत्वज्ञाने सर्वाकांक्षाशान्तिरित्यत्र श्रुतीराह—तत्रेत्यादिना। श्रौते विद्याफले विद्वदनुभवमनुकूलयति—तथैवेति। द्वैतस्य निन्द्यमानत्वादपि न प्रतिपाद्यतेत्याह—विकारेति । विशेषनिषेधश्रुतीनां निराकाङ्क्षज्ञानोत्पादकत्वे फलितमाह—अतो नेति । तुल्यमुत्पत्त्यादिश्रुतीनामपि तथाविधधीजनकत्वमित्याशंक्याऽऽह—नैवमिति । न केवलं युक्तिमात्रेणोत्पत्त्यादिश्रुतीनामन्यार्थत्वं किंतु श्रुतिसामर्थ्यादपीत्याह—प्रत्यक्षं त्विति । तत्र च्छन्दोगश्रुत्या तासामन्यार्थत्वं स्फुटयति—तथाहीति । तत्रेति मूलकारणोक्तिः । एतच्छुङ्गं जगदात्मकं कार्यमुत्पतितमुत्पन्नमिति यावत् । तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छेति सत एवोत्तरत्र कार्यलिंगेन ज्ञेयत्वोक्तेस्तत्तेजोऽसृजतेत्यादिश्रुतीनां तच्छेषत्वं सिद्धमित्यर्थः । तैत्तिरीयश्रुत्यापि जन्मादिश्रुतीनामैक्यधीशेषत्वमाह—यत इति । तासामन्यपरत्वे फलितमाह—एवमिति । ब्रह्मणोऽनेकशक्तिमत्त्वाभावेऽपि न परविषया गतिरित्यत्र किमायातं तदाह—

त्म्यावगमपरत्वान्नानेकशक्तियोगो ब्रह्मणः॥ अतश्च गन्तव्यत्वानुपपत्तिः। "न तस्य प्राणा उत्क्रामन्ति" [बृ० ४।४।६] "ब्रह्मैव सन्ब्रह्माप्येति" [बृ० ४।४।६] इति च परस्मिन्ब्रह्मणि गतिं निवारयति। तद्व्याख्यातं "स्पष्टो ह्येकेषाम्" [व्या० सू० ४।२।१३] इत्यत्र। गतिकल्पनायां च गन्ता जीवो गन्तव्यस्य ब्रह्मणोऽवयवो विकारोऽन्यो वा ततः स्यात्। अत्यन्ततादात्म्ये गमनानुपपत्तेः॥ यद्येवं ततः किं स्यादिति॥ उच्यते॥ यद्येकदेशः, तेनैकदेशिनो नित्यप्राप्तत्वान्न पुनर्ब्रह्मगमनमुपपद्यते। एकदेशैकदेशिकल्पना च ब्रह्मण्यनुपपन्ना। निरवयवत्वप्रसिद्धेः। विकारपक्षेऽप्येतत्तुल्यम्। विकारेणाऽपि विकारिणो नित्यप्राप्तत्वात्। न हि घटो मृदात्मतां परित्यज्यावतिष्ठते। परित्यागेऽभावप्राप्तेः। विकारावयवपक्षयोश्च तद्वतः स्थिरत्वाद्ब्रह्मणः संसारगमनमप्यनवक्लृप्तम्॥

रत्नप्रभा।

स्पष्टनिषेधाच्च परस्य न गन्तव्यतेत्याह—न तस्येति॥ एवं गन्तव्यालोचनया गतिं निरस्य, गन्त्रालोचनयापि निरस्यति—गतिकल्पनायां चेत्यादिना॥ भेदाभेदेन—द्वौ कल्पौ। अत्यन्तभेदः—तृतीयः कल्पः॥ नन्वत्यन्ताभेदकल्पः किमिति नोक्तः, तत्राह—अत्यन्तेति॥ कल्पत्रये किं दूषणमिति पृच्छति—यद्येवमिति॥ कल्पद्वयेऽपि दोषान्तरमाह—विकारावयवपक्षयोश्चेति॥ विकारावयवरूपजीवविशिष्टस्य ब्रह्मणः स्थिरत्वाद् जीवानां गत्यागती न स्याताम्। न ह्यचलातिस्थूलपाषाणस्थयोर्मण्डूकपाषाणावयवयोश्चलनमस्तीत्यर्थः॥ अस्माकं त्वज्ञानात् कल्पितोपाधिभिर्गत्यागतिविभ्रम इति भावः॥ तृतीय-

भामती।

वाम्नायमानं तदर्थमेवोच्यत इत्युपपत्तिः। 'तद्विजिज्ञासस्व' इति च श्रुतिः। तस्माच्छ्रुत्युपपत्तिभ्यां निरस्तसमस्तविशेषब्रह्मप्रतिपादनपरोऽयमाम्नायो न तूत्पत्त्यादिप्रतिपादनपरः। तस्मान्न गतिस्तात्त्विकी। अपि चेयं गतिर्न विचारं सहत इत्याह—गतिकल्पनायां चेति। अन्यानन्यत्वाश्रयावयवविकारपक्षौ। अन्यो वात्यन्तम्। अथ कस्मादात्यन्तिकमनन्यत्वं न कल्प्यत इत्यत आह—अत्यन्ततादात्म्य इति। मृदात्मतया हि स्वभावेन घटादयो भावास्तद्विकारा व्याप्ताः, तदभावे न भवन्ति शिंशपेव वृक्षत्वाभाव इति। विकारावयवपक्षयोश्च तद्वतः सह विकारावयवैः स्थिरत्वादचलत्वाद्ब्रह्मणः संसारलक्षणं गमनं विकारावयवयोरनुपपन्नम्। न हि स्थिरात्मकमस्थिरं भवति। अन्यानन्यत्वे अपि चैकस्य विरोधादसंभवन्ती

आनन्दगिरीय-न्यायनिर्णयः।

अतश्चेति। इतश्च परविषये न गतिरित्याह—न तस्येति। न तस्मादिति माध्यंदिनश्रुत्या निषेधश्रुतेरन्यार्थत्वमाशंक्योक्तं स्मारयति—तदिति। गन्तव्यरूपालोचनया गतिरयुक्तेत्युक्तम्। अधुना गन्तृरूपालोचनयाऽपि सा न युक्तेति वक्तुं विकल्पयति—गतीति। अन्यानन्यत्वमाश्रित्याद्यौ विकल्पावत्यन्तभेदमाश्रित्यान्त्य इति भेदः। आत्यन्तिकमनन्यत्वं किमिति न विकल्प्यते तत्राऽऽह—अत्यन्तेति। कल्पत्रयेऽपि दोषजिज्ञासया पृच्छति—यदीति। पक्षत्रयेऽपि दोषमाह—उच्यत इति। आद्यमनूद्य प्रत्याह—यदीति। प्रथमपक्षस्योत्थानमेव नास्तीत्याह—एकदेशेति। उक्तदोषसाम्याद् द्वितीयं निराह—विकारेति। नित्यप्राप्तत्वं दृष्टान्तेन स्पष्टयति—न हीति। विपक्षे दोषमाह—परित्यागे वेति। पक्षद्वयेऽपि दोषान्तरमाह—विकारेति। ब्रह्म सविकारं सावयवं चेष्टं तस्य सह विकारैरवयवैश्च निश्चलत्वात्कुतो जीवानां संसारगमनरूपं चलनं न हि स्थिरात्मनामस्थिरत्वं युक्तम-

अथान्य एव जीवो ब्रह्मणः सोऽणुर्व्यापी मध्यमपरिमाणो वा भवितुमर्हति । व्यापित्वे गमनानुपपत्तिः । मध्यमपरिमाणत्वे चानित्यत्वप्रसङ्गः । अणुत्वेऽपि कृत्स्नशरीरवेदनानुपपत्तिः । प्रतिषिद्धे च्चाणुत्वमध्यमपरिमाणत्वे विस्तरेण पुरस्तात् । परस्माच्चान्यत्वे जीवस्य "तत्त्वमसि" [ छां० ६ । ८–१६ ] इत्यादिशास्त्रबाधप्रसङ्गः । विकारावयवपक्षयोरपि समानो दोषः ॥ विकारावयवयोस्तद्वतोऽनन्यत्वाददोष इति चेत् ॥ न ॥ मुख्यैकत्वानुपपत्तेः । सर्वेषु चैतेषु पक्षेष्वनिर्मोक्षप्रसंगः । संसार्यात्मत्वानिवृत्तेः । निवृत्तौ वा स्वरूपनाशप्रसङ्गः । ब्रह्मात्मत्वानभ्युपगमात् ॥ यत्तु कैश्चिज्जल्प्यते नित्यनैमित्तिकानि कर्माण्यनुष्ठीयन्ते प्रत्यवायानुत्पत्तये । काम्यानि प्रतिषिद्धानि च परिह्रियन्ते स्वर्गनरकानवाप्तये । सांप्रतदेहोपभोग्यानि च कर्माण्युपभोगेनैव क्षप्यन्ते इति । अतो

रत्नप्रभा ।

कल्पमनूद्य विकल्प्य दूषयति—**अथेत्यादिना** ॥ अभेदश्रुतिविरोधरूपो दोषो मम नास्तीति भेदवाद्याह—**विकारावयवयोरिति** ॥ भिन्नयोरभेदोऽमुख्यो न युक्तः । विरोधादिति परिहरति—**नेति**॥ किञ्च पक्षत्रयमप्ययुक्तम्, संसारित्वस्य तात्त्विकजीवभावस्य नाशे जीवस्वरूपनाशप्रसङ्गात् । न चास्माभिरिव त्वया ब्रह्मात्मत्वं जीवस्य तात्त्विकरूपमङ्गीकृतम् । यदस्य संसारनाशेऽपि नाशो न स्यादित्याह—**सर्वेष्विति** ॥ ननु किं ब्रह्मत्वेन संसाराभावः किन्तु—**मोक्षः** । स च कर्माभावमात्रेण सेत्स्यतीति कर्मजडानां मतमुद्भाव्य निरस्यति—**यत्त्वित्यादिना** ॥

भामती ।

इति भावः । **अथान्य एव जीवो ब्रह्मणः** । तया च ब्रह्मण्यसंसरत्यपि जीवस्य संसारः कल्पत इति । एतद्विकल्प्य दूषयति—**सोऽणुरिति** ॥ **मध्यमपरिमाणत्व इति** । मध्यमपरिमाणानां घटादीनामनित्यत्वदर्शनात् । **न** ॥ **मुख्यैकत्वेति** । भेदाभेदयोर्विरोधिनोरेकत्रासंभवाद्बुद्धिव्यपदेशभेदादर्थभेदः । अयुतसिद्धतयोपचारेणाभिन्नमुच्यत इत्यमुख्यमस्यैकत्वमित्यर्थः । अपि च जीवानां ब्रह्मावयवत्वपरिणामात्यन्तभेदपक्षेषु तात्त्विकी संसारितेति मुक्तौ स्वभावहानाज्जीवानां विनाशप्रसङ्गः । ब्रह्मविवर्तत्वे तु ब्रह्मैवैषां स्वभावः प्रतिबिम्बानामिव बिम्बं तच्चाविनाशीति न जीवविनाश इत्याह—**सर्वेष्वेतेष्विति** । मतान्तरमुपन्यस्यति दूषयितुम्—**यत्तु कैश्चिज्जल्प्यते** विनैव ब्रह्मज्ञानं **नित्यनैमित्तिकानीति**। यथा हि कफनिमित्तो ज्वर उपात्तस्य कफस्य विशोषणादिभिः प्रक्षये कफान्तरोत्पत्तिनिमित्तदध्यादिवर्जने प्रशान्तोऽपि न पुनर्भवति । एवं कर्मनिमित्तो बन्ध उपात्तानां कर्मणामुपभोगात्प्रक्षये प्रशाम्यति । कर्मान्तराणां च बन्ध-

आनन्दगिरीय–न्यायनिर्णयः ।

न्यानन्यत्वं च विरुद्धत्वान्नोपगन्तुं शक्यमित्यर्थः । तृतीयमनुवदति—**अथेति** । तं त्रेधा विकल्प्य दूषयति—**सोऽणुरित्यादिना** । अनित्यत्वप्रसङ्गो घटादिषु तथादृष्टेरिति शेषः । पक्षद्वयानुपपत्तिं तर्कपादे वियत्पादे चोक्तां स्मारयति—**प्रतिषिद्धे चेति** । अन्यत्वपक्षे श्रुतिविरोधं दोषान्तरमाह—**परस्माच्चेति** । पूर्वोक्तेऽपि पक्षद्वये श्रुतिविरोधस्य तुल्यत्वमाह—**विकारेति** । तयोस्तद्वतोऽन्यत्ववदनन्यत्वस्यापि भावान्नेति शङ्कते—**विकारेति** । भेदाभेदयोर्विरोधिनोरेकत्रायोगाद्बुद्धिव्यपदेशभेदाद्विकारावयवयोस्तद्वतो भेदे सत्ययुतसिद्धत्वादुपचारेणाभेदोक्तिरित्यमुख्यं जीवस्य ब्रह्मैक्यं स्यादित्याह—**नेति** । किंच, पक्षत्रयेऽपि संसारित्वस्य तात्त्विकत्वात्तस्याऽऽत्यन्तिकनाशे जीवरूपनाशाद्युक्तं पक्षत्रयमपीत्याह—**सर्वेष्विति** । संसारित्वे निवृत्ते सिद्धान्तवन्न जीवरूपनाशप्रसक्तिरित्याशंक्याऽऽह—**ब्रह्मेति** । संसारस्य कर्मनिमित्तत्वात्तदभावेऽभावान्मुक्तिरनायाससिद्धेति मतं दर्शयति—**यत्त्विति** । देहान्तरप्रतिसंधानं तेन संबन्धस्तद्ग्रहणमिति यावत् । एवंवृत्तस्य नित्याद्यनु-

वर्तमानदेहपातादूर्ध्वं देहान्तरप्रतिसन्धानकारणाभावात्स्वरूपावस्थानलक्षणं कैवल्यं विनापि ब्रह्मात्मतयैवंवृत्तस्य सेत्स्यतीति ॥ तदसत् ॥ प्रमाणाभावात् । न ह्येतत्, शास्त्रेण केनचित्प्रतिपादितम् । मोक्षार्थी इत्थं समाचरेदिति ॥ स्वमनीषया त्वेतत्तर्कितम् । यस्मात्कर्मनिमित्तः संसारः, तस्मान्निमित्ताभावान्न भविष्यतीति । न चैतत्तर्कयितुं शक्यते । निमित्ताभावस्य दुर्ज्ञानत्वात् । बहूनि कर्माणि जात्यन्तरसञ्चितानीष्टानिष्टविपाकान्येकैकस्य जन्तोः सम्भाव्यन्ते । तेषां विरुद्धफलानां युगपदुपभोगासम्भवात्कानिचिल्लब्धावसराणीदं जन्म निर्मिमते। कानिचित्तु देशकालनिमित्तप्रतीक्षाण्यासत इति ॥ अतस्तेषामवशिष्टानां सांप्रतेनोपभोगेन क्षपणासम्भवान्न यथावर्णितचरितस्यापि वर्तमानदेहपाते देहान्तरनिमित्ताभावः शक्यते निश्चेतुम् । कर्मशेषसद्भावसिद्धिश्च-"तद्य इह रमणीयचरणास्ततः शेषेण" [ छां० ५ । १० । ७ ] इत्यादिश्रुतिस्मृतिभ्यः ॥ स्यादेतत्-नित्यनैमित्तिकानि तेषां क्षेपकाणि भविष्यन्तीति ॥ तन्न ॥ विरोधाभावात् ॥ सति हि विरोधे क्षेप्यक्षेपकभावो

रत्नप्रभा ।

तदिति ॥ एवंवृत्तं मोक्षहेतुरित्यस्मिन् अर्थे मानाभावादित्यर्थः ॥ तर्क एव मानमित्यत आह—न चैतत्तर्कयितुमिति ॥ ननु तवाप्येतत् तर्कमात्रम् । एकस्मिन् जन्मन्यनेकविरुद्धफलानां कर्मणां भोगायोगादस्त्ववशिष्टं कर्म जन्मान्तरस्य निमित्तमित्याशंक्य तत्र मानमाह—कर्मशेषसद्भावसिद्धिश्चेति ॥ सन्त्वनारब्धफलानि पुण्यपापानि । तेषां नित्याद्यनुष्ठानेन क्षयात् न जन्मान्तरमिति शंकते—स्यादेतदिति ॥ पुण्येन पुण्यस्य न नाशः । अविरोधात् । अन्यथाऽतिप्रसङ्गात् । पापस्यापि सर्वात्मना पुण्यनाश्यत्वे मानं नास्तीति सञ्चितपुण्यपापाभ्यां जन्मान्तरं दुर्वारमित्याह—तन्नेत्यादिना ॥ क्रियमाणनित्यादिनापि जन्म स्यात् । "कर्मणा पितृलोकः" इत्यविशेष-

भामती ।

हेतूनामननुष्ठानात्कारणाभावे कार्यानुपपत्तेर्बन्धाभावात्स्वभावसिद्धो मोक्ष आरोग्यमिव । उपात्तदुरितनिवर्हणाय च नित्यनैमित्तिककर्मानुष्ठानाद्दुरितनिमित्तप्रत्यवायो न भवति । प्रत्यवायानुत्पत्तौ च स्वस्थस्वान्तो न निषिद्धान्याचरेदिति । तदेतद्दूषयति—तदसत् । प्रमाणाभावादिति । शास्त्रं खल्वस्मिन्प्रमाणं तच्च मोक्षमाणस्यात्मज्ञानमेवोपदिशति न तूक्तमाचारम् । न चात्रोपपत्तिः प्रभवति, संसारस्यानादितया कर्माशयस्याप्यसंख्येयस्यानियतविपाककालस्य भोगेनोच्छेत्तुमशक्यत्वादित्याह—न चैतत्तर्कयितुमपीति । चोदयति—स्यादेतदिति । नित्येति । परिहरति—तन्न विरोधाभावादिति । यदि हि नित्यनैमित्ति-

आनन्दगिरिय-न्यायनिर्णयः ।

ष्ठानवतो वर्णितचरितस्य मुमुक्षोरित्यर्थः । किं शास्त्रादेव मुच्यते किंवा तर्कादिति विकल्प्याऽऽद्यं प्रत्याह—तदसदिति । प्रमाणाभावं प्रकटयति—न हीति । द्वितीयमनुवदति—स्वेति । स्वोत्प्रेक्षितमपि युक्त्यादेष्टव्यमिति पक्षं प्रत्याह—न चेति । निमित्ताभावस्य दुर्ज्ञानत्वं प्रपञ्चयति—बहूनीति । सर्वाण्येव तानि मुमुक्षुदेहे भोगेन क्षपितानीत्याशंक्याऽऽह—तेषामिति । अनुपभुक्तकर्मणां देहान्तरसंभवान्नित्याद्यनुष्ठानवतोऽपि तत्त्वज्ञानं विना नास्ति मोक्षाशेति फलितमाह—इत्यत इति । ऐकभविकत्वात्कर्माशयस्य वर्तमानभोगेन क्षपणसंभवान्मोक्षसिद्धिरित्याशंक्य कृतात्ययेऽनुशयवानित्यत्रैकभविकत्वं दूषितमिति मत्वाऽऽह—कर्मेति । अनारब्धफलानामपि कर्मणां नित्यनैमित्तिकेभ्यो निवृत्तेरुक्तचरितस्य मुक्तिरिति शंकते—स्यादेतदिति। किं तानि सुकृतानामपि क्षेपकाण्याहो दुरितानामेवेति विकल्प्याऽऽद्यं निरस्यति—नेत्यादिना। तेषां सुकृतविरोधित्वे [illegible] तेषामपि तैर्विनाशादिति मन्वानो विरोधं विवृणोति—सतीति

भवति । न च जन्मान्तरसञ्चितानां सुकृतानां नित्यनैमित्तिकैरस्ति विरोधः । शुद्धिरूपत्वाविशेषात । दुरितानां त्वशुद्धिरूपत्वात्सति हि विरोधे भवतु क्षेपणं, न तु तावता देहान्तरनिमित्ताभावसिद्धिः । सुकृतनिमित्तत्वोपपत्तेः दुश्चरितस्याप्यशेषक्षपणानवगमात । न च नित्यनैमित्तिकानुष्ठानात्प्रत्यवायानुत्पत्तिमात्रं, न पुनः फलान्तरोत्पत्तिरिति प्रमाणमस्ति । फलान्तरस्याप्यनुनिष्पादिनः सम्भवात ॥ स्मरति ह्यापस्तम्बः— तद्यथा—"आम्रे फलार्थे निर्मिते छायागन्धावनूत्पद्येते एवं धर्मंश्चर्यमाणमर्था अनूत्पद्यन्ते" इतिं ॥ न चासति सम्यग्दर्शने सर्वात्मना काम्यप्रतिषिद्धवर्जनं जन्मप्रायणान्तराले केनचित्प्रतिज्ञातुं शक्यम् । सुनिपुणानामपि सूक्ष्मापराधदर्शनात । संशयितव्यं तु भवति । तथापि निमित्ताभावस्य दुर्ज्ञानत्वमेव । न चानभ्युपगम्यमाने ज्ञानगम्ये ब्रह्मात्मत्वे कर्तृत्वभोक्तृत्वस्वभावस्यात्मनः कैवल्यमाकांक्षयितुं शक्यम् ।

---

रत्नप्रभा ।

श्रुतेः । स्मृतेश्चेत्याह—न च नित्येति ॥ प्रत्यवायनिरासार्थे नित्याद्याचारे सति अनु पश्चात् फलान्तरं निष्पद्यत इत्यत्र दृष्टान्तः—तद्यथेति ॥ निर्मिते आरोपिते सतीत्यर्थः ॥ तथापि काम्यादिकर्मसत्तानिश्चयो नास्त्यत आह—संशयितव्यं त्विति ॥ ज्ञानं विना देहपाते मोक्ष एवेति निश्चयालाभात् त्वत्पक्षे क्षतिरिति भावः ॥ ब्रह्मभिन्नस्य जीवस्य कर्तृत्वादिस्वभावस्य मोक्षाशापि न युक्तेत्याह—न चेति ॥

भामती ।

कानि कर्माणि सुकृतमपि दुष्कृतमिव निर्वहेयुस्ततः काम्यकर्मोपदेशा दत्तजलाञ्जलयः प्रसज्येरन् ॥ न ह्यस्ति कश्चिच्चातुर्वर्ण्ये चातुराश्रम्ये वा यो न नित्यनैमित्तिकानि कर्माणि करोति । तस्मान्नैषां सुकृतविरोधितेति । अभ्युच्चयमात्रमाह—न च नित्यनैमित्तिकानुष्ठानादिति ॥ न चासति सम्यग्दर्शने इति । सम्यग्दर्शी हि विरक्तः काम्यनिषिद्धे वर्जयन्नपि प्रमादादुपनिपतिते तेनैव सम्यग्दर्शनेन क्षपयति । ज्ञानपरिपाके च न करोत्येव अज्ञस्तु निपुणोऽपि प्रमादात्करोति । कृते च न क्षपयितुं क्षमत इति विशेषः । न चानभ्युपगम्यमाने ज्ञानगम्ये ब्रह्मात्मत्व इति । कर्तृत्वभोक्तृत्वे समाक्षिप्तक्रियाभोगे,

आनन्दगिरीय—न्यायनिर्णयः ।

ति । द्वितीयमङ्गीकरोति—दुरितानां त्विति । तर्हि तन्निवर्हणे तावतैव देहान्तराभावान्मुक्तेरैक्यधीवैयर्थ्यं नेत्याह—न त्विति । केवलसुकृतारब्धं शरीरं नास्त्यप्रियस्यापि दुरितफलस्य तत्र दर्शनादित्याशंक्याऽऽह—दुश्चरितस्येति । किंच मुमुक्षुभिरनुष्ठितनित्यनैमित्तिकवशादपि देहान्तरसंभवान्नोक्तचरितस्य मुक्त्याशाऽस्तीत्याह—न चेति । तेषामानुषङ्गिकफलत्वं संभावितमपि न प्रमितमित्याशंक्याऽऽहे—स्मरतीति । निर्मिते आरोपिते सतीति यावत् । किंच काम्यनिषिद्धकर्मशेषवशादपि देहान्तरसिद्धेर्नोक्तचरितस्य मुक्तिरित्याह—न चेति ।अस्मदादीनां स्थूलधियां सम्यग्धियं विना सर्वात्मना काम्यादिवर्जनेऽपि ज्ञानादशेषकाम्यादिवर्जनसिद्धिरित्याशंक्याऽऽह—सुनिपुणानामिति।प्रमादो भवत्येवेत्यनियमान्नो जन्मान्तरमित्याशंक्याऽऽह—संशयितव्यमिति । निमित्तसद्भावेऽपि निश्चयाभावे जन्मान्तरमनिश्चितमसिद्धमेव स्यादित्याशंक्याऽऽह—तथाऽपीति। तस्य दुर्ज्ञानत्वे जन्मान्तराभावस्यापि तथात्वात्त्वत्पक्षासिद्धिरित्यर्थः। किं चाऽऽत्मनि कर्तृत्वादि स्वाभाविकमारोपितं वाऽऽद्येऽपि तत्कार्यं तच्छक्तिर्वा स्वभावः।प्रथमे तस्मिन्निवृत्ते स्थिते वा मुक्तिर्नाऽऽद्यः स्वभावस्य निवर्तयितुमशक्यत्वात्।न द्वितीयो व्याघातादित्याह—न चेति।द्वितीयं शङ्कते—

अग्न्यौष्ण्यवत् स्वभावस्यापरिहार्यत्वात् ॥ स्यादेतत्–कर्तृत्वभोक्तृत्वकार्यमनर्थो, न तच्छक्तिः ॥ तेन शक्त्यवस्थानेऽपि कार्यपरिहारादुपपन्नो मोक्ष इति ॥ तच्च न शक्तिः ॥ तद्भावे कार्यप्रसवस्य दुर्निवारत्वात्। अथापि स्यात्–न केवला शक्तिः कार्यमारभतेऽनपेक्ष्यान्यानि निमित्तानि ॥ अत एकाकिनी सा स्थितापि नापराध्यतीति ॥ तच्च न ॥ निमित्तानामपि शक्तिलक्षणेन सम्बन्धेन नित्यसम्बद्धत्वात् ॥ तस्मात्कर्तृत्वभोक्तृत्वस्वभावे सत्यात्मन्यसत्यां विद्यागम्यायां ब्रह्मात्मतायां न कथञ्चन मोक्षप्रत्याशाऽस्ति । श्रुतिश्च–"नान्यः पन्था विद्यतेऽयनाय" [श्वेता० ३ । ८] इति ज्ञानादन्यं मोक्षमार्गं वारयति । परस्मादनन्यत्वेऽपि जीवस्य सर्वव्यवहारलोपप्रसङ्गः । प्रत्यक्षादिप्रमाणाप्रवृत्तेरिति चेत् ॥ न ॥ प्राक् प्रबोधात्स्वप्नव्यवहारवत्तदुपपत्तेः । शास्त्रञ्च "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" [बृ० (२ । ४ । १४) (४ । ५ । १५)] इत्यादिनाऽप्रबुद्धविषये प्रत्यक्षादिव्यवहारमुक्त्वा

रत्नप्रभा ।

कर्तृत्वादिरूपं कार्यं न स्वभावः । किन्तु तच्छक्तिरिति शङ्कते–स्यादेतदिति ॥ कार्यगम्यायाः शक्तेः कार्यस्यासत्यतानुत्पादे सत्त्वमयुक्तम् । अतः शक्तिसत्त्वे तद्विषयस्य कार्यस्यादृष्टदेशकालादिनिमित्तानां चात्मनां शक्तिद्वारा नित्यसम्बद्धत्वान्मोक्षो न स्यादिति परिहरति–तच्चेत्यादिना ॥ मोक्षसिद्ध्यर्थं जीवस्य ब्रह्मत्वाङ्गीकारे संसारानुपपत्तिमाशङ्क्य अज्ञानादुपपत्तिमसकृदुक्तां स्मारयति–परस्मादित्यादिना ॥

भामती ।

ते चेदात्मनः स्वभावावधारिते न त्वारोपिते ततो न शक्यं अपनेतुम् । न हि स्वभावाद्भावोऽवरोपयितुं शक्यो भावस्य विनाशप्रसङ्गात् । न च भोगोऽपि सत्स्वभावः शक्योऽसत्कर्तुं, नो खलु नीलमनीलं शक्यं शक्रेणापि कर्तुं तदिदमुक्तं–स्वभावस्यापरिहार्यत्वादिति । समारोपितस्य त्वनिर्वचनीयस्य तत्स्वभावस्य शक्यस्तत्त्वज्ञानेनावरोपः कर्तुं सर्पस्येव रज्जुतत्त्वज्ञानेनेति भावः । भावमिममविद्वान्परिचोदयति–स्यादेतत्–कर्तृत्वभोक्तृत्वकार्यमिति । अप्रकाशितभावो यथोक्तमेव समाधत्ते–तच्च नेति । कर्तृत्वभोक्तृत्वयोर्निमित्तसंबन्धस्य च शक्तिद्वारेण नित्यत्वाद्भविष्यति कदाचिदेषां समुदाचारो यतः सुखदुःखे भोक्ष्येते इति संभावनातः कुतः कैवल्यनिश्चय इत्यर्थः । भूयोनिरस्तमपि मतिद्रढिम्ने पुनरुपन्यस्य दूषयति–परस्मादनन्यत्वेऽपीति । शेषमतिरोहितार्थम् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ (९) ॥

आनन्दगिरीय–न्यायनिर्णयः ।

स्यादिति । किं शक्तेरस्ति कार्यारम्भकत्वमुत न । आद्येऽपि सा निरपेक्षा कार्यमारभते सापेक्षा वा? नाऽऽद्य इत्याह–तच्च नेति । कल्पान्तरमुत्थापयति–अथापीति । अदृष्टादिनिमित्ताभावादुपभोगलक्षणोऽनर्थो नास्तीत्यर्थः । कर्तृत्वभोक्तृत्वयोर्निमित्तसंबन्धस्याऽऽत्मनोऽदृष्टादिनिमित्तैः संबन्धस्य च शक्तिद्वारा सदातनत्वात्कदाचित्तस्या भोगारम्भकत्वसंभवान्न मुक्तिरित्याह–तच्चेति । सा चेत्कार्यं नाऽऽरभते तर्हि तस्या असत्त्वमेव कार्यैकगम्यत्वादिति मत्वा शक्तेर्वा कार्यस्य वा स्वाभाविकत्वनिरासमुपसंहरति–तस्मादिति । आत्मनि कर्तृत्वादेरारोपितत्वे ज्ञानादेव तन्निवृत्तेर्न कर्मसाध्या मुक्तिरित्युपेत्य ज्ञानमात्रायत्ता सेत्यत्र मानमाह–श्रुतिश्चेति । प्रासङ्गिके परमते पराकृते मोक्षसिद्धये जीवस्य ब्रह्मात्मत्वोपगमेऽपि तुल्याऽनुपपत्तिरिति शङ्कते–परस्मादिति । तत्त्वज्ञानात्प्रागूर्ध्वं वा व्यवहाराभावः ? नाऽऽद्यः, स्वप्नवदुपपत्तेरित्याह–न प्रागिति । तत्रैव शास्त्रानुमतिमाह–शास्त्रं चेति । अप्रबुद्धविषय इति [illegible] द्वितीये ... शास्त्रावष्टम्भेना-

पुनः प्रबुद्धविषये "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येद्" [ बृ० (२।४।१४) ( ४।५।१५ ) ] इत्यादिना तदभावं दर्शयति ॥ तदेवं परब्रह्मविदो गन्तव्यादिविज्ञानस्य बाधितत्वान्न कथञ्चन गतिरुपपादयितुं शक्या ॥ किंविषयाः पुनर्गतिश्रुतय इति ॥ उच्यते ॥ सगुणविद्याविषयां भविष्यन्ति । तथाहि–क्वचित्पञ्चाग्निविद्यां प्रकृत्य गतिरुच्यते । क्वचित्पर्यङ्कविद्यां, क्वचिद्वैश्वानरविद्याम् । यत्रापि ब्रह्म प्रकृत्य गतिरुच्यते "यथा प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" [ छां० ४।१०।५ ] इति "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म" [ छां० ८।१।१ ] इति । तत्रापि च वामनीत्वादिभिः, सत्यकामादिभिश्च,—गुणैः सगुणस्यैवोपास्यत्वात्सम्भवति गतिः, न क्वचित्परब्रह्मविषया गतिः श्राव्यते । तद्यथा–गतिप्रतिषेधः श्रावितः–"न तस्य प्राणा उत्क्रामन्ति" [ बृ० ४।४।८ ] इति । "ब्रह्मविदाप्नोति परम्" [ तै० उ० २।१।१ ] इत्यादिषु तु सत्यप्याप्नोतेर्गत्यर्थत्वे वर्णितेन न्यायेन देशान्तरप्राप्त्यसम्भवात्स्वरूपप्रतिपत्तिरेवेयमविद्याध्यारोपितनामरूपप्रपञ्चप्रविलयापेक्षयाऽभिधीयते । "ब्रह्मैव सन्ब्रह्माप्येति" [ बृ० ४।४।६ ] इत्यादि च द्रष्टव्यम् ॥ अपि च परविषया गतिर्व्याख्यायमाना प्ररोचनाय वा स्यादनुचिन्तनाय वा । तत्र प्ररोचनं तावद्ब्रह्मविदो न गत्युक्त्या क्रियते । स्वसंवेद्येनैवाऽव्यवहितेन विद्यासमर्पितेन स्वास्थ्येन तत्सिद्धेः । न च नित्यसिद्धनिःश्रेयसनिवेदनस्यासाध्यफलस्य विज्ञानस्य गत्यनुचिन्तने काचिदप्यपेक्षोपपद्यते ॥ तस्मादपरविषयैव गतिः ।

---

रत्नप्रभा ।

प्रासङ्गिकं परिहृत्य परमं प्रकृतमुपसंहरति–तदेवमिति ॥ ननु परविद्यायामप्याप्नोतिपदेन गतिः श्रुतेत्यत आह–ब्रह्मविदाप्नोतीति ॥ वैफल्याच्च गतेर्न परविषयत्वमित्याह–अपि चेति ॥ अनुचिन्तनपक्षं प्रत्याह–न च नित्यसिद्धेति ॥ कथं तर्हि कैश्चित् परविषयत्वं गतेरुक्तमित्याशंक्य भ्रान्त्येत्याह–

भामती ।–०

आनन्दगिरीय–न्यायनिर्णयः ।

ऽऽचष्टे–पुनरिति । प्रासङ्गिकं परिहृत्य प्रकृतं निगमयति–तदेवमिति । परमतं निराकृत्य पूर्वोक्तं स्वमतं प्रश्नपूर्वकं विवृणोति–किमित्यादिना । गतिश्रुतीनां सगुणधीविषयत्वं विशदयति–तथाहीति । ब्रह्म प्रकृत्यापि गतेरुक्तेस्तस्या युक्तं परविषयत्वमित्याशंक्याऽऽह–यत्रापीति । सगुणविद्याविषये गतिश्रुतिमुक्त्वा परविद्याविषये तदभावमाह–नेति । ब्रह्मत्वाविशेषात्तत्रापि गतिरेवैवेत्याशंक्याऽऽह–यथेति । आप्नोतेर्गत्यर्थत्वात्परविद्याधिकारेऽपि गतिश्रुतिरस्तीत्याशंक्याऽऽह–ब्रह्मविदिति । ब्रह्मणः सर्वगतत्वं सर्वान्तरत्वं सर्वात्मत्वमित्यादिवर्णितो न्यायः । आप्नोतिस्तर्हि परविषये कथमित्याशंक्याऽऽह–स्वरूपेति । इतश्च परविषये नास्ति गतिरित्याह–अपि चेति । तदेव दर्शयितुं विकल्पयति–परेति । प्ररोचनपक्षं प्रत्याह–तत्रेति । स्वसंवेद्यत्वे हेतुमाह–अव्यवहितेनेति । स्वापादिव्यावृत्त्यर्थं विशिनष्टि–विद्येति । अनुचिन्तनपक्षं प्रतिक्षिपति–न चेति । पक्षद्वयनिरासफलं दर्शयति–तस्मादिति । कथं तर्हि केषां-

तत्र परापरब्रह्मविवेकानवधारणेनापरस्मिन्ब्रह्मणि प्रवर्तमाना गतिश्रुतयः परस्मिन्नध्यारोप्यन्ते। किं द्वे ब्रह्मणी-परमपरञ्चेति॥ बाढं द्वे॥ "एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारः"[प्रश्नो०५।२]इत्यादिदर्शनात्॥ किं पुनः-परं ब्रह्म, किमपरमिति॥उच्यते॥ यत्राविद्याकृतनामरूपादिविशेषप्रतिषेधेनास्थूलादिशब्दैर्ब्रह्म व्यपदिश्यते, तत्परम्। तदेव यत्र नामरूपाविशेषेण केनचिद्विशिष्टमुपासनायोपदिश्यते "मनोमयः प्राणशरीरो भारूपः" [(छां० ३।१४।२) (मैत्रे० २।६)] इत्यादिशब्दैः, तदपरम्॥ नन्वेवं सत्यद्वितीयश्रुतिरुपरुध्येत॥ न॥ अविद्याकृतनामरूपोपाधिकतया परिहृतत्वात्। तस्य त्वपरब्रह्मोपासनस्य तत्सन्निधौ श्रूयमाणं "स यदि पितृलोककामो भवति" [छां० ८।२।१] इत्यादिजगदैश्वर्यलक्षणं संसारगोचरमेव फलं भवति। अनिवर्तितत्वादविद्यायाः। तस्य च देशविशेषावबद्धत्वात्तत्प्राप्त्यर्थं गमनमविरुद्धम्। सर्वगतत्वेऽपि चात्मन आकाशस्येव घटादिगमने बुद्ध्याद्युपाधिगमने गमनप्रसिद्धिरित्यवादिष्म "तद्गुणसारत्वात्" [व्या० सू० २।३।२९] इत्यत्र। तस्मात् "कार्यं बादरिः" [व्या० सू० ४।३।७] इत्येष एव पक्षः स्थितः। "परं जैमिनिः" [व्या० सू० ४।३।१२] इति तु पक्षान्तरप्रतिपादनमात्रप्रदर्शनं प्रज्ञाविकासनायेति द्रष्टव्यम्॥ १४॥ इति कार्याधिकरणम् (५)॥

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च १५(६)॥

स्थितमेतत्-कार्यविषया गतिर्न परविषयेति। इदमिदानीं सन्दिह्यते-

रत्नप्रभा।

तत्र परापरेति॥ प्रश्नपूर्वकं निवेदनस्य असाध्यफलस्य गत्यनुचिन्तने काचिदपेक्षा उपपद्येत॥ तस्मादपरविषया गतिः॥ प्रश्नपूर्वकं परापरब्रह्मविभागं वदन्नपरब्रह्मणि गतेरर्थवत्त्वमाह—किं द्वे इत्यादिना॥ व्यापिनो जीवस्य कथं गतिः, तत्राह-सर्वगतत्वेऽपीति॥ १४॥ (५)॥ एवं गन्तव्यं निरूप्य गन्तॄन्निर्धारयति-अप्रतीकेति॥ "स एवैनान् ब्रह्म गमयति" इत्यविशेषश्रुतेः, तत्क्रतुन्यायाच,-संशयमाह-इदमिति॥ अनियमाधिकरणे तत्त्वविदोऽन्यत्र सर्वोपासकानां मार्गोपसंहार उक्तः॥ इदानी-

भामती।

अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात्तत्क्रतुश्च। 'अब्रह्मक्रतवो यान्ति यथा

आनन्दगिरीय-न्यायनिर्णयः।

चिदाचार्याणां परविषयत्वोपगमो गतेरित्याशंक्य सूक्ष्मदृष्टिशून्यत्वादित्याह-तत्रेति। अपसिद्धान्तं शंकते-किमिति। सोपाधिकनिरुपाधिकत्वेन ब्रह्मणोभेदश्रुतिवैरूप्यात्तेन नापराद्धान्तापत्तिरित्याह-बाढमिति। परापरविभागं प्रश्नपूर्वकं विशदयति-किमित्यादिना। उक्तमेवापसिद्धान्तपरिहारं चोद्यद्वारा स्फोरयति-नन्वित्यादिना। परापरविभागस्य मिथ्यात्वे किं स्यादित्याशंक्यापरब्रह्मणो गन्तव्यत्वार्थं तदुपास्तिफलमाह-तस्येति। अपरब्रह्मोपासनस्योक्तफलत्वेऽपि कथं तद्विषये गतिरित्याशंक्याऽऽह-तस्य चेति। तस्य गन्तव्यत्वेऽपि गन्तृत्वमात्मनो विभुत्वादयुक्तमित्याशंक्याऽऽह-सर्वेति। अनिर्वचनीया गतिरनिर्वचनीयसगुणब्रह्मविषयैवोचितेति भावः। परविषये गत्यभावादपरविषये तदुपपत्तेरस्मदुक्तैव पूर्वोत्तरपक्षव्यवस्थेत्युपसंहरति-तस्मादिति॥ १४॥ (५)॥ गन्तव्यविशेषोक्त्यनन्तरं गन्तृविशेषोक्त्यर्थमाह-अप्रतीकालम्बनानिति। संबन्धं वक्तुं वृत्तं कीर्तयति-स्थितमिति। अमानवपुरुषं विषयीकृत्याविशेषश्रुतेस्तत्क्रतुत्वेनागमनमानाच संशयमाह-इदमिति। विद्याफलार्थे देवयाने पथि गन्तृविशेषोक्त्या पादादि-

किं सर्वान्विकारालम्बनानविशेषेणैवामानवः पुरुषः प्रापयति ब्रह्मलोकम्—उत—कांश्चिदेवेति ॥ किं तावत्प्राप्तम् ॥ सर्वेषामेवैषां विदुषामन्यत्र परस्माद्ब्रह्मणो गतिः स्यात् । तथाहि—"अनियमः सर्वेषाम्" [ ब्या० सू० ३ । ३ । ३१ ] इत्यत्राविशेषेणैवैषा विद्यान्तरेष्ववतारितेति ॥ एवं प्राप्ते प्रत्याह—अप्रतीकालम्बनानिति ॥ प्रतीकालम्बनान्वर्जयित्वा सर्वानन्यान्विकारालम्बनान्नयति ब्रह्मलोकमिति बादरायणाचार्यो मन्यते । न ह्येवमुभयथाभावाभ्युपगमे कश्चिद्दोषोऽस्ति । अनियमन्यायस्य प्रतीकव्यतिरिक्तेष्वप्युपासनेषूपपत्तेः । तत्क्रतुश्चास्योभयथाभावस्य सम-

रत्नप्रभा ।

अप्रतीकोपासकानामेव मार्गः, न सर्वेषां विकारोपासकानामित्युभयथाभावोक्तौ पूर्वोक्तविरोधः स्यात् ॥ तस्मादुपासकमात्रस्योत्तरमार्गसिद्धिरिति पूर्वपक्षफलं, सिद्धान्ते तूभयथाभावसिद्धिः॥ अदोषादिति सूत्रे पदच्छेदः। अविरोधादित्यर्थः ॥ "अनियमः सर्वेषाम्" इति सूत्रे सर्वशब्दस्य प्रतीकोपासकान्यपरत्वादिति भावः ॥ यद्यपि प्रतीकध्यायिनां पितृयाणतृतीयस्थानयोरप्रवेशादर्चिरादिमार्गो वाच्यः । तथापि तेषां विद्युत्पर्यन्तमेव गमनमस्तु, न ब्रह्मप्राप्तिः, अब्रह्मक्रतुत्वाभावात् । यो यद् ध्यायति, स तत्प्राप्नोति—इति हि—तत्क्रतुन्यायः—श्रुतिमूलः । प्रतीकेषु च नामादिषु ध्येयेषु ब्रह्मणो गुणत्वात् न प्राधान्येन ध्येयत्वमस्ति ।

भामती ।

पञ्चाग्निविद्यया । ब्रह्मलोकं प्रयास्यन्ति प्रतीकोपासकास्तथा ॥' सन्ति हि मनो ब्रह्मेत्युपासीतेत्याद्याः प्रतीकविषया विद्याः । तद्वन्तोऽप्यर्चिरादिमार्गेण कार्यब्रह्मोपासका इव गन्तुमर्हन्ति 'अनियमः सर्वासाम्' इत्यविशेषेण विद्यान्तरेष्वपि गतेरवधारणात् । न चैषां परब्रह्मविदामिव गत्यसंभव इति । न च ब्रह्मक्रतव एव ब्रह्मलोकभाजो नातत्क्रतव इत्यप्येकान्तः । अतत्क्रतूनामपि पञ्चाग्निविदां तत्प्राप्तेः । न चैते न ब्रह्मक्रतवो मनो ब्रह्मेत्युपासीतेत्यादौ सर्वत्र ब्रह्मानुगमेन तत्क्रतुत्वस्यापि संभवात् । फलविशेषस्य ब्रह्मलोकप्राप्तावप्युपपत्तेः, तस्य सावयवतयोत्कर्षनिकर्षसंभवादिति प्राप्ते प्रत्युच्यते—'उत्तरोत्तरभूयस्त्वादब्रह्मक्रतुभावतः । प्रतीकोपासकान्ब्रह्मलोकं नामानवो नयेत् ॥' भवतु पञ्चाग्निविद्यायामब्रह्मक्रतूनामपि ब्रह्मलोक-

आनन्दगिरीय—न्यायनिर्णयः ।

संगतिः । पूर्वपक्षे सर्वेषूपासनेष्वनियमन्यायाद्विकारालम्बनेषु विशेषासिद्धिः । सिद्धान्ते प्रतीकोपासनातिरिक्तेषु तत्क्रतुन्यायाद्विशेषसिद्धिरिति मत्वा विमृश्य पूर्वपक्षयति—किं तावदिति । परस्माद्ब्रह्मणोन्यत्रेति कार्यब्रह्मोक्तिः । तत्र गुणोपसंहारस्थानियमाधिकरणन्यायं हेतुत्वेन स्मारयति—तथाहीति । प्रतीकालम्बनानामपि पितृयाणतृतीयस्थानासंबन्धित्वात्प्रतीकविशेषत्वेन ब्रह्मणोऽपि तैर्ध्यातत्वाद्ये वै के चेत्यादिवाक्येन च तेषां ब्रह्मादेतान्ब्रह्म गमयतीत्येतच्छब्देन तेषामपि परामर्शसिद्धेर्विद्यान्तरेषु च गतेरवतारितत्वादविशेषेणामानवः पुरुष एतान्सर्वानेव विकारालम्बनान्ब्रह्मलोकं नयतीति प्राप्तमित्यर्थः । पूर्वपक्षमनुभाष्य सिद्धान्तप्रतिज्ञामवतार्य व्याकरोति—एवमिति । आश्रयान्तरप्रत्ययस्याऽऽश्रयान्तरे क्षेपो हि प्रतीको यथा नाम ब्रह्मेत्यादौ नामादिषु ब्रह्माश्रयस्य प्रत्ययस्य प्रक्षेपः । तदालम्बनाः प्रतीकालम्बनास्तान्विहाय विकारालम्बनान्सगुणविद्यावतः सर्वानिति यावत् । यस्त्वनियमन्यायादविशेषेण सर्वेषां विकारालम्बनानामेषा गतिरिति तद्रूपयन्नुभयथाऽदोषादित्येतद्व्याचष्टे—न हीति । प्रतीकालम्बनान्न नयति विकारालम्बनांस्तु नयतीत्युभयथात्वोपगमे सत्यनियमः सर्वासामिति न्यायस्य न कश्चिद्दोषः सर्वशब्दस्य प्रतीकालम्बनातिरिक्तविषयत्वसिद्धेरित्यर्थः । तत्क्रतुश्चेति पदं पदान्तराध्याहारेण व्याकरोति—तत्क्रतुरिति । तस्य हेतुत्वं

१ सर्वासामिति पाठान्तरम् । २ उभयथा भावः—उभयार्थत्वम् ।

र्थको हेतुर्द्रष्टव्यः । यो हि ब्रह्मक्रतुः, स ब्राह्ममैश्वर्यमासीदेदिति श्लिष्यते "तं यथायथोपासते तदेव भवन्ति" इति श्रुतेः । न तु प्रतीकेषु ब्रह्मक्रतुत्वमस्ति । प्रतीकप्रधानत्वादुपासनस्य ॥ नन्वब्रह्मक्रतुरपि ब्रह्म गच्छतीति श्रूयते । यथा-पञ्चाग्निविद्यायां "स एनान्ब्रह्म गमयति" [ छां० ४ । १५ । ५ ] इति । भवतु यत्रैवमाहत्यवाद उपलभ्यते । तदभावे त्वौत्सर्गिकेण तत्क्रतुन्यायेन ब्रह्मक्रतूनामेव तत्प्राप्तिर्नेतरेषामिति गम्यते ॥ १५ ॥

## विशेषं च दर्शयति ॥ १६ ॥

इति श्रीमद्व्यासमहर्षिप्रणीते शारीरकमीमांसादर्शने तुरीयाध्यायस्य तृतीयः पादः ॥

नामादिषु प्रतीकोपासनेषु पूर्वस्मात्पूर्वस्मात्फलविशेषमुत्तरस्मिन्नुत्तरस्मिन्नुपासने दर्शयति-"यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति" [ छां० ७ । १ । ५ ] "वाग्वाव नाम्नो भूयसी" [ छां० ७ । २ । १ ] "यावद्वाचो गतं तत्रास्य यथाकामचारो भवति" [ छां० ७ । २ । २ ] "मनो वाव वाचो भूयः" [ छां० ७ । ३ । १ ] इत्यादिना । स चायं फलविशेषः प्रतीकतन्त्रत्वादुपासनानामुपपद्यते । ब्रह्मतन्त्रत्वे तु ब्रह्मणोऽविशिष्टत्वात्कथं फलविशेषः स्यात् ॥

---

रत्नप्रभा ।

अस्य च न्यायस्य पञ्चाग्निविद्यायामाहत्यवादात् प्रत्यक्षवचनाद्बाध इष्ट इति सूत्रभाष्यार्थः ॥ १५ ॥ किञ्च प्रतीकतारतम्येन फलतारतम्यश्रुतेर्न प्रतीकध्यायिनां ब्रह्मप्राप्तिरित्याह-विशेषं चेति ॥ तस्मादसति

भामती ।

नयनं, वचनात् । किमिव हि वचनं न कुर्यात् नास्ति वचनस्यातिभार इह तु तदभावात् । 'तं यथायथोपासते तदेव भवति' इति श्रुतेरौत्सर्गिक्यान्नासति विशेषवचनेऽपवादो युज्यते । न च प्रतीकोपासको ब्रह्मोपास्ते सत्यपि ब्रह्मेत्यनुगमे । किंतु नामादिविशेषं ब्रह्मरूपतया । तथा खल्वयं नामादितन्त्रो न ब्रह्मतन्त्रः । आश्रयान्तरप्रत्ययस्याश्रयान्तरे प्रक्षेपः प्रतीक इति हि वृद्धाः । ब्रह्माश्रयश्च प्रत्ययो नामादिषु प्रक्षिप्त इति नामतन्त्रः । तस्मान्न तदुपासको ब्रह्मक्रतुः किंतु नामादिक्रतुः । न च ब्रह्मक्रतुत्वे नामाद्युपासकानामविशेषादुत्तरोत्तरोत्कर्षः संभवी । न च ब्रह्मक्रतुस्तदवयवक्रतुर्येन तदवयवापेक्षयोत्कर्षो वर्ण्येत । तस्मात्प्रतीकालम्बनान्विदुषो वर्जयित्वा सर्वानन्यान्विकारालम्बनान्नयत्यमानवो ब्रह्मलोकम् । न ह्येवमुभयथा-

आनन्दगिरीय-न्यायनिर्णयः ।

साधयति-यो हीति । तत्र मानमाह-तमिति । प्रतीकालम्बनैरपि तद्विशेषणत्वेन ब्रह्म ध्यातमित्युक्तमित्याशंक्याऽऽह-न त्विति । ब्रह्मदृष्ट्या नामादीनामेव प्रतीकानां प्राधान्येनानुचिन्तनान्न प्रतीकालम्बनानां ब्रह्मक्रतुत्वमित्यर्थः । तत्क्रतुस्तद्भवतीति न्यायस्य व्यभिचारं शङ्कते-नन्विति । न्यायस्यौत्सर्गिकत्वेऽपि विशेषवचनादपवादस्तत्राऽऽह-भवत्विति । आहत्यवादः साक्षादपवादकः ॥ १५ ॥ इतोऽपि प्रतीकोपासनानां न ब्रह्मगतिरित्याह-विशेषं चेति । उत्कर्षापकर्षवत्त्वात्फलस्य प्रतीकोपासनानां नैकरूपब्रह्मक्रतुत्वं तत्प्राप्तिर्वा हेतूपचयापचयातिरेकेण फले तदयोगादिति व्याचष्टे-नामादिष्विति । फलविशेषोपलम्भेऽपि किमित्युपासनानां प्रतीकतन्त्रत्वं तत्राऽऽह-स चेति । प्रतीकानामुत्कर्षनिकर्षवत्त्वादित्यर्थः । विपक्षे फलविशेषदृष्टेरश्लिष्टत्वमाह-ब्रह्मेति । प्रतीकालम्बनातिरिक्तानां विकारालम्बनानां

तस्मान्न प्रतीकालम्बनानामितरैस्तुल्यफलत्वमिति ॥ ४ ॥ ३ ॥ १६ ॥
इत्यप्रतीकालम्बनाधिकरणम् ॥ ६ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणपरमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये सगुणब्रह्मविद उत्तरमार्गनिरूपणं नाम चतुर्थाध्यायस्य तृतीयः पादः समाप्तः ॥ ४ ॥ ३ ॥

---

रत्नप्रभा ।

वचने ब्रह्मध्यायिन एव ब्रह्मगन्तार इति सिद्धम् ॥ ४ ॥ ३ ॥ १६ ॥ ( ६ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शलभाष्यव्याख्यायां (भाष्य ) रत्नप्रभायां चतुर्थस्याध्यायस्य तृतीयः पादः समाप्तः ॥ ४ ॥ ३ ॥

भामती ।

भाव उभयथार्थत्वे काश्चित्प्रतीकालम्बनान्न नयति विकारालम्बनान्विदुषस्तु नयतीत्यभ्युपगमे कश्चिद्दोषोऽस्ति 'अनियमः सर्वासाम्' इत्यस्य न्यायस्येति सर्वमवदातम् ॥ ४ ॥ ३ ॥ १६ ॥ ( ६ ) ॥

इति श्रीवाचस्पतिमिश्रविरचिते भगवत्पादभाष्यविभागे भामत्यां चतुर्थस्याध्यायस्य तृतीयः पादः॥४॥३॥

आनन्दगिरीय—न्यायनिर्णयः ।

ब्रह्मलोकगतिरिति स्थिते फलितमुपसंहरति—तस्मादिति ॥ ४ ॥ ३ ॥ १६ ॥ ( ६ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि(ज्ञान)विरचिते शारीरकमीमांसाभाष्यविभागे न्यायनिर्णये चतुर्थाध्यायस्य तृतीयः पादः ॥ ४ ॥ ३ ॥

॥ इति चतुर्थाध्यायस्य सगुणब्रह्मविद उत्तरमार्गनिरूपणाख्यस्तृतीयः पादः ॥



# चतुर्थाध्याये चतुर्थः पादः ४.



## सम्पद्याविर्भावः स्वेनशब्दात् ॥ १ ॥ ४ ॥ ४ ॥ (१) ॥

**"एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रूयते। तत्र संशयः-किं देवलोकाद्युपभोगस्थानेष्विवाऽऽगन्तुकेन केनचिद्विशेषेणाभिनिष्पद्यते-आहोस्विद्-आत्ममात्रेणेति ॥ किन्तावत्प्राप्तम् ॥ स्थानान्तरेष्विवागन्तुकेन केनचिद्रूपेणापि निष्पत्तिः स्यात् । मोक्षस्यापि फलत्वप्रसिद्धेः । अभिनिष्पद्यत इति चोत्पत्तिपर्यायत्वात् । स्वरूपमात्रेण चेदभिनिष्पत्तिः पूर्वास्ववस्था-**

रत्नप्रभा ।

ॐ ब्रह्मणे नमः । पूर्वपादे ब्रह्मोपासकानां कार्यब्रह्मप्राप्तिरुक्ता । सम्प्रति तेषामैश्वर्यविशेषं ब्राह्मलौकिकं[1] पादस्योत्तरार्द्धेन प्रपञ्चयिष्यन्नादौ अभ्यर्हितपरविद्याप्राप्तं निर्विशेषब्रह्मभावमाह-**सम्पद्याविर्भावः स्वेन शब्दादिति** ॥ निर्गुणविद्याफलवाक्यमुदाहृत्य स्वशब्दस्य स्वीयागन्तुकरूपस्वात्मरूपवाचित्वाभ्यां संशयमाह-**एवमिति** ॥ पूर्वपक्षे मोक्षस्य स्वर्गादविशेषः, सिद्धान्ते विशेष इति फलम् । तत्र मोक्षः, आगन्तुकः, फलत्वात्, स्वर्गवदिति न्यायोपेतयाऽभिनिष्पत्तिश्रुत्या पूर्वपक्षमाह-**किमित्यादिना** ॥ स्वशब्दश्रुतिबाधितो न्यायः । अभिनिष्पत्तिश्च साक्षात्कारवृत्त्यभिप्राया बन्धध्वंसजन्मनि औपचारिक्येवेति मत्वा

भामती ।

**संपद्याविर्भावः स्वेनशब्दात्** । 'प्रागभूतस्य निष्पत्तौ कर्तृत्वं न सतो यतः। फलत्वेन प्रसिद्धेश्च मुक्ते रूपान्तरोद्भवः॥' अभूतस्य घटादेर्भवनं निष्पत्तिर्न पुनरत्यन्तसतोऽसतो वा । न जातु गगनतत्कुसुमे निष्पद्येते। स्वरूपावस्थानं चेदात्मनो मुक्तिर्न सा निष्पद्येत, तस्य गगनवदत्यन्तसतः प्रागसत्त्वाभावात्। न चास्य बन्धाभावो निष्पद्यते, तस्य तुच्छस्वभावस्य कार्यत्वेनातुच्छत्वप्रसङ्गात्। फलत्वप्रसिद्धेश्च मोक्षस्याकार्यस्य फलत्वानवकल्पनादागन्तुना रूपेण केनचिदुत्पत्तौ स्वेनेति प्राप्तमनूद्यत इति प्राप्तेऽभिधीयते-'संभवत्यर्थवत्त्वे हि नानर्थक्यमुपेयते । बन्धस्य सदसत्त्वाभ्यां रूपमेकं विशिष्यते ॥' अनधिगतावबोधनं हि प्रमाणं शाब्दमगत्या कथंचिदनुवादतया वर्ण्यते । सकलसांसारिकधर्मापेतं तु प्रसन्नमात्मरूपमप्रसन्नात्तस्मादेव रूपाद्व्या-

आनन्दगिरीय-न्यायनिर्णयः ।

आद्ये पादे निर्गुणविद्याफलैकदेशो बन्धनिवृत्तिरुक्ता । द्वितीये सगुणनिर्गुणफलाप्तिशेषत्वेन तद्विदोरुत्क्रान्त्यनुत्क्रान्ती चिन्तिते । तृतीये सगुणविद्याफलोपयोगितया गतिगन्तव्यगन्तृविशेषा निरूपिताः । संप्रति चतुर्थे पादे परविद्याफलैकदेशो ब्रह्मभावाविर्भावः सगुणविद्याफलं च सर्वेश्वरतुल्यभोगत्वमवधारयिष्यते। तत्रापरविद्याप्राप्यमुक्त्वा परविद्याप्राप्यमाह-**संपद्येति** । निर्गुणविद्याफलमुदाहर्तुं तद्विषयवाक्यमनुदाहरति-**एवमेवेति** । स्वशब्दस्य स्वकीयवाचित्वेनाऽऽगन्तुकत्वभानात्स्वरूपवचनत्वेनानागन्तुकत्वबुद्धेश्च संशयमाह-**तत्रेति** । अत्र च निर्गुणब्रह्मविद्याफलस्य ब्रह्मभावाविर्भावस्य नित्यसिद्धत्वोक्त्या पादादिसंगतिः । पूर्वपक्षे मोक्षस्य स्वर्गादेरविशेषः । सिद्धान्ते तस्य ततो विशेषोऽस्तीति गृहीत्वा विमृश्य पूर्वपक्षमाह-**किमिति** । विमतमागन्तुकं फलत्वात्स्वर्गवदिति मत्वा हेतुमाह-**मोक्षस्येति** । अभिनिष्पत्तिशब्दादपि प्रागभूतस्य निष्पत्तिः सिध्यतीति हेत्वन्तरमाह-**अभिनिष्पद्यत इति** । सिद्धान्तेऽपि स्यादभिनिष्पत्तिरौपचारिकीत्याशंक्याऽऽह-**स्वरूपेति** । उक्तानुमानादभिनिष्पत्तिशब्दाच्च सिद्धमर्थं निगमयति-

१ ब्रह्मलोके भवं-ब्राह्मलौकिकम् ।

सु स्वरूपानपायाद्विभाव्येत ॥ तस्माद्विशेषेण केनचिदभिनिष्पद्यत इति॥ एवं प्राप्ते ब्रूमः ॥ केवलेनैवात्मनाविर्भवति, न धर्मान्तरेणेति ॥ कुतः ॥ स्वेन रूपेणाभिनिष्पद्यते इति स्वशब्दात् । अन्यथा हि स्वशब्देन विशेषणमनवक्लृप्तं स्यात् ॥ नन्वात्मीयाभिप्रायः स्वशब्दो भविष्यति ॥ न ॥ तस्यावचनीयत्वात् । येनैव हि केनचिद्रूपेणाभिनिष्पद्यते, तस्यैवात्मीयत्वापत्तेः स्वेनेति विशेषणमनर्थकं स्यात् । अनात्मवचनतायां त्वर्थवत्केवलेनैवात्मरूपेणाभिनिष्पद्यते, नागन्तुकेनापररूपेणापीति ॥ १ ॥ कः पुनर्विशेषः पूर्वास्ववस्थास्विह च स्वरूपानपायसाम्ये सति इत्यत आह—

## मुक्तः प्रतिज्ञानात् ॥ २ ॥

योऽत्र "अभिनिष्पद्यते" इत्युक्तः स सर्वबन्धविनिर्मुक्तः शुद्धेनैवात्मनाऽवतिष्ठते पूर्वत्र "अन्धो भवति" [ छां० ८ । ९ । १ ] "अपि रोदितीव" [ छां० ८ । १० । २ ] "विनाशमेवापीतो भवति" [ छां० ८ । ११ । १ ] इति च अवस्थात्रयकलुषितेनात्मनेत्ययं विशेषः ॥ कथं पुनरवगम्यते—मुक्तोऽयमिदानीं भवतीति प्रतिज्ञानादित्याह । तथाहि—"एतन्त्वेव ते भूयोऽनुव्याख्यास्यामि" [ छां० ८ । ९ । ३ ( ८ । १० । ४ ) ( ८ । ११ । ३ ) ] इत्यवस्थात्रयदोषविहीनमात्मानं व्याख्येयत्वेन प्रतिज्ञाय "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" [ छां० ८ । १२ । १] इति चोपन्यस्य "स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" [ छां० ८ । ३ । ४ ] इति चोपसंहरति ॥ तथाऽऽख्यायिकोपक्रमेऽपि "य आ-

---

रत्नप्रभा ।

सिद्धान्तयति—एवमिति ॥ मोक्षस्य फलत्वेन प्राप्तागन्तुकत्वनिरासार्थः स्वशब्द इति युक्तम् । स्वीयवाचित्वे त्वनर्थकानुवादः स्यादित्यर्थः ॥ १ ॥ सूत्रान्तरं गृह्णाति—कः पुनरिति ॥ जागरिते ह्यान्ध्यादि-

भामती ।

वृत्तमनधिगतमवबोधयन्नानुवादो युज्यते । न चास्य निष्पत्त्यसंभवः, सत इव घटादेः सांव्यवहारिकेण

आनन्दगिरीय—न्यायनिर्णयः ।

तस्मादिति । मुक्तेरागन्तुकत्वमनूद्य सिद्धान्तयति—एवमिति । उक्तेऽनुमाने जीवति कथमनागन्तुकत्वं मुक्तेरित्याह—कुत इति । विशेषणश्रुतिबाध्यमनुमानमित्याह—स्वेनेति । परं ब्रह्म ज्योतिःशब्दितमुपसंपद्य साक्षादनुभूय तेनैव स्वेन रूपेणाऽऽविर्भावोऽवस्थानमित्यनङ्गीकुर्वन्तं प्रत्याह—अन्यथेति । विधान्तरेण स्वशब्दस्यार्थवत्त्वं शङ्कते—नन्विति । अज्ञातज्ञापकत्वे संभवत्यनुवादकत्वायोगान्नैवमित्याह—न तस्येति। तदेवावचनीयत्वं साधयति—येनेति । परपक्षे विशेषणानर्थक्यमुक्त्वा स्वपक्षे तदर्थवत्त्वमाह—आत्मेति । अर्थवत्त्वं स्फुटयति—केवलेनेति ॥ १ ॥ सूत्रान्तरमाकांक्षाद्वाराऽवतारयति—कः पुनरिति । सूत्रस्थं मुक्तशब्दं योजयति—योऽत्रेति । पूर्वत्रापि वस्तुतोऽस्यैवंभूतत्वान्न विशेषसिद्धिरित्याशंक्यावस्थात्रयेऽपि यथाक्रमं व्यावहारिकरूपेणासदृशत्वमाह—पूर्वत्रेति । जागरिते पुत्रादावहंममाभिमानादन्धवत्परवशो भवति स्वप्ने तन्नाशदृष्ट्या वासनामयं रोदनाद्यनुभवति सुषुप्ते विशेषज्ञानशून्यश्छिद्रातुरज्ञानमात्रपरवशस्तिष्ठतीत्यवस्थात्रयेण बन्धापरनाम्ना कालुष्येण दूषितं यदात्मरूपं तेनाऽऽत्मा संसारदशायामवतिष्ठते । मोक्षे तु निर्मृष्टनिखिलदुःखानुषङ्गप्रद्योतमानपरिशुद्धपरमानन्दरूपेणेति विशेष इत्यर्थः । सूत्रावयवं शङ्कापूर्वकमादत्ते—कथमिति। प्रतिज्ञातमेव प्रकटयति—तथाहीति । प्रकृतोपयोगिप्रतिज्ञान्तरमाह—तथेति। फलत्वादागन्तुक-

त्माऽपहतपाप्मा" [ छां० ८ । ७ । १ ] इत्यादिमुक्तात्मविषयमेव प्रतिज्ञानम् । फलत्वसिद्धिरपि मोक्षस्य बन्धननिवृत्तिमात्रापेक्षा, नापूर्वोपजननापेक्षा । यदप्यभिनिष्पद्यत इत्युत्पत्तिपर्यायत्वं, तदपि पूर्वावस्थापेक्षम् । यथा–रोगनिवृत्तावरोगोऽभिनिष्पद्यत इति तद्वत ॥ तस्माददोषः ॥ २ ॥

## आत्मा प्रकरणात् ॥ ३ ॥

कथं पुनर्मुक्त इत्युच्यते "यावता परं ज्योतिरुपसम्पद्य" [ ( छां० ८ । ३ । ४ ) ( मैत्रे० २।२ ) ] इति कार्यगोचरमेवैनं श्रावयति । ज्योतिःशब्दस्य भौतिकज्योतिषि रूढत्वात् । न चानतिवृत्तो विकारविषयात्कश्चिद्विमुक्तो भवितुमर्हति । विकारस्यार्तत्वप्रसिद्धेरिति ॥ नैष दोषः ॥ यत आत्मैवात्र ज्योतिःशब्देनावेद्यते । प्रकरणात् । "य आत्माऽपहतपाप्मा विरजो विमृत्युः" [ छां० ८ । ७ । १ ] इति । प्रकृते परस्मिन्नात्मनि नाकस्माद् भौतिकं ज्योतिः शक्यं ग्रहीतुम् । प्रकृतहान्यप्रकृतप्रक्रियाप्रसङ्गात् । ज्योतिः शब्दस्त्वात्मन्यपि दृश्यते–"तद्देवा ज्योतिषां ज्योतिः" [ बृ० ४ । ४ । १६ ] इति । प्रपञ्चितं चैतत् "ज्योतिर्दर्शनाद्" [ व्या० सू० १ । ३ । ४० ] इत्यत्र ॥ ३ ॥ इति संपद्याविर्भावाधिकरणम् ॥ १ ॥

---

रत्नप्रभा ।

देहधर्मवान् भवति । स्वप्ने तु हत इव केनचित् ॥ अपि च पुत्रादिनाशाद्रोदितीव भवति । सुषुप्तौ तु विशेषाज्ञानाद्विनष्ट इवेति । बन्धदशायां कलुषितात्मना तिष्ठति । मोक्षे तु विगलिताखिलदुःखः परितः प्रद्योतमानपूर्णानन्दात्मना अवतिष्ठत इति महान् विशेष इत्यर्थः ॥२॥ आ०॥ कार्यगोचरमेवैनमिति । कार्यं–ज्योतिः, तत् प्राप्तमित्यर्थः । कार्यं प्राप्तोऽपि मुक्तः किं न स्यादित्यत आह—न चानतिवृत्त

भामती ।

प्रमाणेन बन्धविगमस्यापि निष्पत्तेर्लोकसिद्धत्वात् । विचारासहतया त्वसिद्धिरुभयत्रापि तुल्या । न ह्यसदुत्पत्तुमर्हतीत्यसकृदावेदितम् । अन्धो भवतीति स्वप्नावस्था दर्शिता बाह्येन्द्रियव्यापाराभावात् । रोदितीव जाग्रदवस्था दुःखशोकाद्यात्मकत्वात् । विनाशमेवापीत इति सुषुप्तिः । एवकारश्चेवार्थेऽनवधारणे ॥ १ ॥ ॥ २ ॥ आत्मा प्रकरणात् । ननु ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति पौर्वापर्यश्रवणात्

आनन्दगिरीय–न्यायनिर्णयः ।

त्वं मुक्तेरुक्तं तत्राऽऽह–फलत्वेति । शब्दसामर्थ्यात्तदागन्तुकत्वमुक्तमनूद्य दूषयति—यदपीति । हेतोरन्यथासिद्धत्वे शब्दस्य चौपचारिकत्वे मुक्तेरनागन्तुकत्वं युक्तमित्युपसंहरति–तस्मादिति ॥२॥ ज्योतिरुपसंपन्नस्य मुक्तत्वायोगमाशंक्य परिहरति–आत्मेति । सूत्रंव्यावर्त्य माह–कथमिति । कार्यगोचरत्वे हेतुमाह–ज्योतिःशब्दस्येति । ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति पौर्वापर्यश्रुतेर्मुक्तेरन्या ज्योतिःसंपत्तिरित्याशंक्य तदुपसंपद्यत इत्युक्त्वा स्वेनाभिनिष्पत्तिरित्यश्रवणादध्याहार्ये च तदुपसंपद्येत्युक्तिवैयर्थ्याज्ज्योतिषो भूतत्वेन कार्यत्वादत्यागे कुतो मुक्तिरित्याह–न चेति । विकारगोचरस्यापि मुक्तत्वमाशंक्याथ यदल्पं तन्मर्त्यमित्यादिश्रुतिमाश्रित्याऽऽह–विकारस्येति । चोद्योत्तरत्वेन सूत्रं योजयति–नेत्यादिना । प्रकरणमेव दर्शयति–य आत्मेति । अकस्मात्प्रकरणविच्छेदं विनेति यावत् । प्रकरणादपि प्रयोगाभावे कथमात्मार्थो ज्योतिःशब्दस्तत्राऽऽह–ज्योतिःशब्द इति । अत्रापेक्षितं न्यायं पूर्वोक्तं सूचयन्पुनरुक्तिं प्रत्याह–प्रपञ्चितं चेति ॥ ३ ॥ विदुषः स्वरूपेऽवस्थितस्यापि वैशेषिकादिवद्ब्रह्मणोऽन्यत्वमाशंक्याऽऽह–

# अविभागेन दृष्टत्वात् ॥ ४ ॥ (२) ॥

परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते यः स किं परस्मादात्मनः पृथगेव भवति–उत–अविभागेनैवावतिष्ठत इति वीक्षायां "स तत्र पर्येति" [ छां० ८ । १२ । ३ ] इत्यधिकरणाधिकर्तव्यनिर्देशात् "ज्योतिरुपसम्पद्य" [ छां० ८ । ३ । ४ ] इति च कर्तृकर्मनिर्देशाद्भेदेनैवावस्थानमिति यस्य मतिः, तं व्युत्पादयति–अविभक्त एव परेणात्मना मुक्तोऽवतिष्ठते ॥ कुतः ॥ दृष्टत्वात ॥ तथाहि–"तत्त्वमसि" [ छां० ६ । ८–१६ ] "अहं ब्रह्मास्मि" [ बृ० १ । ४ । १० ] "यत्र नान्यत्पश्यति" [ छां० ७ । २४ । १ ] "न तु तद्द्वितीयमस्ति" "ततोऽन्यद्विभक्तं यत्पश्येद्" [ बृ० ४ । ३ । २३ ] इत्येवमादीनि वाक्यान्यविभागेनैव परमात्मानं दर्शयन्ति । यथादर्शनमेव च फलं युक्तम् । तत्क्रतुन्यायात् । "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति" "एवं मुनेर्विजानतः आत्मा भवति गौतमः" [ कठ० ४ । १५ ] इति चैवमादीनि मुक्तस्वरूपनिरूपणपराणि वाक्यान्यविभागमेव दर्शयन्ति । नदीसमुद्रादिनिदर्शनानि च । भेदनिर्देशस्त्वभेदेऽप्युपचर्यते । "स भगवः कस्मिन्प्रतिष्ठितः" [ छां० ७ । २४ । १ ] इति "स्वे महिम्नि" [ छां० ७ । २४ । १ ] इति, "आत्मरतिरात्मक्रीडः" [ छां० ७ । २५ । २ ] इति चैवमादिदर्शनात् ॥ ४ ॥ इत्यविभागेन दृष्टत्वाधिकरणम् ॥ २ ॥

---

रत्नप्रभा ।

इति ॥ ३ ॥ ( १ ) ॥ **अविभागेन दृष्टत्वात्** ॥ स्वरूपस्थितमुपजीव्य वादिविवादाद् ब्रह्मभेदाभेदसंशये सति अत्यन्तभेदं पूर्वपक्षमुक्त्वा सिद्धान्तमाह–**यस्येति** ॥ ४ ॥ ( २ ) ॥

भामती ।

स्वरूपनिष्पत्तेरन्या ज्योतिरुपसंपत्तिः तथा च भौतिकत्वेऽपि न मोक्षव्याघातः । भवेदेतदेवं यदि ज्योतिरुपसंपद्य तत् परित्यजेदिति श्रूयेत । तदध्याहारेऽपि तत्प्रतिपादनवैयर्थ्यं तदपरित्यागे च ज्योतिषैव स्वेन रूपेणेति गम्यते । तस्य च भूतत्वे विकारत्वान्मरणधर्मकत्वप्रसिद्धेरमुक्तित्वमिति प्राप्ते प्रत्युच्यते–ज्योतिष्पदस्य मुख्यत्वं भौतिके यद्यपि स्थितम् । तथापि प्रक्रमाद्वाक्यादात्मन्येवात्र युज्यते ॥ परं ज्योतिरिति हि परपदसमभिव्याहारात्परत्वस्य चानपेक्षस्य ब्रह्मण्येव प्रवृत्ते ज्योतिषि चापरे किंचिदपेक्ष्य परत्वात्परं ज्योतिरिति वाक्यादात्मैवात्र गम्यते । प्रकरणं चोक्तम् । यत् संपद्य निष्पद्यत इति तन्मुखं व्यादाय स्वपितीतिवत् । तस्माज्ज्योतिरुपसंपन्नो मुक्त इति सूक्तम् ॥ ३ ॥ ( १ ) ॥ **अविभागेन दृष्टत्वात्** । यद्यपि जीवात्मा ब्रह्मणो न भिन्न इति तत्रतत्रोपपादितं तथापि स तत्र पर्येतीत्याधाराधेयभावव्यपदेशस्य संपत्तृसंपत्तव्यभावव्यप-

आनन्दगिरीय–न्यायनिर्णयः ।

**अविभागेनेति** । विषयोक्तिपूर्वकं वादिविप्रतिपत्तेः संशयमाह–**परमिति** । अत्र मुक्तस्य ब्रह्मणोऽत्यन्ताभेदवादात्पादादिसंगतिः । पूर्वपक्षे जीवेश्वरयोरात्यन्तिकमन्यत्वम् । सिद्धान्ते तयोरात्यन्तिकमभिन्नत्वमङ्गीकृत्य पूर्वपक्षयति–**इति वीक्षायामिति** । सिद्धान्तसूत्रमवतार्य व्याचष्टे–**इति यस्येति** । दृष्टत्वमेव स्फुटयति–**तथाहीति** । परमात्मन्यैक्येन दृष्टत्वे फलितमाह–**यथेति** । फलावस्थावादिवाक्येष्वविभागस्य दृष्टत्वादपि मुक्तस्य परस्मादात्यन्तिकमैक्यमिति व्याख्यान्तरमाह–**यथेति** । उक्तभेदनिर्देशस्य तर्हि का गतिस्तत्राऽऽह–**भेदेति** । उपचारो गतिरित्यत्र तथाऽन्यत्र दृष्टत्वं हेतुमाह–**स इति** ॥ ४ ॥ ( २ ) ॥ ब्रह्मात्मतां प्राप्तस्यापि जी-

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ (३) ॥

स्थितमेतत्-"स्वेन रूपेण" [ छां० ८ । ३ । ४ ] इत्यत्रात्ममात्रस्वरूपेणाभिनिष्पद्यते नागन्तुकेनापररूपेणेति । अधुना तु तद्विशेषबुभुत्साया मभिधीयते । स्वमस्य रूपं-ब्राह्ममपहतपाप्मत्वादि सत्यसङ्कल्पत्वावसानं तथा सर्वज्ञत्वं सर्वेश्वरत्वञ्च, तेन स्वेन रूपेणाभिनिष्पद्यत इति जैमिनिराचार्यो मन्यते ॥ कुतः ॥ "उपन्यासादिभ्यः" तथात्वावगमात् । तथाहि-"एष आत्मापहतपाप्मा" [ छां० ८ । ७ । १ ] इत्यादिना "सत्यकामः सत्यसंकल्पः" इत्येवमन्तेनोपन्यासेनैवमात्मकतामात्मनो बोधयति । तथा "स तत्र पर्येति जक्षन्क्रीडन्रममाणः" [ छां० ८ । १२ । ३ ] इत्यैश्वर्यरूपमावेदयति । "तस्य सर्वेषु लोकेषु कामचारो भवति" [ छां० ७ । २५ । २ ] इति च "सर्वज्ञः सर्वेश्वरः" इत्यादिव्यपदेशाश्चैवमुपपन्ना भविष्यन्ति इति ॥ ५ ॥

---

रत्नप्रभा ।

ब्राह्मेण जैमिनिः० ॥ उक्तं ब्रह्मादिस्वरूपमुपजीव्य स किं सत्येन सर्वज्ञत्वादिधर्मेण युक्तस्तिष्ठति-उत-धर्मस्य शशशृङ्गवदत्यन्तासत्त्वात् चिन्मात्रात्मना तिष्ठति-किंवा-वस्तुतश्चिन्मात्रोऽपि जीवान्तरव्यवहारदृष्ट्या कल्पितसर्वज्ञत्वादिमानिति मुनिविप्रतिपत्तेः संशये सति-आद्यं पूर्वपक्षमाह-अधुनेत्यादिना ॥ उक्तपक्षसिद्धिरेव फलं द्रष्टव्यम् । "सोऽन्वेष्टव्यः" इति विध्यर्थ उद्देशः। "य आत्मा" इत्यादिः उपन्यासशब्दार्थः। आदिपदाद् विधिव्यपदेशग्रहः॥ तत्राज्ञातज्ञापको-विधिः, तमाह—तथा स तत्रेति॥ "सर्वज्ञः" इत्यादिस्तु व्यपदेशः । अयं हि नोद्देशः । विध्यभावात् । नापि विधिः । सिद्धवन्निर्देशादित्यर्थः ॥ ५ ॥ सत्यत्वादि-

भामती ।

देशस्य च समाधानार्थमाह ॥४॥(२) ॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः । उपन्यास उद्देशो ज्ञातस्य यथा य आत्माऽपहतपाप्मेत्यादिः । तथाऽज्ञातज्ञापनं विधिः । यथा स तत्र पर्येति जक्षद्रममाण इति, तस्य सर्वेषु लोकेषु कामचारो भवतीत्येतदज्ञातज्ञापनं विधिः । सर्वज्ञः सर्वेश्वर इति व्यपदेशः । नायमुद्देशो विधेयान्तराभावात् । नापि विधिरप्रतिपाद्यत्वात् । सिद्धवद्व्यपदेशात् । तन्निर्वचनसामर्थ्यादयमर्थः प्रतीयते-त एते उपन्यासादयः । एतेभ्यो हेतुभ्यः । "भावाभावात्मकैः रूपैर्माधिकैः परमेश्वरः । मुक्तः संपद्यते स्वैरित्याह स्म किल जैमिनिः ॥" न च चित्स्वभावस्यात्मनोऽभावात्मानोऽपहतपाप्मत्वादयो भावात्मानश्च सर्वज्ञत्वादयो धर्मा अद्वैतं घ्नन्ति । नो खलु धर्मिणो धर्मा भिद्यन्ते, मा भूद्गवाश्ववद्धर्मिधर्मभा-

आनन्दगिरीय-न्यायनिर्णयः ।

वस्य सप्रपञ्चत्वं चोदयति-ब्राह्मेणेति । वृत्तं कीर्तयति-स्थितमिति । विषयसंशयौ दर्शयति-अधुनेति । येन च ब्रह्मरूपेण मुक्तस्यावस्थानं तत्किं सप्रपञ्चमेव किंवा निष्प्रपञ्चमेवाथ वोभयरूपमिति विप्रतिपत्तेः संशये ब्रह्मणो मुक्तोपसृप्यस्य दृष्टिद्वयमाश्रित्योभयरूपत्वोक्त्या पादादिसंगतिः । पूर्वपक्षे सप्रपञ्चत्वश्रुतीनां वा निष्प्रपञ्चत्वश्रुतीनां वा मुख्यार्थत्वसिद्धिः । सिद्धान्ते द्विविधश्रुतीनां दृष्टिद्वयावष्टम्भान्मुख्यार्थत्वोपपत्तिरित्युपेत्य पूर्वपक्षयति-अभिधीयत इति । उपन्यासेन ब्रह्मणः सप्रपञ्चत्वसिद्धिं विवृणोति-तथाहीति । उपन्यासो नामोद्देशः । स चान्यत्र ज्ञातस्यान्यविधानायानुवादः । आदिशब्दार्थविधिं दर्शयति-तथेति । अज्ञातज्ञापनं विधिः । आदिशब्देनोक्तं व्यपदेशमाह-सर्वज्ञ इति । विधेयान्तररहितत्वेनानुद्देश्यस्याप्रतिपाद्यत्वेनाविधेयस्य च सिद्धवदभिधानं व्यपदेशः ॥ ५ ॥ पूर्वपक्षान्तर-

## चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

यद्यप्यपहतपाप्मत्वादयो भेदेनैव धर्मा निर्दिश्यन्ते । तथापि शब्दविकल्पजा एवैते । पाप्मत्वादिनिवृत्तिमात्रं हि तत्र गम्यते चैतन्यमेव त्वस्यात्मनः स्वरूपमिति तन्मात्रेण स्वरूपेणाभिनिष्पत्तिर्युक्ता ॥ तथा च श्रुतिः— "एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः" [बृ० ४।५।१३] इत्येवञ्जातीयकानुगृहीता भविष्यति । सत्यकामत्वादयस्तु यद्यपि वस्तुस्वरूपेणैव धर्मा उच्यन्ते—सत्याः कामा अस्येति ॥ तथाप्युपाधिसम्बन्धाधीनत्वात्तेषां न चैतन्यवत्स्वरूपत्वसम्भवः । अनेकाकारत्वप्रतिषेधात् । प्रतिषिद्धं हि ब्रह्मणोऽनेकाकारत्वं "न स्थानतोऽपि परस्योभयलिङ्गम्" [ व्या० सू० ३ । २ । १० ] इत्यत्र । अत एव च जक्षणादिसंकीर्तनमपि दुःखाभावमात्राभिप्रायं, स्तुत्यर्थमात्मरतिरित्यादिवत् । न हि मुख्यान्येव रतिक्रीडामिथुनान्यात्मनिमित्तानि शक्यन्ते वर्णयितुम् । द्वितीयविषयत्वात्तेषाम् । तस्मान्निरस्ताशेषप्रपञ्चेन प्रसन्नेनाव्यपदेश्येन बोधात्मनाऽभिनिष्पद्यत इत्यौडुलोमिराचार्यो मन्यते ॥ ६ ॥

---

रत्नप्रभा ।

धर्माणां सत्यत्वं दूषयन्नत्यन्तासत्यपक्षमाह—चिति तन्मात्रेणेति ॥ चितिः—चैतन्यम् । शब्दज्ञानाद् यो विकल्पोऽसन् प्रत्ययः । तज्जाः । अत्यन्तमसन्त इति यावत् । अस्वभावरूपधर्माणामसत्त्वं, भावधर्माणां तु सत्त्वमित्याशंक्य तेषामप्यौपाधिकत्वाद् असत्त्वमित्याह—सत्यकामेति ॥ चिन्मात्रे मुक्ते जक्षणादिश्रुतिः कथं, तत्राह—अत एव चेति॥ सर्वधर्मनिषेधादेवेत्यर्थः॥६॥धर्माणां सत्यत्वम,

भामती ।

वाभाव इति जैमिनिराचार्य उवाच ॥ ५ ॥ चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः । अनेकाकारतैकस्य नैकत्वान्नैकता भवेत् । परस्परविरोधेन न भेदाभेदसंभवः ॥ न ह्येकस्यात्मनः पारमार्थिकानेकधर्मसंभवः । ते चेदात्मनो भिद्यन्ते द्वैतापत्तेरद्वैतश्रुतयो व्याहन्येरन् । अथ न भिद्यन्ते तत एकस्मादात्मनोऽभेदान्मिथोऽपि न भिद्येरन् । आत्मरूपवत् । आत्मरूपं वा भिद्येत । भिन्नेभ्योऽनन्यत्वान्नीलपीतरूपवत् । न च धर्मिण आत्मनो न भिद्यन्ते मिथस्तु भिद्यन्त इति साम्प्रतम् । धर्म्यभेदेन तदनन्यत्वेन तेषामप्यभेदप्रसङ्गात् । भेदे वा धर्मिणोऽपि भेदप्रसङ्गादित्युक्तम् । भेदाभेदौ च परस्परविरोधादेकत्राभावान्न संभवत इत्युपपादितं प्रथमे सूत्रे । अभावरूपाणामद्वैताविहन्तृत्वेऽपि तस्य पाप्मादेः काल्पनिकतया तदधीननिरूपणतया तेषामपि काल्पनिकत्वमिति न तात्त्विकी तद्धर्मता श्लिष्यते । एतेन सत्यकामसर्वज्ञसर्वेश्वरत्वादयोऽप्यौपाधिका व्याख्याताः । तस्मान्निरस्ताशेषप्रपञ्चेनाव्यपदेश्येन चैतन्यमात्रात्मनाभिनिष्पद्यमानस्य मुक्तावात्मनोऽर्थशून्यैरेवापहतपाप्मसत्यकामादिशब्दैर्व्यपदेश इत्यौडुलोमिर्मेने । तदिदमुक्तं—शब्दविकल्पजा एवैते अपहतपाप्मत्वादयो न तु सांव्यवहारिका अपीति ॥ ६ ॥

आनन्दगिरीय—न्यायनिर्णयः ।

माह—चिति तन्मात्रेणेति । उपन्यासादिना नानारसत्वे दर्शिते कथंचिदेकरसत्वमित्याशंक्याऽऽह—यद्यपीति । कथं विकल्पमात्रत्वमित्याशंक्य काल्पनिकत्वात्पाप्मादेस्तन्निवृत्तिरूपाणां तेषामपि राहोः शिर इतिवत्काल्पनिकत्वमेवेत्याह—पाप्मत्वादीति । किं तर्हि तस्य वास्तवरूपं तदाह—चैतन्यमिति । तत्र मानमाह—तथा चेति । सत्यकामत्वादीनामपहतपाप्मत्वादिवन्नेतुमशक्यत्वात्कुतो ब्रह्मणश्चैतन्यमात्रतेत्याशंक्याऽऽह—सत्येति । उपाधीनामपि तदभेदाद्वास्तवमेव धर्मत्वमित्याशंक्याऽऽह—अनेकेति । उपन्यासस्यैव विधिव्यपदेशयोर्गतिमाह—अत इति । अनेकाकारत्वस्य निषिद्धत्वादेवेति यावत् । दृष्टान्तेऽपि मुख्यत्वमाशंक्योक्तम्—न हीति। उपन्यासादीनामन्यथासिद्धत्वे श्रुतिसिद्धमर्थमुपसंहरति—तस्मादिति ॥६॥

**एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥**

एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि व्यवहारापेक्षया पूर्वस्याप्युपन्यासादिभ्योऽवगतस्य ब्राह्मस्यैश्वर्यरूपस्याप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यते ॥ ७ ॥ इति ब्राह्माधिकरणम् ॥ ३ ॥

**संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥ (४) ॥**

हार्दविद्यायां श्रूयते–"स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति [ छां० ८। २। १ ] इत्यादि ॥ तत्र संशयः–किं संकल्प एव केवलः पित्रादिसमुत्थानहेतुः–उत–निमित्तान्तरसहित इति। तत्र सत्यपि "संकल्पादेव" इति श्रवणे लोकवन्निमित्तान्तरापेक्षा युक्ता। यथा–लोकेऽस्मदादीनां संकल्पाद्, गमनादिभ्यश्च हेतुभ्यः पित्रा-

---

रत्नप्रभा।

अत्यन्तासत्त्वं चेति पक्षद्वयमयुक्तम्। अद्वैतश्रुतीनां सर्वज्ञत्वादिश्रुतिव्यवहारयोश्च बाधापाताद् ॥ अतस्तृतीयपक्षः श्रेयानिति सिद्धान्तयति–**एवमपीति** ॥ अत्र केचिन्मुह्यन्ति–अखण्डचिन्मात्रज्ञानात् मुक्तस्य अज्ञानाभावात् कुत आज्ञानिकधर्मयोग इति ॥ ते इत्थं बोधनीयाः। ये ईश्वरधर्माः, त एव चिदात्मनि मुक्ते जीवान्तरैर्व्यवह्रियन्ते इति। न च मूलाविद्यैक्यात् तन्नाशे कुतो जीवान्तरमिति वाच्यम्॥ न वयं तन्नाशे जीवान्तरव्यवहारं ब्रूमः। किन्तु तदंशनाशेन अंशान्तरध्याध्यात्मिकशरीरद्वयाभिमानिनो मुक्तौ अंशांतरोपाधिकाः–जीवाः व्यवहर्तार इति वदामः॥ तर्हि नानाविद्यापक्ष एव कुतो नाद्रियते। जीवभेदस्य आवश्यकत्वादिति **चेत्** ॥ न ॥ प्रकृतिनानात्वं, प्रतिजीवं प्रपञ्चभेदः,–इत्याद्यप्रामाणिकानेकार्थगौरवादिति सर्ववृद्धसम्मत एकविद्यापक्ष एव श्रेयान् ॥ अंशभेदेन च बन्धमुक्तिर्व्यवस्थितेति संक्षेपः ॥७॥(३)॥ एवं परविद्याफलमुक्तम् ॥ इदानीम् अपरविद्याफलं प्रपञ्चयति–**संकल्पादेव तु तच्छ्रुतेरिति** ॥

भामती।

**एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः**। तदेतदतिशौण्डीर्यमौडुलोमेर्न मृष्यते। बादरायण आचार्यो मृष्यन्नपि हि तन्मतम्॥एवमपीत्यौडुलोमिमतमनुजानाति। शौण्डीर्यं तु न सहत इत्याह–**व्यवहारापेक्षयेति**। एतदुक्तं भवति–सत्यं तात्त्विकानन्दचैतन्यमात्र एवात्मा, अपहतपाप्मसत्यकामत्वादयस्त्वौपाधिकतयाऽतात्त्विका अपि व्यावहारिकप्रमाणोपनीततया लोकसिद्धा नात्यन्तासन्तो येन तच्छब्दा राहोः शिर इतिवदवास्तवा इत्यर्थः॥७॥(३)॥**संकल्पादेव तु तच्छ्रुतेः**। यत्नानपेक्षः संकल्पो लोके वस्तुप्रसाधनः। न दृष्टः सोऽत्र यत्नस्य लाघवादवधारितः॥ लोके हि कंचिदर्थं चिकीर्षुः प्रयतते प्रयतमानः समीहते समीहान-

आनन्दगिरीय–न्यायनिर्णयः।

सिद्धान्तयति–**एवमपीति**। चिन्मात्रस्यापि सतो ब्रह्मणस्तत्त्वातत्त्वविभागाद्द्विधात्वसिद्धिरिति सूत्रार्थं विवृणोति–**एवमित्यादिना** ॥ ७ ॥ ( १ ) ॥ पूर्वाधिकरणेषु परविद्याफलमभिधायापरविद्याफलं प्रपञ्चयितुमधुनोपक्रमते–**संकल्पादिति**। विषयं वक्तुं वाक्यमुदाहरति–**हार्देति**। एवकारस्यायोगान्ययोगव्यवच्छेदसाधारणतया संकल्पं विषयीकृत्य संशयमाह–**तत्रेति**। अत्र च सगुणब्रह्मविदो ब्रह्मभूतस्य विभूतिनिर्माणसाधननिरूपणात्पादादिसंगतिः। पूर्वपक्षे लोकवृत्तानुसारि चरणं सिद्धान्ते श्रुतिवृत्तानुसारि चरणमित्यभिप्रेत्यावधारणश्रुत्या संकल्पस्य निरपेक्षत्वसिद्ध्या पूर्वपक्षानुत्थानमाशंक्याऽऽह–**तत्रेति**। मुक्तस्य पित्रादिभोगहेतुसंपत्तिः संकल्पातिरिक्तयत्नादिसापेक्षा भोगहेतुत्वंलोकवदित्युक्तं विवृणोति–**यथेति**। मुक्तस्य

दिसम्पत्तिर्भवति, एवं मुक्तस्याऽपि स्यात् । एवं दृष्टाविपरीतं न कल्पितं भविष्यति । संकल्पादेवेति तु राज्ञ इव संकल्पितार्थसिद्धिकरीं साधनान्तरसामग्रीं सुलभामपेक्ष्योच्यते । न च संकल्पमात्रसमुत्थानाः पित्रादयो मनोरथविजृम्भितवच्चञ्चलत्वात्पुष्कलं भोगं समर्पयितुं पर्याप्नुयुरिति ॥ एवं प्राप्ते ब्रूमः ॥ "संकल्पादेव तु" केवलात्पित्रादिसमुत्थानमिति ॥ कुतः ॥ तच्छ्रुतेः ॥ "संकल्पादेवास्य पितरः समुत्तिष्ठन्ति" इत्यादिका हि श्रुतिर्निमित्तान्तरापेक्षायां पीड्येत । निमित्तान्तरमपि तु यदि संकल्पानुविधाय्येव स्यात्, भवतु । न तु प्रयत्नान्तरसंपाद्यं निमित्तान्तरमिष्यते । प्राक् तत्सम्पत्तेर्वन्ध्यसंकल्पत्वप्रसङ्गात् । न च श्रुति-

रत्नप्रभा ।

एवकारस्य अयोगान्ययोगव्यवच्छेदसाधारण्यात् संशयः । ब्रह्मलोकं गतस्योपासकस्य संकल्पः, यत्नान्तरसापेक्षः, भोगसामग्रीसंकल्पत्वाद्, अस्मदादिसंकल्पवत् । न चैवकारविरोधः । संकल्पेन सामग्र्या अयोगव्यवच्छेदेन सौलभ्यार्थत्वात्, यत्नानङ्गीकारे भोगपुष्ट्यसिद्धिश्चेति पूर्वपक्षार्थः । अत्र लोकवृत्तानुसरणं फलं, सिद्धान्ते तु विद्याबलेन संकल्पस्यैव भोगपुष्टिकरत्वसिद्धिरिति भेदः ॥ किञ्च यदि भोगसंकल्पानन्तरमपि यत्नान्तरसाध्यनिमित्तापेक्षा स्यात्, तर्हि निमित्तप्राप्तेः प्राजातसंकल्पस्य वन्ध्यत्वं स्यात् । भोगे विलम्बात् । ततः सत्यसंकल्पश्रुतेर्न यत्नान्तरापेक्षेत्याह—निमित्तान्तरमपि त्विति ॥ ८ ॥ नन्वी-

भामती ।

प्सितमर्थमाप्नोतीति क्रमो दृष्टः । न त्विच्छानन्तरमेवास्येष्यमाणमुपतिष्ठते । तेन श्रुत्यापि लोकवृत्तमनुरुध्यमानया विदुषस्तादृश एव क्रमोऽनुमन्तव्यः । अवधारणं तु संकल्पादेवेति लौकिकं यत्नगौरवमपेक्ष्य विद्याप्रभावतो विदुषो यत्नलाघवात् । यल्लघु तदसत्कल्पमिति । स्यादेतत् । यथा मनोरथमात्रोपस्थापिता स्त्री स्त्रैणानां चरमधातुविसर्गहेतुरेवं पित्रादयोऽप्यस्य संकल्पोपस्थापिताः कल्पिष्यन्ते स्वकार्यायेत्यत आह—न च संकल्पमात्रसमुत्थाना इति । सन्ति हि खलु कानिचिद्वस्तुस्वरूपसाध्यानि कार्याणि यथा स्त्रीवस्तुसाध्यानि दन्तक्षतमणिमालादीनि । कानिचित्तु ज्ञानसाध्यानि यथोक्तचरमधातुविसर्गरोमहर्षादीनि । तत्र मनोरथमात्रोपनीते पित्रादौ भवन्तु तज्ज्ञानमात्रसाध्यानि कार्याणि न तु तत्साध्यानि भवितुमर्हन्ति । न हि स्त्रैणस्य रोमहर्षादिवद्व्रणन्ति स्त्रीवस्तुसाध्या मणिमालादयस्तदिदमुक्तं पुष्कलं भोगमिति प्राप्तेऽभिधीयते—पित्रादीनां

आनन्दगिरीय—न्यायनिर्णयः ।

पत्तित्वादस्मदादिभोगहेतुसंपत्तिवदिति मत्वा दार्ष्टान्तिकमाह—एवमिति । अनुमानफलमाह—एवं दृष्टेति । लोकवृत्तानुसारेण श्रुतेरर्थवत्त्वसिद्धावेव तद्विपरीतं न कल्प्यमिह त्ववधारणस्य तदनुसरणे सत्यर्थवत्त्वमेव न स्यादित्याशंक्याऽऽह—संकल्पादिति । पित्रादेः संकल्पमात्रजन्यत्वे मनोरथविजृम्भितस्त्रीपुत्रादिवदर्थक्रियासामर्थ्याभावादपि संकल्पातिरिक्तसाधनापेक्षा वक्तव्येत्याह—न चेति । मनोरथनिर्मितादपि हर्षादिकार्यं दृष्टमित्याशंक्य ज्ञानमात्रसाध्यकार्यसत्त्वेऽपि ज्ञेयवस्तुसाध्यं कार्यं तत्र नास्तीत्याह—पुष्कलमिति । संकल्पस्य यत्नादिसापेक्षस्यैव पित्रादिनिर्माणहेतुतेत्येतदनूद्य सिद्धान्तसूत्रमवतार्य व्याकरोति—एवमिति । संकल्पस्य यत्नसापेक्षत्वेऽनुमानस्योक्तत्वान्न तस्य केवलस्य पित्राद्युद्भवहेतुतेति शङ्कते—कुत इति । श्रुतिविरुद्धतया कालात्ययापदिष्टमनुमानमित्याह—तच्छ्रुतेरिति । किंच, निमित्तान्तरमपि संकल्पायत्तं वा यत्नान्तरसाध्यं वा तत्राऽऽद्यमङ्गीकृत्य द्वितीयं दूषयति—निमित्तान्तरमिति । तस्य यत्नाद्यपेक्षस्य संकल्पापेक्षया विलम्बितोत्पत्तिकत्वात्प्राक्तदुत्पत्तेर्विदुषो मोघसंकल्पत्वं स्यात्ततश्च द्वितीयस्यायुक्ततेत्याह—प्रागिति । यत्तु लोकवन्निमित्तान्तरपेक्षेति तत्राऽऽह—न चेति । यदपि मनोरथविजृम्भितवदतिचञ्चलत्वान्न भोग-

गम्येऽर्थे लोकवदिति सामान्यतो दृष्टं क्रमते । संकल्पबलादेव चैषां यावत्प्रयोजनं स्थैर्योपपत्तिः।प्राकृतसंकल्पविलक्षणत्वान्मुक्तसंकल्पस्य॥८॥

## अत एव चानन्याधिपतिः ॥ ९ ॥

अत एव च-अवन्ध्यसंकल्पत्वाद् अनन्याधिपतिः विद्वान् भवति । नास्यान्योऽधिपतिर्भवतीत्यर्थः । न हि प्राकृतोऽपि संकल्पयन्नन्यस्वामिकत्वमात्मनः सत्यां गतौ संकल्पयति । श्रुतिश्चैतद्दर्शयति "अथ य इह आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति" [ छां० ८ । १ । ६ ] इति ॥ ९ ॥ इति संकल्पाधिकरणम् ॥ ४ ॥

## अभावं बादरिराह ह्येवम् ॥ १० ॥ (५) ॥

---

रत्नप्रभा ।

श्वराधीनस्य विदुषः कथं संकल्पमात्रात् भोगसिद्धिः, तत्राह-अत एवेति ॥ ईश्वरधर्म एव विदुषाविर्भूत इति न संकल्पभङ्ग इति भावः ॥ ९ ॥ ( ४ ) ॥ एवकारवत् मनसेति विशेषणेन अन्ययोगव्यवच्छेदाद् देहाद्यभाव इति पूर्वपक्षयति-अभावं बादरिराह ह्येवमिति ॥ अत्रापि वादिविवादात् संशयः । तत्र

भामती ।

समुत्थानं संकल्पादेव तच्छ्रुतेः । न चानुमानबाधोऽत्र श्रुत्या तस्यैव बाधनात् ॥ प्रमाणान्तरानपेक्षा हि श्रुतिः स्वार्थं गोचरयन्ती न प्रमाणान्तरेण शक्या बाधितुम् । अनुमानमेव तु स्वोत्पादाय पक्षधर्मत्वादिवन्मानान्तराबाधितविषयत्वं स्वसामग्रीमध्यपातेनापेक्षमाणं सामग्रीखण्डनेन तद्विरुद्धया श्रुत्या बाध्यते । अत एव नरशिरःकपालादिशौचानुमानमागमबाधितविषयतया नोपपद्यते । तस्माद्विद्याप्रभावाद्विदुषां संकल्पमात्रादेव पित्राद्युपस्थानमिति सांप्रतम् । तथाहुरागमिनः—को हि योगप्रभावादृतेऽगस्त्य इव समुद्रं पिबति स इव दण्डकारण्यं सृजति । तस्मात्सर्वमवदातम् ॥ ८ ॥९॥ (४)॥ अभावं बादरिराह ह्येवम् । "अन्ययोगव्यवच्छित्त्या मनसेति विशेषणात् । देहेन्द्रियवियोगः स्याद्विदुषो बादरेर्मतम् ॥" अनेकधाभाव-

आनन्दगिरीय-न्यायनिर्णयः ।

साधनत्वं संकल्पप्रसूतानां पित्रादीनामिति तत्राऽऽह-संकल्पेति । अस्मदादिसंकल्पितेष्वदृष्टं स्थैर्य कथं मुक्तसंकल्पितेषु कल्प्यते तत्राऽऽह-प्राकृतेति ॥ ८ ॥ विदुषः सत्यसंकल्पत्वे लाभान्तरमाह-अत इति । उपासितुरीश्वराधीनो भोगो न संकल्पमात्राद्भवितुमलमित्याशंक्य सूत्रं व्याकरोति-अत एवेति । सत्यसंकल्पत्वेऽपि कथमीश्वराधीनत्वं विदुषो नेष्यते तत्राऽऽह-न हीति । ईश्वरप्रसादाद्भोगः स्यादित्यपि प्रार्थयमानो जनो दृश्यत इत्याशंक्याऽऽह-सत्यामिति । विदुषोऽनन्याधीनमैश्वर्यमस्तीत्यत्र मानमाह—श्रुतिश्चेति । विद्यानुवादद्वारा तत्फलोक्त्यारम्भार्थोऽथशब्दः ॥ ९ ॥ ( ४ ) ॥ विदुषो ब्रह्मीभूतस्य सप्रपञ्चत्वनिष्प्रपञ्चत्वयोर्व्यावहारिकतात्त्विकताभ्यां व्यवस्थामुक्त्वा संकल्पातिरिक्तसाधनभावाभावयोरेकोपाधावापाततो विरोधाल्लोकसिद्धपदपदार्थापेक्षायाः श्रुतेर्लौकिकादनुमानाद्बाध इति पूर्वपक्षयित्वा पदपदार्थधीमात्रेण श्रुतेरपेक्षायामपि वाक्यार्थबोधने तदभावाद्विमतो यत्नाद्यनपेक्षसंकल्पजन्यो योगजन्यसामर्थ्यदृष्टत्वादगस्त्यकृतसमुद्रपानवदित्यनुमानानुगृहीतश्रुत्या बाधितत्वादनुमानस्य संकल्पमात्रसिद्ध्या विदुषो भोगहेतुसिद्धिरित्युक्तम्। संप्रत्यवधारणादन्ययोगव्यवच्छेदेन संकल्पस्यैव पित्रादिसाधनत्ववदिहापि मनसेतिविशेषणस्यान्ययोगव्यवच्छेदकत्वेनावधारणार्थत्वाद्विदुषो देहाद्यभाव इति पूर्वपक्षयति-अभा-

"संकल्पादेवास्य पितरः समुत्तिष्ठन्ति" [ छां० ८ । २ । १ ] इत्यतः श्रुतेर्मनस्तावत्संकल्पसाधनं सिद्धम् । शरीरेन्द्रियाणि पुनः प्राप्तैश्वर्यस्य विदुषः सन्ति न सन्तीति समीक्ष्यते । तत्र बादरिस्तावदाचार्यः शरीरस्येन्द्रियाणाञ्चाभावं महीयमानस्य विदुषो मन्यते ॥ कस्मात् ॥ एवं ह्याहाम्नायः "मनसैतान्कामान्पश्यन्रमते" [ छां० ५ । १२ । ५ ] "य एते ब्रह्मलोके" [ छां० ८ । १३ । १ ] इति । यदि मनसा शरीरेन्द्रियैश्च विहरेत्, मनसेति विशेषणं न स्यात् ॥ तस्मादभावः शरीरेन्द्रियाणां मोक्षे ॥ १० ॥

## भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

जैमिनिस्त्वाचार्यो मनोवच्छरीरस्यापि सेन्द्रियस्य भावं मुक्तं प्रति मन्यते । यतः "स एकधा भवति त्रिधा भवति" [ छां० ७ । २६ । २ ] इत्यादिनाऽनेकधाभावविकल्पमामनन्ति । न ह्यनेकविधता विना शरीरभेदेनाञ्जसी स्यात् ।

---

रत्नप्रभा ।

देहादयो न सन्त्येव, सदा सन्त्येवेति च पक्षद्वयं पूर्वपक्षः; कालभेदेनेच्छया सन्ति, न सन्ति चेति

भामती ।

ऋद्धिप्रभावभुवो मनोभेदाद्वा स्तुतिमात्रं वा कथंचिद्भूमविद्यायां निर्गुणायां तदसंभवादसतापि हि गुणेन स्तुतिर्भवत्येवेति ॥ १० ॥ भावं जैमिनिर्विकल्पामननात् । शरीरेन्द्रियभेदे हि नानाभावः समञ्जसः । न चार्थसंभवे युक्तं स्तुतिमात्रमनर्थकम् ॥ न हि मनोमात्रभेदे स्फुटतरोऽनेकधाभावो यथा शरीरेन्द्रियभेदे । अत एव सौभरेरभिविनिर्मितविविधदेहस्यापर्यायेण मान्धातृकन्याभिः पञ्चाशता विहारः पौराणिकैः स्मर्यते । न चार्थसंभवे स्तुतिमात्रमनर्थकमवकल्पते । संभवति चास्यार्थवत्त्वम् । यद्यपि निर्गुणायामिदं भौमविद्यायां पठ्यते तथापि तस्याः पुरस्तादनेन सगुणावस्थागतेनैश्वर्येण निर्गुणैव विद्या स्तूयते। न चान्ययोगव्यवच्छेदेनैव विशेषणम् । अयोगव्यवच्छेदेनापि विशेषणात् । यथा चैत्रो धनुर्धरः । तस्मान्मनःशरीरेन्द्रिययोग

आनन्दगिरीय–न्यायनिर्णयः ।

वमिति । मनसः सद्भावोऽपि किमिति विदुषो न विचार्यते तत्राऽऽह—संकल्पादेवेति। शरीरेन्द्रियाणि विषयस्तानि किं विद्यावतो मुक्तस्य सन्ति किंवा न सन्त्याहो सन्ति च न सन्ति चेतिवादिविप्रतिपत्तेः संशय माह—शरीरेति । अत्र सगुणब्रह्मविदः संकल्पादेव देहादिभावाभावयोरुक्त्या ब्रह्मधीफलविभूतेरुक्तेरस्ति पादादिसंगतिः । पूर्वपक्षे विशेषणश्रुतेरनेकधाभावश्रुतेर्वा मुख्यार्थत्वसिद्धिः । सिद्धान्ते द्वयोरपि श्रुत्योर्विदुषः सत्यसंकल्पत्वादेव मुख्यार्थत्वोपपत्तिरित्यङ्गीकृत्य पूर्वपक्षसूत्रं योजयति—तत्रेति । सत्यामपि विप्रतिपत्तावभावनियमासिद्धिरिति शङ्कते—कस्मादिति । विशेषणश्रुत्या परिहरति—एवं हीति । पक्षान्तरेऽपि विशेषणमयोगव्यवच्छेदकत्वेन युक्तमित्याशंक्याऽऽह—यदीति । अन्ययोगव्यवच्छेदाय मनसेतिविशेषणाद्रामेन पश्यतीत्यादाविवेतरव्यावृत्तिर्गम्यते । अयोगव्यवच्छेदे तु न तथा विशेषणमर्थवदित्यर्थः । विशेषणफलमुपसंहरति—तस्मादिति ॥ १० ॥ पूर्वपक्षान्तरमाह—भावमिति । सूत्राक्षराणि योजयति—जैमिनिस्त्विति । विकल्पामननं मनोभेदादेव किं न स्यादित्याशंक्याऽऽह—न हीति । देहभेदाभावे मनोभेदस्यापि दुर्भणत्वान्न तद्भेदकृतं विकल्पामननमित्यर्थः । निर्गुणविद्याधिकारे पाठादि-

यद्यपि निर्गुणायां भूमविद्यायामयमनेकधाभावे विकल्पः पठ्यते । तथापि विद्यमानमेवेदं सगुणावस्थायामैश्वर्यं भूमविद्यास्तुतये संकीर्त्यत इत्यतः सगुणविद्याफलभावेनोपतिष्ठत इत्युच्यते ॥ ११ ॥

## द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

बादरायणः पुनराचार्योऽत एवोभयलिङ्गश्रुतिदर्शनादुभयविधत्वं साधु मन्यते-यदा सशरीरतां संकल्पयति, तदा सशरीरो भवति । यदा त्वशरीरतां, तदा अशरीर इति । सत्यसंकल्पत्वात्, संकल्पवैचित्र्याच्च । द्वादशाहवत् । यथा द्वादशाहः सत्रम्, अहीनश्च, भवति । उभयलिंगश्रुतिदर्शनाद्, एवमिदमपीति ॥ १२ ॥

---

रत्नप्रभा ।

सिद्धान्तपक्षो द्रष्टव्यः । फलं तत्तच्छ्रुतेर्मुख्यत्वमिति विवेकः ॥ १० ॥ ११ ॥ द्वादशाहवदिति ॥ "य एवंविद्वांसः सत्रमुपयन्ति" इत्युपायनचोदनागम्यत्वश्रुतेर्द्वादशाहस्य—सत्रत्वम्, "आसत" इति च "उपयन्ति" इति वा चोदितत्वं-सत्रलक्षणमिति स्थितम् । तथा-"द्वादशाहेन प्रजाकामं याजयेद्"

भामती ।

ऐश्वर्यशालिनां नियमेनेति मेने जैमिनिः ॥ ११ ॥ द्वादशाहवदुभयविधं बादरायणोऽतः । मनसेति केवलमनोविषयां च स एकधा भवति त्रिधा भवतीति शरीरेन्द्रियभेदविषयां च श्रुतिमुपलभ्यानियमवादी खलु बादरायणो नियमवादौ पूर्वयोर्न सहते । द्विविधश्रुत्यनुरोधात् । न चायोगव्यवच्छेदेनैवंविधेषु विशेषणमवकल्प्यते । कामेषु हि रमणं समनस्केन्द्रियेण शरीरेण पुरुषाणां सिद्धमेवेति नास्ति शङ्का मनोयोगस्येति तद्व्यवच्छेदो व्यर्थः । सिद्धस्य तु मनोयोगस्य तदन्यपरिसंख्यानेनार्थवत्त्वमवकल्पते । तस्माद्वामेनाक्ष्णा पश्यतीतिवदत्रान्ययोगव्यवच्छेद इति सांप्रतम् । द्वादशाहवदिति । द्वादशाहस्य सत्रत्वमासनोपायिचोदने । अहीनत्वं च यजतिचोदने सति गम्यते ॥ द्वादशाहमृद्धिकामा उपेयुरित्युपायिचो-

आनन्दगिरीय-न्यायनिर्णयः ।

कल्पामननं स्तुतिरेवेत्याशंक्याऽऽह-यद्यपीति । देहे प्रियादिभोगहीने निर्गुणज्ञाने स्तुतित्वेनानेकधात्वस्यान्वयेऽपि विशिष्टभोगसंसर्गयोग्ये दहराद्युपासने फलत्वेनान्वय इत्यर्थः । न च मनसेति विशेषणमन्ययोगव्यावर्तकं देहादि व्यवच्छिनत्तीति युक्तं चैत्रो धनुर्धर इतिवदयोगव्यवच्छेदेनापि तद्योगादिति भावः ॥ ११ ॥ सिद्धान्तयति-उच्यत इति । सूत्रं व्याचष्टे-बादरायण इति । मनसेतिविशेषणसामर्थ्यादेकधा भवति त्रिधा भवतीत्यादिविकल्पाम्नानसामर्थ्याच्चेत्यतःशब्दार्थं स्फुटयति-उभयेति । सशरीरत्वमशरीरत्वं चैकस्यैव विरुद्धमित्याशंक्य कालभेदादविरोधं दर्शयति-यदा त्विति । इतिशब्दस्योभयविधत्वमिति पूर्वेण संबन्धः । विदुषः संकल्पानुसारि कार्यमित्यत्र हेतुमाह-सत्येति । कार्यवैचित्र्ये हेतुः-संकल्पेति । धनुर्धरत्वादि हि विशेषणं पाक्षिकप्राप्तविशेष्यपदयोगव्यवच्छेदकं युक्तं न हि चैत्रो धनुर्दधान एवावतिष्ठते । प्रकृते तु मनसैतानित्यादौ कामभोगेषु मनसो नित्यप्राप्तत्वात्तदनुवादेनान्ययोगनिवृत्त्यर्थतेत्याशंक्य दृष्टान्तमवतार्य व्याचष्टे-द्वादशाहवदिति । तस्य बहुकर्तृकतयासत्रत्वे नियतकर्तृकतयाऽऽहीनत्वे च हेतुमाह-उभयेति । द्वादशाहो हि यजमानबहुत्वादासनोपायनोपदेशाच्च सत्रं य एवंविद्वांसः सत्रमुपयन्तीत्युपायनचोदनादर्शनात्सप्तदशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्नित्यासनचोदनायाश्च द्वादशाहाधिकारे दृष्टत्वादासनोपायनचोदनयोरन्यतरत्वस्य सत्रलक्षणत्वाद्द्वादशाहेन प्रजाकामं याजयेदितियजतिचोदनादर्शनान्नियतकर्तृकत्वावगमाच्च द्विरात्रवदहीनत्वं चास्य गम्यते । तथेदमपि विदुष

## तन्वभावे सन्ध्यवदुपपद्यते ॥ १३ ॥

यदा तु सेन्द्रियस्य शरीरस्याभावः, तदा यथा सन्ध्ये स्थाने शरीरेन्द्रियविषयेष्वविद्यमानेष्वप्युपलब्धिमात्र एव पित्रादिकामा भवन्ति, एवं मोक्षेऽपि स्युः । एवं ह्येतदुपपद्यते ॥ १३ ॥

## भावे जाग्रद्वत् ॥ १४ ॥

भावे पुनस्तनोर्यथा जागरिते विद्यमाना एव पित्रादिकामा भवन्ति, एवं मुक्तस्याप्युपपद्यन्ते ॥ १४ ॥ इत्यभावाधिकरणम् ॥ ५ ॥

## प्रदीपवदावेशस्तथाहि दर्शयति ॥ १५ ॥ (६) ॥

---

रत्नप्रभा ।

इति यजतिचोदनादर्शनात् नियतकर्तृकत्वावगमेन द्विरात्रादिवदहीनत्वं चेत्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ ( ५ ) ॥ प्रदीपवदावेशः ॥ संकल्पमात्रात् निर्मितदेहानुपजीव्य तेषूभयथा दर्शनात् संशयमाह—

भामती ।

दनेन य एवं विद्वांसः सत्रमुपयन्तीति च द्वादशाहस्य सत्रत्वं बहुकर्तृकस्य गम्यते एवं तस्यैव द्वादशाहेन प्रजाकामं याजयेदिति यजति चोदनेन नियतकर्तृपरिमाणत्वेन द्विरात्रेण यजेतेत्यादिवदहीनत्वमपि गम्यत इति । संप्रति शरीरेन्द्रियाभावेन मनोमात्रेण विदुषः स्वप्नवत्सूक्ष्मो भोगो भवति । कुतः—उपपत्तेः । मनसैतानिति श्रुतेः । यदि पुनः सुषुप्तवदभोगो भवेत् नैषा श्रुतिरुपपद्येत । न च सशरीरवदुपभोगः शरीराद्युपादानवैयर्थ्यात् । सशरीरस्य तु पुष्कलो भोगः । इहाप्युपपत्तेरित्यनुषञ्जनीयम् । तदिदमुक्तं सूत्राभ्याम्—तन्वभावे संध्यवदुपपत्तेः । भावे जाग्रद्वत् । इति ॥१२॥१३॥१४॥ (५) ॥ प्रदीपवदावेशस्तथाहि दर्शयति । वस्तुतः परमात्मनोऽभिन्नोऽप्ययं विज्ञानात्माऽनाद्यविद्याकल्पितप्रादेशिकान्तःकरणावच्छेदेनानादिजीवभावमापन्नः प्रादेशिकः सन्न देहान्तराणि स्वभावनिर्मितान्यपि नानाप्रदेशवर्तीनि सान्तःकरणो युगपदावेष्टुमर्हति । न वात्मान्तरं स्रष्टुमपि । सृज्यमानस्य स्रष्टृतिरेकेऽनात्मत्वादात्मत्वे वा कर्तृकर्मभावाभावाद्भेदाश्रयत्वादस्य । नाप्यन्तःकरणान्तरं तत्र सृजति सृज्यमानस्य तदुपाधित्वाभावात् । अनादिना खल्वन्तःकरणेनौत्पत्तिकेनायमवरुद्धो नेदानीन्तनेनान्तःकरणेनोपाधितया संबद्धुमर्हति । तस्माद्यथा दारुयन्त्रं तत्प्रयोक्त्रा चेतनेनाधिष्ठितं सत्तदिच्छामनुरुध्यते । एवं निर्माणशरीराण्यपि सेन्द्रियाणीति प्राप्ते प्रत्यभिधीयते—शरीरत्वं न जातु स्याद्भोगाधिष्ठानतां विना। स त्रिधेति शरीरत्वमुक्तं युक्तं च तद्विभौ॥ स त्रिधा भवति पञ्चधा सप्तधा नवधेत्यादिका श्रुतिर्विदुषो नानाभावमाचक्षाणा भिन्नशरीरेन्द्रियोपाधिसंबन्धेऽवकल्पते नादेहहेतु (भूत) भेदे । न हि यन्त्राणि भिन्नानि निर्माय वाहयन्यन्त्रवाहो नानात्वेनापदिश्यते । भोगाधिष्ठानत्वं च शरीरत्वं नाभोगाधिष्ठानेषु यन्त्रेष्विव युज्यते । तस्माद्देहान्तराणि सृजति । न चानेनाधिष्ठितानि देहपक्षे वर्तन्ते । न च सर्वगतस्य वस्तुतो विगलितप्रायाविद्यस्य विदुषः पृथग्जनस्येवौत्प-

आनन्दगिरीय—न्यायनिर्णयः ।

सशरीरत्वमशरीरत्वं च द्विविधश्रुतिसिद्धं विचित्रसंकल्पनिबन्धनमविरुद्धमित्यर्थः ॥ १२ ॥ विदुषो देहाद्यसत्त्वमयुक्तं भोगाभावप्रसङ्गादित्याशंक्याऽऽह—तन्वभाव इति । स्वप्ने देहाभावेऽपि तत्र संनिकर्षस्य ज्ञानहेतुता मनःस्थितिमात्रहेतुत्वेनान्यथासिद्धत्वाद्योगिनश्च विद्यासामर्थ्यादेव मनोवस्थानादिति मत्वाऽऽह—संध्यवदिति । सूत्राक्षराणि व्याकरोति—यदेत्यादिना । विदुषो देहादेरभावे मनसेतिविशेषणोपपत्तिं हेतूकरोति—एवं हीति ॥ १३ ॥ तर्हि देहाद्युपादानमनर्थकं तत्राऽऽह—भाव इति । पुष्कलभोगसिद्ध्यर्थं देहाद्यादानमिति मन्वानः सूत्रं योजयति—भावे पुनरिति ॥ १४ ॥ ( ५ ) ॥ संकल्पाधीनमनेकदेहनिर्माणमफलं निरात्मकेषु देहभेदेषु भोगायोगादित्याशंक्याऽऽह—प्रदीपवदिति । वृत्तानुवाद-

"भावं जैमिनिर्विकल्पामननाद्" [ व्या० सू० ४।४।११] इत्यत्र सशरीरत्वं मुक्तस्योक्तं तत्र त्रिधाभावादिष्वनेकशरीरसर्गे किं निरात्मकानि शरीराणि दारुयन्त्रवत्सृज्यन्ते किंवा सात्मकान्यस्मदादिशरीरवदिति भवति वीक्षा । तत्रात्ममनसोर्भेदानुपपत्तेरेकेन शरीरेण योगादितराणि शरीराणि निरात्मकानीति ॥ एवं प्राप्ते प्रतिपद्यते ॥ "प्रदीपवदावेशः" इति । यथा प्रदीप एकोऽनेकप्रदीपभावमापद्यते विकारशक्तियोगाद्, एवमेकोऽपि सन्विद्वानैश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति ॥ कुतः ॥ "तथाहि दर्शयति" शास्त्रमेकस्यानेकभावं-"स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा" [ छां०७।२६।२ ] इत्यादि ॥ नैतद्दारुयन्त्रोपमाभ्युपगमेऽवकल्पते । नापि जीवान्तरावेशे । न च निरा-

रत्नप्रभा ।

भावमिति ॥ अनादिलिंगशरीरस्यैकस्मिन्नेव शरीरे भावात् निर्मितानेकदेहेषु भोगासिद्धिः पूर्वपक्षफलं, सिद्धान्ते तत्सिद्धिरिति मत्वा सूत्रं व्याचष्टे-यथेत्यादिना ॥ "स एकधा त्रिधा पञ्चधा" इत्यादिश्रुत्याऽविदुष एवानेकधाभाव उक्तः । विद्वांस्तु न देहः । नापि चिन्मात्रः । किंतु लिङ्गोपहितात्मा । न च तस्य लिङ्गभेदं विनाऽनेकत्वं सम्भवति । अतः श्रुतिबलादेकस्यैवानादिलिङ्गस्यानेकदेहेषु प्रवेशेन भेद एष्टव्यः । यद्यपि मूलप्रदीपस्य वर्त्यन्तरेषूत्पन्नदीपानां चात्यन्तभेदोऽस्ति । लिङ्गस्य तु देहभेदकृतो भेदो, न स्वतः । स्वतो लिङ्गभेदे तदुपहितजीवभेदाद् अनुसन्धानानुपपत्तेः, आगन्तुकानेकलिङ्गसृष्टौ असत्कार्यवादापाताच्च । तथापि प्रदीपत्वजात्यैक्येन व्यक्तिष्वैक्यारोपाद् दृष्टान्तदार्ष्टान्तिकयोः साम्यं द्रष्टव्यम् । तथा च यथा प्रदीपोऽनेकवर्तिषु प्रविशति, एवं विद्यायोगबलाद् विद्वल्लिङ्गस्य व्यापित्वादनेकदेहेषु युगपदावेश इति सूत्रार्थः ॥ विदुषोऽनेकधात्वं श्रुतमन्यथा न घटते इत्याह-नैतदिति ॥ इतश्च सात्मकत्वमित्याह-न च निरात्मकानामिति ॥ यदनादि मनः एकदेहस्थं तदनुसारीणि देहान्तरस्थानि मनांसि भवन्ति ।

भामती ।

त्तिकान्तःकरणवश्यता येन तदौत्पत्तिकमन्तःकरणमागन्तुकान्तःकरणान्तरसंबन्धमस्य वारयेत् । तस्मा-

आनन्दगिरीय-न्यायनिर्णयः ।

पूर्वकं मुक्तस्योक्तानि सांकल्पिकानि शरीराणि विषयीकृत्योभययोपलब्धेः संदेहमाह—भावमिति । तत्रेति मुक्तोक्तिः । मुक्तस्यापरविद्याफलभूतस्य सांकल्पिकेषु प्रवेशप्रकारोक्त्या पादादिसंगतिः । पूर्वपक्षे भोक्तुरेकत्वादेकत्रैव भोगसिद्धिः । सिद्धान्ते भोक्तुरैक्येऽपि स्वेच्छया तस्यानेकत्र भोगोपपत्तिरिति मत्वापूर्वपक्षयति—तत्रेति । आत्मनो विभुत्वेऽपि मनस्येव चैतन्यव्यक्तेस्तदवच्छेदकैकदेहावस्थितस्य देहान्तरावेशायोगादन्तःकरणान्तरोपादानेऽपि तस्यानाद्यन्तःकरणान्तरावच्छिन्नस्य पुनरागन्तुकान्तःकरणावच्छेदासंभवात्संभवे च जीवभेदाद्भोगाननुसंधानप्रसङ्गादेकस्मादितराणि निरात्मकानीति प्राप्तमित्यर्थः । पूर्वपक्षमनूद्य सिद्धान्तसूत्रमवतारयति—एवमिति । तत्र दृष्टान्तं व्याचष्टे-यथेति । दीपादीनां भिन्नत्वेऽपि दीपत्वस्यैकत्वमेकवर्तिवर्तिदीपेषूपचर्य भिन्नवर्तिवर्तिनां दीपानां भिन्नतेति दृष्टान्तमुक्त्वा दार्ष्टान्तिकमावेशशब्दितं दर्शयति-एवमिति । तत्र हेतुत्वेनावशिष्टं सूत्रावयवं व्याचष्टे-तथाहीति । यथा दारुयन्त्रं चैतन्यशून्यमपि चेतनेच्छामनुरुध्यते तथा निर्माणशरीराणि सेन्द्रियाणीति कस्मान्नाभ्युपगम्यते तेन, निरात्मकत्वमेव शरीरान्तराणामित्याशंक्याऽऽह-नैतदिति । यन्त्रवाहकस्य हि यन्त्राणि भिन्नानि निर्माय वाहयतोऽपि नानात्वेन व्यपदेशाभावाद्विदुषश्च तथा व्यपदेशात्तत्तद्देहोपाध्यवच्छेदो भातीत्यर्थः । तर्हि निर्माणदेहेष्वात्मान्तराणि सृजति विद्वानित्याशंक्याऽऽह-नापीति । जीवान्तरावेशेऽपि नैतदवकल्पत इति संबन्धः । एकस्यानेकधाभावश्रुतिविरोधादननुसंधानप्रसङ्गाच्चेत्यर्थः । शरीरान्तराणां निरात्मकत्वाभावे हेत्वन्तरमाह-न चेति ।

त्मकानां शरीराणां प्रवृत्तिः सम्भवति ॥ यत्त्वात्ममनसोर्भेदानुपपत्तेरनेकशरीरयोगासम्भव इति ॥ नैष दोषः ॥ एकमनोऽनुवृत्तीनि समनस्कान्येवापराणि शरीराणि सत्यसंकल्पत्वात्स्रक्ष्यति । सृष्टेषु च तेषूपाधिभेदादात्मनोऽपि भेदेनाधिष्ठातृत्वं योक्ष्यते। एषैव च योगशास्त्रेषु योगिनामनेकशरीरयोगप्रक्रिया॥१५॥ कथं पुनर्मुक्तस्यानेकशरीरावेशादिलक्षणमैश्वर्यमभ्युपगम्यते यावता "तत्केन कं विजानीयात्" [बृ०४।५।१५] "न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात्" [बृ० ४ । ३ । ३०] "सलिल एको द्रष्टा द्वैतो भवति" [बृ० ४ । ३ । ३२] इत्येवञ्जातीयका श्रुतिर्विशेषविज्ञानं वारयतीति ॥ अत उत्तरं पठति—

## स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

रत्नप्रभा ।

तदवस्थानां तन्नियम्यत्वसम्भवादित्यत्र योगशास्त्रसम्मतिमाह—एषैवेति ॥ "निर्माणचित्तान्यस्मितामात्रात्" [पा० सू० ४ । ४ ] " प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्" [पा० सू० ४ । ५ ] इति भगवत्पतञ्जलिना सूत्रितम् । योगिनोऽभिमानमात्रान्निर्माणचित्तानि निर्माणदेहेषु भवन्ति । तेषां नियामकमनादिचित्तमित्यर्थः ॥ १५ ॥ ( ५ ) ॥ उत्तरसूत्रव्यावर्त्यशंकामाह—कथं पुनरिति ॥ सलिलवत् सलिलः, स्वच्छ इत्यर्थः ॥ " न तु तद्द्वितीयमस्ति" इति क्वचित् सुषुप्तिमधिकृत्योक्तम् । "तत् केन कम्" इत्यादि क्वचिन्मुक्तिं प्रकृत्योक्तम्। एवं विशेषज्ञानाभाववचनं सुषुप्तिमुक्त्यन्यतमापेक्षं सगुणोपासकस्य भोगोक्तौ न विरुध्यते । भिन्नविषयत्वादित्याऽऽह—स्वाप्येति ॥ तत्रैव श्रुतौ

भामती ।

विद्वान् सर्वस्य वशी सर्वेश्वरः सत्यसंकल्पः सेन्द्रियमनांसि शरीराणि निर्माय तानि चैकपदे प्रविश्य तत्तदिन्द्रियमन्तःकरणैस्तेषु लोकेषु मुक्तो विहरतीति सांप्रतम् । प्रदीपवदिति तु निदर्शनं प्रदीपैक्यं प्रदीपव्यक्तिषूपचर्यते भिन्नवर्तिवर्तिनीनां भिन्नव्यक्तीनां भेदात् । एवं विद्वाञ्जीवात्मा देहभेदेऽप्येक इति परमार्थः । एकमनोनुवर्तीनीत्येकाभिप्रायवर्तीनीत्यर्थः ॥ १५ ॥ संपन्नः केवलो मुक्त इत्युच्यते । न चैतस्येत्थंभावसंभवः श्रुतिविरोधादित्युक्तमर्थजातमाक्षिपति—कथं पुनर्मुक्तस्येति ॥ सलिल इति । सलिलमिव सलिलः सलिलप्रातिपदिकात्सर्वप्रातिपदिकेभ्य इत्युपमानादाचारे क्विपि कृते पचाद्यचि च कृते रूपम् । एतदुक्तं भवति—यथा सलिलमम्भोनिधौ प्रक्षिप्तं तदेकीभावमुपयाति । एवं द्रष्टापि ब्रह्मणेति । अत्रोत्तरं सूत्रम्—स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि । काश्चिच्छ्रुतयः

आनन्दगिरीय—न्यायनिर्णयः ।

आत्मनाधिष्ठितानामचेतनानां प्रवृत्त्ययोगाद्भोगाभावप्रसङ्गाच्च शरीरान्तरेषु न निरात्मकत्वमित्यर्थः । पूर्वपक्षबीजमनुभाषते—यत्त्विति । स्वतन्त्रानादिमनोभेदे सत्येव जीवभेदादेकमनःसंकल्पसमुत्थानात्तदायत्तानां मनसां भेदेऽपि जीवभेदाभावात्तत्तदुपाधिव्यक्तचैतन्यो विद्वानैश्वर्यभागित्युपगमे न किंचिदवद्यमिति परिहरति—नेत्यादिना । एकमनोनुवर्तनमेकाभिप्रायाविरोधित्वम् । उक्तेऽर्थे योगशास्त्रसंमतिमाह—एषैवेति । निर्माणचित्तान्यस्मितामात्रं प्रवृत्तिभेदप्रयोजकं चित्तमेकमनेकेषामित्यादिनैषैव प्रक्रियोक्तेत्यर्थः ॥ १५ ॥ मुक्तस्य यथोक्तमैश्वर्यं विशेषज्ञाननिषेधकश्रुतिविरुद्धमिति शंकते—कथमिति । शंकोत्तरत्वेन सूत्रमवतारयति—अत इति । प्रतिज्ञां व्याचष्टे—स्वाप्यय इति । उक्तमेव व्यक्तीकर्तुं विभजते—

स्वाप्ययः-सुषुप्तम्। "स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते" [छां० ६।८।१] इति श्रुतेः। सम्पत्तिः-कैवल्यम्। "ब्रह्मैव सन्ब्रह्माप्येति" [बृ० ४।४।६] इति श्रुतेः। तयोरन्यतरामवस्थामपेक्ष्येतद्विशेषसंज्ञाभाववचनं क्वचित्सुषुप्तावस्थामपेक्ष्योच्यते। क्वचित्कैवल्यावस्थाम्। कथमवगम्यते-यतस्तत्रैव तदधिकारवशादाविष्कृतम्। "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति" [बृ० २।४।१२] इति। "यत्र त्वस्य सर्वमात्मैवाभूद्" [बृ० २।४।१४] "यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति" [बृ०४।३।१९ (माण्डूक्य) (नृ० पू० ४।१) (नृ० उ० १) (रामो०.३)] इत्यादिश्रुतिभ्यः। सगुणविद्याविपाकस्थानं त्वेतत्, स्वर्गादिवदवस्थान्तरम्। यत्रैतदैश्वर्यमुपवर्ण्यते। तस्माददोषः॥ १६॥ इति प्रदीपाधिकरणम्॥६॥

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च॥ १७॥ (७)॥

### रत्नप्रभा।

तदधिकारवशात् सुषुप्त्यादिप्रकरणबलाद् उक्तवचनानामन्यतरापेक्षत्वमाविष्कृतं, हि यतः, ततोऽवगम्यत इत्यर्थः॥अत्र समुत्थानादिवाक्यं मुक्तिविषयं, "यत्र सुप्तः" इति-सुप्तिविषयमिति विभागः॥ १६॥(६)॥ जगद्व्यापारवर्जमिति॥ "सङ्कल्पादेव" इत्यादिनोक्तैश्वर्यस्य जगत्सृष्ट्यादिव्यतिरिक्तविषयत्वेनात्रापवादात् संगतिः। उभयथा दर्शनात् संशयः, ईश्वरनानात्वं पूर्वपक्षफलं, सिद्धान्ते तु विद्यायोगिनामीश्वरनियम्यत्वादेकस्य नित्यसिद्धस्येश्वरस्यैव जगत्कर्तृत्वसिद्धिरिति विवेकः। प्रलयात् सर्गसमये यस्येक्षणपूर्वं कर्तृत्वं श्रुतौ प्रकृतं, तस्यैव नियन्तृत्वादिः जगद्व्यापारः। न ह्युपासकानां देहं विनेक्षणं संभवति॥

### भामती।

सुषुप्तिमपेक्ष्य काश्चित्तु संपत्तिं तदधिकारात्। ऐश्वर्यश्रुतयस्तु सगुणविद्याविपाकावस्थापेक्षा मुक्त्यभिसंधानं तु तदवस्थासत्तेर्यथाऽरुणदर्शने संध्यायां दिवसाभिधानम्॥१६॥(६)॥ जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च। "स्वाराज्यकामचारादिश्रुतिभ्यः स्यान्निरंकुशः। स्वकार्य ईश्वराधीनसिद्धिरप्यत्र साधकः॥" 'आप्नोति स्वाराज्यं' 'सर्वेऽस्मै देवा बलिमावहन्ति' 'सर्वेषु लोकेषु कामचारो भवति' इत्यादिश्रुतिभ्यो विदुषः परब्रह्मण इवान्यानधीनत्वमैश्वर्यमवगम्यते। नन्वस्य ब्रह्मोपासनालब्धमैश्वर्यं कथं ब्रह्माधीनं न तु स्वभावः। न हि कारणाधीनजन्मानो भावाः स्वकार्ये स्वकारणमपेक्षन्ते। किंत्वत्र ते स्वतन्त्रा एव। यथाहुः-"मृत्पिण्डदण्डचक्रादि घटो जन्मन्यपेक्षते। उदकाहरणे त्वस्य तदपेक्षा न विद्यते॥" न च विदुषां परमेश्वराधीनैश्वर्यसिद्धित्वात्तद्वृतमैश्वर्यं येन लौकिका इव राजानो महाराजाधीनाः स्वव्यापारे

### आनन्दगिरीय-न्यायनिर्णयः।

क्वचिदिति। तत्केन कमित्यादिकं वाक्यं क्वचिदित्युच्यते द्वितीयस्तु क्वचिच्छब्दः सलिलादिवाक्यगोचरः। हेतुभागमाकांक्षाद्वारा व्याकरोति-कथमित्यादिना। तत्रेत्युक्तवाक्यप्रकरणोक्तिः। तदधिकारः सुषुप्तिमोक्षयोरन्यतरस्य प्रकरणम्। तत्र समुत्थानवाक्यं यत्र सुप्तवाक्यं स्वापाधिकारविषयम्। यत्र त्वस्येति मोक्षाधिकारविषयमिति भेदः। विशेषज्ञानाभावाभिधानं सुप्तिमुक्त्योरन्यतराभिप्रायेणेत्युक्तम्। इदानीमैश्वर्याभिधानस्य सगुणविद्याविषयत्वेन भिन्नगोचरत्वान्न विरोधाशंकेत्याह-सगुणेति। कथं तर्हि सगुणविद्याफले मुक्तिशब्दप्रवृत्तिरित्याशंक्य संध्यायां दिवाशब्दवत्प्रत्यासत्तिमात्रेणेति मत्वाऽऽह-तस्मादिति॥ १६॥ (६)॥ मनोदेहसर्गादावुत्सर्गतो यदैश्वर्यमुपासितुरुक्तं तस्य जगत्सर्गेऽप्रमाणादपवादं दर्शयति-जगदिति। अपरब्रह्मणा सायुज्यं

ये सगुणब्रह्मोपासनात्सहैव मनसेश्वरसायुज्यं व्रजन्ति, किं तेषां निरवग्रहमैश्वर्यं भवति–आहोस्वित्–सावग्रहमिति संशयः ॥ किं तावत्प्राप्तम् ॥ निरङ्कुशमेवैषामैश्वर्यं भवितुमर्हति । "आप्नोति स्वाराज्यं" [ तै० उ० १।६।२ ] "सर्वेऽस्मै देवा बलिमावहन्ति" [ तै० उ० १।५।३ ] "तेषां सर्वेषु लोकेषु कामचारो भवति" [ छां० (७।२५।२) (८।१।६) ] इत्यादिश्रुतिभ्य इति ॥ एवं प्राप्ते पठति–जगद्व्यापारवर्जमिति ॥ जगदुत्पत्त्यादिव्यापारं वर्जयित्वाऽन्यदणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति । जगद्व्यापारस्तु नित्यसिद्धस्यैवेश्वरस्य ॥ कुतः ॥ तस्य तत्र प्रकृतत्वादसन्निहितत्वाच्चेतरेषाम् । पर एव हीश्वरो जगद्व्यापारेऽधिकृतः । तमेव प्रकृत्योत्पत्त्याद्युपदेशान्नित्यशब्दनिबन्धनत्वाच्च । तदन्वे-

---

रत्नप्रभा ।

किञ्चेश्वरस्य नित्यसिद्धत्वात् शब्दैकसमधिगम्यत्वाज्जगत्स्रष्टृत्वं युक्तं, न तु तत्प्रसादलब्धसिद्धीनां जीवानामित्याह—नित्यशब्दनिबन्धनत्वाच्चेति ॥ किञ्च विदुषां समप्राधान्ये मिथो विरोधः । एकं प्रति

भामती ।

विद्वांसः परमेश्वराधीना भवेयुः । न खलु यदधीनोत्पादं यस्य रूपं तत्तद्धीनं भवतीति कश्चिन्नियमः । तत्समानां तदधिकानां च दर्शनात्तथा ह्यन्तेवासी गुर्वधीनविद्यः तत्समस्तदधिको वा दृश्यते । दुष्टसामन्ताश्च पार्थिवाधीनैश्वर्याः पार्थिवा स्पर्धमानास्तान्विजयमाना वा दृश्यन्ते । तदिह निरतिशयैश्वर्यत्वात् परमेश्वरस्य मा नाम भूवन्विद्वांसस्ततोऽधिकास्तत्समास्तु भविष्यन्ति।तथा च न तदधीनाः। न हि समप्रधानभावानामस्ति मिथोऽपेक्षा । तदेते स्वतन्त्राः सन्तस्तद्वत्प्रत्यग् जगत्सर्जनेऽपि प्रवर्तेरन्निति प्राप्ते प्रत्यभिधीयते—नित्यत्वादनपेक्षत्वात् श्रुतेस्तत्प्रक्रमादपि । ऐकमत्याच्च विदुषां परमेश्वरतन्त्रता ॥ जगत्सर्गलक्षणं हि कार्यं कारणैकस्वभावस्यैव हि भवतु आहो कार्यकारणस्वभावस्य । तत्रोभयस्वभावस्य स्वोत्पत्तौ मूलकारणापेक्षस्य पूर्वसिद्धः परमेश्वर एव कारणमभ्युपेतव्य इति स एवैकोऽस्तु जगत्कारणम्। तस्यैव नित्यत्वेन स्वकारणानपेक्षस्य क्लृप्तसामर्थ्यात् । कल्प्यसामर्थ्यास्तु जगत्सर्जनं प्रति विद्वांसः । न च जगत्स्रष्टृत्वमेषां श्रूयते । श्रूयते त्वत्रभवतः परमेश्वरस्यैव । तमेव प्रकृत्य सर्वासां तच्छ्रुतीनां प्रवृत्तेः । अपि च

आनन्दगिरीय–न्यायनिर्णयः ।

गतानामैश्वर्यं विषयीकृत्य तस्योभयथादृष्ट्या संशयमाह—ये सगुणेति । सगुणब्रह्मविद्याफलभूतैश्वर्यस्य निरतिशयत्वनिवारणात्पादादिसंगतिः । पूर्वपक्षे विद्वदैश्वर्यस्य निरंकुशत्वादीश्वरभेदादनेकमत्या जगदुत्पत्त्यादिव्यवस्थासिद्धिः । सिद्धान्ते तद्भेदाभावात्परमेश्वराधीनतया जगदुदयादिव्यवस्थोपपत्तिरित्यभिप्रेत्य प्रश्नपूर्वकं पूर्वपक्षयति–किं तावदिति । श्रुतीनां श्रुतार्थग्रहेण पूर्वपक्षयित्वा सिद्धान्तयति–एवमिति । तत्र प्रतिज्ञां विभजते–जगदिति । तत्र हेतुद्वयं प्रश्नपूर्वकमाह–कुत इति । ईश्वरस्य नित्यसिद्धस्यैव जगदुत्पत्त्यादिव्यापार इत्यत्र प्रकरणादिति हेतुं विवृणोति–पर इति । प्रलयादुत्थानकाले सर्वस्य जगतो यः कर्ता तस्यैव स्थित्यादावपि कर्तृत्वोक्तेरन्यस्य चाऽऽदिसर्गे कर्तृत्वाभावादीश्वरस्यैव जगद्व्यापारे संनिधिरित्याह–तमेवेति । किंच, परस्यैव नित्यत्वेन स्वहेत्वनपेक्षणस्य क्लृप्तशक्तित्वाज्जगत्सर्जनं प्रति कल्प्यसामर्थ्यत्वाच्च विदुषामीश्वरविषयेव जगत्सृष्टिरेष्टव्या । किंच, पौर्वापर्यालोचनायामीश्वरस्यैव जगत्सर्गः शब्दाद्गम्यते । जन्मादिसूत्रमारभ्य चैतदुपपादितम् । ततोऽद्वितीयप्रतिज्ञा सिद्धैवेत्याह–नित्येति । ईश्वरस्य जगद्व्यापारे संनिधिमुक्त्वा विदुषां तत्रासंनिधिमाद्यप्रतिज्ञासिद्ध्यर्थं समर्थयते–तदन्वेषणेति । श्रूयते तेषां सर्वेषु लोकेषु

षणविजिज्ञासनपूर्वकमितरेषामणिमाद्यैश्वर्यं श्रूयते । तेनासन्निहितास्ते जगद्व्यापारे। समनस्कत्वादेव चैषामनेकमत्ये कस्यचित्स्थित्यभिप्रायः कस्यचित्संहाराभिप्राय इत्येवं विरोधोऽपि कदाचित्स्यात्। अथ कस्यचित्संकल्पमन्वन्यस्य संकल्प इत्यविरोधः समर्थ्येत, ततः परमेश्वराकूततन्त्रत्वमेवेतरेषामिति व्यवतिष्ठते ॥ १७ ॥

**प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥**

अथ यदुक्तम् "आप्नोति स्वाराज्यम्" [ तै० उ० १।६।२ ] इत्यादिप्रत्यक्षोपदेशान्निरवग्रहमैश्वर्यं विदुषां न्याय्यमिति, तत्परिहर्त्तव्यम्। अत्रोच्यते ॥ नायं दोषः ॥ "आधिकारिकमण्डलस्थोक्तेः" । आधिकारिको यः सवितृमण्डलादिषु विशेषायतनेषु व्यवस्थितः परमेश्वरः, तदायत्तैवेयं स्वाराज्यप्राप्तिरुच्यते। यत्कारणमनन्तरम्-"आप्नोति मनसस्पतिम्" [ तै० उ० १।६।२ ] इत्याह । यो हि सर्वमनसां पतिः पूर्वसिद्ध ईश्वरः, तं प्राप्नोति ॥ एतदुक्तं भवति ॥ तदनुसारेणैव चानन्तरं

---

रत्नप्रभा ।

अन्येषां गुणत्वे त्वेक एवेश्वर इत्याह—समनस्कत्वादिति ॥ १७ ॥ अधिकारे नियोजयति आदित्यादीनिति—आधिकारिकः । स चासौ मण्डलस्थश्च तस्य प्राप्यत्वोक्तेरित्यर्थः। मनसस्पतिः—सूर्यमण्डलान्तःस्थः परमात्मा । "तत् सवितुर्वरेण्यं, भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयाद्" इति श्रुतेः ॥ तथा च यदि पूर्वं निरंकुशं स्वाराज्यमुक्तं स्यात्, तर्हि ईश्वरस्याग्रे प्राप्यतां न ब्रूयात् ॥ अतो भोगे स्वाराज्यं न जगज्जन्मादिष्विति भावः ॥ वाक्पतित्वादिकमपीश्वराधीनमित्याह—तदनुसारेणेति ॥

भामती ।

समप्रधानानां हि न नियमवदेकमत्यं दृष्टमिति यदैकः सिसृक्षति तदैवेतरः संजिहीर्षतीत्यपर्यायेण सृष्टिसंहारौ स्याताम् । न चोभयोरपीश्वरत्वं व्याघातात् । एकस्य तु तदाधिपत्ये तदभिप्रायानुरोधिनां सर्वेषामैकमत्योपपत्तेरदोषः। तत्रागन्तुकानां कारणाधीनजन्मैश्वर्याणां गृह्यमाणविशेषतयाऽसमत्वान्नित्यैश्वर्यशालिनः स एव तेषामधीष इति तत्तन्त्रा विद्वांस इति परमेश्वरव्यापारस्य सर्गसंहारस्य नेशते ॥ १७ ॥ पूर्वपक्षिणोऽनुशयबीजमाशंक्य निराकरोति—प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः । यतः

आनन्दगिरीय-न्यायनिर्णयः ।

कामचारो भवतीत्यादाविति शेषः । सृष्ट्युत्तरभाविनामुपासकानां सृष्टिकाले सत्त्वाभावात्पूर्वकल्पसिद्धानां प्रलयकाले मुक्तत्वान्न स्रष्टृत्वादि तेषां क्लिष्टमित्यर्थः। इतश्च विदुषां न निरंकुशैश्वर्यमित्याह—समनस्कत्वादिति । किं विदुषां समप्रधानत्वमाहो गुणप्रधानत्वम् ? आद्ये समप्रधानानां नियमेनैकमत्यादर्शनादेकस्य सिसृक्षायामपरस्य संजिहीर्षासंभवादपर्यायमेव सर्गसंहारौ स्याताम्। अपरथा द्वयोरपि नेश्वरत्वं कार्यविघातादित्यर्थः द्वितीयमनुभाष्य दूषयति—अथेत्यादिना । एकाभिप्रायानुवर्तितायामन्येषामागन्तुकैश्वर्याणामगृह्यमाणविशेषतया कस्यचित्प्राधान्यायोगादनागन्तुकैश्वर्यपरमेश्वरत्वातत्वमितरेषामेषितव्यमित्यर्थः ॥ १७ ॥ पूर्वपक्षबीजमनूद्य दूषयति—प्रत्यक्षेति । अनुवादभागं व्याकरोति—अथेति । परिहारमवतारयति—अत्रेति । नञर्थमुक्त्वा हेतुमवतार्य व्याचष्टे—नेत्यादिना । अधिकारे नियोजयत्यादित्यादीनित्याधिकारिकस्तत्र हेतुमाह—यदिति । यस्मात्कारणात्स्वाराज्यप्राप्त्यनन्तरमाहाऽऽप्नोति मनसस्पतिमिति । यदि पूर्वमेव निरंकुशं स्वाराज्यमुक्तं तर्हि पश्चादीश्वरप्राप्तिवचनं न स्यात्तस्माद्भोगे स्वाराज्यं न तु जगतः स्रष्टृत्वादावित्यर्थः । विवक्षितार्थसिद्धये वाक्यार्थं कथयति—यो हीति । विदुषामीश्वराधीनमैश्वर्यं स्वाराज्यमित्यत्र वाक्यशेषमनुकूलयति—तदनुसारेणेति । परमेश्वराधीन-

"वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवति" [तै० उ० १।६।२] इत्याह । एवमन्यत्रापि यथासम्भवं नित्यसिद्धेश्वरायत्तमेवेतरेषामैश्वर्यं योजयितव्यम् ॥ १८ ॥

## विकारावर्ति च तथाहि स्थितिमाह ॥ १९ ॥

विकारावर्त्यपि च नित्यमुक्तं पारमेश्वरं रूपं, न केवलं विकारमात्रगोचरं सवितृमण्डलाद्यधिष्ठानम् । तथाहि-अस्य द्विरूपां स्थितिमाहाम्नायः- "तावानस्य महिमा ततो ज्यायाँश्च पुरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" [ छां० ३ । १२ । ६ ] इत्येवमादिः । न च तन्निर्विकारं रूपमितरालम्बनाः प्राप्नुवन्तीति शक्यं वक्तुम् । अतत्क्रतुत्वात्तेषाम् । अतश्च यथैव द्विरूपे परमेश्वरे निर्गुणे रूपमनवाप्य सगुण एवावतिष्ठते, एवं सगुणेऽपि निरवग्रहमैश्वर्यमनवाप्य सावग्रह एवावतिष्ठत इति द्रष्टव्यम् ॥ १९ ॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

---

रत्नप्रभा ।

उक्तन्यायं कामचारादिवाक्येष्वतिदिशति-एवमिति ॥ १८ ॥ जगद्व्यापारः, उपासकप्राप्यः, तदुपास्यनिष्ठत्वात्, सङ्कल्पसिद्ध्यादिवदित्याशंक्योपास्यस्थनिर्गुणस्वरूपे व्यभिचारमाह—विकारावर्त्ति चेति ॥ ॥ १९ ॥ निर्गुणस्वरूपे प्रमाणमाह—दर्शयतश्चैवमिति ॥ यथा ज्ञानाभावान्निर्गुणं न प्राप्तं, तथा

भामती ।

परमेश्वराधीनमैश्वर्यं तस्माच्चतो न्यूनमणिमादिमात्रं स्वाराज्यं न तु जगत्स्रष्टृत्वम् । उक्तान्यायात् ॥ १८ ॥ विकारावर्ति च तथाहि स्थितिमाह । एतावानस्य महिमेति विकारवर्ति रूपमुक्तम् । ततो ज्यायांश्चेति निर्विकारं रूपम्। तथा पादोऽस्य विश्वा भूतानीति विकारवर्ति रूपं त्रिपादस्यामृतं दिवीति निर्विकारमाह रूपम्॥१९॥दर्शयतश्चापरे श्रुतिस्मृती निर्विकारमेव रूपं भगवतस्ते च पठिते। एतदुक्तं भवति—यदि ब्रूषे सगुणे ब्रह्मण्युपास्यमाने यथा तद्गुणस्य निरवग्रहत्वमपि वस्तुतोऽस्तीति निरवग्रहत्वं विदुषा प्राप्तव्यमिति तदनेन व्यभिचारयते । यथा सविकारे ब्रह्मण्युपास्यमाने वस्तुतः स्थितमपि निर्विकाररूपं न प्राप्यते तत्कस्य हेतोः, अतत्क्रतुत्वादुपासकस्य । तथा तद्गुणोपासनया वस्तुतः स्थितमपि निरवग्रहत्वं नाप्यते । तत्त्वोपासनासु पुरुषक्रतुत्वात । उपासकस्य तदक्रतुत्वं च निरवग्रहत्वस्योपासनविध्यगोचरत्वाद्विध्यधीन-

आनन्दगिरीय—न्यायनिर्णयः ।

मणिमादिलक्षणमैश्वर्यं विदुषां स्वाराज्यं न तु जगतः स्रष्टृत्वादीत्युक्तमर्थं तेषां सर्वेषु लोकेष्वित्यादिवाक्येषु संचारयति-एवमिति ॥१८॥ निरतिशयैश्वर्यवदीश्वरोपासकास्तदात्मतां प्राप्ताः सातिशयैश्वर्यवन्तो भवन्तीत्ययुक्तं तदात्मत्वविरोधादित्याशंक्य ब्रह्मैक्येऽपि सगुणप्राप्तानां निर्गुणप्राप्त्यभाववदेतद्युक्तमिति वक्तुं ब्रह्मणो द्वैरूप्यमाह—विकारावर्तीति।तत्र प्रतिज्ञाविभागं व्याचष्टे—विकारेति।चकारसूचितमर्थमाह—नेति।हेतुभागं व्याचष्टे-तथाहीति। तत्र प्रथमतृतीयपादाभ्यां विकारवर्ति रूपमुच्यते, द्वितीयचतुर्थपादाभ्यां विकारावर्ति ब्रह्मणो रूपमुक्तमिति भेदः।अस्तु ब्रह्मणो विकारवर्ति रूपं तथाऽपि किं स्यात्तत्राऽऽह—न चेति।वस्तुतस्तथात्वेऽपि यथोपासनमेव तत्प्राप्तिरुपासनं च विध्यधीनं निरवग्रहमहत्त्वादिधर्मस्य चोपास्यगोचरत्वादनुपासितस्याप्राप्तिरिति फलितमाह—अतश्चेति॥१९॥विकारावर्ति रूपमस्तीत्यत्रैव श्रुतिस्मृती प्रमाणयति—दर्शयतश्चेति।

दर्शयतश्च विकारावर्तित्वं परस्य ज्योतिषः श्रुतिस्मृती—"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः" [ ( कठ० ५ । १५ ) ( श्वेता० ६ । १४ ) ( मुण्ड० २ । २ । १० ) ] इति, "न तद्भासयते सूर्यो न शशाङ्को न पावकः" [ भ० गी० १५ । ६ ] इति च। तदेवं विकारावर्तित्वं परस्य ज्योतिषः प्रसिद्धमित्यभिप्रायः ॥ २० ॥

## भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

इतश्च न निरङ्कुशं विकारालम्बनानामैश्वर्यं यस्माद्भोगमात्रमेषामनादिसिद्धेनेश्वरेण समानमिति श्रूयते—"तमाहापो वै खलु मीयन्ते लोकोऽसौ" इति, "स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति" [ बृ० १।५।२३ ] इत्यादिभेदव्यपदेशलिङ्गेभ्यः ॥ २१ ॥ नन्वेवं सति साति-

रत्नप्रभा।

ध्यानाभावाज्जगत्स्रष्टृत्वादि न प्राप्नोति। ध्यानाभावश्च विध्यभावादिति भावः ॥ २० ॥ तमुपासकं ब्रह्मलोकगतमाह हिरण्यगर्भः मया खल्विमा आपः अमृतरूपाः मीयन्ते भुज्यन्ते न चापि असौ लोकः अमृतोदकलक्षण इत्यर्थः ॥ श्रुत्यन्तरमाह—स यथेति॥ भोगसाम्ये सः दृष्टान्तो यथेत्यर्थः॥ तेनो इति। उशब्दोऽप्यर्थः ॥ सलोकतामपीत्यन्वयः। सायुज्यं समानदेहत्वं क्रमेण मुक्तिर्वा ॥ २१ ॥ शास्त्रस-

भामती।

त्वाच्चोपासनासु पुरुषस्वातन्त्र्याभावात्स्वातन्त्र्ये वा प्रातिभत्वप्रसङ्गादिति॥२०॥ भोगमात्रसाम्यलिंगाच्च न केवलं स्वाराज्यस्येश्वराधीनतयाऽजगत्सर्जनम्, साक्षाद्भोगमात्रेण तेन परमेश्वरेण साम्याभिधानादपि व्यपदेशलिङ्गादिति। भूतान्यवन्ति प्रीणयन्तीति भोजयन्तीति यावत्। सूत्रान्तरावतारणाय शङ्कते—नन्वेवं सति सातिशयत्वादिति।सह परमेश्वरस्यातिशयेन वर्तत इति विदुष ऐश्वर्यं सातिशयम्।यच्च कार्यं सातिशयं तच्च यथा लौकिकमैश्वर्यम्। तदनेन कार्यत्वमुक्तम्। तथा च कार्यत्वादन्तवत्प्राप्तमिति तच्च न युक्तमानन्त्येन

आनन्दगिरीय—न्यायनिर्णयः।

प्रसिद्धे प्रत्यक्षानुमाने प्रत्याचक्षाणः सूत्राक्षराणि योजयति—दर्शयतश्चेत्यादिना। उक्तेऽर्थे सुलभानि श्रुतिस्मृतिवचनानीति मन्वानो वाक्यार्थमाह—तदेवमिति ॥ २० ॥ अपरब्रह्मविदां विश्वस्रष्टृत्वाद्यभावे हेत्वन्तरमाह—भोगमात्रेति। न केवलं स्वाराज्यस्य परमेश्वरायत्ततया विदुषां जगद्व्यापारराहित्यं किंतु तेन भोगमात्रेण साम्योक्तिलिङ्गादपीत्यर्थः। चकारार्थमाह—इतश्चेति। हेत्वन्तरमेवावशिष्टसूत्राक्षरयोजनया स्पष्टयति—यस्मादिति। तं ब्रह्मलोकगतमुपासकं हिरण्यगर्भः स्वसमीपमुपागतं सानुनयमाह मया खल्वाप एवामृतमय्यो मीयन्ते दृश्यन्ते भुज्यन्ते तवाप्यसावमृतरूपोदकलक्षणो लोको भोग्यो यथासुखं भुज्यतामित्याह—तमाहेति। उपासकस्योपास्यदेवस्य भोगमात्रसाम्ये श्रुत्यन्तरमाह—स यथेति। सशब्दो दृष्टान्तपरः। अवन्ति भजन्ते। तत्र वाक्यान्तरमाह—तेनेति। उशब्दोऽप्यर्थः सलोकतामपीति संबध्यते। प्रकृतेनोपासनेनोपास्याया देवतायाः सायुज्यं तेन समानदेहतां समानलोकतां च भावनाविशेषादाप्नोतीत्यर्थः ॥ २१ ॥ विदुषां निरंकुशैश्वर्याभावे दोषमाशंक्यते—नन्विति। सह परमेश्वरस्यैश्वर्येणातिशयेन वर्तत इति सातिशयं विदुषामैश्वर्यं तच्च परमेश्वराधीनत्वाल्लौकिकैश्वर्यवत्कार्यं कार्यत्वाच्चान्तवदित्यर्थः। विद्वदैश्वर्यस्यान्तवत्त्वे का क्षतिरित्या-

शयत्वादन्तवत्त्वमैश्वर्यस्य स्यात् ॥ ततश्चैषामावृत्तिः प्रसज्येतेति ॥ अत उत्तरं भगवान्बादरायणाचार्यः पठति—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ ४ ॥ ४ ॥ २२ ॥

। इति श्रीमद्वैयासिक्यां शारीरकमीमांसायां चतुर्थाऽध्यायस्य चतुर्थः पादः ॥४॥४॥

नाडीरश्मिसमन्वितेनार्चिरादिपर्वणा देवयानेन पथा ये ब्रह्मलोकं शास्त्रोक्तविशेषणं गच्छन्ति "यस्मिन्नरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि, यस्मिन्नैरं मदीयं सरः, यस्मिन्नश्वत्थः सोमसवनः, यस्मिन्नपराजिता पूर्ब्रह्मणः, यस्मिंश्च प्रभुविमितं हिरण्मयं वेश्म, यश्चानेकधामन्त्रार्थवादादिप्रदेशेषु प्रपञ्च्यते, तं ते प्राप्य न चन्द्रलोकादिवद्भिक्तभोगा आवर्तन्ते ॥ कुतः ॥ "तयोर्ध्वमायन्नमृतत्वम्" [ (छां० ८।६।६)

रत्नप्रभा ।

मात्रि सूचयन् सूत्रकारं पूजयति—भगवानिति ॥ भगवत्त्वं सर्वज्ञत्वम् । सूत्रद्वारा शिष्याणामाचारे स्थापनाद्—आचार्यत्वम् । बादरायणपदेन बदरिकाश्रमवासोक्त्या नित्यसर्वज्ञस्य परमगुरोर्नारायणस्य प्रसादद्योतनात् तत्प्रणीतशास्त्रे निरवद्यतामुद्द्योतयति ॥ सगुणविद्यायाः सातिशयफलत्वेऽपि ततो निर्गुणविद्याऽनावृत्तिरित्याह—अनावृत्तिः शब्दादनावृत्तिः शब्दादित्यादि ॥ ये ब्रह्मलोकं गच्छन्ति, ते तं प्राप्य नावर्तन्ते इति सम्बन्धः ॥ लोकं विशिनष्टि—यस्मिन्निति ॥ इतः अस्मात् पृथिवीलोकात् तृतीयस्यां दिवि यो ब्रह्मलोकः, तस्मिन्नर इति, ण्य इति च, अर्णवतुल्यौ सुधाहृदावित्यर्थः ॥ ऐरम् अन्नमयं, मदीयं मदकरं सरः, सोमसवनः अमृतवर्षी । यद्यपि तेषामिह न पुनरावृत्तिरिमं मानवमिति च श्रुतिषु "इहेमम्" इतिविशेषणादस्मिन् कल्पे ब्रह्मलोकगतानां कल्पान्तरे आवृत्तिर्भाति ॥ तथापीश्वरोपास्तिं विना पञ्चाग्निविद्याश्रमेधदृढब्रह्मचर्यादिसाधनैः ये गताः, तेषां तत्त्वज्ञाननियमाभावादावृत्तिः

भामती ।

तद्विदुषां तत्र प्रवृत्तेरिति ॥ २१ ॥ अत उत्तरं पठति—अनावृत्तिः शब्दादनावृत्तिः शब्दात् । किमर्चिरादिमार्गेण ब्रह्मलोकप्राप्तानामैश्वर्यस्यान्तवत्त्वं त्वया साध्यते । आहोस्विच्चन्द्रलोकादिव ब्रह्मलोकादेत-

आनन्दगिरीय—न्यायनिर्णयः ।

शंक्य विदुषां मुक्तता न स्यादित्याह—ततश्चेति । एतदुत्तरत्वेनोत्तरसूत्रं सूत्रकारं पूजयन्नवतारयति—अत इति । भगवानित्यनेन सर्वज्ञत्वादिसंपत्तिरुक्ता । आचार्यशब्देन शास्त्रार्थबहुलीकरणं सदाचारे शिष्याणां स्थापनं स्वयं तदाचरणं चेत्यत्र नैपुण्यमुक्तमिति भेदः । यत्तु सातिशयत्वेन कार्यत्वं ततश्चान्तवत्त्वमित्यनुमानं तत्र किमैश्वर्यस्यान्तवत्त्वमात्रं साध्यं किंवा मुक्त्यभावो विदुषामिति विकल्प्याऽऽद्ये सिद्धसाध्यत्वं मत्वा द्वितीये क्रममुक्तिवादिश्रुतिविरोधमाह—अनावृत्तिरिति । सूत्रस्थं प्रतिज्ञापदं व्याचष्टे—नाडीति । अर्चिरादिपदोक्तदेवयानं पन्थानं स्मारयतुं विशेषणद्वयम् । ये ब्रह्मलोकं गच्छन्ति ते तं प्राप्य मुक्तभोगास्ततो नाऽऽवर्तन्त इति संबन्धः । कानि तानि शास्त्रोक्तानि विशेषणानीत्युक्ते यथाशास्त्रं तान्यनुक्रामति—यस्मिन्निति । इतो लोकात्पृथिवीशब्दितात्तृतीयस्यां दिवि यो ब्रह्मलोकस्तस्मिन्नरण्यसंज्ञौ द्वावर्णवावित्यर्थः । तस्मिन्नेवान्नमयं हर्षकरं च सरोऽस्तीत्याह—यस्मिन्नैरमिति । सोमसवन इत्यत्र सोमशब्दोऽमृतवचनः । कर्मज्ञानशून्यानां दुष्प्रापत्वमपराजितत्वम् । ब्रह्मणो हिरण्यगर्भस्येति यावत् । प्रभुशब्दोऽपि हिरण्यगर्भमेवाधिकरोति । उक्तविशेषणवति ब्रह्मलोके मानमाह—यश्चेति । चन्द्रलोकादिवेति वैधर्म्योदाहरणम् । प्रतिज्ञामेवं व्याख्याय मोक्षहेतुमाकांक्षापूर्वकं व्याख्याति—कुत इत्यादिना । ननु दर्शितानामनावृत्तिश्रुतीनामर्थवादत्वादविरोधःप्रामाण्यमिति ... मिमिहेति च विशे-

(कठ० ६।१६)] इति, "तेषां न पुनरावृत्तिः" [बृ० ६।२।१५] "एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" [छां० ४।१५।६] "ब्रह्मलोकमभिसम्पद्यते" [छां० ८।१५।१] "न च पुनरावर्तते" [(छां० ८।१५।१)(वासु०उ० ४)] इत्यादिशब्देभ्यः। अन्तवत्त्वेऽपि त्वैश्वर्यस्य यथाऽनावृत्तिः, तथा वर्णितं "कार्यात्यये तदध्यक्षेण सहातः परम्" [व्या० ४।३।१४] इत्यत्र। सम्यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिः। तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिरिति। "अनावृत्तिः शब्दादनावृत्तिः श-

रत्नप्रभा।

स्यात्। ये तु दहरादीश्वरोपास्त्या गताः, तेषां सगुणविद्याफलक्षयेऽपि निरवग्रहेश्वरानुग्रहाल्लब्धात्मज्ञानैर्मुक्तिरिति नियम इत्यभिप्रेत्याह—अन्तवत्त्वेऽपि त्विति॥ नन्वत्र सूत्रकृता सगुणविदामेवानावृत्तिः उक्ताः, न निर्गुणविदाम्। तत्र को हेतुरित्याशंक्य तेषामावृत्तिशंकाभावादित्याह—सम्यगिति॥ तदाश्रयणेनैवेति॥ गुणविदामावृत्तिप्राप्तौ सम्यग्दर्शनाश्रयणेनैवानावृत्तिः साधिता॥ अतः स्वत एव सम्यग्दर्शिनामावृत्तिशंका नेति किमु वाच्यमित्यर्थः॥ यत्र अध्यायसमाप्तिः, तत्र पदमात्रस्य अभ्यासो दर्शितः। इह सूत्रस्यैवाभ्यासात् शास्त्रसमाप्तिर्द्योत्यत इत्याह—अनावृत्तिः शब्दादिति॥ एवं समन्वयोक्त्या ब्रह्मात्मैक्यस्य वेदान्तप्रमाणकत्वमवधारितम्, वाक्यार्थज्ञाने स्मृतितर्कादिसर्वप्रकारविरोधः परिहृतः, साधनसम्पत्तिश्च दर्शिता॥ तस्माद्विवेकादिसाधनसम्पन्नस्य श्रवणाद्यावृत्तिनिरस्तसमस्तप्रतिबन्धनस्य अखण्डात्मसंबोधात् समूलबन्धध्वंसे सति आविर्भूतनिष्कलङ्कानन्तस्वप्रकाशचिदानन्दात्मना अवस्थानमिति सिद्धम्॥ ४॥ ४॥ २२॥ (७)॥

नानाविधग्रन्थजातं वीक्ष्य सम्यग्यथामति। शारीरकस्य भाष्यस्य कृता व्याख्या सतां मुदे॥ १॥
अन्तर्यामी जगत्साक्षी सर्वकर्ता रघूद्वहः। अतोऽत्र दोषोऽशंक्यः स्यादेष होवेतिशासनात्॥ २॥

भामती।

ब्रह्मलोकप्राप्तिर्मुक्तेरन्तवत्त्वम्। तत्र पूर्वस्मिन् कल्पे सिद्धसाधनम्। उत्तरत्र तु श्रुतिस्मृतिविरोधः। दहरदृशानां च क्रममुक्तिप्रतिपादनादिति। तत्त्वमसिवाक्यार्थैकोपासनापरान् प्रत्याह—सम्यग्दर्शनविध्वस्ततमसामिति। द्विधाऽविद्या तमः। निरुपाधिब्रह्मसाक्षात्कारस्तत्त्वदर्शनम्। न चैतन्निर्वाणं स्वरूपावस्थानं [illegible] कार्यं येनानित्यं स्यादित्याह—नित्यसिद्धेति॥ ४॥ ४॥ २२॥ (७)॥

भङ्क्त्वा वादसुरेन्द्रवृन्दमखिलाविद्योपधानातिगं येनाम्नायपयोनिधेर्नयपथा ब्रह्मामृतं प्राप्यते।
सोऽयं शाङ्करभाष्यजातविषयो वाचस्पतेः सादरं संदर्भः परिभाव्यतां सुमतयः स्वार्थेषु वो मत्सरः॥ १॥

आनन्दगिरीय—न्यायनिर्णयः।

कल्पान्तरे भवत्यावृत्तिरिति तत्राऽऽह—अन्तवत्त्वेऽपीति। ये तावदूर्ध्वरेतसः स्वाश्रमधर्मनिष्ठा ब्रह्मचर्येण ब्रह्मलोकमधिरूढास्तेषामन्तरेण विद्यां बन्धध्वंसासिद्धेरस्त्येवाऽऽवृत्तिः। ये तु सगुणोपासकास्तेषामैश्वर्यस्य कल्पमात्रस्थायित्वेऽपि क्रममुक्तिविवक्षयाऽनावृत्तिरविरुद्धेत्यर्थः। सगुणब्रह्मविदामेवानावृत्तिरत्र प्रतिपाद्यते न निर्गुणब्रह्मविदां तत्र को हेतुरित्याशंक्य तेषामावृत्तिशंकाभावादित्याह—सम्यगिति। सगुणब्रह्मविदामपि ब्रह्मलोकगतानां तत्रोत्पन्नसम्यग्दर्शनप्रसादादेव मुक्तिरिति स्थिते सम्यग्दर्शिनामनावृत्तिः सुतरां सिध्यतीति कैमुतिकन्यायमाह—तदाश्रयेणेनेति। उपासकानामीश्वरायत्तमैश्वर्यं न निरतिशयमित्यधिकरणार्थमुपसंहर्तुमितीत्युक्तम्। सूत्राभ्यासस्य प्रयोजनमाह—अनावृत्तिः शब्दादिति।—अध्यायपरिसमाप्तिरेव तत्र पदस्यैवाभ्यासो दृष्टः, प्रकृते सूत्रस्यैवाभ्यासाच्चतुर्लक्षणस्य वेदान्तमीमांसाशास्त्रस्य समन्वयाविरोधसाधनफलानां साकल्येनोक्तत्वाद्वक्तव्यानवशेषात्परिसमापनमुचितमिति भावः॥ ४॥ ४॥ २२॥ (७)॥

त्वाद्' इति सूत्राभ्यासः शास्त्रपरिसमाप्तिं दर्शयति ॥ ४ ॥ ४ ॥ २२ ॥ इति जगद्व्यापाराधिकरणम् ॥ ७ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणपरमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये निर्गुणब्रह्मविद्विदेहमुक्ति–सगुणब्रह्मविद्ब्रह्मलोकस्थितिनिरूपणं नाम चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः ॥ ४ ॥ ४ ॥

॥ समाप्तमिदं शारीरकमीमांसादर्शनभाष्यं श्रीशाङ्करभाष्योपेतम् ॥

---

रत्नप्रभा ।

युक्तस्यक्षर्क्षेश्च पार्श्वे करतलयुगले कौस्तुभाभां दयां च सीतां कोदण्डदीक्षाममयवरयुतां वीक्ष्य रामाङ्गसङ्गः ॥ क्रियाः क स्यादितीत्थं हृदि कृतमनना भाष्यरत्नप्रभेयं स्वात्मानन्दैकलुब्धा रघुवरचरणाम्भोजयुग्मं प्रपन्ना १॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शनभाष्यव्याख्यायां ( भाष्य ) रत्नप्रभायां चतुर्थस्याध्यायस्य चतुर्थः पादः समाप्तः ॥ ४ ॥ ४ ॥

भामती ।

अज्ञानसागरं तीर्त्वा ब्रह्मतत्त्वमभीप्सताम् । नीतिनौकर्णधारेण मयाऽपूरि मनोरथः ॥ २ ॥ यन्न्यायकणिकातत्त्वसमीक्षातत्त्वविन्दुभिः । यन्न्यायसांख्ययोगानां वेदान्तानां निबन्धनैः ॥ ३ ॥ समचैषं महत्पुण्यं तत्फलं पुष्कलं मया । समर्पितमथैतेन प्रीयतां परमेश्वरः ॥४॥ नृपान्तराणां मनसाप्यगम्यां भ्रूक्षेपमात्रेण चकार कीर्तिम् । कार्तस्वरासारसुपूरितार्थसार्थः स्वयं शास्त्रविचक्षणश्च ॥५॥ नरेश्वरा यच्चरितानुकारमिच्छन्ति कर्तुं न च पारयन्ति। तस्मिन्महीपे महनीयकीर्तौ श्रीमन्नृगेऽकारि मया निबन्धः ॥६॥

इति श्रीवाचस्पतिमिश्रविरचिते शंकरभगवत्पादभाष्यविभागे भामत्यां चतुर्थस्याध्यायस्य चतुर्थः पादः समाप्तः ॥ ४ ॥ ४ ॥

आनन्दगिरीय–न्यायनिर्णयः ।

व्याख्याऽसंख्याततर्ककचचयरयस्त्रस्तदुस्तर्कशङ्का शङ्काव्याजप्रकारप्रसरणसमतावस्तुतत्त्वं श्रयन्ती ॥ शुद्धानन्दाङ्घ्रियुग्मस्मृतिभरनिभृतप्रौढगाढोक्तिरूढाऽऽनन्दज्ञानप्रणीता जगति मुदमियं सद्धियां संविधत्ताम् ॥१॥ सन्त्येव बहुलानीह व्याख्यानानि महाधियाम् ॥ व्याख्या तथाऽपि सौख्येन व्याख्यानायं मया कृता ॥२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि ( ज्ञान ) कृते शारीरकमीमांसाभाष्यविभागे न्यायनिर्णये चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः ॥ ४ ॥ ४ ॥

॥ इति चतुर्थाध्यायस्य निर्गुणब्रह्मविद्विदेहमुक्ति–सगुणब्रह्मविद्ब्रह्मलोकस्थितिनिरूपणाख्यश्चतुर्थः पादः ॥

## इति श्रीमद्ब्रह्मसूत्रशांकरभाष्ये फलाख्यस्तुरीयोऽध्यायः ॥ ४ ॥

ॐ तत्सत् । ॥ समाप्तोऽयं ग्रन्थः ॥ ॐ तत्सत् ।

